SRI BALAMANORAMA SERIES NO 6.

॥ श्रीः ॥

# KARIKAVALI

## WITH

Muktavali, Prabha, Manjusha, Dinakariya, Ramarudriya & Gangarama Jatiya.

---

# कारिकावली

श्रीविश्वनाथतर्कपञ्चाननकृता

मुक्तावली-प्रभा-मञ्जूषा-दिनकरीय रामरुद्रीय-गङ्गारामजटीयसमन्विता ।

---

EDITED
BY
C. SANKARA RAMA SASTRY M.A., B.L.,
High Court Vakil,
Mylapore, Madras.

PRINTED & PUBLISHED BY
SRI BALAMANORAMA PRESS, MYLAPORE, MADRAS.

मद्रास् मैलापूर्नगरस्थश्रीबालमनोरमामुद्राक्षरशालायां
मुद्रिता प्राकाश्यं नीता च ।

1923

Price Rs. 12. Postage Extra.

॥ श्रीः ॥

## उपोद्घातः ॥

विदितमेव सर्वेषां पण्डितप्रकाण्डानां यदुत दुःखपङ्कनिमग्नस्य नानावस्थापन्नस्य प्राणिजातस्य सुखं मे भूयात् दुखं मे मा भूदिति प्रतीतिसाक्षिकसुखदुःखाभावावेव परमपुरुषार्थाविति। तत्र च आत्यन्तिकदुःखोच्छेदस्य निःश्रेयसापरनामकस्यैव मोक्षत्वमाहुस्तर्कनिष्णाताः। तस्याधिगमप्रकारश्च पदार्थतत्त्वावधारणमिति नैयायिका आमनन्ति। एवं मोक्षसाधनमुख्योपायस्य पदार्थतत्त्वज्ञानस्य प्रतिपादिकां अष्टादशविद्यास्थानेषु अभ्यर्हिततमां आन्वीक्षकीं निखिलजगदुद्दिधीर्षया भगवान् गौतममुनिः "प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानां तत्त्वज्ञानान्निःश्रेयसाधिगमः" इत्यारभ्य "हेत्वाभासाश्च यथोक्ताः" इत्यन्तैः सूत्रैः पञ्चाध्यायैः प्रणिनाय। शास्त्रस्य चास्य न्यायशास्त्रं, तर्कशास्त्रं, आन्वीक्षकी, आक्षपादी, गौतमीयं इत्यादीनि बहूनि नामानि तत्र तत्र प्रयुज्यमानान्युपलभ्यन्ते। किमिदं न्यायशास्त्रं नाम? प्रमाणैरर्थपरीक्षणं न्यायः, प्रत्यक्षागमाश्रितमनुमानं सा अन्वीक्षा, प्रत्यक्षागमाभ्यां ईक्षितस्य अनु ईक्षणं अन्वीक्षा तया प्रवर्तत इति आन्वीक्षकी न्यायविद्या न्यायशास्त्रं। यद्वा, न्यायः पञ्चावयववाक्यं प्रतिज्ञाहेतूदाहरणोपनयनिगमनानि पञ्चावयवाः, एतस्य न्यायस्य च परार्थानुमानस्थले प्रयोगः, इयं हि न्यायविद्या पदार्थतत्त्वावधारणजननद्वारा यथा स्वात्मसाक्षात्कारं प्रत्युपयुज्यते तथा आत्मा इतरभिन्नः सुखादिमत्त्वात् यन्नैवं तन्नैवं इत्यादिभिः पञ्चावयवैः आत्मनः इतरभिन्नत्वेन परार्थं बोधनायापि प्रवृत्ता। यद्वा तर्क्यन्ते प्रतिपाद्यन्त इति तर्काः पदार्थाः तानधिकृत्य कृतमिदं शास्त्रं तर्कशास्त्रं इत्यादयो व्युत्पत्तयः तत्र तत्र ग्रन्थैः प्रतिपादिताः॥

परंच न्यायशास्त्रवत् अभ्यर्हितकोटिप्रविष्टान्यन्यान्यपि शास्त्राणि तत्तन्महर्षिभिः मोक्षोपायप्रदर्शनपराणि प्रतिपादितानि। तथाहि आस्तिकदर्शनानि षट् न्यायः, वैशेषिकः, साङ्ख्यं, योगः, मीमांसा, वेदान्तश्चेति। तत्र न्यायमते निःश्रेयसलक्षणमोक्षोपायः पदार्थतत्त्वज्ञानं गौतममुनिना प्रपञ्चितमिति प्रदर्शितमेवाधस्तात्। वैशेषिकदर्शनस्य च कर्ता भगवान् कणादः, तेनापि "अथातो धर्मं व्याख्यास्यामः" इत्यारभ्य "तद्वचनादाम्नायस्य प्रामाण्यं" इत्यन्तैः सूत्रैः दशभिरध्यायैः "धर्मविशेषप्रसूतात् द्रव्यगुणकर्मसामान्यविशेषसमवायानां पदार्थानां साधर्म्यवैधर्म्याभ्यां तत्त्वज्ञानान्निःश्रेयसं" इत्यनेन मोक्षोपायः द्रव्यादिषट्पदार्थपरिज्ञानमिति प्रत्यपादि। साङ्ख्यदर्शनस्य च प्रणेता भगवान् कपिलमहर्षिः आध्यात्मिकाधिदैविकाधिभौतिकात्मकत्रिविधदुःखध्वंसरूपपुमर्थस्य साधनं चतुर्विंशतितत्त्वपरिज्ञानमिति "अथ त्रिविधदुःखात्यन्तनिवृत्तिः अत्यन्तपुरुषार्थः" इत्यारभ्य "यद्वा तद्वा तदुच्छित्तिः पुरुषार्थः तदुच्छित्तिः पुरुषार्थः" इत्यन्तैः सूत्रैः षड्भिरध्यायैः सिद्धान्तयामास। इदमेव कापिलमतं निरीश्वरसाङ्ख्यमिति प्रसिद्धम्। सेश्वरसाङ्ख्यं तु योगः, तस्य कर्ता भगवान् पतञ्जलिः, तेनच "अथ योगानुशासनं" इत्यारभ्य "पुरुषार्थशून्यानां गुणानां प्रतिप्रसवः कैवल्यं स्वरूपप्रतिष्ठा वा चितिशक्तिः" इत्यन्तैः सूत्रैः समाधिसाधनविभूतिकैवल्यनामकपादचतुष्टयेन क्लेशकर्मविपाकादिभिः अपरामृष्टपुरुषविशेषरूपेश्वरतत्त्वं प्रतिपादितम्। मीमांसाशास्त्रं हि भगवज्जैमिनिमुनिप्रणीतं साङ्गोपाङ्गवेदाध्ययनसमधिगम्यधर्माधर्मप्रदर्शनाय "अथातो धर्मजिज्ञासा" इत्यारभ्य "विद्यते वान्यकालत्वात् यथा याज्या-

सम्प्रैषः ” इत्यन्तैः सूत्रैः षोडशलक्षणैः बह्वधिकरणगर्भितं प्रपञ्चितम् । वेदान्तशास्त्रस्य तु कर्ता भगवान् बादरायणः अखण्डसच्चित्सुखस्वरूपं जगज्जन्मस्थितिलयकर्तृत्वलक्षणलक्षितं जीवाभिन्नं अशनायाद्यतीतं अपेतब्रह्मक्षत्रादिभेदं असंसारि ब्रह्मतत्त्वं “ अथातो ब्रह्मजिज्ञासा ” इत्यारभ्य “ अनावृत्तिः शब्दादनावृत्तिः शब्दात् ” इत्यन्तैः सूत्रैः चतुर्भिरध्यायैः प्रपञ्चयामास । अस्यैव वेदान्तशास्त्रस्य उत्तरमीमांसा इति नामान्तरं वरीवर्ति । अनयोश्च पूर्वोत्तरमीमांसयोः एकवाक्यतां समामनन्ति रामानुजमतानुयायिनः । परंतु तयोः भिन्नशास्त्रत्वं समर्थितमद्वैतग्रन्थेषु । यतः एतयोर्द्वयोः शास्त्रयोरनुबन्धचतुष्टयभेदो विद्यते । तथाहि पूर्वमीमांसायां धर्माधर्मौ विचार्यतया विषयौ, उत्तरमीमांसायां परं ब्रह्म, अत एव जैमिनिना “ अथातो धर्मजिज्ञासा ” इति धर्मस्यैव जिज्ञास्यत्वेन वर्णनं, बादरायणेन च “ अथातो ब्रह्मजिज्ञासा ” इति ब्रह्मणः जिज्ञास्यत्वेनोपवर्णनमपि सङ्गच्छते । पूर्वमीमांसायां वेदाध्ययनवतः अधिकारित्वं, उत्तरमीमांसायां तु नित्यानित्यवस्तुविवेकः इहामुत्रार्थफलभोगविरागः शमदमोपरतितितिक्षाश्रद्धासमाधानानि मुमुक्षुत्वमित्येवं साधनचतुष्टयसम्पन्नस्यैवाधिकारः । पूर्वमीमांसायाः वेदार्थविचारद्वारा धर्माधर्मपरिज्ञानं प्रयोजनं, ब्रह्ममीमांसायास्तु पराभिन्नस्य निर्गुणस्यात्मनः साक्षात्कारः प्रयोजनं एवमनयोरुभयोरनुबन्धचतुष्टयभेदोऽवगन्तव्यः । अपिच पूर्वोत्तरमीमांसयोरैकशास्त्र्ये ब्रह्ममीमांसोपक्रमे “ अथातो ब्रह्मजिज्ञासा ” इत्यथकरणमसङ्गतं स्यात् । परंच “ मध्वादिष्वसंभवादनधिकारं जैमिनिः ” इति ब्रह्ममीमांसायां जैमिनेः पृथङ्नामग्रहणं शास्त्रभेद एव घटते । अपिच पूर्वोत्तरयोः मीमांसयोः अभेदे सर्वसंप्रतिपन्नं दर्शनषट्कत्वं व्याहन्येत, अपिच पूर्वमीमांसायां “ आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानां ” इति सूत्रेण जैमिनिना वेदघटकविधिवाक्यानामेव प्रामाण्यं, इतरेषामर्थवादरूपतया स्तुतिनिन्दापरतया विधिशेषतयैव प्रामाण्यम् । वैयासिकनयेतु ब्रह्मणः सिद्धवस्तुस्वरूपत्वात् सिद्धवस्तुप्रतिपादकवाक्यानामपि प्रामाण्यं सिद्धान्तितमित्यनयोः शास्त्रयोर्महान् भेद इत्यन्यत्र द्रष्टव्यमिति सुधीभिर्विभावनीयम् ॥

प्रकृतेऽस्मिन् न्यायशास्त्रे सूत्रकर्ता भगवान् अक्षपाद इति पूर्वमेव न्यरूपि, तस्य भाष्यकर्ता भगवान् वात्स्यायनमुनिः । तस्मिन् न्यायभाष्ये दिङ्नागप्रभृतिभिर्नास्तिकैर्दूषिते तदीययुक्त्याभासान् निरस्य न्यायभाष्यस्य गाम्भीर्यं सिद्धान्तयन् उद्योतकरः न्यायवार्तिकं प्रणिनाय । अस्य च टीका न्यायवार्तिकतात्पर्यटीकेति प्रसिद्धा विख्यातलोकातिशायिवैदुषीवैभवैः, सर्वतन्त्रस्वतन्त्रश्रीमद्वाचस्पतिमिश्रैः व्यरचि ।

“ यदक्षपादः प्रवरो मुनीनां शमाय शास्त्रं जगतो जगाद ।
कुतार्किकाज्ञाननिवृत्तिहेतुः विधीयते तस्य मया निबन्धः ॥ ” इति न्यायवार्तिकोक्त्या तत्रत्यकुतार्किकैरिति पदस्य दिङ्नागप्रभृतिभिर्नास्तिकैरिति टीकाकृद्व्याख्यानेन “ इच्छामि किमपि पुण्यं दुस्तरकुनिबन्धपङ्कमग्नानाम् ।
उद्योतकरगवीनामतिजरतीनां समुद्धरणात् ॥ ” इति तदीयोक्त्या च टीकाग्रन्थस्योत्कर्षः अवगम्यते । एभिरेव वाचस्पतिमिश्रैः योगसूत्रभाष्यव्याख्या, साङ्ख्यतत्त्वकौमुदी, न्यायकणिका, न्यायसूची, तत्त्वसमीक्षा, तत्त्वबिन्दुः, भामती इत्यनेके प्रबन्धाः निर्मिताः । तथाचोक्तं ब्रह्मसूत्रशाङ्करभाष्यव्याख्यायां भामत्यां तैरेव —

“ यन्न्यायकणिकातत्त्वसमीक्षातत्त्वबिन्दुभिः ।
यन्न्यायसाङ्ख्ययोगानां वेदान्तानां निबन्धनैः ॥

समर्चेषं महत्पुण्यं तत्फलं पुष्कलं मया ।
समर्पितमथैनेन प्रीयतां परमेश्वरः ॥ " इति । एत एव वाचस्पतिमिश्राः गृहस्थाश्रमे मण्डनमिश्र इति ख्यातस्य तुरीयाश्रमे सुरेश्वर इति ख्यातस्य अपरावतारभूता इति कथा जागर्ति । एभ्यः अर्वाचीनः श्रीमानुदयनाचार्यः तात्पर्यपरिशुद्धिनामकं न्यायवार्तिकतात्पर्यटीकाव्याख्यानं, न्यायकुसुमाञ्जलिनामकं स्वतन्त्रनिबन्धनं च निबन्धयामास । एवं न्यायनये प्राचीनप्रस्थानं व्याख्यातम् ॥

अथ श्रीमद्गङ्गेशोपाध्यायः प्रत्यक्षानुमानोपमानशब्दात्मकप्रमाणचतुष्टयवादिगौतमीयमतमवलम्ब्य, पदार्थविभागादिसन्दर्भावशेषेषु कणादमतप्रक्रियाः सङ्कटय्य, शास्त्रान्तरीयविषयान् हृदि निधाय, निरतिशयवाङ्माधुरीगुम्फितं निसर्गसुन्दरनिजधोरणीभिरलङ्कृतं प्रमाणचतुष्टयप्रामाण्यव्यवस्थापनपरं लोकोत्तरां नवीनन्यायमर्यादां प्रपञ्चयन्तं श्रीतत्त्वचिन्तामणिं नाम प्रत्यक्षादिखण्डचतुष्टयात्मकं युक्तिजालजटिलं बह्वर्थगर्भितं अतिसङ्क्षिप्तपदरचनानिर्मितं निखिलशास्त्रकृदादरणीयतमं न्यायग्रन्थं रचयामास । अस्य च ग्रन्थस्य गभीरिमाणमनुभाव्य तदानीन्तनैः शास्त्रकृद्भिः प्राचीनन्यायग्रन्थानप्यवज्ञाय अस्यैव ग्रन्थस्य व्याख्याने पठनपाठनयोश्चादरो विहितः । अस्य च गङ्गेशोपाध्यायस्य वाचस्पतिमिश्रापेक्षया अर्वाचीनत्वमवगन्तव्यम् । अत एव पक्षताग्रन्थे " मुमुक्षोः शब्दादात्मावगमेऽपि मननस्य मोक्षोपायत्वेन सिद्धिविशेषानुमतीच्छया आत्मानुमानं अत एव प्रत्यक्षपरिकलितमप्यर्थं अनुमानेन बुभुत्सन्ते तर्करसिकाः नहि करिणि दृष्टे चीत्कारेण तमनुमिमतेऽनुमातार इति वाचस्पतिवचनयोरविरोधः । अनुमित्सातद्विरहाभ्यां तदुपपत्तेः " इति वाचस्पतिवचनोदाहरणं सङ्गच्छते । काले च " राजकीयसभासु विद्वत्परीक्षार्थमागतैः पण्डितैः चिन्तामणेः नूतनव्याख्या ग्रथनीया " इति नियमेन बहुभिः पण्डितैः बह्वयो व्याख्याः अकारिषत तथापि तत्र मुख्यतया आदरणीयकोटिं प्रविष्टाः कतिचनैव व्याख्याः, श्रीजयदेवमिश्रेण विरचिता आलोकनामकव्याख्या, श्रीरुचिदत्तेन विरचिता प्रकाशनामकव्याख्या, श्रीमथुरानाथतर्कवागीशेन निर्मिता रहस्यनामकव्याख्या, श्रीरघुनाथशिरोमणिना कृता दीधितिनामकव्याख्या च । आसु च व्याख्यासु श्रीरघुनाथशिरोमणिकृतदीधितिरेव अतिसङ्क्षिप्ततया अन्यूनानतिरिक्तपदसन्दर्भणेन अनन्यसामान्यप्रतिभाविशेषविजृम्भितयुक्तिजालजटिलतया चोत्कर्षस्य परां कोटिमावहतीत्यत्र न्यायशास्त्रज्ञा एव प्रमाणम् ॥

अस्याश्च दीधितिव्याख्यायाः श्रीजगदीशतर्कालङ्कारेण श्रीगदाधरभट्टाचार्येण च व्याख्ये निरमायिषाताम् । अनयोर्मध्ये जागदीश्याः अनुमानखण्डः प्रायेणोत्तरदेशे पठनपाठनपरम्पराप्राप्तः परिदृश्यते । गदाधरीयं तु विविधपरिष्कारजटिलं मणिदीधित्योः प्रतिपदमर्थवर्णनेन सौलभ्येन च दाक्षिणात्यैरत्यन्तमाद्रियते । परंतु ग्रन्थस्यातिविस्तृतत्वात् तदीयानुमानखण्ड एव तत्रापि पञ्चलक्षणी, चतुर्दशलक्षणी, सिद्धान्तलक्षणं, सामान्यनिरुक्तिः, अवयवः, पक्षता, बाधः इति बाधान्तमेव पठनपाठनपरम्परायां प्रसिद्धम् । तदनन्तरं तेनैव प्रणीताः व्युत्पत्तिवादः, शक्तिवादः, प्रामाण्यवादश्च प्रायः पठ्यन्ते । गदाधरेण च स्वतन्त्रवादाः चतुःषष्टिः निर्मिता इति प्रसिद्धिः, तत्र कतिचनैवास्माभिरुपलभ्यन्ते, बहवो लुप्तप्रायाः अज्ञातवसतयश्च नोपलभ्यन्त इत्यास्तां विस्तरः ॥

क्रमेण च मणिदीधित्योः ग्रन्थयोरपि बालानां पठनं दुष्करमित्याकलय्य तदीयाशयमनुसृत्य नितरां सङ्ग्रहेण मणिकारोक्तमार्गेण काणादन्यायमतसङ्क्षेपरूपः भाषापरिच्छेदापरनामककारिकावळ्याख्यग्रन्थः श्रीविश्वनाथतर्कपञ्चाननेन कारिकारूपेण

निरमायि। अस्याश्च कारिकावल्याः मुक्तावलीनामकं व्याख्यारत्नं तेनैव निर्मितम्। अस्य च मुक्तावलीति नामकरणबीजमपि तदारम्भे "सद्द्रव्या गुणगुम्फिता" इति श्लोकेन तार्किकसिद्धान्ता एव मुक्ताः तासां आवलिः मुक्तावलिरिव विष्णोर्वक्षसि समर्पिता इति प्रतिपादकेन प्रदर्शितं, विस्तरस्तु तत्रैव द्रष्टव्यः। अनेन विश्वनाथपञ्चाननेन वात्स्यायनीयन्यायभाष्यस्य वृत्तिरपि विरचिता। मुक्तावल्याश्च प्रकाशाभिधं व्याख्यानं बालकृष्णात्मजमहादेवभट्टेन विरचयितुमारभ्य तत्सुतेन दिनकरभट्टेन समाप्तिमानिन्ये। प्रकाशस्य च तरङ्गिण्यभिधा व्याख्या श्रीरामरुद्रभट्टेन विरचिता आशब्दपरिच्छेदसमाप्तेः। अस्मत्पुस्तके मुक्तावली, दिनकरीयरामरुद्रीये, प्रभा, मञ्जूषा, गङ्गारामजटीयं इत्येता व्याख्याः प्रकाशिताः। तत्र "दिनकरशितिकण्ठौ यस्य कण्ठे लुठेतां स जयति शितिकण्ठं कण्ठशोषं विनैव" इति बहुधोपवर्णितत्वेन अविच्छिन्नपठनपाठनसम्प्रदायकत्वेन च दिनकरीयस्य गौरवं विदितचरमेवेति न तत्रास्माभिः नूतनतया वक्तव्यं किञ्चिदस्ति। यद्यप्येवं मुक्तावल्या दिनकरीयप्रभृतयो व्याख्याः प्रसिद्धाः, तथापि विविच्य मूलभाववर्णनेन प्रतिपदमवतारिकादानेन अतिललितपदसन्दर्भणेन व्याख्याभेदप्रकारप्रदर्शनेन न्यायसूत्राणां, भाष्यस्य, कुसुमाञ्जलेः, चिन्तामणेः, जगदीशस्य, गदाधरस्य च स्वोक्तिप्रामाण्यव्यवस्थापनाय तत्र तत्र उदाहरणेन च मुक्तावलीस्थवाक्यानां नवीनशाब्दबोधपरिष्काररीत्या वाक्यार्थवर्णनेन बहुत्र दिनकरव्याख्याखण्डनेनच व्याख्यानान्तराणि श्रीनृसिंहशास्त्रिविरचिता प्रभानाम्नी व्याख्या नितरामतिशेत इति व्याख्यातारतम्यपरीक्षाकुतूहलिनां मानसमेव प्रमाणम्। अनेनैव नृसिंहशास्त्रिणा तर्कसङ्ग्रहदीपिकायाः नृसिंहप्रकाशिकाभिधानं व्याख्यानं विरचितम्। मञ्जूषानाम्नी मुक्तावलीटीका पट्टाभिरामशास्त्रिविरचिता अतिविस्तृता दुरूहपरिष्कारघटिता क्रोडपत्रवत् विद्वत्सभासु वादवेळायां पाण्डित्यप्रकटनायोपयुज्येत। अयं पट्टाभिरामः प्रभाकर्तुः नृसिंहशास्त्रिणः शिष्यः, अनेन तर्कसङ्ग्रहस्य दीपिकायाश्च खिलटिप्पण्यौ व्युत्पत्तिवादव्याख्या च विरचिताः। मञ्जूषाग्रन्थश्च आत्मवादान्तं लिखित इति प्रसिद्धिः, परंतु अकाशग्रन्थे शब्दो न स्पर्शवद्विशेषगुण इति अलीकपर्यन्तमेवास्माभिरधिगतः तस्मादसम्पूर्णैव मञ्जूषा मुद्रिता॥

इदानीं न्यायदर्शनस्य दर्शनान्तरेभ्य कतिपयेषु मुख्येषु विषयेषु विसंवादाः प्रदर्श्यन्ते। प्रथमं तावत् गौतमोक्तरीत्या पदार्थाः षोडश प्रमाणप्रमेयादिभेदात्। वैशेषिकनयेतु द्रव्यगुणकर्मसामान्यविशेषसमवायभेदेन पदार्थाः षट्। अभावरूपपदार्थः अतिरिक्तः अङ्गीकरणीय इति नव्याः, तदनुरोधेन नव्यन्यायप्रवर्तकेन गङ्गेशोपाध्यायेनापि पदार्थाः सप्तेत्यङ्गीकृतमत एवोपमानचिन्तामणौ सप्तपदार्थभिन्नतया शक्तिसादृश्यादीनां अतिरिक्तपदार्थत्वमाशङ्कितमिति मुक्तावलीकारोक्तिरपि सङ्गच्छते। शक्तिरतिरिक्तः पदार्थ इति मीमांसकाः, सादृश्यमतिरिक्तः पदार्थ इत्यालङ्कारिकाः, तमसः नवद्रव्यातिरिक्तद्रव्यत्वमिति मीमांसकाः, तस्य तेजोऽभावरूपत्वात् न द्रव्यत्वमिति नैयायिकाः, अभावस्याधिकरणात्मकत्वमिति वेदान्तिनः। न्यायनये प्रत्यक्षानुमानोपमानशब्दाः चत्वारि प्रमाणानि, वैशेषिकनये प्रत्यक्षानुमाने, मीमांसकानां मते प्रत्यक्षानुमानोपमानशब्दार्थापत्त्यनुपलब्धिभेदात् प्रमाणानि षट्। वेदान्तिनां मते मीमांसकमतं नैयायिकमतं वानुरुध्य प्रमाणविभागो बोध्यः, सम्भवैतिह्ये अपि प्रमाणे इति पौराणिकाः, बौद्धमते प्रत्यक्षानुमाने एव प्रमाणे, चार्वाकाणां प्रत्यक्षमात्रं, प्रमाणविभागानुरोधेन तत्तन्मतेषु प्रमितिविभागोऽवगन्तव्यः। तथाहि न्यायनये प्रत्यक्षानुमित्युपमितिशाब्दभेदात् प्रमितयश्चतस्रः, प्रमितिर्नाम यथार्थज्ञानं पुरोवर्तिनि घटे इन्द्रियसन्निकर्षाज्जायमानं अयं घट इत्याकारकं घट-

विशेष्यकघटत्वप्रकारकसमवायसंसर्गकज्ञानं प्रत्यक्षम् । पर्वते धूमं पश्यतः वह्निधूमयोः नियतसहचारज्ञानवतः पर्वतो वह्निमान् धूमादित्याकारिका पर्वतविशेष्यकवह्निप्रकारकसंयोगसंसर्गकज्ञानमनुमितिः । गोसदृशो गवय इत्याप्तवाक्यं श्रुत्वा गवयेऽगृहीतशक्तिकः वनं गच्छन् तत्र गवयं पश्यन् अतिदेशवाक्यार्थं स्मरन् अयं गवयपदवाच्य इति प्रत्येति स एव शक्तिग्रहः उपमितिरित्युच्यते । गामानय यजेतेत्यादिवाक्यश्रवणानन्तरं गोकर्मकानयनानुकूलकृतिमानित्यादयः ये बोधा उत्पद्यन्ते ते शाब्दप्रमितावन्तर्भूताः । पीनो देवदत्तो दिवा न भुङ्क्ते इत्यत्र देवदत्तस्य दिवाऽभुञ्जानस्य पीनत्वं रात्रिभोजनं विना नोपपद्यते तस्मात् पीनत्वान्यथानुपपत्त्या रात्रिभोजनं यत्कल्प्यते सा अर्थापत्तिः । अनुपलब्धिर्नाम अभावप्रत्यक्षं यथा भूतले घटो नास्तीत्याकारकघटाभावप्रत्यक्षस्य तत्र घटानुपलब्धिरेव प्रमाणं, शते पञ्चाशदित्यत्र संभवप्रमाणं, इह वटे यक्षस्तिष्ठतीत्यत्र ऐतिह्यं । प्रत्यक्षत्वं साक्षात्करोमि, अनुभवामि, अध्यक्षयामीत्यादिप्रतीतिसाक्षिकं अनुमितित्वं अनुमिनोमीत्यनुव्यवसायवेद्यं, उपमितित्वं उपमिनोमीति प्रतीतिसिद्धं, शाब्दत्वं च शाब्दयामीत्यनुभवगम्यं, अर्थापत्तिस्तु व्यतिरेक्यनुमानेऽन्तर्भूता, अनुपलब्धिः प्रतियोगिसत्त्वप्रसञ्जनप्रसञ्जितप्रतियोग्यनुपलब्धिसहकृतेन्द्रियरूपप्रत्यक्षप्रमाणेन चरितार्था, सम्भवस्तु अनुमानविशेष एव, ऐतिह्यंचाज्ञातमूलवक्तृकशब्द एवेति न्यायमतसिद्धान्तः । एवं चतुर्विधायाः प्रमायाः यथार्थत्वापरपर्यायं प्रमात्वं नाम तद्वति तत्प्रकारकत्वं, ईदृशस्य ज्ञानप्रामाण्यस्य स्वतोग्राह्यत्वं वा परतोग्राह्यत्वं वेत्यत्र बहुधा विप्रतिपत्तिः क्रियते शास्त्रकृद्भिः । सर्वाण्यपि ज्ञानानि प्रमाणानीत्येव प्रथमं गृह्यते , सति तु औत्तरकालिके विषयबाधे अप्रमात्वं गृह्यत इति स्वतोग्राह्यत्ववादिनां मतम् । ज्ञानस्य प्रामाण्यं ज्ञानोत्पत्तिसमये ज्ञायत एवेति न नियमः अनभ्यासदशायां जलज्ञानं प्रमा न वा इति संशयस्योदयात् इति परतोग्राह्यत्ववादिनः । अयंच प्रामाण्यविचारः बहोः कालादारभ्य तान्त्रिकाणां विवादरङ्गीभूतः । श्रूयते हि भगवत्पादश्रीमच्छङ्कराचार्याणां दिग्विजययात्रायां मीमांसककमूर्धन्यमण्डनमिश्रजिगीषया माहिष्मतीं प्राप्तवद्भ्यः आचार्येभ्यः जलानयनार्थमागताभिः मण्डनमिश्रगृहदासीभिः निवेदितानि तदीयगृहचिह्नानि । यथा—

> " स्वतः प्रमाणं परतः प्रमाणं कीराङ्गना यत्र गिरं गिरन्ति ।
> द्वारस्थनीडान्तरसन्निरुद्धा जानीहि तन्मण्डनपण्डितौकः ॥
> फलप्रदं कर्म फलप्रदोऽजः कीराङ्गना यत्र गिरं गिरन्ति ।
> द्वारस्थनीडान्तरसन्निरुद्धा जानीहि तन्मण्डनपण्डितौकः ॥
> जगद्ध्रुवं स्यात् जगदध्रुवं स्यात् कीराङ्गना यत्र गिरं गिरन्ति ।
> द्वारस्थनीडान्तरसन्निरुद्धा जानीहि तन्मण्डनपण्डितौकः ॥ " इति ॥

अत्र प्रथमश्लोके वेदाः अनादितया स्वतःप्रमाणं वा पौरुषेयत्वेन परतःप्रमाणं वा इत्येकोऽर्थः, ज्ञानस्य प्रामाण्यं स्वतः ज्ञानजनकसामग्र्या गृह्यते उत परतः तद्भिन्नसामग्र्या गृह्यत इति विप्रतिपत्तिरित्यपरोऽर्थः । तथाहि अस्यैव परिष्कारविशेषान् हृदि निधाय गङ्गेशोपाध्यायैः तत्त्वचिन्तामणौ प्रत्यक्षखण्डे प्रामाण्यवादे प्रञ्चविप्रतिपत्तयो दर्शिताः ॥ तत्र गुरुभाट्टमुरारिमिश्रात्मकत्रिविधमीमांसकसम्मतः स्वतोग्राह्यत्वपरिष्कारः तर्कसङ्ग्रहदीपिकायामेव प्रदर्शितः " ज्ञानप्रामाण्यं तदप्रामाण्याग्राहकयावज्ज्ञानग्राहकसामग्रीग्राह्यं नवा " इति ग्रन्थेन । तत्र विधिकोटिः स्वतस्त्वं, निषेधकोटिः परतस्त्वं, स्वतस्त्वं मीमांसकानां वेदान्तिनां च, परतस्त्वं नैयायिकानां मते । तज्ज्ञानविषयकज्ञानाजन्यज्ञानग्राह्यं

न वा इति द्वितीया विप्रतिपत्तिः । स्वाश्रयग्राहकेण गृह्यत एव न वा इति तृतीया विप्रतिपत्तिः । स्वाश्रयेण गृह्यत एव नवेति प्रत्येकमेव वेति चतुर्थी विप्रतिपत्तिः । यद्वा घटोऽयमिति ज्ञानप्रामाण्यं एतज्ज्ञानग्राह्यं नवा एतज्ज्ञानग्राहकमात्रग्राह्यं नवा इति पञ्चमी विप्रतिपत्तिः । एवं पञ्चविप्रतिपत्तयः प्रामाण्यवादे प्रदर्शिताः । अथ ज्ञप्त्युत्पत्तिभेदेन स्वतस्त्वपरतस्त्वयोः विचारः ग्रन्थावलोकनेनैव विशदीभविष्यतीति विस्तरभिया नास्माभिर्वर्णितः ॥

एवं कर्मण एव फलप्रदत्वं नतु ईश्वरस्येति मीमांसकानां सिद्धान्तः तैरीश्वरानङ्गीकारात् अत एव पूर्वतन्त्रे देवताधिकरणे " उपासनादौ परं ध्यानमात्रमाहार्यं तस्येति जैमिनिमतनिष्कर्षः, मम त्वेवं वदतोऽपि वाणी दुष्यतीति हरिस्मरणमेव शरणम् " इति खण्डदेवेनोक्तम् । जगद्ध्रुवं स्यादित्यस्य श्लोकस्य जगत्सत्यत्वं वेदान्तीतरमतसिद्धं, वेदान्तिनां मतेतु मिथ्यात्वमित्यभिप्रायः ॥

अयथार्थज्ञानं अप्रमा, अयथार्थत्वं नाम तदभाववति तत्प्रकारकत्वं तच्च सर्वेषां परतोग्राह्यमेव । सर्वं ज्ञानं प्रमा अप्रमैव नास्तीत्यख्यातिवादिनः प्राभाकराः, तन्मते शुक्तौ क्वचिद्रजतार्थिप्रवृत्तिः रजतस्मृतिपुरोवर्तिज्ञानाभ्यामेव निर्वहति न तदर्थं शुक्तौ इदं रजतमित्येकाकारकज्ञानाङ्गीकारः प्रवृत्तिं प्रति इष्टभेदाग्रहस्यैव कारणत्वाङ्गीकारात् । वेदान्तिनां मते तु शुक्तिरजतादिभ्रमस्य संसारकालीनबाधविषयप्रातिभासिकरजतादिविषयकत्वं, तथा च तादृशभ्रमकालेऽनिर्वचनीयरजतं विषयीक्रियत इति अनिर्वचनीयख्यातिवादिनो वेदान्तिनः । नच रजतोत्पादकानां रजतावयवादीनां अभावे शुक्तौ कथं रजतमुत्पद्यत इति वाच्यं, नहि लोकसिद्धसामग्री प्रातिभासिकरजतोत्पादिका किंतु विलक्षणैव तथाहि काचादिदोषदूषितलोचनस्य पुरोवर्तिद्रव्यसंयोगात् इदमाकारा चाकचिक्याकारा काचिदन्तःकरणवृत्तिरुदेति तस्यां च वृत्तौ इदमंशावच्छिन्नं चैतन्यं प्रतिविम्बते तत्र वृत्तेः वहिर्निर्गमेन इदमंशावच्छिन्नचैतन्यं वृत्त्यवच्छिन्नचैतन्यं प्रमातृचैतन्यं चाभिन्नं भवति । ततश्च प्रमातृचैतन्याभिन्नविषयचैतन्यनिष्ठा शुक्तित्वप्रकारिका अविद्या चाकचिक्यादिसादृश्यसन्दर्शनसमुद्बोधितरजतसंस्कारसध्रीचीना काचादिदोषसमवहिता रजतरूपार्थाकारेण रजतज्ञानाभासाकारेण च परिणमत इत्यनिर्वचनीयख्यातिवादः । शशविषाणादिवदत्यन्तमसदेव वस्तु प्रतीयत इत्यसत्ख्यातिवादिनो माध्वाः, तैः ज्ञानस्य विषयसत्ताव्याप्यत्वानङ्गीकारात् । रामानुजमतानुयायिनस्तु स्वप्ने भ्रमे च सत्यमेव रजतादिकमुत्पद्यते, अत एव च तत्प्रयुक्तसुखदुःखे अप्यनुभवसिद्धे इति सत्ख्यातिवादमङ्गीकुर्वन्ति । नैयायिकास्तु प्रवृत्तिं प्रति इष्टसाधनताज्ञानस्य हेतुत्वात् सत्यरजतस्थले पुरोवर्तिविशेष्यकरजतत्वप्रकारकज्ञानस्य लाघवेन प्रवृत्तिजनकतया शुक्तावपि रजतार्थिप्रवृत्तिजनकत्वेन विशिष्टज्ञानस्यैव कल्पनावश्यकतया शुक्तिविशेष्यकरजतत्वप्रकारकं ज्ञानं अङ्गीक्रियत इत्यन्यथाख्यातिवादमङ्गीकुर्वन्तीत्यास्तां विस्तरः ॥

पुस्तकस्यास्य च मुद्रणविषये मातृकाप्रदानेन उपकृतवद्भ्यः कुम्भकोणवासिश्रीनिवासपाठ्राचार्येभ्यः मन्नाल्कट्टै गोविन्दाचार्येभ्यः, विल्लियम्बाकं नरसिंहाचार्येभ्यः, श्रोत्रियं-नावल्पाकं रामानुजाचार्येभ्यः, वाराणसीस्थराजकीयसंस्कृतपाठशालामीमांसोपाध्यायश्रीचिन्नस्वामिशास्त्रिभ्यश्च निरतिशयं कार्तज्ञ्यमावेदयामः ॥ इति सर्वतःशिवम् ॥

मैलापूर्, मद्रास्.
२८—९—१९२३

सि. शङ्करराममशास्त्री,
एडिटर्.

॥ श्रीः ॥

विषयानुक्रमणिका

ॐ

॥ श्रीः ॥

श्रीगुरुचरणारविन्दाभ्यां नमः ।

# कारिकावली ।

मुक्तावली-प्रभा-मञ्जूषा-दिनकरीय-रामरुद्रीयसमन्विता ।

नूतनजलधररुचये गोपवधूटीदुकूलचोराय ।
तस्मै कृष्णाय नमः संसारमहीरुहस्य बीजाय ॥ १ ॥

चूडामणीकृतविधुर्वलयीकृतवासुकिः ।
भवो भवतु भव्याय लीलाताण्डवपण्डितः ॥ १ ॥

## प्रभा.

कामाक्षीपदपाथोजे जप्त्वा मुक्तावलीप्रभा ।
श्रीरायनरसिंहाख्यपण्डितेन चिकीर्ष्यते ॥

तत्र प्रारिप्सितग्रन्थसमाप्तिविरोधिविघ्नव्यूहविध्वंसनविचक्षणां परमेश्वरप्रार्थनां आदौ निबध्नाति— **चूडामणीकृतेति** ॥ अचूडामणिः चूडामणिः संपद्यमानः कृतः चूडामणीकृतः, चूडामणीकृतः विधुः येन स तथेत्यर्थः । एवं वलयीकृतेत्यत्रापि विग्रहो ज्ञेयः । ननु—अशिरोभूषणस्य विधोः परमेश्वरशिरोभूषणत्ववर्णने

## मञ्जूषा.

प्रणम्य दक्षिणामूर्तिमक्षीणगुणलक्षणम् । मुक्तावलीस्थवाक्यार्थनिरुक्तिः क्रियते मया ॥ १ ॥
मुक्तावलीमनेकप्राक्तनटीकादुरुक्तिधूलिमलात् । गोपायतादियं मे तार्किकसिद्धान्तरत्नमञ्जूषा ॥ २ ॥
अनिदम्पूर्वगृहीतैर्घटितां पट्टाभिरामकृतिनेमाम् । मञ्जूषां युक्तिमणिभिरादत्तां कोऽपि गोपिकाजारः ॥ ३ ॥

भाषापरिच्छेदव्याख्यानमारभमाणो विश्वनाथपञ्चाननः स्वेष्टदेवतां प्रार्थयते—**चूडामणीकृतेति** ॥

## दिनकरीयम् .

लक्ष्मीपादयुगं प्रणम्य पितरं श्रीबालकृष्णाभिधं
भारद्वाजकुलाम्बुधौ विधुमिव श्रीगौरवास्याम्बुजात् ।
ज्ञात्वाऽशेषमतं मितेन वचसा सिद्धान्तमुक्तावली-
गूढार्थांस्तनुते यथामति महादेवः परेषां मुदे ॥ १ ॥

## रामरुद्रीयम् ।

तातस्य तर्कसरसीरुहकाननेषु रामेश्वरस्य तरणेश्चरणे प्रणम्य ।
श्रीरामरुद्रसुकृती कृतिनां हिताय लीलावशात्किमपि कौतुकमातनोति ॥
जाने कदाचिदपि नैव शिवस्वरूपात्तातात्पुनः परमदैवतमन्यदत्र ।
तस्मादिमां कृतिमिहाघतरङ्गिणीत्वात्पाथाय तच्चरणयोः परिकल्पयामि ॥
तरङ्गिणीयं सफलोक्तिवाचा मुदे बुधानां तरसा विदे च ।
भूयात्सदालं निखिलाण्डभाण्डकीर्तिप्रभाजातविभूषितानाम् ॥

सिद्धान्तमुक्तावलीव्याख्यां चिकीर्षुर्महादेवः प्रारिप्सितग्रन्थविघ्नविघाताय कृतं तातनमस्काररूपं मङ्गलं शिष्यशिक्षार्थमादौ निबध्नाति—**लक्ष्मीति** ॥ **गूढार्थांस्तनुते** ॥ विस्तारयतीत्यर्थः । अर्थस्य विस्तारो

## प्रभा.

अचलयस्य वासुकेः परमेश्वरहस्तभूषणत्ववर्णने च प्रयोजनाभावः । न च परमेश्वरस्यासाधारणसामर्थ्यद्योतनाय चन्द्रवासुक्योस्तद्वर्णनमिति वाच्यम् । चूडामणीकृतविधुत्वादिसामर्थ्यापेक्षया त्रिपुरसंहारादिरूपातिशयसामर्थ्यस्य परमेश्वरे सत्त्वेन तदप्रतिपाद्य, उक्तसामर्थ्यप्रतिपादने बीजाभाव इत्याशङ्कां निमित्तप्रतिपादनेन परिहरति—**लीलेति** ॥ लीलया ताण्डवं नर्तनं तत्र पण्डितः तदभिज्ञ इत्यर्थः । पार्वत्यास्सन्तोषापादकनर्तनक्रियाकर्तेति

## मञ्जूषा.

अचूडामणिश्चूडामणिः कृतश्चूडामणीकृतः तादृशो विधुर्येनेति विग्रहः । अत्र विग्रहवाक्ये चूडासंयोगित्वरूपचूडामणिसादृश्यविशिष्टस्य निर्वाहकतासंबन्धेन कृधात्वर्थे कृतौ व्यापारे वान्वयः । नामार्थधात्वर्थयोरपि क्वचिद्भेदान्वयस्वीकारात् । उपादानताख्यविषयतारूपं निवर्तनीयधर्मवत्त्वरूपं वा यत्कर्मत्वं तद्विशिष्टो निष्ठार्थः । तस्य चाचूडामणिपदार्थे पूर्वकालावच्छिन्नचूडासंयोगित्वरूपचूडामणिसादृश्याभावविशिष्टे तादात्म्यसंबन्धेनान्वयः । तथाच चूडासंयोगित्वविशिष्टनिर्वाहककृत्युपादानतावदभिन्नस्तन्निर्वाहकव्यापारनिवर्तनीयधर्मवदभिन्नो वा पूर्वकालावच्छिन्नचूडासंयोगित्वाभाववानित्याकारकोऽचूडामणिश्चूडामणिःकृत इति वाक्यजन्यबोधः । चूडासंयोगोत्पादिकायाः कृतेर्व्यापारस्य वा चूडासंयोगित्वविशिष्टनिर्वाहकत्वमक्षतम् । तन्निवर्तनीयधर्मश्चूडासंयोगित्वाभाव एव । निर्वाहकत्वनिवर्तनीयत्वे च स्वरूपसंबन्धविशेषरूपे, स्ववृत्तिधर्मप्रयोजकत्वरूपं वा निर्वाहकत्वं, स च धर्मश्चूडासंयोगित्वमेव, स्वप्रयोज्याभावप्रतियोगित्वरूपं वा निवर्तनीयत्वमिति न दोषः । अथवाऽचूडामणिपदार्थस्य पूर्वकालावच्छिन्नचूडासंयोगित्वाभाववतस्तादात्म्येन चूडामणिपदार्थेऽन्वयः । तस्य च स्वनिष्ठधर्मप्रयोजकत्वरूपनिर्वाहकत्वसंबन्धेन कृधात्वर्थेऽन्वयः । स च यदि कृतिरूपः तदोपादानतारूपं कर्मत्वं निष्ठार्थतावच्छेदकं, यदि व्यापाररूपस्तदा स्वप्रयोज्यधर्मवत्त्वरूपम् । तथाच पूर्वकालावच्छिन्नचूडासंयोगित्वाभाववदभिन्नो यश्चूडासंयोगी तन्निष्ठधर्मप्रयोजिका या कृतिस्तदुपादानमिति तादृशव्यापारप्रयोज्यधर्मवानिति वा बोधः । स च धर्मश्चूडासंयोगित्वमेव । अथवाऽचूडामणिपदार्थस्य निष्ठान्तार्थविशेषणत्वमभ्युपेयते । तथाच पूर्वकालावच्छिन्नचूडासंयोगित्वाभाववदभिन्नश्चूडासंयोगित्वविशिष्टनिर्वाहकव्यापारप्रयोज्यधर्मवानिति बोधः । यद्वा अचूडामणिरित्यस्य चूडामणिः कृत इत्यस्य च न परस्परान्वितार्थकत्वमुपेयते । तथाहि । चूडामणीकृतविधुरित्येतत् कृत्स्नमेव युगपद्यदा विगृह्यते तदाऽचूडामणिश्चूडामणिः कृतो विधुर्येनेति विग्रहवाक्यं निष्पद्यते । तत्राचूडामणिरित्यस्य येन चूडामणिः कृत इत्यस्य च विधुपदार्थे एकत्र द्वयमिति रीत्याऽन्वयः । येनेत्यत्र तृतीयार्थः कर्तृत्वम् । तच्च कृतेर्धात्वर्थत्वे आश्रयत्वरूपं, व्यापारस्य तथात्वे च कृतिरूपम् । तथाच पूर्वकालावच्छिन्नचूडामणित्वाभाववदभिन्नश्चूडामणित्वविशिष्टनिर्वाहकयदाश्रयककृत्युपादानाभिन्नस्तन्निर्वाहकयन्निष्ठकृति-जन्यव्यापारप्रयोज्यधर्मवदभिन्नो वा विधुरित्यन्वयबोधः । यत्र तु चूडामणीकृत इत्येतावदेव विगृह्यते तत्राचूडामणिश्चूडामणिः कृत इति विग्रहवाक्ये चूडामणिः कृत इत्यनेनैको विशिष्टार्थः प्रत्याय्यते। अचूडामणिरित्यत्र तु यदि चूडामणित्वं चूडामणिशब्दार्थः नञर्थश्च पूर्वकालावच्छिन्नाभाववानित्युच्यते, तदाऽचूडामणिरित्यनेनाप्येको विशिष्टार्थः । यदि च चूडामणिपदमेव पूर्वकालावच्छिन्नचूडामणित्वाभाववल्लाक्षणिकं नञ्पदं तात्पर्यग्राहक-

## दिनकरीयम्.

तत्र तावद्भाषापरिच्छेदव्याख्यानं चिकीर्षुः विश्वनाथपञ्चाननो निर्विघ्नपरिसमाप्तये कृतस्येश्वरनिर्देशरूपमङ्गलस्य शिष्या अप्येवं कुर्युरिति शिष्यशिक्षार्थं निबन्धनं कुर्वन्नीश्वरं प्रार्थयते—**चूडामणीकृतेति** ॥ **लीले-**

## रामरुद्रीयम्.

नाम नानाजनसम्बन्धः । स च सम्बन्धः प्रकृते स्वविषयकज्ञानवत्त्वमेवेति भावः ॥ **तत्र तावदिति** ॥ निपातो वाक्यालङ्कारे । **शिष्या अप्येवं कुर्युरितीति** ॥ अत्रेतिशब्दस्य उक्ताकारकाभिप्रायोऽर्थः । इतिशब्दस्याव्ययतया तृतीयान्तत्वेन शिष्या अप्येवं कुर्युरित्याकारकाभिप्रायेणेत्यर्थः पर्यवसितः । एतेन शिष्या अप्येवं कुर्युरित्याकारकज्ञानेच्छाशब्दानां शिष्यशिक्षानामकतया, कुर्युरितिशिष्यशिक्षायै इति ग्रन्थासंगतिः,

## प्रभा.

फलितोऽर्थः । शृङ्गारभावजक्रियाया एव लीलात्वात् । तथाच अवश्यकर्तव्यं नर्तनं भूषणं विना न शोभत इति

## मञ्जूषा.

मित्युच्यते, तदाऽचूडामणिरित्यस्य न शाब्दबोधजनकत्वं, किन्तु पदार्थोपस्थितिमात्रजनकत्वम्, कश्चिदित्यादि-पदार्थान्तरमध्याहृत्य तदर्थे अचूडामणिरित्यस्य चूडामणिः कृत इत्यस्य चैकत्रद्वयमिति रीत्या अन्वय इति वास्तु। यद्वा अचूडामणिश्चूडामणिः कृतो विधुर्येनेत्यत्र अचूडामणित्वविशिष्टे विधौ येन चूडामणिः कृत इत्यस्यान्वयः। अचूडामणिश्चूडामणिः कृत इत्येतावन्मात्रविग्रहे त्वचूडामणित्वविशिष्टे अध्याहृतकश्चित्पदार्थे तदन्वय इति त एते पञ्चकल्पाः । तत्र प्रथमकल्पे हारीकृतमौक्तिको मालाकार इत्यत्राहारो हारः कृतानि मौक्तिकानीति विग्रहो नोपपद्यते। कृतशब्दस्य विशेष्यनिघ्नतया अहारपदसमानलिङ्गवचनकत्वापत्तेः। यत्पदार्थस्य यत्पदार्थेऽभेदसंबन्धे-नान्वयः, तयोस्समानलिङ्गवचनकत्वनियमात् । तत्र हि सन्दर्भविशेषविशिष्टमौक्तिकसमुदायो हारशब्दार्थः । पूर्वकालावच्छिन्नसन्दर्भविशेषाभाववान् अहारशब्दार्थः । तथाच सन्दर्भविशेषविशिष्टमौक्तिकसमुदायनिर्वाहक-यत्कर्तृकव्यापारनिवर्तनीयधर्मवदभिन्नो यः पूर्वकालावच्छिन्नसन्दर्भविशेषाभाववान् तदभिन्नानि मौक्तिकानीति प्रथमकल्परीत्या बोधो वाच्य इति । किन्तु अहारो हारः कृतः मौक्तिकानि येनेत्येव तत्कल्पे विग्रहो वाच्यः। एवं हारीकृतानि मौक्तिकानि मालाकारेणेत्यत्र हारीकृतानीत्यस्य अहारो हारः कृत इत्येव विग्रहो वाच्यः। द्वितीयादिकल्पेषु तु हारीकृतमौक्तिक इति कृत्स्नविग्रहे कृतशब्दार्थस्य मौक्तिकशब्दार्थ एवाभेदेनान्वयात्तस्य तत्समानलिङ्गवचनकता । हारीकृतानि मौक्तिकानीत्यत्र हारीकृतानीत्येतद्विग्रहे कृतशब्दार्थाभेदान्वयिविशेष्य-वाचकपदान्तरासमभिव्याहारेऽपि विशेष्यनिघ्नपदानां विशेष्यवाचकपदासमभिव्याहारे स्वान्वययोग्यसंनिहित-वाक्यान्तरस्थितपदसमानलिङ्गवचनकतास्वारस्येन कृतशब्दस्य मौक्तिकशब्दसमानलिङ्गवचनकता। एवं कश्चि-दित्यादिशब्दान्तराध्याहारपक्षेऽपि सर्वनाम्नां यत्पदोपस्थितार्थपरामर्शित्वं तत्पदसमानलिङ्गवचनकत्वनिय-

## दिनकरीयम्.

ति ॥ इदं च विशेष्यं, नातः समाप्तपुनरात्तत्वदोषः । वस्तुतस्तु विधोः किमिति चूडामणीकरणं, किमर्थं

## रामरुद्रीयम्.

स्वकर्तव्यत्वेन ज्ञानस्यैव शिक्षाशब्दार्थत्वादिति निरस्तम् । **समाप्तपुनरात्तत्वमिति** ॥ क्रियान्वयेन शान्ताकाङ्क्षस्य विशेष्यवाचकपदस्य विशेषणान्तरान्वयार्थं पुनरनुसन्धानं समाप्तपुनरात्तत्वं काव्यदोषः । प्रकृते हि चूडामणीकृतविधुर्वलयीकृतवासुकिः भवो भव्याय भवत्वित्येतावताऽन्वयबोधेनैव भवपदस्य शान्ताकाङ्क्षतया उत्तरत्र विद्यमानलीलाताण्डवपण्डित इति विशेषणस्यान्वयार्थं स भवः पुनः कीदृश इत्याकाङ्क्षासम्पादनाय भवपदेन भवस्मरणस्यावश्यकतया भवति समाप्तपुनरात्तत्वं दोष इति भावः । ननु जातितद्भिन्नप्रवृत्तिनिमित्तकशब्दानां जातिप्रवृत्तिनिमित्तकमेव विशेष्यवाचकमिति नियमः, अन्यथा नीलोत्पलमित्यादिवदुत्पलनीलमित्यादेरपि प्रयोगस्य प्रसङ्गात्, तथाहि समासविधायकसूत्रे यत्प्रथमान्त-पदनिर्दिष्टं तत्समासे पूर्वं निपततीति नियमः, विशेषणं विशेष्येणेति कर्मधारयविधायकसूत्रे विशे-षणवाचकपदस्य प्रथमान्तपदनिर्दिष्टत्वात्पूर्वनिपातनियमः, नीलोत्पलयोर्विशेषणविशेष्यभावे नियामकाभा-वे उत्पलस्य विशेषणत्वविवक्षया उत्पलनीलमिति प्रयोगः स्यादेव । तस्माज्जातिप्रवृत्तिनिमित्तको-त्पलपदस्य विशेष्यवाचकत्वमेवेत्यवश्यमङ्गीकरणीयं । तथा च शिवशरीरवृत्तिजातिविशेषप्रवृत्तिनिमित्तकस्य भवशब्दस्य विशेषणपरत्वानुपपत्तिः, न च भवः सर्वं जानातीति प्रतीत्यनुपपत्तिः अवच्छेदकतासम्बन्धेन ज्ञानवत्त्वबोधकत्वस्येश्वरज्ञानस्य किञ्चिदनवच्छिन्नत्वेन स्वीकर्तुमशक्यत्वादिति वाच्यम्, स्वाश्रयावच्छिन्न-त्वसम्बन्धेन तादृशवैजात्यविशिष्टचेतनस्यैव भवपदार्थत्वोपगमात् । स्वाश्रयावच्छिन्नत्वं च स्वनिष्ठ-कर्मासाधारणकारणयत्नवत्त्वसम्बन्धेन स्वाश्रयविशिष्टत्वमिति बोध्यम् । न चैकव्यक्तिकत्वाद्भवत्वन्न जातिरिति वाच्यम्, कल्पभेदेन शिवशरीरस्यापि भिन्नत्वात् । न च भवत्यस्माज्जगदिति व्युत्पत्त्या जगत्कारणत्वमेव भवपदप्रवृत्तिनिमित्तं न तु जातिविशेष इति वाच्यम् योगाद्रूढेर्बलीयस्त्वादित्यभियुक्तोक्त्या शीघ्रोपस्थितिक-

## प्रभा.

लोकगत्या भूषणवत्त्वस्य वक्तव्यतया त्रिपुरसंहारादेः नर्तनानुपयोगित्वेन तदप्रतिपाद्य नर्तनोपयोगितया विधु-वासुक्योः शिरोभूषणत्वहस्तकङ्कणत्ववर्णनपूर्वकं परमेश्वरस्य चूडामणीकृतविधुत्वादिकं उक्तं इति नोक्त-

## मञ्जूषा.

मेन कानिचिदिति नपुंसकबहुवचनान्तपदमेवाध्याहर्तव्यमिति तत्पदसमानलिङ्गवचनकता कृतशब्दस्य। अथ समासार्थ उच्यते। तत्र केचित् प्रकृत्यर्थतावच्छेदकीभूतं चूडामणित्वं च्विप्रत्ययार्थः । पूर्वकालावच्छिन्नस्व-निष्ठाभावप्रतियोगित्वाधेयत्वोभयसंबन्धेन तत्र प्रकृत्यर्थस्यान्वयः । तथाच पूर्वकालावच्छिन्नस्वनिष्ठाभाव-प्रतियोगित्वाधेयत्वोभयसंबन्धेन चूडामणिविशेषितं यच्चूडामणित्वं तदनुकूलकृत्युपादानमिति, तत्प्र-योजकव्यापारप्रयोज्यधर्मवानिति वा निष्ठान्तजन्यबोधः ॥ अभूततद्भावे च्विरित्यनुशासनात् अभू-तस्य पूर्वकालावच्छेदेन प्रकृत्यर्थतावच्छेदेन प्रकृत्यर्थतावच्छेदकाभाववतः तद्भावः प्रकृत्यर्थतावच्छेदक-धर्मः तस्मिन्वाच्ये च्विप्रत्ययः स्यादित्यर्थः । अत्राभूतत्वांशस्तुल्यवित्तिवेद्यतया संसर्गमर्यादया भासते । यद्वा । अभूतः पूर्वकालावच्छेदेन प्रकृत्यर्थनिष्ठाभावप्रतियोगी यस्तद्भावः प्रकृत्यर्थासाधारणधर्म इत्यर्थः। अत्र कल्पेऽप्यभूतत्वांशस्संसर्गमर्यादया लभ्यत एव । परन्तु तुल्यवित्तिवेद्यताश्रयणमन्तरेणैवोपपद्यत इत्याहुः । एतन्मते व्याससमासयोस्समानार्थकत्वं विरुध्यते । यद्यपि राज्ञः पुरुषो राजपुरुष इत्यत्रापि न व्याससमासयोस्समानार्थकत्वं, निरूपितत्वसंबन्धेन राजविशेषितस्वत्वप्रकारकाश्रयतासंसर्गकपुरुषविशेष्यक-बोधस्य व्यासवाक्येन, राजनिरूपितस्वत्वाश्रयप्रकारकतादात्म्यसंसर्गकपुरुषविशेष्यकबोधस्य समासवाक्येनो-दयात्। तथाप्याश्रयतया स्वत्वस्य, आश्रयस्य वा तादात्म्येनान्तराप्रकारत्वेपि तद्वारा राज्ञः पुरुषांशे प्रकारत्वम-क्षतमेवेति तावता तयोस्समानार्थकत्वप्रवादोऽप्युपपद्यते। नचेह तथा संभवतीति ध्येयम्। वस्तुतस्तु पूर्वका-लीनचूडामणित्वाभाववान् च्विप्रत्ययार्थः। चूडामणिपदार्थस्य चूडासंयोगित्वविशिष्टस्य निर्वाहकतासंब-न्धेन कृधात्वर्थव्यापारेऽन्वयः। निवर्तनीयधर्मवान्निष्ठार्थः। तस्य च्विप्रत्ययार्थे पूर्वकालावच्छिन्नचूडामणित्वा-भाववति तादात्म्येनान्वयः । तथाच चूडासंयोगित्वविशिष्टनिर्वाहकव्यापारानिवर्तनीयधर्मवदभिन्नपूर्वका-लावच्छिन्नचूडामणित्वाभाववानित्याकारकश्चूडामणीकृत इति वाक्यजन्यबोधः । व्युत्पत्तिवैचित्र्येण च च्वि-प्रत्ययप्रकृत्यर्थस्य च्विप्रत्ययोत्तरधात्वर्थे, निष्ठार्थस्य च्विप्रत्ययार्थे चान्वयस्वीकारे बाधकाभावात्। अनेन च समासार्थेन प्राथमिकदर्शितविग्रहवाक्यार्थोऽनुरुध्यते। अभूततद्भावे च्विरिति सूत्रस्य अभूतः पूर्वकालावच्छि-न्नधर्मिनिष्ठाभावप्रतियोगी, तद्भावः प्रकृत्यर्थतावच्छेदकधर्मः च्विप्रत्ययबोध्य इत्यर्थः। पूर्वकालावच्छिन्नप्रकृत्यर्थ-तावच्छेदकाभाववतः च्विप्रत्ययवाच्यत्वे तुल्यवित्तिवेद्यतया पूर्वकालावच्छिन्नधर्मिनिष्ठाभावप्रतियोगित्वविशिष्ट-प्रकृत्यर्थतावच्छेदकधर्मस्य च्विप्रत्ययबोध्यत्वमक्षतमेवेति न तद्विरोधः। अथवा अभूतत्वमेव च्विप्रत्ययार्थः अभूतत्वं पूर्वकालावच्छिन्नधर्मिनिष्ठाभावप्रतियोगित्वं, तच्च प्रकृत्यर्थतावच्छेदकीभूतचूडामणित्वेऽन्वेति। तथाच पूर्वकालावच्छिन्नधर्मिनिष्ठाभावप्रतियोगि यच्चूडामणित्वं तद्विशिष्टनिर्वाहकव्यापारप्रयोज्यधर्मवानिति बोधः। इदानीं दर्शितविग्रहवाक्यार्थः पर्यवसानगत्यानुरुध्यते। प्रकृत्यर्थतावच्छेदकान्वितस्य पूर्वकालावच्छिन्नधर्मि-निष्ठाभावप्रतियोगित्वस्य च्विप्रत्ययवाच्यत्वे तद्विशिष्टप्रकृत्यर्थतावच्छेदकस्य च च्विप्रत्ययान्तबोध्यत्वमक्षत-मिति न तदनुशासनविरोधः। पूर्वकालावच्छिन्नचूडामणित्वाभाव एव वा च्विप्रत्ययार्थः। तस्याश्रयतासंबन्धेन प्रकृत्यर्थेऽन्वयः। पूर्वकालावच्छिन्नचूडामणित्वाभाववान्वा तदर्थः। तस्य तादात्म्येन प्रकृत्यर्थे अन्वयः ।

## दिनकरीयम्.

वा वासुकेर्वलयीकरणमित्याकाङ्क्षायां, निराकाङ्क्षप्रतिपत्तिर्न संभवतीति, लीलेत्यादिविशेषणानुक्तौ विवक्षि-

## रामरुद्रीयम्.

रूढ्यर्थमादाय शान्ताकाङ्क्षान्वयबोधोपपत्तौ विलम्बोपस्थितिकयोगार्थमादायान्वयबोधानुपादाने समासपुन-रुक्तत्वदोषस्यावश्यकत्वादित्यत आह—**वस्तुतस्त्विति। इत्याकाङ्क्षायामिति।** सत्यामिति शेषः। **निराकाङ्क्षप्रतिपत्तिर्न सम्भवतीति।** स्वोत्तरानुत्पन्नाकाङ्क्षाकशाब्दबोधो न भवतीत्यर्थः। **विवक्षि-**

## प्रभा.

शङ्कावकाश इति भावः। एतेन भवपदार्थपरमेश्वरस्य नर्तनवत्त्वप्रतिपादनेन सन्तुष्टत्वलाभात् शीघ्रमेव भक्तानां

## मञ्जूषा.

इदानीं दर्शितद्वितीयविग्रहवाक्यार्थो निराबाधमनुरुध्यते । सूत्रार्थोऽप्येतदनुसारेण स्वयमूहनीयः । यद्वा । च्विप्रत्ययार्थस्य पूर्वकालावच्छिन्नचूडामणित्वाभाववतः तादात्म्यसंबन्धेन निष्ठार्थविशेषणत्वमभ्युपेयते । तथा च पूर्वकालावच्छिन्नचूडामणित्वाभाववदभिन्नश्चूडामणित्वविशिष्टनिर्वाहकव्यापारप्रयोज्यधर्मवानिति बोधः। इदानीं दर्शिततृतीयविग्रहवाक्यार्थोऽनुरुध्यते । सूत्रार्थस्त्वस्मदुपदर्शितप्रथमकल्परीत्या प्रत्येतव्यः । परन्त्वत्र कल्पे, विधुः चूडामणीक्रियत इत्यादावगतिः। आख्यातार्थे कर्मत्वे च्विप्रत्ययार्थस्याऽभेदेनान्वयासंभवात्। व्युत्पत्तिवैचित्र्येण तत्र च्विप्रत्ययार्थस्य आख्यातार्थे कर्मत्वे आधेयतासंबन्धेनान्वय इति वास्तु । चतुर्थविग्रहवाक्यार्थानुरोधेन समासार्थस्तु न संभवत्येव। तत्र हि च्विप्रत्ययार्थस्य पूर्वकालावच्छिन्नचूडामणित्वाभाववतश्चूडामणिपदसमभिव्याहृतकृतपदार्थस्य, चूडामणित्वविशिष्टनिर्वाहकव्यापारप्रयोज्यधर्मवतश्च न परस्परान्वयबोधः। किंतु चूडामणीकृतः विधुरित्यत्र विधुपदार्थे तयोरुभयोरेकत्र द्वयमिति रीत्यान्वय इति वाच्यं। तच्च न संभवति च्विप्रत्ययार्थस्य चूडामणिपदकृतपदघटितसमासार्थसापेक्षत्वेन तस्य समासमध्यनिवेशानुपपत्तेः । नच परस्परान्वयित्वलक्षणसापेक्षत्वविरहेऽपि धवखदिरौ छिन्धि इत्यादाविव एकक्रियान्वयित्वलक्षणं सापेक्षत्वमास्तामिति वाच्यम् । तथापि चूडामणीकृतं पश्येत्यादौ द्वितीयार्थविषयतायामेव च्विप्रत्ययार्थस्य निष्ठान्तार्थस्य च पृथगाधेयतासंबन्धेन अन्वयस्य वक्तव्यतया पूर्वकालावच्छिन्नचूडामणित्वाभाववान् चूडामणित्वविशिष्टनिर्वाहकव्यापारप्रयोज्यधर्मवतोऽन्यस्स एव वेति संशयनिवर्तकतायास्तद्वाक्यजन्यशाब्दबोधस्यानुपपत्तेः । यत्र निष्ठान्तार्थस्य अभेदान्वययोग्यविशेष्यवाचकपदान्तरसमभिव्याहारोऽस्ति तत्र च्विप्रत्ययार्थस्य निष्ठान्तार्थस्य च पदान्तरार्थे तादात्म्येनान्वयः यत्र स नास्ति तत्र च्विप्रत्ययवाच्यार्थस्य निष्ठार्थे तादात्म्येन विशेषणत्वमभ्युपेयते तथैव व्युत्पत्तिस्वीकारादित्युक्तौ तु न दोषः। एवं दर्शितं पञ्चमकल्परीत्यापि शाब्दबोधो युज्यते। चूडामणीकृतो विधुरित्यत्र तादात्म्येन च्विप्रत्ययार्थपूर्वकालावच्छिन्नचूडामणित्वाभावविशिष्टे विध्वर्थे निष्ठार्थस्य विशेषणत्वं । यत्र विशेष्यवाचकपदान्तरसमभिव्याहारो नास्ति तत्र निष्ठार्थ एव च्विप्रत्ययार्थान्वय इति वक्तुं शक्यत्वात्। परन्तु समासमध्यनिविष्टकिंचित्पदार्थविशिष्टे पदान्तरार्थे तत्समासनिविष्टेतरपदार्थान्वयो न क्वचिदानुभाविक इति प्रतिभाति । वस्तुतस्तु प्रकृत्यर्थतावच्छेदकीभूतचूडामणित्वमेव च्विप्रत्ययार्थः। तत्र प्रकृत्यर्थस्याधेयतासम्बन्धेनान्वयः । शब्दसाधुत्वमात्रार्थकत्वं वा प्रकृतेरिष्यते चूडामणीकृतो विधुरित्यत्र विधुपदं पूर्वकालावच्छिन्नचूडामणित्वाभावविशिष्टविधुलाक्षणिकं निष्ठार्थो निवर्तनीयधर्मवान्। तथाच चूडामणित्वानुकूलव्यापारनिवर्तनीयधर्मवदभिन्नः पूर्वकालावच्छिन्नचूडामणित्वाभावविशिष्टो विधुरित्यन्वयबोधः। विशेष्यवाचकपदान्तरसमभिव्याहारविरहस्थले तु निवर्तनीयधर्मवान् पूर्वकालावच्छिन्नचूडामणित्वाभाववांश्च पृथङ्निष्ठार्थौ व्युत्पत्तिवैचित्र्यादेकपदोपात्तयोरपि तयोः परस्परमन्वयः। तथाच चूडामणि-

## दिनकरीयम्.

तान्वयबोधाभावान्नायमत्र दोषः । उत्थाप्याकाङ्क्षया विशेषणान्वय एव तत्प्रसरादिति । लीलया ताण्डवं नृत्यं

## रामरुद्रीयम्.

**तान्वयबोधेति।** विशेष्यवाचकपदेन, निरुक्तनिराकाङ्क्षान्वयबोधजननोत्तरं विशेषणान्तरान्वयार्थं, विशेष्यवाचकपदस्य पुनरनुसन्धानं समाप्तपुनरात्तत्वमिति समाप्तपुनरात्तत्वलक्षणघटकत्वेन विवक्षितो यो निराकाङ्क्षान्वयबोधस्तदभावादित्यर्थः । लीलेत्यादिविशेषणानुक्तावित्यनेन तादृशविशेषणोक्तौ तादृशविशेषणसहितेतरवाक्यजन्यान्वयबोध एव विवक्षितान्वयबोधो भवतीति सूचितम् । नन्वेवं समाप्तपुनरात्तत्वं क्वापि दोषो न स्यात् शाब्दबोधमात्रे आकाङ्क्षायाः प्रयोजकत्वेन विशेषणान्तरान्वयार्थं स कीदृश इत्यादियत्किञ्चिदाकाङ्क्षायाः कल्पनीयतया क्वापि निराकाङ्क्षप्रतिपत्तेरसंभवादित्यत आह—**उत्थाप्याकाङ्क्षयेति।** अनियताकाङ्क्षयेत्यर्थः । क्रियाकारकपदानां परस्पराकाङ्क्षा, नियता, पुत्रादिपदानामपि प्रतियोग्याकाङ्क्षा नियता, एवं प्रयो-

## प्रभा.

स्वाभिलषितफलं ददातीति सूच्यते। स्वकृतमूलस्य स्वकर्तृकव्याख्याने निमित्तं प्रदर्शयन् प्रतिजानीते **निजनिर्मि-**

## मञ्जूषा.

त्वप्रयोजकव्यापारनिवर्तनीयधर्मवदभिन्नः पूर्वकालावच्छिन्नचूडामणित्वाभाववानिति बोधः। अभूततद्भावे च्विरित्यनुशासनस्याप्यभूते पूर्वकालावच्छिन्नप्रकृत्यर्थतावच्छेदकाभाववति परम्परयान्वयी यः प्रकृत्यर्थतावच्छेदको धर्मः तस्मिन्वाच्ये च्विप्रत्ययो भवतीत्यर्थः । अभूतपदेन पूर्वकालावच्छिन्नप्रकृत्यर्थतावच्छेदकधर्माभावस्य परम्परया च्विप्रत्ययार्थविशेष्यतावच्छेदकत्वमावश्यकमित्येतावदेव विवक्षितं । ननु समभिव्याहृतपदान्तरस्य तद्विशिष्टलाक्षणिकत्वमावश्यकमित्येतावदपि तेन तादृशाभावविशिष्टबोधकपदान्तरसमभिव्याहारो यत्र, तत्र प्रागशुक्लो घट इदानीं शुक्लीकृत इत्यादौ घटपदस्य पूर्वकालावच्छिन्नशुक्लरूपाभावविशिष्टघटलाक्षणिकत्वमिति न पौनरुक्त्यप्रसक्तिः । पूर्वकल्पेषु त्वभूतत्वस्य च्विप्रत्ययार्थे प्रकृत्यर्थसंसर्गतया च्विप्रत्ययार्थविधया वा लाभसम्भवेन प्रागशुक्ल इत्यंशे पौनरुक्त्यं दुर्वारमेव, अत्र कल्पे तु न तत्प्रसक्तिः । अत्र प्रकृत्यर्थतावच्छेदकाभावपदं प्रकृत्यर्थतावच्छेदकविरुद्धधर्ममात्रपरं । एतेन प्राङ्नीलो घट इदानीं शुक्लीकृत इत्यादौ शुक्लरूपविरुद्धनीलरूपविशिष्टवाचकपदसमभिव्यहारेऽपि घटपदस्य न पूर्वकालावच्छिन्नशुक्लरूपाभावविशिष्टघटलाक्षणिकत्वं प्रयोजनाभावात् । अत्र सर्वेष्वपि कल्पेषु प्रकृत्यर्थतावच्छेदकभेदेन च्विप्रत्ययशक्त्यानन्त्यापत्तिरिति तु न शङ्कनीयमेव । 'तस्य भावस्त्वतलाविति' सूत्रविहितत्वतलादेरिव नानार्थकत्वस्येष्टत्वादित्यास्तां विस्तरः । यत्तु महादेवः अचूडामणिश्चूडामणिस्संपद्यत इति चूडामणीकृत इति विग्रहः इति । तत्तुच्छं, संपूर्वकपद्यतेर्भवतेरिवाऽसाधारणधर्मरूपतादात्म्यवाचकतया शुक्लो भवति शुक्लस्संपद्यत इत्यादेः शुक्लत्वनितादात्म्याश्रय इति बोधजनकत्ववच्चूडामणिस्संपद्यत इत्यस्यापि चूडामणिवृत्तितादात्म्याश्रय इति बोधजनकत्वेन समासघटिकीभूतकृतशब्दार्थस्य विग्रहवाक्यार्थप्रवेशाभावेन न्यूनतापत्तेः । अत्र चूडामणीकृतविधुरित्यत्र विधुशब्दस्य पूर्वकालावच्छिन्नचूडामणित्वाभावाश्रयविधुनिष्ठधर्मनिवर्तकचूडामणित्वविशिष्टनिर्वाहकव्यापारकर्तरि लक्षणा । चूडामणीकृतपदं तात्पर्यग्राहकं बहुव्रीहौ विग्रहवाक्याद्यादृशविशेष्यविशेषणभावापन्नस्यार्थस्य बोधस्तादृशविशेष्यविशेषणभावविपरीतविशेष्यविशेषणभावापन्नविशिष्टार्थे चरमपदलक्षणाङ्गीकारादिति सर्वं चतुरस्रम् ॥ **भवतु भव्यायेति** ॥ इह तु संपादकत्वं भूधात्वर्थः । तदन्वितं निरूप्यत्वं च चतुर्थ्यर्थः । क्लृपि संपद्यमाने चेत्यनुशासनात् क्लृप्त्यर्थकधातुयोगे,संपादकत्वार्थकधातुयोगे, यत्संपद्यते जायते तद्वाचकपदाच्चतुर्थीति तदर्थः । यद्यप्येतदनुशासनस्य बीजमङ्कुराय भवतीत्यादिप्रकृतिविकृतिभावमात्रविषयकत्वमङ्गीकृतं दण्डिप्रभृतिभिस्तथापि कामाय नो भवतु गोपकिशोरमूर्तिरित्याद्यभियुक्तप्रयोगानुरोधेन प्रकृतिविकृतिभावतदभावोभयसाधारणप्रयोज्यप्रयोजकभावमात्रविषयकत्वमेतदनुशासनस्यावश्यकमित्यन्यदेतत् । अथ संपादकतार्थकधातुयोगे निरूप्यत्वार्थकचतुर्थी यद्येतदनुशासनविहिता स्यात् तर्हि संपादयति प्रयोजयति निर्वाहयतीत्यादावपि चतुर्थी स्यादिति चेद्भ्रान्तोऽसि नहि तत्रानुकूलत्वापरपर्यायं स्वरूपसंबन्धविशेषात्मकं संपादकत्वं धातुना प्रत्याय्यते । [illegible] संपत्तिस्तदुत्तरणिचा तद-

## दिनकरीयम्.

तत्र पण्डितोऽभिज्ञ इत्यर्थः । अनेन च नृत्यविशिष्टतया स्मर्तिविषयत्वात् प्रार्थिता अर्थाः संभवन्त्येवेति सूचितम् । ननु भूषणरहितस्य कथं नृत्यं तत्राह—**चूडामणीकृतेति** ॥ अचूडामणिः चूडामणिः सम्पद्यमानः कृतः चूडामणीकृतो विधुर्येन स तथोक्तः । **वलयीकृतेति** । अवलयः वलयः संपद्यमानः कृतः वलयीकृतो

## रामरुद्रीयम्.

जनाकाङ्क्षापि नियतैव, प्रयोजनाभावे वाक्यार्थस्यैवासिद्धिप्रसङ्गात्, भवः कीदृश इत्याद्याकाङ्क्षा तु, न नियता तथा च नियताकाङ्क्षारहितान्वयबोधोत्तरं विशेष्यवाचकपदस्य पुनरनुसन्धानमेव समाप्तपुनरात्तत्वमिति विवक्षितत्वात्, स कीदृश इत्यादुयत्थाप्याकाङ्क्षया विशेषणान्तरान्वयस्थल एव समाप्तपुनरात्तत्वदोष इति भावः । **अचूडामणिरिति** । च्विस्स्यादभूततद्भावे इत्यनेन विहितच्विप्रत्ययान्तचूडामणिशब्दघटितादुक्तवाक्या-

निजनिर्मितकारिकावलीमतिसङ्क्षिप्तचिरन्तनोक्तिभिः ।
विशदीकरवाणि कौतुकान्ननु राजीवदयावशंवदः ॥ २ ॥

सद्रव्या गुणगुम्फिता सुकृतिनां सत्कर्मणां ज्ञापिका
सत्सामान्यविशेषनित्यमिलिताऽभावप्रकर्षोज्ज्वला ।

## प्रभा.

नेति ॥ **अतिसंक्षिप्तेति**॥ अत्यन्तं संक्षेपः शब्दसंक्षेपः यासु ताः अल्पशब्दघटिता इत्यर्थः। ताश्चताः चिरन्तनोक्तयश्च इति कर्मधारयः चिरन्तनाः कणादादयः तेषामुक्तयः तदभिमतार्थप्रतिपादकाः शब्दाः इत्यर्थः । उक्तिभिरित्यभेदे तृतीया, तस्य विशदीकरणार्थव्याख्यायामन्वयः । कौतुकान्नन्वित्यन्वयः कौतुकादेवेत्यर्थः । स्वकृतव्याख्याया अल्पशब्दघटितत्वप्रतिपादनेन विस्तृतत्वाज्ञानात् अस्य उपयोगित्वं सूच्यते । चिरन्तनोक्तिभिन्नत्वप्रतिपादनेन कणादाद्यनभिमतार्थप्रतिपादकत्वप्रयुक्तानादरणीयता निरस्ता, कौतुकादित्यनेन स्वस्य ग्रन्थकरणे आयासाभावः सूचितः, राजीवदयावशंवद इत्यस्य राजीवनामके शिष्ये शुश्रूषादिना जाता या दया तया वशंवदः तदधीनस्सन्नित्यर्थः । तथाच ग्रन्थकरणप्रवृत्तौ राजीवदयावशंवदत्वं निमित्तमिति सूच्यते, तदधीनस्य तदुक्तार्थकरणावश्यकत्वात् इति भावः । ननु स्वजन्मसाफल्याय अस्य ग्रन्थस्य भगवदर्पणमावश्यकं, तस्य च अयोग्यत्वात् कथं भगवदर्पणं इत्याशङ्कां द्रव्यादिसकलपदार्थवत्त्वरूपप्रसिद्धमुक्तावलीसाम्यप्रतिपादनेन मुक्तावल्या इव एतस्यापि भगवदर्पणयोग्यताज्ञापनेन परिहरन्, श्रोतृप्रवृत्तये विषयप्रयोजनसंबन्धाधिकारिणस्सूचयन् स्वकीर्त्यनुवृत्तये ग्रन्थस्य स्वस्य च नाम निबध्नाति—**सद्रव्येति** ॥ मुक्तावली द्रव्यैः मुक्तारूपै-

## मञ्जूषा.

सुकूलव्यापार इत्यस्ति विशेषः । अथवा भव्याय भवत्वित्यत्र संपादकत्वमेव चतुर्थ्यर्थः । असाधारणधर्म एव भूधात्वर्थः । तत्र चतुर्थ्यर्थस्य संपादकत्वस्याऽभेदसंबन्धेनान्वयः । यद्यपि सुबर्थस्य धात्वर्थे तादात्म्येनान्वयो नान्यत्र दृष्टः तथापीह व्युत्पत्तिवैचित्र्यात्तथान्वयः स्वीक्रियत इति न दोषः । लोडर्थस्तु प्रार्थना, तस्याश्च विषयतासंबन्धेन धात्वर्थेऽन्वयः । धात्वर्थस्य चाख्यातार्थाश्रयत्वे, तस्य च भवपदार्थेऽन्वयः, भव्यशब्देन चेह विघ्नध्वंसरूपस्समाप्तिरूपो वा स्वेष्टो मङ्गलार्थो विवक्षितः । तथाच प्रार्थनाविषयीभूतं यद्विघ्नध्वंसनिरूपितं संपादकत्वं तदाश्रयस्त्वंवानिति, प्रार्थना[illegible]यो विघ्नध्वंससंपादकत्वाभिन्नासाधारणधर्मस्तदाश्रयत्ववानिति वा बोधः। अर्वाचीनास्तु यत्र चैत्रस्स्वेष्टसंपादको भवत्वितीच्छया चैत्रस्स्वेष्टाय भवत्वितिवाक्यमाह मैत्रः प्रयुङ्क्ते न तु मैत्रस्येष्टं वस्तुतश्चैत्रस्संपादयति, तत्र तद्वाक्यस्याप्रामाण्यापत्तिः प्रार्थनाविषयीभूतस्य मैत्रेष्टसंपादकत्वस्य चैत्रे बाधादतो निरूपितत्वसंबन्धेन धात्वर्थविशेषितस्याख्यातार्थाश्रयत्वस्य प्रकारितासंबन्धेन लोड्विशेषोपस्थितप्रार्थनायां तस्याश्च विशेष्यतासम्बन्धेन प्रथमान्तार्थेऽन्वय इत्याहुः । तन्न, धात्वर्थस्य प्रथमान्तार्थकर्तृकत्वलाभानुपपत्तेः । उक्तस्थले च तद्वाक्यस्य प्रामाण्यं नेष्यत एव, अभिनिवेशिप्रयुक्तवाक्यानां प्रामाण्यस्य प्रायिकत्वादिति । शिष्यावधानाय प्रतिजानीते—**निजेति** ॥ स्वकृतग्रन्थस्य स्वयमेव व्याख्यानं प्रायशो न दृष्टचरमतस्तत्र निमित्तमाह—**राजीवेति** ॥ **सद्रव्येति** ॥ प्रतिपादकतया द्रव्यैः पृथिव्यादिभिस्सहिता सद्रव्या, हारपक्षे द्रव्यं धनं

## दिनकरीयम्.

वासुकिर्येन स तथेत्यर्थः । शिष्यावधानाय प्रतिजानीते—**निजनिर्मितेति** ॥ निजेन स्वेन निर्मिता रचिता या कारिकावली तां अति अत्यन्तं सङ्क्षेपः शब्दसङ्क्षेपो यासु ताः अतिसङ्क्षिप्तास्ताद्दश्यश्च ताश्चिरन्तनानां कणादप्रभृतीनां या उक्तयो वचांसि वचःप्रतिपाद्या युक्तयस्ताभिरहं विशदीकरवाणि प्रकटीकरोमीत्यर्थः । ननु लीलावत्यादिप्राचीननिबन्धाध्ययनेनैव कारिकावलीप्रतिपादितोऽर्थो बोद्धव्य इति किमनेन भवत्कृतविशदनिबन्धेनेत्यत आह—**अतिसङ्क्षिप्तेति** । तथा च लीलावत्यादिप्रचीननिबन्धेषु ग्रन्थबाहुल्येन बहुतरदुःखहेतु-

## रामरुद्रीयम्.

दयमर्थो लभ्यत इति भावः ॥ **शिष्यावधानायेति** ॥ शिष्याणामवधानं शुश्रूषा तस्मै इत्यर्थः । वक्तव्या-

## प्रभा.

स्सहिता युक्ता। गुणेन सूत्रेण गुम्फिता रचिता। सुकृतिनां पुण्यवतां यानि समीचीनकर्माणि, अर्थाकर्षणमन्त्रपुरश्चरणादिरूपकाम्यकर्माणि तेषां ज्ञापिका बोधिका, सत्सामान्यं समीचीनजातिः, विशेषो महत्त्वनिर्मलत्वादिः ताभ्यां नित्यं अनवरतं मिलिता युक्ता। अभावे तेजोऽभावे सति प्रकर्षेण उज्ज्वला अर्थप्रकाशिका, सद्युक्तिः समीचीना युक्तिः योगः रचनाविशेषः यस्यां सा। एवं ग्रन्थोऽपि सद्रव्या द्रव्यैस्सहिता प्रतिपादकतासंबन्धेन।

## मञ्जूषा.

क्रयणद्वारकसाध्यतया विक्रयणद्वारकसाधकतया वा तद्विशिष्टेत्यर्थः। मरकतप्रवालादिनानाविधद्रव्यघटितेत्यपि महादेवः। गुणैः रूपादिभिर्गुम्फिता प्रतिपादकतया विशिष्टा, हारपक्षे गुणेन सूत्रेण गुम्फिता प्रोतेत्यर्थः, कर्मसु सत्त्वं न भावत्वं सत्ताजातिमत्त्वं वा अव्यावर्तकत्वात्। किन्तु, प्रकृतन्यायशास्त्रे प्रतिपाद्यतया वर्तमानत्वं, धर्मशास्त्रेषु प्रायशो धर्माधर्मयोरेव कर्मशब्देन व्यवहारः नतु ताविह तृतीयपदार्थतया कर्मशब्दप्रतिपाद्यत्वेनाभिमतौ तयोर्गुणेऽन्तर्भावात्। एवं धर्माधर्मयोर्विहितनिषिद्धकर्मणोर्यागादिकलञभक्षणादिरूपयोरेव कचित्कर्मपदेन व्यवहारः। न तौ तृतीयपदार्थतयाऽभिमतौ यागादेरिच्छारूपत्वात्, गळाधस्संयोगानुकूलक्रियानुकूलव्यापाररूपभक्षणादेः प्रयत्नादिरूपत्वात्। तयोश्च विहितनिषिद्धकर्मणोः क्रियारूपत्वेऽपि धर्माधर्मानुपधायकशाखादिक्रियाणामसंग्रहात्। तथाच क्रियत इति व्युत्पत्त्या कार्यमपि कर्मशब्दप्रतिपाद्यतयाऽभिमतमित्येतत्सूचनाय सत्पदम्। तथाच सतां न्यायशास्त्रे वर्तमानानां, कर्मणां कर्मशब्दप्रतिपाद्यानामुत्क्षेपणादीनां ज्ञापिका बोधिका, हारपक्षे सतां समीचीनानां सत्पात्रदानादिरूपाणां प्राक्तनकर्मणां ज्ञापिकाऽनुमापिकेत्यर्थः। ग्रन्थपक्षे सत्सामान्येत्यादि उज्ज्वलेत्यन्तं एकस्समासः, समानस्य भावः सामान्यमिति व्युत्पत्त्या सादृश्यमपि सामान्यपदप्रतिपाद्यं तथा गगनाभावादिरूपसाधारणधर्मोऽपि सामान्यपदप्रतिपाद्यः अतस्सदिति सामान्यविशेषणम्। न्यायशास्त्रे वर्तमानं जातिरूपं सामान्यमित्यर्थः, यद्वा सामान्यं द्विविधं जातिः अखण्डोपाधिश्चेति तर्कालङ्कारादिभिस्सामान्यपदार्थो द्वेधा विभक्तः। विश्वनाथपञ्चाननस्तु जातिमेव निरूपयिष्यति न तु अखण्डोपाधिमतस्सदिति प्रशस्तमित्यर्थः प्राशस्त्यं च सकलतार्किकसंमतत्वं, जातिर्हि सकलतान्त्रिकैस्सम्मन्यते न त्वखण्डोपाधिः। एतेन स्वयमखण्डोपाध्यनिरूपणे बीजमपि दर्शितम्। विशेषः परमाणूनां परस्परव्यावर्तकः पञ्चमपदार्थः। मिळितं मेलनं भावे निष्ठाप्रत्ययात्। नित्यमिळितं नित्यसंबन्धस्समवायः। अभावस्सप्तमपदार्थः एतेषां प्रकर्षेणोज्ज्वला प्रकाशिका, एतेषां यः प्रकर्षः परस्परवैलक्षण्यं तस्य उज्ज्वला

## दिनकरीयम्.

प्रतिपत्तिकतया न बालानां प्रवृत्तिरिति भावः। स्वोत्प्रेक्षामूलकताप्रयुक्तानादरणीयतां निरसितुं चिरन्तनेत्युक्तम्। नन्वित्यवधारणे। तथा च कौतुकादेवेत्यर्थः। अनेन स्वस्य ग्रन्थकरणे क्लेशाभावः सूचितः। स्वस्य ग्रन्थकरणे प्रवृत्तौ निमित्तमाह—**राजीवेति**॥ राजीवे शिष्ये या दया कृपा तया वशंवदस्तदधीन इत्यर्थः॥ ननु ग्रन्थादौ श्रोतृप्रवृत्तये प्रयोजनादि वक्तव्यं भवति, तस्य चेहानुक्तत्वादुपेक्षणीयतैतद्ग्रन्थस्य स्यादित्याशङ्क्य, विषयप्रयोजनसम्बन्धाधिकारिणः सूचयन्नतिसङ्क्षिप्तत्वादेतद्ग्रन्थस्य, सकलपदार्थाप्रतिपादकतया कथं बालव्युत्पत्तिरित्याशङ्कां चैतद्ग्रन्थस्य सकलपदार्थप्रतिपादकत्वप्रदर्शनेन परिहरन् "यत्करोषि यदश्नासि यज्जुहोपि ददासि यत्। यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम्॥" इति भगवदुक्तेर्मुक्तावलीसमं स्वकीयग्रन्थं श्रीमति भगवति चार्पयन् स्वकीर्त्यनुवृत्तये ग्रन्थस्य स्वस्य च नाम निबध्नाति—**सद्द्रव्येति**॥ द्रव्यैः

## रामरुद्रीयम्.

र्थस्य विशिष्याज्ञाने तत्प्रतिपत्तेरिष्टसाधनत्वाग्रहेण शिष्याणां वाक्यश्रवणेच्छा न सम्भवति, प्रतिज्ञया स्वकारिकावलीव्याख्यानस्य कर्तव्यत्वज्ञाने कारिकावल्यर्थज्ञानरूपेष्टसाधनत्वस्य ग्रन्थकृद्वाक्येषु सुग्रहत्वेन भवत्येव तच्छ्रवणेच्छेति भावः। **शब्दसङ्क्षेप इति**। सङ्क्षेपो द्विविधः शब्दसङ्क्षेपोऽर्थसङ्क्षेपश्च, तत्रार्थसङ्क्षेपेण ग्रन्थस्य सकलार्थाप्रतिपादकत्वे, बालव्युत्पत्तिजनकता न स्यादित्याशङ्क्य सङ्क्षेपपदस्य प्रकृते शब्दसङ्क्षेपमात्रपरत्वमुपदर्शितमिति पद्यस्थातिसङ्क्षिप्तपदस्य प्रयोजनं प्रकटयन्नाह—**नन्वित्यादि**। **स्वोत्प्रेक्षेति**।

विष्णोर्वक्षसि विश्वनाथकृतिना सिद्धान्तमुक्तावली
विन्यस्ता मनसो मुदं वितनुतां सद्युक्तिरेषा चिरम् ॥ ३ ॥

## प्रभा.

गुणैः रूपादिगुणैः गुम्फिता प्रतिपादकतया युक्ता । सतां उत्क्षेपणादिरूपाणां पञ्चकर्मणां ज्ञापिका बोधिका । सामान्यं च विशेषश्च नित्यमिलितं च सामान्यविशेषनित्यमिलितानि सन्ति सामान्यविशेषनित्यमिलितानि यस्यां सा, नित्यमिलितं नित्यसंबन्धः समवायः । अभावस्य प्रकर्षः प्रागभावादिरूपः तेन उज्ज्वला तत्प्रतिपादिकेत्यर्थः । सत्यः युक्तयः साधकबाधकप्रमाणोपन्यासादिरूपा यस्यां सा युक्तिप्रतिपादिकेत्यर्थः । सिद्धान्ताः एव मुक्ताः तासां आवली, एतादृशी सिद्धान्तमुक्तावली विष्णोः वासुदेवस्य वक्षसि वक्षस्थले विन्यस्ता भक्तिश्रद्धापुरस्सरं समर्पितेत्यर्थः । सुकृतिनां पण्डितानां मुदं सन्तोषं चिरं बहुकालं वितनुतां विस्तारयत्वित्यर्थः । एतेन द्रव्यादयो विषयाः, पदार्थतत्त्वज्ञानं प्रयोजनं, प्रतिपाद्यप्रतिपादकभावस्संबन्धः, पदार्थतत्त्वावधारणकामो

## मञ्जूषा.

प्रकाशिकेति वा, तैः प्रतिपाद्यभूतैः प्रकर्षेणोज्ज्वला प्रकाशमानेति वा, एतेषां यः प्रकर्षः परस्परवैलक्षण्यं तेन प्रतिपाद्यभूतेनोज्ज्वला प्रकाशमानेति वा, एतेषां यः प्रकृष्टः कर्षः कर्षणं प्रतिपादनमिति यावत्, तेनोज्ज्वला प्रकाशमानेति वा । अत्र मिलितेत्यन्तं पदं विभज्य सत्सामान्यं जातिरूपसामान्यं विशेषः पञ्चमपदार्थः नित्यो नित्यसंबन्धस्समवायस्तैर्मिलिता, सन्ति सामान्यविशेषनित्यमिलितानि यस्यामिति वाऽर्थ इति महादेवो व्याचख्यौ । तत्राकारप्रश्लेषः क्लेशसाध्यः झटित्यनवगमादिति विदाङ्कुर्वन्तु शब्दरसिकाः । हारपक्षे सामान्येभ्यः साधारणेभ्यः हारेभ्यो यो विशेषः वैलक्षण्यं स किमपकर्षरूपः नेत्याह ॥ **सदिति** ॥ सन् प्रशस्तः उत्कर्षः तेन नित्यं अनवरतं मिलिता विशिष्टेत्यर्थः । सन् समीचीनो यस्सामान्यविशेषः तेन नित्यं मिलिता इत्यर्वाचीनाः । सत्सामान्यं समीचीना जातिः विशेषो महत्त्वनिर्मलत्वादिस्ताभ्यां नित्यं मिलितेति तु महादेवः । भावानां सन्निकृष्टपदार्थानां प्रकर्षेणोज्ज्वला स्वप्रभया प्रकाशिका, भावेषु पदार्थेषु मध्ये प्रकर्षेणोज्ज्वला प्रकाशमानेति वाऽर्थः । भावेऽन्तःकरणे प्रकर्षेणोज्ज्वला इष्टतया समीचीनतया वा प्रकाशमानेति वा, भा कान्तिः तस्या वप्रं वलयं प्रभामण्डलमिति यावत्, तस्य कर्षः कर्षणं तेनोज्ज्वला प्रकाशमानेति वा, हारं कण्ठे धृत्वा पुरुषे गच्छति लम्बमानो हारश्चलन्परितः प्रभामण्डलं कर्षन्निव चलतीत्यर्थः । महादेवस्तु अभावे तेजोऽभावे तमसि प्रकर्षेणोज्ज्वला अर्थप्रकाशिकेत्यर्थ इति व्याचख्यौ । तमसि प्रकाशमानेत्यर्वाचीनाः । सत्यस्समीचीना युक्तयस्सिद्धान्तोपपादकहेतुविशेषाः यस्यां प्रतिपाद्यतया सा सद्युक्तिः, हारपक्षे सत्येव युक्तिर्यस्यास्सा एतच्च सत्कर्मणां ज्ञापिकेत्यत्र अनुकूलतर्कसूचकं । सतां समीचीना युक्तिर्ग्रथनविशेष इति वा । एवंविधा सिद्धान्तमुक्तावली विष्णोर्वक्षसि विन्यस्ता विन्यासोपलक्षितं यदवस्थिततत्त्वप्रकारकमानसारोपात्मकं भावना-

## दिनकरीयम्.

संहिता युक्ता प्रतिपादकतया, गुणैरपि गुम्फिता युक्ता । सतामुत्क्षेपणादीनां पञ्चानां कर्मणां ज्ञापिका बोधिका । सत् जातिरूपं सामान्यं, विशेषाः, नित्यः समवायस्तैर्मिलिता, यद्वा सन्ति सामान्यविशेषनित्यमिलितानि यस्यां सा, नित्यमिलितं नित्यसंम्बन्धः । अभावस्य प्रकर्षः प्रागभावादिभेदेन वैलक्षण्यं, तस्य उज्ज्वला प्रकाशिका । एषा बुद्धिस्था, सिद्धान्ता एव मुक्तास्तासां आवली पङ्क्तिः विष्णोर्नारायणस्य वक्षसि वक्षःस्थले, विन्यस्ता विशेषतोऽर्पिता, सुकृतिनां पण्डितानां मनसः मुदं सन्तोषं चिरं बहुकालं वितनुतां विस्तारयत्वित्यर्थः । ननु युक्तीनामत्रासत्त्वात्कथं विदुषां सन्तोषस्तत्राह—**सद्युक्तिरिति**।

## रामरुद्रीयम्.

स्वकीयकल्पनामूलकत्वेत्यर्थः । **अनेन** अवधारणेन ॥ **सत् जातिरूपमिति** । सामान्यमनुगतधर्ममात्रं तच्च क्वचिदुपाधिरूपं क्वचिज्जातिरूपं, प्रकृतग्रन्थे जातिरूपसामान्यस्यैव निरूपणीयत्वेन, जातिरूपसामान्यलाभाय सत्सामान्येत्युक्तमिति भावः । ननु सदित्यस्य सत्ताविशिष्टार्थकत्वेन सत्पदस्य जातिरूपार्थकत्वं लक्षण-

विघ्नविघाताय कृतं मङ्गलं शिष्यशिक्षायै ग्रन्थतो निबध्नाति—नूतनेति । ननु मङ्गलं

## प्रभा.

अधिकारीति सूचितं । मूले कृतस्य मङ्गलस्य तन्निबन्धनस्य च प्रयोजनमाह—विघ्नविघातायेति ॥

## मञ्जूषा.

ऽपरपर्यायं ज्ञानं तद्विषयीकृता सुकृतिनां मनसो मुदमानन्दविशेषजननैकतानतां वितनुतां प्रयोजयत्वित्यर्थः ॥ विघ्नविघातायेति ॥ अत्र महादेवः यद्यपि घातपदस्य उत्पत्तिमदभावपरतया विपदमनर्थकमिति प्रतिभाति इत्याशङ्क्य, तथापि विशिष्टवाचकानां पदानां सति पृथक् विशेषणवाचकपदसमवधाने विशेष्यमात्रपरतायाः 'सकीचकैर्मारुतपूर्णरन्ध्रैः' इत्यत्र 'कीचका वेणवस्ते स्युर्ये स्वनन्त्यनिलोद्धताः' इति कोशान्मारुतपूर्णरन्ध्रत्वविशिष्टवेणुबोधककीचकपदे दृष्टत्वाद्घातपदमभावमात्रपरमिति द्रष्टव्यमिति समादधौ । अत्राहुः विशेषबोधको विशब्दः क्वचिदभावबोधकश्च, न तु क्वचिदुत्पत्तिबोधक इत्याक्षेपोऽयमलग्नक इति । तत्र ब्रूमः सत्यं विशेषबोधक एव विशब्दः, स च विशेषः उत्पत्तेरन्यो ध्वंसे दुर्वचः, उत्पत्तिरेव हि ध्वंसे प्रागभावादिभ्यो विशेषः, एवं चोत्पत्तिरूपविशेषबोधको विशब्दोऽनर्थकः, जन्याभावत्वरूपध्वंसत्वविशिष्टवाचकघातपदेनैवोत्पत्तिलाभसंभवात् उत्पत्तेरेव जन्यतात्वादित्यभिप्रायेणेदमाशङ्कितं इति । स्यादेतत् ईश्वरस्थापकानुमाने स्वरूपसंबन्धरूपमेकं कार्यत्वं प्रागभावप्रतियोगित्वरूपं चान्यत्कार्यत्वमिति वक्ष्यति महादेवः । एवं च तादृशजन्यत्वस्य घातपदार्थघटकतया लाभेऽप्याद्यक्षणसंबन्धरूपाया उत्पत्तेस्तस्मादलब्धतया क्वानर्थक्यशङ्का । नच स्वरूपसंबन्धरूपं, प्रागभावप्रतियोगित्वरूपं, उत्पत्तिरूपं, वा जन्यत्वं घातपदार्थतावच्छेदकमित्यत्र विनिगमनाविरहात्त्रयाणामेव घातपदार्थतावच्छेदकत्वं वाच्यमित्यस्त्येवानर्थशङ्केति वाच्यं । लाघवेन स्वरूपसंबन्धरूपजन्यत्वस्यैव तथात्वस्वीकारात् । किंच धर्मत्रयविशिष्टे एका शक्तिः पृथग्वा, आद्ये एकेनैव अभावान्तरव्यावृत्तेरितरयोरव्यावर्तकत्वात् । द्वितीये घातपदस्य नानार्थकतापत्तिः नच कदाचित्स्वरूपसंबन्धरूपजन्यत्वविशिष्टस्य कदाचित्प्रागभावप्रतियोगित्वविशिष्टस्य कदाचिदुत्पत्तिविशिष्टस्य चाभावस्य घातपदाद्बोधेन शक्तित्रयमावश्यकमिति वाच्यं । लाघवेनैकधर्मविशिष्टे शक्तिसिद्धावितरधर्मविशिष्टयोर्लक्षणया शक्तिभ्रमेण वा बोधाङ्गीकारसंभवात् । अस्तु वा धर्मत्रयविशिष्टे शक्तित्रयं, तथाऽपि सकृदुच्चरितन्यायादेकेन घातशब्देनैकधर्मविशिष्टमेव प्रत्याय्येत नतु धर्मत्रयविशिष्टं, तथा चोत्पत्तिबोधकस्य विशब्दस्य न पौनरुक्त्यं कार्यत्वान्तरविशिष्टमेव घातपदेन प्रत्याय्यत इत्यभिधानात् । अस्तु वोत्पत्तिविशिष्टाभावः

## दिनकरीयम्.

सत्यः युक्तयो यस्यां सा तथा । मुक्तावलीसादृश्यं ग्रन्थे द्रव्यादिपदार्थवत्तया, तथा हि मुक्तावली सद्रव्या साध्यतया द्रव्यवती द्रव्यसाध्येति यावत्, नानाविधद्रव्यघटिता वा । गुणेन सूत्रेण गुम्फिता निर्मिता, सुकृतिनां पुण्यवतां यानि सन्ति समीचीनानि भगवद्भजनादिरूपाणि कर्माणि तेषां बोधिका । सत्सामान्यं समीचीना जातिः विशेषो महत्त्वनिर्मलत्वादिस्ताभ्यां नित्यमनवरतं मिलिता सम्बद्धा । अभावे तेजोऽभावेऽन्धकारे सति प्रकर्षेणोज्ज्वला अर्थप्रकाशिकेति यावत् । यथा मुक्तावली द्रव्यादिसकलपदार्थवती तथाऽयं ग्रन्थोऽपीति । अत्र च मुक्तावलीसाम्योक्त्या निर्दोषत्वं सूचितम् । अत्र द्रव्यादिपदार्थप्रतिपादकत्वप्रदर्शनेन द्रव्यादयो विषया उक्ताः । पदार्थतत्त्वावधारणं च प्रयोजनं सूचितम् । सम्बन्धश्च प्रतिपाद्यप्रतिपादकभावः । पदार्थतत्त्वावधारणकामोऽधिकारीति ॥ ग्रन्थारम्भसमये कृतस्य मङ्गलस्य, तन्निबन्धस्य च, वैयर्थ्यमाशङ्क्य फलं दर्शयति—विघ्नविघातायेति ॥ प्रारब्धुमिष्टस्य ग्रन्थस्येति शेषः । यद्यपि अत्र घातपदस्योत्पत्ति-

## रामरुद्रीयम्.

यैव वाच्यम्, सामान्यपदमपि शास्त्रकृत्परिभाषया जातिरूपसामान्य एव सुप्रसिद्धम्, अन्यथा 'सामान्यं सविशेषकं' इति मूलेऽपि जात्यतिरिक्तसामान्यव्यावर्तकविशेषणानुक्त्या मूलकारस्य न्यूनतापत्तेस्सदित्यनर्थकं स्यात आह—यद्वेति ॥ विपदमनर्थकमितीति । इदं चोपसर्गाणां वाचकत्वमताभिप्रायेण । अन्यथा

## प्रभा.

प्रारिप्सितग्रन्थस्येत्यादिः। विघ्नः समाप्तिप्रतिबन्धकाधर्मविशेषः तस्य विघातः विशेषेण नाशः वीत्युपसर्गसम-

## मञ्जूषा.

एव घातशब्दबोध्यः तथापि न पौनरुक्त्यं कार्यत्वान्तररूपस्यैव विशेषस्य विशब्देन बोधसंभवात् । नैष दोषः यतो नात्र पौनरुक्त्यमाशङ्कितुरभिप्रेतं किन्त्वव्यावर्तकविशेषणाभिधानं, घातपदार्थघटकजन्यत्वविशेषणेनैव प्रागभावादीनां व्यावर्तितत्वादिति । एवंच विशब्दबोध्यो विशेषः घातपदार्थघटकजन्यत्वादतिरिक्तोऽस्तु मा वा उभयथाऽव्यावर्तकत्वमवश्यपरिहार्यमिति शङ्कासङ्गतिः । ततश्चोत्पत्तिमदभावपरतयेत्यत्रोत्पत्तिपदं जन्यत्वपरं तच्च स्वरूपसंबन्धरूपं, प्रागभावप्रतीयोगित्वरूपं, आद्यक्षणसंबन्धरूपं, वेत्यन्यदेतत् यादृशं च जन्यत्वं घातपदार्थघटकं तादृशमेवेह विशब्दबोध्यं, घातपदं त्वभावमात्रपरमिति नाव्यावर्तकविशेषणाभिधानमिति च समाधीयत इति न दोषगन्धः । अथैवमपि विपदमित्ययुक्तं उपसर्गाणां द्योतकत्वेन शक्तत्वरूपपदत्वासंभवात् । द्योत्यस्यैवाऽव्यावर्तकत्वशङ्केति चेत्तर्हि घातपदमभावमात्रपरामिति सिद्धान्तासंगतिः विशब्दस्योत्पत्तिरूपविशेषणवाचकत्वासंभवात् इति चेदत्र केचित् उपसर्गाणां वाचकत्वपक्षमवलम्ब्येदमुक्तं महादेवेनेति समादधते । स्वपरमतभेदपरिज्ञानविधुरो महादेव इत्यभिधानस्यैव पर्यायान्तरमिदं समाधानं, द्योतकत्ववादिनैयायिकमते विशब्दद्योत्यार्थस्याव्यावर्तकत्वपरिहाराभावश्च । अन्ये तु नायं विशब्दः उपसर्गात्मकः किन्तु सुबन्तः, तथाहि वात्युत्पद्यत इति विः, 'वा गतिगन्धनयोः' इत्यस्माद्धातोः वातेर्डिच्चेत्यौणादिकः इप्रत्ययः धातूनामनेकार्थकत्वादिति गत्यर्थकस्यापि वातेर्जगदित्यत्र गमेरिव संसार इत्यत्र सरतेरिवोत्पत्त्यर्थकत्वमविरुद्धं ईदृश एवायं विशब्द इति वक्तव्यं, न तूपसर्गात्मक इति विशब्दद्योत्यार्थाभावादित्यभिप्रेत्य यद्यपीत्यादिना तत्राव्यव्यावर्तकविशेषणाभिधानमाशङ्क्य परिहृतमिति व्याचक्षते । एतच्च बहुतरक्लेशसंवलितं, गत्यर्थकधातोरुत्पत्त्यर्थकत्वमिति न दृष्टचरं विनाशप्रतीयोगित्वेनैव जगच्छब्दप्रवृत्तिस्वीकारात् । संसार इत्यत्र तूपसर्गविशेषवशादुत्पत्तिबोधे बाधकाभावः अत एवोत्पत्तिरित्यत्र गत्यर्थकपदेः उत्पत्त्यर्थकत्वमप्यविरुद्धं, उपसर्गविशेषस्यैव तन्नियामकत्वादिति। अन्ये तु यथा घात इत्यत्र भावकृतश्शब्दसाधुत्वार्थकत्वस्वीकारेण धातुत एव ध्वंसोपस्थितिः तथा कृदन्तसमुदायत एव कदाचित्तदुपस्थितिरिष्यत इति कृदन्तसमुदायस्यापि तत्र शक्तिरुपेयते । तत्र च यदा धातुत एव तदुपस्थितिः तदा विशब्दस्योपसर्गत्वेऽपि कृदन्तसमुदायात्मकप्रातिपदिकेन यदा तदुपस्थितिः तदा न तस्योपसर्गत्वं 'उपसर्गाः क्रियायोगे' इति धात्वर्थयोगे एव तत्संज्ञाविधानात्तत्र चोपसर्गसंज्ञावत एव प्रादेरवाचकत्वं नैयायिकाभिमतं न तु केवलनिपातसंज्ञावत एव, तथासति निर्मक्षिकमुपकुम्भमित्यादौ निरुपादेरुपसर्गभावात् समीपाद्यर्थकत्वकथनविरोधापत्तेः । प्रकृते विशब्दो नोपसर्गसंज्ञावांस्तथासति पूर्वोक्तरीत्या तद्द्योत्यार्थाभावेन तदानर्थक्यापत्तेः, किन्तु केवलनिपातसंज्ञावानित्यभिप्रेत्य । तत्रापि विशब्दार्थस्योत्पत्तिरूपविशेषस्य घातपदार्थघटकतयैव लाभात्तदानर्थक्यमाशंक्य घातशब्दस्य अभावमात्रपरत्वमाश्रित्य समाहितवान्महादेवः। अत एव घातशब्दस्योत्पत्तिमदभावपरतयेत्यभिहितं, नतु हनधातोरिति, तथा घातपदमभावमात्रपरमित्यभिहितं, न तु हनधातोरित्यतो न कोऽपि दोष इति वदन्ति । एतच्च

## दिनकरीयम्.

मदभावपरतया विपदमनर्थकमिति प्रतिभाति तथापि विशिष्टवाचकानां पदानां पृथक् विशेषणवाचकपदस-

## रामरुद्रीयम्.

तेषां द्योतकत्वपक्षे किंचिदर्थावाचकतया उपसर्गाणां शक्तत्वरूपपदत्वासम्भवेन विपदमित्यसङ्गतमेव स्यात् । अत एव समाधानेऽपि "विशिष्टवाचकानां पदानां सति पृथग्विशेषणवाचकपदसमवधने विशेष्यमात्रपरत्वम्" इति न्यायेन विपदसन्निहितघातपदस्य अभावमात्रपरताप्रदर्शनमपि संगच्छते । अन्यथा विपदस्य किंचिदर्थावाचकत्वेन विशेषणवाचकत्वासम्भवात् विघातपदस्योक्तन्यायविषयता न स्यादिति ध्येयम् । विशिष्टवाचकपदस्यापि विशेषणबोधकत्वरूपविशेषणवाचकत्वस्याक्षततया तेषां क्वापि विशिष्टवाचकता न स्यादित्यतः **पृथगित्युक्तम् ॥** विशिष्टवाचकपदातिरिक्तमित्यर्थः । ननु विघ्नविघाताय कृतं मङ्गलमिति मूलेन मङ्गले

### प्रभा.

भिव्याहृतघातपदस्य विलक्षणनाशार्थकत्वात्, प्रकृतसमाप्तिप्रतिबन्धकयावद्विघ्ननाश इति फलितोऽर्थः। तस्मा-

### मञ्जूषा.

यद्यपि महादेवग्रन्थानुगुणमेव तथाऽपि न तत् युक्तिसहं—तथाहि विशब्दस्य धातुयोग एव विशेषबोधकत्वं न तु प्रातिपदिकयोगे शब्दस्वाभाव्यात्, विशिष्टजयादितात्पर्येण हि विजयते वितनोतीत्यादि प्रयुज्यते, न तु विशिष्टघटादितात्पर्येण विघटो विपट इत्यादि प्रयुज्यत प्रतियोगिसमभिव्याहृतविपदस्याभावविशिष्टलक्षणा-तात्पर्यग्राहकत्वमेव विफलो विजनो विधन इत्यादौ दृश्यते। अत एव 'विनीलननशाकिनी विरलबीजरोमांकुरम्' इति चाटुश्लोके विशिष्टनीलतात्पर्यकविनीलपदस्य असाधुत्वमेव मनीषिणो मन्यन्ते। तदिह धातुतो ध्वंसो-पस्थितावेव विशब्दस्य विशेषबोधोपयोगित्वनिर्वाह इति विफलोऽयमायासः। अस्तु वा यत्किंचित्प्रातिपदिक-योगेऽपि तस्य विशेषबोधोपयोगित्वं, तथापि भावकृदन्तसमुदायात्मकप्रातिपदिकस्य ध्वंसे शक्तावेव विशब्दस्यो-पसर्गत्वाभावप्रसक्तिः। नच समुदायशक्तिर्युक्तिसिद्धा, हन्ति हन्यते घ्नन् हन्यमानः पचति पच्यते पचन् पच्यमान इत्यादाववश्यकल्पनीयधातुशक्त्यैव घातः पाक इत्यादावपि शाब्दबोधनिर्वाहे तत्र समुदायशक्तौ प्रमाणाभावात्। अत एव संयोगविभागादिशब्दानां नैमित्तिकसंज्ञात्वनिराकरणं दीधितिकृतां सङ्गच्छते। यत्तु धातोरिव घञाद्यन्तसमुदायस्यापि शक्तिरावश्यकी, अन्यथा पाकं पश्यतीत्यादौ सुब्विभक्त्यर्थकर्मत्वादौ तदन्वयानुपपत्तिः, प्रकृत्यर्थान्वितस्वार्थबोधकत्वं प्रत्ययानामिति व्युत्पत्तेः धातूनां सुब्विभक्त्यप्रकृतित्वात्। प्रकृत्ये-कदेशार्थस्यापि प्रत्ययार्थान्वये, पचन्तं पश्यतीत्यादितोऽधिकरणादिपरल्युडन्तपचनपदघटितात् पचनं पश्यतीत्या-दितश्च पाकादेर्द्वितीयार्थकर्मत्वाद्यन्वयापत्तेः। एकत्र विशेषणत्वेनोपस्थितस्यान्यत्र विशेषणत्वेनान्वयस्य अव्युत्पन्न-तया तत्र कृदर्थकर्त्रधिकरणादिविशेषणपाकादेर्न कर्मत्वे विशेषणतयाऽन्वय इति चेत्तथापि पाकादि-विशेषणतया सुबर्थसङ्ख्यान्वयसंभवेन, यत्र पाककर्त्रादेर्द्वित्वादिकं बाधितं पाकादेस्तदबाधितं तत्र पचन्तौ पश्यति पचमानौ पश्यतीत्यादिप्रयोगप्रसङ्गस्य दुर्वारत्वात्। धातूपस्थाप्यार्थे सुबर्थान्वयबोधं प्रति तत्तद्धातूत्तर-प्रत्ययधर्मिककिञ्चिदर्थपरत्वज्ञानस्य प्रतिबन्धकत्वमुपगम्य एतादृशातिप्रसङ्गवारणे च गौरवात्। एवं शोभनं पचनमित्यादौ धातुमात्रेण पाकाद्युपस्थितौ तत्र शोभनाद्यभेदान्वयानुपपत्तिः, विशेषणविभक्तिसजातीय-विभक्तिप्रकृत्यनुपस्थाप्यत्वात्। प्रकृत्येकदेशसाधारणतादृशविभक्तिप्रकृतित्वस्य प्रयोजकत्वे, तत्र ल्युडादेः अधिकरणादिपरत्वेऽपि तथाविधान्वयबोधप्रसङ्गात्: धात्वर्थे समानविभक्तिकप्रातिपदिकान्तरार्थाभेदान्वय-बोधं प्रति तत्तद्धातूत्तरप्रत्ययधर्मिककिञ्चिदर्थपरत्वज्ञानस्य प्रतिबन्धकताभ्युपगमेन तद्वारणे च गौरवात्। एवं पाको दृश्यते पचनं दृश्यते पाको भवति पचनं भवतीत्यादौ आख्यातोपात्तसङ्ख्याकर्मत्वादेः पाकादावन्वय-बोधानुपपत्तिः प्रथमाविभक्तिप्रकृत्यनुपस्थाप्यत्वात्। प्रकृत्येकदेशसाधारणप्रकृतित्वस्य प्रयोजकत्वे, पचन् दृश्यते इत्यादावधिकरणादिपरल्युडादिघटिते पचनं दृश्यत इत्यादौ च तथाऽन्वयबोधप्रसङ्गात्। कस्य चित्प्रतिबन्धकत्वं कल्पयित्वा तद्वारणे च गौरवात्। एवं स्तोकः पाकः स्तोकं पचनं स्तोकेन पचनेन स्थीयत इत्यादौ धातुत एव पाकोपस्थितौ स्तोकशब्दस्य पाकादिशब्दसमानलिङ्गवचनकत्वानुपपत्तिः, क्रियाविशेषणानां नपुंसकद्वितीयैक-वचनान्तत्वनियमात्। मम तु धातुमात्रस्यैव यत्र पाकादौ तात्पर्यं तत्र विशेषणवाचकपदात् द्वितीयैव स्तोकं पाक इति। यत्र कृदन्तसमुदायस्य पाकादौ तात्पर्यं तत्र तादृशपदं तथाविधकृदन्तसमुदायसमानविभ-क्तिकमेव, तदुक्तं कातन्त्रपरिशिष्टे 'कथं स्तोकः पाकः कृदन्तविशेषणत्वाद्धात्वर्थैकाधिकरण्ये तु स्तोकमोदनस्य पाक इति स्यादेव' इतीति कैश्चिदुक्तं तदयुक्तं। तथासति स्तोकमोदनस्य पाकान्न दुःखानि स्तोकमोदनस्य पाको दुःखाजनकः स्तोकमोदनस्य चैत्रेण पाको, मैत्रेण बहु दृश्यत इत्यादावन्वयबोधानुपपत्तेः तत्र स्तोकमिति क्रिया-

### दिनकरीयम्.

मवधाने, विशेष्यमात्रपरतायाः 'स कीचकैर्मारुतपूर्णरन्ध्रैः' इत्यत्र 'कीचका वेणवस्ते स्युर्ये स्वनन्त्यनिलो-

### रामरुद्रीयम्.

विघ्नध्वंसजनकत्वस्यैव सूचितत्वेन, तदुपरि नन्वित्यादिमूलेन विघ्नध्वंसं प्रति मङ्गलं न कारणमित्याशङ्का

## प्रभा.

इत्यर्थः। एतेन मङ्गलस्य विघ्नध्वंस एव फलमिति नवीनमतं दर्शितं। मङ्गलस्य समाप्तिफलकत्ववादिनां प्राचा-

## मञ्जूषा.

विशेषणान्वयानुरोधेन धातुत एव पाकोपस्थितेरवश्यं वक्तव्यतया तत्र विभक्त्यर्थान्वयस्य समानविभक्तिकप्रातिपदिकान्तरार्थाभेदान्वयस्याख्यातोपात्तसंख्याकर्मत्वाद्यन्वयस्य चानुपपत्तेः । किं बहुना तात्पर्यवशात् क्वचिद्धातुनैवार्थोपस्थितिः क्वचित् कृदन्तसमुदायेनेति तेनैवोक्तं । ततश्च पाकं पश्यति पाकः शोभनः पाको दृश्यते पाकस्तिष्ठतीत्यादौ यदि धातुत एवार्थोपस्थितिरभिप्रेता तदा विभक्त्यर्थाद्यन्वयानुपपत्तिर्दुर्वारैवेति तदनुरोधेन प्रकृत्येकदेशसाधारणप्रकृतित्वस्य प्रयोजकतायाः, पचन्तं पश्यतीत्यादौ पाके तदन्वयवारणाय दर्शितप्रतिबन्धकतायाश्च परमतेऽप्यवश्यं कल्पनीयतया कृदन्तसमुदायस्य शक्तिकल्पनया कृतम् । तदुक्तं शाब्दिकैः 'कृदभिहितो भावो द्रव्यवत्प्रकाशते' इति—भावः क्रिया धात्वर्थ इति यावत्, तस्य द्वे अवस्थे सिद्धावस्था साध्यावस्था च सङ्ख्याकारकाद्यन्वययोग्यत्वं सिद्धत्वं । तच्च प्रातिपदिकार्थस्य सार्वत्रिकं धात्वर्थस्य क्वाचित्कं। सार्थकप्रत्ययान्तधातूपस्थाप्यस्य साध्यत्वं।तच्च संख्याकारकाद्यन्वयायोग्यत्वं। भावतिङोऽपि वर्तमानत्वाद्यर्थत्वात् तदन्तधातूपस्थाप्यस्यापि साध्यत्वमेव । भावकृदन्तधातूपस्थाप्यस्य तु सिद्धावस्थाऽभ्युपेयत इति । ततश्च कृदभिहितो धात्वर्थस्सिद्धवत्प्रकाशत इति तदर्थः । अथैवं स्तोकः पाक इति प्रयोगानुपपत्तिः क्रियाविशेषणानां कर्मत्वं नपुंसकत्वमेकवचनान्तत्वेत्यनुशासनादिति चेदत्र गदाधरः- क्रियाविशेषणानां कर्मत्वमित्यानुशासने क्रियापदस्य सार्थकप्रत्ययान्तधातूपस्थाप्यार्थपरत्वात् न स्तोकः पाक इत्याद्यनुपपत्तिरित्याचष्ट । तदपरे न क्षमन्ते, स्तोकं जुगुप्सते मृदु मीमांसते इत्यादिनिरर्थकसन्नन्तस्थलेऽनुपपत्तेः । तत्र तिङोऽर्थवत्त्वेऽपि शबादिधातूनां सनादिप्रत्ययव्यवधानेन तदन्तताविरहादिति। तत्रेदमुत्तरं—सार्थकत्वपदेन किञ्चिदर्थलक्षणा-तात्पर्यग्राहकत्वान्यतरवत्त्वस्य विवक्षितत्वात् , जुगुप्सत इत्यादौ सनादेरर्थोपस्थापकत्वाभावेऽपि शबादिधातूनां गर्हाविचाराद्यर्थलक्षणातात्पर्यग्राहकत्वेन सार्थकत्वसिद्धेः । अस्तु वा किञ्चिदर्थबोधकत्वमेव सार्थकत्वमिह विवक्षितं, तथापि न क्षतिः स्वपूर्वप्रत्ययभिन्नपदपूर्वत्वाभाववधिशिष्टस्वपूर्वत्वसम्बन्धेन सुब्विभक्तिभिन्नसार्थकप्रत्ययाविशिष्टत्वस्यैव सार्थकप्रत्ययान्तत्वशब्दार्थत्वेन, जुगप्सते इत्यादौ सार्थकतिङ्प्रत्ययपूर्वसनादिप्रत्ययपूर्वस्यापि शबादेस्तथात्वसम्भवात् । अत एव स्तोकं पचतीत्यादौ शबादिविकरणप्रत्ययस्यार्थबोधकत्वाभावेऽपि तिङ्विभक्तिमादायैव पचादेस्तथात्वं । स्तोकः पाकः स्तोकान् पाकान् पश्यतीत्यादौ संख्याद्यर्थकसुब्विभक्तिमादायातिप्रसंगवारणाय सार्थकप्रत्ययस्सुब्विभक्तिभिन्नत्वेन विशेषितः । तदपि सार्थकत्वं न किंचिदर्थबोधोपधायकत्वं स्तोकं स्थीयत इत्यादौ वर्तमानत्वाद्यविवक्षायामनुपपत्तेः किंत्वर्थबोधौपयिकाकाङ्क्षाशालित्वमिति वक्तव्यम् । एवंच गतानि रम्याणि वराङ्गनाया इत्यादावतिप्रसंगः निष्ठाप्रत्ययरूपस्य भावकृतस्तदानीं भूतकालबोधानुपधायकत्वेऽपि तद्बोधौपयिकाकाङ्क्षाशालित्वस्याक्षतत्वादिति तैरेवोक्तं । तदप्यापातरमणीयमेव, तथाहि स्तोकं स्थीयत इत्यादौ कदाचिद्वर्तमानत्वाविवक्षायां तद्बोधविरहेऽपि लट्त्वेन रूपेण भावतिङोऽपि वर्तमानत्वबोधजनकत्वं तद्विवक्षास्थले निर्बाधमिति तद्बोधजनकतावच्छेदकानुपूर्वीविशेषरूपाकांक्षाशालित्वं तत्राक्षतं। गतानीत्यादौ तु कर्त्रादिपरनिष्ठाप्रत्ययेनैव भूतत्वं बोध्यते न तु भावपरेणेत्यस्य निर्विवादतया कर्त्रादिपरनिष्ठाप्रत्ययताद्दशधातुपदयोरेव आनुपूर्वी भूतत्वबोधजनकतावच्छेदिका न तु भावपरनिष्ठाप्रत्ययताद्दशधातुपदयोः, ताद्दशबोधं प्रति धातुपदाव्यवहितोत्तरकर्त्रादिपरनिष्ठाप्रत्ययज्ञानस्यैव कारणत्वादिति न तस्य सार्थकत्वसंभवः। न चैतावता गदाधरोक्तं सम्यगिति मन्तव्यं। स्तोकमोदनस्य पाक इत्यादौ स्तोकमित्यस्य क्रियाविशेषणत्वानुपपत्तेः भावकृतां निरर्थकत्वस्य तेनैवोक्तत्वात्। कथं तर्हि स्तोकः

## दिनकरीयम्.

द्धताः' इति कोशपर्यालोचनया मारुतपूर्णरन्ध्रत्वविशिष्टवेणुबोधककीचकपदे दृष्टत्वात् , घातपदमभावमात्रपरं

## रामरुद्रीयम्.

यद्यपि युज्यते तथापि न वा समाप्तिं प्रति कारणमित्युक्तिरसङ्गतेत्यतस्तद्ग्रन्थमभिप्रायान्तरेणावतारयति—

## प्रभा.

म्मते विघ्नध्वंसफलकत्वप्रतिपादनं विना समाप्तिफलकत्वं न निर्वहतीति तत्प्रतिपादनेन मङ्गलस्य विघ्नध्वंस-

## मञ्जूषा.

पाकः स्तोकमोदनस्य पाक इति द्विविधप्रयोगयोरुपपत्तिरिति चेदत्र केचित् भावकृतां क्रियात्वेन क्रियासामान्यमर्थः, तत्र प्रकृत्यर्थस्य पाकादिरूपक्रियाविशेषस्य अभेदेनान्वयः। स्तोकं स्थीयत इत्यादौ लकारस्यापि क्रियासामान्यार्थकत्वेनैव भावार्थकत्वानुशासनात्। तथाच घञन्तस्थले यदा स्तोकादीनां घञ्प्रकृत्युपस्थाप्यपाकाद्यन्वयविवक्षा तदा स्तोकमोदनस्य पाक इति प्रयोगः। घञादिप्रत्ययोपस्थाप्यक्रियासामान्यान्वयस्तु यदा विवक्ष्यते, तदा स्तोकादिपदानां विशेष्यवाचकपदानुसारिविभक्तिमत्वमित्याहुः। तत्तुच्छं, भावप्रत्ययशक्यतावच्छेदकस्य क्रियात्वस्य दुर्वचत्वात्—तद्धि न कर्मत्वं, स्पन्दो मन्दः मन्दं चलनं पश्येत्यादौ धातुत एव कर्मत्वविशिष्टोपस्थित्या पौनरुक्त्यापत्तेः। संख्या परिमाणं संयोगो विभागस्स्नेहश्शब्दो नादो बुद्धिर्ज्ञानं दर्शनं स्पर्शनं श्रवणं मननं ध्यानं कामो रागः द्वेषः इत्यादौ कर्मत्वस्य बाधाच्च। नापि गुणकर्मसाधारणं सत्त्वं तत्, स्पन्दस्सन् बुद्धिस्सती ज्ञानं सदित्यादौ भावकृतैव सत्त्वविशिष्टोपस्थितौ पौनरुक्त्यापत्तेः। समवायो ध्वंसः इत्यादावगतेश्च। नापि भावत्वं जन्यत्वं वा, समवायो व्यतिरेक इत्यादावगतेः स्पन्दो भावो जन्यो वेत्यादौ पौनरुक्त्यापत्तेश्च। नापि प्रमेयत्वम्, अभिधेयत्वादिकमादाय विनिगमनाविरहापत्तेः,स्पन्दः प्रमेय इत्यादौ पौनरुक्त्यापत्तेश्च। किं च कर्मत्वादिप्रमेयत्वान्तस्य दर्शितस्य कस्यापि धर्मस्य अनुपस्थितावपि स्पन्दः पाकः इत्यादौ शाब्दबोधोत्पत्तेरानुभाविकतया तेषां भावप्रत्ययशक्यतावच्छेदकत्वमयुक्तमेव। नच सकलधात्वर्थसाधारणाखण्डोपाधिरेव क्रियात्वमिति वाच्यम्, तत्र प्रमाणाभावात्। न हि स्पन्दपाकपरिमाणादिषु पण्डितपामरसाधारण्येन क्रियाकारानुगतप्रतीतिरस्ति। किन्तु धात्वर्थत्वविशिष्टे तान्त्रिकैः परिभाषितः क्रियाशब्दः, नच क्रियाशब्दबोध्यतया तान्त्रिकपरिभाषितत्वमेव भावकृद्वाच्यतावच्छेदकमिति युक्तम्। तान्त्रिकपरिभाषामविदुषः स्पन्दपाकादिशब्दाद्बोधानुपपत्तेः, क्रियाशब्दबोध्यतया तान्त्रिकपरिभाषित इति वाक्ये पौनरुक्त्यापत्तेश्च। अस्तु वा क्रियात्वमखण्डोपाधिस्तत्किं क्रियापदे धातुबोध्यतावच्छेदकम्, उत कृत्प्रत्ययबोध्यतावच्छेदकं आहोस्विदुभयबोध्यतावच्छेदकं, आद्ये क्रिया भावकृद्वाच्येति प्रयोगानुपपत्तिः। धात्वर्थविशेषणस्य नपुंसकद्वितीयैकवचनान्तत्वनियमस्य त्वयोक्तत्वात्। द्वितीये धातोः मूकत्वापत्तिः प्रकृत्यर्थान्वितस्वार्थबोधकत्वं प्रत्ययानामिति व्युत्पत्तिविरोधश्च स्तोकमोदनक्रियेति प्रयोगानुपपत्तिश्च। तृतीये तु पौनरुक्त्यं स्फुटमेवेत्यलमधिकेन। तस्माद्भावकृदन्तस्थले धातुनैव पाकत्वादिविशिष्टं प्रत्याय्यते, भावप्रत्ययस्तु शब्दसाधुत्वमात्रार्थः पाकत्वाद्यवच्छिन्नविशेष्यकाभेदसंसर्गकस्तोकत्वाद्यवच्छिन्नप्रकारकशाब्दबोधं प्रति नपुंसकद्वितीयैकवचनान्तस्तोकादिपदपचादिधात्वोस्समभिव्याहारज्ञानस्य, समानविभक्तिकयोः स्तोकादिपदपचादिधातुघटितकृदन्तसमुदाययोस्समभिव्याहारज्ञानस्य तृणारणिमणिन्यायेन कारणत्वस्वीकाराच्च, स्तोकमोदनस्य पाकः स्तोकः पाक इति द्विविधप्रयोगयोरुपपत्तिः। तत्र प्रथमकार्यकारणभावे क्रियाविशेषणानां कर्मत्वमित्यनुशासनं बीजम्। द्वितीयकार्यकारणभावे तु कृदभिहितो भावो द्रव्यवत्प्रकाशत इत्यनुशासनम्। तत्र कृत्समभिव्याहारसिद्धसाध्यताकधात्वभिहितत्वात् कृदभिहितत्वं भावस्यौपचारिकम्। ततश्च द्रव्यवत्प्रकाशत इत्यनेन संख्याकारकाद्यन्वययोग्यत्वं समानविभक्तिकप्रातिपदिकान्तरार्थाभेदान्वययोग्यत्वं च दर्शितम्। तत्र द्रव्यं भवतीत्यनुक्त्वा द्रव्यवत्प्रकाशत इति वतिप्रत्ययाभिधानेन साध्याऽवस्थाऽपि क्वचिदस्तीति ज्ञायते। तेन नपुंसकद्वितीयैकवचनान्तप्रातिपदिकार्थाभेदान्वययोग्यत्वमपि कल्प्यते, प्रयोगानुसारित्वात्कल्पनाया इति।

## दिनकरीयम्.

द्रष्टव्यम्। ननु निष्फलत्वान्मङ्गलाचरणमयुक्तं, नच निष्फलत्वमेव तस्यासिद्धं, फलविशेषशून्यत्वेन हेतुना

## रामरुद्रीयम्.

ननु निष्फलत्वादिति। फलविशेषशून्यत्वहेतुनेति॥ यद्यपि ज्योतिष्टोमादावपि पुत्रादि-

न विघ्नध्वंसं प्रति न वा समाप्तिं प्रति कारणं, विनापि मङ्गलं नास्तिकादीनां ग्रन्थेषु निर्वि-

**प्रभा.**

द्वारा समाप्तिः फलमिति प्राचीनमतं सूचितम्। केचित्तु विघातायेत्यत्र यद्यपि घातपदस्य उत्पत्तिमदभावपर-

**मञ्जूषा.**

अत्र प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वमिति व्युत्पत्तौ प्रकृत्येकदेशसाधारणप्रकृतित्वस्यैव निविष्टतया न पाकं पश्यतीत्यादौ संख्याकर्मत्वाद्यन्वयानुपपत्तिः। तद्धात्वर्थे संख्याद्यन्वयबोधं प्रति तद्धातूत्तर-प्रत्ययधर्मिककिंचिदर्थपरत्वज्ञानस्य प्रतिबन्धकत्वकल्पनाच्च पचन्तं पश्यतीत्यादौ न पाके संख्याद्यन्वया-पत्तिः। एवं तद्धात्वर्थे तिङर्थाद्यन्वयबोधं प्रति समानविभक्तिकप्रतिपादिकान्तरार्थभेदान्वयबोधं प्र-त्यपि दर्शितज्ञानस्य प्रतिबन्धकत्वं कल्पयित्वा पूर्वोपदर्शितातिप्रसङ्गो वारणीयः। यत्तु एतादृशप्रतिबध्य-प्रतिबन्धकभावकल्पने, शोभनः पाको दृश्यत इत्यादौ पाके सुबर्थसंख्यायाः शोभनाभेदस्य,तिङर्थस्य चान्वया-नुपपत्तिः। पचधातूत्तरसुप्प्रत्ययधर्मिककिंचिदर्थपरत्वज्ञानस्य प्रतिबन्धकस्य सत्त्वात्। नच तद्धातूत्तरत्वं तद्धात्वव्यवहितोत्तरत्वं पाक इत्यादौ सुपो घञादिना व्यवधानान्नानुपपत्तिरिति वाच्यम्। तथासति पचमानौ पश्यतीत्यादौ शानचश्शपा व्यवधानेन शानच्प्रत्ययधर्मिककर्तृपरत्वज्ञानस्य अकिञ्चित्करतया तत्र पाकादौ संख्याद्यन्वयबोधापत्तेरित्यादिदूषणं कैश्चिदुक्तम्। तदयुक्तं, तद्धातूत्तरप्रत्ययपदेन तद्धातूत्तरसुब्विभक्तिपू-र्वश्च यः प्रत्ययः तस्य तद्धातूत्तरसुप्पदभिन्नो यः प्रत्ययः तस्य तद्धातूत्तरकृत्प्रत्ययस्यैव वा विवक्षितत्वेन दर्शितदोषाप्रसक्तेरिति। वस्तुतस्तु पचादिधातोरिव तदुत्तरकृत्प्रत्ययस्यापि पाकत्वाद्यवच्छिन्ने शक्तिरुपेयते न तु तस्य निरर्थकत्वम्। 'नपुंसके भावे क्तः' इत्याद्यनुशासनेषु तत्तद्धात्वर्थवाचकत्वेन भावकृतां विधानात्, तेषु भावपदस्य धात्वर्थपरत्वात्, सप्तम्या वाचकत्वार्थकत्वात्। नचैवं धात्वर्थतावच्छेदकभेदेन भावकृतां शक्ति-भेदापत्तिः, अनायत्या तस्येष्टत्वात्। तत्र यथा धूमालोकोभयलिङ्गकलिङ्गपरामर्शात्पर्वतो वह्निमानित्यनुमितिरे-कैव जायते, यथाच घटे नयनद्वयसंयोगात् घट इत्याकारकं चाक्षुषमेकमेव जायते, यथा वा नानासंबन्ध-ज्ञानरूपोद्बोधकवशाद्घट इत्याकारकं स्मरणमेकमेव जायते, तथा धातुकृदुभयशक्तिज्ञानात्पाक इत्याकारकस्मर-णमेकमेव जायते, न च धातुकृतोरन्यतरवैयर्थ्यं 'न केवला प्रकृतिः प्रयोक्तव्या नापि प्रत्ययः' इति न्यायेन द्वयोरावश्यकत्वात्। इत्थञ्च पाकस्य धात्वर्थत्वं नामार्थत्वं चेत्युभयमापतितमिति स्तोकमोदनस्य पाको मैत्रेणेत्यादौ नपुंसकद्वितीयैकवचनान्तप्रातिपदिकार्थभेदान्वयबोधरूपं तृतीयार्थकर्तृत्वादिविशेषितान्वयबोध-रूपं कार्यत्वं निर्वहति कारकविभक्तीनां धात्वर्थविशेषणस्वार्थबोधकत्वनियमात्। एवं पाकं पश्यति पाकः शोभनः पाको दृश्यत इत्यादौ सुब्विभक्त्यर्थसंख्याकर्मत्वाद्यन्वयबोधरूपं समानविभक्तिकप्रातिपदिकान्तरार्था-भेदान्वयबोधरूपं तिङर्थान्वयबोधरूपं च नामार्थत्वप्रयुक्तं कार्यत्वमपि निर्वहतीति सर्वं चतुरश्रम्। एतदभिप्रायकमेव 'कृदभिहितो भावो द्रव्यवत्प्रकाशते' इत्यभिधानं, यस्मात्कृताऽभिधीयते तस्मात्प्रा-तिपदिकार्थत्वप्रयुक्तकार्यत्वमपि धात्वर्थस्य भवतीत्यर्थ इत्यलं प्रसक्तानुप्रसक्तचिन्तया। तस्मात् कृदन्त-समुदायस्य शक्तिमभ्युपेत्य विशब्दस्योपसर्गत्वाभावसंपादनमयुक्तमेव। किंच यद्येवमभ्युपेयते, तदा स्तोकोऽभिषवो दृश्यते, स्तोकमभिषवं पश्यतीत्यादौ षत्वानुपपत्तिः उपसर्गात्सुनोतीत्यादिसूत्रेण उपसर्गात्परस्यैव सुनोतीत्यादेस्सस्य षत्वविधानात्। उक्तस्थले समानविभक्तिकप्रातिपदिकान्तरार्थभेदान्वयानुरोधेन, द्वितीया-

**दिनकरीयम्.**

तत्साधनादित्यभिप्रायेणाशङ्कते—**नन्विति**। मङ्गलस्य कारणत्वाभावे व्यतिरेकव्यभिचाररूपहेतुमाह—**वि-**

**रामरुद्रीयम्.**

रूपफलविशेषशून्यत्वेन, फलविशेषशून्यत्वं न निष्फलत्वव्याप्यं, तथापि तत्पदेन यावत्फलविशेषशून्यत्वस्य विवक्षितत्वात्, यावद्विशेषाभावस्य च सामान्याभावव्याप्यत्वान्नोक्तासङ्गतिरिति भावः। नचैवं निष्फलत्व-सिद्धये यावत्फलविशेषशून्यत्वमेव साधनीयं, मूले तु मङ्गलं न विघ्नध्वंसं प्रति, न वा समाप्तिं प्रति कारण-

## प्रभा.

तथा विपदमनर्थकमिति प्रतिभाति, तथापि विशिष्टवाचकानां पदानां पृथग्विशेषणवाचकपदसमवधाने विशेष्यमात्रपरतायाः सकीचकैर्मारुतपूर्णरन्ध्रैरित्यत्र 'कीचका वेणवस्ते स्युः ये स्वनन्त्यनिलोद्धताः' इति कोशान्मा-

## मञ्जूषा.

कसंख्याकर्मत्वाद्यन्वयानुरोधेन, तिङर्थान्वयानुरोधेन च सव इति समुदायस्यैव बोधकतायास्त्वया वाच्यत्वेनाभिशब्दस्य उपसर्गत्वासंभवात्। एवं शोभनामुपाधिं पश्यति प्राधिं पश्यतीत्यादौ उपसर्गादधिधाताविति सूत्रविहितवृध्यनुपपत्तिः,शोभनाभेदाद्यन्वयानुरोधे ऋद्धिरिति समुदायशक्तेरावश्यकत्वेनोपादेरुपसर्गत्वासंभवात्। एवमन्यदप्यूह्यं। अस्तु वा यथाकथंचिदत्र विशब्दस्य विशेषवाचकत्वं तथापि समभिव्याहृतपदवाच्यतावच्छेदककोट्यप्रविष्टं कञ्चन विशेषं बोधयन्नेव विशब्दस्सार्थकस्स्यात् नत्वन्यथा न चेह तथा संभवति, ततश्चैतावता स्थितस्य गतिश्चिन्तनीयेति न्याय एव अनुसृतो महादेवेन। न तु तस्य सार्थकत्वं सम्यगुपपादितं। तथाहि—विशिष्टवाचकानामित्यादिनियमे मानाभावः। न च 'सकीचकैर्मारुतपूर्णरन्ध्रैः कूजद्भिरापादितवंशकृत्यम्।' इति कालिदासप्रयोग एव तादृशनियमज्ञापकः। अन्यथा मारुतपूर्णरन्ध्रैः कूजद्भिरिति पदद्वयार्थस्य पुनरुक्तत्वापत्तेरिति महादेवोक्तं प्रमाणं युक्तं। कीचकशब्दस्य वेत्रवंशादिसाधारणं यद्वेणुत्वं तद्व्याप्यजातिविशेषावच्छिन्न एव शक्तिस्वीकारेण पौनरुक्त्याप्रसक्तेः। मारुतपूर्णरन्ध्रत्व-विशिष्टध्वनिमत्त्वोभयविशिष्ट एव तत्पदशक्तिस्वीकारे यदा न रन्ध्रेषु मारुतपूरणं ध्वनिजननं वा, तत्कालीने गृहमागते तस्मिन् कीचकपदप्रयोगानुपपत्तिः। तदुभयस्योपलक्षणविधया तत्पदशक्यतावच्छेदकत्वेऽपि यादृशकीचकव्यक्तौ दैवाद्रन्ध्रेषु मारुतपूरणाभावेन कदाचिदपि न ध्वनिरुत्पन्नः तत्र कीचकपदप्रयोगानुपपत्तेः। मारुतपूरणजन्यध्वन्युपलक्षितिनां कीचकानां सुषिरव्यापारापादकत्वासंभवेन तदापादकत्वरक्षार्थं तद्विशिष्टबोधनस्यावश्यकतया तदर्थं मारुतपूर्णरन्ध्रैः कूजद्भिरिति पदद्वयास्यावश्यकत्वाच्च। एतेन मारुतपूरणजन्यध्वनिस्वरूपयोग्यत्वं कीचकपदशक्यतावच्छेदकं दैवान्मारुतपूरणाभावेनाजनितध्वनिकायामपि कीचकव्यक्तौ तत्स्वरूपयोग्यत्वमक्षतमित्यपि प्रत्युक्तं। तावताऽपि सुषिरव्यापारापादकत्वोपपादनाय तादृशध्वनिविशिष्टत्वबोधनाय पदद्वयवैयर्थ्यानवकाशात्। किं च तादृशध्वनिस्वरूपयोग्यत्वं तादृशध्वनिजनकतावच्छेदकधर्मवत्त्वं। स च धर्मो वेणुत्वव्याप्यजातिविशेष एवेति, तस्य स्वरूपत एव शक्यतावच्छेदकत्वमुचितं लाघवात्, न तु तादृशध्वनिजनकतावच्छेदकत्वेन रूपेण, गौरवात्। नचैवं 'कीचका वेणवस्ते स्युर्ये स्वनन्त्यनिलोद्धताः' इति कोशविरोध इति वाच्यं। तादृशजातिविशेषस्य शब्दान्तरेण प्रतिपादनासंभवेन दीर्घग्रीवो लम्बोष्ठो विकटपृष्ठो यः पशुस्स उष्ट्रपदवाच्य इति वाक्यस्येव तादृशकोशस्य शक्यतावच्छेदकपरिचायकधर्ममात्रपरत्वात्। तथा च ये यज्जातिविशिष्टाः वेणवः अनिलोद्धतास्सन्तः स्वनन्ति ते तज्जातिविशिष्टाः कीचकपदवाच्या इति तादृशकोशार्थः। एवं वंशाङ्कुरवृत्तिजातिविशेष एव करीरपदशक्यतावच्छेदकः, लाघवात्तादृशजातिविशेषपरिचायकधर्मसमर्पक एव 'वंशाङ्कुरे करीरोऽस्त्री' इति कोशस्तेन 'आनिन्यिरे वंशकरीरनीलैः' इत्यत्र न पौनरुक्त्यप्रसक्तिः। अथ एव देवदत्तयज्ञदत्ताद्युच्चरितेषु शब्देषु देवदत्तीयत्वाद्यनुमापकाः परस्परव्यावृत्ता वेदपौरुषेयत्ववादे गङ्गेशोपाध्यायाङ्गीकृता जातिविशेषाः। गजतुरगमयूरादिशब्देष्वपि तादृशजातिविशेषा अनुभवसिद्धास्स एव च बृंहणहेषाकेकादिपदशक्यतावच्छे-

## दिनकरीयम्.

**नापीति। निर्विघ्नपरिसमाप्तीति।** विघ्नध्वंसपूर्वकसमाप्तीत्यर्थः। न च तत्र जन्मान्तरीयमङ्गलकल्पनान्न

## रामरुद्रीयम्.

मित्यनेन फलद्वयशून्यत्वमेव साध्यते, तेन च न यावत्फलविशेषशून्यत्वरूपहेतुसिद्धिरिति कथं प्रकृतोपयोग इति वाच्यम्। पशुपुत्रादिफलशून्यत्वस्य मङ्गले सर्वसम्मतत्वेन तस्य साधनानर्हतया, प्राचीननवीनाभ्यां समाप्तिविघ्नध्वंसयोरेव फलत्वाङ्गीकारेण, तदुभयफलशून्यत्वसाधने यावत्फलविशेषशून्यत्वरूपहेतुसिद्धेरावश्यकत्वादिति भावः। न चैवमपि प्राचीनैः मङ्गलस्य विघ्नध्वंसद्वारैव समाप्तिकारणत्वाङ्गीकारान्मङ्गलस्य विघ्न-

## प्रभा.

रुतपूर्णरन्ध्रत्वविशिष्टवेणुबोधककीचकपदे दृष्टत्वाद्धातपदमभावमात्रपरम् द्रष्टव्यमित्याक्षेपं परिहारश्चाहुः । तदसत्

## मञ्जूषा.

दकः, न तु गजादिकर्तृकत्वविशिष्टशब्दकत्वं तथा, गौरवात् । 'धैवतं हेषते वाजी निषादं बृंहते गजः' 'हयानां हेषमाणानां करिणां चापि बृंहतां' इत्यादौ हयादिकर्तृकत्वविशिष्टशब्दकर्तारो हयादय इति बोधस्य शिरोवेष्टनेन नासिकास्पर्शनतुल्यत्वापत्तेः, हेषाशब्दं च शृण्वत इत्यत्र हेषापदेनैव हयकर्तृकशब्दबोधने शब्दपदे पौनरुक्त्यापत्तेश्च । मम तु कल्पवृक्षस्सहकारतरुरित्यादाविव सामान्यविशेषभावेन न पौनरुक्त्यं । तेन हयहेषितैः केकिकेकारुतेत्यादावपि विशिष्टवाचकानामिति न्यायप्रसरः। किं च भारते युद्धपञ्चके 'हयहेषितशब्दैश्च करिबृंहितशब्दैश्च' इति बहुशः प्रयुज्यते, तत्र च हयगजादिसंबन्धित्वस्य हयगजादिपदैः, शब्दत्वस्य च शब्दशब्देन बोधने मध्ये लम्बमानानां हेषितबृंहितादिपदानां मूकत्वमेव परमते वक्तव्यमित्यलं पल्लवितेन । अथैवं विघ्नविघातायेत्यत्र विशब्दस्य किं प्रयोजनमिति चेद्विघ्नप्रतियोगिकध्वंसे विशेषद्योतनमेवेति ब्रूमः— स च विशेषो नोत्पत्तिरूपः घातपदेनैव तल्लाभात्, घातपदस्याखण्डोपाधिरूपध्वंसत्वविशिष्टवाचितास्वीकारे तत्रोत्पत्तिरूपविशेषस्य अव्यावर्तकत्वात् । किन्त्वविलम्बितोत्पत्तिकत्वं विशेषः तथाहि जन्यभावस्य विनाशित्वनियमात् उत्पन्नो विघ्नो यद्यपि भोगादिरूपेण नाशकान्तरेणावश्यमेवास्मिन्नमुष्मिन्वा जन्मनि नङ्क्ष्यति तथाऽपि तादृशो विघ्ननाशो न कार्यकारीति समाप्तिप्रतिबन्धापत्तेः । मङ्गले कृते तु इदानीमेव विघ्नो नश्यतीत्यविलम्बेन विघ्ननाशाय मङ्गलाचरणमिति स एष मुख्यः कल्पः । एवमन्येऽपि कल्पाः कविभिरुद्भाविताः— यदा मङ्गलस्य न विघ्नध्वंसत्वं कार्यतावच्छेदकं, भोगादिजन्यविघ्नध्वंसे व्यभिचारात् । किं तु भोगाद्यजन्यविघ्नध्वंसत्वं, स्वाव्यवहितोत्तरक्षणोत्पत्तिकत्वसम्बन्धेन मङ्गलविशिष्टविघ्नध्वंसत्वं वा, अत एव वक्ष्यति मङ्गलं विघ्नध्वंसविशेषे कारणमिति । ततश्च भोगाद्यजन्यत्वरूपविशेषद्योतको विशब्द इति द्वितीयः पक्षः । मङ्गलस्य विघ्ननाशकत्ववद्विघ्नप्रतिबन्धकत्वमपि शिष्टसम्मतं, विघ्नो नश्यतामितीच्छयेव विघ्नो मा भूदितीच्छयाऽपि तदाचरणात् । तत्र च निष्पन्नो विघ्नध्वंसो विघ्नान्तरोत्पादे निष्फलः, अतो विघ्नान्तरोत्पादविरहविशिष्टविघ्नध्वंस एवोद्देश्यस्स च मङ्गलेनैव स्यात्, भोगस्य विघ्ननाशकत्वेऽपि विघ्नप्रतिबन्धकत्वासम्भवात् । एवं च विघ्नान्तरोत्पादविरहविशिष्टत्वरूपविशेषद्योतको विशब्द इति तृतीयः पक्षः । युक्तं चैतत्, ज्वरार्तस्यौषधपाने पूर्वपूर्वज्वरापगमेऽपि यावज्ज्वरान्तरानुत्पादं ज्वरो विहत इति प्रयोगाभावेन विशब्दस्य तादृशविशेषद्योतकताया अनुभवसिद्धत्वात् । एवं भिन्नभिन्नसमयेषु प्रागार्जिता भूयांसो विघ्ना यदीदानीं स्युस्तैस्सर्वैरपि नष्टैरिदानीं भवितव्यं, सर्वे च भोगान्न युगपन्नश्येयुस्तत्तत्कर्मविपाकसमय एव भोगस्य तत्तत्कर्मनाशकत्वात् । मङ्गलं त्वपरिपक्वानपि तानशेषान्युगपद्विनाशयेत्, ततश्च विघ्नासमानकालोत्पत्तिकत्वरूपविशेषद्योतको विशब्द इति चतुर्थः कल्पः । तदर्थसौष्ठवमात्रफलकोऽयं विशब्दः। अनुभूयते हि विघ्नविघातायेत्यतो विघ्नविघातायेत्यत्र शब्दमैत्रीतदनुभवरसिकैरित्यर्वाचीनाः । अथ मङ्गलस्यावश्यकर्तव्यतां साधयितुं आशङ्कते—**नन्विति** ॥ अत्र केचिदाक्षिपन्ति विघ्नविघाताय कृतमित्यनेन मङ्गले विघ्नध्वंसोद्देश्यककृतिविधेयत्वबोधनेऽपि विघ्नध्वंसकारणत्वस्याबोधनात् अनुपपत्तिशङ्काया नावकाशः अप्रसक्तत्वात् । न च तदुद्देश्यककृतिविधेयत्वस्य तत्कारणत्वव्याप्यतया विघ्नध्वंसकारणत्वमर्थाल्लभ्यत एवेति वाच्यं । स्वर्गमुद्दिश्य केनचित्क्रियमाणचैत्यवन्दनादौ व्यभिचारेण तादृशनियमा-

## दिनकरीयम्.

व्यभिचार इति वाच्यं, भोगादिनापि नास्तिकात्मनि विघ्ननाशसंभवेन, जन्मान्तरीयमङ्गलसन्देहेन व्यभिचार-

## रामरुद्रीयम्.

ध्वंसं प्रत्यकारणत्वे समाप्तिं प्रति विघ्नध्वंसद्वारा कारणत्वमसम्भवदुक्तिकमेवेति पृथक्समाप्तिकारणत्वनिषेधो व्यर्थ एवेति वाच्यम् । यतो हि विघ्नध्वंसद्वारैव समाप्तिं प्रति मङ्गलस्य प्राचीनैः सर्वत्र कारणत्वोपगमे विघ्नध्वंसो मङ्गलफलमिति वादिनो नवीनस्य मते, न चैवं स्वतस्सिद्धविघ्नविरहवता कृतस्येत्यादिना विघ्नात्यन्ताभाववता कृतस्य मङ्गलस्य निष्फलत्वापत्तिः प्राचीनैः कर्तुमशक्या, स्वमते-

### प्रभा.

वीत्यस्य उपसर्गत्वेन पदत्वाभावात् विशेषणवाचकत्वाभावाच्च आक्षेपपरिहारयोरसंगतत्वात् । अस्तु वा तस्य

### मञ्जूषा.

सिद्धेः । न च तदुद्देश्यकभ्रमाजन्यकृतिविधेयत्वस्यैव तत्कारणत्वव्याप्यत्वस्वीकारान्नोक्तव्यभिचार इति वाच्यं भ्रमाजन्यत्वांशस्य विघ्नविघातायेत्यनेनालब्धत्वात् । अस्तु वा भ्रमाजन्यत्वांशस्य कण्ठतोऽनुक्तत्वेऽपि ग्रन्थकृत्प्रयत्ने संभावनोपनीतभ्रमाजन्यत्वमवगाह्य मानसात्मको दर्शितव्याप्यधर्मबोधः, कृधातोर्भ्रमाजन्ययत्नलक्षणया शाब्दात्मक एव वा, एतावता मङ्गले विघ्नध्वंसकारणत्वस्यार्थतो लाभसंभवेऽपि समाप्तिकारणत्वस्य कथमप्यलब्धतया तदनुपपत्तिशंका निरवकाशैव अप्रसक्तत्वादिति अत्र * ब्रूमः । पूर्वप्राप्ताया विघ्नध्वंसकारणताया अनुपपत्तावुद्भावितायां मङ्गलस्य विघ्नध्वंसद्वारा समाप्तिकारणत्वांगीकर्तृप्राचीनमतेऽप्यनुपपत्तेरुपस्थितत्वेन प्रसङ्गसङ्गत्या समाप्तिकारणताया अप्यनुपपत्तिशङ्कायास्संगतेः । अस्मद्गुरुचरणास्तु विघ्नविघाताय कृतमित्यनेन विघ्नध्वंस एव फलमिति नवीनमतस्येव विघ्नध्वंसद्वारा समाप्तिः फलमिति प्राचीनमतस्यापि परम्परया दर्शितत्वेन मतद्वयेऽपि अनुपपत्तिशङ्का युज्यत एव अप्रसक्तत्वाभावादिति प्राहुः। महादेवस्तु ननु निष्फलत्वान्मङ्गलाचरणमयुक्तं, न च निष्फलत्वमेवासिद्धं तस्य फलविशेषशून्यत्वरूपहेतुना साधनादित्यभिप्रायेण शङ्कते नन्विति इत्यवतारयांचकार । तस्यायमाशयः विघ्नविघातायेति वाक्योपरि नेयमाशङ्का येनाप्रसक्तप्रतिषेध आक्षिप्येत, किंतु नूतनेत्यादिवाक्यप्रतिपाद्यं यन्मङ्गलं तदनुपपत्तिशङ्कैवेति न दोष इति । अत्र चायुक्तमित्यस्य बलवदनिष्टानुबन्धीत्यर्थः । तथा च मङ्गलं बलवदनिष्टानुबन्धि, निष्फलत्वाच्चैत्यवन्दनादिवत् इत्यनुमानं पर्यवसन्नं । अत्र च न कुर्यान्निष्फलं कर्मेत्यागम एवानुकूलतर्कः । तत्र लिङ्गुपस्थाप्यस्य बलवदनिष्टाननुबन्धित्वस्य योऽभावो बलवदनिष्टानुबन्धित्वरूपः तस्य निष्फलकार्यकृतौ नञा बोधनात् । एतदनुरोधनायैव मङ्गलमयुक्तमित्यनुक्त्वा मङ्गलाचरणमयुक्तमित्युक्तं महादेवेन । केचित्तु मूलकृताऽग्रे मङ्गल एव सफलत्वस्य साधयिष्यमाणतया प्रथमतो निष्फलत्वशङ्काया अपि तत्रैव युक्तत्वेन, तद्धेतुतया बलवदनिष्टानुबन्धित्वानुमित्याऽपि मङ्गलविशेष्यकतयैव भवितव्यमिति पर्यालोच्य मङ्गलं बलवदनिष्टानुबन्धि इत्यनुमानमेव पर्यवसाययांचकार । नैतावता महादेवग्रन्थविरोधः, मङ्गलाचरणस्य बलवदनिष्टानुबन्धित्वे तद्विषयीभूतमङ्गलेऽपि तस्यौचित्यावर्जनीयत्वात् । निष्फलत्वं जनकतासंबन्धावच्छिन्न-

### दिनकरीयम्.

संशयसंभवात् । अत्र कादम्बर्यादिग्रन्थे मङ्गलसत्त्वेऽपि समाप्तेरदर्शनेनान्वयव्यभिचारोऽपि दोषो बोध्यः ।

### रामरुद्रीयम्.

ऽपि तत्र विघ्नध्वंसरूपद्वाराऽभावेन मङ्गले निष्फलत्वस्यैवाङ्गीकरणीयत्वात् । तथा च प्राचीनानामपूर्वद्वारैव मङ्गलस्य समाप्तिहेतुता सम्मतेति न कश्चिद्दोष इति भावः । न चैवं विघ्नध्वंसस्तु मङ्गलस्य द्वारमिति प्राचीनोक्तिविरोध इति वाच्यम् । द्वारत्वं हि तज्जन्यत्वे सति तज्जन्यजनकत्वं, तच्चापूर्वद्वारा मङ्गलस्य समाप्तिहेतुत्वे-

---

* ननु विघ्नविघाताय कृतं मंगलमित्यत्र विघ्नविघातशब्दस्य विघ्नस्य विघातः इति षष्ठीतत्पुरुषेण विघ्नध्वंसपरत्वं वा, उत, विघ्नस्य विघातो यस्मै फलायेति व्युत्पत्त्या समाप्तिपरत्वं वा । प्राचीननवीनमतयोः अन्यतरदाश्रित्य उभयथापि वक्तुं शक्यत्वात् उभयमपि संभवतीत्याशयेन शङ्कते—**नन्विति** । तत्पुरुषापेक्षया बहुव्रीहेः जघन्यत्वात् प्रथमतो तत्पुरुषार्थो विघ्ननाशश्च बहुव्रीह्यर्थः समाप्तिश्च शङ्कादशायां चरमं उपक्षिप्ते । अथवा ननु विघ्नविघातायेति प्रयोजनत्वार्थिका चतुर्थी स्वर्गाय यागः कृतः इतिवत् किं मुख्यप्रयोजनत्वमभिधत्ते, उत अपूर्वाय याग इत्यादिवत् अन्यार्थेच्छाविषयनिष्ठं गौणप्रयोजनत्वमभिधत्ते । शेषं पूर्ववदित्यभिप्रायेण आशङ्कते—**नन्वित्यादि** ॥ अत्रापि मुख्यफलप्रतिपादनापेक्षया गौणफलोक्तेः जघन्यत्वात् पश्चात् समाप्तिकीर्तनं । विघ्नध्वंसस्य गौणफलत्वं हि समाप्तिरूपफलान्तराधीनेच्छाविषयप्रयुक्तं स्यात् तच्चायुक्तं सति मुख्यसंभवे गौणाश्रयणस्यायुक्तत्वात् इति ॥

## प्रभा.

पदत्वं विशेषणवाचकत्वञ्च, तथापि प्रकृते व्याकरणप्रमाणसिद्धोपसर्गत्वस्वीकारेणैव सामञ्जस्ये तस्य विशेषण-

## मञ्जूषा.

फलत्वावच्छिन्नप्रतियोगिकाभावः, तत्साधको हेतुश्च जनकतासंबन्धावच्छिन्नतत्तत्फलव्यक्तित्वावच्छिन्नप्रतियोगिताकाभावकूटवत्त्वं, विशेषाभावकूटस्य सामान्याभावसाधकताया अपि स्वतस्सिद्धप्रयोज्यप्रयोजकभावमूलकत्वात् नाप्रयोजकत्वशंका । एवं च बलवदनिष्टानुबन्धित्वानुमापकसफलत्वाभावसाधकफलविशेषाभावकूटसाधकोऽयं न विघ्नध्वंसं प्रतीत्यादिग्रन्थः । नन्वेतावता विघ्नध्वंसरूपफलजनकत्वाभाव-समाप्तिरूपफलजनकत्वाभावयोस्सिद्धावपि कथं निखिलतत्तत्फलाभावकूटसिद्धिः । न च दर्शिताभावकूटस्यैव हेतुताऽस्त्विति वाच्यम्, तथासति निष्फलत्वरूपसाध्याभाववति यागादौ तादृशाभावद्वयसत्त्वेन व्यभिचारापत्तेरिति चेन्न, विघ्नध्वंससमाप्तीतरफलजनकत्वाभावस्य मङ्गले सर्वमतसिद्धतया, विघ्नध्वंसरूपफलजनकत्वसमाप्तिरूपफलजनकत्वयोर्नवीनमतप्राचीनमतसिद्धयोरभावसाधने निखिलतत्तत्फलाभावकूटस्य साधितप्रायत्वादिति वदन्ति । अथात्र जनकतासम्बन्धावच्छिन्नतत्तत्फलव्यक्तित्वावच्छिन्नप्रतियोगिताकाभावकूटरूपहेतुरसिद्धः मङ्गळस्यापि स्वध्वंसरूपफलजनकत्वात् । नचात्राभावप्रतियोगिव्यक्तिपरिचायकं फलत्वं प्रवृत्त्युद्देश्यत्वं, अत एव विघ्नध्वंस एव फलमित्यग्रिममुक्तावळीग्रन्थे फलमित्यस्य प्रवृत्त्युद्देश्यमिति विवरणं कृतं महादेवेन । तच्च न मंगळध्वंससाधारणं, मंगळध्वंसमुद्दिश्य कस्यापि कुत्रचिदपि प्रवृत्त्यभावात्, तथाच मङ्गळध्वंसफलकत्वाभावस्य दर्शिताभावकूटानन्तर्गतत्वान्न हेत्वसिद्धिरिति वाच्यम् । शिष्यप्रवृत्त्युपयोगिनिबन्धनरूपमङ्गळवाचकशब्दप्रयोगाय मङ्गळप्रत्यक्षमुद्दिश्यापि कस्यचित् मङ्गळे प्रवृत्तिसम्भवेन तस्य निरुक्तपरि-

## दिनकरीयम्.

व्यभिचारसन्देहस्य ग्राह्यसंशयरूपतया, कारणताप्रत्यक्ष एव प्रतिबन्धकत्वं न त्वनुमितौ, तत्र तस्यानुकूलत्वा-

## रामरुद्रीयम्.

ऽपि मङ्गलजन्यसमाप्तिं प्रति विघ्नध्वंसस्य प्रतिबन्धकससंर्गाभावविधया कारणत्वेन विघ्नध्वंसस्य मङ्गलजन्यत्वेन च संभवत्वेवेति, मङ्गलस्यापूर्वद्वारा समाप्तिकारणत्वेऽपि विघ्नध्वंसस्य द्वारतासम्भवात्। न चैवमपि अपूर्वस्य द्वारतामते स्वजन्यापूर्वसम्बन्धेनैव मङ्गलस्य हेतुताया वक्तव्यतया, स्वजन्यविघ्नध्वंसवत्त्वसम्बन्धेन मङ्गलस्य कारणताप्रतिपादनं मुक्तावलीव्याख्यानकृतामसङ्गतमेवेति वाच्यम्। यत्र मङ्गलजन्यविघ्नध्वंसो वर्तते तत्रानन्तस्थलेषु नानापूर्वव्यक्तीनां कल्पने गौरवात्, तादृशस्थले स्वजन्यविघ्नध्वंससम्बन्धेनैव मङ्गलस्य समाप्तिहेतुता युक्तेत्यभिप्रायकतया तदुक्तिसङ्गतेः । नचैवमपि समाप्तिं प्रति मङ्गलस्य क्वचित्स्वजन्यविघ्नध्वंससम्बन्धेन हेतुता, क्वचित्स्वजन्यापूर्वसम्बन्धेनेत्यायातं, तथा च पृथक्समाप्तिकारणत्वनिषेधस्यावश्यकत्वेऽपि यत्र स्वजन्यापूर्वसम्बन्धेन मङ्गलं, न तत्र स्वजन्यविघ्नध्वंससम्बन्धेन, यत्र च स्वजन्यविघ्नध्वंससम्बन्धेन मङ्गलं, न तत्र स्वजन्यापूर्वसम्बन्धेनेति, समाप्तौ मङ्गलस्य सम्बन्धद्वयेनापि व्यतिरेकव्यभिचारात्कारणत्वमेवासम्भवदुक्तिकमिति वाच्यम् । तत्तत्सम्बन्धेन मङ्गलाव्यवहितोत्तरत्वस्यापि कार्यतावच्छेदककोटिप्रविष्टतया व्यभिचाराभावादिति हृदयम् । ननु व्यतिरेकव्यभिचाररूपहेतुना समाप्तिकारणत्वाभावस्य मङ्गले पूर्वपक्षिणा साधनात्, समाप्त्यन्याफलकत्वे सति सफलत्वहेतुना मङ्गले समाप्तिकारणत्वानुमानं सिद्धान्तिनामसङ्गतं, समाप्तिकारणत्वाभावसाधकहेतौ हेत्वाभासमनुद्भाव्य, समाप्तिकरणत्वानुमानस्य सत्प्रतिपक्षत्वापत्तेरित्यतः सिद्धान्तग्रन्थस्य भावमाह—**व्यभिचारसन्देहस्येति** । मङ्गलत्वधर्मिकसमाप्तिमन्निष्ठाभावप्रतियोगितावच्छेदकत्वसन्देहस्येत्यर्थः । **ग्राह्यसंशयरूपतयेति** । अनुमित्या ग्राह्यं हि मङ्गले समाप्तिकारणत्वं, तच्च समाप्तिमन्निष्ठाभावप्रतियोगितानवच्छेदकमङ्गलत्ववत्त्वं, तथा च साध्यसन्देहपर्यवसन्नस्य व्यभिचारसन्देहस्य नानुमितौ प्रतिबन्धकत्वमिति भावः । **कारणताप्रत्यक्ष एव प्रतिबन्धकत्वमिति** । विशेषदर्शनाभावविशिष्टतत्संशयः प्रात्यक्षिकनिश्चयप्रतिबन्धक इति मताभिप्रायेणोक्तम् । वस्तुतस्तु संशयसामग्र्या एव निश्चयप्रतिबन्धकत्वमत एव विशेषदर्शनदशायामेककोटिभानप्रतिबन्धेन संशयसामग्र्यभावान्निश्चय इति मन्तव्यम् ।

**प्रभा.**

वाचित्वमङ्गीकृत्य घातपदस्य अभावमात्रपरतायाः प्रक्षालनाद्धीतिन्यायकवलितत्वात्। ननु विघ्नविघातायेति

**मञ्जूषा.**

चायकरूपाक्रान्ततया तज्जनके मङ्गले हेत्वसिद्धेर्दुर्वारत्वात्। न च प्रत्यक्षातिरिक्तत्वमपि परिचायकविशेषणं, अतः प्रत्यक्षफलकत्वाभावस्यापि उक्तकूटानन्तर्गतत्वान्न हेत्वसिद्धिरिति वाच्यम्। तथाऽपि निष्फलत्वाभावरूपसाध्याभाववति प्रत्यक्षमात्रफलके चक्षुस्संयोगादौ व्यभिचारापत्तेः। न च स्वप्रत्यक्षातिरिक्तत्वमेव परिचायकविशेषणं, स्वपदं फलजनकत्वेनाभिमतपरं, ध्वंसातिरिक्ततत्तत्फलनिष्ठा या विषयतासंबन्धानवच्छिन्ना कार्यता तन्निरूपितजनकत्वाभावकूटवत्त्वं वा हेतुरतो न व्यभिचार इति वाच्यम्। तथाऽपि क्रियाविशेषवाचकशब्दप्रयोगाय क्रियाविशेषप्रत्यक्षमुद्दिश्य यत्र प्रवृत्तिस्तत्र स्वप्रत्यक्षातिरिक्तं यत्प्रवृत्त्युद्देश्यं तज्जनकत्वाभावकूटवति तादृशक्रियाविशेषादौ प्रत्यक्षफलके निष्फलत्वरूपसाध्याभावेन व्यभिचारापत्तेः। न च तादृशक्रियाविशेषस्य स्वप्रत्यक्षातिरिक्तं तादृशशब्दप्रयोगरूपम् यत् प्रवृत्त्युद्देश्यं तज्जनकत्वान्न व्यभिचार इति वाच्यम्। तथा सति मङ्गलस्य स्वप्रत्यक्षातिरिक्तं यन्मङ्गलनिबन्धनरूपं प्रवृत्त्युद्देश्यं तज्जनकत्वेन हेत्वसिद्ध्यापत्तेः। यदि च स्वप्रत्यक्षेणान्यथासिद्धत्वान्न मङ्गलस्य तन्निबन्धनजनकत्वमित्युच्यते तदा दर्शितक्रियाविशेषस्थलेऽपि तुल्यमिति व्यभिचारो दुर्वारः। अथ मङ्गलप्रत्यक्षातिरिक्तत्वमेव परिचायकविशेषणं तेन मङ्गलप्रत्यक्षं यत्क्रियाविशेषप्रत्यक्षं घटादिचाक्षुषप्रत्यक्षं च, तज्जनकक्रियाविशेषादौ चक्षुस्संयोगादौ च हेत्वसत्त्वान्न व्यभिचार इति चेदस्त्वेवं, एवमपि स्वध्वंसरूपफलजनके मङ्गले निष्फलत्वबाधस्य फलपदस्य प्रवृत्त्युद्देश्यपरतावर्णनेन वारणेऽपि स्वप्रत्यक्षरूपं यत्प्रवृत्त्युद्देश्यं तज्जनकत्वमादाय बाधो दुर्वारः। अथ यादृशमङ्गलस्य निबन्धनं न कृतं तादृशमङ्गलमादायैव मङ्गलं निष्फलमित्यनुमानपर्यवसानमस्तु, पक्षतावच्छेदकीभूतमङ्गलत्वसामानाधिकरण्यमात्रेण साध्यसिद्धेरुद्देश्यत्वात्, तथाच दर्शितबाधोऽकिञ्चित्करः। एवं च हेतावपि स्वप्रत्यक्षातिरिक्तत्वं परिचायकविशेषणं न देयं, पक्षतावच्छेदकसामानाधिकरण्यमात्रेण साध्यसिद्धेरुद्देश्यत्वे भागासिद्धेरदोषत्वेनाकृतनिबन्धनरूपमङ्गलमादाय हेतुपर्यवसानसंभवादिति चेन्न। स्वसमानाधिकरणविघ्नन्यूनसंख्याकस्य बलवत्तरविघ्नसमानाधिकरणस्य, निर्विघ्नपुरुषानुष्ठितस्य च मङ्गलस्य नैयायिकैरपि निष्फलत्वाङ्गीकारेण मङ्गलत्वसामानाधिकरण्यमात्रेण साध्यसिद्धेरुद्देश्यत्वे सिद्धसाधनापत्तेः। अथास्तु मङ्गलत्वावच्छेदेनैव साध्यसिद्धिरुद्देश्या, प्रत्यक्षातिरिक्तप्रवृत्त्युद्देश्यत्वावच्छिन्नजनकतासंबन्धावच्छिन्नप्रतियोगिताकाभावस्यैव साध्यत्वान्नोक्तबाध इति चेत्तत्रैव तादृशनिष्फलत्वसत्त्वेन व्यभिचारापत्तेः। अथ मङ्गलप्रत्यक्षातिरिक्तप्रवृत्त्युद्देश्यत्वावच्छिन्नजनकतासंबन्धावच्छिन्नप्रतियोगिताकाभावस्यैव निष्फलत्वपदेन विवक्षितत्वात् नायं व्यभिचार इति चेत्तथापि शिष्यप्रवृत्त्युपयोगिमङ्गलवाचकशब्दप्रयोगाय मङ्गलप्रत्यक्षमुद्दिश्यापि यत्र मंगले प्रवृत्तिस्तस्य न कुर्यादिति निषेधाविषयत्वेन बलवदनिष्टानुबन्धित्वस्य बाधो दुर्वारः। न च केवलं स्वप्रत्यक्षमुद्दिश्यैव तदाचरणे तस्य मंगलत्वमेव नेष्यते विघ्नध्वंसोद्देश्यकप्रवृत्तिविषयस्यैव मंगलव्यवहाराविषयत्वात्। यदि विघ्नध्वंसमुद्दिश्यापि तत्र प्रवृत्तिः, तदास्य प्रवृत्त्युद्देश्यविघ्नध्वंसरूपफलाजनकत्वादेव न कुर्यादिति निषेधविषयत्वमित्यस्त्येव तस्य बलवदनिष्टानुबन्धित्वमिति वाच्यं। न हि यतो यत्र फलद्वयमुद्दिश्य प्रवृत्तिस्तदेकतरफलाविसंवादिनोऽपि तस्यापरफलाजनकतया बलवदनिष्टानुबन्धित्वं, तथा सति स्वर्गं पश्वादिफलं चोद्दिश्य केनचित्क्रियमाणस्य पश्वादिफलविसंवादिनो दर्शपूर्णमासादेर्धान्यं तृणपुञ्जं चोद्दिश्य क्रियमाणस्य तदेकतरफलविसंवादिनः कृष्यादेरपि तथात्वापत्तेरिति–अत्र ब्रूमः फलं तावद्द्विविधं मुख्यमानुषंगिकं च, स्वविधेयकप्रवृत्ति-

**दिनकरीयम्.**

दित्यभिप्रायवान्, मङ्गलं समाप्तिफलकं समाप्त्यन्याफलकत्वे सति सफलत्वादिति परिशेषानुमानेन मङ्गलस्य

**रामरुद्रीयम्.**

**तत्र तस्येति,** अनुमितौ साध्यसंशयस्येत्यर्थः। **अनुकूलत्वादिति,** सिद्ध्यभावरूपपक्षतासंपादकत्वादिति भावः। **परिशेषानुमानेनेति,** तदितरविशेषाभाववत्त्वे सति सामान्यवत्त्वरूपो हेतुः परिशेषानुमा-

परिसमाप्तिदर्शनादिति चेन्न अविगीतशिष्टाचारविषयत्वेन मङ्गलस्य सफलत्वे सिद्धे, तत्र

## प्रभा.

ग्रन्थेन दर्शितं नवीनमतं, सूचितं च प्राचीनमतमयुक्तं व्यभिचारादित्याक्षिपति—**नन्विति** ॥ अथवा विघ्नध्वंससमाप्त्यन्यतरकामनया कृतं मंगलमयुक्तं इष्टसाधनत्वाभावात् चैत्यवन्दनादिवत् । अत्र हेतोः स्वरूपासिद्धिशङ्कां मतद्वयेऽपि परिहरति—**नन्वित्यादिना** ॥ **निर्विघ्नपरिसमाप्तिदर्शनादिति** ॥ एतेन तत्र प्रत्यक्षेण समाप्तेस्तत्कारणतया विघ्नध्वंसस्य च सत्त्वमाविष्कृतं। तथाच नवीनस्य विघ्नध्वंसस्यैव मंगलकार्यत्वेन इच्छाविषयत्वात्, प्राचीनस्य समाप्तेरेव तादृशेच्छाविषयत्वाच्च, मंगळं विघ्नध्वंसरूपेष्टसाधनत्वाभाववत् विघ्नध्वंसाव्यवहितप्राक्कालावच्छेद्यविघ्नध्वंससमानाधिकरणात्यन्ताभावप्रतियोगित्वात्। एवं मंगळं समाप्तिरूपेष्टसाधनत्वाभाववत् समाप्त्यव्यवहितप्राक्कालावच्छेद्यसमाप्त्यधिकरणनिष्ठात्यन्ताभावप्रतियोगित्वात्, यत् यदव्यवहितप्राक्कालावच्छेद्यतत्समानाधिकरणात्यन्ताभावप्रतियोगि भवति, तत् तत्कारणत्वाभाववदिति सामान्यमुखीव्याप्त्या, घटं प्रति रासभवदिति दृष्टान्तेन मतद्वयेऽपि पक्षे मङ्गळे इष्टसाधनत्वाभावरूपहेतोरसिद्धत्वान्न स्वरूपासिद्धत्वाशङ्केति भावः। केचित् ननु निष्फलत्वान्मङ्गळाचरणमयुक्तं, नच निष्फलत्वमेवासिद्धं फलविशेषशून्यत्वहेतुना तत्साधनादित्यभिप्रायेण शङ्कते नन्वित्यवतरणिकामाहुः । तदसत् नवीनमते विघ्नध्वंसस्यैव

## मञ्जूषा.

प्रयोजकोत्कटेच्छाविषयीभूतं स्वस्य मुख्यं फलं, तादृशानुत्कटेच्छाविषयीभूतं स्वस्यानुषङ्गिकं फलं, उत्कटानुत्कटत्वे जातिविशेषौ इच्छानिष्ठौ, दुःखविशेषजननस्वरूपयोग्यानुत्पत्तिकफलविषयकत्वमुत्कटत्वं, तदन्यत्वमनुत्कटत्वं, उत्कटेच्छाविषयीभूतफलस्यानुत्पत्त्या दुःखविशेषजननात् । इत्थं च स्वविधेयकप्रवृत्तिप्रयोजकीभूतोत्कटेच्छाविषयफलविसंवादिकार्यविषयकश्च न कुर्यादिति निषेधः। विघ्नध्वंसातिरिक्तस्वप्रत्यक्षादिविषयकोत्कटेच्छयाऽपि यत्र प्रवृत्तिः न तन्मङ्गळपदव्यवहार्यं, किंतु विघ्नध्वंसविषयकोत्कटेच्छया यत्र प्रवृत्तिः, तदतिरिक्ते स्वप्रत्यक्षादौ अनुत्कटेच्छया च, तदा मङ्गळत्वं न हीयते तस्य च विघ्नध्वंसजनकतायाः परैरङ्गीकारात् न बलवदनिष्टानुबन्धित्वरूपसाध्यस्य बाधः । ततश्च मङ्गळप्रत्यक्षातिरिक्तं यत्प्रवृत्त्युद्देश्यं जनकतासम्बन्धेन तत्सामान्याभाव एव निष्फलत्वमिति न कोऽपि दोषः । अथवा स्वविधेयकप्रवृत्तिप्रयोजकोत्कटेच्छाविषयाजनकत्वमेव निष्फलत्वम् । अत्र च जनकत्वं स्वरूपयोग्यत्वरूपं विवक्षितम्, तेन पापभ्रमेण कृतप्रायश्चित्तादौ पापध्वंसानुपधायके बलवदनिष्टाननुबन्धिनि दर्शितनिष्फलत्वसत्त्वेऽपि न व्यभिचारः । तथाच मंगळं बलवदनिष्टानुबन्धि स्वविधेयकप्रवृत्तिप्रयोजकोत्कटेच्छाविषयत्वावच्छिन्नजनकतासम्बन्धावच्छिन्नप्रतियोगिताकाभावात्, चैत्यवन्दनवत् इत्यनुमानं बोध्यम् । अत्र च हेत्वसिद्धिशंकायां फलविशेषजनकत्वाभावकूटवत्त्वेन तत्साधनीयं, अनुमानं च मंगळं जनकतासम्बन्धावच्छिन्नप्रतियोगिताकदर्शिताभाववत् स्वविधेयकप्रवृत्तिप्रयोजकोत्कटेच्छाविषयत्वपरिचेयतत्तद्व्यक्तिजनकत्वाभावकूटवत्त्वादिति । अत्र च सामान्यमुखव्याप्तौ चैत्यवन्दनं

## दिनकरीयम्.

समाप्तिफलकतां व्यवस्थापयिष्यन् प्रथमतो विशेष्यासिद्धिनिरासाय फलवत्तां साधयति—**अविगीतेति** ॥ विषयत्वं च ज्ञानविषयसुखेऽतिप्रसक्तमतः—**आचारेति** । आचारश्चात्र यद्यपि क्रियैव तथापि विषयत्वश्रुतेः कृतिरेव विवक्षिता । विधेयतया कृतिविषयत्वं बोध्यम् । तेन फले न व्यभिचारः, तस्योद्देश्यतया कृतिविषयत्वात् । विधेयतया कृतिविषयत्वं चैत्यवन्दनादावप्यस्त्यतः **शिष्टेति** । शिष्टत्वं च फलसाधनतांशे भ्रान्तिरहितत्वं न तु वेदप्रामाण्याभ्युपगन्तृत्वं, तेन व्युत्क्रमेण कृते दर्शादौ निष्फलत्वेऽपि न व्यभिचारः । शिष्टा-

## रामरुद्रीयम्.

नम् । **आचारश्चात्रेति**, अत्रेतिशब्दश्चोत्तरान्वयी, तथा च आचारो यद्यपि क्रियैव तथाप्यत्र विषयत्वश्रुतेः कृतिरेव विवक्षितेत्यर्थः । ननु श्येनयागस्यापि शत्रुवधरूपेष्टसाधनत्वात्सफलत्वमक्षतमेव, अतस्तत्र हेतुसत्त्वेऽपि न व्यभिचार इति हेतावविगीतत्वविशेषणं व्यर्थमित्याशङ्कां निराकर्तुमविगीतपदाभावे व्यभिचारमु-

## प्रभा.

मङ्गळफलत्वेन, प्राचीनमते समाप्तेरेव तत्फलत्वेन, उभयोः फलत्वस्य कस्याप्यननुमतत्वेन तयोः फलविशेषत्वासम्भवात्। अस्तु वा फलविशेषशब्देन लक्षणया उभयोरुपस्थितिः, तथापि फलविशेषशून्यत्वस्य विघ्नध्वंसजनकत्वाभाव-समाप्तिजनकत्वाभावोभयरूपस्य निष्फलत्वरूपसाध्यशून्ययागादौ सत्त्वेन व्यभिचारितया तादृशोभयत्वावच्छिन्नेन हेतुना निष्फलत्वसाधनासम्भवादिति । समाप्तिदर्शनादित्युपलक्षणं कादम्बर्यादौ मङ्गळसत्त्वेऽपि समाप्तेरदर्शनादित्यपि बोध्यं । तेन सत्यपि मङ्गले इत्यादिना अग्रे अन्वयव्यभिचारपरिहारग्रन्थस्संगच्छते । यद्यपि नास्तिकात्मनि जन्मान्तरमङ्गळकल्पनया व्यतिरेकव्यभिचारः परिहर्तुं शक्यः, तथापि भोगादिनापि नास्तिकात्मनि विघ्ननाशसम्भवेन जन्मान्तरीयमङ्गळसन्देहाहितव्यभिचारसंशयसम्भवेन मंगळे इष्टसाधनतासन्देहसम्भवात् । नच जन्मान्तरीयमंगळसन्देहाहितव्यतिरेकव्यभिचारसन्देहेन हेतुनिश्चयाभावात् तत्तन्मताभिमतेष्टसाधनत्वाभावानुमित्यसंभवेऽपि अन्वयव्यभिचाररूपलिंगस्य मंगळे निश्चितत्वात्तेन हेतुना निरुक्तसाध्यानुमितौ बाधकाभाव इति वाच्यम् । स्वाव्यवहितोत्तरक्षणावच्छेद्यः स्वस्वव्याप्येतरयावत्कारणाधिकरणस्वाधिकरणनिष्ठो योऽत्यन्ताभावः तत्प्रतियोगिकार्यकत्वस्यैव अन्वयव्यभिचाररूपतया, कादम्बर्यादिग्रन्थकर्तरि स्वस्वव्याप्येतरयावत्कारणसन्देहेन तत्सन्देहाहितान्वयव्यभिचाररूपहेतोरपि पक्षे सन्देहसम्भवेन तन्निश्चयाभावात् तेन हेतुनापि निरुक्तसाध्यानुमित्यसंभवात् । नच व्यतिरेकव्यभिचारसंशयस्य कारणत्वघटकाव्यभिचारसंशयरूपतया, विशिष्टकारणत्वसंशयजनकत्वेऽपि अन्वयव्यभिचाराभावस्य कारणत्वाघटकतया तत्संशयस्य कथं कारणतासंशयजनकत्वमिति वाच्यम् । स्वाव्यवहितोत्तरक्षणावच्छेदेन स्वस्वव्याप्येतरयावत्कारणाधिकरणस्वाधिकरणनिष्ठात्यन्ताभावाप्रतियोगिकार्यकत्वरूपव्यापकत्वघटितकारणत्वसंशयं प्रति कादम्बर्यादिग्रन्थकर्तरि स्वस्वव्याप्येतरयावत्कारणसन्देहप्रयुक्ततादृशयावत्कारणाधिकरणस्वाधिकरणनिष्ठात्यन्ताभावप्रतियोगित्वसंशयस्य हेतुत्वसंभवात्, व्याप्यसंशयस्य व्यापकसंशयहेतुत्वाच्च । अत्र ईदृशव्यभिचारसन्देहाहितेष्टसाधनतासन्देहस्य तत्प्रत्यक्षं प्रति प्रतिबन्धकत्वेऽपि तदनुमितावनुकूलत्वमेवेत्यभिप्रायेण मतद्वयेऽपि इष्टसाधनत्वं साधयति—**अविगीतेति** । अविगीतत्वं बलवदनिष्टाननुबन्धित्वं

## मञ्जूषा.

दृष्टान्तः । प्रकृते तादृशेच्छाविषयत्वपरिचेयं च विघ्नध्वंसरूपं समाप्तिरूपं च फलमेवेति तज्जनकत्वाभावद्वयमेव ग्रन्थकृता साधितमिति । अथवा सामान्यतः प्रवृत्त्युद्देश्याजनकत्वमेव निष्फलत्वम् । एवं तत्साधनहेतुकोटिप्रविष्टफलपरिचायकमपि प्रवृत्त्युद्देश्यत्वमात्रम् । न चैवं स्वप्रत्यक्षादिरूपप्रवृत्त्युद्देश्यमादाय बाधो भागासिद्धिश्चेति वाच्यम् । पक्षतावच्छेदकसामानाधिकरण्यमात्रेण साध्यसिद्धेरुद्देश्यत्वात् । न चोक्तरीत्या सिद्धसाधनमिति वाच्यम् । स्वरूपयोग्यत्वरूपजनकत्वस्यैव तत्र निवेशात् । विघ्नध्वंसत्वावच्छिन्नं प्रति मंगळत्वेन सामान्यतः कारणतास्वीकारेण बलवत्तरादिविघ्नस्थले विशेषकारणविरहेण विघ्नध्वंसानुत्पादनेऽपि निर्विघ्नपुरुषानुष्ठितमंगळस्थले विघ्नरूपकारणाभावेन तदनुपधानेऽपि च स्वरूपयोग्यतारूपकारणतायाः मंगळमात्रे नैयायिकाभिप्रेतत्वेन सिद्धसाधनानवकाशात् । अस्तु वा मंगळन्यूनसंख्याकविघ्नवत्पुरुषानुष्ठितमंगळत्वमेव पक्षतावच्छेदकं तत्सामानाधिकरण्येन निष्फलत्वं नैयायिकानामिष्टमेवेति न कोऽपि दोषः । न च जन्यमात्रस्य भोगसाधनतायाः वक्ष्यमाणत्वान्न निष्फलत्वमिति वाच्यम् । निर्विघ्नसमाप्तिजनितभोगसाधनतायाः समाप्ति-

## दिनकरीयम्.

चारविषयत्वं श्येनयागादावप्यस्त्यतः **अविगीतेति** । अविगीतत्वं च बलवदनिष्टाननुबन्धित्वम् । तेन श्येनादौ प्रवृत्त्युपयुक्तबलवदनिष्टाननुबन्धीष्टसाधनत्वरूपसाध्याभावेऽपि न व्यभिचारः। **सिद्धे**, अनुमिते। **तत्र**

## रामरुद्रीयम्.

पपादयन्नाह—**तेनेत्यादि** ॥ **प्रवृत्त्युपयुक्तेति** ॥ मङ्गलाचरणे प्रवृत्तिनिर्वाहाय बलवदनिष्टाननुबन्धीष्टसाधनत्वरूपसफलत्वमेवानुमेयं, तच्च श्येने नास्त्येवेति हेतावविगीतपदाभावे भवत्येव व्यभिचार इति भावः । अनिष्टे बलवत्त्वं च इष्टोत्पत्तिनान्तरीयकभिन्नत्वम् । अनिष्टे बलवत्त्वविशेषणात्, बहुवित्तव्ययायाससाध्यया-

**फलजिज्ञासायां सम्भवति दृष्टफलकत्वे अदृष्टफलकल्पनाया अन्याय्यत्वात्, उपस्थितत्वाच्च**

## प्रभा.

शिष्टाचारविषयत्वं इष्टसाधनत्वप्रकारकभ्रमशून्यसमवेतकृतिविधेयत्वं, तादृशभ्रमाजन्यकृतिविधेयत्वं वा । अत्र विषसंपृक्तान्नभक्षणादौ तृप्तिरूपेष्टसाधनताज्ञानसत्त्वेऽपि प्रवृत्त्यभावेन, बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनताज्ञानस्यैव प्रवर्तकत्वावश्यकतया प्रवर्तकज्ञानलाभाय बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वरूपसफलत्वमेव प्रकृते साध्यं बोध्यम् । 'श्येनेनाभिचरन्यजेत' इति श्रुत्या श्येननामकयागस्य शत्रुनाशकत्वप्रतिपादनात् तादृशयागकर्तुर्निरुक्तशिष्टत्वसत्त्वेन तादृशपुरुषसमवेतकृतिविधेयत्वरूपहेतुमति श्येनयागे निरुक्तसाध्याभावेन व्यभिचारवारणाय हेतोरविगीतत्वविशेषणम् । तादृशयागस्य नरकसाधनत्वेन सत्यन्ताभावेन न व्यभिचारः बलवदनिष्टाननुबन्धित्वविशेषणवति व्युत्क्रमेण कृतदर्शादौ कृतिविधेयत्वसत्त्वेन तत्र निरुक्तसाध्याभावात् व्यभिचारवारणाय विशेष्यदलघटककृतौ शिष्टसमवेतत्वविशेषणम् । तत्कर्तुः इष्टसाधनत्वांशे भ्रान्तिमत्त्वेन निरुक्तशिष्टत्वाभावान्न दोषः । फले व्यभिचारवारणाय विषयत्वमपहाय विधेयत्वं हेतुतया उपन्यस्तम् । अत्र यत् अविगीतत्वे सति अभ्रान्तयत्पुरुषसमवेतकृतिविधेयं भवति, तत् तत्पुरुषीयेष्टसाधनं भवतीति सामान्यमुखीव्याप्तौ दर्शादिः दृष्टान्तः । यथा 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति श्रुत्या दर्शादेः स्वर्गसाधनत्वप्रतिपादनेन तत्कर्तुरभ्रान्तत्वेन तत्कृतयागस्य तदीयस्वर्गसाधनत्वं, तथा सर्वज्ञगौतमादीनामभ्रान्तत्वेन मङ्गलस्येष्टसाधनत्वाभावे, स्वेन स्वग्रन्थादौ मंगलं न क्रियेत इति तादृशगौतमादिना ग्रन्थादौ कृतमंगलस्यापि तदीयेष्टसाधनत्वमवश्यमंगीकार्यमिति तत्कृतमंगलस्य तदीयेष्टसाधनत्वे सिद्धे, यद्विशेषयोरितिन्यायेन मंगलसामान्यस्येष्टसाधनत्वं सिध्यतीति सिद्धे इत्यन्तमूलस्याभिप्रायः । यद्यपि पूर्वपक्षग्रन्थे मंगलस्य नवीनमतसिद्धेष्टसाधनत्वमादौ निराकृत्यानन्तरमेव प्राचीनमतसिद्धेष्टसाधनत्वं निराकृतमिति, सिद्धान्तग्रन्थेऽपि आदौ नवीनमतमेव व्यवस्थापनीयं । तथाऽपि प्राचीनमतसिद्धार्थस्य दुष्टत्वेन तन्मतदूषणपूर्वकं नवीनमतं व्यवस्थापनीयमित्यभिप्रायेण पूर्वपक्षग्रन्थे पश्चाद्दूषितमपि प्राचीनमतमादौ सिद्धान्तयति—**तत्र फलजिज्ञासायामित्यादिना** । तत्रेति

## मञ्जूषा.

साधनतामन्तरेणासम्भवात्, मंगलनिबन्धनजनितभोगसाधनतायाश्चानिबद्धमंगलेऽभावात् अतिरिक्तस्य कस्यचित्सुखानुभवरूपस्य दुःखानुभवरूपस्य वा तुच्छभोगस्य पूर्वपक्षिभिरवश्यमंगीकर्तव्यत्वेऽपि तस्य प्रवृत्त्युद्देश्यत्वाभावादिति । परं तु अयुक्तमित्यस्य बलवदनिष्टानुबन्धीत्यर्थो न सम्भवति निष्फलकर्ममात्रस्य तथात्वे मानाभावात् । बलवदनिष्टानुबन्धित्वं हि दुरितजनकत्वं, न च तत्र प्रमाणमस्ति । न च न कुर्यान्निष्फलं कर्मेत्यागम एव तत्र प्रमाणं, कृतिसाध्यत्वाभावस्य प्रत्यक्षबाधितत्वेनेष्टसाधनत्वाभावस्यं निष्फलमित्यनेनैव बोधितत्वेन च विधिबोधितबलवदनिष्टाननुबन्धित्वाभावस्यैव तत्र नञा बोधनीयत्वादिति वाच्यम् । तथा सति सर्वेषामेव प्रत्यवायापत्तेः । न हि प्रत्यहमस्मदादिभिः क्रियमाणं सकलमेव कर्म सफलमित्यस्ति नियमः, तथा च सर्वे शिष्टाः प्रत्यवेयुः । न हि पूजार्थमतिथीनन्वेषमाणानां प्रत्यवाय इति युक्तम्, न वा फलजननस्वरूपयोग्यमपि कर्म फलभ्रान्त्यारभमाणाः प्रत्यवयन्ति ।

## दिनकरीयम्.

मङ्गले । **फलजिज्ञासायां**, विशेषतः फलजिज्ञासायां । ननु कथं तर्हि गङ्गास्नानादीनामदृष्टार्थकतेत्यत आह—**संभवतीति** । तथा च तत्र दृष्टासंभवेनादृष्टकल्पनेति भावः । ननु तर्हि विश्वजिन्न्यायात्स्वर्ग एवेष्टं

## रामरुद्रीयम्.

गादौ न प्रवृत्त्यनुपपत्तिः । यद्यपि जलताडनादेरपि न कुर्यान्निष्फलं कर्मेत्यादिना निषिद्धतया तदनुकूलकृतेरपि नरकरूपबलवदनिष्टजनकतयाऽविगीताचारविषयत्वं सफलकर्मण्येवेति शिष्टपदमनर्थकम् । तथापि पश्वादिकृतवृथाचेष्टायां व्यभिचारवारकतया शिष्टपदसार्थक्यमेव, विधिनिषेधयोर्नराधिकारिकत्वेन तदीयवृथाचेष्टाया निषेधाविषयत्वेन बलवदनिष्टाजनकत्वादिति भावः । **ननु तर्हीति** । अदृष्टफलकल्पनाया अन्याय्यत्वे हीत्यर्थः । **विश्वजिन्न्यायादिति** । काम्यप्रकरणे 'विश्वजिता यजेत' इति विधिः श्रूयते । काम्यप्रकरणपठि-

## प्रभा.

अभ्रान्ततत्पुरुषीयेष्टसाधनत्वानुमित्युद्देश्यभूततत्पुरुषानुष्ठितमंगळे इत्यर्थः। फलजिज्ञासायां तत्पुरुषकामनाविषय-तावच्छेदकरूपेण ज्ञानगोचरेच्छायाम्। **संभवतीति।** अन्यथा गंगापानस्येव कषायपानस्यापि अदृष्टफलकत्वापत्ते-रिति भावः। ननु पशुपुत्रादिरूपदृष्टफलमेव कल्प्यतामत आह—**उपस्थितत्वादिति॥** प्रारिप्सितं कर्म निर्विघ्नं

## मञ्जूषा.

तस्मादवश्यकर्तव्यकुक्षिभरणाद्युपयोगिमात्रव्यतिरिक्तासत्संपत्संपादनप्रयासस्य नित्यनैमित्तिकाद्यावश्यककर्मा-नुष्ठानश्रवणाद्यभ्यासप्रतिरोधिनः प्रतिषेधक एवायमागमः। तथा च निष्फलशब्देन वृथैश्वर्यसंपादकं बहुत-रक्लेशजुष्टं कर्मोच्यते, तत्फलस्यैश्वर्यस्यानावश्यकत्वात् तस्य निष्फलत्वव्यपदेशः। नवा चात्र बलवद-निष्टाननुबन्धित्वाभावो बलवदनिष्टानुबन्धित्वं सत्कर्मविरोधरूपं बोध्यते। इममेवार्थं 'अभ्युष्णात्सघृता-दन्नादाच्छिद्राच्चैव वाससः। अपरप्रेष्यभावाच्च भूय इच्छन् पतत्यधः॥' इत्यादिस्मृतिरपि अनुरुन्धे। न चैवं चैत्यवन्दनादेः पापजनकत्वं न स्यादिति वाच्यम्। 'यान्यस्माकं सुचरितानि तानि त्वयोपास्यानि नो इतराणि' इत्यादिश्रुत्यैव शाक्यार्हताद्याचाराणां पापजनकत्वबोधनादिति। तस्मा-दयुक्तमित्यस्य भ्रममूलकेच्छाजन्यप्रवृत्तिविधेयमित्यर्थः। तथा च मंगळं भ्रममूलकेच्छाजन्यप्रवृत्तिविधेयम् स्ववि-धेयकप्रवृत्तिजनकेच्छाविषयजनकत्वाभावादित्यनुमानं पर्यवसन्नं शेषं पूर्वोक्तदिशाऽवसेयम्। मंगलस्य विघ्नध्वंसं प्रति समाप्तिं प्रति च कारणत्वाभावमुपपादयति—**विनापीति॥** विघ्नस्याभावो निर्विघ्नं अर्थाभावेऽव्ययीभावः अभावश्चात्र ध्वंसरूपो विवक्षितः निर्विघ्नं परिसमाप्तिः निर्विघ्नपरिसमाप्तिः। निर्विघ्नमित्यस्य विघ्नध्वंसादित्यर्थः। अव्ययादाप्सुपः इति पञ्चम्या लोपात् उत्तरत्वं पञ्चम्यर्थः। तथा च विघ्नध्वंसपूर्वकसमाप्तिदर्शनादित्यर्थः। यद्वा निर्विघ्नमिति तृतीयान्तं तदर्थश्च स्वाश्रयकर्तृकत्वरूपं स्वाश्रयकर्तृकप्रतियोगित्वरूपं वा वैशिष्ट्यं, स्वं विघ्नध्वंसः। निर्विघ्नस्वाश्रयकत्व-स्वसमानकालीनत्वोभयसंबन्धावच्छिन्नविघ्ननिष्ठप्रतियोगिताकाभाववती या समाप्तिस्तद्दर्शनादित्यर्थस्तु न संभवति, तथा सति विघ्नध्वंसं प्रति मङ्गलस्य व्यभिचारालाभात्। मङ्गळमिति द्वितीयार्थः प्रतियोगित्वं, विनापदार्थश्चाभावः, तस्य सामानाधिकरण्यसंबन्धेन विघ्नध्वंसविशिष्ट-समाप्तावन्वयः। नास्तिकादीनामित्यत्र कर्तृकर्मणोः कृतीति षष्ठ्यर्थः कृतिः, ग्रन्थशब्दस्य कृदन्तत्वात्तथा च नास्तिकादिनिष्ठकृतिजन्यग्रन्थेष्वित्यर्थः, षष्ठी शेष इति संबन्धसामान्ये वा षष्ठीति ग्रन्थेष्वित्यत्र सप्तम्यर्थ-घटकत्वस्य समाप्तिपदार्थघटकचरमवर्णेऽन्वयः समाप्तिश्चरमवर्णध्वंस इत्येके। पूर्वेदिन एव ग्रन्थस्समाप्त इति व्यवहाराच्चरमवर्णज्ञानं चरमवर्ण एव वा समाप्तिरित्यन्ये। वर्णे चरमत्वं स्वघटितग्रन्थघटकवर्णप्रागभावा-समानकालीनत्वं, तथा च मङ्गळप्रतियोगिकाभावसमानाधिकरणः यो विघ्नध्वंसविशिष्टनास्तिकादिसंबन्धिग्रन्थ-घटकचरमवर्णध्वंसादिः तद्दर्शनादित्यर्थः। अत्र विशिष्टान्वयिनोऽसति बाधके विशेषणेनान्वय इति न्यायेन विघ्नध्वंसविशिष्टसमाप्तौ सामानाधिकरण्यसंबन्धेनान्वयिनो मङ्गळप्रतियोगिकाभावस्य विशेषणीभूतविघ्नध्वंसे-ऽपि तेन संबन्धेनान्वयः स्वीक्रियते। तेन विघ्नध्वंससमानाधिकरणाभावप्रतियोगित्वरूपस्य समाप्तिसमाना-धिकरणाभावप्रतियोगित्वरूपस्य च व्यतिरेकव्यभिचारस्य मङ्गळे लब्धतया तदभावघटितकारणत्वं तत्र न संभवतीति भावः। मङ्गळस्य समाप्तिकारणतावादिप्राचीनमतमुपन्यस्यति—**अविगीतेत्यादिना॥** अत्र महादेवः मङ्गळं समाप्तिफलकं समाप्त्यन्याफलकत्वे सति सफलत्वादिति परिशेषानुमानेन समाप्तिफलकतां व्यवस्थापयिष्यन् प्रथमतो विशेष्यासिद्धिनिरासाय सफलतां साधयति—अविगीतेति॥ विषयत्वं ज्ञानविष-

## दिनकरीयम्.

कल्प्यतामत आह—**उपस्थितत्वादिति।** आरब्धं कर्म मे निर्विघ्नं परिसमाप्यतामिति ग्रन्थादौ प्रवृत्त-

## रामरुद्रीयम्.

तत्वेन तस्य नित्यत्वाभावात् प्रत्यवायपरिहारफलस्याप्यभावात् प्रवृत्त्यर्थं किञ्चित्फलं कल्पनीयं, श्रुतौ फला-श्रवणादिति अतः 'स स्वर्गः सर्वान्प्रत्यविशिष्टत्वात्' इति जैमिनिना सूत्रं प्रणीतं सः विश्वजिता साध्यः, स्वर्गो भवितुमर्हति स्वर्गस्य सर्वान्प्रत्यविशिष्टत्वात्सर्वेषामिच्छाविषयत्वादिति यावत्। तथा च विश्वजिद्यागस्य

**समाप्तिरेव फलं कल्प्यते । इत्थं च यत्र सत्याम् समाप्तौ मङ्गलं न दृश्यते, तत्रापि जन्मान्त-**

## प्रभा.

परिसमाप्यतामिति कामनयैव विद्याविवाहादौ मंगळकरणं दृष्टमिति, तद्वत्या ग्रन्थादावपि तादृशकामनयैव मंगळकरणं वाच्यमिति, तादृशकामनाविषयत्वेन निर्विघ्नपरिसमाप्तेरेवोपस्थितत्वादित्यर्थः । तथाच इष्टसाधनत्वव्याप्याविगीतशिष्टाचारविषयत्ववत् मंगळं इति परामर्शात् उक्तदिशा इतरफलसाधनत्वबाधज्ञानसहकृतात्, व्यापकतावच्छेदकेष्टसाधनत्वत्वेन समाप्तिसाधनत्वविधेयकानुमितिः, तादृशपरामर्शात् व्यापकतानवच्छेदकसमाप्तिसाधनत्वत्वेन समाप्तिसाधनत्वविधेयकानुमितिर्वा भवतीति भावः। इदमुपलक्षणं, मंगळस्य समाप्तिसाधनत्वे शिष्टाचारानुमितश्रुतिरपि प्रमाणमिति बोध्यम् । न च अनुमितश्रुतेरानुपूर्वीविशेषनिर्णयाभावेन कथं बोधकत्वमिति वाच्यम् । प्रत्यक्षश्रुतेः भगवदुच्चरितानुपूर्व्याः केनाप्यश्रुतत्वेन पूर्वपूर्वाध्यापकोच्चरितानुपूर्वीविशेषवत्त्वनिर्णयादेव यथा बोधकत्वं तथा अनुमितश्रुतेरपि सर्वज्ञभाष्यकारप्रभृतिभिः उच्चारितानुपूर्वीविशेषवत्त्वनिर्णयादेव बोधकत्वसम्भवात्। अत एव ' न च तस्य निष्फलत्वे' इत्याद्यग्रिममुक्तावळीग्रन्थोऽपि सङ्गच्छते। इदानीं पूर्वोक्तव्यतिरेकव्यभिचारमुद्धरति—**इत्थं चेति** ॥ मङ्गळस्य समाप्तिफलकत्वे अनुमिते

## मञ्जूषा.

यत्सुखेऽतिप्रसक्तं अत आचारेति । यद्यप्याचारः क्रिया तथापि विषयत्वश्रुतेः कृतिरेव विवक्षिता । विषयत्वं विधेयतया बोध्यं तेन फले न व्यभिचारः, तस्योद्देश्यतया कृतिविषयत्वात् । विधेयतया कृतिविषयत्वं चैत्य-

## दिनकरीयम्.

पुरुषकामनाविषयत्वेन परिशेषानुमाने प्रवर्तमानस्योपस्थितत्वादित्यर्थः । कल्प्यते, अनुमीयते । अनेन च मङ्गलस्य समाप्तिहेतुत्वेऽनुमानमेव प्रमाणं, न तु शिष्टाचारानुमिता श्रुतिः, इदानीमानुपूर्वीविशेषनिर्णयाभावेन तस्याबोधकत्वादिति सूचितम् । व्यापकत्वघटितकारणताग्रहप्रतिबन्धकज्ञानाविषयव्यतिरेकव्यभिचारमुद्धरति—**इत्थं चेति** । मङ्गलस्य समाप्तिफलकत्वे सिद्धे चेत्यर्थः । तत्रापि, नास्तिकादिग्रन्थेऽपि । तत्, मङ्गलं। कल्प्यते अनुमीयते, कार्यरूपसमाप्त्येति शेषः । ग्राह्यसन्देहपर्यवसन्नस्य पूर्वोक्तव्यभिचारसंशयस्य कारणतानुमिताव-

## रामरुद्रीयम्.

पुत्रादिफलकत्वे पुत्रवदादीनां तत्र प्रवृत्तिर्न स्यात्, स्वर्गफलकत्वे तु तस्य सर्वेषामिच्छाविषयतया सर्वेषां तत्र प्रवृत्तिः सम्भवतीति स्वर्ग एव फलत्वेन कल्पयितुमुचित इति न्यायपर्यवसितार्थः । तन्न्यायादत्रापि स्वर्ग एवेष्टं कल्प्यतामित्यर्थः । उपस्थितत्वादित्यनेन कस्योपस्थितत्वमुक्तमित्याकाङ्क्षायामाह । **परिशेषानुमाने प्रवर्तमानस्येति** ॥ समाप्त्यन्याफलकत्वे सति सफलत्वहेतुकानुमान इति तदर्थः । ननु समाप्तित्वेन समाप्तेरुपस्थितिरकिञ्चित्करी व्याप्तिघटकाभावादीनामप्युपस्थितत्वाविशेषादित्यत आह । **ग्रन्थादौ प्रवृत्तपुरुषकामनाविषयत्वेनेति** ॥ तथा च तादृशकामनाविषयत्वप्रकारकोपस्थितिविषयत्वं नान्येषामिति भावः । ग्रन्थादौ प्रवृत्तिसमये ग्रन्थसमाप्तावेवेच्छाया औत्सर्गिकत्वात्तथात्वं बोध्यम् । **व्यतिरेकव्यभिचारमुद्धरतीति** ॥ यद्यपि व्यतिरेकव्यभिचारनिश्चये सति कारणताया बाधितत्वेन समाप्तेर्मङ्गळकार्यत्वासिद्ध्या समाप्तिरूपकार्येण मङ्गळानुमितिरेव न सम्भवति । यदि तु जन्मान्तरीयमंगळसन्देहान्न व्यतिरेकव्यभिचारनिश्चयः, अपि तु सन्देह एव, स च न कारणत्वानुमितौ प्रतिबन्धक इति समाप्त्या मंगळानुमानं सम्भवत्येवेत्युच्यते, तदा ग्राह्यसन्देहपर्यवसन्नतादृशव्यभिचारसन्देहस्याकिञ्चित्करत्वेन तादृशव्यभिचारोद्धारो विफल एव । तथापि कारणत्वानुमितावपि नास्तिकस्य जन्मान्तरीयमंगळसन्देहेन बाधितविषयकत्वसन्देहाद्भवत्यप्रामाण्यसन्देहः, अप्रामाण्यसन्देहास्कन्दितकारणतानिश्चयो न स्वकार्याय क्षम इति तदुद्धार आवश्यक इति भावः। व्यतिरेकव्यभिचारेण समाप्तेः कार्यत्वासिद्धया कथं समाप्तिरूपकार्येण मंगळानुमानमित्याशङ्कां निरस्यति । **ग्राह्यसन्देहेत्यादिना** । ननु प्रचुरविघ्नस्थले यत्किञ्चिन्मङ्गळेन यत्किञ्चिद्विघ्नध्वंसस्यावश्यकतया स्वजन्यविघ्नध्वंससम्बन्धेन मंगळस्य सत्त्वात्कथमेतत्पक्षे समाप्त्यभाव इत्याशङ्कां

रीयं तत् कल्प्यते । यत्र च सत्यपि मङ्गले समाप्तिर्न दृश्यते, तत्र बलवत्तरो विघ्नो विघ्नप्राचुर्यं वा बोध्यम् । प्रचुरस्यैवास्य बलवत्तरविघ्ननिवारणे कारणत्वम् । विघ्नध्वंसस्तु मङ्गलस्य

## प्रभा.

चेत्यर्थः । तत्रापि, नास्तिकग्रन्थेऽपि । तत्, मङ्गलं । **कल्प्यत इति** ॥ समाप्तिरूपकार्येणानुमीयत इत्यर्थः । तथा च समाप्तग्रन्थकर्ता अयं मङ्गलाश्रयः, समाप्तग्रन्थकर्तृत्वात् आस्तिकवत् इत्यनुमानेन मङ्गलव्याप्यसमाप्तग्रन्थकर्तृत्ववानयमिति परामर्शात् एतज्जन्मीयमङ्गलबाधज्ञानसहकृतात्, व्यापकतानवच्छेदकजन्मान्तरीयमङ्गलत्वेन मङ्गलं सिध्यतीति भावः । उक्तान्वयव्यभिचारमुद्धरति—**यत्रेति** ॥ कादंबर्यादिग्रन्थ इत्यर्थः । ननु विघ्नस्य बलवत्तरत्वं मङ्गलानाश्यप्रारब्धरूपत्वादन्यद्दुर्वचं, तथात्वे प्रारब्धात्मकदुरितस्य पूर्वमपि सत्त्वेन पूर्वकृतग्रन्थसमाप्त्यनुपपत्तेः ! न च एतद्ग्रन्थसमाप्तिप्रतिबन्धकविघ्नस्यैव प्रारब्धरूपत्वं कल्प्यत इति वाच्यम् कल्पनागौरवात्, अनुमितश्रुतेरप्यप्रामाण्यापत्त्या समाप्तिप्रतिबन्धकदुरितस्य प्रारब्धरूपत्वे प्रमाणाभावाच्चेत्यत आह—**विघ्नप्राचुर्यं वेति** ॥ तथा च प्रचुरमङ्गलाभावात् प्रकृते न प्रचुरविघ्ननाश इति भावः । इदमुपलक्षणं, पूर्वोत्पन्नविघ्नानां तेन नाशेऽपि तदुत्तरकालीनविघ्नानां नाशकाभावेन न समाप्तिरित्यपि बोध्यम् । **प्रचुरस्यैवेति** ॥ प्रचुरस्य मङ्गलस्यैवेत्यर्थः । बलवत्तरविघ्ननिवारणेऽपीत्यपिशब्दात् प्रचुरविघ्ननिवारणपरिग्रहः। ननु कादंबर्यादौ प्रचुरमङ्गलाभावात् प्रचुरविघ्ननाशो माऽस्तु विघ्नान्यूनसङ्ख्याकमङ्गलस्यैव हेतुत्वात्, स्वल्पमङ्गलेन स्वल्पविघ्ननाशात् विघ्ननाशद्वारा मङ्गलस्य सत्त्वात् समाप्तिर्जायतामित्यत आह—**विघ्नध्वंसस्त्विति**॥

## मञ्जूषा.

वन्दनादावप्यस्ति अतश्शिष्टेति । शिष्टत्वं चात्र इष्टसाधनतांशे भ्रान्तिरहितत्वं, न तु वेदप्रामाण्याभ्युपगन्तृत्वं तेन व्युत्क्रमेण कृते दर्शादौ न व्यभिचारः । शिष्टाचारविषयत्वं श्येनयागादावप्यास्ति अतोऽविगीतेति । अविगीतत्वं च बलवदनिष्टाननुबन्धित्वं तेन श्येनयागादौ प्रवृत्त्युपयुक्तबलवदनिष्टाननुबन्धीष्टसाधनत्वरूपसाध्याभावेऽपि न व्यभिचारः । सिद्धे, अनुमिते । तत्र, मंगले । फलजिज्ञासायां, विशेषतःफलजिज्ञासायां । ननु कथं तर्हि

## दिनकरीयम्.

प्रतिबन्धकत्वात् व्यभिचारनिर्णयस्य चाभावादिति भावः । नन्वेवमप्यन्वयव्यभिचारज्ञानं कारणताग्रहविरोधि भविष्यत्येवेत्याशङ्क्यान्वयव्यभिचारं निरस्यति । **यत्र चेति** ॥ तत्र कादम्बर्यादौ । बलवत्तरत्वं वैजात्यम् । नन्वेवमपि कादम्बर्यादौ कुतो न विघ्नध्वंस इत्यत आह—**प्रचुरस्येति** ॥ प्रचुरस्यैव मंगलस्येत्यर्थः । बलवत्तरविघ्ननिवारणे, बलवत्तरादिविघ्ननिवारणे । तेन प्रचुरविघ्नस्यापि संग्रहः । तथा च मंगलस्य विघ्नसमसङ्ख्याकमङ्गलत्वेन नाशकतया न तत्र विघ्ननाश इति भावः । अत्र च विघ्नसमसङ्ख्याकमङ्गलत्वेन हेतुत्वेऽधिकसङ्ख्याकमङ्गलात् न्यूनसङ्ख्याकविघ्ननाशो न स्यादतः प्राचुर्यं वेत्यत्र वाकारोऽनास्थायां बोध्यः । ननु तथापि कादम्बर्यादौ विघ्नध्वंसो मा जायतां समाप्तिः परं जायतां मङ्गलरूपहेतोः सत्त्वादित्याशङ्क्याह—**विघ्नध्वंसस्त्विति** । तथा च स्वजन्यविघ्नध्वंससम्बन्धेन मङ्गलाभावान्न समाप्तिरिति भावः । आहुरित्यस्वरसोद्भावनम् । तद्बीजं तु विघ्नध्वंसद्वारा मङ्गलस्य हेतुत्वं न संभवति, नास्तिकग्रन्थसमाप्तौ

## रामरुद्रीयम् .

निरस्यति । **तथाचेत्यादिना** ॥ **विघ्नसमसंख्याकेति** ॥ तत्स्थलीयविघ्नेतरावृत्तिः सकलविघ्नवृत्तिर्या संख्या, तत्सजातीया तत्स्थलीयमंगलेतरावृत्तिः तादृशसकलमंगलवृत्तिर्या संख्या तादृशसंख्यावन्मंगलत्वेनेत्यर्थः । अन्यथा विघ्नप्राचुर्येऽपि यत्किञ्चिद्विघ्नवृत्तिसंख्यामादाय, मंगलस्य न्यूनतायामपि मंगलान्यवृत्तिसंख्यामादाय वा समसंख्यत्वोपपादनसम्भवात् । **अधिकसंख्याकमंगलादिति** ॥ एतच्चापाततः । निरुक्तविघ्ननिष्ठसंख्यासजातीयतत्स्थलीयमंगलेतरावृत्तिसंख्यावन्मंगलत्वेन कारणत्वे, अधिकसंख्याकमंगलादपि स्वल्पविघ्ननाशसम्भवात् । वस्तुतस्तु, प्रतिबन्धकसंसर्गाभावविधया सकलविघ्नाभावस्यापि समाप्तिहेतुत्वेन विघ्नध्वंससम्बन्धेन मंगलसत्त्वेऽपि मंगलेतरयावत्कारणान्तर्गतयावत्प्रतिबन्धकाभावस्यासत्त्वादेव नान्वयव्यभिचार इत्यत्रैव

## प्रभा.

यावद्विघ्नध्वंसस्त्वित्यर्थः । तु अवधारणे, यावद्विघ्ननाश एवेत्यर्थः । प्रकृतसमाप्तिप्रतिबन्धकविघ्नासमानकालीनविघ्नध्वंस एव व्यापार इति फलितोऽर्थः । तथाच कादंबर्यादौ तादृशव्यापाराभावान्न समाप्तिरिति भावः । अत्र समाप्तिः चरमवर्णध्वंसरूपा, न तु चरमवर्णरूपा, चरमवर्णस्य तृतीयक्षणे नाशेन सर्वदा ग्रन्थस्समाप्त इति, असमाप्तो ग्रन्थ इति प्रामाणिकव्यवहारानुपपत्तेः । एतन्मते मङ्गलसमाप्त्योः कथं कार्यकारणभाव इति चेदित्थं, स्वजनकविघ्नध्वंसावच्छेदकतासम्बन्धेन समाप्तिं प्रति स्वजन्यविघ्नध्वंसावच्छेदकतासम्बन्धेन मङ्गलस्य, स्वप्रतियोगिचरमवर्णानुकूलकृतिमत्त्वसम्बन्धेन समाप्तिं प्रति प्रकृतसमाप्तिप्रतिबन्धकविघ्नासमानकालीनविघ्नध्वंससम्बन्धेन मङ्गलस्य, स्वनिष्ठजन्यतानिरूपितदैशिकविशेषणतासम्बन्धावच्छिन्नजनकतासम्बन्धेन समाप्तिं प्रति स्वनिष्ठजनकतानिरूपितदैशिकविशेषणतासम्बन्धावच्छिन्नजन्यतासम्बन्धेन मङ्गलस्य, शरीरनिष्ठप्रत्यासत्त्या, आत्मनिष्ठप्रत्यासत्त्या, विघ्नध्वंसनिष्ठप्रत्यासत्त्या वा कार्यकारणभावस्वीकारात् जन्मान्तरीयमङ्गलकल्पनान्न नास्तिकग्रन्थसमाप्तौ व्यभिचारस्यापि प्रसक्तिः । न चैवं सति जन्मान्तरीयसमाप्तिमुद्दिश्य जन्मान्तरे मङ्गलकरणापत्तिरिति वाच्यं आपादकाभावात् । न च जन्मान्तरीयसमाप्तिसाधारणकार्यकारणभाव एवापादक इति वाच्यं । तथा सति 'पुत्रकामः पुत्रेष्ट्या यजेत' इति श्रुत्या पुत्रसामान्यं प्रति पुत्रेष्टेः कारणत्वप्रतिपादनेन अस्यां पत्न्यां मम पुत्रो भवत्विति कामनया पुत्रेष्टिकरणे सामग्र्यन्तरसमवधाने अस्या-

## मञ्जूषा.

गंगास्नानादीनामदृष्टार्थकतेत्यतः आह सम्भवतीति । तथा च दृष्टफलासंभवेन तत्रादृष्टफलकल्पनेति भावः ।

## दिनकरीयम्.

व्यभिचारात् । न च स्वजनकविघ्नध्वंसोत्पत्त्यवच्छेदकतासम्बन्धेन समाप्तिं प्रति स्वजन्यविघ्नध्वंसावच्छेदकतासम्बन्धेन मंगळस्य हेतुत्वात्, स्वप्रतियोगिचरमवर्णानुकूलकृतिमत्त्वसम्बन्धेन समाप्तिं प्रति आश्रयतासम्बन्धेन मंगलस्य हेतुत्वाद्वा जन्मान्तरीयमङ्गलकल्पनया न व्यभिचार इति वाच्यं । तथा सति जन्मान्तरीयसमाप्तिमुद्दिश्य जन्मान्तरीयमङ्गलकरणापत्तेः । अतः स्वप्रतियोगिचरमवर्णावच्छेदकतासम्बन्धेन समाप्तिं

## रामरुद्रीयम्.

मूलतात्पर्यात्, समसंख्याकमंगळत्वेन कारणतावर्णनमयुक्तमेव । परन्तु बलवत्तरत्वरूपवैजात्यकल्पनं गौरवग्रस्तमित्यभिप्रायेणैव मूले द्वितीयपक्षावलंबनमिति ध्येयम् । **न च स्वजनकविघ्नेति** ॥ अत्र स्वजनकविघ्नध्वंसोत्पत्त्यवच्छेदकतासम्बन्धेन समाप्तिं प्रति मंगळस्य हेतुत्वात्, समाप्तिं प्रति स्वजन्यविघ्नध्वंसावच्छेदकतासम्बन्धेन मंगळस्य हेतुत्वात्, स्वप्रतियोगिचरमवर्णानुकूलकृतिमत्त्वसम्बन्धेन समाप्तिं प्रति आश्रयतासम्बन्धेन मंगळस्य हेतुत्वाद्वेत्यन्वयेन कार्यकारणभावत्रयलाभः। तत्राद्यद्वयं शरीरनिष्ठप्रत्यासत्त्या, तृतीयस्तु आत्मनिष्ठप्रत्यासत्त्या । प्रथमकल्पे कारणतावच्छेदकसम्बन्धः, द्वितीयकल्पे कार्यतावच्छेदकसम्बन्धश्च केवलावच्छेदकतैव। स च सुगमत्वात् ग्रन्थकृता नोक्त इति बोध्यम् । एतेन कार्यतावच्छेदकसम्बन्धस्य कारणतावच्छेदकसम्बन्धस्य चातिगुरुभूतस्याचरणं, प्रयोजनाभावात् ग्रन्थकृतामनुचितमिति केषांचिदाक्षेपो निरवकाशः । अत एवोत्पत्तिपदमपि सार्थकम् । अन्यथा स्वजनकविघ्नध्वंसावच्छेदकतासंबन्धेन नास्तिकशरीरेऽपि समाप्त्युत्पत्त्या तत्रावच्छेदकतासंबन्धेन मंगळविरहेऽपि, स्वजन्यविघ्नध्वंसावच्छेदकतासंबन्धेन मंगलसत्त्वेन व्यभिचाराप्रसक्त्या तदुपादानवैयर्थ्यापत्तेरिति ध्येयम् । **जन्मान्तरीयसमाप्तिमिति** ॥ न चेष्टापत्तिः, तथा शिष्टानामाचारानुभवादिति भावः । अत्रेदमवधेयम् । मंगळाचरणस्य बहुवित्तव्ययायाससाध्यत्वविरहेण ग्रन्थारंभसमयेऽपि कर्तुं शक्यतया, जन्मान्तरे ग्रन्थकर्तृत्वसामर्थ्यविरहदशायामेतदुपेक्षणसंभवेन नेयमापत्तिः संभवति, नहि कश्चिद्भाविराज्यसंभावनया स्वल्पवित्तसाध्यं श्वेतछत्रमावश्यकमर्जयति । ग्रन्थकरणसामर्थ्यसत्त्वे ग्रन्थसमाप्तिमुद्दिश्य मंगळमाचरतो ग्रन्थप्रवृत्तिरावश्यकी आवश्यकी च तत्समाप्तिरिति । यदि च कदाचिद्विघ्नभूयस्त्वादिना न समाप्तिस्तथापि न तत्र जन्मान्तरीयसमाप्तेरुद्देश्यता । भ्रान्त्या ऐहिकसमाप्तेरेवोद्देश्यतासम्भवादिति । **अतः स्वप्रतियोगीति** । न चावच्छेदकतासम्बन्धेन समाप्तिं प्रतीत्येव वक्तव्यं, किं स्वप्रतियोगिचरमवर्णावच्छेद-

## प्रभा.

मेव पुत्रोत्पत्तिः, सामग्र्यन्तरासमवधाने आमुष्मिकपुत्रोत्पत्तिरिति स्वीकारस्य पुत्रकामाधिकरणसिद्धान्तात्। न चामुष्मिकपुत्रकामनया पुत्रवानपि कश्चित् पुत्रेष्टिं करोतीति पुराणादावपि क्वाप्यदर्शनात्। एवञ्च प्रकृतेऽपि 'समाप्तिकामो मङ्गलमाचरेत' इति श्रुत्या समाप्तिसामान्यं प्रति मङ्गलस्य हेतुत्वप्रतिपादनेन, प्रारिप्सितं कर्म निर्विघ्नं परिसमाप्यतामिति कामनया मङ्गलकरणे सामग्र्यन्तरसमवधाने एतस्यैव ग्रन्थस्य समाप्तिः, सामग्र्यन्तरासमवधाने जन्मान्तरीयसमाप्तेः तुल्यया युक्तया अवश्यं स्वीकरणीयत्वात्, प्रत्यक्षश्रुतौ पुत्रमात्रकामनाश्रवणात्। अनुमितश्रुतावपि समाप्तिसामान्यकामनाश्रवणात्। न च यत्कामनया यत् अनुष्ठीयते तत् तस्य फलमिति न्यायात् प्रारिप्सितग्रन्थसमाप्तिकामनया कृतमङ्गलस्य तादृशसमाप्तिफलकत्वमेव वक्तव्यमिति वाच्यम्। अस्मदीयकामनाया वस्तुसाधकत्वाभावेन तादृशनियमे मानाभावात्। अन्यथा शर्कराखण्डकामनयाऽपि कृतस्य कषायस्यापि शर्कराखण्डफलकत्वापत्तेः। ऐहिकपुत्रकामनया कृतपुत्रेष्टेः तन्मात्रफलकत्वापत्तेश्च। न चेष्टापत्तिः तदधिकरणसिद्धान्तविरोधापत्तेः। तस्मात् असति बाधके तत् तस्य फलमित्येव नियमो वाच्य इति ऐहिकपुत्रबाधकसत्त्वे आमुष्मिकपुत्रकल्पनावत् ऐहिकसमाप्तिबाधकसत्त्वे आमुष्मिकसमाप्तिफलकल्पनाया आवश्यकत्वात्। यदि च प्रात्यक्षिकत्वाभावमात्रेण तादृशश्रुतेरप्रामाण्यमुच्यते, तदा मन्वादिस्मृतिमूलभूतानां आचारमूलभूतानाञ्च अनुमितश्रुतीनां प्रात्यक्षिकत्वाभावेन अप्रामाण्यापत्त्या तन्मूलकस्मृत्याचाराणामप्यप्रामाण्यापत्तेः। तस्मात् अनुमितश्रुतेरपि प्रामाण्यमावश्यकमिति न कोऽपि दोषः। एवञ्च सति जन्मान्तरीयसमाप्तिमुद्दिश्य जन्मान्तरे मङ्गलकरणावश्यप्रसक्त्या तादृशदोषवारणाय स्वप्रतियोगिचरमवर्णावच्छेदकतासम्बन्धेन समाप्तिं प्रति स्वोत्पत्त्यवच्छेदकजातीयतासम्बन्धेन मङ्गलस्य हेतुत्वं परिकल्प्य नास्तिकशरीरे व्यभिचारप्रदर्शनं केषाञ्चित् निर्युक्तिकमेव। यच्च नास्तिकशरीरे व्यभिचारवारणाय स्वावच्छेदकावच्छिन्नप्रतियोगिकत्वस्वाव्यवहितोत्तरक्षणोत्पत्तिकत्वोभयसम्बन्धेन मङ्गलजन्यविघ्नध्वंसविशिष्टसमाप्तिं प्रति मङ्गलस्य हेतुत्वं परैरङ्गीकृतमनूद्य, एवमपि भो-

## मञ्जूषा.

ननु तथापि विश्वजिन्न्यायेन स्वर्ग एवेष्टः कल्प्यतामत आह इपस्थितत्वादिति। आरब्धं कर्म

## दिनकरीयम्.

प्रति स्वोत्पत्त्यवच्छेदकजातीयतासम्बन्धेन मङ्गलहेतुत्वस्य वाच्यतया नास्तिकशरीरे व्यभिचारस्य दुर्वारत्वात्। न च पुत्रकामाधिकरणविरोधः, सहकार्यन्तरासमवधानेनैहिकपुत्राभावेऽप्यामुष्मिकपुत्ररूपफलस्य तत्र सिद्धान्तितत्वादिति वाच्यं। तत्र पुत्रमात्रकामनाश्रवणादिह तु विशिष्टशिष्टाचारानुमितश्रुत्या ऐहिकसमाप्तेरेव मङ्गल-

## रामरुद्रीयम्.

कतापर्यंतानुधावनेनेति वाच्यम्। यत्र वर्णोत्पत्तिद्वितीयक्षणे शरीरक्रियया शरीरस्यैतद्देशाद्विभागः तेन च पूर्वसंयोगनाशः तत्र तच्छरीरावच्छेदेन न वर्णनाशः, किन्तु शरीराधिकरणवृत्तिप्रभाद्यवच्छेदेनैवेति नावच्छेदकतायाः कार्यतावच्छेदकसम्बन्धत्वमंगीकृतम्। **स्वोत्पत्त्यवच्छेदकजातीयतेति** ॥ मङ्गलावच्छेदकशरीर एव समाप्तिरिति न नियमः, अवयवोपचयादिना समाप्तिसमये मङ्गलावच्छेदकशरीरनाशात्। अतो जातीयतापर्यन्तानुधावनम्। जातिश्च एकक्षणवृत्तिपदार्थद्वयावृत्तित्वेन विशेषणीया। तेन जन्मान्तरीयशरीरस्यापि पृथिवीत्वादिना मङ्गलावच्छेदकशरीरसजातीयत्वेऽपि न क्षतिः। तादृशी च जातिः तत्तत्पुरुषीयतत्तज्जन्मीययावच्छरीरवृत्तिचैत्रत्वादिजातिरेवेति नोक्तक्षतिः। यद्यपि स्वावच्छेदकजातीयतेत्युक्तावपि न दोष इत्युत्पत्तिप्रवेशवैयर्थ्यम्। तथापि विघ्नध्वंसस्याप्यनेनैव सम्बन्धेन हेतुत्वमिति लाभायैवात्रोत्पत्तिप्रवेशः। मङ्गलस्यानेन सम्बन्धेन हेतुत्वे विघ्नध्वंसस्याप्यनेन सम्बन्धेन हेतुत्वमिति लाभसम्भवात्। विघ्नध्वंसस्य तु कारणतावच्छेदकसम्बन्धे उत्पत्तिप्रवेश आवश्यकः। अन्यथा जन्मान्तरीयसमाप्तेरपि विघ्नध्वंसफलत्वापत्तेरिति मन्तव्यम्। यद्वा स्तुतिरूपमङ्गलस्य मीमांसकमते नित्यतया तदवच्छेदकत्वं शरीरस्य न सम्भवति, किं तु प्राकट्यरूपतदुत्पत्तेरेवेति मीमांसकमतसंग्रहायैवोत्पत्तिपर्यंतनिवेशनम्। **पुत्रकामाधिकरणेति** ॥ 'पुत्रकामः पुत्रेष्ट्या यजेत' इति विधौ पुत्र-

## प्रभा.

गादिनाश्यविघ्नध्वंसपूर्वकसमाप्तौ क्लृप्तनियतपूर्ववृत्तिताकेन विघ्नध्वंसेनैव मङ्गलस्थलीयसमाप्त्युपपत्तेः मङ्गलस्यान्यथासिद्धत्वं दुर्वारमेवेति दूषितम् । तदपि न सम्यक् । अनुमितश्रुतेरप्रामाण्यापत्त्या भोगादिजन्यविघ्नध्वंसस्य समाप्तिहेतुत्वानङ्गीकारात् । अस्तु वा भोगादिजन्यविघ्नध्वंसस्यापि समाप्तिहेतुत्वं तथाऽपि प्रात्यक्षिकश्रुतिभ्यां दर्शपूर्णमासयोः ज्योतिष्टोमस्य च स्वर्गसाधनत्वप्रतिपादनेन तत्र परस्परव्यभिचारपरिहाराय स्वर्गे वैजात्यं परिकल्प्य विजातीयस्वर्गं प्रति दर्शपूर्णमासयोः विजातीयस्वर्गं प्रति ज्योतिष्टोमयागस्य च कारणत्वमङ्गीकृत्य यथा श्रुतिसमर्थनं कृतं, तथा आनुमानिकश्रुत्या समाप्तिं प्रति विघ्नध्वंसद्वारा मङ्गलस्य हेतुत्वप्रतिपादनेन तस्य भोगादिजन्यविघ्नध्वंसपूर्वकसमाप्तिस्थले व्यभिचारपरिहाराय तादृशसमाप्तिव्यावृत्तवैजात्यं एतत्समाप्तौ स्वीकृत्य विजातीयसमाप्तिं प्रति मङ्गलस्य हेतुत्वस्वीकारेण अन्यथासिद्धत्ववारणसंभवात् । न च ध्वंसरूपसमाप्तौ वैजात्यमप्रसिद्धमिति वाच्यम् । तथाऽपि तत्प्रतियोगिचरमवर्णेषु वैजात्यं परिकल्प्य स्वाश्रयप्रतियोगिकत्वरूपपरम्परासंबन्धेन तादृशवैजात्यस्य मङ्गलजन्यसमाप्तिषु सत्त्वेन अप्रसिद्ध्यभावात् । अत्र विघ्नध्वंसस्य समाप्तिं प्रति न विघ्नध्वंसत्वेन जनकत्वं निर्विघ्नपुरुषस्य समाप्त्यनुपपत्तेः। नापि विघ्नप्रतियोगिकाभावत्वेन, विघ्नकाले विघ्नान्योन्याभावसत्त्वेन समाप्त्यापत्तेः। न वा विघ्नान्योन्याभावभिन्नत्वे सति विघ्नप्रतियोगिकाभावत्वेन, विघ्नवत्यपि संबन्धान्तरावच्छिन्नप्रतियोगिताकविघ्नाभावस्य तादृशस्य सत्त्वेन तदानीं समाप्त्यापत्तेः । किञ्च येन संबन्धेन येन रूपेण विघ्नस्य प्रतिबन्धकत्वं तत्संबन्धावच्छिन्नतद्धर्मावच्छिन्नप्रतियोगिताकाभाव-प्रकृतसमाप्तिप्रतिबन्धकविघ्नासमानकालीनविघ्नध्वंस-तादृशप्रागभावादीनां त्रयाणामन्यतमत्वेन हेतुत्वमिति न काप्यनुपपत्तिः । विघ्नध्वंसमङ्गलयोः कार्यकारणभावं नवीनमतव्याख्यानावसरे विवेचयिष्यामः । एवं रीत्या मङ्गलस्य समाप्तिसाधनत्वे अनुमिते

## मञ्जूषा.

निर्विघ्नं परिसमाप्यतामिति ग्रन्थादौ प्रवृत्तपुरुषकामनाविषयत्वेन, परिशेषानुमाने प्रवर्तमानस्योपस्थितत्वादित्यर्थः। कल्प्यते, अनुमीयते। अनेन च मंगलस्य समाप्तिहेतुत्वे अनुमानमेव प्रमाणं, न तु शिष्टाचारानुमिता-

## दिनकरीयम्.

फलत्वात् । नच स्वावच्छेदकावच्छिन्नप्रतियोगिकत्व-स्वाव्यवहितोत्तरक्षणोत्पत्तिकत्वोभयसम्बन्धेन मङ्गलजन्यविघ्नध्वंसविशिष्टसमाप्तित्वस्य मङ्गलकार्यतावच्छेदकत्वान्न व्यभिचार इति वाच्यम्, कारणस्य कार्यतावच्छेदकत्वानुपगमात् । अत एव काशीमरणान्मुक्तिरिति श्रुत्यन्तर्गतपञ्चम्याः प्रयोजकत्वपरत्वोपवर्णनं ग्रन्थकृतां सङ्गच्छते । अन्यथा तत्रापि काशीमरणविशिष्टमुक्तिं प्रति काशीमरणहेतुत्वस्य निर्दुष्टतया तथोपवर्णनमसङ्गतं स्यात् । अथ 'तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय' इति श्रुत्या तत्त्वज्ञानस्य मुक्तिसामान्यं प्रति हेतुत्वं प्रतिपादितं, तच्च काशीमरणस्य मुक्तिहेतुत्वे न संभवति काशीमरणजन्यमुक्तौ

## रामरुद्रीयम्.

कामपदमधिकृत्य यो विचारस्तद्विरोध इत्यर्थः । **स्वावच्छेदकावच्छिन्नेति** ॥ आस्तिकनास्तिकाभ्यां युगपद्यत्र ग्रन्थसमाप्तिः कृता, तत्र नास्तिकीयसमाप्तेरपि आस्तिकीयमङ्गलजन्यविघ्नध्वंसाव्यवहितोत्तरक्षणोत्पत्तिकत्वेन तत्पूर्वमुक्तसम्बन्धेन कार्याधिकरणे मङ्गलविरहाद्व्यभिचार इत्यतः स्वावच्छेदकावच्छिन्नप्रतियोगिकत्वनिवेशः । नास्तिकसमाप्तौ व्यभिचारवारणाय द्वितीयसम्बन्धप्रवेशः । स्वोत्तरत्वं स्वाधिकरणक्षणध्वंसाधिकरणत्वमेव । तादृशक्षणोत्पत्तिकत्वं च नास्तिकसमाप्तिसाधारणमेवेत्यव्यवधाननिवेशेनैव नास्तिकसमाप्तिर्व्यावर्तनीया । तच्चाव्यवधानं यदि स्वाधिकरणक्षणध्वंसाधिकरणक्षणध्वंसानधिकरणत्वं, तदा आस्तिकीयसमाप्तेरप्यसंग्रहः, स्वाधिकरणीभूतविघ्नध्वंसोत्पत्त्यधिकरणक्षणध्वंसाधिकरणतद्वितीयक्षणध्वंसानधिकरणत्वस्य समाप्त्युत्पत्तिक्षणे काप्यसम्भवात् । यदि च स्वध्वंसाधिकरणक्षणध्वंसानधिकरणत्वं तदित्युच्यते, तदाऽपि ध्वंसस्य ध्वंसाप्रसिद्ध्या तादृशोभयसंबन्धेन ध्वंसविशिष्टाप्रसिद्धिरेव । यत्तु स्वाधिकरणतत्क्षणध्वंसाधिकरणक्षणध्वंसानधिकरणत्वमेवाव्यवहितत्वं, तच्च सर्वत्र तत्क्षणपदेन समाप्त्यव्यवहि-

## प्रभा.

श्रुतिरप्यनुमातुं शक्या—तथाहि मंगळं स्वनिष्ठसमाप्तिसाधनत्वबोधकश्रुतिगम्यं, समाप्तिकामनया शिष्टैरनुष्ठीयमानत्वात्, यत् यत्कामनया शिष्टैरनुष्ठीयते तत् स्वनिष्ठतत्कारणत्वबोधकश्रुतिगम्यं यथा दर्शादिरित्यनुमानं तत्र प्रमाणम्। इयांस्तु विशेषः, प्रत्यक्षश्रुतिः अपूर्वार्थे, आनुमानिकी तु निर्णीतार्थे प्रमाणमिति। विघ्नध्वंसकामो मङ्गळमाचरेतेत्यनुमितश्रुत्या विघ्नध्वंसं प्रति मङ्गळस्य हेतुत्वप्रतिपादनात् विघ्नध्वंसकामनयैव मङ्गळा-

## मञ्जूषा.

श्रुतिः, इदानीमानुपूर्वीविशेषनिर्णयाभावेन तस्या अबोधकत्वादिति सूचितं इति व्याचख्यौ । अत्र

## दिनकरीयम्.

तत्त्वज्ञानस्य व्यभिचारप्रसङ्गादतः काशीमरणस्य न मुक्तिजनकत्वं, अपि तु तत्त्वज्ञानद्वारा मुक्तिप्रयोजकत्वमेवेति ग्रन्थकृतां तत्रत्यपञ्चम्याः प्रयोजकत्वपरत्वोपवर्णनं, न तु कारणस्य कार्यतानवच्छेदकत्वात्तथोपवर्णनमिति चेत्। अस्तु कारणस्य कार्यतावच्छेदकत्वम्, अस्तु च पूर्वोक्तरीत्या मङ्गळजन्यविघ्नध्वंसविशिष्टसमाप्तित्वस्य कार्यतावच्छेदकत्वेन नास्तिकशरीरे व्यभिचारवारणम्। एवमपि भोगादिजन्यविघ्नध्वंसपूर्वकसमाप्तौ कॢप्तनियतपूर्ववृत्तिताकेन ध्वंसेनैव मङ्गळस्थलीयसमाप्त्युपपत्तेर्मङ्गळस्यान्यथासिद्धत्वं दुर्वारमेव । न च व्यापारेण व्यापारिणो नान्यथासिद्धिरिति वाच्यं, यत्र व्यापारिणः प्रमाणबोधितकारणतानिर्वाहाय व्यापारस्य कारणत्वं कल्प्यते, यथा यागस्य स्वर्गहेतुतानिर्वाहार्थमपूर्वं, तत्रैव व्यापारेण व्यापारिणो नान्यथासिद्धिः । अत एव काशीमरणस्य तत्त्वज्ञानेन मुक्तावन्यथासिद्धत्वात् प्रयोजकत्वपरतया श्रुतिसमर्थनं सङ्गच्छते । प्रकृते च प्रति-

## रामरुद्रीयम्.

तत्पूर्वक्षणव्यक्तिमादाय समाप्तिक्षणे सूपपादमेवं, नास्तिकशरीरे व्यभिचारवारणं तु स्वावच्छेदकावच्छिन्नप्रतियोगिकत्वदलेनैवेति कैश्चित् प्रलपितं तदत्यन्तमसत् । आत्मन्युत्पन्नस्य विघ्नध्वंसस्य ध्वंसाभावेन तदीयभोगायतनजन्मान्तरशरीरावच्छेदेनापि तदात्मनि सत्त्वस्यावश्यकत्वात् प्रथमदलेन नास्तिकसमाप्तिवारणासम्भवात्, अन्यथा जन्मान्तरार्जितपुण्यपापादेरपि जन्मान्तरीयशरीरावच्छेदेनासत्त्वापत्त्या तदवच्छेदेन भोगजनकता न स्यात् । न च स्वावच्छेदकेत्यस्य स्वोत्पत्त्यवच्छेदकार्थकत्वात् नोक्तदोष इति वाच्यम् । तथासति आस्तिकीयसमाप्तेरपि स्वोत्पत्त्यवच्छेदकावच्छिन्नप्रतियोगिकत्वाभावेनासंग्रहप्रसङ्गात् । न च स्वोत्पत्त्यवच्छेदकजातीयावच्छिन्नप्रतियोगिकत्व एव तात्पर्यमिति न कोऽपि दोष इति वाच्यम् । एवमपि निरुक्ताव्यवधाननिवेशे प्रयोजनविरहेण तद्वैयर्थ्यस्य दुरुद्धरत्वादिति चेत्सत्यं, स्वोत्तरजन्मानुत्तरत्वमेव प्रकृते अव्यवहितत्वम्। जन्म च आद्यशरीरप्राणसंयोगः । शरीरे आद्यत्वं च स्वसजातीयशरीरध्वंसानधिकरणत्वम् । जातिश्च पूर्वोक्तैव ग्राह्या अतो नाप्रसिद्धिः । एवं च नास्तिकीयसमाप्तेर्विघ्नध्वंसोत्तरजन्मोत्तरक्षणोत्पत्तिकत्वेनाव्यवधाननिवेशात्तद्वारणमव्याहतमेव । न च आस्तिकीयसमाप्तेरपि स्वोत्तरपुरुषान्तरीयजन्मोत्तरक्षणोत्पत्तिकतयाऽसंग्रहो दुर्वार एवेति वाच्यम् । स्वाश्रयशरीरावच्छिन्नभोगाश्रयत्व-दैशिकविशेषणत्वोभयघटितसामानाधिकरण्यसम्बन्धेन विघ्नध्वंसविशिष्टत्वेन जन्मनो विशेषणीयत्वात् । न चैवमपि यादृशग्रन्थसमाप्त्यनन्तरं ग्रन्थकर्तुर्मुक्तिस्तादृशसमाप्तेरसंग्रह एव, स्वोत्तरस्वसमानाधिकरणजन्माप्रसिद्धेरिति वाच्यम् । स्वोत्तरचरमशरीरानुत्तरत्वस्यैवाव्यवधानपदार्थत्वेनाङ्गीकरणीयत्वात् । चरमत्वं च स्वसजातीयशरीरप्रागभावानधिकरणत्वम् । इत्थं च समाप्त्युत्तरं मुक्तिस्थलेऽपि स्वोत्तरचरमशरीरप्रसिद्ध्या नासंग्रहः । उत्तरत्वनिवेशनं च यत्र नास्तिकेन मङ्गलाचरणं विनैव ग्रन्थान्तरसमाप्तिः कृता, तदनन्तरं तच्छरीरेणैवास्तिको भूत्वा तदनन्तरजातविघ्नं मङ्गळाचरणेन नाशयित्वा ग्रन्थान्तरसमाप्तिः कृता तत्रत्यपूर्वसमाप्तौ व्यभिचारवारणायैवेति दिक् ॥ कारणस्य कार्यतानवच्छेदकत्वे प्राचां संमतिमाह । **अत एवेति** ॥ कारणस्य कार्यतावच्छेदककोटिप्रवेशांगीकारेऽपि काशीमरणान्मुक्तिरित्यत्र पञ्चम्याः प्रयोजकत्वार्थकत्वोपवर्णनमावश्यकं, तथा च कारणस्य कार्यतानवच्छेदकत्वे न प्राचां संमतिरित्याशयेन शंकते **अथेति** ॥ कारणस्य कार्यतावच्छेदककोटिप्रवेशसंभवेऽपि समाप्तिं प्रति मंगलस्य न हेतुतासंभवः अन्यथासिद्ध-

द्वारमित्याहुः प्राञ्चः ॥ नव्यास्तु मङ्गलस्य विघ्नध्वंस एव फलम्, समाप्तिस्तु बुद्धिप्रतिभादिकारणकलापात् । न चैवं स्वतःसिद्धविघ्नविरहवता कृतस्य मङ्गलस्य निष्फलत्वापत्तिरिति वाच्यम्, इष्टापत्तेः । विघ्नशङ्कया तदाचरणात् । तथैव शिष्टाचारात् । नच तस्य निष्फलत्वे

## प्रभा.

चरणमिति वदतां गंगेशोपाध्यायप्रभृतीनां मतमाह—**नव्यास्त्विति** ॥ विघ्नध्वंस इत्येवकारेण समाप्तेः मङ्गळफलत्वव्यवच्छेदः । ननु तर्हि कुतस्समाप्तिरित्यत आह—**समाप्तिस्त्विति । बुद्धिप्रतिभादीति** ॥ बुद्धिः ज्ञानं प्रतिभा स्फूर्तिः आदिपदात् प्रतिबन्धकाभावपरिग्रहः । एवं, मङ्गळस्य विघ्नध्वंसं प्रत्येव जनकत्वे । **स्वतस्सिद्धविघ्नविरहवतेति** ॥ विघ्नसामग्र्यभाववतेत्यर्थः । यद्यपि मङ्गळस्य समाप्तिफलकत्ववादिमतेऽपि तत्र मङ्गळात् विघ्नध्वंसानुत्पत्त्या तज्जन्यसमाप्त्यनुत्पत्त्या च निष्फलत्वं संभवति, तथाऽपि तन्मते समाप्तिं प्रति निरुक्तान्यतमत्वेन विघ्नध्वंसस्य हेतुत्वात्, विघ्नध्वंसनिष्ठतादृशान्यतमत्वावच्छिन्नकारणतानिरूपितकार्यताश्रयसमाप्त्युत्पत्त्या तन्मते निष्फलत्वापत्त्यभावात् । **निष्फलत्वापत्तिरिति** ॥ फलानुपधायकत्वापत्तिरित्यर्थः । **इष्टापत्तेरिति** ॥ तथा च आलोकाद्यसमवधानकाले चक्षुषः चाक्षुषानुपधायकत्वमिव प्रतियोगिरूपकारणान्तराभावकाले मङ्गळस्य विघ्नध्वंसानुपधायकत्वेऽपीष्टापत्तेर्वक्तुं शक्यत्वादिति भावः । ननु तर्हि कथं फलानुपधायके प्रवृत्तिरित्याशङ्कां इष्टोपधायकताज्ञानं न प्रवर्तकं मोक्षकामनया गङ्गास्नानादिप्रवृत्त्यनुपपत्तेः, किन्तु प्रयोजकसाधारणेष्टसाधनताज्ञानमित्यभिप्रायेण परिहृत्य प्रवृत्तिमुपपादयति—**विघ्नशङ्कयेति । तदाचरणादिति** ॥ तत्र प्रवृत्ते-

## मञ्जूषा.

परिशेषानुमाने समाप्त्यन्याफलकत्वं समाप्तिभिन्नं तज्जनकव्यापारभिन्नं तज्जन्यभोगभिन्नं च यत्प्रवृत्त्युद्देश्यं,

## दिनकरीयम्.

बन्धकाभावस्य कार्यमात्रे हेतुताया मङ्गळकार्यतां विनापि क्लृप्ततया, मङ्गळस्य अन्यथासिद्धत्वं दुष्परिहरमेवेति । विघ्नध्वंसस्य द्वारत्वमिच्छतां प्राचां मतेऽपि विघ्नध्वंसस्य मङ्गळकार्यत्वावश्यकतया विघ्नो मे निवर्तताम् इति कामनया मङ्गळाचरणेन च, मङ्गळस्य विघ्नध्वंस एव फलमिति वदतां चिन्तामणिकृतां मतमाह । **नव्यास्त्विति** ॥ विघ्नध्वंस एवेत्येवकारेण समाप्तिव्यवच्छेदः । फलं प्रवृत्त्युद्देश्यम् । ननु समाप्तिस्तर्ह्याकस्मिकी स्यादत आह । **समाप्तिस्त्विति** ॥ बुद्धिर्ज्ञानं । प्रतिभा तद्विशेषः स्फूर्त्याख्यः । प्रतिभादीत्यादिना विघ्नसंसर्गाभावपरिग्रहः । अनयैव रीत्या कारीरीष्टिस्थलेऽप्यवग्रहनिवृत्तिरेव फलं वृष्टिस्तु स्वकारणदेवेति बोध्यम् । एवं, मङ्गलस्य विघ्नध्वंसं प्रति जनकत्वे । **स्वतः सिद्धविघ्नविरहवतेति** ॥ विघ्नात्यन्ताभाववतेत्यर्थः । ननु निष्फले प्रवृत्तिरेव कथमत आह । **विघ्नशङ्कयेति** ॥ संशयनिश्चयसाधारणविघ्नज्ञानमेव प्रवर्तकमिति भावः । तदाचरणात् मङ्गळाचरणात् । ननु विघ्नसंशये मङ्गळाचरणमेवासिद्धमित्यत्राह । **तथैवेति । शिष्टाचारादिति** ॥ विषयतासम्बन्धेन मङ्गळ इति शेषः । ननु निर्विघ्नपुरुषानुष्ठितमंगलस्थलेऽ-

## रामरुद्रीयम्.

त्वादित्याशयेन समाधत्ते । **एवमपीति** ॥ विघ्नध्वंसस्य कार्यत्वावश्यकतयेति । तथा च प्राचीनमते समाप्तौ विघ्नध्वंसे च मंगळकार्यत्वं कल्पनीयमिति गौरवमिति भावः । **विघ्नो मे निवर्ततामिति कामनयेति** ॥ सावधारणोऽयं निर्देशः, अन्यथा विघ्नध्वंसद्वारैव समाप्तेर्मंगलफलतया समाप्तिकामनाधीनविघ्नध्वंसकामनाया अपि मंगळकरणप्रयोजकतया विघ्नध्वंसकामनया मंगलाचरणस्य प्रकृतानुपयोगप्रसंगात् । अथवा, ननु उभयोर्मंगळकार्यत्वे गौरवेऽपि विघ्नध्वंसस्यैव मंगळफलत्वं, विघ्नध्वंसकामनया मंगळानुष्ठानान्न संभवति, यस्य यत्फलत्वं तत्कामनया तदनुष्ठाननियमादित्याशङ्कां निराकुरुते—**विघ्नो मे निवर्ततामित्यादिना** ॥ ननु विघ्नध्वंस एव मंगळफलमिति मूलोक्तिरयुक्ता, फलपदस्य जन्यार्थकतया मंगळध्वंसस्यापि मंगळजन्यतया एवकारासंगतेरित्याशंकां निराकुर्वन्फलपदं व्याचष्टे—**फलमिति । आकस्मिकीति** ॥ यत्किञ्चित्कारणानियम्येत्यर्थः ।

तद्बोधकवेदाप्रामाण्यापत्तिरिति वाच्यम् । सति विघ्ने तन्नाशस्यैव वेदबोधितत्वात् । अत

## प्रभा.

रित्यर्थः । न च विघ्नप्रकारकज्ञानस्य कथं प्रवर्तकत्वमिति वाच्यम् । विघ्नस्यानिश्चतया निर्विघ्नोऽहमिति निर्णये विघ्नरूपानिष्टनिवारणे इच्छानुदयात्, स्वस्मिन् संशयनिश्चयसाधारणविघ्नप्रकारकज्ञाने सति तन्निवारणरूपफले इच्छोदयेन विघ्ननिवारणोपाये मंगलेऽपीच्छासंभवात् । उपायेच्छां प्रति फलेच्छायाः कारणत्वात्, उपायेच्छया च उपाये प्रवृत्तिरिति क्रमेण विघ्नप्रकारकज्ञानमात्रस्य प्रवृत्तिप्रयोजकत्वसंभवात् । न चेष्टसाधनताज्ञानाधीनेच्छयैव प्रवृत्त्युपपत्तेः फलेच्छायाः प्रयोजकत्वे मानाभाव इति वाच्यम् । ज्योतिष्टोमयागे श्रुतितः स्वर्गसाधनतानिर्णयवतोऽपि पुंसः स्वर्गे इच्छाभाववतो ज्योतिष्टोमे प्रवृत्त्यापत्तेः । विघ्नप्रकारकज्ञानमात्रस्य मङ्गलाचरणप्रयोजकत्वे सम्मतिमाह—**तथैवेति** ॥ विघ्नप्रकारकज्ञानमात्रेणैवेत्यर्थः । **शिष्टाचारादिति** ॥ शिष्टानां आस्तिकानां आचारात्प्रवृत्तेरित्यर्थः । तथा च 'कूष्माण्डैर्जुहुयात् यो पूत इव मन्येत' इति श्रुत्या अपूतत्वशङ्कायाः कूश्माण्डहोमरूपप्रायश्चित्तकरणप्रयोजकत्वप्रतिपादनेन पापशङ्कया तन्निवर्तककूश्माण्डहोमादौ यथा आस्तिकानां प्रवृत्तिः, तथैव विघ्नशङ्कया तन्निवर्तके मङ्गले शिष्टानां प्रवृत्तिः आवश्यकीति भावः । **तस्येति** ॥ अविघ्नपुरुषानुष्ठितमङ्गलस्येत्यर्थः । **निष्फलत्व इति** ॥ विघ्नध्वंसरूपफलानुपधायकत्व इत्यर्थः । **तद्बोधकेति** ॥ मङ्गलसामान्यस्य विघ्नध्वंसफलकत्वबोधकवेदस्य अप्रमाणत्वापत्तिरित्यर्थः । विघ्नध्वंसफलकत्वाभावकति विघ्नध्वंसफलकत्वप्रतिपादकत्वादिति भावः । **सति विघ्न इति** ॥ विघ्नरूपकारणान्तरसमवधाने सतीत्यर्थः । **तन्नाशस्यैवेति** ॥ मङ्गलात् विघ्नध्वंसोत्पत्तेरेवेत्यर्थः—तथा च मंगलस्य विघ्नरूपकारणान्तराभावेनैव विघ्नध्वंसरूपफलानुपधायकत्वोपपत्तौ स्वरूपयोग्यताया अबाधेन न विघ्ननाशकत्वबोधकवेदाप्रामाण्यमिति भावः । उक्तरीत्या आनुमानिकश्रुतिनिष्ठाप्रामाण्याभावे प्रात्यक्षिकश्रुतिनिष्ठाप्रामाण्याभावं

## मञ्जूषा.

तज्जनकत्वम् । तेन मंगलस्य समाप्तिभिन्नं विघ्नध्वंसं प्रति भोगं प्रति स्वध्वंसं प्रति च जनकत्वेऽपि न हेत्वप्रसिद्धिः । ... ... ... ... ... ...

## दिनकरीयम्.

न्वयव्यभिचारेण विघ्नध्वंसं प्रति मंगलस्य कारणता बाधिता, तथा च बाधितार्थबोधकत्वाद्वेदस्याप्रामाण्यमिति, श्रुतेः कारणताबोधकत्वमङ्गीकर्तुमसे शङ्कां निरस्यति । **न चेति** ॥ तस्य, निर्विघ्नपुरुषानुष्ठितमंगलस्य । **तद्बोधकेति** ॥ मंगलविघ्नध्वंसयोः कार्यकारणभावबोधकेत्यर्थः । **सति विघ्न इति** ॥ तथा चोपदर्शितस्थले प्रतियोगिरूपकारणाभावेन विघ्नध्वंसरूपकार्यानुदयोपपत्तौ कारणताया अबाधितत्वेन न कारणताबोधकवेदाप्रामाण्यमिति भावः । अत एव, नाशं प्रति प्रतियोगिनः कारणत्वादेव। **तद्बोधकवेदाप्रामाण्यमिति** ॥ प्रायश्चित्तस्य पापनाशकत्वबोधकवेदाप्रमाण्यमित्यर्थः । ननु मंगलं न विघ्नध्वंसे कारणं विनायकस्तवपाठादिजन्यविघ्नध्वंसे व्यभिचारात्, विनायकस्तवस्य मंगलत्वेऽपि तदनुकूलकण्ठाभिघातरूपस्य तत्पाठस्य मंगलत्वाभावात् । न च पाठकतासम्बन्धेन विनायकस्तव एव विघ्ननाशकः स च मंगलमेवेति न व्यभिचार इति वाच्यं, 'सर्वे विघ्नाः शमं यान्ति' इत्यादिना तत्पाठस्यापि

## रामरुद्रीयम्.

नन्वेवं कारीरियागस्यापि वृष्टिः फलं न स्यात्, यागेनावग्रहनिवृत्तौ स्वकारणादेव वृष्टिसंभवादित्याशंकामिष्टापत्त्या परिहरति—**अनयैवेति** ॥ अवग्रहो वृष्टिप्रतिबन्धको दुरितविशेषः । **श्रुतेः कारणताबोधकत्वमिति** ॥ विध्यर्थः केषांचिन्मते शाब्दी भावना, केषांचिदपूर्वं, न्यायमते त्विष्टसाधनत्वं, तथा च मंगले विघ्नध्वंसकारणताया बाधितत्वेन शिष्टाचारानुमितायाः विघ्नध्वंसकामो मंगलमाचरेदिति श्रुतेरप्रमाण्यापत्तिः, न्यायमते तत्र विधिना मंगले विघ्नध्वंसकारणताया एव प्रत्येतव्यत्वादिति भावः । ननु सति विघ्ने तन्नाशस्यैव वेदबोधितत्वादिति मूलमसंगतं स्वर्गकामो यजेतेत्यादिवद्विघ्नध्वंसकामो मंगलमाचरेतेत्यादावपि

एव पापभ्रमेण कृतस्य प्रायश्चित्तस्य निष्फलत्वेऽपि न तद्बोधकवेदाप्रामाण्यम् ।
मङ्गलं च विघ्नध्वंसविशेषे कारणम्, विघ्नध्वंसविशेषे च विनायकस्तवपाठादिः ।

## प्रभा.

उपष्टम्भकतया उपन्यस्यति—**अत एवेति** ॥ स्वरूपयोग्यतारूपकारणत्वमादाय मङ्गलस्य विघ्ननाशकत्वबोधकवेदस्याप्रामाण्यनिराकरणादेवेत्यर्थः । **वेदाप्रामाण्यमिति** ॥ तथाच कूष्माण्डहोमरूपप्रायश्चित्तस्य प्रतियोगिरूपकारणाभावेन फलोपधायकत्वाभावात् प्रायश्चित्तस्य पापनाशकत्वबोधकवेदस्याप्रामाण्यापत्तेः, यदि च स्वरूपयोग्यतारूपकारणत्वमादाय प्रात्यक्षिकश्रुतेः प्रामाण्यमुपपाद्यते तदा आनुमानिकश्रुतावपि तुल्यमिति भावः । ननु मङ्गलं न विघ्नध्वंसे कारणं विनायकस्तोत्रपाठादिजन्यविघ्नध्वंसे व्यभिचारात् । यदि च विनायकोत्कर्षप्रकारकज्ञानस्य तज्जनकशब्दरूपस्य वा स्तोत्रस्य मङ्गलत्वेन विघ्ननाशकत्वेऽपि तदनुकूलकण्ठताल्वाद्यभिघातरूपपाठस्य विघ्ननाशकत्वे प्रमाणाभावः । न च 'सर्वे विघ्नाश्शमं यान्ति गणेशस्तवपाठतः' इति वचनेन पाठस्य विघ्ननाशकत्वमव्याहतमिति वाच्यम् । गणेशस्तवपाठत इति वचनेन 'कृदभिहितो भावो द्रव्यवत्प्रकाशते' इति अनुशासनबलात्पठितस्तोत्रस्यैव तसिल्प्रत्ययेन हेतुत्वप्रतिपादनात्, कण्ठताल्वाद्यभिघातस्य विघ्ननाशकत्वे प्रमाणाभाव इति विभाव्यते, तदा प्रायश्चित्तादिजन्यविघ्ननाशे व्यभिचारो दुष्परिहर इत्यत आह—**मंगलं चेति** ॥ **विघ्नध्वंसविशेष इति** ॥ विजातीयविघ्नध्वंस इत्यर्थः । तथाच मङ्गलनाश्येषु विघ्नेषु नाश्यतावच्छेदकतया सिद्धवैजात्यमादाय स्वाश्रयप्रतियोगिकत्व-कालिकविशेषणत्वोभयसंबन्धेन तादृशवैजात्यावच्छिन्नं प्रति मङ्गलस्य हेतुत्वस्वीकारान्न व्यभिचार इति भावः । न च नाश्यतावच्छेदकस्य कार्यतावच्छेदकत्वं बाधितमिति वाच्यम् । संबन्धभेदेन एकत्रावच्छेदकत्वद्वयस्वीकारे बाधकाभावात् । उक्तास्वरसं हृदि निधाय स्तवपाठादिरित्यादिपदमुपात्तं । आदिना प्रायश्चित्तादिपरिग्रहः । अत्राप्युक्तदिशा कार्यकारणभाव ऊह्यः । एवं इतरबाधसहकृतात् सफलत्वव्याप्याविगीतशिष्टाचारविषयत्ववत् मङ्गलमिति परामर्शात्, विघ्नध्वंसफलकत्वानुमित्यनन्तरं उक्तरीत्या विघ्नध्वंसकामो मङ्गलमाचरेतेति श्रुतिरप्युन्नेयेति मणिकारप्रभृतीनां आशयः। ननु मङ्गलस्य विजातीयविघ्ननाशं प्रत्यपि हेतुत्वं न संभवति, आवाहनाद्युद्वासनान्तषोडशोपचारात्मकेश्वरपूजनरूपमङ्गलस्य एकक्षणवृत्तित्वाभावात् । न च चरमपूजनस्यैव मङ्गलत्वमस्त्विति वाच्यम् । ध्यानाद्यनुत्तरत्वविशिष्टोद्वासनात्मकचरमपूजनस्य विघ्नध्वंसाजनकतया तस्य मङ्गलत्वाभावात् । न च एतदुत्तरत्वविशिष्टचरमोपचारस्य

## दिनकरीयम्.

विघ्ननाशकत्वबोधनात्, प्रायश्चित्तजन्यविघ्नध्वंसे व्यभिचाराच्चेत्यत आह । **मङ्गलं चेति** । **स्तवपाठादिरिति** । आदिना प्रायश्चित्तपरिग्रहः । तथा च मङ्गलस्य स्वसामानाधिकरण्य-स्वाव्यवहितोत्तरक्षणोत्पत्तिकत्वसम्बन्धेन मङ्गलविशिष्टविघ्नध्वंसत्वं विजातीयविघ्नध्वंसत्वं वा कार्यतावच्छेदकम्, एवं विनायकस्तवपाठादेरुपदर्शितसम्बन्धेन विनायकस्तवपाठादिविशिष्टविघ्नध्वंसत्वं विजातीयविघ्नध्वंसत्वं वा कार्यतावच्छेदकमिति न व्यभिचार इति भावः । ननु विघ्नध्वंस एव यदि मङ्गलस्य फलं, तदा समाप्तिकामस्य मङ्गले प्रवृत्तिर्न स्यादतः समाप्ति-

## रामरुद्रीयम्.

विघ्नध्वंसकारणत्वमेव विध्यर्थो वाच्यः न तु सति विघ्ने इत्यपि, तद्बोधकपदाभावात् अतस्तन्मूलतात्पर्यमाह **तथा चेति** ॥ सति विघ्न इति मूले मंगलादिति शेषः । तथा च केवलदंडात् घटानुत्पत्तावपि दंडो घटकारणमिति वाक्यस्य नाप्रामाण्यं, सर्वदा दण्डे घटाव्यहितपूर्वत्वस्य तात्पर्याविषयत्वात् किं तु दण्डेतरयावद्घटकारणसत्त्वे दण्डे घटाव्यवहितपूर्वत्वमेव तात्पर्यविषयस्तद्वत्प्रकृतेऽपीति मूलाशयः । **शमं यांतीत्यादिनेति** ॥ आदिना गणेशस्तवपाठत इत्यस्य संग्रहः । ननु स्तवपाठस्य विघ्नध्वंसकारणतायास्तादृशवाक्यबोधितत्वेऽपि पाठजन्यविघ्नध्वंसे मंगलस्य व्यभिचारो दुर्घट एव, स्तुतिरूपमंगलस्य पाठकतासम्बन्धेन कार्याधिकरणे वृत्तेरित्यतः स्थलान्तरे व्यभिचारं दर्शयति । **प्रायश्चित्तजन्येति** ॥ विशेषपदार्थमेव प्रकटयन्नाह । **तथा चेति** ॥ लाघवादाह । **विजातीयेति** ॥ **प्रवृत्तिर्न स्यादिति** ॥ यद्धि यस्य फलं भवति

**क्वचिच्च विघ्नात्यन्ताभाव एव समाप्तिसाधनम्, प्रतिबन्धकसंसर्गाभावस्यैव कार्यजनकत्वात्।**

## प्रभा.

विघ्ननिवर्तकतया तस्य मङ्गलत्वे बाधकाभाव इति वाच्यं, ध्यानाद्युत्तरोत्तरत्वविशिष्टचरमपूजनस्य उद्वासनादिपूर्वपूर्वत्वविशिष्टध्यानस्य, ध्यानाद्युत्तरोत्तरत्वविशिष्टोद्वासनादिपूर्वपूर्वत्वाविशिष्टमाध्यमिकपूजनस्य चेत्यत्र विनिगमकाभावादिति चेन्न। ध्यानादिप्रत्येकपूजनजन्यादृष्टानां विघ्नध्वंसरूपफलपर्यन्तस्थायित्वेन तत्तददृष्टद्वारा सर्वेषां हेतुत्वेन उक्तदोषाभावात्। न च तत्तददृष्टद्वारा तत्तत्पूजानां हेतुत्वे अनन्तकार्यकारणभावप्रसङ्ग इति वाच्यं। इष्टापत्तेः, ध्यानादिप्रत्येकपूजनजन्यषड्डुत्तरदशादृष्टैः एकपरमादृष्टोत्पत्तिस्वीकारेण, तादृशादृष्टद्वारा षोडशोपचारपूजात्मकमङ्गलस्य एकहेतुत्वसम्भवाच्च। न चैवं सति मङ्गलस्य साक्षाद्धेतुत्वभङ्गप्रसङ्ग इति वाच्यं। इष्टापत्तेः मङ्गलस्य एतेषां मतेऽपि विघ्नध्वंसं प्रति व्यापारवत्कारणत्वरूपकरणत्वस्येष्टत्वात्। नव्यनवीनैरेव फलायोगव्यवच्छिन्नकारणत्वरूपकरणत्वस्वीकारात्। एतेषां मते मङ्गलस्यादृष्टं प्रत्येव कारणत्वम्, विघ्नध्वंसं प्रति तु प्रयोजकत्वमेवेति एतन्मते उक्तदोषाभावात्। न चैवं सति नवीनमतस्य प्राचीनमताभेदप्रसङ्ग इति वाच्यं। करणत्वस्योभयमतेऽप्येकरूपत्वेऽपि प्राचीनमते व्यापारत्वेनाभिमतस्य, एतन्मते फलत्वेन तयोर्भेदात्। न च उक्तरीत्या मङ्गलस्य समाप्तिफलकत्वाभावेन समाप्तिकामस्य मङ्गले प्रवृत्त्यनुपपत्तिरिति वाच्यम्। इष्टापत्तेः, तण्डुलानयनादेः भोजनप्रयोजकत्वेन भोजनकामस्य तण्डुलादौ प्रवृत्तिवत् मङ्गलस्य समाप्तिप्रतिबन्धकविघ्ननिवर्तकत्वेन क्वचित्समाप्तिप्रयोजकतया समाप्तिकामस्य मङ्गले प्रवृत्तेस्सम्भवाच्चेति दिक्। एतावता स्वमतमुपन्यस्य प्राचीनमते आहुरित्यनेन सूचितं अस्वरसं प्रकाशयति—**क्वचिदिति** ॥ स्वतस्सिद्धविघ्नविरहवति पुरुषे इत्यर्थः। **विघ्नात्यन्ताभाव एवेति** ॥ तादृशपुरुषे विघ्नध्वंसविघ्नप्रागभावयोरभावादिति भावः। **समाप्तिसाधनमिति** ॥ तथाच स्वजन्यविघ्नध्वंससम्बन्धेन मङ्गलरूपकारणाभावेऽपि समाप्तिरूपकार्योदयेन व्यतिरेकव्यभिचारात् समाप्तिं प्रति मङ्गलस्य हेतुत्वन्न सम्भवतीति भावः। ननु विघ्नध्वंसस्य निरुक्तान्यतमत्वेन हेतुत्वस्वीकारेण तद्वारा मङ्गलस्य हेतुत्वे बाधकाभाव इत्यत आह—**प्रतिबन्धकेति** ॥ येन रूपेण येन सम्बन्धेन प्रतिबन्धकत्वं तत्सम्बन्धावच्छिन्नतद्धर्मावच्छिन्नप्रतियोगिताकाभावस्येत्यर्थः—**कार्यमात्रेति** ॥ दृष्टान्तो-

## दिनकरीयम्.

साधनविघ्नध्वंससाधनत्वान्मङ्गले प्रवृत्तिर्वाच्या, तच्च न संभवति स्वतःसिद्धविघ्नविरहस्थले व्यभिचारेण विघ्नध्वंसस्य समाप्तिसाधनत्वाभावादिति शङ्कां निरस्यति। **क्वचिदिति**। नन्वेवमननुगमोऽतोऽनुगतेन रूपेण कारणत्वे बीजमाह। **प्रतिबन्धकेति** ॥ संसर्गाभावस्य संसर्गाभावत्वेन संसर्गाभावस्य, तथाच विघ्नसंसर्गाभावत्वेन हेतुत्वान्न पूर्वोक्तव्यभिचार इति भावः। अत्र च तत्तद्विघ्नाभावत्वेन हेतुता, न तु विघ्ना-

## रामरुद्रीयम्.

तत्कामस्यैव तत्र प्रवृत्तिनियमादिति भावः। **प्रवृत्तिर्वाच्येति** ॥ तृप्तिकामस्य तृप्तिसाधनौदनसाधने पाके प्रवृत्तिरिवेति शेषः। **व्यभिचारेणेति** ॥ व्यतिरेकव्यभिचारेणेत्यर्थः। **संसर्गाभावत्वेन संसर्गाभावस्येति** ॥ संसर्गाभावत्वावच्छिन्नस्येति पर्यवसितार्थः। इदं च विवरणं संसर्गाभावस्य ध्वंसत्वादिना कारणत्वेऽपि न व्यभिचारनिरास इति यथाश्रुतमूलवाक्यस्योक्तशंकाया अनिरासकत्वादिति बोध्यम्। ननु तत्तद्विघ्नाभावानां यदि विघ्नसंसर्गाभावत्वेन हेतुता, तदा यत्किंचिद्विघ्नसत्त्वेऽपि विघ्नप्रतियोगिकसंसर्गाभावस्य सत्त्वेन समाप्त्यापत्तिः, यदि विघ्नत्वावच्छिन्नप्रतियोगिताकसंसर्गाभावत्वेन हेतुता, तदा ध्वंसप्रागभावयोर्न हेतुता तयोस्सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वानंगीकारात्। यदि च विघ्नप्रतियोगिकसंसर्गाभावकूटत्वेन हेतुता तदा क्वापि समाप्तिर्न स्यात्, ध्वंसप्रागभावादीनामेकदा एकत्रासत्त्वेन कूटाधिकरणत्वस्य कदाप्यसंभवादित्याशङ्कां परिहर्तुमाह—**अत्र चेति**। **तत्तद्विघ्नाभावत्वेनेति**। तत्तद्विघ्नप्रतियोगिकसंसर्गाभावत्वेनेत्यर्थः। तेन भेदमादाय न विघ्नसत्त्वेऽपि समाप्त्यापत्तिः। न चैवमपि विघ्नसत्त्वे समाप्त्यापत्तिर्दुर्वारा, तत्तद्विघ्नव्यक्तेरपि द्वित्वादिनाऽत्यन्ताभावरूपसंसर्गाभावसत्त्वादिति वाच्यम्। तत्तद्विघ्नत्वेतरधर्मानवच्छिन्नतत्तद्विघ्ननिष्ठप्रतियोगिताकसंसर्गाभावत्वेनेत्यर्थविवक्षयोक्तदोषप्रतीकारसम्भवात्, ध्वंसप्रागभावयोरपि सामान्यधर्मावच्छिन्नप्रतियोगि-

**इत्थं च नास्तिकादीनां ग्रन्थेषु जन्मान्तरीयमङ्गलजन्यदुरितध्वंसः स्वतःसिद्धविघ्नात्यन्ता-**

## प्रभा.

पन्यासाय, तेन यथा समवायसम्बन्धेन घटत्वाद्यवच्छिन्नं प्रति समवायसम्बन्धेन घटत्वादिना घटादेः प्रतिबन्धकत्वात्, समवायसम्बन्धावच्छिन्नघटत्वाद्यवच्छिन्नप्रतियोगिताकाभावस्य हेतुत्वं, तथा समाप्तिं प्रति समवायसम्बन्धेन विघ्नत्वेन प्रतिबन्धकत्वात्, समवायसम्बन्धावच्छिन्नविघ्नत्वावच्छिन्नप्रतियोगिताकाभावस्य हेतुत्वमावश्यकमित्यर्थो लभ्यते। तथाच विघ्नध्वंसविघ्नप्रागभावयोः तादृशाभावरूपत्वाभावात् तत्साधारणनिरुक्तान्यतमत्वेन हेतुत्वे मानाभाव इति भावः। न च विघ्नध्वंसतत्प्रागभावाभ्यां अत्यन्ताभावस्य विरोधात्, ध्वंसाद्यधिकरणे अत्यन्ताभावासत्त्वेन समाप्त्यनुपपत्त्या ध्वंसादिसाधारणनिरुक्तरूपेण हेतुत्वमावश्यकमिति वाच्यम्। विरोधे मानाभावात्, ध्वंसाद्यधिकरणेऽप्यत्यन्ताभावस्वीकारात्। एतत्तत्त्वं 'ध्वंसप्रागभावाधिकरणे नात्यन्ताभाव इति प्राचां मतम्' इति मुक्तावलीव्याख्यानावसरे विवेचयिष्यामः। विघ्नात्यन्ताभावस्य समाप्तिहेतुतापक्षे निरुक्तव्यतिरेकव्यभिचारो नास्तीत्याह—**इत्थं चेति** ॥ समाप्तिं प्रति विघ्नात्यन्ताभावस्य निरुक्तरूपेण हेतुत्वे चेत्यर्थः। **जन्मान्तरीयमङ्गळजन्येति** ॥ विघ्नध्वंसजनकजन्मान्तरीयमङ्गळप्रयोज्यविघ्नात्यन्ताभाव इत्यर्थः। नास्तिकात्मनि विघ्नध्वंसकल्पने, तज्जनकमङ्गळकल्पने च गौरवादाह—**स्वतस्सिद्धेति** ॥ दुरितकारणाभावप्रयुक्तविघ्नात्यन्ताभाव इत्यर्थः।

## दिनकरीयम्.

भावकूटत्वेन, विघ्नप्रागभावादीनामेकत्रासंभवेन समाप्तिर्न स्यादिति बोध्यम्। यत्र च मंगलं विनापि समाप्तिस्तत्र विघ्नध्वंसाभाववति समाप्तेर्दर्शनात् व्यतिरेकव्यभिचारमाशङ्क्य निषेधति—**इत्थं चेति** ॥ दुरितध्वंसकल्पने तज्जनकीभूतमंगलकल्पने च गौरवादाह—**स्वतःसिद्धेति** ॥ यत्र च मंगळे सत्यपि न समाप्तिस्तत्र मंगळाद्विघ्नध्वंसो भवत्येव, समाप्त्यभावस्तु विघ्नभूयस्त्वात्, तन्मंगळानन्तरोत्पन्नाद्विघ्नाद्वेत्यवधेयम्। अथ समाप्तिविघ्नध्वंसयोराकाशात्मनिष्ठयोः कथं कार्यकारणभाव इति चेदुच्यते। स्वप्रतियोगिप्रयोजकत्वसम्बन्धेन चरमवर्णध्वंसरूपसमाप्तिं प्रति विशेषणतासम्बन्धेन विघ्नसंसर्गाभावत्वेन हेतुत्वमिति ॥ वस्तुतस्तु आहुरित्यनेन सूचितामन्यथासिद्धिं प्रकटयति—**क्वचिच्चेति** ॥ विघ्नात्यन्ताभाव एवेत्येवकारेण

## रामरुद्रीयम्.

ताकत्वाङ्गीकारे तु तत्तद्विघ्नत्वावच्छिन्नप्रतियोगिताकसंसर्गाभावत्वेनेत्यर्थकरणेऽपि न क्षतिरिति मन्तव्यम्। **विघ्नध्वंसाभाववतीति** ॥ विघ्नसंसर्गाभावसामान्याभाववतीत्यर्थः। अन्यथा यथाश्रुते विघ्नध्वंसाभाववत्यपि विघ्नात्यन्ताभावसम्भवेन विघ्नसंसर्गाभावत्वेन हेतुत्वे व्यतिरेकव्यभिचारासम्भवेनासंलग्नकतापत्तेः। तथा च यत्र मङ्गळं विनैव समाप्तिस्तत्र विघ्ननाशकमङ्गळासत्त्वेन विघ्नस्यैव सत्त्वात्, निरुक्ततद्विघ्नप्रतियोगिकस्य कस्यापि संसर्गाभावस्यासत्त्वेन तद्विघ्नसंसर्गाभावस्य व्यतिरेकव्यभिचारो दुर्वार एवेति भावः। ननु यत्र सत्यपि मङ्गळे न समाप्तिर्दृश्यते, तत्र मङ्गळाद्विघ्नध्वंस एव न जात इत्यवश्यमङ्गीकरणीयं, अन्यथा तत्तद्विघ्नसंसर्गाभावानां सत्त्वेन समाप्तिविरहस्योपपादयितुमशक्यत्वात्, तथा चान्वयव्यभिचारेण मङ्गळस्य विघ्नध्वंसफलकत्वं न शक्यते वक्तुमित्याशङ्कां निराकुरुते—**यत्र चेति। विघ्नभूयस्त्वादिति** ॥ ननु मङ्गळानन्तरोत्पन्नविघ्नादपि तत्र समाप्त्यभावसम्भवेन नानाविघ्नव्यक्तीनां तत्कारणीभूतप्रागभावादीनां च कल्पने गौरवमतस्तथैवाह—**मङ्गळानन्तरेति। स्वप्रतियोगिप्रयोजकत्वेति** ॥ स्वप्रतियोगिचरमवर्णानुकूलकृतिमत्त्वसम्बन्धेनेत्यर्थः। न च स्वप्रयोजकत्वसम्बन्धेनेत्येव कुतो नोक्तं, जीवात्मनि स्वानुकूलकृतिमत्त्वासम्भवेऽपि स्वजनकचरमवर्णजनककृतिजनकत्वरूपस्य स्वप्रयोजकत्वस्य सम्भवादिति वाच्यं, निरुक्तप्रयोजकत्वस्य नानाजनकताघटितत्वेन गौरवादिति भावः। क्वचिच्चेत्यादि प्रकारान्तरेण व्याचष्टे—**वस्तुतस्त्वित्यादिना** ॥ समाप्तिसाधनमित्यस्य समाप्तिकारणमित्यर्थकत्वे क्वचिदित्यस्यासङ्गतिः, तत्तद्विघ्नसंसर्गाभावत्वेन हेतुताया व्यवस्थापिततया सर्वत्रैवाभावत्रयस्यापि कारणत्वात्, नियतपूर्ववर्तितावच्छे-

भावो वास्तीति न व्यभिचार इत्याहुः ॥

**प्रभा.**

अत्र ग्रन्थादौ विघ्नध्वंसकामनया मङ्गलाचरणे विवाद इत्यस्वरः आहुरित्यनेन सूचितः ॥ श्रीः ॥

**दिनकरीयम्.**

विघ्नध्वंसस्य तद्वारकमङ्गलस्य च व्यवच्छेदः । समाप्तिसाधनं, समाप्त्यव्यवहितपूर्ववर्तितया निश्चितः । तथा च तेनैव मङ्गलस्थलीयसमाप्तिनिर्वाहे मङ्गलस्य तज्जन्यविघ्नध्वंसस्य चान्यथासिद्धिः, ध्वंसप्रागभावयोरत्यन्ताभावेन विरोधे मानाभावात् ध्वंसस्थलेऽपि अत्यन्ताभावसत्त्वादिति भावः । नन्वन्योन्याभावभिन्नाभावत्वेनैव लाघवाद्धेतुताऽस्त्वत आह—**प्रतिबन्धकसंसर्गेति** ॥ प्रतिबन्धकसत्त्वेऽपि सम्बन्धान्तरावच्छिन्नाभावस्य सत्त्वात्कार्योत्पादवारणाय तत्तत्संसर्गावच्छिन्नप्रतियोगिताकाभावत्वेनैव हेतुत्वस्य वाच्यत्वेन, न ध्वंसस्य हेतुता, तस्य संसर्गावच्छिन्नत्वे मानाभावादिति भावः । दुरितध्वंसः दुरितध्वंससामग्रीप्रयुक्तः । स्वतः सिद्धो दुरितकारणाभावप्रयुक्तः । एतेन विघ्नध्वंसस्य तदत्यन्ताभावस्य वा समाप्तिहेतुताविचारस्याप्रकृततया तद्व्यवस्थापने प्रकृतानुपयोगः । एवं प्रतिबन्धकाभावकूटस्य हेतुत्वेऽतीतानागतप्रागभावध्वंसयोर्युगपदवस्थानासंभवेनैकत्र कूटाप्रसिद्धिः, पूर्वोक्तरीत्या तत्तत्संसर्गावच्छिन्नप्रतियोगिताकत्वस्य प्रतिबन्धकाभावविशेषणत्वेन ध्वंसप्रागभावयोरसंग्रहश्चेति दूषणानि निरस्तानि । उक्तरीत्या प्रतिबन्धकात्यन्ताभावस्यैव कार्यमात्रे हेतुत्वादिति । मूले **नूतनेत्यादि** ॥ नूतनो यो जलधरो मेघस्तस्य रुचिरिव रुचिर्यस्य तस्मै । एतेन यथा नूतनजलधरः शीघ्रं वृष्टिप्रदस्तथाऽयमपि स्वाभिलषितफलप्रद इति सूचितम् । नमस्कार्यस्य भगवतः सन्तुष्टतां सूचयितुमाह—**मूले गोपेति** ॥ गोपानां वधूव्यः स्त्रियस्तासां दुकूलानि वस्त्राणि

**रामरुद्रीयम्.**

दकधर्मवत्त्वस्यैव कारणतारूपत्वादतस्तत्पदं व्याचष्टे—**समाप्त्यव्यवहितेति** ॥ ननु मङ्गलाद्विघ्नध्वंसस्थले ध्वंसप्रागभावाभ्यामत्यन्ताभावस्य विरोधाद्विघ्नात्यन्ताभावस्यैवासत्त्वेन कथं तेन विघ्नध्वंसस्यान्यथासिद्धिरित्यत आह—**ध्वंसप्रागभावेत्यादि । अन्योन्याभावभिन्नाभावत्वेनेति** ॥ सर्वत्र विघ्नात्यन्ताभावसत्त्वेऽपि न विघ्नात्यन्ताभावत्वेन हेतुता सम्भवति, विघ्नसंसर्गाभावत्वापेक्षया नित्यत्वघटितस्य तस्य गुरुत्वात्, सति च लघुधर्मे गुरुधर्मस्य कारणतावच्छेदकत्वानङ्गीकारात् तथा चायातमेव त्रयाणामपि कारणत्वमिति भावः । **तत्तत्संसर्गेति** ॥ प्रतिबन्धकतावच्छेदकसंसर्गेत्यर्थः । **वाच्यत्वेनेति** ॥ तथा च प्रतिबन्धकसंसर्गाभावस्येति मूलस्य प्रतिबन्धकतावच्छेदकसंसर्गावच्छिन्नप्रतियोगिताकाभावस्येत्यर्थ इति भावः । **मानाभावादिति** ॥ समवायेन घटाधिकरणे संयोगेन घटो नास्ति, संयोगेन घटाधिकरणे समवायेन घटो नास्तीति प्रतीत्युपपत्तये हि संयोगसमवायसम्बन्धावच्छिन्नघटाभावयोर्भेदोपपत्तये अत्यन्ताभावप्रतियोगितायां सम्बन्धावच्छिन्नत्वमङ्गीक्रियते, ध्वंसे च तादृशयुक्त्यसम्भवेन संसर्गावच्छिन्नप्रतियोगिताकत्वमप्रामाणिकमेवेति भावः । नन्वेवं विघ्नध्वंसस्याकारणत्वे दुरितध्वंसः स्वतःसिद्धविघ्नात्यन्ताभावो वेत्याद्यग्रिमग्रन्थासङ्गतिरित्यतो दुरितध्वंसपदं व्याचष्टे । **दुरितध्वंस इत्यादिना** ॥ अत्यन्ताभावस्य नित्यत्वेऽपि प्रतियोगिसत्त्वदशायामत्यन्ताभावसम्बन्धासत्त्वेनाधिकरणसम्बन्धात्यन्ताभावे दुरितध्वंससामग्रीप्रयुक्तत्वमिति भावः । द्वितीयव्याख्यानादरणे स्वयमेव बीजं प्रकटयति—**एतेनेति** ॥ ननु मङ्गलस्य विघ्नध्वंसफलकत्वे समाप्तिकामनया तत्र प्रवृत्तिः समाप्तिजनकविघ्नध्वंसजनकत्वेनैवोपपादनीया, विघ्नध्वंसस्य समाप्तिहेतुत्वं च व्यभिचारेणासम्भवदुक्तिकमित्याशङ्क्य क्वचिच्चेत्यादिग्रन्थस्यावतारितत्वेन न प्रकृतानुपयोग इत्यतो दूषणान्तरमाह—**एवमिति** । ननु प्रतिबन्धकसंसर्गाभावकूटत्वेन न हेतुतामङ्गीकुर्मो येनाप्रसिद्धिः स्यात् अपि तु तत्तद्विघ्नसंसर्गाभावत्वेनेत्युक्तमेवेत्याशङ्क्य दूषणान्तरमाह । **पूर्वोक्तेति** ॥ द्वितीयव्याख्याने तद्दोषनिवारणे हेतुमाह । **उक्तरीत्येति** । **प्रतिबन्धकाभावस्येति** ॥ प्रतिबन्धकतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकतत्तत्प्रतिबन्धकाभावत्वेनेत्यर्थः ॥ यत्तदोर्नित्यसम्बन्धात्प्रकृतश्लोके यत्पदाभावात्कथं तत्पदसङ्गतिरित्याशङ्क्य प्रकृते तच्छब्दस्य प्रसि-

**तस्मै कृष्णाय नमः संसारमहीरुहस्य बीजाय ॥ १ ॥**

**संसारमहीरुहस्य बीजायेति॥** संसार एव महीरुहो वृक्षस्तस्य बीजाय निमित्तकारणायत्य-

## प्रभा.

संसारमहीरुहस्येति मूलस्य संसारे महीरुह इति सप्तमीतत्पुरुषाश्रयणे प्रपञ्चवृत्तिवृक्षकारणत्वमीश्वरे लभ्यते, तच्चानुपपन्नं अस्मदादिसाधारणत्वात् अतः कर्मधारयमाह मुक्तावल्यां—**संसार एवेति** ॥ कार्यमात्रं प्रति ईश्वरस्य साधारणकारणत्वमेवेति सूचयति—**निमित्तेति** ॥ तथा च समवायिकारणत्वासमवायिकारणत्वयोस्साधारणरूपत्वासंभवेन तद्वयुदासेन निमित्तकारणत्वस्य उभयरूपत्वेन एतस्य लाभसम्भवादिति भावः । ननु ईश्वरे मानाभावात् ईश्वरनमस्काररूपमङ्गळाचरणमयुक्तम् । तथा हि, न हि तत्र बाह्यप्रत्यक्षं प्रमाणं, अरूपिद्रव्यत्वात् । नापि मानसं, स्वात्मभिन्नद्रव्यत्वात् । नापि श्रुतिः, तत्प्रामाण्यस्येश्वराधीनत्वेन ईश्वर-

## दिनकरीयम्.

तेषां चोरायेत्यर्थः—**तस्मा इति** ॥ तच्छब्दः सामान्यतः सकलजनप्रसिद्धत्वसूचनाय । अनेन भगवति नमस्कारप्रकारीभूतापकर्षावधित्वमुक्तं तदयुक्तं, भगवति मानाभावादित्याशङ्क्य नैयायिकमतेनेश्वरसाधकानुमानसूचनायाह—**संसारेति** ॥ संसारस्य महीरुह इति षष्ठीतत्पुरुषभ्रान्तिं व्यावर्तयितुं कर्मधारयमाह—**मुक्तावल्यां संसार एवेति** ॥ बीजत्वं समवायिकारणत्वं तच्चेश्वरे बाधितमत आह—**निमित्तेति** ॥ नन्वीश्वरे मानाभावात् नमस्काररूपमंगळाचरणमयुक्तं, नहि तत्र प्रत्यक्षं प्रमाणमरूपिद्रव्यत्वेन बाह्यप्रत्यक्षाविषयत्वात् । नापि मानसं, परात्मनः परेण मनसा प्रत्यक्षवारणायात्मप्रत्यक्षं प्रति परात्मव्यावृत्तविजातीयात्ममनःसंयोगत्वेन हेतुत्वस्यावश्यकतया ईश्वरे तस्याभावात्, नाप्यनुमानं लिङ्गाभावात्, नच द्यावाभूमी जनयन्नित्यादिश्रुतिरेव प्रमाणं, श्रुतीनामीश्वरोच्चरितत्वेन प्रामाण्यादीश्वरसन्देहे श्रुतिप्रामाण्यस्यापि सन्दि-

## रामरुद्रीयम्.

द्धार्थकतया न यत्पदापेक्षेति समाधत्ते—**तच्छब्द इति । नमस्कारप्रकारीभूतेति** ॥ स्वापकर्षबोधानुकूलव्यापारो नमःशब्दार्थः, अपकर्षान्वय्यवधित्वं कृष्णपदोत्तरचतुर्थ्यर्थ इति भावः । यद्यप्यवधित्वस्यापादानतारूपतया तदर्थिका पञ्चम्येव न तु चतुर्थी । तथापि क्रियान्वय्यवधित्वस्यैवापादानत्वरूपतया नात्र पञ्चमीप्रसक्तिः, परन्तु निरुक्तापकर्षावधित्वविवक्षायां नमःस्वस्तीत्यादिसूत्रेण चतुर्थ्येव विहितेति भावः । एवं च श्रीकृष्णावधिकस्वापकर्षबोधानुकूलो मदीयो व्यापार इत्युक्तवाक्याच्छाब्दबोधः, उच्चारयितृव्यापारस्यैव नमश्शब्दार्थत्वात् । यद्यप्येवं सति नारायणं नमस्कुर्यात्यादावपि नारायणपदोत्तरं चतुर्थ्येवापेक्षिता न द्वितीया, करोतिकर्मत्वस्य नारायणेऽसम्भवेन नमःपदार्थस्यैव तत्कर्मकतया नमःपदार्थघटकापकर्षावधित्वस्यैव द्वितीयया बोधनीयत्वात् । तथापि तत्र लक्षणया नमस्कारानुकूलकृतिपर्यन्तं करोत्यर्थः नमःपदं तात्पर्यग्राहकम् अतो नमःपदयोगाभावान्न चतुर्थी । अपकर्षबोधनिरूपितापकर्षनिष्ठप्रकारतानिरूपितावधित्वनिष्ठप्रकारतानिरूपितप्रकारतारूपा विषयतैव द्वितीयार्थः । अत एव नमःपदस्य सार्थकत्वविवक्षया 'स्वयंभुवे नमस्कृत्य ब्रह्मणेऽमिततेजसे' इत्यादौ चतुर्थ्येव न द्वितीयेति मन्तव्यम् । **षष्ठीतत्पुरुषभ्रान्तिमिति** । सकलप्रपञ्चहेतोरीश्वरस्य महीरुहबीजत्वमात्रकथनस्यानुचितत्वेन षष्ठीतत्पुरुषस्य भ्रममूलकत्वमिति भावः । **समवायिकारणमिति** ॥ वृक्षादिसमवायिकारण एव वृक्षादेर्बीजव्यवहारादिति भावः । यद्यपि बीजं वृक्षादेर्न समवायिकारणं, बीजनाशानन्तरमेव तदवयवैरङ्कुरारम्भात् तथापि समवायिकारणत्वमत्र समवायिकारणावयवकत्वमेव विवक्षितमतो नासङ्गतिः । ईश्वरे पूर्वोक्तप्रमाणाभावमेव व्युत्पादयन्नाह—**नहीति** ॥ **लिङ्गाभावादिति** ॥ ईश्वरसाधकलिङ्गाभावादित्यर्थः । उपमानस्य शक्तिमात्रसाधकत्वेन तन्निराकरणं न कृतमित्यवधेयम् । तथा क्षित्यङ्कुरादिकमपीति मूले क्षित्यंकुरादीनां पक्षत्वं सूचितं, तथाच क्षित्यंकुरादावनुगतं पक्षतावच्छेदकं किमित्याशङ्कते ।

थः। एतेन ईश्वरे प्रमाणं दर्शितं भवति। तथाहि यथा घटादि कार्यं कर्तृजन्यं तथा क्षित्यङ्कुरादिकमपि।

**प्रभा.**

सन्देहे श्रुतिप्रामाण्यस्यापि सन्दिग्धत्वादत आह—**एतेनेति** ॥ जगत्कारणत्वप्रतिपादनेनेत्यर्थः । **प्रमाणमिति** ॥ अनुमाननवकमित्यर्थः। 'कार्यायोजनधृत्यादेः पदात् प्रत्ययतः श्रुतेः। वाक्यात् संख्याविशेषाच्च साध्यो विश्वजिदव्ययः ॥' इति वचनेन नवानां ईश्वरसाधकानुमानानां आचार्यैर्दर्शितत्वात्, तेषां मध्ये कार्यत्वहेतुकप्राथमिकानुमानमाह—**तथाहीति** ॥ घटादि कार्यमिति पदद्वयं । तथा च घटादि कार्यं भवति यथा कर्तृजन्यं तथा क्षित्यङ्कुरादिकमपीत्यर्थलाभात्, क्षितिः सकर्तृका कार्यत्वात् घटवदित्यनुमानं लभ्यत इति भावः। ननु क्षितित्वसामानाधिकरण्येन साध्यसिद्धेरुद्देश्यत्वे दृष्टान्ते घटादौ सिद्धसाधनं, क्षितित्वावच्छेदेन तथात्वे, परमाणौ बाधः, कालिक-समवायोभयसंबन्धेन क्षितित्वस्य पक्षतावच्छेदकत्वे, द्वयोः पक्षतावच्छेदकताघटकसम्बन्धत्वकल्पने गौरवं अतः पक्षान्तरमाह—**अङ्कुरेति** ॥ अत्र अङ्कुरशब्देन अङ्कुरसदृशलक्षणया द्व्यणुकं

**दिनकरीयम्.**

ग्धत्वात् अत आह—**एतेनेति** ॥ प्रमाणमनुमानरूपं प्रमाणम् । **तथा क्षित्यङ्कुरादिकमपीति** ॥ नन्वत्र किं पक्षतावच्छेदकं, न तावत् क्षितित्वं, अंकुरादेरपि क्षितित्वेन पृथक् तदुपादानवैयर्थ्यात्, किंच क्षितित्वसामानाधिकरण्येन साध्यसिद्धेरुद्देश्यत्वे, दृष्टान्ते घटादौ अंशतः सिद्धसाधनम्, अवच्छेदकावच्छेदेन तथात्वे, परमाणौ बाधः, जन्यक्षितित्वस्य पक्षतावच्छेदकत्वे परमते जन्यपदव्यावृत्त्यसिद्धिः तन्मतेऽजन्यक्षितेरभावात्, जन्यत्वस्यैव तथात्वसम्भवेन पक्षतावच्छेदककोटौ क्षितित्वस्य व्यर्थत्वाच्च, नच तदपि सम्भवति, पक्षतावच्छेदकहेत्वोरैक्यप्रसङ्गादिति चेन्न । स्वरूपसम्बन्धविशेषरूपकार्यत्वस्यैव पक्षतावच्छेदक-

**रामरुद्रीयम्.**

**नन्वत्रेति** ॥ **अङ्कुरादेरपीति** ॥ तथा च क्षितित्वस्यैव पक्षतावच्छेदकत्वे अङ्कुरस्यापि क्षितित्वेनांकुरादेः पृथगुपादानमनर्थकमिति भावः। नन्वत्र क्षितिपदं न पृथिवीत्वजात्यवच्छिन्नपरं येनांकुरादेरुपादानं व्यर्थं स्यात् अपि तु भूमण्डलपरमेव, तथा च भूमण्डलाङ्कुरादीनां सर्वेषां पक्षत्वलाभे सर्वानुगतं पक्षतावच्छेदकं किमित्याशङ्कायां पृथिवीत्वमेव तथेत्युक्तौ नाङ्कुरादेः पृथगुपादानवैयर्थ्यमत आह । **किं चेति—अवच्छेदकावच्छेदेनेति । तथात्वे** । साध्यसिद्धेरुद्देश्यत्वे इत्यर्थः। तथा चावच्छेदकावच्छेदेनानुमितौ सामानाधिकरण्येन साध्यसिद्धेरप्रतिबन्धकतया न सिद्धसाधनमिति भावः। **परमते** चार्वाकमत इत्यर्थः । **जन्यपदेति** । तैरप्रत्यक्षत्वेन नित्यपृथिव्यनङ्गीकारादिति भावः। ननु पक्षतावच्छेदककोटिप्रविष्टविशेषणानां सर्वमते प्रयोजनमपेक्षितमिति न नियमस्तथा च नित्यपृथिव्यां बाधवारकतयैव जन्यपदं सार्थकमित्यत आह । **जन्यत्वस्यैवेति** । नन्वस्तु जन्यत्वमेव पक्षतावच्छेदकं किं नश्छिन्नमत आह। **न च तदपीति** । **ऐक्यप्रसङ्गात् इति** । ननु पक्षतावच्छेदकहेत्वोरैक्ये को दोषः, न च व्याप्तिग्रहदशायामेव पक्षतावच्छेदकीभूतहेतौ साध्यसामानाधिकरण्यसिद्ध्या सिद्धसाधनमेव दोष इति वाच्यम्, हेतुः साध्यसामानाधिकरण इति व्याप्तिग्रहस्य हेतुमान्साध्यवानित्यनुमितितो भिन्नाकारत्वात् समानाकारकसिद्धेरेवानुमितिप्रतिबन्धकत्वात्, अवच्छेदकावच्छेदेन साध्यसिद्धेरुद्देश्यत्वे सामानाधिकरण्यमात्रावगाहिसिद्धेरप्रतिबन्धकत्वाच्च, यद्यप्यवच्छेदकावच्छेदेन अनुमितौ सामानाधिकरण्यादधिकं पक्षतावच्छेदकव्यापकत्वमेव साध्ये भासते; व्याप्तिज्ञानेऽपि साध्ये हेतुव्यापकत्वं भासत एवेति तुल्यं तथापि व्याप्तिग्रहे व्यापकत्वं प्रकारतयैव, अनुमितौ तु साध्यीयसंसर्गघटकतया भासत इति भेदाच्चेति चेन्न। उद्देश्यतावच्छेदकविधेययोरैक्येनोपनयवाक्याच्छाब्दबोधानुपपत्तेरेव दोषत्वात्। न च नवीनमते विधेयांशेऽधिकावगाहिनः शाब्दबोधस्योपगमेन पक्षतावच्छेदकहेत्वोरैक्येऽपि साध्यव्याप्यहेतुमान्पक्ष इत्याकारकस्योपनयजन्यशाब्दबोधस्य नानुपपत्तिरिति वाच्यम् । प्राचीनैरुदाहरणवाक्यादेव व्याप्तिलाभादुपनयेनापि तत्प्रतिपादने पौनरुक्त्यमिति, पक्षे हेतुमत्तामात्रमेवोपनयेन बोधनीयम् । तथाचायमित्युपनयवाक्यस्य हेतुमान्पक्ष इत्येवार्थ इत्यङ्गीकारात्तन्मतानुसारेणैव पक्षतावच्छेदकहेत्वो-

## प्रभा.

लभ्यते, यथा वृक्षप्रयोजकस्य बीजादुत्पन्नस्य प्राथमिकदर्शनविषयस्याङ्कुरत्वं तथा संसारवृक्षप्रयोजकस्य परमाणुभ्यां उत्पन्नद्व्यणुकस्यापि प्रसिद्धाङ्कुरसाम्यात् अङ्कुरशब्देन द्व्यणुकं लक्ष्यते । तथा च द्व्यणुकं सकर्तृकं कार्यत्वादित्यनुमानं फलितामिति नोक्तदोषः । ननु द्व्यणुकत्वं न जातिः पृथिवीत्वादिना साङ्कर्यात् किन्तु नित्यसमवेतद्रव्यत्वमेव । एवं च नित्यसमवेतत्वविशिष्टद्रव्यत्वं द्रव्यत्वविशिष्टनित्यसमवेतत्वं वेत्यत्र विनिगमनाविरहात् गौरवाच्चेत्यत आह—**आदीति** ॥ आदिना मेघादिपरिग्रहः । तथा च मेघस्सकर्तृकः इत्याद्यनुमानं लब्धं । तत्र मेघत्वजातेः समवायेन पक्षतावच्छेदकत्वान्नोक्तदोषावकाश इति भावः । साध्यं सकर्तृकत्वं, न कर्तृजन्य-

## दिनकरीयम्.

त्वात् । प्रागभावप्रतियोगित्वरूपकार्यत्वस्यैव हेतुत्वेन तयोरैक्याभावात् । साध्यं च न स्वोपादानगोचरापरोक्ष-

## रामरुद्रीयम्.

रैक्यादिति दूषणाभिधानादिति ध्येयम्—**स्वरूपसम्बन्धरूपेति** ॥ यद्यपि स्वरूपसम्बन्धरूपकार्यताव्यक्तीनां तत्तद्व्यक्तिमात्रपर्यवसितत्वेन नानुगतपक्षतावच्छेदकलाभस्तथाप्यन्यतमत्वेनानुगतीकृतानां पक्षतावच्छेदकत्वमिति भावः ।—**प्रागभावप्रतियोगित्वेति** ॥ न च प्रतियोगित्वस्यापि स्वरूपसम्बन्धस्वरूपतया तत्तद्धर्मिव्यक्तीनामैक्येन पक्षतावच्छेदकहेत्वोरैक्यापरिहार इति वाच्यम् । 'अभावविरहात्मत्वं वस्तुनः प्रतियोगिता' इत्याचार्यमताभिप्रायानुसारेण, संयोगेन घटाभावात्समवायेन घटाभावस्य भेदः प्रतियोगिताभेदादेव समर्थनीयः प्रतियोगिप्रतियोगितावच्छेदकयोरैक्यात् , स्वरूपसम्बन्धरूपप्रतियोगितायाः प्रतियोगिघटव्यक्तेरैक्येन भेदो दुरुपपाद एवेति तयोर्भेदो न स्यादतो विषयत्वस्येव प्रतियोगित्वस्यापि पदार्थान्तरत्वमेवाङ्गीकरणीयं सप्तपदार्थविभागस्तु तत्त्वज्ञानोपयोगिज्ञानविषयाणामेवेति न तद्विरोधोऽपीति नवीनमताभिप्रायेणैतदभिधानम् । वस्तुतस्तु प्रागभावप्रतियोगित्वरूपकार्यत्वस्य हेतुत्वादिति ग्रन्थस्य प्रतियोगिताख्यस्वरूपसम्बन्धेन प्रागभावस्य हेतुत्वादित्यर्थे तात्पर्यान्न कोऽपि दोष इति ध्येयम् । वस्तुतस्तु क्षित्यङ्कुरादिकमिति मूलस्य क्षितित्वस्याङ्कुरत्वस्य तद्धटत्वस्य पक्षतावच्छेदकत्वे तात्पर्यं, तत्र क्षितिस्सकर्तृकेति प्रथमप्रयोगे क्षितित्वसामानाधिकरण्येन साध्यसिद्धेरुद्देश्यत्वे घटादावंशतः सिद्धसाधनं, पक्षतावच्छेदकावच्छेदेन तथात्वे तु परमाणौ बाध इत्यतोऽङ्कुरत्वस्य पक्षतावच्छेदकत्वानुधावनम् । तत्र च सामानाधिकरण्येन साध्यसिद्धेरुद्देश्यत्वे क्वाप्यङ्कुरे जीवीयकृतिसाध्यत्वाभावेन नांशतः सिद्धसाधनं न वा बाधो नित्याङ्कुरस्याभावादिति भावः । ननु क्षितित्वावच्छेदेनाङ्कुरत्वावच्छेदेन वा कार्यत्वहेतुना सकर्तृकत्वानुमितिर्न सम्भवति, कार्यत्वरूपहेतोरप्रयोजकत्वात् । न च कार्यत्वं यदि कृतिजन्यत्वव्यभिचारि स्यात्तदा कृतिजन्यतावच्छेदकं न स्यादित्यनुकूलतर्कसत्त्वान्नाप्रयोजकत्वमिति वाच्यम् । कृतित्वेन कार्यत्वेन कार्यकारणभावे मानाभावेनोक्ततर्कानवतारात् । न चान्वयव्यतिरेकावेव मानमिति वाच्यम् । कुलालकृतिसत्त्वे घटस्तदभावे घटाभाव इति विशिष्यैवान्वयव्यतिरेकग्रहात्, तन्तुवायकृतिकाले घटापत्तिवारणाय कुलालकृतित्वेन घटत्वेन विशिष्य कार्यकारणभावस्यावश्यकत्वेन सामान्यतः कृतित्वेन कार्यत्वेन कार्यकारणभावे मानाभावात् । न च यद्विशेषयोरिति नियम एव मानमिति वाच्यम्, तस्याप्यप्रयोजकत्वात् । न च कार्यसामान्याभावे कुलालादिकृत्यभावकूटस्य प्रयोजकत्वे गौरवं, कृतित्वावच्छिन्नाभावस्यैकस्य तथात्वे लाघवं, तच्च कृतित्वस्य कारणतावच्छेदकत्वमन्तरा न सम्भवति, कारणतावच्छेदकधर्मावच्छिन्नाभावस्यैव कार्यतावच्छेदकधर्मावच्छिन्नाभावप्रयोजकत्वात् तथा च लाघवमूलक एव यद्विशेषयोरित्यादिन्याय इति वाच्यम् । कारणतावच्छेदकधर्मावच्छिन्नाभाव एव कार्याभावे प्रयोजक इति न नियमः, किं तु स्वरूपसम्बन्धरूपप्रयोजकत्वं प्रतीत्यनुरोधेन लघ्वनतिप्रसक्तधर्मावच्छेदेन कल्प्यत इति नियमः, तथा च लाघवादेव कारणतानवच्छेदककृतित्वावच्छिन्नप्रतियोगिताकैकाभावस्य कार्याभावप्रयोजकत्वं, कृतित्वेन कार्यत्वेन कार्यकारणभावमन्तरापि सूपपादमेवेति तत्र प्रमाणाभाव एवेत्यभिप्रेत्यादिपदमुपात्तम् । तेन सर्गाद्यकालीनघटनिष्ठतद्व्यक्तित्वावच्छिन्नस्योपसंग्रहात्तद्व्यक्तौ कुलालकृतिजन्यत्वस्य साधनीयत्वात्, कुलालकृतित्वेन घटत्वेन कार्यकारणभावसत्त्वेन तत्राप्रयोजकत्वाशङ्काविरहादिति

## प्रभा.

त्वं, अनन्तकृतीनां जनकतावच्छेदकत्वे गौरवात् । नापि स्वोपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिजन्यत्वं स्वत्वघटितत्वेनाननुगमात्, उपादानगोचरापरोक्षज्ञानत्वादेर्गुरुधर्मत्वेन जनकतानवच्छेदकत्वाच्च । किन्तु समवाय-दैशिकविशेषणत्वान्यतरसंबन्धेन कार्यं प्रत्यन्वयव्यतिरेकाभ्यां ज्ञानत्वाद्यवच्छिन्नस्य विषयतासंबन्धेन हेतुत्वस्य कॢप्ततया, विषयतासंबन्धावच्छिन्नज्ञानत्वाद्यवच्छिन्नजनकतानिरूपिततादृशान्यतरसंबन्धावच्छिन्नजन्यत्वरूपसकर्तृकत्वं साध्यमिति । यदि चान्यतरत्वेन संसर्गताया मानाभावात् तादृशकार्यकारणभावोऽप्रामाणिक इति तादृशसाध्यं अप्रसिद्धमिति विभाव्यते, तदा कालिकसंबन्धेन कार्यं प्रति विषयतासंबन्धेन ज्ञानत्वाद्यवच्छिन्नस्य हेतुत्वं स्वीकृत्य तादृशकार्यत्वरूपप्रकृतसाध्यं सिध्यतीति । जनकतायां विषयतासंबन्धावच्छिन्नत्वनिवेशात् अदृष्टद्वारा हविरादिगोचरास्मदीयज्ञानादिजन्यत्वमादाय न सिद्ध-

## दिनकरीयम्.

ज्ञानचिकीर्षाकृतिजन्यत्वम् । कार्यमात्रं प्रति कृतेरेवान्वयव्यतिरेकाभ्यां हेतुत्वेन, तज्जनकज्ञानचिकीर्षयोस्तत्रान्यथासिद्धत्वेन तत्त्रितयजन्यत्वरूपसाध्यस्य तत्र बाधात्, दृष्टान्तपक्षसाधारणस्य स्वत्वस्यैकस्याभावेन तद्घटितस्वोपादानगोचरेत्यादिसाध्यस्यासम्भवात्, कृतित्वापेक्षयोपादानगोचरकृतित्वस्य गौरवेण जनकतानवच्छेदकत्वाच्च । किन्तु विशेष्यतासम्बन्धावच्छिन्नकृतित्वावच्छिन्नकारणतानिरूपितसमवायसम्बन्धावच्छिन्नकार्यत्वम्, तेनादृष्टद्वाराऽस्मदीयकृतिजन्यत्वस्य पक्षे सत्त्वेऽपि न सिद्धसाधनम् । यदि च कार्यमात्रे कृतित्वेने-

## रामरुद्रीयम्.

भावः । न चैवमीश्वरस्य कुलालत्वापत्तिरिति वाच्यम् । घटकरणसमर्थस्यैव कुलालत्वेनेश्वरे तस्येष्टत्वात् । अत एव 'नमः कुलालेभ्यः कर्मारेभ्यः' इत्यादिश्रुतिरपि सङ्गच्छते । यदि च सर्गाद्यस्य विवादग्रस्तत्वेन सर्गाद्यकालीनस्य घटस्य पक्षत्वे पक्षाप्रसिद्धिरिति मन्यते, तदास्तु खण्डघट एवादिपदार्थः, तत्पूर्वमपि कुलालकृत्यसत्त्वेन तत्पक्षकानुमानेनेश्वरकृतिसिद्धेरावश्यकत्वादिति युक्तमुत्पश्यामः । व्यक्तीभविष्यति चेदमुपरिष्टात् । ननु सकर्तृत्वं कर्तृजन्यत्वमेव वाच्यम् तच्च न सम्भवति, कर्तुर्जनकत्वेऽनन्तकृतिव्यक्तीनां कारणतावच्छेदकत्वापत्त्या गौरवात्, लाघवेन स्वरूपतः कृतित्वजातेरेव कारणतावच्छेदकत्वादित्याशङ्कां निराकुर्वन्प्राचीनमतनिराकरणपूर्वकं स्वमतेन सकर्तृकत्वं निर्वक्तुमारभते—**साध्यं चेति** ॥ नित्यज्ञानेच्छाकृतिमानेवेश्वरः सकर्तृकत्वानुमानेन साधनीयः, अन्यथा ईश्वरे नित्यज्ञानेच्छयोरसिद्धिप्रसङ्गादतः सकर्तृकत्वमुपादानगोचरापरोक्षज्ञानाचिकीर्षाकृतिजन्यत्वरूपमेव साधनीयं, तथा चैतदनुमानेन नित्यज्ञानेच्छाकृतीनां सिद्धौ, तत्पक्षगुणत्वहेतुकानुमानेन लाघवादेकद्रव्याश्रितत्वसिद्धौ तदेव द्रव्यमीश्वर इति नित्यज्ञानेच्छाकृतिमानेक ईश्वरः सिध्यतीति प्राचामभिप्रायः । **तत्र बाधादिति** ॥ कार्यरूपपक्षे बाधादित्यर्थः । नन्वन्वयव्यतिरेकाभ्यां ज्ञानचिकीर्षयोर्हेतुतासिद्धौ व्यापारत्वेनैव कृतेः कार्यमात्रं प्रति कारणत्वमिति, व्यापारेण व्यापारिणो नान्यथासिद्धिरिति न्यायविरोधेन कृत्य, तयोर्नान्यथासिद्धिरित्यत आह—**दृष्टान्तेति** ॥ **असम्भवादिति** ॥ दृष्टन्तपक्षवृत्तिसाध्यद्वयगतानुगतसाध्यतावच्छेदकाभावादिति भावः । ननु तर्हि स्वेति परित्याज्यमेव, यदि चान्वयव्यतिरेकाभ्यां कृतेरेव प्रथमतः कार्यमात्रे हेतुत्वमवधार्यते, तज्जनकत्वेनैव ज्ञानचीकीर्षयोरनुमानमित्याग्रहस्तदास्तु तयोरप्यन्यथासिद्धत्वं, तथाप्युपादानगोचरकृतिजन्यत्वस्यैव सकर्तृकत्वस्य साध्यत्वान्नास्माकं कापि क्षतिरित्यशङ्कायामाह—**कृतित्वापेक्षयेति** । स्वमतेन सकर्तृकत्वं निर्वक्ति । **किं त्विति** ॥ विशेष्यतासम्बन्धावच्छिन्नेत्यस्य प्रयोजनं तेनेत्यादिना स्वयमेव वक्ष्यति। कृतित्वावच्छिन्नत्वोपादानं तु सविषयकत्वेन कृतेः कारणत्वे ज्ञानेच्छयोर्नान्यथासिद्धिः सम्भवति तयोरपि सविषयकत्वेन कारणत्वात्, स्वेन तु तयोरन्यथासिद्धत्वस्यैवांगीकरणीयत्वादित्यभिप्रायेण । कार्यत्वे समवायसम्बन्धावच्छिन्नत्वप्रवेशस्तु यदुपादानिका प्रवृत्तिस्तत्रैव समवायेन कार्यमिति नियमस्य तन्त्वादौ घटापत्तिवारकस्य निर्वाहार्थैवेति बोध्यम् । **न सिद्धसाधनमिति** । तादृशजनकतायाः स्वजन्यादृष्टसम्बन्धावच्छिन्नतया विशेष्यतासम्बन्धानवच्छिन्नत्वादिति भावः । नन्वेवमुक्तानुमानेन नित्यकृतिसिद्धौ तत्र द्रव्याश्रितत्वानुमाने नित्यकृतिमदीश्वरसिद्धावपि तस्मिन्नित्यज्ञानं नित्येच्छा च न सिध्येत्, न च कृतिं

## प्रभा.

साधनम् । तथा च तादृशज्ञानजन्यत्वमिच्छाजन्यत्वं कृतिजन्यत्वं वा साध्यमिति फलितम् । **कार्यत्वादिति ॥** अत्र कार्यत्वं न स्वरूपसम्बन्धविशेषः पक्षवृत्तिकार्यत्वस्य पक्षात्मकतया अनुगमकरूपाभावेन च सपक्षावृत्तित्वादसाधारण्यापत्तेः । अत एव न प्रागभावप्रतियोगित्वमपि, पूर्वोक्तदोषापत्तेः । किन्तु स्ववृत्तिमहाकालान्यत्वकालिकविशेषणत्वोभयसम्बन्धेन सत्तावत्त्वमेव कार्यत्वं सर्वानुगतं हेतुः, महाकालव्यावर्तनाय स्ववृत्तिमहाकालान्यत्वस्य सम्बन्धकोटौ निवेशः । स्ववृत्तित्वं तद्वत्त्वञ्च दैशिकविशेषणतया बोध्यम् । परमाण्वादिवारणाय कालिकविशेषणतासम्बन्धनिवेशः । सत्तायाः सत्तात्वेन हेतुत्वं, निरुक्तोभयसम्बन्धः हेतुतावच्छेदक इति फलितम् । एतादृशानुमितौ ज्ञानेच्छाकृतिषु लाघवज्ञानसहकृतात्परामर्शात् नित्यत्वमेकत्वञ्च भासत इति नित्यैकत्वसिद्धिः । ननु ईश्वरज्ञानादौ कीदृशमेकत्वं सिध्यति ? न गुणरूपं, गुणे गुणानङ्गीकारात् । नापि स्वरूपसम्बन्धविशेषरूपं, ईश्वरे ज्ञानद्वयाङ्गीकारेऽपि प्रत्येकमेतादृशैकत्वसत्त्वात् । अत एव सामानाधिकरण्यसम्बन्धेन आश्रयगतमेकत्वं अनुमितिविषय इति मतं प्रत्युक्तम् । तत्र ज्ञानद्वयाङ्गीकारेऽपि एतादृशैकत्वभानसम्भवेन अभिमतार्थासिद्धेरिति चेन्न । स्वभिन्नज्ञानत्वव्यापकस्वाधिकरणावृत्तित्वकत्वरूपं स्वाधिकरणवृत्तिस्वभिन्नज्ञानकं यद्यत्त्वं

## दिनकरीयम्.

वान्वयव्यतिरेकाभ्यां ज्ञानत्वेनेच्छात्वेन च हेतुत्वं स्वीक्रियते, तदा तादृशज्ञानजन्यत्वमिच्छाजन्यत्वं कृतिजन्यत्वं वा साध्यमस्तु । यत्तु कर्तृजन्यत्वमेव साध्यमिति, तन्न । कार्यमात्रे कर्तृत्वेन जनकत्वे मानाभावाल्लाघवात्कृतित्वेनैव तत्र हेतुत्वात् । ननु कार्यं विशेष्यतासम्बन्धावच्छिन्नकृतिनिष्ठजनकतानिरूपितसमवायसम्बन्धावच्छिन्नजन्यताशालि, प्रागभावप्रतियोगित्वादित्यनुमानं फलितं, तत्र च ध्वंसे पक्षतावच्छेदकजन्यत्वाक्रान्ते विशेष्यतासम्बन्धावच्छिन्नकृतिनिष्ठजनकतानिरूपितसमवायसम्बन्धावच्छिन्नजन्यत्वरूपसाध्यस्याभावाद्बाध इति चेन्न । सत्त्वविशिष्टजन्यत्वस्यैव ध्वंसव्यावृत्तस्य पक्षतावच्छेदकत्वोपगमात् । न च हेत्वधिकरणे ध्वंसे उक्तसाध्याभावेन व्यभिचार इति वाच्यम् । सत्त्ववैशिष्ट्यस्य हेतौ विशेषणात् । अथैवंरीत्या व्यभिचारवारणेऽपि ध्वंसस्य कृतिजन्यत्वे मानाभावेन कार्यमात्रस्य कृतिजन्यत्वप्रवादो व्याहन्येतेति चेन्न । तादृशप्रवादस्य निर्युक्तिकत्वेनाश्रद्धेयत्वात् । यद्वा जन्यत्वमात्रं ध्वंससाधारणमेव पक्षतावच्छेदकं, कृतिजन्य-

## रामरुद्रीयम्.

प्रति ज्ञानचिकीर्षयोर्हेतुत्वेन कृत्या तयोरीश्वरेऽनुमानमिति वाच्यम् । कार्येणैव कारणानुमानसम्भवेन नित्यकृतेः कार्यत्वाभावादनुमानेन तत्सिद्ध्यसम्भवादित्याशयेन ज्ञानेच्छयोः सिद्ध्यर्थं प्रकारान्तरमनुसरति—**यद्विचेति ।** स्वमतेऽन्वयव्यतिरेकाभ्यां कृतेरेव कार्यमात्रे हेतुतया, यः करोति स जानाति स इच्छतीति व्याप्त्या जन्यकृत्या तत्कारणत्वेन ज्ञानचिकीर्षयोः कल्पनम् । नित्यकृतेरजन्यतया तया ज्ञानचिकीर्षयोरनुमानं न सम्भवत्येव । परं तु यः सर्वज्ञः इत्यादिश्रुत्यैव ज्ञानेच्छयोः सिद्धिर्वाच्येति स्वमतमभिप्रेत्य यदि चेत्युक्तम् । **कृतिजन्यत्वं वेति ॥** विनिगमनाविरहादिति भावः । तथा च सकर्तृकत्वानुमानेनैव ज्ञानेच्छाकृतीनां त्रयाणामेवेश्वरे सिद्धिरिति भावः । **यत्त्विति ॥ मानाभावादिति ॥** ननु स्वनिष्ठकृतिविशेष्यतासम्बन्धेन यत्र कर्ता तत्र समवायेन कार्यमित्यन्वयव्यतिरेकावेव मानमित्यत आह—**लाघवादिति ॥** ननु जन्यत्वावच्छेदेन समवायसम्बन्धावच्छिन्नकृतिजन्यत्वसाधने ध्वंसादौ साध्यविरहेण बाधो व्यभिचारश्चेत्याशङ्कितुं पर्यवसितपक्षसाध्यहेतूननुवदति—**नन्वित्यादिना ॥** सर्वसिद्धप्रवादस्याश्रद्धेयत्वमसहमानः कल्पान्तरमाह—**यद्वेति ॥** अथात्र कृतिनिष्ठजनकतानिरूपितादृष्टाद्वारकजन्यत्वस्य साधने कारणतावच्छेदकसम्बन्धः कार्यतावच्छेदकसम्बन्धश्च पूर्वोक्त एव, तथा च ध्वंसे न कृतिजन्यत्वरूपसाध्यसिद्धिः सम्भवति । न च विशेष्यतासमवायाभ्यां कश्चित्कार्यकारणभावः अन्यस्तु विशेष्यताविशेषणताभ्यामिति ध्वंसेऽपि कृतिजन्यत्वसिद्धिः सम्भवत्येवेति वाच्यम् । उपादानत्वाख्यविशेष्यतासम्बन्धेनैव कृतेः कारणत्वस्याङ्गीकरणीयतया ध्वंसस्योपादानविरहेण तं प्रत्युक्तविशेष्यतासम्बन्धेन कारणत्वासम्भवादिति चेन्न । कालनिष्ठप्रत्यासत्त्यैव कार्यमात्रं प्रति कृतेः कार-

**प्रभा.**

तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदकूटवत्त्वरूपं वा एकत्वं ईश्वरज्ञाने तादृशानुमितिविषय इति ।

**दिनकरीयम्.**

त्वमात्रं साध्यं, एवं च हेतावपि सत्त्ववैशिष्ट्यं नोपादेयं प्रयोजनाभावात् । एवं च ध्वंसेऽपि ईश्वरीयकृतिजन्यत्वस्य निराबाधतया कार्यमात्रे कृतिजन्यत्वप्रवादोऽप्युपपद्यत इति । न च कृतिजन्यत्वमात्रस्य साध्यत्वेऽदृष्टद्वारा हविरादिगोचरास्मदीयकृतिजन्यत्वमादाय सिद्धसाधनमिति वाच्यम् । अदृष्टाद्वारकत्वेन कृतिजन्यताया विशेषणीयत्वादिति दिक् । एतादृशानुमितौ लाघवज्ञानसहकारेण ज्ञानेच्छाकृतिषु नित्यत्वमेकत्वं च भासत इति नित्यैकत्वसिद्धिः । अथेश्वरज्ञानादौ कीदृशमेकत्वमनुमित्या विषयीक्रियते । न तावत्संख्यारूपं गुणे गुणानङ्गीकारात् । नच नित्यज्ञानवन्निष्ठभेदप्रतियोगितानवच्छेदकत्वरूपमेकत्वं तद्विषय इति वाच्यं, ईदृशैकत्वस्य नित्यज्ञानानुमितेः प्रागनुपस्थितत्वेन तादृशानुमितौ भानासंभवादिति चेत्, अत्र केचित्, सामानाधिकरण्यसम्बन्धेनैव ज्ञानादावाश्रयगतमेकत्वमनुमितौ भासते, यद्वा द्वित्वासमानाधिकरणत्वरूपमेकत्वं तद्विषयः । नच जीवेश्वरगतद्वित्वसामानाधिकरण्यस्येश्वरज्ञानादौ सत्त्वाद्बाध इति वाच्यं, दुःखवदवृत्तित्वेन द्वित्वस्य विशेषणीयत्वात्, न चैवमपि घटेश्वरगतद्वित्वसामानाधिकरण्यस्य तत्र सत्त्वाद्बाध इति वाच्यं आत्मानात्मवृत्तिभिन्नत्वेनापि द्वित्वस्य विशेषणीयत्वादित्याहुः तन्न । ईश्वरे ज्ञानद्वयाङ्गीकारेऽप्येतादृशैकत्वभाननिर्वाहेणोद्देश्यासिद्धेः । वस्तुतस्तु स्वाधिकरणावृत्तिस्वभिन्नज्ञानकत्वमेवैकत्वम् । एवमीश्वरेच्छाकृत्योरपि द्रष्टव्यम् । एवं च तादृशज्ञानादिसिद्धौ तत्र गुणत्वेन हेतुना द्रव्याश्रितत्वे साधनीये द्रव्यान्तरस्य बाधादीश्वरसिद्धिरिति द्रष्ट-

**रामरुद्रीयम्.**

णत्वस्योपगन्तव्यत्वादिति तात्पर्यात् । **लाघवज्ञानेति** ॥ वह्निव्याप्यधूमवानिति परामर्शाद्वह्नेर्महानसीयत्वे लाघवमिति लाघवज्ञानसहकृताद्यथा हि पर्वतो महानसीयवह्निमानित्यनुमितिस्तथा कृतेरेकत्वे नित्यत्वे च लाघवमिति लाघवज्ञानसहकृतकृतिजन्यत्वव्याप्यकार्यत्ववानिति परामर्शात् नित्यैककृतिजन्यमित्याद्यनुमितिरिति भावः । ज्ञानेच्छाकृतिषु कीदृशमेकत्वमनुमित्या विषयीक्रियते इत्याशङ्कते—**अथेत्यादिना । न च नित्यज्ञानवन्निष्ठेति** ॥ एतादृशैकत्वज्ञानस्य फलं नित्यज्ञानस्यैकत्वसिद्धिरिति भावः । **अत्र केचिदिति** ॥ नन्वाश्रयगतैकत्वस्य सामानाधिकरण्यसम्बन्धेन ज्ञानेच्छादिषु भानोपगमेऽपि नेश्वरैकत्वसिद्धिरीश्वरनानात्वेऽपि तत्तदीश्वरगतज्ञानादिषु तत्तदीश्वरगतैकत्वस्य सामानाधिकरण्यसम्बन्धेन भाने बाधकाभावादित्यस्वरसात्कल्पान्तरमाह—**यद्वेति** ॥ **बाध इतीति** ॥ ईश्वरीयज्ञाने एकत्वबाध इत्यर्थः ॥ **आत्मानात्मेति** ॥ अनात्मवृत्तिभिन्नत्वमात्रोपादाने दुःखवदवृत्त्यनात्मवृत्तिभिन्नद्वित्वाप्रसिद्धिः, ईश्वरगतद्वित्वस्यैव तथात्वसम्भवेन तस्यानङ्गीकारात्, अत आत्मवृत्तित्वे सत्यनात्मवृत्ति यत्तद्भिन्नत्वमेव, विशेषणमुपात्तम् । तथा च तादृशं द्वित्वं घटपटादिगतद्वित्वमेवेति नाप्रसिद्धिरिति भावः । **उद्देश्यासिद्धेरिति** ॥ ईश्वरे सर्वविषयकमेकमेव ज्ञानमिति सिद्ध्यर्थं हि ज्ञानादावेकत्वभानं स्वीक्रियते ईश्वरस्यैकत्वसिद्धावपि तदीयज्ञानादीनामेकत्वासिद्धेरिति भावः । **स्वाधिकरणेति** ॥ यत्रैकत्वं भासते तदेव स्वपदार्थः । अत्र च स्वभिन्नज्ञानत्वावच्छेदेन स्वाधिकरणावृत्तित्वं विवक्षणीयम् । अन्यथा ईश्वरीयज्ञाननानात्वेऽपि स्वभिन्नजीवज्ञानादौ स्वाधिकरणावृत्तित्वसत्त्वेनेश्वरज्ञानादेरेकत्वासिद्धिप्रसङ्गात् । स्वभिन्नज्ञानत्वव्यापकस्वाधिकरणावृत्तित्वकत्वमेव ज्ञानगतमेकत्वमिति फलितं । तच्च नित्यज्ञानैकत्व एव सम्भवति नतु तद्भेदेऽपीति द्रष्टव्यम् । अथाऽत्र नित्यज्ञानव्यक्तिरेव स्वपदार्थः तद्घटितं च निरुक्तैकत्वं नित्यज्ञानानुमितेः प्राक् दुर्ग्रहमिति कथं नित्यज्ञानानुमितौ तादृशैकत्वभानसम्भवः विशिष्टबुद्धौ विशेषणज्ञानस्य हेतुत्वात् । न च नित्यज्ञानानुमितेः पूर्वमपि ज्ञानत्वसामान्यलक्षणया प्रत्यासत्त्या निखिलज्ञानव्यक्तीनां ज्ञानं सम्भवत्येव, कथमन्यथानुपस्थितज्ञानव्यक्तेस्तादृशानुमितौ विधेयतया भानसम्भवः उक्तकार्यकारणभावस्य जागरूकत्वादिति वाच्यम् । एवमपि स्वभिन्नेत्यत्र स्वत्वं न ज्ञानत्वस्वरूपं, ज्ञाने ज्ञानत्वावच्छिन्नभेदासत्त्वेन स्वभिन्नज्ञानाप्रसिद्धिप्रसङ्गात् । अपि तु नित्यज्ञाननिष्ठतद्व्यक्तित्वमेव तदिति वाच्यम्, तथा च तस्य प्रमेयत्वादिसामान्यलक्षणया सुग्रहत्वेऽपि स्वरूप-

**नच तत्कर्तृत्वमस्मदादीनां सम्भवतीत्यतस्तत्कर्तृत्वेनेश्वरसिद्धिः । नच शरीराजन्यत्वेन कर्त्र-जन्यत्वसाधकेन सत्प्रतिपक्ष इति वाच्यं, अप्रयोजकत्वात् । मम तु कर्तृत्वेन कार्यत्वेन**

## प्रभा.

एवं ईश्वरेच्छाकृत्योरपीति नोक्तदोष इति बोध्यम् । उक्तानुमानेन एतादृशज्ञानादिसिद्धौ तत्र गुणत्वेन द्रव्य-समवेतत्वसाधने आश्रयान्तरबाधात् तदाश्रयतया ईश्वरसिद्धिरित्यभिप्रायः । **सत्प्रतिपक्ष इतीति** ॥ तथा च तद्बलादनुमितेरेवानुत्पत्त्या कार्यत्वहेतुकानुमानं नेश्वरसाधकमिति भावः । **अप्रयोजकत्वादिति** ॥ व्यभिचारशङ्कानिवर्तकाभावादित्यर्थः । केचित्तु इदमुपलक्षणं, शरीराजन्यत्वहेतौ शरीररूपविशेषणस्यासिद्धि-

## दिनकरीयम्.

व्यम् । **अप्रयोजकत्वादिति** । अनुकूलतर्काभावादिति भावः । इदमुपलक्षणम् । शरीराजन्यत्वहेतोश्शरीर-रूपविशेषणस्यासिद्धिवारकस्यापि व्यभिचारावारकत्वेन व्यर्थतया, तद्विशेषणावच्छेदेन व्याप्तिग्रहासंभवेन व्या-प्यत्वासिद्धेश्चेत्यपि द्रष्टव्यम् । न च व्यर्थविशेषणत्वस्याधिकोक्त्या निग्रहस्थानत्वेऽपि तज्ज्ञानस्य व्याप्ति-ज्ञानप्रतिबन्धकत्वे मानाभाव इति वाच्यं, तथापि गुरुधर्मस्यानवच्छेदकतया साध्यसम्बन्धितावच्छेदकरू-

## रामरुद्रीयम्.

तस्तद्व्यक्तित्वेन वा तस्य प्रकारत्वमसम्भवि, स्वरूपतस्तत्प्रकारकज्ञाने स्वरूपतस्तद्विषयकज्ञानस्य, तद्व्यक्तित्व-विशिष्टप्रकारकज्ञाने च तद्व्यक्तित्वविशिष्टज्ञानस्य हेतुतया, सामान्यलक्षणाजन्यज्ञानस्य च प्रमेयत्वादिसामान्य-प्रकारकत्वनियमेन नित्यज्ञानानुमितेः पूर्वं तथाविधतद्व्यक्तिज्ञानासम्भवेन नित्यज्ञानानुमितौ भेदप्रतियोगिता-वच्छेदकतया तद्व्यक्तित्वभानासम्भवस्य दुष्परिहरत्वादिति । मैवम् । एकव्यक्तिमात्रवृत्तिधर्म एव प्रकृते स्वत्वम् । एकमात्रवृत्तित्वं च स्वप्रतियोगिवृत्तित्वस्वसामानाधिकरण्योभयसम्बन्धेन भेदविशिष्टान्यत्वम् । अनेन च रूपेण नित्यज्ञानानुमितेः पूर्वमपि तन्निष्ठतद्व्यक्तित्वस्य सामान्यलक्षणया सुग्रहत्वात् । न चैवमपि तद्व्यक्ति-भेदस्य प्रतियोगितावच्छेदकं लाघवाच्छुद्धतद्व्यक्तित्वमेव,तस्य स्वरूपतो भानानङ्गीकारे तु तद्व्यक्तीतरावृत्तित्ववि-शिष्टमेव तत् तथा, नतूक्तोभयसम्बन्धेन भेदविशिष्टभेदवत् गौरवात्, तथा च तादृशभेदाप्रसिद्धिरिति वाच्यम् । तादृशभेदस्योपलक्षणतया प्रतियोगितावच्छेदकव्यावर्तकत्वोपगमात् । न चाभावप्रतियोगितावच्छेदककोटा-वुपलक्षणतया भानानङ्गीकारात् न तथोपगमसम्भव इति वाच्यम् । प्रतियोगितासंसर्गकबुद्धावेव तथाभाना-नङ्गीकारात्, प्रकृते च तथाविधभेदविशिष्टभेदवदवच्छिन्नप्रतियोगिताकाभावत्वेनैव नित्यज्ञानभेदस्य निवेशनीय-त्वादिति सर्वमनाकुलम् । केचित्तूक्तवाक्यस्य स्वसमानाधिकरणस्वभिन्नज्ञानकं यद्यत्तदन्यत्वमेवार्थ इति नोक्ता-नुपपत्तिः। नच समासान्तर्गतनञां उत्तरपदार्थमात्रान्वयित्वं, न तु पूर्वपदार्थविशिष्टोत्तरपदार्थान्वयित्वं, तथासति नीलोऽप्रमेय इति वाक्यान्नीलप्रमेयभेदबोधापत्तिः । तथा च स्वाधिकरणावृत्तीत्यादिवाक्यादुक्तार्थलाभासम्भव इति वाच्यम्, घटानधिकरणमित्यादौ घटाधिकरणभिन्नप्रतीत्यर्थं समासान्तर्गतनञोऽपि यत्रोत्तरपदं ससम्बन्धि-कपदघटितं (पदात्मकं) तत्र पूर्वपदार्थान्वितस्वार्थबोधकत्वस्याप्यङ्गीकरणीयत्वात्, अन्यथाऽधिकरणसामान्य-भिन्नस्याप्रसिद्ध्या घटानधिकरणमित्यतः शाब्दबोधस्यैवानुपपत्तेरित्यपि वदन्ति । **एवमिति** ॥ स्वाधि-करणावृत्तिस्वभिन्नेच्छाकत्वं स्वाधिकरणावृत्तिस्वभिन्नकृतिकत्वमिच्छाकृत्योरेकत्वमिति भावः । नन्वेवमनुमा-नेन नित्यैकज्ञानेच्छाकृतिव्यक्तीनां सिद्धावपि नेश्वरसिद्धिरित्याशङ्कायामाह—**एवं चेति** । **द्रव्यान्तरस्य बाधादिति** ॥ ज्ञानादिकं न पृथिव्यादिवृत्ति चेतनगुणत्वात् । नापि जीवात्मवृत्ति नित्यज्ञानादि-त्वात्, जीवात्मनि तु नित्यज्ञानाद्यभावादित्येवं रीत्या द्रव्यान्तरस्य बाधादिति भावः । **अनुकूल-तर्केति** ॥ शरीराजन्यत्वकृत्यजन्यत्वयोरत्यन्ताभावरूपत्वेन नित्ययोर्व्याप्तिग्राहककार्यकारणभावरूपानुकूल-तर्काभावादित्यर्थः । **तद्विशेषणावच्छेदेनेति** ॥ व्यभिचारवारकविशेषणावच्छेदेनैव हेतौ व्याप्तिरङ्गी-क्रियते न तु तदवारकविशेषणावच्छेदेनेति भावः । ननु साध्यवदन्यावृत्तित्वादिकमेव व्याप्तिः, तेषां च धूमे धूमत्वावच्छेदेनेव नीलधूमत्वावच्छेदेनापि सत्त्वे न किंचिद्बाधकम् । वस्तुतस्तु भेदस्य सामानाधिकरण्यस्य वा

## प्रभा.

वारकस्यापि व्यभिचारावारकत्वेन व्यर्थतया, तद्विशेषणावच्छेदेन व्याप्तिग्रहासंभवेन व्याप्यत्वासिद्धेश्चेत्यपि द्रष्टव्यम् । न च व्यर्थविशेषणस्याधिकोक्त्या निग्रहस्थानत्वेऽपि तज्ज्ञानस्य व्याप्तिज्ञानप्रतिबन्धकत्वे मानाभाव इति वाच्यम्, तथापि गुरुधर्मस्यानवच्छेदकतया साध्यसम्बन्धितावच्छेदकरूपव्याप्तेस्तत्राभावेन व्याप्यत्वासिद्धेर्दुर्वारत्वादिति । तदुक्तमाचार्यैः 'एकामसिद्धिं परिहरतो द्वितीयापत्तिः' इति दूषणान्तरमाहुः । तदसत् गुरुधर्मत्वमात्रं व्याप्यतानवच्छेदकत्वे न तन्त्रं, धूमप्रागभावत्वस्यापि व्याप्यतानवच्छेदकत्वापत्तेः । किन्तु लघुधर्मसमनियतत्वविशिष्टगुरुधर्मत्वं, एवञ्च शरीराजन्यत्वस्य गुरुधर्मत्वेऽपि लघुधर्मसमनियतत्वाभावेन व्याप्यतावच्छेदकत्वसंभवात् । उक्तार्थे आचार्योक्तिरपि नोपष्टंभिका, द्वितीयापत्तिरित्यस्य द्वितीयायाः व्याप्यत्वासिद्धेरापत्तिरिति नार्थः। परिहरत इत्यस्यानन्वयापत्तेः। किंतु एकां हेतुनिष्ठासिद्धिं परिहरतः विशेषणान्तरदानेन निवारणकर्तुः पुंसः द्वितीयायाः निग्रहस्थानरूपाया अधिकोक्तेरापत्तिरित्यर्थः । तादृशाचार्योक्त्या हेतोः स्वरूपासिद्धिवारणाय विशेषणदाने तद्दातुरधिकोक्तिरूपदोषप्राप्तिरित्याचार्याणामाशयो लभ्यते इति तदुक्तेरुपष्टम्भकत्वासम्भवाच्च । **कर्तृत्वेन कार्यत्वेनेति** ॥ यद्यपि कुलालादिकृतिसत्त्वे घटाद्युत्पत्तिः कुला-

## दिनकरीयम्.

पव्याप्तेस्तत्राभावेन व्याप्यत्वासिद्धेर्दुर्वारत्वादिति । तदुक्तमाचार्यैः "एकामसिद्धिं परिहरतो द्वितीयापत्तिः" इति । **कर्तृत्वेन कार्यत्वेन कार्यकारणभाव एवेति** ॥ नचान्वयव्यतिरेकाभ्यां घटत्वाद्यवच्छिन्नं प्रति

## रामरुद्रीयम्.

किंचिदवच्छेदेन सत्त्वं किंचिदवच्छेदेन तदभाव इत्यत्र न किंचिदपि साधकम् । अग्रे वृक्षः कपिसंयोगी न मूल इत्यादिवत्तत्साधकप्रतीतेरभावात्, न च धूमो धूमत्वेन वह्नेर्व्याप्यो न नीलधूमत्वेनेति प्रतीतिरेव तत्साधिकेति वाच्यम् । तत्रैव विवादात् । न च व्यर्थविशेषणज्ञानमेव तदवच्छेदेन व्याप्तिज्ञाने प्रतिबन्धकमिति व्यर्थविशेषणत्वज्ञानदशायां व्याप्तेरज्ञानरूपासिद्धिर्निष्प्रत्यूहैवेति वाच्यम् । तादृशप्रतिबध्यप्रतिबन्धकभावे मानाभावात् । न चैवं नीलधूमादिप्रयोक्तुर्निग्रहो न स्यादिति वाच्यम्, अधिकस्यापि निग्रहस्थानत्वेन तत्सम्भवादित्याशङ्कते—**न चेति । मानाभाव इतीति** ॥ ग्राह्याभावाद्यनवगाहित्वादिति भावः । **व्याप्तेस्तत्राभावेनेति** ॥ जन्यत्वाभावत्वापेक्षया शरीरजन्यत्वाभावत्वस्य गुरुत्वेन साध्यसामानाधिकरण्यानवच्छेदकत्वात्, स्वरूपसम्बन्धरूपावच्छेदकत्वस्य गुरुधर्मे प्राचीनैरनङ्गीकारादिति भावः । **तदुक्तमिति** ॥ कुसुमांजलाविति शेषः । **एकामसिद्धिमिति** ॥ स्वरूपासिद्धिमित्यर्थः । **द्वितीयापत्तिरिति** ॥ व्याप्यत्वासिद्ध्यापत्तिरित्यर्थः । स्वरूपासिद्धिपरिहाराय हेतौ शरीरपदप्रवेशे, तस्य व्यभिचारावारकत्वेन शरीराजन्यत्वत्वस्य साध्यसम्बन्धितानवच्छेदकत्वेन व्याप्यत्वासिद्धिप्रसङ्गादिति भावः । इदं पुनरिहानुसन्धेयम् । सम्भवदवच्छेदकताकलघुधर्मसत्त्व एव गुरुधर्मे स्वरूपसम्बन्धरूपमवच्छेदकत्वं न स्वीक्रियते, 'सम्भवति लघौ गुरौ तदभावात्' इति दीधित्युक्तेः । प्रकृते च जन्यत्वसामान्याभावादतिरिक्त एव शरीरजन्यत्वाभावः, तन्निष्ठसाध्यसामानाधिकरण्ये च लघोरपि जन्यत्वाभावत्वस्य नावच्छेदकत्वसम्भवः, तत्र तस्यासत्त्वात् । अन्यथा विशिष्टसत्तात्वस्यापि द्रव्यत्वत्वाद्यपेक्षया गुरुत्वेनानवच्छेदकत्वापातात् । न च जन्यत्वसामान्याभावत्वं जन्यत्वत्वावच्छिन्नप्रतियोगिताकत्वे सत्यभावत्वं, जन्यत्वत्वावच्छिन्नप्रतियोगिताकत्वं च न तत्पर्याप्तप्रतियोगितावच्छेदकताकत्वं, किं तु तन्निष्ठप्रतियोगितावच्छेदकताकत्वं, तथा च शरीरजन्यत्वाभावेऽपि तदक्षतमेवेति वाच्यम् । तथा सति घटवृत्तिजन्यत्वाभावस्य पटादौ सत्त्वेन व्यभिचारितया तादृशजन्यत्वाभावस्य कर्त्रजन्यत्वसाधकत्वानुपपत्तेः । अत एव न व्यर्थविशेषणतापि, स्वसमानाधिकरणव्याप्यतावच्छेदकधर्मान्तरघटित एव तत्प्रसरात् । जन्यत्वाभावत्व-शरीरजन्यत्वाभावत्वयोर्व्यधिकरणत्वात् शरीरजन्यत्वाभावत्वस्य जन्यत्वाभावत्वेनाघटितत्वात्सर्वमिदमसंगतमिति प्रतिभाति । तथापि परमते शरीरजन्यत्वं नास्तीति यत्र प्रतीतिस्तत्र सर्वत्रैव कृतिजन्यत्वं नास्तीति प्रतीतिरभ्युपगम्यते । शरीराजन्यस्य कृतिजन्यपदार्थस्य तैरनंगीकारात्। समनियताभावयोश्च भेदे मानाभावेन भवति शरीरजन्यत्वाभावनिष्ठं कृतिजन्यत्वाभावत्वम् । एवं च कृति-

## प्रभा.

लादिकृत्यभावे घटाद्यनुत्पत्तिरित्यन्वयव्यतिरेकाभ्यां घटत्वाद्यवच्छिन्नं प्रति कुलालादिकृतित्वेन हेतुता सिद्धा न तु कार्यत्वावच्छिन्नं प्रति कृतित्वेनापि हेतुता, तथा अन्वयव्यतिरेकयोरदर्शनात् । तथापि यद्विशेषयोरिति न्यायेन बाधज्ञानाभावे सति विशेषरूपेणान्वयव्यतिरेकबलादेव सामान्यरूपेणापि कारणत्वस्वीकारे बाधका- भावात् । न च तादृशन्याये मानाभाव इति वाच्यम् । तथासति कार्यत्वावच्छिन्नाभावे तत्तत्कृतित्वावच्छि- न्नाभावकूटस्य प्रयोजकत्वापत्त्या गौरवापत्तेः । कृतित्वेन हेतुत्वस्वीकारे कार्याभावे कृतित्वावच्छिन्नाभावस्यैकस्य प्रयोजकत्वस्वीकारेण लाघवादिति । नवीनमतानुयायिनस्तु तादृशसामान्यकार्यकारणभावाभावेऽपि घटत्वाद्यव- च्छिन्नं प्रति कुलालादिकृतित्वेन हेतुत्वस्य क्लृप्ततया, सर्गाद्यकालीनघटव्यक्तिं खण्डघटव्यक्तिं वा पक्षीकृत्य घटत्वहेतुना सकर्तृकत्वसाधने सर्गाद्यकाले कुलालाभावात्तत्कुलालस्य खण्डघटानुकूलयत्नाभावाच्च तदाश्रयतया ईश्वरसिद्धिरित्याहुः । तदसत्, सर्गाद्यकाले घटोत्पत्तौ मानाभावात् । ईश्वरस्य चिकीर्षावशात् आदौ परमाणुषु द्रव्यारम्भानुगुणक्रियाया एव उत्पत्तिः, ततः द्व्यणुकादिक्रमेण महापृथिव्यादिभूतचतुष्टयोत्पत्त्यनन्तरं ब्रह्मण-

## दिनकरीयम्.

कुलालादिकृतित्वेनैव हेतुत्वादेतादृशकार्यकारणभावे मानाभाव इति वाच्यम् । घटत्वपटत्वादिभेदेनानन्तकार्य- कारणभावकल्पनापेक्षया कार्यत्वावच्छिन्नं प्रति कृतित्वेनैकहेतुताकल्पनस्यैवोचितत्वात् । यद्विशेषयोरिति न्यायेन कार्यत्वकृतित्वाभ्यां सामान्यकार्यकारणभावस्यावश्यकत्वाच्च । नचैतादृशन्यायो निष्प्रमाणक इति वाच्यं, कार्यत्वावच्छिन्नाभावे तत्तत्कृत्यभावकूटस्य प्रयोजकत्वकल्पने गौरवात्, कृतित्वावच्छिन्नाभावस्यैकस्य

## रामरुद्रीयम्.

जन्यत्वत्वापेक्षया शरीरजन्यत्वत्वस्य गुरुत्वेन तदवच्छिन्नप्रतियोगिताकाभावस्य तन्मतेऽप्रसिद्ध्या न तस्य हेतुतासंभव इति यावन्ति शरीरजन्यत्वानि तावत्प्रतियोगिकाभावत्वेनैव हेतुता वाच्या । तथा च तदपेक्षया लघुभूतेन कृतिजन्यत्वत्वावच्छिन्नप्रतियोगिताकाभावत्वेनैव तस्य हेतुता युक्ता । तन्मते शरीराजन्यकृतिजन्यपदार्थस्यानभ्युपगमेन तादृशाभावे कृतिजन्यत्वत्वावच्छिन्नप्रतियोगिताकत्वस्यैव तैरभ्यु- पगमसंभवादिति दूषणं सारमिति। **अन्वयव्यतिरेकाभ्यामिति** ॥ कुलालकृतिसत्त्वे घटसत्त्वं तदभावे तद- भाव इत्यन्वयव्यतिरेकाभ्यामित्यर्थः । **कुलालादिकृतित्वेनैवेति** ॥ यद्रूपावच्छिन्नयोरन्वयव्यतिरेकग्रह- स्तद्रूपावच्छिन्नयोरेव कार्यकारणभावनियमादिति भावः । **एतादृशकार्यकारणभावे**—कृतित्वावच्छिन्न- कारणत्वकार्यत्वावच्छिन्नजन्यत्वस्वरूपे । **मानाभाव इति** ॥ अन्यथा घटत्वदण्डत्वादिना अन्वयव्यतिरेक- ग्रहादेव द्रव्यत्व-समवेतद्रव्यत्वाभ्यामेककार्यकारणभावकल्पनस्यैव युक्ततया, घटादिकं प्रति दण्डत्वादिना का- रणताविलयप्रसंगात् । न चोक्तान्वयव्यतिरेकाभ्यां विशिष्य हेतुतासिद्धावपि, कृतिसत्त्वे कार्यसत्त्वं कृत्यभावे कार्याभाव इत्यन्वयव्यतिरेकाभ्यां, कार्यत्वकृतित्वाभ्यामपि कार्यकारणभावोऽवर्ज्य इति वाच्यम् । सृष्टिकाले कृतिसामान्याभावस्य जन्यसामान्याभावस्य च क्वाप्यनिश्चयेन, प्रलये चास्मदादीनामभावेन तादृशान्वयव्य- तिरेकग्रहस्यैवासिद्धेः। यद्धर्मावच्छिन्नयोरन्वयव्यतिरेकसहचारग्रहस्तद्धर्मावच्छिन्नयोरेव कार्यकारणभावग्रह इत्यौ- त्सर्गिको नियमः इत्यभिप्रेत्याह—**एकहेतुत्वकल्पनस्यैवेति** । प्रकृते घटत्वपटत्वकुलालकृतित्वतन्तुवायकृति- त्वाद्यवच्छिन्नानन्तकार्यकारणभावे गौरवनिश्चयरूपबाधकसत्त्वात्, कार्यत्वकृतित्वाभ्यामेक एव कार्यकारणभावः कल्प्यत इति भावः । ननु तन्तुवायकृतिसत्त्वे घटोत्पत्तिवारणाय विशेषतोऽन्वयव्यतिरेकाभ्यां घटत्वकुलालकृति- त्वादिना विशेषकार्यकारणभावानामावश्यकत्वेन, तादृशान्वयव्यतरेकग्रहैः कार्यत्वकृतित्वाभ्यां सामान्यकार्य- कारणभावकल्पनेऽपि तादृशगौरवस्याङ्गीकरणीयत्वादित्यतस्तत्साधकं हेत्वंतरमाह—**यद्विशेषयोरिति** । 'यद्वि- शेषयोः कार्यकारणभावोऽसति बाधके तत्सामान्ययोरपि' इति न्यायः । मीमांसकमते चाक्षुषं प्रति रूपं, स्पा- र्शनं प्रति स्पर्शः, कारणं । बहिरिन्द्रियजन्यप्रत्यक्षसामान्ये न रूपं न वा स्पर्शः कारणं, प्रभावाय्वोः प्रत्यक्षे व्यभिचारात् । नापि गुणः कारणमतिप्रसंगात् । नापि रूपस्पर्शान्यतरत्कारणमन्यतरत्वस्यापि गुरुत्वात्, विनि- गमनाविरहेण गुरुतरकारणताद्वयप्रसंगाच्चेत्येतो न्याये असति बाधक इत्युक्तम् । **आवश्यकत्वाच्चेति** ॥

## प्रभा.

स्वसकाशात् मानसाः सर्वज्ञाः मन्वादयः जायन्त इति स्वीक्रियते 'ब्रह्मणो मानसा मन्वादयः पुत्राः' इति श्रुतेः, तैरेव तदनन्तरकालीनाः प्राकृतपुरुषाः घटादयश्च उत्पाद्यन्त इत्यस्वरसं, कार्यत्वेन कृतित्वेन कार्यकारणभावानङ्गीकर्तॄणां मते घटत्वेन कुलालकृतित्वेन कार्यकारणभावेऽपि मानाभावः, तत्तद्घटत्वावच्छिन्नं प्रति तत्तत्कृतित्वेन हेतुत्वादित्यावश्यकविशेषकार्यकारणभावेनैव उपपत्तेरिति घटत्वादिहेतुकानुमानेऽप्यनुकूलतर्काभावस्तुल्य इत्याद्यस्वरसञ्च हृदि निधाय, श्लोकरूपेणेश्वरसाधकानुमानपरिगणनायां आचार्येण घटत्वादिहेतुकानुमानस्यापठितत्वेन तेन हेतुना ईश्वरसाधनासंभवात्। यत्तूक्तरीत्या घटादेः कुलालादिचेष्टायाश्चान्वयव्यतिरेकाभ्यां यद्विशेषयोरिति न्यायेन कार्यसामान्यं प्रति चेष्टात्वेन हेतुत्वमावश्यकमिति द्व्यणुकाद्युत्पत्तेः पूर्वं चेष्टानुरोधेन ईश्वरस्य नित्यशरीरमप्यङ्गीकार्यमिति । तन्न, तादृशान्वयव्यतिरेकयोर्मानाभावात् । अथ वा चेष्टात्वन्न जातिः, उत्क्षेपणत्वादिना साङ्कर्यात् किन्तु हिताहितप्राप्तिपरिहारानुकूलक्रियात्वं, तथा च तादृशचेष्टात्वापेक्षया क्रियात्वजातेर्लघुत्वेन तादृशान्वयव्यतिरेकाभ्यां कार्यमात्रं प्रति क्रियात्वेनैव

## दिनकरीयम्.

प्रयोजकत्वे लाघवादिति । केचित्तु मास्तु कार्यत्वं कृतेः कार्यतावच्छेदकं तथापि घटत्वाद्यवच्छिन्नं प्रति कृतेः कारणतया, सर्गाद्यकालीनघटादिकं पक्षीकृत्य घटत्वादिहेतुना सकर्तृकत्वसाधने जीवानां बाधादीश्वरसिद्धिरित्याहुः। दीधितिकृतस्तु कार्यत्वावच्छिन्नं प्रति कृतेर्हेतुत्वाभावेऽपि घटत्वाद्यवच्छिन्नं प्रति कृतेर्हेतुतया, खण्डघटोत्पत्तेः पूर्वं कृतेरावश्यकतया तदाश्रयत्वेनेश्वरसिद्धिमाहुः । नन्वेवंरीत्या घटादि-कुलालादिचेष्टयोरन्वयव्यतिरेकाभ्यां कार्यत्वावच्छिन्नं प्रति चेष्टात्वादिना हेतुत्वादङ्कुराद्युत्पत्तेः पूर्वं चेष्टानुरोधेनेश्वरस्य नित्यशरीरमपि सिद्ध्येदिति चेन्न । तादृशान्वयव्यतिरेकाभ्यां कार्यत्वावच्छिन्नं प्रति क्रियात्वेनैव हेतुत्वात्तत्र चेष्टात्वेन हेतुत्वे मानाभावात् । आचार्यमतानुयायिनस्तु अस्तु चेष्टात्वेन तत्र हेतुत्वं, अस्तु च तदनुरोधेनेश्वरस्य नित्यं शरीरं, तथापि नेश्वरस्यातिरिक्तशरीरसिद्धिः परमाणूनामेव तच्छरीरत्वोपगमात् । एवं चेश्वरकृतिजन्यचेष्टावद्भिः परमाणुरूपशरीरैरेव तत्तत्कार्याणामुत्पत्तिः, परमाणुक्रियायां चेष्टात्वरूपवैजात्याङ्गीकाराच्छरीर-

## रामरुद्रीयम्.

प्रयोजनाभावेऽपि नियमबलेन तत्सिद्धिरिति भावः । **लाघवादिति** ॥ तथाचोक्तन्यायो लाघवमूलकत्वान्न निष्प्रमाणक इति भावः। न च कृतित्वस्य कार्यत्वावच्छिन्नं प्रति कारणतानवच्छेदकत्वेऽपि, लाघवादेव कृतित्वावच्छिन्नाभावस्यैकस्य कार्यसामान्याभावप्रयोजकत्वं कल्पनीयमिति वाच्यम् । कारणतावच्छेदकधर्मावच्छिन्नाभावस्यैव कार्यतावच्छेदकावच्छिन्नाभावप्रयोजकतानियमादिति भावः । अत एव तादृशनियमे मानाभाव इति वादिनां केषांचिन्मतमुत्थापयति । **केचित्त्विति । मास्त्विति** ॥ उक्तनियमे मानाभावेन तादृशकार्यकारणभावानङ्गीकारेऽपि लाघवादेव कृत्यभावस्य कार्याभावप्रयोजकत्वसम्भवादिति भावः । आहुरित्यस्वरसोद्भावनम् । तद्बीजं तु परैः सर्गादेरेवानंगीकारेण तत्कालीनघटस्य पक्षत्वे पक्षाप्रसिद्धिरेव । वस्तुतस्तु खण्डघटं पक्षीकृत्य कुलालकृतिजन्यत्वसाधने जीवरूपकुलालकृतेर्बाधादीश्वरसिद्धिः, घटकरणसमर्थस्यैव कुलालत्वेन तादृशकुलालत्वस्येश्वरेऽपि स्वीकारसम्भवात् । अत एव 'नमः कुलालेभ्य' इति श्रुतिरपि सङ्गच्छते इति तु युक्तमुत्पश्यामः । वर्णयन्ति चैवमेव दीधितिकृतोऽपि । तदेवाह—**दीधितिकृतस्त्विति । नित्यशरीरमपीति** ॥ चेष्टावदन्त्यावयवित्वरूपशरीरत्वस्य निर्लेपत्वसम्भवात्, अवयविमात्रस्य स्वमते विनाशित्वात्, नात्रेष्टापत्तिः संभवतीति भावः । **चेष्टात्वेन हेतुत्वे मानाभावादिति** ॥ नन्वगृहीतव्यभिचारकलघुभूतव्याप्यधर्मान्तरसत्त्वे व्यापकरूपेण न कारणत्वमन्यथासिद्धेः । कार्यत्वावच्छिन्नं प्रति प्रवृत्तित्वादिरूपव्याप्यधर्मसत्त्वे कृतित्वेनापि कारणत्वं न स्यादत उक्तमगृहीतेति । कार्यत्वावच्छिन्नं प्रति जन्यकृतित्वरूपव्याप्यधर्मसत्त्वे कृतित्वेनापि कारणता न स्यादत उक्तं लघ्विति । अन्यथा घटत्वावच्छिन्नं प्रति दण्डत्वेनेव द्रव्यत्वादिनापि कारणत्वापत्तेरित्यवश्यं चेष्टात्वेनैव कारणताङ्गीकरणीयेत्यस्वरसादाचार्यानुयायिनां मतमुत्थापयति—**आचार्येति** ॥ **वैजात्याङ्गीकारादिति** ॥ तथा च परमाणुक्रियारूपचेष्टाबलादेव द्व्यणुका-

## प्रभा.

हेतुत्वं सिध्यतीति ईश्वरस्य नित्यशरीरापत्त्यभावात् । अपरे तु तादृशान्वयव्यतिरेकाभ्यां चेष्टात्वेन हेतुत्वमस्तु परमाणुक्रियायां चेष्टात्वरूपवैजात्याङ्गीकारेण तदाश्रयतया परमाणूनामेव तच्छरीरत्वाभ्युपगमात् । शरीरलक्षणे अन्त्यावयवित्वानिवेशात् । एतेन ईश्वरस्यातिरिक्तशरीराङ्गीकारे तस्य महत्त्वे पाषाणान्तर-वृत्तिफेकशरीरोत्पादकत्वानुपपत्तेः, तस्य पाषाणप्रवेशासम्भवात् । अणुत्वे तु दूरस्थकार्योत्पादकत्वानुप-पत्तिरिति दूषणस्य नावकाश इति वदन्ति । तदसत्, उक्तदोषेण कार्यमात्रं प्रति चेष्टात्वेन हेतुत्वासम्भवात् । चेष्टात्वस्य जातिरूपत्वाभावेन उपाधिरूपचेष्टात्वस्य परमाणुक्रियासाधारणत्वाभावेन च परमाणूनां तच्छरीरत्वा-सम्भवाच्च । यत्तु कार्यत्वहेतुकानुमाने शरीरजन्यत्वमुपाधिः, तस्य दृष्टान्ते साध्यव्यापकत्वात् द्व्यणुकादौ साध-नाव्यापकत्वाच्च । न च द्व्यणुकादौ साध्यसन्देहेन उपाधेस्साध्यव्यापकत्वसंशयान्नोपाधित्वनिश्चय इति, तथापि सन्दिग्धोपाधित्वस्य दुर्वारत्वात्। न च हेतौ, पक्षे साध्यसन्देहाधीनव्यभिचारसंशयस्याप्रतिबन्धकत्वमितिवाच्यम्। अनुकूलतर्काभावे पक्षीयव्यभिचारसंशयस्यापि प्रतिबन्धकत्वात् । अत एव अनुकूलतर्कविरहे पक्षेतरत्वस्य सन्दिग्धोपाधित्वमिति ग्रन्थकृतां लेखनमपि सङ्गच्छत इति । तन्न, कार्यत्वकृतित्वाभ्यां कार्यकारणभावरूपानु-कूलतर्कबलात् कार्यत्वस्य कृतिजन्यत्वव्याप्यत्वनिर्णयेन, कृतिजन्यत्वव्याप्यकार्यत्वरूपसाधनाव्यापकत्वेन हेतुना

## दिनकरीयम्.

लक्षणेऽन्त्यावयवित्वस्यानिवेशाच्च न परमाणूनां शरीरत्वानुपपत्तिः । न च नानापरमाणूनां शरीरत्वक-ल्पने गौरवाल्लाघवेन तस्यातिरिक्तत्वसिद्धिरिति वाच्यं, तच्छरीरस्य महत्त्वेऽभुग्नस्य तस्य पाषाणादौ प्रवेशा-संभवेन पाषाणान्तर्वर्तिभेकशरीरोत्पादकतानुपपत्तेः । अणुत्वे च दूरस्थकार्योत्पादकत्वानुपपत्तेरित्याहुरित्यलं पल्लवैरिति । यत्तु पूर्वोक्तस्थापनानुमाने शरीरजन्यत्वमुपाधिः, तस्य घटादौ साध्यव्यापकत्वात् अङ्कुरादौ सा-धनाव्यापकत्वाच्च । नचाङ्कुरादौ सकर्तृकत्वरूपसाध्यसन्देहेनोपाधेः साध्यव्यापकत्वसंशयान्नोपाधित्वनिश्चय इति वाच्यं, तथापि सन्दिग्धोपाधित्वस्य दुर्वारत्वात् । न चोपाधिसन्देहाहितो व्यभिचारसन्देहः पक्षीय-

## रामरुद्रीयम्.

द्रिूपतत्तत्कार्योत्पत्तिसम्भवेन तदनुरोधेन नेश्वरस्य परमाण्वतिरिक्तशरीरसिद्धिरिति भावः । ननु शरीरक्रियाया एव चेष्टात्वेन परमाणौ च चेष्टावदन्त्यावयवित्वरूपशरीरत्वविरहेण, कथं परमाणुक्रियायां चेष्टात्वाङ्गीकारसम्भवः, द्रव्यान्तरानारम्भकत्वे सत्यवयवित्वमेव हि अन्त्यावयवित्वं, तच्च परमाणोर्द्व्यणुकारम्भकत्वादवयवित्वाभावाच्च । चेष्टावत्त्वमात्रस्य शरीरलक्षणत्वे तु हस्तादावपि शरीरमिति व्यवहारापत्तिरित्याशङ्कायामाह—**शरीरलक्षण इति । शरीरत्वानुपपत्तिरिति** ॥ तथा च हस्तादौ शरीरव्यवहारे इष्टापत्तिरेवेति भावः । यद्वा शरीर-लक्षणेऽन्त्यावयवित्वस्थाने द्रव्यारम्भकावयविभिन्नत्वमेवोपादेयं । तथा च हस्तादौ न शरीरव्यवहाराप-त्तिस्तस्य शरीररूपद्रव्यारम्भकत्वात् , न वा परमाणूनां शरीरत्वानुपपत्तिस्तेषामवयवित्वाभावादिति तु परमार्थः । **अतिरिक्तत्वसिद्धिरितीति** ॥ नानाधिकरणेष्वभावत्वकल्पने गौरवात् यथाधिकरणा-तिरिक्ताभावसिद्धिर्लाघवात्, तद्वत्प्रकृतेऽपीति भावः । **दूरस्थकार्येति** ॥ ईश्वरस्याणुरूपैकशरीरांगीकारे तच्चेष्टया युगपन्नानादूरदेशस्थकार्योत्पत्तेरसम्भवोद्देशान्तरस्थचेष्टया देशान्तरस्थावयवेषु क्रियोत्पत्तेरसम्भवादि-ति भावः । **स्थापनानुमान इति** ॥ जन्यं कृतिजन्यं कार्यत्वादित्यनुमान इत्यर्थः । अङ्कुरा-दिकं कर्त्रजन्यं शरीराजन्यत्वादित्यनुमानस्यापि पूर्वमुक्तत्वेन तद्व्यावृत्त्यर्थं स्थापनपदम् । स्वव्यवस्थाप-नीयसाध्यसाधकमिति तदर्थः । **साधनाव्यापकत्वाच्चेति** ॥ इदं च स्वमतानुसारेण, आचार्यानुयायिनां मते त्वंकुरादेरपि परमाणुरूपेश्वरशरीरजन्यत्वादिति मन्तव्यम् । **सन्दिग्धोपाधित्वस्येति** ॥ उपाधि-निश्चये हि हेतौ सोपाधिकत्वहेतुना व्यभिचारनिश्चय एव सम्भवति । उपाधिसन्देहे च व्यभिचार-सन्देह आवश्यकः, व्याप्यसन्देहेन व्यापकसन्देहस्यानुभवसिद्धत्वात् । व्यभिचारस्य हि ज्ञानसामान्यं व्याप्तिज्ञानप्रतिबन्धकमिति संदिग्धोपाधित्वस्यापि दूषकत्वादिति भावः । ननूपाधिसन्देहाहितो व्यभि-चारसन्देहः पक्षान्तर्भावेनैवांगीकरणीयः, घटादौ साध्यनिश्चयेन साध्यसन्देहासम्भवात् । स च

**कार्यकारणभाव एवानुकूलस्तर्कः । 'द्यावाभूमी जनयन् देव एको विश्वस्य कर्ता भुवनस्य गोप्ता' इत्यादय आगमा अप्यनुसन्धेयाः ॥ * ॥**

## प्रभा.

शरीरजन्यत्वरूपोपाधौ कृतिजन्यत्वाव्यापकत्वानुमानात् । एतावता प्रबन्धेन ईश्वरं प्रसाध्य वेदोऽपि ईश्वरे प्रमाणमित्याह—**द्यावाभूमीति** ॥ इत्याद्यागमा इत्यत्रादिपदात् 'यस्सर्वज्ञः ससर्वविद्ब्रह्मैव परमात्मा, विज्ञानं ब्रह्म, आनन्दो ब्रह्म' इत्यादीनां परिग्रहः। एवं आयोजनत्वादिहेतुकानुमानान्यपि ईश्वरसाधकानि भवन्ति तथा हि आयोजनत्वं कर्मत्वं, तथाच मेघादिसञ्चारः प्रयत्नजन्यः कर्मत्वात्, मेघादीनां पतनाभावः

## दिनकरीयम्.

व्यभिचारसन्देह एव स च न प्रतिबन्धक इति वाच्यम्। पक्षतत्समयोर्व्यभिचारसंशयस्यापि प्रतिबन्धकत्वात्। अत एवानुकूलतर्कविरहदशायां पक्षेतरत्वं सन्दिग्धोपाधिरित्यभिधानं ग्रन्थकृतां सङ्गच्छत इति । तन्न । कार्यत्वेन कृतित्वेन कार्यकारणभावरूपस्यानुकूलतर्कस्य सत्त्वेन, कार्यत्वरूपहेतोः साध्यव्याप्यत्वनिश्चयेन साध्यव्याप्याव्यापकत्वेनोपाधौ साध्याव्यापकत्वनिश्चयादिति । एवं चोक्तानुमानेनेश्वरसिद्धौ तदुच्चरितत्वेन वेदस्य प्रामाण्यनिश्चयाद्वेदोऽपि ईश्वरे प्रमाणमित्याह । **द्यावाभूमी जनयन्निति । इत्यादय इति** । आदिना 'ईश्वरमुपासीत' 'यः सर्वज्ञस्स सर्वविद्यस्य ज्ञानमयं तपः' 'सोऽकामयत' इत्यादीनां परिग्रहः । कार्यानुमानं चोपलक्षणम् । सर्गाद्यकालीनद्व्यणुकप्रयोजकं कर्म प्रयत्नजन्यं, कर्मत्वात् । गुरुत्ववतां पतनाभावः, पतनप्रतिबन्धकप्रयत्नप्रयुक्तः, धृतित्वात् । ब्रह्माण्डनाशः प्रयत्नजन्यः, नाशत्वात् । घटादिव्यवहारः स्वतन्त्रपुरुषप्रयोज्यः, व्यवहारत्वात् आधुनिककल्पितव्यवहारवत् । वेदजन्यप्रमा वक्तृयथार्थज्ञानजन्या, शाब्दप्रमात्वात् । वेदः असंसारिपुरुषप्रणीतः, वेदत्वात् । वेदः पौरुषेयः वाक्यत्वात् । द्व्यणुकपरिमाणजनिका संख्या, अपेक्षाबुद्धिजन्या एकत्वान्यसंख्यात्वादित्यनुमानान्तराण्यपि साक्षात्परंपरया वा ईश्वरसाधकानि बोध्यानीति । तदुक्तम् । 'कार्यायोजनधृत्यादेः पदात्प्रत्ययतः श्रुतेः । वाक्यात्संख्याविशेषाच्च साध्यो विश्वजिदव्ययः' इति । आयोजनं कर्म । पद्यते गम्यते अनेनेति पदं व्यवहार इति सङ्क्षेपः ॥ * ॥

## रामरुद्रीयम्.

न व्याप्तिज्ञानप्रतिबन्धकः पक्षान्तर्भावेन व्यभिचारसन्देहस्य तदप्रतिबन्धकत्वात्, अन्यथाऽनुमितेः पूर्वं सर्वत्रैव पक्षे साध्यसन्देहसंभवेन तत्र च हेतोर्निश्चयादनुमानमात्रोच्छेदप्रसंगात् । तस्मात्साध्याभावांशे निश्चयात्मकं वृत्तित्वांशे संशयनिश्चयसाधारणं व्यभिचारज्ञानं प्रतिबन्धकमित्यास्थेयम्। प्रकृते च तादृशव्यभिचारसंदेहासंभवात्कथं सन्दिग्धोपाधेर्दूषकतेत्याशंकते—**न चेति** ॥ **पक्षतत्समयोरिति** ॥ पक्ष उद्देश्यतावच्छेदकावच्छिन्नः तत्समस्तु तद्भिन्नत्वे सति साध्यसन्देहाक्रान्तः । **प्रतिबन्धकत्वादिति** ॥ न चैवमुक्तरीत्याऽनुमानमात्रोच्छेदापत्तिरिति वाच्यम् । धूमो यदि वह्निव्यभिचारी स्यात्तर्हि वह्निजन्यो न स्यादित्यनुकूलतर्केण व्यभिचारसन्देहस्यासम्भवादिति भावः । प्रकृतार्थे ग्रन्थकृतां सम्मतिमाह—**अत एवेति** ॥ **अनुकूलतर्कस्य सत्त्वेनेति** ॥ अनुकूलतर्काभावविशिष्टव्यभिचारसन्देहस्यैव व्याप्तिनिश्चयप्रतिबन्धकत्वादिति भावः। **निश्चयादिति** ॥ उपाधित्वसन्देहासम्भवादिति शेषः । नन्वनुमानेनैवेश्वरसाधने तत्प्रतिपादकोपनिषद्भागस्याध्ययनवैफल्यमित्याशङ्कामपनेतुं वेदस्यापि प्रमाणताबोधकं मूले द्यावाभूमी इत्यादि श्रुतिप्रदर्शनमवतारयति—**एवमिति । यः सर्वज्ञ इति** ॥ सामान्यरूपेण सर्वविषयकज्ञानवानित्यर्थः । सामान्यरूपेण सर्वविषयकज्ञानवत्त्वं जीवानामपीत्यतः—**सर्वविदिति** ॥ विशेषरूपेणापि सर्वविषयकज्ञानवानित्यर्थः । **तपः** चान्द्रायणादिवत्पापक्षयसाधनमित्यर्थः । **कार्यानुमानमिति** ॥ कार्यपक्षकानुमानमित्यर्थः । कार्यायोजनेत्यादि कारिकायामपि कार्यादिपदं तत्पक्षकानुमानपरम् । अत्र च ब्रह्माण्डनाशः प्रयत्नजन्य इत्यनुमानस्य कृत्यनुमानद्वारा ईश्वरसाधकत्वं । घटादिव्यवहारः स्वतन्त्रपुरुषप्रयोज्य इत्याद्यनुमानं तु साक्षादीश्वरसाधकमिति बोध्यम् ॥ * ॥

**द्रव्यं गुणस्तथा कर्म सामान्यं सविशेषकम्।**
**समवायस्तथाऽभावः पदार्थाः सप्त कीर्तिताः॥ २॥**

पदार्थान्विभजते। **द्रव्यमिति**॥ अत्र सप्तमस्याभावत्वकथनादेव षण्णां भावत्वं प्राप्तं

## प्रभा.

प्रयत्नजन्यः धृतित्वात्, प्रपञ्चनाशः प्रयत्नजन्यः नाशत्वात्, घटपदं घटे पुरुषविशेषसङ्केतितं पदत्वात् नदीवृद्ध्यादिपदवत्, वेदवाक्यजन्यप्रमा यथार्थतात्पर्यज्ञानजन्या शाब्दप्रमात्वात्, वेदः अशरीरिपुरुष-प्रणीतः वेदत्वात्, वेदः पुरुषकर्तृकः वाक्यत्वात्, द्व्यणुकपरिमाणजनिका संख्या अपेक्षाबुद्धिजन्या एकत्वान्यसंख्यात्वात् इति नवानुमानानीश्वरसाधकानि आचार्योक्तानीति वेदितव्यानि। इदानीं संसारमहीरुहस्येत्यत्र संसारशब्देन जननमरणप्रवाहविशिष्टपदार्थमात्रस्योपस्थितौ विशेष्यतया पदार्थत्वेन पदार्थमात्रस्योपस्थितत्वात् प्रसङ्गसङ्गत्या मूले पदार्थान्निरूपयति—**द्रव्यं गुण इति**॥ यत इत्यादिः। पदार्थ इत्यस्य विपरिणामेन द्रव्यादिषु प्रत्येकमन्वयः। तेन यतः द्रव्यादिकं पदार्थः अतः पदार्थास्सप्तेत्यन्वयो लभ्यते। न च विशेषसहितसामान्यस्यैव सामान्यं सविशेषकमित्यनेन लाभात् कथं पदार्थानां सप्तत्वलाभ इति वाच्यम्। घटवत्कपालं द्रव्यमित्यादौ कपाले अन्वितस्य द्रव्यत्वस्य बाधकाभावेन विशेषणे घटेऽपि यथा अन्वयः, तथा विशेषसहितसामान्ये अन्वितस्य पदार्थत्वस्य बाधकाभावेन विशेषणभूते विशेषेऽप्यन्वयसंभवात्। अथ वा द्रव्यादीनां सर्वेषां प्रत्यक्षसिद्धतया तेषु पदार्थत्वान्वयेऽपि विशेषस्यालीकतया तत्र कथं पदार्थत्वान्वय इत्यत आह—**सविशेषकमिति**॥ विशेषेण सहितं सविशेषं सविशेषमेव सविशेषकमिति विग्रहेण परमाणूनां परस्परभेदसाधकत्वरूपविशेषविशिष्टो विशेष इत्यर्थो लभ्यते, तथा च विशेषपदार्थानङ्गीकारे परमाणूनां परस्परभेदसिद्धिरेव न भवतीति तादृशभेदसिद्ध्यर्थं विशेषपदार्थोऽङ्गीकर्तव्य इति भावः। एवञ्च विशेषस्य प्रत्यक्षसिद्धत्वाभावेऽप्यनुमानप्रमाणसिद्धतया तत्र पदार्थत्वान्वये बाधकाभावेन पदार्थानां सप्तत्वलाभो भवतीति मूलाभिप्रायः। विभागात्मकमेव कर्म न तु विभागजनकमिति भूषणमतं निर्युक्तिकमिति सूचयितुं तथेत्युक्तं। यथा गुणः अतिरिक्तपदार्थः तथा कर्मापीति भावः। अभावस्य भावात्मकत्वमेवेति मीमांसकमतमपि निर्युक्तिकमिति सूचयितुं तथेत्युक्तं, यथा समवायः अतिरिक्तः तथा अभावोऽपीति भावः। युक्तिश्च तत्तन्निरूपणावसरे प्रदर्श्यते। यद्यप्यत्र विभागवाक्यादेव पदार्थविभाजकधर्माणां सप्तत्वं लभ्यते तथापि उत्पन्नज्ञाने अप्रामाण्यज्ञानानुत्पत्त्यर्थं सप्तेति संख्यावाचकपदं प्रयुक्तं, तथाहि ब्राह्मणमानयेत्यत्र एकवचनेन ब्राह्मणस्य एकत्वबोधनेऽपि द्वितीयस्यानयननिषेधालाभेन द्वितीय आनीयतान्न वेति सन्देहः जायते, एकब्राह्मणमानयेत्यत्र तु सङ्ख्यावाचकादिपदानां इतरनिषेधबोधकतया द्वितीयस्य यथा आनयननिषेधलाभः तथा विभागवाक्यात् विभाजकधर्मेषु सप्तत्वलाभेऽपि अष्टत्वादिसंख्यानिषेधालाभेन तादृशधर्मेषु अष्टत्वसंख्यासंशयसम्भवेन उत्पन्नसप्तत्वज्ञाने अप्रामाण्यसंशयसंभवात् तादृशसङ्ख्यानिरासाय सप्तपदं प्रयुक्तमिति। अन्ये विभाजकधर्माः कुतो नोक्ता इत्यत आह—**कीर्तिता इति**॥ तथाच पदार्थविभाजकधर्मेषु द्रव्यत्वाद्यभावत्वान्तपदार्थविभाजकधर्मान्यतमभिन्नत्वन्नास्त्येव कणादेन महर्षिणा तन्मतानुयायिगङ्गेशोपाध्यायेन चाप्रतिपादनादिति भावः।

## दिनकरीयम्.

मूले शिष्यावधानाय—प्रतिजानीते— **द्रव्यं गुण इति**॥ निरूप्यन्त इति शेषः। संयोगापेक्षया कर्मणोऽतिरिक्तत्वं नास्ति इति भूषणकारमतं निराकर्तुं तथेत्युक्तं। यथा गुणः पृथक् पदार्थः तथा कर्मापीत्यर्थः। अभावोऽधिकरणात्मक इति प्राभाकरमतं दूषयितुं पुनस्तथेत्युक्तं, युक्तिश्चाग्रे वक्ष्यते। यद्यपि विभागवाक्यस्य न्यूनाधिकसंख्याव्यवच्छेदकतयैव सप्तसङ्ख्या लब्धा तथापि सप्तग्रहणं स्पष्टार्थम्। नन्वन्ये

## रामरुद्रीयम्.

**प्रतिजानीत इति**॥ स्वकर्तव्यत्वेन निर्देशः प्रतिज्ञा। द्रव्यं गुण इत्यादिकारिकायां द्रव्यादिनिरूपणे स्वकर्तव्यत्वाप्रतिपादनात् प्रतिजानीत इत्यसङ्गतमतः शेषं पूरयति—**निरूप्यन्त इतीति**। **न्यूनाधिकसङ्ख्येति**॥

तेन पृथगुपन्यासो न कृतः। एते च पदार्थाः वैशेषिकनये प्रसिद्धाः नैयायिकानामप्यविरुद्धाः, प्रतिपादितं चैवमेव भाष्ये। अत एवोपमानचिन्तामणौ सप्तपदार्थभिन्नतया शक्ति-

## प्रभा.

ननु ग्रन्थान्तरे भावोऽभावश्चेति पदार्थानां द्वैविध्येन विभागो दृष्टः तथैवात्रापि कुतो न विभागः कृत इत्यत आह—**मुक्तावल्यां सप्तमस्येति । अभावत्वकथनादेवेति** ॥ समवायेनसत्तासंबन्धित्व-एकार्थसमवायेनसत्तासंबन्धित्व — एतदन्यतरत्वावच्छिन्नस्वरूपसंबन्धावच्छिन्नप्रतियोगिताकाभाववत्त्वरूपाभावत्व-ज्ञानजनकशब्दादेवेत्यर्थः। **भावत्वमिति** ॥ स्वरूपसंबन्धेन तादृशान्यतरवत्त्वरूपभावत्वमित्यर्थः। **प्राप्तमिति**। वाचकपदं विनाऽपि उपस्थितमित्यर्थः। **तेनेति** ॥ उपस्थितत्वेनेत्यर्थः। **पृथगुपन्यासः** भावत्वेनापि पृथगुपन्यास इत्यर्थः। ननु द्रव्यत्वाद्यभावत्वान्तपदार्थविभाजकधर्मान्यतमभिन्नाः पदार्थविभाजकधर्माः कथन्न सन्ति गौतमसूत्रतद्भाष्यादिषु पदार्थविभागजनकत्वेन प्रमाणत्वप्रमेयत्वादिषोडशधर्माणां निरूपणादत आह—**एते चेति। वैशेषिकेति**। कणादसूत्रतद्भाष्यादिषु प्रतिपादिता इत्यर्थः। कणादमतप्रसिद्धा इत्यनेन द्रव्यत्वाद्यभावत्वान्तानां पदार्थविभाजकत्वं सयुक्तिकमिति सूच्यते। तथा हि परस्परवैयधिकरण्यापन्नानामेव पदार्थविभाजकत्वं स्वीकार्यम्, अन्यथा पृथिवीत्वादिनापि पदार्थविभागापत्तेः। तथा च प्रमाणत्वादिषोडशधर्माणां परस्परवैयधिकरण्याभावेन प्रमाणत्वादिभिर्विभागोऽनुचित इत्यस्वरसं हृदि निधाय सर्वज्ञेन कणादऋषिणा परस्परवैयधिकरण्यापन्नान् उक्तसप्तधर्मानादाय एतद्धर्मैरेव षोडश्या विभक्तपदार्थानां विभागः कृत इति प्रमाणत्वादीनां पदार्थविभाजकत्वे प्रमाणाभावेनोक्तपदार्थविभाजकधर्मान्यतमभिन्नत्वं पदार्थविभाजकधर्मे अप्रसिद्धमिति नोक्तानुपपत्तिरिति भावः। उक्तार्थे भाष्यकारसम्मतिमाह—**प्रतिपादितमिति** ॥ द्रव्यगुणकर्मसामान्यविशेषसमवायाभावास्सप्तपदार्थाः षोडशपदार्थानामत्रैवान्तर्भूतत्वादिति प्रति-

## दिनकरीयम्.

पदार्थाः कुतो नोक्ता इत्यत आह—**कीर्तिता इति** ॥ तथा चैतेभ्योऽन्ये पदार्थाः न सन्त्येव कणादप्रभृतिभिरनुक्तत्वादिति भावः। नन्वितरेषु ग्रन्थेषु षट् भावपदार्थाः सप्तमस्त्वभाव इति निरूपितं, तथैवात्र कुतो न निरूपितमित्याशङ्क्याह। **मुक्तावल्यां सप्तमस्येति** ॥ अत्र समवायैकार्थसमवायान्यतरसम्बन्धेन सत्तावत्त्वं भावत्वं तदभावोऽभावत्वमिति। **प्राप्तं** अर्थात्प्राप्तं। **तेन** प्राप्तत्वेन। **पृथगुपन्यास इति** ॥ भावत्वेनोपन्यास इत्यर्थः। तेषामिति शेषः। नन्वन्ये पदार्थाः कथं न सन्ति न्यायसूत्रे षोडशपदार्थनिरूपणादित्याशङ्क्य, नैयायिकानामपि मते सप्तपदार्था इत्यविरुद्धं षोडशपदार्थानां सप्तपदार्थेषु अन्तर्भूतत्वादित्याह—**एते चेति**। उक्तार्थे भाष्यसम्मतिमाह। **प्रतिपादितं चेति** ॥ **एवमेवेति** ॥ द्रव्यगुणकर्म-

## रामरुद्रीयम्.

तद्व्यवच्छेदार्थमेव विभागकरणादिति भावः। **कुतो न निरूपितमिति** ॥ पदार्थो द्विविधः भावोऽभावश्च-द्रव्यादयः षट् भावाः, सप्तमस्त्वभाव इति रीत्या कुतो न निरूपितमित्यर्थः। **मूले सप्तमस्येति** ॥ यद्यपि सप्तमस्याऽभावत्वकथनेऽपि तदितरेषां भावत्वं दुर्लभमेव, नह्येकस्य ब्राह्मणत्वे प्रतिपादिते तदितरेषां सर्वेषामब्राह्मणत्वं प्रतिपादितं भवति, तथाप्येतस्य विभागवाक्यतया परस्परासङ्कीर्णव्याप्यधर्मकथनस्यैव विभागरूपतया द्रव्यादीनामभावत्वेऽभावत्वं विभाजकमेव न स्यादिति द्रव्यादीनामभावभिन्नत्वात्परिशेषाद्भावत्वं प्राप्तमिति भावः। **समवायेति** ॥ यद्यपि समवाये समवायघटितसामानाधिकरण्येन न सत्तावत्त्वं, स्वरूपसम्बन्धेनैव तस्य वृत्तेस्तथापि समवायत्वस्य संसर्गतानवच्छेदकत्वेऽपि स्वरूपत्वेन समवायस्यैव स्वसम्बन्धत्वेन, न तस्य समवायेन वृत्तित्वक्षतिरिति मन्तव्यम्। **अर्थात्प्राप्तमिति** ॥ अनुमानात्प्राप्तमित्यर्थः। अनुमानं च द्रव्यादयो भावा अभावत्वव्याधिकरणधर्मवत्त्वादित्येवंरूपम्। न च द्रव्यत्वादौ विभाजकधर्मेऽभावत्ववैयधिकरण्यमेवाप्रसिद्धमिति वाच्यम्। परस्परासमानाधिकरणव्याप्यधर्मरूपेण यावतां सामान्यवतां प्रतिपादनस्यैव विभागरूपतया द्रव्यत्वादीनामभावत्वसामानाधिकरण्ये तेषां विभाजकत्वस्यैवानुपपत्तेरिति

## प्रभा.

पादितमित्यर्थः । अन्तर्भावश्च सुधीभिरूह्यः ग्रन्थविस्तरभिया नास्माभिर्विविच्यते । भाष्यकारसम्मतिमुक्त्वा

## दिनकरीयम्.

सामान्यविशेषसमवायाभावाः सप्तैव पदार्थाः षोडशानामत्रैवान्तर्भावादिति प्रतिपादितमित्यर्थः । कथमन्तर्भाव इति चेदित्थं, प्रमाणस्येन्द्रियादेः द्रव्ये, व्याप्तिज्ञानादेर्गुणे, प्रमेयस्यात्मशरीरेन्द्रियस्वरूपस्य द्रव्ये, अर्थस्य गन्धरसरूपस्पर्शशब्दस्वरूपस्य गुणे, बुद्धेर्गुणे, मनसो द्रव्ये, प्रवृत्तेर्गुणे, दोषाणामिच्छाद्वेषमिथ्याज्ञानस्वरूपाणां रागद्वेषमोहपदप्रतिपाद्यानां गुणे, प्रेत्य मृत्वा, भावो जननमिति व्युत्पत्त्या मरणोत्तरजन्मत्वं प्रेत्यभावपदप्रवृत्तिनिमित्तं, चरमप्राणशरीरसंयोगध्वंसो मरणं, आद्यशरीरप्राणसंयोगो जन्म, तथा च मरणानन्तरं तादृशसंयोगरूपस्य तस्य गुणे, सुखदुःखसंवेदनस्वरूपस्य मुख्यफलस्य गुणे, गौणमुख्यसाधारणजन्यमात्रस्वरूपफलस्यापि द्रव्यादिषु, पीडालक्षणस्य दुःखस्य गुणे अन्तर्भावः । अपवर्गस्तु आत्यन्तिकी दुःखनिवृत्तिः—दुःखानि, शरीरं षडिन्द्रियाणि षड्विषयाः षड्बुद्धयः सुखं दुःखं चेत्येकविंशतिः। तत्र दुःखत्वजातिशून्ये शरीरादौ दुःखसम्बन्धितया गौणं दुःखत्वं, स्वर्गादिसुखस्यापि तन्नाशज्ञानेन दुःखसम्बन्धित्वमव्याहतमेव । नचैकविंशतिदुःखान्तर्गतयोर्मनःश्रवणयोर्नित्यत्वात् कथं तन्नाश इति वाच्यम् । यद्रूपविशिष्टस्य श्रवणस्य ज्ञानद्वारा दुःखहेतुतया दुःखत्वं, तद्रूपस्य कर्णशष्कुल्या नाशे तद्विशिष्टश्रवणेन्द्रियरूपदुःखनाशात्। एवमात्मसंयोगरूपव्यापारविशिष्टस्यैव मनसो ज्ञानद्वारा दुःखहेतुतया, दुःखत्वं, व्यापारनाशेन तद्विशिष्टमनोरूपदुःखनाशसंभवादिति । दुःखनिवृत्तावात्यन्तिकत्वं च स्वसमानाधिकरणदुःखासमानकालीनत्वम् । नन्वेतादृशदुःखध्वंसस्य मुक्तित्वे कथं तत्त्वज्ञानसाध्यता तस्येति चेत्, इत्थं, तत्त्वज्ञानेन मिथ्याज्ञानवासनानाशः, वासनानाशे च दोषस्य वासनाविशिष्टरागादेरभावः विशेषणाभावे विशिष्टाभावात्, तादृशरागादिरूपहेत्वभावे च प्रवृत्तेर्धर्माधर्मरूपाया अभावोऽनुत्पत्तिः, तदनुत्पादे प्रारब्धकर्माधीनदेहान्यदेहसम्बन्धरूपजन्माभावः, भोगतत्त्वज्ञानाभ्यां प्रारब्धतद्भिन्नकर्मनिवृत्तिरिति । जन्माभावे दुःखानुत्पादः, तथा च स्वसमानाधिकरणदुःखासमानकालीनत्वरूपविशेषणांशे तत्त्वज्ञानस्य प्रयोजकत्वान्मुक्तेस्तत्त्वज्ञानसाध्यत्वं, तथा च सूत्रं 'दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः' इति, अस्यार्थः—पठितेषु जन्मादिषु मध्ये

## रामरुद्रीयम्.

भावः । **चरमेति** ॥ प्राणशरीरसंयोगे चरमत्वञ्च स्वसजातीयशरीरवृत्तिप्राणसंयोगप्रागभावानधिकरणत्वम्, एवमाद्यत्वमपि तथाविधप्राणसंयोगध्वंसानधिकरणत्वमिति बोध्यम् । **गौणमिति** ॥ लाक्षणिकमित्यर्थः । **दुःखत्वम्** ॥ दुःखपदप्रतिपाद्यत्वं । दुःखसंबन्धस्तु जनकत्वादिरूप इति भावः । ननु दुःखसंबन्धित्वाद्दुःखत्वं सुखे न संभवति, तस्य दुःखासंबन्धित्वात् । न च सुखस्यापि दुःखसमानाधिकरणत्वात्तत्त्वमक्षतमिति वाच्यम् । तथासत्यात्यंतिकदुःखनिवृत्तेरपि पूर्वतनदुःखसमानाधिकरणत्वेन दुःखत्वापत्तेः । न च स्वसमानाधिकरणदुःखासमानकालीनत्वादिरूपो दुःखसंबन्धो नोक्तनिवृत्तौ, अस्मदादिसुखे च तादृशदुःखसमानकालीनत्वात्तदक्षतमेवेति वाच्यम् । तथापि स्वर्गीयसुखे 'यन्न दुःखेन संभिन्नम्' इत्यादिश्रुतिविरोधेन तथात्वस्य स्वीकर्तुमशक्यतया तस्य दुःखत्वं न संभवत्येवेत्याशङ्कामपनेतुमाह—**स्वर्गादिसुखस्येति** ॥ तथा च यन्न दुःखेनेत्यादिश्रुतौ दुःखपदं स्वर्गनाशज्ञानजन्यदुःखातिरिक्तदुःखपरमिति न विरोध इति भावः । **व्यापारनाशेनेति** ॥ मनःक्रियया मनःसंयोगरूपव्यापारनाशेनेत्यर्थः । यद्यपि भाविमुक्तिदशायामपि मनःसंयोगान्तरं वर्तत एव तथापि तस्य न व्यापारत्वं, पुरीतद्भिन्नदेशावच्छिन्नमनःसंयोगस्यैव ज्ञानसाधनत्वेन तथात्वान्मुक्तौ च शरीराभावादिति भावः । **स्वसमानाधिकरणेति** ॥ शुकादिमुक्तावव्याप्तिवारणाय दुःखे स्वसामानाधिकरण्यनिवेशः । इदानींतनास्मदादिदुःखध्वंसेऽतिव्याप्तिवारणायासमानकालीनत्वांतनिवेशः। नन्वेतावता चरमदुःखध्वंसो मुक्तिरित्यायातं, चरमदुःखस्यापि योग्यविभुविशेषगुणत्वेन स्वोत्तरोत्पन्नविशेषगुणमात्रेणैव नाशसम्भवान्मुक्त्यर्थं तत्त्वज्ञानापेक्षा न स्यादित्याशङ्कते । **नन्वित्यादिना** ॥ सूत्रार्थमाह—**अस्यार्थ इति** ॥ नन्वनन्तरपदस्योत्तरार्थकतया दुःखाभावे जन्माभावस्य प्रयोजकत्वं न स्यात्, दुःखजन्मेत्या-

## प्रभा.

तन्मतानुसारिन्यायप्रवर्तकानां गङ्गेशोपाध्यायानां सम्मतिमप्याह—**अत एवेति** ॥ द्रव्यत्वाद्यभावत्वान्त-

## दिनकरीयम्.

उत्तरोत्तराणामपाये, तदनन्तराभावादव्यवहितपूर्वाभावात्। तथा च तत्त्वज्ञानेन मिथ्याज्ञानस्य नाशः तेन दोषाणां नाशः तेन प्रवृत्तेरनुत्पादः तेन जन्मानुत्पादस्तेन दुःखानुत्पाद इति पूर्वोक्त एवार्थः पर्यवसितः। एकविंशतिदुःखनाशस्तु स्वकारणसाध्यो, न तत्र तत्त्वज्ञानस्य प्रयोजकतेति वदन्ति। नव्यास्तु योग्यविभुविशेषगुणनाशं प्रति स्वोत्तरवर्तिगुणानां कारणत्वात्, स्वोत्तरोत्पन्नगुणेनैव दुःखध्वंसरूपमुक्तिसंभवेन न तत्र तत्त्वज्ञानापेक्षेति दुःखपदं दुःखसाधनदुरितपरतया व्याख्येयं दुरितस्य च योग्यगुणत्वाभावान्न स्वोत्तरवृत्तिगुणनाश्यतेति तन्नाशरूपमुक्तेस्तत्त्वज्ञानसाध्यत्वमेवेत्याहुः। तथा चैतादृशापवर्गस्याभावे, संशयस्य गुणे, साध्यतया इच्छाविषयरूपप्रयोजनस्य यथायथं द्रव्यादिषु, तत्तच्छास्त्रसिद्धार्थरूपस्य सिद्धान्तस्य द्रव्यादिषु, शब्दस्वरूपप्रतिज्ञाद्यन्यतमरूपाणामवयवानां गुणे, व्याप्यारोपेण व्यापकारोपस्य तर्कस्य गुणे, निर्णयस्य गुणे, तत्त्वबुभुत्सोः कथारूपवादस्य गुणे, विजिगीषुकथारूपजल्पस्य गुणे, स्वपक्षस्थापनाहीनकथारूपवितण्डायाः गुणे, अनुमितितत्कारणज्ञानान्यतरप्रतिबन्धकज्ञानविषयरूपाणां हेत्वाभासानां यथायथं द्रव्यादिषु, अभिप्रायान्तरेण

## रामरुद्रीयम्.

दिसूत्रपठिते जन्माभावे प्रवृत्त्यभावस्याप्रयोजकतया, सूत्रार्थानुपपत्तिश्चेत्याशङ्कानिरासायानन्तरपदस्याव्यवहितपूर्वार्थकतामाह। **अव्यवहितपूर्वाभावादिति** ॥ वदन्तीत्यस्वरसोद्भावनं, तद्बीजं तु विशेष्याप्रयोजकस्यापि विशेषणांशे प्रयोजकतामादाय विशिष्टप्रयोजकत्वोपगमे धूमो वह्निप्रयोजक इतिवद्वह्निमत्पर्वतप्रयोजक इति व्यवहारापत्तिरेव। **स्वोत्तरवर्तिगुणानामिति** ॥ उत्पत्तिसम्बन्धेन स्वोत्तरवर्तिविशेषगुणानामित्यर्थः। तेन स्वस्यापि स्वोत्तरवर्तित्वेऽपि न ज्ञानादीनां क्षणिकत्वापत्तिः। न वा द्वितीयक्षणोत्पन्नघटादिसंयोगेनैवापेक्षाबुद्धेर्नाशापत्तौ द्वित्वादीनां क्षणत्रयावस्थायित्वासंभवेन, स्वोत्पत्तिद्वितीयक्षणोत्पन्ननिर्विकल्पकेन स्वतृतीयक्षण एव द्वित्वप्रत्यक्षस्य वक्तव्यतया तदानीं च द्वित्वाभावात्तत्प्रत्यक्षानुपपत्तिः। न च प्रत्यक्षे विषयस्य कारणत्वेऽपि द्वितीयक्षणे द्वित्वसत्त्वात् तृतीयक्षणे तत्प्रत्यक्षोत्पत्तौ किं बाधकमिति वाच्यम्। प्रत्यक्षे विषयस्य कार्यकालवृत्तितया कारणत्वात्, नाशोत्पत्तिक्षणे प्रतियोगिप्रत्यक्षस्यानुभवविरुद्धत्वात्। द्वित्वादीनां क्षणत्रयावस्थायित्वे तु तृतीयक्षणे द्वित्वप्रत्यक्षे न काप्यनुपपत्तिः। न च विशेषगुणत्वेन कारणत्वेऽपि द्वित्वोत्पत्तिक्षणोत्पन्नज्ञानादिनाऽपेक्षाबुद्धिनाशे तृतीयक्षणे द्वित्वनाशापत्त्या द्वित्वप्रत्यक्षानुपपत्तितादवस्थ्यमिति वाच्यम्। द्वित्वाद्युत्पत्तिक्षणे विशेषगुणोत्पत्त्यनङ्गीकारात्। विशेषगुणं प्रत्युत्पत्तिक्षणावच्छिन्नद्वित्वकारणापेक्षाबुद्धिव्यक्तेः प्रतिबन्धकतामङ्गीकृत्यैव द्वितीयक्षणे तदनङ्गीकारसम्भवादिति ध्येयम्। न चैवमपि सुषुप्तिप्राक्कालोत्पन्नविशेषगुणानां नाशानुपपत्तिरिति वाच्यम्। तत्रागत्या स्वोत्तरवर्तित्वविशिष्टस्य स्वस्यैव नाशकत्वाभ्युपगमात्। सर्वत्र स्वोत्तरवृत्तित्वेन नाशकत्वे अपेक्षाबुद्धेस्तृतीयक्षणे स्थायित्वानुपपत्तिरिति बोध्यम्। वस्तुतस्तु प्रकृते स्वोत्तरवर्तित्वं स्वध्वंसाधिकरणक्षणवृत्तित्वमेव। तथा च समवायेन नाशकत्वाभ्युपगमेऽपि प्रतिबन्धकत्वाकल्पने क्षत्यभावेन लाघवादिति। **दुरितपरतयेति** ॥ तथा च पापध्वंस एव मुक्तिर्न दुःखध्वंस इति नोक्तानुपपत्तिः। ननु पापस्याप्यात्मविशेषगुणत्वेन स्वोत्तरोत्पन्नगुणेनैव तन्नाशसम्भवात्कथं पापध्वंसस्यापि तत्त्वज्ञानसाध्यतेत्याशङ्कामपनेतुं नाश्यतावच्छेदककोटौ योग्यतां निवेश्य स्वोत्तरवर्तिगुणनाश्यतां वारयति—**दुरितस्य चेति** ॥ न च पापस्य स्वोत्तरवर्तिगुणनाश्यत्वे इष्टापत्तिसम्भवेन नाश्यतावच्छेदककोटौ योग्यतानिवेशो व्यर्थ इति वाच्यम्। तथासति पापस्य प्रायश्चित्तनाश्यताबोधकश्रुतिविरोधापत्तेरिति भावः। न चैवं पापस्य प्रायश्चित्तेनापि नाश्यतया कथं मुक्तिं प्रति तत्त्वज्ञानत्वेन कारणता प्रायश्चित्तजन्यपापध्वंसे व्यभिचारादिति वाच्यम्। तादृशव्यभिचारवारणायैव स्वसमानाधिकरणदुरितासमानकालीनत्वरूपात्यन्तिकत्वस्य कार्यतावच्छेदककोटौ प्रवेशितत्वात्। न चैवं पापध्वंसे न तत्त्वज्ञानस्य प्रयोजकता किन्तु तद्विशेषणीभूतस्वसमानाधिकरणदुरितासमानकालीनत्व एवेति प्राचीनमतादविशेष इति वाच्यम्। ध्वंसव्यक्तीनां परस्परभिन्नत्वेन प्रायश्चि-

## प्रभा.

धर्माणां पदार्थविभाजकत्वस्वीकारादेवेत्यर्थः । **सप्तपदार्थभिन्नतयेति** ॥ द्रव्यत्वादिसप्तान्यतमप्रतियोगि-

## दिनकरीयम्.

प्रयुक्तशब्दस्यार्थान्तरं परिकल्प्य दूषणाभिधानरूपस्य छलस्य गुणे, असदुत्तररूपजातेर्गुणे, पराजयहेतुस्वरूप-निग्रहस्थानानां यथायथं द्रव्यादिष्वन्तर्भावः । निग्रहस्थानानि—प्रतिज्ञाहानिः, प्रतिज्ञान्तरं, प्रतिज्ञाविरोधः प्रतिज्ञासंन्यासो, हेत्वन्तरमर्थान्तरं, निरर्थकमविज्ञातार्थकमपार्थकमप्राप्तकालं, न्यूनमधिकं, पुनरुक्तमननुभाषणम-ज्ञानमप्रतिभा, विक्षेपो, मतानुज्ञा, पर्यनुयोज्योपेक्षणं,निरनुयोज्यानुयोगोऽपसिद्धान्तो, हेत्वाभासाश्च । अत्र चका-रोऽनुक्तसमुच्चयार्थस्तेन दृष्टान्ते साधनवैकल्यादीनां परिग्रहः । तत्र विशिष्यप्रतिज्ञातस्य पक्षादेः परित्यागरूप-प्रतिज्ञाहानेरभावे, परोक्तदोषोद्दिधीर्षया पूर्वानुक्तविशेषणविशिष्टतया प्रतिज्ञातार्थकथनरूपस्य प्रतिज्ञान्तरस्य गुणे, स्वोक्तसाध्यादिविरुद्धहेत्वादिकथनरूपप्रतिज्ञाविरोधस्य गुणे, स्वोक्तसाध्यादेः परेण दूषणे कृते तत्साध्याप-लापरूपस्य प्रतिज्ञासंन्यासस्याभावे, परोक्तदूषणोद्दिधीर्षया पूर्वोक्तहेतुतावच्छेदकातिरिक्तहेतुतावच्छेदकविशिष्ट-हेतुकथनरूपस्य हेत्वन्तरस्य गुणे, प्रकृतानाकाङ्क्षिताभिधानरूपार्थान्तरस्य गुणे, अवाचकपदप्रयोगरूपनिरर्थकस्य गुणे, अवाचकवाक्यप्रयोगरूपाविज्ञातार्थस्य गुणे, अभिमतवाक्यार्थबोधानुकूलाकाङ्क्षाशून्यपदप्रयोगरूपस्यापार्थ-कस्य गुणे, समयनिबन्धनविषयीभूतकथाक्रमविपरीतक्रमेणाभिधानरूपस्याप्राप्तकालस्य गुणे, यत्किंचिदवयव-शून्यावयवाभिधानरूपस्य न्यूनस्य गुणे, अधिकहेत्वाद्यभिधानरूपस्याधिकस्य गुणे, पुनरभिधानरूपस्य पुन-रुक्तस्य गुणे, परिषदा विरभिहितस्याप्यप्रत्युच्चारणरूपस्याननुभाषणस्याभावे, परिषदा विज्ञातार्थस्य वादिना त्रिरभिहितस्याप्यविज्ञानरूपस्याज्ञानस्याभावे, उत्तरार्हे परोक्तं बुद्ध्वाऽप्युत्तरस्याप्रतिपत्तिरूपाया अप्रतिभायाः अभावे, असम्भवत्कालान्तरकार्यव्यासङ्गमुद्भाव्य कथाविच्छेदरूपस्य विक्षेपस्याभावे, स्वपक्षे दोषमनुद्धृत्य पर-पक्षे दोषाभिधानरूपमतानुज्ञाया गुणे, निग्रहस्थानं प्राप्तवतो निग्रहस्थानानुद्भावनरूपस्य पर्यनुयोज्योपेक्ष-णस्याभावे, निग्रहस्थानानवसरे तन्निग्रहस्थानाभिधानरूपस्य निरनुयोज्यानुयोगस्य गुणे, कथायां स्वीकृत-

## रामरुद्रीयम्.

तज्जन्यपापध्वंसव्यक्तौ तत्वज्ञानजन्यत्वासम्भवेऽपि तत्वज्ञानाव्यवहितोत्तरपापध्वंसव्यक्तौ तत्वज्ञानजन्यत्वे बाध-काभावादिति भावः । यद्यप्येवं सति तत्त्वज्ञानानुत्तरदुःखव्यक्तिनाशे तत्त्वज्ञानजन्यत्वासम्भवेऽपि तत्त्वज्ञानोत्तर-तद्व्यक्तौ तज्जन्यत्वसम्भवेन प्राचीनमतेऽपि न दोषस्तथाप्येतदस्वरसेनैवाहुरित्युक्तम् । तथा च दुःखध्वंसस्य मुक्तित्वेऽप्युक्तरीत्याऽनुपपत्त्यभावात् दुःखपदस्य दुरितलक्षणाकल्पनं नव्यानां कुकल्पनमेवेत्यस्वरस आहुरित्यनेन सूचितो ग्रन्थकृतेति नानुपपत्तिरिति ध्येयम् । अथ 'ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुतेऽर्जुन' इति स्मृत्या दुरि-तस्य ज्ञाननाश्यत्वबोधनात् पापनाशरूपमुक्तौ तत्वज्ञानसाध्यत्वाङ्गीकारः सम्भवत्येव, दुःखध्वंसस्य तत्वज्ञान-जन्यताबोधकमानाभावेन न तथात्वसम्भव इति चेदिहापि 'तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽ-यनाय' इति श्रुतेरेव प्रमाणत्वसम्भवादात्यन्तिकदुःखनिवृत्तेरेवातिमृत्युशब्दार्थत्वात्,तत्त्वज्ञानोत्तरदुःखव्यक्तेः स्वसा-क्षात्कारेण नाश्यत्वस्येव तत्त्वज्ञानोत्तरं प्रारब्धदुरितव्यक्तीनां भोगनाश्यताया एव स्वीकरणीयत्वेन विशेषा-भावात् श्रुतिबलादेव विशिष्टदुःखध्वंसे तत्त्वज्ञानसाध्यताया व्यवस्थापनसम्भवात् । किं च कर्ममात्रनाशस्यैव तत्त्वज्ञानजन्यत्वेन स्मृतिबोधिततया स्वसमानाधिकरणपुण्यासमानकालीनपुण्यध्वंसस्यापि मुक्तित्वापत्तिः । न चेष्टापत्तिः, सुखदुःखाभावतज्जनकाभावानात्मकत्वेनापुरुषार्थत्वादित्यलं पल्लवितेन । **परित्यागरूपेति** ॥ पक्षादेः परित्यागः पक्षस्य पक्षत्वेन प्रतिपादनाभाव एवेति तस्याभावरूपतेति भावः । **प्रतिज्ञातार्थेति** ॥ सा-ध्येत्यर्थः । **साध्यापलापेति** ॥ साध्यस्यापलापः साध्यत्वेनानुक्तिरेवेति भावः । **अवाचकेति** ॥ डुंफडा-दीत्यर्थः । **अवाचकवाक्येति** ॥ अत्र वाचकत्वं बोधजनकत्वमेव । न तु शक्तिः । वाक्ये तदभावात् । तादृशं वाक्यं भूस्तनं हिमभेषजवदित्यादिकमप्रसिद्धार्थकपदघटितम् । **अपार्थकस्येति** ॥ पर्वतो वह्निरधि-करणमित्यादेरपार्थकस्येत्यर्थः । **असंभवत्कालान्तरेति** ॥ सुतदारादिपरिरक्षणरूपेत्यर्थः । **कथाविच्छेदः** ॥

सादृश्यादीनामतिरिक्तपदार्थत्वमाशङ्कितम् ॥ ननु कथमेत एव पदार्थाः शक्तिसादृश्यादी-

## प्रभा.

ताकभेदवत्तयेत्यर्थः । **शक्तिसादृश्ययोरिति** ॥ शक्तित्वसादृश्यत्वयोरित्यर्थः । **अतिरिक्तपदार्थत्वमिति** ॥ पदार्थविभाजकधर्मत्वमित्यर्थः । तथा च शक्तित्वसादृश्यत्वयोः प्रमाणत्वादिपदार्थविभाजकधर्मभिन्नत्वविशिष्टपदार्थविभाजकधर्मत्वशङ्कामकृत्वा द्रव्यत्वादिपदार्थविभाजकधर्मभिन्नत्वविशिष्टपदार्थविभाजकधर्मत्वाशङ्कया द्रव्यत्वादीनामेव पदार्थविभाजकत्वं तदनुमतमिति लभ्यत इति भावः । ननु तादृशमणिग्रन्थेन द्रव्यत्वाद्यभावत्वान्तानां पदार्थविभाजकत्वस्य तदनुमतत्वलाभेऽपि तत्र शक्तिसादृश्ययोः कया युक्त्या अतिरिक्तपदार्थत्वशङ्का, तादृशशङ्कायाः परिहारो वा कया युक्त्येति शिष्याजिज्ञासायां तन्निवृत्त्यर्थं स्वयमेवाशङ्क्य परिहरति, अथवा ननु प्राभाकरमते शक्तेरतिरिक्तपदार्थत्वात् आलङ्कारिकमते सादृश्यस्यातिरिक्तपदार्थत्वाच्च पदार्थानां सप्तत्वकथनमसङ्गतमिति तटस्थश्शङ्कते—**नन्विति** ॥ केचित्तु मण्यादिसमवहिते सति वह्निना दाहोत्पत्तिवारणाय मण्यादेः कारणविघटकत्वरूपप्रतिबन्धकता वाच्या, सा च वह्निनिष्ठदाहानुकूलशक्तिरूपकारणविघटकतयैव निर्वहतीति मण्यादिप्रतिबन्धकत्वान्यथानुपपत्त्या सिद्धायाश्शक्तेः षड्भावानन्तर्भूतत्वादतिरिक्तत्वमिति पदार्थाः सप्त कीर्तिता इति मूलमयुक्तमित्यभिप्रायेण प्राभाकरश्शङ्कते नन्वितीत्यवतरणिकामाहुः । तदसत्, तन्मते शक्तेरतिरिक्तपदार्थत्वेऽपि सादृश्यस्यातिरिक्तपदार्थत्वाभावात् । उभयोरतिरिक्तपदार्थत्वव्यवस्थापकनन्वित्यादिग्रन्थस्य प्राभाकराभिप्रायकत्वासंभवात् । **एत एवेति** ॥ द्रव्यत्वाद्यभावत्वान्तान्यतमा एवेत्यर्थः । **पदार्था इति** ॥ पदार्थविभाजकधर्मा इत्यर्थः । तेन यथाश्रुते एत एव द्रव्याद्यभावान्तान्यतमा एवेन्येवकारेण द्रव्याद्यभावान्तान्यतमभिन्नानां पदार्थत्वनिषेधप्राप्त्या नैयायिकमते तादृशान्यतमभेदाप्रसिद्ध्या पदार्थत्वस्य केवलान्वयित्वेन पदार्थत्वाभावाप्रसिद्ध्यां च एत एव पदार्था इत्युक्तेरसङ्गतत्वेन कथमित्याशङ्कायास्सुतरामसङ्गतत्वमिति दूषणस्य नावकाशः । तत्र हेतुमाह—**शक्तीति** ॥ शक्तित्व-

## दिनकरीयम्.

सिद्धान्तप्रच्यवनरूपस्यापसिद्धान्तस्याभावे, हेत्वाभासानां पूर्वोक्तलक्षणानां द्रव्यादिष्वन्तर्भाव इति । भाष्यस्यार्षत्वमाशङ्क्य मणिकृतां सम्मतिमाह । **अत एवेति** ॥ मण्यादिसमवधाने सति वह्निना दाहोत्पत्तिवारणाय मण्यादेः कारणविघटकत्वरूपा प्रतिबन्धकता वाच्या, सा च वह्निनिष्ठदाहानुकूलशक्तिरूपकारणविघटकतयैव निर्वहति, मण्यादिप्रतिबन्धकत्वान्यथानुपपत्त्या सिद्धायाः शक्तेः षड्भावेष्वनन्तर्भूतत्वादतिरिक्तत्वमिति 'पदार्थाः सप्त कीर्तिताः' इति मूलमयुक्तमित्यभिप्रायेण प्राभाकारः शङ्कते । **नन्विति । अतिरिक्तेति** ॥ सप्तपदार्थाति-

## रामरुद्रीयम्.

शब्दोच्चारणाभावः । **सिद्धान्तस्य** ॥ तार्किकादिमतसिद्धार्थस्य ! **स्वीकृतस्य** स्वेन साधनीयतयाङ्गीकृतस्य **प्रच्यवः**—अनुपपादनम् । एवं च तस्याभावरूपतेति भावः । **आर्षत्वमाशङ्क्येति** ॥ तथा च भाष्यकारस्य महर्षित्वेन ' तेजस्विनां न दोषाय वह्नेः सर्वभुजो यथा 'इति वचनादनुपपन्नार्थप्रतिपादनं न दोषायेत्यभिप्रायेण मणिकारस्येदानींतनस्यापि तादृशार्थप्रतिपादकता मुक्तावलीकारेणाभिहितेति भावः॥ **षड्भावेष्विति** । शक्तेः द्रव्ये नान्तर्भावः—स्पर्शशून्यत्वात् पृथिव्यादिचतुष्टये, उत्पादविनाशशालित्वादाकाशादिपञ्चकेऽप्यनन्तर्भावात्। नापि गुणकर्मणोः, गुणवृत्तित्वात् कपालादिरूपे घटरूपाद्युत्पादकशक्तिसत्त्वात् । नापि सामान्यविशेषसमवायेषु, उत्पादविनाशशालित्वादित्यर्थः । **अतिरिक्तत्वमिति** ॥ सप्तपदार्थातिरिक्तत्वमित्यर्थः । न च तस्या अभावान्तर्भावसंभवात्कथं सप्तपदार्थातिरिक्तत्वमिति वाच्यम् । नञुल्लिखितप्रत्ययाविषयत्वेन सप्रतियोगिकत्वाननुभवेन च तस्या अभावेऽप्यनन्तर्भावादिति भावः । वस्तुतस्तु षड्भावेष्विति पाठः प्रामादिकः तावन्मात्रेण सप्तपदार्थातिरिक्तत्वासिद्धेः हेत्वन्तरपूरणे च गौरवापत्त्या क्लृप्तपदार्थेष्वित्येव वक्तुमुचितत्वात्, यथोत्पत्तिविनाशशालित्वेन नित्यद्रव्यादिषु शक्तेर्नान्तर्भावस्तथैव नित्यात्यन्तान्योन्याभावयोः विनाशित्वेन ध्वंसे,उत्पन्नत्वेन

**नामप्यतिरिक्तपदार्थत्वात् । तथाहि, मण्यादिसमवहितेन वह्निना दाहो न जन्यते, तच्छून्येन तु जन्यते, तत्र मण्यादिना वह्नौ दाहानुकूला शक्तिर्नाश्यते, उत्तेजकेन मण्याद्यपसारणेन च**

## प्रभा.

सादृश्यत्वयोरित्यर्थः । **अतिरिक्तपदार्थत्वादिति** ॥ अतिरिक्तत्वे सति पदार्थत्वादित्यर्थः । क्लृप्तपदार्थविभाजकधर्मान्यतमभिन्नत्वे सति पदार्थविभाजकधर्मत्वादिति यावत् । ननु शक्तौ प्रमाणाभावेन तन्निष्ठशक्तित्वस्य पदार्थविभाजकत्वं न संभवतीत्याशङ्कां,शक्तित्वस्य शक्तिसाधनपूर्वकपदार्थविभाजकत्वव्यवस्थापनेन परिहरति । **तथाहीत्यादिना** ॥ **मण्यादिसमवहितेनेति** ॥ मणिमन्त्रौषध्यादिविशिष्टेनेत्यर्थः । अत्र वह्नौ तद्वैशिष्ट्यञ्च नैयायिकमते येन येन संबन्धेन प्रतिबन्धकत्वं तेन तेन संबन्धेन बोध्यं । तेन कालिकसंबन्धमादाय न दोषः । दाहः पूर्वरूपपरावृत्तिः । **न जन्यत इति** ॥ तथा चान्वयव्यभिचारात् दाहं प्रति वह्नेः न वह्नित्वेन कारणत्वमिति भावः । ननु वह्नेरकारणत्वात्तेन न दाह इत्यत आह—**तच्छून्येनेति** ॥ मण्यादिवैशिष्ट्यशून्येनेत्यर्थः । तथाच वह्नेः कारणत्वात् वह्नित्वस्य कारणतावच्छेदकत्वाच्च वह्नौ अव्यभिचरितः कश्चन कारणतावच्छेदकधर्मस्स्वीकार्यः सैव शक्तिरिति भावः । ननु वह्नित्वेन कारणत्व इव शक्तिमत्त्वेन कारणत्वेऽपि अन्वयव्यभिचारस्तदवस्थ इत्यत आह—**तत्रेति** ॥ उक्तयुक्त्या शक्तिमत्त्वेन वह्नेः कारणत्वस्वीकारे त्वित्यर्थः । **वह्नौ दाहानुकूला शक्तिरिति** ॥ वह्निनिष्ठदाहजनकतावच्छेदकशक्तिरित्यर्थः । नाश्यत इत्यस्य कल्प्यत इत्यनेनान्वयः । तथा चैतन्मते कारणीभूताभावप्रतियोगित्वं न प्रतिबन्धकत्वं, दाहं प्रति मण्याद्यभावानामपि हेतुत्वापत्त्या गौरवात् , किन्तु कारणतावच्छेदकविघटकत्वरूपमेवेति मण्यादिसमवधानकाले वह्निनिष्ठतादृशशक्तेः नाशेन कारणतावच्छेदकविशिष्टकारणाभावान्न दाहापत्तिरिति भावः । ननु मण्यादेः तादृशशक्तिविघटकत्वरूपप्रतिबन्धकत्वस्वीकारे उत्तेजकविशिष्टमण्यादिसत्त्वे दाहो न स्यात् तादृशशक्तेरभावादत आह—**उत्तेजकेनेति** ॥ ननु मण्यादेः न मणित्वादिना शक्तिनाशकत्वं, उत्तेजकसमवधाने वह्निनिष्ठशक्तेः अनाशेन अन्वयव्यभिचारात् । नाऽपि उत्तेजनकाभावविशिष्टमणित्वादिना, तथासति विनिगमकाभावेन नाश्यनाशकभावद्वयापत्तेः । न चेष्टापत्तिः, तथासति दाहं प्रति मण्याद्यभावविशिष्टवह्नित्वेन हेतुत्वस्वीकारेणैव उक्तदोषवारणे शक्तेरेवासिद्ध्यापत्तेः । मण्यादौ शक्तिनाशकतावच्छेदिकां काञ्चन शक्तिं परिकल्प्य तादृशशक्तिमत्त्वेनैव तेषां वह्निनिष्ठदाहजनकतावच्छेदकशक्तिनाशकत्वरूपं प्रतिबन्धकत्वं वाच्यम् । एवञ्च उत्तेजनकसमवधानकाले मण्यादिनिष्ठतादृशशक्तेः नाशस्वीकारेण नाशकतावच्छेदकविशिष्टाभावेनैव वह्नौ तादृशशक्त्युत्पत्तिसम्भवे उत्तेजनकस्य शक्त्युत्पादकत्वे मानाभाव इत्यत आह—**मण्याद्यपसारणेन चेति** ॥ मण्याद्यभावेन चेत्यर्थः ।

## दिनकरीयम्.

रिक्तेत्यर्थः । अतिरिक्तपदार्थतामेव व्यवस्थापयति । **तथाहीत्यादिना** ॥ मण्यादीत्यादिना मन्त्रौषध्यादिपरिग्रहः । **समवहितेन**—समीपवर्तिना । ननु वह्निरूपकारणाभावादेव न दाह इति न मण्यादेः प्रतिबन्धकत्वमतः समवहितेन वह्निनेति । दाहो रूपान्तरोत्पत्तिः पूर्वरूपपरावृत्तिर्वा । मण्याद्यतिरिक्तस्य प्रतिबन्धकत्वं खण्डयति । **तच्छून्येनेति** ॥ मणिसमवधानशून्येनेत्यर्थः । ननु वह्नौ यदि दाहानुकूला शक्तिस्तदा मण्यादिसत्त्वे कुतो न दाह इति चेत्तत्राह । **तत्रेति** ॥ पूर्वोक्तयुक्त्या शक्तिसिद्धावित्यर्थः । **दाहानुकूलेति**॥ अत्र चानुकूलत्वं कारणतदवच्छेदकसाधारणं तेन शक्तेः कारणतावच्छेदकत्वेऽपि न क्षतिः । नाश्यत इत्यस्य

## रामरुद्रीयम्.

प्रागभावेऽप्यनन्तर्भावसंभवाच्चेति ध्येयम् । **रूपपरावृत्तिर्वेति** ॥ रूपनाशो वेत्यर्थः । लाघवमेवोत्तरकल्पानुसरणे बीजम् । ननु मूले तच्छून्येन तु जन्यत इत्युक्तिर्व्यर्था तस्याः प्रतिबन्धकत्वासाधकत्वात् अतस्तस्या मण्यतिरिक्तप्रतिबन्धकताखण्डकत्वेन सार्थकतां व्यवस्थापयति । **मण्याद्यतिरिक्तेति** ॥ गगनादीनां प्रतिबन्धकत्वमित्यर्थः । तथा च गगनादीनां प्रतिबन्धकत्वे मणिशून्यदशायामपि वह्निना दाहो न स्यात्प्रतिबन्धकसत्त्वादतो मण्यादेरेव प्रतिबन्धकता वाच्येति मूलाभिप्राय इति भावः । **पूर्वोक्तयुक्त्येति** ॥ मण्यादिसमवधाने सतीत्यादिना स्वेन पूर्वमुक्तयुक्त्येत्यर्थः । **कारणतावच्छेदकत्वेऽपीति** ॥ वह्नित्वेन वह्नेः

जन्यत इति कल्प्यते। एवं सादृश्यमप्यतिरिक्तः पदार्थः, तद्धि न षट्सु भावेष्वन्तर्भवति

## प्रभा.

चकारो वार्थः। तथा च नाशकतावच्छेदकशक्त्यवच्छिन्नाभावेन वह्नौ दाहजनकतावच्छेदिका शक्तिर्जन्यत इति भावः। अत्र उत्तेजनकानां मण्यादिनिष्ठनाशकतावच्छेदकशक्तिनाशकत्वं केन रूपेणेति विचारस्तु अप्रकृततया ग्रन्थविस्तरभिया च उपेक्ष्यत इति हृदयम्। नन्वेवं रीत्या शक्तिसिद्धावपि तस्याः अतिरिक्तपदार्थविभाजकधर्मवत्त्वेऽपि किं मानमिति चेदित्थम्। शक्तिः द्रव्यत्वादित्रिकान्यतमशून्या गुणवृत्तित्वात् गुणत्ववत्। नच स्वरूपासिद्धिः, गुणस्यापि तन्मते शक्तिमत्त्वेनैव हेतुत्वात्। एवं शक्तिः सामान्यत्वादित्रिकान्यतमशून्या जन्यत्वात् घटादिवत् इत्युक्तानुमानद्वयेन द्रव्यत्वादिसमवायत्वान्तपदार्थविभाजकषट्कान्यतमशून्यत्वसिद्धौ शक्तिः क्लृप्तपदार्थविभाजकान्यतमभिन्नपदार्थविभाजकधर्मवती तादृशपदार्थविभाजकान्यतमशून्यत्वे सति ज्ञेयत्वात् यन्नैवन्तन्नैवं यथा द्रव्यम् इत्यादिपरिशेषानुमानेन शक्तेरतिरिक्तविभाजकधर्मवत्वे सिद्धे तादृशधर्मः अर्थाच्छक्तित्वमेव भवतीति भावः। तन्मते भावातिरिक्ताभावानङ्गीकारात् अभावत्वस्य पदार्थविभाजकधर्मत्वमेव बाधितं। यदि परमते तादृशस्याभावस्यापि सिद्धत्वात्तच्छून्यत्वमपि साधनीयमित्युच्यते, तदा सामान्यत्वाद्यभावत्वान्तान्यतमशून्यत्वसाधकमेव जन्यत्वे सति विनाशित्वादित्यनुमानं द्वितीयं, तद्रीत्यैव परिशेषानुमानमिति हृदयम्। उक्तरीत्या शक्तिं तस्याः अतिरिक्तत्वञ्च प्रसाध्य सादृश्यस्य सर्वमतसिद्धत्वात्तस्यातिरिक्तत्वमात्रं साधयति। **एवमित्यादिना। अतिरिक्तः पदार्थ इति**॥ द्रव्यत्वाद्यभावत्वान्तपदार्थविभाजक-

## मञ्जूषा.

एवं शक्तेरतिरिक्तपदार्थत्वमुक्त्वा सादृश्यस्याह—**एवमिति**॥ न शक्तिवत्सादृश्येऽप्यनुमानापेक्षा तस्य प्रत्यक्षसिद्धतात्। किं तु तस्यातिरिक्तपदार्थत्वेऽतस्तदेव साध्यतया निर्दिशति—**अतिरिक्तः पदार्थ इति**॥

## दिनकरीयम्.

कल्प्यते इत्यनेनान्वयः। तथा च वह्निनिष्ठशक्तित्वावच्छिन्नं प्रति मणित्वेन नाशकत्वस्वीकारेण मण्यादिसत्त्वदशायां शक्तेरभावादेव न दाह इति भावः। ननु मण्यादेर्यदि शक्तिनाशकत्वं तदा उत्तेजकविशिष्टे मण्यादावपसारिते वा दाहानापत्तिरित्यतआह। **उत्तेजकेनेति**॥ मण्याद्यपसारणेन चेत्यत्र चकारो वाकारार्थे। न च दाहं प्रति मण्यभावत्वेन हेतुत्वकल्पनान्न मणिसमवधानकाले दाहापत्तिरिति वाच्यं, मण्यभावत्वेन रूपेण स्वतन्त्रहेतुताकल्पने गौरवात् विलक्षणशक्तिमत्त्वेन वह्नेः कारणत्वकल्पनस्यैवोचितत्वादित्यभिमानात्। नन्वेवं शक्तिशिद्धावपि तस्या अतिरिक्तत्वासिद्धिरिति चेन्न उक्तपदार्थेष्वनन्तर्भूतत्वात्। तथाहि न तावत् द्रव्यात्मिका शक्तिः, गुणादिवृत्तित्वात्। अत एव न गुणात्मिका कर्मात्मिका वा। न च सामान्याद्यन्यतमरूपा, उत्पत्तिमत्त्वे सति विनाशित्वादिति॥ एवमतिरिक्तां शक्तिं प्रसाध्य सादृश्यस्याप्यतिरिक्तपदार्थतां व्यवस्थापयति। **एवमित्यादिना॥ अतिरिक्त इति**॥ क्लृप्तसप्तपदार्थातिरिक्त इत्यर्थः। षड्भावानन्तर्भूतत्वे

## रामरुद्रीयम्.

शक्तित्वेन वह्निनिष्ठशक्तित्वेन वा शक्तेश्च दाहं प्रति कारणत्वे गौरवाच्छक्तिविशिष्टवह्नित्वेनैव कारणत्वौचित्यात् शक्तेः कारणत्वाभावादिति भावः। वस्तुतो मीमांसकैर्घटादिकं प्रति तत्तत्कारणेषु घटाद्यनुकूलां शक्तिं कल्पयित्वा तादृशविलक्षणशक्तिमत्त्वेनैव कारणत्वस्याङ्गीकाराद्दण्डचक्रादिभेदेनापि न कारणताबाहुल्यमित्यपि लाघवमेतन्मत इति मन्तव्यम्। **वाकारार्थ इति**॥ उत्तेजकमण्यपसारणयोरेकसत्त्वेऽपि दाहोत्पत्त्या समुच्चितयोर्दाहकारणत्वासंभवादिति भावः। **न मणिसमवधानकाल इति**॥ मण्यभावस्य हेतुतयैव मणिसमवधानकाले दाहवारणसंभवान्नानन्तशक्त्यादिपदार्थकल्पनं युक्तमिति भावः। **अभिमानादिति**॥ वस्तुतस्त्वनन्तशक्तितत्प्रागभावध्वंसानां कल्पनामपेक्ष्य मण्यभावत्वेन कारणत्वान्तरकल्पनमेवोचितं कल्प्यस्यैकत्वेन लाघवादिति सूचयितुमुक्तमभिमानादिति। क्लृप्तपदार्थानन्तर्भूतत्वे मूलोक्तस्य षड्भावानन्तर्भूतत्वस्य न हेतुता संभवति अभावे व्यभिचारात्। नापि नाप्यभाव इत्यनेनोक्तस्याभावानान्तर्भूतत्वस्य, भावपदार्थे व्यभिचारादतो हेत्व-

## प्रभा.

धर्मान्यतमभिन्नपदार्थविभाजकधर्मवदित्यर्थः । अत्र द्रव्यत्वादिसमवायत्वान्तान्यतमशून्यत्वे सति अभावत्व-शून्यत्वादिति हेतुः पूर्णीयः । तादृशहेतौ सत्यन्तासिद्धिन्निरस्यति—**तद्धीति** ॥ हि यतः । तथाच सादृश्यं यस्मात् षड्भावानन्तर्भूतं अभावानन्तर्भूतञ्च तस्मात् अतिरिक्तपदार्थ इत्यर्थो लभ्यते । अत्र येषु यत्साधर्म्यं

## मञ्जूषा.

तत्र चातिरिक्तत्वमेव साध्यं न तु पदार्थत्वमपि तत्र प्रविष्टं प्रयोजनाभावात् । अतिरिक्तत्वस्य द्रव्यादि-पदार्थप्रतियोगित्वलाभाय पदार्थ इत्युक्तं, प्रतियोगिवाचकपदासमभिव्याहृतान्यातिरिक्तादिपदानां स्वसम-भिव्याहृतपदार्थतावच्छेदकाश्रयत्वेन क्लृप्तवस्तुप्रतियोगिकभेदबोधकतायास्स्वारसिकत्वात् । यथा चित्रमति-रिक्तरूपमिति वाक्याद्रूपत्वाश्रयत्वेन क्लृप्तनीलादिप्रतियोगिकभेदबोध इति । एतदेवाभिप्रेत्य सप्तपदार्थाति-रिक्त इत्यर्थ उक्तो महादेवेन । तत्र हेतुमाह—**तद्धीति** ॥ हि यतस्तत् सादृश्यं षड्भावान्तर्भूतं न भवति नाप्यभावे अतस्सादृश्यमतिरिक्तः पदार्थ इति योजना । तेन षड्भावानन्तर्भूतत्वे सत्यभावानन्तर्भूतत्वा-दिति हेतुः पर्यवसन्नः । तद्घटकदलयोः प्रत्येकं साधकं हेतुद्वयं सामान्येऽपीत्यादिना सत्त्वेनेत्यादिना च प्रतिपादितम् । एतेनात्र षड्भावानन्तर्भूतत्वे सत्यभावानन्तर्भूतत्वादिति हेतुः पूरणीयः । तत्र विशेषणासिद्धिं निरस्यति—तद्धीत्यादि इति महादेवेन व्याख्याने पूरणमनतिप्रयोजनकं वेदितव्यम् । पूरितवाक्ये हि हेतुपंचम्या तादृशविशिष्टार्थस्यातिरिक्तपदार्थत्वहेतुत्वं बोध्यते तच्च हिशब्देनैव बोधितं हिशब्दस्य पूर्वोक्तार्थ-हेतुतायास्स्वसमभिव्याहृतपदार्थविशेषणतया बोधकत्वव्युत्पत्तेः । बोधकत्वं च शक्त्या लक्षणातात्पर्यग्राहक-तया वा । तत्र द्वितीयपक्षे नञ एव अतिरिक्तपदार्थत्वहेतुत्वविशिष्टाभावलाक्षणिकत्वमवसेयम् । ननु किमत्र पक्षतावच्छेदकं । न तावत्सादृश्यत्वं, तस्य दुर्वचत्वात् । तद्धि न पदार्थान्तरभूतसादृश्यवृत्तिरखण्डो धर्मः तस्य सादृश्यातिरिक्तत्वसिद्ध्यधीनसिद्धिकत्वात् । नापि तद्भिन्नत्वविशिष्टतद्गतभूयोधर्मवत्त्वं, तादृशधर्मरूपसादृश्ये क्लृप्तपदार्थातिरिक्तत्वसाधने बाधापत्तेः । उच्यते । सदृशपदोल्लिखितप्रतीतिप्रकारत्वं सदृशपदवाच्यतावच्छेदकत्वं वा पक्षतावच्छेदकं, तच्च नैयायिकमते प्रसिद्धं परेषां तु तत् पदार्थान्तरवृत्त्येवेति न बाधः । साध्यं तु न भिन्नपदार्थत्वावच्छिन्नत्वं अप्रसिद्धत्वात् । नापि क्लृप्तपदार्थत्वावच्छिन्नभेदः, क्लृप्तत्वस्य दुर्वचत्वात् । नापि द्रव्याद्यभावान्तेषु वर्तमानं यत्तावद्विषयकप्रतीतिविषयत्वं तावदन्यतमत्वादि वा तदवच्छिन्नभिन्नत्वं साध्यमिति युक्तं, नैयायिकमते कोट्यप्रसिद्ध्या विप्रतिपत्तेरसंभवात् । किंतु द्रव्यत्वाद्यवच्छिन्नभे-दकूटवत्त्वं, तादृशकूटप्रसिद्धिस्तु काले कालिकविशेषणतया, साध्यतावच्छेदकसंबन्धेन कोटिप्रसिद्धेरना-वश्यकत्वात् । नचैवं साध्यहेत्वोरभेदः, द्रव्यादिसमवायान्तवृत्त्यन्यतमत्वाद्यवच्छिन्नभेदस्य हेतुघटकत्वेन अभेदाप्रसक्तेः । अथ वा द्रव्याद्यवृत्तिधर्मवत्त्वं साध्यं । द्रव्यन्त्वाद्यवच्छिन्नभेदषट्कवत्त्वे सत्यभावान्यत्वं, द्रव्यादिषट्कान्यतमावृत्तिधर्मवत्त्वे सत्यभावावृत्तिधर्मवत्त्वं वा हेतुः । अवृत्तित्वं च स्वरूपसंबन्धाव-च्छिन्नवृत्तित्वाभावः, धर्मपदं वस्तुपरं, साध्यतावच्छेदकस्तु स्वरूपसंबन्धः । तादृशधर्मो नैयायिकमते रूपगमना-दिरेव प्रसिद्धः, परेषां तु सादृश्ये तादृशो धर्मः तद्व्यक्तित्वादिरेव अन्ततोऽस्तीति न बाधः । वस्तुतस्तु साद-श्यमप्यातिरिक्तः पदार्थ इति न प्रतिज्ञा, किं तु पक्षपरिग्रहः । तदर्थश्च द्रव्यत्वाद्यवच्छिन्नभेदसप्तकवदिति । एवं परिगृहीते पक्षे भेदास्सप्त सादृश्ये साधनीयास्संवृत्ताः । तत्र चैकेन हेतुना षड्भेदः अन्येन चैकस्साध्यते ता-वता च भेदसप्तकं सादृश्ये सिद्धमिति नांतरालिकमनुमानमपेक्षितं प्रयोजनाभावात् । हेतुद्वयविषयकसमूहा-लंबनपरामर्शात्समूहालंबनानुमितेः प्रत्येकसिद्ध्युत्तरकालीनमानसबुद्धेर्वा भेदसप्तकप्रकारिकायास्संभवेन पक्षप-रिग्रहनिर्वाहात् । हिशब्दश्चायं परिगृहीतपक्षव्यवस्थापकोऽयमुत्तरग्रन्थ इत्येतादृशार्थबोधकस्तथा च वाशब्दतु-

## दिनकरीयम्.

सत्यभावानन्तर्भूतत्वादिति हेतुः पूरणीयः । तत्र सत्यन्तासिद्धिं निरस्यति । **तद्धीति** ॥ **तत्** सादृश्यम्,

## रामरुद्रीयम्.

न्तरं पूरयति । **षड्भावेति । तत्रेति** ॥ उक्तहेतावित्यर्थः । घटकत्वं सप्तम्यर्थः । तस्य च सत्यन्तेऽन्वयः ।

**सामान्येऽपि सत्त्वात्, यथा गोत्वं नित्यं तथा अश्वत्वमपि नित्यमिति सादृश्यप्रतीतेः। नाप्य-**

## प्रभा.

तेषु तत्सादृश्यमेकमेवेत्यालङ्कारिकसिद्धान्तः तदनुसारेण तत्र हेतुमाह—**सामान्येऽपीति** ॥ सामान्येतरवृत्तित्वसामान्यवृत्तित्वोभयवत्त्वादित्यर्थः। अत्र गगनाभावादिः दृष्टान्तः। केचित्तु प्रमेयत्वे व्यभिचारवारणाय हेतौ व्यतिरेकित्वे सतीति विशेषणं देयमित्याहुः। तदसत्, प्रमेयत्वस्य प्रमाविषयत्वरूपस्य विषयभेदेन भिन्नतया निरुक्तोभयवत्त्वरूपहेतोरभावात्। यदि विषयतासम्बन्धेन प्रमावत्त्वमेव प्रमेयत्वं, विषयतासंबन्धेन सर्वत्र विद्यमानायाः ईश्वरप्रमाव्यक्तेः निरुक्तवृत्तिताद्वयवत्त्वेन व्यभिचारस्तदवस्थ इत्युच्यते तदा व्यतिरेकित्वविशेषणदानेऽपि समवेतत्वस्य प्रतियोगितासंबन्धेन समवायवत्त्वरूपस्य तादृशहेतुमत्त्वेन व्यभिचारस्य दुर्वारत्वात्। यदि च प्रतियोगितायाः वृत्त्यनियामकतया तेन संबन्धेन समवायवत्त्वरूपसमवेतत्वाप्रसिद्ध्या तत्र व्यभिचारस्याप्रसक्तिरित्युच्यते तदा विषयताया अपि वृत्त्यनियामकतया तेन संबन्धेन प्रमावत्त्वरूपप्रमेयत्वासिद्ध्या तत्र व्यभिचाराभावेन हेतौ व्यतिरेकित्वे सतीति विशेषणदानवैयर्थ्यस्य दुर्वारत्वात्। पक्षात्मकसादृश्ये हेतुसत्त्वे प्रतीतिं प्रमाणयति—**यथेति**। अश्वत्वमपीत्यपिना आकाशादिपरिग्रहः। एवञ्च यथा

## मञ्जूषा.

ल्ययोगक्षेमो न हेतुत्वार्थक इति न हिशब्दस्वरसविरोधः। **सामान्येऽपीति**। अत्र महादेवः 'सामान्येऽपीति। सामान्येतरवृत्तित्वे सति सामान्यवृत्तित्वादित्यर्थः। तेन सामान्यत्वे न व्यभिचारः। व्यतिरेकित्वे सतीति विशेषणान्न प्रमेयत्वादौ व्यभिचारः। भावत्वे च द्रव्यादिषट्कान्यतमत्वरूपे हेतुमति साध्यसत्त्वान्न व्यभिचार' इति व्याचख्यौ। अत्रेदं चिन्त्यते। सामान्येतरवृत्तित्वविशेषणानुपादाने कथं सामान्यत्वे व्यभिचारप्रसक्तिः तस्य सामान्यानतिरेकादिति चेत्तर्हि सामान्येतरवृत्तित्वविशेषणेन कथं तद्व्यावर्त्यते, सामान्यनिष्ठस्य सामान्येतरवृत्तित्वस्य तदनतिरिक्तसामान्यत्वे दुर्निवारत्वात्। किं च सामान्यतदितरोभयसाधारणस्य एकस्य सादृश्यस्याभावेन स्वरूपासिद्धिः। येषु यत्सादृश्यं धर्म्यन्तरेषु तत्सादृश्यमेकमेवेत्यालङ्कारिकसिद्धांत इत्यस्मद्गुरुचरणोक्तरीत्या प्रकृतग्रन्थस्यालङ्कारिकमताभिप्रायकतास्वीकारेण स्वरूपासिद्धिवारणेऽपि प्रमेयत्वस्य प्रमाविषयत्वरूपस्य विषयभेदेन भिन्नतया न तत्र व्यभिचार इत्यस्मद्गुरुचरणोक्तरीत्या प्रमेयत्वव्यावर्तकव्यतिरेकित्वविशेषणेन कथं तद्व्यावर्तनं, प्रमेयत्वस्यापि तत्तद्व्यक्तित्वावच्छिन्नाभावप्रतियोगित्वात्। अथात्यन्ताभावप्रतियोगितानवच्छेदकधर्मशून्यत्वं व्यतिरेकित्वं प्रमेयत्वे तादृशप्रमेयत्वत्वसत्त्वात्तद्व्यावर्तनम्। नचैवं सर्वत्रैव तादृशप्रमेयत्वसत्त्वादप्रसिद्धिरिति वाच्यं। तत्तन्निष्ठप्रमेयत्वव्यक्तेः तत्तद्व्यक्तित्वेनाभावप्रतियोगितावच्छेदकत्वात्। यदि तु प्रमेयत्वत्वस्यापि तत्तत्प्रमेयत्वव्यक्तिवृत्तित्वविशिष्टत्वेनाभावप्रतियोगितावच्छेदकत्वात् कथमनवच्छेदकत्वमिति विभाव्यते तदा यत्किञ्चिद्व्यक्त्यसंबद्धस्वविशिष्टसामान्यकभिन्नधर्मशून्यत्वं व्यतिरेकित्वं, तादृशो धर्म-

## दिनकरीयम्.

**हि हेतौ। सामान्येऽपीति** ॥ सामान्येतरवृत्तित्वे सति सामान्यवृत्तित्वादित्यर्थः। तेन सामान्यत्वे न व्यभि-

## रामरुद्रीयम्.

**हि हेताविति** ॥ हिशब्दो हेतुवाचक इत्यर्थः। सप्तम्या वाचकत्वार्थकत्वात्। तथा च हेतोरभेदेन षड्भावानन्तर्भावविशेषणत्वमिति भावः। न चैवं हेतुरित्युक्ते कुतेत्याकाङ्क्षोदयाद्धेतुत्वनिरूपकान्वय्यनुक्त्या न्यूनत्वमिति वाच्यम्। हेत्वन्वयिन उक्तहेतावित्यस्याध्याहारेणोक्तहेतुहेत्वभिन्नषड्भावानंतर्भूतत्वविशिष्टाभावान्तर्भूतत्वाभावाश्रयस्सादृश्यमिति बोधे तात्पर्यात्। अत्र च भावांतर्भूतत्वाभावान्तर्भूतत्वयोरभावद्वयस्य मिलितस्यैव हेतुत्वं, प्रत्येकस्य भावाभावयोर्व्यभिचारित्वादिति मंतव्यम्। इदं चापाततः। मूलोक्तस्य मिलिताभावद्वयस्यैवातिरिक्तपदार्थत्वे हेतुत्वसंभवेन हेत्वंतरं पूरयित्वा तत्र विशेषणविशेष्यभागाप्रसिद्धिनिरासपरत्वेन तद्ग्रीत्यादिग्रंथव्याख्यानस्यानुचितत्वादिति ध्येयम्। **सामान्येतरवृत्तित्वे सतीति** ॥ सामान्येऽपीत्यपिना सामान्येतरस्य समुच्चितत्वादयमर्थो लभ्यत इति भावः। **तेनेति** ॥ सामान्येतरवृत्तित्वोपादाने-

## प्रभा.

गोत्वं नित्यं तथा अश्वत्वं नित्यं तथा आकाशादिकं नित्यमिति सादृश्यप्रतीतिरित्यर्थलाभात्। तादृशप्रती-

## मञ्जूषा.

श्च प्रमेयत्वत्वं न तु प्रमेयत्वमिति न दोषः। न चैवं सर्वस्यापि तादृशगगनाभावविशिष्टसम्ब-न्धित्वादप्रसिद्धितादवस्थ्यमिति वाच्यम्, धर्मपदस्य भावपरत्वादिति चेन्न। तथापि सादृश्ये सा-दृश्यत्वरूपतादृशधर्मसत्त्वेन स्वरूपासिद्धेर्दुर्वारत्वादिति। अत्र ब्रूमः सामान्येतरनिष्ठाधिकरणतानिरूपक-तावच्छेदकतापर्याप्त्यधिकरणसामान्यनिष्ठाधिकरणतानिरूपकतावच्छेदकतापर्याप्त्यधिकरणधर्मवत्त्वविवक्षणान्न सामान्यत्वे व्यभिचारः—तथाहि यद्यपि सामान्यत्वं सामान्यस्वरूपानतिरिक्तम्। एवं सामान्य-त्वत्वमपि सामान्यत्वस्वरूपादनतिरिक्तं, तथापि सामान्यमखण्डोपाधिः सामान्यत्वं नित्यत्वे सत्यनेक-समवेतत्वं, सामान्यत्वत्वं तु नित्यानेकसमवेतेतरावृत्तित्वे सति निखिलनित्यानेकसमवेतवृत्तित्वम्। न च सामान्यरूपं सामान्यत्वं कथं नित्यानेकसमवेतेतरावृत्तीति वाच्यम्। सामान्येतरवृत्तितानवच्छेदकं यन्नित्यानेक-समवेतवृत्तित्वं तस्यैव सामान्यत्वत्वरूपत्वात्। एवं च घटस्सामान्यत्ववान् इत्यप्रतीत्या सामान्यम् सामा-न्यत्ववदिति प्रतीत्या च नित्यानेकसमवेतेतरावृत्तित्वादिघटितविशिष्टरूपसामान्यत्वत्वस्य घटादिनिष्ठाधिकरणता-

## दिनकरीयम्.

चारः। व्यतिरेकित्वे सतीति विशेषणान्न प्रमेयत्वादौ व्यभिचारः। भावत्वे च द्रव्यादिषट्कान्यतमत्वरूपे हेतु-मति साध्यस्य सत्त्वान्न व्यभिचार इति। **यद्यपीति**। यदि सादृश्यं द्रव्यादावन्तर्भूतं तदा द्रव्यादेः सामान्यावृत्ति-

## रामरुद्रीयम्.

नेत्यर्थः। अथ सामान्यत्वमनेकसमवेतत्वे सति नित्यत्वं, तच्च ध्वंसप्रागभावाप्रतियोगित्वरूपतया अभाव-स्वरूपमेवेति कथं व्यभिचारः, न च विनिगमनाविरहेण नित्यत्वे सत्यनेकसमवेतत्वस्यापि सामान्यत्वरूप-तासम्भवेन तस्य चानेकानुयोगिकसमवायप्रतियोगित्वस्य स्वरूपसम्बन्धविशेषरूपस्य सामान्यात्मकतया भवति व्यभिचार इति वाच्यम्। एवमप्यभेदे आधाराधेयभावानुपगमेन सामान्ये तद्वृत्तित्वासत्त्वेन व्यभि-चाराप्रसक्तेः। न च सामान्यत्वं सामान्यत्वप्रकारकज्ञानरूपमेव विवक्षितमिति वाच्यम्, तथासति सा-मान्यविषयकज्ञानस्य विषयतया सामान्यसम्बन्धित्वात् सामान्येतरात्मवृत्तित्वाच्च सत्यंतोपादानेऽपि व्यभि-चारतादवस्थ्यात्, व्यभिचारवारणरूपप्रयोजनाभावेन सत्यंतसार्थक्यमात्राय वृत्तित्वस्थाने सम्बन्धित्वविवक्षा-या अनुचितत्वाच्च। तस्मात् सामान्यनिरूपितायाः सम्बंधांतरावच्छिन्नवृत्तितायाः अप्रसिद्धया स्वरूपसम्बं-धावच्छिन्नसामान्यवृत्तित्वमेव हेतुर्वाच्यः, सामान्यत्वे च न तादृशं सामान्यवृत्तित्वमिति व्यभिचारो दुर्घट एव, युक्तं चैतत् सादृश्यस्यातिरिक्तत्ववादिनाऽपि स्वरूपसम्बन्धेनैव तस्य प्रकारत्वोपगमेन, तस्य भूयोधर्म-वत्त्वरूपतावादिनाऽपि स्वरूपेणैव तस्य प्रकारतांऽगीकरणीया, अनुभवे विवादासम्भवात् एकाकारप्रतीतेर्ना-नासम्बन्धेन तत्प्रकारकत्वानौचित्याच्च। अत एव ग्रन्थकृतापि तद्भिन्नत्वे सति तद्गतभूयोधर्म इत्यनुक्त्वा तद्-गतभूयोधर्मवत्वपर्यन्तमनुसृतं। तथा च सादृश्ये स्वरूपासिद्धिवारणायोभयमतसिद्धं सामान्यनिरूपितस्वरूप-सम्बन्धावच्छिन्नवृत्तित्वमेव हेतुरित्यवश्यमंगीकरणीयमिति न व्यभिचार इति चेन्न। सामान्यं सामान्यत्व-वदिति प्रतीत्या सामान्ये सामान्यत्वाधारत्वावगाहनेन, सामान्यत्वस्य सामान्यातिरिक्तस्य दुर्वचत्वेन च स्वस्यापि स्वरूपसम्बन्धेन स्ववृत्तित्वमवश्यमंगीकरणीयं, अभावाधिकरणकाभावस्थले सर्वैरपि तथा स्वीका-रात्। अनयैव रीत्या प्रमेयत्वादावपि वक्ष्यमाणव्यभिचारो बोध्यः। सर्वं प्रमेयत्ववदिति प्रतीत्या प्रमेयत्व-स्य प्रमास्वरूपस्य स्वरूपसम्बन्धेन वृत्तेरावश्यकत्वात्, विषयताया विषयस्वरूपत्वेच सर्वत्र प्रमेयत्वमेकमिति प्रतीतिविरोधात्। ज्ञानस्वरूपे च प्रमेयत्वे स्वरूपसम्बन्धेन सामान्यतदितरवृत्तित्वसत्त्वाद्व्यभिचारस्यावश्य-कत्वादिति भावः। नन्वन्यतरसम्बन्धेन सत्तावत्त्वरूपभावत्वे हेतुसत्त्वाद्व्यभिचार इत्याशङ्कां निराकुरुते। **भावत्वे चेति**॥ न चैवमपि घटघटत्वगतद्वित्वे व्यभिचारो दुर्वारस्तस्य संख्यारूपत्वासंभवेऽपि द्वित्ववत्ता

## प्रभा.

त्या गोत्वनिरूपितसादृश्यस्य अश्वत्वे आकाशादौ च सिद्धत्वेन तत्र निरुक्तहेतोरक्षतत्वादिति भावः ।

## मञ्जूषा.

निरूपकतावच्छेदकतापर्याप्त्यधिकरणत्वं,तदघटितविशिष्टरूपसामान्यत्वत्वस्य च सामान्यनिष्ठाधिकरणतानिरूपकतावच्छेदकतापर्याप्त्यधिकरणत्वं न स्वीक्रियते, तथा चोभयनिष्ठाधिकरणतानिरूपकतावच्छेदकतापर्याप्त्यधिकरणैकधर्मवत्त्वस्य सामान्यत्वे अभावान्न तत्र व्यभिचारः । एवं च प्रमेयत्वत्वरूपतादृशधर्ममादाय प्रमेयत्वे व्यभिचारप्रसक्त्या व्यतिरेकित्वविशेषणं । तच्च पूर्वोपदर्शितधर्मे व्यतिरेकितावच्छेदकत्वपर्यवसितम् । व्यतिरेकितावच्छेदकत्वं च अत्यन्ताभावप्रतियोगितावच्छेदकत्वं यत्किञ्चिद्वृत्त्यसम्बद्धस्वविशिष्टसामान्यकत्वं वा । प्रमेयत्वत्वं तु न तादृशमिति न प्रमेयत्वे व्यभिचारः । नन्वेवं सादृश्यस्य व्यतिरेकित्वाभावात्स्वरूपासिद्धिरिति वाच्यम् । नित्यत्वरूपसाधारणधर्माभिव्यङ्ग्यत्वविशिष्टसादृश्यत्वस्य व्यतिरेकितावच्छेदकस्य सादृश्ये सत्त्वादिति । परं त्वेवं क्रमेण नित्यत्वप्रकारकप्रमाविशेष्यत्वत्वमादाय प्रमेयत्वे व्यभिचारः प्रसज्यते । एवं समवेतत्वे, किञ्च द्रव्यादिषट्कान्यतमत्वरूपे भावत्वे व्यभिचाराप्रसक्तावपि समवायैकार्थसमवायान्यतरसम्बन्धेन सत्ताश्रयत्वरूपे भावत्वे तादृशाश्रयत्वत्वमादाय व्यभिचारो दुर्वार इति । तस्मादेकधर्मपर्याप्तावच्छेदकताकसामान्यवृत्तित्व-सामान्येतरवृत्तित्वोभयवत्त्वमेव हेतुः । सामान्यत्वे व्यभिचारवारणाय अवच्छेदकताकान्तं । तादृशवृत्तित्वद्वयस्य प्रमेयत्वसमवेतत्वभावत्वादिष्वभावान्न व्यभिचारः । येषु यत्साधर्म्यं तेषु तत्सादृश्यमेकमेवेत्यस्मद्गुरुचरणोक्तरीत्या च न स्वरूपासिद्धिः । अत्र च सादृश्यातिरिक्तत्ववादिनां मते च स्वाश्रयस्समवायिकारणं । एवं च सामान्यादौ वर्तमानं सादृश्यं सामान्यादिसमवेतं, अत एव विशिष्टातिरिक्तत्ववादे विशिष्टसत्तायास्सत्तासमवेतत्वमुक्त्वा तदुपरि सामान्यादेः कथं समवायित्वमित्याशङ्क्य, यथा सादृश्यं प्रति सामान्यादेस्समवायिकारणत्वमिति दृष्टान्ततयोक्तम् । तथा च सामान्यसमवेतत्वमेव हेतुः ततो न कुत्रापि व्यभिचारः ॥ सामान्येऽपीत्यपिशब्दस्तु उक्तहेतोर्दर्शितसाध्यव्याप्यत्वे अविवादस्फोरणायेति यद्यपि शक्यते वक्तुं, तथापि नात्र हेतुभूतवृत्तित्वे समवायावच्छिन्नत्वविशेषणं ग्रन्थकृदभिप्रेतं, तथासत्यनेनैव हेतुना अभावभिन्नत्वस्यापि साधनसम्भवे नाप्यभाव इति प्रयत्नान्तरवैफल्यात् । नापीत्यपिशब्दं प्रतीयमानत्वात् इत्युपरि संयोज्य सत्त्वेन प्रतीयमानत्वादपि नाभाव इति योजनया, अपिशब्दसमुच्चितसामान्यसमवेतत्वस्यापि हेतुतालाभान्न विरोध इति व्याख्याने तु महान् क्लेशः । तस्मादस्मद्गुरुचरणोक्तं सामान्येतरवृत्तित्व-सामान्यवृत्तित्वोभयवत्त्वमेव हेतुः । उभयस्मिंश्च एकधर्मपर्याप्तावच्छेदकताकत्वनिवेशान्न सामान्यत्वादौ व्यभिचार इत्यवोचाम । अथात्र यदि सादृश्यत्वावच्छेदेन साध्यसिद्धिरुद्देश्या तदा मुखवृत्तिचन्द्रसादृश्यादौ भागासिद्धिः, पक्षतावच्छेदकावच्छेदेनानुमितिं प्रति तदवच्छेदेन हेतुमत्ताज्ञानस्यैव कारणत्वात् । यदि सा-

## दिनकरीयम्.

त्वेन यथा गोत्वं नित्यं तथा अश्वत्वमित्यबाधितप्रतीतिर्न स्यादित्यर्थः । अभावेऽन्तर्भावमाशङ्क्य निराचष्टे—

## रामरुद्रीयम्.

बुद्ध्युपपत्तये अपेक्षाबुद्धिरूपस्य स्वरूपसम्बन्धेन वृत्तेरावश्यकत्वादिति वाच्यम् । व्यासज्यवृत्त्यन्यत्वस्यापि हेतौ विशेषणत्वोपगमात् । व्यासज्यवृत्तित्वं च एकमात्रवृत्तिधर्मावच्छिन्नापर्याप्तिमत्वमिति न किंचिदनुपपन्नम् । वस्तुतस्तु स्वरूपसम्बन्धावच्छिन्नसामान्यवृत्तित्वमेव हेतुरिति मूलकृतां तात्पर्यं, अपिकारस्तु सादृश्यस्य सामान्यमात्रवृत्तित्वे मुखादौ चंद्रसादृश्यप्रतीतिर्न स्यादित्याशंकानिरासाय स्वरूपसतस्सामान्येतरवृत्तित्वस्यानुवादक एव नतु हेतुतावच्छेदकत्वेऽपि मूलकृतां तात्पर्यम् । न चैवं सामान्यस्वरूपे सामान्यत्वे व्यभिचार इति वाच्यम् । आधाराधेयभावप्रतीत्यनुरोधेनानेकसमवेतत्वे सति नित्यत्वस्वरूपताया एव सामान्यत्वे स्वीकरणीयत्वात् । एवं प्रमेयत्वमपि न प्रमैव विषयार्थकप्रत्ययादिविरोधात्, अपि तु प्रमाविषयत्वं तथा च प्रमेयत्वस्य विषयतारूपस्य प्रतिविषयं भिन्नत्वेन कस्यामपि विषयतायां सामान्यतदितरोभयवृत्तित्वासम्भवेन प्रमेयत्वेऽपि व्यभिचारासम्भवात् हेतौ व्यतिरेकित्वविशेषणमप्यनर्थकमेव । परं तु विषयस्वरूपायां विषय-

**प्रभा.**

विशेष्यासिद्धिं वारयति—**नापीति** ॥ अभावत्वशून्यमित्यर्थः । अत्र नैयायिकमते अभावस्यातिरिक्तत्वात्

**मञ्जूषा.**

दृश्यत्वसामानाधिकरण्येन, तदापि सिद्धसाधनं, सदृशपदोल्लिखितप्रतीतौ तद्भिन्नत्वविशिष्टतद्गतभूयोधर्मवत्त्वस्येव तद्गतभूयोधर्मवत्त्वविशिष्टस्य तद्भिन्नत्वस्यापि कदाचित्प्रकारताया नैयायिकमते अशक्यवर्जनीयतया तत्र साध्यस्य न्यायमतेऽपि सिद्धत्वात् । एवं न्यायमते विशेषणविशेष्यभावे विनिगमनाविरहेण तद्भिन्नत्वस्यापि सदृशपदवाच्यतावच्छेदकत्वं दुर्वारम् । अस्तु वा साधारणधर्मस्यैव तत्पदोल्लिखितप्रतीतिप्रकारत्वं तत्पदवाच्यतावच्छेदकत्वं च, तथापि यत्राभावस्य साधारणधर्मत्वं तत्र षड्भावभिन्नत्वस्य न्यायमतेऽपि सिद्धत्वादंशतस्सिद्धसाधनं दुर्वारमेव । अथ भावसाधारणधर्मस्थलीयसादृश्यव्यक्तेरेव पक्षत्वान्न सिद्धसाधनभागासिद्धी, पश्चात्सादृश्यत्वहेतुना तद्व्यक्तिदृष्टान्तेन सादृश्यत्वावच्छेदेन षड्भावभिन्नत्वसाधनाच्चेष्टसिद्धिरिति चेन्न, तथासति नित्यत्वसाधारणधर्मकसादृश्यस्य ग्रन्थकृदुपात्तस्यानन्वयप्रसंगात्, नित्यत्वस्य ध्वंसप्रतियोगित्वाभावरूपस्य भावत्वाभावात् । उच्यते, सादृश्यत्वमेव पक्षतावच्छेदकं दर्शितवृत्तिताद्वयवद्वृत्तिधर्मवत्त्वस्य हेतुत्वाच्च न भागासिद्धिः । तादृशो धर्मश्च सादृश्यत्वमेव । नचैवं सादृश्यवृत्तिप्रमेयत्वादिधर्ममादाय द्रव्यादौ व्यभिचार इति वाच्यम् । सादृश्यनिष्ठप्रमेयत्वव्यक्तेर्द्रव्यादावसत्त्वात्। धर्मपदं च भावपरं नातो गगनाभावादिकमादाय व्यभिचारः। वाच्यत्ववस्तुत्वादिकमपि प्रतिव्यक्ति भिन्नमेवेति न तदादायापि व्यभिचारः। नच प्रतियोगितासंबन्धेन सामान्यतदितरवृत्तौ समवाये, एकार्थसमवायेन सामान्यतदितरवृत्तौ सत्तायाञ्च व्यभिचार इति वाच्यम् । तयोर्वृत्तिनियामकत्वाभावात् । नच तथापि स्वरूपसंबन्धेन सामान्यवृत्तौ कालिकसंबन्धेन कालवृत्तौ सामान्यत्वे व्यभिचार इति वाच्यम्। एकसंबन्धावच्छिन्नत्वस्य वृत्तिद्वयविशेषणत्वात् । अथ स्यादेवं सर्वं, यदा तत्तद्धर्मेषु तत्सादृश्यैकत्वं सयुक्तिकं, न त्वेवं, तथासत्येकस्मिन्कामिनीवदने रोगरुदितमालिन्यादिना चन्द्रसादृश्यस्य क्षये कामिन्यन्तरवदनेऽपि तदपक्षयप्रसंगात् , श्यामघटे कुरुविन्दसादृश्यस्य पाकोत्तरकालोत्पत्तिकत्वानुपपत्तेश्चेति चेत्तथापि यत्र यत्सादृश्यं सार्विकं, तदेकत्वे बाधकाभावात्। अतश्च नित्यत्वेन गोत्वसादृश्यमश्वत्वे गगने चैकमेवास्तु लाघवात्। अथ तव प्रतियोगिभेदेन सादृश्यभेद आवश्यकः अन्यथा गोत्वेऽपि गोत्वसादृश्यप्रसंगात् , तथाचैकैकस्यां नित्यव्यक्तौ तदितरयावन्नित्यव्यक्तिप्रतियोगिकानां सादृश्यानां भेदस्त्वन्मते सिद्धः, मम त्वेकैकव्यक्तिनिष्ठानां भेदः न तु प्रतियोगिभेदेन भेद इति तुल्यं किंतु त्वन्मते एकैकस्य सादृश्यस्य तदितरयावन्नित्यव्यक्तिसंबन्धकल्पनागौरवं परमतिरिच्यत इति चेदस्तु गौरवं तथापि तन्मतरीत्या हेतुपरिष्कारो न विरुद्ध इत्यस्मद्गुरुचरणानामभिप्रायः । यदि च द्वित्वादिकं प्रत्येकत्वादिबुद्धेरिव परत्वादिकं प्रति विप्रकृष्टत्वज्येष्ठत्वादिबुद्धेरिवच सादृश्यं प्रति साधारणधर्मबुद्धेर्निमित्तकारणत्वं तदभिमतमित्युच्यते तदा बहुव्यक्तिष्वेकसाधारणधर्मज्ञानस्थले द्वित्वादिरीत्यनुसरणेन नानुपपत्तिगन्धः । परत्वादिरीत्यनुसरणे तु सामान्यसमवेतत्वमेव हेतुः । नाप्यभाव इत्यत्रापिशब्दस्य भिन्नक्रमेण पूर्वोपदर्शितयोजनया च न सन्दर्भविरोधः ।. नापीत्यादिग्रन्थः प्रत्यक्षप्रमाणप्रदर्शनपर इति कल्पे तु न दोषगंधः। अभावभिन्नत्वस्य अनुमाननिरपेक्षतया अनुमितौ तदप्रवेश इत्यभिप्रायवर्णनसंभवात्। मुखवृत्तिचन्द्रसादृश्ये

**दिनकरीयम्.**

**नापीति** ॥ यद्यप्यतिरिक्ताभावमनङ्गीकुर्वतः प्राभाकरस्य मतेऽभावेऽन्तर्भावचिन्ता न सम्भवति तथापि परमत-

**रामरुद्रीयम्.**

तायाः स्वरूपसम्बन्धेन सामान्यवृत्तित्वसत्त्वात्तत्र व्यभिचारवारणाय सामान्यवृत्तित्वे विषयतात्वाद्यनवच्छिन्नत्वं विशेषणं देयं । एवं च द्वित्वादिकमपि अपेक्षाबुद्धिविषयत्वमेव नत्वपेक्षाबुद्धिरूपं ज्ञाने विषयवृत्तित्वस्याप्यक्लृप्तत्वादिति तत्रापि न व्यभिचार इति । सामान्यभिन्नत्वं वा हेतोर्विशेषणम् । सादृश्ये सामान्यभेदस्य अभाववृत्तित्वेन साधनसम्भवादिति । एतल्लाभायैव अपिपदमपि सार्थकं इति युक्तमुत्पश्यामः । ननु भावत्वेन प्रतीयमानत्वं भ्रान्तपुरुषस्याभावेऽप्यक्षतं तत्र अभावानन्तर्भूतत्वाभावादयं हेतुर्व्यभिचारीत्याशं-

भावे, सत्त्वेन प्रतीयमानत्वादिति चेन्न । मण्याद्यभावविशिष्टवह्न्यादेर्दाहादिकं प्रति, स्वा-

**प्रभा.**

तत्र सादृश्यस्यान्तर्भावनिराकरणमावश्यकमिति हृदयम् । तत्र प्रतीतिं प्रमाणयति—**सत्त्वेनेति** ॥ भावत्वेने-त्यर्थः । **प्रतीयमानत्वादिति** । प्रमाविषयत्वादित्यर्थः । उक्तरीत्या तटस्थकृतशङ्कां आदौ शक्तिखण्डनेन

**मञ्जूषा.**

भागासिद्धिवारणं तु पूर्ववदिति सर्वं समञ्जसम् ॥ **सत्त्वेन** भावत्वेन । **प्रतीयमानत्वात्** ॥ प्रमीयमानत्वादि-त्यर्थः । नन्वत्र हेतोस्साध्याविशिष्टत्वं असिद्धाभावभिन्नत्वेन भावत्वप्रकारकप्रतीतेः प्रमात्वासिद्धेः, तथाहि नाव भावत्वं समवायैकार्थसमवायान्यतरसंबन्धेन सत्तावत्त्वं, सामान्याद्यवृत्तिभावादिमात्रवृत्तिसादृश्यव्यक्तौ भागा-सिद्धिप्रसङ्गात्, भावसाधारणधर्मस्थलीयसादृश्येष्वभावाभिन्नत्वस्य न्यायमतेऽपि सिद्धत्वेनांशतस्सिद्धसाधनवार-णायावच्छेदकावच्छेदेन साध्यसिद्धेरेवोद्देश्यत्वात् । नापि द्रव्यादिषट्पदार्थान्यतमत्वम्, स्वरूपासिद्धिप्रसङ्गात् । नापि द्रव्यादिषट्पदार्थसादृश्ये तत्सप्तकान्यतमत्वमप्रयोजकत्वात्, नहि यत्राभावभिन्नत्वं साध्यं तत्र तद्घटि-तान्यतमत्वमेव हेतुःभवितुमर्हति, तथासति द्रव्यादिषट्पदार्थध्वंसे तत्सप्तकान्यतमत्वेन हेतुना ध्वंसेऽप्यभाव-भिन्नत्वसिद्धिप्रसङ्गात्, अतः परिशेषादभावभिन्नत्वमेव भावत्वं । तथाचाभावभिन्नत्वे साध्ये अभावभिन्नत्वप्रमा-विषयत्वमेव हेतुरिति साध्याविशिष्टत्वं दुर्वारमिति दर्शितमहादेवव्याख्यानमयुक्तमिति चेत्तर्हि सत्त्वेनेत्यस्य नञुल्लेखरहितप्रतीतिविषयत्वादित्यर्थः । नचैवं नञुल्लेखरहितप्रमेयत्वध्वंसत्वादिप्रकारकप्रमाविषये ध्वंसादौ व्यभिचार इति वाच्यं । नञुल्लिखितप्रतीत्यविषयत्वस्य तदर्थत्वात् । ध्वंसादेरपि घटो नेत्यादिप्रतीतिविषयत्वस्य प्राचीनैरभ्युपगमेन तत्र व्यभिचाराभावात् । एतेनेदं तम इति प्रतीतिविषये तमस्यपि व्यभिचारो निरस्तः । तेजो नेतिप्रतीतिविषयताया अपि तत्र सत्त्वात् पूर्वपक्षिमते तमसो द्रव्यत्वाच्च । नच सादृश्याभावो नेति प्रतीति-विषयतामादाय स्वरूपासिद्धिरिति वाच्यं, अभावाप्रकारकत्वस्य प्रतीतिविशेषणत्वात् । प्रमायन्यत्वमपि प्रती-

**दिनकरीयम्.**

मभ्युपेत्येदं निराकृतमिति भावः। **सत्त्वेन** भावत्वेन। **प्रतीयमानत्वात्** प्रमीयमानत्वात् । मणिसमवधानका-लीनवह्निना दाहापत्तिवारणाय प्राभाकरेण साधितां शक्तिं दूषयति। **मण्याद्यभावेति** ॥ अतिरिक्तशक्तिकल्पा-नां पूर्वोक्तनाश्यनाशकभावकल्पनां चापेक्ष्य लाघवाद्दाहत्वावच्छिन्नं प्रति मण्यभावविशिष्टवह्नित्वादिनैव हेतुत्व-कल्पनमुचितमिति भावः । **दाहादिकमिति** ॥ आदिपदेन वह्नेः सङ्ग्रहः, मणिसत्त्वे वह्नेरप्यनुत्पत्तेः । तथा च मणिरूपप्रतिबन्धकसद्भावान्न दाहवह्नी इति भावः । ननु यदा कदाचिन्मण्यभावविशिष्टाद्वह्नेर्दा-हापत्तिः कारणतावच्छेदकावलीढकारणसत्त्वस्यैव कार्योत्पत्तिनियामकत्वात्, मण्यभावविशिष्टवह्नित्वं वह्निवि-शिष्टमण्यभावत्वं वा कारणतावच्छेदकमित्यत्र विशेषणविशेष्यभावे विनिगमनाविरहेण गुरुभूतकार्यकारण-

**रामरुद्रीयम्.**

कानिरासाय तदर्थमाह । **प्रमीयमाणत्वादिति** ॥ **यदा कदाचिदिति** ॥ मणिसत्त्वदशायामपि पूर्व-कालावच्छेदेन मण्यभावसामानाधिकरण्यरूपवैशिष्ट्यवतो वह्नेर्दाहापत्तिरिति भावः । ननु कारणताव-च्छेदकविशिष्टकारणसत्त्वमेव कार्योत्पत्तिप्रयोजकं, तदधिकरणे मण्यभावासत्त्वदशायां सामानाधिकरण्य-सम्बन्धेन मण्यभावविशिष्टवह्न्यधिकरणत्वाभावान्न दाहापत्तिरित्यत आह । **कारणतावच्छेदका-वलीढेति** ॥ कारणतावच्छेदकोपलक्षितेत्यर्थः । अन्यथा विशेषणज्ञानस्य विषयितासम्बन्धेन विशेषण-विशिष्टज्ञानरूपस्य विशिष्टबुद्धिहेतुत्वे गतानागतविशेषणज्ञानजन्यविशिष्टज्ञाने व्यभिचारापत्तेरिति भावः । ननु विषयितासम्बन्धेन विशेषणस्य न कारणतावच्छेदकत्वमपि तु विशेषणनिरूपितविषयिताया एव, विषयिता च ज्ञानसमानकालीनैवेति कारणतावच्छेदकविशिष्टस्य कार्योत्पत्तिप्रयोजकत्वेऽपि न क्षतिरित्यस्वरसादाह । **मण्या-द्यभावेति** ॥ **गुरुभूतेति** ॥ वह्नित्वेन मण्यभावत्वेन कारणत्वाङ्गीकारेऽपि कारणताद्वयमेव, किं तु लघुधर्मा-वच्छिन्नं । मण्यभावविशिष्टवह्नित्वादिना कारणत्वे तु गुरुधर्मावच्छिन्नकारणताद्वयमापद्येतेति भावः । नन्वेवं मणेः

**तन्त्रयेण मण्यभावादेरेव वा हेतुत्वं कल्प्यते। अनेनैव सामञ्जस्ये अनन्तशक्तितत्प्रागभावध्वं-**

## प्रभा.

अनन्तरं सादृश्यस्य अतिरिक्तत्वखण्डनेन च परिहरति—**मण्याद्यभावेति** ॥ दाहादिकं प्रतीत्यत्रादिना वह्नि-परिग्रहः। मण्यादिसत्त्वे दाहस्येव वह्नेरप्यनुत्पत्तेः। तथाच दाहत्वाद्यवच्छिन्नं प्रति मण्याद्यभावविशिष्टवह्नित्वेन तद्धेतुत्वस्वीकारेणैव मण्यादिसत्ताकाले दाहाद्यापत्तिवारणे शक्तिर्नाङ्गीकर्तव्येति भावः। ननु दाहं प्रति मण्याद्यभावविशिष्टवह्नित्वेन वह्निविशिष्टमण्याद्यभावत्वेन वेत्यत्र विनिगमकाभावात् गुरुतरानन्तकार्य-कारणभावापत्त्या वह्नेश्शक्तिमत्त्वेन हेतुत्वमेवोचितमित्यत आह—**मण्यभावादेरिति** ॥ आदिना मन्त्रा-भावौषध्यभावयोः परिग्रहः। तथाच प्रतिबन्धकत्वं न कार्यानुकूलधर्मविघटकत्वं, अनुमितिं प्रति बाधसत्प्रति-पक्षयोः प्रतिबन्धकत्वानापत्तेः। किन्तु कारणीभूताभावप्रतियोगित्वरूपं, तच्च मण्यभावहेतुत्व एव सम्भवतीति भावः। ननु प्रतिबन्धकत्वस्यैतादृशत्वे घटकारणदण्डात्मकाभावप्रतियोगिनि दण्डाभावे, घटकारणीभूतघ-टप्रागभावप्रतियोगिनि घटे, विषयविधया प्रत्यक्षकारणघटात्यन्ताभावप्रतियोगिनि घटे, अतिव्याप्तिरिति चेन्न कारणतावच्छेदकाभावत्वघटकप्रतियोगित्वस्यैव कारणीभूताभा[illegible]तियोगित्वपदार्थत्वात्। प्रकृते दण्डाभावाभाव-त्वस्य कारणतावच्छेदकत्वाभावात्, प्रागभावस्य तत्तद्व्यक्तित्वेनैव हेतुत्वात्, प्रत्यक्षे घटाद्यभावस्य विषयत्वेन तत्तद्व्यक्तित्वेन वा हेतुत्वाच्चोक्तस्थलेष्वतिव्याप्तेरभावात्। ननु वह्नेः मण्यभावादीनाञ्च हेतुत्वापेक्षया एकस्य वह्नेश्शक्तिमत्त्वेन हेतुत्वमेवोचितमित्यत आह—**अनेनैवेति** ॥ दाहादिकं प्रति मण्यभावादेः हेतुत्वेनैवेत्यर्थः। **सामञ्जस्य इति** ॥ मण्यादिसमवधानकाले दाहाद्यापत्तिवारण इत्यर्थः। **अनन्तशक्तीति** ॥ वह्निनिष्ठाः

## मञ्जूषा.

तिविशेषणं। तेन घटो नेतिप्रतीतौ घटाभावत्वेन रूपेण कदाचित्सादृश्यस्य भानेऽपि न क्षतिः। तथाच प्रतियोगि-तासंबन्धावच्छिन्नाभाववृत्तिप्रकारतानिरूपितभ्रमानिरूपितविशेष्यताशून्यत्वादिति पर्यवसितोऽर्थः। तेन न नञुल्लिखितत्वनिर्वचनप्रयासगौरवप्रसक्तिः। अस्मद्गुरुचरणास्तु 'तत्र प्रतीतिं प्रमाणयति-सत्त्वेनेति भावत्वेनेत्यर्थः। प्रतीयमानत्वादिति प्रमाविषयत्वादित्यर्थः' इति व्याचक्रुः। तथाच सत्त्वेनेत्यादिग्रन्थो न सादृश्यस्याभाव-भिन्नत्वेऽनुमानप्रदर्शनपरः किन्तु प्रत्यक्षप्रमाणप्रदर्शनपर इत्याशयः। एतद्व्याख्यानेऽपि भावत्वेनेत्यस्याभावभि-न्नत्वेनेत्यर्थः अभावभिन्नत्वे तद्विषयकप्रत्यक्षप्रतीतेरेव साधकत्वादिति बोध्यम्। **अनन्तशक्तीति** ॥ ननु मणेर्दाहप्रतिबन्धकत्वव्यवहारान्यथानुपपत्त्यैव शक्तिस्सिद्ध्यति, कार्यानुकूलधर्मविघटकत्वस्यैव प्रतिबन्धक-त्वपदार्थत्वात्। यत्तु प्रतिबन्धकत्वं न कार्यानुकूलधर्मविघटकत्वं, बाधज्ञानस्यानुमितिप्रतिबन्धकत्वाभावापत्ते-रिति महादेवेनोक्तं, तत्तुच्छं मणेर्वह्निनिष्ठदाहानुकूलशक्तिविघटकताया इव बाधज्ञानस्यापि परामर्शात्ममनस्सं-योगादिनिष्ठानुमित्यनुकूलशक्तिविघटकतायास्सुवचत्वादिति चेदत्र पृच्छामः, शक्तिं प्रति किं कारणं। वह्निरिति चेत्तर्हि मणिसमवहितेन वह्निना कुतो नोत्पद्यते। मणिना प्रतिबन्धादिति चेन्मणेर्हि शक्तिनाशकत्वं त्वया स्वीकृतं नतु शक्तिप्रतिबन्धकत्वं। तथाच पूर्वशक्तेर्मणिना नाशेऽपि शक्त्यन्तरोत्पत्तिर्दुर्वारा। अथोत्पन्नाऽपि

## दिनकरीयम्.

भावद्वयापत्तिश्चेत्यत आह। **मण्यभावादेरिति** ॥ तथा च प्रतिबन्धकत्वं न कार्यानुकूलधर्मविघटकत्वं बाधज्ञानस्यानुमितिप्रतिबन्धकत्वाभावापत्तेः। किं तु कारणीभूताभावप्रतियोगित्वम्, तच्च मण्यभावस्य हेतुत्व एवोपपद्यते न त्वतिरिक्तशक्तिसत्त्व इति भावः। ननु प्रतिबन्धकत्वस्येदृशत्वे कारणीभूतवह्निरूपाभावप्रति-

## रामरुद्रीयम्.

प्रतिबन्धकत्वानुपपत्तिः. कारणविघटकस्यैव प्रतिबन्धकत्वान्मणेर्मण्यभावानाशादित्यत आह—**तथा चेति** ॥ **बाधज्ञानस्येति** ॥ यत्र परामर्शनाशानन्तरं लौकिकप्रत्यक्षरूपो बाधनिश्चयस्तत्र बाधनिश्चयोत्पत्तिद्वितीयक्षणे परामर्शनिष्ठशक्तिनाशो वक्तव्यः, तथा च बाधोत्पत्तितृतीयक्षणे बाधेनानुमितिप्रतिबन्धो वाच्यः स च न सम्भवति तत्पूर्वं परामर्शाभावादेवानुमित्यनुत्पादसम्भवात्, बाधद्वितीयक्षणेऽनुमित्यापत्तेश्च तत्पूर्वं शक्तिविशिष्टपरामर्शसत्त्वादिति भावः। **न त्वतिरिक्तेति** ॥ अतिरिक्तशक्त्यङ्गीकारे मण्यभावस्य कारणत्वे

## प्रभा.

दाहानुकूलशक्तयः मणिमन्त्रौषधिनिष्ठाः शक्तिनाशकतावच्छेदिकाः शक्तयः तासां प्रागभावाः तासां ध्वंसाश्च कल्पनीया इति गौरवमित्यर्थः । इदमुपलक्षणं । शक्तिनाशं प्रति शक्तेः मण्यादीनाञ्च, शक्तिम् प्रति मण्यभावादीनाञ्च कारणत्वकल्पनागौरवमपि बोध्यम् । ननु मण्यादिस्थलीयदाहं प्रति उत्तेजनकस्यैव हेतुताऽस्तु लाघवादिति चेन्न मण्याद्यनुत्तरदाहं प्रति मण्याद्यभावस्य हेतुतावश्यकतया कार्यकार-

## मञ्जूषा.

शक्तिनाशकसमवधानान्नश्यतीति चेत् नश्यताम् तृतीयक्षणे, द्वितीयक्षणे च दाहः केन वारणीयः । अथ मणेश्शक्तिनाशकत्वमिव शक्तिप्रतिबन्धकत्वमपि स्वीक्रियत इति चेत्तर्हि मणेश्शक्तिप्रतिबन्धकत्वं नाम। शक्त्यनुकूलधर्मविघटकत्वमिति चेत् कोऽसौ शक्त्यनुकूलधर्मः, वह्निनिष्ठशक्त्यन्तरमिति चेत्तदेव कुतो न । तदानीं मणिना नाशादिति चेत् नश्यतात्पूर्वमन्यदुत्पद्यताम् । तत्रापि मणिः प्रतिबन्धक इति चेत्तर्हि तत्राप्युक्तैव फक्किका । तथाच शक्तीनामनवस्था । तदेतदभिप्रेत्य ग्रन्थकृतोक्तम**नन्तशक्तीति** । अथ मणिसमवधानकालीनवह्निनिष्ठदाहशक्तित्वाद्यवच्छिन्नं प्रति उत्तेजकानां, वह्निनिष्ठदाहशक्तित्वावच्छिन्नं प्रति तृणारणिमणिन्यायेन मण्यभावोत्तेजकयोरुत्तेजकाभावविशिष्टमण्यभावस्यैव वा, हेतुत्वकल्पनान्नोक्तदोष इति चेत्सत्यं किंतु दाहं प्रत्येवैदृशंकारणता स्वीक्रियतां किमन्तरा शक्तिमभ्युपगम्य तां प्रत्युक्तकारणतास्वीकारेण । तदेतदभिप्रेत्योक्तम्—**अनेनैव सामञ्जस्य इति** ॥ तथाचायातं कारणीभूताभावप्रतियोगित्वस्य प्रतिबन्धकत्वपदार्थतया । किंचास्त्वेवं कारणतास्वीकारः, तथापि वह्निनिष्ठदाहानुकूलशक्तिनाशं प्रति मणेः केन रूपेण कारणत्वं, मणित्वेनेति चेत्तर्ह्युत्तेजकसमवहितेन मणिना कुतो न शक्तिनाशः, अत एव न शक्तिमत्त्वेन मणेर्वह्निनिष्ठशक्तिनाशकता, मणिसत्त्वे तन्निष्ठशक्तेरनाशात् । अथ मणिशक्तेरुत्तेजिका विघटिका इति चेत् किं तद्विघटकत्वं, नाशकत्वं प्रतिबन्धकत्वं वा, आद्ये एकशक्तिनाशे शक्त्यन्तरोत्पादे बाधकाभावः । द्वितीये तु उत्तेजकस्य मणिशक्तिप्रतिबन्धकतानुपपत्त्या शक्तिसिद्धावपि वह्निनिष्ठदाहशक्तिनाशानुकूलमणिशक्त्युत्पादनानुकूलशक्त्यन्तरं मणौ तदन्यस्मिन् वा यत्र क्वचिदङ्गीकार्यं । तदपि

## दिनकरीयम्.

योगिनि वन्ह्यभावेऽतिव्याप्तिः, स्वप्रागभावप्रतियोगिनि घटादौ चेति चेन्न । तादात्म्यातिरिक्तसम्बन्धावच्छिन्ना या कारणता तदाश्रयीभूतो यो भावभिन्नात्यन्ताभावस्तत्प्रतियोगित्वस्य विवक्षितत्वात् । कारणताविशेषोपादानाच्च स्वात्यन्ताभावप्रत्यक्षे स्वस्य प्रतिबन्धकत्वापत्तिः परास्ता । विषयस्य तदात्म्यसम्बन्धेनैव प्रत्यक्षे हेतुत्वात् । ननु वह्निमण्यभावयोर्द्वयोर्हेतुत्वापक्षेयाऽतिरिक्तशक्तेरेकस्या एव हेतुता युक्ता लाघवादित्यत आह । **अनेनैवेति** । दाहादिकं प्रति मण्यभावादेर्हेतुत्वकल्पनेनैवेत्यर्थः । **सामञ्जस्ये** मणिसमवधान-

## रामरुद्रीयम्.

युक्तिविरहात् कारणीभूताभावप्रतियोगित्वरूपप्रतिबन्धकत्वस्य मणावसंभवादिति भावः । **वन्ह्यभावेति** ॥ कारणाभावे प्रतिबन्धकताव्यवहाराभावात् कारणसत्त्वे कार्यानुत्पत्तिप्रयोजकस्यैव प्रतिबन्धकत्वेन व्यवह्रियमाणत्वान्नेष्टापत्तिसंभव इति भावः । **घटादौ चेति** ॥ तथा च स्वस्य स्वोत्पत्तौ प्रतिबन्धकत्वापत्तिरिति भावः । प्रतिबन्धकाभावस्य कार्यकालवृत्तित्वेन कारणतया नात्रापीष्टापत्तिः । **भावभिन्नोऽत्यन्ताभाव इति** ॥ वह्न्यभावाभावं वह्निस्वरूपमादाय वन्ह्यभावे प्रतिबन्धकत्वापत्तिवारणाय भावभिन्न इति, प्रागभावमादाय स्वस्मिन् स्वप्रतिबन्धकत्वापत्तिवारणाय—**अत्यन्ताभाव इति** ॥ यद्यप्यत्यन्ताभावत्वं नित्यत्वे सति संसर्गाभावत्वं तच्च न वह्न्यादौ, भावभिन्नत्वरूपाभावत्वस्यैव तत्रासत्त्वात् तथापि प्रकृते अत्यंताभावत्वं नाभावत्वघटितं किं तु अन्योन्याभावभिन्नत्वे सति ध्वंसप्रागभावभिन्नत्वे सति सप्रतियोगिकत्वमतो न भावभिन्न इत्यस्य वैयर्थ्यम् । अत एव यत्र अनुयोगिवाचकपदोत्तरं सप्तमी तत्र नञा अत्यन्ताभावो बोध्यत इति नियमोऽप्युपपद्यते अन्यथा भूतले घटो नास्तीत्यादौ न स्यादेव नञा अत्यन्ताभावस्य बोध्यत्वमिति ध्येयम् । **परास्तेति** ॥ न चोक्तापत्तिवारणाय दैशिकविशेषणतासम्बन्धावच्छि-

## प्रभा.

णभावद्वयापत्तेः । किञ्च मण्यादिस्थलीयत्वं मण्याद्युत्तरत्वमेव वाच्यम् । एवंच मण्युत्तरत्व-मन्त्रोत्तरत्वौषध्युत्तरत्वानामेकस्मिन्दाहे असंभाविततया त्रयाणां प्रत्येकमेव कार्यतावच्छेदकत्वं वाच्यमिति प्रत्येकधर्मावच्छिन्नं प्रति उत्तेजकानां सर्वेषां तावदन्यतमत्वेन हेतुत्वस्य वक्तव्यतया कार्यतावच्छेदककारणतावच्छेदकगौरवात् कार्यकारणभावानन्त्यप्रसङ्गाच्च । ननु दाहं प्रति उत्तेजकाभावविशिष्टमण्यादेः केन संबन्धेन प्रतिबन्धकत्वम्, न संयोगसम्बन्धेन, मणिसंयुक्तेऽपि वह्नौ संयोगेन द्रव्यस्याव्याप्यवृत्तितया संयोगेन मण्यभावसत्त्वादिति चेदत्राहुः प्राञ्चः। संयोगस्याव्याप्यवृत्तित्वेऽपि भावाभावसाधारणविशेषणताया व्याप्यवृत्तित्वात् तस्या एव प्रतिबन्धकतावच्छेदकसंबन्धत्वं स्वीक्रियते, उत्तेजकीभूतमण्यादेरपि तादृशसंबन्धेनैवोत्तेजकत्वं, तथाचोत्तेजकीभूततत्तन्मणिव्यक्तित्वावच्छिन्नतादृशविशेषणतासंबन्धावच्छिन्नप्रतियोगिताकाभावकूटोत्तेजकीभूतौषधिव्यक्तित्वावच्छिन्नतादृशसंबन्धावच्छिन्नप्रतियोगिताकाभावकूटोत्तेजकीभूततत्तन्मन्त्रत्वावच्छिन्नोद्देश्यत्वसंबन्धावच्छिन्नप्रतियोगिताकाभावकूटैतत्त्रयस्य विशेषणताद्वयघटितसामानाधिकरण्यरूपं यद्वैशिष्ट्यं तद्विशिष्टमणीनामोषधीनां च तावदन्यतमत्वावच्छिन्ननिरुक्तविशेषणतासंबन्धावच्छिन्नप्रतियोगिताकाभावस्य मन्त्राणामुद्देश्यतासंबन्धेनैव प्रतिबन्धकतया निरुक्ताभावकूटत्रयस्योद्देश्यत्व-दैशिकविशेषणतोभयघटितसामानाधिकरण्यरूपं यद्वैशिष्ट्यं तद्विशिष्टप्रतिबन्धकीभूतमन्त्राणां तावदन्यतमत्वावच्छिन्नोद्देश्यत्वसंबन्धावच्छिन्नप्रतियोगिताकाभावस्य चाभावीयदैशिकविशेषणतासंबन्धेन हेतुत्वमिति । नव्यास्तु भावत्वाभावत्वयोर्विरोधात् भावाभावसाधारणविशेषणतायां मानाभावः । परन्तु संयोगस्याव्याप्यवृत्तित्वेऽपि तन्निरूपिताधिकरणतायाः स्वरूपसंबन्धरूपायाः

## मञ्जूषा.

तदा कुतो नेत्याशङ्कायां तत्राप्युत्तेजिका विघटिका वाच्या इत्यनवस्था । अथ मन्यते दाहशक्तिनाशानुकूलमणिशक्तेर्नाशका एवोत्तेजकाः न प्रतिबन्धकाः । अतश्चोत्पन्नमपि दाहशक्तिनाशानुकूलं शक्त्यन्तरं पुनरेवोत्तेजकेन नाश्यते नातो दाहशक्तिनाशप्रसंग इति । तत्र ब्रूमः । उत्पन्नं मणौ शक्त्यन्तरं तृतीयक्षणे नाश्येताऽन्यथा नास्तिकमतप्रवेशप्रसङ्गात् । तथाच द्वितीयक्षणे वह्नौ दाहशक्तिनाशप्रसङ्गः। ततश्चोत्तेजकाभावविशिष्टमण्यभावरूपकारणबलात्पुनर्वह्नौ दाहशक्त्यन्तरोत्पादेनोत्तरक्षणे दाहजननसंभवेऽपि वह्नेर्दाहा विच्छिद्य विच्छिद्योत्पद्येरन् । अथ सतोर्मण्युत्तेजकयोरिष्यत एवेदं, क्षणव्यवधानस्य दुर्ज्ञेयत्वात् । अथवा दाहशक्तिनाशानुकूला मणिशक्त्यो द्वितीयक्षण एवोत्तेजकेन नाश्यन्ते तासां च पूर्वकालवृत्तितया, सहभावेन च दाहशक्तिनाशानुकूलता अतो न दाहशक्तेर्नाशः । नचैतावता नास्तिकत्वप्रसंगः कृत्स्नस्य जगतः क्षणिकत्वानंगीकारात् । नैकदेशस्वीकारमात्रेण नास्तिकता । तथासति नाशस्वीकारमात्रेण सर्वेषामेव तथात्वप्रसङ्गादिति चेदेवं सति यावन्मण्युत्तेजकसमवधानमुत्पन्नप्रध्वंसिनीर्मणिशक्तीर्वह्निशक्तीर्वा गणयितुमीश्वरोऽपि नेश्वरः । तदिदमभिप्रेत्योक्तमनन्तशक्तीति । यदि तु मणिशक्तिं प्रत्युत्तेजकाभावस्य कारणत्वान्न तदा मणौ शक्त्युत्पत्तिरिति मन्यते तदा किमपराद्धं मण्यभावस्य दाहकारणतया । तथाचागतं मणिशक्तिं प्रत्युत्तेजकानां कारणीभूताभावप्रतियोगित्वरूपया प्रतिबन्धकतया । अथ मणौ न दाहशक्तिनाशानुकूला शक्तिःस्वीक्रियते किंतु दाहशक्तिनाशं प्रत्युत्तेजकाभावविशिष्टमणेः कारणत्वमतो नोक्तदोष इति चेत्तर्ह्युत्तेजकाभावविशिष्टमणेर्मणिविशिष्टोत्तेजकाभावस्य वेति विनिगमनाविरहादवच्छेदकगौरवाच्च मणेरुत्तेजकाभावस्य च दण्डचक्रन्यायेन दाहशक्तिनाशं प्रति कारणतैव युक्ता । तथाचागतं दाहशक्तिनाशं प्रत्युत्तेजकानां दर्शितप्रति

## दिनकरीयम्.

दशायां दाहवारणे । प्रागभावे मानाभावादाह । **ध्वंसेति** ॥ इदमुपलक्षणं प्रतियोगिध्वंसयोः शक्तिनाश-

## रामरुद्रीयम्.

त्वमेव कारणताविशेषणमस्तु तथा च भावानां दैशिकविशेषणतासम्बन्धेन अकारणत्वाद्भावभिन्न इत्यपि नोपादेयमिति वाच्यम् । चक्षुस्संयुक्तविशेषणतादिना भावानामपि दैशिकविशेषणतया कारणत्वेन तदावश्य-

सकल्पनाऽनौचित्यात् । नचोत्तेजके सति प्रतिबन्धकसद्भावेऽपि कथं दाह इति वाच्यं; उत्तेजकाभावविशिष्टमण्यभावस्य कारणत्वात् ॥ सादृश्यमपि न पदार्थान्तरं किं तु

प्रभा.

व्याप्यवृत्तितया तादृशाधिकरणत्वस्यैवोत्तेजकतावच्छेदकसंबन्धत्वं प्रतिबन्धकतावच्छेदकसंबन्धत्वं च स्वीक्रियते—तथाचोत्तेजकीभूताः याः मणिव्यक्तयः—याश्चौपधिव्यक्तयः तावदन्यतमत्वावच्छिन्ननिरुक्ताधिकरणत्वसंबन्धावच्छिन्नप्रतियोगिताकाभावस्य, उत्तेजकीभूता याः मन्त्रव्यक्तयः तावदन्यतमत्वावच्छिन्नोद्देश्यत्वसंबन्धावच्छिन्नप्रतियोगिताकाभावस्य च निरुक्ताधिकरणत्वाभावीयदैशिकविशेषणत्वोभयघटितसामानाधिकरण्यरूपं यद्वैशिष्ट्यं तद्विशिष्टा याः प्रतिबन्धकीभूतमणिव्यक्तयः ओपधिव्यक्तयश्च तावदन्यतमत्वावच्छिन्ननिरुक्ताधिकरणत्वसंबन्धावच्छिन्नप्रतियोगिताकाभावस्य ,निरुक्तोत्तेजकाभावत्रयस्य च उद्देश्यत्व-दैशिकविशेषणत्वोभयसंबंधघटितसामानाधिकरण्यरूपं यद्वैशिष्ट्यं तद्विशिष्टाः याः प्रतिबन्धकीभूतमन्त्रव्यक्तयः तावदन्यतमत्वावच्छिन्नोद्देश्यत्वसंबन्धावच्छिन्नप्रतियोगिताकाभावस्य चाभावीयदैशिकविशेषणतासंबन्धेन हेतुत्वम्। नचैवमपि मणिसंयोगशून्यकालेऽपि संयोगाधिकरणत्वरूपसंबन्धसत्वाद्दाहानापत्तिरिति वाच्यं संबंधसत्त्वेऽपि तेन संबंधेन मणेरभावात् । वायौ रूपसमवायसत्वेऽपि रूपाभावस्यैव सुवचत्वात् । नचैवं कार्यकारणभावद्वयापत्तिरिति वाच्यं इष्टत्वात् । एकधर्मावच्छिन्नं प्रति बहूनां तत्तद्रूपेण कारणत्वस्य सकलतन्त्रसिद्धत्वादिति प्राहुः । यत्तु-अनुमानमेव शक्तौ प्रमाणं तथा हि वह्निर्दाहानुकूलाद्दिष्टातीन्द्रियधर्मसमवायी दाहजनकत्वात् आत्मवत् । अत्र भर्जनकपालस्थवह्निनिष्ठानुद्भूतरूपमादाय सिद्धसाधनवारणाय साध्ये दाहानुकूलेति । अदृष्टवदात्मसंयोगमादाय तद्वारणाय अद्दिष्टेति । वह्निनिष्ठोष्णस्पर्शमादाय तद्वारणायातीन्द्रियेति । तन्न । दाहनिष्ठजन्यतानिरूपितजनकत्वस्य जन्यमात्रकारणकालादि-

मञ्जूषा.

बन्धकतया । यत्त्वत्र कैश्चिदुक्तं कारणीभूताभावप्रतियोगित्वस्यैव प्रतिबन्धकत्वपदार्थत्वेऽनुमितौ व्यभिचारज्ञानस्य प्रतिबन्धकता न स्यात् तदभावस्यानुमित्यजनकत्वादिति तत्तुच्छम् । इष्टत्वात् , तत्कारणप्रतिबन्धकतयैव तत्प्रतिबन्धकत्वव्यवहारात् । कथमन्यथा भवतां तदुपपत्तिः अनुमित्यनुकूलव्याप्तिज्ञानविघटकत्वादिति चेद्व्यभिचारज्ञानं हुत्पत्स्यमानां व्याप्तिधियं प्रतिबध्नाति न तूत्पन्नां विघटयति विघटकता हि नाशकता नतु प्रतिबन्धकता अनवस्थानात् । अथोत्पन्नामपि तां स्वोत्तरोत्पन्नगुणविधया विघटयतीति चेत्तर्हि व्याप्तिज्ञानानुत्तरव्यभिचारज्ञानस्य प्रतिबन्धकताविरहप्रसंगः । स्वोत्तरोत्पन्नगुणविधया पूर्वपरामर्शनाशकस्य परामर्शान्तरस्यानुमितिप्रतिबन्धकत्वापत्तिश्च । तस्मात्कारणीभूताभावप्रतियोगित्वमेव प्रतिबन्धकत्वमिति सिद्धं । ननु प्रतिबन्धकत्वस्येदृशत्वे कारणीभूतवह्निरूपाभावप्रतियोगिनि वह्न्यभावेऽतिव्याप्तिः, स्वप्रागभावप्रतियोगिनि घटादौ चेति चेदत्र महादेवः—तादात्म्यातिरिक्तसम्बन्धावच्छिन्नकारणताश्रयीभूतो यो भावभिन्नोऽत्यन्ताभावः तत्प्रतियोगित्वं विवक्षितं । कारणताविशेषोपादानाच्च स्वात्यन्ताभावप्रत्यक्षे स्वस्य प्रतिबन्धकतापत्तिः परास्ता । विषयस्य तादात्म्यसंबन्धेनैव प्रत्यक्षहेतुत्वादिति निरवोचत् । तन्न विचा-

दिनकरीयम्.

मण्योः शक्तिमण्यपसारणयोश्च कार्यकारणभावकल्पनाऽपि स्यादित्यपि बोध्यम् । उत्तेजकाभावेति । तथा च केवलं मणिर्न प्रतिबन्धकः किं तु उत्तेजकाभावविशिष्टः, तदभावश्च उत्तेजकसमवधानकालेऽपि तिष्ठतीति न व्यभिचार इति भावः । अथ मण्यादिस्थलीयदाहं प्रत्युत्तेजकस्यैव हेतुताऽस्त्विति चेन्न । तस्यानुगतत्वात्त-

रामरुद्रीयम्.

कत्वात् । इदमिहेतिप्रतीतिनियामकविशेषणतारूपस्य तस्य लघुत्वाच्चेति ध्येयम् । तस्याननुगतत्वादिति ॥ मणिमन्त्रमहौषध्यादिषु उत्तेजकत्वस्यैकस्य दुर्वचत्वात् पृथिवीत्वादिना सांकर्येण तस्य जातित्वासम्भवादिति भावः । नन्वेवमुत्तेजकाभावविशिष्टमण्यभावत्वेनापि हेतुता न संभवति उत्तेजकस्याननुगत-

## प्रभा.

वृत्तित्वेन तत्र साध्याभावेन व्यभिचारात् । दाहत्वावच्छिन्ननिरूपितजनकत्वस्य दृष्टान्तेऽसत्वात्, दाहत्वावच्छिन्नं प्रत्यात्मत्वेन कारणत्वे मानाभावात् । नैयायिकमते दाहत्वावच्छिन्नं प्रति तादृशमण्यभावस्य हेतुतया तत्र निरुक्तधर्मसमवायित्वरूपसाध्याभावात् । प्रागभावाङ्गीकर्तृमते दाहं प्रति दाहप्रागभावस्य हेतुतया तत्र निरुक्तसाध्याभावाच्च । परे तु—वह्निं प्रति तृणफूत्कारसंयोगत्वादिना कारणत्वे व्यभिचारेण तृणफूत्कारसंयोगादिषु एकां शक्तिं परिकल्प्य तादृशशक्तिमत्वेनैव कारणत्वकल्पनमावश्यकमिति अतिरिक्तशक्तिसिद्धिः । न च वह्नौ वैजात्यत्रयं परिकल्प्य तत्तद्वैजात्यावच्छिन्नं प्रति तृणफूत्कारसंयोगत्वादिना कारणतात्रयस्वीकारेणैव व्यभिचारवारणान्नातिरिक्तशक्तिकल्पनमिति वाच्यं, वैजात्यत्रयकल्पनापेक्षया तादृशसंयोगानामेकशक्तिमत्वेन हेतुत्वस्यैव लघुत्वादित्याहुः । तन्न । तृणफूत्कारसंयोगत्वावच्छिन्नप्रतियोगिताकभेद-अरणिनिर्मन्थनसंयोगत्वावच्छिन्नप्रतियोगिताकभेद-मणितरणिकिरणसंयोगत्वावच्छिन्नप्रतियोगिताकभेदैतत्त्रयावच्छिन्नप्रतियोगिताकभेदरूपान्यतमत्वेन त्रयाणां हेतुत्वेनैव व्यभिचारवारणे शक्तौ प्रमाणाभावात् । केचित्तु 'तत्तत्संबन्धसाधारणैकजातेरेवाभ्युपगमात् । नच योग्यवृत्तिजातेः योग्यत्वापत्तिरिति वाच्यम् । दोषविशेषेण शक्तेरिवायोग्यत्वकल्पनात् । नच

## मञ्जूषा.

यते । अत्यन्ताभावनिवेशेनैव कारणीभूतवह्निरूपाभावप्रतियोगिनि वह्न्यभावेऽतिव्याप्तिवारणसम्भवात् भावभिन्नत्वनिर्वचनमफलम् । नचात्यन्ताभावत्वमिह न त्रैकालिकसंसर्गाभावत्वं येन वह्निस्तेन व्यावर्त्येत किंत्वनुयोगिताविशेषरूपं भावाभावसाधारणं इति वाच्यं, तस्याव्यावर्तकत्वात् प्रागभावस्यापि स्वाभावाभावरूपत्वेन तद्व्यावर्तनासंभवाच्च । अथात्यन्ताभावपदं स्वात्यन्ताभावपरं । स्वं प्रतिबन्धकत्वेनाभिमता व्यक्तिः । घटप्रागभावश्च न घटात्यन्ताभाव इति तद्व्यावर्तनमिति चेत्किं स्वात्यन्ताभावत्वं स्वप्रतियोगिकत्वे सत्यत्यन्ताभावत्वमिति यदि तर्हि घटप्रागभावोऽपि घटप्रतियोगिकः घटप्रागभावात्यन्ताभावात्यन्ताभावश्चेति कथं तद्व्यावर्तनम् । अथ स्वनिष्ठप्रतियोगितानिरूपकात्यन्ताभावत्वरूपानुयोगिताविशेषवत्त्वं तत् घटप्रागभावनिष्ठात्यन्ताभावत्वं तु न घटनिष्ठप्रतियोगितानिरूपितं किं तु घटप्रागभावात्यन्ताभावनिष्ठप्रतियोगितानिरूपितमिति चेत्तथाऽपि दाहकारणीभूतो यो मण्यभावः किंचिद्विशिष्टस्य तस्याभावोऽपि स्वात्यन्ताभावात्मकमण्यभावप्रतियोगित्वाद्दाहप्रतिबन्धकस्स्यात् । घटप्रागभावात्यन्ताभावत्वस्य घटतद्ध्वंसयोरपि स्वीकारेण घटनिष्ठा या घटप्रागभावात्यन्ताभावत्वावच्छिन्ना प्रतियोगिता तन्निरूपितात्यन्ताभावत्वरूपानुयोगिता-

## दिनकरीयम्.

दभावकूटविशिष्टमण्यभावस्य चानुगतत्वात् । अत्रेदं बोध्यं, अभावीयविशेषणतासम्बन्धेन दाहत्वावच्छिन्नं प्रति उद्देश्यतादैशिकविशेषणतान्यतरसम्बन्धावच्छिन्नप्रतियोगिताकानां तत्तदुत्तेजकाभावानां सामानाधिकरण्यरूपं यद्वैशिष्ट्यं तदवच्छिन्नस्य मण्यादेर्दैशिकविशेषणतोद्देश्यतान्यतरसंबन्धावच्छिन्नप्रतियोगिताका-

## रामरुद्रीयम्.

स्याभावादित्यत आह । **तदभावकूटेति** ॥ उत्तेजकाभावकूटविशिष्टमण्यभावस्य हेतुत्वे मन्त्ररूपोत्तेजकदशायामपि मन्त्रस्य गगनविशिष्टत्वेन वन्ह्यधिकरणे देशेऽभावसत्त्वात्सामानाधिकरण्यसम्बन्धेन तदुत्तेजकाभावविशिष्टमणिसत्त्वाद्दाहानुत्पादप्रसङ्गः । किं च संयोगेन द्रव्यस्याव्याप्यवृत्तितामते मणिसत्त्वेऽपि किंचिदवच्छेदेन संयोगेन मण्यभावसत्त्वात् दाहापत्तिश्चेत्याशङ्कां निराकुरुते । **अत्रेदं बोध्यमिति** ॥ **अभावीयविशेषणतेति** ॥ दाहस्य रूपध्वंसरूपतया विशेषणतयैव तदुत्पत्तेरिति भावः । **उद्देश्यतादैशिकविशेषणतान्यतरेति** ॥ मन्त्रस्य उद्देश्यतासम्बन्धेनैव वन्ह्यधिकरणदेशे सत्वात् उद्देश्यतानिवेशः । मण्यादिरूपोत्तेजकस्य सत्त्वेऽपि किंचिदवच्छेदेन संयोगेन तदभावसत्त्वाद्दाहानुपपत्तिरिति दैशिकविशेषणतानिवेशः । दैशिकविशेषणतया तु न द्रव्यस्याव्याप्यवृत्तित्वमिति न दाहानुपपत्तिरिति भावः । इदं च भावाभावसाधारणैदैशिकविशेषणतामभ्युपेत्योक्तम् । **मण्यादेरिति** ॥ आदिना मंत्रादेः परिग्रहः । अत एव सम्बन्धकोटौ

## प्रभा.

नोदमत्वादिना सङ्करः तस्यादोषत्वात् , अन्यतमत्वेन कारणतासंभवाच्च । नचान्यतमत्वघटकभेदानां मिथो विशेषणविशेष्यभावे विनिगमनाविरहेण कारणतावच्छेदकभेदात् कारणताबाहुल्यमिति वाच्यम् । कारणतावच्छेदकानां समनियतानां भेदानामैक्येन कारणतैक्यसंभवात् । नच भेदानां स्वरूपतोऽवच्छेदकत्वासंभवात् तृणफूत्कारसंयोगभेदविशिष्टारणिनिर्मन्थनसंयोगभेदविशिष्टमणितरणिकिरणसंयोगभेदावच्छिन्नप्रतियोगिताकभेदत्वादिना अवच्छेदकत्वं वक्तव्यम् । तथाचावच्छेदकतावच्छेदकभेदादवच्छेदकताभेदः तद्भेदे च कारणताभेद इति वाच्यम् । स्वरूपसंबन्धरूपायाः अतिरिक्ताया वा कारणताया अवच्छेदकभेदेऽप्यभेदादित्यन्यत्र विस्तर' इत्यन्तेन पूर्वोपदर्शितग्रन्थस्य खण्डनमाहुः । तदसत् । स्वरूपसंबन्धरूपायाः कारणतायाः तृणफूत्कारादिसंयोगरूपतया तृणफूत्कारादिसंयोगव्यक्तिभेदेन भिन्नतया एकत्वासंभवात् । अतिरिक्तकारणतास्वीकारे तृणफूत्कारादिसंयोगेषु त्रिषु अतिरिक्तपदार्थरूपकारणतां परिकल्प्य तत्र तादृशभेदत्वाद्यनेक-

## मञ्जूषा.

विशेषाश्रयप्रागभावप्रतियोगिनि घटे अतिव्याप्तिश्च । प्रत्यक्षादौ गुरुत्वादेस्तादात्म्येन प्रतिबन्धकताप्रदर्शकबहुतरग्रन्थकारोक्तिविरोधश्च । कारणीभूतगुरुत्वादिभेदनिष्ठायास्तादात्म्यसंबन्धावच्छिन्नगुरुत्वादिनिष्ठप्रतियोगितानिरूपिताया अनुयोगिताया अत्यन्ताभावत्वरूपत्वाभावात् । तस्मात्कारणतावच्छेदकाभावत्वावच्छिन्ननिरूपितप्रतियोगिताश्रयत्वं प्रतिबन्धकत्वं । वह्नेर्दाहकारणतावच्छेदकं वह्नित्वं । प्रागभावस्य तद्व्यक्तित्वं घटात्यन्ताभावप्रत्यक्षे घटात्यन्ताभावस्य कारणतावच्छेदकं विषयत्वं तद्व्यक्तित्वं वेति न दोषः । अस्मद्गुरुचरणैरप्येतदेव निरुक्तम् । उत्तेजकत्वं तु प्रतिबन्धकसमवधानकालीनकार्योत्पादप्रयोजकत्वं प्रतिबन्धकविशेषणीभूताभावप्रतियोगित्वं वा । अत्र च मन्त्रौषध्यादिरूपाणां उत्तेजकानां नोत्तेजकत्वेनाभावो मणिविशेषणतया प्रतिबन्धकतावच्छेदककोटिप्रविष्टः अन्योन्याश्रयप्रसंगात् । किन्तु मन्त्रत्वौषधित्वादिना । उत्तेजकतावच्छेदकसंबन्धस्तु मन्त्राणामुद्देश्यता सा च स्वोच्चारणप्रयोजकदाहवत्त्वप्रकारकेच्छाविषयत्वम् । औषध्यादीनां तु यथायथं तादात्म्यसंयोगसामानाधिकरण्यसामीप्यादिः । यत्तु मूर्तमात्रस्य दिगुपाधितया दैशिकविशेषणतायाः आवश्यकत्वेन स एवौषधिविशेषाणां उत्तेजकतावच्छेदकसंबन्धः । तस्य कालिकविशेषणतातिरिक्तसंबन्धान्तरनियतत्वान्नातिप्रसङ्ग इति । तन्न । तस्य सकलसंबन्धिसाधारणतयाऽतिप्रसंजकत्वात् । तथापि यद्व्यक्तेस्तादात्म्यसंबन्धेनोत्तेजकत्वं

## दिनकरीयम्.

भावस्य अभावीयविशेषणतासम्बन्धेन हेतुत्वमिति । एतेन संयोगसंम्बन्धावच्छिन्नप्रतियोगिताकमण्यभावस्य तत्संयुक्तेऽपि सत्त्वात् दाहापत्तिरिति परास्तम् । नन्वनुमानमेव शक्तौ प्रमाणम् तथाहि, वह्निः दाहानुकूलाद्विष्ठातीन्द्रियधर्मसमवायी दाहजनकत्वाददृष्टवदात्मवदिति । वह्निद्व्यणुकत्वमादाय भर्जनकपालस्थवह्निनिष्ठानुद्भूतरूपमादाय वा सिद्धसाधनवारणाय साध्ये दाहानुकूलेति, वह्निद्व्यणुकेन्धनसंयोगमादायादृष्टवदात्मसंयोगमादाय वा तद्वारणायाद्विष्ठेति, वह्निनिष्ठोष्णस्पर्शमादाय तद्वारणायातीन्द्रियेतीति चेन्न विपक्षे बाधकतर्कविरहेणास्यानुमानस्याप्रयोजकत्वात् । केचित्तु वह्निं प्रति तृणफूत्कारसंयोगादीनां तृणफूत्कारसंयोगत्वादिरूपेण कारणताया व्यभिचारेणासंभवादतिरिक्तशक्तिसिद्धिः न च तृणफूत्कारयोररणिनिर्मन्थनयोर्मणिकिरणयोश्च सम्बन्धस्य जन्यतावच्छेदकं वह्निवृत्तिवैजात्यत्रयं कल्प्यमिति न व्यभिचार इति वाच्यं, तज्जन्यतावच्छेदकवैजात्यत्रयकल्पनामपेक्ष्य तत्तत्सम्बन्धानामेकशक्तिमत्त्वेन कारणत्वकल्पनाया एव लघुत्वेन

## रामरुद्रीयम्.

-उद्देश्यताप्रवेशः । संयोगस्थाने दैशिकविशेषणताप्रवेशे तूक्तैव युक्तिः । **वह्निद्व्यणुकत्वमिति** ॥ वह्निद्व्यणुकवृत्तिपरिमाणाव्यक्तिमित्यर्थः । तेन वह्निद्व्यणुकत्वस्य नानाद्व्यणुकेषु सत्त्वेपि न क्षतिः । ननु महत्त्वविशिष्टवह्नेरेव पक्षत्वात् न सिद्धसाधनमित्यत आह—**भर्जनकपालस्थेति** ॥ वह्निद्व्यणुकेन्धनसंयोगमादायापि महद्वह्नेः पक्षत्वे न सिद्धसाधनमत उक्तं **मदृष्टवदात्मसंयोगमिति** । स्वाश्रयसंयोगसम्बन्धेन कार्यमात्रे

## प्रभा.

धर्मावच्छिन्नावच्छेदकतानिरूपकताकल्पनापेक्षया तादृशसंयोगेषु त्रिषु एकां शक्तिं परिकल्प्य तादृशशक्तिमत्त्वेन त्रयाणामेकहेतुत्वस्यैव लघुत्वात्। वस्तुतः तृणफूत्कारसंयोगभेदविशिष्टारणिनिर्मन्थनसंयोगभेदविशिष्टमणितरणिकिरणसंयोगभेदावच्छिन्नप्रतियोगिताकभेदानां समनियतानां त्रयाणां ऐक्येन तत्स्वरूपाणां तादृशभेदत्वादीनां त्रयाणामैक्येन कारणतावच्छेदकतावच्छेदकभेदाभावात्, कारणतावच्छेदकताभेदाभावेन कारणतावच्छेदकधर्मवत्त्वरूपकारणत्वस्वीकारेऽपि कारणतैक्यसंभवाच्च। अन्ये तु तृणादिसंबन्धकालीनवायुसंयोगादीनां एकशक्तिमत्त्वेन हेतुतामादाय विनिगमनाविरहान्न शक्तिसिद्धिरित्याहुः। तन्न। तृणादिसंबन्धकालीनानां द्रव्यत्वादीनां

## मञ्जूषा.

तद्व्यक्तेर्दैशिकविशेषणता तत्संयोगिन्यप्यक्षता। तथाच मणिसमवधाने तद्व्यक्तेरिव तद्व्यक्तिसंयोगिनोऽपि दाहः स्यात्। एतेन भावाभावसाधारणविशेषणताया ओषधिविशेषनिष्ठोत्तेजकतावच्छेदकसंबन्धत्वमपि प्रत्युक्तं तस्यापि निखिलसंबन्धिसाधारणत्वात्। एवं मणेः प्रतिबन्धकतावच्छेदकसंबन्धस्संयोगः प्रतियोगिव्यधिकरणत्वविशिष्टमण्यभावस्य कारणत्वाच्च न मणिसंयुक्तेऽपि दाहापत्तिः। अस्मद्गुरुचरणास्तु संयोगसंबन्धावच्छिन्नाधिकरणतायाः व्याप्यवृत्तेः प्रतिबन्धकतावच्छेदकसंबन्धत्वमङ्गीचक्रुः। इदं तु बोध्यं। मणिस्थलीयदाहं प्रत्युत्तेजकानां कारणत्वं कल्प्यते लाघवात्। नच मणिमन्त्रौषध्यादिरूपाणामुत्तेजकानामननुगततया तत्तत्कारणवैशिष्ट्यं विशेष्य मन्त्रत्वादिना नानाकारणत्वकल्पने गौरवात् तत्तदुत्तेजकाभावविशिष्टमण्यभावत्वेनैव कारणताकल्पनमेव युक्तमिति वाच्यम्। अवच्छेदकताया व्यासज्यवृत्तित्वानङ्गीकारेण तत्तदुत्तेजकाभावानां विशेषणविशेष्यभावे विनिगमनाविरहप्रयुक्तगुरुधर्मावच्छिन्नानन्तकारणताकल्पनापेक्षया तत्तदुत्तेजकानामतिलघुतत्तद्रूपेण कतिपयकारणताकल्पनाया एव युक्तत्वात्। ननु मणिसमवधानदशायां वह्न्यादिघटितसामान्यसामग्रीबलात् उत्तेजकाभावेऽपि दाहत्वरूपसामान्यधर्मावच्छिन्नापत्तिः। नच विशेषसामग्रीसमवहिताया एव सामान्यसामग्र्याः फलोपधायकत्वात् तावदुत्तेजकान्यतमरूपविशेषसामग्र्यभावे सामान्यसामग्र्या न फलापत्तिरिति वाच्यम्। मण्याद्यसमवधानदशायां उत्तेजकविरहेऽपि वह्न्यादिघटितसामान्यसामग्र्याः फलोपधानेन तेषां विशेषसामग्रीत्वासम्भवादिति चेन्न। मण्यभावविशिष्टदाहत्वावच्छिन्नं प्रति मण्यभावत्वेनापि कारणतान्तरं कल्पयित्वा वह्न्यादिघटितसामान्यसामग्र्या फलजनने मण्यभावतत्तदुत्तेजकान्यतमस्य विशेषसामग्रीत्वकल्पनया

## दिनकरीयम्.

न्याय्यत्वादित्याहुः। तन्न। तत्तत्सम्बन्धसाधारण्येनैकजातिरेवाभ्युपगमात्। न च योग्यवृत्तिजातेर्योग्यत्वापत्तिरिति वाच्यम्, दोषविशेषेण शक्तेरिवायोग्यत्वकल्पनात्। न च नोदनत्वादिना सङ्करः। तस्यादोषत्वात्। अन्यतमत्वेन कारणतासम्भवाच्च। न चान्यतमत्वघटकभेदानां मिथो विशेषणविशेष्यभावे विनिगमनाविरहेण कारणतावच्छेदकभेदात्कारणताबाहुल्यमिति वाच्यं, कारणतावच्छेदकानां भेदानां समनियतानामैक्येन कारणतैक्यसम्भवात्। न च भेदानां स्वरूपतोऽवच्छेदकत्वासम्भवेन तृणफूत्कारसंयोगभेदविशिष्टारणिनिर्मन्थ-

## रामरुद्रीयम्.

अदृष्टस्य हेतुतया तत्सम्बन्धेन संयोगस्यापि हेतुत्वादिति भावः। यद्यप्यत्रात्मनो दृष्टान्तत्वमसङ्गतं तस्य दाहजनकत्वे मानाभावात्। तथापि कार्यमात्रे कर्तुरेव कारणत्वमताभिप्रायेणैवमुक्तम्। यद्वा दाहजनकत्वमत्र न दाहकारणत्वं अपि तु दाहप्रयोजकत्वं तच्च कारणतत्कारणसाधारणं स्वरूपसम्बन्धस्वरूपमिति कार्यमात्रकारणकृतिकारणात्मन्यप्यक्षतमेवेति ध्येयम्। **न्याय्यत्वादिति** ॥ एतच्चापाततः। शक्तेः प्रतिबन्धकनाश्यतया तदपसारणजन्यतया चोत्पादविनाशशालित्वेन अनन्तशक्तिकल्पनापत्त्या विपरीतगौरवापत्तेरिति ध्येयम्। **दोषविशेषेणेति** ॥ अदृष्टादिरूपेणेत्यर्थः। अन्यथा त्वन्मतेऽपि वह्निगतशक्तिप्रत्यक्षापत्तेरिति भावः। **तस्यादोषत्वादिति** ॥ स्वसामानाधिकरण्यस्वाभावसामानाधिकरण्योभयसम्बन्धेन जातिविशिष्टजातित्वस्य स्वव्यापकजातित्वव्याप्यत्वे मानाभावेन सांकर्यस्य जातित्वबाधकत्वे मानाभावादिति भावः। **स्वरूपतोऽवच्छेदकत्वासंभवेनेति** ॥ जातीतरस्य स्वरूपतो भानानङ्गीकारात्। यस्य स्वरूपतो भानं तस्यैव

## प्रभा.

शक्तिमत्त्वेन कारणत्वेऽन्वयव्यभिचारापत्त्या तेषु शक्तिकल्पनाया असंभवात् । न च तृणादिसंबंधशून्यकाले अवर्तमानत्वे सति तृणादिसंबंधकाले वर्तमानत्वविशिष्टानां शक्तिकल्पनायामुक्तदोष इति वाच्यम् । तथापि कालिकतृणादिसंबन्धान्वयव्यतिरेकविशिष्टेषु शक्तिकल्पनापेक्षया प्रथमोपस्थिततृणादिसंबंध एव शक्तिकल्पनाया

## मञ्जूषा.

सर्वदोषविरहादिति । नन्वनुमानमेव शक्तौ प्रमाणं । तथाहि वह्निर्दाहानुकूलातीन्द्रियधर्मसमवायी दाहजनकत्वादात्मवत् । तज्जननशक्तिमत एव तज्जनकत्वं संभवेत् । आत्मनि त्वदृष्टमादाय साध्यसंगतिः । नच प्रतिबन्धकाभावविधया दाहजनके जलसंयोगाभावे व्यभिचार इति वाच्यम् । प्रतिबन्धकाभावस्य कार्यमात्रं प्रति जनकतायाः परैरनभ्युपगमात् । मणेरिव जलसंयोगस्यापि वह्निनिष्ठदाहशक्तिविघटकतयैव तदानीं दाहापत्तिवारणात् । नच प्रतियोगिविधया पूर्वरूपनाशात्मकदाहजनके पूर्वरूपे व्यभिचार इति वाच्यम् । तत्र [illegible]गमात् पूर्वरूपनाशप्रागभावस्य पूर्वरूपात्मक एव दाहजनक इति न दाहप्रागभावे व्यभिचारः । नच कार्यविधया दाहजनके ध्वंसे व्यभिचार इति वाच्यम् । तत्र शक्त्यनभ्युपगमे कालत्वानवच्छिन्नजनकतायाः कालिकातिरिक्तसंबन्धावच्छिन्नजन्यताया वा विवक्षितत्वात् । दाहत्वावच्छिन्नजन्यतानिवेशस्तु न संभवति दृष्टान्तासिद्धिप्रसंगात् । भावत्वे सतीति वा विशेष्यतां, तेन ध्वंसे न व्यभिचारः । इत्थं च जलसंयोगाभावेऽपि न व्यभिचारशंकेति चेन्न । अप्रयोजकत्वात् । तज्जनके हि कारणतावच्छेदकविधया तदनुकूलधर्म आवश्यकः नतु तादृशधर्मस्यातीन्द्रियत्वमप्यावश्यकं । सच धर्मो वह्नौ वह्नित्वमेवेति न शक्तिसिद्धिशंका । केचित्तु तृणफूत्कारसंयोगारणिनिर्मन्थनसंयोगमणितरणिकिरणसंयोगानां त्रयाणां वह्नित्वावच्छिन्नं प्रति कारणतायां परस्परजन्यवह्नौ व्यभिचारेण वह्नौ कार्यतावच्छेदकवैजात्यत्रयस्वीकारे गौरवेण च तेषां त्रयाणामननुगतानां एकशक्तिमत्त्वेनैव कारणताया वक्तुमुचितत्वेन शक्तिसिद्धिः । ननु त्रिष्वेका शक्तिर्न संभवति । साहि न नित्या अनेकसमवेतनित्यधर्मस्य जातित्वात् वह्न्युत्पादप्रतिबन्धकमण्यादिसमवधानविनाश्यत्वाच्च । किंत्वनित्या वाच्या, तस्याश्चैकत्वे एकव्यक्तौ शक्तिनाशे व्यक्त्यन्तरमप्यशक्तं स्यात् । तथाच कथमेकरूपेण त्रयाणां कारणतासम्भवः । नच तृणसंयोगाद्यन्यतमवृत्तिशक्तित्वेन तासामनुगम इति वाच्यम् । मणिसत्त्वेऽपि तृणसंयोगवृत्तिक्रियाद्युत्पादानुकूलशक्तिमादाय वह्न्युत्पादापत्तेः । दाहानुकूलत्वेन विशेषणे तु तदपेक्षया तृणसंयोगादीनामेवान्यतमत्वेन कारणताया उचितत्वात् । एतेन वह्न्युत्पादानुकूलशक्तीस्तत्तद्व्यक्तित्वेन धृत्वा तावदन्यतमत्वेन तासां कारणतावच्छेदकत्वस्वीकारोऽपि प्रत्युक्तः । नच वह्न्युत्पादानुकूलत्वेन तासामनुगम इति वाच्यम् । सिद्धे तासां वह्न्युत्पादानुकूलत्वे तद्विशिष्टशक्त्यवच्छिन्नकारणसत्त्वाद्वह्न्युत्पादः, सति च वह्न्युत्पादे तासां तदनुकूलत्वमित्यन्योन्याश्रयप्रसंगादिति चेन्न । वह्न्युत्पादानुकूलशक्तीनां विलक्षणशक्तित्वेन कारणतावच्छेदकतास्वीकारेण सर्वानुपपत्तिविरहात् । वैलक्षण्यं च शक्तिनिष्ठजातिरूपमखण्डोपाधिरूपं वा । इत्थमेव वह्निनिष्ठदाहजनकतावच्छेदकशक्तीनामनुगमोऽवसेय इत्याहुः ॥ तन्न । वह्नौ कार्यतावच्छेदकवैजात्यत्रयस्वीकारेणाव्यवहितोत्तरत्वनिवेशेन वा तृणसंयोगादीनां कारणतात्रयस्वीकारेणैवोपपत्तौ मण्यादिसमवधानासमवधानप्रयुक्तोत्पादप्रध्वंसविशिष्टापरिमितशक्तिव्यक्तिकल्पनायां महागौरवात् । किंच तादृशवैलक्षण्यावच्छिन्नशक्तिरूपकार्यस्य पाषाणमृत्संयोगादिघूत्पत्तिवारणाय तदवच्छिन्नं प्रति तृणसंयोगादीनां कारणत्वं वाच्यम् । तृणसंयोगत्वादिना कारणतात्रयकल्पनेऽपि परस्परजन्यशक्तौ व्यभिचारः ॥ शक्तौ कार्यतावच्छेदकवैजात्यत्रयं स्वीकृत्याव्यवहितोत्तरत्वं निवेश्य वा तद्वारणे वह्निं प्रत्येव तथा स्वी-

## दिनकरीयम्.

नसम्बन्धभेदविशिष्टमणिकिरणसम्बन्धभेदावच्छिन्नप्रतियोगिताकभेदत्वादिना अवच्छेदकत्वं वक्तव्यं तथा चावच्छेदकतावच्छेदकभेदादवच्छेदकताभेदस्तद्भेदेन च कारणताभेद इति वाच्यं, स्वरूपसम्बन्धरूपाया॥

## रामरुद्रीयम्.

स्वरूपतोऽवच्छेदकत्वनियमादिति भावः । **स्वरूपसम्बन्धरूपाया इति** ॥ तत्तत्कारणव्यक्तिरूपाया-

## प्रभा.

उचितत्वात् । इदानीं सादृश्यस्यातिरिक्तत्वखण्डनेन पूर्वोक्तशङ्कां परिहरति । **सादृश्यमपीति ॥ न पदार्थान्तरमिति ॥** क्लृप्तपदार्थविभाजकधर्मान्यतमभिन्नपदार्थविभाजकधर्मवन्न भवतीत्यर्थः । तादृशधर्मान्यतमशून्यत्वहेतोः स्वरूपासिद्धत्वात् हेत्वन्तरस्याभावादिति भावः । उक्तहेतोस्स्वरूपासिद्धत्वोपपादकतया सादृश्यस्य क्लृप्तपदार्थस्वरूपत्वं दर्शयति **किन्त्विति ॥** गगनं गगनाकारमित्याद्यनन्वयालंकारेऽतिव्याप्ति-

## मञ्जूषा.

कियतां किमान्तरालिकशक्तिस्वीकारेण । यदि तु विलक्षणशक्तित्वावच्छिन्नजनकतावच्छेदकतया तृणसंयोगादिषु विजातीयशक्त्यन्तराभ्युपगमः तदाऽनवस्था । तदेतदभिप्रेत्य ग्रन्थकृतोक्तमनन्तशक्तीति । महादेवस्तु तृणसंयोगादीनां तृणसंयोगाद्यन्यतमत्वेनैव कारणतास्वीकारान्न दोषः । नचान्यतमत्वघटकभेदानां मिथो विशेषणविशेष्यभावे विनिगमनाविरहेण कारणतावच्छेदकताभेदात्कारणताभेदापत्तिरिति वाच्यं । स्वरूपसंबन्धरूपाया अतिरिक्ताया वा कारणताया अवच्छेदकताभेदेऽप्यभेदादिति समादधौ । तत्रायमभिसन्धिः । कारणत्वं स्वरूपसंबन्धरूपं प्राचीनैरुक्तं । अखण्डोपाधिरूपमतिरिक्तं नवीनैरुक्तं । तत्र यदि प्रथमं नियतपूर्ववृत्तित्वरूपं तदा तत् कारणस्वरूपं नावच्छेदकभेदादवच्छेदकतावच्छेदकताभेदाद्वा भेत्तुमर्हति । किंतु कारणीभूततृणसंयोगादिभेदात् । अथ यदि पूर्ववृत्तित्वं पूर्वक्षणरूपं तदा क्षणभेदाद्भिन्नं नावच्छेदकताभेदाद्भेत्तुमर्हति । अथ यदि पूर्ववृत्तितावच्छेदकधर्मरूपं तदा तदन्यतमत्वात्मकातिरिक्तभेदरूपं नावच्छेदकताभेदात् भिद्यते । द्वितीये त्वखण्डोपाधिरूपायाः कारणतायाः विशेषणविशेष्यभावे विनिगमनाविरहप्रयुक्ताऽवच्छेदकताभेदेऽपि भेदो न स्वीक्रियते प्रयोजनाभावात् तस्मादुभयविधाया अपि कारणताया नावच्छेदकताभेदप्रयुक्तो भेदः आश्रयादिभेदप्रयुक्तभेदस्तु मतद्वयेऽप्यविशिष्ट एव न हि तृणसंयोग एव तरणिकिरणसंयोगवति अभ्युपेयत इति । अत्र च विचार्यते मीमांसकैश्शक्तिनि-

## दिनकरीयम्.

अतिरिक्ताया वा कारणताया अवच्छेदकभेदेऽप्यभेदादित्यन्यत्र विस्तरः । परे तु तृणादिसम्बन्धकालीनवायुसंयोगादीनामेकशक्तिमत्त्वेन हेतुतामादाय विनिगमनाविरहान्न शक्तिसिद्धिरित्याहुः ॥ यदाशङ्कितं सादृश्यमप्यतिरि-

## रामरुद्रीयम्.

कारणतावच्छेदकभेदेन भेदासम्भवादिति भावः । **अतिरिक्ताया इति ॥** सप्तपदार्थातिरिक्ताया इत्यर्थः । तादृशकारणताया अवच्छेदकताभेदाद्भेदे नानाकारणताव्यक्तिकल्पनागौरवापत्त्या नानावच्छेदकतानिरूपितैककारणताया एव कल्पयितुमुचितत्वादिति भावः । व्यापकतारूपकारणताया एव प्रतियोगितावच्छेदकतापर्याप्त्यनवच्छेदकधर्मघटितत्वेन अवच्छेदकत्वादिभेदेन भिन्नत्वादिति ध्येयम् । इदमुपलक्षणम् । भेदस्य तद्व्यक्तित्वेन कारणतावच्छेदकत्वेऽपि न क्षतिरिति द्रष्टव्यम् । यद्यपि घटादिकार्यं प्रति तत्तत्कार्यानुकूलैकशक्तिमत्त्वेन कारणत्वे लाघवं दण्डत्वादिना नानाकारणत्वकल्पने गौरवं प्रतिबन्धकसमवधानकालीनकारणेषु शक्त्यभावादेव कार्यानुत्पादसंभवे प्रतिबन्धकाभावस्य कारणत्वाकल्पनेन च महालाघवादिति शक्तिकल्पनमेव न्यायः । न च दण्डचक्रादिषु सर्वत्रैकशक्तिमङ्गीकृत्य तद्वत्त्वेन कारणत्वे केवलदण्डादपि घटोत्पत्तिः स्यात् अशेषकारणतावच्छेदकावच्छिन्नस्य सत्वादिति वाच्यम् । शक्तेः कारणसमुदायपर्याप्तत्वोपगमेन पर्याप्तिसम्बन्धेनैव शक्तिमत्वेनैव कारणत्वाभ्युपगमेन च केवलदण्डसत्वदशायां कारणतावच्छेदकावच्छिन्नस्याभावात् । एतन्मते सामग्रीत्वमपि यद्यद्धर्मावच्छिन्नसमुदाये कारणतावच्छेदकपर्याप्तिः तद्धर्मावच्छिन्नसमुदायत्वमेव । तथापि दण्डत्वादिना घटकारणत्वाभावे दण्डत्वाद्यवच्छिन्नधर्मिकेष्टसाधनताज्ञानासंभवेन घटार्थी नियमतो दण्डत्वाद्यवच्छिन्नोपादाने न प्रवृत्तः स्यादिति दण्डत्वादिना घटकारणत्वमावश्यकमिति भावः । सर्वमिदं मनसि निधायैवान्यत्र विस्तर इत्युक्तमिति । यद्यप्येवमपि तत्तद्धर्मावच्छिन्नसमुदायधर्मिककारणताऽवच्छेदकशक्तिपर्याप्तिज्ञानं तत्तद्धर्मावच्छिन्नोपादानगोचरप्रवृत्तिकारणमित्युक्तौ घटार्थिनो नियमतो दण्डत्वाद्यवच्छिन्नोपादाने प्रवृत्तिस्संभवत्येव तथाप्यतदस्वरसेनैव परे त्वित्यादिना शक्तिखण्डने युक्त्यंतराभिधायिनो मतस्य अभिधास्यमानत्वाद्[illegible]रति

**तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वम्, यथा चन्द्रभिन्नत्वे सति चन्द्रगताह्लादकत्वादिमत्त्वं**

## प्रभा.

वारणाय—**तद्भिन्नत्वे सतीति** । 'सादृश्यमुपमाभेद' इत्यालंकारिकसूत्रेण भेदघटितसादृश्यस्यैवो-पमात्वप्रतिपादनादिति भावः । तद्गतभूयोधर्मवत्वमित्यत्र तद्गतत्वन्न लक्षणघटकमसंभवापत्तेः गौरवाच्च । किंतु तादृशभूयोधर्माणां उपमानोपमेयसाधारणत्वबोधनाय । लक्षणं तु चन्द्रभिन्नत्वे सति आह्लादकत्वं विशिष्य वक्तव्यमिति बोध्यम् ।नव्यास्तु सादृश्याधिकरणत्वप्रतियोगित्वानां अतिरिक्तपदार्थत्वमेव । तेषां क्लृप्तपदार्थ-स्वरूपत्वे तेषामननुगमेनानुगताकारप्रत्ययानापत्तेः । नच तेषामतिरिक्तत्वे विभागसूत्रव्याघात इति वाच्यं ।

## मञ्जूषा.

ष्टकारणतावच्छेदकता दर्शितवैजात्यावच्छिन्ना एकैव स्वीक्रियत इति लाघवं । नैयायिकानां तु कारणतावच्छेदकता-वच्छेदकधर्मस्य एकविधविशेषणविशेष्यभावापन्नपदार्थस्तोमघटितस्यैकविधस्याभावादवच्छेदकताभेदो दुर्वारः।अ-वच्छेदकत्वं नाम अवच्छेदकप्रतीतिसाक्षिको धर्मः। प्रतीतिश्च कारणविशेषणे कारणतावच्छेदकतां तद्विशेषणे कार-णतावच्छेदकतावच्छेदकतां तत्तद्विशेषणेषु तत्तन्निष्ठावच्छेदकतावच्छेदकतामवगाहमाना नानाविधा दृश्यते । तत्र च कस्याश्च प्रमात्वं कस्याश्च भ्रमत्वं इति विनिगन्तुमशक्यं लाघवगौरवयोरभावात् । तथाचावच्छेदकानां भेदो दुर्वारः। अपि चावच्छेदकताभेदादवच्छेद्यभेदः सकलकथकसंप्रदायसिद्धस्सर्वैरपि तांत्रिकैरवच्छेदककोटिप्रविष्टध-र्माणां विशेषणविशेष्यभावे विनिगमनाविरहेण कारणताभेदस्य लिखितत्वान्महादेवेनाग्रे तत्र तत्र प्रदर्शयिष्य-माणत्वाच्च। तस्मादनादरणीयं महादेववचनम् । यद्यप्येषा रीतिरनन्यथासिद्धनियतपूर्ववृत्तित्वं तदवच्छेदकधर्म-वत्त्वं वा कारणत्वमिति पक्षे न प्रसरति,तथापि तत्पक्षस्याप्रामाणिकत्वाद्द्वितीयपक्षमाश्रित्यैवोक्तमस्माभिः।यथा च न प्रसरति अप्रामाणिकता तथा व्यक्तमुपपादयिष्यामोऽग्रे कारणताग्रन्थे । नचान्यतमत्वघटकानां भेदानां त्रयाणामेकत्रद्वयमितिरीत्यैव कारणतावच्छेदककोटौ प्रवेशान्न विशेषणविशेष्यभावे विनिगमनाविरह इति वाच्यमवच्छेदकताया व्यासज्यवृत्तित्वस्यान्यत्र दूषणीयत्वात् । ये तु कामिनीचरणघातादशोकादितः कुसुमो-

## दिनकरीयम्.

क्तपदार्थ इति तदपि निराकरोति । **सादृश्यमपीति** ॥ **तद्भिन्नत्वे सतीति** । इदं च सादृश्यनिरूपके-ऽतिव्याप्तिवारणाय । अनुयोगितासम्बन्धविवक्षणे तु न देयमेव । **तद्गतभूयोधर्मवत्त्वमिति** ॥ तत्रा-साधारण्येन विद्यमाना ये भूयांसो धर्मास्तद्वत्त्वमित्यर्थः । नन्विदं "गगनं गगनाकारं सागरः सागरोपमः । रामरावणयोर्युद्धं रामरावणयोरिव" इत्यादावव्याप्तमिति चेन्न । तद्वृत्तिधर्ममात्रस्य तत्र विवक्षितत्वात् ।

## रामरुद्रीयम्.

ध्येयम् ॥ **अनुयोगितासम्बन्धविवक्षण इति** ॥ तद्गतभूयोधर्मवत्त्वं तत्सादृश्यमित्यत्र तद्गतधर्मव-त्ताया अनुयोगितासम्बन्धेन विवक्षणे इत्यर्थः । **न देयमेवेति** ॥ तद्गतधर्मरूपसंबन्धे तदनुयोगिकत्वानभ्यु-पगमनेनैव सादृश्यप्रतियोगिन्यतिव्याप्तिवारणसंभवादिति भावः । ननु पदार्थमात्रस्यैव पदार्थमात्रेणापि सादृश्यं स्यात् तद्गतप्रमेयत्ववाच्यत्वादिधर्मवत्वसत्वादित्याशङ्कां निराकुरुते । **तत्रासाधारण्येनेति** ॥ सकलपदार्थावृत्तित्वेनेत्यर्थः । वैशिष्ट्यं तृतीयार्थः । घटभिन्नत्वेन सिंहकाकयोरपि सादृश्यापत्तिवारणाय भूयांस इति । न च चन्द्रगतभूयोधर्मस्य चन्द्रसम्बन्धत्वे किं मानमिति वाच्यम् । नीलो घट इत्यादौ स्ववृत्तिनीलत्व-सम्बन्धेन घटे नीलस्येव मुखं चन्द्र इति रूपकस्थले स्ववृत्तिभूयोधर्मसम्बन्धेन मुखे चन्द्रस्य प्रकारतावादिमते तत्र तत्सम्बन्धत्वस्य क्लृप्तत्वादिति ध्येयम् । यद्यपि घटभेदपटभेदादयो भूयांसो धर्मास्तत्रापि सम्भवन्त्येव गोत्वाश्वत्वयोर्निरुक्तस्वरूपैकधर्ममादाय सादृश्यमङ्गीकृत्यैवोक्तमिति भूयस्त्वोपादानमसङ्गतमेव तथापि प्रायेण भूयो-धर्मैरेव सादृश्यप्रतीतिः इति तात्पर्यविषयार्थकमेव प्रकृते भूयःपदमिति ध्येयम् । नरोऽयं सिंहसदृश इत्यादौ तु घटभिन्नत्वादिर्न तात्पर्यविषयः । किं तु पराक्रमः । तस्यापि तथात्वे त्विष्टापत्तेः । तस्मादसाधारण्येनेत्यपि न देयम् । यथा घटो वाच्यस्तथा पटोऽपीति व्यवहाराच्च । **नन्विदमिति** ॥ तद्भिन्नत्वघटितसादृश्यमित्यर्थः ।

मुखे चन्द्रसादृश्यमिति ॥ २ ॥

## प्रभा.

सूत्रस्य साक्षात्परंपरया वा तत्त्वज्ञानोपयोगिपदार्थनिरूपणपरत्वादित्याहुस्तन्न । सामान्यादित्रयाणां यादृशं तत्त्वज्ञानोपयोगित्वं तादृशोपयोगित्वस्य सादृश्यादावक्षतत्वात् तथा सत्यपि सादृश्यादीनामतिरिक्तत्वे प्रमाणाभावात् तेषामतिरिक्तत्वसिद्ध्युत्तरकालीनप्राप्तविभागसूत्रविरोधस्य परिहारकारणं वन्ध्यामालिन्यक्षालनतुल्यमिति । नचाधिकरणत्वस्य संयोगरूपत्वे वदरे कुण्डमिति प्रत्ययापत्त्या बाधकसत्त्वेनाधिकरणत्वस्य पदार्थान्तरत्वसिद्धिरिति वाच्यं अनुयोगितासंबन्धेन संयोगवत्त्वस्य संयोगानुयोगित्वस्य वा अधिकरणत्वस्वरूपत्वस्वी-

## मञ्जूषा.

त्पादनशक्तिं प्राणप्रतिष्ठापनादिना प्रतिमादिष्वभिलषितार्थसंपादनशक्तिञ्च स्वीकुर्वन्ति ते शशधरादिभिः प्रत्युक्ताः । तथाहि कामिनीचरणसम्पर्कप्रसन्नानामशोकतरूणां मनुष्याणामिव कतिपयरेतोधातुस्थानीया अवयवा उद्भिद्य धरणिगतानामपामन्तः पवनोपनीतैः परमाणुभिः कालवशेनैव क्रमादुच्छूनाः कलिकादिक्रमेण कुसुमान्यारभन्ते किं तत्र शक्तिस्वीकारेण एवं प्राणप्रतिष्ठापनादिकमेव बहुतरपरिचर्यासहकारेण स्वध्वंससम्बन्धेनाभिलषितार्थान् संपादयतीति किं तत्र शक्त्या । यत्तु अत्र केचिदाक्षिपन्ति कामिनीचरणसम्पर्कादशोकतरूणामिव पिचुमन्दतरूणामपि कुतो न रेतोधातूद्भेद इति तन्न शक्तिपक्षे पर्यनुयोगस्य तुल्यत्वादित्यास्तां विस्तरः । **तद्भिन्नत्वे सतीति** ॥ अत्र भूयस्त्वं न विवक्षितम् एकधर्मेण सादृश्यानुपपत्तेः भूयानातिशयितः तात्पर्यविषय इति व्याख्येयम् । " त्वाह्लादकत्वं आह्लादप्रयोजकचाक्षुषविषयत्वं तच्च चन्द्रमुखसाधारणं नैकम् । न च तद्वृत्तितावच्छेदकरूपावच्छिन्नधर्मवत्त्वं विवक्षितमिति वाच्यम् घटः पट इव द्रव्यमित्यादौ सादृश्यभानानुपपत्तेः तत्र द्रव्यत्वस्य स्वरूपत एव भानादिति चेन्न । यत्र साधारणधर्मस्य स्वरूपतो भानं तत्र तद्गतधर्मवत्त्वमेव वाच्यम् यत्र किञ्चिद्रूपेण भानं तत्र पूर्वं निरुक्तमित्यदोषात् । अस्मद्गुरुचरणास्तु तद्गतत्वं न लक्षणे प्रविष्टं किन्तु चन्द्रभिन्नत्वे सत्याह्लादकत्वं. चन्द्रसादृ-

## दिनकरीयम्.

युगभेदविवक्षया भेदसत्त्वाद्वा । अत एव युगभेदविवक्षायामिहोपमालङ्कारोऽन्यथाऽनन्वयालङ्कार इत्युक्तमालङ्कारिकैः । सादृश्यघटकधर्मश्च क्वचिज्जातिरूपो यथा घटसदृशः पट इत्यादौ । क्वचिदुपाधिरूपो यथा गोत्वं नित्यं तथाश्वत्वमपीत्यादौ यथा वा चन्द्रसदृशं मुखमित्यादावाह्लादकत्वादि । अतिरिक्तकल्पने गौरवादिति । नव्यास्तु सादृश्यमतिरिक्तमेव न चातिरिक्तत्वे पदार्थविभागव्याघात इति वाच्यम् तस्य सा-

## रामरुद्रीयम्.

विवक्षितत्वादित्यस्य श्लोके इवाद्यर्थत्वेनेति शेषः । **युगभेदविवक्षयेति** ॥ युगभेदप्रयुक्ततत्तद्युगविशिष्टगगनभेदविवक्षयेत्यर्थः । **भेदसत्त्वाच्चेति** ॥ गगने गगनभेदसत्त्वाच्चेत्यर्थः । उक्तार्थे आलङ्कारिकाणां सम्मतिमाह । **अत एवेति** । युगभेदविवक्षायामित्यस्य पूर्वोक्त एवार्थः । **इहेति** ॥ गगनं गगनाकारमिति श्लोक इत्यर्थः । **उपमालङ्कार इति** । सादृश्यस्याबाधितत्वादिति भावः । **अन्यथा** विशेष्ययोर्भेदानङ्गीकारे । **अनन्वयालङ्कार इति** ॥ प्रतिपाद्यमानार्थस्यान्वयाभावादिति भावः । ननु उक्तसादृश्यलक्षणे धर्मपदं यदि जातिपरं तदा गोत्वाश्वत्वयोः सादृश्यानुपपत्तिः, यदि च जातिभिन्नोपाधिपरं तदा घटपटयोः कम्बुग्रीवादिमत्त्वादिरूपैकोपाधिविरहेण तयोस्सादृश्यं न स्यादित्याशङ्कां निराकरोति—**सादृश्यघटकधर्म इति** । चन्द्रसदृशं मुखमित्यादौ लक्षणसत्त्वं सूचयितुमाह—**यथेति** । **आह्लादकत्वादीति** । आह्लादः सुखविशेषः । यद्यपि चन्द्रमुखदर्शनजन्ययोः सुखयोर्भिन्नत्वेन चन्द्रमुखयोर्नैकमाह्लादकत्वं कारणतावच्छेदकभेदेन कारणताभेदस्यावश्यकत्वात् तथापि स्वाश्रयोपधायकत्वसंबन्धेन एकवैजात्यविशिष्टत्वमेव प्रकृते साधारणो धर्मः सुखचन्द्रदर्शनजन्यं च एकजातीयमेव सुखमिति भावः । आदिना वर्तुलत्वतेजस्त्वित्वादिपरिग्रहः । सादृश्यमिति शेषः । अत

## प्रभा.

कारेण बदरे कुण्डप्रतियोगिकसंयोगानुयोगित्वाभावेनैव तादृशप्रत्ययापत्त्यभावात् नाधिकरणत्वस्य पदार्थान्तरत्वसिद्धिः। एवं स्वरूपसंबन्धरूपप्रतियोगित्वानां एकधर्मावच्छिन्नत्वेन अनुगतीकृतानामेवानुगतप्रतीति-

## मञ्जूषा.

इयमिति रीत्या विशिष्यैव धर्माणां लक्षणे प्रवेशः ते च धर्मा उपमानसाधारणा ग्राह्याः तेन चन्द्रभिन्नत्वे सति केशादिमत्त्वं न चन्द्रसादृश्यमिति स्फोरणाय तद्भतत्वोत्कीर्तनमित्याहुः। अत्र चन्द्रगतधर्मवत्त्वमात्रोक्तौ चन्द्रेऽपि चन्द्रसादृश्यापत्तेः अतः सत्यन्तं अनुयोगितासंबन्धेन विवक्षणे तु न देयमिति महादेवः। तस्यायमर्थः। मुखं चन्द्रसदृशमिति व्यवहारात् सादृश्यस्य चन्द्रः प्रतियोगि मुखमनुयोगि चन्द्रे तु न सादृश्यानुयोगिता चन्द्रश्चन्द्रसदृश इति व्यवहाराभावात् तथाचानुयोगिताविवक्षयैव चन्द्रेऽतिव्याप्तिवारणसंभवात् तद्भिन्नत्वे सतीति विशेषणं न देयमिति। अत्र विचार्यते मुखं चन्द्रसदृशमिति प्रतीतौ चन्द्रगतधर्मानुयोगित्वस्यानुयोगितासंबन्धेन चन्द्रगतधर्मस्य वा प्रकारत्वं वाच्यं अनुयोगित्वं चाश्रयत्वापरपर्यायं चन्द्रेऽप्यक्षतं पदार्थान्तररूपानुयोगित्वस्वीकारे चन्द्रसादृश्यस्यैवातिरिक्तपदार्थत्वं स्वीक्रियताम् ननु संयोगादेरनुयोगिता नाम कोऽपि संबन्धस्स्वरूपविशेषात्मकोऽतिरिक्तो वा नैयायिकैरेव स्वीकृतः स चात्रापि स्वीक्रियत इति चेत्कस्यायमनुयोगिता नाम संबन्धः सादृश्यस्यैवेति चेत्किं सादृश्यं, साधारणधर्म इति चेत्किमयमाह्लादकत्वस्य मुख एव संबन्धो न चन्द्रे तथासति चन्द्रो मुखसदृशः चन्द्र आह्लादक इति न लोकाः प्रतीयुः, अथ चन्द्रगतत्वविशिष्टनिरूपितानुयोगिता न चन्द्रे किंतु तद्भिन्न इति चेत्तद्विपरीतमवगतं चन्द्रगतत्वविशिष्टनिरूपितानुयोगिता हि चन्द्र एव गुणकर्मान्यत्वविशिष्टनिरूपितानुयोगितैव गुणकर्मा॰यस्मिन्। अतस्सादृश्यलक्षणे ये तदन्यत्वं निवेशयन्ति तेऽप्युपलक्षणविधयैव निवेशयेयुः न विशेषणविधया, अथ चन्द्रवृत्तित्वविशिष्टनिरूपितानुयोगितायाश्चन्द्रमात्रवृत्तित्वेऽपि चन्द्रप्रतियोगिकत्वविशिष्टाह्लादकत्वनिरूपितानुयोगिता मुख एव श्येनप्रतियोगिकत्वविशिष्टसंयोगनिरूपितानुयोगितैव शैले वृक्षावधिकत्वविशिष्टविभागनिरूपितानुयोगितैव पर्णे मुखं चन्द्रसदृशमिति प्रतीतौ चन्द्रप्रतियोगिकत्वविशिष्टाह्लादकत्वनिरूपितानुयोगितैव भासते। नचैवं मुखं चन्द्रस्य सदृशमितिवत् चन्द्रस्या-

## दिनकरीयम्.

क्षात्परम्परया वा तत्त्वज्ञानोपयोगिपदार्थमात्रनिरूपणपरत्वात्। एवमधिकरणत्वमपि तस्य संयोगादिरूपत्वे बदरकुण्डसंयोगस्य द्विष्ठत्वेन कुण्डे बदरमितिवद्बदरे कुण्डमित्यपि प्रयोगः स्यात्। एवं प्रतियोगित्वमपी-

## रामरुद्रीयम्.

एवातिरिक्तपदेनोत्तरत्र तस्योपस्थितिः सप्तपदार्थातिरिक्तेति तदर्थः। सप्तपदार्थातिरिक्तविषयतादिपदार्थमङ्गीकुर्वतां नव्यानां मतमुपदर्शयति—**नव्यास्त्विति। अतिरिक्तमेवेति।** अन्यथा सदृश इत्याकारकप्रतीतेः सर्वत्र समानाकारतानुभवापलापापत्तेरिति शेषः। प्रतीतेः समानत्वमेकप्रकारकत्वं तथा च चन्द्रसदृशं मुखमित्यादौ आह्लादकरत्वादेः प्रकारता घटसदृशः पट इत्यादौ तु द्रव्यत्वपृथिवीत्वादेरिति तादृशप्रतीत्योः सादृश्यांशे अनुभवसिद्धायाः समानाकारतायाः अपलाप उक्तधर्मस्य सादृश्यतावादिमते दुरुद्धरः। सादृश्यमतिरिक्तः पदार्थ इति मते तु न तदनुपपत्तिः। यद्यपि मुखे चन्द्रे च नैकं सादृश्यं अन्यथा पटे चन्द्रसादृश्यप्रतीत्यापत्तिरिति सादृश्यांशे तादृशप्रतीत्योर्न समानाकारतोपपत्तिः तथापि उभयसादृश्यसाधारणस्य सादृश्यत्वरूपाखण्डोपाधेरनुगततया घटो रूपवान् पटो रूपवानिति प्रतीत्यो रूपांश इव सादृश्यांशे समानाकारतोपपत्तिरिति ध्येयम्। **विभागव्याघात इति॥** पदार्थानां सप्ताधिकत्वादिति भावः। **तत्त्वज्ञानोपयोगीति॥** आत्मधर्मिकात्मेतरद्रव्यादिभेदप्रकारकज्ञानं तत्त्वज्ञानं तज्जनकज्ञानविषयत्वं तदुपयोगित्वं तादृशज्ञाने च पक्षविधया आत्मज्ञानस्य प्रतियोगितावच्छेदकप्रकारकप्रतियोगिज्ञानविधया द्रव्यादिपदार्थज्ञानस्य जनकत्वात् आत्मादीनां तत्त्वज्ञानोपयोगिता। तत्र च तादृशानुमितिजनकपरामर्शात्मकज्ञानस्य पक्षरूपात्मविषयकत्वात्साक्षादात्मन उपयोगित्वं परामर्शजनकप्रतियोगिज्ञानविषयद्रव्यादिपदार्थानां तु परंपरोपयोगित्वमिति विशेषो बोध्यः। यद्यपि द्रव्यादिभेदव्याप्यहेतुमानिति

## प्रभा.

संभवे प्रतियोगित्वस्यापि न पदार्थान्तरत्वसिद्धिरिति । सादृश्यलक्षणं लक्ष्ये उपपादयति । **यथेति** ॥ २ ॥

## मञ्जूषा.

ह्लादकमित्यपि प्रत्ययस्स्यात् इति वाच्यं । सदृशादिपदोल्लिखितप्रतीतावेव चन्द्रप्रतियोगिकत्वभानोपगमादिति चेन्न संयोगादेः प्रतियोगित्वस्योभयसिद्धत्वेऽपि आह्लादकत्वादिधर्माणां स्वरूपादिसंबन्धातिरिक्तप्रतियोगित्वाख्यसंबन्धकल्पने प्रमाणाभावात् अथैवं मुखं चन्द्रस्य सदृशमित्यत्र षष्ठ्या किमुल्लिख्यत इति चेत्सादृश्यलक्षणे तद्गतत्वमनिवेशयतां भेदसमानाधिकरणधर्मवत्त्वरूपसादृश्यघटकभेदान्वितं प्रतियोगित्वं, तन्निवेशयतां पुनः धर्मान्वितमाधेयत्वमपीति । महादेवस्य पुनरयमभिसंधिः सादृश्यातिरिक्तत्ववादिभिरपि मुखं चन्द्रस्य सदृशमिति प्रतीत्या सादृश्यस्य चन्द्रादौ प्रतियोगित्वरूपसंबन्धान्तरमन्वेष्टव्यं तच्च वयमाह्लादकत्वादेरेव संबन्धतया स्वीकुर्मः तथाच चन्द्रप्रतियोगिकत्वविशिष्टाह्लादकत्वनिरूपिताधिकरणतायाश्चन्द्रेऽभावान्न तद्भिन्नत्वविशेषणं देयमिति । अथ परैरपि न सादृश्यस्य प्रतियोगित्वं संबन्धान्तरमभ्युपगन्तव्यं किंतु ज्ञापकत्वं समानज्ञानविषयत्वं वा चन्द्रमप्रतीत्य सादृश्यस्याप्रतीतेः नत्वेतदाह्लादकत्वस्य शक्याभ्युपगमं चन्द्रमप्रतीत्यापि मुखमाह्लादकं इति प्रतीतिरिति चेदाह्लादकपदोल्लिखितप्रतीतौ चन्द्रप्रतीत्यनावश्यकत्वेऽपि सदृशादिपदोल्लिखिताह्लादकत्वादिप्रतीतौ तदावश्यकत्वेन ममापि चन्द्रे ज्ञापकत्वादेस्सूपपादत्वादिति अत्र चानिर्भरमेव सूचयति अनुयोगितासंबन्धविवक्षणेत्विति सप्तमीं प्रयुञ्जानो महादेवः परैरङ्गीकृतस्यापि प्रतियोगित्वरूपसंबन्धान्तरस्य स्वयमङ्गीकारे प्रयोजनाभावात् ज्ञापकत्वादेस्तु चन्द्रेऽवाधितत्वेऽपि तस्य तत्प्रतीतिविषयतास्वीकारे प्रयोजनाभावाच्चेति सर्वं समञ्जसम् । अथाह्लादकत्वादेरेव सादृश्यत्वे चन्द्र इव मुखमाह्लादकमिति वाक्ये पौनरुक्त्यापत्तिः आह्लादकत्वस्येवपदेनैव लब्धत्वात् इति चेन्न इवपदेन साधारणधर्मत्वेनैवाह्लादकत्वबोधनेन पौनरुक्त्याभावात् । अयं तु विशेषः यत्र विशिष्य साधारणधर्मवाचकपदसमभिव्याहारोऽस्ति तत्र साधारणधर्मत्वेनैवाह्लादकत्वमिवादिर्बोधयति यत्र तु स नास्ति तत्र सति तात्पर्ये आह्लादकत्वत्वेनैव बोधः । अन्यदा तु साधारणधर्मत्वेनैवाह्लादकत्वादिर्बोध्यते । अत एव भूयःपदं तात्पर्यविषयकमित्यवोचाम ॥ इति शक्तिसादृश्यनिरूपणम् ॥ अक्षितोऽस्यक्षिरैत्वेत्यादौ क्षितिशब्दस्य क्षयवाचकत्वादाह ।

## दिनकरीयम्.

त्याहुः । सादृश्यलक्षणं लक्ष्ये योजयति । **यथेति** । इतिशब्दः श्लोकव्याख्यासमाप्तिद्योतकः ॥ २ ॥

## रामरुद्रीयम्.

परामर्शस्य द्रव्यादिविषयकतया द्रव्यादीनामपि साक्षादुपयोगित्वसंभवः तथापि भेदानां तत्तद्व्यक्तित्वेनापि परामर्शे भानसंभवेन तत्तद्भेदव्याप्यहेतुमानात्मेति परामर्शस्य द्रव्याद्यविषयकत्वात्परम्परोपादानम् अत्र मात्रपदेन सप्तपदार्थातिरिक्तसादृश्यादिपदार्थव्यवच्छेदः । तथाच सादृश्यादीनामात्मभिन्नपदार्थानां सत्त्वेऽपि आत्मनि तद्भेदो नानुमितिविषय इति तदेतज्ज्ञानं न तत्त्वज्ञानं अतस्तद्भेदज्ञानजनकज्ञानविषयस्यापि सादृश्यादेर्न तत्त्वज्ञानोपयोगितेति भावः । एवंच तत्त्वज्ञानोपयोगिपदार्थानामेव महर्षिणा विभजनान्न विभागव्याघात इति भावः । अधिकरणत्वादीनां अतिरिक्ततां साधयति । **एवमिति** ॥ **कुण्डे बदरमिति** ॥ इत्थं च आधारत्वं सप्तम्यर्थः । तत्र प्रकृत्यर्थस्याधेयतासंबन्धेनान्वयः आधारत्वस्य च निरूपकतासंबन्धेन सप्तमीसमभिव्याहृतबदरादिपदार्थेऽन्वयः । तथाच कुण्डवृत्त्याधारतानिरूपकं बदरमिति बोधः । इदं प्राचीनमताभिप्रायेण । आधेयत्वं सप्तम्यर्थ इति नवीनमते तु कुण्डं बदरवदितिवद्बदरं कुण्डवदित्यापत्तिर्द्रष्टव्या **प्रतियोगित्वमपीति** ॥ एवं अतिरिक्तपदार्थ इत्यर्थः । प्रतियोगितायाः प्रतियोगिस्वरूपत्वे भूतलादेरपि घटादिप्रतियोगितापत्तिः घटः प्रतियोगितावानित्याधारताप्रतीत्यनुपपत्तिश्च । प्रतियोगितावच्छेदकस्वरूपत्वे अभेदेनावच्छेद्यावच्छेदकभावविरहेण घटत्वादेः प्रतियोगितावच्छेदकत्वानुपपत्तिश्च अतिरिक्तत्वसाधिकेति भावः अपिना विषयत्वादिसमुच्चयः ॥ २ ॥ ननु क्षितिः पृथिवीत्यादिव्याख्यानं ग्रन्थकृतामसंगतम् क्षित्यादिशब्दानां प्रसिद्धार्थकत्वात् अप्रतिपत्तेरन्यथाप्रतिपत्तेर्वा निरासायैव हि विवरणं कुर्वन्ति सन्तः न चात्र तयोरे-

क्षित्यप्तेजोमरुद्व्योमकालदिग्देहिनो मनः ।
द्रव्याण्यथ गुणा रूपं रसो गन्धस्ततः परम् ॥ ३ ॥

द्रव्याणि विभजते—क्षित्यविति ॥ क्षितिः पृथिवी, आपो जलानि, तेजो वह्निः, मरुद्वायुः, व्योम आकाशः, कालः समयः, दिगाशा, देही आत्मा मनः एतानि नव द्रव्याणी-

प्रभा.

क्षितिशब्दस्य कोशेन भूमात्रवाचकत्वप्रतिपादनात् प्रकृतोपयोगिनमर्थमाह । **क्षितिः पृथिवीति** ॥ गन्धवन्मात्रवृत्तिजातिविशिष्टेत्यर्थः। पृथिवीशब्दस्यैव तादृशजातिविशिष्टे गौतमादिभिस्सङ्केतितत्वात्तादृशजातिविशिष्टे क्वचित्क्षितिशब्दप्रयोगः अजहत्स्वार्थलक्षणयैवेति ध्येयम् । 'आपो वा इदं सर्वम्' इति श्रुत्या सर्वस्मिन्नपि अप्शब्दप्रयोगात् प्रकृतोपयोगिनमर्थमाह। **आपो जलानीति** ॥ 'तेजो वा आज्यं' इति श्रुत्या तेजश्शब्दस्य आज्येऽपि प्रयोगात् प्रकृतोपयोगिनमर्थमाह । **तेजो वह्निरिति** ॥ वह्न्यादिरित्यर्थः। मरुद्गणेष्वपि मरुच्छब्दप्रयोगात् प्रकृतोपयोगिनमर्थमाह् । **मरुद्वायुरिति** । 'सैषा भार्गवी वारुणी विद्या परमे व्योमन् प्रतिष्ठिता' इत्यादौ व्योमन्शब्दस्य ब्रह्मणि प्रयोगादाह । **व्योम आकाश इति** ॥ यमस्यापि कालशब्दवाच्यत्वादाह । **कालस्समय इति** ॥ ईषत्समाप्तावपि दिक्छब्दप्रयोगादाह । **दिगाशेति** ॥ देहोऽस्यास्तीति व्युत्पत्त्या देहिशब्दस्य जीवमात्रपरत्वादाह । **देह्यात्मेति** ॥ अजहत्स्वार्थलक्षणया आत्ममात्रपरत्वात् आत्मसामान्यमित्यर्थः । यद्यपि विभागवाक्यात् द्रव्यविभाजकधर्मेषु नवत्वरूपा संख्या लब्धा तथापि संख्यावाचकपदाभावे पदार्थास्सप्त कीर्तिता इत्यत्रोक्तरीत्या पृथिव्यादिमनोऽन्तान्यतमाभिन्नेषु द्रव्यत्वनिषेधाप्रतिपादनात् द्रव्यत्वस्य द्रव्यविभाजकपृथिवीत्वादिमनस्त्वान्तान्यतमव्याप्यत्वनिश्चयो न भवति एतन्निश्चयश्च संख्याबोधकपदपूरणेनेति तथैवार्थमाह । **एतानि नव द्रव्याणीति** ॥

मञ्जूषा.

**क्षितिः पृथिवीति** ॥ आपो वा अकामयन्तेत्यादौ अप्शब्दस्य देवताविशेषपरत्वादाह। **आपो जलानीति**॥ अग्नये तेजस्वते पुरोडाशमष्टाकपालं निर्वपेत्तेजस्काम इत्यादौ तेजःपदस्य रूपविशेषपरत्वादाह।**तेजो वह्निरिति**॥ वह्निवृत्तिजातिविशेषावच्छिन्न इत्यर्थः। मरुत एव स्वेन भागधेयेनोपधावतीत्यादौ मरुच्छब्दस्य देवतापरत्वादाह॥

दिनकरीयम्.

स्त्रियां क्तिन्नितिसूत्रविहितक्तिन्प्रत्ययान्तक्षितिशब्दस्य क्षयवाचकत्वात् क्षितिपदस्य प्रकृतोपयोगिनमर्थमाह। **क्षितिः पृथिवीति** ॥ अप्शब्दस्य अप्तृन्तृजित्यादिपाणिनीयसूत्रे शब्दपरत्वादाह। **आपो जलानीति** ॥ प्रतापस्यापि तेजश्शब्दवाच्यत्वात्प्रकृते तेजःपदार्थं दर्शयति । **तेजो वह्निरिति** ॥ वह्न्यादिरित्यर्थः। देवविशेषस्यापि मरुच्छब्दवाच्यत्वात्प्रकृतोपयोगिनमर्थमाह । **मरुद्वायुरिति** ॥ व्योमशब्दस्य वेदे ब्रह्मणि प्रयोगादाह। **व्योम आकाश इति** ॥ कालशब्दस्यान्तकादिबोधकत्वादाह। **कालः समय इति**॥ दिक्शब्दस्य दिशअतिसर्जन इति धातुना निष्पन्नस्य दानार्थकत्वात्प्रकृतोपयोगिनमर्थमाह। **दिगाशेति** ॥ देहविशिष्टार्थवाचकाद्देहिशब्दाद्देहावयवानामुपस्थितेराह। **देही आत्मेति** ॥ अथेश्वरस्य देहिनां मध्येऽनन्तर्भावात्कथं द्रव्यत्वमिति चेन्न। वृद्धा भूतावेशन्यायेनेश्वरस्य शरीरमिच्छन्ति। संसार्यदृष्टवशाच्छरीरमित्यन्ये। अत एवास्वरसा-

रामरुद्रीयम्.

कतरापि संभवतीत्यतोऽन्यथाप्रतिपत्तिमुपपादयन् तत्सार्थक्यमाह ॥ **स्त्रियामित्यादिना** ॥ **आत्मेतीति**॥ स्वावच्छिन्नभोगवत्त्वसंबन्धेन देहविशिष्ट एव देहिशब्दार्थः। नतु समवायेन तद्विशिष्ट इति न देहावयवोपस्थितिरिति भावः॥ **अनन्तर्भावादिति** ॥ ईश्वरस्य किंचिच्छरीरावच्छेदेन भोगाभावादिति भावः। **कथं द्रव्यत्वमिति** ॥ सामान्यव्याप्ययावद्धर्मकथनस्यैव विभागतया द्रव्यविभागवाक्ये ईश्वरवृत्तिधर्मान्तरानुपदेशात्तस्य द्रव्यत्वाभावनिश्चयादिति भावः। **भूतावेशन्यायेनेति** ॥ यथा भूताभिभवस्थले मनुष्यादिशरीराव-

## प्रभा.

संख्यावाचकपदस्य स्वार्थान्वयिभिन्ने समभिव्याहृतपदार्थान्वयव्यवच्छेदार्थकतया नवत्वसंख्यान्वयिपृथिव्यादिमनोऽन्तान्यतमभिन्नेषु द्रव्यत्वान्वयनिषेधप्राप्त्या द्रव्यत्वविभाजकपृथिवीत्वादिमनस्त्वान्तान्यतमव्या-

## मञ्जूषा.

**मरुद्वायुरिति** ॥ परमे व्योमन्प्रतिष्ठितेत्यादौ व्योमन्शब्दस्य ब्रह्मपरत्वादाह । **व्योमाकाश इति** ॥ कालदिशोस्तु विवरणं बहुषु पुस्तकेषु न दृश्यते महादेवेनापि न व्याख्यातम् । देहविशिष्टार्थकदेहिन्शब्दाद्देहावयवानामुपस्थितेराह देही आत्मेतीति महादेवः तन्न, सामान्यतः सम्बन्धिबोधकतया विहितस्यापि मत्वर्थीयप्रत्ययस्य तत्तत्प्रकृतिसमभिव्याहारे नियतसंबन्धविशेषावच्छिन्नबोधकतायाः सर्वानुभवसिद्धत्वेन दर्शिताशङ्काया अनवकाशात् । तथाहि वृक्षादिष्वेव शाखीति व्यपदेशः न पर्णादिषु अतः शाखाद्यवयववाचकपदोत्तरमत्वर्थीयप्रत्ययेन समवेतत्वमेव बोध्यते न समवायित्वं एवं पुत्रीत्यादौ पुत्रतानिरूपकत्वं शास्त्रीत्यादौ अध्येतृत्वं एवं गोमान् चैत्रो गोमान् व्रज इत्यादिव्यवहारात् गवादिपदोत्तरेण स्वामित्वं संयोगश्च बोध्यते । नचेह देहावयवे हस्तादौ देहीति व्यवहारोऽस्ति येन समवायित्वबोधकत्वमाशङ्क्येत तस्मादित्थमवतरणीयम् ॥ तथाहि देहिन्शब्दो देहावच्छिन्नपरो लोके दृष्टः । तथाच ईश्वरपरिग्रहो न स्यात् । ननु मास्त्वीश्वरपरिग्रहः अतएवाग्रे जीव एव निरूप्यते नेश्वरः नचेश्वरस्यानिरूपणात् ग्रन्थस्य न्यूनतेति शङ्क्यम् मङ्गलरूपेश्वरानिर्देशेनैव तन्निरूपणस्य वृत्तत्वात् अतएव तत्रैवमीश्वरसाधकानुमानं उपन्यस्तं ग्रन्थकृता नहि तत्तत्प्रकरण एव तत्तन्निरूपणमिति नियमोऽस्मिन्ग्रन्थे दृश्यते आत्मप्रकरणे बुद्धिनिरूपणात् । उच्यते मास्त्वात्मप्रकरणे ईश्वरनिरूपणम् । तथापि ईश्वरे केनचिद्द्रव्यविभाजकेन भवितव्यम् अन्यथा नवत्वव्याघातात् अथ मन्यते भूतावेशन्यायात् संसार्यदृष्टवशाद्वा ईश्वरस्यापि देहित्वं ग्रन्थकृदभिमतम् ; अत एव नूतनजलधररुचय इति देहित्वेनोक्तस्यैव संसारमहीरुहस्य बीजायेति ईश्वरत्वं मूले निर्दिष्टं, साधितं च ग्रन्थकृतेति एवमपि नात्र देहित्वस्य द्रव्यविभाजकत्वं युक्तं लाघवात् आत्मत्वस्यैव तथात्वसंभवात् अत एवात्मेन्द्रियाद्यधिष्ठातेत्युपरिष्टादभिधानमपि संगच्छते, अन्यथा द्रव्यविभाजकीभूतदेहित्वविशिष्ट एव लक्षणाद्याकाङ्क्षया आत्मत्वविशिष्टे तदभिधानमप्रकृतं स्यात् अत एव चाग्रे ईश्वरे सा जातिरस्तीत्यादिना ईश्वरे आत्मत्वजातिसत्तां स्वमतेनोक्त्वा पश्चादीश्वरे तदनङ्गीकारमताभिधानवेलायां ईश्वरस्य दशमद्रव्यत्वापत्तिमाशङ्क्य ज्ञानवत्त्वेन विभजनादिति समाहितमनेन हि स्वमते आत्मत्वजातिरेव विभाजिकेत्यवगम्यते तस्मादात्मत्वजातेर्विभाजकत्वलाभाय देही आत्मेत्युक्तम् । देहिन्शब्दादात्मत्वजातिविशिष्टलाभश्च देहिन्शब्दस्य पङ्कजादिपदवद्योगरूढिस्वीकारेण लक्षणयोपपादनीयः । तथाच तत्र योगरूढिपक्षे उपस्थितस्यापि देहावच्छिन्नत्वस्य न विभाजकत्वं स्वीक्रियते प्रयोजनाभावात् । किंत्वात्मत्वस्येति बोध्यम् अथ कोऽयं भूतावेशन्यायः कश्च संसार्यदृष्टवशः उच्यते । यथा हि लोके भूतानि जीवान्तरशरीरमाविशन्ति तथेश्वरोऽप्यनुभूयते हि वेङ्कटेश्वरनरसिंहादिसंज्ञावानीश्वरो मानुषाणां शरीरमाविष्टो लोके सोऽयं भूतावेशन्यायः इति केचन मन्यन्ते तदपरे न क्षमन्ते जीवविशेषा एवैते वेंकटेश्वरादिसंज्ञाभिराविशन्ति

## दिनकरीयम्.

दाह । **आत्मेति** ॥ पृथिव्यप्तेजोवाय्वात्मान इति पञ्चैव द्रव्याणि व्योमादेरीश्वरात्मन्येवान्तर्भूत त्वात् मनसश्चासमवेतभूतेऽन्तर्भावादित्याहुर्नवीनास्तन्मतं निराकर्तुं सङ्ख्यावोधकपदपूरणेनार्थमाह । **एतानि नव द्रव्याणि**

## रामरुद्रीयम्.

च्छेदेन भूतस्य न सुखदुःखसाक्षात्काररूपभोगाश्रयता किंतु तदीयशरीरावच्छेदेनैव एवमपि भूतप्रयत्नजन्यव्यापारवन्मनुष्यादिशरीरं तथात्रापि रामादिशरीरं नेश्वरस्य भोगावच्छेदकं अपि तु तदन्तर्गतजीवस्यैव एवमपि ईश्वरप्रयत्नजन्यरावणवधादिरूपविलक्षणव्यापारवदिति समुदायार्थः । यद्यपि एवमपि उक्तसम्बन्धेनेश्वरस्य देहविशिष्टत्वाभावात् देहिशब्दान्नेश्वरलाभः संभवति तथापि स्ववृत्तिचेष्टानुकूलकृतिमत्त्वसम्बन्धेन देहविशिष्ट एव प्रकृते देहिशब्दार्थ इति नानुपपत्तिरिति भावः । नन्वेवं ईश्वरस्य श्रुतावपाणिपादत्वाद्युक्तिर्विरुध्येतेत्यतः

## प्रभा.

प्यत्वनिश्चयसंभवात्। नच तादृशनिश्चयाभावे का क्षतिरिति वाच्यम् तथा सति गुणादिषु पृथिवीत्वाद्यन्यतमरूपव्यापकाभावेन द्रव्यत्वरूपव्याप्याभावसाधनानुपपत्तेरिति । मूले क्षित्यप्तेजोमरुद्व्योम इत्यादाव

## मञ्जूषा.

शरीरं मानुषाणां अनुग्रहसृष्टिसंज्ञया विष्णुपुराणादिषु सृष्टिप्रकरणेऽभिहिता वेंकटेश्वरादिसंज्ञां वहन्तो नानाविधाः । पृथगीश्वरमानिनः ईश्वरभावनापूर्विकामेव पूजां स्वीकुर्वाणास्तदर्थमेवेश्वरत्वेन पुराणादिषु निर्दिष्टां बलिं काङ्क्षमाणाः ते हि मन्त्राद्युपासनाविशेषैः पुरुषाणां वशीभूताः केचिदतिक्षुधिताः केचिदीषत्क्षुधितास्सर्वेऽपि तत्तदुपासनाविशेषैस्तारतम्येन क्षुध्यन्ति उपासनाविशेषैर्होमब्राह्मणभोजनादिभिश्च तृप्यन्ति अभिव्यञ्जति हि क्षुत्तृष्णादिकमाविष्टा गणविशेषाः ते च केचित् सर्वकर्तृत्वाभिमानिनः केचिन्नरसिंहत्वमानिनः केचिद्रामत्वमानिन इति विविधरूपास्त एव प्राणस्थापनादिभिरावाह्यमानाः प्रतिमादिष्वनुप्रविशन्ति अनुप्रवेशश्च सूक्ष्मशरीरेणान्तरवस्थानं प्रतिमादिषु स्वशरीरत्वाभिमानो वा अत एव प्रतिमादिनाशदाहावयवभङ्गादौ स्वेषामेव दाहादिकमाचक्षते पुरुषेष्वाविश्य स्थानविशेषेषु च वेङ्कटाद्रिप्रभृतिषु पौराणिकेषु त एव दृष्टिगोचरैस्स्वैस्स्वैश्शरीरैस्सन्निदधते । अथैवं स्थानविशेषेषु ईश्वरस्याविर्भावप्रतिपादनपराणि पुराणानि व्याहन्येरन् न व्याहन्यन्ते अयमेव ह्याविर्भावो नामेश्वरस्य यदात्माभिमानगणविशेषावस्थानं अन्यस्य दुर्वचत्वात् तेन हि तत्रेश्वरतया तानेवोपासीनाः पुरुषार्थान् भजन्ते ईश्वरप्रवणमनसश्च भवन्ति तदेतदुक्तं प्रतिमास्वल्पबुद्धीनां सर्वत्र समदर्शिनामिति। तर्हि कोऽयं भूतावेशन्यायो नामात्र वदन्ति ब्रह्मविष्णुरुद्राणां त्रयाणां एकस्मात्परस्परस्य च परस्परस्मादुत्पत्त्याद्यभिधायिनश्श्रुतिस्मृतीतिहासपुराणादयः परस्परं विरुध्यन्त एकवाक्यतया समर्थनीयाः अतोऽतिरिक्त एवेश्वरो जीवभूतानां तेषां शरीरेषु कदाचित्कदाचिदनुप्रविशतीत्यङ्गीकार्यं तथा सति सर्वप्रामाण्यनिर्वाहादनुप्रवेशश्चाथर्वणिकमन्त्रपाठादिभिरितरकर्तृकैर्भवति अनुप्रविष्टाश्च ते सर्गादीनि वितन्वन्ति लोकानां प्रयच्छन्ति च वरानुपासकानामवतरन्ति च रामकृष्णादिरूपविशेषैः ननु कोऽयमनुप्रवेशो नाम न तावद्गृहादाविव चैत्रादीनाममूर्तत्वान्न संयोगः अव्यावर्तकत्वान्नापि तदवच्छेदेन ज्ञानोत्पत्तिस्तदवच्छिन्नज्ञानवत्त्वं वा व्याप्यवृत्तिनित्यज्ञानवत्त्वात् नाप्यात्मनस्तदवच्छिन्नत्वमव्याप्यवृत्तित्वाभावात्। उच्यते अनुप्रवेशो नाम तन्निष्ठावच्छेदकताविशेषनिरूपकत्वं अवच्छेदकत्वं च धर्मान्तरमुत्पादविनाशशालि तदवच्छिन्नज्ञानवत्त्वं वा अनुप्रवेशः भगवज्ज्ञानस्यापि कदाचिदवच्छिन्नत्वमभ्युपगम्यते। वस्तुतस्तु तदवच्छिन्नात्मत्वप्रकारकलौकिकसाक्षात्कारविशेष्यत्वं तत्रानुप्रवेशः आत्मत्वं च स्वत्वं तथाहि पुरुषान्तरकर्तृकाथर्वणिकमन्त्रविशेषपाठैरीश्वरे उत्पादितेन तन्मनसां विजातीयेन संयोगेनेश्वरं स्वत्वेनाभिमन्यन्ते स्मर्यन्ते हि पुराणेषु सुमनसः पुरुषान्तरात्मनि विजातीयसंयोगेन आजन्म पुरुषान्तरकृतान् व्यापारान् स्वकृतत्वेनाभिमन्यमाना जीवास्ततश्च ब्रह्मादयः कालविशेषे ईश्वरं स्वत्वेन निर्दिशन्ति अनुद्बुद्धतत्संस्काराश्च रामादयः कदाचिद्दुःखिता लक्ष्मणादिभिस्स्मार्यन्ते महात्मानं कृतात्मानं किं न बुध्यस इत्यादिना तेनचोद्बुद्धसंस्काराः प्रागनुभूतं स्वस्येश्वरत्वं स्मरन्तो दुःखं विजहते संस्कारानु-

## दिनकरीयम्.

**ति** ॥ व्योम्नस्तावच्छब्दाश्रयतया सिद्धिः । न च भगवत एव शब्दाश्रयत्वम् । प्रत्येकं जीवमादाय विनिगमनाविरहात् । न च जीवानामाश्रयत्वे शब्दवानहमिति प्रत्यक्षापत्तिः । अदृष्टवदयोग्यत्वस्यैव कल्पनात् ।

## रामरुद्रीयम्.

कल्पान्तरमाह। **अत एवेति** ॥ अयं भावः, देहिशब्दस्य उक्तसम्बन्धेन देहविशिष्टार्थकत्वे ईश्वरस्य शरीरानङ्गीकारे ईश्वरस्य द्रव्यमध्ये अविभजनात् द्रव्यत्वं न स्यादित्यस्वरसात् देहिशब्दार्थो न देहविशिष्टः अपि तु आत्मत्वजात्यवच्छिन्न इतीश्वरस्य द्रव्यत्वसिद्धिरिति विवरणतात्पर्यम् । न चेश्वरस्याशरीरत्वे ब्रह्मविष्णुमहेश्वरशरीराणामपि ईश्वरीयत्वं न स्यात् जीवादृष्टवशेन सृष्ट्यादिकार्यार्थमीश्वरस्य ब्रह्मादिशरीरोत्पत्त्यङ्गीकारेण इष्टापत्तेरयोगादिति वाच्यम् । इष्टत्वात् । ब्रह्मादिशरीराणां ईश्वरीयत्वं हि तदीयभोगावच्छे-

## प्रभा.

पि यत इत्यादिः । द्रव्यपदस्य क्षित्यादिषु वचनविपरिणामेनान्वयः । तथा च यतः पृथिवी द्रव्यमित्यादि अत एतानि नव द्रव्याणीत्यर्थकरणात् पृथिवीत्वादिप्रत्येकधर्मावच्छिन्ने द्रव्यत्वलाभात् उक्तव्याप्तिलाभ इति द्रव्याणीति

## मञ्जूषा.

द्वोधोद्बोधप्रयुक्तावेव च रामकृष्णयोरावृतत्वानावृतत्वव्यवहारौ । संभवति चेदृश एव भूतानां मानुषशरीरेष्वावेशः तच्छरीरावच्छिन्नलौकिकसाक्षात्कारविषयत्वात् । इयांस्तु विशेषः भूतानां लौकिकसाक्षात्कारस्स्वात्ममात्रविषयकः न मानुषात्मविषयकः मनसो भिन्नत्वात् भूतीयस्यैव हि मनसस्तदात्मना विजातीयसंयोगः तच्छरीरावच्छेदेनोत्पद्यते इह त्वेकस्यैव मनसो युगपत्स्वात्मना परमात्मना च विजातीयसंयोगाद्वयोरभेदभ्रम इति प्रतिमादिष्वाविष्टानामपि गणानां शरीरेषु परमात्मन ईदृशोऽनुप्रवेशो न निवार्यते । नचैवमीश्वरस्य लौकिकसाक्षात्काराविषयत्वसिद्धान्तविरोधः अस्मदादिलौकिकसाक्षात्काराविषयत्वस्यैवाभिप्रेतत्वात्तावतैवेश्वरेऽनुमानादिप्रणयनसार्थक्यात् ब्रह्मादीनामपि लौकिकसाक्षात्कारप्रमाविषयत्वस्येश्वरे अभावाच्च । एवंच तच्छरीरावच्छिन्नविजातीयमनस्संयोगाश्रयत्वमेव तत्रानुप्रवेश इत्यपि वक्तुं युक्तं भूतेश्वरसाधारण्येन एवं परमात्मनः प्रत्यक्षं नास्तीति लेखनमपि ग्रन्थकृतां अस्मदादिविषयं । अन्यथाऽन्येनात्मना विजातीयमनस्संयोगात्तदीयजन्मवृत्तान्तस्य स्वात्मीयतया प्रत्यभिज्ञाप्रतिपादनपरपुराणकथाविरोधात् अथवा लौकिकविषयता द्विविधा लौकिकसन्निकर्षप्रयोज्या दोषविशेषप्रयोज्या च । तथाच यथा मण्डूकवसाञ्जनादिप्रयोज्या उरगत्वादौ लौकिकविषयता यथा च देशान्तरगतादृष्टचरकामिनीगुणविशेषबहुतरश्रवणजनितवासनाविशेषोपोद्बलितरागविशेषविततिपरिभावनातिशयरूपदोषविशेषात्कामिनीपरिरम्भादौ चाक्षुषलौकिकविषयता परिरम्भसुखे च मानसलौकिकविषयता तथात्रापि । तथाहि ब्रह्मादयस्सर्वज्ञा महायोगिनो विदितेश्वरतत्त्वाः कालविशेषे पुरुषान्तरैरीश्वरत्वेन स्तूयमानास्सादरं च तां स्तुतिमाकर्णयन्तः तदुद्बोधिताभिरनादौ संसारे पूर्वपूर्वानुभूतेश्वराभेदविषयवासनाभिः पुरुषान्तरप्रार्थ्यमानकर्तव्यकर्मोद्योगसहकृताभिः योगविशेषोपोद्बाविताभिरपहृतमनसस्स्वात्मानमेवेश्वरत्वेन स्वात्मत्वेन चेश्वरंमन्यमानाः कर्मविशेषानारभन्ते । अत एव कर्मविशेषारम्भेषु अवश्यमेव स्तूयन्ते । एवं च यथोपवर्णितवासनारूपदोषविशेषप्रयोज्यैवेश्वरलौकिकविषयता नतु लौकिकसन्निकर्षप्रयोज्येति न दोषः लौकिकसन्निकर्षप्रयोज्यलौकिकविषयताशून्यत्वस्यैव सिद्धान्तत्वादतश्च तच्छरीरावच्छिन्नस्वात्मत्वप्रकारकसाक्षात्कारनिरूपितलौकिकविषयताश्रयत्वमेव तत्रानुप्रवेशो नाम एवंचैतन्मते देहवाचकपदोत्तरमत्वर्थीयप्रत्ययेन देहावच्छिन्नत्वतदवच्छिन्नज्ञानाश्रयत्वादिकमिव तदनुप्रविष्टत्वमपि बोध्यते मूर्तिहीनश्चिमूर्तिमानिति प्रयोगादतो देहिशब्देनेश्वरस्यापि लाभसंभवः । अथवा यथाहि नित्यायामपि भगवदिच्छायां सृष्टिगोचरत्वरूपसिसृक्षात्वसंहारगोचरत्वरूपसंजिहीर्षात्वादेः कालिकाव्याप्यवृत्तित्वं तथा निरवच्छिन्नवृत्तिकास्वपि तदीयज्ञानेच्छाकृतिषु तत्तदर्थविषयकत्वं दैशिकव्याप्यवृत्ति स्वीक्रियते । तथाहि यदेश्वरतया ब्रह्मादयस्स्तूयन्ते तदा भगवज्ज्ञाने तज्ज्ञातव्यार्थविषयकत्वमिच्छायां च एष्टव्यार्थविषयकत्वं कृतौ च

## दिनकरीयम्.

कालदिशोस्तु एतस्मिन्काले घटः, पूर्वस्यां दिशि पटः इत्याद्यनुगताकारप्रत्ययात् मनसश्चासमवेतभूतत्वे पार्थिवादित्रसरेणूनादाय विनिगमनाविरह इत्याशयः । अधिकमग्रे व्यक्तीभविष्यति । **मूले द्रव्याणीति** ॥ द्रव्यपदं

## रामरुद्रीयम्.

दकत्वं, तददृष्टजन्यत्वं, तत्कृतिजन्यचेष्टावत्त्वं वा । नाद्यद्वितीयौ । तस्य भोगादृष्टयोरभावात् । नापि तृतीयः । समवायेन चेष्टां प्रति अवच्छेदकतासम्बन्धेनैव कृतेः कारणतया व्याप्यवृत्तित्वेनेश्वरकृतेरवच्छेदकतया क्वाप्यसत्त्वात् । कार्यत्वावच्छिन्नकारणताया एव तत्राङ्गीकारात् । ब्रह्मादीनां जीवन्मुक्तयोगित्वस्याभ्युपेयत्वादिति ध्येयम् । **अयोग्यत्वस्यैवेति** ॥ मानसप्रत्यक्षायोग्यत्वस्यैवेत्यर्थः । तेन शब्दस्य श्रावणत्वेऽपि न क्षतिः । **त्रसरेणूनिति** ॥ नवीनमते अवयवधारायास्त्र्यणुकेष्वेव विश्रान्तेस्तेषामेवासमवेतत्वा-

त्यर्थः ॥ ननु द्रव्यत्वजातौ किं मानं नहि तत्र प्रत्यक्षं प्रमाणं घृतजतुप्रभृतिषु द्रव्यत्वाग्रहादिति चेन्न । कार्यसमवायिकारणतावच्छेदकतया संयोगस्य विभागस्य वा समवायिकारणतावच्छेदकतया द्रव्यत्वसिद्धेरिति ॥ ननु दशमं द्रव्यं तमः कुतो नोक्तं

**प्रभा.**

मूलस्थपदं लाघवात् द्रव्यत्वविशिष्टार्थकमित्यभिप्रायेण । तत्र प्रमाणं पृच्छति । मुक्तावल्यां **किं प्रमाणमिति** । किंशब्दः प्रश्ने । **तत्रेति** । द्रव्यत्वजातावित्यर्थः । **प्रत्यक्षमिति** । इदं द्रव्यमित्याकारकप्रत्यक्षमि-

**मञ्जूषा.**

कर्तव्यार्थविषयकत्वं तद्देहावच्छेदेन भवति । इतरार्थविषयकत्वं तु न दैशिकाव्याप्यवृत्ति प्रयोजनाभावात् । अयमेव च सर्गादौ वरदानशत्रुनिग्रहादौ च ब्रह्मादिशरीरेषु कदाचिद्गुणशरीरेष्वीश्वरस्यानुप्रवेशो यत्तदवच्छिन्नविषयताविशिष्टज्ञानाश्रयत्वं महात्मानं कृतात्मानं इत्यादिलक्षणवाक्यमपि भगवदिच्छायास्तत्तच्छरीरावच्छेदेन कर्तव्यार्थविषयतासंबन्धप्रयोजकमेवेत्यादिपूर्ववदन्यदूहनीयम् । सोऽयम् भूतावेशन्यायः संसारार्थदृष्टवशोऽपीदृश एव तथाहि पूर्वकल्पावसानप्रमितचेतननिचयसमवेतसदसददृष्टविशेषैस्तावत्समयपरिपक्वैस्सामयिकसृष्टिविषयताविशिष्टभगवदिच्छासनाथैर्द्व्यणुकादिक्रमेण जनितचतुर्मुखत्वादिविशेषणविशिष्टं शरीरमीश्वरसमवेतज्ञानादिनिष्ठतत्तदर्थविषयितावच्छेदकं भवति । तिरोधीयते च तच्छरीरसंपादनीयार्थानुभावकसंसारार्थदृष्टपरिक्षये पुनरपि हिरण्यकशिपुप्रभृतिनिभृततपोविशेषैः तादृशमेव जायते तद्वरदाने च तिरोधीयते तदुपप्लुतसुराभिलषितं पुनरपि प्रादुर्भवति नानास्थानेषु युगपदुपासीनानां वरदानायैकरूपाण्येव नानाशरीराण्याविर्भूय भगवज्ज्ञानेच्छादिनिष्ठविषयिताविशेषानवच्छिन्नानि कंचिदनेहसमवस्थायान्तर्धीयन्ते । एवं विष्ण्वादिशरीराण्यपि ज्ञेयानि । तथाच ब्रह्मविष्ण्वादिशरीरावच्छिन्ना न जीवाः एवं रामकृष्णाद्यवतारशरीरेष्वपि रामकृष्णयोरावृतत्वानावृतत्वव्यवहारस्तु गूढप्रकटप्रभाववत्त्वाभ्याम् । अथैवं रामकृष्णादेर्विष्ण्ववतारत्वं शरभरुद्रादेश्शिवावतारत्वमित्यादिव्यवहारभेदः कथमिति चेदुच्यते । विद्विषदुपप्लुता दिवौकःप्रभृतयः महता समाधिना यादृशरूपविशिष्टमनुसंदधते तेषां तादृशरूपमेवाविर्भूय वरदानप्रतिश्रुतदनुजवधं तिरोधत्ते पश्चाच्च तदुपप्लवनिग्रहाय गृहीतं रूपं तदवतार इत्याचक्षते । शेषं सुधीभिरूहनीयम् । केचित्तु जीवविशेषा एव वेंकटेशनरसिंहादिव्यपदेशं भजन्ते तेषां च परमात्माराधनफलमेव तादृशः प्रभावः कथमन्यथा वित्ताभरणादिवितरणालयावरणादिनिर्माणतदपहरणादिना प्रीतिद्वेषावुपपद्येताम् अपूर्णेषु जीवेष्वेव तदुपपत्तेः । नच निजार्थनिरपेक्षस्य भक्तरक्षणतद्विरुद्धशिक्षणैकदीक्षितस्य भगवतो निरुक्तप्रीतिद्वेषाश्रयत्वं न परिपूर्णत्वविरोधि स्वापेक्षणीयकिंचिदर्थकभिन्नत्वस्यैव पूर्णपदार्थत्वात् । कथमन्यथा रामकृष्णाद्यवतारेषूपपत्तिरिति वाच्यम् । भूतविशेषाणामेव रामकृष्णादिव्यपदेशभाक्त्वादत एव राज्यभ्रंशपत्न्यपगमाद्युपपत्तिः कर्मापरवशस्येश्वरस्य स्वबुद्धिपूर्वकदुःखसंपादकव्यापाराचरणानुपपत्तेरिति प्रालपन् । तदतितुच्छम् वेंकटादिस्थलेषु भगवदाविर्भावप्रतिपादकानां

**दिनकरीयम्.**

द्रव्यत्वरूपजातिविशिष्टार्थकं न तु गुणाश्रयत्वविशिष्टार्थकं गौरवात् ॥ **मुक्तावल्यां किं मानमिति** ॥ किंशब्दः प्रश्ने । ननु द्रव्यं द्रव्यमित्यनुगतप्रतीतिरेव जातिसाधिका भविष्यतीत्यत आह । **नहीति** ॥ **तत्र**

**रामरुद्रीयम्.**

दिति भावः । **विनिगमनाविरह इति** ॥ तथा चानेकद्रव्यव्यक्तिषु मनस्त्वस्वीकारापेक्षया एकैकातिरिक्तव्यक्तिषु तत्तन्मनस्त्वं स्वीकर्तुमुचितमिति भावः । ननु द्रव्याणीति मूलवाक्यस्यातिरिक्तद्रव्यत्वजात्यभावेऽपि नानुपपत्तिः गुणवदाद्यर्थकत्वेनापि तद्विवरणसम्भवात् अतो मुक्तावल्यां द्रव्यत्वसाधनायासो विफल इत्याशङ्कामपनेतुं मूले द्रव्यपदस्य द्रव्यत्वविशिष्टार्थकतां व्यवस्थापयति । **द्रव्यपदमिति** ॥ **प्रश्न इति** ॥ जिज्ञासाबोध-

## प्रभा.

त्यर्थः । **घृतेति** ॥ प्रभृत्यन्तपदं हिरण्यभिन्नमात्रोपलक्षकम् । तथाच पामराणां हिरण्यभिन्ने द्रव्यत्वप्रकारकज्ञानाभावेन नवद्रव्येषु द्रव्यत्वरूपजातिसाधकानुगतप्रतीतेरभावात् नोक्तप्रतीत्या द्रव्यत्वजातिसिद्धिर्भवतीति भावः । **कार्येति** ॥ समवायेन कार्यं प्रति तादात्म्येन द्रव्यस्य हेतुतया तदवच्छेदकतया द्रव्यत्वजातिसिद्धिरिति भावः । नच प्रागभावप्रतियोगित्वरूपकार्यत्वं न कार्यतावच्छेदकम् तस्य ध्वंससाधारणत्वादननुगतत्वाच्चेति वाच्यम् स्ववृत्तिमहाकालभेदवत्त्वकालिकविशेषणत्वसमवायैतत्त्रितयसंबन्धेन सत्त्वरूपकार्यत्वस्यैव कार्यतावच्छेदकत्वात् तस्यानुगतत्वात् । महाकालवारणाय स्ववृत्तिमहाकालभेदवत्त्वस्य कार्यतावच्छेदकतावच्छेदकसंबन्धकोटौ निवेशः । स्ववृत्तिभेदवत्त्वं दैशिकविशेषणतया बोध्यम् नातस्संबन्धान्तरेण तादृशभेदवत्त्वमादाय उक्तदोषत दवस्थ्यम् आकाशादिवारणाय तत्कोटौ कालिकसंबन्धनिवेशः । ध्वंसवारणाय तत्कोटौ समवायसंबन्धनिवेशः । तथाच निरुक्तत्रितयसंबन्धावच्छिन्नसत्तानिष्ठावच्छेदकतानिरूपितसमवायसंबन्धावच्छिन्नकार्यतानिरूपिततादात्म्यसंबन्धावच्छिन्नकारणतावच्छेदकतया द्रव्यत्वजातिसिद्धिरिति भावः । नचैता-

## मञ्जूषा.

भगवत एव रामकृष्णादिरूपत्वप्रतिपादकानां च बहुप्रमाणानां व्याघातापत्तेः य एव रामकृष्णाद्यवतारस्स्वगुणक्रियाजन्मानुभवेन जगद्धन्ययितुं भगवता प्रवर्त्यते तच्छरीरहेतुरेव संसार्यदृष्टवश इत्यवधेयम् । आचार्यास्तु भौतिकाः परमाणव एवेश्वरस्य शरीराणि । तथाहि विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोहस्त उत विश्वतस्पात् संबाहुभ्यां नमति संपतत्रैर्द्यावापृथिवी जनयन् देव एक इत्यादिश्रुतिभिर्यथा लोके घटादि कार्यं जनयन् कुलालादिः पाणिपादाद्यवयवैर्व्याप्रियते एवं द्यावापृथिव्युपलक्षितं कृत्स्नं जगज्जनयन् परमेश्वरोऽपि पाणिपादादिभिस्सर्वतो व्याप्रियत इत्यवगम्यते । ते च पाणिपादादयः परिशेषात्परमाणव एवेत्याहुरित्यलं विस्तरेण । **घृतेति** । तथाच हिरण्यादिष्वेव लोकानां द्रव्यशब्दोल्लिखिता प्रतीतिरिति भावः । यद्यपि द्रव्यशब्दोल्लेखाभावेऽपि पृथिवीजलादिष्वनुगतो जातिविशेषः प्रत्यक्षसिद्ध एव चक्षुरादिसंयुक्तसमवायसत्त्वात् । तथापि तस्य पृथिवीत्वादिना साङ्कर्यवारणाय परमाणुद्व्यणुकसाधारण्यसिद्धावपि गगनादिसाधारण्यं न सिध्येदिति सर्वद्रव्यसाधारणद्रव्यत्वजातिसिद्ध्यर्थं अनुमानप्रमाणमाह । **कार्येति** । कार्यत्वं प्रागभावप्रतियोगित्वम् नच समवायसंबन्धावच्छिन्नकार्यताशून्यध्वंससाधारणस्य कार्यत्वस्य कथं कार्यतावच्छेदकत्वमिति वाच्यम् । कार्यतातिरिक्तवृत्तिधर्मस्यापि कार्यतावच्छेदकत्वे बाधकाभावात् एतच्च कारणतानिरूपणे स्फुटतरमुपपादयिष्यामः । महादेवस्तु सत्त्वविशिष्टकार्यत्वं कार्यतावच्छेदकमित्याह । अस्मद्गुरुचरणास्तु स्ववृत्तिमहाकालभेदवत्त्वकालिकविशेषणत्वसमवायैतत्त्रितयसंबन्धेन सत्तायाः कार्यतावच्छेदकत्वम् । अत्र च महाकालवारणाय स्ववृत्तिमहाकालभेदवत्त्वनिवेशः । शेषं सुगममित्याहुः । अयं च कार्यकारणभावः नीले नीलाद्यापत्तिवारणाय स्वीकरणीयः । अन्यथा स्वाश्रयसमवेतत्वसंबन्धेन नीलत्वावच्छिन्नवति नीले समवायेन नीलापत्तेः । मम तु नीलत्वव्यापककार्यत्वावच्छिन्नजनकस्य द्रव्यत्वावच्छिन्नस्य तादात्म्येन अभावान्न नीलत्वावच्छिन्नापत्तिः । नच

## दिनकरीयम्.

द्रव्यत्वजातौ । **घृतेति** ॥ तथाच घृतादिषु पामराणां द्रव्यत्वज्ञानाभावेन सकलद्रव्यसाधारणद्रव्यत्वजातिसि

## रामरुद्रीयम्.

कशब्दः प्रश्नः । घटकत्वं सप्तम्यर्थः । तथाच मूलस्थकिंशब्दः जिज्ञासार्थक इति पर्यवसितोऽर्थः । उत्तरवाक्येन प्रमाणसामान्यस्यानिरासेन किंशब्दस्य आक्षेपार्थकत्वासंभवादिति भावः । **घृतादिष्विति** ॥ न च घटादावित्येव कुतो नोक्तमिति वाच्यम् । अनुगतप्रतीत्यभावे बीजसूचनाय घृताद्युपादानात् । तथा हि । अनुगताकृतिव्यङ्ग्या हि मनुष्यत्वादिजातिः, नहि नवद्रव्येष्वनुगताकृतिः काचित्संभवति, घृतादिष्वेकैकपदार्थेष्वपि सर्वदा नैकाकृतिः कठिनत्वद्रवत्वयोरनियतत्वादिति भावः । **पामराणामिति** ॥ पण्डितानां शास्त्रकारीयवाक्यजन्यद्रव्यत्वभानसंभवेऽपि पामराणां शास्त्रजन्यज्ञानाभावेन पामराणामित्युक्तम् । द्रव्यत्वस्य प्रत्यक्षवेद्यत्वे

## प्रभा.

दृशकार्यकारणभावस्वीकारेऽपि एतद्व्यक्तिसमवेतरुनिक्तकार्यत्वावच्छिन्नत्वस्य व्यक्त्यन्तरे उत्पत्तिवारणाय तत्तद्व्यक्तिसमवेततादृशकार्यत्वावच्छिन्नं प्रति समवेतत्वकालिकाविशेषणत्वोभयसंबन्धेन तत्तद्व्यक्तित्वावच्छिन्नं प्रति वा तत्तद्व्यक्तित्वेन समवायिकारणत्वस्यावश्यं वाच्यतया तेनैव तन्निर्वाहे निरुक्तकार्यकारणभावे मानाभाव इति वाच्यं यद्विशेषयोरिति न्यायेन सामान्यकार्यकारणभावस्यावश्यकत्वादित्यभिप्रायः । ननु निरुक्तानां त्रयाणां कार्यतावच्छेदकताघटकसंबन्धकल्पनागौरवसत्त्वात् तेन संबन्धेन तस्य कार्यतावच्छेदकत्वासंभवेन नोक्तदिशा द्रव्यत्वजातिसिद्धिर्भवतीत्यतः प्रकारान्तरेण द्रव्यत्वजातिसिद्धिमाह । **संयोगस्येति** ॥ केचित्तु ननु जन्यसत्त्वरूपकार्यत्वावच्छिन्नं प्रति तादात्म्येन द्रव्यत्वेन कारणत्वे मानाभावः । नच नीले नीलोत्पत्तिवारणाय तथा हेतुत्वमावश्यकमिति वाच्यम् समवायेन नीलं प्रति स्वाश्रयसमवेतद्रव्यत्वसंबन्धेन नीलहेतुतयैव तद्वारणात् कार्यत्वस्य कार्यतावच्छेदकत्वे गौरवा त् कालिकसंबन्धेन घटत्वादिकमादाय विनिगमनाविरहाच्चेत्यत आह संयोगस्येति इत्यवतरणिकामाहुः तदसत् । कार्यं प्रति तादात्म्येन द्रव्यत्वेन कारणत्वानङ्गीकारे समवायेन

## मञ्जूषा.

समवायेन नीलत्वावच्छिन्नं प्रति स्वाश्रयसमवेतद्रव्यत्वसंबन्धेन नीलादेः कारणत्वकल्पनादेवोक्तापत्तिवारणात् दर्शितकार्यकारणभावे मानाभाव इति न द्रव्यत्वजातिसिद्धिरिति वाच्यम् । द्रव्यत्वजात्यसिद्धौ तस्य कारणतावच्छेदकसंबन्धत्वस्वीकारासंभवात्स्वाश्रयसमवेतत्वद्रव्यत्वयोर्विशेषणविशेष्यभावे विनिगमनाविरहेण कार्यकारणभावभेदप्रसंगान्नीलपीतमधुराद्यनन्तकारणतावच्छेदकसंबन्धकोटौ द्रव्यत्वनिवेशापेक्षया कार्यत्वावच्छिन्नं प्रति द्रव्यत्वेनैव कारणतायाः स्वीकर्तुमुचितत्वाच्च । ननु जलादौ नीलत्वाद्यवच्छिन्नापत्तिवारणाय नीलत्वाद्यवच्छिन्नं प्रति पृथिवीत्वादिना समवायिकारणताया आवश्यकतया अत एव न नीलादौ नीलाद्यापत्तिः । नच नीलादिकं प्रति अवश्यकल्पनीयकारणताकयोर्नीलादिविजातीयाग्निसंयोगयोरभावादेव न जलादौ नीलाद्यापत्तिरिति वाच्यम् । तथापि विजातीयाग्निसंयोगवत्यग्नौ नीलाद्यापत्तेर्दुर्वारत्वात् । नचाग्निप्रतियोगिकत्वविशिष्टविजातीयाग्निसंयोगो नाग्नाविति वाच्यम् । नीलाद्यनन्तकारणतावच्छेदककोटौ वह्निप्रतियोगिकत्ववैजात्ययोर्मिथोविशेषणविशेष्यभावे विनिगमनाविरहेण कारणताभेदापत्त्या नीलत्वाद्यवच्छिन्नं प्रति पृथिवीत्वेन अतिरिक्तकारणतानामेवावच्छेदकलाघवेन युक्तत्वात् । नचाग्निसंयोगस्य वैजात्यपुरस्कारेणैवानुयोगितासंबन्धेन कारणतास्वीकारान्नाग्नौ तदापत्तिरिति वाच्यम् । वह्निक्रियाजन्यादिव घटक्रियाजन्यादुभयक्रियाजन्याच्च संयोगान्नीलाद्युत्पत्तेः । अग्निसंयोगस्यानुयोगितासंबन्धेन कारणत्वे तस्य नीलाद्यसमवायिकारणत्वानुपपत्तेः समवायस्वाश्रयसमवेतत्वान्यतरसंबन्धावच्छिन्नकारणताया एवासमवायिकारणतापदार्थत्वात् । अथाग्निसंयोगनीलाद्योः परस्परजन्यनीलादौ व्यभिचारवारणाय वैजात्ययोरेव कार्यतावच्छेदकत्वेन नाग्नौ नीलत्वावच्छिन्नापत्तिः तदवच्छिन्नं प्रत्यापादकाभावादिति चेदेवं सति तुल्ययुक्त्या नीलेऽपि न नीलत्वावच्छिन्नापत्तिः । यदि च नीलादिजन्यतावच्छेदकजात्यवच्छिन्नमेव नीलादावापाद्येत तदाऽग्निसंयोगजन्य-

## दिनकरीयम्.

द्धिर्न भविष्यतीति भावः । **कार्येति** ॥ कार्यत्वं प्रागभावप्रतियोगित्वम् । न च ध्वंससाधारण्यम् । सत्त्वेन विशेषणीयत्वात् । अत्र च कार्यस्य समवायः प्रत्यासत्तिः कारणस्य तादात्म्यम् । यत्र समवायेन कार्यं तत्र तादात्म्येन द्रव्यमिति नियमात् । ननु जन्यसत्त्वरूपकार्यत्वावच्छिन्नं प्रति तादात्म्येन द्रव्यत्वेन कारणत्वे

## रामरुद्रीयम्.

घटादिवत्तस्यापि पामराणां प्रत्यक्षं स्यात् तदभावेन द्रव्यत्वे प्रत्यक्षं न प्रमाणमिति भावः । ननु किमिदं द्रव्यत्वावच्छिन्नस्य कार्यतावच्छेदकं कार्यत्वं न जातिरूपं ध्वंससाधारण्यात्, नाप्युपाधिरूपं अनुगताननतिप्रसक्तस्य तस्य दुर्वचत्वादित्याशङ्कायां तन्निर्वक्ति । **कार्यत्वमिति** ॥ **न चेति** ॥ द्रव्यकार्यत्वाभाववति ध्वंसेऽपि प्रागभावप्रतियोगित्वस्य सत्त्वेनातिप्रसक्ततया द्रव्यकार्यतावच्छेदकत्वानुपपत्तिरिति भावः । **नन्विति** ॥ जन्यत्व-

## प्रभा.

नीलं प्रत्यवयवनीलस्य हेतुत्वं न संभवति स्वाश्रयसमवेतत्वविशिष्टद्रव्यत्वस्य द्रव्यत्वविशिष्टस्वाश्रयसमवेतत्वस्य वा कारणतावच्छेदकसंबन्धत्वमित्यत्र विनिगमकाभावात् स्वाश्रयसमवेतत्वद्रव्यत्वोभयत्वावच्छिन्नस्यैकसंबन्धेनावर्तमानतया संबन्धत्वासंभवात् सकलद्रव्यसाधारणद्रव्यत्वसिद्धेः प्राक् द्रव्यत्वघटितस्य संबन्धत्वासंभवाच्च । प्रागभावप्रतियोगित्वरूपकार्यत्वस्य कालिकसंबन्धेन घटत्वादिकमादाय विनिगमनाविरहोऽपि न संभवति तेन संबन्धेन घटत्वादेर्महाकालवृत्तित्वात् प्रागभावव्यक्तिभेदेन प्रतियोगिव्यक्तिभेदेन च प्रागभावप्रतियोगित्वरूपकार्यत्वस्याननुगततया महाकालान्यवृत्तिविशेषणतासंबन्धेन घटत्वादेर्महाकालवृत्तित्वेऽपि तेन संबन्धेनाप्यनुगतघटत्वादिकमादाय विनिगमनाविरहासंभवाच्च । चतुर्विंशतिगुणविभाजकधर्माणां मध्ये केषांचित् पृथिव्यादिमनोऽन्तसकलवृत्तितावच्छेदकत्वासंभवात् केषांचिन्नित्यगुणवृत्तित्वाच्च संयोगत्वविशिष्टस्य कार्यत्वमभिहितम् । यद्यप्यत्राप्युक्तरीत्या तत्तद्व्यक्तिसमवेतकार्यं प्रति तत्तद्व्यक्तित्वेन समवायिकारणत्वस्वीकारेणैव सामञ्जस्ये संयोगत्वावच्छिन्नं प्रति द्रव्यत्वेन हेतुत्वानङ्गीकारेऽपि न क्षतिः तथापि कार्यमात्रवृत्तिजा-

## मञ्जूषा.

तावच्छेदकजात्यवच्छिन्नं कुतो न शक्यतेऽप्यावापादयितुम् । तद्वारणं च तादृशजातिव्यापकनीलत्वाद्यवच्छिन्नं प्रति पृथिव्याः कारणत्वकल्पनया शक्यमेव किंच जातेरनियाम्यत्वेन सर्वेषां सर्वजातीयत्वं एकजातीयत्वं वा स्यादिति जातेर्नियामकापेक्षायां कार्यमात्रवृत्तिजातेः कार्यताविशेषनियाम्यतायास्सिद्धान्तसिद्धत्वेन तत्राग्निसंयोगावयवनीलादिजन्यताविशेषयोर्द्वयोर्नीलत्वादिजातिनियामकत्वे गौरवापत्त्या नीलत्वाद्यवच्छिन्नं प्रति पृथिवीत्वादिना हेतुतां स्वीकृत्य तादृशजन्यताविशेषस्यैव नीलत्वादिजातिनियामकत्वं आवश्यकम् । अत एव कार्यमात्रवृत्तिजातेः कार्यतावच्छेदकत्वमिति नियमः । नियाम्यानियामकभावश्चायं प्रातीतिकस्वरूपसंबन्धविशेषः । तथाच किं कार्यत्वावच्छिन्नं प्रति द्रव्यत्वेन कारणतास्वीकारेणेति चेन्न । गुणादौ समवायसंबन्धेन कार्यत्वावच्छिन्नानुत्पादे कार्यत्वव्याप्यतत्तद्धर्मावच्छिन्नजनकसामग्र्यभावकूटस्य प्रयोजकत्वकल्पनापेक्षया द्रव्यभेदस्यैकस्यानुगतस्य प्रयोजकतास्वीकारे लाघवानुरोधेन तादृशकारणताया आवश्यकत्वात् । नचैवं गुणादौ भावत्वप्रमेयत्वाद्यनन्तधर्मावच्छिन्नानां समवायेनानुत्पादप्रयोजकभेदप्रतियोगितया कारणान्तराणि स्युरिति वाच्यम् । समवायेन भावत्वाद्यवच्छिन्नोत्पत्तिं प्रति समवायेन या व्यापकता तदवच्छेदकीभूतकार्यत्वावच्छिन्नजनकद्रव्यभेदस्यैव समवायेन भावत्वाद्यवच्छिन्नानुत्पादप्रयोजकत्वसंभवात् । नच तथापि द्रव्यजन्यतावच्छेदकं कार्यत्वं भावत्वादिकमेवेत्यत्र विनिगमनाविरह इति वाच्यम् । कार्यताशून्यबहुतरव्यक्तिव्यवृत्तधर्मस्य कार्यतावच्छेदकत्वे संभवति तत्साधारणधर्मस्य कार्यतावच्छेदकताया अन्याय्यत्वात् । एवञ्च उक्तकार्यतावच्छेदकतयैव सत्ताजातिरपि सिद्ध्यति तस्याश्च द्रव्यत्वादिना साङ्कर्यवारणाय नित्यसाधारण्यम् । कार्यतातिप्रसक्तधर्मस्य कार्यतावच्छेदकत्वानङ्गीकारे त्वस्मद्गुरुचरणोपदर्शितसंबन्धत्रयस्य कार्यतावच्छेदकतावच्छेदकत्वं वाच्यम् । समवायेन कार्यत्वभावत्वाद्यवच्छिन्नोत्पत्तिव्यापकतावच्छेदकस-

## दिनकरीयम्.

मानाभावः, न च नीले नीलोत्पत्तिवारणाय तथा हेतुत्वमावश्यकमिति वाच्यं, समवायेन नीलं प्रति स्वाश्रयसमवेतद्रव्यत्वसम्बन्धेन नीलस्य हेतुतयैव तद्वारणात् कार्यत्वस्य कार्यतावच्छेदकत्वे गौरवात् कालिकसम्बन्धेन

## रामरुद्रीयम्.

स्य कार्यतावच्छेदकत्वेऽनन्तस्वरूपाणां कार्यतावच्छेदकताघटकसंसर्गता स्वीकरणीया, सत्त्वस्य तथात्वे तु एकस्य समवायस्यैव तथाविधसंसर्गता कल्पनीयेति लाघवमभिप्रेत्याह । **जन्यसत्त्वरूपेति** ॥ **स्वाश्रयसमवेतद्रव्यत्वेति** ॥ स्वाश्रयसमवेतत्वसम्बन्धेन स्वस्मिन्नपि नीलस्य सत्त्वेन तत्र नीलोत्पत्तिवारणाय सम्बन्धकोटौ द्रव्यत्वप्रवेशः । नन्वेवमुक्तकार्यकारणभावविरहेऽप्युक्तकारणतावच्छेदकसंसर्गघटकतयैव द्रव्यत्वजातिसिद्धिर्निष्प्रत्यूहैवेति सिद्धं नः समीहितमित्यत आह । **कार्यत्वस्येति** ॥ ननु तर्हि लाघवात्कालिकसम्बन्धेन

## प्रभा.

तेः कार्यतावच्छेदकत्वानियमानुरोधेन ईदृशकारणत्वमावश्यकमिति हृदयम् । ननु नित्यसंयोगाङ्गीकर्तृमते संयोगत्वस्य समवायसंबन्धेन कार्यतावच्छेदकत्वं न संभवति नित्यसंयोगेऽपि संयोगत्वस्य सत्त्वात् कालिकसमवायोभयसंबन्धेन तस्य कार्यतावच्छेदकत्वे कालिकसमवाययोः कार्यतावच्छेदकताघटकसंबन्धत्वकल्पने गौरवमिति उत्क्रमेण द्रव्यत्वसिद्धयसंभवादाह । **विभागस्य वेति ।** नित्यसंयोगाङ्गीकर्तृमतेऽपि नित्यविभागासंभवादिति भावः । नच द्रव्यनिष्ठविभागसमवायिकारणतायां परम्परया गुणत्वस्यैवावच्छेदकत्वसंभवात् नेदं द्रव्यत्वजातिसाधकमिति वाच्यम् क्लृप्तानां गुणत्वसंख्यात्वपरिमाणत्वपृथक्त्ववत्त्वसंयोगत्वानां विनिगमनाविरहेण सकलद्रव्यसमवेतद्रव्यत्वजातिसिद्धेर्निष्प्रत्यूहत्वात् । इदमुपलक्षणम् । द्वित्वादिसमवायिकारणतावच्छेदकतयापि द्रव्यत्वजातिसिद्धिर्बोध्या । केचित्तु इदमुपलक्षणम् द्रव्यवति द्रव्यान्तरानुत्पत्त्या समवायेन द्रव्यस्य प्रतिबन्धकत्वं कल्पनीयमिति प्रतिबन्धकतावच्छेदकतया द्रव्यत्वजातिसिद्धिर्बोध्या प्रतिबध्यतावच्छेदकं तु पृथिव्यादिचतुष्टयमात्रवृत्तिभूतत्वमेव नित्यव्यावृत्तत्वात् भूतत्वस्य प्रतिबन्धकतावच्छेदकत्वे तु मूर्तत्वस्य तथात्व-

## मञ्जूषा.

स्वावच्छिन्नजनकद्रव्यभेद एव समवायेन कार्यत्वभावत्वाद्यवच्छिन्नानुत्पादप्रयोजकः । एवं च अखण्डानुगतधर्मस्य कार्यतावच्छेदकत्वे लाघवमपि कार्यत्वभावत्वादेरतथात्वे विनिगमकमित्यास्तां विस्तरः । द्रव्यत्वजातावनुमानान्तरमाह ॥ **संयोगस्येति** ॥ ननु किमर्थोऽयं कार्यकारणभावः । नच गुणादौ तदापत्तिवारणाय स आवश्यक इति वाच्यम् । तत्तद्व्यक्तिसमवेतसत्सामान्यं प्रति तत्तद्व्यक्तित्वेन समवायिकारणत्वावश्यकत्वेनैव तद्वारणात् । तथाहि घटादौ प्रसिद्धास्संयोगव्यक्तयः गुणादौ किं तत्तद्व्यक्तित्वेनापाद्यन्ते उत संयोगत्वावच्छिन्नं आद्ये उक्तकारणतया वारणं संभवति तत्तत्संयोगव्यक्तित्वव्यापकतत्तद्घटादिव्यक्तिसमवेतसत्त्वावच्छिन्नजनकतत्तद्घटादिव्यक्तेस्तादात्म्येन गुणादावभावात् । नच तद्घटव्यक्तिसमवेतसंयोगद्वित्वादिव्यक्तेः पटादावुत्पत्त्या व्यभिचार इति वाच्यम् । तत्तद्व्यक्तिसमवेतत्वस्य विशेषणविधया कार्यतावच्छेदकत्वेन तद्विशिष्टस्यान्यत्रानुत्पत्तेः उपलक्षणत्वेऽपि कार्यतावच्छेदकाश्रययत्किंचिद्व्यक्त्यधिकरणयावद्व्यक्तिनिष्ठाभावप्रतियोगित्वस्यैव व्यभिचारपदार्थत्वेन दोषाभावाच्च । नच तथापि तत्संयोगव्यक्तेस्तादात्म्यसंबन्धेन तद्घटव्यक्तिरूपकारणाभावेऽपि यथा पटादावुत्पत्तिस्तथा गुणादावपि स्यादिति वाच्यम् । तत्पटव्यक्तिसमवेतसत्सामान्यं प्रति तत्पटव्यक्तेरपि समवायिकारणतया तत्कार्यतावच्छेदकधर्मस्यापि तत्संयोगव्यक्तिसाधारण्येन तत्क्रियादिव्यक्त्या समवायेन तत्संयोगव्यक्तौ जननीयायां तद्घटव्यक्तितत्पटव्यक्त्योस्तादात्म्येन सहकारित्वस्वीकारात् । तत्सहकारित्वं च तन्निष्ठकार्यव्याप्यतावच्छेदककोटिप्रविष्टत्वम् । द्वितीये त्वापादकाभावः । नहि संयोगत्वावच्छिन्नं प्रति किञ्चित्कारणमास्ते । द्वे हि संयोगकारणे संयोगः कर्म च तयोश्च कार्यतावच्छेदकं वैजात्यद्वयं स्वाव्यवहितोत्तरक्षणोत्पत्तिकत्वसंबन्धेन तत्तद्विशिष्टसंयोगत्वं वा । एवञ्च संयोगकर्मणोरभावादेव न तत्कार्यतावच्छेदकावच्छिन्नापत्तिरिति किं सं-

## दिनकरीयम्.

पटत्वादिकमादाय विनिगमनाविरहान्बेत्यत आह । **संयोगस्येति** ॥ अत्र च रूपादिगुणानां सकलद्रव्यसाधारण्याभावेन द्रव्यकार्यतया परित्यागः । सकलद्रव्यवृत्तिसङ्ख्यादित्रयस्य च गगनादिवृत्तेर्नित्यत्वात् । न च संयोगत्वावच्छिन्नं प्रति द्रव्यत्वेन समवायिकारणत्वे मानाभावस्तत्तद्व्यक्तिसमवेतसत्सामान्यं प्रति तत्तद्व्यक्ति-

## रामरुद्रीयम्.

घटत्ववत्त्वमेव कार्यतावच्छेदकमस्त्वत आह । **कालिकसम्बन्धेनेति ॥ द्रव्यकार्यतया परित्यागः** द्रव्यकार्यत्वेनानुक्तिः । इदञ्च संख्यादित्रयस्य चेत्यत्राप्यनुपज्यते । **सत्सामान्यमिति** ॥ सत्त्वं समयसम्बन्धः समयश्चात्र स्वाधिकरणसमयध्वंसानधिकरणीभूतो ग्राह्यः तेन तादृशसमयसम्बन्धस्योत्पत्तिरूपत्वेनोत्पत्तिमत्त्वलाभात् नित्यगुणादिव्यावृत्तिः यद्यप्यभावस्सन्निति प्रतीत्या समयसम्बन्धमात्रमेव सत्पदार्थः तथापि सामान्यशब्दस्यात्र

## प्रभा.

मादाय विनिगमनाविरहापत्तिः द्रव्यत्वस्य प्रतिबन्धकतावच्छेदकत्वं तु धर्मिग्राहकमानसिद्धम् । नच तस्य ग-गनादिवृत्तित्वे मानाभाव इति वाच्यम् भूतत्वेन तुल्यव्यक्तिकत्वापत्त्या विनिगमनाविरहेण गगनादिवृत्ति-त्वाभ्युपगमात् । नच भूतत्वेन तुल्यव्यक्तिकत्वापत्तिवारणाय मनोवृत्तित्वमेव द्रव्यत्वे कल्प्यतां गगनादिवृ-त्तित्वकल्पने गौरवात् गगनादिवृत्तित्वकल्पनेऽपि मूर्तत्वेन सांकर्यवारणाय मनोवृत्तित्वस्यावश्यकत्वादिति वाच्यम् । तथासति मूर्तत्वजात्या द्रव्यत्वस्य तुल्यव्यक्तिकत्वापत्तिरिति प्रकारान्तरेण द्रव्यत्वजातिसाधनमाहुः । तदसत् भूतत्वस्य प्रतिबन्धकतावच्छेदकत्वे मूर्तत्वस्य तथात्वमादाय विनिगमनाविरहापत्तिरिति दूषणं न सम्यक् शब्दस्पर्शान्यतरवत्त्वरूपभूतत्वस्य मूर्तत्वजात्यपेक्षया गुरुभूतत्वेन संभवति लघाविति न्यायेन लाघवस्यैव विनिगमकत्वेन मूर्तत्वस्यैव प्रतिबन्धकतावच्छेदकत्वसिद्धेः । भूतत्वेन तुल्यव्यक्तिकत्वा-पत्त्या विनिगमनाविरहेण गगनादिवृत्तित्वाभ्युपगमादिति दूषणमप्यलग्नकम् पृथिव्यादिपञ्चवृत्तिभूतत्वेन पृथिव्यादिचतुष्टयवृत्तिद्रव्यत्वजातेः तुल्यव्यक्तिकत्वाप्रसक्तेः । नच पृथिव्यादिचतुष्टयमात्रवृत्तिभूतत्वेन

## मञ्जूषा.

योगत्वावच्छिन्नं प्रति द्रव्यत्वेन कारणतयेति चेन्न । गुणादौ संयोगत्वावच्छिन्नानुत्पादे संयोगत्वव्याप्यत-त्तद्धर्मावच्छिन्नजनकसामग्र्यभावकूटस्य प्रयोजकत्वे गौरवेण तदावश्यकत्वात् । यदितु संयोगत्वव्यापक-सत्त्वावच्छिन्नं प्रति द्रव्यत्वेन दर्शितकारणतयाप्युपपत्तिरिति मन्यते तदा कार्यमात्रवृत्तेस्संयोगत्वजातेः कार्य-तावच्छेदकत्वानुरोधेनैवोक्तकारणताऽऽवश्यकीति बोध्यम् । एवं विभागस्थलेऽपि । अत्र द्वित्वादिसमवायि-कारणतावच्छेदकतयाऽपि द्रव्यत्वजातिसिद्धिरस्मद्गुरुचरणैरुक्ता । नचात्र सर्वत्र परंपरासंबन्धेन गुणत्वस्यैवा-वच्छेदकत्वमस्त्विति वाच्यम् । साक्षात्संबद्धधर्मबाधे सत्येवानुमितेः परंपरासंबद्धधर्मविषयकत्वस्य वाच्यत्वा-त् एकत्वत्वैकपृथक्त्वत्वसंख्यात्वादिकमादाय विनिगमनाविरहाच्च । अत्र केचिद्द्रव्यवति द्रव्यान्तरानुत्पत्त्या समवायेन द्रव्यस्य प्रतिबन्धकत्वं कल्पनीयमिति प्रतिबन्धकतावच्छेदकतया द्रव्यत्वजातिसिद्धिः प्रतिबध्य-तावच्छेदकं च पृथिव्यादिचतुष्टयमात्रवृत्तिस्पर्शसमवायिकारणतावच्छेदकतया द्रव्यसमवायिकारणतावच्छेद-कतया वा सिद्धजातिविशेषरूपं, पृथिवीत्वादिना सांकर्यवारणाय स्वीकृतान्त्यावयविवृत्तिकं भूतत्वं नतु द्रव्य-त्वं मूर्तत्वं वा बहुतरनित्यद्रव्यव्यावृत्तधर्मस्य प्रतिबध्यतावच्छेदकत्वे संभवति तत्साधारणधर्मस्य तथात्वानौ-चित्यात् । भूतत्वस्य प्रतिबन्धकतावच्छेदकत्वे तु मूर्तत्वस्य तथात्वमादाय विनिगमनाविरहः । नच तस्य गगनादिवृत्तित्वे मानाभाव इति वाच्यम् । भूतत्वेन तुल्यव्यक्तिकत्वापत्त्या विनिगमनाविरहेण गगना-दिपञ्चवृत्तित्वाभ्युपगमात् । नच घटत्वकलशत्वयोरिवाभेदस्वीकारेण तुल्यव्यक्तिकत्ववारणमस्त्विति वाच्यम् तावता भूतत्वस्यैव प्रतिबन्धकतावच्छेदकत्वप्राप्त्या मूर्तत्वस्य तथात्वमादाय विनिगमनाविरहस्यावा-रणात् । नच गगनादिवृत्तित्वकल्पनेऽपि मूर्तत्वेन साङ्कर्यवारणाय मनोवृत्तित्वस्यावश्यकतया किं गग-नादिवृत्तित्वकल्पनेनेति वाच्यम् । तथा सति मूर्तत्वजात्या द्रव्यत्वस्य तुल्यव्यक्तिकत्वापत्तेः अभेद-

## दिनकरीयम्.

त्वेन समवायिकारणत्वस्यावश्यकतया गुणादौ तदुत्पादासम्भवादिति वाच्यं, कार्यमात्रवृत्तिजातेः कार्यतावं-

## रामरुद्रीयम्.

विशेषपरताभ्युपगमादुक्तार्थलाभः । सत्पदस्य सत्तावदर्थकत्वे नित्यगुणव्यावर्तनाय जन्यत्वप्रवेशस्यावश्यकतया तत एव जातिवारणे तद्वारकसत्पदवैयर्थ्यापत्तेः । प्रागभावस्य सर्वमतासिद्धतया प्रागभावप्रतियोगित्वं नोपात्त-मिति ध्येयम् । **आवश्यकतयेति** ॥ अन्यथा एकत्र समवेतस्यापरत्र समवायेनोत्पादप्रसंगादिति भावः । वस्तुतस्तु उक्तकार्यकारणभावस्य प्रतिव्यक्ति भिन्नतया घटादौ नित्यगुणाभावेन तदभिप्रायेण जातिमात्रव्यावर्त-नाय लाघवेन सत्पदं यथाश्रुतमेव सम्यगिति प्रतिभाति । गगनादिस्थल एवागत्या जन्यत्वं प्रवेश्य कार्यकार-णभाव इति भावः । **कार्यमात्रवृत्तिजातेरिति** ॥ अन्यथा तदवच्छिन्नस्याकस्मिकत्वापत्तेरिति भावः ।

## प्रभा.

तुल्यव्यक्तिकत्वापादने तात्पर्यमिति वाच्यम् । पृथिव्यादिचतुष्टयमात्रवृत्तिभूतत्वं स्पर्शवत्त्वरूपं पृथिवीत्वादिचतुष्टयान्यतमवत्त्वं वा नाद्यः स्पर्शवत्त्वस्य जातिरूपत्वाभावेन तेन सह तुल्यव्यक्तिकत्वस्यादोषत्वादन्यथा पृथिवीत्वादेरपि गन्धवत्त्वादिना तुल्यव्यक्तिकत्वेन पृथिवीत्वादेरपि जातित्वानुपपत्तेः । न द्वितीयः मूर्तत्वस्यापि पृथिवीत्वाप्त्वतेजस्त्ववायुत्वमनस्त्वान्यतमत्वावच्छिन्नेन सह तुल्यव्यक्तिकत्वान्मूर्तत्वस्यापि जातित्वानुपपत्तेः । नचेष्टापत्तिः मूर्तत्वजात्या द्रव्यत्वस्य तुल्यव्यक्तिकत्वापत्तिरित्यग्रेतनत्वदुक्तग्रन्थविरोधापत्तेः । तस्मात्स्वभिन्नैकजातिसमनियतत्वमेव तुल्यव्यक्तिकत्वं वाच्यम् । एवंच द्रव्यत्वस्य पृथिवीत्वादिजातिचतुष्टयान्यतमेना सह तुल्यव्यक्तिकत्वेऽपि एकजात्या सह तुल्यव्यक्तिकत्वाभावात् न तस्य गगनादिवृत्तित्वसंभवः । नच पृथिव्यादिचतुष्टयमात्रवृत्तिभूतत्वं द्रव्यसमवायिकारणतावच्छेदकतया सिद्धो जातिविशेषः तस्य चरमावयववृत्तित्वं स्वीक्रियते तेषामनित्यत्वेन नित्यस्येत्यादिनियमानवकाश इति वाच्यम् द्रव्यत्वजातिसिद्धेः प्राक् द्रव्यसमवायिकारणतावच्छेदकतया पृथिव्यादिचतुष्टयमात्रवृत्तिजातिसिद्धेरसंभवात् । अस्तु वा तादृशजातिविशे-

## मञ्जूषा.

स्वीकारे च भूतत्वस्य प्रतिबन्धकतावच्छेदकतामादाय विनिगमनाविरहापत्तेरित्याहुः । तन्न अत्यन्ताप्रतिबन्धकबहुतरव्यक्तिव्यावृत्तधर्मस्य प्रतिबन्धकतावच्छेदकत्वे संभवति तत्साधारणधर्मस्य तथात्वानौचित्येन अणुरपि विशेषोऽध्यवसायकर इति न्यायेन मूर्तत्वस्य तथात्वमादाय विनिगमनाविरहप्रसक्तेरभावेन भूतत्वस्यैव प्रतिबन्धकतावच्छेदकत्वसंभवात् । साधर्म्यप्रकरणे जलत्वादीनां द्रव्यत्वसाक्षाद्व्याप्यत्वस्य अग्रे वक्ष्यमाणतया दर्शितभूतत्वमूर्तत्वजात्योर्ग्रन्थकृदभिमतत्वाच्च । किंच न पृथिव्यादिचतुष्टयवृत्तिभूतत्वजातौ प्रमाणमस्ति तद्धि न प्रत्यक्षेण द्रव्यत्वादतिरिक्तमनुभूयते नाप्यनुमानगम्यं योग्यवृत्तिजातेर्योग्यत्वापत्तेरनुमानस्याप्यसंभवाच्च । तद्धि न द्रव्यसमवायिकारणतावच्छेदकतया सिध्यति द्रव्यारम्भकविजातीयावयवसंयोगाभावात् समवायेन द्रव्यं प्रति स्पर्शस्य समवायसंबन्धेन हेतुत्वस्वीकाराद्वा गगनादौ द्रव्योत्पत्तिवारणसंभवेन अतिरिक्तभूतत्वजातिपुरस्कारेण पृथिव्यादीनां कारणताया अप्रामाणिकत्वात् नापि स्पर्शसमवायिकारणतावच्छेदकतया तत्सिद्धिः तत्र प्रमाणाभावात् नहि स्पर्शत्वं कार्यमात्रवृत्ति येन कार्यताविशेषनियाम्यतयैव तथात्वमावश्यकं स्यात् अनुपदोक्तद्रव्यकारणत्वादेरेव स्पर्शत्वजातिनियामकताया मतद्वयेऽप्यावश्यकत्वात् नच गगनादौ स्पर्शत्वावच्छिन्नाभावे अनुगतप्रयोजकलाभाय तद्धेतुत्वमावश्यकमिति वाच्यम् । योग्यवृत्तिजातेर्योग्यत्वनियमेन पृथिवीजलादिषु द्रव्यत्वादतिरिक्तस्यानुगतधर्मस्य प्रत्यक्षतोऽनुपलम्भेन कल्पयितुमशक्यतया स्वाश्रयसमवेतत्वसंबन्धावच्छिन्नप्रतियोगिताकानुष्णाशीतस्पर्शाभावसमवायसंबन्धावच्छिन्नप्रतियोगिताकविजातीयाभिसंयोगाभावकूटस्यैव अनायत्या तत्प्रयोजकताया वक्तव्यत्वात् अन्यथा रूपसमवायिकारणतावच्छेदकतया पृथिव्यादिषु त्रिषु रससमवायिकारणतावच्छेदकतया पृथिवीजलयोर्नैमित्तिकद्रवत्वसमवायिकारणतावच्छेदकतया पृथिवीतेजसोरनुष्णाशीतस्पर्शसमवायिकारणताव-

## दिनकरीयम्.

च्छेदकत्वानियमेन तादृशकारणत्वस्यावश्यकत्वात् । नित्यसंयोगाङ्गीकर्तुर्मतसाधारण्येनाह । **विभागस्यैवेति** ॥ **द्रव्यत्वसिद्धेः** द्रव्यत्वजातिसिद्धेः । क्वचित्तथैव पाठः । अत्र यद्यपि गुणत्वेनान्यथासिद्धिः सम्भवति तथापि साक्षात्सम्बद्धधर्मबाधे सत्येवानुमितेः परम्परासम्बद्धधर्मविषयकत्वमिति भावः । इदमुपलक्षणम् ॥ द्रव्यवति द्रव्यान्तरानुत्पत्त्या समवायेन द्रव्यस्य प्रतिबन्धकत्वं कल्पनीयमिति प्रतिबन्धकतावच्छेदकतया द्रव्यत्वजातिसिद्धिः, प्रतिबध्यतावच्छेदकं तु पृथिव्यादिचतुष्टयमात्रवृत्तिभूतत्वमेव, नित्यव्यावृत्तत्वात्, भूतत्वस्य

## रामरुद्रीयम्.

**गुणत्वेनान्यथासिद्धिरिति** ॥ स्वाश्रयाश्रयत्वरूपपरम्परासम्बन्धेन गुणत्वस्यापि द्रव्यनिष्ठकारणतावच्छेदकत्वसंभवादिति भावः । **नित्यव्यावृत्तत्वादिति** ॥ यद्यपि भूतत्वं पृथिव्यादिपरमा-

**तद्धि प्रत्यक्षेण गृह्यते तस्य च रूपवत्त्वात्कर्मवत्त्वाच्च द्रव्यत्वम् तद्धि गन्धशून्यत्वान्न**

## प्रभा.

षसिद्धिः तथापि पृथिव्यादिचतुष्टयमात्रवृत्तिजात्या सह द्रव्यत्वजातेः तुल्यव्यक्तित्वापत्तिः घटत्वकलशत्वयोरैक्याङ्गीकारेण यथा तुल्यव्यक्तिकत्वदोषो वारितः तथा तादृशजात्योरैक्यमङ्गीकृत्यैव वारणीय इति द्रव्यत्वजातेर्गगनादिवृत्तित्वे उक्तयुक्तेरसाधकत्वात् । मीमांसकमतमुपन्यस्य दूषयति । **नन्विति** ॥ तमः पदार्थ एवेत्यलीक इत्याशङ्कायामाह । **तद्धीति** ॥ हि हेतौ । तथाच तमो यतश्चक्षुषा गृह्यते अतस्तमः पदार्थ इति ना-

## मञ्जूषा.

च्छेदकतया पृथिवीवाय्वोश्च जातिसिद्धिप्रसंगात् । अथ पृथिव्यादिष्वनुभूयमानोऽनुगतो धर्मो भूतत्वमेवास्तु न द्रव्यत्वमिति चेद्भ्रान्तोऽसि । नवद्रव्यसाधारणं कंचन धर्मं भवानप्यनुमन्यते । सच गगनादिष्वयोग्यः पृथिव्यादिषु योग्य इति च भवताप्यङ्गीकार्यं किन्तु तदतिरिक्तं पृथिव्यादिचतुष्टयमात्रवृत्तिनं कमपि धर्ममङ्गीकुर्वाणो भवान् पृच्छ्यते किमतिरिक्तं कमपि धर्मं प्रत्यक्षेणानुभवसीति । एतेन मूर्तत्वमपि प्रत्याख्यातम् द्रव्यत्वाद्भेदेन तस्यानुपलब्धेः । यद्यपि स्पन्दत्वं कार्यमात्रवृत्तितयावश्यं कार्यतावच्छेदकं वाच्यम् तथापि तदवच्छिन्नकारणतावच्छेदकं न जातिरूपं किंत्वपकृष्टपरिमाणवत्त्वम् । यथा चापकृष्टत्वं मूर्तपरिमाणेष्वनुगतं तथाग्रे पारिमाण्डल्येति श्लोकव्याख्यानावसरे वक्ष्यते । नच स्पन्दसमवायिकारणतावच्छेदकमेव जातिरूपमस्तु संयोगादिसमवायिकारणतावच्छेदकमन्यदास्तामिति वाच्यम् तत्रानुगतस्यैकस्य विनिगन्तुमशक्यत्वात् । तदेतत्सर्वमभिप्रेत्यैव वक्ष्यति जलत्वादीनां द्रव्यत्वसाक्षाद्व्याप्यत्वं मूर्तत्वमपकृष्टपरिमाणवत्त्वमिति च ग्रन्थकृत । तर्हि द्रव्यं प्रति द्रव्यस्य प्रतिबन्धकतायां किं प्रतिबध्यतावच्छेदकमिति चेत् द्रव्यत्वमेव तस्यानायत्या बहुतरनित्यसाधारण्येऽपि क्षतेरभावात् । जन्यत्वं वा विशेष्यतां पूर्वोक्तसंबन्धत्रयस्य कार्यतावच्छेदकतावच्छेदकत्वं वास्तु । एवं चोक्तप्रतिबन्धकतावच्छेदकतया द्रव्यत्वजातिसिद्धिः परं निष्प्रत्यूहैवेत्यलमतिजल्पनेन । **दशमद्रव्यमिति** । पृथिवीत्वादिशून्यद्रव्यमित्यर्थः । ननु तमसस्सत्त्व एव किं मानं सत्त्वे वा कथं द्रव्यत्वं द्रव्यत्वे वा कुतः पृथिवीत्वादिशून्यत्वमित्याशङ्कात्रयं क्रमेण वारयति । **तद्धीत्यादिना** ॥ तस्यान्न गन्धशून्यत्वादिति गन्धाभावस्य हेतुतोक्तौ घटगतगन्धप्रति-

## दिनकरीयम्.

प्रतिबन्धकतावच्छेदकत्वे तु मूर्तत्वस्य तथात्वमादाय विनिगमनाविरहापत्तिः, द्रव्यत्वस्य प्रतिबन्धकतावच्छेदकत्वं तु धर्मिग्राहकमानसिद्धम् । न च तस्य गगनादिवृत्तित्वे मानाभाव इति वाच्यं, भूतत्वेन तुल्यव्यक्तिकत्वापत्त्या विनिगमनाविरहेण गगनादिपञ्चवृत्तित्वाभ्युपगमात्, न च भूतत्वेन तुल्यव्यक्तित्ववारणाय मनोवृत्तित्वमेव द्रव्यत्वे कल्प्यतां गगनादिवृत्तित्वकल्पने गौरवात् गगनादिवृत्तित्वकल्पनेऽपि मूर्तत्वेन साङ्कर्यवारणाय मनोवृत्तित्वस्यावश्यकत्वादिति वाच्यम्, तथा सति मूर्तत्वजात्या द्रव्यत्वस्य तुल्यव्यक्तित्वापत्तेरिति ॥ ननु दशमद्रव्यस्य तमसस्सत्त्वान्नव द्रव्याणीत्ययुक्तमित्यभिप्रायेण मीमांसकः शङ्कते। **नन्विति** ॥ ननु तमसि मानाभावेन नोक्तमित्याशङ्क्य तमस्साधकप्रत्यक्षप्रमाणमाह । **तद्धीति** ॥ तमो हीत्यर्थः । **प्रत्यक्षेण** चक्षुरिन्द्रिये-

## रामरुद्रीयम.

णुवृत्तित्वेन न नित्यव्यावृत्तम्, न चेदं प्रतिबध्यतावच्छेदकं भूतत्वं परमाणुव्यावृत्तमेव स्वीकार्यमिति वाच्यम्, तथा सति पृथिवीत्वादिना साङ्कर्यापत्त्या तस्य जातित्वानुपपत्तेः । तथापि साङ्कर्यस्य दोषत्वानुपगमेनैतदभिहितम् । ननु द्रव्यत्वस्यापि प्रतिबन्धकतावच्छेदकत्वे भूतत्वमूर्तत्वाभ्यां विनिगमनाविरहतादवस्थ्यमत आह । **द्रव्यत्वस्येति** ॥ **धर्मिग्राहकमानेति** ॥ द्रव्यत्वसाधकानुमानेत्यर्थः । तथा च तस्य प्रतिबन्धकतानवच्छेदकत्वे द्रव्यत्वमेव न सिद्ध्येदिति क्लृप्तयोरेव परस्परं विनिगमनाविरहः न तु क्लृप्तस्याक्लृप्तेनेति भावः । **साङ्कर्यवारणायेति** ॥ यद्यपि स्वमते साङ्कर्यं न दोषः, तथापि तुष्यतु दुर्जन इति न्यायेन तस्य दोषत्वम-

## प्रभा.

लीक इति फलितः। इत्थंच तमः पृथिवीत्वादिमनस्त्वान्तान्यतमभिन्नद्रव्यविभाजकधर्मवत् एतादृशान्यतमशून्यत्वे सति द्रव्यत्वादिति परिशेषानुमानेन तमसोऽतिरिक्तद्रव्यत्वं साधयितुं विशेष्यासिद्धिनिरासाय प्रथमं द्रव्यत्वं साधयति। **तस्य चेति** ॥ तमसोऽपीत्यर्थः। तथाच घटादे रूपवत्त्वाद्यथा द्रव्यत्वं तथा तमसोऽपीति भावः। ननु तमो नीलभिति प्रत्यक्षवत् तमश्चलति परमपरं संयुक्तं विभक्तं चेति प्रत्यक्षेण रूपस्येव क्रियापरत्वापरत्वसंयोगविभागानामपि तमसि सिद्धत्वात् 'तमः खलु चलं नीलं परापरविभागवत्। प्रसिद्धद्रव्यवैधर्म्यान्नवभ्यो भेत्तुमर्हति ' ॥ इति वचनेन षण्णामपि द्रव्यत्वसाधकत्वप्रतिपादनाच्च। अत्र सर्वेषां अनुपन्यासात् न्यूनतेत्याशङ्कां हेत्वन्तरसाधनेन परिहरति। **कर्मवत्त्वादिति** ॥ तथाच कर्मवत्त्वपदं सर्वहेतूपलक्षकम्। कर्मवत्त्वपदसमभिव्याहृतो वा चकारः अनुक्तसकलहेतुसमुच्चायक इति न न्यूनतेति भावः। सत्यन्तासिद्धीर्निरस्यति : **तच्चेति** ॥ **गन्धशून्यत्वादिति** ॥ गन्धत्वावच्छिन्नप्रतियोगिताकाभाववत्त्वादित्यर्थः। अन्यादिपदसमभिव्याहारस्येव शून्यपदसमभिव्याहारस्यापि अन्वयितावच्छेदकावच्छिन्नप्रतियोगिताकत्वविषयकशाब्दबोधहेतुत्वादत एव यत्किंचिद्घटवति घटशून्यं भूतलमिति वाक्यस्याप्रमाणत्वं यत्किंचिद्घटवति देशान्तरवृति-

## मञ्जूषा.

योगिकाभावमादाय पटे व्यभिचारः। अतस्तच्छून्यत्वमुक्तम्। हेतुश्च प्रतियोगिव्यधिकरणस्समवायसंबन्धावच्छिन्नप्रतियोगिताकोऽपि बोध्यः। तेनोत्पत्तिकालीने संयोगसंबन्धावच्छिन्नगन्धाभाववति वा घटे न व्यभिचार इति महादेवः। तत्रच गन्धत्वावच्छिन्नप्रतियोगिताकत्वं शून्यपदसमभिव्याहारेणैव लभ्यते। प्रतियोगिव्यधिकरणत्वादिकं तु वैवक्षिकमिति भावः। अत्र प्रतियोगिव्यधिकरणत्वं प्रतियोग्यनधिकरणवृत्तित्वं प्रतियोग्यधिकरणावृत्तित्वं वा। आद्ये प्रतियोग्यनधिकरणत्वं समवायसम्बन्धेन प्रतियोगितावच्छेदकसम्बन्धेन वा। आद्ये गन्धसमवायिभिन्नजलवृत्तिगन्धाभावस्योत्पत्तिकालावच्छेदेन घटे सत्त्वाद्व्यभिचारतादवस्थ्यम्। प्रतियोग्यनधिकरणवृत्तित्वविशिष्टस्य हेतुत्वे तावतैव गन्धसमवायिभिन्नजलादिवृत्तित्वविशिष्टस्य संयोगसम्बन्धावच्छिन्नगन्धाभावस्य घटेऽभावादेव तत्र व्यभिचारवारणे समवायसंबन्धावच्छिन्नप्रतियोगिताकत्वविशेषणमनर्थकम्। द्वितीये समवायसंबन्धावच्छिन्नगन्धाभावस्यापि प्रतियोगितावच्छेदकीभूतविशेषणतासंबन्धेन किञ्चिद्विशिष्टस्वाभावरूपप्रतियोग्यधिकरणमेव जगदित्यप्रसिद्धिः। भावनिष्ठप्रतियोगितानिवेशेऽपि संयोगेन गन्धाभावस्य स्वरूपसम्बन्धेन गन्धाभावस्य संयोगसंबन्धेन वाच्यत्वाभावस्य च त्रयाणां समनियततया भेदाभावेन संयोगेन गन्धाभावस्य स्वरूपसंबन्धोऽपि प्रतियोगितावच्छेदकसम्बन्धः वाच्यत्वमपि प्रतियोगीति तदनधिकरणाप्रसिद्ध्या संयोगेन गन्धाभावो न प्रतियोगिव्यधिकरण इति समवायसम्बन्धावच्छिन्नत्वनिवेशो व्यर्थः। स्वीयभावनिष्ठतत्प्रतियोगितावच्छेदकसंबन्धेन तत्प्रतियोगिताश्रयानधिकरणत्वस्य स्वीयगन्धनिष्ठप्रतियोगितावच्छेदकसम्बन्धेन गन्धनिष्ठप्रतियोगिताश्रयानधिकरणत्वस्य वा विवक्षणे तु तादृशसंयोगसंबन्धेन गन्धाधिकरणत्वस्यैवाप्रसिद्ध्या सुतराम्। अथास्तु

## दिनकरीयम्.

ण। ननु तमसः सिद्धावपि तस्य द्रव्यत्वे किं मानमित्याशङ्क्यानुमानप्रमाणमाह। **तस्येति** ॥ तमस इत्यर्थः। चकारो द्रव्यत्वमित्यनेनान्वेति। तथा च तमो द्रव्यं रूपवत्त्वादित्यनुमानं तमसो द्रव्यत्वे प्रमाणमिति सूचितम्। इदमुपलक्षणम्। परत्वाद्याश्रयत्वादित्यपि बोध्यम्। इदं तमः परमिदमपरमिति प्रतीतेः। ननु तमसि रूपे मानाभावः, न च नीलं तम इति प्रतीत्या तत्सिद्धिरिति वाच्यम्, प्रतीतेर्भ्रान्तित्वादतो हेत्वन्तरमाह। **कर्मवत्त्वादिति** ॥ कर्मवत्त्वं च समवायसम्बन्धेन विवक्षितं तेन जन्यमात्रस्य कालिकसम्बन्धेन कर्मवत्त्वेऽपि न व्यभिचारः। न च स्वरूपासिद्धिः। चलतिच्छायेति प्रतीत्या कर्मवत्त्वसिद्धेः। तमसः क्लृप्तद्रव्येष्वन्तर्भावं

## रामरुद्रीयम्.

भ्युपेत्यापि दोषान्तरमाह। **तथा सतीति** ॥ **चलतिच्छायेति प्रतीत्येति** ॥ यद्यपि नीलं तम इति

## प्रभा.

घटव्यक्त्यभावं पूर्वक्षणवृत्तित्वविशिष्टघटाभावं घटपटोभयाभावं च विषयीकृत्य बोधतात्पर्येण प्रयुक्त घटाभाववद्भूतलमिति वाक्यस्य प्रमाणत्वं च घटते । एतत्सर्वं हृदि निधाय गन्धाभाववत्त्वादित्यनुक्त्वा गन्धशून्यत्वादित्युक्तम् । अत्र समवायसंबन्धावच्छिन्नप्रतियोगिताकत्वं हेतौ विशेषणीयम् । तेन गन्धवति संयोगसंबन्धेन गन्धाभावसत्त्वेऽपि न व्यभिचारः । नच तथाप्युत्पत्तिकालघटे तादृशगन्धाभावसत्त्वात् व्यभिचारस्तदवस्थ एवेति वाच्यम् । समवायेन गन्धसंबन्धित्वशून्यत्वस्यैव विवक्षितत्वात् । नचैवं सुरभ्यसुरभ्यवयवारब्धे निर्गन्धघटे व्यभिचारो दुर्वार इति वाच्यम् । समवायेन गन्धसंबन्धित्व-समवायघटितसामानाधिकरण्यसंबन्धेन गन्धसंबन्धित्व-एतदन्यतरत्वावच्छिन्नस्वरूपसंबन्धावच्छिन्नप्रतियोगिताकाभावस्यैवाभावीयदैशिकविशेषणतासंबन्धेन हेतुत्व एतादृशग्रन्थतात्पर्यात् । निर्गन्धघटे समवायघटितसामानाधिकरण्येनावयवगन्धसंबन्धित्वसत्त्वेन निरुक्तहेत्वभावाद्व्यभिचाराप्रसक्तेः । केचित्तु अभावश्च प्रतियोगिव्यधिकरणः समवायसंबन्धावच्छिन्नप्रतियोगिताकश्च बोध्यः । तेनोत्पत्तिकालीने संयोगसंबन्धावच्छिन्नगन्धाभाववति घटे न व्यभिचार इत्याहुः तदसत् प्रतियोगिव्यधिकरणत्वमत्र समवायेन प्रतियोगितावच्छेदकसंबन्धेन वा । नाद्यः समवाये गन्धानधिकरणजलादिवृत्तित्वविशिष्टस्य संयोगेन गन्धाभावस्य घटेऽसत्त्वाद्व्यभिचाराप्रसक्तेः । न द्वितीयः संयोगेन गन्धाभावस्य प्रतियोगितावच्छेदकसंयोगसंबन्धेन गन्धाधिकरणाप्रसिद्ध्या प्रतियोगिव्यधिकरणत्वाभावेनैव व्यभिचारवारणे अभावे समवायसंबन्धावच्छिन्नप्रतियोगिताकत्वविशेषणवैयर्थ्यात् । स्वप्रतियोगितावच्छेदकसंबन्धेन प्रतियोगितावच्छेदकावच्छिन्नसमानाधिकरणं यद्यत्त्वं तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदकूटवत्त्वरूपं प्रतियोगिव्यधिकरणसंबन्धावच्छिन्नसाधारणं प्रतियोगिवैयधिकरण्यं निवेश्य समवायसंबन्धावच्छिन्नप्रतियोगिताकत्वविशेषणसार्थक्यसमर्थनस्य प्रक्षाळनाद्धीति न्यायग्रस्तत्वात्तावतापि निर्गन्धघटे व्यभिचारवारणाच्च । नच प्रतियोगिव्यधिकरणनिरुक्तगन्धाभाव-समवायघटितसामानाधिकरण्येन गन्धाभावैतदुभयत्वावच्छिन्नस्य हेतुत्वान्नोक्तस्थले व्यभिचार इति वाच्यम् एवमपि वृत्त्यनियामकसंबन्धस्याभा-

## मञ्जूषा.

स्वप्रतियोगितावच्छेदकसम्बन्धेन स्वप्रतियोग्यधिकरणवृत्ति यत्तदन्यत्वं प्रतियोगिव्यधिकरणत्वमिति चेत्तर्हि समवायेन गन्धाभावस्य प्रतियोग्यधिकरणे घटे उत्पत्तिकालावच्छेदेन वर्तमानत्वादप्रसिद्धिरिति चेदत्र ब्रूमः । स्वप्रतियोगितावच्छेदकसंबन्धेन स्वप्रतियोगिसमानाधिकरणं यत्तद्भिन्नत्वमेवेह प्रतियोगि-

## दिनकरीयम्.

निराकुरुते । **तद्धीत्यादिना ॥ गन्धेति ॥** गन्धाभावस्य हेतुत्वोक्तौ पटगतगन्धप्रतियोगिकाभावमादाय घटे व्यभिचारोऽतः शून्यत्वमुक्तम् । हेतुश्च प्रतियोगिव्यधिकरणः समवायसम्बन्धावच्छिन्नप्रतियोगिताकोऽपि बोध्यः । तेन नोत्पत्तिकालीने संयोगसंबन्धावच्छिन्नगन्धाभाववति च घटे व्यभिचारः ।

## रामरुद्रीयम्.

प्रतीतेरिव एतस्या अपि प्रतीतेर्भ्रमत्वकल्पनसम्भवात्पूर्वोक्तावतारणासङ्गतिः, तथापि व्रह्यादितेजस्यौपाधिकरक्तादिरूपभ्रमस्य सर्वसिद्धतया रूपवत्ताप्रतीतौ भ्रमत्वकल्पनसंभवः, क्रियावत्ताप्रतीतौ तु न तथा सम्भवः, क्वापि क्रियावत्ताप्रतीतौ तथात्वादर्शनादिति भावः । यद्यपि वेगवतः पुंसः स्थिरे वृक्षादौ भ्रमरूपा क्रियावत्ताप्रतीतिरनुभूयते, तथापि तत्र भ्रान्तपुरुषनिष्ठदोषस्यैव क्रियावत्ताभ्रमजनकत्वेन क्लृप्ततया भ्रमविशेषे समीपवृत्त्युदासीनपदार्थनिष्ठक्रियारूपदोषस्य क्रियाभ्रमजनकत्वेन कुत्राप्यकल्पनात् नात्र प्रतीतेर्भ्रमत्वकल्पनसंभव इति भावः । ननु गन्धाभावादित्यनुक्त्वा गन्धशून्यत्वान्न पृथिवीति किमर्थमुक्तमित्याशङ्क्य गन्धाभावादित्युक्ते गन्धप्रतियोगिकाभावहेतुता लभ्यते तथा च तत्तद्गन्धाभावस्यापि तथात्वेन तस्य च पृथिवीत्वाभावव्यभिचरित्वात् गन्धसामान्याभावस्य हेतुतालाभाय गन्धशून्यत्वादित्युक्तमि-

पृथिवी, नीलरूपवत्त्वाच्च न जलादिकम् । तत्प्रत्यक्षे चालोकनिरपेक्षं चक्षुः कारणमिति

## प्रभा.

वप्रतियोगितानवच्छेदकत्वमते सामानाधिकरण्येनाभाववत्त्वघटितनिरुक्तहेतोरप्रसिद्धेः । **न पृथिवीति** ॥ पृथिवीत्वशून्यमित्यर्थः । एकहेतुनैव जलत्वादिमनस्त्वान्तान्यतमशून्यत्वसाधनसंभवे स्नेहशून्यत्वादितत्तद्धेतुना जलत्वाभावादेः प्रातिस्विकरूपेण साधनमनुचितमित्यभिप्रायेणाह । **नीलरूपवत्त्वादिति** ॥ ननु तमो न रूपिद्रव्यम् आलोकासहकृतचक्षुर्ग्राह्यत्वादालोकाभाववत् इत्यनुमानेन रूपिद्रव्यभिन्नत्वसिद्धौ नीलरूपवत्त्वेन तमसि कथं जलत्वादिमनस्त्वान्तान्यतमशून्यत्वसिद्धिरित्याशङ्कां रूपिद्रव्यभिन्नत्वसाधकहेतोर्व्यभिचारप्रदर्शनेन परिहरति । **तत्प्रत्यक्ष इति** ॥ तमःप्रत्यक्ष इत्यर्थः । **आलोक इति** ॥ आलोकासहकृतचक्षुरेव कारणमित्यर्थः । तथाच द्रव्यवृत्तिलौकिकविषयतासंबन्धेन चाक्षुषमात्रे आलोकस्य न कारणत्वं आलोकादौ

## मञ्जूषा.

व्यधिकरणत्वम् । मीमांसकमते अधिकरणस्वरूपानतिरिक्तस्याभावस्याधिकरणभेदेन भिन्नतया तमोनिष्ठस्य गन्धाभावस्य निरुक्तप्रतियोगिव्यधिकरणत्वोपपत्तिः । अथवा स्वीयभावनिष्ठप्रतियोगितावच्छेदकसंबन्धेन भावरूपप्रतियोग्यनधिकरणवृत्तित्वं प्रतियोगिव्यधिकरणत्वं, संयोगपदं च समवायातिरिक्तत्वेन रूपेण कालिकविशेषणताविषयितादिसंबन्धपरम् । अतस्तत्संबन्धावच्छिन्नप्रतियोगिताकाभावमादाय व्यभिचारवारणाय समवायावच्छिन्नप्रतियोगिताकत्वविशेषणसार्थक्यं इति बोध्यम् । परन्तु समवायेन प्रतियोग्यनधिकरणवृत्तित्वविशिष्टगन्धाभावगन्धाधिकरणत्वाभावगन्धवद्भेदादेरपि लघोर्हेत्वन्तरस्य संभवः । अथैवमपि नानाजातीयगन्धवदवयवारब्धस्यावयविनो निर्गन्धताया अग्रे वक्ष्यमाणतया तत्र व्यभिचारः । नच समवायसामानाधिकरण्यान्यतरसंबन्धेन गन्धशून्यत्वविवक्षया न व्यभिचार इति वाच्यम् । निर्गन्धकपालारब्धघटे निर्गन्धकपालावयवारब्धकपालारब्धघटादौ च व्यभिचारस्य तावताप्यपरिहारादिति चेन्न । गन्धवद्वृत्तिद्रव्यत्वव्याप्यजातिशून्यत्वस्य गन्धवदवृत्तिजातिमत्त्वस्य वा विवक्षितत्वात् । ननु तमसो द्रव्यत्वे द्रव्यनिष्ठलौकिकविषयतासंबन्धेन चाक्षुषत्वावच्छिन्नं प्रत्यालोकसंयोगस्यालोकावच्छिन्नचक्षुस्संयोगस्य वा कारणतायां व्यभिचारः । न चालोकचाक्षुषे व्यभिचारवारणाय स्वाव्यवहितोत्तरक्षणोत्पत्तिकत्वसंबन्धेन

## दिनकरीयम्.

**नीलरूपेति** ॥ अनुगतेनैकेनैव नीलरूपेण हेतुना जलाद्यष्टकभेदसिद्धेः स्नेहाभावभास्वररूपादीनामन-

## रामरुद्रीयम्.

त्वभिप्रायेणाह । **गन्धाभावस्येति** ॥ **संयोगसम्बन्धावच्छिन्नगन्धाभाववति चेति** ॥ नच संयोगेन गन्धाभावे प्रतियोगिव्यधिकरणत्वस्यैव दुर्घटतया तादृशाभावमादाय व्यभिचारप्रदर्शनमसङ्गतं संयोगेन प्रतियोग्यधिकरणाप्रसिद्धेरिति वाच्यम् । यादृशसम्बन्धसामान्ये यदभावप्रतियोगिप्रतियोगिकत्वयदभावाधिकरणीभूतयत्किंचिद्वृत्त्यनुयोगिकत्वोभयाभावः तदधिकरणे तदभावस्य तादृशसम्बन्धेन प्रतियोगिव्यधिकरणत्वमित्युक्तौ तादृशाभावस्यापि प्रतियोगिव्यधिकरणत्वसम्भवादिति भावः । वस्तुतस्तु सुरभ्यसुरभ्यवयवारब्धघटे व्यभिचारो दुर्वारः. तत्र परस्परविरोधेन कस्यापि गन्धस्यानुत्पत्त्या प्रतियोगिव्यधिकरणसमवायसम्बन्धावच्छिन्नगन्धसामान्याभावसत्त्वादिति प्रतियोगिव्यधिकरणत्वं स्वसमवायिसमवेतत्वसम्बन्धेन गन्धानधिकरणे निरवच्छिन्नदैशिकविशेषणतया वृत्तित्वं तद्विशिष्टगन्धाभावस्य हेतुत्वे तात्पर्यमुपगन्तव्यम् । उक्तघटे च उक्तसम्बन्धेन कपालनिष्ठगन्धसत्त्वेन तत्र गन्धाभावस्य प्रतियोगिव्यधिकरणत्वासम्भवान्न व्यभिचारः। नच यत्र सुरभ्यसुरभिकापालिकारब्धं कपालद्वयं तत्र समवेतस्य घटस्य स्वाश्रयसमवेतत्वसम्बन्धेनापि गन्धाधिकरणत्वविरहाद्व्यभिचारतादवस्थ्यमिति वाच्यम् । कपालद्वयसंयोगादुत्पत्स्यमानस्य घटस्य कपालावयवादिष्वपि समवायेनोत्पादस्वीकारात् । अन्यथा घटसत्त्वदशायामेव कापालिकादौ समवायेन घटाभावस्य

## प्रभा.

व्यभिचारात् किन्त्वालोकादिभिन्नद्रव्यवृत्तिलौकिकविषयतासंबन्धेन चाक्षुष एव आलोकादिवृत्तिलौकिकविषय-

## मञ्जूषा.

आलोकसंयोगवैशिष्ट्यस्य तदवच्छिन्नचक्षुस्संयोगवैशिष्ट्यस्य वा कार्यतावच्छेदककोटौ अवश्यं निवेशनीयतया तमश्चाक्षुषे न व्यभिचार इति वाच्यम् । आलोकसंयोगस्यालोकवृत्तिसंयोगत्वेन कारणतया आलोकचाक्षुषेऽप्यालोकवृत्तिगगनादिसंयोगस्याप्यन्ततस्संभवेन तत्र व्यभिचारप्रसक्त्यभावात् । अत एव संयोगसंबन्धेनालोकस्य कारणतां परित्यज्यालोकसंयोगस्यैव कारणता स्वीक्रियते । अन्यथा संयोगसंबन्धेनालोकस्यालोकावच्छिन्नचक्षुस्संयोगस्य वाऽभावेन व्यभिचारापत्तेः । अत एव गृह्णाति चक्षुस्संबन्धादालोकोद्भूतरूपयोरिति मूले आलोकपदं आलोकसंयोगपरतया व्याख्यास्यति ग्रन्थकृत् । अथालोकवृत्तित्वसंयोगत्वयोर्विशेषणविशेष्यभावे विनिगमनाविरहेण कारणताद्वयापत्त्या संयोगसंबन्धेनालोकस्य तदवच्छिन्नचक्षुस्संयोगस्य वा कारणतैव युक्ता । तथाचालोकचाक्षुषे व्यभिचारवारणाय कारणवैशिष्ट्यस्य कार्यतावच्छेदककोटौ निवेशनीयतया न तमश्चाक्षुषे व्यभिचारः । न चालोकचाक्षुषे व्यभिचारवारणायालोकभिन्नद्रव्यचाक्षुषत्वमेव कार्यतावच्छेदकं स्वीक्रियते अव्यवहितोत्तरत्वानिवेशे गौरवात् तथाच तमश्चाक्षुषे व्यभिचारो दुर्वार इति वाच्यम् । एतद्दोषवारणार्थैव गौरवेऽपि अव्यवहितोत्तरत्वघटितधर्मस्य कार्यतावच्छेदकत्वस्वीकारसंभवादिति चेन्न । यथोक्तकारणवैशिष्ट्यस्य कार्यतावच्छेदककोटौ निवेशेऽपि तादृशकारणवैशिष्ट्यचाक्षुषत्वयोर्विशेषणविशेष्यभावे विनिगमनाविरहेण कारणताद्वयस्याविशिष्टतया अव्यवहितोत्तरत्वनिवेशप्रयुक्तगौरवाधिक्येन तदपेक्षया आलोकवृत्तिसंयोगत्वेन कारणताया एव युक्तत्वात् । किंचालोकस्य तदवच्छिन्नचक्षुस्संयोगस्य वा स्वविशिष्टचाक्षुषं प्रति कारणतास्वीकारे आलोकस्य तदवच्छिन्नचक्षुस्संयोगस्य वाऽभावदशायां महदुद्भूतरूपादिघटितसामान्यसामग्रीबलात् घटादौ द्रव्यचाक्षुषत्वावच्छिन्नापत्तिः । कारणतावच्छेदकावच्छिन्नसत्त्वे कार्यतावच्छेदकावच्छिन्नोत्पत्तेरावश्यकत्वात् । नच विशेषसामग्रीसमवहिताया एव सामान्यसामग्र्याः फलोपधायकत्वेनोद्भूतरूपादिघटितसामान्यसामग्र्या

## दिनकरीयम्.

नुगतानां न हेतुतयोपन्यासः, जलादिकमित्यादिना तेजःप्रभृतिद्रव्यसंग्रहः । तथा च नवसु द्रव्येष्वन्त-

## रामरुद्रीयम्.

प्रत्यक्षापत्तेः । नच कपालस्य घटप्रतिबन्धकत्वात्कथं कापालिकादौ तदुत्पाद इति वाच्यम् । द्रव्यविभाजकोपाधिव्याप्या या घटत्वादिजातयः तत्तज्जात्यवच्छिन्नं प्रति तत्तज्जात्यवच्छिन्नस्यैव प्रतिबन्धकत्वोपगमेन घटं प्रति कपालस्याप्रतिबन्धकत्वात् । तद्द्रव्यं प्रति तद्द्रव्यानारम्भकद्रव्यत्वेन वा प्रतिबन्धकतायाः स्वीकरणीयत्वादिति । पार्थिवपरमाणौ गन्धनाशदशायां गन्धाभावसत्त्वात्तत्र व्यभिचारवारणाय विशेषणतायां निरवच्छिन्नत्वप्रवेशः । इत्थं च संयोगेन गन्धाभावस्यापि प्रतियोगिव्यधिकरणत्वात् तद्वारणाय समवायावच्छिन्नप्रतियोगिताकत्वनिवेशसार्थक्यम् । एतेन प्रतियोगिव्यधिकरणत्वं यदि प्रतियोग्यधिकरणावृत्तित्वं तदा तादृशगन्धाभावाप्रसिद्धिः अधिकरणभेदेनाभावाभेदात् । यदि प्रतियोग्यनधिकरणवृत्तित्वं तदा गन्धाभावप्रतियोगित्वेन गन्धोपादाने शिरोवेष्टनेन नासिकास्पर्शतुल्यता यदि गन्धानाधिकरणवृत्तित्वं तदापि गन्धानधिकरणजलादिवृत्तिगन्धाभावस्य पृथिव्यामपि सत्त्वाद्व्यभिचारतादवस्थ्यम्, यदि च गन्धानधिकरणवृत्तित्वविशिष्टगन्धाभावस्य हेतुत्वान्न व्यभिचार इति विभाव्यते तदापि तद्घटकगन्धानधिकरणत्वमात्रस्य हेतुतासम्भवेन शेषवैयर्थ्यमिति दूषणानि प्रत्युक्तानि । स्वाश्रयसमवेतत्वसम्बन्धेन गन्धानधिकरणत्वस्य पार्थिवपरमाणौ व्यभिचारित्वेन शेषसार्थक्यादिति विभावनीयम् । **न हेतुतयेति** ॥ एतेन प्राचीनग्रन्थेषु जलादिभेदसाधने मानाहेतूपन्यासो व्यर्थप्रयास इति सूचितम् । **परिशेषेणेति** । पृथिव्यादि-

## प्रभा.

तासंबन्धेन चाक्षुषं प्रति आलोकासहकृतचक्षुष एव कारणतया आलोकासहकृतचक्षुर्ग्राह्यत्वहेतोरालोकादौ

## मञ्जूषा.

फलजनने आलोकस्य तदवच्छिन्नचक्षुस्संयोगस्य वा विशेषसामग्रीत्वान्नानुपपत्तिरिति वाच्यम् । आलोकादिकं विनाप्युद्भूतरूपादिघटितसामग्र्या आलोके द्रव्यचाक्षुषत्वावच्छिन्नोत्पादेन आलोकादेर्विशेषसामग्रीत्वासंभवेन तत्र फलोत्पादकतावच्छेदकधर्मावच्छिन्नघटितसामग्र्या आलोकाद्यसंयुक्तघटादावप्यविशिष्टतया तत्र फलापत्तेर्दुर्वारत्वात् अतः आलोकचाक्षुषं प्रति तादात्म्येनालोकस्य समवायेनालोकवृत्तिचक्षुस्संयोगस्य वा हेतुत्वान्तरं परिकल्प्य उद्भूतरूपादिघटितसामग्र्या फले जननीये संयोगतादात्म्यान्यतरसंबन्धेनालोकस्यालोकावच्छिन्नचक्षुस्संयोगालोकवृत्तिचक्षुस्संयोगान्यतरस्य वा विशेषसामग्रीत्वस्वीकारेण नालोकाद्यसंयुक्तघटादिचाक्षुषापत्तिरिति वक्तव्यं तदपेक्षया द्रव्यचाक्षुषं प्रत्यालोकवृत्तिसंयोगत्वेनैव कारणताकल्पनं युक्तमिति तमश्चाक्षुषे व्यभिचारो दुर्वारः । अथ तमोभिन्नद्रव्यचाक्षुषत्वस्यैवालोकसंयोगादिकार्यतावच्छेदकत्वान्न तमश्चाक्षुषे व्यभिचारः । नच तमोभिन्नत्वस्य कार्यतावच्छेदककोटिप्रवेशे गौरवं तमोभिन्नत्वद्रव्यत्वयोर्विशेषणविशेष्यभावे विनिगमनाविरहेण कारणताबाहुल्यं चेति वाच्यम् द्रव्याधिकरणकाभावविषयकलौकिकचाक्षुषं प्रति स्वाश्रयविशेषणतासंबन्धेनालोकसंयोगस्यालोकसंयोगावच्छिन्नचक्षुस्संयोगाश्रयविशेषणताया वा कारणतायां तमश्चाक्षुषे व्यभिचारवारणाय तत्कार्यतावच्छेदककोटौ तमोभिन्नत्वस्याभावे विशेषणतया निवेशस्य त्वन्मते आवश्यकत्वेन साम्यात् । प्रत्युत तमोभिन्नत्वद्रव्याधिकरणकत्वाभावत्वानां त्रयाणां विशेषणविशेष्यभावे विनिगमनाविरहस्तव मते । मन्मते तु तमोभिन्नत्वद्रव्यत्वयोर्द्वयोरेवेति लाघवमिति चेन्न तमोऽतिरिक्तत्ववादिभिरपीहालोको नास्तीत्यालोकाभावचाक्षुषस्य दुरपह्नवतयालोकाभावभिन्नत्वस्य तत्कार्यतावच्छेदककोटावश्यं निवेशनीयत्वेनालोकाभावस्यैव चास्माकं तमःपदार्थत्वेन तत्राधिकस्यानिवेशनीयत्वात् द्रव्यचाक्षुषनिष्ठकार्यतावच्छेदककोटौ तमोभिन्नत्वनिवेशनस्य तव मतेऽधिकत्वात् । ननु रूपादिमत्त्वेन तमसो द्रव्यत्वसिद्धौ द्रव्यचाक्षुषनिष्ठकार्यतावच्छेदककोटौ तमोभिन्नत्वनिवेशनप्रयुक्तगौरवं न दोषाय प्रामाणिकत्वात् । नचैवमालोकादेस्तमोभिन्नद्रव्यचाक्षुषत्वस्यैव कार्यतावच्छेदकत्वे आलोकसंयोगादिशून्यतादशायामुद्भूतरूपादिघटितसामान्यसामग्रीबलात्तत्कार्यतावच्छेदकीभूतद्रव्यचाक्षुषत्वावच्छिन्नापत्तिः । आलोकसंयोगादिकं विनाप्युद्भूतरूपादिघटितसामग्र्या तमसि द्रव्यचाक्षुषत्वावच्छिन्नोत्पादेन तत्सामग्र्या फलजनने आलोकसंयोगादेर्विशेषसामग्रीत्वासंभवादिति वाच्यम् । एवं सति द्रव्याधिकरणकाभावचाक्षुषनिष्ठकार्यतावच्छेदककोटावपि तमोभिन्नत्वनिवेशस्याप्रामाणिकत्वापत्तेः । तथाहि तमोभिन्नद्रव्याधिकरणकाभावचाक्षुषत्वस्यैवालोकसंयोगादिकार्यतावच्छेदकत्वे आलोकसंयोगाद्यभावदशायामपि भूतलादौ घटाभावादिचाक्षुषापत्तिः । तमश्चाक्षुषे क्लृप्तसामान्यसामग्र्यास्तत्राप्यक्षतत्वात् आलोकसंयोगादिकं विनापि सामान्यसाम-

## दिनकरीयम्.

भावासम्भवेन परिशेषेण तमसोऽधिकद्रव्यत्वसिद्धिरिति भावः । तदुक्तम् । "तमः खलु चलं नीलं परापरविभागवत् । प्रसिद्धद्रव्यवैधर्म्यान्नवभ्यो भेत्तुमर्हति ॥" इति । ननु तमसो द्रव्यत्वे आलोकनिरपेक्षेण चक्षुरिन्द्रियेण ग्रहो न स्यात् द्रव्यग्रहे ह्यालोकसापेक्षचक्षुरिन्द्रियस्य हेतुत्वादित्यत आह । **तत्प्रत्यक्षे चेति** ॥ तमःप्रत्य-

## रामरुद्रीयम्.

भिन्नत्वे सति द्रव्यत्वरूपहेतुनेत्यर्थः । नच विशेष्यासिद्धिः रूपादिना तत्साधनादिति भावः । उक्तार्थे मीमांसकानां संमतिमाह । **तदुक्तमिति** । परापरयोर्यौ विभागौ विशेषधर्मौ परत्वापरत्वस्वरूपौ तद्वदिति परापरविभागवदित्यस्यार्थः । **प्रसिद्धद्रव्यवैधर्म्यादिति** । प्रसिद्धानि यानि पृथिव्यादिद्रव्याणि तेषां वैधर्म्यात् तद्वृत्तिगन्धशून्यत्वादेरित्यर्थः । ननु तत्प्रत्यक्षेचेत्यादिमूलं प्रकृतानुपयुक्तमित्याशङ्कां निराकुर्वन् तद्ग्रन्थमवतारयति । **नन्विति** ॥ ननु तेजोऽभावस्तम इति वादी प्रष्टव्यः किं तेजस्सामान्याभावस्तमश्शब्दा-

चन्ने । **आवश्यकतेजोऽभावेनैवोपपत्तौ द्रव्यान्तरकल्पनाया अन्याय्यत्वात् । रूपवत्ता-**

## प्रभा.

व्यभिचारित्वेन निरुक्तसाध्यसाधकत्वासंभवादिति भावः । **आवश्यकतेजोऽभावेनैवेति** ॥ महाप्रभात्वावच्छिन्नप्रतियोगिताकाभावेनैवेत्यर्थः । तमसोऽभाव एव तेजः किन्न स्यादित्याशङ्कां वारयितुं तेजस्यावश्यकत्वविशेषणम् । तेनोष्णस्पर्शान्यथानुपपत्त्या तेजसः भावरूपत्वमावश्यकमिति लभ्यते । **उपपत्ताविति** ॥ इदं तम इति प्रत्यक्षनिर्वाह इत्यर्थः । **द्रव्यान्तरेति** ॥ कॢप्तद्रव्यातिरिक्तद्रव्यस्य कालसंबन्धिताया इत्यर्थः । **अन्याय्यत्वादिति** ॥अप्रामाणिकत्वादित्यर्थः । तथाच मानाधीना मेयसिद्धिर्मानसिद्धिश्च लक्षणादिति नियमेन इदं तम इति प्रत्यक्षमेव तमसि प्रमाणं वाच्यं कॢप्तनिरुक्ताभावस्य तादृशप्रत्यक्षविषयत्वे बाधकाभावात् नेदं द्रव्यान्तरसाधकमिति तदलीकमेवेति भावः । ननु कथं तर्हि नीलं तम इति प्रतीतिः अत आह । **रूपवत्तेति** ॥ तुरवधारणे । भ्रमरूपत्वादिति योजना। भ्रमरूपैवेत्यर्थः । तथाच नीलत्वभ-

## मञ्जूषा.

म्या तमश्चाक्षुषजननेन आलोकसंयोगादेर्विशेषसामग्रीत्वासंभवादिति चेन्न । अभावचाक्षुषनिष्ठकार्यतावच्छेदककोटावालोकाभावभिन्नत्वं निवेशयतस्तत्वाप्येतद्दोषस्याविशिष्टतयाऽऽलोकाभावचाक्षुषं प्रत्यालोकाभावस्य तादात्म्येनालोकाभाववृत्तिचक्षुस्संयुक्तविशेषणताया वा कारणतान्तरं परिकल्प्य सामान्यसामग्र्या द्रव्याधिकरणकाभावचाक्षुषरूपफले जननीये आलोकसंयोगालोकाभावान्यतरस्यालोकसंयोगावच्छिन्नचक्षुस्संयुक्तविशेषणतालोकाभाववृत्तिचक्षुस्संयुक्तविशेषणतान्यतरस्य वा विशेषसामग्रीत्वस्वीकारेणोक्तदोषस्य वारणीयतया तमःपदेनैवालोकाभावं व्यवहरतामस्माकमप्युक्तदोषवारणसंभवात् । तमोऽतिरिक्तत्ववादिनस्तु आलोकसंयोगाद्यभावदशायां सामान्यसामग्रीबलाददृष्टादिचाक्षुषं दुर्वारमिति दूषणमवशिष्यत इत्यत आह । **तत्प्रत्यक्षे चेति** । तमःप्रत्यक्षे चेत्यर्थः । **आलोकनिरपेक्षमिति** । आलोकसंयोगासहकृतमित्यर्थः । **चक्षुरिति** । चक्षुस्संयोगादिघटितसामान्यसामग्रीत्यर्थः । **कारणमिति** ॥ उत्पादप्रयोजकमित्यर्थः । अयमाशयः । तमोभिन्नद्रव्यचाक्षुषं प्रति आलोकसंयोगस्य समवायेन तमश्चाक्षुषं प्रति च तादात्म्येन तमसः कारणत्वं कल्पयित्वा चक्षुस्संयोगोद्भूतरूपादिघटितसामान्यसामग्र्या फले जननीये आलोकसंयोगतमोऽन्यतरस्य

## दिनकरीयम्.

क्षेचेत्यर्थः । तमोभिन्नद्रव्यचाक्षुषत्वावच्छिन्नं प्रत्येव संयोगसम्बन्धेनालोकत्वेन कारणत्वावधारणादिति भावः । **आवश्यकतेजोऽभावेनेति** ॥ प्रकृष्टमहत्त्वोद्भूतानभिभूतरूपवत्तेजस्त्वावच्छिन्नाभावेनेत्यर्थः । अन्धकाराभाव एव तेजः किन्न स्यादिति तु न सम्यक्, उष्णस्पर्शभास्वररूपबुद्धेरनुपपत्तेरिति सूचनायावश्यकपदम् । **उपपत्तौ** तमोव्यवहारोपपत्तौ । ननु तमसस्तेजोऽभावत्वे रूपवत्ताप्रतीतिः कथं अभावे रूपाभावादित्यत आह । **रूपव-**

## रामरुद्रीयम्.

उत तद्विशेषाभावः नाद्यः गाढतरतमस्यपि तमःप्रतीत्यनुपपत्तेः सर्वदैव सर्वत्र तेजःपरमाणूनां सत्त्वात् न द्वितीयः सौरालोकसत्त्वेऽपि यत्किञ्चित्तेजोऽभावसत्त्वेन तमःप्रतीत्यापत्तेरित्यतो यादृशतेजोऽभावस्य तमश्शब्दार्थता तादृशं तेजोऽभावं दर्शयति । **प्रकृष्टेति** ॥ तेजस्त्र्यणुकसत्त्वेऽपि तमःप्रतीतेरनुभवसिद्धत्वात् महत्त्वे प्रकृष्टत्वविशेषणं चक्षुरादितेजस्सत्त्वेऽपि तमःप्रतीतेः उद्भूतत्वनिवेशः हिरण्यादितेजःसत्त्वेऽपि तमःप्रतीतेः अनभिभूतत्वस्यापि निवेशः तथा चैतादृशविशेषणविशिष्टतेजस्सामान्याभावस्य तमश्शब्दार्थतया नोक्तापत्तिरिति भावः । ननु तेजोऽभावे आवश्यकत्वं अवश्यक्लृप्तत्वं तच्च घटो नास्तीत्यादिप्रतीत्या यथा घटाभावादिरवश्यं क्लृप्तः तथा तेजो नास्तीति प्रतीत्या तेजोऽभावोऽपीत्युपपदनीयं तच्च न सम्भवति तेजोरूपद्रव्ये मानाभावात् तमोरूपद्रव्याभाव एव तेजस्त्वप्रतीतिरुपगमसंभवादित्याशङ्कामपनेतुं तेजोरूपद्रव्यस्यावश्यकतां प्रदर्शयति । **अन्धकाराभाव एवेति** ॥ **आवश्यकपदमिति** ॥ तथाच तमोऽभाव एव तेजः किं न स्या-

प्रतीतिस्तु भ्रमरूपा । कर्मवत्ताप्रतीतिरप्यालोकापसरणौपाधिकी भ्रान्तिरेव । तमसो-

प्रभा.

इतिवत् नीलं तम इति प्रतीतेः भ्रमत्वे बाधकाभाव इति भावः । ननु नभसि कस्यचित् पदार्थस्य चाक्षुषाभावोपाधिकनीलन्नभ इतिवत् अन्धकारेऽपि कस्यचित्पदार्थस्य चाक्षुषाभावोपाधिकतया नीलं तम इति प्रतीतेरपि भ्रमत्वमस्तु तमश्चलतीति प्रतीतेर्निरुपाधिकतया प्रमात्वमस्त्वित्यत आह । **कर्मवत्ताप्रतीतिरपीति॥** अपिशब्दः उक्तप्रतीतिसमुच्चायकः । **आलोकापसरणेति ॥** आलोकसमवेतापसरणात्मकक्रियाविषयिणीत्यर्थः । तथाच स्फटिके जपाकुसुमसंबन्धात् यथा लौहित्यप्रत्ययः तथा प्रतियोगिरूपालोकसंबन्धात् तमसि आलोकसमवेतक्रियाविषयिणी तादृशप्रतीतिरिति भावः । ननु विशिष्टबुद्धित्वलिङ्गकविशेषणविशेष्यसंबन्धविषयकत्वविधेयकानुमितौ स्वरूपाणां संसर्गतया विषयत्वसंभवेऽपि तदपहाय अनुमितिविषयताया अतिरिक्तसमवायो यथा अङ्गीकृतः तथा इदं तम इति प्रत्यक्षेऽपि उक्ताभावस्य विषयत्वसंभवेऽपि तमपहाय तादृशप्रत्यक्षविषयतयातिरिक्तद्रव्यत्वं स्वीक्रियेत तत्स्वीकारे उक्तप्रतीत्योः भ्रमत्वाकल्पनलाघवस्यापि संभवादत आह । **तमस इति ॥** तथाचोक्तानुमितौ अनन्तस्वरूपाणां संसर्गतया विषयत्वकल्पने गौरवात् एक-

मञ्जूषा.

विशेषसामग्रीत्वं स्वीक्रियते । एवं च नालोकासंयुक्तघटादिचाक्षुषापत्तिः । तत्र समवायेनालोकसंयोगस्य तादात्म्येन तमसो वाऽभावात् । तमश्चाक्षुषं तु तमोरूपविशेषसामग्रीबलादेवोपपद्यत इति न तत्र चक्षुस्संयोगादिघटितसामान्यसामग्र्या आलोकसंयोगसापेक्षत्वमिति । एवञ्चालोकसंयोगस्य स्वातन्त्र्येणैव चाक्षुषकारणत्वं नतु चक्षुस्संयोगनिष्ठकारणतावच्छेदकघटकत्वमिति मताभिप्रायेण स्वारसिकोऽयं ग्रन्थः । तन्मतस्यैव प्रसिद्धत्वात् । आलोकसंयोगस्य चक्षुस्संयोगविशेषणत्वमेवेति वक्ष्यमाणसिद्धान्तपक्षे तु तमोभिन्नद्रव्यचाक्षुषं प्रति आलोकसंयोगावच्छिन्नचक्षुस्संयोगस्य तमश्चाक्षुषं प्रति तमोवृत्तिचक्षुस्संयोगस्य च कारणताद्वयं परिकल्प्य उद्भूतरूपादिघटितसामान्यसामग्र्या फले जननीये दर्शितचक्षुस्संयोगद्वयान्यतरस्य सहकारित्वमिति रीत्या उपपादनीयम् । एतन्मते चक्षुस्संयोगस्य विशेषसामग्रीत्वेन सामान्यसामग्रीत्वाभावात् अथ-

दिनकरीयम्.

त्वेति ॥ ननु रूपवत्ताप्रतीतेर्भ्रान्तित्वेऽपि चलतीति प्रत्ययासिद्धकर्मवत्त्वहेतुना द्रव्यत्वं सेत्स्यतीत्यत आह । **कर्मवत्ताप्रतीतिरपीति ॥** नहि द्रव्येऽन्यौपाधिकी कर्मवत्ताप्रतीतिरिति भावः । ननु प्रतीतेर्भ्रान्तित्वं तत्रैव स्वीक्रियते यत्रोत्तरकाले बाधज्ञानं प्रकृते च तमो न चलतीति उत्तरकाले बाधज्ञानाभावात्कथं प्रतीतेर्भ्रान्तित्वमित्यतो दूषणान्तरमाह । **तमस इति ॥** अवयवादीत्यादिना उत्पत्तिध्वंसपरिग्रहः । यत्त्वारोपितं

रामरुद्रीयम्.

दित्याशङ्कानिरासाय मूले तेजस एवावश्यकत्वं प्रदर्शितमिति भावः । **यत्रोत्तरकाल इति ॥** इदं रजतमिति भ्रमानन्तरं नेदं रजतमिति बाधनिश्चयादेव पूर्वतनप्रतीतेर्भ्रमत्वं कल्प्यते न तूत्तरकाले बाधनिश्चयाभावे अन्यथा घटादिविषयकप्रतीतीनामपि भ्रमत्वकल्पनापत्त्या शून्यवादापत्तेरिति भावः । **दूषणान्तरमाहेति ॥** तथाच धूमो यदि वह्निव्यभिचारी स्यात्तर्हि वह्निजन्यो न स्यादिति तर्केण व्यभिचारज्ञानप्रतिबन्धवत्तमो यदि द्रव्यं स्यात्तर्ह्यक्लृप्तानन्तावयवसमवेतं स्यादिति तर्केण द्रव्यत्वज्ञानप्रतिबन्धसम्भवात् क्रियादिहेतुनापि तमसो न द्रव्यत्वासिद्धिरिति भावः । न चैवं धूमेन वह्न्यनुमितिरपि न स्यात् वह्निर्यदि पर्वतवृत्तिः स्यात् तर्ह्यक्लृप्तानन्तावयवसमेतः स्यादिति तर्केण वह्न्यनुमितिप्रतिबन्धसम्भवादिति वाच्यम् । प्रत्यक्षसिद्धमहानसीयवह्न्यारम्भकपरमाणूनां क्लृप्तत्वात् । न च वह्न्यारम्भकपरमाणूनां क्लृप्तत्वेऽपि पर्वतीयवह्न्यारम्भकाणां तेषामक्लृप्तत्वात्त्वदुक्ततर्कावतारः सम्भवतीति वाच्यम् । महानसीयवह्न्यारम्भकपरमाणुभिरेव पर्वतीयवह्न्यारम्भसम्भवात् तमःपरमाणूनां क्वाप्यक्लृप्तत्वात् । न च तमोऽस-

ऽतिरिक्तद्रव्यत्वे अनन्तावयवादिकल्पनागौरवं च स्यात् । सुवर्णस्य यथा तेजस्यन्तर्भावस्त-थाग्रे वक्ष्यते ॥ ३ ॥

स्पर्शः सङ्ख्या परिमितिः पृथक्त्वं च ततः परम् ।
संयोगश्च विभागश्च परत्वं चापरत्वकम् ॥ ४ ॥
बुद्धिः सुखं दुःखमिच्छा द्वेषो यत्नो गुरुत्वकम्
द्रवत्वं स्नेहसंस्कारावदृष्टं शब्द एव च ॥ ५ ॥

गुणान्विभजते । **अथ गुणा इति** ॥एते गुणाश्चतुर्विंशतिसङ्ख्याकाः कणादेन कण्ठ-तश्चशब्देन च दर्शिताः । तत्र गुणत्वजातिसिद्धिरग्रे वक्ष्यते ॥ ४ ॥ ५ ॥

## प्रभा.

स्समवायः अनुमितिविषयतयाङ्गीकृतः । इदं तम इति प्रत्यक्षे तु एकस्य निरुक्ताभावस्य विषयत्वस्वीकारे लाघवात् अतिरिक्तद्रव्यस्य विषयत्वस्वीकार एवानन्तावयवकल्पनारूपगौरवात् त्वदुक्तदृष्टान्तवैषम्येण निरुक्ता-भावस्य प्रत्यक्षविषयत्वमावश्यकम् । एवञ्च लाघवात् क्लृप्ताभावस्य प्रत्यक्षविषयत्वे सिद्धे उक्तप्रतीत्योः भ्रम-त्वकल्पनागौरवस्य फलमुखत्वेनादोषत्वादित्यभिप्रायः । ननु तमसस्तेजोऽभावरूपत्वेऽपि सुवर्णस्य पीतरूप-त्वेन द्रव्यत्वे सिद्धे अनुच्छिद्यमानद्रवत्वाधिकरणत्वेन पृथिवीत्वाभावस्य पीतरूपवत्त्वने जलत्वादिमनस्त्वान्तान्य तमशून्यत्वस्य च सिद्धान्तत्वात् परिशेषानुमानेन तस्यातिरिक्तत्वं सिध्यतीत्यत आह । **सुवर्णस्येति** ॥ **वक्ष्यत इति** ॥ तेजोनिरूपणावसर इति शेषः ॥ ३ ॥

**चतुर्विंशतिसंख्याका इति** ॥ रूपत्वादिशब्दत्वान्तगुणविभाजकचतुर्विंशतिधर्मान्यतमधर्मवन्त इत्यर्थः । ननु मृदुत्वकठिनत्वादिरूपातिरिक्तगुणानां सत्त्वात् पृथक्त्वस्यान्योन्याभावरूपत्वाच्चोक्तधर्माणामे कथं विभाजकत्वमित्याशङ्कायामुक्तार्थे सूत्रकारकणादसंमतिमाह । **कणादेनेत्यादि** ॥ रूपरसगन्धस्पर्शा-

## मञ्जूषा.

वाऽऽलोकनिरपेक्षं चक्षुः कारणमित्यस्याऽलोकसंयोगावच्छिन्नत्वाविशेषितस्तमोवृत्तित्वाविशेषितश्चक्षुस्संयोगस्त-मःप्रत्यक्षत्वावच्छिन्नं प्रति हेतुरित्यर्थकतया सिद्धान्तपक्षेऽपि तादृशग्रन्थसमर्थनं युज्यत एवेति बोध्यम् । नच कार्यकारणभावद्वयकल्पने गौरवं उपदर्शितयुक्त्या द्रव्यत्वसिद्धौ उपदर्शितगौरवस्य प्रामाणिकत्वादिति तात्पर्यम् । **भ्रमरूपेति** ॥ नीलं नभ इति प्रतीतिवदिति शेषः ॥ ३ ॥

## दिनकरीयम्.

नीलरूपं तम इति कन्दलीकारमतं तन्न । इह महानन्धकार इति प्रतीतेरपि भ्रमत्वापत्तेः, तमो नीलं न नीलिमेति प्रत्ययाच्च । ननु तमसोऽनतिरिक्तत्वेऽपि सुवर्णस्यातिरिक्तस्य द्रव्यस्य सत्त्वान्नवत्वव्याघातस्तदवस्थ एवेत्यत आह । **सुवर्णस्येति** ॥ **वक्ष्यत इति** ॥ तेजोनिरूपणावसर इति शेषः ॥ ३ ॥

**कण्ठत इति** ॥ "रूपरसगन्धस्पर्शाः सङ्ख्याः परिमाणानि पृथक्त्वं संयोगविभागौ परत्वापरत्वे बुद्धयः सुखदुःखे इच्छाद्वेषौ प्रयत्नाश्च गुण इति विभागसूत्रे सप्तदश कण्ठेनोक्ताः । **चशब्देन** सूत्रस्थ-चशब्देन गुरुत्वद्रवत्वस्नेहसंस्कारधर्माधर्मशब्दाः समुच्चिताः । ते च सर्वे एकतया चतुर्विंशतिगुणा इह व्य-वहृताः । ननु चतुर्विंशतौ किं नाम गुणत्वं न च जातिविशेषस्तत्र प्रमाणाभावादित्यत आह । **तत्रेति** ॥ गुणेष्वित्यर्थः । **अग्रे** गुणनिरूपणावसरे ॥ **वक्ष्यत इति** ॥ द्रव्यकर्मभिन्नसामान्यवति या कारणता सा किंचिद्ध-

## रामरुद्रीयम्.

मवेदमेव स्वीकार्यमिति वाच्यम् । तथा सति निरवयवत्वेन तमसो नाशासम्भवादिति भावः । **इहेति** ॥ जलादावित्यर्थः । **भ्रमत्वापत्तेरिति** । जलादौ प्रकारीभूतनीलरूपविरहादिति भावः ॥ ३ ॥

उत्क्षेपणं ततोऽपक्षेपणमाकुञ्चनं तथा ।
प्रसारणं च गमनं कर्माण्येतानि पञ्च च॥ ६ ॥

## प्रभा.

ससंख्यापरिमाणे पृथक्त्वं संयोगविभागौ परत्वापरत्वबुद्धयः सुखदुःखेच्छाद्वेषप्रयत्नाश्च गुणा इति विभागसूत्रे सप्तदश कण्ठोक्ताः । सूत्रस्थचशब्देन गुरुत्वद्रवत्वस्नेहसंस्कारधर्माधर्मशब्दास्समुच्चिता इत्यर्थः । तथाच सूत्रक्रमेण चतुर्विंशतिधा विभागकरणात् नास्माकं दोष इति भावः । उक्तशङ्कायाः परिहारस्तु तत्तन्निरूपणावसरे वक्ष्यते ॥ ननु सामान्यधर्मप्रकारकज्ञानस्य विशेषधर्मप्रकारकजिज्ञासां प्रति हेतुतया प्रकृते सकलगुणसाधारणलक्षणात्मकसाधारणधर्मप्रकारकज्ञानाभावेन जिज्ञासाया एवानुदयात् रूपत्वादिना विभागोऽनुपपन्न इति चेन्न । अथ गुणा रूपमित्यादिकारिकाघटकगुणपदेनैव गुणत्वजातिमत्त्वरूपलक्षणात्मकसाधारणधर्मस्य ज्ञानसंभवेनोक्तदोषानवकाशात् । ननु कथं चतुर्विंशतिगुणसाधारणगुणत्वजातिसिद्धिरित्यत आह ॥ **तत्रेति** ॥ चतुर्विंशतिगुणेष्वित्यर्थः । **अग्रे वक्ष्यत इति** ॥ द्रव्यकर्मभिन्ने सामान्यवति या कारणता सा किंचिद्धर्मावच्छिन्ना कारणतात्वात् दण्डनिष्ठघटकारणतावदित्यनुमानात् चतुर्विंशतिगुणसाधारणगुणत्वजातिसिद्धिरिति गुणनिरूपणावसरे वक्ष्यत इत्यर्थः । तादृशानुमाने पक्षप्रसिद्ध्यादिकन्तु तादृशग्रन्थव्याख्यानावसर एव स्फुटतरं प्रतिपादयिष्यामः ॥ ४ ॥ ५ ॥

## मञ्जूषा.

ननु गौतमादिभिर्गुणाश्चतुर्विंशतिरुक्ताः कथमिह त्रयोविंशतिरेवोच्यन्त इत्यत आह । **एते गुणा इति** । तत्रधर्माधर्मयोः पृथगभिधानाच्चतुर्विंशतित्वं इह त्वदृष्टत्वेन तयोर्विभागात्त्रयोविंशतित्वम् । तथाचैत एव गुणाश्चतुर्विंशतिसंख्याका भवन्तीत्यर्थः । ननु कणादसूत्रे सप्तदशानामेवोक्तत्वात्तद्विरोध इत्यत आह । **कणादेनेति** ॥ ४ ॥ ५ ॥

## दिनकरीयम्

र्मावच्छेद्या कारणतात्वादित्यनुमानं गुणत्वजातौ प्रमाणमितिभावः । एतत्तत्त्वं तत्रैव स्फुटीभविष्यति ॥४॥५॥

## रामरुद्रीयम्.

**एकतयेति** ॥ एकसंख्यावत्तयेत्यर्थः । तेन गन्धरूपादीनामैक्यासम्भवेऽपि न क्षतिः । संख्या चात्र विषयतया अपेक्षाबुद्धिरूपैव, गुणे गुणानङ्गीकारादिति । **इत्यनुमानमिति** ॥ नन्ववच्छेदकावच्छेदेन साध्यसिद्धेरुद्देश्यत्वे बाधः गन्धादिनिष्ठसमवायसम्बन्धावच्छिन्नकार्यतानिरूपितस्वसमवायिसमवेतद्रव्यत्वसम्बन्धावच्छिन्नगन्धादिनिष्ठकारणताया अतिप्रसक्तत्वेन गुणत्वानवच्छिन्नत्वात्, सामानाधिकरण्येन तथात्वे चतुर्विंशतिगुणनिष्ठकारणतैव पक्षीकर्तव्या तस्या एवानतिप्रसक्तगुणत्वावच्छिन्नत्वसम्भवात् सा चाप्रसिद्धैव गुणत्वेन किंचित्कार्यं प्रति सकलगुणानामकारणत्वात् तथा च पक्षाप्रसिद्धिः, न च गुणत्वावच्छिन्नं प्रत्येव गुणत्वेन कारणत्वात् नाप्रसिद्धिरिति वाच्यम्, कार्यत्वकारणत्वयोरतिप्रसक्तत्वेन गुणत्वस्य तदवच्छेदकत्वासंभवात्, न च गुणप्रत्यक्षत्वावच्छिन्नं प्रत्येव गुणत्वेन कारणत्वात् नाप्रसिद्धिरिति वाच्यम्, प्रत्यक्षत्वावच्छिन्नं प्रति विषयत्वेन सामान्यतः तत्तद्व्यक्तिप्रत्यक्षत्वेन तत्तद्व्यक्तित्वेन विशेषतश्च कार्यकारणभावैरेवोपपत्त्या घटप्रत्यक्षत्वस्वर्णघटप्रत्यक्षत्वचैत्रावलोकितमैत्रनिर्मितघटप्रत्यक्षत्वाद्यनन्तमध्यवर्तिधर्मावच्छिन्नकारणताकल्पने प्रयोजनविरहादिति चेन्न । ज्ञायमानालिङ्गकरणतावादिमताभिप्रायेणैव तदभिधानात्, इदं द्रव्यं गुणादित्यनुमितौ वह्न्यनुमितौ धूमत्वेनेव गुणत्वेन सकलगुणानां कारणताया आवश्यकत्वात् कथमन्यथा गुणत्वं हेतुतावच्छेदकमिति भावः । लिङ्गज्ञानस्य कारणतावादिमते तु गुणत्वस्य जातित्वसिद्ध्यसंभवेऽपि न क्षतिः । तन्मते द्रव्यकर्मभिन्नत्वे सति सामान्यवत्त्वरूपोपाधेरेव गुणपदप्रवृत्तिनिमित्तत्वोपगमादिति ध्येयम् ॥ ४ ॥ ५ ॥

भ्रमणं रेचनं स्यन्द ऊर्ध्वज्वलनमेव च ।
तिर्यग्गमनमप्यत्र गमनादेव लभ्यते ॥ ७ ॥

कर्माणि विभजते । उत्क्षेपणमिति ॥ कर्मत्वजातिस्तु प्रत्यक्षसिद्धा । एवमुत्क्षेपणत्वादिकमपि । ननु भ्रमणादिकमपि पृथक्कर्म अधिकतया कुतो नोक्तमत आह । **भ्रमणमिति** ॥ ६ ॥ ७॥

सामान्यं द्विविधं प्रोक्तं परं चापरमेव च ।
द्रव्यादित्रिकवृत्तिस्तु सत्ता परतयोच्यते ॥ ८ ॥

## प्रभा.

**प्रत्यक्षसिद्धेति** ॥ चलतीति प्रतीतिविषयेत्यर्थः । **भ्रमणादिकमपीति** ॥ यत इत्यादिः । अपिशब्देनोत्क्षेपणत्वादिकर्मविभाजकपञ्चान्यतमावच्छिन्नं गृह्यते । तथाच कर्मोत्क्षेपणत्वादिपञ्चविभाजकधर्मान्यतमावच्छिन्नं भवतीति कृत्वा तादृशधर्मैः यथा विभाजितं तथा कर्म भ्रमणत्वादिरूपपञ्चविभाजकधर्मान्यतमावच्छिन्नं भवतीति तादृशधर्मैरपि कुतो न विभाजितमिति भावः । **पृथक्कर्मेति** ॥ भवतीति शेषः । **अधिकतयेति** ॥ उत्क्षेपणत्वादिपञ्चविभाजकधर्मान्यतमभिन्नभ्रमणत्वादिपञ्चान्यतमवत्तयेत्यर्थः । **कुतो नोक्तमिति** ॥ कुतो न विभाजितमित्यर्थः । तथाच यतः भ्रमणादिकमपि पृथक्कर्म भवति ततः अधिकतया कुतो नोक्तमिति पूरणमिश्रितवाक्ययोजनया पूर्वोक्तो र्थो लभ्यत इति भावः । यद्यप्यूर्ध्वं गच्छति अधो गच्छतीत्यनुगतप्रत्ययेनोत्क्षेपणादीनामपि गमनत्वसिद्धयोत्क्षेपणत्वादिगमनत्वान्तपञ्चधर्माणां परस्परवैयधिकरण्याभावेन विभाजकत्वासंभवात् पञ्चधा विभागोऽप्यनुपपन्नः तथापि स्वतन्त्रेच्छेन मुनिनोत्क्षेपणत्वादिगमनत्वान्तपञ्चधर्मैः विभजनात्पर्यनुयोगासंभव इति हृदयम् ॥ ६ ॥ ७ ॥

## मञ्जूषा.

**पृथगिति** । उत्क्षेपणादिभिन्नमित्यर्थः । इदं च हेतुगर्भविशेषणम् । तथाच यस्माद्भ्रमणादिकं उत्क्षेपणादिभिन्नं कर्म तस्मादधिकतया उत्क्षेपणत्वादिभिन्नविभाजकरूपेण कुतो नोक्तमित्यर्थः । **मूले गमनादेवेति** ॥ विभागवाक्यघटकगमनपदादेवेत्यर्थः । **लभ्यते** बोध्यते । ॥ ६ ॥ ७ ॥

## दिनकरीयम्.

**प्रत्यक्षसिद्धेति** । चलनाकारानुगतप्रत्ययवेद्येत्यर्थः ॥ **अधिकतयेति** ॥ कर्मविभाजकोपाधिभिर्भ्रमणत्वादिभिः । मूले **गमनादेवेति** ॥ अथैवमुत्क्षेपणादीनामपि गमनेऽन्तर्भावात् गमनादेव लाभे उत्क्षेपणत्वादिभिरपि विभागोऽनुचितः नहि उत्क्षेपणादौ गमनत्वं नानुभाविकं ऊर्ध्वमधश्च प्रक्षिप्तलोष्टादावूर्ध्वं गच्छति अधो गच्छतीति प्रत्ययादिति चेन्न स्वतन्त्रेच्छस्य मुनेर्नियोगपर्यनुयोगानर्हत्वादिति ॥ ६ ॥ ७ ॥

## रामरुद्रीयम्.

**गमनादेवेति** ॥ गमनपदादेवेति कारिकार्थः । **लोष्टादाविति** ॥ प्रामादिकोऽयं ग्रन्थः । उत्क्षिपतीति व्यवहारो हि चेतनेष्वेवानुभूयते न त्वचेतने लोष्टादौ तस्माल्लोष्टादिनिष्ठगत्यनुकूलचेतनव्यापार एव उत्पूर्वकक्षिपधातोरर्थः आश्रयत्वं आख्यातार्थ इत्यवश्यमङ्गीकरणीयं तथा चाचेतने घटः प्रक्षिपतीति व्यवहाराभावेन लोष्टाद्यचेतनक्रियायां गतित्वोपपादनस्य प्रकृतानुपयोगात् परं तु लोष्टादिकं प्रक्षिपति चैत्रो गच्छतीति प्रत्ययात् उत्तरदेशसंयोगानुकूलक्रियामात्रस्यैव गतित्वादित्येव लेखनीयमिति मन्तव्यम् । **नियोगपर्यनुयोगेति** ॥ अयमाशयः गतित्वं प्रकृते उत्क्षेपणादिभिन्नत्वे सत्युत्तरदेशसंयोगानुकूलक्रियात्वमेव विभाजकतावच्छेदकत्वेनाभिमतं तेन द्रव्यत्वपृथिवीत्वाभ्यामिव गतित्वोत्क्षेपणत्वाभ्यामपि विभागस्यानर्हत्वेऽपि न क्षतिः । नन्वेवं पृथिव्यन्यद्रव्यत्वादिना विभागापत्तिरिति चेत् । **एतदभिप्रायेणैव** नियोगपर्यनुयोगानर्हत्वादित्यस्योक्तत्वात् । नियोगपर्यनुयोगौ प्रश्ननिन्दे ॥ ६ ॥ ७ ॥

सामान्यं निरूपयति ॥ **सामान्यमिति** ॥ तल्लक्षणं तु नित्यत्वे सत्यनेकसमवेतत्वम्। अनेकसमवेतत्वं संयोगादीनामप्यस्तीत्यत उक्तं नित्यत्वे सतीति। नित्यत्वे सति समवेतत्वं गगनपरिमाणादीनामप्यस्तीत्यत उक्तमनेकेति। नित्यत्वे सत्यनेकवृत्तित्वमत्यन्ताभावस्या-

## प्रभा.

ननु लक्षणात्मकसाधारणधर्मज्ञानं विना विभागोऽनुपपन्न इति आशङ्कां मूलस्थसामान्यपदेन सूचितलक्षणप्रदर्शनेन परिहरति। **तल्लक्षणं त्विति** ॥ अत्र न एकत्वमनेकत्वमिति व्युत्पत्त्या अनेकशब्देन एकत्वान्यसंख्या लब्धा। अनेकत्वविशिष्टमनेकत्वमिति। अनेकसमवेतशब्देन एकत्वान्यसंख्यावत्समवेतत्वं लभ्यते इत्यभिप्रायेण नित्यत्वविशेषणप्रयोजनमाह। **संयोगादीनामिति** ॥ तथाच संयोगविभा-

## मञ्जूषा.

ननु विशेषधर्मप्रकारकज्ञानानुकूलव्यापाररूपविभागस्य विशेषधर्मप्रकारकजिज्ञासायां सत्यामेव सार्थकत विशेषधर्मजिज्ञासा च सामान्यधर्मज्ञाने सत्येव भवति तस्य चेहाभावात् सामान्यं द्विविधमित्यादिविभागोऽनुपपन्न इत्यत आह। **मुक्तावळ्यां तल्लक्षणन्त्विति** ॥ नच व्याख्याने लक्षणाभिधानमात्रेण कथं मूलस्थविभागप्रयोजकविशेषधर्मजिज्ञासोत्थितिरिति वाच्यम्। द्रव्यं गुण इत्याद्युद्देशवाक्यघटकसामान्यपदेनैव तदुपस्थितिरित्यभिप्रायात्। अत एव द्रव्यगुणकर्मणां लक्षणान्तराणि नाभिहितानि उद्देशवाक्यघटकद्रव्यादिपदोपस्थापितद्रव्यत्वादीनामेव तल्लक्षणत्वात्। तेषां चाखण्डतया न निरुक्त्यपेक्षेति जातिरूपत्वं व्यवस्थापितं इहतु सामान्यत्वस्य जातिरूपत्वाभावात् निरुक्तिः कृता। अत्रच क्षित्यप्तेजइत्यादितत्तद्विभागवाक्यघटकद्रव्यादिपदैरेव सामान्यलक्षणलाभं केचन मन्यन्ते। तत्तु न समीचीनतया वयं प्रतीमः। सामान्यधर्मज्ञानजनितविशेषधर्मजिज्ञासोत्थापनीयविभागवाक्यघटकद्रव्यादिपदैस्सामान्यधर्मप्रतिपादनस्य विरुद्धत्वात्। अथैवं द्रव्यंगुणइत्याद्युद्देशवाक्यव्याख्यानावसर एव द्रव्यत्वादीनां जातित्वं सामान्यत्वादिस्वरूपं च वक्तव्यं स्यान्न तु तत्तद्विभागावसर इति चेन्न तत्तद्विभागदशायां तत्तद्विभागप्रयोजकज्ञानविषयसामान्यधर्मस्वरूपप्रतिपादनेऽपि वाधकविरहात इमानि च लक्षणानि व्यावहारिकाण्येव नतु व्यावर्तकानि व्यावहारिकत्वं व्यवहारजनकज्ञानविषयत्वं व्यावर्तकत्वं च इतरभेदानुमितिजनकज्ञानविषयत्वं तदुक्तं व्यावृत्तिर्व्यवहा-

## दिनकरीयम्

**तल्लक्षणं त्विति**। लक्षणप्रयोजनं त्वितरभेदस्य व्यवहारस्य वा सिद्धिः। सामान्यमितरेभ्यो द्रव्यादिभ्यो भिद्यते सामान्यमिति व्यवहारविषयो वा नित्यत्वे सत्यनेकसमवेतत्वात् यन्नैवं तन्नैवं यथा द्रव्यमिति। एवं लक्षणान्तरेऽप्यूह्यम्। अनेकत्वमेकभिन्नत्वम्। जलपरमाणुरूपादावतिव्याप्तिवारणायोक्तो विशेष्यभागः। समवेतत्वघटकसमवायफलमाह। **नित्यत्वे सत्यनेकवृत्तित्वमिति**। नचैवं नित्यसंयोगेऽतिव्याप्तिरिति वाच्यम् तस्य निरस्तत्वात्। कुतो निरास इति चेन्न। द्रव्यनिष्ठकारणतानिरूपितसंयोगनिष्ठकार्यतावच्छेदककोटौ जन्यत्वनिवेशे गौरवात्। नित्यसंयोगाङ्गीकर्तृनये संयोगत्वस्य नित्यवृत्तित्वेन कार्यता-

## रामरुद्रीयम्.

अन्वयदृष्टान्ताभावादाह। **यन्नैवमिति** ॥ **एकभिन्नत्वमिति** ॥ न च यत्किंचिदेकत्वावच्छिन्नभेदवत्समवेते रूपादौ जातिलक्षणातिव्याप्तिरिति वाच्यम्। एकभिन्नत्वपदेन एकत्वावच्छिन्नप्रतियोगिताकभेदस्यैवोक्तत्वात्। न चैवमप्रसिद्धिः ग्रन्थकारेण उभयं नैकमिति प्रतीत्यङ्गीकारेण उभयत्वावच्छिन्न एव तत्प्रसिद्धेः। न चैवमपि जलपरमाणावपि उभयत्वावच्छेदेन तादृशभेदसत्त्वात् तत्समवेतरूपे अतिव्याप्तितादवस्थ्यमिति वाच्यम्। भेदो यदवच्छेदेन वर्तते तदवच्छेदेन वृत्तित्वस्यैव समवेतत्वपदेन विवक्षणीयत्वान्नातिव्याप्तिः। वस्तुतस्तु स्वप्रतियोगिसमवेतत्वस्वाधिकरणसमवेतत्वोभयसम्बन्धेन भेदविशिष्टत्वस्यैव अनेकसमवेतत्वान्न काप्यनुपपत्तिः। एतेन तादृशभेदानुयोगितावच्छेदकद्वित्वाद्यवच्छिन्नजातिवृत्तित्वमप्रामाणिकं जा-

## प्रभा.

गयोः निरुक्तलक्षणाक्रान्तत्वादिति भावः। यदि त्रित्वादिरूपानेकत्वघटितं सामान्यलक्षणं तथाप्याद्पद-ग्राह्यत्रित्वादिष्वतिव्याप्तिर्बोध्या। न चानेकशब्दस्य एकत्वान्यसंख्यावत्परत्वपक्षे नित्यत्वविशेषणेऽपि नित्य-संयोगेऽतिव्याप्तिस्तदवस्थैवेति वाच्यं। नित्यसंयोगे प्रमाणाभावात्। नचात्मा गगनसमवेतसंयोगनिष्ठसम-वायसंबन्धावच्छिन्नाधेयत्वनिरूपकत्ववान् द्रव्यत्वात् घटवदित्यनुमानेनाकाशात्मनोस्संयोगसिद्धौ तयोर्नाशा-संभवात् विभागाभावाच तत्संयोगस्य नाशकाभावेन नित्यत्वमपि सिध्यतीति वाच्यं विपक्ष-बाधकतर्कविरहेणाप्रयोजकत्वादुत्पन्नविनष्टघटाङ्गीकर्तृमते तत्र हेतोर्व्यभिचारित्वापत्तेः किंचात्मा आकाशसम-वेतसंयोगनिष्ठसमवायसंबन्धावच्छिन्नाधेयत्वनिरूपकत्वाभाववान् क्रियानधिकरणत्वात् रूपवदिति सत्प्रतिप-क्षसत्त्वात्। नचेदमप्रयोजकं संयोगं प्रति साक्षात्परंपरया वा क्रियाया हेतुत्वेन कार्यकारणभावरू-पानुकूलतर्कसत्त्वात् ईदृशानुमानेनाकाशात्मनोस्संयोगाभावसिद्धौ कुतस्संयोगस्य नित्यत्वमिति। केचित्तु नित्यसंयोगाङ्गीकारे संयोगत्वस्य नित्यवृत्तितया द्रव्यनिरूपितसंयोगनिष्ठकार्यतावच्छेदकत्वासंभवेन जन्यत्व-विशिष्टसंयोगत्वस्य कार्यतावच्छेदकत्वे गौरवात् तुल्ययुक्त्या नित्यविभागसिद्ध्यापत्तेश्चेति दूषणमाहुः तदसत् प्रमाणेन नित्यसंयोगसिद्धौ कार्यतावच्छेदककोटौ जन्यत्वनिवेशस्यावश्यकत्वात्। अन्यथा प्रमा-करणं प्रमाणमिति सूत्रसिद्धेन्द्रियनिष्ठप्रत्यक्षप्रमाकरणत्वमीश्वरप्रत्यक्षव्यावृत्तजन्यत्वनिवेशनं विना न नि-र्वहतीति तादृशगौरवभिया ईश्वरप्रत्यक्षस्वीकारानुपपत्तेः। यच्चोक्तं नित्यविभागासिद्धिरिति तदपि न ना-श्यनाशकयोर्युगपदेकत्रावस्थानासंभवादिति। अत्र नित्यत्वं न ध्वंसाप्रतियोगित्वरूपं ध्वंसत्वस्योत्पत्ति-विशिष्टाभावत्वरूपस्य क्षणभेदेन भिन्नस्य एकरूपाभावेन तद्घटितध्वंसप्रतियोगित्वस्यापि अननुगततया तदवच्छिन्नप्रतियोगिताकाभावरूपानुगतनित्यत्वाभावात् ध्वंसप्रतियोगित्वव्यक्त्यभावरूपनित्यत्वस्य तु घटनि-ष्ठतादृशप्रतियोगित्वव्यक्त्यभावमादाय द्वित्वादावतिव्याप्त्यापत्तेः। नच ध्वंसप्रतियोगित्वव्यक्तयो या-वत्यः तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदकूटवत्त्वरूपं तावदन्यतमत्वावच्छिन्नप्रतियोगिताकैकभेदवत्त्व-रूपं वा नित्यत्वं लक्षणघटकमिति नोक्तदोष इति वाच्यं कूटनिवेशे गौरवात् असर्वज्ञैः ज्ञातुमशक्यत्वाच्च।

## मञ्जूषा.

रो वा लक्षणस्य प्रयोजनमिति। लक्षणप्रयोजनत्वं लक्षणज्ञानजन्यत्वं। अत्रच पृथिव्याः पृथिवीत्वं व्यावहारिकं लक्षणं गन्धवत्त्वं तु व्यावर्तकलक्षणं तथाहि पृथिवीति व्यवहारे पृथिवीत्वज्ञानं कारणं व्यवहारे व्यव-हर्तव्यतावच्छेदकज्ञानस्य कारणत्वात् व्यावर्तकत्वं तु तस्य न संभवति पक्षतावच्छेदकहेत्वोरैक्येन सिद्धसाधनापत्तेः। गन्धवत्त्वं तु व्यावर्तकं तेन पृथिव्यामितरभेदानुमितिजननात् नतु व्यावहारि-कत्वं तस्य सम्भवति व्यवहर्तव्यतावच्छेदकत्वाभावात् एवं चोद्देश्यवाचकपदप्रतिपाद्यतावच्छेदकधर्म-रूपं लक्षणं व्यावहारिकं अन्यद्व्यावर्तकमिति निष्कर्षः अयं च गदाधरभट्टाचार्यस्याप्यभिप्रेतः पक्षः। व्यावहारिकत्वेनाभिप्रेतस्य दुष्टहेतुलक्षणस्य दुष्टपदप्रतिपाद्यत्वमुपपाद्य तदुपरि तल्लक्षणस्य तत्पदप्रतिपाद्य-त्वाभावमाशङ्क्येतरभेदानुमापकमेवेदं लक्षणमित्यभिधानात् अत्र चेतरभेदानुमापकमेव लक्षणं तस्य व्या-वहारिकत्वं तु कादाचित्कं आस्तां वा मावा न चैवं प्रमेयत्वस्यैव लक्षणत्वानुपपत्तिरिष्टत्वात् नचैवं पृथिवी-त्वस्य पृथिवीलक्षणत्वं न स्यात् पक्षतावच्छेदकहेत्वोरैक्येन तस्य व्यावर्तकत्वासंभवादिति वाच्यं तत्र पृथिवीपदवाच्यत्वस्यैव लक्ष्यतावच्छेदकत्वस्वीकारात् अतएव प्रमाकरणं प्रमाणमित्यादिलक्षणेषु प्रमाणपदवाच्यतादिकमेव लक्ष्यतावच्छेदकत्वेनाभिहितं ग्रन्थकारैः। नच प्रमाणप्रमेयेत्याद्युद्देशवाक्यघट-

## दिनकरीयम्.

नवच्छेदकत्वात्। तुल्ययुक्त्या नित्यविभागसिद्ध्यापत्तेश्च। नन्वाकाशत्वरूपजातावव्याप्तिस्तस्या अनेकसमवे-

## रामरुद्रीयम्.

तेर्निरवच्छिन्नवृत्तित्वादिति दूषणमपास्तम्। **नित्यविभागेति** ॥ कदापि परस्परासंयुक्तपरमाण्वोः नित्यवि-

**प्यस्ति । अतो वृत्तित्वसामान्यं विहाय समवेतत्वमुक्तम् । एकव्यक्तिमात्रवृत्तिस्तु न जातिः**

## प्रभा.

नच कालिकसंबन्धेन घटत्वादिमद्भिन्नत्वरूपनित्यत्वस्य निवेशान्नोक्तदोष इति वाच्यं महाकालस्य नि
रुक्तभिन्नत्वाभावेन नित्यत्वानुपपत्तेः जन्यमात्रस्य कालोपाधितानङ्गीकर्तृनवीनमते त्रित्वादेरपि कालिक
संबन्धेन घटत्वादिमद्भिन्नत्वरूपानित्यत्वसत्त्वेन तत्रातिव्याप्त्यापत्तेः कालिकसंबन्धेन घटत्ववद्भिन्नत्वपटत्वव
द्भिन्नत्वादिरूपनित्यत्वान्यादाय विनिगमनाविरहेणानेकनित्यत्वानां लक्षणे निवेशनीयतया गौरवापत्तेश्च
किन्तु द्रव्यत्वावच्छिन्नप्रतियोगिताकभेदगुणत्वावच्छिन्नप्रतियोगिताकभेदैतदुभयवत्त्वरूपं द्रव्यगुणान्यतरत्वा
वच्छिन्नप्रतियोगिताकैकभेदवत्त्वरूपं वा नित्यत्वं सामान्यलक्षणघटकमिति नोक्तदोषः । अनेकसमवेतत्व
मित्यत्रानेकेषु समवेतमिति सप्तमीतत्पुरुषाश्रयणे पूर्वपदस्य लक्षणाया आवश्यकत्वेन गौरवमिति समवे
तत्वे त्रित्वनिरूपकत्वनिवेशापेक्षया त्रित्वनिवेशे लाघवमिति यदि विभाव्यते तदानेकसमवेतत्वमित्य
त्र समवेतस्य भावः समवेतत्वं अनेकं च तत् समवेतत्वं चेति कर्मधारयसमासाश्रयणेन पूर्वपदस्य लक्षणा
अप्रसक्त्या समवेतत्व एव त्रित्वरूपानेकत्वप्राप्त्या उक्तदोषो वारणीयः । यद्याधेयतायाः स्वरूपसंबन्धरूपत्वपक्षे
घटत्वादिरूपाणां एकत्वेन समवायसंबन्धावच्छिन्नाधेयतात्रयघटितलक्षणमसंभवग्रस्तमिति विभाव्यते त
त्पक्षे अधिकरणताया अपि स्वरूपसंबन्धरूपत्वेनाधिकरणतात्रयानिरूपितसमवायसंबन्धावच्छिन्नाधेयतारू
स्वनिरूपितत्वविशिष्टसमवायसंबन्धावच्छिन्नत्वसंबन्धेनाधिकरणतात्रयविशिष्टाधेयत्वरूपमेव वा स्वाश्रयनि
रूपितसमवेतत्वसंबन्धेनानेकत्वविशिष्टाधेयत्वं अनेकसमवेतलक्षणे निवेश्य उक्तदोषो वारणीयइति
कोऽपि दोष इति दिक् । नन्विदं लक्षणं आकाशत्वरूपजातावव्याप्तमनेकसमवेतत्वाभावात् इत्याश
ङ्कायां तस्यालक्ष्यत्वप्रतिपादनेन परिहरति । **एकव्यक्तीति** ॥ अनेकव्यक्त्यसमवेत इत्यर्थः । तथाचाक

## मञ्जूषा.

कप्रमाणपदोपस्थाप्यतावच्छेदकधर्मावच्छिन्ने व्यावर्तकधर्माकाङ्क्षैव प्रमाकरणं प्रमाणमिति ग्रन्थोत्थित
प्रमाणपदवाच्यत्वावच्छिन्ने लक्षणाभिधाने असङ्गतिरिति वाच्यं उद्देशवाक्यघटकीभूतप्रमाणादिपदानाम
प्रमाणपदवाच्यत्वावच्छिन्नोपस्थापकताया एव स्वीकारादिति केचन मन्यन्ते । तन्मते द्रव्यं गुण इत्याद्युद्दे
वाक्ये द्रव्यादिपदानि तत्तत्पदवाच्यत्वावच्छिन्नपराण्येव एवंच द्रव्यादिपदवाच्यत्वरूपसामान्यधर्मज्ञाना
क्षित्यप्तेज इत्यादिविभागसंगतिः । मुक्तावल्यां क्षितिः पृथिवीत्यादिविवरणं तु तत्तत्पदवाच्यव्यक्तिप्रद
र्शनपरं द्रव्यत्वादीनां जातित्वव्यवस्थापनं सामान्यत्वादिनिर्वचनं च न सामान्यधर्मज्ञानाय किंतु द्रव्य
पदवाच्यत्वाद्यवच्छिन्नस्य व्यावर्तकधर्मज्ञापनायेति बोध्यम् न चैतन्मते द्रव्यादिपदवाच्यत्वस्यैव पदार्थ
त्वावच्छिन्नविभाजकता स्यान्न तु द्रव्यत्वादेस्तदवच्छिन्नोद्देश्यकविभागवाक्यजन्यशाब्दबोधप्रकारतावच्छेद
कत्वस्यैव तदवच्छिन्नविभाजकत्वपदार्थत्वादिति वाच्यं इष्टत्वात् तदवच्छिन्नोद्देश्यकविभागवाक्यजन्य
शाब्दबोधप्रकारतावच्छेदकीभूतवाच्यतावच्छेदकत्वस्यैव तदवच्छिन्नविभाजकत्वपदार्थत्वसंभवाच्च । महा

## दिनकरीयम्.

तत्त्वाभावादित्याशङ्क्यालक्ष्यत्वेनोत्तरमाह । **एकव्यक्तिमात्रेति** ॥ व्यक्तेरभेदरूपस्य बाधकस्य सत्त्वादि

## रामरुद्रीयम्.

भागसम्भवात् न च संयोगानन्तरमेव विभागप्रतीतेः तादृशपरमाण्वोः कदापि विभागाप्रतीतेः क
नित्यविभागाभ्युपगमसंभव इति वाच्यम् तथासति क्रियानन्तरमेव संयोगप्रतीतेः नित्येषु संयोगप्रतीत
संभवात् नित्यसंयोगाभ्युपगमोऽपि न संभवतीति तुल्यमिति भावः । न च नित्यविभागाङ्गीकारे सं
गनाशको गुण इति विभागलक्षणस्य तत्राव्याप्तिरिति वाच्यम् नित्यविभागानङ्गीकारेणैव तल्लक्षणप्रणयना
इदानीं तु विभागत्वजातेरेव तल्लक्षणत्वसंभवादिति ध्येयम् । **व्यक्तेरभेदेति** ॥ व्यक्तेराश्रयस्य । नि

तथा चोक्तम् । व्यक्तेरभेदस्तुल्यत्वं सङ्करोऽथानवस्थितिः । रूपहानिरसम्बन्धो जातिबाधक-

## प्रभा.

शत्वस्यानेकसमवेतत्वासिद्धेः अनेकसमवेतत्वघटितजातित्वासंभवादिति भावः । नन्वाकाशत्वस्य तादृशत्वेऽपि न क्षतिः निस्सामान्यत्वे सति विशेषान्यत्वे सति समवेतत्वरूपजातित्वसंभवादिति चेन्न । अनेकव्यक्तिविशेष्यकैकाकारप्रत्ययस्यैव जातिसाधकत्वात् । एकाकारप्रत्ययमात्रस्य जातिसाधकत्वे परमाणुनिष्ठत्व्यक्तित्वानामपि जातिरूपत्वापत्तेः तेष्वपि निरुक्तजातिलक्षणसत्त्वात् । एवंचाकाशस्यैकव्यक्तित्वेनानेकव्यक्तिविशेष्यकैकाकारप्रत्ययाप्रसिद्ध्या प्रमाणाभावेनाकाशत्वस्य जातिरूपत्वासंभवादिति । उक्तार्थे भाष्यकारसम्मतिमाह । **तथाचोक्तमिति** ॥ द्रव्यकिरणावल्यामुदयनाचार्यैरिति शेषः । उक्तिप्रकारमाह । **व्यक्तेरभेद इत्यादिना** ॥

## मञ्जूषा.

वस्तु व्यावहारिकत्वं न व्यवहर्तव्यतावच्छेदकविधया व्यवहारप्रयोजकत्वं ।किंतु लक्ष्यवाचकपदव्यवहर्तव्यतानुमितिजनकज्ञानविषयत्वं तच्च पृथिवीत्व इव गन्धवत्त्वेऽप्यक्षतं पृथिवीत्वस्य पृथिवीपदव्यवहर्तव्यतायां अवच्छेदकत्वेन तद्व्याप्यताज्ञानवत् तद्व्याप्यतया गन्धवत्त्वेऽपि पृथिवीपदव्यवहर्तव्यताव्याप्यत्वज्ञानसंभवात् एवंच ज्ञेयत्वादेरपि लक्षणत्वमक्षतामिति मन्यते एवं सर्वत्रोद्देशवाक्यघटकविधेयपदानि स्वशक्यतावच्छेदकावच्छिन्नपराण्येव नतु तत्तत्पदवाच्यत्वावच्छिन्नपराणि ततश्च तत्तत्पदशक्यतावच्छेदकधर्माणामेव विभाजकत्वम् । लक्षणाकाङ्क्षा च द्वेधापि संभवति । क्वचित्तत्तत्पदवाच्यत्वावच्छिन्ने क्वचिदुद्देशवाक्यघटकपदशक्यतावच्छेदकावच्छिन्ने च अनुभवसिद्धं चैतत् । तथाहि क्षित्यप्तेज इत्याद्युद्देशवाक्यश्रवणानन्तरं यथा क्षितित्वावच्छिन्नस्य किं लक्षणमिति जिज्ञासा स्वारसिकी तथा क्षित्यप्तेजइत्यत्र क्षितिशब्दानिर्दिष्टस्य किं लक्षणमिति जिज्ञासापि । ततोऽभिधीयमानेषु लक्षणेषु तत्तत्पदशक्यतावच्छेदकधर्मस्य तत्तत्पदवाच्यत्वस्य च यथायोगं लक्ष्यतावच्छेदकत्वसंभवः । यत्रच लक्षणलक्ष्यतावच्छेदकयोरभेदप्रसक्तिः तत्र तत्तत्पदवाच्यत्वमेव लक्ष्यतावच्छेदकं यत्र च भेदस्तत्रोभयमपि यथाकामं संभवतीत्यपि महादेवो मन्यते । ननु सर्वमतेऽपि सामान्यधर्मज्ञानं विना विभागो न संभवतीत्यविशिष्टं तत्र द्रव्यं गुण इत्यादिविभागे का गतिरिति चेत्तत्र प्रथमं सर्वः पदार्थ इति वाक्यमध्याहृत्यैव तदुपरि द्रव्यं गुण इत्यादिविभागवाक्यमवतरणीयमिति मन्महे इत्यास्तां विस्तरः । **अनेकेति** ॥ किमिदमनेकत्वं एकान्यत्वमिति महादेवः युक्तं चैतत् एकं न भवतीति व्युत्पत्त्या तदर्थसिद्धेः न चैकत्वस्य केवलान्वयितया तदवच्छिन्नभेदोऽप्रसिद्ध इति वाच्यम् । एकत्वपर्याप्त्यनवच्छेदकोभयत्वाद्यवच्छेदेनैकत्वावच्छिन्नप्रतियोगिताकभेदस्वीकारे बाधका-

## दिनकरीयम्.

शेषः अनुगतधिया जातिकल्पिकाया अभावादिति भावः । ननु व्यक्त्यभेदस्य जातिबाधकत्वमेवासिद्धं निः-

## रामरुद्रीयम्.

षष्ठ्यर्थः । आश्रयनिष्ठभेदप्रतियोगिकाभाव इति समुदायार्थः । न चैवं घटत्वादेरपि जातित्वं न स्यात्तदाश्रये यत्किंचिद्भेदप्रतियोगिकाभावसत्त्वादिति वाच्यम् । भेदपदेन स्वाश्रयप्रतियोगिकभेदस्य विवक्षितत्वात् स्वाश्रयनिष्ठस्वाश्रयप्रतियोगिकभेदसामान्याभावः स्वनिष्ठजातित्वे बाधक इत्यस्य समुदायार्थत्वात् । नच गगनत्वाश्रयेऽपि स्वस्यैव द्वित्वादिना भेदसत्त्वाद्गगनत्वादावपि जातित्वबाधो न स्यादिति वाच्यम् । स्वाश्रयनिष्ठप्रतियोगितायाः व्यासज्यवृत्तिधर्मानवच्छिन्नत्वेन विशेषणीयत्वादिति भावः । ननु स्वाश्रयनिष्ठस्य स्वाश्रयनिष्ठव्यासज्यवृत्तिधर्मानवच्छिन्नप्रतियोगिताकभेदसामान्याभावस्य स्वस्मिन् जातित्वबाधकत्वे किं मानमित्याशङ्कायामाह । **अनुगतधिय इति** ॥ नानाधर्मिषु एकप्रकारकधिय इत्यर्थः । नानाघटादिव्यक्तिषु एकधर्मप्रकारकबुद्ध्युपपत्तये हि घटत्वादिजातिः कल्प्यते एकव्यक्तौ तु तथाप्रत्ययः तद्व्यक्तित्वमादायापि उपपद्यत इति तदतिरिक्तजातिकल्पने प्रमाणाभाव इति भावः । **असिद्धमिति** । घटत्वं जातिरिति प्रती

सङ्ग्रहः ॥ इति ॥ परत्वमधिकदेशवृत्तित्वमपरत्वमल्पदेशवृत्तित्वं सकलजात्यपेक्षया सत्ताया

**प्रभा.**

जातिबाधकसंग्रह इति ॥ जातिबाधकानां जातिजातित्वान्यतरप्रकारकज्ञानप्रतिबन्धकज्ञानविषयाणां

**मञ्जूषा.**

भावात् । नचैकदेशवृत्तेर्व्यासज्यवृत्तिधर्मावच्छिन्नानुयोगिताकभेदप्रतियोगितावच्छेदकत्वं नास्तीति वाच्यं तादृशनियमानङ्गीकारात् । अतएव वक्ष्यति प्रत्येकमेकत्वसत्त्वेऽपि पृथिवीजलयोर्न गन्ध इतिवदुभयं नैकमित्यस्य सर्वजनसिद्धत्वादिति ग्रन्थकृत् नच तथापि एकत्वावच्छिन्नप्रतियोगिताकभेदाधिकरणोभयानतिरिक्तप्रत्येकजलपरमाणुवृत्तिरूपादावतिव्याप्तिर्दुर्वारेति वाच्यं एकत्वावच्छिन्नप्रतियोगिताकभेदावच्छेदकयत्किंचिद्धर्माधिकरणयावद्व्यक्तिवृत्तित्वस्य तादृशयत्किंचिद्धर्मव्यापकत्वस्य वा विवक्षितत्वात् । तादृशभेदावच्छेदकश्चोभयत्वादिः तत्र जगतएव तादृशभेदावच्छेदकधर्माधिकरणतया तादृशयावद्व्यक्तिवृत्तित्वस्य तादृशभेदावच्छेदकधर्मत्वावच्छिन्ननिरूपितव्यापकत्वस्य चासंभववारणाय यत्किञ्चित्त्वनिवेशः । एकत्वं च संख्यारूपमेव तदवच्छिन्नभेदावच्छेदकत्वस्य रूपादिप्रत्येकमात्रवृत्तितद्व्यक्तित्वादौ सत्वेऽपि तदधिकरणसमवेतत्वस्य जातावेव सत्त्वेन दोषाभावादिति । यदि चैकदेशवृत्तेर्व्यासज्यवृत्तिधर्मावच्छिन्नानुयोगिताकभेदप्रतियोगितावच्छेदकत्वं नाभ्युपेयते तदैकभिन्नत्वमित्यस्य स्वसमानाधिकरणयत्किंचिदेकत्वावच्छिन्नप्रतियोगिताकभेदवत्त्वमित्यर्थः । समभिव्याहृतपदार्थसम्बन्धिनिष्ठयत्किंचिदेकत्वावच्छिन्नप्रतियोगिताकभेदवद्बोधकताया अनेकपदस्याङ्गीकारात् । यथा अनेकपिता चैत्र इत्युक्ते स्ववृत्तिपितृतानिरूपकव्यक्तिनिष्ठैकत्वावच्छिन्नप्रतियोगिताकभेदवन्निरूपितपितृत्वाश्रयश्चैत्र इति बोधः । चैत्रस्य पुत्रा अनेक इत्यत्रापि चैत्रपुत्राः चैत्रपुत्रनिष्ठयत्किंचिदेकत्वावच्छिन्नप्रतियोगिताकभेदवन्त इत्यर्थः । तथाच स्वसमानाधिकरणयत्किंचिदेकत्वावच्छिन्नप्रतियोगिताकभेदवत्समवेतत्वं पर्यवसन्नम् । एवं लक्ष्यत्वेनाभिमतम् । एकत्वं चात्र न संख्यारूपं रूपत्वादावव्याप्तेः किंतु तत्तद्व्यक्तित्वादि तस्य च न तत्तद्व्यक्तित्वेन अनेकपदार्थशरीरे प्रवेशः तत्तद्व्यक्तित्वस्यानुगतस्याभावात् किंतु स्वसमानाधिकरणाव्यासज्यवृत्तिधर्मत्वेन अव्यासज्यवृत्तित्वनिवेशान्न द्वित्वावच्छिन्नभेदमादाय जलपरमाणुरूपेऽतिव्याप्तिः । एवंच स्वाधिकरणवृत्तियत्किंचिदव्यासज्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकभेदवद्वृत्तित्वमिति । अथवा एकत्वावच्छिन्नप्रतियोगिताका यावन्तो भेदाः यथासंभवं तावदाश्रयसमवेतत्वमर्थः । जलपरमाणुरूपं तु न तादृशं तादृशयावद्भेदान्तर्गततत्परमाणुव्यक्तिनिष्ठैकत्वावच्छिन्नप्रतियोगिताकभेदाश्रयसमवेतत्वाभावात् । एतादृशार्थलाभस्तु द्रव्यादयः पञ्च भावा इति श्लोकव्याख्यानावसरे स्फुटीभविष्यति अनेकसमवेतत्वपदस्याक्षरलभ्य एवायमर्थः स्वप्रतियोगिवृत्तित्वस्वसामानाधिकरण्योभयसंबन्धेन भेदविशिष्टत्वं स्ववृत्तित्वस्वभिन्नवृत्तित्वोभयसम्बन्धेन यत्किंचिद्विशिष्टत्वं स्वसामानाधिकरण्यस्वाभावसामानाधिकरण्योभयसंबन्धेन किंचिद्विशिष्टत्वमित्यादयोऽर्था वैवक्षिका एवेति बोध्यम् । दिनकरस्तु अनेकाश्रिता गुणा इति मूलव्याख्यानावसरे गुणनिरूपणे एकत्वभिन्नसंख्याविशिष्टवाचकत्वं अनेकपदस्येति व्याचख्यौ । तद्रीत्या यद्यपि प्रकृतलक्षणं परिष्कर्तुं शक्यते तथाप्येकत्वभिन्नसंख्याविशिष्टवाचकत्वमनेकपदस्येत्येतदेवास्माकमरुन्तुदम् । अनेकपदं हि

**दिनकरीयम्.**

सामान्यत्वे सति विशेषान्यत्वे च सति समवेतत्वस्य जातिलक्षणत्वादित्यतः सम्मतिमाह । **तथाचोक्तमि-**

**रामरुद्रीयम्.**

तिवत् गगनत्वं जातिरिति प्रतीतिरेव तस्य जातित्वसाधिका भविष्यतीति भावः । ननु गगनत्वादेर्जातित्वे तत्राव्याप्त्यापत्त्या पूर्वोक्तलक्षणस्य जातिलक्षणत्वासंभव इत्यतो लक्षणान्तरमाह । **निस्सामान्यत्वे सतीति** ॥ रूपादावतिव्याप्तिवारणाय प्रथमसत्यन्तम् । विशेषेऽतिव्याप्तिवारणाय द्वितीयसत्यन्तम् रूपध्वंसादावतिव्याप्तिवारणाय विशेष्यदलमिति बोध्यम् । **सम्मतिमाहेति** ॥ व्यक्तेरभेदस्य जातिबाधकत्वे प्राचामित्या

## प्रभा.

संग्रहः संक्षेपेण कथनमित्यर्थः । अत्र व्यक्तेरभेदः स्वाश्रयैकव्यक्तिकत्वं तच्च स्वसमानाधिकरणान्योन्या-

## मञ्जूषा.

एकं न भवतीति व्युत्पत्त्या एकभिन्नमाचष्टे तत्पुरुषघटकनञ्स्थोत्तरपदप्रतिपाद्यतावच्छेदकावच्छिन्नभेदबोधकतायाः व्युत्पत्तिसिद्धत्वात् । अन्यथा अनश्व इत्यादेरप्यश्वत्वभिन्नजातिविशिष्टार्थकत्वसंभवेन तादृशपृथिवीत्वादिजातिमादायाश्वेऽप्यनश्व इति व्यवहारापत्तेः नच नञः एकशब्देन तत्पुरुषे सति न निष्पन्नमिदमनेकपदम् किंतु प्रकृत्यन्तरं एकत्वभिन्नसंख्याविशिष्टवाचकमिति वाच्यम् । तथा सति एकशब्दोत्तरपदकत्वाभावेन सर्वनामसंज्ञाविरहात् अनेके अनेकस्मै इत्यादिषु शीभावस्मायादेशाद्यनुपपत्तेः । एतेनैकशब्देनैकत्वमुच्यते तत्समभिव्याहृतनञा तद्भिन्नसंख्या नञा भेदसादृश्ययोर्बोधनात् संख्यात्वेन सादृश्यस्य चेह विवक्षितत्वात् ततो मत्वर्थीयः अर्शआद्यच् गुणवचनाद्वा मतुपो लुक् ततश्चेष्टार्थसिद्धिरित्यपि प्रत्युक्तं तदानीमपि मत्वर्थीयप्रत्ययार्थोपसर्जनतयातिसर्व इत्यादाविव सर्वनामसंज्ञाविरहादित्यन्यदेतत् । प्रकृतलक्षणं तु न हीयते एकत्वभिन्नयत्किंचित्संख्याव्यापकत्वस्यैकत्वभिन्नसंख्यापर्याप्त्यवच्छेदकयत्किंचिद्धर्मव्यापकत्वस्य वा विवक्षणेनातिव्याप्त्यभावात् । द्वित्वादिपर्याप्त्यवच्छेदकधर्मश्च तावद्व्यक्तिवृत्त्यन्यतरत्वादिः । रूपादावपि गुणरूपसंख्याया अभावेऽपि अपेक्षाबुद्धिविशेषविषयत्वरूपा संख्याऽक्षतैव । केचित्त्वनेकसमवेतत्वमित्यत्रानेकं च तत्समवेतत्वं चेति कर्मधारयः तत्पुरुषापेक्षया तस्य लघुत्वात् समवेतत्वे अनेकत्वं चैकभिन्नत्वं सामान्यनिष्ठसमवेतत्ववृत्त्येकत्वावच्छिन्नप्रतियोगिताकभेदवत्त्वमिति यावत् । अस्मिन् भूतले घटा अनेक इत्यत एतद्भूतलवृत्तिघटाः एतद्भूतलघटनिष्ठैकत्वावच्छिन्नप्रतियोगिताकभेदवन्त इति प्रत्ययात् । तथाच स्वनिष्ठसमवेतत्ववृत्त्येकत्वावच्छिन्नप्रतियोगिताकभेदवत्समवेतत्ववत्त्वमिति पर्यवसन्नमित्याहुः । इदं चाधिकरणताभेदेनाधेयताभेदमभ्युपेत्य तदनभ्युपगमे तु अनेकाधिकरणतानिरूपकत्वं स्वनिरूपिताधिकरणतानिष्ठैकत्वावच्छिन्नप्रतियोगितानिरूपकभेदवदधिकरणतानिरूपकत्वपर्यवसितं विवक्षणीयमिति सर्वं समञ्जसम् । **एकव्यक्तिमात्रवृत्तिरिति** ॥ मात्रपदस्य समभिव्याहृतपदार्थसंसर्गित्वाभावव्याप्यभेदप्रतियोगित्वबोधकत्वं व्युत्पत्तिसिद्धम् । पृथिवीमात्रे गन्धो वर्तत इति वाक्याद्गन्धनिष्ठवृत्तितानिरूपकत्वाभावव्याप्यभेदप्रतियोगिपृथिवीनिरूपितवृत्तिताश्रयो गन्ध इति बोधात् । तथाच स्वनिष्ठवृत्तितानिरूपकत्वाभावव्याप्यभेदप्रतियोग्येकव्यक्तिवृत्तिर्यो धर्मस्स न जातिरित्यर्थः । यत्किंचिदेकव्यक्तिभिन्नावृत्तित्वे सति तादृशव्यक्तिवृत्तिर्यो धर्मस्स न जातिरिति यावत् ॥ **व्यक्तेरिति** ॥ व्यक्तेस्स्वाश्रयस्याभेदः स्वाश्रयनिष्ठैकत्वावच्छिन्नप्रतियोगिताकभेदाभावः स्वाश्रयनिष्ठैकत्वावच्छिन्नप्रतियोगिताकभेदवद्वृत्तित्वाभाववत्त्वमिति यावत् तज्ज्ञानञ्चानेकवृत्तित्वघटितजातित्वज्ञाने ग्राह्याभावावगाहितया प्रतिबन्धकम् । ननु जातित्वं नित्यत्वे सत्यनेकसमवेतत्वमिति यदुच्यते तदैव व्यक्त्यभेदस्य जातित्वग्रहप्रतिबन्धकज्ञानविषयत्वरूपं जातित्वबाधकत्वं स्यात् तत्रैव च निर्बन्धं न पश्यामः । निस्सामान्यत्वे सति विशेषान्यत्वे च सति समवेतत्वस्यैव जातिलक्षणत्वसंभवात् । न च निस्सामान्यत्वं सामान्यशून्यत्वं सामान्यत्वं च जातित्वमेवेत्यात्माश्रय इति वा-

## दिनकरीयम्.

ति ॥ द्रव्यकिरणावल्यामुदयनाचार्यैरिति शेषः । बहुवृत्त्येकधर्मस्य सामान्यतया सर्वसिद्धत्वादेकव्यक्तौ जातिरनभ्युपेयेति भावः । व्यक्तेरभेद एकव्यक्तिकत्वमाकाशत्वादेर्जातित्वे बाधकम् । तुल्यत्वं तुल्यव्यक्तिवृत्तित्वं घ-

## रामरुद्रीयम्.

दिः । तथाच गगनत्वं न जातिरिति प्रतीतिरेव प्राचां सम्मतेति भावः । **एकव्यक्तिकत्वमिति** ॥ एकाश्रयकत्वमित्यर्थः । आश्रये एकत्वं च स्वसजातीयाद्वितीयराहित्यं साजात्यं च तत्तदाश्रयत्वेन । नचैवं सिद्ध्यसिद्धिभ्यां व्याघातः । स्वाश्रयनिष्ठभेदाप्रतियोग्याश्रयकत्वं भेदश्च पूर्ववदेव व्यासज्यवृत्तिधर्मानवच्छिन्नप्रतियोगिताकत्वेन विशेषणीय इति ध्येयम् । **तुल्यव्यक्तिवृत्तित्वमिति** ॥ अन्यूनानतिरिक्ताश्रयकत्वमित्यर्थः ।

## प्रभा.

भावप्रतियोगितानवच्छेदकैकत्ववद्वृत्तित्वरूपं स्वसमानाधिकरणान्योन्याभावीयव्यासज्यवृत्तिधर्मानवच्छिन्नप्रतियोगित्वसमानाधिकरणं यद्यत्त्वं तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदकूटरूपं वा वक्तव्यमिति न कश्चिद्दोष इति। तुल्यत्वं तुल्यव्यक्तिवृत्तित्वं तच्च स्वभिन्नजात्याश्रयव्यक्तिनिष्ठसंख्याऽन्यूनानातिरिक्तसंख्याकव्यक्तिकत्वं स्वसमानाधिकरणान्योन्याभावप्रतियोगितानवच्छेदकस्वाभिन्नजातिसमानाधिकरणान्योन्याभावप्रतियोगितानवच्छेकत्वरूपं स्वव्याप्यत्वस्वव्यापकत्वस्वभिन्नत्वैतात्त्रितयसंबन्धेन जातिविशिष्टत्वरूपं वा पर्यवसितं बोध्यम्। कम्बुग्रीवादिमत्त्वेन सह घटत्वस्य तुल्यव्यक्तिकत्ववारणाय स्वभिन्नधर्मस्य जातित्वेन निवेशः। घटत्वस्य

## मञ्जूषा.

च्यम् सामान्यपदस्य समवेतधर्मपरत्वात् तथाच समवायित्वाभावो निस्सामान्यत्वमिति पर्यवसन्नमिति चेन्न बहुवृत्त्येकधर्मस्यैव सामान्यपदेन लोके व्यवहारदर्शनात् अनेकवृत्तित्वघटितस्यैव सामान्यत्वस्य निर्वाच्यत्वात्। अथैवमाकाशत्वस्यापि स्वाश्रयैकभिन्नघटादौ कालिकसंबन्धेन सत्त्वादेकव्यक्तिकत्वानुपपत्तिः। स्वरूपसंबन्धावच्छिन्नवृत्तित्वनिवेशे तु तज्ज्ञानस्य समवायसंबन्धावच्छिन्नवृत्तित्वघटितसामान्यत्वग्रहे ग्राह्याभावानवगाहितया प्रतिबन्धकत्वानुपपत्तिः। समवायसंबन्धावच्छिन्नवृत्तित्वनिवेशे तु भूतत्वेन्द्रियत्वादावपि समवेतत्वघटितैकव्यक्तिकत्वेनैव जातित्ववारणे साङ्कर्यादेर्जातित्वबाधकत्वं न स्यात्। समवेतत्वाभावमात्रस्यैव सामञ्जस्येन समवेतत्वे स्वाश्रयैकाभिन्नीयत्वनिवेशवैयर्थ्यं च। ननु भूतत्वेन्द्रियत्वादेर्जातित्वाभावनिश्चयात्पूर्वं स्वाश्रयैकभिन्नसमवेतत्वस्यापि संभावितत्वेन तदभावस्य दुर्निश्चेयतया साङ्कर्यस्य जातिबाधकत्वोपपत्तिः। ज्ञानकारणमनस्संयोगरूपेन्द्रियत्वे तु सुतराम्। एवमाकाशत्वस्य जातित्वाभावग्रहात्पूर्वं समवेतत्वाभावस्य दुर्निश्चेयत्वात् विशेषशब्दादिरूपे आकाशत्वे तदसंभवाच्च स्वाश्रयैकाभिन्नीयत्वनिवेशसार्थक्यमिति चेदस्त्वेवम्। एवमपि स्वाश्रयैकाभिन्नीयेत्यत्र स्वाश्रयत्वं यदि येन केनापि संबन्धेन तदा कालिकसंबन्धेन स्वाश्रयघटाभिन्नाकाशसमवेतत्वेन संभावितस्याकाशत्वस्यैकव्यक्तिकत्वाभावापत्तेः। स्वरूपसंबन्धावच्छिन्नाश्रयत्वनिवेशे समवायसम्बन्धावच्छिन्नाश्रयत्वघटितसामान्यत्वग्रहप्रतिबन्धकग्रहविषयत्वानुपपत्तिः समवायसंबन्धावच्छिन्नाश्रयत्वनिवेशे शब्दाश्रयत्वरूपाकाशत्वे वस्तुतः एकव्यक्तिकत्वानापत्त्या स्वसमानविशेष्यकजातित्वग्रहप्रतिबन्धकप्रमाविषयत्वानुपपत्तिरिति उच्यते स्वसमवाय्येकभिन्नसमवेतं यत्तद्भिन्नत्वमिहैकव्यक्तिकत्वं तच्च शब्दरूपे शब्दाश्रयत्वरूपे चाकाशत्वे अबाधितम्। बहुव्यक्तिवृत्तिधर्मे च जातित्वाभावनिश्चयात्प्राक् दुर्ग्रहं चेति। यदि त्वेकत्वावच्छिन्नप्रतियोगिताकयावद्भेदाश्रयसमवेतत्वं सामान्यत्वघटकमित्युच्यते तदा तादृशयावद्भेदाश्रयसमवेतत्वाभाव एव व्यक्तेरभेद इत्यनेन विवक्षणीयः यदितु स्वसमवेतत्वस्वभिन्नसमवेतत्वोभयसंबन्धेन प्रमेयविशिष्टत्वं सामान्यत्वघटकमुच्यते तदा तादृशोभयसंबन्धेन प्रमेयविशिष्टान्यत्वमेवैकव्यक्तिकत्वं वाच्यम्। एवं पूर्वोक्तपरिष्कारान्तरेष्वपि बोध्यम्। केचित्तु सर्वाधारताप्रयोजकसंबन्धभिन्नसंबन्धेन स्वाश्रयत्वं तदेकभिन्नव्यक्तिवृत्तित्वं च विवक्षितम्।

## दिनकरीयम्.

टत्वकलशत्वादीनां जातीनां भेदे। वस्तुतस्तु तुल्यत्वं स्वभिन्नजातिसमनियतत्वमिति यावत् तच्च जातिबाधकमेवेति ध्येयम्। सङ्करश्च परस्परात्यन्ताभावसमानाधिकरणयोरेकत्र समावेशः भूतत्वादेर्जातित्वे बाधकः। भू-

## रामरुद्रीयम्.

तथा च स्वनिष्ठजातितुल्याश्रयकत्वं स्वस्मिन् जातित्वे बाधकमित्यायातं तच्च न सम्भवति कलशत्वजातौ स्वात्मकघटत्वतुल्याश्रयकत्वसत्त्वादित्यतो जातिबाधकशब्दस्य यज्जातौ यज्जातितुल्याश्रयकत्वं तत् तज्जातौ तज्जातिभेदबाधकमित्यर्थपरतां सूचयति ॥ **जातीनां भेद इति** ॥ बाधकमिति पूर्वेणान्वयः ॥ नन्वेवं एकस्यैव जातिबाधकपदस्य क्वचिज्जातित्वबाधकार्थकत्वस्य क्वचिज्जातिभेदबाधकत्वार्थकत्वस्य च न सम्भवः सकृदुच्चरितः शब्द इति न्यायादित्यस्वरसादाह ॥ **वस्तुतस्त्विति** ॥ **परस्परेति** ॥ स्वनि-

## प्रभा.

कलशत्वेन तुल्यव्यक्तिकत्ववारणाय जातौ स्वभिन्नत्वनिवेशनम् । तथाच घटत्वकलशत्वयोः ऐक्येन घटत्वभिन्नत्वाभावात् न घटत्वस्य तुल्यव्यक्तिकत्वप्रसक्तिः कम्बुग्रीवादिमत्त्वस्य स्वभिन्नघटत्वादिजात्या सह निरुक्त-

## मञ्जूषा.

अतो न दोषः समवायत्वेन समवायघटितसामान्यत्वग्रहे निरुक्तातिरिक्तसंबन्धेन तद्घटितैकव्यक्तिकत्वग्रहस्य ग्राह्यतावच्छेदकावच्छिन्नाभावानवगाहित्वेऽपि सांकर्यादिग्रहस्यैव तदभावव्याप्यवत्ताज्ञानमुद्रयैव प्रतिबन्धकत्वोपपत्तेः । एवंच जातित्वस्य नित्यानेकसमवेतत्वरूपतावत्पूर्वोक्तनिस्सामान्यत्वघटितधर्मरूपत्वेऽपि सद्वृत्तित्वे सति निरवच्छिन्नविषयताश्रयत्वादिरूपत्वेऽपि च न क्षतिरित्याहुः । ननु निर्धर्मितावच्छेदककज्ञानस्याप्रतिबध्यत्वादप्रतिबन्धकत्वाच्च आकाशत्वधर्मितावच्छेदककजातित्वग्रहे तद्धर्मितावच्छेदककैकव्यक्तिकत्वज्ञानस्य प्रतिबन्धकत्वं वाच्यम् । तच्च न संभवति आकाशत्वं च शब्दाश्रयत्वत्वं शब्दत्वं वा तत एव जातित्वग्रहो बाध्यते किंचित्पदार्थघटितत्वगुणत्वशब्दत्वादीनां जातित्वाभावव्याप्यभूतानां ज्ञानेनैव जातित्वग्रहप्रतिबन्धसंभवादिति चेन्न । किंचित्पदार्थघटितत्वादेर्जातित्वाभावव्याप्यत्वग्रहविलम्बेन शब्दाश्रयत्वं किंचित्पदार्थघटितामिति शब्दाश्रयत्वत्वावच्छिन्ने तद्वत्ताज्ञानविलम्बेन च तस्य प्रतिबन्धकत्वासंभवात् । किंचाकाशपदार्थतावच्छेदकत्वेन आकाशपदोल्लिखितप्रतीतिविषयतावच्छेदकत्वेन वाकाशत्वगोचरजातित्वज्ञानप्रतिबन्धकत्वं प्रायशस्तदवच्छिन्नधर्मिकैकव्यक्तिकत्वज्ञानस्यैव युज्यते तदानीं शब्दाश्रयत्वत्वादेरेव अनुपस्थितत्वात् यद्यपि च किंचित्पदार्थघटितत्वगुणत्वादेरपि जातिबाधकत्वं संभवति तथापि तस्य जातित्वाभावनिश्चयात्प्राक् प्रायशो दुर्निश्चेयत्वात् अनुपादानामिति बोध्यम् । एवमग्रेऽपि तुल्यत्वं स्वभिन्नजातिसमनियतत्वं तज्ज्ञानस्य जातित्वाभावव्याप्यवत्ताज्ञानमुद्रया जातित्वग्रहप्रतिबन्धकत्वं तस्य च जातित्वाभावव्याप्यत्वे लाघवमनुकूलतर्कः यथा घटत्वसमनियतजात्यन्तरसत्त्वे घटकलशकुम्भादि-

## दिनकरीयम्.

तत्वं विहाय मनसि वर्तमानस्य मूर्तत्वस्य मूर्तत्वं विहाय गगने वर्तमानस्य भूतत्वस्य च पृथिव्यादिचतुष्टये सत्त्वात् । ननु साङ्कर्यस्य जातिबाधकत्वे किम्मानमिति चेत् स्वसामानाधिकरण्यस्वाभावसामानाधिकरण्योभयसम्बन्धेन जातिविशिष्टजातित्वावच्छेदेन स्वसमानाधिकरणाभावप्रतियोगित्वाभाव इति नियमस्य भङ्गप्रसङ्ग एवेति । तादृशनियमे मानाभावान्न साङ्कर्यं जातिबाधकमिति नव्याः । अनवस्था तु जातेर्जातिमत्त्वे । यद्यपि निखिलजातिष्वेकवैजात्याङ्गीकारेऽपि तद्वैजात्ये न वैजात्यान्तरमेकव्यक्तिवृत्तित्वात्तथापि निखिलजातिष्वेकवैजात्यं तद्वैजात्यतदाश्रयजातिषु पुनर्वैजात्यमेवमग्रेऽपीत्यनवस्था बोध्या । रूपहानिः निस्सामान्यगर्भलक्षणव्या-

## रामरुद्रीयम्.

करणस्वसमानाधिकरणाभावप्रतियोगिजातिमभिन्नाभावप्रतियोगित्वं स्वस्य जातित्वे बाधकमित्यर्थः ॥ **उभयसम्बन्धेनेति** ॥ सामानाधिकरण्यसम्बन्धेन द्रव्यत्वविशिष्टे पृथिवीत्वादौ द्रव्यत्वसमानाधिकरणाभावप्रतियोगित्वस्यैव सत्त्वाद्व्यभिचारवारणाय स्वाभावसामानाधिकरण्यप्रवेशः । जलत्वाद्यभावसमानाधिकरणे तत्रैव जलत्वसमानाधिकरणाभावप्रतियोगित्वस्यैव सत्त्वात्तद्दोषतादवस्थ्यमतः स्वसामानाधिकरण्यप्रवेशः । **नियमस्य भङ्गप्रसंग एवेति** ॥ उक्तोभयसम्बन्धेन यज्जातिविशिष्टजातित्वं यत्र तत्र तज्जातिव्यापकत्वमिति नियमः दृष्टश्चासौ पृथिवीत्वव्यापके द्रव्यत्वादौ एतादृशनियमभङ्गापत्तिरेव सांकर्यस्य जातित्वबाधकत्वे मानं सांकर्यस्थले जातित्वस्वीकारे एतादृशनियमभङ्गापत्तेरिति भावः ॥ सांकर्यस्थले एकमात्रस्य जातित्वेऽपि नैतादृशनियमस्य भङ्ग इति मूर्तत्वं क्रियासमवायिकारणतावच्छेदकतया सिद्धा जातिरिति केचन वदन्ति ॥ **तादृशनियमे मानाभावादिति** ॥ व्याप्तिग्राहकानुकूलतर्काभावादित्यर्थः ॥ **एकव्यक्तिवृत्तित्वादिति** ॥ तथा च जातौ जात्यङ्गीकारेऽपि नानवस्थेति भावः । **निस्सामान्यत्वघटितेति** ॥ निस्सामान्यत्वे सति सामान्यान्यत्वे सति समवेतत्वं विशेषलक्षणं विशेषे जात्यङ्गीकारे तस्य व्याघातः विशेषवृत्तित्वम् । एतस्य च विशेषत्वे जातित्वबाधकत्वाङ्गीकारे विशेषे जात्य-

प्रभा.

तुल्यव्यक्तिकत्वेन न तस्य जातित्वमिति । एवंच कम्बुग्रीवादिमत्त्वं न जातिः स्वभिन्नजातिसमनियतत्वात् । यद्यत्स्वभिन्नजातिसमनियतं तन्न जातिः द्रव्यत्वसमनियतपृथिव्यादिमनोऽन्तान्यतमत्ववदित्यनु-

मञ्जूषा.

नानाशब्दानां द्वे शक्यतावच्छेदके स्याताम् दण्डादिजन्यतावच्छेदके च द्वे विनिगमनाविरहात् तथाच कम्बुग्रीवादिमत्त्वतावदन्यतमत्वादौ जातित्वाभावव्याप्यजात्यन्तरसमनियतत्ववत्ताज्ञानात् जातित्वज्ञानं प्रतिबध्यते धर्मितावच्छेदकधर्मश्च अत्र घटत्वभिन्नत्वविशिष्टघटत्वसमानियतधर्मत्वं कम्बुग्रीवादिमत्त्वत्वादिकं कम्बुग्रीवादिमानित्यादिप्रतीतिप्रकारतावच्छेदकं वा यदि चान्यतमत्वस्याखण्डैकभेदरूपस्य घटत्वव्यापकत्वसंभवेऽपि कम्बुग्रीवादिमत्त्वस्य कम्बुसदृशग्रीवासमवेतत्वरूपस्य प्रत्येकविश्रान्ततया कथं घटत्वव्यापकत्वं तत्समानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकधर्मवत्त्वस्य व्यापकत्वरूपत्वे द्रव्यत्वव्याप्यस्य द्रव्यत्वसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकसमवेततादिमतः पृथिवीत्वादेरपि द्रव्यत्वादिना तुल्यत्वापत्तिवारणाय स्वानाधिकरणतज्जात्यधिकरणकभिन्नत्वस्य तत्समानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकतद्व्यक्तित्वकत्वस्य वा वाच्यत्वादिति विभाव्यते । तदा तुल्यत्वं साक्षाज्जातित्वग्रहप्रतिबन्धकम् । किंतु जातित्वग्रहप्रतिबन्धकतर्कोत्थापकतया जातित्वबाधकम् । तथाहि तद्विशिष्टबुद्धिं प्रति तदापादककापत्तेः प्रतिबन्धकतया कम्बुग्रीवादिमत्त्वं यदि घटत्वसमनियतजातिस्स्यात्तर्हि घटत्ववत्कम्बुग्रीवादिमत्त्वस्यापि घटत्वसमनियतकार्यतावच्छेदकत्वं स्यादिति तर्कः कम्बुग्रीवादिमत्त्वं घटत्वसमनियतजातिरिति ज्ञानं प्रति प्रतिबन्धकः तादृशतर्के च आपाद्यव्याप्यापादकवत्ताज्ञानमुद्रया घटत्वसमानियतत्वविशिष्टजातित्ववत्ताग्रहो हेतुः । एवंच घटत्वसमानियतत्वविशिष्टजातित्वग्रहप्रतिबन्धकीभूतो यो विनिगमनाविरहप्रयुक्तगौरवसंपादकतयानिष्टभूतघटत्वसमनियतकार्यतावच्छेदकत्वप्रसञ्जनात्मकतर्कः तज्जनकसम्भावनाविषयत्वेन घटत्वसमनियतत्वं जातित्वबाधकं सम्भावना च अप्रामाण्यज्ञानविषयीभूतं ज्ञानं तर्कं प्रति हि अप्रामाण्यशङ्कास्कन्दितमेवापादकवत्ताज्ञानं कारणं तत्र च जातित्वांश इव घटत्वसमनियतत्वांशेऽपि यद्यप्रामाण्यशङ्का स्यात्तदा किं नः प्रच्छिन्नं न च विपर्ययपर्यवसायिनस्तर्कस्य घटत्वसमनियतत्वाभावांशे पर्यवसानसम्भवेऽपि

दिनकरीयम्.

घातरूपा विशेषस्य जातिमत्त्वे । यद्वा रूपस्य स्वतोव्यावर्तकत्वस्य हानिः । तत्र जातिस्वीकारे तथैव व्यावर्तक-

रामरुद्रीयम्.

न्तरनिरासो न स्यादित्यभिप्रायेण जातिबाधकशब्दस्य विशेषे जातिमत्त्वबाधकतां सूचयति ॥ **विशेषस्य जातिमत्त्व इति** ॥ बाधकमिति पूर्वेणान्वयः । एतच्चापाततः एकशब्दस्य एकदा नानार्थकत्वासम्भवेन विशेषवृत्तीनां जातित्वे इत्यस्यैव वक्तुमुचितत्वात् । ननूक्तं विशेषलक्षणं ग्रन्थकृता नोक्तमिति तद्व्याघातस्य विशेषे जातिमत्त्वबाधकत्वं न ग्रन्थकृदभिप्रेतं अन्यथा तादृशलक्षणाभिधानस्य ग्रन्थकर्तुरावश्यकत्वापत्तिः किं तु परमाणूनां परस्परभेदसिद्ध्यर्थमेव विशेषाङ्गीकार इति वदतो मूलकारस्य भेदसाधकत्वमेव तल्लक्षणमित्यभिप्रायो लभ्यते स च न सम्भवति घटभेदसाधकपटत्वादावतिव्याप्तेः अतः स्वतो भेदसाधकत्वं तल्लक्षणमित्यर्थे मूलतात्पर्यमङ्गीकरणीयं तथाच रूपहानिशब्दस्य तादृशलक्षणव्याघातपरतैव युक्तेत्यभिप्रायेणाह । **यद्वेति** ॥ स्वतः स्वेन रूपेण । व्यावर्तकत्वं भेदानुमापकत्वम् । विशेषस्य परमाणौ परमाण्वन्तरभेदसाधने तद्व्यक्तित्वेनैव हेतुता वाच्या, विशेषत्वेन हेतुत्वे परमाण्वन्तरेऽपि विशेषान्तरसत्त्वेन व्यभिचारित्वापत्तेः, विशेषनिष्ठं तद्व्यक्तित्वं च तादात्म्यसम्बन्धेन सैव व्यक्तिः अन्यस्य दुर्वचत्वात्, तन्मात्रविषयकज्ञानव्यक्तेः तत्त्वे तादृशजन्यज्ञानव्यक्त्यभावदशायां तद्व्यक्तौ तद्व्यक्तित्वं नास्तीति प्रत्ययापत्तेः, तस्याश्चानवस्थाभयेन तन्मात्रविशेष्यकज्ञाने स्वरूपत एव प्रकारत्वमभ्युपगम्यते, तथा च विशेषस्य स्वेन रूपेणैव भेदानुमापकता निराबाधैव, इदञ्च विशेषत्वस्य जातित्वे न सम्भवतीति, विशेषस्य जातिमत्त्वे भवति तादृशलक्षणव्याघात इत्याह । **तत्र जातिस्वीकार**

## प्रभा.

मानात् कम्बुग्रीवादिमत्त्वस्य जातित्वाभावसिद्धौ तत्र लिङ्गज्ञानविधया तुल्यव्यक्तिकत्वज्ञानस्य हेतुतया एतस्यापि जातित्वज्ञानप्रतिबन्धकज्ञानजनकत्वेन गौणप्रतिबन्धकत्वात् तदभावव्याप्यवत्तानिश्चयत्वेन मुख्य-

## मञ्जूषा.

दर्शिततर्कस्य कम्बुग्रीवादिमत्त्वं घटत्वसमनियतजातिरिति ज्ञानप्रतिबन्धकत्वसंभवेऽपि कम्बुग्रीवादिमत्त्वं जातिरिति ज्ञानप्रतिबन्धकता न घटत इति वाच्यम् । कम्बुग्रीवादिमत्त्वस्य प्रत्येकविश्रान्तत्वाधीनो यो घटत्वसमनियतत्वाभावः तस्य जातित्वाभावनिश्चयात् प्राग्दुर्निश्चेयतया दर्शिततर्कस्य घटत्वसमनियतत्वाभाव इव जातित्वाभावांशेऽपि पर्यवसानसंभवात् एवंचात्र समनियतत्वघटकं व्याप्यत्वं व्यापकत्वं च समवायसंबन्धावच्छिन्नमेव ग्राह्यं तस्य कम्बुग्रीवादिमत्त्वादौ बाधेऽपि दर्शिततर्कमवतारयतः पुरुषस्य जातित्वाभावनिश्चयात्प्राक्सम्भावयितुं शक्यत्वात् । अथवा घटत्वं यदि स्वसमनियतजातिकं स्यात्तर्हि जातिर्न स्यादिति

## दिनकरीयम्.

त्वं वाच्यं सामान्याश्रयस्य सामान्यरूपेणैव भेदसाधकत्वनियमात् न च सामान्यरूपेण विशेषाणां भेदसाधकत्वं सम्भवति व्यभिचारात् तादृशनियमानङ्गीकारे परमाणुगतैकत्वानां तत्तद्व्यक्तित्वेनैव परमाण्वन्तरभेदसाधकत्वसम्भवेन विशेषस्य वैयर्थ्यप्रसङ्गादिति तु ज्यायः । असम्बन्धः प्रतियोगितानुयोगितान्यतरसम्बन्धेन समवायाभावः समवायाभावयोर्जातिमत्त्व इति॥

## रामरुद्रीयम्.

**इत्यादिना ॥ सामान्यरूपेणैवेति** ॥ सामान्यावच्छिन्नत्वेनेत्यर्थः । व्यावर्तकत्वं भेदसाधने हेतुत्वम् । न चैवं नियमे सति घटवानितरेभ्यो भिद्यते कम्बुग्रीवादिमत्त्वादित्यनुमितिर्न स्यादिति वाच्यम् । तादृशनियमवादिमते इष्टत्वात् । न चैवमपि महानसीयवह्निमत्त्वावच्छेदेन तदितरभेदसाधने महानसीयवह्निरेवं हेतुर्वाच्यः महानसीयत्वं च न सामान्यमिति कथमुक्तनियम इति वाच्यम् । तस्य सामान्यत्वाभावेऽपि वह्नित्वस्य तथात्वेन व्यावर्तकतायाः सामान्यावच्छिन्नत्वनियमाक्षतेः । अथैवंरीत्या तत्तद्विशिष्टविशेषत्वेन विशेषस्य हेतुत्वे विशेषत्वस्य जातित्वेऽपि नोक्तनियमक्षतिरिति तथैव स्वीक्रियत इति चेत् न । तस्य तत्तारूपसमानाधिकरणव्याप्यतावच्छेदकधर्मान्तरघटितत्वेन व्याप्यतावच्छेदकत्वासम्भवादिति हृदयम् । ननूक्तनियमे मानाभावः तथा च विशेषस्य जातिमत्त्वे स्वतोव्यावर्तकत्वं न बाधकमित्याशङ्कां निराकरोति । **तादृशनियमेति ॥ ज्याय इति ॥** ज्यायस्त्वञ्च मूलकृदभिप्रायानुसारित्वमेव बोध्यम् । **प्रतियोगितेति ॥** न चाभावत्वादेः जातित्वाङ्गीकारे समवायेनैव तत्सत्त्वमङ्गीकार्यमुक्तलक्षणानुसारात् तथा चोक्तान्यतरसम्बन्धेन समवायाभावः अभावादौ नोभयवादिसम्मतः कथं तेन हेतुनाऽभावादौ जातिमत्त्वाभावः सिद्ध्यतीति वाच्यम् । समवायपदेन जात्यतिरिक्तप्रतियोगिकत्वविशिष्टसमवायस्य विवक्षितत्वात् । इत्थं च अनुयोगितासम्बन्धेन तादृशसमवायाभाववति रूपादौ व्यभिचारवारणाय प्रतियोगित्वनिवेशः गगनादौ व्यभिचारवारणायानुयोगितानिवेशः । केचित्तु समवायपदं जातिप्रतियोगिकसमवायातिरिक्तसमवायपरमित्याहुः । तदसत् । ग्रन्थकृता समवायैकत्वस्य व्यवस्थापनीयतया जातिप्रतियोगिकसमवायेतरसमवायाप्रसिद्धेः जातिप्रतियोगिकत्वविशिष्टसमवायस्तु प्रतियोगितया जातावेव तिष्ठति नान्यत्र भूतलवृत्तित्वविशिष्टघटस्य भूतलमात्रे सत्त्ववदिति नास्मन्मते समवायैक्यविरोध इति मन्तव्यम् । अथैवमपि जात्यतिरिक्तप्रतियोगिकत्वविशिष्टसमवायस्य प्रतियोगितया अनुयोगितया चासत्त्वेन जातेर्जातिमत्त्वेऽपि निरुक्तासम्बन्धस्यैव बाधकत्वसम्भवादनवस्थायाः जातिबाधकत्वेनोक्तिर्व्यर्थेति चेत्सत्यम् । जात्यतिरिक्तेत्यत्र जातिपदस्यासमवेतवृत्तिजातिपरत्वेन सत्तादौ तस्य जातिमत्त्वबाधकत्वसम्भवेऽपि रूपत्वादौ तद्बाधकताया अनवस्थायामेवाभ्युपेयत्वात् । न चासमवेतवृत्तीति व्यर्थं अखण्डाभावघटकतया तत्सार्थक्यात् । वस्तुतस्तु अनुयोगितापदं सत्तावन्निष्ठोभयवादिसिद्धं यत्समवायानुयोगित्वं तत्परमतस्समवायपदस्य यथाश्रुतार्थकत्वेऽपि न क्षतिरिति ध्येयम् ॥

## प्रभा.

प्रतिबन्धकत्वाच्च तद्विषयतुल्यव्यक्तिकत्वस्य निरुक्तजातिबाधकत्वमुपपद्यत इति । सङ्करश्च परस्परात्यन्ताभावसमानाधिकरणयोर्धर्मयोरेकत्र समावेशः । अत्र परस्परात्यन्ताभावसमानाधिकरणयोरित्यनेन स्वाभाववद्वृत्तिस्वभिन्नधर्माभाववद्वृत्तित्वं स्वस्य एकत्र समावेश इत्यनेन सामानाधिकरण्यं च लभ्यते । तस्य पृथङ्निवेशे गौरवात् स्वाभाववद्वृत्तिस्वसमानाधिकरणधर्माभाववद्वृत्तित्वं स्वनिष्ठसङ्कर इति फलितम् । एतादृशसाङ्कर्यं भूतत्वमूर्तत्वयोरुभयोर्जातित्वबाधकमिति प्राचां मतम् । अन्यतरस्य जातित्वबाधकमिति निर्गलितप्राचीनमतम् । अत्र भूतत्वं विहाय मनसि वर्तमानं मूर्तत्वं मूर्तत्वं विहाय गगने वर्तमानं भूतत्वं तयोरुभयोः पृथिव्यादिचतुष्टये समावेश इति लक्षणसमन्वयः । अत्र भूतत्वं न शब्दस्पर्शान्यतरवत्त्वं उत्पत्तिकालीनघटे सृष्टिप्राक्कालावच्छेदेनाकाशे चाभावात् । नापि तादृशान्यतराधिकरणत्वमुत्पन्नविनष्टाङ्गीकर्तृमते तादृशघटे निरुक्तभूतत्वाभावात् । किन्तु समवायेन शब्दस्पर्शान्यतरसंबन्धित्वं समवायघटितसामानाधिकरण्यसंबन्धेन शब्दस्पर्शान्यतरसंबन्धित्वं एतदन्यतरत्वं पृथिव्यादिगगनान्तान्यतमत्वरूपं वा भूतत्वम् । एवं मूर्तत्वस्याप्यतिरिक्तजातित्वानङ्गीकर्तृमते क्रियावत्त्वरूपमूर्तत्वस्वीकारे उक्तदोषापत्त्या पृथिव्यादिचतुष्टयमनएतदन्यतमत्वरूपं पृथिवीत्वादिजातिचतुष्टयमनस्त्वजात्येतदन्यतमत्वावच्छिन्नवत्त्वरूपं वा वक्तव्यं मूर्तत्वम् । स्वाभाववद्वृत्तित्वरूपविशेषणानुपादाने स्वशब्देन पृथिवीत्वमादाय पृथिवीत्वसमानाधिकरणघटत्वाभाववद्वृत्तित्वात् पृथिवीत्वस्य घटत्वादिना साङ्कर्यापत्तेः तादृशविशेषणदाने तु घटत्वस्य पृथिवीत्वाभाववदवृत्तित्वात् न तेन

## मञ्जूषा.

तर्कः । तेन च घटत्वे स्वसमनियतजातिकत्वाभावे सिद्धे जातित्वावच्छेदेन तत्समनियतत्वाभावपर्यवसानात् तत्समनियतत्वावच्छेदेन जातित्वाभावपर्यवसानाद्विष्टसिद्धिः । यद्वा कम्बुग्रीवादिमत्त्वस्य प्रत्येकविश्रान्तत्वं यदि प्रागेव निश्चितं तदा व्यक्त्यभेद एव जातित्वबाधकः यदा तु न ज्ञातं तदा तुल्यत्वमिति· यदा त्वाधेयतावच्छेदकभेदेनैव आधेयताभेदः न त्वाधेयभेदादित्युच्यते तदा कम्बुग्रीवादिमत्त्वनिरूपितसमवायसंबन्धावच्छिन्नाधेयतैकैवेति नानुपपत्तिः । किंत्वाधेयभेदादाधेयताभेदः सिद्धान्तसिद्ध इति बोध्यम् । अत्र कल्पे व्याप्यत्वं व्यापकत्वं च सर्वाधारताप्रयोजकभिन्नसंबन्धेन समवायस्वरूपान्यतरसंबन्धेन वा बोध्यम् । केचित्तु तुल्यत्वं जात्योर्भेदे बाधकं यथा सुखसमवायिकारणतावच्छेदकतया सिद्धजात्यपेक्षया दुःखसमवायिकारणतावच्छेदकतया सिद्धजातेर्भेदे तथाच तुल्यत्वं जातिसमनियतजातित्वमित्याहुः । संकरश्च स्वसामानाधिकरण्यस्वाभावसामानाधिकरण्यस्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वैतत्रितयसंबन्धेन जातिविशिष्टत्वं तज्ज्ञानस्य च तदभावव्याप्यवत्ताज्ञानमुद्रया जातित्वग्रहप्रतिबन्धकत्वं तस्य च जातित्वाभावव्याप्यत्वे ब्रह्मक्षत्रादीनामेकतरवर्जिनापरक्षेत्रे उत्पादितस्य शरीरस्य ब्रह्मत्वक्षत्रियत्वाद्यात्मकजातिद्वयनिरासनपरस्मृतिपुराणान्येव प्रमाणम् । अन्यथा तत्र जातिद्वयस्वीकारसंभवे तद्विरुद्धसूतत्वादिजात्यन्तरवैफल्यात् । एतच्च क्वचिद्विनिगमनाविरहाद्द्वयोर्जातित्वे बाधकं यथा भूतत्वमूर्तत्वयोः क्वचिदन्यतरस्य प्रबलप्रमाणेन जातित्वे निर्णीते इतरस्यैव जातित्वं बाध्यते यथा गन्धसमवायिकारणतावच्छेदकतया प्रत्यक्षप्रमाणेन च पृथिवीत्वस्य जातित्वे निर्णीते तेन सह सङ्करादिन्द्रियत्वं न जातिरिति अत्र च दलद्वयघटकवृत्तित्वयोः तृतीयदलघटकप्रतियोगित्वेऽपि च संबन्धविशेषावच्छिन्नत्वानिवेशे पटे कालिकसंबन्धेन वर्तमानस्य घटत्वस्य पटत्वेन पृथिवीत्वाभावाधिकरणे कालिकसंबन्धेन वर्तमानस्य घटत्वादेः पृथिवीत्वेन घटनिष्ठाभावीयसंबन्धान्तरावच्छिन्नप्रतियोगिताश्रयस्य पृथिवीत्वादेर्घटत्वेन च सङ्करो दुर्वारः । वृत्तित्वयोस्समवायसंबन्धावच्छिन्नत्वानिवेशे ज्ञानकारणमनस्संयोगाश्रयत्वरूपेन्द्रियत्वे तस्य बाधः । स्वरूपसंबन्धावच्छिन्नत्वानिवेशे इन्द्रियत्वस्य जातित्ववादिनं प्रति साङ्कर्योद्भावनानुपपत्तिरिति चेदत्र केचित् स्वाधिकरणासमवेतं यत्समवेतं तद्भिन्नत्वं स्वसमानाधिकरणत्वं तच्चेन्द्रियत्वस्य जातित्वे तदभावे च तत्ताक्षतम् । एवं स्वाभावसामानाधिकरण्यमपि स्वाभावाधिकरणासमवेतं यत्समवेतं तद्भिन्नत्वं एवं तृतीयदलं तु स्वसमानाधिकरणाभावीयसमवायसंबन्धावच्छिन्नप्रतियोगिताश्रयत्वमेवेत्याहुः । तदपरे न क्षमन्ते । एवं सति

## प्रभा.

पृथिवीत्वस्य सांकर्यापत्तिः । स्वसमानाधिकरणत्वविशेषणानुपादाने घटत्वेन पटत्वस्य सांकर्यापत्तिः । स्वाभाववद्वृत्तिस्वसमानाधिकरणधर्मकत्वमात्रोक्तौ पृथिवीत्वेन घटत्वस्य सांकर्यापत्तिः । अतस्तादृशधर्मकत्वमपहाय तादृशधर्माभाववद्वृत्तित्वमुक्तम् । स्वाभावेत्यत्र तादृशधर्माभावेत्यत्र च प्रतियोगितयोः वैशिष्ट्यव्यासज्यवृत्तिधर्मानवच्छिन्नत्वविशेषणं देयम् । तेन विशिष्टाभावादिकमादाय पृथिवीत्वस्य घटत्वेन घटत्वस्य पृथिवीत्वेन न सांकर्यापत्तिः । एवं प्रतियोगित्वे सर्वाधारताप्रयोजकसंबन्धभिन्नसमानाधिकरणसंबन्धावच्छिन्नत्वेन विशेषणीये तेन कालिकसंबन्धावच्छिन्नप्रतियोगिताकाभावमादाय व्यधिकरणसंबन्धावच्छिन्नप्रतियोगिताकाभावमादाय च द्रव्यत्वस्य पृथिवीत्वेन पृथिवीत्वस्य द्रव्यत्वेन न सांकर्यापत्तिः । स्वाभाववद्वृत्तित्वं स्वसमानाधिकरण्यघटकवृत्तिताद्वयं तादृशधर्माभाववद्वृत्तित्वं च सर्वाधारताप्रयोजकसंबन्धभिन्नसंबन्धावच्छिन्नं ग्राह्यम् । नातः कालिकसंबन्धावच्छिन्नवृत्तित्वान्यादाय दोषः । उभयत्र अभाववत्त्वं दैशिकविशेषणतासंबन्धेन बोध्यम् । नातः कालिकसंबन्धेन तादृशाभाववत्त्वमादाय दोषः । तथाच सर्वाधारताप्रयोजकसंबन्धभिन्नसमानाधिकरणसंबन्धावच्छिन्ना वैशिष्ट्यव्यासज्यवृत्तिधर्मानवच्छिन्ना च या प्रतियोगिता तन्निरूपकाभावनिष्ठदैशिकविशेषणतासंबन्धावच्छिन्नाधेयतानिरूपकाधिकरणनिरूपितसर्वाधारताप्रयोजकसंबन्धभिन्नसंबन्धावच्छिन्नवृत्तिताश्रयः तादृशसंबन्धभिन्नसंबन्धावच्छिन्नस्वनिष्ठाधेयतानिरूपकाधिकरणानिरूपितानिरुक्तसंबन्धावच्छिन्नवृत्तिताश्रयश्च यो धर्मः तन्निष्ठतादृशसंबन्धभिन्नसमानाधिकरणसंबन्धावच्छिन्ना वैशिष्ट्यव्यासज्यवृत्तिधर्मानवच्छिन्ना च या प्रतियोगिता तन्निरूपकाभावनिष्ठदैशिकविशेषणतासंबन्धावच्छिन्नाधेयतानिरूपकाधिकरणनिरूपिततादृशसंबन्धावच्छिन्नवृत्तित्वं स्वनिष्ठसांकर्यमिति न कोऽपि दोषः । वस्तुतस्तु स्वपदार्थे तादृशधर्माभाववद्वृत्तित्वोक्त्या तादृशधर्मे तुल्यवित्तिवेद्यतया स्वसमानाधिकरणाभावप्रतियोगित्वं लभ्यत इति लाघवात् त्रयाणां संसर्गत्वमङ्गीकृत्य स्वसमानाधिकरणत्वस्वाभाववद्वृत्तित्वस्वसमानाधिकरणाभावप्रतियोगित्वैतत्त्रितयसंबन्धेन किंचिद्धर्मसंबन्धित्वं मूर्तत्वस्य जातित्वपक्षे निरुक्तैतत्त्रितयसंबन्धेन जातिसंबन्धित्वं वा स्वनिष्ठसाङ्कर्यम् । संबन्धत्रयघटकप्रतियोगित्वादीनां तत्तत्संबन्धावच्छिन्नत्वं तत्तद्धर्मानवच्छिन्नत्वं च निरुक्तदोषवारणाय निवेशनीयमित्यत्र न कोऽपि दोष इति प्रतिभाति । ननु तादृशसांकर्यस्य कथं जातिबाधकत्वमिति चेन्न लिङ्गविधयैव तस्य जातिबाधकत्वात्तथाहि भूतत्वं न जातिः निरुक्तत्रितयसंबन्धेन मूर्तत्वजातिमत्त्वात् यद्यत् निरुक्तत्रितयसंबन्धेन मूर्तत्वजातिमत् तन्न जातिः यथा गगनमनस्संयोग इति अनुमानात् भूतत्वस्य जातित्वाभावसिद्धौ बाधज्ञानविधया जातित्वज्ञानप्रतिबन्धिका या निरुक्तानुमितिः तज्जनकव्याप्त्यादिज्ञाने निरुक्तसांकर्यस्य विषयत्वात् साक्षात्प्रतिबन्धकज्ञानविषयस्यैव प्रतिबन्धकज्ञानजनकज्ञानविष-

## मञ्जूषा.

जातिबाधकान्तरविलोपप्रसङ्गात् । तथाहि कम्बुग्रीवादिमत्त्वगगनत्वयोस्समवेतत्वाभावेन निरुक्तत्रितयसंबन्धेन जातिविशिष्टान्यत्वमव्याहतं एवं सामान्यादिवृत्तिधर्मसामान्यस्यैव समवेतत्वाभावेन निरुक्तत्रितयसंबन्धेन यत्किंचिज्जातिमत्त्वरूपबाधकात् जातित्वाभावे सिद्धे सामान्यादीनां जातिशून्यत्वमप्यर्थात् सिद्धमिति अनवस्थित्यादीनामपि जातिबाधकता न स्यादिति तन्न विचारसहम् । तथाहि गगनत्वस्य जातित्वाभावनिर्णयात्प्रागसमवेतत्वं दुर्ग्रहमित्युक्तम् । तथाच गगनत्वे पृथिवीत्वादिभिर्न साङ्कर्यं निर्णेतुं उत्थापयितुं वा शक्यं तदधिकरणासमवेतत्वविशिष्टसमवेतत्वसंभावनया विशिष्टभेदस्य दुर्ग्रहत्वात् नापि द्रव्यत्वसत्ताभ्यां तथाकाशत्वे द्रव्यत्वाद्यधिकरणासमवेतत्वसमवेतत्वयोः परस्परव्यतिरेकनियतत्वेन विशिष्टभेदरूपप्रथमदळनिर्णयसंभवेऽपि द्वितीयदळनिर्णयासंभवात् उद्भावयतः पुरुषस्याकाशत्वं शब्दाश्रयत्वरूपमिति निर्णयदशायां दर्शितसाङ्कर्यस्याकाशत्वे प्रहीतुं शक्यत्वेऽपि शब्दरूपमाकाशत्वमिति निर्णयदशायां तस्य समवेतत्वनिश्चयेन साङ्कर्योद्भावनस्य सुतरामशक्यत्वाच्च । एवं कम्बुग्रीवादिमत्त्वेन पटत्वादीनां साङ्कर्यं दुर्ग्रहं प्रथमदळानिर्णयात्न पृथिवीत्वादिना द्वितीयदळानिर्णयात्न घटत्वेन द्वितीयतृतीयदळयोरनिर्णयात् एवं सामान्यत्वादौ न कयाचन जात्या साङ्कर्यं सुग्रहम् प्रथमदळानिर्णयादिति व्यक्त्यभेदादीनां सर्वेषां

## प्रभा.

यस्यापि जातिबाधकपदार्थत्वेन तस्य सांकर्ये अक्षतत्वात् अथवा जातित्वाभावानुमितिजनकजातित्वाभावव्याप्यनिरुक्तत्रितयसंबन्धेन मूर्तत्वजातिपरामर्शस्य तदभावव्याप्यवत्तानिश्चयत्वेन जातित्वप्रकारकज्ञानप्रतिबन्धकत्वान्निरुक्तसाङ्कर्यस्य तद्विषयत्वेन साक्षाज्जातित्वज्ञानप्रतिबन्धकज्ञानाविषयत्वस्याप्यक्षतत्वादित्यास्तां विस्तरः । अनवस्था तु जातेः जातिमत्त्वे क्लृप्तघटत्वादिजातिसमुदायेषु सामान्यमित्यनुगतप्रतीतिबलात् जातिरूपानुगतधर्मस्वीकारे स्वीकृतजातिघटितक्लृप्तजातिसमुदायेऽपि सामान्यमित्यनुगतप्रतीतेस्तुल्यतया जात्यन्तरस्वीकारापत्तेः । एवं तादृशजात्यन्तरघटितपूर्वोक्तजातिसमुदायेऽपीत्यनवस्था बोध्या । तथाचानन्तजातिस्वीकारे अनुमानप्रमाणं दर्शितं तथाहि घटत्वादिजातिसमुदायः जातिमान् अनुगतप्रतीतिविशेष्यत्वात् घटसमुदायवत् । अत्र यथा घटसमुदायस्यायं घटोऽयं घट इत्याकारकानुगतप्रतीतिविशेष्यत्वेन घटत्वजातिमत्त्वं तथा घटत्वादिजातिसमुदायस्यापीदं सामान्यमिदं सामान्यमित्यनुगतप्रतीतिविशेष्यत्वेन तस्यापि जातिमत्त्वप्रसंगः । एवं सिद्धजातिघटितक्लृप्तजातिसमुदायेऽपि तेनैव हेतुना जात्यन्तरस्वीकारापत्तेरित्यादिरीत्या अनन्तजातिसिद्ध्यापत्त्या इष्टापत्तेर्वक्तुमशक्यत्वात् । तथाचानुगतप्रतीतिमात्रं नानुगतधर्मसाधकं किन्तु असति बाधक इति बाधकाभावविशिष्टानुगतप्रतीतिविशेष्यत्वस्यैव जातिसाधकत्वं वाच्यम् । एवंच घटनिष्ठैकाकारानुगतप्रतीतिविशेष्यत्वस्यानन्तजातिसाधकत्वाभावेन तादृशगौरवरूपबाधकाभावविशिष्टत्वेन तत्र घटत्वजातिसिद्धावपि घटत्वादिजातिनिष्ठैकाकारानुगतप्रतीतिविशेष्यत्वस्य घटत्वांशे अनन्तजातिसाधकत्वरूपबाधकसत्त्वेन बाधकाभावविशिष्टनिरुक्तविशेष्यत्वस्यैव जातिसाधकहेतुतया विशिष्टहेतोरभावात् न तत्रानन्तजातिसिद्धिः । एकघट एवायं घटः इयं पृथिवी इदं द्रव्यमित्याद्यनुगतप्रतीतिविशेष्यत्वस्यानन्तजातिसाधकत्वात् दृष्टान्तासिद्धिः अतः हेतुघटकप्रतीतौ एकाकारत्वमपि निवेशितं निरुक्तप्रतीतीनां भिन्नाकारत्वेन न दोषः । इत्थंच स्वनिष्ठैकाकारप्रतीतिविशेष्यत्वज्ञानज्ञाप्यस्वनिष्ठानन्तजातिकत्वरूपानवस्थेति पर्यवसानात् तस्या गौरवरूपदोष एव पर्यवसानमिति जातिविधेयकानुमितिकारणविशिष्टलिङ्गज्ञानप्रतिबन्धकज्ञानविषयतया

## मञ्जूषा.

सार्थक्यामिति । अन्येतु वृत्तिताद्वयं प्रतियोगित्वं च सर्वाधारताप्रयोजकसंबन्धभिन्नसंबन्धावच्छिन्नत्वेन समवायस्वरूपान्यतरसंबन्धावच्छिन्नत्वेन वा विशेषणीयामिति न काप्यनुपपत्तिरित्याहुः । अत्रेदमाशङ्क्यते शब्देतरोद्भूतविशेषगुणानाश्रयत्वे सति ज्ञानकारणमनस्संयोगाश्रयत्वरूपेन्द्रियत्वेनोक्तत्रितयसंबन्धेन पृथिवीत्वजातिमत्त्वसंभवः तस्य प्रतिव्यक्तिविश्रान्ततया पृथिवीत्वसामानाधिकरण्यतदभावसामानाधिकरण्ययोरेकत्वासंभवात् स्वाधिकरणवृत्तितावच्छेदकत्वाभावाधिकरणवृत्तितावच्छेदकत्वसमानाधिकरणप्रतियोगितावच्छेदकधर्मवत्त्वसंबन्धेन जातिमत्त्वविवक्षणे अभावीयविशेषणतासंबन्धेन यत्स्वाधिकरणं तन्निरूपितसमवायसंबन्धावच्छिन्नवृत्तित्वात्मकसामानाधिकरण्यसंबन्धेन नीलान्यत्वादिविशिष्टजातित्वादेरपि तादृशतया तद्घटितसंबन्धेन घटत्वादिमतः पृथिवीत्वादेरपि जातित्वाभावापत्तेः । अत्राहुः इन्द्रियत्वादेर्यदा प्रत्येकविश्रान्तत्वज्ञानं तदा व्यक्त्यभेद एव जातिबाधकः यदा न तज्ज्ञानं तदा साङ्कर्यं अथवा यदि पृथिवीत्वं स्वसङ्कीर्णजातिकं स्यात् तर्हि जातिर्न स्यादिति तर्केण पृथिवीत्वे स्वसङ्कीर्णजातिकत्वाभावे सिद्धे पृथिवीत्वसङ्कीर्णत्वावच्छेदेन वा जातित्वाभावे सिद्धे इन्द्रियत्वादौ जातित्वाभावनिर्णयात्प्राक् प्रत्येकविश्रान्तत्वस्य दुर्निश्चेयतया सङ्कीर्णत्वाभावनिर्णयासंभवेन जातित्वाभाव एव पर्यवसानं बोध्यम् । इत्थं च जातित्वग्रहविरोधिसंभावनाविषयत्वादस्य जातित्वबाधकत्वं बोध्यम् । उक्तानि त्रीणि जातित्वबाधकानि अथ जातिबाधकान्युच्यन्ते अतो व्यवस्थादर्शनायाथशब्दः प्रयुक्तः । अनवस्थितिरनवस्था साच तत्र नैकरूपा प्रकृते जात्यनाश्रयवृत्तिपदार्थविभाजकधर्मशून्यत्वरूपा तज्ज्ञानस्य च तर्कविधया जातिमत्त्वग्रहप्रतिबन्धकत्वं तथाहि जात्याकारानुगतप्रतीत्या जातीनां यदि जातिमत्त्वं स्वीक्रियते तदा स्वीकृतजातावपि जात्याकारानुगतप्रतीतेरविशिष्टतया घटत्वादिजातिषु तत्समवेतजातौ च जात्यन्तरस्वीकारापत्तिः । एवं तत्रापि तदाकारानुगतप्रतीत्या घटत्वादिजातिषु तत्समवेतजातौ तद्वृत्तिजात्यन्तरे चैकजात्यन्तरस्वीकारापत्तिः

## प्रभा.

तस्य जातिबाधकत्वमवसेयमिति दिक् । रूपहानिः रूपस्य निस्सामान्यत्वघटितलक्षणस्यैव हानिरसंभवः कुत्राप्यवृत्तित्वं वा निस्सामान्यत्वे सति सामान्यान्यत्वे सति समवेतत्वस्य विशेषलक्षणत्वात् । तत्र द्रव्यादावतिव्याप्तिवारणाय निस्सामान्यत्वे सतीति । सामान्येऽतिव्याप्तिवारणाय सामान्यान्यत्वे सतीति । समवायादावतिव्याप्तिवारणाय विशेष्यदलम् । नन्वत्र निस्सामान्यत्वं न सामान्यत्वावच्छिन्नप्रतियोगिताकाभाववत्त्वरूपं सामान्यत्वस्याधेयत्वघटितत्वेन नित्यत्वघटकध्वंसघटितत्वेन च तेषां भिन्नभिन्नत्वेनाननुगतसामान्यत्वाप्रसिद्धया तदवच्छिन्नप्रतियोगिताकाभावनिवेशासंभवात् । नापि सामान्यव्यक्तयो यावत्यः तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकाभावकूटवत्त्वं तावदन्यतमत्वावच्छिन्नप्रतियोगिताकैकाभाववत्त्वं वा लक्षणघटकमिति तत्तद्रूपस्य तत्तद्व्यक्तिघटितत्वेनासर्वज्ञैः ज्ञातुमशक्यतया तद्रूपावच्छिन्नघटितलक्षणस्यापि दुर्ज्ञेयत्वापत्तिरिति चेन्न समवायसंबन्धावच्छिन्नाधेयतात्रयवत्त्वरूपमधिकरणतात्रयनिरूपितसमवायसंबन्धावच्छिन्नाधेयत्वरूपं वानुगतं सामान्यत्वं प्रतियोगितावच्छेदकमिति तदवच्छिन्नप्रतियोगिताकाभावरूपनिस्सामान्यत्वस्य लक्षणघटकतास्वीकारेणोक्तदोषाभावात् । एवं लक्षणघटकसामान्यभिन्नत्वमप्यधिकरणतानिरूपितसमवायसंबन्धावच्छिन्नाधेयत्वावच्छिन्नस्वरूपसंबन्धावच्छिन्नावच्छेदकताकप्रतियोगिताकभेदवत्त्वरूपमेवेत्युक्तदोषाप्रसक्तेः । यद्वि च सामान्यत्वस्योक्तरूपस्य लक्षणघटकत्वेऽपि लाघवात् द्रव्यत्वगुणत्वकर्मत्वान्यतमाभाववत्त्वरूपं वा सत्ताभाववत्त्वरूपं वा निस्सामान्यत्वं लक्षणघटकमिति विशेषे सामान्यस्वीकारेऽपि निरुक्तलक्षणस्य समन्वयसंभवात् कथं निरुक्तरूपहानेः जातिबाधकत्वमिति विभाव्यते तदा रूपस्य विशेषस्वरूपस्य हानिरसिद्धिरित्यर्थकरणात् रूपहानिशब्दस्य विशेषासिद्ध्यर्थकत्वात् तथाच विशेषे सामान्यस्वीकारे सामान्याश्रयस्य सामान्यरूपेणैव भेदसाधकत्वनियमात् परमाणुगततत्तदेकत्वादेरिव परमाणुगतविशेष-

## मञ्जूषा.

एवं तत्रापि तथाच जात्यनाश्रयजातिरेव न प्रसिद्ध्यति तथाच यदि जातिर्जातिमती स्यात्तर्हि जात्यनाश्रयवृत्तिपदार्थविभाजकधर्मवती न स्यादिति तर्केण जातिर्जातिमतीति ज्ञानं प्रतिबध्यत इति ।

**रूपहानिरिति ॥** रूपं निस्सामान्यत्वे सति सामान्यभिन्नत्वे सति समवेतत्वरूपं विशेषलक्षणं तस्य हानिरित्यर्थ इति केचित् तन्न तस्यैव विशेषलक्षणत्वं वक्तव्यमिति निर्बन्धाभावात् न ह्यस्मदुक्तलक्षणानुरोधिनी विषयसिद्धिः किंतु प्रमाणानुरोधिनीति । रूपं स्वरूपं तच्च विशेषाणां विशेषत्वं सजातीयपरमाणूनां परस्परव्यावर्तकत्वलक्षणं तस्य हानिरभावः तज्ज्ञानस्य विशेषो जातिमानिति ज्ञानं प्रति तर्कविधया प्रतिबन्धकत्वं तथाहि विशेषाणां जातिमत्त्वे सामान्याश्रयाणां सामान्यरूपेणैव भेदसाधकत्वनियमात् विशेषाणां सामान्यरूपेणैव भेदसाधकत्वे तु विशेषाणां परमाणुषु परस्परभेदसाधकत्वं न संभवति व्यभिचारात् तादृशनियमानङ्गीकारे परमाणुगतैकत्वादीनां तत्तद्व्यक्तित्वेनैव परमाण्वन्तरभेदसाधकत्वसंभवेन विशेषस्य वैयर्थ्यप्रसङ्गात् । तथाच यदि विशेषो जातिमान् स्यात्तर्हि परमाणुषु परस्परव्यावर्तको न स्यादिति तर्को बोध्य इति केचित् । अत्र विचार्यते सामान्याश्रयस्य सामान्यरूपेणैव भेदसाधकत्वमित्यस्य कोऽर्थ इति किं सामान्याश्रयनिष्ठभेदकत्वं सामान्यरूपेणैवेति किंवा सामान्याश्रयस्य अवश्यं सामान्यरूपेण भेदकत्वमिति । अथवा सामान्यरूपेण भेदकत्वं सामान्याश्रयस्यैवेति आद्ये नित्यज्ञानादीनां ईश्वरलक्षणत्वं जन्यज्ञानादीनां जीवलक्षणत्वं च न स्यात् नित्यत्वजन्यत्वादिघटितरूपेण तेषां व्यावर्तकतायास्तत्रासंभवात् । नच सामान्यरूपेणैवेत्यस्य सामान्यघटितरूपेणैवेत्यर्थः । अतो नित्यत्वविशिष्टज्ञानत्वादिना तेषां व्यावर्तकता युज्यते एतत्त्वविशिष्टविशेषत्वरूपस्य एतद्विशेषत्वस्य तु परमाण्वन्तरभेदकतावच्छेदकत्वं न संभवति विशेषत्वांशवैयर्थ्यापत्तेरिति वाच्यम् । तथासति नित्यद्रव्याणीतरेभ्यो भिद्यन्ते जात्यतिरिक्तनित्यधर्मवत्त्वादित्यनुमानोच्छेदापत्तेः परमाण्वेकत्वादीनां तेन रूपेण भेदकतायास्तत्रासंभवात् व्याप्तिपक्षधर्मताग्रहसत्त्वे तत्रानुमितेर्दुरपह्नवतया इष्टापत्तेरयोगात् द्वितीये विशेषाणां परमाणुषु परस्परभेदकतायां विशेषत्वेन रूपेणासंभवेऽपि नित्यद्रव्यत्वाव-

प्रभा.

व्यक्तेरपि तत्तद्व्यक्तित्वेन परमाण्वन्तरभेदानुमापकत्वासंभवेन विशेषपदार्थासिद्धिप्रसंगादिति निगूढार्थः । विशेषासिद्धेः कथं जातिबाधकत्वमिति चेदित्थम् । अयं परमाणुस्तत्परमाणोर्भिन्न इत्याकारकनिश्चयस्य प्रत्यक्षरूपता न संभवति अतीन्द्रियविषयकत्वात् न शाब्दरूपता वेदादिषु तादृशशब्दाभावात् आधुनिकतादृशशब्दानामाप्तोक्तत्वानिश्चयाच्च किन्त्वनुमितिरूपो वाच्यः । तस्य लिङ्गज्ञानसाध्यत्वेन परमाणुगतैकत्वादेः सामान्यरूपेण व्यभिचारित्वात् तत्तद्व्यक्तित्वेनानुमापकत्वासंभवाच्च क्लृप्तमेव किंचिल्लिङ्गज्ञानमनुमेयम् । तथाहि तादृशानुमितिस्सामान्यानाश्रयकिंचिल्लिङ्गज्ञानजन्या सामान्याश्रयलिङ्गकत्वाभाववत्त्वे सति अनुमितित्वात् धूमप्रागभावलिङ्गकवह्न्यनुमितिवदित्यनुमानात् सामान्यानाश्रययत्किंचिल्लिङ्गज्ञानजन्यत्वे सिद्धे विशेषो यदि सामान्यवान् स्यात् तदानुमितिविषयो न स्यादित्यनिष्टप्रसञ्जनात्मकतर्कस्य मणिमन्त्रादिन्यायेन जातिप्रकारकज्ञानप्रतिबन्धकत्वेनानुमितिविषयत्वाभावरूपासिद्धेः तादृशप्रतिबन्धकज्ञानविषयत्वरूपजातिबाधकत्वमक्षतमेवेति दिगिति हृदयम् । असंबन्धः प्रतियोगितानुयोगितान्यतरसंबन्धेन समवायाभावः । इदंचान्यतरत्वेन संसर्गत्वाभ्युपगमेन । अन्यथा प्रतियोगितासंबन्धेन समवायाभाव-अनुयोगितासंबन्धेन समवायाभाव-एतदुभयवत्त्वमेव । इदमपि वृत्त्यनियामकसंबन्धस्याभावप्रतियोगितावच्छेदकत्वाङ्गीकारेण । अन्यथा समवायानुयोगित्वसामान्याभावसमवायप्रतियोगित्वसामान्याभावैतदुभयवत्त्वं समवायानुयोगित्वसमवायप्रतियोगित्वैतदन्यतरत्वावच्छिन्नप्रतियोगिताकाभाववत्त्वं वाऽसंबन्धपदार्थ इति ज्ञेयम् । एतस्य जातिबाधकत्वं कथमिति चेत् इत्थम् । जातिबाधकत्वं जातित्वजात्यधिकरणत्वान्यतरप्रका-

मञ्जूषा.

च्छिन्नेष्वितरभेदकताया विशेषत्वेन रूपेण संभवेन तादृशनियमव्याघाताभावात् । नापि तृतीयः अप्रसक्तप्रतिषेधापत्तेः प्रकृतानुपयोगाच्च प्रमाणमपि नास्मिन्नियमे व्यक्तमीक्षामहे तस्मात्सामान्याश्रयस्येत्यादिनियमोपष्टम्भेन विशेषस्य जातिमत्त्वनिराकरणं नातिरमणीयमित्यस्माकं प्रतिभाति । वस्तुतस्तु परमाणुषु परस्परव्यावर्तकतया विशेषास्सिध्यन्तः अव्यावृत्तधर्मो न व्यावर्तक इति परस्परमव्यावृत्तानां व्यावर्तकत्वासंभवेन तत्र व्यावर्तकान्तरापेक्षायां अनवस्थापत्त्या स्वत एव परस्परव्यावृत्तास्सिध्यन्ति स्वतो व्यावृत्तत्वञ्च व्यावर्तकान्तरानपेक्षसिद्धिविषयपरस्परभेदकत्वं तच्च विशेषाणामेकजातीयत्वेनोपपद्यते एकजातीयानां हि परस्परभेदः प्रत्यक्षतोऽवगन्तव्यः परस्परव्यावृत्तधर्माद्वा न चेह प्रत्यक्षसंभवः परस्परव्यावर्तकधर्मस्तु अनवस्थितः एवंच विशेषाणां अव्यावृत्तत्वात् व्यावर्तकता न स्यात् । एवं च विशेषाणां रूपं व्यावर्तकान्तरानपेक्षसिद्धिविषयपरस्परभेदकत्वरूपस्वतोव्यावर्तकत्वं परमाणुपरस्परव्यावर्तकत्वमेव वास्तु तस्य हानिः विशेषाणां जातिमत्त्वे बाधिकैवेति मन्यामहे । असंबन्धः समवायाभावः स च यदि प्रतियोगितासंबन्धेन समवायाभावः तदा गगनादौ जात्यभावप्रसंगः यद्यनुयोगितासंबन्धेन तदभावः तदा तेनैव सामान्यविशेषयोर्जातिमत्त्ववारणादनवस्थितिरूपहान्योः पृथग्जातिबाधकत्वं न स्यादित्यालोच्य प्रतियोगितानुयोगितान्यतरसंबन्धेन समवायाभाव इत्युक्तवान्महादेवः । प्रत्येकसंबन्धावच्छिन्नप्रतियोगिताकाभावद्वयादयमतिरिक्तोऽभाव इति न वैयर्थ्यशङ्का । यदि चान्यतरत्वेन संबन्धानां न प्रतियोगितावच्छेदकसंबन्धता स्वीक्रियते तदा समवायप्रतियोगित्वसमवायानुयोगित्वान्यतराभाव एव तथा अयं च समवायाभावयोर्जातिमत्त्वे बाधकः जातिबाधकत्वं चास्य तदभावव्याप्यवत्ताज्ञानमुद्रया तथाहि यत्र समवायानुयोगित्वं नास्ति न तत्र जातिर्भवितुमर्हतीति तत्समवेतत्वासंभवात् तथाच समवायानुयोगित्वाभावस्य जात्यभावव्याप्यत्वे सिद्धे सुतरां तद्व्याप्यस्य समवायप्रतियोगित्वानुयोगित्वान्यतराभावस्य जात्यभावव्याप्यत्वमिति । अस्मद्गुरुचरणास्तु असम्बन्धो जातित्वे जातिमत्त्वे च बाधकः तथाहि यथा समवायानुयोगित्वाभावो जात्यभावव्याप्यः तथा समवायप्रतियोगित्वाभावो जातित्वाभावव्याप्यः ततश्च समवायप्रतियोगित्वानुयोगित्वान्यतराभावस्य जातित्वजातिमत्त्वान्यतराभावव्याप्यत्वमक्षतमिति तादृशान्यतरत्वावच्छिन्नवत्ताज्ञानविरोधित्वं असंबन्धस्य तथाच व्यक्त्यभेदादित्ययं जातित्वबाधकं अनवस्थि-

## प्रभा.

रकज्ञानप्रतिबन्धकज्ञानविषयत्वम् । तच्च प्रकृते अभावो जातित्वजात्यधिकरणत्वान्यतराभाववान् समवाय-प्रतियोगित्वसमवायानुयोगित्वान्यतराभाववत्त्वात्समवायवत् समवायेऽपि साध्यस्यासिद्धत्वे व्यतिरेकव्याप्तौ घटादिदृष्टान्तो बोध्यः । तथाचैतादृशासंबन्धप्रकारकाभावविशेष्यकज्ञानस्य जातित्वजात्यधिकरणत्वान्यतरप्रकारकज्ञानप्रतिबन्धकनिरुक्तानुमित्यात्मकज्ञानजनकत्वेन विरोधिज्ञानसामग्रीत्वात्तदभावव्याप्यवत्तानिश्चयत्वाच्च तस्यापि तादृशान्यतरप्रकारकज्ञानप्रतिबन्धकत्वमव्याहतमिति तद्विषयत्वादसंबन्धस्य जातिबाधकत्वम् । यद्यपि समवायप्रतियोगित्वसामान्याभावस्य जातित्वाभावानुमापकत्वात् समवायानुयोगित्वसामान्याभावस्य च जात्यधिकरणत्वाभावसाधकत्वात् प्रत्येकलिङ्गेन प्रत्येकाभावसाधनेनैवोभयोरसंबन्धत्वे सिद्धे उक्तहेतुद्वयनिष्ठोभयत्वेन तादृशप्रतियोगित्वानुयोगित्वान्यतरत्वावच्छिन्नाभावत्वेन वा तादृशान्यतराभावानुमापकत्वोपपादनं व्यर्थमेव तथाप्येकेन रूपेण अन्यतराभावानुमापकत्वसंभवेऽपि प्रत्येकरूपेणैकैकस्य प्रत्येकसाध्यानुमापकत्वस्वीकारे व्याप्तिद्वयकल्पनेन परामर्शद्वयकल्पनेन च गौरवप्रसङ्गात् द्वयोः प्रत्येकरूपेण जाति-

## मञ्जूषा.

तिरूपहानौ तु जातिबाधिके असंबन्धस्तूभयबाधकः तेन समवायाभावयोर्जातित्वं जातिमत्त्वं च बाध्यत इत्याहुः अथ समवायाभावयोस्समवायप्रतियोगित्वाभावस्य जातित्वाभावनिश्चयात्समवायानुयोगित्वाभावस्य च जात्यभावनिश्चयात्प्रागदुर्निश्चेयतया कथं जातित्वजातिमत्त्वग्रहप्रतिबन्धकत्वं इति चेन्न जातित्वजातिमत्त्वाभावनिश्चयात्प्रागेव तयोर्निश्चेतुं शक्यत्वात् । तथाहि समवायस्यापि समवेतत्वमभ्युपेत्य नित्यानेकसमवेतत्वाज्जातित्वस्वीकारे समवायप्रतियोगिकसमवायस्यापि समवायत्वाविशेषात्समवेतत्वापत्त्याऽनवस्थानात् एवं समवायो न समवायानुयोगी तत्प्रतियोग्यनिरूपणात् तद्धि न समवायत्वाभावत्वप्रमेयत्वादि तथासति तत्समवेतस्य तदन्यतया समवायनिष्ठानां तेषां समवायातिरिक्तत्वस्वीकारे गौरवात् किंच समवायत्वं यदि समवेतं स्यात् तर्हि समवायानुयोगिकस्समवायत्वप्रतियोगिको यस्समवायः तत्रापि समवायत्वं समवेतं स्यादेवं तदनुयोगिकसमवायेऽपीत्यनवस्था तस्मात्समवायस्य यत्कुत्रापि समवाये स्वरूपमेव संबन्धः सच यद्यपि वस्तुगत्या समवायानतिरिक्तस्तथापि तस्य स्वरूपत्वेनैव संबन्धता नतु समवायत्वेनेति बोध्यं एवमत्यन्ताभावो न जातिः असमवेतत्वात् अन्यथा घटानयनानन्तरमपि घटाभावबुद्धिस्स्यात् प्रतियोगिनो घटाभावस्यानुयोगिनो भूतलस्य समवायस्य च संबन्धस्याव्यवहितपूर्वं प्रतीतस्यानपगमात् ममतु विशेषणताख्यस्य संबन्धस्य तदानीमभावात् भूतलादिस्वरूपस्य वा तत्कालान्तर्भावेण संबन्धत्वानुपगमान्नानुपपत्तिः नत्वेवं समवायस्सतोः प्रतियोग्यनुयोगिनोः कदाचित्संबन्धो भवति कदाचिन्नेति क्वचिदृष्टं नवा जातेः कालिकाव्याप्यवृत्तित्वं किंच समवाये यो घटात्यन्ताभावः स यदि समवायसमवेतः स्यात्तर्हि समवायानुयोगिको घटात्यन्ताभावप्रतियोगिको यस्समवायः सोऽप्यतिरिक्तस्स्यात् एवं तत्राप्यनवस्था एवं घटात्यन्ताभावे यः पटात्यन्ताभावस्स यदि घटात्यन्ताभावसमवेतस्स्यात्तर्हि सोऽधिकरणभिन्नस्स्यात् नहि सएव तत्समवेतो भवितुमर्हति अन्यथात्यभावस्य संबन्धे समवायसंज्ञा पारिभाषिकी स्यान्नतु वास्तविकं समवायत्वं नह्यभिन्नयोस्समवायस्संबन्धः स्वरूपं तु स्यात् प्रमेयत्वे स्वरूपसंबन्धेन वर्तमानस्य प्रमेयत्वस्याधिकरणस्वरूपानातिरिक्तत्वात् एवमत्यन्ताभावो न जातिमान् असमवायित्वात् नहि स समवायानुयोगी तत्प्रतियोग्यनिरूपणात् तद्धि नात्यन्ताभावत्वादि तथासति अत्यन्ताभावनिष्ठानां धर्माणां तदतिरिक्तत्वस्वीकारे गौरवात् किंचैवं घटात्यन्ताभावे यदत्यन्ताभावत्वं तत्र यो घटात्यन्ताभावस्स किमाश्रयभूताद्धटात्यन्ताभावाद्भिद्यते उत न आद्ये गौरवं द्वितीये तत्समवेतस्य तदाश्रयत्वानुपपत्तिः नहि स्ववृत्तिधर्मसमवेतत्वं ज्ञातेस्तदन्यस्य वा कस्यचिदृष्टं लोके स्वरूपसंबन्धेन वर्तमानत्वंतु स्ववृत्तिप्रमेयत्वे प्रमेयत्वस्य दृष्टं एवमन्योन्याभावस्य समवेतत्वे समवाये घटान्योन्याभावस्य समवायान्तरस्वीकारापत्तिः घटान्योन्याभावाधिकरणस्य घटान्योन्याभावस्य भेदापत्तिश्च अन्योन्याभावस्य समवायित्वे च घटान्योन्याभावे यदन्योन्याभावत्वं तस्य घटान्योन्याभावाश्रयत्वानुपपत्तिः स्वस्य स्ववृत्तिधर्मसमवे-

परभिन्ना तु या जातिः सैवापरतयोच्यते ।
द्रव्यत्वादिकजातिस्तु परापरतयोच्यते ॥ ९ ॥
व्यापकत्वात्परापि स्याद्व्याप्यत्वादपरापि च ।

अधिकदेशवृत्तित्वात्परत्वं तदपेक्षया चान्यासां जातीनामपरत्वम् । पृथिवीत्वाद्यपेक्षया द्रव्यत्वस्याधिकदेशवृत्तित्वाद्व्यापकत्वात्परत्वं सत्तापेक्षयाल्पदेशवृत्तित्वाद्व्याप्यत्वादपरत्वम् ॥ ८-९ ॥

**प्रभा.**

बाधकत्वे असंबन्धपदस्य नानार्थकत्वापत्तेश्चेति तदुपेक्षितामिति हृदयम् ॥ **मुक्तावल्यां सकलजात्यपेक्षयाऽधिकदेशवृत्तित्वादिति** ॥ अत्र सकलजात्यपेक्षयाऽधिकदेशवृत्तित्वं च स्वभिन्नसकलजातिघटकप्रत्येकसमानाधिकरणाभावीयवैशिष्ट्यव्यासज्यवृत्तिधर्मानवच्छिन्नसमवायसंबन्धावच्छिन्नप्रतियोगिताव्यक्तयो यावत्यः तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकाभावकूटवत्त्वम् । सत्तायाः सत्तापेक्षयाऽधिकदेशवृत्तित्वव्यवहारवारणाय स्वभिन्नत्वं सकलजातिविशेषणं सत्ताया अपि विशिष्टाभावादिप्रतियोगित्वेन संबन्धान्त-

**मञ्जूषा.**

तत्वानङ्गीकारात् ध्वंसप्रागभावयोस्तूत्पादविनाशशालित्वादेव जातित्वाप्रसक्तिः तत्र च ध्वंसस्य समवेतत्वाङ्गीकारे तु कपालसमवेतकार्यनाशं प्रति कपालनाशस्य हेतुतया कपालनाशे सति कपालसमवेतरूपादेरिव घटध्वंसस्यापि नाशापत्त्या विनष्टघटस्य पुनरुन्मज्जनप्रसङ्गः कार्यतावच्छेदककोटौ भावत्वनिवेशे च गौरवं प्रागभावे स्वभावत्वहेतुना असमवेतत्वं साधनीयमेवं तेनैव हेतुना समवायित्वाभावोऽपि ध्वंसप्रागभावयोस्साधनीयः युक्त्यन्तरं तु मृग्यम् । ननु सामान्यं द्विविधमित्यादिमूलोक्तविभागोऽनुपपन्नः परापरतया निरूपयिष्यमाणद्रव्यत्वाद्यसंग्रहात् परत्वेनापरत्वेन परापरत्वेन च विभजनीयतया न्यूनताया दुर्वारत्वात् न चापरं द्विविधं केवलापरं परापरं चेति परापरस्यापरत्वरूपविभाजकधर्माक्रान्तत्वान्न न्यूनतेति वाच्यम् । परभिन्ना तु या जातिस्सैवापरतयोच्यत इत्युक्तस्य परभिन्नत्वरूपस्यापरत्वस्य घटत्वाद्यपेक्षया परभूतेषु द्रव्यत्वादिषु असंभवादिति चेन्न परभिन्ना तु या जातिरित्यस्य केवलापरत्वनिर्वचनपरत्वात् तथाहि द्रव्यादित्रिकवृत्तिरित्यादिना परजातिमुक्त्वा द्विविधामपरजातिं क्रमेणाचष्टे ॥ **परभिन्नेत्यादिना** ॥ सैवेत्येवकारो भिन्नक्रमः अपरतयैवेत्यर्थः । एवकारेण परत्वव्युदासात् केवलत्वलाभः तथा च या जातिर्यत्किंचिदपेक्षयापि परा न भवति सा केवलापरेत्यर्थः सा च घटत्वादिरूपा अतएव बहुषु पुस्तकेषु सैवापरतयोच्यत इत्यत उपरिष्टाद्द्रव्यत्वादीत्यतश्च प्राक् घटत्वादिकजातिस्तु तेनापरतयोच्यत इत्यपि पाठः । तत्र चापरतयेत्यस्य अपरतयैवेत्यर्थः यस्यां त्वपरजातौ परत्वमपि सा परापरेत्याह ॥ **द्रव्यत्वादीति** ॥ तथा च सर्वजातिव्यापकत्वं परत्वं जातिव्याप्यत्वमपरत्वं तत्र च जात्यव्यापकत्वे सति जातिव्याप्यत्वं केवलापरत्वं जातिव्याप्यत्वे सति जातिव्यापकत्वं परापरत्वं तदेतदभिप्रेत्यैवोक्तम् ॥ **मुक्तावल्यां सकलजात्यपेक्षया सत्तायाः परत्वं तदपेक्षयाऽन्यासां जातीनामपरत्वमिति** ॥

**दिनकरीयम्.**

**तदपेक्षया चेति** ॥ सत्तापेक्षया चेत्यर्थः । सत्ताजातिश्च द्रव्यं सत् गुणस्सन्नित्याद्यनुगतप्रतीत्यैव सिध्यति । अत्र नव्याः सन्निति प्रतीतिविषयो भावत्वमेव अत एव सामान्यादिष्वपि सदिति व्यवहारः न त्वतिरिक्ता द्रव्यादित्रिकवर्तिनी सत्ताख्या जातिरिति तेन परमपरं द्विविधं सामान्यं परं सत्तेति वैशेषिकविभागो निर्युक्तिकत्वादनादेय इत्याहुः । तन्न सत् । ध्वंसकारणतावच्छेदकतया सत्ताजा-

**रामरुद्रीयम्.**

**भावत्वमेवेति** ॥ नन्वेवमिह भूतले घटाभावः सन्निति प्रतीत्यनुपपत्तिः घटाभावे भावत्वविरहादिति वाच्यं तदनुरोधेनापि कालसम्बन्धस्यैव सत्त्वरूपत्वौचित्यात्, तावतापि सत्ताजातेरसिद्धेरिति भावः ॥ **सत्ताजातिसिद्धेरिति** ॥ ननु प्रतियोगितया ध्वंसं प्रति समवायेन सतः कारणत्वे गगनादीनां तदापत्तिरित्यत-

## प्रभा.

रावाच्छिन्नाभावप्रतियोगित्वेन च तादृशव्यवहारानुपपत्तिः । अतः प्रतियोगित्वे वैशिष्ट्यव्यासज्यवृत्तिधर्मानवच्छिन्नत्वं समवायसंबन्धावच्छिन्नत्वं च निवेशितमिति प्राञ्चः । तत्र व्यापकत्वादिघटितत्वेन गौरवात् । अन्येतु सकलशब्दस्य व्यापकत्वार्थतया स्वभिन्नजातित्वव्यापकस्वसमानाधिकरणाभावप्रतियोगित्वकत्वमेव सकलजात्यपेक्षयाऽधिकदेशवृत्तित्वमित्याहुः तदापि नोक्तगौरवापत्तेः । अस्मद्गुरुचरणास्तु

## मञ्जूषा.

अथवा परभिन्नत्वपरसामान्यलक्षणमेव तत्रच परशब्दस्सत्तात्वेन रूपेण द्रव्यादित्रिकवृत्तित्वेन वा पूर्वोपस्थितसत्तामाचष्टे सैवेत्येवकारश्च कात्स्न्र्यपरः सा सर्वापीत्यर्थः तथाच सत्ताभिन्नत्वं अपरजातिसामान्यलक्षणं तत्रच घटत्वादिकजातिस्त्वित्यादिना केवलापरजातिरुक्ता द्रव्यत्वादिकजातिस्त्वित्यादिनातु परापरजातिः नच घटत्वादिजातिमेव अपरत्वेन निरुच्य तद्भिन्नत्वेन सर्वासां जातीनां परत्वमुक्त्वा तत्र

## दिनकरीयम्.

तिसिद्धिः । यत्र प्रतियोगितासम्बन्धेन ध्वंसोत्पत्तिस्तत्रैव तादात्म्यसम्बन्धेन सादिति सामानाधिकरण्यप्रत्यासत्त्या कार्यकारणभावात् । न च प्रागभावे व्यभिचारः प्रागभावे सत्ताविरहादिति वाच्यम् । प्रागभाववृत्तिप्रतियोगिताभिन्नप्रतियोगितायाः कार्यतावच्छेदकसम्बन्धत्वादिति । वस्तुतस्तु समवायेन सत्तावच्छिन्नं प्रति तादात्म्येन द्रव्यत्वेन कारणतया जन्यतावच्छेदकतया सत्ताजातिसिद्धिः । तादृशकार्यकारणभावे मानाभाव इतितु न स्वाश्रयसमवेतत्वसम्बन्धेन नीलादेर्नीलादावपि सत्त्वात्तत्र नीलोत्पत्तिवारणाय तादृशकार्यकारणभावस्यावश्यकत्वात् । नच स्वाश्रयसमवेतत्वविशिष्टद्रव्यत्वसम्बन्धेन नीलादेर्हेतुतयैव न तदापत्तिरिति वाच्यम् । तादृशसमवेतत्वद्रव्यत्वयोर्विशेषणविशेष्यभावे विनिगमनाविरहेण कारणताबाहुल्यापत्तेः । कालिकसमवायोभयसम्बन्धस्य कार्यतावच्छेदकतावच्छेदकत्वात्सत्ताया नित्यसाधारण्येऽपि न क्षतिरित्यन्यत्र विस्तरः ॥ ८ ॥ ९ ॥

## रामरुद्रीयम्.

ङ्कामपनेतुं तादात्म्येन सतः कारणतां ग्राहयति ॥ **यत्रेति** ॥ न चैतादृशकार्यकारणभावानङ्गीकारे सामान्यादौ ध्वंसापत्तिरेव दूषणं एतादृशकार्यकारणभावस्वीकारेऽपि गगनादौ तदापत्तिरशक्यपरिहारैवेति वाच्यम् । कालिकसमवायोभयसम्बन्धस्यैव कारणतावच्छेदकताघटकत्वादिति भावः । न चैवमपि महाकाले प्रतियोगितया ध्वंसापत्तिः समवायकालिकविशेषणताभ्यां तस्यापि सत्तावत्त्वादिति वाच्यम् । महाकालान्यत्वेन कालिकविशेषणतायाः विशेषणीयत्वादेवमुत्तरत्राप्यनुसन्धेयम् ॥ **व्यभिचार इति** ॥ प्रतियोगितया प्रागभावे ध्वंसोत्पत्त्येति शेषः ॥ **कार्यतावच्छेदकसम्बन्धत्वादिति** ॥ प्रागभाववृत्तिप्रतियोगितासम्बन्धेन ध्वंसं प्रति तु प्रागभावत्वेन हेतुत्वान्तरमेवेति भावः । नन्वेतत्कार्यकारणभावस्य प्रयोजनं प्रागभाववृत्तिप्रतियोगितासम्बन्धेन प्रागभावाभिन्ने ध्वंसापत्तिवारणमेव तथा च तुल्ययुक्त्या घटादिवृत्तिप्रतियोगितासम्बन्धेन ध्वंसं प्रति घटत्वादिनापि कारणत्वमावश्यकं एवं च क्लृप्ततत्तत्कारणविरहादेव सामान्यादौ ध्वंसापत्तिवारणात् उक्तकार्यकारणभावो निष्प्रमाणक एवेत्यस्वरसात्कार्यतावच्छेदकतया सत्तां साधयति ॥ **वस्तुतस्त्वित्यादिना** ॥ **विनिगमनाविरहेणेति** ॥ नच स्वाश्रयसमवेतत्वद्रव्यत्वोभयसम्बन्धेनैव नीलादेः कारणताङ्गीकरणीया नातो विनिगमनाविरहापत्तिरिति वाच्यम् । द्रव्यत्वस्य नीलादिप्रतियोगिकत्वे मानाभावेन तत्संसर्गकत्वासम्भवात् । विशिष्टस्य संसर्गत्वे तु विशेषणविधया प्रविष्टस्याश्रयत्वस्य नीलादिप्रतियोगिकतया तत्संसर्गत्वसम्भवादिति भावः । ननु सत्तायाः नित्यसाधारणत्वेन कथं कार्यतावच्छेदकत्वसम्भव इत्याशङ्कां निराकुरुते ॥ **कालिकेति** । ननु कालिकसमवाययोरुभयोः कार्यतावच्छेदकताघटकसम्बन्धत्वे गौरवादुक्तकारणस्य कार्यतावच्छेदकतया जन्यमात्रसमवेतैव सत्ता सिध्येत् ननु जन्यनित्यसाधारणी भवदभिमतसत्तेत्याशङ्कायामाह ॥ **अन्यत्र विस्तर इति** ॥ अयं भावः । गगनादौ सत्तानङ्गीकारे द्रव्यत्वादिना साङ्कर्यापत्त्या सत्ताया जातित्वमेव न स्यात् साङ्कर्यस्यापि जातिबाधकतायाः प्राचीनैरङ्गीकारादिति ॥ ८ ॥ ९ ॥

## प्रभा.

स्वभिन्नसकलजातिघटकप्रत्येकावच्छिन्नप्रतियोगिताकान्योन्याभाववन्निरूपितवृत्तिताकूटवत्त्वमेव स्वभिन्नसकलजात्यपेक्षयाऽधिकदेशवृत्तित्वमिति नोक्तदोषावकाश इति व्याचक्रुः ॥ **तदपेक्षयाऽन्यासां जातीनामिति॥** अत्र सत्तामेक्षया सकलजातिनिष्ठाल्पदेशवृत्तित्वं तन्निरूपितव्याप्यत्वमेव । तच्च सत्ताभिन्नत्वे सति सत्तावदन्यनिरूपितवृत्तित्वाभाववत्त्वं न भवति सत्तावदन्यध्वंसनिरूपितवृत्तित्वमादाय व्याप्यत्वानुपपत्तेः समवायसंबन्धावच्छिन्नवृत्तित्वनिवेशे अप्रसिद्ध्यापत्तेः सर्वाधारताप्रयोजकसंबन्धभिन्नसंबन्धावच्छिन्नवृत्तित्वनिवेशे गगनादेः सत्ताव्याप्यत्वापत्तेश्च । किन्तु सत्ताभिन्नत्वे सति सत्तावदन्यनिष्ठाधिकरणत्वानिरूपकसमवायसंबन्धावच्छिन्नाधेयतावत्त्वरूपं सकलजातिनिष्ठं सत्तानिरूपितव्याप्यत्वमिति न कश्चिद्दोष इत्याहुः प्राञ्चः । अस्मद्गुरुचरणास्तु सत्तासमानाधिकरणभेदप्रतियोगितानिरूपितसमवायसंबन्धावच्छिन्नव्यासज्यवृत्तिधर्मानवच्छिन्नावच्छेदकत्वमेव स्वभिन्नसकलजातिनिष्ठं व्याप्यत्वं इदमेवच सकलजातीनां अपरत्वव्यवहारनियामकम् । सत्ताधिकरणगगनादौ कालिकसंबन्धेन सत्तावद्भेदमादाय सत्ताघटत्वोभयवद्भेदमादाय सत्तायां सत्तानिरूपितव्याप्यत्वापातिवारणायावच्छेदकतायां समवायसंबन्धावच्छिन्नत्वं व्यासज्यवृत्तिधर्मानवच्छिन्नत्वं च निवेशितम् । अनयैव दिशा द्रव्यत्वादेरपि व्यापकत्वव्याप्यत्वे उपपादनीये इति व्याचख्युः । ननु सत्तायामेव प्रमाणाभावात् तस्याःसकलजात्यपेक्षया परत्वोपपादनमसङ्गतमिति चेन्न द्रव्यं सद्गुणस्सन्नित्याद्यनुगतप्रतीतेरेव तत्र प्रमाणत्वात् । प्राञ्चस्तु यदि सन्निति प्रतीतिः न सत्ताविषयिणी सामान्यादौ सन्निति प्रतीत्यनापत्तेः किंतु भावत्वमेवेति द्रव्यादित्रिकवृत्तिसत्तायां नोक्तानुगतप्रतीतिः प्रमाणमिति विभाव्यते तदा ध्वंसकारणतावच्छेदकतयैव सत्ताजातिसिद्धिर्बोध्या । प्रतियोगितासंबन्धेन ध्वंसं प्रति तादात्म्येन प्रतियोगिनः कारणतया तस्या द्रव्यादित्रिकवृत्तितया तदवच्छेदकतया त्रिषु सत्ताजातिसिद्धिसंभवात् । नच प्रागभावेऽपि प्रतियोगितासंबन्धेन ध्वंसरूपकार्यसत्त्वेन तस्यापि तादात्म्येन हेतुत्वावश्यकतया तत्साधारणधर्मस्यैव कारणतावच्छेदकत्वं वाच्यमिति न तस्य जातिरूपत्वसंभव इति वाच्यं प्रागभाववृत्तिप्रतियोगिताभिन्नप्रतियोगित्वस्यैव कार्यतावच्छेदकसंबन्धत्वादुक्तसंबन्धेन नाशरूपकार्यं प्रति द्रव्यादित्रिकवृत्तिधर्मस्यैव कारणतावच्छेदकत-

## मञ्जूषा.

सत्तायाः केवलपरत्वं द्रव्यत्वादीनां च परापरत्वं कुतो नोक्तमिति वाच्यम् । घटत्वादीनां बहुतया तेषां अपरभिन्नत्वरूपपरत्वघटकभेदप्रतियोगितया निवेशे गौरवादिति सर्वं समञ्जसम् । द्रव्यादित्रिकवृत्तिरिति परजातेर्लक्षणं तदर्थश्च द्रव्यवृत्तित्वे सति गुणवृत्तित्वे सति कर्मवृत्तित्वं अत्रच द्वयोरेव दळयोर्लक्षणत्वसंभवे तृतीयदळोपादानं लक्षणत्रयलाभाय तद्यथा द्रव्यवृत्तित्वे सति गुणवृत्तित्वं द्रव्यवृत्तित्वे सति कर्मवृत्तित्वं गुणवृत्तित्वे सति कर्मवृत्तित्वं च गुणकर्ममात्रवृत्तिवैजात्यस्वीकारपक्षे तु तृतीयलक्षणस्यातिव्याप्तत्वाल्लक्षणद्वयमेवाभिप्रेतम् । अथवा द्रव्यादित्रिकवृत्तिरित्यनेन स्वेतरनिखिलजातिव्यापकत्वं विवक्षितं तच्च स्वसमानाधिकरणान्योन्याभावप्रतियोगितानवच्छेदकस्वेतरजातिकभिन्नत्वं तद्भिन्नत्वमपरत्वं स्वसमानाधिकरणान्योन्याभावप्रतियोगितानवच्छेदकस्वेतरजातिकत्वपर्यवसितं द्वितीयकल्पे परभिन्नेत्यनेनाभिहितं प्रथमकल्पे त्वर्थात्सिद्धम् । प्रथमकल्पे परभिन्नेत्यस्य स्वसमानाधिकरणयत्किंचिज्जातिमदन्योन्याभावसमानाधिकरणाभिन्नेत्यर्थो बोध्यः कल्पद्वयेऽपि व्यापकत्वादित्यस्य स्वसमानाधिकरणयत्किंचिज्जातिमदन्योन्याभावसमानाधिकरणत्वादिति व्याप्यत्वादित्यस्य च स्वसमानाधिकरणान्योन्याभावप्रतियोगितानवच्छेदकस्वेतरजातिकत्वादित्यर्थः । इमे एव चाधिकदेशवृत्तित्वाल्पदेशवृत्तित्वे अत्रच सत्ताजातिसिद्धिः प्रागेवास्माभिरुपदर्शिता अन्येतु सामान्यादौ प्रतियोगितासंबन्धेन ध्वंसत्वावच्छिन्नाभावे तत्तत्प्रतियोगिव्यक्तिभेदकूटस्य प्रयोजकत्वकल्पने गौरवात्सामान्यतः प्रतियोगितासंबन्धेन ध्वंसत्वावच्छिन्नं प्रति तादात्म्यसंबन्धेन सतः कारणताया वाच्यतया तदवच्छेदकतया सत्ताजातिसिद्धिः तस्याश्च द्रव्यत्वादिना संकरवारणाय नित्यसाधारण्यं नचैवं परमाण्वादौ ध्वंसाभावे सद्भेदस्य प्रयोजकत्वासंभवेन तत्तत्प्रतियोगिव्यक्तिभेदकूटस्य प्रयोजकताया अवश्यं वाच्यतया सामान्यादावपि तत्र तस्यैव कूटस्य

## प्रभा.

या सिद्धस्य जातिरूपत्वे बाधकाभावात् सैव सत्तेत्युच्यत इत्याहुः तदसत् । नाशं प्रति प्रतियोगिनः तत्तद्व्यक्तित्वेनैव कारणतायास्सिद्धान्तसिद्धत्वेन तादृशसामान्यकार्यकारणभावे मानाभावात् ध्वंसत्वस्य सकलध्वंससाधारणस्यानुगतस्याभावेन ध्वंसत्वेन सत्त्वेन सामान्यकार्यकारणभावासंभवाच्च । नच यावन्तो ध्वंसाः तावदन्यतमत्वस्य सकलध्वंससाधारणानुगतधर्मस्य प्रसिद्ध्या तादृशकार्यकारणभावस्तुनच इति वाच्यं अन्यतमत्वस्य कार्यतावच्छेदकत्वे मानाभावात् । अन्यथा क्रियाशब्दान्यतरत्वावच्छिन्नं प्रति मनस्सहकृतपृथिव्यादिपञ्चानां हेतुत्वमादाय षट्स्वपि एकजातिस्वीकारापत्तेः परमाणुषु प्रतियोगितासंबन्धेन ध्वंसानुत्पत्त्या कारणतावच्छेदकतया सिद्धधर्मस्य तत्साधारण्ये मानाभावाच्च । अन्यथा क्लृप्तभावत्वस्यैव कारणतावच्छेदकत्वसंभवेनोक्तकार्यकारणभावस्याप्रामाण्यापत्तेः नच तादृशधर्मस्य तदसाधारण्येऽपि द्रव्यत्वादिना सांकर्यात् जातिरूपत्वासंभवभिया नित्यसाधारण्यमावश्यकमिति वाच्यं तस्य जातित्वानङ्गीकारे क्षतिविरहेण नित्यानेकपदार्थवृत्तित्वाकल्पनाच्च विशेषरूपेण संसर्गत्वानङ्गीकर्तृप्राचीनमते केवलप्रतियोगित्वस्यैव संसर्गत्वेन प्रागभावसाधारणरूपस्यैव कारणतावच्छेदकतावश्यकतया सुतरां जातिरूपत्वासंभवाच्च । केचित्तु वस्तुतस्तु समवायेन सत्त्वावच्छिन्नं प्रति तादात्म्येन द्रव्यत्वेन कारणतया तज्जन्यतावच्छेदकतया सत्ताजातिसिद्धिः तादृशकार्यकारणभावे मानाभाव इतितु न स्वाश्रयसमवेतत्वसबन्धेन नीलादेर्नीलादावपि सत्त्वेन तत्र नीलोत्पत्त्यापत्तिवारणाय तादृशकार्यकारणभावस्यावश्यकत्वात् । नच स्वाश्रयसमवेतत्वविशिष्टद्रव्यत्वसंबन्धेन नीलादेः हेतुतया न तदापत्तिरिति वाच्यं तादृशसमवेतत्वद्रव्यत्वयोः विशेषणविशेष्यभावे विनिगमनाविरहेण कारणतावाहुल्यापत्तेः । कालिकसमवायोभयसंबन्धस्य कार्यतावच्छेदकतावच्छेदकत्वात् सत्तायाः नित्यसाधारण्येऽपि क्षतिविरहादित्यन्यत्र विस्तर इत्याहुः तदसत् । द्रव्यत्वावच्छिन्नतादात्म्यसंबन्धावच्छिन्नकारणतानिरूपितःसमवायसंबन्धावच्छिन्नकार्यतावच्छेदकतया सिद्धस्य तादृशकार्यताशून्यनित्यद्रव्यादिवृत्तित्वे मानाभावः अतिप्रसक्तत्वात् । अन्यथा क्लृप्तभावत्वस्यैव कार्यतावच्छेदकत्वसंभवेन भावत्वावच्छिन्नं प्रति तादात्म्येन द्रव्यत्वेन कारणत्वमित्यस्यैव वक्तुं शक्यतया निरुक्तकार्यकारणभावे मानाभावेन द्रव्यादित्रिकवृत्तिसत्तायाः कार्य-

## मञ्जूषा.

प्रयोजकत्वमास्तामिति वाच्यं तत्रानायत्या भेदकूटस्य प्रयोजकत्वेऽपि सामान्यादौ सद्भेदस्यैकस्य प्रयोजकत्वे लाघवानपायात् कार्यतावच्छेदकं च ध्वंसत्वं तच्चाखण्डोपाधिरूपं अनुयोगिताविशेषरूपं जन्याभावत्वरूपं वा तत्र प्रथमद्वितीयपक्षयोः प्रागभावे व्यभिचारः घटात्मके घटप्रागभावध्वंसेऽपि ध्वंसाकारानुगतप्रतीत्या अखण्डोपाधिरूपस्य अनुयोगिताविशेषरूपस्य च ध्वंसत्वस्य तत्र सत्त्वादतः प्रागभाववृत्तिप्रतियोगिताभिन्नप्रतियोगितायां कार्यतावच्छेदकसम्बन्धत्वमभ्युपेयं सद्भिन्नत्वविशिष्टध्वंसत्वमेव वा कार्यतावच्छेदकं न चैवं सद्भेदस्य प्रतियोगितासंबन्धावच्छिन्नध्वंसत्वाच्छिन्नप्रतियोगिताकाभावप्रयोजकत्वासंभवः प्रागभावे सद्भेदवत्त्वेऽपि दर्शिताभावाभावादिति वाच्यं प्रागभाववृत्तिप्रतियोगितासंबन्धेन ध्वंसत्वावच्छिन्नं प्रति प्रतियोगितासंबन्धेन सद्ध्वंसत्वावच्छिन्नं प्रति वा तादात्म्येन प्रागभावस्यापि हेतुत्वान्तरं कल्पयित्वा प्रतियोगितासंबन्धावच्छिन्नध्वंसत्वावाच्छिन्नप्रतियोगिताकाभावे प्रागभाववृत्तिप्रतियोगितासंबन्धावाच्छिन्नध्वंसत्वावच्छिन्नजन्यत्वतद्भिन्नप्रतियोगितासंबन्धावच्छिन्नध्वंसत्वावच्छिन्नजन्यत्वद्वयनिरूपकसत्प्रागभावभेदद्वयस्य प्रयोजकत्वोपगमात् एवं सद्ध्वंसत्वावच्छिन्नं प्रति प्रागभावत्वेन हेतुत्वान्तरं कल्पयित्वा ध्वंसत्वव्याप्यसदन्यध्वंसत्वसद्ध्वंसत्वावच्छिन्नजनकसत्प्रागभावभेदद्वयस्य प्रयोजकत्वकल्पनेनानुपपत्त्यभावात् तावताप्यनन्तभेदकूटस्य प्रयोजकत्वाकल्पनेन लाघवानपायात्तृतीयपक्षेतु भावभिन्नत्वरूपाभावत्वघटितस्य जन्याभावत्वात्मकध्वंसत्वस्य घटे अभावान्न घटप्रागभावादौ दर्शितकार्यकारणभावस्य व्यभिचारप्रसक्तिः । तथाहि घटप्रागभावो ध्वस्त इति प्रतीतिः घटं घटध्वंसं वावगाहते नातिरिक्तं मानाभावात् तत्रच घटात्मको यो ध्वंसः स न भावभिन्नः घटध्वंसस्तु यद्यपि भावभिन्नः घटप्रागभावप्रतियोगिकश्च तथापि न व्यभिचारप्रसक्तिः प्रतियोगितासंबन्धेन तद्वति घटे ता-

## प्रभा.

तावच्छेदकत्वस्य सुदूरपराहतत्वात् । यच्चोक्तं तादृशकार्यकारणभावानङ्गीकारे स्वाश्रयसमवेतत्वसंबन्धेन नीलादेर्नीलादावपि सत्त्वेन तत्र नीलोत्पत्त्यापत्तेस्तद्वारणाय स्वाश्रयसमवेतत्वविशिष्टद्रव्यत्वसंबन्धेन नीलादेर्हेतुत्वे तु विशेषणविशेष्यभावे विनिगमनाविरहेण कारणताबाहुल्यापत्तेरिति तदपि न चारुतरं नीले नीलोत्पत्त्यापत्तिवारणाय स्वसामानाधिकरण्यस्वाश्रयवृत्तिद्रव्यत्वोभयसंबन्धेन नीलादेर्हेतुतयैव विनिगमनाविरहप्रयुक्तदोषवारणे उक्तकार्यकारणभावे मानाभाव इति । वस्तुतस्तु द्रव्यं जातिमद्गुणो जातिमान् इत्यनुगतप्रतीत्यैव त्रिषु सत्ताजातिसिद्धिः । नच तादृशप्रतीतौ द्रव्यत्वादिजातिरेव विषय इति वाच्यं अनेकपदार्थगोचरैकाकारप्रतीतीनामसति बाधके एकधर्मविषयकत्वैकधर्मावच्छिन्नविषयकत्वान्यतरवत्त्वनियमात् । अन्यथा ऊर्ध्वं गच्छति अधो गच्छति इत्याद्यनुगतप्रतीतीनामुत्क्षेपणत्वादिविषयकत्वेन निर्वाहे उत्क्षेपणादिसकलक्रियासाधारणगमनत्वजात्यप्रसिद्धिप्रसंगात् । नचोक्तप्रतीतीनां जातित्वरूपैकधर्मावच्छिन्नविषयकत्वेनोपपत्तिरिति वाच्यं जातित्वस्य नित्यत्वघटकध्वंसघटितत्वेनानेकपदार्थघटितत्वेनाधेयत्वघटितत्वेन च प्रत्येकव्यक्तिविश्रान्तत्वेन सकलजातिसाधारण्याभावात् । एवंच द्रव्यं जातिमदित्यादिप्रतीतीनामेकजातिविषयकत्वावश्यकतया सत्ताजातिसिद्धेर्निष्प्रत्यूहत्वात् एवं घटो जातिमान् पटो जातिमान् इति प्रतीतीनां विनिगमनाविरहेण एकत्र घटत्वपृथिवीत्वद्रव्यत्वविषयत्वमन्यत्र पटत्वघटितत्रितयविषयत्वमिति रीत्या भिन्नभिन्नविषयकत्वेनैकाकारकत्वानुपपत्तिः तस्मात् सर्वत्र जातिमानित्याकारकप्रत्ययानुरोधेन सर्वत्रैकजातिसिद्धौ सैव तान्त्रिकैस्सत्तेति व्यवह्रियते । इत्थंच सन्निति प्रतीतिविषयत्वं सत्पदशक्यतावच्छेदकत्वं च तस्या एवं स्वीक्रियते । परंतु द्रव्यादित्रिकस्य समवायेन सत्तावत्त्वात् तत्र सत्पदप्रयोगो मुख्यः सामान्यादित्रिकस्य एकार्थसमवायेन सत्तावत्त्वात् तत्र सत्प्रयोगो गौण इति विवेकः । एवंच सामान्यं द्विविधं प्रोक्तमित्यादिना विभागकरणं सत्तायाः परत्वोपपादनं च संगच्छते ॥ ८ ॥ ९ ॥

## मञ्जूषा.

दात्म्येन सतस्सत्त्वात् शेषंतु पूर्ववत् नच सद्भिन्नध्वंसत्वस्य जन्याभावत्वस्य वा सत्कार्यतावच्छेदकत्वपक्षे प्रतियोगितासंबन्धेन घटप्रतियोगिकध्वंसवति घटप्रागभावे सत्तादात्म्याभावाद्व्यभिचारो दुर्वार इति वाच्यम् । कार्यतावच्छेदकावच्छिन्नयत्किंचिद्व्यक्त्यधिकरणयावद्व्यक्तिनिष्ठाभावप्रतियोगित्वस्यैव व्यभिचारपदार्थत्वात् अथवा घटध्वंसस्य द्वे प्रतियोगिते एका घटो ध्वस्त इति प्रतीतिसिद्धा घटनिष्ठा प्रतियोगिता अन्या तु घटप्रागभावो ध्वस्त इति प्रतीतिसिद्धा प्रागभावनिष्ठा साच घटेन तद्ध्वंसेन च निरूप्यते उभयनिरूपितयोः प्रतियोगितयोर्भेदे मानाभावात् तथाच स्वप्रतियोग्यनिरूपितप्रतियोगितायाः कार्यतावच्छेदकसंबन्धत्वस्वीकारान्नानुपपत्तिरियमेव प्रागभाववृत्तिप्रतियोगिताभिन्नप्रतियोगिता नामेति पक्षत्रयमप्युपपन्नं सद्भिन्नत्वंतु क्वचिदपि न निवेशनीयं प्रयोजनाभावादित्याहुः । अत्रेदं बोध्यं घटध्वंसात्यन्ताभावाभावस्य घटध्वंसरूपत्वेन घटध्वंसस्य तदत्यन्ताभावोऽपि प्रतियोगीति तत्र सद्रूपकारणाभावात् व्यभिचारो दुर्वारः प्राप्नोति सचेत्थं वारणीयः कार्यतावच्छेदकसंबन्धेन कार्यतावच्छेदकविशिष्टाधिकरणानिष्ठाभावप्रतियोगित्वमेव हि व्यभिचारः कार्यतावच्छेदकावच्छिन्ननिरूपितकार्यतावच्छेदकसंबन्धानुयोगिनिष्ठाभावप्रतियोगित्वमिति यावत् कार्यतावच्छेदकं चेह ध्वंसत्वं तच्च न घटध्वंसात्यन्ताभावनिष्ठप्रतियोगितानिरूपकतावच्छेदकम् । किंतु अत्यन्ताभावत्वं घटध्वंसात्यन्ताभावो ध्वस्त इत्यव्यवहारात् घटध्वंसात्यन्ताभावो नास्तीत्येवं व्यवहारात् इदंच ध्वंसत्वमखण्डोपाधिरूपं जन्याभावत्वरूपं चेति पक्षे ध्वंसत्वमनुयोगिताविशेषरूपमिति पक्षे तु स्ववृत्तिध्वंसनिरूपितप्रतियोगितायाः कार्यतावच्छेदकसंबन्धत्वस्वीकारात् न कोऽपि दोष इति एवं चोक्तप्रमाणेन कस्याश्चिज्जातेः सिद्धौ तस्याः द्रव्यं सदित्यादिप्रतीतिविषयत्वे बाधकाभावादियमत एवेत्यास्तां विस्तरः ॥ ८ ॥ ९ ॥

## अन्त्यो नित्यद्रव्यवृत्तिर्विशेषः परिकीर्तितः ॥ १० ॥

**विशेषं निरूपयति ॥ अन्त्य इति ॥ अन्तेऽवसाने वर्तत इति अन्त्यः यदपेक्षया विशेषो नास्तीत्यर्थः । घटादीनां द्व्यणुकपर्यन्तानां तत्तदवयवभेदात्परस्परं भेदः परमाणूनां परस्परं भेदको विशेष एव स तु स्वत एव व्यावृत्तस्तेन तत्र विशेषान्तरापेक्षा नास्तीत्यर्थः ॥ १० ॥**

### प्रभा.

मूले अन्त्यो नित्यद्रव्यवृत्तिरित्यत्रान्त्यशब्दस्य स्वतोव्यावर्तकत्वरूपलक्षणपरत्वं प्रतिपादयितुं अन्त्यशब्दस्य विग्रहमाह ॥ **मुक्तावल्यां अन्त इति** ॥ **अवसान इति** ॥ निरवयवद्रव्य इत्यर्थः । **वर्तत इति** ॥ सजातीयपरमाणूनां परस्परभेदसाधनाय स्वीक्रियत इत्यर्थः । ननु व्यावृत्तस्यैव व्यावर्तकतया विशेषाणां व्यावर्तकधर्माभावेनाव्यावृत्तत्वात् कथं व्यावर्तकत्वमत आह ॥ **यदपेक्षयेति** ॥ विशेषापेक्षयेत्यर्थः ॥ **विशेषो नास्तीति** ॥ विशेषनिष्ठविशेषान्तरप्रतियोगिकभेदानुमापकविशेषातिरिक्तधर्मो नास्तीत्यर्थः । तथाच परमाणुगतैकत्वादीनां सामान्याश्रयत्वेन तत्तद्व्यक्तित्वेनानुमापकत्वासंभवात् सामान्यरूपेण व्यभिचारित्वाच्च न भेदकत्वं परमाणुगततत्तत्क्रियाध्वंसादेः विशेषासिद्धेः पूर्वं अव्यावृत्तत्वेन न तस्यापि भेदकत्वमित्यन्यथा-

### मञ्जूषा.

मूलस्थान्त्यपदं सविवरणं विगृह्णाति ॥ **अन्ते अवसान इति** ॥ ननु अन्तत्वस्य ससंबन्धिकत्वात्तत्संबन्ध्याकाङ्क्षायां परिशेषादवयवधारैव संबन्धिनी वाच्या साच परस्परावयवावयविभावापन्नबहुपदार्थसमुदायरूपा स्वघटकपदार्थनिरूपितावयवत्वव्यापकस्वघटकताकसमुदायरूपेति यावत् । तदन्तत्वं च तन्निष्ठनिरवयवपदार्थघटितत्वनिरूपकत्वं तन्निष्ठसावयवघटितत्वकभिन्नत्वे सति तद्घटकत्वं वा ततश्चान्तपदं निरवयवद्रव्यपरं इत्यायातम् । तद्वृत्तित्वं च नित्यद्रव्यवृत्तिरित्यनेनैव लब्धमिति पुनरुक्तिर्दुर्वारेत्यत आह ॥ **यदपेक्षयेति** ॥ अयमाशयः लोके चरमान्त्यादिशब्दास्सजातीयमपेक्ष्यैव चरमत्वादिकं स्वभावतोऽभिदधते यथा ब्रह्मक्षत्रादिपरंपरासु चरमं ब्राह्मणं पश्येत्युक्ते ब्राह्मणसमुदायावधिकमेव चरमत्वं स्वभावतः प्रतीयते तदिहान्त्यो विशेष इत्युक्ते विशेषसमुदायसापेक्षमेव अन्त्यत्वं प्रतीयते अथवा विशेषशब्दस्यावृत्तिस्तेनान्त्यो यो विशेषः स विशेषः परिकीर्तितः विशेषशब्देन तान्त्रिकैः परिभाषितः नपुनः कपालादिरूपा अपि विशेषाः विशेषशब्देन तान्त्रिकैः परिभाष्यन्त इत्यर्थः । तथाचेहान्तशब्दः विशेषधारान्तपरः विशेषधाराच स्वघटकानिरूपितविशेषत्वव्यापकस्वघटकताकसमुदायरूपा तस्याश्चान्तस्स्वघटकाविशेषविशेषघटितत्वं तत्र वर्तत इत्यस्य च तत्प्रयोजको भवतीत्यर्थः भोजने वर्तते धनार्जने वर्तत

### दिनकरीयम्.

**स्वत एवेति** ॥ स्वतोव्यावृत्तत्वं च स्वभिन्नलिङ्गजन्यस्वविशेष्यकस्वसजातीयेतरभेदानुमित्यविषयत्वम् । साजात्यं च पदार्थविभाजकोपाधिरूपेण तेन घटादेस्तादात्म्येन व्यावृत्तत्वेऽपि विशेषस्य गुणा-

### रामरुद्रीयम्.

**स्वतो व्यावृत्तत्वं चेति** । विशेषस्यापि स्वलिङ्गकस्वसजातीयविशेषान्तरभेदानुमितिविषयत्वादसम्भववारणाय स्वभिन्नलिङ्गकेति । घटो विशेषाद्भिद्यते कपालसमवेतत्वादित्यनुमितेरपि विशेषभिन्नलिङ्गकत्वाद्विशेषप्रतियोगिकभेदविधेयकत्वाच्च तादृशानुमितिविषयत्वमादाय पुनस्तद्दोषतादवस्थ्यमतः स्वविशेष्यकेति । भेदे स्वसजातीयप्रतियोगिकत्वप्रवेशप्रयोजनं ग्रन्थकृतैव वक्ष्यते । ननु नञ्द्वयप्रवेशे गौरवात् स्वलिङ्गकस्वविशेष्यकस्वसजातीयभेदानुमितिविषयत्वमेव स्वतोव्यावृत्तत्वं वक्तुमुचितं नतु यथोक्तमित्याशङ्कां निराकुरुते ॥ **तेनेति** ॥ तादात्म्येन व्यावृत्तत्वेऽपीत्यस्य घटादीनां इत्यादिः । न क्षतिरिति परेणान्वयः । तथाच स्वतोव्यावृत्तत्वस्योक्तरूपत्वे घटादावपि तादात्म्येन घटहेतुकस्वसजातीयघटान्तरप्रतियोगिकभेदानुमितिविषयत्वेन तत्रातिव्याप्तिरेव स्यादिति भावः । भेदे स्वसजातीयप्रतियोगिकत्वनिवेशस्य प्रयोजनमाह ॥ **विशेषस्येति** ॥

## प्रभा.

नुपपत्त्या परमाणुषु स्वतोव्यावर्तकतयैव विशेषसिद्धिरुपेयेति भावः । ननु घटादिप्रभृतिद्व्यणुकान्तानां भेदकान्यनुक्त्वा परमाणूनां भेदकथने बीजाभाव इत्याशङ्कां घटादिद्व्यणुकान्तानां सावयवत्वेन भेदसिद्धिर्भवति परमाणूनां निरवयवत्वेन भेदककथनमावश्यकमित्याशयप्रदर्शनेन परिहरति ॥ घटादीनामित्यादिना ॥ परस्परभेद इति ॥ सिध्यतीति शेषः । केषांचित् चक्षुरादिना केषांचिन्मनसाऽवयवभेदप्रयुक्तो भेदो ज्ञातुं शक्यत इति भावः । परमाणूनां परस्परभेदसाधक इत्युपलक्षणम् । आकाशादीनां परस्परभेदकोऽपीति बोध्यम् । तथाच परमाणूनां निरवयवद्रव्यत्वात् पारिमाण्डल्यवत्त्वाच्च

## मञ्जूषा.

इत्यादौ तथा दर्शनात्तथाच तादृशसमुदायनिष्ठं यत्स्वघटकाविशेष्यविशेषघटितत्वं तत्प्रयोजकता तादृशसमुदायघटकस्य कस्यचिद्विशेषस्य विशेषान्तराविशेष्यस्यैव भवति अतश्चान्त्य इत्यादेः विशेषान्तररहितो यो विशेषः स इह विशेषशब्देन परिभाषित इत्यर्थो लभ्यत इति तदिदमभिप्रेत्योक्तवान् यदपेक्षया विशेषो नास्तीत्यर्थ इति यदपेक्षयान्यो व्यावर्तको नास्तीत्यर्थ इत्यर्थः । व्यावर्तकधारां तदन्त्यत्वं च विशेषाणामुपपादयति ॥ घटादीनामित्यादिना ॥ केचित्तु अन्त्यत्वं निरवयवद्रव्यवृत्तित्वमेव तच्च नित्यद्रव्यवृत्तिरित्यनेन सिद्धमपि विशेषान्तरशून्यत्वलाभाय पुनरुक्तमित्याह यदपेक्षयेति निरवयववृत्तित्वोत्कीर्तनेन विशेषान्तरशून्यत्वं कुतो लभ्यत इति तु न शङ्क्यम् । कपालाद्यवयवानामेव घटादिविशेषतया विशेषाणां निरवयववृत्तित्वोक्त्या तल्लाभसंभवात् । ननु विशेषाणां निरवयववृत्तित्वोत्कीर्तनेन तदाश्रयभूतानां परमाणूनां

## दिनकरीयम्.

दिशून्यत्वेनेतरभेदानुमितिविषयत्वेऽपि द्रव्यादेरपि प्रमेयत्वादिना विशेषसजातीयत्वेऽपि न क्षतिः ।

## रामरुद्रीयम्.

इतरभेदेति ॥ विशेषेतरद्रव्यादिभेद इत्यर्थः । पदार्थविभाजकोपाधिरूपेण साजात्यप्रवेशस्य प्रयोजनमाह । द्रव्यादेरपीति ॥ अथात्र स्वविशेष्यकत्वं परित्यज्यानुमित्याविषयत्वमित्यत्रानुमित्यविशेष्यत्वमित्युक्तैव सामञ्जस्ये गुरुतरारम्भो विफल एव तावतैव घटो विशेषाद्भिद्यते कपालसमवेतत्वादित्यनुमितिमादायासम्भववारणसम्भवात् उक्तानुमितौ विशेषस्य मुख्यविशेष्यत्वाभावादिति चेन्न । स्वत्वं हि नानुगतं किंतु तत्तद्व्यक्तित्वपर्यवसन्नमेव तत्रच स्वपदेन विशेषोपादानं न सम्भवति विशेषे विशेषान्तरभेदसाधने विशेषेतरलिङ्गाभावादप्रसिद्ध्यापत्तेः किंतु घटादिकमेव तद्व्यक्तित्वेनोपादाय लक्षणं सङ्गमनीयं तथा च स्वविशेष्यकेत्यनुक्तौ विशेषो घटाद्भिद्यते गुणवद्भिन्नत्वादित्यनुमितेरपि घटभिन्नलिङ्गकत्वेन घटसजतीयप्रतियोगिकसेदविधेयकत्वेन च तादृशानुमितौ विशेषस्य मुख्यविशेष्यत्वादसम्भव एव स्यात्तदुपादाने तूक्तानुमितेः घटभिन्नलिङ्गत्वेऽपि घटमुख्यविशेष्यकत्वाभावेन तामुपादाय नासंभव इति ध्येयम् । न चैवमपि विशेषकालीनो घटो घटान्तराद्भिद्यते एतत्कपालसमवेतत्वादित्यनुमितेरपि घटविशेष्यकत्वात् घटाभिन्नलिङ्गकत्वात् स्वसजातीयघटान्तरभेदाविधेयकत्वाच्च तद्विषयत्वस्यैव विशेषे सत्त्वादसम्भवतादवस्थ्यमिति वाच्यम् । अविषयत्वमित्यस्य मुख्यविशेष्यताशून्यतार्थकत्वात् । इत्थं च स्वविशेष्यकत्वानुपादाने घटो विशेषाद्भिद्यते कपालसमेवतत्वादित्यनुमितिमादायासम्भवासम्भवेऽप्युक्तरीत्या घटादिकमादायासम्भववारणायैव स्वविशेष्यकत्वोपादानमिति मन्तव्यम् । अनुमितिश्च मुख्यविशेष्यताद्वयशून्यत्वेनापि विशेषणीया । अन्यथा विशेषो घटाद्भिद्यते घटश्च पटाद्भिद्यते गुणशून्यत्वात् घटत्वाच्चेति समूहालम्बनानुमितिमादाय स्वपदेन घटव्यक्तिमादायासम्भवप्रसङ्गात् । यद्यपि समवायस्य पदार्थविभाजकोपाधिरूपेण स्वसजातीयान्तराभावेन स्वसजातीयभेदानुमितौ मुख्यविशेष्यत्वाभावेन समवाये विशेषलक्षणातिव्याप्तिः प्रसज्यते, न च समवायेऽपि द्वित्वादिना समवायभेदसत्त्वात्तादृशभेदानुमितिविशेष्यत्वस्य समवाये सत्त्वान्नातिव्याप्तिरिति वाच्यम् तथा सति विशेषेऽपि विशेषघटोभयभेदसत्त्वेन तादृशभेदानुमितिविशेष्यत्वमादायासम्भवापत्त्या भेदे व्यासज्यवृत्तिधर्मानवच्छिन्नप्रतियोगिताकत्वविशेषणस्यावश्यकत्वात् । तथापि ता

## प्रभा.

सजातीयानां परस्परभेदस्य मनसापि ज्ञातुमशक्यत्वात् एवमाकाशादीनामपि निरवयवद्रव्यत्वात्परमम-हत्परिमाणवत्त्वाच्च तेषां परस्परभेदस्यापि मनसा ज्ञातुमशक्यत्वाच्च। एतेषां परस्परभेदसिद्ध्यन्यथानुपपत्त्या स्वतोव्यावृत्तत्वेन तेषु विशेषोऽङ्गीकर्तव्य इति भावः ॥ **स्वत एव व्यावृत्त इति** ॥ स्वत इत्यस्यावृत्तिः । स्वतः स्वात्मकलिङ्गात् स्वतः स्वीयात् स्वसजातीयादिति यावत् स्वात्मकलिङ्गादित्यत्र पञ्चम्याः ज्ञानज्ञाप्य-त्वमर्थः । स्वसजातीयादित्यत्र पञ्चम्याः प्रतियोगित्वमर्थः एतदुभयमपि वृतुधात्वर्थे भेदेऽन्वेति । तथाच वि-शेषः स्वात्मकलिङ्गज्ञानजन्यज्ञानविषयस्वसजातीयप्रतियोगिकभेदाश्रय इत्यर्थो लब्धः । स्वत एवेत्यत्र एवकारेण स्वभिन्नलिङ्गज्ञानजन्यज्ञानविषयस्वसजातीयप्रतियोगिकभेदशून्य इत्यर्थो लभ्यते । अत्र व्यावृत्तत्वं भेदनिष्ठ-विधेयतानिरूपितोद्देश्यतारूपं तच्छून्यत्वमेवाव्यावृत्तत्वं ग्राह्यम् । तेन घटो विशेषान्तराद्भिन्नः घटत्वादित्यत्र विशेषव्यक्तिभिन्नघटत्वलिङ्गज्ञानजन्यघटविशेष्यकानुमितिविषयविशेषान्तरप्रतियोगिकभेदवत्त्वस्य स्वस्मि-न्नपि सत्त्वात् तच्छून्यत्वाभावेऽपि नासंभवः स्वस्मिन् तादृशभेदवत्त्वेऽपि भेदनिष्ठविधेयतानिरूपितोद्देश्यता-

## मञ्जूषा.

व्यावर्तकान्तरशून्यत्वं लभ्यते ननु विशेषाणां नच यदपेक्षयेत्यादेर्यद तिरिक्तः परमाणूनां व्यावर्तको ना-स्तीत्यर्थकल्पनया परमाणूनां व्यावर्तकान्तरशून्यत्वसूचनमेव ग्रन्थकृदभिप्रेतमास्त्विति वाच्यं सतु स्वतएव व्यावृत्तस्तेन तत्र विशेषान्तरापेक्षा नास्तीत्युपरितनोपसंहारग्रन्थसन्दर्भे विशेषाणामेव व्यावर्त-कान्तरशून्यत्वस्योपसंहृतत्वेनोपक्रमोपसंहारयोर्विरोधापत्तेरिति चेन्न परम्परया सूचनसंभवात्तथाहि परमाणूनां निरवयवत्वकीर्तनेन तेषां अवयवरूपविशेषविरहस्सूचितः । विशेषाणां तद्वृत्तित्वकथनं च तेषां परस्परव्यावर्त-कतां संभाव्य विशेषाणां परस्परस्माद्व्यावृत्तत्वे परस्पराश्रयव्यावर्तकत्वासंभवेन व्यावर्तकान्तरापेक्षायामनव-स्थापत्त्या तेषां स्वतोव्यावृत्तत्वकल्पनया व्यावर्तकान्तरशून्यत्वं सूचयतीति नानुपपत्तिरित्यपि वदन्ति ॥ **तत्त-दवयवभेदादिति** ॥ यद्यपि द्व्यणुकेषु कथंचित्त्रसरेणुषु च परस्परस्माद्भेदस्य प्रत्यक्षासम्भवेऽपि यो-ग्यसन्निकर्षेण घटादिषु परस्परभेदः प्रत्यक्षासिद्ध एवेति न तत्र व्यावर्तकधर्मापेक्षा । तथापि पटादिषु प-

## दिनकरीयम्.

नित्यद्रव्यवृत्तिरिति विशेषाणां स्थानकथनं न तल्लक्षणे प्रविष्टं प्रयोजनाभावात् । **तत्र** विशेषव्यावृत्तौ नन्वेतत्परमाणुत्वादयो व्यावर्तका भविष्यन्ति किं विशेषेणेति चेन्न । अव्यावृत्तधर्मस्य व्यावर्तकत्वासम्भवा-त् तत्र व्यावर्तकान्तरापेक्षायामनवस्थानात् । ननु विशेषेष्वेष प्रसङ्ग इति चेन्न । तस्य धर्मिग्राहकमानेन

## रामरुद्रीयम्.

दृशानुमितिविषयो यः तद्भिन्नत्वे सति स्वभिन्नस्वसजातीयकत्वस्य समवेतत्वस्य समवायभिन्नत्वस्य वा विशेष्य-दलस्य प्रवेश्यत्वान्नातिव्याप्तिरिति ध्येयम् । अनुमितौ सिषाधयिषानुत्तरत्वमपि विशेषणं देयम् । तेन विशेषेण परमाणूनां भेदसिद्धौ एतत्परमाणुसमवेतत्वादेः व्यावृत्तत्वेन सिषाधयिषया तेन लिङ्गेन विशेषे विशेषान्तरभे-दानुमितावपि नासम्भवः । ननु अन्त्यो नित्यद्रव्यवृत्तिरिति कारिकया अन्त्यत्वे सति नित्यद्रव्यवृत्तित्वं विशेषलक्षणमुक्तं,तत्रान्त्यत्वं स्वतो व्यावृत्तत्वमेव अन्ते व्यावर्तकानामवसाने वर्तत इत्यन्त्यः इति व्यु-त्पत्त्या यस्य व्यावर्तकान्तरं नास्ति तत्त्वमित्यर्थलाभात् स्वतो व्यावृत्तत्वस्यैव लक्षणत्वसम्भवे नित्यद्र-व्यवृत्तित्वमनर्थकं समवायस्यापि नित्यद्रव्यवृत्तितया समवायातिव्याप्तिवारकत्वस्याप्यसम्भवात् नच वृ-त्तित्वं समवेतत्वमेव विवक्षितं तथा च समवायातिव्याप्तिवारकमेव तदिति वाच्यम्, तथापि समवेतत्वमात्रेणै-व तत्रातिव्याप्तिवारणसम्भवे नित्यद्रव्यांशवैयर्थ्यस्य दुर्वारत्वादित्यभिप्रायेणाह ॥ **विशेषाणां स्थान-कथनमिति** ॥ **अव्यावृत्तधर्मस्येति** ॥ यस्माद्भेदसाधकत्वमभिमतं तदवृत्तित्वेन अज्ञातधर्मस्येत्यर्थः । **व्यावर्तकत्वासम्भवात्** तदितरभेदसाधकत्वाभावादित्यर्थः । **तत्र** एतत्परमाणुत्वादौ । **व्या-वर्तकान्तरापेक्षायां** एतत्परमाणुत्वे परमाण्वन्तरावृत्तित्वसाधकहेत्वन्तरापेक्षायाम् । **अनवस्थानात्** अ-नवस्थानप्रसङ्गात् ॥ **एष प्रसङ्ग इति** ॥ अनवस्थाप्रसङ्गात्मकप्रसङ्ग इत्यर्थः । **तस्य विशेषस्य**

## प्रभा.

याः घट एव सत्त्वेन तच्छून्यत्वस्यापि सत्त्वात् । अत्र लिङ्गज्ञानशब्देन लिङ्गविशेष्यकं व्याप्तिप्रकारकं ज्ञानं गृह्यते तेन लिङ्गज्ञानमात्रस्यानुमितिजनकत्वाभावेऽपि नासंभवः । अत्र साजात्यं पदार्थविभाजकोपाधिरूपेण बोध्यं तेन विशेषस्यापि निर्गुणत्वलिङ्गकानुमितिनिरूपितप्रमेयत्वरूपविशेषसाजात्यवद्घटादिप्रतियोगिकभेदनिष्ठविधेयतानिरूपितोद्देश्यत्वसत्त्वेऽपि नासंभवः । अत्र स्वसजातीयप्रतियोगिकभेदनिष्ठविधेयतायां तादृशानुमितिनिरूपितत्वं स्वभिन्नत्वोपलक्षितलिङ्गविशेष्यकव्याप्तिप्रकारकज्ञानत्वावच्छिन्नकारणतानिरूपितकार्यतावच्छेदकत्वरूपं ग्राह्यम् । तेनायं विशेषः तद्विशेषाद्भिन्नः तादात्म्येनैतद्विशेषात् घटो विशेषान्तराद्भिन्नः गन्धवत्त्वादित्यत्र समूहालम्बनात्मकपरामर्शात् जायमानसमूहालम्बनात्मकानुमितेः गन्धादिरूपलिङ्गविशेष्यकतादृशज्ञानजन्यतया तन्निरूपितविशेषान्तरसजातीयप्रतियोगिकभेदनिष्ठविधेयतानिरूपितोद्देश्यत्वस्य स्वस्मिन्नपि सत्त्वेन तच्छून्यत्वाभावेऽपि नासंभवः । नच स्वशब्दस्य तत्तद्व्य-

## मञ्जूषा.

रस्परसंश्लिष्टावयवेषु आलोकादिषु च तथाविधेषु परस्परावयवभेदग्रहान्वयव्यतिरेकानुविधायिभेदग्रहोऽवयविनां दृष्टो नापह्नोतुमर्हति सच क्वचित्प्रत्यक्षरूपः संशयोत्तरप्रत्यक्षे विशेषदर्शनस्य कारणत्वात् यदातु प्रत्यक्षसामग्र्याः परिकरन्यूनता तदानुमितिरूपः उभयथापि तत्तदवयवभेदस्य व्यावर्तकत्वमव्याहतं भेदबोधजनकधीविषयत्वमेव हि व्यावर्तकत्वं । किंच क्वचित्प्रत्यक्षावगतमपि भेदमप्रामाण्यशङ्काकलङ्कापनयनाय दृढतरसंस्कारसंपादनाय परं प्रति सम्यगुपपादनाय च युक्तिभिस्स्थिरीचिकीर्षवः तत्तदवयवभेदमेव युक्तितयाऽवगच्छन्तो दृष्टाः अत एवोक्तं प्रत्यक्षपरिकल्पितमप्यर्थमनुमानेन बुभुत्सन्ते तर्करसिका इति । अतो व्यावर्तकत्वं तत्तदवयवभेदस्य सिद्धमेव नहि वह्नेः पर्वते कस्यचित्प्रत्यक्षयोग्यतामात्रेण धूमस्य तदनुमापकतापराहन्तुं शक्या । अस्मद्गुरुचरणास्तु परस्परं भेद इति । सिद्ध्यतीति शेषः । केषांचिच्चक्षुषा के-

## दिनकरीयम्.

स्वतो व्यावृत्ततयैव सिद्धेः । एवं च नित्यद्रव्येषु विशेषाः सिद्धाः तद्गुणास्तु न विशेषवन्त आश्रयरूपेण विशेषेणैव तेषां व्यावृत्तत्वात् आश्रयस्य च विशेषवत्तया व्यावृत्तत्वेन विशेषत्वसम्भवादिति भावः । ईश्वराकाशयोर्नित्यज्ञानशब्दाभ्यां व्यावृत्तेः सम्भवान्न तत्र विशेष इत्यप्याहुः । नवीनास्तु विशेषेऽतिरिक्ते मानाभावः

## रामरुद्रीयम्.

**धर्मिग्राहकमानेन** परमाणुभेदः किंचिल्लिङ्गज्ञाप्यः भेदत्वात् कपालभेदज्ञाप्यघटभेदवदिति विशेषसाधकानुमानेन । स्वतः प्रमाणान्तरनिरपेक्षव्यावृत्ततयैव परमाण्वन्तरावृत्तित्वरूपेणैव ॥ **सिद्धेरिति** ॥ अनुमितेरित्यर्थः । परमाण्वन्तरवृत्तित्वे विशेषस्य परमाण्वन्तरभेदसाधकत्वासंभवाद्व्यावर्तकत्वेन विशेष एव न सिद्ध्येदित्यनुपपत्तिप्रतिसन्धानसहकृतात्परामर्शादितरपरमाण्ववृत्तित्वेन विशेषस्य सिद्धिरिति भावः । उपसंहरति ॥ **एवंचेति** ॥ **आश्रयरूपेण** रूपाद्याश्रयपरमाणुस्वरूपेण ॥ **विशेषेण** व्यावर्तकेन । ननु अव्यावृत्तस्य कथं व्यावर्तकत्वमित्याशङ्कां परिहरति ॥ **आश्रयस्येति** ॥ **न तत्रेति** ॥ नेश्वरगगनयोरित्यर्थः ॥ **विशेष इति** ॥ नित्यज्ञानशब्दाभ्यामेव तयोरितरनित्यद्रव्यभेदसिद्ध्या विशेषे प्रयोजनाभावादिति भावः । ईश्वरेत्याद्याहुरित्यन्तमेकदेशिनां मतं तत्र च दिक्कालाकाशादीनां परस्परभेदासिद्धेः प्राक् नित्यज्ञानशब्दयोः कालादिव्यावृत्तत्वासिद्ध्या न तेन कालादिभेदसाधनं सम्भवति विशेषस्य तु धर्मिग्राहकमानेन तत्सिद्ध्या विशेषेणैव तत्साधनं सम्भवतीत्यस्वरससूचनाय आहुरित्युक्तम् । यत्तु पार्थिवपरमाणुविशेषे जलपरमाणुविशेषभेदस्य पृथिवीसमवेतत्वेनानुमानसम्भवात् स्वतोव्यावृत्तत्वस्य तत्राव्याप्तिरिति स्वसजातीयभेदानुमितिरित्यस्य स्वेतरस्वसजातीययावद्भेदानुमितिरित्यर्थो वर्णनीय इत्याह तन्मन्दम् । पृथिवीजलपरमाण्वोरेव विशेषं विना भेदासिद्धेरिति । यद्यपि पार्थिवजलपरमाण्वोर्भेदे जलत्वपृथिवीत्वयोः साङ्कर्यापत्त्या तयोर्भेदः सिद्ध एवेति शक्यते वक्तुं तथाप्यसम्भववारणायानुमितौ सिषाधयिषानुत्तरत्वविशेषणस्यावश्यकतया पार्थिवजलपरमाणुविशेष-

## प्रभा.

क्तिपरिचायकतया स्वशब्देनैकैकविशेषोपादाने तादृशोद्देश्यताशून्यत्वस्य स्वस्मिन्नेव सत्त्वेन विशेषान्तरेऽभावादव्याप्तिरिति वाच्यं स्वत्वस्य प्रतियोगिकोटावेव निवेशेन तादृशविशेष्यताकं यद्यत् स्वं तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदकूटस्यानुगतस्य सर्वविशेषेषु सत्त्वेन अव्याप्त्यापत्तेरभावात् । तथाच स्वाभिन्नत्वोपलक्षितलिङ्गविशेष्यकव्याप्तिप्रकारकज्ञानत्वावच्छिन्नकारणतानिरूपितकार्यतावच्छेदकस्वसजातीयप्रतियोगिकभेदनिष्ठविधेयतानिरूपितोद्देश्यताश्रयीभूतं यद्यत् स्वं तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदकूटवत्त्वरूपं पर्यवसितम् । नचैवमपि एतद्विशेषतद्विशेषान्यतरत् विशेषान्तराद्भिन्नं एतद्विशेषतद्विशे-

## मञ्जूषा.

षांचिन्मनसावयवभेदप्रयुक्तभेदो ज्ञातुं शक्यत एवेति फलितोऽर्थ इति व्याचख्युः ॥ **सजातीयेति** ॥ विशेषपदार्थातिरिक्तपरस्परव्यावर्तकधर्मशून्यानामित्यर्थः एतेन वक्ष्यमाणानुमाने अर्थान्तरं निराकृतम् ॥ **परस्परभेदक इति** । परस्परभेदानुमितिजनकज्ञानविषय इत्यर्थः । एतेनानुमानं सूचितं तथाहि परमाणुषु परस्परभेदानुमितिः यत्किंचिल्लिङ्गप्रमाजन्या भ्रमाजन्यानुमितित्वात् वह्न्याद्यनुमितिवत् द्व्यणुकारम्भप्रयोजकः परमाणुषु परस्परभेदः यत्किंचिल्लिङ्गज्ञानज्ञाप्यः भेदत्वाद्धटादिभेदवत् इति वा । अनेकपरमाणुषु परस्परभेदानुमितिजनकप्रमाविषयास्सिध्यन्त इतरबाधादतिरिक्ता एव सिद्ध्यन्तीति । ननु विशेषाः परस्परवृत्तिविशेषाभिन्नत्वेनाज्ञाताः कथं परस्परम्मात्परमाणूनां भेदका भविष्यन्तीत्यत आह ॥ **स त्विति** ॥ **स्वत एव** धर्मिग्राहकमानेनैव । **व्यावृत्तः** परस्परभिन्नतया सिद्धः । **तेन** धर्मिग्राहकमानसिद्धपरस्परभेदकत्वरूपस्वतोव्यावृत्तत्वेन । **तत्र** विशेषेषु । **विशेषान्तरापेक्षा** व्यावर्तकान्तरापेक्षा । **नास्तीति** तथाच

## दिनकरीयम्.

यथैव विशेषाणां स्वव्यावृत्तिधर्मं विना व्यावृत्तत्वं तथैव नित्यद्रव्याणामपीत्याहुः ॥ १० ॥

## रामरुद्रीयम्.

योर्भेदमन्तरा पार्थिवपरमाणुविशेषस्य जलपरमाणुव्यावृत्तत्वासिद्ध्या तत्सिद्ध्यधीनविशेषभेदानुमितेः सिषाधयिषयैवङ्गीकरणीयतया अव्याप्तेरसम्भवादिति ध्येयम् । नवीनमतं दर्शयति ॥ **नवीनास्त्विति** ॥ आहुरित्यस्वरसोद्भावनं तद्बीजं तु त्र्यणुकावयवस्सावयवः महदारम्भकत्वादित्यनुमानेन परमाणोरव्यावृत्तस्यापि सिद्धिसम्भवेन नित्यद्रव्याणां व्यावृत्तत्वस्य धर्मिग्राहकमानासिद्धत्वमेवेति ध्येयम् । अत्रेदमवधेयं पूर्वोक्तयुक्त्या भेदानुमितौ सिषाधयिषानुत्तरत्वनिवेशस्यावश्यकतया स्वभिन्नलिङ्गकत्वनिवेशनमफलं स्वेन स्वेतरभेदसाधनस्य सिषाधयिषां विना असंभवात् विशेषान्तरभिन्नेन स्वेन विशेषान्तरभेदसाधनासम्भवेन सिद्धेरावश्यकत्वात् सिद्धिसत्त्वे सिषाधयिषयैवानुमितिसंभवादिति । किञ्च परमाणूनां परस्परभेदसिद्ध्यर्थमेव विशेषाङ्गीकार इति मूलाभिप्रायवर्णनमप्यसङ्गतं परमाणुभेदः किंचिल्लिङ्गज्ञाप्य इत्याद्युक्तानुमानेन विशेषसिद्धौ सत्यां हि विशेषेण परमाण्वोर्भेदस्साधनीयः परमाण्वोर्भेदासिद्धौ हि तं पक्षीकृत्य विशेषानुमानं सम्भवति अन्यथा पक्षासिद्धिप्रसङ्गादित्यन्योन्याश्रयप्रसङ्गात् । किञ्च मूलकृतः घटादीनां द्व्यणुकपर्यन्तानामित्यादिना घटादीनां परस्परभेदस्य कपालभेदानुमेयत्वोक्तिरप्यसङ्गता घटादीनां परस्परभेदस्य प्रत्यक्षसिद्धत्वादिति । वस्तुतस्तु घटादीनां द्व्यणुकपर्यन्तानामित्यादौ तत्तदवयवभेदादित्यत्र पञ्चम्यर्थः प्रयुक्तत्वमेव न तु ज्ञाप्यत्वं प्रयुक्तत्वं च स्वरूपसम्बन्धरूपं अवयवभेदादवयविभेद इति प्रतीतिसाक्षिकं तथा च द्व्यणुकोत्पादान्यथानुपपत्त्या परमाणुद्वयसिद्धौ तयोर्भेदः किंचित्प्रयोज्यो भेदत्वात् कपालभेदप्रयुक्तघटभेदवदित्याद्यनुमाने इतरबाधबलात् परमाणुगतविशेषभेदासिद्ध्या विशेषसिद्धिरिति मूलतात्पर्यम् । ननु विशेषभेदेऽपि प्रयोजकान्तरानुमानसम्भवेनानवस्थाप्रसङ्ग इत्याशङ्कायामुक्तं स तु स्वत एव व्यावृत्त इति विशेषस्तु स्वप्रयोज्यभेदवानेव न तु तद्गतविशेषान्तरभेदप्रयुक्तभेदवानिति तदर्थः । तथा च स्वतोव्यावृत्तत्वं स्वप्रयोज्यस्वनिष्ठस्वसजातीयप्रतियोगिकभेदकत्वमेवेति पूर्वस्माल्लाघवमपीति सर्वं चतुरस्रम् ॥ १० ॥

## प्रभा.

षान्यतरत्वादित्यादौ पृथिवीपरमाणुवृत्तिविशेषाः जलपरमाणुवृत्तिविशेषाद्भिन्नाः गन्धवद्वृत्तित्वादित्यादौ च तादृशान्यतरत्वगन्धवद्वृत्तित्वात्मकलिङ्गविशेष्यकतादृशज्ञानत्वावच्छिन्नकारणतानिरूपितकार्यतावच्छेदकतादृशविधेयतानिरूपितोद्देश्यतायाः स्वस्मिन्नपि सत्त्वेन तत्तद्व्यक्तिभेदकूटवत्त्वाभावादसंभव इति वाच्यं तादृशान्यतरत्वरूपहेतुनिश्चयस्य साध्यनिश्चयोत्तरकालीनत्वेन पूर्वं तादृशहेतुनिश्चयाभावेनासंभवानवकाशात् । अन्यथा एतत्परमाणुघटान्यतरत्पक्षीकृत्य तादृशान्यतरत्वहेतुना परमाण्वन्तरभेदसाधनसंभवेन विशेषासिद्धिप्रसङ्गसंभवात् विशेषनिष्ठगन्धवद्वृत्तित्वरूपहेतोस्त्वव्यावृत्तत्वेन तस्य व्यावर्तकत्वासंभवेनासंभवानवकाशात् अन्यथा तत्तत्परमाणुनिष्ठतत्तत्क्रियाध्वंसादिलिङ्गेनैव परमाण्वन्तरभेदसाधनसंभवेन विशेषासिद्धिप्रसङ्गात् । नच तथापि पृथिवीपरमाणुवृत्तिविशेषाः जलपरमाणुवृत्तिविशेषाद्भिन्नाः सामानाधिकरण्यसंबन्धेन गन्धवत्त्वादित्यादौ गन्धात्मकतादृशलिङ्गविशेष्यकानिरुक्तज्ञानत्वावच्छिन्नकारणतानिरूपितकार्यतावच्छेदकस्वसजातीयभेदनिष्ठविधेयतानिरूपितोद्देश्यत्वस्य स्वपदार्थविशेषे सत्त्वेन तत्तद्व्यक्तिभेदकूटवत्त्वरूपलक्षणाभावादसंभवतादवस्थ्यमिति वाच्यं व्याप्यतायां सामानाधिकरण्यसंबन्धानवच्छिन्नत्व-

## मञ्जूषा.

यथा क्षित्यङ्कुरादिकं कृतिजन्यामित्यनुमितौ तस्याः कृतेरनित्यत्वे गौरवमिति गौरवज्ञानसहकाराज्जायमानानुमितिः कृतौ नित्यत्वमप्यवगाहमाना क्षित्यङ्कुरादिकं नित्यकृतिजन्यमित्याकारिकैव जायते एवमेषां व्यावर्तकान्तरव्यावृत्तत्वेऽनवस्थागौरवमिति ज्ञानसहकाराज्जायमानानुमितिः परस्परभिन्नत्वमप्यवगाहमाना परमाणुषु परस्परभेदानुमितिः परस्परभिन्नलिङ्गप्रमाजन्येत्याकारिकैव जायत इति न विशेषाणां परस्परभेदसिद्धये लिङ्गान्तरमपेक्षणीयमिति भावः । तथाच स्वतोव्यावृत्तत्वं स्वग्राहकमानसिद्धपरस्परभेदकत्वं । यत्त्वर्वाचीनास्स्वतोव्यावृत्तत्वं स्वात्मकलिङ्गज्ञानजन्यानुमितिविषयत्वं विशेषेषु हि परस्परभेदः स्वात्मकलिङ्गेनैव सिद्ध्यति । एतद्विशेषस्तद्विशेषाद्भिद्यते तादात्म्येनैतद्विशेषादिति । ननु स्वभिन्नलिङ्गेन अनवस्थापत्तेरिति पठयन्ति तत्तुच्छं विशेषाणां परस्परभेदस्य धर्मिग्राहकमानेनैव सिद्धत्वेन तत्रानुमानान्तरानपेक्षणात् । किंचैतद्विशेषे तद्विशेषभेदो यदि प्रागसिद्धस्स्यात्तदा तद्विशेषभेदं प्रति तादात्म्येनैतद्विशेषस्य व्याप्यतैव दुर्ग्रहा । यदि सिद्धस्तदासिद्धसाधनमित्यधिकं विवेचयिष्यामः । मूले अन्त्य इत्यनेन विशेषसद्भावे सपरिकरं प्रमाणं दर्शितं तल्लक्षणमाह ॥ **नित्यद्रव्यवृत्तिरिति** ॥ अनित्यद्रव्यावृत्तिरित्यर्थः तथाचानित्यद्रव्यवृत्त्यवृत्तिपदार्थविभाजकोपाधिमत्त्वं अनित्यद्रव्यवृत्तिपदार्थविभाजकोपाधिशून्यत्वं वा विवक्षितमिति न स परमाणुरूपादावतिव्याप्तिः अनित्यद्रव्यवृत्तित्वं च सर्वाधारताप्रयोजकसंबन्धभिन्नसंबन्धेनेति नानुपपत्तिः । अत्र महादेवः स्वतोव्यावृत्तत्वं स्वभिन्नलिङ्गजन्यस्वविशेष्यकस्वसमानजातीयभेदानुमित्यविषयत्वं साजात्यं च पदार्थविभाजकोपाधिरूपेण तेन घटादेस्तादात्म्येन व्यावृत्तत्वेऽपि विशेषस्य गुणादिशून्यत्वेनेतरभेदानुमितिविषयत्वेऽपि द्रव्यादेरपि प्रमेयत्वादिना विशेषसजातीयत्वेऽपि न क्षतिरित्यनेन ग्रन्थेनान्त्यपदार्थमेव लक्षणं मन्यते । अत्र स्वत्वं प्रतियोगिनिविष्टं नत्वनुयोगिनिविष्टं असंभवापत्तेः सिद्ध्यसिद्धिभ्यां व्याघाताच्च अत्रैतद्विशेषस्तद्विशेषाद्भिद्यते तादात्म्येनैतद्विशेषादित्यादि कादाचित्कानुमितिमादायासंभववारणाय स्वभिन्नलिङ्गजन्यत्वमनुमितौ विशेषणं एतादृशानुमितिस्वीकारेणैव स्वात्मकलिङ्गज्ञानजन्येतरभेदानुमितिविषयत्वरूपयथाश्रुतस्वतोव्यावृत्तत्वपरित्यागे घटादावतिव्याप्तिर्बीजतयोपन्यस्ता घटादेस्तादात्म्येन व्यावृत्तत्वेऽपीत्यनेन ग्रन्थेनेति बोध्यं विशेषवान् परमाणुः विशेषान्तराद्भिन्नः पृथिवीत्वादित्यनुमितिमादायासंभववारणाय स्वविशेष्यकत्वमनुमितौ विशेषणं अत्राक्षिपन्ति अनुमित्यविषयत्वमित्यत्र अनुमितिविशेष्यभिन्नत्वानिवेशेनैव पूर्वोक्तदोषवारणसंभवात् पृथक्स्वविशेष्यकत्वानिवेशो व्यर्थ इति तत्रान्ये प्रत्यवतिष्ठन्ते । स्वविशेष्यकत्वनिवेशे त्रयाणां संबन्धत्वं परिकल्प्य स्वभिन्नलिङ्गजन्यत्वस्य विशेष्यकत्वस्य समानजातीयप्रतियोगिकभेदविधेयकत्व-एतत्त्रितयसंबन्धेन स्वविशिष्टानुमितिकं यत्स्वं तद्भिन्नत्वस्यैव लक्षणत्वस्वीकारसंभवादनुमितिविषयताया एव निवेशो नास्तीति लाघवमिति अथ त्रयाणां संबन्धविधया निवेशे विशेषो द्रव्याद्भिन्नः निर्गुणत्वात् घटो विशेषान्त-

## प्रभा.

स्य विशेषणीयतयाऽसंभवानवकाशात् । अत्र स्वभिन्नलिङ्गेत्यत्र लिङ्गपदं व्याप्तिपक्षधर्मतावल्लिङ्गपरं अन्यथाऽयं विशेषस्तद्विशेषाद्भिन्नः प्रमेयत्वात् घटत्वाच्चेति अव्याप्यपक्षधर्मतावल्लिङ्गविशेष्यकताद्दशज्ञानत्वावच्छिन्नजनकतानिरूपितजन्यताश्रयानुमितिनिरूपितानिरुक्तोद्देश्यत्ववस्य स्वस्मिन् सत्त्वेन तादृशभेदकूटवत्त्वाभावात् असंभवापत्तेः । एवंच स्वभिन्नत्वसामानाधिकरण्यसंबन्धानवच्छिन्नव्याप्यत्वपक्षधर्मत्वैतात्रितयोपलक्षितालिङ्गविशेष्यकव्याप्तिप्रकारकज्ञानत्वावच्छिन्नकारणतानिरूपितकार्यतावच्छेदकस्वसजातीयभेदनिष्ठ-विधेयतानिरूपितोद्देश्यताश्रयो यद्यत् स्वं तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदकूटवत्त्वमिति फलितम् । अत्र कदाप्यनुमिताङ्कुरादौ समवाये चातिव्याप्तिवारणाय स्वतोऽव्यावृत्तत्वमपि लक्षणे निवेशनीयम् । अत्र स्वलिङ्गजन्यत्वविशेषणे प्रयोजनाभावात् स्वसजातीयभेदविधेयकानुमितिविषयत्वमेव स्वतोऽव्यावृत्तकत्वं निवेशनीयमिति मूलार्थः । वस्तुतस्तु स्वतोऽव्यावृत्तकत्वविशेषणस्य स्वत्वघटिततया प्रत्येकं विश्रान्तत्वेनैकैकस्वत्वघटितलक्षणस्यान्यात्राव्याप्तेः भेदकूटघटितत्वेन गौरवाच्च स्वतोऽव्यावृत्तत्वं परित्यज्य लाघवात् तादृशोद्देश्यताश्रयो यद्यत् स्वं तादृशोद्देश्यतासंबन्धेन स्वविशिष्टं वा य-

## मञ्जूषा.

राद्भिन्नः घटत्वादित्यकारकसमूहालम्बनात्मकानुमितिमादायासंभवापत्तिरिति चेन्मैवं यतो यथाश्रुतेऽप्येतद्दोषवारणाय स्वसमानजातीयभेदनिष्ठविधेयतानिरूपितस्वनिष्ठोद्देश्यताकत्वं मिलितं एकविशेषणमिति वाच्यम् । तथात्रापि मिलितस्य संबन्धत्वं स्वीक्रियतां तथाच स्वभिन्नलिङ्गजन्यत्वस्वसमानजातीयभेदनिष्ठविधेयतानिरूपितस्वनिष्ठोद्देश्यताकत्व-एतदुभयसंबन्धेन स्वविशिष्टानुमितिकाभिन्नत्वं पर्यवसन्नम् । यदिचैतद्विशेषस्ताद्विशेषाद्भिन्नस्तादात्म्येनैतद्विशेषात् घटो विशेषान्तरभिन्नः घटत्वादित्याकारकस्वभिन्नघटत्वात्मकलिङ्गजन्यसमूहालम्बनात्मकानुमितिमादाय तद्दोषतादवस्थ्यमिति विभाव्यते तदा स्वभिन्नलिङ्गविषयताघटितधर्मावच्छिन्नजनकतानिरूपितजन्यतावच्छेदकीभूता या स्वसमानजातीयभेदनिष्ठविधेयतानिरूपितस्वनिष्ठोद्देश्यता तन्निरूपकतासंबन्धेन स्वविशिष्टानुमितिकाभिन्नत्वमेव वक्तव्यम् । विशेषणत्वपक्षेऽप्येषैव गतिरिति इदमत्रावधेयं स्वभिन्नलिङ्गजन्यत्वादेर्विशेषणताकल्पेऽपि स्वविशेष्यकत्वनिवेशसार्थक्यं कथंचिदुपपादयितुं शक्यमेव तथाहि एतद्विशेषस्तद्विशेषाद्भिद्यते तादात्म्येनैतद्विशेषात् घटो विशेषान्तराद्भिद्यते घटत्वादिति समूहालम्बनानुमितिं विशेषो द्रव्याद्भिन्नो निर्गुणत्वाद्घटो विशेषान्तराद्भिन्नः घटत्वादिति समूहालम्बनानुमितिं चादायासंभवापत्तिरिति स्वविशेष्यकत्वनिवेशनं तथासति समासे चरमनिर्दिष्टस्य उद्देश्यतया प्रथमनिर्दिष्टस्य विधेयतया स्वजातीयभेदविधेयकत्वे स्वविशेष्यकत्वावच्छेदकत्वं लभ्यते तद्विशिष्टे स्वभिन्नलिङ्गजन्यत्वान्वयसंभवाच्च स्वभिन्नालिङ्गजन्यतावच्छेदकत्वं स्वोद्देश्यतावच्छेदकीभूतस्वसमानजातीयभेदविधेयकत्वे लभ्यते तथाच स्वभिन्नलिङ्गविषयताघटितधर्मावच्छिन्नजनकतानिरूपितजन्यतावच्छेदकीभूतं यत्स्वोद्देश्यकत्वावच्छेदकस्वसमानजातीयभेदविधेयकत्वं तच्छाल्यनुमितिकभिन्नत्वमिति पर्यवस्यति अयमेव ज्यायान् पक्षः नतु पूर्वोक्तः निरुक्तपरपम्परायास्संबन्धत्वस्य सविवादत्वात् परंतु स्वसमानजातीयभेदविधेयकानुमित्यविशेष्यत्वमित्यत्राप्ययमर्थो लभ्यते तत्रापि विशिष्टस्य वैशिष्ट्यमिति रीत्यान्वयस्वीकारे स्वसमानजातीयभेदविधेयकत्वविशिष्टनिरूपितविशेष्यतावद्भिन्नत्वं लभ्यते तदंशे यो विधेयस्तस्यैव तद्विधेयकत्वविशिष्टनिरूपितविशेष्यतास्वीकारेण विशेषो द्रव्याद्भिद्यते घटो विशेषान्तराद्भिद्यते इति समूहालम्बनानुमितिनिष्ठा या विशेषनिष्ठविशेष्यतानिरूपकता तस्यां विशेषान्तरभेदविधेयकत्वस्यावच्छेदकत्वाभावात् नासंभवप्रसक्तिः नच तथापि अत्र कल्पे स्वसमानजातीयभेदविधेयकत्वे तद्विशिष्टनिरूपितविशेष्यतायां वा स्वभिन्नलिङ्गजन्यतावच्छेदकत्वं वैवाक्षिकमेव न शाब्दमिति वाच्यम् । स्वसमानजातीयभेदविधेयकत्वविशिष्टानुमितौ स्वभिन्नलिङ्गजन्यत्वान्वयबलात्स्वसमानजातीयभेदविधेयकत्वे तदवच्छेदकत्वलाभसंभवात् स्वभिन्नलिङ्गजन्यत्वविशिष्टानुमितिनिरूपितत्वस्य विशेष्यतायां भानेन स्वभिन्नलिङ्गजन्यत्वे विशेष्यतानिरूपकतावच्छेदकत्वस्य लब्धतयाप्युक्तदोषवारणाच्च तज्जन्यतावच्छेदकीभूता या विशेष्यता तस्या एव तज्जन्यत्वविशिष्टनिरूपितत्वाङ्गीका-

## प्रभा.

यत् स्वं तत्तद्वृत्तिपदार्थविभाजकोपाध्यन्यतमशून्यत्वमेव निवेशनीयम् । तावतैवानुमिताङ्कुरादौ अतिव्याप्तिवारणसंभवात् समवायेऽतिव्याप्तिः समवेतत्वविशेषणेनैव वारणीया । एवंच तादृशान्यतमशून्यत्वसमवेतत्वैतदुभयवत्त्वं विशेषलक्षणं पर्यवसितमिति न काप्यनुपपत्तिरिति प्रतिभाति । केचित्तु स्वतोव्यावृत्तत्वं च स्वभिन्नलिङ्गजन्यस्वविशेष्यकस्वसमानजातीयभेदानुमित्यविषयत्वमित्याहुः तदसत् स्वाभिन्नालिङ्गजन्यत्वस्वसजातीयभेदविषयकत्वविशेषणयोः पूर्वोक्तार्थकरणेन पूर्वोक्तप्रयोजनसंभवेऽपि स्वविशेष्यकत्वविशेषणस्य मूलोक्तत्वाभावेन प्रयोजनाभावेन तद्घटितलक्षणस्यायुक्तत्वात् । नच स्वविशेष्यकत्वविशेषणानुपादाने विशेषावच्छिन्नपृथिवी विशेषान्तराद्भिन्ना गन्धवत्त्वादित्यत्र तादृशानुमितेः तादृशलिङ्गज्ञानजन्यत्वान्निरुक्तस्वजातीयभेदविधेयकत्वाच्च विशेषस्यापि तादृशानुमितिविषयत्वेन तच्छून्यत्वाभावादसंभवापत्तेरिति वाच्यम् । अनुमित्यविषयत्वमित्यत्र विषयत्वशब्दस्योद्देश्यत्वपरतया तादृशानुमित्युद्देश्यताश्रयो यत् स्वं घटपटादिकमेव तद्भिन्नत्वस्य विशेषे सत्त्वेनासंभवाप्रसक्तेः । नच तथापि स्वविशेष्यकत्वविशेषणोपादाने त्रयाणां संबन्धत्वमङ्गीकृत्य त्रितयसंबन्धेनानुमितिसंबद्धं यत्

## मञ्जूषा.

रेणैतद्विशेषस्तद्विशेषाद्भिन्नः तादात्म्येनैतद्विशेषाद्घटो विशेषाद्भिन्नो घटत्वादिति समूहालम्बनानुमितिनिरूपितविशेषनिष्ठविशेष्यतानिरूपकतायां घटत्वात्मकलिङ्गजन्यत्वावच्छिन्नत्वानङ्गीकारात् । वस्तुतस्तु स्वविशेष्यकत्वं न ग्रन्थकृदभिप्रेतं किंतु प्रामादिकं लेखकदोषाद्वा समागतं । तथाहि यद्यत्र स्वविशेष्यकत्वमनुमितौ विशेषणं स्यात्तर्हि स्वत्वं प्रतियोगिनिविष्टं स्यात् नत्वनुयोगिनिविष्टमसंभवापत्तेः एवंच सति समवायेऽतिव्याप्तिर्वज्रलेपायते तत्समानजातीयभेदाप्रसिद्धया तस्य स्वपदेन धर्तुमशक्यत्वात्तद्वारणाय च समवायभिन्नत्वं समवेतत्वं स्वसजातीयभेदवत्त्वमित्यादिविशेषणान्तरान्वेषणे प्रयासगौरवं स्वविशेष्यकत्वानुपादानेतु अनुयोगिन्येव स्वत्वं निवेश्यते विशेषभिन्नालिङ्गजन्याया घटो विशेषान्तराद्भिन्न इत्यनुमितेः प्रसिद्धत्वात्स्वसजातीयपदस्य स्वसजातीयान्तरपरतायाः लोकसिद्धतया समवाये च तदप्रसिद्ध्यैव नातिव्याप्तिः । किंच यदि प्रतियोगिनिविष्टं स्वत्वमभिप्रेयान्महादेवस्तर्हि अनुमित्यविषयत्वमिति नाभिदधीत किंतु अनुमितिविषयभिन्नत्वमित्येवाभिदध्यात् एवंहि ग्रन्थकृतां स्वरसः यत्र प्रतियोगिनिविष्टं स्वत्वमभिप्रयन्ति तत्र प्रतियोगिबोधकपदोत्तरं भिन्नान्यादिपदानि प्रयुञ्जते नतु प्रतियोगिबोधकपदमध्ये निवेशयन्ति । यत्तु केचिदत्र बभ्रमुः कदाचिदपि केनापि स्वसमानजातीयभेदवत्तयाऽननुमितेऽङ्कुरविशेषादावतिव्याप्तिवारणाय मतद्वयेऽपि स्वसमानजातीयभेदानुमितिविषयत्वरूपविशेषणान्तरप्रक्षेपस्यावश्यकतया ततएव समवायेऽपि न दोष इति प्रतियोगिनि स्वत्वनिवेशोऽपि युज्यत इति तदनालोचनविजृम्भितम् । अनादौ काले ब्रह्माण्डकोटिषु चानन्तासु कश्चिदपि चेतनस्सामान्यलक्षणोपनीतेषु भूतभविष्यन्निखिलवस्तुषु पृथिवीत्वाद्यवच्छिन्नेषु गन्धवत्त्वादिभिः परस्परभेदं नानुमिनोतीत्यस्य महासाहसत्वात्तदङ्कुरव्यक्तिमात्रपक्षकानुमितेः कस्यचिदभावेऽप्यस्माकं क्षतेरभावात् । अन्यथा यद्यक्तेस्स्वेनैवेतरभेदानुमितिस्तत्रातिव्याप्तेर्दुर्वारतापत्तेः अथ स्वभिन्नालिङ्गजन्यस्वसमानजातीयभेदानुमित्यविशेष्यत्वस्य लक्षणत्वे गगनवृत्तिरितरभिन्नः गगनानुयोगिकसमवायादित्यनुमितिविशेष्यतामादायासंभवः प्रसज्यते अतस्स्वमात्रविशेष्यकत्वपरं स्वविशेष्यकत्वपदमावश्यकं दर्शितानुमितौच स्वेतरशब्दादेरपि विशेष्यत्वान्नानुपपत्तिः नचानुमित्यविशेष्यत्वमित्यत्रैव अनुमितिनिरूपितस्वमात्रवृत्तिविशेष्यतावद्भिन्नत्वं विवक्ष्यतां तावताप्युक्तदोषवारणसंभवादिति वाच्यं विषयभेदेन विषयतानां भिन्नतया गगनवृत्तिरितरभिन्न इत्यनुमितिनिरूपितयोः गगनवृत्तित्वरूपैकधर्मावच्छिन्नयोरपि विशेषशब्दनिष्ठयोर्विशेष्यतयोर्भिन्नतया विशेषनिष्ठविशेष्यतायास्स्वमात्रवृत्तित्वानपायात् उक्तदोषस्यानुमितौ स्वेतराविशेष्यकत्वविशेषणेनैव वारणीयत्वात् । नचानुमित्यविशेष्यत्वमित्यत्रानुमितिनिरूपितस्वेतरवृत्तिधर्मानवच्छिन्नविशेष्यतावद्भिन्नत्वमेव विवक्ष्यतां तावताप्युक्तदोषवारणसम्भवादिति वाच्यं स्वेतराविशेष्यकत्वस्यानुमितिविशेषणत्वापेक्षया तस्य लघुत्वाभावात् उपायस्य उपायान्तरादूषकत्वाच्चेति चेदत्र

## प्रभा.

स्वं तत्तद्व्यक्तिभेदकूटवत्त्वस्यैव लक्षणत्वसंभवात् तत्र प्रतियोगिकोटावनुमितेरेव विशेषणतया स्वभिन्न-लिङ्गजन्यत्वादीनां संबन्धतया निवेशेनातिलाघवमिति वाच्यम्। तथासति विशेषो द्रव्याद्भिन्नः निर्गुणत्वात् घटो विशेषान्तराद्भिन्नः घटत्वादित्यादिस्थलीयसमूहालम्बनात्मकपरामर्शजन्यसमूहालम्बनात्मकानुमितिमादाय विशेषस्यापि निरुक्तत्रितयसंबन्धेनानुमितिसंबन्धत्वात् तत्तद्भेदकूटघटितलक्षणस्यासंभवापत्तेः। नचावच्छेद्यावच्छेदकभावापन्नस्वोद्देश्यकत्वस्वसजातीयभेदविधेयकत्वयोरेव संसर्गत्वसंभवात् नोक्तासंभवः यादृशोद्देश्यत्वविधेयत्वयोर्निरूप्यनिरूपकभावः तादृशोद्देश्यकत्वविधेयकत्वयोरेवावच्छेद्यावच्छेदकभावस्य सर्वमतसिद्धतयोक्तसमूहालम्बनात्मकानुमितिनिरूपितविशेषनिष्ठोद्देश्यत्वविशेषान्तरप्रतियोगिकभेदनिष्ठविधेयत्वयोः निरूप्यनिरूपकभावाभावेन तादृशोद्देश्यकत्वविधेयकत्वयोरपि सुतरामवच्छेद्यावच्छेदकभावाप्रसक्त्या तादृशोद्देश्यकत्वविधेयकत्वघटितत्रितयसंबन्धेन विशेषस्यानुमितिसंबद्धत्वाभावादिति वाच्यं एवमप्ययं विशेषः तद्विशेषाद्भिन्नः तादात्म्येनैतद्विशेषात् घटो विशेषान्तराद्भिन्नः गन्धवत्त्वादित्यादिस्थलीयसमूहालम्बनात्मकानुमितिमादायासंभवस्य दुर्वारत्वात् तादृशानुमितिनिरूपितविशेषनिष्ठोद्देश्यत्वविशेषा-

## मञ्जूषा.

केचित् स्वेतराविशेष्यकत्वस्य अनुमितिविशेषणत्वेऽपि स्वेतरवृत्तिधर्मानवच्छिन्नत्वं विशेष्यताविशेषणमावश्यकं अन्यथा गगनवृत्तिविशेषः परमाणुवृत्तिविशेषाद्भिद्यते गगनानुयोगिकसमवायादित्यनुमितिविशेष्यतामादायासंभवापातात् तादृशानुमितेरपि स्वेतराविशेष्यकत्वात् उक्तविशेषणे तु तादृशानुमितिनिरूपितविशेषनिष्ठविशेष्यतावच्छेदककोटौ स्वेतरशब्दादिवृत्तेर्गगनवृत्तित्वस्य घटकत्वान्नानुपपत्तिः एवंच तेनैव गगनवृत्तिरितरभिन्न इत्यनुमितिविशेष्यतामादाय प्रसक्तासंभवस्यापि वारणसंभवात् स्वेतराविशेष्यकत्वं व्यर्थं विशेष्यतायां स्वेतरवृत्तिधर्मानवच्छिन्नत्वलाभश्च स्वविशेष्यकत्वपदेन स्वेतरवृत्तिधर्मानवच्छिन्नविशेष्यताकत्वविवक्षयैव अनुमित्यविशेष्यत्वपदेन अनुमितिनिरूपितस्वेतरवृत्तिधर्मानवाच्छिन्नविशेष्यतावाद्भिन्नत्वविवक्षयापि निर्वहतीति व्यर्थं स्वविशेष्यकपदं ! येऽत्र विशेषाणां परस्परभेदानुमितिः न स्वभिन्नलिङ्गजन्याभ्युपेयत इति समयं बध्नन्ति ते केवलं विप्रलम्भयन्ति पामरान् सति गगनपरिमाणशब्दादौ व्याप्तिज्ञाने सति च हेतोर्गगनवृत्तिविशेषरूपपक्षधर्मताज्ञानादौ लोकानां जायमानायाः पूर्वोक्तानुमितेः कस्यचिदुन्मस्तकस्य समयसंबन्धमात्रेण निरोद्धुमशक्यत्वात् नच तथापि एतद्विशेषाः शब्दश्च परमाणुवृत्तिविशेषाद्भिद्यते गगनानुयोगिकसमवायात् इत्यनुमितिविशेष्यतामादायासंभवः प्रसज्यते सच स्वेतरवृत्तिधर्मानवच्छिन्नत्वाविशेषणेन न शक्यते वारयितुं एतद्विशेषत्वावच्छिन्नविशेष्यतायास्तथाविधत्वात्। किंतु स्वेतराविशेष्यकत्वविशेषणेनैवेति स्वविशेष्यकपदमावश्यकमिति वाच्यं एवमप्येतद्विशेषः परमाणुवृत्तिविशेषाद्भिद्यते गगनानुयोगिकसमवायादित्यनुमितिविशेष्यतामादायासंभववारणाय स्वसमानाधिकरणावृत्तित्वेन भेदस्य विशेषणीयतया तेनैवोक्तदोषवारणसंभवात् तथाहि सति हेतोः व्याप्तिपक्षधर्मताज्ञानादौ दर्शितानुमितिर्दुरपह्नवा। साच स्वेतराविशेष्यका स्वेतरवृत्तिधर्मानववाच्छिन्नविशेष्यताका चेति तद्विशेष्यतामादायासंभवः प्रसज्यते सच भेदे स्वसमानाधिकरणपदार्थान्तरावृत्तित्वनिवेशेन वार्यते परमाणुवृत्तिविशेषभेदस्य स्वसमानाधिकरणशब्दपरिमाणादिरूपपदार्थान्तरवृत्तित्वान्न दोषः एवंच पूर्वोक्तत्रिविधानुमितिविषयीभूतस्यापि भेदस्य स्वसमानाधिकरणपदार्थान्तरवृत्तित्वेन असंभवप्रसक्त्यभावात् स्वेतराविशेष्यकत्वं स्वेतरवृत्तिधर्मानवच्छिन्नत्वं चेत्युभयमपि नोपादेयमेव। तत्तत्परमाणुनिष्ठो यो विशेषः तत्समानाधिकरणपदार्थान्तरावृत्तिश्च भेदः तद्विशेषेतरयावद्व्यक्तिप्रतियोगिकस्तद्विशेषमात्रवृत्तिभेदः तद्विशेषेतरपृथ्वीसमवेतप्रतियोगिकस्तद्विशेषजलपरमाण्वादिवृत्तिविशेषसाधारणभेद इत्यादिः तदनुमापकश्चैतद्विशेषे कश्चिद्धेतुर्नास्ति नह्येतद्विशेषमात्रवृत्तिरेव वक्तव्यः अन्यथाव्यभिचारप्रसक्तेः तथा एतद्विशेषेतरभेदे साध्ये एतत्परमाण्वनुयोगिकसमवायो न हेतुर्भवितुमर्हति एतत्परमाणुवृत्तिरूपादौ व्यभिचारादिति एतद्विशेषत्वंच न वस्तुगत्या एतद्विशेषादतिरिच्यते घटादौ तु नैवं एतत्कपालसमवेतद्रव्यत्वादेरेतत्कपा-

## प्रभा.

न्तरप्रतियोगिकभेदनिष्ठविधेयत्वयोः निरूप्यनिरूपकभावापन्नत्वेन तादृशोद्देश्यकत्वविधेयकत्वयोरवच्छेद्याव- च्छेदकभावसत्त्वेन तादृशोद्देश्यकत्वादिघटितत्रितयसंबन्धेन विशेषस्यानुमितिसंबन्धत्वात् । नच स्वभिन्न- त्वोपलक्षितलिङ्गविशेष्यकव्याप्तिप्रकारकज्ञानत्वावच्छिन्नजनकतानिरूपितानुमितिनिष्ठजन्यतावच्छेदकीभूततादृ- शोद्देश्यकत्वविधेयकत्वयोरेव संसर्गत्वस्वीकारात् नासंभवप्रसक्तिः । उक्तसमूहालम्बनात्मकानुमितिनिरूपित- विशेषनिष्ठोद्देश्यताकत्वविशेषान्तरप्रतियोगिकभेदनिष्ठविधेयताकत्वयोर्निरुक्तव्याप्तिज्ञानजन्यतावच्छेदकत्वाभा- वात् घटानिष्ठोद्देश्यताकत्वविशेषान्तरप्रतियोगिकभेदनिष्ठविधेयताकत्वयोरेव तादृशजन्यतावच्छेदकत्वात् । त- थाच विशेषस्य तादृशजन्यतावच्छेदकत्वोपलक्षितावच्छेद्यावच्छेदकभावापन्नस्वोद्देश्यकत्वस्वसजातीयभेदवि- धेयकत्वघटितत्रितयसंबन्धेनानुमितिसंबद्धत्वाभावादिति वाच्यम् । तथासति तादृशजन्यतावच्छेदकत्वोप- लक्षितावच्छेद्यावच्छेदकभावापन्नस्वोद्देश्यकत्वस्वसजातीयभेदविधेयकत्वोभयसंबन्धेनानुमितिसंबद्धं यद्यत्स्वं तत्तद्भेदकूटवत्त्वस्यैव लक्षणत्वसंभवे स्वभिन्नलिङ्गजन्यत्वस्य संबन्धघटकत्वानुपपत्तेः । नचेष्टापत्तिः स्व- भिन्नलिङ्गजन्यत्वस्य मूलस्थैवकारप्रतिपाद्यत्वेन तद्वैयर्थ्ये मूलविरोधापत्तेः मूलानुक्तस्वविशेष्यकत्वपरिपाल-

## मञ्जूषा.

लसंयोगजन्यत्वादेर्वा तत्र तदितरयावद्व्यक्तिप्रतियोगिकभेदसाधकत्वसंभवात् तदितरयावद्व्यक्तिप्रतियोगिकभेदो नाम तदितरत्वावच्छिन्नप्रतियोगिताकैकभेदः तत्तद्भेदकूटो वेत्यन्यदेतत् । एवंचात्र यदि प्रतियोगिनि- विष्टं स्वत्वं तदा घटादिकमेव तादृशं स्वं यदि त्वनुयोगिनिविष्टं तदा स्वमेतद्विशेषः तद्भिन्नलिङ्गं घटत्वादि तज्जन्या स्वसमानाधिकरणावृत्तिभेदविधेयिका घट इतरेभ्यो भिद्यत इत्याद्यनुमितिस्तद्विशेष्यभिन्नत्वस्य विशेषे सत्त्वाल्लक्षणसङ्गतिः यद्येवं विशेषो द्रव्यभिन्नो गुणशून्यत्वादित्यनुमितिविषयीभूतभेदस्यापि विशेषसमाना- धिकरणरूपाद्यात्मकपदार्थान्तरवृत्तितया तत एव तादृशानुमितिविषयत्वमादाय प्रसक्तदोषवारणसंभवात्स्व- समानजातीयत्वनिवेशवैयर्थ्यं । अपिच एतद्विशेषेतरभेदे साध्ये न हेतुदुर्भिक्षं समवेतत्वे सति सदन्यत्वे सति एतत्परमाणुभिन्नासमवेतत्वादेर्हेतुत्वसंभवात्किंचिद्विशेषणवैशिष्ट्याघटितस्य च रूपादौ सर्वत्र दुर्लभ- त्वादिति भाव्यते तदा भेदे स्वसमानाधिकरणपदार्थान्तरावृत्तित्वं परित्यज्य लिङ्गे स्वसमानाधिकरणमा- त्रवृत्तिभिन्नत्वं देयं तथाहि गगनानुयोगिकसमवायस्तद्विशेषसमानाधिकरणमात्रवृत्तिरेव तद्विशेषस्यापि तद्विशे- षसमानाधिकरणत्वानपायादिति न तल्लिङ्गकानुमितिमादायासंभवः घटादौ तु तत्तद्घटसमानाधिकरणमात्रवृ- त्तिभिन्नं यद्घटत्वादि तज्जन्या या स्वसजातीयपटादिप्रतियोगिकभेदानुमितिस्तद्विशेष्यत्वान्नातिव्याप्तिः । ए- वंच गुणशून्यत्वस्य तत्तद्विशेषसमानाधिकरणेतरवृत्तित्वात्तद्धेतुकद्रव्यभेदानुमितिमादायासंभववारणाय स्वसजा- तीयत्वविशेषणसार्थक्यं । अथैवं सति एतद्विशेषतद्विशेषौ विशेषान्तराद्भिद्येते एतद्विशेषतद्विशेषान्यतर- त्वादित्यनुमितिविशेष्यतामादायासंभववारणाय स्वेतराविशेष्यकार्थकं स्वविशेष्यकपदमावश्यकमेव तादृशानु- मितेस्तत्तद्विशेषेतरविशेषान्तरविशेष्यकत्वान्न दोष इति चेन्न स्वभिन्नत्वस्य स्वाविषयकप्रतीतिविषयत्वा- र्थकत्वात् अन्यथा स्वेतराविशेष्यकत्वस्यानुमितिविशेषणत्वेऽप्येतद्विशेषो विशेषान्तराद्भिन्नः एतद्विशेषतद्वि- शेषान्यतरत्वात् इत्यनुमितिविशेष्यतामादायासंभवस्य दुर्वारत्वात् तथाच स्वसमानाधिकरणमात्रवृत्तिभिन्न- स्वाविषयकप्रतीतिविषयलिङ्गजन्यस्वसजातीयभेदानुमित्यविशेष्यत्वं पर्यवसन्नं एतद्विशेषस्य एतद्विशेषत्व- स्य एतत्परमाणुसमवेतत्वादेश्च एतद्विशेषस्वरूपानतिरिक्ततया नैतद्विशेषाविषयकप्रतीतिविषयत्वं एतद्वि- शेषतद्विशेषान्यतरत्वादेरेतद्विशेषातिरिक्तत्वेऽप्येतद्विशेषघटितत्वान्न तदविषयकप्रतीतिविषयत्वं एतत्परमा- ण्वनुयोगिकसमवायादेश्चैतद्विशेषाविषयकप्रतीतिविषयत्वेऽपि न तत्समानाधिकरणमात्रवृत्तिभिन्नत्वं गुणशून्य- त्वादिहेतोस्तादृशत्वेऽपि न तत्साध्यभेदस्य स्वसजातीयप्रतियोगिकत्वमिति न कोऽपि दोषः तस्मात्स्वविशेष्य- कपदं भ्रमादिकमेवेत्याचक्षते । अथैवंरीत्या विशेषेषु परस्परभेदविषयकानुमितेरस्वीकारे विशेषान्तरापेक्षा नास्तीति मुक्तावलीग्रन्थविरोध इति चेन्नासति विरोधः । नहि तेन ग्रन्थेन विशेषाणां व्यावर्तकान्त- रेण परस्परभेदानुमितिरेव नास्तीत्युच्यते येन विरोधस्स्यात् किंतु व्यावर्तकान्तरमन्तरेणापि परस्परभेद-

## प्रभा.

नाय मूलविरोधाङ्गीकारस्य दासीपरिपालनाय पत्नीपरित्यागाङ्गीकारतुल्यतया तत्रापीष्टापत्तेः वक्तुमशक्यत्वात् स्वविशेष्यकत्वविशेषणाभावेऽपि स्वभिन्नलिङ्गजन्यानुमितिनिरूपितस्वसजातीयभेदनिष्ठविधेयतानिरूपितोद्देश्यत्वसंबन्धेन स्वविशिष्टं यद्यत् स्वं तत्तद्भेदकूटवत्त्वमिति लक्षणसंभवे तत्र प्रतियोगिकोटौ स्वपदार्थस्यैव विशेषणतया निवेशात् । इतरेषां तु संसर्गतया निवेशाच्चोक्तलाघवसंभवेन स्वविशेष्यकत्वविशेषणस्य प्रयोजनलेशाभावात् तद्घटितलक्षणकरणस्यान्याय्यत्वादिति दिक् । लाघवाल्लक्षणान्तरमाह ॥ **मूले नित्यद्रव्यवृत्तिरिति** ॥ नित्यद्रव्यवृत्तिरेवेत्यर्थः । अनित्यद्रव्यावृत्तिरिति यावत् । यद्यपि नित्यद्रव्यगतैकत्वपरिमाणादेरपि अनित्यद्रव्यावृत्तित्वात् अतिव्याप्तं तथापि अनित्यद्रव्यवृत्त्यवृत्तिपदार्थविभाजकोपाधिमत्त्वस्य तदर्थत्वेनोक्तदोषाभावात् अत एव नित्यद्रव्यवृत्तिरिति विशेषाणां स्थानकथनं नतु लक्षणप्रविष्टं प्रयोजनाभावादिति केषांचिन्मूलाभिप्रायवर्णनमपास्तम् । एतावता प्रबन्धेन नित्यद्रव्येषु विशेषसिद्धौ तादृशविशेषेणैव तादृशनित्यद्रव्यवृत्तिगुणक्रियाध्वंसादेरपि व्यावृत्तिसंभवात् न तेष्वपि विशेषाङ्गीकार आवश्यक इति हृदयम् । अपरेतु ईश्वराकाशयोर्नित्यज्ञानशब्दाभ्यां व्यावृत्तेस्संभवान्न तत्र विशेष

## मञ्जूषा.

सिद्धिरित्येतावतैव अनवस्थानिरासात् सति व्याप्त्यादिज्ञाने जायमानानुमितिर्न वार्यते परस्परभेदस्य धर्मिग्राहकमानेनैव सिद्धत्वान्न तदनुमितिरिति चेदस्तु धर्मिग्राहकमानेनैव तत्सिद्धिः तथापि तद्विस्मृत्या विशेषमात्रस्मृत्या तदनुमितिर्न शक्यते वारयितुं सिसाधयिषयाच कदाचिदनुमितिस्स्यात्केन सा वारणीया प्राथमिकभेदसिद्धिस्तु धर्मिग्राहकमानेनैव न त्वेतद्विशेषस्तद्विशेषाद्भिद्यते तादात्म्येनैतद्विशेषादित्यनुमानेन पूर्वोक्तदोषात् उत्तरकालंतु न निवारयामः तस्मादस्त्येव तेषां परस्परभेदानुमितिरत एव विशेषान्तरापेक्षा नास्तीत्येवोक्तं नतु विशेषान्तरं नास्तीति यदपेक्षया विशेषो नास्तीत्यत्रापि विशेषान्तरापेक्षा नास्तीत्यर्थः । अथैवमपि तत्तदवयवभेदात्परस्परं भेद इति ग्रन्थस्वरसविरोधः । घटादिषु घटत्वादिहेतुकानुमितिमादायैवातिव्याप्तेर्वारणीयत्वात् तत्तदवयवघटितहेतोस्तत्तद्घटादिवृत्तिसमानाधिकरणमात्रवृत्तित्वादिति चेन्नायमप्यस्ति विरोधः न ह्ययं ग्रन्थो यथोपदर्शितस्य महादेवलक्षणस्य घटादावतिव्याप्तिवारणाय प्रवृत्तः येन विरोधस्स्यात् किंतु परमाणुषु व्यावर्तकतया विशेषा अवश्यमभ्युपेयाः इति वदिष्यन्विश्वनाथः तर्हि घटादीनां के व्यावर्तका इति जिज्ञासायां सन्ति घटादीनां व्यावर्तका इति दर्शयति ॥ **तत्तदवयवभेदादिति** ॥ नैतावता घटादीनां तत्तदवयवातिरिक्तव्यावर्तकानां निरासः । **स्वतएव व्यावृत्त इति** । धर्मिग्राहकमानातिरिक्तप्रमाणानपेक्षप्राथमिकसिद्धिविषयपरस्परभेदक इत्यर्थः । तदनुगुणं चेदं लक्षणं यथोपवर्णितविशेषणविशिष्टालिङ्गजन्या हि सजातीयभेदानुमितिः प्राथमिकी भवितुमर्हति घटादिषु प्रथममेव घटत्वादिना पटादिभेदानुमितेः नतूक्तविशेषणरहितलिङ्गजन्या तथाहि स्वाभिन्नत्वरहितं स्वमेव तेनच विशेषान्तरभेदानुमितिः एतद्विशेषे विशेषान्तरभेदसिद्ध्यर्थानव्याप्तिग्रहादौ सति स्यादेवं तत्स्थानाभिषिक्तस्वाविषयकप्रतीतिविषयत्वशून्य-एतद्विशेषत्वादिकतिपयालिङ्गकविशेषान्तरभेदानुमितिरपि तथा घटत्वादिलिङ्गकपटादिभेदानुमितिस्तु घटव्यक्त्यन्तरगृहीतया व्याप्त्या एतद्घटव्यक्तौ प्रथममेव भवितुमर्हतीति सर्वमनवद्यं परंतु एतद्विशेषो जलपरमाणुवृत्तिविशेषाद्भिन्नः पृथिव्यनुयोगिकसमवायाज्जलसमवेतत्वाभावादित्यनुमितिविशेष्यतामादायासंभवो दुर्वारः तादृशलिङ्गस्य एतद्विशेषाविषयकप्रतीतिविषयत्वादेतद्विशेषसमानाधिकरणेतरघटत्वादिवृत्तित्वाच्च किन्त्वेवं रीत्या तत्तदवयवभेदादित्यादिग्रन्थो यथोक्तलक्षणस्य घटादावतिव्याप्तिवारणार्थकतयापि योजयितुं शक्यः अयं घटः पटाद्भिद्यते कपालसमवायात्तन्त्वसमवेतत्वादित्याद्यनुमितिविशेष्यतामादायापि तत्रातिव्याप्तिवारणसंभवात् कपालसमवायादेरप्येतद्घटाविषयकप्रतीतिविषयत्वादेतद्घटसमानाधिकरणेतरघटान्तरवृत्तित्वाच्च तस्मादसंभवग्रस्तमेवेदं लक्षणं । यत्तूक्तं केनचित्स्वसजातीयभेदपदस्य स्वेतरस्वसजातीययावत्प्रतियोगिकभेदपरत्वान्नोक्तानुमितिमादायासंभव इति तन्न चारु स्वभिन्नलिङ्गजन्यत्वस्य यथाश्रुतार्थपरत्वे एतद्विशेषो विशेषान्तरेभ्यो भिद्यते एतत्परमाण्वनुयोगिकस-

**घटादीनां कपालादौ द्रव्येषु गुणकर्मणोः ।**
**तेषु जातेश्च सम्बन्धः समवायः प्रकीर्तितः ॥ ११ ॥**

**समवायं दर्शयति ॥ घटादीनामिति ॥** अवयवावयविनोर्जातिव्यक्त्योर्गुणगुणिनोः क्रियाक्रियावतोर्नित्यद्रव्यविशेषयोश्च यः सम्बन्धः स समवायः, समवायत्वं नित्यसम्बन्धत्वम् । तत्र प्रमाणं तु गुणक्रियादिविशिष्टबुद्धिर्विशेषणविशेष्यसम्बन्ध-

**प्रभा.**

इत्याहुः । तत्र नित्यज्ञानस्येश्वरनिष्ठभेदानुमापकत्वं न ज्ञानत्वेन व्यभिचारित्वात् न नित्यत्वविशिष्टज्ञानत्वेन तद्व्यक्तित्वेन वा सामान्याश्रयस्य सामान्यरूपेण भेदसाधकत्वनियमात् नित्यज्ञानत्वस्य नित्यत्वघटितत्वेनोपाधिरूपतया तेन रूपेण तद्व्यक्तित्वेन वा व्यावर्तकत्वासंभवात् । नच स्वसमानाधिकरणेश्वरत्वसंबन्धेन ज्ञानत्वावच्छिन्नमेव व्यावर्तकमस्त्विति वाच्यम् । तादृशस्य संबन्धत्वे प्रमाणाभावादन्यथा परमाणुगतैकत्वमादाय स्वसमानाधिकरणतादृशैकत्ववत्त्वसंबन्धेन सत्तारूपलिङ्गेनैव परमाण्वन्तरभेदसाधनसंभवे विशेषासिद्धिप्रसंगात् तस्माद्व्यावर्तकतया ईश्वरे विशेषाङ्गीकार आवश्यकः । आकाशस्य शब्दात्मकलिङ्गेन व्यावृत्तिसंभवेऽपि कत्वादीनां बहूनां शब्दकारणतावच्छेदकत्वे गौरवात् लाघवाच्छब्दकारणतावच्छेदकतयाऽऽकाशे विशेषस्वीकार आवश्यक इति । नवीनास्तु विशेषे मानाभावः विशेषाङ्गीकर्तृमते स्वतोव्यावृत्ततया यथा विशेषाणां सिद्धिः तथा नित्यद्रव्याणामपि स्वतोव्यवृत्ततया सिद्धिसंभवादित्याहुः । तत्र ईश्वराकाशयोरुक्तरीत्या विशेषासिद्धेरावश्यकत्वादिति ॥ १० ॥

मूले घटादीनां कपालादावित्यत्र घटादिपदमवयविमात्रपरं कपालादिपदमवयवमात्रपरमित्याभिप्रायेणार्थमाह ॥ **अवयवावयविनोरिति** ॥ जातेश्चेत्यत्र चशब्देन सूचितमर्थमाह ॥ **नित्यद्रव्यविशेषयोरिति** ॥ ननु मूलस्थसमवायशब्देनोपस्थितस्य समवायत्वात्मकसमवायलक्षणस्यैकव्यक्तिकत्वेन जा-

**मञ्जूषा.**

मवायात् एतद्विशेषघटान्यतरत्वात् इत्यनुमितिविशेष्यतामादायासंभवापत्तेः स्वाविषयकप्रतीतिविषयस्वसमानाधिकरणमात्रवृत्तिभिन्नलिङ्गजन्यत्वार्थकत्वे घटादौ तादृशानुमितेरप्रसिद्धेः तत्र घटत्वादेस्तत्तद्घटाविषयकघटान्तरविषयकप्रतीतिविषयत्वेऽपि तत्तद्घटासमानाधिकरणेतरघटान्तरवृत्तित्वेऽपि च तद्घटेतरयावद्द्रव्यप्रतियोगिकभेदसाधकत्वाभावात् एतत्कपालसमवायादेस्तत्तद्घटासमानाधिकरणमात्रवृत्तित्वादित्यास्तां विस्तरः । तस्माद्विशेषेषु परस्परभेदानुमितिस्स्वभिन्नालिङ्गेन कदापि न जन्यत इत्यभिप्रायेणेदं लक्षणम् । अभिप्रायमूलं मृग्यम् ॥ १० ॥

**नित्यसंबन्धत्वमिति** ॥ नित्यत्वं वक्ष्यते संबन्धत्वं विशिष्टप्रतीतिनियामकत्वं तच्च प्रकारत्वविशेष्यत्वान्यविषयताश्रयत्वं नच निर्विकल्पकीयविषयतामादाय घटत्वादावतिव्याप्तिरिति वाच्यं किंचि-

**दिनकरीयम्.**

घटादीनां कपालादौ द्रव्येषु गुणकर्मणोः । तेषु जातेश्च सम्बन्ध इति मूलम् । तत्र घटपदकपालपदे अवयव्यवयवपरे इत्याह ॥ **अवयवावयविनोरिति** ॥ जातेश्चेति चकारेण नित्यद्रव्येषु विशेषसम्बन्धः समुच्चीयत इत्याह ॥ **नित्यद्रव्यविशेषयोरिति** ॥ समवायलक्षणमाह ॥ **नित्यसम्बन्धत्वमिति** ॥ सम्बन्धश्चात्र सम्बन्धिभिन्नो ग्राह्यस्तेन नित्याभावादिस्वरूपसम्बन्धे ना-

**रामरुद्रीयम्.**

**घटपदकपालपदे इति** ॥ घटादिकपालादिपदे इत्यर्थः ॥ नित्यद्रव्यविशेषयोः सम्बन्धस्य मूले समवायत्वानुक्त्या मूलस्य न्यूनत्वमित्याशङ्कां परिहरति ॥ **जातेश्चेतीति** ॥ ननु नित्यसम्बन्धत्वस्य समवायलक्षणत्वे द्रव्यत्वाभावादीनां स्वात्मकस्वरूपसम्बन्धेऽतिव्याप्तिरित्याशङ्कां परिहरति ॥ **सम्बन्धश्चेति** ॥ **सम्बन्धिभिन्न इति** ॥ तथाच सम्बन्धप्रतियोग्यनुयोगिभिन्नत्वे सति नित्यत्वे सति सम्ब-

विषया विशिष्टबुद्धित्वाद्दण्डी पुरुष इति विशिष्टबुद्धिवदित्यनुमा । अनेन संयोगादीनां

## प्रभा.

तित्वासंभवादुपाधिरूपत्वं वाच्यं तत्किं तदाह ॥ **समवायत्वमिति** ॥ **नित्यसंबन्धत्वमिति** ॥ नित्यत्वे सति संबन्धत्वं समवायलक्षणमित्यर्थः । नित्यत्वमात्रोक्तौ आकाशादावतिव्याप्तिः । संबन्धत्वमात्रोक्तौ संयोगेऽतिव्याप्तिः अत उभयमुपात्तम् । अत्र संबन्धत्वं विशिष्टप्रतीतिनियामकत्वं विशिष्टबुद्धिनिरूपितप्रकारत्वविशेष्यत्वान्यविषयतावत्त्वमिति यावत् । तेन विशिष्टप्रतीतिनिरूपितविषयत्वरूपविशिष्टप्रतीतिनियामकत्वस्य घटत्वादौ सत्त्वेऽपि न तत्रातिव्याप्तिः । नच तथापि घटाभावो घटाभाववानित्यादिविशिष्टबुद्धिनिरूपितप्रकारत्वविशेष्यत्वान्यविषयतावत्त्वस्य घटाभावात्मकाधेयस्वरूपसंबन्धे नवीनमते घटाभावात्मकाधिकरणस्वरूपसंबन्धे वा सत्त्वात् तत्र नित्यत्वस्यापि सत्त्वादतिव्याप्तिरिति वाच्यं तद्बुद्धिनिरूपितप्रकारत्वविशेष्यत्वान्यतरवच्छिन्नत्वेनापि विशेषणीयत्वात् । नच तथापि विशिष्टबुद्धित्वस्यानुगतस्याभावेन तद्व्यक्तित्वेनैव लक्षणे निवेशनीयतया घट इत्याकारकबुद्धिव्यक्तिनिरूपितप्रकारत्वविशेष्यत्वान्या या पट इत्याकारकबुद्धिव्यक्तिनिरूपितविषयता तस्याः पटत्वे सत्त्वात् घट इत्याकारकपूर्वोक्तबुद्धिव्यक्तिनिरूपितप्रकारत्वविशेष्यत्वान्यतरवच्छिन्नत्वस्यापि पटत्वे सत्त्वाच्च पटत्वादावतिव्याप्तमिति वाच्यं तद्बुद्धिनिरूपितप्रकारत्वविशेष्यत्वान्यविषयतायां तद्बुद्धिनिरूपितत्वेनापि विशेषणीयत्वात् पटत्वनिष्ठविषयतायां घट इत्याकारकबुद्धिव्यक्तिनिरूपितत्वाभावेनातिव्याप्तेरभावात् तद्बुद्धिपदेन घटपटाविति समूहालम्बनात्मकबुद्धिस्वीकारे तु तद्बुद्धिनिरूपितप्रकारतात्वेन घटत्वपटत्वप्रकारत्वे अनुगमय्य तद्बुद्धिनिरूपितप्रकारत्वविशेष्यत्वसामान्यभिन्नत्वस्य विषयतायां निवेशनीयतया पटत्वनिष्ठविषयतायास्तादृशत्वा-

## मञ्जूषा.

द्विषयतानिरूपितत्वस्यापि विषयताविशेषणत्वात् नच गगनादिनिष्ठघटत्वाभावादिरूपस्वरूपसंबन्धेऽतिव्याप्तिरिति वाच्यं प्रकारत्वविशेष्यत्वान्यतरवच्छिन्नत्वस्यापि विशेषणत्वात् नच समवायस्यापि कदाचिदस्मदादिज्ञाने नित्यज्ञाने च प्रकारत्वाद्विशेष्यत्वाच्च असंभव इति वाच्यम् । प्रकारत्वविशेष्यत्वान्यविषयतायामेव स्वनिरूपकप्रकारत्वविशेष्यत्वान्यतरवच्छिन्नवृत्तित्वस्य निवेशनीयत्वात्समवायनिष्ठा या संसर्गताख्या विषयता तन्निरूपकप्रकारत्वविशेष्यत्वयोस्समवाये अभावान्न दर्शितदोषः । एवंच किंचिद्विषयतानिरूपितत्वं नोपादेयमित्यस्मद्गुरुचरणसम्मतः परिष्कारः । अथ घटसमवायकपालयोर्यस्स्वरूपसंबन्धस्स यदि समवायरूपस्तदा घटसमवायवान् कपाल इति प्रतीतिनिरूपितस्वरूपसंबन्धनिष्ठसंसर्गतानिरूपकप्रकारतावच्छिन्नत्वविरहादसंभवः यद्यधिकरणस्वरूपस्तदा तुल्ययुक्त्या प्रमेयत्ववान् समवाय इति प्रतीतिविषयस्वरूपसंबन्धस्यापि समवायरूपतया तन्निष्ठसंसर्गतानिरूपिताविशेष्यतावच्छिन्नत्वविरहादसंभव इति चेद्भ्रान्तोऽसि नहि स्वनिष्ठविषयतानिरूपितप्रकारत्वविशेष्यत्वान्यतरवच्छिन्नत्वं लक्षणमिति वयं ब्रूमः येनायमसंभवस्स्यात्किंतु स्वनिरूपितप्रकारत्वविशेष्यत्वान्यतरवच्छिन्नवृत्तिर्या विषयता प्रकारत्वविशेष्यत्वान्या तदाश्रयत्वमित्येव । एवंच घटसमवायवान् कपाल इत्यादिप्रतीतिनिरूपितसंसर्गतामादाय लक्षणसमन्वयो मा भूत् घटवान् कपाल इत्यादिप्रतीतिविषयतामादाय लक्षणसमन्वयः केन वार्यते अथवा प्रकारतात्वविशेष्यतात्ववत्संसर्गतात्वस्याप्यतिरिक्ततया स्वनिरूपितप्रकारत्वविशेष्यत्वान्यतरवच्छिन्नवृत्तिसंसर्गताश्रयत्वमेव संबन्धत्वमिति बोध्यं यद्यपि समवायः प्रत्यक्षसिद्ध एव नीलो घट इत्यादौ तस्य संसर्गतया भाना-

## दिनकरीयम्.

तिव्याप्तिः । ननु समवायस्य सम्बन्धत्वे किं मानमित्याशङ्क्याह ॥ **तत्र प्रमाणन्त्विति** ॥

## रामरुद्रीयम्.

न्धत्वं समवायलक्षणमतः प्रतियोग्यनुयोग्यात्मकस्वरूपसम्बन्धे नातिव्याप्तिः । अत्र च द्रव्यत्वाभावादीनां लाघवात् द्रव्यत्वाभावादिरेक एव सम्बन्धः घटादीनां महाकाले कालिकसम्बन्धो लाघवादेक एव महाकाल इति स्वरूपसम्बन्धस्य क्वचित्प्रतियोगिरूपता क्वचिदनुयोगिरूपतेति विभागो बोध्यः । सम्ब-

बाधात् समवायसिद्धिः । नच स्वरूपसंबन्धेन सिद्धसाधनमर्थान्तरं वा अनन्तस्वरूपाणां सम्बन्धत्वकल्पने गौरवाल्लाघवादेकसमवायसिद्धिः । नच समवायस्यैकत्वे वायौ

## प्रभा.

भावेन तथाप्यतिव्याप्तेरभावात् । तथाच तद्बुद्धिनिरूपितप्रकारत्वविशेष्यत्वसामान्यभिन्नतद्बुद्धिनिरूपितविषयतावत्त्वे सति तद्बुद्धिनिरूपितप्रकारत्वविशेष्यत्वान्यतरवद्भिन्नत्वं संसर्गत्वमिति फलितम् । ननु तद्बुद्धिशब्देन घट इत्याद्याकारकैकैकबुद्धेरेव ग्राह्यतया घट इत्याकारकबुद्धिव्यक्तिघटितनिरुक्तसंसर्गत्वस्य समवायमात्रनिष्ठत्वेन संयोगे नित्याभावादिस्वरूपसंबन्धे चाभावादतिव्याप्तेरप्रसक्त्या समवायलक्षणे नित्यत्वविशेषणं तादृशान्यतरवद्भिन्नत्वविशेषणं च व्यर्थं तद्बुद्धिशब्देन विनिगमनाविरहेण घट इत्याकारकबुद्धिव्यक्तीनां सर्वासां तत्तद्व्यक्तित्वेन लक्षणे प्रवेशापत्त्या बुद्धिव्यक्तिभेदेन एकस्यैव समवायस्य नानासंसर्गत्वापत्तेश्चेति चेदत्र प्राञ्चः घट इत्याद्याकारकबुद्धिव्यक्तीनां सर्वासां अन्यतमत्वेन संसर्गत्वशरीरे निवेशात् तादृशान्यतममध्ये घटवद्भूतलमित्याद्याकारकबुद्धिव्यक्तेः घटाभावो घटाभाववानिति बुद्धिव्यक्तेश्च प्रविष्टत्वेन तादृशान्यतमत्वावच्छिन्ननिरूपितप्रकारत्वादिघटितलक्षणस्य संयोगे नित्याभावादिस्वरूपसंबन्धे च सत्त्वात्तत्रातिव्याप्तिवारणाय नित्यत्वे सतीति विशेषणं तादृशान्यतरवद्भिन्नत्वविशेषणं च सार्थकमनुगतान्यतमत्वेन रूपेण बुद्धिव्यक्तीनां लक्षणे प्रवेशात् एकस्यानन्तसंसर्गत्वापत्तिरपि नेत्याहुः । तन्न तादृशबुद्धिव्यक्तीनां सर्वासां तत्तद्व्यक्तित्वेनासर्वज्ञैर्ज्ञातुमशक्यतया तादृशान्य

## मञ्जूषा.

तथापि विप्रतिपन्नं प्रति प्रथमतस्स्वरूपसंबन्धाद्यतिरिक्तस्तत्प्रतीतिविषय इति प्रतिपादयितुमशक्यतया तदर्थमनुमानं दर्शयितुमाह ॥ **तत्प्रमाणं त्विति** ॥ समवाये प्रमाणं त्वित्यर्थः । उच्यत इति शेषः । **गुणक्रियेति** ॥ तथाहीत्यादिः ॥ **गौरवादिति** ॥ अथात्र विपरीतमेव गौरवं तथाहि नीलो घट इति प्रतीतौ घटस्वरूपमेव संसर्गः घटस्वरूपंच क्लृप्तमेव न कल्पनीयं तत्प्रतीतिनिरूपिता च या संसर्गता त्वया स्वीकृता समवाये सैव मया घटस्वरूपे स्वीक्रियते नातो मम गौरवं नच घटवि

## दिनकरीयम्.

गुणक्रियादीत्यादिना जातिपरिग्रहः ॥ **संयोगादीति** ॥ द्रव्ययोरेव संयोग इति नियमादिति भावः । अत्र समवायसम्बन्धेन पटत्वावच्छिन्नं प्रति तादात्म्यसम्बन्धेन तन्तुत्वेन हेतुत्वात्कार्यतावच्छेदकसम्बन्धविधया समवायसिद्धिः । न च समवायस्थाने स्वरूपसम्बन्धं निवेश्य कार्यकारणभावः कल्पनीय इति वाच्यं, तथा सति यत्समवेतं कार्यमुत्पद्यते तत्समवायिकारणमिति समवायिकारणव्यवस्था न स्यात् । न च यत्सम्बद्धं कार्यमुत्पद्यते तत्समवायिकारणमित्येवास्त्विति वाच्यं, कपालसम्बद्धघटध्वंसं प्रति कपालस्य समवायिकारणत्वप्रसङ्गादित्यपि द्रष्टव्यम् ॥ **सिद्धसाधनमिति** ॥ अयुतसिद्धयोः स्वरूपसम्बन्ध इति वदतः परस्येति शेषः ॥ **अर्थान्तरं वेति** ॥ समवायसाधने प्रवृत्तानां नैयायिकानामिति शेषः । ननु तथापि समवायस्यैकत्वे किं मानमत

## रामरुद्रीयम्.

न्धत्वं च सांसर्गिकविषयतावत्त्वमेव । **द्रव्ययोरेवेति** ॥ संयोगसामान्यं प्रति द्रव्यस्य समवायिकारणत्वादिति भावः । ननु समवायनानात्ववादिनां नव्यानां मते उक्तानुमानेन न समवायसिद्धिः सम्भवति अतिरिक्तानन्तसमवायानां संबन्धत्वकल्पनामपेक्ष्य क्लृप्तानन्तस्वरूपाणामेव सम्बन्धत्वौचित्यात् इति तन्मतेऽपि समवायसिद्ध्यर्थं स्वयं प्रमाणान्तरमाह ॥ **अत्रेति** ॥ **यत्समवेतमिति** ॥ समवायेन यद्वृत्ति कार्यमित्यर्थः । समवायाभावे एतादृशसमवायिकारणलक्षणानुपपत्तिरिति भावः ॥ **यत्सम्बद्धमिति** ॥ यदनुयोगिकसम्बन्धप्रतियोगीत्यर्थः । तथा च सम्बन्धत्वेनैव सम्बन्धप्रवेशात् समवायाभावेऽपि न समवायिकारणलक्षणानुपपत्तिरिति भावः । सिद्धसाधनमित्यत्र कस्य सिद्धसाधनमित्याकाङ्क्षोदयादाह ॥ **अयुतेति** ॥ ययोरेकमपराश्रितमवतिष्ठते तावयुतसिद्धौ । अर्थान्तरशब्दस्य स्वानभिमतार्थसिद्धिरर्थः । तत्रापि

## प्रभा.

तमत्वघटितलक्षणस्यापि दुर्ज्ञेयत्वापत्तेः । एतेन तादृशदुर्ज्ञेयत्वरूपदोषवारणाय शुकादिसमवेतसर्वविषयकयत्किंचिज्ज्ञानव्यक्तिमुपादाय तद्व्यक्तिघटितलक्षणस्यैव करणीयतया न पूर्वोक्तदोषापत्तिरिति कस्यचिन्मतमपास्तम् । शुकादिसमवेतसर्वविषयकज्ञानव्यक्तीनां बहुत्वेन विनिगमनाविरहेण सर्वासां तत्तद्व्यक्तित्वेन लक्षणे निवेशनीयतया पूर्वोक्तदोषापत्तेर्दुर्वारत्वात् । वस्तुतस्तु नित्यज्ञानव्यक्तित्वावच्छिन्ननिरूपितप्रकारत्वादिघटितमेव लक्षणमिति न दुर्ज्ञेयत्वरूपदोषः । नचैवं सति नित्यज्ञानव्यक्तेः सर्वविषयकत्वेन समवायप्रकारकज्ञानात्मकतया नित्यज्ञानव्यक्तिनिरूपितप्रकारतावत्त्वेन तत्तद्व्यक्तिनिरूपितप्रकारत्वविशेष्यत्वान्यतरवद्भिन्नत्वघटितलक्षणाभावात् निरुक्तलक्षणमसंभवग्रस्तमिति वाच्यम् । नित्यज्ञानव्यक्तिनिरूपितप्रकारत्वविशेष्यत्वान्यतरवद्भिन्नविषयतावत्त्वे सति तादृशविषयतानिरूपकप्रकारत्वविशेष्यत्वान्यतरवद्भिन्नत्वस्यैव लक्षणत्वेन समवायनिष्ठनित्यज्ञानव्यक्तिनिरूपितप्रकारत्वविशेष्यत्वान्यतरवद्भिन्नविषयताया निरूपकं प्रकारत्वं विशेष्यत्वं वा न समवायनिष्ठमिति तादृशान्यतरवद्भिन्नत्वस्य समवाये सत्त्वान्नासंभवः । एवंच तन्निष्ठनित्यज्ञाननिरूपिततादृशप्रकारत्वविशेष्यत्वान्यविषयतायां तादृशबुद्धिव्यक्तिनिरूपितत्वविशेषणं नोपादेयं प्रयोजनाभावात् तथाच नित्यज्ञानव्यक्तिनिरूपितप्रकारत्वविशेष्यत्वान्यतरभिन्नविषयतावत्त्वनित्यज्ञानव्यक्तिनिरूपितप्रकारत्वविशेष्यत्वान्यतरभिन्नविषयतानिरूपकप्रकारत्वविशेष्यत्वान्यतरवद्भिन्नत्वनित्यत्व-एतत्त्रितयवत्त्वं समवायलक्षणमिति न कोऽपि दोष इति प्रतिभाति । ननु समवाये प्रमाणाभावात् तल्लक्षणकरणमसङ्गतं नहि तत्र प्रत्यक्षं प्रमाणं तस्य समवायसाधकत्वेऽपि अतिरिक्तत्वासाधकत्वादित्याशङ्कामनुमानप्रमाणं प्रदर्श्य परिहरति ॥ **तत्प्रमाणं त्विति** ॥ तत्तु प्रमाणमिति योजना । **तत्** अनुमानं **तु** अवधारणे समवाय इत्यादिः । तथाच समवाये अनुमानमेव प्रमाणमित्यर्थः फलितः । किं तदनुमानमित्यत आह ॥ **गुणक्रियादीति** ॥ अत्र गुणक्रियाजात्यन्यतमप्रकारकज्ञानत्वं पक्षतावच्छेदकं नातः एकैकप्रकारकबुद्धित्वस्य पक्षतावच्छेदकत्वे अपरस्य पक्षतावच्छेदककोटिप्रवेशानुपपत्तिः ॥ **विशेषणविशेष्यसंबन्धविषयेति** ॥ अत्र विशेषणविशेष्ययोस्संबन्ध इति षष्ठीतत्पुरुषसमासे विशेषणविशेष्ययोरित्यस्यानर्थक्यप्रसङ्गात् अतः द्वन्द्वसमासपूर्वकबहुव्रीहिसमासाश्रयणेन विशेष्यतानिरूपकत्वप्रकारतानिरूपकत्वसंसर्गतानिरूपकत्वानां प्रत्येकं साध्यत्वलाभः विशिष्टबुद्धित्वहेतोस्त्रयाणामपि व्याप्यत्वात् । एतल्लाभायैव विशेषणविशेष्यसंबन्धविषयेत्युक्तम् । वस्तुतः प्रकृते संसर्गत्वनिरूपकत्वमात्रं साध्यं तावतैव समवायसिद्धिसंभवात् ॥ **विशिष्टबुद्धित्वादिति** ॥ किंचिन्निष्ठप्रकारतानिरूपकबुद्धित्वादित्यर्थः । निर्विकल्पे व्यभिचारवारणाय विशिष्टत्वविशेषणं पूर्वोक्तार्थकं वस्तुतः बुद्धित्वं न हेतुघटकं व्यर्थत्वात् प्रकारित्वमात्रस्यैव सद्धेतुत्वसंभवात् यदि ज्ञाननिष्ठप्रकारित्वापेक्षया इच्छानिष्ठप्रकारित्वस्य

## मञ्जूषा.

षयकप्रतीतौ घटस्वरूपस्य पटविषयकप्रतीतौ पटस्वरूपस्येत्यनन्तानां संसर्गत्वे गौरवमिति वाच्यम् । तत्तत्प्रतीतिनिरूपितानां समवाये त्वया स्वीकृतानामेव संसर्गतानां तत्तत्स्वरूपेषु मया स्वीकारात् नच विषयभेदेन विषयतानां भिन्नतया तत्तत्प्रतीतिनिरूपितानां संसर्गतानां भेदापत्तिरिति वाच्यं विषयैक्येऽपि निरूपकविषयिताभेदेन विषयताभेदस्यावश्यकतया समवायनिष्ठानामपि संसर्गतानां घटप-

## दिनकरीयम्.

आह ॥ **लाघवादिति** ॥ तथा च यथा क्षित्यादिजनकतयेश्वरो लाघवादेक एव सिद्धयति तथा समवा-

## रामरुद्रीयम्.

कस्येत्याकाङ्क्षोदयादाह ॥ **समवायेति** ॥ **लाघवादिति** ॥ लाघवज्ञानसहकारादित्यर्थः । कृतिजन्यत्वव्याप्यकार्यत्ववानिति परामर्शादपि कृतेरेकत्वे लाघवमिति लाघवज्ञानसहकृतात् क्षित्यङ्कुरादिकमेककृतिजन्यमित्यनुमितिवत् सम्बन्धस्यैक्ये लाघवमिति लाघवज्ञानसहकृतात् विशेषणविशेष्यसम्बन्धविषयकत्वव्याप्यविशिष्टबुद्धित्ववती गुणक्रियादिविशिष्टबुद्धिरिति परामर्शादपि विशेषणविशेष्ययोरेकसम्बन्धविष-

## प्रभा.

भिन्नत्वेनेच्छादिनिष्ठप्रकारित्वस्य हेतुत्वे स्वरूपासिद्धिप्रसङ्गेन बुद्धिनिष्ठप्रकारिताया एव हेतुत्वमिति बोधनार्थं बुद्धिनिष्ठस्वरूपसंबन्धेन प्रकारित्वस्य हेतुत्वलाभार्थं वा विशिष्टबुद्धित्वादित्युक्तमिति विभाव्यते तदा बुद्धिनिष्ठप्रकारितायाः तत्तद्व्यक्तित्वेन हेतुत्वेऽप्यननुगमेन भागासिद्धिप्रसक्त्या प्रकारितात्वेन प्रकारित्वस्य हेतुत्वावश्यकतया तस्येच्छादिसाधारण्येऽपि सांसर्गिकविषयत्वावच्छिन्नत्वरूपसाध्यस्यापि तत्र सत्त्वात् व्यभिचारित्वाप्रसक्त्या पूर्वोक्तप्रयोजनासंभवेन बुद्धित्वविशेषणं व्यर्थमेव । परन्तु पक्षेऽपि तादृशहेतुरस्त्विति बोधनाय विशिष्टबुद्धित्वादित्युक्तमिति ध्येयम् ॥ **संयोगादीनामिति** ॥ ननु गुणगुणिनोः संयोगस्य बाधितत्वेऽपि अभावीयविशेषणत्वादिसंबन्ध एवास्तामित्यत आह ॥ **आदीति** ॥ आदिनाऽभावीयविशेषणत्वादेः परिग्रहः । तथाचाभावस्यैव दैशिकविशेषणतासंबन्धस्वीकारेण प्रकृते तदसंभवात् गुणगुणिनोरैक्याभावेन तादात्म्यस्य च बाधितत्वादिति भावः । केचित्तु अत्र समवायसंबन्धेन पटत्वावच्छिन्नं प्रति तादात्म्यसंबन्धेन तन्तुत्वेन हेतुत्वात् कार्यतावच्छेदकसंबन्धविधया समवायसिद्धिः । नच समवायस्थाने स्वरूपसंबन्धं निवेश्य कार्यकारणभावः कल्पनीय इति वाच्यम् । तथासति यत्समवेतं कार्यमुत्पद्यते इत्यादिसमवायिकारणस्य व्यवस्था न स्यात् । नच यत्संबद्धं कार्यमुत्पद्यते तत्समवायिकारणमेवास्त्विति वाच्यं स्वरूपस्यैव प्रवेशे कपालसंबद्धघटध्वंसं प्रति कपालस्यैव समवायिकारणत्वप्रसङ्गादित्यपि द्रष्टव्यमित्यनेन प्रकारान्तरेण समवायसाधनमाहुः । तदसत् । अत्र कार्यत्वं न प्रागभावप्रतियोगित्वरूपं प्रागभावव्यक्तिभेदेन तत्प्रतियोगित्वव्यक्तीनामपि भिन्नभिन्नतया एकैकप्रतियोगित्वघटितलक्षणकरणे अन्यत्रातित्याप्त्यापत्तेः । नहि प्रागभावप्रतियोगितात्वेनानुगमस्संभवति प्रागभावत्वस्यैकस्य अभावात् अतिरिक्तानुगतप्रागभावत्वस्वीकारे तु तदपेक्षया सकलकार्येषु अतिरिक्तानुगतकार्यत्वाङ्गीकारस्यैवोचितत्वात् नचेष्टापत्तिः । समवायस्यातिरिक्तत्वसाधनार्थमतिरिक्तकार्यत्वस्वीकारापत्त्या महागौरवात् । किंतु स्वनिष्ठमहाकालभेदवत्त्वस्वरूपकालिकैतत्त्रितयसंबन्धेन सत्तावत्त्वमेवानुगतं कार्यत्वलक्षणघटकं तथाचैतत्त्रितयसंबन्धेन सत्ताविशिष्टं यत् तत्समवायिकारणं इति लक्षणं पर्यवसन्नम् । कार्यतावच्छेदकसंबन्धकोटौ समवायस्याप्रविष्टत्वात् कार्यतावच्छेदकसंबन्धविधया समवायसिद्धेरप्रामाणिकत्वादिति । वस्तुतस्तु प्रतियोगितासंबन्धेनाश्रयनाशाजन्यरूपनाशं प्रति स्वानुयोगिसमवेतत्वसंबन्धेन विलक्षणतेजस्संयोगस्य हेतुत्वं तत्र समवायानङ्गीकारे स्वानुयोगिसंबद्धत्वसंबन्धेन हेतुत्वं वाच्यम् । तत्र स्वानुयोगिघटादिना रूपस्य न स्वरूपसंबन्धः तस्य नाशात् अतएव न कालिकः विद्यमानस्यैव कालिकसंबन्धस्वीकारात् संयोगस्य बाधितत्वाच्च । तादृशसंयोगनिष्ठकारणतावच्छेदकसंबन्धघटकतया समवायसिद्धिर्द्रष्टव्या ॥ **सिद्धसाधनमिति** ॥ परस्येत्यादिः ॥ **अर्थान्तरं वेति** ॥ नैयायिकस्येत्यादिः । अनभिमतार्थसिद्धिरित्यर्थः । ननु उक्तानुमानादितरबाधादिसहकृतादतिरिक्तसमवायसिद्धावपि तस्यैकत्वे मानाभाव इत्यत आह ॥ **लाघवादिति** ॥ तथाच लाघवज्ञानसहकृतात् इतरबाधादिसहकृतात् नि-

## मञ्जूषा.

टादिविशेष्यताभेदेन भेदादेकस्मिन् बहुविषयताकल्पनापेक्षया बहुष्वेकैकविषयताकल्पनस्य गुरुत्वाभावात् एतेन घटपटकुड्यकुसूलानीत्याकारकसमूहालम्बनप्रतीतौ एकस्यामेव नानास्वरूपाणां संबन्धत्वकल्पने गौरवमित्यपि परास्तम् । तत्रापि चतसृणां संसर्गतानां एकस्मिन् त्वया स्वीकारेण चतसृषु व्यक्तिषु एकैकस्यास्संसर्गतायास्स्वीकारे गौरवाभावात् तथाचातिरिक्तसमवायकल्पनाप्रयुक्तगौरवं परमतिरिच्यते अतस्समवायो न प्रामाणिक इति चेदुच्यते अस्ति तावदयं घटोऽयं घट इति ज्ञानादिमे घटा इति ज्ञानस्य प्रत्यक्षरूपस्य शाब्दरूपस्य वा वैलक्षण्यमानुभाविकं न तदपह्नवमर्हति तच्च समूहालम्बने विशेष्यताभेदेन प्रकारतानां भेदः न त्विमे घटा इति ज्ञाने इति स्वीकारेणैव निर्वहति । ततश्च तस्मिन् ज्ञाने नानाविशेष्यतानिरूपितैकैव प्रकारता तन्निरूपिकाच संसर्गता समवायस्वीकर्तृभिरेकैव स्वीकार्या स्वरूपसंबन्धवादिभिस्तु तत्तद्व्यक्तिस्वरूपात्मकत्रिविषयभेदाद्भिन्ना एव संसर्गतास्स्वीक्रियेरन् इति व्यक्तमिदं गौरवं एवं

रूपवत्ताबुद्धिप्रसङ्गः, तत्र रूपसमवायसत्त्वेऽपि रूपाभावात् । न चैवमभावस्यापि

**प्रभा.**

रुक्तानुमानात् एकः अतिरिक्तस्समवायस्सिद्ध्यतीति भावः ॥ **रूपवत्ताबुद्धिरिति** ॥ अभ्रान्तस्येत्या-दिः । **रूपाभावादिति** ॥ तेन संबन्धेन रूपाभावादित्यर्थः । नच वायौ रूपसमवायसत्त्वेन तेन संबन्धेन कथं रूपाभाव इति वाच्यं वायू रूपवानिति प्रामाणिकानुभवाभावेन वायौ समवायस्य

**मञ्जूषा.**

नीलः पीता इत्यादिप्रतीतिष्वपि बोध्यम् । एवमनन्तेषु भूतलादिस्वरूपेषु रूपादिप्रतियोगिकत्वकल्पनापेक्षया एकस्मिन् समवाये तत्कल्पनायां लाघवमक्षतमेवं आश्रयनाशजन्यतावच्छेदकघटकतयापि समवायसि-द्धिः स्वरूपसंबन्धेन तद्वृत्तिकार्यनाशत्वस्य जन्यतावच्छेदकत्वे ध्वंसस्यापि नाशप्रसङ्गात् ॥ **रूपाभा-वादिति** ॥ ननु रूपसमवायसत्त्वे तेन संबन्धेन कथं तत्र रूपाभावः संबन्धसत्त्वस्य तेन संबन्धेन सं-बन्धिसत्त्वव्याप्यत्वादिति चेदत्र महादेवः रूपनिरूपितत्वविशिष्टसमवायस्यैव रूपसंबन्धतया वायौ तद-भावः नच विशिष्टस्यानतिरिक्ततया विशिष्टसमवायोऽपि वायावस्तीति वाच्यं रूपनिरूपितत्वविशिष्टसमवा-यनिरूपिताधिकरणताया एव रूपसंबन्धतया तस्यच वायावभावात् इत्याचष्ट । तत्र विचार्यते किमेतावता समवायस्य केवलस्य संसर्गतास्तीत्यभिप्रेतं नास्तीति वा । आद्ये रूपनिरूपितत्वविशिष्टस-मवायत्वावच्छिन्ननिरूपिताधिकरणतासंसर्गकरूपप्रकारकवायुविशेष्यकबुद्धेः प्रमात्ववारणेऽपि समवायसंसर्ग-करूपप्रकारकबुद्धेः प्रमात्वमवारितम् । द्वितीये धर्मिग्राहकमानविरोधः विशिष्टबुद्धिसंसर्गतयैव तत्सिद्धेः संस-र्गघटकत्वात्संसर्गत्वमनपेतमिति चेदस्तु तथापि रूपसंबन्धाभावस्यैव भवदुक्तरीत्या तद्बुद्धेः प्रमात्वा-भावनियामकतया रूपसमवायसत्त्वेऽपि रूपाभावादिति रूपाभावस्य तन्नियामकत्वकथनविरोधः । नच रूपा-भावादित्यस्य रूपनिरूपितत्वविशिष्टसमवायत्वावच्छिन्ननिरूपिताधिकरणतासंबन्धेन रूपाभावादित्यर्थकल्प-नया न विरोध इति वाच्यम् । तादृशार्थस्य स्वरसतस्तद्वाक्यादलाभेन कुसृष्टिकल्पनापत्तेः । किंच अ-नन्तस्वरूपाणां संसर्गतास्वीकारेण गौरवाद्धि समवायः प्रागङ्गीकृतः । यदि रूपनिरूपितत्वविशिष्टसमवाय-निरूपिताधिकरणताया एव संबन्धत्वं तदाधिकरणताया अधिकरणस्वरूपानतिरिक्ततयाऽऽनन्त्यानपायात् समवायस्वीकार एव निरर्थकः । अधिकरणता नाधिकरणस्वरूपा किन्त्वतिरिक्ता साच नाधिकरणभे-दाद्भिद्यते मानाभावात् किंतु संबन्धभेदान्निरूपकतावच्छेदकभेदाच्च तथाच रूपवत्ताबुद्धौ सर्वत्र रूप-निरूपितत्वविशिष्टसमवायत्वावच्छिन्ननिरूपिताधिकरणताया एकस्या एव संसर्गता स्वीक्रियते घटत्ववि-शिष्टबुद्धौ सर्वत्र घटत्वनिरूपितत्वविशिष्टसमवायत्वावच्छिन्ननिरूपिताधिकरणतायाः स्वरूपाणां सं-सर्गतास्वीकारापेक्षया लाघवमनपायमिति चेदपसिद्धान्तात् । तथाहि अधिकरणताया अतिरिक्तत्ववादि-भिरपि तत्तद्विशेषधर्मावच्छिन्ननिरूपिताधिकरणतानां अवश्यकल्पनीयानामेव सामान्यधर्मावच्छिन्ननिरूपि-तत्वं स्वीक्रियते नत्वतिरिक्ता सामान्यधर्मावच्छिन्ननिरूपिताधिकरणता काचिदङ्गीकार्या प्रयोजनाभावात् । एतच्च व्याप्तिवादे पूर्वपक्षग्रन्थे भट्टाचार्येण प्रकटितम् । एवञ्च तत्तद्रूपनिरूपितत्वविशिष्टसमवायत्वावच्छिन्न-

**दिनकरीयम्.**

योऽपीत्यर्थः ॥ **रूपवत्ताबुद्धीति** ॥ रूपवत्ताबुद्धेः प्रमात्वप्रसङ्ग इत्यर्थः स्पर्शसमवायरूपसमवाययो-रैक्यादिति भावः । **तत्र** वायौ ॥ **रूपाभावादिति** ॥ न च रूपसमवायसत्त्वे तेन सम्बन्धेन तत्र कथं रूपाभावः सम्बन्धसत्त्वस्य तेन सम्बन्धेन सम्बन्धिसत्त्वव्याप्यत्वादिति वाच्यं, रूपनिरूपित-त्वविशिष्टसमवायस्यैव रूपसम्बन्धतया वायौ तदभावात् । न च विशिष्टस्यानतिरिक्तत्वेन विशि-

**रामरुद्रीयम्.**

ष्यिणीत्यनुमितिरिति समुदायार्थः । समवायस्यैकत्वे वायौ रूपवत्ताबुद्धिरापादिता मूलकारेण सा च न सङ्गच्छते वायावपि भ्रान्तानां रूपवत्ताप्रतीतेरतो रूपवत्ताबुद्धेः प्रमात्वापत्तिपरतया व्याचष्टे ॥ **रूपव-त्तेति** ॥ तत्र हेतुमाह ॥ **स्पर्शेति** ॥ **सम्बन्धसत्त्वस्येति** ॥ तत्प्रतियोगिकतत्सम्बन्धसत्त्वस्य तेन

## प्रभा.

रूपसंबन्धत्वानङ्गीकारात् । अन्यथा स्फटिके लौहित्याश्रयसंयोगवद्भूतलादावपि लौहित्याश्रयसंयोगसत्त्वात् लोहितं भूतलमिति प्रतीत्यापत्तेर्दुर्वारत्वात् । तस्मात्कल्पनाया अनुभवानुरोधित्वेन लोहितं भूतलमिति प्रतीत्यभावात् भूतलनिष्ठलौहित्याश्रयसंयोगस्य यथा लौहित्यसंबन्धत्वाभावः तथा वायू रूपवा-

## मञ्जूषा.

निरूपिता या अधिकरणतास्तत्तद्रूपनिरूपितत्वविशिष्टसमवायत्वावच्छिन्नवत्ताप्रतीत्यनुरोधेन कल्पितास्तासामेव रूपनिरूपितत्वाविशिष्टसमवायत्वपर्याप्तनिरूपकतावच्छेदकताकत्वमपि स्वीक्रियते ताभिरेव रूपनिरूपितत्वविशिष्टसमवायत्वावच्छिन्नवत्ताप्रतीतेरपि निर्वाहात् नत्वाधिकरणतान्तरं प्रयोजनाभावत् । अन्यथा एकैकव्यक्तौ यावन्तो धर्मास्तद्यक्तित्वं तद्यक्त्येतद्यक्त्यन्यतरत्वं एवं व्यक्तित्रयान्यतमत्वं व्यक्तिचतुष्टयान्यतमत्वं इत्यादि एवं नीलत्वरूपत्वगुणत्वसत्ताभावत्वप्रमेयत्वादि एवं तदाश्रयान्या यावत्यो व्यक्तयः प्रत्येकं तत्तद्यक्त्यन्यत्वविशिष्टनीलत्वादि एवं तत्तद्धर्मप्रकारकप्रमाविशेष्यत्वादि तत्तद्विशिष्टनिरूपिताधिकरणतानां तत्तद्विशिष्टनिरूपितत्वाविशिष्टसमवायत्वावच्छिन्ननिरूपिताधिकरणतानां च भेदे महागौरवप्रसङ्गात् । ममतु तत्तद्यक्तित्वविशिष्टनिरूपिताधिकरणताया एव तद्यक्तिवृत्तियावद्धर्मावच्छिन्ननिरूपितत्वं तद्यक्तित्वविशिष्टनिरूपितत्वविशिष्टसमवायत्वावच्छिन्ननिरूपिताधिकरणताया एव च तद्यक्तिवृत्तियावद्धर्मावच्छिन्ननिरूपितत्वविशिष्टसमवायत्वावच्छिन्ननिरूपितत्वं एवमेतद्यक्तिवृत्तित्वाविशिष्टघटत्वनिरूपिताधिकरणताया एव घटत्वनिष्ठैतद्यक्तिवृत्तितावच्छेदकीभूतघटत्वजातित्वादियावद्धर्मावच्छिन्ननिरूपितत्वं एतद्यक्तिवृत्तित्वविशिष्टघटत्वनिरूपितत्वविशिष्टसमवायत्वावच्छिन्ननिरूपिताधिकरणताया एव च घटत्वनिष्ठैतद्यक्तिवृत्तितावच्छेदकीभूतयावद्धर्मावच्छिन्ननिरूपितत्वविशिष्टसमवायत्वावच्छिन्ननिरूपितत्वमिति व्यक्तमेव लाघवं । ततश्चाधिकरणताया अधिकरणस्वरूपत्वमते अतिरिक्तत्वमते च अधिकरणभेदेन भिन्नतया समवायाङ्गीकारेऽपि अनन्तानां संसर्गतास्वीकारो नापेत इति तत्स्वीकारे गौरवं दुर्वारमेव तस्मादनुपपन्नं महादेववचनम् । हरिरामस्तु वायौ रूपवत्ताबुद्धेः प्रमात्वमञ्जसा प्रत्याचख्यौ । तथाहि वस्तुतो रूपनिरूपितो यस्समवायस्स यद्यपि वायौ तिष्ठति तथापि नासौ वायौ रूपस्य संबन्धः । ननु समवायो न वायौ रूपस्य संबन्ध इत्युक्ते कोऽर्थः । किं समवायो न वाय्वनुयोगिक इति किंवा न रूपप्रतियोगिक इति आहोस्विद्वायुविशेष्यकरूपप्रकारकबुद्धौ संसर्गो नेति । नाद्यद्वितीयौ असंभवान्नापि तृतीयः वायू रूपवानिति भ्रमीयसंसर्गतायास्तत्र दुर्वारत्वात् तादृशप्रमीयसंसर्गता तत्र नास्तीत्यर्थः । इति चेत्तस्या एवेदानीं अस्माभिरापादनीयत्वादिति चेदुच्यते । वाय्वनुयोगिकत्वविशिष्टसमवाये रूपप्रतियोगिकत्वं नास्तीत्यर्थः । समवायनिष्ठयोर्वाय्वनुयोगिकत्वरूपप्रतियोगिकत्वयोरवच्छेद्यावच्छेदकभावो नास्तीति फलितोऽर्थः । ततश्च तत्संबन्धिविशेष्यकत्वे सति तत्प्रकारकत्वं प्रमात्वं तत्संबन्धित्वं च तत्प्रतियोगिकत्वावच्छिन्ननिरूपकताकानुयोगित्वं । अतो वायू रूपवानिति बुद्धेर्न प्रमात्वं किंतु भ्रमत्वं तच्च तदभाववद्विशेष्यकत्वे सति तत्प्रकारकत्वं तत्प्रतियोगिकत्वविशिष्टतत्संबन्धनिष्ठनिरूपकताकानुयोगिताया एव तेन संबन्धेन तदभावं प्रति विरोधित्वाद्वायौ समवायेन रूपाभावोऽक्षत एवेति तस्य भ्रमत्वमिति । एवंचात्र मुक्तावलीग्रन्थस्यापि वस्तुतो रूपनिरूपितस्य समवायस्य वायौ सत्त्वेऽपि तस्य वायौ रूपसंबन्धत्वाभावेन तत्संबन्धावच्छिन्नप्रतियोगिताकरूपाभावस्य वायौ सत्त्वात् वायू रूपवानिति बुद्धेः भ्रमत्वमेव न प्रमात्वमित्यर्थकतया नानुपपत्तिरिति । उपाध्यायमतानुयायिनस्तु विशिष्टबुद्धौ विशेष्येऽनुयोगितारूपसंबन्धो विशेषणे च तस्य प्रतियोगितारूपसंबन्धो भासत इति नियमेन रूपवानिति बुद्धौ सम्बन्धविधया भासमाने समवाये विशेष्यानुयोगिकत्वरूपप्रतियोगिकत्वे अपि संबन्धमर्यादया भासेते तयोश्च परस्परावच्छेद्यावच्छेदकभावभानमपि स्वीक्रियते । ततश्च वायू रूपवानिति बुद्धौ संबन्धविधया भासमानयोर्वाय्वनुयोगिकत्वरूपप्रतियोगिकत्वयोर्भासमानो योऽवच्छेद्यावच्छेदकभावः तस्य बाधान्न तस्याः प्रमात्वमित्याहुः । तत्र प्रमात्वस्य पूर्वोक्तरीत्या निर्व-

**वैशिष्ट्यं सम्बन्धान्तरं सिद्ध्येदिति वाच्यम् तस्य नित्यत्वे भूतले घटानयनानन्तरम-**

## प्रभा.

नित्यनुभवाभावेन वायौ समवायस्य रूपसंबन्धत्वानङ्गीकारादिति भावः । केचित्तु रूपाभावादिति । नच रूपसमवायसत्त्वेन तेन संबन्धेन कथं रूपाभावः संबन्धसत्त्वस्य तेन संबन्धेन संबन्धिसत्त्वव्याप्यत्वादिति वाच्यं रूपानिरूपितत्वविशिष्टसमवायस्यैव रूपसंबन्धतया वायौ तदभावात् । नच विशिष्टस्यानतिरिक्ततया विशिष्टसमवायोऽपि वायावस्त्वेवेति वाच्यं रूपानिरूपितत्वविशिष्टसमवायाधिकरणताया एव रूपसंबन्धत्वात् तस्य वायावभावादित्यभिप्रायमाहुः तदसत् । तादृशाधिकरणत्वस्य रूपसंबन्धत्वे आधिकरणत्वस्य स्वरूपसंबन्धानतिरिक्तत्वेन परमते सिद्धसाधनस्य नैयायिकमते अर्थान्तरस्य च प्रसङ्गात् विशेषरूपेण संसर्गत्वानङ्गीकर्तृप्राचीनमते अवयवावयविप्रभृत्ययुतसिद्धयोः संबन्धाभावप्रसङ्गात् रूपसंबन्धाभावात् वायौ रूपाभाव इत्येव वक्तुं शक्यतया तत्र रूपसमवायसत्त्वेऽपीति मुक्तावलीग्रन्थस्यासाङ्गत्यापत्तेः । नच निरुक्ताधिकरणत्वरूपस्य रूपसंबन्धस्य स्वरूपसंबन्धादनतिरिक्तत्वेऽपि तद्घटकसमवायस्यातिरिक्तत्वसिद्ध्यर्थमेवोक्तानुमानप्रदर्शनं केवलं समवायसत्त्वेऽपि तद्घटिताधिकरणत्वरूपरूपसंबन्धाभावात् रूपाभाव इति प्रदर्शनाय तत्र रूपसमवायसत्त्वेऽपीत्यादिप्रतिपादनं च सङ्गतमिति वाच्यं । विशिष्टाधिकरणत्वस्य सबन्धत्वे तद्घटकसमवायस्यातिरिक्तत्वव्यवस्थापनस्यैकत्वव्यवस्थापनस्य चाकिंचित्करत्वात् समवायस्यातिरिक्तत्वेऽपि एकत्वेऽपि च तद्घटिताधिकरणत्वस्यानतिरिक्तत्वात् अनेकत्वाच्च केवलसमवायस्य संबन्धत्वानङ्गीकारे तत्र रूपसमवायसत्त्वेऽपीति समवायसत्त्वप्रदर्शनस्यासाङ्गत्यापत्तेश्चेति । नव्यास्तु पृथिव्यां गन्धस्य समवायः न जले इति प्रतीतेः समवायस्य नानात्वमाहुः तन्न पृथिव्यां गन्धस्य समवाय इत्यस्य संबन्ध इत्यध्याहारेण समवायः पृथिव्यामेव संबन्धः न जले संबन्धः गन्धस्य समवायः इत्यर्थकतयाप्युपपत्तेः । समवायस्य नानात्वाङ्गीकारे प्रमाणाभावः अन्यथा स्वरूपेणैव चरितार्थतया समवायस्यैवासिद्धिप्रसङ्गात् ॥ **नचैवमिति** ॥ एवं घटाभाववद्भूतलमित्याकारिका बुद्धिः संसर्गताविषयिका विशिष्टबुद्धित्वात् इत्यनुमानात् ॥ **वैशिष्ट्यमिति** ॥ भूतलादावित्यादिः ॥ **संबन्धान्तरमिति** ॥ अतिरिक्तपदार्थरूपमित्यर्थः । अभावाधिकरणयोरतिरिक्तपदार्थरूपवैशिष्ट्यं नित्यमनित्यं वेति विकल्प्य दूषणमाह ॥ **तस्येति** ॥ ननु घटवति भूतले न घटाभावप्रतीतिः घटान-

## मञ्जूषा.

यनेनैव अनतिप्रसङ्गे विशेषणप्रतियोगिकत्वविशेष्यानुयोगिकत्वयोस्तयोरवच्छेद्यावच्छेदकभावस्य च विशिष्टबुद्धिविषयतास्वीकारस्य निष्प्रयोजनत्वादिति दीधितिकृन्मतानुयायिनः । परन्तु उपाध्यायमतानुसारेण कथंचिन्महादेवग्रन्थो योजयितुं शक्यते । तथाहि रूपनिरूपितत्वविशिष्टसमवायनिरूपिताधिकरणताया इत्यस्य रूपप्रतियोगिकत्वावच्छिन्नसमवायनिष्ठनिरूपकताकानुयोगिताया इत्यर्थः । तत्रच समवा-

## दिनकरीयम्.

ष्टसमवायोऽपि वायावस्तीति वाच्यं, रूपनिरूपितत्वविशिष्टसमवायनिरूपिताधिकरणताया एव रूपसंबन्धत्वात् तस्य वायावभावात् । पृथिव्यां गन्धस्य समवायो न जले इत्यादिप्रतीतेः समवायस्य नानात्वमिति तु नव्याः । **सम्बन्धान्तरं** अतिरिक्तपदार्थतयेति शेषः । सिद्ध्येदित्यस्य भूतलादावित्यादिः । यदि वैशिष्ट्यमतिरिक्तमुररीक्रियते तदा तन्नित्यमनित्यं वेति विकल्प्याद्ये दूषणमाह ॥ **तस्येति** ॥

## रामरुद्रीयम्.

सम्बन्धेन तद्वत्त्वव्याप्यत्वात् प्रतियोगिमति चाभावासत्त्वादिति भावः । **इति तु नव्या इति** ॥ तथाच तन्मते समवायस्य रूपसम्बन्धत्वेऽपि न क्षतिः वायौ रूपसमवायानङ्गीकारादिति भावः । अभावस्यापि वैशिष्ट्यं सम्बन्धान्तरं सिध्येदिति मूले सम्बन्धान्तरपदस्य संयोगसमवायातिरिक्तार्थकत्वे विघ्नापत्तिरेव स्वरूपस्यैव तत्सम्बन्धत्वोपगमादतः शेषं पूरयति ॥ **अतिरिक्तेति** ॥ **उररीक्रियते**

**पि घटाभावबुद्धिप्रसङ्गात् घटाभावस्य तत्र सत्त्वात् तस्य च नित्यत्वात् अन्यथा देशान्तरेऽपि घटाभावप्रतीतिर्न स्यात् वैशिष्ट्यस्य च तत्र सत्त्वात् मम तु घटे पाकरक्ततादशायां श्यामरूपस्य नष्टत्वान्न तद्वत्ताबुद्धिः वैशिष्ट्यस्यानित्यत्वे त्वनन्तवै-**

## प्रभा.

यनेन घटाभावस्य नाशेन तत्र तदभावात् अत आह ॥ **तस्येति** ॥ घटाभावस्येत्यर्थः ॥ **नित्यत्वादिति** ॥ तथाच घटानयने घटाभावस्य नाशाभावेन घटवति तत्प्रतीत्यापत्तेः दुर्वारत्वादिति भावः । **अन्यथेति** ॥ घटाभावस्यानित्यत्व इत्यर्थः ॥ **देशान्तरेऽपीति** ॥ घटानधिकरणदेशेऽपीत्यर्थः ॥ **न स्यादिति** ॥ तथाच संयोगेन घटवति भूतलादौ संयोगसंबन्धावच्छिन्नघटत्वावच्छिन्नप्रतियोगिताकाभावस्यैकत्वेन तस्य घटानयनेन नाशस्वीकारे विषयाभावात् घटानधिकरणदेशेऽपि घटाभावप्रत्ययानुपपत्तेरिति भावः ॥ **वैशिष्ट्यस्येति** ॥ तस्य त्वया नित्यत्वस्वीकारादिति भावः ॥ नन्वतिरिक्तसमवायाङ्गीकर्तृमतेऽपि पाकरक्ते घटे श्यामसमवायसत्त्वात् श्यामरूपवत्ताबुद्धिप्रसङ्गो दुर्वार इत्यत आह ॥ **मम त्विति** ॥ **न तद्वत्ताबुद्धिरिति** ॥ तथाच संवन्धसत्त्वेऽपि श्यामरूपाविषया-

## मञ्जूषा.

य एव संवन्धः तत्र विशेषणविशेष्ययोस्संवन्धः इतरांश इति विशिष्टे रूपसंवन्धत्वव्यपदेश इति एवंचात्र रूपाभावादिति मुक्तावलीग्रन्थस्य समवायेन रूपाभावादित्येवार्थः नतु रूपनिरूपितत्वविशिष्टसमवायनिरूपिताधिकरणतासंवन्धेन रूपाभावादिति प्रयोजनाभावात्पूर्वोक्तरीत्या समवायेन रूपाभावस्य वायावक्षतत्वादित्युपाध्यायमतानुसारेण मद्दिवग्रन्थो युज्यत इति बोध्यम् ॥ **वैशिष्ट्यस्य च तत्र सत्त्वादिति** ॥ तस्य त्वया नित्यत्वाङ्गीकारादिति भावः । ननु तवापि श्यामघटस्य पाकरक्ततादशायां तत्र श्यामरूपवत्ताबुद्धिप्रसङ्गः पूर्वं विद्यमानस्य श्यामरूपस्य यस्समवायस्तस्येदानीमपि सत्त्वादित्यत आह ॥ **मम त्विति** ॥ अयमाशयः किं विनष्टश्यामरूपे रक्तकालावच्छिन्नत्वावगाही इदानीं श्यामो घट इति प्रत्यय आपाद्यते आहोस्विच्छ्यामो घट इति प्रत्ययस्तदानीं आपाद्यते वा ।

## दिनकरीयम्.

ननु वैशिष्ट्यस्य तत्र सत्त्वेऽपि घटानयनदशायां तत्र घटाभावाभावादेव न घटाभावबुद्धिरत आह ॥ **घटाभावस्येति** ॥ **तत्र** घटवति भूतले ॥ **तस्येति** ॥ घटाभावस्येत्यर्थः । **अन्यथा** घटाभावस्यानित्यत्वे । **देशान्तरेऽपि** घटशून्यदेशेऽपीत्यर्थः । घटत्वावच्छिन्नाभावस्यैकविधत्वादिति भावः ॥ **वैशिष्ट्यस्येति** ॥ वैशिष्ट्यस्य नित्यत्वाभ्युपगमपक्ष इत्यादिः ॥ **तत्र** घटानयनेन घटवति । न च घटवति न घटाभावबुद्धिर्घटवत्ताज्ञानस्य प्रतिवन्धकस्य सत्त्वादिति वाच्यं घटवत्ताज्ञानविरहदशायां जायमानाया घटाभावबुद्धेः प्रमात्वप्रसङ्गादित्यत्र तात्पर्यात् । ननु सिद्धान्तिनोऽपि मते पाकेन रक्ते घटे श्यामरूपसमवायस्य सत्त्वात् श्यामरूपवत्ताधीप्रसङ्ग इत्यत आह ॥ **मम त्विति** ॥ द्वितीये दूषणमाह ॥ **वैशिष्ट्यस्येति** ॥ ननु वैशिष्ट्यानङ्गीकारे घटाभावभूतलयोः कः सम्बन्धः स्वरूपमिति चेत्तथा सति घटशून्यतादशायामिव घटवत्तादशायामपि भूतले घटाभावबुद्धिस्तव मतेऽपि स्यात्

## रामरुद्रीयम्.

अङ्गीक्रियत इत्यर्थः । नन्वेकघटाभावस्य नाशेऽपि घटाभावान्तरमादाय घटशून्यदेशेऽपि घटाभाववत्ताबुद्धिरुपपद्यत एवेत्याशङ्क्याह ॥ **घटत्वावच्छिन्नेति** ॥ **एकविधत्वादिति** ॥ एकत्वादित्यर्थः ॥ **जायमानाया घटाभावबुद्धेरिति** ॥ घटवत्ताज्ञानाभावदशायां घटवत्यपि भूतले भ्रमरूपा घटाभाववत्ताबुद्धिर्जायत एवेति न तदापत्तिः सम्भवतीत्यतस्तस्याः प्रमात्वमापादयति ॥ **प्रमात्वेति** ॥ नन्वेष प्रसङ्गः समवायैकत्ववादिनां मतेऽपि समान इत्याशङ्क्य ममत्वित्यादिग्रन्थमवतारयति ॥ **नन्विति** ॥ **द्वितीये** वैशिष्ट्यस्यानित्यत्वपक्षे ॥ **वैशिष्ट्यानङ्गीकारे** अभावाधिकरणयोरतिरिक्तसम्बन्धानङ्गीकार इत्यर्थः । स्व-

**शिष्टयकल्पने तवैव गौरवम् । एवंच तत्तत्कालीनं तत्तद्भूतलादिकं तत्तदभावानां सम्बन्धः ॥ ११ ॥**

### प्रभा.

भावात् न श्यामवत्ताप्रतीत्यापत्तिरिति भावः । वैशिष्ट्यस्यानित्यत्वपक्षमनूद्य दूषयति ॥ **वैशिष्ट्यस्येति** ॥ **तवैवेति** ॥ अभावाधिकरणयोरतिरिक्तवैशिष्ट्याङ्गीकर्तुरेवेत्यर्थः ॥ **गौरवमिति** ॥ तथाच वैशिष्ट्यानन्त्यप्रयुक्तगौरवस्य तुल्यत्वेऽपि अतिरिक्तपदार्थकल्पनागौरवस्याधिक्यादिति भावः । नन्वतिरिक्तवैशिष्ट्यानङ्गीकारे अभावाधिकरणयोः स्वरूपसंबन्धस्यैव वक्तव्यतया घटाधिकरणदेशेऽपि घटाभावरूपविषयस्याधिकरणात्मकस्वरूपसंबन्धस्य च सत्त्वात् घटाभाववद्भूतलमिति प्रतीत्यापत्तिस्तदवस्थैवेत्यत आह ॥ **एवंचेति** ॥ वैशिष्ट्यस्यातिरिक्तत्वानभ्युपगमे चेत्यर्थः ॥ **तत्तत्कालीनेति** ॥ यस्मिन्काले यादृशभूतलादौ घटो नास्तीति प्रमा तत्कालविशिष्टतद्भूतलादिकं घटाद्यभावस्य संबन्ध इत्यर्थः ॥ तथाच तादृशकालविशेषस्य देशविशेषस्य वा तत्तद्व्यक्तित्वेनैव संबन्धघटकता नतु निरुक्तरूपेण गौरवात् प्रयोजनाभावादिति भावः । नच तादृशकालविशेषविशिष्टाधिकरणस्वरूपसंबन्धस्य प्रत्यक्षकाल एव सत्त्वेन पूर्वकालावृत्तितया ईदृशसन्निकर्षस्य कथं प्रत्यक्षकारणत्वं तस्य प्रत्यक्षकारणत्वोपपादनाय

### मञ्जूषा.

नाद्यः विनष्टश्यामरूपस्य तत्कालावच्छिन्नत्वानङ्गीकारात् द्वितीये किं लौकिकप्रत्यक्षात्मक उतालौकिकप्रत्यक्षात्मकः । आद्ये लौकिकप्रत्यक्षे विषयस्य कारणत्वान्न तद्वत्ताबुद्धिः अलौकिकप्रत्यक्षं तु इष्यत एव एवं तस्य प्रमात्वमपि प्रमात्वशरीरे कालानन्तर्भावादिति एवंच न तद्वत्ताबुद्धिरित्यस्य न तल्लौकिकप्रत्यक्षमित्यर्थः । ननु यद्यभावस्य संबन्धान्तरं न स्वीक्रियते तर्हि तस्य कस्संबन्धः भूतलस्वरूपमिति चेत्तर्हि घटवत्यपि भूतले घटाभावलौकिकचाक्षुषापत्तिः विषयस्य घटाभावस्य सत्त्वात् नच तदा न लौकिकसन्निकर्ष इति वाच्यम् चक्षुस्संयुक्तानुयोगिकभूतलस्वरूपात्मकविशेषणताया अपि तत्र सत्त्वात् । नच घटलौकिकचाक्षुषस्य प्रतिबन्धकस्य सत्त्वान्न तदा घटाभावचाक्षुषमिति वाच्यम् । घटलौकिकचाक्षुषाभावदशायामेव तस्यापादनीयत्वात् नह्यसतोर्धर्म्यन्तरघटितसन्निकर्षानुभूयमानारोपजनकदोषयोर्घटवति भूतले घटाभावलौकिकचाक्षुषमभ्युपगम्यते तान्त्रिकैः एवं तत्कालोत्पन्नस्य घटाभावोपनीतभानादेः प्रमात्वापत्तिः विशेषणविशेष्यसंबन्धानां त्रयाणामपि सत्त्वात् नच प्रमात्वस्य कालाघटितत्वादिष्यते एव तस्य प्रमात्वमिति वाच्यम् । इदानीं घटाभाववद्भूतलमित्याकारकस्य घटाभावे एतत्कालावच्छिन्नत्वावगाहिनो ज्ञानस्य प्रमात्वापादनात् यद्यपि घटाभावे उपलक्षणविधया एतत्कालावच्छिन्नत्वावगाहिनस्तादृशज्ञानस्य प्रमात्वमिष्यत एव देशान्तरवृत्तित्वावच्छेदेन घटाभावस्य एतत्कालावच्छिन्नत्वाबाधात् । तथाहि एतत्का-

### दिनकरीयम्.

घटाभावभूतलयोस्तत्स्वरूपसम्बन्धस्य च तत्र सत्त्वादत आह ॥ **एवं चेति** ॥ **तत्तत्कालीनमिति** ॥ घटाभाववद्भूतलमिति ज्ञानकालीनमित्यर्थः ॥ **तत्तद्भूतलादिकमिति** ॥ यत्र भूतले घटाभावबुद्धिस्तत्तद्भूतलादिकमित्यर्थः ॥ **तत्तदभावानामिति** ॥ यस्य यस्याभावस्य बुद्धिस्तस्य तस्येत्यर्थः । तथा च

### रामरुद्रीयम्.

रूपस्य सम्बन्धत्वे बाधकमाह ॥ **तथासतीति** ॥ तत्तत्कालीनं तत्तद्भूतलादिकमित्यत्र यदा यदा भूतले घटाभावो वर्तते तत्कालीनमित्यर्थो न सम्भवति घटवत्तादशायामपि घटाभावे भूतलावृत्तित्वप्रयोजकस्य दुर्वचत्वात् अतस्तत्तत्कालीनमित्यस्यार्थमाह ॥ **घटाभाववदिति** ॥ ज्ञानकालीनमित्यत्र ज्ञानपदं प्रमात्वेनाभिमतज्ञानपरं तेन घटवत्तादशायामपि भ्रमात्मकघटाभाववत्त्वबुद्धिसम्भवेन तामादाय नोक्तदोषतादवस्थ्यमिति ध्येयम् । नन्वेवमभावाधिकरणयोः स्वरूपमेव सम्बन्ध इति सिद्धान्तो व्याहन्येतेत्याशङ्कां निराकुरुते ॥ **तथाचेति** ॥ **स्वरूपविशेष इति** ॥ तथा च स्वरूपसम्बन्ध इत्यस्यापि स्व-

## प्रभा.

घटो नास्तीति प्रमोपधायकसामग्रीविशिष्टत्वोपलक्षितकालस्यैव तत्तद्व्यक्तित्वेन सन्निकर्षघटकत्वे तस्याभावप्रमापूर्वकाल एव सत्त्वेन सन्निकर्षस्य कार्यकालवृत्तितया हेतुत्वमिति सिद्धान्तभङ्ग इति वाच्यं। घटो नास्तीति प्रमितितज्जनकसामग्रीतदन्यतरविशिष्टकालस्यैव तत्तद्व्यक्तित्वेन संबन्धघटकत्वस्वीकारेण

## मञ्जूषा.

लावच्छिन्नत्वविशिष्टघटाभावनिरूपितवैशिष्ट्यावगाहिनस्तादृशज्ञानस्यैव प्रमात्वमापादनीयम् ॥ यत्कालावच्छेदेन यस्य संबन्धो यत्र वर्तते तत्कालावच्छिन्नत्वविशिष्टतन्निरूपितसंबन्धस्य तत्रावश्यकत्वादित्यत आह ॥ **इत्थं चेति** ॥ अत्र तत्तत्कालीनेत्यस्य घटाभाववद्भूतलमिति ज्ञानकालीनेत्यर्थमाह महादेवः । अथैतावता तद्वद्विशेष्यकघटाभावप्रकारकज्ञानाधिकरणकालविशिष्टभूतलस्वरूपं तत्र घटाभावस्य संबन्ध इत्यायातम् । तथाच घटकालावच्छेदेन घटाभाववत्तावगाहिनः पूर्वोपदर्शितोपनीतभानस्य प्रमात्वं दुर्वारमेव तादृशज्ञानाधिकरणकालविशिष्टभूतलस्वरूपात्मकसंबन्धस्य तदानीमनपायात् नच ज्ञानपदं प्रमापरमिति वाच्यम् । तथासति तज्ज्ञानस्य प्रमात्वे सिद्धे तदधिकरणकालविशिष्टभूतलस्वरूपात्मकसंबन्धसत्त्वं तत्सत्त्वे च तज्ज्ञानस्य प्रमात्वमित्यन्योन्याश्रयापत्तेः । नचात्र कालस्य तत्तद्व्यक्तित्वेनैव संबन्धघटकत्वं नतु निरुक्तरूपेण तादृशकालविशेषाणां परिचायकन्तु प्रमात्वाभिमततादृशज्ञानाधिकरणत्वमिति नान्योन्याश्रय इति वाच्यम् । एवमप्येतादृशसंबन्धस्य ज्ञानकाल एव संभवेन तादृशज्ञानाधिकरणत्वपरिचितकालविशेषविशिष्टभूतलस्वरूपात्मकसंबन्धस्य तादृशज्ञानात्प्रागसंभावितया चक्षुस्संयुक्तविशेषणतायाः कारणत्वानुपपत्तेः । नच घटाभावप्रमासामग्र्यधिकरणत्वमेव परिचायकमिति वाच्यम् । तथासति घटाभावप्रमा-

## दिनकरीयम्.

न स्वरूपमात्रं सम्बन्धः किन्त्वीदृशः स्वरूपविशेष इति न पूर्वोक्तातिप्रसङ्ग इति भावः । नव्यास्तु वैशिष्ट्यं पदार्थान्तरमेव भूतलं घटाभाववदिति प्रत्ययात् स्वरूपसम्बन्धाभ्युगपमे चाभावाधिकरणवृत्त्यखण्डभेदतावन्मात्रविषयकज्ञानादिकमादाय विनिगमनाविरह इत्याहुः ॥ ११ ॥

## रामरुद्रीयम्.

रूपविशेषः सम्बन्ध इत्यत्रैव तात्पर्यात् न सिद्धान्तव्याघात इति भावः ॥ **नव्यास्त्विति** ॥ ननु भूतलं घटाभाववदिति प्रतीतेः स्वरूपसम्बन्धेनैवोपपत्त्या वैशिष्ट्यस्य पदार्थान्तरत्वे मानाभाव इत्यत आह ॥ **स्वरूपसम्बन्धेति** ॥ अभावाधिकरणं तत्तद्भूतलादि तद्वृत्त्यखण्डो भेदः ताद्भिन्नत्वप्रकारकप्रमाविशेष्यत्वावच्छिन्नभेदः । ननु तत्तदधिकरणमात्रवृत्त्युक्तभेदस्याधिकरणातिरिक्तत्वे तदधिकरणव्यक्तावनन्तभेदाङ्गीकारप्रसङ्गेन तस्याधिकरणस्वरूपत्वमेवोचितमतस्तमादाय न विनिगमनाविरहप्रसङ्ग इत्यत आह ॥ **तावन्मात्रेति** ॥ वस्तुतस्तु अखण्डैकभेदेन साकमधिकरणानां न विनिगमनाविरहस्सम्भवति अधिकरणानां नानात्वेन लाघवादेकभेदस्यैव सम्बन्धत्वौचित्यादतस्तद्विषयकज्ञानादिकमादाय विनिगमनाविरहं प्रसञ्जयति ॥ **तावन्मात्रेत्यादि** ॥ एतेन अनवस्थाभयेन भेदाधिकरणकभेदस्यैव अधिकरणरूपताङ्गीकरणीया न तु भेदमात्रस्य तथासत्यन्योन्याभावस्यैव विलयप्रसङ्गादिति दूषणं परास्तम् । द्रव्यगुणादिविषयकज्ञानव्यक्तेर्द्रव्यत्वाभावसम्बन्धत्वे गुण इव द्रव्येऽपि द्रव्यत्वाभावबुद्धिप्रसङ्गः सम्बन्धात्मकज्ञानस्य द्रव्येऽपि विशेष्यतया सत्त्वादतो मात्रपदम् । आदिना इच्छादिपरिग्रहः । युक्तं चैतद् समवायनानात्ववादिनां नव्यानां मते अनन्तातिरिक्तनानासमवायकल्पनामपेक्ष्य क्लृप्तस्वरूपाणामेव सम्बन्धत्वौचित्येन तन्मतेऽतिरिक्तसमवायस्यैवासिद्धिप्रसङ्गादिति मन्तव्यम् । अत्र चाहुरित्यनेनास्वरसोद्भावनं तद्बीजं तु तदधिकरणविषयकनानाज्ञानव्यक्तीनां सम्बन्धत्वकल्पनामपेक्ष्यैकस्यास्तद्व्यक्तेस्तथात्वे लाघवात् न विनिगमनाविरहः यत्किञ्चिदेकज्ञानव्यक्तेरेव तथात्वे तज्ज्ञानव्यक्त्यभावदशायां सम्बन्धाभावेनाभावविशिष्टबुद्ध्यनुदयापत्तेः नित्यज्ञानव्यक्तेस्तथात्वे च तस्याः सर्वविषयकत्वेन प्रतियोगिमत्यप्यभाववद्बुद्धिप्रसङ्ग इति बोध्यम् ॥ ११ ॥

## प्रभा.

नोक्तानुपपत्तिः । वस्तुतः तत्तत्कालीनेत्यादिग्रन्थस्य यदा यस्मिन्नधिकरणे यो न तिष्ठति तत्कालविशिष्ट-तदधिकरणं तत्प्रतियोगिताकाभावस्य संबन्ध इत्येवार्थ इति न काप्यनुपपत्तिरिति हृदयम् । नव्यास्तु वैशिष्ट्यं पदार्थान्तरमेव भूतलं घटाभाववदित्यादिप्रत्ययात्स्वरूपसंबन्धाभ्युपगमे चाभावाधिकरणवृत्य-

## मञ्जूषा.

सामग्र्यधिकरणत्वपरिचितकालविशेषविशिष्टभूतलस्वरूपस्य सामग्रीकाल एव संभवेन प्रमाकाले तस्यासंभाविततया सन्निकर्षस्य कार्यकालवृत्तितया हेतुत्वसिद्धान्तव्याकोपात् । स्वपूर्वकालविशिष्टभूतल-स्वरूपात्मकसंबन्धस्य प्रमाकाले बाधितत्वेन घटासमवधानकालमवगाहमानस्येदानीं घटाभाववद्भूतल-मिति ज्ञानस्य प्रमात्वानापत्तेश्च । नच तादृशप्रमातत्सामग्र्यन्यतराधिकरणत्वमेव कालविशेषपरि-चायकमिति वाच्यम् । एवमपि घटसमवधानकालोत्पन्नस्य तत्समवधानानाधिकरणपूर्वापरकालाव-गाहिनः पूर्वदिने घटाभाववद्भूतलं परदिने घटाभाववद्भूतलमित्युपनीतभानादेः प्रमात्वाभावाप-त्तेः पूर्वापरकालयोस्तत्प्रमातत्सामग्र्यन्यतराधिकरणत्वरूपपरिचायकधर्मानाक्रान्तत्वात् तदनाक्रान्तघटसम-वधानकालविशिष्टभूतलस्वरूपात्मकसंबन्धे पूर्वापरदिनात्मककालविशेषावच्छिन्नत्वविशिष्टनिरूपितत्वबाधा-त् । नच तादृशप्रमातत्सामग्र्यन्यतराधिकरणतादृशप्रमाविषयैतदन्यतरत्वं परिचायकमिति वाच्यम् । तथासति घटासमवधानकालोत्पन्नस्य तत्कालं घटसमवधानकालं च अवगाहमानस्य इदानीं घटाभाव-वद्भूतलं पूर्वदिने घटाभाववद्भूतलमित्याकारकसमूहालम्बनात्मकज्ञानस्य पूर्वदिनांशेऽपि प्रमात्वापत्तेः । इदानीन्तनकालस्य तादृशप्रमातत्सामग्र्यन्यतराधिकरणत्ववत्पूर्वदिनात्मककालस्यापि तादृशप्रमाविषयत्वेन परिचायकधर्माक्रान्ततया तद्विशिष्टभूतलादिस्वरूपस्यापि संबन्धत्वानपायात् अथ तत्प्रमाव्यक्तितत्सामग्र्यन्य-तराधिकरणकालविशिष्टभूतलादिस्वरूपं तत्प्रमाविषयो भूताभावस्य संबन्ध इत्येवं तत्तद्व्यक्तित्वेन यदि प्रमायाः कालविशेषपरिचायककोटिप्रवेशः स्यात् तदा स्यादयं दोषः । वयं तु प्रमात्वेनैव प्रमां तत्र प्रवेशयामः तथाच तद्विशेष्यकत्वविशिष्टघटाभावप्रमाधिकरणत्वपरिचितकालविशेषावच्छिन्नभूतलस्वरूपं घ-टाभावस्य संबन्धः । तथाच घटसमवधानकालोत्पन्नस्य तत्समवधानानधिकरणपूर्वापरकालावगाहिनः पूर्वोपद-र्शितज्ञानस्य न प्रमात्वानुपपत्तिः । पूर्वापरदिनात्मककालयोरपि पुरुषान्तरस्य योगिनामेव वा यद्घटा-भाववद्भूतलमिति ज्ञानं प्रमात्मकं तदधिकरणत्वात् तद्विशिष्टभूतलस्वरूपस्य संबन्धत्वानपायादेवं घटा-समवधानकालोत्पन्नस्य तत्कालं घटसमवधानकालं च अवगाहमानस्य पूर्वोपदर्शितज्ञानस्य न पूर्वदिनांशे प्रमात्वापत्तिः पूर्वदिनात्मककालस्य घटाभावप्रमाधिकरणत्वाभावात् । एवंच सामग्रीविशेषोऽपि न कर्त-व्यः लौकिकप्रत्यक्षात्मकप्रमोत्पत्त्यव्यवहितपूर्वक्षणस्यापि पुरुषान्तरीयतादृशप्रमाधिकरणत्वेन तद्विशिष्टभू-तलादिस्वरूपस्यापि संबन्धतया तदानीं लौकिकसन्निकर्षस्य सूपपादत्वादिति चेन्न । एवंसति घटसम-वधानकालोत्पन्नं यत्पूर्वदिने घटाभाववद्भूतलं परदिने घटाभाववद्भूतलमित्याकारकं प्रमात्मकं ज्ञानं चैत्रीयम-तीतानागतवस्तुदर्शियोगीयं वा तदधिकरणकालविशिष्टभूतलस्वरूपस्यापि संबन्धत्वापत्त्या तत्कालावगाहि-नः इदानीं घटाभाववद्भूतलमित्युपनीतभानादेश्चैत्रीयस्य मैत्रीयस्य वा प्रमात्वापत्तेः प्रतिक्षणमेव योगिनाम-पि कस्यचित्प्रमा जायत इति नियमाभावेन यद्भूतले घटाभावज्ञानं घटसमवधानानधिकरणीभूत एव कस्मिंश्चि-त्क्षणे कस्यचिदपि न जातं तत्क्षणमवगाहमानस्य कालान्तरोत्पन्नस्य तदानीं घटाभाववद्भूतलमित्युपनीतभा-नादेः प्रमात्वानापत्तेश्च तत्क्षणस्य परिचायकधर्मानाक्रान्ततया तद्विशिष्टभूतलस्वरूपस्य संबन्धत्वाभावात् नच तत्क्षणस्यापि तादृशेश्वरप्रमाधिकरणत्वमस्त्येवेति वाच्यम् । तस्यास्सदातनत्वेन तदधिकरणत्वस्य घटसमवधानकालव्यावृत्तत्वाभावात् अत्रोच्यते स्वावच्छिन्नत्वविशिष्टघटाभाववैशिष्ट्यावगाहिप्रमाधिकरण-कालविशेषविशिष्टभूतलादिस्वरूपं संबन्धः स्वपदं परिचेयकालविशेषपरं सर्वत्रान्ततो भगवत्प्रमामादाय परिचयसंपत्तिः । तथाहि यदा यदा घटसमवधानं भूतले नास्ति तत्तत्कालावच्छिन्नत्वविशिष्टघटाभाव-वैशिष्ट्यविषयकं तद्भूतलविशेष्यकं प्रमात्मकं ज्ञानं परमेश्वरस्य प्रसिद्ध्यतीति तदधिकरणत्वपरिचिततत्त

प्रभा.

खण्डभेदतावन्मात्रविषयकज्ञानादिकमादाय विनिगमनाविरह इत्याहुः तन्न वैशिष्ट्यपदार्थान्तरत्वे तस्य नित्यत्वमनित्यत्वं वेत्यादिविकल्पप्रयुक्तदूषणग्रस्तत्वात् । नच वैशिष्ट्यस्यानतिरिक्तत्वे अभावाधिकरणवृत्तीत्यादिना उक्तविनिगमनाविरहदोषतादवस्थ्यमिति वाच्यं अभावस्वरूपस्यैव वैशिष्ट्यस्य संबन्धत्वे अ-

मञ्जूषा.

त्कालविशेषविशिष्टभूतलस्वरूपस्य संबन्धतानिर्वाहः । यदातु भूतले घटसमवधानं तत्कालावच्छिन्नत्वविशिष्टवैशिष्ट्यज्ञानं न प्रमात्मकमिति न तत्कालस्य परिचायकधर्माक्रान्तता । प्रमात्वं च भ्रमभिन्नत्वं अतो घटकालोत्पन्नस्य तत्कालं घटासमवधानकालं चावगाहमानस्येदानीं घटाभाववद्भूतलं पूर्वदिने घटाभाववद्भूतलमिति समूहालम्बनात्मकज्ञानस्य पूर्वदिनांशे प्रमात्वेन तदधिकरणकालविशिष्टभूतलस्वरूपस्यापि संबन्धत्वप्राप्त्या तादृशसमूहालम्बनस्य तत्कालावगाहिज्ञानान्तरस्य च तत्कालांशे प्रमात्वापत्तिः तदानीं घटाभावलौकिकचाक्षुषापत्तिश्च लौकिकसंनिकर्षसत्त्वादिति दूषणस्य नावकाशः । परन्तु तन्निष्ठघटसमवधानानधिकरणत्वस्य लघोः कालपरिचायकस्य संभवेनेदृशगुरुधर्मानुसरणमफलम् । नच यस्मिन् भूतले घटसमवधानं कदापि नास्ति तत्र संबन्धघटककालविशेषपरिचायकधर्मदुर्भिक्षमिति वाच्यम् । तद्भूतलस्वरूपस्य सर्वदैव घटाभावसंबन्धतया तत्र संबन्धघटककालविशेषापेक्षाविरहेण तत्परिचायकधर्मस्य सुतरामनपेक्षितत्वादित्येतदेवाभिप्रेतं ग्रन्थकृतः अत एवाग्रे वक्ष्यति घटकालस्य संबन्धाघटकत्वादिति ॥ अन्यथा घटाभावज्ञानाभावकालस्य संबन्धाघटकत्वादित्येवावक्ष्यत् इदन्तु विवेचनीयं घटासमवधानकालविशिष्टभूतलस्वरूपं संबन्ध इत्युक्तो कोऽर्थं इति नहि भूतले प्रतिक्षणं एकैकं स्वरूपमस्ति येनैतत्कालीनं स्वरूपं संबन्धः एतत्कालीनं नेति वक्तुं शक्येत । अथ घटासमवधानकालस्संबन्धतावच्छेदक इति तदर्थ इति चेत्केयं संबन्धता नाम यस्यामवच्छेदको घटासमवधानकालः सा संसर्गताख्या विषयतेति चेत् तर्कि घटाभाववद्भूतलमिति ज्ञाने कालोऽपि संसर्गघटकतया भासते भासत एवेति चेत् केन रूपेण भासते घटासमवधानकालत्वेनेति चेत्किं घटासमवधानकालत्वं नाम घटसंयोगानवच्छेदकत्वमिति चेत्तर्हि घटाभाववद्भूतलमिति ज्ञानं भ्रम एव स्यात्तत्कालस्यापि देशान्तरवृत्तिघटसंयोगावच्छेदकत्वात्तत्तद्भूतलनिष्ठघटसंयोगानवच्छेदकत्वमिति चेत्तर्हि कदापि घटासंयुक्ते भूतले यद्घटाभावज्ञानं तत्र संसर्गदुर्भिक्षापत्तेः तत्र कालविशेषाविशेषितमेव भूतलस्वरूपं संसर्गतया भासत इति चेद्विषयतावैचित्र्यप्रसङ्गात् नहि कदाचिदपि यद्घटासंयुक्तं भूतलं यच्च युगान्तरे तत्संयुक्तं तयोर्घटाभाववद्भूतलमित्याकारके ज्ञाने तयोर्विषयतानां न्यूनाधिकसंख्याकत्वमनुभवसिद्धं सिद्धान्तसिद्धं वा । अथ मन्यसे तत्तत्कालत्वेनैव कालस्य संसर्गघटकतया विशिष्टबुद्धिविषयत्वं । तत्रच कदाचिद्घटसंयुक्ते भूतले यद्घटाभावज्ञानं तस्मिन् तन्निष्ठघटसंयोगानवच्छेदककाल एव तद्व्यक्तित्वेन संसर्गघटकतयापि भासते कदाचिदपि तदसंयुक्ते तु स्वैरं सर्व एव काल इति । एवंच घटकालोत्पन्नं घटाभाववद्भूतलमिति ज्ञानं प्रमैवं तत्र घटासमवधानकालस्यैव संसर्गघटकतया भानाद्घटकालोत्पन्नमिदानीं घटाभाववद्भूतलमिति ज्ञानं तु भ्रमः तत्र भासमानघटासमवधानकालविशिष्टभूतलस्वरूपात्मकसंबन्धे एतत्कालावच्छिन्नत्वविशिष्टघटाभावानिरूपितत्वबाधादिति तत्र पृच्छामः सर्वत्र घटाभावज्ञाने लौकिकालौकिकात्मके किमननुगतातीतानागतकालविशेषाणां तत्तद्व्यक्तित्वेन भासकमिति लौकिकसन्निकर्षस्याप्रसक्तेः संसर्गोपस्थितेरनपेक्षितत्वाच्च । अथ घटज्ञानाभावादीनां घटाभावभासककारणानामेव जन्यतावच्छेदककोटौ घटासमवधानकालव्यक्तिविशिष्टभूतलस्वरूपसंसर्गकत्वं निवेश्यत इति चेत्कालभेदेन कार्यकारणभावानन्त्यप्रसङ्गात् । किंच बहुवारं घटसंयुक्तवियुक्ते भूतले विनष्टे पश्चात्तत्र यद्घटाभावज्ञानं मानसचाक्षुषादिरूपं उपनीतभानाद्यात्मकं तत्रान्तारालिकेषु घटासमवधानकालेषु को वा संसर्गघटकतया भासत इति विनिगमनाविरहः । सर्वेषामपि भाने संसर्गतावच्छेदकविषयतानन्त्यं किंच घटाभावलौकिकचाक्षुषे चक्षुस्संयुक्तविशेषणतायाः कारणत्वं दुर्वचं तत्र यदि विशेषणता भूतलस्वरूपा तदा घटकाले कुतो न घटाभावलौकिकप्रत्यक्षं यदितु कदाचिद्घटसंयुक्तं यद्भूतलं

## प्रभा.

भावस्वरूपस्य नित्यत्वेन सर्वदा सर्वदेशेषु वर्तमानत्वापत्त्या घटाधिकरणदेशेऽपि घटाभावप्रमापत्तेः। नच यदा यस्मिन् देशे घटो न तिष्ठति तत्कालीनतद्देशीयघटाभावस्यैव संसर्गत्वाभ्युपगमात् न पूर्वोक्तदोष इति वाच्यं अभावनिष्ठतद्देशीयत्वस्य तद्देशवृत्तित्वरूपत्वादन्यस्य दुर्वचतया तद्देशवृत्तित्वस्य संबन्ध-

## मञ्जूषा.

तत्र घटाभावलौकिकचाक्षुषे चक्षुस्संयुक्तवृत्तिर्यः तन्निष्ठघटसंबन्धानवच्छेदककालविशिष्टतद्भूतलस्वरूपात्मकविशेषणतासंबन्धः तस्य कारणत्वं कदाचिदपि घटासंयुक्तं यद्भूतलं तत्र घटाभावप्रत्यक्षे चक्षुःसंयुक्तवृत्तितद्भूतलस्वरूपात्मकसंबन्धस्य कारणत्वमित्युच्यते। तदा प्रतियोगिभेदादधिकरणभेदादभावभेदाच्चक्षुस्संयुक्तविशेषणतायाः कारणताबाहुल्यमिति तस्मादभावज्ञाने कालविशेषस्य संसर्गघटकतया भानाभ्युपगमो न युक्तिसहः। किन्तु भूतलस्वरूपात्मके संबन्धे भूतलानुयोगिकत्वावच्छेदेन यद्घटाभावप्रतियोगिकत्वं तत्र घटकालो नावच्छेदकः किन्तु घटासमवधानकाल एव तस्य कालिकाव्याप्यवृत्तित्वादेवंच घटाभावप्रतियोगिकत्वविशिष्टविशेषणतानुयोगिविशेष्यकत्वे सति घटाभावप्रकारकत्वं घटाभावप्रमात्वमतो न घटकालावगाहिन इदानीं घटाभाववद्भूतलमिति ज्ञानस्य प्रमात्वापत्तिः एतत्कालावच्छिन्नत्वविशिष्टघटाभावप्रतियोगित्वस्य तद्भूतलानुयोगिकत्वावच्छेदेन बाधात् एवं द्रव्याधिकरणकाभावलौकिकचाक्षुषं प्रति चक्षुस्संयुक्तानुयोगिकत्वविशिष्टविशेषणतायाः प्रतियोगितासंबन्धेन कारणत्वं घटकाले च तद्भूतलानुयोगिकत्वविशिष्टानिरूपितप्रतियोगितायाः घटाभावे असत्त्वान्न तदा घटाभावलौकिकचाक्षुषापत्तिः एवंच घटकालस्य संबन्धघटकत्वादित्युत्तरग्रन्थस्य तद्भूतलानुयोगिकत्वावच्छिन्नघटाभावप्रतियोगिकत्वात्मकसंबन्धत्वे घटकालस्य अनवच्छेदकत्वादित्यर्थ इति अथवा घटाभाववद्भूतलमिति ज्ञाने विशेषणतात्वेन विशेषणतासंसर्गः विशेषणतात्वं च अखण्डो धर्मः तच्च घटासमवधानकालभूतलस्वरूपोभयपर्याप्तं घटाभावनिरूपितंच तेन रूपेण घटासमवधानकालभूतलस्वरूपयोरुभयोस्संसर्गमर्यादया भानम्। एवंच विशेषणतात्वपर्याप्त्यधिकरणैकदेशघटासमवधानकालनाशान्न घटकाले घटाभाववद्बुद्धेः प्रमात्वं घटाभावलौकिकप्रत्यक्षापत्तिर्वा तादृशविशेषणतात्वविशिष्टत्वसंसर्गकत्वं घटज्ञानाभावकार्यतावच्छेदकमिति न तस्य कार्यकारणभावानन्त्यं बहुवारं घटसंयुक्तवियुक्ते भूतले विनष्टे पश्चाद्यद्घटाभावज्ञानं तत्र विशेषणतात्वेन आन्तरालिकानां सर्वेषामपि कालानामसति नियामकेऽभ्युपगम्यत एव संसर्गतया भानं संसर्गविषयताबाहुल्येऽपि संसर्गतावच्छेदकीभूतविशेषणतात्वविषयता एकैव द्रव्याधिकरणकाभावलौकिकचाक्षुषं प्रति चक्षुस्संयुक्तानुयोगिकविशेषणतात्वविशिष्टस्य प्रतियोगितासंबन्धेन कारणता कल्प्यते। इत्थंच घटाभावनिरूपितत्वेन रूपेण विशेषणतात्वं कदाचिद्घटसमवहितं यद्भूतलं तत्र घटासमवधानकालान्तर्भावेण पर्याप्तम्। यत्तु कदाचिदपि न समवधीयते तत्र संभावितसर्वकालान्तर्भावेण कालानन्तर्भावेणव वा पर्याप्तं घटाभावनिरूपितत्वेनाकारेण तु घटादिस्वरूप एव पर्याप्तं न घटस्वरूपेऽपि। उपाध्यायमतानुसरणेतु घटाभावप्रतियोगिकत्वमपि घटाभावविशिष्टबुद्धौ संबन्धमर्यादया भासते। घटाभावप्रतियोगिकत्वं च कदाचिद्घटसंयुक्ते भूतले तदसमवधानकालान्तर्भावेण पर्याप्तं कदाचिदपि तदसंयुक्तभूतले तु संभावितसर्वकालान्तर्भावेण कालानन्तर्भावेणैव वा पर्याप्तं इति रीत्या सर्वदोषवारणम्। विशेषणतात्वस्य घटाभावनिरूपितत्वंतु नैतन्मते आवश्यकं विशेषणतात्वं तु स्वरूपत्वापरपर्यायं सर्वमतेऽपि आवश्यकमेव तस्यैव विशिष्टबुद्धिसंसर्गतावच्छेदकत्वात् सन्निकर्षनिष्ठकारणतावच्छेदकत्वाच्च। एवं वैशिष्ट्यातिरिक्तवादिमते संसर्गतावच्छेदकं विशेषणतात्वमावश्यकमेवेति बोध्यम्। एवंच घटकालस्य संबन्धाघटकत्वादित्युत्तरग्रन्थोऽपि साधु सङ्गच्छते। तत्तत्कालीनतत्तद्भूतलादिकमित्यस्य तत्तत्कालतत्तद्भूतलादिकोभयमित्यर्थोऽवसेयः। ममतु प्रतिभाति सामयिकाभावस्थले तदभावनिरूपितविशेषणतात्वं तदभावप्रतियोगिकत्वमेव तत्तद्भूतलानुयोगिकत्वावच्छेदेन तत्तत्काल एव पर्याप्तमिति स्वीकर्तुमुचितं आवश्यकत्वात् ततएव सर्वदोषपरिहाराच्च व्याप्यवृत्त्यभावस्थलेतु अनन्तकालापेक्षया लाघवेन तत्तदधिकरणस्वरूप एव तत्पर्याप्तमिति सर्वं समञ्जसम्। अत्र केचिदाचक्षते

प्रभा

विशेषनियन्त्रितत्वेन घटकीभूतसंबन्धस्य स्वात्मकत्वे आत्माश्रयापत्तेः कालविशेषानियन्त्रिताधिकरणस्य संबन्धत्वेन तेन संबन्धेन तद्देशवृत्तित्वाभावविशिष्टाभावस्य संबन्धत्वकल्पनापेक्षया तादृशकालविशेषनियन्त्रितदेशविशेषस्यैव संबन्धरूपत्वौचित्यात् । एवं तावन्मात्रवृत्त्यखण्डभेदस्य केवलस्य संसर्गत्वरूपत्वे पूर्वोक्तदोषापत्त्या कालविशेषविशिष्टदेशविशेषीयत्वविशिष्टाखण्डभेदस्य संबन्धत्वावश्यकतया तदपेक्षया तादृश-

मञ्जूषा.

व्याप्यवृत्त्यभावस्थले सर्वत्रैव वा अभावस्वरूपस्यैव संबन्धत्वमुचितं तत्रैव तत्तदधिकरणानुयोगिकत्वतत्तदभावप्रतियोगिकत्वयोर्विशेषणतात्वस्य च स्वीकर्तुमुचितत्वात् नच विनिगमनाविरहः एकैकाभावसंबन्धत्वस्य अनन्ताधिकरणस्वरूपेषु कल्पनापेक्षया एकैकाभावस्वरूप एव कल्पयितुमुचितत्वात् अथैतावति ब्रह्माण्डे यावन्त्यः पदार्थव्यक्तयः प्रत्येकं तत्तद्व्यक्तित्वाभावः तत्तद्व्यक्तिद्वयान्यतरत्वाभावः तत्तद्व्यक्तित्रयान्यतमत्वाभावः इति रीत्या एकैकस्यां व्यक्तौ वर्तमानानामभावानामसर्वज्ञदुर्ज्ञेयसंख्याकतया तद्व्यक्तिरभाववतीत्याकारिकायामभावत्वेन निखिलाभावावगाहिन्यां विशिष्टबुद्धावभावस्वरूपाणामेव संसर्गतास्वीकारे संसर्गविषयताबाहुल्यं अधिकरणस्वरूपस्य संसर्गत्वे तु तदैक्यमिति लाघवमिति चेन्न । एकैकाभावं प्रति भावव्यक्तीनामिव तत्तदभावभिन्नाभावव्यक्तीनामपि भूयसीनामधिकरणतया घटत्वाभावः प्रमेये पटत्वाभावः प्रमेय इत्याकारिकासु प्रमेयत्वेन निखिलप्रमेयप्रकारिकासु आधेयतासांसर्गिकासु विशिष्टबुद्धिषु आधेयतावच्छेदकसंबन्धविधया अनन्तभावव्यक्त्यनन्ताभावव्यक्तिस्वरूपाणां विषयत्वकल्पनापेक्षया घटत्वाभावादिस्वरूपस्य एकैकस्य विषयत्वकल्पनायां लाघवस्य व्यक्तत्वात् पूर्वोक्तगौरवं तु एतद्गौरवापेक्षया अल्पीय इति तदिष्यत एवेति । नव्यास्तु विशेषणतातिरिक्तैव एकैकस्यां घटाभाववद्भूतलमित्यादिबुद्धौ विशेषणतात्वेन तद्भूतलानुयोगिकत्वघटाभावप्रतियोगिकत्वाभ्यां तद्भूतलस्वरूपस्य तदभावस्वरूपस्य तद्व्यक्त्यसंख्याकाभावान्तराणां परमाण्वाकाशाद्यसंख्याकनित्यद्रव्यगुणादीनां मध्ये कस्य संसर्गमर्यादया भानमित्यत्र विनिगमनाविरहप्रसङ्गात् । नचोपस्थितत्वाद्विशेष्यविशेषणयोरन्यतरस्वरूपस्यैव संसर्गतया भानमुचितमिति वाच्यम् । संसर्गतया भाने उपस्थितत्वस्याप्रयोजकत्वात् अभावान्तराणां संसर्गत्वेऽतिप्रसङ्गस्य भूतलादिस्वरूपसंसर्गतापक्षप्रसक्तातिप्रसङ्गवारणरीत्यैव वारणात् । नच पूर्वोक्तरीत्या नित्यानित्यविकल्पग्रासः पक्षद्वयेऽपि दोषाभावात् । तथाहि वैशिष्ट्यस्य नित्यत्वपक्षे न घटकाले घटात्यन्ताभावबुद्धिप्रसङ्गः तद्भूतलानुयोगिकत्वघटाभावप्रतियोगिकत्वयोरवच्छेद्यावच्छेदकभावस्य घटासमवधानकालावच्छेदेनैव स्वीकारात् । घटाभावनिरूपितत्वविशिष्टविशेषणतात्वस्य घटाभावप्रतियोगिकत्वस्य वा तत्तत्कालान्तर्भावेण पर्याप्तिप्रकाराद्वा तद्दोषवारणात् । नचानया रीत्या भूतलस्वरूपसंबन्धतापक्षस्यैव उपपादनसंभवात् अलं वैशिष्ट्यातिरिक्ततयेति वाच्यम् । तत्र विनिगमनाविरहदोषस्योक्तत्वात् अतएव अनित्यत्वपक्षेऽपि युज्यत एव अनन्तवैशिष्ट्यकल्पनाप्रयुक्तगौरवस्यैकैकविशिष्टबुद्धौ विनिगमनाविरहप्रयुक्तासंख्याकपदार्थसंसर्गताकल्पनप्रयुक्तगौरवापेक्षयाऽल्पीयस्त्वात् । तर्हि नित्यत्वानित्यत्वपक्षयोः कतरो ज्यायानिति चेदनित्यत्वपक्ष एवेत्यवेहि । विशेषणता हि धर्मिग्राहकमानसिद्धसंसर्गताका न कदाचिदपि तया वियोगमर्हति । ततश्च घटासमवधानकाले भूतले वर्तमाना घटाभावविशेषणता यदि घटकालेऽपि स्यात्तदानीमपि तया संबन्धतया भवितव्यं अतः नष्टैव सेति वाच्यं कथं तर्हि समवायो वायौ रूपस्य न संबन्धः घटस्य पाकरक्ततादशायां तत्र श्यामरूपस्य समवायो न संबन्धः तस्यापि धर्मिग्राहकमानसिद्धसंबन्धताकत्वाविशेषादिति चेदस्ति विशेषः नहि वायू रूपवानिति प्रतीतिविषयसंबन्धतया समवायस्सिद्धः येन वायौ समवायेन रूपसंबन्धेन भवितव्यं स्यात् घटे तु पूर्वमुत्पन्नलौकिकप्रत्यक्षात्मिका पाकरक्तताकालोत्पन्नोपनीतभानात्मिका वा श्यामो घट इति प्रतीतिस्तद्विषयसंबन्धतया यद्यपि समवायस्सिद्धः तथापि न तेन पाकरक्ततादशायां श्यामरूपसंबन्धेन भवितव्यम् । श्यामरूपस्य नष्टत्वात्सति हि प्रतियोगिनि तन्निरूपितसंबन्धता वाच्या प्रकृते तु घटासमवधानकालोत्पन्ना अलौकिकप्रत्यक्षात्मिका तत्समवधानकालोत्पन्नोपनी-

**अभावस्तु द्विधा संसर्गान्योन्याभावभेदतः।**

अभावं विभजते ॥ **अभावस्त्विति** ॥ अभावत्वं द्रव्यादिषट्कान्योन्याभाववत्त्वम् ॥

**प्रभा.**

देशविशेषस्यैव संबन्धत्वौचित्यात् एवं तावन्मात्रविषयकज्ञानेच्छाकृतीनां संबन्धत्वेऽपि ऊह्यमित्युक्तरीत्या विनिगमनाविरहाप्रसक्त्या वैशिष्ट्यस्य पदार्थान्तरत्वे प्रमाणाभावात् ॥ ११ ॥

अभावस्तु द्विधेत्यादिमूलप्रविष्टाभावपदेन सूचितमभावलक्षणात्मकमभावत्वं निर्वक्ति ॥ **मुक्तावल्यां अभावत्वमिति** ॥ **द्रव्यादिषट्केत्यादि** ॥ अत्र द्रव्यादिनिष्ठषट्त्वावच्छिन्नप्रतियोगिताकान्योन्याभाववत्त्वं नार्थः प्रत्येकस्मिन्नपि तादृशान्योन्याभावसत्त्वेनातिव्याप्त्यापत्तेः । नच षट्त्वस्य प्रत्येकस्मिन्नपर्याप्तत्वेऽपि स्वरूपसंबन्धेन षट्स्वपि वर्तमानतया स्वरूपसंबन्धावच्छिन्नषट्त्वनिष्ठावच्छेदकताकप्रतियोगिताकान्योन्याभाववत्त्वस्य द्रव्यादावसत्त्वान्नातिव्याप्तिरिति वाच्यं षट्त्वस्यापेक्षाबुद्धिविशेषविषयत्वरूपस्य सकलद्रव्यादिवृत्तित्वे मानाभावेन यादृशद्रव्यादौ तादृशापेक्षाबुद्धिविशेषविषयत्वं नास्ति तत्रैव तादृशान्योन्या-

**मञ्जूषा.**

तभानाद्यात्मिका वा यो घटाभाववद्भूतलमिति प्रतीतिस्तद्विषयतयापि सिध्यन्ती विशेषणता घटसमवधानदशायां सति प्रतियोगिनि घटाभावे सति वानुयोगिनि भूतले स्वयमपि जीवन्ती कथं धर्मिग्राहकमानसिद्धां संबन्धतां विजह्यात् । तस्मान्नैव सा तदानीमित्येवं सिद्धे विशेषणतानामनित्यत्वे तासामनुगमकं विशेषणतात्वं अतिरिक्तमङ्गीकार्यं अन्यथा चक्षुस्संयुक्तविशेषणतादेरनुगतकारणत्वानुपपत्तेः । तदेव चाभावविशिष्टबुद्धौ संसर्गतावच्छेदकमिति न कोऽपि दोष इति प्राहुरित्यास्तां विस्तरः ॥ ११ ॥

**द्रव्यादिषट्कान्योन्याभाववत्त्वमिति** ॥ द्रव्यादीनां षट्काः स्वार्थकप्रत्ययेन षड्रूपा ये अन्योन्याभावास्तद्वत्त्वं द्रव्यादिषट्कस्य द्रव्यत्वाद्यवच्छिन्नप्रतियोगिताकान्योन्याभाववत्त्वं वा । केचित्तु द्रव्यादिषट्कान्योन्याभाव इत्यनेन द्रव्यत्वाद्यवच्छिन्नप्रतियोगिताकत्वं अन्योन्याभावे दुर्लभं तावत्प्रतियोगिताकान्योन्याभावस्यैव ततस्स्वरसतो लाभात् तत्र द्रव्यत्वादेरवच्छेदकत्वासंभवात् अतो द्रव्यादिनिष्ठा षट्त्वसंख्यैव प्रतियोगितावच्छेदकत्वेन विवक्षितेत्याहुः सा च संख्या द्रव्याद्यन्यतमत्वरूपेति न युक्तम् अन्यतमत्वघटकभेदषट्कस्यैव लक्षणत्वसंभवेन तदवच्छिन्नाभिन्नभेदस्य लक्षणत्वेनाभिधानस्य शिरोवेष्टनेन नासिकास्पर्शनतुल्यत्वात् किन्त्वपेक्षाबुद्धिविशेषविषयत्वरूपा साच द्रव्यत्वगुणत्वादिसामान्यलक्षणाजन्यतावद्विषयकसमूहालम्बनात्मकयत्किंचिद्बुद्धिव्यक्तिविषयत्वरूपा तद्विषयतानां च प्रत्येकं विश्रान्तानामपि यद्यपि तद्बुद्धिव्यक्तिविषयतात्वेन रूपेण व्यासज्यवृत्तितास्वीकारेण तावत्सु पर्याप्तिरभ्युपेयते तथापि तद्बुद्धिविषयतात्वावच्छिन्नस्य नेह पर्याप्तिसंबन्धेन प्रतियोगितावच्छेदकत्वं अभिप्रेतं तथा सति पर्याप्तिसंब-

**दिनकरीयम्.**

**द्रव्यादिषट्कान्योन्याभावेति** ॥ इह च द्रव्यत्वादि न प्रतियोगितावच्छेदकमननुगमात् किं तु तद्गतषट्त्वसङ्ख्यैव द्विप्रतियोगिकभेदस्य द्वित्वमिवेति ध्येयम् । वस्तुतो भावत्वमे-

**रामरुद्रीयम्.**

**षट्त्वसङ्ख्यैवेति** ॥ यद्यपि घटपटोभयभेदस्य प्रत्येकं घटपटयोरिव षट्त्वावच्छिन्नभेदस्याभावत्वे तस्य प्रत्येकं द्रव्यादावपि सत्त्वेन तेषामप्यभावत्वापत्तिः तथापि पर्याप्तिसम्बन्धेन षट्त्वावच्छिन्नभेदस्य द्रव्यादौ सत्त्वेऽप्यपेक्षाबुद्धिरूपषट्त्वस्य विषयतयाऽवच्छेदकत्वान्न भावेष्वतिप्रसङ्ग इति मन्तव्यम् । ननु व्यासज्यवृत्तिधर्माणां पर्याप्तिसम्बन्धेनैव प्रकारत्वमिति नियमः अन्यथा द्वित्वस्य समवायेन प्रत्येकमपि सत्त्वेनैको द्वाविति प्रतीत्यापत्तेः, न चैको द्वाविति प्रतीतिविरहेऽपि एको द्वित्ववानिति प्रतीतेरिष्टतया समवायेनापि व्यासज्यवृत्तिधर्माणां प्रकारत्वमावश्यकमिति वाच्यम्, द्वित्ववानिति प्रतीतौ मतुबर्थसमवायस्यैव प्रकारत्वात्तथा च षड्भिन्नमिति प्रतीतौ पर्याप्तिसम्बन्धेनैव षट्त्वस्य प्रकारत्वानुभवात् षट्त्वावच्छिन्नभेदो निष्प्रमाणक एवेत्यभिप्रायेणाह ॥ **वस्तु-**

## प्रभा.

भावसत्त्वेनातिव्याप्तेर्दुर्वारत्वात् । नच सर्वे भावा इति सामान्यलक्षणाप्रत्यासत्तिजन्यभावत्वप्रकारकज्ञानविशेष्यत्वरूपषट्त्वस्य सकलद्रव्यादिवृत्तित्वेन तादृशान्योन्याभाववत्त्वस्य द्रव्यादावसत्त्वान्नातिव्याप्तिरिति वाच्यं भावत्वप्रकारकप्रमाविशेष्यत्वस्य विशेष्यभेदेन भिन्नतयैकैकविशेष्यत्वव्यक्तेः अवच्छेदकत्वेऽन्यत्रातिव्याप्त्यापत्तेः तादृशप्रमाविशेष्यतात्वावच्छिन्नस्यावच्छेदकत्वे तस्य भावत्वरूपलघुधर्मसमनियतत्वेन तदवच्छिन्नप्रतियोगिताकान्योन्याभावस्यालीकतयाऽसंभवापत्तेः । किन्तु द्रव्यत्वाद्यवच्छिन्नप्रतियोगिताकभेदषट्कवत्त्वं तादृशभेदषट्कावच्छिन्नप्रतियोगिताकाखण्डभेदं द्रव्यादिषट्कनिष्ठं द्रव्यादिषट्कान्यतमत्वरूपमुपादाय तद्व्यक्त्यवच्छिन्नप्रतियोगिताकैकभेदवत्त्वरूपं वा द्रव्यादिषट्कान्योन्याभाववत्त्वमिति । तस्य तद्व्यक्तित्वेनैव निवेशान्न प्रतियोगिज्ञानापेक्षा तद्व्यक्तित्वस्य तद्व्यक्तित्वरूपतया न विशेषणज्ञानहेतुतायां व्यभिचारोऽपीति न कोऽपि दोष इति हृदयम् । केचित्तु वस्तुतो भावभिन्नत्वमेवाभावत्वं । अथ भावभिन्नत्वस्याभावत्वे भावत्वरूपप्रतियोगितावच्छेदकज्ञानशून्यत्वदशायां घटो नास्तीति प्रतीत्यनापत्तिः । एवमन्योन्याभावत्वस्याभावत्वगर्भस्याग्रे वक्तव्यतया अभावत्वस्यान्योन्याभावत्वगर्भत्वे अन्योन्याश्रयापत्तिः एवमभावो न भाव इति वाक्यात् शाब्दबोधानुपपत्तिश्च स्यात् उद्देश्यतावच्छेदकविधेययोरैक्यादिति । तस्मात् अख-

## मञ्जूषा.

न्धावच्छिन्नतादृशसंख्यानिष्ठप्रतियोगितावच्छेदकताकभेदस्य द्रव्यादावपि सत्त्वेनातिव्याप्त्यापत्तेः किन्त्वाश्रयतासंबन्धेनेति बोध्यम् । अथवा भावत्वमत्र प्रतियोगितावच्छेदकत्वेनाभिमतं तच्च समवायैकार्थसमवायान्यतरसंबन्धेन सत्तावत्त्वरूपं सत्तासमवायित्वसत्तासामानाधिकरण्यान्यतरवत्त्वादिरूपं वा । यत्तु भावभिन्नत्वस्य अभावत्वरूपत्वे भावत्वरूपविशेषणज्ञानशून्यकाले घटो नास्तीति प्रतीत्यनापत्तिरित्याक्षिपन्ति तदज्ञानविलसितम् । नहि वयं नञ्पदोल्लिखितप्रतीतिप्रकारीभूतमभावत्वमीदृशमित्याचक्ष्महे येनेयमनुपपत्तिस्स्यात् । नहि भावभिन्नत्वं सर्वत्र नञ्पदोल्लिखितप्रतीतौ प्रकारीभवितुमर्हति घटाभावो नास्तीत्यादौ घटस्यापि नञोल्लेखात् किन्तु अनुयोगिताविशेषरूपमेवाभावत्वं भावाभावसाधारण्येन तदुल्लिखितप्रतीतौ प्रकारः भावभिन्नत्वं तु भावव्यावृत्तं सप्तमपदार्थस्य लक्षणं तस्य घटो नास्तीत्यादिप्रतीतिविषयत्वासंभवो नास्माकं क्षतिमावहति । नचानुयोगिताविशिष्टस्यैव नञोल्लेखे घटाभावपटाभावादिबुद्धीनामभावांशेऽनुगतत्वं न स्यात् अनुयोगितानां प्रत्यभावव्यक्तिविश्रान्तत्वादिति वाच्यम् अनुयोगितात्वस्यानुयोगितानां अनुगमकस्याखण्डोपाधिरूपस्याङ्गीकारात् । अथवा नास्तीति प्रतीतिप्रकारीभूतमभावत्वमखण्डोपाधिः अतो नानुपपत्तिस्तस्यानुगतत्वात् । अथवा घटो नास्ति घटाभाववद्भूतलमित्यादिप्रतीतावभावत्वमेव न विषयः किन्त्वत्यन्ताभावत्वं तच्चानुयोगिताविशेषरूपं अखण्डोपाधिरूपं वेत्यन्यदेतत् । एतेन निरुक्तान्यतरसंबन्धावच्छिन्नसत्तानिष्ठप्रतियोगितावच्छेदकताकभेदस्य तत्संबन्धावच्छिन्नसत्तानिष्ठप्रतियोगिताकाभावस्य वा घटो नास्तीत्यादिबुद्धौ प्रकारत्वमङ्गीकृत्य तदुपरि घटो नास्तीति प्रतीतौ घटप्रतियोगिकस्सत्ताभाववान् सत्तावद्भेदवान्वा खलु विषयो वाच्यः तत्र सत्ताभाववानित्यत्र अभावत्वं सत्ताभाववत्त्वं एवं सत्तावद्भेदवानित्यत्र भेदघटिताभावत्वं सत्तावद्भेदवत्त्वमिति रीत्या विषयतानवस्थामाशङ्क्य येकेचिदिह जात्यखण्डोपाध्यतिरिक्तपदार्थस्य स्वरूपतः प्रकारता नास्तीति स्वयमन्यत्र व्यवहरन्तोऽपि घटो नास्तीत्यादिबुद्धौ दर्शितसत्ताभावसत्तावद्भेदयोस्स्वरूपतः प्रकारतामङ्गीकृत्य अत्र नव्याः प्राहुरिति परप्रोक्तव्याजेन स्वयमप्यनिर्भृतान् समादधते ते केवलं विप्रलम्भयन्ति पामरानित्यवधेयं । किंच यदि निरवच्छिन्नप्रकारताश्रयीभूतं घटो नास्तीतिप्रतीतिविषयीभूतं अभावत्वं स्यात् तर्हि तस्याखण्डत्वं केन वारणीयं । इदमेव हि जातेरखण्डोपाधेश्चाखण्डत्वं यन्निरवच्छिन्नप्रकारताश्रयत्वं नाम । तथाच सिद्धं नास्तीति प्रतीतिप्रकारीभूतधर्मस्याखण्डोपाधितया । तत्र सत्ताप्रतियोगिकत्वकल्पनन्तु किमर्थमिति न जानीमः । ये पुनरिहाखण्डोपाधिर्न विश्वनाथपञ्चाननस्याभिप्रेत इति भ्राम्यन्ति ते जात्यखण्डोपाध्यतिरिक्तपदार्थज्ञानस्य किंचिद्धर्मप्रकारकत्वनियमात् इत्युपरितनमुक्तावलीग्रन्थे अखण्डोपा-

## प्रभा.

ण्डोपाधिरनुयोगिताविशेषो वा अभावत्वमिति चेन्न अभावत्वस्य भावत्वावच्छिन्नप्रतियोगिताकभेदरूपत्वेऽपि तादृशभेदत्वेन ज्ञान एव भावत्वरूपप्रतियोगितावच्छेदकज्ञानापेक्षया न तद्व्यक्तित्वेन ज्ञान इति अभावत्वशरीरे तद्व्यक्तित्वेनैव भावभेदस्य प्रविष्टतया भावत्वानुपस्थितिकाले घटो नास्तीति प्रतीत्यनुपपत्तिविरहात् अन्योन्याभावत्वस्य अभावत्वघटितत्वेऽप्यभावत्वशरीरे अन्योन्याभावस्य न तेन रूपेण घटकता किंतु तद्व्यक्तित्वेनेत्यन्योन्याश्रयापत्तिविरहात् । एवंच प्रमाकरणं प्रमाणमित्यादिवाक्यस्योद्देश्यतावच्छेदकविधेययोरैक्येनाप्रामाण्यापत्तिभिया प्रमाणशब्दस्य प्रमाणपदवाच्यत्वावच्छिन्नार्थकत्वं परिकल्प्य यथा प्रामाण्यं व्यवस्थापितं तथा अभावो न भाव इति वाक्यस्थाभावपदस्याभावपदवाच्यत्वावच्छिन्नार्थकत्वं परिकल्प्य तादृशवाक्यस्यापि प्रामाण्योपपादनसंभवात् अभावत्वस्याखण्डोपाधित्वे नैयायिकमते घटत्वादीनां अखण्डोपाधिरूपत्वसंभवेन जातिमात्रोच्छेदप्रसंगात् अनुयोगिताविशेषरूपत्वे चाभावव्यक्तिभेदेनानुयोगितानां भिन्नतया अभावपदस्य नानार्थकत्वप्रसंगात् तस्मात् बाधकाभावात् भावभिन्नत्वमेवाभावत्वं तच्च समवायसमवायघटितसामानाधिकरण्यान्यतरसंबन्धावच्छिन्नप्रतियोगिताकसत्ताभावरूपं तच्च पूर्वानुपस्थितमपि प्रकारः एवंच घटाभावादिप्रतीतीनां अभावांशे अनुगतत्वमप्युपपद्यते । नच विषयतानवस्था सत्तात्यन्ताभावव्यक्तेः स्वरूपत एव प्रकारत्वोपगमात् अत एव सत्तारूपप्रतियोगिज्ञानं विनापि घटो नास्तीति बुद्धौ स प्रकारः अभावत्वप्रकारकप्रत्यक्ष एव प्रतियोगिधियो हेतुत्वात् अन्यथा इदं तम इति प्रतीत्यनापत्तेः । नच सत्ताभावरूपाभावत्वस्यानुपस्थितस्य प्रकारत्वे विशेषणधियो हेतुत्वे व्यभिचार इति वाच्यं विशेषणभेदेन हेतुताया भिन्नत्वेन तत्र तद्धेतुत्वानुपगमात् फलानुरोधित्वात् कल्पनाया इत्याहुः तदसत् अन्यतरत्वेन संसर्गत्वानङ्गीकर्तृमते निरुक्तान्यतरसंबन्धावच्छिन्नप्रतियोगिताकसत्ताभावस्यैवाप्रसिद्ध्या भावभिन्नत्वस्य सुतरां तत्स्वरूपत्वासंभवात् । नच तथापि भावभिन्नत्वस्य समवायेनसत्ताभाव-सामाना-

## मञ्जूषा.

धिग्रहणं प्रदर्श्य प्रमापयितव्याः । नच पदार्थाधिक्यं सामान्यान्तर्भूतत्वात् । यदपि तादृशसत्ताभावरूपं सत्तावद्भेदरूपं वा अभावत्वमनुपस्थितमपि प्रकारः विशेषणभेदेन विशिष्टज्ञानहेतुताया भेदादिति तैरेवोक्तं तदपि न प्रकारतासंबन्धेन तत्पुरुषीयबुद्धिं प्रति विषयतासंबन्धेन तत्पुरुषीयज्ञानस्य कारणत्वमितिरीत्या विशेषणज्ञानकारणताया विशेषणभेदेऽप्यभिन्नत्वात् । नच पुरुषभेदेन कारणताभेदापत्तिः इति वाच्यं पुरुषाणामपि विशेषणतया तद्भेदेन कारणताभेदस्य तवाप्यावश्यकत्वात् । यत्तु अन्योन्याभावत्वस्याभावगर्भस्याग्रे वक्तव्यतया अभावस्य अन्योन्याभावगर्भत्वे अन्योन्याश्रयापत्तिरिति केश्चिदाक्षिप्तं न तत्क्षोदक्षमं अन्योन्याभावत्वस्याभावत्वगर्भस्याग्रे निर्वक्तव्यत्वेऽपि भावत्वावच्छिन्नतादात्म्यसंबन्धावच्छिन्नप्रतियोगिताको यस्तद्वत्त्वरूपप्रकृतलक्षणशरीरे अभावत्वानिवेशे प्रयोजनाभावात् । यदप्यभावत्वस्य भावभिन्नत्वरूपत्वे अभावो न भाव इति वाक्याच्छाब्दबोधानुपपत्तिः उद्देश्यतावच्छेदकविधेययोरैक्यादिति तन्न इष्टत्वात् तत्राभावपदस्याभावपदवाच्यत्वविशिष्टार्थकत्वस्वीकाराद्वा तस्माद्भावभिन्नत्वमभावलक्षणं युक्तमेव नन्नुल्लिखितप्रतीतिप्रकारीभूतं अभावत्वन्त्वखण्डोपाधिरूपमनुयोगितात्वानुगतानुयोगितारूपं वा । नच तादृशाखण्डोपाधौ प्रमाणाभावः भावाभावसाधारणनञुल्लिखितप्रतीतेरेव प्रमाणत्वात् । नच घटो नास्तीत्यादिप्रतीतो दर्शितसत्तावद्भेद एव तत्तद्व्यक्तित्वेन प्रकारोऽस्त्विति वाच्यम् भावासंग्रहात् । अभावप्रत्यये हि विशिष्टवैशिष्ट्यमर्यादानातिशेत इति नियमेन प्रतियोगिविशेषिताभावलौकिकप्रत्यक्षस्यापसिद्धान्तत्वाच्च इदं तम इत्यादावपि तेजोऽभावत्वेनैव भानं नतु तद्व्यक्तित्वेनेत्यङ्गीकारात् । अथवा अभावप्रत्यय इत्यस्याभावत्वविशिष्टप्रत्यय इत्यर्थान्नेदं तम इति प्रतीत्यनुपपत्तिः तत्र चाभावत्वं यदि तद्व्यक्तित्वविशिष्टो भेद इत्युच्यते तर्हि घटाभावनिष्ठं सत्तावद्भेदं तद्व्यक्तित्वेनावगाहमानस्तद्व्यक्तिमानिति प्रत्ययोऽपि घटत्वविशिष्टवैशिष्ट्यावगाही स्यात् । नचाभावत्वस्याखण्डोपाधित्वे घटत्वादेरप्यखण्डोपाधित्वं स्यादिति वाच्यम् निरवच्छिन्नप्रकारताश्रयत्वे सति स्वरूपसंबन्धेन ब-

**प्रभा.**

धिकरण्येनसत्ताभाव-एतदुभयवत्त्वस्वीकारान्नोक्तदोष इति वाच्यं तथापि वृत्त्यनियामकसंबन्धस्याभावप्रतियोगितानवच्छेदकत्वे.ते सामानाधिकरण्येन तादृशाभावाप्रसिद्धयाऽभावत्वस्य तदुभयरूपत्वासंभवात्। यदि च समवायेन सत्तासंबन्धित्व-समवायघटितसामानाधिकरण्येनसत्तासंबन्धित्व-एतदन्यतरत्वावच्छिन्नप्रतियोगिताकाभावरूपं तादृशान्यतरत्वावच्छिन्नवत्त्वरूपं वा भावभिन्नत्वमभावत्वं इत्युच्यते तदा नोक्तदोष इति हृदयम्।

**मञ्जूषा.**

र्तमानत्वात्मकाखण्डोपाधित्वे निरवच्छिन्नप्रकारताश्रयत्वांशस्येष्टत्वात् द्रव्यगुणकर्मसु वर्तमानस्याखण्डधर्मस्य समवायेनैव वृत्तिसंभवेन स्वरूपसंबन्धेन वर्तमानत्वांशस्य आपादनासंभवात् अत एव द्रव्यगुणकर्मस्वेव वर्तमानमखण्डरूपं जातिः। यत्तु सामान्यादौ यत्र क्वचिदपि कृतास्पदं तद्द्रव्यगुणकर्मसु वर्तमानं अवर्तमानं वाऽखण्डोपाधिरित्येवोच्यते सामान्यादौ समवायाभावेन तत्र स्वरूपसंबन्धेनैव वृत्तेर्वक्तव्यत्वादिति सिद्धा-

**दिनकरीयम्.**

व तथा बोध्यम्। अत्र केचित्, भावभिन्नत्वस्याभावत्वे भावत्वरूपविशेषणज्ञानशून्यकाले घटो नास्तीति प्रतीत्यनापत्तिः एवमन्योन्याभावत्वस्याभावत्वगर्भत्वस्याग्रे वक्तव्यतयाऽभावत्वस्यान्योन्याभावत्वगर्भत्वे अन्योन्याश्रयापत्तिः एवमभावत्वस्य भावभिन्नत्वरूपत्वेऽभावो न भाव इति वाक्याच्छाब्दबोधानुपपत्तिश्च उद्देश्यतावच्छेदकविधेययोरैक्यादिति तस्मादखण्डोपाधिरनुयोगिताविशेषो वाऽभावत्वमिति वदन्ति। अत्र नव्याः अभावत्वस्याखण्डोपाधित्वे प्रमाणाभावः, किं तु भावभिन्नत्वं समवायसामानाधिकरण्यान्यतरसंम्बन्धावच्छिन्नप्रतियोगिताकसत्ताभावरूपं, तच्च पूर्वानुपस्थितमपि प्रकारः एवं च घटाभावपटाभावप्रतीतीनामभावांशेऽनुगतत्वमुपपद्यते नच विषयतानवस्था सत्तात्यन्ताभावव्यक्तेः स्वरूपत एव

**रामरुद्रीयम्.**

**त इति** ॥ **तथा बोध्यमिति** ॥ अभावत्वं बोध्यमित्यर्थः। यद्यपि द्रव्यादिभेदषट्कस्याभावत्वे न कोऽपि दोषः तथापि गौरवात् द्रव्यादीनां षण्णां पदार्थानामज्ञानेऽपि अभावत्वप्रतीतेश्च तदुपेक्षितमिति ध्येयम्। अभावत्वस्याखण्डोपाधित्वं वदतां मतमुपन्यस्यति ॥ **अत्र केचिदिति** ॥ **अभावत्वगर्भस्येति** ॥ तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकत्वमात्रस्यान्योन्याभावलक्षणत्वे घटत्वादौ घटत्वाभाववद्भेदरूपेऽतिव्याप्तिवारणायाभावत्वनिवेशस्यावश्यकत्वादिति भावः ॥ **अन्योन्याश्रयापत्तिरिति** ॥ अभावत्वज्ञाने अन्योन्याभावत्वज्ञानस्य अन्योन्याभावत्वज्ञाने चाभावत्वज्ञानस्यापेक्षितत्वादिति भावः ॥ **उद्देश्यतावच्छेदकेत्यादि** ॥ अभेदसंसर्गकशाब्दबोधे उद्देश्यतावच्छेदकविधेयतावच्छेदकयोरैक्यस्येव भेदसंसर्गकशाब्दबोधे उद्देश्यतावच्छेदकविधेययोरैक्यस्यापि निराकाङ्क्षताप्रयोजकत्वादिति भावः। अभावत्वस्याखण्डोपाधित्वं न विचारसहं तत्साधकमानाभावादित्यभिप्रेत्याह ॥ **अनुयोगिताविशेषो वेति** ॥ संसर्गाभावानुयोगिताव्यावर्तनाय विशेषपदम् ॥ **प्रमाणाभाव इति** ॥ ननु घटाभावादौ अभाव इत्यनुगततत्प्रतीतिरेव तत्साधिका भविष्यतीत्याशङ्कायां अनुगतप्रतीतिं प्रकारान्तरेणोपपादयति ॥ **किं त्विति** ॥ नन्वेवमभावत्वस्यान्योन्याभावगर्भतयोक्तान्योन्याश्रयापत्तिरित्यत आह ॥ **समवायेति** ॥ सत्ताभावरूपमित्यस्याभावत्वमिति शेषः। नन्वेवमपि सत्तानुपस्थितिदशायां घटो नास्तीत्यादिप्रतीत्यनुपपत्तिरत आह ॥ **तच्चेति** ॥ ननु अनुयोगिताविशेषस्याभावत्वोपगमे लाघवात्तदेव कुतो नाङ्गीकृतमित्यत आह ॥ **एवं चेति** ॥ **अभावांशेऽनुगतत्वमिति** ॥ एकधर्मप्रकारकत्वमित्यर्थः। तथा चाभावत्वस्यानुयोगितारूपत्वे तस्याः घटाभावादौ भिन्नतया अभावप्रतीतेरनुगतत्वं न स्यादिति भावः। ननु जातीतरस्य सत्ताभावस्य स्वरूपतो भानासम्भवेन अभावत्वेनैव तस्य प्रकारता वाच्या तच्च सत्ताभावरूपं तदपि पुनः सत्ताभावरूपाभावत्वेन प्रकार इत्यङ्गीकरणीयम्। तथा चाभावप्रतीतौ विषयतानन्त्यमिति शङ्कां निराकुरुते ॥ **न चेति** ॥ विशेषणस्य सत्ताभावस्य एकस्यैव तत्र तत्र प्रकारत्वात् विषयानवस्था नोक्ता अपि तु विषयतानवस्थै-

प्रागभावस्तथा ध्वंसोऽप्यत्यन्ताभाव एव च।
एवं त्रैविध्यमापन्नः संसर्गाभाव इष्यते ॥ १२ ॥

**संसर्गेति** ॥ संसर्गाभावान्योन्याभावभेदादित्यर्थः । अन्योन्याभावस्यैकविधत्वात्तद्विभागाभावात् संसर्गाभावं विभजते ॥ **प्रागभाव इति** ॥ संसर्गाभावत्वमन्योन्याभावभि-

## प्रभा.

मूले संसर्गान्योन्याभावभेदत इत्यत्र संसर्गपदस्य संसर्गाभावलाक्षणिकत्वमित्यभिप्रायेण आह ॥ **मुक्तावल्यां संसर्गेत्यादि** ॥ **अन्योन्याभावस्यैकविधत्वादिति** ॥ ननु संसर्गाभावस्यैव प्राङ्निर्दिष्टत्वे-

## मञ्जूषा.

न्तरीतिः ॥ **मूले संसर्गान्योन्याभावभेदत इति** ॥ संसर्गशब्दस्तादात्म्यातिरिक्तसंबन्धपरः अथवा वृत्तिनियामकसंबन्धपरः तादात्म्यातिरिक्तवृत्त्यनियामकसंबन्धस्य प्रतियोगितावच्छेदकत्वानङ्गीकारात् अन्योन्यशब्दस्तु तादात्म्यपरः संसर्गान्योन्याभ्याममभावः संसर्गान्योन्याभावः अवच्छिन्नप्रतियोगिताकत्वं तृतीयार्थः तथाच तादात्म्यातिरिक्तसंबन्धावच्छिन्नप्रतियोगताकाभावः तादात्म्यसंबन्धावच्छिन्नप्रतियोगिताकाभावश्चेत्यर्थः । इदंच ध्वंसप्रागभावयोरत्यन्ताभावविरोधितामते श्यामघटे समवायेन रक्तो नास्ति रक्तघटे समवायेन श्यामो नास्तीति प्रतीतौ प्रागभावध्वंसयोरेव विषयतया तयोरपि समवायसंबन्धावच्छिन्नप्रतियोगिताकत्वमस्तीत्यभ्युपगमेन । केचित्तु संसर्गशब्दः प्रागभावादिषु त्रिषु रूढः अन्योन्य-

## दिनकरीयम्.

प्रकारत्वोपगमात् अत एव सत्तारूपप्रतियोगिज्ञानं विनापि घटो नास्तीति बुद्धौ स प्रकारः अभावत्वप्रकारकप्रत्यक्ष एव प्रतियोगिधियो हेतुत्वात् अन्यथा इदं तम इति प्रतीयनापत्तेः न च सत्ताभावरूपस्याभावत्वस्यानुपस्थितस्य प्रकारत्वे विशेषणधियो हेतुत्वे व्यभिचार इति वाच्यम् विशेषणभेदेन हेतुताया भिन्नत्वेन तत्र तद्धेतुत्वानुपगमात्फलानुरोधित्वात्कल्पनाया इति प्राहुः ॥ संसर्गान्योन्याभावभेदत इति मूलादेकः संसर्गाख्योऽपरोऽन्योन्याभाव इति प्रतीयते तच्चायुक्तं संसर्गस्याभावत्वानङ्गीकारादित्यत आह ॥ **संसर्गाभावेति** ॥ तथा च द्वन्द्वात्परं श्रूयमाणस्याभावपदस्य प्रत्येकं सम्बन्धात्संसर्गाभावोऽन्योन्याभावश्चेति मूलार्थ इति भावः क्रमेण द्वयोरभावयोर्लक्षणमाह ॥

## रामरुद्रीयम्.

वेति बोध्यम् । ननु सत्ताभावस्य स्वरूपतः प्रकारत्वोपगमेऽपि सत्तोपस्थितिशून्यकाले घटो नास्तीत्यादिप्रतीतिरनुपपन्नैव अभावज्ञाने प्रतियोगिज्ञानस्य हेतुतया सत्ताज्ञानं विना सत्ताभावभानासम्भवादित्यत आह ॥ **अत एवेति** ॥ **प्रत्यक्ष एवेति** ॥ अभावविषयकशाब्दबोधादौ प्रतियोगिज्ञानानपेक्षणात् प्रत्यक्ष इत्युक्तम् । इदमिति प्रत्यक्षविषयः तमस्त्वं तु न तेजोऽभावत्वरूपं अपि तु तेजोऽभावनिष्ठतद्व्यक्तित्वमेव नातस्तेजोज्ञानं विना तादृशप्रतीत्यनुपपत्तिः । ननु सत्ताभावस्य पूर्वानुपस्थितस्य प्रकारत्वोपगमे विशिष्टबुद्धित्वावच्छिन्नं प्रति विशेषणज्ञानत्वेन हेतुतायां व्यभिचार इत्याशङ्कायामाह ॥ **विशेषणभेदेनेति** ॥ अयं भावः विशिष्टबुद्धित्वं हि सप्रकारकबुद्धित्वादन्यद्दुर्वचम् विशेषणत्वमपि प्रकारत्वादतिरिक्तं तथाचोक्तकार्यकारणभावे सति घटज्ञानात् पटविशिष्टबुद्ध्यापत्तिः घटस्यापि क्वचित्प्रकारत्वात् अतो घटविशिष्टबुद्धिं प्रति घटज्ञानत्वेन पटविशिष्टबुद्धिं प्रति पटज्ञानत्वेन विशिष्यैव कार्यकारणभावः स्वीकरणीय इति ॥ **तत्रेति** ॥ अभावत्वविशिष्टबुद्धावित्यर्थः ॥ **तद्धेतुत्वेति** ॥ अभावत्वज्ञानस्य हेतुत्वानुपगमादित्यर्थः । ननु सर्वत्र विशिष्टबुद्धौ विशेषणज्ञानस्य हेतुत्वाकल्पने बीजाभाव इत्यत आह ॥ **फलेति** ॥ विशेषणज्ञानं विना विशिष्टबुद्ध्यनुत्पादः फलम् । तदनुरोधित्वात् कार्यकारणभावकल्पनाया इत्यर्थः । घटादिज्ञानमन्तरा घटादिविशिष्टबुद्ध्यनुदयात् तत्र कार्यकारणभावः कल्प्यते अनुपस्थिताभावत्वविशिष्टबुद्ध्युदयादत्र न कल्प्यते इति भावः ॥ **द्वन्द्वान्त इति** ॥ अथात्र संसर्गश्चान्योन्यश्च संसर्गान्योन्यौ तौच तावभावौ चे

## प्रभा.

नानन्तरनिर्दिष्टान्योन्याभावस्य प्रथमं विभागाप्रसक्त्या इयमवतारिकाऽयुक्ता न चाभावस्तु द्विधान्योन्यसंसर्गाभावभेदत इति मूलपाठाभिप्रायेणेयमवतारिका युक्ता तत्रान्योन्याभावस्यैव प्राङ्निर्दिष्टत्वेन प्रथमं विभागप्रसक्तेरिति वाच्यं । तथा सति संसर्गेतीति प्रतीकधारणस्य संसर्गाभावान्योन्याभावभेदादित्यर्थकरणस्य चायुक्तत्वापत्तेरिति चेन्न संसर्गाभावस्य प्राङ्निर्दिष्टत्वेऽपि अन्योन्याभावभिन्नाभावत्वरूपसंसर्गा-

## मञ्जूषा.

शब्दश्च भेदे तथाच संसर्गश्चान्योन्यश्च संसर्गान्योन्यौ तौ च तावभावौ चेति द्वन्द्वात्परं कर्मधारय इति प्राहुः । अन्ये तु अन्योन्येनाभावः अन्योन्याभावः तादात्म्यसंबन्धावच्छिन्नप्रतियोगिताकाभाव इत्यर्थः संसर्गश्चान्योन्याभावश्चेति द्वन्द्वः संसर्गशब्दस्तु प्रागभावादित्रयपर इत्याहुः । एतदुभयमपि संसर्गारोपजन्यप्रतीतिविषयानावत्वं संसर्गाभावत्वमिति प्राचीननिरुक्त्यननुरोधि ॥ **अन्योन्याभावस्येति** ॥ एका विधा यस्य स एकविधस्तस्य भावस्तत्त्वं । ननु किमिदं विधायामेकत्वं न तावत्तद्व्यक्तित्वं अव्यावर्तकत्वात् द्रव्यादावपि तथाविधैकविधत्वसत्त्वेन तस्यापि विभागासंभवप्रसंगात् । नचैका स्वभिन्नधर्मासमानाधिकरणा विधा धर्मो यस्येति स्वभिन्नधर्मासमानाधिकरणधर्मवत्त्वं धर्मद्वयशून्यत्वपर्यवसितमेकविधत्वमिति वाच्यम् अन्योन्याभावेऽप्यन्योन्याभावत्वप्रमेयत्वयोर्द्वयोस्सत्त्वात् । नचैका यत्किंचिद्धर्मानिष्ठन्यूनवृत्तितानिरूपकभिन्ना विधा असाधारणधर्मो यस्येतिव्युत्पत्त्या यत्किंचिद्धर्मनिष्ठन्यूनवृत्तितानिरूपकाभिन्नासाधारणधर्मकत्वं तत् स चासाधारणधर्मः प्रकृतेऽन्योन्याभावत्वमेव एतादृशैकविधत्वं अन्योन्याभावत्वावच्छिन्नस्य विभागासंभवे हेतुरेवेति वाच्यम् अन्योन्याभावत्वस्यापि घटत्वावच्छिन्नप्रतियोगिताकत्वादिनिष्ठन्यूनवृत्तितानिरूपकत्वात् एवमन्येऽपि पक्षास्स्फुरन्तोऽपि स्वत एव प्रतिहन्यन्ते उच्यते । एका परस्पराविरुद्धा विधा रीतिः स्ववृत्तित्वेनावश्यवक्तव्यतयेष्यमाणधर्मसामान्यरूपा यस्येति व्युत्पत्त्या परस्पराविरुद्धावश्यवक्तव्यत्वप्रकारकेच्छाविषयीभूतस्ववृत्तिधर्मसामान्यकत्वमेकत्वमेकविधत्वमिति प्राप्तं तच्च विभागासंभवे हेतुः । तथाहि अन्योन्याभाववृत्तित्वेनावश्यवक्तव्यतया ये धर्मा इष्यन्ते ग्रन्थकृता तादात्म्यसंबन्धावच्छिन्नप्रतियोगिताकत्वाभावत्वप्रमेयत्वादयः न ते परस्परविरुद्धाः ये तु परस्परविरुद्धा घटत्वावच्छिन्नप्रतियोगिताकत्वादयः न ते वक्तव्यतयेष्यन्ते । तेषां विशिष्य वक्तुं बोद्धुं वाऽऽकल्पकालस्यापर्याप्तत्वात् । यद्यपि घटत्वावच्छिन्नप्रतियोगिताकत्वघटत्वान्यधर्मावच्छिन्नप्रतियोगिताकत्वाभ्यां विभागस्संभवति तथापि न तथा विभागस्स्वारसिकः तथा सति पटत्वावच्छिन्नप्रतियोगिताकत्वतदन्यधर्मावच्छिन्नप्रतियोगिताकत्वाभ्यामेवं एकैकधर्ममादाय तदवच्छिन्नप्रतियोगिताकत्वतदन्यधर्मावच्छिन्नप्रतियोगिताकत्वाभ्यां विभागसंभवेन तत्र कं धर्ममादाय विभागः क्रियतामित्यत्र नियामकाभावात् यद्यपि व्यासज्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकत्वतदन्यधर्मावच्छिन्नप्रतियोगिताकत्वाभ्यां विभागः शक्यते कर्तुं तथापि तावपि धर्मौ न वक्तव्यतया ग्रन्थकृतेष्येते अत्यन्ताभावसाधारणत्वात् येन त्विष्यते तेन ताभ्यां विभागः क्रियत एवेति नानुपपत्तिगन्धः । स्यादेतत् संसर्गान्योन्याभावभेदत इति मूले चरमनिर्दिष्टान्योन्याभावविभागाभावबीजशङ्कायाः प्रथमनिर्दिष्टसंसर्गाभावविभागकाले कथमुत्थितिरिति चेदत्र केचित् अभावस्तु द्विधान्योन्यसंसर्गाभावभेदत इत्येव मूलपाठः एवं मुक्तावल्यामप्यन्योन्येतीत्येव प्रतीकधारणं अन्योन्याभावसंसर्गाभावभेदादित्यर्थ इत्येत्र च विवरणमपि पाठान्तरन्तु प्रामादिकमित्याहुः । अन्येतु संसर्गाभावविभागानन्तरकालप्रसक्तिकामपि तदाशङ्कामिहैव निराकृतवानक्षरलाघवाय वाक्यान्तरप्रयुक्त्यभावाय च अन्यथोत्तरत्र एतद्वाक्यप्रयोगे तद्विभागासंभवादिति पञ्चम्यन्तान्वययोग्यं तद्विभागो न कृत इत्यादिकं शब्दान्तरमवश्यं प्रयोक्तव्यं स्यात् । तथाचाक्षरगौरवं भिन्नवाक्यप्रयुक्तिश्च नचात्र संसर्गाभावविभागे अन्योन्याभावविभागासंभवस्य हेतुत्वाभावात्कथमन्वय इति वाच्यम् । द्वितीयान्तसंसर्गाभावपदोत्तराध्याहृतैवकारबोधितेन संसर्गाभावेतराभावकर्मकत्वाभावेन संसर्गाभावेतराभावकर्मकविभागाभावविशिष्टत्वेन वा विशेषिते धात्वर्थविभागे तदन्वयसंभवात् । तावता सविशेषणे हीति न्यायेन विशेषणांशे तस्य प्र-

न्नाभावत्वम् । अन्योन्याभावत्वं तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वम् ।

**प्रभा.**

भावत्वेन प्रथममुपास्थितिर्न संभवति अन्योन्याभावत्वेनान्योन्याभावस्य संसर्गाभावत्वघटकत्वेन घटकीभूतान्योन्याभावज्ञानसाध्यत्वात् । एवंचानन्तरनिर्दिष्टस्याप्यन्योन्याभावस्य तेन रूपेण प्रथममुपस्थितत्वेन तस्यैव प्रथमं विभागप्रसक्त्या एकविधत्वादित्यवतरणिकाया युक्तत्वादिति ॥ **अन्योन्याभावभिन्नाभाव-**

**मञ्जूषा.**

योजकतालाभसंभवात् अथवा अभावत्वावच्छिन्नविभागोत्तरकालीनसाधर्म्यनिरूपणपूर्वकालात्मको यो लट्प्रत्ययविवक्षितवर्तमानकालः तद्विशिष्टविभागत्वावच्छेदेन संसर्गाभावनिष्ठकर्मतायाः निरूपकतासंबन्धेनान्वयः तेनास्मिन् काले संसर्गाभावातिरिक्तस्य विभागो नास्तीति लभ्यते ततश्च वर्तमानकालीनविभागत्वव्यापकत्वविशिष्टनिरूपकतासंबन्धेन संसर्गाभावकर्मताविशेषितविभागत्वविशिष्टे तद्विभागासंभवप्रयोज्यत्वं भासमानं विशेषणांशमादाय पर्यवस्यतीति बोध्यम् । अस्मद्गुरुचरणास्तु विभाज्यतावच्छेदकीभूतसंसर्गाभावत्वस्य अन्योन्याभावत्वगर्भतया तदवच्छिन्नस्यैव प्रथमं विभागो युक्तः ननु संसर्गाभावत्वावच्छिन्नस्येत्याशङ्कायां तस्य यदि विभागः क्रियते तदा प्रथममेव विभागो युक्तस्स्यात् नत्विह तद्विभागः क्रियते तस्यैकविधत्वात् अतश्च तद्विभागासंभवात् संसर्गाभावं विभजत इत्यर्थं इति रीत्या ग्रन्थं समर्थयन्ति ॥ **अन्योन्याभावभिन्नाभावत्वमिति** ॥ इदं च समनियताभावानां भेदपक्षे । अन्यथा कपिसंयोगात्यन्ताभावस्य व्याप्यवृत्तिकपिसंयोगिभेदाभिन्नत्वासंभवेऽपि घटत्वात्यन्ताभावस्य घटभेदाभि-

**दिनकरीयम्.**

॥ **संसर्गाभावत्वमिति** ॥ अन्योन्याभावेऽतिव्याप्तिवारणायान्योन्याभावभिन्नेति । घटादावतिव्याप्तिवारणायाभावपदम् । एवमग्रेऽपि ॥ **तादात्म्येति** ॥ तादात्म्यत्वेन तादात्म्यावच्छिन्नत्वं प्रतियोगितायां विवक्षितम् । तेन संयोगावच्छिन्नप्रतियोगिताके संयोग्यत्यन्ताभावे नातिव्याप्तिः । प्रागभावस्य लक्षण-

**रामरुद्रीयम्.**

ति विग्रहो न सम्भवति संसर्गस्याभावत्वानभ्युपगमात् नचात्र संसर्गपदं तादात्म्यभिन्नसम्बन्धपरं अन्योन्यपदं च तादात्म्यसम्बन्धपरं तथा च संसर्गान्योन्याभ्यामभावाविति व्युत्पत्त्या तादात्म्यभिन्नसम्बन्धावच्छिन्नप्रतियोगिताकतादात्म्यावच्छिन्नप्रतियोगिताकाभावयोर्लाभान्नोक्तदोषः तृतीयाया अवच्छिन्नप्रतियोगिताकत्वार्थकत्वादिति वाच्यम् । एवमपि ध्वंसप्रागभावयोः प्रतियोगित्वस्य सम्बन्धानवच्छिन्नत्वमते तयोरसंग्रहापातादिति चेन्न । संसर्गपदस्य तादात्म्यानवच्छिन्नप्रतियोगितारूपसंसर्गपरत्वेन अन्योन्यपदस्य च तादात्म्यावच्छिन्नप्रतियोगितापरत्वेन तयोरभावाविति व्युत्पत्त्या तादृशप्रतियोगिताद्वयनिरूपकाभावावित्यर्थलाभान्नासङ्गतिः निरूपकत्वस्यैव षष्ठ्यर्थत्वादिति । यद्वा संसर्गपदं संसर्गपदपूर्वकपरं अन्योन्यपदमपि तत्पदपूर्वकपरं अभावपदं च अभावपदवाच्यपरं तथाच संसर्गान्योन्यौ च तौ अभावौ चेति व्युत्पत्त्या संसर्गान्योन्यपदपूर्वकाभावपदवाच्याविति पर्यवसितार्थलाभः । एतेनोक्तवाक्यादेवाभावद्वयोर्लक्षणलाभादाकाङ्क्षाविरहेणोत्तरत्राभावद्वयलक्षणप्रतिपादनासङ्गतिरित्यपि परास्तम् ॥ **एवमग्रेऽपीति** ॥ अन्योन्याभावलक्षणेऽपि भावेऽतिव्याप्तिवारणायैवाभावपदमित्यर्थः ॥ **तादात्म्यत्वेनेति** ॥ तादात्म्यत्वं तद्वृत्तोऽसाधारणधर्मः । तादात्म्यत्वेन तादात्म्यावच्छिन्नत्वविवक्षायाः फलमाह ॥ **तेनेति** ॥ **संयोग्यत्यन्ताभाव इति** । संयोगितादात्म्यस्य संयोगरूपतया संयोगसम्बन्धावच्छिन्नप्रतियोगिताकात्यन्ताभावे यथाश्रुतेऽतिव्याप्तिः । इदानीं तु तादात्म्यत्वावच्छिन्नतादात्म्यनिष्ठा या संसर्गविधयावच्छेदकता तन्निरूपकप्रतियोगिताकत्वलाभेन अत्यन्ताभावीयसंयोगनिष्ठप्रतियोगितावच्छेदकतायाः संयोगत्वेनैवावच्छिन्नत्वात् नातिव्याप्तिरिति भावः । यद्यपि संयोगितादात्म्यस्य संयोगरूपत्वेन तत्तादात्म्यत्वमपि संयोगत्वमेवेत्यतिव्याप्तिनिरासो दुर्घट एव । तथापि संसर्गतावच्छेदकं तादात्म्यत्वं न संयोगत्वादिरूपं । किंतु संयोग्यादिवृत्त्यसाधारणधर्मत्वमेव अतोऽत्यन्ताभावीयप्रतियोगितायां संयोगस्य संयोगत्वेनैवावच्छेदक-

प्रभा.

**स्वमिति ॥** अन्योन्याभावेऽतिव्याप्तिवारणाय सत्यन्तं । घटादावतिव्याप्तिवारणाय विशेष्यदलं । नन्व-न्योन्याभावत्वस्य तादात्म्यसंबन्धावच्छिन्नप्रतियोगितानिरूपितानुयोगित्वस्यान्योन्याभावव्यक्तिभेदेन भिन्नतया एकैकान्योन्याभावत्वावच्छिन्नप्रतियोगिताकभेदघटितलक्षणकरणे अपरान्योन्याभावे अतिव्याप्तिरिति चेदत्र नव्याः अन्योन्याभावत्वस्य सकलान्योन्याभावसाधारणाखण्डोपाधिरूपस्यैव स्वीकरणीयतया नोक्तातिव्याप्तिरित्याहुः । अपरेतु अन्योन्याभावत्वस्याननुगतत्वेऽपि यावत्योऽन्योन्याभावव्यक्तयः तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदकूटघटितलक्षणकरणात् तावदन्यतमत्वावच्छिन्नप्रतियोगिताकैकभेदघटितलक्षणकरणान्नोक्तातिव्याप्तिरित्याहुः । अन्येतु स्वावच्छेदकावच्छिन्नवृत्तिकत्वस्वनिरूपकत्वोभयसंबन्धेन प्रतियोगिताविशिष्टत्व-स्वाश्रयाधिकरणकालावृत्तित्वसंबन्धेन प्रतियोगिताविशिष्टत्वैतदन्यतरवत्त्वमेव पारिभाषिकमन्योन्याभावभिन्नत्वं लक्षणघटकमत्र घटपटोभयत्वावच्छिन्नभेदस्य तादृशप्रतियोगिताश्रयघटवृत्तितया तत्रातिव्याप्तिवारणाय स्वसामानाधिकरण्यं परित्यज्य स्वावच्छेदकावच्छिन्नवृत्तिकत्वस्य संसर्गकोटौ निवेश्यत्वेनोपपादनम् । एवंच घटो न घटपटोभयमिति प्रतीतिवत् घटपटोभयं न घटपटोभयमिति प्रतीत्यभावेन घटपटोभयत्वावच्छिन्नवृत्तिकत्वस्य तादृशभेदे असत्त्वान्नातिव्याप्तिः घटान्योन्याभावस्य पटान्योन्याभावप्रतियोगितावच्छेदकावच्छिन्नवृत्तिकत्वात् तत्रातिव्याप्तिवारणाय स्वनिरूपकत्वस्यापि संसर्गकोटौ निवेशः । एवंच घटान्योन्याभावस्य पटनिष्ठप्रतियोगितानिरूपकत्वाभावान्नातिव्याप्तिः । ध्वंसप्रागभावयोः स्वावच्छेदकावच्छिन्नवृत्तिकत्वघटितोभयसंबन्धेन प्रतियोगिताविशि-

मञ्जूषा.

ष्टतया अव्याप्त्यापत्तेः । ननु तथापि घटत्वात्यन्ताभावस्य स्वात्यन्ताभाववद्भेदस्वावच्छिन्नभिन्नभेदात्मकत्वादव्याप्तिर्दुर्वारा नच स्वात्यन्ताभावात्यन्ताभाव एव स्वात्मको नतु स्वात्यन्ताभाववद्भेदस्वावच्छिन्नभिन्नभेदावपीति वाच्यम् । यथाहि स्वज्ञाने स्वात्यन्ताभावाज्ञानात् स्वात्यन्ताभावो नास्तीति ज्ञानाच्च स्वात्यन्ताभावात्यन्ताभावः स्वात्मकः तथा स्वज्ञाने स्वावच्छिन्नभेदाज्ञानात् स्वावच्छिन्नभिन्नो नायमिति ज्ञानाच्च स्वावच्छिन्नभिन्नभेदस्य एवं स्वज्ञाने स्वात्यन्ताभाववान्नायमिति ज्ञानात्स्वात्यन्ताभाववद्भेदस्यच स्वात्मकताया युक्तिसिद्धत्वात् एवं कपिसंयोगात्यन्ताभावस्य स्वरूपसंबन्धेन स्वात्यन्ताभाववद्भेदरूपत्वासंभवेऽपि वृत्त्यनियामकसंबन्धस्याभावप्रतियोगितावच्छेदकत्वपक्षे विषयितासंबन्धेन यस्स्वात्यन्ताभावस्तद्वद्भेदरूपत्वे क्षतिविरहः । एवं कपिसंयोगात्यन्ताभावस्य केवलान्वयितया स्वरूपसंबन्धेन तदवच्छिन्नभेदाप्रसिद्धावपि विषयितासंबन्धेन तदवच्छिन्नभेदप्रसिद्ध्या विषयितासंबन्धेन स्वावच्छिन्नभिन्नभेदात्मकत्वमक्षतमेव एवं सर्वेषामेव अत्यन्ताभावानां ध्वंसप्रागभावयोश्च तथात्वादसंभवः किं बहुना जगत एव तथात्वादप्रसिद्धिरिति नच तादात्म्यसंबन्धावच्छिन्नप्रतियोगिताभिन्नप्रतियोगितानिरूपकत्वं अन्योन्याभावभिन्नत्वं तच्च घटत्वात्यन्ताभावादौ घटत्वनिष्ठप्रतियोगितामादायैव निर्वहति एवंच घटत्वात्यन्ताभावघटभेदयोरभेदेऽपि न क्षतिरिति वाच्यम् । एवं सत्यन्योन्याभावस्यापि किंचिद्विशिष्टस्वात्यन्ताभावविषयितादिसंबन्धावच्छिन्नस्वात्यन्ताभावादिनिष्ठस्वरूपसंबन्धावच्छिन्नप्रतियोगितानिरूपकत्वमादायातिव्याप्तेः प्रतियोगितायां भाववृत्तित्वविशेषणेन वारणेऽपि घटभेदादेस्स्वाभावाभावात्मकतया स्वाभावात्मकस्वप्रतियोगितावच्छेदकरूपभावनिष्ठतादात्म्यातिरिक्तसंबन्धावच्छिन्नप्रतियोगिताकत्वादातिव्याप्तेर्दुर्वारत्वात् नच घटभेदस्य घटत्वात्यन्ताभावरूपत्वाल्लक्ष्यत्वमिति वाच्यम् अलक्ष्यभूतस्य भेदस्यैवाप्रसिद्धत्वात् संयोगिभेदस्यापि स्वसमनियतद्रव्यत्वाभावाभिन्नत्वादिति । उच्यते समनियताभावयोर्भेद एवेति न घटभेदघटत्वात्यन्ताभावयोरैक्यं एवं स्वात्यन्ताभावात्यन्ताभावस्य स्वात्मकत्वेऽपि स्वात्यन्ताभाववद्भेदस्स्वस्मादतिरिक्त एव नतु स्वात्मकः संयोगादेः स्वाभाववद्भेदरूपत्वासंभवेन सर्वत्रैव तस्यातिरिक्तत्वकल्पनात् नचैकत्रासंभवमात्रेण सर्वत्र तथाकल्पने गगनादेस्स्वाभावाभावरूपत्वाभावेन घटादेरपि स्वाभावाभावरूपता न स्यादिति वाच्यम् गगनादेरपि स्वाभावाभावरूपताया मथुरानाथादिभिरुद्धुष्टत्वात् स्वाभाववद्भेदस्य स्वस्मादतिरिक्तत्वपक्षो भट्टाचार्येणाप्युक्तः । एवं संयोगिभिन्नभेदो न संयोगरूपः

## प्रभा.

ष्ट्वाभावात्तत्राव्याप्तिवारणाय स्वाश्रयाधिकरणकालावृत्तित्वसंबन्धेन प्रतियोगिताविशिष्टत्वस्यापि संसर्गाभाव-लक्षणे प्रवेशः तावन्मात्रोक्तौ अत्यन्ताभावेऽव्याप्तिः । तद्वारणायोभयसंबन्धेन प्रतियोगिताविशि-ष्टत्वस्यापि लक्षणे प्रवेशः । एतत्क्रियात्यन्ताभावप्रतियोगिताश्रयैतत्क्रियानिष्ठप्रतियोगिताविशिष्टत्वस्यै-तत्क्रियानाशोत्तरोत्पन्नघटादौ सत्त्वात् तत्र पारिभाषिकान्योन्याभावभिन्नत्वस्यातिव्याप्तिवारणाय तन्मा-त्रस्य लक्षणत्वं परित्यज्य तद्घटिताभावत्वस्य लक्षणत्वमङ्गीकृतम्। एवंच न कुत्राप्यव्याप्तिरतिव्याप्ति-रित्याहुः । अस्मद्गुरुचरणास्तु वाच्यतासंबन्धेनान्योन्याभावशब्दवत्त्वरूपमन्योन्याभावत्वमेव सर्वानुगतं लक्ष-णघटकं वाच्यतासंबन्धावच्छिन्नान्योन्याभावशब्दनिष्ठावच्छेदकतानिरूपितप्रतियोगिताकभेदवत्त्वे सत्यभावत्वं संसर्गाभावलक्षणं लब्धम् । एवंच न कोऽपि दोष इति व्याचक्रुः । वस्तुतस्तु अभावत्वं द्रव्यादि-षट्कान्यतमत्वावच्छिन्नप्रतियोगिताकभेदवत्त्वरूपं यथा तथा संसर्गाभावत्वमपि द्रव्यादिषट्का-न्योन्याभाव-एतदन्यतमत्वावच्छिन्नप्रतियोगिताकभेदवत्त्वरूपमेव वाच्यं लाघवात् । एवं चान्योन्याभाव-भिन्नाभावत्वमित्यत्रान्योन्याभावभिन्नेऽभावत्वमिति सप्तमीतत्पुरुषाश्रयणात् अन्योन्याभावभिन्नवृत्त्यभावत्वम-न्योन्याभावभिन्नाभावत्वपर्यवसितं संसर्गाभावलक्षणमिति लब्धं तच्चानुगतानिरुक्तसंसर्गाभावत्वरूपमेवेति

## मञ्जूषा.

वृक्षे तस्यानवच्छेदकत्वमनन्तर्भाव्यैव प्रतीतेः अतस्सर्वत्रैव स्वावच्छिन्नभिन्नभेदस्स्वस्मादतिरिक्त एवेत्याशयेनेदं लक्षणं अथवान्योन्याभावत्वात्यन्ताभावत्वादेः परस्परसामानाधिकरण्येऽपि उपधेयसंकरेऽपीति न्यायेन विभा-गोपपत्तिः । तथाच तादात्म्यसंबन्धावच्छिन्नप्रतियोगित्वानिरूपितं अनुयोगित्वं संसर्गाभावत्वं तथाच घटभेदे यो घटनिष्ठतादात्म्यसंबन्धावच्छिन्नप्रतियोगितानिरूपितानुयोगिता सान्योन्याभावत्वमित्युच्यते या तु घ-टत्वनिष्ठसमवायसंबन्धावच्छिन्नप्रतियोगितानिरूपितानुयोगिता सात्यन्ताभावत्वमिति संसर्गाभावत्वमिति च एवं घटभेदनिष्ठा या विषयितासंबन्धावच्छिन्नस्वात्यन्ताभावादिनिष्ठस्वरूपसंबन्धावच्छिन्नप्रतियोगितानिरूपि-तानुयोगिता न सान्योन्याभावत्वरूपेति नानुपपत्तिगन्धः । एतच्च संसर्गाभावत्वं भावसाधारणं घटाभावो नास्तीत्यादिप्रतीतिसिद्धानुयोगिताया अपि दृशत्वात् यदिच तद्व्यावृत्तं निर्वाच्यं तदा भावभिन्नत्वमपि विशेषणं देयं तत्र भावसाधारण्यपक्षे अन्योन्याभावभिन्नमन्योन्याभावत्वभिन्नं तादात्म्यसंबन्धावच्छिन्न प्रतियोगितानिरूपितानुयोगिताभिन्नं यदभावत्वं अनुयोगित्वं तत्संसर्गाभावत्वमित्यर्थः । तद्व्यावृत्तत्वपक्षे तु अन्योन्याभावभिन्नत्वे सत्यभावत्वं तत्रान्योन्याभावभिन्नत्वंच तादात्म्यसंबन्धावच्छिन्नप्रतियोगित्वानिरूपिता-नुयोगित्वं अभावत्वं भावभिन्नत्वं एवमन्योन्याभावत्वं तादात्म्यसंबन्धावच्छिन्नप्रतियोगिताकाभावत्वं इ-त्यत्राप्यन्योन्याभावत्वस्य भावसाधारण्यपक्षे तादृशप्रतियोगिताकं तादृशप्रतियोगितानिरूपकं यदभाव-त्वमनुयोगित्वं तदन्योन्याभावत्वमित्यर्थः । तद्व्यावृत्तत्वपक्षे तु तादृशप्रतियोगिताकत्वे सत्यभावत्वं तत् तादृशप्रतियोगिताकत्वं च तादृशप्रतियोगितानिरूपितानुयोगित्वं अभावत्वं भावभिन्नत्वं तच्च भाव-निष्ठतादात्म्यसंबन्धावच्छिन्नप्रतियोगितानिरूपितानुयोगिताविशिष्टवत्त्वं नात आत्माश्रय इति बोध्यम् । अत्र तादात्म्यमसाधारणो धर्मः सच घटः पटो नेत्यादौ पटत्वादिः तस्यच तादृशप्रतीतौ प्रतियोगिता-वच्छेदकत्वं द्विविधं भासते एकं प्रतियोगिविशेषणधर्मविधया अन्यच्च संबन्धविधया तत्र प्रथमं स्वरूपतः द्वितीयं तु तादात्म्यत्वेन रूपेण तादात्म्यत्वं त्वखण्डो धर्मः पटेतरावृत्तित्वे सति पटवृत्तित्वं वा संयोगिनस्संयोगेनाभावप्रतियोगितावच्छेदकत्वन्तु न संयोगस्य तेन रूपेणातो न तत्रातिव्याप्तिरिति केचित् भट्टाचार्यमतानुयायिनस्तु तादात्म्यमेकमात्रवृत्तिधर्मः सच तद्व्यक्तित्वादिरूपस्स एवच नीलो घ-ट इत्यादौ संसर्गः संसर्गतावच्छेदकं चैकमात्रवृत्तित्वं अतो न बहुव्यक्तिविशेष्यकज्ञाने संसर्गाननुगमः घटः पटो नेत्यादौ च सएव प्रतियोगितावच्छेदकसंबन्धः संबन्धतावच्छेदकं चैकमात्रवृत्तित्वं अतो नाननुगमः । एवंच संयोगिनः संयोगेन अभावे नातिव्याप्तिप्रसक्तिः संयोगस्यैकमात्रवृत्तित्वाभावादित्याहुः । अथास्मिन्मते एकमात्रवृत्तिसंबन्धावच्छिन्नप्रतियोगिताकाभावत्वमन्योन्याभावत्वमिति प्राप्तं तत्रैकमात्रवृत्तित्वं स्वप्रतियो-

विनाश्यभावत्वं प्रागभावत्वम् । जन्याभावत्वं ध्वंसत्वम् । नित्यसंसर्गाभावत्वमत्य-

प्रभा.

नकोऽपि दोष इति प्रतिभाति ॥ **तादात्म्यसंबन्धेति** ॥ अत्र तादात्म्यं नाभेदरूपं अभेदस्य भेदप्रतियोगिताकाभावरूपस्य भेदत्वावच्छिन्नप्रतियोगिताकाभावरूपस्य वाऽतिव्याप्त्यसंभवान्यतरदोषग्रस्तत्वेन तस्य तादात्म्यरूपत्वासंभवात् किंतु एकमात्रवृत्तिधर्म एव तादात्म्यम् । धर्मे एकमात्रवृत्तित्वं च स्वप्रतियोगिवृत्तित्वस्वसामानाधिकरण्योभयसंबन्धेन भेदविशिष्टं यद्यत् स्वं तत्तद्व्यक्तिभेदकूटवत्त्वं तादृशो धर्मः तत्तद्व्यक्तित्वादिकमेवेति तदेव तादात्म्यमिति हृदयम् । केचित्तु तादात्म्येति तादात्म्यत्वेन तादात्म्यावच्छिन्नत्वं प्रतियोगितायां विवक्षितं तेन संयोगत्वावच्छिन्नप्रतियोगितावच्छेदकताकसंयोगात्यन्ताभावे नातिव्याप्तिरित्याहुः तदसत् संयोगस्य एकमात्रवृत्तित्वाभावेन तादात्म्यरूपत्वासंभवात् उक्तात्यन्ताभावेऽतिव्याप्त्यसंगतेः । यद्यपि तादृशप्रतियोगिताकत्वस्य तादृशप्रतियोगितानिरूपितानुयोगित्वस्यान्योन्याभावव्यक्तिभेदेन भिन्नतयाऽनुगतलक्षणं न संभवति तथाप्यन्योन्याभावनिष्ठतद्व्यक्तित्वानामेव लक्ष्यतावच्छेदकत्वात् लक्ष्यतावच्छेदकाननुगमेन लक्षणाननुगमस्यादोषत्वात् । यदि च वाच्यतासंबन्धेनान्योन्याभावपदवत्त्वमेवानुगतं लक्ष्यतावच्छेदकं संभवतीति लक्षणाननुगमे अव्याप्तिः प्रसज्यत इत्युच्यते तदा यावत्यः अन्योन्याभावव्यक्तयः तावदन्यतमत्वस्य लक्षणत्वं परिकल्प्य दोषो वारणीय इति । प्रागभावलक्षणमाह ॥ **विनाश्यभावत्वमिति** ॥ अत्यन्ताभावादावतिव्याप्तिवारणाय विनाशीति । अत्रापि प्रागभावनिष्ठतत्तद्व्यक्तित्वानामेव लक्ष्यतावच्छेदकत्वात् नाशव्यक्तिभेदेन नाशप्रतियोगित्वघटितलक्षणस्य भिन्नत्वेऽपि न क्षतिः । यदि चोक्तरीत्या वाच्यतासंबन्धेन प्रागभावशब्दवत्त्वमनुगतं लक्ष्यतावच्छेदकमित्युच्यते तदा यावत्यः प्रागभावव्यक्तयः तावदन्यतमत्वस्य लक्षणत्वं प-

मञ्जूषा.

गिवृत्तित्वस्वसामानाधिकरण्योभयसंबन्धेन भेदविशिष्टान्यत्वं एकभिन्नावृत्तित्वमित्यादिरूपं सर्वमेव भेदघटितं चेत्यात्माश्रयो दुर्वार इति चेन्न स्वसामानाधिकरण्यस्वाभावसामानाधिकरण्योभयसंबन्धावच्छिन्नव्याप्यवृत्तिपदार्थत्वावच्छिन्नप्रतियोगिताकाभाववत्त्वस्यैव भेदाद्यघटितस्य निर्वचनसंभवात् । अत्र च व्याप्यवृत्तित्वनिवेशात् घटादिनिष्ठतद्व्यक्तित्वे तादृशोभयसंबन्धेन संयोगादेस्सत्त्वेऽपि न क्षतिः । व्याप्यवृत्तित्वं च कालिकसंबन्धावच्छिन्नत्वाभावविशिष्टावच्छिन्नवृत्तित्वाभाववत्त्वम् । कालिकसंबन्धावच्छिन्नत्वाभावनिवेशाच्च व्यतिरेकधर्ममात्रस्य कालेऽवच्छिन्नवृत्तिकत्वेऽपि न क्षतिः । अत्र सर्वत्राभावत्वं अनुयोगिता ननु भावभिन्नत्वं तेन न तादात्म्यान्तर्भावप्रसक्तिरिति बोध्यम् ॥ **विनाश्यभावत्वमिति** ॥ ननु घटोत्पत्तेः पूर्वं घटाभावबुद्धेरत्यन्ताभावविषयकत्वेनैवोपपत्तावतिरिक्तप्रागभावे मानाभावः नच घटो भविष्यतीति प्रतीतिव्यवहारौ तत्र मानं वर्तमानप्रागभावप्रतियोगित्वस्यैव भविष्यत्पदार्थत्वात् वर्तमानात्यन्ताभावप्रतियोगित्वस्य तदात्वे कदाचिदप्येतद्देशासंबन्धिनि वस्तुनि तद्वास्त्विह भविष्यतीति व्यवहारापत्तेरिति वाच्यं वर्तमानकालध्वंसाधिकरणसमयमात्रवृत्तित्वादेरेव भविष्यत्वरूपत्वसंभवात् नचोत्पन्नव्यक्तेः पुनरुत्पत्तिवारणाय स आवश्यक इति वाच्यं घटवति कपाले भाविघटप्रागभावसमवहितया कपालत्वाद्यवच्छिन्नघ-

दिनकरीयम्.

माह ॥ **विनाश्यभावत्वमिति** ॥ अत्र ध्वंसेऽतिव्याप्तिवारणाय विनाशीति । ननु प्रागभावसत्त्वे किं मानमिति चेदत्रोत्पन्नस्य पुनरुत्पादभिया तत्सिद्धिरिति प्राञ्चः । केचित्तु जातो घट इत्यादिवदुत्पन्नो घटध्वंस

रामरुद्रीयम्.

त्वात् असाधारणधर्मत्वेनावच्छेदकत्वविरहान्न तत्रातिव्याप्तिः भेदप्रतियोगितावच्छेदकसंसर्गस्यैव असाधारणधर्मत्वेन भानाभ्युपगमात् अन्यथाऽत्यन्ताभावान्योन्याभावयोर्भेदासंभवादिति भावः ॥ **तत्सिद्धिरिति** ॥ प्रागभावानुमितिरित्यर्थः । तदनुमानप्रकारश्च अयं घटः स्वोत्पत्तिक्षणावृत्तिकारणजन्यः स्वोत्पत्तिद्वितीयक्षणानुत्पन्नत्वात् इत्येवंरूपः इत्यनुमानबलाच्चेतरेषां बाधात्प्रागभावसिद्धिः तस्य सामग्रीनाश्यत्वेन प्रतियोग्युत्पत्तिक्षणावृत्तित्वादिति भावः । दीधितिकृतां मतमुपन्यस्यति ॥ **केचिदिति** ॥

## दिनकरीयम्

इति प्रत्यक्षबलेन नाशोऽतिरिच्यते न तु प्रागभावः इहेदानीं घटप्रागभाव इति लोकानां प्रत्ययाभावात् न च तद्घटोपधायकतत्कपालतत्संयोगादीनां तद्घटोत्पत्तिकालेऽपि सत्त्वात्पुनरपि तद्घटोत्पत्त्यापत्तिः प्रागभावाङ्गीकारे च तदभावादेव न पुनस्तदुत्पत्तिरिति वाच्यं जन्यद्रव्यत्वावच्छिन्नं प्रति जनकतया क्लृप्तस्य समवायसम्बन्धावच्छिन्नप्रतियोगिताकद्रव्याभावस्य विरहेणैतदापत्त्यसम्भवात् न च जन्यद्रव्याभावस्य जन्यद्रव्योत्पत्तिकालीनोत्पत्तिकध्वंसाभावस्य वा हेतुत्वमित्यत्र विनिगमनाविरहेण तादृशद्रव्याभावस्य तादृशध्वंसाभावानां च कारणतामपेक्ष्य लाघवादेक एव प्रागभावो हेतुः कल्प्यत इति वाच्यं प्रागभावकल्पनेऽपि तत्कालोत्पत्तिकानन्तपदार्थप्रतियोगिकानामनन्तानां प्रागभावानां विनिगमनाविरहेण…

## रामरुद्रीयम्

**लोकानामिति** ॥ पण्डितपामरसाधारणानामित्यर्थः । प्रागभावस्य प्रत्यक्षत्वे पामराणामपि तत्प्रत्यक्षापत्तिरिति भावः । न चात्र घटो भविष्यतीत्यादिप्रतीतिरेव प्रागभावे मानं वर्तमानप्रागभावप्रतियोगित्वस्यैव भविष्यत्त्वरूपत्वादिति वाच्यम् । वर्तमानकालध्वंसाधिकरणकालोत्पत्तिकत्वस्यैव भविष्यत्त्वरूपत्वाभ्युपगमात् उत्पत्तिश्च आद्यक्षणसम्बन्धः क्षणे आद्यत्वं च तदधिकरणक्षणध्वंसानधिकरणत्वमिति भावः ॥ **जनकतया क्लृप्तस्येति** ॥ प्रागभावकारणत्ववादिना जन्यद्रव्यं प्रति द्रव्याभावस्य किमिति कारणत्वं कल्पनीयमिति तु नाशङ्कनीयं यत्र एतद्घटनाशानन्तरं तदारम्भककपालाभ्यां घटान्तरमुत्पद्यते तत्र पूर्वघटोत्पत्तिद्वितीयक्षणे पुनर्घटोत्पत्तेरन्यथा वारयितुमशक्यत्वात् घटकारणीभूततत्तत्प्रागभावकपालसंयोगादीनां सत्त्वात् । न च द्वितीयघटारम्भककपालद्वयसंयोगव्यक्तेस्तदानीमसत्त्वान्न तदापत्तिरिति वाच्यम् । यतो हि न द्वितीयघटव्यक्त्युत्पत्तिरापाद्यते येन तत्कपालसंयोगव्यक्त्यभावात् न तदापत्तिरिति शक्यते वक्तुं न वा पूर्वघटव्यक्तेरुत्पत्तिरापाद्यते येन तत्प्रागभावाभावात् न तदापत्तिरिति शक्यते वक्तुं अपि तु घटत्वावच्छिन्नोत्पत्तिरेवापाद्यते तत्कारणीभूतानां घटप्रागभावादीनां सर्वेषां सत्त्वादिति भावः । यत्तु यत्र खण्डघटोत्पत्तिर्भविष्यति तत्र महाघटसत्त्वदशायामेव तत्प्रागभावादिबलात्तदुत्पत्त्यापत्तिवारणाय द्रव्याभावस्य कारणत्वमावश्यकमिति तत्तुच्छं खण्डघटं प्रति महाघटनाशस्य कारणत्वेन तदापत्त्यसम्भवादिति ध्येयम् ॥ **तादृशद्रव्याभावस्येति** ॥ समवायावच्छिन्नप्रतियोगिताकद्रव्याभावस्येत्यर्थः ॥ **तादृशध्वंसाभावानामिति** ॥ जन्यद्रव्योत्पत्तिकालोत्पत्तिकध्वंसाभावानामित्यर्थः । अत्र च बहुवचनेन द्रव्याभावत्वापेक्षया तादृशध्वंसाभावत्वस्य गुरुतया न तेन रूपेण कारणतामादाय विनिगमनाविरहः प्रसज्यते अपि तु तत्तद्द्रव्यं प्रति तदुत्पत्तिकालोत्पत्तिकध्वंसव्यक्तीनां तत्तद्व्यक्तित्वेनैवाभावानां कारणता वाच्या तथा चानन्तकार्यकारणभावापत्त्या न विनिगमनाविरह इति सूचितम् । न च तर्हि ध्वंसाभावानां कारणतैव निर्युक्तिकेति वाच्यम् ध्वंसप्रागभावाधिकरणे अत्यन्ताभावानभ्युपगन्तृमते जन्यद्रव्यानुत्पादप्रसङ्गेन अगत्या द्रव्याभावमुपेक्ष्य ध्वंसाभावानां कारणतायाः स्वीकरणीयत्वात् तथा चोत्पन्नस्य पुनरुत्पादवारणाय प्रागभावानङ्गीकारे नवीनैर्द्रव्याभावस्य प्राचीनैः ध्वंसाभावानां हेतुता कल्पनीया प्रागभाववादिना तु तत्सर्वमुपेक्ष्य प्रागभाव एव हेतुत्वेन कल्प्यत इति तद्ग्रन्थाभिप्रायः। वस्तुतस्तु समवायेन द्रव्याभावस्य क्लृप्तस्य उभयवादिसिद्धस्य जन्यद्रव्यत्वावच्छिन्नं प्रति जनकतया जनकत्वेन अङ्गीकरणीयतया अभावादित्यत्रापि षष्ठ्यन्तस्य पुनरन्वयेन क्लृप्तस्य द्रव्यस्याभावादित्यर्थो लभ्यते । तथा च प्रागभाववादिना द्रव्यस्य प्रतिबन्धकत्वानुपगमेऽपि क्लृप्तत्वेन द्रव्याभावस्यैव कारणत्वं वक्तुमुचितम् न त्वक्लृप्तस्य प्रागभावस्येति पूर्वग्रन्थभावः । एवंच कपालद्वयसंयोगाद्घट[१५]त्तिदशायां कापालिकादिष्वपि घटोत्पत्तिस्स्वीकरणीया । अन्यथा कापालिकायां समवायेन घटाभावप्रत्यक्षप्रसङ्गादिति तद्द्रव्यानारम्भकद्रव्याभावस्यैव कारणता वाच्या । तथाच तत्तद्ध्वंसाभावानामपि विनिगमनाविरहेण कारणतापत्तिशङ्कापि संगतैवेति युक्तमुत्पश्यामः । एवं जन्यद्रव्यं प्रति द्रव्योत्पत्तिकालिकोत्पत्तिध्वंसाभावस्य हेतुत्वे तद्घटनाशानन्तरं तदारम्भककपालाभ्यां घटान्तरोत्पत्तिरपि न स्यात् तादृशध्वंसाभावरूपकारणाभावादित्यादिदूषणानां सत्त्वेऽपि तेषां स्पष्टत्वेन तानुपेक्ष्य दूषणान्तरमाह ॥

## प्रभा.

रिकल्प्य दोषो वारणीय इति अस्मद्गुरुचरणाः । अत्र दैशिककालिकविशेषणत्वोभयसंबन्धेन यदभावत्वाश्रयः तत्प्रतियोगित्वे सत्यभावत्वस्य लक्षणत्वे न कोऽपि दोष इति प्रतिभाति । ननु प्रागभावे प्रमाणाभावादिदं लक्षणमयुक्तमिति चेदत्र प्राञ्चः उत्पन्नस्य पुनरुत्पादवारणाय प्रागभावाङ्गीकार आवश्यकः तथाहि तद्घटोपधायकतत्कपालतत्संयोगादीनां तद्घटोत्पत्तिकालेऽपि सत्त्वात्पुनरपि तद्घटोत्पत्त्यापत्तिः प्रागभावाङ्गीकारे च तदभावादेव न पुनस्तदुत्पत्तिरिति । नच समवायेन जन्यद्रव्यत्वावच्छिन्नं प्रति समवायसंबन्धावच्छिन्नद्रव्यत्वावच्छिन्नप्रतियोगिताकाभावस्य प्रतिबन्धकाभावविधया हेतुत्वस्य क्लृप्ततया तदभावादेव तत्र तदापत्तिवारणे प्रागभावाङ्गीकारो निरर्थक इति वाच्यम् तादृशद्रव्याभावस्य स्वसामानाधिकरण्यस्वसमानकालीनत्वोभयसंबन्धेन द्रव्यविशिष्टध्वंसत्वावच्छिन्नप्रतियोगिता-

## मञ्जूषा.

टितसामान्यसामग्र्या घटत्वावच्छिन्नोत्पत्तिवारणाय द्रव्यं प्रति द्रव्यस्य प्रतिबन्धकतायाः क्लृप्ततया तत एवोत्पन्नघटव्यक्तेः पुनरुत्पत्तिवारणसंभवात् व्याप्यधर्मावच्छिन्ने जननीये व्यापकधर्मावच्छिन्नजनकसामग्र्या अपेक्षितत्वात् । नच द्रव्यं प्रति द्रव्यस्य द्रव्योत्पत्तिकालोत्पत्तिकध्वंसानां वा प्रतिबन्धकत्वमित्यत्र विनिगमनाविरहापत्तिरिति वाच्यं प्रागभाववादिनोऽपि तद्घटव्यक्तिं प्रति तद्घटप्रागभावव्यक्तेस्तद्व्यक्तित्वेन कारणत्वमुच्यतां तत्कालोत्पन्नानन्तपवनपरमाणुसंयोगप्रागभावानां वेत्यत्र विनिगमनाविरहापत्तेर्दुर्वारत्वात् । अथतद्घटव्यक्तिप्रागभावस्य तत्कालोत्पन्नपवनपरमाणुसंयोगप्रागभावानां च समनियतत्वेनाभिन्नतया न कारणभेदः नवा कारणतावच्छेदकभेद इति न विनिगमनाविरहप्रसक्तिः यदि च पवनपरमाणुसंयोगप्रागभावस्य परमाणुसाधारणत्वात् न तद्घटप्रागभावसमनैयत्यं तत्कालोत्पन्नक्रियाप्रागभावस्य एकव्यक्तिमात्रवृत्तित्वेन न समनैयत्यसंभवः प्रागभावस्यानेकव्यक्तिप्रतियोगिकत्वमपसिद्धान्त इति मन्यते तथापि तद्घटव्यक्तिप्रागभावस्य

## दिनकरीयम्.

रहेण हेतुताया दुर्वारत्वात् तथा च प्रागभावरूपधर्मिकल्पनागौरवं परमतिरिच्यत इत्याहुः । अत्र वदन्ति स्वानधिकरणेषु तन्तुषु पटोत्पत्तिवारणाय सहस्रतन्तुकपटस्थले बहूनां तन्तूनां तत्संयोगानां च तत्तद्व्यक्तित्वेन हेतुत्वकल्पनापेक्षयैका प्रागभावस्य हेतुता लघीयसी । अथैवमपि द्वित्रिचतुर्षु तन्तुषु सहस्रतन्तुकपटोत्पत्त्यापत्तिः न च चरमसंयोगव्यक्तेस्तद्व्यक्तित्वेन हेतुत्वान्नापत्तिरिति वाच्यं तथा सति स्वानधिकरणेषु तन्तुष्वपि चरमसंयोगाभावादेव पटोत्पत्तिवारणसम्भवे प्रागभावकल्पनानौचित्यादिति चेन्न चरमसंयोगस्य समवायघटितसामानाधिकरण्यप्रत्यासत्त्या हेतुत्वे तन्त्वन्तरेऽपि समवायेन पटोत्पत्त्या तत्र समवायेन चरमसंयोगाभावेन व्यभिचारापत्त्या समवायसम्बन्धेन तत्पटत्वावच्छिन्नं प्रति चरमसंयोगव्यक्तेः कालिकसम्बन्धेन हेतुता वाच्या तथा च स्वानधिकरणतन्तुष्वपि कालिकविशेषणतया चरमसंयोगस्य सत्त्वात् पटोत्पत्तिवारणाय प्रागभावहेतुत्वस्यावश्यकत्वादिति । एवमप्यस्तु कश्चिदतिरिक्तः पदार्थस्तथापि तस्य सप्रतियोगिकत्वे प्रमाणाभाव इति तु तत्त्वम् । ध्वंसस्य लक्षणमाह ॥ **जन्याभावत्वमिति** ॥ प्रागभावेऽतिव्याप्तिवारणाय जन्येति । अत्यन्ताभावस्य लक्षणमाह ॥ **नित्येति** ॥ ध्वंसादिवारणाय नित्यपदम् । नन्वत्यन्ताभावस्य नित्यत्वे

## रामरुद्रीयम्.

**प्रागभावेति** ॥ **अत्र वदन्तीति** ॥ प्राचीनानुयायिन इति शेषः ॥ **तत्संयोगानां** तन्तुसंयोगानामित्यर्थः ॥ **अथैवमपीति** ॥ प्रागभावस्य हेतुत्वेऽपीत्यर्थः ॥ **उत्पत्त्यापत्तिरिति** ॥ तत्तत्संयोगव्यक्तीनां त्वया हेतुतानभ्युपगमात्प्रागभावस्य तदानीमपि सत्त्वादिति शेषः । तत्संयोगव्यक्तीनां हेतुत्वोपगमे च व्यर्थं प्रागभावकल्पनामिति भावः ॥ **स्वानधिकरणेष्विति** ॥ सहस्रतन्तुकपटानधिकरणेष्वित्यर्थः ॥ **तन्त्वन्तरेऽपीति** ॥ चरमसंयोगाधिकरणतन्तुभिन्नसहस्रतन्तुकपटाधिकरणतन्तावपीत्यर्थः । दीधितिकृतामभिप्रेतमाह ॥ **एवमप्यस्त्विति** ॥ **सप्रतियोगिकत्व इति** ॥ तथा च तस्याभावत्वे मानाभावेन न प्रागभावसिं-

प्रभा

काभावानां वा हेतुत्वमित्यत्र विनिगमनाविरहेणानन्तकार्यकारणभावापत्त्या गौरवेण प्रागभावाङ्गीकारस्यैवोचितत्वात् । नच प्रागभावाङ्गीकारेऽपि तत्कालोत्पत्तिकानन्तपदार्थप्रतियोगिकानन्तप्रागभावानां हेतुत्वमादाय विनिगमनाविरहेण कार्यकारणभावानन्त्यस्य तवाप्यावश्यकत्वादिति वाच्यम् । तत्कालोत्पत्तिकानन्तपदार्थप्रतियोगिकानन्तप्रागभावानां समनियतत्वेन ऐक्यादनन्तकार्यकारणभावाभावात् । नच तादृशानागभावानमक्यवत् समवायेन द्रव्याभावनिरुक्तोभयसंबन्धेन द्रव्यविशिष्टध्वंसत्वाद्यवच्छिन्नप्रतियोगिताकाभावानामपि समनियतत्वेनैक्यात् ममापि न कार्यकारणभावानन्त्यमिति वाच्यं तेषामैक्येऽपि द्रव्यत्वाद्यवच्छिन्नाभावत्वेन द्रव्यविशिष्टध्वंसत्वाद्यवच्छिन्नप्रतियोगिताकाभावत्वेन वा हेतुतेत्यत्र विनिगमनाविरहात् अनन्तकार्यकारणभावापत्तितादवस्थ्यात् । प्रागभावस्य हेतुत्वे तु प्रागभावस्य तत्तद्व्यक्तित्वेनैव हेतुत्वेन तादृशप्रागभावानामैक्यात् तन्निष्ठतद्व्यक्तित्वस्याप्येकत्वेन नानन्तकार्यकारणभावापत्तिरिति वाच्यं यदि च लघुधर्मसमनियतगुरुधर्मस्य कारणतानवच्छेदकतया द्रव्यत्वावच्छिन्नप्रतियोगिताकाभावत्वापेक्षया तादृशोभयसंबन्धेन द्रव्यविशिष्टध्वंसत्वावच्छिन्नप्रतियोगिताकाभावत्वादीनां गुरुत्वेन कारणतानवच्छेदकतया विनिगमनाविरहाप्रसक्त्या ममापि नानन्तकार्यकारणभावप्रसक्तिरिति तुल्यं प्रागभावरूपधर्मिकल्पना परमतिरिच्यत इति विभाव्यते तदा स्वानधिकरणेषु तन्तुषु सहस्रतन्तुकपटोत्पत्तिवारणाय बहूनां तन्तुसंयोगानां तत्तद्व्यक्तित्वादिना हेतुत्वकल्पने गौरवात् प्रागभावाङ्गीकार आवश्यकः । तदङ्गीकारे तु स्वानाधिकरणतन्तुषु प्रागभावरूपकारणाभावादेव न तदापत्तिरिति लाघवम् । अथैवमपि द्वित्रचतुर्षु संयुक्तेषु तन्तुषु सह-

मञ्जूषा.

न पदार्थान्तरप्रागभावमादाय विनिगमनाविरहप्रसक्तिः तद्धटोत्पत्तिद्वितीयादिक्षणवृत्तिस्तद्धटोत्पत्त्यभावः तद्धटकारणाभावप्रयोज्यस्तद्धटोत्पत्त्यभावत्वादित्येतादृशधर्मिग्राहकमानसिद्धतद्धटव्यक्तिकारणताकत्वस्यैव विनिगमकत्वात्प्रतियोगिभूततद्धटोपस्थित्यधीनोपस्थितिकतया लघुना तद्धटव्यक्तिप्रागभावेन प्रागभावान्तराणामन्यथासिद्धत्वादिति चेन्ममापि द्रव्याभावत्वापेक्षया द्रव्योत्पत्तिकालोत्पत्तिकध्वंसत्वावच्छिन्नाभावत्वस्वसामानाधिकरण्यस्वसमानकालोत्पत्तिकत्वोभयसंबन्धेन द्रव्यादिविशिष्टध्वंसत्वावच्छिन्नाभावत्वपर्यवसितस्य गुरुतया कारणतावच्छेदकत्वासंभवेन विनिगमनाविरहाप्रसक्तेः किंच निपुणतरविवेचनायां उत्पन्नस्य घटस्य पुनरुत्पत्त्यापत्तिरित्यपार्थकं वचनम् । तथाहि उत्पन्नस्य घटस्य किमवस्थानक्षणेषु पुनरुत्पत्तिरापाद्यते प्रध्वंसक्षणेषु वा आद्ये उत्पत्तिर्नाम आद्यक्षणसंबन्धः सच किंचिद्देशावच्छेदेन आद्यक्षणवृत्तित्वं आद्यक्षणावच्छेदेन किंचिद्देशवृत्तित्वं वा उभयथापि सा द्वितीयादिक्षणेषु घटादावापाद्यमाना तत्क्षणेष्वाद्यत्वापत्तौ विश्राम्यति शेषांशस्य सिद्धत्वात् द्वितीयादिक्षणेष्वाद्यत्वं पुनरशक्यापादनं तद्धि तद्धटाधिकरणक्षणध्वंसानधिकरणत्वे सति तद्धटाधिकरणत्वं तत्रच विशेष्यांशस्सिद्ध एव विशेषणं पुनरापादनीयं नच तत्संभवति तथाहि प्रथमक्षणस्य तद्धटाधिकरणत्वं तावद्दुर्वारं तत्पूर्वं सामग्र्यास्संपन्नत्वात् तस्य च क्षणस्य द्वितियक्षणे ध्वंसोऽपि तथा तत्कालावस्थायिपदार्थसमुदायात्मकतत्क्षणघटकीभूतस्य कस्यचित्पदार्थस्य स्वनाशकबलादुत्पत्स्यमानं प्रध्वंसमुपरोद्धुं अस्माकमसमर्थत्वात् । एवं ग्रन्थकृद्वक्ष्यमाणेष्वपि क्षणोपाधिषु पूर्वपूर्वक्षणध्वंसो द्वितीयादिक्षणेषु दुर्वारः । स्फुटीभविष्यति चेदमुपरिष्टादेवमुत्पन्नस्य प्रथमक्षणध्वंसस्य यत्कालिकसंबन्धेनाधिकरणत्वं द्वितियक्षणस्य कथंकारं वारणीयं एतेन प्रध्वंसक्षणेषु तदुत्पत्तिरपि नापत्तिपदमारोहति उक्तरीत्या आद्यत्वापादनासंभवात् ध्वंसस्य प्रतियोगिविरोधितया घटे तत्क्षणसंबन्धापादनासंभवाच्च प्रतियोगिव्यक्त्युपधायकयावत्कारणतानां तदानीमसंभवाच्च तस्मादर्थसमाजग्रस्त एवोत्पन्नस्य पुनरुत्पत्त्यभाव इति न तदर्थं प्रागभावकल्पना । यत्तु सहस्रतन्तुकपटस्थले तत्पटव्यक्तेः पटान्तराधिकरणतन्तुषु वारणाय समवायेन तत्पटव्यक्तिं प्रति बहूनां तन्तूनां तन्तुसंयोगानां वा तत्तद्व्यक्तित्वेन कारणत्वकल्पनापेक्षया प्रागभावाङ्गीकार आवश्यकः । नच प्रागभावाङ्गीकारेऽपि त्रिचतुरेषु तन्तुषु संयुक्तमात्रेषु तत्पटव्यक्तेरुत्पत्तिवारणाय तद्व्यक्तिं प्रति तद्व्यक्त्यसमवायिकारणचरमसंयोगव्यक्तेस्तद्व्यक्तित्वेन कारणतया आवश्यकतया तेनैव पटान्तराधिकरणतन्तुषु

## प्रभा.

स्रतन्तुकपटोत्पत्त्यापत्तिः । नच चरमसंयोगव्यक्तेः तद्व्यक्तित्वेन हेतुत्वान्नोक्तदोष इति वाच्यं तथा सति स्वानाधिकरणतन्तुष्वपि चरमसंयोगाभावादेव पटोत्पत्तिवारणसंभवेन प्रागभावकल्पनानौचित्यादिति चेन्न चरमसंयोगस्य समवायघटितसामानाधिकरण्यप्रत्यासत्त्या हेतुत्वे तन्त्वन्तरेऽपि समवायेन पटोत्पत्त्या तत्र समवायेन चरमसंयोगाभावेन व्यभिचारापत्त्या समवायसंबन्धेन तत्पटत्वावच्छिन्नं प्रति चरमोत्पन्नसंयोगव्यक्तेः कालिकसंबन्धेन हेतुता वाच्या तथाच स्वानधिकरणतन्तुष्वपि कालिकतया चरमसंयोगसत्त्वात् पटोत्पत्तिवारणाय प्रागभावहेतुत्वस्यावश्यकत्वात् इति । एवमप्यस्तु कश्चनातिरिक्तः पदार्थः तथापि तस्य सप्रतियोगिकत्वे प्रमाणाभाव इति तु तत्त्वमित्याहुः तदसत् चरमतन्तुसंयोगस्य कालिकसंबन्धेन हेतुत्वे द्वित्रिचतुर्षु संयुक्तेषु सहस्रतन्तुषु पटव्यक्त्यधिकरणेषु तन्त्वन्तरसमवेतसहस्रतन्तुकपटव्यक्त्यसमवायिकारणचरमतन्तुसंयोगव्यक्तेः कालिकसंबन्धेन वर्तमानतया तन्तुचतुष्टयसंयोगकालेऽपि एतादृशतन्तुषु समवायेन सहस्रतन्तुकपटव्यक्त्यापत्तिवारणाय तत्पटसमवायिकारणसमवेतचरमतन्तुसंयोगव्यक्तेरेव कालिकसंबन्धेन समवायेन तत्पटं प्रति हेतुत्वं वाच्यं प्रकृते द्वित्रिचतुरादिसंयोगविशिष्टतन्तूनां एतत्कालीनतन्त्वन्तरसमवेतसहस्रतन्तुकपटव्यक्तिसमवायिकारणत्वाभावेन तादृशपटासमवायिकारणचरमसंयोगव्यक्तेः एतत्तन्त्वसमवेतत्वेनैतत्तन्तुषु तादृशचरमसंयोगव्यक्तेरभावेन तत्र समवायेन तत्पटापादनासंभवात् भविष्यत्कालीनैतत्तन्तुसमवेतसहस्रतन्तुकपटव्यक्तेः समवायेनैतत्तन्तुष्विदानीमापादनन्तु न संभवति एतत्पटासमवायिकारणैतत्पटसमवायिकारणतन्तुसमवेतचरमतन्तुसंयोगव्यक्तेरिदानीमनुत्पन्नतया ता-

## मञ्जूषा.

तद्व्यक्त्यापत्तिवारणसंभव इति वाच्यम् । समवायेन तत्पटव्यक्तिं प्रति तत्संयोगव्यक्तेस्समवायेन हेतुत्वे तत्पटाधिकरणतन्त्वन्तरे व्यभिचारापत्त्या कालिकसंबन्धेनैव हेतुताया वाच्यत्वेन पटान्तराधिकरणतन्तुषु तद्व्यक्त्यापत्तेर्दुर्वारत्वादिति महादेवग्रन्थे स्थितं तत्तु तद्ग्रन्थ एवाग्रे दूषितप्रायं तद्ग्रन्थे हि संयोगनिरूपणे कार्यतावच्छेदकावच्छिन्नयत्किंचिद्व्यक्त्यधिकरणयावद्व्यक्तिनिष्ठाभावप्रतियोगित्वस्यैव व्यभिचारपदार्थत्वमुक्तं नचेह तादृशव्यभिचारस्संभवति ततश्च प्रागभावोऽप्रामाणिक इति चेदुच्यते अस्तु समवायेनैव तत्संयोगव्यक्तेस्तत्पटव्यक्तिं प्रति कारणता तथापि प्रागभावो दुर्वारः यथाहि तत्संयोगव्यक्तिरूपविशेषसामग्रीमनपेक्ष्यैव तन्तुसंयोगत्वाद्यवच्छिन्नघटितसामान्यसामग्री पूर्वतन्तुषु तत्पटव्यक्तिमुत्पादयति तथा पटान्तराधिकरणतन्तुष्वपि तां कुतो नोत्पादयेत् पूर्वतन्तुषु तत्पटव्यक्त्युपधायकतावच्छेदकत्वेन क्लृप्तधर्मावच्छिन्नानां तत्राबाधात् अतस्तत्पटव्यक्त्युपधायकं किंचित्पटान्तराधिकरणतन्तुव्यावृत्तं तत्पटाधिकरणयावत्तन्तुसाधारणमन्वेष्टव्यम् । तदेव प्रागभावशब्दितामिति । ननु तत्तद्व्यक्तिसमवेतसत्सामान्यं प्रति तत्तद्व्यक्तेस्तादात्म्येन कारणतास्वीकारे नोक्तप्रागभावसिद्धिप्रत्याशा तथाहि सहस्रस्यापि तन्तूनां तत्तद्गतरूपरसादिसाधारण्येन तत्तत्समवेतसत्त्वावच्छिन्नं प्रति तत्तद्व्यक्तित्वेन कारणता वाच्या कार्यतावच्छेदकाक्रान्ता च तत्पटव्यक्तिरपि । तथाच समवायेन तत्पटव्यक्तिं प्रति समवायेन कालिकविशेषणतया वा कारणीभूतया तच्चरमसंयोगव्यक्त्या तत्पटव्यक्तौ जननीयायां तत्तत्पटव्यक्तिवृत्तितत्तत्तन्तुसमवेतत्वावच्छिन्नकार्यतानिरूपितकारणताश्रयीभूतानां तावत्तन्तुव्यक्तीनां तादात्म्यसंबन्धेनान्यतमत्वेन रूपेण तत्संयोगव्यक्तिनिष्ठफलव्याप्यतावच्छेदककोटिप्रविष्टत्वरूपसहकारित्वस्वीकारेणैव पटान्तराधिकरणतन्तुषु तत्पटव्यक्तिवारणसंभवात् प्रागभावस्वीकारो निरर्थक इति चेदत्र ब्रूमः । उत्पन्ने तस्मिन् सहस्रतन्तुके पटे तच्चरमसंयोगातिरिक्तयत्किंचित्संयोगनाशेन विनष्टे वियुक्तानाभवावयवानां संयोगान्तरेण पुनरुत्पत्स्यमाना पटव्यक्तिः पूर्वपटव्यक्त्यात्मिकैव कुतो नोत्पद्यते तद्व्यक्तित्वावच्छिन्नकारणीभूतायाश्चरमसंयोगव्यक्तेस्तदवस्थत्वात् तत्पटव्यक्तिनिष्ठपटत्वादिसामान्यधर्मावच्छिन्नकार्यतानिरूपितकारणतावच्छेदकीभूततन्तुसंयोगत्वाद्यवच्छिन्नानामपि सत्त्वात् । नच पटान्तरोत्पत्तिक्षणे पूर्वपटव्यक्तेरुत्पत्तिरापादयितुं शक्या तत्क्षणस्य तत्पटव्यक्त्यधिकरणक्षणध्वंसाधिकरणत्वादिति वाच्यम् । यतो न वयं तत्पटव्यक्तेर्निरुक्तामुत्-

### प्रभा.

दृशचरमसंयोगध्वंसः कालिकसंबन्धेनेदानीमवर्तमानतया इदानीं नैतादृशतन्तुषु सहस्रतन्तुकैतत्पट-व्यक्त्युत्पत्त्यापत्तिः । एवंच स्वानधिकरणतन्तुषु एतत्पटासमवायिकारणस्वानधिकरणतन्तुसमवेतचरमसं-योगव्यक्तेरप्रसिद्ध्या कालिकसंबन्धेन सुतरां तत्रावर्तमानतयैव तत्र पटोत्पत्त्यापत्तिवारणसंभवेन प्रागभा-वाङ्गीकारे उक्तप्रमाणाभावादत एवोक्तरीत्या प्रागभावसिद्धावपि तस्य सप्रतियोगिकत्वे प्रमाणाभाव इति स-त्त्वमिति ग्रन्थेन प्रागभावस्य सिद्धत्वमङ्गीकृत्य तस्य सप्रतियोगिकत्वनिराकरणमप्यसंगतं प्रमाणेन प्रागभा-वासिद्धौ तस्यातिरिक्तत्वकल्पनायां गौरवेण भावेष्वनन्तर्भूतत्वेन चाभावान्तर्भूतत्वसिद्धौ अभावमात्रस्य सप्र-तियोगिकत्वेन निष्प्रतियोगिकाभावे मानाभावादेतस्यापि सप्रतियोगिकत्वसिद्धिसंभवात् ॥ वस्तुतस्तु फलेषु मधुरादिरसस्यानुभवसिद्धत्वात् तदारम्भकपरमाणुष्वपि रस उन्नेयः हिरकादिषु मधुरादेरननुभवात् तदार-म्भकपरमाणुष्वपि रसाभाव उन्नेयः फलारम्भकपरमाणुषु हिरकारम्भकपरमाणुषु च तेजस्संयोगरूपासमवा-यिकारणस्याविशिष्टत्वेऽपि फलारम्भकपरमाणुषु मधुराद्युत्पत्तिः हिरकारम्भकपरमाणुषु मधुराद्यनुत्पत्तिः प्राग-भावाङ्गीकारं विना न संभवतीति प्रागभावासिद्धिः । हिरकारम्भकपरमाणुषु रसोत्पादकविजातीयतेजस्संयो-गानङ्गीकारे सुवर्णेऽपि द्रवत्वनाशकविजातीयतेजस्संयोगानङ्गीकारेणैवात्यन्ताग्निसंयोगे सत्यनुच्छिद्यमानद्रवत्वा-धिकरणत्वरूपहेतोरप्यभावात् सुवर्णस्य तेजस्त्वासिद्धिप्रसङ्गात् । प्रागभावाङ्गीकारे तु तेजस्संयोगस्य तुल्य-त्वेऽपि हिरकाद्यारम्भकपरमाणुषु रसप्रागभावरूपकारणाभावात् न मधुराद्युत्पत्तिः फलारम्भकपरमाणौ रस-प्रागभावरूपकारणसत्त्वात् मधुराद्युत्पत्तिश्च संभवति अत एव नानारसवदवयवारब्धावयविनि रसप्रा-

### मञ्जूषा.

त्तिमिदानीमापादयामः किन्त्वापाद्यमानायाः पटव्यक्तेस्तद्व्यक्तित्वसामग्र्यास्स्वजन्यपदार्थे कार्यतावच्छेदक-धर्मप्रयोजकत्वादतश्च पूर्वव्यक्तिनिष्ठतद्व्यक्तित्वप्रयोजकमिदानीमवर्तमानं किमपि कारणमन्वेष्टव्यं तच्च प्रा-गभावातिरिक्तं मृग्यं एवंच प्रागभावकारणतयैव सर्वत्रातिप्रसङ्गभङ्गे तद्व्यक्तिसमवेतसत्सामान्यं प्रति तद्व्यक्ते-स्तादात्म्येन कारणत्वमित्यभ्युपगममात्रं ग्रन्थकृतामित्युत्पश्यामः । नचैवं घटादिकं प्रति कपालसंयो-गादेः कारणताविलोपप्रसङ्गः असंयुक्तयोः कपालयोः घटप्रागभावरूपविशेषसामग्रीविरहेणैव घटापादना-संभवादिति वाच्यम् । कपालसंयोगोत्पत्तेः प्राक् तत्कपालयोः घटोत्पादस्य प्रागभावकारणतया वा-रयितुमशक्यत्वात् कार्यमात्रवृत्तिजातेः कार्यतावच्छेदकत्वमिति नियमेन विनिगमनाविरहेण कपालसंयो-गदण्डादीनां सर्वेषामपि तदवच्छिन्नं प्रति कारणताया आवश्यकत्वात् कदाचिदप्यसंयुक्तयोः कपालयोः घटत्वावच्छिन्नाभावे तत्तत्प्रागभावव्यक्त्यभावकूटस्य प्रयोजकत्वे गौरवाच्च एवं तत्तद्घटव्यक्तिं प्रति तत्तत्कपाल-संयोगव्यक्त्यादीनामपि कारणता न प्रागभावकारणतया चरितार्था तत्तत्कपालयोरेव उत्पत्स्यमानघटव्यक्तेः एतत्संयोगाद्युत्पत्तेः पूर्वमुत्पत्त्यापत्तेः प्रागभावकारणतया वारणासंभवात् । एवं गुणादौ संयोगत्वाव-च्छिन्नाभावे तत्तत्संयोगप्रागभावव्यक्त्यभावकूटस्य प्रयोजकत्वे गौरवात् कार्यमात्रवृत्तिजातेः कार्यतावच्छे-दकत्वनियमाच्च संयोगत्वावच्छिन्नं प्रति द्रव्यत्वेन कारणता आवश्यकी नचैवमपि सुरभ्यसुरभ्यवय-वारब्धद्रव्ये गन्धप्रागभावाभावादेव गन्धापत्तिवारणात् तयोः परस्परप्रतिबध्यप्रतिबन्धकभावो न स्यादिति वाच्यम् । तत्रापि सुरभित्वाद्यवच्छिन्नाभावे तत्तत्सुरभिप्रागभावव्यक्त्यभावकूटस्य प्रयोजकत्वकल्पनापेक्षया सुरभीतरगन्धत्वावच्छिन्नस्य प्रयोजकत्वे लाघवात् नच सुरभित्वाद्यवच्छिन्नं प्रति सुरभिप्रागभावत्वेन कार-णत्वं कल्प्यतामिति वाच्यम् । तावतापि विनिगमनाविरहेण सुरभीतरगन्धाभावत्वेन कारणताया अवारणा-त् । सुरभ्यसुरभ्यवयवारब्धेऽपि कुत्रचिद्द्रव्ये भाविपाकोत्पत्स्यमानसुरभिप्रागभावसंभवेन तदानीं सुरभि-त्वावच्छिन्नाभावे सुरभिप्रागभावत्वावच्छिन्नाभावस्य प्रयोजकत्वासंभवाच्च अपिच सामान्यधर्मावच्छिन्ना-भावो न क्वचिदपि प्रागभावव्यतिरेकान्निश्चेतुं शक्यः तस्य कार्यव्यतिरेकनिश्चयैकनिश्चेयत्वात् अतस्सा-मान्यरूपेण प्रागभावस्य कारणतां क्वचिदपि न कल्पयन्ति तान्त्रिकाः । तत्तत्प्रागभावव्यतिरेकात्तत्त-द्व्यक्तिव्यतिरेकस्तु सुनिश्चेयः तद्व्यक्त्युत्पादनिश्चयेन तत्तत्प्रागभावव्यक्तेर्विनष्टत्वाज्ज्ञानात्तत्पटव्यक्तिविनाशो

## प्रभा.

गभावरूपकारणाभावेनावयवरसात्मकासमवायिकारणसत्त्वेऽपि अवयविनि रसानुत्पत्तिनिर्वाहे अवयविगतमधु-रव्यक्तिं प्रत्यवयवगतमधुरान्यरसव्यक्तीनां पञ्चानां प्रतिबन्धकत्वं तदभावानां हेतुत्वं च न कल्पनीयमिति लाघवमप्युपपद्यते । एकैकमधुरादिव्यक्तिं प्रति पञ्चानां प्रतिबन्धकत्वस्य तदभावानां पञ्चानां कारणत्वस्य च कल्पनापेक्षया तद्व्यक्तित्वेन प्रागभावस्य हेतुत्वकल्पनाया अतिलघुत्वादिति प्राचामाशय इति प्रतिभाति ॥ **जन्याभावत्वमिति** ॥ प्रागभावप्रतियोगित्वरूपजन्यत्वविशिष्टाभावत्वस्य ध्वंसव्यक्तिभेदेन भिन्नत्वेऽपि ध्वंसनिष्ठतद्व्यक्तित्वानामेव लक्ष्यतावच्छेदकत्वात् लक्षणाननुगमेऽपि न दोषः । अथवा वाच्यतासंबन्धेन ध्वंसपदवत्त्वमनुगतं लक्ष्यतावच्छेदकीकृत्य प्रागभावप्रतियोगित्वानि यावन्ति तावदन्यतमविशिष्टाभावत्वस्यानुगतस्य लक्षणत्वमङ्गीकार्यम् । अस्मद्गुरुचरणास्तु जन्ये अभावत्वमिति सप्तमीतत्पुरुषाश्रयणात् जन्यवृत्त्यभावत्वमित्यर्थो लभ्यते जन्यवृत्त्यभावत्वं कालिकस्वरूपोभयसंबन्धेनाभावत्वमेव तदेवानुगतं लक्षणं लक्ष्यतावच्छेदकं च वाच्यतासंबन्धेन ध्वंसपदवत्त्वमेवेति न कोऽपि दोष इति व्याचक्रुः । वस्तुतस्तु कालिकसंबन्धेन घटत्वाधिकरणस्वरूपजन्यत्वं लक्षणे निवेश्य तादृशाधिकरणत्वरूपजन्यत्वाभावत्वैतदुभयत्वावच्छिन्नस्य स्वरूपसंबन्धेन लक्षणत्वस्वीकारेऽपि स्वनिरूपितकालिकविशेषणतादैशिकविशेषणत्वोभयघटितसामानाधिकरण्यविशिष्टाभावत्वसंबन्धेन घटत्वस्य लक्षणत्वस्वीकारेऽपि वाऽनुगमसंभवादतिव्याप्तिवारणसंभवाच्च लाघवात् कर्मधारयसमासाश्रयणेऽपि लक्षणं साध्विति प्रतिभाति ॥ **नित्यसंसर्गेति** ॥ एतल्लक्षणस्य यथाश्रुतार्थः लक्षणघटकीभूतविशेषणानां प्रयोजनं च स्फुटमेव । अ-

## मञ्जूषा.

नन्तरकालं तत्पटसमवायिषूत्पन्नायां पटान्तरव्यक्तौ तद्व्यक्तित्ववारणायैव हि तस्य कारणत्वकल्पनं तच्च तद्व्यक्तौ पूर्वप्रागभावव्यक्तिजन्यत्वाभावज्ञानाच्छक्यमेव नत्वेवमसंयुक्तयोः कपालयोः घटप्रागभावसामान्याभावः सुरभ्यसुरभ्यवयवारब्धद्रव्ये च सुरभिगन्धादिप्रागभावसामान्याभावो वा निश्चेतुं शक्यते भाविघटादिसंभावनया तत्प्रागभावस्यापि संभावितत्वया तदभावस्य प्रमाणान्तरानधिगम्यत्वात् अथैवमेतद्घटव्यक्तिरूपरसादिव्यक्तेरभावोऽपि घटान्तरे तद्रूपरसादिप्रागभावव्यक्तिव्यतिरेकेण निश्चेतुं शक्यते तद्रूपादिव्यक्त्युत्पत्तिव्यतिरेकनिश्चयैकनिश्चेयत्वात् तत्तत्प्रागभावव्यक्तीनां व्यतिरेकस्य अतश्च तत्तद्व्यक्तिसमवेतसत्सामान्यं प्रति तत्तद्व्यक्तेः कारणतापि युक्तिसिद्धा स्यादिति चेदिष्टमेवैतदस्माकं तद्घटव्यक्तिभेदस्यैव तद्रूपाद्युत्पत्तिव्यतिरेके प्रयोजकत्वस्य ग्रन्थकृतामभिप्रेतत्वादिति ॥ **जन्याभावत्वमिति** ॥ ननु किमिदं जन्यत्वं न तावत्प्रागभावप्रतियोगित्वं विनाश्यभावत्वरूपप्रागभावत्वशरीरे ध्वंसत्वस्य घटकतया अन्योन्याश्रयात् नापि कालिकसंबन्धेन घटत्वादिमत्त्वं जन्यत्वं प्रागभावस्यापि कालोपाधितया ग्रन्थकृताग्रे वक्ष्यमाणत्वेन तत्रातिव्याप्तेः नच स्वोत्तरवृत्तिप्रतियोगिकत्वं प्रागभावे विनाशित्वं एवं स्वपूर्ववृत्तिप्रतियोगिकत्वं ध्वंसे जन्यत्वमिति वाच्यं उत्तरत्वपूर्वत्वयोः क्रमेण ध्वंसप्रागभावगर्भत्वात् किंच घटप्रागभावध्वंसः घटतद्ध्वंसोभयरूपः ताभ्यामेव घटप्रागभावो ध्वस्त इति प्रतीत्युपपत्तेः घटप्रागभावध्वंसस्यातिरिक्तत्वे तस्य ध्वंसत्वनिर्वाहाय प्रागभावप्रतियोगित्वस्वीकारस्यावश्यकतया प्रागभावस्यानेकप्रतियोगिताया अपसिद्धान्तत्वेन घटप्रागभावापेक्षया तद्ध्वंसप्रागभावस्यातिरिक्तत्वे च तस्य प्रागभावत्वनिर्वाहाय ध्वंसप्रतियोगित्वस्वीकारे चानवस्थापत्तेः एवं घटध्वंसप्रागभावः घटतत्प्रागभावोभयरूपः ताभ्यामेव घटध्वंसो भविष्यतीति प्रतीत्युपपत्तेः तस्यातिरिक्तत्वे प्रागभावत्वनिर्वाहाय ध्वंसप्रतियोगित्वे च ध्वंसस्यानेकप्रतियोगिकताया अपसिद्धान्तत्वेन घटध्वंसापेक्षया घटध्वंसप्रागभावध्वंसस्यातिरिक्तत्वेन अनवस्थापत्तेः एवंच घटो घटप्रागभावप्रतियोगिकध्वंसात्मकः घटध्वंसप्रतियोगिकप्रागभावात्मकश्च संवृत्त इति विनाशप्रतियोगित्वं ध्वंसे प्रागभावप्रतियोगित्वं च प्रागभावेऽतिव्याप्तम् । ननु भावभिन्नध्वंसप्रतियोगित्वं प्रागभावलक्षणे प्रविष्टं भावभिन्नप्रागभावप्रतियोगित्वं च ध्वंसलक्षणे नातः परस्परमतिव्याप्तिः प्रागभावे तु घटध्वंसात्मको यो घटप्रागभावध्वंसः भावभिन्नस्तत्प्रतियोगित्वमादाय लक्षण-

## प्रभा.

स्वद्रुत्त्वरणात्तु नित्यं संसर्गाभावत्वमिति सप्तमीतत्पुरुषाश्रयणात् नित्यवृत्तिसंसर्गाभावत्वमिति लभ्यते नित्यवृत्तिसंसर्गाभावत्वं च स्वावच्छेदकावच्छिन्नाधिकरणतानिरूपकत्वस्वनिरूपकत्वोभयसंबन्धेन प्रतियोगिताविशिष्टत्वमेवेदमेव चानुगतमत्यन्ताभावलक्षणं घटध्वंसप्रागभावयोः स्वनिरूपकत्वसंबन्धेन घटनिष्ठप्रतियोगितावैशिष्ट्यत्वात् अतिव्याप्तिवारणाय स्वावच्छेदकावच्छिन्नाधिकरणतानिरूपकत्वस्यापि संसर्गकोटौ प्रवेशः घटध्वंसप्रागभावयोः धर्मावच्छिन्नप्रतियोगिताकत्वे मानाभावेन स्वावच्छेदकाप्रसिद्ध्या नातिव्याप्तिः घटान्योन्याभावस्य पटवृत्तित्वेन पटाभावीयपटनिष्ठप्रतियोगितावच्छेदकपटत्वावच्छिन्नपटनिष्ठाधिकरणतानिरूपकत्वस्य घटान्योन्याभावे सत्त्वेन तेन संबन्धेन पटनिष्ठप्रतियोगिताविशिष्टत्वाद्घटान्योन्याभावेऽतिव्याप्तिवारणाय स्वनिरूपकत्वस्य संसर्गकोटौ प्रवेशः घटान्योन्याभावस्य पटनिष्ठप्रतियोगितानिरूपकत्वाभावान्नातिव्याप्तिः घटो न घटपटोभयमिति प्रतीत्या घटत्वावच्छिन्ने घटपटोभयत्वावच्छिन्नप्रतियोगिताकभेदस्य उभयत्वावच्छिन्नप्रतियोगितानिरूपकत्वेन प्रतियोगितावच्छेदकीभूततादृशोभयत्वाश्रयघटनिष्ठाधिकरणतानिरूपक-

## मञ्जूषा.

संगतिः ध्वंसं च घटप्रागभावात्मको यो घटध्वंसप्रागभावः भावभिन्नस्तत्प्रतियोगित्वमादायेति चेन्न एवमपि घटानाधिकरणभूतलादिनिष्ठे घटप्रागभावात्यन्ताभावे घटध्वंसात्यन्ताभावे च अतिव्याप्तेर्दुर्वारत्वात् तयोरपि स्वात्यन्ताभावात्मको यो घटप्रागभावः घटध्वंसश्च भावभिन्नस्तत्प्रतियोगित्वादिति । उच्यते ध्वंसत्वं प्रागभावत्वं च द्विविधं एकं भावाभावसाधारणं अन्यच्च तद्व्यावृत्तं तत्र प्रथममनुयोगिताविशेषरूपमखण्डोपाधिरूपं वा । घटो ध्वस्तः घटप्रागभावो ध्वस्तः घटो भविष्यति घटध्वंसो भविष्यतीति प्रतीतिसाक्षिकं न निरुक्तिमपेक्षते। द्वितीयन्तु निर्वाच्यम् । अतस्तन्निर्वक्ति विश्वनाथः विनाश्यभावत्वं जन्याभावत्वमिति च तत्र विनाश्यभावत्वं ध्वंसत्वशब्दपरिभाषितविलक्षणानुयोगितानिरूपितप्रतियोगित्वे सति अभावत्वं जन्याभवात्वं तु प्रागभावत्वशब्दपरिभाषितविलक्षणानुयोगितानिरूपितप्रतियोगित्वं सत्यभावत्वं न तयोः परस्परघटकता नवा परस्परस्मिन्नतिव्याप्तिः तथाहि घटो यद्यपि ध्वंसरूपः तथापि न घटध्वंसनिष्ठप्रतियोगितानिरूपितं अनुयोगित्वं ध्वंसत्वाख्यं घटे अतो न प्रागभावलक्षणस्य ध्वंसेऽतिव्याप्तिः एवं घटो यद्यपि प्रागभावरूपस्तथापि न घटप्रागभावनिरूपितमनुयोगित्वं प्रागभावत्वाख्यं घटे अतो न ध्वंसलक्षणस्य प्रागभावेऽतिव्याप्तिः एवं घटप्रागभावात्यन्ताभावात्यन्ताभावो यद्यपि घटप्रागभावरूपः तथापि घटप्रागभावात्यन्ताभावनिष्ठप्रतियोगितानिरूपितमनुयोगित्वं घटप्रागभाव न प्रागभावत्वाख्यं किंत्वत्यन्ताभावत्वाख्यमिति न घटप्रागभावात्यन्ताभावे ध्वंसलक्षणस्यातिव्याप्तिः । एवं घटध्वंसात्यन्ताभावे प्रागभावलक्षणस्यातिव्याप्तिवारणं बोध्यम् । उभयोर्लक्षणयोर्घटेऽतिव्याप्तिवारणाय लक्षणद्वयेऽप्यभावत्वं निवेशितं तत्र भावभिन्नत्वं यद्यप्यत्र भावभिन्नत्वनिवेशे प्रागभावत्वशब्दपरिभाषितं विलक्षणानुयोगित्वमेव प्रागभावलक्षणमुचितं एवं ध्वंसत्वशब्दपरिभाषितं विलक्षणानुयोगित्वमेव ध्वंसलक्षणं घटादावतिव्याप्तेर्भावभिन्नत्वविशेषणेन वारणात् तथापि लक्षणस्य लक्षणान्तरादूषकत्वादवैयर्थ्यं तत्र गुरुभूतलक्षणाश्रयणप्रयोजनन्तु प्रागभावस्य ध्वंसत्वनिरूपकत्वं ध्वंसस्य प्रागभावत्वनिरूपकत्वं इति विषयपरिज्ञानमेव प्रागभावत्वध्वंसत्वरूपानुयोगिताविशेषपरिज्ञानरूपं पूर्वलक्षणप्रयोजनं त्वनेनापि निवर्हति एवं प्रागभावत्वध्वंसत्वयोरखण्डोपाधित्वपक्षे ध्वंसत्वावच्छिन्ननिरूपितप्रतियोगिताश्रयत्वे सत्यभावत्वं प्रागभावत्वं प्रागभावत्वावच्छिन्ननिरूपितप्रतियोगिताश्रयत्वे सत्यभावत्वं ध्वंसत्वं अत्र लक्षणघटकीभूत ध्वंसत्वप्रागभावत्वे अखण्डोपाधिरूपे न तयोः परस्परं घटकता नवा तद्घटितलक्षणयोः परस्परघटकता नवा परस्परस्मिन्नतिव्याप्तिः तथाहि घटो यद्यपि ध्वंसरूपः तथापि घटनिष्ठा या घटध्वंसनिष्ठप्रतियोगितानिरूपकता तदवच्छेदकं न ध्वंसत्वं तथा सति घटध्वंसो ध्वस्त इति प्रतीत्यापत्तेः किन्तु प्रागभावत्वं घटध्वंसो भविष्यतीति प्रतीतेः अतो न प्रागभावलक्षणस्य ध्वंसेऽतिव्याप्तिः । एवं ध्वंसलक्षणस्य प्रागभावेऽतिव्याप्तिवारणादिकमप्यूहनीयम् ॥ **नित्येति** ॥ नित्यत्वं प्रागभावाप्रतियोगित्वे सति ध्वंसाप्रतियोगित्वं सं-

### प्रभा.

स्वेन च तादृशभेदस्य निरुक्तोभयसंबन्धेनोभयत्वावच्छिन्नप्रतियोगिताविशिष्टत्वेनातिव्याप्तिवारणाय स्वावच्छेदकाश्रयनिष्ठाधिकरणतानिरूपकत्वस्य संसर्गघटकत्वमपहाय स्वावच्छेदकावच्छिन्नाधिकरणतानिरूपकत्वं निवेशितं एवंच घटपटोभयं न घटपटोभयमिति प्रतीत्यभावेनोभयत्वावच्छिन्नप्रतियोगिताकाभावे तत्प्रतियोगितावच्छेदकीभूतोभयत्वावच्छिन्नाधिकरणतानिरूपकत्वाभावान्नातिव्याप्तिः समनियताभावानां भेदाभिप्रायेणेदं लक्षणं अन्यथा घटान्योन्याभावस्य घटत्वाभावाभिन्नतया घटत्वाभावस्य तादृशोभयसंबन्धेन प्रतियोगिताविशिष्टतयाऽन्योन्याभावेऽतिव्याप्तेः तेन यथाश्रुतलक्षणस्य ध्वंसाप्रतियोगित्वप्रागभावाप्रतियोगित्वघटितत्वेन संसर्गाभावत्वघटकान्योन्याभावघटितत्वेन च ध्वंसप्रागभावान्योन्याभावव्यक्तिभेदेन च भिन्नतया लक्षणस्याननुगमः पूर्वोक्तरीत्यान्यतमत्वेन ग्रहणे दुर्ज्ञेयतेति दूषणं निरस्तम् । अथवा स्वावच्छेदकावच्छिन्नतादात्म्यानवच्छिन्नप्रतियोगिताकत्वसंबन्धेन प्रतियोगिताविशिष्टत्वमत्यन्ताभावत्वं तेन प्रथमकल्पे तद्गुणान्यत्वप्रकारकप्रमाविशेष्यत्वाभावादतिव्याप्तिरिति दूषणं निरस्तमिति व्याचक्षुः । नन्वत्यन्ताभावस्य नित्यत्वे घटवति

### मञ्जूषा.

सर्गाभावत्वमन्योन्याभावभिन्नाभावत्वं ध्वंसे प्रागभावेऽन्योन्याभावे चातिव्याप्तिवारणाय तावन्ति विशेषणानि । ननु पूर्वोक्तरीत्या घटात्मकप्रागभावप्रतियोगित्वादेव न घटप्रागभावेऽतिव्याप्तिः एवं घटात्मकध्वंसप्रतियोगित्वादेव घटध्वंसे नातिव्याप्तिरिति प्रागभावाप्रतियोगित्वध्वंसाप्रतियोगित्वयोरन्यतरविशेषणस्य वैयर्थ्यम् । नच भावभिन्नप्रागभावाप्रतियोगित्वं भावभिन्नध्वंसाप्रतियोगित्वं च विवक्षितमिति वाच्यम् । परस्परविशेषणसार्थकत्वाय तन्निवेशस्यायुक्तत्वात् यदिच घटात्यन्ताभावे घटात्मकध्वंसप्रागभावप्रतियोगित्वव्याप्तिवारणाय तद्विशेषणमावश्यकमिति मन्यते तदा घटध्वंसात्यन्ताभावे तत्प्रागभावात्यन्ताभावे च अव्याप्तिरिति चेन्न प्रागभावत्वनिरूपितप्रतियोगिताशून्यत्वस्य प्रागभावत्वावच्छिन्ननिरूपितप्रतियोगिताशून्यत्वस्य वा प्रागभावाप्रतियोगित्वपदार्थत्वात् ध्वंसत्वनिरूपितप्रतियोगिताशून्यत्वस्य ध्वंसत्वावच्छिन्ननिरूपितप्रतियोगिताशून्यत्वस्य वा ध्वंसाप्रतियोगित्वपदार्थत्वाच्च सर्वानुपपत्तिपरिहारात् । ननु किमिदं तादृशप्रतियोगिताशून्यत्वं न तावत्तादृशप्रतियोगित्वप्रतियोगिकाभाववत्त्वं तादृशप्रतियोगिताभेदमादाय प्रागभावेऽतिव्याप्तेः नापि तदत्यन्ताभाववत्त्वं आत्माश्रयात् उच्यते नेह भावाभावसाधारणं नास्तीत्यादिप्रतीतिगोचरीभूतमनुयोगिताविशेषरूपमखण्डोपाधिरूपं वात्यन्ताभावत्वं निरुच्यते किन्तु तद्व्यावृत्तं तत्रचानुयोगिताविशेषादिरूपस्यात्यन्ताभावत्वस्य घटकत्वेऽपि न क्षतिः नचैवं विलक्षणानुयोगिताश्रयत्वे सति भावभिन्नत्वमेव भावव्यावृत्तं अत्यन्ताभावत्वमित्युच्यतामिति वाच्यम् । घटध्वंसात्यन्ताभावो नास्ति घटप्रागभावात्यन्ताभावो नास्तीत्यादिप्रतीत्या ध्वंसप्रागभावयोरपि तादृशात्यन्ताभावत्वसत्त्वात्तद्व्यावृत्तस्यैवेह निर्वाच्यत्वादिति सर्वं चतुरस्रम् । अन्योन्याभावभिन्नाभावत्वात्मकस्य संसर्गाभावत्वरूपविशेष्यदलस्य निष्कर्षस्तु पूर्वोक्तरीत्या बोध्यः । अत्र उक्तप्रायमपि किञ्चित्पुनरुच्यते घटो भविष्यति घटो ध्वस्तः घटो नास्तीत्यादिषु प्रतियोग्युपरक्ताभावबुद्धिषु भावाभावसाधारणमनुयोगिताविशेषरूपं प्रागभावत्वं ध्वंसत्वमत्यन्ताभावत्वं च भासते नतु विनाश्यभावत्वादिरूपं तत्त्रयं तथाहि घटो भविष्यतीति प्रतीतौ वर्तमानकालीनो यो विनाश्यभावः तत्प्रतियोगित्वं न घटे प्रकारः तत्र भावभिन्नत्वरूपाभावत्वस्य प्रवेशे घटकाले घटध्वंसो भविष्यतीत्यनापत्तेः तदप्रवेशे वर्तमानकालीनो यो विनाशी घटः तत्प्रतियोगित्वस्य घटप्रागभावे सत्त्वात् घटकाले घटप्रागभावो भविष्यतीति प्रतीत्यापत्तेः ममतु वर्तमाननिष्ठं यत् घटप्रागभावत्वं तन्निरूपितप्रतियोगित्वस्य प्रकारत्वान्नानुपपत्तिः । नच विनाशित्वावच्छिन्ननिरूपितप्रतियोगित्वस्य प्रकारत्वोक्तौ ममापि नानुपपत्तिः यन्निरूपितप्रागभावत्वं यत्र त्वमिमतं तन्निष्ठप्रतियोगितानिरूपकतायाः तन्निष्ठाया विनाशित्वावच्छिन्नत्वाङ्गीकारादिति वाच्यम् । प्रतियोगितानिरूपकतावच्छेदकतया भासमानं यद्विनाशित्वं तद्घटकविनाशित्वस्य प्रागभावप्रतियोगित्वात्मकत्वे विषयतानवस्थितेः अनुयोगिताविशेषत्वात्मकत्वे तु लाघवात् प्रा-

न्ताभावत्वम् । यत्र तु भूतलादौ घटादिकमपसारितं पुनरानीतं च तत्र घटकालस्य सम्बन्धाघटकत्वादत्यन्ताभावस्य नित्यत्वेऽपि घटकाले न घटात्यन्ताभावबुद्धिः । तत्रोत्पादविनाशशाली चतुर्थोऽयमभाव इति केचित् । अत्र ध्वंसप्रागभावाधिकरणे

**प्रभा**

घटात्यन्ताभावबुद्ध्यापत्तिः कालविशेषविशिष्टाधिकरणस्याभावसंबन्धत्वस्वीकारेण वारिता तथापि सिंहगुहावलोकनन्यायेन वारणप्रकारं पुनस्स्मारयति ॥ **यत्र त्विति** ॥ अन्ये तु नित्यप्रतियोगिकाभावानामत्यन्ताभावरूपत्वं तदन्यप्रतियोगिकाभावानां सामयिकाभावत्वमिति संसर्गाभावस्य चातुर्विध्यं वदन्ति तन्मतमुपन्यस्यति ॥ **तत्रेति** ॥ कालविशेषविशिष्टाधिकरणस्य संसर्गत्वस्वीकारेणैव घटवति घटाभावप्रतीत्यापत्तिवारणे चतुर्थाभावस्वीकारः तस्योत्पादविनाशस्वीकारश्चाप्रामाणिक इत्यस्वरसश्च केचिदित्यनेन सूचितः ॥ **ध्वंसप्रागभावयोराधिकरण इति** ॥ अत्र प्रतियोगितावच्छेदकावच्छिन्नेन साकमभावस्य विरोधो न संभवति गुणे गुणकर्मान्यत्वविशिष्टस्य सत्तात्वावच्छिन्नस्य सत्त्वेन तादृशाभावासत्त्वप्रसङ्गात् किन्तु प्रतियोगितावच्छेदकावच्छिन्नाधिकरणतया साकमेवाभावस्य विरोधो वाच्यः । नचैवं सति संयोगेन यदाकदाचित् घटवति भूतले तादृशसंबन्धेन घटाधिकरणत्वसत्त्वेन घटशून्यकालेऽपि संयोगेन घटो नास्तीति प्रतीत्यनुपपत्तिः संयोगेन तत्र घटाभावसत्त्वादिति वाच्यं नहि वयमभावमात्रस्य तादृशाधिकरणतया विरोधमाचक्ष्महे किन्तु प्रतियोगितावच्छेदकसंबन्धवति यादृशाभावः प्रामाणिकः तस्यैव यथा घटवति भूतलादौ सत्तासमवायिनि गुणादौ च संयोगेन पूर्वक्षणवृत्तित्वविशिष्टाभावः समवायेन गुणकर्मान्यत्वविशिष्टसत्ताभावश्च प्रामाणिक इति तयोरेव तादृशाधिकरणतया विरोधस्स्वीक्रियते । प्रकृते घटसंयोगवति भूतले संयोगेन घटो नास्तीति प्रतीत्यभावेन तत्र संयोगेन घटाभावस्या-

**मञ्जूषा.**

गभावत्वस्यैवानुयोगिताविशेषरूपस्य भानसंभवात् । एवं घटो ध्वस्त इत्यादौ जन्याभावप्रतियोगित्वं न विषयः तत्र भावभिन्नत्वान्तर्भावे घटकाले घटप्रागभावो ध्वस्त इति प्रतीत्यनापत्तेः तदनन्तर्भावे घटकाले घटध्वंसो ध्वस्त इति प्रतीत्यापत्तेः ममतु वर्तमाननिष्ठं यत् ध्वंसत्वं तन्निरूपितप्रतियोगित्वस्य विशेषणत्वान्नानुपपत्तिः वर्तमाननिष्ठं यज्जन्यत्वं तदवच्छिन्ननिरूपितप्रतियोगित्वस्य विषयत्वे तु जन्यत्वघटप्रागभावत्वस्य विनाशित्वरूपत्वे विषयतानवस्था अनुयोगिताविशेषरूपत्वे ध्वंसत्वस्यैव अनुयोगिताविशेषरूपस्य भानसंभवात् एवं घटो नास्तीत्यादौ न नित्यसंसर्गाभावत्वस्य भानं घटाभावो नास्तीत्यादिप्रतीत्यनुपपत्तेः किन्त्वनुयोगिताविशेषरूपस्य अत्यन्ताभावस्यैव इदं च नव्यमते । प्राचीनमते अत्यन्ताभावत्वस्येव संसर्गाभावत्वस्यापि भानमिष्यते रक्तघटे श्यामो नास्ति श्यामघटे रक्तो नास्तीति धियो ध्वंसप्रागभावावगाहितायाः तैरङ्गीकारात् तत्र भासमानं संसर्गाभावत्वं च तादात्म्यसंबन्धावच्छिन्नप्रतियोगित्वानिरूपितानुयोगितारूपं तासां तत्र भानं च तादृशप्रतियोगितानिरूपितानुयोगितात्वेन ध्वं-

**दिनकरीयम्.**

घटानयनानन्तरमपि भूतले घटो नास्तीति प्रतीत्यापत्तिरित्यत आह ॥ **यत्र त्विति** ॥ तथा च सम्बन्धाभावादेव घटानयनानन्तरं घटात्यन्ताभावबुद्धिर्नेति भावः । कालविशेषविशिष्टस्वरूपस्य संसर्गत्वोपगमादेव घटवति घटो नास्तीति प्रतीत्यभावोपपत्तौ चतुर्थसंसर्गाभावे मानाभाव इत्यस्वरसः केचिदित्यनेन सूचितः । ननु मास्तु घटकाले घटात्यन्ताभावबुद्धिः घटोत्पत्तेः प्राक्काले तु स्यादित्याशङ्क्याह ॥ **अत्रेत्यादिना** ॥ ननु तर्हि रक्तरूपप्रागभावाधिकरणे श्यामघटे श्यामरूपध्वंसाधिकरणे च रक्तघटे कथं रक्तो नास्ति श्यामो नास्तीति च प्रतीतिः ध्वंसप्रागभावयोरधिकरणेऽत्यन्ताभावस्यास-

**रामरुद्रीयम्.**

त्त्वेरिति भावः ॥ **कथं रक्तो नास्तीति** ॥ नास्तीत्यादिप्रतीतेरत्यन्ताभावविषयकत्वादित्याशयेनेदं

नात्यन्ताभाव इति प्राचां मतं श्यामघटे रक्तो नास्ति रक्तघटे श्यामो नास्तीति धीश्च प्रागभावं ध्वंसं चावगाहते न तु तदत्यन्ताभावं तयोर्विरोधात् । नव्यास्तु तत्र विरोधे मानाभावात् ध्वंसादिकालावच्छेदेनाप्यत्यन्ताभावो वर्तत इत्याहुः ।

## प्रभा.

प्रामाणिकतया तादृशाभावस्य प्रतियोगितावच्छेदकसंबन्धेन सहैव विरोधस्वीकारात् घटसंयोगशून्यतादशायां तादृशघटाभावस्य तत्र वृत्तौ बाधकाभावेन न तत्र तादृशाभावप्रतीत्यनुपपत्तिः । एवं संबन्धान्तरेणाभावस्थलेऽपीति वाच्यम् । केषांचिदभावानां तादृशाधिकरणतया साकं केषांचित् प्रतियोगितावच्छेदकसंबन्धेन साकं विरोधं परिकल्प्य प्रतीतिरुपपादनीया एवंच समवायस्य नित्यत्वेनैकत्वेन च श्यामतादशायामपि घटे रक्तसमवायरूपाविरोधिनो रक्तत्वावच्छिन्ननिरूपिताधिकरणत्वरूपाविरोधिनश्च सत्त्वेन तत्र रक्तात्यन्ताभावसत्त्वासंभवेन नास्तीति प्रतीतेः ध्वंसविषयकत्वमङ्गीकर्तव्यं ध्वंसप्रागभावयोस्तु प्रतियोगिना सहैव विरोधस्वीकारेणान्तराश्यामे रक्तस्वरूपप्रतियोग्यभावेन तयोर्वृत्तित्वसंभव इति प्राचामाशय इत्यभिप्रायेण ध्वंसप्रागभावाधिकरणे नात्यन्ताभाव इति प्राचां मतमिति विश्वनाथपञ्चाननभट्टाचार्यैरुक्तमुक्तार्थमेव प्रकाशयति । **रक्तघट इति । तयोर्विरोधादिति** ॥ नचोक्तप्रतीतेः ध्वंसादिविषयकत्वे मध्ये रक्तेऽपि तथा प्रत्ययापत्तिः ध्वंसादिरूपविषयसत्त्वादिति वाच्यं ध्वंसादिसमानाधिकरणं यत्प्रतियोगिसजातीयं तदसमानकालीनाधिकरणस्यैव ध्वंसादिसंबन्धत्वस्वीकारेणान्तरारक्तघटस्यातादृशत्वेन तादृशसंबन्धेन तत्र ध्वंसप्रागभावयोरसत्त्वात् तदा प्रत्ययापत्तेरभावात् । ननु प्रतियोगिना साकमेवाभावस्य विरोधः नतु तदधिकरणतया न चैवं घटवति घटपटोभयाभावस्य सत्त्ववति गुणादौ विशिष्टसत्त्वाभावस्य चासत्त्वप्रसङ्गः विरोधिनस्सत्त्वादिति वाच्यं नवीनमते उभयाभावस्य परंपरासंबन्धेन द्वित्वाभावरूपत्वेन विशिष्टाभावस्य विशेषणविशेष्यसंबन्धाभावरूपवत्त्वेन चैकघटवति स्वाश्रययावदाश्रयत्वरूपपरंपरासंबन्धेन द्वित्वरूपप्रतियोगिनः असत्त्वात् सत्त्ववति गुणादौ गुणकर्मान्यत्वसत्त्वयोः सामानाधिकरण्यरूपप्रतियोगिनः निरूपकतासंबन्धेनासत्त्वाच्च तत्र घटपटोभयं नास्ति गुणकर्मान्यत्वविशिष्टसत्ता नास्तीति प्रतीत्युत्पत्तौ बाधकाभाव इति नवीनमतमुपन्यस्यति ॥ **नव्यास्त्विति** ॥ यद्वा अभावमात्रस्य न तादृशाधिकरणतया विरोधः गौरवात् किंतु वैशिष्ट्यव्यासज्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकाभावस्यैव तस्य प्रतियोगिना सह विरोधित्वे उक्तदोषापत्तेः तदनवच्छिन्नप्रतियोगिताकाभावस्य तु केवलप्रतियोगिना सहैव विरोधः स्वीक्रियते लाघवात् एवंचान्तराश्यामे रक्तरूपप्रतियोग्यसत्त्वेन तत्र जायमानायाः रक्तरूपं नास्तीति प्रतीतेः रक्तात्यन्ताभावविषयकत्वे बाधकाभावात् ध्वंसप्रागभावाभ्यामत्यन्ताभावस्य विरोधस्सुदूरपराहत इति नवीनमतमुपन्यस्यति ॥ **नव्यास्त्विति** ॥ आहुरित्यस्वरसोद्भावनं तद्बीजन्त्वन्तराश्यामे घटे उभय-

## मञ्जूषा.

त्वप्रागभावत्वात्यन्ताभावत्वात्मकानुयोगितासु अन्योन्याभावत्वात्मकानुयोगिताव्यावर्तकवैलक्षण्यस्वीकारे तेन रूपेण अथवा ध्वंसप्रागभावयोः संसर्गावच्छिन्नप्रतियोगिताकत्वस्वीकारेण घटो नास्ति श्यामो नास्ति रक्तो नास्तीत्यादिषु प्रतीतिषु संयोगसमवायादिसंबन्धावच्छिन्नत्वेन प्रतियोगितावगाहनादेव नायं पट इत्याद्यन्योन्याभावत्वावगाहिप्रतीतिवैलक्षण्यनिर्वाहे तिसृणां अनुयोगितानां तादात्म्यसंबन्धवच्छिन्नप्रति-

## दिनकरीयम्.

त्वादित्यत आह ॥ **श्यामघट इति** ॥ **तत्रेति** ॥ ध्वंसप्रागभावयोरित्यर्थः । अत्यन्ताभावेन सह इति शेषः । तथा च नव्यमते पूर्वपक्षिकथितशङ्कायामिष्टापत्तिरेवेति भावः । युक्तं चैतत् कथ-

## रामरुद्रीयम्.

मित्यत्रायः । सिद्धान्तिनस्तु तथात्वे मानाभाव इत्याशय इति ध्येयम् ॥ **पूर्वपक्षिकथिताशङ्कायामिति** ॥ घटकालस्य घटाभावसम्बन्धाघटकत्वेऽपि घटप्रागभावादिकाले घटात्यन्ताभावबुद्धपापत्तेरिति

नन्वस्त्वभावानामधिकरणात्मकत्वं लाघवादिति चेन्न । अनन्ताधिकरणात्मकत्वकल्पनापे-

**प्रभा.**

मतसिद्धरक्तप्रागभावादिविषयकत्वस्वीकारेणैव तादृशप्रतीत्युपपत्तौ तत्र रक्तात्यन्ताभावकल्पने गौरवात् । नच तादृशप्रतीतेः ध्वंसप्रागभावोभयविषयकत्वकल्पनापेक्षया एकात्यन्ताभावविषयकत्वे लाघवमिति वाच्यं अतिरिक्तसामान्याभावानङ्गीकर्तृनवीनमते तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकाभावकूटस्यैव रक्तत्वावच्छिन्नप्रतियोगिताकाभावत्वेन तादृशप्रतीतिविषयताया वक्तव्यतया तदपेक्षया प्रागभावध्वंसयोः तादृशप्रतीतिविषयत्वकल्पनाया एवोचितत्वादिति । ननु पदार्थास्सप्त कीर्तिता इति मूलमयुक्तमभाव एव मानाभावादित्यभिप्रायेण मीमांसकश्शङ्कते ॥ **नन्विति** ॥ **लाघवादिति** ॥ अतिरिक्तपादार्थत्वकल्पनापेक्षयेत्यादिः ।

**मञ्जूषा.**

योगित्वानिरूपितत्वेन वैलक्षण्यपुरस्कारेण वा भानमनावश्यकमिति बोध्यं नायं घट इत्यादिप्रतीतौ तु अन्योन्याभावत्वं भासते तदप्यनुयोगिताविशेषरूपत्वमेव ननु भावभिन्नत्वस्य तत्रान्तर्भावः घटत्वाभाववानित्यादिप्रतीत्यनापत्तेः अनुयोगिताविशेषस्य तादात्म्यसंबन्धावच्छिन्नप्रतियोगितानिरूपितानुयोगितात्वेन भानं तादात्म्यसंबन्धस्य प्रतियोगितावच्छेदकत्वानङ्गीकारेण न तु ध्वंसत्वादेरिवान्योन्याभावत्वस्यापि विलक्षणानुयोगितात्वेनैव भानमिति वदन्ति लघीयस्त्वादिति । ननु किमत्र लाघवं न तावद्भूतले घटो नास्ति पर्वते घटो नास्तीत्यनन्तप्रतीतिषु घटाभावत्वेन भूतलपर्वतादेरेव विषयत्वं नानाविषय-

**दिनकरीयम्.**

मन्यथा पूर्वमग्रेऽपि रक्ते मध्ये श्यामे च घटे रक्तं रूपं नास्तीत्याकारकप्रत्ययस्तस्य सामान्याभावावगाहित्वात् न चेदृशप्रत्ययो रक्तिमध्वंसाद्यवगाही पूर्वापररक्तिमध्वंसप्रागभाववति रक्तेऽपि तादृशाकारप्रत्ययप्रसङ्गादिति । न च रक्तत्वावच्छिन्नप्रतियोगिताकत्वं ध्वंसप्रागभावयोरव्याप्यवृत्ति तेनान्तराश्यामे रक्तं रूपं नास्तीति प्रत्ययस्तदा ध्वंसप्रागभावयोः सामान्यावच्छिन्नप्रतियोगिताकत्वस्वीकारात् न तु पूर्वापररक्तिमध्वंसप्रागभाववति रक्ते तत्र तदा तदनभ्युपगमादिति वाच्यं विनिगमनाविरहेण पदार्थान्तरध्वंसप्रागभावयोरपि तत्स्वीकारप्रसङ्गेन गौरवात् तदपेक्षयात्यन्ताभावस्यान्तरा श्यामादौ सम्बन्धत्वकल्पनेनैव लाघवादित्यन्यत्र विस्तरः । नन्वभावस्तु द्विधेत्यादिविभागोऽनुपपन्नोऽभाव एव मानाभावादित्यभिप्रायेण प्राभाकरः शङ्कते ॥ **नन्विति** ॥ अभावस्याधिकरणात्मकत्वे गौरवं प्रदर्श-

**रामरुद्रीयम्.**

शङ्कायामित्यर्थः ॥ **रक्तं रूपं नास्तीत्याकारकप्रत्यय इति** ॥ ननु तादृशप्रतीतौ नात्यन्ताभावो विषयः किंतु प्रागभावध्वंसावेव तथेत्युक्तमेवेत्याशङ्कायामाह ॥ **तस्येति** ॥ नास्तीति प्रत्ययस्येत्यर्थः ॥ **सामान्याभावावगाहित्वात्** सामान्यधर्मावच्छिन्नप्रतियोगिताकाभावविषयकत्वादित्यर्थः । ध्वंसप्रागभावयोश्च सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वानङ्गीकारादिति शेषः । ननु नास्तीति प्रत्ययस्य सामान्यधर्मावच्छिन्नप्रतियोगिताकाभावमात्रविषयकत्वे मानाभाव इत्याशङ्क्य निराचष्टे ॥ **न चेति** ॥ **पूर्वापरेति** ॥ पूर्वं रक्तः ततः श्यामः ततो रक्तस्ततः श्यामस्ततो रक्तो यो घटः तस्मिन् मध्यरक्ततादशायामित्यर्थः । क्रमिकरक्तरूपत्रयस्थले तु नेयमापत्तिः सम्भवति तादृशरक्तध्वंसप्रागभावयोर्नास्तीत्याकारकप्रतीतिनियामकत्वानङ्गीकारसम्भवात् उक्तस्थले तु श्यामतादशायां तादृशप्रतीत्या तयोरपि तादृशप्रतीतिनियामकत्वस्यावश्यकत्वादिति ध्येयम् । **अव्याप्यवृत्तित्वेनेति** ॥ कालिकाव्याप्यवृत्तित्वेनेत्यर्थः ॥ **पदार्थान्तरध्वंसेति** ॥ रक्तरूपध्वंसोत्पत्तिकालोत्पत्तिकतत्समानाधिकरणवायुसंयोगादिध्वंसेत्यर्थः । **गौरवादिति** ॥ विनिगमनाविरहेणानन्तध्वंसादौ रक्तत्वावच्छिन्नप्रतियोगिताकत्वकल्पनापत्त्या गौरवादित्यर्थः । अभावस्य अधिकरणरूपता मूले शङ्किता तत्र पूर्वग्रन्थसङ्गतिमाह ॥ **नन्वभाव इति** ॥ अतिरिक्तेत्यस्य सप्तपदार्था-

क्षयातिरिक्तकल्पनाया एव लघीयस्त्वात् । एवं चाधाराधेयभावोऽप्युपपद्यते । एवं च तत्तच्छब्दगन्धरसाद्यभावानां प्रत्यक्षत्वमुपपद्यते । अन्यथा तत्तदधिकरणानां तत्तदिन्द्रियाग्राह्यत्वात्प्रत्यक्षत्वं न स्यात् । एतेन ज्ञानविशेषकालविशेषाद्यात्मकत्वमभावस्येति प्रत्युक्तं अप्रत्यक्षत्वापत्तेः ॥ १२ ॥

## प्रभा.

नन्वभावस्यानन्ताधिकरणात्मकत्वकल्पनायाः अतिरिक्ताभावस्यानन्ताधिकरणसंबन्धकल्पनातुल्यतयाऽतिरिक्ताभावकल्पनागौरवं परमतिरिच्यत इत्यत आह ॥ **एवंचेति** ॥ नन्वभावाधिकरणकाभावप्रतियोगिकाभावस्याधिकरणस्वरूपत्वेऽपि आधारतावच्छेदकाधेयतावच्छेदकभेदात् यथाऽधाराधेयभावः स्वीकृतः तथा सर्वत्राप्यस्त्वित्यत आह ॥ **एवंचेति** ॥ **अन्यथेति** ॥ अभावस्याधिकरणात्मकत्व इत्यर्थः ॥ **प्रत्यक्षत्वं न स्यादिति** ॥ नच गृहनिष्ठशब्दाभावस्य गृहस्वरूपस्य गृहत्वेन श्रोत्रग्राह्यत्वाभावेऽपि शब्दाभावत्वेन श्रोत्रग्राह्यत्वे बाधकाभावः एवमुत्तरत्रापीति वाच्यं एकैकस्यैव वस्तुनः एकरूपेण तदिन्द्रियग्राह्यत्वरूपान्तरेण तदिन्द्रियाग्राह्यत्वस्वीकारे मानाभावः अन्यथा रूपादीनामैक्यमङ्गीकृत्यापि रूपत्वेन चक्षुर्ग्राह्यत्वस्य रसत्वेन चक्षुर्ग्राह्यत्वाभावस्य च स्वीकारसंभवेन तेषां भेद एव लुप्येतेत्यादिकमूहनीयम् ॥ **एतेनेति** ॥ उक्तदोषेण तदात्मकत्वक्ष्यमाणदोषेण चेत्यर्थः ॥ **ज्ञानविशेषेति** ॥ घटो नास्तीत्याकारकज्ञानमित्यर्थः ॥ **कालविशेषेति** ॥ घटो नास्तीत्याकारकज्ञानाधिकरणकाल इत्यर्थः ॥ १२ ॥

## मञ्जूषा.

तापत्तिरिति लाघवं भूतलत्वावच्छिन्नविषयतानिरूपितघटाभावविषयतापेक्षया पर्वतत्वावच्छिन्नविषयतानिरूपितायाः तस्याः सर्वमत एव भिन्नत्वात् नच सामान्यलक्षणाजन्ये घटत्वाभाववानित्यादिज्ञाने जलं गन्धाभाववदित्यादिज्ञाने घटत्वाभावत्वाद्यवच्छिन्नानन्तप्रकारताः त्वया स्वीकार्याः । मयातु एकैकैवेति लाघवमिति वाच्यं अभावत्वप्रमेयत्वादिना निखिलाभावावगाहिन्याः अभाववद्भूतलमित्यादिप्रतीतौ अभावत्वेन नानाप्रकारतास्वीकारापेक्षया तत्तद्भूतलादिनिष्ठैकैकप्रकारतास्वीकारपक्षेऽपि लाघवस्यानपायात् उच्यते घटत्वाद्यवच्छिन्नप्रतियोगितानिरूपितानुयोगितायाः एकैकस्याः अनन्ताधिकरणेषु संबन्धकल्पनापेक्षया एकैकस्मिन्नभावे तत्संबन्धकल्पने लाघवं नच घटत्वविशिष्टनिरूपितानुयोगितानन्ताधिकरणेषु अस्माभिः कल्पिता त्वया तु तादृशानुयोगिताविशिष्टो योऽतिरिक्ताभावः तत्प्रतियोगित्वं अनन्ताधिकरणेषु कल्पनीयमिति साम्यमिति वाच्यं घटाभाववद्भूतलमित्यादिप्रतीतौ घटत्वविशिष्टनिरूपितानुयोगिताविशिष्टस्य भूतलादौ संबन्धभानं (उभया) असिद्धमिति भूतलादिस्वरूपेषु तादृशानुयोगिताविशिष्टप्रतियोगिकत्वकल्पनस्य तवाप्यावश्यकत्वात् इयानेव विशेषः यत्तादृशसंबन्धप्रतियोगिकत्वं त्वन्मते

## दिनकरीयम्.

यितुमनन्तेत्युक्तम् ॥ **अतिरिक्तेति** ॥ भावातिरिक्तेत्यर्थः । अभावस्याधिकरणात्मकत्वेऽभेदे आधाराधेयभावानुपपत्तिरूपदोषः सोऽप्यस्मिन्मते नेत्याह ॥ **एवं चेति** ॥ अधिकरणापेक्षयातिरिक्तत्वे चेत्यर्थः । नन्वभावाधिकरणकाभावस्याधिकरणात्मकत्वे यथाधाराधेयभावोपपत्तिस्तथा सर्वत्राप्यस्त्वित्यतो दूषणान्तरमाह ॥ **एवं चेति** ॥ **अन्यथा** अभावस्याधिकरणात्मकत्वे **एतेन** वक्ष्यमाणदूषणेन ॥ १२ ॥

## रामरुद्रीयम्.

तिरिक्तार्थकत्वं न सम्भवति अभावस्यापि नैयायिकैः क्लृप्तत्वात् अतस्तदर्थमाह ॥ **भावातिरिक्त इति** ॥ **अभावस्याधिकरणात्मकत्व इति** ॥ गन्धाभावस्य जलादिरूपत्वेऽपि जलत्वादिनैव तेषां न घ्राणेन्द्रियग्राह्यता गन्धाभावत्वेन तु तेषामपि तथात्वमिष्टमेवेति प्राभाकराणामभिप्राय इति मन्तव्यम् ॥ १२ ॥

## मञ्जूषा.

तादृशानुयोगिताविशिष्टस्य भूतलादेः मन्मते त्वतिरिक्ताभावस्येति ॥ **एवंचेति** ॥ उक्तयुक्त्या अधिकरणातिरिक्ताभावसिद्धौ चेत्यर्थः ॥ **आधाराधेयभाव इति** ॥ भूतले घटो नास्तीति प्रतीतिसिद्धः आधाराधेयभाव इत्यर्थः ॥ **उपपद्यत इति** ॥ प्रायशो लोके भिन्नयोरेवाधाराधेयभावः प्रसिद्धः न त्वभिन्नयोः सचास्माकं सूपपादः भवतां तु घटाभावे न घटः घटभेदो न घट इत्यादिप्रतीतिसिद्धाधाराधेयभावन्तु अत्रापि गौणतया कल्पने प्रयासगौरवमित्यर्थः । उक्तयुक्तेरनतिसाधकतया पूर्वोपदर्शितप्रबलयुक्ताववास्य उपोद्वलकत्वमिति सूचनया एवंचेत्युक्तं अपिशब्दश्च प्रयुक्तः ॥ **प्रत्यक्षत्वमिति** ॥ श्रोत्रेण शब्दाभावं जानामीत्यादिप्रतीतिसिद्धं प्रत्यक्षविषयत्वमित्यर्थः । इयमपि युक्तिः न बलीयसी परैरभावस्यानुपलब्धिप्रमाणगम्यत्वाङ्गीकारात् किन्त्वनुभवेन प्रथमं प्रत्यक्षत्वं प्रसाध्य पश्चात्तदनुपपत्तिः अभावातिरिक्तत्वं हेतुतया उपन्यसनीया नच तावतापि सा स्थिरीभवति तत्तदाधिकरणानां तत्तद्रूपेण तत्तदिन्द्रियाग्राह्यत्वेऽपि तत्तदभावत्वेन रूपेण तथात्वसंभवात् यथा नैयायिकैकदेशिभिः रूपाभावाधिकरणकाभावस्य रूपाभावानतिरिक्तत्वेऽपि तस्य रूपाभावत्वेनैव चाक्षुषविषयता नतु रसाभावत्वेन तद्वत् । ततश्च इयमपि युक्तिः प्रथमामेव युक्तिं उपोद्वलयतीत्याशयेन एवंचेत्युक्तम् ॥ **एतेनेति** ॥ पूर्वोक्तयुक्तित्रयेणेत्यर्थः ॥ **ज्ञानविशेषेति** ॥ यस्मिन् काले भूतले घटाभाववत्त्वं त्वया स्वीक्रियते तत्कालोत्पन्नानि तद्भूतलविषयकाणि भूतले घटो नास्तीत्याकारकाणि इदं भूतलमित्याद्याकारकाण्यपि वा ज्ञानान्येव भूतले घटो नास्तीति प्रतीतौ घटत्वविशिष्टनिरूपितानुयोगिताप्रकारेण भासन्त इत्यर्थः ॥ **कालविशेषेति** ॥ यस्मिन्काले भूतले घटो नास्ति तत्तत्काल एव भूतले घटो नास्तीत्यादिप्रतीतौ तादृशानुयोगिता प्रकारेण भासत इत्यर्थः ॥ **प्रत्युक्तमिति** ॥ घटत्वविशिष्टनिरूपितानुयोगितायाः अनन्तासु ज्ञानव्यक्तिषु कालव्यक्तिषु च कल्पने गौरवादिति भावः । एवं विषयतासंबन्धस्य वृत्तिनियामकत्वाभावात् भूतलज्ञानयोः आधाराधेयभावो न स्यात् एवं कालस्य भूतलाधारत्वं सिद्धं क्लृप्तं नतु तदाधेयत्वं (अथ) भूतलस्याधारत्वं अभावस्याधेयत्वमिति एतादृशाधाराधेयभावो न स्यादिति इदंच वक्ष्यमाणस्य कर्मादेरेव कालोपाधित्वमाश्रित्य जन्यमात्रस्य तथात्वे तु गगने रूपाभाव इत्यत्र बोध्यं इयमपि युक्तिः न विचारक्षमा ज्ञानस्य विषयतासंबन्धेन वृत्तित्वाभावेऽपि अतिरिक्ताभावस्येव ज्ञानात्मकाभावस्यापि स्वरूपसंबन्धेन वृत्तित्वसंभवात् एवं कालस्थलेऽपि बोध्यं अभावस्य ज्ञानात्मकत्वे चाक्षुषादिप्रत्यक्षविषयत्वं न स्यात् तस्य बहिरिन्द्रियाग्राह्यत्वात् एवं कालविशेषात्मकत्वेऽपि तस्यातीन्द्रियत्वादिति इयं तु न पूर्ववदस्थिरा नच ज्ञानस्य ज्ञानत्वेन रूपेण बहिरिन्द्रियाग्राह्यत्वेऽपि घटाभावत्वेन रूपेण तथात्वे बाधकाभावः एवं कालस्य कालत्वेन रूपेणातीन्द्रियत्वेऽपि घटाभावत्वेन रूपेण प्रत्यक्षत्वे बाधकाभाव इति वाच्यं रूपान्तरेणापि तयोः तादृशप्रत्यक्षविषयत्वासंभवात् तथाहि भूतले घटो नास्तीतिप्रतीतौ घटाभावत्वेन रूपेण किं स्वात्मकज्ञानस्य विषयता उत पुरुषान्तरीयस्य नाद्यः प्रत्यक्षे विषयस्य कारणत्वात् पूर्वक्षणे च तदभावात् न द्वितीयः एकस्यां बुद्धौ पुरुषान्तरीयाणां भूयसीनां तादृशज्ञानव्यक्तीनां विषयत्वकल्पने गौरवात् एवं कालविशेषस्यापि न तादृशप्रत्यक्षविषयत्वसंभवः तादृशज्ञानोत्पत्तिक्षणात्मककालस्य पूर्ववृत्तित्वाभावात् पूर्वक्षणात्मककालस्य च तत्कालेऽभावात् विषयस्य पूर्वकालवृत्तितयेव कार्यसहभावेनापि हेतुतायाः सिद्धान्तसिद्धत्वात् नच ज्ञानोत्पत्तिक्षणतत्पूर्वक्षणोभयावस्थायिस्थूलकालस्य एताद्विषयत्वमास्तामिति वाच्यं तथापि तादृशक्षणद्वयावस्थायिनानापदार्थरूपस्थूलकालस्य एकैकतादृशज्ञानविषयत्वकल्पने गौरवात् एवंच अधिकरणात्मकत्वपक्ष इव नात्र पक्षे एतद्युक्तेः फल्गुतेति प्रदर्शनाय एतेनेत्यनेन उक्तामपि तृतीययुक्तिं पुनः पठति ॥ **अप्रत्यक्षत्वापत्तेरिति** ॥ प्रत्यक्षनिरूपितलौकिकविषयताशून्यत्वापत्तेरित्यर्थः । चक्षुषा घटाभावं पश्यामीति सार्वजनीनानुभवसिद्धायाः प्रत्यक्षविषयताया दुरपह्नवतया तत्रेष्टापत्तेरयोगादिति भाव इत्यभावग्रन्थः ॥ १२ ॥

**सप्तानामपि साधर्म्यं ज्ञेयत्वादिकमुच्यते ॥ १३ ॥**

**इदानीं पदार्थानां साधर्म्यवैधर्म्ये वक्तुं प्रक्रमते ॥ सप्तानामिति ॥ समानो धर्मो येषां ते सधर्माणस्तेषां भावः साधर्म्यं समानो धर्म इति फलितोऽर्थः । एवं विरुद्धो धर्मो येषां ते विधर्माणस्तेषां भावो वैधर्म्यं विरुद्धो धर्म इति फलितोऽर्थः । ज्ञेयत्वं ज्ञानविषयता सा च सर्वत्रैवास्ति । ईश्वरज्ञानविषयतायाः केवलान्वयित्वात् । एवमभिधेयत्वप्रमेयत्वादिकं बोध्यम् ॥ १३ ॥**

**प्रभा.**

पदार्थनिरूपणं विना पदार्थानां साधर्म्यवैधर्म्यनिरूपणं न संभवतीति बोधनायाह ॥ **इदानीमिति** ॥ पदार्थनिरूपणानन्तरमित्यर्थः । तदनिरूपणे तत्पदार्थसाधर्म्यतया साधर्म्यस्य निरूपणासंभवादिति भावः ॥ **वक्तुमिति** ॥ ज्ञानजनकशब्दप्रयोगेच्छावानित्यर्थः ॥ **उपक्रमत इति** ॥ सामान्यधर्मप्रकारकज्ञानजनकशब्दानुकूलकृतिमानित्यर्थः । तथाच सामान्यधर्मप्रकारकज्ञानाभावे विशेषधर्मप्रकारकजिज्ञासानुदयात् विशिष्य साधर्म्यवैधर्म्यनिरूपणस्यासाङ्गत्यापत्त्या प्रथमतस्सामान्यधर्मनिरूपणस्यावश्यकत्वा-

**मञ्जूषा.**

**इदानीमिति** ॥ अभावान्तपदार्थनिरूपणोत्तरकालमित्यर्थः । तदनिरूपणे तत्तत्पदार्थघटितत्वेन तत्तत्पदार्थवृत्तित्वेन च साधर्म्याणां ज्ञानासंभवादिति भावः ॥ **साधर्म्यवैधर्म्ये इति** ॥ अत्र यद्यपि यदेव साधर्म्यं तदेव वैधर्म्यमिति तयोर्भेदाभावात् द्वन्द्वोऽनुपपन्नः तथापि तद्वृत्तिधर्मस्तस्य साधर्म्यं तदवृत्तिधर्मस्तु तस्य वैधर्म्यमिति रीत्या तयोर्भेदसंभावनया द्वन्द्वसंगतिः ॥ **वक्तुमुपक्रमत इति** ॥ नन्वत्र साधर्म्यवैधर्म्ये वक्तीत्येव उच्यतां किं वक्तुमुपक्रमत इत्यनेनेति चेदुच्यते नात्रैकेन प्रयत्नेन साधर्म्यवैधर्म्ययोरुभयोरपि वचनमस्ति किन्तु सप्तानामपीत्यादिना विशेषगुणयोगिन इत्यन्तेन साधर्म्यवचनं पश्चाद्युक्तमित्यादिना वैधर्म्यवचनं साधर्म्याण्यपि नैकेन प्रयत्नेन सर्वाण्युच्यन्ते

**दिनकरीयम्.**

परस्परधर्मतापन्नानां सप्तपदार्थानामेव परस्परभेदकत्वं ज्ञापयितुमाह ॥ **इदानीमिति** ॥ पदार्थनिरूपणानन्तरमित्यर्थः । तदनिरूपणे तत्तत्पदार्थघटितस्य तत्तत्पदार्थस्य साधर्म्यतया निरूपणासम्भवादिति भावः । समानो धर्मः सधर्मस्तस्य भावः साधर्म्यमेवं वैधर्म्यमित्यत्रापि भ्रमवारणाय बहुव्रीहिमाह ॥ **समानो धर्मो येषामिति** ॥ **केवलान्वयित्वादिति** ॥ विषयभेदेन विषयताया भेदेऽपि ज्ञानविषयतात्वेन केवलान्वयित्वमस्त्येवेति भावः । एवमग्रेऽपि । ज्ञेयत्वादीत्यत्रादिपदार्थं दर्शयति ॥ **एवमभिधेयत्वेति** ॥ अभिधेयत्वमभिधाविषयत्वमभिधा च सङ्केतप्राह्योऽधिकः पदार्थ इति मीमांसकाः । सङ्केतभिन्नायामभिधायां मानाभावात्सङ्केत एवाभिधेति नैयायिकाः । प्रमेयत्वादिकमित्यादिनाऽस्तित्वपरिग्रहः । तच्च कालसम्बन्धित्वम् ॥ १३ ॥

**रामरुद्रीयम्.**

मूले साधर्म्यवैधर्म्यनिरूपणयोः प्रयोजनस्यानुक्तत्वात् तत्प्रदर्शयितुमाह ॥ **परस्परेति** ॥ **ज्ञानविषयतात्वेनेति** ॥ वृत्तिमदभावाप्रतियोगित्वं न केवलान्वयित्वं केवलान्वयिनोऽपि द्वित्वादिना अभावसत्त्वात् किन्तु वृत्तिमदभावप्रतियोगितानवच्छेदकधर्मवत्त्वमेव तथा एवं च घटादिनिष्ठविषयताव्यक्तेरपि ज्ञानविषयतात्वमादाय केवलान्वयित्वमक्षतमेवेति भावः ॥ **कालसम्बन्धित्वमिति** ॥ इदं च गगनादीनामपि कालवृत्तित्वमभ्युपेत्य अवृत्तिगगनादीनां कालावृत्तित्वे अस्तित्वस्य केवलान्वयित्वानुपपत्तिः । युक्तं चैतत् । कथमन्यथा गगनादीनां नियतपूर्ववृत्तित्वघटितशब्दादिकारणत्वमिति मन्तव्यम् ॥ १३ ॥

## प्रभा.

दिति भावः । यद्यपि द्रव्यं गुणस्तथेत्यादिविभागवाक्यघटकपदार्थशब्देन सप्तानां ज्ञेयत्वादिकं साधर्म्यं सूचितं तथापि स्फुटतरप्रतिपत्त्यर्थं सप्तानामपीत्यादिना प्रतिपाद्यत इति न वैयर्थ्यम् ॥ **मूले सप्तानामिति** ॥ सप्तविभाजकधर्मान्यतमविशिष्टानामित्यर्थः । तादृशान्यतमस्य लक्ष्यतावच्छेदकत्वसंपत्तये अपिशब्दप्रयोगः तदप्रयोगे तादृशान्यतमाश्रययत्किंचिद्वृत्तिधर्मस्य लक्ष्यतावच्छेदकत्वभ्रमाधीनलक्षणातिव्याप्तिशङ्का स्यात् उक्तसर्वसमुच्चायकापिशब्दप्रयोगे तु सर्वेषामपि लक्ष्यतावच्छेदकत्वप्राप्त्या तावन्मात्रवृत्तिधर्मस्य लक्ष्यतावच्छेदकत्वप्राप्त्या च लक्षणातिव्याप्तिशङ्कानुदयादिति भावः । साधर्म्यवैधर्म्यशब्दयोः कर्मधारयसमासत्वभ्रमनिराकरणाय बहुव्रीहिमाह ॥ **मुक्तावल्यां समानो धर्मो येषामिति** ॥ **केवलान्वयित्वादिति** ॥ तथाचेश्वरज्ञानविषयत्वादीनां विषयभेदेन भिन्नत्वेऽपि ज्ञानविषयतात्वेन केवलान्वयित्वादिति भावः । ज्ञेयत्वादिकमित्यत्रादिपदार्थमाह ॥ **एवमिति** ॥ अभिधा चेश्वरेच्छारूपा अतिरिक्तपदार्थरूपा वेत्यन्यदेतत् । प्रमेयत्वादिकमित्यादिना अधिकरणत्वपरिग्रहः ॥ १३ ॥

## मञ्जूषा.

किंतु क्रमेण, तथाच यथा बहून् घटानुत्पिपादयिषति प्रथमघटं कुर्वति घटानुत्पादयितुमुपक्रमत इति प्रयोगस्तथेहापि । ततश्च साधर्म्यवैधर्म्यवचनप्रयोजकप्रथमयत्नवानित्यर्थः । अस्मद्गुरुचरणास्तु वक्तुमिति ज्ञानजनकशब्दप्रयोगेच्छावानित्यर्थः उपक्रमत इति सामान्यधर्मप्रकारकज्ञानजनकशब्दानुकूलकृतिमानित्यर्थः सामान्यधर्मप्रकारकज्ञानाभावे विशेषधर्मप्रकारकजिज्ञासानुदयाद्विशिष्य साधर्म्यवैधर्म्यनिरूपणस्यासाङ्गत्यापत्त्या प्रथमतस्सामान्यधर्मनिरूपणस्यावश्यकत्वादिति भाव इति व्याचक्रुः । एतन्मते द्रव्यादयः पञ्च भावा इत्यारभ्यैव साधर्म्यनिरूपणं वैधर्म्यनिरूपणञ्च । सप्तानामपि साधर्म्यमित्यत्र साधर्म्यशब्दस्तु सामान्यधर्मपर इति बोध्यम् ॥ **मूले सप्तानामिति** ॥ लक्ष्यनिर्देशः । तेन सप्तत्वं लक्ष्यतावच्छेदकमिति लभ्यते तच्च द्रव्याद्यन्यतमत्वं । ज्ञेयत्वपदार्थमाह ॥ **मुक्तावल्यां ज्ञेयत्वं ज्ञानविषयत्वमिति** ॥ नन्वत्र ज्ञानविषयत्वं निरूपितत्वसंबन्धेन ज्ञानविशेषितं विषयत्वं तत्र विषयत्वमात्रस्यैव सम्यक्त्वात् ज्ञानीयत्वनिवेशनमफलमिति चेदुच्यते प्रतिपत्तिसौकर्यार्थं ज्ञानीयत्वमुपात्तं तथाहि यद्यपि विषयत्वमात्रं लक्षणमुचितं तथापि तन्न केवलं पामरैस्सुप्रतिपादं अशास्त्रविदो हिलोके ज्ञायतेऽयं प्रमीयतेऽयमभिधीयतेऽयमिष्यतेऽयं द्विष्यतेऽयमित्येव प्रतिपद्यन्ते नतु विषयोऽयमित्यतः प्रतियोग्यनुपरागेण दुष्प्रतिपादा विषयता तदुपरागेणैव लक्षणीभवितुमर्हति एवंच विषयतायाः प्रतियोगितावच्छेदकभेदादनेकलक्षणत्वमपि उपपद्यते । ज्ञानविषयत्वं प्रमाविषयत्वमभिधाविषयत्वं शाब्दबोधविषयत्वमनुमितिविषयत्वमित्यादि । अथवा विषयतानुगमकस्य विषयतात्वस्य एकस्याङ्गीकारे विषयतात्वेन रूपेण विषयताया लक्षणत्वं युज्यते ये तु नाङ्गीकुर्वन्ति तेषां मते विषयतात्वं न लक्षणप्रविष्टं किंतु निरूपितत्वसंबन्धेन ज्ञानीयस्यैव लक्षणत्वं एवमतिरिक्तविषयतात्वाङ्गीकर्तृणामपि ज्ञानीयस्य लक्षणत्वं न विरुध्यते तच्च ज्ञानीयं किमित्याकाङ्क्षायां विषयत्वं तदिति प्रदर्शनाय ज्ञानविषयत्वमिति लेखनम् । एवंच लक्षणीभूतविषयतानुगमकतावच्छेदकीभूतज्ञानत्वादीनां भेदान्नानालक्षणत्वं ज्ञानीयवत्त्वं प्रमीयवत्त्वं अभिधीयवत्त्वमित्यादि । अथवा विषयतासंबन्धेन ज्ञानमेव लक्षणं विषयतासंबन्धेन ज्ञानस्य केवलान्वयित्वलाभायैव ज्ञानविषयत्वस्य केवलान्वयित्वाभिधानम् । एवंच लक्षणतावच्छेदकानां भेदान्नानालक्षणत्वं विषयतासंबन्धेन ज्ञानं प्रमा अभिधेत्यादि । केचित्तु स्वाश्रयविषयतासंबन्धेन ज्ञानत्वप्रमात्वादेरेव लक्षणत्वमिच्छन्ति । स्यादेतत् तद्वद्विशेष्यकत्वे सति तत्प्रकारकत्वरूपप्रमात्वस्य विषयभेदेन भिन्नतया एकविषयघटितप्रमात्वग्रहणे अन्यविषये अव्याप्तिः ईश्वरप्रमायास्सर्वविषयकत्वेऽप्येकैकविधप्रमात्वविशिष्टनिरूपितविषयताया अन्यत्राभावादेकैकविधप्रमात्वस्यैवोपलक्षणविधया लक्षणघटकतां स्वीकृत्य भगवत्प्रमामादाय [सर्वत्र लक्षणसङ्गमने] च तद्वघटितत्वेनैव

## द्रव्यादयः पञ्च भावा अनेके समवायिनः ।

**द्रव्यादय इति ॥** द्रव्यगुणकर्मसामान्यविशेषाणां साधर्म्यमनेकत्वं समवायित्वं च । यद्यप्यनेकत्वमभावेऽप्यस्ति तथाप्यनेकत्वे सति भावत्वं पञ्चानां साधर्म्यम् । तथा

### प्रभा.

द्रव्यादिषण्णां भावत्वस्य स्फुटत्वात्तदुपेक्ष्य पञ्चानां साधर्म्यमाह ॥ **मूले द्रव्यादय इति ॥ मुक्तावल्यां अनेकत्वे सति भावत्वमिति** ॥ तथाच मूलस्थबहुवचनान्तभावपदं विधेय-

### मञ्जूषा.

भगवत्प्रमाया लक्षणघटकत्वसंभवेन प्रमात्वानिवेशनमफलं लक्षणस्य लक्षणान्तरादूषकत्वेऽपि प्रमात्वघटकयोः तद्वद्विशेष्यकत्वतत्प्रकारकत्वयोरन्यतरवैयर्थ्यं इष्टापत्तौ च तादृशलक्षणस्य प्रमेयत्वपदप्रतिपाद्यत्वानुपपत्तिः किं बहुना तद्वद्विशेष्यकत्वं तद्वन्निरूपिता विशेष्यता तस्याश्च तद्वन्निरूपितत्वेन विशेष्यतात्वेन वा निवेशोऽस्तु नतु मिळितरूपेण प्रयोजनाभावादेवं तत्प्रकारकत्वमित्यत्राप्यवसेयम् एतेन केवलान्वयीभूतगगनाभावादिप्रकारकत्वघटितस्य प्रमात्वस्य लक्षणघटकत्वे तस्य विशेषणविधया निवेशेऽपि नानुपपत्तिरिति प्रत्युक्तम् तत्रापि वैयर्थ्यस्य दुर्वारत्वात् । उच्यते प्रमात्वमिह सद्विषयकत्वं विषयितासंबन्धेन सद्विशिष्टत्वमिति यावत् । ततश्च विषयितासंबन्धेन सद्विशिष्टस्य विषयतासंबन्धेन लक्षणत्वं एतस्य च प्रमेयत्वपदप्रतिपाद्यत्वमप्युपपद्यते । चार्वाकादयो हि सद्विषयकं ज्ञानं प्रमा असद्विषयकं ज्ञानमप्रमेत्याचक्षते स्वीकुर्वन्ति च जात्यादेरसत्तां तन्निरासकमिदं लक्षणं यथा हि घटवृत्तित्वविशिष्टं घट एव नान्यस्मिन् एवं विषयितासंबन्धेन सद्विशिष्टं विषयतासंबन्धेन सत्येव स्यान्नासति अतः प्रतीयते सप्तामी पदार्थाःसन्त इति सत्त्वञ्च वस्तुत्वं यद्यपि वस्तुत्वमेव लक्षणं कर्तुमुचितं तथापि यथा सान्निवेशे न वैयर्थ्यं अत एव मुक्तावळीस्थेन प्रमेयत्वादिकमित्यादिपदेन तदेव संजग्राह महादेवः ॥ १३ ॥

**मूले द्रव्यादय इति** ॥ द्रव्यमादिर्येषामिति विग्रहः । येषामित्यत्र समुदायघटकत्वं षष्ठ्यर्थः । अन्वयश्चास्यादिपदोपस्थाप्ये प्रथमपठितत्वाविशिष्टे । तथाच यद्घटितसमुदायघटकत्वविशिष्टप्रथमपठिताभिन्नं द्रव्यमिति विग्रहवाक्यार्थः । पाठप्राथम्यञ्च द्रव्यं गुण इत्यादिप्रागुक्तविभागानुसारेण ज्ञेयम् । ततश्च द्रव्याभिन्नप्रथमपठितघटितसमुदायघटका इति समासार्थः । ते कियन्तो ग्राह्या इत्यतः **पञ्चेति** ॥ तथाच पञ्चत्वमिह लक्ष्यतावच्छेदकं तच्च द्रव्यगुणकर्मसामान्यविशेषान्यतमत्वं ॥ **मुक्तावल्यामनेकत्वं समवायित्वञ्चेति** ॥ नन्वत्र भावत्वविशेषणं मूल एव तिष्ठति नतु व्याख्यात्रा पूरणीयं तथाच द्रव्यगुणकर्मसामान्यविशेषाणां साधर्म्यं भावत्वे सत्यनेकत्वं समावायित्वञ्च । अभावानामनेकत्वेऽपि न भावत्वमिति वक्तव्यं नतु प्रथममनेकत्वमित्येतावदुक्त्वा यद्यप्यनेकत्वमभावानामस्ति तथाप्यनेकत्वे सति भावत्वमित्युक्तिर्युक्ता तथा सति भावत्वांशस्य व्याख्यातृपूरितत्वावगमेन सन्दर्भविरोधापत्तेरिति चेदत्र केचित् भाष्ये पञ्चानामनेकत्वमित्येतावदेव पठितमस्ति नतु तत्र भावत्वं

### दिनकरीयम्.

द्रव्यादीनां षण्णां साधर्म्यं भावत्वं स्पष्टमतस्तदुपेक्ष्य द्रव्यादीनां पञ्चानां साधर्म्यं मूले प्रपञ्चितम् । **द्रव्यादय इत्यादिना** ॥ **अनेकत्वे सति भावत्वमिति** ॥ एवं च मूले द्रव्यादयः पञ्चे-

### रामरुद्रीयम्.

षड्भावपदार्थानां मूले साधर्म्यानुक्त्या तत्र न्यूनतां परिजिहीर्षुराह ॥ **द्रव्यादीनामिति** ॥ ननु द्रव्यादयः पञ्च भावा इति कारिकायां अनेकत्वमात्रं साधर्म्यमुक्तं तत्कथमनेकत्वे सति भावत्वं मुक्तावल्यां साधर्म्यमुक्तं मूलतस्तदलाभादित्याशङ्कां परिहरति ॥ **एवं चेति** ॥ उक्तार्थे भाष्यकृतां

**चानेकभाववृत्तिपदार्थविभाजकोपाधिमत्त्वमिति फलितोऽर्थः । तेन प्रत्येकं घटादावाकाशादौ च नाव्याप्तिः । समवायित्वं च समवायसम्बन्धेन सम्बन्धित्वं न तु समवायवत्त्वं सामान्यादावभावात् ॥**

## प्रभा।

वाक्यघटकमिति बोध्यम् ॥ **अनेकभाववृत्तीति** ॥ अत्रानेकभाववृत्तित्वं भावनिष्ठाधिकरणताद्वयनिरूपितवृत्तित्वं स्ववृत्तित्वस्वान्यवृत्तित्वोभयसंबन्धेन भावविशिष्टत्वं वा तेनानेकभाववृत्तित्वं स्वप्रतियोगिवृत्तित्वस्वसामानाधिकरण्योभयसंबन्धेन भेदविशिष्टत्वे सति भाववृत्तित्वमिति केषांचिद्व्याख्याने प्राप्तस्योदक्षरत्वदोषस्य पदार्थविभाजकोपाधावनेकवृत्तित्वभाववृत्तित्वयोः विशेषणत्वप्रयुक्तगौरवरूपदोषस्य चात्र नावकाशः । अत्र सर्वत्र वृत्तित्वं सर्वाधारताप्रयोजकसंबन्धभिन्नसंबन्धेन बोध्यं तेन कालिकादिसंबन्धेन वृत्तित्वमादाय समवायादौ नातिव्याप्तिः । भावत्वमादाय समवायेऽतिव्याप्तिवारणाय पदार्थविभाजकोपाधीति ; उपाधिमत्ता च सर्वाधारताप्रयोजकसंबन्धभिन्नसंबन्धेन बोध्या तेन कालिकसंबन्धमादाय ध्वंसे नातिव्याप्तिः ॥ **समवायसंबन्धेन संबन्धित्वमिति** ॥ समवायप्रतियोगित्वसमवायानुयोगित्वान्यतरवत्त्वमित्यर्थः ॥ **नतु समवायवत्त्वमिति** ॥ नतु समवायानुयोगित्वमात्रमित्यर्थः । अत्र कपालसमवेतवृत्तिपदार्थविभाजकोपाधिमत्त्वं द्रव्यादिचतुर्णां लक्षणं एतेषां तन्तुसमवेतत्वघटितलक्षणान्तरसंभवेऽपि प्रकृतलक्षणे तन्तुसमवेतत्वस्याप्रविष्टत्वाल्लक्षणस्य लक्षणान्तरादूषकत्वाच्च न दोषः सत्ताव-

## मञ्जूषा।

कण्ठोक्तम् । तत्र न्यूनतां स्फोरयितुमियं भूमिकाऽऽरब्धा विश्वनाथेन । तत्र हि प्रथममनेकत्वमि-

## दिनकरीयम्।

त्युद्देश्यपदं भावा अनेक इति विधेयपदमिति बोध्यम् । अतएव भाष्ये पञ्चानामित्युक्तं न तु पञ्चभावानामिति ॥ **अनेकभाववृत्तीत्यादि** ॥ अत्र चानेकभाववृत्तित्वं स्वप्रतियोगिवृत्तित्वस्वसामानाधिकरण्योभयसम्बन्धेन भेदविशिष्टत्वे सति भाववृत्तित्वम् । तेन गुणादौ सङ्ख्यारूपस्यानेकत्वस्याभावेऽपि नाव्याप्तिः । भावत्वरूपतादृशधर्ममादाय समवायेऽतिव्याप्तिवारणाय पदार्थविभाजकोपाधीति । उपाधिमत्ता च समवायस्वरूपान्यतरसम्बन्धेन तेन कालिकसम्बन्धेन ध्वंसस्य तादृशोपाधिमत्त्वेऽपि न क्षतिः । समवायेनोपाधिमत्त्वविवक्षणे तु सामान्यादावव्याप्तिः स्यादतस्तन्नोक्तं अन्यतरत्वघटकस्वरूपं तु कालिकसम्बन्धभिन्नं ग्राह्यं तेन ध्वंसे नातिव्याप्तिः । अत्र च समवेत-

## रामरुद्रीयम्।

सम्मतिमाह ॥ **अत एवेति** ॥ **पञ्चभावानामिति** ॥ तथाच भावत्वस्यापि उद्देश्यतावच्छेदककोटिप्रवेशस्य भाष्यकृदनुमतत्वे पञ्चानामित्यपहाय पञ्चभावानामनेकत्वमित्येव ब्रूयादिति भावः । नन्वनेकभाववृत्तीत्यत्र अनेकत्वं यदि बहुत्वसङ्ख्या तदा गुणादौ सङ्ख्याविरहात्तेष्वव्याप्तिः यदि च यत्किञ्चिदेकभिन्नत्वं तदा समवायेऽतिव्याप्तिः यदि तु एकत्वावच्छिन्नसामान्यभेदः तत्र चैकत्वं यदि सङ्ख्यारूपं तदोक्तातिव्याप्तितादवस्थ्यम् । यदि तन्मात्रविषयकबुद्धिविषयत्वं तदाऽप्रसिद्धिः स्वमात्रविषयकबुद्धिविषयत्वरूपैकत्वस्य केवलान्वयितया तदवच्छिन्नसामान्यभेदाप्रसिद्धेरित्याशङ्कानिरासाय अनेकभाववृत्तित्वं निर्वक्ति ॥ **अत्र चेति** ॥ अभावत्ववारणाय भाववृत्तित्वनिवेशः समवायत्ववारणाय सत्यन्तनिवेशः सत्यन्ते उभयसम्बन्धनिवेशोऽपि तद्वारणायैवेति बोध्यम् । उपाधिमत्तायां सम्बन्धविवक्षायाः फलमाह ॥ **तेनेति** ॥ **अतस्तन्नोक्तमिति** ॥ स्वरूपेणोपाधिमत्त्वोक्तौ द्रव्यत्वादीनां दैशिकस्वरूपसम्बन्धे मानाभावेन द्रव्यादिष्वव्याप्तिरित्यपि द्रष्टव्यम् । पदार्थचतुष्टयस्य साधर्म्यानुक्त्या मूलस्य न्यूनतां परिहरन्नाह ॥ **अत्र चेति** ॥ सत्तावन्तस्त्रयस्त्वाद्या इत्यत्र आद्यत्रयमुद्दिश्य

मञ्जूषा।

अनेन भाष्यमनूदितप्रायं यद्यपीत्यनेन तद्दूषितप्रायं तथापीत्यनेन च स्वीयमूलस्य निर्दोषत्वमाविष्कृतमित्याचक्षते । वयन्तु ब्रूमः द्रव्यगुणकर्मसामान्यविशेषाणां साधर्म्यं भावत्वे सत्यनेकत्वं समवायित्वञ्चेत्युक्ते भावत्वे सतीत्यस्य समवायित्वमित्यत्राप्यनुवृत्तिशङ्का स्यात् अतस्तत्र सत्यन्तन्नोपात्तं पश्चाच्च प्रयोजनप्रदर्शनपूर्वकं प्रथमलक्षणे भावत्वनिवेशावश्यकत्वं प्रदर्शितमिति न कश्चिद्विरोधः ॥ प्रत्येकं घटादौ नाव्याप्तिरिति ॥ नन्विह नासंभव इति वक्तव्यं कथमुच्यते नाव्याप्तिरिति तथाहि किञ्चिल्लक्ष्यवृत्तित्वे सति किञ्चिल्लक्ष्यावृत्तित्वमव्याप्तिः नचेहानेकत्वं क्वचिदपि लक्ष्ये वर्तते अनेकत्वं ह्येकभिन्नत्वं तच्च न क्वचिदपि संभवति सर्वस्याप्येकत्वाश्रयत्वात् अथैवं नासंभव इत्यपि न संभवति प्रसिद्धस्य हि पदार्थस्य लक्ष्ये क्वाप्यवर्तमानत्वमसंभवः एकभिन्नत्वं तु न क्वचिदपि प्रसिध्यतीति चेत्तर्हि नाप्रसिद्धिरित्येवोच्यताम् । अथोभयादिवृत्तिधर्मावच्छेदेनैकत्वावच्छिन्नप्रतियोगिताकभेदः प्रसिध्यतीति चेत्तर्हि नाव्याप्तिरित्यपि अप्रसक्तप्रतिषेधः उभयादिवृत्तिधर्मावच्छेदेन एकत्वावच्छिन्नप्रतियोगिताकभेदस्य घटादौ सत्त्वात् । अथ प्रत्येकवृत्तिधर्मावच्छेदेन तादृशभेदो नास्तीति चेन्मास्तु किमेतावता नहि स्ववृत्तियावद्धर्मावच्छेदेन तादृशभेदवत्त्वं लक्षणमिति वयमाचक्ष्महे येन प्रत्येकधर्मावच्छेदेन तदभावो दोषस्स्यात् किन्तु यथाकथंचित्तादृशभेदवत्त्वं लक्षणमित्येव । अथैवं समवायेऽपि समवायघटोभयवृत्तिधर्मावच्छेदेन तादृशभेदवत्त्वादतिव्याप्तिस्स्यादिति चेदास्तामतिव्याप्तिः नैतावता नाव्याप्तिरिति ग्रन्थसङ्गमननिष्पत्तिः प्रत्युतासङ्गतिरेव त्वया सूचिता समवाये नातिव्याप्तिरित्येव वक्तव्यतापातात् । अथ प्रत्येकवृत्तिधर्मावच्छेदेन तादृशभेदवत्त्वं विवक्षणीयमन्यथा समवायेऽतिव्याप्तेः तथाच घटादावव्याप्तिप्रसक्तिरिति चेत्तथा विवक्षायामप्यप्रसिद्धिरेव स्यान्नाव्याप्तिरित्यसङ्गतितादवस्थ्यात् । एतेन एकत्वभिन्नसंख्यापर्याप्त्यधिकरणत्वस्वरूपस्य पारिभाषिकानेकत्वस्य तात्पर्यविषयत्वेऽपि न निस्तारः तथाप्यव्याप्तिशङ्काया अनवकाशात् सा ह्यत्र न गुणरूपा विवक्षिता तथा सति गुणादावेवाव्याप्तेः कथनीयत्वापातात् किन्तु दीधितिकृन्मतानुसारेणातिरिक्ता अपेक्षाबुद्धिविशेषाविषयत्वरूपा वा तत्पर्याप्त्यधिकरणत्वञ्च यद्युभयादेस्तर्हि तदनतिरिक्ते प्रत्येकघटादौ कथमव्याप्तिप्रसक्तिरिति । अत्रोच्यते अनेकपदमिह बहुधा व्युत्पादयन्ति शास्त्रज्ञाः । तथाहि अनेकपदमेकत्वावच्छिन्नप्रतियोगिताकभेदपरं एकत्वावच्छिन्नप्रतियोगिताकाश्च यावन्तो भेदा लोकप्रसिद्धास्तावन्तस्सर्वेऽपि यथासंभवं धर्मिषु प्रकारतया भासन्ते ततश्च चैत्रस्य पुत्रा अनेके इति वाक्याद्यथासंभवमेकत्वावच्छिन्नप्रतियोगिताकयावद्भेदप्रकारेण भासमानानां धर्मिणां चैत्रपुत्रत्वविशिष्टेऽभेदेनान्वयः चैत्रपुत्रत्वाश्रयेषु च यावतामेतादृशानां भेदानां सत्त्वाद्वाक्यार्थोपपत्तिः यत्रत्वेक एव चैत्रस्य पुत्रस्तत्र न तादृशप्रयोगः प्रकारविधया भासमानतादृशयावद्भेदान्तर्गतस्य तद्व्यक्तिनिष्ठैकत्वावच्छिन्नप्रतियोगिताकभेदस्य तत्र बाधात् एवमनेकेषां पिता चैत्र इति वाक्यादेकत्वावच्छिन्नप्रतियोगिताका यावन्तो भेदा यथासंभवं तावदाश्रयनिरूपितं पितृत्वं भासते एकपुत्रस्थले तु भासमानयावद्भेदान्तर्गतो यस्तद्व्यक्तिनिष्ठैकत्वावच्छिन्नप्रतियोगिताकभेदस्तदाश्रयनिरूपितपितृत्वस्य चैत्रे बाधान्न तादृशवाक्यस्य प्रामाण्यम् । एवमनेकसमवेतत्वमित्यत्र एकत्वावच्छिन्नप्रतियोगिताका यावन्तो भेदा यथासंभवं तावदाश्रयसमवेतत्वमर्थः एकव्यक्तिमात्रसमवेते च तादृशयावद्भेदान्तर्गततद्व्यक्तिनिष्ठैकत्वावच्छिन्नप्रतियोगिताकभेदाश्रयसमवेतत्वाभावान्न दोषः । एवञ्च एकत्वावच्छिन्नप्रतियोगिताकयावद्भेदनिष्ठप्रकारतानिरूपितैकव्यक्तिनिष्ठविशेष्यताशालिज्ञानमनेकपदं न जनयति एकव्यक्तौ यावतां भेदानामप्रसिद्धत्वात् किन्तु यावन्तो भेदा यथासंभवं धर्मिषु प्रकारीभूय भासन्ते यथा नीला इति पदाद्यावन्ति नीलरूपाणि यथासंभवं नानाधर्मिषु प्रकारीभूय भासन्ते नैकधर्मिणि तद्वत् । इयांस्तु विशेषः नीलादिपदात् कदाचिदेकमेव नीलरूपमेकस्मिन्नेव धर्मिणि भासते कदाचित्पाकजन्यान्यपि द्वित्राण्यपि नीलरूपाण्येकस्मिन्धर्मिणि भासन्ते नतु कदाचिदपि अनेकपदस्य तादृशभेदप्रकारेण एकमात्रधर्मिणि उपस्थापकत्वं व्युत्पत्तिसिद्धं

## मञ्जूषा.

किन्तु द्वित्रादिधर्म्युपस्थापकत्वमेव शब्दस्वाभाव्यात्तत्र च तत्तद्धर्मिणि तत्तन्निष्ठैकत्वावच्छिन्नप्रतियोगिताकभेदव्यतिरिक्ता एव भेदाः प्रकारीभूय भासन्ते नतु तत्तद्धर्मनिष्ठैकत्वावच्छिन्नप्रतियोगिताकभेदोऽपि बाधात् एवञ्चात्र मूलस्थितानेकपदजन्योपस्थितिप्रकारीभूतानां भेदानामेकैकस्य लक्षणत्वे समवायेऽतिव्याप्तिस्तावत्कूटस्य लक्षणत्वे वा असंभवोऽप्रसिद्धिर्वा किन्तु द्रव्यादयः पञ्चानेके भावा इति वाक्यात्पञ्चत्वविशिष्टे अभेदसंबन्धेन विशेषणतापन्ने भावत्वावच्छिन्नेऽभेदसंबन्धेन विशेषणीभूतेषु धर्मिषु एकैकस्मिन्प्रकारीभूता यावन्तो भेदास्तावत्कूटवत्त्वं लक्षणं वाच्यं तत्तत्कूटेषु च समवायनिष्ठैकत्वावच्छिन्नप्रतियोगिताकभेदस्यापि घटकत्वान्न समवायेऽतिव्याप्तिशङ्का । तत्तत्कूटवत्त्वस्य तत्तद्धर्मिणि सत्त्वान्नासंभवोऽप्रसिद्धिर्वा किन्तु तत्तत्कूटस्य तत्तत्कूटघटकभेदप्रतियोग्यवृत्तित्वादव्याप्तिः प्रसज्यते सा चानेकभाववृत्तीत्युक्तविवक्षया गच्छति एकत्वावच्छिन्नप्रतियोगिताका यावन्तो भेदा यथासंभवं तावदाश्रयभाववृत्तित्वस्य द्रव्यत्वादौ सत्त्वात् समवायत्वन्तु नानेकभाववृत्ति यावत्तादृशभेदान्तर्गतो यस्समवायत्वनिष्ठैकत्वावच्छिन्नप्रतियोगिताकभेदस्तदाश्रयीभूतभाववृत्तित्वस्य तत्र बाधादिति निपुणतरपरिशीलनगम्योऽयमर्थः । येतु समभिव्याहृतपदार्थसंसर्गिनिष्ठयात्किञ्चिदेकत्वावच्छिन्नप्रतियोगिताकभेदविशिष्टबोधकत्वमनेकपदस्य व्युत्पादयन्ति तेषां मते अनेकभाववृत्तीत्यत्रानेकपदं स्वाश्रयभावनिष्ठयत्किञ्चिदेकत्वावच्छिन्नप्रतियोगिताकभेदविशिष्टपरं स्वं पदार्थविभाजकोपाधिः तथाच स्वाश्रयभावनिष्ठयत्किञ्चिदेकत्वावच्छिन्नप्रतियोगिताकभेदविशिष्टभाववृत्तियः पदार्थविभाजकोपाधिः तद्वत्त्वं लक्षणमिति पर्यवसन्नम् । परन्तु अत्र कल्पे प्रत्येकं घटादौ नाव्याप्तिरिति ग्रन्थसमर्थनं दुर्घटं तत्र हि अनेके भावा इति वाक्यात् भाववृत्त्येकत्वावच्छिन्नप्रतियोगिकाभेदवत्त्वे इति भावत्वमित्यर्थो लभ्यते तच्च सर्वत्रैवास्ति नच भाववृत्त्येकत्वपदेन यदेकत्वं गृह्यते तदवच्छिन्नप्रतियोगिताकभेदवत्त्वं तदेकत्वाश्रये नास्तीत्यव्याप्तिरिति भ्रमितव्यं एकमेव एकत्वं गृहीत्वा सर्वत्र लक्षणं संगमनीयमिति निर्बन्धुमशक्यतया तदेकत्वाश्रयेऽपि व्यक्त्यन्तरनिष्ठैकत्वावच्छिन्नप्रतियोगिताकभेदमादाय लक्षणसङ्गमनसंभवात् किन्तु समवायेऽतिव्याप्तिरेव दर्शितविवक्षादरणबीजतया उपन्यसनीया एवमुभयादिवृत्तिधर्मावच्छेदेन प्रत्येकवृत्तिधर्मावच्छिन्नप्रतियोगिताकभेदस्वीकारपक्षे एकत्वत्वविशिष्टावच्छिन्नप्रतियोगिताकभेदावच्छेदकयत्किञ्चिद्धर्माधिकरणयावद्भाववृत्तित्वमनेकभाववृत्तित्वं अनेकपदमेकत्वभिन्नसंख्यापर्याप्त्यधिकरणपरमिति पक्षेऽपि तादृशयत्किञ्चित्संख्याधिकरणयावद्भाववृत्तित्वमनेकभाववृत्तित्वमिति बोध्यम् । पक्षद्वयेऽपि ग्रन्थानुपपत्तिरुक्तैव । अत्रानेकभाववृत्तित्वं स्वप्रतियोगिवृत्तित्वस्वसामानाधिकरण्योभयसंबन्धेन भेदविशिष्टत्वे सति भाववृत्तित्वमिति महादेवेन विवक्षितं तच्च यद्यपि अनुगतं लघु च तथाप्यनेकभाववृत्तित्वमित्यस्य न स्वारसिकोऽयमर्थः । अनेकभाववृत्तित्वव्यवहारविषये समवायाभावान्यतरत्वेऽपि तस्य सत्त्वात् । किन्तु प्रकृतलक्षणे न दोषः तस्य पदार्थविभाजकत्वाभावात् भावनिष्ठाधिकरणताद्वयनिरूपितवृत्तित्वं स्ववृत्तित्वस्वान्यवृत्तित्वोभयसंबन्धेन भावविशिष्टत्वं वा तदित्यस्मद्गुरुचरणाः । एवं स्वप्रतियोगिभाववृत्तित्वस्वाधिकरणभाववृत्तित्वोभयसंबन्धेन भेदविशिष्टत्वमित्यादयोऽपि वैवक्षिकार्था अनुगता ऊहनीयाः । पदार्थविभाजकत्वं च पदार्थत्वावच्छिन्नोद्देश्यको यो विभागवाक्यजन्यबोधः तद्विधेयतावच्छेदकत्वं विभागवाक्यञ्च प्रकृतग्रन्थस्थितमेव बोध्यम् । तेन केनचित् ग्रन्थकृता पदार्थो द्विविधः भावोऽभावश्चेति विभागेऽपि न भावत्वस्य पदार्थविभाजकत्वम् । यद्वा द्रव्यत्वगुणत्वकर्मत्वसामान्यत्वविशेषत्वसमवायत्वाभावत्वान्यतमत्वमेव पदार्थविभाजकत्वम् ॥ **समवायसंबन्धेन संबन्धित्वमिति** ॥ समवायप्रतियोगित्वसमवायानुयोगित्वान्यतरवत्त्वमित्यर्थः ॥ **नतु समवायवत्त्वमिति** ॥ नतु समवायानुयोगितामात्रमित्यर्थं इत्यस्मद्गुरुचरणाः । अथ समवायसंबन्धेन संबन्धित्वमित्यस्मात्समवायप्रतियोगित्वसमवायानुयोगित्वान्यतरवत्त्वमित्यर्थः कुतो लभ्यत इति चेद्व्यवहारानुसारादिति ब्रूमः । व्यवहरन्ति हि लोके

सत्तावन्तस्त्रयस्त्वाद्या गुणादिर्निर्गुणक्रियः ॥ १४ ॥

**सत्तावन्त इति** ॥ द्रव्यगुणकर्मणां सत्तावत्त्वमित्यर्थः ॥ **गुणादिरिति** ॥ यद्यपि गुणाक्रियाशून्यत्वमाद्यक्षणे घटादावतिव्याप्तं क्रियाशून्यत्वं च गगनादावतिव्याप्तं तथापि गुणवदवृत्तिधर्मवत्त्वं कर्मवदवृत्तिपदार्थविभाजकोपाधिमत्त्वं च तदर्थः । नहि घट-

## प्रभा

न्तस्त्रय इति मूलस्य भावार्थमाह ॥ **द्रव्यगुणकर्मणामिति** ॥ अत्र नित्यानित्यभाववृत्तिपदार्थविभाजकोपाधिमत्त्वं द्वयोस्साधर्म्यं बोध्यम् । क्षित्यादीनां नवानामित्वित्यादिना द्रव्यसामान्यलक्षणस्याग्रे वक्ष्यमाणतयाऽत्र नाभिहितमिति बोध्यम् । ननु निर्गुणक्रिय इति यथाश्रुतमूलार्थगुणशून्यत्वक्रियाशून्यत्वलक्षणयोराद्यक्षणे घटादावतिव्याप्तिवारणाय गुणरूपप्रतियोग्यधिकरणावृत्तित्वस्यावश्यमभावे निवेशनीयतयाऽऽवश्यकगुणवदवृत्तिमत्त्वस्य लक्षणत्वेनैव दोषवारणसंभवे गुणाभावनिवेशनमफलमित्याशयेन तथैव लक्षणमाह ॥ **तथापीति** ॥ अतिव्याप्तिवारणाय धर्मवत्त्वनिवेशः । यद्वा ननु निर्गुण इत्यत्र नञः

## मञ्जूषा.

कपालघटौ समवायसंबन्धेन संबन्धिनौ भूतलघटाभावौ विशेषणतासंबन्धेन संबन्धिनावित्यादि ॥ **मूले आद्या इति** ॥ ननु किमत्राद्यत्वं न तावत् प्रथमपठितत्वं ताद्धि स्वघटितविभागवाक्यघटकविधेयबोधकपदानुत्तरविधेयबोधकपदप्रतिपाद्यत्वं तच्च द्रव्यमात्रसाधारणं तथाच आद्यास्त्रय इति वाक्याद्द्रव्याणामेव येषां केषांचित्त्रयाणां पृथिव्यप्तेजसां प्रत्ययस्स्यादिति चेदुच्यते । इह्वाद्यश्चाद्यश्चाद्यश्चेति विग्रहः तत्र प्रथमाद्यपदं

## दिनकरीयम्.

समवेतवृत्तिपदार्थविभाजकोपाधिमत्त्वं द्रव्यादिचतुर्णां साधर्म्यं बोध्यम् । उद्देश्यवाचकपदस्य चरममुपादानमयुक्तमतो योजनया तदर्थं प्रदर्शयति ॥ **द्रव्यगुणकर्मणामिति** ॥ निर्गुणक्रिय इति मूलम् । तदर्थश्च गुणक्रियात्यन्ताभाववत्त्वम् । तेन गुणक्रिययोरन्योन्याभावमादाय द्रव्ये नातिव्याप्तिः ॥ **यद्यपि गुणेति** ॥ न च गुणगुणिनोर्वामदक्षिणगोविषाणवत्समानकालिकत्वात्कथं गुणशून्यत्वमिति वाच्यं निर्गुणे गुणोत्पत्तिस्वीकारेण तत्सम्भवात् । न चैवं घटादेराद्यक्षणावच्छिन्नस्य चाक्षुषता न स्यादिति वाच्यं इष्टापत्तेः ॥ **तथापीति** ॥ गुणवत्ता च समवायेन तेन कालि-

## रामरुद्रीयम्.

सत्तावत्त्वं साधर्म्यं विधीयते तच्चायुक्तं उद्देश्यवाचकपदस्य पूर्वमभिधेयत्वात् अत एव पर्वतो वह्निमानित्येव प्रतिज्ञावाक्यं न तु वह्निमान् पर्वत इति इत्याशङ्कानिरासाय योजनया लभ्यमर्थं मुक्तावल्यां प्रकटयतीत्याह ॥ **उद्देश्यवाचकेति** ॥ अन्यथा तादृशवाक्यस्यातिस्पष्टार्थतया द्रव्यगुणेत्यादिवाक्यमनर्थकमेव स्यादिति भावः ॥ अत्र च नित्यसमवेतपदार्थविभाजकोपाधिमत्त्वं द्रव्यगुणयोः साधर्म्यं बोध्यम् । द्रव्यमात्रस्य तु साधर्म्यं मूलकृतैव वक्ष्यते । ननु निर्गुणत्वादिकं यदि गुणक्रियान्योन्याभाववत्त्वं तदा द्रव्येऽतिव्याप्तिः तत्रापि तयोर्भेदसत्त्वादित्यत आह ॥ **तदर्थश्चेति** ॥ **चाक्षुषत्वं न स्यादिति** ॥ चाक्षुषं प्रति रूपस्य कारणत्वादुत्पत्तिक्षणे च घटादौ तदभावादिति भावः । नन्वाद्यक्षणे घटादौ रूपाङ्गीकारेऽपि तत्पूर्वक्षणे घटाद्यभावेन कारणीभूतस्य तद्वृत्ति चक्षुःसंयोगस्याभावादाद्यक्षणे घटादिचाक्षुषमेव न सम्भवतीति कथमियमापत्तिः चक्षुःसंयुक्तसमवायस्यापि घटादौ तदानीमसम्भवात् उत्पत्तिप्राक्क्षणे घटादेरेवाभावात् वस्तुतस्तु परमाणुद्रव्यत्वादिप्रत्यक्षवारणाय चक्षुःसंयुक्ते योग्यत्वविशेषणस्यावश्यकतया त्र्यणुकचाक्षुषे व्यभिचारापत्त्या द्रव्यान्यद्रव्यसमवेतचाक्षुषत्वस्यैव संयुक्तसमवायकार्यतावच्छेदकत्वेनोपगन्तव्यतया चक्षुःसंयुक्तसमवायेन घटादेः प्रत्यक्षमेव न सम्भवतीत्यभिप्रायेण समाधत्ते ॥ **इष्टापत्तेरिति** ॥ तथाच तृतीयक्षण

**त्वादिकं द्रव्यत्वादिकं वा गुणवद्वृत्ति कर्मवद्वृत्ति वा किं तु गुणत्वादिकं तथा । आकाशत्वादिकं तु न पदार्थविभाजकोपाधिः ॥ १४ ॥**

## प्रभा.

स्थानाभिषिक्तस्य निरुपसर्गस्याभावार्थकत्वे आद्यक्षणे घटादावतिव्याप्त्यापत्त्या निरुपसर्गस्य विरोध्यर्थकत्वं निरुपसर्गसमभिव्याहृतगुणपदस्य वा विरोधिधर्मवदर्थकत्वं वाच्यं एवंच गुणविरोधिधर्मः गुणवद्वृत्तिधर्म एवेति शब्दत एव तदर्थलाभात् तथैवाह तथापीति । गुणवद्वृत्तिधर्मवत्त्वमित्यत्र गुणवत्त्वं समवायेन तेन गुणादेः कालिकेन गुणवत्त्वमादाय नाव्याप्तिः । वृत्तित्वं धर्मवत्त्वं च स्वरूपसंबन्धेन बोध्यं नातस्संबन्धभेदनिबन्धनो दोषः गुणत्वादिप्रकारकप्रमाविशेष्यत्वादिकमादाय लक्षणसमन्वयश्च । एवं निष्क्रिय इत्यत्राप्यर्थो ज्ञेयः । अत्रापि धर्मपदमतिव्याप्तिवारणाय आकाशत्वरूपतादृशधर्ममादायातिव्याप्तिवारणाय धर्मे पदार्थविभाजकोपाधित्वं निवेशयति ॥ **आकाशत्वादिकमिति** ॥ कर्मवत्त्वं वृत्तित्वं च समवायेन बोध्यं नातस्संबन्धभेदनिबन्धनो दोषः । उपाधिमत्ता च सर्वाधारताप्रयोजकाभिन्नसंबन्धेन तेन समवायेनोपाधिमत्त्वाविवक्षणे सामान्यादावव्याप्तिः स्वरूपसंबन्धेन तद्वत्त्वविवक्षणे गुणकर्मणोरव्याप्तिः संबन्धसामान्येन तद्वत्त्वविवक्षणे महाकाले चातिव्याप्तिः इति दूषणस्य नावकाशः । नित्यानित्यभावावृत्तिपदार्थविभाजकोपाधिमत्त्वं कर्मप्रभृतिसर्वपदार्थानां साधर्म्यं बोध्यम् ॥ १४ ॥

## मञ्जूषा.

दर्शिताद्यत्वविशिष्टपरं द्वितीयाद्यपदं तु स्वघटितविभागवाक्यघटकपदोत्तरपदानुत्तरं यत्स्वघटितविभागवाक्यघटकपदोत्तरपदं तत्प्रतिपाद्यत्वविशिष्टपरं तृतीयन्तु स्वघटितविभागवाक्यघटकपदोत्तरपदोत्तरपदानुत्तरं यत्स्वघटितविभागवाक्यघटकपदोत्तरपदोत्तरपदं तत्प्रतिपाद्यत्वविशिष्टपरं ततस्सरूपैकशेषः पदार्थतावच्छेदकभेदस्थले सरूपैकशेषस्य नैयायिकैरभ्युपगमात् । अथवा नेह सरूपैकशेषः किन्तु एकमेवाद्यपदं स्वघटितविभागवाक्यघटकपदोत्तरपदोत्तरपदानुत्तरपदप्रतिपाद्यत्वात्मकेनैकेनैव रूपेण त्रयाणां बोधकं एतादृशाद्यत्वतात्पर्यग्राहकञ्च त्रय इति पदम् ॥ **गुणादिरिति** ॥ इह गुण आदिर्यस्येति विग्रहः । गुणे आदित्वञ्च न प्रदर्शितं स्वघटितविभागवाक्यघटकपदानुत्तरपदप्रतिपाद्यत्वरूपं प्रथमपठितत्वं गुणे तस्य बाधात् किंत्वन्यथा वाच्यं तथाहि यस्येति षष्ठ्यर्थो बोधकत्वं आदित्वंच विभागवाक्यघटकपदानुत्तरपदप्रतिपाद्यत्वं अनुत्तरत्वप्रतियोगिनिविष्टपदे बोधकत्वान्वयः तथाच गुणो विभागवाक्यघटकयद्बोधकपदानुत्तरपदप्रतिपाद्य इत्यर्थः । समासार्थस्तु गुणप्रतिपादकपदनिष्ठोत्तरत्वनिरूपकभिन्नविभागवाक्यघटकपदबोध्यत्वविशिष्ट इति । एषा च रीतिर्द्रव्यादयः पञ्च भावा इत्यादावपि संभवतीति बोध्यम् ॥ **मुक्तावल्यां गुणवद्वृत्तीति** ॥ अवृत्तित्वं स्वरूपसंबन्धेन चेद्द्रव्यत्वमादायातिव्याप्तिः स्वरूपसं-

## दिनकरीयम्.

कसम्बन्धेन गुणवद्गुणवृत्तेर्गुणत्वादेरसङ्ग्रहेऽपि न क्षतिः । गुणवद्वृत्तित्वं तादृशधर्मवत्त्वं च समवायस्वरूपान्यतरसम्बन्धेन । तेन समवायेन गुणवद्वृत्तित्वाभिधाने, तादृशस्य द्रव्यत्वप्रकारकप्रमाविशेष्यत्वस्य द्रव्ये सत्त्वादातिव्याप्तिः अतस्तेनैव तद्वत्त्वं वाच्यं तदा सामान्यादावव्याप्तिरिति परास्तम् । पदार्थविभाजकपदस्य कृत्यमाह ॥ **आकाशत्वादिकं त्विति** ॥ कर्मवद्वृत्त्याकाशत्वरूपोपाधिमत्याकाशेऽतिव्याप्तिवारणाय तत्पदमिति भावः ॥ १४ ॥

## रामरुद्रीयम्.

एव घटादिचाक्षुषमिति भावः ॥ ***अन्यतरसंबन्धेनेति*** ॥ एतच्चापाततः । लाघवेन गुणवद्वृत्तित्वस्य गुणवद्वृत्तिधर्मवत्त्वस्य च दैशिकस्वरूपसंबन्धेनैव वक्तुमुचितत्वात् गुणादौ गुणत्वप्रकारकप्रमाविशेष्यत्वादिकमादायैव साधर्म्योपपादनसंभवात् परंतु कर्मवद्वृत्तिपदार्थविभाजकोपाधिमत्त्वमिति द्वितीयसाधर्म्यनिरुक्तावेवोक्तरीत्यान्यतरसंबन्धनिवेशनमावश्यकं गुणादौ गुणत्वादिरूपपदार्थविभाजकोपाधेः स्वरूपसंबन्धेनासत्त्वादिति मन्तव्यम् ॥ १४ ॥

सामान्यपरिहीनास्तु सर्वे जात्यादयो मताः।

सामान्येति ॥ सामान्यानधिकरणत्वं सामान्यादीनामित्यर्थः ॥

## प्रभा.

सामान्यपरिहीना इति मूले परीत्युपसर्गसमभिव्याहृतहीनपदस्य सामान्यधर्मावच्छिन्नप्रतियोगिताकाभा-

## मञ्जूषा.

बन्धेनैव तद्वत्त्वस्य वाच्यत्वात् । गुणत्वादेः स्वरूपसंबन्धेनासत्त्वेऽपि द्रव्यभेदगुणप्रकारकप्रमाविशेष्यत्वादिकमादायैव तत्र लक्षणसङ्गमनात् तेन अवृत्तित्वं समवायस्वरूपान्यतरसंबन्धेनेत्यादिमहादेवोक्तिर्निरस्ता समवायवैयर्थ्यात् किन्तु द्वितीयलक्षणे तथाकारावश्यकी अत्र गुणवदवृत्तित्वलक्षणे पदार्थविभाजकत्वमनिवेश्य कर्मवदवृत्तित्वघटितलक्षण एव तन्निवेशयन् विश्वनाथो ज्ञापयति उत्पन्नविनष्टघटो नास्मदभिप्रेत इति अन्यथा उत्पन्नविनष्टघटानिष्ठतद्व्यक्तित्वमादायातिव्याप्तिप्रसङ्गात् । ननूत्पन्नविनष्टव्यक्तिः कुतो नाभिप्रेयते न च नास्तिकमतप्रवेशभियेति युक्तं एकदेशस्वीकारमात्रेण तन्मतप्रवेशाप्रसक्तेः सामग्रीतः संभवतोऽर्थस्य अस्मदीयभिया निरोद्धुमशक्यत्वाच्चेति चेदुत्पन्नाया व्यक्तेः द्वितीयक्षण एव नाशोत्पत्तौ सामग्र्यभावात् सा हि समवायिकारणनाशादसमवायिकारणनाशाद्वा भवित्री न तौ घटोत्पत्तिकाले संपद्येते समवायिकारणासमवायिकारणयोः कार्यसहभावेनैव हेतुतायाः सिद्धान्तसिद्धत्वात् । ये तूत्पन्नविनष्टव्यक्तिं स्वीकुर्वन्ति तैरसमवायिकारणासमवायिकारणयोः कार्यसहभावानयमो नाभ्युपेयते । एतदर्थमेव हि तादृशनियमाङ्गीकारः ननु कार्यकाले समवायिकारणासत्त्वेन तत्कार्यं कुत्र समवेतमुत्पद्येत नहि स्वकालानवस्थायिनि पदार्थे किञ्चित्समवेयादतश्चासमवेतभावकार्योत्पादस्स्यात् आद्यक्षणरूपोत्पत्तिश्च देशावच्छिन्ना न स्यादिति चेदस्तु तर्हि समवायिकारणस्य कार्यसहभावेनैव हेतुत्वं असमवायिकारणस्य तु तादृशनियमे न बीजमीक्षामहे । ननु मास्तु तादृशनियमः तथापि घटोत्पत्तिक्षणे कपालसंयोगनाशो न संभवति तत्कारणाभावात् कपालसंयोगनाशो हि कपालनाशात् कपालद्वयविभागाद्वा स्यात् नच घटोत्पत्तिपूर्वक्षणे कपालनाशस्संभवति घटस्यैवानुत्पादप्रसङ्गात् नवा कपालद्वयविभागस्संभवति असंयुक्तयोर्विभागाभावेन विभागं प्रति संयोगस्य कारणतया संयोगोत्पत्तिकाले विभागासंभवात् कपालद्वयसंयोगोत्पत्त्युत्तरक्षणे च घटोत्पत्त्या तत्कालोत्पन्नविभागेन घटोत्पत्तिद्वितीयक्षण एव कपालसंयोगनाशे तृतीयक्षण एव घटनाशपर्यवसानात् । ननु यत्र कपालसंयोगोत्पत्तिद्वितीयक्षणे किञ्चित्प्रतिबन्धकवशान्न घटोत्पत्तिः कपालान्तरक्रियया कपालद्वयविभागश्च तत्र घटोत्पत्तिक्षणोत्पत्तिकेन कपालसंयोगनाशेन द्वितीयक्षणे घटनाशस्वीकार इति चेत्सति घटोत्पादके विजातीयकपालद्वयसंयोगे घटोत्पादविलम्बप्रयोजकस्योत्पन्नविनष्टघटासिद्धिविषयकभवदीयाभिनिवेशादन्यस्य दुर्वचत्वात् । द्रव्योत्पादप्रतिबन्धकानि हि लोके साक्षात्परंपरया वा द्रव्यारम्भकविजातीयसंयोगमेव प्रतिबध्नन्ति नतु सत्यारम्भकसंयोगे सति च समवायिकारणे केनचिद्द्रव्योत्पत्तिविलम्बः क्रियत इति चेदत्र वदन्ति सहस्रतन्तुकपटस्थले चरमतन्तुसंयोगोत्पत्तिकाले यत्र कतिपयपूर्वतन्तुविभागस्तदुत्तरक्षणे च पटोत्पत्तिः तत्र पटोत्पत्तिकालोत्पत्तिकेन पूर्वतन्तुसंयोगनाशेन तद्द्वितीयक्षणे पटनाशे बाधकाभावः एवं कतिपयपूर्वतन्तुसंयोगनाशेन महापटनाशसमकालं यत्र कतिपयतन्त्वन्तरविभागः ततः खण्डपटोत्पत्तिकाले तादृशतन्तुसंयोगनाशात्तद्द्वितीयक्षणे तत्खण्डपटनाशो दुर्वारः एवमन्यत्रापि बहुतरावयवारब्धद्रव्यस्थले बोध्यम् । विश्वनाथस्तु तादृशस्थले द्रव्योत्पत्तिमेव नाभ्युपैति कार्यकालेऽसमवायिकारणाभावादिति सर्वं चतुरस्रम् ॥ १४ ॥

## दिनकरीयम्.

जात्यादीनामप्येकार्थसमवायसम्बन्धेन सामान्यवत्त्वात्सामान्यपरिहीना इति मूलमयुक्तमतो व्या-

## प्रभा.

वत्वदर्थकतया सामान्यत्वावच्छिन्नप्रतियोगिताकात्यन्ताभाववत्त्वं लक्षणमिति फलितं तच्च न संभवति सामान्यत्वस्य सामान्यभेदेन भिन्नतया एकैकसामान्यत्वव्यक्त्युपादाने तद्व्यक्त्यवच्छिन्नप्रतियोगिताकाभावस्य सामान्यान्तराश्रये सत्वेनातिव्याप्त्यापत्तेः किन्तु यावन्ति सामान्यानि तावदन्यतमत्वावच्छिन्नप्रतियोगिताकाभाववत्त्वं द्रव्यत्वगुणत्वकर्मत्वान्यतमत्वावच्छिन्नप्रतियोगिताकाभाववत्त्वं सत्ताव्यक्तित्वावच्छिन्नप्रतियोगिताकाभाववत्त्वं वा मूलकाराभिप्रेतं लक्षणमिति नातिव्याप्तिः । नन्वीदृशसामान्याभावप्रतियोगित न कालिकसंबन्धावच्छिन्ना नित्यद्रव्यादावतिव्याप्त्यापत्तेः न परंपरासंबन्धावच्छिन्ना तस्या वृत्त्यनि-

## मञ्जूषा.

मूले जात्याद्य इति ॥ अस्य गुणादिरित्यत्रैवार्थो बोध्यः ॥ **मुक्तावल्यां सामान्यानधिकरणत्वमिति** ॥ अत्र महादेवः जात्यादीनामप्येकार्थसमवायेन सामान्यवत्त्वात्सामान्यपरिहीना इति मूलमयुक्तमतो व्याचष्टे सामान्यानधिकरणत्वमिति तथाच सामान्यनिरूपिताधिकरणता न सामान्यादौ एकार्थसमवायस्याधिकरणतानियामकत्वाभावादिति भाव इति व्याचख्यौ । यद्यपि सामान्यपरिहीना इति मूले परिपूर्वकस्य हाधातोरभावार्थकतयोक्तप्रत्ययस्याश्रयार्थकतया सामान्यप्रतियोगिकाभावाश्रयत्वमात्रं लक्षणं लभ्यते तत्र च नोक्ताशङ्का सामान्यस्य एकार्थसमवायेन सामान्यादौ सत्त्वेऽपि समवायादिरूपयत्किञ्चित्संबन्धावच्छिन्नप्रतियोगिताकस्य सामान्याभावस्य तत्राक्षतत्वात्तथापि सामान्यनिष्ठप्रतियोगितायां संबन्धविशेषावच्छिन्नत्वानिवेशे यत्किञ्चित्संबन्धावच्छिन्नत्वनिवेशे च संयोगादियत्किञ्चित्संबन्धावच्छिन्नसामान्यनिष्ठप्रतियोगिताकाभावस्य द्रव्यादिसाधारणतयाऽतिव्याप्तिः तद्वारणाय संबन्धसामान्यावच्छिन्नत्वस्य प्रतियोगिताविशेषणताऽऽवश्यकी तथाचाशङ्कासङ्गतिः । ननु सिद्धान्तेऽपि सामान्यनिरूपितकालिकसंबन्धावच्छिन्नाधिकरणताया ध्वंससाधारणतयाऽव्याप्तिः नचाधिकरणतायां समवायावच्छिन्नत्वनिवेशान्नायं दोष इति वाच्यम् । तथासति सामान्यनिष्ठप्रतियोगितायामेव समवायसंबन्धावच्छिन्नत्वनिवेशेन सामञ्जस्येऽधिकरणत्वप्रवेशवैयर्थ्यापातेन दर्शितावतारिकाया असाङ्गत्यापत्तेः अवतारितग्रन्थप्रतिपाद्याधिकरणतायामवश्यनिवेशनीयस्य समवायसंबन्धावच्छिन्नत्वस्य मूललभ्याभावप्रतियोगितायामेव निवेशयितुमुचितत्वेन तत्र संबन्धसामान्यावच्छिन्नत्वं प्रवेश्य तादृशग्रन्थावतरणस्य सन्दर्भविरुद्धत्वात् । किंच समवायसंबन्धावच्छिन्नाधिकरणताप्रवेशेऽपि तादृशाधिकरणतायां संबन्धसामान्यावच्छिन्नप्रतियोगिताकाभावनिवेशे पुनस्तद्दोषतादवस्थ्यमिति तद्वारणाय सामान्यनिरूपितसमवायसंबन्धावच्छिन्नाधिकरणतानिष्ठस्वरूपसंबन्धावच्छिन्नप्रतियोगिता निवेशनीया तदपेक्षया सामान्यनिष्ठसमवायसंबन्धावच्छिन्नप्रतियोगितैव लघीयसी । किंच सामान्यनिरूपिताधिकरणतायां समवायसंबन्धावच्छिन्नत्वानिवेशनं यद्यभिप्रैष्यन्महादेवः तर्हि एकार्थसमवायस्याधिकरणतानियामकत्वाभावादिति नावदिष्यत् तस्याधिकरणतानियामकत्वेऽपि समवायसंबन्धावच्छिन्नाधिकरणताविरहेणैव क्षतेरभावात् अनेन हि ग्रन्थसन्दर्भेणाधिकरणतायां संबन्धविशेषावच्छिन्नत्वानिवेशो नास्तीति प्रतीयते । अपिच सामान्यनिरूपिताधिकरणतायां समवायावच्छिन्नत्वप्रवेशे तादृशाधिकरणत्वप्रतियोगिताकाभावमात्रस्याऽतिप्रसञ्जकत्वात् सामान्यनिरूपितसमवायसंबन्धावच्छिन्नाधिकरणतात्वस्य समवायसंबन्धावच्छिन्नाधिकरणतात्वापेक्षया गुरुत्वेनाभावप्रतियोगितानवच्छेदकतया तदवच्छिन्नप्रतियोगिताकाभावनिवेशासंभवादसङ्गतिः । नच लघुधर्मसमानियतगुरुधर्मस्य न प्रतियोगितावच्छेदकत्वं समवायावच्छिन्नाधिकरणतात्वन्तु रूपाद्यधिकरणतासाधारणमिति वाच्यम् । लघुगुरुधर्मावच्छिन्नप्रतियोगिताकत्वेनाभिमतयोरभावयोर्यत्र समनैयत्यं तत्रापि गुरुधर्मस्य प्रतियोगितावच्छेदकत्वानङ्गीकारत् । नच गुरुधर्मस्य प्रतियोगितावच्छेदकत्वं व्याप्तिग्रन्थे विश्वनाथेन स्वीकृतमिति वाच्यं तथापि सामान्यनिरूपितत्वांशवैयर्थ्यात् । नचातिरिक्ताभावसंपादकत्वान्न वैयर्थ्यमिति वाच्यम् एतादृशाभावयोस्समनियतत्वेनाभेदात् समनियताभावानां भेदेऽपि सामान्यनिरूपितत्वांशस्य प्रतियोगितावच्छेदकतया लक्षणप्रवेशवैयर्थ्यस्य दुर्वारत्वादिति चेदुच्यते । सा-

## पारिमाण्डल्यभिन्नानां कारणत्वमुदाहृतम् ॥ १५ ॥

**प्रभा.**

यामकत्वेनाभावप्रतियोगितानवच्छेदकत्वात् नापि संयोगसंबन्धावच्छिन्ना तादृशाभावस्य केवलान्वयित्वेन द्रव्यादिष्वतिव्याप्त्यापत्तेरत आह ॥ **सामान्यानधिकरणत्वमिति** ॥ यत्संबन्धावच्छिन्ना सामान्यनिष्ठाधेयतानिरूपिताधिकरणता सकलद्रव्यादिषु वर्तते तत्संबन्धावच्छिन्नसामान्यनिष्ठप्रतियोगिताकाभाववत्त्वमित्यर्थः । तथाच समवायसंबन्धावच्छिन्नत्वं प्रतियोगितायां निवेशनीयमिति भावः । अत्र कपालसमवेतावृत्तिपदार्थविभाजकोपाधिमत्त्वं विशेषादीनां साधर्म्यं समवेतावृत्तिपदार्थविभाजकोपाधिमत्त्वं समवायाभावयोस्साधर्म्यं बोध्यं अभावस्य तु भावभिन्नत्वरूपसाधर्म्यस्य स्फुटत्वान्नाभिहितमिति । पा-

**मञ्जूषा.**

मान्यनिरूपितकालिकसंबन्धानवच्छिन्नाधिकरणताशून्यत्वमिह लक्षणमतो न कोऽपि दोषगन्धः । प्रमेयत्वगगनाभावादिनिरूपितस्वरूपसंबन्धावच्छिन्नाधिकरणतामादायाप्रसिद्धिवारणाय सामान्यनिरूपितत्वांशसार्थक्यम् यद्यपि सामान्यनिष्ठसमवायावच्छिन्नप्रतियोगिताकाभावस्य लक्षणत्वं युक्तं तथापि सामान्यत्वघटकवृत्तित्वांशस्यैव तत्प्रतियोगितावच्छेदकतया तत्र लक्षणघटकत्वसंभवात् इतरांशवैयर्थ्यमिति तत्सार्थक्यसंपादनायायमायासः । तत्र वृत्तित्वांशमात्रनिवेशे प्रमेयत्वाद्यधिकरणतामादाय दोष उक्त एव । नच तवापि सामान्यत्वघटकसमवेतत्वांशमात्रनिवेशेनैव प्रमेयत्वाद्यधिकरणतामादाय दोषवारणसंभवात् इतरांशवैयर्थ्यमिति वाच्यम् तावताप्यणुरपि विशेषोऽध्यवसायकर इति न्यायेन सामान्यत्वघटककातिपयाधिकांशसार्थक्यसंपादनपक्षस्यैवाश्रयणीयत्वाद्विषयताया अधिकरणतानियामकत्वपक्षे ज्ञानाद्यात्मकसमवेतनिरूपितविषयतासंबन्धावच्छिन्नाधिकरणतामादायासंभववारणाय तद्घटकानेकांशसार्थक्यस्यापि कथञ्चिदुपपादयितुं शक्यत्वाच्च । अस्मद्गुरुचरणास्तु सामान्यपरिहीना इत्यनेन सामान्याभाववत्त्वमेव लक्षणमभिप्रेतम् सामान्यानधिकरणत्वमित्युक्तिस्तु येन संबन्धेन सामान्याधिकरणत्वं द्रव्यादिषु त्रिषु वर्तते तत्संबन्धावच्छिन्नसामान्यनिष्ठप्रतियोगिताकाभावो लक्षणमिति स्फोरणाय सच संबन्धः समवाय एवेत्याहुः । अन्ये तु समवायसंबन्धावच्छिन्नाधिकरणताशून्यत्वं अनुयोगितासंबन्धेन समवायाभाववत्त्वं वा लक्षणमिहाभिप्रेतं लाघवात् । सामान्यपरिहीना इत्यनेन च एतदेव सूच्यते सामान्यं हि समवायसंबन्धेन वर्तते ततो यत्परिहीयते न तत्र समवायावच्छिन्नाधिकरणतास्ति न वेत्याहुः ॥ वाऽनुयोगितासंबन्धेन समवायः एतदेवाभिसन्धाय सामान्यानधिकरणत्वमित्युक्तं तत्राधिकरणतायां सामान्यनिरूपितत्वाभिधानं समवायसंबन्धावच्छिन्नाधिकरणतालाभाय समवायानुयोगित्वलाभायैव **मूले पारिमाण्डल्येति** ॥ परितो मण्डलं परिमण्डलं मण्डलशब्दश्च लोके वर्तुलत्वविशिष्टे प्रयुज्यते मण्डलाकारा अपि लोके व्यक्तय एकैकस्यां दिशि अवस्थितानां पुरुषाणां कतिपयावयवमात्रावच्छेदेन इन्द्रियसन्निकृष्टास्तदवयवावच्छेदेन दीर्घा उपलक्ष्यन्ते परमाणुस्तु सर्वास्वपि दिक्ष्ववस्थितानां मण्डलाकार एव

**दिनकरीयम्.**

चष्टे ॥ **सामान्यानधिकरणत्वमिति** ॥ तथा च सामान्यनिरूपिताधिकरणता न सामान्यादौ एकार्थसमवायस्याधिकरणतानियामकत्वाभावादिति भावः । अप्रसिद्धत्वात्पारिमाण्डल्यपदार्थं निर्वक्ति ॥

**रामरुद्रीयम्.**

**अधिकरणतानियामकत्वाभावादिति** ॥ यद्यप्येवं सति सामान्यादौ भावत्ववत्त्वमपि न स्यात् सामानाधिकरण्यसम्बन्धेन सत्ताधिकरणत्वमादायैव तत्र भावत्वाधिकरणताया उपपादनीयत्वात् तथापि सत्तासमवायसामानाधिकरण्यान्यतरस्यैव भावत्वरूपत्वामिति भावः । वस्तुतस्तु समवायसम्बन्धावच्छिन्नप्रतियोगिताकसामान्याभावस्य साधर्म्यत्वे न कोऽपि दोष इति ध्येयम् । तत्र न सम्भवतीत्यत्र नकारो न समुच्चयार्थकः परमाणुपरिमाणस्य नित्यतया कालविधयाऽतीन्द्रियतया प्रत्यक्षे विषयविधया न कारणत्वासम्भवेन कार्यान्तरं प्रति कारणत्वस्य समुच्चयासम्भवादतस्तस्य तुकारार्थक-

**पारिमाण्डल्येति** ॥ पारिमाण्डल्यं परमाणुपरिमाणम् । कारणत्वं तद्भिन्नाना-मित्यर्थः । अणुपरिमाणं तु न कस्यापि कारणम् । तद्धि स्वाश्रयारब्धद्रव्यपरिमा-णारम्भकं भवेत् । तच्च न सम्भवति । परिमाणस्य स्वसमानजातीयोत्कृष्टपरिमा-

**प्रभा.**

रिमाण्डल्यभिन्नानामिति मूलेन परमाणुत्वरूपपरिमाणभिन्नानामेव कारणत्वरूपलक्षणप्राप्त्या लक्ष्यतावच्छेदकाक्रान्तद्व्यणुकपरिमाणे तादृशलक्षणाभावादव्याप्तिरित्याशङ्कां तस्याप्यलक्ष्यत्वं प्रतिपाद्य परिहरति ॥ **अणुपरिमाणमिति** ॥ तथाच पारिमाण्डल्यशब्दस्य अजहत्स्वार्थलक्षणया द्व्यणुकपरिमाणसाधारणाणुत्वावच्छिन्नबोधकत्वमिति तस्याप्यलक्ष्यतया नाव्याप्तिरिति भावः । अलक्ष्येऽतिव्याप्तिं वारयति ॥ **अणुपरिमाणमिति** ॥ कस्यापि कारणं नत्विति योजना । **कस्यापीति** ॥ किंचिद्धर्मावच्छिन्नस्यापीत्यर्थः । अपिशब्देन कार्यत्वावच्छिन्नस्य समुच्चयः ॥ **तु** अवधारणे ॥ **न त्विति** ॥ न भवत्येवेत्यर्थः । एवकारेणाणुपरिमाणत्वावच्छेदेन कारणत्वाभावो लभ्यते तथाचाणुपरिमाणसामान्यं कारणत्वाभाववदित्यर्थः फलितः । अत्र प्रमाणाभावादिति हेतुः पूरणीयः । ननु कारणताविशेषलिङ्गेन कारणत्वसामान्यसाधनसंभवात् उक्तहेतोस्स्वरूपासिद्धत्वं बाधितत्वं चेत्याशङ्कां परिहरति ॥ **तद्धीति** ॥ अणुपरिमाणमित्यनुवर्तते तत्स्यादित्यर्थः कारणत्ववत्स्यादिति यावत् ॥ **भवेदिति** ॥ यदि तदेति शेषः ॥ तथाचाणुपरिमाणं स्वाश्रयारब्धद्रव्यपरिमाणारम्भकं भवेद्यदि तदा कारणत्वसामान्यवत्स्यादिति फलितार्थः ॥ **तच्चेति** ॥ च अवधारणे तदेवेत्यर्थः । स्वाश्रयारब्धद्रव्यपरिमाणारम्भकमेवेति यावत् । **न संभवतीति** ॥ न भवतीत्यर्थः । तथाचाणुपरिमाणे निरुक्तपरिमाणासमवायिकारणत्वरूपलिङ्गाभावात् कारणत्वसामान्यसाधनासंभवेन नोक्तहेतोः बाधितत्वं स्वरूपासिद्धत्वं चेति भावः । तत्र हेतुमाह ॥ **परिमाणस्येति** ॥ परिमाणासमवायिकारणपरिमाणमात्रस्येत्यर्थः ॥ **स्वसमानजातीयेति** ॥

**मञ्जूषा.**

मनसा संभाव्यते ननु किञ्चिदवयवावच्छेदेन दीर्घो वक्रो वा अवयवाभावात्तदिदमुच्यते परिमण्डलः परमाणुरिति यद्यपि मण्डलत्वमप्यवयवसंयोगविशेषाधीनमेव तथापि दीर्घत्ववक्रत्वाद्यभावसामान्यात् परिशब्दसमभिव्याहृतो मण्डलशब्दो निरवयवे परमसूक्ष्मे वस्तुनि गौण्या वृत्त्या उपचर्यते ततश्च परिमण्डलः प्रकृष्टाणुत्ववानिति फलितोऽर्थः । तस्य भावः पारिमाण्डल्यं प्रकृष्टाणुत्वं परमाणुत्वमिति यावत् तदेतदभिप्रेत्याह ॥ **मुक्तावल्यां पारिमाण्डल्यं परमाणुपरिमाणमिति** ॥ **तद्भिन्नानां** परमाणुपरिमाणभिन्नानां ॥ **अणुपरिमाणमिति** ॥ परमाणुपरिमाणमित्यर्थः । क्वचित्तथैव पाठः ॥ **न कस्यापीति** ॥ अतीन्द्रियत्वान्न स्वप्रत्यक्षकारणं महत्त्वभिन्नत्वान्न स्वाश्रयादिप्रत्यक्षे नित्यत्वाच्च न स्वध्वंसे कारणमित्यर्थः । ननु तथापि परमाणुपरिमाणं द्व्यणुकपरिमाणे कारणमस्त्वित्यत आह ॥ **तद्धीति** ॥ परमाणुपरिमाणं हीत्यर्थः ॥ **स्वाश्रयेति** ॥ स्वं परमाणुपरिमाणं तदाश्रयारब्धद्रव्यं द्व्यणुकं तत्परिमाणारम्भकं भवेत् कदाचित् संभाव्येतेत्यर्थः ॥ **तच्चेति** ॥ स्वाश्रयारब्धद्रव्यपरिमाणारम्भकीभवनञ्चेत्यर्थः ॥ **न संभवतीति** ॥ कुत इत्यत आह ॥ **परिमाणस्येति** ॥ नन्वेतावता यत्र परिमाणत्वं

**दिनकरीयम्.**

**पारिमाण्डल्यमिति** ॥ **तद्भिन्नानामिति** ॥ पारिमाण्डल्यभिन्नानाम् । ननु द्व्यणुकपरिमाणस्य कारणत्वाभावात्तत्राव्याप्तिरतः पारिमाण्डल्यपदं द्व्यणुकपरिमाणस्याप्युपलक्षकम् तेन तस्यापि अलक्ष्यत्वमित्यभिप्रेत्याह ॥ **अणुपरिमाणं त्विति** ॥ परमाणुद्व्यणुकसाधारणमणुपरिमाणं त्वित्यर्थः । पारिमाण्डल्यस्य कारणत्वे बाधकमाह ॥ **तद्धीति** ॥ अणुपरिमाणं हीत्यर्थः ॥ **तच्चेति** ॥ चस्त्वर्थे । तत्र हेतुमाह ॥

**रामरुद्रीयम्.**

त्वमाह ॥ **त्वर्थ इति** ॥ ननु द्व्यणुकपरिमाणमपि परिमाणत्वेन अणुपरिमाणसजातीयं अणुपरिमा-

णजनकत्वनियमात् । महदारब्धस्य महत्तरत्ववदणुजन्यस्याणुतरत्वप्रसङ्गात् । एवं प-

## प्रभा.

स्वसमानजातीयं यत्स्वोत्कृष्टं परिमाणं तन्निरूपितासमवायिकारणतावत्त्वादित्यर्थः । अत्र साजात्यं च परिमाणविभाजकोपाधिरूपेण उत्कर्षश्च तरतमत्वादिनेति बोध्यम् । तथाचाणुपरिमाणसामान्यं परिमाणनिष्ठकार्यतानिरूपितासमवायिकारणत्वाभाववत् स्वसमानजातीयस्वोत्कृष्टपरिमाणासमवायिकारणं यद्यत्त्वं तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदकूटविशिष्टपरिमाणत्वात् विभुपरिमाणवत् । अत्र तूलसमवेतपरिमाणासमवायिकारणतूलावयवसमवेतप्रचयसंयोगे व्यभिचारवारणाय हेतौ विशेष्यदलम् । हेतौ सत्यन्तासिद्धिं वारयति ॥ महदारब्धस्येति ॥ तथाच कपालपरिमाणासमवायिकारणकघटपरिमाणं यथा क-

## मञ्जूषा.

तत्र स्वसमानजातीयस्वोत्कृष्टपरिमाणजनकत्वमिति नियमो लभ्यते तत्र चान्त्यावयविपरिमाणे व्यभिचारो दुर्वारः अणुपरिमाणस्याणुतरपरिमाणजनकत्वापत्तिश्चेति चेन्न परिमाणजनकत्वविशिष्टपरिमाणत्ववत्त्वस्यैव व्याप्यत्वात् एतादृशव्याप्यव्यापकभावज्ञानस्य च तर्कोत्थापकतया पारिमाण्डल्ये द्व्यणुकपरिमाणकारणताग्रहविघटकत्वमित्याशयेनाह ॥ महदारब्धस्येति ॥ अत्र पारिमाण्डल्यं यदि परिमाणजनकत्वविशिष्टपरिमाणत्ववत्स्यात् तर्हि स्वसमानजातीयस्वोत्कृष्टपरिमाणजनकं स्यादिति तर्काकारो बोध्यः । अत्र स्वसमानजातीयपरिमाणजनकत्वमात्रस्य आपादकत्वे इष्टापत्तिः द्व्यणुकपरिमाणस्य परमाणुपरिमाणसजातीयत्वादतः स्वोत्कृष्टत्वोपादानं अत्र द्व्यणुकपरिमाणस्य त्रसरेणुपरिमाणजनकत्वनिराकरणं यद्यपि न प्रकृतं तथापि द्व्यणुकादौ तु संख्याजन्यमुदाहृतमित्युत्तरत्र मूले द्व्यणुकादावित्यादिपदग्राह्यत्रसरेणुपरिमाणस्य संख्याजन्यतया वक्ष्यमाणतया तस्य द्व्यणुकपरिमाणजन्यत्वमप्यवश्यं निराकार्यं निराकरिष्यते च त्रसरेणुपरिमाणं तु न स्वसमानजातीयमित्यभिप्रेतेन मुक्तावलीग्रन्थेन । एवञ्च परमाणुद्व्यणुकपरिमाणयोरुभयोरपि परिमाणकारणताबाधकतर्कानुकूलव्याप्यव्यापकभावस्यैवाग्रे दर्शनीयतया तदविरोधायेदानीमपि तादृश एव व्याप्यव्यापकभावो दर्शनीय इति स्वसमानजातीयत्वनिवेशनं तदनिवेशने द्व्यणुकपरिमाणं यदि परिमाणजनकं स्यात्तर्हि स्वोत्कृष्टपरिमाणजनकं स्यादिति तर्के इष्टापत्तिप्रसङ्गात् त्रसरेणुपरिमाणस्य द्व्यणुकपरिमाणापेक्षया उत्कृष्टत्वात् । नन्विदमसङ्गतं विजातीययोर्द्व्यणुकत्रसरेणुपरिमाणयोरुत्कर्षापकर्षावधित्वाभावादन्यथा रूपरसयोरपि तथात्वापत्तेः । नचाणुत्वमहत्त्वयोरपि परिमाणत्वेन रूपेण साजात्यमस्तीति वाच्यं गुणत्वव्याप्यव्याप्यजात्या सजातीययोरेवोत्कर्षापकर्षावधित्वाद्यथा नीलनीलतरयोर्नहि नीलशुक्लयोरुत्कर्षापकर्षावधित्वमस्तीति चेदत्र ब्रूमः । उत्कर्षापकर्षौ न यादृच्छिकौ किन्तु प्रतीतिव्यवहारसाक्षिकौ तत्र चैत्रान्मैत्रो नीलतरः चैत्रनीलान्मैत्रनील उत्कृष्टः मैत्रनीलाच्चैत्रनीलोऽपकृष्ट इत्यादिप्रतीतिव्यवहाराभ्यां नीलद्वयोरुत्कर्षापकर्षावधित्वसिद्धिर्न नीलशुक्लयोस्तथा प्रतीतिव्यवहाराभावात् । प्रकृतेतु द्व्यणुकात्तदवयवोऽणुतरः द्व्यणुकाणुत्वात्तदवयवाणुत्वं उत्कृष्ट-

## दिनकरीयम्.

परिमाणस्येति ॥ स्वसमानजातीयेति ॥ साजात्यमत्र परिमाणविभाजकरूपेण बोध्यम् ॥ अणुजन्यस्येति ॥ उत्कृष्टं चाणोरणुतरमेवेति भावः । न चाणुजन्यस्याणुतरत्वमस्तु किम्बाधकमिति वाच्यं तथासति त्रुटेरचाक्षुषत्वप्रसङ्गात् । ननु तर्हि द्व्यणुकादिपरिमाणस्य किं जनकमिति चेत्सङ्ख्यैवेत्यवेहि व्यक्तीभविष्यति चेदमुपरिष्टात् । मूलस्य न्यूनतां परिहरति ॥ एवमिति ॥ बोध्या इत्यनेनान्वयः । न कारणानीति बोध्या

## रामरुद्रीयम्.

णादुत्कृष्टं चेति द्व्यणुकपरिमाणस्यापि कारणत्वेन उक्तनियमक्षतिरित्याशङ्कायामाह ॥ साजात्यमत्रेति॥ परिमाणविभाजकोपाधयः अणुत्वत्वमहत्त्वत्वादयः ॥ अचाक्षुषत्वप्रसङ्गादिति ॥ महत्त्वाभावादिति शेषः ॥ इदमिति ॥ द्व्यणुकादिपरिमाणे सङ्ख्यादिकारणत्वमित्यर्थः ॥ उपरिष्टात् गुणनिरूपण इ-

रममहत्परिमाणमतीन्द्रियसामान्यं विशेषाश्च बोध्याः। इदमपि योगिप्रत्यक्षे विषय-

**प्रभा.**

पालपरिमाणनिष्ठमहत्त्वत्वरूपसाजात्यविशिष्टं कपालपरिमाणावधिकोत्कर्षाश्रयश्च भवति तथा त्र्यणुकप-रिमाणस्य द्व्यणुकगताणुपरिमाणासमवायिकारणत्वे द्व्यणुकपरिमाणनिष्ठाणुत्वत्वरूपसाजात्यवत्त्वस्य द्व्यणु-कपरिमाणावधिकोत्कर्षवत्त्वस्य चापत्तेः व्याप्यसत्त्वे व्यापकसत्ताया आवश्यकत्वात् इष्टापत्तौ त्रुटेरचा-क्षुषत्वप्रसङ्गात्। एवंच द्व्यणुकपरिमाणस्य स्वसमानजातीयोत्कृष्टपरिमाणासमवायिकारणत्वासंभवेन ता-दृशं यद्यत्स्वं तत्तद्व्यक्तिभेदकूटविशिष्टपरिमाणत्वरूपलिङ्गेन व्यापकवद्भेदपर्यवसितेन स्वाश्रयारब्धद्रव्य-परिमाणासमवायिकारणत्वाभावे व्याप्याभावपर्यवसिते अनुमिते सति तादृशासमवायिकारणत्वहेतोः स्व-रूपासिद्धत्वेन कारणत्वसामान्यसाधकप्रमाणाभावात् कारणत्वसामान्याभावसाधकप्रमाणाभावरूपहेतोः न स्वरूपासिद्धत्वं बाधितत्वं चेति समुदायार्थ इति भावः। ननु अणुत्वभिन्नत्वरूपलक्ष्यतावच्छेदका-श्रयेषु परममहत्त्वपरिमाणातीन्द्रियसामान्यविशेषेषु कारणत्वरूपलक्षणासंभवात् अव्याप्तिरित्याशङ्कामलक्ष्य-त्वोपपादनेन परिहरति॥ **एवमिति**॥ **बोध्या इति**॥ अलक्ष्यत्वेन ज्ञेया इत्यर्थः। तथाचा-णुत्वभेदस्येव परममहत्त्वादिभेदत्रयस्यापि लक्ष्यतावच्छेदककोटिप्रवेशात् पारिमाण्डल्यादिचतुर्णां तादृश-लक्ष्यतावच्छेदकानाक्रान्ततया तत्र लक्षणासंभवेऽपि नाव्याप्तिरिति भावः। ननु योगिप्रत्यक्षे विष-यस्य कारणत्वमते ज्ञायमानसामान्यस्य प्रत्यासत्तित्वमते ज्ञायमानलिङ्गस्यानुमितिकारणत्वमते च वि-षयविधया प्रत्यासत्तिविधया लिङ्गविधया चतुर्णां कारणत्वादिदं पारिमाण्डल्यादिष्वतिव्याप्तमित्यत आह॥ **इदमिति**॥ चतुर्णां अकारणत्वमित्यर्थः। एवार्थकोऽपिशब्दः अभिप्रायेणेत्युत्तरं योज्यः अभिप्रा-

**मञ्जूषा.**

मित्यादिव्यवहारेण यथाणुत्वत्वव्याप्यावुत्कर्षापकर्षौ एवं द्व्यणुकपरिमाणात् त्रसरेणुपरिमाणमुत्कृष्टं त्रसरेणुप-रिमाणात् द्व्यणुकपरिमाणमपकृष्टमिति व्यवहारेण परिमाणत्वव्याप्यौ महत्त्वाणुत्वयोरुत्कर्षापकर्षौ स्यातामे-व। नचैवं द्व्यणुकात्तदवयवयवोऽणुतर इतिवत् त्र्यणुकात्त्रसरेणुर्महत्तर इति व्यवहारोऽपि स्यादिति वाच्यं अर्थबाधात्। तथाहि द्व्यणुकात्तदवयवोऽणुतर इति वाक्यात् त्र्यणुकनिष्ठाणुत्वावधिकोत्कर्षाश्रयाणुत्ववान् त-दवयव इति प्रतीयते तरबर्थोत्कर्षान्वय्यवधित्वार्थकपञ्चमीप्रकृतिपदस्य स्वार्थनिष्ठो यस्समभिव्याहृततरप्प्र-त्ययप्रकृत्यर्थतावच्छेदकधर्मः तल्लाक्षणिकतायाः तादृशपञ्चम्या एव वा स्वार्थान्वितोत्कर्षबोधकतरप्प्रत्ययप्र-कृत्यर्थतावच्छेदकीभूतो यो धर्मस्तन्निष्ठावधित्वलाक्षणिकताया व्युत्पत्तिसिद्धत्वात् तथाच त्र्यणुकात्त्रसरेणुर्मह-त्तर इति वाक्यात् त्र्यणुकनिष्ठमहत्त्वावधिकोत्कर्षाश्रयमहत्त्ववान् त्रसरेणुरित्यर्थो बोध्येत सच बाधित इति नानुपपत्तिः। नचैवं सजातीययोरेवोत्कर्षापकर्षावधित्वमिति प्रवादो भज्येतेति वाच्यम् यद्धर्मविशिष्टस्य उत्कर्षा-श्रयतया भानं तद्धर्मविशिष्टस्यैवोत्कर्षावधित्वमित्येवं प्रवादार्थतया प्रकृते तादृशपरिमाणत्वेन साजात्यसत्त्वात्। न चास्त्वेवं यथाकथञ्चिद्युक्तिगवेषणं तथापि नायं पक्षो ग्रन्थकृतां सम्मत इति वाच्यम् विश्वनाथस्य सम्मत-त्वात् तथाहि मूर्तत्वमपकृष्टपरिमाणवत्त्वमिति वक्ष्यति तच्च भवतां परमाणावव्याप्तं स्यात्तत्परिमाणस्य कुतोऽ-प्यपकृष्टत्वाभावात् ममतु परमाणुपरिमाणं त्रसरेणुपरिमाणादपकृष्टमिति व्यवहारेण तत्परिमाणेऽप्यपकर्षस-

**दिनकरीयम्.**

इत्यर्थः। ऐन्द्रियिकयोर्महत्त्वसामान्ययोः स्वविषयकलौकिकप्रत्यक्षे हेतुत्वात्परमत्वातीन्द्रियत्वे इह विशेषणे। ननु योगिप्रत्यक्षे पारिमाण्डल्यस्यापि विषयविधया कारणत्वात् पारिमाण्डल्यभिन्नानामित्ययुक्तमत आ-ह॥ **इदमपीति**॥ यथा योगजधर्मेणातीतानागतविषयकं प्रत्यक्षं तथा विद्यमानविषयकमपदिश्य

**रामरुद्रीयम्.**

त्यर्थः॥ **इहेति**॥ महत्त्वसामान्ययोरित्यर्थः। ननु योगिप्रत्यक्षे विषयस्य कारणत्वाभावे का युक्तिरित्यत आह॥ **यथेति**॥ तथाच योगिप्रत्यक्षेऽपि विषयस्य कारणत्वे तेषामतीतानागतविषयकप्रत्यक्षं न स्यादिति लौकि-

स्य न कारणत्वं ज्ञायमानं सामान्यं न प्रत्यासत्तिः ज्ञायमानं लिङ्गं नानुमिति
रणमित्यभिप्रायेणोक्तम् । आत्ममानसप्रत्यक्षे आत्मपरममहत्त्वस्य कारणत्वात्परममह

## प्रभा.

येणैवेत्यर्थः । तथाच योगिप्रत्यक्षे विषयस्य कारणत्वे अतीतादिविषयकप्रत्यक्षानुपपत्त्या ज्ञायमानस
मान्यस्य प्रत्यासत्तित्वे अतीतघटादिरूपसामान्यज्ञानाधीनालौकिकप्रत्यक्षानुपपत्त्या ज्ञायमानलिङ्गस्यानुमि
हेतुत्वे अतीतादिलिङ्गज्ञानाधीनानुमित्यनुपपत्त्या च तत्तत्कार्यं प्रति नैतेषां कारणत्वमिति नातिव्
सिरिति भावः ॥ **आत्ममानसेति** ॥ टीकाकृन्मते आत्मगतमहत्त्वैकत्वयोः अप्रत्यक्षत्वात् स्व

## मञ्जूषा.

स्वान्नाव्याप्तिः । यद्यप्यत्र महादेवेन अपकृष्टेति अविभुपरिमाणवत्त्वमित्यर्थः तेन परमाणौ नाव्याप्तिरिति
खितं दृश्यते तथापि न तन्मुक्तावलीग्रन्थस्वरससिद्धम् । तथाहि किमिदमविभुपरिमाणवत्त्वं विभुस
मवेतपरिमाणवद्भिन्नत्वं विभुसमवेतपरिमाणभिन्नवत्त्वं विभुसमवेतभिन्नपरिमाणवत्त्वं विभुभिन्नसमवेतपरि
णवत्त्वं वा । नाद्यः गुणादावतिव्याप्तेः विभुभिन्नत्वस्यैव सम्यक्त्वेन विभोर्विभुसमवेतपरिमाणवत्त्वेन भेद
तियोगितया लक्षणे प्रवेशस्य शिरोवेष्टनेन नासिकास्पर्शनतुल्यत्वात् । न द्वितीयः सङ्ख्यादिकमादाय गगना
सत्तादिकमादाय गुणादौ चातिव्याप्तेः । न तृतीयः अपकृष्टपदस्य विभुसमवेतभिन्नार्थकत्वे अप
कृष्टसंख्यावत्त्वमपकृष्टसंयोगवत्त्वमित्यादिरीत्यापि लक्षणकरणसंभवेनापकृष्टगुणवत्त्वमिति सामान्यतो गु
त्वेन निवेशनसंभवेन च विशिष्य परिमाणत्वेन निवेशनस्वरसविरोधात् । चतुर्थे तु यद्यपि संख्यासंयो
गादिकमादाय गगनादावतिव्याप्तिवारकतया विशिष्य परिमाणत्वेन निवेशनं भवति सार्थकं तथा
पि यथोक्तलक्षणे गगनादावतिव्याप्तिवारकस्य तच्चैतेषामेव गगनादिपरिमाणस्य कुतोऽप्यपकृष्टत्वाभाव
इत्युत्तरमुक्तावलीग्रन्थस्य विरोधो दुर्वार एव । तत्रहि अपकृष्टत्वाभावादित्यस्य विभुभिन्नसमवेतत्वा
भावादित्यर्थेऽपकर्षावधित्वबोधकं कुतोऽपीत्येतदनन्वितार्थं स्यात् अत एव च ज्ञायते परमाणुपरिमा
णस्य सजातीयद्व्यणुकपरिमाणापेक्षयाऽपकृष्टत्वाभावेऽपि विजातीयत्रसरेणुपरिमाणापेक्षयाऽपकृष्टत्वात्तत्र ल
क्षणसमन्वयः । गगनपरिमाणन्तु सजातीयाद्विजातीयाद्वा कुतोऽपि नापकृष्टमिति न तत्रातिव्याप्तिरि
ति । अथ मास्तु अपकृष्टपरिमाणवत्त्वामित्यस्य महादेवोक्तार्थता किन्त्वपकर्षाश्रयपरिमाणवत्त्वमिति
यथाश्रुतार्थकत्वमेवास्तु तेन कुतोऽप्यपकृष्टत्वाभावादिति ग्रन्थस्य न विरोधः परमाणावव्याप्तिस्तु
अपकृष्टपरिमाणवद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वमिति विवक्षया वार्यताम् । नचैवं जातिघटितलक्षणे गगना
दावतिव्याप्त्यप्रसक्तेर्गगनादिपरिमाणस्येति ग्रन्थविरोध इति वाच्यम् यथाश्रुतलक्षणाभिप्रायेण तदभि
धानात् जातिघटनायान्तु गगनादीत्यादिपदग्राह्यात्मन्यतिव्याप्तिवारकतयैव तादृशग्रन्थसार्थक्यादिति चेन्न
परापरत्वमूर्तत्वक्रियावेगाश्रया अमी इत्येकवाक्योक्तेषु पञ्चसु लक्षणेषु पूर्वयोरुत्तरयोश्च लक्षणयोर्जा
कण्ठतो घटयित्वा मध्यमलक्षणे कण्ठतस्तामघटयतो विश्वनाथस्य तत्रापि जातिघटनाभिप्राये सन्दर्भवि
रोधापत्तेः भवन्मते मनःपरिमाणस्यापि कुतोऽप्यपकृष्टत्वाभावेन मनस्यव्याप्तेर्दुर्वारत्वाच्च । तस्मात्प
रमाणुत्वस्य महत्त्वापेक्षया अपकृष्टत्वमेव ग्रन्थकृदभिमतं अनुरुन्द्धे चेममेवार्थमुत्तरमुक्तावलीग्रन्थस्व

## दिनकरीयम्.

र्थः । ननु ज्ञायमानसामान्यस्य प्रत्यासत्तित्वेन ज्ञायमानहेतोश्चानुमितिकरणत्वेन पारिमाण्डल्यस्य सा
मान्यलक्षणाजन्यज्ञानेऽनुमितौ च कारणत्वात् पारिमाण्डल्यभिन्नानामिति मूलमसङ्गतमत आह ॥ ज्ञा
यमानमिति ॥ **आत्ममानसेति** ॥ विषयतया द्रव्यलौकिकप्रत्यक्षे समवायेन महत्त्वस्य हेतुत्वा
दिति भावः । यद्यपि स्वप्रत्यक्ष इत्येव वक्तुमुचितं तथापि टीकाकृन्मते आत्मैकत्वमहत्त्व

## रामरुद्रीयम्.

कप्रत्यक्ष एव विषयस्य कारणत्वमङ्गीकार्यं योगजधर्मस्यलौकिकसन्निकर्ष एवेति भावः ॥ स्वप्रत्यक्ष इति

रिमाणमाकाशादेर्बोध्यम् । तस्यापि न कारणत्वमित्याचार्याणामाशय इत्यन्ये । त-

## प्रभा.

त्यक्ष इत्यपहायात्ममानसेत्युक्तम् ॥ **आकाशादेर्बोध्यमिति** ॥ शब्दप्रत्यक्षे सामानाधिकरण्यसंबन्धेन गगननिष्ठमहत्त्वस्य कारणत्वात् अतद्गुणसंविज्ञानबहुव्रीहिमाश्रित्य कालादेर्बोध्यमित्यर्थोऽवसेयः । कारणत्वमन्यत्र पारिमाण्डल्यादिभ्य इति सूत्रस्थाऽऽदिपदात् भाष्ये परममहत्त्वं गृह्णतामाचार्याणां आत्मगतमहत्त्वस्यापि न कुत्रचित् कारणत्वमित्याशयो लभ्यत इति आकाशादेर्बोध्यमित्यनेन परममहत्त्वशब्दस्य विशेषपरत्वे प्रमाणाभाव इति वदतां मतमुपन्यस्यति ॥ **तस्यापीति** ॥ आत्मगतमहत्त्व-

## मञ्जूषा.

परममहत्त्वत्वं जातिविशेषः अपकर्षानाश्रयपरिमाणत्वं वेति । यद्यप्यत्रापकर्षानाश्रयमहत्परिमाणत्वमिति विवक्षितं महादेवेन तथापि न तत्स्वारसिकं एवंच द्व्यणुकपरिमाणस्य त्रसरेणुपरिमाणजनकतावारणाय स्वसजातीयपदं एतच्च परिमाणं मुक्तावळ्यां स्पष्टमुक्तं द्व्यणुकस्याणुपरिमाणन्तु परमाणुत्वापेक्षया नोत्कृष्टं त्रसरेणुपरिमाणन्तु न समानजातीयमिति स्यादेतत् पर्यन्तसंयुक्तावयवद्वयजन्यावयविसमवेतह्रस्वत्वजनके तदवयवह्रस्वत्वे संपुटितावयवद्वयजन्यावयविसमवेतदीर्घत्वजनके तदवयवदीर्घत्वे च दर्शितनियमो व्यभिचरति तत्रावयवह्रस्वत्वदीर्घत्वापेक्षयाऽवयविह्रस्वत्वदीर्घत्वयोरुत्कृष्टत्वाभावात् । अत्र वदन्ति तत्रावयविह्रस्वत्वदीर्घत्वयोर्नावयवह्रस्वत्वदीर्घत्वासमवायिकारणकत्वं किन्त्ववयवसंयोगविशेषासमवायिकारणकत्वमेव एवंच तत्र परिमाणजनकत्वरूपव्याप्यस्याभावान्न व्यभिचार इति । नच तथापि पारिमाण्डल्यभिन्नयोर्ह्रस्वत्वदीर्घत्वयोर्दर्शितपरिमाणयोः कारणत्वरूपलक्षणमव्याप्तमिति वाच्यं तयोरपि स्वध्वंसप्रत्यक्षादिकं प्रति कारणताया निर्बाधत्वात् एतेन सुखदुःखादावव्याप्तिरपि परास्ता तस्यापि स्वध्वंसप्रत्यक्षादिकं प्रति करणत्वात् अजनितावयविरूपादिकस्य पाकनष्टपरमाणुरूपादेस्तु फलोपधायकताविरहेऽपि स्वरूपयोग्यत्वात्स्वध्वंसकारणत्वाच्च नाव्याप्तिः । अत्र महादेवः । तद्भिन्नानां पारिमाण्डल्यभिन्नानां । ननु द्व्यणुकपरिमाणस्यापि कारणत्वाभावात् तत्राव्याप्तिरतः पारिमाण्डल्यपदं द्व्यणुकपरिमाणस्याप्युपलक्षणं तेन तस्याप्यलक्ष्यत्वमित्यभिप्रायेणाह अणुपरिमाणान्त्विति परमाणुद्व्यणुकसाधारणमणुपरिमाणान्त्वित्यर्थ इति व्याचख्यौ । तन्न विचार्यते द्व्यणुकपरिमाणस्यापि स्वध्वंसं प्रति कारणत्वात् कथं तत्राव्याप्तिशङ्कया तस्य लक्ष्यबहिर्भावः । नच भावकार्यनिरूपितकारणत्वस्यैवात्र लक्षणत्वमित्यभिप्रायेणाव्याप्तिशङ्केति वाच्यम् । मूले सामान्यश्रुतेन कारणत्वपदेन कारणतायाः द्व्यणुकपरिमाणाव्याप्तिमात्रसंपादकेन पूर्वानुपस्थितेन भावकार्यनिरूपितत्वाकारेणोपस्थितिं परिकल्प्य तत्राव्याप्तिशङ्कायां तदङ्गीकृत्य तस्यालक्ष्यत्वप्रतिपादनेन समाधाने द्रव्यात्मककार्यनिरूपितत्वाकारेणाप्युपस्थितिं परिकल्प्य रूपादावव्याप्तिशङ्कायां तदङ्गीकृत्य समाधानोपेक्षायां बीजाभावप्रसङ्गात् । अपिच कारणत्वमुदाहृतमित्यत्र कारणत्वपदेन स्वरसतो भावकार्यनिरूपितकारणत्वस्यैव उपस्थितौ अन्यथासिद्धिशून्यस्येत्यादिना तदेव निर्वचनीयं स्यात् । किंचाणुपरिमाणं न कस्यापि कारणमिति कार्यसामान्यनिरूपितकारणत्वव्यवच्छेदस्तद्धीत्यादिना स्वाश्रयारब्धद्रव्यपरिमाणैककारणत्वसंभावना च विरुध्येयाताम् । नच त्वन्मते अणुपरिमाणं न कस्यापीत्यत्र द्व्यणुकपरिमाणसाधारणरूपेणोपादानं विरुद्धमिति वाच्यं साभा-

## दिनकरीयम्.

योरयोग्यत्वात्प्रत्यक्षं न सम्भवति इत्यात्ममानसेत्युक्तम् । केचित्तु कारणत्वं चान्यत्र पारिमाण्डल्यादिभ्य इत्यत्र भाष्ये आदिग्रहणात्परममहत्त्वं गृह्यत इति वदतामाचार्याणामात्मपरिमाणमपि न कस्यचित्कारणमित्याशयो लभ्यते न च तत्र परममहत्पदमात्मपरिमाणातिरिक्तपरममहत्परिमाणपरमिति वाच्यं मानाभावादिति वदन्ति । तन्मतं दूषयितुमुपन्यस्यति ॥ **तस्यापीति** ॥ आ

## रामरुद्रीयम्.

आत्मगतमहत्त्वप्रत्यक्षे स्वस्य विषयविधया कारणत्वादिति भावः ॥ **अयोग्यत्वादिति** ॥ अन्यथाऽऽत्म-

न्न । ज्ञानातिरिक्तं प्रत्येवाकारणताया आचार्यैरुक्तत्वात् ॥ १५ ॥

## प्रभा.

स्यापीत्यर्थः ॥ ज्ञानातिरिक्तं प्रतीति ॥ कारणत्वं च ज्ञातृधर्मेतरकार्यापेक्षयेति भाष्यम् । ज्ञातृधर्माः ज्ञानादयः तदतिरिक्तभावकार्यनिरूपितकारणत्वं पारिमाण्डल्यादिभिन्नानां साधर्म्यमित्यर्थः । तथाच पूर्वोत्तरभाष्यपर्यालोचनया पारिमाण्डल्यादिचतुर्णां ज्ञानातिरिक्तभावकार्यनिरूपिताकारणत्वं तदनुमतं नतु कारणत्वसामान्याभाव इति लाभादिति भावः । ननु भाष्यकारोक्तप्रकारेण पारिमाण्डल्यादिभिन्नानां ज्ञानातिरिक्तभावकार्यनिरूपितकारणत्वं साधर्म्यमित्यनुक्त्वा कारणत्वसामान्यस्य लक्षणत्वमङ्गीकृत्य परममहत्त्वशब्दस्य विशेषपरत्वे बीजाभाव इति चेन्न भाष्ये सूत्रस्थादिपदेन सुखदुःखयोः अजनितावयविरूपादेः पाकनष्टपरमाणुरूपादेः अग्रहणात्तेषामपि लक्ष्यत्वप्राप्त्या तेषु ज्ञानातिरिक्तभावकार्यनिरूपितासाधारणकारणत्वरूपलक्षणासत्त्वादव्याप्तिरित्यरुचेः प्रकारान्तरानुसरणं ग्रन्थकृता कृतमिति ध्येयम् ॥ १५ ॥

## मञ्जूषा.

न्यधर्मावच्छिन्नवाचकपदानां उपस्थितविशेषपरताया लोके दृष्टत्वेन पारिमाण्डल्यं परमाणुपरिमाणमिति पूर्वोपस्थितपरमाणुपरिमाणस्यैव तत्पदेनोपस्थापनात् । नच प्रागपि पारिमाण्डल्यं अणुपरिमाणमित्येव पाठो महादेवाभिप्रेत इति भ्रमितव्यम् । तथा सति द्व्यणुकपरिमाणाव्याप्तिशङ्कायास्तद्भिन्नानां कारण-

## दिनकरीयम्.

त्वमहत्त्वपरिमाणस्यापीत्यर्थः ॥ ज्ञानातिरिक्तं प्रत्येवेति ॥ कारणत्वं च ज्ञातृधर्मेतरभावकार्यापेक्षया इत्याचार्यग्रन्थः । ज्ञातृधर्मा ज्ञानादयः तदतिरिक्तभावकार्यं प्रति कारणत्वं पारिमाण्डल्यभिन्नानां साधर्म्यमिति तदर्थः । एवञ्च पारिमाण्डल्यादीति आदिपदेन परममहत्त्वं गृह्णतामाचार्याणामयमाशयो यत्पारिमाण्डल्यस्य परममहत्त्वादीनां च ज्ञानातिरिक्तं प्रति न कारणत्वं न तु कारणत्वसामान्याभावस्तदनुमत इति भावः । अत्राचार्यैः पारिमाण्डल्यादीत्यादिपदार्थेषु सुखदुःखादेरजनितावयविरूपादेः पाकनष्टपरमाणुरूपादेश्चागणनात्तेषां लक्ष्यत्वमनुमतम् । एवं च तेषु ज्ञानाद्यतिरिक्तभावकार्यफलोपधायकत्वरूपस्याचार्यलक्षणस्याव्याप्तिं परिचिन्त्य स पक्षस्त्यक्तो ग्रन्थकृतेति ध्येयम् ॥ १५ ॥

## रामरुद्रीयम्.

नः अणुत्वे इन्द्रियादिस्वरूपत्वे च विवादासम्भवादिति भावः ॥ तदतिरिक्तभावकार्यमिति ॥ ज्ञानाद्यतिरिक्तभावकार्यमित्यर्थः । यद्यपि ज्ञातृधर्मेतरापेक्षयेत्याचार्यग्रन्थे भावत्वं नोपात्तं तथापि द्व्यणुकपरिमाणस्य स्वध्वंसं प्रति कारणत्वेन पारिमाण्डल्यपदस्याणुपरिमाणसामान्यपरत्वेन द्व्यणुकपरिमाणे भवत्यतिव्याप्तिरिति भावत्वमुपात्तं भावत्वं तु स्वमतेऽपि देयमेव । अन्यथा तत्रैवातिव्याप्तेः ॥ अजनितावयविरूपादेरिति ॥ पाकनष्टपरमाणुरूपादेर्विशेषणं तेन पाकनष्टपरमाणुरूपस्यापि नाशात्पूर्वं द्व्यणुकरूपाद्युपधायकत्वेऽपि न क्षतिः ॥ फलोपधायकत्वरूपस्येति ॥ समवायेन परिमाणं प्रति स्वाश्रयसमवेतत्वसम्बन्धेन परिमाणत्वेन सामान्यतः कारणत्वेन पारिमाण्डल्यस्यापि स्वरूपयोग्यतारूपकारणतावत्त्वात्फलोपधायकत्वविवक्षा । तच्च न अव्यवहितपूर्वत्वसम्बन्धेन कार्यविशिष्टत्वे सति स्वरूपयोग्यत्वं तस्य पारिमाण्डल्येऽपि सत्त्वात् । किंतु कार्योत्पादप्रयोजकत्वमेव । प्रयोजकत्वं च स्वरूपसम्बन्धरूपं दण्डाद्घटोत्पाद इति प्रतीतसाक्षिकमिति ध्येयम् । यद्यपि स्वमतेऽपि स्वप्रत्यक्षं प्रति सुखदुःखयोः कारणत्वेऽपि परमाणुरूपस्यातीन्द्रियतया भावकार्यं प्रत्यकारणत्वेन तत्राव्याप्तिस्तदवस्थैव । न च जन्यमात्रस्य कालोपाधितया कालत्वेन तस्यापि भावकार्यं प्रति कारणत्वमक्षतमेवेति वाच्यम् । तथासति द्व्यणुकपरिमाणस्यापि कालविधया भावकार्यकारणत्वेन अणुपरिमाणं तु न कस्यापि कारणमिति मूलविरोधापत्त्या कारणत्वपदस्य कार्यत्वानवच्छिन्नकार्यतानिरूपितकारणत्वपरतायाः क्लृप्तैव काल इति मतावलम्बनस्य वा आवश्यकत्वेनाव्याप्तेर्दुर्वारत्वादिदमसङ्गतम् । तथापि स्वमते विशेषाश्चेति चकारेण तादृशरूपस्यापि समुच्चितत्वादिति भावः ॥ १५ ॥

## मञ्जूषा.

त्वमित्यर्थं इत्येतदुत्तरमनवतारात् पारिमाण्डल्यं अणुपरिमाणमिति ग्रन्थस्यैव तादृशशङ्कयाऽवतरणीयत्वात् । नच स्वायत्ते शब्दप्रयोग इति न्यायेन परमाणुपरिमाणं न कस्यापि कारणमित्येव वक्तुमुचितत्वेन द्व्यणुकपरिमाणसाधारणरूपावच्छिन्नवाचकपदेन किमिति परमाणुपरिमाणग्रहणमिति वाच्यं परमाणुपरिमाणे संभावितस्य द्व्यणुकपरिमाणकारणत्वस्य यादृशयुक्त्या निराकरणं तादृशयुक्त्यैवाग्रे द्व्यणुकपरिमाणे त्रसरेणुपरिमाणकारणतायाः अपि निराकर्तव्यतया तदर्थस्फोरणाय प्रकृते तत्साधारणरूपावच्छिन्नवाचकपदेन विशेषग्रहणसार्थक्यात् परमाणुपरिमाणं न कस्यापीति पाठे दोषानवकाशाच्चेति ॥ **विशेषाश्चेति** ॥ चकारोऽनुक्तसमुच्चायकः तेन प्रतिबन्धकाभावभिन्ना अतीन्द्रियाश्च येऽभावा गगनाभावादयः तेऽपि संगृह्यन्त इति बोध्यम् । विशेषाश्च बोध्यमित्यत्र नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्यामिति नपुंसकैकवचनम् ॥ **आत्ममानसप्रत्यक्ष इति** ॥ ननु परमाण्वादिचाक्षुषापत्तिवारणाय द्रव्यचाक्षुषस्पार्शनयोर्महत्त्वस्य कारणत्वेऽपि आत्ममानसे तस्य कारणत्वे मानाभावः । नच मानसप्रत्यक्षे सन्निकर्षविधया कारणीभूतस्यात्ममनस्संयोगस्य मनस्यतिप्रसक्ततया तत्र लौकिकविषयतया मानसापत्तिवारणाय तद्धेतुत्वमावश्यकमिति वाच्यम् मनःप्रतियोगिकत्वविशिष्टसंयोगस्य मनस्यभावेन आपत्तिविरहात् । नचात्ममनस्संयोगस्य वैजात्यपुरस्कारेणैव कारणतायाः सिद्धान्तासिद्धतया तत्र मनःप्रतियोगिकत्वस्यापि कारणतावच्छेदककोटिप्रवेशे विशेषणविशेष्यभावे विनिगमनाविरहेण गुरुधर्मावच्छिन्नकारणताद्वयस्वीकारापत्त्या तदपेक्षया लाघवेन मानसप्रत्यक्षे महत्त्वत्वेन कारणतान्तरस्वीकार एवोचित इति वाच्यम् चक्षुःसंयोगादिषु पञ्चसु इन्द्रियसंयोगेषु चाक्षुषादिप्रत्यक्षजनकतावच्छेदकानां पञ्चानां वैजात्यानां भेदकल्पने प्रमाणाभावेन तादृशवैजात्यपुरस्कारेणैवात्ममनस्संयोगस्य हेतुत्वे तादृशवैजात्यावच्छिन्नचक्षुस्संयोगाद्याश्रये लौकिकविषयतया मानसप्रत्यक्षापत्तिवारणाय मनःप्रतियोगिकत्वस्य सन्निकर्षनिष्ठकारणतावच्छेदककोटौ निवेशावश्यकत्वात्तादृशवैजात्यानां भेदस्वीकारेऽपि अनुयोगितासंबन्धेनैव तादृशवैजात्यावच्छिन्नस्य कारणतास्वीकारेण तादृशसंयोगप्रतियोगिनि मनस्यनुयोगितासंबन्धेन तदभावात् । यदितु आश्रयत्वातिरिक्तानुयोगित्वे मानाभावः मनो मनस्संयुक्तमिति प्रतीत्यभावस्य मनसि मनःप्रतियोगिकत्वविशिष्टसंयोगत्वावच्छिन्ननिरूपिताश्रयताविरहेणैव व्यावृत्तिरिति विभाव्यते तथापि न मनसि लौकिकविषयतया मानसापत्तिः तथाहि आत्मनि लौकिकविषयतासंबन्धेन मानसं प्रति समवायसंबन्धेन विजातीयसंयोगस्य कारणत्वेनैवास्तु सन्निकर्षकारणता तथाप्यात्मनिष्ठलौकिकविषयताशालिप्रत्यक्षत्वं प्रति आत्मविशेषगुणनिष्ठलौकिकविषयताशालित्वस्य व्यापकतया तत्प्रयोजकीभूतो यो ज्ञानादिरूपविशेषगुणः तस्यापि सन्निकर्षादिघटितसामग्र्या लौकिकविषयतासंबन्धेन फले जननीये सहकारितया समवायसंबन्धेन ज्ञानादिकं प्रति तादात्म्यसंबन्धेनात्मनः कारणतया मनसि तादृशकारणविरहेण समवायेन ज्ञानाद्यसंभवेन तादृशसहकारिविरहान्नात्मवृत्तिलौकिकविषयतासंबन्धेन मनसि मानसप्रत्यक्षापत्तिः । यदिचात्ममानसं विशेषगुणोपरागेणैव तदभावोपरागेणापि जायते घटमहं जानामि नाहं सुखी नाहं दुःखीत्यपि लोकानामनुभवः तथाचात्ममनस्संयोगादिघटितसामान्यसामग्र्या लौकिकविषयतया मानसे जननीये आत्मविशेषगुणानामिव तदभावानामपि सहकारित्वमवारणीयमिति मनस्यात्मवृत्तिलौकिकविषयतासंबन्धेन मानसापत्तिर्दुर्वारेत्युच्यते तथाप्यात्मवृत्तिलौकिकविषयतासंबन्धेन मानसं प्रति समवायसंबन्धेन विजातीयसंयोगस्य विजातीयसंयोगसंबन्धेन मनसो वा हेतुत्वमित्यत्र विनिगमनाविरहेण विजातीयसंयोगसंबन्धेन मनसोऽपि कारणताया दुर्वारतया स्वस्मिन् संयोगसंबन्धेन स्वाधिकरणतानङ्गीकारेण तत एव मनसि मानसप्रत्यक्षवारणसंभवान्नात्ममानसे महत्त्वस्य कारणताऽऽवश्यकत्वमिति चेन्न द्रव्यचाक्षुषस्पार्शनयोर्महत्त्वस्य कारणत्वे कल्पनीये चाक्षुषत्वं स्पार्शनत्वं च कार्यतावच्छेदकीकृत्य कारणताद्वयकल्पने गौरवेण सामान्यतो द्रव्यवृत्तिलौकिकविषयतासंबन्धेन प्रत्यक्षत्वावच्छिन्नं प्रति महत्त्वेन कारणतायाः कल्पनीयतया तत्र मानसान्यत्वानिवेशे

## मञ्जूषा.

प्रयोजनविरहेण मानसं प्रत्यपि तस्य कारणताया दुर्वारत्वात् मानसत्वावच्छिन्नं प्रति कारणता तु नेष्यत एव अत एव आत्ममानसवृत्तिमहत्त्वजन्यतावच्छेदकं प्रत्यक्षत्वमिति ज्ञापनायात्ममानसप्रत्यक्ष इति प्रत्यक्षपदमुपात्तं ग्रन्थकृता ॥ **आकाशादेरिति** ॥ ननु यथा परमाण्वादिप्रत्यक्षवारणाय द्रव्यवृत्तिलौकिकविषयतासंबन्धेन प्रत्यक्षत्वावच्छिन्नं प्रति समवायसंबन्धेन महत्त्वस्य कारणता तथा परमाणुरूपादिप्रत्यक्षवारणाय द्रव्यसमवेतवृत्तिलौकिकविषयतासंबन्धेन प्रत्यक्षत्वावच्छिन्नं प्रति सामानाधिकरण्यसंबन्धेन महत्त्वस्यापि कारणता वाच्या तथा द्रव्यसमवेतसमवेतप्रत्यक्षेऽपि । ततश्च शब्दश्रावणे शब्दत्वादिश्रावणे च आकाशमहत्त्वस्य कारणता दुर्वारा तत्कथमुच्यते परममहत्त्वमाकाशादेर्बोध्यमिति उच्यते । द्रव्यसमवेतप्रत्यक्षे तत्समवेतप्रत्यक्षे च न महत्त्वस्य स्वातन्त्र्येण कारणता तथा सति परमाणुघटितसन्निकर्षेण पृथिवीत्वनीलत्वादिप्रत्यक्षापत्तेः तत्रापि सामानाधिकरण्यादिना घटमहत्त्वस्य सत्त्वात् अतो द्रव्यसमवेतवृत्तिलौकिकविषयतासंबन्धेन चाक्षुषत्वाद्यवच्छिन्नं प्रति महत्त्वविशिष्टचक्षुस्संयोगवत्समवायादेः कारणत्वमिति रीत्या तत्तदिन्द्रियसन्निकर्षघटकतयैव महत्त्वस्य कारणत्वं वाच्यं तावतैव परमाणुरूपादेरपि प्रत्यक्षवारणसंभवात् । न तत्र महत्त्वं पृथक्कारणं प्रयोजनाभावात् नवा श्रोत्रसमवाये श्रोत्रसमवेतसमवाये वा महत्त्वं घटनीयं प्रयोजनाभावात् नचैवं सन्निकर्षघटकतया महत्त्वस्य कारणत्वे तत एव परमाण्वादिप्रत्यक्षवारणसंभवात् द्रव्यप्रत्यक्षे महत्त्वस्य न पृथक्कारणत्वं नवा मनस्संयोगे तस्य घटकता प्रयोजनाभावादिति शङ्क्यं चक्षुस्संयोगत्वक्संयोगयोः द्रव्यचाक्षुषस्पार्शनजनकतावच्छेदककोटौ प्रयोजनान्तरविरहेण परमाण्वादिचाक्षुषाद्यापत्तिवारणायैव तन्निवेशे महत्त्वचक्षुस्संयोगयोः महत्त्वत्वक्संयोगयोश्च विशेषणविशेष्यभावे विनिगमनाविरहेण कार्यकारणभावचतुष्टयापत्त्या कारणतावच्छेदकगौरवेण च तदपेक्षया द्रव्यवृत्तिलौकिकविषयतासंबन्धेन चाक्षुषस्पार्शनयोः चक्षुस्संयोगत्वत्वक्संयोगत्वाभ्यां तेन संबन्धेन प्रत्यक्षे महत्त्वत्वेन च कारणतात्रयकल्पनाया एव युक्तत्वादत एव ज्ञानादिमानसप्रत्यक्षे महत्त्वस्य कारणताऽनावश्यकीति ज्ञापनायात्ममानसप्रत्यक्ष इत्यात्मपदमुपात्तम् । अथैवं रसनासंयुक्तसमवायघ्राणसंयुक्तसमवाययोः कारणतावच्छेदककोटौ महत्त्वनिवेशे प्रयोजनान्तरविरहेण परमाणुरसगन्धविषयकरासनघ्राणजवारणायैव तन्निवेशे महत्त्वरसनासंयोगयोर्महत्त्वघ्राणसंयोगयोश्च विशेषणविशेष्यभावे विनिगमनाविरहेण गुरुधर्मावच्छिन्नकारणताचतुष्टयापत्त्या रासनघ्राणजसाधारण्येन द्रव्यसमवेतवृत्तिलौकिकविषयतासंबन्धेन प्रत्यक्षत्वावच्छिन्नं प्रति सामानाधिकरण्यसंबन्धेन महत्त्वत्वेन कारणतैव युक्तेति शब्दप्रत्यक्षे महत्त्वस्य कारणता दुर्वारा परन्तु रसनासंयुक्तसमवेतसमवायघ्राणसंयुक्तसमवेतसमवाययोर्महत्त्वनिवेशस्य परमाणुघटितसन्निकर्षेण रसत्वगन्धत्वादिप्रत्यक्षवारणयावश्यकतया द्रव्यसमवेतसमवेतप्रत्यक्षे महत्त्वस्य परंपरासंबन्धेन कारणतायां मानाभावेन शब्दत्वादिप्रत्यक्षे महत्त्वस्य कारणता न प्राप्नोति तावतापि परममहत्त्वमाकाशादेर्बोध्यमिति ग्रन्थासङ्गतिरपरिहार्येति चेदुच्यते । परमाणुरसगन्धयोः प्रत्यक्षवारणाय रसवृत्तिलौकिकविषयतासंबन्धेन रासनत्वावच्छिन्नं प्रति गन्धवृत्तिलौकिकविषयतासंबन्धेन घ्राणजत्वावच्छिन्नं प्रति च सामानाधिकरण्येन महत्त्वस्य कारणताद्वयमङ्गीक्रियते नतु द्रव्यसमवेतवृत्तिलौकिकविषयतासंबन्धेन प्रत्यक्षत्वावच्छिन्नं प्रति तस्य कारणता तथा सति त्रसरेणुप्रत्यक्षे व्यभिचारवारणाय द्रव्यान्यद्रव्यसमवेतवृत्तिलौकिकविषयताया एव कार्यतावच्छेदकसंबन्धताया वाच्यतया द्रव्यान्यत्वद्रव्यसमवेतत्वयोर्विशेषणविशेष्यभावे विनिगमनाविरहेण कार्यकारणभावद्वयस्याविशिष्टतया कार्यतावच्छेदकशरीरगौरवस्याधिकत्वात् । किंच त्रसरेणुवृत्तिधर्माणां चक्षुरतिरिक्तेन्द्रियग्राह्यता नाङ्गीक्रियते ततश्च त्वक्संयुक्तसमवायनिष्ठकारणतावच्छेदककोटौ प्रकृष्टमहत्त्वस्यैव निवेशेन त्रसरेणुस्पर्शसंख्यापरिमाणादिस्पार्शनवारणेऽपि तद्रसगन्धयोः प्रत्यक्षं भवतो दुर्वारं रसनाघ्राणसंयुक्तसमवाययोर्महत्त्वस्याघटकत्वात् द्रव्यसमवेतप्रत्यक्षं

## मञ्जूषा.

प्रति महत्त्वस्य प्रकृष्टमहत्त्वत्वेन महत्त्वस्य कारणत्वे त्रसरेणुरूपादिचाक्षुषे व्यभिचारप्रसक्त्या चाक्षुषान्यत्वस्य कार्यतावच्छेदककोटिप्रवेशे चाक्षुषान्यत्वप्रत्यक्षत्वयोरपि विशेषणविशेष्यभावे विनिगमनाविरहः कार्यतावच्छेदकगौरवञ्च तदपेक्षया रसरासने गन्धघ्राणजे च प्रकृष्टमहत्त्वेन कारणतैव लघीयसी । नच त्रसरेणौ विजातीयानां त्वग्रसनाघ्राणसंयोगानामभावादेव तद्गुणानां स्पार्शनरासनघ्राणजवारणं संभवतीति वाच्यं त्रसरेणौ प्रकृष्टमहत्त्वाभावस्पार्शनानुरोधेन वैजात्यपुरस्कारेण सन्निकर्षाणां कारणतावादिनामपि विजातीयत्वक्संयोगस्य तत्रावश्यकत्वादेवं यत्र एकयैव रसनाक्रियया शुद्धेन त्रसरेणुना च युगपद्रसना संयुज्यते तत्र तद्वैजात्यावच्छिन्नसंयोगस्य शुद्ध इव त्रसरेणावपि उत्पत्तौ बाधकाभावः एवं घ्राणस्थलेऽपि । अन्यथा विजातीयरसनाघ्राणसंयुक्तत्वविरहादेव परमाणुरसगन्धयोरपि प्रत्यक्षापत्तिवारणसंभवेन तत्प्रत्यक्षे महत्त्वकारणताया एव विलोपप्रसङ्गः तद्वैजात्यावच्छिन्नयोः रसनाघ्राणसंयोगयोरणुत्रयसमवेतद्रव्यत्वरूपत्रसरेणुत्वेन तादात्म्यसंबन्धेन प्रतिबन्धकताकल्पने गौरवमतो न शब्दश्रावणप्रत्यक्षे आकाशमहत्त्वस्य कारणता युक्तिसिद्धा परन्तु आत्ममानसप्रत्यक्षे महत्त्वस्य कारणत्वमपि न युक्तिसिद्धं द्रव्यप्रत्यक्षत्वावच्छिन्नं प्रति तद्धेतुतायां मानाभावात् त्रसरेणुस्पार्शनवारणाय द्रव्यस्पार्शनं प्रति प्रकृष्टमहत्त्वत्वेन कारणत्वावश्यकतया तत्र द्रव्यप्रत्यक्षत्वस्य कार्यतावच्छेदकत्वे त्रसरेणुचाक्षुषे व्यभिचारापत्त्या तत्र चाक्षुषान्यत्वनिवेशे चाक्षुषान्यत्वप्रत्यक्षत्वयोर्विशेषणविशेष्यभावे विनिगमनाविरहेण कार्यतावच्छेदकगौरवेण चाक्षुषं प्रति कारणतान्तरकल्पनेन च तदपेक्षया द्रव्यचाक्षुषं प्रति महत्त्वत्वेन द्रव्यस्पार्शनं प्रति प्रकृष्टमहत्त्वत्वेन च कारणताद्वयस्यैव युक्तत्वात् । नच द्रव्यप्रत्यक्षं प्रति महत्त्वत्वेनैव कारणता द्रव्यस्पार्शने तु तादात्म्येन त्रसरेणुः प्रतिबन्धक इति वाच्यम् अणुत्रयसमवेतद्रव्यभेदत्वापेक्षया लघोर्महत्त्वनिष्ठप्रकर्षस्यैव द्रव्यस्पार्शनजनकतावच्छेदकत्वौचित्यात् । एवं नित्यसाधारणधर्मस्य कार्यतावच्छेदकतां ये नाभ्युपगच्छन्ति तेषां जन्यप्रत्यक्षे नित्यव्यावृत्तजातिविशेषानङ्गीकारपक्षे न द्रव्यप्रत्यक्षत्वं महत्त्वकार्यतावच्छेदकीभवितुमर्हति जन्यत्वनिवेशे च जन्यत्वप्रत्यक्षत्वयोर्विशेषणविशेष्यभावे विनिगमनाविरहः कार्यतावच्छेदकगौरवंच जन्यत्वं प्रागभावप्रतियोगित्वं ध्वंसप्रतियोगित्वं कालिकसंबन्धेन घटत्वादिकं वेत्यत्र विनिगमनाविरहश्च द्रव्यसमवेतप्रत्यक्षत्वस्य महत्त्वकार्यतावच्छेदकतास्वीकारेऽप्येष दोषोऽनुसन्धेयः । नचात्र कालिकसमवायोभयसंबन्धेन प्रत्यक्षत्वस्य कार्यतावच्छेदकत्वस्वीकारान्न नित्यसाधारण्यमिति वाच्यम् । द्रव्यस्पार्शनं प्रति प्रकृष्टमहत्त्वत्वेन कारणत्वावश्यंभावे परिशिष्टद्रव्यचाक्षुषस्थले दर्शितोभयसंबन्धेन प्रत्यक्षत्वस्य कार्यतावच्छेदकत्वस्वीकारापेक्षया समवायसंबन्धेन चाक्षुषत्वस्यैव तथात्वौचित्यात् व्याप्यधर्मस्य कार्यतावच्छेदकत्वे संभवति व्यापकधर्मस्य कार्यतावच्छेदकताया अन्याय्यत्वाच्च । नच यत्र एकयैव मनःक्रियया मन आत्मना परमाणुना च संयुज्यते तत्र परमाणौ विजातीयसंयोगे बाधकाभावात् मनस्संयोगस्य वैजात्यपुरस्कारेण कारणतावादिमतेऽपि परमाणौ लौकिकविषयतासंबन्धेन मानसापत्तिवारणायात्ममानसे महत्त्वस्य कारणता आवश्यकीति वाच्यं तद्रीत्या देहप्राणाकाशपरमात्मादौ लौकिकविषयतासंबन्धेन मानसस्य दुर्वारतापत्त्या तद्वारणप्रकारेणैव परमाणावपि वारणसंभवात् तद्वारणप्रकारश्च लौकिकविषयतासंबन्धेन तत्पुरुषीयमानसे तत्पुरुषवृत्तेरेव मनस्संयोगस्य कारणता स्वीकार्येत्यन्यदेतत् । ततश्चात्मादिमानसे शब्दादिश्रावणे च महत्त्वस्य कारणता निर्युक्तिकैव कथं तर्ह्यात्ममानसप्रत्यक्षे आत्ममहत्त्वस्य कारणत्वादिति विश्वनाथोक्तिरिति चेदत्र ब्रूमः । आत्ममानसप्रत्यक्ष इति बहुषु पुस्तकेषु आत्मपदघटितः पाठो न दृश्यते किन्तु मानसप्रत्यक्ष इत्येव अन्येषु चात्मपदं नूतनतया लिखितं दृश्यते तेनेदमवगम्यते महादेवव्याख्यानमवलोक्य कैश्चिदिदं लिखितमिति ततश्च मानसप्रत्यक्षे आत्ममहत्त्वस्य कारणत्वं विषयविधया विश्वनाथाभिप्रेतमात्ममहत्त्वस्य मानसप्रत्यक्षे विषयत्वाङ्गीकारात् ज्ञानातिरिक्तं प्रतीत्यायुत्तरमुक्तावलीग्रन्थस्वरसानुरोधी चायमर्थ

## मञ्जूषा.

इत्युपरिष्टाद्व्यक्तीभविष्यति । यदि चात्मपदघटितक्वाचित्कपाठेऽप्यभिनिवेशस्तदात्मविषयकं यदहं महानिति मानसप्रत्यक्षं तत्रेत्यर्थः । अथवात्मपदं स्वपरं स्वंचात्ममहत्त्वम् । अत्रास्मद्गुरुचरणाः आकाशादेर्बोध्यमित्यत्र आकाशं आदिर्यस्मादिति अतद्गुणसंविज्ञानबहुव्रीहिणा कालादेरित्यर्थ इत्याहुः । तेषामयमाशयः महत्त्वं षड्विधे हेतुरिति मूले षडिन्द्रियजन्यप्रत्यक्षमात्रे महत्त्वस्य कारणता कण्ठोक्ता तद्व्याख्यानमुक्तावल्यां च द्रव्यप्रत्यक्षे द्रव्यसमवेतप्रत्यक्षे तत्समवेतप्रत्यक्षे च सामान्यतो महत्त्वस्य कारणतात्रयं प्रतिपादितं तदनुसारेणैव च मनोऽपि न तथा ज्ञानाद्यनध्यक्षं तथा भवेदिति मूलं तद्व्याख्यानमुक्तावली च दृश्यते अतो न तत्र युक्तिरस्माभिरन्वेष्टव्या तदनुसारेण च प्रकृतग्रन्थो व्याख्येय इति । वयं तु अस्ति षडिन्द्रियजन्येऽपि प्रत्यक्षे महत्त्वस्य कारणतापक्षः केषांचिदभिमतः सच महत्त्वं षड्विध इति मूले दर्शितः व्याख्यातश्च तत्पक्षाभिप्रायेणैव मनोऽपीत्यादिमूलतद्व्याख्याने न तत्र विश्वनाथस्य निर्भरः । दृश्यते हि मूले अनिर्भृतपक्षलेखनमपि बहुशः यस्सपक्षे विपक्षे च भवेत्साधारणस्तु स इत्यादि तदनिर्भरबीजं च मुक्तावल्यां क्वचित्क्वचित् प्रकाश्यते क्वचिन्न प्रकाश्यते प्रकाश्यमानमपि क्वचित्तन्मूलव्याख्यानावसर एव प्रकाश्यते क्वचिच्च स्थलान्तरे यथा साधारणादीनां मूलोक्तेषु प्राचीनलक्षणेषु अनिर्भरबीजं तद्व्याख्यानावसर एव प्रकाशितं विरुद्धयोः परामर्शहेत्वोस्सत्प्रतिपक्षतेति मूलोपदर्शितसत्प्रतिपक्षानित्यदोषत्वपक्षानिर्भरबीजन्तु न तद्व्याख्यानावसरे प्रकाशितं किन्तु प्रागेव स्थलान्तरे । एवं नीलधूमादेर्व्याप्यत्वासिद्धत्वे मूलोक्ते अनिर्भरबीजं कुत्रापि न प्रकाशितं किंतु साध्याप्रसिद्ध्यादेरेव व्याप्यत्वासिद्धरूपतायाः स्वपक्षतया स्थलान्तरेऽभिधानेन सूचितं एवमन्यत्रापि द्रष्टव्यम् । ततश्च महत्त्वं षड्विध इति मूले कारणतात्रयं व्यवस्थापितम् । तत्र तृतीयकारणतायाः निर्युक्तिकत्वं सन्निकर्षग्रन्थे विश्वनाथेन स्फुटतरमवगमयिष्यते । परममहत्त्वमाकाशादेर्बोध्यमिति प्रकृतग्रन्थे तु द्वितीयकारणतायाः स्वासम्मतत्वमात्रमवगम्यते युक्तिस्तु नोक्ता किन्तु सन्निकर्षग्रन्थवक्ष्यमाणरीत्याद्यवष्टम्भेन समर्थनीया द्वितीयकारणतायां विश्वनाथासम्मतत्वमूलभूताया युक्तेः प्रथमकारणतायामविशेषात् तत्रापि न तस्य निर्भर इत्याचक्ष्महे । किन्तु जीवात्ममहत्त्वस्य मानसप्रत्यक्षविषयत्वात्तस्य विषयविधया कारणत्वमस्तीति तद्भिन्नपरममहत्त्वस्यैवात्रालक्ष्यत्वम् । अत्र वर्धमानोपाध्यायमतानुसारिणः जीवात्ममहत्त्वस्यापि न कारणत्वं तस्य मानसप्रत्यक्षाविषयत्वात् ह्यहम्महानिति कश्चिन्मनसा साक्षात्करोति नच महच्छब्दोल्लेखाभावेऽपि आत्मपरिमाणस्य मानसानुभवविषयता नास्तीति साहसमिदं मन्दमतिभिरस्माभिर्विप्रतिपन्नेष्वर्थेषु अनुभवास्तित्वनास्तित्वयोर्विवेक्तुमशक्यत्वादिति वाच्यम् कारणत्वमन्यत्र पारिमाण्डिल्यादिभ्य इत्यादिपदेन परममहत्त्वत्वेन परममहत्त्वं संगृह्णद्भिराचार्यैरेव तादृशानुभवो नास्तीत्युक्तप्रायत्वाद्यदि ह्यात्ममहत्त्वस्य ते मानसप्रत्यक्षविषयतामभिप्रेयुः तर्हि तस्य विषयविधया कारणताया दुर्वारतया अकाशादिमहत्त्वत्वेनैव संगृह्णीयुः नच तथा संजगृहुः अतो ज्ञापयन्त्याचार्यास्तस्यातीन्द्रियत्वमित्याचक्षते तन्मतमनुवदति ॥ **तस्यापीति** ॥ आत्ममहत्त्वस्यापीत्यर्थः । अत्रात्ममहत्त्वस्यापि न कारणत्वमिति लेखनस्वरसपर्यालोचनया पूर्वग्रन्थे आत्ममहत्त्वस्यैव कारणत्वमभिप्रेतमित्यवगम्यते ॥ **ज्ञानातिरिक्तं प्रतीति** ॥ आचार्या हि ज्ञानातिरिक्तकार्यनिरूपितकारणत्वमेव लक्षणीचक्रुः अतो युक्त एव तेषां परममहत्त्वसामान्यस्य लक्ष्यबहिर्भावः नचैतावताऽऽत्ममहत्त्वस्य मानसप्रत्यक्षकारणत्वाभावः तदनुमतोऽवगम्यते नवा तादृशानुभवनास्तित्वस्य तदभिप्रेतत्वे बीजलाभ इति भावः । नच तादृशानुभवसत्तायास्तदभिप्रेतत्वेऽपि न बीजलाभ इति वाच्यं तादृशानुभवसत्तायां मनस्संयोगादिसामग्रीबलादवर्जनीयतया आचार्याभिप्रेतत्वबीजलाभनिरपेक्षसिद्धिकत्वाददृष्टादेरिव परममहत्त्वस्यापि मानसप्रत्यक्षे तादात्म्येन प्रतिबन्धकत्वकल्पने गौरवात् । अथाचार्योक्तं ज्ञानातिरिक्तकार्यनिरूपितत्वं किमिति विश्वनाथो नादृतवानिति चेदत्र बीजमाह मद्गुरुदेवः आचार्यैः पारिमाण्डल्यादीत्यादिपदार्थेषु सुखदुःखादेरजनितावयविरूपादेः पाकविनष्टपरमाणुरूपा-

अन्यथासिद्धिशून्यस्य नियता पूर्ववर्तिता ।
कारणत्वं भवेत्तस्य त्रैविध्यं परिकीर्तितम् ॥ १६ ॥
समवायिकारणत्वं ज्ञेयमथाप्यसमवायिहेतुत्वम् ।
एवं न्यायनयज्ञैस्तृतीयमुक्तं निमित्तहेतुत्वम् ॥ १७ ॥

ननु कारणत्वं किमत आह ॥ अन्यथासिद्धीति ॥ तस्य कारणत्वस्य ॥ १६ ॥ १७ ॥

**प्रभा.**

मूले अन्यथासिद्धिशून्यस्येति ॥ अन्यथासिद्धिशून्यत्वे सति नियतत्वे सति पूर्ववृत्तित्वं कारणत्वमित्यर्थः । दण्डत्वादिवारणायान्यथासिद्धिशून्यत्वे सतीति । घटत्वावच्छिन्ननिरूपितान्यत्र-कृत्तेत्याद्यन्यथासिद्धिशून्ये तद्रासभे अतिव्याप्तिवारणाय नियतेति । घटस्य घटत्वावच्छिन्ननिरूपिता-

**मञ्जूषा.**

देश्चापरिगणनात्तेषामलक्ष्यत्वमनुमतं एवंच तेषु ज्ञानाद्यतिरिक्तभावकार्यफलोपधायकत्वरूपस्याचार्यलक्षणस्याव्याप्तिं परिचिन्त्य स पक्षस्त्यक्तो ग्रन्थकृतेति । अत्र ज्ञानातिरिक्तत्वनिवेशे सुखादावव्याप्तिस्तस्य हि स्वसाक्षात्कारे उद्बोधकविधया पुत्रादिस्मृतौ च कारणत्वं ननु तदतिरिक्तभावकार्यकारणत्व-मस्ति एवं फलोपधायकत्वनिवेशे अवयविरूपानुपधायकपाकविनष्टपरमाणुरूपादावव्याप्तिस्तस्य रूपाद्यात्मकभावकार्यं प्रति स्वरूपयोग्यत्वेऽपि फलोपधायकत्वाभावादिति विवेकः । यद्यप्यत्र ज्ञानातिरिक्तत्वनिवेशनमेव दूषणीयं तथाप्याचार्याभिप्रेतत्वसाम्येन प्रसङ्गात् फलोपधायकत्वमपि दूषितमिति बोध्यम् । किन्तूभयमपीदं भावत्वानिवेशने सत्येव संगच्छते तदानिवेशे सुखादेः पाकविनष्टपरमाणुरूपादेश्च स्वध्वंसकारणतया लक्षणसङ्गमनात् तन्निवेशनं चानतिप्रयोजनमिति प्रागेवोक्तम् । किञ्चाचार्याणां ज्ञानातिरिक्तत्व-निवेशने बीजमपीह वक्तव्यं तच्च महादेवोक्तरीत्या न सम्पन्नमतो नेदमभिप्रेतं विश्वनाथस्य । वयंतु ब्रूमः प्रयोजनाभावादेव न ज्ञानातिरिक्तनिरूपितत्वं निवेशितं ग्रन्थकृता अस्ति त्वाचार्याणां तन्निवेशने प्रयोजनं तेहि योगिप्रत्यक्षे विषयस्य कारणतां स्वीकुर्वन्ति ज्ञायमानसामान्यस्य प्रत्यासत्तित्वं ज्ञायमानलिङ्गस्यानुमितिकरणत्वं अतो लक्षणमिदमतिप्रसज्यते तेनावश्यकं तेषां ज्ञानातिरिक्तत्वनिवेशनं विश्वनाथस्तु तथा नाभ्युपैति तेन तत्परित्यक्तवान् एवंच तत्परित्यागबीजमिदमपीत्यादिना ग्रन्थकृतैव दर्शितमिति न तत्र बीजान्तरान्वेषणप्रयासः कर्तव्यः । अत एव ज्ञानातिरिक्तं प्रति अकारणताया एवाचार्यैरुक्तत्वादित्येतदुत्तरमेवेदमपि योगिप्रत्यक्ष इत्यादिपाठो बहुषु पुस्तकेषु दृश्यते । युक्तं चैतत् ज्ञानातिरिक्तं प्रतीत्यादिग्रन्थोत्तरमेव स्वयं तदनिवेशबीजजिज्ञासोदयात् एवं सति हीदमपीत्यादिग्रन्थो बह्वर्थभरितो भवति । येतु महादेवव्याख्यानमवलोक्य बभ्रमुस्तैरेव इदमपीत्यादिग्रन्थो विशेषाश्च बोध्यमित्येतदुत्तरं लिखित इति मन्तव्यम् । एवंच ज्ञानातिरिक्तं प्रतीत्यादिग्रन्थसन्दर्भस्य विषयादिविधया या कारणता तदनुबन्धित्वात्तदव्यवहितपूर्वस्य मानसप्रत्यक्ष इत्यादिग्रन्थसन्दर्भस्यापि विषयविधया कारणतामनुबध्यैव प्रवृत्तिर्युक्तेति सर्वं समञ्जसम् ॥ १५ ॥

मूले अन्यथासिद्धिशून्यस्येति ॥ इहान्यथासिद्धिशून्यत्वं न विशेषणमन्यथासिद्धेरनुगताया अ-

**दिनकरीयम्.**

मूलेऽन्यथासिद्धीति ॥ दण्डत्वादौ नियतपूर्ववृत्तितायाः सत्त्वादतिव्याप्तिरत उक्तमन्यथा-

**रामरुद्रीयम्.**

दण्डत्वादाविति ॥ घटाधिकरणदेशावच्छेदेन नियतपूर्ववर्तिताया इत्यर्थः । स्वाश्रयाश्रय-

## प्रभा.

न्यत्र क्लृप्तस्यायन्यथासिद्धिशून्यतया घटत्वावच्छिन्ननिरूपितव्यापकत्ववत्तया च घटत्वेन स्वस्य स्वकारणत्वापत्तिवारणाय पूर्ववृत्तीति । अत्र संयोगेन घटं प्रति दण्डस्य न हेतुता भूतलादावपि संयोगेन घटसत्त्वेन तत्र संयोगेन दण्डाभावात् किन्तु संयोगसंबन्धावच्छिन्नोत्पत्त्यवच्छेदकतासंबन्धेन । तथाच तत्संबन्धेन कार्याधिकरणनिष्ठात्यन्ताभावाप्रतियोगित्वघटितं घटकारणत्वं दण्डस्य वाच्यं तदपि न संभवति घटोत्पत्त्युत्तरकालावच्छेदेन तेन संबन्धेन घटाधिकरणे दण्डाभावसत्त्वात् अतः कार्याधिकरणवृत्त्यभावे कार्याव्यवहितप्राक्कालावच्छेद्यत्वमपि निवेशनीयम् । नच तथापि कार्याधिकरणे चक्रे दण्डाभावस्य कालिकसंबन्धेन वर्तमानतया दण्डेऽव्याप्तिरिति वाच्यं वर्तमानत्वस्याभावीयदैशिकविशेषणतासंबन्धावच्छिन्नवृत्तित्वस्य विवक्षणात् । नचैवं संबन्धान्तरावच्छिन्नप्रतियोगिताकदण्डाभावस्य तेन संबन्धेन चक्रे सत्त्वादव्याप्तितादवस्थ्यमिति वाच्यं प्रतियोगितायां कारणतावच्छेदकसंबन्धावच्छिन्नत्वनिवेशात् । नच तथापि दण्डादेः विशिष्टाभावोभयाभावमादायाव्याप्तिरिति वाच्यं अप्रतियोगित्वशब्देन प्रतियोगितानवच्छेदकधर्मवत्त्वविवक्षणात् नचैवं सति पृथक् पूर्ववृत्तित्वविशेषणं व्यर्थमिति वाच्यं इष्टापत्तेः एतादृशव्यापकत्वलाभायैव तदुपादानात् । तथाच संयोगसंबन्धावच्छिन्नोत्प-

## मञ्जूषा.

भावात् किन्तु यत्र यस्यान्यथासिद्धिव्यवहारः तत्तद्व्यक्तित्वाभावकूटवत्त्वं तत्तद्व्यक्तिभेदकूटवत्त्वं वा विशेषणमिति ज्ञापनायान्यथासिद्धिशून्यस्येति षष्ठ्यन्ततया निर्देशः । नच तत्तद्व्यक्तिभेदकूटस्यैव विशेषणत्वे अन्यथासिद्धिनिर्वचनायासवैयर्थ्यमिति वाच्यम् । तत्तद्व्यक्तिपरिचयायैव तन्निर्वचनात् यथाचानुगतत्वमन्यथासिद्धेर्न संभवति तथा स्पष्टमुपरिष्टादुपपादयिष्यामः ॥ **नियतेति** ॥ नन्वत्र नियतत्वं व्यापकत्वं तत्रच परिशेषात् कार्यमेव प्रतियोगि वाच्यं तथाचासंभवः कार्यव्यापकत्वस्य दण्डनिष्ठस्य तन्निष्ठपूर्ववृत्तितायामभावादिति चेदत्र केचित् कार्यपूर्वकालत्वमिह व्यापकत्वप्रतियोगितया विवक्षितं व्यापकतावच्छेदकसंबन्धो निरूपकता पूर्ववृत्तित्वं कार्यपूर्वकालवृत्तित्वं अत्रच वृत्तित्वे पूर्वकालीयत्वोपादानं पूर्वकालत्वस्य व्याप्यत्वलाभाय नतु तस्य व्यापकतावच्छेदकप्रवेशः प्रयोजनाभावात् व्यापकत्वं तु कारणतावच्छेदकत्वेनाभिमतो यो धर्मः तदवच्छिन्नकालिकसंबन्धावच्छिन्नवृत्तित्वत्वेन रूपेण । तथाच कार्यपूर्वकालत्वनिरूपितनिरूपकतासंबन्धावच्छिन्नव्यापकतावच्छेदकं यद्धर्मावच्छिन्नकालिकसंबन्धावच्छिन्नवृत्तित्वत्वं तद्धर्मवत्त्वं नियतमिह पूर्ववृत्तित्वं अस्ति चेदं दण्डे यत्र घटपूर्वकालत्वं तत्र दण्डत्वावच्छिन्नघटपूर्वकालवृत्तित्वं निरूपकतासंबन्धेनेति नियमसत्त्वात् न च रासभत्वाव-

## दिनकरीयम्.

सिद्धिशून्यस्येति । तद्घटत्वावच्छिन्नेऽन्यत्र क्लृप्तनियतपूर्वस्यायन्यथासिद्धिमत्यपि घटत्वावच्छिन्नेऽन-

## रामरुद्रीयम्.

त्वसम्बन्धेन दण्डत्वादेरपि घटाधिकरणसम्बद्धत्वादिति भावः ॥ **घटत्वावच्छिन्न इति** ॥ यद्यप्यग्रे लघुनियतपूर्ववर्तितावच्छेदकावच्छिन्नैरेव कार्योत्पादसम्भवे तत्सहभूतमन्यथासिद्धमित्येव पञ्चमान्यथासिद्धिनिरुक्तिर्ग्रन्थकृता वक्ष्यते तथा च तद्रासभत्वस्य घटत्वावच्छिन्नं प्रत्यपि नियतपूर्ववर्तितानवच्छेदकत्वात् घटत्वावच्छिन्नेऽपि तद्रासभस्यान्यथासिद्धत्वं सम्भवति तथापि लाघवस्य शरीरकृतसम्बन्धकृतादिभेदेन नानारूपतया अन्यथासिद्धत्वमेकमनुगतं न शक्यते वक्तुं तद्विरोधिगौरवस्य तत्तत्पदार्थघटितत्वरूपस्यापि तत्तद्व्यक्तिभेदेन भिन्नतया अन्यदित्यस्य गुरुभूतार्थकतया गौरवस्यैव अन्यथासिद्धत्वपर्यवसानात् अतस्तत्तद्भिन्नत्वमेव अनन्यथासिद्धत्वं वाच्यम् तत्र च नियतपूर्ववर्तिभिन्नानां नियतपूर्ववर्तित्वदलेनैव वारणसम्भवे तादृशानन्तपदार्थभेदानामन्यथासिद्धिशून्यत्वशरीरे प्रवेशे गौरवामिति तत्कार्यनियतपूर्ववर्तित्वे सति तत्कार्यकारणत्वेनाव्यवह्रियमाणा ये तद्भिन्नत्वमेवान्यथासि-

## प्रभा.

स्यवच्छेदकत्वसंबन्धेन घटत्वावच्छिन्नाधिकरणे घटाव्यहितप्राक्कालावच्छेदेन दैशिकविशेषणतासंबन्धेन वर्तमानो योऽभावः तादृशाभावीयकारणतावच्छेदकसंबन्धावच्छिन्नप्रतियोगितानवच्छेदकधर्मवत्त्वं दण्डनिष्ठघटकारणत्वमिति फलितम् । नन्वेवमपि तादृशप्रमेयत्वरूपधर्ममादाय रासभादेः कारणत्वापत्तिः रासभादेः तादृशप्रमेयत्वरूपधर्मवत्त्वेऽपि तेषामन्यथासिद्धत्वाभावात् हेतुतापत्तिरिति चेन्न अन्यथासिद्ध्यनिरूपकत्वेनापि धर्मस्य विशेषणीयत्वात् प्रमेयत्वद्रव्यत्वादीनां दण्डत्वव्यापकधर्मत्वेन तेषामन्यथासिद्ध्यनिरूपकत्वात् । नचैवमपि रासभत्वादीनामपि अन्यथासिद्ध्यनिरूपकत्वादेव तेन रूपेण रासभादीनां कारणत्वापत्तिवारणसंभवे अनन्यथासिद्धत्वविशेषणवैयर्थ्यमिति वाच्यं इष्टापत्तेः अन्यथासिद्ध्यनिरूपकधर्मलाभायैव तादृशविशेषणदानात् । अनयैव दिशा समवायेन घटं प्रति तादात्म्येन कपालस्य समवायेन कपालसंयोगस्य च कारणत्वं बोध्यं एवमेव च कार्यान्तरेऽप्यूह्यमिति संक्षेपः ॥ १६ ॥ १७ ॥

## मञ्जूषा.

च्छिन्नं घटपूर्वकालवृत्तित्वं घटपूर्वकालवृत्तित्वं घटपूर्वकाले नियमेनास्ति । ननु सर्वत्र घटपूर्वकाले देशान्तरावच्छेदेन रासभो वर्तत एवेति कथं तद्वारणमिति चेन्न । कार्याधिकरणदेशावच्छिन्नत्वस्य वृत्तित्वविशेषणत्वात् अत्र वृत्तित्वस्य प्रतिव्यक्तिभिन्नतया न स्वरूपेण कार्यपूर्वकालत्वव्यापकत्वं येनकेनापि रूपेण व्यापकत्वन्तु रासभादिनिष्ठपूर्ववृत्तितासाधारणमिति निरुक्तरूपस्य व्यापकतावच्छेदकतया निवेशः । नच एतादृशपूर्ववृत्तित्वस्य तदवच्छेदकधर्मवत्त्वस्य वा कारणतारूपत्वे तादृशपूर्ववृत्ततावच्छेदकसंबन्धः कालिकविशेषणतैवेति संयोगादेः कारणतावच्छेदकसंबन्धत्वव्यवहारो न स्यादिति वाच्यं कारणताघटकीभूता या तादृशवृत्तितानिरूपिता कार्याधिकरणनिष्ठदैशिकावच्छेदकता तन्नियामकसंबन्धस्य कारणतावच्छेदकसंबन्धत्वव्यवहारादित्याहुः । अन्ये त्वत्र पूर्ववृत्तित्वं पूर्वकालावच्छिन्नं कार्याधिकरणवृत्तित्वं तत्र पूर्वकालावच्छिन्नत्वनिवेशनं पूर्वकालत्वस्य व्याप्यतालाभाय कालिकावच्छेदकतायाः व्यापकतावच्छेदकसंबन्धत्वलाभाय च । व्यापकतावच्छेदकधर्मस्तु कारणतावच्छेदकत्वेनाभिमतधर्मावच्छिन्नकार्याधिकरणवृत्तित्वं तथाच कार्यपूर्वकालत्वनिरूपितकालिकावच्छे-

## दिनकरीयम्.

न्यथासिद्धे तद्रासभेऽतिव्याप्तिवारणाय नियतेति । नियतपूर्ववृत्तिजातीयतेत्यर्थः । तेनारण्यस्थदण्डादावपि स्वरूपयोग्यतासम्पत्तिः । तज्जातीयत्वं च नियतपूर्ववृत्तितावच्छेदकदण्डत्वादिमत्त्वमेवेति ॥ १६ ॥ १७ ॥

## रामरुद्रीयम्.

द्भिन्नत्वं तथा च तद्रसभत्वस्य घटत्वावच्छिन्ननियतपूर्ववर्तितावच्छेदकत्वाविरहात् तद्रासभो न घटत्वावच्छिन्नेऽन्यथासिद्ध इति भावः । न च दण्डत्वाद्यवच्छिन्नभेदकूटस्यानुगतस्यैव अन्यथासिद्धत्वमस्त्विति वाच्यम् । तथासति तदभावस्य दण्डत्वादेरेव कारणतात्वसम्भवेन शेषवैयर्थ्यात् । न्यूनवृत्तिदण्डत्वादेः कारणतानवच्छेदकत्वापत्तेश्च तद्भेदकूटाभावो नातिरिक्त इति ध्येयम् । अरण्यस्थदण्डादौ कारणतोपपत्तये नियतपूर्ववर्तिजातीयत्वं कारणत्वमित्युक्तं तत्र च द्रव्यत्वादिना घटपटादीनामपि नियतपूर्ववर्तिजातीयत्वात्तेषामपि घटकारणतापत्तिरत आह ॥ **तज्जातीयत्वं चेति** ॥ **दण्डत्वादीति** ॥ न च दण्डत्ववद्द्रव्यत्वादिकमपि नियतपूर्ववर्तितावच्छेदकमेवेति तद्दोषतादवस्थ्यमिति वाच्यम् । नियतपूर्ववर्तितावच्छेदकपदेन लघुनियतपूर्ववर्तितावच्छेदकस्योक्तत्वात् । द्रव्यत्वस्य घटनियतपूर्ववर्तितावच्छेदकत्वेन तस्यैव घटकारणतारूपत्वे अनन्तद्रव्येषु घटकारणत्वकल्पनापत्त्या गौरवात् दण्डत्वादिकमेव लध्विति भावः । तथा च द्रव्यत्वादिभिन्नत्वे सति घटनियतपूर्ववर्तितावच्छेदकधर्मवत्त्वं घटकारणत्वमिति पर्यवसितम् ॥ १६ ॥ १७ ॥

## मञ्जूषा.

दकतासंबन्धावच्छिन्नव्यापकतावच्छेदकं यद्धर्मावच्छिन्नकार्याधिकरणवृत्तित्वत्वं तद्धर्मवत्त्वं नियतमिह पूर्ववृत्तित्वं अस्ति च घटपूर्वकाले दण्डनिष्ठं घटाधिकरणवृत्तित्वं कालिकावच्छेदकतासंबन्धेनावश्यमिति लक्षणसमन्वयः कारणताघटककार्याधिकरणवृत्तितावच्छेदकसंबन्धश्च कारणतावच्छेदकसंबन्ध इति व्यपदिश्यत इत्याहुः । अपरेतु कार्यतावच्छेदकधर्मः इह व्यापकत्वप्रतियोगितया विवक्षितः व्यापकंच पूर्ववृत्तित्वं तच्च कार्यपूर्वकालावच्छिन्नं कार्याधिकरणवृत्तित्वं व्यापकतावच्छेदकसंबन्धश्च स्वावच्छेदककालनिष्ठपूर्वत्वनिरूपकत्वं स्वावच्छेदककालनिष्ठप्रागभावप्रतियोगित्वमिति यावत् । एतस्य व्यापकतावच्छेदकसंबन्धत्वलाभायावच्छिन्नान्तं व्यापकता तु कारणतावच्छेदकत्वाभिमतधर्मावच्छिन्नकार्याधिकरणवृत्तित्वत्वेन रूपेण तथाच कार्यतावच्छेदकनिरूपितस्वावच्छेदककालनिष्ठप्रागभावप्रतियोगित्वसंबन्धावच्छिन्नव्यापकतावच्छेदकयद्धर्मावच्छिन्नकार्याधिकरणवृत्तित्वत्वं तद्धर्मवत्त्वमिति फलितं शेषं पूर्ववदित्याहुः । एतन्मते नित्यवृत्तिधर्मस्य कार्यतावच्छेदकत्वं कथमपि न संभवतीति बोध्यम् । अर्वाचीनास्तु नियतपदं सामानाधिकरण्यसंबन्धेन नियमविशिष्टपरं नियमः कार्यव्यापकत्वं तथाच कार्यव्यापकत्वे सति पूर्ववृत्तित्वं पर्यवसन्नमित्याहुः । अथात्र कल्पे संयोगेन घटं प्रति संयोगेन दण्डस्य कारणता न स्यात् उत्तरकालं घटस्य संयोगसंबन्धेन वहुषु स्थलेषु वर्तिष्यमाणतया दण्डस्य तद्व्यापकत्वासंभवात् यदि संयोगसंबन्धो न क्वापि कार्यतावच्छेदकः उत्पत्त्यवच्छेदकतानियामकसंबन्धस्य कार्यतावच्छेदकसंबन्धत्वात् । आद्यक्षणसंबन्धो ह्युत्पत्तिः तत्र देशस्यावच्छेदकतायां तत्कालावस्थायिसंबन्ध एव नियामको भवितुमर्हति नतूत्तरक्षणमुत्पत्स्यमानचक्रसंयोगः । अथवा आद्यक्षणावच्छिन्नमाधेयत्वमुत्पत्तिः तदेव नियतोत्तरक्षणावच्छिन्नवृत्तित्वत्वेन रूपेण कार्यतेत्युच्यते तदवच्छेदकसंबन्धश्च कार्यतावच्छेदकः ततश्च समवायेन घटं प्रति स्वसंयुक्तचक्रसंयोगेन दण्डस्य कारणतेत्येव घटदण्डयोः कार्यकारणभावः नतु चक्रनिष्ठप्रत्यासत्त्येति विभाव्यते तथापि कार्याधिकरणे कपालादौ दर्शितसंबन्धेन दण्डाभावस्य उत्तरक्षणावच्छेदेन सत्त्वात् कथं दण्डस्य तद्व्यापकता । अथ व्यापकताघटकाभावे प्रतियोगिवैयधिकरण्यान्निवेश्यत इति चेन्निवेश्यताम् । तथापि रूपत्वावच्छिन्नं प्रति संख्यात्वेन कारणत्वापत्तिः संख्यायाः रूपनियतत्वात् पाकजरूप एव पूर्ववृत्तित्वाच्च । न च संख्याया रूपकारणता अनन्यथासिद्धत्वविशेषणेन वार्यतामिति वाच्यं नियतपूर्ववृत्तीनामेवानन्यथासिद्धत्वव्यावर्तनीयताया वक्ष्यमाणत्वात् । अत्र वदन्ति व्यापकताघटकाभावे कार्यपूर्वक्षणावच्छिन्नत्वं निवेश्यते तल्लाभायैव पूर्ववृत्तित्वविशेषणम् । तथाच कार्याव्यवहितपूर्वक्षणावच्छेदेन कार्याधिकरणवृत्त्यभावप्रतियोगितानवच्छेदकधर्मवत्त्वमेव नियतपूर्ववृत्तित्वमिति फलितं घटोत्पत्तिद्वितीयक्षणोत्पन्नरूपपूर्वक्षणावच्छेदेन घटे संख्याविरहान्नोक्तदोषः इति । अथैवमपि घटत्वावच्छिन्नं प्रति दण्डस्य कारणत्वानुपपत्तिः एतद्घटाधिकरणे कपाले कालान्तरदेशान्तरभाविघटाव्यवहितपूर्वक्षणावच्छेदेन दण्डाभावसत्त्वादिति चेदत्र हरिरामप्रभृतयः कार्यतावच्छेदकावच्छिन्ना यावत्यो व्यक्तयः प्रत्येकं तत्तदव्यवहितप्राक्क्षणावच्छेदेन तत्तदधिकरणवृत्त्यभावप्रतियोगितानवच्छेदकीभूतस्तत्तदधिकरणवृत्तितावच्छेदकीभूतो वा यो धर्मस्तद्वत्त्वं नियतपूर्ववृत्तित्वमित्याहुः । एवंच नित्यवृत्तिधर्मस्य कार्यतावच्छेदकत्वे नित्यव्यक्तेरपि कार्यतावच्छेदकावच्छिन्नयावदन्तर्गततया तदव्यवहितप्राक्क्षणाप्रसिद्ध्या कारणत्वमेव न घटत इति कार्यतातिरिक्तवृत्तिधर्मस्य कार्यतावच्छेदकत्वानङ्गीकारवादिनः । तदङ्गीकारवादिनस्तु कारणतायाः कार्यतावच्छेदकादिभेदेन भिन्नतया शब्दैक्यस्यानुपादेयतया च नित्यवृत्तिधर्मस्य यत्र कार्यतावच्छेदकता तत्र कारणताशरीरे श्रृङ्गग्राहिकया तत्तद्व्यक्तित्वेन कार्यतावच्छेदकाश्रयीभूतजन्यव्यक्तीनामेव निवेशनसंभवान्नानुपपत्तिरित्याहुः । एतन्मते समवायसंबन्धावच्छिन्नद्रव्यकार्यताशून्यध्वंसवृत्तेः प्रागुपदर्शितकार्यत्वस्यापि कार्यतावच्छेदकत्वं सुवचमिति द्रष्टव्यम् । एवं कार्याव्यवहितपूर्वकालत्वं प्रति निरूपक-

**यत्समवेतं कार्यं भवति ज्ञेयं तदत्र समवायि जनकं तत्।**
**तत्रासन्नं जनकं द्वितीयमाभ्यां परं तृतीयं स्यात्॥ १८॥**

प्रभा.

**यत्समवेतमिति॥** यस्मिन् समवेतमिति व्युत्पत्त्या यन्निरूपितसमवायसंबन्धावच्छिन्नवृत्तिताश्रयः कार्यं तत्समवायिकारणमित्यर्थः। तथाच कार्यनिष्ठसमवायसंबन्धावच्छिन्नाधेयतानिरूपिताधिकरणत्वं समवायिकारणत्वमिति फलितम्। यदि तादृशसमवायसंबन्धावच्छिन्नत्वस्य कार्यत्वसामानाधिकरण्यघटकाधेयत्वविशेषणत्वापेक्षया कार्यतायामेव समवायसंबन्धावच्छिन्नत्वनिवेशे लाघवमिति विभाव्यते

मञ्जूषा.

तासंबन्धेन कार्याधिकरणदेशावच्छिन्नवृत्तित्वस्य कालिकावच्छेदकतासंबन्धेन कार्याधिकरणवृत्तित्वस्य वा व्यापकत्वनिवेशपक्षेऽपि एकरूपाव्यवहितप्राक्क्षणावच्छेदेन सङ्ख्यात्वावच्छिन्नस्य रूपान्तराधिकरणे सत्त्वात्संख्यात्वावच्छिन्नस्य रूपत्वावच्छिन्नं प्रति नियतपूर्ववृत्तित्ववारणाय कार्यतावच्छेदकावच्छिन्ना यावत्यो व्यक्तयः प्रत्येकं तत्तदव्यवहितप्राक्कालनिरूपिततत्तदधिकरणावच्छिन्नवृत्तितावच्छेदकस्तत्तदव्यवहितप्राक्कालावच्छिन्नतत्तदधिकरणवृत्तितावच्छेदको वा यो धर्मस्तद्वत्त्वनिवेशनीयम्। तत्तद्व्यक्तित्वेन यावद्व्यक्तिनिवेशावश्यकत्वे व्यापकत्वनिवेशे प्रयोजनविरहात्तत्र द्वितीयपरिष्कारोऽर्वाचीनपक्षपरिष्कारपर्यवसन्न एव। प्रथमपक्षेऽपि नित्यवृत्तिधर्मस्य कार्यतावच्छेदकत्वसंभवासंभवौ उक्तरीत्या द्रष्टव्यौ। कार्यतावच्छेदकव्यापकत्वनिवेशपक्षे तु सङ्ख्याया रूपकारणत्ववारणाय कार्यतावच्छेदकं प्रति स्वावच्छेदककालनिष्ठप्रागभावप्रतियोगित्वस्वनिरूपकाधिकरणवृत्तित्वोभयसंबन्धेन कारणतावच्छेदकत्वाभिमतधर्मावच्छिन्नवृत्तित्वत्वेन व्यापकत्वं विवक्षणीयम्। तथाच कार्यतावच्छेदकनिरूपिता या स्वावच्छेदककालनिष्ठप्रागभावप्रतियोगित्वस्वनिरूपकाधिकरणवृत्तित्वोभयसंबन्धावच्छिन्ना व्यापकता तदवच्छेदकं यद्धर्मावच्छिन्नवृत्तितात्वं तद्वत्त्वमिति निष्कर्षः। अस्ति चेदं दण्डे यत्र घटत्वं तत्र सर्वत्र दण्डनिष्ठाया घटाधिकरणवृत्तिताया निरुक्तोभयसंबन्धेन सत्त्वात् नतु संख्यायास्संख्यासामानकालोत्पन्नरूपव्यक्तौ तत्समानाधिकरणसंख्यानिष्ठवृत्तितायाः स्वावच्छेदककालनिष्ठप्रागभावप्रतियोगित्वसंबन्धेन असत्त्वात् रूपान्तरसमानाधिकरणसंख्याधिकरणवृत्तितायाश्च स्वनिरूपकाधिकरणवृत्तित्वसंबन्धेनासत्त्वात्। असर्वज्ञसुज्ञेयता चात्र लक्षणे कार्यतावच्छेदकाश्रययावद्व्यक्तीनां तत्तद्व्यक्तित्वेन निवेशाभावात्। किन्तु कार्यतातिप्रसक्तधर्मस्य कार्यतावच्छेदकत्वे ईदृशकारणता न संभवतीत्यवोचाम। वस्तुतस्तु अर्वाचीनपक्षेऽपि स्वाव्यवहितपूर्वकालावच्छिन्नत्वस्वाधिकरणानिरूपितत्वोभयसंबन्धेन कार्यतावच्छेदकाश्रयविशिष्टा या आधेयता तदाश्रयीभूताभावप्रतियोगितानवच्छेदकधर्मवत्त्वमिति रीत्या तत्तद्व्यक्तिनिवेशमन्तरापि परिष्कारश्शक्यत एव। तद्घटाव्यवहितप्राक्क्षणावच्छिन्ना या दण्डाभावनिष्ठा घटान्तराधिकरणानिरूपिताधेयता तस्यां स्वाव्यवहितपूर्वकालावच्छिन्नत्वसंबन्धेन यद्घटव्यक्तिमत्त्वं तद्घटाधिकरणनिरूपितत्वं नास्तीति न दोषः। एवंच कार्यतातिप्रसक्तधर्मस्य कार्यतावच्छेदकत्वमुपपद्यत एव। परन्तु कार्यपूर्वकालत्वव्यापकत्वनिवेशपक्षे विशिष्य तत्तद्व्यक्तिनिवेशमन्तरेण न गतिरिति प्रतीमः॥ १६॥ १७॥

**मूले यत्समवेतमिति॥** कार्यं यत्समवेतं कार्यनिष्ठसमवायसंबन्धावच्छिन्नाधेयतानिरूपकं यत् तदत्र

दिनकरीयम्.

**यत्समवेतमिति॥** यदवच्छिन्नं स्वकारणतावच्छेदकयद्धर्मावच्छिन्ने समवायसम्बन्धेनोत्पद्यते तद्धर्मावच्छिन्नं प्रति तद्धर्मावच्छिन्नं समवायिकारणमित्यर्थः। घटत्वाद्यवच्छिन्नं हि स्वकारणतावच्छे-

रामरुद्रीयम्.

यत्र समवायसम्बन्धेन यत्कार्यमुत्पद्यते तत्तत्प्रति समवायिकारणमित्युक्तौ कपालादेर्द्रव्यत्वादि-

## प्रभा.

तदा समवायसंबन्धावच्छिन्नकार्यतानिरूपिततादात्म्यसंबन्धावच्छिन्नकारणत्वं समवायिकारणत्वमिति बोध्यम् । नचैवं सति कारणत्वघटिततयाऽधिकरणत्वघटिततल्लक्षणापेक्षया इदं गुर्विति वाच्यं कारणत्वसामान्यलक्षणस्याधिकरणत्वघटितलक्षणवादिना पृथक्कपालादौ वक्तव्यतया गौरवात् कारणत्वसामान्यस्वरूपाभावाच्च । ममतु सामान्यलक्षणस्यैव संबन्धविशेषघटनया विशेषपर्यवसानेन लाघवात् कारणतारूपसत्त्वाच्च ॥ भवतीति ॥ यत्समवेतमित्यनुवर्तते यत्समवेतमुत्पत्त्याश्रय इत्यर्थः । यत्समवेतत्वोत्पत्त्योरवच्छेद्यावच्छेदकभावानुकूलसामानाधिकरण्यलाभात् यत्समवेतत्वावच्छिन्नोत्पत्तिरित्यर्थो लभ्यते यत्समवेतत्वं च यत्समवाय एव तथाच यन्निरूपितसमवायसंबन्धावच्छिन्नोत्पत्त्याश्रयः समवायसंबन्धावच्छिन्नोत्पत्त्यवच्छेदकमिति यावत् । समवायसंबन्धावच्छिन्नोत्पत्त्यवच्छेदकत्वः निरूपकत्वपर्यवसितं समवायिकारणत्वमिति फलितोऽर्थः । एतस्य निर्दुष्टत्वेऽपि सामान्यलक्षणात्मकस्य पृथग्वक्तव्यतया

## मञ्जूषा.

समवायि समवायिकारणमित्यर्थः । एवं भवतीत्यत्रापि यत्समवेतमित्यनुवर्तते यत्समवेतमुत्पद्यत इत्यर्थः । उद्देश्यतावच्छेदकविधेयभावमहिम्ना उत्पत्त्यवच्छेदकसमवेतत्वनिरूपकत्वं लब्धं काले वृत्तौ देशस्यैव देशसंबन्धस्याप्यवच्छेदकतायाः सिद्धान्तसिद्धतया आद्यक्षणसंबन्धरूपोत्पत्तौ कपालस्येव कपालसमवेतत्वस्याप्यवच्छेदकताया अक्षतत्वाल्लक्षणसमन्वयः इति रीत्या लक्षणद्वयपरत्वमस्य वाक्यस्येति वदन्ति । उभयमपीदं समवायिकारणत्वाश्रयपरिचायकं इदमेव समवायिकारणत्वं समवायसंबन्धावच्छिन्नाधेयतानिरूपकत्वस्य कारणतास्वरूपसामान्यधर्मानाक्रान्तत्वादिह तु समवायिकारणत्वमेव निर्वाच्यम् । ननु समवायिकारणस्वरूपं कारणत्वं भवेत्तस्य त्रैविध्यमिति कारणत्वस्यैव त्रैविध्यप्रदर्शनात् समवायिकारणत्वमित्यादिना समवायिकारणत्वत्वादिभिरेव विभागाच्च । तस्माद्दर्शितसमवायिकारणवृत्तिपरिचायकरूपद्वयेनापि समवायसंबन्धावच्छिन्नकार्यतानिरूपिततादात्म्यसंबन्धावच्छिन्नकारणत्वं समवायिकारणत्वमित्यर्थो निष्कृष्टव्यः । एवंच यत्समवेतं भवतीत्यन्वये भवनमाद्यक्षणावच्छिन्नाधेयत्वरूपोत्पत्तिः नियतोत्तरक्षणावच्छिन्नवृत्तित्वत्वेन रूपेण कार्यतापदव्यपदेश्या तदवच्छेदकत्वं यदनुयोगिकसमवायप्रतियोगित्वरूपोद्देश्यतावच्छेदकघटकयदनुयोगिकसमवाये भासत इति वदतां मतेऽपि कार्यतावच्छेदकसमवायानुयोगित्वरूपं पर्यवसन्नसमवायिकारणलक्षणं दर्शितसमवायिकारणत्वनिष्कर्षकमेवेति द्रष्टव्यम् । केचित्तु यदिति भिन्नं पदमव्ययतया लुप्तसप्तमीकं ततश्च समवेतं कार्यं यस्मिन् भवतीत्यन्वयः भूधात्वर्थश्च कार्यता तादात्म्यसंबन्धावच्छिन्नकारणता सप्तम्यर्थः कार्यताबोधकधातुपदसमभिव्याहृतसप्तम्यास्तादृशकारणताबोधकत्वव्युत्पत्तिस्वीकारात् तन्तुषु पटस्समवायेनोत्पद्यते घटे प्रत्यक्षविषयतया उत्पद्यते काले कार्यं कालिकविशेषणतया उत्पद्यते इत्यादिस्थले तात्पर्यभेदात् शाब्दबोधवैविध्यमिष्यते । तथाहि यदाद्यक्षणसंबन्धः धातुबोध्यः तदा समवायादिविशिष्टतन्त्वाद्यवच्छेद्यत्वमाद्यक्षणसंबन्धे भासते यदातु आद्यक्षणावच्छिन्नाधेयतात्वेन धात्वर्थता तदा तन्त्वादिनिरूपितत्वं समवायाद्यवच्छिन्नत्वञ्च तत्र भासते यदा आद्यक्षणावच्छिन्नाधेयतैव नियतोत्तरक्षणावच्छिन्नाधेयतात्वरूपकार्यतात्वेन धातुबोध्या तदा तन्त्वादिनिष्ठतादात्म्यसंबन्धावच्छिन्नकारणतानिरूपितत्वं समवायाद्यवच्छिन्नत्वंच तत्र भासते । एवंचात्र समवेतं यस्मिन् भवतीत्यस्य समवायप्रतियोगियन्निष्ठतादात्म्यसंबन्धावच्छिन्नकारणतानिरूपितकार्यताश्रयो भवतीत्यर्थः उद्देश्यताव-

## दिनकरीयम्.

दककपालत्वाद्यवच्छिन्ने समवायसम्बन्धेनोत्पद्यत इति भवति घटत्वाद्यवच्छिन्नं प्रति कपालत्वाद्यवच्छिन्नं समवायिकारणम् । स्वकारणतावच्छेदकेत्युक्त्या च न द्रव्यत्वादेर्घटादिसमवायिकारणतावच्छेद-

## रामरुद्रीयम्.

नापि घटसमवायिकारणतापत्तिः कपालत्वावच्छिन्नस्य तद्घटत्वाद्यवच्छिन्नं प्रत्यपि तथात्वापत्तिरित्यतो

तत्रेति ॥ समवायिकारणे प्रत्यासन्नं कारणं द्वितीयमसमवायिकारणमित्यर्थः । अत्र यद्यपि तुरीतन्तुसंयोगे पटासमवायिकारणत्वं स्यात् वेगादीनामभिघाताद्यसमवायिकारण-

**प्रभा.**

गौरवमित्युपेक्षितम् । तत्रासन्नमिति कारिकाया अर्थमाह ॥ **मुक्तावल्यां तत्रेति** ॥ **तत्र समवायिकारण इति** ॥ असमवायिकारणस्य समवायिकारणसंबन्धित्वाभिधानं समवायसंबन्धावच्छिन्नकारणत्वसमवायद्वयघटितसामानाधिकरण्यसंबन्धावच्छिन्नकारणत्वान्यतरवत्त्वरूपमसमवायिकारणत्वमिति बोधनाय ननु समवायिकारणादावतिव्याप्तिवारणाय प्रत्यासन्नत्वविशेषणदानेऽपि तुरीतन्तुसंयोगेऽतिव्याप्तेः वक्ष्यमाणत्वात् तन्तुत्वादावतिव्याप्तिवारणाय कारणमिति । तथाच तेषामन्यथासिद्धत्वेन कारणत्वाभावादिति भावः ॥ **अत्र यद्यपीति** ॥ उक्तासमवायिकारणलक्षणसत्त्वादिति भावः । नच तुरीतन्तुसंयोगस्यासमवायिकारणत्वमिष्टमिति वाच्यं तथा सति तुरीतन्तुसंयोगनाशात् पटनाशापत्तेः असमवायिकारणनाशस्य द्रव्यनाशकत्वात् अन्यथा द्व्यणुकनाशानुपपत्तेः कार्यकारणभावद्वयाङ्गीकारे गौरवात् समवायिकारणं विना क्षणद्वयं द्रव्यस्थितौ बाधकाभावात् अथ द्रव्यनाशासमवायिकारणनाशयोः क-

**मञ्जूषा.**

च्छेदकविधेयभावमहिम्ना च समवाये कार्यतावच्छेदकत्वलाभात् समवायावच्छिन्नकार्यतानिरूपिततादात्म्यावच्छिन्नकारणत्वं समवायिकारणत्वमिति शाब्द एवायमर्थ इत्याहुः ॥ **मुक्तावल्यां अत्र यद्यपीति** ॥ अथ तुरीतन्तुसंयोगस्य पटं प्रति कुतो नासमवायिकारणत्वमिति चेदत्र महादेवः तथासति तुरीतन्तुसंयोगनाशे पटनाशापत्तिः असमवायिकारणनाशस्य द्रव्यनाशकत्वात् नचासमवायिकारणनाशस्य द्रव्यनाशजनकत्वे प्रमाणाभाव इति वाच्यम् । द्व्यणुकनाशान्यथानुपपत्तेरेव मानत्वात् । नच तन्तुषु विनष्टेषु समवायिकारणं विनैव क्षणद्वयं द्रव्यस्थितिरस्त्विति वाच्यं इष्टापत्तेः कारणतान्तरकल्पने गौरवादित्यभिधाय तदुत्तरमथ द्रव्यनाशासमवायिकारणनाशयोः कथं कार्यकारणभाव इति जिज्ञासामुत्थाप्य अत्राहुरित्यादिना केषांचिन्मतमुपन्यस्य वस्तुतस्तु स्वप्रतियोगिनिष्ठासमवायिकारण-

**दिनकरीयम्.**

कत्वमिति । **तत्रासन्नमिति** । इदं च समवायिकारणादावतिव्याप्तिवारणाय । पटसमवायिकारणतन्तुसमवेततन्तुत्वादावतिव्याप्तिवारणाय जनकमिति । तन्तुत्वस्यान्यथासिद्धत्वेनानन्यथासिद्धनियतपूर्ववृत्तिताया अभावेन नातिप्रसङ्गः ॥ **मुक्तावल्यामत्र यद्यपीति** ॥ तुरीतन्तुसंयोगस्य पटं प्रति कुतो नासमवायिकारणत्वमिति तु नाशङ्कनीयम् तुरीतन्तुसंयोगनाशे पटनाशापत्तेः असमवायिकारणनाशस्य द्रव्यनाशजनकत्वात् । न चासमवायिकारणनाशस्य द्रव्यनाशकत्वे प्रमाणाभाव इति वाच्यं द्व्यणुकनाशान्यथानुपपत्तेरेव मानत्वादिति । न च तन्तुषु विनष्टेषु विनैव समवायिकारणं द्रव्यस्य क्षणद्वयं स्थितिः स्यादिति वाच्यं इष्टापत्तेः कारणान्तरकल्पने गौरवात् । अथ द्रव्यनाशासमवायि-

**रामरुद्रीयम्.**

व्याचष्टे ॥ **यदवच्छिन्नमिति** ॥ **प्रमाणाभाव इतीति** ॥ सर्वत्र समवायिकारणनाशादेव द्रव्यनाशसम्भवादिति भावः ॥ **द्व्यणुकेति** ॥ अत्र द्व्यणुकपदं यादृशघटादेस्तदारम्भककपालनाशमन्तरा तत्संयोगनाशादेव नाशः तादृशघटादेरप्युपलक्षकं नातो न्यूनताप्रसङ्गः ॥ **क्षणद्वयमिति** ॥ समवायिकारणनाशस्य द्रव्यनाशकत्वेऽपि कपालादिनाशक्षणे कपालादिकं विनैव घटादेरवस्थित्यावश्यकत्वेन द्वयपदम् ॥ **इष्टापत्तेरिति** ॥ ननु द्रव्यनाशे समवायिकारणनाशस्यापि पृथक् कारणत्वकल्पनेनैवोपपत्तौ समवायिकारणमन्तरा क्षणद्वयं द्रव्यस्थित्यभ्युपगमो नोचितः न च परस्परजन्यद्रव्यनाशे परस्परव्यभिचार इति वाच्यम् अव्यवहितोत्तरत्वं कार्यतावच्छेदककोटौ निवेश्य तद्वारणसम्भवादित्यत आह ॥ **कारणान्तरेति** ॥ ननु दैशिकविशेषणतासम्बन्धेन द्रव्यप्रतियोगिकनाशं प्रति दैशिकविशे-

प्रभा.

थं कार्यकारणभाव इति चेदत्राहुः नव्याः प्रतियोगितासंबन्धेन द्रव्यनाशं प्रति स्वप्रतियोगिसमवायिसमवेतत्वस्वप्रतियोगिजन्यत्वकालिकविशेषणत्वैतात्रितयसंबन्धेन नाशत्वेन हेतुतेति दण्डसंयोगनाशात् घटनाशापत्तिवारणाय समवेतत्वदलं कपालपवनसंयोगनाशात् घटनाशापत्तिवारणाय जन्यत्वान्तदलं भाविकपालद्वयसंयोगनाशमादाय घटनाशापत्तिवारणाय कालिकविशेषणत्वदलम् । नचैवमपि तुरीतन्तुसंयोगनाशात् पटनाशापत्तिर्दुर्वारेति वाच्यं तुरीतन्तुसंयोगस्य पटकारणत्वानङ्गीकारात् किन्तु संयोगसंबन्धेन तुर्या एव कारणत्वमिति तत्र तथा सति तुरीतन्तुसंयोगस्याकारणत्वे तुर्याः करणत्वानुपपत्तेः व्यापारवत्कारणस्यैव करणत्वात् । केचित्तु वस्तुतस्तु स्वप्रतियोगिनिष्ठासमवायिकारणतानिरूपितफलोपधानात्मकजन्यत्वसंबन्धेन नाशत्वेन हेतुत्वमत्रापि भाविकपालद्वयसंयोगनाशमादायेदानीं घटनाशापत्तिवारणाय कालिकविशेषणत्वमपि संसर्गकोटौ निवेशनीयं तुरीतन्तुसंयोगस्य पटास-

मञ्जूषा.

तानिरूपितफलोपधानात्मकजन्यतासंबन्धेन नाशत्वेन हेतुता तुरीतन्तुसंयोगस्तु निमित्तं नत्वसमवायीति न तन्नाशेन पटनाश इत्याचष्ट । अत्र विचार्यते कारणतावच्छेदकसंबन्धघटकासमवायिकारणत्वं कीदृशं न तावत्समवायसंबन्धावच्छिन्नकार्यतानिरूपितसमवायसंबन्धावच्छिन्नकारणतारूपं तुरीतन्तुसंयोगनाशात्पटनाशापत्तेर्दुर्वारत्वात् समवायेन पटं प्रति तुरीतन्तुसंयोगस्य समवायेनैव हेतुत्वात् नच संबन्धघटककारणतायां तुरीतन्तुसंयोगभिन्नवृत्तित्वं निवेश्यत इति वाच्यम् । तथापि हस्ततन्तुसंयोगनाशाद्वेमतन्तुसंयोगनाशाच्च पटनाशापत्तेः । नच तन्तुभिन्नसमवेतान्यवृत्तित्वमेव तत्र कारणताविशेषणमिति वाच्यं तथासति कपालसंयोगनाशात् घटनाशानुपपत्तेः कपालसंयोगस्य तन्तुभिन्नकपालसमवेतत्वात् । नच तन्तुतदतिरिक्तोभयसमवेतान्यवृत्तित्वमेव तत्र विशेषणमिति वाच्यम् । एवमपि कपालहस्तसंयोगनाशात् घटनाशापत्तेः । नच कपालतदतिरिक्तोभयसमवेतान्यवृत्तित्वमपि तत्र विशेषणमिति वाच्यम् । एतादृशानन्तावयवान् तादूप्येणादाय तत्तदतिरिक्तोभयान्यवृत्तित्वकूटस्य एकत्र निवेशे तेषां विशेषणविशेष्यभावे विनिगमनाविरहेणानन्तकार्यकारणभावप्रसक्त्या कारणतावच्छेदकगौरवेण च तदपेक्ष-

दिनकरीयम्.

कारणनाशयोरसमानाधिकरणयोः कथं हेतुहेतुमद्भाव इति चेदत्राहुः प्रतियोगितया द्रव्यनाशत्वावच्छिन्नं प्रति स्वप्रतियोगिसमवायिसमवेतत्वकालिकविशेषणतोभयसम्बन्धेन नाशत्वेन हेतुतेति । इह कालिकसम्बन्धस्य कारणतावच्छेदकसम्बन्धत्वे घटादेः क्षणिकत्वापत्तिरतः स्वप्रतियोगिसमवायिसमवेतत्वनिवेशः । स्वप्रतियोगिजन्यत्वसम्बन्धश्च दण्डनाशात् घटनाशापत्तेरुपेक्षितः । भाविनाशमादायातिप्रसङ्गवारणाय कालिकसम्बन्धनिवेशः । यदि तु कपालपवनसंयोगनाशात् घटनाशापत्तिरेवमपि दुर्वारैवेति विभाव्यते तदा स्वप्रतियोगिजन्यत्वस्वप्रतियोगिसमवायिसमवेतत्वकालिकविशेषणतैतत्रितयसम्बन्धेन नाशत्वेन हेतुता बोध्या । न चैवमपि तुरीतन्तुसंयोगनाशात्पटनाशापत्तिरिति वाच्यं तु-

रामरुद्रीयम्.

षणतया द्रव्यासमवायिकारणप्रतियोगिकनाशत्वेन कारणत्वे यत्र यत्किञ्चित्तन्तुसंयोगनाशात्सहस्रतन्तुकपटनाशः तत्र तन्तुसंयोगनाशानधिकरणतन्तुष्वपि पटनाशोत्पत्त्या व्यभिचारापत्तिः ध्वंसप्रागभावयोः प्रतियोगिसमवायिदेशमात्रवृत्तित्वादित्यभिप्रायेण शङ्कते ॥ **अथेति** ॥ **हेतुतेति** ॥ तथा च कारणतावच्छेदकलाघवमपीति भावः ॥ **क्षणिकत्वापत्तिरिति** ॥ उत्पत्तिक्षणमारभ्यैव घटादौ यत्किंचिन्नाशसत्त्वादिति भावः । ननु क्षणिकत्ववारणाय स्वप्रतियोगिसमवायिसमवेतत्वस्थाने स्वप्रतियोगिजन्यत्वमेव कुतो न निवेश्यत इत्याशङ्कायामाह ॥ **स्वप्रतियोगीति** ॥ **अतिप्रसङ्गवारणायेति** ॥ द्वितीयक्षण एव घटादौ नाशोत्पत्तिप्रसङ्गवारणायेत्यर्थः ॥ **इति विभाव्यत इति** ॥ स्वप्रतियोगिसमवायियावत्समवेतत्वोक्तौ नेयमापत्तिः सम्भवतीति सूचनाय यदि त्वित्युक्तं तथोक्तावपि कपालरूपनाशाद-

## प्रभा.

मवायिकारणत्वाभावेन न तन्नाशात् पटनाशापत्तिरित्यन्यत्र विस्तर इत्याहुः । वस्तुतस्तु अपेक्षाबुद्धयजन्यस्वप्रतियोगिसमवायिद्वयसमवेतत्वकालिकविशेषणत्वैतदुभयसंबन्धेन नाशत्वेन हेतुत्वं कपालद्वयनिष्ठद्वित्वनाशात् घटनाशापत्तिवारणाय स्वप्रतियोगिनि अपेक्षाबुद्धयजन्यत्वं निवेशितम् । नच कपालद्वयविभागनाशस्य निरुक्तोभयसंबन्धेन घटे सत्त्वात् घटोत्पत्तिक्षणे घटनाशापत्तिरिति वाच्यं क्रियाध्वंसानाश्यत्वस्यापि स्वप्रतियोगिनि निवेशनीयत्वात् विभागमात्रस्य क्रियाध्वंसनाश्यत्वेनोक्तदोषाभावात् । तथाच क्रियाध्वंसानाश्यत्वापेक्षाबुद्धयजन्यत्वोभयविशिष्टो यः स्वप्रतियोगीतत्समवायिद्वयसमवेतत्वकालिकविशेषणत्वोभयसंबन्धेन नाशस्य हेतुत्वमिति फलितमिति न काप्यनुपपत्तिरिति प्रतिभाति ॥ **वेगादीनामित्यादिना** स्पर्शपरिग्रहः ॥ **अभिघातादीत्यादिना** पाकपरिग्रहः ॥ **ज्ञानादी-**

## मञ्जूषा.

या लाघवेन घटनाशत्वाद्यवच्छिन्नं प्रति स्वप्रतियोग्युपहितत्वसंबन्धेन कपालसंयोगनाशत्वादिना कारणतैवेवं विशिष्यैव कारणताया वक्तव्यतया दर्शितरीत्या सामान्यकार्यकारणभावाश्रयणस्य कारणतावच्छेदकसंबन्धकोटौ असमवायिकारणताप्रवेशस्य च वैयर्थ्यापत्तेरिति । तुरीतन्तुसंयोगस्य पटासमवायिकारणतास्वीकारेऽपि पटनाशं प्रति तुरीतन्तुसंयोगनाशस्य कारणतानङ्गीकारेणैव तुरीतन्तुसंयोगस्य पटासमवायिकारणत्वे तुरीतन्तुसंयोगनाशात्पटनाशापत्तिरिति पूर्वोपदर्शितदोषस्य वारणसंभवेन प्रक्रमविरोधस्य दुर्वारत्वात् । एतेन कार्यसमवायीतरासमवेतवृत्तित्वेन कारणताविशेषणान्न तुरीतन्तुसंयोगादिनाशात्पटनाशापत्तिः तन्निष्ठकारणतायाः कार्यसमवायीतरतुर्याद्यसमवेतवृत्तित्वाभावात् । नच तुर्यादेरपि तन्निष्ठरूपाद्यात्मककार्यसमवायित्वात् तदितरत्वं गुणादीनामेव तदसमवेतत्वं तुरीतन्तुसंयोगस्याक्षतं तत्तत्कार्यसमवायीतरेत्युक्तौ चाननुगमतादवस्थ्यमिति वाच्यम् । स्वप्रतियोगिनिष्ठा या स्वनिरूपि-

## दिनकरीयम्.

रीतन्तुसंयोगस्य पटं प्रति कारणतैव न संभवति किंतु तुर्येव संयोगसम्बन्धेन तन्तुनिष्ठा सती पटजनिकेति तत्रातिप्रसङ्गाभावात् । एवं च विशेषलक्षणेषु तुरीतन्तुसंयोगादिभेदानामनिवेशेन लाघवमपीति केचित् । वस्तुतस्तु स्वप्रतियोगिनिष्ठासमवायिकारणतानिरूपितफलोपधानात्मकजन्यत्वसम्बन्धेन नाशत्वेन हेतुता तुरीतन्तुसंयोगस्तु निमित्तं न त्वसमवायीति न तन्नाशेन पटनाश इत्यन्यत्र विस्तरः । वेगादीनामित्यादिना स्पर्शसङ्ग्रहः । अभिघातादीत्यादिना नोदनपरिग्रहः । ज्ञानादीत्यादिना इच्छापरिग्रहः । इच्छादीत्यादिना प्रवृत्तेः परिग्रहः । तन्तुसमवेतत्वे सति तुरीतन्तुसंयोगाद्यन्यत्वे सति पटका-

## रामरुद्रीयम्.

पि घटनाशापत्तितादवस्थ्यमतस्तथा न विवक्षितमेवेति ध्येयम् ॥ **अतिप्रसङ्गाभावादिति** ॥ तुरीतन्तुसंयोगस्य पटजनकत्वाभावादिति भावः । नन्वेवं तुरीतन्तुसंयोगस्य पटं प्रत्यकारणत्वे तत्र पटासमवायिकारणलक्षणातिव्याप्तिविरहेण तल्लक्षणे तुरीतन्तुसंयोगभिन्नत्वविशेषणस्य ग्रन्थकृदुपात्तस्य वैयर्थ्यप्रसङ्ग इत्याशङ्कायामिवमप्यस्माकं लाघवमेवेति नोपादेयमेव तदित्याह ॥ **एवं चेति** ॥ अत्राहुरित्यादि केचिदित्यन्तं ग्रन्थकारानुयायिनो मतमिति बोध्यम् । स्वयमाह ॥ **वस्तुतस्त्विति** ॥ **जन्यत्वसम्बन्धेनेति** ॥ अत्रापि भाविनाशमादाय घटादेः क्षणिकत्वापत्तिवारणाय कालिकसम्बन्धोऽपि प्रवेशनीयः एतल्लाभायैवान्यत्र विस्तर इत्युक्तमिति ध्येयम् ॥ **नोदनेति** ॥ शब्दजनकसंयोगोऽभिघातस्तद्भिन्नसंयोगो नोदनं अभिघाते विलक्षणवेगस्य तद्भिन्नसंयोगे न क्रियाया असमवायिकारणत्वापत्तिरिति भावः । अत्र यद्यपि तयोरसमवायिकारणत्वेऽपि न तन्नाशादभिघातादिनाशापत्तिः द्रव्यनाशं प्रत्येव असमवायिकारणनाशस्य हेतुत्वादितीष्टापत्तिः सम्भवति तथाप्यसमवायिकारणमन्तरा क्षणत्रयं कार्यस्थितेरनिष्टतया तदापत्तिरेवात्रेष्टापत्तिबाधिकेति मन्तव्यम् । ज्ञानादेरिच्छाद्यसमवायिकारणत्वे तु आत्म-

मञ्जूषा.

तत्कार्यताश्रयसमवायीतरासमवेतवृत्तिकारणता तन्निरूपितजन्यताया एव कारणतावच्छेदकसंबन्धत्वस्वीकारात् । प्रथमस्वपदं नाशपरं· द्वितीयस्वपदं कारणतापरं तुरीतन्तुसंयोगनिष्ठा पटकारणता च नैतादृशं स्वं तन्निरूपितकार्यताश्रयीभूतपटसमवायीतरतुरीसमवेतवृत्तित्वादिति न तुरीतन्तुसंयोगनाशात्पटनाशापत्तिः । एवंच स्वनिरूपितकार्यताश्रयसमवायीतरासमवेतवृत्तिकारणतैव संबन्धशरीरानिविष्टा असमवायिकारणतानां । अथवा स्वप्रतियोगिव्यापकत्वविशिष्टस्वप्रतियोगिजन्यत्वमेव स्वप्रतियोगिनिष्ठासमवायिकारणतानिरूपितफलोपधानात्मकजन्यतानां जन्यत्वे व्यापकत्ववैशिष्ट्यंच सामानाधिकरण्यरूपं तुरीतन्तुसंयोगव्यापकता च न पटे तुर्यां पटाभावात् अतो न तन्नाशात्पटनाशापत्तिरिति रीत्या कार्यकारणभावानुगमप्रयासोऽपि अनुपादेय एव । तुरीतन्तुसंयोगस्य पटासमवायिकारणत्वे तुरीतन्तुसंयोगनाशात्पटनाशापत्तिरिति प्रागुपक्रान्तविरोधस्य दुर्वारत्वात् तुरीतन्तुसंयोगस्य पटासमवायिकारणत्वेऽपि यथोक्तसंबन्धस्य कारणतावच्छेदकतास्वीकारेणैव तन्नाशात्पटनाशापत्तिवारणसंभवादित्यत ब्रूमः । तुरीतन्तुसंयोगस्य पटं प्रति कुतो नासमवायिकारणत्वमिति प्रथममाशङ्कितं तत्र कुतो नासमवायिकारणत्वमित्यस्य कोऽर्थः न तावत्समवायसंबन्धावच्छिन्नकार्यतानिरूपितसमवायसंबन्धावच्छिन्नकारणत्वं कुतो नेति तादृशकारणत्वस्य तत्रावर्जनीयत्वात् । किन्तु तुरीतन्तुसंयोगनिष्ठा पटकारणता कुतो नासमवायिकारणतापदावाच्येत्येव । युक्तं चैतत् असमवायिकारणतालक्षणस्य हि लक्ष्यतावच्छेदकं नासमवायिकारणतात्वं लक्षणलक्ष्यतावच्छेदकयोरैक्यप्रवेशात् किन्त्वसमवायिकारणतापदवाच्यत्वं तच्च तुरीतन्तुसंयोगनिष्ठकारणतायामप्यस्तु कथं तत्रातिव्याप्तिरुच्यते इत्याशङ्कार्थः । तत्रच वेगादिनिष्ठाभिघातादिकारणतुरीतन्तुसंयोगनिष्ठपटकारणतायामपि तत्पदवाच्यत्वाभावे प्रामाणिकानां व्यवहाराभाव एव हेतुतया वक्तव्यः । तादृशव्यवहाराभावश्चासमवायिकारणनाशस्य द्रव्यनाशजनकताबोधकतान्त्रिकोद्घोषादवगम्यते ततश्च तुरीतन्तुसंयोगनाशात्पटनाशाभावेन न तन्निष्ठकारणताया असमवायिकारणतापदवाच्यतेत्याशयेन तुरीतन्तुसंयोगनाशे पटनाशापत्तेरित्याद्युक्तं तान्त्रिकोद्घुष्टा च इयमसमवायिकारणनाशस्य द्रव्यनाशजनकता सयुक्तिकैवेति प्रतिपादयितुम् । नचासमवायिकारणनाशस्येत्याद्यारब्धं तत्तच्च द्व्यणुकनाशान्यथानुपपत्तेरित्युपलक्षणं सत्स्वपि तन्तुषु तत्संयोगापगमेन पटनाशस्यानुभाविकत्वाचेत्यपि बोध्यम् । पश्चाच्च तादृशकारणतां परिष्कर्तुं अथ द्रव्यनाशेत्यारभ्य मध्ये केषांचिन्मतमुपन्यस्य वस्तुतस्त्वित्यादिना तादृशकारणता स्वयं परिष्कृता तत्रायमर्थः । असमवायिकारणनाशस्य द्रव्यनाशजनकतायास्सिद्धान्तसिद्धतया असमवायिकारणताघटितनिरुक्तसंबन्धेन कारणता वाच्या तत्रच पटासमवायिकारणादिलक्षणे तुरीतन्तुसंयोगभिन्नत्वादिकं यदि न निवेश्येत तदा तन्निष्ठपटादिकारणताप्यसमवायिकारणतापदार्थः स्यात् तथाच स्वप्रतियोगिनिष्ठासमवायिकारणतानिरूपितजन्यतेत्यनेन स्वप्रतियोगिनिष्ठसमवायसंबन्धावच्छिन्नकारणतानिरूपितसमवायसंबन्धावच्छिन्नकार्यताया एव कारणतावच्छेदकत्वं प्राप्नोतीति तुरीतन्तुसंयोगादिनाशे पटनाशः प्रसज्येत पटासमवायिकारणादिलक्षणे तुरीतन्तुसंयोगादिभिन्नत्वनिवेशे तु तुरीतन्तुसंयोगवेमतन्तुसंयोगादीनां तन्तुभिन्नसमवेतत्वेनानुगतरूपेणैव भेदस्य तत्र निवेशनीयतया स्वनिरूपितकार्यताश्रयसमवायीतरासमवेतवृत्तिसमवायसंबन्धावच्छिन्नकारणतानिरूपितसमवायसंबन्धावच्छिन्नकार्यतादिरेव असमवायिकारणतानिरूपितकार्यतापदार्थ इति नानुपपत्तिः एवं च तुरीतन्तुसंयोगस्तु निमित्तं नत्वसमवायीत्यभिधानमेतदभिप्रायमेवेति द्रष्टव्यम् । केचित्तु अत्र कारणतावच्छेदकसंबन्धघटकं असमवायिकारणत्वं मतान्तरीयतया स्वयमग्रे वक्ष्यमाणाखण्डोपाधिरूपमतो न तुरीतन्तुसंयोगनाशात्पटनाशापत्तिः नवा तुरीतन्तुसंयोगस्य पटासमवायिकारणत्वे तन्नाशात्तन्नाशापादनविरोध इत्याहुः । येतु तुरीतन्तुसंयोगस्य न पटकारणता किन्तु संयोगसंबन्धेन तुर्या एवेति स्वीकुर्वन्ति तेषां मते प्रतियोगितया द्रव्यनाशं प्रति स्वप्रतियोगिसमवायिसमवेतत्वस्वप्रतियोगिजन्यत्वोभयसंबन्धेन स्वप्रतियोगिनिष्ठसमवायाव-

## मञ्जूषा.

च्छिन्नजनकतानिरूपितसमवायावच्छिन्नजन्यतासंबन्धेन वा नाशत्वेन कारणता वाच्या । इह भाविनाशमादायातिप्रसङ्गवारणाय कालिकसंबन्धोऽपि निवेशनीय इति बभ्राम महादेवः । भाविनि वस्तुनि पूर्वक्षणवृत्तित्वघटितकारणताया दुरुपपादत्वात् अन्यथा स्वप्रतियोगिनिष्ठासमवायिकारणतेत्यादिस्वपरिष्कृतसंबन्धशरीरेऽपि प्रवेशापातादिष्टापत्तौ च तत्रापि दर्शित एव भ्रम इति । अथात्र पटासमवायिकारणताव्यवहारः तुरीतन्तुसंयोगादौ नास्तीत्येवावगतं व्यवहाराभावबीजं तु नावगम्यते समवायिकारणप्रत्यासन्नत्वाविशेषात् अस्तु वा तत्र यथाकथञ्चित्तत्र बीजगवेषणं अभिघातादौ तु क्रियाया यादृशं समवायिकारणप्रत्यासन्नत्वं तादृशं वेगादेरपि तुल्यं तत्कुतः क्रियायामेवाभिघातासमवायिकारणत्वं व्यपदिशन्ति प्रामाणिकाः न वेगादिष्वभिघातासमवायिकारणलक्षणे वेगादिभिन्नत्वनिवेशात्तथेति चेत् क्रियाभिन्नत्वमेव निवेश्य वेगादिरेव तथा व्यवह्रियतामुभयमपि वा तथा व्यवह्रियतां नियामकाभावादेवमन्यत्रापि एवमिच्छादौ ज्ञानादेरपि कुतो नासमवायिकारणत्वव्यवहारः समवायिकारणत्वप्रत्यासन्नत्वस्याक्षतत्वादात्मविशेषगुणभिन्नत्वनिवेशाभिप्रायेणेति चेत् भूतविशेषगुणभिन्नत्वनिवेशाभिप्रायेण रूपादीन्यप्यसमवायिकारणतया मा व्यवहार्षिषुः अत्र ब्रूमः । समवायिकारणप्रत्यासन्नत्वमात्रं नासमवायिकारणव्यवहारे तन्त्रं किंतु समवायिकारणप्रत्यासत्त्या स्वातन्त्र्येण फलोपधायकत्वं स्वातन्त्र्यं च स्वसजातीयनिरपेक्षत्वं स्वसजातीयविलम्बप्रयुक्तकार्यविलम्बशून्यत्वमिति यावत् । साजात्यं च समवायिकारणप्रत्यासन्नत्वेन रूपेण तथाच यद्रूपावच्छिन्नं स्वकार्यतावच्छेदकाश्रयसमवायिकारणप्रत्यासन्नपदार्थान्तरविलम्बप्रयुक्तस्वकार्यतावच्छेदकविशिष्टोत्पादविलम्बकं न भवति अथच समवायिकारणप्रत्यासन्नं तद्रूपावच्छिन्नं असमवायिकारणमिति व्यपदिश्यते सति हि तन्तुसंयोगत्वावच्छिन्ने तुरीतन्तुसंयोगविलम्बान्न पटत्वविशिष्टोत्पादविलम्बः तुरीतन्तुसंयोगादीनां आरम्भकविजातीयसंयोगांश एव उपयोगादतो भवत्यसमवायिकारणं तन्तुसंयोगः । तुरीतन्तुसंयोगस्तु न तथा सत्यपि तुरीतन्तुसंयोगे आरम्भकसंयोगोत्पत्तिकाले घटत्वविशिष्टोत्पादविलम्बस्य तत्पूर्वक्षणे आरम्भकसंयोगविलम्बप्रयुक्तत्वादतो नायमसमवायिकारणव्यवहारविषयः एवं वेगोऽपि स हि न साक्षादभिघातकारणं किन्तु क्रियाद्वारा तथाच सति वेगत्वावच्छिन्ने क्रियोत्पत्तिकाले वेगकार्यतावच्छेदकीभूताभिघातत्वविशिष्टोत्पादविलम्बः तत्पूर्वक्षणे क्रियाविलम्बप्रयुक्तः अतो न वेगोऽसमवायिकारणम् । अथ वेगविनिर्मुक्तक्रियया यत्र संयोगः तत्राभिघातत्वविशिष्टोत्पादविलम्बः वेगविलम्बप्रयुक्त इति क्रियापि नासमवायिकारणं स्यादिति चेत् नहि क्रियाजन्यतावच्छेदकमभिघातत्वं किन्तु अभिघातनोदनसाधारणं वैजात्यान्तरं स्वाव्यवहितोत्तरत्वसंबन्धेन क्रियाविशिष्टसंयोगत्वं तथाच सत्यां क्रियायां वेगविलम्बान्न क्रियाजन्यतावच्छेदकविशिष्टोत्पादविलम्बः तस्यावश्यमुत्पादादिति युक्तं तस्यासमवायिकारणत्वम् । एवमन्यत्रापि एवमिच्छादौ ज्ञानादिकमपि नासमवायिकारणव्यवहारमर्हति अनुभूयन्ते हि इष्टसाधनताज्ञानादौ सत्यपि एष्टव्यमनिच्छन्त एव कंचित्कालं स्तब्धवदवतिष्ठमानाः पुमांसो विजातीयात्ममनस्संयोगविलम्बात् नच इष्टसाधनताज्ञानमेव कथं विजातीयात्ममनस्संयोगाभावे उत्पद्यत इति वाच्यम् । उत्पन्ने तस्मिन् तदुत्पादकमनस्संयोगविगमसंभवात् पश्चाच्च यावद्विजातीयमनस्संयोगोत्पादं स्तम्भयति आत्ममनःसंयोगस्तु तत्रासमवायिकारणं भविष्यति । यद्यपि मनस्संयोगे सत्यपि इष्टसाधनताज्ञानविलम्बादिच्छादिविलम्बो दृष्टः तथापि तत्कार्यतावच्छेदकीभूतजन्यात्मविशेषगुणत्वावच्छिन्नं भवत्येव इष्टसाधनताज्ञानोत्पत्तिकाले इच्छात्वविशिष्टविलम्बस्य तत्पूर्वक्षणे इष्टसाधनताज्ञानविलम्बप्रयुक्तत्वेऽपि नेष्टसाधनताज्ञानोत्पत्तिकाले मनस्संयोगकार्यतावच्छेदकविशिष्टविलम्बः इष्टसाधनताज्ञानस्यापि जन्यात्मविशेषगुणत्वात् उत्पद्यते च ज्ञानादावसत्यपि सतीन्द्रियसन्निकर्षादौ निर्विकल्परूपं सति च कण्टकवेधादौ दुःखादिरूपं च जन्यात्मविशेषगुणत्वावच्छिन्नमात्ममनस्संयोगत्वावच्छिन्नात् । ननु कदाचिदात्ममनस्संयोगे सत्यपि यत्र जन्यात्मविशेषगुणसामान्यस्य नोत्पत्तिः तत्र जन्यत्वात्म-

## मञ्जूषा.

विशेषगुणत्वावच्छिन्नविलम्बे तथाप्यधर्मावच्छिन्नजनकतत्तदभावकूटस्य प्रयोजकत्वे वाच्ये इच्छात्वावच्छिन्नजनकेष्टसाधनताज्ञानविलम्बस्यापि प्रयोजकता दुर्वारा नैष दोषः जन्यात्मविशेषगुणसामान्याभावस्य कदाचिज्जाग्रद्दशायामनुभवसिद्धत्वे तदानीं विजातीयात्ममनस्संयोगस्यैव कल्पकाभावेन कल्पनात् । एवं च स्वावच्छेदकावच्छिन्नभिन्नपदार्थनिष्ठसमवायस्वाश्रयसमवेतत्वान्यतरसंबन्धावच्छिन्नप्रतियोगिताकाभावप्रयुक्तः यः स्वावच्छेदकावच्छिन्नसमानकालीनोऽभावः तत्प्रतियोगितावच्छेदकभिन्नधर्मावच्छिन्नसमवायावच्छिन्नकार्यतानिरूपितसमवायस्वाश्रयसमवेतत्वान्यतरसंबन्धावच्छिन्नकारणतात्वमसमवायिकारणतात्वमिति--पर्यवसन्नम् । वेगकार्यतावच्छेदकं ह्यभिघातत्वं स्वव्यापकधर्मावच्छिन्नजनकक्रियाविरहप्रयुक्ताभावप्रतियोगितावच्छेदकं वेगेन क्रियोत्पादकाले अभिघाताभावस्य पूर्वक्षणे क्रियाविरहप्रयुक्तत्वादिति न वेगनिष्ठाभिघातकारणतायामतिव्याप्तिः । एवं तुरीतन्तुसंयोगादावपि द्रष्टव्यम् । यदि चैवं स्वत्वनिवेशेनाननुगम इत्युच्यते तदा स्वावच्छेदकावच्छिन्नसमानकालीनस्वावच्छेदकावच्छिन्नभिन्नपदार्थनिष्ठदर्शितान्यतरसंबन्धावच्छिन्नप्रतियोगिताकाभावप्रयुक्ताभावप्रतियोगितावच्छेदकीभूतधर्मावच्छिन्नकार्यतानिरूपिताया या कारणता तत्तद्भेदकूटविशिष्टा या समवायसंबन्धावच्छिन्नकार्यतानिरूपितदर्शितान्यतरसंबन्धावच्छिन्ना कारणता सैवासमवायिकारणतेति वक्तव्यम् । एतच्च विजातीयात्ममनस्संयोगजन्यतावच्छेदकजन्यात्मविशेषगुणत्वस्वीकारेण यदि तु जीवनयोनियत्नव्यावर्तनाय योग्यत्वस्यापि तत्र निवेशनीयतया कार्यतावच्छेदककोटिप्रविष्टानां विशेषणविशेष्यभावे विनिगमनाविरहेण तदपेक्षया लाघवेन जन्यज्ञानत्वजन्येच्छात्वादिकमेव तज्जन्यतावच्छेदकमिति विभाव्यते तदा सति विजातीयमनस्संयोगे घटादिज्ञानोत्पत्तिकाले जन्येच्छात्वावच्छिन्नाभावः जन्येच्छात्वव्याप्योपायेच्छात्वफलेच्छात्वाद्यवच्छिन्नजनकेष्टसाधनताज्ञानसुखत्वादिप्रकारकज्ञानाभावप्रयुक्त इति जन्येच्छात्वावच्छिन्नं प्रति तस्यासमवायिकारणत्वं न संभवतीत्याक्षेपः प्रसज्यते । स चेत्थं वारणीयः तथाहि स्वावच्छेदकावच्छिन्नभिन्नपदार्थवृत्तिदर्शितान्यतरसंबन्धावच्छिन्नप्रतियोगिताकाभावनिरूपितसाक्षात्प्रयोज्यताश्रयीभूतो यः स्वावच्छेदकावच्छिन्नसमानकालीनोऽभावः तत्प्रतियोगितावच्छेदकधर्मव्याप्यधर्मावच्छिन्नकार्यतानिरूपितकारणताभिन्ना या निरुक्तकारणता सैवासमवायिकारणता । तथाहि इष्टसाधनताज्ञानस्येच्छां प्रति यद्यात्मनिष्ठप्रत्यासत्त्या कारणत्वं तदा एकविषयकेष्टसाधनताज्ञानादन्यविषयकेच्छावारणाय तत्तद्विषयकत्वं कार्यतावच्छेदके कारणतावच्छेदके च निवेश्यम् । तथाच कारणतावच्छेदकावच्छिन्नाभावस्य कार्यतावच्छेदकावच्छिन्नाभाव एव साक्षात्प्रयोजकतया तत्तद्विषयकेष्टसाधनताज्ञानत्वावच्छिन्नाभावानां तत्तद्विषयकेच्छात्वावच्छिन्नाभावा एव साक्षात्प्रयोज्याः तद्द्वाराच इच्छात्वावच्छिन्नप्रतियोगिताकाभावस्तत्प्रयोज्यः विशेषाभावकूटस्य सामान्याभावप्रयोजकत्वात् । तथाचात्ममनस्संयोगजन्यतावच्छेदकं जन्येच्छात्वं न दर्शिताभावनिरूपितसाक्षात्प्रयोज्याश्रयीभूतं भावप्रतियोगितावच्छेदकं नवा तादृशधर्मव्याप्यं यदीष्टसाधनताज्ञानस्य विषयनिष्ठतया हेतुत्वं तदा विषयतासंबन्धावच्छिन्नप्रतियोगिताक एव तदभावः विषयतासंबन्धावच्छिन्नप्रतियोगिताकेच्छाभावप्रयोजको न तु समवायेन तदभावस्समवायेनेच्छाभावे प्रयोजकः एवं सुखत्वज्ञानाभावस्थलेऽपि द्रष्टव्यम् । ननु विषयनिष्ठप्रत्यासत्त्या कारणतास्वीकारपक्षे एकपुरुषीयेष्टसाधनताज्ञानविषये पुरुषान्तरीयेच्छाया विषयतयाऽऽपत्तिवारणाय तत्तत्पुरुषीयत्वं कार्यत्वकारणत्वयोरवच्छेदककोटौ निवेशनीयम् । तथाच एकधर्मिसंबन्धित्वस्य कार्यकारणविशेषणतया कार्यत्वकारणत्वयोरवच्छेदककोटिप्रवेशे तद्धर्मिनिष्ठे कार्यतावच्छेदकावच्छिन्नाभावे तद्धर्मिनिष्ठकारणतावच्छेदकावच्छिन्नाभावस्य प्रयोजकतया तत्पुरुषनिष्ठेच्छात्वावच्छिन्नाभावे तत्पुरुषनिष्ठस्येष्टसाधनताज्ञानत्वावच्छिन्नाभावस्य प्रयोजकत्वं दुर्वारम् । नच उपायेच्छात्वस्य इष्टसाधनताज्ञानकार्यतावच्छेदकतया तदवच्छिन्नाभावस्यैव इष्टसाधनताज्ञानाभावनिरूपितसाक्षात्प्रयोज्यत्वं इष्टसाधनताज्ञानाभावेऽपि सुखत्वप्रकारकज्ञानदशायामिच्छा-

त्वं स्यात् एवं ज्ञानादीनामपीच्छाद्यसमवायिकारणत्वं स्यात् तथापि पटासमवायिकारणलक्षणे तुरीतन्तुसंयोगभिन्नत्वं देयम् । तुरीतन्तुसंयोगस्तु तुरीपटसंयोगं प्रत्यसमवायिकारणं भवत्येव । एवं वेगादिकमपि वेगस्पन्दाद्यसमवायिकारणं भवत्येवेति तत्तत्कार्यासमवायिकारणलक्षणे तत्तद्भिन्नत्वं देयम् । आत्मविशेषगुणानां तु कुत्रा-

## प्रभा.

त्यादिना इच्छापरिग्रहः ॥ इच्छादीत्यादिना कृतेः परिग्रहः । घटत्वादिरूपकार्यतावच्छेदकभेदेन विशिष्यैवासमवायिकारणलक्षणं वाच्यमित्यभिप्रायेणाह ॥ **तथापीति** ॥ **तुरीतन्तुसंयोगभि-**

## मञ्जूषा.

त्वावच्छिन्नाभावविरहादिति वाच्यम् । एवमपि प्रवृत्तित्वावच्छिन्नं प्रति मनस्संयोगस्यासमवायिकारणत्वानुपपत्तेर्दुर्वारत्वात् विषयतया तत्पुरुषीयप्रवृत्तित्वावच्छिन्नं प्रति विषयतया तत्पुरुषीयचिकीर्षाया हेतुत्वेन तत्पुरुषनिष्ठे प्रवृत्तित्वावच्छिन्नप्रतियोगिताकाभावे तत्पुरुषनिष्ठस्य चिकीर्षात्वावच्छिन्नाभावस्य साक्षादेव प्रयोजकत्वसंभवादिति चेदेवं सति स्वावच्छेदकावच्छिन्नभिन्ननिष्ठकारणतावच्छेदकीभूतसमवायस्वाश्रयसमवेतत्वान्यतरसंबन्धावच्छिन्नप्रतियोगिताकाभाव एव लक्षणघटकः । चिकीर्षानिष्ठकारणतावच्छेदकसंबन्धो यदि समवायः तदा तत्संबन्धावच्छिन्नप्रतियोगिताकस्य कारणतावच्छेदकीभूततत्तद्विषयकचिकीर्षात्वावच्छिन्नाभावस्य कार्यतावच्छेदकीभूततत्तद्विषयकप्रवृत्तित्वावच्छिन्नाभाव एव साक्षात्प्रयोजकत्वं यदि विषयता तदा समवायावच्छिन्नचिकीर्षात्वावच्छिन्नप्रतियोगिताकाभावो न कारणतावच्छेदकसंबन्धावच्छिन्नप्रतियोगिताक इति नानुपपत्तिः । अथ चिकीर्षेष्टसाधनताज्ञानादेः किं विषयनिष्ठतया हेतुत्वं युक्तं उत पुरुषनिष्ठतयेति चेद्विषयनिष्ठतयैवेत्यवेहि विषयभेदेन कारणताभेदस्य पुरुषभेदप्रयुक्तभेदापेक्षयाधिकत्वात् पुरुषनिष्ठतया कारणतावादिनोऽपि स्वेच्छाविषयसाधनताज्ञानस्वीयकृतिसाध्यत्वप्रकारकेच्छयोरेव हेतुत्वेन पुरुषभेदेन कारणताभेदस्याऽऽवश्यकत्वाच्चेत्यन्यदेतत् । एवमनुमित्यादौ परामर्शादेरात्मनिष्ठप्रत्यासत्त्या हेतुत्वेऽपि जन्यज्ञानत्वावच्छिन्नं प्रति आत्ममनस्संयोगस्य नासमवायिकारणत्वक्षतिः परामर्शस्य तु नानुमितिं प्रत्यसमवायिकारणता परामर्शमुत्पाद्य विनष्टे विजातीयमनस्संयोगे परामर्शभिन्नात्ममनस्संयोगनिष्ठकारणतावच्छेदकीभूतसमवायसंबन्धावच्छिन्नविजातीयात्ममनस्संयोगत्वावच्छिन्नप्रतियोगिताकाभावनिरूपितसाक्षात्प्रयोज्यताश्रयीभूतो यो मनस्संयोगकार्यतावच्छेदकीभूतजन्यज्ञानत्वावच्छिन्नाभावः तत्प्रतियोगितावच्छेदकीभूतजन्यज्ञानत्वव्याप्यानुमितित्वावच्छिन्नकार्यतानिरूपितकारणताभिन्नकारणतायाः तत्राभावादेवं वेगनिष्ठाभिघातकारणताया अपि क्रियाभावनिरूपितसाक्षात्प्रयोज्यताश्रयीभूतो यो विजातीयसंयोगाभावः क्रियोत्पत्तिकालीनस्तत्प्रतियोगितावच्छेदकीभूतवैजात्यव्याप्याभिघातत्वावच्छिन्नकार्यतानिरूपितकारणताभिन्नत्वाभा-

## दिनकरीयम्.

रणत्वं पटासमवायिकारणत्वमिति विशिष्यैव लक्षणं कर्तव्यमित्याह ॥ **तथापीति** ॥ वस्तुतस्तु तुरीतन्तुसंयोगत्वावच्छिन्नप्रतियोगिताकभेदः पटासमवायिकारणलक्षणघटकतया ग्रन्थकर्तुर्नाभिप्रेतः अपि तु तन्तुभिन्नसमवेतत्वावच्छिन्नप्रतियोगिताकभेद एव । अन्यथा हस्ततन्तुसंयोगादिभेदानां पृथङ्निवेशा-

## रामरुद्रीयम्.

विशेषगुणानां क्वाप्यसमवायिकारणत्वं नास्तीति सिद्धान्तभङ्गप्रसङ्ग एव दूषणं बोध्यम् ॥ **ग्रन्थकर्तुर्नाभिप्रेत इति** ॥ तुरीतन्तुसंयोगभिन्नत्वे सतीत्यस्य तत्संयोगप्रतियोगिकभेदार्थकत्वादिति भावः । नन्वेवं तादृशभेदप्रतियोगितावच्छेदकं किमित्याशङ्कायां तन्तुभिन्नसमवेतत्वमेव तत्प्रयोगितावच्छेदकमित्याह ॥ **अपि त्विति** ॥ तुरीतन्तुसंयोगत्वस्य तत्प्रतियोगितावच्छेदकत्वोपगमे बाधकमाह ॥ **अन्यथेति** ॥

प्यसमवायिकारणत्वं नास्ति तेन तद्भिन्नत्वं सामान्यलक्षणे देयमेव। अत्र समवायिकारणे प्रत्यासन्नं द्विविधं कार्यैकार्थप्रत्यासत्त्या कारणैकार्थप्रत्यासत्त्या च। आद्यं यथा घटादिकं प्रति कपालसंयोगादिकमसमवायिकारणम्। तत्र कार्येण घटेन सह कारणस्य कपालसंयोगस्य एकस्मिन् कपाले प्रत्यासत्तिरस्ति। द्वितीयं यथा घटरूपं प्रति कपालरूपमसमवायिकारणं स्वगतरूपादिकं प्रति समवायिकारणं घ-

**प्रभा.**

**न्नत्वमिति** ॥ स्वावच्छिन्नप्रतियोगिताकभेदवत्समवेतत्वसंबन्धावच्छिन्नतन्तुत्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वमित्यर्थः। तेन तुरीतन्तुसंयोगत्वावच्छिन्नप्रतियोगिताकभेदानिवेशे हस्ततन्तुसंयोगानामपि असमवायिकारणत्वापत्तिः तुरीतन्तुसंयोगभेदहस्ततन्तुसंयोगादिभेदघटितकूटानिवेशे गौरवं तन्तुभिन्नसमवेतत्वस्य समवेतव्यक्तिभेदेन भिन्नतयाऽनुगतधर्मरूपत्वाभावेन तदवच्छिन्नप्रतियोगिताकभेदानिवेशासंभवाच्चेति दूषणस्य नावकाशः। एवमिच्छाद्यसमवायिकारणत्वमपि लाघवात् स्वाभाववद्वृत्तित्वसंबन्धेनाऽऽत्मत्वविशिष्टत्व-

**मञ्जूषा.**

वात् नातिव्याप्तिः एवं तुरीतन्तुसंयोगनिष्ठकारणतायामपि द्रष्टव्यम्। ननु सुखत्वावच्छिन्ने दुःखत्वावच्छिन्ने च धर्माधर्मयोस्समवायेनैव कारणतया नारकिणां सुखाभावो नाकिनां दुःखाभावश्च धर्माधर्माभावप्रयुक्त इति तत्रात्ममनस्संयोगस्यासमवायिकारणत्वं न स्यादिति चेन्नहि तेषां तदानीं सुखदुःखयोरभावौ धर्माधर्माभावप्रयुक्तौ आविमानुषादिजन्मान्तरानुभाव्यसुखदुःखबीजतया तयोस्तत्रापि सत्त्वात् किन्तु तत्सहकारिकालविशेषदेहविशेषाद्यभावप्रयुक्तावेव तौ यदा पुनः धर्माधर्मयोस्सामान्याभावौ स्तः तदा मुक्तिदशायां न विजातीयमनस्संयोगोऽपीति सर्वं चतुरश्रम्। यद्यप्यत्र द्रव्यनाशकारणतावच्छेदककोटौ महादेवप्रवेशितासमवायिकारणताप्येतादृश्येव निवेशयितुं शक्यते तथापि गौरवादिमां रीतिं उत्सृज्य विश्वनाथोक्तरीत्यनुसरणं तत्र कृतमस्माभिः विश्वनाथो हि नासमवायिकारणताया लक्षणमाचचक्षे किन्तु विशेषसामान्याभ्यां असमवायिकारणस्यैव। यद्यप्युद्देशविभागानुरोधात् असमवायिकारणतैव लक्षयितव्या। तथाप्यसमवायिकारणतालक्षणस्य बहुतरविषयपरिज्ञानाधीनप्रतीतिकत्वेन तदुपेक्ष्य तत्परिचयायैनासमवायिकारणलक्षणमुच्यते यत्समवेतं कार्यमिति वाक्येनापि स्वरसतस्समवायिकारणस्यैव लक्षणं लभ्यते समवायिकारणतालक्षणं तु परिचेयमतो न प्रक्रमभङ्गः तत्र विशेषलक्षणमाह ॥ **पटासमवायिकारणलक्षण इति** ॥ तुरीतन्तुसंयोगभिन्नत्वं च तन्तुभिन्नासमवेतत्वं पटव्याप्यत्वं वा तेन तुरीतन्तुसंयोगादिव्युदासः इदं विशेषणं सामान्यलक्षणे न देयमित्याह ॥ **तुरीतन्तुसंयोग इति** ॥ यद्यपि तुरीतन्तुसंयोगनिष्ठा पटकारणता नासमवायिकारणतारूपा तथापीहासमवायिकारणस्यैव लक्षणीयतया तुरीतन्तुसंयोगोऽपि सामान्यलक्ष-

**दिनकरीयम्.**

पत्त्या भेदकूटनिवेशने गौरवादिति ध्येयम्। एतेन तन्तुमात्रसमवेतत्वनिवेशेनैवोपपत्तौ तुरीतन्तुसंयोगान्यत्वनिवेशनमनुचितमित्यपास्तं मात्रपदस्यास्मदुक्तार्थकत्वात्। एवमिच्छाद्यसमवायिकारणलक्षणे आत्ममात्रसमवेतत्वावच्छिन्नप्रतियोगिताकभेद एव निवेश्यो न तु ज्ञानत्वाद्यवच्छिन्नभेद इति बोध्य

**रामरुद्रीयम्.**

**मात्रपदस्येति** ॥ तन्तुभिन्नासमवेतत्वे सति तन्तुसमवेतत्वमेव हि तन्तुमात्रसमवेतत्वमिति भावः। **इच्छाद्यसमवायीति** ॥ अत्र इच्छादिपदं कार्यमात्रपरं तथाचासमवायिकारणसामान्यलक्षणे ज्ञानभेदनिवेशे इच्छाभेदस्यापि निवेशनीयतया गौरवमित्येकभेदनिवेश एवोचित इति भावः। विशेषलक्षणपरत्वे तत्र ज्ञानातिरिक्तेऽतिव्याप्त्यप्रसक्त्या ज्ञानभेदमात्रनिवेशेनैव सामञ्जस्यादिति केचिदाहुः

**टस्तेन सह कपालरूपस्यैकस्मिन् कपाले प्रत्यासत्तिरस्ति । तथाच क्वचित्समवायसम्बन्धेन क्वचित्स्वसमवायिसमवेतत्वसम्बन्धेनेति फलितोऽर्थः । इत्थं च कार्यै-**

## प्रभा.

मेव निवेशनीयं नतु ज्ञानत्वाद्यवच्छिन्नभेदवत्त्वं गौरवादिति हृदयम् ॥ **तथाचेति** ॥ प्रत्यासत्तिद्वयेऽपीत्यर्थः ॥ **फलितार्थ इति** ॥ क्वचित् समवायसंबन्धावच्छिन्नकार्यतानिरूपितसमवायसंबन्धावच्छिन्नकारणत्वं क्वचित्समवायसंबन्धावच्छिन्नकार्यतानिरूपितसमवायद्वयघटितसामानाधिकरण्यसंबन्धावच्छिन्नकारणत्वमसमवायिकारणत्वमिति फलितार्थ इत्यर्थः । नन्वेवं कारणतावच्छेदकसंबन्धभेदेनासमवायिकारणत्वानां भिन्नत्वेनाननुगतं लक्षणमत आह ॥ **इत्थं चेति** । तथाच समवायसंबन्धावच्छिन्नकार्य-

## मञ्जूषा.

णलक्ष्य एवेति न दोष इति भावः ॥ **मूले आभ्यामिति** ॥ समवायिकारणताभिन्ना असमवायिकारणताभिन्ना च या कारणता सा निमित्तकारणता । तत्र कारणतायां समवायिकारणताभिन्नत्वं समवायसंबन्धावच्छिन्नकार्यतानिरूपिततादात्म्यसंबन्धावच्छिन्नकारणताभिन्नत्वं असमवायिकारणताभिन्नत्वं च अस्मदुपदर्शितलक्षणाक्रान्तकारणताभिन्नत्वमेव न तु विश्वनाथाद्युक्तरीतिमनुसृत्य किञ्चिदसमवायिकारणताभिन्नत्वं निर्वक्तुं शक्यमिति प्रमदितव्यं असंभवात् । तथाहि समवायिकारणभिन्नं असमवायिकारणभिन्नं च कारणं निमित्तकारणमिति यथाश्रुतमूलादवगम्यते तच्च न संभवति घटनिमित्तकारणस्य दण्डादेः स्वीयरूपं प्रति समवायिकारणत्वात् तन्निमित्तकारणस्यैव घटकुलालकरसंयोगं प्रति कपालकुलालकरसंयोगस्यासमवायिकारणत्वात् । अथ नेदं सामान्यलक्षणं किन्तु कार्यविशेषनियन्त्रितं भिन्नं भिन्नम् । तथाच तत्कार्यसमवायिकारणभिन्नं तत्कार्यासमवायिकारणभिन्नं यत् तत्कार्यकारणं तत्तत्कार्यनिमित्तकारणं इदंच भावकार्यस्थले । ध्वंसस्थले तु ध्वंसकारणत्वमेव ध्वंसनिमित्तत्वमिति वक्तव्यं अतो नाप्रसिद्धिरिति चेदेवमपि कपालस्य तत्संयोगस्य च घटं प्रति कालविधया निमित्तकारणत्वानुपपत्तेः संयोगासमवायिकारणस्य कर्मणः कालविधया निमित्तकारणत्वानुपपत्तेः प्रत्यक्षसमवायिकारणस्यात्मनः तत्र विषयविधया निमित्तकारणत्वानुपपत्तेश्च । नच तद्धर्मावच्छिन्नकार्यतानिरूपितसमवायिकारणताश्रयभिन्नं तद्धर्मावच्छिन्नकार्यतानिरूपितासमवायिकारण-

## दिनकरीयम्.

म् ॥ **तथा चेति** ॥ द्विविधप्रत्यासत्तिविवक्षणे चेत्यर्थः ॥ **फलितोऽर्थ इति** ॥ द्विविधप्रत्यासत्त्योरिति शेषः । पर्यवसितमसमवायिकारणलक्षणमाह ॥ **इत्थं चेति** ॥ कार्यैकार्थप्रत्यासत्तिः समवायसम्बन्धः कारणैकार्थप्रत्यासत्तिः स्वसमवायिसमवेतत्वसम्बन्धः तथा च समवायस्वसमवा-

## रामरुद्रीयम्.

तत्र मनोरमम् । उपायेच्छां प्रति फलेच्छायाः कारणत्वेन विशेषलक्षणेऽपि इच्छाभेदनिवेशस्यावश्यकत्वादिति विभावनीयम् ॥ **इत्थं चेतीति** ॥ ननु तथाचेत्यादिना घटादिकं प्रति कपालादिसंयोगस्य समवायेन घटरूपादिकं प्रति कपालरूपादेः स्वसमवायिसमवेतत्वसम्बन्धेन कारणत्वमभिधाय इत्थंचेत्यादिना असमवायिकारणलक्षणघटककारणतायां कार्यैकार्थप्रत्यासत्तिकारणैकार्थप्रत्यासत्त्यन्यतरावच्छिन्नत्वकथनं सन्दर्भविरुद्धं कार्यैकार्थप्रत्यासत्तेः प्रकृतकार्यसमवाय्यनुयोगिकसमवायरूपत्वात् लाघवेन केवलसमवायस्यैव कारणतावच्छेदकत्वात् कारणैकार्थप्रत्यासत्तेः प्रकृतकार्यकारणसमवाय्यनुयोगिकसमवायरूपायास्तु कारणतावच्छेदकत्वस्यैवासम्भवात् तेन सम्बन्धेन कपालरूपादेः घटादिरूपाधिकरणे असत्त्वादित्याशङ्कां निरसितुं तदर्थमाह ॥ **कार्यैकार्थेति** ॥ तथा च समवाये प्रकृतकार्यसमवाय्यनुयोगिकत्वप्रदर्शनं कार्यकारणयोरैकाधिकरण्यलाभायैव प्रदर्शितम् । न तु समवायस्य तेन रूपेण कारणतावच्छेदकसम्बन्धत्वलाभायेति भावः । एवं द्वितीयेऽपि कारणपदस्य प्रकृतकार्यकारणघटितार्थकतया प्रकृतकार्यकारणेन सहैकस्मिन्नर्थे कारणघटिता स्वसमवायिसमवेतत्वरूपा प्रत्यासत्तिरित्ये-

## प्रभा.

तानिरूपितसमवायसंबन्धावच्छिन्नकारणत्वसमवायसंबन्धावच्छिन्नकार्यतानिरूपितसमवायद्वयघटितसामानाधिकरण्यसंबन्धावच्छिन्नकारणत्व-एतदन्यतरवत्त्वे सति आत्मत्वाभाववद्वृत्तित्वं सामान्यतोऽसमवायिकारण-

## मञ्जूषा.

ताश्रयाभिन्नं यत्तद्धर्मावच्छिन्नं प्रति कारणं तत्तद्धर्मावच्छिन्नं प्रति निमित्तकारणमित्युच्यते ; उक्तस्थलेषु निमित्तकारणतानिरूपितकार्यतावच्छेदकधर्माणां तत्तन्निष्ठसमवायिकारणत्वासमवायिकारणत्वनिरूपितकार्यतावच्छेदकभिन्नत्वान्नानुपपत्तिरिति वाच्यम् एवमपि कार्यत्वावच्छिन्ने द्रव्यविधया समवायिकारणस्य कालस्य तत्र कालविधया निमित्तकारणत्वानुपपत्तेः यदि तु समवायिकारणतानिरूपकतावच्छेदकं ध्वंसव्यावृत्तं जन्यसत्त्वं सत्त्वमेव वा निमित्तकारणतानिरूपकतावच्छेदकं तु तत्साधारणजन्यत्वमेवेत्यस्ति कार्यतावच्छेदकयोर्भेद इति मन्यते तदा जन्यत्वावच्छिन्नकार्यतानिरूपितयोस्समवायिकारणत्वासमवायिकारणत्वयोरप्रसिद्धया कार्यत्वावच्छिन्नं प्रति कालत्वादृष्टत्वकृतित्वादिना निमित्तकारणत्वानुपपत्तिः तत्तत्प्रत्यक्षव्यक्तित्वावच्छिन्नं प्रति तत्तद्विषयव्यक्तेस्तत्तद्व्यक्तित्वेन निमित्तकारणत्वानुपपत्तिश्च तत्तत्प्रत्यक्षव्यक्तित्वावच्छिन्ननिरूपितयोस्समवायिकारणत्वासमवायिकारणत्वयोरप्रसिद्धेस्तत्तदात्मव्यक्तित्वावच्छिन्नसमवायिकारणतानिरूपितकार्यतायामपि तत्तदात्मव्यक्तिसमवेतसत्त्वस्यैवावच्छेदकत्वेन तत्तद्व्यक्तित्वस्यातथात्वात् ।

## दिनकरीयम्.

यिसमवेतत्वान्यतरसम्बन्धेन कारणत्वे सत्यात्मविशेषगुणान्यत्वं सामान्यतोऽसमवायिकारणत्वमित्यर्थः । अत्र पटासमवायिकारणस्य तन्तुसंयोगस्य पटरूपासमवायिकारणस्य तन्तुरूपस्य च सङ्ग्रहाय समवायस्वसमवायिसमवेतत्वयोः प्रवेशः । घटरूपं प्रति घटस्यासमवायिकारणतावारणाय तादृशान्यतरप्रत्यासत्त्या समवायिकारणे प्रत्यासन्नत्वे सति कारणत्वं परित्यज्य तादृशान्यतरप्रत्यासत्त्या कारणत्वपर्यन्तानुधावनम् । आत्मविशेषगुणान् वारयितुं विशेष्यभागः । यत्तु कार्यनाशजनकनाशप्रतियोगित्वं तत्त्वमिति तन्न । द्वित्वनाशप्रयोजकनाशप्रतियोगिन्यामपेक्षाबुद्धावतिव्याप्तेरिति । अवयवमात्रसंयोगत्वं

## रामरुद्रीयम्.

वार्थः । तत्रापि कारणघटितप्रत्यासत्तौ प्रकृतकार्यकारणसमवाय्यनुयोगिकत्वं कार्यकारणयोरैकाधिकरण्यलाभायैव प्रदर्शितमिति भावः । न च स्वसमवायिसमवेतत्वं स्वसमवाय्यनुयोगिकसमवायप्रतियोगित्वमेव तच्च कारणेन घटेन घटितमिति वाच्यम् । स्वरूपसम्बन्धात्मिकायाः प्रतियोगिताया घटाद्यनतिरिक्तत्वादिति ध्येयम् ॥ **आत्मविशेषेति** ॥ आत्ममात्रसमवेतान्यत्वमित्यर्थः । पूर्वं तथैवाभिधानात् । ननु तत्प्रत्यासन्नं जनकमिति मूलेन स्वरसादन्यतरसंबन्धेन समवायिकारणप्रत्यासन्नत्वे सति कारणत्वस्यैव असमवायिकारणलक्षणघटकता युक्ता नतु निरुक्तान्यतरप्रत्यासत्त्यवच्छिन्नकारणताया मूलतस्तदलाभादित्याशङ्कामपनेतुं यथाश्रुतार्थपरित्यागे बीजमाह ॥ **घटरूपमिति** ॥ **घटस्येति** ॥ रूपसमवायिकारणे घटे स्वसमवायिसमवेतत्वसम्बन्धेन घटस्य प्रत्यासन्नत्वात् रूपं प्रति समवायिकारणत्वाच्चेति भावः ॥ **अपेक्षाबुद्धावतिव्याप्तेरिति** ॥ अथात्र कार्यनाशनिष्ठजन्यतायां नाशनिष्ठजनकतायां वा दैशिकविशेषणतासम्बन्धावच्छिन्नत्वनिवेशे नैष दोषः अपेक्षाबुद्धिनाशस्य दैशिकविशेषणतया तेन सम्बन्धेन द्वित्वनाशाधिकरणे घटादावसत्त्वेन दैशिकविशेषणतया तयोः कार्यकारणभावासम्भवात् कालिकविशेषणतयैव तयोः कार्यकारणभावस्याङ्गीकरणीयत्वात् दैशिकविशेषणतासम्बन्धावच्छिन्नत्वनिवेश आवश्यक एवान्यथा घटादिनाशं प्रति कालत्वेन जनकस्य घटादिनाशस्य प्रतियोगिनि घटादावेव अतिव्याप्तेरिति चेन्न । दैशिकविशेषणतया पटादिनाशं प्रति तन्तुसंयोगादिनाशस्य तेन सम्बन्धेन कारणत्वे सहस्रतन्तुकपटस्थले पूर्वं व्यभिचारस्य प्रदर्शितत्वेन प्रतियोगितया द्रव्यनाशं प्रति पूर्वोक्तत्रितयसम्बन्धेन नाशत्वेनैव कारणताया वाच्यतया कार्यत्वकारणत्वयोर्दैशिकविशेषणतासंबन्धानवच्छिन्नत्वात् । इदमुपलक्षणम् । रूपना-

कार्थकारणैकार्थान्यतरप्रत्यासत्त्या समवायिकारणे प्रत्यासन्नं कारणं ज्ञानादिभिन्नम-समवायिकारणमिति सामान्यलक्षणं पर्यवसितम् । आभ्यां समवायिकारणासमवायिका-रणाभ्यां परं भिन्नं कारणं तृतीयं निमित्तकारणमित्यर्थः ॥ १८ ॥

## प्रभा.

त्वमिति फलितमिति भावः ॥ **समवायिकारणास्समवायिकारणाभ्यामिति** ॥ समवायिकारण-त्वासमवायिकारणत्वाभ्यामित्यर्थः ॥ **कारणमिति** ॥ कारणत्वमित्यर्थः ॥ **निमित्तकारणमित्यर्थ इति** ॥ निमित्तकारणत्वमिति फलितोऽर्थ इत्यर्थः । तेन तुरीपटसंयोगं प्रति तुरीतन्तुसंयोगस्यासमवायिकारणत्वेऽ-पि स्वसमवेतरूपादिकं प्रति तन्त्ववयविनः समवायिकारणत्वेऽपि च न पटं प्रति निमित्तकारणत्वक्षतिरिति हृद-यम् ॥ १८ ॥

## मञ्जूषा.

द्रव्यचाक्षुषत्वावच्छिन्नं प्रत्युद्भूतरूपचक्षुस्संयोगादेः निमित्तकारणत्वानुपपत्तिश्च । द्रव्यचाक्षुषत्वाद्यवच्छिन्न-निरूपितयोस्तयोरप्रसिद्धेस्तदेतत्सर्वमभिप्रेत्यैव समवायिकारणत्वासमवायिकारणत्वान्यकारणत्वमेव निमि-त्तकारणत्वमित्यर्थ उक्तो महादेवेन नचैतावता कृतकृत्यतेति मन्तव्यम् । असमवायिकारणताभिन्न-त्वस्य दुर्वचत्वात् । तथाहि असमवायिकारणताभिन्नत्वं यदि समवायावच्छिन्नकार्यतानिरूपिसमवाय-स्वाश्रयसमवेतत्वान्यतरसंबन्धावच्छिन्नकारणताभिन्नत्वं तदा परामर्शादिनिष्ठानुमित्यादिकारणतायामव्याप्तिः भेदप्रतियोगिकारणतायामात्मविशेषगुणभिन्नवृत्तित्वनिवेशनेन वारणेऽपि तुरीतन्तुसंयोगादिनिष्ठपटादि-कारणतायामव्याप्तिर्दुर्वारा । तुरीतन्तुसंयोगादिभिन्नवृत्तित्वस्यापि तत्र निवेशे तुरीतन्तुसंयोगादिनिष्ठतुरी-पटसंयोगासमवायिकारणतायामतिव्याप्तिः । तस्मादस्मदुक्तलक्षणाक्रान्तासमवायिकारणताघटितमेव नि-रुक्तकारणतायास्सामान्यलक्षणं वक्तव्यम् । एवं यावत्यः असमवायिकारणताव्यक्तयो लोके प्रसिद्धास्त-

## दिनकरीयम्.

द्रव्यासमवायिकारणत्वमित्यादि विशिष्यैव लक्षणं निर्वाच्यं अखण्डोपाधिरेव वा तदित्यन्ये ॥ **भिन्नं कारणमिति** ॥ अत्रेदं बोध्यम् । समवायिकारणत्वासमवायिकारणत्वभिन्नकारणत्वमेव निमित्तकारण-त्वम् । तेन तुरीपटसंयोगं प्रति तुरीतन्तुसंयोगस्यासमवायिकारणत्वेऽपि न तस्य पटं प्रति निमित्त-कारणत्वक्षतिरिति ॥ १८ ॥

## रामरुद्रीयम्.

शजनकनाशप्रतियोगिनि घटादावप्यतिव्याप्तिरवयविरूपासमवायिकारणावयवरूपादावव्याप्तिश्च द्रष्टव्येति वि-भावनीयम् । इत्यादिविशिष्यैवेत्यादिना रूपनिष्ठसमवायसम्बन्धानवच्छिन्नकार्यतानिरूपितकारणताशालिरूपत्वं रूपासमवायिकारणलक्षणमित्यादीनां परिग्रहः । पाकजरूपे चाग्निसंयोगो निमित्तं न त्वसमवायिकारणं ना-तस्तत्राव्याप्तिरिति भावः । पटानारम्भकतन्तुद्वयसंयोगे अतिव्याप्तिं परिचिन्त्य कारणत्वं पदार्थान्तरमिति मताभिप्रायेणाह ॥ **अखण्डोपाधिरिति** ॥ **भिन्नं कारणमितीति** ॥ ननु समवायिकारणासमवायि-कारणभिन्नत्वे सति कारणत्वस्य निमित्तकारणलक्षणत्वे पटनिमित्तकारणे तुरीतन्तुसंयोगेऽव्याप्तिः तस्य तुरी-पटसंयोगासमवायिकारणत्वेन तद्भिन्नत्वविरहात् न च तत्कार्यसमवायिकारणासमवायिकारणभिन्नत्वे सति तत्कार्यकारणत्वं तत्कार्यं प्रति निमित्तकारणत्वमिति विशिष्यैव लक्षणं वक्तव्यम् । तथा च तुरीतन्तुसंयोग-स्य पटसमवायिकारणासमवायिकारणयोर्भिन्नत्वेन न तत्र पटनिमित्तकारणत्वानुपपत्तिरिति वाच्यं तथासति ध्वंसं प्रति निमित्तकारणे प्रतियोग्यादावव्याप्तेः तस्य समवायिकारणासमवायिकारणयोरप्रसिद्धेरित्याशङ्कां निराकुरुते ॥ **अत्रेदमित्यादिना** ॥ समवायिकारणत्वं समवायसम्बन्धावच्छिन्नकार्यतानिरूपिततादात्म्य-संबन्धावच्छिन्नकारणत्वं असमवायिकरणत्वं च तादृशकार्यतानिरूपितनिरुक्तान्यतरसम्बन्धावच्छिन्नकारणत्व-मिति बोध्यम् ॥ १८ ॥

येन सह पूर्वभावः कारणमादाय वा यस्य ।
अन्यं प्रति पूर्वभावे ज्ञाते यत्पूर्वभावविज्ञानम् ॥ १९ ॥

इदानीमन्यथासिद्धत्वमेव व्याक्रियते ॥ **येनेति** ॥ यत्कार्यं प्रति कारणस्य पूर्ववृत्तिता येन रूपेण गृह्यते तत्कार्यं प्रति तद्रूपमन्यथासिद्धमित्यर्थः । यथा घटं प्र-

## प्रभा.

प्रसङ्गसङ्गतिमभिप्रेत्याह ॥ **इदानीमिति** ॥ कारणत्वनिरूपणानन्तरमित्यर्थः । अन्यथासिद्धत्वमन्यथासिद्धिः कियत् कतिविधा इति शिष्यजिज्ञासायामिति शेषः ॥ **तदाहेति** ॥ पञ्चविधेत्याहेत्यर्थः ॥ **यत्कार्यं प्रतीति** ॥ यद्धर्मावच्छिन्नं प्रतीत्यर्थः । अत्र कारणस्येति स्वरूपकीर्तनं नत्वन्यथासिद्धिप्रविष्टं प्रयोजनाभावात् ॥ **पूर्ववृत्तिता येन रूपेण** ॥ यद्धर्मावच्छिन्ना पूर्ववृत्तिता पूर्ववृत्तितावच्छेदको यो धर्म इति यावत् । तथाच तद्धर्मावच्छिन्ननिरूपितनियतपूर्ववृत्तितावच्छेदकत्वं तद्ध-

## मञ्जूषा.

तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदकूटवत्त्वमसमवायिकारणताभिन्नत्वमिति यद्यपि शक्यते वक्तुं तथाप्यसमवायिकारणताव्यक्तीनां परिचायकरूपाभावे तदुर्ग्रहम् । यदि चात्र समवायिकारणासमवायिकारणयोरिव निमित्तकारणस्यापि लक्षणं वक्तव्यमित्याभिनिवेशस्तदा समवायिकारणताभिन्नासमवायिकारणताभिन्नकारणतावत्त्वं सामान्यलक्षणं असमवायिकारणताभिन्नत्वन्तु स्वाश्रयसमवेतत्वसंबन्धावच्छिन्नकारणताभिन्नत्वमात्रं शेषवैयर्थ्यात् द्व्यणुककारणतामादाय परमाणुष्वतिव्याप्तिवारणाय समवायिकारणताभिन्नत्वनिवेशः । परमाणूद्भूतरूपस्य परमाण्वधिकरणकमहत्त्वाभावप्रत्यक्षे निमित्तकारणत्वेऽपि परमाण्वनुद्भूतरूपस्य तद्रसस्पर्शयोः तदेकत्वादीनाञ्च क्वचिदपि निमित्तकारणत्वाभावात् तत्रातिव्याप्तिवारणाय स्वाश्रयसमवेतत्वसंबन्धावच्छिन्नकारणताभिन्नत्वनिवेशः । सर्वेषु जन्येष्वैन्द्रियकेषु च स्वध्वंसप्रत्यक्षकारणतैवान्ततस्तादृशी प्रसिध्यति एवं दिक्कालादिष्वपि यथासंभवमूहनीयम् । एवं जन्यमात्रस्य कालोपाधित्वानङ्गीकारपक्षे तन्तुभिन्नत्वे सति तन्तुसंयोगभिन्नत्वे सति पटकारणत्वं पटनिमित्तकारणस्य लक्षणं तदङ्गीकारे तु तन्तुत्वावच्छिन्नकारणताभिन्नतन्तुसंयोगत्वावच्छिन्नकारणताभिन्नपटकारणतावत्त्वं तथा । एवमात्मभिन्नत्वे सति आत्ममनस्संयोगभिन्नत्वे सति इच्छाकारणत्वमिच्छानिमित्तकारणत्वमित्यादिरीत्या तत्र वक्तव्यं ध्वंसनिमित्तत्वं तु ध्वंसकारणत्वमेवेति ॥ १८ ॥

॥ **मूले येन सहेति** ॥ कारणस्येत्यध्याह्रियते गृह्यत इत्युपरितनमाकृष्यते तथाच कारणस्य पूर्ववृत्तिता येन सह गृह्यत इत्यन्वयः । साहित्यमत्रावच्छिन्नविशेष्यताकत्वं तदाह ॥ **मुक्तावल्यां यत्कार्यं प्रतीति** ॥ अत्र तद्धर्मावच्छिन्ननिरूपितनियतपूर्ववृत्तित्वग्रहविशेष्यतावच्छेदकत्वे सति तद्धर्मावच्छिन्नं प्रति स्वतन्त्रान्वयव्यतिरेकशून्यत्वं तद्धर्मावच्छिन्नं प्रत्यन्यथासिद्धत्वं द्वितीयान्यथासिद्धदण्डरूपादिवारणाय

## दिनकरीयम्.

**यत्कार्यं प्रतीति** ॥ यद्धर्मावच्छिन्नं प्रतीत्यर्थः ॥ **येन रूपेणेति** ॥ यद्रूपावच्छेदेनेत्यर्थः । इत्थं च तद्धर्मावच्छिन्ननिरूपितनियतपूर्ववृत्तित्वग्रहविशेष्यतावच्छेदकत्वे सति तद्धर्मावच्छिन्नं प्रति स्व-

## रामरुद्रीयम्.

यत्कार्यं प्रतीत्यादेः यथाश्रुतार्थकत्वे तद्व्यक्तित्वेन घटादिविषयकप्रत्यक्षव्यक्तिं प्रति पूर्ववृत्तित्वग्रहविशेष्यतावच्छेदकस्यापि तद्व्यक्तित्वस्य स्वविषयकप्रत्यक्षत्वावच्छिन्नतद्व्यक्तिनिष्ठकार्यतानिरूपिता विषयविधया या कारणता तद्वत्त्वेन स्वविषयकप्रत्यक्षत्वावच्छिन्नं प्रत्यपि तद्व्यक्तित्वमन्यथासिद्धं स्यादित्याशङ्कानिरासाय तदर्थमाह ॥ **यद्धर्मावच्छिन्नमिति** ॥ तथा च तद्व्यक्तित्वस्य तद्व्यक्तिविषयकप्रत्यक्षत्वावच्छिन्नपूर्ववृत्तित्वग्रहविशेष्यतावच्छेदकत्वेऽपि तद्व्यक्तित्वविषयकप्रत्यक्षत्वावच्छिन्नपूर्ववृत्तित्वग्रहविशेष्यतान-

## प्रभा.

र्मावच्छिन्ननिरूपितान्यथासिद्धत्वमिति फलितार्थः अत्र गृह्यत इति दण्डस्य घटपूर्ववृत्तितायां प्रमाणोपन्यासाय नतु तस्यापि अन्यथासिद्धिप्रविष्टत्वं प्रयोजनाभावादिति हृदयम् । नच कपालसंयोगस्य घटपूर्ववृत्तिताग्रहात् कपालसंयोगत्वस्य घटपूर्ववृत्तितावच्छेदकत्वे सिद्धे तद्घटककपालस्यापि पूर्ववृत्तितावच्छेदकत्वेन कपालस्य घटं प्रति अन्यथासिद्धत्वापत्तिरिति वाच्यं स्वतन्त्रान्वयव्यतिरेकशून्यत्वेनापि विशेषणीयत्वात् साक्षात्संबन्धघटितान्वयव्यतिरेकशून्यत्वं तदर्थः । एवंच कपालस्य तादात्म्यसंबन्धेनैव घटनियतपूर्ववृत्तित्वग्रहात् घटं प्रति अन्वयव्यतिरेकवत्तया साक्षात्संबन्धघटितान्वयव्यतिरेकशून्यत्वाभावेन घटं प्रति कपालस्यान्यथासिद्धत्वापत्तेरभावात् । एवंच तद्धर्मावच्छिन्ननियतपूर्ववृत्तितावच्छेदकत्वे सति तद्धर्मावच्छिन्ननिरूपितसाक्षात्संबन्धघटितान्वयव्यतिरेकशून्यत्वं तद्धर्मावच्छिन्ननिरूपितान्यथासिद्धत्वमिति समुदायार्थः । केचित्तु येन रूपेणेति यद्रूपावच्छेदेनेत्यर्थः । इत्थं च तद्धर्मावच्छिन्ननिरूपितनियतपूर्ववृत्तित्वग्रहविशेष्यतावच्छेदकत्वे सति तद्धर्मावच्छिन्नं प्रति स्वतन्त्रान्वयव्यतिरेकशून्यत्वं तद्धर्मावच्छिन्नं प्रति अन्यथासिद्धत्वमित्यर्थः । द्वितीयान्यथासिद्धदण्डरूपादिवारणाय सत्यन्तं कपालसंयोगे घटपूर्ववृत्तित्वादिग्रहे तादृशविशेष्यतावच्छेदकत्वात् तत्रातिव्याप्तिवारणाय विशेष्यमित्याहुः तदसत्

## मञ्जूषा.

सत्यन्तं कपालसंयोगो घटपूर्ववृत्तिरित्यादिग्रहे कपालस्यापि तादृशविशेष्यतावच्छेदकत्वात्तत्रातिव्याप्तिवारणाय विशेष्यमिति महादेवः । अत्र दण्डत्वादिकमादिमामित्याद्यग्रिममूलानुरोधेन कारणतावच्छेदकत्वाभिमता धर्मा अस्य लक्षणस्य लक्ष्याः कारणतावच्छेदकातिरिक्ताः कारणवृत्तिधर्मास्तु द्वितीय लक्षणस्येति विवेकः । इदंतु विचार्यते दण्डरूपवान् घटनियतपूर्ववृत्तिरिति ग्रहविशेष्यतावच्छेदकत्वाद्दण्डरूपस्य कथं तत्रातिव्याप्तिवारणं । नच तद्धर्मावच्छिन्ननिरूपितनियतपूर्ववृत्तितावच्छेदकधर्मान्तरघटितधर्मानवच्छिन्नविशेष्यतावच्छेदकत्वं विवक्षितमुक्तविशेष्यतावच्छेदककोटौ तादृशदण्डत्वस्यापि घटकत्वान्न दोष इति वाच्यं एवमपि रूपवान् घटनियतपूर्ववृत्तिः द्रव्यं घटनियतपूर्ववृत्तीत्यादिग्रहविशेष्यतावच्छेदकीभूतरूपद्रव्यत्वादावतिव्याप्तेर्दुर्वारत्वात् । नच तद्धर्मावच्छिन्ननियतपूर्ववृत्तितावच्छेदकधर्मनिष्ठन्यूनवृत्तितानिरूपकभिन्नत्वे सतीति विशेषणान्नायं दोषः रूपत्वविशिष्टस्य द्रव्यत्वस्य च तादृशदण्डत्वनिष्ठन्यूनवृत्तितानिरूपकत्वादिति वाच्यं फलानुपधायकदण्डसाधारणस्य दण्डत्वस्य घटत्वावच्छिन्ननिरूपितनियतपूर्ववृत्तितावच्छेदकीभूतं यत्फलोपधायकदण्डमात्रवृत्तितावदन्यतमत्वादि तन्निष्ठन्यूनवृत्तितानिरूपकत्वादव्याप्तेर्दुर्वारत्वात् । नच स्वावधिकगौरवशून्यत्वं नियतपूर्ववृत्तितावच्छेदकधर्मविशेषणं तावदन्यतमत्वस्य दण्डत्वापेक्षया गुरुत्वान्न दोष इति वाच्यं एवमपि कपालसंयोगत्वे अव्याप्तेः कपालसंयोगो घटनियतपूर्ववृत्तिरित्याकारकग्रहविशेष्यताया घटत्वावच्छिन्ननिरूपितपूर्ववृत्तितावच्छेदकीभूतकपालत्वघटितधर्मावच्छिन्नत्वात् । नच स्वसमानाधिकरणनियतपूर्ववृत्तितावच्छेदकीभूतधर्मान्तरघटितधर्मा-

## दिनकरीयम्.

तन्त्रान्वयव्यतिरेकशून्यत्वं तद्धर्मावच्छिन्नं प्रति अन्यथासिद्धत्वं प्रथममित्यर्थः । द्वितीयान्यथासिद्धदण्डरूपादिवारणाय सत्यन्तम् । कपालसंयोगो घटपूर्ववर्तीत्यादिग्रहे कपालस्यापि तादृशविशेष्यतावच्छेद-

## रामरुद्रीयम्.

वच्छेदकतद्व्यक्तित्वस्य स्वविषयकप्रत्यक्षे नान्यथासिद्धत्वप्रसङ्ग इति भावः ॥ **स्वतन्त्रेति** । अन्वयः स्वाधिकरणे कार्यसत्त्वम् व्यतिरेकः स्वाभावाधिकरणे कार्यासत्त्वम् । अन्वयव्यतिरेकयोः स्वातन्त्र्यं स्वभिन्नप्रकृतकार्यकारणान्वयव्यतिरेकाप्रयुक्तत्वं दण्डत्वदण्डरूपयोरन्वयव्यतिरेकौ स्वभिन्नदण्डरूपकारणान्वयव्यतिरेकप्रयुक्तौ स्वाश्रयाश्रयत्वसम्बन्धेन दण्डत्वादिसत्त्वस्य दण्डसत्त्वाधीनत्वात् । तयोरन्यथासिद्धत्वमिति भावः ॥ **तत्रातिव्याप्तिवारणायेति** ॥ कपाले प्रथमान्यथासिद्धत्वस्यातिव्याप्ति-

## प्रभा.

रूपवान् दण्डो घटपूर्ववृत्तिरित्यादिज्ञानमादाय दण्डरूपस्यापि घटनियतपूर्ववृत्तित्वग्रहविशेष्यतावच्छेदकत्वात् तत्रातिव्याप्तितादवस्थ्यात् नच विशेष्यतावच्छेदकत्वमित्यस्य विशेष्यतानिरूपितावच्छेदकतापर्याप्त्यधिकरणत्वस्य निरवच्छिन्नावच्छेदकत्वस्याविवक्षणात् प्रकृते तादृशावच्छेदकतायाः दण्डत्वान्तर्भावेणैव पर्याप्तेः रूपानिष्ठावच्छेदकतायाः रूपत्वावच्छिन्नत्वाच्च नोक्तदोष इति वाच्यम् । तथासति विशेष्यदलवैयर्थ्यापत्तेः कपालसंयोगो घटपूर्ववृत्तिरित्यादिज्ञानीयविशेष्यतावच्छेदकतायाः कपालमात्रावृत्तितया कपालस्य तादृशावच्छेदकतापर्याप्त्यनधिकरणतया कपालनिष्ठावच्छेदकतायाः निरवच्छिन्नत्वाभावाच्च विशेष्यदलवैयर्थ्ये इष्टापत्तिरिति चेन्न तथापि शब्दकारणतावच्छेदककत्वत्वादेः विशेषपदार्थस्य वा जात्यखण्डोपाध्यतिरिक्तपदार्थत्वेन स्वरूपतोऽवच्छेदकत्वासंभवेन विशिष्टस्यैवावच्छेदकत्वावश्यकतया कवत्वादौ तादृशावच्छेदकत्वपर्या-

## मञ्जूषा.

नवच्छिन्नत्वमेव विशेष्यताविशेषणं कपालत्वस्य कापालत्वसंयोगत्वसमानाधिकरणत्वाभावान्न दोष इति वाच्यं तथापि कपालसंयोगत्वसमानाधिकरणं घटनियतपूर्ववृत्तितावच्छेदकं च यत्संयोगत्वं तद्घटितकपालसंयोगत्वावच्छिन्नत्वात्तादृशविशेष्यताया अव्याप्तेर्दुर्वारत्वात् । अथोच्येत नियतपूर्ववृत्तितावच्छेदकधर्मनिष्ठन्यूनवृत्तितानिरूपकाभिन्नं स्वसमानाधिकरणं यन्नियतपूर्ववृत्तितावच्छेदकं तद्घटितधर्मानवच्छिन्ननियतपूर्ववृत्तित्वग्रहविशेष्यतावच्छेदकत्वे सति स्वावधिकगौरवशून्यनियतपूर्ववृत्तितावच्छेदकधर्मनिष्ठन्यूनवृत्तितानिरूपकभिन्नत्वे सति स्वतन्त्रान्वयव्यतिरेकशून्यत्वं विवक्षितं संयोगत्वं तु नियतपूर्ववृत्तितावच्छेदकीभूतकपालसंयोगत्वनिष्ठन्यूनवृत्तितानिरूपकमेवेति न तद्घटितधर्मावच्छिन्नत्वमादाय कपालसंयोगत्वे अव्याप्तिरिति । तदा दण्डरूपत्वविशिष्टेऽतिव्याप्तिः तस्य हि स्वावधिकगौरवशून्यतादृशदण्डत्वादिरूपधर्मनिष्ठन्यूनवृत्तितानिरूपकभिन्नत्वं स्वतन्त्रान्वयव्यतिरेकशून्यत्वं च निर्विवादम् । किंतु प्रथमसत्यन्तेन तद्व्यावर्तनं कार्यं तच्च न संभवति तत्र हि दण्डरूपवान् घटनियतपूर्ववृत्तिरिति ग्रहविशेष्यताया दण्डत्वघटितधर्मावच्छिन्नत्वान्न दोष इति वाच्यं तच्चाप्रयोजकं दण्डत्वस्य घटनियतपूर्ववृत्तितावच्छेदकीभूततावदन्यतमत्वनिष्ठन्यूनवृत्तितानिरूपकत्वात् । यदि तु प्रथमसत्यन्तशरीरेऽपि स्वावधिकगौरवशून्यनियतपूर्ववृत्तितावच्छेदकधर्मनिष्ठन्यूनवृत्तितानिरूपकभिन्नत्वमेव निवेश्यते स्वं न्यूनवृत्तितानिरूपकत्वेनाभिमतो धर्मः ततश्च दण्डत्वं तादृशधर्मनिष्ठन्यूनवृत्तितानिरूपकभिन्नमेवेति न दण्डरूपत्वविशिष्टेऽतिव्याप्तिरिति विभाव्यते तदा संयोगत्वनिरूपितन्यूनवृत्तिताश्रयीभूतस्य कपालसंयोगत्वावधिकगौरवाविशिष्टतया तादृशगौरवशून्यनियतपूर्ववृत्तितावच्छेदकधर्मनिष्ठन्यूनवृत्तितानिरूपकभिन्नमेव संयोगत्वमिति कपालसंयोगत्वे अव्याप्तिर्दुर्वारैव । ननु तद्धर्मावच्छिन्ननिरूपितनियतपूर्ववृत्तितावच्छेदकत्वे सति स्वतन्त्रान्वयव्यतिरेकशून्यत्वमेव लक्षणं नतु तत्र ग्रहान्तर्भावः प्रयोजनाभावात् । विश्वनाथेन महादेवेन च ग्रहोत्कीर्तनं स्वरूपाख्यानमात्रं घटत्वावच्छिन्ननिरूपितानियतपूर्ववृत्तितावच्छेदकं च दण्डत्वमेव दण्डो घटनियतपूर्ववृत्तिरिति व्यवहारात् नतु दण्डरूपत्वविशिष्टं दण्डत्वापेक्षया तस्य गुरुत्वात् दण्डरूपवान् घटनियतपूर्ववृत्तिरिति व्यवहाराभावाच्च । अत एव न रूपत्वविशिष्टस्य द्रव्यत्वस्य च तथात्वं रूपवान्नियतपूर्ववृत्तिः द्रव्यं घटनियतपूर्ववृत्तीति व्यवहाराभावात् कपालसंयोगो घटानियतपूर्ववृत्तिरिति व्यवहाराच्च कपालसंयोगत्वे नाव्याप्तिरिति चेत्सेयं कश्मला वासना दण्डरूपादेर्हि न दण्डनिष्ठकारणतावच्छेदकतावच्छेदकतामभ्युपयन्ति तान्त्रिकाः न व्यवहरन्ति च दण्डरूपवान् घटकारणमित्यादि दण्डनिष्ठघटनियतपूर्ववृत्तितावच्छेदकत्वस्य दण्डरूपादौ स्वीकारे दण्डरूपवान् घटनियतपूर्ववृत्तिरिति व्यवहारस्वीकारे च किं बाधकमुत्पश्यसि । घटनियतपूर्ववृत्तितावच्छेदकत्वं हि घटाव्यवहितप्राक्क्षणावच्छेदेन घटाधिकरणवृत्त्यभावप्रतियोगितानवच्छेदकत्वं तच्च कथं दण्डरूपत्वविशिष्टे द्रव्यत्वादौ च व्युदसितुं प्रभूयते । अथ मन्यते तद्धर्मावच्छिन्ननिरूपितकारणतावच्छेदकत्वे सति स्वतन्त्रान्वयव्यतिरेकशून्यत्वमेव विवक्षितमिति तर्हि पृच्छामः

## मञ्जूषा.

किं कारणतावच्छेदकत्वमिति नियतपूर्ववृत्तितावच्छेदकत्वमिति चेदुक्तो दोषः । अन्यथासिद्ध्यनवच्छेदकत्वे सति नियतपूर्ववृत्तितावच्छेदकत्वं तथेति चेदन्यथासिद्धिरेव हीदानीं निर्वाच्या तत्र कथमन्यथासिद्धिमन्तर्भावयसि कथं वा दण्डरूपादेः दण्डनिष्ठान्यथासिद्ध्यवच्छेदकत्वमुपपादयसि । अथ स्वावच्छिन्नतद्व्यापारेतरयावन्नियतपूर्ववृत्तितावच्छेदकावच्छिन्नसमवधानकालीनकार्याभावसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वसमानाधिकरणधर्मान्तरनिष्ठलाघवानवधित्वे सति स्वावच्छिन्नतद्व्यापारेतरयावन्नियतपूर्ववृत्तितावच्छेदकावच्छिन्नसमवधानकालीनकार्याभावसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वे सति स्वतन्त्रान्वयव्यतिरेकशून्यत्वं समुदितलक्षणार्थः दण्डरूपत्वविशिष्टवारणाय प्रथमसत्यन्तं तथासति स्वं दण्डत्वं तदवच्छिन्नो दण्डः तद्व्यापारश्चक्रभ्रमणकपालसंयोगादिः तदितराणि नियतपूर्ववृत्तितावच्छेदकावच्छिन्नानि चक्रकपालादीनि तत्समवधानकालीनो यो घटाभावः तत्समानाधिकरणाभावप्रतियोगितावच्छेदकमन्यथासिद्धत्वेनाभिमतदण्डरूपसमानाधिकरणं च दण्डत्वं तन्निष्ठलाघवावधित्वमेव दण्डरूपत्वविशिष्टे वर्तते तस्य बहुपदार्थघटितत्वादिति तद्व्युदासः । कपालसंयोगत्वं यद्यपि संयोगत्वापेक्षया गुरु तथापि संयोगत्वं नैतादृशं स्वं तथाहि स्वं संयोगत्वं तदवच्छिन्नस्संयोगः तद्व्यापारः संयोगध्वंसादिः तदितरेषु चक्रकपालादिषु सत्सु यद्यपि कदाचिद्घटाभावो भवति तथापि संयोगत्वावच्छिन्नाभावस्तदा न संभवति अन्ततो गगनसंयोगस्यापि सत्त्वात् । इदंच गुरुधर्मस्य प्रतियोगितावच्छेदकत्वस्वीकारपक्षे । तदस्वीकारेतु द्वितीयदलेनैव दण्डरूपत्वविशिष्टवारणसंभवात् प्रथमसत्यन्तं न देयमेव । रूपद्रव्यत्वपृथिवीत्वादिवारणाय द्वितीयदलं तथासति स्वं रूपद्रव्यत्वादि तदवच्छिन्नं दण्डादि तस्मात्तद्व्यापाराच्चेतराणि यानि नियतपूर्ववृत्तितावच्छेदकावच्छिन्नानि भगवत्कृत्यादीनि तेषां तत्तन्निष्ठकारणतावच्छेदकत्वाभिमतोपादानताख्यविषयितासंबन्धेन यत्र द्रव्ये समवधानं तत्र यद्यपि दण्डाद्यभावे घटाभावो वर्तते तथापि न तत्र रूपाद्यवच्छिन्नाभावस्संभवति अन्ततः परमाणूनामेव संभवात् उत्पन्नविनष्टद्रव्ये तु गुणादाविव न भगवत्कृतेः उपादानता यदि तु कपालादावुत्पत्तिकालावच्छेदेन संयोगादिसंबन्धेन रूपाद्यवच्छिन्नाभावस्सुलभ इति विभाव्यते तदा स्वावच्छिन्नतद्व्यापारेतरयावन्नियतपूर्ववृत्तितावच्छेदकावच्छिन्नसमवधानकालीनस्वावच्छिन्नसत्ताव्यापककार्यसत्ताकत्वं द्वितीयदलार्थः । नहि भगवत्कृत्यादिसमवधानदशायां रूपाद्यवच्छिन्नसत्तायामवश्यं घटसत्तास्ति अतो न तत्रातिव्याप्तिः अत्र कल्पे प्रथमदलमावश्यकमेव द्वितीयदलं तु द्रव्यत्वपृथिवीत्वादिवारणार्थैव । रूपत्वविशिष्टस्य त्वखण्डदण्डत्वनिष्ठलाघवावधित्वादेव वारणसंभवाद्दण्डेऽतिव्याप्तिवारणाय विशेष्यदलम् । तत्र हि स्वं दण्डः तदवच्छिन्नो दण्डावयवः तद्व्यापारो दण्डचक्रभ्रमादिः तदितरेषु चक्रादिषु सत्सु दण्डावयवसत्त्वेऽवश्यं घटसत्त्वादतिव्याप्तिरिति चेन्न संबन्धसामान्येन स्वावच्छिन्नत्वनिवेशेन चक्रकपालभगवत्कृत्यादीनां सर्वेषामेव नियतपूर्ववृत्तितावच्छेदकावच्छिन्नानां कालिकविशेषणताविषयतादिसंबन्धेन दण्डत्वावच्छिन्नतया तदितरस्य नियतपूर्ववृत्तितावच्छेदकावच्छिन्नस्याप्रसिद्धेः । कथञ्चिदीश्वरादेस्तादृशस्य प्रसिद्धावपि तत्समवधानकाले दण्डत्वावच्छिन्नसत्त्वे घटसत्तानियमाभावात् । यत्किञ्चित्संबन्धनिवेशे तु विधेयतासंबन्धेन द्रव्यत्वविशिष्टा या द्रव्यत्वानुमितिः यश्च तद्व्यापारो द्रव्यत्वानुमितध्वंसादिः तदितरेषु दण्डचक्रादिषु सत्सु द्रव्यत्वानुमितिसत्त्वेऽपि घटसत्त्वाद्द्रव्यत्वेऽतिव्याप्तेर्दुर्वारत्वादिति । अथोच्यते स्वावच्छिन्नतद्व्यापारेतरयावन्नियतपूर्ववृत्तितावच्छेदकावच्छिन्नसमवधानकालीनस्वावच्छिन्नसत्ताव्यापककार्यसत्ताकत्वे सति स्वावच्छिन्नतद्व्यापारेतरयावन्नियतपूर्ववृत्तितावच्छेदकावच्छिन्नसमवधानकालीनस्वावच्छिन्नाभावव्यापककार्याभावकत्वे सति स्वतन्त्रान्वयव्यतिरेकशून्यत्वं विवक्षितम् । सर्वत्र स्वावच्छिन्नत्वं यत्किञ्चिदेकसंबन्धेन बोध्यम् । विधेयतासंबन्धेन द्रव्यत्वविशिष्टानुमित्यभावे घटाभावविरहान्न द्रव्यत्वेऽतिव्याप्तिः गुरुधर्मस्याभावप्रतियोगितावच्छेदकत्वे पूर्वोपदर्शितधर्मान्तरनिष्ठलाघवानवधित्वमपि देयम् । तेन दण्डरूपत्वविशिष्टे नातिव्याप्तिः चक्रादिषु सत्सु दण्डाव-

## मञ्जूषा.

यवसत्त्वे घटसत्त्वात्तदभावे तदभावाच्च । दण्डेऽतिव्याप्तिवारणाय स्वतन्त्रान्वयव्यतिरेकेति न तु कपालवारणाय तत् दण्डचक्रादिषु सत्सु कपालसंयोगसत्त्वे घटसत्त्वं तदभावे तदभाव इति अन्वयव्यतिरेकयोस्सत्त्वेऽप्याधेयतासंबन्धेन कपालविशिष्टसत्त्वे घटसत्त्वमित्यन्वयव्यतिरेकाभावात्तादृशकपालद्वित्वसत्त्वेऽपि घटानुदयादिति । नैतदपि युज्यते दण्डत्वेऽव्याप्तेः । तत्र हि स्वावच्छिन्नो दण्डः तद्व्यापारश्चक्रभ्रमणादिः तदितरो यो नियतपूर्ववृत्तितावच्छेदकावच्छिन्नो दण्डावयवादिः तस्मिन् सति दण्डत्वावच्छिन्नाभावो न प्रसिद्ध्यति । अथ मन्यते स्वावच्छिन्नतद्व्यापारेतरयावन्नियतपूर्ववृत्तितावच्छेदकावच्छिन्नसमवधानकालीनत्वं स्वावच्छिन्नसत्तायामेव विशेषणं नतु स्वावच्छिन्नाभावेऽपि प्रयोजनाभावात् तथाच दण्डत्वे न दोष इति एवं तर्हि दण्डरूपत्वे अतिव्याप्तिः तत्र हि स्वं दण्डरूपत्वं तदवच्छिन्नं दण्डरूपं तद्व्यापारो ध्वंसादिस्तदितरेषु दण्डादिषु सत्सु दण्डरूपसत्त्वे घटसत्त्वं दण्डाद्यभावदशायां दण्डरूपाभावो घटाभावश्चेति । अथ प्रथमान्यथासिद्धलक्षणेन द्वितीयलक्षणाक्रान्तव्यक्तिव्यावृत्तेर्न भवितव्यमिति न नियमः । द्वयोस्समावेशे बाधकाभावादत एव द्वितीयलक्षणे कारणमादाय वेति वाकारं प्रयुञ्जानो ज्ञापयति ग्रन्थकृत् प्रथमेन द्वितीयस्य समावेश इष्ट इति । तथाच नियतपूर्ववृत्तितावच्छेदकत्वमेव लक्षणं दण्डावयवनिष्ठनियतपूर्ववृत्तितावच्छेदके दण्डे कपालसंयोगनिष्ठनियतपूर्ववृत्तितावच्छेदके कपाले चातिव्याप्तिवारणाय स्वतन्त्रान्वयव्यतिरेकशून्यत्वं देयमिति चेत् किं स्वतन्त्रान्वयव्यतिरेकशून्यत्वं नाम साक्षात्संबन्धघटितान्वयव्यतिरेकशून्यत्वमिति चेत्तर्हि समवायेन घटं प्रति स्वसंयुक्तसंयोगसंबन्धेन कारणीभूते दण्डेऽतिव्याप्तिस्तदवस्था संयोगेन घटं प्रति संयोगेन दण्डस्य हेतुत्वाङ्गीकारेण तद्दोषवारणेऽपि समवायेन नीलं प्रति स्वसमवायिसमवेतत्वसंबन्धेन कारणीभूते नीलेऽतिव्याप्तिः नीलविशिष्टनिष्ठायां समवेतत्वसंबन्धावच्छिन्नायां नीलानियतपूर्ववृत्तितायां तस्यावच्छेदकत्वात् साक्षात्संबन्धघटितान्वयव्यतिरेकशून्यत्वं च । नच स्वस्वव्यापारेतरयावन्नियतपूर्ववृत्तितावच्छेदकावच्छिन्नसमवधानकाले यत्सत्त्वे यत्सत्त्वं यदभावे यदभावस्तद्भिन्नत्वं स्वतन्त्रान्वयव्यतिरेकशून्यत्वमिति वाच्यम् । दण्डतद्व्यापारेतरस्य नियतपूर्ववृत्तितावच्छेदकीभूतदण्डावयवत्वावच्छिन्नस्य सत्त्वे दण्डाभावासंभवान्नीलतद्व्यापारेतरस्य नीलविशिष्टस्य तादृशस्य सत्त्वे नीलाभावासंभवाच्च दण्डनीलयोरतिव्याप्तेर्दुर्वारत्वात् । अथ समवधानकालीन इत्यस्य यत्सत्त्वे इत्यत्रैव विशेषणत्वं नतु यदभाव इत्यत्रापि अतो नोक्तदोष इति चेदस्त्वेवं तथापि किं स्वव्यापारत्वं नं तावत् स्वजन्यत्वे सति स्वजन्यतद्धर्मावच्छिन्नजनकत्वं कपालसंयोगेऽतिव्याप्तेः कपालसंयोगजन्यस्य घटजनकस्याप्रसिद्ध्या स्वपदेनान्यस्यैवोपादेयतया तद्भिन्नत्वात् कपालनिष्ठपूर्ववृत्तितावच्छेदकत्वाच्चात्माश्रयभयेन जनकत्वस्य प्रवेशयितुमशक्यत्वाच्च । अथ स्वजन्यत्वमेव स्वव्यापारत्वं कपालसंयोगादेस्त्वन्ततः कपालसंयोगध्वंसादिरेव प्रसिद्ध्यतीति चेत् किं स्वजन्यत्वं न तावत्स्वनिष्ठकारणतानिरूपकत्वमात्माश्रयप्रसङ्गान्नापि स्वव्याप्यत्वं दण्डत्वेऽव्याप्तेः तत्र हि स्वं दण्डत्वं तद्व्याप्यो दण्डः दण्डावयवश्च स्वाश्रयसंयोगसंबन्धेन दण्डत्वस्य संयोगसंबन्धेन दण्डस्य दण्डावयवस्य सत्त्वात् तदितरेषु सत्सु दण्डत्वसत्त्वे घटसत्त्वात्तदभावे तदभावात् । ननु समवधान इत्यस्य यदभाव इत्यत्रापि विशेषणत्वं स्वीक्रियते दण्डावयवस्यापि दण्डव्याप्यत्वेन पूर्वोक्ताया दण्डेऽतिव्याप्तेरप्रसक्तेः तथाच दण्डत्वे नाव्याप्तिः चक्रभ्रमणादेरपि स्वस्वव्याप्येतरयावदन्तर्गततया तस्मिन् सति दण्डत्वाभावस्य घटाभावस्य चासंभवादिति चेन्न यत्र चक्रभ्रमणं तत्र स्वाश्रयसंयोगसंबन्धेन दण्डत्वस्यावश्यकतया चक्रभ्रमणादेरपि दण्डत्वव्याप्यत्वादधिकमग्रिमलक्षणवक्ष्यमाणरीत्यात्रापि अनुसन्धेयम् । तेनाव वक्तव्यं कारणताव्यवहारशून्यत्वमन्यथासिद्धसामान्यलक्षणं परिचायकं विशेषलक्षणानि पञ्च परिचायकान्युच्यन्ते । तत्र प्रथमं येन सहेति तदर्थश्च तद्धर्मावच्छिन्ननिरूपितकारणतावच्छेदकत्वं तच्च न कारणताशरीरे प्रविष्टमात्माश्रयप्रसङ्गात् किन्तु परिचायकं ततश्चायमर्थः यद्यत् घटकारणतावच्छेदकतया प्रा-

ति दण्डत्वमिति । द्वितीयमन्यथासिद्धमाह ॥ **कारणमिति** ॥ यस्य स्वातन्त्र्येणान्वयव्यतिरेकौ न स्तः किं तु कारणमादायैवान्वयव्यतिरेकौ गृह्येते तदन्यथासिद्धम् ।

## प्रभा.

त्यभावात् निरवच्छिन्नावच्छेदकत्वाभावाच्च शब्दं प्रति कवत्वादेरन्यथासिद्धत्वानापत्तेरिति ॥ **मूले कारणमादाय वेति** ॥ अत्रापि पूर्वभाव इत्यनुवर्तते कारणमादायैवेत्यर्थः । कारणघटितधर्मेणैवेति यावत् । एवकारेण कारणाघटितधर्मावच्छिन्नपूर्ववृत्तित्वाभावो लभ्यते । इममेवार्थं प्रकाशयति ॥ **मुक्तावल्यां यस्येति** ॥ **स्वातन्त्र्येणेति** ॥ कारणाघटितधर्मेणेत्यर्थः ॥ **कारणमादायैवेति** ॥ कारणघटितधर्मेणैवेत्यर्थः ॥ **अन्वयव्यतिरेकौ गृह्येते इति** ॥ तथाच येन रूपेणान्वयव्यतिरेकग्रहः तद्रूपस्यैव

## मञ्जूषा.

माणिकैः व्यवह्रियते घटकारणतया च न व्यवह्रियते तादृशं यद्दण्डत्वचक्रत्वादि तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदकूटवत्त्वे सति घटनियतपूर्ववृत्तित्वं घटकारणत्वमिति रीत्या लक्षणं वाच्यम् । तत्र घटकारणताशरीरे कपालभेदाप्रवेशात्तत्परिचयो मा भूदिति घटकारणतया च न व्यवह्रियते इत्युक्तमेतावदेव यद्यपि पर्याप्तं सर्वान्यथासिद्धसाधारणंच तथापि शिष्यबुद्धिवैशद्याय कारणतावच्छेदकत्वादिकमपि परिचायकशरीरे प्रवेशितमिति बोध्यम् । अनेन लक्षणेन कारणतावच्छेदकीभूताः कारणताशरीरनिविष्टभेदप्रतियोगिन्यो व्यक्तयः परिचिताः कारणतावच्छेदकातिरिक्तानां कारणवृत्तिधर्माणां दण्डरूपादीनां परिचयाय लक्षणान्तरमाह ॥ **मूले कारणमादाय वेति** ॥ अत्र वाकारः पूर्वलक्षणे अनास्थासूचकः तत्परिचितानामप्यनेनैव परिचयसंभवात् पूर्वेणास्य चरितार्थता तु न युज्यते दण्डरूपाद्यसङ्ग्रहात् अत्र पूर्वभाव इत्युनुवर्तते गृह्यत इत्याकृष्यते तथाच यस्य कार्यनियतपूर्ववृत्तित्वं कारणमादाय गृह्यते तदन्यथासिद्धमित्यर्थः । एतावता कपालसंयोगस्याप्यन्यथासिद्धत्वं प्रसज्यते स्वाश्रयाश्रयत्वसंबन्धेन घटं प्रति स्वाश्रयाश्रयत्वसंबन्धेन कपालसंयोगस्य नियतपूर्ववृत्तित्वसत्त्वात् स्वाश्रयाश्रयत्वस्य च घटकारणकपालघटितत्वादतोऽत्र कारणमादायेति सावधारणं वाच्यम् । तेन समवायेन घटं प्रति तत्कारणाघटितसमवायसंबन्धेनापि कपालसंयोगस्य नियतपूर्ववृत्तित्वसत्त्वान्न दोष इति अभिप्रायेणाह ॥ **मुक्तावल्यां यस्येति** ॥ स्वातन्त्र्येण कारणान्तराघटितसंबन्धेन कारणमादाय कारणघटितसंबन्धेन तथाच तत्कार्यकारणाघटितसंबन्धावच्छिन्ननियतपूर्ववृत्तिताशून्यत्वे सति नियतपूर्ववृत्तित्वं लब्धं घटं प्रत्यनियतपदार्थानां कारणताघटकनियतत्वविशेषणेनैव वारणसंभवात् न तस्यान्यथासिद्धत्वरूपपरिचायकधर्मवत्त्वमावश्यकमतोऽत्र नियतपूर्ववृत्तित्वनिवेशः अत्राप्यनुगतमिदं निर्वक्तुमशक्यं तथाहि समवायेन घटं प्रति स्वसंयुक्तसंयोगसंबन्धेन नियतपूर्ववृत्तौ दण्डेऽतिव्याप्तिः संयोगेन घटं प्रति संयोगेन दण्डस्य पूर्ववृत्तितास्वीकारे-

## दिनकरीयम्.

कस्वात्तत्रातिव्याप्तिवारणाय विशेष्यम् ॥ **किं तु कारणमिति** ॥ कारणत्वं चात्र पृथगन्वयव्यतिरेकशालित्वं तेन नात्माश्रयः । स्वातन्त्र्येण तत्कार्यनिरूपितान्वयव्यतिरेकशून्यत्वे सति तत्कार्यकारणावच्छिन्नस्व-

## रामरुद्रीयम्.

कारणायेत्यर्थः ॥ **मूले कारणमादायेति** ॥ स्वभिन्नकारणं गृहीत्वैवेत्यर्थः । ननु अनन्यथासिद्धत्वशरीरे स्वभिन्नकारणस्य कारणत्वेन प्रवेशे कारणत्वस्यानन्यथासिद्धिघटितत्वेन भवत्यात्माश्रय इत्यत आह ॥ **कारणत्वं चात्रेति** ॥ **पृथगिति** ॥ स्वाश्रयाघटितसम्बन्धेनेत्यर्थः । दण्डादेरन्यथासिद्धत्ववारणाय कारणमादायेत्यस्य तत्कार्यकारणावच्छिन्नपूर्ववृत्तित्वग्रहविशेष्यत्वार्थकताया अग्रे वक्ष्यमाणतया तत्र च कारणपदस्य नियतान्वयव्यतिरेकशाल्यर्थकतया दण्डत्वस्यापि स्वाश्रयाश्रयत्वसम्बन्धेन तथाविधतया दण्डस्य दण्डत्वावच्छिन्नघटपूर्ववर्तित्वग्रहविशेष्यत्वादिति पृथगित्युक्तम् । पृथगित्युक्तौ च दण्डत्वस्य दण्डघटितपरम्परासम्बन्धेनैवान्वयव्यतिरेकशालित्वान्न दण्डादेरन्यथासिद्धत्वमिति ध्येयम् ॥ **तत्कार्यकारणेति** ॥ यथाश्रुत-

**प्रभा.**

नियतपूर्ववृत्तितावच्छेदकतया रूपसत्त्वे घटसत्त्वमित्यन्वयव्यतिरेकादर्शनात् दण्डरूपसत्त्वे घटसत्त्वमित्यन्वयव्यतिरेकदर्शनाच्च दण्डरूपस्यैव पूर्ववृत्तितावच्छेदकत्वं लभ्यते । एवंच कारणपदस्य स्वतन्त्रान्वयव्यतिरेकशालिपरतया तद्धर्मावच्छिन्ननिरूपितसाक्षात्संबन्धावच्छिन्नान्वयव्यतिरेकशालिघटितधर्मावच्छिन्नतत्कार्यनिरूपितनियतपूर्ववृत्तिताश्रयत्वं तत्कार्यनिरूपितान्यथासिद्धत्वमिति द्वितीयान्यथासिद्धिलक्षणं फलितम् । कारणपदस्य स्वतन्त्रान्वयव्यतिरेकशालिपरत्वान्नान्योन्याश्रयः । अत्रापि स्वतन्त्रान्वयव्यतिरेकशून्यत्वे सतीति विशेषणं देयम् । तेन कपालसंयोगनिष्ठघटनियतपूर्ववृत्तित्वस्य कपालसंयोगत्वावच्छिन्नत्वेन तद्घटकीभूतकपालावच्छिन्नत्वात् तदाश्रयत्वेन कपालस्य न घटनिरूपितान्यथासिद्धत्वापत्तिः दण्डत्वनिष्ठघटनियतपूर्ववृत्तिता लाघवेन दण्डत्वनिष्ठतद्व्यक्तित्वावच्छिन्ना नतु दण्डघटितदण्डत्वत्वावच्छिन्ना गौरवात् ।

**मञ्जूषा.**

ण तद्दोषवारणेऽपि दण्डरूपेऽव्याप्तिः समवायेन घटं प्रति दण्डाद्यघटितकालिकसंबन्धेन नियतपूर्ववृत्तितायाः दण्डरूपे सत्त्वात् । किंचात्र कारणत्वप्रवेशे आत्माश्रयः नियतपूर्ववृत्तित्वस्यैव कारणत्वरूपत्वे नीलं प्रति स्वाश्रयसमवेतत्वसंबन्धेन नियतपूर्ववृत्तौ नीलरूपेऽतिव्याप्तिः स्वाश्रयसमवेतत्वसंबन्धस्य समवेतत्वसंबन्धेन नियतपूर्ववृत्ति यन्नीलविशिष्टं तद्घटितत्वादेतेन पदार्थान्तरनिष्ठनियतपूर्ववृत्तितावच्छेदकसंबन्धव्याप्यस्वनिष्ठकार्यान्वयव्यतिरेकप्रयोजकान्वयव्यतिरेकघटकसंबन्धकत्वमर्थः । तथाहि दण्डस्य स्वसंयुक्तसंयोगसंबन्धेन कारणत्वेऽपि दण्डसंयुक्तसंयोगो न चक्रसंयोगव्याप्यः संयुक्तसंयोगत्वसंयोगत्वाभ्यां व्याप्यव्यापकभावसत्त्वेऽपि स्वप्रतियोगिकत्वतत्प्रतियोगिकत्वघटिताभ्यां रूपाभ्यां व्याप्यव्यापकभावसत्त्वात् तथैव चेह विवक्षितत्वान्न दोषः दण्डरूपीयस्वाश्रयसंयुक्तसंयोगस्य दण्डसंयुक्तसंयोगव्याप्यत्वादित्यपि परास्तम् । नीलं प्रति नीलस्यान्यथासिद्ध्यापत्तेः नीलनिष्ठौ यौ नीलान्वयव्यतिरेकप्रयोजकान्वयव्यतिरेकौ तद्घटकस्य स्वाश्रयसमवेतत्वसंबन्धस्य नीलविशिष्टनिष्ठनियतपूर्ववृत्तितावच्छेदकीभूतसमवेतत्वसंबन्धव्याप्यत्वात् किंच किं कार्यान्वयव्यतिरेकप्रयोजकत्वं व्याप्यत्वमिति चेत् तर्हि स्वाश्रयसंयुक्तसंयोगसंबन्धेन दण्डरूपसत्ता न घटसत्ताव्याप्येति कथं तत्र लक्षणसङ्गतिः व्यापकत्वमिति चेत्तर्हि तेन संबन्धेन दण्डरूपाभावो न घटाभावव्यापक इति तद्दोषतादवस्थ्यं । अथ कार्यान्वयप्रयोजकत्वं तद्व्यापकत्वं कार्यव्यतिरेकप्रयोजकत्वं तु तद्व्याप्यत्वमिति चेदस्तु तथा एवमपि कपालसंयोगसमवायस्य कपालतादात्म्यव्याप्यत्वात् कपालसंयोगे चक्रसंयोगस्य चक्रावयवनिष्ठनियतपूर्ववृत्तितावच्छेदकीभूतचक्रावयवसंयोगव्याप्यत्वात् चक्रे चातिव्याप्तिः । नच पदार्थान्तरनिष्ठनियतपूर्ववृत्तितावच्छेदकसंबन्धव्याप्यत्वे सति तत्संबन्धघटितत्वं स्वनिष्ठकार्यान्वयव्यतिरेकप्रयोजकान्वयव्यतिरेकघटकसंबन्धविशेषणं कपालतादात्म्यं न कपालसंयोगसमवायघटकं चक्रावयवसंयोगो न चक्रसंयोगघटक इति वाच्यम् । एतावतापि नीलं प्रति स्वाश्रयसमवेतत्वसंबन्धेन कारणीभूते नीलेऽतिव्याप्तेर्वज्रलेपत्वात् । यत्तु कारणमिति कारणत्वञ्चात्र पृथगन्वयव्यतिरेकशालित्वं तेन नात्माश्रयः स्वातन्त्र्येण तत्कार्यनिरूपितान्वयव्यतिरेकशून्यत्वे सति तत्कार्यकारणावच्छिन्नस्वनिष्ठतत्कार्यनिरूपितनियतपूर्ववृत्तित्वप्रहविशेष्यताकं यत्तत्तत्कार्यं प्रत्यन्यथासिद्धमित्यर्थः । कपालसंयोगो घटनियतपूर्ववृत्तिरित्यादिप्रहविशेष्यतायाः कपालसंयोगनिष्ठायाः कपालावच्छिन्नत्वात् कपालसंयोगेऽतिव्याप्तिवारणाय सत्यन्तं दण्डत्वादिवारणाय विशेष्यमिति महादेवपरिदेवितं तत्र तावद्दण्डत्ववारणाय विशेष्यमित्ययुक्तं दण्डत्वं घटनियतपूर्ववृत्तीत्यादिप्रहविशेष्यताया दण्डत्वनिष्ठाया दण्डत्वत्वघटकदण्डावच्छिन्नत्वानपायात् । विशेष्यतावच्छेदकतापर्याप्तिनिवेशे दण्डरूपं घटनियतपूर्ववृत्तीति पूर्ववृत्तित्वप्रहविशेष्यतावच्छेदकतायाः रूपत्वान्तर्भावेन पर्याप्तत्वादसंभवापत्तेः कपालसंयोगो घटनियतपूर्ववृत्तिरित्यादिप्रहविशेष्यतावच्छेदकतायाः कपालपर्याप्तत्वाभावेन कपालसंयोगवारकसत्यन्तवैयर्थ्यापत्तेश्च । दण्डीयं घटनियतपूर्ववृत्ति कपालीयो घटनियतपूर्ववृत्तिरित्यादिप्रहविशेष्यतावच्छेदकतामादाय तदुभयो-

## प्रभा.

अतस्तादृशपूर्ववृत्तिताश्रयत्वघटितलक्षणस्य न प्रथमान्यथासिद्धदण्डत्वादावतिव्याप्तिः । एवं रासभस्य घटत्वावच्छिन्ननिरूपितनियतपूर्ववृत्तित्वाभावात् तद्घटत्वावच्छिन्ननिरूपितनियतपूर्ववृत्तित्वसत्त्वेऽपि तादृशपूर्ववृत्तितायाः रासभत्वावच्छिन्नत्वेन तादृशदण्डादिघटितधर्मावच्छिन्नत्वाभावात् न पञ्चमान्यथासिद्धरासभादावतिव्याप्तिः । केचित्तु किन्तु कारणमिति कारणत्वं चात्र पृथगन्वयव्यतिरेकशालित्वं तेन नात्माश्रयः । स्वातन्त्र्येण तत्कार्यनिरूपितान्वयव्यतिरेकशून्यत्वे सति तत्कार्यकारणावच्छिन्नस्वनिष्ठतत्कार्यनिरूपितनियतपूर्ववृत्तित्वग्रहविशेष्यताकं यत्तत् तत्कार्यं प्रति अन्यथासिद्धमित्याहुः तदसत् रासभस्यापि घटत्वावच्छिन्ननिरूपितसाक्षात्संबन्धघटितान्वयव्यतिरेकशून्यत्वेन दण्डसमानकालीनत्वदण्डसमानदेशीयत्व-एतदन्यतरविशिष्टो रासभो घटपूर्ववृत्तिरित्यादिज्ञानीयरासभनिष्ठविशेष्यतायाः तादृशदण्डघटितधर्मावच्छिन्नत्वात्

## मञ्जूषा.

पपादने दण्डीयं घटनियतपूर्ववृत्तीत्याकारकदण्डत्वविशेष्यकग्रहविशेष्यतावच्छेदकतामादाय दण्डरूपेऽतिव्याप्तिर्दुर्वारा । अथ मन्यते ग्रहानिवेशनं स्वरूपाख्यानमात्रं लक्षणंतु तत्कार्यकारणावच्छिन्ननियतपूर्ववृत्तित्वमेव दण्डत्वनिष्ठनियतपूर्ववृत्तितावच्छेदकं दण्डत्वनिष्ठतद्व्यक्तित्वमेव नतु दण्डत्वत्वं गौरवादिति तत्र पृच्छामः । कुतो न दण्डत्वं नियतपूर्ववृत्तितावच्छेदकमिति तद्यदि कार्याव्यवहितप्राक्क्षणावच्छेदेन कार्याधिकरणवृत्तितावच्छेदकत्वरूपं तदा गुणकर्मान्यतरत्वविशिष्टसत्तात्वस्य सत्तात्वापेक्षया गुरुत्वेऽपि यथा द्रव्यवृत्तितावच्छेदकत्वं तथा दण्डत्वत्वस्य गुरुत्वेऽपि दण्डत्वं घटनियतपूर्ववृत्तीति प्रतीत्या तदवच्छेदकत्वं दुर्वारम् । यदि कार्याव्यवहितप्राक्क्षणावच्छेदेन कार्याधिकरणवृत्त्यभावप्रतियोगितानवच्छेदकत्वरूपं तदा सुतरां अथाभिप्रेयते कार्याधिकरणताप्रयोजकाधिकरणतानिरूपकतावच्छेदकत्वे सति कार्याभावप्रयोजकाभावप्रतियोगितावच्छेदकत्वं नियतपूर्ववृत्तितावच्छेदकत्वं तच्च न दण्डत्वत्वेऽभ्युपेयते गौरवात् प्रयोजकत्वंच स्वरूपसंबन्धविशेष इति तर्हि दण्डरूपत्वविशिष्टनिरूपितपरम्परासंबन्धावच्छिन्नाधिकरणतायां घटाधिकरणताप्रयोजकत्वं तत्संबन्धावच्छिन्नदण्डरूपत्वावच्छिन्नप्रतियोगिताकाभावे घटाभावप्रयोजकत्वं चाप्रामाणिकं लाघवेन दण्डाधिकरणत्वदण्डाभावयोस्तत्समनियतयोरेव प्रयोजकत्वस्वीकारसंभवादिति दण्डरूपादावसंभवः । अथैतदर्थमेव ग्रहानिवेशनं कृतं ग्रहश्च संभावनारूपो विवक्षितः संभाव्यमानमपि तादृशान्वयव्यतिरेकवत्त्वं दण्डत्वे तद्व्यक्तित्वेनैव संभाव्यते लाघवान्नतु दण्डत्वत्वेन गौरवात् दण्डरूपे तु दण्डरूपत्वेन संभाव्यते नतु रूपत्वेनातिप्रसङ्गादिति चेत् किमियं संभावना प्रमात्मिका विवक्षिता उत भ्रमप्रमासाधारणी । आद्ये दण्डरूपेऽपि न तत्संभवः तत्र तादृशान्वयव्यतिरेकयोरभावात् द्वितीये दण्डत्वेऽपि दण्डत्वत्वेन संभावना केन वारणीयेत्यलमनावश्यकदण्डत्वनारणसंभवासंभवविचारेण । कपालसंयोगव्यावर्तकं दण्डत्वदण्डरूपसाधारणं स्वातन्त्र्येण तत्कार्यनिरूपितान्वयव्यतिरेकशून्यत्वन्तु दुर्वचमित्यवोचाम । अथास्तु कार्यान्वयव्यतिरेकप्रयोजकान्वयव्यतिरेकशून्यत्वमेव तथा प्रयोजकत्वं तु अतीतिकस्वरूपसंबन्धविशेष इति चेत् कार्यान्वये तद्व्यतिरेके च कारणान्वयव्यतिरेकयोरिव कारणतानवच्छेदकान्वयव्यतिरेकयोरपि प्रयोजकतायाः सिद्धान्तसिद्धतया तच्छून्यत्वस्य दण्डत्वे दुरुपपादत्वात् अथ मास्त्विदं कारणतावच्छेदकसाधारणं तदतिरिक्तानां कारणवृत्तीनां दण्डरूपादीनां संग्राहकमेवेदमास्तामिति चेत् तथापि दण्डत्वजातिनियामकस्य वंशदळजन्यताविशेषादेः दण्डनिष्ठधर्मस्य यावन्वयव्यतिरेकौ तयोरपि दण्डत्वान्वयव्यतिरेकद्वारा घटान्वयव्यतिरेकप्रयोजकत्वेन कारणवृत्तियावद्धर्माणामसङ्ग्रहात् नच साक्षात्प्रयोजकत्वं विवक्ष्यतामिति वाच्यं साक्षात्प्रयोजकत्वं हि तत्प्रयोजकं प्रति अप्रयोजकत्वे सति तत्प्रयोजकत्वं तच्च दण्डान्वयव्यतिरेकयोरप्यसिद्धं तयोश्चक्रभ्रमणकपालसंयोगाद्यन्वयव्यतिरेकप्रयोजकत्वात् नचास्तु दण्डस्येदृशं स्वतन्त्रान्वयव्यतिरेकशून्यत्वं का क्षतिः तत्कार्यकारणावच्छिन्नेत्यादिना विशेषणेन तत्रातिव्याप्तिवारणादिति वाच्यं चक्रसंयुक्तदण्डो घटनि-

## प्रभा.

तादृशविशेष्यताश्रयत्वेन च द्वितीयान्यथासिद्धलक्षणस्य रासभेऽतिव्याप्तेः । नच तादृशज्ञानीयविशेष्यतायां देशकालानवच्छिन्नत्वविशेषणदानान्न पूर्वोक्तातिव्याप्तिरिति वाच्यम् । तथापि दण्डवान् रासभः घटपूर्ववृत्तिरित्यादिभ्रममादाय तादृशज्ञानीयदेशकालानवच्छिन्नतादृशविशेष्यताश्रयत्वस्य रासभे सत्त्वादतिव्याप्तेर्दुर्वारत्वात् । नच प्रहपदस्य प्रमापरत्वस्वीकारेण तत्कार्यनिरूपितनियतपूर्ववृत्तित्वप्रकारकप्रमीयविशेष्यताश्रयत्वस्यैव लक्षणत्वलाभेन तादृशविशेष्यताया रासभेऽसत्त्वान्नातिव्याप्तिरिति वाच्यम् । तथापि दण्डिरासभान्यतरद्घटनियतपूर्ववृत्तीत्यादिप्रमामादाय तादृशप्रमानिरूपितविशेष्यताया रासभे सत्त्वादतिव्याप्तेर्दुर्वारत्वात् । यदि येन रूपेण रासभस्यान्यथासिद्धत्वमनुमतं तद्रूपेतरानवच्छिन्नत्वमपि प्रमीयविशेष्यतायां निवेश्य दण्डिरासभान्यतरद्घटनियतपूर्ववृत्तीत्यादिप्रमीयविशेष्यतावारणं मन्यते तदा स्वतन्त्रा-

## मञ्जूषा.

यतपूर्ववृत्तिः कुलालकरसंयुक्तदण्डो घटनियतपूर्ववृत्तिरित्यादिप्रतीतिविशेष्यत्वस्य तत एव च तत्कार्यकारणावच्छिन्ननियतपूर्ववृत्तितायाश्च तत्र सत्त्वात् । दण्डरूपाद्यसंग्रहेण कार्यान्वयव्यतिरेकप्रयोजकान्वयव्यतिरेकवत्त्वरूपनियतपूर्ववृत्तित्वनिवेशासंभवात् तस्मात्स्वतन्त्रान्वयव्यतिरेकशून्यत्वविशेषणेनैव दण्डादेर्वारणीयतया तद्घटकं प्रयोजकत्वं साक्षात्परम्परासाधारणमेव वाच्यमिति वंशदळजन्यताविशेषे दण्डनिष्ठेऽव्याप्तिर्दुर्वारैव । किञ्च दण्डचक्रसंयोगानुकूलदण्डक्रियायाः क्रियात्वावच्छिन्नसमवायिकारणतावच्छेदकीभूतं दण्डनिष्ठं मूर्तत्वात्मकं यत् परिच्छिन्नपरिमाणं यच्च जन्यत्वावच्छिन्नं प्रति समवायिकारणतावच्छेदकीभूतद्रव्यत्वादि तेषामन्वयव्यतिरेकावपि परम्परया घटान्वयव्यतिरेकप्रयोजकाविति तत्राव्याप्तिः एवं निमित्तकारणीभूतं यद्दण्डादि तद्रूपादेरन्यथासिद्धयुपपादनेऽपि कपालरूपादेः अन्यथासिद्धयुपपादनं घटं प्रति दुष्करं निर्गुणे द्रव्यारम्भानुगुणक्रियानङ्गीकारेण घटारम्भकसंयोगानुकूलकपालक्रियानुकूलकपालरूपादेरन्वयव्यतिरेकयोरपि परम्परया घटान्वयव्यतिरेके प्रयोजकत्वात् । ननु कारणवृत्तीन्यावतोऽपि धर्मान्नैवान्यथासिद्ध्या वारयिष्यामीति न निर्बन्धः किन्तु यावत्स्वयमन्यथासिद्धिः संभाव्यते तावतामनेनानुगतरूपेण भेदकारणताशरीरे निवेशयिष्यामि शेषास्तु पञ्चमेनैव लक्षणेन वारणीया इति चेत्सत्यं तथापीदं दुर्निश्चेयं लक्षणमिति वदामः । तथाहि दण्डरूपसत्तायाः कुतो न घटसत्ताप्रयोजकत्वं कुतो वा तदभावस्य न तदभावप्रयोजकत्वं दण्डापेक्षया दण्डरूपस्य गुरुत्वादिति चेत्तर्हि कपालापेक्षया गुरोः कपालसंयोगस्य चक्रापेक्षया गुरोश्चक्रभ्रमणादेरपि यावन्वयव्यतिरेकौ तयोरप्रयोजकत्वापत्तिः अथ सत्यपि कपाले कपालसंयोगविलम्बे घटविलम्बः सत्यपि चक्रे चक्रभ्रमणविलम्बे घटविलम्बः अतस्तयोरन्वयव्यतिरेकौ तथेति चेत्तर्हि सति कपालसंयोगे न कपालविलम्बात् घटविलम्बः सति चक्रभ्रमणे न चक्रविलम्बात् घटविलम्ब इति कपालचक्रयोरन्वयव्यतिरेकावपि तथा न स्याताम् । नच कपालचक्रयोः स्वतन्त्रान्वयव्यतिरेकशून्यत्वेऽपि तत्कार्यकारणावच्छिन्नेत्यादिविशेषणेन तयोरन्यथासिद्धिवारणं संभवतीति प्रत्याशा कर्तव्या दण्डवच्चक्रं घटनियतपूर्ववृत्ति चक्रवान् कपालो घटनियतपूर्ववृत्तिरित्यादिप्रतीत्या तद्विशेषणस्यापि तत्र सत्त्वात् । अथ कारणान्वयव्यतिरेकयोः कार्यान्वयव्यतिरेकप्रयोजकतया कपालचक्रान्वयव्यतिरेकयोस्तथात्वमिष्यत इति चेत्तर्हि दण्डरूपस्य कारणत्वाभावमनिश्चित्य कथं तदन्वयव्यतिरेकयोरप्रयोजकतानिश्चिनुमः । उक्तान्यथासिद्धत्वादेव हि तत्र कारणत्वाभावो निश्चेयः स्यादिति परस्पराश्रयता । अथ यत्र द्वयोरेकतरस्यान्वयव्यतिरेकयोः प्रयोजकतयोपपत्तिः तत्र लघोरेव साक्षीक्रियते न गुरोरतो न दण्डरूपान्वयव्यतिरेकयोः प्रयोजकतानिश्चय इति चेदेवमपि चक्रकपालयोः कारणतामनिश्चित्य तदन्वयव्यतिरेकयोः प्रयोजकता दुर्निश्चेया तामनिश्चित्य च तयोः कारणतेति परस्पराश्रयता यदि तु घटत्वाद्यवच्छिन्नं प्रति कपालसंयोगत्वादिना न हेतुता किन्तु जन्यद्रव्यत्वावच्छिन्नं प्रति विजातीयसंयोगत्वेन वैजात्यं च द्रव्यारम्भकनिखिलसंयोगसाधारणमे-

## प्रभा.

न्वयव्यतिरेकशून्यत्वविशेषणवैयर्थ्यापत्तेः येन रूपेणाऽन्यथासिद्धत्वं प्रामाणिकानुमतं तद्रूपवत्त्वस्यैव लक्षणत्वसंभवे शेषवैयर्थ्यापत्तेः इष्टापत्तौ कारणमादायेति मूलपरिष्काररूपत्वाभावेन मूलविरोधापत्तेश्चेति दिक्। अन्यं प्रति पूर्ववृत्तित्वं गृहीत्वैवेत्येवकारघटितवाक्यात् अन्यपूर्ववृत्तित्वज्ञानप्रकृतकार्यपूर्ववृत्तित्वज्ञानयोः अन्वयव्यतिरेकलाभेनान्यपूर्ववृत्तित्वज्ञानस्य प्रकृतकार्यपूर्ववृत्तित्वज्ञानकारणत्वं लब्धम् । तच्चान्यपूर्ववृत्तित्वस्यैतत्पूर्ववृत्तितावच्छेदकत्वमन्तरा न निर्वहतीति । एतत्पूर्ववृत्तित्वज्ञाने तदवच्छेदकधर्मज्ञानस्यैव हेतुत्वस्य क्लृप्तत्वात् । तथाचान्यपूर्ववृत्तित्वस्यैतत्पूर्ववृत्तितावच्छेदकत्वसिद्धौ तद्धर्मान्यधर्मावच्छिन्नतद्धर्मावच्छिन्नाननुगुणनिरूपितपूर्ववृत्तित्वघटितधर्मावच्छिन्नतद्धर्मावच्छिन्ननिरूपितपूर्ववृत्तिताश्रयत्वं तद्धर्मावच्छिन्ननिरूपितान्यथासिद्धत्वमिति अन्यं प्रतीत्यादिग्रन्थनिर्गलितार्थः । तद्धर्मान्यधर्मावच्छिन्ने तद्धर्मावच्छिन्नाननुगुणत्वनिवेशात् कुलालजनके चतुर्थान्यथासिद्ध्याश्रये नातिव्याप्तिरिति ध्येयम् । अस्मद्गुरुचरणास्तु अन्यं प्रति पूर्वभाव इत्यादिकारिकाघटकान्यशब्दस्य ससम्बन्धिकतया प्रतियोग्याकाङ्क्षायां कारणमादायेति पूर्वकारि-

## मञ्जूषा.

कमेव तन्त्वादिषु घटाभावे कपालभेद एव प्रयोजकः एवं घटत्वावच्छिन्नं प्रति चक्रभ्रमणत्वने हेतुत्वाङ्गीकारे चक्रत्वेन पृथक्कारणता न स्वीक्रियते प्रयोजनाभावादिति विभाव्यते तदास्तु कारणतावच्छेदकतत्प्रयोजकातिरिक्तानामन्यथासिद्धानां कार्यान्वयव्यतिरेकप्रयोजकान्वयव्यतिरेकशून्यत्वेनानुगतरूपेण कारणताशरीरे निविष्टभेदप्रतियोगितया निवेशः । यदि च कारणतावच्छेदकान्वयव्यतिरेकयोर्न कार्यान्वयव्यतिरेकप्रयोजकता स्वीक्रियते कारणान्वयव्यतिरेकयोस्तत्स्वीकारमात्रेण उपपत्तेरिति विभाव्यते तदा तादृशान्वयव्यतिरेकशून्यत्वेन रूपेण सर्वेषामन्यथासिद्धानां यद्यपि संग्रहस्संभवति तथापि तादृशान्वयव्यतिरेकशून्यभिन्नत्वं तादृशान्वयव्यतिरेकवत्त्वरूपं लक्षणान्तरमेव नत्वनन्यथासिद्धनियतपूर्ववृत्तित्वरूपप्रकृतलक्षणे प्रवेशमर्हति नियतपूर्ववृत्तित्वांशस्यावश्यकक्लृप्तत्वाद्यन्यथासिद्धिनिर्वचनस्य च वैयर्थ्यापत्तिः तस्मात्स्वरूपसंबन्धविशेषरूपप्रयोजकत्वघटितलक्षणं न विश्वनाथाभिप्रेतं यदपीतरान्वयव्यतिरेकप्रयुक्तान्वयव्यतिरेकशालित्वं दण्डत्वदण्डरूपसाधारणमनुगतमन्यथासिद्धत्वं भवतीति महादेवेनोक्तं तत्र यदितरान्वयव्यतिरेकप्रयुक्तत्वं तद्व्याप्यत्वं तदा दण्डान्वयव्यतिरेकयोः दण्डावयवान्वयव्यतिरेकव्याप्यत्वाद्दण्डेऽतिव्याप्तिः स्वाश्रयसमवेतत्वसंबन्धेन नीलान्वयव्यतिरेकयोः समवेतत्वसंबन्धेन नीलविशिष्टान्वयव्यतिरेकव्याप्यत्वान्नीलेऽतिव्याप्तिश्चात एव न व्यापकत्वमपि दण्डनीलयोरतिव्याप्तितादवस्थ्यात् । तस्मादयमभिप्रायो विश्वनाथस्य वाच्यः तद्धर्मावच्छिन्नकार्यतानिरूपितकारणताव्यवहारविषयपदार्थघटितसंबन्धेनैव यस्य तद्धर्मावच्छिन्नं प्रति तज्जनकसंभावितव्यापारं प्रति च कारणता वक्तव्या तेषां तत्तद्व्यक्तित्वेन यथासंभवमनुगतैर्वा कैश्चिद्धर्मैः भेदस्तद्धर्मावच्छिन्नकारणतालक्षणशरीरे प्रवेशनीयः । तथाहि दण्डत्वदण्डरूपादीनां दण्डनिष्ठानां सर्वेषामपि धर्माणां समवायेन घटं प्रति न कालिकसंबन्धेन कारणता युक्ता अव्यावर्तकत्वान्नापि चक्रभ्रमणं प्रति तथा किन्तु दण्डघटितसंबन्धेनैवात उक्तधर्मपरिचितानां दण्डत्वदण्डरूपादीनां तत्तद्व्यक्तित्वेन दण्डवृत्तिधर्मत्वेन वा भेदो घटकारणताशरीरे प्रवेशनीयः घटं प्रति चक्रस्यापि कारणतां स्वीकृत्य संयुक्तसंयोगसंबन्धेन दण्डस्य घटकारणतास्वीकारे दण्डस्य घटं प्रति तादृशत्वेऽपि चक्रभ्रमणं प्रत्यतादृशत्वान्न दण्डस्य परिचायकधर्माक्रान्तता । नीलं प्रति नीलस्य नीलविशिष्टघटितसंबन्धेन कारणत्वेऽपि न नीलविशिष्टघटकारणताव्यवहारविषय इति न दोषः कारणताघटितोक्तधर्मस्य परिचायकत्वान्नात्माश्रयः । अथ समवेतत्वसंबन्धेन नीलविशिष्टस्यैव हेतुता कुतो नाङ्गीक्रियत इति चेत् नीलव्यक्तीनां कारणतावच्छेदकत्वे गौरवादित्येवेहि धर्मगौरवापेक्षया संबन्धगौरवस्यैव व्याप्यत्वादिति । एतच्च परिचायकं नियतपूर्ववृत्तिसाधारणमेवेत्यनियतपूर्ववृत्तिव्यक्तिव्यावर्तकं कारणताशरीरानिविष्टनियतपूर्ववृत्तित्वदळं सार्थकमेवेति । मूले अन्यत्रेति पाठस्थाने

यथा दण्डरूपम् । तृतीयमाह ॥ **अन्यं प्रतीति** ॥ अन्यं प्रति पूर्ववृत्तित्वं गृहीत्वैव यस्य यत्कार्यं प्रति पूर्ववृत्तित्वं गृह्यते तस्य तत्कार्यं प्रत्यन्यथासिद्धत्वम । यथा घटादिकं प्रत्याकाशस्य तस्य हि घटादिकं प्रति कारणत्वमाकाशत्वेनैव स्यात्तद्धि शब्दसमवायिकारणत्वम् । एवं च तस्य शब्दं प्रति कारणत्वं गृहीत्वैव घटादिकं प्रति जनकत्वं ग्राह्यमतस्तदन्यथासिद्धम् । ननु शब्दाश्रयत्वेन तस्य कारणत्वे काऽन्यथासिद्धिरिति चेत् पञ्चमीति गृहाण । नन्वाकाशस्य शब्दं प्रति जनकत्वे कि-

**प्रभा.**

काघटककारणपदेनोपस्थितकार्यजनकमेवान्यपदार्थैकदेशभेदप्रतियोगितया निवेश्यते । एवंचान्यं प्रति इत्या-दिकारिकायाः प्रकृतकार्यजनकातिरिक्तं प्रति इत्यर्थो लभ्यते अन्यत्सर्वं पूर्वोक्तदिशाऽवसेयम् । एवं जनकं प्रतीत्यादिस्थलेऽपि प्रकृतकार्यजनकनिरूपितनियतपूर्ववृत्तित्वघटितेत्यादिपूर्वोक्तार्थश्शब्दादेव लभ्यते इत्ये-तादृशमूलकारतात्पर्यमविज्ञाय तृतीयचतुर्थयोः ऐक्यमाशङ्क्य फलाननुगुणत्वविशेषणदानेन तयोरैक्यनि राकरणं केषांचित् बुद्धिजाड्यप्रयुक्तमिति व्याचख्युः ॥ **कान्यथासिद्धिरिति** ॥ घटत्वान्यधर्मावच्छि-

**मञ्जूषा.**

अन्यं प्रतीति बहवः पठन्ति सच पाठश्छन्दोभङ्गादुपेक्ष्यः अत्रान्यपदं प्रकृतकार्यकारणादन्य-परं कारणमादायेति पूर्ववाक्ये कारणपदेन तस्य उपस्थितत्वादित्यस्मद्गुरुचरणाः अत्रेदं बोध्यं कि-ञ्चिन्निरूपितनियतपूर्ववृत्तित्वग्रहाधीनप्रकृतकार्यनिरूपितपूर्ववृत्तित्वग्रहविषयत्वमेव वक्ष्यमाणार्थपर्यवसन्नं आका-शकुलालपितृसाधारणमनुगतं कारणताशरीरनिविष्टभेदप्रतियोगितावच्छेदकमन्यथासिद्धलक्षणं । तत्र पूर्ववृत्ति-तानिरूपककिञ्चित्पदार्थे प्रकृतकार्यकारणान्यत्वतत्कारणत्वे तु तत्परिचायकतया तृतीयचतुर्थलक्षणयो-र्निविष्टे न तु कारणताशरीरनिविष्टभेदप्रतियोगितावच्छेदककोटौ तयोर्निवेशः आत्माश्रयप्रसङ्गात् ॥ प्रकृतकार्यकारणत्वपदेन प्रकृतकार्यनियतपूर्ववृत्तित्वमात्रनिवेशे घटं प्रति शब्दस्यापि स्वाश्रयसंयोगका-लिकविशेषणतादिसंबन्धेन नियतपूर्ववृत्तित्वात् तृतीयलक्षणासंभवस्य चतुर्थलक्षणातिव्याप्तेश्च प्रसङ्गा-

**दिनकरीयम्.**

निष्ठतत्कार्यनिरूपितनियतपूर्ववृत्तित्वग्रहविशेष्यताकं यत्तत्तत्कार्यं प्रत्यन्यथासिद्धमित्यर्थः कपालसंयोगो घटपूर्व वर्तीत्यादिपूर्ववृत्तित्वग्रहविशेष्यतायाः कपालसंयोगनिष्ठायाः कपालावच्छिन्नत्वात्कपालसंयोगेऽतिव्याप्तिवारणा-य सत्यन्तम् । दण्डत्वादिवारणाय विशेष्यमिति । अत्रेतरान्वयव्यतिरेकप्रयुक्तान्वयव्यतिरेकशालित्वमित्युक्तौ प्रथमद्वितीयान्यथासिद्धयोः सङ्ग्रहेऽपि भेदेनान्यथासिद्धिद्वयप्रदर्शनं शिष्यबुद्धिवैशद्यार्थमिति बोध्यम् ॥ **अन्यं प्रतीति** ॥ फलाननुगुणमन्यं प्रतीत्यर्थः । तेन न कुलालजनके चतुर्थान्यथासिद्धत्वाश्रयेऽतिव्याप्तिः । शङ्कते ॥ **शब्दाश्रयत्वेनेति** ॥ अन्यं प्रतीत्यादितृतीयान्यथासिद्ध्यभावादिति भावः ॥ **पञ्चमीति** ॥ अवश्य क्लृप्तनियतपूर्ववर्तिन इत्यादिकेत्यर्थः । यद्यपि शब्दो द्रव्यजन्यो जन्यगुणत्वादित्यनुमित्यात्मककार्यकार-णभावग्रहरूपानुकूलतर्कसहकृतेनैव शब्दो द्रव्याश्रितो गुणत्वादित्यनुमानेन शब्दाश्रयत्वं गगने गृही-

**रामरुद्रीयम्.**

मूलानुरोधात्स्वभिन्नान्वयव्यतिरेकशालिग्रहाधीनपूर्ववर्तित्वग्रहविशेष्यत्वस्य विशेष्यदलत्वे दण्डत्वस्यापि द्विती-यान्यथासिद्धत्वापत्तिः दण्डत्वे पूर्ववर्तित्वग्रहस्यापि दण्डग्रहाधीनत्वादिति तत्परित्यागः । ननु प्रथमान्यथा-सिद्धिलक्षणे विशेषणं द्वितीयान्यथासिद्धिलक्षणे च विशेष्यदलं परित्यज्य उभयसाधारणमेकमेवान्यथासिद्धि-लक्षणं कुतो न कृतमित्याशङ्क्य समाधत्ते ॥ **अत्रेतरेति** ॥ **इत्यनुमित्यात्मकेति** । इत्यादिन्यायप्रयोग-प्रयोज्यानुमित्यात्मकेत्यर्थः ॥ **कार्यकारणभावग्रहरूपेति** ॥ कार्यकारणभावग्रहेण रूपं स्वरूपं यस्ये-त्यर्थः । तेन शब्दो यदि द्रव्याश्रितो न स्यात् तर्हि द्रव्यजन्यो न स्यादित्यनुकूलत-

मवच्छेदकमिति चेत् कवत्वादिकं विशेषपदार्थो वेति । **चतुर्थमन्यथासिद्धमाह** ॥

**प्रभा.**

न्ननिरूपितपूर्ववृत्तित्वघटितधर्मावच्छिन्नघटत्वावच्छिन्ननिरूपितपूर्ववृत्तितानाश्रयत्वादिति भावः । ननु विनि-

**मञ्जूषा.**

दिति । ननु उक्तधर्मस्यानुगतत्वं न संभवति तथाहि किञ्चिन्निरूपितनियतपूर्ववृत्तित्वग्रहाधीनत्वं तादृशग्रहजन्यत्वं तत्र जन्यत्वस्य कारणतानिरूपकत्वरूपत्वे आत्माश्रयः नियतोत्तरवृत्तित्वरूपत्वे या-दृशचरमतन्तुसंयोगव्यक्तेः तत्पटनियतपूर्ववृत्तित्वं कतिपयैरेव पुरुषैः गृह्यमाणं तत्संयोगप्रत्यक्षध्वंसा-दिकं प्रति अन्ततस्तदुत्तरभाविपचनपरमाणुसंयोगादिकं प्रति वा नियतपूर्ववृत्तित्वं गृहीत्वैव गृह्यते तद्व्यक्तेस्तत्पटं प्रति अन्यथासिद्ध्यापत्तेः । किंच घटारम्भकसंयोगजनककपालो घटनियतपूर्ववृत्तिश्च-क्रभ्रमणजनकदण्डो घटनियतपूर्ववृत्तिः घटनियतपूर्ववृत्तिकपालो घटनियतपूर्ववृत्तिरित्यादिग्रहविशेष्यता-मादायातिव्याप्तिर्दुर्वारा । नच किंचिन्निरूपितनियतपूर्ववृत्तित्वग्रहानुत्तरनियतपूर्ववृत्तित्वग्रहविशेष्याभिन्न-त्वं विवक्ष्यतामिति कपालदण्डयोः कपालो घटनियतपूर्ववृत्तिः दण्डो घटनियतपूर्ववृत्तिरित्याकारकता-दृशग्रहविशेष्यत्वान्न दोष इति वाच्यम् । तथापि पूर्वोपदर्शिततन्तुसंयोगव्यक्तावतिव्याप्तेरवारणात् शब्दाश्रयो घटनियतपूर्ववृत्तिः कुलालपिता घटनियतपूर्ववृत्तिरिति ग्रहविशेष्ययोः आकाशकुलालपित्रोरसङ्ग्र-हाच्चेति चेदुच्यते कारणताशरीरनिविष्टं यन्नियतपूर्ववृत्तित्वं तत्कार्याव्यवहितप्राक्क्षणावच्छेदेन कार्याधि-करणवृत्त्यभावप्रतियोगितानवच्छेदकधर्मवत्त्वं तत्र धर्मे पूर्ववृत्तित्वघटिताभिन्नत्वं विशेषणमित्यत्रानयोस्तृती-यचतुर्थलक्षणयोस्तात्पर्यम् । एवंच कुलालस्य कुलालपितृत्वेनैव दण्डादेश्चक्रभ्रमणजनकत्वादिनापि न कारणत्व-माकाशस्य तु शब्दाश्रयत्वेनापि न कारणत्वं पञ्चमान्यथासिद्धेरिति सर्वं सुस्थम् ॥ **मुक्तावल्यां कवत्वा-**

**दिनकरीयम्.**

त्वा तेन रूपेण घटपूर्ववृत्तित्वं ग्राह्यं तथा च शब्दपूर्ववृत्तित्वं गृहीत्वैव गगनस्य घटपूर्ववृत्तित्व-ग्रहात्तृतीयैवान्यथासिद्धिः सम्भवति तथाप्यन्यं प्रतीत्यस्य यथाश्रुतार्थकत्वेऽपूर्वं प्रति यागस्यान्य-थासिद्धिः स्यात् स्वर्गं प्रति पूर्ववृत्तित्वं गृहीत्वैव गृहीतकारणत्वान्यथानुपपत्त्या यागव्यापारत्वेनापूर्व-कल्पनादतोऽन्यं प्रति पूर्ववृत्तित्वघटितरूपेण यस्य यज्जनकत्वं तस्य तेन रूपेण तं प्रत्यन्यथासिद्धत्व-मित्येतावत्पर्यन्तं विवक्षणमावश्यकम् । यागस्य स्वर्गपूर्ववृत्तित्वघटितस्वर्गजनकत्वेनापूर्वं प्रत्यन्यथासि-द्धत्वेऽपि यागत्वेन हेतुत्वेऽन्यथासिद्ध्यभावात् । एवं च शब्दपूर्ववृत्तित्वघटितशब्दजनकत्वेन गगन-स्यान्यथासिद्धत्वेऽपि तदघटितशब्दाश्रयत्वेन हेतुत्वे तृतीयान्यथासिद्ध्यसम्भव इत्यभिप्रायः । शब्दा-श्रयत्वाष्टद्रव्यातिरिक्तद्रव्यत्वादिना गगनस्य घटं प्रति हेतुत्वेऽपि तृतीयैवान्यथासिद्धिः अन्यं प्रति पूर्ववृत्तित्वानुपपादकं यं प्रति यस्य पूर्ववृत्तित्वं गृह्यत इत्यर्थान्नापूर्वं प्रति यागस्यान्यथासिद्धिरित्यपि केचित् ॥ **कवत्वादिकमिति** ॥ विनिगमकाभावेन बहूनां वर्णानां कारणतावच्छेदकत्वे गौरवात्

**रामरुद्रीयम्.**

कस्य कार्यकारणभावग्रहानात्मकत्वेऽपि न क्षतिः ॥ **सहकृतेनैवेति** ॥ अन्यथा गुणत्वमस्तु द्रव्या-श्रितत्वं मास्तु इत्यप्रयोजकत्वशङ्कया गुणत्वेन द्रव्याश्रितत्वसिद्ध्यसम्भवादिति भावः ॥ **स्वर्गं प्रतीति** ॥ स्वर्गकामो यजेतेति विधिनेत्यादिः । ग्रन्थकारानुरोधिनां केषांचिन्मतमुत्थापयति ॥ **शब्दाश्रयत्वेति** ॥ **अष्टद्रव्येति** ॥ पृथिव्यादिचतुष्टयं कालादिचतुष्टयं चेत्यष्टौ द्रव्याणि । अन्यं प्रतीत्यादेः अन्यं प्रति-पूर्ववर्तित्वं गृहीत्वैवेत्यादिः । गृह्यत इत्यनन्तरं तं प्रति तदन्यथासिद्धमिति पूरणीयम् । पूर्ववृत्ति-त्वानुपपादकमित्यत्र पूर्ववृत्तित्वं स्वनिष्ठत्वेन विशेषणीयम् । अन्यथा शब्दजनककण्ठादिव्यापारं प्रति शब्दकारणत्वेन गगनस्य अन्यथासिद्धत्वं न स्यात् । तस्य कृतिनिष्ठशब्दपूर्ववर्तित्वघटकत्वात् । स्वनिष्ठत्वोक्तौ च उक्तव्यापारस्य कृतिनिष्ठशब्दपूर्ववर्तित्वोपपादकत्वेऽपि आकाशनिष्ठशब्दपूर्ववर्तित्वानु-पपादकत्वात् तं प्रत्यपि भवति गगनमन्यथासिद्धमिति ध्येयम् ॥ **बहूनां वर्णानामिति** ॥ ननु

जनकं प्रति पूर्ववृत्तितामपरिज्ञाय न यस्य गृह्यते ।
अतिरिक्तमथापि यद्भवेन्नियतावश्यकपूर्वभाविनः ॥ २० ॥
एते पञ्चान्यथासिद्धा दण्डत्वादिकमादिमम् ।
घटादौ दण्डरूपादि द्वितीयमपि दर्शितम् ॥ २१ ॥
तृतीयं तु भवेद्व्योम कुलालजनकोऽपरः ।
पञ्चमो रासभादिः स्यादेतेष्वावश्यकस्त्वसौ ॥ २२ ॥

**जनकं प्रतीति** ॥ यत्कार्यजनकं प्रति पूर्ववृत्तित्वं गृहीत्वैव यस्य यत्कार्यं प्रति पूर्ववर्तित्वं गृह्यते तस्य तत्कार्यं प्रत्यन्यथासिद्धत्वम् । यथा कुलालपितुर्घटं प्रति तस्य हि कुलालपितृत्वेन घटं प्रति जनकत्वेऽन्यथासिद्धिः कुलालत्वेन रूपेण जनकत्वे त्विष्टापत्तिः कुलालमात्रस्य घटं प्रति जनकत्वात् । पञ्चममन्यथासिद्धमाह ॥ **अतिरिक्तमिति** ॥ अवश्यक्लृप्तनियतपूर्ववर्तिन एव कार्यसम्भवे तद्भिन्नमन्यथा-

## प्रभा.

गमनाविरहेण बहूनां वर्णानां कारणतावच्छेदकत्वे गौरवान्नैतेषां अवच्छेदकत्वं संभवतीत्यत आह ॥ **विशेषो वेति** ॥ **जनकं प्रति पूर्ववृत्तित्वं गृहीत्वैवेति** ॥ अत्रापि पूर्वोक्तार्थ एव पर्यवस्यति । परन्तु तद्धर्मान्यधर्मावच्छिन्ने तद्धर्मावच्छिन्नाननुगुणत्वं निवेश्य तद्घटितलक्षणकरणेन भेदो द्रष्टव्यः ॥ **अवश्यक्लृप्तेति** ॥ लघुधर्मावच्छिन्नेत्यर्थः ॥ **नियतपूर्ववृत्तीति** ॥ प्रकृतकार्यनिरूपितानियतपूर्ववृत्तीत्यर्थः । तथाच प्रकृतकार्यनिरूपितलघुधर्मावच्छिन्ननियतपूर्ववृत्तित्वभिन्नत्वं प्रकृतकार्यनिरूपितान्यथासिद्धत्वमिति लक्षणं बोध्यम् ।

## मञ्जूषा.

**दिकमिति** ॥ नन्वाकाशस्य कवत्वं खत्वव्यापकशब्दत्वावच्छिन्नसमवायिकारणतावच्छेदकीभूतकवत्वादेवेत्यात्माश्रय इत्यत आह ॥ **विशेषपदार्थो वेति** ॥ एतदर्थमेव तत्र विशेषः स्वीक्रियत इति

## दिनकरीयम्.

वर्णानामसार्वकालिकत्वाचाह ॥ **विशेषपदार्थो वेति** ॥ **यत्कार्यजनकं प्रतीति** ॥ अत्रापि अन्यं प्रतीत्याद्यभिधाने तृतीयचतुर्थान्यथासिद्धयोः संग्रहेऽपि फलाननुगुणत्वतदनुगुणत्वयोर्विशेषणयोरुपादानेन तयोर्भेदेनाभिधाने प्रयोजनाभावस्तथापि शिष्यबुद्धिवैशद्याय तथोक्तमिति ॥ **अवश्यक्लृप्तेति** ॥ गन्धत्वावच्छिन्नं प्रत्यवश्यक्लृप्तगन्धप्रागभावेनैव गन्धोत्पत्तिसम्भवे तत्सहभूतरूप-

## रामरुद्रीयम्.

विशेषस्य कारणतावच्छेदकत्वेऽपि प्रत्येकं कवत्वादिकमादाय विनिगमनाविरहो दुर्वार एवेत्यस्वरसादाह ॥ **वर्णानामिति** ॥ कारणतावच्छेदकविशिष्टकारणसत्त्वस्यैव कार्योत्पत्तिप्रयोजकत्वेन गगने ककारासत्त्वदशायां शब्दान्तरस्याप्युत्पत्तिर्न स्यादिति भावः । कारणतावच्छेदकोपलक्षितकारणसत्तायाः कार्योत्पादप्रयोजकत्वे तु नैतद्दूषणमपीति मन्तव्यम् । यद्यपि शब्दत्वावच्छिन्नं प्रति शब्दकारणत्वेन गगनस्य कारणत्वेऽपि नान्यथासिद्धिः शब्दस्य शब्दभिन्नत्वाभावात् तथापि स्वस्य स्वावच्छेदकत्वे आत्माश्रयापत्तिः कारणतावच्छेदकज्ञानस्य कारणताग्रहहेतुत्वादिति कवत्वादेः कारणतावच्छेदकत्वानुधावनम् । अथ गगनत्वस्य अव्यवहितप्राक्क्षणावच्छेदेन घटाधिकरणवृत्त्यभावप्रतियोगितानवच्छेदकत्वरूपनियतपूर्ववर्तितावच्छेदकत्वमेव न संभवति गगनस्यावृत्तित्वेन घटाधिकरणे संयोगादिना तदभावसत्त्वादिति गगनस्य कारणतावारणायान्यथासिद्ध्युपपादनमनर्थकमिति चेन्न । अवृत्तेरपि कालिकसम्बन्धेन वृत्तितामते कालिकसम्बन्धेनैव गगनस्य नियतपूर्ववृत्तित्वसम्भवादिति ध्येयम् ॥ **अवश्यक्लृप्तेति** ॥

**सिद्धमित्यर्थः । अत एव प्रत्यक्षे महत्त्वं कारणमनेकद्रव्यत्वमन्यथासिद्धम् । तत्र हि महत्त्वमवश्यक्लृप्तं तेनानेकद्रव्यत्वमन्यथासिद्धम् । न च वैपरीत्ये किं विनि-**

## प्रभा.

ननु ग्रन्थान्तरेऽन्यत्र क्लृप्तेत्याद्यन्यथासिद्धिलक्षणं दृश्यते तदुपेक्ष्यावश्यक्लृप्तेत्याद्यन्यथासिद्धिकरणे किं बीजमत आह ॥ **अत एवेति** ॥ अन्यत्र क्लृप्तेत्याद्यन्यथासिद्धिलक्षणपरित्यागादेवेत्यर्थः । तत्स्वीकारे अनेकद्रव्यत्वादन्यत्र महत्त्वस्य क्लृप्तनियतपूर्ववृत्तित्वाभावेन तस्य महत्त्वेनान्यथासिद्धत्वं न स्यादिति भावः । अत्रानेकद्रव्यत्वं नानेकद्रव्यसमवेतत्वं तस्य द्व्यणुकेऽपि सत्त्वेन द्व्यणुकप्रत्यक्षापत्तेः नापि समवेतसमवेतद्रव्यत्वं आत्मप्रत्यक्षानुपपत्तेः अणुभिन्नद्रव्यत्वं ।ादित्यपि न अणुभिन्नद्रव्यत्वं द्रव्यत्वाविशिष्टाणुभिन्नत्वं वेत्यत्र विनिगमनाविरहेण कार्यकारणभावद्वयापत्तेः द्रव्यत्वाणुभिन्नत्वयोरेकसंबन्धेन वृत्तित्वाप्रसिद्धया उभयत्वावच्छिन्नस्य स्वरूपासंभवाच्च । किंतु महत्त्वद्रव्यत्वोभयत्वावच्छिन्नं तदित्यपि बोध्यम् ॥ **महत्त्वमवश्यक्लृप्तमिति** ॥ लघुधर्मावच्छिन्नमित्यर्थः ॥ **अनेकद्रव्यत्वमिति** ॥ महत्त्वद्रव्यत्वोभय-

## मञ्जूषा.

भावः ॥ **अनेकद्रव्यत्वमिति** ॥ अनेकानि द्रव्याणि यस्य तदनेकद्रव्यं तस्य भावस्तत्त्वं द्रव्यपदश्चावयवपरं तत्रानेकत्वं साक्षादुच्यमानमिष्टव्यावर्तकं न ह्येकावयवकं किंचिद्द्रव्यमस्ति तेन-साक्षात्परम्परासाधारणावयवेष्वनेकत्वं वाच्यम् । ततश्च सावयवावयवकत्वं पर्यवसन्नं एतच्च द्रव्यचाक्षुषस्पार्शनयोरेव महत्त्वस्य कारणत्वं नात्ममानसप्रत्यक्षेऽपीति प्रागस्मदुपदर्शितरीत्यनुसारेण । आत्मप्र-

## दिनकरीयम्.

प्रागभावादि पाकजगन्धं प्रत्यन्यथासिद्धम् । एवं घटजातीयं प्रत्यवश्यक्लृप्तनियतपूर्ववर्तिभिर्दण्डादिभिरेव घटोत्पत्तिसम्भवे रासभोऽन्यथासिद्ध इत्यर्थः । नन्ववश्यक्लृप्तनियतपूर्ववर्तिना पाकजरूपप्रागभावेन गन्धोत्पत्तिसम्भवे रूपप्रागभावेन गन्धप्रागभावस्यान्यथासिद्धिः स्यात् यत्कारणत्वमवश्यक्लृप्तमित्युक्तौ चात्माश्रयः स्यादिति चेदत्राहुः लघुनियतपूर्ववर्तित्वरूपमवश्यक्लृप्तत्वमिह बोध्यम् । लघुत्वं च शरीरकृतमुपस्थितिकृतं संम्बन्धकृतं च । तत्र प्रथममनेकद्रव्यसमवेतत्वापेक्षया महत्त्वे । द्वितीयं गन्धं प्रति रूपप्रागभावापेक्षया गन्धप्रागभावे । गन्धात्मकप्रतियोगिज्ञानसत्त्वेन शीघ्रं तदुपस्थितेः । तृतीयं दण्डत्वदण्डरूपाद्यपेक्षया दण्डे । स्वाश्रयदण्डसंयोगादिघटितपरम्परया गुरुत्वादिति । ननु निबन्धान्तरेष्वन्यत्र क्लृप्तेति दृश्यते तत्कथमत्र अवश्यक्लृप्तेति कृतमतस्तस्य फलमाह ॥ **अत एवेति** ॥ अन्यथा महत्त्वस्यानेकद्रव्यत्वादन्यत्र क्लृ-

## रामरुद्रीयम्.

यद्यपि गन्धरूपयोः समानकालोत्पत्तिकत्वेन गन्धरूपप्रागभावयोः तुल्यमवश्यक्लृप्तत्वं तथापि अभावज्ञाने प्रतियोगिज्ञानस्य कारणत्वेन गन्धरूपकार्योपस्थित्यनन्तरं गन्धप्रागभावस्यैव शीघ्रमुपस्थितिः सम्भवति न तु रूपप्रागभावस्य तदुपस्थिते रूपज्ञानसापेक्षत्वादित्युपस्थितिलाघवेन गन्धं प्रति गन्धप्रागभाव एव नियतपूर्ववर्तित्वेन अवश्यक्लृप्तः । पाकजगन्धरूपकार्योपस्थित्यनन्तरं तु गन्धरूपप्रागभावयोर्युगपदेवोपस्थितिः सम्भवति रूपपरावर्तकतेजस्संयोगस्यैव पाकपदार्थतया रूपोपस्थितेरप्यावश्यकत्वात् तथा चापाकजस्थले गन्धं प्रति अवश्यक्लृप्तनियतपूर्ववर्तिना गन्धप्रागभावेनैव पाकजगन्धोत्पत्तिसम्भवे तं प्रति रूपप्रागभावोऽन्यथासिद्ध इति पर्यवसितोऽर्थः ॥ **घटजातीयमिति** ॥ घटत्वेन तद्घटसजातीयं प्रतीत्यर्थः ॥ **घटोत्पत्तिसम्भवे** तद्घटोत्पत्तिसम्भव इत्यर्थः ॥ **नन्वित्यादि** ॥ गन्धरूपयोः युगपदुत्पन्नत्वेन गन्धप्रागभाववद्रूपप्रागभावोऽपि गन्धनियतपूर्ववर्तित्वेन अवश्यक्लृप्त इति रूपप्रागभावेनैव गन्धप्रागभावः कुतो नान्यथासिद्ध इति भावः ॥ **यत्कारणत्वमिति** ॥ अपाकजगन्धस्थले गन्धं प्रति गन्धप्रागभावस्यैव हेतुता क्लृप्ता नतु रूपप्रागभावस्य अतो रूपप्रागभावेन न पाकजगन्धे गन्धप्रागभावोऽन्यथासिद्ध इति भावः ॥ **गुरुत्वादिति** ॥ इदमुपलक्षणम् । घटत्वा-

गमकमिति वाच्यं महत्त्वत्वजातेः कारणतावच्छेदकत्वे लाघवात् ॥ **रासभादिरिति** ॥ यद्घटं प्रति रासभस्य नियतपूर्ववृत्तित्वमस्ति तत्रापि तद्घटजातीयं प्रति सिद्धकारणभावैर्दण्डादिभिरेव तद्व्यक्तेरपि सम्भवे रासभोऽन्यथासिद्ध इति भावः । एतेषु पञ्चस्वन्यथासिद्धेषु मध्ये पञ्चमोऽन्यथासिद्ध आवश्यकः तेनैव परेषां चरितार्थत्वात् । तथा हि दण्डादिभिरवश्यक्लृप्तनियतपूर्ववर्तिभिरेव कार्यसम्भवे दण्डत्वादिकमन्यथासिद्धम् । न च वैपरीत्ये किं विनिगमकमिति वाच्यं दण्डत्वस्य कारण-

## प्रभा.

त्वावच्छिन्नमित्यर्थः ॥ **परेषामिति** ॥ दण्डत्वदण्डरूपाकाशकुलालपितॄणामित्यर्थः ॥ **दण्डत्वादिकमन्यथासिद्धमिति** ॥ दण्डत्वदण्डरूपयोः परम्परासंबन्धेन पूर्ववृत्तित्वस्य वक्तव्यतया संसर्गविधया गुरुधर्मावच्छिन्ननियतपूर्ववृत्तिताश्रयत्वेनान्यथासिद्धत्वात् अनेकद्रव्यत्वस्य तु महत्त्वत्वजात्यपेक्षया गुरुभूतमहत्त्वद्रव्यत्वैतदुभयत्वरूपगुरुधर्मावच्छिन्ननियतपूर्ववृत्तिताश्रयत्वेनान्यथासिद्धत्वात् । पाकजगन्धं प्रति तु रूपप्रागभावस्यान्यथासिद्धत्वं कार्यतया गन्धरूपप्रतियोगिनः उपस्थितत्वेन तदभावस्यापि शीघ्रोपस्थितत्वेन तद्व्यक्तित्वस्य शीघ्रोपस्थितिरूपलाघवविशिष्टत्वेन गन्धप्रागभावनिष्ठनियतपूर्ववृत्तित्वस्य तादृशलघुधर्मावच्छिन्नत्वेन तस्य कारणत्वं रूपस्य तु कार्यरूपत्वाभावेन शीघ्रमनुपस्थिततया तदभावस्यापि अनुपस्थितत्वेन रूपप्रागभावनिष्ठतद्व्यक्तित्वस्यानुपस्थितत्वरूपगौरवविशिष्टत्वेन रूपप्रागभावस्य लघुध-

## मञ्जूषा.

त्यक्षसाधारणद्रव्यप्रत्यक्षत्वावच्छिन्नं प्रति तस्य कारणतापक्षे तु एकं केवलमतीन्द्रियमणुभूतमिति यावत् तदन्यदनेकमणुभिन्नं ततः कर्मधारयात् भावप्रत्ययो बोध्यः ॥ **मूले रासभादिरिति** ॥ यद्यपि अनेन वाक्येन घटसामान्यं प्रत्येव रासभस्य अन्यथासिद्धिः प्रतीयते घटसामान्यान्यथासिद्धदण्डत्वादिषु पाठात् उपपद्यते च घटसामान्यं प्रत्यपि तस्यान्यथासिद्धिस्तथाहि संयोगादिसंबन्धेन रासभविलम्बेऽपि घटविलम्बाभावात् घटकारणत्वं कुत्रेति जिज्ञासायां दण्डादय एव प्रथममुपतिष्ठन्ते न रासभः अतः उपस्थितिलाघवादवश्यकॢप्तनियतपूर्ववर्तिनो दण्डादय एव तैरेव घटसंभवे रासभोऽन्यथासिद्ध इति । तथापि घटत्वावच्छिन्नकारणतायां रासभस्यान्यथासिद्ध्युपपादनमनावश्यकं नियतपूर्ववृत्तित्वदलेनैव तद्वारणात् किन्तु तत्तद्घटव्यक्तित्वावच्छिन्नकारणतायामेव तत्रापि न सर्वत्र विशेषकारणतायां विना रासभमुत्पन्नं घटं प्रति तस्य नियतपूर्ववृत्तित्वाभावादेव वारणात् । किंतु यत्र घटव्यक्तौ रासभस्य पूर्ववृत्तित्वमस्ति तद्व्यक्तिकारणतायामेव रासभस्यान्यथासिद्धत्वं वक्तव्यं इत्याशयेनाह ॥ **मुक्तावल्यां यद्घटव्यक्तिं प्रतीति** ॥ **नियतपूर्ववृत्तित्वमिति** ॥ यद्यप्यत्र पूर्ववृत्तित्वमित्येतावदेव सुवचं एकव्यक्तिं प्रति पूर्ववृत्तिपदार्थस्यानियतत्वाप्रसक्तेः तथापि कारणताशरीरे नियतत्वपूर्ववृत्तित्वयोः परस्परमेळनेन एकविशेषणरूपतया तथोक्तिः अनेन चेदवगम्यते नेह रासभस्य नियतपूर्ववृत्तित्वांशव्यावर्तनीयता किन्तु

## दिनकरीयम्.

मनियतपूर्ववर्तित्वाभावेन तस्यान्यथासिद्धिर्महत्त्वेन न स्यादिति भावः । अत्रानेकद्रव्यत्वं नानेकद्रव्यसमवेतत्वम् । तस्य द्व्यणुकेऽपि सत्त्वेन द्व्यणुकप्रत्यक्षापत्तेः समवेतसमवेतत्वं तदित्यपि न । आत्मनि तस्याभावेनात्मप्रत्यक्षानुपपत्तेः । किंत्वणुभिन्नद्रव्यत्वमिति बोध्यम् ॥ **परेषां** दण्डत्वदण्डरूपाकाश-

## रामरुद्रीयम्.

वच्छिन्नं प्रति नियतपूर्ववर्तितावच्छेदकं दण्डत्वादिकमेव कारणत्वं कल्पनालाघवात् । न तु तथाविधद्रव्यत्वादिकं कल्पनागौरवात् । तथाहि नियतपूर्ववर्तितावच्छेदकद्रव्यत्वस्य घटकारणतारूपत्वे घटनिरूपितत्वविशिष्टकारणतासम्बन्धोऽनन्तपटादिद्रव्येषु कल्पनीयः दण्डत्वस्य तथात्वे दण्डमात्र एवे-

त्वे दण्डघटितायाः परम्परायाः सम्बन्धत्वकल्पने गौरवात् । एवमन्येषामप्यनेनैव चरितार्थत्वं सम्भवति ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥

## प्रभा.

र्मावच्छिन्नपूर्ववृत्तित्वाभावात् गन्धं प्रति रूपप्रागभावस्यान्यथासिद्धत्वमिति बोध्यम् ॥ **अन्येषामिति** ॥ दण्डत्वादीनामित्यर्थः । **अनेन** पञ्चमान्यथासिद्धेन ॥ **चरितार्थत्वमिति** ॥ उक्तरीत्या संग्रह इत्यर्थः । नचान्यथासिद्धस्यैतादृशत्वे अनियतपदार्थानां तत्कार्यनिरूपितलघुधर्मावच्छिन्ननियतपूर्ववृत्तितावद्भिन्नत्वरूपान्यथासिद्धत्वात् तेनैव वारणे नियतपूर्ववृत्तित्वविशेषणं व्यर्थमिति वाच्यम् । तथाप्यनियतान्यथासिद्धपदार्थानां बहुत्वेन तेषामनुगमकरूपाभावाच्च तत्तद्व्यक्तित्वेन भेदकूटनिवेशे गौरवात् दुर्ज्ञेयत्वाच्च नियतपूर्ववृत्तित्वविशेषणेन तेषां वारणस्यैवौचितत्वात् गुरुरूपतत्कार्यनिरूपितपूर्ववृत्तिताश्रयाणां नियतपूर्ववृत्तित्वविशेषणेन आनिवार्यतया स्वल्पतया सुज्ञेयतया च तेषां तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदकूटस्यापि स्वल्पतया सुज्ञेयतया च एतस्यैव कारणताघटकत्वौचित्याभिप्रायात् । नच कारणत्वस्यैतादृशत्वे व्यतिरेकव्यभिचारज्ञानस्य नियमांशग्रहे ग्राह्याभावावगाहितया विरोधित्वेऽपि अन्वयव्यभिचारज्ञानस्य कथं कारणताग्रहविरोधित्वमिति वाच्यम् । अन्वयसहचारज्ञानव्यतिरेकसहचारज्ञानयोः कारणताग्राहकत्वस्वीकारेणैव

## मञ्जूषा.

घटत्वावच्छिन्नकारणतायामेव तत्र पूर्ववृत्तित्वसत्त्वेऽपि नियतपूर्ववृत्तित्वाभावादिति । नन्वेतदाक्षिनिमीलनेन प्रतारणम् । तथाहि अवश्यक्लृप्तनियतपूर्ववृत्तिभिन्नत्वं ह्यन्यथासिद्धिः साच घटत्वावच्छिन्नं प्रत्यपि रासभस्य संभवति नहि रासभो घटत्वावच्छिन्नं प्रति अवश्यक्लृप्तो नियतपूर्ववृत्तिः भवति अतो भव-

## दिनकरीयम्.

कुलालपितृणाम् ॥ **तेन** पञ्चमान्यथासिद्धेन ॥ **चरितार्थत्वं** सङ्ग्रहः । अनियतरासभादेर्वारणाय नियतेत्यादि । न चानियतरासभादेः पञ्चमान्यथासिद्धत्वात्तेनैव वारणे नियतपदं व्यर्थमिति वाच्यं अवश्यक्लृप्तत्वस्यैकस्याभावेन यत्र प्रामाणिकानां न कारणत्वव्यवहारस्तत्तद्भेदस्य निवेशनी- ..या नियतपदेनैव रासभादेर्वारणे तद्भेदस्याप्रवेशादित्यभिप्रायात् । पूर्ववर्तित्वं चाव्यवहितपूर्ववर्तित्वं तेन व्यवहितपूर्ववर्तित्वव्युदासः । अत एव च यागादेः स्वर्गकारणत्वानुपपत्त्याऽपूर्वसम्बन्धेनाव्यवहितपूर्ववर्तित्वोपपादनं ग्रन्थकृतां सङ्गच्छते । अन्यथा यागस्यापि नियतपूर्ववृत्तित्वावाधेनापूर्वकल्पनं न स्यादिति । नचैतादृशस्य कारणत्वे व्यतिरेकव्यभिचारज्ञानस्य नियमांशग्रहे ग्राह्याभावावगाहितया

## रामरुद्रीयम्.

ति द्रव्यत्वापेक्षया दण्डत्वे कल्पनालाघवमित्यपि द्रष्टव्यम् ॥ **अनियतरासभादेरिति** ॥ यद्यपीदं पुनरुक्तं घटत्वावच्छिन्नं प्रत्यनन्यथासिद्धे रासभेऽतिव्याप्तिवारणाय नियतेत्यस्य पूर्वमुक्तत्वात् तथापि पूर्वमन्यत्रक्लृप्तनियतपूर्ववर्तिभिरेव कार्यसम्भवे तत्सहभूतमन्यथासिद्धमिति प्राचीनैर्निरुक्ता पञ्चमान्यथासिद्धिः घटत्वावच्छिन्नं प्रति रासभस्य न सम्भवति घटत्वावच्छिन्नादन्यत्र क्लृप्तनियतपूर्ववर्तिभिः घटोत्पादासम्भवादित्येवं रूपेण रासभस्य घटं प्रति अनन्यथासिद्धत्वमुपपाद्य नियतेति पदस्य सार्थक्यमुक्तम् । इदानींतु ग्रन्थकारैरतिरिक्तमथापि यद्धर्मेनियतावश्यकपूर्वभाविन इत्येवं पञ्चमान्यथासिद्धेर्निर्वचनात् तदनुसारेण रासभोऽपि घटत्वावच्छिन्नं प्रत्यन्यथासिद्ध एवेति तद्वैयर्थ्यमित्याशङ्कां समाधातुं पूर्वमुक्तस्यापि पुनरनुवाद इति मन्तव्यम् । रासभादेरित्यादिना घटादेः परिग्रहः । नियतेत्यादीत्यादिना पूर्ववर्तित्वपरिग्रहः । तथा च घटं प्रति घटत्वावच्छिन्नस्यापि व्यापकतया तत्रातिव्याप्तिवारणाय पूर्ववृत्तित्वप्रवेश इति भावः । मिलितदलद्वयस्य तु घटाव्यवहितप्राक्क्षणावच्छेदेन घटाधिकरणवृत्त्यभावप्रतियोगितानवच्छेदकधर्मवत्त्वमर्थ इति बोध्यम् ॥ **एकस्याभावेनेति** ॥ निरूपितं त्वेतत् ॥ **ग्राह्याभावेति** ॥ कारणतावच्छेदकत्वेनाभिमतधर्मे कार्यसमानाधिकरणाभावप्रतियोगित ।

## प्रभा.

उपपत्तौ अन्वयव्यभिचारज्ञानादेः कारणताग्रहविरोधित्वे मानाभावात् । अन्यथा अन्वयव्यभिचारादिज्ञानशून्यत्ववतः अन्वयसहचारादिज्ञानशून्यत्ववतश्च कारणताप्रत्यक्षापत्तेः अतएव मङ्गलनिष्ठकारणता नान्वयव्यतिरेकगम्या विनापि मंगलं प्रमत्तानुष्ठितसमाप्तेरिति ग्रन्थेनान्वयव्यतिरेकसहचारज्ञानस्य कारणताग्राहकत्वप्रतिपादनं व्यतिरेकव्यभिचारज्ञानस्य व्यतिरेकसहचारज्ञानप्रतिबन्धकत्वप्रतिपादनं च भाष्यकृतां सङ्गच्छते । एवं चान्वयव्यभिचारज्ञानस्य कारणताग्राहकान्वयसहचारादिज्ञानं प्रत्येव प्रतिबन्धकत्वस्य वक्तव्यतया स्वस्वव्याप्येतरसकलकारणसमवधानकालीनं यत्स्वाधिकरणं तन्निष्ठाभावीयावच्छेदकतासंबन्धावच्छिन्नप्रतियोगिताशून्या यदुत्पत्तिः यदभावसमानाधिकरणात्यन्ताभावाप्रतियोगियदुत्पत्तेः तादृशसंबन्धेनाभावः तद्रूपान्वयव्यतिरेकसहचारग्रहे अन्वयव्यभिचारज्ञानादेः ग्राह्याभावावगाहितया प्रतिबन्धकत्वेनानुमितौ व्यभिचारज्ञानवत्कारणताग्रहे अन्वयव्यभिचारज्ञानादेः विरोधित्वं ननु साक्षादुक्तदोषापत्तेः । कारणतानुमितौ तु अन्वयव्यतिरेकसहचारज्ञानयोः अहेतुतया ग्राह्याभावावगाहितया कारणत्वघटकनियमांशग्रहे व्यतिरेकव्य-

## मञ्जूषा.

त्येवान्यथासिद्धः नहि नियतपूर्ववृत्तित्वांशवैयर्थ्यभयात् केनाचिदनुपपादनमात्रेण संभवन्नर्थो व्युदसितुं शक्यत इति चेत् अत्रेदमायुष्मान्प्रष्टव्यः किमनन्यथासिद्धत्वन्नामेति अवश्यक्लृप्तनियतपूर्ववृत्तिभिन्नभिन्नत्वमिति चेत् तत् किमवश्यक्लृप्तनियतपूर्ववृत्तित्वादतिरिच्यते ततश्च विशेषणद्वयं पर्यवसन्नमवश्यक्लृप्तत्वं नियतपूर्ववृत्तित्वञ्चेति तत्रावश्यक्लृप्तत्वमेवानन्यथासिद्धत्वमिति वयमाचक्ष्महे । रासभस्य घटत्वावच्छिन्नकारणता तद्घटव्यक्तिनियतपूर्ववृत्तिभिन्नरासभस्य तद्घटव्यक्तिकारणता चावश्यक्लृप्तनियतपूर्ववृत्तित्वरूपकारणताशरीरनिविष्टनियतपूर्ववृत्तित्वांशेन वार्यते तद्घटव्यक्तिनियतपूर्ववृत्तिरासभादीनां घटत्वावच्छिन्ननियतपूर्ववृत्तिदण्डत्वादीनाञ्च कारणताशरीरनिविष्टावश्यक्लृप्तत्वरूपानन्यथासिद्धत्वेनेति च मन्महे । ननु तत्रैव नियतपूर्ववृत्तित्वव्यावर्तनीयानामवश्यक्लृप्तत्वेन कुतो न निवारणमिति चेदुच्यते किमवश्यक्लृप्तत्वं न तावत्प्रमाणसिद्धत्वं रासभादीनामपि रासभाकाराानुभवसिद्धत्वात् नापि प्रमाणसिद्धनियतपूर्ववृत्तिताकत्वं दण्डत्वादीनां नियतपूर्ववृत्तिरासभादीनाञ्च नियतपूर्ववृत्तितायाः प्रमाणसिद्धत्वानपायात् । किन्तु

## दिनकरीयम्.

विरोधित्वेऽपि अन्वयव्यभिचारग्रहस्य कथं कारणताग्रहाविरोधित्वमिति वाच्यं अवश्यक्लृप्तेत्याद्यन्यथासिद्धिज्ञानप्रयोजकत्वात् । तदितरनिखिलतत्कार्यकारणसत्त्वे तत्कार्यव्यतिरेको यद्व्यतिरेकात्तेनावश्यक्लृप्तेन नियतपूर्ववर्तिनान्यथासिद्धत्वज्ञानात् । नव्यास्तु कारणत्वस्यानन्यथासिद्धनियतपूर्ववर्तितावच्छेदकधर्मवत्त्वे प्रतिबन्धकाभावस्य तत्तद्व्यक्तित्वेन हेतुत्वापत्तिः यत्र न कारणत्वव्यवहारस्तत्तद्व्यक्तिभेदकूटवत्त्वं

## रामरुद्रीयम्.

वच्छेदकत्वस्यैव व्यतिरेकव्यभिचाररूपत्वादिति भावः ॥ **अन्वयव्यभिचारेति** ॥ व्यापकस्याधिकदेशवृत्तित्वं व्यापकत्वानपायादिति भावः ॥ **अन्यथासिद्धत्वज्ञानादिति** ॥ तथा च कारणताघटकानन्यथासिद्धत्वांशज्ञान एव अन्वयव्यभिचारज्ञानस्य प्रतिबन्धकत्वमिति भावः ॥ **तत्तद्व्यक्तित्वेनेति** ॥ दैशिकविशेषणतासंबन्धावच्छिन्नमणित्वावच्छिन्नप्रतियोगिताकाभावत्वस्य मण्यभावनिष्ठतद्व्यक्तित्वापेक्षया गुरुत्वेनान्यथासिद्धिनिरूपकत्वात् लाघवस्यैवान्यथासिद्धयनिरूपकत्वपर्यवसानेनाभावनिष्ठतद्व्यक्तित्वस्यैवान्यथासिद्धयनिरूपकत्वे सति नियतपूर्ववर्तितावच्छेदकत्वादिति भावः । नचास्तु तद्व्यक्तित्वेन प्रतिबन्धकाभावस्य कारणत्वं किन्नश्छिन्नमिति वाच्यम् । दाहादिकं प्रति मण्यभावत्वादिना कारणतायाः सर्ववादिसम्मतताया विलोपप्रसङ्गादिति भावः । ग्रन्थकारमते त्वत्रेष्टापत्तिरेव शरणमिति द्रष्टव्यम् । ननु कारणत्वं नोक्तरूपमङ्गीकरणीयं किंतु यद्यद्धर्मावच्छिन्ने न कारणत्वव्यवहारः तत्तद्धर्मभिन्नधर्मस्यैव तथात्वमङ्गीकरणीयमतो नोक्तदोष इत्यत आह ॥ **यत्रेति** ॥ यद्धर्मावच्छिन्न इत्यर्थः । भेदकूटवत्त्वमि-

## प्रभा.

भिचारानिर्णयस्य प्रतिबन्धकत्वेऽपि अन्वयव्यभिचारानिर्णयस्य प्रतिबन्धकत्वे मानाभावात् । दण्डत्वादिरूप-नियतपूर्ववृत्तीनां तत्तद्व्यक्तित्वेन भेदकूटस्यैव कारणघटकतया तादृशभेदकूटरूपान्यथासिद्धत्वांशे अन्वय-व्यभिचारानिर्णयस्य ग्राह्याभावानवगाहित्वेन प्रतिबन्धकत्वासंभवात् । नव्यास्तु कारणत्वस्य नियतपूर्व-वृत्तितावच्छेदकधर्मरूपत्वे मणित्वावच्छिन्नप्रतियोगिताकाभावत्वस्येव तत्तन्मणित्वावच्छिन्नप्रतियोगिताका-भावत्वादीनामपि मणिसामान्याभावो दाहनियतपूर्ववृत्तिरितिवत् तत्तन्मण्यभावो दाहनियतपूर्ववृत्ति-रिति प्रतीतेः सत्त्वेन नियतपूर्ववृत्तितावच्छेदकत्वावश्यकतयाऽनन्तकारणत्वापत्तेः । नचानन्तविशेषाभावानां कारणत्वसंबन्धकल्पने बहूनां तादृशधर्माणां कारणतारूपत्वकल्पने च गौरवात् सामान्याभावस्यैव का-रणत्वसंबन्धः तद्वृत्तिसामान्याभावत्वस्यैव कारणत्वरूपत्वं च स्वीक्रियत इति वाच्यम् । मन्मते विशेषाभावातिरिक्तसामान्याभावे मानाभावेनातिरिक्तसामान्याभावाप्रसिद्धेः सामान्याभावानामुक्तरीत्या नियतपूर्ववृत्तितावच्छेदकत्वे सिद्धे सामान्याभावत्वस्येव विशेषाभावत्वानामपि कारणतारूपत्वस्यानिवा-

## मञ्जूषा.

लाघवविशिष्टत्वं गौरवशून्यत्वं वा वाच्यम् । तत्र लाघवं गौरवञ्च शरीरकृतत्वसंबन्धकृतत्वोपस्थि-तिकृतत्वैस्त्रिविधमपि प्रत्येकं निरूपकभेदाद्भिन्नं नानुगतं निर्वक्तुं शक्यम् । तथाहि स्वल्पपदार्थघटित-नियतपूर्ववृत्तितावच्छेदकत्वस्वरूपं न सामान्यतो लाघवं शरीरकृतमत्र निवेशयितुं युक्तं दण्डरूपत्व-स्यापि किञ्चिदपेक्षया स्वल्पपदार्थघटितत्वानपायात् । नच प्रकृतकार्यनिरूपितपूर्ववृत्तितावच्छेदकधर्मान्त-रघटकपदार्थन्यूनपदार्थघटितत्वं विवक्षितं स्वस्यापि स्वघटितत्वेन दण्डत्वस्यापि दण्डत्वघटितत्वान्न दण्डेऽव्याप्तिरिति वाच्यम् । दण्डरूपत्वत्वदण्डरूपदण्डरसान्यतरत्वानामपि नियतपूर्ववृत्तितावच्छेदक-तया तदपेक्षया न्यूनपदार्थघटितत्वस्य दण्डरूपत्वे अनपायात् । एवं तत्कार्यनिरूपितनियतपूर्ववृत्ति-तावच्छेदकधर्मान्तरघटकपदार्थाधिकपदार्थघटितधर्मावच्छिन्ननियतपूर्ववृत्तितावद्भिन्नत्वं तादृशधर्मानवच्छिन्न-नियतपूर्ववृत्तित्वं तादृशाधिकपदार्थाघटितधर्मावच्छिन्ननियतपूर्ववृत्तित्वं वा न शरीरकृतगौरवशून्यत्वं कपाल-संयोगत्वचक्रभ्रमणत्वादीनां दण्डत्वकपालत्वाद्यपेक्षयाधिकपदार्थघटितत्वेन द्रव्यचाक्षुषादिजनकतावच्छेदक-

## दिनकरीयम्.

तु सर्वज्ञेनैव ज्ञेयं तत्तद्व्यक्तिभेदकूटवत्त्वसम्बन्धेन कार्यविशिष्टो यो धर्मस्तद्वत्त्वं तदित्यपि न युक्तं तस्य सम्बन्धत्वसन्देहात् तस्मात्कारणत्वं पदार्थान्तरमेवेत्याहुः । तदसत् कारणत्वास्यातिरिक्तत्वे दण्डादौ सर्वदा तत्प्रत्यक्षापत्तेः । न चानन्यथासिद्धत्वे सतीत्यादिधर्मस्तद्व्यञ्जक इति वाच्यं ता-दृशधर्मज्ञानस्यावश्यकत्वेन तस्यैव कारणातग्रहरूपत्वौचित्यात् अस्तु वा दण्डत्वादिकमेव कारणत्वं घटा-

## रामरुद्रीयम्.

त्वस्यापि भेदकूटवद्धर्मवत्त्वमेवार्थः तेन तद्व्यक्तित्वावच्छिन्नभेदस्य प्रतिबन्धकाभावत्वावच्छिन्नेऽसत्त्वेऽपि न क्षतिः ॥ **सर्वज्ञेनैवेति** ॥ कारणतावच्छेदकभिन्नसकलधर्माणां तत्तद्व्यक्तित्वेन अस्मदादीनां ज्ञाना-सम्भवादिति भावः । ननु यद्यद्धर्मावच्छिन्ने न कारणत्वव्यवहारः तत्तद्व्यक्तिभेदकूटवत्त्वसम्बन्धेन प्रकृ-तकार्यविशिष्टो यो धर्मस्तद्वत्त्वमेव कारणत्वमित्युक्तौ नैष दोषः विशिष्टबुद्धौ संसर्गज्ञानस्य अहेतुत्वे-न पूर्वमनुपस्थितानामपि तत्तद्व्यक्तिभेदेन संसर्गघटकतया भाने बाधकाभावादित्याशङ्कां निराचष्टे ॥ **तत्तद्व्य-क्तीति** ॥ **तस्येति** ॥ तादृशभेदकूटस्येत्यर्थः ॥ **सर्वदेति** ॥ कदाचिद्दण्डादौ घटकारणताप्रत्यक्षानुरोधेन कारणतायां योग्यत्वस्याङ्गीकरणीयतया यदा यदा दण्डप्रत्यक्षं तदा तदा तद्गतघटकारणताया अपि प्रत्यक्षाप-त्तिरित्यर्थः । स्वमते तु कारणताया व्यापकताघटितत्वेन व्यापकताज्ञाने च सहचारज्ञानव्यभिचारज्ञानाभावयोः कारणत्वेन तद्विलम्बान्नैतदापत्तिरिति भावः ॥ **तद्व्यञ्जक इति** ॥ कारणताप्रत्यक्षजनकप्रत्यक्ष इत्यर्थः । तादृशधर्मज्ञानस्येत्यस्य कारणताग्रहात् पूर्वमित्यादिः । ननु तादृशधर्मज्ञानस्य कारणताज्ञानार्थमपेक्षितत्वेऽपि न

## प्रभा.

र्यत्वात् तस्मात् सकलाभावानुगतमतिरिक्तपदार्थरूपकारणत्वमङ्गीकार्यमित्याहुः । तन्न कारणत्वस्यातिरिक्तत्वे दण्डादौ सर्वदा तत्प्रत्यक्षापत्तेः । नचान्यथासिद्धेत्यादिधर्मः तद्व्यञ्जक इति वाच्यं तादृशधर्मज्ञानस्यावश्यकत्वे तस्यैव कारणताग्रहरूपत्वौचित्यात् । नचोक्तरीत्याऽनन्ततादृशधर्माणां कारणतारूपत्वे गौरवमिति वाच्यं विशेषधर्माणां नियतपूर्ववृत्तितावच्छेदकत्वेन क्लृप्तत्वेऽपि बहूनां नियतपूर्ववृत्तितावच्छेदकत्वे शरीरकृतगौरवसत्त्वेन लाघवविशिष्टतादृशरूपावच्छेदकत्वरूपान्यथासिद्धयनिरूपकतादृशधर्मत्वाभावेन सामान्याभावत्वस्यैव तादृशधर्मरूपतया कारणतानिरूपकत्वात् । नच कारणतायाः दण्डत्वादिरूपत्वपक्षेऽपि सर्वदा तत्प्रत्यक्षापत्तिः दुर्वारैवेति वाच्यं अन्यथासिद्धयनिरूपकत्वनियतत्वयोः ज्ञानस्य तद्व्यञ्जकत्वस्वीकारेणैव तदापत्तिवारणसंभवात् ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥

## मञ्जूषा.

स्य उद्भूतरूपत्वादेस्तादृशचक्षुर्ग्राह्यपेक्षयाधिकपदार्थघटितत्वाच्च । एवं संबन्धकृतलाघवगौरवकृतयोरपि द्रष्टव्यम् । दण्डरूपादिनिष्ठनियतपूर्ववृत्तितावच्छेदकसंबन्धस्य दण्डरूपत्वादिनिष्ठनियतपूर्ववृत्तितावच्छेदकसंबन्धापेक्षया लघुत्वात् नीलरूपनिष्ठनियतपूर्ववृत्तितावच्छेदकसंबन्धस्य नीलरूपविशिष्टनिष्ठनियतपूर्ववृत्तितावच्छेदकीभूतसमवेतत्वापेक्षया पृथिवीनिष्ठनीलसमवायिकारणतावच्छेदकीभूततादात्म्यापेक्षया च गुरुत्वाच्च । उपस्थितिकृते तु लाघवगौरवे कालभेदेनापि भिन्ने न व्यवस्थिते न हि सर्वदा सर्वेषां दण्डरासभयोरेकस्य प्रथमोपस्थितत्वमन्यस्य चरमोपस्थितत्वं च नियन्तुं केनचिच्छक्यम् । नवा गन्धज्ञाने सति गन्धप्रागभाव एव प्रथममुपतिष्ठते न रूपप्रागभाव इति नियमोऽस्ति गन्धज्ञानोत्तरं तत्प्रागभावमविज्ञायैव रूपं ज्ञात्वा तत्प्रागभावज्ञानस्य कस्यचित्संभवादेषा ह्यत्र रीतिस्तुल्यवदितर कारणसत्त्वे कार्याभावो यद्यद्धर्मावच्छिन्नाभावात्तत्तद्धर्मावच्छिन्नानां मध्ये यत्र गौरवं तत्र कारणता-

## दिनकरीयम्.

दिकार्यसम्बन्धितया तद्गृह उक्तधर्मस्य व्यञ्जकत्वादिति । परे तु कार्यान्वयव्यतिरेककालपूर्वकालान्वयव्यतिरेकशालित्वमित्यूचुः । तदयुक्तं आत्मादौ सुखादिकारणे प्रागभावरूपव्यतिरेकासम्भवेनाव्याप्तेः ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥

## रामरुद्रीयम्.

तस्य कारणतारूपत्वसंभवःउक्तदोषस्य तादवस्थ्यादित्यस्वरसादाह ॥ **अस्तु वेति** ॥ पदार्थान्तरकल्पने गौरवादिति भावः । ननु दण्डत्वस्य कारणतारूपत्वे यदा यदा दण्डप्रत्यक्षं तदा तदैव घटकारणताप्रत्यक्षापत्तिः दण्डसन्निकर्षे दण्डत्वेऽपि तस्यावश्यकत्वादित्याशङ्कां निराकुरुते ॥ **घटादिकार्यसम्बन्धितयेति** ॥ घटादिनिरूपितत्वेनेत्यर्थः ॥ **कार्येति** ॥ कार्यान्वयव्यतिरेकौ कार्यप्रतियोगिकसंसर्गकार्यप्रागभावौ तदधिकरणकालपूर्ववर्तित्वं तन्निष्ठध्वंसप्रतियोगित्वं । तादृशपूर्वकालवृत्त्यन्वयव्यतिरेकशालित्वं तद्वृत्तिसंसर्गप्रतियोगित्वे सति तद्वृत्तिप्रागभावप्रतियोगित्वं । घटसंसर्गकालपूर्वकालवृत्तिसंसर्गप्रतियोगित्वे सति घटप्रागभावकालपूर्ववृत्तिप्रागभावप्रतियोगित्वात् दण्डादेर्घटकारणत्वं अत्र च कार्यान्वयकालपूर्वत्वं तादृशकालत्वव्यापकध्वंसप्रतियोगित्वं । तेन न स्वस्य स्वकारणतापत्तिः । कार्यव्यतिरेककालपूर्वत्वं तु न तथाविधं घटप्रागभावकालत्वव्यापकध्वंसप्र.तियोगिकालाप्रसिद्धेः । किंतु तादृशकालवृत्तिध्वंसप्रतियोगित्वमेव । व्यतिरेकघटितदलप्रवेशस्तु दण्डत्वगगनादीनां कारणतावारणायेति द्रष्टव्यम् ॥ **आत्मादाविति** ॥ व्यतिरेकपदस्य दण्डत्वादिवारणानुरोधेन प्रागभावपरताध्रौव्यादिति भावः । इदमुपलक्षणं कार्यान्वयपूर्वकाले कार्यप्रागभावाधिकरणकालप्रागभावाधिकरणत्वं विशेषणमुपादाय व्यवहितपूर्ववर्तिनां कारणत्वासंभवेऽपि दण्डरूपरासभादीनां कारणत्वापत्तिरशक्यपरिहारैव एवं प्रागभावे कार्यप्रागभावपूर्वकालीनत्वस्यापि प्रागभावस्याव्यावर्तकतया तद्वैयर्थ्यं चेत्यपि द्रष्टव्यम् ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥

## मञ्जूषा.

वच्छेदकतयेष्यते किंतु यत्र लाघवं तदेव कारणतावच्छेदकतयेष्यते यथा चक्रकुलालादिसमवधानदशायां घटाभावो दण्डाभावाद्दण्डत्वदण्डरूपदण्डावयवाद्यभावाद्वा स्यात्तत्र दण्डत्वत्वं दण्डरूपत्वं दण्डावयवत्वं च शरीरगौरवात्संबन्धगौरवाच्च न कारणतावच्छेदकं । एवं गन्धोत्पत्त्यनन्तरं पुनस्तदधिकरणे तद्गन्धोत्पत्त्यभावस्तद्गन्धप्रागभावव्यक्त्यभावात्तद्रूपप्रागभावव्यक्त्यभावाद्वा स्यात्तत्र तद्रूपप्रागभावनिष्ठतव्यक्तित्वं न तद्गन्धकारणतावच्छेदकमुपस्थितिगौरवात् । एवं दण्डस्य दण्डावयवसंमवेतद्रव्यत्वादिकमपि न कारणतावच्छेदकं गौरवात् यद्यपि कपालसंयोगत्वचक्रभ्रमणत्वादिकं दण्डत्वाद्यपेक्षया गुरु तथापि यद्यत्कारणसत्त्वे कपालसंयोगत्वावच्छिन्नाभावात् कार्याभावः कपालदण्डादेरपि तत्तत्कारणमध्यनिविष्टतया तत्सत्त्वेन कपालत्वाद्यवच्छिन्नाभावः अतस्तुल्यवदितरकारणसत्त्व इत्यादिपूर्वोक्तपरिचायकरूपाक्रान्तत्वं न कपालसंयोगत्वादेः तादृशधर्मावच्छिन्नानां च यत्र कस्यचित्संबन्धगौरवं कस्यचिद्धर्मगौरवं स्यात्तत्र यद्धर्मावच्छिन्नस्य धर्मगौरवं स धर्मः कारणतावच्छेदकतया नेष्यते अतो नीलत्वमेव नीलकारणतावच्छेदकं नतु नीलविशिष्टत्वं । एवं संभावितेतरकारणसत्त्वे यद्रूपविशिष्टसत्त्वेऽपि यद्रूपविशिष्टसत्त्वं विना न कार्योत्पत्तिः तयोः प्रथमं न कारणतावच्छेदकं किंतु द्वितीयमेव । यथा चक्रकपालादिमात्रसत्त्वे पृथिवीत्वद्रव्यत्वविशिष्टसत्त्वेऽपि दण्डत्वविशिष्टसत्त्वं विना न कार्योत्पत्तिरतः पृथिवीत्वादिकं न कारणतावच्छेदकं किंतु दण्डत्वमेव । एवं आवश्यकानियतपूर्ववृत्तितावच्छेदकस्वावच्छिन्नसमव्यापकतावच्छेदकधर्मावच्छिन्नानां सत्त्वे यद्धर्मावच्छिन्नाभावान्न क्वचिदपि कार्यतद्व्यापारान्यतराभावः स धर्मो न कारणतावच्छेदकः यथा दण्डत्वावच्छिन्नसत्त्वे द्रव्यत्वत्वरूपत्वाद्यवच्छिन्नाभावान्न घटाभावश्चक्रभ्रमणाद्यभावो वा अतो द्रव्यत्वत्वं रूपत्वं वा न कारणतावच्छेदकमिति द्रव्यत्वरूपयोः न कारणता अत्र पृथिवीत्वादेः दण्डनिष्ठकारणतानवच्छेदकत्वे द्रव्यत्वादेरकारणत्वे च औत्सर्गिकमुपस्थितिगौरवं तन्त्रम् । एवं चैतेषां सर्वेषामेव धर्माणामनुगमकमनतिप्रसक्तमात्माश्रयादिदोषरहितं किञ्चिद्रूपममरगुरोरप्यशक्यनिर्वचनं किंतु तत्तद्रूपैस्तत्तद्धर्मान्परिचित्य तत्तद्व्यक्तिभेद एव कार्याव्यवहितप्राक्क्षणावच्छेदेन कार्याधिकरणवृत्त्यभावप्रतियोगितानवच्छेदकधर्मवत्त्वरूपनियतपूर्ववृत्तित्वघटकधर्मे निवेशनीयः । तत्र नियतपूर्ववृत्तितानवच्छेदकीभूतानां रासभत्वगोत्वाश्वत्वाद्यनन्तधर्माणां केनचिद्रूपेण परिचयसंभवेऽपि न तेषां तत्तद्व्यक्तित्वेन भेदाः कारणताशरीरे प्रवेश्यन्ते गौरवात् नियतपूर्ववृत्तितावच्छेदकत्वदलेनैव तेषां वारणसंभवात् । किंतु नियतपूर्ववृत्तितावच्छेदकीभूता ये धर्मास्त एव येनकेनचिद्रूपेण परिचिताः कारणताशरीरे भेदप्रतियोगितावच्छेदकतया प्रवेशनीयाः । अत एवावश्यकॢप्तनियतपूर्ववृत्तिन एव कार्यसंभवे तत्सहभूतमन्यथासिद्धमित्येव केचित्पठान्ति । तत्सहभूतत्वं हि नियतपूर्ववृत्तिन एव संभवति नान्यस्यात्रान्यथासिद्धत्वमननुगतमित्ययमर्थो विश्वनाथेनैव प्रपञ्चितः । अन्यथातिरिक्तमथापीति मूलस्यावश्यकॢप्तनियतपूर्ववृत्तिभिन्नं अन्यथासिद्धमित्येवार्थे वक्तव्ये अवश्यकॢप्तनियतपूर्ववृत्तिन एव कार्यसंभवे तद्भिन्नमित्याद्युक्तिर्व्यर्था स्यात् अनया ह्यन्यथासिद्धानां परिच्छेयता स्वरसतो ध्वन्यते तस्माद्युक्तमनियतपूर्ववृत्तीनां नान्यथासिद्धत्वमिति । इदमत्र बोध्यम् । अन्यथासिद्धत्वेनाभिमतानां केषांचिद्धर्माणां भेदो धर्मिणि विशेषणमन्यथासिद्धयवच्छेदकत्वेनाभिमतानां केषांचिद्भेदो नियतपूर्ववृत्तितावच्छेदकधर्मे तद्यथा तद्घटत्वावच्छिन्नकारणताशरीरे रासभभेद एव धर्मिविशेषणतया निवेशनीयः । नतु रासभवृत्तिधर्माणां बहूनां भेदो नियतपूर्ववृत्तितावच्छेदकविशेषणतया गौरवात् । दण्डस्य दण्डत्वेन कारणतया तद्भेदो घटकारणतायां न धर्मिविशेषणं किंतु दण्डत्वातिरिक्तदण्डवृत्तिधर्माणां भेदा एव नियतपूर्ववृत्तितावच्छेदकविशेषणानि दण्डत्वभेदो धर्मिणि दण्डरूपद्रव्यत्वादीनां भेदाश्च नियतपूर्ववृत्तितावच्छेदकधर्म इव धर्मिण्यपि तेषां कारणताया दण्डादिनिष्ठकारणतावच्छेदकतायाश्चाभावात् एवमन्यत्राप्यूह्यम् । इदं पुनरिहावधेयं उक्तानां धर्मिणां धर्मा-

मञ्जूषा

णां च केषांचिदनुगतरूपैर्निर्वेशस्संभवति । तद्यथा घटत्वावच्छिन्नकारणताशरीरे धर्मिविशेषणभेदप्रतियोगितानां दण्डत्वदण्डरूपादीनां दण्डचक्रसंयोगातिरिक्तदण्डसमवेतत्वेनानुगमः । नियतपूर्ववृत्तितावच्छेदकविशेषणभेदप्रतियोगितानां दण्डरूपद्रव्यत्वादीनां तु दण्डत्वातिरिक्तदण्डसमवेतत्वेन एवमाकाशकुलालपितृत्वचक्रभ्रमिजनकत्वादीनां किंचिन्निरूपितपूर्ववृत्तित्वघटितत्वेनैवानुगमः । पाञ्चभौतिकं शरीरमिति श्रुत्या शरीरं प्रत्याकाशस्य कारणताबोधनाच्छरीरत्वावच्छिन्नकारणताशरीरे शब्दपूर्ववृत्तित्वातिरिक्तपूर्ववृत्तित्वघटितधर्मभेद एव नियतपूर्ववृत्तितावच्छेदकधर्मविशेषणं एवमन्यत्रापि यथासंभवमूहनीयम् । यदिचैवं दण्डत्वादिभेदस्य घटत्वावच्छिन्नकारणताशरीरे नियतपूर्ववृत्तितावच्छेदकधर्मविशेषणत्वाभावे कपालनिष्ठघटनियतपूर्ववृत्तितायां स्वाश्रयसंयुक्तसंयोगसंबन्धेनावच्छेदकीभूतं यद्दण्डत्वं स्वाश्रयसंयोगसंबन्धेन तद्वत्त्वस्य कपालनिष्ठस्य घटत्वावच्छिन्नकारणतात्वं स्यान्न चैतदिष्यते तान्त्रिकैः द्रव्यत्वादिनेव तेन रूपेणापि कपालस्यान्यथासिद्धत्वाङ्गीकारात् दण्डत्वादिभेदस्यापि नियतपूर्ववृत्तितावच्छेदकधर्मविशेषणतया तत्र निवेशे दण्डस्यापि दण्डत्वेन रूपेणान्यथासिद्धयापत्तेरिति विभाव्यते तदा नियतपूर्ववृत्तितावच्छेदकधर्माधिकरणत्वमेव कारणत्वम् । तत्र नियतपूर्ववृत्तितावच्छेदकधर्मविशेषणभेदप्रतियोगितया अभिमता ये धर्मा द्रव्यत्वादयः तत्तदधिकरणताभेद एव नियतपूर्ववृत्तितावच्छेदकधर्माधिकरणत्वविशेषणतया निवेश्यः तत्रच दण्डत्वनिरूपितस्वाश्रयसंयुक्तसंयोगसंबन्धावच्छिन्नाधिकरणताभेदस्य निवेशान्न कपालस्य दण्डत्वेन रूपेण कारणतापत्तिरिति दिक् । ननु कारणत्वस्यैदृशत्वे तत्र व्यतिरेकव्यभिचारज्ञानस्य ग्राह्याभावावगाहितया प्रतिबन्धकत्वेऽपि अन्वयव्यभिचारज्ञानस्य प्रतिबन्धकता न स्यादिति चेन्नेष्यत एव तत्र तस्य साक्षात्प्रतिबन्धकत्वं । किंतु इतरकारणसत्त्वे यद्रूपविशिष्टसत्त्वेऽपि न कार्योत्पत्तिः तद्रूपवत्त्वपर्यवसन्नस्यान्वयव्यभिचारस्य पूर्वोक्तरीत्या कारणताशरीरनिविष्टभेदप्रतियोगिकतिपयपदार्थपरिचायकतया तज्ज्ञानस्य कारणताज्ञानप्रतिबन्धकत्वव्यपदेश इति । ये त्वन्यथासिद्धेरनुगतत्वं भ्राम्यन्ति तेषामन्वयव्यभिचारस्यान्यथासिद्धिव्याप्यतया तदभावघटितकारणताग्रहे साक्षादेव विरोधित्वं संभवतीति बोध्यम् । अत्र नव्याः कारणत्वमतिरिक्तमाचक्षते युज्यते चैतत् तथा ह्यभियुक्ता मन्यन्ते। कारणत्वमतिरिक्तमिति स्यात्तन्त्रकारवचसामकुसृष्टेः । अन्यथातु गुरुता कुत एव स्याद्धि कारणतयोरुभयोर्वा॥ हेतुता किमिति नो गुरुणावच्छिद्यते भजति न व्यपदेशम् । केन पीलुपरिमाणनिवृत्ता सा हि पूर्वसमयस्थितिरूपा ॥ इत्यादि । अयमर्थः । कारणत्वमतिरिक्तमित्येव युक्तं तथा सत्येव बह्वीनां ग्रन्थकृदुक्तीनामकुसृष्टेः उपपत्तेरित्यर्थः । अन्यथा त्वनुपपत्तिस्स्यादिति भावः । अनुपपत्तिरेव प्रदर्श्यते । अन्यथा त्विति । यदि कारणत्वं नियतपूर्ववृत्तित्वं तदवच्छेदकधर्मवत्त्वं वा स्यात्तदेत्यर्थः । गुरुतेति । चित्ररूपाङ्गीकर्तारो हि साम्प्रदायिका नानाजातीयरूपवदवयवारब्धेऽवयविनि नीलपीताद्यारम्भवारणाय समवायेन नीलं प्रति स्वाश्रयसमवेतत्वसंबन्धेन पीतादीनां प्रतिबन्धकतामङ्गीकुर्वन्ति । तत्रच तत्संबन्धावच्छिन्नप्रतियोगिताकानां पीताद्यभावानां षण्णां कारणत्वे गौरवात्तत्संबन्धावच्छिन्नप्रतियोगिताकस्य नीलातिरिक्तरूपसामान्याभावस्यैकस्य कारणतेति च ते व्यवहरन्ति सोऽयं व्यवहारस्तेषामपार्थकः संपद्यते गौरवस्य दुर्निरूपत्वात्तथाहि षण्णां कारणत्वे किं गौरवं कारणत्वं हि नियतपूर्ववृत्तित्वं तच्च षट्स्वपि क्लृप्तमेव न कल्पनीयं नहि विशेषाभावकूटमन्तरा क्वचिदपि सामान्याभावस्संभवति नवा पीताभावत्वादीनां षण्णां नियतपूर्ववृत्तितावच्छेदकत्वकल्पनापेक्षया नीलातिरिक्तरूपसामान्याभावस्य एकस्य तथात्वकल्पने लाघवमिति भ्रमितव्यम् । पीताभावो नीलपूर्ववृत्तिरित्यादिप्रतीत्या पीताभावत्वादीनां नियतपूर्ववृत्तितावच्छेदकतायास्तवाप्यशक्यवारणत्वात् नीलाव्यवहितप्राक्क्षणावच्छेदेन नीलाधिकरणवृत्त्यभावप्रतियोगितानवच्छेदकत्वरूपस्य नियतपूर्ववृत्तितावच्छेदकत्वस्य च पीताभावत्वादीनां तादृशाभावप्रतियोगितावच्छेदकत्वमनुपपाद्य दुरपह्नवत्वाच्च । इदं हि तेषामभिधित्सितं पीताभावादीनां षण्णां

## मञ्जूषा.

कारणत्वकल्पने पीताभावत्वादीनां षण्णां कारणतावच्छेदकत्वकल्पने च गौरवेण पीताभावादीनामन्यथासिद्धतया न कारणत्वमिति तत्र पृच्छामः किमन्यथासिद्धेरनुगतत्वमभिप्रेयते अननुगतत्वं वा । आद्ये पीताभावादीनां किमन्यथासिद्धौ तन्त्रं गौरवमिति चेत्तदेव हि नेति वयमवोचाम । स्पष्टार्थं पुनरप्युच्यते । षण्णां कारणत्वे किं गौरवं षट्सु कारणतासंबन्धकल्पनमेवेति चेत्तत्किं भवता व्युदसितुं प्रभूयते नियतपूर्ववृत्तितारूपायास्तस्यास्तत्र दुर्निवारत्वात् अनन्यथासिद्धनियतपूर्ववृत्तिता तेषां नेति चेत् किमनन्यथासिद्धत्वं गुरुमिन्नत्वमिति चेत्किं गुरुत्वमिति सोऽयं घटीयन्त्रन्यायः । अथ षट्त्वं गुरुत्वमिति चेत्तर्हि दण्डचक्रचीवरकूटकुलालकपालानां षट्त्वादन्यथासिद्धत्वं स्यादिति स्वयमेव चिरं मनसा विभाव्यताम् । अथ चेदन्यथासिद्धेरननुगतत्वमिति सिद्धान्त आस्थीयते तदा सुतरां पीताभावादीनां कारणतानिराकरणानुपपत्तिः । तथाहि अत्र पक्षे पीताभावादीनां कारणता नास्तीत्युक्ते कोऽर्थः पीताभावादिभिन्नत्वे सति नीलनियतपूर्ववृत्तित्वं नास्तीति हि तदर्थः । तत्रच विशिष्टं निराकुर्वन् किं विशेषणाभावमभिप्रैषि उत विशेष्याभावमाहोस्विदुभयम् । आद्ये त्वप्रसक्तप्रतिषेधः । को हि त्वामाचक्षीत पीताभावः पीताभावात् भिद्यत इति अन्यथा नीलातिरिक्तरूपसामान्याभावेऽपि नीलातिरिक्तरूपसामान्याभावभिन्नत्वविशिष्टनीलनियतपूर्ववृत्तित्वं कुतो न निराचक्षे । द्वितीये तु न तव केवलं भवतां प्रसवितुरपि दुःशकमत एव न तृतीयः कारणतातिरिक्तत्वपक्षे त्विदमुपपद्यते अतिरिक्तरूपायाः कारणतायाः षट्सु संबन्धकल्पनापेक्षया तदवच्छेदकतायाः षट्सु कल्पनापेक्षया च लाघवेन एकत्र कारणतायास्तदवच्छेदकतायाश्चैकत्र कल्पयितुमुचितत्वात् । नहि नियतपूर्ववृत्तित्वमिवातिरिक्तरूपं कारणत्वमपि पीताभावादीनामुभयवादिसिद्धं येन तदशक्यवारणं स्यादिति । किञ्चावच्छेदकभेदेन कारणतानां भिन्नतया पीताभावादिषु कारणताः षट् कल्पनीयाः तदवच्छेदकताश्च पीताभावत्वादिषु षट् नीलातिरिक्तरूपसामान्याभावे त्वेकैव कारणता तदवच्छेदकता चैकैवेति लाघवं नचेदं त्वन्मते संभवति पीताभावादिषु षण्णां नियतपूर्ववृत्तितानां तदवच्छेदकतानां च पीताभावत्वादिषु सर्वसिद्धत्वात् । एवमन्यत्रापि तत्र तत्र कारणताभेदप्रसक्तौ द्रष्टव्यम् । तदिदमुच्यते गुरुता कुत एव स्याद्धि कारणनयोरुभयोर्वेति । उभयोरिति प्रदर्शनार्थम् । बह्वीषु कारणतासु प्रसक्तास्वपि गौरवापादनं कथं संगच्छत इत्यर्थः । नियतपूर्ववृत्तितारूपाणां तासां भेदस्य सर्वसिद्धत्वादिति भावः । एवं कारणतावच्छेदककोटिप्रविष्टपदार्थानां विशेषणविशेष्यभावे विनिगमनाविरहेण कारणताभेदस्तदवच्छेदकताभेदश्च तत्र तत्रापाद्यते । यथा प्रत्यक्षं प्रत्यालोकसंयोगस्य कारणत्वे आलोकवृत्तित्वसंयोगत्वयोर्विशेषणविशेष्यभावे विनिगमनाविरहात् कारणताभेदापत्त्या संयोगसंबन्धेनालोकस्यैव कारणत्वमित्यादि तदपि भवतां विरुध्यते । तथाहि कारणत्वं नियतपूर्ववृत्तित्वं तच्च यदि कार्याव्यवहितप्राक्क्षणावच्छेदेन कार्याधिकरणवृत्तित्वरूपं तदा आधेयत्वस्याधेयभेदात् भेदो नत्वाधेयतावच्छेदकभेदादित्यङ्गीकारे नियतपूर्ववृत्तितावच्छेदकस्यालोकवृत्तित्वविशिष्टसंयोगत्वस्य संयोगत्वविशिष्टालोकवृत्तित्वस्य च भेदेऽपि न तत्प्रयुक्तभेदो नियतपूर्ववृत्तित्वस्याऽऽलोकसंयोगव्यक्तिभेदप्रयुक्तस्तु न त्वयापि निवारयितुं शक्यः आधेयतावच्छेदकभेदात् । तद्भेदेतु तादृशधर्मद्वयावच्छिन्नयोः आलोकसंयोगनिष्ठयोराधेयतयोर्भेदस्तवाप्यावश्यकः । अथ तादृशनियतपूर्ववृत्तितावच्छेदकधर्मवत्त्वं कारणत्वं तथापि दर्शितधर्मद्वयस्य नियतपूर्ववृत्तितावच्छेदकता आलोकसंयोगकारणतानङ्गीकारवादिनोऽप्यविशिष्टा । नह्यालोकसंयोगस्य नियतपूर्ववृत्तित्वं तदवच्छेदकत्वं वा दर्शितधर्मद्वयस्य व्युदसितुं कश्चित्प्रभवति । आलोकीयस्संयोगो नियतपूर्ववृत्तिः संयोग आलोकीयो नियतपूर्ववृत्तिरिति च प्रत्ययात् । एवं कार्याव्यवहितप्राक्क्षणावच्छेदेन कार्याधिकरणवृत्त्यभावप्रतियोगितानवच्छेदकत्वरूपं नियतपूर्ववृत्तितावच्छेदकत्वमपि दर्शितधर्मद्वये दुष्परिहारम् । किंच प्रत्यक्षे आलोकसंयोगो न कारणमित्युक्ते आलोकसंयोगभिन्नप्रत्यक्षनियतपूर्ववृत्ति नेत्येतावानर्थः प्रतीयेत तत्र चोक्तदोषः । मम त्वतिरिक्तायां कारणतायाः कारणता-

## मञ्जूषा.

वच्छेदकभेदात् भिन्नतया तथोक्तिः संगच्छते कारणतावच्छेदकतानां भेदप्रसङ्गाच्च । कारणतावच्छेदकता हि प्रतीतिकल्प्या प्रतीतिश्च कारणाविशेषणे कारणतावच्छेदकतां तद्विशेषणे च तदवच्छेदकतामवगाहमाना नानाविधा दृश्यते तत्र च कस्याः प्रमात्वं कस्याश्च भ्रमत्वमिति न विनिगन्तुं शक्यमतो नालोकसंयोगस्य कारणता युक्ता नत्वेवं तत्र संभवतीत्यवोचाम । नन्वेतत्तदा संभवति यद्यालोकवृत्तित्वसंयोगत्वयोरेकमवच्छेदकमन्यदवच्छेदकतावच्छेदकमित्युपगम्येत वयं तूभयोरपि कारणतावच्छेदकतामेवोपगच्छामः उभयोरपि धर्मिविशेषणतया भानसंभवादिति चेदुच्यते । किमालोकवृत्तित्वसंयोगत्वे च प्रत्येकपर्याप्ते कारणतावच्छेदकते द्वे अभ्युपगम्येयातामुतैका तदुभयपर्याप्ता । आद्ये कारणतावच्छेदकतापर्याप्त्यधिकरणधर्मवतः सत्त्वे कार्योत्पत्त्यवश्यंभावादन्धकारस्थघटेऽप्यालोकवृत्तित्ववतो द्रव्यत्वादेः पवनपरमाणुसंयोगस्य च सत्त्वात्प्रत्यक्षापत्तिः कारणतावच्छेदकतापर्याप्त्यधिकरणयावद्धर्माश्रयसत्ताया एव कार्योत्पत्तिव्याप्यतास्वीकारे चक्षुस्संयुक्तसमवायादेः कारणत्वानुपपत्तेः कारणतावच्छेदकीभूता यावन्तश्चक्षुस्संयोगास्तद्वत्समवायाप्रसिद्धेः प्रकृतेऽपि कारणतावच्छेदकीभूतानि यावन्त्यालोकवृत्तित्वानि तदाश्रयाप्रसिद्धेश्च । न द्वितीयः तदवच्छेदकसंबन्धानिरूपणात् । नहि तत्र समवायः स्वरूपं वाऽवच्छेदकीभवितुमर्हति न्यूनवृत्तित्वात् इदं हि तवाभिप्रेतं समवायस्वरूपोभयसंबन्धावच्छिन्नावच्छेदकतैका संयोगत्वे आलोकवृत्तित्वे च उभयत्र पर्याप्नोतीति । नचेदं संभवति उभयसंबन्धेन कस्याप्यवृत्तित्वात् कारणतावच्छेदकताघटकसंबन्धेनैव कारणतावच्छेदकतापर्याप्त्यधिकरणधर्माश्रयसत्त्वमेव हि कार्योत्पत्तिव्याप्यम् । नचात्र तादृशेन समवायेन स्वरूपेण वा तत्पर्याप्त्यधिकरणोभयवत्त्वं कस्यचिदस्ति कारणतावच्छेदकताघटकसंभावितसंबन्धेन कारणतावच्छेदकतापर्याप्त्यधिकरणैकदेशाश्रयसत्त्वस्यापि कार्यव्याप्यत्वे पवनपरमाणुसंयोगे सत्यपि प्रत्यक्षापत्तेः । कारणतावच्छेदकताश्रययावद्धर्मवत्कारणसत्त्वं तु नकुत्रापि यावतामालोकवृत्तित्वानां क्वचिदप्यसत्त्वात् । किञ्चालोकवृत्तित्वनिष्ठावच्छेदकतानिरूपितत्वसंबन्धावच्छिन्नालोकनिष्ठावच्छेदकताका न सा संयोगत्वे वर्तितुमर्हति संयोगत्वस्यालोकनिरूपितत्वाभावात् । संयोगत्वनिष्ठावच्छेदकतातु निरवच्छिन्ना नालोकवृत्तित्वे वर्तितुमर्हति आलोकवृत्तित्वनिष्ठावच्छेदकताया आलोकावच्छिन्नत्वात् । किञ्च यत्र कारणतावच्छेदकता किंचिद्धर्मावच्छिन्ना तत्र किं कारणतावच्छेदकतावच्छेदकधर्मविशिष्टं यत् कारणतावच्छेदकं तदाश्रयसत्त्वं कार्योत्पत्तिव्याप्यं आहोस्वित् कारणतावच्छेदकतावच्छेदकविशिष्टं यत् कारणतावच्छेदकतापर्याप्त्यधिकरणं तदाश्रयसत्त्वं आद्ये निरूपितत्वसंबन्धेनालोकविशिष्टं यद्वृत्तित्वरूपं कारणतावच्छेदकं तदाश्रयद्रव्यत्वादपि कार्यापत्तिः । द्वितीये कारणतावच्छेदकतापर्याप्त्यधिकरणस्य वृत्तित्वसंयोगत्वोभयस्य कारणतावच्छेदकतावच्छेदकीभूतो य आलोकः निरूपितत्वसंबन्धेन तद्विशिष्टत्वाभावादप्रसिद्धिः । अधिकमुत्तरत्र तत्रतत्र प्रसक्तस्थलेषूपपादयिष्यामः । तस्मात्कारणतावच्छेदककोटिप्रविष्टपदार्थानां यत्र भेदस्तत्रैकमवच्छेदकमन्यदवच्छेदकतावच्छेदकमित्येव स्वीकार्यं तत्र विनिगमनाविरहात् कारणतावच्छेदकतानां तदवच्छेदकतानांच नानात्वं दुर्वारम् । तेन कारणताया अपि भेदस्संपद्यते अवच्छेदकताभेदस्यावच्छेद्यभेदप्रयोजकत्वात् । तस्मादालोकसंयोगस्य कारणत्वे गौरवमिति ग्रन्थकृतामुक्तिरस्माकं संगच्छते ननु नियतपूर्ववृत्तित्वं कारणत्वमिति वादिनः नियतपूर्ववृत्तितावच्छेदकतायास्तदवच्छेदकतायाश्च दर्शितधर्मद्वये तत्प्रतीतिबलेनानिवार्यत्वात् । इदं च प्रदर्शनार्थं किमपि स्थलमस्माभिरिहोदाहृतं बहूनि त्वेवंजातीयकानि स्थलान्यूह्यानि अत्र कारणतावच्छेदककोटिप्रविष्टपदार्थानां विशेषणविशेष्यभावे विनिगमनाविरहप्रयुक्तकारणताबाहुल्यप्रतिपादकग्रन्थविरोधं समुच्चिनोति कारणतयोरुभयोर्वेति वाकारः । तथाच कारणतासु बह्वीषु विशेषणविशेष्यभावे विनिगमनाविरहे वा गुरुता कुत एव स्यादित्यर्थः । अनुपपत्त्यन्तरमुच्यते हेतुता किमिति नो गुरुणावच्छिद्यत इति । घटकारणतावच्छेदकं दण्डत्वं ननु वंशदळसमवेतद्रव्यत्वं गौरवादिति ग्रन्थकृद्भिराभिधीयते । नचेदं युज्यते वंशदळसमवेतद्रव्यं घटानियतपूर्ववृत्तीति प्रतीतिसिद्धनियतपूर्ववृत्तितावच्छेदकत्वरूपकारणतावच्छेदकत्वस्य

## मञ्जूषा.

तत्र बाधाभावात् । एवं कायतरुसंयोगं प्रति हस्ततरुसंयोगस्य समवायसंबन्धेन कारणत्वं नतु स्वाश्रयसमवेतत्वसंबन्धेनेत्याद्युक्तिरपि तेषां न युज्यते कार्याव्यवहितप्राक्क्षणावच्छेदेन कार्याधिकरणतरुनिरूपितायां हस्ततरुसंयोगनिष्ठाधेयतायां समवायस्येव तादृशकायानिरूपितायां तस्यां स्वाश्रयसमवेतत्वसंबन्धस्याप्यवच्छेदकत्वानपायात् ननु गुरुधर्मे गुरुसंबन्धे च कारणतावच्छेदकत्वव्यवहाराभावाद्वंशदळसमवेतद्रव्यत्वाभिन्ननियतपूर्ववृत्तितावच्छेदकधर्मवत्त्वमेव घटकारणतापदार्थः एवं संयोगनिष्ठस्वाश्रयसमवेतत्वसंबन्धावच्छिन्नपूर्ववृत्तिताभिन्ननियतपूर्ववृत्तितावच्छेदकधर्मवत्त्वमेव संयोगजसंयोगकारणतापदार्थ इत्युच्यते अतो न कोऽपि दोष इति चेदत्रोत्तरमुच्यते भजति न व्यपदेशमिति । किमितीत्यनुवर्तते वादस्थले ह्येषा रीतिः कथञ्चिदुपपद्येत न जल्पस्थले घटकारणताशरीरकोटौ दण्डत्वभिन्नत्वमेव लाघवान्निवेशयितुमुचितं नतु वंशदळसमवेतद्रव्यत्वभिन्नत्वं गौरवादिति तेन रूपेणैव कारणताव्यवहारोऽस्तु । अथवा उभयमपि न निवेशनीयमुभयरूपेणैव कारणताव्यवहारसंभवादिति जल्पकोऽभिदध्यात्तदा किं कर्तव्यं स्यात्तथाच गुरुधर्मो गुरुसंबन्धो यदि कारणतावच्छेदकत्वव्यवहारं भजेत तदा किन्नः प्रच्छिद्येत । कारणतातिरिक्तत्वपक्षे तु नायं दोषः प्रसज्येत अतिरिक्ता या कारणता तदवच्छेदकतायाः बहुपदार्थघटितयोर्धर्मसंबन्धयोः कल्पनापेक्षया लघुभूतयोरेव तयोः कल्पयितुमुचितत्वादिति । अनुपपत्त्यन्तरमुच्यते केन पीलुपरिमाणनिवृत्तेति । कारणत्वमन्यत्र पारिमाण्डल्यादिभ्य इति ह्युच्यते तत्र किं कारणत्वं नाम यत्पारिमाण्डल्यादिभ्यो व्यावृत्तं लक्षणं स्यात्पारिमाण्डल्यादिभिन्नत्वे सति कार्यनियतपूर्ववृत्तित्वमिति चेत्किमपराद्धं ते परमाणुरूपेण किंच पारिमाण्डल्यादिभिन्नानां पारिमाण्डल्यादिभिन्नत्वे सति नियतपूर्ववृत्तित्वं लक्षणमिति तावन्न युक्तं नियतपूर्ववृत्तित्वांशवैयर्थ्यात् । नापि पारिमाण्डल्यादिभिन्नत्वमात्रं तथा सति पारिमाण्डल्यादिभिन्नलक्षणत्वेन कथितस्य कारणत्वस्य समवायिकारणतात्वादिना विभागानुपपत्तेः । नहि पारिमाण्डल्यादिभेदस्य त्रैविध्यमस्ति । अथ केवलं कार्यनियतपूर्ववृत्तित्वमात्रं लक्षणमिति चेत्तत् कथं पारिमाण्डल्यादिभ्यो व्यावर्तेत अतिरिक्तातु कारणता पारिमाण्डल्यादौ न कल्प्यते प्रयोजनाभावादिति सुवचम् । एवमन्यान्यप्येवंजातीयकानि बहूनि दूषणान्यूह्यानि ग्रन्थगौरवभयान्न लिख्यन्ते । महादेवस्तु कारणत्वस्यानन्यथासिद्धनियतपूर्ववृत्तितावच्छेदकधर्मत्वे प्रतिबन्धकाभावस्य तत्तद्व्यक्तित्वेन हेतुत्वापत्तिः यथा प्रवृत्तिं प्रति कृतिसाध्यताज्ञानस्य हेतुत्वं कृत्यसाध्यताज्ञानाभावस्य वेति विचारे कारणतावच्छेदकलाघवात् कृतिसाध्यताज्ञानस्यैव हेतुत्वमिति तान्त्रिकैस्सिद्धान्तितं तच्च विरुध्यते कृतिसाध्यताज्ञानत्वापेक्षया कृत्यसाध्यताज्ञानाभावत्वस्य गुरुत्वेऽपि तदभावनिष्ठतद्व्यक्तित्वस्य लघुत्वेन कारणतावच्छेदकत्वसंभवात् गुरुभिन्नो नियतपूर्ववृत्तितावच्छेदको धर्म एव हि कारणतावच्छेदको नाम कृतिसाध्यताज्ञाननिष्ठं तद्व्यक्तित्वं च न किमपि नियतपूर्ववृत्तितावच्छेदकं कृतिसाध्यताज्ञानत्वं कृत्यसाध्यताज्ञानाभावत्वं च गुरु ततश्च परिशेषात् कृत्यसाध्यताज्ञानाभावस्य तद्व्यक्तित्वेन हेतुत्वापत्तिः नचैतदिष्यते तान्त्रिकैः कारणतातिरिक्तत्वपक्षे तादृशी कारणता स्वरसतो यद्धर्मविशिष्टे प्रतीयते स धर्मः कारणतावच्छेदकतया स्वीकार्यः लोका हि स्वरसत एवं प्रतियन्ति मणौ सति दाहो न जायते अतो मण्यभावो दाहकारणं सति बाधज्ञानेऽनुमितिर्न जायते अतो बाधज्ञानाभावोऽनुमितिकारणमिति नतु तद्व्यक्तिर्दाहकारणं तद्व्यक्तिरनुमितिकारणमिति स्वारसिकी प्रतीतिरतो न क्वचिदपि प्रतिबन्धकाभावस्य तद्व्यक्तित्वेन कारणत्वं तेनेहापि कृत्यसाध्यताज्ञाने प्रवृत्तिर्न जायते अतः कृत्यसाध्यताज्ञानाभावः प्रवृत्तिहेतुरित्येव स्वरसतो लोकाः प्रतीयुः नतु तद्व्यक्तिः प्रवृत्तिकारणमिति अतो न तद्व्यक्तित्वस्य तथात्वप्रसक्तिः । ननु स्यादेवं यदि वयं गुरुभिन्ननियतपूर्ववृत्तितावच्छेदकधर्मवत्त्वं कारणत्वमित्याचक्षीमहि नत्वेवमाचक्ष्महे सामान्यतो गुरुत्वस्य दुर्वचत्वात् किन्तु यत्र यत्र प्रामाणिकानां न कारणतावच्छे-

## मञ्जूषा.

दकत्वव्यवहार: तत्तद्भेदकूटविशिष्टनियतपूर्ववृत्तितावच्छेदकधर्मवत्त्वमेव कारणत्वमिति चेत्तर्हि कारणताया असर्वज्ञदुर्विज्ञेयत्वापत्तिः । नच तत्तद्भेदकूटवत्त्वसंबन्धेन कार्यविशिष्टो यो नियतपूर्ववृत्तितावच्छेदकधर्मः तद्वत्त्वं कारणत्वं तत्र भेदकूटस्य संबन्धकोटिप्रवेशान्न दुर्विज्ञेयता संबन्धज्ञानस्य विशिष्टबुद्धावनपेक्षितत्वादिति वाच्यं तत्तद्भेदकूटवत्त्वस्य कार्यप्रतियोगिकत्वाभावेन तत्संबन्धत्वासंभवात् । ननु स्वनिरूपितकारणतावच्छेदकत्वव्यवहारशून्यनिष्ठतत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदकूटवत्त्वमेव संबन्धोऽस्तु तस्य कार्यप्रतियोगिकत्वादिति चेत् किं स्वनिरूपितकारणतावच्छेदकत्वव्यवहारशून्यत्वम् । न तावत्स्वनिरूपितनियतपूर्ववृत्तितावच्छेदकत्वव्यवहारशून्यत्वं तस्यान्यथासिद्धयवच्छेदकधर्मे बाधात् स्ववाचकपदसमभिव्याहृतकारणपदसमभिव्याहृतपदप्रतिपाद्यतानवच्छेदकत्वं तदित्यपि न सति कण्ठताल्वाद्यभिघाते तद्व्यक्तिघटकारणमित्यादिशब्दप्रयोगस्य दुर्निरोधत्वात् । नच प्रामाणिकतादृशपदप्रतिपाद्यतानवच्छेदकत्वं विवक्षितमिति वाच्यं तत्र कारणपदस्य पूर्ववृत्तिमात्रपरत्वे प्रामाणिकत्वानपायादेवमन्यदप्यूह्यम् । नच तत्तद्व्यक्तित्वावच्छिन्नभेदकूटवत्त्वमेव संबन्धस्तस्य कार्यप्रतियोगिकत्वलाभाय स्वविषयकज्ञानविषयत्वादिकं किंचिद्विशेषणं तद्व्यक्तित्वे भेदे वा निवेश्यतामिति वाच्यं तथापि तस्य विशिष्टप्रतीतिनियामकत्वाभावेन संबन्धत्वासंभवादिति कारणत्वमिति कारणत्वमतिरिक्तं वाच्यमिति नव्यमते युक्तिमाचष्ट । नन्वियता प्रबन्धेनातिरिक्तकारणतानङ्गीकारे ग्रन्थकृदुक्तयो विरुध्यन्त इत्युक्तं विरुध्यन्तां नैतावतार्थसिद्धिरिति चेन्न दण्डो घटकारणमित्यादिपामरप्रत्यक्षेणैव तत्सिद्धेः । नहि तत्रानन्यथासिद्धनियतपूर्ववृत्तित्वस्य विषयता संभवति तस्य पूर्वोक्तरीत्या दुर्ग्रहत्वात् । अत्र महादेवः कारणत्वस्य अतिरिक्तत्वे दण्डादौ सर्वदा तत्प्रत्यक्षापत्तिः । नचानन्यथासिद्धत्वे सतीत्यादिधर्मस्तद्व्यञ्जक इति वाच्यम् । तादृशधर्मज्ञानस्यावश्यकत्वे तस्यैव कारणताग्रहरूपत्वौचित्यादिति नव्यमतं प्रत्याचख्यौ तन्न तथा सति गोत्वादिजातेरप्युच्छेदप्रसङ्गात् । नहि सास्नालाङ्गूलककुत्खुरविषाणाद्यज्ञानदशायामयं गौरिति गोत्वं प्रतीयते अतोऽवयवसंस्थानविशेषणज्ञानस्यावश्यकत्वे तस्यैव गोत्वज्ञानरूपतौचित्यात् गोत्वं न सिद्धयेत् यदिच सास्नालाङ्गूलाद्येकैकावयवसन्निवेशविशेषोपलब्धावप्ययं गौरित्याद्यनुगतप्रतीत्या न तस्यां प्रतीतौ कदाचित् सास्नायाः कदाचिल्लाङ्गूलस्येति अननुगतानां विषयत्वसंभव इत्यनुगताया गोत्वजातेरेव तद्विषयत्वमवश्यं वाच्यम् । सास्नादेस्तु तृणारणिन्यायेन गोत्वजातिव्यञ्जकत्वमेवेष्यत इत्युच्यते तदा दण्डत्वादिभिन्नत्वविशिष्टघटनियतपूर्ववृत्तित्वतन्तुत्वादिभिन्नत्वविशिष्टघटनियतपूर्ववृत्तित्वादिनानाधर्मेष्वेकैकपरिज्ञानेऽपि घटकारणं पटकारणमित्येवंरूपायाः घटादिनिरूपितत्वप्रकारेण कारणाकारानुगतप्रतीतेरप्यानुभाविकतया न तत्र दण्डत्वभिन्नत्वाद्यननुगतधर्माणां कारणत्वांशेनोल्लेखो युक्तः किन्तु कारणतात्वरूपधर्मान्तरानुगतातिरिक्तरूपकारणतायाः घटादिनिरूपितत्वप्रकारेण ज्ञानं प्रति दण्डत्वादिभिन्नत्वविशिष्टघटनियतपूर्ववृत्तित्वादिज्ञानस्य हेतुतैव युक्ता । तथा सति घटकारणमित्यादिज्ञानानां कारणत्वांशेऽनुगतत्वनिर्वाहात् । वस्तुतस्तु इदं दण्डत्वादिभिन्नं घटनियतपूर्ववृत्तीति ज्ञानमात्रेण इदं घटकारणमिति न प्रतीयते व्यवह्रियते वा नियतपूर्ववृत्तित्वेऽपि दण्डत्वादिकं यथा न कारणं तथेदमपि स्यादिति संभावनायाः अनुभवसिद्धत्वात् अतो दण्डत्वादिभिन्नत्वे सति नियतपूर्ववृत्तित्वस्य न घटकारणताग्रहाविषयत्वं व्यञ्जकत्वं वा किन्त्वन्वयव्यतिरेकयोरेव कारणताव्यञ्जकत्वं स्वीक्रियते अन्वयव्यतिरेकिता च स्वस्वव्यापारेतरयावत्कारणसमवधानकालीनस्वसत्ताव्यापककार्यसत्ताकत्वे सति तादृशस्वाभावव्यापककार्याभावकत्वं दण्डस्य पृथिवीत्वेन स्थूलत्वेन वा कारणताग्रहवारणाय सत्यन्तं तत्र चक्राद्यभावकाले दण्डत्वविशिष्टसत्त्वेऽपि घटानुत्पादात् दण्डत्वविशिष्टे घटकारणताग्रहोपपत्तये कालीनान्तं स्वसत्ताविशेषणम् । पृथिवीत्वस्थूलत्वादिविशिष्टेतरचक्रभ्रमणादिसमवधानदशायां तद्विशिष्टसत्त्वे कार्योत्पादात् स्वव्यापारेतरेति । अन्वयदले प्रथमस्वत्वनिवेशनं स्पष्टार्थमिति मन्तव्यम् । घटत्वावच्छिन्नं प्रति रासभस्य कारण-

## मञ्जूषा.

ताग्रहवारणाय द्वितीयदळम् । तत्र दण्डत्वदण्डरूपादिवारणाय कालीनान्तं स्वाभावविशेषणं । तादृशदण्डादिसमवधानकाले दण्डत्वाद्यभावसंभवात्तद्वारणाय दण्डेतरचक्रभ्रमणादिकाले दण्डाभावासंभवात्स्वव्यापारेति । दण्डव्यापारचक्रभ्रमणेतरदण्डसमवधानकाले दण्डाभावासंभवात् स्वेति । येषां पुनस्साक्षादेव कारणता ननु किञ्चिद्व्यापारेण तत्र स्वव्यापाराघटितावेवान्वयव्यतिरेकौ कारणताग्राहकौ वाच्यौ तत्र तद्घटनायां प्रयोजनाभावात् । अथात्र दण्डत्वदण्डरूपादीनां कारणत्वाभावेऽनिश्चिते सति दण्डे अन्वयव्यतिरेकौ दुर्ग्रहौ दण्डत्वादेः कारणत्वसंभावनायां दण्डतद्व्यापारेतरयावत्कारणसमवधानकाले दण्डाभावग्रहासंभवात् अगृहीतयोश्च तयोः न दण्डे घटकारणतानिश्चयः अनिश्चितायां च दण्डे घटकारणतायां दण्डत्वादावप्यन्वयव्यतिरेकग्रहसंभवः । तत्रहि दण्डत्वतद्व्यापारेतरदण्डादिकारणसत्त्वे दण्डत्वाद्यभावासंभवाद्धि नान्वयव्यतिरेकग्रह इति वक्तव्यमसति च दण्डकारणताग्रहे चक्रादिकमेव तादृशं कारणमिति तत्समवधानदशायां दण्डत्वाभावस्य सुग्रहत्वात् । नच चक्रभ्रमणस्यापि स्वस्वव्यापारेतरतया तत्सत्त्वे कथं दण्डत्वाभाव इति वाच्यं दण्डस्येव दण्डत्वादेरपि चक्रभ्रमणादिव्यापारेणैव कारणतायाश्शङ्कनीयत्वादेवं चान्योन्याश्रय इति चेदुच्यते । तद्धर्मावच्छिन्नविशेष्यककारणताग्रहं प्रति तद्धर्मावच्छिन्नसमव्यापकतावच्छेदकधर्मान्तरावच्छिन्नावधिकगौरवज्ञानस्य मणिमन्त्रादिन्यायेन तदभावव्याप्यवत्ताज्ञानमुद्रया वा प्रतिबन्धकत्वस्वीकारेण तादृशदण्डत्वावच्छिन्नावधिकगौरवज्ञानेन दण्डत्वत्वदण्डरूपाद्यवच्छिन्नधर्मिककारणताज्ञाने निरुद्धे पश्चाद्दण्डादावन्वयव्यतिरेकज्ञानेन कारणताग्रहो निर्बाध एव गौरवं च शरीरकृतं संबन्धकृतं च बोध्यम् । अयं च प्रतिबध्यप्रतिबन्धकभावः कारणतातिरिक्तत्ववादिनामस्माकमेव युज्यते नतु नियतपूर्ववृत्तित्वं कारणत्वमिति वादिनां गुरुधर्मावच्छेदेनापि नियतपूर्ववृत्तित्वग्रहादित्युक्तप्रायम् । नचैतादृशान्वयव्यतिरेकवत्त्वमेव कारणत्वमस्त्विति शङ्कनीयम् । एतस्य कारणत्वघटितत्वेनात्माश्रयापत्तेः कारणत्वस्थाने नियतपूर्ववृत्तित्वनिवेशे च दण्डत्वादेरपि नियतपूर्ववृत्तितया तत्समवधानकाले दण्डाभावासंभवेन दण्डादेः कारणत्वानुपपत्तेः । नच तत्रापि कारणताघटितोक्तान्वयव्यतिरेकज्ञानस्य कथं कारणताग्राहकत्वमिति वाच्यं पृथिवीसमवेतद्रव्यत्वादेः पृथिवीत्वरूपव्यक्त्यन्तरनिष्ठकारणताघटितयोस्तयोर्व्यक्त्यन्तरे कारणताव्यञ्जकत्वे बाधकाभावात् । एवंच कारणताग्राहकान्वयव्यतिरेकसहचारविघटकतया क्रमादन्वयव्यतिरेकव्यभिचारयोः कारणताग्रहविरोधित्वव्यवहारः । अथ यस्य पुंसः एतावन्तं कालं न कुत्रापि घटकारणताग्रहः तत्र प्रथमं कस्मिंश्चिद्घटे कारणतां कथमसौ निश्चिनुयात् तत्र निरुक्तान्वयव्यतिरेकयोरग्रहादिति चेदुच्यते । न वयं कारणताग्रहमात्रे निरुक्तान्वयव्यतिरेकज्ञानस्य कारणतां ब्रूमहे किन्तु लौकिके उपनीतभानात्मके च प्रत्यक्षे क्वचिदनुमितौ च तत्र च प्रथमं दण्डादौ घटकारणताग्रहो बहुधा संभवति । यथा कस्यचिद्दण्डो घटकारणमित्याप्तवाक्यात्कस्यचिदाप्तवाक्याच्चक्रादौ कारणताग्रहे पश्चादन्वयव्यतिरेकाभ्यां दण्डेऽपि घटकारणतानिश्चयः । कश्चित्तु घटोत्पत्तेः प्राक् नियमेन दण्डचक्रादीनुपलभमानः तदभावे घटानुत्पादंच पश्यन्नियतपूर्ववृत्तिषु दण्डादिषु दण्डत्वादिषु च अविशेषेण कारणतां संभाव्य दण्डादिनियतानां दण्डत्वादीनां कारणतां गौरवेण परमाणुभिन्नविशिष्टेषु किञ्चिदेव कारणमुत सर्वाणि वेति सन्दिहानः सर्वेषामेव स्वस्वेतरेषु कारणत्वसंभावनाविषयेषु सत्सु स्वसत्त्वे कार्यसत्त्वं स्वाभावे कार्याभाव इत्यन्वयव्यतिरेकाववधार्य सर्वेषामेव कारणतां निश्चिनोतीति किमनुपपन्नं तस्माद्युक्तमतिरिक्ता कारणतेति । एवं कारणतानुगमकं काराणाकारानुगतप्रतीतिसाक्षिकं कारणतात्वमप्यनुगतमेव । एवमिह दण्डसत्त्वात् घटसत्त्वमिह दण्डाभावात् घटाभाव इति प्रतीत्या कारणान्वयव्यतिरेकयोः कार्यान्वयव्यतिरेकनिरूपितं स्वरूपसंबन्धरूपं प्रयोजकत्वमतिरिक्तं वाऽवश्यं स्वीकार्यम् । केचित्तु तद्धर्मावच्छिन्नान्वयव्यतिरेकप्रयोजकान्वयव्यतिरेकवत्त्वमेव कारणत्वमस्तु स्वस्वव्यापारेतरेत्यादिपूर्वोक्तान्वयव्यतिरेकज्ञानस्य कारणतावच्छेदकत्वाभिमतधर्मावच्छिन्नान्वयव्यतिरेकयोः कार्यतावच्छेदकत्वाभिमतधर्मावच्छिन्नान्वयव्यतिरेकनिरूपितप्रयोजकता-

## मञ्जूषा.

ज्ञानजनकत्वादेव कारणताग्राहकत्वव्यवहारः । एवं पूर्वोक्तगौरवज्ञानस्यापि तादृशप्रयोजकताज्ञान एव प्रतिबन्धकत्वम् । एवमत्र पक्षेऽपि न पूर्वोक्तग्रन्थकृदुक्त्यनुपपत्तिगन्धः । तद्यथा समवायेन नीलत्वावच्छिन्नानुत्पादे पीताभावादीनां पीतादिरूपाणां षण्णां तादृशाभावत्वादिरूपेण पीतत्वादिरूपेण वा प्रयोजकताषट्कस्वीकारापेक्षया नीलातिरिक्तरूपाभावाभावस्य नीलातिरिक्तरूपात्मकस्य तादृशाभावत्वेन नीलातिरिक्तरूपत्वेन वा एकमेव प्रयोजकत्वं स्वीकर्तुमुचितं लाघवादित्येकमेव कारणत्वमित्युक्तिर्युज्यत एव । एवमन्यत्राप्यूह्यम् । कारणतावच्छेदकाभावादीनां तु नेदृशं प्रयोजकत्वमभ्युपेयतेऽतो न तत्रातिव्याप्तिरिति वदन्ति तन्मन्दं कारणतावच्छेदकाभावादीनामपि कार्यानुत्पादप्रयोजकतायास्तान्त्रिकसिद्धत्वायुक्तिसिद्धत्वाच्च । प्रतियन्ति हि लोकाः तन्तौ कपालत्वाभावान्न तत्र पट इति । एवं यत्र चक्रे वस्त्वन्तरं संयोज्य घटमुत्पादयितुं प्रवृत्तो न शक्नोति पश्चात्तत्रेत्थं मन्यते एतस्य दण्डत्वाभावान्नात्र मृत्पिण्डे घटोत्पत्तिरिति । किंच प्रागभाववृत्तिप्रतियोगिताभिन्नप्रतियोगितासंबन्धेन ध्वंसत्वावच्छिन्नं प्रति तादात्म्येन सतः कारणत्वं प्रागभाववृत्तिप्रतियोगितासंबन्धेन ध्वंसत्वावच्छिन्नं प्रति प्रागभावस्येति कारणताद्वयं परिकल्प्य सामान्यादौ प्रतियोगितासंबन्धावच्छिन्नध्वंसत्वावच्छिन्नाभावे सद्भेदप्रागभावभेदयोः प्रयोजकता स्वीक्रियते । तत्र भवन्मते सामान्यतः प्रतियोगितासंबन्धेन ध्वंसत्वावच्छिन्नं प्रति सतः प्रागभावस्य च कारणताव्यवहारः स्यात् । एवं गन्धत्वावच्छिन्नाभावे गन्धत्वव्याप्यधर्मावच्छिन्नजनकपाकावयवसुरभ्यादिगन्धयोरभावद्वयस्यैव प्रयोजकत्वमिति नीलकण्ठो दर्शयिष्यति पृथिवीग्रन्थे तद्रीत्या गन्धत्वावच्छिन्नं प्रति पाकस्यावयवसुरभ्यादेश्च कारणताव्यवहारप्रसङ्गः । नच सद्भेदप्रागभावभेदयोः प्रतियोगितासामान्येन ध्वंसत्वावच्छिन्नाभावे पाकावयवसुरभ्याद्यभावयोर्गन्धत्वावच्छिन्नाभावे च प्रयोजकत्वेऽपि सत्तादात्म्य–प्रागभावतादात्म्ययोः न प्रतियोगितासामान्येन ध्वंसत्वावच्छिन्नसत्ताप्रयोजकत्वं नवा पाकावयवसुरभ्यादिसत्तयोः गन्धत्वावच्छिन्नसत्ताप्रयोजकत्वमिति वाच्यं सत्प्रागभावतादात्म्ययोः प्रतियोगितासामान्येन ध्वंसत्वावच्छिन्नसत्ताप्रयोजकतां पाकावयवगन्धसत्तयोः गन्धत्वावच्छिन्नसत्ताप्रयोजकतां चान्तरेण तत्तदभावानां कार्याभावप्रयोजकत्वासंभवात् । किंच गन्धत्वावच्छिन्नं प्रति पृथिवीत्वेन कारणत्वानङ्गीकारे गन्धत्वावच्छिन्नस्याकस्मिकत्वापत्तिरिति मुक्तावलीग्रन्थं दूषयता नीलकण्ठेन गन्धत्वावच्छिन्नसत्तायां पाकावयवगन्धसत्तयोः प्रयोजकत्वमेवाविष्कृतम् । तदभावस्य तदभावद्वयप्रयोजकत्वं तु तात्पर्यसिद्धमित्येतच्च प्रदर्शनार्थमस्माभिर्यत्किंचित्स्थलमुदाहृतं बहूनि त्वेवंविधानि स्थलान्यूह्यानि । यदि त्वभावनिष्ठप्रयोजकतायां व्यासज्यवृत्तिधर्मानवच्छिन्नत्वनिवेशान्नायं दोषः सद्भेदप्रागभावभेदोभयादेरुभयत्वादिनैव प्रयोजकत्वादेवं स्वोत्तरक्षणोत्पन्नपदार्थातिरिक्तपदार्थाभावनिष्ठकार्याभावप्रयोजकत्वानधीनत्वमपि तद्विशेषणमतः कारणतावच्छेदकाभावस्य कार्याभावप्रयोजकत्वेऽपि न क्षतिः । दण्डत्वाभावस्य घटाभावप्रयोजकत्वं हि दण्डाभावस्य घटाभावप्रयोजकत्वाधीनमतो न तत्रातिव्याप्तिः । अधीनत्वं च स्वरूपसंबन्धविशेषः दण्डाभावनिष्ठघटाभावप्रयोजकतायाः चक्रभ्रमणाभावनिष्ठघटाभावप्रयोजकत्वाधीनत्वात् दण्डादावव्याप्तिवारणाय किंचिदभावनिष्ठेत्यनुक्त्वा स्वोत्तरक्षणोत्पन्नपदार्थातिरिक्तपदार्थाभावनिष्ठेत्युक्तम् । स्वोत्तरत्वं च स्वसंबन्धाधिकरणक्षणध्वंसाधिकरणत्वमत आत्मादेरपि स्वोत्तरत्वनिर्वाहः । एवंच स्वोत्तरक्षणोत्पन्नपदार्थातिरिक्तपदार्थाभावनिष्ठकार्याभावप्रयोजकत्वानधीनं व्यासज्यवृत्तिधर्मानवच्छिन्नं यत्कार्याभावप्रयोजकत्वं तदाश्रयीभूताभावप्रतियोगित्वमिति पर्यवसन्नम् अन्वयदलं तु नात्र निवेशनीयं प्रयोजनाभावादित्यदिक्सुधीभिरन्विष्यते तदाऽस्तु तदेव कारणत्वम् वयंहि अतिरिक्तामेव कारणतामाचक्ष्महे यूयं त्वतिरिक्तप्रयोजकताघटितामित्येतावानेव विशेषः नियतपूर्ववृत्तित्वं न कारणत्वमित्यत्रैवास्माकमभिनिवेशः परन्तु नियतपूर्ववृत्तित्वविशेषितं उक्तकारणत्वं फलोपधायकत्वमिति शब्द्यते । तस्मादतिरिक्ताया अतिरिक्तप्रयोजकताघटिताया वा कारणतायाः परिचयायैव मूलेऽन्यथासिद्धिशून्यस्येत्याद्युक्तिप्रपञ्च इत्यलं पल्लवकल्पानल्पजल्पनेन ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥

**समवायिकारणत्वं द्रव्यस्यैवेति विज्ञेयम् ।**
**गुणकर्ममात्रवृत्ति ज्ञेयमथाप्यसमवायिहेतुत्वम् ॥ २३ ॥**

**समवायीति** ॥ स्पष्टम् ॥ **गुणेति** ॥ असमवायिकारणत्वं गुणकर्मभिन्नानां वैधर्म्यं न तु गुणकर्मणोः साधर्म्यमित्यत्र तात्पर्यम् । अथवाऽसमवायिकारणवृत्ति-सत्ताभिन्नजातिमत्त्वं तदर्थस्तेन ज्ञानादीनामसमवायिकारणत्वविरहेऽपि नाव्याप्तिः ॥ २३ ॥

## प्रभा.

गुणकर्ममात्रवृत्तीति मूलेन लब्धासमवायिकारणत्वरूपगुणकर्मसाधर्म्यं पारिमाण्डल्यादावव्याप्त-मिति विचिन्त्य वैधर्म्यपरतया मूलं व्याकरोति ॥ **असमवायिकारणत्वमिति** ॥ संभवति साधर्म्यपरत्वे वैधर्म्यपरत्ववर्णनमनुचितं प्रकरणविरुद्धं चेत्याशयेनाह ॥ **अथवेति** ॥ द्रव्यत्वजाति-मादाय द्रव्येऽतिव्याप्तिवारणाय वृत्त्यन्तं सत्ताजातिमादाय तत्रैवातिव्याप्तिवारणाय सत्ताभिन्नेति । वृत्तित्वं जातिमत्त्वं च समवायेन बोध्यं नातः कालिकसंबन्धमादाय दोषः । समवायेन धर्मवत्त्वलाभायैव जातिपदम् ॥ २३ ॥

## मञ्जूषा.

**गुणकर्मभिन्नानां वैधर्म्यमिति** ॥ अयमाशयः । गुणकर्ममात्रवृत्तीति मूलं न गुणकर्म-णोस्साधर्म्यप्रतिपादनाय प्रवृत्तं तथाहि सति समवायिकारणत्वं द्रव्यस्यैवेति मूलस्यापि द्रव्यसाधर्म्यप्रति-पादनपरताया वक्तव्यतया संदर्भविरोधापत्तेः द्रव्यसाधर्म्यं ह्यग्रे वक्ष्यते द्रव्यादीनां नवानां त्वित्यादि एषा ह्यत्र रीतिः एकस्य यत्र बहूनि लक्षणानि वाच्यतयाऽभिप्रेतानि तत्र तानि सर्वाण्येकत्रैवोच्यन्ते नत्वन्यत्रेति । अतः पूर्वं त्रिविधत्वेन दर्शितायाः कारणताया विषयव्यवस्थापनपर एव समवायि-कारणत्वं द्रव्यस्येत्यादिश्लोकः । नचैवं सति निमित्तकारणताया आश्रयप्रतिपादनाभावान्न्यूनतेति मन्तव्यं अर्थतो लाभात् । तत्कथमिति चेदुच्यते समवायिकारणत्वं द्रव्यस्यैव असमवायिकारणत्वं गुणकर्मणोरेवेति समवाय्यसमवायिकारणत्वयोराश्रयनियमे कृते निमित्तकारणताया आश्रयनियमो ना-स्तीति स्वरसतो लभ्यते तेन निमित्तकारणत्वं सर्वत्रैवास्तीति लब्धमेव । किन्तु यदि सम-वाय्यसमवायिकारणत्वयोराश्रयमात्रं प्रतिपाद्य इतरप्रतिषेधो न क्रियेत तदा नायमर्थो लभ्यते विपरीतं च प्राप्नोति । तद्यथा समवायिकारणत्वं द्रव्यवृत्ति असमवायिकारणत्वं गुणकर्मवृत्तीत्येतावत्युक्ते शिष्य एवं जानीयात् समवाय्यसमवायिकारणत्वे हि भिन्नाश्रये उक्ते आभ्यां भिन्नाश्रया निमित्तकारणता स्यादिति । नत्वेवं तयोराश्रयनियमने स्यात् तथाहि सत्येवं जानीयात् समवायिकारणता द्रव्य-स्यैवेति नियमनं कृतं असमवायिकारणतातु गुणकर्मणोरेवेति च निमित्तकारणतायाः स्वाश्रयनियम-

## दिनकरीयम्.

मूले गुणकर्ममात्रवृत्त्यसमवायिकारणत्वमित्युक्तं तच्चायुक्तम् । आत्मविशेषगुणेष्वव्याप्तेरतो वै-धर्म्यपरतया मूलं व्याचष्टे ॥ **असमवायिकारणत्वमिति** ॥ साधर्म्यप्रकरणे वैधर्म्यकथनम-युक्तमित्याशयादाह ॥ **अथवेति** ॥ सत्ताभिन्नद्रव्यत्वरूपजातिमति द्रव्येऽतिव्याप्तिवारणाय वृत्त्य-न्तम् । तत्रैव सत्ताजातिमादायातिव्याप्तिवारणाय सत्ताभिन्नेति । तत्रैव द्रव्यगुणान्यतरत्वरूपधर्म-मादायातिव्याप्तिवारणाय जातीति । वृत्तित्वं जातिमत्त्वं च समवायेन विवक्षितं तेन न गु-णादौ द्रव्यत्वस्य कालिकेन वृत्तित्वात् द्रव्यस्य च कालिकेन गुणत्वादिमत्त्वात् द्रव्ये नातिव्याप्तिः ॥ २३ ॥

## रामरुद्रीयम्.

**द्रव्ये नातिव्याप्तिरिति** ॥ तथाच जातिपदं वृत्तित्ववृत्तिमत्त्वयोः समवायेन लाभायैव अतोऽन्यतरत्वस्यातथात्वेऽपि न तद्वैयर्थ्यमिति भावः ॥ २३ ॥

अन्यत्र नित्यद्रव्येभ्य आश्रितत्वमिहोच्यते ।
क्षित्यादीनां नवानां तु द्रव्यत्वं गुणयोगिता ॥ २४ ॥

**अन्यत्रेति** ॥ नित्यद्रव्याणि परमाण्वाकाशादीनि विहायाश्रितत्वं साधर्म्यमित्यर्थः । आश्रितत्वं तु समवायादिसम्बन्धेन वृत्तिमत्त्वं विशेषणतया नित्यानामपि कालादौ

## प्रभा.

नित्यद्रव्याणि परमाण्वाकाशादीनि विहायेत्यनेन अनित्यद्रव्यत्वं लक्ष्यतावच्छेदकमित्यर्थो लभ्यते तच्च परमाणुपरिमाणगतं यदुत्कर्षरूपं वैजात्यं परममहत्त्वत्वं च एतदन्यतरावच्छिन्नसमवायसंबन्धावच्छिन्नावच्छेदकताकप्रतियोगिताकभेदवत्त्वरूपमपकर्षानाश्रयत्वविशिष्टपरिमाणत्वावच्छिन्नसमवायसंबन्धावच्छिन्नावच्छेदकताकप्रतियोगिताकभेदवत्त्वरूपं वा बोध्यम् । अतो न लक्षणतावच्छेदकाननुगमः ॥ **आश्रितत्वं च समवायादिसंबन्धेनेति** ॥ समवायसंबन्धावच्छिन्नवृत्तित्वस्वरूपसंबन्धावच्छिन्नवृ-

## मञ्जूषा.

त्तं न कृतं तेन सा सर्वत्रैव स्यादिति । अतश्चात्राश्रयान्तरप्रतिषेध आवश्यकः तदिदमभिप्रेत्योचितानसमवायिकारणत्वं गुणकर्मभिन्नानां वैधर्म्यमिति । नन्वावश्यकेऽपि असमवायिकारणताया गुणकर्मभिन्नवैधर्म्यत्वे संभवतोऽर्थस्य परित्यागानौचित्यात् असमवायिकारणत्वं गुणकर्मणोस्साधर्म्यमित्यत्रापि तात्पर्यमस्त्वित्यत आह ॥ **नन्विति** ॥ **तेनेति** ॥ तत्र तात्पर्यकल्पनेनेत्यर्थः ॥ **ज्ञानादीनामिति** ॥ यद्यपि समवायसंबन्धावच्छिन्नकार्यतानिरूपितसमवायस्वाश्रयसमवेतत्वान्यतरसंबन्धावच्छिन्नकारणत्वमेव ह्यसमवायिकारणत्वं तत्रासत्त्वं जनकं द्वितीयामिति मूलतो लब्धं तच्चात्मविशेषगुणभिन्नत्वेन मुक्तावलीप्रतिपादितेन प्रागस्मदुपदर्शितविशेषणेन वा विशेषितमेव सत् ज्ञानादिभ्यो व्यावर्तेत नत्वन्यथा समवायेनेच्छादौ समवायेन ज्ञानादीनां कारणत्वात् सुखदुःखयोरपि पुत्रादिस्मृतौ उद्बोधकविधया समवायघटितसामानाधिकरण्येन कारणत्वात्तथाच तदविशेषितमसमवायिकारणत्वं न ज्ञानादावव्याप्तं तथापि निष्कृष्टस्यैवासमवायिकारणत्वस्य आश्रयव्यवस्थाप्रदर्शनायैतद्ग्रन्थस्य प्रवृत्ततया तस्यैव गुणकर्मसाधर्म्यत्वं न तात्पर्यविषय इति प्रतिपिपादयिषुर्विश्वनाथस्तस्य ज्ञानादावव्याप्तिं प्रतिपादयन्नापराध्नोति । यदि तु तद्विशेषणाघटितमसमवायिकारणत्वं तयोः साधर्म्यमस्त्विति शङ्क्येत तदोद्बोधकानां तत्तद्व्यक्तित्वेनैव कारणतया अनुत्पादितपुत्रादिस्मृतिकयोस्सुखदुःखयोः परत्वापरत्वयोः द्विपृथक्त्वादावजनितपरिमाणासु द्वित्वादिसंख्यासु अणुपरिमाणे चाव्याप्तिर्बोध्या । यदि गुणकर्मणोः किमपि साधर्म्यं वक्तव्यमित्यभिनिवेशः तदा त्वाह ॥ **अथवेति** ॥ **असमवायिकारणवृत्तीति** ॥ अत्र निष्कृष्टासमवायिकारणत्वं न निविष्टं प्रयोजनाभावात् किन्तु यथाश्रुतमेव । तत्रापि लक्षणद्वये तात्पर्यं तच्च समवायसंबन्धावच्छिन्नकारणताघटितमेकं लक्षणं स्वाश्रयसमवेतत्वसंबन्धावच्छिन्नकारणताघटितमेकं उभयविधकारणतयोरेकत्र निवेशे प्रयोजनाभावात् । जातित्वं चेह न निविष्टं प्रयोजनाभावात् । जातित्वनिवेशेऽपि संबन्धान्तरावच्छिन्नवृत्तित्वं संबन्धान्तरेण तद्वत्त्वं चादाय दोष-

## दिनकरीयम्.

ननु गगनादिकं सर्वदैवास्तीत्यादिव्यवहारात् नित्यद्रव्येष्वपि कालिकसम्बन्धेनाश्रितत्वसत्त्वादन्यत्र नित्यद्रव्येभ्य इति मूलमयुक्तमत आह ॥ **आश्रितत्वमिति** ॥ **समवायादिसम्बन्धेन** सर्वाधारतानियामककालिकसंबन्धातिरिक्तसम्बन्धेन ॥ **विशेषणतयेति** ॥ कालिकविशेषणतयेत्यर्थः ।

## रामरुद्रीयम्.

समवायादिसम्बन्धेनेत्यस्य विवरणं सर्वाधारतेत्यादिकम् । आदिपदेन कालिकस्यापि ग्रहणसंभवात् ॥ **कलिकसम्बन्धातिरिक्तेति** ॥ अत्र कालिकपदं दिग्विशेषणताया अप्युपलक्षणं तस्या अपि सर्वाधारताप्रयोजकत्वादिति बोध्यं । दैशिकविशेणताव्यावर्तनायाह ॥ **कालिकेति** ॥ ननु मूले आ-

वृत्तेः ॥ इदानीं द्रव्यस्यैवं विशिष्य साधर्म्यं वक्तुमारभते ॥ **क्षित्यादीनामिति** ॥ स्पष्टम् ॥ २४ ॥

**क्षितिर्जलं तथा तेजः पवनो मन एव च ।**
**परापरत्वमूर्तत्वक्रियावेगाश्रया अमी ॥ २५ ॥**

**क्षितिरिति** ॥ पृथिव्यप्तेजोवायुमनसां परत्वापरत्ववत्त्वं मूर्तत्वं वेगवत्त्वं क-

### प्रभा.

त्तित्व-एतदन्यतरवत्त्वरूपं । समवायस्यापि समवायात्मकस्वरूपसंबन्धेनैव वर्तमानतया न तत्राव्याप्तिः । केचित्तु सर्वाधारताप्रयोजकसंबन्धाभिन्नसंबन्धेन वर्तमानत्वरूपाऽऽश्रितत्वमेव लक्षणं कालिकसंबन्धाभिन्नसंबन्धेन वृत्तित्वस्य लक्षणत्वे नित्यानामपि दिग्विशेषणतया महादिशि वर्तमानतयाऽतिव्याप्त्यापत्तेः । अतः दिग्विशेषणताकालिकविशेषणतयोः सर्वाधारताप्रयोजकसंबन्धत्वेनानुगम इत्याहुः तदसत् संबन्धद्वयसाधारणताप्रयोजकसंबन्धत्वस्य दुर्लभत्वात् सौलभ्ये वा संयोगादीनां संयोगत्वादिनैव संसर्गत्वस्य प्रामाणिकतया सर्वाधारताप्रयोजकसंबन्धभिन्नसंबन्धत्वेन संसर्गतायां प्रमाणाभावेन तत्संबन्धावच्छिन्नवृत्तित्वरूपाश्रितत्वस्य सुतरां अप्रसिद्धत्वात् । अत्र सर्वाधारताप्रयोजकेत्यादिकथनं द्वयोः परिचयाय नतु तेन रूपेणापि भेदनिवेशः उक्तदोषापत्तेः किन्तु कालिकविशेषणतासंबन्धावच्छिन्नत्वाभावदिग्विशेषणतासंबन्धावच्छिन्नत्वाभाव-एतदुभयविशिष्टवृत्तित्वं कालिकविशेषणतासंबन्धावच्छिन्नत्वदिग्विशेषणतासंबन्धावच्छिन्नत्व-एतदन्यतरत्वावच्छिन्नप्रतियोगिताकाभावविशिष्टवृत्तित्वं वा सर्वाधारताप्रयोजकसंबन्धभिन्नसंबन्धेन वृत्तित्वमित्यस्य फलितार्थं इत्यस्मद्गुरुचरणाः । क्षित्यादीनां नवानां त्विति मूलस्थावधारणार्थकतुशब्देनोपस्थितार्थं प्रकाशयति ॥ **द्रव्यस्यैवेति** ॥ प्रथमतः द्रव्यसामान्यलक्षणस्यैवाभ्यर्हिततया विशिष्य साधर्म्यमाहेत्यनुक्त्वा वक्तुमुपक्रमत इत्युक्तमिति ध्येयम् ॥ २४ ॥

### मञ्जूषा

वारणाय समवायनिवेशस्यावश्यकतया तेनैव द्रव्यगुणान्यतरत्वादिवारणात् किन्तु समवायनिवेशलाभाय जातिपदमुक्तम् ॥ २३ ॥ २४ ॥

### दिनकरीयम्.

अत्र नित्यद्रव्यातिरिक्तत्वं लक्ष्यतावच्छेदकम् । न च संयोगेन परमाणोरपि वृत्तेः परमाणावतिव्याप्तिः तत्संयोगस्य वृत्त्यनियामकत्वादिति । क्षित्यादीनां नवानां त्विति मूलस्थतुशब्देन सूचितमर्थं प्रकटयति ॥ **इदानीमिति** ॥ २४ ॥

### रामरुद्रीयम्.

श्रितत्वमिहोच्यत इत्यत्र इहेत्यस्य पूर्वपरामृष्टद्रव्यार्थकत्वे नित्यद्रव्यव्यतिरिक्तद्रव्यत्वं लक्ष्यतावच्छेदकमिति लभ्यते तथा च गुणादावप्याश्रितत्वसत्त्वात् भवत्यतिव्याप्तिरित्याशङ्कां निराकुरुते ॥ **अत्रेति** ॥ तथा च इहेत्यस्य न्यायसिद्धान्त इत्येवार्थः । वेदान्तिनां मते तु नित्यज्ञानस्याप्यनाश्रितत्वाङ्गीकारात्तत्रातिव्याप्तिशङ्कानिरासाय तदुपात्तमिति ध्येयम् ॥ **परमाणोरपीति** ॥ पतनप्रतिबन्धकसंयोगस्यैव वृत्तिनियामकत्वेन गगनादौ गुरुत्वाभावेनैव पतनानुपपत्त्या तत्संयोगस्य पतनप्रतिबन्धकत्वाकल्पनेऽपि पार्थिवजलपरमाण्वोर्गुरुत्ववत्तया तस्य भूतलादिदेशसंयोगे पतनप्रतिबन्धकत्वमावश्यकमिति क्षित्यादिपरमाणोरपि संयोगो वृत्तिनियामक एवेति भावः ॥ **वृत्त्यनियामकत्वादितीति** ॥ जन्यगुरुत्वस्य प्रकृष्टगुरुत्वस्य वा पतनकारणतया तदभावादेव परमाणोः पतनासम्भवेन तत्संयोगस्य पतनप्रतिबन्धकत्वे मानाभावात् अन्यथा वाय्वादिप्रतिबन्धकाभावदशायां सर्वेषामेव परमाणूनामधःपतनापत्तेरिति भावः ॥ **इदानीमितीति** ॥ तथा च द्रव्यातिरिक्तसाधारणसाधर्म्यप्रकरणव्यवच्छेदसूचनाय तुशब्द इति भावः ॥ २४ ॥

मेवत्त्वं च साधर्म्यम् । न च यत्र घटादौ परत्वमपरत्वं वा नोत्पन्नं तत्राव्याप्तिरिति वाच्यम् । परत्वादिसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वस्य विवक्षितत्वात् । मूर्तत्वमपकृष्टपरिमाणवत्त्वं तच्चैषामेव गगनादिपरिमाणस्य कुतोऽप्यपकृष्टत्वाभावात् ।

## प्रभा.

अत्र पृथिव्यादिचतुष्टयमन-एतदन्यतमत्वं लक्ष्यतावच्छेदकं परत्वादिकं लक्षणमिति फलितम् । परत्वादीनां मध्ये एकैकं लक्ष्यतावच्छेदकमपरं लक्षणमिति वा बोध्यम् । दैशिकपरत्वापरत्वयोः बहुतरसूर्यसंयोगान्तरितत्वादिज्ञानसाध्यत्वात् कालिकपरत्वापरत्वयोः बहुतरसूर्यपरिस्पन्दान्तरितत्वादिज्ञानसाध्यत्वादेतादृशज्ञानं यत्र नोत्पन्नं तत्राव्याप्तिरित्याशङ्क्य निरस्यति ॥ **नचेत्यादि** ॥ आत्मन्यतिव्याप्तिवारणाय समानाधिकरणान्तम् । द्रव्यत्वादिजातिमादाय तत्रैवातिव्याप्तिवारणाय द्रव्यत्वव्याप्येति । द्रव्यत्वन्यूनवृत्तीत्यर्थः ॥ **अपकृष्टपरिमाणवत्त्वमिति** ॥ आकाशादिचतुष्टयान्यतमावृत्ति·

## मञ्जूषा.

**परत्वादिसमानाधिकरणेति** ॥ आदिपदादपरत्वसङ्ग्रहः । जातिपदं चात्र पृथिवीगगनसंयोगद्वित्वादिवारणाय । जातित्वं च नित्यत्वमात्रं इतरांशवैयर्थ्यात् समवायेन तद्वत्त्वविवक्षणाच्च नान्यतमत्वादिकमादाय दोषः ॥ **अपकृष्टपरिमाणवत्त्वमिति** ॥ एतत्तत्त्वं प्रागेव प्रपञ्चितं ॥ **पूर्वे-**

## दिनकरीयम्.

ननु धात्वर्थः क्रिया तत्रातिप्रसङ्ग इत्यत आह ॥ **कर्मवत्त्वमिति** ॥ वेगवत्त्वं वेगसम्बन्धित्वं । दिक्कृतयोः परत्वापरत्वयोर्हेतुरिदमस्मात्सन्निकृष्टमित्यपेक्षाबुद्धिः कालकृतयोः परत्वापरत्वयोर्हेतुरयमस्मादल्पतरकालसम्बद्ध इत्यपेक्षाबुद्धिश्च यत्र नोत्पन्ना तत्र परत्वापरत्वयोरनुत्पादादव्याप्तिमाशङ्क्य निरस्यति ॥ **नचेत्यादिना** ॥ आत्मन्यतिव्याप्तिवारणाय समानाधिकरणान्तम् । तत्रैव सत्तामादायातिव्याप्तिवारणाय द्रव्यत्वव्याप्येति । द्रव्यत्वान्यत्वेनापि जातिर्विशेषणीया तेन न द्रव्यत्वव्याप्यद्रव्यत्वमादायातिव्याप्तिः ॥ **अपकृष्टेति** ॥ अविभुवृत्तिपरिमाणवत्त्वमित्यर्थः । तेन परमाणौ नाव्याप्तिः ।

## रामरुद्रीयम्.

**धात्वर्थः क्रियेति** ॥ धात्वर्थो हि क्रिया ज्ञेयो भाव इत्यभिधीयते इति हरिकारिकोक्तेरिति शेषः ॥ **कर्मवत्त्वमितीति** ॥ तथा च प्रकृते क्रियापदार्थो न धात्वर्थः अपि तु कर्मैवेति भावः । वेग इव वेगवत् तस्य भावस्तत्त्वमिति व्युत्पत्त्या वेगसदृशत्वं वेगवत्त्वमिति भ्रमं निरसितुमाह ॥ **वेगसम्बन्धित्वमिति** ॥ ननु न चेत्यादिना मूले यत्र परत्वापरत्वयोर्नोत्पादस्तत्राव्याप्त्याशङ्कनमनुचितं गुणान्तरस्येव तयोरपि उत्पत्तिद्वितीयक्षण एव सर्वत्रोत्पत्तिसम्भवात् क्षणिकपदार्थस्य च ग्रन्थकारैरनङ्गीकारादित्याशङ्कां निराकुरुते ॥ **दिक्कृतयोरिति** ॥ इत्यपेक्षाबुद्धिरित्यत्र इतिपदस्याप्यर्थकतया इदमस्माद्विप्रकृष्टमिति बुद्धिसङ्ग्रहः । तेन परत्वं प्रति सन्निकृष्टत्वज्ञानस्याहेतुत्वेऽपि न क्षतिः एवमुत्तरत्रापि बोध्यम् । यद्यपि वाक्यात्सङ्ख्याविशेषाच्च साध्यो विश्वविदव्यय इत्याचार्यकारिकानुरोधेन परमाणुषु द्वित्वं ईश्वरापेक्षाबुद्धिजन्यमित्यवश्यमङ्गीकरणीयं तथा च नित्यापेक्षाबुद्ध्या सर्वत्र परत्वापरत्वयोरुत्पत्तिः सम्भवत्येव तथापि द्व्यणुकपरिमाणान्यथानुपपत्त्या परमाणुद्वित्वस्याऽऽवश्यकत्वेऽपि यादृशघटादौ परत्वापरत्वबुद्धिर्नानुभवसिद्धा तादृशघटादौ परत्वापरत्वयोः प्रमाणाभावाज्जन्यापेक्षाबुद्धिरेव परत्वापरत्वयोः कारणमित्याशयः । अथवा दिक्पिण्डसंयोगस्यापि परत्वापरत्वयोः कारणतया यादृशघटादेस्तृतीयक्षणे नाशस्तादृशघटेऽव्याप्तौ तात्पर्यम् ॥ **तत्र प-** रत्वापरत्वोत्पादक्षण एव । आश्रयनाशेन तदुत्पादासम्भवादिति भावः ॥ **द्रव्यत्वान्यत्वेनापीति** ॥ वस्तुतस्तु द्रव्यत्वव्याप्यत्वं प्रकृते द्रव्यत्वन्यूनवृत्तित्वमेव लाघवात् तच्च द्रव्यत्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वरूपं न द्रव्यत्व इति तदादाय नातिव्याप्तिसम्भवः । न च गुणत्वादेरपि

पूर्ववत्कर्मवत्त्वं कर्मसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वं वेगवत्त्वं वेगवद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वं च बोध्यम् ॥ २५ ॥

**कालखात्मदिशां सर्वगतत्वं परमं महत् ।**
**क्षित्यादि पञ्च भूतानि चत्वारि स्पर्शवन्ति हि ॥ २६ ॥**

**कालेति** ॥ कालाकाशात्मदिशां सर्वगतत्वं सर्वगतत्वं सर्वमूर्तद्रव्यसंयोगित्वं पर-

### प्रभा.

परिमाणवत्त्वमित्यर्थः । तेन परमाणौ नाव्याप्तिः ॥ **कुतोऽप्यपकृष्टत्वाभावादिति** ॥ तादृशचतुष्टयान्यतमावृत्तित्वरूपापकर्षाभावादित्यर्थः ॥ **पूर्ववदिति** ॥ परत्वापरत्वलक्षणवदित्यर्थः ॥ २५ ॥

वैभवान्महानाकाशस्तथाचात्मेति सूत्राद्विभुत्वादाकाशो महान् तथाच तथैव विभुत्वादेव आत्मा च आत्मापि महान् अनुक्तसमुच्चायकचशब्दात् आत्माकाशमध्यपतितयोः कालदिशोरपि विभुत्वादेव परममहत्त्वलाभ इत्यर्थकात् प्रतिपाद्यार्थमेवाह ॥ **मूले कालखात्मेति** ॥ ननु सर्वगतत्वं सर्वपदार्थसंयोगजनकक्रियावत्त्वं तच्च कालादावसंभवग्रस्तमत आह ॥ **मुक्तावल्यां सर्वमूर्तद्रव्यसंयोगित्वमिति** ॥ मूर्तान्यत्वसंयोगाश्रयत्वोभयवत्त्वमित्यर्थः प्रलये संयोगाभावेन संयोगाश्रय-

### मञ्जूषा.

**वदिति** ॥ अत्र मूर्तत्वलक्षणे जातिमघटयन्विश्वनाथो ज्ञापयति उत्पन्नविनष्टद्रव्ये नास्माकं निर्भर इति ॥ २५ ॥

**मूले सर्वगतत्वमिति** ॥ सर्वगतत्वं सर्वकर्मकगमनाश्रयत्वं तच्चाप्रसिद्धं सर्वान्तःपातिनो गुणादेर्गमनकर्मत्वाभावात् । नच सर्वपदं सर्वद्रव्यपरमिति वाच्यं तथापि गगनादेर्गमनकर्मत्वाभावेनाप्रसिद्धितादवस्थ्यात् । ननु सर्वपदं सर्वमूर्तद्रव्यपरमास्तामिति चेदेवमपि सर्वमूर्तद्रव्यवृत्तिसंयोगानुकूलस्पन्दवत्त्वरूपं सर्वमूर्तद्रव्यकर्मकगमनाश्रयत्वं गगनादावसिद्धमेवेत्याशङ्कयाह ॥ **मुक्तावल्यां सर्वमूर्तद्रव्यसंयोगित्वामिति** ॥ तथाच गमिस्संयोगार्थक इति भावः । नन्वत्र किं सर्वमूर्त-

### दिनकरीयम्.

क्रियाजनकतावच्छेदकं मूर्तत्वं जातिरित्यपि केचित् ॥ **तच्चेति** ॥ निरुक्तमूर्तत्वं चेत्यर्थः । च स्त्वर्थे ॥ **पूर्ववदिति** ॥ परत्वापरत्वसमानाधिकरणेत्यादिकथितविवक्षितार्थवदित्यर्थः ॥ २५ ॥

कालादौ स्पन्दाभावेनासम्भवमाशङ्कयाह ॥ **सर्वमूर्तेति** ॥ अहं महानिति प्रतीतिविषयपरममहत्त्वत्वस्य-

### रामरुद्रीयम्.

तथात्वात्तदादायैवातिव्याप्तिरिति शङ्कनीयं तेषां परत्वापरत्वसामानाधिकरण्यविरहादिति युक्तमुत्पश्यामः ॥ **अपकृष्टेतीति** ॥ परमाणुपरिमाणस्य कुतोऽप्यपकृष्टत्वाभावात्तत्राव्याप्तिमाशङ्कयाह ॥ **अविभुवृत्तीति** ॥ अविभुवृत्तिसंयोगे तु वैजात्यमङ्गीकृत्य तादृशविजातीयसंयोगस्य वेगाद्यजन्यक्रियायां कारणत्वमङ्गीकृत्यापि विभौ क्रियावारणसम्भवेन क्रियासमवायिकारणतावच्छेदकतया मूर्तत्वजातिसिद्धिरविनिगमिकेत्यस्वरससूचनायाह ॥ **केचिदिति** ॥ **तच्चेतीति** ॥ चकारसमुच्चेयस्यार्थान्तरस्याभावात्तद्वैयर्थ्यमित्याशङ्कानिरासाय आह ॥ **चस्त्वर्थे इति** ॥ त्वर्थेन चेत्यनेन विभुपरिमाणे पृथिव्यादिसमवेतत्वस्य व्यवच्छेदान्न तद्वैयर्थ्यमिति भावः ॥ २५ ॥

**कालादाविति** ॥ सर्वगतत्वं सर्वमूर्तकर्मकगतिमत्त्वरूपस्य सर्वगतत्वस्य क्रियारहितकालादावसम्भवादिति भावः । ननु परममहत्त्वत्वस्य जातित्वमभिधाय तस्य कारणताद्यनवच्छेदकत्वेन तत्र जातित्वसाधकप्रमाणविरहेण अपकर्षानाश्रयपरिमाणत्वं वा तदिति कल्पान्तरमनुसृतं मूले तच्चायुक्तं आत्मगतपरिमाणे तादृशजातेः प्रत्यक्षसंभवेन प्रत्यक्षप्रमाणस्यैव तत्साधकस्य सत्त्वादित्याशङ्कां निरस्यति ॥

ममहत्त्वं च । परममहत्त्वत्वं जातिविशेषः अपकर्षानाश्रयपरिमाणत्वं वा ॥ क्षि-

## प्रभा.

त्वपरताया आवश्यकत्वात् अत्र भेदप्रतियोगितावच्छेदकमूर्तत्वं जातिविशेषः पृथिव्यादिचतुष्टयमन-एतदन्यतमत्वं वा बोध्यम् । तेन नानुगतप्रतियोगितावच्छेदकाप्रसिद्धिः । अत्र लक्ष्यतावच्छेदकमाका-मशादिचतुष्टयान्यतमत्वं ॥ **जातिविशेष इति** ॥ अहं महानिति प्रत्यक्षसिद्धपरममहत्त्वत्वजातेः गगना-दिपरिमाणसाधारण्ये बाधकाभावादिति भावः ननु टीकाकृन्मते आत्मगतपरिमाणस्यातीन्द्रियतया अहं हा-निति प्रत्यक्षाभावात् कथं परममहत्त्वत्वं जातिरित्यत आह ॥ **अपकर्षेति** ॥ अपकर्षानाश्रयमहत्त्वत्वमित्यर्थः। तेन परमाणौ नातिव्याप्तिः । अत्रापकर्षो जातिविशेषः मूर्तावृत्तित्वं वा । द्वितीयपक्षे मुक्तावलीस्थपरिमाणश-

## मञ्जूषा.

द्रव्यसंयोगित्वं सर्वे ये मूर्तद्रव्यसंयोगास्तद्वत्त्वं सर्वैर्मूर्तद्रव्यैस्संयोगित्वं वा । नाद्यः सर्वेषां मूर्तद्रव्यसंयोगाना-मेकत्र क्वचिदप्यवर्तमानत्वात् । नापि द्वितीयः सर्वैर्मूर्तद्रव्यैस्संयोगित्वं हि सर्वमूर्तद्रव्यप्रतियोगिकसंयोगानु-योगित्वं तच्चाप्रसिद्धमेव नहि सर्वमूर्तद्रव्यप्रतियोगिकः कश्चित्संयोगोऽस्ति घटाकाशसंयोगात् पटाकाशसंयोगस्य भिन्नत्वादिति चेदुच्यते नह्यत्र सर्वत्वं संयोगप्रतियोगितावच्छेदकतया लक्षणघटकं येनाप्रसिद्धिस्स्यात् । नच सर्वत्वेनोपस्थितानां सर्वेषां मूर्तद्रव्याणां एकस्मिन् संयोगे विशेषणतया लक्षणघटकता किन्तु यथा-योगं तत्तत्संयोगेष्वेव सर्वत्वधर्मितावच्छेदकतापन्नमूर्तद्रव्यत्वावच्छिन्ना या नानाप्रकारताः तान्निरूपिता-स्संयोगिनिष्ठसंयोगरूपैकधर्मावच्छिन्ना या नानाविशेष्यताः तच्छालीति तद्वाक्यजन्यशाब्दबोधस्तेन ह्ययमर्थो लभ्यते यावन्ति मूर्तद्रव्याणि प्रत्येकं तत्तत्प्रतियोगिकसंयोगानुयोगित्वमिति । नच दुर्ज्ञेय-त्वमिति वाच्यम् । तत्तद्व्यक्तित्वानां लक्षणेऽप्रवेशेन दुर्ज्ञेयत्वाप्रसिद्धेः । सर्वत्वधर्मितावच्छेदकतापन्न-मूर्तद्रव्यत्वरूपसामान्यधर्मपुरस्कारेणैव हि तत्तन्मूर्तद्रव्यव्यक्तीनां तत्तत्संयोगव्यक्तिषु संयोगत्वरूपसा-मान्यधर्मावच्छिन्नासु विशेषणतया लक्षणज्ञाने भानं नतु तत्तद्व्यक्तित्वेन । अथैवं सर्वत्वाश्रयविशिष्टमूर्तद्रव्यत्व-विशिष्टकतिपयप्रातियोगिकसंयोगानुयोगिनि भूतलादावतिव्याप्तिरिति वाच्यम् सर्वत्वधर्मितावच्छेदकतया किञ्चिद्धर्मावगाहिज्ञानस्य तदाश्रययावद्व्यक्तिविषयकत्वनियमेन यावतामेव मूर्तद्रव्याणां प्रत्येकप्रतियोगिकसं-योगानुयोगित्वस्यैव सर्वमूर्तद्रव्यसंयोगित्वपदलभ्यतया तस्य भूतलादावभावात् । तथाच यावन्ति मूर्तद्रव्या-णि प्रत्येकं तत्तत्प्रतियोगिका ये संयोगास्तदनुयोगित्वं लक्षणं तच्च सर्वमूर्तद्रव्यसंयोगित्वमित्यनुगताका-रेण ज्ञायत इति नाननुगमः । एवमक्षरलभ्यार्थो निर्दुष्ट एव । मूर्तत्वव्यापकस्वानुयोगिकसंयोगप्र-तियोगित्वकत्वं स्वासंयुक्तमूर्तकभिन्नत्वं स्वप्रतियोगिकसंयोगवाद्भिन्नत्वसंबन्धेन किञ्चिन्मूर्तद्रव्यविशिष्टान्य-त्वमित्यादयस्तु वैवक्षिका एवार्थाः । नन्वत्र सर्वमूर्तद्रव्येति द्रव्यपदं किमर्थमिति चेदत्र केचित् उ-त्पन्नविनष्टद्रव्याङ्गीकर्तृमते तस्यापि सर्वमूर्तान्तःपातित्वात्तत्संयोगित्वस्य गगनादावसंभवात् द्रव्यपदं निविष्टम् । तदर्थश्च संयोगित्वं ततश्च सर्वाणि यानि संयोगिमूर्तानि तत्संयोगित्वं लक्षणम् । एवं संयोगिमूर्तत्वव्यापकस्वानुयोगिकसंयोगप्रतियोगित्वकत्वं स्वासंयुक्तसंयोगिमूर्तकभिन्नत्वमित्यादिरीत्यै-व वैवक्षिकार्था अपि ज्ञेया इत्याहुः । एतच्च मूर्तत्वं जातिरिति पक्षमादायोक्तम् । अपकृष्टपरिमाण-वत्त्वं मूर्तत्वमिति विश्वनाथपक्षे तु कल्पवृक्ष इत्यादौ वृक्षत्वादिकमिव द्रव्यत्वमत्रोपरञ्जकविशेषण-

## दिनकरीयम्.

गगनपरिमाणादिसाधारणस्य जातित्वसम्भवेऽप्यात्मपरिमाणमयोग्यमिति टीकाकृन्मतमनुसृत्याह ॥ **अपकर्षेति** ॥ यद्यप्यणुपरिमाणेषु द्व्यणुकपरिमाणमेवापकर्षाश्रयो न परमाणुपरिमाणमिति परमाणावतिव्या-

## रामरुद्रीयम्.

**अहमित्यादि** ॥ महानित्यस्य परमेत्यादिः तेन महानिति प्रतीतौ परममहत्त्वत्वस्याविषयत्वेऽपि न क्षतिः ॥ **यद्यपीत्यादि** ॥ न च परमाणुपरिमाणे अणुपरिमाणापेक्षया अपकर्षाभावेऽपि घटादिपरिमाणा-पेक्षयाऽपकर्षो वर्तत एव प्रत्यक्षसाधनत्वतदसाधनत्वाभ्यां तयोरप्युत्कर्षापकर्षसम्भवादिति वाच्यम् ।

**त्यादीति** । पृथिव्यप्तेजोवाय्वाकाशानां भूतत्वम् । तच्च बहिरिन्द्रियग्राह्यविशेषगुणवत्त्वम् । अत्र ग्राह्यत्वं लौकिकप्रत्यक्षस्वरूपयोग्यत्वं बोध्यम् । तेन ज्ञातो घट इति प्रत्यक्षे ज्ञानस्याप्युपनीतभानविषयत्वात्तद्वत्यात्मनि नातिव्याप्तिः । न वा प्रत्यक्षाविषयरूपा—

## प्रभा.

द्वस्य परिमाणमात्रपरत्वेऽपि न क्षतिरिति बोध्यम् ॥ **क्षित्यादीति** ॥ अत क्षित्यादिपञ्चकान्यतमत्वं लक्ष्यतावच्छेदकं बोध्यम् ॥ **बहिरिन्द्रियेति** ॥ मानसानिरूपितविषयताश्रयेत्यर्थः । तेनेन्द्रियत्वस्याननुगतत्वेऽपि मानसस्यापि कालविधया चक्षुरादिजन्यत्वेऽपि लक्षणस्य गुरुत्वेऽपि न क्षतिः । ननु ज्ञातो घट इति चाक्षुषनिरूपितविषयताश्रयज्ञानवत्त्वमादायात्मन्यतिव्याप्तिः परमाणावव्याप्तिश्चेत्यत आह ॥ **ग्राह्यत्वं चेति लौकिकप्रत्यक्षेति** ॥ मानसानिरूपितलौकिकप्रत्यक्षविषयताश्रयगुणविभाजकधर्मवद्विशेषगुणवत्त्वमिति

## मञ्जूषा.

मेवेत्यवसेयम् । अत एव बहुषु पुस्तकेषु द्रव्यपदाघटित एव पाठो दृश्यते ॥ **बहिरिन्द्रियेति** ॥ बहिष्ट्वं मनोभिन्नत्वम् ॥ **ज्ञातो घट इति प्रत्यक्ष इति** ॥ निरूपितत्वं सप्तम्यर्थः ॥ **उपनीतभानविषयत्वादिति** ॥ उपनीतः ज्ञानलक्षणाश्रयः तन्निष्ठं भानं उपनीतभानं भानशब्दश्च विषयतापरः । अयं घट इति ज्ञाने घटो भाति घटो भासत इत्यादौ भातिभासतिभ्यां विषयताया एव प्रत्यायनात् । एवंच ज्ञानलक्षणाजन्यतावच्छेदकीभूतालौकिकविषयताविशेषस्य उप-

## दिनकरीयम्.

प्तिस्तथाप्यपकर्षानाश्रयमहत्परिमाणवत्त्वं बोध्यम् ॥ **बहिरिन्द्रियेति** ॥ आत्मन्यतिव्याप्तिवारणाय बहिःपदम् । बहिरिन्द्रियग्राह्यजातीयसंयोगादिमति कालादावतिव्याप्तिवारणाय विशेषेति । विशेषगुणत्वं चगुणनिरूपणे वक्ष्यते । द्रव्यत्वमादायातिव्याप्तिवारणाय गुणेति । लौकिकत्वनिवेशस्य फलमाह ॥ **तेनेति** ॥ **ज्ञातो घट इति** ॥ ज्ञाने च प्रकारीभूतज्ञानांशे न लौकिकी विषयता चक्षुरादेस्तत्र लौकिकसन्निकर्षाभावादिति भावः । स्वरूपयोग्यताप्रवेशस्य फलमाह ॥ **न वेति** ॥ ननु परमा-

## रामरुद्रीयम्.

परिमाणनिष्ठोत्कर्षापकर्षयोः परिमाणविभाजकजात्या स्वसजातीयपरिमाणावधिकत्वस्यैव नियमात् कथमन्यथा विभुपरिमाणे परमाणुपरिमाणापेक्षया नापकर्षः क्रियोपयोगित्वतदनुपयोगित्वाभ्यां तयोरप्युत्कर्षापकर्षयोः सम्भवादिति भावः । उत्कर्षापकर्षौ गुणनिष्ठजातिविशेषौ अयमस्मादुत्कृष्ट इत्यादिप्रतीतिबलात्तयोरपि सावधिकत्वस्वीकार इति बोध्यम् ॥ **महत्परिमाणवत्त्वमिति** ॥ तथा च परमाणुपरिमाणे अपकर्षानाश्रयत्वसत्त्वेऽपि महत्त्वत्वाभावादेव न परममहत्त्वत्वमिति भावः ॥ **बहिःपदमिति** ॥ मनोभिन्नत्वमेव बहिष्ट्वं ग्राह्यम् ॥ **ग्राह्यजातीयेति** ॥ बहिरिन्द्रियजन्यलौकिकप्रत्यक्षविषयजातिमदिति तदर्थः । संयोगप्रत्यक्षे यावदाश्रयप्रत्यक्षस्य कारणत्वेन तदभावात् कालसंयोगो न प्रत्यक्षविषय इति जातीयपर्यन्तानुधावनमावश्यकमिति आवश्यकं च ग्राह्यजातीयत्वविवक्षणमन्यथा परमाणुरूपादेरप्रत्यक्षतया तत्राव्याप्तिप्रसङ्गादिति भावः ॥ **वक्ष्यत इति** ॥ बुद्ध्यादिषट्कमित्यादिकारिकयेति शेषः ॥ **द्रव्यत्वमादायेति** ॥ यद्यपि विशेषगुणत्वं रूपाद्यन्यतमत्वमेवाग्रे वक्ष्यमाणं तत्र च विशेषत्वगुणत्वयोर्न घटकता तथाप्यत्र विशेषत्वं सामान्यगुणभिन्नत्वं तत्सहितगुणत्वमेव विशेषगुणत्वमित्यभिप्रायेण द्रव्यत्वस्यापि सामान्यगुणभिन्नतया तदादायातिव्याप्तिरभिहिता । न चैवमपि द्रव्यत्वे बहिरिन्द्रियग्राह्यजातिविरहादेव तदादाय नातिव्याप्तिरिति वाच्यम् । द्रव्यत्वपदस्य द्रव्येतरासमवेतार्थकतया क्रियाया अपि तथात्वेन तामादाय मनस्यतिव्याप्तेरेवं तात्पर्यविषयत्वात् अन्यतमत्वस्य भेदकूटावच्छिन्नप्रतियोगिताकभेदरूपस्य गुरुत्वेन सामान्यगुणभेदकूटवत्त्वे सति गुणत्वस्यैव लक्षणघटकतोचितेति भावः ॥ **चक्षुरादेरिति** ॥ यद्यपि चक्षु-

**द्रिपति परमाण्वादावव्याप्तिः तस्यापि स्वरूपयोग्यत्वात् महत्त्वलक्षणकारणान्तरासन्नि-**

## प्रभा.

फलितोऽर्थः । तेन तादृशचाक्षुषनिरूपितज्ञानवत्त्वनिष्ठविषयतायां लौकिकत्वाभावात् सत्तायाश्च गुणवि- भाजकत्वाभावात् नात्मन्यतिव्याप्तिः रूपत्वादिजातेः तादृशत्वेन तदाश्रयत्वान्न परमाणावव्याप्तिः ।

## मञ्जूषा.

नीतभानमिति संज्ञा । ततश्च उपनीतभानं च तद्विषयत्वं चेति कर्मधारयः । एतेनात्र उपनीतभा- नशब्दस्यालौकिकविषयताविशेषशालिप्रत्यक्षपरत्वे ज्ञातो घट इति प्रत्यक्षरूपं यदुपनीतभानं उपनीत- भानरूपं वा यत् ज्ञातो घट इति प्रत्यक्षं तद्विषयत्वादित्यर्थो वाच्यः । सच न संभवति ऋ- द्धस्य राजमातङ्ग इत्यादावृद्धराजपदार्थयोरभेदान्वयबोधाभावेन समासघटकपूर्वपदार्थस्य तदघटकपदा- र्थेन सहाभेदान्वयबोधजनकत्वानङ्गीकारात् । ज्ञातो घट इति प्रत्यक्षानिरूपितं यदुपनीतभाननिरूपितं विषयत्वं तस्मादित्यर्थकल्पने तु कुसृष्टिप्रसक्तिरिति दूषणमपास्तम् । इत्थंच ज्ञातो घट इति प्रत्यक्षानिरूपितालौकिकविषयत्वादिति पर्यवसन्नोऽर्थः । अत एवैतद्ग्रन्थव्याख्यानावसरे महादेवेन ज्ञातो घट इति ज्ञाने च प्रकारीभूतज्ञानांशे न लौकिकविषयता चक्षुरादेस्तत्र लौकिकसन्निकर्षा- भावादिति ग्रन्थेन तादृशप्रत्यक्षनिरूपितज्ञाननिष्ठविषयताया लौकिकत्वं नास्तीत्याविष्कृतम् । अत्र बहिरिन्द्रियग्राह्यजातीयकसंयोगादिमति कालादावतिव्याप्तिवारणाय विशेषेतीति विशेषपदप्रयोज- नमुक्त्वा विशेषगुणत्वं च गुणनिरूपणे वक्ष्यत इति तत्प्रतीक्षां विधाय द्रव्यत्वमादायातिव्याप्तिवा- रणाय गुणपदमित्युक्तं महादेवेन तथा चक्षुरिन्द्रियादिगतरूपादिविशेषगुणानां अनुद्भूतत्वेन बहिरिन्द्रि- यग्रहणायोग्यत्वाच्चक्षुरादावव्याप्तिमाशङ्कय लाघवाच्चाहेति लक्षणान्तरमवतारितम् । तेनैवात्र वक्ष्यमाणं वि- शेषगुणत्वं भावनान्यो यो वायुवृत्तिवृत्तिस्पर्शावृत्तिधर्मसमवायी तदन्यत्वे सति गुरुत्वाजलद्रवत्वा- न्यत्वे सति गुणत्वरूपं । तत्र च दलद्वयं विशेषपदलभ्यमित्यभिप्रायेण प्रकृतलक्षणे तादृशदलद्वय- पर्यवसन्नविशेषत्वमात्रनिवेशे तथाविधद्रव्यत्वमादायातिव्याप्तिरुक्ता तत्रच गुरुत्वेत्यादिविशेषणं प्रकृतल- क्षणनिविष्टविशेषगुणत्वशरीरे न निवेशनीयं प्रयोजनाभावादिति ध्येयम् । अत्र विचार्यते बहि- रिन्द्रियजन्यलौकिकप्रत्यक्षस्वरूपयोग्यत्वं परमाणुरूपसाधारणं कीदृशमभिप्रेत्याय महादेव इति । न ता- वत्तादृशप्रत्यक्षनिरूपितलौकिकविषयतावच्छेदकधर्मवत्त्वं तत् । अत एव बहिरिन्द्रियग्राह्यजातीयसंयो- गादिमति कालादावतिव्याप्तिवारणाय विशेषपदमित्युक्तमिति युक्तं वक्तुं तादृशगुणत्वसत्तादिकमादा- यात्मन्यतिव्याप्तेः । नापि तादृशविषयतावच्छेदिका तादृशविषयताश्रयवृत्तिर्वा या गुणत्वव्याप्यजा- तिस्तद्वत्त्वं तादृशसंस्कारत्वविशिष्टभावनामादायात्मन्यातिव्याप्तेः नच संस्कारत्वजात्यनङ्गीकारात् तदन्य- त्वेन जातिविशेषणाद्वा न दोष इति वाच्यं एवमपि द्रव्यत्वमादायातिव्याप्तिवारकतया गुणपद- सार्थक्योपपादनविरोधाच्चक्षुरादावव्याप्तिशङ्कया लक्षणान्तरावतारणविरोधाच्च तादृशरूपत्वादिजातिमादाय चक्षुरादिरूपादावपि स्वरूपयोग्यताया अक्षतत्वात् प्रत्यक्षानिरूपितलौकिकविषयताश्रयमात्रनिवेशतात्पर्येण तादृशावतारणसंगमनस्य लक्षणे मात्रार्थनिवेशवैयर्थ्येन विशेषपदव्यावृत्तिप्रदर्शकस्वग्रन्थविरोधेन तादृश- जात्यप्रसिद्ध्या चायुक्तत्वात् अथ बहिरिन्द्रियजन्यलौकिकप्रत्यक्षनिष्ठकार्यतानिरूपितकारणतावच्छेदकध-

## दिनकरीयम्.

णुरूपादेर्योग्यत्वे कुतो न तस्य प्रत्यक्षमत आह ॥ **महत्त्वेति** ॥ लौकिकविषयतया द्रव्यसमवे-

## रामरुद्रीयम्.

क्षसंयुक्तात्मसमवायस्य ज्ञाने सत्त्वात् लौकिकसन्निकर्षाभावादित्यसङ्गतं तथापि चक्षुःसंयुक्तयोग्यसमवा- यस्यैव सन्निकर्षत्वमावश्यकं अन्यथा परमाणौ चक्षुःसंयोगदशायां तत्समवेतद्रव्यत्वादिप्रत्यक्षापत्ते- रिति आत्मनोऽयोग्यत्वात् ज्ञाने न लौकिकसन्निकर्ष इति भावः ॥ **महत्त्वेतीति** ॥ ननु घट

धानाच्च न प्रत्यक्षत्वम् । अथवाऽऽत्मावृत्तिविशेषगुणवत्त्वं तत्त्वम् ॥ **चत्वारीति** ॥ पृथिव्यप्तेजोवायूनां स्पर्शवत्त्वम् ॥ २६ ॥

## प्रभा.

संयोगत्वजातिमादाय कालादावतिव्याप्तिवारणाय विशेषनिवेशः लाघवात् । लक्षणान्तरमाह ॥ **अथवेति** ॥ **आत्मावृत्तीति** ॥ इदंचात्मावृत्तिविशेषगुणानां लक्षणत्वबोधनाय नतु तेन रूपेणापि प्रवेशः गौरवात् प्रयोजनाभावाच्च । विशेषगुणत्वेनापि न प्रवेशः उक्तदोषापत्तेः किन्तु विशेषगुण एव लक्षणत्वेन ग्राह्य इति बोधनाय । लक्षणं तु स्पर्शशब्दान्यतरवत्त्वमिति बोध्यम् ॥ चत्वारि स्पर्शवन्तीति मूलात् पृथिव्यादिचतुष्टयान्यतमवत्त्वावच्छिन्नस्य स्पर्शवत्त्वं लक्षणमिति लभ्यते। तत्र यद्यपि मृदुत्वकठिनत्वयोस्स्पर्शगततजातिविशेषरूपत्वमेव न संयोगगतजातिविशेषरूपत्वं तथा सति चक्षुर्ग्राह्यतापत्तेः इति वदतां प्राचीनानां मते मृदुस्पर्शकठिनस्पर्शवदवयवारब्धे द्रव्ये परस्परविरोधेन स्पर्शानुत्पादात् तत्र चित्रस्पर्शानङ्गीकारे बाधकाभावाच्च तत्र स्पर्शवत्त्वलक्षणमव्याप्तं तथापि स्पर्शसमानाधिकरणमनोवृत्तिजातिमत्त्वविवक्षया दोषो वारणीयः। नच द्रव्यत्वादिवारणायाकाशव्यक्त्यवृत्तित्वमेव निवेश्यतां विभागवाक्यादाकाशस्यैव प्रथममुपस्थितत्वादिति वाच्यम् मूर्तत्वजात्यभ्युपगमपक्षे मूर्तत्वजातेरपि तादृशतया तामादाय मनस्यतिव्याप्तिवारणाय मनोव्यक्त्यवृत्तित्वविशेषणस्यावश्यकत्वात् । यदि च मृदुस्पर्शकठिनस्पर्शवदवयवारब्धत्र्यणुकैरारब्धचतुरणुकादिषु स्पर्शप्रत्यक्षात् तत्रावयवेषु स्पर्शाभावेनावयविस्पर्शस्य विषयत्वासंभवात् तत्र स्पर्शोत्पत्त्यसंभवाच्च तत्र स्पर्शप्रत्यक्षानिर्वाहाय नानास्पर्शवदवयवारब्धत्र्यणुकेषु चित्रस्पर्शोऽङ्गीकार्यः तादृशत्र्यणुकारब्धचतुरणुकादिषु स्पर्शोत्पत्तिसंभवेन तेषु प्रत्यक्षापत्तिरिति तादृशत्र्यणुकेषु स्पर्शसत्त्वेनाव्याप्त्यप्रसक्त्या जातिघटितलक्षणमयुक्तमिति विभाव्यते तदा यथाश्रुतस्पर्शवत्त्वलक्षणमेव साध्विति मन्तव्यम् ॥ २६ ॥

## मञ्जूषा.

र्मवत्त्वमेव तत्। सच धर्मः उद्भूतरूपवत्त्वमेवेति न परमाणावव्याप्तिः नवा चक्षुरादावव्याप्तिशङ्काया अनुपपत्ति-

## दिनकरीयम्.

तत्प्रत्यक्षे सामानाधिकरण्यसम्बन्धेन कारणस्य महत्त्वस्य परमाणुरूपादावभावान्न तल्लौकिकप्रत्यक्षमिति भावः । ननु चक्षुरिन्द्रियादिगतरूपादिविशेषगुणानामनुद्भूतत्वेन बहिरिन्द्रियग्रहणायोग्यत्वाच्चक्षुरादावव्याप्तिमाशङ्क्य लाघवाच्चाह ॥ **अथवेति** ॥ अत्र च कल्पे दैशिकपरत्वापरत्वमादाय मनस्यतिव्याप्तिवारणाय विशेषेति ॥ **स्पर्शवत्त्वं** समवायेन स्पर्शवत्त्वं ॥ २६ ॥

## रामरुद्रीयम्.

रूपादौ महत्त्वाभावेऽपि तत्प्रत्यक्षदर्शनात् परमाणुरूपे तदभावेऽपि तत्प्रत्यक्षं स्यादित्याशङ्कां निरस्यति ॥ **लौकिकेति** ॥ **ग्रहणायोग्यत्वादिति** ॥ बहिरिन्द्रियजन्यलौकिकप्रत्यक्षं प्रति उद्भूतरूपत्वेनैव कारणतया कारणतावच्छेदकधर्मत्वस्यैव योग्यतारूपत्वादिति भावः। ननु बहिरिन्द्रियजन्यलौकिकप्रत्यक्षस्वरूपयोग्यत्वं न लक्षणे निवेश्यते किंतु बहिरिन्द्रियजन्यलौकिकप्रत्यक्षविषयगुणत्वन्यूनवृत्तिजातिमत्त्वमेव लक्षणघटकं तथा च तथाविधरूपत्वादिजातेः चक्षुरादिरूपेऽपि सत्त्वेन न चक्षुरादावव्याप्तिरित्यस्वरसादाह ॥ **लाघवाच्चेति** ॥ **अथवेतीति** ॥ नन्वत्र कल्पे आत्मावृत्तित्वं समवायेन आत्मवृत्तितानवच्छेदकधर्मवत्त्वमेव वक्तुमुचितं अन्यथा तस्यात्मावृत्तिभिन्नत्वरूपत्वे सामान्यगुणभेदकूटरूपविशेषत्वनिवेशेन गौरवप्रसङ्गात्। इत्थं च विशेषत्वनिवेशनं विनापि कालादावतिव्याप्तिवारणं सम्भवति कालादिनिष्ठसंयोगे तादृशधर्मवत्त्वाभावादिति विशेषत्वनिवेशनमनर्थकमित्याशङ्कामपनेतुं तन्निवेशे प्रयोजनान्तरमाह ॥ **अत्र चेति** ॥ **समवायेनेति** ॥ बोध्यमिति शेषः । अन्यथा कालिकदिक्कृतविशेषणताभ्यां स्पर्शवतोः कालदिशोरतिव्याप्तिप्रसङ्गादिति भावः ॥ २६ ॥

## मञ्जूषा.

एत एव परमाणुरूपस्य कारणतावच्छेदकधर्माक्रान्तत्वे कुतो न तत्प्रत्यक्षमिति शङ्काया अवतारेण महत्त्वलक्षणकारणान्तरासान्निधानादित्यादिग्रन्थोऽपि स्वरसतस्साधु सङ्गच्छते । स्वरूपयोग्यत्वस्य कारणतागर्भत्वविरहे दर्शितशङ्काया अनवतारात् कारणतान्तरेत्यन्तरपदघटितवाक्येन समाधानानुपपत्तेश्च । नच संयोगादिकमादाय कालादावतिव्याप्तिवारकतया विशेषपदसार्थक्योपपादकमहादेवग्रन्थविरोध इति वाच्यं चाक्षुषप्रत्यक्षकारणतावच्छेदकीभूतचक्षुस्संयोगत्वालोकसंयोगत्वाद्यवच्छिन्नवत्त्वस्य कालादावक्षतत्वात् । नचैवं पर्याप्तिनिवेशे प्रयोजनाभावेन तादृशकारणतावच्छेदकघटकरूपत्वादिजातिमादाय चक्षुरादावपि लक्षणसङ्गमनात् तत्राव्याप्तिशङ्काया असङ्गतिरिति वाच्यं एतदस्वरसेनैव लाघवाच्चेति दूषणान्तरप्रणयनादिति चेन्न । बहिरिन्द्रियजन्यलौकिकप्रत्यक्षात्मकं यद्विशिष्टवैशिष्ट्यावगाहिप्रत्यक्षं तत्कारणतावच्छेदकीभूतविशेषणतावच्छेदकप्रकारकानिर्णयत्वचान्यो विशेषगुणः तद्वत्त्वात्मन्यतिव्याप्तेः । नच कार्यतायां विषयतासंबन्धावच्छिन्नत्वनिवेशान्नायं दोषस्समवायस्यैव विशिष्टवैशिष्ट्यावगाहिप्रत्यक्षनिष्ठकार्यतावच्छेदकसंबन्धत्वादिति वाच्यं उपनीतभाननिष्ठज्ञानलक्षणादिजन्यतायां विषयतासंबन्धस्यावच्छेदकतया तत्कारणीभूतज्ञानादिमत्त्वात्मन्यतिव्याप्तेर्दुर्वारत्वात् बहिरिन्द्रियजन्योपनीतभानस्य किञ्चिदंशे लौकिकत्वनियमेन लौकिकत्वविशेषणेन तद्वारणासंभवात् । नच लौकिकपदमलौकिकान्यपरमिति वाच्यं एवमप्ययं घट इत्यादिविशिष्टज्ञाननिष्ठप्रकारतासंबन्धावच्छिन्नकार्यतानिरूपितकारणतामादायातिव्याप्तितादवस्थ्यात् । नच विषयतायाः कार्यतावच्छेदकत्वं विषयतात्वेन विवक्ष्यतामथवा कार्यतायां लौकिकविषयतासंबन्धावच्छिन्नत्वनिवेशान्नोपनीतभानविशिष्टज्ञानादिजनकतामादाय दोषः एतत्सूचनायैव प्रत्यक्षे लौकिकत्वमुपात्तमिति वाच्यं तथा सति प्रसिद्धसौरभाद्युपनीतभानजनकोपनायकज्ञानवत्तामादायातिव्याप्तेर्वारकतयैव लौकिकत्वनिवेशनसार्थक्योपपादनसंभवेन ज्ञातो घट इत्याकारकज्ञानविषयकोपनीतभानपर्यन्तानुधावनवैयर्थ्यात् तत्रापि ज्ञानविषयकोपनीतभानजनकोपनायकज्ञानवत्तामादायातिव्याप्तेस्स्वदुक्तरीत्या वक्तव्यतया तादृशोपनीतभानविषयीभूतज्ञानवत्तामादायातिव्याप्तिप्रदर्शकमुक्तावलीग्रन्थविरोधस्य दुर्वारत्वाच्च । नच बहिरिन्द्रियग्राह्येत्यस्य यथाश्रुतार्थाभिप्रायेण तथोक्तिरिति वाच्यं बहिरिन्द्रियग्राह्यत्वं च बहिरिन्द्रियजन्यलौकिकप्रत्यक्षस्वरूपयोग्यत्वमित्यस्यैतदव्यवहितपूर्वमेव लिखितत्वात् । किंचैवमपि द्रव्यत्वमादायातिव्याप्तिवारकतया गुणत्वनिवेशसार्थक्योपपादकमहादेवग्रन्थविरोधः । द्रव्यत्वस्य बहिरिन्द्रियजन्यलौकिकप्रत्यक्षकरणत्वाभावात् । नच बहिरिन्द्रियजन्यलौकिकप्रत्यक्षे विषयविधया कारणतावच्छेदकीभूतं यत्तद्व्यक्तित्वादि तद्वत्त्वं तत्राक्षतमिति वाच्यं कारणतावच्छेदकधर्मवत्त्वस्य समवायेन विवक्षयैव तद्वारणसंभवात् । अथास्तु तत्सूचनायैव गुणपदं कारणतावच्छेदकतावच्छेदकसंबन्धेन वा तद्वत्त्वं विवक्ष्यतामिति चेदेवमपि बहिरिन्द्रियग्राह्यजातीयसंयोगादिमति कालादावितिमहादेवग्रन्थस्वरसाविरोधः । तेन हि प्रत्यक्षविषयत्वमेव लक्षणे निविष्टमिति प्रतीयते नतु तज्जनकत्वं निविष्टमिति । उच्यते । बहिरिन्द्रियजन्यप्रत्यक्षनिरूपितलौकिकविषयताश्रयावृत्तिजातिशून्यत्वमेव तादृशप्रत्यक्षस्वरूपयोग्यत्वमिह महादेवाभिप्रेतं नहि परमाणुरूपादौ तादृशजातिरस्ति अतस्तस्य स्वरूपयोग्यत्वमक्षतं बहिरिन्द्रियग्राह्यजातीयसंयोगादिमतीत्यनेन कालघटसंयोगादौ बहिरिन्द्रियग्राह्यावृत्तिजातिशून्यत्वमेव प्राप्तं अतः कालादावतिव्याप्तिस्सूपपादा चक्षुरादिरूपादौ तु तादृशविषयताश्रयावृत्तेरुद्भूतत्वजातेः सत्त्वात्तत्राव्याप्तिशङ्का सूपपादा भावनात्वजातेस्तादृशतया न भावनामादायात्मन्यतिव्याप्तिः लौकिकपदानुपादाने ज्ञानत्वजातेः बहिरिन्द्रियजन्योपनीतभानविषयवृत्तितया तदवृत्तिजातिशून्यत्वं ज्ञानस्याक्षतमिति न मुक्तावलीग्रन्थविरोधः । नच लौकिकपदानुपादाने बहिरिन्द्रियजन्यप्रत्यक्षविषयावृत्तिजातिरेव न प्रसिद्ध्यति सर्वस्या अपि जातेर्बहिरिन्द्रियजन्यसामान्यलक्षणाजन्योपनीतभानादिविषयवृत्तित्वादिति वाच्यं लौकिकत्वानिवेशेऽसंभवापत्तिवारणाय स्वाधिकरणावृत्तिजातिमत्त्वसंबन्धेन ब-

द्रव्यारम्भश्चतुर्षु स्यात् अथाकाशशरीरिणाम् ।
अव्याप्यवृत्तिः क्षणिको विशेषगुण इष्यते ॥ २७ ॥

पृथिव्यप्तेजोवायुषु चतुर्षु द्रव्यारम्भकत्वम्। न च द्रव्यानारम्भके घटादावव्याप्तिः द्रव्यसमवायिकारणवृत्तिद्रव्यत्वव्याप्यजातिमत्त्वस्य विवक्षितत्वात् ॥ अथाकाशेति ॥ आकाशात्मनामव्याप्यवृत्तिक्षणिकविशेषगुणवत्त्वं साधर्म्यमित्यर्थः। आकाशस्य विशेषगुणः शब्दः स चाव्याप्यवृत्तिः यदा किंचिदवच्छेदेन शब्द उत्पद्यते तदाऽन्यावच्छेदेन

**प्रभा.**

द्रव्यारम्भश्चतुर्षु स्यादिति मूले आरम्भपदं समवायेन द्रव्यवत्त्वलाभाय नतु समवायिकारणस्यापि लक्षणघटकता गौरवात् प्रयोजनाभावाच्चेति बोध्यम् ॥ **मुक्तावळ्यां द्रव्यानारम्भक इति** ॥ समवायेन द्रव्यवद्भिन्न इत्यर्थः ॥ **द्रव्यसमवायिकारणवृत्तीति** ॥ समवायेन द्रव्यवृत्तीत्यर्थः। अत्र सत्तादिकमादायाकाशादावतिव्याप्तिवारणाय जातौ द्रव्यत्वव्याप्यत्वनिवेशः। तद्व्याप्यत्वं च तन्न्यूनवृत्तित्वमथवा द्रव्यत्वन्यूनवृत्तिजातीनामेव लक्षणघटकतेति बोधनाय द्रव्यत्वव्याप्येत्युक्तं नतु तेन रूपेणापि लक्षणे प्रवेशः गौरवात् प्रयोजनाभावाच्च। तादृशजातीनां मनोऽव्यवृत्त्यवृत्तित्वेनैव लक्षणघटकता तथाच समवायेन द्रव्यवद्वृत्तिमनोऽव्यवृत्त्यवृत्तिजातिमत्त्वं लक्षणमिति पर्यवसितं एवंच न काप्यनुपपत्तिः ॥ **आकाशात्मनामिति** ॥ आकाशात्मान्यतरत्वं लक्ष्यतावच्छेदकं अत्र लक्ष्ये लक्षणमुपपादयितुं शब्दज्ञानादीनां

**मञ्जूषा.**

हिरिन्द्रियजन्यप्रत्यक्षनिरूपितविषयताशून्यत्वस्यैव विवक्षणीयतया घटत्वादेः प्रसिद्धेन तादृशसंबन्धेन बहिरिन्द्रियजन्यप्रत्यक्षविषयताया अभावस्य सर्वत्रैव सत्त्वेनातिव्याप्तिसङ्क्रमनात् परंतु महत्त्वलक्षणकारणान्तरेत्यादिग्रन्थस्वरसाविरोधः परमवशिष्यते सचेत्थं परिहरणीयः परमाणुरूपस्य बहिरिन्द्रियग्राह्यावृत्तिजातिशून्यत्वे कुतो न तत्प्रत्यक्षं नच कारणाभावान्नेति वाच्यं द्रव्यसमवेतप्रत्यक्षं प्रति कारणीभूतस्योद्भूतरूपस्य सामानाधिकरण्यसंबन्धेन स्वस्मिन्नपि सत्त्वादित्याशङ्क्य तत्रोद्भूतरूपलक्षणकारणसत्त्वेऽपि महत्त्वलक्षणकारणान्तरासन्निधानात् न प्रत्यक्षमित्युक्तमिति एवं तावन्महादेवाशयो वर्णितः। लक्षणं त्वन्यथापि परिष्कर्तुं शक्यते बहिरिन्द्रियजन्यलौकिकप्रत्यक्षस्वरूपयोग्यत्वं तादृशप्रत्यक्षनिरूपितलौकिकविषयतावच्छेदकधर्मवत्त्वं विशेषगुणत्वंचेह द्रव्यविभाजकोपाधिव्याप्यतावच्छेदकजातिमत्त्वे सति गुणत्वं तथाच बहिरिन्द्रियजन्यप्रत्यक्षनिरूपितलौकिकविषयतावच्छेदकीभूता द्रव्यविभाजकोपाधिव्याप्यतावच्छेदिका च या जातिस्तद्वान्यो गुणस्तद्वत्त्वं भूतत्वमिति पर्यवसन्नम्। ज्ञानत्वादिवारणाय विषयतावच्छेदकत्वान्तं जातिविशेषणं सत्तागुणत्वसंयोगत्वादिवारणाय द्वितीयावच्छेदकान्तं तादृशजातिमतस्समवायेन लक्षणत्वसूचनाय गुणपदमिति सर्वं सुस्थम् ॥ **मूले स्पर्शवन्तीति** ॥ मृदुकठिनादिनानाजातीयस्पर्शवदवयवारब्धेऽव्यवयविनि द्रव्यस्पार्शनानुरोधात् चित्रस्पर्शोऽङ्गीकार्य इति नाव्याप्तिः उत्पन्नविनष्टद्रव्यानङ्गीकारात् अनयोर्लक्षणयोर्जातिघटना न मुक्तावळ्यां कृता ॥ २६ ॥

**मुक्तावळ्यां योग्यविभुविशेषगुणानामिति** ॥ ननु कथमत्र कार्यकारणभाव इति चेदत्र म-

**दिनकरीयम्.**

**द्रव्यसमवायिकारणेत्यादि** ॥ सत्तादिकमादाय गगनेऽतिव्याप्तिवारणाय द्रव्यत्वव्याप्येति। आकाशशरीरिणामिति मूले शरीरिपदमात्मपरमित्यभिप्रायेणाह ॥ **आकाशात्मनामिति** ॥ लक्ष्ये लक्षणं योजयितुं शब्दज्ञानादीनामव्याप्यवृत्तित्वं क्षणिकत्वं चोपपादयति ॥ **आकाशस्येत्यादिना** ॥

**रामरुद्रीयम्.**

**द्रव्यत्वव्याप्येतीति** ॥ यद्यपि द्रव्यत्वमपि द्रव्यत्वव्याप्यमित्युक्तदोषतादवस्थ्यं तथाप्यत्रापि प्र-

**तदभावस्यापि सत्त्वात् । क्षणिकत्वं च तृतीयक्षणवृत्तिध्वंसप्रतियोगित्वम् । योग्यवि-भुविशेषगुणानां स्वोत्तरवृत्तिविशेषगुणनाश्यत्वात्प्रथमशब्दस्य द्वितीयशब्देन नाशः ।**

## प्रभा.

अव्याप्यवृत्तित्वक्षणिकत्वे उपपादयति ॥ **तथाहीत्यादिना** ॥ **स्वोत्तरवृत्तीति** ॥ प्रतियोगितासंबन्धेन योग्यविभुविशेषगुणनाशं प्रति स्वाव्यवहितपूर्ववृत्तित्वसंबन्धेन गुणत्वेन कारणत्वं कार्यतावच्छेदकं तु यावन्तो योग्यविभुविशेषगुणध्वंसास्तावदन्यतमत्वं स्वाश्रयप्रतियोगिकत्वकालिकविशेषणत्वैतदुभयसंबन्धेन बुद्धित्वसुखत्वदुःखत्वेच्छात्वद्वेषत्वयत्नत्वशब्दत्व-एतदन्यतमत्वावच्छिन्नत्वं वा बोध्यं अतो नाननुगमः । वस्तुतः कार्यतावच्छेदकाननुगमेऽपि न क्षतिरिति तत्त्वं । प्रतियोगितासंबन्धेन अपेक्षाबुद्धिनाशं प्रति स्वप्रागभावाधिकरणक्षणप्रागभावानधिकरणक्षणवृत्तित्वस्वसमानकालीनत्वोभयसंबन्धेन गुणत्वेन कारणत्वमिति समानाधिकरणगुणसाधारण्येन नाश्यनाशकभावादित्यर्थः । केचित्तु यत्र प्र-

## मञ्जूषा

हादेवः । यत्र प्रतियोगितासंबन्धेन योग्यविभुविशेषगुणनाशः तत्र स्वसामानाधिकरण्यस्वाव्यवहितपूर्ववृत्तित्वोभयसंबन्धेन योग्यविशेषगुण इति सामानाधिकरण्येन नाशकत्वं बोध्यम् कार्यतावच्छेदके योग्यत्वोपादानेन प्रायश्चित्तादिजन्यादृष्टनाशे न व्यभिचारः योग्यत्वंच लौकिकसाक्षात्कारविषयनिर्वि-

## दिनकरीयम्.

क्षणिकस्य विशेषगुणस्यानभ्युपगमादाह ॥ **क्षणिकत्वं चेति** ॥ घटादिव्यावृत्तये तृतीयक्षणवृत्तीति । स्वपदं नाश्यत्वाभिमतपरं तदुत्तरवृत्तिः तद्द्वितीयक्षणवृत्तिर्यो विशेषगुणस्तन्नाश्यत्वादित्यर्थः । अत्र च यत्र प्रतियोगितासम्बन्धेन योग्यविभुविशेषगुणनाशस्तत्र स्वसामानाधिकरण्यस्वाव्यवहितपूर्ववर्तित्वोभयसम्बन्धेन योग्यविभुविशेषगुण इति सामानाधिकरण्येन नाशकत्वं बोध्यम् । कार्यतावच्छेदके योग्यत्वानुपादाने प्रायश्चित्तादिजन्यादृष्टनाशे व्यभिचारः योग्यत्वं च लौकिकसाक्षात्कारविषयनिर्विकल्पकान्यतरत्वं अतीन्द्रियजातिशून्यत्वं वा । रूपादिनाशे व्यभिचारवाणाय विभ्विति । संयोगादिनाशे व्यभिचारवा-

## रामरुद्रीयम्.

**णोक्तरीतिरनुसन्धेया अतो न कश्चिद्दोष इति ध्येयम्** ॥ **घटादिव्यावृत्तय इति** ॥ क्षणिकविशेषगुणवत्त्वस्य लक्षणान्तरतायाः अग्रे वक्ष्यमाणतया ध्वंसप्रतियोगिविशेषगुणवत्त्वस्य घटादावतिव्याप्तिः तन्निरासायेत्यर्थः । न चेदानीमपि यत् घटरूपादिकं तृतीयक्षणे नष्टं तत्रातिव्याप्तितादवस्थ्यमिति वाच्यम् । अग्रे समाधास्यमानत्वात् ॥ **द्वितीयक्षणवृत्तिरिति** ॥ स्वद्वितीयक्षणवृत्तिरित्यर्थः । इदं च अपेक्षाबुद्धिव्यतिरिक्तस्थले तत्र तु तृतीयक्षणवृत्तिरित्येव वक्तव्यमिति बोध्यम् । वस्तुतस्तु मूले स्वोत्तरवृत्तीत्यस्य स्वाव्यवहितोत्तरवर्तीत्यर्थः । अव्यवहितोत्तरत्वं स्वोत्तरविशेषगुणानुत्तरत्वे सति स्वोत्तरत्वं स्वोत्तरत्वं च स्ववृत्तिप्रागभावप्रतियोगित्वमित्येकोक्त्यैवोभयसङ्ग्रहः सम्भवतीति ध्येयम् । अत्र च स्वत्वस्याननुगतत्वेन तत्तद्व्यक्तिविश्रान्त एव कार्यकारणभाव इति तत्तद्व्यक्तिनाशं प्रति तत्तद्व्यक्तित्वेनैव कारणता युक्ता स्वद्वितीयक्षणवृत्तित्वादेरव्यावर्तकत्वात् अनन्तकार्यकारणभावापत्त्या गौरवं चेत्याशयेनाह ॥ **अत्रचेति** ॥ **स्वाव्यवहितेति** ॥ स्वप्रागभावाधिकरणकालप्रागभावानधिकरणत्वे सति स्वप्रागभावाधिकरणत्वं स्वाव्यवहितपूर्वत्वं अत्र, चापेक्षाबुद्धिद्वितीयक्षणोत्पन्नपुरुषान्तरीयज्ञानादिना तृतीयक्षणे तन्नाशवारणाय स्वसामानाधिकरण्यप्रवेशः । अपेक्षाबुद्धिद्वितीयक्षणे च तत्पुरुषस्य न योग्यविशेषगुणोत्पाद इति सिद्धान्तः । ज्ञानादेः क्षणिकत्ववारणाय द्वितीयसम्बन्धप्रवेशः ॥ **न व्यभिचार इति** ॥ नान्वयव्यभिचार इत्यर्थः । ननु योग्यत्वस्य लौकिकप्रत्यक्षविषयरूपत्वेन निर्विकल्पकस्य स्वोत्तरोत्पन्नज्ञानादिना नाशो न स्यादित्याशङ्कामपनेतुं योग्यतां निर्वक्ति ॥ **योग्यत्वं चेति** ॥ लाघवादाह ॥ **अतीन्द्रियेति** ॥ निर्विकल्पकत्वं तु न जातिः निष्प्रकारकज्ञानत्वस्यैव निर्विकल्पकत्वरूपत्वात् ज्ञानत्वं तु नातीन्द्रियमिति भावः ॥ **रूपादिनाश इति** ॥ अत्र व्यभिचारपदं व्यतिरेकव्यभिचारपरं रूप-

## प्रभा.

तियोगितासंबन्धेन योग्यविभुविशेषगुणनाशः तत्र स्वसामानाधिकरण्यस्वाव्यहितपूर्वत्रृत्तित्वोभयसंबन्धेन योग्यविभुविशेषगुण इति सामानाधिकरण्येन नाशकत्वं बोध्यम्। कार्यतावच्छेदके योग्यत्वोपादानेन प्रायश्चित्तादिजन्यादृष्टनाशे न व्यभिचारः। योग्यत्वमतीन्द्रियजातिशून्यत्वं रूपादिनाशे व्यभिचारवारणाय विभ्विति आत्मसंयोगनाशे व्यभिचारवारणाय विशेषेति कारणतावच्छेदके योग्यत्वविशेषत्वयोरुपादानात् द्वितीयक्षणोत्पन्नादृष्टसंयोगादिना न तृतीयक्षणे अपेक्षाबुद्धिनाशः सामानाधिकरण्यसंबन्धनिवेशान्न शब्दादिना व्यधिकरणानामिच्छादीनां नाशः स्वाव्यहितपूर्वत्रृत्तित्वनिवेशाच्च न ज्ञानादीनां उत्पत्तिकाले इच्छादिना नाश इत्याहुः। तदसत् कारणतावच्छेदके योग्यत्वविशेषत्वयोरुपादानेऽपि अपेक्षाबुद्धिद्वितीयक्षणोत्पन्नेच्छादिना तृतीयक्षणे अपेक्षाबुद्धेर्नाशापत्तेर्दुर्वारत्वात् कारणतावच्छेदके योग्यत्वविशेषत्वनिवेशवैयर्थ्यात्

## मञ्जूषा.

कल्पकान्यतरत्वमतीन्द्रियजातिशून्यत्वं वा। रूपादिनाशे व्यभिचारवारणाय विभ्विति संयोगादिनाशे व्यभिचारवारणाय विशेषेति कारणतावच्छेदके योग्यत्वविशेषत्वयोरुपादानान्न द्वितीयक्षणोत्पन्नादृष्टसंयोगादिना तृतीयक्षणे अपेक्षाबुद्धिनाशः सामानाधिकरण्यसंबन्धनिवेशान्न शब्दादिना व्यधिकरणानां ज्ञानेच्छादीनां नाशः स्वाव्यवहितपूर्ववृत्तित्वनिवेशाच्च न ज्ञानादीनामुत्पत्तिकाले इच्छादिना नाश इत्याचष्ट। अत्र ज्ञानाद्युत्पत्तिकाले वर्तमानं यत्तत्पूर्वक्षणोत्पन्नेच्छादि तेन ज्ञानादेः स्वोत्पत्तिद्वितीयक्षणे नाशापत्तिर्वेत्यर्थः। यथाश्रुते तु ज्ञानादिपूर्वकालोत्पन्नेच्छादिना ज्ञानादेः स्वोत्पत्तिकाले नाशापत्तिर्नेति लभ्यते तच्चायुक्तम् प्रतियोगितासंबन्धेन ध्वंसत्वावच्छिन्नं प्रति तादात्म्यसंबन्धेन सतः कारणतया उत्पत्तिक्षणे तन्नाशापत्तेरयोगात्। अत्र विचार्यते। सुषुप्तिप्राक्कालोत्पन्नज्ञानेच्छादिव्यक्तेः नाशकदुर्भिक्षं तत्समानाधिकरणस्य तदुत्तरवृत्तेः योग्यविशेषगुणस्याभावात्। किंच जीवनयोनियत्ननाशस्य कार्यतावच्छेदकानाक्रान्तत्वापत्तिः तस्य पूर्वोक्तयोग्यत्वाभावादिति। अथोच्येत सुषुप्तिप्राक्कालोत्पन्नमेव ज्ञानं स्वोत्पन्नद्वितीयक्षणविशिष्टं सत् स्वनाशकं भवति तथाहि तज्ज्ञानसामानाधिकरण्यं तज्ज्ञानेऽपि वर्तते एवं स्वाधिकरणीभूतो यः कश्चित्क्षणः तत्प्रागभावाधिकरणक्षणप्रागभावानधिकरणतत्प्रागभावाधिकरण-

## दिनकरीयम्.

रणाय विशेषेति। कारणतावच्छेदके योग्यत्वविशेषत्वयोरुपादानान्न द्वितीयक्षणोत्पन्नादृष्टसंयोगादिना तृतीयक्षणेऽपेक्षाबुद्धिनाशः सामानाधिकरण्यसम्बन्धनिवेशान्न शब्दादिना व्यधिकरणानां ज्ञानेच्छादीनां नाशः स्वाव्यवहितपूर्ववृत्तित्वसम्बन्धनिवेशाच्च न ज्ञानादीनां उत्पत्तिकाले इच्छादिना नाशः। केचित्तु स्वत्वस्य तद्व्यक्तिपर्यवसायितया तत्तद्गुणस्य तत्तद्गुणो नाशकः अपेक्षाबुद्धेस्तु द्वित्वप्रत्यक्षमित्याहुः। परे

## रामरुद्रीयम्.

सत्त्वे रूपान्तरानुत्पत्त्या अन्वयव्यभिचारासम्भवात्। एवमुत्तरत्रापि। पाकजन्यरूपादिना घटवृत्तिगगनादिसंयोगस्य नाशानुत्पादाद्व्यभिचारो बोध्यः॥ **व्यधिकरणानामिति**। इदं च समानाधिकरणगुणानामेव नाशकत्वमिति वस्तुगतिमनुरुध्योक्तं व्यधिकरणेच्छया शब्दनाशेऽपि तस्य द्विक्षणावस्थायित्वनिर्वाहेष्टापत्तिसम्भवात् परं तु अस्मदुक्त्यैव व्यावृत्तिरिति ध्येयम्॥ **उत्पत्तिकालिकेच्छादिनेति**॥ पूर्वक्षणोत्पन्नेच्छादिनेत्यर्थः। यद्यपि स्वस्यैव स्वनाशकत्वापत्तिरेव वक्तुमुचिता तथापि स्वाव्यवहितपूर्ववर्तित्वस्य गुरुत्वेन तत्स्थाने स्वाभिन्नत्वमेव निवेश्य स्वस्य स्वनाशकत्ववारणसम्भवादेतावत्पर्यन्तानुधावनमिति मन्तव्यम्। अपेक्षाबुद्धिनाशं प्रत्यपि तृतीयक्षणोत्पन्नद्वित्वनिर्विकल्पकव्यक्तीनां तत्तद्व्यक्तित्वेन कारणत्वेऽनन्तकार्यकारणभावापत्त्या गौरवात्तत्तैककारणताया अपि वक्तुं शक्यत्वेन गौरवस्वीकारानौचित्यादित्याशयेनाह॥ **अपेक्षाबुद्धेस्त्विति**॥ एकस्मिन् क्षणे नानाविशेषगुणव्यक्तीनां नाशेन तद्व्यक्तिनाशं प्रति तत्तद्व्यक्तित्वेन कारणत्वकल्पने बहुतरादिकार्यकारणभावाधिक्यसम्पादकं अतो लाघवेन तत्तत्क्षणोत्पन्नयोग्यविभुविशेषगुणनाशं प्रति

## प्रभा.

अपेक्षाबुद्धिद्वितीयक्षणे तदधिकरणे ज्ञानादिजनकसामग्रीसत्त्वेऽपि ज्ञानादिकं नोत्पद्यत इत्यत्र प्रमाणाभावात् स्वद्वितीयक्षणोत्पन्नेच्छादीनां प्रति स्वद्वितीयक्षणोत्पन्नानां समानधिकरणज्ञानादीनामसमानाधिकरणशब्दादीनां चानुगतत्वेन कारणत्वे बाधकाभावात् कारणतावच्छेदकसंबन्धकोटौ सामानाधिकरण्यनिवेशस्य वैयर्थ्यात् तस्मादस्मदुक्तरीत्यैव वक्तव्यमिति । परेतु स्वत्वस्य तत्तद्व्यक्तिपर्यवसायितया तत्तद्गुणस्य तत्तद्गुणो नाशकः अपेक्षाबुद्धेस्तु द्वित्वप्रत्यक्षमित्याहुः । अन्येतु एतत्क्षणोत्पत्तिकयोग्यविभुविशेषगुणत्वेन नाश्यता एतत्क्षणोत्तरक्षणवृत्तित्वविशिष्टगुणत्वेन नाशकता । अपेक्षाबुद्धिनाशे द्वित्वप्रत्यक्षं विशेषसामग्री चरमज्ञानादिकं तूत्तरक्षणवृत्तित्वविशिष्टं स्वमेव नाशकं तत्तत्क्षणोत्पत्तिकसकलविशेषगुणसाधारणं चेदमित्याहुः । मतद्वयमपि तत्तद्व्यक्तिघटिततया क्षणघटिततया च तत्तद्व्यक्तिभेदेन क्षणभेदेन

## मञ्जूषा.

क्षणवृत्तित्वरूपं स्वाव्यवहितपूर्ववृत्तित्वमपि स्वस्मिन्नबाधितं स्वद्वितीयक्षणप्रागभावाधिकरणप्रथमक्षणवृत्तित्वस्य तत्र सत्त्वात् अतो नाद्यदोषः । नापि द्वितीयः जीवनयोनियत्नवैजात्यस्यैव यावज्जीवमनुवृत्तिस्वीकारात् । नचैवं चतुःक्षणवृत्तीत्यादिवक्ष्यमाणलक्षणे यत्नत्वजातेः घटकता न स्यादिति वाच्यं तावता क्षतेरभावात् । अथवा योग्यत्वमैन्द्रियकगुणत्वव्याप्यजातिमत्त्वं । नचैवं भगवज्ज्ञानेच्छाकृतीनामुक्तरीत्यैव स्वेन नाशापत्तिः जन्ययोग्यविशेषगुणस्यैव नाशकत्वस्वीकारात् । लौकिकसाक्षात्कारविषयनिर्विकल्पकजीवनयोनियत्नान्यतमत्वं वा नाशकतावच्छेदककोटिप्रविष्टं योग्यत्वमस्तु जीवनयोनियत्नमनङ्गीकुर्वतां मतमाश्रित्य वा इदमुक्तमिति अस्त्वेतदेवमेवमपि द्वितीयक्षणोत्पन्नादृष्टेन तृतीयक्षणेऽपेक्षाबुद्धिनाशवारणाय कारणतावच्छेदके योग्यत्वनिवेशनमिति यदुक्तं तदयुक्तमेव । एवमप्यपेक्षाबुद्धिद्वितीयक्षणोत्पन्नज्ञानेच्छादिना तृतीयक्षणे तन्नाशस्य दुर्वारतया योग्यत्वविशेषणस्याजागलगलितस्तनायमानत्वात् । अथापेक्षाबुद्धिद्वितीयक्षणे तदात्मनि योग्यविशेषगुणो नोत्पद्यते नच कारणसत्त्वे कुतो नोत्पद्यत इति वाच्यम् । अगत्या कस्यचित्प्रतिबन्धकस्य कल्पनात् आनुभाविकं चैतत् लोके हि पुमान् घटादिकं गणयन् अवहितचित्तो दृश्यते यस्तु चित्तं नावधत्ते नासौ द्वित्वादिकं साक्षात्करोति जीवनयोनियत्नस्तु नाभ्युपेयते तद्व्यावृत्तमेव योग्यत्वं कारणतावच्छेदके निवेश्यतामिति चेदस्तु तथा

## दिनकरीयम्.

तु एतत्क्षणोत्पन्नयोग्यविभुविशेषगुणत्वेन नाश्यता एतत्क्षणोत्तरक्षणवृत्तित्वविशिष्टयोग्यविभुविशेषगुणत्वेन नाशकता अपेक्षाबुद्धिनाशे तु द्वित्वप्रत्यक्षं विशेषसामग्री तेनापेक्षाबुद्ध्युत्तरक्षणे सामान्यसामग्रीसत्त्वेऽपि न क्षतिः चरमज्ञानादिकं तूत्तरक्षणवृत्तित्वविशिष्टस्वयमेव नाशकं एतत्क्षणोत्पन्नसकलविशेषगुणसाधारणं चेद-

## रामरुद्रीयम्.

तत्क्षणोत्तरक्षणवृत्तित्वविशिष्टगुणत्वेनैव कारणता वक्तुमुचितेत्याशयेनाह ॥ **एतत्क्षणोत्पन्नेति** ॥ नन्वेवमपेक्षाबुद्धेरपि स्वद्वितीयक्षणवृत्तिगुणेन नाशापत्तिस्तथा च द्वित्वनिर्विकल्पकक्षण एवापेक्षाबुद्धिनाशे चतुर्थक्षणे द्वित्वनाशाद्विषयाभावेन तत्क्षणे द्वित्वविशिष्टप्रत्यक्षानुपपत्तिरित्यत आह ॥ **अपेक्षाबुद्धीत्यादि** ॥ **विशेषसामग्रीति** ॥ तथा च विशेषसामग्रीसहिताया एव सामान्यसामग्र्याः कार्योपधायकतया सामान्यसामग्रीसत्त्वेऽपि द्वित्वप्रत्यक्षरूपविशेषकारणाभावात् तृतीयक्षणे नापेक्षाबुद्धिविनाश इति भावः । नन्वेवं प्रथमकल्पे यज्ज्ञानानन्तरं मुक्तिस्तादृशज्ञानानन्तरं तदात्मनि ज्ञानाद्यनुत्पत्त्या तन्नाशानुपपत्तिः तद्व्यक्तित्वेन स्वस्यैव नाशकत्वे तस्य क्षणिकत्वापत्तिः । यदि च तदनन्तरमपि तत्र घटादिसंयोगोत्पत्त्या तदेव नाशकमित्युच्यते तथापि महाप्रलयपूर्वतृतीयक्षणोत्पन्नचरमात्मसाक्षात्काराद्वितीयक्षणे गुणोत्पादस्वीकारे क्षणिकगुणानङ्गीकारेण तृतीयक्षणे महाप्रलयानुपपत्तेस्तन्नाशकं दुर्लभमेव । न च चरमात्मसाक्षात्कारेणादृष्टमात्रनाशे कारणाभावेन महाप्रलयानुपपत्तिरिति वाच्यम् । महाप्रलयानुरोधेन तत्क्षणस्यैव तज्जनकादृष्टनाशे प्रतिबन्धकत्वोपगमाद् इत्यत आह ॥ **चरमज्ञानादिकं त्विति** ॥ अत्र कार्यकारणभावानन्त्यप्रयुक्तगौरवं आहुः

एवं ज्ञानादीनामपि। ज्ञानादिकं हि यदात्मनि विभौ शरीरावच्छेदेनोत्पद्यते तदा घटाद्यवच्छेदेन तदभावोऽस्त्येव । एवं ज्ञानादिकमपि क्षणद्वयावस्थायि। इत्थं चाव्याप्यवृत्तिविशेषगुणवत्त्वं क्षणिकविशेषगुणवत्त्वं चार्थः । पृथिव्यादौ रूपादिर्विशेषगुणोऽस्तीत्यतोऽव्याप्यवृत्तीत्युक्तम् । पृथिव्यादावव्याप्यवृत्तिः संयोगादिरस्तीति विशेषगुणेत्युक्तम् । न च रूपादीनामपि कदाचित् तृतीयक्षणे नाशसम्भवात् क्षणिकविशेषगुणवत्त्वं क्षित्यादावतिव्याप्तमिति वाच्यम् । चतुःक्षणवृत्तिजन्यावृत्तिजातिमद्विशेषगुणवत्त्वस्य तदर्थत्वात् अपेक्षाबु-

## प्रभा.

च कार्यकारणभावबाहुल्यरूपगौरवग्रस्तमित्युपेक्षितम् ॥ **ज्ञानादीनामपीति** ॥ अपिना शब्दस्समुच्चीयते । अव्याप्यवृत्तित्वं क्षणिकत्वं चास्तीति शेषः । तदुपपादयति ॥ **ज्ञानादिकं हीति** ॥ शरीरघटयोरवच्छेद्याधिकरणसंबन्धसत्त्वप्रतिपादनायात्मनि विभावित्युक्तम् ॥ **उत्पद्यत इति** ॥ शरीरस्य ज्ञानकारणत्वादिति भावः ॥ **अस्त्येवेति** ॥ घटस्य ज्ञानाकारणत्वादिति भावः नन्वाव्याप्यवृत्तिक्षणिकविशेषगुणवत्त्वलक्षणे अव्याप्यवृत्तित्वविशेषणं क्षणिकत्वविशेषणं वा व्यर्थमव्यावर्तकत्वादित्यत आह ॥ **इत्थं चेति** ॥ शब्दादीनामव्याप्यवृत्तित्वक्षणिकत्वसिद्धौ चेत्यर्थः ॥ **अर्थ इति** ॥ तथा च तादृशवाक्यस्य लक्षणद्वयपरत्वस्वीकारात् नैकविशेषणवैयर्थ्यमिति भावः । अत्राकाशात्मान्यतरत्वं लक्ष्यतावच्छेदकं बोध्यम् ॥ **अव्याप्यवृत्तीत्युक्तमिति** ॥ अत्राव्याप्यवृत्तिपदस्य दैशिकाव्याप्यवृत्तित्वमर्थः । तेन रूपादेः कालिकाव्याप्यवृत्तित्वेऽपि नातिव्याप्तिः । ननु चित्ररूपानङ्गीकर्तृनवीनैः नानारूपवदवयवारब्धपटस्य प्रत्यक्षानुरोधेन तत्तद्रूपाधिकरणतत्तत्तन्त्ववच्छेदेन तत्तद्रूपस्य स्वीकृतत्वेन रूपस्यापि दैशिकाव्याप्यवृत्तित्वं तथाच तद्वत्त्वमादाय नवीनमते घटादावतिव्याप्तं प्राचीनमते ईश्वरस्यापि लक्ष्यतया तदीयज्ञानादेरव्याप्यवृत्तित्वाभावेन लक्षणमव्याप्तमिति वाच्यमिति चेन्न नवीनमते व्याप्यवृत्त्यवृत्तिगुणत्वन्यूनवृत्तिजातिमद्विशेषगुणवत्त्वस्यैव तदर्थत्वेन रूपत्वस्य तादृशत्वाभावात् नातिव्याप्तिः । ज्ञानत्वादेः तादृशत्वाभावेऽपि तन्मते जीवस्यैव लक्ष्यतया तादृशद्वेषत्वजातिमादाय तत्र लक्षणसमन्वयः प्राचीनमते अव्याप्यवृत्तिवृत्तिगुणत्वन्यूनवृत्तिजातिमद्विशेषगुणवत्त्वस्य तदर्थत्वेन ज्ञानत्वादिरूपतादृशजातिमादाय आत्ममात्रे लक्षणसमन्वयः । चित्ररूपाङ्गीकर्तृप्राचीनमते रूपमात्रस्य व्याप्यवृत्तित्वेन पटादावतिव्याप्तेरनवकाश इति ध्येयम् ॥ **कदाचिदिति** ॥ घटोत्पत्तितृतीयक्षणे घटनाश-

## मञ्जूषा.

तथापि सुषुप्तिप्राक्कालोत्पन्नज्ञानेच्छादिवदपेक्षाबुद्धिः स्वयमेव द्वितीयक्षणविशिष्टा सती स्वात्मानं कुतो न विनाशयेत् स्वोत्पत्त्यधिकरणक्षणप्रागभावाधिकरणक्षणप्रागभावानधिकरणस्वोत्पत्त्यधिकरणक्षणप्रागभावाधिकरणक्षणवृत्तित्वरूपस्वाव्यवहितपूर्ववृत्तित्वानिवेशे च सुषुप्तिप्राक्कालोत्पन्नज्ञानेच्छादिविनाशकदुर्भिक्षापत्तेः ।

## दिनकरीयम्.

भित्यप्याहुः । शब्दस्याव्याप्यवृत्तित्वक्षणिकत्वे उपपाद्य ज्ञानादीनामपि ते उपपादयति ॥ **एवमिति** ॥ क्षणिकपदस्य वैयर्थ्याल्लक्षणद्वयाभिप्रायेणार्थमाह ॥ **इत्थं चेति** ॥ **अव्याप्यवृत्तीत्युक्तमिति** ॥ न च रूपादीनामपि कालिकाव्याप्यवृत्तित्वात्कथं तद्वारणमिति वाच्यं अव्याप्यवृत्तिपदेन दैशिकाव्याप्यवृत्तित्वस्योक्तत्वात् ॥ **विशेषगुणेत्युक्तमिति** ॥ विशेषगुणाश्च बुद्ध्यादिषट्कं स्पर्शान्ताः स्नेहः सांसिद्धिको द्रवः । अदृष्टभावनाशब्दा अमी वैशेषिका गुणा इति वक्ष्यमाणास्तल्लक्षणं तु गुणनिरूपणे वक्ष्यते । यत्तु अव्याप्यवृत्तिविशेषगुणवत्त्वमीश्वरेऽव्याप्तं तद्गुणानां व्याप्यवृत्तित्वादिति तन्न अव्या-

## रामरुद्रीयम्.

रित्यनेन सूचितम् ॥ **व्याप्यवृत्तित्वादिति** ॥ ईश्वरस्य शरीरविरहेण तदवाच्छिन्नत्वासम्भवादिति भावः ।

द्धिः क्षणत्रयं तिष्ठति क्षणचतुष्टयं तु न किमपि जन्यज्ञानादिकं तिष्ठति रूपत्वादिकं तु क्षणचतुष्टयस्थायिन्यपि रूपादौ वर्तत इति तद्व्युदासः। ईश्वरज्ञानस्य चतुःक्षणवृत्तित्वात् ज्ञानत्वस्य तद्वृत्तित्वाज्जन्येत्युक्तम्। यद्याकाशजीवात्मनोः साधर्म्यं तदा जन्येति न देयं द्वेषत्वादिकमादाय लक्षणसमन्वयात् परममहत्त्वस्य तादृशगु-

## प्रभा.

स्थल इत्यर्थः ॥ **चतुःक्षणवृत्तीति** ॥ चतुःक्षणवृत्तीनि यानि जन्यानि तदवृत्तिर्या जातिः शब्दत्वादिः तद्वान् यो विशेषगुणः शब्दादिः तद्वत्त्वस्याकाशादौ सत्त्वात् लक्षणसमन्वयः ॥ **तदर्थत्वादिति** ॥ क्षणिकविशेषगुणवत्त्वशब्दतात्पर्यविषयत्वादित्यर्थः। शब्दत्वादेः जन्यवृत्तित्वादसंभव इति चतुःक्षणवृत्तित्वं जन्ये निवेशितं अवृत्तित्वघटकवृत्तित्वं समवायेन बोध्यं तेन जन्यमात्रे कालिकसंबन्धेन शब्दत्वादेः वृत्तित्वेऽपि नासंभवः। नन्वसंभववारणाय त्रिक्षणवृत्तित्वमेव निवेश्यतां चतुष्ट्वापेक्षया त्रित्वस्य प्रथमोपस्थितत्वादत आह ॥ **अपेक्षाबुद्धिरिति** ॥ तथाच ज्ञानत्वस्य त्रिक्षणवृत्तिजन्यावृत्तित्वाभावात् ज्ञानत्वस्य संग्रहो न स्यादिति भावः। नच ज्ञानत्वस्यातादृशत्वेऽपि तादृशेच्छात्वादिकमादायात्ममात्रे लक्षणसमन्वयसंभवे प्रथमोपस्थितत्रिक्षणवृत्तित्वघटितलक्षणं परित्यज्य ज्ञानत्वसंग्राहकचतुःक्षणवृत्तित्वघटितलक्षणकरणे बीजाभाव इति वाच्यम् तदसंग्रहे योग्यविभुविशेषगुणानां क्षणिकत्वे सति विशेषगुणत्वरूपलक्षणस्य त्रिक्षणवृत्तिजन्यावृत्तिजातिमत्त्वरूपक्षणिकत्वघटितत्वेन लक्ष्यतावच्छेदकाश्रये ज्ञाने अव्याप्त्यापत्त्या त्रिक्षणवृत्तित्वघटितलक्षणं परित्यज्य ज्ञानत्वसंग्राहकचतुःक्षणवृत्तित्वघटितलक्षणं कृतमिति ध्येयम् ॥ **तद्व्युदास इति** ॥ रूपत्वस्य चतुःक्षणवृत्तिजन्यावृत्तित्वाभावात् न घटादावतिव्याप्तिरिति भावः। मूले आकाशशरीरिणामित्यत्र शरीरिशब्दस्य जीवे शक्ततया आकाशजीवयोरेवेदं लक्षणमिति नवीनमतमनुसृत्याह ॥ **मुक्तावल्यां यद्याकाशेति** ॥ **जन्येति न देयमिति** ॥ इदमुपलक्षणं त्रिक्षणवृत्तित्वमेव निवेशनीयं नतु चतुःक्षणवृत्तित्वमपीति बोध्यम्। ननु ज्ञानत्वादेरतादृशतया जीवे वा कथं लक्षणसमन्वय इत्यत आह ॥ **द्वेषत्वादिकमिति** ॥ यद्यपि ज्ञानत्वादीनां चतुःक्षणवृत्त्यवृत्ति-

## मञ्जूषा.

अथोच्येतापेक्षाबुद्धिनाशे द्वित्वनिर्विकल्पकस्य विशेषसामग्रीत्वात्र तृतीयक्षणेऽपेक्षाबुद्धिनाश इति तदा

## दिनकरीयम्.

प्यवृत्तिपदेनाव्याप्यवृत्तिवृत्तिगुणत्वव्याप्यजातिमत्त्वस्य विवक्षितत्वात् ॥ **चतुःक्षणवृत्तीति** ॥ चतुःक्षणवृत्तीनि यानि जन्यानि घटादीनि तदवृत्तिर्या जातिर्ज्ञानत्वादिस्तद्वान् विशेषगुणो ज्ञानादिस्तद्वत्त्वस्यात्मादौ सत्त्वाल्लक्षणसमन्वयः। अत्र च वृत्तित्वं समवायेन विवक्षितम्। तेन जन्यमात्रे कालिकेन ज्ञानत्वस्य वृत्तित्वेऽपि न क्षतिः वृत्त्यन्तं च ज्ञानत्वादेर्जन्यवृत्तित्वात् असम्भववारणाय ॥ **तदर्थत्वादिति** ॥ क्षणिकविशेषगुणवत्पदार्थत्वादित्यर्थः। ननु त्रिक्षणवृत्तित्वमुपेक्ष्य चतुःक्षणवृत्तित्वपर्यन्तानुधावने प्रयोजनाभावः न च त्रित्वचतुष्ट्वयोर्लाघवगौरवविरहेण चतुष्ट्वोपादाने इच्छैव नियामिकेति वाच्यम्। प्रथमोपस्थितत्वरूपलाघवस्य त्रित्वे सम्भवादत आह ॥ **अपेक्षाबुद्धिरिति** ॥ तथा च त्रिक्षणवृत्तित्वस्य प्रवेशे ज्ञानत्वस्य सङ्ग्रहो न स्यादिति भावः। चतुःक्षणवृत्तिजन्यावृत्तीत्यस्य फलमाह ॥ **रूपत्वादिकं त्विति** ॥ **तद्व्युदासः** रूपत्वजातिव्युदासः। तथा च रूपत्वजातिमद्विशेषगुणवति घटादौ योऽतिव्याप्तिः सा निरस्तेति भावः। जन्येत्यस्य फलमाह ॥ **ईश्वरेति** ॥ शरीरिणामित्यत्र मूले शरीरिपदस्य यथाश्रुतार्थकत्वाभिप्रायेणाह ॥ **यद्याकाशजीवात्मनोरिति** ॥ ननु जन्यत्वाप्रवेशे ज्ञानत्वेच्छात्वप्रयत्नत्वजातीनां चतुःक्षणवृत्त्यवृत्तित्वाभावात्कथं लक्षणसमन्वय इत्यत आह ॥ **द्वेषत्वा-**

## रामरुद्रीयम्.

**न क्षतिरिति** ॥ नासम्भव इत्यर्थः। चतुर्थक्षणवृत्तीत्यस्य फलमाह ॥ **वृत्त्यन्तं चेति** ॥ ज्ञानत्व

णत्वाच्चतुर्थक्षणे द्वित्वादीनां नाशाभ्युपगमात् द्वित्वादीनामपि तथात्वात्तद्वारणाय वि-शेषेति । त्रिक्षणवृत्तित्वं वा वक्तव्यम् । इच्छात्वादिकमादायात्मनि लक्षणसम-न्वयः ॥ २७ ॥

## प्रभा.

त्वाभावेऽपि ज्ञानत्वसमानाधिकरणानां अनुमितित्वादीनां चाक्षुषत्वादीनां च तादृशजातिरूपत्वेन त-द्वद्विशेषगुणवत्त्वमादाय जीवे लक्षणसमन्वयसंभवेऽनुपस्थितद्वेषत्वादिकमादाय लक्षणोपपादने बीजाभावः तथापि तृतीयक्षणवृत्तिध्वंसप्रतियोगीनि यावन्ति रूपाणि तेषां तादात्म्यसंबन्धेन तत्तद्व्यक्तित्वेन प्रति-योगितासंबन्धेन तन्नाशं प्रति हेतुत्वकल्पने गौरवापत्त्या तृतीयक्षणवृत्तिध्वंसप्रतियोगिषु रूपेषु याव-त्सु तादृशरूपनाशसामग्रीघटकतावच्छेदकतया तादृशसामग्रीघटकतया वा एकं वैजात्यं स्वीकृत्य तादृशवैजा-त्यपुरस्कारेण कारणत्वाङ्गीकर्तृप्राचीनैकदेशिमते तादृशजातेरपि निरुक्तरूपतया तद्वद्विशेषगुणवत्त्वमादाय घटादावतिव्याप्तिवारणाय जातिपदस्य गुणविभाजकजातिपरत्वावश्यकतयाऽनुमितित्वादीनां अतादृशत्वेन द्वेषत्वादिकमित्युक्तम् । नीलत्वादिना सांकर्यवारणाय सप्तवैजात्यस्वीकारेऽपि अनन्तकारणत्वापेक्षया स-प्तकारणत्वस्य लघुत्वानपायात् गुणविभागवाक्यादनुमितित्वादीनां अनुपस्थितत्वाद्वा द्वेषत्वादिकमित्युक्त-मिति ध्येयम् । अत्र शरीरिशब्दस्य मुख्यार्थपरत्वे द्रव्यविभागवाक्यघटकदेहिशब्दस्यापि तुल्ययु-क्त्या मुख्यार्थपरत्वेन नवद्रव्यविभागानन्तर्गततया ईश्वरस्य दशमद्रव्यत्वापत्तिः लक्षणे जन्यत्वचतुर्थ-क्षणिकत्वयोः अनुपादाने योग्यविभुविशेषगुणत्वावच्छिन्नस्य त्रिक्षणवृत्त्यवृत्तिजातिमत्त्वरूपक्षणिकत्वविशिष्टवि-शेषगुणत्वरूपं यल्लक्षणं तस्य ज्ञानादावव्याप्तिश्चेति अस्वरसं विचिन्त्य यदीत्युक्तमिति ध्येयम् ॥ **तादृशगुणत्वादिति** ॥ चतुःक्षणवृत्तिजन्यावृत्तिजातिमद्गुणत्वादित्यर्थः । परममहत्त्वत्वस्य अहं म-हानिति प्रतीतिसिद्धजातिरूपत्वादिति भावः । ननु जन्यत्वाविशेषितलक्षणपक्षे परममहत्त्वत्वस्य चतुः-क्षणवृत्त्यवृत्तिजातिरूपत्वाभावात् तस्य जातित्वे प्रमाणाभावाच्च परममहत्त्वस्यातादृशत्वेन न तदादाय कालादावतिव्याप्तिः अत आह ॥ **चतुर्थक्षण इति** ॥ नन्वाकाशात्मनोस्साधर्म्यप्रतिपादकवाक्यादेव योग्यविभुविशेषगुणानामपि लक्षणं बोध्यमिति नियमाभावात् आकाशात्मनोर्लक्षणवाक्यादेव लक्षणाप्रति-पादनेऽपि क्षत्यभावाल्लाघवाच्च त्रिक्षणवृत्तिघटितमेव लक्षणं युक्तमित्यभिप्रायेणाह ॥ **त्रिक्षणवृत्ति-त्वं वेति** ॥ २७ ॥

## मञ्जूषा.

किं योग्यत्वस्य कारणतावच्छेदककोटिप्रवेशनेन । एतेन विशेषत्वनिवेशनमपि प्रत्याख्यातम् । यदातु

## दिनकरीयम्.

**दिकमिति** ॥ आदिना शब्दत्वपरिग्रहः । विशेषपदस्य कृत्यमाह ॥ **परममहत्त्वस्येति** ॥ **तादृ-शगुणत्वादिति** ॥ चतुःक्षणवृत्तिजन्यावृत्तिजातिमद्गुणत्वादित्यर्थः । ननु परममहत्त्वत्वं न जातिः किंत्वपकर्षानाश्रयपरिमाणत्वमित्युक्तं तथा च कथं तदादायातिप्रसङ्ग इत्यत आह ॥ **चतुर्थक्षणे द्वित्वादीनामिति** ॥ यद्वा ननु जन्यपदानुपादाने परममहत्त्वत्वस्य चतुःक्षणवृत्तिवृत्तित्वान्न परममह-त्त्वमादाय कालादावतिव्याप्तिरत आह ॥ **चतुर्थक्षणेति** ॥ **द्वित्वादीनामिति** ॥ **तथात्वादिति** ॥ तादृशजातिमद्गुणत्वादित्यर्थः । प्रथमोपस्थितत्वरूपलाघवमभिसन्धायाह ॥ **त्रिक्षणेति** ॥ २७ ॥

## रामरुद्रीयम्.

स्य सङ्ग्रहो न स्यादित्यनेन ज्ञानत्वमादायात्मनि लक्षणसमन्वयायैव त्रिक्षणवृत्तित्वमुपेक्षितम् । इच्छात्व-मादायैव लक्षणसमन्वयसम्भवेन त्रिक्षणवृत्तीत्यपि शक्यते वक्तुमिति सूचितम् ॥ **यथाश्रुतार्थ-कत्वाभिप्रायेणेति** ॥ स्वावच्छिन्नज्ञानादिमत्त्वसम्बन्धेन शरीरविशिष्टार्थकत्वाभिप्रायेणेत्यर्थः ॥ २७ ॥

## मञ्जूषा.

योग्यत्वविशेषत्वे न कारणतावच्छेदककोटौ प्रविशेत तदा सुषुप्तिप्राक्कालोत्पन्नज्ञानेच्छादेस्तदात्मनि विभौ यत्र क्वापि प्रदेशे तदुत्तरक्षणमवश्यमेवोत्पद्यमानेनानवरतपरिस्पन्दमानापरिमितपवमानपरमाणुसंयोगसन्तानान्तःपातिना केनचित्संयोगेन नाश उपपद्यत इति स्वसमानाधिकरणस्वाव्यवहितपूर्वत्तित्वनिवेशनक्लेशोऽपि नावश्यकः । यदप्युक्तं शब्दादिनेच्छादीनां नाशवारणाय कारणतावच्छेदकसंबन्धमध्ये सामानाधिकरण्यप्रवेश इति तत्र किमिच्छाद्वितीयक्षणोत्पन्नेन शब्देनेच्छाया नाश आपाद्यते उतेच्छोत्पत्तिक्षणोत्पन्नेन । आद्ये इष्टापत्तिः । द्वितीये त्विच्छायां तदव्यवहितपूर्ववृत्तित्वविरहः । ननु पूर्वोक्तं यत्किञ्चित्क्षणघटितं तादृशशब्दाव्यवहितपूर्वक्षणवृत्तित्वं शब्दोत्पत्तिद्वितीयक्षणमादाय तदिच्छायामक्षतमिति वाच्यम् । तथापि तादृशशब्दरूपकारणवशात्तदिच्छायाः तृतीयक्षणे नाशापादने इष्टत्वादिच्छोत्पत्तिक्षणे कारणतावच्छेदकीभूताव्यवहितपूर्वक्षणवृत्तित्वघटकस्य शब्दोत्पत्तिद्वितीयक्षणस्यानिष्पन्नतया तदिच्छोत्पत्तिद्वितीयक्षणे तन्नाशस्यापादयितुमशक्यत्वादन्यथा ज्ञानयोरेव न यौगपद्यमिति दिनकरेण गुणनिरूपणे उक्ततया तत्पक्षे इच्छोत्पत्तिकालोत्पत्तिकद्वेषेण इच्छाया द्वितीयक्षणे नाशप्रसङ्गात् । किं बहुना ज्ञानेच्छादेस्सर्वस्य द्वितीयक्षणे नाशप्रसंगः स्वद्वितीयक्षणमादाय स्वाव्यवहितपूर्वत्वसंबन्धस्य स्वास्मिन्नुत्पत्तिक्षणेऽपि त्वदुक्तरीत्या उपपादयितुं शक्यत्वात् तस्मात्कारणनिष्पत्तिरिव कारणतावच्छेदकीभूताव्यवहितपूर्वक्षणवृत्तित्वघटकस्वाधिकरणक्षणनिष्पत्तिरपि कार्योत्पत्तेः प्रागावश्यक इति प्रकृतेऽवश्यं वक्तव्यतया न शब्देन इच्छाया द्वितीयक्षणे नाशप्रसक्तिरिति व्यर्थं स्वसामानाधिकरण्यनिवेशनमेवञ्च सुषुप्तिप्राक्कालोत्पन्नज्ञानेच्छादीनां यत्र क्वचिदात्मनि पृथिव्यादौ वा तदुत्तरक्षणमुत्पन्नेन येन केनापि गुणेन नाशस्संभवति एवञ्च प्रतियोगितासंबन्धेन योग्यविभुविशेषगुणनाशत्वावच्छिन्नं प्रति स्वाव्यवहितपूर्वक्षणवृत्तित्वसंबन्धेन गुणत्वेन कारणत्वमिति पर्यवसन्नं कार्यतावच्छेदककोटिप्रविष्टानां तु विशेषणानां प्रयोजनानि महादेवोक्तरीत्यावसेयानि । ननु तद्रीतिस्तव मते न संभवति तथाहि प्रायश्चित्तादिजन्यादृष्टनाशे रूपादिनाशे संयोगादिनाशे च न व्यभिचारः प्रसज्यते तत्रापि कस्यचित् गुणस्य स्वाव्यवहितपूर्वक्षणवृत्तित्वसंबन्धेन सत्त्वादिति चेन्नहि वयं व्यतिरेकव्यभिचारवारणं तत्प्रयोजनमाचक्ष्महे किन्त्वन्वयव्यभिचारवारणं प्रसज्यते ह्यन्वयव्यभिचारः गुणनाशत्वमात्रस्य कार्यतावच्छेदकत्वे अदृष्टरूपसंयोगेषु तृतीयक्षणे गुणनाशत्वावच्छिन्नापत्तेर्दुर्वारत्वात् नच प्रायश्चित्तपाकाश्रयनाशविभागादीनां विशेषसामग्रीत्वान्नानुपपत्तिरिति वाच्यं प्रायश्चित्तादिकं विनापि स्वाव्यवहितपूर्वक्षणवृत्तित्वसंबन्धेन गुणरूपसामान्यसामग्र्या ज्ञानादौ गुणनाशत्वावच्छिन्नोत्पादनेन तेषां विशेषसामग्रीत्वासंभवात् । नच योग्यत्वादेः कार्यतावच्छेदकप्रवेशेऽपि गुणरूपकारणबलाददृष्टादौ योग्यविभुविशेषगुणनाशत्वावच्छिन्नापत्तिर्दुर्वारेति वाच्यम् तत्तद्ध्वंसव्यक्तित्वावच्छिन्नं प्रति तत्तत्प्रतियोगिव्यक्तेः तत्तद्व्यक्तित्वेनापि कारणतया गुणत्वावच्छिन्नरूपसामान्यसामग्र्या प्रतियोगितासंबन्धेन योग्यविभुविशेषगुणनाशत्वावच्छिन्ने जननीये तत्तद्योग्यविभुविशेषगुणव्यक्त्यन्यतमस्य तादात्म्यसंबन्धेन विशेषसामग्रीत्वाङ्गीकारेण रूपादृष्टादौ योग्यविभुविशेषगुणनाशत्वावच्छिन्नापादनासंभवात् अथवा प्रतियोगितासंबन्धेन योग्यविभुविशेषगुणनाशत्वावच्छिन्नं प्रति तादात्म्यसंबन्धेन योग्यविभुविशेषगुणत्वेन कारणतान्तरं स्वीकृत्य स्वाव्यवहितपूर्वक्षणवृत्तित्वसंबन्धेन गुणत्वावच्छिन्नस्य तादात्म्यसंबन्धेन योग्यविभुविशेषगुणत्वावच्छिन्नस्य च परस्परसहकारेण फलोपधायकत्वस्वीकारान्नोक्तापत्तिः । अथैतादृशकारणतास्वीकारे गुणकार्यतावच्छेदककोटौ योग्यत्वादिनिवेशे प्रयोजनविरहः स्वाव्यवहितपूर्वक्षणवृत्तित्वसंबन्धेन गुणत्वावच्छिन्नरूपसामान्यसामग्र्या प्रतियोगितासंबन्धेन गुणनाशत्वावच्छिन्ने जननीये तादात्म्यसंबन्धेन योग्यविभुविशेषगुणः प्रायश्चित्तं पाक आश्रयनाशो विभाग इत्यादीनामन्यतमस्य विशेषसामग्रीत्वाङ्गीकारेणादृष्टादेः गुणरूपसामान्यकारणमात्रेण तृतीयक्षणे नाशापादनासंभवादिति चेदुच्यते गुणरूपसामान्यसामग्री प्रतियोगितासंबन्धेन

## मञ्जूषा.

गुणनाशत्वावच्छिन्नमुत्पादयति दर्शितकारणविशेषणेषु अन्यतमं ह्यपेक्षेत तथाच घटात्मविभागरूपविशेषकारणबलाददृष्टे प्रतियोगितासंबन्धेन गुणनाशत्वावच्छिन्नापत्तिरेवं प्रायश्चित्तरूपविशेषकारणबलात्संयोगादौ तदापत्तिः । अथ प्रायश्चित्तस्यादृष्टनाश एव विशेषसामग्रीत्वं विभागस्य संयोगनाश एवेति चेत् को नेत्याह नैतावता कृतकृत्यता द्वे हि सामग्रीव्याप्ती एका सामान्यसामग्रीनिष्ठा सामान्यधर्मावच्छिन्ननिरूपिता अन्या च विशेषसामग्रीनिष्ठा विशेषधर्मावच्छिन्ननिरूपिता तत्राद्यायां विशेषसामग्र्योऽन्यतमत्वेन निवेश्यन्ते द्वितीया तु तत्तद्विशेषभेदाद्भिद्यते तद्यथा जन्यज्ञानत्वावच्छिन्नसामान्यसामग्री आत्ममनस्संयोगादिः विशेषसामग्री चक्षुस्संयोगादिः व्याप्तिज्ञानादिश्च । तत्र चक्षुस्संयोगालोकसंयोगोद्भूतरूपादिघटिता एका विशेषसामग्री त्वक्सन्निकर्षोद्भूतस्पर्शादिघटिता चैका एवमन्या अपि वाच्याः । एवञ्च तावत्सामग्र्यन्यतमाविशिष्टात्ममनस्संयोगादिः यत्रात्मनि तत्रावश्यं जन्यज्ञानत्वावच्छिन्नमिति सामान्यसामग्रीव्याप्तिः आत्ममनस्संयोगविशिष्टचक्षुस्सन्निकर्षोद्भूतरूपादिघटितसामग्री यत्र तत्र चाक्षुषं आत्ममनस्संयोगाविशिष्टत्वक्सन्निकर्षोद्भूतस्पर्शादिघटितसामग्री यत्र तत्र स्पार्शनमिति विशेषसामग्रीव्याप्तिः प्रकृते च गुणजन्यतावच्छेदकं यदि गुणनाशत्वं तदा गुणस्य सामान्यसामग्रीत्वं प्राप्तं प्रतियोगितया योग्यविभुविशेषगुणनाशं प्रति तादात्म्येन योग्यविभुविशेषगुणतया पापनाशं प्रति स्वाश्रयावच्छेद्यतासंबन्धेन गङ्गास्नानमित्येवं विशेषसामग्री तेनेत्थं व्याप्तिः योग्यविभुविशेषगुणगङ्गास्नानाद्यन्यतमविशिष्टो गुणः स्वाव्यवहितपूर्वक्षणवृत्तित्वसंबन्धेन यत्र तत्र प्रतियोगितया गुणनाश इति सामान्यसामग्र्या स्वाव्यवहितपूर्वक्षणवृत्तित्वसंबन्धेन गुणसत्ताविशिष्टयोग्यविभुविशेषगुणो यत्र तत्र तादात्म्येन तत्र प्रतियोगितया योग्यविभुविशेषगुणनाशः यत्र तु तत्सत्ताविशिष्टं गङ्गास्नानं तत्र पापविशेषनाशो विशेषगतयेति रीत्या विशेषसामग्रीणां तत्रच गङ्गास्नानदशायां सामान्यसामग्रीबलात्प्रतियोगितया गुणनाशः यथा पापविशेषे जन्यते तथा तद्वृत्तिसंयोगेऽपि कुतो न जन्यते अतः प्रतियोगितया पापविशेषनाशं प्रति तादात्म्येन पापविशेषस्यापि कारणतान्तरं स्वीकृत्य प्रायश्चित्तविशिष्टपापविशेषस्यैव विशेषसामग्रीत्वं वाच्यमेवं संयोगादिस्थलेऽपि । एवञ्च ध्वंसप्रतियोगिनो बहवो मध्यविधाः कार्यकारणभावाः कल्पनीया इति गौरवम् । अथ तत्तद्ध्वंसव्यक्तिं प्रति तत्तत्पापविशेषव्यक्तीनां तत्तद्व्यक्तित्वेन कारणतायास्तवाप्यावश्यकतया गङ्गास्नानविशिष्टं तावत्पापविशेषान्यतमत्वावच्छिन्नं तादात्म्येनैका विशेषसामग्री एवं विभागविशिष्टं तावत्संयोगव्यक्त्यन्यतमत्वावच्छिन्नं तादात्म्येनैका विशेषसामग्रीति न गङ्गास्नानदशायां सामान्यसामग्रीबलात्संयोगादौ गुणनाशत्वावच्छिन्नापत्तिरिति चेत्संभवत्येवं किन्तु पापविशेषरूपसंयोगादिनाशे गुणस्य दर्शितसंबन्धेन सामान्यसामग्रीत्वं न संभवति गङ्गास्नानपाकादिघटितसामग्रीनिष्ठासु पापविशेषध्वंसत्वरूपध्वंसत्वाद्यवच्छिन्ननिरूपितव्याप्तिषु स्वाव्यवहितपूर्वत्वसंबन्धेन गुणस्य प्रयोजनाभावेनावच्छेदककोटौ अनिवेशनीयत्वादतस्तद्व्यावृत्तमेव कार्यतावच्छेदकमभ्युपेतव्यमुत्पन्नानां च येषां विनाशः स्वाव्यवहितपूर्वक्षणवृत्तित्वसंबन्धेन गुणादतिरिक्तं कारणं नापेक्षते तावद्विनाशसाधारणं च तद्वाच्यं तच्च परिशेषाद्योग्यविभुविशेषगुणनाशत्वमेव यदि चैवमपेक्षाबुद्धेः तृतीयक्षणे नाशापत्तिरुक्तकारणबलात् । नचापेक्षाबुद्धिनाशे द्वित्वप्रत्यक्षस्य विशेषसामग्रीत्वान्न दोष इति वाच्यं द्वित्वप्रत्यक्षं विनापि ज्ञानान्तरे गुणरूपसामान्यसामग्रीबलेन फलोत्पादेन तस्य विशेषसामग्रीत्वासंभवादिति विभाव्यते तदास्त्वपेक्षाबुद्ध्यतिरिक्तयोग्यविभुविशेषगुणनाशत्वमेव गुणकार्यतावच्छेदकमपेक्षाबुद्धिनाशत्वं च द्वित्वप्रत्यक्षस्य । न चैवं गुणरूपकारणबलादपेक्षाबुद्धौ तृतीयक्षणेऽपेक्षाबुद्ध्यन्ययोग्यविभुविशेषगुणत्वावच्छिन्नापत्तिरिति वाच्यम् प्रतियोगितासंबन्धेनापेक्षाबुद्ध्यन्ययोग्यविभुविशेषगुणनाशत्वावच्छिन्नं प्रति तादात्म्यसंबन्धेनापेक्षाबुद्ध्यन्ययोग्यविभुविशेषगुणत्वेन कारणतान्तरं स्वीकृत्य स्वाव्यवहितपूर्वक्षणवृत्तित्वसंबन्धेन गुणस्य तादात्म्यसंबन्धेनापेक्षाबुद्ध्यन्ययोग्यविभुविशेषगुणस्य च परस्परसहकारित्वस्वीकारात् गुणरूपसामान्यसामग्र्या फले जननीये अपेक्षाबुद्ध्यन्ययोग्यविभुविशेषगुणनाशत्वव्याप्यतत्तद्ध्वंसव्यक्तित्वावच्छिन्नं प्रति तत्तद्व्यक्तित्वेन कारणीभू-

रूपद्रवत्वप्रत्यक्षयोगिनः प्रथमास्त्रयः ।
गुरुणी द्वे रसवती द्वयोर्नैमित्तिको द्रवः ॥ २८ ॥

**रूपद्रवत्वेति** ॥ पृथिव्यप्तेजसां रूपवत्त्वं द्रवत्ववत्त्वं प्रत्यक्षविषयत्वं चेत्यर्थः ! न च चक्षुरादीनां भर्जनकपालस्थवह्नेरूष्मणश्च रूपवत्त्वे किं मानमिति वाच्यम् । त-

**मञ्जूषा**

तानां तत्तद्व्यक्तीनामन्यतमत्वेन विशेषसामग्रीत्वस्वीकाराद्वा दर्शितदोषानवकाशात् । यदि च योग्यत्वविभुसमवेतत्वविशेषगुणत्वानां बहुपदार्थघटितानां मिथो विशेषणविशेष्यभावे विनिगमनाविरहः अवच्छेदकगौरवं चेति मन्यते तदा बुद्धिनाशत्वेच्छानाशत्वादिकमेव कार्यतावच्छेदकं बुद्धिनाशस्थले अपेक्षाबुद्ध्यन्यबुद्धिनाशत्वमेव कार्यतावच्छेदकमपेक्षाबुद्धित्वं च एकत्वान्यसंख्याद्युपधायकत्वम् । अथापेक्षाबुद्धिनाशे द्वित्वादिप्रत्यक्षस्य कारणत्वं न संभवति घटद्वयविषयकापेक्षाबुद्धिजन्यघटद्वयनिर्विकल्पकात्म रूपटद्वयविषयकापेक्षाबुद्धेः घटद्वयद्वित्वसविकल्पकेन नाशापत्तिरेवमपेक्षाबुद्धिद्वितीयक्षणे योग्यविभुविशेषगुणोत्पत्तिस्वीकारपक्षे घटद्वयविषयकापेक्षाबुद्धिद्वितीयक्षणोत्पन्नपटद्वयविषयकापेक्षाबुद्धेः घटद्वयनिर्विकल्पकेन च नाशापत्तिरिति चेन्नापेक्षाबुद्धिनाशे द्वित्वप्रत्यक्षस्य स्वप्रागभावाधिकरणक्षणप्रागभावाधिकरणक्षणवृत्तित्वसंबन्धेनैव द्वित्वप्रत्यक्षादेः कारणत्वस्वीकारादित्यास्तां विस्तरः ॥ **अव्याप्यवृत्तिविशेषगुणवत्त्वमिति** ॥ एतच्चाकाशजीवात्मनोरेव साधर्म्यमिति पक्षे सर्वात्मसाधारणसाधर्म्यपक्षे तु अव्याप्यवृत्तिवृत्तिगुणत्वव्याप्यजातिमद्विशेषगुणवत्त्वमिति बोध्यम् ॥ **चतुःक्षणवृत्तीति** ॥ अत्र चतुर्थक्षणवृत्तीति केचित् पठन्ति तत्पक्षे ज्ञानाद्युत्पत्तिक्षणस्यापि किञ्चिदपेक्षया चतुर्थत्वात् अप्रासिद्धिः । स्वचतुर्थत्वं विवक्ष्यत इति चेत्किं स्वचतुर्थत्वं स्वाधिकरणक्षणध्वंसाधिकरणक्षणध्वंसाधिकरणक्षणध्वंसाधिकरणक्षणध्वंसानधिकरणत्वे सति स्वाधिकरणक्षणध्वंसाधिकरणक्षणध्वंसाधिकरणक्षणध्वंसाधिकरणत्वमिति चेत्तर्हि ईश्वरज्ञानस्येत्याद्यग्रिमग्रन्थाविरोधः । ईश्वरज्ञानीयदर्शितचतुर्थक्षणाप्रासिद्धेः । यदि तु चतुर्थत्वघटकं सत्यन्तमिह न निवेश्यते प्रयोजनाभावादित्युच्यते तदा चतुर्थेत्युक्तावपि न क्षतिः ॥ **क्षणत्रयं तिष्ठतीति** ॥ तथाच ज्ञानत्वसंग्रहाय त्रिक्षणवृत्तित्वं परित्यज्य चतुःक्षणवृत्तित्वमुक्तमिति भावः । ननु ज्ञानत्वस्य संग्रहाभावे का क्षतिः इच्छात्वादिकमादाय लक्षणसमन्वयसंभवात् । नचैतदग्रे ग्रन्थकृदेव वक्ष्यतीति वाच्यम् । तथाप्युदक्षरत्वानपायादिति चेदत्रास्मद्गुरुचरणाः यद्यपि इह गगनात्मनोरेव लक्षणं प्रकृतं तथाप्यनेन योग्यविभुविशेषगुणानामपि लक्षणं प्राप्तं न तत्परित्यागमर्हति संभवति हि योग्यविभुविशेषगुणानां अव्याप्यवृत्तिविशेषगुणत्वं क्षणिकविशेषगुणत्वञ्च लक्षणं एवञ्चास्य लक्षणस्य ज्ञानेऽव्याप्तिवारणाय त्रिक्षणवृत्तित्वपरित्यागः अत्र योग्यविभुविशेषगुणलक्षणस्याप्रकृतत्वेनावश्यं वक्तव्यत्वाभावमभिप्रेत्य चाग्रे त्रिक्षणवृत्तित्वं वा बाच्यमिति वक्ष्यतीत्याहुः ॥ **द्वेषत्वादिकमिति** ॥ अनुमितित्वचाक्षुषत्वादेरपि लक्षणघटकत्वसंभवेऽपि तस्य विभागवाक्यादनुपस्थित्या तदपेक्षया द्वेषत्वादेरेव प्रथममुपस्थित्या अनुमितित्वादिकमिति नोक्तम् ॥ **परममहत्त्वस्येति** ॥ इदञ्च जन्यत्वघटितलक्षणाभिप्रायेण । लक्षणद्वयाभिप्रायेणाप्याह ॥ **चतुर्थक्षण इति** ॥ **त्रिक्षणवृत्तित्वं वेति** ॥ अत्र कल्पे जन्यत्वाघटितलक्षणे विशेषपदं व्यर्थमिति बोध्यम् । एतत्सूचनायैव विशेषपदप्रयोजनाभिधानोत्तरं त्रिक्षणवृत्तित्वं वेत्युक्तं अन्यथा चतुःक्षणवृत्तित्वपर्यन्तानुधावनप्रयोजनाभिधानानुपदमेवेदमभिदध्यात् ॥ २७ ॥

मूले **रूपेति** ॥ अत्र रूपद्रवत्वप्रत्यक्षाणां योग इति षष्ठीतत्पुरुषान्मत्वर्थीयप्रत्ययस्वीकारे रूपादिसंबन्धवत्त्वस्य लक्षणत्वं लभ्यते तथाप्युक्तं लाघवेन रूपादिमत्त्वस्यैव लक्षणत्वसंभवात् । अत एव रूपद्रवत्वप्रत्यक्षैर्युज्यन्त इति युजेर्णिनिप्रत्ययोऽपि न संभवति किन्तु रूपञ्च द्रवत्वञ्च प्रत्यक्ष-

त्रापि तेजस्त्वादिना रूपानुमानात् । एवं वाय्वानीतपृथिवीजलतेजोभागानामपि पृथिवीत्वादिना रूपानुमानं बोध्यम् । न च घटादौ द्रुतसुवर्णादिभिन्ने तेजसि च द्रवत्ववत्त्वमव्याप्तमिति वाच्यम् । द्रवत्ववद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वस्य विवक्षितत्वात् । घृतजतुप्रभृतिषु पृथिवीषु जलेषु द्रुतसुवर्णादौ तेजसि च द्रवत्वसत्त्वात्तत्र च पृथिवीत्वादिसत्त्वात्तदादाय सर्वत्र लक्षणसमन्वयः । न च प्रत्यक्षविषयत्वं परमाण्वादावव्याप्तमतिव्याप्तं च रूपादाविति वाच्यम् । चाक्षुषलौकिकप्रत्यक्षविषयवृत्तिद्रव्य-

## प्रभा.

चक्षुरादीनामित्यादिना घ्रणादिपरिग्रहः ॥ तत्रापीति ॥ चक्षुरादिष्वपीत्यर्थः । तेजस्त्वादीत्यादिपदात् पृथिवीत्वजलत्वयोः परिग्रहः । पृथिवीत्वादिनेत्यादिना जलत्वतेजस्त्वयोः परिग्रहः । पृथिवीत्वादौ द्रवत्वसामानाधिकरण्यमुपपादयति ॥ घृतजत्वित्यादिना ॥ लौकिकचाक्षुषविषयवृत्तीति ॥ चाक्षुषनिरूपितलौकिकविषयतावद्वृत्तीत्यर्थः । तेन घटो वायुमानिति चाक्षुषस्य घटांशे लौकिकतया तादृशचाक्षुषविषयवृत्तिवायुत्वजातिमादाय न वायावतिव्याप्तिः । अत्र द्रव्यत्वव्याप्यजातौ लौकिकविषयतावद्वृत्तित्वनिवेशापेक्षया लौकिकविषयतावत्त्वमेव निवेशनीयं लाघवात् द्रव्यत्वव्याप्यत्वं च द्रव्यत्वसमानाधिकरणाभावप्रतियोगित्वे सति द्रव्यत्वसमानाधिकरणत्वं । सत्तावारणाय विशेषणदलं गुणत्वादिवारणाय विशेष्यदलं । वस्तुतः सत्ताभिन्नत्वद्रव्यत्वभिन्नत्वोभयविशेषणेनैव सत्तादिवारणे गुरुभूतसत्यन्तं व्यर्थमिति प्रतिभाति । नच मूर्तत्वजात्यभ्युपगमपक्षे तादृशमूर्तत्वजातिमादाय वाय्वा-

## मञ्जूषा.

योगश्चेति द्वन्द्वान्मत्वर्थीयः । प्रत्यक्षयोगः प्रत्यक्षविषयत्वं । नच समवायेन रूपादेरिव विषयतया प्रत्यक्षस्यैव लक्षणत्वमास्तामिति वाच्यम् विषयतायास्संबन्धत्वस्य सविवादतया वृत्त्यनियामकतया च सर्वसंप्रतिपन्नसंबन्धताकवृत्तिनियामकस्वरूपसंबन्धेन प्रत्यक्षविषयत्वस्यैव लक्षणत्वस्य युक्तत्वात्तदिदमभिप्रेत्याह ॥ मुक्तावल्यां रूपवत्त्वं द्रवत्ववत्त्वं प्रत्यक्षविषयत्वञ्चेति ॥ अनुद्भूतरूपानङ्गीकर्तृदीधितिकृन्मतमाशङ्क्य निराकरोति ॥ नच चक्षुरादीनामिति ॥ नच प्रत्यक्षविषयत्वमिति ॥ ननु परमाणौ योगिप्रत्यक्षविषयत्वसत्त्वात् कथमव्याप्तिः नच योगिप्रत्यक्षविषयत्वस्याव्यावर्तकत्वात् लौकिकप्रत्यक्षविषयत्वमेव वाच्यमित्यव्याप्तिसंगतिरिति वाच्यम् उपादानलौकिकप्रत्यक्षविधया कारणीभूतप्रत्यक्षनिरूपितविषयतायाः कार्यानुपादानरूपादिनिष्ठाया लौकिकत्वप्रमाणाभावेऽपि द्व्यणुकाद्युपादानपरमाणुनिष्ठायाः तस्या लौकिकत्वस्य वक्तव्यत्वात् ईश्वरप्रत्यक्षविषयताया लौकिकत्वस्य हरिरामेण कण्ठत उक्तत्वाच्चेति चेदीश्वरप्रत्यक्षविषयताया लौकिकत्वानङ्गीकारेण तथोक्तेः । अथवा वाय्वादावतिव्याप्तिवारणाय जन्यप्रत्यक्षनिरूपितलौकिकविषयताया एव लक्षणत्वस्य वाच्यत्वा-

## दिनकरीयम्.

चक्षुरादीनामित्यादिना घ्राणादिपरिग्रहः । तत्रापि चक्षुरादिष्वपि । पृथिवीत्वादौ द्रवत्ववद्वृत्तित्वमुपपादयति ॥ घृतजत्वित्यादिना ॥ योगिप्रत्यक्षविषयत्वादाह ॥ अतिव्याप्तं चेति ॥ घटो वायुमानिति वाय्वंशे उपनीतभानात्मकघटविशेष्यकचाक्षुषविषयवायुवृत्तिद्रव्यत्वव्याप्यवायुत्वजातिमति वायावतिव्याप्तिवारणाय लौकिकेति ॥ गुरुत्ववत्त्वमिति ॥ गुरुत्वं रक्तिकमाषकतोलकत्वादि । इदमुपलक्षणम् । पतनवत्त्वमित्यपि बोध्यम् । पतनत्वं गुरुत्वासमवायिकारणककर्मत्वम् । उल्का प-

## रामरुद्रीयम्.

मूलस्य न्यूनतामपनेतुमाह ॥ पतनवत्त्वमितीति ॥ बोध्यमित्यस्य क्षितिजलयोः साधर्म्यमित्यादिः । पतनत्वं निर्वक्ति ॥ गुरुत्वेति ॥ न च परमाणूनां सर्वदा पतनापत्त्या प्रकृष्टगु-

त्वव्याप्यजातिमत्त्वस्य विवक्षितत्वात् । आत्मन्यतिव्याप्तिवारणाय चाक्षुषेति ॥ गुरुणी इति ॥ गुरुत्ववत्त्वं रसवत्त्वं च पृथिवीजलयोरित्यर्थः । नच घ्राणेन्द्रियादीनां वाय्वानीतपृथिव्यादिभागानां च रसादिमत्त्वे किं मानमिति वाच्यम् । तत्रापि पृथिवीत्वादिना तदनुमानात् ॥ द्वयोरिति ॥ पृथिवीतेजसोरित्यर्थः । नच नैमित्तिकं द्रवत्वं घटादौ वह्न्यादौ चाव्याप्तमिति वाच्यम् । नैमित्तिकद्रवत्वसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वस्य विवक्षितत्वात् ॥ २८ ॥

## प्रभा.

द्वावतिव्याप्तिरिति वाच्यम् मूर्तत्वान्यत्वमपि जातौ निवेश्य पूर्वोक्तावतिव्याप्तेः वारणीयत्वात् । वस्तुतस्तु द्रव्यत्वव्याप्यत्वमत्र वायुवृत्तित्वे सति द्रव्यत्वसमानाधिकरणत्वं सत्तादिवारणाय वायुवृत्तित्वं रूपत्वादिवारणाय विशेष्यदलं एवंच न कोऽपि दोष इति प्रतिभाति ॥ गुरुत्ववत्त्वमिति ॥ तच्च रक्तिकमाषकतोलकत्वादिभेदेन नानाविधं बोध्यम् । यद्यपि पतनवत्त्वमपि साधर्म्यं भवति तदनुक्तौ न्यूनता तथापि गुरुत्ववत्त्वप्रतिपादनेन गुरुत्वासमवायिकारणक्रियात्मकपतनवत्त्वस्याप्युक्तप्रायत्वं तेजःप्रभृतिषु गुरुत्वनिराकरणेन तदसमवायिकारणकपतनस्यापि निराकरणप्राप्तेः पृथङ् नोक्तमिति ध्येयं ॥ नैमित्तिकद्रवत्वसमानाधिकरणेति ॥ अत्र द्रव्यत्वव्याप्यत्वं जलावृत्तित्वमेव लाघवादिति ध्येयम् ॥ २८ ॥

## मञ्जूषा.

तु अव्याप्तिसंगतिः । यद्वा प्रत्यक्षपदं चाक्षुषलौकिकप्रत्यक्षपरमित्यभिप्रायेणैवायमाक्षेपः । अत एवातिव्याप्तिश्च रूपादावित्येवोक्तं न त्वात्मनीति अन्यथा द्रव्याणां लक्षणप्रस्तावे प्रथमोपस्थितात्मपरित्यागो निर्बीजः स्यात् ॥ मूले द्वे इति ॥ यद्यप्यत्र द्वित्वेनान्ययोरपि कयोश्चित् ग्रहणसंभवः तथापि प्रथमोपस्थितत्वरूपविनिगमकसत्त्वात् प्रथमास्त्रय इत्यतः प्रथमे इति वचनविपरिणामेनानुषङ्गाद्वा पृथिवीजलयोरेव ग्रहणमिति बोध्यम् ॥ द्वयोरिति ॥ इह पृथिवीजलयोर्न ग्रहणं पृथगारम्भात् नच लक्षणभेदात् पृथगारम्भश्चरितार्थो न पूर्वविलक्षणार्थतात्पर्यज्ञापनायालमिति वाच्यम् रसवती इत्यत्रापि पृथगारम्भप्रसङ्गात् । विलक्षणयोश्च कयोर्ग्रहणमिति शङ्कायां पूर्वोपस्थितपृथिवीजलाभ्यामव्यवहितयोस्तेजोवाय्वोरिति वक्तव्यम् तत्र चैकस्य ग्रहणमात्रेण पृथगारम्भसार्थक्यादव्यवहितत्वाच्च तेज एव गृह्यते इतरत्तु पृथिवीजलयोरन्यतरद्वाच्यम् तत्र पृथिव्येव ग्राह्या प्रथमोपस्थितत्वादेतत्सर्वमभिप्रेत्यैव द्वयोरिति प्रतीकं धृत्वा पृथिवीतेजसोरित्यर्थ इत्युक्तं मुक्तावळ्याम् । गुरुणी द्वे इत्यत्र एतादृशक्लेशाभावसूचनाय तत्र प्रतीकधारणं न कृतमिति बोध्यम् ॥ २८ ॥

## दिनकरीयम्.

पततीत्यादिप्रयोगस्तु लाक्षणिकः । वस्तुतस्तु गुरुत्वासमवायिकारणककर्मवृत्तिपतनत्वं जातिविशेष एव ॥ २८ ॥

## रामरुद्रीयम्.

त्वस्यैव पतनासमवायिकारणत्वेनाङ्गीकरणयितया परमाणौ तदभावेन पतनासम्भवादव्याप्तिरिति वाच्यम् । पतनवद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वस्य विवक्षणीयत्वादिति भावः । नन्वेवमप्युल्का पततीति प्रयोगानुपपत्तिः तेजोरूपोल्कायां गुरुत्वाभावेन पतनासम्भवादित्यत आह ॥ उल्केति ॥ लाक्षणिक इति ॥ गमधात्वर्थ इत्यादिः । लाघवमभिप्रेत्याह ॥ वस्तुतस्त्विति ॥ जातिविशेष एवेति ॥ गुरुत्वजन्यतावच्छेदकतयैव तत्सिद्धिरिति भावः ॥ २८ ॥

आत्मानो भूतवर्गाश्च विशेषगुणयोगिनः ।
यदुक्तं यस्य साधर्म्यं वैधर्म्यमितरस्य तत् ॥ २९ ॥

आत्मान इति ॥ पृथिव्यप्तेजोवाय्वाकाशात्मनां विशेषगुणवत्त्वमित्यर्थः ॥ यदुक्तमिति ॥ ज्ञेयत्वादिकं विहायेति बोध्यम् । तत्तु न कस्यापि वैधर्म्यं केवलान्वयित्वात् ॥ २९ ॥

**प्रभा.**

**पृथिवीति** ॥ अत्र पृथिव्यादिपञ्चकात्मैतदन्यतमत्वं लक्ष्यतावच्छेदकं ॥ **विशेषगुणवत्त्वमिति** ॥ विशेषगुणत्वं न लक्षणघटकं गौरवात् किन्तु स्पर्शशब्दज्ञानैतदन्यतमत्वावच्छिन्नं लक्षणमिति बोध्यं ॥ **ज्ञेयत्वादिकमिति** ॥ पदार्थसामान्यलक्षणानि विहायेत्यर्थः । पदार्थसामान्यलक्षणानां विरुध्यधर्मत्वाभावमुपपादयति ॥ **केवलान्वयित्वादिति** ॥ २९ ॥

**मञ्जूषा.**

**मूले विशेषगुणयोगिन इति** ॥ यौगपदमविवक्षितार्थमित्याशयेनाह ॥ **विशेषगुणवत्त्वमिति** ॥ द्रव्यविभाजकोपाधिव्याप्यतावच्छेदकजातिविशिष्टगुणवत्त्वमित्यर्थः ॥ विशेषगुणलक्षणस्येदानीमप्रकृततया वंशदलद्वयविभागादौ तादृशजातेरसत्त्वेऽपि क्षत्यभावादिति । एतावता प्रबन्धेन पदार्थानां द्रव्याणां च साधर्म्याण्युक्तानि । अथैतेषां वैधर्म्याण्येकोक्त्या दर्शयति ॥ **मूले यदुक्तमिति** ॥ यद्यस्य साधर्म्यमुक्तं तत्तदितरस्य वैधर्म्यमित्यर्थः । यथाऽऽत्मभूतानां विशेषगुणवत्त्वं साधर्म्यमित्युक्ते तदितरेषां तद्वैधर्म्यमिति । ननु किमिदं वैधर्म्यत्वं न तावत्तदवृत्तित्वं विशेषगुणस्याप्यात्मभूतेतरस्मिन् कालादौ कालिकसंबन्धेन वृत्तेः । नच तेन संबन्धेन तद्वैधर्म्यत्वं तत्संबन्धावच्छिन्नतन्निरूपितवृत्तित्वाभाववत्त्वमिति वाच्यम् तर्हि सत्तावन्तस्त्रयस्त्वाद्या इत्युक्तसत्ताया द्रव्यगुणकर्मेतरवैधर्म्यत्वानुपपत्तेः तन्निरूपितसमवायावच्छिन्नवृत्तित्वाप्रसिद्धेरिति चेन्न तन्निष्ठाभावीयतत्संबन्धावच्छिन्नप्रतियोगित्वस्यैव तेन संबन्धेन तद्वैधर्म्यत्वपदार्थत्वात् अथैतावता यत् यस्य येन संबन्धेन साधर्म्यमुक्तं तत्संबन्धावच्छिन्नप्रतियोगिताकतदभावस्तदितरत्र तिष्ठतीत्यायातम् तथाच क्षित्यादीनां नवानां गुणवत्त्वं साधर्म्यमित्युक्ते तदितरेषु गुणाभावास्तिष्ठतीति वैधर्म्यं प्राप्तमिति गुणादिर्निर्गुणक्रिय इति न वक्तव्यं स्यादिति चेत् न हि तत्र निर्गुणत्वं गुणाभाववत्त्वमात्रं किन्तु गुणवदवृत्तिधर्मवत्त्वं तच्च न वैधर्म्यातिदेशेन प्राप्नोति । स्यादेतत् यद्यस्य साधर्म्यमित्युक्तं तत्तदितरस्य वैधर्म्यमित्यल्पमिदमुच्यते कुतः यद्यस्य साधर्म्यं तत्तस्य क्वचिद्वैधर्म्यं भवति यथा क्षित्यादीनां नवानां गुणवत्त्वं साधर्म्यं तत्क्षित्यादौ उत्पत्तिकालावच्छेदेन वर्तमानाभावप्रतियोगीति चेदेवं सति तन्निष्ठान्योन्याभावीयप्रतियोगितानिरूपिततत्संबन्धावच्छिन्नावच्छेदकत्वमेव तेन संबन्धेन तद्वैधर्म्यत्वमस्तु । अथैवं गगनादिस्समवायेन कस्यचिद्वैधर्म्यं न स्यादिति चेत् का नो हानिः यद्यस्य साधर्म्यं तत्तदितरस्य वैधर्म्यमित्येव हि वयमवोचाम । अतएव गुणादिर्निर्गुणक्रिय इत्यत्र आद्यक्षणावच्छिन्नघटादावतिव्याप्तेर्गुणवदन्योन्याभाववत्त्वरूपलघुलक्षणविवक्षयैव वारणसंभवेऽपि न तद्विवक्षितं विश्वनाथेन तादृशलक्षणस्य वैधर्म्यातिदेशेनैव प्राप्तत्वात् । किन्तु गुण-

**दिनकरीयम्.**

ननु सप्तानामपि साधर्म्यं ज्ञेयत्वं तत्कस्य वैधर्म्यमित्याशङ्कायामाह ॥ **ज्ञेयत्वादिकमिति** ॥ २९ ॥

**रामरुद्रीयम्.**

ननु मूले यदुक्तं यस्य साधर्म्यं वैधर्म्यमितरस्य तदिति सामान्यतोऽभिधानमयुक्तं सप्तपदार्थानां साधर्म्ये ज्ञेयत्वादौ तदितराप्रसिद्ध्या तदितरवैधर्म्यत्वाभावादित्याशङ्कामपनेतुं मुक्तावल्यां ज्ञेयत्वादिकं विहायेति पूरयतीत्याह ॥ **नन्वित्यादि** ॥ २९ ॥

## मञ्जूषा.

वदन्त्वितिधर्मवत्त्वमिति गुरुविवक्षैवात् । इदमत्र बोध्यम् । साधर्म्यत्वं स्वनिरूपकतावच्छेदकावच्छिन्न विशेष्यकतदितरयावत्प्रतियोगिकभेदाविधेयकानुमितावुपयुज्यते वैधर्म्यत्वं स्वनिरूपकतावच्छेदकावाच्छिन्नभेदविधेयकतदितरयावद्विशेष्यकानुमितावुपयुज्यते तद्धर्मव्यापकत्वे सति तद्धर्मव्याप्यत्वं तद्धर्मविशिष्टनिरूपितसाधर्म्यत्वं तद्धर्मावच्छिन्नभेदव्यापकत्वे सति तद्धर्मव्यापकभेदप्रतियोगितावच्छेदकत्वं तद्धर्मावच्छिन्ननिरूपितवैधर्म्यत्वं दर्शितं । साधर्म्यत्वस्य वैधर्म्यत्वस्य च घटकास्त्रयो दोषाः अव्याप्तिरसंभवोऽतिव्याप्तिश्च तत्र अव्याप्त्यसंभवौ साधर्म्यत्ववैधर्म्यत्वघटकयोः प्रथमदलयोः विघटकौ अतिव्याप्तिस्तु तद्घटकयोर्द्वितीयदलयोस्तत्र साधर्म्यत्वविघटिका अव्याप्तिः तद्धर्मविशिष्टे क्वचिदवर्तनं । वैधर्म्यत्वविघटिका तु तद्धर्मावच्छिन्नेतरास्मिन् क्वचिदवर्तनं यथा पृथिव्याः साधर्म्यं जलाद्यन्यतमस्य वैधर्म्यं नीलरूपवत्त्वमित्यत्राव्याप्तिः । असंभवस्तु साधर्म्यत्वविघटकः । तद्धर्मावच्छिन्ने क्वचिदप्यवर्तनं वैधर्म्यत्वविघटकस्तु तद्धर्मावच्छिन्नेतरस्मिन् क्वचिदप्यवर्तनं यथा तत्रैव शीतस्पर्शगगनादि अतिव्याप्तिस्तु साधर्म्यत्वविघटिका तद्धर्मावच्छिन्नेतरवृत्तित्वं वैधर्म्यत्वविघाटिका तु तद्धर्मविशिष्टनिरूपितवृत्तित्वं यथा तत्रैव शीतस्पर्शत्वरूपप्रमेयत्वादौ तत्रेतरभेदानुमितावुभयविधापि अव्याप्तिर्भागासिद्धिं संपादयति । असंभवस्तु स्वरूपासिद्धिं अतिव्याप्तिः पुनर्व्यभिचारम् । अथवा यथा साधर्म्यत्वं स्वनिरूपकतावच्छेदकावच्छिन्नविशेष्यकेतरभेदानुमितावुपयुज्यते तथा वैधर्म्यत्वमपि स्वनिरूपकतावच्छेदकावच्छिन्नविशेष्यकायामेव इतरभेदानुमितावुपयुज्यते किन्तु साधर्म्यत्वेनाभिमतो यस्स एवाद्ये हेतुः द्वितीयेतु वैधर्म्यत्वेनाभिमतो यस्स एव तदभाववत्तद्वदन्योन्याभावादिः यथा जलादिकं पृथिवीतो भिद्यते निर्गन्धत्वादित्यत्राव्याप्तिर्व्यभिचारं संपादयति तथा असंभवोऽपि यथा जलादिकं पृथिवीतो भिद्यते शीतस्पर्शाभावान्नीलरूपाभावात् गगनाभावादित्यादावतिव्याप्तिस्तु एकदेशकात्स्न्याभ्यां द्वेधा भिद्यते तत्रैकदेशातिव्याप्तिर्भागासिद्धिं सम्पादयति यथा जलादिकं पृथिवीतो भिद्यते शीतस्पर्शाभावाद्रूपाभावादिति । कृत्स्नातिव्याप्तिस्त्वप्रसिद्धिं स्वरूपासिद्धिं वा यथा जलादिकं पृथिवीतो भिद्यते प्रमेयत्वाभावादिति हेतावप्रसिद्धिः । तत्रैव पृथिवीत्वाभावप्रकारकप्रमाविशेष्यत्वाभावहेतौ च स्वरूपासिद्धिरिति । अथात्र पक्षद्वयेऽपि असमवायिकारणत्वं गुणकर्मभिन्नानां वैधर्म्यमिति विश्वनाथोक्तिविरोधः । प्रथमपक्षे गुणकर्मणी द्रव्यसामान्यादिभ्यो भिद्येते असमवायिकारणत्वादिति अनुमाने आत्मविशेषगुणादौ भागासिद्धिप्रसङ्गात् द्वितीयपक्षे द्रव्यसामान्यादयः गुणकर्मभ्यां भिद्यन्ते असमवायिकारणत्वाभावादित्यनुमाने व्यभिचारापाताच्चेति चेदेतदस्वरसेनैवाथवेत्यादिपक्षान्तरमारब्धं तत्रेति केचन मन्यन्ते । यथा जलादिनिखिलवैधर्म्यभूतेन निखिलपृथिवीसाधर्म्यभूतेन च गन्धेन घटो जलादिभ्यो भिद्यते गन्धात् जलादिकं घटाद्भिद्यते गन्धाभावादित्यनुमितिरपि संभवति। तथात्र रूपं द्रव्यादिभ्यो भिन्नं असमवायिकारणत्वात् द्रव्यादिकं रूपाद्भिन्नं असमवायिकारणत्वाभावादित्येकदेशविशेष्यकाया एकदेशभेदविधेयिकाया वानुमितेस्संभवान्न तदुक्तिविरोधः । अव्याप्तिर्हि कृत्स्ने कृत्स्नाद्वा भेदानुमितिमेव विरुणद्धि नत्वेकदेशे एकदेशाद्वा भेदानुमितिमित्यन्ये । वयन्तु तद्ग्रन्थो न वैधर्म्यत्वप्रतिपादनपर इति ब्रूमः अत एतद्ग्रन्थस्य असमवायिकारणताविपर्यव्यवस्थामात्रपरतां प्रागवोचाम । ततश्च गुणकर्मभिन्नानां वैधर्म्यमित्यस्य गुणकर्मभिन्नावृत्तिरित्येतावानेवार्थः । ननु दर्शितवैधर्म्यत्ववदिति अत्र निरुक्तं वैधर्म्यलक्षणं यदुक्तं यस्य साधर्म्यमित्यनेनैव दर्शितप्रायम् । तथाहि यद्यस्य साधर्म्यमित्यनेन यद्रूपं यद्धर्मावच्छिन्ने सर्वत्र वर्तते इतरत्र न वर्तत इति लब्धं तत्तदितरस्य वैधर्म्यमित्युक्त्या च दर्शितवैधर्म्यलक्षणं पर्यवसन्नमेवेति । अत्र सामान्यपरिहीनत्वं सामान्यादीनां साधर्म्यतया व्यावर्तकमुक्तं तदभावश्च वैधर्म्यातिदेशेन द्रव्यगुणकर्मणां व्यावर्तक इति लभ्यते तत्र द्रव्यगुणकर्मणामेव सामान्यवत्त्वं साधर्म्यमुक्त्वा वैधर्म्यातिदेशेन तदभाववत्सामान्यादीनां व्यावर्तक इत्युक्तौ यद्यपि प्रयासलाघवं वर्तते तथापि स्वतन्त्रेच्छस्य नियन्तुमशक्यत्वात् तथोक्तमिति मन्तव्यम् ॥ २९ ॥

स्पर्शादयोऽष्टौ वेगाख्यः संस्कारो मरुतो गुणाः ।
स्पर्शाद्यष्टौ रूपवेगौ द्रवत्वं तेजसो गुणाः ॥ ३० ॥
स्पर्शादयोऽष्टौ वेगश्च द्रवत्वं च गुरुत्वकम् ।
रूपं रसस्तथा स्नेहो वारिण्येते चतुर्दश ॥ ३१ ॥
स्नेहहीना गन्धयुताः क्षितावेते चतुर्दश ।
बुद्ध्यादिषट्कं सङ्ख्यादिपञ्चकं भावना तथा ॥ ३२ ॥
धर्माधर्मौ गुणा एते आत्मनः स्युश्चतुर्दश ।
सङ्ख्यादिपञ्चकं कालदिशोः शब्दश्च ते च खे ॥ ३३ ॥
सङ्ख्यादिपञ्चकं बुद्धिरिच्छा यत्नोऽपि चेश्वरे ।
परापरत्वे सङ्ख्याद्याः पञ्च वेगश्च मानसे ॥ ३४ ॥

स्पर्शादय इति ॥ ते च खे आकाशे ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥

## प्रभा.

वायोर्नवैकादश तेजसो गुणा जलक्षितिप्राणभृतां चतुर्दश । दिक्कालयोः पञ्च षडेव चाम्बरे महेश्वरेऽष्टौ मनसस्तथैव च ॥ इति प्राचीनकारिकानुसारेण वाय्वादिगुणानाह ॥ **मूले स्पर्शादयोऽ-**

## मञ्जूषा.

**स्नेहहीना इति** ॥ नन्वत्रैतच्छब्देन पूर्वश्लोकोक्तानां स्पर्शादिस्नेहान्तानां ग्रहणे वाक्यार्थबाधः स्नेहे क्षितिवृत्तित्वबाधात् स्पर्शादिरसान्तानामेव ग्रहणे चतुर्दशत्वानुपपत्तिः । उच्यते रसान्ता एवैतच्छब्देन परामृश्यन्ते आगन्तुकगन्धमादाय चतुर्दशत्वोपपत्तिः स्नेहहीना इत्यस्य स्नेहभिन्ना इत्यर्थः । नचैतच्छब्दपरामृष्टेषु स्पर्शादिरसान्तेषु स्नेहभिन्नत्वमव्यावर्तकमिति वाच्यम् । तद्विशेषणबलादेवैतच्छब्देन स्नेहपरामर्शाभावात् । अथवैतच्छब्दो न स्वरूपतःस्पर्शत्वाद्यवच्छिन्नपरः किन्तु जलवृत्तितावच्छेदकीभूतगुणविभाजकोपाध्यवच्छिन्नपरः अत एव जलावृत्तेः स्थितस्थापकस्याधिकस्य पृथिवीवृत्तित्वेऽपि न विश्वनाथस्य न्यूनता कुतो नवा तदन्तर्भावेन पञ्चदशत्वापत्तिरेवञ्च स्नेहस्यापि तादृशविभाजकोपाध्यवच्छिन्नत्वात्तद्भिन्नत्वविशेषणं सार्थकं गन्धयुक्तत्वं येनकेनापि संवन्धेन गन्धसंबन्धित्वं विशिष्टान्वयिनोऽसति बाधके विशेषणेऽप्यन्वयात् गन्धस्यापि क्षितिवृत्तित्वलाभः । नन्विह गन्धयुक्तत्वं गन्धसमानाधिकरणत्वं गन्धासमानाधिकरणस्यापि स्पर्शादेः नानाजातीयगन्धवदवयवारब्धानिर्गन्धक्षितिवृत्तित्वेन न्यूनतापत्तेः गन्धसमा-

## दिनकरीयम्.

वायोर्नवैकादश तेजसो गुणा जलक्षितिप्राणभृतां चतुर्दश । दिक्कालयोः पञ्च षडेव चाम्बरे महेश्वरेऽष्टौ मनसस्तथैव च ॥ इति प्राचीनश्लोकमनुसृत्य वायोस्तावत् गुणानाह ॥ **मूले स्पर्शादयोऽष्टाविति** ॥ स्पर्शसङ्ख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वान्यष्टौ वेगाख्यसंस्कारश्चेति वायोर्गुणा इत्यर्थः । तेजसो गुणानाह ॥ **स्पर्शाद्यष्टाविति** ॥ अपां गुणानाह ॥ **स्पर्शादयोऽष्टाविति** ॥ पृथिव्या गुणानाह ॥ **स्नेहहीना इति** ॥ **एते**ऽव्यवहितपूर्वोक्ताः । आत्मनो गुणानाह ॥ **बुद्ध्यादिषट्कमिति** ॥ बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नाः सङ्ख्यादिपञ्चकं सङ्ख्यापरिमाणपृथक्त्वसंयोगविभागाः । **काल-**

## रामरुद्रीयम्.

**प्राचीनश्लोकमिति** ॥ क्वचित्कारिकावलीग्रन्थे इमौ श्लोकौ दृश्येते तौ प्रक्षिप्तावेवेति मन्त-

## प्रभा.

**ष्टाविति** ॥ ईश्वरस्य गुणानाह ॥ **संख्यादिपञ्चकमिति** ॥ नवीनास्तु ईश्वरस्य परिमाणवत्त्वे मानाभावः । नच द्रव्यत्वेन तदनुमानमिति वाच्यम् उत्पन्नविनष्टघटे व्यभिचारेण द्रव्यत्वस्यासाधकत्वात् । नच समवायसंबन्धेन परिमाणसंबन्धित्व समवायघटितसामानाधिकरण्यसंबन्धेन परिमाणसंबन्धित्वैतदन्यतरत्वावच्छिन्नस्य स्वरूपसंबन्धेन साध्यतया तस्योत्पन्नविनष्टघटेऽपि सत्त्वेन व्यभिचाराभावात् द्रव्यत्वस्य तत्साधकत्वे बाधकाभाव इति वाच्यम् ईश्वरे द्रव्यत्वाभावेन द्रव्यत्वहेतोः स्वरूपासिद्धत्वात् अनित्यगुणाश्रयत्वस्यैव द्रव्यत्वसाधकत्वेन तादृशहेत्वभावेन तेन द्रव्यत्वानुमानासंभवात् ईश्वरस्य द्रव्यत्वबोधकश्रुतेरभावेन श्रुत्यापि तत्सिद्धेरसंभवात् । नच अणोरणीयान् इति श्रुतिरेव परिमाणवत्त्वे प्रमाणमिति वाच्यम् महतो महीयानिति श्रुत्या महत्त्वस्यापि प्रतिपादनेन विरोधात् ॥ तत्परिहाराय परिमाणाभाववत्त्वबोधन एव श्रुतेस्तात्पर्यस्वीकाराच्च । अत एव तत्र संयोगविभागयोस्सत्त्वेऽपि मानाभावः द्रव्यत्वस्यैव तत्साधकत्वात् पृथक्त्वस्यैवान्योन्याभावरूपत्वेन तस्य गुणत्वाभावात् एवंच एकमेवाद्वितीयं ब्रह्मेत्यादिश्रुत्या एकत्वं यस्सर्वज्ञ इत्यादिश्रुत्या ज्ञानवत्त्वं सत्यकामस्सत्यसंकल्प इत्यादिश्रुत्या इच्छाकृतिमत्त्वमानन्दं ब्रह्मेत्यादिश्रुतिघटकानन्दशब्दस्य मत्वर्थीयाच्प्रत्ययान्तत्वं विना नपुंसकत्वानुपपत्त्याऽऽनन्दवदर्थकत्वावश्यकतया श्रुत्याऽऽनन्दवत्त्वमपि सिध्यतीति ईश्वरस्य पञ्चैव गुणा इत्याहुः तन्न श्रुत्या ईश्वरस्य गुणपञ्चकसिद्धौ तैरेव लिङ्गैर्जीवदृष्टान्तेन श्रुत्यानिषिद्धद्रव्यत्वसाधने बाधकाभावात् । नचानित्यगुणाश्रयत्वाभावेन द्रव्यत्वाभावसाधकेन सत्प्रतिपक्ष इति वाच्यं उत्पन्नविनष्टघटे व्यभिचारेण तादृशहे-

## मञ्जूषा.

नाधिकरणद्रव्यविभाजकोपाधिसमानाधिकरणत्वं गन्धयुक्तत्वमिति यद्युच्यते तदा न दोषः । अत्र स्नेहहीना इत्यस्य स्नेहाघटितसमुदायघटका इत्यर्थः । गन्धयुता इत्यस्य च गन्धघटितसमुदायघटका इत्य-

## दिनकरीयम्.

दिशोर्गुणानामैक्यादेकोक्त्यैवाह ॥ **सङ्ख्यादिपञ्चकमिति** ॥ आकाशस्य गुणानाह ॥ **शब्दश्चेति** ॥ तथा चाकाशे शब्दः सङ्ख्यादयः पञ्चैवं षड्गुणा इत्यर्थः । ईश्वरस्य गुणानाह ॥ **सङ्ख्यादीति** ॥ अत्र नव्याः ईश्वरस्य परिमाणवत्त्वे प्रमाणाभावः; न च द्रव्यत्वेन तदनुमानमिति वाच्यं अप्रयोजकत्वात् ईश्वरे द्रव्यत्वसत्त्वे मानाभावाच्च । अत एव तत्र संयोगविभागयोः सत्त्वेऽपि मानाभावः पृथक्त्वस्य च गुणत्वमेव निरस्तम् । यथा चेश्वरे सुखसम्भवस्तथाग्रे व्यक्तीभविष्यति । एवं च सङ्ख्याबुद्धी-

## रामरुद्रीयम्.

क्यं एतद्वाक्यस्वरसात् ॥ **ऐक्यादिति** ॥ एकजातीयत्वादित्यर्थः । तेन दिक्कालयोः परिमाणादिभेदेऽपि न क्षतिः ॥ **अप्रयोजकत्वादिति** ॥ ईश्वरपरिमाणस्याजन्यत्वेन जन्यपरिमाणं प्रति द्रव्यत्वेन कारणत्वेऽपि तादृशकार्यकारणभावग्रहरूपानुकूलतर्कसहकृतेनोक्तानुमानेन ईश्वरे परिमाणसिद्ध्यसम्भवादिति भावः । ननु द्रव्यत्वं यदि परिमाणव्यभिचारि स्यात्तर्हि निरुपाधिकं न स्यादित्यनुकूलतर्कसहकृतेनोक्तानुमानेन ईश्वरेऽपि परिमाणसिद्धिर्निष्प्रत्यूहैव अन्यथा कालदिशोरपि परिमाणासिद्धिप्रसङ्गादित्यस्वरसादुक्तानुमाने स्वरूपासिद्धिमाह ॥ **ईश्वर इति** ॥ अत एव वेदान्तिनामीश्वरस्य स्वप्रकाशसुखात्मकत्वे विवादोऽपि सङ्गच्छत इति भावः ॥ **निरस्तमिति** ॥ रूपं घटात्पृथगिति व्यवहारानुरोधेन पृथक्पदस्य भिन्नार्थकताध्रौव्येण घटः पटात्पृथगित्यत्रापि तद्विषयकतयैवोपपत्तौ तादृशप्रतीत्या पृथक्त्वरूपगुणान्तरासिद्धिरिति भावः ॥ **तथाग्रे व्यक्तीभविष्यतीति** ॥ नित्यं विज्ञानमानन्दं ब्रह्मेति आनन्दं ब्रह्मणो विद्वान् बिभेति कुतश्चनेत्यादिश्रुतिभिरीश्वरे नित्यसुखसिद्धेरिति भावः ॥ **सङ्ख्येति** ॥ एको ह वै नारायण इत्यादिश्रुत्या तत्सिद्धिरिति भावः । ज्ञानेच्छाप्रयत्नास्तु क्षितौ सकर्तृकत्वानुमानेनैव सिध्यन्तीति प्रतिपादितमधस्तात् । न चैवमणोरणीयान् महतो महीयानिति

## तत्र क्षितिर्गन्धहेतुर्नानारूपवती मता ।

साधर्म्यवैधर्म्ये निरूप्य सम्प्रति प्रत्येकं पृथिव्यादिकं निरूपयति ॥ तत्रेति ॥ **गन्धहेतुरिति** ॥ गन्धसमवायिकारणमित्यर्थः । यद्यपि गन्धवत्त्वमात्रं पृ-

### प्रभा.

तोः द्रव्यत्वाभावासाधकत्वादिति संक्षेपः ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥

इति मुक्तावलीप्रभायां प्रत्यक्षपरिच्छेदे प्रथमपरिच्छेदः समाप्तिमगादिति मङ्गलं भूयात् ॥

**साधर्म्यवैधर्म्ये निरूप्येति** ॥ क्षित्यादीनां साधर्म्यवैधर्म्ये निरूप्येत्यर्थः ॥ **प्रत्येकमिति** ॥ द्रव्यविभाजकपृथिवीत्वाद्येकैकधर्मावच्छिन्नमित्यर्थः । ननु गन्धं प्रति प्रतिबन्धकाभावविधया गन्धाभावस्य हेतुतया गन्धहेतुत्वं गन्धाभावेऽतिव्याप्तमत आह ॥ **गन्धसमवायीति** ॥ केचित्तु कालादावतिव्याप्तेरत आह गन्धसमवायीतीत्यवतरणिकामाहुः तदसत् गन्धहेतुरिति मूले गन्धपदस्य गन्धत्वविशिष्टशक्ततया गन्धपदसमभिव्याहृतहेतुपदात् गन्धत्वविशिष्टनिरूपितहेतुताविशिष्टस्यैव लाभात् कालादेरतादृशतया तत्रातिव्याप्तेरप्रसक्तेः ॥ **गन्धवत्त्वमात्रमिति** ॥ समवायिकारणत्वाघटितमित्यर्थः ।

### मञ्जूषा.

र्थः । तयोः परस्परमन्वयबलात् स्नेहाघटितगन्धघटितसमुदायघटका इति पर्यवस्यति । तादृशसमुदायघटकत्वविशिष्टे क्षितिवृत्तित्वान्वयबलात् गन्धस्यापि क्षितिवृत्तित्वलाभः अथवा स्नेहहीना स्नेहाघटिता गन्धयुक्ता गन्धघटिता ये चतुर्दशचतुर्दशत्वसंख्यापर्याप्त्यधिकरणसमुदायस्तद्भिन्ना ये एते जलवृत्तितावच्छेदकगुणविभाजकोपाध्यवच्छिन्नास्ते क्षितावित्यर्थ इत्यपि वदन्ति ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥

इति मञ्जूषायां प्रत्यक्षखण्डे प्रथमपरिच्छेदः ॥

**साधर्म्यवैधर्म्ये इति** ॥ पदार्थानां द्रव्याणाञ्चेत्यादिः ॥ **प्रत्येकमिति** ॥ एकैकमित्यर्थः । स्वविषयकनिरूपणविषयद्रव्यनिष्ठभेदप्रतियोगितानवच्छेदकैकत्वमिति यावत् । एकत्वशब्देन च द्रव्यविभा-

### दिनकरीयम्.

च्छाप्रयत्नसुखानीति पञ्चैवेश्वरस्य गुणा इत्याहुः ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥

इति श्रीभारद्वाजबालकृष्णात्मजमहादेवकृतौ मुक्तावलीप्रकाशे प्रथमः परिच्छेदः ॥

गन्धहेतुत्वं कालादौ गतमतो व्याचष्टे ॥ **गन्धेति** ॥ गन्धवद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वमित्यर्थः । तेन सुरभ्यसुरभिकपालारब्धनिर्गन्धघटे नाव्याप्तिः । वृत्त्यन्तेन न जलादावतिव्याप्तिः ।

### रामरुद्रीयम्.

श्रुत्या ईश्वरे परिमाणमपि कुतो न सिध्यतीति वाच्यम् । महत्त्वाणुत्वयोर्विरुद्धत्वेन एकत्रोभयोरसम्भवान्महत्त्वस्य देशकालापरिच्छिन्नत्वरूपताया अणुत्वस्य च सर्वान्तर्यामित्वरूपताया एव प्रकृते वक्तव्यत्वादिति हृदयम् ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥

इति श्रीरामरुद्रभट्टाचार्यविरचितायां मुक्तावलीप्रकाशतरङ्गिण्यां प्रथमस्तरङ्गः ॥

**कालादाविति** ॥ गन्धनिष्ठकार्यत्वावच्छिन्नकार्यतानिरूपिततादात्म्यसम्बन्धावच्छिन्नकालत्वावच्छिन्नकारणतायाः कालेऽपि सत्त्वादिति भावः । ननु गन्धत्वावच्छिन्नकार्यताविवक्षणे नैष दोषः आवश्यकं च तद्विवक्षणमन्यथा कार्यतायां समवायसम्बन्धावच्छिन्नत्वविवक्षणेऽपि गन्धनिष्ठसमवायसम्बन्धावच्छिन्नगुणत्वावच्छिन्नकार्यतानिरूपितद्रव्यत्वावच्छिन्नकारणतामादाय जलादावतिव्याप्त्यापत्तिरित्याशयेनादिपदमुपात्तम् । तेन च गन्धत्वावच्छिन्नकारणविजातीयादृष्टसङ्ग्रह इति ध्येयम् । गन्धवद्वृत्तीत्यादिमन्थस्य गन्धवत्त्वमात्रमित्यस्येत्यादिः ॥ **द्रव्यत्वव्याप्येति** ॥ द्रव्यत्वन्यूनवृत्तीत्यर्थः । तेन द्रव्यत्वस्यापि द्रव्यत्वव्याप्यत्वेन न तदादाय जलादावतिव्याप्तिरेवमग्रेऽपि द्रष्टव्यम् ॥ **नाव्याप्तिरिति** ॥ अनेन च तादृशघटेऽव्या-

प्रभा.

तथाच गन्धसमानाधिकरणजलावृत्तिजातिमत्त्वमित्यर्थः । तेन सुरभ्यसुरभ्यवयवारब्धावयविसमवेतघटादौ नाव्याप्तिः । यद्यपि सुरभ्यसुरभ्यवयवारब्धावयविन्यव्याप्तिरसंभवति तथापि समवायसंबन्धेन गन्धसंबन्धि-

मञ्जूषा.

जकधर्मो विवक्षितः एतच्च पृथिव्यादिकमित्यस्य विशेषणं युज्यते चैतत् युगपदुभयादीनां निरूपणे हि पृथिवीविषयकनिरूपणे जलस्यापि विषयत्वात् पृथिवीत्वं तादृशद्रव्यनिष्ठभेदप्रतियोगितावच्छेदकमेव स्यादेवं जलत्वमिति । अथवा प्रत्येकमिति निरूपणक्रियाविशेषणं निरूपणे प्रत्येकत्वं च स्वविषय-द्रव्यनिष्ठभेदप्रतियोगितानवच्छेदकद्रव्यविभाजकधर्मावच्छिन्नविषयकत्वं यद्वा प्रत्येकमित्यव्ययतया लुप्त-तृतीयाकं प्रत्येकरूपेणेत्यर्थः ॥ **गन्धसमवायिकारणमित्यर्थ इति** ॥ अत्रापाततो बहवो विरोधा प्रस्फुरन्ति तथाहि गन्धहेतुरित्यस्य गन्धसमवायिकारणमित्यर्थमुक्त्वा यद्यपि गन्धवत्त्वमात्रं लक्षणमुचितं तथापि पृथिवीत्वजातौ प्रमाणोपन्यासाय हेतुत्वमुपन्यस्तमित्यभिधाय तथाहीत्यादिना। पृथिवीत्वं प्रसाध्य पश्चान्न चेत्यादिना गन्धवत्त्वस्य पाषाणे अव्याप्तिमाशङ्क्य तत्रापि गन्धसत्त्वादिति परिहृतं । अनेन हि ग्रन्थसन्दर्भेणैवं प्रतीयते पृथिव्यां गन्धसमवायिकारणत्वोक्त्या तत्र समवायेन गन्धवत्त्वमप्य-र्थतो लभ्यते तत्र शाब्दोऽर्थः पृथिवीत्वजातिसिद्ध्यर्थः आर्थिकोऽर्थस्तु लक्षणमिति । नचैतत्संभवति ग-न्धवत्त्वरूपलक्षणस्य गन्धस्तु द्विविधो मत इत्युत्तरत्र मूले शब्दत एव लाभादत्रार्थतस्तल्लाभस्या-किंचित्करत्वात् वक्ष्यति हि तन्मूलव्याख्यानावसरे विश्वनाथः द्विविध इति वस्तुस्थितिमात्रम् । ननु द्विविधगन्धवत्त्वं लक्षणं लक्षणे द्वैविध्यस्य व्यर्थत्वादिति अनेन हि सन्दर्भेण तन्मूलावगतस्य ग-न्धवत्त्वांशस्य लक्षणत्वं स्वरसतः प्रतीयत इति सोऽयमेको दोषः । पाषाणे गन्धवत्त्वस्याव्याप्ति-माशङ्क्य तत्रापीत्यादि ग्रन्थेन गन्धवत्त्वसाधनप्रयासोऽप्यकिंचित्करः पाषाणे गन्धवत्त्वसाधनेऽपि सु-रभ्यसुरभ्यवयवारब्धघटादावव्याप्तिवारणाय जातिघटनाया लक्षणे आवश्यकतया तेनैव पाषाणेऽप्यव्याप्ति-वारणसंभवेन तत्र गन्धवत्त्वसाधनस्यानावश्यकत्वादिति सोऽयं द्वितीयो दोषः तावेतौ दोषौ नीलकण्ठेन न निवारितौ प्रत्युत दृढीकृतौ स हि गन्धवत्त्वमात्रं लक्षणमुचितमित्यत्रैव गन्धवद्वृत्तिद्रव्यत्वव्याप्यजातिम-त्त्वमर्थः तेन सुरभ्यसुरभिकपालारब्धनिर्गन्धघटे नाव्याप्तिरित्युक्तवान् तेन हि गन्धसमवायिकारणत्वपर्यवस नार्थस्यैव लक्षणत्वं प्रतीयतेऽन्यथा गन्धस्तु द्विविधो मत इत्यत्रैवेमां विवक्षामाद्रीयेत पश्चाच्च न च पाषाणे गन्धाभावादित्यस्य ननु गन्धवत्त्वस्य पृथिवीलक्षणत्वे पाषाणादौ गन्धशून्येऽव्याप्तिरित्याशङ्कां निराकुरुत इ-त्यवतरणिका दत्ता तेन पूर्वोक्तरीत्या पाषाणे गन्धवत्त्वसाधनप्रयासवैफल्यं न परिहृतं प्रत्युत प्रागेव गन्धव-त्त्वमित्यस्य गन्धवद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वमर्थ इति स्वयमुक्त्वा पश्चादिमामाशंकामुद्भावयितुं कुतो न ल-ज्जितं नीलकण्ठेनेति न प्रतीमः । एवं तत्रापि गन्धसत्त्वादित्युत्तरेण कथमन्यथा तद्भस्मनि गन्ध उपलभ्यत इत्यादिमुक्तावलीग्रन्थसन्दर्भेण पाषाणे गन्धाभावे तत्परमाणोरपि निर्गन्धत्वात्तदारब्धपाषाणभस्मनोऽपि निर्गन्धत्वापत्तिरिति स्वरसतोऽर्थः प्रतीयते सच न संभवति पाषाण इव तद्भस्मन्यप्यनुद्भूतगन्धापत्तिवार-णाय पाषाणावयवेषु पाकाङ्गीकारस्यावश्यकतया पूर्वं निर्गन्धैरेव परमाणुभिः पाषाणारम्भः पाकोत्पादितग-न्धवद्भिश्च तैर्भस्मारम्भ इति स्वीकारे बाधकाभावात् इत्येको विरोधः प्रतीयते सच नीलकण्ठेन कयापि प्रणा-ल्या परिहृतः तद्यथा तत्रापि गन्धसत्त्वादित्यत्र पृथिवीत्वेनेति शेषपूरणं कृत्वा गन्धसत्त्वादि-त्यस्य गन्धानुमानादित्यर्थः उक्तः पश्चाच्च ननु पाषाणस्य पृथिवीत्व एव मानाभावे नितरां तदधी-नगन्धवत्त्व इत्यतस्तत्र पृथिवीत्वसाधनाय भूमिकामारचयति ॥ कथमन्यथेत्यादिना ॥ अन्यथा पा-षाणादौ पृथिवीत्वानङ्गीकारे ॥ तद्भस्मनि पाषाणभस्मनि । यद्यपि पाषाणे पृथिवीत्वाभावे अल-क्ष्यत्वादेव तत्र गन्धवत्त्वलक्षणं नाव्याप्तमिति व्यर्थः तत्र गन्धसाधनाय परिश्रमः तथापि वस्तुस्थितिम-नुरुध्य तथोक्तमिति बोध्यम् पाषाणभस्मनि गन्धः प्रत्यक्षसिद्धः तेन तत्र पृथिवीत्वमङ्गीकरणीयं

## प्रभा.

त्व-स्वसामानाधिकरण्यस्वाश्रयवृत्तिद्रव्यत्ववत्त्वोभयसंबन्धेन गन्धसंबन्धित्वान्यतरवत्त्वस्य तदर्थत्वस्वीकारेऽपि तत्राव्याप्तिवारणसंभवात् जातिघटितलक्षणपरिष्कारस्यानावश्यकत्वापत्तेः एतादृशस्थलानुसरणमिति ध्येयम् ।

## मञ्जूषा.

ततश्च भस्मारम्भकावयवेष्वपि पृथिवीत्वमङ्गीकार्यम् । भस्मारम्भकावयवपाषाणावयवयोरैक्यात् पाषाणस्यापि पृथिवीत्वसिद्धिरित्यभिप्राय इति उक्तं । ततश्च कथमन्यथेत्यादिग्रन्थो न पाषाणे गन्धवत्त्वसाधनाय प्रवृत्तः किन्तु गन्धवत्त्वसाधकपृथिवीत्वरूपहेतुसाधनायात एवेत्थञ्च पाषाणपरमाण्वोः पृथिवीत्वात्तज्जन्यपाषाणस्यापि पृथिवीत्वम् तथाच तस्यापि गन्धवत्त्वे बाधकाभाव इति उपसंहारे पृथिवीत्वसिद्धिनिष्पत्त्यर्थोनैव गन्धसिद्धिर्दर्शितेति नीलकण्ठाभिप्रायः । अत्र पृथिवीत्वेन गन्धानुमानमयुक्तं सुरभ्यसुरभिकपालारब्धनिर्गन्धघटे व्यभिचारात् नच नानाजातीयगन्धवदवयवानारब्धत्वे सति पृथिवीत्वं हेतुरिति वाच्यं नानाजातीयगन्धवदवयवारब्धाभ्यामवयवाभ्यामारब्धेऽवयविनि व्यभिचारात् । नच साक्षात्परम्परया वा नानाजातीयगन्धवदवयवारब्धत्वमेव विशेषणमिति वाच्यम् । पाषाणारम्भकपरमाणुषु नानाजातीयगन्धविरहस्य निर्णेतुमशक्यत्वेन हेतोस्सन्दिग्धत्वात् । नहि पाषाणारम्भकपरमाणुषु सुरभिरसुरभिर्वैकजातीय एव गन्ध इति निर्णाययितुं किञ्चित्प्रमाणमस्ति सोऽयमेको नीलकण्ठव्याख्यायां दोषः । नच पाषाण इत्यादिना पाषाणे गन्धाभावप्रयुक्तामव्याप्तिमाशङ्क्य तत्रापि गन्धसत्त्वादित्यभिधाय तदुपरि कथमन्यथेति प्रतिपादितेनान्यथाशब्देन गन्धानङ्गीकार इत्येवार्थः प्रतीयते न तु पृथिवीत्वानङ्गीकार इति तस्य विश्वनाथग्रन्थसन्दर्भेऽनुपस्थितत्वात् । नहि विश्वनाथो योगी परमेश्वरो वा येन कालान्तरे नीलकण्ठो नाम कश्चिदुत्पद्य मदुक्तिं व्याख्यास्यति सच गन्धसत्त्वादिति मदुक्तेर्गन्धानुमानादित्यर्थं वक्ष्यति तत्र चानुमाने पृथिवीत्वं हेतुतया दर्शयिष्यति अतस्तद्भावमहमिदानीं परामृशेयमिति प्रतिसन्धायान्यथाशब्दं प्रयुञ्ज्यात् सोऽयं द्वितीयो दोषः । गन्धवत्त्वरूपपृथिवीलक्षणाव्याप्तिशङ्काप्रस्तावे पाषाणे पृथिवीत्वं नास्तीति शङ्कैव नोत्तिष्ठते सन्दर्भविरोधात् सोऽयं तृतीयो दोषः किंत्वयमक्षिणी निमील्य नीलकण्ठेन स्वीकृतप्रायः । निर्गन्धैः परमाणुभिः पाषाणारम्भः तैरेव पाकोत्पादितगन्धवद्भिर्भस्मारम्भ इति निर्गन्ध एव पाषाण इत्यस्य परिहाराभावश्चतुर्थः अयं च दोषः परिहृत इति नीलकण्ठो बभ्राम । नहि मूलस्यान्यथाव्याख्यानमात्रेण दोषः परिहृतो भवति किन्तु युक्तिकथनेन इयानेव तु नीलकण्ठस्यान्यथाव्याख्यानतो लाभः यदयं दोषोऽर्थान्तरपरिभावनाप्रमृष्टवासनतया न शिष्यस्य झटिति बुद्धिमारोहेत् न च युक्तिरपि । तथा सत्यप्युक्तप्रणाल्या पाषाणे पृथिवीत्वसिद्ध्या तेन गन्धानुमानसंभवादित्यनेन ग्रन्थेन दर्शितैव नीलकण्ठेनेति वाच्यं तस्य युक्त्याभासत्वात् । नहि पृथिवीत्वं गन्धसाधकं भवितुमर्हत्युक्तव्यभिचारात् । ननु पार्थिवपरमाणुषु कथं कदाचिन्निर्गन्धत्वमिति चेन्न गन्धोत्पादकविजातीयाग्निसंयोगविलम्बेन तत्सम्भवात् नन्वचेतनाः परमाणवः कथं निर्गन्धत्वावस्थापन्ना एव मिलिताः पाषाणमारभन्त इति नियम इति चेन्न तवानुद्भूतगन्धवत्त्वावस्थायामेव तदारम्भ इति नियमवत् किञ्चित्प्रतिबन्धकवशेन ममाप्युपपत्तेः । अथैवं घ्राणेन्द्रिये पृथिवीत्वेन रसानुमानं पूर्वोक्तं न स्यात्तत्रापि नानाजातीयरसवदवयवारब्धेऽवयविनि व्यभिचारेण पृथिवीत्वस्य रससाधकत्वासम्भवात् इति चेदस्तु तत्राप्ययमाक्षेपः । नह्येतावता त्वदिष्टसिद्धिरिति । अत्र वदन्ति यद्यपि गन्धवत्त्वमात्रं लक्षणमुचितमिति ग्रन्थस्य गन्धसमवायिकारणत्वस्य गुरुतया न लक्षणत्वमुचितम् किन्तु गन्धवत्त्वस्य लक्षणत्वलाभायैव तदुक्तमित्यङ्गीकार्यम् । तत्र गन्धस्तु द्विविधो मत इत्यनेनैव लभ्यत इति गन्धहेतुत्वोक्तिर्व्यर्थेत्याशयः न वयं गन्धवत्त्वस्य लक्षणत्वपर्यवसानाय गन्धहेतुत्वोक्तिरिति ब्रूमः येन वैयर्थ्यं स्यात् किन्तु लक्ष्यतावच्छेदकीभूतपृथिवीत्वादिजातिप्रमाणसूचनाय तदुक्तिरित्याशयेन तथापि पृथिवीत्वजातावित्यादिग्रन्थः तत्रच मूलेऽग्रे वक्ष्यमाणस्यापि गन्धवत्त्वलक्षण-

**प्रभा.**

तेजस्त्वादिजातिवारणाय गन्धसमानाधिकरणेति । सत्तादिवारणाय जलावृत्तीति । सामानाधिकरण्यघटकवृत्तिताद्वयं अवृत्तित्वप्रतियोगिवृत्तित्वं जातिमत्त्वं च समवायेन बोध्यम् । तेन न कालि-

**मञ्जूषा.**

स्येह मुक्तावळ्यां प्रस्तुतत्वात्तदिहैव विवक्षितं गन्धवद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वमिति नीलकण्ठेन प्रसक्तत्वादेवं च गन्धवत्त्वलक्षणस्य पाषाणादावव्याप्तिर्विश्वनाथेन नचेत्यादिना शंकिता । साच यथाश्रुत एव नतु स्वोक्तविवक्षायामिति सूचयितुमेव नीलकण्ठेन नतु गन्धवत्त्वस्य पृथिवीलक्षणत्वे पाषाणादौ गन्धशून्येऽव्याप्तिरिति शङ्कां निराकुरुत इत्यवतरणिका दत्ता । ततश्च नानाजातीयगन्धवदवयवारब्धावयविन्यव्याप्तिवारणायावश्यकजातिघटनयैव तत्राव्याप्तिवारणसंभवेऽपि वस्तुस्थितिमनुरुध्य पाषाणे गन्धवत्त्वं साधयितुं यथाश्रुतस्वोक्तलक्षणे तत्राव्याप्तिशङ्कामुखेन प्रसक्तिस्संपादिता विश्वनाथेनेति नीलकण्ठाभिप्रायः । पृथिवीत्वेन गन्धानुमानं च न साक्षात् किंतु पृथिवीत्वेन हेतुना पाषाणत्वजात्यवच्छेदेन गन्धवदवृत्तिजातिशून्यत्वं साध्यते पाषाणत्वावच्छेदेन गन्धवदवृत्तिजातिशून्यत्वं च यत्र क्वचन पाषाणजातीये गन्धस्वीकारमन्तरा नोपपद्यते तत्रच विनिगमनाविरहात् सर्वास्वपि पाषाणव्यक्तिषु गन्धस्सिध्यति । एवं घ्राणेन्द्रिये पृथिवीत्वेन प्राग्रससाधनमप्यनयैव रीत्या बोध्यं नच तथापि वाय्वानीतपार्थिवभागे पृथिवीत्वेन रसानुमानं प्रागुक्तं विरुध्यत इति वाच्यम् । उद्भूतगन्धवत्त्वेनुद्भूतरूपादिमत्सु च पार्थिवभागेष्वेकं नानाविधं वा वैजात्यमस्तीत्यभिप्रायेण तथोक्तत्वात् कथमन्यथेत्यादिग्रन्थश्च गन्धवत्त्वलक्षणस्य पाषाणादावव्याप्तेः तत्र पृथिवीत्वानङ्गीकारेणैव वारयितुं शक्यतया किं तत्र गन्धानुमानप्रयासेनेति तटस्थशङ्कयावतरणीयः । नीलकण्ठोऽपि वस्तुस्थितिमनुरुध्य तथोक्तमिति वदन् तटस्थशङ्कयैव कथमन्यथेत्यादिग्रन्थस्यावतरणीयतां जनयति । एवं चान्यथेत्यादिग्रन्थस्य पृथिवीत्वानङ्गीकार इत्यर्थबोधकतायाः क्लिष्टत्वेऽप्यगत्या स्वीकार इति बोध्यम् । एवंचोक्तप्रणाल्या पाषाणे पृथिवीत्वसिद्धया तेन गन्धानुमानसम्भवान्न चतुर्थदोषप्रसक्तिः पृथिवीत्वस्य पाषाणे परम्परया गन्धसाधकत्वेन व्यभिचाराप्रसक्तेः । अप्रयोजकत्वं तु नेदानीं शङ्कनीयं तदभिप्रायेणैव दीधितिकृद्भिरनुद्भूतगन्धादिप्रत्याख्यानात् तदिदं नीलकण्ठोक्त्यनुरोधेन मुक्तावळीग्रन्थसङ्गमनं अन्यथापि तद्ग्रन्थः सङ्गमयितुं शक्यते । तद्यथा नानाजातीयगन्धवदवयवारब्धेऽवयविन्यव्याप्तिवारणाय गन्धवदवृत्तिजातिशून्यमूर्तत्वमेव विवक्ष्यते नतु गन्धवद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वं द्रव्यत्वव्याप्यत्वनिवेशे गौरवादित्यभिप्रेयिवान्विश्वनाथः पाषाणेऽव्याप्तिमाशङ्क्य परिहरति अतः पाषाणे गन्धवत्त्वसाधनप्रयासो न विफलः शेषं पूर्ववत् । अथवा नानाजातीयगन्धवदवयवारब्धस्यावयविनो निर्गन्धत्वमिति पक्षे विश्वनाथस्य न निर्भरः तद्बीजस्याग्रे प्रकटयिष्यमाणत्वात् किंत्वव्याप्यवृत्तिनानागन्धोत्पत्तिरेव तत्राभ्युपेयते नचैवं नानाजातीयरूपवदवयवारब्धेऽवयविनि चित्ररूपस्वीकारो निर्युक्तिकः तत्राप्यव्याप्यवृत्तिनानारूपस्वीकारसंभवादिति वाच्यं इष्टापत्तेः अव्याप्यवृत्तिनानारूपस्वीकार एव ग्रन्थकृतो निर्भरात् । अत एव गुणमुक्तावळ्यां चित्ररूपप्रकरणे बहुषु पुस्तकेषु नव्यास्त्वित्यादिना अव्याप्यवृत्तित्वपक्ष एव स्थिरीकृतो दृश्यते एवंचात्र गन्धवत्त्वलक्षणे जातिघटनाया अनावश्यकत्वाभिप्रायेणैव पाषाणेऽव्याप्तिशङ्का युज्यते । एवं तत्रापीत्यादिना पाषाणे पृथिवीत्वेन गन्धसाधनमपि न विरुध्यते उक्तरीत्या व्यभिचाराप्रसक्तेः एवंच घ्राणेन्द्रिये वाय्वानीतपार्थिवभागे च पृथिवीत्वेन रससाधनमपि प्राक्तनं यथाश्रुतमेव साधु सङ्गच्छते नानाजातीयरसवदवयवारब्धेऽप्यवयविन्यव्याप्यवृत्तिनानारसस्वीकारेण पृथिवीत्वस्य तत्र व्यभिचाराप्रसक्तेः कथमन्यथेत्यादिग्रन्थावतरणादिकं तु पूर्ववदेव । वस्तुतस्तु नच पाषाणे गन्धाभावादित्युत्तरं गन्धवत्त्वमव्याप्तमिति पाठो न वास्तविकः किंतु प्रामादिकः । कथं तत्र पृथिवीत्वमिति पाठस्तु प्रामाणिकः तत्पाठे उक्तदोषाभावात् यथाच दोषाभावस्तथाग्रे व्या-

**थिव्या लक्षणमुचितं तथापि पृथिवीत्वजातौ प्रमाणोपन्यासाय कारणत्वमुपन्यस्तम्।**

## प्रभा.

कसंबन्धमादाय दोषः ॥ **प्रमाणोपन्यासायेति** ॥ यद्यपि घटादौ पृथिवीत्वस्य प्रत्यक्षसिद्धतया न प्रमाणान्तरापेक्षा तथापि परमाण्वादिषु पृथिवीत्वस्य प्रत्यक्षासंभवेन तत्साधारण्येन पृथिवीत्वसिद्धग-

## मञ्जूषा.

ख्यास्यते। अथेदानीमानुपूर्व्येण मुक्तावली व्याख्यायते गन्धहेतुत्वं कालादौ गतमतो व्याचष्टे गन्धसमवायिकारणमिति नीलकण्ठः। गन्धहेतुरिति वाक्यात् गन्धत्वविशिष्टनिरूपितहेतुतैव लभ्यते सा च गन्धत्वावच्छिन्नकार्यतानिरूपितकारणतैव तस्याश्च कालादौ प्रसक्त्यभावान्नेदं युक्तं किन्तु समवायेन-गन्धत्वावच्छिन्नकारणीभूतो यः समवायेन गन्धाभाववत्त्वात्तिव्याप्तिरिति शङ्कयैव तद्ग्रन्थावतरणं कार्यमित्यस्मद्गुरुचरणाः। गन्धहेतुत्वं हि पृथिवीत्वजातौ प्रमाणोपन्यासायेति वक्ष्यते तच्च हेतुत्वं कीदृशमित्याकाङ्क्षायां विशेषतो दर्शयति गन्धसमवायिकारणमितीति तु वयं। गन्धहेतुत्वोक्तेः पृथिवीत्वजातिप्रमाणसूचकतां दर्शयितुमाशङ्कते ॥ **यद्यपीति** ॥ **उचितमिति** ॥ लाघवादिति शेषः। तत्सूचनायैव च गन्धसमवायिकारणत्वमुक्तमिति तु न संभवति तस्य गन्धस्तु द्विविधो मत इत्यनेनैव कण्ठत उक्तत्वादिति भावः। गन्धहेतुत्वोक्तिर्न लक्षणलाभायेत्याशयेन तस्याः पृथिवीत्वजातिप्रमाणप्रदर्शनार्थतां स्पष्टयति ॥ **तथापीति** ॥ अत्र यद्यपितथापिभ्यामनादरस्सूचितः तद्बीजं तु गन्धवत्त्वरूपलघुलक्षणान्तरसंभवो न समवायावच्छिन्नगन्धनिष्ठकार्यतानिरूपिततादात्म्यसंबन्धावच्छिन्नकारणतारूपगुरुलक्षणस्य लक्षणत्वविघटकः धर्मिभेदेनेतरभेदानुमाने व्यर्थविशेषणताप्रयुक्तव्याप्यत्वासिद्धेर्धूमप्रागभावादाविव प्रसक्त्यभावात् किंच गन्धवत्त्वमपि यथाश्रुतं न चारु प्राचीनमते नानाजातीयगन्धवदवयवारब्धद्रव्येऽव्याप्तेः किंतु गन्धवद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वं गन्धवदवृत्तिजातिशून्यमूर्तत्वं । वक्तव्यं गन्धसमवायिकारणत्वं तु निर्गन्धघटेऽप्यक्षतं तत्र प्रतिबन्धकवशेन गन्धानुत्पादेऽप्यरण्यस्थदण्डादाविव स्वरूपयोग्यतायाः गन्धकारणताया अक्षतत्वात् परन्त्विदं कारणतातिरिक्तत्वपक्ष एव सङ्गच्छते। तदनतिरिक्तत्वपक्षे त्वन्यथासिद्ध्यनवच्छेदकगन्धनियतपूर्ववृत्तितावच्छेदकधर्मवत्त्वमेव स्वरूपयोग्यतारूपं गन्धसमवायिकारणत्वं वाच्यम्। गन्धनियतपूर्ववृत्तितावच्छेदकत्वं च गन्धसमवायिनिष्ठभेदप्रतियोगितानवच्छेदकत्वं तदाश्रयधर्मेऽन्यथासिद्ध्यनवच्छेदकत्वं गन्धकारणतावच्छेदकत्वव्यवहारशून्या ये गुणवत्त्वभूतत्वमूर्तत्वद्रव्यत्वसत्ताभावत्वप्रमेयत्वपृथिवीत्वान्यतरत्वादयो धर्मास्तत्तद्भेदकूटविशिष्टत्वं तत्रच प्रकृतलक्षणे

## दिनकरीयम्.

द्रव्यत्वव्याप्येत्यनेन तत्रैव सत्तामादाय सा न। न वा जातिपदोपादानाज्जलपृथिव्यन्यतरत्वमादाय सा। गन्धवत्त्वं वृत्तित्वं च समवायेन। तेन कालिकसम्बन्धेन गन्धवति समवायसम्बन्धावच्छिन्नवृत्तित्ववज्जलत्वादिमति पृथिवीनिरूपितकालिकसम्बन्धावच्छिन्नवृत्तित्ववज्जलत्वादिमति वा जलादौ नातिव्याप्तिः। **प्रमाणोपन्यासायेति** ॥ यद्यपि पृथिवीत्वस्य प्रत्यक्षतया न प्रमाणान्तरापेक्षा तथापि अयो-

## रामरुद्रीयम्.

ग्निवारणाय गन्धवत्त्वस्योक्तरूपस्यैव विवक्षणीयतया तदपेक्षया लाघवेन गन्धसमवायिकारणत्वमेव लक्षणं वक्तुमुचितं तथापि सति पृथिवीत्वावच्छिन्ने स्वरूपयोग्यतारूपकारणतामादाय तादृशघटेऽपि लक्षणसमन्वयसम्भवात्। न च द्रव्यत्वव्याप्यत्वं द्रव्यनिष्ठभेदप्रतियोगितावच्छेदकत्वमेव कारणताशरीरे च गन्धवन्निष्ठाभावप्रतियोगितानवच्छेदकत्वरूपनियमांशस्यानन्यथासिद्धत्वस्य च प्रवेशेन तत्रैव गौरवमिति वाच्यम्। अत्रापि नित्यत्वादिघटितगुरुशरीरजातित्वस्य प्रवेशात् विनिगमनाविरहेणापि तस्य लक्षणता दुर्वारैवेति सूचितम् ॥ **नातिव्याप्तिरिति** ॥ एवं चान्यतरत्वमादायाऽतिव्याप्त्यप्रसक्त्या जलपृथिवीद्वित्वमादाय जलेऽतिव्याप्तिवारणायैव जातिपदमिति विभावनीयम् ॥ **अयोग्यसाधारण्येनेति** ॥

तथा हि पृथिवीत्वं हि गन्धसमवायिकारणतावच्छेदकतया सिध्यति अन्यथा गन्धत्वावच्छिन्नस्याकस्मिकत्वापत्तेः । न च पाषाणादौ गन्धाभावात् गन्धवत्त्वमव्याप्त-

प्रभा.

र्थ तदुपन्यास इति हृदयम् ॥ **सिध्यतीति** ॥ गन्धसमवायिकारणता किंचिद्धर्मावच्छिन्ना कारणतात्वात् दण्डनिष्ठकारणतावत् इत्यनुमानेन सिध्यतीत्यर्थः ॥ **अन्यतेथि** ॥ गन्धत्वावच्छिन्नं प्रति पृथिवीत्वेन हेतुत्वानङ्गीकार इत्यर्थः ॥ **आकस्मिकत्वापत्तेरिति** ॥ ध्वंसस्येवासमवेतकार्यत्वापत्तेरित्यर्थः । समवायेन कार्याधिकरणस्यैव कार्यसमवायिकारणत्वादिति भावः । नच तद्गन्धव्यक्तिं प्रति तत्तत्पृथिवीव्यक्तेः समवायिकारणत्वस्वीकारेणैव तदापत्तिवारणे पृथिवीत्वेन हेतुत्वे मानाभाव इति वाच्यम् कार्यमात्रवृत्तिजातेः कार्यतावच्छेदकत्वनियमेन यद्विशेषयोरिति व्याप्त्या च गन्धत्वावच्छिन्नं प्रति पृथिवीत्वेन हेतुत्वस्यावश्यकत्वादिति भावः । इदमुपलक्षणं पृथिवीपदशक्यतावच्छेदकतया पृथिवीत्वजातिसिद्धिः असति बाधके शक्यतावच्छेदकत्वस्यापि जातित्वसाधकत्वात् । नचै-

मञ्जूषा.

द्रव्यत्वसत्ताभिन्नत्वनिवेशेनैवोपपत्तेरितरभेदनिवेशनं व्यर्थम् पृथिवीजलसंयोगादेः प्रत्येकं गन्धसमवायिनिष्ठभेदप्रतियोगितावच्छेदकत्वात् समवायस्य लक्षणतावच्छेदकसंबन्धत्वेन पृथिवीजलान्यतरत्वमादायातिव्याप्तेरभावाच्च पृथिवीजलान्यतरत्वादिभेदनिवेशेऽपि पृथिवीत्वरूपतादृशधर्मस्य कालिकसंबन्धेन जलादावपि सत्त्वेन समवायस्य लक्षणतावच्छेदकत्वस्वीकारावश्यंभावादिति बोध्यम् ॥ **अन्यथेति** ॥ गन्धत्वावच्छिन्नं प्रति पृथिवीत्वेन समवायिकारणत्वानभ्युपगम इत्यर्थः ॥ **आकस्मिकत्वापत्तेरिति** ॥ समवायिकारणानियाम्यत्वापत्तेरित्यर्थः । ननु गन्धत्वावच्छिन्नस्य समवायिकारणानियाम्यत्वे का क्षतिः नचासमवेतत्वापत्तिः जन्यसत्त्वावच्छिन्नं प्रति तादात्म्येन द्रव्यस्य हेतुतया तत्तद्व्यक्तिसमवेतसामान्यं प्रति

दिनकरीयम्.

व्यसाधारण्येन प्रत्यक्षासम्भवात्तत्साधारण्येन पृथिवीत्वसिद्ध्यर्थं तदुपन्यास इति भावः । **अन्यथा** गन्धत्वावच्छिन्नं प्रति हेतुत्वानङ्गीकारे ॥ **आकस्मिकत्वापत्तेः** नियतकारणानियम्यत्वापत्तेरित्यर्थः । तथा च कार्यमात्रवृत्तेर्गन्धत्वस्य कार्यतावच्छेदकत्वानुरोधेन तदवच्छिन्ने पृथिवीत्वेन हेतुत्वमावश्यकमिति भावः । इदमुपलक्षणम् । रूपादिनाशकतावच्छेदकतयापि पृथिवीत्वजातिसिद्धिर्द्रष्टव्या प्रतियोगिता-

रामरुद्रीयम्.

अयोग्यविशेष्यकत्वेनेत्यर्थः । वैशिष्ट्यं तृतीयार्थः । तत्साधारण्येन अयोग्यपरमाण्वादिवृत्तित्वेनेत्यर्थः तथा च परमाणौ प्रत्यक्षेण न पृथिवीत्वजातिसिद्धिः अपि तु तत्रापि गन्धोत्पत्त्या गन्धरूपकार्यहेतुकानुमानेनैव तत्कारणतावच्छेदकपृथिवीत्वजातिसिद्धिरिति भावः ॥ **नियतकारणेति** ॥ कारणे नियतत्वं जलादिव्यावृत्तत्वमेव । नियम्यत्वं कार्यतावच्छेदकधर्मवत्त्वं तथा च गन्धं प्रति पृथिवीत्वेनाकारणत्वे कदाचिज्जलादावपि तदुत्पादः स्यादिति भावः । ननु नेयमापत्तिः सम्भवति पाकजगन्धे विजातीयतेजःसंयोगत्वेन तेजःसंयोगस्यापाकजे चावयवगन्धस्यैव कारणतया तदभावादेव जलादौ गन्धोत्पादासम्भवात् वैजात्यस्य पृथिव्यनुयोगिकसंयोग एव स्वीकरणीयत्वात् अन्यथा एकवैजात्यस्यैव रूपादिजनकतावच्छेदकतया जलादौ रूपोत्पादापत्तेः । न च रूपात्मकप्रतिबन्धकसत्त्वादेव न तत्र तदापत्तिरिति वाच्यम् । रूपान्तरोत्पादकतावच्छेदकस्यैव पूर्वरूपनाशकतावच्छेदकतया नाशस्यैवापादनीयत्वादित्यस्वरसाद्भावमाह ॥ **तथाचेति** ॥ कार्यतावच्छेदकत्वनियमादित्यस्य समवायिकारणकार्यतावच्छेदकत्वनियमादित्यर्थः । तेन गन्धत्वस्य विजातीयादृष्टजन्यतावच्छेदकत्वेऽपि न पृथिवीत्वासिद्धिप्रसङ्गः व्याप्तिसिद्धिस्तु घटत्वादिकपालत्वादिभ्यां कार्यकारणभावदर्शनादेवेति भावः । ननूक्तव्याप्तौ मानाभावस्तद्ग्राहकानुकूलतर्काभावादित्यस्वरसात्प्रमाणान्तरं दर्शयति ॥ **इदमित्यादि** ॥ **विलक्षणेति** ॥ प्रभा-

## प्रभा.

चमदृष्टपदशक्यतावच्छेदकतयाऽदृष्टत्वस्यापि जातित्वापत्तिरिति वाच्यम् अदृष्टपदस्य नानार्थकत्वेन क्लृप्तधर्मत्वादिजातेरेव शक्यतावच्छेदकत्वात् अत एव सैन्धवपदविभुपदशक्यतावच्छेदकतयापि न जात्यन्तरसिद्धिः क्लृप्ताश्वत्वादीनामेव शक्यतावच्छेदकत्वात् विभुपदशक्यतावच्छेदकात्मत्वस्य बाधकाभावात् जातिरूपत्वं विभुपदशक्यतावच्छेदकाकाशत्वादेः व्यक्त्यैक्यरूपबाधकसत्त्वेनोपाधिरूपत्वं । वस्तुतो विभुपदस्य नानार्थकत्वाभावेऽपि विभुपदशक्यतावच्छेदकतया सिद्धविभुत्वस्य भूतत्वेन सांकर्यात् न जातिरूपत्वमिति प्रतिभाति । एवंच पृथिवीत्वस्य जातिरूपत्वे बाधकाभावात् शक्यतावच्छेदकतया जातिरूपत्वासिद्धिर्भवतीति बोध्यम् । केचित्तु इदमुपलक्षणं रूपादिनाशकतावच्छेदकतयापि पृथिवीत्वजाति

## मञ्जूषा.

तत्तद्व्यक्तेस्तादात्म्येन हेतुतया च तदापत्तिविरहात् । नच जले गन्धत्वावच्छिन्नसमवायसंबन्धावच्छिन्नप्रतियोगिताकाभावरूपकारणबलात्तत्तत्कार्यतावच्छेदकीभूतगन्धत्वावच्छिन्नापत्तिवारणाय पृथिवीत्वेन हेतुत्वमावश्यकमिति वाच्यम् गन्धत्वव्याप्यधर्मावच्छिन्नजनकानां पाकावयवसुरभ्यादीनां विशेषसामग्रीत्वकल्पनादेव तद्वारणात् समवायेन गन्धत्वावच्छिन्नं प्रति तादात्म्येन पृथिवीत्वेन कारणतावादिभिरपि नानाजातीयगन्धवद्वयवारब्धाभ्यामवयवाभ्यामारब्धेऽवयविनि पृथिवीरूपकारणबलात् गन्धाभावरूपकारणबलाच्च गन्धत्वावच्छिन्नापत्तिवारणाय तेषां विशेषसामग्रीत्वस्यावश्यकल्पनीयत्वात् । नच कार्यमात्रवृत्तिजातेः कार्यतावच्छेदकत्वनियमेन गन्धत्वावच्छिन्नं प्रति पृथिवीत्वेन हेतुत्वमावश्यकमिति वाच्यम् । गन्धवति गन्धोत्पत्तिवारणाय कल्पनीयेन गन्धं प्रति गन्धाभावस्य कारणत्वेनैव तादृशनियमनिर्वाहात् । नच समवायिकारणकार्यतावच्छेदकत्वं कार्यमात्रवृत्तिजातेरित्येव नियम इति वाच्यं अप्रयोजकत्वात् । जातेर्हि नियामकं किंचिदपेक्षितं अन्यथा सर्वेषां सर्वजातीयत्वस्यैकजातीयत्वस्य वा प्रसङ्गात् तत्रच

## दिनकरीयम्.

संबन्धेनाश्रयनाशाजन्यरूपनाशं प्रति स्वसमवायिपृथिवीसमवेतत्वस्ववृत्तिरूपत्वोभयसंबन्धेन विलक्षणतेजःसंयोगत्वेन हेतुत्वात् पृथिवीत्वस्य तादृशनाशकतावच्छेदकसम्बन्धघटकत्वात् । आश्रयनाशजन्यरूपनाशे व्यभिचारवारणायाजन्यान्तं नाशविशेषणम् । घटाग्निसंयोगेन पटरूपनाशापत्तिवारणाय समवेतत्वान्तस्य नाशकतावच्छेदकसम्बन्धे प्रवेशः । तेजोवृत्तिरूपे प्रतियोगितासम्बन्धेन तादृशरूपनाशापत्तिवारणाय तद्घटकतया पृथिवीत्वप्रवेशः । स्वसमानाधिकरणरसगन्धादौ प्रतियोगितासम्बन्धेन तादृशरूपनाशोत्पत्त्यापत्तिवारणाय स्ववृत्तिरूपत्वस्य नाशकतावच्छेदकसम्बन्धे प्रवेशः । स्ववृत्तित्वं च कालिकविशेषणतया बोध्यम् । स्वसमवायिपृथिवीसमवेतत्वविशिष्टरूपत्वस्य सम्बन्धत्वे रूपत्वविशिष्टस्वसमवायिसमवेतत्वमादाय विनिगमनाविरहेण नाश्यनाशकभावद्वयापत्तिरिति तत्त्यागः । एतेन पाकजगन्धे तेजःसंयोगस्य कारणत्वेनापाकजे च सुरभ्यादिगन्धादाववयवगतसुरभ्यादेर्नियामकत्वेन गन्धत्वेन पृथिवीत्वेन कार्यकारणभावे मानाभावात् पृथिवीत्वं न जातिरिति प्रत्युक्तम् । ननु गन्धवत्त्वस्य पृथि-

## रामरुद्रीयम्.

दिसंयोगेन रूपनाशानुत्पादाद्विलक्षणेति ॥ **स्ववृत्तिरूपत्वस्येति** ॥ रूपत्वस्य तेजःसंयोगप्रतियोगिकत्वे मानाभावात् स्ववृत्तित्वप्रवेशः । परम्परासम्बन्धे प्रविष्टविशेषणभागस्य सप्रतियोगिकत्वादेव विशिष्टपरम्परासम्बन्धस्य सप्रतियोगिकत्वनियमात्तद्वृत्तेराधेयतायाः तेजःसंयोगप्रतियोगिकत्वेन स्ववृत्तिरूपत्वस्य तत्प्रतियोगिकत्वसम्भवादिति भावः ॥ **स्वसमवायिसमवेतत्वेति** ॥ विलक्षणतेजःसंयोगप्रतियोगिकत्वविशिष्टसमवायानुयोगिसमवेतत्वेत्यर्थः । तेन पृथिवीत्वाप्रवेशेऽपि न क्षतिः । तेजस्संयोगप्रतियोगिकत्वविशिष्टसमवायानुयोगित्वस्य तेजस्यनङ्गीकारादिति भावः ॥ **तेज इति** ॥ विजातीयतेजस्संयोगत्वेनेति शेषः । तेन जलादौ न गन्धापत्तिः वैजात्यस्य पृथिव्यनुयोगिकसंयोग एव स्वीकारादिति हृदयम् ॥ **प्रत्युक्तमिति** ॥ तादृशकार्यकारणभावाभावेऽपि रूपनाशकतावच्छेद-

## प्रभा.

दृष्ट्या प्रतियोगितासंबन्धेनाश्रयनाशाजन्यरूपनाशं प्रति स्वसमवायिपृथिवीसमवेतत्वस्ववृत्तिरूपत्वत्वोभयसंबन्धेन विलक्षणतेजस्संयोगत्वेन कारणत्वात् पृथिवीत्वस्य तादृशनाशकतावच्छेदकसंबन्धघटकत्वात् । आश्रयनाशजन्यरूपनाशे व्यभिचारवारणायाजन्यान्तं विशेषणम् घटाग्निसंयोगेन पटरूपनाशापत्तिवारणाय समवेतत्वान्तस्य नाशकतावच्छेदकसंबन्धे प्रवेशः तेजोवृत्तिरूपे प्रतियोगितासंबन्धेन तादृशरूपनाशापत्तिवारणाय तद्घटकतया पृथिवीत्वनिवेशः स्वसमानाधिकरणरसगन्धादौ प्रतियोगितासंबन्धेन तादृशनाशापत्तिवारणाय स्ववृत्तिरूपत्वस्य नाशकतावच्छेदकसंबन्धे प्रवेशः स्ववृत्तित्वं च कालिकाविशेषणतया बोध्यम् स्वसमवायिसमवेतत्वविशिष्टरूपत्वस्य संबन्धत्वे तु रूपत्वविशिष्टस्वसमवायिसमवेतत्वमादाय विनिगमनाविरहेण नाश्यनाशकभावद्वयापत्तिरिति तत्परित्याग इति प्रकारान्तरेण पृथिवीत्वजा–

## मञ्जूषा.

गन्धत्वजातौ समवायिकारणजन्यतैव नियामिका वाच्येति कोऽयं निर्बन्धः निमित्तकारणजन्यतायास्तन्नियामकत्वेऽपि क्षतिविरहादिति चेदुच्यते गन्धाभावत्वावच्छिन्नकारणतानिरूपितकार्यता न गन्धत्वजातिं नियमयितुमीष्टे अन्योन्याश्रयप्रसङ्गात् । तथाहि गन्धत्वं यदा व्यवतिष्ठते तदैव तदवच्छिन्नप्रतियोगिताकाभावत्वेन कारणता निर्णीयेत तादृशकारणतानिरूपिता च कार्यता स्वयं क्वचिद्यवतिष्ठमाना स्वावच्छेदकधर्मं व्यवस्थापयेत् नत्वन्यथेति । गन्धत्वं किञ्चिद्धर्मावच्छिन्नकारणतानिरूपितकार्यतानियाम्यं कार्यमात्रवृत्तिजातित्वादित्यनुमानेन गन्धत्वनियामककार्यतानिरूपितकारणतावच्छेदकतया किञ्चिद्धर्मसिध्यान्नितरबाधात् पृथिवीत्वरूप एव सिध्यति । नच पृथिवीत्वस्य व्यवस्थितिं विना तदवच्छिन्नकारणतानिरूपितकार्यतापि न व्यवतिष्ठते इति कथं तस्य गन्धत्वव्यवस्थापकत्वमिति वाच्यं । धर्मिग्राहकोक्तानुमानेन तस्याः कारणतावच्छेदकतया सिद्धत्वेन तादृशकारणताया एव तद्व्यवस्थापकत्वात् नचोक्तानुमानेन तादृशकारणतावच्छेदकतया गन्धाभावत्वमेव सिध्यतामिति वाच्यम् । गन्धत्वे किंचिन्नियाम्यताया एव साध्यतया तावत्पर्यन्तं तस्याव्यवस्थितत्वेन तदवच्छिन्नप्रतियोगिताकाभावत्वे कारणतावच्छेदकत्वनिर्णयासंभवात् नहि गन्धत्वस्य कारणतावच्छेदकीभूताभावत्वनिरूपितप्रतियोगितावच्छेदकत्वं धर्मिग्राहकमानसिद्धं । तथासति तस्य पक्षत्वानुपपत्तेः नहि प्रागसिद्धं वस्तु पक्षीभवितुमर्हतीत्यादि स्वयमूहनीयम् । ननु पाकविशेषजन्यतायाः अवयवसुरभ्यसुरभिजन्यतयोश्च तत्र नियामकत्वसंभवादुक्तानुमानेऽर्थान्तरत्वमिति चेन्न तथासति महागौरवप्रसङ्गात् तथाहि सुरभित्वमिति नैका जातिः मालतीवकुलचंपकपुन्नागकुन्दारविन्दादिगन्धेषु सुरभित्वानां भिन्नत्वात् एवमसुरभित्वमपि तथा लशुनमूलकशुक्तादिष्वसुरभित्वानां भिन्नत्वात् किंत्वानन्दविशेषजनकघ्राणजप्रत्यक्षविषयतावच्छेदकजातीनां सुरभित्वमिति संज्ञा दुःखविशेषजनकघ्राणजप्रत्यक्षविषयतावच्छेदकजातीनां त्वसुरभित्वमिति । अत एव एक एव गन्धो लोके पुरुषभेदेन कालभेदेन च सुरभिः असुरभिश्च व्यवह्रियते । अस्तु वा सुरभित्वमसुरभित्वं च द्वे एव जाती तथापि तद्व्याप्या नानाजातयोऽवश्यमभ्युपेयाः तत्पुरस्कारेणैव चावयवावयविगन्धयोः कार्यकारणभावो वाच्यः एकजातीयसुरभिगन्धवदवयवारब्धेऽवयविन्यन्यजातीयसुरभिगन्धानुत्पादात् एवं पाकस्यापि तत्तद्विजातीयगन्धं प्रति पृथग्विधवैजात्यपुरस्कारेण नानाहेतुताः कल्पनीयाः । अन्यथैकैकविधपाकोत्पादितगन्धस्य विनिगमनाविरहेण सर्वगन्धजातीयत्वप्रसङ्गात् तथाचानन्तानां पाकावयवगन्धजन्यतानां गन्धत्वजातिनियामकत्वे महागौरवापत्त्या पृथिवीत्वावच्छिन्नजन्यतैव तथा वाच्या किंच जले गन्धत्वावच्छिन्नानुत्पादेऽनेकेषां पाकावयवसुरभ्यसुरभ्यभावानां • प्रयोजकत्वकल्पनापेक्षया पृथिवीभेदस्यैकस्यैव तथात्वकल्पने लाघवमिति .तदनुरोधेनाप्युक्तकारणतावश्यकी । नच नानाजीयगन्धवदवयवारब्धाभ्यामवयवाभ्यामारब्धेऽवयविनि गन्धत्वावच्छिन्नानुत्पादे दर्शिताभावकूटस्य प्रयोजकतायास्तवाप्यवश्यकतया जलादावपि तस्यैव प्रयोजकत्वमस्त्विति वाच्यम् अत्रागत्या गौरवस्वीकारेऽप्यन्यत्र संभवतो लाघवस्य परित्यागानौचित्यात् । न चाधिकरणभेदेनाभावभेदाभावात् गन्धत्वावच्छिन्नोत्पा-

### प्रभा.

तिसाधनमाहुः तदसत् तेजस्संयोगस्य न तेजस्संयोगत्वेन हेतुत्वं किञ्चित्कालमग्नौ निक्षिप्य पुनर्गृहीते घटे पूर्वरूपनाशादर्शनात् वह्न्यवयवक्रियया घटस्य सर्वावयवावच्छेदेन जायमाना यावन्तो वह्न्यवयवसंयोगाः रूपनाशकाः तेषु नाशकतावच्छेदकतया वैजात्यं स्वीकृत्य तादृशवैजात्यपुरस्कारेण तेजस्संयोगस्य हेतुत्वं वाच्यं तथाच तादृशतेजस्संयोगस्य वह्निक्रियाजन्यत्वेन वह्निप्रतियोगिकत्वात्

### मञ्जूषा.

दाभावः सर्वत्रैक एवेति क लाघवमिति वाच्यम् । अभावस्यैकत्वेऽपि तत्तदधिकरणनिष्ठानामभावसंबन्धानां भिन्नभिन्नत्वात् तत्तदधिकरणेषु कार्योत्पादाभावसंबन्धस्यैव च प्रयोजकत्वापेक्षत्वात् नानाजातीयगन्धवदवयवारब्धे तादृशावयवारब्धे चावयविनि गन्धोत्पादोऽस्त्येवेत्यत्रैव ग्रन्थकृतो निर्भरस्य वक्ष्यमाणतयोक्तशङ्काया एवानवताराच्च । किंच विजातीयतेजःसंयोगरूपस्य पाकस्य समवायसंबन्धेन घट इव तेजस्यपि सत्त्वात् तत्र गन्धत्वावच्छिन्नोत्पत्तिवारणं पृथिवीकारणतयैव निर्वाह्यम् । नच समवायेन विजातीयसंयोगस्य विजातीयसंयोगसंबन्धेन तेजसो वा कारणत्वमित्यत्र विनिगमनाविरहात् विजातीयसंयोगसंबन्धेन तेजसोऽपि कारणत्वं सिद्धम् । तथाच न तेजसि गन्धापत्तिः स्वस्य संयोगसंबन्धेन स्वस्मिन्ननङ्गीकारात्तेजोवृत्तितेजोऽन्तरसंयोगस्य च विजातीयत्वाभावादिति वाच्यम् । तत्प्रतियोगिकसंयोगस्यैव तत्संबन्धतया घटक्रियाजन्यघटप्रतियोगिकतेजोऽनुयोगिकसंयोगात् गन्धानुत्पादापत्त्या संयोगसंबन्धेन तेजसः कारणत्वासंभवात् । नच वह्न्यवयवक्रियाजन्यादेव संयोगात् गन्धोत्पादः न पार्थिवद्रव्यक्रियाजन्यात् प्रज्वलति वह्नौ सकृन्निक्षिप्य पुनर्गृहीते घटे पूर्वगन्धनाशगन्धान्तरोत्पादयोरदर्शनादिति वाच्यम् । अवस्थित एव घटे सकृद्वह्निना प्रज्वलता संयोज्य वह्न्यपनयनेऽपि तद्दर्शनाभावेन विजातीयसंयोगाभावस्यैव तदानीं गन्धान्तरानुत्पादप्रयोजकत्वात् । नच तद्वैजात्यं वह्न्यवयवक्रियाजन्यसंयोग एव स्वीक्रियत इति वाच्यम् । चलन्त्यां वह्निज्वालायां चाल्यमाने च शूललग्नहृदयपिण्डे तत्र गन्धान्तरोत्पादप्रयोजकवैजात्यं किं हृदयपिण्डक्रियाजन्यवह्निसंयोगे स्वीक्रियते उत वह्निक्रियाजन्य इत्यस्य शपथनिर्णेयत्वात् । तथाच परित्यज्य निश्चिताव्यभिचारकं सन्दिह्यमानव्यभिचारकरूपेण कारणत्वकल्पनानौचित्यात् । नच संयोगसंबन्धेन तेजस्त्वेन कारणत्वसंभवः अत एव समवायातिरिक्तमनुयोगिताख्यं कञ्चन संबन्धं स्वीकृत्य तेन संबन्धेन विजातीयसंयोगस्य कारणतास्वीकारेऽपि न निस्तारः पार्थिवद्रव्यक्रियाजन्यस्य संयोगस्यानुयोगितया तत्रासंभवेन व्यभिचारसन्देहात् तस्यानुयोगितासंबन्धेन तेजोवृत्तितया तत्र गन्धोत्पादापत्तेश्च तस्मात् गन्धत्वावच्छिन्नं प्रति पृथिवीत्वेन कारणत्वमावश्यकमेवेत्यश्रद्धेयमेव पाकजगन्धे तेजसः कारणत्वेनापाकजे च सुरभिगन्धादाववयवगतसुरभ्यादेर्नियामकत्वेन गन्धत्वेन पृथिवीत्वेन कार्यकारणभावे मानाभाव इति नीलकण्ठवचनम् । इदमुपलक्षणं आश्रयनाशाजन्यरूपनाशं प्रति स्वसमवायिपृथिवीसमवेतत्वसंबन्धेन विलक्षणतेजस्संयोगस्य कारणतया तदवच्छेदकसंबन्धघटकतयापि पृथिवीत्वासिद्धिः तत्र पृथिवीत्वानिवेशे तादृशाग्निसंयोगस्य अग्निरूपेऽपि सत्त्वेन तत्रापि प्रतियोगितासंबन्धेन आश्रयनाशाजन्यरूपनाशापत्तेः । नच उक्तसंबन्धेन तेजःसंयोगस्य पृथिवीरसादावपि सत्त्वात् तत्रापि प्रतियोगितासंबन्धेन यथोक्तरूपनाशापत्तिरिति वाच्यं प्रतियोगितासंबन्धेन तत्तद्ध्वंसव्यक्तित्वावच्छिन्नं प्रति तत्तत्प्रतियोगिव्यक्तेः तत्तद्व्यक्तित्वेन तादात्म्यसंबन्धेन कारणतया विलक्षणतेजःसंयोगरूपसामान्यकारणेनाश्रयनाशाजन्यरूपनाशत्वावच्छिन्ने जननीये तद्व्याप्यतत्तद्ध्वंसव्यक्तित्वावच्छिन्नजनिकानां तत्तत्प्रतियोगिव्यक्तीनां तादात्म्येन विशेषसामग्रीत्वेन तदापत्तिविरहात् । नीलकण्ठस्तु स्वसमवायिपृथिवीसमवेतत्वस्ववृत्तिरूपत्वोभयसंबन्धस्य कारणतावच्छेदकत्वात् न रसादौ प्रतियोगितासंबन्धेन रूपनाशापत्तिरित्याचष्ट अत्र कारणतावच्छेदकसंबन्धकोटौ पृथिवीत्वनिवेशनं तेजोऽनुयोगिकघटप्रतियोगिकसंयोगस्यापि रूपनाशकत्वमस्तीति पक्षे । तदनङ्गीकारे तु स्वानुयोगिकसमवेतत्वसंबन्धस्य कारणतावच्छेदकत्वस्वीकारेणैव ते-

मिति वाच्यम् । तत्रापि गन्धसत्त्वात् अनुपलब्धिस्त्वनुत्कटत्वेनाप्युपपद्यते कथमन्यथा

## प्रभा.

घटानुयोगिकत्वाच्च पृथिवीत्वरूपेण पृथिव्यास्संसर्गशरीरे निवेशे प्रयोजनाभावः तेजसि स्वानुयोगिकत्वाभावेनैव तन्निष्ठरूपे व्यभिचारवारणात् । एवं प्रतियोगितासंबन्धेन नाशं प्रति तादात्म्यसंबन्धेन प्रतियोगिनः कारणतया स्वसमानाधिकरणरसगन्धादौ तादात्म्येन प्रतियोगिरूपकारणाभावादेव तादृशरूपनाशापत्तिवारणे स्ववृत्तिरूपत्वस्यापि संबन्धघटकत्वे प्रमाणाभावः । तथाच स्वानुयोगिसमवेतत्वसंबन्धेन विजातीयतेजस्संयोगस्य हेतुत्वं फलितामिति पृथिवीत्वजातेः तादृशसंबन्धघटकत्वाप्रसिद्धया तादृशसंबन्धघटकतया पृथिवीत्वजातिसिद्धेरप्रामाणिकत्वादिति ॥ **तत्रापीति** ॥ पाषाणादावपीत्यर्थः । **गन्धसत्त्वादिति** ॥ गन्धानुमानादित्यर्थः । सुरभ्यसुरभ्यवयवासमवेतद्रव्यवृत्तित्वविशिष्टपृथिवीत्वेनेति शेषः । केवलपृथिवीत्वस्य सुरभ्यसुरभ्यवयवारब्धघटादिवृत्तित्वेन व्यभिचारितया न तस्य गन्धानुमापकत्वमिति शङ्काया अनवकाशः । पाषाणादौ गन्धसत्त्वेऽप्यनुपलम्भमुपपादयति ॥ **अनुपलब्धिस्त्विति** ॥ अप्रत्यक्षं त्वित्यर्थः ॥ **अनुत्कटत्वेनेति** ॥ अनुद्भूतत्वेनेत्यर्थः । ननु पाषाणादौ निरु-

## मञ्जूषा.

जोरूपेऽतिप्रसङ्गाभावेन तत्र पृथिवीत्वानिवेशनमफलमिति ध्येयम् । ननु यदि गन्धसमवायिकारणतावच्छेदकं पृथिवीत्वं तदा नानाजातीयगन्धवदवयवारब्धे घटादौ घटत्वादिना साङ्कर्यवारणाय तत्राप्यव्याप्यवृत्तिगन्धस्वीकारेणैव पृथिवीत्वजातिसिद्धावपि पाषाणादौ न तस्यास्सिद्धिसंभवः ततश्च पाषाणादिर्न पृथिवी किंत्वतिरिक्तद्रव्यमिति शङ्कां परिहरति ॥ **नचेति** ॥ पाषाणे गन्धाभावात् कथं तत्र पृथिवीत्वमिति पाठः ततश्च पाषाणस्य पृथिवीत्वसाधनायैव नचेत्यादिग्रन्थः प्रवृत्तः युज्यते चैतत् तथाहि जलनिरूपणे करकादेर्जलत्वं साध्यते यथा वा तेजोनिरूपणे सुवर्णस्य तेजस्त्वं साध्यते तथा पृथिवीनिरूपणे पाषाणस्य पृथिवीत्वं साध्यते यद्यपि करकसुवर्णयोर्विषयप्रकरण एव जलत्वादिकं साधयिष्यते तथाप्यत्रैव पूर्वपक्षयुक्तेरुपस्थितत्वात् प्रसङ्गसङ्गत्यात्रैव पृथिवीत्वं साध्यत इति बोध्यम् । अत्र पाषाणो न पृथिवी गन्धाभावादित्यनुमाने तात्पर्यं प्राचीनमते तु गन्धवदवृत्तिजातिमत्त्वं हेतुः तेन न पूर्वोक्तनिर्गन्धघटे व्यभिचारः उभयथाप्येतदनुमानं पाषाणे गन्धाभावमप्रसाध्य दुरुपपादम् । नच पाषाणस्य गन्धाभाववत्त्वे किञ्चित्प्रमाणमस्त्यतः स्वरूपासिद्धोऽयं हेतुरित्याह ॥ **तत्रापीति** ॥ ननु यदि पाषाणे गन्धोऽभविष्यत्तर्हि अग्राह्यत अतोऽनुपलब्ध्या गन्धाभावो निर्णीयते इत्यत आह ॥ **अनुपलब्धिस्त्विति** ॥ **अनुत्कटत्वेन** अनुद्भूतत्वेन ॥ अपिशब्देन दृढतमावयवसंयोगस्समुच्चीयते तथा चानुपलब्धिमात्रं नाभावनिर्णायकं किंतु योग्यानुपलब्धिः साचेह नास्ति इति भावः । ननु पाषाणे गन्धसत्त्वं त्वया कथं निश्चितमिति चेन्न हि वयं पाषाणे गन्धसत्तां निश्चिनुमः किंतु संभावयामः तावता त्वदुक्तहेतोस्सन्दिग्धाया अनुमापकत्वासंभवः एतत्सूचनाय चानुत्कटत्वेनापीत्यपिशब्दः प्रयुक्तः तेन हि स्वरसतो गन्धाभावस्समुच्चीयते ततश्च पाषाणे गन्धानुपलब्धिस्तद्गन्धस्यानुद्भूतत्वाद्वा स्यात् तत्र गन्धाभावाद्वा स्यात् तथाच सन्देहे पर्यवसानम् । ननु पाषाणे गन्धत्वसाधकप्रमाणाभावोपोद्बलितेन लाघवज्ञानेन तत्र गन्धाभावो निश्चीयते अतो न स्वरूपासिद्धिरित्यतो दूषणान्तरमाह ॥ **कथम**

## दिनकरीयम्.

त्वीलक्षणत्वे पाषाणादौ गन्धशून्येऽव्याप्तिरित्याशङ्कां निराकरोति ॥ **नचेत्यादिना** ॥ **तत्रापि** पाषाणादावपि । पृथिवीत्वेनेति शेषः ॥ **गन्धसत्त्वात्** गन्धानुमानात् । ननु पाषाणादौ गन्धसत्त्वेऽनुपलम्भो न स्यादित्यत आह ॥ **अनुपलब्धिस्त्विति** ॥ **अनुत्कटत्वेन** अनुद्भूतत्वेन ॥ ननु पाषाणस्य पृथिवीत्व एव मानाभावे नितरां तदधीनगन्धवत्त्वे इत्यतस्तत्र पृथिवीत्वसाधनाय भूमिकामारचयति ॥ **कथमन्यथे**

## रामरुद्रीयम्.

कसम्बन्धघटकतयैव तत्सिद्धेरिति भावः ॥ **पृथिवीत्वेनेतीति** ॥ पाषाणादौ गन्धसत्त्वादिति भू-

तद्भस्मनि गन्ध उपलभ्यते । भस्मनो हि पाषाणध्वंसजन्यत्वात् पाषाणोपादानो-

**प्रभा.**

क्तहेतुघटकपृथिवीत्वरूपविशेष्यासिद्धया विशिष्टहेतुनिर्णयाभावेन तत्र गन्धानुमानस्य सुतरामसंभवेन तस्य अनुत्कटत्वोपपादनं असंगतमित्याशङ्कां विशेष्यसाधनेन परिहरति ॥ **कथमन्यथेति** ॥ **अन्यथा** तत्र पृथिवीत्वानङ्गीकारे ॥ **तद्भस्मनि** पाषाणभस्मनि ॥ **उपलभ्यत इति** ॥ प्रत्यक्षनिरूपितलौकिकविषयतावानित्यर्थः । ननु पाषाणभस्मनि गन्धस्य प्रत्यक्षसिद्धत्वमात्रेण कथं पाषाणस्य पृथिवीत्वसिद्धिरित्यत आह ॥ **भस्मनो हीति** ॥ तथाच भस्मनि गन्धस्य प्रत्यक्षसिद्धत्वात् तेन पृथिवीत्वमङ्गीकार्यम् । तस्मादेव तदवयवेषु पृथिवीत्वमङ्गीकार्यं भस्मावयवपाषाणावयवयोरैक्यात् पाषाणावयवेष्वपि पृथिवीत्वसिद्धौ तत्समवेतद्रव्यत्वेन पाषाणस्यापि पृथिवीत्वं सिध्यतीति भावः । ननु भ-

**मञ्जूषा.**

**न्यथेति** ॥ अथवैतावता पृथिवीत्वाभावसाधकतया परोपन्यस्तहेतोस्साध्यसमत्वेनासाधकत्वं दर्शितं नचैतावता स्वाभिमतार्थनिश्चयः अतस्स्वाभिमतार्थसाधकं हेतुमाह । कथमन्यथेति । अन्यथा पाषाणस्य पृथिवीत्वानङ्गीकार इत्यर्थः । इदानीं पृथिवीत्वस्य प्रक्रान्ततयान्यथाशब्देन तदभावोपस्थितिरक्लेशेनैव निर्वहतीति बोध्यम् । अत्र पाषाणः पृथिवी पार्थिवपरमाण्वारब्धद्रव्यत्वादित्यनुमानेन पाषाणस्य पृथिवीत्वं पाषाणारम्भकपरमाणोः पृथिवीत्वञ्च भस्मरूपपृथिव्यारम्भकत्वेन भस्मनः पृथिवीत्वं च गन्धवत्त्वेनेति समुदायार्थः । तथाच तस्यापि गन्धवत्त्वे बाधकाभाव इति अत्रापिशब्दप्रयोगादनादरस्सूच्यते गन्धवत्त्वं सिद्धमिति अनुक्त्वा गन्धवत्त्वे बाधकाभाव इत्युक्त्या चानावश्यकत्वं सूच्यते कथमनादर इति चेन्निश्चायकाभावात् तथाहि यद्यपि पृथिवीत्वस्य साधितत्वात् तत्र गन्धवत्त्वं संभवति तथापि नावश्यमस्तीति निर्णेतुं शक्यम् । तथाह्युद्भूतगन्धवद्भिरेव परमाणुभिः पाषाणारम्भः अस्तिच तत्रोद्भूतगन्धः अनुपलम्भस्तु दृढावयवसंयोगेन प्रतिबन्धात् अथवानुद्भूतगन्धवद्भिरेव तैस्तदारम्भो गन्धश्च तत्रानुद्भूतः । यद्वा नानाजातीयगन्धवद्भिरेव परमाणुभिस्तदारम्भः अतो निर्गन्ध एव

**दिनकरीयम्.**

**त्यादिना** ॥ **अन्यथा** पाषाणादौ पृथिवीत्वानङ्गीकारे ॥ **तद्भस्मनि** पाषाणभस्मनि । यद्यपि पाषाणे पृथिवीत्वाभावेनालक्ष्यत्वादेव तत्र गन्धवत्त्वलक्षणं नाव्याप्तमिति व्यर्थस्तत्र गन्धसाधनाय परिश्रमस्तथापि वस्तुस्थितिमनुरुध्य तथोक्तमिति ध्येयम् । पाषाणभस्मनि गन्धः प्रत्यक्षसिद्धस्तेन तत्र पृथिवीत्वमङ्गीकरणीयं ततश्च भस्मारम्भकावयवेष्वपि पृथिवीत्वसिद्धिस्ततश्च पाषाणारम्भकावयवेष्वपि पृथिवीत्वमङ्गीकरणीयं भस्मारम्भकावयवपाषाणावयवयोरैक्यादेवं च पाषाणस्यापि पृथिवीत्वसिद्धिरित्यभिप्रायस्तदेतद्विशदयति ॥ **भस्मनो हीति** ॥ एतेन पाषाण इव तद्भस्मन्यप्यनुद्भूतगन्धापत्तिवारणाय पाषाणावयवेषु पाकाङ्गीकार आवश्यकः एवं च पाकोत्पादितगन्धवद्भिः पाषाणावयवैरेव तद्भस्मारम्भः निर्गन्धैश्च तैरेव पाषाणारम्भ इत्यन्यथा तद्भस्मनीत्याद्यसङ्गतिरिति परास्तम् । तथासत्यप्युक्तप्रणाल्या

**रामरुद्रीयम्.**

लमसङ्गतं तत्र, तत्साधकप्रमाणाभावादित्याशङ्कानिरासाय गन्धसत्त्वादित्यस्य गन्धानुमानादित्यर्थकतया आवश्यकत्वेन तत्र हेत्वनुपन्यासे मूलस्य न्यूनतापत्तेरिति भावः ॥ **व्यर्थ इति** ॥ पाषाणस्य पृथिवीत्व एव लक्षणस्याव्याप्तिः तस्यापृथिवीत्वे तु तत्र गन्धासत्त्वस्यातिव्याप्तिवारकतया अनुकूलत्वादिति भावः ॥ **वस्तुस्थितिमनुरुध्येति** ॥ पाषाणस्य पृथिव्यन्यद्रव्यतया अपसिद्धान्ततया लक्ष्यत्वेन तत्राव्याप्तिपरिहारस्यैवोचितत्वादिति भावः ॥ **पाषाणारम्भ इतीति** ॥ न च पाकजगन्धे गन्धनाशोऽपि कारणमन्यथा गन्धनाशात्पूर्वमेव पाकेन गन्धोत्पादप्रसङ्गादिति कथं निर्गन्धपरमाणौ गन्धोत्पादः सम्भवतीति वाच्यम् । गन्धं प्रति गन्धस्य प्रतिबन्धकत्वेन प्रतिबन्धकसंसर्गाभावविरहादेव गन्धसत्त्वे तदुत्पादासम्भवात् । न चैवमपि जलादौ पाकेन पाकजगन्धा-

पादेयत्वं सिध्यति यद्द्रव्यं यद्द्रव्यध्वंसजन्यं तत्तदुपादानोपादेयमिति व्याप्तेः । दृष्ट

**प्रभा.**

स्मनः पाषाणध्वंसजन्यत्वेऽपि पाषाणोपादानोपादेयत्वे मानाभाव इत्यत आह ॥ **यद्द्रव्यमिति** ॥ केचित्तु अत्र घटध्वंसप्रत्यक्षे घटोपादानानुपादेये व्यभिचारवारणाय प्रथमं द्रव्यपदं अथवा घटध्वंसजन्यरूपध्वंसे व्यभिचारवारणाय तत् । मिथ्याज्ञानध्वंसजन्यकायव्यूहे नवीनमते दण्डस्वरूपदण्डप्रागभावध्वंसजन्यघटे वा व्यभिचारवारणाय द्वितीयं द्रव्यपदम् । प्रतिबन्धकात्यन्ताभावजन्ये द्रव्ये

**मञ्जूषा.**

पाषाणः अपि वा निर्गन्धत्वावस्थापन्नैरेव परमाणुभिः पाषाणारम्भ इति बहुधोत्प्रेक्षितुं शक्यं सोऽयमनादरः । एवं तत्र गन्धसिद्ध्यभावेऽपि सन्दिग्धतया न परोक्तहेतोर्निश्चायकत्वं स्वमते च तत्र गन्धवत्त्वनिश्चयं विनापि पृथिवीपरमाण्वारब्धद्रव्यत्वहेतुनैव पृथिवीत्वसिद्धिरिति तदिदमनावश्यकत्वं परन्तु यत्र पाकेन पूर्वगन्धनाशः तत्र तदुत्तरक्षणमेव गन्धान्तरोत्पाद औत्सर्गिकः अतः पाषाणारम्भकपरमाणुषु निर्गन्धत्वावस्था न कल्पयितुं युक्ता नानाजातीयगन्धवत्त्वमपि न नियन्तुमुचितं अतः पाषाणस्य गन्धवत्त्वे न बाधकं किंचिदस्ति असति प्रतिबन्धके च पृथिव्या गन्धवत्त्वं न नियतम् । एवं घ्राणेन्द्रियेऽपि तस्य हि पृथिवीत्वं हेत्वन्तरेण साधयिष्यते बाधकाभावाच्च गन्धवत्त्वं उद्भूतगन्धवद्भिस्तु परमाणुभिः घ्राणं नारभ्यते घ्राणं प्रत्युद्भूतगन्धस्य प्रतिबन्धकत्वकल्पनादित्यादि स्वयमूहनीयम् । दीधितिकृतस्तु अनुद्भूतगन्धादिकमेव नाभ्युपयन्तीति सर्वं समञ्जसम् । अथ यद्द्रव्यं यद्द्रव्यध्वंसजन्यमित्यादिनियमघटकविशेषणप्रयोजनादिकं विचार्यते । अत्र घटध्वंसप्रत्यक्षे आश्रयनाशजन्यरूपनाशे वा व्यभिचारवारणाय प्रथमं द्रव्यपदं मिथ्याज्ञानध्वंसजन्यकायव्यूहे दण्डस्वरूपदण्डप्रागभावध्वं-

**दिनकरीयम्.**

पाषाणे पृथिवीत्वसिद्ध्या तेन गन्धानुमानसम्भवादिति ॥ **यद्द्रव्यमिति** ॥ अत्र च घटध्वंसप्रत्यक्षे घटोपादानानुपादेये व्यभिचारवारणाय प्रथमं द्रव्यपदम् । अथवा घटध्वंसजन्यरूपध्वंसे व्यभिचारवारणाय तत् । मिथ्याज्ञानध्वंसजन्यकायव्यूहे नवीनमते दण्डस्वरूपदण्डप्रागभावध्वंसजन्ये घटे व्यभिचारवारणाय द्वितीयं द्रव्यपदम् । प्रतिबन्धकद्रव्यात्यन्ताभावजन्ये द्रव्ये व्यभिचारवारणाय ध्वंसपदम् । ध्वंसत्वेन चेह जनकत्वं विवक्षितम् । तेन प्राचां मते प्रतिबन्धकसंसर्गाभावत्वेन तस्य हेतुत्वेऽपि न क्षतिः ध्वंसजन्यत्वं चादृष्टाद्वारकं विवक्षितम् । तेन सालग्रामशिलाध्वंसजन्ये नारकीयशरीरे

**रामरुद्रीयम्.**

पत्त्या तद्द्वारणायैव पृथिवीत्वेन गन्धहेतुता आवश्यिकेति वाच्यम् । विजातीयतेजःसंयोगस्यैव पाकत्वात् । जलादिवृत्तिसंयोगे वैजात्यानङ्गीकारादिति भावः ॥ **द्रव्यपदमिति** ॥ ननु अग्रे ध्वंसत्वेन ध्वंसजन्यत्वं विवक्षणीयं तथा चात्र न व्यभिचारः प्रत्यक्षं प्रति विषयस्य सामान्यतो विषयत्वेन विशेषतश्च तत्तद्व्यक्तित्वेन हेतुतयैवोपपत्तौ मध्यमविधानन्तकार्यकारणभावे मानाभावादित्यत आह ॥ **अथवेति** ॥ **कायव्यूह इति** ॥ झटिति प्रारब्धक्षयार्थं सौभरिप्रभृतीनां युगपदनेकशरीरपरिग्रहः पुराणेषु श्रूयते तादृशकायसमूहे मिथ्याज्ञानजन्यानादिवासनाध्वंसोऽपि हेतुत्वेनाङ्गीकरणीयस्तत्वज्ञानरहितानां युगपदनेकशरीरपरिग्रहस्य क्वाप्यननुभवादिति यद्ध्वंसजन्यमित्युक्तौ वासनोपादानानुपादेये कायसमूहे भवति व्यभिचार इति भावः ॥ **नवीनमत इति** ॥ दण्डप्रागभावध्वंसस्य नवीनमते दण्डरूपत्वानङ्गीकारेण दण्डजन्यघटादौ वक्ष्यमाणव्यभिचारासम्भवेन उक्तमेव प्रयोजनं तन्मत इति सूचनाय इदमुक्तम् । प्राचीनमते घटेऽपि व्यभिचारस्तदनुपादान इत्याह ॥ **दण्डेति** ॥ **प्रतिबन्धकद्रव्यात्यन्ताभावजन्येति** ॥ मण्यभावजन्यवह्न्यादावित्यर्थः ॥ **प्राचां मत इति** ॥ नवीनमते तु प्रतिबन्धकात्यन्ताभावस्यैव कार्यहेतुतया नायं व्यभिचारः सम्भवतीति भावः ॥ **नारकीयशरीर इति** ॥ न च निषिद्धाचरणभवे पापद्वारा नरके तदुपयोगिशरीरे च हे-

## प्रभा.

व्यभिचारवारणाय ध्वंसपदम् । ध्वंसत्वेन चेह जनकत्वं विवक्षितं तेन प्राचां मते प्रतिबन्धकसंसर्गाभावत्वेन हेतुत्वेऽपि न क्षतिः । ध्वंसजन्यत्वं चात्र अदृष्टाद्वारा विवक्षितं तेन सालग्रामध्वंसजन्ये नारकीयशरीरे न व्यभिचारः । नच दुग्धध्वंसजन्ये दध्नि दुग्धावयवजन्यत्वस्वीकारे दध्नोऽपि दुग्धत्वापत्त्या दुग्धावयवैः दधि न जन्यत इति अवश्यमङ्गीकरणीयं तथाच दध्नि व्यभिचार इति वाच्यं दध्नोऽपि द्व्यणुकातिरिक्तदुग्धध्वंसजन्यत्वास्वीकारात् द्व्यणुकरूपदुग्धध्वंसजन्यत्वेऽपि तस्य न तत्र व्यभिचारः तदुपादानपरमाणुजन्यत्वस्य दध्नि सत्त्वात् । नच दुग्धपरमाणुजन्यत्वेन दध्नोऽपि दुग्धत्वापत्तिरिति वाच्यं दुग्धपरमाणौ दुग्धत्वाभावात् द्रव्यत्वव्याप्यव्याप्यजातेः परमाणुवृत्तित्वे मानाभावात् ॥ अन्यथा परमाणुस्वरूपदुग्धजन्यत्वेन दुग्धत्वापत्तिवारणासंभवात् दधित्वदुग्धत्वयोः परमाणौ

## मञ्जूषा.

सजन्ये घटे वा व्यभिचारवारणाय द्वितीयं द्रव्यपदं प्रतिबन्धकद्रव्यात्यन्ताभावजन्यद्रव्ये व्यभिचारवारणाय ध्वंसपदं ध्वंसत्वेन चेह जनकत्वं विवक्षितम् । तेन प्राचाम्मते प्रतिबन्धकसंसर्गाभावत्वेन तस्य हेतुत्वेऽपि न क्षतिः ध्वंसजन्यत्वं चादृष्टाद्वारा विवक्षितं तेन साळग्रामध्वंसजन्ये नारकीयशरीरे न व्यभिचार इति नीलकण्ठेनोक्तम् । अत्र मिथ्याज्ञानपदं तज्जन्यवासनापरं । अत्र विचार्यते ध्वंसत्वेन जनकत्वाविवक्षायाः किं प्रयोजनमिति एवं ह्यत्र वाच्यम् । वह्निं प्रति मणेः प्रतिबन्धकतया प्रतिबन्धकसंसर्गाभावविधया मणिध्वंसस्य वह्निं प्रति कारणत्वं एवं घटादिकं प्रति मणिविशेषादेः प्रतिबन्धकतया तद्ध्वंसोऽपि तत्र कारणं अतः तत्र व्यभिचारवारणाय तद्विशेषणमावश्यकमिति नचै–तद्युक्तिसहं तथाहि कश्चिन्मणिविशेषादिर्दहने संयुज्य महादहनं प्रतिबध्नाति कश्चित्तु इन्धने संयुज्यान्यस्तु समीपतोऽवस्थाय तत्र कस्य मणेर्ध्वंसो वह्नौ कारणं संयोगेन समवायेन वा वह्निं प्रति मणिसंसर्गाभावो दैशिकविशेषणतयैव हि कारणं स्यात् । सच मणेरत्यन्ताभाव एव स्यात् न

## दिनकरीयम्.

न व्यभिचारः । न च दुग्धध्वंसजन्ये दध्नि दुग्धावयवजन्यत्वस्वीकारे दध्नोऽपि दुग्धत्वापत्त्या दुग्धावयवैर्दधि न जन्यते इत्यङ्गीकरणीयं तथाच दध्नि व्यभिचार इति वाच्यम् । दध्नो द्व्यणुकातिरिक्तदुग्धध्वंसजन्यत्वास्वीकारात् द्व्यणुकरूपदुग्धध्वंसजन्यत्वेऽपि तस्य न तत्र व्यभिचारः तदुपादानपरमाणुजन्यत्वस्य दध्नि सत्त्वात् । नच दुग्धपरमाणुजन्यत्वेन दध्नोऽपि दुग्धत्वापत्तिरिति वाच्यं । दुग्धपरमाणौ दुग्धत्वाभावात् द्रव्यत्वव्याप्यव्याप्यजातेः परमाणुवृत्तित्वे मानाभावात् अन्यथा परमाणुस्वरूपदुग्धजन्यत्वेन दुग्धत्वापत्तिवारणासम्भवात् दधित्वदुग्धत्वयोः परमाणुवृत्तित्वे जातिसङ्करप्रसङ्गादिति व्याप्तिबोधार्थं दृष्टान्तमाह

## रामरुद्रीयम्.

तुरिति न व्यभिचार इति वाच्यम् । स्वानुकूलकृतिमत्त्वसम्बन्धेन निषिद्धकर्मणोऽपि हेतुत्वसम्भवादिति भावः ॥ **दध्नीति** ॥ स्थूलदध्नीत्यर्थः । दुग्धावयवेत्यस्यापि स्थूलदुग्धावयवेत्यर्थः । सिद्धान्तेऽपि दधिद्व्यणुकस्य दुग्धद्व्यणुकावयवजन्यत्वस्वीकारात् ॥ **व्यभिचार इतीति** ॥ दधित्र्यणुकस्य दुग्धत्र्यणुकध्वंसजन्यत्वे तत्र दुग्धत्र्यणुकावयवदुग्धद्व्यणुकोपादानोपादेयत्वविरहेणेति भावः ॥ **द्व्यणुकातिरिक्तेति** ॥ इदं च उपादानपदस्य साक्षादवयवपरताभिप्रायेणोक्तं तदुपादानोपादेयमित्यस्य तदारम्भकपरमाण्वारब्धमित्यर्थकत्वे तु स्थूलदध्नोऽपि स्थूलदुग्धध्वंसजन्यत्वेऽपि न क्षतिस्तदारम्भकपरमाण्वारब्धत्वस्य तत्र सत्त्वात् परमाणौ तदारम्भकत्वं च तत्सत्ताप्रयोजकसत्तावत्त्वमेव शक्यते निर्वक्तुम् । अन्यथा स्थूलपाषाणारम्भकावयवोपादेयभस्मनोऽपि पाषाणत्वापत्त्यविशेषाद्दधिपर्यन्तानुधावने प्रयोजनाभाव एवेति चिन्तनीयमिति ॥ **तस्येति** ॥ नियमस्येत्यर्थः ॥ **तत्र** दधिद्व्यणुके ॥ **मानाभावादिति** ॥ दुग्धारम्भकपरमाणूनामन्यत्र गमनं दध्यारम्भकतद्भिन्नपरमाणूनामत्रागमनमित्यस्य कल्पनं तत्प्रयोजकविरहेणायुक्तमिति भावः ॥ **अन्यथेति** ॥ दधिद्व्यणुकस्य दुग्धपरमाणुजन्यत्व इत्यर्थः । ननु द्रव्यत्वव्याप्यव्याप्यजातेः परमाणुवृत्तित्वे

## प्रभा.

साङ्कर्यप्रसङ्गादित्यर्थवर्णनमाहुः ॥ अस्मद्गुरुचरणास्तु रूपनाशाश्रयनाशयोः न दैशिकविशेषणतासंबन्धेन कार्यकारणभावः आश्रयस्यैवासत्त्वात् किन्तु कालिकविशेषणतासंबन्धेन । तथाच जनकतायां कालिकसंबन्धानवच्छिन्नत्वविशेषणेनैव व्यभिचारवारणे प्रथमद्रव्यपदं व्यर्थम् । प्रागभावानङ्गीकर्तृनवीनमते प्रागभावस्यालीकतया तद्ध्वंसस्याप्यलीकत्वेन द्वितीयद्रव्यपदं व्यर्थम् । अथवा पाषाणध्वंसजन्यवह्नौ व्यभिचारवारणाय व्याप्यकोटौ सजातीयत्वं निवेश्य यद्यत्सजातीयं यद्यद्ध्वंसजन्यं तत्तदुपादानोपादेयमिति व्याप्तिर्वक्तव्या । तत्रापि येनकेनचिद्रूपेण साजात्यस्वीकारे उक्तदोषापत्त्या द्रव्यविभाजकोपाधिरूपेण साजात्यं वाच्यं तथाच द्रव्यविभाजकोपाधीन् विशिष्योपादाय पृथिवीत्वाश्रयं यत्पृथिवीत्वाश्रयध्वंसजन्यं तत्तदुपादानोपादेयमिति रीत्या विशिष्य व्याप्तिलाभात् न पूर्वोक्तदोषावकाशः । वस्तुतस्तु जन्यतायां समवायसंबन्धावच्छिन्नत्वानिवेशात् यद्यद्ध्वंसनिष्ठकारणतानिरूपितसमवायसंबन्धा-

## मञ्जूषा.

ध्वंसः मणिध्वंसो हि दैशिकविशेषणतया मण्यवयवे वर्तेत नेन्धने दहने वा किंच मणेस्संयोगसामानाधिकरण्यादिसंबन्धावच्छिन्नप्रतियोगिताकाभाव एव हि कारणं न समवायसंबन्धावच्छिन्नप्रतियोगिताकस्तस्य माणिसंयुक्तेन्धनदहनादावपि सत्त्वात् । नच ध्वंसस्संयोगाद्यवच्छिन्नप्रतियोगिताकत्वेनेष्यते । अभ्युपगम्यते तु कैश्चित्समवायावच्छिन्नप्रतियोगिताकत्वेन तस्माद्यत्र प्रतिबध्यताप्रतिबन्धकतयोरुभयोरपि समवायोऽवच्छेदकस्तत्रैव ध्वसः कारणं भवेत् यथा द्रव्यं प्रति द्रव्यस्य प्रतिबन्धकतया घटान्तरं प्रति पूर्वघटध्वंसः तस्य समवायावच्छिन्नप्रतियोगिताकत्वात् कार्याधिकरणे दैशिकविशेषणतया वर्तमानत्वाच्च । तत्रच पूर्वघटोपादानोपादेयत्वमप्यक्षतं तस्माद्ध्वंसत्वेन जनकत्वविवक्षणं प्रामादिकमेव नीलकण्ठस्य । नच द्रव्यत्वेन पटं प्रति द्रव्यसंसर्गाभावत्वेन घटध्वंसस्यापि कारणतया तत्र व्यभिचार इति वाच्यं फलोपहितजन्यत्वस्यैवात्र निवेशात् ध्वंसत्वेन जनकत्ववादिनोऽपि फलोपहितत्वानिवेशनमावश्यकमित्यनुपदं वक्ष्यामः । ननु ध्वंसप्रागभावयोरत्यन्ताभावविरोधवादिन एव प्रतिबन्धकसंसर्गाभावत्वेन कारणतां स्वीकुर्वन्ति तथाच मणिध्वंसेन मणिसंयोगध्वंसवतीन्धने न तदवच्छेदकावच्छेदेन मणिसंयोगात्यन्ताभावः । नातः संयोगेन मण्यत्यन्ताभावोऽपि तत्संयोगात्यन्ताभावस्य संयोगेन तदत्यन्ताभावसमशीलत्वात् अतस्तत्र नात्यन्ताभावः कारणीभवितुमर्हति किंतु ध्वंस एव. सच स्वप्रतियोगिसमवायिनीव स्वप्रतियोगिसंयोगध्वंसो यत्रानुपदमुत्पत्स्यते तत्रापि दैशिकविशेषणतयास्ति तस्य च संयोगसंबन्धावच्छिन्नप्रतियोगिताकत्वाभावेऽपि न क्षतिः संयोगातिरिक्तसंबन्धावच्छिन्नप्रतियोगिताकमणिसंसर्गाभावत्वेनैव कारणतास्वीकारात् ध्वंसप्रागभावयोस्समवायावच्छिन्नप्रतियोगिताकत्वमपि न स्वीक्रियते अतो ध्वंसस्य कारणतावच्छेदकाक्रान्तत्वनिर्वाह इति चेत्स्यादेवम् यदि संयोगेन तदत्यन्ताभावं प्रत्यपि तत्संयोगध्वंसप्रागभावयोर्विरोधिता स्यात् नत्वेवं घटासमवधानकालीनभूतलस्वरूपमेव घटाभावस्य संबन्ध इति प्राचीनैरुक्तत्वात् अन्यथा कदाचिद्धटसंयुक्ते भूतले घटात्यन्ताभावस्यैव प्रसक्त्यभावेन संबन्धशरीरे कालनिवेशनमफलमेव स्यात् तथाच यथा घटापनयने घटसंयोगध्वंसवति संयोगेन घटाभावस्तथा घटध्वंसेन घटसंयोगध्वंसवति संयोगेन तदभावे न किंचिद्बाधकम् । आवश्यकश्च तदपसरणेन तत्संयोगध्वंसवति संयोगेन तदत्यन्ताभावस्वीकारः अन्यथा मण्यपसारणेन मणिसंयोगध्वंसवति तत्रापि प्रत्युत्पादानुपपत्तेः तस्मात् स्वप्रतियोगिसंयोगिनि ध्वंसस्वीकारो निर्युक्तिक एवेति किं ध्वंसत्वेन जनकत्वविवक्षया परन्तु यत्र कस्यचिद्ग्रन्थिलस्य दृढस्य काष्ठमूलविशेषस्यावयवेषु यावदवयविसत्त्वं वह्निसंयोगो नोत्पद्यते तत्र संयोगसंबन्धेन वह्निं प्रति तत्काष्ठविशेषस्य समवायेन प्रतिबन्धकता वाच्येत्यभिप्रायेणेयं नीलकण्ठोक्तिस्सङ्गमनीया । तत्र तदवयवनिष्ठप्रत्यासत्त्या तत्काष्ठविशेषध्वंसस्यापि काष्ठान्तरवृत्तितदत्यन्ताभावसाधारणसंसर्गाभावत्वेन कारणत्वात् इदंच संयोगस्य कार्यतावच्छेदकत्वस्वीकारपक्षे तदस्वीकारे तु समवायेन वह्निं प्रत्येव तत्काष्ठविशेषस्य संयोगेन प्रतिबन्धकता

## प्रभा.

वच्छिन्नजन्यतावत् तत्तदुपादानोपादेयमिति व्याप्तिर्लब्धा। एवञ्च घटध्वंसजन्यतत्प्रत्यक्षनिष्ठकार्यताया विषयतासंबन्धावच्छिन्नत्वेन समवायसंबन्धावच्छिन्नत्वाभावात् आश्रयनाशजन्यरूपनाशनिष्ठकार्यताया अपि समवायसंबन्धावच्छिन्नत्वाभावात् प्रथमद्रव्यपदं व्यर्थम्। मिथ्याज्ञानध्वंसनिरूपितकार्यव्यूहनिष्ठजन्यताया विजातीयसंयोगसंबन्धावच्छिन्नत्वेन दण्डस्वरूपदण्डप्रागभावध्वंसनिरूपितघटनिष्ठकार्यतायास्संयोगसंबन्धावच्छिन्नत्वेन समवायसंबन्धावच्छिन्नत्वाभावात् द्वितीयद्रव्यपदमपि व्यर्थम्। मण्यादिरूपप्रतिबन्धकात्यन्ताभावनिरूपितघटनिष्ठकार्यतायास्संयोगसंबन्धावच्छिन्नत्वेन व्यभिचाराप्रसक्त्या जनकतायां ध्वंसत्वावच्छिन्नत्वमपि न निवेशनीयं। सालग्रामध्वंसनिरूपितनारकीयशरीरनिष्ठजन्यतायाः विजातीयसंयोगावच्छिन्नत्वेन व्यभिचाराप्रसक्त्या व्याप्तिघटकजनकतायां अदृष्टानवच्छिन्नत्वमपि न निवेशनीयं। पाषाणध्वंसनिरूपितवह्निनिष्ठजन्यताया अपि संयोगसंबन्धावच्छिन्नत्वेन समवायसंबन्धावच्छिन्नत्वाभावात् व्यभि-

## मञ्जूषा.

वाच्या सर्वत्र सञ्चरिष्णवो हि तैजसाः परमाणवः तेजस्त्रसरेण्वन्तरैरिन्धनविशेषैश्च संयुक्ता द्व्यणुकादिक्रमेण महान्तं दहनमारभन्ते तत्रच ग्रन्थिलकाष्ठमूलान्तर्वर्तिनः परमाणवो बाह्यदहनत्रसरेणुभिरन्तः कथञ्चिदनुप्रविष्टैस्संयुक्ता अपि तादृशकाष्ठमूलेन प्रतिबन्धात् न दहनमारब्धुमीशते अन्तःप्रविष्टबाह्यदहनत्रसरेणुसंपर्कजनितावयवक्रियाविघटिते वाय्वादिपरितिष्टे वा तस्मिन् तदवयवशकलसंयुक्ताः परमाणवो दहनमारभन्त इति नानुपपत्तिरिति आस्तां वा यथाकथंचित् ध्वंसत्वावच्छिन्नत्वनिवेशसार्थक्यं तथापि नैतद्विश्वनाथाभिप्रेतं दृष्टान्तासिद्धिप्रसङ्गात् नहि खण्डपटत्वावच्छिन्नं प्रति महापटध्वंसत्वेन कारणता प्रयोजनाभावात् किंतु द्रव्यवति द्रव्यान्तरानुत्पत्त्या द्रव्यं प्रति द्रव्यस्य प्रतिबन्धकता अतो न यावन्महापटसमवधानं खण्डपटोत्पत्तिः तन्नाशे च प्रतिबन्धकविगमाज्जायमानः पटः खण्डपट इत्युच्यते। खण्डपटत्वं हि न जातिः येन तत्कार्यतावच्छेदकत्वमावश्यकं किंतु महापटध्वंसाव्यवहितोत्तरक्षणे तदीयकतिपयावयवपुञ्जसमवायेनोत्पन्नत्वे सति पटत्वं तच्चार्थसमाजग्रस्ततया न कार्यतावच्छेदकमतः खण्डपटं प्रति महापटध्वंसस्य संसर्गाभावविधयैव कारणत्वं किंच पाषाणभस्मत्वं पाषाणध्वंसोत्तरकालीनपाषाणारम्भकपरमाण्वारब्धभस्मत्वं तदवच्छिन्नं प्रति न पाषाणध्वंसत्वेन कारणत्वं प्रयोजनाभावादर्थसमाजग्रस्तत्वाच्च। एवं हि तत्र क्रमः वह्निसंयोगेन परमाणुषु न प्रथमं भस्मारभ्यते पाषाणद्व्यणुकात्मकेन द्रव्येण प्रतिबन्धात्। अतो वह्निसंयोगात् परमाणुष्वारम्भकसंयोगापगमेन द्व्यणुकादिनाशे विजातीयतेजस्संयोगसहकृतैर्द्रव्यरूपप्रतिबन्धकसंसर्गाभावसनाथैः परमाणुभिः भस्मारभ्यते न तत्र पाषाणध्वंसत्वेन कारणता। अथ भस्मत्वावच्छिन्नं प्रति पूर्वद्रव्यध्वंसत्वेनाजनकत्वे विशकलितावस्थितेषु परमाणुषु विजातीयतेजस्संयोगात् भस्मारम्भस्स्यादिति चेत्स्यादेव यदि विशकलितावस्थितान् पार्थिवपरमाणूनेकतस्समूहितुमिह कश्चित्प्रभवेत् तुल्यं चैतत् परेषां अनादौ संसारे सर्वेषामेव परमाणूनां पाषाणध्वंसवत्त्वात्। नन्वनुभवसिद्धे करीषपाषाणभस्मनोः मिथोव्यावृत्तेवैजात्ये अतस्तदवच्छिन्नं प्रति पाषाणध्वंसत्वादिना कारणत्वमावश्यकमिति चेत् रूपस्पर्शयोरेव ते वैजात्ये अनुभवसिद्धे न भस्मनोः। तथाच विजातीयं रूपं स्पर्शं प्रति च पाषाणध्वंसस्य स्वसमानाधिकरणस्वोत्तरद्रव्यानुत्तरत्वस्वसामानाधिकरण्यस्वोत्तरत्वैतत्त्रितयसंबन्धेन पाषाणध्वंसस्य कारणत्वमस्तु। अथवा परमाणुषु पूर्वरूपस्पर्शविशेषनाशप्रयुक्तः पाकजरूपस्पर्शयोः विशेषः तदधीनं च द्व्यणुकादिरूपे भस्मनि रूपस्पर्शयोर्विशेष इति न तत्रापि पाषाणध्वंसत्वादिना जनकत्वं पाषाणरूपस्पर्शयोर्हि करीषरूपस्पर्शापेक्षया वैजात्यमनुभवसिद्धम्। अतस्तदारम्भकपरमाणुरूपस्पर्शयोरपि तद्वैजात्यमावश्यकं वह्न्युत्पादकलोहितपचनीयादिद्रव्यविशेषाधीनमपि क्वचित्पाकजरूपादीनां वैलक्षण्यं क्वचित्पाकविशेषाधीनमपि ततश्च पाषाणभस्म पाषाणोपादानोपादेयं पाषाणध्वंसनिष्ठध्वंसत्वावच्छिन्नजनकतानिरूपितजन्यताशालिद्रव्यत्वादित्यनुमाने स्वरूपासिद्धिः इदं तु बोध्यं पाषाणभस्मत्वावच्छिन्नं

## प्रभा.

चाराप्रसक्त्या व्याप्तिशरीरे सजातीयत्वविशेषणमपि व्यर्थमेव । एवंच द्रव्यविभाजकोपाधिरूपेण साजात्यलाभायापि द्रव्यपदद्वयं नोपादेयमेवेति व्याचख्युः । वस्तुतस्तु यद्द्रव्यमित्यादिव्याप्तौ ग्रन्थकर्तुः द्रव्यत्वनिवेशे न तात्पर्यं यद्रूपं यद्रूपध्वंसजन्यमित्यादि यत्कर्म यत्कर्मध्वंसजन्यमित्यादिव्याप्तेश्च वक्तव्यतया गौरवापत्तेः । द्रव्यादिरूपव्यर्थविशेषणघटितत्वेन व्याप्यत्वासिद्ध्यापत्तेश्च । किन्तु दृष्टान्ते खण्डपटमहापटयोर्द्रव्यत्वात् दार्ष्टान्तिके भस्मपाषाणयोर्द्रव्यत्वाच्च यद्द्रव्यं यद्द्रव्येत्युक्तं । अथवा भावमात्रोपलक्षकं द्रव्यपदद्वयं तदपि भावस्यैव समवायसत्त्वेन कार्यतायाः समवायसंबन्धावच्छिन्नत्वलाभाय भावप्रतियोगिकध्वंसस्यैव दैशिकविशेषणतासंबन्धसत्त्वेन घटप्रागभावात्मकाभावप्रतियोगिकघटात्मकध्वंसस्य तादृशसंबन्धाभावात् ध्वंसनिष्ठकारणतायाः दैशिकविशेषणतासंबन्धावच्छिन्नत्वलाभाय च यद्द्रव्यमित्याद्युक्तम् । तथाच यत्प्रतियोगिकध्वंसनिष्ठाभावीयदैशिकविशेषणतासंबन्धावच्छिन्नजनकतानिरू-

## मञ्जूषा.

प्रति पाषाणध्वंसत्वेन जनकतास्वीकारपक्षेऽपि पाषाणभस्मत्वेन रूपेण पाषाणान्तरभस्मव्यक्तिं प्रति पाषाणध्वंसत्वेन रूपेण पाषाणान्तरध्वंसस्यापि स्वरूपयोग्यतारूपकारणत्वसत्त्वात् तत्र तदुपादानोपादेयत्वविरहेण व्यभिचारः प्रसज्यते सच फलोपहितजन्यत्वस्यैव व्याप्यकोटौ प्रवेशनेन परिहरणीयः अतो ध्वंसत्वावच्छिन्नत्वेन जनकतामप्रवेशयतां अस्माकं न फलोपहितत्वस्य तत्र प्रवेशनमधिकं । नच पाषाणध्वंसत्वेन जनकतास्वीकारपक्षे यद्द्रव्यं यद्धर्मविशेषितद्रव्यप्रतियोगिकध्वंसत्वावच्छिन्नजनकतानिरूपितजन्यताशालि तद्द्रव्यं तद्धर्माश्रयोपादानोपादेयमित्येवव्याप्तिरिष्यते तावतापि उक्तव्यभिचारवारणसंभवादिति न फलोपधाननिवेश आवश्यक इति वाच्यम् । यथाकथञ्चिदपि विवक्षान्तरस्य तत्राप्यावश्यकतया अस्माकं गौरवाभावात् ध्वंसत्वेन जनकत्वविवक्षणे स्वरूपासिद्ध्यादिकं प्रसज्यत इत्यत्रैवास्माकमभिनिवेशाच्च किंच ध्वंसत्वेन जनकत्वे विवक्षिते नीलकण्ठग्रन्थोऽपि विरुध्यते । घटध्वंसप्रत्यक्षे घटध्वंसस्य घटं प्रति दण्डप्रागभावध्वंसात्मकस्य दण्डस्य च ध्वंसत्वेन जनकत्वविरहादेव तत्र व्यभिचारवारणेन तत्र द्रव्यपदयोर्व्यावृत्तिदानस्यासङ्गतत्वात् । यद्यपि घटध्वंसजन्यतत्प्रत्यक्षे दण्डप्रागभावध्वंसजन्ये घटे च व्यावृत्तिदानं यथाश्रुताभिप्रायेण निष्कृष्टपक्षाभिप्रायेण तु आश्रयनाशजन्यरूपनाशे मिथ्याज्ञानजन्यवासनाध्वंसजन्यकायव्यूहे च व्यावृत्तिदानमिति रीत्या तद्ग्रन्थः संगमयितुं शक्यते तथापि पूर्वोक्तस्वरूपासिद्धिदृष्टान्तासिद्ध्योः दुर्वारतैव । अत्र केचित् तत्काद्यातक्यैः परमाणुभिः दुग्धध्वंसे सत्येव दध्यारम्भात् दधित्वावच्छिन्नं प्रति दुग्धध्वंसत्वेन कारणत्वमावश्यकम् । एवं खण्डपटात्मकानुगतप्रतीतिसाक्षिकं खण्डपटत्वमपि जातिविशेषः तदवच्छिन्नं प्रति महापटध्वंसत्वेन हेतुत्वं महापटध्वंसं विना तदवच्छिन्नानुत्पत्तेः । एवं पाषाणभस्मकरीषभस्मादिष्वपि वैजात्यमनुभवसिद्धं तदवच्छिन्नं प्रति च पाषाणध्वंसत्वादिना कारणत्वमस्तीति न काप्यनुपपत्तिः अत एव घटादिकं प्रति जलादिध्वंसस्य कालोपाधिविधया कारणत्वेन तद्वारणाय कालत्वानवच्छिन्नत्वनिवेशनप्रयासोऽपि नोपादेय इत्याहुः अत्राक्षिपन्ति कारणतायां ध्वंसत्वावच्छिन्नत्वं निवेश्यतां मा वा उभयथापि मत्कुणध्वंसजन्ये पटोलिकाशलाटौ सारमेयध्वंसजन्ये जम्बीरफले मातृवृश्चिकशरीरध्वंसजन्ये शिशुवृश्चिके च व्यभिचारो दुर्वार इति तत्रेदमभिधीयते । पटोलिकाशलाटौ न मत्कुणध्वंसः कारणं किंतु तदीयरुधिरस्य पटोलिकामूलान्तरवयवसंयोग एव अन्तःपवनोपनीतैर्मत्कुणारम्भकपरमाणुभिरपि शलाटूनामारम्भसंभवेन व्यभिचाराप्रसक्तिश्च । एवं सारमेयध्वंसजन्यजम्बीरफलेऽपि द्रष्टव्यं । मातृवृश्चिकशरीरध्वंसजन्यं तु न शिशुवृश्चिकशरीरं किंतु तस्य बहिर्देशसंयोगो मातृशरीरावयवसंयोगध्वंसजन्यः । केचिदत्र यद्ध्वंसजन्यमित्येतावत्युच्यमाने पाषाणध्वंसजन्यवह्नौ व्यभिचारेण यत्स्वसजातीयध्वंसजन्यं तत्तदुपादानोपादेयमित्येव व्याप्तिर्वक्तव्या तत्र साजात्यं केन रूपेणेत्याकाङ्क्षायां द्रव्यविभाजकरूपेणेति वक्तव्यं तत्सूचनाय नियमशरीरे उभे द्रव्यपदे उपात्ते । तथाच पाषाणवह्न्योर्घटतद्ध्वंसप्रत्यक्षयोः कपालतद्रूपनाशयोर्मिथ्याज्ञानजन्यवासनाकायव्यूहयोर्दण्डप्रागभावघटयोश्च द्रव्यविभाजकरूपेण साजात्यविरहान्न तेषु व्य-

## प्रभा.

पितसमवायसंबन्धावच्छिन्नजन्यताश्रयो यत् तत्तदुपादानोपादेयमिति द्रव्यादित्रिकसाधारणी एकैव यत्तद्भ्यां व्याप्तिः फलिता । तत्र जनकतायां दैशिकविशेषणतासंबन्धावच्छिन्नत्वानिवेशे घटप्रागभावप्रतियोगिकघटात्मकध्वंसनिष्ठजनकतानिरूपितसमवायसंबन्धावच्छिन्नजन्यताश्रयघटीयरूपादेः घटप्रागभावोपादानाप्रसिद्ध्या तदुपादेयत्वस्य सुतरामप्रसिद्ध्या व्याप्तिभङ्गापत्तिरिति तन्निवेशितं । एवंच तादृशघटनिष्ठजनकतायाः तादात्म्यसंबन्धावच्छिन्नत्वेन घटीयरूपे व्याप्याभावात् व्यापकाभावेऽपि न क्षतिः । जन्यतायां समवायसंबन्धावच्छिन्नत्वानिवेशे स्वजनकक्रियानाशजन्यस्वप्रतियोगिकविभागनाशे तादृशक्रियानाशनिष्ठदैशिकविशेषणतासंबन्धावच्छिन्नजनकतानिरूपितजन्यतारूपव्याप्यस्य तादृशविभागनाशे सत्त्वेन तत्र तदुपादानोपादेयत्वाभावात् व्यभिचारापत्तेः समवायसंबन्धावच्छिन्नत्वनिवेशे तु तादृशविभागनाशनिष्ठजन्यतायास्समवायसंबन्धावच्छिन्नत्वाभावेन समवायसंबन्धावच्छिन्नजन्यत्वरूपव्याप्याभावात् तत्र व्यापकाभावेऽपि न व्यभिचारः । नच विभागनाशं प्रति स्वजनकक्रियानाशस्य हेतुत्वे मानाभाव इति वाच्यं हस्तक्रियया हस्तपुस्तकविभागे सति उत्तरसंयोगोत्पत्त्या तादृशक्रियानाशे सति पुनर्हस्तक्रियया विभागद्वारा पुनर्हस्तपुस्तकसंयोगे जाते एकदा हस्तपुस्तकविभागतत्संयोगयोरेकत्र वृत्तित्वापत्तेः । एवं पुनर्हस्तक्रियया हस्तपुस्तकविभागोत्तरं पुनरुत्तरसंयोगः तदुत्तरं तत्क्रियानाशे पुनर्हस्तक्रियया पूर्वदेशविभागपूर्वकहस्तपुस्तकसंयोगे

## मञ्जूषा.

भिचारः एवंच वह्निं प्रति प्रतिबन्धकीभूतस्य मणिविशेषस्य यो ध्वंसः तस्यापि कारणत्वेऽपि न क्षतिः मणिवह्न्योस्साजात्याभावात् । यदितु घटं प्रत्यपि कस्यचिन्मणिविशेषस्य प्रतिबन्धकत्वेन तद्ध्वंसस्यापि तत्र कारणत्वमभिमन्यते तदोक्तरीतिरप्यनुसर्तव्येत्याहुः तन्न पाषाणे पृथिवीत्वस्य सन्दिग्धतया तत्र भस्मसाजात्यस्य प्रागनिर्णयात् तन्निर्णये चानुमानवैयर्थ्यात् तथाच पाषाणभस्म पाषाणोपादानोपादेयं स्वसजातीयपाषाणध्वंसजन्यत्वादित्यनुमाने साध्याविशिष्टत्वम् । किंच वह्निं प्रति न पाषाणध्वंसस्य कारणता मोचाकन्दरससेकादिना पाषाणनाशे वह्न्यनुत्पादात् किंत्ववयवविभागविशेषस्य विलक्षणाभिघातस्य इति न वह्नौ व्यभिचारप्रसक्तिः । अन्ये तु दृष्टान्तदार्ष्टान्तिकयोर्द्रव्यत्वाद्द्रव्यपदमुपात्तं नतु द्रव्यत्वस्य तत्र प्रवेशः अत एव रूपध्वंसजन्यस्य रूपान्तरस्य पूर्वरूपोपादानोपादेयत्वं कर्मध्वंसजन्यस्य कर्मान्तरस्य पूर्वकर्मोपादानोपादेयत्वं च ततश्च रूपाद्यसङ्ग्राहकत्वात् द्रव्यत्वमनुपादेयमेव किंच द्रव्यध्वंसः प्रायेण दैशिकविशेषणतया कारणं स्यात् द्रव्यं च समवायेन कार्यं स्यात् इति कारणतायां दैशिकविशेषणतासंबन्धावच्छिन्नत्वस्य कार्यतायां समवायसंबन्धावच्छिन्नत्वस्य च लाभायोभयत्र द्रव्यपदे उपात्ते । तथाच यत् यद्ध्वंसनिष्ठदैशिकविशेषणतासंबन्धावच्छिन्नकारणतानिरूपितसमवायसंबन्धावच्छिन्नकार्यताश्रयीभूतामिति व्याप्यदलार्थः । एवंच पाषाणध्वंसस्य वह्निं प्रति कारणत्वेऽपि न क्षतिः तत्राहि संयोगेन वह्निं प्रति दैशिकविशेषणतया पाषाणध्वंसस्य समवायेन वह्निं प्रति स्वाश्रयसंयोगसंबन्धेन पाषाणध्वंसस्येति वा कार्यकारणभावो वक्तव्यः न तु समवायेन वह्निं प्रति दैशिकविशेषणतया पाषाणध्वंसस्यातो न दोषः । विषयतया प्रत्यक्षं प्रति तादात्म्येन विषयस्य कारणता अतो न घटध्वंसप्रत्यक्षे व्यभिचारः । ध्वंसप्रागभावयोस्स्वप्रतियोगिसमवायिदेशवृत्तित्वमित्यत्र साक्षादेव समवायित्वं यद्यभिप्रेतं तदा कालिकसंबन्धेन कपालसमवेतकार्यनाशं प्रति कालिकसंबन्धेन कपालनाशस्य कारणतयैव कार्यकारणभावः यदि तु साक्षात्परम्परासाधारणं समवायित्वं तत्र निविष्टं तदा कपालनाशकपालरूपादिनाशयोः कपालारम्भकपरमाणुषु दैशिकविशेषणतयोत्पत्तिसंभवेन दैशिकविशेषणतासंबन्धेन कपालसमवेतकार्यनाशं प्रति दैशिकसंबन्धेन कपालनाशस्य कारणतापि संभवति उभयथापि कार्यतायास्समवायसंबन्धानवच्छिन्नत्वान्नाश्रयनाशजन्यरूपनाशे व्यभिचारः । एवं कार्यव्यूहं प्रति यदि मिथ्याज्ञानजन्यवासनाध्वंसस्य कारणता स्वीक्रियते तदा दैशिकविशेषणतायाः कारणतावच्छेदकत्वेऽपि कार्यतावच्छेदकसंबन्धो न समवायः किन्तु विलक्षणसंयोगः स्वावच्छिन्नज्ञा-

**चैतत् खण्डपटे महापटध्वंसजन्ये । इत्थं च पाषाणपरमाणोः पृथिवीत्वात्तज्जन्य-पाषाणस्यापि पृथिवीत्वं तथा च तस्यापि गन्धवत्त्वे बाधकाभावः ॥ नानेति ॥ शुक्लनीलादिभेदेन नानाजातीयं रूपं पृथिव्यामेव वर्तते न तु जलादौ तत्र शुक्लस्यैव सत्त्वात् पृथिव्यां त्वेकस्मिन्नपि धर्मिणि पाकवशेन नानारूपसम्भवात् । नच यत्र नानारूपं नोत्पन्नं तत्राव्याप्तिरिति वाच्यम् । रूपद्वयवद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वस्य वि-**

## प्रभा.

सति तदुत्तरं तत्क्रियानाशे पुनर्हस्तक्रियया हस्तपुस्तकविभाग इति रीत्या अनेकेषां हस्तपुस्तकविभागानां एकदा एकत्र वृत्तित्वापत्तेश्च तस्माद्विभागस्य स्वजनकक्रियानाशनाश्यत्वं सकलतान्त्रिकानुमतमवश्यमङ्गीकर्तव्यम्। मणिकारप्रभृतयः पूर्वसंयोगनाशस्य उत्तरसंयोगस्य वा विभागनाशकत्वमिति वदन्ति तत्तु विभागमात्रस्य क्षणिकत्वापत्त्या क्रियाविभागयोः एकदा नाशापत्त्या च उपेक्षितं । एवंच यत्प्रतियोगिकध्वंसनिष्ठाभावीयदैशिकविशेषणतासंबन्धावच्छिन्नजनकतानिरूपितसमवायसंबन्धावच्छिन्नजन्यताश्रयं यत्तत्तदुपादानोपादेयमिति द्रव्यादित्रिकसाधारणयत्तद्भ्यां अनुगतव्याप्तौ दोषलेशाभावेन केषांचिद्व्याप्यशरीरे द्रव्यत्वस्य द्विधा निवेशनं जनकतायां ध्वंसत्वावच्छिन्नत्वनिवेशनं अदृष्टसंबन्धानवच्छिन्नत्वनिवेशनं च न यौक्तिकं किन्तु तद्बुद्धिकृतमेवेति प्रतिभाति । उक्तव्याप्तौ दृष्टान्तमाह ॥ **दृष्टं चैतदिति** ॥ पाषाणे गन्धवत्त्वानुमापकसुरभ्यसुरभ्यन्यतरवासमवेतद्रव्यवृत्तित्वविशिष्टपृथिवीत्वरूपहेतुघटकविशेष्यासिद्धिशङ्कामुपसंहारव्याजेन परिहरति ॥ **इत्थं चेति** ॥ उक्तव्याप्त्या पाषाणस्य भस्मारम्भकपरमाण्वभिन्नपरमाण्वारब्धत्वासिद्धौ चेत्यर्थः ॥ **पाषाणस्यापीति** ॥ द्व्यणुकादिरूपपाषाणस्यापीत्यर्थः ॥ **पृथिवीत्वमिति** ॥ सिध्यतीति शेषः ॥ **तथाचेति** ॥ विशिष्टहेतुसिद्धौ चेत्यर्थः ॥ **बाधकाभाव इति** ॥ तथाचावयवनानागन्धरूपविरोध्यभावेन पाषाणे गन्धोत्पत्तिसंभवात् नोक्तविशिष्टपृथिवीत्वहेतोर्बाधितत्वमिति भावः ॥ **यत्रेति** ॥ पटादावपीत्यर्थः ॥ **रूपद्वयवद्वृत्तीति** ॥ यद्यपि घटा-

## मञ्जूषा.

नवत्त्वमवच्छेद्यतैव वेति न तत्र व्यभिचारः एवं दण्डप्रागभावध्वंसात्मको यो दण्डः तज्जन्यताया घटनिष्ठायास्समवायावच्छिन्नत्वेऽपि दैशिकविशेषणतायाः कारणतानवच्छेदकत्वान्न घटे व्यभिचारः एवं ग्रन्थिलकाष्ठमूलविशेषीयपूर्वोपदर्शितसमवायसंबन्धावच्छिन्नाप्रामाणिकप्रतिबन्धकतास्वीकारेऽपि तद्ध्वंसजन्यतायाः संयोगसंबन्धावच्छिन्नत्वान्न दोषः एवमवच्छेद्यतासंबन्धेन नारकीयशरीरं प्रति स्वानुकूलकृतिमत्त्वसंबन्धेनैव सालग्रामध्वंसस्य हेतुत्वात् न तत्र व्यभिचारः एवं कालिकसंबन्धेन जन्यत्वावच्छिन्नं प्रति तादात्म्यसंबन्धेन कालस्य कारणतया न कालविधया जलध्वंसजन्यघटे व्यभिचारः । अत्र कारणतायां दैशिकविशेषणतासंबन्धावच्छिन्नत्वनिवेशनप्रयोजनं दण्डप्रागभावध्वंसात्मकदण्डनिरूपितघटनिष्ठजन्यताया घटप्रागभावध्वंसात्मकघटनिरूपिततद्रूपनिष्ठजन्यतायाश्च वारणं जन्याभावत्वरूपध्वंसत्वनिवेशे तु सालग्रामध्वंस-

## दिनकरीयम्.

**दृष्टं चैतदिति** ॥ मूले नानारूपवत्त्वं लक्षणान्तरमुक्तं तल्लक्ष्ये प्रतिपादयति ॥ **शुक्लेत्यादिना** ॥ अलक्ष्ये लक्षणगमनासत्त्वं प्रतिपादयति ॥ **न त्विति** ॥ रूपद्वयवद्वृत्तिसत्तारूपजातिमति गुणादावतिव्याप्तिवारणाय द्रव्यत्वव्याप्येति । द्रव्यत्वव्याप्यजलत्वादिमति जलादावतिव्याप्तिवारणाय रूपद्वयवद्वृत्तीति द्रव्यत्वव्याप्यजलपृथिव्यन्यतरत्वादिमति जलादावतिव्याप्तिवारणाय जातीति । अपेक्षाबुद्धिवि-

## रामरुद्रीयम्.

बाधकाभाव एव मानं भविष्यतीत्यत आह ॥ **दर्शितत्वेत्यादि** ॥ **जातीतीति** ॥ अत्रापि वृत्तित्वं जातिमत्त्वं च समवायेनैव विवक्षणीयम् । अन्यथा जलत्वं पृथिवीत्वं चादाय जलेऽतिव्याप्तितादवस्थ्यात् एवं च जातिपदव्यावृत्तिर्जलपृथिव्युभयत्वादिकमादायैवेति दृष्टव्यम् ॥ **अपेक्षेति** ॥ रूप-

वक्षितत्वात् रूपनाशवद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वस्य वा वाच्यत्वात् वैशेषिकनये पृथिवीपरमाणौ रूपनाशस्य रूपान्तरस्य च सत्त्वात् न्यायनये घटादावपि तत्सत्त्वाल्लक्षणसम-

प्रभा.

दावव्याप्तिवारणाय नीलवद्वृत्तिजलावृत्तिजातिमत्त्वमित्यादिलक्षणषट्कमेव वक्तुमुचितं रूपद्वयरूपनाशघटितलक्षणापेक्षया लघुत्वात् प्राचीनमते शुक्लं विहाय नीलादिघटितलक्षणषट्काभिप्रायेण चित्ररूपानङ्गीकर्तृनवीनमते लक्षणपञ्चकाभिप्रायेण च सप्तरूपवती मतेत्यनुक्त्वा नानारूपवती मतेत्युक्तवान् मूलकारः तथापि नानारूपवती मतेति कारिकायाः नानारूपवदवयवारब्धपटेऽव्याप्यवृत्तिनीलादिसमुदायाङ्गीकर्तृनवीनमते नानारूपवत्त्वसंभवेऽपि प्राचीनमते एकस्य पूर्वरूपनाशमन्तरा रूपान्तरवत्त्वासंभवेन रूपद्वयवत्त्वं रूपनाशवत्त्वं च लक्षणघटकमभिप्रेतमिति यथाश्रुतमूलाशयेन रूपद्वयवद्वृत्तिरूपनाश॰ द्वृत्तीत्यादिजातिघटितलक्षणं गुर्वपि कृतवान् । लक्षणद्वयेऽपि द्रव्यत्वव्याप्यत्वं जलावृत्तित्वमेव लाघवात् । एतत्पक्षे रूपद्वयवद्वृत्तीतिवत् रूपत्रयवद्वृत्तीत्यादिलक्षणमप्यावश्यकं । अत्र प्रथमपक्षस्य द्वित्वत्रित्वादि-

मञ्जूषा.

निष्ठत्वनुकूलकृतिमत्त्वसंबन्धावच्छिन्नजनकतानिरूपितपापविशेषनिष्ठसमवायसंबन्धावच्छिन्नजन्यतावारणमेव तत्प्रयोजनमिति बोध्यम् । समवायावच्छिन्नत्वनिवेशनप्रयोजनं तु वैशेषिकनये द्व्यणुकनाशनिष्ठदैशिकविशेषणतासंबन्धावच्छिन्नजनकतानिरूपितपार्थिवपरमाणुरूपनाशनिष्ठदैशिकविशेषणतासंबन्धावच्छिन्नजन्यताया एकदेशिमते पूर्वसंयोगनाशनिष्ठदैशिकविशेषणतासंबन्धावच्छिन्नजनकतानिरूपितविभागनाशनिष्ठतत्संबन्धावच्छिन्नजन्यतायास्सर्वमत एवादृष्टविशेषनाशनिष्ठदैशिकविशेषणतासंबन्धावच्छिन्नजनकतानिरूपितदैशिकविशेषणतासंबन्धावच्छिन्नसंस्कारविशेषनाशनिष्ठजन्यतायाः वारणमेवमुपदर्शितस्थलान्तरेप्यूहनीयमित्याहुः । अत्रायं हेतुर्वाद एवोपयुज्यते न जल्पे । ध्वंसो हि दैशिकविशेषणतया स्वप्रतियोगिसमवायिन्येव वर्तेत तत्र च समवायेन यत्कार्यं वर्तते तदेव तादृशकार्यतावत्स्यात् तथाच भस्मनः पाषाणसमवायिसमवेतत्वासिद्धेः प्राक् पाषाणध्वंसाश्रयसमवेतत्वं दुर्निश्चेयं तन्निश्चयमन्तरेण च तादृशहेतुर्दुर्निश्चेयः किंच पाषाणध्वंसनिष्ठदैशिकविशेषणतासंबन्धावच्छिन्नजनकतानिरूपितसमवायसंबन्धावच्छिन्नजन्यत्वापेक्षया पाषाणध्वंसाश्रयसमवेतत्वमेव लाघवेन हेतुरुचितः धर्मिभेदेऽपि संभवतो लाघवस्य परित्यागानौचित्यात् साध्याविशेषत्वस्योभयत्रापि अविशिष्टत्वात् तस्मात् पाषाणध्वंसजन्यत्वमात्रं हेतुघटकं तत्तु पाषाणोपादानोपादेयत्वासिद्धेः प्रागपि सुसाधमेव संबन्धविशेषानवगमेऽपि अन्वयव्यतिरेकाभ्यां पाषाणभस्म पाषाणध्वंसजन्यमिति निश्चेतुं शक्यत्वात् तत्र भस्मादौ पाषाणध्वंसादेः ध्वंसत्वेन जनकतास्वीकारपक्षे नीलकण्ठोक्तरीतिरेवानुसर्तव्या । तदस्वीकारे तु कालविधया जलादिध्वंसजन्यघटादौ व्यभिचारवारणाय कालत्वानवच्छिन्नत्वं तादात्म्यसंबन्धानवच्छिन्नत्वं वा कारणतायां निवेश्यं कार्यतायां वा जन्यत्वानवच्छिन्नत्वं कालिकसंबन्धानवच्छिन्नत्वं वा तत्र प्रथमद्रव्यपदस्य प्रयोजनं आश्रयनाशजन्यरूपादिनाशे वैशेषिकनये द्व्यणुकनाशजन्यपरमाणुरूपनाशे सालग्रामनाशजन्यपापविशेषे कारणतायां तादात्म्यसंबन्धानवच्छिन्नत्वनिवेशान्यपक्षेषु घटध्वंसप्रत्यक्षे च व्यभिचारवारणं । द्वितीयद्रव्यपदप्रयोजनं तु वासनानाशजन्यकायव्यूहे प्रतिबन्धकीभूतदुरदृष्टविशेषनाशजन्यपुत्रादौ च व्यभिचारवारणं अन्यत्पूर्वोक्तरीत्यावधेयम् ॥ **रूपनाशवदिति** ॥ एतेन ध्वंसप्रागभावयोः स्वप्रतियोगिसमवायिदेशवृत्तित्वमिति नियमे साक्षात्समवायित्वमेव निविष्टं नतु साक्षात्परम्परासाधारणमिति सूच्यते अन्यथा जलावयविरूपनाशस्य प॰

दिनकरीयम्.

शेषविषयत्वरूपद्वित्वघटितत्वेन गौरवादाह ॥ **रूपनाशेति** ॥ अत्रापि प्रतिपदव्यावृत्तिः पूर्ववद्बोध्या ।

रामरुद्रीयम्.

निष्ठं द्वित्वं न सङ्ख्यारूपं गुणे गुणानङ्गीकारात् अपि तु रूपद्वयविषयकापेक्षाबुद्धिविषयत्वरूपं तन्निवेशनीयमिति गौरवमतस्तदघटितं रूपनाशघटितलक्षणं प्रणिनाय । नाशत्वं च अखण्डोपाधिरू॰

षड्विधस्तु रसस्तत्र गन्धस्तु द्विविधो मतः ॥ ३५ ॥

न्वयः ॥ षड्विध इति ॥ मधुरादिभेदेन यः षड्विधरसः स पृथिव्यामेव । जले मधुर एव रसः । अत्रापि पूर्ववद्रसद्वयवद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वं लक्षणार्थोऽवसेयः । द्विविध इति वस्तुस्थितिमात्रं नतु द्विविधगन्धवत्त्वं लक्षणं द्विविधत्वस्य व्यर्थत्वात् । द्वैविध्यं च सौरभासौरभभेदेन बोध्यम् ॥ ३५ ॥

## प्रभा.

घटितत्वेन गौरवात् द्वितीयलक्षणानुसरणमिति बोध्यम् ॥ **मूले षड्विधस्तु रसस्तत्रेति** ॥ अत्र यद्यपि षड्विधरसवत्त्वं न लक्षणं अव्याप्त्यापत्तेः नतु रसवत्त्वमात्रमतिव्याप्त्यापत्तेः अतो जातिघटितलक्षणस्यावश्यकतया रससमानाधिकरणजलावृत्तिजातिमत्त्वमिति रसत्वावच्छिन्नघटितलक्षणवन्मधुरत्वाद्यवच्छिन्नघटितलक्षणषट्कमपि मूलाभिप्रेतं अत एव षड्विधस्तु रसस्तत्रेत्युक्तवानिति तथैव वक्तुमुचितं तथापि यथाश्रुतमूलाशयमनुसृत्यार्थमाह ॥ **मुक्तावल्यां अत्रापीति** ॥ **पूर्ववदिति** ॥ रूपघटितलक्षणपरिष्कार इवेत्यर्थः ॥ **द्रव्यत्वव्याप्येति** ॥ अत्रापि जातेः द्रव्यत्वव्याप्यत्वेन न प्रवेशः गौरवात् प्रयोजनाभावाच्च किन्तु जलावृत्तित्वेनैव । रसद्वयवद्वृत्तीत्युपलक्षणं रसत्रयादिमद्वृत्तीत्यपि बोध्यम् । अत्रापि द्वित्वत्रित्वादिघटितत्वेन गौरवात् रसनाशवद्वृत्तित्वघटितलक्षणमेव कार्यमिति हृदयम् ॥ **मूले गन्धस्तु द्विविध इति** ॥ अत्र यद्यपि गन्धवत्त्वमात्रस्य लक्षणत्वे नानागन्धवदवयवारब्धनिर्गन्धघटेऽव्याप्तिवारणाय गन्धसमानाधिकरणजलावृत्तिजातिमत्त्वमिति गन्धत्वावच्छिन्नघटितलक्षणवत्सुरभित्वाद्यवच्छिन्नघटितलक्षणद्वयमप्यावश्यकं तुल्ययुक्तेः अत एव द्विविधो मत इत्यनेन गन्धस्य द्वैविध्यप्रतिपादनमपि संगच्छत इति तथैव वक्तुमुचितं तथापि यथाश्रुतमूलाशयमनुसृत्याह ॥ **मुक्तावल्यां द्विविध इति** ॥ **वस्तुस्थितिमात्रमित्यादिना** ॥ ३५ ॥

## मञ्जूषा.

रमाणौ दैशिकविशेषणतासंबन्धेनोत्पत्त्या तद्वृत्तिजलत्वमादायातिव्याप्तिप्रसङ्गात् । केचिदेतद्दोषवारणाय पाकजत्वेन रूपनाशं विशिंषन्ति अथैवं पाकजत्वेन विशेषिते रूपीयत्वं नाशत्वं च व्यर्थम् । नच तथासति पाकजद्रवत्वमादाय तेजस्यतिव्याप्तिरिति वाच्यं आवश्यकविशेषणतासंबन्धनिवेशेनैव तद्दोषवारणात् तथाच विशेषणतया यः पाकजवान् तत्समवेतद्रव्यत्वव्याप्यजातिमत्त्वमित्येव लक्षणमुचितमिति रूपनाशघटितलक्षणस्य नेयं विवक्षेति चेन्न । तेजःसंयोगरूपो यः पाकः प्रतियोगिविधया तज्जन्यो यस्तद्ध्वंसः तद्वति तेजस्यतिव्याप्तिवारणाय रूपीयत्वनिवेशनसार्थक्यसम्भवात् । नाशत्वनिवेशनं तु विशेषणतासंबन्धेन तद्वत्त्वलाभाय नच पाकजत्वं यदि तेजस्संयोगजन्यत्वमात्रं तदा जलावयविरूपनाशं प्रत्यपि तेजस्संयोगस्य कालविधया जनकत्वात् तद्दोषतादवस्थ्यम् । अतस्तेजस्संयोगनिष्ठवैजात्यावच्छिन्नजनकतानिरूपितजन्यतैव निवेश्या तथा च सति व्यर्थं रूपीयत्वादिनिवेशनमिति

## दिनकरीयम्.

षड्विधस्तु रसस्तत्रेति मूलोक्तं रसस्य षड्विधत्वं प्रकाशयति ॥ **मधुरेत्यादिना** ॥ यत्र नानारसमोत्पन्नास्तत्राव्याप्तिरित्यत आह ॥ **अत्रापीति** ॥ ननु मूले गन्धस्तु द्विविधो मत इत्यनेन द्विविधगन्धवत्त्वं पृथिव्या लक्षणं प्रदर्शितं तच्चायुक्तं द्वैविध्यांशस्य वैयर्थ्यादित्यत आह ॥ **वस्तुस्थितिमात्रमिति** ॥ वस्तुगत्या गन्धो द्विविधस्तिष्ठतीति सूचयितुमुक्तं न तु लक्षणे द्वैविध्यस्यापि प्रवेश इत्यर्थः । गन्धस्य द्वैविध्यं प्रकाशयति ॥ **द्वैविध्यं चेति** ॥ ३५ ॥

## रामरुद्रीयम्.

प्रमेयेति न गौरवमिति भावः । द्वित्वादिघटितत्वेनेत्यादिपदं सम्पातायातं तदितरभागस्योभयत्र तुल्यत्वादिति ध्येयम् ॥ **जातीतीति** ॥ अत्रापि पूर्वोक्तमनुसन्धेयम् ॥ ३५ ॥

## मञ्जूषा.

वाच्यम् । कालत्वानवच्छिन्नजनकत्वादिनिवेशेनैव तद्वारणसंभवादिति । अन्ये तु स्ववृत्तिरूपनाशवत्त्वं लक्षणघटकं घटो हि स्ववृत्तेरेव रूपस्य नाशवान् नतु जलपरमाणुस्तथा तद्वृत्तिरूपस्य नाशाभावात् अतो न दोष इति वदन्ति । उभयमपि विश्वनाथासम्मतं रूपनाशवदित्येव तेनोक्तत्वादिति बोध्यम् । अत्र यद्यपि जातिघटनाया आवश्यकत्वे नानारूपवती मतेति मूलस्य नानालक्षणपरत्वं स्वीकृत्य नीलवद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वं पीतवद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वमिति रीत्या लक्षणान्येव वक्तुमुचितानि रूपद्वयवत्त्वस्य रूपनाशवत्त्वस्य वा निवेशे गौरवात् तथापि नानारूपवतीत्यनेन रूपविभाजकयावद्धर्मावच्छिन्नवतीत्यर्थो लभ्यते तत्रच यया रीत्या लक्षणकरणे सर्वविभाजकधर्माक्रान्तानां लक्षणघटकता स्यात् तथा वक्तुमुचितम् । तत्रच रूपद्वयवद्वृत्तीति वा रूपनाशवद्वृत्तीति वा लक्षणकरणे स्वैरं सर्वविभाजकधर्माक्रान्तानां लक्षणघटकता न वार्यते पृथग्लक्षणकरणे तु शुक्लरूपस्य लक्षणघटकता न युज्यते जलादावतिव्याप्तिप्रसङ्गात् । शुक्लत्वव्याप्यपाकादिजन्यतावच्छेदकजातिविशेषपुरस्कारेण तत्रापि किंचिल्लक्षणगवेषणे तु प्रयासगौरवमिति बोध्यम् । एवं षड्विधस्तु रसस्तत्रेत्यत्रापि मधुररसघटितलक्षणस्य जलातिव्याप्तिदुष्टतया सर्वरसविभाजकधर्माक्रान्तानां लक्षणघटकता संभवतीत्यभिप्रायेणैव रसद्वयवद्वृत्तीत्याद्यनुसृतं । स्यादेतत् षड्विधस्तु रसस्तत्रेत्यादाविवात्रापि सप्तरूपवती मतेति संख्याविशेषवाचकपदमुपेक्ष्य किमिति सामान्यतो नानारूपवती मतेत्याह विश्वनाथ इति चेद्रूपस्य सप्तविधत्वे निर्भराभावादिति ब्रूमः । सप्तविधत्वं हि चित्ररूपाङ्गीकारेण स्यात्र तत्र ग्रन्थकृतो निर्भरः । नानाजातीयरूपवदवयवारब्धेऽवयविन्यव्याप्यवृत्तिनानारूपस्वीकारसंभवात् अथ तर्हि स्याद्रूपं तत्र षड्विधमिति ब्रूतादिति चेत् संप्रदायविरोधापत्तेः नत्वेवं षड्विधस्तु रसस्तत्रेत्यत्रानुपपत्तिरस्ति॥ **वस्तुस्थितिमात्रमिति॥**
अथात्र सुरभित्वेन असुरभित्वेन च पृथक् लक्षणद्वयं स्वीक्रियतां तत्सूचकतया द्विविधपदसार्थक्यात् नह्यत्र शुक्लरूपमधुररसयोरिव कस्यचिदतिव्याप्तिप्रसक्तिरस्तीति चेत् किमत्र गन्धत्वेन सुरभित्वासुरभित्वाभ्यां च लक्षणत्रयपरत्वमस्य वाक्यस्यास्त्विति शङ्क्यते आहोस्वित् सुरभित्वासुरभित्वाभ्यां लक्षणद्वयपरत्वमेवेति । आद्ये गन्धत्वावच्छिन्नघटितलक्षणेनैवेतरलक्षणद्वयस्य सिद्धत्वात् अतो न पृथगुक्तम् नहि गन्धः पृथिव्यां वर्तते अन्यत्र न वर्तत इत्युक्ते गन्धत्वव्याप्यजात्यवच्छिन्नः पृथिव्यां किं न वर्ततान्यत्र वा वर्ततेति कोऽपि सन्दिह्यात् अतिप्रसङ्गश्चैवं स्यात्। सन्ति मालतीवकुलचम्पकपुन्नागकुन्दारविन्दादिगन्धेषु भिन्ना जातयः तत्तद्रूपेण लक्षणकरणप्रसङ्गात् तस्मात् गन्धत्वावच्छिन्नघटितलक्षणेन चरितार्थत्वात् नेतरलक्षणद्वयकरणं युक्तं । नापि द्वितीयः लघुलक्षणोपेक्षाया अन्याय्यत्वात् सुरभित्वादिघटितलक्षणे हि जातिघटनाऽऽवश्यकी अन्यथा परस्परमव्याप्तिप्रसङ्गात् अतो गौरवसंपादके ते उभे लक्षणे । नच नानाजातीयगन्धवदवयवारब्धघटेऽव्याप्तिवारणायात्रापि जातिघटनाऽऽवश्यकीति वाच्यम् । तत्राव्याप्यवृत्तिनानागन्धस्वीकारेण जातिघटनानावश्यकीत्यभिप्रायात् रूपादीनामव्याप्यवृत्तित्वस्वीकारपक्ष एवास्य निर्भरात् । किमत्र सूचकमिति चेदिदमेव तावदेकं यत्सुरभित्वादिघटितलक्षणद्वयस्य मूललभ्यस्याप्युपेक्षणं नानारूपवतीत्यभिधानं द्वितीयं एवमौत्सर्गिकपाठे पाषाणे गन्धाभावात् गन्धवत्त्वमव्याप्तमित्यभिधानं तृतीयं तत्पाठे पृथिवीत्वेन पाषाणे गन्धवत्त्वसाधनं चतुर्थं घ्राणेन्द्रिये वाय्वानीतपार्थिवभागे च पृथिवीत्वेन रसानुमानं पञ्चमं एवमत्रैव पूर्वापरलक्षणयोर्जातिं घटयित्वा मध्यस्थे गन्धवत्त्वलक्षणे स्वयं तदघटनं षष्ठं एवमन्यदपि तत्र तत्र वक्ष्यामः । नचैवमव्याप्यवृत्तिः क्षणिको विशेषगुण इष्यत इत्यत्र प्रथमलक्षणं पृथिव्यादावतिव्याप्तमिति वाच्यम् । द्वितीयलक्षणे त्रिक्षणवृत्तिजन्यावृत्तिजातिमत्त्वरूपक्षणिकत्वनिर्वचनवत् प्रथमलक्षणेऽपि व्याप्यवृत्तिजन्यावृत्तिजातिमत्त्वरूपाव्याप्यवृत्तित्वनिर्वचनसंभवात् । नहि सकृदुक्तयोर्द्वयोर्लक्षणयोरेकत्र दर्शितपरिष्कारारीतेरन्यत्राप्याश्रयणे प्रयासाधिक्यमस्ति। ननु तर्हि प्रथमलक्षण एव तां रीतिमभिधाय द्वितीयलक्षणे तदतिदेशो युक्त इति चेत् संप्रदायमते प्रथमलक्षणे तदनावश्यकत्वेन द्वितीयलक्षणे सर्वमत एव तदावश्यकत्वेन च द्वितीयलक्षण एव तदभिधानात् । नहि संप्रदायमतन्नाभिधत्ते विश्वना-

**स्पर्शस्तस्यास्तु विज्ञेयो ह्यनुष्णाशीतपाकजः ।**

**स्पर्श इति ॥ तस्याः** पृथिव्याः । अनुष्णाशीतस्पर्शवत्त्वं वायावपि वर्तत इत्युक्तं पाकज इति । इत्थं च पृथिव्याः स्पर्शोऽनुष्णाशीत इति ज्ञापनार्थन्तदुक्तं पाकजस्पर्शवत्त्वमात्रं तु लक्षणं अधिकस्य वैयर्थ्यात् । यद्यपि पाकजस्पर्शः पटादौ

## प्रभा.

**मूले अनुष्णाशीतपाकज इति** ॥ अत्र यद्यपि मृदुत्वकठिनत्वयोः स्पर्शविशेषरूपत्वमते मृदुत्वकठिनत्ववदवयवारब्धपृथिव्यां परस्परविरोधेन स्पर्शानुत्पत्त्या तत्राव्याप्तेर्वायावतिव्याप्तेश्च वारणाय अनुष्णाशीतस्पर्शसमानाधिकरणवाय्ववृत्तिजातिमत्त्वघटितलक्षणस्याप्यावश्यकतया तस्य लक्षणत्वनिराकरणे बीजाभावः तथापि यथाश्रुतमूलाभिप्रायेण लक्षणत्वं निराकरोति ॥ **मुक्तावल्यां इत्थं**

## मञ्जूषा.

थ इति वयं ब्रूमः किंत्वव्याप्यवृत्तित्वपक्षे निर्भरसूचनं बहुषु प्रदेशेष्वस्तीत्येतावदेव एवं गुणग्रन्थे अथ प्रादेशिको भवेत् वैशेषिको विभुगुणस्संयोगादिद्वयं· तथेत्यत्रापि प्रादेशिकत्वमीदृशमेव वाच्यम्। तत्पूर्वतनानि हि कतिपयानि लक्षणानि यथाश्रुते दुष्टानि विश्वनाथेन चापरिष्कृतान्येव दृश्यन्ते अतः प्रादेशिकत्वलक्षणे एतत्परिष्काराकरणं न्यूनतासंपादकमिति शङ्काया एवानवकाशः संप्रदायमतेऽनावश्यकत्वाच्च ॥ ३५ ॥

**ज्ञापनार्थमिति** ॥ नन्वावश्यकेऽनुष्णाशीतत्वपाकजत्वयोरन्यतरस्य वैयर्थ्येऽवश्यंभाविन्याञ्च जातिघटनायां पाकजत्वोक्तेरेव स्वरूपाख्यानपरतां स्वीकृत्य अनुष्णाशीतत्वजातिपुरस्कारेणैव लक्षणघटकत्वमुचितं अनुष्णाशीतस्पर्शवद्वृत्तिवाय्ववृत्तिजातिमत्त्वविवक्षयैव वायावतिव्याप्तिवारणसंभवात् । अथवात्र जातिरेव न घटनीया वायुभिन्नत्वे सति अनुष्णाशीतस्पर्शवत्त्वस्यैव लक्षणत्वसंभवात् मृदुकठिनादिनानाजातीयस्पर्शवदवयवारब्धेऽप्यवयविनि द्रव्यस्पार्शनानुरोधेन चित्रस्पर्शस्याव्याप्यवृत्तिनानास्पर्शस्य वावश्यमभ्युपेतव्यत्वेन तत्राव्याप्तेरनवकाशादिति चेदुच्यते । स्वसजातीयभेदानुमानार्थमेव हि लक्षणं तत्कथं स्वसजातीयभेदघटितमेव कर्तुं युक्तं साध्याविशेषत्वप्रसङ्गात् स्वसजातीयावृत्तिजातिमत्त्वघटितमप्यत एव लक्षणं न युक्तम् । तज्जात्याश्रये वायुभेदज्ञानमन्तरेण तज्जातौ वाय्ववृत्तित्वस्य दुर्ग्रहतया पृथिव्यां वायुभेदे साध्ये साध्याविशेषत्वस्य दुर्वारत्वत् । अत एव सति गत्यन्तरे स्वसजातीयभेदादिकं न लक्षणे प्रवेशयन्ति तान्त्रिकाः । अथैवं सत्यभास्वरशुक्लेतररूपासमानाधिकरणेत्यादिवक्ष्यमाणजललक्षणादीनि व्याहन्येरन्, अभास्वरशुक्लेतररूपासमानाधिकरणत्वस्य पृथिवीतेजोवृत्तित्वाभावपर्यवसनादिति चेन्न व्याहन्यन्ते नहि जलत्वे अभास्वरशुक्लेतररूपासमानाधिकरणत्वं तदाश्रये पृथिवीतेजोभेदपर्यवसन्नं तस्य शंखत्वादिजातिसाधारणत्वात् तज्जात्याश्रयेऽभास्वरशुक्लादितरद्रूपन्नास्तीत्येतावत एवार्थस्य तत्र प्रतीयमानत्वाच्च । वाय्ववृत्तित्वं तु यज्जातौ ज्ञा-

## दिनकरीयम्.

अनुष्णाशीतत्वस्य वैयर्थ्यादाह ॥ **इत्थं चेति** । पाकजस्पर्शवत्त्वमात्रोक्तौ चेत्यर्थः । न्यायमते पाकजस्पर्शाभाववति पटे वैशेषिकमते पाकजस्पर्शस्य परमाणुष्वेव विद्यमानत्वादवयविनि भागासिद्धिमाशङ्क्य निषेधति ॥ **यद्यपीति** ॥ **पाकजस्पर्शेति** ॥ पटादावित्यादिपदेन वैशेषिकमतेऽवयविमात्रपरिग्रहः । सत्तारूपजातिमादाय गगनादावतिव्याप्तिवारणाय द्रव्यत्वव्याप्येति । द्रव्यत्वसमानाधिकरणसत्तामादायातिव्याप्तिवारणाय व्याप्यभागः । स्पर्शसमानाधिकरणजलत्वादिकमादाय जलादावतिव्याप्तिवारणाय पाकजेति । पाकजद्रवत्वसमानाधिकरणतेजस्त्वमादाय तेजस्यतिव्याप्तिवारणाय स्पर्शेति। जलपृथिव्यन्यतरत्वमादाय जलादावतिव्याप्तिवारणाय जातीति । अत्र च पृथिवीत्वस्य लक्ष्यतावच्छेद-

## रामरुद्रीयम्.

ननु पृथिवीत्वमपि पृथिवीलक्षणं सम्भवतीति तत्कथन्नोक्तमित्याशङ्कां निरस्यति ॥ **अत्र चेति** ॥

## नित्यानित्या च सा द्वेधा नित्या स्यादणुलक्षणा ॥ ३६ ॥

नास्ति तथापि पाकजस्पर्शवद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वमर्थो बोध्यः ॥ **नित्येति** ॥ सा पृथिवी नित्याऽनित्या चेत्यर्थः । अणुलक्षणा परमाणुरूपा पृथिवी नित्या ॥ ३६ ॥

### प्रभा.

**चेत्यादिना** ॥ **द्रव्यत्वव्याप्येति** ॥ जलावृत्तीत्यर्थः । इदमुपलक्षणं पृथिवीत्वजातिमत्त्वमपि तल्लक्षणं बोध्यम् । नच व्यतिरेकसहचारेणाप्यन्वयव्याप्तिरेव गृह्यत इति आचार्यमते हेतौ साध्यसामानाधिकरण्यज्ञानस्य तुल्यवित्तिवेद्यतया साध्ये हेतुसामानाधिकरण्यावगाहित्वेन हेतोरेव पक्षतावच्छेदकतया पक्षतावच्छेदकाश्रये साध्यसिद्ध्यात्मकत्वेनानन्तरमितरभेदसाधने सिद्धसाधनापत्तिरिति वाच्यं तादृशज्ञानानिष्पत्तावपि पक्षविशेष्यकसाध्यप्रकारकज्ञानस्यानिष्पन्नत्वेन सिद्धसाधनाप्रसक्तेः । व्यतिरेक्यनुमितौ व्यतिरेकव्याप्तिज्ञानस्यैव हेतुत्वमिति नैयायिकमते सुतरां सिद्धसाधनाप्रसक्तेरित्यपि बोध्यम् । अणुत्वस्य द्व्यणुकसाधारण्येन तस्य नित्यत्वासंभवादाह ॥ **परमाणुरूपेति** ॥ ३६ ॥

### मञ्जूषा.

यतं तदाश्रये वायुभेदस्तदैव ज्ञायत एवेत्यस्ति ततोऽस्य विशेषः । यद्यपि वायुवृत्तिस्पर्शैकत्वादियत्किंचिद्व्यक्ति तद्व्यक्तित्वेन धृत्वा तद्व्यक्त्यसमानाधिकरणजातिमत्त्वं लक्षणं संभवति तथापि तल्लक्षणस्य पामराणामसंप्रतिपादत्वात्तदुपेक्षितम् । इदमत्र बोध्यं स्वसजातीयभेदघटितं स्वसजातीयावृत्तिजातिघटितं वा लक्षणमेव न संभवतीति न वयं ब्रूमः किंतु यद्भेदघटितं यदवृत्तिधर्मघटितं वा यल्लक्षणं तन्न

### दिनकरीयम्.

कत्वाल्लक्षणत्वं न सम्भवतीति तत्परित्यागः । वस्तुतस्तु पृथिवीत्वजातिरपि पृथिव्या लक्षणम् । न च व्यतिरेकसहचारेणाप्यन्वयव्याप्तिरेव गृह्यत इत्याचार्यमते पक्षतावच्छेदकस्य न हेतुत्वमिति वाच्यम् । हेतुः साध्यसमानाधिकरण इति ज्ञानेऽपि हेतुमान् साध्यवानिति बोधस्यानिष्पन्नत्वेन पक्षतावच्छेदकत्वेऽपि हेतुत्वाविरोधात् व्यतिरेकव्याप्तेर्गमकतायां तु सुतराम् । अणुत्वस्य द्व्यणुकेऽपि सत्त्वादाह ॥ **परमाणुरूपेति** ॥ ३६ ॥

### रामरुद्रीयम्.

**आचार्यमत इति** ॥ व्यापकसामानाधिकरण्यरूपान्वयव्याप्तिज्ञानमेव सर्वत्रानुमितौ कारणम् । न चैवमन्वयसहचारज्ञानेन पृथिवीतरेभ्यो भिद्यते गन्धवत्त्वादित्यादावन्वयव्याप्तिज्ञानासम्भवात्कथमनुमितिरिति वाच्यम् । तत्र व्यतिरेकसहचारग्रहेणैवान्वयव्याप्तिग्रहस्वीकारात् । तथा चान्वयसहचारमात्रगृहीतव्याप्तिकत्वमेव केवलान्वयित्वम् । हेतौ व्यतिरेकसहचारमात्रगृहीतव्याप्तिकत्वं केवलव्यतिरेकित्वम् । उभयसहचारगृहीतव्याप्तिकत्वमन्वयव्यतिरेकित्वमित्याचार्यमतं उभयव्याप्तिज्ञानस्यानुमितिकारणतावादिमणिकारमत एव गृहीतान्वयमात्रव्याप्तिमत्त्वादिकं केवलान्वयित्वादिकमिति बोध्यम् ॥ **पक्षतावच्छेदकस्येति** ॥ व्याप्तिग्रहदशायामेवानुमितिग्राह्यस्य पक्षतावच्छेदकसाध्ययोः सामानाधिकरण्यस्य गृहीततया सिद्धसाधनापत्तेरिति भावः ॥ **अविरोधादिति** ॥ समानाकारिकाया अधिकविषयिण्या अपि तथाविधाया एव सिद्धेरनुमितिप्रतिबन्धकत्वादिति भावः । यद्यपि तथाचायमित्युपनयवाक्यात्पक्षो हेतुमानिति बोधस्यैव प्राचीनैः स्वीकारात्पक्षतावच्छेदकहेत्वोरैक्ये उपनयवाक्याच्छाब्दबोधानुपपत्तिरस्ति तथापि परार्थानुमितावेव न्यायप्रयोगस्यापेक्षणीयतया स्वार्थानुमितिसादायैव लक्षणप्रयोजनसम्भवात् उपनयवाक्याच्छाब्दबोधासम्भवेऽपि क्षतिविरहात् । नवीनमते साध्यव्याप्यहेतुमत्ताबोधस्यैवोपनयजन्यत्वोपगमेन विधेयांशेऽधिकावगाहितया तत्सम्भवाच्चेति भावः ॥ **सुतरामिति** ॥ इदमुपलक्षणम् । अवच्छेदकावच्छेदेनानुमितिसम्भवोऽपि बोध्यः सामानाधिकरण्यमात्रविषयकसिद्धेस्तत्राप्रतिबन्धकत्वादिति दिक् ॥ ३६ ॥

## मञ्जूषा.

तद्वेदं साधयितुं क्षमते साध्याविशेषत्वादतस्संभवति गत्यन्तरे न तथा लक्षणं कर्तुमुचितमित्येव । यत्तु गत्यन्तराभावस्तत्र तादृशमपि लक्षणं स्वीक्रियते यथा नैमित्तिकद्रवत्वरूपतेजोलक्षणे पृथिव्यवृत्तित्वान्निवेशयिष्यते गत्यन्तराभावात् तावता न तस्य लक्षणत्वं व्याहतं तस्य पृथिवीभेदसाधने स्वरसतस्सामर्थ्याभावेऽपि जलादिभेदसाधने सामर्थ्यसत्त्वात् । इहतु वायुभेदाघटितलक्षणसंभवात् तद्घटितलक्षणकरणं अयुक्तमेव नचानुष्णाशीतत्वव्याप्यमृदुत्वकठिनत्वादिजातिपुरस्कारेणानुष्णाशीतस्पर्शान्निवेश्य मृदुस्पर्शवद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वमिति रीत्या लक्षणकरणमस्त्विति वाच्यं संप्रदायमते मृदुत्वकाठिनत्वयोः स्पर्शवृत्तित्वानङ्गीकारेण तस्य सविवादत्वापत्तेः ॥ **पाकजस्पर्शवद्वृत्तीति** ॥ जलस्पर्शतेजोद्रवत्वयोर्वारणाय पाकजत्वस्पर्शत्वे उपात्ते । यद्यपि पृथिवीवृत्तिर्यत्किंचिद्द्रव्यत्वव्याप्यजातिमत्त्वं लक्षणं संभवति तथापि तस्य पामराणामसुप्रतिपादत्वात् तद्व्यक्तिपरिचायकधर्मग्रहसापेक्षत्वाच्च तदुपेक्षितम् । अत एव संख्यापरिमाणादीनां पृथिवीलक्षणत्वत्यागः यत्र तु गत्यन्तराभावः तत्र तथाविधमपि लक्षणं न निवारयामः स्यादेतत् स्पर्शस्येव रूपरसयोरपि पाकजत्वपुरस्कारेण लक्षणघटकत्वसंभवात् तत्र तदुपेक्षायां बीजाभाव इति । नच स्पर्शघटितलक्षणे पाकजत्वोत्कीर्तनं न रूपादिघटितलक्षणे पाकजत्वनिवेशासंभवद्योतकं किन्तु रूपादिघटितलक्षणोक्तरीतिरत्रासंभवद्योतकमिति वाच्यं पाकेन पूर्वरूपनाशरूपान्तरोत्पादयोरिव पूर्वस्पर्शनाशस्पर्शान्तरोत्पादयोरपि सिद्धान्तसिद्धतया स्पर्शद्वयवत्त्वस्पर्शनाशवत्त्वघटनाया अत्रापि संभवात् । नच रूपद्वयवत्त्वं रूपनाशवत्त्वं च पृथिव्यां पाकवशादेव ततश्च पाकजस्पर्शवत्त्वोक्त्या स्पर्शद्वयवत्त्वस्पर्शनाशवत्त्वयोरर्थतो लाभात् न वैषम्यप्रसक्तिरिति वाच्यम् । अर्थतः पर्यवसानेऽपि शब्दवैषम्योपादानस्य तत्प्रतिपाद्यतावच्छेदकधर्मवैषम्योपादानस्य च निर्बीजत्वापातादिति चेदस्ति तत्र किंचिद्बीजं । तथाहि नानारूपवतीत्यादिमूलं न स्वरसतो लक्षणप्रतिपादनपरं किन्तु पृथिवीत्वविशिष्टस्य रूपादिभिर्जलादिवैलक्षण्यमात्रप्रतिपादनपरं लक्षणलाभस्त्वार्थिकस्तद्यथा पृथिवीत्वविशिष्टे रूपविभाजकसर्वधर्मावच्छिन्नानि सन्ति नतु जलत्वादिविशिष्टे तत्रैकैकविधस्यैव रूपस्य सत्त्वात् । तथा विभाजकधर्मषट्काक्रान्ता अपि रसास्तत्र वर्तन्ते नान्यत्र । विभाजकधर्मद्वयाक्रान्तोऽपि गन्धः तत्रैव वर्तते अन्यत्र त्वेकविधोऽपि नास्तीति रीत्या रूपादिभिस्त्रिभिर्वैलक्षण्यमुपपादितं इदानीं स्पर्शेनोपपादनीयं अत्र विभाजकधर्मत्रयाक्रान्ता अपि स्पर्शाः पृथिव्यां सन्तीति न वक्तुमुचितमयोगात् किंत्वनुष्णाशीतत्वरूपविभाजकधर्माक्रान्तस्पर्शस्तत्रास्तीति वक्तव्यं तावता जलतेजोवैलक्षण्यं सिद्धं वायुतो वैलक्षण्यन्तु न सिद्धं अतः पृथिवीत्वाविशिष्टविशेषकानुष्णाशीतस्पर्शविशेषकं किंचिदावश्यकं तच्च न मृदुत्वं कठिनत्वं वा युक्तं सविवादत्वात् द्वयोरेकोक्त्यसंभवाच्च । एकतरमात्रोपादाने च वायुस्पर्शवृत्तिवैजात्यस्येव मृदुत्वकठिनत्वयोरनुपात्तांशस्यापि निरासद्योतनप्रसङ्गात् अतः पाकजत्वमेव तद्विशेषकमुपात्तम् । यद्यपि पाकजत्वविशेषित एव स्पर्शः इतरवैलक्षण्यद्योतनायालं तथापि पृथिवीविशेषकस्पर्शे स्पर्शविभाजकधर्मान्तरव्युदासायानुष्णाशीतत्वमपि तत्रोपात्तं पृथिवीवृत्तिरूपादिषु तत्तद्विभाजकधर्मास्सर्वेऽपि यथायोगमासते नत्वेवं पृथिवीवृत्तिस्पर्शे इति द्योतनायापि तदुपादानम् एषा मूलशैली तत्रच लक्षणपर्यवसानविरहे मूलस्य न्यूनता प्रसज्यते अतस्तन्मूलं लक्षणेष्वपि पर्यवसाययन् मुक्तावलीकारस्तत्तन्मूलानुसारेणैव लक्षणानि परिष्करोति कोनु तावतास्यापराधः नह्येकविधलक्षणपरिष्करणं अन्यविधपरिष्करणव्यवच्छेदकं परिष्करणीयन्तु मूलानुसारेण मूलतात्पर्यन्तु मुक्तावल्यामपि प्रकटितं शुक्लनीलादिभेदेन नानारूपं पृथिव्यामेव वर्तत इत्यादिना सन्दर्भेण मूलस्य स्वरूपाख्यानपरत्वावगमात् । ननु जलतेजसोर्द्रवत्वमपि लक्षणमुच्यते तथापि कुतो नोक्तमिति । उच्यते किंचिज्जातिपुरस्कारेणैव गुणानां पृथिव्यादिलक्षणत्वमिह विवक्षितं पाकजस्पर्शस्यापि स्पर्शवृत्तिपाकजन्यतावच्छेदकवैजात्यपुरस्कारेणैव लक्षणत्वसंभवात् । नच तेजोद्रवत्वव्यावृत्तं पृथिवीनैमित्तिकद्रवत्वे किंचिद्वैजात्य-

**अनित्या तु तदन्या स्यात् सैवावयवयोगिनी ।**

**तदन्या** परमाणुभिन्ना पृथिवी द्व्यणुकादिरूपा सर्वाप्यनित्येत्यर्थः । **सैवानित्या** पृथिव्यवयववतीत्यर्थः । नन्ववयविनि किं मानं परमाणुपुञ्जैरेवोपपत्तेः । नच परमाणूनामतीन्द्रियत्वात् घटादीनां प्रत्यक्षं न स्यादिति वाच्यम् । एकस्य परमाणोरप्रत्यक्षत्वेऽपि तत्समूहस्य प्रत्यक्षत्वसम्भवात् यथैकस्य केशस्य दूरेऽप्रत्यक्षत्वेऽपि तत्समूहस्य प्रत्यक्षत्वम् । न

**प्रभा.**

नन्ववयवातिरिक्तावयविनि मानाभावन्नित्यानित्यविभागोऽयुक्तः नचावयविनः परमाणुरूपत्वे घटस्यापि नित्यत्वेनोत्पत्त्यभावात् दण्डादिसामग्र्यपेक्षा न स्यादिति वाच्यं परमाणूनां विलक्षणसंयोगविशिष्टानामेव घटात्मकतया तादृशसंयोगोत्पत्तावेव दण्डादेरुपयोगित्वस्वीकारात् घट उत्पन्न इत्याकारकोत्पादविनाशप्रतीतेरपि तादृशसंयोगोत्पादविनाशावगाहित्वेनैवोपपत्तेर्नातिरिक्तत्वमवयविनः । अत एवानन्तावयवादिकल्पनागौरवस्य तत्सामग्रीकल्पनागौरवस्य च नावकाश इति नवीनैकदेशिमतमुपन्यस्यति ॥ **नन्वित्यादिना** ॥ ननु घट इत्यादिप्रत्यक्षमेव तत्र प्रमाणमित्यत आह ॥ **परमाणुपुञ्जैरिति** ॥ विलक्षणसंयोगविशिष्टैः परमाणुभिरेवेत्यर्थः ॥ **उपपत्तेरिति** ॥ घट इति प्रत्यक्षोपपत्तेरित्यर्थः ॥ **प्रत्यक्षत्वादिति** ॥ प्रत्यक्षत्वसंभवादित्यर्थः । इदं क्वाप्यदृष्टचरमित्याशङ्कां दृष्टान्तमुखेन

**मञ्जूषा.**

मस्ति तत्र पाकनाश्यतावच्छेदकजातेस्तेजोनिरूपणेऽस्माभिर्दूषयिष्यमाणत्वात् । नच सांसिद्धिकद्रवत्वत्वजातिपुरस्कारेण द्रवत्वस्य जललक्षणत्वसंभवेऽपि नैमित्तिकद्रवत्वस्य तेजोलक्षणत्वमग्रे वक्ष्यमाणं विरुध्यते तत्रापि पृथिवीद्रवत्वव्यावृत्तजातिविशेषे मानाभावात् तत्र पृथिवीवृत्तित्वाभावविशेषितजातिघटनाया इवात्र तेजोवृत्तित्वाभावविशेषितजातिघटनाया अपि संभवादिति वाच्यं स्वसजातीयावृत्तिजातिघटितलक्षणकरणस्य युक्तरूपत्वाभावात् । तेजःस्थले तु सुवर्णे तैजसत्वसाधकवक्ष्यमाणहेतुसत्त्वसूचनाय तेजसि नैमित्तिकद्रवत्वमस्तीत्युक्तं तस्य च लक्षणपरत्वमपि संभवतीत्याशयेन कथंचित्परिष्कृतं विश्वनाथेनेति द्रष्टव्यम् । अत्र पृथिवीवृत्तिसंख्यादौ जलादिसंख्याव्यावृत्तजातिविशेषाभावात्तेषां न लक्षणत्वमुक्तम् । नच वंशदलद्वयविभागादौ शब्दविशेषजनकतावच्छेदकवैजात्यमस्तीति वाच्यं वंशदलकपालतन्तुशाखादिविभागेभ्यो मिथो विलक्षणानामेव शब्दानामुत्पत्त्या तत्तज्जात्यवच्छिन्नशब्दं प्रति वंशदलविभागत्वादिना कारणत्वस्यावश्यकत्वेनावयवकठिनस्पर्शतारतम्येन शब्दतारतम्यस्यानुभवसिद्धतया तत्र कठिनस्पर्शस्य तद्विशिष्टत्वेन विभागस्यैव वा विशेषसामान्याभ्यां कारणताया आवश्यकत्वेन च तत्र विभागे जातिविशेषकल्पनायां मानाभावादिति ॥ ३६ ॥

अत्र सौगतास्सङ्गिरन्ते खरस्नेहौष्ण्येरणस्वभावाश्चतुर्विधाः परमाणवस्तत्राद्यो रूपरसगन्धस्पर्शस्वभावः द्वितीयो रूपरसस्पर्शस्वभावः तृतीयो रूपस्पर्शस्वभावः चतुर्थस्स्पर्शस्वभावः एते च मिथः संहताः पृथिव्यप्तेजोवायुशब्दैः क्रमाद्व्यपदिश्यन्ते तान्येतानि चत्वारि भूतानीत्युच्यन्ते त एव च पृथिव्यादयः संघातविशेषापन्नाश्शरीरेन्द्रियविषयरूपा भवन्ति तेच शरीरेन्द्रियविषया भौतिका इत्युच्यन्ते एतान्येव बाह्यानि वस्तूनि । आकाशे तु प्रमाणाभाव

**दिनकरीयम्.**

बौद्धः शङ्कते ॥ **नन्विति** ॥ नन्वयं घट इत्यादिप्रतीतिरेव तत्र प्रमाणं भविष्यत्यत आह ॥ **परमाणुपुञ्जैरेवेति** ॥ विलक्षणसंस्थानविशिष्टैः परमाणुभिरेवेत्यर्थः ॥ **उपपत्तेरिति** ॥ अयं घट इत्यादिप्रतीतिरुपपत्तेरित्यर्थः ॥ **तत्समूहस्य** परमाणुसमूहस्य । तत्र दृष्टान्तमाह ॥ **यथेति** ॥ **तत्समूहस्य** के-

**रामरुद्रीयम्.**

नन्वयं घट इति प्रतीतेः परमाणुपुञ्जविषयकत्वे मृत्पिण्डेऽपि तथा प्रतीत्यापत्तिस्तत्रापि तत्स-

चैको घटः स्थूल इति बुद्धेरनुपपत्तिरिति वाच्यम् एको महान् धान्यराशिरितिवदुपपत्तेः। नैवं। परमाणोरतीन्द्रियत्वेन तत्समूहस्यापि प्रत्यक्षत्वायोगात् दूरस्थकेशस्तु नातीन्द्रियः स-

**प्रभा.**

परिहरति ॥ **यथेति** ॥ **अनुपपत्तिरिति** ॥ परमाणूनामेकत्वाभावान्महत्त्वाभावाच्चेति भावः ॥ **इतिवदुपपत्तेरिति** ॥ यथा धान्यराशेरेकत्वान्महत्त्वाच्चैको महानिति प्रत्यक्षं तथा समूहगतैकत्वमादायावयवसंयोगरूपमहत्त्वमादाय च एकः स्थूलो घट इति प्रत्यक्षसंभवादित्यर्थः । अतीन्द्रियसमुदायस्याप्यतीन्द्रियत्वमावश्यकं अन्यथाऽऽकाशकालदिक्समुदायस्यापि प्रत्यक्षत्वापत्तेरित्यभिप्रायेण समाधत्ते ॥ **नैवमित्यादिना** ॥ ननु एकस्य केशस्य दूरे अप्रत्यक्षत्वेऽपि तत्समूहस्य प्रत्यक्षत्वात्

**मञ्जूषा.**

इति तन्मतन्निराकर्तुमाशङ्कते ॥ **नन्विति** ॥ **एको महानिति** ॥ धान्यराशिर्हि तव मते न वस्तुतो धान्येभ्योऽतिरिच्यते धान्यानामन्त्यावयवित्वेन द्रव्यान्तरानारम्भकत्वात् अतस्तत्रैकत्वप्रतीतिः न संख्यामवगाढुमर्हति धान्यानामनेकत्वात् किन्तु परस्परसंयुक्तपदार्थमात्रघटितसमुदायत्वरूपमेकत्वमेव तद्विषयः एवं सामान्यतो महान् धान्यराशिरिति प्रतीतौ धान्यगतमहत्त्वस्यैव कथंचिद्भानिर्वाहेऽपि धान्यशतघटितराश्यपेक्षया धान्यसहस्रघटितराशौ महत्तरत्वप्रतीतिर्न धान्यसमवेतमहत्त्वालम्बनत्वमुभयविधराशिघटकधान्यसमवेतानां महत्त्वानामुत्कर्षापकर्षयोरभावात् अतस्तद्राशिघटकपरस्परसंयुक्तधान्यपर्याप्तसंख्याधिकसंख्यापर्याप्त्यधिकरणपरस्परसंयुक्तधान्यघटितत्वमेव तदपेक्षया महत्तरत्वमिति वक्तव्यम् । तद्वदेकः स्थूलो घट इत्यत्रापि परस्परसंयुक्तपदार्थघटितसमुदायत्वरूपमेकत्वं परस्परसंयोगविशेषापन्नबहुपदार्थघटितत्वरूपस्थूलत्वमपि घटपदोल्लिखितपरमाणुपुञ्जे भासत इति भावः एवमस्मादयं स्थूलतर इत्यादावप्यूहनीयम् ॥ **परमाणोरतीन्द्रियत्वेनेति** ॥ तथाच शतमप्यन्धानान्न पश्यति सहस्रमपि पङ्गूनां न चलतीति न्यायेन स्वभावतोऽतीन्द्रियाः परमाणवः संहता अपि न प्रत्यक्षविषयीभवितुमर्हन्ति दूरस्थकेशस्तु न स्वभावतोऽतीन्द्रियः तदानीमेव सन्निहितेन पुरुषान्तरेण गृह्यमाणत्वात् । किन्तु दूरत्वरूपप्रतिबन्धकसमवधानात् न तदा तत्प्रत्यक्षं प्रतिबध्यतावच्छेदकं चात्र न केशप्रत्यक्षत्वं तत्समानपरिमाणाश्रयतन्तुविशेषादिद्रव्यान्तरप्रत्यक्षासङ्ग्रहात् किन्तु तत्तदपकर्षाश्रयपरिमाणद्रव्यप्रत्यक्षत्वं व्यामादिव्यवधानरूपतत्तद्दूरत्वप्रतिबध्यतावच्छेदकं अथैवं दूरस्थाः बहवः केशाः समूढाश्चक्षुषा न गृह्येरन् प्रतिबन्धकसत्त्वात् । नच तादृशपरिमाणविशिष्टैकैकव्यक्तिमात्रविषयकप्रत्यक्षत्वं प्रतिबध्यतावच्छेदकमिति वाच्यं तथासत्यसंयुक्तकेशद्वयविषयकप्रत्यक्षस्य प्रतिबध्यतावच्छेदकानाक्रान्तत्वापत्तेरिति चेन्न तादृशपरिमाणवद्द्रव्यान्तरसंयोगाभावविशिष्टतादृशपरिमाणवद्द्रव्यविषयकत्वप्रत्यक्षत्वस्यैव प्रतिबध्यतावच्छेदकत्वस्वीकारात्। अथैवं समानजातीयपरिमाणाश्रयशुक्लतन्तुसमुदायघटितस्य नीलतन्तोर्दूरे प्रत्यक्षत्वापत्तिरिति चेन्न । नीलत्वस्यापि तत्र प्र-

**दिनकरीयम्.**

शसमूहस्य ॥ **अनुपपत्तिरिति** ॥ परमाणूनामनेकत्वादणुत्वाच्चेति भावः ॥ **इतिवदुपपत्तेरिति** ॥ तत्र यथा धान्यसमूहस्यैकत्वादेक इति प्रतीतिरेवं संयोगविशेषस्यैव महत्त्वात्मकतया महानिति प्रतीतिस्तथा परमाणुपुञ्जेष्वपीति भावः ॥ **प्रत्यक्षत्वायोगादिति** ॥ तथा च स्वभावतोऽयोग्यानां परमाणूनां परस्परसंयोगमात्रेण योग्यत्वं न सम्भवतीति भावः । दूरस्थकेशस्तु स्वभावतो नातीन्द्रिय इति त्वदुक्त-

**रामरुद्रीयम्.**

त्वादित्यतस्तद्व्याचष्टे ॥ **विलक्षणेति** ॥ **संस्थानं** संयोगः ॥ **समूहस्यैकत्वादिति** ॥ समूहशब्दार्थस्तावद्धान्यनिष्ठसङ्ख्याविशेष एव नतु तद्विशिष्टधान्यानि तत्रैकत्वाभावात् प्रत्येकमेकत्वसत्त्वेऽपि राशिपदप्रयोगानुपपत्तेरिति ध्येयम् ॥ **संयोगविशेषस्येति** ॥ एकधान्यसंयुक्तापरधान्यसंयुक्तान्यधान्यप्रतियोगिकसंयोगस्येत्यर्थः ॥ **न सम्भवतीति** ॥ अन्यथा पिशाचादीनामपि परस्परसंयुक्तानां प्र-

न्निधाने तस्यैव प्रत्यक्षत्वात् । नच तदानीं दृश्यपरमाणुपुञ्जस्य उत्पन्नत्वान्न प्रत्यक्षत्वेऽपि विरोध इति वाच्यम् । अदृश्यस्य दृश्यानुपादानत्वात् अन्यथा चक्षुरूष्मादिसन्ततेः कदा-

**प्रभा.**

उक्तनियमे मानाभाव इत्यत आह ॥ **दूरस्थकेशास्त्विति** ॥ **तस्यैवेति** ॥ दूरस्थकेशस्यापी त्यर्थः ॥ **प्रत्यक्षत्वादिति** ॥ तथाच दूरस्थकेशस्य दूरत्वदोषवशात्प्रत्यक्षाविषयत्वेऽपि समीपगतस्य दूरत्वादिदोषनिवृत्तौ तस्यापि प्रत्यक्षविषयत्वेनातीन्द्रियत्वाभावात् केशसमुदायस्यातीन्द्रियघटितत्वरूपव्या प्याभावेनाप्रत्यक्षत्वरूपव्यापकाभावेऽपि न क्षतिरिति भावः । इदानीं सन्मात्रस्य क्षणिकत्ववादिमत-मनुसृत्य नवीनैकदेशी शङ्कते ॥ **नचेत्यादिना** ॥ ननु वौद्धस्यैवं शङ्का तैरप्रत्यक्षपदार्थानङ्गीकारेण परमाणोरप्यनङ्गीकारादिति हृदयम् ॥ **तदानीमिति** ॥ घट इत्याकारकप्रत्यक्षपूर्वमित्यर्थः ॥ **दृश्यप-रमाणुपुञ्जस्येति** ॥ अदृश्यपरमाणुपुञ्जैरित्यादिः ॥ **उत्पन्नत्वादिति** ॥ तैस्सन्मात्रस्य क्षणिकत्व-स्वीकारेण तन्मतानुसारिनवीनैकदेशिना परमाणोरप्युत्पत्तिस्वीकारसंभवादिति भावः॥ **चक्षुरूष्मादीति** ॥ आदिना ताम्बूलचर्वणोपयोगिचूर्णगततेजःपरिग्रहः । तथाच चक्षुस्सन्ततौ ऊष्मसन्ततौ चूर्णादिग-

**मञ्जूषा.**

व्यान्तरे द्रव्ये च विशेषणत्वस्वीकारात् एवं तादृशपरिमाणविशिष्टशुक्लद्रव्यप्रत्यक्षादावपि दूरत्वविशेषाणां प्रतिवन्धकत्वं वोध्यमित्यन्यदेतत् । ननु वस्तुतो यदतीन्द्रियं तत्समूहः प्रत्यक्ष इति न वयमप्याचक्ष्महे किन्तु क्षणभङ्गुरेषु प्रतिक्षणाभिन्नेषु परमाणुषु ये कपालघटादिव्यपदेशभाजः परमाणुसन्तानास्ते नातीन्द्रियाः अतस्ते चक्षुषा गृह्यन्ते ये तु तत्पूर्वतनास्ते अतीन्द्रियाः अतो न ते गृह्यन्ते इत्येवास्माकं सिद्धान्त इत्याशङ्कां निराकुरुते ॥ **नचेति** ॥ अत्र घटव्यपदेशभाजः प्रतिक्षणमुत्पद्य-मानाः परमाणवः सर्वेऽपि दृश्यन्ते चक्षुरात्मकाः प्रतिक्षणमुत्पद्यमानास्तु परमाणवो न दृश्यन्ते अतो व्यवस्थोपपत्तये दृश्यत्वे दृश्योपादेयत्वं तन्त्रं अदृश्यत्वे चादृश्योपादेयत्वमित्यवश्यं त्वया वाच्यम् । तथाच पूर्वैरदृश्यैः परमाणुभिः कथं दृश्याः घटात्मकाः परमाणवः उपादीयन्त इत्याशयेन समा-धत्ते ॥ **अदृश्यस्येति** ॥ **दृश्यानुपादानत्वादिति** ॥ सौगत इति गूढोऽयमभिप्रायः अत्र सौगतम-त इति कण्ठतोऽनुक्तत्वात् न्यायमतेऽप्ययन्नियम आवश्यक इत्येव विश्वनाथाभिप्रायोऽवगम्यते तथैव

**दिनकरीयम्.**

दृष्टान्तस्य वैषम्यमित्याह ॥ **दूरस्थकेशास्त्विति** ॥ **तस्यैवेति** ॥ **तस्य** दूरस्थकेशस्य । एवकारश्च तच्छब्दप्राक्तनसन्निधानपदेनान्वेति । तथा च सन्निधानत एव तस्य प्रत्यक्षत्वादित्यर्थः । तथा च दूरत्वस्य प्रतिबन्धकत्वात्तद्दशायामप्रत्यक्षत्वमात्रं तस्य न तु स्वाभाविकमप्रत्यक्षत्वमिति भावः ॥ **उत्पन्नत्वा-दिति** ॥ क्षणभङ्गवादिनां मते परमाणूनामुत्पत्तिस्वीकारादिति भावः ॥ **अन्यथा** अदृश्यस्य दृश्यो-

**रामरुद्रीयम्.**

त्यक्षत्वापत्तिरिति भावः । ननु तस्यैवेत्यस्य दूरस्थकेशस्यैवेत्यर्थकत्व एवकारासङ्गतिः सन्निधाने घ-टादेरपि प्रत्यक्षत्वादत आह ॥ **एवकारश्चेति** ॥ ननु अदृश्यपरमाणुपुञ्जोत्पत्तिर्मूलोक्ता न सङ्गच्छते परमाणूनां नित्यत्वादित्याशङ्कां निराकुरुते ॥ **क्षणभङ्गेति** ॥ तथाहि तेषां प्रयोगः यत्सत्तत्क्षणि-कं दीपसन्ततिवदिति भावः । अदृश्यस्य दृश्यानुपादानत्वादिति मूलं तत्र यद्यप्युपादानपदं न कारणा-र्थकं सम्भवति स्वमतेऽप्यदृश्यादृष्टस्य दृश्यघटादिकारणत्वान्नापि समवायिकारणार्थकं सम्भवति अदृ-श्यपरमाणौ दृश्यपरमाणुसमवायिकारणतायास्तैरप्यनङ्गीकारात् समवायेन परमाणौ परमाणोर्वृत्तित्वा-ङ्गीकारे परमाणोरेव सावयवत्वापत्त्याऽवयविनिराकरणानुपपत्तेः । नापि प्रकृत्यर्थकं प्रकृतित्वं हि द-ध्नो दुग्धादौ स्वजनकनाशप्रतियोगित्वम् । तच्च न तेषां मते परमाणुषु सम्भवति । क्षणभङ्गवा-दिनां तेषां पूर्वपूर्वव्यक्तित एवोत्तरोत्तरव्यक्तेरुत्पादस्यानुमततयान्तरनाशक्षणव्यवधानस्य तैरनङ्गीकारा-

चित् दृश्यत्वप्रसङ्गात् । नचातितप्ततैलादौ कथमदृश्यदहनसन्ततेर्दृश्यदहनोत्पत्तिरिति वाच्यम् । तत्र तदन्तःपातिभिरदृश्यदहनावयवैः स्थूलदहनोत्पत्तेरुपगमात् । नचादृश्येन द्व्यणुकेन कथं दृश्यत्रसरेणोरुत्पत्तिरिति वाच्यम् । यतो न दृश्यत्वमदृश्यत्वं वा कस्यचित्स्वभावादाचक्ष्महे किंतु महत्त्वोद्भूतरूपादिकारणसमुदायवतो दृश्यत्वं तदभावे चादृश्यत्वम् ।

## प्रभा.

ततेजस्सन्ततौ चेति फलितोऽर्थः ॥ **कदाचित् दृश्यत्वप्रसङ्गादिति** ॥ तव मते एतेषां प्रतिक्षणं जायमानत्वेनं जायमानानां मध्ये कदाचिदेकस्य दृश्यस्याप्युत्पत्तिसंभवेन तस्य प्रत्यक्षापत्तेरित्यर्थः । स्थलविशेषे अदृश्यस्य दृश्योपादानत्वमस्तीत्याशङ्कते ॥ **नचातितप्तेति** ॥ समाधत्ते ॥ **तत्रेति** ॥ अतितप्ततैलादावित्यर्थः ॥ **तदन्तःपातिभिरिति** ॥ तप्ततैलान्तःपातिभिरित्यर्थः ॥ **दृश्यदहनावयवैरिति** ॥ दृश्यसूक्ष्मदहनावयवैरित्यर्थः । **दृश्यदहनोत्पत्तेरिति** ॥ दृश्यस्थूलदहनोत्पत्तेरित्यर्थः ॥ **यत इति** ॥ कारणसमाजाधीनधर्मरूपत्वादित्यर्थः ॥ **कस्यचिदिति** ॥ पदार्थस्येति शेषः ॥ **स्वभावादिति** ॥ कारणनैरपेक्ष्यादित्यर्थः । अभेदे पञ्चमी ॥ **आचक्ष्महे इति** ॥ अङ्गीकुर्म इत्यर्थः । तथाच दृश्यत्वमदृश्यत्वं च कारणसमाजाधीनं भवतीति घटत्वादिवत् कारणसमाजाधीनाभिन्नं नाङ्गीकुर्म इति दृश्यत्वादृश्यत्वयोरर्थसमाजग्रस्तत्वेन चैत्रावलोकितमैत्रनिर्मितनीलेतरघटत्वादेरिव कार्यकारणभावावच्छेदकत्वासंभवात् दृश्यत्वादृश्य-

## मञ्जूषा.

स्वरसान्नियमबीजस्याविशिष्टत्वाच्च तथाहि यथा चक्षुरात्मकेषु प्रतिक्षणमुत्पद्यमानेषु परमाणुषु आन्तरालिकानां केषाञ्चिद्दृश्यत्ववारणाय सौगतानामयं नियम आवश्यकः तथा नैयायिकानामपि अदृश्यैश्चक्षुरवयवैरारब्धस्य चक्षुषो दृश्यत्ववारणाय आवश्यक इति अतोऽभिप्रायमविद्वान् शङ्कते ॥ **न चातितप्ततैलादाविति** ॥ अत्र वक्ष्यमाणाशयोद्घाटनस्य इदानीं कर्तुमशक्यत्वात् वस्तुस्थित्यनुरोधाचाभ्युपेत्य समाधत्ते ॥ **तदन्तःपातिभिरिति** ॥ पुनरप्यभिप्रायापरिज्ञानेनैव शङ्कते ॥ **न चेति** ॥ नायंनियमो नैयायिकानामावश्यकः किन्तु महत्त्वोद्भूतादिकारणसमवधानं यत्र तत्र दृश्यत्वं तदभावे तदभाव इत्येवास्माकं नियमः तावतैव चक्षुरादौ परमाणुद्व्यणुकयोश्च प्रत्यक्षत्ववारणात् । नच सौगतमतेऽपीदं संभवति परमाणोः महत्त्वाभावेन घटव्यपदेशभाजोऽपि तस्याप्रत्यक्षत्वप्रसङ्गात् अतश्चक्षुस्सन्ततौ सर्वेषामदृश्यत्वं घटसन्ततौ सर्वेषां दृश्यत्वं च पूर्वोक्तनियमाभ्युपगमेनैव त्वयोपपादनीयं तच्च न संभवति पूर्वपरमाणोरदृश्यत्वेन तदुपादेयस्य दृश्यत्वायोगादित्यभिप्रायमुद्घाटयति ॥ **यतो न वयमित्यादिना** ॥ **स्वभावादिति** ॥ उपादानस्वभावादित्यर्थः । उपादानदृश्यत्वादृश्यत्ववशादिति यावत् । एतच्चाभिप्रायोद्घाटनं प्राथमिकशङ्कोत्तरं न युज्यते तत्रानुद्भूतरूपवद्भिः तैलान्तर्गतैरदृश्यदहनावयवैरेव स्थूलदहनोत्पत्तिस्वीकारे स्थूलदहनेऽप्यनुद्भूतरूपापत्त्या तत्प्रत्यक्षस्य दुरुपपादत्वापातादिति बोध्यम् । अत्र केचित् चक्षुरादेर्दृश्यत्ववारणाय तादृशानियमो मतद्वयेऽप्यावश्यक इत्यभिप्रायेणैवादृश्यस्य दृश्यानुपादानत्वादित्युक्तं तदुपरि चोक्तनियमस्वीकारे स्थलविशेषे व्यभिचारः प्रसज्यते अतो

## दिनकरीयम्.

त्पादकत्वे ॥ **तत्र** तादृशदहनोत्पत्तिस्थले ॥ **तदन्तःपातिभिः** अतितप्ततैलान्तःपातिभिः । **स्वभावात्** कारणनैरपेक्ष्यात् ॥ **उद्भूतरूपादीति** ॥ आदिनाऽऽलोकादिपरिग्रहः ॥ **तदभावे** महत्त्वोद्भूतरूपा-

## रामरुद्रीयम्.

दिति महदसमञ्जसम् । तथापि त्वन्मत इत्यादि पूरणान्नानुपपत्तिः तन्मते पूर्वव्यक्तिमात्रस्यैवोत्तरव्यक्तिहेतुतयाऽदृष्टादेः कारणतानभ्युपगमेनोपादानपदस्य कारणमात्रार्थकत्वे क्षतिविरहादिति ध्येयम् ।
**कारणनैरपेक्ष्यादिति** । तथा च त्वन्मतेऽतीन्द्रियत्वं प्रत्यक्षत्वञ्च स्वाभाविकमित्यतीन्द्रियस्यैन्द्रियकपदार्थोत्पादकत्वे चक्षुरादौ कदाचित् दृश्यत्वमापादितं मन्मते तु कारणबलात् त्र्यणुकस्य प्रत्यक्षत्वेऽपि

## मञ्जूषा.

दृश्यत्वमदृश्यत्वं च तत्तद्व्यक्तिस्वभावाधीनमित्यवश्यं नैयायिकेनापि वाच्यं मयापि तथैवोच्यते अतः पूर्वपरमाणूनामदृश्यत्वं तत्स्वभावात् घटात्मकानां च तेषां दृश्यत्वमपि तत्स्वभावादिति न दोष इत्यभिप्रायेणाशङ्क्य परिहरति ॥ नचातितमेति ॥ पुनरपि तथैव शङ्कते नचादृश्येनेति ॥ कथमिति ॥ तथाचोक्तनियमो व्यभिचरित इति भावः मास्तु उक्तनियमः तथापि न वयं दृश्यत्वादृश्यत्वयोस्तत्तद्व्यक्तिस्वभावमात्राधीनत्वं ब्रूमः किन्तु महत्त्वोद्भूतादिकारणसमवधानतदभावाधीनत्वमेव तच्च त्वन्मते न सम्भवतीत्याशयेन समाधत्ते यतो न वयमित्यादिना स्वभावादिति ॥ . तत्तद्व्यक्तिस्वभावादित्यर्थ इति रीत्या पाठयन्ति तत्र दृश्यत्वादृश्यत्वयोस्तत्तद्व्यक्तिस्वभावाधीनत्वं मास्मत्वमाचक्षीथाः न त्वं निग्रन्तासि मामतोऽहमाचक्षे इति यदि सौगतः प्रत्यवतिष्ठेत तदा तत्र हेतुर्न शब्दतो लब्धः किन्तु वस्तुनो दृश्यत्वस्य स्वाभाविकत्वे लोकानां तत्साधनप्रवृत्त्यनुपपत्तिरूपो हेतुः पूरणीय इति न्यूनता बोध्या । अन्येतु अदृश्यस्येत्यादिग्रन्थमस्मदुक्तरीत्यैव व्याकुर्वन्तो यतो न वयमित्यादिग्रन्थे भङ्ग्यन्तरमाश्रयन्ते तद्यथा दृश्यत्वे दृश्योपादेयत्वं तन्त्रमदृश्यत्वे चादृश्योपादेयत्वमित्ययं नियमः सौगतानामेवावश्यकः घटात्मकपरमाणुसन्ताने दृश्यत्वस्य चक्षुरात्मकपरमाणुसन्ताने चादृश्यत्वस्य व्यवस्थायै दृश्यत्वावच्छिन्नं प्रति दृश्यत्वेनादृश्यत्वावच्छिन्नं प्रत्यदृश्यत्वेन चोपादानकारणतायाः वक्तव्यत्वात् नतु नैयायिकानामनुपपन्नत्वादनुपयोगित्वाच्च । कथमनुपपन्नत्वमिति चेदुच्यते नैयायिकमते हि दृश्यत्वादृश्यत्वे अर्थसमाजग्रस्ते नीलघटत्ववत् यथा स्वसामग्र्या घट उत्पद्यमानस्तत्र नीलरूपोत्पादकसामग्र्यां सत्यां नीलो भवत्यसत्यां चानीलो भवतीति नीलघटत्वमनीलघटत्वं चार्थसमाजग्रस्तमिति नकस्यचित्कार्यतावच्छेदकं एवं स्वसामग्र्या उत्पन्नो घटस्सत्यां महत्त्वोद्भूतरूपालोकसंयोगादिरूपदर्शनसामग्र्यां दृश्यो भवत्यसत्यामदृश्यो भवतीति दृश्यत्वमदृश्यत्वं च अर्थसमाजग्रस्तमिति न कस्यचित् कार्यतावच्छेदकं भवितुमर्हति तदिदमनुपपन्नत्वं अत एव चानुपयोगित्वमपि महत्त्वोद्भूतरूपादिकारणसमवधानासमवधानाभ्यामेव दृश्यत्वादृश्यत्वव्यवस्थोपपत्तेः । नत्वेवं सौगतानामनुपपन्नत्वात् उपयोगित्वाच्च तन्मते हि दृश्यत्वादृश्यत्वे नार्थसमाजग्रस्ते यथाह्यस्मिन्मते घटत्वं साहजिकं तथा तन्मते दृश्यत्वमदृश्यत्वं च साहजिकं नह्युत्पन्नः परमाणुः किंचित्कारणमपेक्ष्य दृश्यो भवति तस्य क्षणिकत्वादुत्पद्यमान एव हि कश्चित्स्वभावादृश्य एवोत्पद्यते कश्चिददृश्यः अतो नैयायिकमतसिद्धघटत्वपटत्वतुल्ये सौगतानां दृश्यत्वादृश्यत्वव्यवस्थासिद्धये कयोश्चित्कार्यतावच्छेदके अवश्यमभ्युपेतव्ये । तत्र पारिशेषात् दृश्यत्वं दृश्यत्वविशिष्टोपादेयतावच्छेदकमदृश्यत्वं चादृश्यत्वविशिष्टोपादेयतावच्छेदकमिति वक्तव्यं तदिदमुपपन्नत्वं अत एव चोपयोगित्वमपि न हि त्वन्मते महत्त्वोद्भूतरूपादेः कारणत्वं संभवति तथासति परमाणोः महत्त्वाभावेन घटात्मकपरमाणुसन्ताने कस्यापि प्रत्यक्षत्वानुपपत्तेः । तत्र महत्त्वस्य कारणत्वानङ्गीकारे सर्वेषां परमाणूनां सर्वदा प्रत्यक्षत्वापत्तेः दृश्यत्वावच्छिन्नं प्रति दृश्यत्वेनोपादानकारणतास्वीकारे च सर्वेषां परमाणूनां प्रत्यक्षत्वापत्तिर्वार्यते घटात्मकपरमाणुसन्तानान्तःपातिनां दृश्यत्वमप्युपपद्यत इति वक्तव्यम् । तत्रच घटात्मकपरमाणुसन्तानात् पूर्वेषामदृश्यत्वेन कथं तैर्घटात्मकाः दृश्याः परमाणवः प्रथममुपादीयन्त इत्याशयेनाह । यतो न वयमिति । स्वभावादिति । घटत्वादिवत् कारणसमाजाधीनामिति न वयमाचक्ष्महे इत्यर्थ इति तदेदमपि व्याख्यानं समीचीनमेव पूरणाद्यभावादिति द्रष्टव्यम् । ननु मयापि महत्त्वोद्भूतरूपादेः कारणत्वमिष्यते नातश्चक्षुरादेः प्रत्यक्षत्वं चक्षुराद्यात्मके परमाणुपुञ्जे उद्भूतरूपानङ्गीकारात् त्रसरेण्वाद्यात्मकस्य तु परमाणुपुञ्जस्य प्रत्यक्षत्वमुपपद्यते तत्र महत्त्वानङ्गीकारादिति चेत् तर्हि त्रसरेणोरणुपुञ्जोपादेयत्वं महत्त्वं च सिद्धं महत्त्वे सिद्धे किं तत्र षट्त्वकल्पनया लाघवादेकत्वस्यैवोचितत्वात् एकैकस्मिन् त्रसरेणौ षण्णां महतां द्रव्याणां अनुपलम्भबाधितत्वाच्च तथाचास्मन्मत एव पर्यवसानं अयं चार्थः क्वचित्पुस्तकेषु परमाणोर्महत्त्वाभावादित्यत उपरिष्टादित्थं चेत्यतःप्राग्वियमानेन तदारब्धस्य महतस्त्वद्भिन्नस्य कस्यचिदङ्गीकारे विवादाभावादित्यनेन

## मञ्जूषा.

पाठेन प्रकटीकृतः ॥ कस्याचिदिति ॥ एकस्येत्यर्थः । अत्र सौगतमतानुयायिनः प्रत्यक्षे महत्त्व-मपेक्ष्यत एव महत्त्वं च न परिमाणरूपं गुणान्तरं किन्तु संहतिरूपं तथाच संहताः परमाणव-श्चक्षुषा गृह्यन्ते नच चक्षुराद्यात्मकपरमाणूनामपि चक्षुर्ग्राह्यत्वापत्तिः उद्भूतरूपस्वभावानामेव परमाणूनां चक्षुर्ग्राह्यतास्वीकारात् चक्षुराद्यात्मकाश्च परमाणवो नोद्भूतरूपस्वभावाः । संहतिविशेषा एव वा चक्षु-र्ग्राह्यत्वे तन्त्रम् । चक्षुराद्यात्मकेषु च परमाणुषु न तादृशस्संहतिविशेषः स्वीक्रियते अतः न ते च-क्षुर्ग्राह्या इति वदन्ति अत्र पृच्छामः । घटाद्यात्मकाः परमाणवः सन्निहितस्य पुंसः चक्षुषा यदा गृह्यन्ते तदा कुड्यादिव्यवहितस्य चक्षुषा कुतो न गृह्यन्ते तथा अन्धकारे त्वचा गृह्यमाणाः च-क्षुषा कथं न गृह्यन्ते चक्षुर्ग्राह्यत्वानियामकस्य संहतिविशेषस्य तदानीमपि सत्त्वात् अन्यथा त्वचा ग्राह्यत्वानुपपत्तेः अथ संहतिविशेष इव चक्षुःसंयोगालोकसंयोगावपि चक्षुर्ग्राह्यतानियामकावि-ष्येते इतिचेदतिविरुद्धं भाषसे । क्षणप्रध्वंसिनो हि परमाणवः कदोत्पद्यन्ते कदा च मि-थस्संहन्यन्ते कदा वा चक्षुरालोकाभ्यां कदोत्पन्नाभ्यां संयुज्यन्ते कदा च चक्षुषा गृह्यन्त इति । अथ मन्यसे संहृतिर्नाम न संहन्यमानेभ्यो वस्तुतो अतिरिच्यते धर्मधर्मिणोरैक्यात् तथाच प्रतिक्ष-णमुत्पद्यमानाः परमाणवः केचिदसंहता एव उत्पद्यन्ते केचित् संहताः । तत्र विशेषाः चलनविशेषात्मकाः परस्परसंहताश्च परमाणव संहतान्परमाणूनुपाददते । असंहताश्चलनविशेषात्मकाश्चासंहतान् एवं उत्पद्यमाना एव परमाणवःस्वोपादानसंयुक्तोपादानकैः चलनविशेषात्मकैर्वा तत्कालोत्पत्तिकैरेव चक्षुरालोकव्यपदेशभाग्भिः परमाणुभिः संयुक्ता एवोत्पद्यन्ते एते च संहतिविशेषचक्षुस्संयोगालोकसंयोगास्सहभावमात्रेण प्रत्यक्षमुत्पा-दयन्ति न पूर्ववृत्तितया तथा विशेषयोरपि अथवोत्पन्नाः परमाणवो द्वितीयक्षण एव गृह्यन्ते तत्र संहतिविशेषादीनां विषयस्य च पूर्ववृत्तितयैव निमित्तत्वमिति चेदुच्यते प्रतिक्षणमुत्पद्यमानानां परमाणूनां किं कारणमिति पृच्छ्यते पूर्वपूर्वे परमाणव इति चेत् पूर्वेष्वेकक्षणोत्पन्नेष्वनन्तेषु परमाणुषु कः परमाणुरुत्त-रक्षणमुत्पत्स्यमानानामनन्तानां परमाणूनां मध्ये कस्योपादानमिति विनिगन्तुं शक्यम् । अथ समानजाती-यत्वं उपादानोपादेयभावे तन्त्रमिति चेत् जात्यलीकत्ववादिनः तव समानजातीयत्वस्य दुर्वचत्वात् घट-व्यपदेशमभजमानैः पूर्वपरमाणुभिः तद्व्यपदेशभाजां तेषां प्रथमत. उत्प.दनासंभवात् घटव्यपदेशार्हपरमाणुप्र-र्वर्तनेषु घटत्वजातिरभावेन तैर्घटात्मकपरमाणुपुञ्जारम्भानुपपत्तेश्च । किंच घटव्यपदेशं भजमानैः एतद्देशवर्ति-भिः परमाणुभिः अखिलदेशवर्तिनस्तदुत्तरक्षणभाविनो यावन्तो घटात्मकाः परमाणवः ते सर्वेऽपि कुतो नोपादीयन्ते । अथोच्यते समानदेशत्वमपि तत्र नियामकमिति तदप्यचारु तथासति देशव्यपदेशभा-क्परमाणूनां क्षणिकत्वभङ्गापत्तेः अथ मन्यसे तद्देशात्मकपरमाणुसंयुक्तैः परमाणुभिः तद्देशोपादेयपरमा-णुसंयुक्ता एव परमाणव उपादीयन्ते नेतरे इति तदपि न एतद्देशात्मक-एतत्क्षणोत्पन्नपरमाणूपादे-यत्वस्याप्येतदुत्तरक्षणोत्पन्नदेशान्तरात्मकपरमाणुष्वुपपादनीयतया तत्र तद्विरहबीजस्य दुर्लभत्वादेतद्देशात्मकैः परमाणुभिः एतद्घटोपादानकपरमाणुसंयुक्ता एव परमाणवः उपादीयन्त इत्युक्तौ चान्योन्याश्रयात् । ततश्च सर्वेषां सर्वोपादेयत्वं प्राप्तं एवंच घटात्मकाः परमाणवः उत्पद्यमानास्सन्निहितपुरुषीयचक्षु-रात्मकैरिव कुड्यव्यवहितपुरुषीयचक्षुरात्मकैरपि परमाणुभिस्संयुक्ता एव कुतो नोत्पद्यन्ते तेषामपि त-द्घटोत्पादनसंयुक्तपरमाणूपादेयत्वस्य पूर्वोक्तरीत्या दुर्वारत्वादिति असन्निकृष्टघटचाक्षुषापत्तिरपरिहार्यैव । तस्मादनुपपन्न एव सौगतवादः । इत्थञ्च स एवायं घट इत्यापामरप्रत्यभिज्ञापि साधु सङ्गच्छते ननु मास्तु क्षणिकत्ववादः स्थिरत्ववादेऽवयवातिरिक्तावयवी दुस्साध एव स्थिरा एव परमाणवस्त्रसरेण-व एव वा संहतिविशेषमापन्ना घटादिशब्दैर्व्यवह्रियन्ते इत्यत्र कस्यचिदपि बाधकस्यानुपलम्भात् प्र-त्युतावयव्यतिरिक्तत्वपक्ष एव बाधकमुपलभामहे । तथाहि माषकगुरुत्ववद्द्वयाभ्यवयवाभ्यां द्विमाषक-गुरुत्ववतो द्रव्यान्तरस्यारम्भे माषकगुरुत्ववद्भिश्चतुर्भिर्द्रव्यैस्तुलितैर्यावान् पतनविशेषः तावान् माषकगुरुत्व-वदवयवद्वयारब्धेनाप्यवयविनोत्पद्येत तत्राप्यवयवयोः अवयविनि च संभूय चतुर्माषकगुरुत्वस्य निष्पन्नत्वात्

**तथा च त्रसरेणोर्महत्त्वात्प्रत्यक्षत्वं न तु द्व्यणुकादेस्तदभावात् । न हि त्वन्मतेऽपि सम्भवतीदं परमाणौ महत्त्वाभावात् । इत्थं चावयविसिद्धौ तेषामुत्पादविनाशयोः प्रत्यक्षसिद्धत्वादनित्यत्वम् । तेषां चावयवधाराया अनन्तत्वे मेरुसर्षपयोरपि साम्यप्रसङ्गः अतः क्वचि-**

## प्रभा.

त्वाभ्यां कार्यकारणभावो न संभवतीति भावः । दृश्यत्वादृश्यत्वयोरर्थसमाजग्रस्तत्वमेवोपपादयति ॥ **परन्त्वित्यादिना** ॥ **इदं संभवतीति** ॥ मन्मते द्व्यणुके महत्त्वाभावाददृश्यत्वं त्रसरेणोर्महत्त्वात् दृश्यत्वोपपादनवत् तव मते कारणीभूतपरमाणुपुञ्जस्य महत्त्वाभावाददृश्यत्वोपपादनेऽपि कार्यभूतपरमाणुपुञ्जेऽपि महत्त्वाभावात् दृश्यत्वोपपादनं न संभवतीति भावः । नच कार्यभूतपरमाणुपुञ्जे महत्त्वस्याप्युत्पत्तिस्वीकारात् त्रसरेणाविवात्रापि दृश्यत्वोपपादनमस्त्विति वाच्यम् । अयं घट इत्यादिप्रतीतिविषयताया विनिगमनाविरहेणानेकपरमाणुषु कल्पनापेक्षया तद्विषयताया अतिरिक्तावयविनि स्वीकारस्यैव लघुत्वादिति ॥ **इत्थं चेति** ॥ पूर्वोक्तयुक्त्या चेत्यर्थः ॥ **मेरुसर्षपयोरपीति** ॥ अपिना त्रसरेणुद्व्यणुकयोस्समुच्चयः ॥ **साम्यप्रसङ्ग**

## मञ्जूषा.

तस्मादवयवा एवावयवीति चेन्न सत्स्वेवावयवेषु उत्पन्नः पटः विनष्टः पटः उत्पन्नो घटो विनष्टो घटः उत्पन्नो वृक्षो विनष्टो वृक्ष इति सार्वजनीनप्रतीतिसिद्धोत्पादविनाशविशिष्टस्य वस्तुनो द्रव्यान्तरत्वावश्यंभावात् । नचावयवसंयोगविभागावेव उत्पादविनाशाविति वाच्यं संयोगविभागयोरप्युत्पादविनाशप्रतीतिरनुभवसिद्धतया तत्र संयोगविभागयोर्विषयीकरणेऽनवस्थापत्त्या तत्रान्यविधयोरेवोत्पादविनाशयोर्वाच्यत्वेन एकजातीयप्रतीतेः भिन्नजातीयार्थविषयकत्वकल्पनायाः अन्याय्यत्वात् पटोऽयं न तन्तवस्तन्तव इमे न पट इति प्रतीतेश्चावयवगुरुत्वकार्याधिककार्यजनकत्वस्यावयविगुरुत्वेऽनङ्गीकारेण द्रव्याभावविशिष्टद्रव्यनिष्ठगुरुत्वस्यैव कार्यजनकतास्वीकारेण वा न पूर्वोक्तदोषः । एवंच सिद्धेषु स्थि-

## दिनकरीयम्.

द्यभावे ॥ **तदभावात्** महत्त्वाभावादित्यर्थः । अत्र नास्तिकमतानुयायिनः परस्पराविभक्तपरमाणूनां महत्त्वाभावादप्रत्यक्षत्वेऽपि परस्परसंयुक्तानां पुञ्जात्मनां तेषां प्रत्यक्षे बाधकाभावः । नच महत्त्वाभाव एव बाधकः परस्परविलक्षणसंयोगरूपस्यैव महत्त्वस्य प्रत्यक्षजनकत्वात् । नच परमाणूनां नित्यत्वात् घटादावुत्पत्तिनाशप्रतीत्यनुपपत्तिरिति वाच्यम् । तन्मते पदार्थमात्रस्यैव क्षणिकत्वात्परमाणूनामुत्पत्तिनाशयोः स्वीकारात् । नच परमाणुपुञ्जेषु घटत्वाङ्गीकारे कपालात् घट इति प्रतीत्यनुपपत्तिः परमाणूनां कपालजन्यत्वाभावादिति वाच्यम् । तन्मते कपालस्यापि परमाणुपुञ्जरूपतया घटरूपपरमाणुपुञ्जेषु कपालरूपपुञ्जजन्यत्वस्वीकारात् पुञ्जात्पुञ्जोत्पत्तिरिति तेषां सिद्धान्तादित्याहुः । तन्न । घट इत्यादिप्रतीतिविषयताया अनेकपरमाणुषु कल्पने गौरवादित्यवयवातिरिक्तावयविसिद्धिरिति दिक् ॥ **मेरुसर्षपयोरिति** ॥ अपिशब्दः साम्यप्रसङ्ग इत्युत्तरं सम्बध्यते तेन

## रामरुद्रीयम्.

तदभावात् द्व्यणुकस्यातीन्द्रियत्वसम्भवाददृश्यस्य दृश्यकारणत्वेऽपि न क्षतिरिति भावः ॥ **विलक्षणसंयोगेति** ॥ विजातीयतेजस्संयोगेत्यर्थः । तच्च वैजात्यं चक्षुःपिशाचादिसंयोगव्यावृत्तमेवाङ्गीकरणीयमतो न तेषां परस्परसंयोगेन प्रत्यक्षत्वापत्तिरिति भावः । एवकारेण तदतिरिक्तमहत्त्वास्वीकारः सूचितः अवयविमात्रस्यैवानङ्गीकारादाकाशकालाद्यप्रत्यक्षपदार्थानामप्यनङ्गीकाराच्च तन्महत्त्वेऽव्याप्त्यसम्भवादिति ध्येयम् ॥ **उत्पत्तिस्वीकारादिति** ॥ न चैवं प्रतिक्षणं घटादावुत्पत्तिविनाशप्रत्यक्षापत्तिरिति वाच्यम् । घटधाराया दीपकधारावच्छिन्नत्वेन तत्प्रत्यक्षासम्भवात् प्रत्यक्षपुञ्जस्य सजातीयपुञ्जान्तरपूर्वत्वाभावे नाशस्य तादृशपुञ्जान्तरानुत्तरत्वे चोत्पत्तेः प्रत्यक्षसम्भवादिति भावः ॥ **सिद्धान्तादिति** । कपालरूपपुञ्जद्वयात् घटरूपैकपुञ्जोत्पत्तिरिति तत्सिद्धान्तादित्यर्थः ॥ **दिगिति** ॥

द्विश्रामो वाच्यः यत्र तु विश्रामस्तस्यानित्यत्वेऽसमवेतकार्योत्पत्तिप्रसङ्गात्तस्य नित्यत्वम् ।

## प्रभा.

इति ॥ परस्परानिरूपितोत्कर्षापकर्षान्यतरशून्यपरिमाणवत्त्वप्रसङ्ग इत्यर्थः । तत्समवेतपरिमाणावधिकोत्कर्षाश्रयतत्समवेतपरिमाणसजातीयपरिमाणवत्त्वे तदारम्भकावयवपर्याप्तसंख्याधिकसंख्यापर्याप्त्यधिकरणावयवारब्धत्वस्यैव नियामकतयाऽवयवधाराया अनन्तत्वे उत्कर्षापकर्षनियामकासंभवान्मेरुसर्षपयोरुत्कर्षापकर्षान्यतराश्रयपरिमाणवत्त्वानुभवापलापप्रसङ्गः । त्रसरेणुद्व्यणुकयोस्समानसंख्याकावयवारब्धत्वेन त्रसरेणोरिव द्व्यणुकस्यापि महत्त्ववत्त्वापत्त्या चाक्षुषत्वप्रसङ्गश्चेति भावः । नच मेर्ववयवसर्षपावयवानां परिमाणतारतम्यात् प्रचयसंयोगतारतम्याच्च न तयोस्साम्यप्रसंग इति वाच्यं मेर्ववयवसर्षपावयवयोरप्यनन्तावयवकत्वेन तत्परिमाणतारतम्यासंभवात् प्रचयतारतम्यस्याप्यवयवगतसंख्याविशेषनियम्यत्वेनोभयावयवानामानन्त्ये संख्याविशेषासंभवेन प्रचयतारतम्यासंभवाच्च ॥ अत इति ॥ पूर्वोक्तातिप्रसङ्गपरिहारार्थेत्यर्थः ॥ क्वचिदिति ॥ कुत्रचिदित्यर्थः ॥ वाच्य इति ॥ तथाच यत्र विश्रामः तत्प्रभृति सर्षपारंभकावयवेषु पर्याप्ता या संख्या तदधिकसंख्यायाः विश्रामप्रभृति मेर्ववयवारम्भकावयवेषु पर्याप्तत्वान्नोक्तदोषावकाश इति भावः । नन्ववयवधारायाः विश्रामाङ्गीकारेऽपि विश्रामाश्रयस्य नित्यत्वे किं प्रमाणमित्यत आह ॥ यत्र-त्विति ॥ असमवेतकार्योत्पत्तिप्रसङ्गादिति ॥ भावकार्यस्यासमवेतत्व-

## मञ्जूषा.

रूपेव सर्वेष्ववयवेष्ववयविषु च तेषामेव रूपचलनाद्यात्मकत्वमपि प्रत्युक्तं सत्येव धर्मिणि घटपरमाण्वादौ पाकनोदनादिना रूपचलनाद्युत्पादविनाशयोरनुभवसिद्धत्वादिति सर्वं समञ्जसम् ॥ तेषांचेति ॥ अवयवधारायाः अवयवपरम्परायाः ॥ अनन्तत्वे निरवयवघटितत्वाभावे ॥ क्वचिदिति ॥ अवयवधारायाः किंचिन्निरूपितनिरवयवघटितत्वं वाच्यमित्यर्थः ॥ यत्र विश्राम इति ॥ अवयवधारानिष्ठनिरवयवघटितत्वं यन्निरूपितमित्यर्थः तादृशावयवधाराघटकं यन्निरवयवमिति यावत् । विश्रामनिरूपकस्य

## दिनकरीयम्.

च द्व्यणुकस्य सावयवारब्धत्वे महत्त्वापत्तिः समुच्चीयते । साम्यं परिमाणतारतम्याभावः परिमाणकारणीभूताया अवयवसङ्ख्याया उभयत्र साम्यादिति भावः । नच मेर्ववयवानां सर्षपतुल्यपरिमाणवत्त्वं न तु सर्षपावयवानां सर्षपतुल्यपरिमाणवत्त्वमित्यवयवपरिमाणविशेषाद्विशेष इति वाच्यम् । मेर्ववयवसर्षपावयवयोरप्यनन्तावयवत्वेन तत्परिमाणतारतम्याभावस्याप्यापादनीयत्वात् । नच मेरुसर्षपयोरवयवगतप्रचयाख्यसंयोगविशेषात्तद्विशेष इति वाच्यं प्रचयविशेषस्यापि सङ्ख्याविशेषनियाम्यत्वेन सङ्ख्याविशेषाभावे तद्विशेषानुपपत्तेरिति । ननु तथापि विश्रामाश्रयस्य नित्यत्वे मानाभाव इत्यत आह ॥ यत्र त्विति ॥ असमवेतेति ॥ असमवेतभावकार्योत्पत्तिप्रसङ्ग इत्यर्थः । ननु त-

## रामरुद्रीयम्.

त्र्यणुक एवावयवधाराया विश्रान्तिरिति दीधितिकारमते त्र्यणुकपुञ्जस्य केशसमूहवत् प्रत्यक्षसम्भवेऽपि नानात्र्यणुकानां तादृशप्रतीतिविषयत्वकल्पने गौरवादेवातिरिक्तावयविसिद्धिरिति सूचितम् ॥ महत्त्वापत्तिरिति ॥ अपकृष्टमहत्त्वं प्रति स्वाश्रयसमवेतसमवेतत्वसम्बन्धेन संख्यायाः कारणत्वादिति भावः ॥ कारणीभूताया इति ॥ परिमाणोत्कर्षापकर्षप्रयोजिकाया इत्यर्थः ॥ साम्यादिति ॥ साम्यमत्र उभयावयवनिष्ठाभावप्रतियोगित्वमेव न त्वेकजातीयत्वमवयवधाराया अविश्रान्तत्वे तद्गतसङ्ख्याया एवासिद्धेरिति ध्येयम् ॥ संयोगविशेषादिति ॥ मुष्टिपरिमिततूलस्य यथा प्रचयविशेषेण परिमाणतारतम्यमनुभवसिद्धं तथा मेरोरवयवेषु अत्यन्तशिथिलसंयोगात् मेरुपरिमाणस्योत्कर्षः सर्षपावयवेषु च किञ्चिच्छिथिलसंयोगात्तत्परिमाणस्यापकर्ष इति भावः ॥ सङ्ख्याविशेषनियम्यत्वेनेति ॥ यद्यप्यवयवानां सङ्ख्यासाम्येऽपि प्रचयविशेषेण परिमाणतारतम्यमनुभूयते तथापि सर्षपावयवेषु दृढ-

**महत्परिमाणतारतम्यस्य गगनादौ विश्रान्तत्वमिवाणुपरिमाणतारतम्यस्यापि कचिद्विश्रान्तत्वमस्तीति तस्य परमाणुत्वसिद्धिः । न च त्रसरेणावेव विश्रामोऽस्त्विति वाच्यम् । त्रसरेणुः सावयवः चाक्षुषद्रव्यत्वात् घटवदित्यनुमानेन तदवयवसिद्धौ त्रसरेणोरवयवाः सावयवाः महदारम्भकत्वात् कपालवदित्यनुमानेन तदवयवसिद्धेः । नचेदमप्रयोजकं अपकृष्टमहत्त्वं**

## प्रभा.

प्रसङ्गादित्यर्थः । समवायिकारणाभावादिति भावः । विश्रामाश्रयस्याणुत्वं व्यवस्थापयति ॥ **महत्परिमाणेति** ॥ अपकर्षानाश्रयमहत्त्वस्येत्यर्थः ॥ **गगनादाविति** ॥ आकाशादिचतुष्टय इत्यर्थः ॥ **विश्रान्तत्वमिति** ॥ वृत्तित्वमित्यर्थः ॥ **अणुपरिमाणेति** ॥ अपकर्षानाश्रयाणुपरिमाणस्यापीत्यर्थः ॥ **कचित्** कुत्रचित् ॥ **विश्रान्तत्वं** वृत्तित्वमस्तीत्यवश्यमङ्गीकार्यमित्यर्थः । परिमाणस्य गुणत्वादिति भावः ॥ **इतीति** ॥ इति हेतोरित्यर्थः ॥ **तस्येति** ॥ विश्रामाश्रयस्येत्यर्थः ॥ **त्रसरेणुस्सावयव इति** ॥ अत्र सावयवत्वं समवेतद्रव्यत्वं न द्रव्यसमवायिकारणकद्रव्यत्वं तस्य कारणताघटितत्वेन गौरवात् तावन्मात्रेणेष्टसिद्धेश्च ॥ **चाक्षुषद्रव्यत्वादिति** ॥ अत्र चाक्षुषत्वं चाक्षुषत्वावच्छिन्ननिरूपितलौकिकविषयतावत्त्वं नतु चक्षुर्जन्यप्रत्यक्षनिरूपितलौकिकविषयतावत्त्वं गौरवात् प्रयोजनाभावाच्च । घटत्वादौ व्यभिचारवारणाय द्रव्यत्वनिवेशः । यदिच द्रव्यवृत्तिलौकिकविषयतासंबन्धेन चाक्षुषत्वावच्छिन्नं द्रव्यवृत्तिस्वरूपसंबन्धेन चाक्षुषत्वावच्छिन्ननिरूपितलौकिकविषयतावत्त्वं केवलस्वरूपसंबन्धेन चक्षुस्संयोगेतराप्रयोज्यलौकिकविषयतावत्त्वं वा चाक्षुषत्वशब्दार्थं इत्युच्यते तदा हेतुकोटौ पृथक् द्रव्यत्वविशेषणं न देयमिति हृदयम् ॥ **त्रसरेणवयवा इति** ॥ अत्र समवायसंबन्धेन त्रुटिमत्त्वं पक्षतावच्छेदकं नतु त्रसरेणुसमवायिकारणत्वं गौरवात् प्रयोजनाभावाच्च ॥ **सावयवा इति** ॥ अत्रापि पूर्ववत्समवेतद्रव्यत्वं समवेतत्वमात्रं वा सावयवत्वशब्दार्थः तावतैवेष्टसिद्धेः ॥ **महदारम्भ-**

## मञ्जूषा.

परमाणुसंज्ञाप्रवृत्तिनिमित्तं अपकर्षानाश्रयाणुत्वं दर्शयति ॥ **महत्परिमाणतारतम्यस्येति** ॥ महत्परिमाणनिष्ठस्यापकर्षावधित्वसमानाधिकरणस्योत्कर्षस्येत्यर्थः ॥ **गगनादौ** गगनादिपरिमाणे ॥ अवच्छेद्यत्वं सप्तम्यर्थः ॥ **विश्रान्तत्वमिव** उत्कर्षानवधित्वसामानाधिकरण्यमिव ॥ **अणुपरिमाणतारम्यस्य** अणुपरिमाणनिष्ठस्यापकर्षावधित्वसमानाधिकरणस्योत्कर्षस्य **कचित्** किंचिदवच्छेदेन **विश्रान्तत्वं** उत्कर्षानवधित्वसामानाधिकरण्यं **अस्ति** अङ्गीकार्यम् । अन्यथा उत्कर्षापकर्षपरम्परायाः अनवस्थितत्वापातादिति भावः । यद्यपि उत्कर्षः अपकर्षावधित्वसमानाधिकरण एवेति तत्र तत्सामानाधिकरण्यविशेषणमनर्थकं तथापि तारतम्यशब्देन लोकानां स्वरसतो न्यूनाधिकभाव एव प्रतीयत इति तदनुरोधेनापकर्षावधित्वसमानाधिकरणोत्कर्षः तारतम्यशब्दार्थः उक्तः ॥ **इति** अतो हेतोः ॥ **परमाणुत्वसिद्धिरिति** ॥ परमाणुसंज्ञाप्रवृत्तिनिमित्तभूतेत्यादिः । अस्मद्गुरुचरणास्तु विश्रामाश्रयस्याणुत्वं साधयति महत्परिमाणेति अपकर्षानाश्रयमहत्त्वस्येत्यर्थः ॥ गगनादाविति आकाशादिचतुष्टय इत्यर्थः ॥ विश्रान्तत्वमिति वृत्तित्वमित्यर्थः । अणुपरिमाणेति अपकर्षानाश्रयाणुपरिमाणस्यापि इत्यर्थः । कचित् कुत्रचित् । विश्रान्तत्वं वृत्तित्वं अस्तीति अवश्यमङ्गीकार्यमित्यर्थः । परिमाणस्य गुणत्वादिति भाव इति व्याचक्रुः । एतदेव नीलकण्ठस्याप्यभिप्रेतं महत्परिमाणेत्यादिग्रन्थस्य । ननु तस्य नित्यत्वसिद्धावप्यणुत्वे किं मानमित्यत आहेति तेनावतरणिकादानात् । दीधितिकृन्मतमाशङ्क्य निराकरोति ॥ **नचेति** ॥ विश्राम इत्यस्याव-

## दिनकरीयम्.

स्य नित्यत्वसिद्धावप्यणुत्वे किं मानमित्यत आह ॥ **महत्परिमाणेति** ॥ **चाक्षुषद्रव्यत्वादि-**

## रामरुद्रीयम्.

तरसंयोगेनापि परिमाणापकर्षसम्भव इत्यत्र तात्पर्यम् । वस्तुतो मेरोरवयवेषु सर्षपावयवापेक्षयोत्कृ

## प्रभा.

**कत्वादिति** ॥ अत्र महदारम्भकस्य भाव इति व्युत्पत्त्या महदारम्भकनिष्ठासाधारणधर्म एव महदारम्भकत्वशब्दार्थ इति लभ्यते । तथाच महत्पदार्थनिष्ठसमवायसंबन्धावच्छिन्नाधेयतानिरूपिताधिकरणत्वस्यापि आरम्भकपदोत्तरश्रूयमाणभावप्रत्ययार्थत्वलाभेन तस्यैव हेतुत्वमङ्गीक्रियते नतु महत्पदार्थनिरूपितसमवायिकारणत्वस्य लघुधर्मावच्छिन्नेन साधनसंभवे गुरुधर्मावच्छिन्नेन साधनस्यानुचितत्वात् तादृशगुरुधर्मघटकयावत्पदार्थोपस्थितिकल्पनाच्चेति ध्येयम् । अत्र त्रसरेण्ववयवपक्षकस्थले द्व्यणुके चाक्षुषत्वरूपहेतोरभावेन स्वरूपासिद्ध्यापत्त्या महदारम्भकत्वहेत्वन्तरानुसरणं । यद्यपि त्र्यणुकपक्षस्थलेऽपि तस्यैव हेतुत्वसंभवे हेत्वन्तरानुसरणमनुचितं तथापि महदारम्भकत्वरूपहेतोर्ज्ञानं महत्पदार्थज्ञानमन्तरा महत्पदार्थे प्रमाणोपन्यासमन्तरा च न भवतीति महत्पदार्थे प्रात्यक्षिकज्ञानस्य महत्पदार्थे प्रत्यक्षप्रमाणस्य च संपादनीयतया तदपेक्षया लाघवेन त्रसरेणावेव .चाक्षुषत्वावच्छिन्ननिरूपितलौकिकविषयतावत्त्वरूपं प्रत्यक्षप्रमाणगम्यत्वमुपपाद्य तस्यैव हेतुत्वमङ्गीकृतमिति ध्येयम् । यद्यपि चाक्षुषद्रव्यत्वहेतुना सावयवद्रव्यारब्धत्वसाधनेनैवेष्टसिद्धेरनुमानद्वयं व्यर्थं तथाप्युपायस्योपायान्तरादूषकत्वान्न वैयर्थ्य-

## मञ्जूषा.

यत्रधारायाः इत्यादिः ॥ **अपकृष्टमहत्त्वं प्रतीति** ॥ नन्वपकृष्टमहत्त्वं प्रत्यनेकद्रव्यत्वस्य कथं प्रयोजकत्वं तावता वा कथं उक्तयोरनुमानयोः अप्रयोजकत्वशङ्कानिरास इति चेत् अत्र नीलकण्ठः त्रसरेणुमहत्त्वं सासमवायिकारणकमपकृष्टमहत्त्वात् घटमहत्त्ववदिति अनुमानेन त्रसरेणुमहत्त्वं प्रति किंचिदसमवायिकारणं सिध्यत् परिशेषात् संख्यारूपमेव सिध्यति । ततश्च त्रसरेणोर्यदि सावयवत्वं न स्यात् तर्हि असमवायिकारणविरहेण तत्र. महत्त्वोत्पादासंभवेन तस्य चाक्षुषद्रव्यत्वं न स्यात् द्रव्यचाक्षुषे महत्त्वस्य कारणत्वादिति हेतूच्छित्तिः अनुकूलतर्कः । एवंचानेकद्रव्यत्वे सावयवत्वरूपे सत्येव स्वाश्रयसमवेतत्वसंबन्धेन संख्यारूपमसमवायिकारणं संभवतीति तस्यापकृष्टमहत्त्वप्रयोजकत्वमिति मन्यते मुक्तावलीग्रन्थस्य चेममर्थं कण्ठतोऽभिधातुं नीलकण्ठो लज्जते । किन्तु सूचयति कुतो लज्जा कथं वा सूचनं कथं वा तस्य लज्जा त्वया विज्ञाता सा च लज्जा किं प्रमापूर्विका उत भ्रमपूर्विकेति । उच्यते द्वे अनुमाने मुक्तावल्यामुक्ते द्व्यणुकसाधकमेकं परमाणुसाध-

## दिनकरीयम्.

ति ॥ आत्मनि व्यभिचारवारणाय चाक्षुषपदम् । घटाभावे व्यभिचारवारणाय द्रव्यपदम् । **तदवयवसिद्धाविति** ॥ त्रसरेण्ववयवसिद्धावित्यर्थः ॥ **तदसिद्धेरिति** ॥ अवयवधाराया असिद्धेरित्यर्थः । अत्र नव्याः त्रसरेणोरवयवाः सावयवा इत्याद्यनुमानयोरुक्तयोरप्रयोजकत्वेन त्रुटावेव विश्रामः । नच चाक्षुषं प्रति महत्त्वं कारणं तथा च त्रुटौ महत्त्वमावश्यकं तच्चावयवसङ्ख्याजन्यमिति अवयवं विना नोत्पद्यते इत्यनुकूलतर्कसत्त्वान्नाप्रयोजकत्वं द्व्यणुकसाधकानुमानस्येति वाच्यम् । त्रसरेणुमहत्त्वस्य नित्यत्वस्वीकारेणोक्ततर्कानवतारात् । नचाणुव्यवहारस्याणुपरिमाणनिबन्धनतया तदाश्रयद्रव्यसिद्धिरावश्यकीति वाच्यम् । तस्यापकृष्टपरिमाणनिबन्धनत्वात् महत्यपि महत्तमादणुव्यवहारात् । नचैवं त्रसरेणुपुञ्ज एवास्त्ववयवीति वाच्यम् । विशकलितेष्वपि तेषु घट इत्यादिप्रत्ययप्रसङ्गात् । नच तत्संयोगवृत्त्येव घटत्वं घटो द्रव्यमित्यादिप्रतीतौ च परम्परया तद्भानमिति वाच्यम् । सम्भवति सा-

## रामरुद्रीयम्.

ष्टप्रचयाङ्गीकारे सर्षपापेक्षया मेरौ मार्दवापत्तिरेव बाधिकेति विभावनीयम् ॥ **असमवेतेत्यादि** ॥ ननु ध्वंसस्यासमवेतकार्यस्य सिद्धान्तिभिरप्युत्पादाङ्गीकारादापत्तिरियमसङ्गतेत्यत आह ॥ **असमवेतभावेति** ॥ **मूलेऽनेकद्रव्यवत्त्वस्येति** ॥ स्वसमवेतसमवेतत्वसम्बन्धेन नानाद्रव्यवत्त्वस्येत्यर्थः । ननु समवेतत्वसम्बन्धेन तथात्वं तदर्थस्तथासति परमाणुसाधकानुमानस्याप्रयोजकत्वशङ्काया अनिवृत्तेरिति ध्येयम् ॥ **परम्परयेति** ॥ घटो द्रव्यमित्यादिप्रतीतौ स्वाश्रयसमवेतत्वसम्बन्धेन घटत्वभा-

प्रत्यनेकद्रव्यत्वस्य प्रयोजकत्वात् । नचैवं क्रमेण तदवयवधारापि सिध्येदिति वाच्यम् । अनवस्थाभयेन तदसिद्धेरिति ॥

**सा च त्रिधा भवेद्देहमिन्द्रियं विषयस्तथा ॥ ३७ ॥**

**सा चेति** ॥ सा कार्यरूपा पृथिवी त्रिविधा । शरीरेन्द्रियविषयभेदादित्यर्थः ॥ ३७ ॥

## प्रभा.

मिति मूलकाराभिप्राय इति प्रतिभाति ॥ **अनेकद्रव्यत्वस्येति** ॥ अणुभिन्नद्रव्यत्वस्येत्यर्थः ॥ **प्रयोजकत्वादिति** ॥ नियतपूर्ववृत्तित्ववत्त्वादित्यर्थः ॥ **तदसिद्धेरिति** ॥ अवयवधाराया असिद्धेरिति भावः । नव्यास्तु उक्तानुमानयोरप्रयोजकत्वेन त्रुटावेव विश्रामः नच तस्य चाक्षुषत्वानुरोधेन महत्त्वस्य वक्तव्यतया तादृशमहत्त्वमवयवसंख्याजन्यमिति अवयवं विना नोपपद्यत इति अ-

## मञ्जूषा.

कं द्वितीयं तदुपरि नचाप्रयोजकमित्याशङ्कयेदमुच्यते अपकृष्टमहत्त्वं प्रतीत्यादि अत्रच सन्दर्भे द्वयोरप्यनुमानयोरनुकूलतर्कलाभेन भवितव्यम् । नच नीलकण्ठाभिमतार्थरीत्या तथालाभः परमाण्वनुमाने तदलाभात् अतो लज्जा एवं परमाणुसाधनमुक्तावलीव्याख्यानानुपदमेवात्र नव्या इत्यारभ्य अनुमानयोरुक्तयोरप्रयोजकत्वेन त्रुटावेव विश्रामः नच चाक्षुषं प्रति महत्त्वं कारणं तथा च त्रुटौ महत्त्वमावश्यकं तच्चावयवसंख्याजन्यमित्यवयवं विना नोपपद्यत इत्यनुकूलतर्कसत्त्वान्नाप्रयोजकत्वं द्वयणुकसाधकानुमानस्येति वाच्यम् त्रसरेणुमहत्त्वस्य नित्यत्वस्वीकारेणोक्ततर्कानवकाशादिति लिखितं नीलकण्ठेन । नचापकृष्टमहत्त्वत्वेन सासमवायिकारणकत्वसिद्धिरिति वाच्यं अप्रयोजकत्वात् । अन्यथा महत्त्वत्वहेतुना गगनपरिमाणेऽपि सासमवायिकारणकत्वसिद्ध्यापत्तेरिति भावः । अत्र मु-

## दिनकरीयम्.

क्षात्सम्बन्धविषयत्वे परम्परासम्बन्धविषयकत्वकल्पने गौरवादित्याहुः । ननु परमाणुत्रयेण कुतो न द्रव्यान्तरोत्पत्तिः परमाणुद्वयेन द्वयणुकवत् एवं द्वयणुकद्वयेन द्रव्यान्तरोत्पत्त्यापत्तिस्त्रिभिर्द्वयणुकैः त्र्यणुकवदिति चेन्न । प्रमाणाभावेन तादृशद्रव्यासिद्धौ परमाणुत्रये द्वयणुकद्वये च द्रव्यारम्भकसंयोगाकल्पनात् । अत्रेदं चिन्त्यम् । त्रिभिः परमाणुभिरेव त्र्यणुकमस्तु परमाणुभ्यामनारम्भस्तु सिद्धान्तिनां द्वयणुकाभ्यामनारम्भ इव मानाभावात् फलबलेन त्रयाणामेव युगपद्द्रव्यारम्भकसंयोगकल्पनात् । वस्तुतो गवाक्षरन्ध्रे दृश्यमानानां द्वयणुकत्वमेव युक्तमणुद्वयारब्धत्वे लाघवादिति । मूलस्थस्य देहमिन्द्रियं विषयस्तथेत्यस्य त्रैविध्ये हेतुपरत्वं सूचयितुमर्थमाह ॥ **सा कार्यरूपेति** ॥ ३७ ॥

## रामरुद्रीयम्.

नमित्यर्थः । आहुरित्यनेन विलक्षणसंयोगविशिष्टत्र्यणुकपुञ्ज एव घटत्वाङ्गीकारे नैष दोष इत्यस्वरसः सूचितः ॥ **प्रमाणाभावेनेति** ॥ तादृशद्रव्ये इत्यादिः । त्र्यणुकस्य प्रत्यक्षसिद्धतया तदन्यथानुपपत्त्या द्वयणुकासिद्धिसम्भवेऽपि परमाणुत्रयारब्धद्रव्यादेः सिद्ध्यसम्भवादिति भावः ॥ **लाघवादिति** ॥ न चैवं तस्य त्र्यणुकपदवाच्यत्वानुपपत्तिरिति वाच्यम् । अप्रत्यक्षद्वयणुकवासनावासितैरेव तथा व्यवह्रियमाणत्वात् । जालसूर्यमरीचिस्थं यत्सूक्ष्मं दृश्यते रजः । प्रथमं तत्प्रमाणानां त्रसरेणुरिति स्मृतः ॥ इति स्मृतौ त्रसरेणुपदस्यैव प्रयोगात् तत्पदं च मण्डपादिवदवत्केवलरूढमेव । यद्वा त्रिभिस्साहितो रेणुस्त्रसरेणुः हितलोप आर्ष इत्येव तत्रास्तु व्युत्पत्तिरिति भावः । एतदपेक्षयापि त्र्यणुकनित्यतायामेव लाघवं परमाण्वादिकल्पने गौरवादितिध्येयम् । **हेतुपरत्वं** कार्यपरत्वम् । परमाणोर्विषयत्वेऽपि विषयस्तथेत्यस्य जन्यविषयार्थकतया परमाणोस्तथात्वं नास्त्येव अत एव कारिकायाममेऽपि विषयो द्वयणुकादिस्तु ब्रह्माण्डान्त इत्येवं वक्ष्यतीति भावः ॥ ३७ ॥

## प्रभा.

नुकूलतर्कसत्त्वान्नाप्रयोजकत्वमिति वाच्यं त्रसरेणुमहत्त्वस्य नित्यत्वस्वीकारात् नच अणुरिति व्यवहारात् अणुत्वाश्रयद्रव्यसिद्धिरिति वाच्यं तस्यापकृष्टपरिमाणनिबन्धनत्वात् महत्यपि महत्तमादणुव्यवहारात । नचैवं त्रसरेणुपुञ्ज एवावयवीति वाच्यं विशकलितेष्वपि तेषु घट इति प्रतीत्यापत्तेः नच तत्संयोगवृत्त्येव घटत्वं घटो द्रव्यमिति प्रतीतौ च परम्परया तद्भानमिति वाच्यं संभवति साक्षात्संबन्धविषयकत्वे परम्परासंबन्धविषयकत्वकल्पने गौरवादित्याहुः । तन्न अतिरिक्ताणोरनङ्गीकारे तत्प्रत्यक्षापत्त्यभावेन प्रत्यक्षे महत्त्वस्य कारणत्वविलोपप्रसङ्गात् अणुरिति व्यवहारस्यापकृष्टपरिमाणनिबन्धनत्वे महानणुरिति व्यवहारापत्तेः महत्वातिरिक्ताणुत्वानङ्गीकारे परमाणुरिति व्यवहारानुपपत्तेश्च तस्याणुत्वावधिकोत्कर्षाश्रयाणुत्वनिबन्धनत्वादिति हृदयम् । ननु परमाणुत्रयेण कुतो न द्रव्यान्तरोत्पत्तिः परमाणुद्वयेन द्व्यणुकवत् अविभुद्रव्यत्वान्निरवयवत्वाच्च परमाणुत्रयस्य संयोगासंभवेऽपि द्व्यणुकद्वयेन द्रव्यान्तरोत्पत्तिरस्तु त्रिभिः द्व्यणुकैस्त्र्यणुकवादिति चेन्न प्रमाणाभावेन तादृशद्रव्यासिद्धौ द्व्यणुकद्वयेऽपि द्रव्यारम्भकसंयोगाकल्पनात् केचित्तु त्रिभिः परमाणुभिरेव त्र्यणुकमस्तु परमाणुभ्यामनारम्भस्तु सिद्धान्तिनां द्व्यणुकाभ्यामानारम्भ इव मानाभावात् फलबलेन त्रयाणामेव युगपत् द्रव्यारम्भकसंयोगकल्पनात् । वस्तुतस्तु गवाक्षरन्ध्रे दृश्यमानानां द्व्यणुकत्वमेव युक्तं अणुद्वयारब्धत्वे लाघवादिति मुक्तावलीखण्डनमाहुः । तदसत् त्रयाणां परमाणूनां संयोगासंभवस्योक्तत्वात् गवाक्षरन्ध्रदृश्यमानस्य द्व्यणुकत्वं न संभवति द्व्यणुके महत्वाभावात् महत्वस्यावयवगतबहुत्वसंख्याजन्यत्वात् महत्त्वं प्रति एकत्वान्यसंख्यारूपबहुत्वसंख्याया हेतुत्वस्य सिद्धान्तविरुद्धत्वात् एकस्मात् द्रव्योत्पत्त्यभावेन द्वाभ्यामेवोत्पत्तेर्वक्तव्यतयाऽतिप्रसङ्गाभावेनावयविगतैकत्वस्य हेतुत्वेऽपि क्षत्यभावात् बहुत्वस्य हेतुत्वानुपपत्तेश्चेति । देहमिन्द्रियं विषयस्तथेति मूलस्य त्रैविध्यप्रयोजकपरत्वं सूचयितुं अर्थमाह ॥ **सा कार्यरूपेति** ॥ **त्रिविधेति** ॥ प्रकारत्रयान्यतमवतीत्यर्थः । पृथिव्याः प्रकारत्रयान्यतमवत्त्वं कुत इत्याकाङ्क्षायां प्रयोजकमाह॥ **शरीरेति** ॥ अत्र शरीरादिशब्दानां शरीरत्वादिलाक्षणिकत्वं बोध्यं लुप्तषष्ठ्या वर्तमानत्वं शरीरादिशब्दानां वा शरीरत्वादिवृत्तिलाक्षणिकत्वं भेदपदोत्तरश्रूयमाणपञ्चम्याः प्रयोज्यत्वमर्थः । तस्य व्युत्पत्तिवैचित्र्येण विधापदार्थैकदेशप्रकारत्रये अन्वयः । तथाच शरीरत्वेन्द्रियत्वविषयत्ववृत्तिभेदप्रयोज्यप्रकारत्रयवती कार्यरूपा पृथिवीति वाक्यार्थः । शरीरत्वेन्द्रियत्वविषयत्वानां भेदसत्त्व एव पृथिव्यास्त्रैविध्यं शरीरत्वादीनामैक्ये त्रैविध्यं नोपपद्यत इत्यन्वयव्यतिरेकाभ्यां शरीरत्वेन्द्रियत्वविषयत्ववृत्तिभेदसत्ताधीनसत्ताकत्वरूपतादृशभेदप्रयोज्यत्वस्य प्रकारत्रये सत्त्वात् प्रयोज्यप्रयोजकभावो नानुपपन्न इति हृदयम् ॥ ३७ ॥

## मञ्जूषा.

क्तावल्यामुक्तयोरुभयोरप्यनुमानयोरप्रयोजकत्ववारणे कृते तन्निरासकेऽत्र नव्या इत्यादिग्रन्थेऽपि तस्यैव प्रथमतस्समाधेयता स्यात् नत्वेवमस्ति अतोऽत्र नचेत्यादिना शङ्किता रीतिरेव मुक्तावल्यभिप्रेतेति नीलकण्ठाभिप्रायोऽवगम्यते एवं नव्यमतप्रदर्शनानन्तरं तेनैवात्रेदं बोध्यम् त्रिभिः परमाणुभिरेव त्र्यणुकमस्तु । परमाणुभ्यामनारम्भस्तु सिद्धान्तिनां द्व्यणुकाभ्यामनारम्भ इव मानाभावात् फलबलेन त्रयाणामेव युगपद्द्रव्यारम्भकसंयोगकल्पनात् वस्तुतो गवाक्षरन्ध्रे दृश्यमानानां द्व्यणुकत्वमेव युक्तमणुद्वयारब्धत्वे लाघवादिति लिखितम् । तस्य चायमर्थः त्रसरेणुसमवेतमहत्त्वस्य यदि संख्याजन्यत्वमावश्यकमिति निर्बध्यते तदा द्वित्वसंख्यायां महत्त्वजनकत्वासंभवेन तज्जनकत्रित्वसंख्याश्रयतया केचिदवयवाः सिद्धाः तेषामवयवास्तु कथं सिध्येयुः तत्र बीजाभावात् तथाच त्रसरेणुमहत्त्वजनकत्रित्वाश्रया एत एव परमाणव इति । सांप्रदायिकास्तु अमहतामनवयवानां त्रयाणां युगपत् संयोगासंभवं मनसाभिसंदधते अतो निरवयवैस्त्रिभिरणुभिर्द्रव्यारम्भो न संभवतीति द्वाभ्यामेव निरवयवाभ्यामणुभ्यां द्रव्यारम्भस्तच्च द्रव्यं न त्रसरेणुर्भवितुमर्हति महत्त्वजनकत्रित्वासंभवात् । द्व्यणुकन्त्वेकैकावयवावच्छेदेन युगपत् द्वाभ्यां संयोगमर्हति इति त्रिभिर्द्व्यणुकैस्त्रसरेणुरारभ्यत इति

## मञ्जूषा.

मन्यन्ते तत्राह वस्तुत इति द्व्यणुकत्वमेवेति तथाच यस्त्रसरेणुरिति सांप्रदायिकैर्व्यवह्रियते तमेव वयं द्व्यणुकशब्देन व्यवहरामः निरवयवयोरमहतोर्द्वयोः संयोगस्य भवतापि स्वीकृतत्वात् नचैवं द्व्यणुकस्य महत्त्वाभावादचाक्षुषत्वापत्तिरिति वाच्यं भवतां यस्त्रसरेणुः तस्यैवास्माकं द्व्यणुकतया तत्राप्यपकृष्टमहत्त्वाङ्गीकारात् नच महत्त्वकारणत्रित्वाभावात् कथं महत्त्वमिति वाच्यं भवतां द्व्यणुकाणुत्वं प्रतीवास्माकं द्व्यणुकापकृष्टमहत्त्वं प्रत्येव परमाणुद्वित्वसंख्यायाः कारणत्वस्य वक्तुमुचितत्वादिति । अनेन चेदं संभाव्यते गवाक्षरन्ध्रे यो दृश्यते तत्सावयवत्वसाधकहेताववानुकूलतर्कसंभावना नतु तदवयवसाधकहेताविति तदेतदुभयं उक्तेऽर्थे सूचनं एवमपकृष्टमहत्त्वं प्रतीत्यादिमुक्तावलीग्रन्थस्य आशयं अनुक्त्वा अत्र नव्या इत्यादि नव्यमतप्रदर्शनवेळायां तदाशयस्य भङ्ग्यन्तरेण सूचितत्वादेव नीलकण्ठस्य लज्जा विज्ञायते इदं तु तत्त्वं प्रथमानुमाने नीलकण्ठाभिमतोऽप्यनुकूलतर्कः न त्रसरेणुमहत्त्वनित्यत्ववादिनव्यमतसिद्धः किन्तु सांप्रदायिकमत एव स्वारसिकः एवंच सत्यनुमानद्वय एवानुकूलतर्कः सुलभः तथाहि महत्त्वान्तरे त्रित्वादिसंख्यायाः कारणत्वं क्लृप्तं नतु द्वित्वस्य ततस्त्रसरेणुमहत्त्वकारणाकाङ्क्षायां त्रित्वचतुष्ट्वादिकमेव प्रथममुपतिष्ठते नतु द्वित्वं अतस्त्रसरेणोस्त्रिषु चतुर्षु पञ्चसु वावयवेषु कल्पनीयेषु प्रथमोपस्थितत्वात् त्रय एव कल्प्यन्ते । तेच न निरवयवाः तथासति त्रयाणां संयोगानुपपत्तेः । अतश्च यदि द्व्यणुकं निरवयवं तदा न तैस्त्रिभिस्त्रसरेण्वारम्भः स्यात् किन्तु द्वाभ्यां तथासति तत्र महत्त्वं न स्यात् महत्त्वाभावे च तस्य चाक्षुषत्वं द्व्यणुकस्य महदारम्भकत्वं च न स्यादिति । अतश्चानेकद्रव्यत्वमित्यस्य सावयवावयवकत्वमित्यर्थः तादृशार्थलाभस्त्वन्यथासिद्धिप्रकरणे दर्शितः अतोऽर्थभ्रम एव नीलकण्ठस्य । यद्यप्यत्र त्रसरेणुमहत्त्वस्य नित्यत्वस्वीकारे नेमावनुकूलतर्कौ प्रसरतः तथापि परिच्छिन्नमहत्त्वं जन्यमेवेति प्राचामनुभवः । नवीनास्तु तादृशानुभवमनादृत्य त्रसरेणौ विश्रान्तिमङ्गीकुर्वन्तीति मतनिगर्वः । केचित्तु अनेकद्रव्यत्वमित्यस्य त्र्यवयवकत्वमित्यर्थः । तस्य त्रसरेणुमहत्त्वप्रयोजकत्वं पूर्वोक्तरीत्या बोध्यं त्रसरेणोस्त्र्यवयवकत्वं च त्रसरेण्ववयवानां सावयवत्व एव निर्वहति नान्यथा पूर्वोक्तयुक्तेरतोऽनुकूलतर्कद्वयलाभः शेषं पूर्ववदित्याहुः । एतन्मतेऽपकृष्टमहत्त्वशब्दः त्रसरेणुमहत्त्वमात्रपरः प्रयोजकत्वादित्यस्य च प्रयोजकतया वाच्यत्वादित्यर्थः यथाश्रुते कपालद्वयारब्धघटनिष्ठापकृष्टमहत्त्वे व्यभिचारात् अस्मदुक्तार्थे तु व्यभिचारप्रसक्त्यभावात् यथाश्रुतार्थ एव सङ्गच्छते नच व्यभिचाराभावेऽपि घटादिपरिमाणे सावयवावयवकत्वस्य प्रयोजकत्वे मानाभाव इति वाच्यं परिच्छिन्नमहत्त्वस्य संख्याप्रचयमहत्त्वान्यतमजन्यत्वनियमेनाविभोर्निरवयवस्य युगपत् द्वाभ्यां संयोगाभावे त्रित्वादिसंख्यायाः परिमाणजनकत्वसंभवात् निरवयवानां प्रचयस्यैवासंभवात् महत्त्वस्यापि संख्याद्यन्यतमजन्यत्वावश्यंभावेन सावयव एव संभवाच्च परिच्छिन्नमहत्त्वमात्रे सावयवावयवकत्वस्य प्रयोजकताया दुर्वारत्वात् । पुनरिदानीं चिन्त्यते गवाक्षरन्ध्रे दृश्यमानस्य वस्तुनः परमाणुद्वयेनारम्भो युज्यते न वेति । अत्रायं नीलकण्ठाभिप्रायः न सामान्यतः परिच्छिन्नमहत्त्वत्वावच्छिन्नं प्रति त्रित्वत्वेन कारणता येन तत्र व्यभिचारापत्त्या त्रुटित्वस्यापि त्रित्वजन्यत्वमावश्यकं स्यात् नत्वेवं कारणतास्ति कपालद्वयारब्धघटमहत्त्वे व्यभिचारापत्तेः अपि च तिलपरिमाणैस्त्रिभिरवयवैरारब्धे महत्त्वमेकविधं तिलपरिमाणाभ्यां द्वाभ्यामध्यर्धतिलपरिमाणेन चैकेनारब्धेऽन्यविधं एवं तिलपरिमाणेनैकेनाध्यर्धतिलपरिमाणेन चान्येन यवपरिमाणेन चेतरेणारब्धेऽन्यविधं अतस्तत्तज्जातिविशिष्टं प्रति तत्तज्जातिविशिष्टपर्याप्तत्रित्वत्वादिना विशिष्यविशिष्यैव कारणता वाच्या नच तावतापि निर्वाहः क्वचिदवयवद्वयारब्धे अर्धतिलपरिमाणावयवषट्कारब्धे च तत्तज्जातिविशिष्टोत्पाददर्शनात् अतः कारणवैशिष्ट्यमपि कार्यतावच्छेदके निवेशनीयम् । एवंच त्रुटित्वं प्रति लाघवात् द्वित्वमेव कारणमस्तु । नच महत्त्वान्तरे त्रित्वस्य कारणतायाः क्लृप्तत्वात् त्रुटित्वाख्यमहत्त्वं प्रत्यपि तदेव कारणमुचितमुपस्थितिलाघवात् नतु द्वित्वमिति वाच्यं ईदृशोपस्थितिलाघवस्याप्रयोजकत्वात् । नहि स्थलान्तरे त्रित्वकार्यतावच्छेदकं त्रुटित्वसाधारणं नवा त्रित्वनिष्ठं कारणतावच्छेदकं अन्यत्रित्वसाधा-

### मञ्जूषा.

रणं तादृशमेव हि लाघवमन्यस्यान्यथासिद्धिं संपादयेत् । यथा स्थलान्तरे घटत्वविशिष्टका-रणतावच्छेदकतया सिद्धदण्डत्वाश्रयस्यैव तद्घटव्यक्तित्वावच्छिन्नं प्रति तद्व्यक्तित्वेन कारणता ननु रासभव्यक्तेरिति । यथाकथंचिदुपस्थितिलाघवं च कदाचिद्द्वित्वेऽपि सूपपादं महत्त्वान्तरे संख्यायाः कारणत्वस्य क्लृप्तत्वात् संख्यात्वेन रूपेण द्वित्वस्याप्युपस्थितिसंभवात् । अस्तु वाणुत्वमेव त्रुटित्वकारणं परिमाणस्य स्वसमानजतीयेत्यादिनियमस्याभ्युपगममात्रमानकत्वात् । तस्मान्नीलकण्ठपक्षोऽपि सयुक्तिक एवेत्यस्मान् प्रतिभाति । सा च त्रिधेति मूलात्कार्यरूपा पृथिवी त्रिधा तथा देहोऽपि त्रिधा तथेन्द्रियमपि त्रिधा तथा विषयोऽपि त्रिधेत्यर्थः प्रतीयते तदाह ॥ **शरीरेन्द्रियविषयभेदादिति** ॥ शरीरेन्द्रियविषयाणां यो भेदः परस्परव्यावर्तकधर्मवत्त्वं भिद्यते व्यावर्त्यतेऽनेनेति व्युत्पत्तेः तस्मादित्यर्थः । ज्ञानज्ञाप्यत्वं पञ्चम्यर्थः त्रिविधेति त्रित्वाश्रयाविभाजकधर्मवतीत्यर्थः । त्रित्वे पञ्चम्यर्थान्वयः युज्यते चैतत् शरीरेन्द्रियविषयाः परस्परव्यावर्तकधर्मवन्त इति ज्ञाने हि कार्यपृथिवीविभाजकधर्मास्त्रय इति ज्ञायते । परस्परान्योन्याभाव एव वा भेदशब्दार्थः तस्यापि विभाजकधर्मत्रित्वज्ञापकत्वमविरुद्धम् । अन्ये तु शरीरादिपदं शरीरत्वादिपरं भेदश्चान्योन्याभावः नहि तद्वृत्तिधर्मेषु परस्परभेदज्ञानमात्रेण तद्विभाजकधर्मेषु संख्या ज्ञायते तथासति पृथिवीवृत्तिरूपरसगन्धादिषु परस्परभेदज्ञानमात्रेण पृथिवीविभाजकधर्मेषु संख्याज्ञानापत्तेः परस्परासामानाधिकरण्यं वा तस्यापि त्रित्वज्ञापकत्वमक्षतमित्याहुः । त्रित्वविशेषितविभाजकधर्मवत्त्वे विभाजकधर्माविशिष्ट एव वा पञ्चम्यर्थज्ञानज्ञाप्यत्वान्वयः तादृशभेदज्ञानस्य पृथिवी त्रिविधेति ज्ञानजनकत्वेन योग्यतासत्त्वात् इत्यन्ये । सर्वत्र प्रयोज्यत्वं पञ्चम्यर्थः तच्च प्रातीतिकस्वरूपसंबन्धविशेषि शरीरादिभेदप्रयुक्तं कार्यपृथिव्यास्त्रैविध्यमिति प्रतीतेरित्येके । नन्वत्र विभाजकधर्मत्रयविशिष्टरूपास्त्रिविधपदार्थो न प्रसिध्यति क्वचिदपि धर्माणां त्रयाणामसत्त्वादिति चेत्स्यादयं दोषः यदि त्रिविधपदेन पर्याप्तिसंबन्धावच्छिन्नत्रित्वनिष्ठावच्छेदकताकविभाजकधर्मनिष्ठनिरूपकताकाधिकरणत्वं प्रतीयेत यदिवा त्रित्वविशेषितधर्मत्रयनिष्ठप्रकारतानिरूपितैकनिष्ठविशेष्यताशाल्युपस्थितिजनकत्वं त्रिविधपदस्य स्वीक्रियेत । नत्वेवं त्रित्वनिष्ठैकप्रकारतानिरूपिता या विभाजकधर्मनिष्ठास्तिस्रः प्रकारतास्तन्निरूपितविशेष्यतात्रयशालिन्या एवोपस्थितेस्तेन जननात् । एवं विभाजकधर्मनिष्ठप्रकारतात्रयनिरूपिता याः तादात्म्यसंबन्धावच्छिन्ना धर्मनिष्ठास्तिस्रः प्रकारताः तन्निरूपिता याः कार्यपृथिवीत्वनिष्ठैकावच्छेद्यतानिरूपितास्तिस्रो विशेष्यतास्तच्छालिशाब्दबोधः तत्र भवति अतो न कोऽपि दोषः । विभागस्थले चोद्देश्यतावच्छेदकावच्छेदेन विधेयान्वयस्य सार्वत्रिकतया द्रव्यं द्विविधं पृथिवीजलभेदात् इति न प्रयोगः द्रव्यत्वावच्छेदेन पृथिवीजलवृत्तिपरस्परभेदज्ञानज्ञाप्यद्वित्वाश्रयविभाजकधर्मविशिष्टत्वस्य बाधात् । अत्र केचिदुक्ताप्रसिद्धिमाशंक्य त्रिपदसमभिव्याहृतविधापदस्य विभाजकधर्मत्रयान्यतमविशिष्टलाक्षणिकतां स्वीकुर्वन्ति एतन्मते पृथिवी द्विविधा द्रव्यगुणभेदादिति वाक्यस्य प्रामाण्यापत्तिः पृथिवीत्वावच्छेदेन तादृशविभाजकधर्मद्वयान्तरस्याबाधात् अतो विभागवाक्ये सर्वत्र परस्परोद्देश्यविधेयभावं स्वीकृत्य परस्परव्याप्यव्यापकभावभानमङ्गीकार्यम् । पृथिवीत्वे च द्रव्यगुणभेदज्ञानज्ञाप्यविभाजकधर्मद्वयान्यतरत्वविशिष्टत्वव्यापकत्वबाधात् न तथा प्रयोग इति वक्तव्यं एवं च सति कार्यपृथिवीत्वे दर्शितविभाजकधर्मत्रयान्यतमत्वाविशिष्टव्यापकत्वमपि दुर्लभं शरीरत्वादेर्जलादिसाधारणत्वात् अतः शरीरादिपदं पार्थिवशरीरादिपरं द्रष्टव्यं सा च त्रिधेति मूले धात्वप्रत्ययार्थः प्रकारवान् विभाजकधर्मवानिति यावत् । तत्र शरीरादिपदार्थानां त्रयाणां अभेदेनैवान्वयः तथाच शरीराद्यभिन्नत्रित्वाश्रयप्रकारवदभिन्ना कार्यपृथिवीत्यर्थः । अत्र तादात्म्यसंबन्धावच्छिन्नशरीरादिनिष्ठप्रकारतात्रयनिरूपिता विभाजकधर्मवन्निष्ठाविशेष्यतास्तिस्र इति नाप्रसिद्धिः । काचित्तु देह इन्द्रियं विषय इत्यनन्तरामितिशब्दोऽध्याहर्तव्यः धात्वप्रत्ययार्थश्च प्रकार एव । तत्र देहादीनामाधेयतयान्वयः इतिशब्दसमभिव्याहारनियन्त्रितव्युत्पत्तिबलात् प्रत्ययार्थस्य च प्रकारस्याश्रयतया पृथिव्यामन्वयः यद्वा देहादिपदं देहत्वादिपरं अस्याभेदेन प्रकारेऽन्वयः देहत्वादिलक्षणातात्पर्यग्राहकश्चेतिशब्द इत्याहुः अत्रापि व्याप्यव्यापकभावभानादिकं पूर्ववत् बोध्यम् ॥ ३७ ॥

**योनिजादिभेदेह इन्द्रियं घ्राणलक्षणम् ।**

तत्र देहमुदाहरति ॥ योनिजादिरिति ॥ योनिजमयोनिजं चेत्यर्थः । योनिजमपि द्विविधं जरायुजमण्डजं चेति । जरायुजं मानुषादीनाम् । अण्डजं सर्पादीनाम् । अयोनिजं स्वेदजोद्भिज्जादिकम् । स्वेदजाः कृमिदंशाद्याः । उद्भिज्जास्तरुगुल्माद्याः । नारकिणां शरीरमप्ययोनिजम् । नच मानुषादिशरीराणां पार्थिवत्वे किं मानमिति वाच्यम् । गन्धादिमत्त्वस्यैव प्रमाणत्वात् । नच क्लेदोष्मादेरुपलम्भादाप्यत्वादिकमपि स्यादिति वाच्यम् । तथा

**प्रभा.**

पार्थिवशरीरं विभज्य दर्शयति ॥ **योनिजादीति** ॥ आदिपदग्राह्यमाह ॥ **अयोनिजं चेति** ॥ **योनिजमिति** ॥ योनिजमपीत्यर्थः । शुक्रशोणितपरस्परमेलनजन्यमिति यावत् ॥ **जरायुजमिति** ॥ गर्भवेष्टनचर्मपुटजातमित्यर्थः ॥ **मनुष्यादीनामिति** ॥ आदिना पश्वादिपरिग्रहः ॥ **सर्पादीनामित्यादिना** कुक्कुटादीनां परिग्रहः । स्वेदजमुदाहरति ॥ **कृमिदंशाद्या इति** ॥ पापविशेषसहिताणुभ्य एव तच्छरीराणामुत्पत्तिस्वीकारादिति भावः ॥ **उद्भिज्जादिकमिति** ॥ आदिना देवादिशरीरपरिग्रहः । तच्छरीराणां धर्मविशेषसहिताणुभ्य एव उत्पत्तिस्वीकारादिति भावः । देवादिशरीराणां अयोनिजत्वे ब्रह्मणो मानसा मन्वादयः पुत्रा इति श्रुतिरेव प्रमाणम् । नच योनिं विना न शरीरमिति श्रुत्या सा विरुध्यत इति वाच्यं तत्र योनिपदस्य कारणमात्रपरत्वात् शरीरपदस्य मनुष्यदेहपरत्वाद्वा विरोधस्य वारणीयत्वात् । गन्धादीत्यादिना नीलादेः परिग्रहः ॥ **क्लेदोष्मा-**

**दिनकरीयम्.**

योनिजं शुक्रशोणितयोः परस्परमेलनजन्यं तद्भिन्नमयोनिजम् ॥ **जरायुजमिति** ॥ गर्भवेष्टनचर्मपुटकं जरायुः । मानुषादीनामित्यादिना पशुमृगादीनां परिग्रहः । सर्पादीनामित्यादिना विहङ्गमादिपरिग्रहः । स्वेदजमुदाहरति ॥ **कृमिदंशाद्या इति** ॥ तच्छरीराणामुत्पत्तेरधर्मविशेषसहितेभ्योऽणुभ्य एव स्वीकारादिति भावः । उद्भिज्जादिकमित्यादिना देवादिशरीरपरिग्रहः तच्छरीराणामुत्पत्तेर्धर्मविशेषसहितेभ्योऽणुभ्य एव स्वीकारादिति भावः । तेषामयोनिजत्वे त्वागम एव ब्रह्मणो मानसा मन्वादयः पुत्रा इत्यादिः प्रमाणं । योनिं विना न शरीरमित्येवंविधागमे च योनिपदं कारणमात्रपरं शरीरपदं मनुष्यदेहपरं वा । गन्धादीत्या-

**रामरुद्रीयम्.**

. योनिजमित्यस्य योनिद्वारा निर्गतमित्यर्थकत्वे कदाचित्स्वेदजस्यापि योनिद्वारा निर्गमसम्भवादतिव्याप्तिरित्याशङ्कापरिहाराय व्याचष्टे ॥ **शुक्रेति** ॥ **पशुमृगादीनामिति** ॥ यद्यपि पशुपदस्य लोमवल्लाङ्गूलवद्वाचकतया तेनैव मृगसङ्ग्रहे पृथङ् मृगोपादानं व्यर्थं तथापि गोबलीवर्दन्यायेन लाङ्गूलरहितस्यापि मृगविशेषस्य सम्भवाभिप्रायेण वा तदुपादानमिति बोध्यम् । विहङ्गमादीत्यादिना वल्लीप्रभृतीनां परिग्रहः ॥ **दंशाद्या इति** ॥ ननु कृम्यादीनामपि शरीरं शुक्रशोणितमेलनजमेव शरीरमात्रस्य तथात्वादित्याशङ्कायामाह ॥ **तच्छरीराणामिति** ॥ **तेषामिति** ॥ देवादिशरीराणामित्यर्थः । न तु कृम्यादिशरीराणामित्यर्थः । उत्तरत्र वक्ष्यमाणप्रमाणस्य तेषामयोनिजत्वसाधकत्वाभावादिति ध्येयम् ॥ **योनिं विनेति** ॥ शुक्रशोणितमेलनं विनेत्यर्थः ॥ **कारणमात्रपरमिति** ॥ नन्वेवं कार्यमात्रस्यैव कारणं विनाऽसम्भवाच्छरीरमात्रस्य कारणं विनाऽनुत्पत्तिकथनं न युज्यते इत्याशङ्कायामाह ॥ **शरीरपदमिति** ॥ अत्र मनुष्यपदं पश्वादीनामप्युपलक्षकम् । ननु मानुषादिशरीरे पृथिवीत्वसाधनाय मूले गन्धादिमत्त्वादिति हेतुरुपन्यस्तस्तत्र हेतावादिपदं व्यर्थं केवलगन्धस्यैव पृथिवीत्वाव्यभिचारित्वात् । न चादिपदं हेत्वन्तरसूचनायेति वाच्यम् । गुणान्तरस्यैव पृथिवीत्वव्यभिचारित्वेन तदसंभवादित्यत आह ॥ **गन्धादीत्यादिनेति** ॥ तथा च नीलादिहेत्वन्तरसूचनायैवादिप-

सति जलत्वस्य पृथिवीत्वादिना सङ्करप्रसङ्गात् । नच तर्हि जलीयत्वादिकमेवास्तु नतु पार्थिवत्वमिति वाच्यम् । क्लेदादीनां विनाशेऽपि शरीरत्वेन प्रत्यभिज्ञानात् गन्धाद्युपलब्धेश्च पृ-

प्रभा.

देरिति ॥ क्लेदः स्वेदः ऊष्मा औष्ण्यं आदिना व्यूहावकाशपरिग्रहः । व्यूहः क्रिया अवकाशः कण्ठादौ अन्नादिगत्यप्रतिबन्धः । तथाचैतैर्लिङ्गैर्जलादिचतुष्टयरूपत्वस्याप्यनुमातुं शक्यत्वादिति भावः ।

मञ्जूषा.

मुक्तावल्यां **क्लेदोष्मादेरिति** ॥ क्लेदः शीतस्पर्शः ऊष्मा उष्णस्पर्शः ॥ **क्लेदादीनामिति** ॥ तथाच शरीरे प्रतीयमानः शीतस्पर्शादिः न शरीरसमवेतः तस्मिन् सत्येव विनष्टत्वादिति भावः । अत्र क्लेदोष्मादेरित्यत्र क्लेदशब्देन क्षरणं विवक्षितमिति केचिन्मन्यन्ते घर्मजले प्रतीयमानं क्षरणं शरीरसमवेतमिति भ्रान्त्येयमाशङ्केति तेषामभिप्रायः स च न युज्यते क्षरणस्य घृतादौ व्यभिचारेण जलत्वासाधकत्वात् । किंच शङ्काया भ्रममूलत्वे भ्रमवारणं सिद्धान्ते कर्तव्यम् । तच्चेह न कृतमिति न्यूनता प्रसज्यते किंच क्षरणस्यैव जलत्वसाधकत्वेनाशङ्कितत्वे क्लेदादीनामित्यादिसिद्धान्तो विरुध्यते नहि कदाचित्क्षरणाभावमात्रेण जलत्वं वार्यते कुंभधृते रसौषधिविशेषे बद्धे करकादिरूपे च जले व्यभिचारापत्तेः । नन्विह क्षरणाभावेन जलत्वाभावानुमानन्नाभिप्रेतं तथासति जलत्वपृथिवीत्वादीनां साङ्कर्यप्रसङ्गादित्यादिग्रन्थसन्दर्भानर्थक्यप्रसङ्गात् किंतु भङ्ग्यन्तरेण जलत्वं वार्यते तथथा शरीरे गन्धवत्त्वात् पृथिवीत्वं क्षरणवत्त्वाज्जलत्वं च स्वीक्रियेत तदा द्वयोस्सङ्करः प्रसज्यते तत्र किं स्वीक्रियतां किं वा न स्वीक्रियतां इति विचारे जलत्वसाधकतयाभिमतं क्षरणमसार्वत्रिकं पृथिवीत्वसाधकतयाभिमतस्तु गन्धस्सार्वत्रिकः अतोऽणुरपीति न्यायेन पृथिवीत्वमेव विनिगम्यत इति चेदस्त्वेतदेवम् । तथापि घृतादौ व्यभिचारेण शङ्कानवतारः सिद्धान्ते क्षरणस्य शरीरवृत्तित्वभ्रमानिराकरणं चेति दूषणद्वयमपरिहार्यम् । अन्ये तु क्लेदशब्देन स्वेदो विवक्षित इत्याहुः अथात्र जलविशेषरूपस्य स्वेदस्य संयोगेन हेतुत्वे स्वेदसंयुक्त घटादौ व्यभिचारः शरीरस्वेदस्य कदाचित् घटेऽपि संयोगसंभवात् स्वेदकारणत्वमपि तन्निमित्तकारणे कालादौ असमवायिकारणे तदवयवसंयोगे चानैकान्तिकं स्वेदसमवायिकारणत्वं च स्वरूपासिद्धं आशङ्काया भ्रममूलत्वे सिद्धान्ते तदवारणं अवयविनाशेऽप्यवयवनाशस्य सार्वत्रिकतया क्लेदादीनां विनाशेऽपीत्यादिसमाधानानुपपत्तिश्च उच्यते । समवायेन स्वेदो हेतुः नच समाधानानुपपत्तिः क्षरणहेतुत्वपक्षोक्तरीत्या तदुपपत्तेः । नच भ्रमवारणाभावः पृथिवीत्वे सिद्धे पश्चात्स्वेदसमवायित्वभ्रमस्य वारयितुं शक्यत्वात् । नहि क्षरणमिव स्वेदसमवायित्वमपि पृथिवीसाधारणं येन भ्रमवारणं दुश्शकं स्यात् अथवा समवेतत्वसंबन्धेन स्वेदो हेतुः शरीरं च हस्तादाविव स्वेदेऽपि समवेतमिति भ्रमेणाशङ्का अवयवनाशेऽवयविनाशस्यावश्यकतया न स्वेदसमवेतं शरीरमिति च समाधीयते ॥ **क्लेदादीनां विनाशेऽपीति** ॥ अतो न कोऽपि दोषः परं त्वत्र कल्पे जलत्वपृथिवीत्वयोः साङ्क-

दिनकरीयम्.

दिना शुक्लेतररूपपरिग्रहः । क्लेदोष्मादेरित्यादिना व्यूहावकाशपरिग्रहः । क्लेदः क्षरणं स्वेद इति यावत् । ऊष्मा पाकः औष्ण्यमिति यावत् तच्च शरीरसम्बन्धेन पुष्पादौ रूपादिपरावृत्त्यानुमीयते अनुष्णात्तदनुत्पत्तेः । व्यूहः क्रिया अवकाशो मुखादावन्नादिगत्यप्रतिबन्धः । ननु कथं तर्हि शरीरे पाञ्चभौतिकत्वव्य-

रामरुद्रीयम्.

दमिति भावः । शरीरस्याद्रवत्वेन क्षरणासम्भवादाह ॥ **स्वेद इतीति** ॥ ननु पाको रूपपरावर्तकतेजस्संयोगः स च पृथिवीत्वस्यैव साधको न तु तेजस्त्वस्य पृथिवीभिन्ने पाकानङ्गीकारादत आह ॥ **औष्ण्यमितीति** ॥ उष्णस्पर्श इत्यर्थः ॥ **व्यूहः क्रियेति** ॥ यद्यपि क्रियावत्त्वं न

थिवीत्वसिद्धेः तेन पार्थिवादिशरीरे जलादीनां निमित्तत्वमात्रं बोध्यम् । शरीरत्वं न जातिः पृथिवीत्वादिना साङ्कर्यात् किंतु चेष्टाश्रयत्वं वृक्षादीनामपि चेष्टाश्रयत्वान्नाव्याप्तिः । नच

## प्रभा.

ननु तर्हि कथं पाञ्चभौतिकत्वोपपत्तिरित्यत आह ॥ तेनेति ॥ जलत्वादिनिराकरणेनेत्यर्थः । ननु शरीरत्वं करचरणादिनिष्ठसमवायिकारणतानिरूपितसमवायसंबन्धावच्छिन्नकार्यतावच्छेदकतया सिद्धो जातिविशेषः तादृशशरीरत्वं वृक्षादौ बाधितामिति कथं वृक्षादीनां अयोनिजदेहत्वमित्याशङ्कां तस्य जातित्वनिराकरणेन परिहरति ॥ शरीरत्वमिति ॥ नाव्याप्तिरिति ॥ तथाच वृक्षादिक्रियायामपि चेष्टत इति प्रत्यक्षसिद्धचेष्टात्वरूपवैजात्याङ्गीकारादिति भावः । ननु स्थावरा वृक्षास्तृणौषधिगुल्मलतावनस्पतय इत्यादिना भाष्यकृता वृक्षादेर्विषयमध्ये परिगणितत्वात् तद्विरुद्धत्वेन कथं वृक्षादेश्शरीरत्वाङ्गीकार इति भाष्यकारानुयायी आक्षिपति ॥ नचेति ॥ नर्मदातीरसंजातास्सरलार्जुनपादपाः । नर्मदातोयसंस्पर्शात्ते यान्ति परमां गतिं ॥ गुरुं त्वंकृत्य हुंकृत्य विप्रं निर्जित्य वादतः । श्मशाने जायते वृक्षः कंकगृध्रोपसेवितः ॥ इत्यादिवचनेन वृक्षाद्यवच्छेदेन कृतसत्कर्मणा पुण्यलोकवासोपयोगिदिव्यशरीरप्राप्तेः करचरणाद्यवयवविशिष्टशरीरावच्छेदेन कृतगुरुधिक्कारादिनिषिद्धकर्मणा कंकगृध्रोपसेवितश्मशानवृत्तिवृक्षसंबन्धप्राप्तेश्च व्यासेन प्रतिपादनात् भाष्यकारवचनव्यासवचनयोर्मध्ये व्यासवचनमेव सयुक्तिकमिति गङ्गेशो-

## मञ्जूषा.

र्यापादनमनतिप्रयोजनकम् । ननु क्लेदशब्देन शीतस्पर्शं विवक्षतामप्येष दोष इति चेन्नायमस्ति दोषः तथाहि शीतस्पर्शाज्जलीयं शरीरमिति शङ्कमानं प्रति शीतस्पर्शनाशेऽपि शरीरप्रत्यभिज्ञानादिति न प्रथमतो युक्तं वक्तुम । अस्ति यावच्छरीरावस्थानं तत्र शीतस्पर्शः किंतूत्कटोष्मसमवेतोष्णस्पर्शेन प्रतिबन्धान्न स्पृश्यत इति प्रत्युक्तिसंभवात् तत्रहीदं वक्तव्यं यद्येकस्य गन्धवत्त्वात् पृथिवीत्वं शीतस्पर्शवत्त्वात् जलत्वं च स्यात्तदा तयोस्संकरस्स्यात अतः कतरदत्र युक्तमिति विचारे पृथिवीत्वमेवेति वाच्यम् । कुतः गन्धवत्त्वप्रतीतेः सार्वत्रिकत्वात् शीतस्पर्शवत्त्वप्रतीतेरसार्वत्रिकत्वात् । नहि सार्वत्रिकप्रतीतेः भ्रमत्वमुचितं एवंच क्लेदादीनां विनाशेऽपीत्यस्यानुपलम्भेऽपीत्यर्थः । नत्वेवं स्वेदसमवेतत्वहेतुत्वपक्षे तद्ग्रन्थसार्थक्यमुपपादयितुं शक्यं तत्रहि नोक्तरीत्या प्रत्युक्तिरवतरति सर्वदा स्वेदसत्त्वे चाक्षुषप्रसङ्गात् नह्यूष्मस्पर्शस्तप्तजलशीतस्पार्शनमिवोष्मा क्वचिज्जलचाक्षुषं प्रतिबध्नन् दृष्टः अयोग्यस्य कस्यचित्प्रतिबन्धकत्वकल्पने च गौ-

## दिनकरीयम्.

रवहार इत्यत आह ॥ तेनेति ॥ शरीरस्य पार्थिवत्वसाधनेनेत्यर्थः । एवं च शरीरे पाञ्चभौतिकत्वव्यवहारो न पञ्चभूतोपादानकत्वनिबन्धनः किंतु तज्जन्यत्वनिबन्धनस्तत्राप्येकैकस्योपादानत्वं चतुर्णां निमित्तत्वमिति विवेकः ॥ किंतु चेष्टेति ॥ चेष्टात्वं जातिविशेषश्चेष्टत इति प्रत्यक्षसिद्धः । नच शरीरत्वमेव पृथिवीत्वादिव्याप्यजातिः चेष्टात्वं तु तत्क्रियात्वमिति वाच्यम् । पृथिवीत्वादिना सङ्करेण पृथिवीत्वादिव्याप्या-

## रामरुद्रीयम्.

वायुत्वसाधकं तस्य पञ्चद्रव्यसाधारणत्वात् तथापि वायोरेव सदागतिमत्त्वेन क्रियापदस्यात्र सर्वदा क्रियावत्त्वार्थकतया न तेन वायुत्वसाधनानुपपत्तिः । न च सुषुप्तिदशायां शरीरेऽपि क्रियाविरहात्स्वरूपासिद्धिरिति वाच्यम् । तदानीमप्युच्छ्वासादिप्रयुक्तक्रियासत्त्वादिति भावः ॥ चतुर्णामिति ॥ यद्यपि जलपरमाण्वादिसंयुक्तपार्थिवपरमाणुष्वेव घट इव शरीरमुत्पद्यत इति वाय्वन्तत्रयाणां तत्र कारणत्वं जलसम्बन्धाभावे संश्लेषाभावेनावयव्यनुत्पादादुष्णस्पर्शसदागत्यभावापत्त्या च जलादीनां कारणत्वासम्भवादाकाशसंयोगस्याव्यावर्तकतया कथं तस्य कारणत्वं तथापि निविडपाषाणादौ भेकादीनामुत्पत्त्याऽवकाशविधयाऽऽकाशस्य शरीरकारणत्वमिति मन्तव्यम् ॥ विवेक इति ॥ भेद इत्यर्थः ॥ न चेति ॥ विनिगमनाविरहेणेति शेषः ॥ तत्क्रियात्वं शरीरसमवेतक्रियात्वम् ॥ स-

वृक्षादेः शरीरत्वे किं मानमिति वाच्यम् आध्यात्मिकवायुसम्बन्धस्य प्रमाणत्वात् । तत्रैव किं मानमिति चेत् भग्नक्षतसंरोहणादिना तदुन्नयनात् । यदि हस्तादौ शरीरव्यवहारो न भवति तदाऽन्त्यावयवित्वेन विशेषणीयम् । नच यत्र शरीरे चेष्टा न जाता तत्राव्याप्तिरि-

## प्रभा.

पाध्यायानां मतमनुसृत्य आक्षेपं परिहरति ॥ आध्यात्मिकेति ॥ प्राणेत्यर्थः ॥ तत्रैवेति ॥ प्राणवायावेवेत्यर्थः ॥ भग्नक्षतेति ॥ भग्नयोर्विलक्षणविभागविशिष्टावयवयोः क्षतयोः विजातीयविभागविशिष्टावयवयोश्चेत्यर्थः ॥ संरोहणमिति ॥ संबन्ध इत्यर्थः । आदिना वृद्धिपरिग्रहः । तथाच तादृशावयवयोस्संबन्धेन वृद्ध्या च वृक्षादौ प्राणानुमानसंभवादित्यर्थः । करादेरपि चेष्टाश्रयत्वात् करादौ मे सुखं पादे मे वेदनेत्यनुभवेन करादेर्भोगावच्छेदकत्वस्यापि सत्त्वाच्छरीरव्यवहार इष्ट इत्यस्वरसं निधाय यदीत्युक्तम् ॥ अन्त्यावयवित्वेनेति ॥ समवायेन द्रव्यवद्भिन्नत्वेनेत्यर्थः । यद्यपि सुषुप्त्यादौ चेष्टाविरहेऽपि चेष्टाश्रयत्वस्य

## मञ्जूषा.

त्वमिति । दृश्यते च वस्त्रादिमार्जनेन स्वेदविनाशः तस्माच्छीतस्पर्श एव क्लेदशब्दार्थो युक्तः युज्यते चैतत्पूर्वं पृथिव्यसाधारणगुणेन गन्धेनैव हि पृथिवीत्वं साधितं तत्र प्रतिबन्ध्यजलासाधारणगुणेन शीतस्पर्शेन जलत्वसाधनशङ्केव द्रागुपतिष्ठते इति । अत्राशङ्काग्रन्थस्थेन क्लेदोष्मादेरित्यादिना व्यूहावकाशपरिग्रह इति नीलकण्ठेन लिखितं व्यूहः क्रिया अवकाशो सुखादावन्नादिगत्यप्रतिबन्ध इति च तेनैव विवृतं अत्र व्यूहेन वायुत्वसाधनमभिप्रेतं नच पृथिव्यादौ व्यभिचारः विलक्षणक्रियाया एव व्यूहशब्दार्थत्वात् । नच स्वरूपासिद्धिः शरीरान्तर्गतप्राणादिसमवेतविलक्षणक्रियायाश्शरीरसमवेतत्वभ्रमेणाशङ्कनात् प्राणेषूत्क्रान्तेषु निश्चलं शरीरं प्रत्यभिज्ञायते । नच निश्चलो वायुः कदाचिदस्ति अतो न वायुश्शरीरमिति च समाधीयते । अनवकाशत्वेन चाकाशत्वसाधनमभिप्रेतं आकाशो हि न कस्यचित् गतिं प्रतिबध्नाति नच तेजसि व्यभिचारः तस्यापि कदाचिच्चक्षुरादिगतिप्रतिबन्धकत्वात् प्रतिबध्यते ह्यतिभास्वरेण तेजसा चक्षुरादेर्गतिरत्युष्णेन च शरीरादिगतिः जलादिगतिश्च गतिप्रतिबन्धस्वरूपयोग्यताशून्यत्वं चेह विवक्षितं अतो न तेजोविशेषे व्यभिचारः । साध्यं च नाकाशत्वं कालादौ व्यभिचारात् किन्तु विभुत्वमाकाशादिचतुष्टयान्यतमत्वरूपं तत्र सिध्यत् पाञ्चभौतिकत्वश्रुतिबलादाकाशत्व एव पर्यवस्यतीति हृदयम् । नच यत्किंचिद्द्रव्यगत्यप्रतिबन्धः प्रभायां व्यभिचरति गतिसामान्याप्रतिबन्धश्च स्वरूपासिद्ध इति वाच्यं अन्नादिगत्यप्रतिबन्धमात्रेण गतिसामान्याप्रतिबन्धकत्वभ्रमेणाशङ्कनात् । भ्रमवारणं तु समाधाने पूरणीयं मृतशरीरेऽन्नादिगतिप्रतिबन्धो हि तत्र स्वरसतो लभ्यते जीवच्छरीरेऽपि द्रव्यान्तरप्रतिबन्धोऽपि तत्रोहितुं शक्य एवेति न दोषः ॥ नच वृक्षादेः

## दिनकरीयम्.

नेकशरीरत्वकल्पने गौरवात् ॥ आध्यात्मिकेति । आध्यात्मिकवायुः प्राणाख्यः । शङ्कते ॥ तत्रैवेति ॥ भग्नक्षतेति ॥ भग्नक्षतयोर्विभागविशेषविश्लिष्टावयवयोः संरोहणादिकं आदिना वृद्धिसंग्रहः । वृद्धिश्चावयवोपचयः ॥ तदुन्नयनादिति ॥ आध्यात्मिकवायुसम्बन्धानुमितेः । ननु भग्नक्षतसंरोहणादिहेतुभूतवायोः प्राणत्वे प्रमाणाभाव इति चेन्न । नर्मदातीरसञ्जाताः सरलार्जुनपादपाः । नर्मदातोयसंस्पर्शात् ते यान्ति परमां गतिम् । गुरुं हुंकृत्य तुंकृत्य विप्रं निर्जित्य वादतः । श्मशाने जायते वृक्षः कङ्कगृध्रोपसेवितः ॥ इत्यागमस्यैव तत्र मानत्वात् ॥ अन्त्यावयवित्वेनेति ॥ द्रव्यानारम्भकद्रव्यत्वेनेत्यर्थः । मृतशरीरे चेष्टाया अ-

## रामरुद्रीयम्.

क्रूरेणेति ॥ पृथिवीत्वं विहाय शरीरत्वस्य जलशरीरादौ शरीरत्वं विहाय पृथिवीत्वस्य घटादौ उभयोश्च मानुषादिशरीरे सत्त्वेनेत्यर्थः ॥ उपचय आधिक्यम् ॥ तत्रेति ॥ तादृशवायोः प्राणत्व इत्यर्थः ॥ मानत्वादिति ॥ धर्मविशेषेणोत्तमगतिप्राप्तेर्वृक्षस्य जीवशरीरत्वमावश्यकं तच्छरीरिजीवस्यै

## मञ्जूषा.

**शरीरत्व इति** ॥ नन्वत्राक्षिप्यमाणं शरीरत्वं कीदृशं न तावज्जातिरूपं तस्य प्रागेव निराकृतत्वात् न तावच्छरीरपदवाच्यत्वं तस्य चेष्टावत्त्वरूपप्रवृत्तिनिमित्तेनैव सिद्धतया आध्यात्मिकवायुसंबन्धरूपहेत्वन्तरानुसरणवैफल्यापत्तेः । उच्यते तरुगुल्मादयोऽपि शरीरपदवाच्यतया प्राग्विश्वनाथेन परिगणिताः अतस्तत्र लक्षणसमन्वयो वृक्षादीनां चेष्टासत्त्वान्नाव्याप्तिरित्यनेन कृतः तत्रैव च देवदत्तश्चेष्टत इतिवद्वृक्षश्चेष्टत इति प्रायो न व्यवहरन्ति लोकाः किंतु वृक्षः कम्पत इत्येवातस्तत्र चेष्टावत्त्वमव्याप्तमिति शङ्का भवति तदिदमाशङ्क्यते नच वृक्षादेः शरीरत्व इति चेष्टावत्त्व इत्यर्थः । एवं शरीरत्वं चेष्टावत्त्वमिति प्रागुक्तत्वान्नात्रार्थे क्लेशः चेष्टां प्रत्याध्यात्मिकवायुसंयोगस्य कारणत्वात् तेन तत्सिद्धिरिति च समाधीयते । अर्वाचीनास्तु नेयं लक्षणानुपपत्तिशङ्का किन्तु लक्ष्यतावच्छेदकीभूतशरीरपदवाच्यत्वानुपपत्तिशङ्कैव । तच्च यद्यपि प्रवृत्तिनिमित्तचेष्टावत्त्वेनैव साधयितुं युक्तं तथापि तस्य सन्दिग्धतया तत्कारणीभूताध्यात्मिकवायुसंबन्धेनैव साध्यते आध्यात्मिकवायुसंबन्धवत्त्वमेव वा शरीरपदप्रवृत्तिनिमित्तमभिप्रेतमिति पाठयन्ति । अत्राध्यात्मिको वायुः प्राणाख्य इति नीलकण्ठः । ननु प्राणसंबन्धः काले प्राणावयवे च शरीरतां व्यभिचरति तत्संयोगो गगने मूर्तत्वविशेषितोऽपि मनसि स्पर्शवत्त्वविशेषितोऽपि परस्परस्मिन् प्राणानां परस्परसंयोगसत्त्वात् रूपवत्त्वविशेषितोऽप्मादौ श्वासात्मकस्य प्राणवायोः कदाचित् घटेऽपि संयोगसंभवात् जीवनयोनियत्नभिन्नास्मदीयप्रयत्नासाध्यत्वविशेषितोऽपि निगीर्णान्नकबळादौ तत्रापि प्राणसंयोगस्यावर्जनीयत्वात् । उच्यते आध्यात्मिकत्वं वायुसंबन्धविशेषणं तच्चावच्छेदकतासंबन्धावच्छिन्नजन्यात्मविशेषगुणत्वावच्छिन्नकार्यतानिरूपितसमवायसंबन्धावच्छिन्नकारणत्वं तदवच्छेदकतया सिद्धो जातिविशेषो वा नच विजातीयस्य प्राणशरीरसंयोगस्य प्राणसाधारणत्वात् व्यभिचार इति वाच्यं प्राणप्रतियोगिकत्वेन रूपेण तस्य प्राणावृत्तित्वात् ॥ **भग्नक्षतेति** ॥ भङ्गः शब्दविशेषजनको भूयोऽवयवविभागः क्षतिः शब्दविशेषाजनकः किंचिदवयवविभागः । ननु किमिदं भग्नक्षतसंरोहणं नाम न तावत् भग्नस्य क्षतस्य वा पुनरुत्पत्तिः अप्रसिद्धेः नहि यो यावानवयवो भज्यते क्षाण्यते वा स एव तावान् पुनरुत्पद्यते किंतु भूमौ पतित्वा शुष्यति उत्पद्यमानं त्ववयवान्तरं एतेनात्र भग्नक्षतशब्दौ विभागविशेषजन्यनाशप्रतियोगिनमाचक्षाते इत्यपि निरस्तं अवयवविभागजन्यनाशप्रतियोगिनः पूर्वावयविनः पुनरुत्पत्त्यभावात् । अथ भग्ने क्षते वा संरोहणं भग्नक्षत संरोहणं यत्किंचिदवयवविनाशोत्तरं तदवयवेषु पूर्वावयविसमवेतपरिमाणसजातीयपरिमाणवतो द्रव्यान्तरस्य स्वत उत्पत्तिः । तथाच स्वनाशोत्तरकालीनास्मदीयप्रयत्नासाध्योत्पत्तिकत्वस्वसामानाधिकरण्यस्वसमवेतपरिमाणसजातीयपरिमाणवत्त्वैतत्त्रितयसंबन्धेन द्रव्यविशिष्टत्वं पर्यवसन्नम् । मानुषादिशरीरे हि किंचिदवयवक्षत्या पूर्वावयविविनाशेऽपि पश्चादुत्पन्नचर्मावयवसन्धानेन तेष्ववयवेषु तावदवयव्यन्तरमुत्पद्यते । प्रच्छिन्नायामङ्गुल्यामङ्गुल्यन्तरप्ररोहाभावस्तु वृक्षविशेषे प्रच्छिन्नायां शिरश्शाखायां शिरश्शाखान्तरप्ररोहाभाववत्कारणविशेषाभावात् प्रतिबन्धकविशेषाद्वा कल्पनीयः । नचैवं छिन्नप्ररूढ एव वृक्षादौ दर्शितहेतुसंभवात् भागासिद्धिरिति वाच्यं तस्यैवेदानीं पक्षत्वाभ्युपगमात् पश्चाद्वृक्षत्वहेतुना सर्वत्र शरीरत्वसाधनेनेष्टसिद्धेः दर्शितत्रितयसंबन्धेन द्रव्यविशिष्टवृत्तिद्रव्यत्वव्याप्यव्याप्यजातिमत्त्वस्यैव सर्वत्र हेतुत्वसंभवाच्च । अत्र स्वस्यापि स्वसमानाधिकरणत्वात् स्वसमवेतपरिमाणसजातीयपरिमाणवत्त्वाच्च घटादौ व्यभिचारवारणाय संबन्धघटकप्रथमदळं. महापटनाशानन्तरं पूर्वपटावयवेषु तन्त्वन्तरसंयोजनेनोत्पादिते पूर्वपटसजातीयपरिमाणवति पटान्तरे व्यभिचारवारणाय तत्रास्मदीयप्रयत्नासाध्यत्वनिवेशः । एकत्र पटनाशोत्तरमस्मदीयप्रयत्नं विना देशान्तरे दैववशपतितकृपाणपुटपाटितेषु तन्तुष्वेतद्देशीयपटसजातीयपरिमाणवतः खण्डपटस्योत्पत्त्या तत्र व्यभिचारवारणाय स्वसामानाधिकरण्यदळं दैववशनिष्पन्नमहापटनाशोत्तरकालोत्पत्तिके खण्डपटे व्यभिचारवारणाय तृतीयदळमिति. चेदेवमपि दैववशपतिततकृतण्डु-

## मञ्जूषा.

लाद्यातत्कदुग्धध्वंसोत्तरकालोत्पत्तिके दध्नि व्यभिचारः । एवं वैशेषिकमतेऽपि सर्वत्र नैयायिकमते च क्वचिदग्निसंयोगजनितपूर्वघटनाशोत्तरकालोत्पत्तिके घटान्तरेऽपि । नच स्वसामानाधिकरण्यं स्वसमवायिमहत्समवेतत्वमतो न दोषः आतञ्चनेन दुग्धद्व्यणुकपर्यन्तनाशोत्तरमेव हि द्व्यणुकादिक्रमेण दध्यारभ्यते अतो महति दुग्धावयवे दध्नो न समवायः किंतु दुग्धद्व्यणुकावयवे परमाणौ दधिद्व्यणुकस्य तत्र च न व्यभिचारः परमाणोरमहत्त्वात् । एवं पाकस्थलेऽपि घटान्तरे न व्यभिचारप्रसक्तिः किन्तु घटान्तरारम्भकद्व्यणुके तत्रच परमाणोरमहत्त्वान्न दोष इति वाच्यम् । एवमपि पात्रस्थितस्य महाजलस्य कतिपयावयवपरिस्रावेण विनाशे परिशिष्टेष्ववयवेषु दैवादागन्तुकजलान्तरसंयोगेनोत्पादिते महाजले व्यभिचारात् । नच स्वनाशोत्तरकालीनास्मदीयप्रयत्नासाध्योत्पत्तिकावयवान्तरसमवेतत्वं प्रथमदलार्थः भङ्गादिना पूर्ववृक्षनाशोत्तरवृक्षान्तरारम्भकस्य शाखान्तरस्योत्पादात् पक्षे हेतुसत्त्वं इहतु जलान्तरं न पूर्वमहाजलनाशोत्तरकालोत्पत्तिकं किंतु तत्संयोगमात्रमिति वाच्यम् । एवमपि यत्र घटावयवे एकस्मिन्नेव कपाले वह्निसंयोगेन तत्कपालस्य द्व्यणुकमारभ्य नाशः पुनर्द्व्यणुकादिक्रमेण पूर्वकपालसजातीयकपालान्तरारम्भः उत्पन्नेन च तेन कपालेन पूर्वकपालान्तरसंयुक्तेन पूर्वघटसजातीयघटान्तरारम्भः तत्र घटान्तरे व्यभिचारात् । नच स्वानारम्भकपरमाण्वारब्धत्वं स्वारम्भकपरमाण्वनारब्धत्वं वा प्रथमदलनिवेशितावयवान्तरविशेषणमिति वाच्यं एवमपि पात्रस्थितस्य महत्तरस्य जलस्य कतिपयावयवपरिस्रावोत्तरमेव यत्र करकादिविलयेन स्रुतानामनेकेषां जलानां संयोगेन वा किंचिन्महाजलमुत्पन्नं पश्चाच्च तत्संयुक्तेन पूर्वपरिस्रुतावशिष्टेन पात्रस्थितेन जलेन पुनर्महत्तरं जलमारब्धं तत्र तस्मिन्महत्तरजले व्यभिचारात् । किंचात्र प्रथमकल्पे यत्र घटारम्भकैकमात्रकपालपाकस्थले पूर्वघटानारम्भका अपि कतिपयपरमाणवो दैवात्तत्र लग्ना घटान्तरमारभन्ते तत्र व्यभिचारो दुर्वारः द्वितीयकल्पे तु स्वरूपासिद्धिः तथाहि छिन्नप्ररूढं यद्यपि शाखान्तरमन्तःपवनोपनीतैर्भूपरमाणुभिरारभ्यते तथापि छिन्नविशेषितपूर्वावयवारम्भका अपि कतिचिदन्तःपरमाणवस्तत्र मिलन्ति । नचैवं पूर्वावयवस्य विनाशापत्तिरिष्टत्वादुपचयापचयाभ्यामुत्पादविनाशयोः सर्वसम्मतत्वात् । एषा ह्यत्र रीतिः तरुष्वन्तःसञ्चरता पवनेन सलिलसेकशिथिलिताः पार्थिवाः परमाणवः सततमुत्क्षिप्यान्तरेव व्यूहन्ते व्यूहमानैरुत्सर्पद्भिश्च तैस्सह पूर्वपूर्वव्यूढा अपि परमाणवो यथायोगं प्रसर्पन्ति उत्सर्पन्ति च तत्र केचित्परमाणवः शाखामारभन्ते केचित्पत्राणि केचित्पुष्पाणि केचित्फलानि भग्नायां शाखायां तत्सजातीयशाखान्तरोत्पादेऽप्येषैव रीतिः । एवं मानुषादिशरीरेष्वपि भुक्तान्नकवलाद्यारम्भकाः केचन परमाणवोऽन्तस्सञ्चरता पवनेनैव यथायोगं व्यूहन्ते तेन चोपचीयन्ते शरीरावयवाः एवं प्रच्छिन्ने चर्मखण्डे तत्सजातीयचर्मखण्डान्तरोत्पत्तिरपि द्रष्टव्या । क्वचिदनागन्तुकैः पूर्वावयव्यारम्भकैरेव परमाणुभिः अन्तःपवनसञ्चारितैः अवयवान्तरारम्भो दृष्टः यथा गृहान्तरुपरिबद्धोऽपि कुमारीदलकाण्डः किसलयति अनश्नतोऽपि कस्यचिच्चर्मखण्डः प्ररोहति यद्यप्येतावता मनुष्यादिशरीरेष्विव तरुष्वप्यन्तःपरमाणूनां सञ्चारको वायुः प्राण एव भवितुमर्हति तथापि न वयं तत्र प्राणसञ्चारो नास्तीति ब्रूमः किन्तूक्तहेतोरदुष्टस्य निर्वचनमशक्यमित्येव । अत्रोच्यते भग्ने क्षते वा पूर्वस्यावयविनो यस्मिन्कस्मिंश्चिदवयवे सति पश्चात्संरोहणं तदनारम्भकतत्समवेतद्व्यारम्भकपरमाणुसंयोगनाशासहकृतपरमाण्वप्रयोज्या उत्पत्तिरुत्तरावयविसंबन्धिनोऽवयवस्य भग्नक्षतसंरोहणन्नाम । अथवा भग्नक्षतशब्दौ विभक्तपतितावयवमिव विभक्तावशिष्टमप्यवयवमाचक्षाते अतो भग्नात् क्षताद्वा विभक्तावशिष्टात् प्रकाण्डादेरवयवात् संरोहणं तदारम्भकपरमाणुसंयोगनाशासहकृतपरमाण्वप्रयोज्या उत्पत्तिरुत्तरावयविसंबन्धिनोऽवयवस्य भग्नक्षतसंरोहणन्नाम । तथाहि भग्नायां शाखायां शाखान्तरारम्भकाः परमाणवो भग्नशिष्टावस्थितप्रकाण्डादिरूपावयवारम्भकपरमाणुपुञ्जात् बहिर्निस्सरन्त एव शाखान्तरमारभन्ते । अतस्तैः शाखान्तरारम्भे भग्नशिष्टप्रकाण्डारम्भकपर-

### मञ्जूषा.

माणुभिस्सह यस्तेषामन्तस्संयोगः तन्नाशो बहिर्निस्सरणक्रियाद्वारा सहकारी नत्वेवं परिस्रुतावशिष्टात् पात्रस्थिताज्जलात् जलान्तरस्योत्पत्स्यमानमहत्तरजलावयवभूतस्य संरोहणमस्ति पात्रस्थितजलपरमाणुपुञ्जात् अनिस्सृतैरेव परमाणुभिस्तदारम्भात् क्वचिन्निस्सृतैरारम्भेऽपि अनिस्सृतैरेवारम्भसंभवेन दैववशसंपन्नस्य निस्सरणस्य तत्राप्रयोजकत्वाच्च । तथाचावयवान्तरविभक्तावयवारम्भकपरमाणुसंयोगनाशासहकृतपरमाणवप्रयोज्योत्पत्तिकावयवसमवेतद्रव्यत्वं पर्यवसन्नो हेतुः संयोगनाशस्य सहकारित्वं च निस्सरणद्वारेति नानुपपत्तिरिति दिक् । अस्मद्गुरुचरणास्तु भग्नयोः क्षतयोर्वा संरोहणं भग्नक्षतसंरोहणं विभागविशेषविशिष्टयोरवयवयोः पुनस्संबन्ध इत्यर्थ इत्याचक्षते । ननु पटावयवानामपि तन्तूनां विभक्तानां पुनस्तन्तुवायेन संयोजनात् तत्र व्यभिचारः नचास्मदीयप्रयत्नासाध्यत्वमपि संबन्धविशेषणमिति वाच्यं एवमपीषद्विभक्तयोराद्रयोश्चक्रनिहितयोः कपालयोर्बलवता मारुतेन संयोजनेन घटे व्यभिचारात् पाकविशीर्णानामवयवानां पाकेन पुनस्संयोजनाच्च । उच्यते न निश्शेषविभक्ताभ्यामवयवाभ्यां वृक्षान्तरमारभ्यते किन्तु किंचिदंशसंयुक्ताभ्यां तत्र चेयं रीतिः अविभक्तावयवांशमार्गेण सञ्चरतान्तरेण वायुना भौमाः परमाणवः इतस्ततस्सञ्चारिता विभक्तांशदेशद्वयात् बहिर्निस्सृत्य निस्सृत्य परस्परेण शनैस्संयुज्यमाना वृक्षान्तरमारभन्ते अयमेव संयोगो विभक्तयोरवयवयोः पुनस्संबन्ध इत्युपचर्यते । न त्वेतादृशस्तन्तूनां कपालयोर्वा पुनस्संबन्धोऽस्ति । तथाच विभक्तावयवद्वयारम्भकपरमाणुसंयोगनाशप्रयोज्यपरस्परसंयोगविशिष्टपरमाणुसहकृततादृशावयवद्वयारम्भकपरमाण्वारब्धद्रव्यत्वं हेतुः पर्यवसन्नः । विभक्तावयवद्वयारम्भकैः परमाणुभिस्सह यः पवनाकृष्टानां परमाणूनां अन्तस्संयोगः तन्नाशेन बहिर्निस्सरणद्वारा प्रयोज्यो यस्तेषामुभयेषां निस्सृतानां परस्परेण संयोगस्तद्विशिष्टैः तैः परमाणुभिः सहकृता ये पूर्वविभक्तावयवद्वयारम्भकाः परमाणवस्तदारब्धत्वस्य तत्र वृक्षे सत्त्वान्न दोषः । पूर्वविभक्तयोरवयवयोरुपचयादिना नाशसंभवेन तादृशावयवद्वयारब्धत्वमपहाय तदारम्भकपरमाण्वारब्धत्वमुक्तमिति दिक् । भग्नक्षतसंरोहणादिनेत्यादिपदादुपचयपरिग्रहः । उपचयश्च पूर्वावयव्यारम्भकाणां परमाणूनां प्रकृष्टमहत्त्ववदवयव्यन्तरारम्भकैः परमाण्वन्तरैः तद्व्यूढैः स्वात्मभिश्च विलक्षणसंयोगः पच्यमानबीजावयवानां क्वथ्यमानरागठाद्यवयवानां उद्व्यस्यमानतूलकाद्यवयवानां च यः प्रकृष्टमहत्त्ववदवयव्यन्तरारम्भकः शिथिलीभावापरनामा संयोगः स नेदृशोपचयरूपस्तत्रावयवान्तरमेळनाभावात् किंतु विद्यमानानामेवावयवानां प्रचयाख्यस्संयोग इति न तत्र दोषः । तथाचेदृशोपचयाख्यसंयोगविशेषविशिष्टावयवारब्धद्रव्यत्वं पर्यवसन्नो हेतुः । यदि चात्र परमाणूनां निरवयवानां परस्परव्यूह्यव्यूहकभावो नास्तीति मनसा संभाव्यते तदोक्तस्थले सर्वत्र परमाणुपदं त्रसरेणुपरं बोध्यम् । अथोक्तानां त्रयाणां हेतूनां न प्रयोजकत्वमिति चेन्नास्त्यप्रयोजकता भग्नसंरोहणस्य भग्नयोरवयवयोरुपदर्शितसंबन्धस्य निरुक्तोपचयस्य चान्तःप्राणसञ्चारनिमित्तकत्वात् । नन्वास्तां वृक्षादिष्वन्तः प्राणवायुः तथापि वृक्षे तत्संयोगस्य ज्ञानाद्युत्पादानुकूलत्वे किं बीजमिति चेत् विरुद्धमिदमाशङ्क्यते यत्संयोगो ज्ञानाद्युत्पादानुकूलस्स एव हि वायुः प्राणो नाम । किंच संरोहणादौ ज्ञानाद्युत्पादानुकूलत्वरूपेण तदवच्छेदकजातिरूपेण वाध्यात्मिकत्वेन विशिष्ट एव प्राणसंयोगः प्रयोजकः नान्यथा श्वासाभिहते घटादौ तदभावादिति नाप्रयोजकत्वशङ्कावकाशः । अत्राचार्यमतानुयायिनः वृक्षादेः प्राणवत्त्वे तदधीने शरीरत्वे च मानाभावः भग्नक्षतसंरोहणादेरन्यथैवोपपत्तेः तद्धि परमाणूनां अन्तरितस्ततस्संचाराधीनं परमाणूनां सञ्चारश्च आन्तरस्य वायोः सूक्ष्मसञ्चाराधीन इत्येतावन्तमर्थमभ्युपगच्छामः । तस्य वायोः प्राणत्वं तत्संयोगेन वृक्षादौ ज्ञानाद्युत्पत्तिश्च नेष्यते । नहि संरोहणत्वाद्यवच्छिन्नं प्रति ज्ञानाद्युत्पादानुकूलप्राणसंयोगत्वेन हेतुता मानाभावात् । एषा ह्यत्र रीतिः अनवरतपरिस्पन्दिनो मारुतास्त्रसरेणवो धरणिसलिलसंयोगशिथिलीकृतेषु बीजावयवेषु मन्दंमन्दमनुप्रविशन्तः पार्थिवानाप्यांश्च त्रसरेणूनाकृष्य तत्तद्बीजावयवैस्संयोजयन्ति तथाविधैश्च तत्तद्बीजावयवैस्तत्तद्-

ति वाच्यम् । तादृशशरीरे प्रमाणाभावात् । अथवा चेष्टावदन्त्यावयविवृत्तिद्रव्यत्वव्याप्य-

## प्रभा.

लक्षणत्वस्वीकारमात्रेणाव्याप्तिवारणं संभवति तथापि मृतशरीरस्य जीवशरीरापेक्षया स्थौल्येन भिन्नतया तत्र चेष्टाधिकरणत्वमपि न संभवतीति तत्राव्याप्तिर्दुर्वारेत्यस्वरसादाह ॥ अथवेति ॥

## मञ्जूषा.

क्षाङ्कुरा उत्पद्यन्ते ऊष्मसंयोगविशेषाच्च तत्र रूपादय उत्पद्यन्ते तद्द्वारेणैव पार्थिवैराप्यैश्च त्रसरेणुभिः परमाणुभिर्वाऽनवरतमन्तरुन्नीय व्यूह्यमानैस्तरवो वर्धन्ते तत्रच त्रसरेणूनां परमाणूनां वा तत्तदुत्तरदेशसंयोगे तत्तक्रियाविशेषः कारणं क्रियाविशेषे च पवननोदनविशेषः तत्रच तदीयक्रियाविशेषः सर्वत्रादृष्टविशेषोऽपि पुरुषस्य सहकारो । भग्नक्षतसंरोहणादावप्येषैव रीतिः । किं तस्य वायोः प्राणत्वेन किंवा तत्संयोगाद्वृक्षादौ ज्ञानाद्युत्पत्तिस्वीकारेण । ननु वर्धमाना इमाः पवनप्रतिहतिजनितविनिपातचकिता लता झटिति सन्निहितानुपद्मतरूनालम्बन्ते वेष्टयन्ति च तदीयान्विटपानात्मीयैरंशुभिरशिथिलबन्धमेव बहुशः । अतो लतादीनां ज्ञानाश्रयवच्छेदकत्वमावश्यकमिति चेन्न बाह्यपवनसञ्चारविशेषेणैव तदुपपत्तेः । नर्मदातीरसञ्जाता इत्यादिपुराणवचनं तु प्रशंसामात्रपरं गुरुं त्वंकृत्य हुंकृत्येत्यादितु निन्दामात्रपरमिति वदन्ति । तदन्ये न क्षमन्ते विष्णुपुराणादौ चेतनसृष्टिप्रकरणे वृक्षादिसृष्टेरुक्तत्वादिति ॥ यदि हस्तादाविति ॥ वस्तुतो हस्तादावपि शरीरव्यवहारो भवत्येव यद्वि चेष्टावद्भोगावच्छेदकं वा तदेव हि शरीरपदवाच्यं हस्तादिक्रिया हि चेष्टैव हस्तश्चेष्टत इति व्यवहारात् एवं भोगावच्छेदकोऽपि हस्तः हस्ते मे वेदनेत्यनुभवादिति सूचनाय यदीत्युक्तम् ॥ तादृशे प्रमाणाभावादिति ॥ नच कथं तादृशे प्रमाणाभावः मृतशरीरस्य तादृशस्य सत्त्वात् परिमाणतारतम्यवतस्तस्य चेष्टाश्रयपूर्वशरीराभिन्नत्वादिति वाच्यं मृतशरीरादौ शरीरव्यवहारस्य काष्ठलोहशरीरादाविवाकृतिविशेषसाम्यप्रयुक्तत्वेन गौणत्वात् । भोगायतनं शरीरमित्येव ह्यभियुक्तानामुक्तिः । एवं चेष्टाश्रयपूर्वशरीरवृत्तिचैत्रत्वादिजातिरपि मृतशरीरे न स्वीक्रियते चैत्रोऽयमिति व्यवहारस्त्वाकारसाम्यप्रयुक्तः अतो वक्ष्यमाणजातिघटितलक्षणस्य न तत्रातिव्याप्तिप्रसक्तिः । ननु शरीरस्य न चैतन्यं मृतेषु व्यभिचारत इति वक्ष्यमाणतया तत्रापि शरीरव्यवहारो मुख्य इत्येव विश्वनथपक्ष इति चेत् भ्रान्तोऽसि । नहि मृतशरीरे चैतन्यापादनं तत्र शरीरव्यवहारमुख्यत्वाभिप्रायं तत्र शरीरव्यवहारमुख्यत्वामुख्यत्वयोरतन्त्रत्वात् नहि चेतनत्वे शरीरपदवाच्यत्वं तन्त्रमिति पराभिप्रेतं येनेत्थमापाद्येत । किन्तु मृतशरीरस्य पूर्वशरीरादभेदमभिप्रेत्यैव तदापादितम् । युज्यते चेदमापादनं यदि शरीरस्यैव ज्ञानवत्त्वमुच्येत तदा पूर्वज्ञानाश्रयस्य शरीरस्य मृतत्वावस्थायामपि सत्त्वात्तदानीमपि तत्र ज्ञानाद्यापत्तिः । मन्मते तु पूर्वं ज्ञानाश्रयस्यात्मनस्तदानीमपि यातनाशरीरान्तरावच्छेदेन ज्ञानादिमत्त्वमिष्यत एव । तच्छरीरावच्छेदेन तदानीं तदात्मनि ज्ञानाभावस्तु नात्मनश्चैतन्यक्षतिमावहतीति हि तद्ग्रन्थार्थः । नचायमर्थो मृतशरीरस्य पूर्वशरीरभेदाभिप्राये सङ्गच्छते पूर्वशरीरस्यैव वयं चेतनत्वमाचक्ष्महे न मरणकालोत्पन्न

## दिनकरीयम्.

भावेनाव्याप्तेराह ॥ अथवेति ॥ घटत्वमादाय घटेऽतिव्याप्तिवारणाय चेष्टावदिति । हस्तादावतिव्याप्तिवारणायान्त्यावयवीति । नच हस्तत्वादिकं न जातिः पृथिवीत्वादिना सङ्करादिति वाच्यम् । पृथिवीत्वादिव्याप्यनानाहस्तत्वाद्यङ्गीकारात् । पृथिवीत्वरूपतादृशजातिमति घटादावतिव्याप्तिरतो लक्षणान्तरमाह ॥ अ-

## रामरुद्रीयम्.

वोत्तमगतिप्राप्तिसम्भवात् जीवात्मनो भोगायतनस्य च प्राणवत्त्वनियमादिति भावः ॥ मृतशरीर इति ॥ न च मृतशरीरेऽपि पूर्वं चेष्टासत्त्वात्कथमव्याप्तिर्नहि यदा यस्य चेष्टावत्त्वं तदा तस्य शरीरत्वमिति कालघटितं लक्षणमिति वाच्यम् । यत्र मरणानन्तरं खण्डशरीरान्तरमुत्पन्नं तत्राव्याप्तौ तात्पर्यात् ॥ न चेति ॥ यद्यपि हस्तत्वस्य जातित्वाभावेऽपि पृथिवीत्वादिकमादायैवातिव्याप्तिः प्र-

जातिमत्त्वं अन्त्यावयविमात्रवृत्तिचेष्टावद्वृत्तिजातिमत्त्वं वा तत् मानुषत्वचैत्रत्वादिजातिमा-

## प्रभा.

घटत्वादिवारणाय चेष्टावदिति। हस्तत्वादिवारणायान्त्यावयवीति। नच शरीरत्वस्येव हस्तत्वादेरपि पृथिवीत्वादिना सांकर्येण जातित्वाभावात् तामादाय हस्तादावतिव्याप्त्यप्रसक्त्यान्त्यावयवित्वविशेषणं व्यर्थमिति वाच्यं पृथिवीत्वादिव्याप्यनानाहस्तत्वजात्यङ्गीकारेणोक्तदोषप्रसक्त्या तद्विशेषणस्यावश्यकत्वात्। नचैवं सति पृथिवीत्वादिव्याप्यनानाशरीरत्वजातिमङ्गीकृत्य तादृशजातिचतुष्टयान्यतमवत्त्वस्यैव लक्षणत्वसंभवे चेष्टावत्त्वादिघटितगुरुतरलक्षणकरणमयुक्तमिति वाच्यं तस्यापि लक्षणान्तरत्वात् प्रकृतलक्षणे तस्याघटकत्वेन वैयर्थ्याभावादित्यभिप्राय इति हृदयम्। नन्वत्र पृथिवीत्वरूपतादृशजातिमादाय घटादावतिव्याप्त्यापत्तेः द्रव्यव्याप्यत्वविशेषणवैयर्थ्याच्च लक्षणान्तरमाह॥ **अन्त्यावयविमात्रेति**॥

## मञ्जूषा.

शरीरस्येति परेण प्रतिवचनसंभवात्। ननु मृतशरीरे पूर्वशरीरात् परिमाणवैषम्यस्यानुभवसिद्धत्वात् कथमभेद इति चेन्नाहमिदमर्थं प्रष्टव्यः। अथाप्युच्यते न सर्वत्र मरणाव्यवहितोत्तरक्षणमेव परिमाणवैषम्यमनुभवसिद्धं येन पूर्वशरीरात्तस्य भेदो नियतस्स्यात् किंतु बहुकालोत्तरं। क्वचिदव्यवहितोत्तरमेव परिमाणवैषम्यदर्शनेऽपि न क्षतिः। यत्र न तथा तत्रैव चैतन्यस्यापादनीयत्वात्। वस्तुतस्तु अव्यवहितोत्तरक्षणे स्थौल्यातिशयज्ञानं भ्रम एव उत्क्रममाणेन प्राणवायुना कुक्षिभागयोर्विप्रकर्षिततया तच्छरीरमुच्छूनमिव प्रतिभासते न तत्र परिमाणान्तरमुत्पद्यते आरम्भकसंयोगान्तरोत्पाद एव परिमाणान्तरोत्पादस्वीकारात् अन्यथा आसीनदेवदत्तादुत्थितदेवदत्ते संकुचितवेष्टितपटात्प्रसरितोत्क्षिप्तपटे च परिमाणवैषम्यप्रसङ्गात्। सति ह्यन्तःप्राणवायौ आरम्भकपरमाणूनामितस्ततश्चलनादुपचयापचयौ संभाव्येयातां किन्तु बहुकालं बाह्यपवनेनोदनेन कतिपयपरमाणूनामपनयने हस्तपादादिभङ्गे वा धर्म्यन्तरं परिमाणान्तरं चोत्पद्यते। एवंचात्र पूर्वशरीरादभिन्ने मृतशरीरे नाव्याप्तिप्रसङ्गः तत्र पूर्वं चेष्टाया उत्पन्नत्वात् लक्षणस्य यदाकदाचित्सत्ताया एव वक्तव्यत्वात् अन्यथा पूर्वोक्तानां गुणवत्त्वस्पर्शवत्त्वादीनां वक्ष्यमाणानां शीतस्पर्शवत्त्वस्नेहवत्त्वादीनां लक्षणत्वानुपपत्तेः। पूर्वशरीरात् भिन्नं तु यन्मृतशरीरं तदलक्ष्यमेवेति न तत्राव्याप्तिशङ्का। अतः सुष्ठूक्तं तादृशे प्रमाणाभावादिति। ननु यत्र झटित्युपचीयमानेष्वपचीयमानेषु वा शरीरावयवेषु पूर्वोपचयानन्तरं द्वित्रिचतुःक्षणानन्तरमेव पुनरुपचयो जातः तत्र युद्धादौ प्रतिक्षणमेव छिद्यमानेषु चावयवेषु आन्तरालिकस्य शरीरस्यापि द्वित्रिचतुःक्षणमात्रावस्थायितया तत्र कदाचिच्चेष्टानुत्पादसंभवेन तत्राव्याप्तिरित्यनुशयानः पक्षान्तरमाश्रयते॥ **अथवेति**॥ घटत्वादिवारणाय चेष्टावदिति। हस्तत्वादिवारणाय अन्त्यावयवीति। ननु हस्तत्वादिकं न जातिः पृथिवीत्वादिना सङ्करात् पृथिवीत्वादिव्याप्यनानाहस्तत्वादिस्वीकारे च तादृशशरीरत्वादेरपि स्वीकारसंभवेन शरीरत्वस्य जातित्वनिराकरणानौचित्यप्रसङ्गादिति चेन्न पृथिवीजलादिचतुर्विधशरीरसाधारणस्य एकस्य जातिरूपस्यैव शरीरत्वस्य पूर्वं निराकृतत्वात्। सर्वशरीरानुगतो धर्म एव हीदानीमाकांक्षितस्स जातिरूपो निराकृतः पृथिवीत्वव्याप्यनानाजातयस्तूक्तरूपेणानुगतीक्रियन्ते। वस्तुतस्तु निखिलपार्थिवशरीरसाधारण्येका जातिर्निखिलजलीयशरीरसाधारण्येका जातिरित्येवं चतस्रः शरीरत्वजातीर्न वयं स्वीकुर्मः मानाभावात्। सन्ति तु काश्चन जातयोऽनुभवसिद्धा यथावयवोपचयापचयभिन्नेषु

## दिनकरीयम्.

न्त्यावयवीति॥ अन्त्यावयविमात्रवृत्तीत्यनेन पृथिवीत्वजातिव्युदासः। चेष्टावद्वृत्तीत्यनेन घटत्वादिव्युदा-

## रामरुद्रीयम्.

सज्यत एव तथापि पृथिवीत्वादिकमादायैतल्लक्षणे घटादावतिव्याप्तेर्वक्ष्यमाणतया तदादाय व्यावृत्तिप्रदर्शनमनुचितामिति हस्तत्वस्य जातित्वसाधकतापरिश्रमः। नन्वत्र शरीरलक्षणप्रविष्टं चेष्टात्वं यदि

दाय लक्षणसमन्वयः। न च नृसिंहशरीरे कथं लक्षणसमन्वयः तत्र नृसिंहत्वस्यैकव्यक्तिवृत्तितया जातित्वाभावात् जलीयतैजसशरीरवृत्तितया देवत्वस्यापि जातित्वाभावादिति वाच्यम्। कल्पभेदेन नृसिंहशरीरस्य नानात्वेन नृसिंहत्वजात्या लक्षणसमन्वयात्॥ इन्द्रिय-

## प्रभा।

अवयवावृत्तीत्यर्थः। सत्यन्तेन हस्तत्वादेः पृथिवीत्वद्रव्यत्वादिव्यापकजातिमात्रस्य व्युदासः चेष्टावद्वृत्तीत्यनेन घटत्वादिव्युदासः। चेष्टात्वं हितप्राप्त्यहितपरिहारानुकूलक्रियात्वं चेष्टत इति प्रत्यक्षसिद्धजातिविशेषो वा नतु स्पन्दमात्रं घटादावतिव्याप्त्यापत्तेः॥ जलीयेति॥ देवत्वस्य जातित्वाभावे सांकर्यघटकसामानाधिकरण्योपपादकमिदम्। अपिना नृसिंहत्वपरिग्रहः। तथाचैकव्यक्तिवृत्तित्वात् नृसिंहत्वं यथा

## मञ्जूषा.

चैत्रशरीरेषु एकं वैजात्यं तादृशेषु मैत्रशरीरेषु एकं वैजात्यमित्येवं चैत्रत्वमैत्रत्वादिपरिभाषिताः काश्चन जातयः एवं मानुषगवाश्वगजोष्ट्रलतागुल्मौषधिवनस्पतिषु मानुषत्वादिशब्दपरिभाषिताः काश्चन जातयः एवं वरुणादिष्वेता एव जातयः पृथिवीत्वादिव्याप्यानि नानाशरीरत्वानीति मन्महे। यथा हि चैत्रमैत्रशरीरयोः परस्परवैजात्यमनुभवसिद्धं तथा तदवयवेषु हस्तमुखपादादिष्वपि वैजात्यमनुभवसिद्धम्। एवं मनुष्याद्यवयवापेक्षया गजाश्वाद्यवयवेषु लतागुल्माद्यवयवेषु च मिथो वैलक्षण्यमानुभाविकं दुरपह्नवं ता एता जातयः पृथिवीत्वादिव्याप्यानि नानाहस्तत्वादीनीति मन्महे। ततश्च न कश्चन विरोधः। पृथिवीत्वादिजातिवारणाय द्रव्यत्वव्याप्यव्याप्यत्वनिवेशः। केषुचित्पुस्तकेषु व्याप्यपदद्वयघटितः पाठो न दृश्यते तत्र एकव्याप्यपदविलोपः प्रामादिकः। द्रव्यत्वव्याप्यत्वमात्रेण पृथिवीत्वादिजातिवारणासंभवात्। इममेव दोषं लक्षणान्तरावतरणबीजमाचक्षाणो नीलकण्ठस्तु बभ्राम। अतिमात्रव्यक्तदोषाख्याने विश्वनाथस्य मौढ्यापत्तेः। भूतेषु भाविषु च बहुविधेषु लक्षणपरिष्कारेषु द्रव्यत्वव्याप्यजातिपदेन पृथिवीत्वादिजातय एव गृह्यन्ते ता इह कथं द्राक् नोपतिष्ठेरन्। अतिव्याप्तिश्च नेयमल्पा पार्थिवेषु जलीयेषु तैजसेषु वायवीयेषु च सर्वेष्विन्द्रियेषु विषयेषु च प्रसरणादिति अत्र द्रव्यत्वव्याप्यव्याप्यत्वं द्रव्यत्वसमानाधिकरणान्योन्याभावप्रतियोगितावच्छेदिका या जातिः तत्समानाधिकरणान्योन्याभावप्रतियोगितावच्छेदकत्वे सति तत्समानाधिकरणत्वं वाच्यम्। अतो लाघवाय लक्षणान्तरमाह॥ अन्त्यावयविमात्रवृत्तीति॥ द्रव्यसमवाय्यवृत्तीत्यर्थः॥ नच नृसिंहेति॥ नृसिंहशरीरे हि

## दिनकरीयम्.

सः। चेष्टाच हिताहितप्राप्तिपरिहारार्था क्रिया ग्राह्या न तु स्पन्दनमात्रं ग्राह्यं घटादावपि सत्त्वात्। ननु देवत्वजातिमादाय लक्षणसमन्वय इत्यत आह॥ जलीयेति॥ देवत्वस्यापीति॥ अपिना नृसिंहत्वपरिग्रहः॥ जातित्वाभावादिति॥ जातिसाङ्कर्यादिति भावः। जातिसाङ्कर्यस्यादोषत्वे देवत्वशरीरत्वा-

## रामरुद्रीयम्.

शरीरक्रियानिष्ठजातिविशेषस्तदा मन्त्रादिमहिम्ना नोदनं विनापि यत्राचेतने घटादौ क्रियोत्पत्तिः तत्रापि मन्त्रमहिम्ना घटश्चेष्टत इति प्रयोगात्तत्रापि तादृशजातेरङ्गीकरणीयतया घटत्वमादाय घटादावतिव्याप्तिः। यदि च शरीरक्रियात्वं चेष्टात्वं तदात्माश्रय इत्यतश्चेष्टात्वं प्रकारान्तरेण निर्वक्ति॥ चेष्टा चेति॥ परिहारार्थेति॥ अत्रेष्टत्वं स्वावच्छिन्नेच्छाविषयत्वमनिष्टत्वं स्वावच्छिन्नद्वेषविषयत्वं तेन घटादिक्रियाया अपि कस्यचिदिष्टानिष्टप्राप्तिपरिहारानुकूलत्वसम्भवेऽपि न घटत्वादिकमादायातिव्याप्तिः तदर्थत्वंच तत्प्रयोजनकत्वं तदनुकूलत्वमिति यावत्। न च शरीरे कीदृशजातिमादाय लक्षणं सङ्गमनीयं पृथिवीत्वादेरतथात्वादिति वाच्यम्। मनुष्यत्वादिकमादायैव तत्सम्भवात्। नच मनुष्यत्वमपि न जातिर्नृसिंहत्वादिभिरेव साङ्कर्यादिति वाच्यम्। तत्र मनुष्यत्वाद्यनङ्गीकारादिति भावः॥ अपिनेति॥ नृसिंहत्वस्य जातित्वे बाधकमेकव्यक्ति-

**मिति** ॥ घ्राणेन्द्रियं पार्थिवमित्यर्थः। पार्थिवत्वं कथमिति चेदित्थम्। घ्राणेन्द्रियं पार्थिवं रूपादिषु मध्ये गन्धस्यैवाभिव्यञ्जकत्वात् कुङ्कुमगन्धाभिव्यञ्जकगोघृतवत्। न च दृष्टान्ते

## प्रभा.

न जातिः तथा सांकर्यरूपदोषवत्त्वाद्देवत्वस्यापि जातित्वाभावेन नृसिंहशरीरेऽव्याप्तिर्दुर्वारेति भावः। सांकर्यस्यादोषत्वे तु शरीरत्वजातिमादायैव शरीरमात्रे लक्षणसमन्वयेन गुरुलक्षणानुसरणवैयर्थ्यापत्तेरिति हृदयम् ॥ **लक्षणसमन्वयसंभवादिति** ॥ एकव्यक्तिकत्वरूपबाधकाभावादिति भावः॥ **रूपादिषु मध्य इति** ॥ रसगन्धस्पर्शाः आदिपदार्थाः अत्र सप्तम्याः घटकत्वमर्थः एतल्लाभायैव मध्य इत्युक्तं तस्य गन्धपदसमाभिव्याहृतैवकारार्थगन्धेतराविषयकज्ञानाजनकत्वघटकगन्धेतरस्मिन्नन्वयः। तथाच रूपरसगन्धस्पर्शघटकीभूतं यत् गन्धेतरत् तद्विषयकज्ञानाजनकत्वे सति गन्धविषयकज्ञानजनकत्वादिति हेतुः फ-

## मञ्जूषा.

न मनुष्यत्वं सिंहत्वं वाऽस्ति एकैकमात्रस्वीकारे विनिगमकाभावात् उभयोः स्वीकारे च जातिसंकरप्रसङ्गात् आंशिकत्वापाताच्च। किन्तु तदीयमुखाद्यवयवेषु प्रसिद्धसिंहमुखाद्यवयववृत्तिजातिमत्त्वं तदीयपादोदराद्यवयवेषु च प्रसिद्धमानुषीयपादादिवृत्तिजातिमत्त्वं स्वीक्रियते। तैश्चोभयजातीयैरवयवैरारभ्यमाणे शरीरे शुक्लपीताभ्यामारब्धे रूप इव चित्रत्वजातिः नृसिंहत्वापरपर्यायः स च स्वीकारो न संभवति एकव्यक्तिकत्वात्। नचास्मदादिशरीराणामिव नृसिंहशरीरस्याप्युपचयापचयाभ्यां भेदोऽस्तीति वाच्यम् संसार्यदृष्टसचिवभगवत्सङ्कल्पमात्राकृष्टपरमाण्वारब्धस्य घटिकाद्वयकालावस्थितस्याशनायापिपासाद्यसंस्पृष्टस्य नृसिंहशरीरस्यान्तरालिकोपचयापचयकल्पने मानाभाव इत्यभिप्रायात् ॥ **कल्पभेदेनेति** ॥ कल्पशब्दः कालविशेषवचन उपासनाप्रयोगवचनश्च उभयमपीह विवक्षितम्। प्रतिब्रह्मकल्पं नृसिंहावतारस्वीकारादुपासनादृष्टवशेन नृसिंहशरीराणामुत्पादस्वीकाराच्चेति ॥ **रूपादिष्विति** ॥ घटितत्वं सप्तम्यर्थः। मध्यशब्दस्समुदायपरः घटकत्वं सप्तम्यर्थः। एवकारार्थश्च गन्धेतराव्यञ्जकत्वं रूपादिघटितसमुदायघटकत्वं गन्धे एवकारार्थघटकगन्धेतरस्मिंश्च विशेषणम्। केचित्तु रूपादिपदोत्तरसप्तम्या एव घटकत्वमर्थः तादृशार्थतात्पर्यग्राहकश्च सप्तम्यन्तो मध्यशब्द इति वदन्ति। एतन्मतेऽपि रूपादिघटकत्वान्वयः पूर्ववत्। पक्षद्वयेऽपि गन्धे तदन्वयो वाक्यलब्धोऽपि प्रयोजनविरहान्न हेतुकोटौ प्रवेश्यते रूपादीत्यादिपदेन रसगन्धस्पर्शशब्दा गृह्यन्ते अत एव रूपादिषु पञ्चसु मध्य इति सप्तम्यन्तपञ्चपदघटितोऽपि पाठो बहुषु पुस्तकेषु दृश्यते तथाच रूपरसगन्धस्पर्शशब्दसमुदायघटको यो गन्धेतरः तदव्यञ्जकत्वे सति गन्धव्यञ्जकत्वादिति हेतुः फलितः ॥ **कुङ्कुमगन्धेति** ॥ अत्र गन्धविशेषनिष्ठलौकिकविषयतानिरू-

## दिनकरीयम्.

देर्नानाजातित्वाङ्गीकारे वा देवत्वशरीरत्वजातिमादायैव लक्षणसमन्वय इति ध्येयम् ॥ **रूपादिषु मध्य इति** ॥ रसगन्धस्पर्शा आदिपदार्थाः। नवशरावगन्धव्यञ्जकजले मनसि च व्यभिचारवारणायैवकारः तद्दाने च सक्तुरसस्याप्यभिव्यञ्जकत्वान्न दोषः। घ्राणेन्द्रिये गन्धत्वाभिव्यञ्जकत्वाद्धेत्वप्रसिद्धिवारणाय हेतौ मध्यान्तम्। नचासिद्धिवारकविशेषणं निरर्थकमिति वाच्यम्। व्यभिचारज्ञान इव हेत्वप्रसिद्धावपि व्याप्तिज्ञाना-

## रामरुद्रीयम्.

कत्वं न तु साङ्कर्यमिति बोध्यम् ॥ **नवशरावेति** ॥ ननु रूपाद्यव्यञ्जकत्वं तत्प्रत्यक्षानुपधायकत्वम्। तच्च परकीयरूपाद्यव्यञ्जकगन्धव्यञ्जकजलव्यक्तावक्षतमेवेत्येवकारेण न तत्र व्यभिचारवारणसम्भव इत्याशयेनान्यत्र व्यभिचारवारकतां तस्य प्रदर्शयति ॥ **मनसि चेति** ॥ **मध्यान्तमिति** ॥ एवकारेण गन्धभिन्नाद्यव्यञ्जकत्वं लभ्यते तच्च न गन्धत्वव्यञ्जकघ्राणेन्द्रियेऽपीति स्वरूपासिद्धिवारणाय मध्यान्तं तत्सहितैवकारेण च गन्धभिन्नरूपाद्यन्यतमाव्यञ्जकत्वं लभ्यते अतो न गन्धत्वव्यञ्जकघ्राणेन्द्रियेऽपि स्वरूपासिद्धिरिति भावः ॥ **निरर्थकमिति** ॥ व्यभिचारावारकत्वादिति भावः ॥ **व्याप्तिग्रहौ-**

स्वीयरूपादिव्यञ्जकत्वादसिद्धिरिति वाच्यम् । परकीयरूपाद्यव्यञ्जकत्वस्य तदर्थत्वात् । न चैवं नवशरावगन्धव्यञ्जकजलेऽनैकान्तिकत्वमिति वाच्यम् । तस्य सक्तुरसाभिव्यञ्जकत्वात् ।

## प्रभा.

लितः । तत्रापि रूपाग्राहकत्वे सति रसाग्राहकत्वे सति स्पर्शाग्राहकत्वे सति गन्धग्राहकत्वादित्युक्तौ एकसत्यन्तेनानतिप्रसङ्गे सत्यन्तद्वयवैयर्थ्यापत्त्या सत्यन्तत्रयघटितहेतुत्रय एव मूलकारस्य तात्पर्यं वाच्यम् । अत्र हेतुत्रये सत्यन्तविशेषणानि नवशरावगन्धव्यञ्जकजले व्यभिचारवारकाणि तादृशजलस्य स्वीयरूपरसस्पर्शव्यञ्जकत्वान्न व्यभिचारः । उक्तहेतुत्रयस्य दृष्टान्तासिद्धिमाशङ्कते ॥ **नचेति** ॥ **तदर्थत्वादिति** ॥ सत्यन्तत्रयतात्पर्यार्थत्वादित्यर्थः । नचासिद्धिवारकं विशेषणं व्यर्थमिति वाच्यं व्यभिचारज्ञान इव हेत्वप्रसिद्धिज्ञानेऽपि व्याप्तिज्ञानाभावेन व्याप्तिग्रहौपयिकाप्रसिद्धिवारकविशेषणोपादानस्यापि सर्वसम्मतत्वात् ॥ **तस्येति** ॥ नवशरावगन्धव्यञ्जकजलस्येत्यर्थः । नच सक्तुरसानभिव्यञ्जकजलविशेषे

## मञ्जूषा.

पितकुङ्कुमनिष्ठविषयतासंबन्धेन घ्राणजत्वावच्छिन्नं प्रति गोघृतस्य संयोगसंबन्धेन कारणता बोध्या ॥ **स्वीयरूपादीति** ॥ ननु स्वकीयरूपादिज्ञाने स्वस्य कथं कारणत्वमिति चेदत्र केचित् । गोघृतं रूपवदिति चाक्षुषप्रत्यक्षे गोघृतस्य विषयविधया कारणत्वमस्ति तत्र स्वीयरूपव्यञ्जकत्वम् । नचैवं स्वीयरूपादीत्यादिपदग्राह्यस्वीयरसव्यञ्जकत्वानुपपत्तिः रासनप्रत्यक्षनिरूपितलौकिकविषयताया द्रव्येऽभावादिति वाच्यम् स्वीयरूपादीत्यादिपदेन स्वीयस्पर्शमात्रस्यैव ग्रहणसंभवात् । स्वीयस्पर्शविषयकस्पार्शनप्रत्यक्षे द्रव्यस्य विषयविधया कारणत्वेन तत्रानुपपत्त्यभावादिति आचक्षते । तत्तु समीचीनमेव परन्तु वक्ष्यमाणस्य वाय्वानीतसुरभिभागस्य स्वीयगन्धव्यञ्जकतया दृष्टान्तत्वं वाच्यम् । तच्चोक्तरीत्या न संभवति द्रव्यस्य घ्राणजप्रत्यक्षनिरूपितलौकिकविषयतानङ्गीकारात् । अन्येतु द्रव्यसमवेतविषयकचाक्षुषत्वाद्यवच्छिन्नं प्रति चक्षुस्संयुक्तसमवायत्वादिना हेतुतया तादृशसन्निकर्षघटकतया चक्षुस्संयुक्तत्वादिरूपेण गोघृतस्य स्वीयरूपादिप्रत्यक्षे कारणत्वमस्ति एवं वाय्वानीतसुरभिभागस्यापि स्वीयगन्धाभिव्यञ्जकत्वमस्तीत्याहुः । वस्तुतस्तु गोघृतसंयुक्ते भस्मनि घृतीयं विलक्षणं रूपं प्रतीयते । एवं तत्संयुक्ते पिष्टविशेषादौ रसमृदुस्पर्शविशेषावपि प्रतीयेते । अतो विलक्षणरूपादिनिष्ठलौकिकविषयतानिरूपितविषयतासंबन्धेन चाक्षुषत्वाद्यवच्छिन्नं प्रत्यनुभूयमानारोपजनकदोषविधया गोघृतस्य संयोगसंबन्धेन कारणत्वं वाच्यम् । एवं वाय्वानीतसुरभिभागस्यापि वायुजलादौ तादृशसौरभविशेषनिष्ठलौकिकविषयतानिरूपितविषयतासंबन्धेन घ्राणजप्रत्यक्षे तादृशदोषविधया संयोगेन कारणत्वं वाच्यमिति न कोऽपि दोषः ॥ **परकीयरूपादीति** ॥ परकीयो यो रूपरसगन्धस्पर्शशब्दसमुदायघटको गन्धेतरः तदव्यञ्जकत्वस्येत्यर्थः । तथाच गोघृतस्य परकीयरूपादिव्यञ्जकत्वाभावान्न दृष्टान्तासिद्धिः नच दृष्टान्तासिद्धिवारकविशेषणं व्यर्थमिति वाच्यम् व्याप्तिग्रहोपायोपयोगित्वे-

## दिनकरीयम्.

भावेन व्याप्तिग्रहौपयिकाप्रसिद्धिवारकविशेषणोपादानस्य सर्वसिद्धत्वात् ॥ **तदर्थत्वात्** ॥ हेतुवाक्यघटकमध्यान्तपदसमभिव्याहृतैवकारार्थत्वात् । तथाच दृष्टान्ते स्वीयरूपादिव्यञ्जकघृतादावसिद्धिवारणाय परकीयत्वं रूपादौ विशेषणं देयमिति भावः ॥ **तस्येति** ॥ नवशरावगन्धव्यञ्जकजलस्येत्यर्थः । नच येन नवशरावगन्धव्यञ्जकजलेन सक्तुरसो नाभिव्यञ्जितस्तत्र जलविशेषेऽनैकान्तिक इति वाच्यम् । परकीयरूपादिविषयकसाक्षात्कारस्वरूपायोग्यत्वस्य विवक्षितत्वान्नवशरावगन्धव्यञ्जकजलेऽपि रसव्यञ्जकतावच्छेदकज-

## रामरुद्रीयम्.

**पथिकेति** ॥ व्याप्तिग्रहानुकूलेत्यर्थः । व्यभिचारवारकविशेषणस्य हि हेतौ सार्थक्यं व्याप्तिग्रहानुकूलत्वमेव तथा च मध्यान्तानुपादाने हेतोरेव सत्त्वाप्रसिद्ध्या व्याप्तिज्ञानासम्भवेन तस्याप्येतद्व्याप्तिग्रहानुकूलत्वान्न तद्वैयर्थ्यमिति भावः । नन्वत्र हेतौ शब्दाव्यञ्जकत्वप्रवेशो निरर्थक एव आदिपदेन

**यद्वा परकीयेति न देयं वायूपनीतसुरभिभागानां दृष्टान्तत्वसम्भवात् । न च घ्राणेन्द्रिय-**

## प्रभा.

व्यभिचारस्तदवस्थ इति वाच्यं परकीयरूपादिविषयकसाक्षात्कारजनकवृत्तिद्रव्यविभाजकधर्मशून्यत्वस्य तदर्थत्वेन प्रकृते तादृशजलत्वस्य सत्त्वादिति । ननु प्रथमहेतोः नवशरावगन्धव्यञ्जकजले कुसुमाक्षरमषीनीलरूपव्यञ्जकतया व्यभिचारवारणेऽपि तृतीयहेतोः तत्र व्यभिचारः तद्वारणाय परकीयत्वविशेषणादानप्रयुक्तलाघवाय च तथा हेतुं वक्तुं दृष्टान्तान्तरमाह ॥ **यद्वेति** ॥ अत्र रूपग्राहकत्वादिघटितहेतुत्रये रूपविषयकज्ञानस्य न रूपविषयकज्ञानत्वेन निवेशः गौरवात् किन्तु चाक्षुषत्वेन । एवं गन्धग्राहकत्वमित्यत्रापि गन्धज्ञानस्य गन्धविषयकज्ञानत्वेन न निवेशः गौरवात् किन्तु घ्राणजत्वेन । घ्राणजत्वं च घ्राणजन्यतावच्छेदकप्रत्यक्षत्वव्याप्यजातिविशेषः एवं हेतुघटककारणतयोः कार्यतयोर्वा कालोपाधिविधया जन्यत्वं जनकत्वं चादाय दृष्टान्तासिद्धिस्वरूपासिद्ध्योः व्यभिचारित्वस्य च वारणाय कालिकसंबन्धानवच्छिन्नत्वमेव वा निवेशनीयम् । यद्यपि कारणतयोः व्यापारसंबन्धावच्छिन्नत्वनिवेशेन कार्यतयोः चाक्षुषत्वाद्यवच्छिन्नत्वनिवेशेन वा लौकिकविषयतासंबन्धावच्छिन्नत्वनिवेशेन वा उक्तदोषवारणं संभवति तथापि सत्यन्तविशेषणवैयर्थ्यापत्त्या कारणतयोः व्यापारसंबन्धावच्छिन्नत्वनिवेशेन सत्यन्तवैयर्थ्यापत्त्या च कार्यतयोः चाक्षुषत्वाद्यवच्छिन्नत्वनिवेशनं लौकिकविषयतासंबन्धावच्छिन्नत्वनिवेशनं च मूलकारानुमतमित्युपेक्षितम् । एवंच कालिकसंबन्धानवच्छिन्नचाक्षुषनिष्ठकार्यतानिरूपितकारणताशून्यत्वे सति घ्राणजनिष्ठतादृशसंबन्धानवच्छिन्नकार्यतानिरूपितकारणत्वघटितः प्रथमो हेतुः पर्यवसितः । एवं

## मञ्जूषा.

न वैयर्थ्याभावात् । स्वरूपासिद्धिवारकाविशेषणमेव हि व्यर्थमित्युच्यते । नन्वनुमानस्य द्वे अङ्गे व्याप्तिः पक्षधर्मता च तत्र व्यभिचारादिवारकविशेषणं यथा व्याप्तिग्रह उपयुज्यते तथा स्वरूपासिद्धिवारकविशेषणं पक्षधर्मताग्रह उपयुज्यते तत्कुतः तस्य वैयर्थ्यमिति चेदुच्यते । प्रथमतो गृहीतव्याप्तिकस्य हेतोः पक्षधर्मता पश्चात् गृह्यते ततो ह्यनुमितिरिति ह्युत्सर्गः ततश्च व्याप्तिं गृह्णन्पुरुषो यद्विशेषणेन विना हेतुः न स्वात्मानं लभते नवा साध्यसहचरितस्स्यात् व्यभिचरेद्वा तद्विशेषणघटितधर्मपुरस्कारेणैव तत्र व्याप्तिं गृह्णाति नतु स्वरूपासिद्धिवारकमपि विशेषणं तत्र घटयति भाव्यनुमित्युद्देश्यपक्षव्यक्तीनां तदानीमुत्सर्गतः परिज्ञानाभावादनुपयोगाच्च । व्याप्तिग्रहे हि तदुपयोगिविशेषणघटनैवावश्यकी स्यात् । ननु दोषान्तरवारकविशेषणघटना । तथाच गृहीतव्याप्तिकस्य हेतोः पक्षधर्मताज्ञानकाले स्वरूपासिद्धिवारकविशेषणान्तरघटितत्वेनानुसन्धाने पक्षधर्मतया गृह्यमाणविशिष्टहेतौ पूर्वं व्याप्तेरग्रहाद्व्याप्यत्वासिद्धिरित्युच्यते तस्मात्स्वरूपासिद्धिवारकमेव विशेषणं व्यर्थं नत्वप्रसिद्धिदृष्टान्तासिद्धिव्यभिचारवारकमिति परकीयत्वविशेषणे न वैयर्थ्यम् । वस्तुतो वैयर्थ्यशङ्काया एव नावकाशः । अतिरिक्ताभावसंपादकत्वात् । स्फुटीभविष्यति चेदमुपरिष्टात् । नचैवमित्येवंशब्दघटितः पाठः ॥ **एवं** परकीयत्वविशेषणोपादाने । तदनुपादाने तु तादृशजलस्य स्वीयरूपादिव्यञ्जकत्वाद्व्यभिचाराभावेन उपष्टम्भसङ्गतिः ॥ **सक्तुरसेति** ॥ रसस्यापि तादृशसमुदायघटकत्वादिति भावः । लाघवायाह ॥ **यद्वेति** ॥ अत्र नीलकण्ठः रूपा-

## दिनकरीयम्.

लत्वस्य सत्त्वादिति । परकीयेति विशेषणाप्रवेशे लाघवादाह ॥ **यद्वेति** ॥ तददाने हेतुमाह ॥ **वायूपनीति** ॥ इदमत्र बोध्यम् । रूपाद्यव्यञ्जकत्वे सतीत्यस्य हेतुत्रये तात्पर्यं शब्दाव्यञ्जकत्वे सति गन्धव्यञ्जकत्वस्य

## रामरुद्रीयम्.

रसगन्धस्पर्शानां ग्रहणेऽपि रसाव्यञ्जकत्वे सति गन्धव्यञ्जकत्वमात्रस्य हेतुतासम्भवेन रूपस्पर्शयोरव्यञ्जकत्वस्य हेतुघटकत्वे प्रयोजनाभाव इत्यस्वरसात्प्रकारान्तरेण तद्ग्रन्थतात्पर्यं वक्तुमुपक्रमते ॥ **इदमत्रेति** ॥ **हेतुत्रयेति** ॥ ननु रूपरसस्पर्शशब्दघटितत्वेन हेतोश्चातुर्विध्यात्त्रय इत्यसङ्गतमत आह ॥

सन्निकर्षस्य गन्धमात्राभिव्यञ्जकत्वात्तत्र व्यभिचार इति वाच्यम् । द्रव्यत्वे सतीति विशेषणात् ।

## प्रभा.

द्वितीयहेतुरपि रासननिष्ठतादृशसंबन्धानवच्छिन्नकार्यतानिरूपितकारणताशून्यत्वघटितः परिष्करणीयः । एवं तृतीयहेतुरपि स्पार्शननिष्ठतादृशसंबन्धानवच्छिन्नकार्यतानिरूपितकारणताशून्यत्वघटितः परिष्करणीयः । एवं सन्निकर्षे व्यभिचारवारणाय पृथक् द्रव्यत्वनिवेशापेक्षया कारणतायामेव द्रव्यत्वसामानाधिकरण्यमेव निवेशनीयम् । तथाच विशेषणविशेष्यभावे विनिगमनाविरहात् चाक्षुषनिष्ठतादृशसंबन्धानवच्छिन्नकार्यतानिरूपितकारणताशून्यत्वघ्राणजनिष्ठतादृशसंबन्धानवच्छिन्नकार्यतानिरूपितद्रव्यत्वसमानाधिकरणकारण-त्वैतदुभयत्वावच्छिन्नः प्रथमो हेतुः। अनयैव दिशा द्वितीयहेतुः तृतीयहेतुश्च परिष्करणीयः अतो न कोऽपि दोषः। अत्रैव मूलकारस्य निर्भर इति प्रतिभाति ॥ **घ्राणेन्द्रियसन्निकर्षस्येति** ॥ घ्राणसन्निकर्षस्येत्य-

## मञ्जूषा.

वाव्यञ्जकत्वे सतीत्यस्य हेतुत्रये तात्पर्यं शब्दाव्यञ्जकत्वे सति गन्धव्यञ्जकत्वस्य नवशरावगन्धव्यञ्जकजले व्यभिचारेण तत्र ग्रन्थकृतस्तात्पर्याभावात् । तत्र रूपरसस्पर्शाः परकीयत्वेन विशेषणीयाः नच प्रथमहेतौ नवशरावगन्धव्यञ्जकजले व्यभिचारस्तस्य लुप्ताक्षरमषीनीलरूपव्यञ्जकत्वात् नच तृतीयहेतौ तत्र व्यभिचारः एतदस्वरसेनापि यद्वेति कल्पान्तरप्रणयनात् तत्रापि परकीयत्वविशेषणाघटितं हेतुत्रयमित्याचख्यौ । तच्च वस्तुतो यद्यपि रमणीयमेव तथापि मुक्तावलीग्रन्थस्वरसाविरुद्धम्। तत्र हि यदि हेतुत्रयमभिप्रेतं स्यात् तर्हि नचैवं नवशरावगन्धव्यञ्जकजलेऽनैकान्तिकतेत्यनेन हेतुत्रयेऽप्यविशेषेण व्यभिचारस्य शङ्किततया तस्य सक्तुरसाभिव्यञ्जकत्वादित्यनेन द्वितीयहेतुमात्रे व्यभिचारनिराकरणे न्यूनता । तद्ग्रन्थस्य प्रदर्शनार्थत्वे प्रथमहेतौ व्यभिचारवारणबीजं कण्ठतोऽनुपन्यस्य द्वितीयहेतौ तद्बीजस्य कण्ठत उपन्यासे सन्दर्भविरोधः । तृतीयहेतौ दोषवारणाभावे मौढ्यापत्तिश्च । नहि हेतुत्रयसाधारण्येन दोषमाशंक्य हेतुद्वयमात्रे तत्परिहारो युक्तः । तस्माद्ग्रन्थेतरो यः परकीयो रूपरसगन्धस्पर्शशब्दसमुदायघटकस्तद्व्यञ्जकत्वाभावघटित एक एवात्र हेतुरभिप्रेतः तत्रच नोक्तग्रन्थविरोधः सक्तुरसव्यञ्जकत्वमात्रेण विशिष्टहेतोर्व्यभिचारवारणात् । नचैवं लुप्ताक्षरमषीनीलरूपव्यञ्जकत्वेनैव व्यभिचारवारणं कुतो न कृतं हेतौ रूपस्य प्रथममुपस्थितत्वादिति वाच्यम् तत्र मषीतिरोधायकपांसुकणापनयन एव जलस्योपयोगः नतु तत्समवेतनीलरूपसाक्षात्कारे तस्य कारणतेत्यभिप्रायेण तदुपेक्षणात् नचात्र हेतावेकैकांशनिवेशमात्रेणैवोपपत्तौ रूपादीनां चतुर्णां निवेशे वैयर्थ्यमिति वाच्यम् रूपाद्येकैकव्यञ्जकत्वाभावापेक्षया तादृशसमुदायघटकव्यञ्जकत्वसामान्याभावस्यातिरिक्तत्वेन वैयर्थ्यशङ्कानवकाशात् । अत एव परकीयत्वनिवेशेऽपि न वैयर्थ्यशङ्कावकाशः गोघृतसाधारणस्य परकीयतादृशसमुदायघटकव्यञ्जकत्वाभाव-

## दिनकरीयम्.

नवशरावगन्धव्यञ्जकोदके व्यभिचारेण तत्र ग्रन्थकर्तुस्तात्पर्याभावात्। तत्र हेतुषु रूपरसस्पर्शानां परकीयत्वं विशेषणम् । नच प्रथमहेतौ नवशरावगन्धव्यञ्जकजले व्यभिचारः लुप्ताक्षरमषीनीलरूपव्यञ्जकत्वात् । नच तृतीयहेतौ तत्र व्यभिचारः एतदस्वरसेनापि यद्वेति कल्पान्तरप्रणयनात् तत्रापि परकीयत्वविशेषणाघटितं हेतुत्रयमिति ॥ **तत्र** घ्राणेन्द्रियसन्निकर्षे । इन्द्रियत्वं न जातिस्तेजस्त्वादिना साङ्कर्यात् किंतु शब्देतर-

## रामरुद्रीयम्.

**शब्देति** ॥ **कल्पान्तरेति** ॥ परकीयत्वादिघटितकल्पेत्यर्थः । तथा च तादृशजलस्यापि स्वीयस्पर्शव्यञ्जकत्वात् न तत्र तृतीयहेतौ व्यभिचार इति भावः । अपिशब्देन पूर्वोक्तलाघवसमुच्चयः । यद्वेत्यादिकल्पेऽप्येकत्र हेतौ रूपरसस्पर्शानां त्रयाणामुपादानं व्यर्थमित्यभिप्रायेणाह ॥ **तत्रापीति** ॥ ननु मूले देहविषययोरेव निर्वचनादिन्द्रियत्वं जातिरेवेत्याशयो लभ्यते तच्च न सम्भवतीत्याशङ्क्य समा-

## मञ्जूषा.

स्य तद्व्यावृत्ततादृशसमुदायघटकसामान्यव्यञ्जकत्वाभावापेक्षयातिरिक्तत्वात् । नन्वत्र परकीयत्वनिवेशेऽपि न गोघृते हेत्वसिद्धिवारणं घटो रूपवान् गोघृतं रूपवदित्याकारकसमूहालम्बनात्मकपरकीयरूपसाक्षात्कारे तस्य विषयविधया कारणत्वात् । घटरूपादिप्रत्यक्षे कालोपाधिविधया घ्राणेन्द्रियस्यापि कारणतया पक्षे हेत्वसिद्धिश्च । अथ रूपादिसाक्षात्कारनिष्ठकार्यतायां परकीयरूपादिनिष्ठलौकिकविषयताघटितसंबन्धावच्छिन्नत्वं तन्निरूपितकारणतायां तादात्म्यसंबन्धानवच्छिन्नत्वं वा निवेश्यतेऽतो नोक्तदोषद्वयम् । नच प्रथमकल्पे आत्ममनसोः द्वितीयकल्पे आत्मनि व्यभिचार इति वाच्यम् गन्धव्यञ्जकत्वपदेन गन्धनिष्ठलौकिकविषयताघटितसंबन्धावच्छिन्नकार्यतानिरूपितकारणत्वस्य गन्धसाक्षात्कारनिष्ठप्रत्यक्षत्वव्याप्यजात्यवच्छिन्नकार्यतानिरूपितकारणत्वस्य वा विवक्षितत्वात् । परं त्वेवं सति रूपाद्यव्यञ्जकत्वविशेषणस्य मनसि व्यभिचारवारणप्रयोजनकत्वाभिधानं नीलकण्ठस्य विरुध्यते । तत्तु यथाश्रुताभिप्रायकतया नेयम् । इदानीन्तु नवशरावगन्धव्यञ्जकजल एव रूपाद्यव्यञ्जकत्वविशेषणव्यावृत्तिरवसेयेति चेदस्त्वेवमेव । परकीयरूपाद्यव्यञ्जकत्वमित्यत्र फलोपधायकतारूपकारणतानिवेशे नवशरावगन्धमात्रव्यञ्जिकायां परकीयरूपाद्यव्यञ्जिकायां जलव्यक्तौ व्यभिचारः । स्वरूपयोग्यतारूपकारणत्वनिवेशे च द्रव्यसमवेतनिष्ठलौकिकविषयतासंबन्धेन चाक्षुषत्वाद्यवच्छिन्नं प्रति सन्निकर्षघटकतया चक्षुस्संयुक्तत्वादिरूपेणाधेयतासंबन्धेन कारणतया घटादिरूपप्रत्यक्षं प्रत्यपि . गोघृतादेः स्वरूपयोग्यतानपायेन दृष्टान्तासिद्धितादवस्थ्यम् । एवंच जन्यप्रत्यक्षसामान्ये इन्द्रियत्वेन कारणतापक्षे द्रव्यसमवेतनिष्ठलौकिकविषयतासंबन्धेन जन्यप्रत्यक्षत्वावच्छिन्नं प्रति संयुक्तसमवायसंबन्धेनेन्द्रियत्वेन कारणतया घटरूपादिप्रत्यक्षं प्रत्यपीन्द्रियत्वेन रूपेण घ्राणस्यापि स्वरूपयोग्यत्वेन स्वरूपासिद्धिरिति उच्यते परकीयरूपादिनिष्ठलौकिकविषयताघटितसंबन्धावच्छिन्नकार्यतानिरूपितफलोपधायकतात्मककारणताश्रयवृत्तिद्रव्यविभाजकधर्मशून्यत्वं परकीयरूपाद्यव्यञ्जकत्वं । गोघृतं तु सन्निकर्षघटकतया चक्षुःसंयुक्तत्वेन रूपेण घटरूपादिप्रत्यक्षस्वरूपयोग्यमपि न क्वचिदपि यथोपदर्शितफलोपधायकत्वाश्रयः पार्थिवेन वस्तुना क्वचिदपि परकीयरूपादिप्रत्यक्षानुपधानात् । घटो रूपवान् गोघृतं रूपवदिति समूहालम्बनप्रत्यक्षे विषयविधया तस्योपधायकत्वेऽपि तज्जन्यता न परकीयरूपादिनिष्ठलौकिकविषयताघटितसंबन्धावच्छिन्ना । एवं घ्राणस्येन्द्रियत्वेन रूपेण रूपादिप्रत्यक्षे स्वरूपयोग्यत्वेऽपि नोपधायकत्वम् । यदि च हरीतक्यवयवानां जलमधुररसव्यञ्जकतया स्वरूपासिद्धिरिति मन्यते तदा जन्यप्रत्यक्षत्वावच्छिन्नं प्रति इन्द्रियत्वेन सामान्यकारणतानङ्गीकारपक्षे परकीयरूपादिसाक्षात्कारनिष्ठकार्यतानिरूपितसंयोगसंबन्धावच्छिन्नकारणताशून्यत्वं तत्सन्निकर्षघटकतया गोघृतस्य यत्कारणत्वं तदाधेयतासंबन्धावच्छिन्नं दर्शितसमूहालम्बने विषयविधया कारणत्वं तु तादात्म्यसंबन्धावच्छिन्नं जन्यज्ञानत्वावच्छिन्नं प्रति मनस्संयोगेनैव कारणत्वान्न तत्र व्यभिचारः किंत्वात्मनि व्यभिचारः प्रसज्यते सच गन्धव्यञ्जकत्वपदेन गन्धसाक्षात्कारनिष्ठकार्यतानिरूपितसंयोगसंबन्धावच्छिन्नकारणत्वं गन्धनिष्ठलौकिकविषयताघटितसंबन्धावच्छिन्नकार्यतानिरूपितकारणत्वं गन्धसाक्षात्कारनिष्ठप्रत्यक्षत्वव्याप्यजात्यवच्छिन्नकार्यतानिरूपितकारणत्वं घ्राणजत्वावच्छिन्नकार्यतानिरूपितकारणत्वं गन्धसाक्षात्कारनिष्ठजन्यत्वघटितधर्मानवच्छिन्नकार्यतानिरूपितकारणत्वं गन्धसाक्षात्कारनिष्ठकार्यतानिरूपिततादात्म्यसंबन्धानवच्छिन्नकारणत्वं वा विवक्षितमिति रीत्या परिहरणीयः । नचात्र संयोगसंबन्धावच्छिन्नकारणतानिवेशपक्षे स्वरूपासिद्धिः गन्धसाक्षात्कारे घ्राणस्य संयुक्तसमवायसंबन्धेनैव कारणत्वादिति वाच्यं तादृशकारणतायाः संयोगघटितसंबन्धावच्छिन्नत्वे संयोगसंबन्धावच्छिन्नत्वानपायात् । नचैतत्कल्पे घ्राणसंयुक्तसमवाये व्यभिचाराप्रसक्त्या तत्र व्यभिचारवारणाय द्रव्यत्वविशेषणदानमग्रे विश्वनाथस्य विरुध्यत इति वाच्यं कारणतायां संयोगसंबन्धावच्छिन्नत्वनिवेशन एव द्रव्यत्वविशेषणदानतात्पर्यवर्णनसंभवात् । अथवा परकीयरूपाद्यव्यञ्जकत्वं परकीयरूपादिनिष्ठलौकिकविष-

**विषयो द्व्यणुकादिश्च ब्रह्माण्डान्त उदाहृतः ॥ ३८ ॥**

विषयमाह ॥ **विषय इति** ॥ उपभोगसाधनं विषयः । सर्वमेव कार्यजातमदृष्टाधी-

## प्रभा.

र्थः । ननु विषयत्वं न जातिः सामान्यादिसाधारणत्वात् अतस्तल्लक्षणमाह ॥ **उपभोगसाधनमिति** ॥ साक्षात्परम्परासाधारणोपभोगप्रयोजकत्वमित्यर्थः । तेन द्व्यणुकादेः साक्षादुपभोगसाधनत्वाभावेऽपि नाव्याप्तिः तस्य परमाणुसाधारण्येऽपि न क्षतिः तस्यापि विषयत्वात् । परन्तु कार्यरूपपृथिव्याः त्रैविध्येन विभजनात् कार्यपृथिवीविषय एव विषयो द्व्यणुकादिस्त्वित्यादिना दर्शित इति न तद्ग्रन्थविरोधः अत एव तदुपभोगं साक्षात्परम्परया वा जनयत्येवेति वक्ष्यमाणं सङ्गच्छते ॥ **सर्वमेव हि कार्यजातमिति** ॥ अत्र सर्वपदं जातपदं वा सम्पातायातं ॥ **अदृष्टाधीनमिति** ॥

## मञ्जूषा.

यताप्रयोजकतावच्छेदकधर्मशून्यत्वं वक्तव्यम् । गोघृतं हि चक्षुस्संयुक्तत्वरूपेणापि न परकीयरूपादौ लौकिकविषयतां प्रयोजयति । अतश्चक्षुस्संयुक्तत्वं न तादृशलौकिकविषयताप्रयोजकतावच्छेदकम् । कारणतावच्छेदकसंबन्धेन कारणसत्त्वमेव हि कार्यतावच्छेदकसंबन्धे प्रयोजकम् । चक्षुस्संयुक्तं चाधेयतावच्छेदकसंबन्धेन स्वीयरूपादावेव स्यात् न परकीयरूपादौ अतो न गोघृते हेत्वासिद्धिः सक्तुसंयुक्तजलव्यक्तिवृत्तिर्या सक्तुरसनिष्ठलौकिकविषयताप्रयोजकता तदवच्छेदकजलत्वस्य सर्वस्मिन् जले सत्त्वान्न पूर्वोक्तव्यभिचारः । लौकिकविषयताया आत्ममनोजन्यतानवच्छेदकतया तयोर्व्यभिचारवारणाय. गन्धव्यञ्जकत्वम् । तच्च गन्धनिष्ठलौकिकविषयताप्रयोजकतावच्छेदकधर्मवत्त्वम् । अत्र कल्पेऽपि गन्धव्यञ्जकत्वमित्यस्य यथायोगं पूर्वोक्तपरिष्कारा द्रष्टव्याः । वस्तुतस्तु परकीयरूपादिसाक्षात्कारजनकतानवच्छेदकगन्धसाक्षात्कारजनकतावच्छेदकधर्मवत्त्वं दळद्वयपर्यवसन्नार्थः । आत्मत्वमनस्त्वे यथा गन्धसाक्षात्कारजनकतावच्छेदके तथा परकीयरूपादिविषयकसाक्षात्कारजनकतावच्छेदके एवेति न दोषः कुङ्कुमगन्धव्यञ्जकतावच्छेदकस्य घृतत्वस्य भस्मादौ स्वीयरूपादिव्यञ्जकतावच्छेदकत्वात् दृष्टान्तासिद्धिवारणाय परकीयत्वविशेषणं सार्थकम् । घ्राणस्य कालोपाधिविधया इन्द्रियविधया वा घटरूपादि-

## दिनकरीयम्.

त्यादिना वक्ष्यमाणं बोध्यम् । ननु विषयत्वं न जातिः सामान्यादौ सत्त्वादतस्तल्लक्षणमाह ॥ **उपभोगेति** ॥ यद्यपि साक्षादुपभोगसाधनत्वं द्व्यणुकादावव्याप्तं साक्षात्परम्परासाधारणभोगसाधनत्वं परमाणावपीति द्व्यणुकादिब्रह्माण्डान्त इति ग्रन्थविरोधस्तथापि साक्षात्परम्परासाधारणभोगसाधनत्वं विवक्षितं परमाणुरपि विषय एव कार्यरूपपृथिव्या एव त्रिप्रकारेण विभजनात्कार्यरूपपृथिवीविषय एव द्व्यणुकेत्यादिना प्रदर्शित इति न तद्ग्रन्थविरोधः अत एवोक्तं तदुपभोगं साक्षात्परम्परया वा जनयत्येवेति । कार्यजातमित्यत्र जातपदं सम्पातादायातम् ॥ **अदृष्टाधीनमिति** ॥ अत्र कार्यमात्रं प्रत्यदृष्टस्य हेतुना न समवायसम्बन्धेन ध-

## रामरुद्रीयम्.

र्मत्वे ॥ **इन्द्रियत्वमिति** ॥ **उपभोगेतीति** ॥ सुखदुःखसाक्षात्कार उपभोगस्तत्साधनं तत्प्रयोजक इत्यर्थः तत्र घटादेरकारणत्वादिति ध्येयम् ॥ **कार्यरूपपृथिव्या इति** ॥ सा कार्यरूपेति विवरणादिति भावः ॥ **प्रदर्शित इति** ॥ तत्र विषय इत्यस्य जन्यविषय इत्यर्थकत्वादिति भावः । यद्यपि सेत्यस्य पृथिवीत्वावच्छिन्नपरत्वेऽपि न क्षतिः परमाणोर्देहत्वाद्यसम्भवेऽपि विषयतया त्रिविधान्तर्गतत्वसम्भवात्तथापि सा चेत्यत्र चकारस्य जलादीनां त्रैविध्यस्याग्रे वक्ष्यमाणतयाऽर्थान्तरसमुच्चायकत्वासम्भवेनैवकारार्थकताया एव स्वीकरणीयतया तस्य च जलादीनामपि त्रिविधत्वेन पृथिवीव्यतिरिक्तत्रैविध्यव्यवच्छेदकत्वासम्भवेन सा चेत्यस्य कार्यरूपाया एवेत्यर्थकताया आवश्यकत्वादिति भावः ॥ **सम्पातादायातमिति** ॥ सर्वमित्यनेनैवाशेषत्वलाभादिति भावः । नन्वदृष्टा-

नम्। यत्कार्यं यददृष्टाधीनं तत्तदुपभोगं साक्षात् परम्परया वा जनयत्येव नहि बीजप्रयो-

## प्रभा.

अदृष्टजन्यमित्यर्थः। अत्र कार्यमात्रं प्रति अदृष्टस्य न समवायसंबन्धेन हेतुत्वं घटाद्यधिकरणकपालादौ समवायेन तस्यासत्त्वेन व्यभिचारात्। नतु स्वसमवायिसंयोगसबंन्धेन शब्दसमवायिन्याकाशे स्वसमवाय्यात्मसंयोगाभावात्। नापि स्वसमवायिसंयुक्तसंयोगेन ईदृशपरम्परायाः कारणतावच्छेदकसंबन्धत्वसन्देहसंभवात्। किन्तु कालिकसंबन्धेन कार्यं प्रति कालिकसंबन्धेनादृष्टं हेतुरिति बोध्यम्। अत एव विषयितासंबन्धेन कार्यं प्रति समवेतत्वसंबन्धेन ईश्वरस्य तेन संबन्धेन कार्यं प्रति तादात्म्यसंबन्धेन ईश्वरज्ञानेच्छाकृतीनां कालिकसंबन्धेन कार्यं प्रति तादात्म्यसंबन्धेन कालस्य दैशिकसंबन्धेन कार्यं प्रति तादात्म्यसंबन्धेन दिशः कालिकसंबन्धेन कार्यं प्रति कालिकसंबन्धेनादृष्टं हेतुरिति तत्र तत्रोक्तं सङ्गच्छते। केचित्तु अदृष्टस्य कार्यमात्रं प्रति हेतुता न साक्षात् नहि सामग्रीसमवधाने अदृष्टविलम्बेन कार्यविलम्बो दृष्टः येन तत्साक्षाद्धेतुस्स्यात्। परन्तु सामग्रीसम्पादकतया प्रायः परम्परयैव तदुपयोगः। क्वचिन्मेघसंचारादौ साक्षादेव तद्धेतुः अन्यथा सामग्रीसम्पादकत्वस्यैवानुपपत्तिरिति। एतदर्थमेव साक्षात्परम्परासाधारणजन्यत्वबोधकमधीनपदमुपात्तमित्याहुः। तदसत् अदृष्टस्य क्वचिन्मेघसंचारादौ साक्षादन्यत्र परम्परया हेतुत्वमित्यत्र प्रमाणाभावात् मेघवायुसंयोगकारणान्तरसत्त्वेऽदृष्टविलम्बेन मेघसंचारविलम्बादर्शनात्। किन्तु साधारणकारणानां ईश्वरतदीयज्ञानेच्छाकृतीनां कालदिशोः प्रागभावस्य च यादृशहेतुत्वं तादृशहेतुत्वस्यात्रापि वक्तुमुचितत्वात् सकलसामग्रीसमवधाने ईश्वरादिविलम्बेन कार्यविलम्बादर्शनात् तेषामपि सामग्रीसम्पादकतया हेतुत्वापत्तेः। अधीनपदं तु न साक्षात्परम्परासाधारणजन्यत्वबोधकं किन्तु साधारणजन्यत्वबोधकमेव तस्यासाधकत्वादित्यास्तां विस्तरः॥ **यददृष्टाधीनमिति**॥ यत्पुरुषीयादृष्टाधीनमित्यर्थः॥ **तदिति**॥ तत्कार्यमित्यर्थः॥ **तदुपभोगमिति**॥ तत्पुरुषस्योपभोगमित्यर्थः।

## मञ्जूषा.

साक्षात्कारकारणत्वेऽपि घ्राणत्वस्य तादृशकारणतानवच्छेदकत्वात् न स्वस्वरूपासिद्धिः। एवमन्येऽपि दोषाः परिहृता वेदितव्याः। इदन्तु तत्त्वम्। अनुकूलतर्काभावादयं हेतुरप्रयोजकः। नहि गन्ध-

## दिनकरीयम्.

टाद्यधिकरणे कपालादौ समवायेन तदभावाद्व्यभिचारात्। यत्तु स्वसमवायिसंयोगेनादृष्टं कार्यमात्रे हेतुरिति तन्न। शब्दरूपकार्याधिकरणे गगनेऽदृष्टसमवाय्यात्मसंयोगाभावेन व्यभिचारात् परन्तु स्वसमवायिसंयुक्तसंयोगेन तस्य हेतुता बोध्या। इदं तु बोध्यम्। अदृष्टस्य कार्यमात्रं प्रति हेतुता न साक्षात् नहि सामग्रीसमवधानेऽदृष्टविलम्बेन कार्यविलम्बो दृष्टः येन तत्साक्षाद्धेतुः स्यात् परन्तु सामग्रीसम्पादकतया प्रायः परम्परयैव तदुपयोगः क्वचित्तु मेघसञ्चारादौ साक्षादेव तद्धेतुः अन्यथा सामग्रीसम्पादकत्वस्यैवानुपपत्तेरिति एतदर्थमेव साक्षात्परम्परासाधारणजन्यत्वबोधकमधीनपदमुपात्तम्॥ **यददृष्टाधीनं** यत्पुरुषीयादृष्टाधीनं।

## रामरुद्रीयम्.

धीनत्वमदृष्टजन्यत्वमेव तच्च न घटादिरूपकार्यस्य सम्भवतीत्याशङ्कते॥ **अत्रेति**॥ **व्यभिचारादिति**॥ इदमुपलक्षणं कालिकदिक्कृतविशेषणताभ्यां तथात्वेऽपि तत्रैव व्यभिचारो बोध्यः॥ **बोध्येति**॥ गगनेऽप्यात्मसंयुक्तपवनादिसंयोगसत्त्वेन विभुद्वयसंयोगानङ्गीकारेऽपि क्षतिविरहादिति भावः। अदृष्टजन्यमित्युपेक्ष्यादृष्टाधीनमित्युक्तौ फलं वक्तुमुपक्रमते॥ **इदं त्विति**॥ **स्यादिति**॥ तदितरयावत्कारणसत्त्वे तदभावे कार्याभावरूपव्यतिरेकसहचाराभावादिति भावः॥ **तदुपयोगः** अदृष्टोपयोगः। तज्जनकादृष्टाभावे तत्कारणानामेव जननानुपपत्तेरिति भावः॥ नत्वेवं कार्यमात्रेऽदृष्टस्याप्रयोजकत्वमेवेत्याशङ्कामपाकरोति॥ **क्वचिदिति**॥ आदिनौत्पातिकभूकम्पादिपरिग्रहः॥ **अन्यथा** कार्यमात्रं प्रत्येव तस्याकारणत्वे। सामग्रीसम्पत्तिरेकत्र सकलकारणतावच्छेदकावच्छिन्नसम्बन्धः॥ **अनुपपत्तेरि-**

जनाभ्यां विना कस्यचिदुत्पत्तिरस्ति तेन द्व्यणुकादिब्रह्माण्डान्तं सर्वमेव विषयो भवति शरीरेन्द्रिययोर्विषयत्वेऽपि प्रकारान्तरेणोपन्यासः शिष्यबुद्धिवैशद्यार्थः ॥ ३८ ॥

## प्रभा.

उक्तार्थे न्यायमाह ॥ **नहीति** ॥ **तेनेति** ॥ द्व्यणुकादिकार्यस्य साक्षात्परम्परया वा तत्तत्पुरुषोपभोगसाधनत्वेनेत्यर्थः । ननु सर्वस्यैव विषयत्वे शरीरेन्द्रियविषयभेदेन त्रैविध्येन विभागः असङ्गतः । परस्परवैयधिकरण्यापन्नधर्मैरेव विभागस्य सकलतन्त्रसिद्धत्वात् अत आह ॥ **शरीरेन्द्रिययोरिति** ॥ **विषयत्वेऽपीति** ॥ तादृशधर्माणां त्रयाणां सामानाधिकरण्येऽपीत्यर्थः ॥ **भेदेनेति** ॥ उक्तधर्मत्रयेणेत्यर्थः ॥ **उपन्यास इति** ॥ विभाग इत्यर्थः ॥ **शिष्यबुद्धीति** ॥ शिष्याणामिमानि शरीराणि इमानीन्द्रियाणि तद्भिन्नविषया अपि सन्तीति बालबोधनार्थमित्यर्थः । तथाच शरीरेन्द्रियत्वाभ्यां विभजने घटादीनां असंग्रहः । अतो ज्ञानावच्छेदकज्ञानकारणान्यविषयत्वेनैव विभजने तात्पर्यमिति तेषां परस्परवैयधिकरण्यान्नानुपपत्तिरिति भावः ॥ ३८ ॥

॥ इति पृथिवीग्रन्थः समाप्तः ॥

## मञ्जूषा.

साक्षात्कारं प्रति पृथिवीत्वेन कारणता परकीयरूपादिसाक्षात्कारं प्रति तेन रूपेण प्रतिबन्धकता किन्तु रूपादिषु पञ्चसु मध्ये यदिन्द्रियं यं गुणं गृह्णाति तदिन्द्रियं तद्गुणयुक्तमिति प्राचीनगाथैवात्र बीजं तादृशगाथानुसरणे हि घ्राणेन गन्धवता भाव्यम् गन्धग्राहकत्वात् गन्धवतश्चावश्यं पृथिवीत्वमिति पृथिवीत्वसिद्धिः । तादृशगाथा त्वभ्युपगममात्रसिद्धा । अन्यथा रूपादिषु पञ्चसु मध्ये यदिन्द्रियं यं गुणं न गृह्णाति तदिन्द्रियं तद्गुणशून्यमित्यपि नियममङ्गीकृत्य घ्राणे नीरूपत्वनीरसत्वयोरपि स्वीकारापत्तेः । अतश्च घ्राणादीनां पृथिव्यादिभूतजन्यत्वबोधिका श्रुतिरेव मानमिति पर्यालोचनीयम् ॥ **उपभोगेति** ॥ अत्र नीलकण्ठः—विषयत्वं न जातिः सामान्यादौ सत्त्वात् अतस्तल्लक्षणमाह उपभोगेति । यद्यपि साक्षाद्भोगसाधनत्वं द्व्यणुकादावव्याप्तं साक्षात्परम्परासाधारणसाधनत्वं परमाणावपीति द्व्यणुकादिब्रह्माण्डान्तमिति ग्रन्थविरोधः तथापि साक्षात्परम्परासाधरणसाधनत्वं विवक्षितमिति परमाणुरपि विषय एव कार्यरूपपृथिव्या एव त्रिप्रकारेण विभजनात् कार्यपृथिवीविषय एव द्व्यणुकेत्यादिना प्रदर्शित इति न तद्ग्रन्थविरोधः अत एवोक्तं तदुपभोगं साक्षात्परम्परया वा जनयत्येवेत्याचख्यौ । अत्र परमाणोरपि यदि विषयत्वमभिप्रेतं स्यात् तर्हि पृथिवीत्वावच्छि-

## दिनकरीयम्.

तत्तत्कार्यमित्यर्थः ॥ **तदुपभोगं** तत्पुरुषस्योपभोगसाधनम् ॥ **तेन** द्व्यणुकादिकार्यस्य तत्तत्पुरुषोपभोगसाधनत्वेन । नन्वेवं सर्वस्यैव विषयत्वेन शरीरेन्द्रियविषयभेदेन पृथिव्यास्त्रैविध्यं न सिद्ध्येदित्यत आह ॥ **शरीरेन्द्रिययोरपीति** ॥ ३८ ॥

॥ इति पृथिवीग्रन्थः ॥

## रामरुद्रीयम्.

**ति** ॥ सामग्रीसम्पत्तिरूपकार्यजनकत्वस्यैव सामग्रीसम्पादकतारूपत्वादिति भावः ॥ **त्रैविध्यं** विभाजकधर्मत्रयवत्त्वम् । परस्परासंकीर्णव्याप्यधर्माणामेव विभाजकत्वादिति भावः । मूले प्रकारान्तरेणेत्यस्य विषयत्वभिन्नदेहत्वादिनेत्यर्थः ॥ **उपन्यासः** कथनम् । शिष्यबुद्धेर्वैशद्यं देहत्वाद्यवान्तरधर्मविषयकत्वं तत्प्रयोजकः । यद्यप्येतावता विभागव्याघातो न परिहृतस्तथापि प्रकृते विषयत्वस्य देहेन्द्रियातिरिक्तोपभोगसाधनत्वरूपस्य विभाजकतावच्छेदकत्वोपगमेन न विभागानुपपत्तिरिति मन्तव्यम् ॥ ३८ ॥

॥ इति पृथिवीग्रन्थः ॥

## मञ्जूषा.

त्रस्यैव त्रेधा विभागः कुतो न कृतस्स्यात्। किंच विषयत्वस्य नित्यसाधारणत्वे द्रव्यत्वसत्त्वादेरेव तल्लक्षणत्वसंभवेन उपभोगसाधनत्वरूपगुरुलक्षणकरणं तत्सङ्गमनप्रयासश्च वृथा तत्र शरीरस्य विषयस्य चाभावात् इन्द्रियं दर्शयतीति आकाशनिरूपणवक्ष्यमाणमुक्तावळीग्रन्थस्वरसविरोधश्च। शब्दद्वारा उपभोगसाधनत्वस्याकाशेऽपि सत्त्वात् तत्र विषयस्येत्यस्य इन्द्रियभिन्नविषयस्येत्यर्थकल्पने प्रयासापत्तेः कर्णशष्कुलीरूपोपाधिभेदात् तद्विशिष्टाकाशरूपश्रोत्रे परस्परभेदव्यपदेशोपपादनवत् तादृशोपाध्यनवच्छिन्नस्याकाशस्यौपाधिकं भेदव्यपदेशमादाय विषयत्वोपपादनसंभवाच्च। कालादेः इन्द्रियभिन्नत्वादुपभोगसाधनत्वाच्च विषयत्वसंभवेन आकाशे इन्द्रियत्वस्येव कालादौ विषयत्वस्याप्युपपादनीयतया तदनुपपादनेन च ग्रन्थकृतो न्यूनतापत्तिश्च। मुक्तावळीग्रन्थस्था लक्षणसङ्गमनरीतिरपि न परमाणुसाधारणी। तत्र ह्युपभोगसाधनत्वमदृष्टाधीनत्वप्रयुक्तमित्युच्यते। नच तस्य परमाणौ संभवप्रसक्तिः। द्व्यणुकादिस्तु ब्रह्माण्डान्त इति मूले द्व्यणुकादिब्रह्माण्डान्तमिति मुक्तावळ्यां च पूर्वोत्तरावधिपरिच्छेदश्च फल्गु स्यात् तस्मात् परमाणुव्यावृत्तमेव विषयत्वमभिप्रेतम्। यद्यपीत्यादिना नीलकण्ठकृताशङ्का तु मूलेनैव परिहृतेति वक्ष्यामः। एतेन विषयत्वं न जातिः सामान्यादौ सत्त्वादित्यवतरणमप्यनुचितप्रायम्। सामान्यादेरपि स्वप्रत्यक्षादिद्वारा भोगसाधनत्वात् निर्वाच्यं विषयत्वं सामान्यादिसाधारणमित्याभिप्रेत्य हीदमवतरणं निर्वाच्यम्। विषयत्वस्य नित्यसाधारण्येनेति च वयमवोचाम। ज्ञानादिनिरूपितस्य स्वरूपसंबन्धविशेषात्मकस्य विषयत्वस्येह मूलस्थविषयपदतात्पर्यविषयत्वभ्रान्त्या तस्य जातित्वं नेत्युक्तमवतरणिकायामिति तु न युक्तम् विषयताया विषयस्वरूपत्वपक्षे तस्य प्रतिव्यक्तिविश्रान्ततया जातित्वशङ्कानवकाशात् अतिरिक्तत्वपक्षेऽपि विषयभेदेन भिन्नतया शङ्कानवकाशात्। अतोऽन्यथावतरणीयं तथाहि ननु विषयत्वं न जातिः ध्वंससाधारणत्वात् परमाण्वादिव्यावृत्ततया पृथिवीत्वादिना संकराच्चेत्यत आह उपभोगेति। नन्विह साधनत्वं यदि जनकत्वं तदा द्व्यणुकादावव्याप्तिः तस्योपभोगकारणत्वाभावात्। नच साक्षात्परम्परासाधारणं कारणत्वमिह लक्षणमिति वाच्यं तस्य दुर्निरूपत्वात्। अनन्यथासिद्धनियतपूर्ववृत्तित्वं तदभिव्यञ्जकपदार्थान्तररूपं वा साक्षात्कारणत्वं नाम। परम्परया कारणत्वं तु तत्कारणकारणत्वं तत्कारणकारणं प्रति कारणत्वमित्येवं नानाविधं ननु सर्वसाधारणं साक्षात्परम्परासाधारणकारणत्वं नाम किंचिदस्ति। नच साक्षात्कारणेषु परम्परया कारणेषु च प्रयोजकत्वशब्दव्यपदेश्यस्वरूपसंबन्धविशेषोऽस्तीति वाच्यम्। तथापि तस्य लक्षणत्वे परमाणावतिव्याप्त्यापत्तेः। किंच यादृशव्यक्तिविशेषाः कस्यचिदुपभोगमजनयित्वैव प्रध्वस्ताः तेष्वव्याप्तिरित्याशङ्काद्वयमेकोक्त्या परिहरति ॥ **सर्वमेवेत्यादिना** ॥ **साक्षादिति** ॥ कपालसंयोगचक्षुस्संयोगादिवत्किंचिद्व्यापारमनपेक्ष्येत्यर्थः ॥ **परम्परयेति** ॥ दण्डचक्रेन्द्रियादिवत् कंचिद्व्यापारमपेक्ष्येत्यर्थः। एतदुक्तं भवति। अनादौ काले विविधैरात्मभिः अनवरतमारभ्यमाणानि सुकृतानि दुष्कृतानि च अनन्तान्युत्सर्गतो भोगैकनाश्यानि साक्षादुपभोगं निष्पादयितुमपारयन्ति तत्साधनीभूतान्विषयानुत्पादयन्ति। ते च विषयाः स्वस्वजनकादृष्टनाशकारणीभूतान् भोगानवश्यमुत्पादयन्ति। अन्यथा तादृशादृष्टानां नित्यत्वापत्तेः। तत्रच स्वस्वजनकादृष्टवैलक्षण्यात् विषयाणामुपभोगनिष्पादने भूयान्विशेषः। यथा केचित् स्वसंयोगेन केचित् स्वसंयोगप्रध्वंसेन केचित् स्वप्रत्यक्षेण केचित् स्वीयरूपादिप्रत्यक्षेण केचित् स्वसमवेतद्रव्येण केचित् स्वसमवेतद्रव्यसमवेतद्रव्येण केचित् स्वनाशजन्यद्रव्येणेति रीत्या भोगान् जनयन्ति। एवं बहुपुरुषीयबहुविधादृष्टविशेषजनिता वापीकूपतटाकारामसद्धीधराकूपारादयः केचन विषयाः तत्तददृष्टपरिपाकदशायां तेषां तेषामुपभोगान् जनयन्ति। एवमेकपुरुषीयविविधादृष्टजनिताः तिन्त्रिणीफलकटुमाचीशलाटुसैन्धवमाषा जीरकासर्षपा इति बहवो विषयाः केचन मिळिता एकस्यैकमेव भोगं जनयन्ति। एवं क्रमेण सर्वेषां विषयाणां भो-

## मञ्जूषा.

गसाधनत्वात् नाव्याप्तिशङ्का । एवं तत्पुरुषीयादृष्टजन्यं यत्तदेव तत्पुरुषीयभोगसाधनं अन्यदन्यथासिद्धं तत्पुरुषीयभोगजनकादृष्टजन्यस्यैव लघूपस्थितिकत्वात् । अतो न परमाणुगगनादावतिव्याप्तिः । अत्र गुणादावतिव्याप्तिवारणाय द्रव्यत्वमपि विशेषणं देयम् । असाधारणकारणत्वविवक्षणान्न कालादावतिव्याप्तिः ॥ **नहि बीजेति** ॥ अत एव महाप्रळयोऽपि सिध्यति । तथाहि संसरतां जीवानां प्रतिकल्पं केचित्केचिदपवृज्यन्ते अपवृक्ताश्च न पुनस्संसरान्ति नाप्यपवृक्तसमसंख्याकानि संसार्यन्तराणि कुतश्चिदागच्छन्ति । अतः पूर्वपूर्वसर्गापेक्षयोत्तरोत्तरसर्गे न्यूनता वाच्या । अपवृक्तात्मभोगसाधनानां शरीरेन्द्रियविषयाणामसर्गात् । ततो यदा सर्व एवापवृज्यन्ते तदा बीजप्रयोजनयोरभावात् विश्वसृष्ट्युपरमो महाप्रळयः संपद्यते तमेव च महाप्रळयं मोक्ष इति केचन व्यवहरन्ते । नन्वत्र सत्यां दृष्टसामग्र्यां अदृष्टविळम्बान्न कार्यविळम्बं क्वचिदीक्षामहे तत्कुतः कार्यमात्रेऽदृष्टस्य कारणतेति चेत् । इतस्ततो नीयते यन्त्र स्यूत इव कर्मणा । अधिष्ठानं तथा कर्ता करणं च पृथग्विधम् । विविधा च पृथक् चेष्टा दैवं चैवात्र पञ्चमम् । भोगायैवास्य सकलं कर्मभिः परिकल्पितम् ॥ इत्याद्यागमवशादिति ब्रूमः । ननु कार्यमात्रस्यादृष्टाधीनत्वे कार्यत्वाविशेषाद्दृष्टमप्यदृष्टाधीनं स्यादिति चेदिष्यत एवेदम् । किन्तु केचिददृष्टविशेषा भोगानुत्पादयन्तो यथोचितमदृष्टविशेषानप्युत्पादयन्ति केचन भोगानेव केचन अदृष्टविशेषानेव । इदं पुनरिहावसेयम् । देवदत्तीयभोगविशेषजनिका घटव्यक्तिर्येनादृष्टेन जनिता तेनैव तद्घटव्यक्त्युपधायकः कपालसंयोगः कपालस्तत्क्रियाविभागादिस्तत्क्रियानुकूलनोदनादिकं चक्रभ्रमणादिकं चोत्पद्यते आत्ममनस्संयोगादिवत् । यथा हि क्वचिदेकेनैवात्ममनस्संयोगेन ज्ञानमिच्छा कृतिश्चोत्पाद्यन्ते तद्वत् । नन्वेवं घटः कपालसंयोगाधीनस्स च चक्रभ्रमणाधीनः तच्च दण्डसंयोगाधीनं सच दण्डाधीनस्स च वृक्षाधीनः स च बीजाधीन इति रीत्यैकैकादृष्टकार्यधारा तददृष्टोत्पत्तिप्राक्कालोत्पत्तिकपदार्थसाधारणी अनवस्थिता च स्यादिति चेन्न यावत्या कारणधारया तद्घटव्यक्तिविशेषजनितभोगातिरिक्तभोगेनोपयुज्यते तावत्या एव तद्घटव्यक्त्युपधायकादृष्टविशेषाधीनत्वस्य लाघवानुरोधात् कल्पनयोक्तदोषद्वयानवकाशात् । अत्र नीलकण्ठः । अदृष्टस्य कार्यमात्रं प्रति हेतुता न साक्षात् । नहि सामग्रीसमवधानेऽदृष्टविळम्बे कार्यविळम्बो दृष्टः येन तत्साक्षाद्धेतुस्स्यात् किंतु सामग्रीसम्पादकतया प्रायः परम्परयैव तदुपयोगः क्वचिन्मेघसञ्चारादौ साक्षादेव तद्धेतुः अन्यथा सामग्रीसम्पादनस्यैवानुपपत्तेः एतदर्थमेव साक्षात्परम्परासाधारणजन्यत्वबोधकमधीनपदमुपात्तमित्याचख्यौ । तन्मन्दम् । यथा सामग्रीसत्त्वेऽदृष्टविळम्बान्न घटविळम्बः तथा सामग्रीभूतानां चक्रभ्रमणादिपदार्थानामपि मिथो या सामग्री तस्यां सत्यामदृष्टविळम्बात्तत्पदार्थविळम्बाभावेन तत्रापि त्वदुक्तरीत्या साक्षाद्धेतुत्वासंभवेन अदृष्टहेतुताया एव विलोपप्रसङ्गात् मेघसञ्चारादेरपि या सामग्री वायुनोदनादिरूपा तस्या भूमात्रसञ्चारिभिः अस्माभिरपरिकलितत्वेऽपि वस्तुतो लब्धात्मकतया तस्यां सत्यामवश्यमेव तदुत्पत्तेरिति । अत्र तत्तत्कर्मविशेषजनितानां सुकृतदुष्कृतरूपाणामदृष्टविशेषाणां तत्तन्नियतफलोपधायकत्वस्यागमसिद्धतया तत्तत्कार्यविशेषे तत्तददृष्टविशेषाणां यथोचितसंबन्धाभ्यां यथोचितरूपाभ्यां च विशेषकार्यकारणभावाः कल्पनीयाः । सामान्यकार्यकारणभावस्तु कार्यत्वावच्छिन्नं प्रति स्वसमवायिसंयुक्तसंयोगसंबन्धेनादृष्टस्य कारणतेति नीलकण्ठेन दर्शितः । कालिकसंबन्धेन कार्यत्वावच्छिन्नं प्रति कालिकसंबन्धेनादृष्टत्वेन कारणतेत्यन्यैरुक्तम् । तत्र प्रथमपक्षे कार्यतावच्छेदकसंबन्धो यदि समवायः तदा ध्वंससाधारण्याभावः गुणोत्पत्तेः प्रागाद्यक्षणावच्छिन्नघटादौ तदसंभवश्च तादृशसंयुक्तसंयोगस्यापि कार्यतया तत्पूर्वं तदपेक्षणेऽनवस्थादोषश्च । कालिकसंबन्धावच्छिन्नकार्यतानिरूपिततादात्म्यसंबन्धावच्छिन्नकारणत्वरूपकाललक्षणे तादात्म्यसंबन्धावच्छिन्नत्वनिवेशनस्यादृष्टातिव्याप्तिवारणप्रयोजनकत्वं अग्रे नीलकण्ठेनैव अभिधास्यमानं च

मञ्जूषा.

विरुध्येत किंतु कालिकसंबन्ध एव कार्यतावच्छेदकसंबन्धः । नचैवं कालिकसंबन्धेन कार्याधिकरणे-स्पन्दादौ यथोक्तसंबन्धेनादृष्टस्याभावात् व्यभिचार इति वाच्यं कार्यतावच्छेदकावच्छिन्नयत्किंचिद्व्यक्त्य-धिकरणयावद्व्यक्तिनिष्ठाभावप्रतियोगित्वस्यैव व्यभिचारपदार्थत्वेन कार्याधिकरणे महाकाले यथोक्तसंबन्धे-नादृष्टसत्त्वेन व्यभिचाराप्रसक्तेः । किंतु अत्रत्यनीलकण्ठग्रन्थः कार्यतायाः समवायावच्छिन्नत्वतात्पर्यक एव स्वारसिकः प्रतीयते । अत्र ह्येवं लिखितं वर्तते । कार्यमात्रं प्रति अदृष्टस्य हेतुता न समवा-यसंबन्धेन घटाद्यधिकरणे कपालादौ समवायेन तदभावात् व्यभिचारात् । यत्तु स्वसमवायि-संयोगसंबन्धेनादृष्टं कार्यमात्रे हेतुरिति तन्न शब्दरूपकार्याधिकरणे गगनेऽदृष्टसमवाय्यात्मसंयोगाभावेन व्यभिचारात् । परन्तु स्वसमवायिसंयुक्तसंयोगसंबन्धेनादृष्टस्य हेतुता बोध्येति अनेन हि संदर्भेण स-मवायस्य कार्यतावच्छेदकत्वं स्फुटमेव प्रतीयते । तत्तु ध्वंसासंग्रहादिदोषात् अग्रिमतद्ग्रन्थविरोधा-च्च हेयमिति अवोचाम । आवश्यकं च ध्वंसस्याऽदृष्टजन्यत्वं पुत्रपश्वादिनाशस्य तत्तत्कर्मविशेष-जन्यतायाः श्रुतिसिद्धत्वात् ध्वंसेनापि भोगोत्पादनेन तस्यादृष्टाधीनत्वमन्तरेणानुपपत्तेश्च । स्यादेतत् यदि बीजप्रयोजनाभ्यां विना न कस्यचिदुत्पत्तिस्तदा भोगस्य किं प्रयोजनमिति वक्तव्यम् । उच्यते सुखदुःखसाक्षात्कारो हि भोगः । सच सुखदुःखवासनां जनयति पूर्वोत्पन्नां वा दृढयति दृढया च वासनया स्मरन् सुखान्यभिलष्यति दुःखानि च विद्वेष्टि ततः प्रवर्तते ततस्सुखं दुःखं वानुभ-वतीत्यस्ति भोगस्यापि भोगसाधनत्वम् । इदन्तु बोध्यम् । कार्यमात्रस्य न भोगप्रयोजनकत्वसंभवः । तथाहि अपवर्गपूर्वभाविनो भोगस्य न भोगान्तरं प्रयोजनं किंतु स्वजनकप्रारब्धनाशद्वाराऽपवर्ग एव प्रयोजनं अदृष्टनाशस्य तत्कार्यभोगाभावः प्रयोजनं कारणाभावस्य कार्याभावप्रयोजकत्वात् । एवमिदानी-न्तनानां भोगनाशानामुद्बोधकविधया सुखदुःखसाक्षात्कारकत्वेन भोगसाधनत्वसंभवेऽपि अपवर्गपूर्वभावि-भोगनाशस्य न भोगः प्रयोजनं किन्तु विशेषाभावकूटस्य सामान्याभावप्रयोजकतया तादृशकूटघटकत्वेन तन्नाशस्य भोगसामान्याभावप्रयोजकत्वमेव । तन्नाशे च तद्भोगजनकादृष्टमेव कारणं नत्वदृष्टान्तरं माना-भावात् । महाप्रळयस्य च भोगसामान्याभाव एव प्रयोजनं कारणाभावस्य कार्याभावप्रयोजनकत्वात् । म-हाप्रळयो हि चरमादृष्टनाशश्चरमशरीरादिनाशो वा चरमपरमाणुत्रसरेणुसंयोगनाशो वेत्यादि स्वयमूहनीयम् । तत्र चरमशरीरादिनाशे तच्छरीरजनकादृष्टमेव कारणं तददृष्टनाशश्च तच्छरीरादिनाशात् प्राग्वा स्यादुत्तरकाले वा नचात्र प्रथमपक्षे तच्छरीरादिनाशं प्रति तददृष्टस्य कारणत्वानुपपत्तिरव्यवहितपूर्ववृत्तित्वाभावादिति वाच्यं पूर्ववृत्तित्वमात्रेणापि कारणत्वनिर्वाहादित्यास्तां विस्तरः । ननु बीजप्रयोजनाभ्यामित्यत्र प्रयोजनप-दस्य नानाविधप्रयोजनपरत्वे उपभोगसाधनत्वरूपलक्षणस्य सर्वत्र सङ्गमने उपष्टम्भकतया तादृशन्यायोत्की-र्तनं विरुध्यत इति चेन्न अपवर्गप्राग्भाविभोगादिस्थलविशेषेषु कतिपयेष्वगत्या भोगातिरिक्तप्रयोजनस्य तादृ-शन्यायाभिप्रेतत्वेऽपि जन्यद्रव्याणां सर्वेषां भोगप्रयोजनकताया एव तदभिप्रेतत्वात् । एवं चोपभोगसाधन-त्वरूपं लक्षणं सकलजन्यद्रव्यसाधारणं नित्यव्यावृत्तं चेति सर्वं समञ्जसम् । ये तु शरीरेन्द्रियभिन्नत्वमेव विषयलक्षणमाचक्षते ते विषयत्वं नित्यसाधारणमेवाभिप्रयन्ति इति बोध्यम् ॥ **भेदेनोपन्यास इति** ॥ विषयत्वातिरिक्तत्वेन शरीरत्वेन इन्द्रियत्वेन चोपन्यास इत्यर्थः । प्रकारान्तरेणोपन्यास इति पाठेऽपि अयमे-वार्थः। तथाच प्रमाणस्य प्रमेयत्वेऽपि यथा प्रमेयत्वातिरिक्तेन प्रमाणत्वेनोपन्यासः प्रमाणप्रमेयेति सूत्रे कृत-स्तथेहापीति भावः । नच विषयत्वस्य शरीरत्वेन्द्रियत्वसमानाधिकरणत्वादनित्यपृथिवीविभा जकत्वं न संभवतीति वाच्यं समानाधिकरणधर्माणामपि क्वचिद्विभाजकत्वस्वीकारात् । केचित्तु शरीरेन्द्रियभिन्नत्वविशिष्टविषयत्वमिह विभाजकमतो नोक्तदोषः भेदेनोपन्यास इत्यस्य शरीरेन्द्रियभि-न्नत्वविशिष्टविषयत्वेन रूपेण विभाग इत्यर्थः देहमिन्द्रियं विषयस्तथेति मूलेऽपि देहमिन्द्रियं तथा शरीरेन्द्रियभिन्नो विषयश्चेति त्रिधेत्यर्थ इत्याहुः ॥ ३८ ॥ इति मञ्जूषायां पृथिवीग्रन्थः ॥

**वर्णः शुक्लो रसस्पर्शौ जले मधुरशीतलौ ।**

जलं निरूपयति ॥ **वर्णः शुक्ल इति** ॥ स्नेहसमवायिकारणतावच्छेदकतया जलत्वजातिसिद्धिः । यद्यपि स्नेहत्वं नित्यानित्यवृत्तितया न कार्यतावच्छेदकं तथापि जन्यस्नेहत्वं तथा बोध्यम् । अथ परमाणौ जलत्वं न स्यात् तत्र जन्यस्नेहाभावात् तस्य च नित्यस्य स्वरूप-

## प्रभा.

शुक्लरूपवत्त्वादिलक्षणलक्ष्यतावच्छेदकजलत्वजातावादौ प्रमाणमाह ॥ **स्नेहेति** ॥ कारणतावच्छेदकतया सिद्धधर्मस्य व्यक्त्यैक्यादिरूपजातिबाधकाभावात् जातिरूपत्वमिति भावः ॥ **नित्यानित्यवृत्तितयेति** ॥ यद्यपि स्नेहत्वस्यातिप्रसक्तत्वोपपादनाय नित्यवृत्तितयेत्येव वक्तुमुचितं तथापि तस्य कार्यतावैयधिकरण्यप्रयुक्तावच्छेदकत्वाभावाशङ्कानिराकरणायानित्यवृत्तित्वोपपादनमिति ध्येयम् ॥ **जन्यस्नेहत्वमिति** ॥ जन्यस्नेहमात्रवृत्तिवैजात्यमित्यर्थः ॥ तेन न विनिगमनाविरहप्रयुक्तदोषप्रसंक्तिः ॥ **तथेति** ॥ कार्यतावच्छेदकमित्यर्थः । तथाच जन्यस्नेहं प्रति जन्यजलस्य समवायिकारणतया तादृशकार्यतावच्छेदकतया जन्यस्नेहेषु वैजात्यं सिध्यतीति भावः ॥ **तत्रेति** ॥ जलपरमाणावित्यर्थः ॥ **जन्यस्नेहाभावादिति** ॥ तथाच तादृशकारणतावच्छेदकतया सिद्धजलत्वस्य तादृशकारणताशून्यपरमाणुवृत्तित्वे मानाभावादिति भावः । बाधकमप्याह ॥ **नित्यस्येति** ॥ केचित्तु नित्यसाधा-

## मञ्जूषा.

**स्नेहसमवायिकारणतावच्छेदकतयेति** ॥ अत्र जलीयशुक्लरूपे पृथिवीशुक्लरूपव्यावृत्तजातिविशेषः तन्मधुररसे पृथिवीरसव्यावृत्तजातिविशेषश्च नास्मदभिमत इति ज्ञापयति विश्वनाथः अन्यथा विभागक्रमेण वर्णः शुक्ल इत्यादिप्रकृतमूलक्रमेण च रूपरसयोः प्रथममुपस्थितत्वादुक्तवैजात्यावच्छिन्नरूपरससमवायिकारणतावच्छेदकतया जलत्वजातिसिद्ध्यभिधानोपेक्षाया निर्बीजत्वापत्तेरिति केचन मन्यन्ते । तन्मन्दं तावतापि शीतस्पर्शसमवायिकारणतावच्छेदकतया तत्सिद्ध्यभिधानोपेक्षाया निर्बीजतापत्तेर्दुर्वारत्वात् । ननु शीतस्पर्शसमवायिकारणतावच्छेदकतया तत्सिद्धिर्जले शीतस्पर्शव्यवस्थापनदशायामभिधास्यत एवातो न दोषः जले शुक्लरूपमधुररसव्यवस्थापनदशायामपि तद्वैजात्यावच्छि-

## दिनकरीयम्.

जलत्वजातौ प्रमाणमाह ॥ **स्नेहेति** ॥ कारणतावच्छेदकतया धर्मसिद्धौ बाधकाभावात्तस्य जातित्वमिति भावः । नित्यवृत्तिधर्मस्य कार्यतावच्छेदकत्वाभावेन स्नेहत्वस्य कार्यतावच्छेदकत्वं न सम्भवतीति शङ्कते ॥ **यद्यपीति** ॥ **तथा** कार्यतावच्छेदकम् । वस्तुतस्तु नित्यसाधारणधर्मस्य कार्यतावच्छेदकत्वे दोषाभावात् जन्यपदं न देयमेव । ननु यथाऽरण्यस्थदण्डादौ फलानुपधायके कारणतावच्छेदकतया दण्डत्वादिजातिस्तथात्रापि भविष्यतीत्यत आह ॥ **तस्येति** ॥ दण्डादेः स्वरूपयोग्यता-

## रामरुद्रीयम्.

ननु स्नेहजनकतावच्छेदकतया जलत्वसिद्धावपि न तस्य जातित्वसिद्धिः शब्दादिकारणतायां कारणतात्वस्य जात्यवच्छिन्नत्वव्यभिचारित्वेन तेन हेतुना जलत्वजात्यवच्छिन्नत्वस्य साधनासम्भवादित्याशङ्कायामाह ॥ **बाधकाभावादिति** ॥ जातित्व इति शेषः । व्यक्त्यभेदादिरूपजातिबाधकविरहादित्यर्थः । जातित्वमित्यस्याग्रे लाघवादिति शेषः । एतेन कारणतावच्छेदकीभूतं जलत्वं शीतस्पर्शवत्त्वमेव न जातिः पदार्थान्तरकल्पने गौरवादिति प्रत्युक्तम् । शीतत्वरूपजातिविशिष्टानामनेकेषां कारणतावच्छेदकत्वे गौरवाल्लाघवेन शुद्धजलत्वजातेरेव कारणतावच्छेदकत्वौचित्यादिति ध्येयम् ॥ **दोषाभावादिति** ॥ कालविशेषावच्छेदेन स्वावच्छिन्नाधिकरणवृत्त्यभावप्रतियोगितानवच्छेदकजलत्वधर्मवत्त्वरूपकार्यतायाः स्नेहत्वेऽनतिप्रसक्तत्वसम्भवादिति भावः ॥ **अत्रापीति** ॥ स्नेहानुपधायकपरमाणावपीत्यर्थः ॥ **तथाऽत्रापि भविष्यतीति** ॥ कारणतावच्छेदकजलत्ववत्ता निराबाधा भवि-

## मञ्जूषा.

रूपरससमवायिकारणतावच्छेदकत्वाभिधानात्तद्वैजात्ययोः अनभिमतत्वं ज्ञायत इति चेत्तर्हि स्नेहसमवायिकारणतावच्छेदकत्वमपि स्नेहस्तत्रेति मूलव्याख्यानावसर एव उच्यताम् । इदानीं लक्ष्यतावच्छेदकीभूतजलत्वजातिसिद्धिस्तु प्रथमोपस्थितशीतस्पर्शसमवायिकारणतावच्छेदकतयैवोच्यताम् । तस्मादेवं वक्तव्यम् । न भाविमूलजन्योपस्थितिप्राथम्यमिहापेक्षणीयं किन्तु अथ गुणा रूपमित्यादिपूर्वोपदर्शितविभागे स्नेहत्वस्योपस्थितत्वात् तदवच्छिन्नसमवायिकारणतावच्छेदकत्वमुक्तं शीतत्वं तु न तत्रोपतिष्ठते तस्य गुणविभाजकत्वाभावात् । अनुष्णाशीतशीतोष्णेत्यादिभाविस्पर्शविभागे हि विभाजकतया शीतत्वमुपस्थास्यति । अतो नादौ शीतत्वावच्छिन्नसमवायिकारणतावच्छेदकत्वमुक्तं जले मधुरशीतलाविति मूलव्याख्यानावसरे तु शीतत्वस्य मूलत उपस्थितत्वात् तदवच्छिन्नसमवायिकारणतावच्छेदकत्वं वक्ष्यत इति । एवंच जलीयशुक्लरूपमधुररसनिष्ठौ वैजात्यविशेषौ न पूर्वोक्तगुणविभागादुपस्थितौ नवा वर्णः शुक्ल इति प्रकृतमूलादतस्तदवच्छिन्नसमवायिकारणतावच्छेदकत्वं नोक्तम् । कथं तर्हि अपाकजानुष्णाशीतस्पर्श इति मूलात् पूर्वोक्तगुणविभागाच्चानुपस्थितं यद्वैजात्यं तदवच्छिन्नस्पर्शसमवायिकारणतावच्छेदकतया वायुत्वजातिसिद्धिरग्रे वक्ष्यत इति चेत् तत्र गत्यन्तराभावात् इति ब्रूमः । स्यादेतत् यदि जलीयरूपरसयोः जातिविशेषौ स्यातां तदा तत्पुरस्कारेणैव रूपरसयोर्जललक्षणत्वसंभवात् वक्ष्यमाणपरिष्कारान्तरादरणमनर्थकमिति नैष दोषः । तादृशजातिविशेषपुरस्कारेण रूपरसयोर्मूलतोऽनुपस्थित्या दर्शितपर्यनुयोगानवकाशात् । अथ मूल एव तादृशजातिपुरस्कारेण रूपरसौ कुतो नोक्ताविति चेदसुप्रतिपादत्वादिति ब्रूमः । तादृशजातिविशेषौ हि न केनचिच्छब्देन प्रतिपादयितुं शक्येते किन्तु विजातीयशब्देन । सच शब्दो नानावैजात्यावच्छिन्नवाची कथं बालकं प्रकृतौ जातिविशेषौ विशिष्य झटिति प्रत्याययेत् । अथ तादृशजातिविशेषौ विश्वनाथाभिप्रेताविस्यत्र किं ज्ञापकमिति चेन्न । नहि वयं तयोस्तदभिमतत्वे ज्ञापकमस्तीति ब्रूमः किंत्वनभिमतत्वे ज्ञापकन्नास्तीत्येव । तत्र च वायुस्पर्शे पृथिवीस्पर्शव्यावृत्तजातिविशेषस्य कण्ठोक्ततया तुल्यन्यायत्वेन जलीयरूपरसयोरपि पृथिवीरूपरसव्यावृत्तजातिविशेषस्वीकारो न तद्ग्रन्थविरोधमावहतीति प्रतिभाति ॥ **यद्यपीति** ॥ नित्यवृत्तिधर्मस्य कार्यतावच्छेदकत्वे बाधकाभाव इति ज्ञापनाय यद्यपीत्युक्तम् । तदर्थश्चाप्रयोजकत्वसंभावनाविषयत्वं कार्यतावच्छेदकताविघटकत्वाभावप्रकारकसंभावनाविषयत्वमिति यावत् । तच्च नित्यानित्यवृत्तिताविशेषणम् । अथवा युक्त्यसिद्धत्वसंभावनाविषयत्वं तदर्थः । नित्यानित्यवृत्तित्वप्रयोज्यत्वविशिष्टकार्यतावच्छेदकभेदविशेषणं यद्वा नञ इहान्योन्याभावप्रकारकोत्कटकोटिकसन्देहविषयत्वे लक्षणा । यद्यपिशब्दस्तात्पर्यग्राहकः इदानीमाभिनिवेशिकस्याप्यप्रामाण्यस्य न शङ्कावकाशः ॥ **तथापीति** ॥ स्नेहत्वनिष्ठनित्यवृत्तित्वज्ञानाहितकार्यतावच्छेदकभेदसंभावनाप्रतिबध्यत्वाभावविशिष्टनिश्चयविषयत्वरूपं पूर्वोक्तार्थाबाध्यत्वं तथापीत्यस्यार्थः । तच्च तथा बोध्यमित्यत्र तथाशब्दार्थे कार्यतावच्छेदकत्वे विशेषणं जन्यस्नेहत्वं जन्यत्वविशिष्टस्नेहत्वं जन्यस्नेहमात्रवृत्तिजातिविशेष इति केचित् ॥ **तत्र** जलपरमाणौ ॥ **जन्यस्नेहाभावादिति** ॥ तथाच साधकाभावः । बाधकमप्याह ॥ **तस्य चेति** ॥ **नित्यस्येति** ॥ एतच्च प्राचामभ्युपगममात्रं अनुकूलतर्काभावेनोक्तनियमासिद्धेः । द्रव्यचाक्षुषत्वाद्यवच्छिन्नजनकतावच्छेदकीभूतोद्भूतरूपत्वाद्यवच्छिन्नपरमाणुरूपादौ व्याभिचाराच्च । किंतु कदाचिदपि फलानुपधायिकायां व्यक्तौ कारणतावच्छेदकधर्मस्वीकारे प्रमाणाभाव इत्येवोक्तनियमार्थः द्रव्यचाक्षुषानुपधायिकायामपि जलपरमाणुरूपव्यक्तौ महत्त्वाभावचाक्षुषाद्यनुरोधेन द्व्यणुकादिसमवेतोद्भूतरूपाद्यनुरोधेन चोद्भूतरूपत्वस्वीकारस्यावश्यकत्वान्न तत्र प्रमाणाभावः । इहतु परमाणौ जलत्वस्वीकारे प्रमाणाभाव एव । तथाच साधकाभाव एवोक्तनियमस्य पर्यवसानं बोध्यम् । यद्यप्येवं सति जलत्वजातेरेव जन्यस्नेहसमवायिकारणतावच्छेदकत्वं वक्तुमुचितं तस्या एव जन्यजलत्वजात्यवच्छिन्नसमवायिकारणतावच्छेदकत्वस्वीकारेण

**योग्यत्वे फलावश्यम्भावानियमादिति चेन्न । जन्यस्नेहजनकतावच्छेदिकाया जन्यजलत्वजातेः सिद्धौ तदवच्छिन्नजनकतावच्छेदकतया जलत्वजातिसिद्धिः । शुक्लरूपमेव जलस्येति दर्श-**

## प्रभा.

रणधर्मस्य कार्यतावच्छेदकत्वे दोषाभावाज्जन्यपदं न देयमित्याहुः तदसत् तादृशधर्मस्यापि कार्यतावच्छेदकत्वे पदार्थसमवायिकारणतावच्छेदकतया द्रव्यत्वजातिसिद्धिमनुक्त्वा कार्यसमवायिकारणतावच्छेदकतया द्रव्यत्वजातिसाधनस्य निर्बीजत्वापत्तेः संख्यापरिमाणसमवायिकारणतावच्छेदकतया तत्सिद्धिमुपेक्ष्य संयोगादिसमवायिकारणतावच्छेदकतया तत्सिद्धिप्रतिपादकमूलविरोधापत्तेः जलनिष्ठतादात्म्यसंबन्धावच्छिन्नकारणतानिरूपितसमवायसंबन्धावच्छिन्नजलनिष्ठकार्यतावच्छेदकतया सिद्धजलत्वजातेः परमाणुसाधारण्यसंभवेनैतादृशप्रयासवैफल्यापत्तेश्च किंच घटत्वस्येव पृथिवीत्वजातेरपि दण्डकार्यतावच्छेदकत्वापत्तेरिति ॥ **जन्यजलत्वजातेरिति** ॥ जन्यजलमात्रवृत्तिवैजात्यस्येत्यर्थः ॥ **तदवच्छिन्नेति** ॥ तादृशवैजात्यावच्छिन्नेत्यर्थः । नचैवं तादृशवैजात्यावच्छिन्नजनकताशून्यजलान्त्यावयविनि जलत्वं न स्यादिति वाच्यं तादृशजनकतावच्छेदकतया सिद्धजलत्वजातेर्जलान्त्यावयविवृत्तित्वस्वीकारात् अन्त्यावयविनोऽनित्यत्वेन तत्र नित्यस्येत्यादिव्याप्तेरनवतारात् । केचित्तु जलान्त्यावयविनि जलत्वं न स्यादित्याक्षेपस्य जलस्यान्त्यावयवित्वानङ्गीकारादिति परिहारमाहुः । तदसत् जलस्यान्त्यावयवित्वानङ्गीकारे शरीरलक्षणस्य जलीयशरीरेऽव्याप्त्यापत्तेः । यत्तु ईदृशवैजात्यावच्छिन्नसमवायिकारणतावच्छेदकतया

## मञ्जूषा.

जन्यजलोत्पादानुरोधेन परमाणौ जलत्वजातिस्वीकारावश्यकतया प्रमाणाभावनिबन्धनदर्शितानियमस्य तत्राप्रसरात् तथापि जलत्वावच्छिन्नजन्यतावच्छेदकतया जन्यजलत्वजातिस्वीकारावश्यकत्वेऽनतिप्रसक्तत्वात्तस्यैव जन्यस्नेहसमवायिकारणतावच्छेदकत्वमुचितं व्याप्यरूपेण कारणत्वे संभवति व्यापकरूपेणान्यथासिद्धत्वादित्याशयेन समाधत्ते ॥ **जन्यस्नेहेति** ॥ अत्र नित्यवृत्तिधर्मस्य कार्यतावच्छेदकत्वानङ्गीकारपक्ष एव जन्यजलत्वजातिस्वीकारः । अन्यथा तु जलत्वजातेरेव जलत्वावच्छिन्नजन्यतावच्छेदकत्वं वक्तुमुचितमिति तत्पक्षे जलत्वजातिरेव स्नेहसमवायिकारणतावच्छेदिका । अत एवाग्रे जन्यशीतस्पर्शजनकतावच्छेदकं जलत्वं जन्यजलत्वं वा बोध्यमित्यादौ जलत्वस्यापि शीतस्पर्शसमवायिकारणतावच्छेदकत्वमभिधास्यते । सां-

## दिनकरीयम्.

यां न कापि क्षतिः तस्यानित्यत्वेन फलोपधायकत्वाभावादिति भावः ॥ **जन्यजलत्वजातेः** जन्यजलमात्रवृत्तिजातेः ॥ **तदवच्छिन्नेति** ॥ जन्यजलत्वजात्यवच्छिन्नेत्यर्थः । नचैवं जलान्त्यावयविनि जलत्वं न स्यादिति वाच्यम् । जलस्यान्त्यावयवित्वानुपगमात् । ननु जलत्वावच्छिन्नं प्रति समवायसम्बन्धेन स्नेहस्यैव कारणत्वमस्तु अतिरिक्तजातिकल्पनापेक्षया लाघवादिति चेन्न । जलत्वावच्छिन्नं प्रति स्नेहत्वेन कारणत्वं शीतस्पर्शत्वेन वेत्यत्र विनिगमनाविरहेणातिरिक्तजातिसिद्धेः क्लृप्तमादाय कल्पनीयेन विनिगमनाविरहाभावादिति । केचित्तु धूमादिकं प्रत्यार्द्रेन्धनादेः कारणत्वं निर्विवादं

## रामरुद्रीयम्.

व्यतीत्यर्थः । ननु जन्यजलत्वं जन्यत्वविशिष्टजलत्वं विशिष्टञ्च न जातिरित्यत आह ॥ **जन्यजलमात्रेति** ॥ **जलान्त्यावयविनि** जलान्तरजननायोग्यजलावयविनि ॥ **न स्यादिति** ॥ तादृशजले जनकतावच्छेदकजातिस्वीकारे तस्यायोग्यतैव न स्यादिति भावः ॥ **अनुपगमादिति** ॥ जलमात्र एव जलान्तरसंयोगेन वृहज्जलजननयोग्यतासत्त्वादिति भावः ॥ **जातिसिद्धेरिति** ॥ ननु जलत्वस्यापि ताभ्यां विनिगमनाविरह इत्यत आह ॥ **क्लृप्तमिति** ॥ **विनिगमनाविरहाभावादिति** ॥ कल्पनीयस्य हि कारणतावच्छेदकत्वं धर्मिग्राहकप्रमाणसिद्धं क्लृप्तस्य तु न तथात्वमिति विनिगमकस्यैव सत्त्वादिति भावः ॥ **निर्विवादमिति** ॥ अन्वयव्यतिरेकाभ्यामित्यादिः ॥

### प्रभा.

सिद्धजलत्वजातेः जलान्त्यावयव्यवृत्तित्वेऽपि न क्षतिः स्नेहसमवायिकारणतावच्छेदकतया सिद्धजलत्वमादायैव जलान्त्यावयविनि जलत्वव्यवहारसंभवादिति तन्न तथा सति स्नेहसमवायिकारणतावच्छेदकतया सिद्धजलत्वजातेः वैजात्यावच्छिन्नसमवायिकारणतावच्छेदकतया सिद्धजलत्वजातेश्च द्व्यणुकादौ समावेशेन साङ्कर्यापत्त्या उभयोर्जातित्वानुपपत्तेः । परंतु धूमादिकं प्रत्यार्द्रेन्धनादेः हेतुत्वं निर्विवादं आर्द्रत्वं च जलसंयुक्तत्वं जलसंयुक्तेन्धनत्वेनेन्धनसंयुक्तजलत्वेन वा कारणतेत्यत्र विनिगम-

### मञ्जूषा.

सिद्धिकद्रवत्वं जातिविशेषः प्रत्यक्षसिद्धः तदवच्छिन्नजनकतावच्छेदकमपि तदेवेति च एवं तेजस्त्वादिसाधनग्रन्था अपि फलानुपधायकानित्यसाधारणधर्मस्यापि कारणतावच्छेदकत्वपक्षमादायाग्रे दृश्यन्त इति बोध्यम् । स्यादेतत् जन्यस्नेहजनकतावच्छेदकीभूतजन्यजलत्वावच्छिन्नजनकतावच्छेदकतया जलत्वजातिस्वीकारपक्षे जलान्त्यावयविनि जलत्वजातिसिद्धिर्न स्यात् तत्र जलाकारप्रत्यक्षस्य जन्यजलत्वजात्यालम्बनतयैव निर्वाहादिति चेदत्र नीलकण्ठः जलस्यान्त्यावयव्यनभ्युपगमादिति समादधौ । तदपरे न क्षमन्ते । जलस्यान्त्यावयव्यभ्युपगमाभावे जलशरीरेऽन्त्यावयवित्वघटितशरीरलक्षणस्याव्याप्तिप्रसक्तिरिति । अत्र नीलकण्ठानुसारिणः जलस्यान्त्यावयव्यनभ्युपगमादिति नीलकण्ठग्रन्थस्य जलारम्भस्वरूपायोग्यजलानुपगमादित्यर्थः नतु जलानुपधायकजलानुपगमादिति दैवाज्जलान्तरसंयोगाभावे जलानुपधायकविषयजलस्य दुरपह्नवत्वात् । एवंच जलीयशरीरमपि जलीयशरीरान्तरेण विलक्षणसंयोगे महाशरीरमारभत एव । ततश्च यत्र विलक्षणसंयोगापन्नाभ्यां जलीयशरीराभ्यां शरीरान्तरमारभ्यते तत्र पूर्वशरीरयोरवयवत्वात् शरीरलक्षणे न तयोर्लक्ष्यत्वं येन तु शरीरेण दैवान्न शरीरान्तरमारब्धं तदेव शरीरलक्षणलक्ष्यं शरीरलक्षणघटकमन्त्यावयवित्वं च न द्रव्यारम्भस्वरूपायोग्यत्वं किन्तु द्रव्यसमवायिभिन्नत्वमात्रम् । अतो न तस्य तत्राव्याप्तिः । एवं चारम्भकसंयोगरूपकारणासन्निधानेन जन्यजलानारम्भेऽपि जन्यजलत्वावच्छिन्नजनकतावच्छेदकजातिस्वीकारो जलशरीरे आवश्यक एवारण्यस्थदण्डे घटजनकतावच्छेदकजातिस्वीकारवदित्याहुः । वस्तुतस्तु जलशरीरे जन्यजलजनकतावच्छेदकजात्यस्वीकारे परमाणुसाधारण्यास्तस्याः जन्यस्नेहजनकतावच्छेदकजन्यजलत्वजातेश्च मिथस्साङ्कर्यापत्तिरिति तत्र तत्स्वीकार आवश्यक एवेति ध्येयम् । अत्र नीलकण्ठेन केचिदित्यारभ्य धूमादिकं प्रत्यार्द्रेन्धनादेः कारणत्वं निर्विवादं आर्द्रत्वं च जलसंयुक्तत्वं तथाच जलसंयुक्तेन्धनत्वेनेन्धनसंयुक्तजलत्वेन वा कारणतेत्यत्र विनिगमनाविरहात् जलत्वेन्धनत्वयोः पार्थक्येन कारणतावच्छेदकतया जलत्वजातिसिद्धिरित्याहुरिति लिखितम् । अत्र विनिगमनाविरहोपन्यासो निरर्थकः जलसंयुक्तेन्धनत्वेन कारणत्वेऽपि कारणतावच्छेदकघटकतया जलत्वसिद्धेर्निष्प्रत्यूहत्वात् । नवा पृथक्कारणत्वसंभवः वह्नौ पृथग्देशावच्छेदेन दग्धेन्धनस्य जलस्य च संयोगेऽपि धूमानुत्पादात् बहिरवयवावच्छेदेन जलसिक्तस्य दग्धेन्धनरूपेङ्गालस्य वह्नौ प्रक्षेपेऽपि धूमानुदयाच्च । किन्त्वन्तरवयवावच्छेदेन जलसंयुक्तेन्धनत्वेनैव कारणता वाच्या । तत्र चान्तरवयवावच्छेदेनेन्धनसंयुक्तजलत्वेन कारणता विनिगमनाविरहाद्दुर्वारैव । किंत्वेतादृशकारणतावच्छेदकतयैव यदि जलत्वजातिसिद्धिरिष्यते तदा तस्याः परमाणुद्व्यणुकसाधारण्यं दुर्घटं परमाणुद्व्यणुकात्मकजलसंयुक्तेन्धनेन धूमोत्पादविरहेण महाजलसंयुक्तेन्धनस्यैव कारणताया वाच्यत्वादित्यवसेयम् । मूले वर्णः शुक्ल इत्यादिना जलस्य रूपरसस्पर्शैः पृथिव्यादिभ्यो वैलक्षण्यमेवाभिप्रेतं नतु लक्षणं अतो नातिव्याप्तिशङ्कावकाशः । यद्यपि शीतस्पर्शमात्रस्यानतिप्रसक्ततया लक्षणत्वमुचितं तथापि स्वरूपाख्यानमात्रपररसशब्देन सह पाठात् शीतस्पर्शप्रतिपादनमपि स्वरसतः स्वरूपाख्यानपरमात्रमेवोचितम् । यदि चैतेषां लक्षणत्वमप्यावश्यकमित्यभिनिवेशः तदा रूपरसयोः परिष्कार आदरणीयः शीतस्पर्शस्य तु यथाश्रुत एव लक्षणत्वं निर्वहतीत्याशयेनाह ॥ **मुक्तावल्यां शुक्लरूपमे-**

यितुमुक्तं वर्णः शुक्ल इति । ननु शुक्लरूपवत्त्वं लक्षणम् । अथवा नैमित्तिकद्रवत्ववद्वृत्ति-

**प्रभा.**

नाविरहात् जलत्वेन्धनत्वयोः पार्थक्येन कारणतावच्छेदकतया जलत्वजातिसिद्धिरित्याहुः तन्न धूमं प्रति जलसंयुक्तेन्धनत्वेन न हेतुत्वं तप्तायःपिण्डे ज्वलितनिर्धूमाङ्गारे च जलपरमाणुद्व्यणुकयोस्संयोगसत्त्वेऽपि तत्र धूमानुत्पत्त्या व्यभिचारापत्तेः । किन्तु महाजलसंयुक्तेन्धनत्वरूपार्द्रेन्धनत्वेनैव हेतुत्वं वाच्यम् । अत्राप्युक्तदोषेण महाजलत्वेन्धनत्वाभ्यां कारणताद्वयमावश्यकं एवंच महाजलत्वस्योपाधिरूपत्वे महाजलमात्रवृत्तिवैजात्यरूपत्वे वा न जलपरमाणुद्व्यणुकसाधारण्यं तयोर्महत्त्वाभावात् तप्तायःपिण्डाद्यन्तर्भावेन व्यभिचारित्वाचोक्तरीत्या जलत्वजातिसिद्धेरसंभवात् । अन्येतु स्थूलजलप्रत्यक्षसिद्धजलत्वजात्यवच्छिन्नसमवायिकारणतावच्छेदकतया परमाणुसाधारणजलत्वजातिसिद्धिः कार्यतावच्छेदककारणतावच्छेदकयोरैक्ये क्षतिविरहात् नित्यसाधारणधर्मस्य कार्यतावच्छेदकत्वे दोषाभावाच्चेत्याहुः तन्न स्थूलजले प्रत्यक्षप्रमाणसिद्धजलत्वमेव व्यवहारबलात् परमाणुद्व्यणुकयोरपि स्वीक्रियत इत्येतावतैवेष्टसिद्धेः कार्यतावच्छेदककारणतावच्छेदकयोरैक्यस्वीकारस्य नित्यवृत्तिधर्मस्य कार्यतावच्छेदकत्वस्वीकारस्य चायुक्तत्वादिति ॥ **ननु शुक्लेति** ॥ पृथिव्यादावतिव्याप्तिरिति शेषः । शुक्लवत्त्वस्य लक्षणत्वमपि संभवतीत्याह ॥ **अथवेति** । अत्र पृथिव्यादावतिव्याप्तिवारणाय नैमित्तिकद्रवत्ववदवृत्तीति वाय्वादावतिव्याप्तिवारणाय शुक्लवद्वृत्तीति वक्ता-

**मञ्जूषा.**

**वेत्यादिना ॥ नैमित्तिकेति ॥** नैमित्तिकद्रवत्वत्वं जातिविशेषः । अग्निसंयोगासमवायिकारणकद्रवत्वत्वं वा । शुक्लवद्वृत्तीत्यत्र रूपवद्वृत्तीत्यपि पाठः । शुक्लरूपवद्वृत्तीति पाठस्तु प्रामादिकः शुक्लत्वरूपत्वोभयानिवेशे प्रयोजनाभावात् । घटत्वादिवारणाय द्रव्यत्वसाक्षाद्व्याप्यत्वनिवेशः । ननु किमिदं द्रव्यत्वसाक्षाद्व्याप्यत्वं नतावत् द्रव्यत्वव्याप्याव्याप्यत्वं तद्धि न द्रव्यत्वसमानाधिकरणान्योन्याभावप्रतियोगितावच्छेदकजातिसमानाधिकरणान्योन्याभावप्रतियोगितावच्छेदकत्वाभावः जलत्वस्यापि तादृशपृथिवीत्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वेनासम्भवापत्तेः । नापि द्रव्यत्वसमानाधिकरणभेदप्रतियोगितावच्छेदकजातिसमानाधिकरणत्वाविशिष्टं यत्तादृशजातिसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वं तदभावः जलत्वस्यापि तादृशकरकात्वादिसमानाधिकरणत्वेन तादृशपृथिवीत्वादिसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वेन चासम्भवापातात् । नापि द्रव्यत्वसमानाधिकरणभेदप्रतियोगितावच्छेदिका या जातिस्तद्व्यक्तिसमानाधिकरणत्वविशिष्टतद्व्यक्तिसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वाभावः घटत्वस्यापि तादृशजलत्वाव्याप्यतामादायातिव्याप्त्यापत्तेः । उच्यते । द्रव्यत्वसमानाधिकरणभेदप्रतियोगितावच्छेदिका यावत्यो जातयः प्रत्येकं तत्तत्समानाधिकरणत्वविशिष्टतत्तत्समानाधिकरणभेदप्रतियोगितावच्छेदकत्वाभावकूटवत्त्वं स्वसमानाधिकरणतादृशजातिसमा-

**दिनकरीयम्.**

आर्द्रत्वं च जलसंयुक्तत्वं तथा च जलसंयुक्तेन्धनत्वेनेन्धनसंयुक्तजलत्वेन वा कारणतेत्यत्र विनिगमनाविरहाज्जलत्वेन्धनत्वयोः पार्थक्येन कारणतावच्छेदकतया जलत्वजातिसिद्धिरित्याहुः । परेतु स्थूलजलवृत्तिप्रत्यक्षसिद्धजलत्वरूपजात्यवच्छिन्नसमवायिकारणतावच्छेदकतया परमाणुसाधारणजलत्वजातिसिद्धिः कार्यतावच्छेदककारणतावच्छेदकयोरैक्ये क्षत्यभावात् नित्यसाधारणधर्मस्य कार्यतावच्छेदकत्वे दोषाभावाचेत्याहुः ॥ **नन्विति** ॥ पृथिव्यादावतिव्याप्तेरिति शेषः । शुक्लरूपवत्त्वस्य लक्षणत्वेऽपि न क्षतिरित्यभिप्रेत्याह ॥ **अथवेति** ॥ द्रव्यत्वव्याप्यवायुत्वजातिमादाय वायावतिव्याप्तिवारणाय रूपव-

**रामरुद्रीयम्.**

**पार्थक्येनेति** ॥ इदं च वस्तुगतिमनुरुध्योक्तम् ॥ आर्द्रेन्धनत्वेन धूमकारणत्वेऽपि कारणतावच्छेदककोटिप्रविष्टतयैव जलत्वसिद्धिसम्भवादित्यवधेयम् ॥ आहुरित्यस्वरसोद्भावनं तद्बीजं तु परमाणुरूपजलसंयोगस्य धूमप्रयोजकत्वे मानाभावेन उक्तयुक्त्या परमाणौ जलत्वासिद्धेरिति । परे त्वित्यादिकं तु

## प्रभा.

दावतिव्याप्तिवारणाय द्रव्यत्वसाक्षाद्व्याप्येति च जातिविशेषणं देयम् । तत्र नैमित्तिकद्रवत्ववतोः पृथवीतेजसोः नैमित्तिकद्रवत्ववत्त्वेन निवेशे गौरवात् पृथिवीत्वतेजस्त्वाभ्यां निवेश उचितः तथा सति पृथिव्यवृत्तित्वं तेजोऽवृत्तित्वं च जातौ लब्धं एतल्लाभायैव च द्रव्यत्वसाक्षाद्व्याप्यत्वविशेषणं प्रयोजनान्तरविरहात् एवंच पृथिवीवृत्तित्वसामान्याभावतेजोवृत्तित्वसामान्याभावशुक्लवद्वृत्तित्वैतत्त्रितयविशिष्टजातिमत्त्वं लक्षणं फलितमिति न कोऽपि दोषः । अस्मद्गुरुचरणास्तु वज्रत्वजातिमादायातिव्याप्तिवारणाय द्रव्यत्वसाक्षाद्व्याप्येति साक्षाद्व्याप्यत्वं च द्रव्यविभाजकधर्मत्वमिति व्याचक्रुः । केचित्तु साक्षादिति घटत्वादिवारणाय द्रव्यत्वसाक्षाद्व्याप्यत्वं च द्रव्यत्वव्याप्याव्याप्यत्वमात्रं नतु द्रव्यत्वव्याप्यत्वस्यापि तत्र प्रवेशः रूपवद्वृत्तित्वविशेषणेनैव रूपत्वादीनां वारणात् तन्निवेशे प्रयोजनाभावात् मूर्तत्वजात्यनभ्युपगमादेव जलत्वस्य द्रव्यत्वव्याप्यमूर्तत्वव्याप्यत्वेऽपि न क्षतिरित्याहुः तदसत् मूर्तत्वजात्यभ्युपगमपक्षे मूलोपात्तलक्षणस्य निर्दुष्टत्वासम्पादकतयोक्तपक्षस्य हेयत्वात् । अन्ये तु द्रव्यत्वव्याप्याव्याप्यत्वस्य यथाश्रुतस्य लक्षणघटकत्वे द्रव्यत्वव्याप्यजलत्वाव्याप्यत्वस्य घटत्वादावपि सत्त्वेन तमादाय घटादावतिव्याप्त्यापत्तेः । द्रव्यत्वव्याप्ययावद्व्याप्यत्वनिवेशे असंभवः द्रव्यत्वव्याप्ययावद्धर्माणामेकाधिकरणाप्रसिद्ध्या यावन्निरूपितव्याप्यत्वाभावस्याप्रसिद्धत्वात् । किन्तु द्रव्यत्वव्याप्या यावन्तो धर्माः तत्प्रत्येकनिरूपितव्याप्यत्वाभावकूटवत्त्वं वाच्यम् । एवंच मूर्तत्वजात्यभ्युपगमपक्षे द्रव्यविभाजकोपाधिद्वयघटकप्रत्येकासमानाधिकरणत्वं व्याप्यधर्मेषु निवेश्य द्रव्यत्वव्याप्या यावन्तो द्रव्यविभाजकोपाधिद्वयघटकप्रत्येकासमानाधिकरणा धर्माः तत्प्रत्येकनिरूपितव्याप्यत्वाभावकूटवत्त्वरूपद्रव्यत्वसाक्षाद्व्याप्यत्वनिवेशात् द्रव्यत्वन्यूनवृत्तित्वरूपद्रव्यत्वव्याप्यत्वविशिष्टधर्मेषु मूर्तत्वान्यत्वनिवेशाद्वा मूर्तत्वजातिवारणसंभवेन लक्षणस्य निर्दुष्टत्वसंभवात् इत्याहुः । तत्र प्रथमपरिष्कारे द्रव्यविभाजकोपाधिद्वयघटकप्रत्ये-

## मञ्जूषा.

नाधिकरणभेदप्रतियोगितावच्छेदकं यद्यत् स्वं तत्तद्भेदकूटवत्त्वं स्वसामानाधिकरण्यस्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वोभयसंबन्धेन तादृशजातिविशिष्टान्यत्वं वा तत् । तादृशजातीत्यस्य द्रव्यसमानाधिकरणभेदप्रतियोगितावच्छेदकजातिरित्यर्थः । एवमन्यदप्यूह्यम् । सर्वपक्षेऽपि जलघटान्यतरत्वमादाय घटादावतिव्याप्तिवारणाय जातिपदमिति नीलकण्ठोक्तिरसङ्गतैव द्रव्यत्वसमानाधिकरणभेदप्रतियोगितावच्छेदिका या पृथिवीत्वजातिस्तत्समानाधिकरणत्वस्य तत्समानाधिकरणभेदप्रतियोगितावच्छेदकत्वस्य च तत्र सत्त्वात् । नच घटपदं पृथिवीमात्रपरं तथाच पृथिवीजलान्यतरत्वस्य तादृशयज्जातिसमानाधिकरणत्वं तज्जातिसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वविरहात्तदादायातिव्याप्तिसङ्गतिरिति वाच्यम् । पृथिवीजलान्यतरत्वस्य नैमित्तिकद्रवत्ववद्वृत्तित्वेन लक्षणघटकत्वानिर्वाहात् । अतः द्रव्यत्वसमानाधिकरणभेदप्रतियोगितावच्छेदिकाः स्वभिन्ना यावत्यो जातयः प्रत्येकं तावदभाववद्वृत्तित्वकूटवत्त्वं द्रव्यत्वव्याप्याव्याप्यत्वमित्यभिप्रायेणेदमुक्तन्नीलकण्ठेन स्वं लक्षणत्वेनाभिमता जातिः जलत्वस्य तादृशजलत्वाभाववद्वृत्तित्वाभावादसंभववारणाय स्वाभिन्नेत्युक्तम् । घटजलान्यतरत्वं तु जलान्तर्भावेन घटत्वपृथिवीत्वाद्यभाववद्वृत्तिघटान्तर्भावेण जलत्वाद्यभाववद्वृत्तीति लक्षणघटकं भविष्यत्येव घटत्वस्य तु तादृशपृथिवीत्वाभाववद्वृत्तित्वाभावान्न तदादायातिव्याप्तिः अस्मदुक्तपरिष्कारे तु वायुजलान्यतरत्वमादायातिव्याप्तिवारणाय जातिपदमिति वक्तव्यम् । उभयमतेऽपि समवायेन शुक्लवद्वृत्तित्वस्य समवायेन तादृशधर्मवत्त्वस्य च विवक्षयैवोक्तदोषवारणसंभवात् । जातित्वनिवेशस्य नेदं प्रयोजनम् । किन्तु नीलकण्ठाभिमतपरिष्कारे घटजलसंयोगघटजलद्वित्वादिवारणाय जातित्वनिवेशनम् । अस्मदुक्तपरिष्कारे तु समवायनिवेशलाभायैव जातित्वनिवेशनं नतु घटजलसंयोगवायुजलसंयोगादिवारणाय तेषां यावज्जलव्यक्तिवृत्तित्वासंभवेन जलत्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वाज्जलत्वसमानाधिकरणत्वाच्च यावतीषु जलव्यक्तिष्वन्यत्र च समवेतैका सङ्ख्या नास्ति अतीतानागतजलव्यक्तीनां मेळनासंभवात् । अतो न यावज्जलवायुसमवेतसंख्यामादाय दोषवारणायापि तस्याः

**रूपवद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वम्** अभास्वरशुक्लेतररूपासमानाधिकरणरूपवद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वं वा तदर्थः तेन स्फटिकादौ नातिव्याप्तिः ॥ **रसस्पर्शाविति** ॥ जलस्य मधुर एव रसः । शीत एव स्पर्शः । तिक्तरसवद्वृत्तिमधुरवद्वृत्तिद्रव्यत्व-

## प्रभा.

कासमानाधिकरणत्वनिवेशे द्रव्यविभाजकोपाधित्वमेव द्रव्यत्वसाक्षाद्व्याप्यत्वमित्यस्यैव निर्दुष्टत्वेन शेषवैयर्थ्यात् मूर्तत्वान्यत्वानिवेशपक्षे तु द्रव्यसमवायिकारणतावच्छेदकतया सिद्धपृथिव्यादिचतुष्टयमात्रवृत्तिजात्यभ्युपगमपक्षे रूपसमवायिकारणतावच्छेदकतया सिद्धपृथिव्यादित्रिकमात्रवृत्तिजात्यभ्युपगमपक्षे गुरुत्वसमवायिकारणतावच्छेदकतया सिद्धपृथिवीजलमात्रवृत्तिजात्यभ्युपगमपक्षे च तादृशलक्षणस्यासंभवग्रस्तत्वात् तत्तत्पक्षे असंभववारणाय लक्षणे तत्तद्भिन्नत्वनिवेशे निवेशितुः परिहास्यत्वापत्तेरिति दिक् । ननु वर्णश्शुक्ल इति मूलानैमित्तिकद्रवत्वस्यानुपस्थिततया तदुपस्थितिकल्पने गौरवमिति शुक्लघटितमेव लक्षणमाह ॥ **अभास्वरेति** ॥ अभास्वरशुक्लसमानाधिकरणेत्युक्तौ पृथिवीत्वजातिमादाय पृथिव्यामतिव्याप्तेरभावद्वयगर्भेतेति बोध्यम् । अ-

## मञ्जूषा.

र्थक्यमेवमन्यत्राप्यूह्यम् । द्रव्यविभाजकत्वमेव द्रव्यत्वसाक्षाद्व्याप्यजातित्वमित्यपि केचित् ॥ **अभास्वरेति** ॥ शङ्खत्वादिवारणाय द्रव्यत्वसाक्षाद्व्याप्यत्वनिवेशः ॥ **शीत एवेति** ॥ अस्त्रीनियत-

## दिनकरीयम्.

वृत्तीति । यथा च वायुत्वं जातिस्तथाग्रे वक्ष्यते । पृथिवीत्वादिजातिमादाय पृथिव्यादावतिप्रसङ्गवारणाय नैमित्तिकद्रवत्ववद्वृत्तीति । साक्षादिति पटत्वादिवारणाय । द्रव्यत्वसाक्षाद्व्याप्यत्वं च द्रव्यत्वव्याप्याव्याप्यत्वमात्रं नतु द्रव्यत्वव्याप्यत्वस्यापि तत्रान्तर्भावः रूपवद्वृत्तित्वविशेषणेनैव रूपत्वादीनां वारणात्तन्निवेशे प्रयोजनाभावात् । यद्यप्यवश्योपस्थितिकद्रवत्वस्यैव रूपस्थाने प्रवेशो युक्तस्तेनापि वायुत्वादेर्वारणात् एवं च द्रवत्ववद्वृत्तित्वाभावादेव पटत्वादीनां वारणसम्भवे द्रव्यत्वसाक्षाद्व्याप्येत्यपि न देयमिति लाघवम् । तथापि मूले वर्णः शुक्ल इत्यादिना रूपघटितलक्षणस्योक्तत्वात्तदघटितलक्षणपरिष्कारे मूलविरोधः स्यादिति तथा न कृतमिति ध्येयम् । मूर्तत्वजात्यनभ्युपगमेन चेदं तेन जलत्वस्य द्रव्यत्वप्याप्यमूर्तत्वव्याप्यत्वेऽपि न क्षतिः । जलघटान्यतरत्वमादाय घटादावतिव्याप्तिवारणाय जातीति । क्वचिच्छुक्लरूपवद्वृत्तीति पाठः। तत्र शुक्लपदं रूपपदं वा सम्पातादायातम् । एवमेव च व्यावृत्तिरभास्वरशुक्लेतररूपेत्यत्र रूपवद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यपदयोर्वा बोध्या पृथिवीत्वमादाय पृथिव्यामतिव्याप्तिवारणायाभास्वरशुक्लेतररूपासमानाधिकरणेति । जलत्वस्य शुक्लरूपसामानाधिकरण्यादसम्भव इति शुक्लेतरेति । तेजस्त्वमादाय तेजस्यतिव्याप्तिवारणायाभास्वरेति ॥ **शीत एवेति** ॥ यद्यपि शीतं

## रामरुद्रीयम्.

स्वानुमतमेव स्नेहत्वस्यैव जन्यतावच्छेदकत्वसम्भवेन जन्यत्वाप्रवेशेऽपि न क्षतिरित्यस्य स्वेनैव पूर्वमुक्तत्वादिति मन्तव्यम् ॥ **तत्रान्तर्भाव इति** ॥ ननु द्रव्यत्वव्याप्याव्याप्यत्वमात्रस्य द्रव्यत्वसाक्षाद्व्याप्यतारूपत्वे तथाविधरूपत्वमादाय रूपादावतिव्याप्तिरित्यत आह ॥ **रूपवदित्यादि** ॥ **अवश्योपस्थितिकेति** ॥ नैमित्तिकद्रवत्ववद्वृत्तित्वस्य पृथिवीत्वादिवारणायावश्यमुपात्ततया द्रवत्वस्यावश्योपस्थितिकत्वेन तत्परित्यज्यानुपस्थितरूपप्रवेशस्यानुचितत्वादिति भावः ॥ **रूपघटितेति** ॥ तत्र वर्णपदस्य रूपार्थकत्वादिति भावः ॥ यद्यप्येवमपि मूले शुक्लपदस्याप्युपात्तत्वेन तस्य चोक्तलक्षणघटकतया मूलविरोधो दुर्वार एव तथापि शुक्लवद्वृत्तित्वं रूपवद्वृत्तित्वं वा प्रवेशनीयमित्यत्र विनिगमनाविरहेण लक्षणद्वये मूलतात्पर्यस्य विवक्षणीयतया न मूलविरोध इति भावः ॥ **एवमेवेत्यादि** ॥ एकस्मिन् लक्षणे शुक्लरूपपदयोरघटकत्वेनापरितोषान्मूले कारिकानुसारिलक्षणान्तरमेतदवधेयम् ॥ **बोध्येति** ॥ वायुत्वमादायातिव्याप्तिवारणाय पटत्वादिकमादाय तद्वारणाय च रूपव-

साक्षाद्व्याप्यजातिमत्त्वं तदर्थस्तेन शर्करादौ नातिव्याप्तिः । शीतेतरस्पर्शवदवृत्तिस्पर्शवद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वं तदर्थः । ननु शुक्लरूपमेवेति कुतः कालिन्दीजलादौ नीलिमोपलब्धेरिति चेन्न । नीलजनकतावच्छेदिकायाः पृथिवीत्वजातेरभावाज्जले नीलरूपासम्भवात् । कालिन्दीजले नीलत्वप्रतीतिस्त्वाश्रयौपाधिकी अत एव वियति विक्षेपे धवलिमोप-

## प्रभा.

व्याप्यभास्वरशुक्लेतररूपासमानाधिकरणेति पृथिवीतेजसोः परिचायकं न तयोस्तेन रूपेणापि प्रवेशः गौरवात् । किन्तु पृथिवीत्वतेजस्त्वाभ्यामेवेति इदमपि पूर्वलक्षणमेव । परन्तु पूर्वलक्षणे पृथिवीतेजसोः परिचायककोटिप्रविष्टनैमित्तिकद्रवत्वमनुपस्थितमित्युपस्थितिकृतं गौरवं द्वितीयपरिष्कारे तयोः परिचायककोटिप्रविष्टशुक्लरूपमुपस्थितमित्येव लाघवं । लक्षणं तदेवेति हृदयम् ॥ **तिक्तवदवृत्तीति** ॥ पृथिव्यवृत्तीत्यर्थः । एतल्लाभायैव द्रव्यत्वसाक्षाद्व्याप्येति । पृथिव्यवृत्तिमधुरवद्वृत्तिजातिमत्त्वमित्येव लक्षणं बोध्यम् ॥ **आश्रयौपाधिकीति** ॥ स्वसमवायिसंयोगसंबन्धेनाश्रयगतनीलविषयिणीत्यर्थः ॥ **अत एवेति** ॥ उक्तपरम्परासंबन्धस्य जलं नीलमिति प्रतीतिनियामकत्वादेवेत्यर्थः ॥ **वियतीति** ॥ तादृशजले उक्तपरम्परासंबन्धघटकाश्र-

## मञ्जूषा.

ल्लिङ्गानां योगे तल्लिङ्गतापि चेति शीतशब्दस्य पुंस्त्वं ॥ **तिक्तादिमदिति** ॥ अत्र तिक्तादीनां मधुरेतररसत्वेन निवेशः । तिक्तत्वादिना निवेशेन लक्षणपञ्चके तात्पर्यम् । गुणत्वादिवारणाय द्रव्यत्वसाक्षाद्व्याप्येति ॥ **आश्रयौपाधिकीति** ॥ अत्र नीलकण्ठः स्वसमवायिसंयोगसंबन्धेनोपष्टम्भकपार्थिवभागगतनीलरूपप्रतीतिः कालिन्दीजलादाविति भावः ॥ **अत एवेति** ॥ उपदर्शितसंबन्धस्य जलं नीलमिति प्रतीतिनियामकत्वादेवेत्यर्थः ॥ **वियतीति** ॥ तत्रोपदर्शितसंबन्धघटकसंयोगनाशादिति भाव इति व्याचख्यौ ।

## दिनकरीयम्.

गुण इति कोशात् क्लीबतैवोचिता तथापि विशेष्यस्य स्पर्शशब्दस्य पुल्लिङ्गत्वात् पुल्लिङ्गतया निर्देशः शुक्लं रूपमित्यादौ शुक्लपदस्य क्लीबतयैवेति । द्रव्यत्वव्याप्या या पृथिवीत्वरूपा जातिस्तामादाय पृथिव्यामतिव्याप्तिवारणाय तिक्तावृत्तीति । तेजस्त्वादिजातिमादाय तेजआदावतिव्याप्तिवारणाय मधुरवद्वृत्तीति । शेषं दर्शितदिशाऽवसेयम् ॥ **शीतेतरेति** ॥ द्रव्यत्वरूपजातिमादायातिव्याप्तिवारणाय शीतेतरस्पर्शवदवृत्तीति । आमत्वादिकमादायात्मादावतिव्याप्तिवारणाय स्पर्शवद्वृत्तीति । शेषं पूर्ववत् । ननु जले नीलरूपाभावे कथं नीलरूपप्रतीतिरत आह ॥ **कालिन्दीति** ॥ स्वसमवायिसंयोगसम्बन्धेनोपष्टम्भकपार्थिवभागगतनीलरूपप्रतीतिः कालिन्दीजलादाविति भावः ॥ **अत एवेति** ॥ उपदर्शितसम्बन्धस्य जलं नीलमिति प्रतीतिनियामकत्वादेवेत्यर्थः ॥ **वियतीति** ॥ तदोपद-

## रामरुद्रीयम्.

वृत्तित्वद्रव्यत्वसाक्षाद्व्याप्यत्वयोः प्रवेश इत्यर्थः । न च पटे नीलादिरूपस्याप्यनुभवसिद्धतयाऽसमानाधिकरणान्तेनैव पटत्वादिवारणसम्भवात् शङ्खादावतिव्याप्तिवारणमेव साक्षात्पदप्रयोजनं तथाचैवमेवेति कीर्तनमसङ्गतमिति वाच्यम् ॥ नीलपटादिस्थले नीलादिरूपं न पटस्य अपितु नीलयुक्तद्रव्यान्तरस्यैवेति सिद्धान्तात् ॥ **क्लीबतैवेति** ॥ गुणे शुक्लादयः पुंसीति कोशसत्त्वेऽपि शुक्लं रूपमित्यादिप्रयोगो यथा चिन्तामण्यादौ दृश्यते तथात्रापीत्यर्थः कोशस्य विशेष्यवाचकपदासमभिव्याहारस्थल एव प्रवृत्तिरिति भावः ॥ द्रव्यत्वेत्यादिमूले शीतस्पर्शवत्त्वस्य जललक्षणत्वे क्वापि दोषाभावात्तन्निरुक्तिर्न कृतेति मन्तव्यम् ॥ **दोषमिति** ॥ वायुत्वमादायातिव्याप्तिवारणाय मधुरवद्वृत्तीति ॥ शर्करात्वमादायातिव्याप्तिवारणाय साक्षाद्व्याप्येति ॥ जलशर्करोभयत्वमादाय तद्वारणाय जातीति पदमिति भावः ॥ **उपष्टम्भकेति** ॥ कालिन्दीजलसंयुक्तेत्यर्थः ॥ इदं तु बोध्यम् ॥ कालिन्दीजले नीलत्वप्रतीतावाश्रयौ-

लब्धिः। अथ जले माधुर्ये किं मानं नहि प्रत्यक्षेण कोऽपि रसस्तत्रानुभूयते। नच नारिकेलजलादौ माधुर्यमुपलभ्यत एवेति वाच्यम्। तस्याश्रयौपाधिकत्वात् अन्यथा जम्बीररसादावाम्लादिरसोपेलब्धेराम्लादिमत्त्वमपि स्यादिति चेन्न। हरीतक्यादिभक्षणस्य जलरसव्यञ्जकत्वात्। नच हरीतक्यामेव जलोष्मसंयोगाद्रसान्तरोत्पत्तिरिति वाच्यम् क-

## प्रभा.

यगतसंयोगाभावादिति भावः। ननु माधुर्ये प्रमाणाभावात् जले मधुर एवेत्युक्तिरयुक्तेति शङ्कते ॥ **अथेति** ॥ तत्र प्रत्यक्षप्रमाणं निराकरोति ॥ **नहीति** ॥ **अन्यथेति** ॥ नारिकेलजलविषयकरसोपलब्धेः आश्रयौपाधिकत्वानङ्गीकारे ॥ **अम्लादिमत्त्वमपीति** ॥ तत्रोपलब्धिमात्रस्य वस्तुसाधकत्वादिति भावः ॥ **हरीतक्यादिभक्षणस्येति** ॥ आदिना आमलकपरिग्रहः ॥ **व्यञ्जकत्वादिति** ॥ तथाच हरीतक्यादिभक्षणसहकृतरसनेन्द्रियस्यैव जलरसग्राहकत्वात् न सर्वदा जले रसप्रत्यक्षापत्तिरिति भावः ॥ **जलोष्मसंयोगादिति** ॥ जलोष्मभ्यां संयोगादित्यर्थः ॥ **रसान्तरोत्पत्तिरिति** ॥ तथाच जलोष्मसंयोगात् जायमानहरीतकीनिष्ठमधुररसस्यैव उपलभ्यमानतया जले मधुररसस्वीकारे प्रमाणाभाव इति भावः ॥ **कल्पनागौरवादिति** ॥ तथाच हरीतकीभक्षणोत्तरकालीनोपलम्भविषयरसस्य हरीत-

## मञ्जूषा.

अत्रोप सन्निहिते वस्तुनि आदधाति स्वनिष्ठधर्ममारोपयतीत्युपाधिशब्दस्य व्युत्पत्तिमनुसृत्येदमुक्तं नीलकण्ठेन नैतद्विचारसहम्। कालिन्दीजले उपष्टम्भकपार्थिवभागसत्त्वे वियति विक्षेपेऽपि तस्यानपगमात्। यावदाश्रयसत्त्वमनुवर्तमानो विलक्षणसंयोग एव ह्युपष्टम्भो नाम। नचात्रोपष्टम्भकशब्दः प्रवाहाधिकरणभूप्रदेशपर इति वाच्यं धवललोहितवर्णसिकतास्वपि प्रवहति जले नीलिमोपलब्ध्या तत्रोक्तसंबन्धाभावात्। नच सिकताप्रवाहदशायामपि कृष्णभूरेणवस्तत्रानुवर्तन्त इति वाच्यं वियति विक्षेपेऽपि तेषामनुवृत्तेः। अत एवान्तराळे धवळतयोपलब्धं कनककटाहधृतं कतकक्षोदरेणुभिरपनीतपङ्कमपि जलं नीलतयैवोपलभामहे तस्मादत्रोपाधिशब्दो भ्रमनिमित्तदोषपरः। तथाच जले नीलरूपभ्रमे आश्रयो दोषः तस्य च न जपाकुसुमादेरिवानुभूयमानारोपजनकत्वं किन्तु दूरत्वमण्डूकवसा-

## दिनकरीयम्.

र्शितसम्बन्धघटकसंयोगनाशादिति भावः ॥ **तत्र** जले ॥ **तस्य** माधुर्यस्य ॥ **अन्यथा** आश्रयोपाधिकत्वाभावे। व्यञ्जकत्वादित्युत्तरं हरीतकीभक्षणोत्तरं प्रत्यक्षेण माधुर्योपलम्भादिति पूरणीयम् ॥ **कल्पनागौरवादिति** ॥ अवयवरसाजन्यस्य पृथिवीरसस्याग्निसंयोगसाध्यत्वदर्शनादेतदनुरोधमात्रेण जलसंयोगस्यापि पृथिवीरसोत्पादकत्वस्वीकारेऽतिरिक्तकार्यकारणभावस्य हरीतक्यां मधु-

## रामरुद्रीयम्.

पाधिकत्वं आश्रयविशेषसंयोगरूपदोषजन्यत्वमेव मूलग्रन्थकर्तुरभिप्रेतं नतूक्तपरम्परासंसर्गकत्वं तथासति जले नीलत्वस्येव पृथिवीत्वस्यापि प्रतीतिप्रसङ्गात् ॥ न च त्वन्मतेऽपि तादृशदोषबलात्कुतो न पृथिवीत्वप्रत्यय इति वाच्यम्। स्फटिकादिस्वच्छद्रव्ये रक्तपटादिसंयोगबलाद्रक्तत्वप्रतीतिरेव न तु पटत्वप्रतीतिरिति सर्वानुभवसिद्धमिति पित्तादिदोषस्य पीतत्वमात्रभ्रान्तिजनकतामात्रकल्पनावदत्राप्यनुभवानुरोधेन नीलत्वभ्रान्तिजनकतामात्रस्यैव तादृशदोषे कल्पनीयत्वात् दोषविशेषजन्यत्वादेव विशेषदर्शिनामपि समवायेनैव नीलत्वभ्रान्तिः नहि नीलो घटो नीलं जलमिति प्रतीत्योर्वैलक्षण्यमनुभवसिद्धमिति कश्चिदुपैतीति। हरीतकीभक्षणस्येत्यादिना हरीतकीभक्षणस्य जलरसव्यञ्जकत्वमुक्तं मूले तत्र च हेतोरनभिधानान्मूलस्य न्यूनतामाशङ्क्य हेतुं पूरयति ॥ **व्यञ्जकत्वादीत्यादिना** ॥ **हरीतक्यामिति** ॥ यद्यपि हरीतक्यां मधुररसकल्पनं सिद्धान्ते जले मधुररसकल्पनस्थानीयमिति गौरवात्तत्प्रदर्शन-

**ल्पनागौरवात्। पृथिवीत्वस्याम्लादिजनकतावच्छेदकत्वाच्च जले नाम्लादिकम्। जम्बीररसादौ**

## प्रभा.

कौत्पत्तित्वकल्पने तादृशरसं प्रति जलोष्मसंयोगस्य हेतुत्वकल्पनेऽवयवरसाजन्यपृथिवीरसस्याग्निसंयोगजन्यत्वमिति नियमस्य व्यभिचारेणतादृशनियमं परित्यज्यावयवरसाजन्यपृथिवीरसस्याग्निसंयोगजन्यत्वजलोष्मसंयोगजन्यत्वान्यतरवत्त्वमिति नियमान्तरकल्पने च गौरवमिति भावः। ननु जम्बीरजलादौ सर्वत्र आम्लरसस्य अनुभूयमानत्वात् जले आम्लरसोऽपि स्वीक्रियतामित्यत आह ॥ **पृथिवीत्वस्येति** ॥ **आम्लादीति** ॥ आदिना लवणादिपरिग्रहः। तथाच कारणतावच्छेदकपृथिवीत्वशून्यत्वात् जले आम्लाद्युत्पत्तिर्न संभवतीति भावः। ननु पृथिवीत्वे मधुररसजनकतावच्छेदकत्वस्यापि सत्त्वात् तादृशपृथिवीत्वशून्यतया जले मधुररसोऽपि न स्वीकार्यः। नच पृथिवीत्वस्येव जलत्वस्यापि मधुररसजनकतावच्छेदकतया तादृशधर्मवत्त्वेन जले मधुररसोत्पत्तौ बाधकाभाव इति वाच्यं तथा सति जम्बीरजलादावम्लोपलब्धेः जलत्वे आम्लजनकतावच्छेदकत्वस्यापि सत्त्वेन तादृशधर्मवत्त्वेन जलेऽप्याम्लोत्पत्त्यापत्तिरित्याशङ्क्य जले

## मञ्जूषा.

ञ्जनादेरिव स्मर्यमाणारोपजनकत्वं नेतावता पार्थिवरेणूनां कृष्णारुणादिवर्णानां जलविलोडितानां काष्ण्र्यादिगोचारानुभूयमानारोपजनकतां वयमपलपामः। अथैवं वियति विक्षिप्ते कलुषे वारिणि कुतो न काष्ण्र्यारुण्यादिकं प्रतीयत इति चेत्प्रतीयत एवातिकलुषे किन्तु धावल्यमपि प्रतीयते जलसमवेतधावल्यप्रतीतिप्रतिबन्धकस्याश्रयस्याभावादिति दिक्। ईषत्कलुषे वियति विक्षिप्ते काष्ण्र्याद्यप्रतीतिस्तु प्रतिबन्धकवशात् प्रतिबन्धकश्च वियद्विक्षेप इत्याद्यूहनीयम्। एवं क्वचित् कृष्णभूमिप्रवाहिनि जले आश्रयदेशनीलिमोपलब्धिमपि न वयं वारयामः। तत्र च यद्याश्रयनीलिमा समवायेन जले भासते तदा भ्रमः यदि स्वसमवायिसंयोगेन तदा प्रमेत्यवगन्तव्यम् ॥ **तस्याश्रयोपाधिकत्वादिति** ॥ तादृशजलानुषक्तेषु नारिकेळभागेषु यो रसस्स एव जले प्रतीयत इत्यर्थः ॥ **कल्पनागौरवादिति** ॥ एतच्चापाततः। तथाहि किमत्र कल्पनागौरवम्। नच पार्थिवरसं प्रत्यवयवरसस्य तेजस्संयोगस्य च कारणत्वं क्लृप्तं जलसंयोगस्यापूर्वकारणत्वकल्पने गौरवमिति वाच्यं सर्वत्र जलेऽनुद्भूतस्पर्शवतस्तेजसस्सत्त्वेन तत्संयोगेनैव तत्र हरीतक्यवयवेषु रसान्तरोत्पत्तिस्वीकारेणापूर्वकारणताया मयाप्यकल्पनात्। अत एव जलक्षिप्तेऽन्नादौ पर्युषिते रसान्तरमुपलभामहे। अत एव च मुक्तावल्यां नच हरी-

## दिनकरीयम्.

ररसस्य च कल्पने गौरवादिति भावः। नन्वस्तु जले मधुरो रसस्तथापि जम्बीरजलादौ प्रत्यक्षसिद्धस्याम्लरसस्यापि स्वीकारे बाधकाभाव इत्यत आह ॥ **पृथिवीत्वस्येति** ॥ **आम्लादिजनकतावच्छेदकत्वादिति** ॥ यद्यपि पृथिवीत्वस्याम्लादेर्जनकतावच्छेदकतावन्मधुरजनकतावच्छेदकत्वमप्यस्तीति तुल्यं तथापि हरीतक्यादिभक्षणोत्तरं जलेऽपि मधुरोपलब्धेस्तत्र मधुरस्वीकारस्यावश्यकत्वाज्जलत्वेनापि मधुरं प्रति हेतुत्वं कल्प्यत इति भावः। ननु जम्बीरसलिलादावाम्लप्रत्यक्षात् जलत्वेनाम्लादिरसेऽपि तुल्यवद्धेतुत्वं स्यादत आह ॥ **जम्बीररसादाविति** ॥ स्वसमवायिसंयो-

## रामरुद्रीयम्.

मनुचितं तथापि प्रतिवादिना मन्मते कार्यकारणभावस्यैकस्याधिक्यं त्वन्मते जले मधुररसकल्पनस्थानीयामिति यदुच्यते तदा जलेऽस्माकं तत्कल्पनं भवतो हरीतक्यां मधुररसकल्पनस्थानीयं कार्यकारणभावकल्पनं त्वन्मतेऽधिकमेवेति सूचयितुं तत्कीर्तनमिति ध्येयम्। अम्लजनकतावच्छेदकपृथिवीत्वस्य जलेऽभावान्नाम्लादिमत्त्वं जलस्येति मूलोक्तं न सङ्गच्छते शर्करादौ मधुररसजनकतावच्छेदकत्वेनापि पृथिवीत्वस्य क्लृप्ततया तदभावाज्जले मधुररसस्याभावप्रसङ्गादित्याशङ्कते ॥ **यद्यपीति** ॥ **तत्र** हरीतक्यां अशक्यतयेत्यस्यानुभवानुरोधेनेत्यादिः। जलत्वस्येत्यस्य पृथिवीत्वेनैवेत्यादिः। ननु जम्बीर-

## मञ्जूषा.

तक्यवयवेषु कषायरसः किं तव कदापि न नश्यति तथा सति नित्यत्वापत्तेः किंत्वाश्रयनाशादग्रे यदाकदाचिन्नङ्क्षतीति त्वमङ्गीकरोषि वयं त्विदानीमेव नश्यतीत्यङ्गीकुर्मः । न तत्रास्माकं गौरवम् । एवं मधुररसरासनमपि तदानीमुभयसिद्धं तच्च जलरसमवगाहतां हरीतक्यवयवरसं वा कोऽनयोर्विशेषः । किंतु यादृशहरीतकीव्यक्तिभक्षणोत्तरं जलपानं क्रियते तादृशहरीतक्यवयवेष्वेव त्वदनभिमतमधुररसव्यक्तिकल्पनमस्माकम् । युष्माकन्तु हरीतकीभक्षणोत्तरपीतेषु तदनुत्तरपीतेष्वपि तेषु च सर्वेषु जलेष्वसदनभिमतमधुररसकल्पनामिति कस्येदं गौरवम् । तस्माज्जलीयमधुररसोऽनुभवसिद्ध इत्येव युक्तिर्वक्तव्या । अनुभूयते हि वर्षासलिलं मधुरं भूपतितं तु भौमरसविशेषैरुपलभ्यते किन्तु गुडादिमधुररसेषु यः प्रकर्षः स जलमधुरिमण्यस्ति न वेत्येतावती विप्रतिपत्तिः । स च हरीतकीभक्षणोत्तरपरिपीतसलिलरसेऽनुभूयते स चानुभवो यदि प्रमेत्युच्यते तदा तद्व्यञ्जकत्वं हरीतकीभक्षणस्य वाच्यं तदानीं च जलीयमधुररसे पार्थिवमधुररसव्यावृत्तजातिविशेषो नास्तीत्यापन्नम् । यदि च सोऽनुभवो भ्रमः हरीतकीभक्षणं च तत्र स्मर्यमाणारोपजनकदोषः हरीतकीभक्षणसन्धुक्षितजलपानसंधुक्षितो जिह्वाप्रवर्ती प्रकृष्टमधुररसशालिपित्तद्रव्यविशेषो वानुभूयमानारोपजनकदोष इत्युच्यते तदा पार्थिवमधुररसव्यावृत्तः अपकर्षाख्यः जातिविशेषो जलेऽस्तीत्यापन्नं अनयोश्च पक्षयोरेकतरं न वयं विनिश्चेतुं प्रभवामः एतेन कषायरसैर्मधुररसैश्चावयवैरारब्धा हरीतकी नानारसैव तत्र च मधुररसस्य व्यञ्जको जलसंयोगः नतु तद्गतरसान्तरस्य फलबलात् अतो नीरसमेव जलमिति केषांचिदुक्तिरपास्ता । अनुभवेन जले माधुर्यसिद्धेरुक्तत्वात् । किंच नानाजातीयरसवदवयवारब्धत्वे चित्ररसैव हरीतकी स्यात् । नेष्यते चित्ररसः । तत्राव्याप्यवृत्तिनानारसोत्पत्तिरपि न संभवति व्याप्यवृत्तिजातीयगुणानामव्याप्यवृत्तित्वविरोधात् । व्याप्यवृत्ति च विजातीयं रसद्वयं युगपद्विरुद्धम् । अथास्तु नीरसैव हरीतकी जलसंयोगो हरीतक्यवयवगतमाधुर्यस्यैव व्यञ्जकोऽस्तु जलपानाभावदशायां उपलभ्यमानकषायरसोऽप्यवयवगत एवास्त्विति चेदेतावता हि कतिपये हरीतक्यवयवाः कषायाः कतिपये मधुरा इति प्राप्तम् । एवं च सति जलपानेऽपि कतिचन हरीतक्यवयवाः कषाया एवोपलभ्येरन् नचैवमुपलभ्यन्ते । नच हरीतक्यवयवसमवेतकषायरसरासनं प्रति जलसंयोगस्य प्रतिबन्धकत्वमिति वाच्यं तावता तव लाघवाभावात् हरीतक्यामेवेत्यनन्तरं जलोष्मसंयोगादित्यत्र तेजस्संयोगादित्येव बहुषु पुस्तकेषु पाठो दृश्यते । अथवा हरीतक्यवयवेषु रसान्तरोत्पत्तौ जलसंयोगस्यैव कारणतामभ्युपगच्छन्तो न वयं प्रत्यवेयाम नवा राज्ञामाज्ञा तत्रास्मान्निरुन्द्धे । एतेन पर्युषितान्नादौ रसान्तरोत्पादानुरोधेन तत्र विजातीयतेजस्संयोग उभयमतकल्पनीयः । इहतु रसोत्पादानुकूलस्य विजातीयतेजस्संयोगस्य कल्पने तदेव भवतां गौरवमित्यपास्तम् । जलसंयोगेनैव तत्र रसान्तरोत्पादाभ्युपगमात् । नचोक्तमेवात्र गौरवं अपूर्वकारणताकल्पनाप्रयुक्तामिति वाच्यं जलसमवेतमधुररसनिष्ठलौकिकविषयताशालिरासनप्रत्यक्षत्वावच्छिन्नं प्रति हरीतक्यवयवसंयोगत्वेन कारणताया अस्माकमपूर्वायास्त्वया कल्पनीयतया तदंशे साम्यात् । प्रत्युत तवैव गौरवमतिरिच्यते मधुरत्वावच्छिन्नं प्रति पृथिवीत्वेनेव जलत्वेनापि कारणत्वान्तरस्य त्वया कल्पनीयत्वात् । नच हरीतक्यवयवेषु पूर्वरसनाशमन्तरेण रसान्तरोत्पादो न संभवति रसं प्रति रसस्य प्रतिबन्धकत्वात् ततश्च हरीतक्यवयवसमवेतकषायरसनाशं प्रति जलसंयोगस्य कारणताकल्पनं तवाधिकमिति यान्यं जलपाने जिह्वालग्नेषु हरीतक्यवयवेषु कषायरसानुभवस्य. तवाप्यसिद्धतया हरीतक्यवयवसमवेतरसनिष्ठलौकिकविषयताशालिरासनत्वावच्छिन्नं प्रति जलसंयोगस्य प्रतिबन्धकतायास्त्वया वाच्यतया तदंशेऽपि साम्यात् । अथ जले पूर्वसिद्ध एव मधुररसः इदानीं हरीतक्यवयवसंयोगेनाभिव्यज्यत इत्यस्माकं लाघवम् । तव तु जलसंयोगेन हरीतक्यवयवेषु पूर्वरसनाशः रसान्तरोत्पत्तिः तदभिव्यक्तिश्चेत्यधिकव्यक्तिकल्पनया गौरवामिति चेत् विपरीतं मन्यसे । तथाहि हरी-

**स्वाश्रयौपाधिकी तथा प्रतीतिः । एवं जन्यशीतस्पर्शजनकतावच्छेदकं जन्यजलत्वं तदव-**

### प्रभा.

अम्लोपलब्धेः भ्रमत्वोपपादनेन परिहरति ॥ **जम्बीरेति** ॥ **आश्रयौपाधिकीति** ॥ स्वसमवायिसंयोगेन जम्बीरसमवेतरसविषयिणीत्यर्थः ॥ **तथा प्रतीतिरिति** ॥ जम्बीरजलमम्लमिति प्रतीतिरित्यर्थः । तथाच शुष्कजम्बीरेऽपि अम्लरसोपलब्धेस्तत्राम्लरसाङ्गीकारस्यावश्यकतया अम्लं जलमिति प्रतीतेः परम्परया अम्लविषयकत्वं स्वीक्रियते हरीतक्यां तु मधुररसस्यानुपलम्भात् मधुरं जलमिति प्रतीतेः परम्परासंबन्धेन आश्रयगतमधुरविषयकत्वं न संभवतीति जले माधुर्यसिद्धिः निष्प्रत्यूहेति भावः । नच कर्कटीभक्षणोत्तरं जलपाने तिक्तरसोपलब्धेस्तत्र तिक्तरसोऽप्यस्त्विति वाच्यम् । जलपानात्पूर्वमपि कर्कट्यां तिक्तरसानुभवात् कर्कटीभक्षणं विना जलपाने तिक्तरसस्याननुभवात् कर्कटीसमवेततिक्तरसो जलपानोत्तरमपि प्रतीयत इत्यभ्युपगमात् हरीतक्यां हरीतक्यवयवेषु वा वर्तमानमधुररसस्य व्यञ्जको जलसंयोग इति मतं तु हेयमेव अवयविन्यवयवेषु वा कषायरसवत् मधुररसवत्त्वे प्रमाणाभावात् । तस्मान्निदाघपीतशीतलवाहिगङ्गाजलमाधुर्यस्यानुभवसिद्धस्यापलपितुमशक्यतया जले मधुर एव रस इति सिद्धम् । जलत्वजातौ प्रमाणान्तरमाह ॥ **एवमिति** ॥ ननु घृष्टचन्दनादौ शैत्योपलब्धिवशात्तत्र

### मञ्जूषा.

तक्यवयवेषु कषायरसः किं तव कदापि न नश्यति तथा सति नित्यत्वापत्तेः किंत्वाश्रयनाशादग्रे यदाकदाचिन्नङ्क्षतीति त्वमङ्गीकरोषि वयं त्विदानीमेव नश्यतीत्यङ्गीकुर्मः । न तत्रास्माकं गौरवं एवं मधुररसरासनमपि तदानीमुभयसिद्धं तच्च जलरसमवगाहतां हरीतक्यवयवरसं वा कोऽनयोर्वि-

### दिनकरीयम्.

गेन जम्बीरगताम्लरसप्रतीतिस्तद्भूतजल इत्यर्थः । शुष्केऽपि जम्बीरे आम्लप्रतीतेस्तत्राम्लरसस्यावश्यकत्वे तस्यैव तद्भूतजले परम्परया प्रतीतिः हरीतक्यां तु मधुररसाभावान्न हरीतकीगतमाधुर्यस्य जले प्रतीतिरिति भावः । कर्कटीभक्षणोत्तरं जलपाने तिक्तरसस्यानुभवात्तिक्तरसोऽपि जले स्यादिति तु न जलपानात्पूर्वमपि कर्कट्यां तिक्तरसोपलब्धेः कर्कटीभक्षणोत्तरं रसनाप्रवर्तिपित्तक्षोभे तदीयतिक्तोपलब्धेर्वैद्यकसिद्धत्वाच्च । वस्तुतो निदाघपीतनिर्मलगङ्गाजलमाधुर्यस्यानुभवसिद्धस्यापलापासम्भवान्मधुर एवेति युक्तम् । एतेन हरीतक्यादौ न जलसंयोगेन माधुर्यमुत्पद्यते येन कल्पनागौरवम् । परन्तु हरीतक्यां कषायवन्मधुररसोऽपि स्वीक्रियते तद्व्यञ्जकश्च जलसंयोगः न तु तद्भूतरसान्तरस्य फलबलात् । यदि च चित्ररूपवच्चित्ररसे मानाभावात् गुणविरोधेन नीरसैव हरीतकी रसप्रतीतिस्तु अवयवेषु रससत्त्वात्परम्परयेत्युच्यते तदाऽस्तु जलसंयोगो हरीतक्यवयवगतमाधुर्यस्यैव व्यञ्जक इत्यपास्तम् । जलत्वजातावनुमानान्तरं प्रमाणमाह ॥ **एवमिति** ॥ ननु जलत्वाभावेऽपि घृष्टचन्दनादौ

### रामरुद्रीयम्.

गतरसस्य जले भानं जलगतरसस्य जम्बीरे भानं वेत्यत्र विनिगमकं दुर्लभमित्याशङ्कायामाह ॥ **शुष्केऽपीति** ॥ नन्वेवं हरीतकीगतमधुररसस्यैव जलेऽपि परम्परया भानस्वीकारेणैवोपपत्तौ जले मधुरो रसोऽपि न स्यादित्यत आह ॥ **हरीतक्यामिति** ॥ **तद्व्यञ्जकश्चेति** ॥ हरीतकीमधुररसव्यञ्जकस्त्वित्यर्थः । **रसान्तरस्य** कषायरसस्य ॥ **फलबलात्** तत्प्रत्यक्षरूपकार्यबलादित्यर्थः ॥ **मानाभावादिति** ॥ चित्ररसस्य प्रामाणिकत्वे तत्र चित्ररूप इवावयवगतनानारसानां हेतुत्वसम्भवेऽपि नीरसद्रव्यप्रत्यक्षे बाधकाभावेन चित्ररूपवच्चित्ररसानङ्गीकारे क्षतिविरहान्नानारसावयवकद्रव्ये परस्परविरोधेन कस्यापि रसस्यानुत्पत्त्या नीरसैव हरीतकीति समुदायार्थः । न चैवं हरीतकीभक्षणे तस्यापि रसस्य प्रत्यक्षं न स्यादनुभूयते च कषायरसप्रत्यक्षमत आह ॥ **रसप्रतीतिस्त्विति** ॥ **परम्परया** स्वाश्रयसमवेतत्वसम्बन्धेन ॥ **अपास्तमिति** ॥ गङ्गाजले माधुर्यस्य प्रत्यक्षसिद्धत्वादिति

च्छिन्नजनकतावच्छेदकं जलत्वं बोध्यम् । घृष्टचन्दनादौ तु शैत्योपलब्धिश्चन्दनान्तर्वर्तिशीततरसलिलस्यैव । तेजःसंयोगाज्जले उष्णप्रतीतिरौपाधिकी स्फुटैव तत्र पाकासम्भवात् । घृ-

## प्रभा.

शीतस्पर्शाङ्गीकारस्यावश्यकतया तत्र जलत्वाभावेन व्यभिचारात् कथं जलत्वस्य तत्कारणतावच्छेदकत्वमत आह ॥ **घृष्टचन्दनादाविति** ॥ आदिना शीतं शिलातलमिति प्रतीतिविषयशिलातलपरिग्रहः । ननु जले शीत एव स्पर्श इत्युक्तं तत्रोष्णस्पर्शस्याप्युपलभ्यमानत्वादत आह ॥ **तेजस्संयोगादिति** ॥ **स्फुटैवेति** ॥ अन्वयव्यतिरेकाभ्यां तेजोनिष्ठोष्णस्पर्शस्यैव तत्र भानाङ्गीकारादिति भावः । ननु तेजस्संयोगात्. तत्र शीतस्पर्शनाशः उष्णस्पर्शोत्पत्तिश्च स्वीक्रियतामत आह ॥ **तत्रेति** ॥ जलादावित्यर्थः ॥ **पाकासंभवादिति** ॥ पूर्वस्पर्शनाशकस्पर्शान्तरोत्पादकविजा-

## मञ्जूषा.

शेषः । किंतु यादृशहरीतकीव्यक्तिभक्षणोत्तरं जलपानं क्रियते तादृशहरीतक्यवयवेष्वेव त्वदनाभिमतमधुररसव्यक्तिकल्पनमस्माकम् । युष्माकन्तु हरीतकीभक्षणोत्तरपीतेषु तदनुत्तरपीतेष्वपि तेषु च सर्वेषु जलेष्वस्मदनभिमतमधुररसकल्पनमिति कस्येदं गौरवम् । तस्माज्जलीयमधुररसोऽनुभवसिद्ध इत्येव युक्तिर्वक्तव्या । अनुभूयते हि वर्षासलिलं मधुरं भूपतितं तु भौमरसविशेषैरुपलभ्यते किन्तु गुडादिमधुररसेषु यः प्रकर्षः स जलमधुरिमण्यस्ति न वेत्येतावती विप्रतिपत्तिः । स च हरीतकीभक्षणोत्तरपरिपीतसलिलरसेऽनुभूयते स चानुभवो यदि प्रमेत्युच्यते तदा तद्व्यञ्जकत्वं हरीतकीभक्षणस्य वाच्यं तदानीं च जलीयमधुररसे पार्थिवमधुररसव्यावृत्तजातिविशेषो नास्तीत्यापन्नम् । यदि च सोऽनुभवो भ्रमः हरीतकीभक्षणं च तत्र स्मर्यमाणारोपजनकदोषः हरीतकीभक्षणसन्धुक्षितजलपानसंधुक्षितो जिह्वाग्रवर्ती प्रकृष्टमधुररसशालिपित्तद्रव्यविशेषो वानुभूयमानारोपजनकदोष इत्युच्यते तदा पार्थिवमधुररसव्यावृत्तः अपकर्षाख्यः जातिविशेषो जलेऽस्तीत्यापन्नं अनयोश्च पक्षयोरेकतरं नैं वयं विनिश्चेतुं प्रभवामः एतेन कषायरसैर्मधुररसैश्चावयवैरारब्धा हरीतकी नानारसैव तत्र च मधुररसस्य व्यञ्जको जलसंयोगः ननु तद्गतरसान्तरस्य फलवलात् अतो नीरसमेव जलमिति केषांचिदुक्तिरपास्ता । अनुभवेन जले माधुर्यसिद्धेरुक्तत्वात् । किंच नानाजातीयरसवदवयवारब्धत्वे चित्ररसैव हरीतकी स्यात् । नेष्यते चित्ररसः । तत्राव्याप्यवृत्तिनानारसोत्पत्तिरपि न संभवति व्याप्यवृत्तिजातीयगुणानामव्याप्यवृत्तित्वविरोधात् । व्याप्यवृत्ति च विजातीयं रसद्वयं युगपद्विरुद्धम् । अथास्तु नीरसैव हरीतकी जलसंयोगो हरीतक्यवयवगतमाधुर्यस्यैव व्यञ्जकोऽस्तु जलपानाभावदशायां उपलभ्यमानकषायरसोऽप्यवयवगत एवास्त्विति चेदेतावता हि कतिपये हरीतक्यवयवाः कषायाः कतिपये मधुरा इति प्राप्तम् । एवं च सति जलपानेऽपि कतिचन हरीतक्यवयवाः कषाया एवोपलभ्येरन् नचैवं उपलभ्यन्ते । नच हरीतक्यवयवसमवेतकषायरसरासनं प्रति जलसंयोगस्य प्रतिबन्धकत्वमिति वाच्यं तावता तव लाघवाभावात् कतिपयेषु हरीतक्यवयवेषु जलपानेऽपि माधुर्यानुपलम्भप्रसङ्गस्य तावताप्यवारणाच्चेत्यास्तां विस्तरः । यदादौ प्रतिज्ञातं शुक्लरूपमेव जलस्येति जलस्य मधुर एव रस इति च तदेतदुभयं व्यवस्थापितम् । यत्तु प्रतिज्ञातं शीत एव स्पर्श इति तदिदानीं व्यवस्थापयिष्यन् तज्जनकतावच्छेदकतया जलत्वजातिसिद्धिमाह ॥ **एवमिति** ॥ **तत्र पाकासंभवादिति** ॥ अयमाशयः । यदि पाकेन जले

## दिनकरीयम्.

शैत्योत्पत्तेर्व्यभिचारेण कथं जन्यजलत्वेन तत्र हेतुत्वमत आह ॥ **घृष्टेति** ॥ पूर्वं शीत एव स्पर्श इत्युक्तं तत्साधयति ॥ **तेजःसंयोगादिति** ॥ **तत्र** जले । विवेचयिष्यते च पाकासम्भव-

## रामरुद्रीयम्.

भावः । ननु घृतादावपि तदन्तर्गतजलस्यैव स्नेह इति मूलमसङ्गतं घृतादेः पार्थिवत्वेन तत्र जलीय-

**स्नेहस्तत्र द्रवत्वं तु सांसिद्धिकमुदाहृतम् ॥ ३९ ॥**

तादावपि तदन्तर्वर्तिजलस्यैव स्नेहः जलस्य स्नेहसमवायिकारणत्वात् तेन जल एव स्नेह इति मन्तव्यम् ॥ **द्रवत्वमिति** ॥ सांसिद्धिकद्रवत्वत्वं जातिविशेषः प्रत्यक्षसिद्धः तदवच्छिन्न-जनकतावच्छेदकमपि तदेवेति भावः । तैलादावपि जलस्यैव द्रवत्वं स्नेहप्रकर्षेण च दहना-नुकूल्यमिति वक्ष्यति ॥ ३९ ॥

**प्रभा.**

तीयतेजस्संयोगासंभवात् । नच पृथिव्यामिव जलेऽपि तादृशसंयोगस्वीकारे बाधकाभाव इति वाच्यं तत्र तादृशसंयोगस्वीकारे शीतनाशपूर्वकोष्णस्पर्शोत्पत्तिवत् पूर्वरूपनाशपूर्वकरूपान्तरोत्पत्त्यापत्तेः जले उ-ष्णस्पर्शोत्पत्त्यनन्तरं तादृशतेजस्संयोगनाशे तादृशोष्णस्पर्शनाशकाभावात् शीतोत्पादकाभावाच्च तेजस्संयो-गनाशानन्तरमपि उष्णप्रतीत्यापत्तेः शीतप्रतीत्यनुपपत्तेश्च तस्मात् पृथिव्यामेव तादृशतेजस्संयोगः न जलादाविव्यवश्यमङ्गीकार्यमित्यभिप्रायः । ननु स्नेहस्तत्रेति मूलेन जलस्य स्नेहवत्त्वं लक्षणमिति ल-भ्यते तच्च घृतादिपृथिव्यामतिव्याप्तमत आह ॥ **घृतादावपीति** ॥ **तदन्तर्वर्तीति** ॥ घृततैला-न्तर्वर्तीत्यर्थः ॥ **जलस्यैव स्नेह इति** ॥ स्वाश्रयसंयोगेन प्रतीयत इति शेषः । ननु समवा-येनैव घृतादौ स्नेहः प्रतीयतामित्यत आह ॥ **जलत्वस्येति** ॥ तथाच घृतादौ तादृशजलत्वाभावात् तत्र समवायेन स्नेहोत्पत्तिर्न संभवतीति भावः ॥ **तेनेति** ॥ घृतादौ समवायेन स्नेहाभावेनेत्यर्थः ॥ **मन्तव्य-मिति** ॥ अन्यत्र समवायेन तु तत्वानुपपत्त्या जल एव समवायेन स्नेहः स्वीकार्य इत्यर्थः । ननु सांसिद्धिकद्रवत्व-

**मञ्जूषा.**

शीतस्पर्शनाशः उष्णस्पर्शोत्पत्तिश्च स्वीक्रियते तदा तेजस्संयोगनाशोत्तरमप्युष्णस्पर्श एव प्रतीयेत । तथा श्यामघटे पाकेन यः कठिनस्पर्शः यश्च कन्दादौ मृदुस्पर्शः स पाकनाशेऽप्यनुवर्तते नत्वेवं ज-ले । तत्र हि पाकजन्यस्योष्णस्पर्शस्य नाशः केन वा स्यात् विनश्यदवस्थेन पाकेन तन्नाशेन वा उभयथापि पश्चान्निस्स्पर्शमेव जलं स्यात् नतु शीतस्पर्शं तज्जनकाभावात् । पूर्वं हि पाकेनावयविनि

**दिनकरीयम्.**

मुपरिष्टात् । घृतादावित्यादिपदेन तैलपरिग्रहः । जलस्यैव स्नेह इत्यनन्तरं स्वाश्रयसंयोगेन प्रती-यत इति शेषः ॥ **तेन** घृतादौ समवायेन स्नेहनिरासेन ॥ **जल एवेति** ॥ स्नेहस्यावान्तरविशे-षाभावात्स नोत्कीर्तितः ॥ **तदवच्छिन्नजनकतावच्छेदकं** सांसिद्धिकद्रवत्वत्वावच्छिन्नजनकतावच्छेदकं ॥ **तदेव** जन्यजलत्वमेव । तदवच्छिन्नजनकतावच्छेदकं जलत्वमिति भावः । अथैवंरीत्या परमाणुव्या-वृत्तमाद्यद्व्यणुकं जलत्वमेकं परमाणुसाधारणं द्वितीयमिति जलत्वयोर्भेदे भेदाग्रहः कुत इति चेत्स-मनियतयोग्यव्यक्तिवृत्तित्वादिति । एवमग्रेऽपि । तैलादावित्यादिपदेन क्षीरपरिग्रहो न तु घृतस्य तत्र नैमित्तिकद्रवत्वस्य समवायेनैव सत्त्वात् । द्रवत्वमित्यनन्तरं स्वाश्रयसंयोगेन प्रतीयत इति शेषः । ननु तैले जलस्य सत्त्वे तैलस्य दहनानुकूल्यं न स्याज्जलस्य दहनप्रतिकूलत्वादित्यत आह ॥ **स्नेहप्रकर्षेणेति** ॥ प्रकृष्टस्नेहस्य जलस्य दहनानुकूल्यमेव । अपकृष्टस्यैव तस्य दहनप्रतिकूलत्वादि-ति भावः ॥ **इति वक्ष्यतीति** ॥ स्नेहनिरूपणावसरे इति शेषः ॥ ३९ ॥

**रामरुद्रीयम्.**

स्नेहासम्भवादतः पूरयति ॥ **जलस्यैवेत्यादि** ॥ **जन्यजलत्वमेवेति** ॥ जन्यजलमात्रवृत्तिजातिरे-वेत्यर्थः । परमाणौ जलत्वसिद्ध्यर्थमाह ॥ **तदवच्छिन्नेति** ॥ जन्यजलत्वावच्छिन्नेत्यर्थः ॥ **समनि-यतेति** ॥ अयमेव दोषो जात्योर्भेदग्रहप्रतिबन्धक इति भावः ॥ **अग्रेऽपीति** ॥ तेजोनिष्ठजात्योर-पि भेदग्रहे प्रतिबन्धकमिदमेवेति भावः ॥ ३९ ॥

नित्यतादि प्रथमवत् किं तु देहमयोनिजम् ।

**प्रथमवदिति** ॥ पृथिव्या इवेत्यर्थः । तथा हि जलं द्विविधं नित्यमनित्यं च परमाणुरूपं नित्यं द्व्यणुकादि सर्वमनित्यमवयवसमवेतं च अनित्यमपि त्रिविधं शरीरेन्द्रियविषयभेदात् ।

## प्रभा.

त्वस्योपाधिरूपत्वेनाननुगततया कथं तदवच्छिन्नजनकतावच्छेदकतया जलत्वजातिसिद्धिरित्याशङ्कानिरासाय प्रथमं सांसिद्धिकद्रवत्वत्वस्य जातित्वे प्रमाणमाह ॥ **सांसिद्धिकद्रवत्वत्वमिति** ॥ **प्रत्यक्षसिद्ध इति** ॥ द्रवतीति प्रत्यक्षप्रमाणजन्यप्रमितिविषय इत्यर्थः । तथाच स्थूलजलसमवेतद्रवत्वे प्रत्यक्षसिद्धसांसिद्धिकद्रवत्वत्वं बाधकाभावाद्व्यवहारबलाच्च प्रत्यक्षाविषयपरमाण्वादिसमवेतद्रवत्वेऽपि स्वीक्रियत इति भावः ॥ **तदवच्छिन्नेति** ॥ कालिकसमवायोभयसंबन्धेन तदवच्छिन्नेत्यर्थः । तेन सांसिद्धिकद्रवत्वत्वजातेर्नित्यवृत्तितया न कार्यतावच्छेदकत्वमिति शङ्काया नावकाशः ॥ **तदेवेति** ॥ जन्यजलमात्रवृत्तिवैजात्यमेवेत्यर्थः । तथाच तादृशावच्छेदकतया जन्यजलमात्रवृत्तिवैजात्यसिद्धौ तदवच्छिन्नजनकतावच्छेदकतया परमाणुसाधारणजलत्वजातिसिद्धिरिति भावः । ननु जन्यजलमात्रवृत्तिवैजात्यमेकं परमाणुसाधारणं जलत्वमपरं यद्यङ्गीक्रियते तदा तयोः भेदाग्रहः कुत इति चेन्न समनियतयोग्यव्यक्तिवृत्तित्वरूपदोषादेवाग्रहः । वस्तुतो जन्यजलमात्रवृत्तिवैजात्यस्यातीन्द्रियत्वाभ्युपगमान्नाक्षेपप्रसक्तिरिति हृदयम् । ननु तैलादावपि सांसिद्धिकद्रवत्वोपलब्धेर्व्यतिरेकव्यभिचारेण कथं जलत्वं कारणतावच्छेदकमित्यत आह ॥ **तैलादाविति** ॥ आदिपदात् क्षीरपरिग्रहः ॥ **जलस्यैवेति** ॥ तैलाद्यन्तर्गतजलस्यैवेत्यर्थः ॥ **द्रवत्वमिति** ॥ स्वसमवायिसंयोगसंबन्धेन प्रतीयत इति शेषः । ननु तैले जलस्वीकारे दहनानापत्तिः जलस्य दहनविरोधित्वादित्यत आह ॥ **स्नेहप्रकर्षेणेति** ॥ प्रकृष्टस्नेहेनेत्यर्थः । कृदभिहित इत्यादिन्यायात् प्रकर्षो वैजात्यं तथाच विजातीयस्नेहविशिष्टजलस्य दहनानुकूलत्वात् नानुपपत्तिरिति भावः ॥ **इति वक्ष्यत इति** ॥ स्नेहनिरूपणावसर इत्यादिः ॥ ३९ ॥

षष्ठीप्रकृतिभूतोपमानवाचकशब्दात् परतः षष्ठीस्थाने वतिप्रत्ययस्स्यादित्यर्थकषष्ठीसमर्थाद्वतिरिति सूत्रानुसारेणार्थमाह ॥ **पृथिव्या इवेत्यर्थ इति** ॥ एवमग्रेऽपि ॥ **जलीयशरीरमिति** ॥ जल-

## मञ्जूषा.

शीतस्पर्शे नश्यत्स्ववयवेष्वपि शीतस्पर्शा नश्येयुः । अथोच्येत परमाणुशीतस्पर्शो न नश्यतीति तदा महद्गौरवम् । तथाहि जन्यशीतस्पर्शनाशं प्रति उष्णस्पर्शं प्रति चाग्निसंयोगस्य द्वे कारणते पाकदशायां परमाणुशीतस्पर्शेन द्व्यणुकादौ शीतस्पर्शोत्पत्तिवारणाय शीतस्पर्शं प्रत्यग्निसंयोगस्यैका प्रतिबन्धकता उष्णस्पर्शनाशं प्रति विनश्यदवस्थाग्निसंयोगस्य तन्नाशस्य वैका कारणतेति चत्वारस्ते कार्यकारणभावाः । मम तु शीतस्पर्शप्रत्यक्षं प्रत्यग्निसंयोगस्यैका प्रतिबन्धकता कल्पनीया घटादावनुष्णाशीतस्पर्शप्रत्यक्षं प्रति अग्निसंयोगस्य प्रतिबन्धकतायां कल्पनीयायां तत्रैवोष्णेतरस्पर्शप्रत्यक्षत्वस्य प्रतिबध्यतावच्छेदकत्वस्वीकारेण गतार्थो वा । एवं जले उष्णस्पर्शं प्रत्यनुभूयमानारोपजनकदोषविधयाग्निसंयोगस्यैका कारणता वाच्या सापि घटादिविशेष्यकोष्णस्पर्शप्रत्यक्षस्थलीयकारणतया गतार्था वा एवं द्व्यणुकादिषु महावयविपर्यन्तेषु शीतस्पर्शनाशा उष्णस्पर्शानामुत्पत्तयस्तेषां नाशाः पुनः शीतस्पर्शान्तराणामुत्पत्तयश्चेति महागौरवमिति ॥ ३९ ॥

## दिनकरीयम्.

**प्रथमवदिति** ॥ षष्ठीसमर्थाद्वतिरित्यभिप्रायेणाह ॥ **पृथिव्या इवेत्यर्थ इति** ॥ **जलीयं शरी-**

## रामरुद्रीयम्.

**षष्ठीसमर्थादिति** ॥ प्रथमाया इवेति षष्ठ्यन्ताद्वतिप्रत्यय इत्यभिप्रायेणेत्यर्थः । **अग्रेऽपि** तेजो-

इन्द्रियं रसनं सिन्धुहिमादिर्विषयो मतः ॥ ४० ॥

पृथिवीतो यो विशेषस्तमाह ॥ किं त्विति ॥ देहमयोनिजं अयोनिजमेवेत्यर्थः । जलीयं शरीरं अयोनिजं वरुणलोके प्रसिद्धम् ॥ इन्द्रियमिति ॥ जलीयमित्यर्थः । तथा हि रसनं जलीयं गन्धाद्यव्यञ्जकत्वे सति रसव्यञ्जकत्वात् सक्तुरसाभिव्यञ्जकोदकवत् । रसनेन्द्रियसान्निकर्षे व्यभिचारवारणाय द्रव्यत्वं देयम् । विषयं दर्शयति ॥ सिन्धुरिति ॥ सिन्धुः समुद्रः हिमं तुषारः आदिपदात्सरित्कासारकरकादिः सर्वोऽपि ग्राह्यः । नच हिमकरकयोः कठिनत्वात्पार्थिवत्वमिति वाच्यम् । ऊष्मणा विलीनस्य तस्य जलत्वस्य प्रत्यक्षसिद्धत्वात् यद्द्रव्यं यद्द्रव्यध्वंसजन्यमिति व्याप्तेर्जलोपादानोपादेयत्वासिद्धेः । अदृष्टविशेषेण द्रवत्वप्रतिरोधात् करकायाः काठिन्यप्रत्ययस्य भ्रान्तित्वात् ॥ ४० ॥

**प्रभा.**

मात्रे हस्तपादाद्यसंभवेऽपि पार्थिवभागानां निमित्तत्वात् करपादादिमत्त्वं संभवतीति हृदयम् । ननु प्रत्यक्षाविषयत्वात् तादृशशरीरे मानाभाव इत्यत आह ॥ **वरुणलोक इति** ॥ तथाच प्रत्यक्षाभावेऽपि श्रुतिपुराणादिकं तत्र प्रमाणमिति भावः ॥ **गन्धाद्यव्यञ्जकत्वे सतीति** ॥ अत्रापि हेतुत्रये तात्पर्यं गन्धादिविषयमनिवेश्य पूर्ववत् बोध्यम् । करकादिरित्यत्रादिपदात् कूपादिपरिग्रहः ॥ **विलीनयोरिति** ॥ नष्टयोरित्यर्थः ॥ **तयोरिति** ॥ हिमकरकयोरित्यर्थः । तथाच हिमे नष्टे सति करकायां नष्टायां सत्यामिति फलितोऽर्थः । ननु हिमादेर्नाशानन्तरं जायमानद्रव्ये द्रवत्वजलत्वयोः प्रत्यक्षसिद्धत्वेऽपि

**दिनकरीयम्.**

**रमिति** ॥ तच्च पार्थिवावयवैरुपष्टब्धं बोध्यम् । तेन जलमात्रे हस्तपादादिव्यवस्थाया असम्भवेऽपि न क्षतिः । ननु तादृशशरीरे मानाभावोऽनुपलम्भादित्यत आह ॥ **वरुणलोक इति** ॥ तत्र च श्रुतिरेव प्रमाणमिति भावः ॥ **गन्धेति** ॥ रसव्यञ्जके मनसि व्यभिचारवारणाय गन्धाद्यव्यञ्जकत्व इति । कासारः सरः । करकादिरित्यत्रादिपदात्कूपादिपरिग्रहः ॥ **कठिनत्वादिति** ॥ कठिनस्पर्शवत्त्वादित्यर्थः ॥ **विलीनस्य तस्येति** ॥ सप्तम्यर्थे षष्ठी । क्वचिद्विलीनयोरिति पाठः । स तु ऋजुरेव विलीनताया द्रवत्वरूपाया जलत्वव्यञ्जकत्वादिति भावः । ननु विलीनता नैमित्तकद्रवत्वमेव तदुक्तमूष्मणेति तच्च न जलत्वव्यञ्जकं यदि च विलीने तस्मिन्नित्यस्य तस्मिन्नष्टे सतीत्यर्थस्तथापि करकादिनाशोत्तरं द्रव्यान्तरोत्पादात्तत्रैव द्रवत्वजलत्वयोः प्रत्यक्षं न करकायां नष्टत्वादत आह ॥ **यद्द्रव्यमिति** । तथा च करकादिनाशोत्पन्नद्रव्यान्तरे जलत्वस्य प्रत्यक्षसिद्धत्वादुक्तव्याप्त्या करकादिषु जलत्वसिद्धिरिति भावः । ननु हिमकरकयोः पार्थिवत्वाभावे कथं काठिन्यप्रत्यय इत्यत आह ॥ **अदृष्टविशेषेणेति** ॥ ४० ॥

॥ इति जलग्रन्थः ॥

**रामरुद्रीयम्.**

निरूपणेऽपि ॥ **जलमात्रे** केवले जले ॥ **स त्विति** ॥ तादृशपाठस्त्वित्यर्थः ॥ **ऋजुः** स्पष्टार्थकः ॥ **तदुक्तं** नैमित्तिकत्वमुक्तम् । ऊष्मण एव निमित्तत्वप्रतिपादनादिति भावः ॥ **तच्च** नैमित्तिकद्रवत्वं च । सांसिद्धिकस्यैव तस्य जलत्वव्यञ्जकत्वादिति भावः । नष्टत्वादित्यस्य करकाया इत्यादिः । मूलेऽदृष्टविशेषेणेत्यस्य दुरदृष्टबलेनेत्यर्थः । प्रतिरोधोऽप्रत्यक्षं तथा च प्रतिबन्धकबलात् द्रवत्वाग्रहे भ्रान्तिरूपैव काठिन्यप्रतीतिरिति भावः ॥ ४० ॥

॥ इति जलग्रन्थः ॥

## प्रभा.

हिमादेर्नष्टत्वेन तत्र द्रवत्वाद्यसिद्धेः पृथिवीत्वमेव स्वीकार्यमत आह ॥ **यद्द्रव्यमिति** ॥ तथाच करकादिनाशोत्पन्नद्रव्यान्तरे द्रवत्वादेः प्रत्यक्षसिद्धत्वेन उक्तव्याप्त्या हिमादावपि जलत्वादिसिद्धिर्निराबाधेति भावः । ननु हिमकरकयोर्जलत्वे कथं काठिन्यानुभव इत्यत आह ॥ **अदृष्टविशेषेणेति** ॥ जीवनादृष्टविशेषेणेत्यर्थः । तन्मिलितौषधेन शरीरसंरक्षणादिति भावः । ननु तयोः जलत्वे कथं काठिन्यप्रत्ययः जले काठिन्याभावात् अत आह ॥ **करकायामिति** ॥ इदमुपलक्षणं हिमेऽपीत्यपि बोध्यम् ॥ **भ्रान्तत्वादिति** ॥ रूपादेश्चाक्षुषसामग्र्यभावरूपदोषेण यथा नीलं तम इति प्रत्ययः तथा द्रवत्वप्रतिरोधमात्रेण काठिन्यप्रत्यय इति भावः ॥ ४० ॥

इति जलग्रन्थः संपूर्णः ॥

## मञ्जूषा.

**पृथिवीतो यो विशेष इति** ॥ शरीरे योनिजत्वाभावः इन्द्रिये रसनत्वमित्यादिरूपो यः पृथिवीशरीरादिव्यावृत्तधर्म इत्यर्थः ॥ **गन्धाद्यव्यञ्जकत्वे सतीति** ॥ अत्र जन्यमात्रस्य कालोपाधित्वाङ्गीकारान्नाप्रसिद्धिः ॥ **सक्तुरसेति** ॥ यादृशजलेन नवशरावगन्धो नाभिव्यञ्जितस्तदेवात्र दृष्टान्तः । यदि च जन्यमात्रस्य कालोपाधितापक्षेऽप्रसिद्धिवारणाय गन्धादिव्यञ्जकतानवच्छेदकरसव्यञ्जकतावच्छेदकधर्मवत्त्वं विवक्ष्यते तदा नायं दृष्टान्तस्संभवतीति बोध्यम् । ननु यथाश्रुतेऽपि कथं दृष्टान्तसङ्गतिः सक्तुरसव्यञ्जकजलस्यापि नवशरावगन्धादिसाक्षात्कारस्वरूपयोग्यत्वात् फलोपधायकत्वाभावविवक्षायां यादृशगुडव्यक्तिरनुभूयमानारोपजनकदोषविधया पिष्टादौ स्वीयरसाभिव्यक्तिमुत्पादयति न तु गन्धादेः तादृशगुडादिव्यक्तौ व्यभिचारापत्तिरिति चेन्न परकीयरसाभिव्यञ्जकत्वविवक्षया तद्दोषवारणसंभवात् । सक्तुरसाभिव्यञ्जकोदकवदित्यनन्तरं क्वचित्पुस्तके वाय्वानीतजलावयववद्वेति दृष्टान्तान्तरं दृश्यते तत्तु नातिरमणीयं वाय्वानीतजलावयवानां रसव्यञ्जकतायास्सविवादत्वात् तेषां स्वीयस्पर्शव्यञ्जकत्वेन गन्धाद्यव्यञ्जकत्वाभावाच्च । नच परकीयगन्धाद्यव्यञ्जकत्वविवक्षातात्पर्येण तेषां दृष्टान्ततोक्तिरथवा गन्धस्पर्शरूपाव्यञ्जकत्वघटितहेतुत्रयस्य तात्पर्यविषयतया स्पर्शाव्यञ्जकत्वादिघटितहेतुद्वये तस्य दृष्टान्तत्वसङ्गतिरिति वाच्यम् तेषां सत्त्वादिरसव्यञ्जकतास्वीकारे नवशरावगन्धव्यञ्जकत्वलुप्ताक्षरमषीनीलरूपव्यञ्जकत्वयोः केवलमपराधाभावात् । नच वाय्वानीतेन जलावयवेन येन रसाभिव्यक्तिरेव जनिता नतु गन्धाद्यभिव्यक्तिस्स एवात्र दृष्टान्त इति वाच्यं तथा सति सक्तुरसाभिव्यञ्जकोदकवदिति पूर्वदृष्टान्तापेक्षयास्य वैषम्याभावप्रसङ्गात् । स्वरूपयोग्यतारूपजनकत्वाभावविवक्षायां हि ततोऽस्य वैलक्षण्यं स्यादिति ॥ **विलीनयोरिति** ॥ नष्टयोस्सतोरित्यर्थः ॥ **प्रत्यक्षसिद्धत्वादिति** ॥ अर्थादनन्तरोत्पन्नद्रव्य इति गम्यते तावता हिमकरकयोः किमायातमित्यत आह ॥ **यद्द्रव्यमित्यादि** ॥ **द्रवत्वतिरोधानादिति** ॥ ननु द्रवत्वस्य किं तिरोधानं नाम । अत्र केचित् अनुत्पत्तिरिह तिरोधानं युज्यते चैतत् तथाहि करकादिमिलितेनौषधिविशेषेण रोगादिनिवृत्तिर्भवतीति सर्वसंप्रतिपन्नमिदं तथा करकादिपानेन रोगविशेषोत्पत्तिरपि तत्र च करकादौ द्रवत्वोत्पादे जलान्तरात्तस्य वैलक्षण्यग्रहाभावेन तत्परिग्रह एव न निष्पद्येत ततश्च तेन रोगादिनिवृत्तिः रोगविशेषोत्पादो वा न स्यादतो रोगनिवृत्त्यादिप्रयोजकादृष्टेन तत्र द्रवत्वोत्पत्तिः प्रतिबध्यत इति । अथैवं यावत्यः करकाव्यक्तयः परिगृहीताः पुरुषाणां रोगविशेषान्निवर्तयेयुरुत्पादयेयुर्वा तास्वदृष्टेन द्रवत्वप्रतिबन्धोऽप्यनेवंविधासु स्वविलयनजनितजलसेकप्रयुक्ताङ्कुरोत्पादादिद्वारेण भोगसाधनतामजहन्तीषु करकासु द्रवत्वोत्पादे बाधकाभाव इति चेन्न तत्तद्रोगनिवृत्त्यादिप्रयोजकादृष्टविशेषाणामनुगमकरूपाभावेन नानाप्रतिबन्धककल्पने गौरवेण समवायेन द्रवत्वत्वावच्छिन्नं प्रति जन्यतासंबन्धेन करकारम्भकादृष्टत्वेन करकात्वविशिष्टजन्यतासंबन्धेनादृष्टत्वेनैव वा प्रतिबन्धकतायाः कल्पनीयतया करकासामान्ये द्रवत्वोत्पादासंभवादित्याहुः । एतन्मा-

## उष्णः स्पर्शस्तेजसस्तु स्याद्रूपं शुक्लभास्वरम् ।

तेजो निरूपयति ॥ उष्ण इति ॥ उष्णत्वं स्पर्शनिष्ठो जातिविशेषः प्रत्यक्षसिद्धः

### मञ्जूषा.

न्ये न क्षमन्ते करकायां द्रवत्वानुत्पादस्य विश्वनाथाभिप्रेतत्वे सांसिद्धिकद्रवत्वलक्षणे जातिघटनाभावानुपपत्तेः सांसिद्धिकद्रवत्वजनकतावच्छेदकतया जलत्वजातिसिद्ध्युत्कीर्तनानुपपत्तेश्च । नच यथा गन्धसमवायिकारणतावच्छेदकतया सिद्धायाः पृथिवीत्वजातेर्नीलादिजनकतावच्छेदकत्वं तथा स्नेहादिजनकतावच्छेदकतया सिद्धाया जलत्वजातेस्सांसिद्धिकद्रवत्वजनकतावच्छेदकत्वं न विरुध्यत इति वाच्यं यतो न वयं जलत्वस्य सांसिद्धिकद्रवत्वजनकतावच्छेदकत्वानुपपत्तिमुद्भावयामः किन्तु तदवच्छेदकतया तत्सिद्ध्यभिधानानुपपत्तिमेव । नह्येकदेशमात्रवृत्तिजनकतावच्छेदकतया निश्शङ्कं जातिसिद्धिमभिधत्ते विश्वनाथः तथा सति नानारूपवती मतेत्यादौ नीलादिजनकतावच्छेदकतया पृथिवीत्वसिद्ध्यभिधानोपेक्षाया निर्बीजतापातात् । किंच करकादेरद्रवत्वाभिप्राये रूपद्रवत्वप्रत्यक्षयोगिनः प्रथमास्त्रयइत्यत्र द्रवत्वलक्षणे घटादौ द्रुतसुवर्णादिभिन्ने तेजसि चेत्यनेन ग्रन्थेन पृथिवीतेजसोरव्याप्तिशङ्कायां करकादिरूपजलाव्याप्तिशङ्कोपेक्षा निर्बीजा स्यात् तस्मात् द्रवत्वतिरोधानं द्रवत्वसाक्षात्काराभावः तत्प्रयोजकत्वं च करकत्वादिसाक्षात्कारजनकादृष्टस्य कल्प्यते द्रवत्वसाक्षात्कारे करकत्वादेस्साक्षात्कर्तुमशक्यत्वात् । तत्र द्रवत्वनिष्ठलौकिकविषयतानिरूपितलौकिकविषयतासंबन्धेन साक्षात्कारत्वावच्छिन्नं प्रति जन्यतासंबन्धेन करकत्वसाक्षात्कारप्रयोजकादृष्टत्वेन करकारम्भकादृष्टत्वेनैव वा प्रतिबन्धकत्वं करकात्वविशिष्टजन्यतासंबन्धेनादृष्टत्वेनैव वा प्रतिबन्धकत्वं प्रतिबध्यत्वन्तु पूर्वोक्तमेव । नन्वनुभूयमानारोपजनकदोषविशेषसमवधानेऽन्यदीयद्रवत्वनिष्ठलौकिकविषयतानिरूपितविषयतासंबन्धेन साक्षात्कारस्य करकायामुत्पत्त्या व्यभिचारः करकाद्रवत्वनिष्ठलौकिकविषयतायाः कार्यतावच्छेदकसंबन्धघटकत्वं च न संभवति अप्रसिद्धेः हरिरामदर्शितरीत्या भगवज्ज्ञानीयविषयताया लौकिकत्वस्वीकारेऽपि कार्यतावच्छेदकसंबन्धेन कार्योत्पत्त्यप्रसिद्धेर्दुर्वारत्वात् नित्यसाधारणधर्मस्य कार्यतावच्छेदकत्वानङ्गीकारपक्षे जन्यसाक्षात्कारत्वस्यैव कार्यतावच्छेदकताया वाच्यतया कार्यतावच्छेदकसंबन्धेन कार्यतावच्छेदकधर्मावच्छिन्नस्यैव क्वचिदसत्त्वाच्च । अन्यदीयद्रवत्वनिष्ठलौकिकविषयताशालिकरकासाक्षात्कारस्यापि किंचिदंशे प्रमात्वेन कार्यतावच्छेदककोटौ प्रमात्वनिवेशनेनापि नोक्तव्यभिचारवारणसंभवः । सर्वांशे प्रमात्वनिवेशे च करका नीलेत्याकारके नीलत्वाद्यंशे भ्रमात्मके करकासाक्षात्कारे तदीयद्रवत्वस्य लौकिकविषयतायां बाधकाभावप्रसङ्ग इति चेन्न स्वाश्रयद्रवत्वसमानाधिकरणत्वस्वनिरूपितत्वोभयसंबन्धेन लौकिकविषयताविशिष्टविषयतायाः कार्यतावच्छेदकसंबन्धत्वस्वीकारेण सर्वानुपपत्तिपरिहारात् । एवं द्रवत्वनिष्ठलौकिकविषयता परन्तु यथोपदर्शितसंबन्धेन साक्षात्कारत्वावच्छिन्नं प्रति करकाया एव प्रतिबन्धकत्वमुचितं लाघवात् एवं पूर्वकल्पेऽपि समवायेन द्रवत्वं प्रति तादात्म्यसंबन्धेन करकाया एव प्रतिबन्धकत्वं युक्तं न त्वदृष्टस्य गौरवादिति बोध्यम् । अत्रार्वाचीनाः हिमकरकयोः द्रवत्वसाक्षात्कारे नादृष्टविशेषस्य विशिष्य प्रतिबन्धकता तथा सति लोके प्रतिबन्धकान्तरविलोपप्रसङ्गात् । नापि हिमकरकयोस्तादात्म्येन तथा सति प्रतिबन्धकताद्वयस्वीकारापत्तेः । किंतु घनीभावापरनामा विजातीयो निबिडाख्योऽवयवसंयोग एव सामानाधिकरण्यसंबन्धेन हिमकरकोभयसाधारण्येन फेनबुद्बुदादिसाधारण्येन च प्रतिबन्धकः । एवंच मुक्तावलीस्थादृष्टविशेषशब्दोऽपि निबिडावयवसंयोगपरः । दृष्टं दर्शनं साक्षात्कार इति यावत्तयतो न संभवति सोऽयमदृष्टः साक्षात्काराभावप्रयोजक इत्यर्थः । तादृशो यो विशेषो विलक्षणधर्म इति तद्व्युत्पत्तिस्वीकारादित्याहुः । अन्ये तु हिमकरकयोरुपष्टम्भकः पार्थिवभागोऽभ्युपेयते तथाच तादृशपार्थिवभागोपष्टम्भक एव द्रवत्वसाक्षात्कारे प्रतिबन्धकस्स एवादृष्टविशेषशब्दवाच्य इति वदन्ति ॥ ४० ॥ ** ॥ इति जलग्रन्थः ॥

इत्थं च जन्योष्णस्पर्शसमवायिकारणतावच्छेदकं तेजस्त्वं जातिविशेषः तस्य परमाणुवृत्तित्वं जलत्वस्येवानुसन्धेयम् । नचोष्णस्पर्शवत्त्वं चन्द्राकिरणादावव्याप्तमिति वाच्यम् । तत्राप्युष्णस्य सत्वात् किं तु तदन्तःपातिजलस्पर्शेनाभिभवादग्रहः । एवं रत्नकिरणादौ च पार्थिवस्पर्शेनाभिभवात् चक्षुरादौ चानुद्भूतत्वादग्रहः ॥ रूपमि-

**प्रभा.**

**उष्णत्वमिति** ॥ उष्णत्वजातिमन्तरा वक्ष्यमाणप्रकारेण तेजस्त्वजातिसिद्धिर्न भवतीति प्रथमत उष्णत्वजातौ प्रमाणमाह ॥ **प्रत्यक्षसिद्ध इति** ॥ वह्निरुष्ण इति स्पार्शनविषय इति भावः ॥ **इत्थं चेति** ॥ उष्णत्वजातिसिद्धौ चेत्यर्थः ॥ **जन्योष्णस्पर्शेति** ॥ कालिकसमवायोभयसंबन्धेन उष्णत्वजातिविशिष्टेत्यर्थः ॥ **तेजस्त्वजातिसिद्धिरिति** ॥ तथाच तादृशोष्णस्पर्शसमवायिकारणतावच्छेदकतया जन्यतेजोमात्रवृत्तिवैजात्यसिद्धौ तदवच्छिन्नजनकतावच्छेदकतया नित्यसाधारणतेजस्त्वजातिसिद्धिरिति भावः । उक्तार्थमेव प्रकाशयति ॥ **तस्येत्यादिना** ॥ केचित्तु समवायेन विलक्षणनीलं प्रति समवायेन तेजस्संयोगत्वेन हेतुतया तेजस्त्वजातिसिद्धिरित्यपि द्रष्टव्यमित्याहुः तदसत् अवयवनीलाजन्यनीलं प्रति तेजस्संयोगस्य न तेजस्संयोगत्वेन हेतुता सूर्यादितेजस्संयोगसत्त्वे नीलानुत्पत्तेः किन्तु वैजात्यपुरस्कारेण । तथाच वैजात्यावच्छिन्नस्य हेतुत्वात् तादृशकारणतावच्छेदककोटौ तेजस्त्वस्याप्रविष्टत्वेन कारणतावच्छेदकघटकतया तेजस्त्वजातिसिद्ध्यभावात् । वस्तुतस्तु इदमुपलक्षणं तेजःपदशक्यतावच्छेदकतया तेजस्त्वजातिसिद्धिः असति बाधके शक्यतावच्छेदकतया जातिसिद्धेस्सर्वसम्मतत्वादित्यपि द्रष्टव्यम् । चन्द्रकिरणादावित्यादिपदात् रत्नकिरणपरिग्रहः । ननु तत्रोष्णस्पर्शसत्वे अनुपलम्भः कुत इत्यत आह ॥ **किन्त्विति** ॥ **तदन्तःपातीति** ॥ चन्द्रकिरणान्तःपातीत्यर्थः ॥ **अभिभवादिति** ॥ तथाचानभिभूतस्पर्शस्यैव प्रत्यक्षत्वेन चन्द्रकिरणसमवेतोष्णस्पर्शस्याभिभूतत्वान्न प्रत्यक्षापत्तिरिति भावः । चन्द्रकिरणादावित्यादिपदार्थविवरणपूर्वकं तत्र प्रसक्तदोषं वारयति ॥ **एवमिति** ॥ रत्नकिरणादावित्यादिपदात् सुवर्णपरिग्रहः । चक्षुरादावित्यादिपदात् प्रदीपप्रभापरिग्रहः

**मञ्जूषा.**

**जन्योष्णस्पर्शेति** ॥ समवायेन विलक्षणनीलरूपं प्रति समवायेन तेजस्संयोगस्य हेतुतया तदवच्छेदकघटकतयापि तेजस्त्वजातिसिद्धिः नीलकण्ठेनोक्ता । तेजस्संयोगस्य वैजात्यपुरस्कारेणैव हेतुतया न तत्र तेजस्त्वप्रवेशइत्यन्ये ॥ **अभिभवादिति** ॥ सजातीयग्रहणकृतं सजातीयसंवलनकृतं वा यदग्रहणं तदभिभवशब्दार्थः । तथाचोष्णस्पर्शनिष्ठलौकिकविषयतानिरूपितलौकिकविषयतासंबन्धेन स्पार्शनत्वविशिष्टं प्रत्युष्णस्पर्शप्रत्यक्षस्य

**दिनकरीयम्.**

**इत्थं चेति** । उष्णत्वजातिसिद्धौ चेत्यर्थः । ननु कथं तर्हि जन्योष्णस्पर्शसमवायिकारणभिन्नेषु परमाणुषु तेजस्त्वजातिसिद्धिरित्यत आह ॥ **तस्येति** ॥ तेजस्त्वस्येत्यर्थः ॥ **जलत्वस्येवेति** ॥ यथा च जन्यजलत्वावच्छिन्नजनकतावच्छेदकतया जलपरमाणौ जलत्वजातिसिद्धिस्तथा जन्यतेजस्त्वावच्छिन्नजनकतावच्छेदकतया तेजःपरमाणावपि तेजस्त्वरूपजातिसिद्धिरित्यर्थः । इदमुपलक्षणम् । समवायेन विलक्षणनीलोत्पत्तित्वावच्छिन्नं प्रति समवायेन तेजःसंयोगत्वेन हेतुत्वात्तेजस्त्वजातिसिद्धिरित्यपि द्रष्टव्यम् । चन्द्रकिरणादावित्यादिना रत्नकिरणादेः परिग्रहः ॥ **तत्रापि** चन्द्रकिरणादावपि ॥ ननु तर्ह्यौष्ण्यप्रतीतिः कुतो नेत्यत आह ॥ **किं त्विति** ॥ **तदन्तःपातिजलस्पर्शेनेति** ॥ चन्द्रकिरणान्तर्गतजलभागशीतस्पर्शेनेत्यर्थः । ननु चक्षुरादिनिष्ठस्योष्णस्पर्शस्य केनाप्यनभिभूतत्वात्प्रत्यक्षापत्तिरत आह ॥ **चक्षुरादौ चेति** ॥ मरकतकिरणादावित्यादिना सुवर्णपरिग्रहः । स्याद्रूपं शुक्लमा-

**रामरुद्रीयम्.**

**विलक्षणेति** ॥ अवयवनीलाजन्येत्यर्थः । नीलेत्युपलक्षणं पाकेन रक्तादेरप्युत्पत्तेः । अतिप्रस-

**नैमित्तिकं द्रवत्वं तु नित्यतादि च पूर्ववत् ॥ ४१ ॥**

**त्यादि** ॥ वैश्वानरे मरकतकिरणादौ च पार्थिवरूपेणाभिभवात् शुक्लरूपाग्रहः । अथ तद्रूपाग्रहे धर्मिणोऽपि चाक्षुषत्वं न स्यादिति चेन्न । अन्यदीयरूपेणैव धर्मिणो ग्रहसम्भवात् शङ्खस्येव पित्तपीतिम्ना । वह्नेस्तु शुक्लं रूपं नाभिभूतं किं तु तदीयं शुक्लत्वमभिभूतमित्यन्ये ॥ **नैमित्तिकमिति** ॥ सुवर्णादिरूपे तेजसि तत्सत्त्वात् ।

**प्रभा.**

तथाचानभिभूतोद्भूतस्पर्शस्यैव प्रत्यक्षत्वेन चक्षुरादिसमवेतस्पर्शस्यानुद्भूतत्वेनोद्भूतत्वाभावान्न प्रत्यक्षत्वमिति भावः । स्याद्रूपं शुक्लभास्वरं इति मूले शुक्लपदं स्वरूपकीर्तनं लक्षणं तु भास्वररूपवत्त्वं तावतैवानतिप्रसङ्गात् । भास्वरत्वं च भास्वरं शुक्लमिति प्रत्यक्षसिद्धतेजोरूपमात्रवृत्तिशुक्लत्वव्याप्यजातिविशेषः । ननु तादृशभास्वररूपस्य वैश्वानरादावप्रत्यक्षं कुत इत्यत आह ॥ **मुक्तावळ्यां वैश्वानर इति** ॥ मरतकिरणादावित्यादिपदात्सुवर्णपरिग्रहः । ननु तदीयरूपाणां अप्रत्यक्षत्वे रूपाविषयकद्रव्यचाक्षुषाभावाद्वैश्वानरादेरपि चाक्षुषत्वानुपपत्तिरित्यत आह ॥ **तद्रूपेति** ॥ **धर्मिणोऽपीति** ॥ अपिना तद्गतैकत्वादेः परिग्रहः ॥ **अन्यदीयरूपेणैवेति** ॥ सुवर्णादिसमवेतरूपाभिभावकरूपेणैवेत्यर्थः । तेनान्यदीयरूपेण द्रव्यचाक्षुषस्वीकारे घटादिरूपेण वायोश्चाक्षुषापत्तिरिति शङ्कानवकाशः । अन्ये तु अन्यदीयरूपं विषयीकृत्यान्यस्य चाक्षुषत्वे वायोरप्युक्तरीत्या चाक्षुषत्वापत्तिवारणाय वह्न्यादिनिष्ठरूपस्याभिभूतत्वमनङ्गीकृत्य तदीयशुक्लत्वस्यैवाभिभूतत्वमङ्गीकृत्य वह्निनिष्ठशुक्लत्वरूपस्य प्रत्यक्षत्वाद्वह्नेरपि प्रत्यक्षत्वम् । परन्तु शुक्लत्वस्याभिभूतत्वात्तस्याप्रत्यक्षत्वं । पार्थिवरूपनिष्ठरक्तत्वादिना वह्निनिष्ठशुक्लस्य प्रत्यक्षमिति वदतां मतमाह ॥ **वह्नेस्त्विति** ॥ **तदीयं शुक्लत्वमिति** ॥ स्वसमवायिसमवायिसंयु–

**मञ्जूषा.**

स्वविषयस्पर्शाश्रयोपष्टम्भत्वसंबन्धेन उष्णान्यस्पर्शस्यैव वा स्वाश्रयोपष्टम्भत्वसंबन्धेन प्रतिबन्धकत्वमिति भावः ॥ **वह्नेस्त्विति** ॥ तथाच न सामान्यतः शुक्लरूपनिष्ठप्रकारतानिरूपितविशेष्यतासंबन्धेन चाक्षुषं प्रति वह्न्युपष्टम्भकपार्थिवभागनिष्ठलोहितरूपस्य स्वाश्रयोपष्टम्भत्वसंबन्धेन प्रतिबन्धकत्वं किन्तु शुक्ल-

**दिनकरीयम्.**

स्वरमिति मूलम् । तत्र शुक्लेति स्वरूपकथनम् । भास्वररूपमात्रस्य लक्षणत्वेऽतिप्रसङ्गाभावात् । भास्वरत्वं जातिविशेषः । स च तेजोरूपमात्रवृत्तिः शुक्लत्वव्याप्यश्चेति । ननु रूपाविषयकद्रव्यप्रत्यक्षस्याभावाद्वैश्वानरादेश्चाक्षुषत्वानापत्तिरिति शङ्कते ॥ **तद्रूपाग्रह इति** ॥ वैश्वानरादेरचाक्षुषत्वे तद्गतसङ्ख्यादिगुणानामपि चाक्षुषत्वं न स्यादिति योग्यव्यक्तिमात्रवृत्तित्वाभावादित्यपिना सूचितम् ॥ **अन्यदीयरूपेणैवेति** ॥ पार्थिवरूपेणैवेत्यर्थः । मतान्तरमाह ॥ **वह्नेस्त्विति** ॥ **सुवर्णादिरूपे ते–**

**रामरुद्रीयम्.**

ङ्गाभावमुपपादयति ॥ **भास्वरत्वमिति** ॥ ननु तेजोगतरूपाणामनेकविधत्वात् पीतत्वशुक्लत्वादिना साङ्कर्याद्भास्वरत्वस्य जातित्वं न सम्भवतीत्याशङ्कां निराकरोति ॥ **शुक्लत्वव्याप्यश्चेति** ॥ न च विद्युदादौ भास्वरपीतस्याप्यनुभवात्कथं शुक्लत्वं तस्येति वाच्यम् । तत्रत्यशुक्ल एव पीतत्वभ्रान्तेरेवोपगमादिति भावः ॥ **रूपाविषयकेति** ॥ न च निर्विकल्पके प्राथमिके घट इति प्रत्यक्षे च रूपविषयकत्वाननुभवात् कथमेतदिति वाच्यम् । घटत्वे सन्निकर्षदशायां रूपादावपि सन्निकर्षस्यावश्यकतया घटघटत्वयोरिव रूपरूपत्वयोरपि समूहालम्बननिर्विकल्पकस्य प्राथमिकविशिष्टप्रत्यक्षस्यापि रूपत्वविशिष्टवैशिष्ट्यानवगाहिनो रूपविषयकत्वस्यैव स्वीकरणीयत्वादिति भावः । सूचितमित्यस्य वैश्वानरादेरित्यादिपदेनेति शेषः ॥ **पार्थिवेति** ॥ पाकजपार्थिवरूपेणेत्यर्थः । तस्यैव पाक

नच नैमित्तिकद्रवत्वं दहनादावव्याप्तं घृतादावतिव्याप्तं चेति वाच्यम् । पृथिव्यवृत्तिनैमित्तिकद्रवत्ववद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वस्य विवक्षितत्वात् ॥ **पूर्ववदिति** ॥ जलस्थेवेत्यर्थः । तथा हि तत् द्विविधं नित्यमनित्यं च नित्यं परमाणुरूपं तदन्यदनित्यमवयवि च । तच्च त्रिधा शरीरेन्द्रियविषयभेदात् शरीरमयोनिजमेव तच्च सूर्यलोकादौ प्रसिद्धम् ॥ ४१ ॥

## प्रभा.

त्कसमवेतत्वसंबन्धेन पीतत्वजात्या शुक्लत्वमभिभूतमित्यर्थः । अत्र स्वसमवायिसमवायिसंयुक्तसमवेतत्वसंबन्धेन पीतत्वस्य सुवर्णसमवेतशुक्लनिष्ठत्वेनाभिभावकत्वकल्पनापेक्षया स्वसमवायिसंयोगसंबन्धेन पीतरूपस्य सुवर्णनिष्ठत्वेन शुक्लरूपाभिभावकत्वकल्पनमेवोचितं लाघवात् पीतत्वजातेरुक्तपरम्परासम्बन्धेन शुक्लत्वाभिभवसंपादकत्वे शुक्लत्वजातेरेकत्वेन पटादिसमवेतशुक्लेऽपि शुक्लत्वजातिचाक्षुषानुपपत्तेश्च । नैमित्तिकद्रवत्वलक्षणस्यासम्भवं वारयति ॥ **सुवर्णादिरूप इति** ॥ ४१ ॥

## मञ्जूषा.

स्वावच्छिन्नप्रकारतानिरूपितविशेष्यतासंबन्धेन चाक्षुषं प्रति अथवा शुक्लत्वजातिनिष्ठप्रकारतानिरूपितविशेष्यतासंबन्धेन चाक्षुषं प्रति स्वाश्रयोपष्टम्भवह्निसमवेतत्वसंबन्धेन लोहितरूपस्य प्रतिबन्धकत्वम् । अतो वह्नौ शुक्लरूपं गृह्यत एव किन्तु शुक्लत्वेन न गृह्यते । अपितूपष्टम्भकपार्थिवभागनिष्ठरूपसमवेतलोहितत्वप्रकारेण गृह्यत इत्यर्थः । तुशब्दो मरतककिरणं व्यावर्तयति । अयमभिप्रायः । तेजस्सामान्याभावस्य तमःपदार्थत्वे सुवर्णादिसत्त्वे तमोव्यवहारो न स्यात् तमसि सुवर्णादिसंयोगेन पदार्थान्तरप्रत्यक्षापत्तिश्च अतोऽनभिभूतरूपवत्तेजस्सामान्याभावस्यैव तमःपदार्थत्वं तथाविधरूपवत्तेजस्संयोगस्यैव च द्रव्यप्रत्यक्षे कारणत्वं वाच्यम् । एवं च वह्निरूपस्याभिभूतत्वे तत्संयुक्तेऽपि तमस्सत्त्वाव्यवहारः स्यात् तमसि वह्निसंयुक्तेऽन्धकारादिप्रत्यक्षं च न स्यात् । किंच वह्निरूपस्य प्रत्यक्षाविषयत्वे तत्र भास्वरत्वजातिरपि चक्षुषा न गृह्येत । एवं पद्मरागवज्रादिविशेषकिरणादावपि द्रष्टव्यम् । न त्वेवं मरतककिरणे तत्संयुक्तेऽपि तमोव्यवहारात् तमसि तत्संयुक्तपदार्थप्रत्यक्षाभावात्तत्र भास्वरत्वाग्रहणाच्च । एवंच यादृशतेजोरूपं तमसि गृह्यते तदनभिभूतं यस्य तु न गृह्यते तदभिभूतमिति पर्यवसन्नमिति ॥ ४१ ॥

## दिनकरीयम्.

**जसि तत्सत्त्वादिति** ॥ तेन नासम्भव इति भावः ॥ **पृथिव्यवृत्तीति** ॥ नैमित्तिकद्रवत्ववद्वृत्तिपृथिवीत्वरूपजातिमादाय पृथिव्यामतिव्याप्तिवारणाय पृथिव्यवृत्तीति । पृथिव्यवृत्तिजलत्वजातिमादाय जले पृथिव्यवृत्तिवायुत्वादिकमादाय वायावतिव्याप्तिवारणाय नैमित्तिकद्रवत्ववद्वृत्तीति । वायुतेजोन्यतरत्वमादाय वायावतिव्याप्तिवारणाय जातीति ॥ ४१ ॥

## रामरुद्रीयम्.

जत्वात् वैश्वानरे यादृशरूपप्रतीतिस्तादृशं रूपं न काष्ठादिरूपपृथिव्यां पूर्वमनुभूतमतः पाकजत्वं प्रदर्शितमिति ध्येयम् । ननु सुवर्णरूपतेजसि नैमित्तिकद्रवत्वसत्त्वं मूले प्रदर्शितं तच्चानर्थकमेव तावताऽप्यव्याप्तेरपरिहारादित्याशङ्कायामाह ॥ **तेनेति** ॥ तत्कथनेनेत्यर्थः । तथा च तद्ग्रन्थस्यासम्भवपरिहारकत्वमेव अव्याप्तिपरिहारस्तु उत्तरग्रन्थेनैव करणीय इति भावः ॥ **पृथिव्यवृत्तीति** ॥ अत्र जातिपदस्य द्रव्यत्वसाक्षाद्व्याप्यजातिपरत्वेऽपि न निस्तार इति सूचनायैव द्रव्यत्वसाक्षाद्व्याप्येत्युक्तम् । जलत्वेत्युपलक्षणं वायुत्वादिकमादाय वाय्वादावप्यतिव्याप्तिसम्भवादिति द्रष्टव्यम् ॥ ४१ ॥

**इन्द्रियं नयनं वह्निस्वर्णादिर्विषयो मतः ।**

अत्र यो विशेषस्तमाह ॥ इन्द्रियमिति ॥ ननु चक्षुषस्तैजसत्वे किं मानमिति चेत् चक्षुस्तैजसं परकीयस्पर्शाद्यव्यञ्जकत्वे सति परकीयरूपव्यञ्जकत्वात् प्रदीपवत् दीपस्य स्वीयस्पर्शव्यञ्जकत्वादत्र दृष्टान्तेऽव्याप्तिवारणाय प्रथमं परकीयेति । घटादेः स्वीयरूपव्यञ्जकत्वाद्व्यभिचारवारणाय द्वितीयं परकीयेति । अथवा प्रभाया दृष्टान्तत्वसम्भवादाद्यं परकी-

**प्रभा.**

चक्षुषस्तैजसत्वं साधयति ॥ **चक्षुस्तैजसमिति** ॥ अत्र कालोपाधिविधया परकीयस्पर्शविषयकज्ञानजनकत्वमादाय दृष्टान्तासिद्धेः स्वरूपासिद्धेश्च वारणाय सत्यन्तघटकजनकतायां कालिकसंबन्धानवच्छिन्नत्वं देयम् । काले व्यभिचारवारणाय विशेष्यघटकजनकतायामपि कालिकसंबन्धानवच्छिन्नत्वं देयम् । परकीयस्पर्शादीत्यत्राऽऽदिपदात् गन्धरसयोः परिग्रहः तेन तदव्यञ्जकत्वघटितहेतुद्वयलाभः । वस्तुतस्तु परकीयस्पर्शविषयकज्ञानत्वेन निवेशापेक्षया लाघवात् स्पार्शनत्वेनैव ग्रहस्य सत्यन्तघटकतया निवेश उचितः । एवं परकीयरूपाविषयकज्ञानत्वेन निवेशापेक्षया चाक्षुषत्वेनव ग्रहस्य विशेष्यदलघटकतया निवेश उचितः एवं दलद्वयघटकजनकतयोः कालिकसंबन्धानवच्छिन्नत्वनिवेशापेक्षया लाघवात् संयोगसंबन्धावच्छिन्नत्वनिवेश एवोचितः । तथाच स्पार्शननिष्ठकार्यतानिरूपितसंयोगसंबन्धावच्छिन्नजनकताशून्यत्वचाक्षुषनिष्ठकार्यतानिरूपित-संयोगसंबन्धावच्छिन्नत्वोभयं हेतुरिति फलितम् । जन्यज्ञानमात्रं प्रति मनसः कारणत्वान्मनसि व्यभिचारवारणाय सत्यन्तदलम् । घटादौ व्यभिचारवारणाय विशेष्यभागः । एवं चक्षुस्सन्निकर्षस्य संयोगसंबन्धावच्छिन्नकारणत्वाभावेनैव व्यभिचारवारणे द्रव्यत्वविशेषणमपि न देयम् । परकीयस्पर्शविषयकत्वपरकीयरूपविषयकत्वयोः हेतुकोट्यप्रविष्टतया तादृशदलद्वयघटकपरकीयत्वविशेषणप्रयोजनान्वेषणं सुदूरपराहतम् । य-

**दिनकरीयम्.**

**परकीयस्पर्शादीति** ॥ गन्धाव्यञ्जकत्वादिघटितहेत्वन्तरसूचनायादिपदेन गन्धादिपरिग्रहः । चक्षुषः परकीयरूपादिव्यञ्जकत्वादसिद्धिवारणाय स्पर्शपदम् । अत्र केचिदाहुः चक्षुर्विषयासम्बद्धमेव ग्राहकं । यदि प्राप्यप्रकाशकारि स्यात् तदा रसनादिवदधिष्ठानसम्बद्धं गृह्णीयात् नचैवं गोलकासम्बद्धग्रहणात् । किंच य-

**रामरुद्रीयम्.**

**स्पर्शपदमिति** ॥ परकीयपदमपि स्वीयस्पर्शव्यञ्जकदीपे दृष्टान्तासिद्धिवारणाय । उक्तरीत्या परकीयरूपव्यञ्जकजले व्यभिचारवारणाय हेतौ सत्यन्तं गगनादौ तद्वारणार्थं विशेष्यदलम् । घटादौ स्वीयरूपव्यञ्जके तद्वारणाय तत्रापि परकीयेति चक्षुस्सन्निकर्षे व्यभिचारवारणाय द्रव्यत्वे सतीत्यपि पूरणीयम् । एतत्सर्वं मूलोक्तत्वादुपेक्षितामिति बोध्यम् । गोलकमेव चक्षुर्न तैजसमित्युच्छृङ्खलमतं दर्शयति ॥ **अत्र केचिदित्यादिना** ॥ **विषयासम्बद्धं** विषयसन्निकर्षरहितम् । एवकारेण सन्निकृष्टग्राहकत्वं व्यवच्छिद्यते गोलकसंयुक्तस्य चक्षुषाऽग्रहणात् अत्र चक्षुःपदं चक्षुरिन्द्रियत्वेनाभिमतपरं न तेजोरूपचक्षुषः स्वमतेऽसत्त्वेऽपि न पक्षाप्रसिद्धिः । नवा पार्थिवगोलकस्य च सन्निकृष्टग्राहकतायाःतेनाप्यनङ्गीकारेण यदीत्याद्युत्तरग्रन्थानुत्थितिरिति ध्येयम् । अत चोत्तरग्रन्थानुसारादधिष्ठानासम्बद्धग्राहकत्वादिति हेतुरूहनीयः परं त्वाभिमुख्यमव्यवधानं च ग्रहणे प्रयोजकमित्येतन्मतेऽवश्यमङ्गीकरणीयमन्यथा पृष्ठदेशस्थितानां व्यवहितानां च चाक्षुषापत्तिवारणासम्भवात् सिद्धान्तिभिस्तु चक्षुस्संयोगाभावेनैव तद्वारणसम्भवान्न तेषामेतत्कल्पनीयं दूरस्थत्वस्य प्रतिबन्धकताकल्पनं तूभयमतेऽपि समानमिति बोध्यम् । ननूक्तहेतुरप्रयोजक इत्याशङ्कानिरासाय साध्याभावे हेतुरेव न स्यादिति हेतूच्छित्त्यापत्तिरूपमनुकूलतर्कं प्रदर्शयति ॥ **यदीत्यादिना** ॥ **प्राप्यकारि** सन्निकृष्टग्राहि । न चैवमिति छेदः । गोलकसम्बद्धमात्रग्राहकं नचेति तदर्थः ग्रहणादित्यन्तस्य चक्षुष इत्यादिः । अत्र प्रदीपप्रभायां वक्ष्यमाणव्यभिचाररूपारुचिं परिचिन्त्य स्वाधिकपरिमाणवद्द्रव्यग्राहकत्वेनापि चक्षुष्युक्तसाध्यासिद्धिः सम्भवतीत्याह ॥ **किं चेति** ॥ यद्यत्संयुक्तमेव यत्सम्बन्धिफलजनकं तत्तदपेक्षया नात्यन्तन्यूनपरिमाणव-

## प्रभा.

दिच मनसि व्यभिचारवारणाय मनोभिन्नत्वं. विशेष्यदळघटकजन्यतायां चाक्षुषत्वावच्छिन्नत्वं वा निवेश्यते तदा तादृशसत्यन्तदलमपि व्यर्थमेवेति प्रतिभाति । अन्येतु चक्षुर्विषयासंबद्धमेव ग्राह्यं यदि प्राप्यकारि स्याद् तदा रसनादिवदधिष्ठानसंबन्धं गृह्णीयात् नचैवं गोलकासंबन्धग्रहणात् । नच घटादीनां गोलकासंबद्धत्वेऽपि चक्षुरेव ऽगोलकान्निर्गत्य घटादिना संबध्यत इति वाच्यम् । चक्षुषः प्राप्यग्राहकत्वे स्वतोऽधिकपरिमाणग्राहकत्वानुपपत्तेः यावदवयवावच्छेदेन विषयसंयोगाभावात् नच सर्वावयवावच्छेदेन विषयसंयोगाभावेऽपि चक्षुस्संयोगमात्रेण घटादिग्राहकत्वमात्मवत् तत्समवेताधिकपरिमाणग्राहकत्वे बाधकाभावः सामग्र्यास्तुल्यत्वादिति वाच्यम् । तथा सति शाखाचन्द्रमसोस्तुल्यकालग्रहणानापत्तेः चक्षुषः शाखाप्राप्त्युत्तरकालमेव चन्द्रप्राप्तिसंभवेन शाखाप्रत्यक्षोत्तरमेव चन्द्रप्रत्यक्षसंभवात् । नचेष्टापत्तिः अनुभवति तून्मीलयन्नेव नयने शाखां शीतमयूखं चेति इति लोकप्रवादविरोधापत्तेः तस्माच्चक्षुषः प्राप्यकारित्वानुरोधेन गोलकातिरिक्तं चक्षुः परराङ्गीक्रियते गोलकस्य चन्द्रादिप्राप्त्यसंभवात् । अप्राप्यकारित्वासिद्धौ गोलकमेव चक्षुः तत्तु पार्थिवं न तैजसमित्याहुः । तदसत् । अधिष्ठानासंबन्धार्थग्राहिण्याः प्रदीपप्रभाया इव चक्षुषोऽपि प्राप्यकारित्वसंभवात् स्वाधिकपरिमाणद्रव्यग्रहणात् त्वगिन्द्रिये व्यभिचारेण तादृशनियमे मानाभावात् । तुल्यकालग्रहणं चासिद्धमेव तदभिमानस्य कालसान्निकर्षेणैवोपपत्तेः । अचिन्त्यो हि तेजसां लाघवातिशयेन वेगातिशयः यत् प्राचीनाचलचूडावलम्बिन्येव भगवति मयूखमालिनि भवनोदरेष्वालोक इत्यभिमानो लोकानाम् । इदमुपलक्षणं चक्षुषः

## दिनकरीयम्.

दि चक्षुः प्राप्य गृह्णीयात्तर्हि स्वतोऽधिकपरिमाणवन्न गृह्णीयात् न खलु नखरञ्जनिका परशुच्छेद्यं छिनत्तीति शाखाचन्द्रमसोस्तुल्यकालग्रहणानापत्तिश्च गतिक्रमेण प्राप्य ग्रहणे हि सन्निहितक्रमेण ग्रहणं स्यात् न तु तुल्यकालमुपलम्भः अनुभवति तून्मीलयन्नेव नयने शाखां शीतमयूखं च । एवं च प्राप्यकारित्वानुरोधेन गोलकातिरिक्तं चक्षुः परैरङ्गीक्रियते गोलकस्य चन्द्रादिप्राप्त्यसम्भवात् । अप्राप्यकारित्वे च गोलकमेव चक्षुस्त च न तैजसमिति । तदसत्, अधिष्ठानासम्बद्धार्थग्राहिण्याः प्रदीपप्रभाया इव चक्षुषोऽपि प्राप्यकारित्वसम्भवात् पृथुतरग्रहणस्य च गोलकनिर्गतस्य महतश्च चक्षुषः पृथ्वग्रत्वेन प्रदीपप्रभाया इवोपपत्तेः स्वाधिकपरिमाणवद्द्रव्यग्राहिणा त्वगिन्द्रियेण व्यभिचारात् तादृशनियमे मानाभावाच्च । तुल्यकालग्रहणं चासिद्धमेव तदभिमानस्य कालसान्निकर्षेणैवोपपत्तेः अचिन्त्यो हि तेजसो लाघवातिशयेन वेगातिशयः यत्प्राचीनाचलचूडावलम्बिन्येव भगवति मयूखमालिनि भवनोदरेष्वालोक इत्यभिमानो लोकानाम् । यत्त्वाहुः शालिकाचार्याः चक्षुर्बाह्या

## रामरुद्रीयम्.

दिति सामान्यमुखव्याप्त्यभिप्रायेण दृष्टान्तमाह ॥ **न खल्विति** ॥ **नखरञ्जनिका** नखकृन्तनी । तथा चैतद्व्याप्त्यनङ्गीकारे नखरञ्जनिकापि परशुभेद्यं महादार्वपि छिन्द्यात् । अत्र च स्वाधिकपरिमाणदारोरपि परशुभेद्यत्वदर्शनादात्यान्तिकन्यूनताया निर्वक्तुमशक्यत्वाच्चेत्यस्वरसाद्धेत्वन्तरमाह ॥ **शाखेति** ॥ तथा च शाखाचन्द्रमसोरेककालीनचाक्षुषजनकत्वेनापि चक्षुषि असान्निकृष्टग्राहकत्वमापादयितुं शक्यमिति भावः । उपसंहरति ॥ **एवं चेति** ॥ चक्षुषः असन्निकृष्टग्राहकत्वे चेत्यर्थः । नन्विष्टापत्तिरित्याशङ्कायामाह ॥ **तच्चेति** ॥ तथा चेन्द्रियं नयनामिति कारिकाविरोधापत्तेर्नेष्टापत्तेस्सम्भव इति भावः ॥ **अधिष्ठानासम्बद्धेति** ॥ तथाचोक्तनियमो दीपरूपाधिष्ठानासम्बद्धघटादिग्राहिण्यां दीपप्रभायां व्यभिचरित इति भावः ॥ **तदभिमानस्य** एककालीनत्वभ्रमस्य ॥ **कालसान्निकर्षेण** अतिसन्निहितकालवृत्तित्वेन । ननु शाखातः चन्द्रमसोऽतिदूरत्वेन झटिति चन्द्रचक्षुःसंयोगासम्भवात् शाखाचन्द्रमसोश्चाक्षुषयोरत्यन्तसान्निध्यमेव न सम्भवति येन तुल्यकालताभ्रान्तिः स्यादित्यत आह ॥ **अचिन्त्यो हीति** ॥ निर्वक्तुमशक्य इत्यर्थः । **लाघवातिशयेन** वेगजनकक्रियातिशयेनेत्यर्थः । गुरुत्वाभावरूपलाघवस्य वाय्वाद्यपेक्षयाऽतिशयासम्भवादिति मन्तव्यम् ॥ **यत्** यस्मात् ॥ **प्राचीनाचलः** उदयगिरिः ॥ **चूडा** अग्रं शिखरमिति यावत् **मयूखमालिनि** सूर्ये ॥ **अभिमानो** भ्रमः । उदयाचलारोहणग्रहणं किरणप्रसारयोर्वस्तुगत्यैककालीनत्वाभावादिति भावः ।

येति न देयम्। चक्षुस्सन्निकर्षे व्यभिचारवारणाय द्रव्यत्वं देयम्। विषयं दर्शयति॥ **वह्नी-ति**॥ ननु सुवर्णस्य तैजसत्वे किं मानमिति चेन्न। सुवर्णं तैजसं असति प्रतिबन्धकेऽत्यन्तानलसंयोगेऽप्यनुच्छिद्यमानद्रवत्वात् यन्नैवं तन्नैवं यथा पृथिवीति। नचाप्रयोजकं पृथि—

## प्रभा.

अप्राप्यकारित्वे सर्वदा घटादिविषयकचाक्षुषापत्तिः कालभेदेन चाक्षुषनियामकस्य चक्षुःक्रियाजन्यस्य तव नियामकत्वाभावादित्यपि बोध्यम्। यदाहुः कारिकाचार्याः चक्षुर्बाह्यालोकाभ्यामारब्धेन चक्षुषा तावदर्थसंस्पृष्टेन युगपत् तावदर्थग्रहणमिति तन्न यौक्तिकं चक्षुर्बाह्यालोकाभ्यामारब्धस्य चक्षुषः पृष्ठभागेऽपि सत्त्वात् पृष्ठभागस्थितपदार्थग्रहणापत्तेः। पृष्ठदेशस्थबाह्यालोकैश्चक्षुरुत्पादे मानाभाव इति चेत् अग्रदेशस्थबाह्यालोकैरपि तदुत्पादे मानाभावः तदनभ्युपगमेऽपि चाक्षुषोपपादनस्यानुपदमुक्तत्वादिति। ननु सुवर्णं पार्थिवं नैमित्तिकद्रवत्वात् घृतादिवत् इत्यनुमानेन सुवर्णस्य पार्थिवत्वसिद्धेर्न तैजसत्वमित्यभिप्रायेण शङ्कते॥ **अथेति**॥ **सुवर्णमिति**॥ अत्र प्रतिबन्धकासमवधानकालिकात्यन्ताग्निसंयोगसमानकालीनानुच्छिद्यमानद्रवत्वाधिकरणत्वमेव पक्षतावच्छेदकं। पक्षतावच्छेदकावच्छेदेन साध्यसिद्धेरुद्देश्यत्वेन पक्षतावच्छेदकहेत्वोरैक्येऽपि सामानाधिकरण्येन साध्यसिद्धेरदोषत्वात्। वस्तुतस्तु तादृशद्रवत्ववत्त्वेन प्रमितं यद्वस्तु तस्य तद्व्यक्तित्वेन पक्षत्वस्वीकारे तद्व्यक्तित्वस्यैव पक्षतावच्छेदकत्वेन पक्षतावच्छेदकहेत्वोरभेदाप्रसक्त्या न सिद्धसाधनप्रस-

## दिनकरीयम्.

लोकाभ्यामारब्धेन चक्षुषा तावदर्थसंस्पृष्टेन युगपत्तावदर्थग्रहणमिति शाखाचन्द्रमसोस्तुल्यकालग्रहणमुपपद्यत एवेति। तन्न। चक्षुर्बाह्यालोकाभ्यामारब्धस्य चक्षुषः पृष्ठभागेऽपि सत्त्वात्पृष्ठभागस्थितपदार्थग्रहणापत्तेः। पृष्ठदेशस्थबाह्यालोकैश्चक्षुरुत्पादे मानाभाव इति चेदग्रदेशस्थबाह्यालोकैरपि तदुत्पादे मानाभावः तदनभ्युपगमेऽपि चाक्षुषोपपादनस्यानुपदमुक्तत्वादिति। लाघवादाह॥ **अथवेति**॥ **तैजसत्वे किं मानमिति**। सुवर्णं पार्थिवं नैमित्तिकद्रवत्ववत्त्वादित्यनुमानस्य पार्थिवत्वसाधकस्यैव सत्त्वात्। समाधत्ते॥ **नेति**॥ **सुवर्णमिति**॥ नचात्र पीतरूपवद्द्रव्यात्मकस्य सुवर्णस्य पक्षत्वे बाधः तैजससुवर्णस्य चानुमानात् पूर्वमसिद्ध्या पक्षाप्रसिद्धिः धर्मशास्त्रे पीतद्रव्येऽपि सुवर्णपदप्रयोगेन तस्यापि सुवर्णपदवाच्यतया सुवर्णपदवाच्यत्वस्य पक्षतावच्छेदकत्वे बाधतादवस्थ्यादिति वाच्यम्। अत्यन्तानलसंयोगे सत्यनुच्छिद्यमानद्रवत्वाधिकरणत्वस्यैव पक्षतावच्छेदकत्वात् अवच्छेदकावच्छेदेन साध्यसिद्धेरुद्देश्यतया पक्षतावच्छेदकहेत्वभेदप्रयुक्तस्य सामानाधिकरण्येन सिद्धसाधनस्यादोषत्वात्॥ **असति प्रतिबन्धक इति**॥ जलमध्यस्थघृतादौ व्यभिचारवारणायासति प्रतिबन्धक इति। अग्निसंयोगानाश्यद्रवत्ववति घृतादौ व्यभिचारवारणाय संयोगे सतीत्यन्तम् तादृशद्रवत्वस्य स्वसमानाधिकरणात्यन्ताग्निसंयोगासमानकालीनत्वान्न व्यभिचारः। अनुच्छिद्यमानद्रवत्वादित्यस्यानुच्छि-

## रामरुद्रीयम्.

वस्तुतस्तु चक्षुरिन्द्रियस्य तैजसत्वसाधकानुमानस्य पूर्वमुक्ततया तत एव गोलकस्य चक्षुरिन्द्रियत्वं न शङ्कास्पदमपि। न हि सिद्धान्तिभिः प्राप्यकारित्वानुरोधेन चक्षुषस्तथात्वमङ्गीक्रियतेऽन्यथा रसनेन्द्रियादीनामधिष्ठानातिरिक्तत्वं कथं सिध्येत्। यद्यपि घ्राणेन्द्रियस्य पार्थिवत्वादधिष्ठानातिरिक्तत्वे न किञ्चिदपि मानं तथापि नासिकासत्त्वेऽपि केषांचिद्गन्धानुपलब्धिदर्शनात् घ्राणादीन्द्रियमतीन्द्रियमिन्द्रियत्वान्मनोवदित्यनुमानाच्च तत्सिद्धिरिति ध्येयम्। बाह्यालोकोऽत्र न सौरालोकादिपरमाण्वादिस्तदारब्धस्य प्रत्यक्षत्वापातात् किंत्वनुद्भूतरूपवत्तेज एवेति मन्तव्यम्। लाघवादित्यस्य परकीयत्वाप्रवेशेनेत्यादिः॥ **पीतरूपवदिति**॥ उपष्टम्भकपार्थिवभागस्येत्यर्थः॥ **धर्मशास्त्र इति**॥ तोलकपरिमितं सुवर्णं दद्यादित्यादिरूप इत्यर्थः। **तादवस्थ्यादिति**॥ अवच्छेदकावच्छेदेन साध्यसिद्धेरुद्देश्यतया सामानाधिकरण्येन बाधप्रसङ्गादिति भावः। सामानाधिकरण्येन साध्यसिद्धावपि सुवर्णस्य तैजसविषयत्वसम्भवेन सामानाधिकरण्येन साध्यसिद्धौ सामानाधिकरण्येन बाधस्यादोषतया सुवर्णपदवाच्यत्वस्य पक्षतावच्छेदकत्वेऽपि न क्षतिः। शोभनो वर्णो यस्येति व्युत्पत्त्या

## मञ्जूषा.

**परकीयस्पर्शादीत्यादि** ॥ अत्रापि प्रागुक्तरीत्या सर्वमवसेयम् ॥ **सुवर्णं तैजसमिति** ॥ नन्वत्र वस्तुतस्सुवर्णत्वं द्विविधं पीतिमगुरुत्वाश्रयनिष्ठमेकं तेजोभागनिष्ठमेकं उभयत्र सुवर्णपदप्रयोगात् । उभयसाधारणं च नैकं सुवर्णत्वं पृथिवीत्वतेजस्त्वाभ्यां सङ्करप्रसङ्गात् । तथाचात्र पीतिमगुरुत्वाश्रयनिष्ठस्य सुवर्णत्वस्य पक्षतावच्छेदकत्वे बाधः । द्वितीयस्य पक्षतावच्छेदकत्वे स्वाश्रयासिद्धिः । पार्थिवभागोपष्टब्धस्य तेजोरूपस्य सुवर्णस्यानुमानात् पूर्वमसिद्धेरिति चेन्न । सुवर्णपदवाच्यत्वस्यैव पक्षतावच्छेदकत्वात् । यत्तु धर्मशास्त्रे पीतद्रव्ये सुवर्णपदप्रयोगेण तस्यापि सुवर्णपदवाच्यतया सुवर्णपदवाच्यत्वस्य पक्षतावच्छेदकत्वेऽपि बाधतादवस्थ्यमिति नीलकण्ठेनोक्तं तदयुक्तम् । सुवर्णपदवाच्यत्वसामानाधिकरण्यमात्रेण साध्यसिद्धेरुद्देश्यतामात्रेणेष्टसिद्ध्या अंशतो बाधस्यादोषत्वात् । अथवात्यन्तानलसंयोगे सत्यनुच्छिद्यमानद्रवत्वाधिकरणत्वमेव पक्षतावच्छेदकं नच पक्षतावच्छेदकहेत्वोर्भेदे सिद्धसाधनमिति वाच्यं व्याप्तिग्रहवेळायां हेतुविशेष्यकसाध्यसामानाधिकरण्यप्रकारकज्ञाननिष्पत्तावपि पक्षतावच्छेदकावच्छिन्नविशेष्यकसाध्यतावच्छेदकावच्छिन्नप्रकारकज्ञानस्यानिष्पत्त्या दोषाभावात् । यत्र तु व्याप्तिग्रहोत्तरं कदाचिद्धेतुमान् साध्यवानिति ज्ञानं मानसोपनीतभानात्मकं कस्यचित्स्यात् तस्य तत्र दर्शितानुमित्यनुत्पादेऽपि न क्षतिः तादृशमानसोपनीतभानशून्यस्य दर्शितानुमित्युत्पत्त्यैवास्माकमिष्टसिद्धेः उक्तव्याप्तिज्ञानसहकृतेन मनसा मानसात्मकस्य तेजस्त्वज्ञानस्योत्पादनेऽपि अस्माकमिष्टार्थसिद्ध्या दर्शितसिद्धसाधनस्यादोषत्वाच्च । नहि सुवर्णे तेजस्त्वसिद्ध्यानुमित्यात्मिकयैव भवितव्यमिति नियमः व्याप्तिज्ञानोपोद्बलितमनोजन्यमानसनिश्चयात्मकत्वेऽपि क्षतेरभावात् । यादृशेन हि सिद्धसाधनेन जल्पस्थले वादिन इष्टार्थसिद्धिर्न स्यात् तस्यैव दोषत्वं यथा शक्तिवादिना वह्निर्दाहानुकूलधर्मवान् दाहजनकत्वादिति प्रयुक्ते सिद्धसाधनं दोषः । परमतेऽपि वह्नौ दाहानुकूलधर्मस्य वह्नित्वस्य सिद्धत्वेन शक्तिसिद्ध्यभावादित्यादि । अस्तु वा अनुमानप्रमाणादिमात्रसमयसंबन्धे दर्शितसिद्धसाधनस्यापि दोषत्वं तथापि नात्र दोष इत्युक्तम् । तादृशमानसोपनीतभानाद्यभावदशायां सिद्धसाधनाप्रसराद्विति । यत्तु अवच्छेदकावच्छेदेन साध्यसिद्धेरुद्देश्यत्वात् पक्षतावच्छेदकहेत्वभेदप्रयुक्तस्य पक्षतावच्छेदकसामानाधिकरण्येन साध्यसिद्धिरूपस्य सिद्धसाधनस्य न दोषत्वमिति नीलकण्ठेन लिखितं । तदयुक्तं व्याप्तिग्रहवेळायां हेतुव्यापकत्वस्यापि साध्ये निश्चितत्वेन पक्षतावच्छेदकावच्छेदेन साध्यसिद्धेरपि तदभिमतपर्यवसानगत्या वृत्तत्वात् । पर्यवसानगत्यनाश्रयणे तु पक्षतावच्छेदकसामानाधिकरण्यमात्रेण साध्यसिद्धेरुद्देश्यत्वेऽपि पूर्वोक्तरीत्या पक्षस्साध्यवानिति सिद्धनिष्पत्त्यैव दोषाभावेनावच्छेदकावच्छेदेन साध्यानुमित्यनुसरणवैयर्थ्यात् एवं व्यतिरेकव्याप्तिग्रहे सिद्धसाधनप्रसक्तिरेव नेति मन्तव्यम् । केचित्तु पक्षतावच्छेदकावच्छेदेन साध्यसिद्धेरुद्देश्यत्वादित्यस्य पक्षतावच्छेदकावच्छिन्नविशेष्यकसाध्यप्रकारकसिद्धेरुद्देश्यत्वादित्यर्थः । पक्षतावच्छेदकसामानाधिकरण्येन साध्यसिद्धिरूपस्येत्यस्य च हेतुभूतपक्षतावच्छेदके साध्यसामानाधिकरण्यज्ञानरूपस्येत्यर्थः । अतो न दोष इति नीलकण्ठं समर्थयन्ति । सोऽयं महान् क्लेशः । अत्र जलमध्यस्थघृतादौ व्यभिचारवारणायासति प्रतिबन्धक इति । अग्निसंयोगनाश्यद्रवत्ववति घृतादौ व्यभिचारवारणायात्यन्तानलसंयोग इति । नन्वत्र प्रतिबन्धकासमवधानकालीनत्वमत्यन्तानलसंयोगसमानकालीनत्वं च कुत्र विशेषणं अनुच्छिद्यमानपदार्थैकदेशे नाशे उत द्रवत्वे आहोस्वित् तादृशद्रवत्वाधिकरणे पक्षे । नाद्यः आश्रयनाशनाश्यद्रवत्ववति घृतादौ व्यभिचारात् तदीयद्रवत्वस्यात्यन्तानलसंयोगजन्यनाशप्रतियोगित्वाभावात् । द्वितीये प्रतिबन्धकासमवधानकालीनमत्यन्तानलसंयोगसमवधानकालीनं नाशाप्रतियोगि च यद्द्रवत्वं तदधिकरणत्वमर्थस्स्यात् । तत्र चानुपपत्तिः स्फुटैव सुवर्णादिद्रवत्वस्य नाशप्रतियोगित्वाभावात् । अत एव न तृतीयोऽपि । एतेन प्रतिबन्धकासमवधानकालीनत्वं नाशविशेषणं अत्यन्तानलसंयोगसमवधानकालीनत्वं तु द्रवत्वविशेषणमित्यपि निरस्तम् । स्वरूपासिद्धेः अत्यन्तानलसंयोगसमवधानकालीनत्वं नाशे विशेषणम् प्रतिबन्धकासमवधानकालीनत्वं तु द्रवत्व इत्यपि न संभवति । तप्तजलमध्यपतिते पश्चादाश्रयनाशविनष्टद्रवत्ववति घृतादौ व्यभिचारापातात् तदीयद्रवत्वस्यापि अग्रे प्रतिबन्धकासमवधानकालीनत्वात् प्रतिबन्धकसमवधानकालीनभिन्नत्वनिवेशे-

## मञ्जूषा.

तु कदाचिदपि जलासंयुक्तायां घृतादिव्यक्तौ तुत्थादिव्यक्तौ वा व्यभिचारः। उच्यते। अनुच्छिद्यमानत्वं यद्यपि नाशाप्रतियोगित्वरूपं तथापीह वर्तमानत्वमात्रं विवक्षितम्। तथाच द्रवत्वनाशप्रतिबन्धकानधिकरणात्यन्तानलसंयोगाधिकरणकालवृत्तिद्रवत्वाधिकरणत्वं पर्यवसन्नोऽर्थः। तत्र चात्यन्तानलसंयोगे स्वसमानाधिकरणत्वं देयम्। स्वं द्रवत्वं तेनाग्निसंयोगानाश्रयस्य घृतादिद्रवत्वस्यापि देशान्तरवृत्त्यत्यन्तानलसंयोगसमानकालीनत्वेऽपि न व्यभिचारः। ननु सुवर्णद्रवत्वाधिकरणकालस्यापि देशान्तरवृत्तिघृतादिसमवेतद्रवत्वनाशप्रतिबन्धकीभूतजलाधिकरणत्वात् स्वरूपासिद्धिरप्रसिद्धिरेव वा। नच स्ववृत्तिद्रवत्वनाशप्रतिबन्धकत्वं विवक्षितं स्वं पक्षत्वेनाभिमतं वस्तु स्वनाशप्रतिबन्धकत्वमेव वा वाच्यं स्वं पक्षवृत्तित्वेनाभिमतं द्रवत्वमिति वाच्यं पृथिवीद्रवत्वनाशं प्रत्येव विजातीयद्रवद्रव्यस्य जलस्य संयोगेन प्रतिबन्धकतायाः सिद्धान्तासिद्धत्वेन सुवर्णद्रवत्वनाशप्रतिबन्धकाप्रसिद्ध्या स्वरूपासिद्धितादवस्थ्यात्। एतेन द्रवत्वनाशप्रतिबन्धके स्वसमानाधिकरणत्वं देयम्। स्वं द्रवत्वमित्यपि निरस्तम्। सुवर्णद्रवत्वसमानाधिकरणस्य द्रवत्वनाशप्रतिबन्धकस्याप्रसिद्धेरिति चेन्न। पृथिवीद्रवत्वनाशं प्रति जलत्वेन प्रतिबन्धकतया सुवर्णद्रवत्वाधिकरणे संयोगेन कालान्तरे वर्तमानं पृथिवीद्रवत्वनाशप्रतिबन्धस्वरूपयोग्यं यज्जलं तदनधिकरणत्वस्य तादृशद्रवत्वाधिकरणे काले सत्त्वेन स्वसमानाधिकरणत्वस्य द्रवत्वनाशप्रतिबन्धकविशेषणत्वे बाधकाभावात् कदाचिदपि जलासंयुक्तायाः सुवर्णव्यक्तेः पक्षबहिर्भावेऽपि क्षतेरभावात्। अथवा स्वसामानाधिकरण्यस्वसमानकालीनत्वोभयसंबन्धेन द्रवत्वनाशप्रतिबन्धकविशिष्टान्यत्वमेव द्रवत्वविशेषणं अतो न कोऽपि दोषः। यद्वा द्रवत्वनाशप्रतिबन्धकशून्यत्वे सतीति धर्मिणि विशेषणं तच्छून्यत्वं च प्रतिबन्धकतावच्छेदकत्वाभिमतसंबन्धावच्छिन्नप्रतियोगिताकाभावरूपमिति न दोषः। अत्यन्तानलसंयोगो नाम यावत्परिमाणविशिष्टे पार्थिवभागे यावत्परिमाणविशिष्टस्य वह्नेर्यावत्संख्याकावयवावच्छेदेन संयोगे द्रवत्वनाशः तावत्परिमाणविशिष्टे सुवर्णे तावत्परिमाणविशिष्टस्य वह्नेस्तावत्संख्याकावयवावच्छेदेन संयोगः। अत्रानयवा इत्यनेन वह्न्यवयवाः द्रवत्वाश्रयव्यक्त्यवयवाश्च ग्राह्याः। तथाच स्वसमानाधिकरणपरिमाणसजातीयपरिमाणविशिष्टपार्थिवभागसमवेतद्रवत्वनाशजनको योऽग्निसंयोगः स्वावच्छेदकवह्न्यवयवपर्याप्तसंख्यासजातीयसंख्यापर्याप्त्यधिकरणवह्न्यवयवावच्छिन्नत्वस्वावच्छेदकपार्थिवभागावयवपर्याप्तसंख्यासजातीयसंख्यापर्याप्त्यधिकरणवह्नीतरद्रव्यावयवावच्छिन्नत्वैतदुभयसंबन्धेन तादृशाग्निसंयोगविशिष्टो योऽग्निसंयोगः तत्समवधानकालीनत्वं द्रवत्वविशेषणं पर्यवसन्नं प्रथमस्वपदं द्रवत्वपरं द्वितीयस्वपदं तृतीयस्वपदं चाग्निसंयोगपरम्। एवंच यथाकथंचिदग्निसंयोगसमवधानकालीनद्रवत्ववति घृततुत्थादौ एतादृशाग्निसंयोगविरहात् न व्यभिचारः। अथवा तत्तत्परिमाणविशेषविशिष्टसुवर्णत्वेन पक्षता। तत्तत्संख्याविशेषविशिष्टस्वावयवावच्छिन्नतत्तत्संख्याविशेषविशिष्टवह्न्यवयवावच्छिन्नवह्निसंयोगसमवधानकालीनद्रवत्वाधिकरणत्वं हेतुः। यादृशपरिमाणविशेषविशिष्टेषु पार्थिवभागेषु यादृशसंख्याविशेषविशिष्टावयवावच्छिन्नात् वह्निसंयोगात् द्रवत्वनाशो दृष्टः तादृशपरिमाणविशेषविशिष्टसुवर्णपक्षकस्थले तादृशतादृशसंख्यैव धर्तव्येति न दोषः। ननु अत्यन्तत्वं अनलसंयोगगतो जातिविशेष इति वक्तुं युक्तं तादृशजातिविशेषस्य फलबलैककल्प्यत्वे सुवर्णाग्निसंयोगे तादृशजातिविशेषकल्पकाभावेन स्वरूपासिद्धिप्रसङ्गात्। यदिच प्रत्यक्षादिप्रमाणान्तरगम्यं तदा यावताग्निसंयोगेन चुळकपरिमिते घृतादौ द्रवत्वनाशः तावताग्निसंयोगेन प्रस्थपरिमितघृतादावपि द्रवत्वनाशापत्तिः चुळकपरिमितघृतादिसमवेतद्रवत्वनाशकाग्निसंयोगगतवैजात्यस्य तत्र दुर्वारत्वात्। यदिच तत्तदग्निसंयोगगतानि वैजात्यानि भिन्नभिन्नानि प्रत्यक्षासिद्धानि तत्तत्परिमाणविशेषविशिष्टपार्थिवभागद्रवत्वनाशगतावच्छेदकान्युपेयन्ते तत्तत्परिमाणविशेषविशिष्टसुवर्णपक्षकस्थले च तत्तद्वैजात्यावच्छिन्नाग्निसंयोगसमवधानकालीनद्रवत्वाधिकरणत्वमेव हेतुरिति नोक्तव्यभिचारावकाश इत्युच्यते तदा न विवदामः। पृथिवीद्रवत्वस्येत्यनन्तरं क्वचित्पुस्तकेषु जलद्रवत्वस्य चेति पाठो दृश्यते। सच प्रामादिकः नैमित्तिकद्रवत्वाधिकरणस्य मूषास्थद्रव्यस्य जलत्वप्रसक्त्यभावात् जलद्रवत्वनाशं प्रति अत्यन्तानलसंयोगस्य कारणत्वाभावाच्च। अतितप्तजले ह्याश्रयनाशादेव द्रवत्वनाश इष्यते। नचात्यन्तानलसंयोगे यथा जलनाशोऽनु-

## मञ्जूषा

भवसिद्धः तथा घृतनाशोऽपि तत्कथमुच्यते जलद्रवत्वनाश आश्रयनाशजन्यः पृथिवीद्रवत्वनाशोऽग्निसंयोगजन्य इति वाच्यम् । तुल्यादेः पार्थिवस्य वह्निनिक्षेपाद्द्रुतस्य पश्चात्तदवस्थस्यैव द्रवत्वनाशदर्शनात् घृतादेरपि अतिदाहे द्रवत्वशून्यमण्डमण्यादिपरिशेषात् । अथ द्रुतात्तुल्यात् घनीभूतं तत् अतिरिच्यते परिमाणभेदात् एवं घृताद्यपेक्षया मण्डमण्यादिरपि इत्याश्रयनाशजन्य एव तत्र द्रवत्वनाश इति चेत् एवमपि तादृशघनद्रव्याणां पूर्वतुल्यघृताद्यवयवैरेवारब्धत्वेनावयवेषु द्रवत्वनाश आवश्यकः न त्वेवं तप्तजलावयवैः किमपि घनद्रव्यमारब्धं दृष्टम् । अतः पृथिवीद्रवत्वनाशं प्रति अग्निसंयोगस्यास्ति कारणता । किंच केषुचिदनलविन्यस्तेषु पार्थिवेष्ववयवेषु अवयविष्वपि विलक्षणपरिमाणविशिष्टेष्वेव द्रवत्वोत्पादतद्विनाशावानुभाविकौ तत्र च द्रव्यभेदे मानाभावः तावता च सिद्धमस्मत्समीहितम् । नहि वयमग्निसंयोगे पृथिव्यामाश्रयनाशाद्द्रवत्वनाशं क्वचिदपि नाभ्युपगच्छामः । किन्तु सत्येवाश्रये क्वचिदग्निसंयोगादपि द्रवत्वनाशो घ्यणुकादावयवविनि परमाणुषु तु अग्निसंयोगादेवेत्येतावन्तमेवार्थं अतो न दोषगन्धः । तस्मान्नाप्रयोजकत्वमुक्तानुमानस्य । अत्राश्रयनाशजन्यद्रवत्वनाशे व्यभिचारवारणाय द्रवत्वे आश्रयनाशनाश्यद्रवत्वव्यावृत्तं जातिविशेषं कल्पयित्वा विजातीयद्रवत्वनाशत्वावच्छिन्नं प्रत्यग्निसंयोगत्वेन हेतुता स्वीकार्या तच्च वैजात्यं सुवर्णद्रवत्वव्यावृत्तमपीति दर्शितोऽनुकूलतर्कोऽसङ्गतः । सुवर्णस्य पृथिवीत्वेऽपि तदीयद्रवत्वस्याग्निसंयोगनाश्यतावच्छेदकानाक्रान्ततयात्यन्ताग्निसंयोगसत्त्वेऽपि नाशापत्तेरसंभवादित्याचिक्षेप नीलकण्ठः । तत्र विचार्यते । जातिविशेषस्याग्निसंयोगनाश्यतावच्छेदकत्वस्वीकारेणाग्निसंयोगकारणताया व्यभिचारवारणेऽपि आश्रयनाशकारणतायाः अग्निसंयोगजन्यद्रवत्वनाशे कथं व्यभिचारवारणं । अग्निसंयोगनाश्यद्रवत्वव्यावृत्तजातिविशेषस्याश्रयनाशनाश्यतावच्छेदकत्वस्वीकारेणेति चेन्महानयं ते प्रमादः । यद्धि घृतद्रवत्वमाश्रयनाशान्नङ्क्षति यच्च पाकात् किमेतयोः परस्परवैलक्षण्यं प्रागनुभूयते । अयोग्यावितौ जातिविशेषाविति चेत् स्यातां तावयोग्यौ तावतापि न तवेष्टसिद्धिः । नहि किंचित् घृतद्रवत्वमाश्रयनाशनाश्यताया एव योग्यं किंचिदग्निसंयोगनाश्यताया इति व्यवस्थितमस्ति । तथा सति कस्याचिदाश्रयनाशेऽत्यन्तानलसंयोगे वा तथैवावस्थानापत्तेः । नहि तथा किंचिदवतिष्ठते । दृश्यते ह्येवंजातीयकं तथैवावतिष्ठमानं बहुशो लोके यथा चन्द्रोदयभक्षणनिवर्तनीयो विजातीयो ज्वरविशेषो जलपानेऽपि तिष्ठत्येव । जलपाननिवर्तनीयस्तु चन्द्रोदयभक्षणेऽपीति । अपिच परमाणुद्रवत्वेऽग्निसंयोगनाश्यतावच्छेदिका जातिरवश्योपेया तदारब्धे च घ्यणुकादिद्रवत्वे सा जातिः क्वचिदस्ति क्वचिन्नाश्रयनाशनाश्यतावच्छेदिकेत्यत्र नियामकाभावः । कार्यवैजात्यस्य कारणवैजात्याधीनत्वात् । अथाश्रयनाशनाश्यतावच्छेदकं द्रवत्वनिष्ठं न जात्यन्तरं सामान्यतः प्रतियोगितासंबन्धेन नाशत्वावच्छिन्नं प्रति स्वप्रतियोगिसमवेतत्वकालिकविशेषणत्वैतदुभयसंबन्धेन नाशत्वेन विशेषतो वा तत्तद्व्यक्तिसमवेतकार्यनाशं प्रति तत्तद्व्यक्तिनाशत्वेन कारणताया आश्रयनाशजन्यरूपरसादिनाशसाधारण्येनैव कल्पनीयत्वात् द्रवत्वनाशे आश्रयनाशस्य कारणत्वान्तरकल्पने प्रमाणाभावात् । तत्र च रूपत्वादिना संकरेण जातिविशेषस्वीकारस्य असंभावितत्तयाग्निसंयोगादिजन्यरूपद्रवत्वादिनाशे व्यभिचारः कार्यतावच्छेदककोटौ कारणवैशिष्ट्यनिवेशेनैव वारणीयः । एवंच द्रवत्वे आश्रयनाशनाश्यतावच्छेदकजातेरनङ्गीकारात्र तन्नियामकचिन्तेति चेन्मास्तु तादृशजात्यन्तरनियामकचिन्ता । तथाप्यग्निसंयोगनाश्यतावच्छेदकजात्यवच्छिन्नेनावयवद्रवत्वेनारब्धेष्ववयविद्रवत्वेषु केषुचित् सा जातिरस्ति केषुचिन्नेत्यत्र नियामकं दुर्भिक्षमेव । तद्वैजात्यावच्छिन्नं प्रति तत्तद्व्यक्तित्वेन प्रतिबन्धकत्वकल्पने च महागौरवमिति तदपेक्षयाग्निसंयोगजन्यतावच्छेदककोटावाश्रयनाशाजन्यत्वं निवेश्यैवाग्निसंयोगकारणताया आश्रयनाशजन्यद्रवत्वनाशे व्यभिचारवारणं युक्तमिति अप्रमाणेयं जातिः ॥ **अद्रवत्वादिति** ॥ तेजोभागात्मकसुवर्णनिष्ठद्रवत्वस्यैव तत्र भानसंभवादिति भावः । यद्यपि पीतिमगुरुत्वाश्रयस्य पार्थिवभागस्य द्रवत्वाङ्गीकारेऽपि नोक्तहेतोर्व्यभिचारः प्रसज्यते अत्यन्तानलसंयोगे सत्यपि तन्नाशानुदयेन तत्र विजातीयद्रवद्रव्यविधया सुवर्णस्य प्रतिबन्धकतया तादृशद्रवत्वस्य प्रतिबन्धकासमवधानकालीनता नास्तीति वक्तुं शक्यत्वात् तथापि पृथिवीद्रवत्वनाशं प्रति विजातीयद्रवद्रव्यत्वेन प्रतिबन्धकता न वास्तविकी पृथिवी-

**वीद्रवत्वस्य अत्यन्ताग्निसंयोगनाश्यत्वात् । ननु पीतिमगुरुत्वाश्रयस्यापि तदानीं द्रुतत्वात्तेन व्यभिचार इति चेन्न। जलमध्यस्थमषीक्षोदवत्तस्याद्रुतत्वात् । अपरे तु**

## प्रभा.

क्किरिति प्रतिभाति। जलमध्यस्थघृतादौ व्यभिचारवारणाय असति प्रतिबन्धक इति । आश्रयनाशनाश्यद्रवत्ववति घृतादौ व्यभिचारवारणाय सत्यन्तभागः । विजातीयसंयोगे सतीति तदर्थः । अग्निसंयोगनाश्यद्रवत्ववति घृतादौ व्यभिचारवारणाय द्रवत्वेऽनुच्छिद्यमानत्वनिवेशः । नाशसामग्र्यसमवहितत्वं नाशाप्रतियोगित्वं वा तदर्थः । द्रवत्वादित्यस्य द्रवत्वाधिकरणत्वादित्यर्थः। तेन विजातीयाग्निसंयोगशून्यकालिकसुवर्णस्यापि पक्षतावच्छेदकाक्रान्ततया तत्र तादृशद्रवत्वहेतोरसत्त्वेऽपि न भागासिद्धिः ॥ **अग्निसंयोगनाश्यत्वादिति** ॥ तथाच पृथिवीद्रवत्वनाशाग्निसंयोगयोः कार्यकारणभावरूपानुकूलतर्कबलात् व्यभिचारशङ्कानिरासे क्लृप्तसामग्रीबलात् तेजस्त्वसिद्धिर्निराबाधा पृथिवीत्वसाधकनैमित्तिकद्रवत्वहेतोश्च सुवर्णान्तर्भावेन व्यभिचारित्वानिर्णयेन तस्य पृथिवीत्वसाधकत्वं न संभवतीति भावः । अग्नेरपत्यं प्रथमं हिरण्यमिति आगमोऽपि तत्र प्रमाणं बोध्यम् । एतेनाश्रयनाशजन्यद्रवत्वनाशे व्यभिचारवारणायाश्रयनाशनाश्यद्रवत्वव्यावृत्तं वैजात्यं द्रवत्वे कल्पयित्वा तादृशवैजात्याश्रयप्रतियोगिकद्रवत्वनाशं प्रत्यग्निसंयोगस्य हेतुत्वं वाच्यं तच्च वैजात्यं सुवर्णनिष्ठद्रवत्वव्यावृत्तमपीति सुवर्णस्य पृथिवीत्वेऽपि उक्तकार्यकारणभावसंभवान्नोक्ततर्कस्य व्यभिचारशङ्कानिवर्तकत्वमिति कथमुक्तानुमानात्तत्र तेजस्त्वसिद्धिरिति शङ्का निरस्ता । श्रुत्यापि तेजस्त्वसिद्धेः ॥ **मषीक्षोदवदिति** ॥ मषीवत् क्षोदवदित्यर्थः । क्षोदश्चूर्णं ॥ **तस्येति** ॥ पीतिमाश्रयस्येत्यर्थः । प्रकारान्तरेण

## दिनकरीयम्.

व्यमानद्रवत्वाधिकरणत्वादित्यर्थो न तु च्छिद्यमानद्रवत्वानाधिकरणत्वादिति गगनादौ व्यभिचारात् ॥ **आग्निसंयोगनाश्यत्वादिति** ॥ एतच्चोपलक्षणम्। अग्नेरपत्यं प्रथमं हिरण्यमित्याद्यागमान्यथानुपपत्तेरप्यनुकूलतर्कत्वादिति । एतेनाश्रयनाशजन्यद्रवत्वनाशे व्यभिचारवारणाय द्रवत्वे आश्रयनाशनाश्यद्रवत्वव्यावृत्तं जातिविशे-

## रामरुद्रीयम्.

सुवर्णपदबोध्यो दीपादिरपीति न सुवर्णस्य तेजोविषयत्वसिद्धिरिति नाशङ्कनीयं तथा व्युत्पत्तौ तस्य वाक्यत्वेन शक्यतारूपवाच्यत्वाप्रसिद्धेरिति तु विभावनीयम् ॥ **सामानाधिकरण्येन सिद्धसाधनस्येति** ॥ यद्यप्युक्तहेत्वधिकरणे अनुमानात्पूर्वं क्वापि साध्यानिश्चयेन व्यतिरेकव्याप्तिज्ञानादेवानुमितिरुपगन्तव्या व्यतिरेकव्याप्तौ च न साध्यसाधनयोः सामानाधिकरण्यं घटकमिति न सिद्धसाधनशङ्कावसरस्तथापि रजतादौ व्यतिरेकेण सामानाधिकरण्येन अनुमित्युत्तरमन्वयव्याप्तिज्ञानस्यापि सम्भवात्तदुत्तरं तेनैव रूपेण सुवर्णस्थले अनुमितिरन्वयव्याप्तिज्ञानेनापि सम्भवतीत्यभिप्रायेणैतदभिहितमिति ध्येयम् । अग्निसंयोगनाश्येत्यस्य अग्निसमवधानाभावेनेत्यादिः । तेन घृतद्रवत्वसामान्यस्यैव अग्निसंयोगनाश्यतावच्छेदकाक्रान्ततया तादृशघृतस्याप्रसिद्धावपि अग्नेरसमवधानेन अग्निसंयोगजन्यनाशाप्रतियोगिद्रवत्ववतो घृतस्य प्रसिद्धया न क्षतिः ॥ **स्वसमानाधिकरणेति** ॥ गुणकर्मान्यत्वे सति सत्त्वादित्यादौ सतिसप्तम्याः सामानाधिकरण्यार्थकतायाः गोषु दुह्यमानासु गत इत्यादौ तस्याः समानकालीनत्वार्थकतायाश्च क्लृप्तत्वादिति भावः । अनुच्छिद्यमानद्रवत्वस्य स्वसमवायिसंयोगरूपपरम्परया गगनादिसामानाधिकरण्येन व्यभिचारित्वापत्त्या समवायेन तस्य हेतुतालाभायाधिकरणत्वांशं पूरयित्वा व्याचष्टे ॥ **अनुच्छिद्यमानेत्यादि** ॥ द्रवपदस्य गुणपरताया अगि सम्भवेन उच्छिद्यमानो द्रवो यस्य स उच्छिद्यमानद्रवः नोच्छिद्यमानद्रवोऽनुच्छिद्यमानद्रवः तस्य भावस्तत्त्वमिति व्युत्पत्तिलभ्यार्थकतां तत्पदस्य निराकरोति ॥ **नत्विति** ॥ अनधिकरणत्वादित्यस्य पूर्वतनेनेत्यर्थः इत्यनेनान्वयः ॥ **अनुकूलतर्कत्वात्** ॥ सुवर्णं यदि तैजसं न स्यात्तर्ह्येतदागमप्रतिपाद्याग्न्यपत्यत्वमत्र स्यादिति तर्कस्याऽऽकारः स्वसमवायिकारणसमवायिकारणकमपत्यशब्दार्थः जन्यमात्रं न तदर्थः तथासति तस्य कालादृष्टादेरपत्यत्वप्रसङ्गादिति भावः ॥ **जातिविशेषमिति** ॥ अन्यथा अवयवनाशजन्यत्वस्य गुरुशरीरस्य जन्यतावच्छेदककोटिप्रवेशेन गौरवापत्तेरिति हृदयम् । इत्यपि परा-

**पीतिमाश्रयस्यात्यन्ताग्निसंयोगेऽपि पूर्वरूपपरावृत्त्यदर्शनात्तत्प्रतिबन्धकं विजातीयद्रवद्रव्यं कल्प्यते तथाहि अत्यन्ताग्निसंयोगी पीतिमगुरुत्वाश्रयः विजातीयरूपप्रतिबन्धकद्रवद्रव्यसंयुक्तः**

## प्रभा.

सुवर्णस्य तेजस्त्ववादिनां मतमुपन्यस्यति ॥ **अपरे त्विति** ॥ **कल्प्यत इति** ॥ इत्याहुरिति शेषः । तन्मतं निर्दुष्टमिति तदेव सिद्धान्तयति ॥ **तथाहीत्यादिना** ॥ अग्निसंयोगी पीतिमगुरुत्वाश्रय इति पक्षकोटौ अग्निसंयोगशब्दो विजातीयाग्निसंयोगपरः । तेनोदासीनाग्निसंयोगविशिष्टहारिद्रादेर्न पक्षतावच्छेदकाक्रान्तत्वं । पक्षतावच्छेदककोटौ पीतत्वविशेषणानुपादाने जलस्यापि तादृशपक्षतावच्छेदकाक्रान्ततया तत्र वक्ष्यमाणपृथिवीत्वघटितनिष्कृष्टहेत्वभावेन भागासिद्ध्यापत्तेः । अतः पीति माश्रयत्वविशेषणं । तादृशपीतिमाश्रयः पृथिवीरूप एव न तेजोरूप इति स्फुटप्रतिपत्त्यर्थं गुरुत्वाश्रय इति । वस्तुतः पीतिमगुरुत्वाश्रयः इति पाठः प्रामादिक इति प्रतिभाति ॥ **विजातीयरूपेति** ॥ विजातीयं रूपप्रतिबन्धकं यत् द्रवद्रव्यं तत्संयुक्तमित्यर्थः । अत्र सजातीयद्रवद्रव्यस्य प्रतिबन्धकत्वं नास्तीति बोधयितुं द्रवद्रव्ये विजातीयत्वविशेषणं सजातीयस्यापि प्रतिबन्धकत्वे घृतसंयुक्तपीतघटेऽपि रूपनाशानुपपत्तेः । अत्र द्रव्यस्य प्रतिबन्धकत्वे वाय्वादिसंयोगस्य पृथिव्यां सर्वदा सत्त्वेनाग्निसंयोगात् रूपनाशानापत्तेः । अतः द्रवद्रव्यस्यैव प्रतिबन्धकत्वमिति स्फुटतरप्रतिपत्त्य.

## मञ्जूषा.

भिन्नत्वद्रवत्वयोर्विशेषणविशेष्यभावे विनिगमनाविरहेण प्रतिबन्धकताबाहुल्यप्रसङ्गात् परस्पराविशेष्यविशेषणभावानापन्नयोः पृथिवीभिन्नत्वद्रवत्वयोः प्रतिबन्धकतावच्छेदकत्वं न संभवतीति तयोः प्रत्येकपर्याप्तावच्छेदकताद्वयस्वीकारे पृथिवीभिन्नवायुपरमाणुसंयुक्तेषु परस्परसंयुक्तेषु च द्रुतेषु घृतावयवेषु द्रवत्वनाशानुपपत्तेः प्रतिबन्धकतावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्नसत्त्वे कार्योत्पत्तेरसंभवात् । तथाहि प्रतिबन्धकतावच्छेदकत्वं कारणतावच्छेदकीभूतानुयोगितानिरूपितप्रतियोगितावच्छेदकत्वम् । तच्च यदि प्रत्येकपर्याप्तं तदा पृथिवीभिन्नाभावस्य द्रवद्रव्याभावस्य च कारणत्वमित्यायातम् । तथा चोक्तदोषः । पृथिवीभिन्नत्वे द्रवत्वे च नैकावच्छेदकता पर्याप्तुमर्हति तदवच्छेदकयोः संबन्धयोर्धर्मयोश्च भेदात् । तस्मात् पृथिवीद्रवत्वनाशं प्रति जलत्वेनैव प्रतिबन्धकतायाः वास्तविकतया पीतिमगुरुत्वाश्रये व्यभिचारवारणाय तस्याद्रवत्वस्वीकार आवश्यक एव । नच पीतं द्रुतमित्यादिप्रतीतेः परम्परासंबन्धविषयकत्वादिकल्पने प्रमाणाभावेन पीतभागे द्रवत्वस्वीकार एव युक्त इति वाच्यं अत्यन्तानलसंयोगेन तन्नाशवारणाय पृथिवीभिन्नद्रवद्रव्यत्वेन तत्र प्रतिबन्धकत्वकल्पने गौरवप्रसङ्गात् ॥ **रूपापरावृत्तिदर्शनादिति** ॥ नच पुनःपुनः विलाप्यमाने सुवर्णे पीत-

## दिनकरीयम्.

षं कल्पयित्वा विजातीयद्रवत्वनाशं प्रत्यग्निसंयोगत्वेन हेतुता स्वीकार्या तच्च वैजात्यं सुवर्णद्रवत्वव्यावृत्तमपीति दर्शितानुकूलतर्कोऽसङ्गतः सुवर्णस्य पृथिवीत्वेऽपि तदीयद्रवत्वस्याग्निसंयोगनाश्यतावच्छेदकानाक्रान्ततया अत्यन्ताग्निसंयोगसत्त्वेऽपि नाशापत्तेरसम्भवादित्यपि परास्तम् । क्षोदश्चूर्णम् ॥ **तस्य** पीतिमगुरुत्वाश्रयस्य । प्रकारान्तरेण तस्य तैजसत्वं साधयतां मतमुपन्यस्यति ॥ **अपरे त्वित्यादिना** ॥ **तत्प्रतिबन्धकं** रूपपरावृत्तिप्रतिबन्धकम् । अग्निसंयोगस्य तैजससुवर्णेऽपि सत्त्वादुक्तं पीतिमेति । सा-

## रामरुद्रीयम्.

स्तमित्यपिना तादृशागमस्य शब्दविधयापि सुवर्णस्य तैजसत्वे प्रमाणता सूचिता ॥ **क्षोद इति** ॥ यद्यपि पार्थिवभागस्य तदानीं द्रवत्वाङ्गीकारेऽपि तेजोरूपद्रवद्रव्यान्तरस्य प्रतिबन्धकस्य सत्त्वान्न व्यभिचार इति शंक्यते वक्तुं तथापि पार्थिवद्रवत्वनाशप्रतिबन्धकत्वेन ज ःस्यैव क्लृप्ततया नैमित्तिकद्रवत्ववतस्तेजसोऽनुमानात्पूर्वमसिद्धतया न तत्प्रतिबन्धकसत्तामादाय व्यभिचारवारणसम्भवः पार्थिवद्रवत्वनाशप्रतिबन्धकत्वेन द्रव्यान्तरकल्पनं तु परेत्वित्यादिना वक्ष्यमाणं मतान्तरमेवानुसरतीति भावः ॥ **तैजससुवर्णेऽपीति** ॥ तत्र वक्ष्यमाणपृथिवीत्वघटितहेतोरभावेन अवच्छेदकावच्छेदेन साध्यसिद्धेरुद्देश्यतया भागासिद्धिप्रसङ्गादिति भावः । अत एव अग्निसंयोगशून्यपीतपार्थिवे साध्यस्य विजातीयद्रवद्रव्यसंयो-

**अत्यन्ताग्निसंयोगे सत्यपि पूर्वरूपविजातीयरूपानाधिकरणत्वात् जलमध्यस्थपीतपटवत् । तस्य च पृथिवीजलभिन्नस्य तेजस्त्वनियमात् ॥**

## प्रभा.

र्थं द्रव्ये द्रवत्वविशेषणम् । तथाच रूपप्रतिबन्धकद्रव्यसंयुक्तत्वमात्रं साध्यमिति तत्त्वम् ॥ **अत्यन्ताग्निसंयोगे सतीति** ॥ अग्निसंयोगशून्यताकालीनघटे व्यभिचारवारणाय सत्यन्तं विजातीयसंयोग इति तदर्थः । नच पूर्वापररक्तिमध्वंसप्रागभाववति मध्ये रक्ते अत्यन्ताग्निसंयोगकालीने व्यभिचार इति वाच्यं पूर्वरूपविजातीयरूपेत्यस्य पूर्वरूपभिन्नरूपेत्यर्थकतया तादृशमध्येरक्तघटे पूर्वरक्तभिन्नरक्तान्तराधारत्वेन हेत्वभावान्न व्यभिचारः । अत एव घटः पूर्वं रक्तः इदानीं रक्ततर इति प्रतीत्यनुभवोऽपि सङ्गच्छते । अत्र पूर्वरूपभिन्नरूप.नाधारत्वोक्त्या पूर्वरूपनाशो न जायत इत्यर्थःसूच्यते । तथाचात्यन्ताग्निसंयोगसमानकालीनपूर्वरूपध्वंसानाधारत्वादित्यत्यन्ताग्निसंयोगसमानकालीनपूर्वरूपभिन्नरूपानाधारत्वादिति हेतुद्वयलाभात् न मूलकारस्य न्यूनता । जलपरमाण्वादौ व्यभिचारवारणाय हेतुद्वयेऽपि पृथिवीत्वविशेषणं देयम् । यद्यपि पूर्वरूपविजातीयरूपाभाववत्त्वस्यैव हेतुत्वमुचितं अधिकरणत्वघटितहेतुताकरणे गौरवात् आद्यक्षणावच्छिन्नघटे विजातीयाग्निसंयोगरूपसत्यन्ताभावेन तत्र विशिष्टहेत्वभावात् तथापि नानारूपव-

## मञ्जूषा.

रूपोत्कर्षदर्शनात् कथमुक्तहेतोः पक्षधर्मत्वमिति वाच्यं तदन्तर्गतपीतरूपोत्कर्षधीप्रतिबन्धकमालिनद्रव्यापनयनस्यैव तेजस्संयोगप्रयोज्यतास्वीकारेण तत्र रूपपराभूत्यनङ्गीकारात् । अत एव निश्शोधिते तस्मिन् न पुनः पीतरूपोत्कर्षदर्शनं किंत्वप्रयोजकोऽयं हेतुः अनुकूलतर्कविरहात् । न चातितप्तसलिलमध्यपतितपीतपटरूपनाशापत्तिवारणाय पृथिवीरूपनाशं प्रति द्रवद्रव्यस्य प्रतिबन्धकत्वं कल्पनीयम् । तत्र चातितप्तघृतमध्यपतितपीतपटरूपनाशानुपपत्त्या पृथिवीभिन्नत्वमपि प्रतिबन्धकतावच्छेदककोटौ प्रवेशनीयामिति कथमप्रयोजकत्वमिति वाच्यम् । पृथिवीभिन्नत्वद्रवत्वयोर्विशेषणविशेष्यभावे विनिगमनाविरहेणावच्छेदकगौरवेण च तदपेक्षया जलत्वेनैव पृथिवीरूपनाशप्रतिबन्धकतायाः लाघवेन युक्तत्वात् । नचैवमत्यन्तानलसंयोगे सु-

## दिनकरीयम्.

ध्ये विजातीयपदमुद्देश्यसिद्ध्यर्थम् । हेतौ सत्यन्तमग्निसंयोगरहिते पूर्वरूपविजातीयरूपानाधारे घटे व्यभिचारवारणाय । अत्र हेतौ पृथिवीत्वं देयं तेन जलपरमाणौ न व्यभिचारः । यथाकथञ्चिदग्निसंयुक्ते घटे तद्वारणायात्यन्तेति । नचाप्रयोजकत्वं विरोधिद्रवद्रव्यसम्बन्धं विना पार्थिवाग्निसंयोगस्य पूर्वरूपविजातीयरूपजनकत्वादिति भावः । न च द्रवद्रव्यादन्यदेव प्रतिबन्धकं वाच्यम् । अदृष्टकल्पनापत्तेरिति ॥ **तस्य चेति** ॥ **तस्य** द्रवद्रव्यस्य ॥ **पृथिवीजलभिन्नस्येति** ॥ पृथिव्याः पक्षीकृतपीतिमाश्रयाया विजातीयत्वाभावाज्जलस्य तत्रासम्भवादिति भावः ॥ **तेजस्त्वनियमादिति** ॥ वाय्वादौ

## रामरुद्रीयम्.

गस्य हेतोश्च स्वसमानाधिकरणाग्निसंयोगकालीनपूर्वरूपविजातीयरूपानाधारत्वस्य चासत्त्वेन बाधासिद्ध्योर्वारणाय अग्निसंयोगीति सार्थकम् । अत्र च यत्किञ्चित्पीतपटादौ साध्यस्योभयवादिसिद्धतया सामानाधिकरण्येन साध्यतायां सिद्धसाधनापत्त्याऽवच्छेदकावच्छेदेनैव साध्यसिद्धिरुद्देश्येति बोध्यम् ॥ **तेन जलपरमाणाविति** ॥ यद्यपि पूर्वहेतावपि जलपरमाणौ व्यभिचारस्तदवस्थ एव तत्रापि पृथिवीत्वस्य हेतुविशेषणत्वे हेत्वप्रसिद्धिरेव पृथिव्यामग्निसंयोगानाश्रयद्रवत्वाभावात्तथापि तत्र द्रवत्वपदस्य नैमित्तिकद्रवत्वार्थकत्वोपगमान्न व्यभिचार इति विभावनीयम् ॥ **विरोधीति** ॥ विजातीयरूपप्रतिबन्धकेत्यर्थः ॥ **द्रवद्रव्यादन्यत्** ॥ अदृष्टादिकमित्यर्थः ॥ **तत्रासम्भवादिति** ॥ सांसिद्धिकद्रवत्वस्य तत्रानुभवादिति भावः ॥ **वाय्वादाविति** ॥ यद्यपि तेजसोऽपि न तत्र रूपं प्रत्यक्षमिति रूपाभावो न वायौ प्रतिबन्धकत्वकल्पनबीजं तथापि पार्थिवरूपनाशे नीरूपद्रव्यसंयोगस्य प्रतिबन्धकत्वे क्वापि पार्थिवरूपनाशः पाकेन न स्यात्तस्य सर्वदैव सम्भवादिति रूपवतो द्रव्यान्तरस्यैव तथात्वमङ्गीकरणीयमित्यभिप्रायेणैतदभिहितमित्यवधेयम् ॥

## प्रभा.

रक्तपालारब्धघटे नवीनैरव्याप्यवृत्तिनीलादिनानारूपवत्त्वस्वीकारेणात्यन्ताग्निसंयोगकाले किंचिदवच्छेदेन पूर्वरूपविजातीयरूपवत्यपि अवयवान्तरावच्छेदेन तादृशविजातीयरूपाभावस्यापि सत्त्वेन व्यभिचारापत्त्या तादृशरूपाभावघटितहेतुं परित्यज्य तादृशरूपाधिकरणत्वाभावघटितहेतुः कृतः । वस्तुतः निरवच्छिन्नविशेषणतासंबन्धेन पूर्वरूपविजातीयरूपाभावस्य हेतुत्वलाभायैवाधिकरणत्वपदं नतु तदपि हेतुघटकं गौरवात् प्रयोजनाभावाच्चेति तत्त्वम् । नीलादीनां अव्याप्यवृत्तित्वानङ्गीकर्तृप्राचीनमते तु पूर्वरूपध्वंसाभावस्य पूर्वरूपभिन्नरूपाभावस्य च केवलविशेषणतासंबन्धेन हेतुत्वमिति बोध्यम् । घटादिनिष्ठपूर्वरूपविजातीयरूपानाधारत्वस्यापि स्वव्यधिकरणघटादिनिष्ठात्यन्ताग्निसंयोगसमानकालिकतया तादृशघटादौ व्यभिचारवारणाय स्वसमानाधिकरणत्वेनात्यन्ताग्निसंयोगो विशेषणीयः । तथाच स्वसमानाधिकरणात्यन्ता-

## मञ्जूषा.

वर्णरूपनाशापत्तिरिति वाच्यं रूपनाशं प्रति सुवर्णस्य तादात्म्येन प्रतिबन्धकतास्वीकारात् तावता प्रतिबन्धकताद्वयाविशेषेऽपि अवच्छेदकलाघवानपायादित्यतः प्रथमानुमान एव स्वस्य निर्भर इति सूचनाय परेत्वित्युक्तम् । ननु सुवर्णस्य तैजसत्वेऽन्धकारे तदुपष्टम्भकपार्थिवभागचाक्षुषापत्तिः सुवर्णात्मकतेजस्संयोगस्य सत्त्वात् । नच द्रव्यचाक्षुषं प्रति अनभिभूतरूपवत एव तेजसः कारणत्वमिति वाच्यं अनाभिभूतत्वस्य दुर्वचत्वात् । नच स्वसजातीयग्रहणप्रयुक्तस्वग्रहणाभावकत्वं अभिभूतत्वमिति वाच्यं अन्धकारे पीतरूपग्रहणाभावेन तत्का-

## दिनकरीयम्.

रूपाभावादिति भावः । नचान्धकारे पीतिमरूपाश्रयद्रव्यग्रहापत्तिः सुवर्णरूपालोकसंयोगसत्त्वादिति वाच्यम् । उद्भूतानभिभूतरूपालोकसंयोगस्यैव द्रव्यप्रत्यक्षे हेतुत्वात् सुवर्णरूपस्य त्वभिभूतत्वात् । न च तदानीं पीतरूपस्याप्यग्रहात् सजातीयग्रहणकृतमग्रहणं न तु सुवर्णरूपस्येति न तस्याभिभूतत्वमिति वाच्यम् । लघुतया सजातीयसम्बन्धस्यैवाभिभवपदार्थत्वात् । न च तथाऽप्यन्धकारे सुवर्णस्य साक्षात्कारापत्तिः तेजोभिन्नद्रव्यप्रत्यक्षं प्रत्येवालोकसंयोगस्य हेतुत्वादिति वाच्यम् । सुवर्णभिन्नं यत्तेजस्तद्भिन्नद्रव्यप्रत्यक्षं प्रत्येव तस्य हेतुत्वात् । नवीनास्तु सुवर्णं पार्थिवमेव पीतं सुवर्णं द्रुतमिति साक्षात्सम्बन्धेन द्रवत्वप्रतीतेर्भ्रमत्वायोगात् द्रुतं द्रुततरमिति प्रतीतेर्द्रवत्वस्याप्यत्यन्तोच्छेदात् पृथिवीत्वस्य पीतरूपसमवायिकारणतावच्छेदकत्वाद्रूपनाशे तादात्म्येन स्वर्णस्य विरोधित्वाच्च न पीतरूपनाश इति वदन्ति ॥ इति तेजोग्रन्थः ॥

## रामरुद्रीयम्.

**तदानीमिति** ॥ अन्धकारस्थितिदशायामित्यर्थः ॥ **सजातीयग्रहणकृतमिति** ॥ रूपत्वेन स्वसजातीयं यत्पीतरूपं तत्प्रत्यक्षप्रयोज्यं अग्रहणं प्रत्यक्षविषयत्वाभाव इत्यर्थः ॥ **तेजोभिन्नेति** ॥ स्वस्मिन्स्वप्रतियोगिकसंयोगानङ्गीकारेण तेजोऽन्तरसंयुक्ततेजःप्रत्यक्षानुपपत्त्या तथैव कार्यकारणभावस्य स्वीकरणीयत्वादिति भावः । यद्यपि तेजःसमवेतसंयोगत्वेन हेतुत्वे नेयमनुपपत्तिस्तेजस्यपि तत्सत्त्वात्तथापि लाघवात्संयोगसंम्बन्धेन तेजस एव द्रव्यप्रत्यक्षहेतुतायाः स्वीकरणीयतया स्वस्मिन्संयोगेन स्वस्यासत्त्वात्तेजोभिन्नत्वं द्रव्याविशेषणमावश्यकमिति भावः ॥ **द्रुतमिति** ॥ इदंच जलमध्यस्थमषीक्षोदन्यायेन पीतद्रव्यस्य अद्रवत्वाङ्गीकारस्य ग्रन्थकृत्सम्मतत्वात्तदभिप्रायेणोक्तम् । द्रवत्वस्यापीत्यपिकार उच्छेदादित्यनन्तरं योजनीयस्तथाच जले द्रवत्वसत्त्वेऽपि तदीयद्रवत्वस्य पार्थिवद्रवत्वापेक्षयाऽतिविलक्षणत्वात्सांसिद्धिकत्वाच्च न जलमित्यर्थः । पीतरूपवत्त्वाच्च न पृथिव्यन्य इत्याह ॥ **पृथिवीत्वस्येति** ॥ ननु तर्ह्यग्निसंयोगे कुतो न रूपनाश इत्यत आह ॥ **रूपनाश इत्यादि** ॥ वदन्तीत्यस्वरससूचनाय । सच पार्थिवस्यापि तदानीं द्रवत्वाङ्गीकारसम्भवेन प्रतीतिः प्रमात्वसम्भवात् द्रव्यान्तरसंयोगस्यैव अन्यत्र पार्थिवरूपद्रवत्वनाशप्रतिबन्धकत्वेन क्लृप्ततया तत्रैव तादात्म्येन स्वस्य तदुभयनाशप्रतिबन्धकताकल्पनेऽन्यत्राद्दष्टकल्पनापत्तेः ग्रन्थकृतापार्थिवस्य द्रवत्वानङ्गीकारेण तदीयद्रवत्वनाशे द्रव्यान्तरसंयोगस्य प्रतिबन्धकत्वाकल्पनाच्चैतन्मते तत्रापि तस्य प्रतिबन्धकताकल्पनाधिक्याच्चावगन्तव्यः ॥

॥ इति तेजोग्रन्थः ॥

## प्रभा.

मिसंयोगसमानकालीनपूर्वरूपविजातीयरूपानाधारत्वादिति हेतुः फलितः । एककालावच्छिन्नसामानाधिकरण्यसंबन्धेनात्यन्ताग्निसंयोगविशिष्टपूर्वरूपविजातीयरूपानाधारत्वादिति निष्कृष्टो हेतुरिति न काप्यनुपपत्तिरित्यास्तां विस्तरः । नचोक्तानुमानस्याप्रयोजकत्वमिति वाच्यं प्रतियोगितासंबन्धेनाश्रयनाशाजन्यरूपनाशं प्रति स्वानुयोगिसमवेतत्वसंबन्धेन विजातीयतेजस्संयोगस्य प्रतिबन्धकाभावसहितस्य फलोपधायकत्वात् एतादृशकार्यकारणभावरूपानुकूलतर्कसत्त्वेनाप्रयोजकत्वशङ्काया अनवकाशात् । नच द्रवद्रव्याभिन्नमेव प्रतिबन्धकमित्युच्यतामिति वाच्यम् । द्रवद्रव्यभिन्नस्य प्रतिबन्धकत्वे वाय्वादिसंयोगस्य प्रतिबन्धकस्यात्रैव घटादावपि सत्त्वेन विजातीयतेजस्संयोगकाले रूपनाशानापत्तेः अदृष्टस्य प्रतिबन्धकत्वे तु अदृष्टरूपकल्पनापेक्षया द्रवद्रव्यस्य कॢप्तस्य प्रतिबन्धकत्वकल्पनाया एव लघुत्वात् ॥ **तस्य चेति** ॥ द्रवद्रव्यस्य चेत्यर्थः ॥ **पृथिवीजलभिन्नस्येति** ॥ पृथिव्याः पक्षविजातीयत्वाभावात् जलस्य तत्रासंभवादिति भावः ॥ **तेजस्त्वनियमादिति** ॥ वाय्वादौ रूपाभावादिति भावः । नचान्धकारे पीतद्रव्यप्रत्यक्षापत्तिः सुवर्णरूपालोकसंयोगसत्त्वादिति वाच्यम् उद्भूतानभिभूतवदालोकसंयोगस्यैव द्रव्यप्रत्यक्षहेतुत्वस्वीकारेण सुवर्णसंयोगस्य तथात्वात् । नच तदानीं पीतरूपस्याग्रहात्सजातीयग्रहणकृतमग्रहणं न सुवर्णरूपस्येति न तस्याभिभूतत्वमिति वाच्यं लाघवेन सजातीयसंबन्धस्यैवाभिभवपदार्थत्वस्वीकारात् । नच तथाप्यन्धकारे सुवर्णसाक्षात्कारापत्तिः तेजोभिन्नद्रव्यचाक्षुषं प्रत्येवालोकसंयोगस्य हेतुत्वादिति वाच्यं सुवर्णभिन्नतेजोभिन्नद्रव्यचाक्षुषं प्रत्येव तस्य हेतुत्वस्वीकारादिति । नवीनास्तु सुवर्णं पार्थिवमेव पीतं सुवर्णं द्रुतमिति साक्षात्संबन्धेन द्रवत्वप्रतीतेर्भ्रमत्वायोगात् द्रुतं द्रुततरमिति प्रतीतेर्द्रवत्वस्याप्यत्यन्तमुच्छेदात्

## मञ्जूषा.

लीनस्य सुवर्णरूपग्रहणाभावस्य स्वसजातीयग्रहणप्रयुक्तत्वासंभवात् । नच स्वसजातीयसंबन्धप्रयुक्तस्वग्रहणाभावकत्वमभिभूतत्वमिति वाच्यं एवमपि स्वग्रहणपदेन स्वविषयकज्ञानसामान्यविवक्षणे सुवर्णरूपविषयकानुमितिदशायां तस्याभिभूतत्वानुपपत्तिः स्वविषयकलौकिकप्रत्यक्षविवक्षणे सुतरां सुवर्णरूपविषयकलौकिकप्रत्यक्षाप्रसिद्धेः । यत्तु स्वसजातीयसंबन्ध एवाभिभव इति नीलकण्ठः तन्न सौरालोकादेरपि रूपवद्द्रव्यान्तरसंयोगात् रूपवद्द्रव्योपष्टब्धवृत्तित्वमेव सजातीयसंबन्धपदार्थः उपष्टम्भश्च विजातीयसंयोग इति चेदेवमपि चन्द्रकिरणादेः शीतलसलिलावयवोपष्टब्धस्य चाक्षुषजनकत्वानुपपत्तेः पार्थिवभागोपष्टम्भविवक्षणेऽपि वैश्वानरपद्मरागकिरणादेस्तदनुपपत्तेः । उच्यते । स्वसजातीयसंबन्धप्रयुक्तं यल्लौकिकविषयतासंबन्धावच्छिन्नप्रतियोगिताकप्रत्यक्षाभावाश्रयत्वं तदेवाभिभूतत्वम् । सुवर्णरूपनिष्ठलौकिकविषयतया प्रत्यक्षाभावे पीतपार्थिवभागोपष्टम्भस्य प्रयोजकत्वान्नानुपपत्तिः । वैश्वानरपद्मरागकिरणादौ रूपं नाभिभूतं किन्तु शुक्लत्वमभिभूतमिति स्वीकारेण न तस्य प्रत्यक्षजनकत्वानुपपत्तिः । अथैवं सत्यन्धकारे सुवर्णात्मकं तेजः कुतो न गृह्यते तेजोभिन्नद्रव्यचाक्षुषं प्रत्येव तेजसः कारणत्वात् । नचैवं द्रव्यचाक्षुषजन्यतावच्छेदककोटौ तेजोभिन्नत्वनिवेशे तेजश्चाक्षुषोपधायकचक्षुस्संयोगादिघटितसामग्रीबलादन्धकारे घटादिचाक्षुषापत्तिः तेजश्चाक्षुषे व्यभिचारेण चक्षुस्संयोगादिघटितसामग्र्या फले जननीये संयोगेन तेजसस्सहकारित्वासंभवादिति वाच्यम् तेजश्चाक्षुषं प्रति तादात्म्येन तेजसोऽपि कारणतां कल्पयित्वा चक्षुस्संयोगादिघटितसामग्र्या फले जननीये संयोगतादात्म्यान्यतरसंबन्धेन तेजसस्सहकारित्वकल्पनेनानुपपत्त्यभावात् । तथाच तादात्म्येन सुवर्णात्मकतेजोरूपसहकारिबलादन्धकारे तस्य चाक्षुषापत्तिः । अथ तेजोनिष्ठायां संयोगसंबन्धावच्छिन्नायामिव तादात्म्यसंबन्धावच्छिन्नायामपि चाक्षुषकारणतायामनभिभूतरूपवत्तेजस्त्वस्यैवावच्छेदकतास्वीकारान्नान्धकारे सुवर्णचाक्षुषापत्तिः । न चैवमालोकसंयोगसमवधानकालीनचाक्षुषविषये सुवर्णे तादात्म्येनानभिभूतरूपवतः तेजसोऽसत्त्वाद्व्यभिचार इति वाच्यम् अनभिभूतरूपवत्तेजश्चाक्षुषत्वस्यैव तादात्म्यसंबन्धावच्छिन्नतेजोनिष्ठकारणतानिरूपितकार्यतावच्छेदकत्वस्वीकारादिति चेदेतावता तेजोभिन्नद्रव्यचाक्षुषे संयोगेनानभिभूतरूपवत्तेजश्चाक्षुषे च तादात्म्येनानभिभूतरूपवत्तेज-

अपाकजोऽनुष्णाशीतस्पर्शस्तु पवने मतः ॥ ४२ ॥

वायुं निरूपयति ॥ अपाकज इति ॥ अनुष्णाशीतस्पर्शस्य पृथिव्यामपि सत्त्वादुक्तम-

## प्रभा.

पृथिवीत्वस्य पीतरूपसमवायिकारणतावच्छेदकत्वात् रूपनाशे तादात्म्येन सुवर्णस्य विरोधित्वाच्च न पीतनाश इति वदन्ति । तत्र आश्रयनाशाजन्यरूपनाशं प्रति स्वानुयोगिसमवेतत्वसंबन्धेन तेजस्संयोगस्य हेतुतया सुवर्णसमवेतरूपे तादृशसंबन्धेन विजातीयतेजस्संयोगसत्त्वेन प्रतियोगितासंबन्धेन तत्र तादृशरूपनाशापत्तेः प्रतियोगितासंबन्धेन तादृशरूपनाशं प्रति तादात्म्यसंबन्धेन तेजस्समवेतरूपस्य दैशिकविशेषणतासंबन्धेन तादृशरूपनाशं प्रति तादात्म्यसंबन्धेन सुवर्णस्य समवायसंबन्धेन सुवर्णत्वसुवर्णगतैकत्वादीनां वा प्रतिबन्धकत्वमित्यत्र विनिगमनाविरहेण बहूनां प्रतिबन्धकत्वकल्पनापत्तेः पीतं सुवर्णं द्रुतमित्यादिप्रतीतेः रक्तो वह्निरिति प्रतीतिवत् साक्षात्संबन्धेन द्रवत्वावगाहित्वे मानाभावेन तत्प्रतीतेः भ्रमत्वात् क्षालितशुभ्रवस्त्रस्य मालिन्यनिवृत्त्या इदानीं शुभ्रतरमिति प्रतीतिवत् तेजस्संयोगातिशयेन सुवर्णेऽपीदानीं द्रुततरमिति प्रतीत्युपपत्तेः द्रवत्वनाशे मानाभावात् पूर्वोक्तश्रुतिविरोधापत्तेश्च ॥

॥ इति तेजोग्रन्थः ॥

## मञ्जूषा.

सः कारणत्वमिति पर्यवसन्नम् । आलोकसंयोगसमवधानकाले उत्पद्यमानं सुवर्णचाक्षुषं च न द्वयोरपि जन्यतावच्छेदकाक्रान्तं चक्षुस्संयोगादिघटितसामग्रीबलादेव तदुत्पत्तिस्वीकारे च तद्बलादन्धकारे सुवर्णस्य घटादेश्चाक्षुषापत्तिरिति चेदत्र केचित् अनभिभूतरूपवत्तेजोभिन्नद्रव्यचाक्षुषत्वं संयोगसंबन्धावच्छिन्नकारणतानिरूपितकार्यतावच्छेदकं अतस्सुवर्णचाक्षुषस्यापि संग्रहः अनभिभूतरूपवत्तेजश्चाक्षुषत्वं च तादात्म्यसंबन्धावच्छिन्नकारणतानिरूपितकार्यतावच्छेदकं नातः सुवर्णचाक्षुषस्य तदाक्रान्तत्वमभिभूतत्वं च पूर्वनिरुक्तम् । पद्मरागकिरणादिव्यावृत्तं सुवर्णभिन्नं यत्तेजः तद्भिन्नद्रव्यप्रत्यक्षं प्रत्येव तस्य हेतुत्वमिति नीलकण्ठग्रन्थेऽपि सुवर्णभिन्नपदमनभिभूतरूपवत्तेजःपरं अतो रजतमरतककिरणादिप्रत्यक्षस्यापि संग्रहात् नान्धकारे तदापत्तिरित्याहुः । वस्तुतस्तु द्रव्यचाक्षुषं प्रति अनभिभूतरूपवत्तेजोवृत्तिसंयोगस्य समवायेन कारणत्वमित्येव कार्यकारणभावः । अनभिभूतरूपवत्तेजोवृत्तित्वसंयोगत्वयोः विशेषणविशेष्यभावे विनिगमनाविरहेण कारणताद्वयस्याविशिष्टत्वेऽपि पूर्वमते कार्यतावच्छेदककोटिप्रविष्टयोरनभिभूतरूपवत्तेजोभिन्नत्वद्रवत्वयोः अनभिभूतरूपवत्त्वतेजस्त्वयोश्च विशेषणविशेष्यभावे विनिगमनाविरहेण कार्यकारणभावाधिक्यात् । एवंच तेजस्यपि तेजोवृत्तिगगनादिसंयोगसत्त्वात् न तच्चाक्षुषे व्यभिचारः । सुवर्णस्यानभिभूतरूपवत्त्वाभावात् न तद्वृत्तिगगनादिसंयोगेनान्धकारे तच्चाक्षुषम् किन्तु सौरालोकादिसंयोगेनैवेति न कोऽपि दोषः । इदन्तु तत्त्वम् । मतद्वयेऽपि चक्षुरूष्मादिसंयोगेन चाक्षुषापत्तिवारणायोद्भूतत्वमपि रूपविशेषणम् । अत एव उद्भूतानभिभूतरूपवदालोकसंयोगस्य हेतुत्वमिति नीलकण्ठेनाप्युक्तम् । वस्तुतस्तु पूर्वोपदर्शितानभिभूतत्वशरीरे सजातीयसंबन्धप्रयुक्तत्वनिवेशे प्रयोजनाभावात् प्रत्यक्षविषयत्वं अनभिभूतत्वमिति पर्यवसन्नम् । तथाच प्रत्यक्षविषयरूपवत्तेजस्संयोगस्य कारणत्वमिति न चक्षुरूष्मादिसंयोगात् प्रत्यक्षापत्तिः ॥

॥ इति तेजोग्रन्थः ॥

## दिनकरीयम्.

वायौ प्रमाणं दर्शयितुं मूलेऽपाकजोऽनुष्णाशीतस्पर्शस्तु पवने मत इत्युक्तं तत्रापाकजादीनां क्रमेण व्यावृत्तिमाह ॥ अनुष्णाशीतस्पर्शेति ॥ उक्तमपाकज इति ॥ यद्यप्यपाकजानुष्णाशीतस्पर्शवत्त्वं पटादावतिव्याप्तं तथाऽप्यपाकजानुष्णाशीतस्पर्शवन्मात्रवृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वं पाकजस्प-

## रामरुद्रीयम्.

अपाकजानुष्णाशीतस्पर्शवन्मात्रेति ॥ पृथिवीत्ववारणाय मात्रपदम् । अपाकजानुष्णाशीतस्पर्शवद्भिन्ने पार्थिवपरमाणौ पृथिवीत्वस्य वृत्तेस्तद्व्युदासः । अत्र च तादृशस्पर्शवन्मात्रवृत्तित्वं तादृशस्पर्शव-

थाकज इति । अपाकजस्पर्शस्य जलादावपि सत्त्वादुक्तमनुष्णाशीतेति । एतेन वायवीयो विजातीयस्पर्शो दर्शितः तज्जनकतावच्छेदकं वायुत्वमिति भावः ॥ ४२ ॥

## प्रभा.

अपाकजानुष्णाशीतस्पर्शस्तु पवने मत इति मूलस्य वायुत्वजातौ प्रमाणपरत्वं दर्शयितुं अपाकजादिपदानां प्रथमं प्रयोजनमाह ॥ **अनुष्णाशीतस्पर्शस्येति** ॥ **अनुष्णाशीत इतीति** ॥ नच तथापि पटादावतिव्याप्तिः तदीयस्पर्शस्यापाकजत्वादिति वाच्यं अपाकजत्वघटकजन्यत्वस्य साक्षात्परम्परासाधारणप्रयोज्यत्वपरतया पृथिवीपरमाणुस्पर्शस्य तेजस्संयोगजन्यत्वेन पटादिनिष्ठस्पर्शस्यापि पाकप्रयोज्यत्वात् पाकाप्रयोज्यानुष्णाशीतस्पर्शवत्त्वं न कस्याश्चित्पृथिव्या इत्यतिव्याप्त्यप्रसक्तेः । केचित्तु पटादावतिव्याप्तिवारणायापाकजानुष्णाशीतस्पर्शवत्त्वव्याप्यद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वं पाकजानुष्णाशीतस्पर्शवदवृत्त्यनुष्णाशीतस्पर्शवद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वं वा तदर्थोऽवसेय इत्याहुः तदसत् यथाश्रुतस्यैव निर्दुष्टत्वसंभवे उक्तपरिष्कारस्य निर्बीजत्वात् । नच यथाश्रुतलक्षणस्योत्पन्नविनष्टवाय्वङ्गीकर्तृमते अव्याप्तिरिति वाच्यं तादृशवायौ मानाभावात् । अथवा अनुष्णाशीतस्पर्शवद्वृत्तिपृथिव्यवृत्तिजातिमत्त्वमेव तल्लक्षणम् । अनुष्णाशीतस्पर्शवत्त्वे अपाकजत्वकथनं तादृशजातौ पृथिव्यवृत्तित्वलाभायेति बोध्यम् ॥ **एतेनेति** ॥ अनुष्णाशीतस्पर्श—

## मञ्जूषा.

मूलोक्तलक्षणघटकानां त्रयाणां विशेषणानां प्रयोजनान्याह ॥ **अनुष्णाशीतस्पर्शेत्यादिना** ॥ **जलादाविति** ॥ जलतेजसोरित्यर्थः । नच कारणगुणप्रक्रमजन्यस्पर्शवति घटादौ उक्तलक्षणमतिव्याप्तमिति वाच्यं अपाकजपदस्य पाकप्रयोज्यभिन्नपरतया पार्थिवस्पर्शमात्रस्य परमाणुस्पर्शद्वारा पाकप्रयोज्यतयातिव्याप्त्यप्रसक्तेः । वायुत्वजातौ प्रमाणोपन्यासार्थमाह ॥ **एतेनेति** ॥ अपाकजत्वादिकथनेनेत्यर्थः ॥ **विजातीयः** पृथिव्यादिस्पर्शव्यावृत्तजात्यवच्छिन्नः ॥ **दर्शितः** स्मारितः । अपाकजत्वादिसहितस्पर्शत्वोपस्थित्या तत्सहचरिततादृशवैजात्यस्य स्मरणसंभवादिति भावः । तादृशवैजात्ये प्रमाणाभाव इति तु न शङ्क्यं क्षीररसादौ गुडादिरसव्यावृत्तजातिविशेषस्येव वायुस्पर्शे पृथिवीस्पर्शव्यावृत्तजातिविशेषस्यानुभवसिद्धत्वादिति केचिद्व्याचक्षते । न चात्र पाकजस्पर्शवत्त्वरूपपृथिवीलक्षणेऽपि पाकप्रयोज्यत्वनिवेशेनैव

## दिनकरीयम्.

शवदवृत्त्यनुष्णाशीतस्पर्शवद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वं वा तदर्थोऽवसेयः ॥ **एतेन** स्पर्शस्यानुष्णाशीतत्वादिकथनेन ॥ **तज्जनकतावच्छेदकमिति** ॥ तथा च विजातीयस्पर्शजनकतावच्छेदकतया वायुत्वजातिसिद्धिः । इदमुपलक्षणम् । शब्दविशेषस्य वह्नित्वावच्छिन्नस्य वा निमित्तकारणतावच्छेदकतया वायुत्वजातिसिद्धिरित्यपि द्रष्टव्यम् ॥ ४२ ॥

## रामरुद्रीयम्.

द्भिन्नावृत्तित्वमात्रं न तु तादृशस्पर्शवद्वृत्तित्वमपि तत्र घटकं प्रयोजनविरहादात्मत्वादेरपि तादृशस्पर्शवाद्भिन्नवृत्तित्वादेव वारणात् । पटत्वादिकमादायातिव्याप्तिवारणाय साक्षाद्व्याप्यत्वनिवेशः तच्च द्रव्यत्वव्याप्यजात्यव्याप्यत्वमात्रं गुणादिवृत्तिजातीनां तादृशस्पर्शवद्भिन्नावृत्तित्वदलेनैव वारणात् वायुपटद्वित्वमादायातिव्याप्तिवारणाय जातिपदम् । अपाकजस्पर्शवद्भिन्नावृत्तित्वनिवेशेनैव पृथिवीत्ववारणसम्भवेऽपि जलत्वादीनामवारणादनुष्णाशीतस्पर्शवदित्युक्तम् । प्रथमस्याधिकाभावद्वयावच्छिन्ने वृत्तिताद्वयघटितत्वेन आधिक्यादेकाधिकरणाधेयत्वघटितं लघुभूतं कल्पान्तरमाह ॥ **पाकजेति** ॥ पृथिवीत्ववारणायावृत्त्यन्तम् । जलत्ववारणाय वृत्त्यन्तम् । स्पर्शत्वव्याप्यजातिविशेषावच्छिन्नपरमनुष्णाशीतपदमिति लाभायैवात्र स्पर्शपदमन्यथा उष्णशीतभिन्नज्ञानादिमद्वृत्त्यात्मत्वजातिमादायैव अतिव्याप्तेः । पूर्वदले स्पर्शपदं तु समवायेन पाकजवत्त्वलाभायान्यथा वायोरपि कालिकादिना पाकजस्पर्शवत्तयाऽसम्भवापत्तेः अन्यत्पूर्ववदनुसन्धेयम् ॥ **एतेनेति** ॥ वस्तुतस्तु यद्यपीत्यादिना दर्शिताशङ्कानिरासायैव मूले एतेनेत्यादिग्रन्थः । तथा च विजातीयस्पर्शवत्त्वस्यैव वायुलक्षणत्वे न कोऽपि दोष इति मूलाभिप्राय इति युक्तमुत्पश्यामः ॥ ४२ ॥

तिर्यग्गमनवानेष ज्ञेयः स्पर्शादिलिङ्गकः ।

**एष वायुः ॥ स्पर्शादिलिङ्गकः ॥** वायुर्हि स्पर्शशब्दधृतिकम्पैरनुमीयते विजातीयस्प-

**प्रभा.**

र्श्य पाकाप्रयोज्यत्वकथनेनेत्यर्थः ॥ **विजातीयेति** ॥ पृथिवीस्पर्शस्य पाकप्रयोज्यत्वात् जलसमवेतस्पर्शस्य शीतत्वात् तेजस्समवेतस्पर्शस्य उष्णत्वाच्च तद्विलक्षणस्पर्श एव वायुनिष्ठ इत्यर्थः ॥ **दर्शित इति** ॥ सूचित इत्यर्थः । अत्र रूपवद्द्रव्यसंयोगसमानकालीनप्रत्यक्षविषयस्पर्शेषु तादृशप्रत्यक्षेण वैजात्यसिद्धौ बाधकाभावात् व्यवहारबलाच्चातीन्द्रियतादृशस्पर्शेष्वेतादृशवैजात्यं सिध्यतीत्यभिप्रायः ॥ **तज्जनकतावच्छेदकामिति** ॥ तादृशवैजात्यनिष्ठकालिकसमवायोभयसंबन्धावच्छिन्नावच्छेदकतानिरूपितसमवायसंबन्धावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकमित्यर्थः । केचित्तु शब्दविशेषस्य वह्नित्वावच्छिन्नस्य च निमित्तकारणतावच्छेदकतया वायुत्वजातिसिद्धिरित्यपि ज्ञातव्यमित्याहुः । तदसत् स्पर्शादिलिङ्गक इति मूले शब्दविशेषलिङ्गज्ञाप्यत्वस्य वक्ष्यमाणतया तेनैव वायुत्वस्य शब्दविशेषजनकतावच्छेदकत्वलाभेन तत्प्रदर्शनानौचित्यात् वह्नित्वावच्छिन्नं प्रति वायोर्निमित्तकारणत्वे मानाभावः वह्निविशेषं प्रति वायुविशेषस्य निमित्तत्वेऽपि तादृशकारणतावच्छेदकतया सकलवायुसाधारणवायुत्वजातिसिद्ध्यसंभवात् । वस्तुतस्तु वायुपदशक्यतावच्छेदकतया वायुत्वजातिसिद्धिः असति बाधके शक्यतावच्छेदकतयापि जातिसिद्धेरुक्तत्वादिति हृदयम् ॥ ४२ ॥

**मञ्जूषा.**

पटादावतिव्याप्तिवारणसंभवात् तत्र जातिघटनं विश्वनाथस्य विरुध्यत इति वाच्यं तृणदहनसंयोगेन महादहनोत्पत्त्या तदीयोष्णस्पर्शस्यापि तृणसमवेतपूर्वरूपादिनाशकतृणदहनसंयोगरूपपाकप्रयोज्यतया तत्रातिव्याप्तिप्रसङ्गात् । नच जातिघटनेऽपि कालविधया पाकजन्यस्पर्शवति जलादावतिव्याप्तिवारणाय पाकत्वरूपजातिविशेषावच्छिन्नजनकता निवेशनीया । तथा च तादृशजातिविशेषावच्छिन्नप्रयोजकतयैव तत्र प्रवेश्यतां किं जातिघटनेन तृणाग्निसंयोगस्य तृणाग्निसंयोगत्वेनैव महादहनोत्पादकतया तेन रूपेणैव तस्य महादहनोत्पादप्रयोजकता नतु पाकत्वेनेत्यनतिप्रसङ्गात् पार्थिवपरमाणुस्पर्शजनकतावच्छेदकीभूतं यत्पाकत्वं तदेव पार्थिवस्पर्शसामान्यप्रयोजकतावच्छेदकामिति नाव्याप्तिप्रसक्तिरिति वाच्यं स्पन्दमात्रस्यैव कालोपाधित्वनये पाकत्वावच्छिन्नजनकताप्रवेशस्यानावश्यकत्वात् । यद्यपि स्पर्शस्तस्यास्तु विज्ञेयो ह्यनुष्णाशीतपाकज इति मूलोक्तं अनुष्णाशीतत्वमपि लक्षणे प्रवेश्य दर्शितमहादहनातिव्याप्तिश्शक्यते वारयितुं तदुक्तेः स्वरूपाख्यानपरतास्वीकारे प्रयोजनाभावात् तथाप्येकत्रानुसृतरीतेरेवान्यत्राप्यनुसरणीयत्वे नियमाभावात् पृथिवीलक्षणे पाकजन्यतानिवेशेऽपि वायुलक्षणे पाकप्रयोज्यतानिवेशेऽनतिविरोधः । वस्तुतस्तु कारणस्य कार्यप्रयोजकत्वं कारणत्वं तत्कारणस्य कार्यप्रयोजकत्वं कारणकारणत्वमिति रीत्याननुगतान्येव प्रयोजकत्वानीत्येकैकविधप्रयोजकतानिवेशेऽन्यविधप्रयोजकतानिरूपकस्पर्शवत्यां पृथिव्यां पूर्वलक्षणस्याव्याप्तेरेतल्लक्षणस्यातिव्याप्तेश्च प्रसङ्गादुभयत्रापि प्रयोजकतानिवेशनं अयुक्तमेव । तस्मादपाकजानुष्णाशीतस्पर्शवत्त्वस्य कारणगुणप्रक्रमजन्यस्पर्शवति पटादौ अतिव्याप्तिमाशङ्क्यैव एतेनेत्याद्युक्तम् ॥ **एतेन** अपाकजानुष्णाशीतस्पर्शवत्त्वकथनेन ॥ **विजातीयस्पर्शः** पृथिव्यादिस्पर्शव्यावृत्तजातिविशेषावच्छिन्नस्पर्शः ॥ **दर्शितः** विवक्षितः । तथाच विजातीयस्पर्शवत्त्वमेव वायोर्लक्षणमित्यर्थः । विजातीयस्पर्शवत्त्वस्य लक्षणत्वोक्त्या च वायुत्वजातौ प्रमाणमपि सूचितमिति दर्शयति तज्जनकमितीति रीत्या व्याख्यानमृजु । अत्र वायोरनुष्णाशीतस्पर्शे पृथिवीस्पर्शव्यावृत्तजातिविशेषो नास्तीति गुणनिरूपणे दिनकरेणाभिधानमेतन्मुक्तावलीग्रन्थविरोधादुपेक्षणीयम् ॥ ४२ ॥ **मूले तिर्यग्गमनवानिति** ॥ तिर्यग्गम-

**दिनकरीयम्.**

**मूले स्पर्शादिलिङ्गक इति** ॥ स्पर्शादीन लिङ्गानि यस्य स तथा ॥ **मुक्तावल्यां धृतीति** ॥ धृतिर्गुरुणो द्रव्यस्यापतनम् । विजातीयस्पर्शेनेति तृतीयान्तचतुष्कमनुमानादित्यनेनान्वितम् । अनुमितिप्रकारस्तु योऽयं रूपवद्द्रव्यासमवेतस्पर्शः स क्वचिदाश्रितः स्पर्शत्वात् पृथिवीसमवेतस्पर्शवत् पृथिव्यादिस्पर्शे

**र्शेन विलक्षणशब्देन तृणादीनां धृत्या शाखादीनां कम्पनेन च वायोरनुमानात् । यथा**

## प्रभा.

**मूले स्पर्शादिलिङ्गक इति** ॥ भावप्रधाननिर्देशात् स्पर्शत्वादिलिङ्गक इत्यर्थः । अथवा स्पर्शादीनि लिङ्गानि ज्ञापकानि पक्षरूपाणि यस्येति विग्रहात् हेतुज्ञानस्येव पक्षज्ञानस्यापि अनुमितिहेतुतया पक्षस्यापि ज्ञापकत्वलाभात् तथाच स्पर्शादिपक्षकानुमित्या वायुस्सिध्यतीति भावः । स्पर्शादिलिङ्गक इति मूलस्य यथाश्रुतार्थमाह ॥ **मुक्तावल्यां वायुर्हीत्यादि** ॥ स्पर्शत्वावच्छिन्नादीनां पक्षत्वे भागासिद्धिप्रसक्त्या तादृशमूलस्य तात्पर्यार्थमाह ॥ **विजातीयस्पर्शेनेत्यादिना** ॥ **वायोरनुमानादिति** ॥ अनुमानप्रकारश्च रूपवद्द्रव्य-

## मञ्जूषा.

नातिरिक्तक्रियाशून्यत्वे सति क्रियावानित्यर्थः । यदि तु वायौ भ्रमणादिकं स्वीक्रियते तदा नेदं लक्षणपरं किंतु वायावुत्सर्गतः तिर्यग्गमनमेव वात्यादौ क्वचिदेव भ्रमणाद्युत्पादादिति प्रदर्शनपरं वक्तव्यम् ॥ **स्पर्शादिलिङ्गक इति** ॥ अथ वक्ष्यमाणानुमानेषु स्पर्शत्वादीन्येव लिङ्गानि तत्कथमुच्यते स्पर्शादिलिङ्गक इति । अत्र केचित् वक्ष्यमाणानुमानेषु स्पर्शादीनामेव तादात्म्यादिसंबन्धेन हेतुत्वमित्यभिप्रायेणेदमुक्तमित्याहुः अन्ये तु स्पर्शादिपदं स्पर्शत्वादिपरं अतो न दोष इति व्याचक्षते । एतन्मते स्पर्शादिलिङ्गक इति मूलसङ्गतावपि मुक्तावलीग्रन्थः क्लिश्यते । तत्रहि विजातीस्पर्शेनेत्युक्तं । तत्र यदि स्पर्शत्वमेव स्पर्शपदार्थः तदा विजातीयपदार्थः कुत्र अभेदेनान्वीयात् विजातीयपदस्य सामानाधिकरण्यसंबन्धेन वैजात्यविशिष्टपरत्वं तु स्वारसिकलक्षणैकनिर्वाह्यम् । विजातीयस्पर्शत्वमित्यत्र तु अभेदेन विजातीयपदार्थान्वितस्य स्पर्शस्य त्वप्रत्ययार्थे सामानाधिकरण्यसंबन्धेन वैजात्यविशिष्टस्पर्शत्वे आधेयतासंबन्धेनान्वयान्नानुपपत्तिः नच विजातीयस्पर्शेनेत्यत्र स्पर्शपदं स्पर्शवृत्तित्वविशेषितस्पर्शत्वपरं तत्र स्पर्शे विजातीयपदार्थान्वयान्न ममाप्यनुपपत्तिरिति वाच्यं स्पर्शस्य ससंबन्धिकातिरिक्तपदार्थैकदेशतया स्पर्शवृत्तित्वविशेषितस्पर्शत्वतात्पर्यकेदम्पदघटिते विजातीयमिदमिति वाक्य इव विजातीयस्पर्श इति वाक्येऽपि स्पर्शे पदार्थान्तरान्वयासंभवात् एवं विलक्षणशब्देनेत्यादावपि योजनीयम् । अस्मद्गुरुचरणास्तु लिङ्गपदं ज्ञापकपरं हेतुज्ञानस्येव पक्षज्ञानस्यापि अनुमितिहेतुतया पक्षस्यापि ज्ञापकत्वमविरुद्धं तथाच स्पर्शादिपक्षकानुमितिविषय इति फलितोऽर्थ इत्याहुः । एतन्मते विजातीयस्पर्शेनेत्यादिमुक्तावलीग्रन्थोऽपि पक्षीभूतेन विजातीयस्पर्शादिना वायोरनुमानादित्यर्थकतया सूपपाद एव । युज्यते चायमेव पक्षः । तथाहि वक्ष्यमाणानुमाने स्पर्शत्वमेव हेतुः न वैजात्यविशेषितं स्पर्शत्वं प्रयोजनाभावात् सर्वसपक्षव्यावृत्तत्वेनासाधारण्यापाताच्च । अत एव केवलमपि वैजात्यं न हेतुः । एवं तादात्म्येन स्पर्शहेतुतापक्षे स्पर्शत्वमेव हेतुतावच्छेदकं नतु वैजात्यविशेषितं वैजात्यमेव वा उक्तदोषात् । तथाच विजातीयस्पर्शेनेत्यादिग्रन्थो यदि हेतुप्रदर्शनपर एव स्यात् तर्हि विजातीयपदं व्यर्थं स्यात् । पक्षप्रदर्शनपरत्वे तु पृथिव्यादिस्पर्शस्य पक्षताव्युदासाय तत्पदं सार्थकम् । यद्यपि पृथिव्यादिस्पर्शसाधारणस्पर्शत्वस्य पक्षतावच्छेदकत्वेऽपि अवच्छेदकावच्छेदेन साध्यसिद्धेरुद्देश्यत्वे सिद्धसाधनानवकाशात् न दोषप्रसक्तिः । तथापि पक्षतावच्छेदकसामानाधिकरण्येन साध्यसिद्धेरुद्देश्यत्वेऽपि दोषाभावाय वैजात्यमेव पक्षतावच्छेदकं वक्तव्यम् । अथैवं सति स्पर्शपदमनर्थकमिति चेत् स्पर्शनिष्ठमेव वैजात्यमिह ग्राह्यमित्येतदर्थं स्पर्शपदोपादानात् विजातीयसंयोगो विजातीयरूपमित्यादिरीत्या विजातीयशब्दस्य सामान्यधर्मावच्छिन्नयत्किंचिद्विशेष्यवाचकपदसमभिव्याहारेणैव भूरिप्रयोगात् कल्पवृक्षो नाकलोकोऽङ्गदेशो गङ्गानदीत्यादौ वृक्षत्वादेरिव स्पर्शत्वस्याप्युपरञ्जकत्वसंभवाच्च । विजातीयत्वं तु नोपरञ्जकं सामान्यधर्मत्वाभावात् विधेयत्वाच्च । दृश्यते च पक्षस्यापि कारणधारानुमापकत्वमिति निर्देशः यथा कार्यायोजनधृत्यादेरित्यादिः । तस्मात् युक्तमेव स्पर्शादिलिङ्गक इति कथनम् ॥ **मुक्तावल्यां विजातीयस्पर्शेनेति** ॥ अत्र विजातीयस्पर्शो द्रव्याश्रितः स्पर्शत्वात् घटादिस्पर्शवदित्यनुमानम् ॥ **विलक्षणशब्देनेति** ॥ असतिसति रूपवद्द्रव्याभिघाते योऽयं पर्णादिषु मर्मरशब्दसन्तानः स स्प-

**मञ्जूषा.**

शब्दवद्वेगवद्द्रव्यसंयोगजन्यः अविभज्यमानावयवद्रव्यसंबन्धिशब्दसन्तानत्वात् दण्डाहतभेरीशब्दसन्तानवदि- त्यनुमानम् । अत्राविभज्यमानावयवद्रव्यसंबन्धित्वं न विभागशून्यावयवावच्छिन्नत्वं विभागवदवयवाव- च्छिन्नभिन्नत्वं वा पर्णावयवानामपि वायुसंयोगेनान्ततो गगनादितो विभागोत्पत्त्या स्वरूपासिद्धिप्रसङ्गात् नापि परस्परविभागशून्यावयवकद्रव्यावच्छिन्नत्वमान्तरालिकघटाद्यवच्छिन्ने शब्दजशब्दे व्यभिचारात् । अत एव विभागाजन्यत्वं तेन विवक्षितमित्यपि प्रत्युक्तं शब्दजशब्दे व्यभिचारात् । किंतु कारणतत्कारणसा- धारणप्रयोजकतास्वीकारपक्षे विभागाप्रयोज्यत्वमेव संबन्ध्यन्तेन विवक्षितं तत्सूचनायैव हेतौ सन्तानपद- म् । तथाच विभागाप्रयोज्यशब्दत्वं हेतुः । एवंच विभागप्रयोज्ये शब्दजशब्दे न व्यभिचारः । साध्यको- टिनिविष्टं जन्यत्वमपि प्रयोज्यतारूपमेव तेन संयोगप्रयोज्ये शब्दजशब्दे न व्यभिचारः । साध्यकोटौ प्रयो- ज्यतानिवेशसूचकं च पक्षकोटौ सन्तानपदम् । यदि तु तादृशप्रयोजकता न स्वीक्रियते तदा रूपवद्द्रव्या- भिघाताद्यजन्यपर्णाद्यवच्छिन्नप्राथमिकमर्मरशब्दघटितपरम्परायां स्पर्शवद्वेगवद्द्रव्यसंयोगजन्यप्राथमिकशब्द- घटितत्वं विभागजशब्दाघटितत्वे सति प्राथमिकशब्दघटितत्वेन विभागाजन्यप्राथमिकशब्दघ- टितत्वेन वा साधनीयम् । सर्वत्र प्राथमिकत्वं स्वजनकशब्दध्वंससमानकालीनं यत्ताद्भिन्न- त्वं शब्दाजन्यत्वमेव वा । यद्वा तादृशप्राथमिकशब्द एव पक्षः तादृशसंयोगजन्यत्वमेव साध्यं वि- भागाजन्यप्राथमिकशब्दत्वं हेतुः ॥ **तृणादीनां धृत्येति** ॥ अत्रेत्थमनुमानम् । नभसि तृणतूलस्तनयि- त्नुविमानादीनां पतनाभावः स्पर्शवद्द्रव्यसंयोगहेतुकः अस्मदाद्यनधिष्ठितद्रव्यधृतित्वात् नौकादिधृतिवदिति । अत्र च नभःपदं ऊर्ध्वदेशपरम् । तद्देशावच्छिन्नोत्क्षेपणक्रियाप्रयोज्यसंयोगाधिकरणत्वं तद्देशावधिको- र्ध्वत्वं अधिकरणत्वप्रवेशाच्च सर्वदा तादृशसंयोगविरहेऽपि यदाकदाचित्तादृशसंयोगोत्पत्तिमात्रेणो- र्ध्वत्वनिर्वाहः । नच यस्मिन् देशे यद्देशावच्छिन्नोत्क्षेपणाक्रियाप्रयोज्यसंयोगः कदापि नोत्पन्नः तत्रा- व्याप्तिरिति वाच्यं सर्वत्रैव तादृशपवनपरमाणुसंयोगसंभवात् । अथवा तादृशक्रियाप्रयोज्यसंयोगस्व- रूपयोग्यत्वमेव तथास्तु । वस्तुतस्तु तन्निष्ठभूतलसंयुक्तसंयोगपरम्पराघटकसंयोगपर्याप्तसंख्याधिकसंख्यापर्या- प्त्यधिकरणसंयोगघटितभूतलसंयुक्तसंयोगपरम्परावत्त्वं तदवधिकोर्ध्वत्वम् । सर्वत्रैव तादृशसंयुक्तसंयोगपरम्प- राघटकाः संयुक्तप्रदेशाश्च परमाणव एव सुलभाः । भूतलाधःप्रदेशेषु तत्तदधोभागावधिकोर्ध्वत्वनि- र्वचने भूतलादिस्थाने अतलादिकं निवेशनीयम् । यद्वा ब्रह्माण्डकटाहाधोभित्तिमेव तद्व्यक्तित्वेन निवेश्य सर्वत्रोर्ध्वत्वं निर्वक्तुं युक्तं लाघवात् । एवं ब्रह्माण्डकटाहोर्ध्वभित्तिं तद्व्यक्तित्वेन धृत्वापि सर्वत्र ऊर्ध्वत्वं निर्वचनीयं तथा तद्देशनिष्ठतद्व्यक्तिसंयुक्तसंयोगपरम्पराघटकसंयोगपर्याप्तसंख्यान्यूनसं- ख्यापर्याप्त्यधिकरणसंयोगघटिततद्व्यक्तिसंयुक्तसंयोगपरम्परावत्त्वं तद्देशावधिकं उर्ध्वत्वमिति । अधिकं दिङ्निरूपणे वक्ष्यमाणरीत्यावसेयम् । नभसीत्यत्र सप्तम्यर्थो वृत्तिस्तृणान्वयी । तथाचोर्ध्वदेशवर्तिषु तृणादिषु वर्तमानः पतनाभावः पक्षः विहगादिधृतौ व्यभिचारवारणाय हेतावस्मदाद्यनधिष्ठितत्वं द्रव्यविशे- षणम् । तच्च पतनाभाववत्त्वविधेयकास्मदादिवृत्तिकृत्यनुपादानत्वं तृणादेर्नौकादेश्च तादृशेश्वरकृत्युपादा- नत्वात् अस्मदादीति अथात्राधिकरणभेदेनाभावभेदानङ्गीकारात् जलसंयोगप्रयोज्यस्य नौ- कादिवृत्तेरेव पतनाभावस्य विहगादिवृत्तितया कथं विहगादिधृतौ व्यभिचारः येनास्मदाद्यनधिष्ठितत्वं सा- र्थकीक्रियेतेति चेदेवं सति तृणादिवृत्तिपतनाभावस्यापि नौकादिवृत्तिपतनाभावानतिरिक्ततया सि- द्धसाधनापत्त्या नभोवृत्तितृणादिकं स्पर्शवद्द्रव्यसंयुक्तं अस्मदाद्यनधिष्ठितत्वे सति पतनाभाववत्त्वादि- त्यनुमानं वक्तव्यम् । तत्र च विहगादौ व्यभिचारवारणाय सत्यन्तं सार्थकमेव । नच विहगादावपि स्प- र्शवत्परमाण्वादिसंयोगसत्त्वात् कथं तत्र व्यभिचारप्रसक्तिरिति वाच्यं सिद्धसाधनवारणाय पतनप्रतिब- न्धकस्यैव स्पर्शवद्द्रव्यसंयोगस्य साध्यतया तस्य विहगादावभावात् । इदानीं तृणादीनां धृत्येत्यत्र तृतीयाबोध्यं ज्ञापकत्वं लिङ्गनिधयैव धृतेरुपपादनीयम् । यदि च पक्षविधया ज्ञापकमध्यपाठो धृते- र्विरुध्यत इत्युच्यते तदा धृतिपदं पतनाभावसंबन्धपरम् । तथाच नभोवृत्तितृणादिषु वर्तमानः पत-

**पूर्ववन्नित्यताद्युक्तं देहव्यापि त्वगिन्द्रियम् ॥ ४३ ॥**

वायुर्न प्रत्यक्षस्तथाऽग्रे वक्ष्यते ॥ **पूर्ववदिति** ॥ वायुर्द्विविधो नित्योऽनित्यश्च परमाणुरूपो

**प्रभा.**

संयोगासमानकालीनप्रत्यक्षविषयस्पर्शः क्वचिदाश्रितः स्पर्शत्वात् वह्निसमवेतस्पर्शवत् पृथिव्यादिसमवेतस्पर्शे सिद्धसाधनवारणाय रूपवद्द्रव्यसंयोगासमानकालीनत्वं प्रत्यक्षविशेषणम्। एवं वीणाध्वनिः स्पर्शवद्वेगवद्द्रव्यसंयोगजन्यः विभागाजन्यशब्दसन्तानत्वात् मृदङ्गावच्छेद्यशब्दसन्तानवत्। वंशदलद्वयविभागजन्यशब्दे व्यभिचारवारणाय हेतौ विभागाजन्यत्वनिवेशः। एवं मेघनिष्ठपतनाभावः स्पर्शवद्वेगवद्द्रव्यसंयोगजन्यः जन्यप्रयत्नाजन्यधृतित्वात् नौकादिधृतिवत्। प्रयत्नवदात्मसंयोगजन्यपुस्तकादिधृतौ व्यभिचारवारणाय धृतौ जन्यप्रयत्नाजन्यत्वनिवेशः। एवं रूपवद्द्रव्याभिघातशून्यतृणसमवेतकर्म स्पर्शवद्वेगवद्द्रव्याभिघातजन्यं विजातीयकर्मत्वात् प्रवाहाभिघातकुशादिकर्मवदिति ॥ **अग्रे वक्ष्यत इति** ॥ रूपमत्राऽपि कारणमिति कारिकाव्याख्यानावसर

**दिनकरीयम्.**

सिद्धसाधनवारणाय रूपवद्द्रव्यासमवेत इति विशेषणम्। एवमसति रूपवद्द्रव्याभिघाते योऽयं पर्णादिषु शब्दसन्तानः स स्पर्शवद्वेगवद्द्रव्यसंयोगजन्यः अविभज्यमानावयवद्रव्यसम्बन्धिशब्दसन्तानत्वात् दण्डाभिहतभेरीशब्दसन्तानवत्। पृथिव्याद्यभिघातजन्मनि सिद्धसाधनवारणायासतीत्यादिपक्षविशेषणम्। विभागजन्मनि शब्दे व्यभिचारवारणाय हेतावविभज्यमानेति। एवं नभसि तृणतूलस्तनयित्नुविमानादीनां धृतिः स्पर्शवद्वेगवद्द्रव्यसंयोगहेतुका अस्मदाद्यनधिष्ठितद्रव्यधृतित्वात् नौकाधृतिवत् जलादिगततृणादौ सिद्धसाधनवारणाय नभसीति। प्रयत्नवदात्मसंयोगहेतुकधृत्यादौ व्यभिचारवारणायास्मदादीति। एवं रूपवद्द्रव्याभिघातमन्तरेण तृणे कर्म स्पर्शवद्वेगवद्द्रव्याभिघातजन्यं विजातीयकर्मत्वात् नदीपूराहतकाशादिकर्मवदिति ॥ **अग्रे वक्ष्यत इति** ॥ आत्मनिरूपणावसर इत्यर्थः ॥ **मूले पूर्ववन्नित्यताद्युक्तमिति** ॥ पूर्ववज्जलवदित्यर्थः। नित्यतादीत्यादिनाऽनित्यत्वपरिग्रहः। **उक्तं** बोध्यमित्यर्थः। एतदेव स्पष्टयति ॥ **मुक्तावल्यां वायुर्द्विविध इति** ॥ **तत्र**

**रामरुद्रीयम्.**

**सिद्धसाधनवारणायेति** ॥ इदं च स्पर्शत्वसामानाधिकरण्येन द्रव्याश्रितत्वसाधनाभिप्रायेणावच्छेदकावच्छेदेन साध्यसिद्धौ सामानाधिकरण्येन सिद्धेरप्रतिबन्धकत्वादेवमग्रेऽपि बोध्यम् ॥ **शब्दसन्तान इति** ॥ यद्यपि वेगवद्द्रव्यसंयोगस्यैव शब्दजनकतया साध्ये स्पर्शवत्त्वविशेषणमनर्थकं शब्दजनने स्पर्शानुपयोगात्तथापि उक्तानुमानेनैव वायोः स्पर्शस्यापि सिद्ध्यर्थं तदुपात्तं साध्ये व्यर्थविशेषणत्वस्यादोषत्वादिति ध्येयम्। यत्तु गगनादिसंयोगहेतुकत्वसिद्ध्याऽर्थान्तरतावारणाय स्पर्शवदिति नन्वेवमपि तेजःसंयोगहेतुकत्वसिद्ध्याऽर्थान्तरता तदवस्थैवेत्यस्वरसादाह वेगवदिति तन्न वेगपदं चात्र द्रव्यान्तरक्रियाजनकवेगपरं तेन तेजस्यपि वेगसत्त्वेन तदुपादानेऽपि नार्थान्तरतापत्तिरेवं च स्पर्शवत्त्वोपादानं वायौ स्पर्शसिद्ध्यर्थमेवेत्यवधेयम्। **अस्मदाद्यनधिष्ठितेति** ॥ प्रयत्नवदात्मसंयोगाप्रयुक्तद्रव्यधृतित्वादित्यर्थः ॥ **नौकाधृतीति** ॥ जलस्थद्रव्यधृतिवदित्यर्थः ॥ **जलादिगतेति** ॥ इदं चावच्छेदकावच्छेदेन साध्यसिद्धेर्नोद्देश्यता किं तु सामानाधिकरण्येनेत्यभिप्रायेण। अन्यथा तादृशतृणादिधृतौ साध्यस्य सिद्धावपि वायुमात्राधिष्ठिततृणादिधृतावेव साध्यस्यासिद्धतया अवच्छेदकावच्छेदेन साध्यसिद्ध्यभावात्तादृशानुमितौ बाधकाभावेन सामानाधिकरण्येन साध्यसिद्धेरकिंचित्करत्वापातात् सामानाधिकरण्येन साध्यासिद्ध्याऽपि वायुसिद्धिसम्भवेनावच्छेदकावच्छेदेन साध्यसिद्धेरुद्देश्यत्वे प्रयोजनाभावादिति भावः ॥ **नभसीति** ॥ वायुभिन्नस्पर्शवदनाधिष्ठितेति तदर्थः। नभःसंयुक्तार्थकत्वे जलस्थतृणादिधृतिव्यावर्तनासम्भवादिति मन्तव्यम् ॥ **प्रयत्नवदिति** ॥ परमेश्वरधृतपृथिव्यादिलोकधृत्यादावित्यर्थः नत्वस्मदादिधृतघटादिधृत्यादाविति तदर्थः सम्भवति। तत्रास्मदादिहस्तादिरूपतादृशद्रव्यसंयोगहेतुकत्वरूपसाध्यस्यापि सत्त्वेन व्यभिचाराप्रसक्तेरिति ध्येयम्। कर्मणा वायुसिद्धिप्रकारमाह ॥ **एवमित्यादिना** ॥ पार्थिवाभिघातजन्यतृणादिकर्मणि सिद्धसाधनवारणायान्तरेणेत्युक्तं साध्ये स्पर्शवत्त्वोपादानप्रयोजनं पूर्ववदेव। चेष्टात्मकक्रियायां व्यभिचारवारणाय हेतौ विजा-

नित्यस्तदन्योऽनित्योऽवयवसमवेतश्च सोऽपि त्रिविधः शरीरेन्द्रियविषयभेदात् तत्रशरीरमयोनि-जमतीन्द्रियं पिशाचादीनां परन्तु जलीयतैजसवायवीयशरीराणां पार्थिवभागोपष्टम्भादुपभो-

**प्रभा.**

इत्यर्थः ॥ **तत्रेति** ॥ तेषु मध्य इत्यर्थः ॥ **अयोनिजमिति** ॥ अयोनिजमेवेत्यर्थः ॥ **अतीन्द्रियमिति** ॥ लौकिकविषयताशून्यमित्यर्थः । तादृशशरीरं केषामित्यत आह ॥ **पिशाचादीनामिति** ॥ वायुलोके प्रसिद्धामिति शेषः । ननु वायोर्वाग्व्यापाराभावात् करचरणाद्यभावाच्च तच्छरीरस्य कथं भोगायतनत्वमत आह ॥ **परं त्विति** ॥ जलीयतैजसशरीरयोरप्याक्षेपस्य तुल्यतया प्रकरणलाघवमभिप्रेत्यात्रैव साधारण्येन

**मञ्जूषा.**

नाभावसंबन्धः स्पर्शवद्द्रव्यसंयोगप्रयोज्यतृणादिसंबन्धकः अस्मदाद्यनधिष्ठिततृणादिवृत्तित्वे सति पतनाभाववत्वात् अस्मदाद्यनधिष्ठितयद्वृत्तित्वं पतनाभावे स्पर्शवद्द्रव्यसंयोगप्रयोज्यतत्संबद्धकत्वं तत्रेति सामान्यतो व्याप्त्यानुमानं वक्तव्यं तत्र च विहगादिवृत्तिपतनाभावे स्पर्शवद्द्रव्यसंयोगप्रयोज्यविहगादिसंबन्धकत्वाभावात् सामान्यतो व्याप्तौ व्यभिचारवारणायास्मदाद्यनधिष्ठितत्वं सार्थकमेव ॥ **वृक्षादीनां कम्पनेनेति** ॥ रूपवद्द्रव्यसंयोगासमवधानकालीनं वृक्षादौ कर्म किंचिद्द्रव्यसंयोगजन्यं कर्मवेगाजन्यकर्मत्वात् नदीपूराहतकाशादिकर्मवदित्यनुमानमत्र बोध्यम् । मृदुकठिनस्पर्शशून्यस्य वायुशरीरस्य करचरणाद्यवयवसन्निवेशव्यवस्थानुपपत्त्या ग्रहणाद्यसंभवेन भोगावच्छेदकत्वासंभवात् कथं शरीरत्वमिति शङ्कां परिहरति ॥ **परं त्विति** ॥ जलीयतैजसशरीरयोरपि शङ्कासाम्यात् तयोरपि लाघवायात्रैव समाधानं उक्तम् । तत्र वायोः प्रकृतत्वात् तस्य प्रथमतो ग्रहणं कृतं अनन्तरं उद्देशक्रमेण जलतेजसोरिति मन्तव्यम् ॥ **उपभोगक्षमत्वमिति** ॥ सुखदुःखसाक्षात्काररूपभोगावच्छेदकत्वमित्यर्थः । अर्वाचीनास्तु शरीरमयोनिजमित्यनेन वायुशरीरस्यायोनिजत्वमुक्तं तच्च निस्स्पर्शस्य ईरणैकस्वभावस्य वायोर्योनिविशेषप्रभृत्यवयवसन्निवेशव्यवस्थित्यभावेन व्यवायाभावादिति सम्भाव्यते तच्चायुक्तं इमे वै सहास्तां ते वायुर्व्यवात् आपो वरुणस्य पत्नय आसन् ता अग्निरभ्यध्यायत् तास्समभवत्तस्य रेतः परापतत् इत्यादिश्रुत्या वाय्वादिशरीरेष्वपि व्यवायप्रतिपादनात् इत्याहुः न वयं वाय्वादेः व्यवाय एव नेति ब्रूमः ततो वाय्वादिशरीरोत्पत्तिर्नैत्येव अत एव इमे वै सहास्तां इत्यत्र वायुव्यवायेन पार्थिवस्यैवाजाशरीरस्योत्पत्तिर्दर्शिता आपो वरुणस्येत्यत्रापि अग्निरेतसा हिरण्यस्योत्पत्तिर्दर्शिता तस्य रेतः परापतत् तद्धिरण्यमभवदिति हिरण्यं च तत्र तैजसभा-

**दिनकरीयम्.**

तेषु मध्ये ॥ **अयोनिजं** अयोनिजमेवेत्यर्थः ॥ **पिशाचादीनामिति** ॥ । मरुतां लोके प्रसिद्धामिति शेषः। ननु वायोस्ताल्वादिवाग्व्यापाराभावात् करचरणाद्यभावेन चाहरणविहरणाद्यभावात् कथं भोगायतनत्वमित्यत आह ॥ **परन्त्विति** ॥ जलीयतैजसशरीरयोरप्याक्षेपस्य तुल्यत्वात् प्रकरणलाघवमभिप्रेत्य साधारण्येन समाधानमाह ॥ **जलीयतैजसवायवीयेति** ॥ ननु कथं तर्हि जलीयत्वादिव्यपदेश इत्यत आह ॥ ज-

**रामरुद्रीयम्.**

तीयेति । विलक्षणेति तदर्थः । वेगाजन्यत्वे सति चेष्टाभिन्नत्वमेव प्रकृते वैलक्षण्यं न तु जातिविशेषः अवच्छेदकतासम्बन्धावच्छिन्नयत्नगतकारणतानिरूपितकार्यतावच्छेदकतया चेष्टायां जातिविशेषसिद्धिसम्भवेऽपि अचेतननिष्ठक्रियासु तत्साधकप्रमाणाभावात् । न च स्पर्शवद्द्रव्याभिघातजन्यतावच्छेदकतयापि अचेतनक्रियासु जात्यन्तरसिद्धौ बाधकाभाव इति वाच्यम् । तथासति धूमादिपरामर्शजन्यतावच्छेदकतयापि अनुमितौ जातिविशेषाणां सिद्धिप्रसङ्गाद्धूमादिलिङ्गकानुमितित्वस्यैव तत्कार्यतावच्छेदकतया सर्वैरुपगमेनेष्टापत्त्यसम्भवात्प्रकारान्तरेण कार्यकारणभावोपपत्तावतिरिक्तजातिकल्पनानौचित्यात् तत्तद्नन्तक्रियाव्यक्तिभेदस्य दुर्ज्ञेयतया चेष्टत इति प्रतीतौ विलक्षणतया च चेष्टात्वजातिसिद्धेर्निष्प्रत्यूहत्वादिति विभावनीयम् । पूरं प्रवाहः तदाहतत्वं तत्संयुक्तत्वमेव । कारिकास्थपूर्वपदस्याव्यवहितपूर्वा-

गक्षमत्वं जलादीनां प्राधान्याज्जलीयत्वादिकमिति । अत्र यो विशेषस्तमाह ॥ देहव्यापीति ॥ शरीरव्यापकं स्पर्शग्राहकमिन्द्रियं त्वक् तच्च वायवीयं रूपादिषु मध्ये स्पर्शस्यैवाभिव्यञ्ज-

**प्रभा.**

समाधानमाह ॥ **जलीयेति** ॥ ननु तर्हि कथं जलीयत्वादिव्यवहार इत्यत आह ॥ **जलादीनामिति** ॥ **अत्रेति** ॥ त्वगिन्द्रिय इत्यर्थः ॥ **यो विशेष इति** ॥ सर्वशरीरवृत्तित्वादिरूप इत्यर्थः ॥ **शरीरव्यापकमिति** ॥ सर्वशरीरवृत्तीत्यर्थः । देहत्वव्यापकमिति यावत् । तथाच शरीरत्वव्यापकत्वे सति इन्द्रियत्वं त्वगिन्द्रियस्य लक्षणमिति फलितम् । नच नखलोमादीनां त्वगिन्द्रियानाधारत्वात् असंभव इति वाच्यं तेषां संयोगिद्रव्यत्वेन शरीरत्वाभावात् । मूलस्थत्वागिन्द्रियमित्यस्य त्वचि स्थितमिन्द्रियमित्यर्थः । एतेन देहसहजावरणं त्वगित्युच्यते तच्च पार्थिवं प्रत्यक्षसिद्धं नेन्द्रियं न वायवीयं चेति शङ्का निरस्ता । यद्यपि देहव्यापीति मूलस्योक्तरीत्या लक्षणपरत्वं संभवति तथापि तस्याश्रयपरत्वाभिप्रायेण प्रयोजनप्रदर्शनपूर्वकं तल्लक्षणं स्वयमाह ॥ **स्पर्शग्राहकेति** ॥ अत्र स्पर्शविषयकत्वेन ज्ञानस्य निवेशे गौरवात् स्पार्शनत्वेनैव निवेशः तथाच स्पार्शनत्वावच्छिन्नकार्यतानिरूपितकारणत्वं त्वगिन्द्रियलक्षणमिति फलितं त्वक्सन्निकर्षे व्यभिचारवारणाय इन्द्रियत्वनिवेशः । यदि सन्निकर्षे व्यभिचारवारणाय कारणतायां संयोगसंबन्धावच्छिन्नत्वं निवेश्यते तदा एतादृशकारणतालाभायैव इन्द्रियपदमिति बोध्यम् ॥ **तच्चेति** ॥ त्वगिन्द्रियं चेत्यर्थः ॥ **रूपादिषु मध्य इति** ॥ अत्र रूपरसगन्धस्पर्शाः आदिपदार्थाः अत्रापि सप्तम्यर्थो घटकत्वं एतल्लाभाय मध्य इत्युक्तं

**दिनकरीयम्.**

लादीनामिति ॥ अत्र त्वगिन्द्रिये ॥ **यो विशेषः** अधिष्ठानादिः ॥ **शरीरव्यापकमिति** ॥ नच नखलोमकेशादीनां त्वगिन्द्रियानाधारत्वादसम्भव इति वाच्यम् । तेषां संयोगिद्रव्यत्वेन शरीरत्वाभावात् । मूलस्थत्वागिन्द्रियमित्यस्य त्वचि स्थितमिन्द्रियमित्यर्थः । एतेन देहसहजावरणं त्वगित्युच्यते तच्च पार्थिवं प्रत्यक्षसिद्धं चेति नेन्द्रियं नच वायवीयामिति परास्तम् । त्वगिन्द्रियलक्षणमाह ॥ **स्पर्शेति** ॥ कार्यमात्रजनककालादावतिव्याप्तिवारणायेन्द्रियमिति । चक्षुरादावतिव्याप्तिवारणाय स्पर्शग्राहकेति । **त्वक्** त्वगिन्द्रियमित्यर्थः ॥ **तच्चेति** ॥ त्वगिन्द्रियं चेत्यर्थः । पक्षे स्पर्शत्वाभिव्यञ्जकत्वादसिद्धिवारणाय

**रामरुद्रीयम्.**

र्थकत्वे तेजसि नित्यत्वादेः कारिकायां कण्ठतोऽनुक्तेरसङ्गतिरित्यतस्तदर्थमाह । **जलवदिति** । ननूक्तमित्यसङ्गतं कारिकायां वायोर्नित्यतादीनामनभिधानादित्यतस्तदर्थमाह ॥ **बोध्यमिति** ॥ **तेषामिति** ॥ लोमादीनामित्यर्थः ॥ **संयोगिद्रव्यत्वेन** ॥ शरीरसंयुक्तद्रव्यत्वेनेत्यर्थः । द्रव्यद्वयस्यैव संयोगसम्भवाल्लोम्नो न शरीरत्वमिति द्योतनाय शरीरसंयुक्तत्वाभिधानम् । यद्यप्येवमपि पुरीतति शरीरावयवनाडीविशेषे त्वगिन्द्रियाभावेन तस्यैवमपि न देहव्यापकतासम्भवः सुषुप्तिकाले ज्ञानवारणानुरोधेन पुरीतति तदनङ्गीकारात्तथापि देहव्यापकत्वं यावद्देहावयववृत्तित्वमेव विवक्षितं तच्च पुरीतति त्वगिन्द्रियाभावेऽपि स्वप्नजनकमध्यस्थनाडीविशेषस्यैव पुरीतत्वाङ्गीकारेणाक्षतमेव । पुरीतत्प्रदेशस्य नाड्यवयवत्वेऽपि शरीरावयवत्वाभावात् । न च शरीरव्यापकत्वं शरीरानिष्ठप्रतियोगिव्यधिकरणाभावाप्रतियोगित्वमेव तथा च पुरीततः शरीरावयवत्वेऽपि तदवच्छेदेन शरीरवृत्त्यभावप्रतियोगित्वेऽपि त्वगिन्द्रियस्य न शरीरव्यापकत्वानुपपत्तिरिति वाच्यम् । तथासति केशादीनां शरीरावयवत्वेऽपि क्षतिविरहेण ग्रन्थकृतां तेषां द्रव्यान्तरताव्यवस्थापनस्य वैफल्यापत्तेः । परे तु सिद्धान्तनभोभाग एव पुरीतत् । गगने त्वगभावादेव तत्र मनसोऽवस्थानदशायां ज्ञानानुत्पादः एतदभिप्रायेणैव रे रे मानस पालितं प्रतिजनुर्देहान्तरे त्वं सदा तत्कृष्णपदाम्बुजे क्षणमपि प्रस्थीयतां रे मनः । इत्थं प्रार्थितमानसं निजगृहप्रध्वंसशङ्काकुलं सिद्धामध्यवियद्गतं न च गतं तत्पादपङ्केरुहं इति प्राचीनपद्यमपि सङ्गच्छत इति प्राहुः । **सहजावरणं** स्वाभाविकावरणं चर्मरूपम् ॥ **कालादाविति** ॥ यद्यपि स्पार्शनत्वावच्छिन्नजन्यतानिवेशे न कालादावतिव्याप्तिः आवश्यकश्च लक्षणे तादृशजन्यतानिवेशः अन्यथा जन्यमात्रस्य कालोपाधितामते चक्षुष्यतिव्याप्तितादवस्थ्यात्

कत्वात् अङ्गसङ्गिसलिलशैत्याभिव्यञ्जकव्यजनपवनवत् ॥ ४३ ॥

## प्रभा.

तस्य स्पर्शस्यैवेत्यत्र एवकारार्थघटकेतरपदार्थे अन्वयः तथाच रूपादिघटकं यत् स्पर्शेतरत् तद्विषयकज्ञानाजनकत्वे सति स्पर्शविषयकज्ञानजनकत्वादित्यर्थः । अत्रापि एकसत्यन्तघटितहेतोः निर्दुष्टत्वे इतरसत्यन्तद्वयवैयर्थ्यवारणाय हेतुत्रये तात्पर्यं बोध्यम् । तत्रापि रूपादिविषयकत्वेन ज्ञानस्य निवेशे गौरवात् असंभवाच्च तादृशज्ञाननिष्ठत्वेन कार्यतानिवेशे कालोपाधिविधया जनकत्वमादाय असिद्ध्यादिवारणाय चाक्षुषत्वादिनैव ज्ञानस्य निवेशः कार्यतायां कालिकसंबन्धानवच्छिन्नत्वनिवेशश्चोचितः तथाच चाक्षुषनिष्ठतादृशसंबन्धानवच्छिन्नकार्यतानिरूपितकारणताशून्यत्वे सति स्पार्शननिष्ठलौकिकविषयतासंबन्धावच्छिन्नकार्यतानिरूपितकारणत्वादिति प्रथमो हेतुः । अनयैव रीत्या गन्धरसघटितहेतुद्वयमपि ऊह्यं त्वक्सन्निकर्षे व्यभिचारवारणाय विशेष्यदलप्रविष्टजनकतायां संयोगसंबन्धावच्छिन्नत्वं निवेशनीयम् । यद्यपि विशेष्यदळघटककार्यतायां स्पार्शनत्वावच्छिन्नत्वमेव निवेशनीयं नतु गुरुभूतसत्यन्तं तावतैव मनसि व्यभिचारवारणसंभवाल्लाघवाच्चेति एवंच नोपादेयमेव सत्यन्तत्रयं विशेषधर्मावच्छिन्नकार्यताऽभावाथैव रूपादिषु मध्ये स्पर्शस्यैवेत्युक्तमिति वक्तुं शक्यते तथापि तादृशहेतोर्व्यतिरेकिलिङ्गत्वेन दृष्टान्तान्तरस्यैव वक्तव्यतया व्यजनपवनस्य दृष्टान्तत्वप्रतिपादकमूलविरोधापत्तिरिति कार्यतायां स्पार्शनत्वावच्छिन्नमनिवेश्य सत्यन्तघटितहेतुत्रयोपन्यासः कृत इति बोध्यम् ॥ **अङ्गसङ्गिसलिलेति** ॥ स्वेद इत्यर्थः ॥ ४३ ॥

## मञ्जूषा.

गोपष्टम्भकपार्थिवद्रव्यमेव विवक्षितं तस्यैव यद्धिरण्यमुपास्यति सरेतसमेवाग्निमाधत्ते इत्युत्तरत्र श्रूयमाणं यदग्न्याधेयपूर्वाङ्गभूतं प्रक्षेपणं तदुपयोगित्वात् अस्तु वात्र तैजसमेव हिरण्यं तथापि न तस्य शरीरत्वमिति अग्निरेतसा तैजसशरीरोत्पत्तिर्नैत्यविरुद्धामिति समादधानाः कथं वाय्वादिष्ववयवसन्निवेशव्यवस्थाशून्येषु श्रुतिसिद्धव्यवायसंभव इति शङ्कानिरासकतया परंविस्त्वादिग्रन्थमवतार्य उपभोगक्षमत्वमित्यस्य व्यवाययोग्यत्वमित्यर्थमुक्त्वातदुपरि वाय्वादेः व्यवायाभ्युपगमे तदुत्पन्नस्य शरीरस्य कथं पार्थिवत्वमित्याशङ्क्य, पार्थिवभागोपष्टम्भादित्यनेन इयमप्याशङ्का समाहिता । द्यावापृथिव्यभिमानिदेवताविशेषमिथुनव्यवायक्षुभितैः, उपष्टम्भकपार्थिवभागावयवैरेव पार्थिवशरीरोत्पादस्वीकारात् । एवं तद्धिरण्यमभवदित्यत्र हिरण्यपदस्य पार्थिवद्रव्यपरत्वपक्षेऽप्यग्निरेतस्स्थानीयतेजोभागोपष्टम्भकैः अग्निस्थानीयैरेव वा पार्थिवभागैरेव तदुत्पत्तिरप्यविरुद्धा । अत एव सुवर्णतैजसत्वप्रमाणत्वेन नीलकण्ठोदाहृतां अग्नेरपत्यं प्रथमं हिरण्यं इति श्रुतिमपि न वयमनुमोदामहे आप्यशरीराधिकरणकाग्निकर्तृकव्यवायक्षुभितपार्थिवभा-

## दिनकरीयम्.

रूपादिषु मध्य इति । मनसि व्यभिचारवारणाय एवकारः । त्वगिन्द्रियसन्निकर्षे व्यभिचारवारणाय द्रव्यत्वे सतीत्यपि बोध्यम् ॥ **अङ्गसङ्गिसलिलं** स्वेदः ॥ ४३ ॥

## रामरुद्रीयम्.

न च प्रलये क्रिययैव क्षणघटिकादिव्यवस्था वाच्या तत्र तदनङ्गीकारे पुराणप्रसिद्धसृष्टिप्रलयकालयोरेकप्रमाणत्वस्य असम्भवात् प्रलये दिक्कालविभागो नास्तीत्यस्य महाप्रलयपरत्वात् तथा च महाप्रलयोपाधित्वस्य ध्वंसे स्वीकारेऽपि तदतिरिक्तक्रियाभिन्नजन्यमात्रे कालोपाधित्वकल्पने बीजाभावान्मतमेतदसङ्गतमिति वाच्यम् । तथासतीदानीन्तनदिनाद्युपाधित्वस्यानन्ताक्रियाव्यक्तिषु कल्पने गौरवात् जन्यमात्रस्य तथात्वे तु दिनमात्रस्थाप्येकघटादिव्यक्तेरेव तथात्वसम्भवेन लाघवस्यैव तन्मूलतासम्भवेन तादृशमतस्य सङ्गतत्वात् तथापि त्वक्संयोगादावतिव्याप्तिवारणायैव इन्द्रियपदमिति ध्येयम् । मूले इन्द्रियं त्वगित्यसङ्गतं त्वचश्चर्मरूपस्य इन्द्रियाधिष्ठानत्वादत इन्द्रियपदपूरणेन तस्य त्वचि स्थितमिन्द्रियमित्यर्थकतामाह ॥ **त्वगिन्द्रियमिति** ॥ **मध्य इतीति** ॥ तत्सहितैवकारेण रूपाद्यव्यञ्जकत्वस्यैव लाभेन स्पर्शव्यञ्जकत्वेऽपि त्वगिन्द्रियस्य न स्वरूपासिद्धिरिति भावः । बोध्यमित्यस्य विशेषणमित्यादिः ॥ ४३ ॥

मञ्जूषा.

गोत्पन्नत्वमात्रेण तदपत्यत्वव्यपदेशसंभवादित्यभिधाय एवं च वाय्वादिशरीराणामयोनिजत्वे इमे वै सहास्त।मित्यादिश्रुतिरेव प्रमाणं तद्व्यवायेन पार्थिवशरीरादेरेवोत्पत्तिश्रवणादित्याचक्षते । एतच्च व्याख्यानं परंत्वित्यादिमुक्तावलीग्रन्थस्वरसानुरोधि । शरीरमयोनिजामित्यनेन व्यवायाभावसंभावनायां शरीरमयोनिजमेव किन्तु व्यवाययोग्यता परमस्तीति प्रतिपादयितव्यत्वादिति ध्येयम् ॥ **जलादीति** ॥ **प्राधान्यादिति** ॥ प्राधान्यमुपादानकारणत्वम् ॥ **अत्रेति** ॥ अत्र त्वगिन्द्रिये यो विशेषः अधिष्ठानादिः ॥ **शरीरव्यापकमिति** ॥ नचैवं नखरोमकेशानां त्वगिन्द्रियानाधारत्वादसंभव इति वाच्यं तेषां संयोगिद्रव्यत्वेन शरीरत्वाभावात् । मूलस्थस्य त्वगिन्द्रियमित्यस्य त्वचि स्थितमिन्द्रियमित्यर्थः । एतेन देहसहजावरणं त्वगित्युच्यते तच्च पार्थिवं प्रत्यक्षसिद्धं च एतच्च नेन्द्रियं नच वायवीयं इति परास्तम् । त्वगिन्द्रियस्य लक्षणमाह स्पर्शेतीत्यटीकत नीलकण्ठः । अत्र त्वगिन्द्रियस्य मुक्तावल्यामप्रक्रान्तत्वात् अत्रेति सर्वनाम्ना कथं तस्य परामर्शः । किंचात्रेत्यस्य त्वगिन्द्रिये इत्येव यद्यर्थःस्यात् तर्हि विषयवायोः परामर्शो न स्यात् तथाच पार्थिवविषयादितो वायुविषये वैलक्षण्यं मूलोपदर्शितं अनवतारितमेव स्यात् । अथ यथा पृथिव्यादौ असौ विषय इति प्रतिपादितं तथा वायावप्यसौ विषय इत्येतावदेव प्रतिपादितं नतु ततोऽधिकं किंचिन्मूले प्रतिपादितमस्ति नत्वेवं त्वगिन्द्रिये पार्थिवेन्द्रियादिष्वप्रतिपादितस्य अधिष्ठानविशेषादेः वायवीयेन्द्रिये देहव्यापि त्वगिन्द्रियमित्यनेन प्रतिपादितत्वात् । अतोऽत्रेत्यनेन त्वगिन्द्रियमात्रपरामर्शो युक्त इति चेत् तर्हि यथा पृथिवीजलयोः इदमिन्द्रियमिति प्रतिपादितं तथा तेजस्यपि तावत एवार्थस्य इन्द्रियं नयनमित्यनेन प्रतिपादनात् तत्राप्यत्र यो विशेषस्तमाहेत्यवतारणं विश्वनाथस्य विरुध्येत । तस्मादत्र वायौ यो विशेष इन्द्रिये त्वक्त्वं विषये प्राणादित्वमित्येवंरूपः पृथिव्यादिव्यावृत्तधर्मस्तमाहेत्येव व्याख्येयम् । यदपि मूलस्थस्य त्वगिन्द्रियमित्यस्य त्वचि स्थितमिन्द्रियमित्यर्थमभिधाय एतेनेत्यादिना तादृशार्थाभिधानप्रयोजनकथनं तदपि हेयमेव । तथाहि घ्राणरसनचक्षुस्त्वक्श्रोत्रशब्दा इन्द्रियेषु तदधिष्ठानचर्मपुटकेषु प्रयुज्यन्ते गन्धग्राहकं घ्राणमिति दीर्घमस्य घ्राणमिति तथा च यथा त्वक्शब्दस्य देहसहजावरणमादायेह शङ्का प्रवृत्ता तथा घ्राणादौ कुतो न प्रवर्तेत तद्वारणाय तत्राप्यधिष्ठानविशेषः कुतो न मूले प्रतिपादितः । किंच इन्द्रियं घ्राणलक्षणं इन्द्रियं रसनमित्यादौ इन्द्रियशब्देन प्रक्रान्तपार्थिवादीन्द्रियपरामर्शे पार्थिवेन्द्रियं घ्राणं जलीयेन्द्रियं रसनं इत्यादिरर्थः । तदनुसारेण त्वगिन्द्रियमित्यस्य व्यस्ततामभ्युपेत्य इन्द्रियं वायवीयं इन्द्रियं त्वगात्मकमित्येवार्थो युक्तः । अन्यथा प्रक्रमभङ्गापत्तेः । वायवीयेन्द्रियं किमिति जिज्ञासाया अनिवृत्त्यापत्तेश्च । नहि चर्मणि स्थितमिन्द्रियं देहव्यापकमित्युक्त्या तादृशशङ्का निवर्तते । नच समानमस्मत्पक्षेऽपीन्द्रियपदं वायवीयेन्द्रियपरमेव तथा च त्वचि स्थितं वायवीयेन्द्रियं देहव्यापकमित्युक्त्या तादृशजिज्ञासा निवर्तत एव किमिति जिज्ञासाविषयतावच्छेदकधर्मस्य वायवीयेन्द्रिये देहव्यापीत्यनेन लब्धत्वादिति वाच्यं पृथिव्यादौ पार्थिवेन्द्रियत्वादिव्याप्यधर्मस्येवेहापि वायवीयेन्द्रियत्वव्याप्यधर्मस्यैव जिज्ञास्यतावच्छेदकतया चर्मसाधारणदेहव्यापित्वोक्त्या तज्जिज्ञासाया अनिवृत्तेः नहि पार्थिवेन्द्रियं किमिति जिज्ञासा रूपवत्पार्थिवेन्द्रियमित्यतो निवर्तते अथात्र पृथगिन्द्रियशब्दमध्याहृत्य देहव्यापीन्द्रियं चर्मस्थितं वायवीयेन्द्रियमित्यर्थकथनाद्व्याप्यधर्मलाभ इति चेदस्त्वेवं रीत्या व्याप्यधर्मलाभः । तथापि पूर्ववन्नित्यतादीत्यतिदेशेन वायवीयेन्द्रियत्वमेवोपतिष्ठते नतु चर्मस्थितत्वविशेषितम् । ततश्च वायवीयेन्द्रियं किमित्येव जिज्ञासा जायेत नतु चर्मस्थितं वायवीयेन्द्रियं किमिति तत्र चेदमनुत्तरं अथाध्याहृतस्येन्द्रियमित्यस्य वायवीयमिन्द्रियमित्यर्थः । त्वगिन्द्रियमित्यत्र इन्द्रियपदन्तु यथाश्रुतपरमेव तथाच चर्मस्थितेन्द्रियं वायवीयेन्द्रियमित्यर्थः चर्मस्थितत्वं चर्मव्यापकत्वं तेन घ्राणादेश्चर्मस्थितत्वेऽपि न क्षतिः देहव्यापीति च पृथग्विधेयमिति न कोऽपि दोष इति चेन्महानयं क्लेशः । वायवीयेन्द्रियत्वं हि नात्रुपदमिह कण्ठोक्तं किंत्वातिदेशिकं । तदेव चेहाध्याह्रियमाणं क्लिश्नाति प्रेक्षावतः । आस्तां वा

## मञ्जूषा.

यथाकथंचिदिहान्वयः । तथापि त्वचि स्थितमिन्द्रियमित्यर्थकथनमनुचितमेव । घ्राणादिशब्दो हि यद्यपीन्द्रियाधिष्ठानचर्मपुटकेषु लौकिकैः प्रयुज्यते तथापि तान्त्रिकव्यवहार इन्द्रियेष्वेव सुवर्णव्यवहार इव तेजसि । तद्यथा शरीरव्यापकं स्पर्शग्राहकमिन्द्रियं त्वक् त्वचो योगो मनसा ज्ञानकारणमित्यादिः । चर्म तु न त्वक्शब्देन व्यवह्रियते किंतु चर्मशब्देन सुवर्णोपष्टम्भकभाग इव पीतिमगुरुत्वाश्रयादिशब्दैः । यथा सुषुप्त्यनुरोधाच्चर्ममनस्संयोगस्य हेतुत्वमित्यादिः । तथाच त्वगिन्द्रियमित्यत्र परं त्वक्शब्देन कथं चर्मोपाददीत विश्वनाथः कथं वा त्वगिन्द्रियमित्यस्य व्यस्तत्वे त्वक्शब्देन चर्मोपादाय तत्रेन्द्रियत्वाद्यभावशङ्का कथंवा तस्य समस्तत्वे त्वक्शब्देनेन्द्रियमादाय तत्र स्थितमिन्द्रियान्तरमप्रसिद्धं घ्राणादेर्नासाग्राद्यवच्छेदकत्वगिन्द्रियस्थितेस्स्वे तु तस्य वायवीयत्वाभावादसङ्गतिरिति शङ्कावतरति स्वारसिकी त्वियमेव शङ्का त्वक्शब्दस्येन्द्रिय एव तान्त्रिकव्यवहारादिति दिक् । नैकान्ततश्चर्मैकायतनत्वं त्वगिन्द्रियस्य हेतुः प्रभवति साधारणत्वात् । कथमन्यथा क्षतव्रणादिपतितमक्षिकादिस्पार्शनप्रत्यक्षमिति बोधश्च ॥ **मूले देहव्यापीति** ॥ देहपदं देहत्वपरम् । तथाच देहत्वनिष्ठस्वरूपसंबन्धावच्छिन्नव्याप्यतानिरूपितसंयोगसंबन्धावच्छिन्नव्यापकतावदित्यर्थः । अथवा देहपदं शरीरपरमेव तादात्म्यसंबन्धो व्याप्यतावच्छेदकत्वेन विवक्षितः । पक्षद्वयमपि देहावयवानां द्व्यणुकपर्यन्तानामपि देहत्वमित्यभिप्रायेण । नातो देहव्यापित्वस्य घ्राणादिसाधारण्यम् । अथवात्र देहपदेन देहावयवत्वं तद्विशिष्टं वा विवक्षणीयम् । तत्र प्रथमपक्षे स्वरूपसंबन्धो व्याप्यतावच्छेदकः द्वितीये तादात्म्यम् । वस्तुतस्तु देहपदं यथाश्रुतपरमेव । समवायो व्याप्यतावच्छेदकत्वेन विवक्षितः । नातो घ्राणादिसाधारण्यम् । तत्र शरीरव्यापकमिति स्थानकथनमात्रं । लक्षणन्तु स्पर्शग्राहकत्वे सतीन्द्रियत्वमेवेति नीलकण्ठो मन्यते । शरीरव्यापकत्वस्य तु लक्षणत्वं न संभवति । तत्तच्छरीरव्यापकत्वस्य त्वगिन्द्रियान्तरव्यावृत्तत्वात् शरीरत्वविशिष्टव्यापकत्वस्य च कुत्राप्यभावात् व्यापकतावच्छेदकधर्मवत्त्वस्य चेन्द्रियान्तरसाधारणत्वादिति तदभिप्रायः । शरीरव्यापकत्वे सतीन्द्रियत्वमेकं लक्षणं स्पर्शग्राहकत्वे सतीन्द्रियत्वमपरमित्यस्मद्गुरुचरणाः । नच शरीरव्यापकत्वस्य लक्षणत्वे उक्तदोष इति वाच्यं शरीरनिष्ठैकमात्रवृत्तिधर्मावच्छिन्नव्याप्यतानिरूपितव्यापकत्वस्य शरीरत्वविशिष्टव्यापकतावच्छेदकेन्द्रियविभाजकोपाधिमत्त्वस्य वा विवक्षितत्वेनोक्तदोषाभावात् ।अथात्र मतद्वयेऽपि स्पर्शग्राहकत्वे सतीन्द्रियत्वं कालविधया स्पर्शप्रत्यक्षकारणीभूते घ्राणादावतिव्याप्तं तथा प्रत्यक्षत्वावच्छिन्नकार्यतानिरूपितेन्द्रियत्वावच्छिन्नकारणतामादायाप्यतिव्याप्तिः एवं जन्यज्ञानत्वावच्छिन्नकार्यतानिरूपितमनस्त्वावच्छिन्नकारणतामादाय मनस्यतिव्याप्तिरिति चेदुच्यते । स्पार्शनत्वावच्छिन्नकार्यतैवास्मद्गुरुचरणैर्निवेशिता अतस्तन्मते न दोषप्रसक्तिः । इन्द्रियत्वदळप्रयोजनन्तु त्वक्सन्निकर्षोद्भूतस्पर्शाद्यतिव्याप्तिवारणं नीलकण्ठमते तु स्पार्शनत्वावच्छिन्नकार्यता न निवेशयितुं शक्या कालाद्यतिव्याप्तिवारणस्येन्द्रियत्वनिवेशप्रयोजनतया तेन कथनात् । अत एव कार्यतायां जन्यत्वानवच्छिन्नत्वमपि न तदभिमतं अपितु स्पन्दस्यैव कालोपाधित्वं जन्यप्रत्यक्षत्वावच्छिन्नं प्रति नेन्द्रियत्वेन कारणत्वमित्यभिप्रायेण घ्राणाद्यतिव्याप्तिवारणं इन्द्रियपदस्य बहिरिन्द्रियपरतया च मनस्यतिव्याप्तिवारणं कर्तव्यम् । मुक्तावळ्यां शरीरव्यापकं स्पर्शग्राहकमिन्द्रियं त्वगित्यनन्तरं आत्मन्यतिव्याप्तिवारणाय शरीरमात्रव्यापकमिति चर्मण्यतिव्याप्तिवारणाय स्पर्शेतीति क्वचित् पाठस्तिष्ठति । अत्र पक्षे शरीरमात्रव्यापकत्वे सति स्पर्शग्राहकत्वं लक्षणं । अथात्र कल्पे मात्रपदमधिकं निविष्टं तच्च व्यर्थं समवायसंबन्धावच्छिन्नशरीरनिष्ठव्याप्यतानिरूपितसंयोगसंबन्धावच्छिन्नव्यापकत्वस्यात्मन्यसत्त्वात् ; । न ह्यात्मप्रतियोगिकसंयोगोऽस्ति येन संयोगसंबन्धेन तस्य व्यापकत्वं स्यात् मात्रपदानिवेशे वा कथं तद्व्यावर्तनमात्मनश्शरीरेतरं प्रत्यपि संयोगेनाव्यापकत्वात् । स्पर्शग्राहकत्वविशेषणस्य चर्मातिव्याप्तिवारकत्वाभिधानमप्ययुक्तं चर्मणः शरीरसमवायिमेदःप्रभृत्यवयवसंयोगित्वेनातिव्याप्तिप्रसक्त्यभावात् उच्यते शरीरावयवत्वचोस्संयोगः किं शरीरप्रतियोगिकः उत त्वक्प्रतियोगिक इति केनेदं निश्चेतुं शक्यम् । अतः

प्राणादिस्तु महावायुपर्यन्तो विषयो मतः ।

विषयं दर्शयति ॥ प्राणादिरिति ॥ यद्यप्यनित्यो वायुश्चतुर्विधस्तस्य चतुर्थः प्राणादिरित्युक्तमाकरे तथापि संक्षेपादेव त्रैविध्यमुक्तम् । प्राणस्त्वेक एव हृदादिस्थानवशात् क्रियाभेदाच्च नानासंज्ञां लभते ॥

## प्रभा.

**आकर इति** ॥ प्रशस्तपादभाष्य इत्यर्थः । ननु कथं तर्हि अपानादिव्यवहार इत्यत आह ॥ **हृदादीति** ॥ हृदि प्राणो गुदेऽपान इत्यादिकोशप्रतिपादितस्थानभेदादित्यर्थः । मुखनासिकाभ्यां निष्क्रमणप्रवेशनात् प्राणः मलादीनां अधोनयनात् अपानः आहारेषु पाकार्थं वह्नेः प्रकाशनात्समानः ऊर्ध्वं नयनादुदानः नाडीमुखेषु विततनाद्व्यानः इति क्रियाभेदाच्च संज्ञापञ्चकं लभते । नहि संज्ञाभेदमात्रेण संज्ञिभेदः संभवति तथासति पाकक्रियापाठक्रियागानक्रियाकर्तरि एकस्मिन् पुरुषे पाचकपाठकगायकव्यवहारभेदात् व्यवहर्तव्यभेदापत्तेरिति भावः ॥ इति मुक्तावलीप्रभायां द्वितीयपरिच्छेदे वायुग्रन्थः समाप्तः ॥

## मञ्जूषा.

शरीरव्यापकत्वं सर्वावयवावच्छेदेन शरीरसंयोगित्वं शरीरीयसर्वावयवसंयोगित्वमेव वा । तत्संयोगित्वं तद्वृत्तिसंयोगवत्त्वम् । तच्चात्मन्यपि गतमतो मात्रपदम् । तदर्थश्च न शरीरेतरासंयोगित्वं त्वचोऽपि तादृशघटादिसंयोगित्वात् । किंतु शरीरातिरिक्तस्य महतः प्रकृष्टमहत्त्ववतो वा द्रव्यस्य यावद्भिरवयवैर्युगपदसंयोगित्वरूपं शरीरेतराव्यापकत्वम् । तथाच यथोपदर्शितशरीरेतराव्यापकत्वे सति शरीरव्यापकत्वे सति स्पर्शग्राहकत्वं लक्षणम् । आत्मवारणाय प्रथमदलं मनोवारणाय द्वितीयं चर्मवारणाय तृतीयं । एतच्च चर्मणस्सर्वावयवसंयोगित्वमस्तीत्यभिप्रायेण । अन्यथा पुनस्सर्वशरीरावयवसंयोगिनि ज्वराद्यूष्मण्यतिव्याप्तिवारणं तत्प्रयोजनमिति बोध्यम् । अथवा शरीरावयवभिन्नो यश्शरीरासंयुक्तदेशः तदसंयोगित्वं शरीरमात्रव्यापकत्वम् । नहि चर्मणस्त्वचो वा तादृशदेशसंयोगित्वमस्ति । मनस्तु शरीरासंयुक्तैरान्तरपवनपरमाणुभिरेवान्तः कदाचित्संयुज्यत इति न तत्रातिव्याप्तिः । स्पर्शग्राहकत्वं च परकीयस्पर्शसाक्षात्कारजनकत्वम् । अतो न स्वीयस्पर्शग्राहकतामादाय चर्माद्यतिव्याप्तितादवस्थ्यं द्रव्यत्वस्य संयोगित्वस्य वा विशेषणत्वस्वीकारात् त्वक्सन्निकर्षाद्यतिव्याप्तिर्नेत्यलमधिकेन । घ्राणरसननयनानां प्रागलक्षणान्यनभिधाय त्वगिन्द्रियस्येदानीं लक्षणाभिधाने इच्छैव नियामिका ॥ **अङ्गसङ्गीति** ॥ यद्यपि सर्वस्यैव वायोः प्रायशस्त्वक्संयुक्तसमवायरूपसन्निकर्षघटकतया स्वीयस्पर्शव्यञ्जकत्वेन दृष्टान्तत्वसंभवः एवमनुभूयमानारोपजनकदोषविधया वस्त्वन्तरे स्वीयस्पर्शव्यञ्जको वायुरिति स्वेदस्पर्शव्यञ्जकवायुविशेषपर्यन्तानुधावनं व्यर्थं तथापि शिष्यप्रतिपत्तिसौकर्याय तथोक्तमिति बोध्यं यद्वा स्वीयस्पर्शव्यञ्जके ऊष्माख्यतेजोविशेषे व्यभिचारवारणाय परकीयस्पर्शाव्यञ्जकत्वमेव हेतुर्वाच्य इत्यभिप्रायेण वायुविशेषपर्यन्तानुधावनम् ॥ ४३ ॥

## दिनकरीयम्.

**आकरे** प्रशस्तपादभाष्यादौ ॥ **प्राणस्त्वेक एवेति** ॥ कथं तर्ह्यपानादिव्यवहार इत्यत आह ॥ **स्थानवशादिति** ॥ हृदि प्राणो गुदेऽपानः समानो नाभिसंस्थितः । उदानः कण्ठदेशस्थो व्यानः सर्वशरीरगः इति स्थानभेदादित्यर्थः ॥ **क्रियाभेदाच्चेति** ॥ मुखनासिकाभ्यां निष्क्रमणप्रवेशनात्प्राणः मलादीनामधोनयनादपानः आहारेषु पाकार्थं वह्नेः समुन्नयनात्समानः उदूर्ध्वं नयनादुदानः नाडीमुखेषु विततनाद्व्यान इति क्रियाभेदाद्धि पञ्चसंज्ञा लभते न तु संज्ञाभेदेन संज्ञिभेद इति भावः ॥ ॥ इति वायुग्रन्थः ॥

## रामरुद्रीयम्.

हृदि प्राण इत्यादेः हृन्मात्रावच्छिन्न इत्यादिरर्थः । यथाश्रुते व्यानस्यापि प्राणत्वापत्तिः । समुन्नयनमुद्दीपनं वह्नेर्वायुसखत्वेन वायुसहकारेणैव तदभिवृद्धिरिति भावः । विततनादन्नरसस्य विस्तारणादित्यर्थः ॥

॥ इति वायुग्रन्थः ॥

## मञ्जूषा.

**संक्षेपादिति ॥** लाघवादित्यर्थः । अयमभिप्रायः । अनित्यवायुश्चतुर्विधः शरीरेन्द्रियविषयप्राणभेदादिति विभागे विभाजकतावच्छेदकं विषयत्वं न शरीरेन्द्रियभिन्नत्वे सति भोगसाधनत्वरूपं तस्य प्राणसाधारणत्वात् किन्तु प्राणभिन्नत्वविशेषितमेव तद्वाच्यमिति गौरवम् । अन्यथा विभाजकतावच्छेदकीभूतविषयत्वशरीरे व्यजनवायुभिन्नत्वमपि निवेश्य व्यजनवायोः पञ्चत्वेन विभागोपेक्षा निर्बीजा स्यात् । नचैवं तत्र शरीरेन्द्रियभिन्नत्वं निवेश्य तयोः पृथक्करणमप्ययुक्तमिति वाच्यं इदं शरीरं इदमिन्द्रियं अयं च ताभ्यामन्यो विषय इति परिज्ञानाय तथोक्तत्वात् । यद्यपि इदं शरीरं इदं इन्द्रियं अयं प्राणोऽयं च तेभ्योऽन्यो विषय इति परिज्ञानाय प्राणभिन्नत्वमपि निवेशयितुं युक्तम् । नहि व्यजनवायुत्वतुल्यं प्राणत्वं येन तदनावश्यकपरिज्ञानं स्यात् । प्राणत्वं हि श्रुतिस्मृतिपुरुषुष्टमवश्यविज्ञेयम् । तथापि यथा शरीरत्वमिन्द्रियत्वं तदन्यविषयत्वं च पृथिव्यप्तेजोवायुसाधारणं न तथा प्राणत्वं किन्तु सिन्धुत्वाग्नित्वादितुल्ययोगक्षेमं विषयेषु परिगणनादेव सुज्ञेयं न विभाजकतावच्छेदकतयावश्यवक्तव्यं अन्यथा जलादौ सिन्धुत्वादेरपि तथात्वस्य वक्तव्यतया तदुपेक्षाया निर्बीजतापत्तेरिति । अत्र वदन्ति । पृथिव्यादीनां त्रेधा विभागोऽनुपपन्नः इन्द्रियस्यालीकत्वात् । तथाहि मनोऽतिरिक्तेन्द्रियसद्भावे मानाभावः । नासाग्राद्यवस्थितेन मनसैव घ्राणजादिप्रत्यक्षजननसंभवात् । घ्राणजादिप्रत्यक्षे मनसस्तव मते घ्राणादिभिरिव मन्मते नासाग्रादिभिस्संयोगस्य कारणतास्वीकारेणातिप्रसङ्गभङ्गात् । कारणैक्येऽपि नासाग्रावस्थितत्वविशिष्टमनस्त्वाद्यात्मककारणतावच्छेदकीभूतघ्राणत्वादिभेदेनैव घ्राणजादिप्रत्यक्षाणां मिथो वैलक्षण्यनिर्वाहात् वस्तुतस्तु सर्वत्र मनस्त्वमेव कारणतावच्छेदकं कार्यतावच्छेदकं तु घ्राणजत्वादिकं जन्यप्रत्यक्षत्वमेव वा नासाग्रमनस्संयोगादीनां विशेषसामग्रीत्वाङ्गीकारेणोक्तदोषाभावात् अथैवमसन्निकृष्टगन्धादिप्रत्यक्षापत्तिः । नच घ्राणजादौ नासाग्रमनस्संयोगादीनां न हेतुता किन्तु नासाग्रावच्छेदेन यन्मनस्संयुक्तं तत्समवायादेरेव अतो न दोष इति वाच्यम् । एवमप्यणोस्तस्य युगपन्नानावस्तुसंयोगासंभवेन समूहालम्बनप्रत्यक्षमात्रविलोपप्रसङ्गात् चाक्षुषस्थले मनसो गोलकाग्रावच्छेदेन विषयसंयोगस्यासंभावितत्वाच्च । उच्यते । समूहालम्बनलौकिकप्रत्यक्षमसिद्धमेव किंत्वविलम्बोत्पादमात्रेण नानाविषयाणां शाखाशीतमयूखयोरिव युगपदुल्लेखाभिमानमात्रम् । तत्र च घ्राणजं रासनं त्वाचं च नासाग्राद्यवच्छेदेन मनसो विषयसंयोगे सत्येव भवति चाक्षुषं तु गोळकान्निर्गतस्य मनसो विषयसंयोगे । आस्तां वा घ्राणजादावपि क्वचित् गोलकान्निर्गतस्यैवास्य विषयसंयोगेनापि कारणत्वम् । स्यादेतत् । एकदेशमात्रदृष्टस्पृष्टयोर्वस्तुनोः परिमाणविशेषग्रहणाभावात् भूयोऽवयवावच्छेदेन चक्षुस्त्वचोर्विषयसंयोगस्तत्र कारणमिति वक्तव्यं तच्च न सङ्गच्छते मनसोऽणुत्वेन भूयोऽवयवावच्छेदेन विषयसंयोगासंभवात् । नैष दोषः । यादृशयादृशपरिमाणग्रहे यावद्यावदवयवावच्छिन्नेन्द्रियसंयोगस्य हेतुतां त्वमिधत्से तावद्भिरेवावयवैः प्रत्येकमवच्छिन्नानां गोलकनिर्गमनोत्तरकालीनानामव्यवहितानां मनस्संयोगानां चरमस्य संयोगस्य च तत्र हेतुताया अस्माभिरभिधानात् । एवमन्येऽपि दोषाः शक्यपरिहाराः । घ्राणेन्द्रियं पार्थिवमित्यादीन्यनुमानानि त्वप्रयोजकानि मनष्षष्ठानीन्द्रियाणीत्यादिस्मृतयश्च घ्राणजादिकार्यभेदाभिप्रायाः । वस्तुतस्तु नासाग्रमेव घ्राणं जिह्वाग्रमेव रसनं कृष्णताराग्रमेव चक्षुः चर्मैव त्वक् शरीरमेव वा तत्तन्मनस्संयोगः तत्तज्जन्यप्रत्यक्षे कारणं तथा विषयेषु तत्तत्संयोगोऽपि चाक्षुषे तु चक्षुस्संयोगो न कारणं किन्तून्मीलनं सिद्धान्तिनोऽपि चक्षुर्विषयसंयोगहेतुतयोन्मीलनस्यावश्यकत्वात् । अथोन्मीलनस्य जन्यतावच्छेदकं यदि सामान्यतो द्रव्यचाक्षुषत्वं तदा सर्वेषामेव द्रव्याणामविशेषेण चाक्षुषापत्तिः । यदि तत्तन्मीलनव्यक्तेस्तद्विषयकचाक्षुषत्वं तदाननुगमः मम तु विषयतया द्रव्यचाक्षुषं प्रति चक्षुस्संयोगस्य समवायेन हेतुताङ्गीकारान्न दोषः । उच्यते यद्यपि चाक्षुषकारणता तवानुगता तथापि चक्षुषस्तत्तत्संयोगं तत्तदनुकूलतत्तत्क्रियाविशेषं प्रति चोन्मीलनस्य तत्तद्व्यक्तित्वेनैव कारणता वाच्येति तदंशे साम्यमेव । नह्युन्मीलनस्य सामान्यतः पुरोवर्तिदेशचक्षुस्संयोगत्वं जन्यतावच्छेदकं भवति पुरोवृत्तित्वस्य दुर्वचत्वात् पार्श्ववर्तिनोऽपि वस्तुनश्चक्षुस्संयोगाच्च । ततश्चाक्षुषं प्रति चक्षुस्संयोगस्य का-

**आकाशस्य तु विज्ञेयः शब्दो वैशेषिको गुणः ॥ ४४ ॥**

आकाशं निरूपयति ॥ **आकाशस्येति** ॥ आकाशकालदिशामेकव्यक्तिकत्वादाकाशत्वादिकं न जातिः किंतु आकाशत्वं शब्दाश्रयत्वम्। वैशेषिक इति कथनं तु विशेषगुणान्तरव्यवच्छे-

**प्रभा**

**आकाशेति** ॥ यद्यपि कालत्वदिक्त्वयोः जातित्वनिराकरणं तत्तन्निरूपणावसरे कर्तव्यं तथापि प्रसङ्गात् लाघवायात्रैवाभिहितमिति ध्येयम् ॥ **एकैकव्यक्तित्वादिति** ॥ एकव्यक्तिमात्रवृत्तित्वादित्यर्थः अनेकसमवेतत्वाभावादिति भावः। ननु तस्य जातित्वाभावे किं तत्स्वरूपमित्यत आह ॥ **किं त्विति** ॥ तथाच शब्दाश्रयत्वं आकाशलक्षणमिति भावः। नन्वेवं सति शब्दस्य विशेषत्वकथनं व्यर्थमत आह ॥ **वैशेषिक इति** ॥ **विशेषगुणान्तरव्यवच्छेदायेति** ॥ आकाशस्य शब्द एव विशेषगुण इति निर्णयायेत्यर्थः। इत्थंच श-

**मञ्जूषा.**

रणता तवाधिका अपिच चन्द्रतारादिषु चाक्षुषानुरोधेन चक्षुस्संयोग आवश्यकः। तावतीञ्च पदवीं प्रसरच्चक्षुरन्तरालवर्तिभिर्वस्तुभिरसंयुज्य कथं चन्द्रतारादिभिस्संयुज्यते। तथाचान्तरालिकवस्तुविशेषसंयोगव्यक्तिषून्मीलनानां हेतुताकल्पनं तवाधिकम्। किंचान्तरालिकवस्तूनां चाक्षुषवारणाय तत्र दूरत्वस्य प्रतिबन्धकता.

**दिनकरीयम्.**

**आकाशेति** ॥ कालत्वं दिक्त्वं न जातिरित्यग्रे वक्तव्यं भवति तल्लाघवेनात्रैव प्रसङ्गाद्युगपदाभिहितम् ॥ **न जातिरिति** ॥ अनेकसमवेतत्वाभावादिति शेषः। तेनैकव्यक्तित्वस्य जातित्वाभावहेतुत्वे वैयधिकरण्यमिति प्रत्युक्तम् ॥ **किंत्विति** ॥ आश्रयता चात्र समवायेन विवक्षिता तेन कालस्य जगदाधारत्वेन शब्दाश्रयत्वेऽपि न क्षतिः। मूले वैशेषिकपदस्य वैयर्थ्यमाशङ्कयाह ॥ **वैशेषिक इतीति** ॥ इत्थं च शब्द इति मूलं सा-

**रामरुद्रीयम्.**

ननु आकाशनिरूपणावसरे आकाशत्वं न जातिरित्येव वक्तव्यं कालत्वदिक्त्वयोस्तत्तन्निरूपणावसर एव जातित्वनिषेधौचित्यात् तत्किं मुक्तावल्यामिदानीमेव त्रयाणां जातित्वनिराकरणमारभ्यत इत्याशङ्कायामाह ॥ **कालत्वमित्यादि** ॥ **अग्रे** तत्तन्निरूपणावसरे। तथा च न जातिरित्यस्य वारत्रयलेखने ग्रन्थगौरवं स्यादिति भावः। तदित्यव्ययं तस्मादित्यर्थः। ननु तथाप्यसङ्गताभिधानं दुर्वारमेवेत्यत आह ॥ **प्रसङ्गादिति** ॥ स्मृतस्योपेक्षानर्हत्वं प्रसङ्गः एकहेतुकानुमितिविषयत्वेन तयोरपि स्मृतत्वादिति भावः। तथा च प्रसङ्गसङ्गत्या तदभिधानान्नार्थान्तरतापत्तिरिति बोध्यम्। मूले आकाशादीनामेकव्यक्तिकत्वादिति आकाशत्वादेर्जातित्वाभावे हेतुरुक्तस्तत्र हेतुसाध्ययोर्वैयधिकरण्यमाशङ्क्य हेतुं पूरयति ॥ **अनेकेति** ॥ यद्यपि आकाशादीनामाकाशत्वादिकमेकव्यक्तिकत्वान्न जातिरित्यन्वयः तत्र च एकैव व्यक्तिराश्रयो यस्येति बहुव्रीहौ कप्रत्ययः तस्य भावस्तत्त्वं तस्मादित्यर्थः। आश्रये एकत्वं च स्वप्रतियोगिवृत्तिद्रव्यविभाजकोपाधिमत्त्वस्वाश्रयत्वोभयसंबन्धेन भेदविशिष्टो यस्तदन्यत्वं एतादृशविशिष्टो घटादिर्न त्वाकाशादिः तदाश्रयकत्वं तदाश्रितत्वमिति यावत्। एवंरीत्या मूलोक्तहेतुरपि परिष्कर्तुं शक्यस्तथापि एतादृशहेतौ गौरवमालोचयताऽनेकानुयोगिकसमवायप्रतियोगिकत्वाभावरूपहेतुः पूरितः अनेकत्वं नैकत्वदभिन्नसङ्ख्या तथासति गुणे गुणानङ्गीकारेण गुणत्वजातावपि तथाविधसङ्ख्यावदनुयोगिकसमवायप्रतियोगिकत्वाभावसत्त्वेन व्यभिचारापत्तेः किंतु अपेक्षाबुद्धिविशेषविषयत्वं तच्च यद्यपि अपेक्षाबुद्धीनामननुगतत्वादननुगतं यत्किञ्चिदेकबुद्धिव्यक्तिविषयानुयोगिकसमवायप्रतियोगिकत्वाभावस्य घटत्वादिजातिसाधारण्येन हेतुत्वमसम्भवदुक्तिकं तथापि स्वप्रतियोगिसमवेतत्वस्वाश्रयसमवेतत्वोभयसम्बन्धेन भेदविशिष्टान्यत्वादित्यर्थे तात्पर्यान्न दोषः। एतावतापि द्रव्यविभाजकोपाधिघटितमूलोक्तहेत्वपेक्षया लाघवानपायात्। अत्र च लाघवात्समवेतत्वाभावस्यैव हेतुता युक्तेति नाशङ्कनीयम्। शब्दसमवायिकारणत्वापेक्षया लाघवेन शब्दस्यैव आकाशत्वरूपतया स्वरूपासिद्धिप्रसङ्गादित्यवधेयम् ॥ **वैयधिकरण्यमितीति** ॥ इदं च एकव्यक्तिरेवैकव्यक्तिकं तस्य भावस्तत्त्वमिति व्युत्पत्त्या एकव्य-

दाय। एतेन प्रमाणमपि दर्शितं तथाहि शब्दो गुणश्चक्षुर्ग्रहणायोग्यबहिरिन्द्रियग्राह्यजाति–

**प्रभा.**

ब्द इति मूलं सावधारणमिति ज्ञेयम्। ननु शब्दस्य विशेषगुणत्वनिर्णयाभावे का क्षतिरत आह ॥ **एतेनेति** ॥ शब्दस्य विशेषगुणत्वकथनेनेत्यर्थः ॥ **प्रमाणमिति** ॥ आकाश इत्यादिः। अनुमानप्रमाणमित्यर्थः ॥ **दर्शितमिति** ॥ सूचितमित्यर्थः। तथाच शब्दः पृथिव्याद्यष्टद्रव्यातिरिक्तद्रव्यसमवेतः अष्टद्रव्यासमवेतत्वे सति द्रव्यसमवेतत्वादित्यनुमानं आकाशे प्रमाणमिति भावः। अत्र विशेष्यासिद्धिनिरासाय द्रव्यसमवेतत्वं साधयितुं तत्साधकहेतुमादौ साधयति ॥ **तथाहीत्यादिना** ॥ **चक्षुर्ग्रहणायोग्येति** ॥ चाक्षुषनिरूपितलौकिकविषयताशून्येत्यर्थः ॥ **बहिरिन्द्रियग्राह्येति** ॥ मनोभिन्नेन्द्रियजन्यज्ञाननिरूपितलौकिकविषयतावदित्यर्थः। मानसानिरूपितलौकिकविषयतावदिति यावत्। तेनेन्द्रियत्वस्यानुगतस्याभावेन तद्घटितेन्द्रियजन्यप्रत्यक्षत्वस्याप्यननुगतत्वात् गौरवाच्च कथं हेतुत्वमिति शङ्का निरस्ता। तथाच चाक्षुषनिरूपितलौकिकविषयताशून्यमानसानिरूपितलौकिकविषयताविशिष्टजातिमत्त्वादिति हेतुः फलितः। नच वायोस्स्पार्शनाङ्गीकर्तृनवीनमते वायुत्वजातेरपि तादृशतया तादृशहेतुमति वायौ तादृश–

**मञ्जूषा.**

वाच्या दूरत्वं च नानुगतं निर्वक्तुं शक्यम्। तथाच दूरत्वस्यानन्तप्रतिबन्धकताकल्पनं तवाधिकम्। मम तु तत्तदुन्मीलनविशेषाणां दूरस्थवस्तुविशेषचाक्षुषे हेतुत्वाकल्पनादेवोपपत्तौ न तत्र दूरत्वस्य प्रतिबन्धकता। अथोन्मीलनस्यैव चाक्षुषहेतुत्वेऽन्धस्य कुतो न चाक्षुषमिति च तत्तत्पुरुषीयोन्मीलनव्यक्तीनां चाक्षुषकारणत्वाकल्पनात् रोगविशेषस्य चाक्षुषप्रतिबन्धकत्वकल्पनाद्वा। एवमन्येऽपि दोषा निपुणतरपरिशीलनपरिहार्याः। विस्तरभयाद्विरम्यत इति तावेतौ द्वावपि पक्षौ युक्तिसिद्धावपि तान्त्रिकसंप्रदायविरोधादुपेक्षणीयौ॥ इति वायुग्रन्थः॥

**विशेषगुणान्तरव्यवच्छेदार्थेति** ॥ कथमेतस्य लाभ इति चेत् शब्द इत्युत्तरमेवकाराध्याहारेणेति केचित्। वस्तुतस्त्वाकाशस्य वैशेषिको गुणश्शब्द इति योजनायामुद्देश्यविधेयभावमहिम्ना शब्दत्वे आकाशविशेषगुणत्वव्यापकत्वलाभादार्थिको विशेषगुणान्तरव्यवच्छेदः। आकाशवृत्तिविशेषगुणत्वस्योद्देश्यतावच्छेदकत्वाच्छब्दत्वस्य च विधेयतावच्छेदकत्वात्। यदि च लक्षणवाक्ये लक्ष्यस्य कदाचिद्विशेष्यत्वाभावेऽप्युद्देश्यत्वमावश्यकमिति मन्यते तदा आकाशस्य शब्दो वैशेषिको गुण इति योजनयाऽऽकाशस्यैवोद्देश्यत्वं शब्दाभिन्नवैशेषिकगुणस्य च विधेयत्वं तथापि न क्षतिः वैशेषिकगुणस्य शब्दस्य चान्तरालिकोद्देश्यविधेयभावेन वैशेषिकगुणे अभेदेनान्वयिनश्शब्दस्य विशेषणीभूताकाशवृत्तित्वविशिष्टवैशेषिकगुणत्वावच्छेदेनान्वयस्वीकारादिष्टसिद्धिः ॥ **चक्षुर्ग्रहणायोग्येति** ॥ एतच्च जातिविशेषणं।

**दिनकरीयम्.**

वधारणं ज्ञेयम् ॥ **एतेन** विशेषगुणत्वकथनेन ॥ **प्रमाणमिति** ॥ आकाश इत्यादिः। तच्च शब्दः पृथिव्याद्यष्टद्रव्यातिरिक्तद्रव्याश्रितः अष्टद्रव्यानाश्रितत्वे सति द्रव्याश्रितत्वादित्येवंरूपं बोध्यम् ॥ **दर्शितं** सूचितम्। अत्रानुमाने स्वरूपासिद्धिं परिहर्तुमाह ॥ **तथाहीति** ॥ घटादौ व्यभिचारवारणायायोग्येति।

**रामरुद्रीयम्.**

क्तिकत्वादित्यर्थपर्यवसितं मूलोक्तं तत्र च द्रव्यत्वादेरप्येकव्यक्तिकत्वेन व्यभिचारापत्त्याऽऽकाशादीनामित्येकव्यक्तिकत्वादित्यनेनान्वितमित्यभिप्रायेणोक्तं यथोक्तार्थकत्वे वैयधिकरण्याभावात्। नचैवमिदानीं तादृशार्थैकव्यक्तिकत्वादित्यस्य हेतुत्वसंभवान्मूले तदुक्तिवैयर्थ्यमिति वाच्यम्। हेतुसाधकत्वेनैव तदुपन्यासादिति भावः ॥ **इत्थंचेति** ॥ वैशेषिकपदस्याकाशे विशेषगुणान्तरव्यवच्छेदपरत्वे चेत्यर्थः ॥ **सावधारणमिति** ॥ शब्द एवेत्येवकारसहितमित्यर्थः। तथासत्येवोक्तार्थलाभसम्भवादिति भावः ॥ **विशेषगुणत्वेति** ॥ विशेषगुणत्वस्य शब्दे सिद्ध्यनन्तरमेव वक्ष्यमाणरीत्याऽऽकाशसाधकवक्ष्यमाणहेतोः शब्दे सिद्धिसम्भवादिति भावः। आकाशे प्रमाणप्रदर्शनरूपता शब्द एवाकाशविशेषगुण इत्यस्य न सम्भवतीत्यतो दर्शितमित्यस्यार्थमाह ॥ **सूचितमिति** ॥ **घटादाविति** ॥ त्वगिन्द्रियजन्यलौकिकप्रत्यक्षविषयघटत्वादिजातिमत्त्वा-

## मञ्जूषा.

धर्मिविशेषणत्वेऽतीन्द्रिये द्रव्ये कर्मणि च व्यभिचारापत्तेः । नच बहिरिन्द्रियग्राह्यत्वस्यापि धर्मिविशेषणत्वस्वीकारान्नायं व्यभिचार इति वाच्यं तथापि दैवात्त्वगिन्द्रियमात्रगृहीते घटविशेषे व्यभिचारस्य दुर्वारत्वात् । अथ वायुस्पार्शनाङ्गीकर्तृनव्यमते वायुत्वजातिमादाय वायौ व्यभिचरस्त्वयं हेतुः । नच द्रव्यावृत्तित्वमपि जातिविशेषणमिति वाच्यं तथा सत्यात्ममनसोर्व्यभिचाराप्रसक्त्या तद्वारकस्य बहिरिन्द्रियग्राह्यत्वविशेषणस्य वैयर्थ्यापत्तेः । नच तद्विशेषणस्य द्रव्यावृत्तित्वरूपजातिविशेषण एव तात्पर्यमास्तामिति वाच्यं तद्विशेषणेन तदर्थस्य दुर्ग्रहत्वात् । कथंचिल्लाभसंभवेऽपि शब्दो निरवयवद्रव्यमिति ये वदन्ति ये च सावयवद्रव्यमिति तन्मतद्वयस्य प्राचीनग्रन्थेषूपन्यस्तस्य निराकरणायैव एतदनुमानप्रवृत्त्या हेतोः साध्याविशेषताया दुर्वारत्वाच्च । उच्यते वायुस्पार्शनानङ्गीकर्तृप्राचीनमतानुसारेणैवेदमुक्तम् । नव्यमते त्वीश्वरातिरिक्तस्याकाशस्यैवानङ्गीकारेण तन्मतसाधारणहेत्वभिधानस्यानावश्यकत्वात् । ननु नव्यमते ईश्वरातिरिक्ताकाशानङ्गीकारेऽपि शब्दस्य गुणत्वसाधनमावश्यकमेव शब्दस्य ईश्वरगुणत्वानङ्गीकारादिति चेत् अस्तु तेषामपि शब्दस्य गुणत्वं किन्तु तत्साधको हेतुरयमेव तेषामपीति न नियमः । चक्षुर्ग्रहणायोग्यत्वगिन्द्रियातिरिक्तबहिरिन्द्रियग्राह्यजातिमत्त्वस्य हेतुत्वसंभवात् । एतन्मते चक्षुर्ग्रहणायोग्यत्वं त्वगिन्द्रियातिरिक्तबहिरिन्द्रियाग्राह्यत्वं तच्च धर्मिविशेषणमपि संभवति चक्षुस्त्वगुभयातिरिक्तबहिरिन्द्रियग्राह्ययोर्द्रव्यकर्मणोरभावादिति बोध्यम् । अत्रेदं शङ्क्यते । अनुकूलतर्काभावादुक्तो हेतुरप्रयोजक इति । यत्तु यथा रूपादिरासनवारणाय रासनप्रत्यक्षे तादात्म्येन रसस्य कारणतायां वाच्यायां रसत्वमधुरत्वादिरासने रसाभावरसत्वाद्यभावरासने च व्यभिचारवारणाय गुणवृत्तिलौकिकविषयताया एव कार्यतावच्छेदकसंबन्धत्वं वाच्यं यथा वा रूपादिघ्राणजवारणाय घ्राणजप्रत्यक्षे तादात्म्यसंबन्धस्य गन्धस्य कारणतायां वाच्यायां गन्धत्वसुरभित्वादिघ्राणजे गन्धाभावगन्धत्वाद्यभावघ्राणजे च व्यभिचारवारणाय गुणवृत्तिलौकिकविषयताया एव कार्यतावच्छेदकसंबन्धत्वं वाच्यं तथा सङ्ख्यादिश्रावणवारणाय श्रावणप्रत्यक्षे तादात्म्येन शब्दस्य कारणतायां वाच्यायां शब्दत्वकत्वादिश्रावणे शब्दाभावशब्दत्वाद्यभावश्रावणे च व्यभिचारवारणाय गुणवृत्तिलौकिकविषयताया एव कार्यतावच्छेदकसंबन्धत्वं वाच्यम् । तथाच यदि शब्दस्य गुणत्वं न स्यात् तदा तत्र गुणवृत्तिलौकिकविषयतासंबन्धेन श्रावणप्रत्यक्षोत्पादासंभवेन चक्षुरतिरिक्तं श्रोत्रेन्द्रियरूपं यद्बहिरिन्द्रियं तद्ग्राह्यत्वं न स्यात् । तथाच हेतूच्छित्तिरनुकूलतर्क इति तत्तुच्छम् । शब्दस्य द्रव्यत्वमङ्गीकुर्वतां परेषां द्रव्यवृत्तिलौकिकविषयताया एव शब्दकार्यतावच्छेदकसंबन्धत्वस्वीकारसंभवात् । वस्तुतस्तु शब्दवृत्तिलौकिकविषयताया एव शब्दकार्यतावच्छेदकसंबन्धत्वं अथैवं न्यायनये गुणश्रवणकारणीभूतस्य श्रोत्रसमवायस्य संख्यादौ परनये द्रव्यश्रावणकारणीभूतस्य कर्णशष्कुलीसंयोगस्य च घटादौ सत्त्वात् संख्यादेर्घटादेश्च श्रावणापत्तिः शब्दकार्यतावच्छेदकीभूतशब्दश्रावणत्वावच्छिन्नापत्तेः तत्र तादात्म्येन शब्दविरहेण असंभवेऽपि सन्निकर्षकार्यतावच्छेदकावच्छिन्नापत्तेर्दुर्वारत्वादिति चेन्न श्रोत्रसमवायेन कर्णशष्कुलीसंयोगेन वा फले जननीये तादात्म्येन शब्दस्य विशेषसामग्रीत्वस्वीकारेणानुपपत्त्यभावात् । वस्तुतस्सन्निकर्षकार्यतावच्छेदकमपि शब्दश्रावणत्वमेव । अतः सन्निकर्षशब्दयोः परस्परसहकारित्वान्नानुपपत्तिः इत्यादिकं स्वयमूहनीयम् । एवं रासनादिस्थलेऽपि रसरासनत्वादिकमेव कार्यतावच्छेदकमिति बोध्यम् । तथाचाप्रयोजकोऽयं हेतुरिति । उच्यते । शब्दस्य गुणत्वाभावे किं स्यात् न तावत्कर्मत्वं चलनाकारानुभवविषयत्वाभावात् संयोगविभागाद्यहेतुत्वाच्च । न सामान्यादिरूपता उत्पादविनाशादिप्रत्ययगोचरत्वात् आश्रयानिरूपणात् आंशिकत्वादिदोषाच्च । अतः परिशेषाद्द्रव्यरूपतैव वाच्या सैव च निराकरणीया पराभ्युपेतत्वात् तत्र च शब्दात्मकं द्रव्यं किमुद्भूतरूपवत् उत तच्छून्यं आद्ये चक्षुर्ग्रहणयोग्यता स्यात् अन्त्ये बहिरिन्द्रियग्राह्यतानुपपत्तिः । बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षं प्रति उद्भूतरूपस्य कारणत्वात् तत्र शब्दातिरिक्तत्वनिवेशे शब्दातिरिक्तत्वबहिष्कृद्रव्यत्वानां विशेषणविशेष्यभावे विनिगमनाविरहेण कार्यकारणभावानन्त्यप्रसङ्गाच्च शब्दप्रत्यक्षे कारणान्तरकल्पने गौरवाच्चेति प्राचीनमतरीत्या हेतूच्छित्तिरनुकूलतर्कः । नच शब्दस्य द्रव्यत्वे तस्यैव

मत्त्वात् स्पर्शवत् शब्दो द्रव्यसमवेतः गुणत्वात् रूपवदित्यनुमानेन शब्दस्य द्रव्यसमवेतत्वे

## प्रभा.

साध्याभावाव्यभिचार इति वाच्यं जातौ द्रव्यावृत्तित्वेन विशेषणीयत्वात् नचैवं सति उक्तविशेषणेनैव मनस्त्वात्मत्वजातिमादाय मनसि आत्मनि च व्यभिचारवारणे जातौ बहिरिन्द्रियग्राह्यत्वविशेषणं व्यर्थमिति वाच्यं इष्टत्वात् जातौ द्रव्यावृत्तित्वलाभायैव तादृशविशेषणदानात् । एवं च सति कर्मत्वजातिमादाय कर्मण्यतिव्याप्तिवारणायैव चक्षुर्ग्रहणायोग्यत्वविशेषणं । एवंच चाक्षुषनिरूपितलौकिकविषयताशून्यद्रव्यावृत्तिजातिमत्त्वादिति परिष्कृतो हेतुरिति बोध्यम्.। एतावता परिशेषानुमानेन विशेष्यासिद्धिं निराकृत्येदानीं

## मञ्जूषा.

हि चक्षुर्ग्रहणायोग्यत्वं बहिरिन्द्रियग्राह्यत्वं च नोपपद्येत न तद्वृत्तिजातेरिति कथं हेतूच्छित्तिरिति वाच्यं आश्रययोग्यत्वाभावे जातेरपि योग्यत्वासंभवात् । नव्यमते त्वनुकूलतर्कों दुर्लभः । अथ नव्यमते द्रव्यचाक्षुषं प्रत्युद्भूतरूपस्य द्रव्यस्पार्शनं प्रत्युद्भूतस्पर्शस्यात्ममानसं प्रति तादात्म्येनात्मनश्च कारणतया महत्त्वादिघटितसामान्यसामग्र्या फले जननीये उद्भूतरूपोद्भूतस्पर्शयोस्तादात्म्येनात्मनश्च विशेषसामग्रीत्वस्यावश्यकत्वेन चक्षुरादाविव शब्देऽपि द्रव्यप्रत्यक्षोत्पादो न संभवतीत्यस्त्येवानुकूलतर्क इति चेन्न शब्दस्यापि तादात्म्येन विशेषसामग्रीत्वसंभवात् न्यायमतेऽपि गुणप्रत्यक्षसामान्यसामग्र्या फले जननीये तस्य विशेषसामग्रीत्वावश्यंभावेन द्रव्यप्रत्यक्षे तस्य विशेषसामग्रीत्वसंभवे गौरवाभावादिति । किन्तु नव्यमते गुणत्वजातेरनङ्गीकारान्निदमनुमानमावश्यकम् । नचैवं शब्दस्य द्रव्याश्रितत्वासिद्धिप्रसङ्गः जन्यभावत्वेनैव तत्सिद्धिसंभवात् । जन्यत्वं च गुणनिरूपणे ग्रन्थकृदेव साधयिष्यति । नचैवं नव्यनये शब्दस्य द्रव्यत्वनिराकरणानुपपत्तिरिति वाच्यं जन्यत्वे सत्यनेकद्रव्यसमवेतत्वाभावेन द्रव्यभिन्नत्वसाधनसंभवात् । शब्दस्यानेकद्रव्यसमवेत-

## दिनकरीयम्.

आत्मनि व्यभिचारव्यावृत्तये बहिरिन्द्रियग्राह्येति । रसत्वादौ व्यभिचारवारणाय जातिमदिति । एतच्चानुमानमग्रिमद्रव्यसमवेतत्वसाधकानुमाने स्वरूपासिद्धिनिरासायेति बोध्यम् ॥ **गुणत्वादिति** ॥ एतदनुमानेनो-

## रामरुद्रीयम्.

-दिति भावः ॥ **चक्षुरित्यादि** ॥ चक्षुर्जन्यलौकिकप्रत्यक्षस्वरूपायोग्यत्वे सतीति सत्यन्तार्थः । घटः शब्दावच्छेदक इति शब्दांशे अलौकिकविषयताशालिचाक्षुषं प्रति शब्दस्यापि स्वरूपयोग्यतया स्वरूपासिद्धिवारणाय लौकिकत्वनिवेशः तादृशप्रत्यक्षाविषयत्वोक्तौ चक्षुस्संयोगाद्यभावेन तादृशप्रत्यक्षाविषयघटादौ व्यभिचारतादवस्थ्यमतः स्वरूपयोग्यताप्रवेशः सा च उद्भूतरूपं नयनस्य गोचर इत्यादिना परिगणितानामेवेति भावः । **बहिरिन्द्रियग्राह्येति** ॥ बहिरिन्द्रियग्राह्यत्वं बहिरिन्द्रियजन्यलौकिकप्रत्यक्षविषयत्वम् । आत्मनि व्यभिचारवारणाय लौकिकत्वनिवेशः । अथात्मनीन्द्रियग्राह्यद्रव्यत्वादिजातिसत्त्वाद्व्यभिचारो दुर्वार एव । न च सत्यन्तं जातावेव विशेषणमस्तु तथा च द्रव्यत्वस्य चक्षुर्ग्रहणयोग्यत्वान्न तदादायात्मनि व्यभिचार इति वाच्यम् । तथासति चाक्षुषाविषयत्वोक्त्यैव सामञ्जस्ये योग्यताविशेषनिवेशनवैयर्थ्यापत्तेः चाक्षुषाविषयबहिरिन्द्रियग्राह्यगुणावृत्तिजातौ मानाभावेन तादृशजातिमादाय व्यभिचाराप्रसक्तेरिति चेन्मैवं । बहिरिन्द्रियग्राह्यजातिमत्त्वादित्यस्य बहिरिन्द्रियग्राह्यत्वे सति जातिमत्त्वादित्यर्थकतया आत्मनि व्यभिचारानवकाशात् शब्दध्वंसादौ व्यभिचारवारणायैव जातिमत्त्वस्य सार्थकत्वाच्च । न चैवं भागासिद्धिरिति वाच्यम् बहिरिन्द्रियाग्राह्यशब्दसंभवेऽपि शब्दत्वसामानाधिकरण्येन अष्टद्रव्यातिरिक्तद्रव्याश्रितत्वसिद्ध्याप्याकाशसिद्धिसम्भवेन शब्दत्वावच्छेदेन गुणत्वसाधने प्रयोजनाभावेन सामानाधिकरण्येन गुणत्वासिद्धेरुद्देश्यत्वात् सामानाधिकरण्येन साध्यसिद्धेरुद्देश्यतायां भागासिद्धेरदोषत्वात् ॥ **रसत्वादिव्यावृत्तये** ॥ रसत्वादौ हेतोरभावज्ञानायेत्यर्थः । अन्यथा चक्षुर्ग्रहणायोग्यत्वे सति रसनेन्द्रियग्राह्ये रसत्वे गुणत्वाभावेन व्यभिचारापत्तेरिति भावः । शब्दे गुणत्वानुमानस्य प्रकृतोपयोगितां दर्शयति ॥ **एतच्चेति** ॥ द्रव्यसमवेतत्वानुमानस्य फलमाह ॥ **एतदनुमानेनेति** ॥ विशेषाभावसहकृतसामान्यहेतुकानुमानं परिशेषानुमानं स्पर्शवद्द्रव्यविशेषस्य गुणो नेति

**सिद्धे शब्दो न स्पर्शवद्विशेषगुणः अग्निसंयोगासमवायिकारणकत्वाभावे सति अकारणगुणपूर्वकप्रत्यक्षत्वात् सुखवत्। पाकजरूपादौ व्यभिचारवारणाय सत्यन्तम्। पटरूपादौ व्यभिचारवारणायाकारणगुणपूर्वकेति। जलपरमाणुरूपादौ व्यभिचारवारणाय प्रत्यक्षेति। शब्दो न**

## प्रभा.

विशेषणासिद्धिं निराकरोति ॥ **शब्दो न स्पर्शवद्विशेषगुण इति** ॥ पृथिव्यादिचतुष्टयान्यतमसमवेतविशेषगुणत्वाभाववानित्यर्थः ॥ **अकारणगुणपूर्वकेतीति** ॥ नचैवमपि यत्किंचित्पटगतरूपस्य पटान्तरसमवेतरूपं प्रति यदसमवायिकारणं तत्पूर्वकत्वाभावेन तत्र विशिष्टहेतोस्सत्त्वाद्व्यभिचारो दुर्वार इति वाच्यं अकारणगुणपूर्वकेत्यस्य स्वाश्रयसमवायिकारणसमवेतगुणासमवायिकारणकं यद्यत्स्वं तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदकूटत्वदर्थकतया पूर्वोक्तदोषाभावात्। वस्तुतस्तु अकारणगुणपूर्वकेत्यस्य स्वाश्रयसमवायिकारणसमवेतगुणासमवायिकवृत्तिगुणविभाजकधर्मशून्यार्थकत्वमेव पूर्वोक्तरीत्या भेदकूटनिवेशे दुर्ज्ञेयत्वापत्तेः गौरवाच्च। एवंच सति पाकजरूपादेः परमाणुरूपादेश्च तादृशगुणविभाजकधर्मशून्यत्वाभावेनैव व्यभिचारवारणे अग्निसंयोगासमवायिकारणकत्वाभावे सतीति विशेषणं प्रत्यक्षत्वरूपविशेष्यदलं चाव्यावर्तकत्वेन व्यर्थमि-

## मञ्जूषा.

त्वाभावश्च तदाश्रयानेकद्रव्यकल्पने गौरवप्रसङ्गादेव सिध्यतीत्यन्यदेतत्। अत्र वदन्ति मास्तु शब्दो द्रव्यं तथापि तस्य न गुणत्वमभ्युपगच्छामः किंत्वतिरिक्तत्वं नचैवं पदार्थान्तरकल्पने गौरवमिति वाच्यं विचारासहत्वात्। तथाहि शब्दस्यातिरिक्तत्वे कुतोऽस्माकं गौरवं नहि शब्दस्त्वदनभिमतः येन ततोऽस्माकं गौरवं स्यात् प्रत्युत तस्मिन् गुणत्वजातिकल्पने तवैव गौरवं नच तस्मिन् गुणत्वजातिसंबन्धाभावस्त्वया कल्पनीय इति साम्यमिति वाच्यं प्रतियोगिग्राहकप्रमाणाभावनिबन्धनस्यात्यन्ताभावस्य प्रतियोग्यसिद्ध्यैव सिद्धत्वात् अन्यथा अतिप्रसङ्गात्। कर्णशष्कुल्यां च तस्य स्वरूपं समवायो वा सन्निकर्षः तस्य समवाय्यन्तरं कल्पयाद्भिः यस्मिन् यस्मिन् देशे अवच्छेदकत्वं कल्प्यते तस्मिन् तस्मिन् अस्माभिः स्वरूपसंबन्धस्य समवायस्य वा कल्पनेन गौरवाभावात्। प्रत्युत समवाय्यन्तरं कल्पयतां परेषामेव गौरवमिति। एतच्च भगवत्सूत्रकारानभिप्रेतत्वादुपेक्षणीयं एतेन संयोगिद्रव्यं शब्दः दूरतो भेर्यां प्रहतायां आगच्छति शब्द इति प्रतीतेः। अत एव आकस्मिकोत्पन्नशब्दप्रतिहतं शिथिलकुड्यादिकं डोलायते दीर्यते शीर्यति च हठात् स्फुटन्ति च श्रवणपुटेषु घटमानाः रिञ्जूषपिण्डा विशिष्य तथा नयनगोलकाण्डा विघटिते भ्रमन्ति पतन्ति न स्पृश्यते चानुभवरसिकैः सूक्ष्मदर्शिभिः अदूरदेशपरिप्लुष्टायसशतघ्नीनिष्पतनजन्मा निष्ठुरतरो निर्ह्रादः कर्षन्निव देहमभिधावन्तस्पर्शवानपि शब्दः सच स्पर्शः क्वचिदुद्भूतः क्वचिदनुद्भूतः ततश्च स्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्ववेगाख्यगुणनवकवान् सावयवद्रव्यं शब्द इति वदन्तोऽपि भगवत्सूत्रकारोक्तिविरोधादेवोपेक्षणीयाः। शब्दस्य सावयवत्वेऽनन्तावयवतन्नाशादिकल्पनागौरवाच्चेत्यलमधिकेन ॥ **शब्दो न स्पर्शवद्विशेषगुण इति** ॥ ॥ **इतः परं मञ्जूषायां मातृकानुपलम्भात् न मुद्र्यते** ॥

## दिनकरीयम्.

स्पर्शपरिशेषानुमाने हेतौ विशेष्यासिद्धिर्निरस्ता। विशेषणासिद्ध्युद्धारायाह ॥ **शब्दो न स्पर्शवद्विशेषगुण इति** ॥ न स्पर्शवतो द्रव्यस्य पृथिव्यादिचतुष्टयस्य विशेषगुण इत्यर्थः ॥ **अकारणगुणपूर्वकप्रत्यक्षत्वादिति** ॥ अकारणगुणपूर्वकत्वे सति प्रत्यक्षत्वादित्यर्थः। हेतुसत्त्वं प्रतिपादयितुं पाकजेति ॥ **जलप-**

## रामरुद्रीयम्.

साधने पृथिव्यादियत्किञ्चिद्द्रव्यविशेषगुणत्वाभावासिद्धौ उद्देश्यभूतस्पर्शवद्द्रव्यसामान्यविशेषगुणत्वाभावासिद्धिरतो व्याचष्टे ॥ **न स्पर्शवत इत्यादि** ॥ अपाकजत्वे सत्यकारणगुणपूर्वकप्रत्यक्षस्य विषयत्वादित्यस्य हेतुत्वे कारणगुणपूर्वकरूपादौ व्यभिचारः आत्मनः कारणाभावेन प्रत्यक्षमात्रस्यैवाकारणगुणपूर्वकत्वादतस्तदर्थमाह ॥ **अकारणेति** ॥ **पाकजेतीति** ॥ पाकजत्वोक्त्यैव कारणगुणजत्वाभावलाभेनाकारणगुणपूर्वकत्वे सति प्र-

दिक्कालमनसां गुणः विशेषगुणत्वात् रूपवत् । नात्मविशेषगुणः बहिरिन्द्रिययोग्यत्वात् रूपवत् । इत्थंच शब्दाधिकरणं नवमं द्रव्यं गगनात्मकं सिध्यति । न च वाय्ववयवेषु सू-

प्रभा.

ति चेत् इष्टमेवैतत् । एतादृशगुणविभाजकधर्मशून्यत्वलाभायैव दलद्वयोपादानमिति प्रतिभाति ॥ **न दिकालेति** ॥ शब्द इत्यनुवर्तते । दिक्कालमनोऽन्यतमसमवेतगुणत्वाभाववानित्यर्थः ॥ **विशेषगुणत्वादिति** ॥ रूपादिचतुष्टयशब्दान्यतमत्वादित्यर्थः । यथाश्रुते दृष्टान्तपक्षसाधारणविशेषगुणत्वस्याभावेऽपि न क्षतिः ॥ **बहिरिन्द्रिययोग्यत्वादिति** ॥ मनोभिन्नेन्द्रियजन्यज्ञाननिरूपितलौकिकविषयतावत्त्वादित्यर्थः । मानसानिरूपितलौकिकविषयताश्रयगुणविभाजकधर्मवत्त्वादिति फलितोऽर्थः । तेनाऽऽद्यशब्दस्य लौकिकविषयताशून्यत्वेऽपि न भागासिद्धिः नवा गौरवमिति ॥ **इत्थं चेति** ॥ पूर्वोक्तप्रकारेण पृथिव्याद्यष्टद्रव्यासमवेतत्वसिद्धौ चेत्यर्थः ॥ **सिध्यतीति** ॥ पूर्वोक्तपरिशेषानुमानेन लाघवज्ञानसहकृतेन सिध्यतीत्यर्थः । ननु शब्दस्य विशेषगुणत्व एव प्रमाणाभावात् तेन दिक्कालमनोगुणत्वाभावसाधनासंभवेन कथमतिरिक्ताकाशसिद्धिरिति चेन्न शब्दो विशेषगुणः चाक्षुषनिरूपितलौकिकविषयत्वचाक्षुषान्यनिरूपितलौकिकविषयत्वोभयाभावविशिष्टलौकिकविषयताविशिष्टगुणविभाजकधर्मवत्त्वादित्यनुमानस्यैव प्रमाणत्वात् । अत्र हेतुतावच्छेदकसंबन्धस्समवायः । संख्यात्वमादाय व्यभिचारवारणायोभयाभावविशिष्टत्वं धर्मविशेषणं । गुरुत्वत्वमादाय व्यभिचारवारणाय लौकिकविषयताविशिष्टत्वमपि धर्मविशेषणम् । प्रभात्वमादाय व्यभिचारवारणाय गुणविभाजकत्वमपि धर्मविशेषणम् । तथाच विशेषणत्रयविशिष्टधर्मवत्त्वं समवायेन हेतुरिति फलितम् । नच सांसिद्धिकद्रवत्वस्नेहादिषु निरुक्तहेत्वभावात् कथं विशेषगुणत्वसिद्धिरिति वाच्यं हेत्वन्तरेणैव साधनीयत्वात् । तथाहि स्नेहसांसिद्धिकद्रवत्वधर्माधर्मभावनाः विशेषगुणा द्रव्यविभाजकोपाध्येकैकाधिकरणसमवेतमात्रवृत्तिगुणत्वन्यूनवृत्तिजातिमत्त्वात् ज्ञानवदित्यनुमानात् तेषामपि विशेषगुणत्वसिद्धिः । अत्र संख्यात्वादिकमादाय व्यभिचारवारणाय तादृशसमवेतमात्रवृत्तित्वं जातिविशेषणं । तादृशसमवेतेतरासमवेतत्वं तदर्थः । घटत्वादिकमादाय व्यभिचारवारणाय गुणत्वन्यूनवृत्तीति । स्थितस्थापकत्वस्य जातित्वाभावात् न तत्र व्यभिचारः । तदपि समवायसंबन्धेन हेतुत्वलाभायैतादृशानुमानस्य शुक्लरूपमधुररसस्पर्शानां विशेषगुणत्वासाधकत्वेऽपि न क्षतिः पूर्वोक्तानुमानेनैवसिद्धेः । विशेषगुणलक्षणं च गुणनिरूपणावसरे वक्ष्यते । शब्दस्य स्पर्शवद्विशेषगुणत्वाभावसाधकहे-

दिनकरीयम्.

**रमाण्विति** ॥ अनित्यानां पार्थिवरूपादीनां केषाञ्चिदग्निसंयोगासमवायिकारणकत्वात् केषाञ्चित्कारणगुणपूर्वकत्वादत्रोपेक्षा ॥ **न दिक्कालेति** ॥ शब्द इत्यनुवर्तते ॥ **बहिरिन्द्रियेति** ॥ मनसोऽन्यदिन्द्रियम् ॥ **योग्यत्वात्** प्रत्यक्षत्वादित्यर्थः । एतेनानात्मगुणग्राहकेन्द्रियत्वं बाह्येन्द्रियत्वं तच्च मनस्यतिप्रसक्तं तेनापि रूपादिग्रहणादिति निरस्तम् ॥ **इत्थं च** अनेन प्रकारेण पृथिव्याद्यष्टद्रव्यानाश्रितत्वसिद्धौ च ॥ **सिध्यतीति** ॥ पूर्वोक्तपरिशेषानुमानेन सिध्यतीत्यर्थः । नन्वेतत्सर्वं तदोपपद्येत यदि शब्दस्य विशेषगुणत्वे किञ्चित्प्रमाणं स्यात्तत्रैव मानं न पश्याम इति चेन्न । शब्दो विशेषगुणः लौकिकप्रत्यासत्त्येन्द्रियग्राह्यत्वे सति लौकिकप्रत्यासत्त्या द्वीन्द्रियग्रहणयोग्यताराहित्ये च सति गुणत्वव्याप्यजातिमत्त्वादित्यनुमानस्यैव तत्र प्रमाणत्वात्।

रामरुद्रीयम्.

त्यक्षत्वरूपहेतुप्रतिपत्तिसंभवादिति भावः ॥ **अत्रोपेक्षेति** ॥ अत्र प्रत्यक्षत्वदलव्यावृत्तिप्रदर्शने उपेक्षा तेषामग्रहणम् ॥ **तत्प्रत्यक्षत्वात्** ॥ तज्जन्यप्रत्यक्षविषयत्वादित्यर्थः ॥ **प्रमाणं स्यादिति** ॥ शब्दस्य सामान्यगुणत्वे अष्टद्रव्यानाश्रितत्वरूपविशेषणासिद्धिप्रसङ्गात्कर्मजसंयोगादौ व्यभिचारेण उक्तहेतुना स्पर्शवद्गुणभेदसाधनासम्भवेन स्पर्शवद्विशेषगुणभेदसाधने च स्पर्शवतां सामान्यगुणत्वसम्भवादिति भावः ॥ **लौकिकप्रत्यासत्त्येति** ॥ इदं च गुरुत्वत्वादेरप्युपनयसन्निकर्षेणेन्द्रियग्राह्यत्वमादाय व्यभिचारवारणाय द्वितीयमपि एतादृशपदं शब्दस्पर्शयोरप्युपनयसन्निकर्षेण चक्षुर्ग्राह्यतया असिद्धिवारणायैव ॥ **द्वीन्द्रियेति** ॥ जातौ तत्तदिन्द्रियग्रहणयोग्यत्वं तत्तदिन्द्रिययोग्यवृत्तित्वमेव द्वीन्द्रियपदं तु विजातीयेन्द्रियद्वयपरं बोध्यम् ।अन्यथा रू-

क्षमशब्दक्रमेण वायौ कारणगुणपूर्वकः शब्द उत्पद्यतामिति वाच्यं अयावद्द्रव्यभावित्वेन वायोर्विशेषगुणत्वाभावात् ॥ ४४ ॥

**इन्द्रियं तु भवेच्छ्रोत्रमेकः सन्नप्युपाधितः ।**

तत्र च शरीरस्य विषयस्य चाभावादिन्द्रियं दर्शयति ॥ **इन्द्रियमिति** ॥ नन्वाकाशं लाघवादेकं सिद्धं श्रोत्रं पुरुषभेदाद्भिन्नं कथमाकाशं स्यादिति चेत्तत्राह ॥ **एकः सन्नपीति** ॥ उपाधेः कर्णशष्कुलीभेदाद्भिन्नं श्रोत्रं भवतीत्यर्थः ॥

### प्रभा

तोः स्वरूपासिद्धत्वं बाधितत्वं चाशङ्कते ॥ **नचेति** ॥ **कारणगुणपूर्वक इति** ॥ कारणगुणपूर्वकत्वघटितहेतोः स्वरूपासिद्धत्वं स्पर्शवद्वायुविशेषगुणत्वसाधकत्वात् तदभावसाधने बाधितत्वं चेति भावः ॥ **अयावद्द्रव्यभावित्वेनेति** ॥ आश्रयनाशाजन्यनाशप्रतियोगित्वेनेत्यर्थः । त्रिक्षणवृत्तिध्वंसप्रतियोगित्वेनेति फलितोऽर्थः ॥ **वायुविशेषगुणत्वाभावादिति** ॥ तथाच तादृशप्रतियोगित्वस्य वायुविशेषगुणत्वाभावव्याप्यत्वादिति भावः ॥ ४४ ॥

ननु आकाशीयशरीरनिरूपणमुपेक्ष्य इन्द्रियं तु भवेच्छ्रोत्रमित्यनेन कथमादौ इन्द्रियनिरूपणमत आह ॥ **तत्र चेति** ॥ **विषयस्य चेति** ॥ इन्द्रियभिन्नविषयस्य चेत्यर्थः ॥ **कर्णशष्कुलीभेदादिति** ॥ तथाच तत्तत्पुरु-

### दिनकरीयम्

प्रभात्वमादाय व्यभिचारवारणाय गुणत्वव्याप्येति । गुरुत्वत्वमादाय व्यभिचारवारणाय प्रथमं सत्यन्तं सङ्ख्यात्वमादाय व्यभिचारवारणाय द्वितीयं सत्यन्तम् । सांसिद्धिकद्रवत्वस्नेहधर्माधर्मभावनासु प्रकृतहेतोरभावेऽपि तत्र हेत्वन्तरेणैव विशेषगुणत्वं साधनीयमिति । पूर्वोक्तानुमाने बाधं स्वरूपासिद्धिं चाशङ्कते ॥ **नचेति** ॥ **वायाविति** ॥ तथा च स्पर्शवद्वायुगुणत्वस्य तत्र सत्त्वात्तदभावसाधने बाध इति भावः । कारणगुणपूर्वकत्वकथनं त्वकारणपूर्वकत्वघटितहेतोरसिद्धिप्रदर्शनार्थम् ॥ **अयावद्द्रव्यभावित्वेनेति** ॥ स्वाश्रयनाशजन्यनाशप्रतियोगि यद्यत्तद्भिन्नत्वेनेत्यर्थः । ननु तथाप्याकाशे प्रत्यक्षमेव प्रमाणं किमिति नोपन्यस्तमिति चेन्न चाक्षुषत्वप्रयोजकस्य महत्त्वे सत्युद्भूतरूपवत्त्वस्याकाशेऽसम्भवेन चक्षुषः प्रमाजनकत्वासम्भवात् । ननु यद्याकाशो न चाक्षुषस्तदेह पक्षीति चाक्षुषाधिकरणत्वेन किं भासते इति चेदालोक एवेति परिकलय ॥ ४४ ॥

नन्वाकाशीयशरीरविषययोः प्रदर्शनमुज्झित्वा कथमिन्द्रियप्रदर्शनमिन्द्रियं तु भवेच्छ्रोत्रमित्यनेन ग्रन्थेन क्रियत इत्याशङ्क्याह ॥ **तत्र चेति** ॥ आकाशे चेत्यर्थः ॥ **कर्णशष्कुलीभेदादिति** ॥ चैत्रादिकर्णशष्कु-

### रामरुद्रीयम्

पादीनामपि चक्षुर्द्वयग्रहणयोग्यतया द्वीन्द्रियग्रहणायोग्याप्रसिद्धेः । यद्यपि संख्यात्वादीनां सर्वासामेव जातीनां कालभेदेन पुरुषभेदेन च द्वीन्द्रियग्राह्यतया द्वीन्द्रियाग्राह्यत्वे सतीत्येव वक्तुमुचितं योग्यतानिवेशे प्रयोजनाभावात्तथापीन्द्रियद्वयजन्यत्वस्य क्वाप्यसम्भवेनाप्रसिद्धयापत्त्या तथा नोक्तम् । नच स्वात्मकेन्द्रियजन्यग्रहविषयत्वस्वभिन्नविजातीयेन्द्रियजन्यग्रहविषयत्वोभयसम्बन्धेनेन्द्रियविशिष्टत्वरूपं द्वीन्द्रियग्राह्यत्वमनुगतं निर्वक्तुं शक्यमिति वाच्यम् । जन्यत्वादिप्रवेशेनैतस्य अतिगुरुत्वादित्यभिप्रायात् । नचेन्द्रिययोग्यत्वमपि तज्जन्यलौकिकप्रत्यक्षविषयवृत्तित्वमेवेति आधेयत्वमधिकमेव योग्यतानिवेशपक्ष इति वाच्यम् । चक्षुर्योग्यत्वमुद्भूतरूपाद्यन्यतमत्वं त्वग्योग्यत्वमुद्भूतस्पर्शाद्यन्यतमत्वं एवंरूपत्वादिन्द्रिययोग्यतायाः अन्यतमत्वं च भेदकूटावच्छिन्नभेदस्तस्य च तत्तद्व्यक्तित्वेनैव योग्यताघटकत्वोपगमेन लाघवानपायादिति ध्येयम् ॥ **सांसिद्धिकेति** ॥ तथाविधद्रवत्वत्वस्नेहत्वयोस्त्वक्चक्षुरुभयग्राह्यत्वाद्धर्माधर्मभावनानामतीन्द्रियत्वान्न तेषु हेतुसत्त्वमिति भावः ॥ **हेत्वन्तरेणैवेति** ॥ एते पञ्च विशेषगुणाः स्थितिस्थापकान्यत्वे सति विभिन्नद्रव्यविभाजकोपाधिमद्वावृत्तिद्वयवृत्तितानवच्छेदकगुणत्वव्याप्यजातिमत्त्वात्सुखवदित्येवमनुमानं बोध्यम् ॥ **पूर्वोक्तानुमाने** स्पर्शवद्विशेषगुण-

**जन्यानां जनकः कालो जगतामाश्रयो मतः ॥ ४५ ॥**

कालं निरूपयति ॥ जन्यानामिति ॥ तत्र प्रमाणं दर्शयितुमाह ॥ जगतामाश्रय इति ॥

## प्रभा.

धीयकर्णशष्कुल्यवच्छिन्नाकाशस्य तत्तत्पुरुषश्रोत्रत्वादिति भावः। नव्यास्तु शब्दनिमित्तकारणत्वेन क्लृप्तस्येश्वरस्यैव शब्दसमवायिकारणत्वं। नच ईश्वरस्य वा शब्दसमवायिकारणत्वं जीवस्य वेत्यत्र विनिगमनाविरह इति वाच्यम्। जीवस्य शब्दसमवायिकारणत्वे ज्ञानादिवच्छब्दस्यापि मानसत्वापत्तेः अदृष्टवत्प्रतिबन्धकत्वकल्पने चातिगौरवम्। नचैवं कर्णशष्कुलीविवरावच्छिन्नाकाशस्य श्रोत्रत्वं न स्यादिति वाच्यं इष्टापत्तेः तथापीश्वरस्यैव श्रोत्रत्वस्वीकारादित्याहुः तन्न। नात्मविशेषगुणः बहिरिन्द्रियग्राह्यत्वादित्यनुमानेनात्मसामान्यविशेषगुणत्वाभावस्य साधितत्वेन शब्दस्य ईश्वरगुणत्वस्यात्यन्तासंभावितत्वात्। स्वतन्त्रास्तु मृदङ्गादीनामेव गुणश्शब्दः प्राचीनैरपि मृदङ्गत्वादिना निमित्तकारणतायास्स्वीकारात् मृदङ्गे शब्द इत्यादिप्रतीतेश्च। नहि तत्रावच्छेदकत्वं मानाभावात् अन्यथा तत्रावच्छेदकताख्यस्वरूपसंबन्धस्यान्यत्र समवायस्य कल्पने गौरवादिति वदन्ति। तन्न शब्दो न स्पर्शवद्विशेषगुण इत्याद्यनुमानेन शब्दस्य स्पर्शवद्विशेषगुणत्वाभावस्य साधितत्वात् मृदङ्गादिविशेषगुणत्वस्यात्यन्तासंभावितत्वादित्याकाशग्रन्थः ॥

मूले जन्यानां जनक इति ॥ कार्यसामान्यं प्रति निमित्तकारणमित्यर्थः। कालिकसंबन्धा-

## दिनकरीयम्.

ल्यवच्छिन्नमाकाशं चैत्रादिश्रोत्रमिति भावः। नव्यास्तु शब्दनिमित्तकारणत्वेन क्लृप्तस्येश्वरस्यैव शब्दसमवायिकारणत्वम्। नचेश्वरस्य शब्दसमवायिकारणत्वं जीवस्य वेत्यत्र विनिगमनाविरहः जीवस्य शब्दसमवायित्वे ज्ञानवच्छब्दस्यापि मानसत्वापत्तेः अदृष्टादिवत्प्रतिबन्धककल्पने चातिगौरवम्। नचैवं कर्णशष्कुलीविवरावच्छिन्नाकाशस्य कथं श्रोत्रत्वोपपत्तिरिति वाच्यम्। तथाविधस्येश्वरस्यैव श्रोत्रत्वोपपत्तेरित्याहुः। स्वतन्त्रास्तु मृदङ्गादीनामेव गुणः शब्दः शब्दं प्रति मृदङ्गत्वादिना समवायिकारणतायाः स्वीकारात् प्राचीनैरपि मृदङ्गत्वादिना निमित्तकारणतायाः स्वीकारात् मृदङ्गे शब्द इत्यादिप्रतीतेश्च। नच तत्रावच्छेदकत्वं विषयः मानाभावात् अन्यथा तत्रावच्छेदकताख्यस्वरूपस्य सम्बन्धस्यान्यत्र समवायस्य कल्पने गौरवादिति वदन्तीति। ॥ इत्याकाशग्रन्थः ॥

मूले जन्यानां जनक इति ॥ कार्यत्वावच्छिन्नं प्रति निमित्तकारणमित्यर्थः। अत्र च कालिकसम्बन्धा-

## रामरुद्रीयम्.

त्वाभावसाध्यकानुमाने। हेतोरसिद्धिप्रदर्शनार्थमित्यस्य पक्ष इत्यादिः ॥ चक्षुष इति ॥ नीलं नभ इति चाक्षुषभ्रमात्प्रमेत्युक्तम् ॥ ४४ ॥

अतिगौरवमिति ॥ विनिगमनाविरहेण नानाजीवेषु शब्दसमवायिकारणताया अतिरिक्तप्रतिबध्यप्रतिबन्धकभावकल्पनायाश्चापत्तिरिति भावः। न च कालदिशावादाय विनिगमनाविरह इति वाच्यं। नवीनैस्तयोरपीश्वर एवान्तर्भावितत्वादिति मन्तव्यम्। अथ स्वतन्त्रमते शब्दग्राहकमिन्द्रियं किंस्वरूपं कर्णशष्कुलीस्वरूपमेव बधिरस्य शब्दप्रत्यक्षवारणाय शरीरस्थदोषविशेषस्य तत्प्रत्यक्षप्रतिबन्धकताकल्पनस्य सर्वमत एवावश्यकतया शष्कुलीमात्रस्य श्रोत्रत्वेऽपि तत्कल्पनाधिक्यविरहादिति चेत्तर्हि मृदङ्गसमवेतशब्दे श्रोत्रस्य कस्सन्निकर्षः स्वसंयोगिसंयुक्तसमवाय इति चेत्सन्निकर्षान्तरकल्पनागौरवादिति मैवं। तत्तदात्मन एव तदीयश्रोत्रेन्द्रियत्वोपगमात्। न च कर्तृत्वकरणत्वयोर्विरोधात्कथमेतदिति वाच्यम्। स्वात्मानं वेत्तीत्यादौ कर्तृत्वकर्मत्वयोरिव तयोरप्यविरोधादित्थं च केवलसमवायस्य सन्निकर्षत्वाकल्पनेन लाघवान्तरमपि। न च कर्णशष्कुलीपिधानदशायामपि शब्दप्रत्यक्षापत्तिरिति वाच्यम्। तथाविधाकाशस्य श्रोत्रतामतेऽपि केनापि वस्तुना व्यवधीयमानाकाशे शब्दोत्पत्तौ बाधकाभावेन तस्य तत्प्रत्यक्षप्रतिबन्धकताकल्पनायाः सिद्धान्तेऽप्यावश्यकत्वादिति दिक् ॥ इत्याकाशग्रन्थः ॥

## प्रभा.

वच्छिन्नकार्यतानिरूपिततादात्म्यसंबन्धावच्छिन्नकारणत्वं महाकालस्य लक्षणमिति फलितोऽर्थः । दिश्यति—व्याप्तिवारणाय कार्यतायां कालिकसंबन्धावच्छिन्नत्वनिवेशः अदृष्टादावतिव्याप्तिवारणाय तादात्म्यसंबन्धावच्छिन्नत्वस्य कारणतायाम् । तथाचादृष्टस्य कालिकसंबन्धावच्छिन्नकारणतावत्त्वादीश्वरस्य स्वसमवेतज्ञानविषयत्वसंबन्धावच्छिन्नकारणतावत्त्वाच्च नातिव्याप्तिरिति भावः नच कार्यमात्रं प्रति कालस्य हेतुत्वे किं मानमिति वाच्यं कालान्तरावच्छेदेन स्वकर्तृकभेदनाश्रयकुसूलादेः इदानीं स्वकर्तृकभेदनानुत्पत्तेरेव मानत्वात् कर्तृकर्मणोरैक्येन तदानीं भेदनोत्पादकसामग्र्या इदानीमप्यक्षतत्वात् । एवंच तत्तत्कार्यविशेषं प्रति तत्तत्कालविशेषस्य हेतुत्वे सिद्धे यद्विशेषयोरिति न्यायेन कार्यमात्रे कालस्य हेतुत्वमावश्यकमिति । अत एवाद्य घटो भविष्यति

## दिनकरीयम्.

वच्छिन्नकार्यत्वावच्छिन्नकार्यतानिरूपितमधिकरणविधयाया निमित्तत्वं काललक्षणम् । कालिकसम्बन्धावच्छिन्नेति करणादिश्यधिकरणतयेति करणादृष्टेश्वरयोर्नातिव्याप्तिरिति बोध्यम् । ननु कार्यमात्रे प्रति कालस्य निमित्तकारणत्वे किं मानमिति चेदत्राहुः । अद्य घटो भविष्यति श्वः पटो भविता इत्यादिप्रत्ययेन तत्तत्कार्योत्पत्त्यधिकरणत्वेन कालो विषयीक्रियते तत्तदुत्पत्त्यधिकरणत्वेन व्यवहारविषयस्य तत्तदुत्पत्तिहेतुत्वनियमात् तदुत्पत्तिहेतुत्वस्य तद्धेतुत्वव्याप्यत्वात् । एवं च तत्तत्कार्यविशेषं प्रति तत्तत्कालविशेषस्य हेतुत्वे सिद्धे यद्विशेषयोरिति व्याप्त्या कार्यमात्रे कालस्य हेतुतासिद्धिरिति । सा च हेतुता निमित्तकारणतैव । नच कार्यमात्रे

## रामरुद्रीयम्.

कार्यसामान्ये कालस्य समवायिकारणत्वासम्भवादसमवायिकारणत्वस्य च द्रव्येऽसत्त्वाज्जनकपदं निमित्तकारणपरतया व्याचष्टे ॥ **निमित्तकारणमित्यर्थ इति** ॥ मूले जगतामाश्रय इत्यस्य कालप्रमाणप्रदर्शनपरतया व्याख्येयतया जन्यानामित्यादिकं काललक्षणप्रदर्शनपरमेवेति वाच्यं लक्षणप्रामाण्यस्वरूपाभिधानस्यैव निरूपणशब्दार्थत्वात्तच्च न सम्भवति दिगादीनामपि कार्यसामान्ये निमित्तकारणत्वेनातिप्रसङ्गादित्यत आह ॥ **अत्रेति** ॥ **अधिकरणविधयेति** ॥ अधिकरणत्वेनेत्यर्थः । यद्यपि कार्यमात्रं प्रति कालस्य कालत्वेनैव कारणता युक्ता अधिकरणत्वस्य दिगाद्यतिप्रसक्तत्वेन कालनिष्ठकारणतायामवच्छेदकत्वासम्भवात्तथापि कालत्वस्यैकव्यक्तिकत्वेन जातित्वासम्भवात्कालिकसम्बन्धावच्छिन्नाधिकरणत्वादतिरिक्तस्य कालत्वस्य निर्वक्तुमशक्यतया अधिकरणविधयेत्युक्तम् । तथा च निरुक्तकालत्वस्याधिकरणतारूपत्वान्न सङ्गतिः एवं दिक्त्वमपि दिक्कृतविशेषणतयाधिकरणत्वमेव नातो दिश्यतिव्याप्त्यभिधानासङ्गतिरिति केचित् । तदसत् । तथासति महाकाललक्षणस्य घटादावतिव्याप्त्यापत्तेरग्रे तत्रैव प्रमाणस्य प्रदर्शनीयतया तस्यैव लक्ष्यत्वावधारणात् । परन्तु तस्य तादात्म्यसम्बन्धेनेत्येवार्थः आधारस्य सर्वत्र तेनैव कारणत्वात् निमित्तत्वं कारणत्वं न तु निमित्तकारणत्वं तन्निवेशे प्रयोजनाभावादिति ध्येयम् । दिशीत्यस्य नातिव्याप्तिरित्यग्रतनेनान्वयः । अदृष्टेश्वरयोरित्यत्रेश्वरग्रहणं कार्यमात्रे कर्तुरेव कारणत्वाभिप्रायेण कृतिकारणतामते तु ईश्वरपदं तत्कृतिपरमिति द्रष्टव्यम् ॥ **उत्पत्त्यधिकरणत्वेनेति** ॥ भूधातोः प्रकृते उत्पत्त्यर्थत्वादिति भावः ॥ **व्यवहारविषयस्येति** ॥ कपाले घट उत्पद्यत इत्यादौ तथा दर्शनादिति भावः । यद्यपि कपालादेर्न घटोत्पत्तिसाक्षादाधारत्वं तथापि गृहे पचतीत्यादाविव परम्परया तथात्वं बोध्यम् । यद्यपि आद्यक्षणसम्बन्धरूपाया उत्पत्तेस्तत्तद्विशेषणविशिष्टक्रियाद्यात्मकतैव तादृशक्षणानुयोगिककालिकसम्बन्धस्य तादृशक्षणस्वरूपत्वात् तथा च तादृशक्षणहेतुता तत्तद्दिवसादौ विप्रतिपन्नैव कपालादिदृष्टान्ते असम्भवदुक्तिकं च उक्तनियमोऽप्यप्रयोजकत्वेन विप्रतिपन्न एव तथापि यदुत्पत्त्याधारत्वेन प्रतिपन्नो यस्तत् तत्कारणमित्येवं नियमस्यैवोपगमसम्भवानुत्पत्तिनिवेशे प्रयोजनाभाव एव परन्तु उत्पत्तेराकस्मिकत्वापत्तिवारणायैव नियमे उत्पत्तेः प्रवेशिततया यदि तस्याः क्रियात्मकता तदा तासां स्वकारणनियम्यतया नाकस्मिकतापत्तिरिति तन्निवेशो व्यर्थ एव एवं च कालविशेषनियताम्रफलादौ कालविशेषकारणताया आवश्यकत्वेन यद्विशेषयोरिति न्यायेन कार्यसामान्ये कालस्य हेतुतासिद्धेरिति युक्तमुत्पश्यामः । एतदभिप्रायेणैवास्वरससूचनायाहुरित्युक्तम् ॥ **सा चेति** ॥ इतरकारणत-

इदानीं घट इत्यादिप्रतीतिः सूर्यपरिस्पन्दादिकं यदा विषयीकरोति तदा सूर्यपरिस्पन्दादिना घटादेः सम्बन्धो वाच्यः स च सम्बन्धः संयोगादिर्न सम्भवतीति काल एव सम्बन्ध-

## प्रभा.

श्वः पटो भविष्यतीत्याद्याकारिका तत्तत्कालस्य तत्तत्कार्योत्पत्त्यवच्छेदकत्वावगाहिनी प्रतीतिरपि सङ्गच्छते तत्कारणत्वं विना तदुत्पत्त्यवच्छेदकत्वासंभवात् ज्ञानाद्युत्पत्त्यवच्छेदकशरीरे ज्ञानकारणत्वदर्शनात्। नच स्वसमवेतद्वित्वादिसमवायिकारणस्य कालस्य कथं द्वित्वादिनिमित्तकारणत्वमिति वाच्यम् समवायसंबन्धेन द्वित्वादिकं प्रति समवायिकारणत्वेऽपि कालिकसंबन्धेन द्वित्वादिसाधारणकार्यसामान्यं प्रति तस्य निमित्तकारणत्वे बाधकाभावात्। अनयैव दिशा दिशोऽपि कार्यमात्रे निमित्तत्वं बोध्यम्॥ **मुक्तावल्यां तत्रेति** ॥ पूर्वोक्तलक्षणलक्षितकाल इत्यर्थः॥ **प्रमाणमिति** ॥ अनुभवरूपमित्यादिः॥ **जगतामाश्रय इति** ॥ तथाच कालस्सर्ववानित्यनुभवात् सर्वाधारत्वेन कालस्सिध्यतीति भावः। नन्वेतादृशप्रतीतौ सर्वाधारत्वेन क्लृप्तदिश एव विषयत्वमास्तां अतिरिक्तकालकल्पने गौरवादित्याशङ्कां प्रकारान्तरेण कालं प्रसाध्योक्तप्रतीतेस्तद्विषयकत्वाङ्गीकारेण परिहरति॥ **तथाहीत्यादिना** ॥ **यदि सूर्येति** ॥ सिद्धान्ते खण्डकालस्य तादृशप्रतीतिविषयत्वस्वीकारे कालिकसंबन्धावच्छिन्नघटाभावतत्प्रतियोगिनोरेकत्र कालिकसंबन्धेन वर्तमानत्वासंभवेन तयोः तेन संबन्धेन व्याप्यवृत्तित्वापत्त्या महाकालस्यैव तादृशप्रतीतिविषयत्वस्वीकारात् यदीत्युक्तम्। नच महाकालस्य तादृशप्रतीतिविषयत्वे इदानीं घटो न तदानीमिति प्रत्ययानुपपत्तिरिति वाच्यं अत्र प्रतियोग्यभावयोरेकावच्छेदेन वृत्तित्वविरोधात् अन्यथा विभिन्नावच्छेदेन संयोगतदभावयोः वृक्षे असत्त्वप्रसङ्गात्। एवंच वृक्षे कपिसंयोगतदभावयोस्सत्त्वेनाग्रे वृक्षः कपिसंयोगवान् मूले वृक्षः कपिसंयोगाभाववानिति प्रतीतेः विभिन्नावच्छेदेन वृक्षे कपिसंयोगतदभावावगाहित्ववत् इदानीं घटो न तदानीं घट इति प्रतीतेरपि विभिन्नावच्छेदेन महाकाले घटतदभावावगाहित्वे बाधकाभावात्। अत एवेदानीं घट इति प्रतीत्या महाकालसिद्धिः घटध्वंसविशिष्टः कालो घटवदन्य इति प्रतीत्या खण्डकालस्य चाधिकरणत्वं सिध्यतीति तर्कालङ्कारभट्टाचार्योक्तिरपि संगच्छत इति। सूर्यपरिस्पन्दादिकमित्यादिना वायुपरिस्पन्दादेः परिग्रहः। इतीत्यनन्तरं स्वसमवायितपनसंयोगिसंयोग एव संबन्धो वाच्यस्तत्रेति शेषः॥ **काल एवेति** ॥ आकाशादीनां विनिगमनाविरहेणं संबन्धघटकत्वासंभ-

## दिनकरीयम्.

कालस्य निमित्तहेतुत्वं न सम्भवति स्वसमवेतद्वित्वपृथक्त्वसंयोगविभागं प्रति कालस्य समवायिकारणत्वेन तद्भिन्नत्वघटितस्य निमित्तकारणत्वस्य तत्राभावादित्याचार्योक्तं शङ्क्यं समवायसम्बन्धेन द्वित्वादिकं प्रति तस्य समवायिकारणत्वेऽपि कालिकसंबन्धेन द्वित्वादिकार्यं प्रति निमित्तकारणत्वस्यानपायात्। एवमेव कार्यमात्रे दिशोऽपि निमित्तकारणत्वं बोध्यम्॥ **मुक्तावल्यां तत्रेति** ॥ **तत्र काले** ॥ **जगतामाश्रयो मत इति** ॥ कालः सर्ववानिति प्रतीत्या सर्वाधिकरणत्वेन कालसिद्धिरिति भावः। नन्वेतादृशी प्रतीतिर्दिग्विषयिण्येवास्तु अतिरिक्तकालकल्पने गौरवादिति न केवलमनया प्रतीत्या कालः सिध्यति परन्तु प्रमाणान्तरेण काले सिद्धे प्रकृतप्रतीतिबलात् सर्वाधारत्वं कल्प्यत इत्याह॥ **इदानीमित्यादिना** ॥ **सूर्यपरिस्पन्दादिकमिति** ॥ इदानीं तदानीमिति प्रतीतिर्महाकालं विषयीकरोतीति तु न वाच्यम्। तथासतीदानीं घटो न तदानीमिति प्रत्ययानुपपत्तेः नच तत्तत्क्रियाविशिष्टमहाकाल एवेदनीमित्यादिप्रत्ययविषयस्तथा चेदानीं घटो न तदानीमिति प्रत्ययस्यैतत्क्रियाविशिष्टमहाकाले घटो न तत्क्रियाविशिष्टमहाकाल इत्यर्थ इति वाच्यम्। तथा

## रामरुद्रीयम्.

योक्तरीत्या कालेऽसम्भवादिति भावः। इदानीमित्यादिप्रतीतीनां सूर्यपरिस्पन्दविषयकत्वं मूले प्रतिपादितं तदुपपादयति॥ **इदानीमित्यादिना** ॥ **प्रतीत्यनुदयापत्तेरिति** ॥ महाकालस्य सर्वाधारत्वादिति भावः। यद्यपि न तदानीं घट इति प्रतीतेरेव बाधितार्थकता त्वन्विदानीं घट इत्यस्येति इदानीं घट इति भागस्य प्रकृते नोपयोगस्तथापि कालस्य गगनादिवन्न कस्यापि कालिकसम्बन्धेनाधारतेति न तदानीं घट इ-

घटकः कल्प्यते । इत्थं च तस्याश्रयत्वमेव सम्यक् ॥ ४५ ॥

## परापरत्वधीहेतुः क्षणादिः स्यादुपाधितः ।

प्रमाणान्तरं दर्शयति ॥ परापरत्वेति ॥ परत्वापरत्वादिबुद्धेरसाधारणं निमित्तं काल एव ।

### प्रभा.

वादिति भावः । तथाचेदानीं घट इत्याकारकसूर्यपरिस्पन्दप्रकारकघटविशेष्यकप्रतीतिः परम्परासंबन्धविषया साक्षात्संबन्धाभावे सति विशिष्टबुद्धित्वादित्यनुमानात् परम्परासंबन्धविषयकत्वसिद्धौ तादृशपरम्परासंबन्धे क्लृप्ताकाशादीनां विनिगमनाविरहेण तादृशसंबन्धघटकतयाऽतिरिक्तकालस्सिध्यतीति इदानीमित्यादिकल्प्यत इत्यन्तसमुदायार्थः ॥ इत्थं चेति ॥ उक्तरीत्याऽतिरिक्तकालसिद्धौ चेत्यर्थः ॥ सम्यगिति ॥ संभवतीत्यर्थः । कालस्सर्ववानिति प्रतीतेरतिरिक्तकालविषयकत्वस्यैव युक्तत्वादिति भावः ॥ ४५ ॥

परापरत्वधीहेतुरिति मूलप्रतिपाद्यपरत्वापरत्वविषयकबुद्धिकारणत्वं कार्यमात्रकारणादृष्टादावतिप्रसक्तं अतः हेतुपदस्यासाधारणनिमित्तकारणत्वमङ्गीकृत्य विशिष्टमूलार्थमाह ॥ परत्वेति ॥ ननु परत्वापरत्वयोः प्रमाणोपन्यासायैव धीपदं नतु तस्यापि प्रवेशः परत्वापरत्वासाधारणकारणत्वस्यैव वक्तुमुचितत्वात् नच तदपि संभवति कालिकपरत्वापरत्वयोः जन्यद्रव्य एवोत्पत्त्या तत्र कालस्यासाधारणकारणत्वे मानाभावात् अ-

### दिनकरीयम्.

सति तत्तत्क्रियाविशिष्टमहाकालापेक्षया लाघवेन तत्तत्क्रियाया एव तादृशप्रतीतिविषयत्वस्योचितत्वात् । इतीत्यनन्तरं स्वाश्रयतपनसंयोगिसंयोग एव सम्बन्धो वाच्यस्तत्रेति शेषः । नचाकाशमेव सम्बन्धघटकमास्तामिति वाच्यम् । आकाशदिगात्मनां विनिगमनाविरहेणातिरिक्तैककालस्य तथात्वात् ॥ इत्थं चेति ॥ अतिरिक्तकालसिद्धौ चेत्यर्थः ॥ सम्यगिति ॥ कालः सर्ववानिति प्रतीतेरातिरिक्तकालविषयकत्वस्योचितत्वादिति भावः ॥ ४५ ॥

परत्वापरत्वबुद्धेरिति ॥ ज्येष्ठे परत्वप्रत्ययः कनिष्ठेऽपरत्वप्रत्ययः स च परत्वापरत्वगुणविशेषाधीनः परत्वापरत्वे च सासमवायिकारणके भावकार्यत्वात् असमवायिकारणं च तयोः कालपिण्डसंयोग एवेति परत्वापरत्वयोरसमवायिकारणसंयोगाश्रयतया कालसिद्धिरिति भावः । परत्वापरत्वयोरित्यस्यैव वक्तुमुचितत्वेऽपि तद्बुद्धिपर्यन्तानुधावनं कालिकपरत्वापरत्वयोः प्रमाणं दर्शयितुम् । न च पिण्डगतरूपादेरेव परत्वा-

### रामरुद्रीयम्.

त्यस्य नानुपपत्तिरिति यदि ब्रूयात्तदेदानीं घट इत्यपि न स्यादित्यावेदयितुं तदुपादानमिति ध्येयम् ॥ आकाशमेवेति ॥ स्वाश्रयसंयोगिसंयोगरूपपरम्परासम्बन्धस्याकाशमादायापि घटयितुं शक्यत्वादिति भावः ॥ तथात्वात् सम्बन्धघटकत्वात् । यद्यपि स्वसंयोगित्वेनैवाकाशादीनां सम्बन्धघटकता नत्वाकाशत्वादिनेति न विनिगमनाविरहावकाशस्तद्रूपेण क्लृप्तविभूनां सर्वेषामेव सम्बन्धघटकत्वमपीष्टमेव विनिगमनाविरहात् । न चानन्तव्यक्तीनां तादृशपरम्परासंबन्धघटकत्वकल्पनापेक्षया एकातिरिक्तव्यक्तिकल्पनमेव लघ्विति वाच्यम् । कालस्य संयोगिसंयोगघटकतायाः स्वसंयोगिन्याकाशादिव्यावर्तकविशेषणमन्तरा दुर्वारत्वादिदमसङ्गतं तथापि अनन्तानामाकाशादिसंयोगव्यक्तीनां घटीयसंसर्गता विनिगमनाविरहेण कल्पनीया अतिरिक्तकालव्यक्तिकल्पने तु तदीयसंयोगमात्र एव तत्कल्पनमिति लाघवं क्लृप्ताकाशादिसंयोगमादायाक्लृप्तकालसंयोगस्य विनिगमनाविरहो न सम्भवतीति पूर्वमेवावेदितमिति तात्पर्यमवगन्तव्यम् ॥ अतिरिक्तकालेति ॥ कालाख्यातिरिक्तद्रव्यसत्त्वे उक्तप्रतीतेर्दिग्विषयकता न युज्यते दिशोऽनुल्लेखात्कालपदस्य दिगर्थकता च लक्षणां विना न सम्भवतीति तत्स्वीकारे मुख्यार्थपरित्यागापत्तेरिति भावः ॥ ४५ ॥

मूले असाधारणं निमित्तमित्यस्य तादृशबुद्धित्वावच्छिन्नं प्रति निमित्तकारणमित्यर्थो न सम्भवति तथाविधहेतुतायां मानाभावादतस्तत्पदस्य प्रयोजकार्थकतां स्पष्टयति ॥ ज्येष्ठ इत्यादिना भाव इत्यन्तेन ॥ प्रमाणमिति ॥ रामः परो लक्ष्मणोऽपर इति विलक्षणप्रतीत्यैव कालिकपरत्वापरत्वयोः सिद्धिस्तादृशप्रतीतेः दि-

परत्वापरत्वयोरसमवायिकारणसंयोगाश्रयो लाघवादतिरिक्तः काल एव कल्प्यत इति भावः। नन्वेकस्य कालस्य सिद्धौ क्षणदिनमासवर्षादिसमयभेदो न स्यादित्यत आह ॥ **क्षणादिः स्यादुपाधित इति** ॥ कालस्त्वेकोऽप्युपाधिभेदात् क्षणादिव्यवहारविषयः। उपाधिस्तु स्व-

## प्रभा.

न्यथा रूपादिकं प्रत्यपि कालस्यासाधारणकारणत्वापत्तेः अतो भावार्थमाह ॥ **परत्वापरत्वयोरिति** ॥ तथाच परत्वापरत्वे सासमवायिकारणके भावकार्यत्वात् रूपादिवदित्यनुमानात् असमवायिकारणसिद्धौ तत्र गुणविभागकारिकया क्रमेणोपस्थितसमवायिकारणमात्रगतगुणानां केषांचित् व्यभिचारित्वात् केषांचित् विनिगमनाविरहेण बहूनामसमवायिकारणत्वापत्त्या गौरवादुभयवृत्तिद्वित्वादेरसमवायिकारणत्वं तु न संभवति द्वित्वादेरपेक्षाबुद्धयधीनत्वात् कार्योत्पत्तेः पूर्वं नियमेनावर्तमानत्वात् विनिगमनाविरहाच्च अतो गुणविभागकारिकया विभागात्पूर्वमुपस्थितस्य संयोगस्यैवोक्तानुमानात् सिद्धासमवायिकारणत्वं वाच्यं तादृशसंयोगस्य द्विनिष्ठत्वेन तदाश्रयत्वं क्लृप्तानां विनिगमनाविरहेणासंभवात् तदाश्रयतया लाघवात् अतिरिक्त एकः कालस्सिध्यतीति भावः। केचित्तु ननु लाघवादेककालसिद्धौ क्षणदिनादिविरुद्धनानाव्यवहारो न स्यात् नहि क्षणत्वदिनत्वादिकमविरुद्धं तथा सति दिनं क्षण इति व्यवहारापत्तेरित्यभिप्रायेण क्षणादिस्स्यादिति मूलमवतारयति नन्वित्यादिनेत्याहुः तदसत् क्षणत्वदिनत्वादीनां विरुद्धत्वे मानाभावात्। नचैवं सति दिनं क्षण इति व्यवहारापत्तिरिति वाच्यं उत्पत्तिकालीनो घटो गन्धवानिति व्यवहाराभावात् दिनत्वस्य क्षणत्वाधिकरणतावच्छेदकत्वाभावेनैव तथा व्यवहारापत्त्यभावात् कालस्त्वेकोऽपीत्युत्तरग्रन्थविरोधाच्च। वस्तुतस्तु नन्वेककालसिद्धौ क्षणादिविभिन्नव्यवहारो न स्यात् व्यवहर्तव्यभेदाभावादित्याभिप्रायेण मूलमवतारयति ॥ **नन्विति** ॥ **समयभेदो न स्यादिति** ॥ विभिन्नव्यवहारो न स्यादित्यर्थः व्यवहर्तव्यभेदाभावादिति शेषः ॥ **उपाधिभेदादिति** ॥ तथाच व्यवहर्तव्याभेदेऽपि व्यवहर्तव्यतावच्छेदकोपाधिभेदाद्विभिन्नव्यवहारो नानुपपन्न इति भावः। केचित्तु इदमुपलक्षणं तादृशोपाधीनामेव क्षणादिव्यवहारविषयत्वं नतु महाकालस्येत्यपि द्रष्टव्यमित्याहुः तदसत् मूलाविरुद्धमूलानुक्तार्थस्यैव न्यूनतापरिहारायेदमुपलक्षणमित्यादिना वक्तव्यतया मूलविरुद्धार्थप्रतिपादनस्योपलक्षणत्वासंभवात् उक्तरीत्या एकस्यैव क्षणादिनानाव्यवहारविषयत्वसंभवे बहूनां तादृशव्यवहारविषयत्वकल्पनाया अन्याय्यत्वाच्च। इदानीं क्षणत्वव्यवहारौपयिकोपाधीनाह ॥ **उपाधिस्त्विति** ॥

## दिनकरीयम्.

परत्वासमवायिकारणत्वमस्त्विति वाच्यम्। कालिकपरत्वापरत्वयोर्वाय्वुत्पत्त्या व्यभिचारात्। अत एव पृथिवीपिण्डसंयोगस्य न तत्र कारणत्वम्। पृथिव्यसंयुक्तपदार्थेऽपि तादृशपरत्वापरत्वयोरुत्पादेन व्यभिचारात्। ननु तथाप्याकाशदिगात्ममनोभिः पिण्डसंयोगस्य तथात्वं स्यात् किं कालकल्पनयेत्यत आह ॥ **लाघवादिति** ॥ आकाशदिग्भ्यां पिण्डसंयोगस्य तथात्वे जीवात्मभिः प्रत्येकं विनिगमनाविरहादात्ममनसोस्त्वनन्तत्वान्न तथात्वं किं तु लाघवादतिरिक्तः काल एव तथात्वेन कल्प्यत इति भावः ॥

ननु यदि काल एक एव तदा क्षणलवकाष्ठादिनानाव्यवहारस्तत्र न स्यात्। नचैकस्मिन्नेव घटे घटः कलशः कुम्भ इति व्यवहारवदत्रापि क्षणादिनानाव्यवहारे बाधकाभाव इति वाच्यम्। एकस्मिन् विरुद्धनानाव्यवहारायोगात् नहि घटत्वकलशत्वादिकं मिथो विरुद्धं क्षणत्वदिनत्वादिकं तु विरुद्धमेव नहि क्षणं दिनमिति प्रतीतिरस्तीत्याशङ्कते ॥ **नन्वेकस्येति** ॥ **समयभेदः** समयभेदव्यवहारः। विभिन्नव्यवहारविषय इति यावत्। एकस्मिन् विरुद्धनानाव्यवहारविषयत्वाभावादिति भावः ॥ **उपाधिभेदादिति** ॥ तथा चैकस्य

## रामरुद्रीयम्.

वकृतपरत्वादिविषयकत्वासम्भवादिति भावः। प्रत्यक्षे विषयस्य कारणतया विषयप्रयोजकस्य तत्प्रत्यक्षप्रयोजकताऽवसेया ॥ **व्यभिचारादिति** ॥ यद्यपि स्पर्शस्य कारणत्वेन वायुपरत्वादौ व्यभिचारस्तथापि सङ्ख्यादिकमादाय विनिगमनाविरहादनन्तगुणानां तथात्वापत्त्याऽक्लृप्तस्य कालसंयोगस्यैव तथात्वमुचि

जन्यविभागप्रागभावावच्छिन्नं कर्म पूर्वसंयोगावच्छिन्नविभागो वा पूर्वसंयोगनाशावच्छिन्नो-

## प्रभा.

क्षणत्वव्यवहारौपयिकोपाधिस्त्वित्यर्थः । तुः अवधारणे उच्यत इति शेषः । तानेवाह ॥ **स्वजन्येति** ॥ घटगतैकक्रियानाशोत्तरोत्पन्नतद्गतक्रियान्तरोत्पन्नविभागप्रागभावविशिष्टप्रथमकर्मणः क्षणचतुष्टयावस्थायिनः प्रथमक्षणत्वापत्तिवारणाय स्वजन्येति । तथाच स्वजन्यविभागप्रागभावावच्छिन्नं यत् स्वं स एव प्रथमक्षणत्वव्यवहारौपयिकोपाधिरिति भावः । इदन्तु प्राचीनमते । प्रागभावानङ्गीकर्तृनवीनमते तु स्वजन्य-विभागानवच्छिन्नं स्वमेव तत्र क्षणत्वव्यवहारौपयिकोपाधिरिति बोध्यं प्रतिक्षणं क्रियोत्पत्तौ मानाभावेन द्वितीयादिक्षणेषु एतादृशोपाध्यसंभवात् तत्रापि तादृशव्यवहारौपयिकोपाधिमाह ॥ **पूर्वसंयोगेति** ॥ स्वजन्यविभागनाश्यसंयोगविशिष्टस्वजन्यविभाग इत्यर्थः । तेन स्वजन्यविभागस्योदासीनपूर्वसंयोगविशिष्टस्य द्वित्रिक्षणवृत्तित्वेऽपि उदासीनविभागस्य स्वजन्यविभागनाश्यसंयोगविशिष्टस्य तथात्वेऽपि न क्षतिः । तृतीयक्षणे तमाह ॥ **पूर्वसंयोगनाशेति** ॥ स्वजन्यविभागजन्यसंयोगनाशावच्छिन्नस्वजन्यसंयोगप्रागभाव इत्यर्थः । तेन नोक्तरीत्याऽतिप्रसङ्गः । इदमपि प्राचां मते । नवीनमते स्वजन्यसंयोगानवच्छिन्नस्वजन्यविभाग-जन्यसंयोगनाश एवोपाधिर्बोध्यः । अत्र विभागस्य स्वजनकक्रियानाशनाश्यत्वमिति भाष्यकाराः । स्वजन्य-विभागस्य स्वजजन्यसंयोगनाश्यत्वमिति केचित् । जन्यविभागस्य स्वजन्यविभागजन्यसंयोगनाशनाश्यत्व-मिति नव्याः । एतन्मते स्वजन्यविभागजन्यसंयोगनाशावच्छिन्नस्वजन्यविभागो वा तृतीयक्षणे क्षणत्वव्यव-

## दिनकरीयम्.

कालस्य किञ्चिद्धर्मविशिष्टस्य क्षणत्वं किञ्चिद्धर्मविशिष्टस्य दिनत्वं न तु केवलस्येति भावः । इदमुपलक्षणम् । तादृशोपाधीनामेव क्षणत्वादिव्यवहारविषयत्वं नतु महाकालस्येत्यपि द्रष्टव्यम् ॥ **स्वजन्येति** ॥ स्वं क्रिया । घटगतैकक्रियानाशोत्तरोत्पन्नतद्गतक्रियान्तरजन्यविभागप्रागभावविशिष्टस्य प्रथमकर्मणः क्षणचतुष्टयावस्थायिनः क्षणत्वापत्तिरतः स्वजन्येति । नन्वेवं प्रथमक्षणे क्षणव्यवहारोपपादनेऽपि द्वितीयक्षणे कथं तदुपपादनं तत्र क्रियाजन्यविभागोत्पत्त्या विभागप्रागभावासम्भवात् । न च द्वितीयक्षणोत्पन्नक्रियान्तरस्यैव निरुक्त-विशिष्टस्य तत्र क्षणत्वमिति वाच्यम् । प्रतिक्षणं क्रियोत्पत्तौ मानाभावात् अतस्तत्रापि क्षणव्यवहारोपपादकमुपाधिमाह ॥ **पूर्वसंयोगेति** ॥ स्वजन्यविभागनाश्यपूर्वसंयोगविशिष्टस्वजन्यविभाग इत्यर्थः । तेन स्वजन्यविभागस्य यत्किञ्चित्पूर्वसंयोगविशिष्टस्य द्वित्रिक्षणवृत्तित्वेऽपि यत्किञ्चिद्विभागस्य स्वजन्यविभागना-श्यपूर्वसंयोगविशिष्टस्य तथात्वेऽपि न क्षतिः । तृतीयक्षणे तदुपपादकमुपाधिमाह ॥ **पूर्वसंयोगनाशाव-च्छिन्नोत्तरसंयोगप्रागभावो वेति** ॥ स्वजन्यविभागजन्यपूर्वसंयोगनाशावच्छिन्नस्वजन्योत्तरसंयोग-

## रामरुद्रीयम्.

तमिति भावः ॥ **तथात्वेन** निरुक्तासमवायिकारणसंयोगाश्रयत्वेनेत्यर्थः ॥ **विरुद्धेति** ॥ एकधर्मावच्छिन्नबोधकत्वमेव व्यवहारगतो विरोधः ॥ **नहीति** ॥ घटत्वादीनामविरोधोक्तिर्व्यवहारे एकधर्मावच्छिन्नबोधकत्वरूपविरोधपरिहारायैव । एवमुत्तरत्रापीति मन्तव्यम् । एकस्मिन्नित्यनन्तरं विरुद्धेति पूरणीयं उक्तयुक्तेः ॥ **द्रष्टव्यमिति** ॥ इदं च न मूलकारसंमतं तथासत्युपाधीनां कालघटितपरम्परासम्बन्धेनैव आधारताप्रत्ययस्योपगन्तव्यतया गौरवापत्तेः साक्षादधिकरणत्वोपगमस्य नानाव्यक्तिषु तत्तदनन्तपदार्थीयकालिकसम्बन्धत्वकल्पनाप्रयुक्तगौरवग्रस्तत्वादिति ध्येयम् ॥ **निरुक्तेति** ॥ स्वजन्यविभागप्रागभावेत्यर्थः ॥ **प्रतिक्षणमिति** ॥ द्वितीयतृतीयचतुर्थक्षणेषु क्रियान्तरोत्पत्तिमन्तरा क्षणनिर्वचनसम्भवेऽपि पञ्चमक्षणोपाधेः क्रियान्तरोत्पत्त्यैव निर्वाहात्प्रतिक्षणमित्युक्तम् ॥ **स्वजन्येति** ॥ स्वपदं पूर्वततत्क्रियाव्यक्तिपरम् । स्वजन्यविभागनाश्यत्वानिवेशे प्रयोजनमाह ॥ **तेनेति** ॥ **त्रिक्षणेति** ॥ इदं च उत्तरदेशसंयोगेन चतुर्थक्षणे सर्वत्र विभागनाश इत्यभिप्रायेण अन्यथा गगनादिगतविभागस्य ध्वंसादिवदविनाशित्वापत्तेरिति भावः । त्रिक्षण-वृत्तित्वेऽपीत्यस्य न क्षतिरित्यनेतनेनान्वयः । विभागे स्वजन्यत्वनिवेशप्रयोजनमाह ॥ **यत्किञ्चिदिति** ॥

त्तरसंयोगप्रागभावो वा उत्तरसंयोगावच्छिन्नं कर्म वा। नचोत्तरसंयोगानन्तरं क्षणव्यवहारो न स्यादिति वाच्यम् । कर्मान्तरस्यापि सत्त्वादिति । महाप्रलये क्षणादिव्यवहारो यद्यस्ति

## प्रभा.

हारौपयिकोपाधिर्बोध्यः । क्वचित्पुस्तके पूर्वसंयोगावच्छिन्नविभागो वेति पाठः स तु नवीनमताभिप्रायकतया एवं व्याख्येयः । चतुर्थक्षणे तादृशोपाधिमाह ॥ **उत्तरसंयोगेति** ॥ स्वजन्यसंयोगावच्छिन्नं स्वमित्यर्थः । तेन संयोगमात्रस्योत्तरसंयोगत्वेन संयोगोत्पत्तिकालीनोत्पत्तिकर्मणः क्षणचतुष्टयस्थायिनः न क्षणत्वापत्तिरिति ॥ नन्वेतादृशक्षणलक्षणं महाप्रलयात्मकक्षणे अव्याप्तं तत्र क्रियादेरभावात् । नच तत्र क्षणत्वाभावे का क्षतिरिति वाच्यं तथा सति अध्वस्तक्षणयोगस्य क्षणयोगो जनिर्मतेति उत्पत्तिलक्षणप्रतिपादकाचार्यकारिकायाः मणिकारकृतस्य तदधिकरणक्षणावृत्तित्वव्याप्यस्ववृत्तिध्वंसप्रतियोगिताकसमयवृत्तित्वरूपोत्पत्तिलक्षणार्थस्याव्याप्त्यापत्तेः तत्र महाप्रलयाधिकरणक्षणाप्रसिद्धेरत आह ॥ **महाप्रलय इति** ॥ नच तादृशसमयसंबन्धरूपोत्पत्तिलक्षणं नित्येऽतिव्याप्तमिति वाच्यं यदधिकरणक्षणावृत्तित्वव्याप्या यत्समयवृत्तिध्वंसप्रतियोगिता तस्य तत्समयसंबन्ध एवोत्पत्तिरित्यर्थकरणेन घटीयाद्यक्षणवृत्तिध्वंसप्रतियोगित्वस्य घटाधिकरणक्षणावृत्तित्वव्याप्यत्वेन घटे तादृशसमयसंबन्धसत्त्ववत् घटत्वाधिकरणक्षणावृत्तित्वव्याप्या यत्समयवृत्तिध्वंसप्रतियोगिता तादृशसमयस्यैव घटत्वादेः नित्यत्वेनाप्रसिद्धतया घटत्वादावतिव्याप्त्यप्रसक्तेः । यद्यपि यद्वृत्तित्वव्याप्येत्येव वक्तुमुचितं लाघवात् तथापि जन्यमात्रस्य कालोपाधितानङ्गीकर्तृमते द्वितीयादिक्षणस्यापि यत्समयशब्देनोपादातुं शक्यतया तृतीयादिसमयसंबन्धस्यापि उत्पत्तिपदार्थत्वापत्तेरिति उपेक्षितं । यदधिकरणक्षणावृत्तित्वं च यदधिकरणक्षणवृत्तित्वसामान्याभावरूपं ग्राह्यं नातः विशिष्टाभावोभयाभावमादाय घटादावव्याप्तिः । व्यापकता चाभावीयदैशिकविशेषणतासंबन्धेन । तेन कालिकसंबन्धमादाय नोक्तदोषः । व्याप्यता च स्वरूपसंबन्धेन ग्राह्या तेन न कालिकसंबन्धमादायोक्तदोषप्रसक्तिः । एवंच यदधिकरणवृत्तित्वघटकवृत्तित्वं अवृत्तित्वप्रतियोगिवृत्तित्वं ध्वंसस्य यत्समयवृत्तित्वं च कालिकसंबन्धावच्छिन्नं न संबन्धसामान्या-

## दिनकरीयम्.

प्रागभाव इत्यर्थान्नातिप्रसङ्गः । क्वचित्पुस्तके पूर्वसंयोगनाशावच्छिन्नविभागो वेति पाठः स च प्रामादिकः प्रथमद्वितीयचतुर्थक्षणेष्वेकैकोपाधेरेवाभिहिततया तृतीयक्षणे उपाधिद्वयाभिधाने सन्दर्भविरोधापत्तेः उत्तरसंयोगस्यैव विभागनाशकतायाः सिद्धान्तसिद्धतया निरुक्तोपाधेः क्षणद्वयावस्थायिनः क्षणत्वायोगाच्च । यदि च तत्पाठप्रामाण्येऽप्याग्रहस्तदा पूर्वसंयोगनाशस्यैव विभागनाशकत्वाभिप्रायेण स योजनीयः । चतुर्थक्षणे तमाह ॥ **उत्तरसंयोगेति** ॥ स्वनाशकोत्तरसंयोगेत्यर्थः । तेन सर्वस्यैव संयोगस्योत्तरसंयोगतया तद्विशिष्टकर्मणः क्षणचतुष्टयावस्थायिनः क्षणत्वापत्तिर्निरस्ता । नन्वेतादृशक्षणलक्षणं महाप्रलयात्मकक्षणेऽव्याप्तं तत्र तादृशकर्माभावात् । न च महाप्रलयस्य क्षणत्वाभाव इष्ट एवेति वाच्यम् । तत्रापि क्षणव्यवहारस्य सत्त्वात् अन्यथा महाप्रलयोत्पत्तौ उत्पत्तिलक्षणस्य तदधिकरणक्षणावृत्तित्वव्याप्यस्ववृत्तिध्वंसप्रतियोगिताकसमयवृत्तित्वरूपस्याव्याप्त्यापत्तेः तत्र महाप्रलयाधिकरणक्षणाप्रसिद्धेरत आह ॥ **महाप्रलय इति** ॥ महाप्रलये क्षणव्यवहारो

## रामरुद्रीयम्.

**तथात्वेऽपि** त्रिक्षणवृत्तित्वेऽपि ॥ **नातिप्रसङ्ग इति** ॥ पूर्वसंयोगनाशे स्वजन्यविभागजन्यत्वाप्रवेशे स्वजन्यत्वाप्रवेशे च पूर्ववदतिप्रसङ्गो यः स नेत्यर्थः ॥ **सन्दर्भेति** ॥ ननु तृतीयक्षणे उपाधिद्वयस्यापि सम्भवेन एकमात्राभिधाने न्यूनता स्यादिति द्वयमप्युक्तं इतरत्र एकैकोपाधेरेव सत्त्वादेकैकमेवोक्तमिति नैतावता सन्दर्भविरोध इत्यत आह ॥ **उत्तरेति** ॥ एवकारेण पूर्वसंयोगनाशव्यवच्छेदः तथा चोत्तरसंयोगोत्पत्तिक्षणेऽपि विभागस्तिष्ठत्येवेति भावः ॥ **स्वनाशकेति** ॥ उत्तरसंयोगोत्तरं क्रिया न तिष्ठतीति लाभायैतदभिहितं लाघवेन स्वजन्यत्वस्यैव वक्तुमुचितत्वात् । न च पूर्वसंयोगनाशस्यैवोत्तरसंयोगजनकत्वमिति वाच्यम् । तथासति क्रियाविगमेऽपि तदुत्पत्त्यापत्तिः संयोगविभागयोरनपेक्षकारणं कर्मेति सूत्रविरोधापत्तेश्चेति ॥

**तदा ध्वंसेनैवोपपादनीय इति । दिनादिव्यवहारस्तु तत्तत्क्षणकूटैरिति ॥**

## प्रभा.

वच्छिन्नं ग्राह्यं अन्यथा संबन्धान्तरेण तेषां वृत्तित्वाप्रसिद्धयाऽसंभवापत्तेः । तथाच यत्समयवृत्तिध्वंसप्रतियोगित्वव्यापकतावच्छेदकं यदधिकरणक्षणवृत्तित्वसामान्याभावत्वं तस्य तत्समयसंबन्ध उत्पत्तिरिति पर्यवसितोऽर्थः । स्ववृत्तिध्वंसप्रतियोगित्वव्यापकतावच्छेदकाभावत्वावच्छिन्ननिरूपितप्रतियोगितावच्छेदकवृत्तित्वावच्छिन्ननिरूपकक्षणसामान्यवृत्तित्वसंबन्धेन क्षणवत्त्वमुत्पत्तिरिति निर्गलितोऽर्थ इति प्रतिभाति । महाप्रलये क्षणव्यवहारो नास्त्येव स्ववृत्तिध्वंसप्रतियोगिकालावृत्तित्वस्ववृत्तित्वोभयसंबन्धेन किंचित्पदार्थरूपस्य क्षणाघटितोत्पत्तिलक्षणस्य वक्तुं शक्यत्वात् अत्र घटोत्पत्तिप्राक्क्षणमादायोत्पन्नघटस्य पुनरुत्पत्त्यापत्तिवारणाय स्ववृत्तित्वस्य संबन्धकोटौ प्रवेशः द्वितीयादिक्षणसंबन्धस्याप्युत्पत्तिरूपत्वापत्तिवारणाय स्ववृत्तिध्वंसप्रतियोगिकालावृत्तित्वस्यापि संबन्धघटकतेति एवंचोक्तारुचिं हृदि निधाय यदीत्युक्तम् ॥ **ध्वंसेनैवेति** ॥ स्ववृत्तिध्वंसप्रतियोगिप्रतियोगिकयावद्ध्वंसविशिष्टसमयस्यैव तत्र क्षणव्यवहारनियामकत्वेन मणिकारोक्तत्वात् अत्र यावद्ध्वंसविशिष्टमात्रस्य तत्र क्षणव्यवहारनियामकत्वे असंभवः घटप्रागभावध्वंसस्य घटात्मकतया तस्यापि यावद्ध्वंसान्तर्गतत्वेन प्रलयस्य कालिकसंबन्धेन घटाद्यात्मकध्वंसघटितसमुदायवत्त्वाभावात् अतः स्ववृत्तिध्वंसप्रतियोगिप्रतियोगिकत्वं यावद्ध्वंसविशेषणं. तादृशयत्किंचिद्ध्वंसवत्त्वस्येदानीन्तनकालेऽपि सत्त्वेनातिव्याप्तिवारणाय यावद्ध्वंसविशेषणम् । एवं चरमक्रियाध्वंसस्यापि प्रलयात्मकस्ववृत्तिध्वंसप्रतियोगिप्रतियोगिकयावद्ध्वंसान्तर्गतत्वेन तद्घटितध्वंससमुदायस्येदानीन्तनकालेऽभावान्नातिव्याप्तिः । यद्यपि घटात्मकध्वंसमादायासंभववारणाय यावद्ध्वंसेषु भावप्रतियोगिकत्वविशेषणमेव दातुमुचितं स्ववृत्त्यादिविशेषणापेक्षया लाघवात् तथापि भावप्रतियोगिकयावद्ध्वंसस्य महाकालेऽपि सत्त्वात् अतिव्याप्त्यापत्तेः । नच तस्यापि क्षणत्वमिष्टमेवेति वाच्यं केवलमहाकालस्य क्षणत्वाङ्गीकारे सिद्धान्तविरोधापत्तेः केवलमहाकालस्य तथा व्यवहाराभावाच्च । स्ववृत्तीत्यादिविशेषणदाने तु घटाद्यात्मकध्वंसस्यापि यावदन्तर्गतत्वेन तद्घटितध्वंससमुदायत्वावच्छिन्नस्य कदाचिदपि महाकालेऽसत्त्वेन नोक्तदोषावकाशः । तस्मात् तादृशयावद्ध्वंसविशिष्टसमयस्य क्षणत्वव्यवहारनियामकत्वेन मणिकारोक्तस्य तत्रापि संभवात् क्षणव्यवहारो नानुपपन्न इति भावः ॥

॥ इति कालग्रन्थः ॥

## दिनकरीयम्.

नास्त्येव उत्पत्तिलक्षणस्य क्षणाघटितस्यैव स्ववृत्तिध्वंसप्रतियोगिकालावृत्तित्वविशिष्टस्ववृत्तित्वरूपस्य तदुत्पत्तौ सम्भवादित्यभिप्रेत्योक्तं यदीति ॥ **ध्वंसेनैवेति** ॥ स्ववृत्तिध्वंसप्रतियोगिप्रतियोगिकयावद्ध्वंसविशिष्टसमयस्यैव तत्र क्षणव्यवहारविषयत्वादिति भावः ॥ इति कालग्रन्थः ॥

## रामरुद्रीयम्.

**तादृशकर्मेति** ॥ विभागप्रागभावाद्यवच्छिन्नकर्मेत्यर्थः । इदमुपलक्षणं । उत्तरसंयोगप्रागभावादेरप्यसत्त्वादित्यपि बोध्यम् ॥ **तदधिकरणेति** ॥ तत्पदमुत्पत्स्यमानपदार्थपरं अधिकरणत्वमाधेयताद्वयं च कालिकेन व्याप्यत्वं व्यापकत्वं च दैशिकस्वरूपेण बोध्यम् । तथा च यदधिकरणक्षणावृत्तित्वस्य व्याप्या यत्समयवृत्तिध्वंसप्रतियोगिता तस्य तत्समयवृत्तित्वमुत्पत्तिरित्यर्थः । अत्र च यदधिकरणसमयेत्युक्तौ तद्घटाधिकरणमहाकालादिवृत्तित्वस्यैव तदुत्पत्तिसमयवृत्तिध्वंसप्रतियोगिपूर्वविनष्टपटादौ सत्त्वेन व्याप्तिभङ्गः स्यादिति क्षणत्वेनैव समयो निवेशनीय इति भावः ॥ **स्ववृत्तीति** ॥ अत्र स्वपदद्वयं यत्समयवृत्तित्वमुत्पत्तित्वेनाभिमतं तत्समयव्यक्तिपरं कालावृत्तित्वं तादृशकालवृत्तित्वसामान्याभावस्तेन न स्वपदेन द्वितीयक्षणाद्युपादानसम्भवः अन्यथा द्वितीयादिक्षणवृत्तिध्वंसप्रतियोगियत्किञ्चित्पूर्वकालावृत्तित्वस्योत्पन्नघटादौ सत्त्वेन तस्य द्वितीयादिक्षणवृत्तित्वस्याप्युत्पत्तित्वप्रसङ्गात् तादृशाभाववैशिष्ट्यं स्ववृत्तित्वे सामानाधिकरण्यसम्बन्धेन बोध्यम् । ननु मूले महाप्रलये ध्वंसरूपसमयेनैव क्षणव्यवहार उपपादनीय इत्युक्तं तन्न सङ्गच्छते ध्वंसस्य क्षणत्वे सृष्टिकालेऽपि ध्वंसरूपस्थूलकालस्य क्षणत्वेन व्यवहारापत्तेः । यदि च चरमध्वंसव्यक्तेरेव तद्व्यक्तित्वे-

## दूरान्तिकादिधीहेतुरेका नित्या दिगुच्यते ॥ ४६ ॥

दिशं निरूपयति ॥ **दूरान्तिकेति** ॥ दूरत्वमन्तिकत्वं च दैशिकं परत्वमपरत्वं बोध्यम् । तद्बुद्धेरसाधारणं बीजं दिगेव । दैशिकपरत्वापरत्वयोरसमवायिकारणसंयोगाश्रयतया लाघवादेका दिक् सिध्यतीति भावः ॥ ४६ ॥

## उपाधिभेदादेकापि प्राच्यादिव्यपदेशभाक् ।

नन्ु यद्येकैव दिक् तदा प्राचीप्रतीच्यादिव्यवहारः कथमुपपद्यत इत्यत आह ॥ **उपाधिभेदादिति** ॥ यत्पुरुषस्योदयागिरिसन्निहिता या दिक् सा तत्पुरुषस्य प्राची एवमुदयागिरिव्यवहिता या

### प्रभा.

बहुतरसूर्यपरिस्पन्दान्तारितत्वरूपदूरत्वस्याल्पतरसूर्यपरिस्पन्दान्तरितत्वरूपान्तिकत्वस्य च ज्ञाने दिशः असाधारणकारणत्वे मानाभावः अन्यथाऽनेकघटाद्यन्तरितत्वादिज्ञानेऽपि दिशस्तादृशकारणत्वापत्तेः । अतः मूलोक्तदूरादिपदानां दैशिकपरत्वापरत्ववत्परत्वं बोधयितुं दूरत्वादिपदार्थमाह ॥ **दूरत्वमिति** ॥ अत्रापि दिग्विशेषणतासंबन्धावच्छिन्नकार्यतानिरूपिततादात्म्यसंबन्धावच्छिन्नकारणत्वं दिशो लक्षणं बोध्यम् । दिक् सर्ववर्तीति प्रतीत्या सर्वाधिकरणतया दिक्सिद्धिर्बोध्या तदुपर्युक्तरीत्याऽऽशङ्कापरिहाराय प्रमाणान्तरेण दिक्सिद्ध्यै परत्वापरत्वधीहेतुरित्युक्तमिति ध्येयम् । ननु दैशिकपरत्वापरत्वबुद्धिकारणत्वं कार्यमात्रकारणादृष्टादावतिव्याप्तमतो हेतुपदस्यासाधारणनिमित्तकारणपरत्वाभिप्रायेण विशिष्टमूलार्थमाह ॥ **तद्बुद्धेरसाधारणमिति** ॥ ननु दिशो दैशिकपरत्वापरत्वासाधारणकारणत्वस्यैव वक्तुमुचितत्वेन बुद्धिपदस्य दैशिकपरत्वापरत्वयोः प्रमाणोपन्यासपरत्वेनैव सार्थक्यं वक्तव्यं तदपि न संभवति दैशिकपरत्वापरत्वयोः मूर्त एवोत्पन्नत्वेन तत्र दिशः असाधारणकारणत्वे मानाभावात् अन्यथा मूर्त उत्पन्नकार्यान्तरेऽपि तस्याः असाधारणकारणत्वापत्तेः अतो भावार्थमाह ॥ **दैशिकपरत्वापरत्वेति** ॥ अत्रापि भावकार्यत्वलिङ्गकानुमानादसमवायिकारणसिद्धौ कालस्थलोक्तरीत्या संयोगस्यासमवायिकारणत्वे सिद्धे क्लृप्तानां विनिगमनाविरहेण तादृशसंयोगाश्रयतया दिक्सिद्धिरिति भावः ॥ ४६ ॥

॥ **कथमुपपद्यत इति** ॥ व्यवहर्तव्यभेदाभाव इति भावः । प्राच्यादिव्यवहारनिमित्तान् उपाधीनाह ॥ **यत्पुरुषस्येति** ॥ अत्र पुरुषपदं मूर्तमात्रोपलक्षकं पञ्चम्यर्थे षष्ठी दिक्पदमपि मूर्तमात्रोपलक्षकं तथाच यन्मूर्तादुदयगिरिसन्निहितं यन्मूर्तं सा ततः प्राचीत्यर्थः । तदपेक्षयोदयगिरिसन्निहितत्वं च तन्नि-

### दिनकरीयम्.

**बीजं** प्रयोजकम् । कथं दिशस्तत्र प्रयोजकत्वं तद्दर्शयति ॥ **दैशिकपरत्वापरत्वयोरिति** ॥ परत्वापरत्वबुद्धिं प्रति परत्वापरत्वे निमित्ते तत्र दिक्पिण्डसंयोगस्तत्र दिगिति क्रमेण परम्परया दिशस्तद्बुद्धौ निमित्तत्वं बोध्यम् । अत्रापि बुद्धिपर्यन्तानुधावनं दैशिकपरत्वापरत्वयोः प्रमाणं दर्शयितुं तादृशपरत्वापरत्वाभ्यामेव तदनुमितेः सम्भवादिति ॥ ४६ ॥

प्रतीच्यादीत्यादिनोदीच्यादिपरिग्रहः ॥ **मूले उपाधीति** ॥ वस्तुतो दिश एकत्वेऽपि तत्तदुपाधिभेदेन

### रामरुद्रीयम्.

न क्षणत्वं नान्यध्वंसस्येत्युच्यते तदा कुतो नान्यध्वंसस्य तद्व्यक्तित्वेन क्षणव्यवहारविषयता चरमध्वंसस्यैव तथात्वमित्यत्र बीजालाभ इत्यतो यथा नान्यध्वंसस्य तद्व्यक्तित्वेन क्षणव्यवहारविषयत्वं तथा विशेषणं प्रदर्शयति ॥ **स्ववृत्तीति** ॥ तादृशसमयश्चरमध्वंस एवेति भावः ॥ इति कालग्रन्थः ॥

कारिकास्थहेतुशब्दस्य मूले बीजमिति व्याख्यानं कृतं तन्न सङ्गच्छते कारणेऽपि क्वचिद्बीजशब्दप्रयोगात् परत्वापरत्वबुद्धौ दिशोऽकारणत्वाच्च अतो बीजशब्दस्य प्रकृते प्रयोजकार्थकतामाह ॥ **बीजमिति** ॥ ननु परत्वापरत्वाभ्यामेव दिशोऽनुमानसंभवात्तद्बुद्धिपर्यन्तानुधावनमफलमित्यत आह ॥ **अत्रापीति** ॥ ४६ ॥

दिक् सा प्रतीची । एवं यत्पुरुषस्य सुमेरुसन्निहिता या दिक् सोदीची तद्व्यवहिता स्व-

**प्रभा.**

छोदयगिरिसंयुक्तसंयोगापेक्षया अल्पतरोदयगिरिसंयुक्तसंयोगवत्त्वं । नचोदयगिरिव्यवहिते उदयगिरिसन्निहिते चोदयगिरिसंयुक्तसंयोगपरम्पराघटकैकसंयोगस्यैव विद्यमानत्वेन कथमुदयगिरिसमीपस्थे मूर्ते दूरस्थमूर्तनिष्ठोदयगिरिसंयुक्तसंयोगापेक्षया अल्पतरोदयगिरिसंयुक्तसंयोगवत्त्वमिति वाच्यं तन्निष्ठोदयगिरिसंयुक्तसंयोगापेक्षयाऽल्पतरोदयगिरिसंयुक्तसंयोगवत्त्वस्य तन्निष्ठोदयगिरिसंयुक्तसंयोगपरम्पराघटकसंयोगसमुदायपर्याप्तसंख्यान्यूनसंख्यापर्याप्त्यधिकरणस्वनिष्ठोदयगिरिसंयुक्तसंयोगपरम्पराघटकसंयोगसमुदायवत्त्वरूपतयोक्तदोषाभावात् । नच दूरस्थमूर्तनिष्ठोदयगिरिसंयुक्तसंयोगपरम्पराघटकसंयोगसमुदायापेक्षया समीपस्थमूर्तस्य दूरस्थपदार्थघटितसव्यापसव्योदयगिरिसंयुक्तसंयोगपरम्पराघटकसंयोगसमुदायस्य बहुत्वेन दूरस्थमूर्तापेक्षया समीपस्थमूर्तस्य प्रतीचीत्वव्यवहारापत्तिरिति वाच्यं स्वनिष्ठोदयगिरिसंयुक्तसंयोगपरम्परायाः स्वनिष्ठोदयगिरिसंयुक्तसंयोगपरम्परानिष्ठन्यूनत्वानिरूपकत्वेन विशेषणीयत्वात् । एवंच दूरस्थमूर्तघटितस्वनिष्ठसव्यापसव्योदयगिरिसंयुक्तसंयोगपरम्परायाः स्वनिष्ठदूरस्थमूर्तघटितलघुभूतोदयगिरिसंयुक्तसंयोगपरम्परानिष्ठ-यूनत्वनिरूपकत्वेन लघुभूतोदयगिरिसंयुक्तसंयोगपरम्परायां एव न्यूनत्वानिरूपकत्वात्स्वनिष्ठतादृशलघुपरम्पराघटकसंयोगसमुदायस्य दूरस्थमूर्तनिष्ठोदयगिरिसंयुक्तसंयोगपरम्पराघटकसंयोगसमुदायपर्याप्तसंख्याधिकसंख्यापर्याप्त्यनधिकरणत्वेन तादृशसंख्यापर्याप्त्यधिकरणसंयोगसमुदायकत्वस्य सुतरां स्वपदार्थीभूतसमीपस्थमूर्तेऽभावेन दूरस्थमूर्तापेक्षया समीपस्थमूर्तस्य प्रतीचीत्वव्यवहारापत्तेरभावात् । तथाच तन्निष्ठोदयगिरिसंयुक्तसंयोगापेक्षयाऽल्पतरोदयगिरिसंयुक्तसंयोगवत्त्वं च तन्निष्ठोदयगिरिसंयुक्तसंयोगपरम्पराघटकसंयोगसमुदायपर्याप्तसंख्यान्यूनसंख्यापर्याप्त्यधिकरणसमीपस्थमूर्तनिष्ठोदयगिरिसंयुक्तसंयोगपरम्परानिष्ठन्यूनत्वानिरूपकस्वनिष्ठोदयगिरिसंयुक्तसंयोगपरम्पराघटकसंयोगसमुदायकत्वमेव । तन्निष्ठोदयगिरिसंयुक्तसंयोगापेक्षया बहुतरोदयगिरिसंयुक्तसंयोगवत्त्वं च तन्निष्ठोदयगिरिसंयुक्तसंयोगपरम्परानिष्ठन्यूनत्वानिरूपकतन्निष्ठोदयगिरिसंयुक्तसंयोगपरम्पराघटकसंयोगसमुदायपर्याप्तसंख्याधिकसंख्यापर्याप्त्यधिकरणदूरस्थमूर्तात्मकस्वनिष्ठोदयगिरिसंयुक्तसंयोगपरम्पराघटकसंयोगसमुदायकत्वमेवेति फलितम् । अत्रोदाहरणं मथुरातः प्राच्यां प्रयाग इति काशीतः प्रतीच्यां प्रयाग इति बोध्यम् । अनयैव दिशा मेरुसन्निहितत्वमेरुव्यवहितत्वे उपपादनीये । अ-

**दिनकरीयम्**

प्राच्यादिसंज्ञाभेद इति भावः । प्राच्यादिसंज्ञासु निमित्तभूतानुपाधीनाह ॥ **यत्पुरुषस्येति** ॥ पुरुषस्येति पदार्थमात्रोपलक्षणम् । पञ्चम्यर्थे षष्ठी । दिक् मूर्तम् । एवमग्रेऽपि । तथा च यदपेक्षयोदयगिरिसन्निहितं यन्मूर्तं सा ततः प्राचीत्यर्थः तदपेक्षयोदयगिरिसन्निहितत्वं च तन्निष्ठोदयगिरिसंयुक्तसंयोगापेक्षयाऽल्पतरोदयगिरिसंयुक्तसंयोगवत्त्वम् । इत्थं च मथुरायाः प्राच्यः प्रयाग इत्यत्र मथुरानिष्ठोदयगिरिसंयुक्तसंयोगपर्याप्तसङ्ख्याव्याप्यसङ्ख्यापर्याप्त्यधिकरणोदयगिरिसंयुक्तसंयोगवन्मूर्तवृत्तिः प्रयाग इत्यन्वयबोधः । एवं काशीतः प्र-

**रामरुद्रीयम्.**

अयमस्मात्सन्निहित इत्यादिप्रयोगात्पुरुषादित्येव प्रयोक्तुमुचितं ननु पुरुषस्येत्यत आह ॥ **पञ्चम्यर्थ इति** ॥ अवधित्वं पञ्चम्यर्थः । पुरुषावधिकोदयगिरिसान्निध्यवती दिक् तस्य प्राचीत्यर्थः पर्यवसितः । अवधित्वं स्वरूपसम्बन्धविशेषः ॥ **सेति** ॥ तन्मूर्तावच्छिन्ना महती दिगित्यर्थः । नातः स्त्रीलिङ्गनिर्देशासङ्गतिः । संयोगापेक्षयेत्यस्यापि तादृशसंयोगावधिकत्वमेवार्थः तस्य च अल्पतरत्वे अन्वयः । उदयगिरिसंयुक्तसंयोगपर्याप्तेत्यस्य तादृशसंयोगादिपर्याप्तेत्यर्थः । आदिना तद्वत्संयुक्तसंयोगादीनां पुरुषनिष्ठविशिष्टसंयोगघटकानां परिग्रहः तेषु पर्याप्तसङ्ख्या अपेक्षाबुद्धिविशेषविषयत्वरूपैव गुणेषु गुणानङ्गीकारात् । यद्वा मथुरानिष्ठो यः परम्परयोदयगिरिसंयुक्तसंयोगस्तद्घटका ये मूर्तास्तत्पर्याप्तसङ्ख्येत्यर्थे तात्पर्यान्न दोषः । सङ्ख्याव्याप्यत्वं च सङ्ख्यासमानाधिकरणप्रतियोग्यवृत्तिभेदप्रतियोगितावच्छेदकत्वमेव न तु व्यापकसामानाधिकरण्यादिकं तथासति स्वस्यापि स्वव्याप्यत्वापातात् । मूर्तवृत्तिरित्युपाधीनामेव प्राच्यादित्वमित्यभिप्रायेण अन्यथा तु ता-

वाची । सर्वेषामेव वर्षाणां मेरुरुत्तरतः स्थित इति नियमात् ॥

## प्रभा.

श्रोदाहरणं माहिष्मतीत उत्तरस्यां अवन्तिका काशीत अवाच्यामवन्तिकेति बोध्यम् । अन्ये तु तन्निष्ठोदयगिरिसंयुक्तसंयोगपरम्पराघटकं तस्य प्राचीत्वमाहुः तन्न पूर्वोक्तरीत्या समीपस्थमूर्तनिष्ठसन्यापसन्योदयगिरिसंयुक्तसंयोगपरम्परायां दूरस्थमूर्तस्यापि घटकतया तस्य समीपस्थपदार्थापेक्षया प्राचीत्ववारणाय तन्निष्ठोदयगिरिसंयुक्तसंयोगपरम्परायां तन्निष्ठोदयगिरिसंयुक्तसंयोगपरम्परानिष्ठन्यूनत्वानिरूपकत्वेन विशेषणीयतया तादृशलघुपरम्पराघटकमूर्तवृत्तिमूर्तान्तरस्य तादृशलघुपरम्परायामघटकत्वेन तस्य प्राचीत्वव्यवहारनियामकत्वानुपपत्तेः । नच तस्य तादृशव्यवहारनियामकत्वाभावे का क्षतिरिति वाच्यं समीपस्थमूर्तानां मध्ये कस्यचित् प्राचीत्वव्यवहारनियामकत्वं कस्यचिन्नेत्यत्र युक्त्यभावात् । दीधितिकृतस्तु दिक्कालौ नेश्वरादतिरिच्येते मानाभावात् तत्तत्कालोपाधिदिगुपाधिविशिष्टादीश्वरादेव क्षणदिनप्राचीप्रतीच्यादिव्यवहारोपपत्तेरित्याहुः । अत्र नव्याः ईश्वरस्य दिक्कालरूपत्वं तत्तज्जीवस्य वेति विनिगमनाविरहात् अतिरिक्तयोस्तयोः स्वीकारः । नच तत्तज्जीवस्य जगज्जनकत्वं परत्वापरत्वजनकत्वं च कल्प्यं ईश्वरस्य तु क्लृप्तमिति लाघवमिति वाच्यम् । संबन्धघटकयोर्दिक्कालयोः जगज्जनकत्वानङ्गीकारात् दिक्कालोपाधीनामेव जगज्जनकत्वकल्पनात् परत्वापरत्वयोः गुणत्व एव मानाभावः सन्निकृष्टत्वविप्रकृष्टत्वाभ्यामेव परापरव्यवहारोपपत्तेरित्याहुः तन्न तत्तन्निरूपणे कालदिशोः जगत्कारणत्वस्य साधितत्वेन ईश्वरस्यैव तयोरपि जगत्कारणत्वस्य क्लृप्ततया कल्पनागौरवाभावात् । एवं सन्निकृष्टत्वविप्रकृष्टत्वाभ्यां परापरव्यवहारस्वीकारे पूर्वोक्तालपसमुदायवत्त्वरूपसन्निकृष्टत्वस्य पूर्वोक्तबहुतरसमुदायवत्त्वरूपविप्रकृष्टत्वस्य च परापरत्वव्यवहारानियामकत्वेन वक्तव्यतया बहूनां तादृशसंयोगानां परापरपदशक्यतावच्छेदकत्वस्वीकारेऽतिगौरवापत्तेः अयं परः अयमपर इति लौकिकप्रत्यक्षानुपपत्तेश्च बहुभिस्संयोगैः सह लौकिकसन्निकर्षाभावादिति ॥ इति दिग्ग्रन्थः ॥

## दिनकरीयम्.

तीच्यां प्रयाग इत्यत्र काशीनिष्ठोदयगिरिसंयुक्तसंयोगपर्याप्तसङ्ख्याव्यापकसङ्ख्यापर्याप्त्यधिकरणोदयगिरिसंयुक्तसंयोगवन्मूर्तवृत्तिः प्रयागः एवमन्यत्रापि बोधा ऊहनीयाः । तन्निष्ठोदयाचलसंयुक्तसंयोगपरम्पराघटकं यन्मूर्तं तत्प्राचीत्यपि वदन्ति । दीधितिकृतस्तु दिक्कालौ नेश्वरादतिरिच्येते मानाभावात् तत्तत्कालोपाधिदिगुपाधिविशिष्टादीश्वरादेव क्षणदिनप्राचीप्रतीचीत्यादिव्यवहारोपपत्तेरित्याहुः । अत्र नव्याः ईश्वरस्य दिक्कालरूपत्वं तत्तज्जीवस्य वेति विनिगमनाविरहेणातिरिक्तयोस्तयोः स्वीकारः । नचात्र जीवस्य जगज्जनकत्वं परत्वापरत्वजनकत्वं च कल्प्यमीश्वरस्य तु क्लृप्तमिति लाघवमिति वाच्यम् । सम्बन्धघटकयोर्दिक्कालयोर्जगज्जनकत्वाकल्पनाद्दिक्कालोपाधीनामेव जगज्जनकत्वकल्पनात् परत्वापरत्वयोर्गुणत्व एव मानाभावः सन्निकृष्टत्वविप्रकृष्टत्वाभ्यामेव परापरव्यवहारोपपत्तेरिति वदन्ति ॥ इति दिग्ग्रन्थः ॥

## रामरुद्रीयम्.

दृशमूर्तावच्छिन्नवृत्तिरिति शाब्दबोधो वर्णनीयः ॥ **सङ्ख्याव्यापकेति** ॥ व्यापकत्वमत्र न तादृशसङ्ख्यासमानाधिकरणप्रतियोग्यवृत्तिभेदप्रतियोगितानवच्छेदकत्वं तथासति स्वस्य स्वव्यापकत्वेनातिप्रसङ्गात् नापि स्वभिन्नत्वे सति स्वसमानाधिकरणतादृशभेदप्रतियोगितानवच्छेदकत्वं विच्छिन्नपुरुषीयापेक्षाबुद्धिजन्यसजातीयसङ्ख्यामादाय सङ्ख्यान्तरस्यापि व्यापकत्वापत्त्याऽतिप्रसङ्गतादवस्थ्यात् परं तु स्वसमानाधिकरणतादृशभेदप्रतियोगितानवच्छेदकनिरुक्तसङ्ख्याकत्वमेवेति न काशीतः प्राच्यां काशीति व्यवहारापत्तिः । आहुरित्यनेन दीधितिकृन्मते अस्वरसस्सूचितः तद्बीजं तु इदानीं तदानीमित्यादिप्रयोगाणां तत्तदुपाध्यवच्छिन्नेश्वरस्य विषयत्वोपगमे प्रत्येकं जीवमादाय विनिगमनाविरहेण अतिरिक्तकालासिद्धिः । न च कार्यमात्रजनकत्वेन क्लृप्तस्येश्वरस्यैव जन्यमात्रजनककालरूपता युक्ता न तु जीवस्य तत्र तस्याक्लृप्तत्वादिति विनिगमकमस्तीति वाच्यम् । कार्यमात्रं प्रति ईश्वरीयकृतेरेव हेतुत्वेन क्लृप्तत्वात्कर्तुः कार्यजनकत्वे मानाभावादिति ।

आत्मेन्द्रियाद्यधिष्ठाता करणं हि सकर्तृकम् ॥ ४७ ॥

आत्मानं निरूपयति ॥ आत्मेन्द्रियाद्याधिष्ठातेति ॥ आत्मत्वजातिस्तु—सुखदुः—

प्रभा

**मूले आत्मेन्द्रियाद्यधिष्ठातेति** ॥ ननु आत्मसामान्यलक्षणोक्त्यनन्तरमेवात्मस्वरूपप्रमाणयोर्वक्तव्यतया तदकथनेन न्यूनतेत्याशङ्कामात्मशब्देनात्मत्वविशिष्टस्योपस्थितयात्मत्वजातिमत्त्वमात्मनो लक्षणमित्युक्तप्रायमात्मशब्दस्यैव लक्षणकथनरूपत्वादिति परिहर्तुमादौ आत्मत्वजातिं साधयति ॥ **मुक्तावल्यां सुखदुःखादीति** ॥ एतेनात्मनिरूपणप्रस्तावे आत्मत्वजातिसाधनमर्थान्तरप्रस्तमिति दूषणं परास्तम् । नच गुणविभागकारिकयां ज्ञानस्यैव प्रथममुपस्थितत्वेन ज्ञानादिसमवायिकारणतावच्छेदकतयेत्यनुक्त्वा सुखादिसमवायिकारणतावच्छेदकतयेत्युक्तौ बीजाभाव इति वाच्यम् ज्ञानत्वस्य नित्यवृत्तितया कार्यतावच्छेदकत्वासंभवेन कालिकसमवायोभयसंबन्धस्य कार्यतावच्छेदकतावच्छेदकसंबन्धत्वस्वीकारे प्रयासाधिक्यमिति अनन्तरोपात्तमपि सुखादिकमादाय तत्समवायिकारणतावच्छेदकतयेत्युक्तम् । आदिना दुःखद्वेषधर्माधर्मादेः परिग्रहः । यद्यपि आत्मत्वे अहं सुखीत्यादिप्रत्यक्षप्रमाणमपि संभवति तथापि स्वीयात्मनि प्रत्यक्षसंभवेऽपि सकलात्मसाधारण्येन तत्प्रत्यक्षासंभवेन सकलात्मसु तत्सिद्ध्यर्थमनुमानमुपन्यस्तामिति हृदयम् । ननु सुखत्वाद्यवच्छिन्नं प्रत्यात्मत्वेन कारणत्वे मानाभावः नचातिप्रसङ्गः अदृष्टादिकारणविरहादेवातिप्रसङ्गवारणसंभवादिति चेन्न कार्यमात्रवृत्तिजातिस्समवायिकारणकार्यतावच्छेदकत्वनियमेन तादृशकार्यकारणभावस्यावश्यकत्वात् । नच तादृशनियमसंरक्षणाय सुखत्वाद्यवच्छिन्नं प्रति सत्त्वेन द्रव्यत्वेन वा हेतुत्वमास्तां अदृष्टादिकारणविरहेणैवातिप्रसङ्गवारणसंभवादिति वाच्यम् व्याप्यलघुभूतधर्मेण कारणत्वे संभवति व्यापकधर्मेण कारणत्वकल्पनाया अन्याय्यत्वात् इति प्राचामभिप्रायः तन्न कार्यमात्रवृत्तिजातेः समवायिकारणकार्यतावच्छेदकत्वनियमे मानाभावः किन्तु कार्यतावच्छेदकत्वमात्रं । अन्यथा चाक्षुषत्वादेरपि कार्यमात्रवृत्तितया चाक्षुषत्वादिभेदेनानुमितित्वादिभेदेन चात्मनस्समवायिकारणत्वप्रसङ्गात् । यच्चोक्तं व्याप्यलघुधर्मेण कारणत्वे संभवतीति तदपि न आत्मत्वस्य व्याप्यत्वेन सिद्धत्वेऽपि जातित्वासिद्धेः प्राक् तस्य लघुधर्मत्वासिद्धेः । अस्मद्गुरुचरणास्तु शरीरस्य समवायेन विहिताविहितकर्मवत्त्वेनादृष्टोत्पत्त्यापत्तेस्तज्जन्यसुखाद्युत्पत्तेश्च वारणाय सुखत्वाद्यवच्छिन्नं प्रति आत्मत्वेन कारणत्वमावश्यकमिति व्याचक्रुः । केचित्तु वस्तुतस्तु मनसि ज्ञानोत्पत्तिवारणाय ज्ञानत्वावच्छिन्नं प्रति आत्मत्वेन हेतुत्वमावश्यकमित्याहुः तदसत् तावतापि ईश्वरे ज्ञानोत्पत्त्यापत्तेर्दुर्वारत्वात् । नच समवायेन ज्ञानोत्पत्तौ शरीरस्यावच्छेदकतया ईश्वरस्य शरीराभावेन न तत्र समवायेन ज्ञानोत्पत्त्यापत्तिरिति वा-

दिनकरीयम्.

**सुखदुःखादीति** ॥ आदिना ज्ञानेच्छाद्वेषप्रयत्नधर्माधर्मभावनापरिग्रहः । यद्यप्यात्मत्वस्यान्यात्मन्यप्रत्यक्षत्वेऽपि स्वात्मनि स्वरूपतो मानसप्रत्यक्षविषयत्वमस्त्येव तथापि सकलात्मसाधारणानुगतप्रत्यक्षासम्भवेन

रामरुद्रीयम्.

अत एव एतादृशास्वरसं स्पष्टीकर्तुं नवीनमतमुपन्यस्यति ॥ **नव्यास्त्वित्ति** ॥ **दिक्कालोपाधीनामिति** ॥ न चैवं ग्रन्थकृदुक्तकाललक्षणमसम्भवग्रस्तामिति वाच्यम् । नवीनानां ग्रन्थकृदननुयायित्वादिति भावः । वदन्तीत्यनेन अत्राप्यस्वरसस्सूचितस्तद्बीजं तु नानोपाधीनां कारणताकल्पनमपेक्ष्य एकस्य महाकालस्य कारणताकल्पनमेवोचितं लाघवात्कालस्य जगत्कारणत्वेऽपि उक्तरीत्याऽतिरिक्तकालसिद्धिसम्भवाच्चेति ध्येयम् ॥

॥ इति दिग्ग्रन्थः ॥

नन्वहं सुखीत्यादिप्रतीत्या आत्मत्वेनात्मनो विषयीकरणात् प्रत्यक्षमेवात्मत्वे प्रमाणं सम्भवति तत्कथं मूले सुखादिसमवायिकारणता किञ्चिदवच्छिन्ना कारणतात्वादित्यनुमानं तत्र प्रमाणत्वेन दर्शितमित्याशङ्कते ॥ **यद्यपीति** ॥ **स्वरूपतः** स्वांशे किञ्चिद्धर्माप्रकारकेत्यर्थः ॥ **सकलात्मसाधारण्यं** सकलात्मविशेष्यकत्वम् ॥ **अनुगतप्रत्यक्षं** सकलात्मगतैकात्मत्वप्रकारकप्रत्यक्षम् । प्रकारकत्वस्य समासंक्लसषष्ठय-

खादिसमवायिकारणतावच्छेदकतया सिध्यति । ईश्वरेऽपि सा जातिरस्त्येव अदृष्टादिरूपका-

## प्रभा.

च्यं तथा सति मनसोऽपि शरीराभावेनैव तत्र ज्ञानोत्पत्त्यभावात् आत्मत्वेन हेतुत्वे उक्तापत्तिवारणरूपप्रमाणासंभवात् । नच घटादौ ज्ञानोत्पत्तिवारणाय विजातीयात्ममनस्संयोगस्य हेतुत्वावश्यकतया तेनैवेश्वरे ज्ञानोत्पत्तिवारणसंभवेन आत्मत्वेन हेतुत्वे न किमपि बाधकमिति वाच्यं आत्मत्वेन कारणत्वं विनात्ममनस्संयोगस्यासमवायिकारणत्वासंभवेनात्ममनस्संयोगस्यासमवायिकारणत्वान्यथानुपपत्त्या आत्मत्वेन हेतुत्वमावश्यकमित्यनुक्त्वा मनसि ज्ञानोत्पत्त्यापत्तिवारणाय तदावश्यकमित्युक्तौ बीजाभावात् अनुयोगितासंबन्धेनात्ममनस्संयोगस्य हेतुत्वस्वीकारे मनसि तेन संबन्धेनात्मसंयोगाभावेन तदापत्त्यभावात् सुखादिसमवायिकारणतावच्छेदकतयेति मूलविरोधापरिहाराच्च आत्मत्वस्य सुखसमवायिकारणत्वावच्छेदकत्वानुपादानात् । वस्तुतस्तु आत्मपदशक्यतावच्छेदकतया आत्मत्वजातिसिद्धिः असतिबाधके शक्यतावच्छेदकतया जातिसिद्धेस्सकलतन्त्रसिद्धत्वात् अदृष्टपदस्य नानार्थकत्वेनादृष्टपदशक्यतावच्छेदकतया जातिसिद्धेरपि वारितत्वात् । न चैवमपि विभुपदशक्यतावच्छेदकतया विभुत्वस्य जातित्वापत्तिरिति वाच्यं भूतत्वेन साङ्कर्येण तथापत्त्यसंभवात् । अत एव गुणदीधितौ गुणपदशक्यतावच्छेदकतया गुणत्वजातिसिद्धिव्यवस्थापनं भट्टाचार्यशिरोमणीनां सङ्गच्छते । एवंच सकलात्मसाधारणात्मत्वजातिसिद्धौ तस्य व्याप्यलघुधर्मरूपतया तस्यैव सुखादिसमवायिकारणतावच्छेदकत्वं फलितमिति विश्वनाथपञ्चाननस्याभिप्राय इति प्रतिभाति । ननु एतादृशात्मत्वस्य ईश्वरसाधारण्ये तत्र कुतो न सुखाद्युत्पत्तिरत आह ॥ **अदृष्टादीति** ॥ आदिना दुःखाद्यवच्छेदकशरीरपरि-

## दिनकरीयम्.

जातिरूपं तत्र सिध्यति अनेकसमवेतत्वघटितजातित्वग्रहेऽनेकव्यक्तिग्रहहेतुत्वस्य सर्वसिद्धत्वादित्यनुमानमेव तत्र प्रमाणमित्यभिप्रायेण सुखदुःखादिसमवायिकारणतावच्छेदकतया तत्सिद्धिः प्रदर्शिता । अथ सुखत्वाद्यवच्छिन्नं प्रत्यात्मत्वेन कारणत्वे मानाभावः सुखदुःखद्वेषभावनाधर्माधर्मान् प्रति यथाक्रमं धर्माधर्मानिष्टसाधनत्वादिज्ञानानुभवविहितनिषिद्धकर्मणां समवायसम्बन्धेन निमित्तकारणत्वावश्यकतयाऽतिप्रसङ्गाभावात् भावकार्याणां सासमवायिकारणकत्वनियमस्य तु द्रव्यत्वेन तत्तद्व्यक्तित्वेन वा समवायिकारणत्वमादायैवोपपन्नत्वादिति चेत् अत्र प्राञ्चः कार्यमात्रवृत्तिजातेः समवायिकारणकार्यतावच्छेदकत्वनियमेन तादृशकार्यकारणभावस्यावश्यकत्वात् । नच तावता सुखत्वाद्यवच्छिन्नं प्रति सत्त्वेन द्रव्यत्वेन वा कारणत्वमस्तु अदृष्टादेर्निमित्तकारणत्वादेवातिप्रसङ्गविरहादिति वाच्यम् । व्याप्यलघुभूतधर्मे कारणतावच्छेदके सम्भवति व्यापकधर्मेण कारणत्वकल्पनाया अन्याय्यत्वादित्याहुः । वस्तुतस्तु मनसि ज्ञानोत्पत्तिवारणाय ज्ञानत्वाद्यवच्छिन्नं प्रत्यात्मत्वेन हेतुत्वमावश्यकमिति । ननु तथाप्यात्मत्वजातेर्भगवदात्मसाधारण्ये मानाभाव इत्यत आह ॥ **ईश्वर इति** ॥ आत्मा वा अरे द्रष्टव्यः इत्यादिश्रुतावात्मपदव्यवहारादिति भावः । ननु तर्हीश्वरे सुखाद्युत्पत्तिः कुतो न भवतीत्यत आह ॥ **अदृष्टादीति** ॥ आदिना शरीरपरिग्रहः । ननु तथापि नित्यस्य स्वरूपयोग्यत्वे फलावश्यम्भाव

## रामरुद्रीयम्.

र्थत्वात् ॥ **जातिरूपमिति** ॥ तथा चात्मत्वस्य स्वरूपतः प्रत्यक्षत्वेऽपि तद्गतजातित्वं न प्रत्यक्षसिद्धमिति भावः । ननु सुखादीनामात्माभिन्ने उत्पादो निमित्तकारणाभावादेव न सम्भवति किमर्थमात्मनः तत्र समवायिकारणतेत्याशङ्कते ॥ **अथेति** ॥ कार्यतावच्छेदकनियमादित्यस्य समवायिकारणेत्यादिस्तेन निमित्तकारणजन्यतावच्छेदकत्वेनापि सुखत्वस्य समवायिकारणजन्यतानवच्छेदकत्वेऽपि नोक्तनियमस्य भङ्गः ॥ **अन्याय्यत्वादिति** ॥ अनेकव्यक्तिषु कारणताकल्पने गौरवादिति भावः । नन्वत्र कारणता न फलोपधायकतारूपा तस्या द्रव्यत्वेन कारणतावादिनापि आत्मन्येव स्वीकारात् किं तु स्वरूपयोग्यतारूपैव सा च कारणतावच्छेदकरूपैवेति नवद्रव्येषु द्रव्यत्वस्य क्लृप्तत्वान्न तत्कल्पनागौरवमित्यस्वरसादाह ॥ **वस्तुतस्त्विति** ॥ **आवश्यकमितीति** ॥ तथा च सुखसमवायिकारणतावच्छेदकतया तदसिद्धावपि ज्ञानसमवायिकारणतावच्छेदकतयैव तत्सिद्धिरिति भावः । ज्ञानं प्रत्यात्ममनःसंयोगस्य हेतुत्वेन घटादौ तदभावान्मनस्येव व्यभि-

रणाभावान्न सुखदुःखाद्युत्पत्तिः नित्यस्य स्वरूपयोग्यस्य फलावश्यम्भावनियम इत्यस्याप्रयो-

## प्रभा.

ग्रहः। नच तादृशकारणतावच्छेदकतया सिद्धात्मत्वजातिरीश्वर इवाकाशादावपि स्वीक्रियतां अदृष्टरूपकारणविरहादेवात्रापि सुखाद्युत्पत्तिवारणसंभवादिति वाच्यं न केवलं तादृशावच्छेदकतया आत्मत्वजातिसिद्धिरङ्गीकृता किन्तु आत्मपदशक्यतावच्छेदकतया सिद्धात्मत्वजातेः लाघवात् सुखसमवायिकारणतावच्छेदकत्वस्यापि स्वीकारे तादृशजातिमति ईश्वरे सुखाद्युत्पत्तिवारणायादृष्टादिकारणविरहादित्युक्तम् । नह्यदृष्टाभावेन सुखाद्युत्पत्तिवारणसंभवमात्रेण सर्वत्र तादृशजातिस्वीकारस्संभवति मानाभावादिति भावः। ईश्वरेऽपि तादृशजातिस्वीकारे नित्यस्येत्यादिनियमभङ्ग इत्यत आह ॥ **नित्यस्य स्वरूपयोग्येति** ॥ **अप्रयोजकत्वादिति** ॥ तथाच नित्यस्य स्वरूपयोग्यत्वे फलावश्यंभाव इत्येव नियमात् सकलकारणसत्त्वाघटिततादृशनियमे मानाभावादिति भावः । केचित्तु अप्रयोजकत्वादिति जलपरमाणौ स्नेहानुत्पत्त्या तादृशनियमे मानाभावादिति भाव इत्याहुः तदसत् जन्यस्नेहजनकतावच्छेदकतया सिद्धजलत्वजातेः जलपरमाणुवृत्तित्वस्वीकार एव जन्यस्नेहस्वरूपयोग्यजलपरमाणौ स्नेहानुत्पत्त्या तादृशनियमे मानाभावादित्युक्तिसङ्गता ! भवेत् नचैवं जन्यस्नेहजनकतावच्छेदकतया सिद्धजन्यजलमात्रवृत्तिवैजात्यमादाय तदवच्छिन्नजनकतावच्छेदकतया सिद्धजलत्वजातेरेव जलपरमाणुसाधारण्यस्वीकारात् तत्र जन्यजलरूपकार्योत्पत्त्या व्यभिचाराभावादिति । ननु ईश्वरे अदृष्टं कुतो नोत्पद्यत इति चेन्न तत्त्वज्ञानान्यज्ञानरूपकारणाभावात्तस्याहेतुत्वे मुक्तात्मन्यपि अदृष्टोत्पत्त्यापत्तेः । एवंच यागादिविशेष्यकेष्टसाधनत्वज्ञानस्यापि तत्त्वज्ञानान्यत्वेन तस्यापि तादृशज्ञानरूपतया चिकीर्षादिद्वारा अदृष्टहेतुत्वसंभवात् ईश्वरज्ञानस्यैकत्वेन तदन्यत्वाभावात् मुक्तात्मनः ज्ञानसामान्याभावाच्च नादृष्टोत्पत्तिरिति । नन्वत्र सुखसमवायिकारणतावच्छेदकतया सिद्धो जातिविशेषः जीवत्वमेव नात्मत्वं अतिप्रसक्तत्वात् अन्यथा द्रव्यत्वमपि तादृशजातिविशेषस्स्यादिति वदतां

## दिनकरीयम्.

इति नियमेनेश्वरस्य स्वरूपयोग्यत्वे फलोपधानापत्तिरित्यत आह ॥ **नित्यस्येति** ॥ **अप्रयोजकत्वादिति** ॥ जलपरमाणौ स्नेहानुत्पत्त्या तादृशनियमे मानाभावादिति भावः । नन्वीश्वरेऽदृष्टं कुतो नोत्पद्यत इति चेन्न मिथ्याज्ञानरूपकारणाभावात् मिथ्याज्ञानस्याहेतुत्वे च मुक्तात्मन्यप्यदृष्टोत्पत्तिप्रसङ्गः । वेदस्थात्मपदादेर्ज्ञानादिमति लक्षणापत्तिरित्यस्वरस आहुरित्यनेन सूचितः । इन्द्रियाद्यधिष्ठातेति मूलमात्मनि

## रामरुद्रीयम्.

चारः प्रदर्शितः एवमिच्छादिकं प्रति ज्ञानादेः कारणत्वेन तदभावादेव मनसि तदापादनासम्भवेन ज्ञानमात्रानुसरणं इत्थं च कार्यवृत्तिजातेस्तदवच्छिन्नस्याकस्मिकत्वापत्तिवारणाय किञ्चित्कारणजन्यतावच्छेदकत्वनियम एवाङ्गीक्रियते न तु समवायिकारणजन्यतावच्छेदकत्वनियमोऽपि तदनभ्युपगमे क्षतिविरहादित्यात्मत्वं न पूर्वोक्तयुक्त्या सिध्यतीति पूर्वपक्षोऽपि निरवकाश इति भावः। सुखाद्युत्पत्तिरित्यत्र आदिना ज्ञानपरिग्रहः। अत एव तदापत्तिवारकशरीरस्यादिपदेन ग्रहणं सार्थकं ज्ञानं प्रति शरीरस्य स्वावच्छिन्नभोगजनकादृष्टवत्त्वसम्बन्धेन हेतुता तदभावादेव मुक्तस्य न ज्ञानोत्पत्तिरिति भावः। अदृष्टशब्दस्यात्र धर्मोऽर्थः सुखं प्रति तस्यैव कारणत्वादिति ध्येयम् ॥ **कुतो नोत्पद्यत इतीति** ॥ अथेश्वरस्य शरीराभावेन तदीयशुभाशुभकर्माभावान्नियमापत्तिरयुक्ता नह्यस्मदादिशुभादिकर्मणा ईश्वरेऽदृष्टोत्पत्तिरापादयितुं शक्या चैत्रक्रियया मैत्रात्मन्यदृष्टोत्पत्तिवारणाय क्रियाया अवच्छेदकतासम्बन्धेन स्वकारणीभूता या कृतिस्तद्वत्त्वसम्बन्धेनैवाऽदृष्टकारणतायाः स्वीकरणीयत्वादीश्वरकृतेरस्मदादिशरीरानवच्छिन्नतया अवच्छेदकतासम्बन्धेन अहेतुत्वात् । न च स्वजनककृतिमत्त्वसम्बन्धेनैव कर्मणोऽदृष्टहेतुत्वमस्तु चैत्रक्रियायां मैत्रीयकृतेरजनकत्वान्न पूर्वोक्तापत्तिरेवं च कार्यमात्र एवेश्वरकृतेः कारणत्वेन ईश्वरेऽदृष्टापत्तिः सम्भवत्येवेति वाच्यम् । कालिकसम्बन्धावच्छिन्नकार्यत्वावच्छिन्नकार्यतानिरूपितकालिकसम्बन्धावच्छिन्नकृतित्वावच्छिन्नकारणतायाः कृतिमात्रे सत्त्वात् ताद्वि-

जकत्वात् । परे तु ईश्वरे सा जातिर्नास्त्येव प्रमाणाभावात् नच दशमद्रव्यत्वापत्तिः ज्ञानवत्त्वेन विभजनादित्याहुः ॥ इन्द्रियाद्यधिष्ठाता ॥ इन्द्रियाणां शरीरस्य च परम्परया चैतन्यसम्पादकः । यद्यप्यात्मनि अहं सुखी दुःखीत्यादिप्रत्यक्षविषयत्वमस्त्येव तथापि वि-

## प्रभा.

मतमाह ॥ **परे त्विति** ॥ **प्रमाणाभावादिति** ॥ अतिप्रसक्तत्वादित्यर्थः ॥ **नच दशमद्रव्यत्वापत्तिरिति** ॥ इदमुपलक्षणं श्रुतिघटकीभूतात्मत्वजातिपदवाच्यत्वानुपपत्तिश्चेत्यपि बोध्यं ॥ **ज्ञानवत्त्वेनेति** ॥ श्रुतिघटकीभूतात्मशब्दस्य ज्ञानावच्छिन्ने लाक्षणिकत्वाच्चेत्यपि बोध्यम् । पूर्वोक्तरीत्या ईश्वरे तादृशजातिस्वीकारेऽपि बाधकाभावात् जात्यवच्छिन्ने शक्तिं परित्यज्य ज्ञानावच्छिन्ने आत्मपदशक्तेः लक्षणाया वा कल्पनमनुचितमित्यस्वरसं हृदि निधायाहुरित्युक्तमिति ध्येयम् । एतावता आत्मनो लक्षणमुक्त्वा स्वरूपं वक्तुमिन्द्रियाद्यधिष्ठातेति मूलं स्वरूपपरतया व्याकरोति ॥ **इन्द्रियाणामिति** ॥ आदिपदार्थमाह ॥ **शरीरस्य चेति** ॥ अधिष्ठातेति मूलार्थमाह ॥ **चैतन्यसंपादक इति** ॥ तथाच जपाकुसुमं स्वसंयुक्तस्फटिकादौ

## दिनकरीयम्.

प्रमाणपरतया व्याचष्टे ॥ **इन्द्रियाणामिति** ॥ आदिपदसङ्ग्राह्यमाह ॥ **शरीरस्येति** ॥ **परम्परया** जनकतासम्बन्धेनावच्छेदकतासम्बन्धेन वा ॥ **चैतन्यं** ज्ञानवत्त्वम् । एतेनात्मनि प्रमाणं दर्शितम् । अचेतनं

## रामरुद्रीयम्.

न्नायां विशेषकारणतायामीश्वरकृतौ मानाभावादिति चेन्न । जीवादृष्टवशेन ईश्वरपरिगृहीतरामकृष्णादिशरीरचेष्टाया ईश्वरकृतिजन्यत्वस्वीकारात्तच्छरीरचेष्टाया जीवीयकृत्यसाध्यतयाऽवच्छेदकतयेश्वरकृतिजन्यत्वमावश्यकं अस्मदीयचेष्टातो विलक्षणत्वात् । न च तदीयमुखप्रसादमालिन्याभ्यां सुखदुःखयोरनुमानाद्भोगस्यापीश्वरे प्रसङ्ग इति वाच्यम् । ईश्वरशरीरे अहं स्वामीत्युपासनया कस्यचित् तच्छरीरमित्युपगमात् परन्तु जीवासाध्यचेष्टोपपत्तये भूतावेशन्यायेन तच्छरीरे अवच्छेदकतयेश्वरकृतिकल्पनादिति नानुपपत्तिलेशोऽपीत्यवधेयम् ॥ **मुक्तात्मन्यपीति** ॥ जीवन्मुक्तात्मन्यपीत्यर्थः । परममुक्तस्य शरीराभावेन कर्मण एवाभावात् मिथ्याज्ञानपदमपि शरीरे आत्मज्ञानजन्यवासनापरं अन्यथा तादृशज्ञानविरहदशायां अदृष्टानुत्पादप्रसङ्गात् जीवन्मुक्तस्य आत्मसाक्षात्कारेण तादृशवासनानाशेऽपि प्रारब्धबलात्तत्कार्यस्य शरीरस्य न नाश इति बोध्यम् ॥ **मूले इन्द्रियाणामधिष्ठातेति** ॥ अधिष्ठातृशब्दस्य तन्निष्ठक्रियाजनकार्थकत्वे प्रवृत्त्याद्यनुमेयोऽयमित्यनेन गतार्थता स्यात् तन्निष्ठव्यापारजनकज्ञानजनक इत्यर्थकत्वे च गौरवमतस्तन्निष्ठज्ञानवत्त्वसम्पादकतार्थकता इन्द्रियाणामित्यादिना मूले दर्शिता ॥ **अवच्छेदकतेति** ॥ यद्यप्यवच्छेदकतासम्बन्धेन तदीयज्ञानं प्रति तादात्म्यसम्बन्धेन तदीयशरीरस्य हेतुताया आवश्यकतयाऽवच्छेदकत्वोपादाने प्रयोजनाभावस्तथापि खण्डशरीरसमकालोत्पन्नज्ञानव्यक्तौ द्वितीयक्षणोत्पन्नखण्डशरीरस्य पूर्वमसत्त्वेनाकारणतया व्यभिचारेणोक्तकार्यकारणभावासम्भवः परन्तु तत्समवेतगुणानां तदीयशरीरेणैवावच्छेद्यावच्छेदकभावानियमोपगमादेव घटादीनां न ज्ञानावच्छेदकत्वमिति भावः । तथा चोत्तरत्र मूलोक्तं ज्ञानोपधानं उक्तान्यतरसम्बन्धेन ज्ञानवत्त्वमेवेति पर्यवसितम् ॥ **एतेनेति** ॥ इन्द्रियाणि शरीरं च ज्ञात्रधिष्ठितं अचेतनत्वे सति उक्तान्यतरसम्बन्धेन ज्ञानवत्त्वाद्वास्यादिवदित्यनुमानमात्मनि प्रमाणं दर्शितामित्यर्थः । अत्राधिष्ठितत्वं सहकृतत्वं तच्च स्वभिन्नत्वे सति स्वजन्यकार्योपधायकत्वं स्वस्मिन् स्वसहकृतत्वाप्रतीतेः स्वभिन्नत्वनिवेशस्तथा चोक्तानुमानेनेन्द्रियादिभिन्नज्ञातृसिद्धिः ज्ञानोपधायके आत्मनि व्यभिचारवारणाय हेतौ सत्यन्तं । न चेश्वरमादाय साध्यसत्त्वान्न व्यभिचार इति वाच्यम् । सहकारिताघटकजन्यतायाः कार्यत्वानवच्छिन्नाया एव प्रकृते निवेशितत्वादीश्वरजन्यत्वस्य ज्ञानेऽसम्भवाच्च तदीयकृतेरेव कार्यमात्रे कारणत्वादिति ध्येयम् । यद्यपि शरीरस्य ज्ञानाकारणत्वेन तत्र चेतनसहकृतत्वं दुर्घटं तथापि चेतनाधिष्ठितत्वं उक्तान्यतरसम्बन्धेन चेतनप्रयोज्यतत्तत्क्रियावत्त्वमेव प्रयोज्यत्वं च जन्यतज्जन्यसाधारणं । तेन छिदां प्रति

प्रतिपन्नं प्रति प्रथमत एव शरीरादिभिन्नस्तत्प्रतीतिगोचर इति प्रतिपादयितुं न शक्यत इत्यतः प्रमाणान्तरं दर्शयति ॥ करणमिति ॥ वास्यादीनां छिदाकरणानां कर्तारमन्तरेण फलानुपधानं दृष्टम् एवं चक्षुरादीनां ज्ञानकरणानामपि फलोपधानं कर्तारमन्तरेण नोपपद्यत इत्यतिरिक्तः कर्ता कल्प्यते ॥ ४७ ॥

**शरीरस्य न चैतन्यं मृतेषु व्यभिचारतः ।**

ननु शरीरस्य कर्तृत्वमस्त्वत आह ॥ **शरीरस्येति** ॥ ननु चैतन्यं ज्ञानादिकमेव मुक्तात्म-

**प्रभा.**

परम्परासंबन्धेन यथा लौहित्यवत्वं सम्पादयति तथा आत्मापि स्वसंयुक्तेन्द्रियादिषु जनकतावच्छेदकत्वात्स-परम्परासंबन्धेन चैतन्यवत्वं साधयतीत्यर्थः । एतावता स्वरूपमुक्त्वात्मनि प्रमाणं दर्शयितुमादावाक्षेपमुक्त्वा करणं हीत्यादिमूलमवतारयति ॥ **यद्यप्यात्मनीति** ॥ नचात्मनः प्रत्यक्षत्वस्वीकारे आत्मा तावन्न प्रत्यक्ष इति सूत्रभाष्यविरोध इति वाच्यं भाष्यस्थात्मपदस्य परमात्माभिप्रायकत्वेन आत्मतत्त्वविवेके व्याख्यातत्वात् ॥ **विप्रतिपन्नं प्रतीति** ॥ अहमिति प्रतीतेः शरीराद्यतिरिक्तविषयकत्वे विप्रतिपन्नं प्रतीत्यर्थः ॥ **वास्यादीनामिति** ॥ इदंच दृष्टान्तकथनम् । तथाच इन्द्रियं सकर्तृकं फलोपधानात्मककारणत्वघटितकरणत्वात् छेदनफलोपधायकवास्यादिवत् इत्यनुमानं फलितम् । अत्रात्मनि व्यभिचारवारणाय तादृशकारणत्वमात्रस्य हेतुत्वं परित्यज्य तादृशकारणताघटितकरणत्वस्य हेतुत्वोपन्यासः । फलानुपधायके वास्यादौ स्वरूपयोग्यतारूपकारणत्वघटितानिरुक्तहेतोः सत्त्वाद्व्यभिचारवारणाय फलोपधानात्मककारणताघटितस्य हेतुत्वेनोपन्यासः । नच कर्तृभूतात्मनः विभुत्वाच्छिद्रक्रियास्वरूपयोग्यवास्यादावपि तत्संबन्धस्य विद्यमानत्वात् कथं व्यभिचार इति वाच्यं कर्तृसंबन्धत्वं न कृत्याश्रयसंबन्धत्वरूपं मूर्तमात्रे सिद्धत्वेन सिद्धसाधनापत्तेः किन्तु प्रकृतकार्योपधायककृतिकालीनत्वविशिष्टतादृशकृत्यवच्छेदकशरीरसंबन्धत्वम् । एवंच छिदिक्रियास्वरूपयोग्यवास्यादौ तादृशहेतुमति उक्तसाध्याभावात् व्यभिचारवारणाय निरुक्तहेतौ फलोपधानात्मककारणतानिवेशस्यावश्यकत्वात् ॥ ४७ ॥

ननु स्थूलोऽहं कृशोऽहं करोमीति प्रतीत्या शरीरस्यैव कर्तृत्वसिद्धेः शरीरमेवात्मेति चार्वाकाभिमताभिप्रायकतया मूलमवतारयति ॥ **ननु शरीरस्येति** ॥ ननु चैतन्यं ज्ञानाधिकरणत्वमेव

**दिनकरीयम्.**

चेतनाधिष्ठितं कार्यं करोतीति व्याप्तेः । अहं सुखीत्यादिनाहं जानाम्यहं करोमीत्यादिपरिग्रहः । नचात्मा तावन्न प्रत्यक्ष इति सूत्रभाष्यविरोध इति वाच्यम् । आत्मतत्त्वविवेके परात्माभिप्रायेण भाष्यव्याख्यानस्य प्रदर्शितत्वात् ॥ **विप्रतिपन्नं प्रतीति** ॥ अहमिति प्रतीतेः शरीराद्यतिरिक्तविषयकत्वे विप्रतिपन्नं प्रतीत्यर्थः ॥ ४७ ॥

**रामरुद्रीयम्.**

चेतनस्याकारणत्वेऽपि तत्कारणप्रवृत्तिकारणत्वेन दृष्टान्तस्य न साध्यवैकल्यमिति विभावनीयम् ॥ **अचेतनमिति** ॥ यद्यपि करणं हि सकर्तृकमिति व्याप्तिः प्रदर्शिता यद्यत्करणं तत्तत्फलोपहितकारणं तत्सकर्तृकं तदुपधाने तत्कर्तृसहकृतामिति तदर्थात् व्यापारवत्कारणस्य करणत्वे चक्षुःसंयोगेन जानातीति प्रयोगानुपपत्त्या फलोपहितकारणत्वस्यैव तत्त्वात्सहकृतत्वं पूर्वनिरुक्तमेव एतादृशसामान्यमुखव्याप्तिरेवोत्तरत्र मूले वास्यादीनामित्यादिना दर्शयिष्यते तथापि आत्मनि उक्तनियमस्य व्यभिचारः स्वाभिन्नतज्ज्ञानकर्तुरप्रसिद्धेः हेतोर्दृष्टान्तपक्षसाधारण्यानुरोधेन उक्तनियमस्याश्रयत्वानुकूलकृतिमत्त्वतदन्यतररूपतत्तत्क्रियाकर्तृत्वघटितत्वाद्वैवं चेत्यालोच्य तादृशव्याप्तिरेवायं परिष्कार आदृतः यद्यदचेतनं यत्करोति यदुपधायकं भवति तत्तदुपधाने चेतनाधिष्ठितं भवतीति तदर्थः । चेतनाधिष्ठितत्वं पूर्वनिरुक्तमेवेत्युक्तानुमानेन चक्षुरादिभिन्नज्ञातृसिद्धिः चेतनाचेतनयोरेकत्वासिद्धेरिति भावः । उक्तानुमाने वास्यादिरेव दृष्टान्तः उत्तरमूलग्रन्थानुसारादिति भावः ॥ ४७ ॥

नां त्वन्मत इव मृतशरीराणामपि तदभावे का क्षतिः प्राणाभावेन ज्ञानाभावस्य सिद्धेरि- ति चेन्न । शरीरस्य चैतन्ये बाल्ये विलोकितस्य स्थाविरे स्मरणानुपपत्तेः शरीराणामवयवो- पचयापचयैरुत्पादविनाशशालित्वात् । न च पूर्वशरीरोत्पन्नसंस्कारेण द्वितीयशरीरे संस्का- र उत्पाद्यत इति वाच्यम् अनन्तसंस्कारकल्पने गौरवात् । एवं शरीरस्य चैतन्ये बालकस्य स्त-

## प्रभा.

न तु ज्ञानवत्त्वरूपं अन्यथा मुक्तात्मनि तव चैतन्याभावप्रसङ्गात् एवंच मृतशरीरस्य ज्ञानाधिक- रणत्वरूपचैतन्यवत्त्वात् कथं व्यभिचार इत्याक्षिपति ॥ **चैतन्यमित्यादिना** ॥ **ज्ञानादिकमेवेति** ॥ ज्ञानाद्यधिकरणत्वमेवेत्यर्थः । आदिना इच्छादेः परिग्रहः ॥ **त्वन्मत इवेति** ॥ देहातिरिक्तात्मत्ववा- दिनां मत इवेत्यर्थः ॥ **तदभाव इति** ॥ ज्ञानाभाव इत्यर्थः ॥ **का क्षतिरिति** ॥ ज्ञानाधिकरणत्वरू पचैतन्यसत्त्वादिति भावः । ननु तर्हि मृतशरीरे ज्ञानानुत्पत्तिः कुत इत्याशङ्कां परिहरति ॥ **प्राणाभावेनेति** ॥ **सिद्धेरिति** ॥ तथाच ज्ञानादिकं प्रति प्राणस्यापि हेतुतया मुक्तात्मनि प्राणाभावप्रयुक्तज्ञानाभाववत् मृतशरीरेऽपि प्राणाभावप्रयुक्तज्ञानाभावसंभवादिति भावः ॥ **बाल्ये विलोकितस्येति** ॥ अत्र सप्तम्य- र्थः अवच्छेदकत्वं विलोकनपदं अनुभवमात्रपरं तेन शब्देनानुभूतस्य कालान्तरे स्मरणानुपपत्तेरकथनात् न्यूनताशङ्का निरस्ता । तथाच बाल्यावच्छेदेनानुभूतस्येत्यर्थः पर्यवसन्नः ॥ **स्थाविर इति** ॥ अत्र स्थाविरपदं यौवनकौमारयोरुपलक्षकं तेन न न्यूनता । स्मरणानुपपत्तिमेवोपपादयति ॥ **शरीराणा- मिति** ॥ **उत्पादविनाशशालित्वादिति** ॥ तथाचानुभवाश्रयस्य बाल्यशरीरस्य नष्टत्वेन तदानी मभावादिति भावः ॥ **संस्कार उत्पद्यत इति** ॥ तथाच स्वसामग्रीजन्ययौवनादिशरीरे बाल्य- शरीरसमवेतसंस्कारेण यौवनादिशरीरे संस्कारान्तरोत्पत्तिस्वीकारेण तत्रापि स्वप्रयोज्यसंस्कारवत्त्वसंबन्धे- नानुभवस्य सत्त्वान्न स्मरणानुपपत्तिरिति भावः ॥ **अनन्तसंस्कारेति** ॥ इदमुपलक्षणम् । संस्कार- स्य संस्कारजनकत्वे एकस्मिन्नेव शरीरे प्रतिक्षणं संस्कारान्तरोत्पत्त्यापत्तेः पूर्वशरीरोत्पन्नसंस्कारस्य उ- त्तरशरीरनिष्ठसंस्कारस्य सामानाधिकरण्याभावेन संस्कारस्य संस्कारजनकत्वे मानाभावाच्चेत्यपि बोध्यम् । ननु लाघवात् क्लृप्तशरीरस्य चैतन्यसिद्धौ अनन्तसंस्कारादिकल्पनं न दोषाय फलमुखत्वादित्यतो

## दिनकरीयम्.

नैयायिकमते यथा मुक्तात्मनां ज्ञानाभावेन न ज्ञानाधिकरणत्वरूपं चैतन्यं तथा ममापि मते मृतशरीर- स्य न चैतन्यमिति शरीरमेवात्मेति वादी चार्वाकः शङ्कते ॥ **ननु चैतन्यमिति** ॥ **ज्ञानादिकं** ज्ञानाद्यधिक- रणत्वम् ॥ **तदभावे** ज्ञानाद्यभावे । ननु तव मते मृतशरीरे चैतन्याभावः किंनिबन्धनः मन्मते तु प्राण- विशिष्टात्मनो विरह एव तत्र प्रयोजक इत्यत आह ॥ **प्राणाभावेनेति** ॥ तथा च लाघवात् प्राणाभावः चैतन्यविरहे प्रयोजक इति भावः । चार्वाकमतं परिहरति ॥ **नेति** ॥ **स्मरणानुपपत्तेरिति** ॥ अनुभवा- श्रयस्य बाल्यशरीरस्य तदानीमभावादिति भावः । ननु बाल्यशरीरं तदाऽस्त्येवेत्यत आह ॥ **शरीराणा- मिति** ॥ **संस्कार उत्पाद्यत इति** ॥ तथा च स्वप्रयोज्यसंस्कारवत्त्वसम्बन्धेन बाल्यशरीरसमवेतानुभ- वस्य स्थविरशरीरे सत्त्वान्न स्मरणानुपपत्तिरिति भावः । गौरवस्य फलमुखत्वाद्दूषणान्तरमाह ॥ **एवमिति** ॥

## रामरुद्रीयम्.

**शरीरमेवात्मेति** ॥ तथा चोक्तहेतोरसिद्धिरिति भावः ॥ **ज्ञानाद्यधिकरणत्वमिति** ॥ कालि- कादिना ज्ञानादेः कालादावपि सत्त्वेन तेषामपि चेतनत्वापत्त्या समवायावच्छिन्नज्ञानाद्याधारत्वमेव चैतन्य- मिति भावः ॥ **उत्पद्यतामितीति** ॥ ननु पूर्वपूर्वशरीरनिष्ठसंस्कारेणोत्तरशरीरे संस्कारोत्पत्तावपि न स्म- रणोपपत्तिः स्थविरशरीरे बालकशरीरगतानुभवस्य स्वजन्यसंस्कारवत्त्वसम्बन्धेन विरहादित्यत आह ॥ **त- थाचेति** ॥ **गौरवस्य** अनेकसंस्कारव्यक्तिकल्पनरूपगौरवस्य ॥ **फलमुखत्वादिति** ॥ फलं विचारफलं शरीरस्यात्मत्वनिश्चयः तन्मुखत्वात्तदुत्तरकालीनत्वादित्यर्थः । फलं मुखं पूर्वकालीनं यस्येति व्युत्पत्तेः तथा

न्यपाने प्रवृत्तिर्न स्यात् इष्टसाधनताज्ञानस्य तद्धेतुत्वात् तदानीमिष्टसाधनत्वानुभावकाभावात् मन्मते तु जन्मान्तरानुभूतेष्टसाधनत्वस्य तदानीं स्मरणादेव प्रवृत्तिः। न च जन्मान्तरानुभूतमन्यदपि स्मर्यतामिति वाच्यम् उद्बोधकाभावात्। अत्र त्वनायत्या जीवनादृष्टमेवोद्बोधकं कल्प्यते। इत्थं च संसारस्यानादितया आत्मनोऽनादित्वसिद्धावनादिभावस्य नाशासम्भवान्नित्यत्वं सम्भवतीति बोध्यम् ॥

## प्रभा.

दूषणान्तरमाह ॥ एवमिति ॥ न स्यादित्यस्य हेतुमाह ॥ **इष्टेति** ॥ **तद्धेतुत्वादिति** ॥ इच्छाद्वारा प्रवृत्तिहेतुत्वादित्यर्थः। बालस्य इष्टसाधनताज्ञानरूपकारणासत्त्वमुपपादयति ॥ **तदानीमिति** ॥ स्तन्यपानप्रवृत्तिपूर्वकाल इत्यर्थः ॥ **अनुभावकाभावादिति** ॥ इन्द्रियसन्निकर्षरूपकारणाभावात् प्रत्यक्षानुत्पत्त्या ज्ञानसामान्याभावादेव इष्टसाधनत्वविषयकानुमित्याद्यनुत्पत्तिसंभवादिति भावः। एतादृशानुपपत्तिस्तवापि तुल्येत्याशङ्कां स्वमतेष्टसाधनताज्ञानोपपादनेन परिहरति ॥ **मन्मते त्विति** ॥ **प्रवृत्तिरिति** ॥ तथाच स्मृत्यनुभवसाधारणेष्टसाधनताज्ञानत्वेन हेतुत्वादिति भावः ॥ **स्मर्यतेति** ॥ तथाच जन्मान्तरानुभवजन्यघटादिविषयकसंस्कारस्यापि सत्त्वादिति भावः ॥ **उद्बोधकाभावादिति** ॥ तथाच उद्बुद्धसंस्काररूपकारणाभावात् न घटादिस्मरणापत्तिरिति भावः। ननु स्तन्यपानविशेष्यकेष्टसाधनत्वप्रकारकस्मृतिजनकसंस्कारस्य अनुद्बुद्धत्वात् कथं तादृशस्मृतिरित्याशङ्कां उद्बोधकसत्त्वप्रतिपादनेन परिहरति ॥ **अत्र त्विति** ॥ इष्टसाधनत्वस्मारकसंस्कारे त्वित्यर्थः ॥ **अनायत्या** जीवनान्यथानुपपत्त्या ॥ **जीवनादृष्टमेवेति** ॥ अन्यथा बालस्य शुष्ककण्ठतया मरणापत्तिरिति भावः ॥ **इत्थंचेति** ॥ शरीरातिरिक्तात्मसिद्धौ चेत्यर्थः ॥ **संसारस्यानादितयेति** ॥ अत्र संसारः जननमरणान्यतररूपः तस्यानादित्वं न प्रागभावाप्रतियोगित्वं तयोः प्रागभावप्रतियोगित्वात् किन्तु स्वाश्रयानधिकरणकालकाभिन्नधर्मवत्त्वम्। एवंच जननमरणान्यतरत्वरूपसंसारत्वस्य स्वशब्देनोपादनासंभवः तादृशान्यतरत्वाश्रयानधिकरणकालाप्रसिद्धेः कालमात्रस्य जननमरणान्यतराश्रयत्वात्। किन्तु घटनिष्ठतद्व्यक्तित्वादिकमेव तादृशस्वाश्रयानाधिकरणकालकं यद्यत्त्वं तत्तद्व्यक्तिभेदकूटवत्त्वस्य पूर्वोक्तस्यान्यतरत्वे सत्त्वात् तद्वत्त्वमादाय संसारस्यानादित्वापत्तिः। नच संसारस्य एतादृशानादित्वोपपादनेऽपि आत्मनः अनादित्व इदं कथं प्रयोजकमिति वाच्यं शरीरस्य जननमरणयोः अनादित्वस्वीकारे तत्कारणीभूतादृष्टस्याप्यनादित्वं वाच्यं तच्च स्वाश्रयप्रागभावाधिकरणस्वाश्रयानधिकरणकालकाभिन्नधर्मवत्त्वरूपं महाप्रलयस्य स्वपदार्थादृष्टत्वाश्रयानधिकरणतया अदृष्टत्वस्य तादृशकालिकभिन्नधर्मत्वाभावात् अदृष्टस्य तादृशधर्मवत्त्वरूपानादित्वानुपपत्तिः अतः सत्यन्तं कालविशेषणं असंभववारणाय स्वाश्रयानधिकरणत्वमपि कालविशेषणं। एवं

## दिनकरीयम्.

न स्यादित्यत्र हेतुमाह ॥ **इष्टेति** ॥ **तद्धेतुत्वात्** प्रवृत्तिहेतुत्वात् ॥ **तदानीं** स्तन्यपानप्रवृत्त्यव्यवहितपूर्वकाले। ननु प्रवृत्त्यन्यथानुपपत्तिस्तवापि समानेत्याशङ्क्य स्वमते प्रवृत्त्यन्यथानुपपत्तिं परिहरति ॥ **मन्मते त्विति** ॥ **अन्यदपीति** ॥ इष्टसाधनत्वादन्यदपीत्यर्थः ॥ **अत्र तु** स्तन्यपानप्रवृत्त्यनुकूलेष्टसाधनत्वस्मरणे तु। आत्मनो नित्यत्वं साधयति ॥ **इत्थं चेति** ॥ स्तन्यपानप्रवृत्त्यनुकूलेष्टसाधनतास्मरणे च। प्रागभावस्य नाशसम्भवादाह ॥ **भावस्येति** ॥ **नाशासम्भवादिति** ॥ नाशं प्रति जन्यभावत्वेन हेतुत्वादात्मनोऽनादित्वेन जन्यभावत्वरूपहेतोरभावेन नाशासम्भवादित्यर्थः। इति चार्वाकमतखण्डनम् ॥

## रामरुद्रीयम्.

चोत्तरकालीनगौरवज्ञानस्य पूर्वकालीननिश्चयप्रतिबन्धकत्वासम्भव इति भावः ॥ **इष्टसाधनत्वादन्यदपीत्यर्थ इतीति** ॥ तथा च सर्वेषां जातिस्मरत्वापत्तिरिति भावः। मूले अनायत्येत्यस्यागत्येत्यर्थः। अन्यथेष्टसाधनतानुभवाभावेनोद्बोधकाभावेन स्मरणासम्भवेन च प्रवृत्त्यसम्भवेन बालः शुष्ककण्ठो म्रियेतेति भा-

तथात्वं चेदिन्द्रियाणामुपघाते कथं स्मृतिः ॥ ४८ ॥

ननु चक्षुरादीनामेव ज्ञानादिकं प्रति करणत्वं कर्तृत्वं चास्तु विरोधे साधकाभावादत आह ॥

## प्रभा.

चादृष्टस्य तादृशानादित्वासिद्धौ स्वाश्रयप्रागभावाधिकरणकालमात्रे आत्मनः स्थितिं विना उक्तानादित्वं न संभवति समवायिकारणात्माभावे समवेतादृष्टस्याप्यभावेनादृष्टस्य तादृशकालभिन्नधर्मवत्त्वाभावादत आत्मनोऽप्यनादित्वमङ्गीकार्यम् । तन्निष्ठानादित्वं तु प्रागभावाप्रतियोगित्वमेव न तु पूर्वोक्तपारिभाषिकं तथा सत्यात्मनोऽप्युत्पत्तिविनाशापत्त्याऽऽत्मनाशेऽप्यदृष्टस्यापि नाशाज्जननमरणयोरप्युत्पत्तिभावप्रसङ्गात् गौरवाच्चेति तात्पर्यार्थः अन्ये तु संसारस्येति जननमरणप्रवाहजनकादृष्टस्येत्यर्थः अस्यानादित्वं पूर्वोक्तमेवेत्याहुः । क्वचित्पुस्तके संस्कारस्यानादितयेति पाठः । तत्र संस्कारस्येति बालकस्य स्तन्यपानादौ प्रवृत्तिजनकेष्टसाधनतास्मृतिजनकसंस्कारमात्रस्येत्यर्थः । तथाच तादृशसंस्कारस्य जातमात्रसमवेतेष्टसाधनतास्मृतिजनकेषु भावनात्वव्याप्यवैजात्याङ्गीकारमते स्वपदेन तादृशवैजात्यस्य ग्रहणासंभवेन संस्कारनिष्ठतद्व्यक्तित्वमुपादाय स्वाश्रयप्रागभावाधिकरणकालभिन्नधर्मवत्त्वरूपमनादित्वं वक्तव्यम्। तादृशवैजात्यानङ्गीकारे तु स्वपदेन भावनानिष्ठतद्व्यक्तित्वमेवोपादाय स्वाश्रयप्रागभावेत्यादिपूर्वोक्तं तादृशकालिकभिन्नधर्मवत्त्वं भावनात्वमुपपाद्य तादृशधर्मवत्त्वरूपमनादित्वं संस्कारस्य वक्तव्यमिति भाव इति प्रतिभाति । इन्द्रियाणां कर्तृत्ववादिबौद्धमताभिप्रायकत्वेन तथात्वं चेति मूलमवतारयति ॥ **ननु चक्षुरादीनामिति** ॥ आदिपदेन बहिरिन्द्रियमात्रस्य परिग्रहः । तन्मते मनसः इन्द्रियत्वाभावादिति भावः ॥ **ज्ञानादौ करणत्वमिति** ॥ यत इत्यादिः । ज्ञानादिनिरूपितव्यापारसंबन्धावच्छिन्नकारणत्वमित्यर्थः ॥ **कर्तृत्वं चेति** ॥ अत इत्यादिः । कृत्याश्रयत्वमित्यर्थः एतन्मते अतिरिक्तात्मनः कृत्यादेः तत्समवेतत्वस्य चानभ्युपगमादिति भावः । ननु कर्तृत्वरूपसाध्याभाववति व्याप्तिज्ञानादौ करणत्वहेतोः सत्त्वाद्व्यभिचारित्वेन इन्द्रियाणां कर्तृत्वासाधको हेतुरत आह ॥ **आदीति** ॥

## दिनकरीयम्.

**ननु चक्षुरादीनामेव ज्ञानादिकं प्रति करणत्वं कर्तृत्वं चास्त्विति** ॥ करणत्वं च व्यापारवत्त्वे सति कारणत्वं भवति हि चक्षुरादौ चक्षुःसंयोगादिरूपव्यापारवति चाक्षुषज्ञानाव्यवहितपूर्वकालवृत्तित्वं न तु फलोपहितत्वं राजसूयेन स्वाराज्यकामो यजेतेत्यादौ यागादिनिष्ठकारणत्वादावप्रसङ्गात् करणत्वकारणत्वयोरविशेषप्रसङ्गाच्च । कर्तृत्वं च यद्यपि क्रियानुकूलकृतिमत्त्वं न सम्भवत्यचेतने चक्षुरादौ तथापि पूर्वपक्षिणाऽतिरिक्तस्यात्मनः कृत्यादीनामात्मसमवेतत्वस्य चानङ्गीकरणात् कृत्याश्रयत्वमपि चक्षुरादीनामस्त्वित्यर्थः । नन्वेकस्यैव करणत्वे कर्तृत्वे कर्तृकरणादिभेदव्यवहारोऽनुपपन्न इत्यत आह ॥ **विरोध इति** ॥ **विरोधे** विभिन्नाधिकरणवृत्तित्वे । तथा च, कर्तृत्वकरणत्वादिलक्षणोपाधिभेदात्कर्तृकरणादिव्यवहारभेदोपपत्तिरित्याशयः । न चैतन्यमित्यत्र विशेष्यतयोपस्थितस्याभावस्य तच्छब्देन परामर्शसम्भ-

## रामरुद्रीयम्.

वः ॥ **अप्रसङ्गादिति** ॥ तादात्म्येनाव्याप्तेरित्यर्थः । यागस्य स्वर्गाव्यवहितपूर्वत्वाभावादिति भावः । नन्वव्यवहितपूर्ववृत्तित्वमवश्यं कारणतावच्छेदकसम्बन्धेन विवक्षणीयं तथा च स्वजन्यापूर्वसम्बन्धस्यैव प्रकृते तथात्वान्नाव्याप्तिरन्यथा व्यापारवत्त्वोपादानेऽपि विशेष्यदलसंत्त्वेन यागस्याकारणत्वापत्तेरित्यतो दूषणान्तरमाह ॥ **कारणत्वेति** ॥ इदं चाव्यवहितपूर्ववृत्तित्वमेव कारणत्वमित्यभिप्रायेण । वस्तुतोऽरण्यस्थदण्डादौ कारणताव्यवहारानुरोधेन नियतपूर्ववर्तितावच्छेदकधर्मवत्त्वस्यैव कारणतारूपत्वेन न तयोर्भेदानुपपत्तिगन्धोऽपि ॥ **व्यवहारभेदो** व्यवहारवैलक्षण्यं तच्च परस्परविरोध एव नत्वानुपूर्वीभेदोऽत्र भेदशब्दार्थः एकार्थकयोरपि घटकुम्भशब्दयोस्तथा दर्शनादसङ्गत्यापत्तेः । नन्वेवं कर्तृकरणपदयोः पर्यायतापत्तिरेकार्थकत्वान्न चेष्टापत्तिः कर्तृप्रयोगस्थले करणशब्दाप्रयोगादित्यत आह ॥ **तथा चेति** ॥ **भेदोपपत्तिः** वैलक्षण्योपप-

**तथात्वमिति** ॥ तथात्वं चैतन्यम् ॥ **उपघाते** नाशे सति। **अर्था**च्चक्षुरादीनामेव । **कथं स्मृतिः पूर्वं चक्षुषा साक्षात्कृतानां चक्षुरभावे स्मरणं न स्यात् अनुभवितुरभावात् अन्येनानुभूतस्यान्येन स्मरणासम्भवात् अनुभवस्मरणयोः सामानाधिकरण्येन कार्यकारणभावादिति भावः ॥ ४८ ॥**

## प्रभा.

आदिना प्रत्यक्षप्रमितिविभाजकोपाध्यवच्छिन्नपरिग्रहः। तथाच तादृशहेतोरव्यभिचारित्वेन कर्तृत्वसाधकत्वसंभव इति भावः। अत्र व्यतिरेकदृष्टान्तोऽवसेयः। हेतोर्विरुद्धत्वाशङ्कां वारयति ॥ **विरोध इति** ॥ विगतभिन्नाधिकरणवृत्तीत्यर्थः ॥ सामानाधिकरण्य इति यावत् ॥ साधकाभावादिति पाठे तु विरोधे असामानाधिकरण्ये मानाभावादिति कर्तृकरणत्वे विरुद्धे इति साधकप्रत्ययाभावादिति भावः॥ ननु न चैतन्यमित्यत्र विशेष्यतया उपस्थितस्याभावस्यैव तच्छब्देन परामर्शसंभवः तस्य प्रकृतानुपयुक्तत्वमतो व्याचष्टे ॥ **मुक्तावल्यां तथात्वं चैतन्यमिति** ॥ उपघातपदस्य केवलावयवनाश एव प्रयोगादाह ॥ **नाश इति** ॥ उपघातपदस्य ससंबन्धिकतया उपघातः केषामित्याकाङ्क्षायाः सत्त्वादाह ॥ **अर्थादिति** ॥ तथाच एकमेवेन्द्रियाणामिति पदं काकाक्षिन्यायेन उभयत्र संबध्यत इति भावः। कथं स्मृतिरिति मूलेन चक्षुरभावेन स्मरणानुपपत्तिरुक्ता तत्र हेतोरनुपपत्तेः स्वयं हेतुं पूरयितुं मूलार्थमाह ॥ **पूर्वमिति** ॥ चक्षुषः नाशात्पूर्वमित्यर्थः ॥ **चक्षुषा साक्षात्कृतानामिति** ॥ चक्षुःकारणकत्वविशिष्टचक्षुःकर्तृकत्वविशिष्टचाक्षुषविषयाणामित्यर्थः ॥ **चक्षुरभाव इति** ॥ चाक्षुषकारणाभिन्नचाक्षुषसमवाय्यभाव इत्यर्थः। तत्र हेतुमाह ॥ **अनुभवितुरिति** ॥ ननु सिद्धान्तिमते चक्षुरादिनानुभूतस्य इन्द्रियान्तरेण मनसैव स्मरणादेतन्मतेऽपि इन्द्रियान्तरेणैव स्मरणं नानुपपन्नमत आह ॥ **अन्येनानुभूतस्येति** ॥ तत्र हेतुमाह ॥ **अनुभवेति** ॥ **सामानाधिकरण्येनेति** ॥ समवायघटितसामानाधिकरण्येनेत्यर्थः। नचेन्द्रियान्तरेण स्मरणस्वीकारे समवायघटितसा-

## दिनकरीयम्.

व्याचष्टे ॥ **तथात्वं चैतन्यमिति** ॥ उपघातपदस्य केवलावयवनाश एव प्रयोगस्तदाह ॥ **नाश इति** ॥ मूले उपघाते कथं स्मृतिरित्युक्तं तत्रोपघातः केषामित्याकाङ्क्षायाः सत्त्वादाह ॥ **अर्थादिति** ॥ तथाचैकमेवेन्द्रियाणामिति पदमाकाङ्क्षावशादुभयत्र सम्बध्यत इत्याशयः। कथं स्मृतिरिति मूलेनेन्द्रियाणां चैतन्यपक्षे चक्षुरभावे स्मृत्यभाव आपादितस्तत्र हेतोरनुक्तेः स्वयं हेतुं पूरयन्नर्थमाह ॥ **पूर्वं चक्षुषेति** ॥ नन्विन्द्रियान्तरेणैव स्मृतिर्भविष्यतीत्यत आह ॥ **अन्येनानुभूतस्येति** ॥ अत्र हेतुमाह ॥ **अनुभवेति** ॥ यद्यपि व्यधिकरणयोः कार्यकारणभावविरहात्सामानाधिकरण्येनेत्युक्तिर्विफला तथापि यत्र विषयतासम्बन्धेन स्मृतिस्तत्र विषयतासम्बन्धेनानुभव इतीदृशविषयत्वघटितसामानाधिकरण्यप्रत्यासत्त्या कार्यकारणभाव आवश्यकः आत्मनिष्ठसामानाधिकरण्यघटितकार्यकारणभावेन घटाद्यनुभवोत्तरं पटादौ विषयतासम्बन्धेन स्मृत्यापत्तेरवारणादिति। चक्षुःकर्तृकानुभवस्य घटे सत्त्वादिन्द्रियान्तरकर्तृकं स्मरणं तत्र नानुपपन्नमित्याशङ्कानिराकरणाय तथोक्तिः समवायघटितसामानाधिकरण्यप्रत्यासत्त्येति तदर्थः। चैत्रस्य घटानुभवकाले मैत्रस्य घटस्मरणवारणाय तत्तत्पुरुषभेदेनानन्तकार्यकारणभावकल्पने गौरवात् समवायघटितसामानाधिकरण्यप्रत्यासत्त्या तयोर्हेतुहेतुमद्भावस्वीकारादिति भाव इति ध्ये-

## रामरुद्रीयम्.

त्तिः। तदपि विभिन्नप्रवृत्तिनिमित्तकत्वमेव ॥ **केवलावयवेति** ॥ अवयविरहितावयवेत्यर्थः। अवयवनाशेऽप्यवयविनो नाशस्यावश्यकत्वात्केवलेत्युक्तम्। नत्ववयविनाशव्यवच्छेदाय तदुक्तिः एवकारेणैव तत्सिद्धेः ॥ **उभयत्रेति** ॥ इन्द्रियाणामित्यस्य तथात्वं नाश इत्युभयोरित्यर्थः ॥ **घटाद्यनुभवोत्तरं पटादाविति** ॥ न च घटविषयकस्मरणं प्रति घटविषयकानुभवत्वेन कारणत्वे नैष दोष इति वाच्यम्। तथासति विषयभेदेनानन्तकार्यकारणभावप्रसङ्गादिति भावः ॥ **तयोर्हेतुहेतुमद्भावस्वीकारादिति** ॥

**मनोऽपि न तथा ज्ञानाद्यनध्यक्षं तदा भवेत् ।**

ननु चक्षुरादीनां चैतन्यं मास्तु मनसस्तु नित्यस्य चैतन्यं स्यादत आह ॥ **मनोऽपीति** ॥ **न तथा** न चेतनं ॥ **ज्ञानादीति** ॥ मनसोऽणुत्वात्प्रत्यक्षे च महत्त्वस्य हेतुत्वात् मनसि ज्ञा-

## प्रभा.

मानाधिकरण्याभावेऽपि विषयत्वघटितप्रत्यासत्तिसत्त्वेन वैयधिकरण्यप्रयुक्तकार्यकारणभावनिराकरणम· युक्तमिति वाच्यं सिद्धान्तिना विषयत्वघटितप्रत्यासत्तिसत्त्वेन वैयधिकरण्यप्रयुक्तकार्यकारणभावनिराकरणम·· युक्तमिति वाच्यं सिद्धान्तिना विषयत्वघटितसामानाधिकरण्यप्रत्यासत्तिमादाय चैत्रानुभूतघटादेः मैत्रस्य स्मरणापत्तिवारणाय विषयत्वघटितसामानाधिकरण्यप्रत्यासत्तेः अनुभवस्मृत्योः कार्यकारणभावानियामकत्वस्य निराकृतत्वात् ॥ ४८ ॥

ननु चक्षुरादीनामुक्तदोषेण चैतन्याभावेऽप्याकाशरूपश्रोत्रेन्द्रियस्य नित्यतया कुतो न चैतन्यं नच तथापि पूर्वोक्तकारणत्वहेतोश्चक्षुरादिसाधारण्येन व्यभिचारितया कथं चैतन्यसिद्धिस्तस्येति वाच्यं तादृशहेतोर्व्यभिचारित्वेऽपि श्रावणत्वावच्छिन्ननिरूपितकरणत्वलिङ्गेनैव चैतन्यसिद्धिसंभवादिति चेन्न कर्णशष्कुलीविवरदेशावच्छिन्नाकाशस्यैव श्रोत्रत्वेन कर्णशष्कुलीविवररूपविशेषणाभावे विशिष्टश्रोत्रस्य कर्णशष्कुलीविवरवर्तमानकालावच्छेदेन श्रावणविषयार्थस्य कर्णशष्कुलीविवरनाशरूपबाधिर्यकालावच्छेदेन स्मरणानुपपत्तेस्तुल्यतया श्रोत्रस्यापि चैतन्यासंभवात् । नच तथापि कर्णशष्कुलीविवरनाशाद्विशिष्टाभावोऽस्तु नाशव्यवहारस्तु कथमिति वाच्यं स्वर्गध्वस्त इतिवद्विशेषणीभूतकर्णविवरनाशं विषयीकृत्य तथा व्यवहारात् । वस्तुतः उपघातपदस्याभावमात्रलाक्षणिकतया इन्द्रियाणामभावे स्मृतिः कथमित्येव कारिकार्थ इति भाति ॥ **चक्षुरादीनां चैतन्यं मास्त्विति** ॥ नाशे सति स्मरणानुपपत्तेरिति शेषः । अत्र नाशे सति स्मरणानुपपत्तिरूपदोषोऽस्मिन्पक्षे नास्तीति सूचयितुं नित्यस्येति विशेषणदानं तु अवधारणे नित्यस्य मनस एवेत्यर्थः ॥ **चैतन्यं स्यादिति** ॥ मानसत्वावच्छिन्ननिरूपितकरणत्वलिङ्गेन कर्तृत्वसिद्धिर्भवत्वित्यर्थः । ननु मूले न तथेत्यत्र तच्छब्देन पूर्वोपस्थितचैतन्यस्य परामर्शे असङ्गतिरत आह ॥ **न चेतनमिति** ॥ मनसश्चैतन्ये ज्ञानादेरनध्यक्षत्वाप-

## दिनकरीयम्.

यम् । इतीन्द्रियवादिमतखण्डनम् ॥ ४८ ॥

इन्द्रियाणां चैतन्यपक्षे यो दोषः सोऽत्र कल्पे नास्तीति सूचयितुमाह ॥ **नित्यस्येति** ॥ ननु तथेत्यत्र मूले तच्छब्देन पूर्वोपस्थितचैतन्यस्यैव परामर्शः स्यात्तथा चासङ्गतिरत आह ॥ **न तथा न चेतनमिति** ॥ अनध्यक्षं तदा भवेदिति मूलेन मनसश्चैतन्ये ज्ञानादेरप्रत्यक्षत्वमुक्तं तत्र

## रामरुद्रीयम्.

अनुभवस्मरणयोः कार्यकारणभावस्वीकारादित्यर्थः । तथा च विषयतयैकस्समवायेन चैकः कार्यकारणभाव इति भावः । एतच्चापाततः उक्तरीत्या कार्यकारणभावद्वयानङ्गीकारेऽपि घटघटत्वसमवायविषयकनिर्विकल्पकादपि घटत्वप्रकारकस्मरणापत्तेः । न च प्रकारत्वविशेष्यत्वसांसर्गिकविषयताभिः कार्यकारणभावस्योपगमान्नैष दोषो निर्विकल्पकस्य तादृशविषयतानभ्युपगमादिति वाच्यम् । एवमपि घटत्वपटत्वाभ्यां पटघटविषयकानुभवात् घटत्वप्रकारकघटविशेष्यकपटत्वप्रकारकपटविशेष्यकस्मरणापत्तेः । कालिकेन घटत्वप्रकारकसमवायेन घटत्वप्रकारकस्य कालिकेन पटत्वप्रकारकस्य घटविशेष्यकस्मरणापत्तेरशक्यपरिहारत्वात् अनायत्या घटत्वप्रकारकसमवायसंसर्गकघटविशेष्यकानुभवस्समवायेन घटत्वप्रकारकसमवायसंसर्गकघटविशेष्यकस्मरणं प्रति समवायेन कारणमिति रीत्या विषयभेदेनानन्तकार्यकारणभावस्यैव कल्पनीयत्वात् । परं तु कालिकविशेषणताप्रत्यासत्तिघटितसामानाधिकरण्यप्रत्यासत्त्या स्मरणानुभवयोः कार्यकारणभावाभ्युपगमे एकेन्द्रियेणानुभूतस्य इन्द्रियान्तरेणापि स्मरणोपपत्तेः समवायघटितसामानाधिकरण्यार्थकस्य सामानाधिकरण्यप्रत्यासत्त्येत्यस्य मूलेऽभिधानमिति युक्तमुत्पश्यामः ॥ ४८ ॥

नसुखादिसत्त्वे तत्प्रत्यक्षानुपपत्तिरित्यर्थः । यथा च मनसोऽणुत्वं तथाऽग्रे वक्ष्यते ॥ नन्वस्तु विज्ञानमेवात्मा तस्य स्वतःप्रकाशरूपत्वाच्चेतनत्वम् । ज्ञानसुखादिकं तु तस्यैवाकारविशे-

## प्रभा

त्तिरुक्तपूरितहेत्वर्थघटितमर्थमाह ॥ **मनस इति** ॥ **तत्प्रत्यक्षानुपपत्तिरित्यर्थ इति** ॥ इदमुपलक्षणम् । मनसो ज्ञानसुखादिमत्त्वे तस्याणुत्वेन सर्वावयवावच्छेदेन सुखाद्युपलब्धिर्न स्यात् इत्यपि बोध्यम् । एतेन लौकिकविषयतासंबन्धेन मानसत्वावच्छिन्नं प्रति महत्त्वस्य हेतुत्वे मानाभावान्मनसोऽणुत्वेऽपि सुखादिप्रत्यक्षसंभवेन तस्य चैतन्ये न किमपि बाधकमिति प्रत्युक्तम् । ननु मनसोऽणुत्व एव तद्दूषणं भवेत् तत्रैव न प्रमाणमत आह ॥ **यथेति** ॥ **अग्र इति** ॥ अयौगपद्याज्ज्ञानानामित्यादिग्रन्थेन मनसोऽणुत्वं साधयतीति भावः । योगाचारास्तु ज्ञानत्वस्य प्रमेयत्वव्यापकत्वेन सर्वस्यापि विज्ञानरूपत्वं विज्ञानं द्विविधं प्रवृत्तिविज्ञानमालयविज्ञानं चेति अयं घट इत्यादि प्रवृत्तिविज्ञानं अहमित्याकारकमालयविज्ञानं तदेवात्मेत्याहुः तन्मतमुपन्यस्यति ॥ **नन्वस्त्विति** ॥ **विज्ञानमेवाऽऽत्मेति** ॥ अप्यर्थ एवकारः आत्मेत्युत्तरं योज्यः । तथाचात्मापि विज्ञानमित्यर्थः । यथाश्रुते विशेष्यसंगतैवकारस्यान्ययोगव्यवच्छेदार्थकतया प्रकृते विज्ञानान्याप्रसिद्धया विशिष्टार्थाप्रसिद्धेः । यद्यप्येतन्मतेऽपि विज्ञानं सर्वमस्त्येव वक्तुमुचितं तथाप्यात्मनिरूपणस्य प्रस्तुतत्वादात्मेत्युक्तमिति ध्येयम् । नन्वात्मनोऽपि विज्ञानरूपत्वे ज्ञानाद्यधिकरणत्वरूपचैतन्यानुपपत्तिः ज्ञानस्य ज्ञानानाधारत्वात् नच योगाचार्यमते आलयविज्ञानस्यैवात्मरूपतया तस्य प्रवृत्तिविज्ञानाधिकरणत्वे बाधकाभावः नैयायिकमते प्रतिक्षणं जीवनयोनियत्नोत्पत्तावपि तत्काले ज्ञानाद्युत्पत्तिवत् एतन्मते प्रतिक्षणमालयविज्ञानस्योत्पत्तावपि तत्काले प्रवृत्तिविज्ञानाद्युत्पत्तौ बाधकाभावादेककालोत्पन्नयोर्घटपटयोः कालिकसंबन्धेनाधाराधेयभावस्वीकारवत् एककालोत्पन्नयोरप्यालयविज्ञानप्रवृत्तिविज्ञानयोः स्वरूपसंबन्धेनाधाराधेयभावस्वीकारे बाधकाभावाच्चेति वाच्यं सर्वदा प्रवृत्तिविज्ञानोत्पत्तौ मानाभावेन सुषुप्तिकाले प्रवृत्तिविज्ञानाद्यनुत्पत्त्या तत्कालीनात्मनः ज्ञानाधिकरणत्वाभावेन चैतन्यानुपपत्तेः दुर्वारत्वादत आह ॥ **तस्य स्वतःप्रकाशरूपत्वादिति** ॥ स्वाभिन्नज्ञानविषयत्वादित्यर्थः । पञ्चम्यर्थोऽभेदः । तथाच सुषुप्तिकालीनालयविज्ञानपरम्परा-

## दिनकरीयम्.

हेतुं प्रदर्शयन्नाह ॥ **मनस इति** ॥ **तत्प्रत्यक्षेति** ॥ ज्ञानादिप्रत्यक्षानुपपत्तिरित्यर्थः । ननु मनसोऽणुत्वमेवासिद्धमत आह ॥ **यथा चेति** ॥ **अग्रे वक्ष्यत इति** ॥ अयौगपद्याज्ज्ञानानां तस्याणुत्वमिहेष्यत इति ग्रन्थेन साधयिष्यत इत्यर्थः ॥ **विज्ञानमेवेति** ॥ आत्मनिरूपणस्य प्रस्तुतत्वादात्मेत्युक्तं वस्तुमात्रस्यैव तन्मते विज्ञानरूपत्वादिति बोध्यम् । अत्र विज्ञानत्वं प्रमेयत्वस्य सत्त्वस्य व्यापकं न वेति विप्रतिपत्तिः तत्र विधिकोटिर्योगाचारस्य निषेधकोटिर्नैयायिकस्येति बोध्यम् । द्विविधं विज्ञानं प्रवृत्तिविज्ञानमालयविज्ञानं चेति तत्रायं घट इत्यादि प्रवृत्तिविज्ञानं अहं जानामीत्यालयविज्ञानं तदेवात्मा ॥ **तस्य**

## रामरुद्रीयम्.

**असङ्गतिः स्यादिति** ॥ मनसो ज्ञानरूपत्वासम्भवादिति भावः ॥ **साधयिष्यत इत्यर्थ इति** ॥ यद्यपि मानसान्यप्रत्यक्षं प्रत्येव महत्त्वस्य कारणत्वोपगमे नैष दोषः अत एव माध्वादिमते जीवानामणुत्वमेव अङ्गीकृतं तथापि मानसान्यत्वप्रत्यक्षत्वयोर्विशेषणविशेष्यभावे विनिगमनाविरहेण गुरुतरकार्यकारणभावद्वयापत्त्या गौरवापत्तेर्न तथोपगमसम्भवः । न च सिद्धान्तिमते अनन्तजीवानां कल्पनीयतया कारणताद्वयकल्पने न ततो गौरवमिति वाच्यम् । अनेकजीवकल्पनागौरवस्य फलमुखत्वेनादोषत्वादिति भावः । विज्ञानात्मकवादिविचारे तदङ्गविप्रतिपत्तिं दर्शयति ॥ **अत्रेति** ॥ **सत्त्वस्य वेति** ॥ सामान्यादीनां तन्मते अलीकत्वादिति भावः । सत्त्वमत्र कालसम्बन्धित्वमेव ग्राह्यम् ॥ **अहं जानामीत्यादीति** ॥ अहमित्याकारकज्ञानमित्यर्थः । तेन सुषुप्तिकाले उत्तरत्र वक्ष्यमाणालयविज्ञानधारानुवृत्तेर्न विरोधः अन्यथा तत्काले प्रवृत्ति-

षः । तस्यापि भावत्वादेव क्षणिकत्वं पूर्वपूर्वविज्ञानस्योत्तरोत्तरविज्ञानहेतुत्वात् सुषुप्त्यवस्थायामप्यालयविज्ञानधारा निराबाधैव मृगमदवासनावासितवसन इव पूर्वपूर्वविज्ञानजनितसंस्काराणामुत्तरोत्तरविज्ञाने संक्रान्तत्वान्नानुपपत्तिः स्मरणादेरिति चेन्न । तस्य जगद्विषयकत्वे सर्वज्ञत्वापत्तिः यत्किञ्चिद्विषयकत्वे विनिगमनाविरहः सुषुप्तावपि विषयावभासप्रसङ्गाच्च ज्ञानस्य सविषयत्वात् । तदानीं निराकारा चित्सन्ततिरनुवर्तत इति चेन्न । तस्याः प्र-

## प्रभा.

यामपि स्वाभिन्नज्ञानविषयत्वरूपचैतन्यं निराबाधमेवेति भावः । नन्वात्मनः क्षणिकविज्ञानरूपत्वे सुखादिसमवायिकारणत्वानुपपत्तिः ज्ञानोत्पत्तिक्षणे सुखाद्युत्पत्तौ विज्ञानस्य पूर्ववृत्तित्वाभावेन कारणत्वस्यैवानुपपत्तेः विज्ञानोत्पत्तिद्वितीयक्षणे सुखाद्युत्पत्तिस्वीकारे सुखाद्युत्पत्तिकाले विज्ञानस्यैव नाशात्समवायिकारणत्वानुपपत्तेः समवायिकारणस्य कार्यकालवृत्तितया हेतुत्वादित्यत आह ॥ **ज्ञानसुखादिकमिति** ॥ **तस्यैवाकारविशेष इति** ॥ तस्याकारविशेष एवेत्यर्थः । तदाकारविशेषत्वं च वस्तुतस्तदभिन्नत्वे सति तद्भिन्नत्वेन भासमानत्वं । एवंच ज्ञानसुखादीनामात्माभिन्नत्वेन कार्यकारणभावाप्रसक्त्या न पूर्वोक्तदोष इति भावः । ननु ज्ञानसुखादीनामात्माभिन्नत्वे अहं सुखीत्यादिसर्वानुभवसिद्धसुखाद्यधिकरणत्वावगाहिप्रत्ययो न स्यात् अभेदे आधाराधेयभावासंभवादिति चेन्न आधाराधेययोरैक्येऽपि आधारतावच्छेदकाधेयतावच्छेदकभेदेनाधाराधेयभावस्य सर्वैः स्वीकृतत्वात् । नच तथापि तादात्म्यसंबन्धस्याधिकरणत्वानियामकतया कथं तेन संबन्धेनाधाराधेयभाव इति वाच्यं तादात्म्यस्य तादात्म्यत्वेनाधिकरणत्वानियामकत्वेऽपि स्वरूपत्वेनाधिकरणत्वनियामकत्वे बाधकाभाव इत्यभिप्रायात् । ननु ज्ञानादीनामात्मनः आकारविशेषरूपत्वे आत्मनो विकारित्वप्राप्त्या अनित्यत्वापत्तिरित्यत इष्टापत्तिमाह ॥ **तस्य भावत्वादेवेति** ॥ तथाच भावमात्रस्यापि क्षणिकत्वेनैतस्यापि क्षणिकत्वप्राप्त्या अनित्यत्वमिष्टमेवेति भावः। नन्वेवं सति सुषुप्तावात्मा न सिध्येत् पूर्वोत्पन्नविज्ञानस्य क्षणिकत्वेन नाशात् विज्ञानान्तरस्योत्पादकाभावात् अत आह ॥ **पूर्वपूर्वेति** ॥ एतन्मते कार्यकारणयोरेकाधिकरणवृत्तित्वानियमात् कारणतायाः कार्यपूर्ववृत्तित्वमात्ररूपत्वाच्च पूर्वविज्ञानस्य उत्तरविज्ञानहेतुत्वसंभव इति ध्येयम् । ननु विज्ञानस्यापि क्षणिकत्वे तदाश्रितसंस्कारस्यापि भावत्वेन क्षणिकत्वात् कालान्तरे स्मरणन्न स्यादित्याशङ्कां परिहरति ॥ **मृगमदेति** ॥ कस्तूरिकागन्धस्य यथा वसने संक्रमः तथा पूर्वविज्ञानजनितसंस्कारस्योत्तरोत्तरविज्ञाने संक्रमः संभवतीति स्मरणं निराबाधमिति भावः । विज्ञानस्य जगद्विषयकत्वं यत्किंचिद्विषयकत्वं वेति विकल्प्याद्ये दूषणमाह ॥ **तस्येति** ॥ द्वितीये त्वाह ॥ **यत्किंचिदिति** ॥ **विनिगमकाभावादिति** ॥ तथाच यत्किंचिद्विषयकत्वेऽपि सर्वज्ञत्वापत्तेरिति भावः । आत्मनः सविषयकत्वे दूषणमाह ॥ **सुषुप्तावपीति** ॥ शङ्कते ॥ **तदानीमिति** ॥ सुषुप्तिकाल इत्यर्थः ॥ **निराकारा** निर्विषयिणी ॥ **चित्संततिः** ज्ञानसन्ततिः ॥ **अनुवर्तत इति** ॥ जायत

## दिनकरीयम्.

विज्ञानस्य । ननु सुषुप्तावात्मा न सिध्येत् पूर्वोत्पन्नविज्ञानस्य क्षणिकत्वेन नाशाद्विज्ञानान्तरस्य च तदानीमुत्पादकाभावादत आह ॥ **पूर्वपूर्वेति** ॥ ननु विज्ञानस्य क्षणिकत्वेन तदाश्रितसंस्कारस्यापि क्षणिकत्वात् कालान्तरे स्मरणं न स्यादित्याशङ्कां परिहरति ॥ **मृगमदेति** ॥ विज्ञानस्य जगद्विषयकत्वं किञ्चिद्विषयकत्वं वाभिप्रेतमिति विकल्प्याद्ये दूषणमाह ॥ **तस्येति** ॥ विज्ञानस्य । द्वितीये आ- ॥ **यत्किञ्चिदिति** ॥ आत्मस्वरूपविज्ञानस्य सविषयत्वे दूषणमाह ॥ **सुषुप्ताविति** ॥ शङ्कते ॥ त-

## रामरुद्रीयम्.

ज्ञानविरहेण जानामीत्याकारकज्ञाने च घटः पट इत्यादिप्रवृत्तिज्ञानस्यैव विषयत्वेन आलयविज्ञानानुवृत्तेस्तदानीमसम्भवापत्तेः अहमित्याकारकज्ञाने च स्वयमेव विषयः घट इत्यादिज्ञानस्य तद्गोचरप्रवृत्तिसाधनत्वात्प्रवृत्तिज्ञानत्वमिति बोध्यम् ॥ **उत्पादकाभावादिति** ॥ पुरीतद्भिन्नदेशावच्छिन्नमनस्संयोगरूपकारणाभा-

काशत्वे प्रमाणाभावात् अन्यथा घटादीनामपि ज्ञानत्वापत्तिः। नचेष्टापत्तिः विज्ञानव्यतिरिक्तवस्तुनोऽभावादिति वाच्यम्। घटादेरनुभूयमानस्यापलपितुमशक्यत्वात्। आकारविशेष एवायं विज्ञानस्येति चेन्न किमयमाकारोऽतिरिच्यते विज्ञानात्तर्हि समायातं विज्ञानव्यतिरिक्तेन। नातिरिच्यते चेत्तर्हि समूहालम्बने नीलाकारोऽपि पीताकारस्स्यात् स्वरूपतो विज्ञानस्याविशेषात्। अपोहरूपो नीलत्वादिर्विज्ञानधर्म इति चेन्न। नीलत्वादीनां विरुद्धानामेकस्मिन्नसमावेशात् इतरथा विरोधावधारणस्यैव दुरुपपादत्वात्। नवा वासनासंक्रमः सम्भवति मातृपुत्रयोरपि वासनासंक्रमप्रसङ्गात्। नचोपादानोपादेयभावो नियामक इति वाच्यम्।

## प्रभा.

इत्यर्थः। तस्याः निर्विषयकचित्सन्ततेः॥ प्रकाशत्वे विज्ञानत्वे॥ **प्रमाणाभावादिति**॥ ज्ञानत्वस्य विषयिताव्याप्यत्वादिति भावः॥ **अन्यथेति**॥ निर्विषयस्यापि ज्ञानत्वस्वीकार इत्यर्थः॥ **अनुभूयमानस्येति**॥ विज्ञानभिन्नत्वेनानुभवसिद्धस्येत्यर्थः॥ **अपलपितुमशक्यत्वादिति**॥ विज्ञानत्वेन रूपेण वक्तुमशक्यत्वादित्यर्थः। आकारस्य विज्ञानातिरिक्तत्वं अनतिरिक्तत्वं वेति विकल्प्याद्ये दूषणमाह॥ **किमयमिति**॥ **तर्हीति**॥ विज्ञानातिरिक्ताकारविशेषस्वीकारे हीत्यर्थः॥ **समायातं विज्ञानव्यतिरिक्तेनेति**॥ विज्ञानव्यतिरिक्तवस्तुस्वीकारप्रयुक्तास्मन्मतप्रविष्टत्वमित्यर्थः तवेति शेषः। द्वितीये त्वाह॥ **समूहालम्बन इति**॥ नीलपीतावितिः समूहालम्बन इत्यर्थः। स्यादित्यत्र हेतुमाह॥ **स्वरूपतो विज्ञानस्येति**॥ विज्ञानस्वरूपस्येत्यर्थः॥ **अविशेषादिति**॥ एकत्वादित्यर्थः। तथाच तदभिन्नाभिन्नस्य तदभिन्नतेति नियमेन नीलाकाराभिन्नविज्ञानाभिन्नत्वात् पीताकारस्य नीलाकाराभिन्नत्वसिद्धिरिति भावः। ननु नीलाकारः पीताकारादभिन्न एव परंतु अतद्व्यावृत्तिरूपत्वेन विज्ञानभिन्नयोर्नीलत्वपीतत्वयोर्भेदात् भेदप्रतीतिरिति शङ्कते॥ **अपोहरूप इति**॥ अनीलव्यावृत्तिरूप इत्यर्थः॥ **इतरथेति**॥ नीलत्वपीतत्वयोरविरोध इत्यर्थः॥ **विरोधेति**॥ नीलत्वपीतत्वे विरुद्धे इत्याकारकाभ्रान्तानुभवस्यैवेत्यर्थः॥ **दुरुपपादत्वादिति**॥ प्रमात्वेनोपपादयितुमशक्यत्वादित्यर्थः। ननु समूहालम्बने न नीलाकारः नवा पीताकारः अभ्युपेयते येनोक्तदूषणं स्यात् किन्तु चित्राकार एवेति नोक्तदोष इत्याशङ्कायां पूर्वोक्तवासनासंक्रममेव मुख्यतया दूषयति॥ **नवेति**॥ नैवेत्यर्थः॥ **मातृपुत्रयोरपीति**॥ अपिना पूर्वोत्तरालयविज्ञानयोः परिग्रहः॥ **वासनासंक्रमप्रसंगादिति**॥ पूर्वालयविज्ञानस्य उत्तरालयविज्ञानहेतुतया पूर्वालयविज्ञाननिष्ठसंस्कारः उत्तरालयविज्ञाने यथा संक्रमति तथा मातृरूपविज्ञानस्यापि पुत्रविज्ञानहेतुतया मातृनिष्ठसंस्कारस्य पुत्रे संक्रमप्रसंगादित्यर्थः नचेष्टापत्तिः पुत्रस्य मात्रनुभूतपदार्थस्मरणापत्तेरिति भावः॥ **नचोपादानोपादेयेति**॥ एतन्मते उपादानत्वं कार्याव्यवहितपूर्ववृत्तित्वे

## दिनकरीयम्.

**दानीमिति**॥ **निराकारा** निर्विषया॥ **चित्सन्ततिः** विज्ञानसन्ततिः॥ **प्रकाशत्वे** ज्ञानत्वे। ज्ञानत्वस्य विषयिताव्याप्यत्वादिति भावः॥ **अन्यथा** प्रमाणाभावेऽपि तत्र ज्ञानत्वस्वीकारे। आकारस्य विज्ञानातिरिक्तत्वमनतिरिक्तत्वं वेति विकल्प्याद्ये दूषणमाह॥ **तर्हि समायातमिति**॥ द्वितीये त्वाह॥ **समूहालम्बन इति**॥ नीलपीते इति समूहालम्बन इत्यर्थः॥ **स्यादिति**॥ तदभिन्नाभिन्नस्य तदभिन्नत्वनियमादिति भावः। एतदेवोपपादयति॥ **स्वरूपतो विज्ञानस्येति**॥ विज्ञानस्वरूपस्येत्यर्थः॥ **अविशेषात्** एकत्वात्। ननु नीलाकारः पीताकारश्चाभिन्न एव भेदप्रतीतिस्तु तद्धर्मयोर्नीलत्वपीतत्वयो-

## रामरुद्रीयम्.

वादित्यर्थः॥ **मूले सुषुप्ताविति**॥ तदानीन्तनालयविज्ञानस्य स्वमात्रविषयकत्वोपगमेऽपि तस्यैव तदानीं भानप्रसङ्ग इति भावः॥ **प्रमाणाभावेऽपीति**॥ विषयितात्मकज्ञानत्वव्यापकाभावेऽपीत्यर्थः॥ तद-

**वासनायाः संक्रमासम्भवात् । उत्तरस्मिन्नुत्पत्तिरेव संक्रम इति चेन्न । तदुत्पादकाभावात् । चितामेवोत्पादकत्वे संस्कारानन्त्यप्रसङ्गः । क्षणिकविज्ञानेऽप्यतिशयविशेषः कल्प्यत इति चे-**

## प्रभा.

सति कार्यसजातीयत्वं । अत्र व्यवहितपूर्वोत्पन्नविज्ञानस्य उपादानत्ववारणायाऽव्यवहितपूर्ववृत्तित्वनिवेशः । घटं प्रति दण्डस्य उपादानत्ववारणाय विशेष्यदलं । साजात्यं च कार्यतावच्छेदकावच्छिन्नत्वं तेषं मते आत्मत्वावच्छिन्नं प्रत्यात्मत्वेन समवायिकारणतया उत्तरालयविज्ञानं प्रति पूर्वालयविज्ञानस्योपादानत्वोपपत्तेः । प्रकृते चैत्रादिशब्दानां शरीरमात्रवाचकत्वेनात्मनः सहजावरणं शरीरमिति भाष्यात् आत्मावरणत्वेन शरीरस्य क्लृप्ततया कार्यरूपविज्ञानावरणचैत्राद्यावृतत्वं कार्यसजातीयत्वं बोध्यम् । नच चैत्रशरीरयोरपि विज्ञानरूपत्वेन क्षणिकतया कथं पूर्वालयविज्ञानावरणचैत्रावृतत्वमुत्तरालयविज्ञानस्येति वाच्यं तत्कार्यावरणतावच्छेदकचैत्रत्वाद्यवच्छिन्नावृतत्वरूपतत्कार्यसजातीयत्वस्य विवक्षितत्वात् प्रकृते चैत्रात्मकशरीरयोर्विज्ञानरूपत्वेन क्षणिकत्वेऽपि तद्वृत्तिचैत्रत्वादेरतद्व्यावृत्तिरूपतया विज्ञानरूपत्वाभावेन क्षणिकत्वाभावात् । एतन्मते चैत्रादिशब्दानां तु आत्मविशेषवाचकतया तत्कार्यवृत्तिचैत्रत्वादिमत्त्वरूपमेव तत्कार्यसजातीयत्वं वाच्यं लाघवात् । एवंच मातृपुत्रयोः मातृत्वपुत्रत्वरूपविरुद्धधर्माश्रयत्वेन पुत्रसजातीयत्वाभावात् मातुः पुत्रनिरूपितोपादानत्वाभावेन मातृनिष्ठसंस्कारस्य पुत्रे संक्रमप्रसङ्गाभावात् । न चैवमपि द्वितीयालयविज्ञानं प्रति प्राथमिकालयविज्ञानस्योपादानत्वसंभवेऽपि प्राथमिकालयविज्ञानं प्रति उपादानत्वाभावेन कथमुत्पद्यत इति वाच्यं मात्रादिरूपनिमित्तकारणादेव प्राथमिकात्मरूपविज्ञानोत्पत्तेः संभवात् । अहेतुक एवोत्पद्यत इति वदतां मते कार्यमात्रस्य उपादानजन्यत्वाभावे क्षतिविरहादित्याशयः ॥ **वासनाया इति** ॥ वासनायाः क्रियारहितत्वेन पूर्वविज्ञानस्थितसंस्कारस्य उत्तरविज्ञाने प्रवेशासंभवादित्यर्थः । शङ्कते ॥ **उत्तरस्मिन्निति** ॥ उत्तरविज्ञानोत्पत्तिकाल एव पूर्वालयविज्ञानस्थितसंस्कारात् उत्तरालयविज्ञाने संस्कारोऽप्युत्पद्यते । एकक्षणोत्पत्तिकयोरपि आधाराधेयभावस्य तन्मतसिद्धत्वादिति भावः ॥ **तदुत्पादकेति** ॥ संस्कारोत्पादकाभावादित्यर्थः । संस्कारस्य संस्काराहेतुत्वादिति भावः ॥ **चितामेवेति** ॥ संस्कारं प्रति ज्ञानत्वेन हेतुत्वस्वीकारात् नोक्तदोष इत्याशयः ॥ **तदानन्त्यप्रसंग इति** ॥ संस्कारानन्त्यप्रसंग इत्यर्थः । तथाच गौरवान्न ज्ञानत्वेन हेतुत्वमिति भावः । शङ्कते ॥ **क्षणिक इति** ॥ **अतिशयविशेष इ-**

## दिनकरीयम्.

भेदात् । नच तयोरपि विज्ञानस्वरूपत्वादभेदः नीलत्वादेरपारमार्थिकस्य पारमार्थिकविज्ञानेनाभेदासंभवादित्यभिप्रायवान् शङ्कते ॥ **अपोहरूप इति** ॥ अनीलव्यावृत्तिरूप इत्यर्थः ॥ **इतरथा** विरुद्धनीलत्वादीनामेकत्र समावेशे । ननु समूहालम्बने न नीलाकारो नवा पीताकारोऽभ्युपेयते परन्तु चित्राकार एवेति नोक्तदोष इति वासनासंक्रमं मुख्यतया दूषयति ॥ **नवेति** ॥ **मातृपुत्रयोरिति** ॥ मात्राऽनुभूतस्य गर्भस्थेन तनयेन स्मरणप्रसङ्गादिति भावः । उपादानेनानुभूतमुपादेयेन स्मर्यते इत्यपि निरस्यति ॥ **नचेति** ॥ शङ्कते ॥ **उत्तरस्मिन्निति** ॥ वासनोत्पादकेत्यर्थः ॥ **चितामेवेति** ॥ ज्ञानानामेव संस्कारोत्पादकत्वे तेषामानन्त्यात् संस्कारानन्त्यापत्तिरित्यर्थः । शङ्कते ॥ **क्षणिकेति** ॥ **अ-**

## रामरुद्रीयम्.

**भिन्नेति** ॥ नीलरूपाकारात्मकविज्ञानाभिन्नस्य पीताकारस्य नीलाभिन्नत्वनियमादिति भावः ॥ **एकत्र समावेश इति** ॥ एकाधिकरणवृत्तित्वेनावधारणे । तेनैकाधिकरणवृत्तीनामपि तथात्वेनाप्रतीतिदशायां भ्रमात्मकविरोधावधारणेऽपि नासङ्गतिः ॥ **उपादानेनेति** ॥ अत्रोपादानत्वं न समवायिकारणत्वं विभिन्नकालीनयोः क्षणिकज्ञानव्यक्त्योरेकव्यक्तिं प्रति अपरव्यक्तेरुक्तसमवायिकारणत्वासम्भवात् । नापि तन्मते स्वकारणत्वे सति स्वोत्पत्तिकालोत्पत्तिकध्वंसप्रतियोगित्वमुपादानत्वं तन्मते वस्तुमात्रस्यैव क्षणिकत्वेन मातुरपि पुत्रोपादानतापत्तेः । अत एव न स्वभिन्नासमवेतत्वे सति स्वकारणत्वमुपादानत्वं उत्तरोत्तरघटादिव्यक्तिं प्रति

त्र मानाभावात् कल्पनागौरवात्। एतेन क्षणिकशरीरेष्वेव चैतन्यं प्रत्युक्तं गौरवादतिशये मा-

## प्रभा.

त्रि ॥ उत्तरोत्तरालयविज्ञाननिष्ठसंस्कारोत्पादकतावच्छेदकशक्तिविशेषः स्वीक्रियत इत्यर्थः। तथाच यादृशयादृशविज्ञानोत्तरं स्मृतिरनुभवसिद्धा तादृशतादृशविज्ञान एव संस्कारस्वीकारेण तत्तद्विज्ञानाव्यवहितपूर्ववृत्तिविज्ञानेष्वेव तादृशशक्तिस्वीकारेण ज्ञानानन्त्यप्रयुक्तसंस्कारानन्त्याभावात् न पूर्वोक्तगौरवमिति भावः ॥ **मानाभावादिति** ॥ कार्यानुकूलशक्तौ मानाभावादित्यर्थः। ननु ज्ञानव्यक्तिभेदेनानन्तसंस्काराकल्पनरूपलाघवमेव तत्र प्रमाणमित्यत आह ॥ **कल्पनागौरवाच्चेति** ॥ तथाच शक्तेरपि भावत्वेन क्षणिकतया अनन्तशक्तितत्प्रागभावादिकल्पनागौरवस्यात्रापि तुल्यत्वेन लाघवाभावादिति भावः ॥ **एतेन** वक्ष्यमाणदूषणेनेत्यर्थः ॥ **गौरवादिति** ॥ कालान्तरे स्मरणनिर्वाहे क्षणिकानन्तशरीरव्यक्तिभेदेनानन्तसंस्कारकल्पनाप्रयुक्तगौरवादित्यर्थः। ननु यादृशयादृशशरीरेषु स्मरणमुपलभ्यते तत्तच्छरीराव्यवहितपूर्ववृत्तिशरीरेष्वेव संस्कारस्वीकारेण तत्तदव्यवहितपूर्ववृत्तिशरीरेष्वेव संस्कारजनकतावच्छेदकशक्तिस्वीकारान्न शरीरव्यक्तिभेदेनानन्तसंस्कारकल्पनागौरवमत आह ॥ **अतिशय इति** ॥ तथाच शक्तेरपि भावत्वेन क्षणिकतया अनन्तशक्तितत्प्रागभावादिकल्पनागौरवस्य तुल्यत्वेन तादृशशक्तौ मानाभावादिति भावः। ननु अङ्कुरं प्रति बीज-

## दिनकरीयम्.

**तिशयाविशेषः** शक्तिविशेषः। उत्तरोत्तरविज्ञानानुकूलतयेति शेषः ॥ **गौरवादिति** ॥ स एवायमित्यापामरप्रत्यभिज्ञानात् क्षणिकानन्तशक्तितत्प्रागभावध्वंसकल्पने गौरवादित्यर्थः। ननु क्षेत्रस्थबीजादङ्कुरोत्पत्तिर्न कुसूलस्थबीजादतोऽङ्कुरत्वावच्छिन्नं प्रति कुर्वद्रूपत्वेन हेतुत्वमङ्गीक्रियते कुर्वद्रूपत्वं चाङ्कुरजनकतावच्छेदकतया सिद्धो जातिविशेषः स च फलोपधायकक्षणिकसमर्थबीजमात्रवृत्तिर्बीजत्वव्याप्यः कल्प्य-

## रामरुद्रीयम्.

पूर्वपूर्वघटादिव्यक्तीनामुपादानत्वानुपपत्तेस्तन्मते तत्राप्युपादानोपादेयभावाभ्युपगमेनेष्टापत्त्यसम्भवात् परं तु असहकृतं कारणमुपादानं उत्तरव्यक्तौ पूर्वव्यक्तिमात्रस्यैव तैः कारणत्वाङ्गीकारात् भवत्युत्तरव्यक्तौ पूर्वव्यक्तेरुपादानत्वं माता च पुत्रं प्रति नासहकृतं कारणं शुक्रशोणितादेरपि पुत्रकारणत्वादिति ध्येयम् ॥ **शक्तिविशेष इति** ॥ अयं भावः। ज्ञानव्यक्तीनां संस्कारज्ञानजनकत्वे प्रतिज्ञानं भिन्नसंस्कारव्यक्तिकल्पनागौरवेऽपि यादृशज्ञानव्यक्त्युत्तरं स्मरणमनुभवसिद्धं तज्ज्ञाननिष्ठसंस्कारानुकूला काचित् शक्तिः पूर्वज्ञानव्यक्तौ स्वीकरणीया न तु सर्वज्ञानव्यक्तावतिशयः कल्प्यते न संस्कारानन्त्यम् ॥ **क्षणिकेति** ॥ तन्मते पदार्थमात्रस्य क्षणिकत्वेऽपि यदा यदा स्मरणमनुभवसिद्धं तदा तदा तज्ज्ञानेष्वेकैव शक्तिः कल्पनीया नातोऽनन्तशक्तिकल्पनागौरवमिति यदि ब्रूयात्तदा ज्ञानव्यक्तिभेदेन शक्तिर्भिन्नैवाङ्गीकरणीया पदार्थानां तन्मते क्षणिकत्वादिति समाधानसूचनाय पदार्थमात्रसाधारणक्षणिकत्वस्यापि शक्तावनुवादः अत एव ध्वंसप्रागभावावप्येतस्य कल्प्याविति द्योतनाय ध्वंसप्रागभावयोरुपादानमपि सङ्गच्छते। अनन्तेति तु अनन्तव्यक्तिकल्पनागौरवस्फुरणाय यदा यदा स्मरणमनुभूयते तदा तदा विभिन्नशक्तिव्यक्तिकल्पनस्यावश्यकत्वादिति भावः। इदमुपलक्षणं तत्तदतिशयं प्रति पूर्वकालीनज्ञानव्यक्तीनां कारणताकल्पनेनापि गौरवं बोध्यम्। अत्र च प्रामाणिकं गौरवं न दोषायेति न्यायेन नानाशक्तिकल्पनेऽपि न दोष इत्याशङ्कानिरासायैव सोऽयमित्यभेदप्रत्यभिज्ञानादित्युक्तं अभेदस्यैवानुभवसिद्धतया नानाव्यक्तिकल्पनं न प्रामाणिकमिति तदभिप्रायः। वस्तुतस्तु पदार्थमात्रस्यैव क्षणिकत्वानुपगमे हेतुरेतत् तथा च क्षणिकपदार्थोपगन्तॄणां मते नानाव्यक्तिकल्पनागौरवमेव हेतुत्वेनाभिमतं तत्रैव प्रामाणिकं गौरवं न दोषायेत्याशङ्कायामाह ॥ **स एवायमिति** ॥ तथा चाभेदस्यैव अनुभवसिद्धतया क्व विभिन्नव्यक्तीनां प्रामाणिकताचिन्तेति भावः। एतेन प्रत्यभिज्ञायाः प्रत्यक्षरूपत्वेन शक्तीनामतीन्द्रियत्वेन तद्विषयकप्रत्यभिज्ञानं न सम्भवतीति दूषणमपि प्रत्युक्तम् ॥ **जातिविशेष इति** ॥ अङ्कुरोपधायकक्षणिकबीजव्यक्तिमात्रवृत्तिर्जातिरित्यर्थः। स चायमपोहरूप एवाङ्-

नाभावाच्च । बीजादावपि सहकारिसमवधानासमवधानाभ्यामेवोपपत्तेः कुर्वद्रूपत्वाकल्पनात् ॥

## प्रभा.

त्वेन न हेतुत्वं कुसूलस्थबीजादङ्कुरोत्पत्त्यापत्तेः किन्तु कुर्वद्रूपत्वेन तच्च समर्थक्षणिकबीजमात्रवृत्तिबीजत्वव्याप्यजातिविशेषः तस्य कुसूलस्थबीजव्यावृत्तत्वेन व्यभिचाराभावात् तथा क्षणिकानन्तशरीरेषु शरीरत्वव्याप्यकुर्वद्रूपत्वरूपजातिं परिकल्प्य तेन रूपेण उत्तरोत्तरशरीरनिष्ठसंस्कारोत्पादकत्वं वाच्यं अत आह ॥ **बीजादावपीति** ॥ **सहकारिसमवधानेति** ॥ धरणिजलसंयुक्तत्वासंयुक्तत्वाभ्यामित्यर्थः ॥ **उपपत्तेरिति** ॥ कस्माच्चित् बीजादङ्कुरोत्पत्तिः कस्माच्चित् बीजान्नेति नियमोपपत्तेरित्यर्थः ॥ **कुर्वद्रूपत्वाकल्पनादिति** ॥ कुर्वद्रूपत्वे तद्रूपेण जनकत्वे च प्रमाणाभावादित्यर्थः । योगाचार्यमतानुयायिनस्तु यत्सत् तत्क्षणिकमिति व्याप्त्या जगतः क्षणिकत्वं तदनुरोधेन कुर्वद्रूपत्वं तेन रूपेण जनकत्वं चावश्यकं तादृशव्याप्त्यनङ्गीकारे कुसूलस्थबीजादङ्कुरोत्पत्तिवारणाय धरणिजलसंयोगादीनां सहकारित्वकल्पने गौरवात् तादृशव्याप्तिस्वीकारे तु कुर्वद्रूपत्वेन हेतुत्वस्वीकारात् धरणिजलसंयोगादीनां कारणत्वाप्रसक्त्या लाघवात् । नच क्षणिकत्वमतेऽपि बीजस्य धरणिसलिलसंयोगादेर्वा कुर्वद्रूपत्वेन हेतुत्वमित्यत्र विनिगमनाविरहेणानन्तकार्यकारणभावकल्पनं तुल्यमिति वाच्यं मन्मते बीजानां धरणिजलसंयोगादीनां च कुर्वद्रूपत्वेन हेतुत्वस्वीकारे गौरवाभावादित्याहुः तदसत् ईदृशगौरवापेक्षया क्षणिकानन्तपदार्थकल्पने अतिगौरवात् । नच लाघवात् कुर्वद्रूपत्वेन एकहेतुतासिद्धौ ईदृशगौरवस्य फलमुखत्वेनादोषत्वामिति वाच्यं फलमुखगौरवस्यापि दोषत्वात् । इदमुपलक्षणं कुर्वद्रूपत्वस्य जातिरूपत्वे तस्यापि क्षणिकत्वेनानन्तकार्यकारणभावस्तुल्यः अतद्व्यावृत्तिरूपत्वे तस्य नित्यतया अङ्कुरोत्पत्त्यनन्तरं पुनरङ्कुरोत्पत्त्यापत्तिः तद्धर्माश्रयस्य सत्त्वादित्यपि बोध्यम् । किंच जगतः क्षणिकत्वे स एवायं घट इति प्रत्यभिज्ञानुपपत्तिः पूर्वापरकालीनघटयोः भेदात् । नच तत्सजातीयाभेद एव तादृशप्रतीतिविषयः तन्मते जातेरपि क्षणिकत्वेन तादृशघटद्वयवृत्तिघटत्वस्यापि भिन्नत्वात् । इदमापाततः । जातेरतद्व्यावृत्तिरूपत्वेनालीकतया क्षणिकत्वाभावेन पूर्वापरकालीनघटवृत्तिघटत्वस्य ऐक्ये बाधकाभावात् । एवमुत्तरत्रापि विज्ञेयम् । एतेन जगतः क्षणिकत्वे नाशं प्रति सत्त्वेन एकमेव हेतुत्वमिति लाघवमित्यपि परास्तं । सत्ताया अपि भावत्वेन क्षणिकतया नानात्वात् । यदपि स्थिरपदार्थाङ्गीकारे एकस्मिन् सामर्थ्यमसामर्थ्यं च विरुद्धमतस्तद्भेद इति तदपि न एकस्मिन् कालभेदेन सहकारिसमवधानासमवधानरूपसामर्थ्यासामर्थ्ययोर्वृत्तौ बाधकाभावात् । यत्तु पूर्वापरकालीनधर्मिणोरभेदे तद्धर्मयोः सामर्थ्यासामर्थ्ययोः कथं भेदः तन्मते धर्मधर्मिणोरभेदादिति तन्न घटत्वं न घट इत्यादिप्रतीतीनामप्रामाण्यापत्त्या धर्मधर्मिणोरभेदस्य वक्तुमशक्यत्वादिति । इदमुपलक्षणं परिणामरूपधर्मस्याभिन्नत्वेऽपि अतद्व्यावृत्तिरूपधर्मस्याभेदासंभवादित्यपि बोध्यम् ।

## दिनकरीयम्.

ते एवमत्रापि कुर्वद्रूपत्वेनैव क्षणिकशरीरेषूत्तरोत्तरशरीरनिष्ठवासनोत्पादकत्वं वाच्यमत आह ॥ **बीजादाविति** ॥ **उपपत्तेः** कस्माच्चिद्बीजादङ्कुरोत्पत्तिः कस्माच्चिन्नेति नियमोपपत्तेः ॥ **कुर्वद्रूपत्वाकल्पनादिति** ॥ कुसूलस्थबीजादिषु धरणिसलिलसंयोगादिरूपसहकार्यभावादेवाङ्कुरानुपपत्तेः कुर्वद्रूपत्वं तद्रूपेण जनकत्वं च न कल्प्यते प्रमाणाभावादिति भावः । अत्र वदन्ति यत्सत् तत्क्षणिकमिति व्याप्त्या जगतः क्षणिकता तदनुरोधेन च कुर्वद्रूपत्वं तद्रूपेण कार्यं प्रति हेतुत्वं चावश्यकम् । नच तादृशव्याप्तौ मानाभावः तादृशव्याप्त्यस्वीकारे कुसूलस्थबीजादङ्कुरोत्पत्तिवारणाय धरणिसलिलसंयोगादीनां सहकारित्वकल्पने गौरवात् तादृशव्याप्तिस्वीकारे तु कुर्वद्रूपत्वेन हेतुत्वकल्पनात्कुसूलस्थबीजे कुर्वद्रूपत्वाभावादेवाङ्कुरानुपपत्तेर्न सहकारिता कारणान्तराणामिति लाघवात् । नच क्षणिकत्वमतेऽपि बीजस्य धरणिसलिलसंयोगादेर्वा कुर्वद्रूपत्वेन हेतुत्वमित्यत्र विनिगमनाविरहेण सर्वेषां सहकारिणां कारणत्वकल्पन-

## रामरुद्रीयम्.

मतधर्ममात्रस्य तन्मतेऽलीकत्वादिति ॥ **तादृशव्याप्त्यस्वीकार इति** ॥ तथा च जगद्यदि क्षणिकं न

अस्तु तर्हि क्षणिकविज्ञाने गौरवात् नित्यविज्ञानमेवात्मा अविनाशी वारेऽयमात्मा सत्यं ज्ञानमनन्तं ब्रह्मेत्यादिश्रुतेश्चेति चेन्न । तस्य सविषयत्वासम्भवस्य दर्शितत्वान्निर्विष-

## प्रभा.

वेदान्तिमतमुपन्यस्यति ॥ **अस्तु तर्हीति** ॥ **क्षणिकविज्ञान इति** ॥ आत्मनि क्षणिकवि-ज्ञानरूपे सति गौरवादात्मनः क्षणिकविज्ञानरूपत्वासंभवादित्यर्थः ॥ **आत्मेति** ॥ अस्त्विति पूर्वेणान्वयः । आत्मनः नित्यत्वे श्रुतिप्रमाणमाह ॥ **अविनाशीति** ॥ आत्मनः नित्यत्वविज्ञानरूपत्वोभयसाधकश्रु-त्यन्तरमाह ॥ **सत्यमित्यादि** ॥ आत्ममात्रस्य नित्यविज्ञानरूपत्वमीश्वरस्य वेति विकल्प्याद्ये दूषणमाह ॥ **त-स्येत्यादिना** ॥ **दर्शितत्वादिति** ॥ तस्य जगद्विषयकत्वे इत्यादिग्रन्थेन प्रतिपादितत्वादित्यर्थः । तथाच

## दिनकरीयम्.

मावश्यकमिति वाच्यम् । मन्मते अङ्कुरं प्रति बीजानां धरणिसलिलसंयोगादिसहकारिणां च कुर्वद्रू-पत्वेनैव हेतुत्वकल्पनात् कुर्वद्रूपत्वानङ्गीकारे तु बीजत्वधरणिसलिलसंयोगत्वादिनानाहेतुत्वकल्पने गौर-वादिति । तदसत् ईदृशगौरवापेक्षया क्षणिकानन्तपदार्थकल्पनेऽतिगौरवात् । न च लाघवात्कुर्वद्रूप-त्वेन तेषामेकहेतुतासिद्धावीदृशं गौरवं न दोषाय फलमुखत्वादिति वाच्यम् । फलमुखगौरवस्यापि दो-षत्वात् । किं च जगतः क्षणिकत्वे स एवायं घट इति प्रत्यभिज्ञानुपपत्तेः पूर्वकालीनघटाभेदस्यैतत्का-लीनघटेऽभावात् । न च तज्जातीयाभेद एव तादृशप्रतीतेर्विषयः तन्मते जातेरपि क्षणिकत्वेन पूर्व-कालीनघटवृत्तिघटत्वस्यैतत्कालीनघटेऽभावात् । एतेन जगतः क्षणिकत्वे नाशत्वावच्छिन्नं प्रति सत्त्वे-नैकमेव हेतुत्वमिति लाघवमित्यपास्तम् । यदपि स्थिरपदार्थाङ्गीकारे एकस्मिन् पदार्थे सामर्थ्यमसाम-र्थ्यं च विरुद्धमतस्तद्भेद इति तदपि न । एकस्मिन्नेव पदार्थे एककालावच्छेदेन सामर्थ्यतदभावयोरेव विरुद्धतया कालभेदेन तत्स्वीकारे बाधकाभावात् । यत्तु पूर्वापरकालीनधर्मिणोरभेदे तद्धर्मयोः सामर्थ्या-सामर्थ्ययोर्भेदोऽनुपपन्नस्तन्मते धर्मधर्मिणोरभेदादिति । तन्न घटत्वं न घट इत्यादिप्रतीतीनामप्रामा-ण्यापत्त्या धर्मधर्मिणोरभेदस्य वक्तुमशक्यत्वादिति दिक् । इति क्षणिकवादिमतखण्डनम् ॥

वेदान्ती शङ्कते ॥ **अस्तु तर्हीति** ॥ **क्षणिकविज्ञान इति** ॥ आत्मनः क्षणिकविज्ञानस्वरूपत्वपक्ष इत्यर्थः । आत्ममात्रस्य नित्यविज्ञानरूपत्वमीश्वरस्य वेतिं विकल्प्याद्ये दूषणमाह ॥ **तस्येति** ॥ **द-र्शितत्वादिति** ॥ तस्य जगद्विषयकत्व इत्यादिग्रन्थेन दर्शितत्वादित्यर्थः । तथा च जीवस्य तथात्वा-

## रामरुद्रीयम्.

स्यात्तदा नानाकारणताकल्पनरूपगौरवोपधायकं स्यादिति तर्क एवोक्तव्याप्तौ प्रयोजक इति भावः ॥ **मन्म-त इति** ॥ तथा च कुर्वद्रूपत्वेन सर्वेषां कारणत्वेऽपि कारणता एकैव त्वन्मते तु नानाकारणता कल्पनीयेति गौरव-मिति भावः ॥ **ईदृशगौरवेति** ॥ कतिपयकारणताकल्पनगौरवेत्यर्थः ॥ **फलमुखत्वादिति** ॥ नानाकारण-ताकल्पनापेक्षया लाघवेन कुर्वद्रूपत्वेनैककारणतासिद्धौ एतदुपपत्तये नानाव्यक्तिकल्पने तादृशकल्पनायाः का-रणतासिद्ध्युत्तरकालीनतया तादृशगौरवज्ञानस्य पूर्वतनानुमितिप्रतिबन्धकत्वासम्भवादिति भावः न च का-रणतानिश्चयात्पूर्वमपि यत्सदित्यादिव्याप्त्या नानाव्यक्तिकल्पनमुपतिष्ठत एवेति वाच्यम् । तादृशव्याप्तेरप्र-योजकत्वाशङ्कानिरासाय उक्ततर्कापेक्षया तत्र चापायव्यतिरेकनिश्चयसम्पादकस्यैकरूपेण तादृशनिश्चयस्यापे-क्षणीयतया गौरवोपस्थितेः कारणतासिद्ध्युत्तरत्वनियमादिति भावः ॥ **दोषत्वादिति** ॥ उत्पन्नायामप्य-नुमितौ उत्तरकालीनगौरवज्ञानेनाप्रामाण्यज्ञानोत्पत्त्याऽप्रामाण्यज्ञानास्कन्दितानुमित्या एककारणतासिद्ध्यस-म्भवादिति भावः । यद्यपि तन्मते जातेरलीकतया सत्त्वाभावेन न क्षणिकत्वं नित्यपदार्थानां तैरनङ्गीकारात् अनुगतधर्मानङ्गीकाराच्च कुर्वद्रूपत्वस्याप्यपोहरूपत्वात् । न च तर्हि सदसतोः सम्बन्धाभावेन तज्जातीयत्वं घटे नास्त्येवेति प्रत्यभिज्ञानुपपत्तिरिति वाच्यम् । असतोऽपि तैर्भानाङ्गीकारेण प्रत्यभिज्ञानसम्भवादिदमसङ्गतं तथापि असद्विषयकत्वेन प्रत्यभिज्ञाया भ्रमत्वापत्तिरेव तन्मते दूषणम् । न चेष्टापत्तिस्तथासति अभेदावगाहि-

**यस्य ज्ञानत्वे मानाभावात् सविषयकत्वस्याप्यननुभवादतो विज्ञानादिभिन्नो नित्य आत्मेति सिद्धम् । सत्यं ज्ञानमिति ब्रह्मपरं जीवे तु नोपयुज्यते ज्ञानाज्ञानसुखित्वादिभिर्जीवानां भेदसिद्धौ सुतरामीश्वरभेदः अन्यथा बन्धमोक्षव्यवस्थानुपपत्तेः । योऽपीश्वराभेदबोध–**

**प्रभा.**

जीवस्य तादृशत्वाभावादात्मसामान्यस्य न तद्रूपत्वमिति भावः । आत्मनः निर्विषयकत्वे दूषणमाह ॥ **निर्विषयकस्येति** ॥ **मानाभावादिति** ॥ तथाच ज्ञानत्वस्य विषयताव्याप्यत्वेन व्यापकीभूतविषयत्वानङ्गीकारे ज्ञानत्वमपि न स्यादिति भावः । ननु यद्विषयकत्वं यादृशजीवे अनुभवसिद्धं तादृशजीवस्य तद्विषयकत्वमुपेयत इत्यत्र दूषणमाह ॥ **सविषयकत्वस्येति** ॥ सविषयकत्वस्यापीत्यर्थः ॥ **अननुभवादिति** ॥ घटस्य ज्ञानमित्याद्यनुभवात् ज्ञानस्य घटादिविषयकत्वमङ्गीकृतं घटस्यात्मेत्यनुभवाभावात् आत्मनो न सविषयकत्वमिति भावः । उपसंहरति ॥ **अत इति** ॥ उक्तदोषेण सविषयकत्वासंभवादित्यर्थः ॥ **इति सिद्धमिति** ॥ इत्यवश्यमङ्गीकर्तव्यमित्यर्थः । नन्वेवं सत्यात्मनो विज्ञानरूपत्वप्रतिपादकश्रुतिविरोध इत्यत आह ॥ **सत्यमिति** ॥ **नोपयुज्यत इति** ॥ ब्रह्मपदसामानाधिकरण्यादिति भावः । ननु जीवब्रह्मणोरैक्याज्जीवस्य ज्ञानभिन्नत्वे उक्तश्रुतिविरोधस्तदवस्थ इत्यतो जीवब्रह्मणोर्भेदं साधयति ॥ **ज्ञानाज्ञानेति** ॥ सुखित्वादीत्यादिना दुःखित्वपरिग्रहः ॥ **भेदसिद्धाविति** ॥ परस्परभेदानुमितावित्यर्थः । तथाच एतच्छरीरावच्छेद्यविज्ञानादिमान् एतच्छरीरसमानकालीनयोगाद्यजन्यैतच्छरीरसजातीयैतच्छरीराभिन्नशरीरावच्छिन्नभिन्नः एतच्छरीरसमानकालीनैतच्छरीरसजातीयैतच्छरीरभिन्नयोगाद्यजन्यशरीरावच्छेद्यज्ञानाद्यनाधारत्वादिति व्यतिरेक्यनुमानात् जीवानां परस्परभेदस्सिध्यतीति भावः ॥ **सुतरामिति** ॥ अन्यथानुपपत्त्येत्यर्थः ॥ **ईश्वरभेद इति** ॥ ईश्वरजीवयोर्भेद इत्यर्थः । अङ्गीकर्तव्य इति शेषः । अन्यथा एकमेवेत्यादिश्रुतिविरोधापत्तेरिति भावः । ननु ईश्वरस्य जीवभिन्नत्वेऽपि ममैवांशो जीवलोक इति वचनेन जीवानामीश्वरांशत्वप्रतिपादनात् ईश्वराभिन्नत्वमङ्गीकार्यं समुद्रस्य तरङ्गभिन्नत्वेऽपि समुद्रांशभूततरङ्गाणां न समुद्रभिन्नत्वं वदतो जीवानां विज्ञानाभिन्नत्वन्निराबाधमिति मतं दूषयति ॥ **अन्यथेति** ॥ जीवानामीश्वराभिन्नत्व इत्यर्थः ॥ **बन्धमोक्षेति** ॥ कश्चित् संसारी बद्धः कश्चित्

**दिनकरीयम्.**

सम्भवात् नात्ममात्रस्य नित्यज्ञानस्वरूपत्वमिति भावः । ननु जीवस्य न जगद्विषयकत्वं नवा नियतयत्किञ्चिद्विषयकत्वं ब्रूमः परन्तु यद्विषयकत्वं यत्र जीवेऽनुभवसिद्धं तत्र तद्विषयकत्वमत आह ॥ **सविषयकत्वस्येति** ॥ ननु सत्यं ज्ञानमिति श्रुतिरेव जीवस्य ज्ञानस्वरूपत्वे प्रमाणमत आह ॥ **सत्यमिति** ॥ ननु जीवब्रह्मणोरैक्यान्नित्यविज्ञानरूपत्वं जीवस्य निराबाधमित्यतो जीवब्रह्मणोर्भेदं साधयति ॥ **ज्ञानाज्ञानेति** ॥ सुखित्वादीत्यादिना दुःखित्वपरिग्रहः ॥ **सुतरामिति** ॥ जीवात्मनां नानात्वसिद्धावीश्वरस्यैकस्यानेकजीवात्मकत्वासम्भवादेकत्वानेकत्वयोर्विरोधादिति भावः ॥ **ईश्वरभेदः** ईश्वरजीवात्मनोर्भेदः सिध्यतीत्यर्थः ॥ **अन्यथा** ईश्वरस्य जीवात्मकत्वे ॥ **बन्धमोक्षेति** ॥ कश्चित्संसारी बद्धः

**रामरुद्रीयम्.**

तथैव प्रतीत्युपपत्तौ तज्जातीयत्वावगाहित्वानुसरणवैयर्थ्यापत्तेः प्रतीतेः प्रमात्वोपपादनायैव तदनुसरणात्तदनुसरणेनाप्यप्रतीकारादिति विभावनीयम् । क्षणिकविज्ञानपक्ष इत्यस्य विज्ञानस्य क्षणिकत्वपक्ष इत्यर्थकताभ्रमं निराकुरुते ॥ **आत्मन इति** ॥ उत्तरत्र दूषणद्वयस्य मूले वक्तव्यतया विकल्प्य दूषणद्वयं सङ्गमयति ॥ **आत्ममात्रस्येति** ॥ **यत्किञ्चिद्विषयकत्वं वेति** ॥ नियतैकविषयकत्वमित्यर्थः । यथाश्रुते अनुभवानुसारेण नियतयत्किञ्चिद्विषयकत्वस्यैव व्यवस्थापनीयतया असङ्गत्यापत्तेः ॥ **तद्विषयकत्वमिति** ॥ तथा चानुभवानुसारित्वात्कल्पनाया न विनिगमनाविरहावकाश इति भावः ॥ **सविषयकत्वस्येतीति** ॥ नहि घटविषयकः अपितु घटविषयकज्ञानवानित्येव अनुभवादिति मूलाशयः ॥ **अन्यथेति** ॥ नन्वेकस्मिन्नेव ब्र-

को वेदः सोऽपि तदभेदेन तदीयत्वं प्रतिपादयन्स्तौति अभेदभावनयैव यतितव्यमिति वदति । अत एव सर्वे आत्मानः समर्पिता इति श्रूयते । मोक्षदशायामज्ञाननिवृत्तावभेदो जायत इत्यपि न । भेदस्य नित्यत्वेन नाशासम्भवात् भेदनाशेऽपि व्यक्तिद्वयं स्थास्यत्येव । न च द्वित्व-

## प्रभा.

संसारी मुक्त इति व्यवस्था न स्यादित्यर्थः । तथाचेश्वरस्य बन्धमोक्षयोरभावात् ईश्वराभिन्नचैत्रमैत्रयो-रेकस्य बद्धत्वमेकस्य मुक्तत्वं न स्यादित्यर्थः । ननु जीवब्रह्मणोः परस्परभेदस्वीकारे तत्त्वमसि अहं ब्रह्मास्मीत्याद्यभेदश्रुतिविरोधापत्तिरित्यत आह ॥ **योऽपीति** ॥ **सोऽपीति** ॥ अभेदेन स्तौतीति परेणान्वेति । तथाचोक्तश्रुतेः अभेदस्य प्रातीतिकार्थत्वेऽपि साम्यस्यैव वास्तवार्थत्वमिति भावः । ननु साम्यस्य उक्तश्रुतितात्पर्यार्थत्वे अभेदेन स्तुतिर्विरुद्धेत्याशङ्क्यां साम्ये प्रतिपादनीये अभेदेनैव स्तोतव्येत्यत्राप्युक्तश्रुतिरेव प्रमाणमित्युक्त्वा परिहरति ॥ **अभेदेनेति** ॥ ॥ **वदितव्यमिति** ॥ स्तोतव्यमित्यर्थः ॥ **इति वदतीति** ॥ एतादृशार्थमपि उक्तश्रुतिरेव बोधयतीत्यर्थः । उक्तार्थे उपष्टम्भकमाह ॥ **अत एवेति** ॥ उक्तश्रुतेस्साम्यप्रतिपादकत्वस्वीकारादेवेत्यर्थः ॥ **समर्पिता इति** ॥ ईश्वरसेवार्थं नियुक्ता इत्यर्थः ॥ **इतीति** ॥ एतादृशोऽर्थ इत्यर्थः ॥ **श्रूयत इति** ॥ श्रुतावित्यादिः । श्रुतिवाक्यजन्यशाब्दबोधविषयीक्रियत इत्यर्थः । तथाच जीवब्रह्मणोरभेदे सेव्यसेवकभावप्रतिपादकश्रुतेरप्रामाण्यापत्तिः एकव्यक्तौ तदुभयासंभवादिति भावः । इदानीमन्योन्याभावस्यानित्यत्वमङ्गीकृत्य अज्ञानकालावच्छेदेन जीवब्रह्मणोर्भेदं ज्ञानकाले तयोरभेदं च वदतां मतमुपन्यस्य दूषयति ॥ **मोक्षदशायामिति** ॥ तत्त्वज्ञानाव्यवहितोत्तरक्षण इत्यर्थः ॥ **अज्ञाननिवृत्ताविति** ॥ मिथ्याज्ञाननिवृत्तावित्यर्थः । असुरादिघटकनञ्पदस्येवात्रापि नञो विरोध्यर्थकत्वादिति भावः । नचेदानीमपि सुषुप्तिकाले मिथ्याज्ञाननिवृत्तेः कथं तत्त्वसाध्यत्वमिति वाच्यं प्रकृताज्ञानशब्दस्य मिथ्याज्ञानजन्यसंस्कारलाक्षणिकतया तस्यैव तत्त्वज्ञाननाश्यत्वस्वीकारेण सुषुप्त्यादौ तस्य नाशाभावेन उक्तदोषाभावात् । एवंच तत्त्वज्ञानेन तादृशसंस्कारनाशः तेन स्मरणानुत्पादः तेन रागाद्यनुत्पादः तेन धर्माधर्मयोरनुत्पादः तेन सुखाद्यनुत्पादे जीवेश्वरयोस्समानधर्मवत्त्वेन बाधकाभावादभेद उत्पद्यत इति तेषामाशयः । स्वमतानुसारेण समाधत्ते ॥ **भेदस्येति** ॥ नवीनमते अन्योन्याभावस्य पृथक्त्वरूपत्वेन यथा अनित्यत्वं तथा ममापि मते अनियतापेक्षाबुद्धिजन्यजीवगतानेकपृथक्त्वरूपान्योन्याभावस्यापि अनित्यत्वस्वीकारे बाधकाभावात् अभेदोत्पत्तिर्निराबाधेत्याशङ्कायामभेदोत्पत्तावपि तव नेष्टसिद्धिरित्याह ॥ **भेदनाशेऽपीति** ॥ भवदभिमतानियतापेक्षाबुद्धिजन्यानेकपृथक्त्वरूपान्योन्याभावस्य नष्टत्वेऽपीत्यर्थः । भेदसत्त्वे व्यक्तिद्वयं निर्विवादमित्यपि अपिना सूचितं ॥ **व्यक्तिद्वयमिति** ॥ तथाच अपेक्षाबुद्धिनाशात् द्वित्वनाशेऽपि यथा व्यक्तिद्वयं तिष्ठति तथा कारणीभूतानियतापेक्षाबु-

## दिनकरीयम्.

कश्चिन्मुक्त इति व्यवस्थाऽनुपपन्ना स्यादित्यर्थः । चैत्रमैत्रात्मनोरीश्वररूपयोरैक्यादिति भावः । ननु कथं तर्हि तत्त्वमसीत्यादितच्छब्दप्रतिपाद्यब्रह्मणि युष्मच्छब्दप्रतिपाद्यजीवस्याभेदबोधको वेदः प्रमाणमित्यत आह ॥ **योऽपीति** ॥ मोक्षकाले जीवात्मनां ब्रह्मणा सहाभेद उत्पद्यत इति मतं निरस्यति ॥ **मोक्षेति** ॥ भेदस्यानित्यत्वमभ्युपेत्यापि मोक्षकाले जीवब्रह्मणोर्भेदं व्यवस्थापयति ॥ **भेदनाशेऽपीति** ॥ भेदसत्त्वे व्य-

## रामरुद्रीयम्.

ह्मणि जीवोपाधीनामनन्ततया तत्तदन्तःकरणावच्छेदेन विलक्षणसुखित्वाद्यनेकानुभवो न विरुध्यते एकस्मिन्नेव गगने विभिन्नकर्णशष्कुल्यवच्छेदेन विरुद्धशब्दतदभावयोरनुभववदित्याशङ्कायामुक्तं ॥ **मूलेऽन्यथेति** ॥ तदर्थमाह ॥ **ईश्वरस्येति** ॥ संसारीति बद्ध इत्यस्य विवरणं ॥ **मुक्त इति** ॥ निवृत्तसंसार इत्यर्थः । अनुपपत्तिः स्यादित्यत्र हेतुमाह ॥ **चैत्रमैत्रात्मनोरिति** ॥ बद्धमुक्तात्मनोरिति तदर्थः । ईश्वरस्वरूपयोरेकेश्वरस्वरूपयोरिदं चैक्यहेतुत्वेनोक्तम् । अथ तत्तदन्तःकरणावच्छिन्नचैतन्यस्य एकत्वेऽपि तदन्तःकरणस्य नाशे

मपि नश्यतीति वाच्यम् । तत्र निर्धर्मके ब्रह्मणि सत्यत्वाभावेऽपि सत्यस्वरूपं तदितिवत् द्वित्वाभावेऽपि व्यक्तिद्वयात्मकौ ताविति सुवचत्वात् । मिथ्यात्वाभावोऽधिकरणात्मकस्तत्र सत्यत्वमिति चेत् । एकत्वाभावो व्यक्तिद्वयात्मको द्वित्वमित्यप्युच्यतां प्रत्येकमेकत्वेऽपि पृथिवीजलयो-

## प्रभा.

द्विनाशादनियतपृथक्त्वरूपान्योन्याभावस्य नाशे व्यक्तिद्वयस्थितिर्निराबाधैवेति भावः ॥ **द्वित्वमपीति** ॥ अपिना अन्योन्याभावस्समुच्चीयते । तथाचापेक्षाबुद्धिनाशात् द्वित्वस्यापि नाशे विशेषणाभावात् विशिष्टव्यक्तिद्वयस्थितिर्न संभवतीति भावः ॥ **तत्रेति** ॥ वेदान्तिन इत्यर्थः । निर्धर्मकत्वकथनं ब्रह्मणः सत्यत्वाभावप्रतिपादनाय । ननु निर्धर्मकत्वं स्वभिन्नधर्मशून्यत्वमेव मिथ्यात्वाभावरूपसत्यत्वस्य ब्रह्मनिष्ठस्याधिकरणरूपत्वादुक्तसत्यत्वं नानुपपन्नमिति आशयेनाक्षिपति ॥ **मिथ्यात्वाभाव इति** ॥ **एकत्वाभाव इति** ॥ एकत्वमभावो यस्येति व्युत्पत्त्या एकत्ववदन्योन्याभाव इत्यर्थः । तेन उत्पत्तिकालीनघटस्य एकत्वाभाववत्तया तादृशाभावस्यैकव्यक्त्यात्मकत्वेऽपि न क्षतिः । ननु प्रत्येकमेकत्वात् तत्र कथं तदवच्छिन्नप्रतियोगिताकान्योन्याभावः अन्योन्याभावस्य प्रतियोगितावच्छेदकेन सह विरोधात् । नच प्रत्येकमेकत्वसत्त्वेऽप्येकत्वानधिकरणतावच्छेदकोभयत्वावच्छेदेन एकत्ववदन्योन्याभावस्वीकारे बाधकाभावाद्विभिन्नावच्छेदेन तयोरेकत्र वृत्तौ बाधकाभावादिति वाच्यं व्यासज्यवृत्तिधर्मावच्छिन्नानुयोगिताकभेदानभ्युपगमादित्याशङ्कां तादृशान्योन्याभावसाधनेन परिहरति ॥ **पृथिवीजलयोरित्यादि** ॥ तथाच पृथिवीजलयोर्न गन्ध इति प्रतीत्या पृथिवीजलोभयत्वरूपव्यासज्यवृत्तिधर्मावच्छिन्नानुयोगिताकगन्धात्यन्ताभावः यथा स्वीकृतः तथा उभयं नैकमिति प्रतीत्या उभयत्वरूपव्यासज्यवृत्तिधर्मावच्छिन्नानुयोगिताकैकत्ववदन्योन्याभावस्वीकारे बाधकाभाव इति भावः । एतेनैकत्वात्यन्ताभावस्य व्यक्तिद्वयात्मकस्यैव द्वित्वरूपत्वमिति यथाश्रुतार्थकरणे एकत्ववति एकत्वात्यन्ताभावः कथमिति प्रसक्ताक्षेपः एकावच्छेदेन एकत्व तत्तदभावयोः अवृत्तित्वेऽपि एकत्वरूपप्रतियोग्यनधिकरणतावच्छेदकद्वित्वावच्छेदेन एकत्वाभावमङ्गीकृत्य परिहरणीयः तादृशव्यासज्यवृत्त्यात्मकद्वित्वावच्छेदेन एकत्वाभावाङ्गीकारे किं प्रमाणमित्याशङ्कायां प्रमाणतया उभयं नैकमिति प्रतीतिर्दर्शिता । इयं च न व्यासज्यवृत्तिधर्मावच्छेदेनैकत्वात्यन्ताभावविषयिणी किन्तु एकत्ववदन्योन्याभावविषयिण्येव तस्यास्तादृशशब्दोल्लेखिततया चैतादृशप्रतीतिप्रदर्शनं प्रकृतानुपयुक्तं उभयत्र नैकत्वमिति प्रतीतेः प्रकृतोपयोगित्वेऽपि तदप्रदर्शनेन न्यूनता उभयं नैकमिति प्रतीतेः यथाकथंचित् द्वित्वावच्छेदेन एकत्वात्यन्ताभावविषयकत्वस्वीकारे पृथिवीजलयोर्न गन्ध इत्याकारकप्रतीतेः दृष्टान्तता नोपपद्यते एतादृशप्रतीतेरपि व्यासज्यवृत्तिधर्मावच्छिन्नानुयोगिताकात्यन्ताभावविषयकत्वेन दृष्टान्ततुल्यत्वादिति दूषणमपास्तम् । एकत्वाभाव

## दिनकरीयम्.

क्तिद्वयं निर्विवादमेवेत्यपिना सूचितम् । तत्र वेदान्तिनः ॥ **निर्धर्मक इति** ॥ इदं च सत्यत्वाभावेऽपीत्यत्र हेतुतयोक्तम् । ननु निर्धर्मकत्वं स्वभिन्नधर्मशून्यत्वं मिथ्यात्वाभावरूपसत्यत्वस्य ब्रह्मरूपत्वादभावस्याधिकरणात्मकत्वान्नानुपपन्नमित्यभिप्रायेण शङ्कते ॥ **मिथ्यात्वाभाव इति** ॥ ननु कथमेकत्वाधिकरणे तदभावरूपद्वित्वमत आह ॥ **प्रत्येकमिति** ॥ ननु ब्रह्मविद्ब्रह्मैव भवतीति श्रुतेर्मोक्षदशायामभेद उत्पद्यत इत्यर्थः

## रामरुद्रीयम्.

तदन्तःकरणावच्छिन्नचैतन्यस्य मुक्तत्वव्यवहारः यदन्तःकरणस्य न नाशः तदन्तःकरणावच्छिन्नचैतन्ये बद्धत्वव्यवहार इति बद्धमुक्तव्यवस्थाया नानुपपत्तिरिति चेत् । एवमपि मोक्षार्थं प्रयत्नानुष्ठानवैफल्यापत्तेरवारणादेतदन्तःकरणनाशेऽपि अन्तःकरणान्तरावच्छिन्ने स्वात्मनि दुःखोत्पत्तेरावश्यकतया प्रवृत्तिफलस्य निर्दुःखत्वस्यासम्भवादिति भावः । यदि चान्तःकरणस्यैव सुखदुःखादिर्न चैतन्यस्य कदापीत्युच्यते तदा विमुक्त्यर्थप्रयत्नो व्यर्थ एव स्वस्य नित्यमुक्तत्वात् । यदि च भ्रान्तिनिवृत्त्यर्थं तदप्युच्यते तदाऽप्यन्तःकरणान्तरावच्छिन्ने स्वस्मिन्नेव भ्रान्तेरावश्यकत्वेन प्रयत्नस्य निष्फलत्वापत्तेरावश्यकत्वादिति भावः ॥ **भेदमिति** ॥ द्वित्व-

र्न गन्ध इतिवदुभयं नैकमित्यस्य सर्वजनसिद्धत्वात् । योऽपि तदानीमभेदप्रतिपादक आगमः सोऽपि निर्दुःखत्वादिना साम्यं स्तौति सम्पदाधिक्ये पुरोहितोऽयं राजा संवृत्त इतिवत् अत एव निरञ्जनः परमं साम्यमुपैतीति श्रुतिः श्रूयते । ईश्वरोऽपि न ज्ञानसुखात्मा किं तु ज्ञानाद्याश्रयः नित्यं विज्ञानमानन्दं ब्रह्मेत्यादौ विज्ञानपदेन ज्ञानाश्रय एवोक्तः यः सर्वज्ञः स सर्वविदित्याद्यनुरोधात् । आनन्दमित्यस्याप्यानन्दवदित्यर्थः । अर्शआदित्वान्मत्वर्थीयो-

प्रभा.

इत्यादिग्रन्थस्यान्यार्थकत्वेनोपवर्णितत्वादिति हृदयम् । नन्वेवं सति मोक्षकाले जीवब्रह्मणोरभेदप्रतिपादकश्रुतेः का गतिरत आह ॥ **योऽपीति** ॥ **तदानीमिति** ॥ मोक्षकाल इत्यर्थः ॥ **आगम इति** ॥ ब्रह्मविद्ब्रह्मैव भवतीत्याकारकागम इत्यर्थः ॥ **निर्दुःखत्वादिनेति** ॥ निर्दुःखत्वादिविशिष्टात्मत्वेनेत्यर्थः । यथाश्रुते निर्दुःखत्वादिरूपसाम्यस्य घटादिसाधारणतया श्रुतौ ब्रह्मविदित्युपमेयनिर्देशवैयर्थ्यापत्तेः । आदिना निर्द्वेषत्वादिपरिग्रहः । तृतीयार्थोऽभेदः तस्य साम्येऽन्वयः ॥ **स्तौतीति** ॥ अभेदेन स्तौतीत्यर्थः । तथाचाभेदार्थस्य प्रातीतिकार्थत्वेऽपि साम्यस्यैव वास्तवार्थत्वात् नोक्तदोष इति भावः । नतु साम्यबोधतात्पर्येणाभेदेन प्रतिपादनं न दृष्टमित्याशङ्कां तादृशोदाहरणप्रतिपादनेन परिहरति ॥ **संपदाधिक्येति** ॥ उक्तार्थोपष्टम्भकश्रुतिमाह ॥ **अत एवेति** ॥ ब्रह्मविदित्यादिश्रुतेः साम्यप्रतिपादकत्वादेवेत्यर्थः ॥ **निरञ्जन इति** ॥ निर्दुःख इत्यर्थः ॥ **परमं साम्यमुपैतीति** ॥ उत्कृष्टसाम्यमुपैतीत्यर्थः ॥ **श्रुतिः श्रूयत इति** ॥ इत्यर्थका श्रुतिः पठ्यमानवेदे उपलभ्यते । तथाच ब्रह्मविदिति श्रुतेरभेदार्थकत्वे निरञ्जन इत्यादिश्रुतेरप्रामाण्यापत्तेरिति भावः अत्र लोके ईषत्साम्यमित्यत्र साम्यस्य ईषत्त्वमुपमानवृत्तियत्किञ्चिद्धर्माभिन्नत्वरूपं यथा सिद्धं तथा परमं साम्यमित्यत्र साम्यस्य परमत्वं उपमानवृत्तियावद्धर्माभिन्नत्वरूपमेव वाच्यं तुल्यन्यायात् । एवंच निर्दुःखेश्वरात्मकोपमानवृत्तियावद्धर्माभिन्नमुपैतीति तात्पर्यार्थस्य वक्तव्यतया उपमेयतया निर्दुःखे तादृशयावद्धर्मान्तर्गतेश्वरत्वरूपधर्मवत्त्वस्यापि प्राप्त्या ईश्वरत्वरूपैकमात्रधर्मवत्त्वं आदाय तादृशश्रुतेरभेदार्थकत्वलाभाज्जीवब्रह्मणोर्भेदव्यवस्थापने उपष्टम्भकतया एतादृशश्रुतिलेखनं प्रामादिकमिति प्रतिभाति । द्वितीयपक्षे दूषणमाह ॥ **ईश्वरोऽपीति** ॥ अपिना जीवो यथा न ज्ञानसुखात्मा तथा प्रमाणाभावादीश्वरोऽपि ज्ञानसुखात्मको न भवतीत्यर्थः सूच्यते एतदेवोपपादयति ॥ **किंत्विति** ॥ नतु तर्हि ईश्वरस्य विज्ञानाद्यभिन्नत्वप्रतिपादकश्रुतिविरोध इत्याशङ्कां श्रुतेर्विज्ञानाद्याश्रयपरत्वदृढीकरणेन परिहरति ॥ **नित्यमिति** ॥ **विज्ञानपदेनेति** ॥ अधिकरणार्थकल्युडन्तविज्ञानपदेनेत्यर्थः । तादृशश्रुतिघटकविज्ञानपदस्य स्वार्थकल्युडन्तत्वे बाधकश्रुतिमाह ॥ **सर्वज्ञ इति** ॥ आदिना यस्य ज्ञानमयं तप इत्यादेः परिग्रहः । तथाच नित्यं विज्ञानमिति श्रुतौ विज्ञानपदस्य स्वार्थकल्युडन्तत्वे यः सर्वज्ञ इत्यादिश्रुतिविरोधापत्त्या अधिकरणार्थकल्युडन्तत्वमवश्यमङ्गीकार्यमिति भावः उक्तश्रुतिघटकविज्ञानपदस्याधिकरणल्युडन्तत्वेन तेन विज्ञानाश्रयत्वबोधनेऽप्यानन्दशब्देन ईश्वरस्यानन्दरूपत्वबोधने बाधकाभाव इत्यत आह ॥ **आनन्दमिति** ॥ **आनन्दवदित्यर्थ**

दिनकरीयम्.

कायाः का गतिरत आह ॥ **योऽपीति** ॥ **अत एव** ब्रह्मविद्ब्रह्मैव भवतीति श्रुतेः साम्यप्रतिपादकत्वादेव ॥ **निरञ्जनः** निर्दुःखः । द्वितीये दोषमाह ॥ **ईश्वरोऽपीति** ॥ **विज्ञानपदेन** नित्यमित्यादिश्रुत्यन्तर्गतविज्ञानपदेन अधिकरणल्युडन्तेन विज्ञानाश्रयत्वबोधनादिति भावः ॥ **आनन्दवदित्यर्थ**

रामरुद्रीयम्.

मित्यर्थः । यथाश्रुते भेदनाशाभ्युपगमेन पुनर्भेदोत्पादस्य मूलानुक्तत्वेन च भेदव्यवस्थापनस्यासङ्गत्यापत्तेरिति ध्येयम् । न च भेदनाशे प्रतिबन्धकाभावेन तादात्म्यमप्युत्पद्यतामिति वाच्यम् । अभेदभावनामात्रेण तादात्म्योत्पत्तौ घटपटयोरपि तथात्वापत्तेरिति भावः । स्वभिन्नधर्मशून्यत्वमित्यस्य नानुपपन्नमित्यभ्रेतनेनान्वयः ॥ **द्वितीय इति** ॥ नात्मसामान्यस्य ज्ञानरूपत्वं किन्तु परमात्मन एवेति द्वितीयपक्ष इत्यर्थः ॥

ऽच्प्रत्ययः अन्यथा पुंल्लिङ्गत्वापत्तेः आनन्दोऽपि दुःखाभावे उपचर्यते भाराद्यपगमे सुखी संवृत्तोऽहमितिवत् । अस्तु वा तस्मिन्नानन्दो न त्वसावानन्दः असुखमिति श्रुतेः । न विद्यते सुखं यस्येति कुतो नार्थ इति चेन्न । क्लिष्टकल्पनापत्तेः प्रकरणविरोधादानन्दमित्यत्र मत्वर्थीयाच्प्रत्ययविरोधाच्चेति सङ्क्षेपः ॥

## प्रभा.

इति ॥ अन्यथा सुखार्थानन्दशब्दस्य पुंल्लिङ्गत्वनियमेन मत्वर्थीयाच्प्रत्ययान्तत्वं विना नपुंसकानुपपत्तेरिति भावः । ननु आनन्दवदर्थकत्वमपि न संभवति तव मते निरानन्दकब्रह्मणि आनन्दासंभवादत आह ॥ आनन्दोऽपीति ॥ उपचर्यत इति ॥ दुःखाभावं प्रवृत्तिनिमित्तीकृत्य ईश्वरे आनन्दशब्दः प्रयुज्यत इत्यर्थः । तथाचानन्दशब्दस्य दुःखाभाववति लक्षणेति । ननु तर्हि घटादावप्यानन्दशब्दस्य प्रयोगापत्तेः तव लक्षणापत्तेश्च अत आह ॥ अस्त्विति ॥ नित्यज्ञानादिवन्नित्यसुखमप्यस्त्वित्यर्थः । ईश्वरस्य सुखाभिन्नत्वे प्रमाणमाह ॥ असुखमिति ॥ तथाचासुखं ब्रह्मेति श्रुतिघटकनञो ब्रह्मणि सुखभेदबोधनादिति भावः ॥ क्लिष्टकल्पनापत्तेरिति ॥ नञः तत्र लक्षणापत्तेरित्यर्थः । नहि नञ्तत्पुरुषेऽपि तत्र लक्षणावश्यकी तस्य निपातत्वेन भेदेनान्वयसंभवात् । ननु नञ्तत्पुरुषेऽपि एकधर्मिबोधकत्वरूपसामानाधिकरण्यमनुभवसिद्धं । अन्यथा असुखपदब्रह्मपदयोः समानवचनत्वानुपपत्तेः अतस्तन्निर्वाहार्थं नञः अभाववति लक्षणा तवाप्यावश्यकीत्यत आह ॥ प्रकरणेति ॥ शरीरभेदार्थकाशरीरमित्यादिश्रुतिघटकासुखशब्दस्य सुखाभाववदर्थकत्वासंभवादित्यर्थः । प्रकरणविरोधस्यादोषत्वेऽपि दूषणान्तरमाह ॥ मत्वर्थीयाच्प्रत्ययविरोधाच्चेति ॥ सुखार्थकानन्दशब्दस्य पुंल्लिङ्गत्वनियमेन मत्वर्थीयाच्प्रत्ययान्तत्वं विना नपुंसकत्वानुपपत्त्या आनन्दमिति शब्दस्यासाधुत्वापत्तेरिति भावः ।

## दिनकरीयम्.

इति ॥ मत्वर्थीयाच्प्रत्ययान्तेनानन्दशब्देनानन्दवतो बोधनात् अन्यथाऽऽनन्दमिति नपुंसकत्वानुपपत्तेरिति भावः । नन्वानन्दवदित्यर्थो न सङ्गच्छते तव मते ईश्वरे आनन्दाभावादत आह ॥ आनन्दोऽपीति ॥ लक्षणाकल्पनमेव तव दोष इत्यत आह ॥ अस्तु वेति ॥ असुखमिति ॥ असुखमित्यत्र नञा ब्रह्मणि सुखभेदबोधनादिति भावः ॥ क्लिष्टकल्पनापत्तेरिति ॥ बहुव्रीहावन्यपदार्थलाभार्थं नञस्तत्र लक्षणापत्तेरित्यर्थः । नच नञ्तत्पुरुषेऽपि नञो लक्षणाऽऽवश्यकी अन्यथा नञर्थस्य नामार्थतया भेदेनान्वयासम्भवादिति वाच्यम् । तस्य नामत्वेऽपि निपातत्वादिति । ननु नञ्तत्पुरुषेऽपि तत्रासुखपदब्रह्मपदयोरेकधर्मिबोधकत्वलक्षणं सामानाधिकरण्यमनुभवसिद्धं अन्यथा तयोः समानवचनत्वानुपपत्तेरतस्तन्निर्वाहार्थं नञोऽभाववति लक्षणा तवाप्यावश्यकीत्यत आह ॥ प्रकरणेति ॥ प्रत्ययविरोधाच्चेति ॥ आनन्दशब्दस्य पुंल्लिङ्गत्वनियमेनानन्दमिति रूपस्य मत्वर्थीयाच्प्रत्ययं विनाऽनुपपत्तेरिति भावः । इति वेदान्तिमतखण्डनम् ॥

## रामरुद्रीयम्.

त्वर्थीयेति ॥ तदस्यास्तीत्यर्थे मतुबादीनामिव अर्श आदिभ्योऽजिति सूत्रेण अच्प्रत्ययविधानादिति भावः ॥ नपुंसकत्वानुपपत्तेरिति ॥ स्यादानन्दथुरानन्द इति कोशेन तस्य नित्यपुंल्लिङ्गत्वावधारणादिति भावः । न च छान्दसं नपुंसकलिङ्गत्वमिति वाच्यम् । गत्यन्तराभाव एव छान्दसत्वाभ्युपगमादित्यवधेयम् ॥ आवश्यकीति ॥ ब्रह्मणि सुखाभिन्नस्यैवाभेदान्वयसम्भवादिति भावः । ननु नञर्थभेदस्याश्रयतयैव ब्रह्मण्यन्वयो वाच्य इत्यत आह ॥ अन्यथेति ॥ नामार्थतयेति ॥ नामार्थयोः भेदान्वयबोधोपगमे राजा पुरुष इत्यत्रापि राजकीयः पुरुष इति बोधापत्तिरिति भावः ॥ निपातत्वादिति ॥ निपातातिरिक्तनामार्थयोरेव अभेदेनान्वयनियमः कथमन्यथा घटो नास्तीत्यादौ नञर्थाभावे प्रतियोगितया घटादेरन्वयाभ्युपगम इति भावः ॥ समानवचनेति ॥ अभेदान्वयस्थल एव समानवचनत्वनियमादिति भावः ॥ प्रत्ययविरोधादि-

**एतेन प्रकृतिः कर्त्री पुरुषस्तु पुष्करपलाशवन्निर्लिप्तः किंतु चेतनः कार्यकारणयोरभेदात् कार्यनाशे सति कार्यरूपतया तन्नाशोऽपि न स्यादित्यकारणत्वं तस्य बुद्धिगतचैतन्याभि–**

**प्रभा.**

सांख्यमतमुपन्यस्यति ॥ **एतेनेति** ॥ पूर्वोक्तरीत्याऽऽत्मनो ज्ञानवत्त्वसाधनेन वक्ष्यमाणदोषेण चेत्यर्थः ॥ **प्रकृतिरिति** ॥ मूलाविद्यात्मकप्रकृतिरित्यर्थः ॥ **कर्त्रीति** ॥ कर्तृत्वं चात्र मूलाविद्यान्तःकरणप्रकृतित्वरूपं बोध्यं कृतिमत्त्वरूपकर्तृत्वस्य तन्मते अन्तःकरणवृत्तित्वात् । नैयायिकाभिमतं पुरुषस्य कर्तृत्वं निषेधति ॥ **पुरुष इति** ॥ **पुष्करपलाशवदिति** ॥ पद्मपत्रवदित्यर्थः ॥ **निर्लिप्त इति** ॥ अत्र लिप्तत्वमनुयोगितासंबन्धेन विजातीयसंयोगवत्त्वं । वैजात्यं च अम्भसा भस्मालिप्तं शरीरं तैलेन लिप्तमित्याद्यनुगतप्रतीतिसिद्धनोदनत्वव्याप्यजातिविशेषरूपं अनुयोगितासंबन्धेन तादृशवैजात्यावच्छिन्नप्रतियोगिताकाभाववत्त्वं स्वरूपसंबन्धेन तादृशवैजात्यावच्छिन्नानुयोगित्वावच्छिन्नप्रतियोगिताकाभाववत्त्वं वा निर्लिप्तत्वं । तस्य निर्लिप्तत्वे किं प्रमाणमत आह ॥ **किंत्विति** ॥ यत इत्यर्थः । तथाच पुरुषः लिप्तत्वाभाववान् चेतनत्वात् इति व्यतिरेक्यनुमानमेव निर्लिप्तत्वे प्रमाणमिति भावः । एतन्मते चैतन्यं न ज्ञानाश्रयत्वं ज्ञानस्य पुरुषावृत्तित्वात् किंतु चेतन इत्यनुगतप्रतीत्या चेतनपदशक्यतावच्छेदकतया वा सिद्धधर्मविशेषः । सचात्मत्वरूपोऽतिरिक्तो वा अन्यदेतत् । ननु तस्य निर्लिप्तत्वेऽपि कारणत्वमास्तामत आह ॥ **कार्यकारणयोरपीति** ॥ एतन्मत इत्यादिः ॥ **न स्यादिति** ॥ मा भवत्वित्यर्थः ॥ **इत्यकारणत्वमिति** ॥ इति हेतोः अकारणत्वमित्यर्थः ॥ **तस्येति** ॥ पुरुषस्येति । स्वीकार्यमिति शेषः । तथाच नाशाप्रतियोगित्वरूपनित्यत्वानुपपत्त्या कारणत्वन्नाङ्गीकर्तव्यमिति भावः । यद्यपि चैतन्यनित्यत्वयोः अन्यतरलिङ्गेनैव निर्लिप्तत्वकारणत्वाभावोभयसाधनसंभवे हेतुद्वयोपन्यासो व्यर्थः तथापि शिष्यबु–

**दिनकरीयम्.**

साङ्ख्यमतं दूषयितुमुपन्यस्यति ॥ **एतेनेति** ॥ पूर्वोक्तयुक्त्याऽऽत्मनो ज्ञानवत्त्वसाधनेन वक्ष्यमाणयुक्त्या चेत्यर्थः ॥ **प्रकृतिरिति** ॥ मूलप्रकृतिरित्यर्थः ॥ **कर्त्रीति** ॥ कर्तृत्वं चात्र कर्तृभूतान्तःकरणप्रकृतित्वम् । अनुकूलकृतिमत्त्वलक्षणकर्तृत्वस्य तन्मतेऽन्तःकरणधर्मत्वादिति ध्येयम् ॥ **पुष्करपलाशवदिति** ॥ पद्मपत्रवदित्यर्थः । यथा च पद्मपत्रमम्भसा लिप्तं न सम्भवति तथा पुरुषः कर्तृत्वाद्याश्रयो न भवतीति भावः । तथा च पुरुषः कर्तृत्वाभाववान् कारणत्वाभावादित्यनुमानं तत्र प्रमाणं बोध्यम् । ननु तत्र कारणत्वसत्त्वाद्धेत्वसिद्धिरत आह ॥ **कार्यकारणयोरिति** ॥ **न स्यादिति** ॥ मा भवत्वित्यर्थः ॥ **तस्य पुरुषस्य** । नन्वेतादृशपुरुषसत्त्वे किं मानमत आह ॥ **बुद्धिगतेति** ॥ क्वचित्प्रसिद्धस्यैव चैतन्यस्य बुद्धावारोपसम्भवा–

**रामरुद्रीयम्.**

**ति** ॥ न विद्यते सुखं यस्येति बहुव्रीह्यादरणे आनन्दमित्यत्र मत्वर्थकाच्प्रत्ययश्रुतिविरोधादिति भावः । वस्तुतः प्रकरणपदस्य प्रत्ययार्थकता न प्रसिद्धा अतो नञ्तत्पुरुषनिष्पन्नपदपरम्परापठितत्वमेव प्रकरणं तद्विरोधादित्यर्थः । अस्थूलमनणु अदीर्घमित्यादौ सर्वत्र नञ्तत्पुरुषदर्शनेन तत्सन्निधौ पठितस्य असुखमिति पदस्य बहुव्रीहिनिष्पन्नत्वे प्रकरणविरोधादित्यर्थो ज्यायानिति प्रतिभाति ॥ इति वेदान्तिमतखण्डनम् ॥

मूलस्थ-एतेनेत्यस्यार्थमाह ॥ **पूर्वोक्तेति** ॥ न च पुरुषस्य साङ्ख्यमतेऽपि किं तु चेतन इत्यनेन चेतनत्वाङ्गीकाराच्चैतन्यस्य ज्ञानरूपत्वादात्मनो ज्ञानवत्त्वसाधनेन साङ्ख्यमतनिराकरणासम्भवादिदमसङ्गतमिति वाच्यम् । चेतनत्वस्य तन्मते विज्ञानरूपत्वाभ्युपगमादन्यथा चेतनातिरिक्तज्ञानाभ्युपगमे तस्य पञ्चविंशति तत्त्वमध्येऽप्रविष्टतया तत्त्वाधिक्यापत्तेः मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त । षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुष इति तत्सिद्धान्तादिति भावः । एतेनेत्यस्यैवार्थान्तरमाह ॥ **वक्ष्यमाणेति** ॥ **मूलेति** ॥ सर्वकारणेत्यर्थः ॥ **प्रकृतित्वमिति** ॥ कारणत्वमित्यर्थः । नन्वनुकूलकृतिमत्त्वमेव कर्तृत्वमिति कुतो नाभ्युपेयत इत्यत आह ॥ **अनुकूलेति** ॥ **मा भवत्वितीति** ॥ पुरुषस्य घटादिकारणत्वे घटादि-

मानान्यथानुपपत्त्या तत्कल्पनं । बुद्धिश्च प्रकृतेः परिणामः सैव महत्तत्त्वमन्तःकरणमित्यु-च्यते तत्सत्त्वासत्त्वाभ्यां पुरुषस्य संसारापवर्गौ तस्या एवेन्द्रियप्रणालिकया परिणतिर्ज्ञानरू-

प्रभा.

द्विवैशद्याय हेतुद्वयोपन्यास इति ध्येयम् । ननु चैतन्यस्यैवाऽलीकतया कथं तेन हेतुना निर्लिप्तत्वा-दिकं साध्यत इत्यत आह ॥ **बुद्धिगतेति** ॥ **तत्कल्पनमिति** ॥ पुरुषे चैतन्यस्वीकार इत्यर्थः । तथाच क्वचित्प्रसिद्धस्यैव बुद्धावारोपसंभवेन तादृशारोपान्यथानुपपत्त्या पुरुषे चैतन्यमङ्गीकर्तव्यमिति भावः । ननु बुद्धिपुरुषयोरभेद एवास्त्वित्यत आह ॥ **बुद्धिश्चेति** ॥ चोऽवधारणे । तस्य परिणामपदार्थेन सहान्वयः । मूलाविद्यायाः परिणाम एव बुद्धिरित्यर्थः । एवकारेण पुरुषाभिन्नत्वव्यवच्छेदः । तथाच नि-त्यत्वानित्यत्वरूपविरुद्धधर्माध्यासान्न बुद्धिपुरुषयोरभेदसंभव इति भावः । ननु पुरुषस्याकर्तृत्वे कृतिसाध्य-धर्माधर्मयोस्तत्रानुत्पत्त्या तज्जन्यसुखदुःखयोः सुतरामसंभवेन सर्वदा पुरुषस्यासंसारित्वापात्तिरत आह ॥ **तत्सत्त्वासत्त्वाभ्यामिति** ॥ बुद्धिसत्त्वासत्त्वाभ्यामित्यर्थः । तथा चैतन्मते पुरुषस्य बुद्धिरूपमूलाविद्या-संवन्ध एव संसारः मूलाविद्यानिवृत्तिरेव मोक्ष इति वस्तुगतिः । तथाहि वस्तुतो दर्पणासंबद्धस्यापि मुखस्य स्वच्छत्वरूपोपाधिकृतदर्पणासंसर्गाग्रहात् फूत्कारजनितदर्पणनिष्ठमालिन्यस्य यथा ज्ञानं तथा बुद्ध्यसंबद्धस्या-पि पुरुषस्य स्वच्छत्वरूपोपाधिकृतबुद्ध्यसंसर्गाग्रहात् बुद्धिपरिणतिरूपाणां सुखादीनां बुद्धिपरिणत्याकारविशे-षरूपाणां घटादिरूपविषयाणां च पुरुषे ग्रहः तथाच न वस्तुतः पुरुषस्य विषयसंबन्धः किन्तु औपाधिक इति औपाधिकमेव संसारित्वं बुद्धिनाशे तु उपाध्यभावात् स्वाभाविकमेवासंसारित्वमिति । ननु तव मते पुरुष-स्य ज्ञानवत्त्वरूपचैतन्यमेवास्तु बाधकाभावात् । नच तस्य ज्ञानवत्त्वे अनित्यधर्माश्रयत्वेनानित्यत्वापत्तिरिति वाच्यं ज्ञानस्यापि नित्यत्वस्वीकारात् । एवंच बुद्धिज्ञानयोः ऐक्येन बुद्धेरपि नित्यतया तत्कारणतया मूल-प्रकृतिसिद्धिस्तु सुदूरपराहतेत्याशङ्कां परिहरति ॥ **तस्या एवेति** ॥ **इन्द्रियप्रणालिकया** ॥ इन्द्रियकरणिका

दिनकरीयम्.

दिति भावः ॥ **प्रकृतेरिति** ॥ मूलप्रकृतेरित्यर्थः । ननु पुरुषस्य कर्तृत्वाभावे तत्र धर्माधर्मयोरुत्पत्त्यभावा-त्तदधीनसुखदुःखयोस्तत्रानुत्पत्तौ दुःखध्वंसरूपमोक्षः पुरुषस्य न स्यादत आह ॥ **तत्सत्त्वासत्त्वाभ्यामिति** ॥ बुद्धिसत्त्वासत्त्वाभ्यामित्यर्थः । बुद्धिसत्त्वे इन्द्रियप्रणालिकया तत्परिणामेनायं घट इत्यादिज्ञानेन सम्बद्धो घटा-दिर्विषयः स्वाकारज्ञानपरिणामिबुद्ध्यागृहीतासंसर्गकत्वसम्बन्धेन पुरुषनिष्ठः पुरुषस्वरूपतिरोधानेन पुरुषस्य संसारसम्पादकः बुद्धिनाशे तु तत्परिणामस्यायं घट इत्यादिज्ञानरूपस्याभावाद्विषयावच्छेदाभावात्कैवल्या-वस्थानरूपो मोक्षः दुःखसम्बन्धतद्ध्वंसरूपौ संसारमोक्षौ तु न पुंसः किंतु बुद्धेरेवेति भावः । ननु पुरु-षे साक्षात्सम्बन्ध एव विषयस्यास्तु स एव च तस्मिन् संसारव्यवहारनियामकोऽस्तु किमुक्तबुद्धिघटितपर-म्परासम्बन्धेनेत्यत आह ॥ **तस्या एवेति** ॥ तथा च विषये बुद्धेरेव सम्बन्धः पुरुषसम्बन्धः बुद्धिपुरुष-

रामरुद्रीयम्.

कार्यस्यापि नाशो न स्यात्कार्यकारणयोरभेदात्पुरुषस्य चाविकारस्य नाशरूपविकारासम्भवादिति भावः ॥ **इन्द्रियप्रणालिकयेति** ॥ इन्द्रियद्वारेत्यर्थः । इन्द्रियमार्गेण बहिर्निर्गताया बुद्धेर्घटादिविषयदेशप्राप्तौ त-दाकारेण बुद्धेः परिणामो जायते स एव वृत्तिरूपं घटादिज्ञानमिति रीत्येन्द्रियाणां द्वारता बोध्या ॥ **सम्ब-न्ध इति** ॥ स्वाकारकत्वमेव ज्ञानघटयोः सम्बन्धः ॥ **स्वाकारेति** ॥ घटादिविषयाकारेत्यर्थः ॥ **परि-णामित्वं** कारणत्वम् ॥ **अगृहीतासंसर्गकत्वं** अगृहीतभेदकत्वं भेदाग्रहस्तु बुद्धिसान्निध्यरूपदो-षादेवेति बोध्यम् ॥ **स्वरूपतिरोधानं** सम्बन्धमात्ररहितस्वभावस्याप्रकाशः ॥ **विषयावच्छेदः** विष-यसम्बन्धभानम् । कैवल्येनेत्यस्यापि विषयसम्बन्धभानं विनेत्येवार्थः ॥ **बुद्धेरेवेति** ॥ बुद्धावेव दुःखस्य तद्ध्वंसस्य चोत्पादादिति भावः ॥ **साक्षात्सम्बन्धः** स्वरूपसम्बन्धरूप इत्यर्थः । बुद्धेः पुरुषसम्बन्धित्वं तत्र पुरुषसम्बन्धं विनाऽनुपपन्नमित्याशङ्क्याह ॥ **बुद्धीति** ॥ तथा च भेदाग्रह एव तत्र तत्सम्बन्ध इति

पा घटादिना सम्बन्धः। पुरुषे कर्तृत्वाभिमानो बुद्धौ चैतन्याभिमानश्च भेदाग्रहात्। ममेदं कर्तव्यमिति मदंशः पुरुषोपरागो बुद्धेः स्वच्छतया तत्प्रतिबिम्बादतात्त्विको दर्पणस्येव मुखोपरागः। इदमिति विषयोपराग इन्द्रियप्रणालिकया परिणतिभेदस्तात्त्विको निःश्वासाभिहतदर्पण-

## प्रभा.

ज्ञानरूपा अयं घटः इत्यादिज्ञानरूपा तस्याः परिणतिरिति योजनया बुद्धेस्समवेतकार्यस्यैव घटादिना संबन्धः तस्या इत्यस्यावृत्तिः। तस्या घटादिना संबन्धः परिणतिः। तेषामयमाशयः नित्यज्ञानस्वीकारे स एव पुरुषोऽस्तु मन्मते नित्यवस्तुद्वयाभावात् तथाच पुरुषस्य नित्यविज्ञानवत्त्वरूपचैतन्यमिष्टमेव। एवंच घटादिविषयकास्मदादिज्ञानानां सर्वमतेऽप्यनित्यतया तदाश्रयतया मूलाविद्यैव बुद्धिशब्देन व्यवह्रियते। मूलाविद्यायास्तदाश्रयत्वे तु तस्या अव्यक्ततया जानामि करोमीत्याद्याकारकप्रत्यक्षविषयत्वं न संभवतीति तदर्थं तूलाविद्यास्वीकारः तत्समवायिकारणत्वेन मूलाविद्यास्वीकारश्चावश्यकः। एवंच बुद्धेर्घटादिज्ञानपरिणामित्वेनानित्यतया न पूर्वोक्तदोषावकाश इति। ननु पुरुषस्याकर्तृत्वे पुरुषः कर्तेत्यनुभवः कथमित्याशङ्क्य बुद्धौ चैतन्यानुभव इव बुद्धिपुरुषयोर्भेदाग्रहमूलको भ्रमरूप एव पुरुषे कर्तृत्वानुभव इति परिहरति॥ **पुरुषे कर्तृत्वाभिमान इति ॥ भेदाग्रहादिति** ॥ परमते कर्तृचेतनयोः ऐक्यात्तन्मतसिद्धैक्यस्यैतन्मते भ्रमसंभवः तस्मादेव बुद्धिपुरुषयोर्भेदाग्रहस्तस्मादेव पुरुषनिष्ठचैतन्यस्य बुद्धावारोपः बुद्धिनिष्ठकर्तृत्वादेश्च पुरुषे आरोप इति भावः एतावता कर्तृचेतनयोः सप्रमाणं भेदमुपपाद्य परमतसिद्धबुद्ध्युपलब्ध्यभेदनिराकरणाय उपलब्धिस्वरूपं दर्शयितुं बुद्धेरंशत्रयं दर्शयति॥ **ममेदमित्यादि** ॥ अस्मच्छब्दार्थभूतपुरुषस्य संबन्धः ममेति षष्ठ्या बोध्यत इत्याह॥ **पुरुषोपराग इति** ॥ ननु पुरुषेण बुद्धेः कस्संबन्धः न विषयविषयिभावः बुद्धेः बुद्ध्यपरिणामित्वेन निर्विषयत्वात् नच तादात्म्यं चिज्जडयोस्तादात्म्याभावादित्यत आह॥ **बुद्धेः स्वच्छतयेति ॥ तत्प्रतिबिम्बादिति** ॥ तस्य पुरुषस्य तादात्म्यभ्रमादित्यर्थः नियम्यत्वं पञ्चम्यर्थः।तथाच बुद्धौ पुरुषस्य तादात्म्याभावेऽपि स्वच्छत्वौपाधिकतादात्म्यभ्रमसत्त्वादारोपितैकत्वं पुरुषोपरागः वस्तुस्वरूपबुद्धौ पुरुषैक्यस्यावर्तमानतया अवास्तवत्वं तत्र दृष्टान्तमाह॥ **दर्पणस्येवेति** ॥ दर्पणे मुखसंबन्धाभावेऽपि स्वच्छत्वरूपोपाधिप्रयुक्तमुखसंबन्धरूपभ्रान्तिवारणात् तन्नियम्याध्यासिकमुखसंबन्धवत्त्वं यथा दर्पणे अवास्तवं तद्वदित्यर्थः॥ **इदमितीति** ॥ इदंपदस्य घटादिरूपविषयार्थकतया तत्संबन्धवत्त्वं बुद्धौ स्वीकार्यमित्याह ॥ **विषयोपराग इति** ॥ इदमिति शब्देन बुद्धौ विषयसम्बन्धो बोध्यत इत्यर्थः ननु बुद्धौ कोऽयं विषयसंबन्धः बुद्धेर्निर्विषयतया विषयविषयिभावसंबन्धाभावात् नच तादात्म्यं बुद्धेः शरीरान्तर्वृत्तित्वेन बुद्धिपरिणामज्ञानव-

## दिनकरीयम्.

योरसंसर्गाग्रहात् न तु पुरुषे स्वातन्त्र्येण विषयसंम्बन्धोऽस्ति मानाभावात्। न च विषयप्रकाशार्थं साक्षात्सम्बन्ध एव स्वीकार्यः किमुक्तपरम्परयेति वाच्यम्। तस्य पुरुषस्वभावनिबन्धनत्वे पुरुषस्य नित्यत्वेन तत्स्वभावाधीनविषयसम्बन्धस्य सत्त्वान्मोक्षाभावप्रसङ्गात् घटप्रकाशकाले पटादिरूपविषयस्वभावाधीनस्य पटादिरूपचैतन्यसम्बन्धस्य सत्त्वात्पटादेरपि प्रकाशापत्तेरिति। यद्वा बुद्धितो ज्ञानस्य भेदमाह॥ **तस्या एवेति** ॥ तथा च बुद्धेः परिणतिर्ज्ञानं न तु बुद्धिरेवेति भावः॥ **भेदाग्रहादिति** ॥ बुद्धिपुरुषयोर्भेदाग्रहादित्यर्थः। इदानीं बुद्धित उपलब्धेर्भेददर्शनार्थं बुद्धेरंशत्रयं प्रदर्शयति॥ **ममेदमित्यादिना** ॥ **पुरुषोपरागः** पुरुषसम्बन्धो दर्पणस्य यथा मुखसम्बन्धः प्रतिबिम्बमात्रं न तु तात्त्विकस्तथा बुद्धिपुरुषयोर्भेदाग्रहादेकत्वाभिमानः पुरुषोपराग इत्यर्थः॥ **इन्द्रियप्रणालिकया** इन्द्रियद्वारा॥ **परिणतिभेदः** अयं घट इत्या-

## रामरुद्रीयम्.

भावः॥ **स्वातन्त्र्येण** भेदाग्रहातिरेकेण॥ **मानाभावादिति** ॥ बुद्धौ तद्भिन्नपुरुषसम्बन्धे प्रमाणाभावादित्यर्थः॥ **विषयप्रकाशार्थमिति** ॥ साक्षात्सम्बन्धकल्पने प्रमाणोपन्यासाय। **तस्य** साक्षात्सम्बन्धस्य॥ **पुरुषस्वभावनिबन्धनत्वे** ॥ पुरुषस्वरूपप्रयुक्तत्वे स्वात्मकस्वरूपसम्बन्धस्य स्वस्वभावाधीनत्वादिति भावः।

स्येव मालिनिमा । कर्तव्यमिति व्यापारांशः । तेनांशत्रयवती । बुद्धिस्तत्परिणामेन ज्ञानेन पुरुषस्यातात्त्विकः सम्बन्धः दर्पणमालिनिम्नेव मुखस्योपलब्धिरुच्यते । निज्ञानवत्सुखदुःखेच्छाद्वेषधर्माधर्मा अपि बुद्धेरेव कृतिसामानाधिकरण्येन प्रतीतेः । नच बुद्धिश्चेतना परिणामित्वात् ।

## प्रभा.

ह्याह्यत्वाभावात् बाह्यघटादिना तादात्म्यस्य बाधितत्वादित्यत आह ॥ **इन्द्रियप्रणालिकयेति** ॥ इन्द्रियद्वारा बहिर्निर्गता सतीत्यर्थः ॥ **परिणातिभेदः** ॥ विभिन्ना विलक्षणा परिणतिरित्यर्थः । कृदभिहित इति न्यायात् तेन भिद्यतेऽनेनेति व्युत्पत्त्या भेदशब्दस्य वैलक्षण्यार्थकत्वादयं घट इत्याद्याकारकप्रतीतिलाभः । तथाच बुद्धौ घटाद्याकारिज्ञानपरिणामित्वमेव विषयसंबन्ध इति न पूर्वोक्तदोष इति भावः । अत्र ज्ञानस्य घटाद्याकारित्वं च स्वाभिन्नस्वविषयघटादिकत्वरूपमेव ज्ञानरूपबुद्धिपरिणतेः बाह्यत्वेन सविषयकत्वस्वीकारेण च घटादिरूपविषयस्य ज्ञानाभिन्नत्वज्ञानविषयत्वोपपत्तिरिति बोध्यम् । विषयेण सह बुद्धेः परिणतिविशेषरूपसंबन्धस्य तात्त्विकत्वे दृष्टान्तमाह ॥ **निश्वासाभिहतेत्यादि** ॥ फूत्कारजन्यवायुसंबन्धाज्जायमानदर्पणनिष्ठमलिनिमेवेत्यर्थः ॥ **कर्तव्यमिति व्यापारावेश इति** ॥ विषयनिष्ठकर्तव्यतया सह बुद्धेस्संबन्ध इत्यर्थः । अत्र कर्तव्यत्वेन सह बुद्धेर्विषयविषयिभावस्य तादात्म्यस्य वा उक्तदोषेण वक्तुमशक्यतया कर्तव्यत्वाकारिज्ञानपरिणामित्वमेव बुद्धौ कर्तव्यतासंबन्ध इति हृदयम् । ज्ञानस्य कर्तव्यताकारित्वं चोक्तविषयाकारित्वं बोध्यम् । अत्रापि दृष्टान्तः निश्वासाभिहतदर्पणस्य मलिनिमेति हृदयम् ॥ **तेनेति** ॥ बुद्धेर्ममेदं कर्तव्यमित्याकारकत्वेनेत्यर्थः ॥ **अंशत्रयवतीति** ॥ पुरुषसंबन्धविषयसंबन्धव्यापारसंबन्धरूपांशत्रयवतीत्यर्थः । एतावता बुद्धेरंशत्रयवत्त्वमुपपाद्य संप्रत्युपलब्धिस्वरूपं दर्शयति ॥ **तत्परिणामेत्यादि** ॥ बुद्धिपरिणामेन ज्ञानेन पुरुषस्य यः अतात्त्विकस्संबन्धः चेतनोऽहं जानामि चेतनोऽहं करोमि इत्याकारकः पुरुषे ज्ञानपरिणामिबुद्धितादात्म्यभ्रमरूपः स एवोपलब्धिरिति योजिततादृशग्रन्थसमुदायार्थः ननु बुद्धिरेवोपलब्धिरिति भावः । तादृशज्ञानपुरुषयोर्निरुक्तसंबन्धस्यातात्त्विकत्वे दृष्टान्तमाह ॥ **दर्पणमलिनिम्नेव मुखस्येति** ॥ संबन्ध इत्यनुवर्तते । तथाच दर्पणमुखयोरसंसर्गाग्रहात् दर्पणनिष्ठमालिन्यस्य यथा मुखे भ्रमस्तथा बुद्धिपुरुषयोरसंसर्गाग्रहात् बुद्धिनिष्ठज्ञानपरिणामित्वस्यापि पुरुषे भ्रम इति भावः ॥ **ज्ञानवत्सुखेत्यादि** ॥ ज्ञानस्य बुद्धिपारि-

## दिनकरीयम्.

द्विज्ञानरूपः परिणाम एव विषयेण घटादिना बुद्धेः सम्बन्ध इत्यर्थः । तस्य पारमार्थिकत्वे निःश्वासाभिहतदर्पणस्य मलिनिमा दृष्टान्तः ॥ **कर्तव्यमितीति** ॥ पूर्वोक्तपुरुषोपरागविषयोपरागाभ्यां कर्तव्यस्य घटादेरवभासस्तेन कर्तव्यमित्यध्यवसायो व्यापारांश इत्यर्थः ॥ **ज्ञानेन पुरुषस्यातात्त्विकः सम्बन्ध इति** ॥ अत्र ज्ञानेन पुरुषस्य योऽतात्त्विकः सम्बन्धः स उपलब्धिरित्युच्यत इत्यन्वयः । अतात्त्विके दृष्टान्तः दर्पणस्य मलिनिम्नेव मुखस्य सम्बन्ध इति । तथा च ज्ञानेन सह चेतनोऽहमिदं जानामीत्याकारो बुद्धावारोपितस्य यः सम्बन्धोऽतात्त्विकः स उपलब्धिर्न तु बुद्धिरेवोपलब्धिरिति भावः ॥ **कृतिसामानाधिकरण्येनेति** ॥ अदृष्टस्यातीन्द्रियत्वेऽपि धार्मिकोऽहं करोमीति तदंशे उपनीतभानरूपं बोध्यम् ॥ **परिणामि-**

## रामरुद्रीयम्.

उक्ताशयकल्पनागौरवमभिसन्धाय प्रकारान्तरेणैतद्ग्रन्थमेवावतारयति ॥ **यद्वेति** ॥ **पुरुषोपरागाभ्यामिति** ॥ विशेषणे तृतीया तदर्थस्य च बुद्धेर्ज्ञानरूपपरिणामार्थकाध्यवसायपदार्थेऽन्वयः । कर्तव्यघटादेरिति षष्ठ्यर्थोऽपि तत्रैवान्वेति ॥ **व्यापारांश इति** ॥ व्यापारः कर्तव्यमित्यभिलप्यमानः अंशः सम्बन्धो यस्य स तथेत्यर्थः । तथा च ममेदं कर्तव्यमिति बुद्ध्यभिलापकशब्दे ममेत्यनेन पुरुषसम्बन्धः इदमित्यनेन विषयसम्बन्धः कर्तव्यमिति व्यापारसम्बन्धो बुद्धावभिलप्यत इति सम्बन्धत्रयवती बुद्धिरिति सिद्धमिति भावः ॥ **तथाचेत्यादि** ॥ चेतनोऽहं करोमीत्याकारेण बुद्धावारोपितस्य पुरुषस्य ज्ञानेन सहेदं ज्ञानामिति प्रतीयमानोऽतात्त्विकसम्बन्धो यस्स उपलब्धिरित्यर्थो योजनया प्रतीयमान इत्यस्याध्याहारेण च बोध्यः ।

इति मतमपास्तम् । कृत्यदृष्टभोगानामिव चैतन्यस्यापि सामानाधिकरण्यप्रतीतेः तद्भिन्ने मानाभावाच्च । चेतनोऽहं करोमीति प्रतीतिश्चैतन्यांशे भ्रम इति चेत् कृत्यंशेऽपि किं नेष्यते अन्यथा बुद्धेर्नित्यत्वे मोक्षाभावोऽनित्यत्वे तत्पूर्वमसंसारापत्तिः । नन्वचेतनायाः प्रकृतेः कार्यत्वा-

प्रभा.

णामत्वेन बुद्धिधर्मत्वस्यावश्यकतया तस्य दृष्टान्तत्वकथनं ॥ बुद्धेरेवेति ॥ बुद्धिधर्मा एवेत्यर्थः ॥ कृतिसामानाधिकरण्येनेति ॥ कर्तृनिष्ठत्वेनानुभवसिद्धत्वादित्यर्थः । तेषां कृतिसाध्यत्वादिति भावः । तेषां जीवनयोनियत्नसाध्यत्वादिति भाव इत्यपि केचित् । ननु बुद्धौ चैतन्यानुभवानुरोधेन चैतन्यवत्तया पुरुषकल्पनमयुक्तं बुद्धावेव चैतन्यस्वीकारेण बुद्धौ तादृशज्ञानस्य प्रमाणत्वादित्याशङ्कां बुद्धौ चैतन्यनिराकरणेन परिहरति ॥ नचेति ॥ परिणामित्वादिति ॥ अनित्यत्वादित्यर्थः । अत्र घटादिदृष्टान्तो बोध्यः ॥ कृत्यदृष्टेति ॥ अदृष्टादेः कृतिसामानाधिकरण्यस्य साधितत्वत्तेषां दृष्टान्तत्वमङ्गीकृतं ॥ सामानाधिकरण्येन प्रतीतेरिति ॥ कृतिसामानाधिकरण्येन अनुभवादित्यर्थः ॥ तद्भिन्ने मानाभावाच्चेति ॥ कर्तृभिन्नचेतने मानाभावाच्चेत्यर्थः । तथाच चैतन्यकृत्योः चेतनोऽहं करोमीत्याकारकसामानाधिकरण्यावगाह्यनुभवविरोधापत्त्या कर्तृचेतनयोः भेदो नाङ्गीकर्तव्य इति भावः । चकारेण पूर्वोक्तदोषस्समुच्चीयते। ननु परिणामित्वेन चैतन्याभावस्य साधितत्वात्तादृशप्रतीतिश्चैतन्यांशे भ्रमत्वमङ्गीकार्यमित्याक्षिपति ॥ चेतनोऽहमिति ॥ कृत्यंशेऽपीति ॥ तथाच बुद्धिः कर्तृत्वाभाववती परिणामित्वादित्यनुमानेन कर्तृत्वाद्यभावस्यापि बुद्धौ साधयितुं शक्यतया तादृशप्रतीतेः कृत्यंशेऽपि भ्रमत्वमेवाङ्गीकर्तव्यमिति तादृशभ्रमानुरोधेन पुरुषस्यैव कर्तृत्वमङ्गीकर्तव्यं तदनुरोधेन च सुखादिकमपि तत्रैवाङ्गीकर्तव्यमिति प्रमाणाभावात् बुद्धिर्नाङ्गीकर्तव्येति भावः । बुद्धौ प्रमाणाभावमुक्त्वा बाधकमप्याह ॥ अन्यथेति ॥ अतिरिक्तबुद्धिस्वीकार इत्यर्थः ॥ बुद्धेर्नित्यत्व इति ॥ तथाच बुद्धेस्सर्वदा सत्त्वेन तद्घटितविषयसंबन्ध-

दिनकरीयम्.

त्वादिति ॥ अनित्यधर्माश्रयत्वादित्यर्थः ॥ कृत्यदृष्टभोगानामिति ॥ कृतिः स्वसमानाधिकरणमेवादृष्टं जनयति तच्चादृष्टं स्वसमानाधिकरणमेव भोगं जनयतीति कृत्यदृष्टभोगानां परम्परया सामानाधिकरण्यप्रमितिवच्चेतनोऽहं करोमीति सामानाधिकरण्यप्रमितिप्रतीतेरित्यर्थः ॥ तद्भिन्नेति ॥ कर्तृभिन्ने मानाभावादित्यस्य चेतन इत्यादिः । चः पूर्वोक्तदूषणसमुच्चायकः कर्तृत्वाश्रयो न चेतनः जन्यधर्माश्रयत्वात् घटवदिति बाधकसत्त्वाच्चेतनोऽहं करोमीति प्रतीतिश्चैतन्यांशे भ्रम इत्याशङ्कते ॥ चैतन्यांशे इति ॥ कृत्यंशेऽपीति ॥ बुद्धिः कर्तृत्वाभाववती जन्यधर्माश्रयत्वात् इति बाधकस्य तत्रापि सत्त्वादिति भावः ॥ अन्यथेति ॥ कर्तृचेतनयोर्भेदाङ्गीकार इत्यर्थः ॥ बुद्धेर्नित्यत्व इति ॥ कर्तृभिन्नस्य चेतनस्य स्वी-

रामरुद्रीयम्.

ननु कृतिसामानाधिकरण्येन अदृष्टप्रतीतिः प्रात्यक्षिकी न सम्भवति तस्यातीन्द्रियत्वादत आह ॥ अदृष्टस्येति ॥ तदंशो अदृष्टांशः ॥ अनित्यधर्मत्वादिति ॥ यद्यपि धर्माश्रयत्वांशो व्यर्थः तथापि क्षणिकविज्ञानवादिना अनित्यविज्ञाने व्यभिचारोद्भावनमभिसन्धाय तदुक्तं क्षणिकविज्ञानस्य, वृत्तिमत्त्वलक्षणधर्मत्वविरहान्न तत्र व्यभिचार इति भावः । वृत्तिमत्त्वं च दैशिकसम्बन्धेन बोध्यम् । तेन कालिकेन क्षणिकविज्ञानस्य वृत्तिमत्त्वेऽपि न व्यभिचारतादवस्थ्यं बुद्धेस्तु प्रकृतिपरिणामत्वेन तद्वृत्तित्वान्न स्वरूपासिद्धिः । ननु तद्भिन्ने मानाभावादित्यसङ्गतं कर्तृभिन्नानां प्रकृत्यादीनां सत्त्वादत आदिं पूरयति ॥ चेतन इत्यादिरिति ॥ बुद्धिः कर्तृत्वाभाववती जन्यधर्मत्वादिति पाठः । जन्यधर्माश्रयत्वादिति प्रामादिकः । यद्ययं नैयायिकानां प्रयोगस्तदा तन्मते कर्तुर्जन्यधर्माश्रयत्वाद्व्यभिचारित्वापत्तेः यदि च साङ्ख्यमतप्रविष्टस्यैव तन्मतसिद्धपुरुषस्यैव कर्तृत्वमस्तु न बुद्धेरित्यभिप्रायेणायं प्रयोग इत्युच्यते तदा स्वमतव्याघातः कर्तृत्वस्यापि जन्यधर्मतया पुरुषधर्मत्वासम्भवेन कर्तृत्वस्याधर्मत्वापत्तिश्चेति । यदि च तत्पाठप्रामाण्येऽप्याग्रहस्तदा जन्यधर्मः क-

बुद्धेरचेतनत्वं कार्यकारणयोस्तादात्म्यादिति चेन्न । असिद्धेः कर्तुर्जन्यत्वे मानाभावात् । वीतरागजन्मादर्शनादनादित्वं अनादेर्नाशासम्भवान्नित्यत्वं तत्किं प्रकृत्यादिकल्पनेन । न च

## प्रभा.

स्यापि सर्वदा सत्त्वेन पुरुषस्य कैवल्यावस्थानरूपमोक्षानुपपत्तिः बुद्धेरनित्यत्वे तु अजन्यस्य नाशासंभवेन जन्यत्वस्य चाङ्गीकर्तव्यतया बुद्ध्युत्पत्तेः पूर्वमपि पुरुषविषयसंबन्धाभावेन मोक्षापत्तिः । अथवा बुद्ध्युत्पत्तेः पूर्वं बुद्ध्याश्रितबुद्धिजनकादृष्टस्याप्यभावात् बुद्धेरेवानुत्पत्त्या कदापि विषयसंबन्धरूपसंसारानुपपत्तेरित्यर्थः । इदमापाततः बुद्धेर्नाशप्रतियोगित्वेऽपि सांख्यैः तस्याः प्रागभाववदनादित्वस्वीकारान्नोक्तबाधकमिति वस्तुतो बुद्ध्यनङ्गीकारे प्रमाणाभाव एव शरणमिति तत्त्वम् ॥ **असिद्धेरिति** ॥ मूलप्रकृतेरेवासिद्धेरित्यर्थः । मूलप्रकृतौ प्रमाणाभावादिति भावः । ननु कर्तृत्वेन जन्यत्वानुमाने तत्कारणतया मूलप्रकृतिस्सिध्यतीत्यत आह ॥ **कर्तुरिति** ॥ तथा च कर्तृत्वस्य नित्यत्वव्याप्यतया तेन नित्यत्वमेव सिध्यति नतु जन्यत्वमिति भावः कर्तृत्वस्य नित्यत्वव्याप्यत्वे कर्तुरनादित्वप्रतिपादकं सूत्रमेव प्रमाणमित्याह ॥ **वीतरागेत्यादि** ॥ वीतरागजन्मादर्शनादिति न्यायसूत्रम् । सरागजन्मदर्शनादिति तदर्थः ॥ **अनादित्वमिति** ॥ स्तन्यपाने बालस्य प्रवृत्तिर्हि नेष्टसाधनताज्ञानमन्तरेण तच्च नानुभवरूपं अनुभवसामग्र्यभावात् स्मरणस्य तु समानाधिकरणपूर्वानुभवसापेक्षतया पूर्वजन्मसत्त्वे तत्रापि प्रथमप्रवृत्त्यनुरोधेन तत्पूर्वस्य एवं तत्पूर्वजन्मनः सिद्धावनादित्वमात्मनः इति भावः ॥ **अनादेरिति** ॥ अनादिभावस्येत्यर्थः ।

## दिनकरीयम्.

कारे तस्मिन् सुखदुःखाभावात् संसारमोक्षयोरनुपपत्त्या पूर्वोक्तरीत्या बुद्धिसत्त्वासत्त्वाभ्यामेव संसारापवर्गौ वाच्यौ तथा च बुद्धेर्नित्यत्वे तु तत्सत्त्वनिबन्धनस्य संसारस्य सर्वदापत्त्या मोक्षाभाव एव स्यात् । बुद्धेरनित्यत्वे तु तत्र जन्यत्वं स्वीकरणीयमजन्यस्य नाशासम्भवात् तथा च तदुत्पत्तेः पूर्वं तत्सत्त्वनिबन्धनसंसारो न स्यादित्यर्थः । वस्तुतस्तदुत्पत्तेः पूर्वं तदाश्रितादृष्टादेरभावाद्बुद्धेरनुत्पत्त्या संसारः कदापि न स्यादित्यवधेयम् ॥ ॥ **असिद्धेरिति** ॥ बुद्धौ प्रकृतिकार्यत्वाभावादिति भावः । ननु कर्तृत्वेन जन्यत्वानुमितिः परिशेषात्प्रकृतिजन्यत्वविषयिणी स्यादित्यत आह ॥ **कर्तुरिति** ॥ कर्तृत्वस्य जन्यत्वव्याप्यत्वेऽनुकूलतर्काभावादिति भावः । प्रत्युत तद्विपरीतानादित्वग्राहकतर्कसत्त्वादनादित्वमेव कर्तुरित्याह ॥ **वीतरागेति** ॥ वीतरागजन्मादर्शनादिति न्यायसूत्रं सरागजन्मदर्शनादिति तदर्थः ॥ **अनादित्वमिति** ॥ स्तन्यपाने बालस्य प्रवृत्तिर्नेष्टसाधनताज्ञानमन्तरेण तच्च नानुभवस्वरूपं बाधात् स्मरणस्य स्वसमानाधिकरणपूर्वानुभवसापेक्षतया पूर्वजन्मसत्त्वे पूर्वजन्मन्यपि प्रथमप्रवृत्त्यनुरोधेन तत्पूर्वस्य एवं तत्पूर्वस्य जन्मनः सिद्धावनादित्वमा-

## रामरुद्रीयम्.

तृत्वातिरिक्तत्वेन विशेषणीयस्तथा च साङ्ख्यमतानुयायिन एव पुरुषस्यैव कर्तृत्वं चेतनत्वं चास्तीत्यभिप्रायेणेयमाशङ्का भविष्यति । केचित्तु जन्यधर्मत्वादित्यस्य बहुव्रीहिमाश्रित्य जन्यधर्माश्रयत्वादित्यर्थं परिकल्प्य एतद्ग्रन्थस्य कर्तृत्वाभावसाधने न तात्पर्यं अपि तु व्यभिचारेणोक्तहेतुना चेतनत्वाभावो न साधयितुं शक्योऽन्यथा तेनैव व्यभिचारहेतुना कर्तृत्वाभावोऽपि किं न सिध्येदित्यापादन एव तात्पर्यमित्याहुः । ननु कर्तृनित्यत्वे निर्मोक्षप्रसङ्ग इति मूलमसङ्गतं कर्तुर्नित्यत्वेऽपि तद्भिन्नस्य चेतनस्यात्यन्तिकदुःखनिवृत्तिरूपमोक्षे बाधकाभावादित्यत आह ॥ **कर्तृभिन्नस्येति** ॥ **तस्मिन्** चेतने ॥ **सुखेति** ॥ शुभाशुभकर्मा-कर्तरि सुखदुःखयोरसम्भवादिति भावः ॥ **न स्यादित्यर्थ इति** ॥ न चेष्टापत्तिरिति वाच्यम् । पूर्वमसंसारिणोऽपि संसारित्वोपगमे मुक्तस्यापि पुनः संसारित्वापत्त्या मोक्षार्थं कोऽपि न प्रवर्तेतेति भावः । पूर्वमसंसारे कदापि संसारो न स्यादित्यप्यापत्तिः सम्भवतीत्याह ॥ **वस्तुतस्त्विति** ॥ **तदुत्पत्तेः** बुद्ध्युत्पत्तेः ॥ **तदाश्रितेति** ॥ बुद्ध्याश्रितेत्यर्थः । अदृष्टादेरित्यादिना तज्जनककर्मणः परिग्रहः ॥ **अनुत्पत्त्येति** ॥ कार्यमात्रे अदृष्टस्य कारणत्वादिति भावः । नन्वनादेर्नाशायोगादिति मूलमसङ्गतं प्रागभाव-

**प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः । अहङ्कारविमूढात्मा कर्ताऽहमिति मन्यते इत्य-नेन विरोध इति वाच्यम् । प्रकृतेरदृष्टस्य गुणैरदृष्टजन्यैरिच्छादिभिः कर्ताऽहमेवेत्यस्य तदर्थत्वा-त् । तत्रैवं सति कर्तारमात्मानं केवलं तु य इत्यादि वदता भगवता प्रकटीकृतोऽयमुपरिष्टादाशय**

## प्रभा.

जन्यभावत्वेन नाशहेतुत्वादिति भावः ॥ **ननु किं प्रकृत्यादीति** ॥ तत्तस्मात् पूर्वोक्तरीत्या कृतिचैतन्य-योस्सामानाधिकरण्यस्य उभयाश्रये नित्यत्वस्य च सिद्धत्वादिति यावत् । किं प्रकृत्यादीति मूलप्रकृत्यादिक-ल्पनेन तत्कार्यबुद्धिकल्पनेन च किं प्रयोजनमित्यर्थः । तथाच प्रमाणाभावात् प्रयोजनाभावाच्च प्रकृतिर्नाङ्गीकर्तव्ये-ति भावः । नच प्रकृतेरिति प्रकृतिर्माया तस्याः गुणैस्सत्त्वरजस्तमोरूपैस्सर्वशः सर्वाणि क्रियमाणानीत्यन्वयः । भवन्तीति शेषः । अनेन प्रकृतेः कर्तृत्वं प्रतिपादितं ॥ **अहङ्कारः** अहमिति प्रत्ययः तेन विमूढोऽहमिति प्र-त्ययविषय इत्यर्थः **आत्मा** अन्तःकरणं यस्य सः अहमितिप्रत्ययविषयान्तःकरणागृहीतासंसर्गक इ-त्यर्थः । एतादृशः पुरुषः **कर्ताहमिति मन्यत इति** ॥ तादृशागृहीतासंसर्गकत्वदोषेणान्तःकरणनिष्ठकर्तृ-त्वादिमत्तया ज्ञायत इत्यर्थः । तेनात्मनः कर्तृत्वाभावः प्रतिपाद्यत इति प्रकृत्यनङ्गीकारे पुरुषस्य कर्तृत्वाङ्गीकारे च गीतावचनविरोध इति भावः । अर्थान्तरं परिकल्प्य विरोधं परिहरति ॥ **प्रकृतेरदृष्टस्येति** ॥ कार्यमात्रस्यादृष्टाधीनत्वात् प्रकृतिशब्देन जगत्कारणादृष्टेश्वरादिकमेव उच्यत इति भावः । प्रकृतिशब्दोत्तरषष्ठ्या जन्यत्वरूपसंबन्धार्थकतया अदृष्टजन्येच्छादयो लभ्यन्त इत्यभिप्राये-णादृष्टस्य गुणैरिच्छादिभिरित्युक्तम् । सर्वाणि कर्माणि क्रियमाणानि भवन्ति इति योजना तेनादृष्टशब्द-बोध्यानां विश्वेषां कर्तृत्वं प्रतिपादितं अहङ्कारविमूढात्मा अहमिति प्रत्ययविषयः पुरुषः कर्ता अहमह-मेव कर्तेति मन्यत इति ॥ **तदर्थत्वादिति** ॥ गीतार्थत्वादित्यर्थः । तथाच तेन स्वतन्त्रकर्तृत्वाभाव एव प्रतिपाद्यते नतु कर्तृत्वसामान्याभाव इति भावः । गीतावचनस्य एतादृशार्थकरणे उत्तरगीतावच-नमेव प्रमाणमित्याह ॥ **तत्रैवं सतीत्यादि** ॥ **प्रकटीकृतोऽयमिति** ॥ अधिष्ठानं तथा कर्ता करणं च पृथग्विधं । विविधा च पृथक् चेष्टा दैवं चैवात्र पञ्चममित्यनेन पञ्चानां कर्तृत्वं प्रतिपाद्य तत्रैवं सतीत्यादि-

## दिनकरीयम्.

त्मन इति भावः । अनादेरित्यस्य भावस्येति शेषः । जन्यभावत्वेन नाशे हेतुत्वादिति भावः ॥ **नचेति** ॥ प्रकृतिर्माया तस्या गुणैः सत्त्वरजस्तमोलक्षणैः क्रियमाणानि कर्माणि भवन्ति अहङ्कारोऽहमिति प्रत्ययः तेन विमूढ आत्मा अन्तःकरणं यस्य तथाविधः पुरुषः कर्ताहमिति मन्यते इत्यर्थकेन भगवद्वचनेनेत्यर्थः । तेना-त्मनः कर्तृत्वाभावप्रतिपादनादिति भावः ॥ **अहमेवेति** ॥ तथा च तेन स्वतन्त्रकर्तृत्वाभाव एवात्मनि प्र-तिपाद्यते न तु कर्तृत्वसामान्याभाव इति भावः ॥ **प्रकटीकृतोऽयमिति** ॥ अधिष्ठानं तथा कर्ता करणं च पृथग्विधम् । विविधाश्च पृथक् चेष्टा दैवं चैवात्र पञ्चममित्यनेन पञ्चानामपि कर्तृत्वं प्रतिपाद्य तत्रैवं स-तीत्यादिनापि स्वतन्त्रकर्तृत्वस्यैवात्मनो निषिद्धत्वादिति भावः । एवं पुरुषस्यैव कर्तृत्वमस्तु नच कारणत्वा-

## रामरुद्रीयम्.

स्यानादेरपि नाशदर्शनादित्यत आह ॥ **अनादेरित्यस्येति** ॥ प्रकृतेर्गुणैः क्रियमाणानि सर्वशः कर्माणीत्य स्योत्तरार्धे नान्वयसम्भवः कर्माणीत्यस्य द्वितीयान्तत्वोपगमेऽपि कर्तेति कृद्योगे षष्ठ्यापत्त्या साधुत्वानुपप-त्तेर्निराकाङ्क्षतापरिहाराय क्रियापदमध्याहरति ॥ **भवन्तीति** ॥ इत्थं चोत्तरार्धात्प्रागेवमपीत्यपिः पूरणीय इति भावः । अहमिति प्रत्यय इत्यस्य कर्तरि बुद्धौ इत्यादिस्तथासत्येव तेन विमूढत्वोपपत्तेः आत्मेत्यस्य पुरुषार्थकत्वे भेदनियतविग्रहस्थषष्ठ्यनुपपत्तिरतो व्याचष्टे ॥ **अन्तःकरणमिति** ॥ विरोधे हेतुमाह ॥ **तेनेति** ॥ स्वतन्त्र-कर्तृत्वं कारणान्तरनिरपेक्षनिष्ठकर्तृत्वं अधिष्ठानमाधारः दैवमदृष्टं ॥ **कर्तृत्वं प्रतिपाद्य** कारणत्वं प्रतिपाद्येत्यर्थः । क्रियानुकूलकृतिमत्त्वरूपस्य तस्याधिष्ठानादौ बाधात् एवं चाहमेव कर्ता इत्यत्रापि अहमेव कारणमित्येवार्थः तथासत्येव मूढतोपपत्तिरन्यथा कारणानां बहुत्वेऽपि स्वस्यैव कर्तृतयाऽहमेव कर्तेत्यस्य प्रमात्वापत्तिरिति ध्ये-

धर्माधर्माश्रयोऽध्यक्षो विशेषगुणयोगतः ॥ ४९ ॥

इति सङ्क्षेपः ॥ धर्माधर्मेति ॥ आत्मेत्यनुषज्यते । शरीरस्य तदाश्रयत्वे देहान्तरकृतकर्मणां देहान्तरे भोगानुपपत्तेः ॥ विशेषेति ॥ योग्यविशेषगुणस्य ज्ञानसुखादेः सम्बन्धेनात्मनः प्रत्यक्षत्वं सम्भवति न त्वन्यथाऽहं जानेऽहं करोमीत्यादिप्रतीतेः ॥ ४९ ॥

प्रवृत्त्याद्यनुमेयोऽयं रथगत्येव सारथिः ।

आत्मा परदेहादौ प्रवृत्त्यादिनाऽनुमीयते । प्रवृत्तिरत्र चेष्टा ज्ञानेच्छाप्रयत्नादीनां देहेऽभावस्योक्तप्रायत्वात् चेष्टायाश्च प्रयत्नसाध्यत्वाच्चेष्टया प्रयत्नवानात्माऽनुमीयत इति भावः ।

प्रभा.

ना स्वतन्त्रकर्तृत्वस्यैवात्मनो निषिद्धत्वादिति भावः । पुरुषस्यैव कर्तृत्वमस्तु नच कारणत्वाभावेन कर्तृत्वाभावस्साधित इति वाच्यं स्वरूपासिद्धेः । नच कार्यकारणयोरभेदात् कार्यनाशे कार्यरूपतया तस्य नाशापत्त्या अकारणत्वमेवेति वाच्यं कार्यकारणयोरभेदस्यैवासिद्धत्वादित्यादियुक्तिसत्त्वे ग्रन्थविस्तरभिया नोक्तमित्याशयेन संक्षेप इत्युक्तमिति ध्येयम् ॥ तदाश्रयत्व इति ॥ धर्माधर्माश्रयत्व इत्यर्थः ॥ देहान्तरकृतकर्मणामिति ॥ देहान्तरे कृतानि कर्माणि यैरिति व्युत्पत्त्या देहान्तरावच्छेद्यकर्मविषयकसफलयत्नवतामित्यर्थः । देहान्तरावच्छेद्योत्पत्त्याश्रयादृष्टवतामिति यावत् ॥ देहान्तरेण देहान्तरावच्छेदेन ॥ भोगानुपपत्तेरिति ॥ सुखदुःखानुभवो न स्यादित्यर्थः । कार्यकारणयोस्सामानाधिकरण्याभावादिति भावः । अध्यक्षो विशेषगुणयोगत इति मूलेन विशेषगुणसंबन्धेनात्मनः प्रत्यक्षत्वमुक्तं तच्चायुक्तं अदृष्टसंबन्धेनात्मप्रत्यक्षाभावादतः विशेषगुणपदं योग्यविशेषगुणपरतया व्याकरोति ॥ मुक्तावल्यां योग्यविशेषेति ॥ यथाश्रुतमूलार्थदूषणमाह ॥ नत्विति ॥ तदेवोपपादयति ॥ अहं सुखीत्यादि ॥ इत्यादिप्रतीतेरिति ॥ इत्याद्याकारकयोग्यविशेषगुणप्रकारेणैवात्मप्रत्यक्षस्यानुभवसिद्धत्वादित्यर्थः ॥ ४९ ॥

परदेहादाविति ॥ आदिपदेन वीणादेः परिग्रहः ॥ प्रवृत्त्यादिनेति ॥ आदिपदेन पञ्चमादिस्वरादेः परिग्रहः । प्रवृत्तिसाधने प्रवृत्तेर्लिङ्गत्वासंभवात् प्रवृत्त्यनुमितेः पूर्वं प्रवृत्तेरज्ञानाच्च प्रवृत्तिशब्देनात्र लक्षणया प्रवृत्तिजन्यचेष्टैव ग्राह्या । तथाच इदं परकीयशरीरं अवच्छेदकतासंबन्धेन यत्नवत् चेष्टावत्त्वान्मच्छरीरवत् इयं परकीयवीणातन्त्री स्वप्रयोज्याभिघाताख्यसंयोगसंबन्धेन प्रयत्नवत् अवच्छेदकतासंबन्धेन पञ्चमादिस्वरवत्त्वादस्मदीयवीणातन्त्रीवत् अस्मदीयताल्वोष्ठादिवच्चेत्यनुमानेन प्रयत्नसिद्धौ तदाश्रयतया परात्मा सिध्यतीति भावः ॥ प्रवृत्तिरत्र चेष्टेति ॥ एतद्वाक्यघटकप्रवृत्तिपदलक्ष्यार्थश्चेष्टेत्यर्थः ॥ उक्तप्रायत्वादिति ॥ शरीरस्य न चैतन्यमित्यनेन ज्ञानाभावस्य उक्तत्वादिच्छादीनामभावस्य कण्ठतः अनुक्तेश्च प्रायपदं । पूर्वोक्तानुमाने अनुकूलतर्कमाह ॥ चेष्टायाश्चेति ॥ चशब्देन पूर्वो-

दिनकरीयम्.

भावेन कर्तृत्वाभाव एव साधनीय इति वाच्यं स्वरूपासिद्धेः । कार्यकारणयोरभेदात् कार्यनाशे कार्यरूपतया नाशः स्यादित्यकारणत्वं पुरुषस्येत्यपि न सत् कार्यकारणयोरभेदस्यैवासिद्धत्वादित्यादि विस्तरभिया नोक्तमित्यभिप्रायवानाह ॥ संक्षेप इति ॥ तदाश्रयत्वं धर्माधर्माश्रयत्वे ॥ अन्यथा विशेषगुणसम्बन्धादृते ॥ इत्यादिप्रतीतेरिति ॥ इत्यादौ ज्ञानादिसम्बन्धप्रकारेणैवात्मनः प्रत्यक्षस्यानुभवसिद्धत्वादित्यर्थः ॥ ४९ ॥

परकीयप्रवृत्त्यादेरतीन्द्रियत्वेन हेतुज्ञानासम्भवात् स्वरूपासिद्धेश्चाह ॥ प्रवृत्तिरत्रेति ॥ उक्तप्रायत्वादिति ॥ शरीरस्य न चैतन्यमित्यनेनोक्तत्वादित्यर्थः । इच्छादीनामभावस्य कण्ठरवेणानुक्तेः प्रायपदम् । चेष्टायाः प्रवृत्तिज्ञापकत्वेऽनुकूलतर्कमाह ॥ चेष्टायाश्चेति ॥ चेष्टयेति ॥ शरीरे समवायेन चेष्टानुमितस्यावच्छेदकतया प्रयत्नस्य समवायेनाश्रय आत्मैवेति भावः । दृष्टान्तासिद्धिमाशङ्क्य निराकरो-

रामरुद्रीयम्.

यम् ॥ स्वरूपासिद्धेरिति ॥ परकीयशरीरस्यैव पक्षतया तत्र प्रवृत्तिरूपहेतोरभावादिति भावः ॥ दृष्टा-

**अहङ्कारस्याश्रयोऽयं मनोमात्रस्य गोचरः ॥ ५० ॥**

अत्र दृष्टान्तमाह ॥ **रथेति** ॥ यद्यपि रथकर्म चेष्टा न भवति तथापि तेन कर्मणा सारथिर्यथाऽनुमीयते तथा चेष्टात्मकेन कर्मणा परात्माऽनुमीयत इति भावः ॥ **अहङ्कारस्येति** ॥ अहङ्कारोऽहमिति प्रत्ययः तस्याश्रयो विषय आत्मा न शरीरादिरिति ॥ **मन इति** ॥ मनोभिन्नेन्द्रियजन्यप्रत्यक्षाविषयः मानसप्रत्यक्षविषयश्चेत्यर्थः । रूपाद्यभावेनेन्द्रियान्तरायोग्यत्वात् ॥ ५० ॥

## प्रभा.

रूपचमादिस्वरूपहेतुस्समुच्चीयते । अत्रान्यदीयक्रियाविशेषवत्त्वादिहेतुना परात्मसमवेतप्रवृत्त्यनुमितौ दृष्टान्तमाह ॥ **मूले रथगत्येति** ॥ ननु एकधर्मावच्छिन्नलिङ्गेन तत्र यथा एकधर्मावच्छिन्नविधेयकानुमितिः तथात्रापीति दृष्टान्तो वाच्यः । यथा घटे पृथिवीत्वेन द्रव्यत्वानुमितिस्तथा पटेऽपि तेन तस्यानुमितिस्संभवतीति पक्षभेदमात्रं पुरस्कृत्यानुमितिदृष्टान्तेनानुमितिसमर्थनमनुभवसिद्धं । प्रकृते च प्रयत्नवत्त्वावच्छिन्नसाध्यस्यैकत्वेऽपि रथगमनस्य चेष्टात्वरूपहेतुतावच्छेदकानाश्रयत्वेन भिन्नहेतुकत्वादेतादृशानुमितेर्दृष्टान्तत्वन्नोपपद्यत इत्यभिप्रायेण शङ्कते ॥ **मुक्तावल्यां यद्यपीति** ॥ अत्र रथक्रियायास्साक्षात्प्रयत्नाजन्यत्वेन चेष्टत इति प्रतीतिसिद्धचेष्टात्वजातेस्तत्राभावेऽपि तादृशक्रियायाः प्रयत्नप्रयोज्यत्वेन हितप्राप्त्यहितपरिहारानुकूलत्वस्य चेष्टायामिवात्रापि सत्त्वेन तादृशानुकूलत्वविशिष्टकर्मत्वेन रथक्रियाचेष्टान्यतरत्वेन वा उभयोर्हेतुत्वं संभवतीत्यभिप्रायेण परिहरति ॥ **तथापीत्यादिना** ॥ इदमुपलक्षणं । वीथ्यां कोलाहल इति सर्वेषामनुभवात् अवच्छेदकतासंबन्धेन कोलाहलात्मकशब्दलिङ्गेन वीथ्यां पुरुष इत्यनुमानं द्वितीयानुमाने दृष्टान्तो बोध्यः । उक्तार्थमुपसंहरति ॥ **मूले अहङ्कारस्याश्रयोऽयमिति** ॥ तस्मादित्यादिः । तस्माच्छरीरादीनां कर्तृत्वासंभवात् ॥ **अहङ्कारस्याहमिति** प्रत्ययस्याश्रयः विषय इत्यर्थः । तथाचात्मन एव कर्तृत्वादहमिति शब्दबोध्योऽपि आत्मैवेति भावः । उक्तार्थमेव प्रकटयति ॥ **न शरीरादिरिति** ॥ **मनोभिन्नेन्द्रियेति** ॥ तादृशप्रत्यक्षनिरूपितलौकिकविषयताशून्य इत्यर्थः । तेनायं घटो मया ज्ञात इति चाक्षुषविषयत्वमादाय न दोषः चाक्षुषस्पार्शनान्यतरनिरूपितलौकिकविषयताशून्य इति फलितोऽर्थः । तेनेन्द्रियत्वस्य एकस्याभावेन इन्द्रियजन्यप्रत्यक्षाप्रसिद्ध्या तदीयलौकिकविषयत्वाभावाप्रसिद्धिरिति दूषणस्य नावकाशः ॥ **मानसप्रत्यक्षविषय इति** ॥ मानसत्वावच्छिन्ननिरूपितलौकिकविषयतावानित्यर्थः । तेन गगनादेरपि मानसोपनीतभानविषयत्वेन निरुक्तसत्यन्तदळसत्त्वेन च तस्यापि मनोमात्रगोचरत्वव्यवहारापत्तिरिति दूषणस्य नावकाशः । नच गौरवात्प्रयोजनाभावाच्च लौकिकविषयतायां मानसत्वावच्छिन्ननिरूपितत्वनिवेशनं व्यर्थं सत्यन्तदळविरहेणैवान्यत्र तादृशव्यवहारापत्त्यप्रसक्तेरिति वाच्यं इष्टापत्तेः। यद्यपि विशेष्यदळं व्यर्थं अध्यक्षो विशेष इत्यादिपूर्वग्रन्थेनात्मनो मानसप्रत्यक्षप्रतिपादनात् तथापि मनोमात्रस्य गोचर इति कारिकाया अपि इतरेन्द्रियाग्राह्यत्वबोधन एव तात्पर्यं नतु मनोग्राह्यत्वबोधनेऽपि । अत एव मुक्तावल्यां रूपाद्यभावेनेन्द्रियान्तरायोग्यत्वनियामकरूपाद्यभाववत्त्वप्रदर्शनं मानसविषयत्वनियामकज्ञानादिमत्त्वस्याप्रदर्शनं च सङ्गच्छत इति हृदयम् ॥ ५० ॥

## दिनकरीयम्.

ति ॥ **यद्यपीति** ॥ तथा चोत्तरसंयोगप्रासियोग्यक्रियावत्त्वस्यैव हेतुत्वमिति भावः । आत्मनो मनोमात्रजन्यज्ञानविषयत्वे हेतुमाह ॥ **रूपाद्यभावेनेति** ॥ ५० ॥

## रामरुद्रीयम्.

**त्वासिद्धिमिति** ॥ शरीरमिदं चेतनाधिष्ठितं चेष्टावत्त्वाद्रथवदित्यनुमाने चेतनाधिष्ठितत्वं चेतनप्रयुक्तक्रियावत्त्वमेव तस्य दृष्टान्तरथे सत्त्वेऽपि चेष्टारूपहेतोरभावात् शरीरक्रियायामेव चेष्टात्वाङ्गीकारादिति भावः ॥ ५० ॥

विभुर्बुद्ध्यादिगुणवान् बुद्धिस्तु द्विविधा मता ।
अनुभूतिः स्मृतिश्च स्यादनुभूतिश्चतुर्विधा ॥ ५१ ॥

**विभुरिति** ॥ विभुत्वं परममहत्परिमाणवत्त्वम् । तच्च पूर्वमुक्तमपि स्पष्टार्थमुक्तम् ॥ **बुद्ध्यादिगुणवानिति** ॥ बुद्धिसुखदुःखेच्छादयश्चतुर्दशगुणाः पूर्वमुक्ता वेदितव्याः । अत्रैव प्रसङ्गात्कतिपयं बुद्धेः प्रपञ्चं दर्शयति ॥ **बुद्धिस्त्विति** ॥ द्वैविध्यं व्युत्पादयति ॥ **अनुभू-**

## प्रभा.

नन्वात्मनः प्रत्यक्षमनुपपन्नं महत्त्वाभावादत आह ॥ **मूले विभुरिति** ॥ ननु प्रत्यक्षे विभुत्वस्याहेतुतया आत्मनो विभुत्वकथनं प्रकृतानुपयुक्तमत आह ॥ **मुक्तावल्यां विभुत्वं परममहत्त्वमिति** ॥ तथाच मूलस्थविभुशब्दः महत्त्वावच्छिन्नलाक्षणिक इति भावः । ननु कालखात्मदिशां सर्वगतत्वं परमं महदिति ग्रन्थेनात्मनः परममहत्त्वस्य प्रतिपादितत्वात् पौनरुक्त्यमत आह ॥ **तच्चेति** ॥ परममहत्त्वं चेत्यर्थः ॥ **स्पष्टार्थमिति** ॥ तथाचात्मनि परममहत्त्वोपस्थितिं विनोक्तशङ्कायाः अपरिहारात् झटिति तदुपस्थित्यर्थं पुनरुक्तिरिति भावः ॥ **पूर्वमुक्ता इति** ॥ साधर्म्यप्रकरणे बुद्ध्यादिषट्कं संख्यादिपञ्चकं भावना तथा इत्यादिना उक्ताश्चतुर्दश गुणा इत्यर्थः ॥ **वेदितव्या इति** ॥ बुद्ध्यादिगुणवानित्यत्रादिशब्देन ग्राह्या इत्यर्थः ॥ इति प्रत्यक्षपरिच्छेदे द्वितीयपरिच्छेदः समाप्तः ।

ननु आत्मनिरूपणप्रस्तावे बुद्धेर्द्वैविध्यकरणमसङ्गतमित्याशङ्कां सङ्गतिप्रदर्शनेन परिहरति ॥ **मुक्तावल्यामत्रैवेति** ॥ आत्मनिरूपणप्रकरण एवेत्यर्थः ॥ **प्रसङ्गादिति** ॥ स्मृतस्य उपेक्षानर्हत्वरूपप्रसङ्गसङ्गतिवशादित्यर्थः । अप्रमा च प्रमा चेति ज्ञानं द्विविधमिष्यते इत्यनेन अप्रमात्वप्रमात्वाभ्यां बुद्धेर्विभागस्याग्रे करणीयतया सर्वधर्मैः प्रकृते बुद्धेर्विभागाभावात् कतिपय इत्युक्तं । अत्र प्रपञ्चशब्दो धर्मपरः कतिपयशब्दश्च ईषत्परः तस्याभेदेन धर्मेऽन्वयः तस्य धात्वर्थेऽन्वयः । तथाच बुद्धिविशेष्यकेषदभिन्नावान्तरधर्मप्रकारकज्ञानजनकशब्दानुकूलकृतिमानिति बोध इति ध्येयम् । अनुभवं विभजते ॥ **मूले अनुभूति-**

## दिनकरीयम्.

कालखात्मदिशां सर्वगतत्वं परमं महदित्यनेनात्मनि परममहत्त्वस्योक्तेः पौनरुक्त्यमाशङ्क्याह ॥ **तच्चेति** ॥ **पूर्वमुक्ता इति** ॥ बुद्ध्यादिषट्कं संख्यादिपञ्चकं भावना तथा । धर्माधर्मौ गुणा एते आत्मनः स्युश्चतुर्दश इत्यनेन साधर्म्यप्रकरणे कथिता इत्यर्थः ॥ इति श्रीभारद्वाजकुलोद्भवबालकृष्णभट्टतनूद्भवमहादेवभट्टकृतौ मुक्तावलीप्रकाशे द्वितीयः परिच्छेदः ॥

मूले बुद्धिस्तु द्विविधा मता अनुभूतिः स्मृतिश्च तत्रानुभूतिः प्रत्यक्षात्मिकैवेति चार्वाकाः । अनुमितिरपीति कणादसुगतौ । उपमितिरपीति केचिन्नैयायिकैकदेशिनः । अर्थापत्तिरपीति प्राभाकराः । अनुपलब्धिरपीति भाट्टा वेदान्तिनश्च । सम्भवैतिह्यरूपे अपीति पौराणिकाः । तत्सर्वमयुक्तमिति सूचयितुमनुभूतेश्चातुर्विध्यमाह ॥ **अनुभूतिश्चतुर्विधेति** ॥ अनुमिनोमि उपमिनोमि शाब्दयामीति प्रतीतिसिद्धानामनुमित्यादीनां दुर्वारतया चार्वाकाद्युदितमयुक्तम् । अर्थापत्तेश्चानुमितावेवान्तर्भावो व्यतिरेकिग्रन्थे व्यक्तीभवि-

## रामरुद्रीयम्.

**अर्थापत्तिरपीति** ॥ पीनो देवदत्तो दिवा न भुङ्क्ते इति ज्ञानानन्तरं पीनत्वान्यथानुपपत्त्या रात्रिभोजनं कल्पयति इयमर्थापत्तिरित्यर्थः ॥ **अनुपलब्धिरपीति** ॥ अभावे कॢप्तसन्निकर्षाभावेन प्रत्यक्षासम्भवात्तद्ग्रहार्थं प्रतियोग्युपलम्भाभावस्य प्रमाणत्वं परिकल्प्य तज्जन्यैवाभावप्रतीतिरिति भाट्टा वेदान्तिनश्चेत्यर्थः ॥ **सम्भवैतिह्यरूपे अपीति** ॥ शतमस्तीति ज्ञानानन्तरं शतं पञ्चाशद्घटितमिति ज्ञानात्पञ्चाशदस्तीति सम्भवानुभवः इह वटे यक्षस्तिष्ठतीत्यज्ञातमूलवक्तृकवाक्याज्जायमानोऽनुभव ऐतिह्यम् । नचायं शाब्दानुभवः आप्तोक्तत्वेन निश्चितशब्दस्यैव तत्करणत्वेन तदभावादिति भावः । नन्वनुभूतिश्चतुर्विधेति वाङ्मात्रेण कथं न्यूनाधिकसङ्ख्यानिरास इत्याशङ्क्य स्वयं युक्तिमाह ॥ **अनुमिनोमीत्यादि** ॥ अभाव एवान्तर्भाव

**तिरिति** ॥ एतासां चतसृणां करणानि चत्वारि प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानीति सूत्रोक्तानि वेदितव्यानि। इन्द्रियजन्यं ज्ञानं प्रत्यक्षम्। यद्यपि मनोरूपेन्द्रियजन्यं सर्वमेव ज्ञानं तथापीन्द्रियत्वेन रूपेणेन्द्रियाणां यस्मिन् ज्ञाने करणत्वं तत्प्रत्यक्षमिति विवक्षितम्। ईश्वरप्र-

## प्रभा.

**श्चतुर्विधेति** ॥ ननु चार्वाकमते प्रत्यक्षस्यैव अनुभवरूपतया कणादसुगतमते प्रत्यक्षानुमित्योरेवानुभवरूपतया एकदेशिमते प्रत्यक्षादित्रयाणामेवानुभवरूपतया प्राभाकरमते अर्थापत्त्या सह पञ्चानामपि तत्स्वरूपतया भट्टमते वेदान्तिमते चानुपलब्ध्या सह षण्णामपि तत्स्वरूपतया पौराणिकमते संभवैतिह्याभ्यां सह प्रमित्यष्टकस्यापि तत्स्वरूपतया च तत्सर्वमुपेक्ष्य चतुर्धा विभागकरणमयुक्तमिति चेन्न अनुमिनोमि उपमिनोमि शाब्दयामि इत्यनुभवसिद्धानुमितित्वादिजात्यवच्छिन्नप्रमितीनां दुर्वारतया चार्वाकादिमतं न युक्तिसहं अर्थापत्तिप्रमितेः अर्थापत्तिस्तु नैवेहेत्यादिना व्यतिरेकिग्रन्थे अनुमितावन्तर्भावनीयतया अनुपलब्धेस्तु अभावान्तर्भूतत्वेन संभवप्रमितेरनुमित्यन्तर्गतत्वेनैतिह्यस्य शाब्दप्रमित्यन्तर्गतत्वेन च प्राभाकरादिमतमयुक्तमनुभूतेश्चतुर्धा विभागकरणस्यैव युक्तत्वात्। विभागवाक्यात्प्रथमोपस्थितं प्रत्यक्षमादौ लक्षयति ॥ **मुक्तावल्यामिन्द्रियजन्यमिति** ॥ तत्र इन्द्रियजन्यत्वमिन्द्रियनिष्ठव्यापारसंबन्धावच्छिन्नकारणतानिरूपितकार्यत्वं नातः कालोपाधितया चक्षुरादिजन्यत्वमादायानुमित्यादावतिव्याप्तिरेवंच सति चक्षुरादिध्वंसे चक्षुरादिसन्निकर्षे वा तादृशजन्यत्वाभावादेवातिव्याप्तिवारणे ज्ञानत्वविशेषणं व्यर्थमिति चेदिष्टमेव। जन्यताविशेषलाभायैव ज्ञानत्वोपादानं। न चैवं सति इच्छादेरपि संयोगेन मनोजन्यत्वेनातिव्याप्तिरिति वाच्यं तत्र मनसः कारणत्वे मानाभावादात्ममनस्संयोगस्यैव तत्रासमवायिकारणत्वेन मनसस्संयोगसंबन्धेन कारणत्वस्य केनाप्यनङ्गीकृतत्वात् ननु उक्तलक्षणमनुमित्यादावतिव्याप्तमित्याक्षिपति ॥ **यद्यपीति** ॥ **सर्वमेव ज्ञानमिति**॥ जन्यज्ञानसामान्यमित्यर्थः॥ **इन्द्रियत्वेनेति** ॥ न च ज्ञानकारणमनस्संयोगाश्रयत्वघटितेन्द्रियत्वस्य चक्षुरादिव्यक्तिभेदेन भिन्नतया अननुगतत्वात् कथं कारणतावच्छेदकत्वमिति वाच्यं इन्द्रियत्वस्य ज्ञानकारणमनस्संयोगाश्रयरूपस्य चक्षुरादिभेदेन भिन्नत्वेऽपि तादृशसंयोगेषु तत्कारणतावच्छेदकतया नोदनत्वव्याप्यजातिविशेषमङ्गीकृत्य तादृशवैजात्यावच्छिन्नावच्छेदकतानिरूपितेन्द्रियनिष्ठकारणतानिरूपितकार्यत्वं प्रत्यक्षलक्षणमिति फलितम्। एवंच जन्यज्ञानमात्रे मनसस्संयोगसंबन्धेन मनस्त्वेन कारणत्वेऽपि चक्षुरादिनिष्ठसंयोगसाधारणतादृशवैजात्यपुरस्कारेण मनस्संयोगस्य जन्यज्ञानसामान्यं प्रति मनसः हेतुत्वे मानाभावान्न तत्रातिव्याप्तिरित्यपरे। अन्ये तु इन्द्रियत्वेनेति। सन्निकर्षषट्कान्यतमत्वेनेत्यर्थः। संयोगभिन्नव्यापारसंबन्धेनेति यावत्। तथाच संयोगभिन्नव्यापारसंबन्धावच्छिन्नेन्द्रियनिष्ठकारणतानिरूपितकार्यत्वं संयोगापर्याप्तसंसर्गतानिरूपितेन्द्रियनिष्ठकारणतानिरूपितकार्यत्वं वा पर्यवसितं प्रत्यक्षलक्षणमिति फलितं। एवं चाहं सुखीत्यादिमानसप्रत्यक्षस्य संयुक्तसमवायजन्यत्वाद्गन्धादिप्रत्यक्षस्यापि तादृशत्वाच्छ्रावणप्रत्यक्षस्य च समवायजन्यत्वाच्च लक्षणसमन्वयः। जन्यज्ञानस्य संयोगरूपव्यापारजन्यत्वे मानाभावान्ना

## दिनकरीयम्.

व्यति। अनुपलब्धेस्त्वभाव एवान्तर्भावः अन्यासां च यथायथमनुमित्यादावन्तर्भावः उद्दिष्टासु प्रमासु प्रथमोपस्थितत्वात् प्रत्यक्षं लक्षयति ॥ **मुक्तावल्यामिन्द्रियजन्यमिति** ॥ इन्द्रियजन्यत्वमिन्द्रियरूपादावप्यस्त्यतो ज्ञानमिति। अनुमित्यादावतिव्याप्तिवारणायेन्द्रियजन्यमिति। इन्द्रियजन्यत्वविशेषणे दत्तेऽप्यनुमित्यादावतिव्याप्तिस्तदवस्थेत्याशङ्कते ॥ **यद्यपीति** ॥ नन्विन्द्रियजन्यत्वाभावादीश्वरप्रत्यक्षेऽव्याप्तिरत आह ॥ **ईश्व-**

## रामरुद्रीयम्.

**इति** ॥ उपलब्ध्यभाव एवानुपलब्धिर्नतु प्रमितिः विशेषणतासन्निकर्षेणाभावज्ञानं प्रत्यक्षात्मकमेवेति भावः॥ **यथायथमिति** ॥ सम्भवस्यानुमितावैतिह्यस्य शब्दे अन्तर्भाव आप्तोक्तत्वसन्देहादप्रामाण्यज्ञानास्कन्दितः स इति भावः ॥ **इन्द्रियरूपादावपीति** ॥ इदं च यथाश्रुताभिप्रायेण। वस्तुतो मनोरूपेन्द्रियजन्यानुमित्यादावतिव्याप्तिवारणाय इन्द्रियत्वावच्छिन्नजनकतानिरूपितजन्यताविवक्षणस्यावश्यकतया ज्ञानपदं स्व-

**त्यक्षं तु न लक्ष्यम् । इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मकं**

## प्रभा.

तिव्याप्तिरित्याहुः अस्मद्गुरुचरणास्तु जन्यज्ञानत्वावच्छिन्नं प्रति आत्ममनस्संयोगत्वेन असमवायिकारणत्वे माना-भावः सुखःद्यवच्छिन्नं प्रत्यपि तेन रूपेणासमवायिकारणत्वस्यावश्यकतया सुखाद्युत्पत्तिकाले ज्ञानोत्पत्त्यापत्तेः। नच जन्यज्ञानादिनिरूपितासमवायिकारणतावच्छेदकतया सिद्धानेकवैजात्यं स्वीकृत्य तत्तद्वैजात्यपुरस्कारेण म-नस्संयोगस्य जन्यज्ञानादिहेतुत्वस्वीकारात् न पूर्वोक्तापत्तिरिति वाच्यं तथा सति अनन्तवैजात्यकल्पनागौरव-प्रसङ्गात् । तस्मात् यादृशमनस्संयोगव्यक्त्युत्तरं ज्ञानव्यक्तिर्वा सुखादिव्यक्तिर्वा जायते तत्तद्व्यक्तित्वावच्छिन्नं प्रति तत्तन्मनस्संयोगव्यक्तित्वेनासमवायिकारणत्वं वाच्यं । नचैवं सत्यनन्तकार्यकारणभावप्रसङ्ग इति वा-च्यं सामान्यकार्यकारणभावस्य दोषसहस्रग्रस्तत्वात् विशेषकार्यकारणभावस्यापि सर्वमतेऽप्यावश्यकतया तादृशगौरवस्य प्रामाणिकत्वात् । एवंच मानसत्वावच्छिन्नं प्रत्येवात्ममनस्संयोगत्वेन हेतुतया व्यापार-तावच्छेदकधर्मावच्छिन्नसंसर्गतानिरूपितेन्द्रियनिष्ठकारणतानिरूपितकार्यत्वं प्रत्यक्षलक्षणमिति परिष्करणीय-मिति न कुत्राप्यतिव्याप्तिः । अथवा इन्द्रियत्वेनेति ॥ इन्द्रियत्वादिव्याप्यघ्राणत्वादिनेत्यर्थः ॥ **यस्मिन् ज्ञा-ने करणत्वमिति** ॥ यज्ज्ञात्यवच्छिन्ने करणत्वमित्यर्थः ॥ **तत्प्रत्यक्षमिति** ॥ तत्तज्जात्यन्यतमविशिष्टं प्रत्यक्षमित्यर्थः । तथाच घ्राणत्वाद्यन्यतमावच्छिन्नव्यापारसंबन्धावच्छिन्नकारणतानिरूपितकार्यतानिरूपित-समवायातिरिक्तसंबन्धानवच्छिन्नावच्छेदकताश्रयजातिमत्त्वं फलितं एवंच जन्यज्ञानत्वावच्छिन्नं प्रति मनस्संयो-गत्वेनासमवायिकारणत्वेऽपि जन्यज्ञानत्वस्योपाधिरूपतया तन्निष्ठतत्कार्यतावच्छेदकतायास्समवायसंबन्धानव-च्छिन्नत्वात् जन्यज्ञानत्वस्य कालिकसमवायोभयसंबन्धेन ज्ञानत्ववत्त्वेऽपि तन्निष्ठकार्यतावच्छेदकतायाः तादृ-शोभयसंबन्धावच्छिन्नत्वेन समवायातिरिक्तसंबन्धानवच्छिन्नत्वाभावात् न पूर्वोक्तातिव्याप्तिरिति विश्वनाथप-ञ्चाननस्य निगूढाभिप्राय इति व्याचक्रुरिति दिक् । नन्विदं लक्षणमीश्वरप्रत्यक्षे अव्याप्तमत आह ॥ **ई-श्वरप्रत्यक्षं त्विति** ॥ ईश्वरप्रत्यक्षस्यालक्ष्यत्वे अनिर्भरसूचनाय तुशब्दः अनास्थायां ॥ **न लक्ष्यमि-**

## दिनकरीयम्.

**श्वरप्रत्यक्षं त्विति** ॥ तथा च जन्यप्रत्यक्षमेव लक्ष्यमिति भावः । ननु तस्यैव लक्ष्यत्वे किं मानमत आह ॥ **इन्द्रियार्थेति** ॥ इन्द्रियार्थसन्निकर्षोत्पन्नमित्यनेनेश्वरप्रत्यक्षमनुमित्यादि च व्यावर्त्यते । भ्रमवारणाय **अव्यभिचारीति** ॥ भ्रमभिन्नमित्यर्थः । एतावता प्रत्यक्षप्रमाया लक्षणमुक्तं । तद्विभागमाह ॥ **अव्यपदेश्यमिति** ॥ निर्विकल्पकमित्यर्थः । नच अव्यपदेश्यपदेन कथं निर्विकल्पकलाभ इति वाच्यम् । व्यपदेशः पदवाच्यत्वं तदविषयकमित्यर्थात् विशिष्टज्ञाने तत्तत्पदवाच्यत्वमुपनीतं भासते इति प्राचीनमता-नुसारित्वात् । अत एव कणादं कणादनामानं मुनिमित्यादि तत्र तत्रोक्तं सङ्गच्छते । यद्वा व्यपदेशः श-ब्दप्रयोगः स च विशिष्टज्ञानादेवेत्यव्यपदेश्यत्वेन व्यपदेशानर्हत्वेन निर्विकल्पकलाभः ॥ **व्यवसायात्मक-**

## रामरुद्रीयम्.

रूपकीर्तनमेवेति बोध्यम् । अनुमित्यादावित्यादिनोपमित्यादिपरिग्रहः । ननु सूत्रे अव्यभिचारिपदवैयर्थ्यमि-त्याशङ्कयाह ॥ **भ्रमेति** ॥ ननूक्तलक्षणस्य प्रत्यक्षभ्रमेऽव्याप्तिरित्यत आह ॥ **एतावतेति** ॥ तथा च प्रत्य-क्षप्रमाया लक्ष्यतया भ्रमस्यालक्ष्यत्वान्न तत्राव्याप्तिरिति भावः । न चैवं मूलोक्तलक्षणस्य भ्रमेऽतिव्याप्ति-स्तस्यापि लक्ष्यत्वाभ्युपगमे च सूत्रानुसारिता न स्यादिति वाच्यम् । ज्ञानपदस्य मूलस्थलक्षणे प्रमापरत्वादत एव न तद्वैयर्थ्यमिति भावः ॥ **तदविषयकमिति** ॥ पदवाच्यत्वाविषयकमित्यर्थः । नन्वयं घट इत्यादि-विशिष्टज्ञानस्यापि पदवाच्यत्वाविषयकत्वान्निर्विकल्पकविभाजकधर्मस्य विशिष्टज्ञानसाधारण्यादसङ्गतिरित्यत आह ॥ **विशिष्टज्ञान इति** ॥ तथा चायं घटपदवाच्य इत्यादिरेव विशिष्टज्ञानाकार इति भावः । एतत्क-ल्पे व्यपदेश्यपदे विषयः प्रत्ययार्थः । नवीनमतमनुसृत्याह ॥ **यद्वेति** ॥ एतत्कल्पे तु अर्ह एव प्रत्ययार्थ इति भावः । अनुव्यवसायभिन्नज्ञानमात्रस्यैव व्यवसायत्वेन निर्विकल्पकसाधारणं व्यवसायत्वमत आह ॥ **विशिष्टेति** ॥ इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मकमिति सूत्रयोजनमाह ॥

प्रत्यक्षमिति सूत्रे तथैवोक्तत्वात् । अथवा ज्ञानाकरणकं ज्ञानं प्रत्यक्षम् । अनुमितौ व्याप्तिज्ञानस्य

## प्रभा.

ति ॥ उक्तलक्षणलक्ष्यतया तात्पर्याविषय इत्यर्थः । तथाच जन्यप्रत्यक्षत्वस्यैवैतल्लक्षणलक्ष्यतावच्छेदकतया नाव्याप्तिरिति भावः । उक्तार्थे सूत्रं प्रमाणयति ॥ इन्द्रियार्थेति ॥ सन्निकर्षषट्कान्यतमजन्यमित्यर्थः । तेनेश्वरप्रत्यक्षस्यानुमित्यादेश्च व्युदासः भ्रमवारणायाव्यभिचारीति । भ्रमाभिन्नमित्यर्थः । प्रत्यक्षप्रमाया लक्षणमुक्त्वा तद्विभागमाहाव्यपदेश्यमिति । व्यपदेशशब्दप्रयोगः । सच विशिष्टज्ञानादेवेति व्यपदेश्यशब्देन विशिष्टज्ञानलाभे शब्दप्रयोजकान्यज्ञानत्वरूपाव्यपदेश्यत्वेन निर्विकल्पकलाभः ॥ व्यवसायात्मकमिति ॥ विशिष्टज्ञानात्मकमित्यर्थः । एवंच सूत्रे इन्द्रियार्थसन्निकर्षोत्पन्नमव्यभिचार्यव्यपदेश्यं व्यवसायात्मकमिति योजना बोध्या अन्यथा लक्षणप्रतिपादकवाक्यजातस्य विभागबोधकपदेन व्यवधानादसङ्गतेरिति ॥ तथैवोक्तत्वादिति ॥ ईश्वरप्रत्यक्षालक्ष्यत्वस्यैवाभिप्रेतत्वलाभादित्यर्थः । सूत्रस्थप्रत्यक्षपदस्य जन्यप्रत्यक्षलाक्षणिकत्वादिति भावः । ननु सूत्रे इन्द्रियार्थसन्निकर्षोत्पन्नमिति सावधारणं तादृशसन्निकर्षोत्पन्नमेवेत्यर्थः । इन्द्रियकरणकमेवेति यावत् । एवकारेण ज्ञानकरणकभिन्नत्वलाभः । तथाच ज्ञानाकरणकज्ञानत्वं प्रत्यक्षलक्षणमिति लक्षणवाक्यतात्पर्यार्थः । एवंच सूत्रस्थप्रत्यक्षपदस्य मुख्यार्थपरत्वेऽपि बाधकाभावाल्लक्षणाकल्पनमनुचितमित्यभिप्रायेणाह ॥ अथवेति ॥ ज्ञानाकरणकमिति ॥ ज्ञानं करणं यस्येति व्युत्पत्त्या ज्ञानकरणकाभिन्नत्वमित्यर्थः । ज्ञानशब्देन ज्ञानत्वन्यूनवृत्तिजात्यवच्छिन्नं बोध्यते । तथाच तादृशजातेः ज्ञानकरणकभिन्नत्वस्य च सामानाधिकरण्यलाभादित्यर्थः । सूत्रस्थप्रत्यक्षपदस्य जन्यप्रत्यक्षालाक्षणिकत्वादिति भावः । ज्ञानकरणकभिन्नत्वसमानाधिकरणज्ञानत्वन्यूनवृत्तिजातिमत्त्वं प्रत्यक्षलक्षणमिति फलितं । ज्ञानत्वन्यूनवृत्तिजातौ ज्ञानकरणकाभिन्नत्वसमानाधिकरणत्वं ज्ञानकरणकत्वव्यभिचारित्वमेव तद्वदन्यवृत्तित्वस्यैव तद्व्यभिचारित्वपदार्थत्वात् । एवंच ज्ञानकरणकत्वव्यभिचारिज्ञानत्वन्यूनवृत्तिजातिमत्त्वं प्रत्यक्षलक्षणं पर्यवसन्नमिति न काप्यनुपपत्तिः । ज्ञानकरणकत्वं च ज्ञाननिष्ठव्यापारसंबन्धावच्छिन्नकारणतानिरूपितकार्यत्वमेव । तल्लक्षणघटकदलप्रयोजनानि सुधीभिरूह्यानीति हृदयम् । इदमुपलक्षणं । नित्यवृत्त्यनुभवविभाजकधर्मवत्त्वं लौकिकविषयत्वसमानाधिकरणानुभवविभाजकधर्मवत्त्वं वा ईश्वरप्रत्यक्षसाधारणं लघुरूपं प्रत्यक्षलक्षणमिति बोध्यं तेन मनसः अणुमानत्वनये ज्ञानाकरणकत्वघटितप्रत्यक्षलक्षणमनुमित्यादावतिव्याप्तमिति दूषणस्य नावकाशः । ज्ञानाकारणकत्वघटितलक्षणस्यानुमित्यादावतिव्याप्तिं वारयति ॥ अनुमित्यादावित्यादि ॥ पूर्वलक्षण-

## दिनकरीयम्.

मिति ॥ विशिष्टव्यवसायात्मकमित्यर्थः । विशिष्टज्ञानात्मकमिति यावत् । एवं च सूत्रे इन्द्रियार्थसन्निकर्षोत्पन्नमव्यभिचारि अव्यपदेश्यं व्यवसायात्मकमिति योजना बोध्या । अन्यथा लक्षणवाक्ये विभागबोधकपदेन व्यवधानादसङ्गतेरिति ॥ तथैवोक्तत्वादिति ॥ ईश्वरप्रत्यक्षालक्ष्यत्वस्यैवाभिप्रेतत्वादित्यर्थः । ईश्वरप्रत्यक्षस्यापि लक्ष्यत्वमाभिप्रेत्याह ॥ अथवेति ॥ ज्ञानाकरणकमिति ॥ ज्ञानाजन्यमित्युक्तौ चाव्याप्तिः विशिष्टज्ञानमात्रस्य विशेषणज्ञानजन्यत्वादतो ज्ञानाकरणकमिति । अनुमित्यादौ व्याप्त्यादिज्ञानस्य करणत्व-

## रामरुद्रीयम्.

एवं चेति ॥ नन्वीश्वरप्रत्यक्षं तु न लक्ष्यमित्युक्त्वा सूत्रे तथैवोक्तत्वादिति मूलकारोक्तिरसङ्गता उक्तसूत्रे ईश्वरप्रत्यक्षालक्ष्यताया अनभिधानादतस्तदर्थमाह ॥ ईश्वरेति ॥ ननु जन्यप्रत्यक्षप्रमाणलक्षणस्य सूत्रकारोक्तावपि प्रत्यक्षप्रमासामान्यलक्षणं किमिति शिष्यजिज्ञासया प्रत्यक्षप्रमासामान्यलक्षणं वक्तव्यमेवेत्यस्वरसाल्लक्षणान्तरमवतारयति ॥ ईश्वरेति ॥ अव्याप्तिरिति ॥ निर्विकल्पकस्य ज्ञानाजन्यतया लक्षणस्य तत्र सत्त्वेन विशिष्टज्ञानमात्रेऽव्याप्तिरित्यर्थः । नच निर्विकल्पकस्यापि ईश्वरज्ञानजन्यतया असंभव एव वक्तुमुचित इति वाच्यं । एवमपि ईश्वरप्रत्यक्षे लक्षणसमन्वयस्यावश्यकत्वात् । अव्याप्तौ हेतुमाह ॥ विशिष्टेति ॥ जन्येत्यादिस्तेनेश्वरविशिष्टज्ञानस्य विशेषणज्ञानाजन्यत्वेऽपि न कृत्स्नार्थकमात्रपदासङ्गतिः । यत्त्वीश्वरज्ञानं निर्विकल्पकमेवेति तदसत् कार्यमात्रं प्रत्यन्वयव्यतिरेकाभ्यां लोके विशिष्टज्ञानस्यैव कारणत्वावधारणात् विशिष्टज्ञानस्यैवेश्वरे सकर्तृकत्वा-

उपमितौ सादृश्यज्ञानस्य शाब्दबोधे पदज्ञानस्य स्मृतावनुभवस्य करणत्वात्तत्र नातिव्याप्तिः इदं लक्षणमीश्वरप्रत्यक्षसाधारणम् । परामर्शजन्यं ज्ञानमनुमितिः । यद्यपि परामर्शप्रत्यक्षा-

**प्रभा.**

वत् एतल्लक्षणमीश्वरप्रत्यक्षे नाव्याप्तमित्याह ॥ **इदं लक्षणमित्यादि** ॥ क्रमप्राप्तामनुमितिं लक्षयति ॥ **परामर्शजन्यं ज्ञानमिति** ॥ यद्यपि परामर्शप्रत्यक्षेऽतिव्याप्तिः । नच परामर्शनिष्ठसमवायसंबन्धा-

**दिनकरीयम्.**

मस्त्येवेति नानुमित्यादावतिव्याप्तिः । अकरणकत्वादेव चेश्वरज्ञानसङ्ग्रहः । अथ निदिध्यासनद्वारा मनना-दिज्ञानकरणके योगिप्रत्यक्षे लक्षणमिदमव्यापकमिति चेन्न । ज्ञानाकरणकपदेन ज्ञानत्वगर्भधर्मावच्छिन्नकरण-कत्वाभावस्य विवक्षितत्वात् । नचेदं योगिप्रत्यक्षाव्यापकं श्रवणादिप्रतिपत्तीनां शाब्दत्वादिनैव जनकत्वेन विशिष्टाभावसत्त्वादिति । अथवा ज्ञानकरणकत्वाव्यभिचारिजातिशून्यज्ञानत्वमिह विवक्षितं तादृशी च जा-तिरनुमितित्वादिरेव । एतेनानुमित्यादौ व्याप्तिज्ञानादेर्ज्ञानत्वेन करणतानये ज्ञानत्वघटितकरणतावच्छेदकध-र्माप्रसिद्ध्याऽसम्भवोऽपि प्रत्युक्त इति । व्याप्तिज्ञानस्येति षष्ठ्यन्तचतुष्टयस्य करणत्वमित्यनेनान्वयः नच स्म-रणात्मकपरामर्शस्थले व्याप्तिज्ञानस्य करणत्वासम्भव इति वाच्यम् । तत्र व्याप्तिज्ञानस्य संस्कारद्वारा हेतुत्वा-त् । नच ज्ञानपदस्य सविषयकपरत्वमेवास्तां किं व्याप्तिज्ञानस्य संस्कारद्वारा तत्र हेतुत्वकल्पनेनेति वा-च्यम् । इच्छादितः संस्काराच्चानुमितेरनुदयात् सविषयकत्वस्यातिप्रसक्तत्वात् ॥ **सादृश्यज्ञानस्य** सा-दृश्यप्रकारकज्ञानस्य ॥ **तत्र** अनुमित्यादौ । अनुमितिं लक्षयति ॥ **परामर्शेति** ॥ परामर्शत्वं च व्याप्तिवि-शिष्टपक्षधर्मताज्ञानत्वं ।तथाच व्याप्तिविशिष्टपक्षधर्मताज्ञानजन्यं ज्ञानमनुमितिरिति फलितम् ।भवति हि वह्नि-व्याप्यधूमवान् पर्वत इति ज्ञानं व्याप्तिविशिष्टपक्षधर्मताज्ञानं तज्जन्यं पर्वतो वह्निमानिति ज्ञानमिति तत्र लक्ष-णसमन्वयः । **यद्यपीत्यादि** ॥ प्रत्यक्षादिकमित्यादिना विशेषणतावच्छेदकप्रकारकनिश्चयविषया परामर्शज-

**रामरुद्रीयम्.**

नुमित्या सिद्धेः । यदि च कार्यसामान्ये कृतेरेव कारणत्वं न ज्ञानेच्छयोः तया तयोरन्यथासिद्धत्वात्तथा च स-कर्तृकत्वानुमानेनेश्वरे कृतेरेव सिद्धिर्न ज्ञानेच्छयोः । न चैवमीश्वरे ज्ञानेच्छयोः कथं सिद्धिरिति वाच्यम् । य-स्सर्वज्ञ इत्यादिश्रुत्या ज्ञानस्य स ऐक्षत बहु स्यामिति श्रुत्या इच्छायास्तत्र सिद्धेरीक्षणस्येच्छारूपत्वादिति विभाव्यते तदा यथाश्रुतमेव साधु । न चैवमपि जन्यनिर्विकल्पकस्यापीश्वरज्ञानजन्यतया तत्राव्याप्तेरनुपपा-दनाद्ग्रन्थकारस्य न्यूनता दुर्वारैवेति वाच्यम् । ज्ञानजन्येत्यस्य समवायसम्बन्धावच्छिन्नजनकतानिरूपित-जन्यताशून्यार्थकत्वे निर्विकल्पकेऽव्याप्त्यसम्भवेन तदुपेक्षणसम्भवादिति ध्येयम् । अनुमित्यादौ लक्षणास-त्त्वमुपपादयति ॥ **अनुमित्यादाविति** ॥ इदं लक्षणमीश्वरप्रत्यक्षसाधारणमित्याह ॥ **अकारणकत्वादे-वेति** ॥ करणसामान्यशून्यत्वादेवेत्यर्थः । ननु तत्त्वज्ञानात्मकप्रत्यक्षे अव्याप्तिस्तत्र निदिध्यासनव्यापारक-स्य अनुमित्यादिज्ञानस्य करणत्वादित्याशङ्कते ॥ **अथेति** ॥ **ज्ञानत्वगर्भेति** ॥ ज्ञानत्वघटितेत्यर्थः । करण-त्वाभावस्येत्यस्य निरूपकतासम्बन्धेनेत्यादिः । योगिप्रत्यक्षं तत्त्वज्ञानरूपं बोध्यम् । नन्वेवमपि विशिष्ट-वैशिष्ट्यावगाहिप्रत्यक्षे विशेषणतावच्छेदकप्रकारकज्ञानव्यापारकानिर्विकल्पककरणके अव्याप्तिर्दुर्वारैवेत्यस्वर-सादाह ॥ **अथवेति** ॥ **करणतानय इति** ॥ परामर्शाभावादेव घटादिज्ञानादनुमितिवारणसम्भवादिति भावः । एतच्च यथाश्रुताभिप्रायेणोक्तं पर्याप्त्यनिवेशसूचनायैव घटितेत्युपादानादेवं तत्त्वं ज्ञानत्वघटि-तत्वं ज्ञानत्वाविषयकप्रतीत्यविषयत्वमात्रं न तु ज्ञानत्वभिन्नत्वमपि तत्र घटकं प्रयोजनाभावादसम्भवापत्तेश्चेति विभावनीयम् ॥ **करणत्वासम्भव इति** ॥ व्याप्तिज्ञानासत्त्वेऽपि विशिष्टविषयकसंस्काराद्विशिष्टविषयक-स्मरणात्मकपरामर्शोत्पत्तेरिति भावः ॥ **संस्कारद्वारेति** ॥ तथा च व्याप्तिज्ञानस्य स्वजन्यपरामर्शसम्ब-न्धेन अनुमितौ कारणता परामर्शे स्वजन्यत्वं च स्वनिष्ठसमवायस्वजन्यसंस्कारान्यतरसम्बन्धावच्छिन्नकारण-तानिरूपितकार्यतारूपं नातः प्रात्यक्षिकपरामर्शजन्यानुमितिव्याप्तिज्ञानकरणत्वानुपपत्तिरिति भावः ॥ **ज्ञान-पदमिति** ॥ अनुमितौ व्याप्तिज्ञानं कारणमित्यत्र ज्ञानपदमित्यर्थः । तथा च स्मरणात्मकपरामर्शस्यापि व्या-

दिकं परामर्शजन्यं तथापि परामर्शजन्यं हेत्वविषयकं ज्ञानमनुमितिः । नच कादाचित्कं-हेतुविषयकानुमितावव्याप्तमिति वाच्यम् । तादृशज्ञानवृत्त्यनुभवत्वव्याप्यजातिमत्त्वस्य वि-

**प्रभा.**

वच्छिन्नकारणताघटितस्यैवानुमितिलक्षणतया प्रत्यक्षे विषयस्य तादात्म्येनैव हेतुत्वान्नोक्तातिव्याप्तिरिति वाच्यं व्याप्यसंशयस्य व्यापकसंशयं प्रति समवायेनैव हेतुतया वह्निव्याप्यधूमवान् पर्वत इत्याका-

**दिनकरीयम्.**

न्यस्य विशिष्टवैशिष्ट्यबोधस्य परिग्रहः ॥ **परामर्शजन्यमिति** ॥ विषयविधया तत्र परामर्शस्य हेतुत्वा-दिति भावः ॥ **कादाचित्केति** ॥ धूमवान् पर्वतो वह्निमानित्यनुमितौ पक्षतावच्छेदकविधया धूमस्य भानादिति भावः ॥ **तादृशेति** ॥ कथितनिश्चयजन्यहेत्वविषयकेत्यर्थः । सत्तामादायातिव्याप्तिरतोऽनुभ-

**रामरुद्रीयम्.**

प्तिविषयकसंस्कारजन्यतया कारणत्वमक्षतमिति भावः । एवं च करणं व्याप्तिधीरिति कारिकायामपि धीपदं सविषयकपरमेवेति भावः ॥ **तत्रेति** ॥ स्मरणात्मकपरामर्श इत्यर्थः । यद्यपि समानविषयकनिश्चयस्य संस्कार-द्वारा कैश्चिदनुभवत्वेन कैश्चिज्ज्ञानत्वेन स्मरणजनकत्वं वल्लभमेवेति नैतदनुरोधेन तत्कल्पनीयमित्यसङ्गतमेवैतत्त-थापि हेतुत्वकल्पनेनेत्यस्य तादृशहेतुत्वघटितलक्षणकल्पनेनेत्यर्थकतया अन्यतरसम्बन्धेन व्याप्तिज्ञानजन्यत्वस्य लक्षणघटकत्वमपेक्ष्य समवायेन व्याप्तिविषयकजन्यत्वस्य लक्षणघटकत्वे लाघवान्नासङ्गतिः ॥ **अतिप्रसक्त-त्वादिति** ॥ अथ व्याप्तिविषयकत्वेन कारणतापक्षे व्याप्तिविषयकेच्छादावपि कारणत्वमस्त्येवेति कथमति-प्रसक्तता अन्यथा अनुमित्यनुपधायकव्याप्तिज्ञानेऽपि व्याप्तिज्ञानत्वसत्त्वेन अतिप्रसक्ततया तदपि कारणता-वच्छेदकं न स्यात् । यदि च अनुमित्यनुपधायकेऽपि व्याप्तिज्ञाने स्वरूपयोग्यतारूपकारणत्वस्वीकारान्नातिप्र-सक्तिरित्युच्यते तदा प्रकृतेऽपीदमेवोत्तरमिति मैवं । कतिपयव्याप्तिज्ञानेषु कारणत्वकल्पनापेक्षया अनन्तेच्छादिषु तत्कल्पनगौरवस्यैव तन्मते दूषणत्वेन प्रकृतग्रन्थाभिप्रेतत्वादत एवैतत्सूचनायैवेच्छात इत्युपेक्ष्य इच्छादितः संस्कारेच्छेत्येतावत्पर्यन्तमभिहितमित्यवधेयम् । उपमितौ सादृश्यज्ञानं करणमित्यत्र गवयादिविशेष्यकसाद-श्यप्रकारकज्ञानस्य व्यापारताभ्रमं निराकर्तुं व्याचष्टे ॥ **सादृश्यप्रकारकेति** ॥ न चैवं तद्व्यापारदौर्लभ्यं अ-तिदेशवाक्यार्थस्मृतेर्व्यापारत्वेन वक्ष्यमाणत्वात् ॥ **तथा चेति** ॥ व्याप्तिविशिष्टं व्याप्तिप्रकारकं यत्पक्ष-विशेष्यकं पक्षधर्मताज्ञानं हेतुतावच्छेदकसंसर्गावगाहिज्ञानमित्यर्थः परामर्शजन्यसंस्कारेऽतिव्याप्तिवारणाय ज्ञा-नपदोपादानम् । ननु व्याप्तिविशिष्टे पक्षधर्मताज्ञानमिति व्युत्पत्त्या वह्निव्याप्यविशेष्यकपर्वतादिवृत्तित्वप्रका-रकज्ञानजन्यत्वं ततो लभ्यते तथा च वह्निव्याप्यधूमवान् पर्वत इति परामर्शजन्यानुमितावव्याप्तिरित्या-शङ्कायामाह ॥ **भवति हीति** ॥ वह्निव्याप्यधूमवान्पर्वत इति ज्ञानं व्याप्तिविशिष्टपक्षधर्मताज्ञानं भवती-त्यन्वयः । उक्तरीत्या व्याप्तिप्रकारकपक्षविशेष्यकहेतुतावच्छेदकसम्बन्धावगाहिज्ञानस्यैव तादृशवाक्यलभ्यत्वा-दिति भावः । न चैवमपि वह्निव्याप्यो धूमः पर्वत इति ज्ञानजन्यानुमितावव्याप्तिर्धूमो वह्निव्याप्यो धूम-वान् पर्वत इति परामर्शानात्मकज्ञानजन्यप्रत्यक्षादावतिव्याप्तिर्वह्निव्याप्यधूमवानिति परामर्शस्यापि काल-विधया घटादिप्रत्यक्षहेतुतया तत्रातिव्याप्तेर्वारणाय च हेतुतावच्छेदकसम्बन्धावच्छिन्नव्याप्त्यवच्छिन्नप्रकारता-निरूपितपक्षविशेष्यताशालिनिश्चयत्वावच्छिन्नजनकतानिरूपितजन्यताया एव लक्षणे निवेशनीयत्वादिति वाच्य-म् । अनुमितिसमानविशेष्यतया पक्षविशेष्यकपरामर्शस्यैवानुमितिहेतुत्वादिति भावः ॥ **यद्यपीत्यादीति** ॥ ननु प्रत्यक्षे विषयस्य सामान्यतो विषयत्वेन विशेषतश्च तत्तद्व्यक्तित्वेनैव हेतुतया लक्षणे चोक्तनिश्चयत्वाव-च्छिन्नजनकतानिरूपितजन्यताया एव विवक्षणीयतया नोक्तातिव्याप्तिरित्यत आह ॥ **आदिनेत्यादि** ॥ त-था चैतदस्वरसेनैव मूले आदिपदमुपात्तम् । विशिष्टवैशिष्ट्यावगाहिबुद्धित्वावच्छिन्नं प्रति च विशेषणतावच्छेद-कप्रकारकविशेषणनिश्चयत्वेनैव हेतुतया भवति तत्राव्याप्तिरिति भावः ॥ **धूमवान् पर्वत इत्यादि** ॥ आलोका-दिलिङ्गकधूमवत्पर्वतपक्षकानुमित्यादावित्यर्थः ॥ **सत्तामादायेति** ॥ पर्वतो वह्निमानित्यनुमितिवृत्तिसत्ता-जातिमत्त्वस्य प्रत्यक्षादावपि सत्त्वादिति भावः । नन्वनुभवत्वमप्यनुभवत्वव्याप्यमेवेति तदादायैव अति-

**वक्षितत्वात् । अथवा व्याप्तिज्ञानकरणकं ज्ञानमनुमितिः । एवं सादृश्यज्ञानकरणकं ज्ञानमुपमि-**

**प्रभा.**

रकज्ञानजन्यपर्वतो वह्निमान्नवेति संशयेऽतिव्याप्तेः परामर्शप्रत्यक्षशब्देन परामर्शात्प्रत्यक्षमिति पञ्चमीतत्पुरुषाश्रयणेन तस्यापि लाभात् । ननु व्याप्यप्रकारकपक्षविशेष्यकनिश्चयत्वरूपपरामर्शत्वमेवानुमितिलक्षणघटकमतो नोक्तस्थलद्वयेऽतिव्याप्तिरत आह ॥ **आदीति** ॥ आदिना वह्निव्याप्यधूमवत्पर्वतवानयं देश इति विशिष्टवैशिष्ट्यावगाहिबोधपरिग्रहः तस्य परिष्कृतानुमितिलक्षणाक्रान्तत्वात् । यद्यपि पञ्चमीतत्पुरुषाश्रयणपक्षे परामर्शप्रत्यक्षशब्देनोक्तबोधस्यापि लाभादादिपदमनर्थकं तथापि पूर्वपरिष्कृतानुमितिलक्षणं तत्रैवास्तीति तटस्थप्रतिपत्त्यर्थमेव तस्यादिपदेन पृथग्ग्रहणमिति बोध्यं । नचैवं सति परामर्शध्वंसे परिष्कृतलक्षणाभावादेवातिव्याप्तिवारणे ज्ञानत्वरूपविशेष्यदलं व्यर्थमिति वाच्यं इष्टापत्तेः । नच तथापि पुरुषत्वव्याप्यकरादिमानयमिति विशेषदर्शनजन्ये अयं पुरुष इति संशयोत्तरप्रत्यक्षेऽतिव्याप्तिरिति वाच्यं तादृशकार्यतासमानाधिकरणलौकिकविषयत्वासमानाधिकरणजातिमत्त्वस्य विवक्षितत्वात् प्रत्यक्षत्वचाक्षुषत्वादिजातेर्लौकिकविषयत्वसमानाधिकरणतया अदोषात् । नचैवं सति परामर्शप्रत्यक्षादौ तत एवातिव्याप्तिवारणे तद्वारणाय तथापीत्यादिना हेत्वविषयकत्वं निवेश्य तदुत्तरं कदाचिद्धेतुविषयकानुमितावव्याप्तिवारणायानुभवत्वव्याप्यजातिमत्त्वघटितपरिष्करणं प्रक्षालनाद्धीति न्यायकवलितत्वेनानुचितमिति वाच्यं इष्टापत्तेः । मणिकारमतानुसारेणैव हेत्वविषयकत्वविशेषणदानात् तत्प्रयुक्तातिव्याप्तिवारणार्थं तादृशजातिमत्त्वघटितलक्षणपरिष्करणाच्चेति मूलकारस्य निगूढाभिप्रायः । अत एव तादृशजातिमत्त्वस्य विवक्षितत्वादित्युक्तम् । नतु विवक्षणीयत्वादित्युक्तं मूलकृता । मणिकृता विवक्षितत्वादित्यर्थकेन विवक्षितत्वादिति ग्रन्थेन स्वस्यासम्मतत्वलाभादिति हृदयम् । ननु पूर्वोक्तानुमितिलक्षणस्य पक्षतावच्छेदकावच्छिन्नविषयताघटितत्वेन निश्चयत्वघटकतदभावाप्रकारकत्वघटितत्वेन यथाश्रुतरीत्या हेत्वविषयकत्वघटितत्वेन च गौरवाल्लक्षणान्तरमाह ॥ **अथवेत्यादि** ॥ क्रमेण उपमितिशाब्दबोधयोर्लक्षणमाह ॥ **एवं सादृश्येत्यादि** ॥

**दिनकरीयम्.**

वत्वव्याप्येति । अनुभवत्वन्यूनवृत्तिकत्वं तदर्थः । तेन नानुभवत्वजातिमादाय प्रत्यक्षादावतिव्याप्तिः । जातिमत्त्वं च समवायेन विवक्षितं तेन कालिकसम्बन्धेन जातिमति काले नातिव्याप्तिः । पक्षधर्मताया अप्रवेशेन लाघवाल्लक्षणान्तरमाह ॥ **अथवेति** ॥ अत्रापि साध्यतावच्छेदकधर्मसाध्यतावच्छेदकसम्बन्धहेतुतावच्छेदकधर्महेतुतावच्छेदकसम्बन्धानामननुगमादेकव्याप्त्युपादानेऽन्यानुमितावव्याप्तेरेकां व्याप्तिमुपादाय तज्ज्ञानकरणकवृत्त्यनुभवत्वव्याप्यजातिमत्त्वं विवक्षणीयम् । नन्वनुमितिं प्रत्यपि न व्याप्तिज्ञानत्वेन करणत्वं किंतु ज्ञानत्वेन मनस्त्वेनैव वा एवमेवोपमित्यादावपि मनस्त्वेनैव करणत्वम् । नच कार्यवैजात्यं न

**रामरुद्रीयम्.**

व्याप्तितादवस्थ्यमित्यत आह ॥ **अनुभवत्वेति** ॥ अत्र च धूमवान् पर्वतो वह्निमानित्यनुमितावव्याप्तिवारणायैव जातिघटितलक्षणादरणमिति बोध्यम् ॥ **लाघवादिति** ॥ व्याप्तिज्ञाननिष्ठस्वजन्यज्ञानसम्बन्धावच्छिन्नजनकताकत्वं व्याप्तिज्ञानकरणकत्वं न तु व्याप्तिज्ञानजन्यज्ञानजन्यत्वे सति व्याप्तिज्ञानजन्यत्वं व्याप्तिज्ञानकरणकत्वं तेन कालोपाधिविधया व्याप्तिज्ञानजन्यत्वमादाय तथैव परामर्शजन्यत्वमादाय च घटादिप्रत्यक्षे नातिव्याप्तिः अत्रापि लिङ्गाविषयकत्वनिवेशनमावश्यकं अन्यथा वह्निव्याप्यधूमवत्पर्वतवान्देश इति विशिष्टवैशिष्ट्यावगाहिज्ञानेऽतिव्याप्तिप्रसङ्गात् लिङ्गाविषयकत्वं व्याप्त्यवच्छिन्नप्रकारताशून्यत्वमेव तेन धूमत्वादिना धूलीपटलादिविषयकविशेष्यावगाहिप्रत्यक्षे नातिव्याप्तितादवस्थ्यम् । न चैवमपि व्याप्तित्वेन घटाद्यवगाहिविशिष्टवैशिष्ट्यप्रत्यक्षवारणासम्भव इति वाच्यम् । हेतुतावच्छेदकावच्छिन्नप्रकारतानिरूपिताधिकरणत्वावच्छिन्नप्रकारतानिरूपिताधेयतात्वावच्छिन्नप्रकारतेत्यादिक्रमेणाधेयत्वावच्छिन्नप्रकारतापर्यन्तमुपादाय तन्निरूपितसाधनतावच्छेदकावच्छिन्नप्रकारिताशून्यत्वस्य निवेशनीयत्वादिति भावः ॥ **तज्ज्ञानकरणकवृत्तीति** ॥ तद्व्याप्तिज्ञानकरणकज्ञानवृत्तीत्यर्थः ॥ **करणत्वमिति** ॥ परामर्शरूपकारणान्तराभावा-

तिः । पदज्ञानकरणकं ज्ञानं शाब्दबोधः । वस्तुतस्तु यत्किञ्चिदनुमितिव्यक्तिमादाय तद्व्यक्तिवृत्तिप्रत्यक्षावृत्तिजातिमत्त्वमनुमितित्वम् । एवं यत्किञ्चित्प्रत्यक्षादिव्यक्तिमादाय तद्व्यक्तिवृत्त्यनुमित्यवृत्तिजातिमत्त्वं प्रत्यक्षत्वादिकं वाच्यमिति ॥ ५१ ॥

**प्रत्यक्षमप्यनुमितिस्तथोपमितिशब्दजे ।**
**घ्राणजादिप्रभेदेन प्रत्यक्षं षड्विधं मतम् ॥ ५२ ॥**

जन्यप्रत्यक्षं विभजते ॥ घ्राणजादीति ॥ घ्राणजं रासनं चाक्षुषं स्पार्शनं श्रौत्रं मानसमिति

## प्रभा.

अर्थस्तु पूर्वलक्षणदिशा अवसेयः । ननु व्याप्तिज्ञानकरणकत्वं व्याप्तिज्ञाननिष्ठव्यापारसंबन्धावच्छिन्नकारणतानिरूपितकार्यत्वं तत्रापि घटकीभूतव्याप्तिः साध्यसाधनसंबन्धभेदेन भिन्नैवेत्येकैकव्याप्तिघटितलक्षणस्यानुमितावव्याप्तिवारणाय एकैकव्याप्तिमुपादाय तत्प्रकारकज्ञानकरणकसमवेतप्रत्यक्षासमवेतधर्मसमवायित्वरूपं लक्षणं परिष्करणीयम् । एवं च तादृशकार्यतावत्त्वेनानुमितिनिवेशापेक्षया लाघवेन तद्व्यक्तित्वेनानुमितिनिवेशनमेवोचितमित्यभिप्रायेणाह ॥ **वस्तुत इत्यादि** ॥ ननु लाघवस्याविशिष्टत्वात् प्रत्यक्षादिलक्षणमपि तथैव वाच्यं इत्याशयेनाह ॥ **एवमित्यादि** ॥ अर्थस्तु अनुमितिलक्षणवत् बोध्यः । यत्किञ्चिदुपमितिव्यक्तिमादाय यत्किञ्चिच्छाब्दव्यक्तिमादाय च तद्व्यक्तिवृत्तिप्रत्यक्षासमवेतधर्मसमवायित्वरूपमुपमितित्वं शाब्दत्वं चेत्यादिपदेन बोध्यमित्यर्थः । केचित्तु इदं चानुभवत्वजात्यङ्गीकारेण । तदनङ्गीकारे तद्व्यक्तिसमवेतस्मरणासमवेतधर्मसमवायित्वरूपस्य लक्षणचतुष्टयस्य एकशब्देन वक्तुं शक्यत्वादिति हृदयमित्याहुः तदसत् । अनुभवत्वजात्यङ्गीकारेऽपि तद्व्यक्तिसमवेतानुभवत्वन्यूनवृत्तिधर्मसमवायित्वरूपस्य लक्षणचतुष्टयस्य एकशब्देन वक्तुं शक्यत्वा-

## दिनकरीयम्.

त्स्यादिति वाच्यम् । सामग्रीवैलक्षण्यादेव तदुपपत्तेः । नच प्रमाणविभागानुपपत्तिः क्रियाविशेषात्तदुपपत्तेरतः पूर्वोक्तानुमित्यादिलक्षणानामसम्भव इत्यत आह ॥ **वस्तुत इति** ॥ घटेऽतिव्याप्तिवारणाय वृत्त्यन्तम् । वृत्तित्वं समवायेन विवक्षितं तेनानुमितौ कालिकेन घटत्वस्य वृत्तित्वेऽपि नातिव्याप्तिः । ज्ञानत्वानुभवत्वादिकमादाय प्रत्यक्षादावतिव्याप्तिवारणाय विशेष्यदलम् । ननु मनसः करणतापक्षे ज्ञानाकरणकत्वं प्रत्यक्षलक्षणमनुमित्यादावतिव्याप्तमतः प्रत्यक्षस्य लक्षणान्तरमाह ॥ **एवमिति** ॥ **प्रत्यक्षत्वादिकमिति** ॥ यत्किञ्चिदुपमितिव्यक्तिमादाय तद्व्यक्तिवृत्तिप्रत्यक्षासमवेतजातिमत्त्वमुपमितित्वम् । यत्किञ्चिच्छाब्दबोधव्य-

## रामरुद्रीयम्.

देव यत्किञ्चिज्ज्ञानात्केवलमनसो वाऽनुमितिवारणसम्भवादिति भावः । अत्र च ज्ञानत्वेन करणतापक्षे अनन्तज्ञानव्यक्तीनां करणत्वकल्पनापत्तिरपि च ज्ञानस्य समवायेन कारणत्वेऽपि क्षत्यभावात्परामर्शस्यापि ज्ञानत्वाद्गुरुभूतस्वजन्यज्ञानवत्त्वसम्बन्धेन तस्य तथात्वे मानाभावाच्चेति मनस्त्वेन वेत्युक्तम् । ननु परामर्शातिदेशवाक्यार्थस्मरणद्वाराऽनुमित्युपमित्योरेकमनःकरणकत्वे इन्द्रियत्वव्याप्तिज्ञानत्वादिना प्रमाणविभागो न स्यात् । न च प्रत्यक्षकरणत्वानुमितिकरणत्वादिना एकस्यापि मनसो विभागसम्भवः परस्परासङ्कीर्णव्याप्यधर्मकथनं विभाग इत्यत्र परस्परासङ्कीर्णत्वस्य स्वावच्छिन्नविषयित्वाव्यापकविषयितावच्छेदकत्वरूपत्वादन्यथा व्यभिचारभिन्नविरोधाप्रसिद्ध्या हेत्वाभासविभागानुपपत्तेरिति वाच्यम् । मनस्त्वेनैवोभयत्र करणत्वे अनुमितित्वोपमितित्वयोरेव नियामकाभावेन कथञ्चिदपि विभागासम्भवादित्याशङ्कते ॥ **नचेति** ॥ **क्रियाविशेषादिति** ॥ क्रिया धात्वर्थो न तु कर्म तथा च प्रत्यक्षादिप्रमारूपमाधात्वर्थविजातीयप्रमाभेदेनैव प्रमाणानां विभागसम्भवादिति भावः । मनस इत्यस्यानुमित्यादावित्यादिः ॥ **अतिव्याप्तमिति** ॥ नित्यप्रत्यक्षे अव्याप्तिभिया इन्द्रियाजन्यत्वस्य प्रत्यक्षलक्षणत्वासम्भवादिति भावः ॥ **प्रत्यक्षत्वमिति** ॥ उपमित्यादेः सर्वमतासिद्धतया प्रथमोपस्थितत्वाच्च अनुमित्यसमवेतत्वस्यैव प्रत्यक्षलक्षणघटकत्वेनोक्तिः । आदि-

षड्विधं प्रत्यक्षम् । नचेश्वरप्रत्यक्षस्याविभजनान्न्यूनत्वं जन्यप्रत्यक्षस्यैव निरूपणीयत्वादुक्त-सूत्रानुसारात् ॥ ५२ ॥

घ्राणस्य गोचरो गन्धो गन्धत्वादिरपि स्मृतः ।
तथा रसो रसज्ञायास्तथा शब्दोऽपि च श्रुतेः ॥ ५३ ॥

**गोचर इति** ॥ ग्राह्य इत्यर्थः । गन्धत्वादिरित्यादिपदात्सुरभित्वादिपरिग्रहः । गन्धस्य प्रत्यक्षत्वात् तद्वृत्तिजातिरपि प्रत्यक्षा गन्धाश्रयग्रहणे तु घ्राणस्यासामर्थ्यमिति बोध्यम् ॥ **तथा रस इति** ॥ रसत्वादिसहित इत्यर्थः । तथा शब्दोऽपि शब्दत्वादिसहितः । गन्धो रसश्चोद्भूतो बोध्यः ॥ ५३ ॥

## प्रभा.

त् ॥ **निरूपणीयत्वादिति** ॥ विभाज्यत्वेनाभिप्रेतत्वादित्यर्थः । तथात्वे प्रमाणमाह ॥ **उक्तसूत्रेति** ॥ इन्द्रियार्थसन्निकर्षोत्पन्नमित्याद्युपदर्शितसूत्रानुसारादित्यर्थः । तथाच सूत्रप्रतिपाद्योत्पन्नत्वघटितप्राथमिकप्रत्यक्षप्रमालक्षणस्येश्वरप्रत्यक्षे अव्याप्तिवारणाय सूत्रस्थप्रत्यक्षपदस्य जन्यप्रत्यक्षपरत्वावश्यकतया तस्यैवोक्तलक्षणलक्ष्यत्वलाभेन तस्यैव षोढा विभजनान्न न्यूनता । एवंच प्रत्यक्षं द्विविधं नित्यमनित्यं चेति नित्यमेकमेवानित्यं षड्विधमित्यभिप्रायेण मूले घ्राणजादिप्रभेदेनेत्युक्तमिति भावः । इदमुपलक्षणं सूत्रप्रतिपाद्यज्ञानाकरणकत्वघटितद्वितीयलक्षणस्येश्वरप्रत्यक्षे अव्याप्त्यभावेन प्रत्यक्षसामान्यस्यैव लक्ष्यत्वलाभात् तस्याविभजने न्यूनतापत्त्या तत्पक्षे नित्यघ्राणजादिभेदेन सप्तविधं प्रत्यक्षमित्यपि बोध्यम् ॥ ५१ ॥ ५२ ॥

इदानीं द्रव्यग्रहणासमर्थेन्द्रियग्राह्याण्यादावाह ॥ **मूले घ्राणस्य गोचरो गन्ध इति** ॥ ननु मूलस्थगोचरपदस्य विषयत्वशक्तत्वात् घ्राणविषयत्वाप्रसिद्धिरतो गोचरपदलक्ष्यार्थमाह ॥ **ग्राह्य इत्यर्थ इति** ॥

## दिनकरीयम्.

क्तिमादाय तद्व्यक्तिवृत्तिप्रत्यक्षासमवेतजातिमत्त्वं निर्वाच्यमित्यर्थः । शब्दभेदेनानुमित्यादीनां लक्षणकथनमनुभवत्वजात्यङ्गीकारेण तदनङ्गीकारे तद्व्यक्तिसमवेतस्मरणासमवेतधर्मसमवायित्वरूपस्य लक्षणचतुष्टयस्यैकशब्देन वक्तुं शक्यत्वादिति ध्येयम् ॥ **उक्तसूत्रेति** ॥ इन्द्रियार्थसन्निकर्षोत्पन्नमित्याद्युपदर्शितसूत्रानुसारादित्यर्थः ॥ ५१ ॥ ५२ ॥

घ्राणस्य निर्विषयकत्वादाह ॥ **ग्राह्य इति** ॥ सुरभित्वादीत्यादिनाऽसुरभित्वपरिग्रहः ॥ **तद्वृत्तीति** ॥ गन्धवृत्तीत्यर्थः ॥ ५३ ॥

## रामरुद्रीयम्.

पदग्राह्यमुपमितित्वं शाब्दत्वं च निर्वक्ति ॥ **यत्किञ्चिदिति** ॥ **शब्दभेदेनेति** ॥ प्रत्यक्षलक्षणे अनुमित्यसमवेतेति तदितरलक्षणेषु प्रत्यक्षासमवेतेति शब्दविशेषेणेत्यर्थः । प्रथमतो मूले अनुमितिलक्षणस्यैव जातिघटितस्योक्तत्वात्प्रत्यक्षादीनामित्युपेक्ष्य अनुमित्यादीनामित्युक्तम् ॥ **अनुभवत्वजात्यङ्गीकारेणेति** ॥ विशेषणज्ञानादिजन्यतावच्छेदककोटौ स्मृत्यन्यत्वनिवेशे गौरवापत्त्या तज्जन्यतावच्छेदककोटिप्रविष्टतयैवानुभवत्वजातिसिद्धेरिति भावः । एवं च सर्वलक्षणेषु स्मृत्यसमवेतेत्युक्तौ अनुभवत्वमादाय अनुमित्यादावतिव्याप्त्यापत्त्या एकत्रानुमित्यसमवेतत्वस्यान्यत्र प्रत्यक्षासमवेतत्वस्यैव निवेशनीयतया शब्दभेदेन लक्षणाभिधानमावश्यकमेवेति बोध्यम् ॥ **तद्व्यक्तिसमवेतेति** ॥ एकशेषेण प्रत्यक्षादिव्यक्तिसमवेतेत्यर्थः । ज्ञानत्वादिकमादाय अन्यत्रातिव्याप्तिवारणायात्र स्मरणासमवेतेत्युक्तम् ॥ **सूत्रानुसारादिति** ॥ सूत्राननुसारेण प्रत्यक्षसामान्यस्य लक्षणप्रदर्शनपक्षे तु नित्यप्रत्यक्षस्यैकत्वेन तद्विभागासम्भवाज्जन्यप्रत्यक्षस्यैव विभाग इति भावः ॥ ५१ ॥ ५२ ॥

ननु गोचरपदस्य विषयार्थकतया घ्राणस्य गोचरो गन्ध इत्यसङ्गतमित्याशङ्कां निराकरोति ॥ **घ्राणस्येति** ॥

उद्भूतरूपं नयनस्य गोचरो द्रव्याणि तद्वन्ति पृथक्त्वसंख्ये ।
विभागसंयोगपरापरत्वस्नेहद्रवत्वं परिमाणयुक्तम् ॥ ५४ ॥
क्रिया जातिर्योग्यवृत्तिः समवायश्च तादृशः ।
गृह्णाति चक्षुः सम्बन्धादालोकोद्भूतरूपयोः ॥ ५५ ॥

**उद्भूतरूपमिति** ॥ ग्रीष्मोष्मादावनुद्भूतरूपमिति न तत्प्रत्यक्षम् ॥ **तद्वन्ति** उद्भूतरूपवन्ति ॥ **योग्येति** ॥ पृथक्त्वादिकमपि योग्यव्यक्तिवृत्तितया बोध्यम् ॥ **तादृशः** योग्यव्यक्तिवृत्तिः । चक्षुर्योग्यत्वमेव कथं तदाह ॥ **गृह्णातीति** ॥ आलोकसंयोग उद्भूतरूपं च चाक्षुषप्रत्यक्षे कारणम् । तत्र द्रव्यचाक्षुषं प्रति तयोः समवायसम्बन्धेन कारणत्वं द्रव्यसमवेतरूपादिप्रत्य-

## प्रभा.

सुरभित्वादीत्यादिपदादसुरभित्वपरिग्रहः । मूले प्रथमतो गन्धस्य घ्राणग्राह्यत्वमुपपाद्यानन्तरं गन्धत्वादेः तद्ग्राह्यत्वप्रतिपादने निमित्तमाह ॥ **मुक्तावल्यां गन्धस्येति** ॥ **प्रत्यक्षेति** ॥ जातिप्रत्यक्षे आश्रयप्रत्यक्षस्य हेतुत्वादिति भावः । ननु महत्त्वसमानाधिकरणोद्भूतरूपबलात् द्रव्यचाक्षुषवत् महत्त्वसमानाधिकरणोद्भूतगन्धबलाद्द्रव्यघ्राणजापत्तिरित्याशङ्कां परिहरति ॥ **गन्धाश्रयेति** ॥ द्रव्यनिष्ठलौकिकविषयताशालिप्रत्यक्ष इत्यर्थः । द्रव्यस्य गन्धवत्त्वकथनं तत्र घ्राणजप्रत्यक्षापादकगन्धसत्त्वप्रतिपादनायेति हृदयं । अवधारणार्थकतुशब्देन द्रव्यान्यग्रहणे घ्राणस्य सामर्थ्यसत्त्वं लभ्यते ॥ **न सामर्थ्यमिति** ॥ न करणत्वमित्यर्थः । द्रव्यनिष्ठलौकिकविषयताप्रयोजकसन्निकर्षशून्यत्वमिति यावत् । द्रव्यघ्राणसंयोगः द्रव्यनिष्ठलौकिकविषयताप्रयोजको न भवतीति फलितार्थः । तथाचान्वयव्यतिरेकाभ्यामेव कारणत्वस्य ग्राह्यतया द्रव्ये घ्राणसंयोगेऽपि तत्र लौकिकप्रत्यक्षाजननात् घ्राणसंयोगशून्यकालेऽपि चक्षुस्संयोगसत्त्वे लौकिकप्रत्यक्षजननाचान्वयव्यतिरेकाभ्यां व्यभिचारेण प्रमाणाभावात् घ्राणसंयोगस्य व्यापारत्वं घ्राणस्य करणत्वं च न संभवतीति भावः ॥ ५३ ॥

रूपे उद्भूतत्वनिवेशप्रयोजनमाह ॥ **ग्रीष्मेति** ॥ ऊष्मादावित्यादिना सूलिकाविशेषनिष्ठतेजःपरिग्रहः न्यूनतां परिहर्तुमाह ॥ **पृथक्त्वादिकमपीति** ॥ ननु संबन्धादालोकोद्भूतरूपयोरिति मूलादालोकसंबन्धः उद्भूतरूपसंबन्धश्च लभ्यते तथात्वे वाय्वादावपि समवायस्यैकत्वात्समवायरूपोद्भूतसंबन्धस्य सत्त्वेन चाक्षुषापत्तिरतस्तात्पर्यार्थमाह ॥ **मुक्तावल्यामालोकसंयोग उद्भूतरूपं चेति** ॥ तथाच यथाश्रुतमूलादुद्भूतरूपसंबन्धस्य कारणत्वलाभेऽपि तत्र बाधकसत्त्वात् वाच्यार्थं परित्यज्य तात्पर्यार्थं उद्भूतरूपस्यैव कारणत्वं वाच्यमिति भावः ॥ **द्रव्यचाक्षुषं प्रतीति** ॥ द्रव्यवृत्तिलौकिकविषयतासंबन्धेन चाक्षुषं प्रतीत्यर्थः । एतेन द्रव्यविषयकत्वविशिष्टचाक्षुषत्वस्य कार्यतावच्छेदकत्वे चाक्षुषत्वविशिष्टद्रव्यविषयत्वस्य तथात्वमादाय विनिगमनाविरहः उभयोरुभयत्वेन कार्यतावच्छेदकत्वे उभयोरेकसंबन्धेनावर्तमानतया उभयनिष्ठकार्यतावच्छेदकताघटकसंबन्धाप्रसिद्धिः एवंच द्रव्यचाक्षुषस्य केवलविषयतासंबन्धेन कार्यत्वे घटत्वादावपि तेन संबन्धेन कार्यस्य सत्त्वेन तत्र समवायसंबन्धेन तयोरविद्यमानतया व्यभिचारेण कारणत्वानुपपत्तेः द्रव्यवृत्तिलौकिकविषयतायाः कार्यतावच्छेदकसंबन्धत्वे तु कार्यतावच्छेदककोटौ द्रव्यविषयकत्वविशेषणवैयर्थ्यमित्यादीनि

## दिनकरीयम्.

उद्भूतपदस्य कृत्यमाह ॥ **ग्रीष्मेति** ॥ ऊष्मादावित्यादिना चूर्णप्रविष्टतेजःपरिग्रहः ॥ **न तत्प्रत्यक्षम्** ॥ नोष्मादिगतरूपप्रत्यक्षम् । न्यूनतां परिहर्तुमाह ॥ **पृथक्त्वादिकमपीति** ॥ **आलोकसंयोग इति** ॥

## रामरुद्रीयम्.

**ग्राह्य इतीति** ॥ तथा च गोचरपदस्य जन्यज्ञानविषयार्थकतया नासङ्गतिरिति भावः । न तत्प्रत्यक्षमित्यस्य नोष्मादिप्रत्यक्षमिति नार्थः रूपे उद्भूतत्वप्रवेशेन तत्प्रत्यक्षवारणसम्भवात् द्रव्याणि तद्वन्तीत्यनेनैव तत्प्रत्यक्षस्य वारणीयत्वादतो व्याचष्टे ॥ **नोष्मादिगतेति** ॥ ५३ ॥ ५४ ॥ ५५ ॥

क्षे स्वाश्रयसमवायसम्बन्धेन द्रव्यसमवेतसमवेतस्य रूपत्वादेः प्रत्यक्षे स्वाश्रयसमवेतसमवायसम्बन्धेनेति ॥ ५४ ॥ ५५ ॥

**उद्भूतस्पर्शवद्द्रव्यं गोचरः सोऽपि च त्वचः ।**
**रूपान्यच्चक्षुषो योग्यं रूपमत्रापि कारणम् ॥ ५६ ॥**

**उद्भूतेति** । उद्भूतस्पर्शवद्द्रव्यं त्वचो गोचरः ॥ **सोऽपि** उद्भूतस्पर्शोऽपि स्पर्शत्वादिसहितः ॥ **रूपान्यदिति** ॥ रूपभिन्नं रूपत्वादिभिन्नं यच्चक्षुषो योग्यं तत् त्वगिन्द्रियस्यापि ग्राह्यम् । तथा च पृथक्त्वसङ्ख्यादयो ये चक्षुर्ग्राह्या उक्ता एवं क्रियाजातयो योग्यवृत्तयश्च ते त्वचो ग्राह्या इत्यर्थः ॥ **अत्रापि** त्वगिन्द्रियजन्यद्रव्यप्रत्यक्षे रूपं कारणम् । तथा च बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षे रूपं कारणम् । नवीनास्तु बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षमात्रे न रूपं कारणं प्रमाणाभावात् किं तु चाक्षुषप्रत्यक्षे रूपं स्पार्शनप्रत्यक्षे स्पर्शः कारणमन्वयव्यतिरेकात् । बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षमात्रे किं कारणमिति चेन्न किञ्चिदपि । आत्मा-

**प्रभा.**

दूषणानि निरस्तानि । एवं द्रव्यसमवेतचाक्षुषादावप्युक्तरीत्या अर्थो ज्ञेयः ॥ ५४ ॥ ५५ ॥

नन्ु रूपभिन्नस्य रूपत्वादेस्त्वगिन्द्रियेणाग्रहणात् रूपपदं रूपत्वतद्व्याप्यजात्युपलक्षकमित्याशयेनाह ॥ **रूपत्वादिभिन्नमिति** ॥ आदिना नीलत्वादिपरिग्रहः । द्रव्याध्यक्ष इति पूर्वान्वय इति बोधनाय रूपमत्रापि कारणं द्रव्याध्यक्ष इत्युक्तं प्रतीकधारणम् । ननु द्रव्यचाक्षुषे द्रव्यस्पार्शने चोद्भूतरूपस्य हेतुत्वे कार्यतावच्छेदकाननुगमदोषं वारयति ॥ **तथाचेति** ॥ वायोः प्रत्यक्षत्ववादिनां मतमुपन्यस्यति ॥ **नवीनास्त्विति** ॥ **प्रमाणाभावादिति** ॥ वायौ उद्भूतरूपाभावेऽपि प्रत्यक्षोत्पत्त्या अन्वयव्यतिरेकसहकृतप्रत्यक्षप्रमाणाभावादिति भावः ॥ **न किञ्चिदपीति** ॥ अयमाशयः । बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षमात्र इत्यनेन द्रव्यवृत्तिलौकिकविषयतासंबन्धेन प्रत्यक्षं प्रति बहिरिन्द्रियस्य कारणत्वं लभ्यते आत्मप्रत्यक्षे व्यभिचारवारणाय आत्मान्यद्रव्यवृत्तिलौकिकविषयताया एव कार्यतावच्छेदकसंबन्धत्वं वाच्यं प्रत्यक्षत्वस्य नित्यवृत्तितया कार्यतावच्छेदकत्वोपपत्तये कालिकसमवायोभयस्यैव कार्यतावच्छेदकतावच्छेदकसंबन्धत्वं वाच्यमिति गौरवम् । एवंच बहिरिन्द्रियत्वं मनोभिन्नेन्द्रियत्वमेव इन्द्रियत्वं च चक्षुरादिव्यक्तिभेदेन भिन्नमित्यननुगततया परस्परव्यभिचारेण कथं तेन रूपेण कारणत्वं साङ्कर्यवशादिन्द्रियत्वस्य जातित्वाभावेन तेन रूपेण हेतुत्वाप्रसक्तिः । नच बहिरिन्द्रियपञ्चकान्यतमत्वरूपानुगतबहिरिन्द्रियत्वेन हेतुत्वस्वीकारान्न व्यभिचार इति वाच्यं घ्राणसंयुक्ते घटादौ तादृशान्यतमत्वावच्छिन्नस्य संयोगसंबन्धेन सत्त्वेनान्धस्य रोगविशेषा-

**दिनकरीयम्.**

तस्य कारणत्वमन्धकारे चाक्षुषापत्तिवारणायोद्भूतरूपस्य तु पिशाचादीनां प्रत्यक्षवारणायेत्यवधेयम् ॥ तयोः उद्भूतरूपालोकसंयोगयोः ॥ ५४ ॥ ५५ ॥

रूपभिन्नस्य रूपत्वादेस्त्वगिन्द्रियेणाग्रहणादाह ॥ **रूपत्वादिभिन्नमिति** ॥ आदिना नीलत्वादिपरिग्रहः । द्रव्याध्यक्ष इति पूर्वान्वयी न तूत्तरान्वयीति बोधयितुं रूपमत्रापि कारणं द्रव्याध्यक्ष इत्यन्तप्रतीकधारणम् । शङ्कते ॥ **बहिरिन्द्रियेति** ॥ ननु कार्याभावे कारणाभावस्य प्रयोजकतया गगनादौ बहिरिन्द्रियजन्यप्रत्यक्षाभावे रूपाभावस्पर्शाभावयोः प्रयोजकत्वकल्पने गौरवात्तादृशप्रत्यक्षे रूपत्वेन हेतुतां

**रामरुद्रीयम्.**

**रूपत्वादिभिन्नमितीति** ॥ इदं च पूरणं न तु विवरणं तथात्वे रूपादिभिन्नमित्येव ब्रूयादिति बोध्यम् । ननु रूपमत्रापि कारणमित्यत्रैव श्लोकसमाप्तेर्द्रव्याध्यक्ष इति द्वितीयकारिकास्थमेकं पदं किमित्य-

वृत्तिशब्दभिन्नविशेषगुणवत्त्वं वा प्रयोजकमस्तु । रूपस्य कारणत्वे लाघवमिति चेन्न । वायोस्त्वगिन्द्रियेणाग्रहणप्रसङ्गात् । इष्टापत्तिरिति चेत् । उद्भूतस्पर्श एव लाघवात्कारणमस्तु । प्रभाया अप्रत्यक्षत्वे त्विष्टापत्तिरेव किं नेष्यते तस्मात्प्रभां पश्यामीतिवत् वायुं

## प्रभा.

स्पृशामीति प्रत्ययात् त्वगिन्द्रियस्य प्रत्यक्षानुत्पत्त्याऽनन्यथ्यभिचारापत्तेः । तस्माद्बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षाप्रसिद्ध्या तत्र किं कारणमिति शङ्काऽनुपपन्नेव । न चात्मान्यद्रव्यवृत्तिलौकिकविषयतासंबन्धेन प्रत्यक्षमेव बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षशब्देन बोध्यत इति तस्य प्रसिद्ध्या तादृशशङ्का उपपन्नेति वाच्यं एतादृशशङ्काया एव न किञ्चिदित्यनेन परिहृतत्वात् । तेन संबन्धेन प्रत्यक्षं प्रति एकस्य कारणत्वे द्रव्यगुणान्यतरादिवृत्तिलौकिकविषयतासंबन्धेन प्रत्यक्षं प्रति कस्यचिद्धेतुत्वापत्त्या अप्रामाणिकानन्तकार्यकारणभावकल्पनापत्तेरिति दिक् । ननु बहिरिन्द्रियजन्यप्रत्यक्षशब्देन चाक्षुषत्वस्पार्शनत्वावच्छिन्नं बोध्यते तं प्रति कस्यचित्कारणत्वानङ्गीकारे तदभावः किंप्रयोज्यः कार्याभावस्य कारणाभावप्रयोज्यत्वादत आह ॥ आत्मावृत्तीति ॥ आत्मनो बहिरिन्द्रियजन्यप्रत्यक्षवारणायात्मावृत्तीति । आकाशस्य तद्वारणाय शब्दभिन्नेति । कालादेस्तद्वारणाय विशेषेति । अत्र सकलविशेषगुणसाधारणविशेषगुणत्वस्याभावेन रूपादिषु तत्प्रत्येकमेव तत्पर्यवस्यतीति प्रकृते रूपत्वस्पर्शत्वान्यतरवत्त्वरूपत्वमेवात्मावृत्तिशब्दभिन्नविशेषगुणत्वं वाच्यम् । एवंच चाक्षुषत्वावच्छिन्नं प्रति उद्भूतरूपस्य स्पार्शनत्वावच्छिन्नं प्रति उद्भूतस्पर्शस्य च हेतुतया चाक्षुषत्वस्पार्शनत्वान्यतरावच्छिन्नाभावे उद्भूतरूपत्वोद्भूतस्पर्शत्वान्यतरावच्छिन्नाभावस्य प्रयोजकत्वमङ्गीकृत्य गगनादौ दोषस्य वारणीयतया चाक्षुषत्वादिघटितान्यतरावच्छिन्नं प्रति उद्भूतरूपत्वादिघटितान्यतरावच्छिन्नस्य प्रयोजकत्वमेव न तु कार्यतावच्छेदकान्यतरावच्छिन्नं प्रति कारणतावच्छेदकान्यतरस्यापि हेतुत्वान्तरं अप्रामाणिकानन्तकार्यकारणभावकल्पनापत्तेः इत्याशयेन कारणमस्त्वित्यनुक्त्वा प्रयोजकमस्त्वित्युक्तमिति ध्येयम् । ननु चाक्षुषं प्रत्युद्भूतरूपत्वेन स्पार्शनं प्रति उद्भूतस्पर्शत्वेन कारणत्वकल्पने तादृशान्यतरावच्छिन्नं प्रति उद्भूतरूपत्वादिघटितान्यतरावच्छिन्नस्य प्रयोजकत्वकल्पने च गौरवात् तादृशान्यतरावच्छिन्नं प्रत्युद्भूतरूपत्वेन हेतुत्वमेव लाघवात् कल्पनीयं अप्रामाणिकानन्तकार्यकारणभावकल्पनागौरवस्याप्यनवकाशादित्याशयेन शङ्कते ॥ रूपस्येति ॥ प्रतिबन्द्योत्तरयति ॥ इष्टापत्तिरिति चेदिति ॥ तथाच वायोः प्रत्यक्षत्वस्य उभयानुमतत्वाभावात् प्राचीनमते इष्टापत्तेर्वक्तुं शक्यत्वादिति भावः । प्रतिबन्द्योत्तरयति ॥ तर्हीति ॥ उद्भूतस्पर्श इति ॥ कारणमस्त्विति ॥ तादृशान्यतरावच्छिन्नं प्रति उद्भूतरूपस्य हेतुत्वं तादृशान्यतरावच्छिन्नं प्रतीति शेषः ॥ लाघवादिति ॥ उद्भूतरूपत्वोद्भूतस्पर्शत्वाभ्यां कार्यकारणभावकल्पनेन तादृशान्यतरावच्छिन्नस्य चाक्षुषत्वादिघटितान्यतरावच्छिन्नं प्रति प्रयोजकत्वाकल्पनेन च लाघवादित्यर्थः ॥ किं न स्यादिति ॥ तथाच प्रभायाः प्रत्यक्षत्वस्य उभयानुमतत्वेनाप्रत्यक्षत्वस्योभयोरप्यनिष्टत्वेनानिष्टप्रसञ्जनात्मकतर्कसत्त्वाद्वायोः अप्रत्यक्षत्वं नाङ्गीकर्तव्यमिति भावः । उपसंहरति ॥ तस्मादिति ॥ उक्तबाधकसत्त्वादित्यर्थः ॥

## दिनकरीयम्.

कल्पयित्वा तदवच्छिन्नाभावत्वेनैव तादृशप्रत्यक्षाभावे प्रयोजकत्वमुचितमित्यत आह ॥ आत्मावृत्तीति ॥ आत्मनो बहिरिन्द्रियजन्यप्रत्यक्षवारणायात्मावृत्तीति आकाशस्य बहिरिन्द्रियजन्यप्रत्यक्षवारणाय शब्दभिन्नेति । कालादेस्तद्वारणाय विशेषेति । शङ्कते ॥ रूपस्येति ॥ पुनः

## रामरुद्रीयम्.

नैवोपात्तमित्याशङ्कां निरस्यति ॥ द्रव्याध्यक्ष इतीति ॥ पुनः शङ्कत इति ॥ मूले लाघवादित्यस्य आत्मावृत्तित्वावच्छिन्नाभावत्वेनैव तादृशप्रत्यक्षाभावे प्रयोजकत्वं शब्दभिन्नविशेषगुणापेक्षयेत्यादिः रूपापेक्षया स्पर्शस्य लाघवाभावात्तथा च उद्भूतरूपत्वेन उद्भूतस्पर्शत्वेन वा कारणत्वमित्यत्र विनिगमनाविरहः वायोरिव प्रभायाः प्रत्यक्षाभावे इष्टापत्तिसम्भवादित्यत्रैव तद्ग्रन्थतात्पर्यमिति बोध्यम् । एतदेव स्पष्टयति ॥

स्पृशामीति प्रत्ययसम्भवात् वायोरपि प्रत्यक्षत्वं सम्भवत्येव बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षभावे न रूपस्य तथा स्पर्शस्य हेतुत्वं वायुप्रभयोरेकत्वं गृह्यत एव क्वचिद्द्वित्वादिकमपि कश्चित् सङ्ख्यापरिमाणाद्यग्रहो दोषादित्याहुः ॥ ५६ ॥

प्रभा.

**बहिरिन्द्रियेति** ॥ एवंचेत्यादिः । वायोः प्रत्यक्षत्वावश्यकत्वे चेत्यर्थः ॥ **हेतुत्वमिति** ॥ व्यभिचारादिति शेषः । ननु द्रव्यस्पार्शनं प्रति महत्त्वावच्छिन्नोद्भूतस्पर्शावच्छिन्नत्वक्संयोगस्य द्रव्यसमवेतस्पार्शनं प्रति तादृशत्वक्संयुक्तसमवायस्य हेतुत्वमुक्तकारणबलात् त्रुटिस्पार्शनवारणाय द्रव्यवृत्तिलौकिकविषयतासंबन्धेन स्पार्शनं प्रति तादात्म्यसंबन्धेन त्रुटेः प्रतिबन्धकत्वंच कल्प्यम् । नचैवं सति द्वितीयकार्यकारणभावमहिम्ना त्रुटिगतपरिमाणादेः स्पार्शनापत्तिरिति वाच्यम् । तत्स्पार्शनवारणाय त्रुटिसमवेतस्पर्शस्पार्शनोपपत्तये च स्पर्शान्यद्रव्यसमवेतस्पार्शनं प्रति तत्संयुक्तस्पार्शनवत्समवायत्वेन हेतुत्वस्वीकारान्नोक्तदोषः । एवंच त्रुटिभिन्नस्थूलवायोः स्पार्शनाङ्गीकारे तद्गतसङ्ख्यापरिमाणादेरप्युक्तकारणबलात् स्पार्शनापत्त्या वायोः प्रत्यक्षत्वमेवाङ्गीकर्तव्यमित्याशङ्कां तादृशसङ्ख्यापरिमाणादेः प्रत्यक्षत्वाङ्गीकारेण परिहरति ॥ **वायुप्रभयो-**

दिनकरीयम्.

शङ्कते ॥ **इष्टेति** ॥ प्रतिबन्द्योत्तरयति ॥ **उद्भूतेति** ॥ उपसंहरति ॥ **तस्मादिति** ॥ ननु त्रुटेः स्पार्शनानङ्गीकारात्तत्स्पार्शनवारणाय स्पर्शान्यद्रव्यसमवेतस्पार्शनं प्रति त्वक्संयुक्तस्पार्शनवद्द्रव्यसमवायत्वेन हेतुत्वस्य वाच्यतया वायोः स्पार्शनाङ्गीकारो नोचितः अन्यथा वायुगतसङ्ख्यापरिमाणयोस्त्वचा ग्रहणप्रसङ्गादित्यत आह ॥ **वायुप्रभयोरिति** ॥ प्रभोपादानं दृष्टान्तार्थम् ॥ **गृह्यत एवेति** ॥ तथा च वायुगतसङ्ख्यादिग्रहे इष्टापत्त्या वायोः स्पार्शनाङ्गीकारे बाधकाभाव इति भावः ॥ **क्वचिदिति** ॥ सजातीयसंवलनाभाव इत्यर्थः । आदिपदात् परिमाणपरिग्रहः तद्ग्रहश्च भूयोऽवयवावच्छेदेन त्वगिन्द्रियसन्निकर्षस्थले बोध्यः । ननु सजातीयसंवलनदशायां भूयोऽवयवावच्छेदेन त्वगिन्द्रियसन्निकर्षाभावे च कथं न वायुगतद्वित्वपरिमाणयोर्ग्रह इत्यत आह ॥ **क्वचित्सङ्ख्यापरिमाणेति** ॥ **दोषादिति** ॥ सजातीयसंवलनादिरूपदोषादित्यर्थः । आहुरित्यनेनास्वरसस्तद्बीजं तु वायोः प्रत्यक्षतासन्देहेन लाघवान्मूर्तप्रत्यक्षत्वावच्छिन्नं प्रति रूपत्वेनैव का

रामरुद्रीयम्.

**प्रतिबन्द्येति** ॥ समानं विरोध्युत्तरं प्रतिबन्दी ॥ **उपसंहरतीति** ॥ गुरुभूतस्यापि आत्मावृत्तीत्यादिना पूर्वमुक्तस्य कारणत्वेन व्यवस्थापयतीत्यर्थः ॥ **नोचित इति** ॥ चतुरणुकादिवायोरपि स्पर्शान्यत्वाद्द्रव्यसमवेतत्वाच्च तत्र कारणीभूतत्वक्संयुक्तस्पार्शनवत्समवायस्याभावात् त्र्यणुकस्य स्पार्शनाविषयत्वादिति भावः । ननु वायुगतसङ्ख्यादिप्रत्यक्षापत्तिदोषेणैव वायुप्रभयोरिति ग्रन्थस्यावतारितत्वेन तत्र प्रभागतसङ्ख्याप्रत्यक्षे इष्टापत्तिरयुक्तेत्यत आह ॥ **दृष्टान्तार्थमिति** ॥ **बाधकाभाव इति** ॥ अत्र च यद्यपि वायोः स्पार्शनोपगमे तस्यापि स्पर्शान्यद्रव्यसमवेतत्वेन तत्प्रत्यक्षे कारणीभूतस्य त्वक्संयुक्तस्पार्शनवत्समवेतत्वस्य विरह एव बाधको भवति परमाणुस्तु महत्त्वाभावादेव न स्पार्शनयोग्यः । न च वायुचतुरणुकस्य नेष्यत एव स्पार्शनमपि तु पञ्चाणुकादीनामेवेति वाच्यम् । चतुरणुकस्य स्पार्शनाविषयत्वे पञ्चाणुकेऽपि कारणासंपत्तेरिदमसङ्गतमित्याक्षिप्य तथापि वायोः स्पार्शनमङ्गीकुर्वता नवीनेन द्रव्यसमवेतेत्यत्र द्रव्ये त्रुटिभिन्नत्वस्य प्रकृष्टमहत्त्वस्य वा विशेषणतामङ्गीकृत्यैव वायुस्पार्शनस्योपपादनीयत्वान्नासङ्गतिः ग्रन्थकारेण च प्राचीनसम्मतकार्यकारणभाव एव प्रदर्शितस्तेन वायोः स्पार्शनानङ्गीकारेण द्रव्ये तद्विशेषणस्यानर्थकत्वादिति केचन समादधिरे । तन्न मनोरमम् । वायुस्पार्शनानङ्गीकर्त्रापि पार्थिवचतुरणुकादिस्पार्शनोपपत्तये द्रव्ये तद्विशेषणस्योपादेयत्वात् । वस्तुतः स्पार्शनवत्त्वं च न लौकिकविषयतया स्पार्शनविशिष्टत्वं तथासत्यवयवस्पार्शनानुत्तरावयविस्पार्शनानुपपत्तेर्नापि स्पार्शनोपलक्षितत्वं यदङ्कुरावयवस्य स्पार्शनमसिद्धं तस्य स्पार्शनानुपपत्तेरतः स्पार्शनयोग्यत्वमेव तद्वाच्यं तद्योग्यता च प्राचां महत्त्वे सति उद्भूतरूपस्पर्शवत्त्वं नवीनानां उद्भूतस्पर्श-

द्रव्याध्यक्षे त्वचो योगो मनसा ज्ञानकारणम् ।

**त्वचो योग इति** ॥ त्वङ्मनस्संयोगो ज्ञानसामान्ये कारणमित्यर्थः । किं तत्र प्रमाणं सुषुप्तिकाले त्वचं त्यक्त्वा पुरीतति वर्तमानेन मनसा ज्ञानाजननमिति । ननु

प्रभा.

**रिति** ॥ अत्र प्रभोपादानं दृष्टान्तग्रहणार्थम् ॥ **एकत्वमिति** ॥ एकत्वादिकमित्यर्थः । आदिना परिमाणादिपरिग्रहः ॥ **गृह्यत एवेति** ॥ तथाच वायुगतसङ्ख्यादिस्पार्शने इष्टापत्त्या तादृशवायोः स्पार्शनाङ्गीकारे बाधकाभाव इति भावः ॥ **क्वचिदिति** ॥ प्रभयोर्वाय्वोश्च विलक्षणसंयोगाभावस्थल इत्यर्थः । तथाच तादृशसंयोगाभावस्थले अस्मिन् गृहे एका प्रभा अन्यस्मिन्गृहे एका प्रभा अयमेको वायुः अयमेको वायुः इत्याकारकापेक्षाबुद्धिसंभवात्तेन द्वित्वोत्पत्त्या द्वित्वप्रत्यक्षमपि संभवति तादृशविलक्षणसंयोगसत्त्वे तु तादृश—संबन्धरूपदोषवशात् निरुक्तापेक्षाबुद्ध्यसंभवात् द्वित्वाद्यनुत्पत्त्या तत्प्रत्यक्षासंभवादिति समुदितग्रन्थतात्पर्यार्थ इति भावः । अत्र प्रभायाः प्रत्यक्षत्वस्य उभयमतसिद्धत्वात् द्रव्यवृत्तिलौकिकविषयतासंबन्धेन मानसान्यप्रत्यक्षं प्रति उद्भूतस्पर्शस्य निर्णीतव्यभिचारकत्वेन न हेतुत्वं वायोः प्रत्यक्षत्वस्य उभयवाद्यसम्मतत्वेन मध्यस्थस्य सन्देहविषयतया तत्सन्देहाधीनव्यभिचारसंशयविषयत्वेन उद्भूतरूपस्य सन्दिग्धव्यभिचारकत्वात् ईदृशव्यभिचारसंशयस्य कारणताग्रहप्रतिबन्धकत्वेऽपि उद्भूतरूपत्वेन कारणत्वे लाघवमिति लाघवज्ञानस्योत्तेजकतया उत्तेजकाभावविशिष्टतादृशसंशयरूपप्रतिबन्धकाभावेन उद्भूतरूपस्य कारणताग्रहसंभवः । उद्भूतस्पर्शस्य तु व्यभिचारनिर्णयवत्त्वेन तत्र लाघवज्ञानस्यानुत्तेजकतया कारणताग्रहो न संभवतीति अरुचिं हृदि निधायाहुरित्युक्तामिति ध्येयम् ॥ ५६ ॥

**ज्ञानसामान्य इति** ॥ जन्यज्ञानसामान्य इत्यर्थः । ज्ञानाजननमित्यत्र प्रमाणमित्यनुषज्यते । चक्षुरादिनेत्या-

दिनकरीयम्.

रणत्वमुचितम् । नच वायुगतप्रत्यक्षतासन्देहाधीनव्यभिचारसन्देहस्य प्रतिबन्धकस्य सत्त्वात्कथं कारणताग्रह इति वाच्यम् । लाघवतर्काभावविशिष्टस्यैव व्यभिचारसन्देहस्य प्रतिबन्धकतया प्रकृते पूर्वोक्तलाघवतर्कस्य सत्त्वेन तदभावविशिष्टव्यभिचारसन्देहाभावस्य सत्त्वात् । यच्चोक्तं प्रभाया अप्रत्यक्षे त्विष्टापत्तिरित्येव किं न स्यादिति तदपि न उपरिदेशे विहङ्गम इत्यत्र प्रभामण्डलस्यैवोपरिदेशतया तत्प्रत्यक्षं विनोपरिदेशे विहङ्गम इति प्रत्यक्षानुपपत्तेरित्यादिकामिति ॥ ५६ ॥

**ज्ञानसामान्ये** ॥ जन्यज्ञानसामान्ये ॥ **ज्ञानाजननमिति** ॥ प्रमाणमित्यनुषज्यते । चक्षुरादिने-

रामरुद्रीयम्.

सहितं महत्त्वमतो नानुपपत्तिः इत्थं च पूर्वोक्ते वायुस्पार्शनानौचित्ये अन्यथेत्यादिनोक्तस्य वायुगतसङ्ख्यापरिमाणप्रत्यक्षापादनस्यैव बीजता बोध्या ॥ **तद्ग्रहश्चेति** ॥ परिमाणग्रहश्चेत्यर्थः ॥ **मूर्तप्रत्यक्ष इति** ॥ इन्द्रियत्वस्यातिगुरुतया बहिरिन्द्रियजन्यत्वपरित्यागः कृतः ॥ **उक्तलाघवेति** ॥ मूर्तप्रत्यक्षाभावे रूपस्पर्शयोरभावद्वयस्य प्रयोजकताकल्पनमपेक्ष्य एकस्य रूपाभावस्य तथात्वे लाघवमित्यनेनोक्तलाघवेत्यर्थः । नन्वेकस्पर्शाभावस्य तथात्वेऽपि लाघवानपायात् स्पर्शस्यैव कारणता लाघवात् सिध्यतामित्यत आह ॥ **यच्चोक्तमिति** ॥ **उपरिदेशे विहङ्गम इतीति** ॥ एतच्च प्रात्यक्षिकप्रतीत्यभिप्रायेण । शाब्दबोधे प्रथमान्तपदोपस्थाप्यस्यैव मुख्यविशेष्यतया भाननियमेन उपरिदेशस्याप्रत्यक्षत्वेऽपि विहङ्गमांशे विशेषणतयोपनयसन्निकर्षेण भानसम्भवादनुपपत्त्यभावात्तथा चोपरिदेशविशेष्यकविहङ्गमप्रकारकप्रत्यक्षस्यैवानेन शब्देनाभिलापादुपनीतं विशेषणतयैव भासत इति नियमादुपरिदेशस्याप्रत्यक्षत्वे तस्य प्रत्यक्षे मुख्यविशेष्यतया भानानुपपत्तिः वायोरप्रत्यक्षत्वे तु न काचिदनुपपत्तिरस्तीति भावः ॥ ५६ ॥

ननु ज्ञानसामान्ये त्वङ्मनोयोगस्य कारणत्वं मूलोक्तमसङ्गतं नित्यज्ञाने तस्याकारणत्वादतो व्याचष्टे ॥ **जन्यज्ञानेति** ॥ **प्रमाणमितीति** ॥ इदमुपलक्षणं तत्रेत्यस्याप्यनुषङ्गो बोध्यः । आम्रस्य को रस इति प्रश्नोत्तरभूते मधुर इत्यादौ किंशब्दं विहाय प्रश्नस्थस्य सर्वस्यैव अनुषङ्गदर्शनादन्यथा प्रश्नवाक्यतो रसत्वा-

सुषुप्तिकाले किं ज्ञानं भविष्यति अनुभवरूपं स्मरणरूपं वा । नाद्यः अनुभवसामग्र्यभावात् तथाहि प्रत्यक्षे चक्षुरादिना मनस्संयोगस्य हेतुत्वात्तदभावादेव न चाक्षुषादिप्रत्यक्षम् । ज्ञानादेरभावादेव न मानसं प्रत्यक्षं ज्ञानाद्यभावे च आत्मनोऽपि न प्रत्यक्षमिति । व्याप्तिज्ञानाभावादेव नानुमितिः सादृश्यज्ञानाभावान्नोपमितिः पदज्ञानाभावान्न शाब्दबोधः इत्यनुभवसामग्र्यभावान्नानुभवः । उद्बोधकाभावाच्च न स्मरणम् । मैवम् । सुषुप्तिप्राक्कालो-

प्रभा.

दिपदेन बहिरिन्द्रियमात्रपरिग्रहः ॥ **तदभावादेवेति** ॥ चक्षुरादिमनःसंयोगरूपकारणाभावादेवेत्यर्थः ॥ **न मानसं प्रत्यक्षमिति** ॥ ज्ञानादेर्न मानसप्रत्यक्षमित्यर्थः ॥ **न प्रत्यक्षमिति** ॥ योग्यविशेषगुणसंबन्धेनैवात्मनः प्रत्यक्षस्वीकारेण योग्यविशेषगुणप्रत्यक्षसामग्र्यन्तर्गतज्ञानाद्यभावान्नात्मप्रत्यक्षमिति भावः ॥ **उद्बोधकाभावादिति** ॥ उद्बोधकस्य फलबलकल्प्यत्वादिति भावः ॥ **सुषुप्तिप्राक्कालोत्पन्नेच्छादिव्यक्तेरिति** ॥ ननु ज्ञानमुपेक्ष्य इच्छादिग्रहणे किं बीजमिति चेदत्र केचित् इच्छाया आदिरिति व्युत्पत्त्या ज्ञानमात्रं विवक्षितमित्याहुः । अपरे तु इच्छादिव्यक्तिशब्दस्यावृत्तिस्वीकारेण इच्छाया आदिरिति व्युत्पत्त्या एकेच्छादिव्यक्तिशब्देन ज्ञानसामान्यं लभ्यते इच्छा आदिर्यस्येति तद्गुणसंविज्ञानबहुव्रीहिणा अपरेच्छादिव्यक्तिशब्देन इच्छाकृत्यादिकमपि लभ्यते इति सुषुप्तिप्राक्कालोत्पन्नयोग्यविभुविशेषगुणानां तत्संबन्धेनात्मनश्च सुषुप्तिकाले प्रत्यक्षापत्तिरित्यर्थो लभ्यत इति न न्यूनतेत्याहुः । तदुभयमपि मन्दं गुणविभागकारिकायां बुद्धिपदेच्छापदयोः अविलम्बेनोच्चारितत्वाभावेन इच्छोपस्थित्यव्यवहितपूर्वकालीनोपस्थितिविषयत्वरूपेच्छादित्वस्य बुद्धावसंभवेन षष्ठीसमासेन ज्ञानस्य लाभासंभवात् । एवं विभागकारिकायामिच्छापदयत्नपदयोरविलम्बेनाच्चारितत्वाभावेनेच्छोपस्थित्यव्यवहितपूर्वकालिकोपस्थितिविषयत्वेच्छोपस्थित्यव्यवहितोत्तरकालीनोपस्थितिविषयत्वान्यतरवत्त्वरूपेच्छादित्वस्य इच्छाकृत्यादौ असंभवेन तद्गुणसंज्ञानबहुव्रीहिणा कृत्यादेरपि लाभासंभवात् । नच ज्ञानेच्छाकृतय इति प्रवादमाश्रित्य तत्पुरुषसमासेन ज्ञानस्य तद्गुणसंविज्ञानबहुव्रीहिणा चेच्छाकृत्यादेर्लाभ उक्त इति वाच्यं स्वकृतविभागकारिकाक्रमं परित्यज्य बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नाश्चेति गुणसूत्रविरुद्धज्ञानेच्छाकृतय इति लोकप्रवादमाश्रित्य इच्छादिव्यक्तिरित्युक्तमिति विश्वनाथपञ्चाननस्य मूढाभिप्रायकल्पनानौचित्यात् । अन्येतु इच्छादिव्यक्तिरित्यत्रादिपदस्य कारणार्थकतया

दिनकरीयम्.

त्यादिना त्वगादिपरिग्रहः ॥ **तदभावादेव** ॥ चक्षुरादिना मनोयोगाभावादेव ॥ **ज्ञानादेरभावादेव न मानसमिति** ॥ अत्र ज्ञानादेर्न मानसमित्यन्वयः । अभावादित्यत्रापि ज्ञानादेरित्यस्यान्वयो बोध्यः ॥ **न प्रत्यक्षमिति** ॥ योग्यगुणसम्बन्धेनैवात्मनो मानसप्रत्यक्षस्वीकाराद्योग्यविशेषगुणप्रत्यक्षसामग्र्यन्तर्गतस्य ज्ञानादेरभावादेव नात्मप्रत्यक्षमित्यर्थः ॥ **उद्बोधकाभावा-**

रामरुद्रीयम्.

बान्तरधर्मप्रकारकाम्रविशेष्यकज्ञानेच्छाया लाभेनोत्तरतो मधुरत्वप्रकारकाम्ररसविशेष्यकबोधानुत्पत्तौ तस्योत्तरत्वानुपपत्तेरिति ध्येयम् ॥ **त्वगादीति** ॥ पुरीतति त्वगिन्द्रियाभावेन तत्र स्थितमनस्त्वक्संयोगासम्भवादिति भावः । ननु ज्ञानादेरभावादेव न मानसमिति मूलेकेषामित्याकाङ्क्षाया अनिवृत्तेराह ॥ **अत्रेति** ॥ नन्वेवमभावादित्यत्रापि तादृशाकाङ्क्षायास्सत्त्वात् तदनिवृत्तितादवस्थ्यमत आह ॥ **अभावादित्यत्रापीति** ॥ यद्यपि न मानसमित्यस्य मानससामान्याभाव एवार्थस्सम्भवति मनोयोग्यस्यात्मनः सत्त्वेऽपि योग्यगुणसम्बन्धाभावादेव तत्प्रत्यक्षस्याप्यसम्भवात्तथाप्यत्रैव मानससामान्याभावोक्तौ उत्तरग्रन्थानुत्थितेस्तथा नोक्तमिति ध्येयम् ॥ **योग्यगुणेति** ॥ मनोग्रहणयोग्येत्यर्थः । धर्माधर्माश्रयोऽध्यक्षो विशेषगुणयोगत इति कारिकायामेवोक्तत्वादिति भावः । ननु जातमात्रस्य प्राथमिकेष्टसाधनतास्मरणे जीवनादृष्टस्याप्युद्बोधकत्वकल्पनादत्रापि सम्बन्धिज्ञानरूपोद्बोधकासम्भवेऽप्यदृष्टविशेषस्योद्बोधकत्वसम्भवादुद्बोधकाभावादिति

त्पन्नेच्छादिव्यक्तेस्तत्सम्बन्धेनात्मनश्च प्रत्यक्षत्वप्रसङ्गात् तदतीन्द्रियत्वे मानाभावात् सुषु-

प्रभा.

तत्पुरुषसमासेन ज्ञानस्य बहुव्रीहिणा चेच्छाजन्यकृत्यादेर्लाभ इति न न्यूनता न वा कारिकाक्रम-विरोधसूत्रविरोधावित्याहुः । तन्न । पूर्वोक्तसमासद्वयेन इच्छाकारणज्ञानस्य इच्छाजन्यकृत्यादेश्च लाभेऽपि इच्छाया इच्छाजनकत्वाभावादिच्छाजन्यत्वाभावाच्चालाभेन न्यूनताया दुर्वारत्वात् साक्षादिच्छाजन्यत्वविवक्षणे सुखदुःखादेरसङ्ग्रहप्रसङ्गात् परम्परासाधारणजन्यत्वमात्रविवक्षणे धर्माधर्मयोरपि तादृशत्वेन तत्संबन्धेनात्मप्रत्यक्षापत्तेश्च । एतेन इच्छादिव्यक्तेरित्यस्य बहुव्रीहिसमासाश्रयणे इच्छाजन्यमात्रस्यैव लाभेनाहार्यज्ञानस्यापि इच्छाजन्यत्वेन तस्यापि लाभादाव्याप्तिर्नाङ्गीकर्तव्येति कैश्चिदुक्तमपास्तं पूर्वोक्तदोषापत्तेः । अस्मद्गुरुचरणास्तु इच्छादिव्यक्तेरित्यस्य तद्गुणसंविज्ञानबहुव्रीहिणा आत्मसमवेतसुषुप्तिप्राक्कालोत्पन्नयोग्यविशेषगुणमात्रलाभमङ्गीकृत्योपपादनीयः नचैवं सति ज्ञानादिव्यक्तेरित्युक्त्यापि तादृशार्थलाभे इच्छादिव्यक्तेरित्युक्तिर्विफलेति वाच्यं निर्विकल्पकरूपज्ञानस्यापि सत्त्वेन तस्य सुषुप्तिकाले प्रत्यक्षापादनासंभवात् ज्ञानपदस्य निर्विकल्पकान्यज्ञानपरत्वे गौरवात् निर्विकल्पकान्यज्ञानव्यक्तेरित्युक्तावक्षराधिक्यात् । इच्छादिव्यक्तेरित्युक्तौ तु इच्छाया अतीन्द्रियत्वाभावेन इच्छानिष्ठयोग्यत्वरूप-समानधर्मविशिष्टसुषुप्तिप्राक्कालोत्पन्नात्मविशेषगुणमात्रस्यैव बहुव्रीहिणा लाभात् विनिगमनाभावाच्च इच्छादिव्यक्तिरित्युक्तामिति व्याचकुः । वस्तुतस्तु सुषुप्तिप्राक्काले ज्ञानसामान्योत्पादकात्ममनस्संयोगसत्त्व एव सुषुप्तिकाले तत्प्रत्यक्षवारणाय त्वङ्मनस्संयोगादेर्हेतुत्वमापद्येत तदेव न । तथाहि मनःक्रियया आत्ममनोविभागः तत आत्ममनस्संयोगनाशः ततः पुरीतति नाड्यां मनस्संयोगरूपा सुषुप्तिर्वाच्या । तत्रात्ममनोविभागकाले आत्ममनस्संयोगसत्त्वेन तस्यासमवायिकारणतायां कार्यपूर्ववृत्तित्वमात्रस्य तन्त्रत्वेनात्ममनस्संयोगनाशकाले ज्ञानोत्पत्तिसंभवेऽपि ज्ञानोत्पत्तिकाले आत्ममनस्संयोगाभावात् सुषुप्तिक्षणे मानसप्रत्यक्षापादनासंभवात् तस्यासमवायिकारणतायां कार्यकालवृत्तित्वमात्रस्य तन्त्रत्वं स्वीकृत्य सुषुप्तिकाले आत्ममनस्संयोगस्याप्युत्पत्त्या मानसप्रत्यक्षापत्तिसंभवेऽपि सुषुप्त्यव्यवहितप्राक्कालस्य आत्ममनस्संयोगनाशकतया असमवायिकारणाभावात् ज्ञानोत्पत्त्यसंभवेन सुषुप्तिकाले ज्ञानरूपविषयाभावात् मानसप्रत्यक्षस्य सुतरामापादनासंभवात् । तस्मादिच्छायाः आदिः कारणमिति विग्रहमेव स्वीकृत्य सुषुप्तिप्राक्कालोत्पन्नापेक्षाबुद्धिरूपज्ञानव्यक्तिमुपादाय सुषुप्तिकालोत्पन्नात्ममनस्संयोगेन तादृशापेक्षाबुद्धिसहकृतेन सुषुप्त्युत्पत्तिद्वितीयक्षणे तत्प्रत्यक्षापत्तिवारणाय त्वङ्मनोयोगस्य कारणत्वमभिहितम् । एवंचापेक्षाबुद्धिभिन्नात्मवृत्तियोग्यविशेषगुणानां क्षणत्रयावस्थायित्वाभावेन सुषुप्त्युत्पत्तिद्वितीयक्षणे मानसापत्त्यभावात् आदिपदस्य योग्यविशेषगुणमात्रपरत्ववर्णनं ज्ञानमात्रपरत्ववर्णनं चायुक्तं किंचिच्छादित्वेन ज्ञानस्य निवेशान्निर्विकल्पकस्येच्छाकारणत्वाभावेन तस्य निरासे व्यक्तिग्रहणादपेक्षाबुद्धिव्यक्तेः लाभ इत्येव परमार्थ इति प्रतिभाति । ननु सुषुप्तिप्राक्कालोत्पन्नज्ञानव्यक्तेः अतीन्द्रियतया सुषुप्तिकाले न तदापादनं संभवतीत्यत आह ॥ **तदतीन्द्रियत्व इ-**

दिनकरीयम्.

**दिति** ॥ उद्बोधकस्य फलबलकल्प्यत्वादिति भावः ॥ **इच्छादिव्यक्तेरिति** ॥ इच्छाया आदिरिति व्युत्पत्त्या ज्ञानमात्रं विवक्षितम् ॥ **तदतीन्द्रियत्वे** ज्ञानातीन्द्रियत्वे । ननु सुषुप्तिप्राक्कालीनज्ञानस्य निर्वि-

रामरुद्रीयम्.

मूलमसङ्गतमत आह ॥ **उद्बोधकस्येति** ॥ तथा च स्मरणस्य प्रमाणसिद्धत्वे तदनुरोधेन कस्यचिदुद्बोधः कल्पनीयः । न चात्र स्मरणमनुभवसिद्धमिति भावः । ननु प्रथमोपस्थितज्ञानमुपेक्ष्येच्छादिव्यक्तेरिति मूलाभिधानमसङ्गतमित्यत आह ॥ **इच्छाया इत्यादि** ॥ **ज्ञानमात्रमिति** ॥ यद्यपि सुषुप्तिप्राक्काले कदाचिदिच्छादेरपि सम्भवेन तदनुक्त्या मूलस्य न्यूनतापत्त्या मात्रपदमसङ्गतं किं तु तत्पुरुषबहुव्रीहिभ्यां ज्ञानादि विवक्षितमित्येव वक्तुमुचितं तथापि स्वप्नावस्थानन्तरमेव सुषुप्तिरिति नियमेन स्वप्नदशायां च मिथ्यामनःसंयोगरूपदोषवशाद्भ्रमात्मकज्ञानमेवोत्पद्यते न त्विच्छादिकमन्यथा स्वप्नदशायां चिकीर्षाबलात्प्रवृत्तेरप्या-

प्तिप्राक्काले निर्विकल्पकमेव नियमेन जायते इत्यत्रापि प्रमाणाभावात् । अथ ज्ञानमात्रे त्वङ्मनःसंयोगस्य यदि कारणत्वं तदा रासनचाक्षुषादिप्रत्यक्षकाले त्वाचप्रत्यक्षं स्यात् विषयत्वक्संयोगस्य त्वङ्मनःसंयोगस्य च सत्त्वात् परस्परप्रतिबन्धादेकमपि वा न स्यादिति । अत्र केचित् पूर्वोक्तयुक्त्या त्वङ्मनःसंयोगस्य ज्ञानहेतुत्वे सिद्धे चाक्षुषादिसामग्र्याः स्पार्शनादिप्रतिबन्धकत्वमनुभवानुरोधात् कल्प्यते इति । अन्ये तु सुषुप्त्यनुरोधे-

## प्रभा.

ति ॥ सुषुप्तिप्राक्कालोत्पन्नज्ञानस्य अतीन्द्रियत्व इत्यर्थः । ननु सुषुप्तिप्राक्काले निर्विकल्पकस्यैव जननात्तस्यातीन्द्रियत्वमुभयवादिसिद्धमत आह ॥ **सुषुप्तिप्राक्काल इति** ॥ ननु सुषुप्तिप्राक्काले नियमेन निर्विकल्पकोत्पत्तौ प्रमाणाभावेन सविकल्पकोत्पत्तावपि तस्यापि तृतीयक्षणे नाशेन सुषुप्त्यव्यवहितद्वितीयक्षणे तस्याभावेन न मानसप्रत्यक्षापादनसंभव इत्यत आह ॥ **अपीत्यादि** ॥ अपिना सुषुप्तिप्राक्काले नियमेनापेक्षाबुद्ध्यन्यज्ञानमेव जायत इत्यत्र प्रमाणाभावः समुच्चीयते । तथाच सुषुप्तिप्राक्काले निर्विकल्पकोत्पत्तौ अपेक्षाबुद्ध्यन्यसविकल्पकोत्पत्तौ वा सुषुप्तिद्वितीयक्षणे तत्संबन्धेन मानसप्रत्यक्षासंभवेऽपि यदा सुषुप्तिप्राक्काले अपेक्षाबुद्धेरुत्पत्तिः तदुत्तरं सुषुप्तिद्वितीयक्षणे तादृशज्ञानवत्त्वमादाय मानसापत्तिवारणायैव तादृशकार्यकारणभावस्यावश्यकत्वमिति भावः ॥ **त्वङ्मनोयोगस्य चेति** ॥ तदनङ्गीकारे चाक्षुषमपि न स्यादिति भावः । ननु चाक्षुषसामग्रीकाले स्पार्शनसामग्रीसत्त्वेऽपि चाक्षुषसामग्र्यास्तत्प्रतिबन्धकत्वेन तदभावविशिष्टसामग्र्यभावात् न तदा स्पार्शनापत्तिरत आह ॥ **परस्परेति** ॥ तथाचोभयसामग्र्यास्सत्त्वेन चाक्षुषसामग्र्यभावविशिष्टस्पार्शनसामग्रीरूपकारणाभावात् यथा न स्पार्शनं तथा स्पार्शनसामग्र्यभावविशिष्टचाक्षुषसामग्र्या अप्यभावात् चाक्षुषमपि न स्यादिति भावः । समाधत्ते ॥ **अत्रेत्यादि** ॥ अत्रेत्यस्य वदन्तीत्यनेनान्वयः । केचित्कल्पे चाक्षुषादिसामग्र्या इत्यत्रादिपदाद्रासनादिपरिग्रहः । स्पार्शनादीत्यत्रादिपदाद्घ्राणजादिपरिग्रहः ॥ **अनुभवानुरोधादिति** ॥ आत्ममनस्संयोगस्येव त्वङ्मनस्संयोगस्यापि सामान्यसामग्रीरूपतया चाक्षुषादिसामग्रीकाले यथा न मानसं तथा न स्पार्शनं विशेषसामग्र्यभावविशिष्टसामान्यसामग्र्या एव मानसस्पार्शनरूपफलोपधायकत्वं नतु सामान्यसामग्र्यभावविशिष्टविशेषसामग्र्याश्चाक्षुषादिरूपविशेषफलजनकत्वं अप्रसिद्धत्वादित्यनुभवबलादित्यर्थः ॥ **सुषुप्त्यनुरोधेनेति** ॥ सुषुप्तिद्वितीयक्षणे ज्ञानानुत्पत्त्यनुरोधेने-

## दिनकरीयम्.

कल्पकरूपत्वात् तदतीन्द्रियत्वमुभयवादिसिद्धमेवेत्यत आह ॥ **सुषुप्तिप्राक्काले इति** ॥ **त्वङ्मनःसंयोगस्य चेति** ॥ तदस्वीकारे चाक्षुषमपि न स्यादिति भावः । ननु चाक्षुषादिसामग्र्याः स्पार्शनप्रतिबन्धकत्वादेव न स्पार्शनं तत्रेत्यत आह ॥ **परस्परेति** ॥ **अनुभवानुरोधादिति** ॥ अनुभवस्य त्वयापि स्वहस्तितत्वादन्यथा इष्टापत्त्यादिना त्वदुक्तापत्तेरसङ्गतत्वापातादिति भावः । स्वमतमाह ॥ **अन्ये त्वित्यादिना** ॥ **सुषुप्त्यनुरोधेन** सुषुप्तौ ज्ञानानुत्पादानुरोधेन । इत्थं च चाक्षुषादिकाले पूर्वोक्तस्पार्शनापत्तिर्न स-

## रामरुद्रीयम्.

पत्त्या गत्यादेरप्यापत्तेरिति सिद्धान्तमनुसृत्यैवमभिहितामिति मन्तव्यम् । वस्तुतो ज्ञानादिव्यक्तेरित्युक्तौ केषांचिज्ज्ञानानां सिद्धान्तेऽप्यतीन्द्रियतया वक्ष्यमाणस्य तस्यातीन्द्रियत्व इत्यादिदूषणस्यासङ्गत्यापत्त्या मूलकृता ज्ञानमुपेक्षितमेतद्दूषणस्य सविकल्पकज्ञानोपगमेऽपि सुगमतया तदुपेक्ष्य निर्विकल्पकमेव जायत इत्याशङ्क्याग्रे मूले निराकरिष्यते । अत एव स्वप्नावस्थायां प्रलापादेरप्यनुभवसिद्धतया तदानीमिच्छादेः प्रामाणिकत्वेऽपि नासङ्गतिरिति युक्तमुत्पश्यामः । ननु सुषुप्तिप्राक्कालोत्पन्नज्ञानव्यक्तीनामतीन्द्रियत्वे मानाभाव इति मूलोक्तमसङ्गतं तदानीं निर्विकल्पकस्यैवोत्पत्त्या तदतीन्द्रियत्वस्य सर्ववादिसिद्धत्वादित्याशङ्क्योत्तरग्रन्थमवतारयति ॥ **नन्वित्यादि** ॥ **तदतीन्द्रियत्वं** ॥ निर्विकल्पकातीन्द्रियत्वम् । मूले विषयत्वक्संयोगस्येत्यस्य भुज्यमानद्रव्यवाय्वादिना त्वक्संयोगस्येत्यर्थः ॥ **तदस्वीकार इति** ॥ त्वङ्मनस्संयोगास्वीकार

न चर्ममनःसंयोगस्य ज्ञानहेतुत्वं कल्प्यते चाक्षुषादिप्रत्यक्षकाले त्वङ्मनःसंयोगाभावा-

**मनोग्राह्यं सुखं दुःखमिच्छा द्वेषो मतिः कृतिः ॥ ५७ ॥**

न्न त्वाचप्रत्यक्षमिति ॥ मनोग्राह्यमिति । मनोजन्यप्रत्यक्षविषय इत्यर्थः । मतिर्ज्ञानम् ।

## प्रभा.

त्यर्थः । अस्मिन्कल्पे चाक्षुषादिकाले स्पार्शनापत्तिर्नेत्याह ॥ चाक्षुषादीति ॥ अत्र केचित्कल्पे त्वङ्मनोयोगस्य ज्ञानसामान्यं प्रति हेतुत्वकल्पनेन चाक्षुषसामग्र्याः स्पार्शनप्रतिबन्धकत्वकल्पनेन च गौरवं अन्ये त्वित्यादिकल्पे चर्ममनस्संयोगस्य हेतुत्वकल्पनेन गौरवमित्यस्वरसं हृदि निधाय वदन्तीत्युक्तमिति ध्येयम् । वस्तुतस्तु त्वङ्मनस्संयोगस्य चर्ममनस्संयोगादेर्वा न जन्यज्ञानसामान्यकारणत्वं प्रमाणाभावात् । नचैवं सति तस्यासमवायिकारणजन्यत्वानुपपत्तिरिति वाच्यं आत्मविशेषगुणं प्रति केवलात्ममनस्संयोगत्वेनासमवायिकारणत्वस्वीकारेणैव तस्याप्यसमवायिकारणजन्यत्वोपपत्तेः । अत एव सुषुप्तिकाले जीवनयोनियत्नोत्पत्तिरपि सङ्गच्छते किंतु परात्मनः परेण मनसा सुषुप्तिकाले स्वीयात्मनः स्वीयमनसा च प्रत्यक्षापत्तिवारणाय परात्मवृत्तिस्वीयमनस्संयोगव्यावृत्तं स्वात्मवृत्तिसुषुप्तिकालीनस्वीयमनस्संयोगव्यावृत्तं च वैजात्यमङ्गीकृत्य तत्पुरस्कारेणात्ममनस्संयोगस्य मानसत्वावच्छिन्नं प्रति हेतुत्वं कल्प्यते अनेनैव पूर्वोक्तातिप्रसङ्गवारणे त्वङ्मनोयोगस्य चर्ममनोयोगादेर्वा जन्यज्ञानसामान्यस्य हेतुत्वं अप्रामाणिकमेव । नचैवं सति त्वचो योगो मनसा ज्ञानकारणमिति मूलविरोधापत्तिरिति वाच्यं मनसेति तृतीयान्तपदस्य काकाक्षिन्यायेन योगपदेनेव ज्ञानपदेनापि साकाङ्क्षत्वान्मनसा त्वगिन्द्रिययोगः मनसा ज्ञानं प्रति कारणमिति कारिकार्थो लभ्यते । मनसा ज्ञानं मानसप्रत्यक्षं एवं मनसा त्वचो योग इत्यनेन त्वच इत्यत्र षष्ठ्याः संवन्धित्वार्थकतया त्वग्विशिष्टमनस्संयोगः आत्ममनःसंवन्ध इत्यर्थात् त्वग्विशिष्टमनसा सहात्मसंयोगस्य कारणत्वं लभ्यते । तथाच तादृशसंयोग एव विजातीयमनःसंयोग इति पूर्वोक्तार्थ एव पर्यवसानान्न मूलविरोध इति तत्वैव मूलकाराभिप्राय इति प्रतिभाति । मनोग्राह्यत्वस्य सर्वत्र वर्तमानत्वादाह ॥ मनोजन्येति ॥ मानसत्वाश्रयनिरू-

## दिनकरीयम्.

म्भवतीत्याह ॥ चाक्षुषादीति ॥ अत्र नव्याः सुषुप्त्यव्यवहितप्राक्काले ज्ञानोत्पत्तिर्यदि स्यात्तदा तत्प्रत्यक्षापत्तिभिया त्वङ्मनःसंयोगस्य चर्ममनःसंयोगस्य वा हेतुत्वं सैव तु न युक्तिसिद्धा तथा हि सुषुप्त्यनुकूलमनःक्रियया मनसा आत्मनो विभागस्तत आत्ममनःसंयोगनाशस्ततः पुरीततिरूपोत्तरदेशेन मनःसंयोगरूपा सुषुप्तिरुत्पद्यते एवं च सुषुप्त्यव्यवहितपूर्वक्षणे आत्ममनःसंयोगरूपासमवायिकारणनाशात् तत्क्षणे ज्ञानोत्पत्तेरभावात् असमवायिकारणस्य कार्यसहभावेन हेतुत्वात् । यदि च कार्यनाशजनकनाशप्रतियोगिन एवा-

## रामरुद्रीयम्.

इत्यर्थः ॥ न स्यादितीति ॥ ज्ञानसामान्ये त्वया तस्य हेतुत्वस्वीकारादिति भावः ॥ स्वहस्तितत्वादिति ॥ स्वीकृतत्वादित्यर्थः ॥ इष्टापत्त्यादिनेति ॥ स्पार्शनं चाक्षुषादिकालेऽपि भवत्येवेतीष्टापत्तेरित्यर्थः । आदिना चाक्षुषादिकं कदापि नोत्पद्यत एवेत्यपलापपरिग्रहो बोध्यः । ननु पुरीतति मनःप्रवेशस्यैव सुषुप्तिपदार्थतया त्वङ्मनःसंयोगस्य ज्ञानकारणत्वेऽपि तदनुपपत्त्यभावात्सुषुप्त्यनुरोधेनेत्यसङ्गतमत आह ॥ सुषुप्ताविति ॥ न सम्भवतीति ॥ चर्ममनःसंयोगस्य चाक्षुषादिकाले सत्त्वेऽपि तत्र स्थितेन त्वगिन्द्रियेण मनःसंयोगाभावादिति भावः ॥ नव्यमतमुपन्यस्यति ॥ अत्र नव्या इति ॥ तत्क्षणे सुषुप्त्यव्यवहितप्राक्क्षणे ॥ अभावादिति ॥ ननु कारणस्य कार्योत्पादपूर्वक्षण एव सत्त्वमपेक्षितं ननु कार्योत्पत्तिकालेऽपि तथाच ज्ञानोत्पत्तिपूर्वक्षणे विभागकालेऽपि आत्ममनःसंयोगोऽस्त्येव ज्ञानोत्पत्तिकाल एव पूर्वोत्पन्नविभागेन तस्य नाशादतः सुषुप्त्यव्यवहितपूर्वक्षणेऽपि ज्ञानोत्पत्तौ न बाधकमत आह ॥ असमवायिकारणस्येति ॥ कार्यसहभावेनेति ॥ कार्यकालवृत्तित्ववैशिष्ट्येनेत्यर्थः ॥ यदि चेति ॥ असमवायिकारणनाशस्य द्रव्यरूपकार्यनाशं प्रत्येव हेतुता न तु गुणादिरूपकार्यनाशं प्रत्यपीति द्रव्यं प्रत्येवासमवायि

कृतिर्यत्नः । एवं सुखत्वदुःखत्वादिकमपि मनोग्राह्यम् । एवमात्मापि मनोग्राह्यः किं तु मनोमात्रगोचर इत्यनेन पूर्वमुक्तत्वादत्र नोक्तः ॥ ५७ ॥

## प्रभा.

पितलौकिकविषयतावदित्यर्थः । तेन चाक्षुषादेर्मनोजन्यत्वेऽपि न रूपादिसाधारण्यं मतिशब्दस्य करणव्युत्पत्त्या चक्षुरादिप्रमाणपरत्वादाह ॥ **ज्ञानमिति** ॥ कृतिशब्दस्य करणव्युत्पत्त्या कृतिसाधनपरत्वादाह ॥ **प्रयत्न इति** ॥ न्यूनतां परिहरति ॥ **एवमिति** ॥ दुःखत्वादिकमित्यादिपदात् ज्ञानत्वेच्छात्वादेः परिग्रहः । नन्वात्मनोऽपि मनोग्राह्यत्वेन तदनुक्तौ मूलकारस्य न्यूनतेत्याशङ्कां परिहरति ॥ **एवमिति** ॥ **मनोग्राह्य इति** ॥ मनोग्राह्य एवेत्यर्थः । तर्हि कुतो न प्रतिपादितमित्यत आह ॥ **किंत्विति** ॥ **इत्यनेनेति** ॥ इति यथाश्रुतमूलेनेत्यर्थः ॥ **नोक्तमिति** ॥ अन्यथा पौनरुक्त्यापत्तिरिति भावः ॥ ५७ ॥

## दिनकरीयम्.

सा[illegible]ायिकारणस्य कार्यसहभावेन हेतुत्वमिति मन्यते तथापि न सुषुप्त्यव्यवहितप्राक्कालोत्पन्नज्ञानव्यक्तेः सुषुप्तिकाले प्रत्यक्षापात्तीभिया त्वङ्मनःसंयोगादेर्हेतुत्वं विजातीयात्ममनःसंयोगस्य हेतुत्वेनैव तत्प्रत्यक्षवारणात् । तच्च वैजात्यं परात्ममनःसंयोगपुरीतत्त्ववच्छिन्नात्ममनःसंयोगव्यावृत्तमेषितव्यमिति भावः । नच वैजात्येनात्ममनःसंयोगस्य त्वङ्मनःसंयोगस्य वा हेतुत्वमित्यत्र विनिगमकाभावः त्वङ्मनःसंयोगादेरवच्छेदकतासंबन्धेन हेतुत्वापेक्षया समवायेनात्ममनःसंयोगस्य हेतुत्वे लाघवात् त्वङ्मनःसंयोगस्य हेतुत्वे चाक्षुषादिसामग्र्याः स्पार्शनप्रतिबन्धकत्वकल्पनागौरवाच्च । एतेन यत्र मनःक्रियया न पुरीतति संयोगरूपा सुषुप्तिः किंतु पुरीतति क्रिययैवात्मसंयुक्तेन मनसा पुरीतति संयोगरूपा सुषुप्तिः तत्र पूर्वोक्तापत्तिवारणाय त्वङ्मनःसंयोगादेर्हेतुत्वमित्यपास्तम् । पुरीतति क्रियाजन्यमनःपुरीतति संयोगस्य सुषुप्तित्वाभावाच्च तदानीं मनसः सर्वावयवावच्छेदेन पुरीतति संयोगाभावेन पुरीतति बहिर्देशावच्छिन्नात्ममनःसंयोगस्य सत्त्वात् ज्ञानाद्युत्पत्तौ बाधकाभावात् । अत एव यदा त्वचं त्यक्त्वा मनः पुरीततिमनुविशतीति ग्रन्थकाराणां लेखः सङ्गच्छत इति वदन्ति । मनोग्राह्यत्वस्य सार्वत्रिकत्वादाह ॥ **मनोजन्येति** ॥ मनोमात्रजन्येत्यर्थः । न्यूनतां परिहरति ॥ **एवमिति** ॥ ५७ ॥

## रामरुद्रीयम्.

कारणस्य कार्यकालवृत्तित्वेन कारणता नतु गुणादिकं प्रत्यपीति भावः ॥ **तत्प्रत्यक्षवारणात्** ॥ सुषुप्त्यव्यवहितपूर्वक्षणोत्पन्नज्ञानप्रत्यक्षवारणात् पुरीतदवच्छेदेनात्ममनःसंयोगे वैजात्यानङ्गीकारादिति भावः ॥ **वैजात्येनेति** ॥ यद्यप्यात्ममनःसंयोगस्य कारणता क्लृप्तैव वैजात्यस्य तदवच्छेदकत्वमेव कल्पनीयं त्वङ्मनःसंयोगस्य तु कारणतैव न क्लृप्तेति वैषम्यान्न विनिगमनाविरहावकाशस्तथापि वैजात्यस्याक्लृप्तस्य कल्पनीयतया क्लृप्तत्वङ्मनस्संयोगे कारणतैव किं न कल्प्यते कल्पनीयस्योभयत्र तुल्यत्वादिति भावः । त्वङ्मनस्संयोगादेरित्यादिना चर्ममनस्संयोगपरिग्रहः ॥ **अवच्छेदकतेति** ॥ समवायेन तयोरात्मन्यसत्त्वादिति भावः ॥ **लाघवादिति** ॥ अवच्छेदकतायास्तत्तदवच्छेदकस्वरूपायाः कारणतावच्छेदकसम्बन्धत्वे नानाव्यक्तिषु संबन्धत्वकल्पने गौरवं एकस्य समवायस्य तथात्वे लाघवादित्यर्थः । त्वङ्मनस्संयोगस्य कारणतापक्षे गौरवान्तरमप्याह ॥ **चाक्षुषादीति** ॥ **एतेनेत्यादि** ॥ वक्ष्यमाणदूषणेनेति तदर्थः । एवं च सुषुप्तित्वाभावाच्चेति चकारः प्रामादिक एवेति बोध्यम् । न च विजातीयात्ममनःसंयोगस्य समवायेन कारणत्वे लाघवस्यापि चकारेण समुच्चयसम्भवाच्चकारस्य प्रामादिकत्वकल्पनमसङ्गतमिति वाच्यम् । पुरीततिक्रियया सुषुप्तिस्थले पूर्वतनात्ममनस्संयोगानपायात्सुषुप्तावपि ज्ञानोत्पादापत्त्या तद्वारणाय पुरीततिमनस्संयोगस्य ज्ञानं प्रति प्रतिबन्धकताकल्पनस्यावश्यकत्वे वैजात्यं कल्पयित्वा विजातीयात्ममनःसंयोगत्वेन कारणतायामेव मानाभावात् । यदि च तत्संयोगव्यक्तावपि वैजात्यं नाङ्गीक्रियत इत्युच्यते तदा जाग्रदवस्थायामपि तदात्ममनःसंयोगव्यक्तितो ज्ञानानुत्पादप्रसङ्ग इत्यवधेयम् । अथ पुरुषान्तरीयात्मना पुरुषान्तरीयमनस्संयोगात् ज्ञानोत्पत्तिवारणाय पुरुषान्तरीयात्ममनःसंयोगव्यावृत्तवैजात्यं कल्पयित्वा विजातीयात्ममनःसंयोगत्वेन ज्ञा-

ज्ञानं यन्निर्विकल्पाख्यं तदतीन्द्रियमिष्यते ।

**चक्षुःसंयोगाद्यनन्तरं घट इत्याकारकं घटत्वादिविशिष्टं ज्ञानं न सम्भवति पूर्वं विशेषणस्य घटत्वादेर्ज्ञानाभावात् विशिष्टबुद्धौ विशेषणज्ञानस्य कारणत्वात् तथा च प्रथम-**

## प्रभा.

ननु ज्ञानं यन्निर्विकल्पाख्यमित्यनेन निर्विकल्पस्यातीन्द्रियत्वमुक्तं तच्चायुक्तं प्रमाणाभावेन निर्विकल्पकस्यैवासिद्धत्वादित्याशङ्कां प्रमाणप्रदर्शनेन स्वयं परिहरति ॥ **मुक्तावल्यां चक्षुस्संयोगादीति** ॥ महत्त्वावच्छिन्नोद्भूतरूपावच्छिन्नालोकसंयोगावच्छिन्नचक्षुस्संयोगाद्यनन्तरमित्यर्थः । आदिना त्वक्संयोगपरिग्रहः । चक्षुस्संयोगाद्यनन्तरमित्यनेन तादृशचक्षुस्संयोगशून्यकाले घट इत्याकारकस्मृतिसंभवेऽपि तादृशप्रत्यक्षसाम्याः प्रतिबन्धकत्वेन तदुत्तरं तादृशस्मरणमपि न संभवतीति सूच्यते । तथाच निर्धर्मितावच्छेदककानुमितेरप्रसिद्धया घट इति ज्ञानस्य अनुमितिरूपता न संभवति अत एव उपमित्यादिरूपतापि तस्य न संभवतीति तदाकारकज्ञानसामान्यासंभवः उक्त इति भावः । ननु घटत्वविशिष्टवैशिष्ट्यज्ञानस्यापि घटत्वविशिष्टज्ञानात्मकतया विशेषणतावच्छेदकप्रकारकज्ञानरूपकारणाभावादेव तदनुत्पत्तेर्न निर्विकल्पापेक्षेत्यत आह ॥ **घट इत्याकारकमिति** ॥ तथाच तस्य विशिष्टवैशिष्ट्यावगाहित्वाभावाद्विशेषणतावच्छेदकप्रकारकज्ञानस्याहेतुतया निर्विकल्पकापेक्षा आवश्यकीति भावः ॥ **न संभवतीति** ॥ नोत्पत्तुमर्हतीत्यर्थः । तत्र हेतुमाह ॥ **पूर्वमिति** ॥ घट इति ज्ञानाव्यवहितप्राक्क्षण इत्यर्थः ॥ **विशेषणस्येति** ॥ घट इति ज्ञाननिरूपितविशेषणताश्रयस्येत्यर्थः । ननु घटत्वज्ञानाभावे घट इति ज्ञानाभावः कुत इत्यत आह ॥ **विशिष्टबुद्धाविति** ॥ **हेतुत्वा-**

## दिनकरीयम्.

निर्विकल्पके प्रमाणं दर्शयति ॥ **चक्षुःसंयोगादीति** ॥ **विशेषणज्ञानस्य कारणत्वादिति** ॥ कदाचिद्घट इत्याकारकं स्वरूपतो घटत्वप्रकारकं कदाचिज्जातिमानिति जातित्वेन घटत्वादिप्रकारकं ज्ञानं जायते इत्यनुभवसाक्षिकं तन्निर्वाहाय घटत्वांशेऽन्याप्रकारकघटत्वप्रकारकबुद्धौ तादृशघटत्वज्ञानत्वेन घटत्वांशे जातित्व-

## रामरुद्रीयम्.

नहेतुता आवश्यकी तच्च वैजात्यं सुषुप्तिकालीनात्ममनःसंयोगव्यावृत्तमपीति कल्पनयैवोपपत्तौ त्वङ्मनःसंयोगादेः कारणत्वान्तरकल्पनमयुक्तमिति चेदनधिगतभावोऽसि पूर्वोक्तसुषुप्तिदशायां पूर्वज्ञानोत्पत्त्यनुरोधेन क्लृप्तवैजात्यात्ममनःसंयोगस्य सत्त्वे सति विजातीयात्ममनःसंयोगकारणताया वारयितुमशक्यतया सुषुप्तेरेव ज्ञानप्रतिबन्धकत्वस्यावश्यकत्वे वैजात्यस्य तद्भिन्नसुषुप्तिकालीनात्ममनःसंयोगव्यावृत्तत्वकल्पने बीजाभावात् । तादृशसुषुप्त्यङ्गीकारपक्षे ज्ञानसामान्ये त्वङ्मनःसंयोगस्य कारणत्वमप्यप्रामाणिकमेव तथाविधसुषुप्तिसमये मनसो निश्चलत्वेन पूर्वतनत्वक्संयोगस्यापि सत्त्वेन तत्कारणतयापि ज्ञानवारणासम्भवेन अगत्या पुरीततिमनःसंयोगस्य ज्ञानमात्रप्रतिबन्धकत्वमेव कल्पनीयमित्थं च त्वङ्मनःसंयोगचर्ममनःसंयोगयोः कारणतयापि तदानीं ज्ञानवारणासम्भवेनादिपदेन पुरीतति मनःसंयोगस्यैव ज्ञानकारणतायां ग्रन्थकारेण तात्पर्यं सूचितमिति विभावनीयम् । नव्यमत एव ग्रन्थकाराणामपि निर्भरो लाघवादित्यवधेयम् । लौकिकचाक्षुषादेरपि मनोजन्यतया मनोग्राह्यत्वस्य घटादावतिव्याप्तिमाशङ्कयाह ॥ **मनोमात्रेति** ॥ मनोलौकिकसन्निकर्षजन्यत्वविवक्षायां मात्रपदं विनाप्युपपत्तिरिति ध्येयम् ॥ ५७ ॥

ननु विशिष्टबुद्धौ विशेषणज्ञानस्य हेतुत्वे मानाभावः चक्षुःसंयोगद्वितीयक्षण एव घट इति विशिष्टप्रत्ययोपगमे क्षतिविरहात् नहि तृतीयक्षण एव तादृशप्रत्यक्षमिति लोकानामनुभवः क्षणस्यातिसूक्ष्मत्वेन क्षणविलम्बस्य शपथनिर्णेयत्वात् रक्तो दण्ड इति निर्णयं विना रक्तदण्डवानिति निर्णयानुदयेन अन्वयव्यतिरेकाभ्यां भवतु विशिष्टवैशिष्ट्यप्रत्यक्षे विशेषणतावच्छेदकप्रकारकनिश्चयस्य कारणत्वं निर्विकल्पकस्य अतीन्द्रियत्वेन विशेषणज्ञानहेतुतायामन्वयव्यतिरेकप्रत्यक्षासम्भवादतो विशेषणज्ञानहेतुत्वे युक्तिमाह ॥ **कदाचिदित्यादि** ॥ **तन्निर्वाहाय** ॥ तादृशानुभवनिर्वाहाय । अन्यथा जातिमानिति घटत्वप्रकारकबोधोत्पाददशायामपि घट

तः घटघटत्वयोर्वैशिष्ट्यानवगाह्येव ज्ञानं जायते तदेव निर्विकल्पकं तच्च न प्रत्यक्षम् ।

## प्रभा.

**दिति** ॥ घटत्वज्ञानरूपकारणाभावात् न घट इति भ्रान्तोत्पत्तिसंभव इति फलितार्थः । तथाच घट इति बुद्धिः विशेषणज्ञानजन्या विशिष्टबुद्धित्वात् दण्डीति विशिष्टबुद्धिवदित्यनुमानान्निर्विकल्पकसिद्धिरिति भावः ॥ **तथाचेति** ॥ घट इति ज्ञानकारणघटत्वज्ञानासिद्धौ चेत्यर्थः ॥ **वैशिष्ट्यानवगाह्येवेति** ॥ वैशिष्ट्यनिष्ठसांसर्गिकविषयतानिरूपितविषयिताशून्यमित्यर्थः । निर्विकल्पस्य सांसर्गिकविषयतानिरासेनैव घटघटत्वनिरूपितविशेष्यित्वप्रकारित्वशून्यत्वं लब्धं तयोस्सांसर्गिकविषयतानियतत्वात् । नच तर्हि तस्य निर्विषयत्वापत्तिरिति वाच्यं । चतुर्थविषयताया घटघटत्वादिनिष्ठाया एव निर्विकल्पीयत्वेन तत्र तादृशविषयत्वस्वीकारात् । वैशिष्ट्यानवगाह्येवेत्येवकारेण कल्पनीयविशेषणज्ञानस्यापि वैशिष्ट्यावगाहित्वे तस्यापि विशिष्टबुद्धितया विशेषणज्ञानान्तरापेक्षा स्यादेवं तस्यापि वैशिष्ट्यावगाहित्व इत्यनवस्थाभियैव प्राथमिकविशेषणज्ञानं वैशिष्ट्यानवगाह्येव स्वीकार्यमिति सूचितम् ॥ **तदेवेति** ॥ चतुर्थविषयताशालिज्ञानमेवेत्यर्थः ॥ **निर्विकल्पकमिति** ॥ निर्विकल्पकस्वरूपमित्यर्थः । लक्षणं तु चतुर्थविषयताशालित्वमेव न प्रकारताशून्यत्वादिकं एतेन घटादिव्यावर्तनाय ज्ञानत्वनिवेशे विशेषणविशेष्यभावे विनिगमनाविरहः प्रकारत्वादिशून्यत्वज्ञानत्वोभयत्वावच्छिन्नस्य लक्षणत्वे लक्षणतावच्छेदकसंबन्धाप्रसिद्धिः प्रकारतादिशून्यत्वसविषयकत्वोभयत्वावच्छिन्नस्य लक्षणत्वं स्वीकृत्य घटादिव्यावर्तनेऽतिगौरवमिति दूषणमपास्तम् । निर्विकल्पके प्रमाणमुपन्यस्य मूलोक्तमतीन्द्रियत्वं साधयितुं प्रतिजानीते ॥ **तच्चेति** ॥ **न प्रत्यक्षमिति** ॥ लौकिकविषयताशून्यमित्यर्थः । तत्साधयति ॥ त

## दिनकरीयम्.

प्रकारकघटत्वविशिष्टबुद्धौ च तादृशघटत्वज्ञानत्वेन हेतुत्वस्यावश्यकत्वादिति भावः ॥ **वैशिष्ट्यानवगाह्येवेति** ॥ वैशिष्ट्यसांसर्गिकविषयताशून्यमेवेत्यर्थः । वैशिष्ट्यसांसर्गिकविषयतानिरासेनैव घटघटत्वयोर्विशेष्यताप्रकारताशून्यत्वं लब्धं तयोर्वैशिष्ट्यसांसर्गिकविषयतानियतत्वात् । नचैवं निर्विकल्पस्य निर्विषयकत्वापत्तिस्तुरीयविषयताया एव तत्र स्वीकारात् । एतेन निर्विकल्पस्य घटघटत्वावगाहित्ववद्वैशिष्ट्यावगाहित्वमपि दुर्वारम् घटेन्द्रियसन्निकर्षकाले इन्द्रियसम्बद्धविशेषणतायास्तद्वैशिष्ट्ये सत्त्वादिति वैशिष्ट्यानवगाहित्वोक्तिरसङ्गतेत्यपास्तम् । वैशिष्ट्यानवगाह्येवेत्येवकारेण कल्पनीयविशेषणज्ञानस्य वैशिष्ट्यावगाहित्वे तस्यापि विशिष्टबुद्धितया विशेषणज्ञानान्तरसापेक्षता स्यादेव तस्यापि वैशिष्ट्यावगाहित्वमित्यनवस्थाभिया प्रथमं विशेषणज्ञानं वैशिष्ट्यानवगाह्येव स्वीकार्यमिति सूचितम् ॥ **तदेव** तादृशविषयतात्रयशून्यमेव ॥ **निर्विक**

## रामरुद्रीयम्.

इत्याकारकप्रत्यक्षापत्तेरिति भावः । घट इति प्रत्यक्षकाले जातिमानिति प्रत्यक्षापत्तिस्तु न सम्भवति विशेषणतावच्छेदकप्रकारज्ञानरूपकारणविरहादित्यवधेयम् ॥ **ज्ञानत्वेनेति** ॥ अथ विशिष्टवैशिष्ट्यावगाहितया जातिमानिति बुद्धेस्तत्र जातित्वप्रकारकघटत्वविशेष्यकनिश्चयत्वेनैव हेतुतया ज्ञानत्वेनेत्यसङ्गतमिति चेन्न । विशेष्ये विशेषणं तत्रापि विशेषणान्तरमिति रीत्या जायमानस्य जातिमानिति ज्ञानस्य विशिष्टवैशिष्ट्यानवगाहित्वात् । न च प्रकारांशे किञ्चित्प्रकारकत्वादतिरिक्तस्य विशिष्टवैशिष्ट्यावगाहित्वस्य दुर्वचतया तदपि विशिष्टवैशिष्ट्यावगाह्येवेति वाच्यम् । विशेषणावच्छिन्नप्रतियोगिकतत्तत्संसर्गावगाहिज्ञानस्य विशिष्टवैशिष्ट्यावगाहित्वात् विशेषणावच्छिन्नप्रकारताशालित्वमेव तत् विशेष्ये विशेषणमिति रीत्या उत्पन्नज्ञाने तु प्रकारप्रकारे नावच्छेदकताख्या विलक्षणा विषयता नातस्तस्य तथात्वापत्तिरिति केचित् । इत्थमेव च दण्डो रक्तो न वेति संशयानन्तरमौचित्याज्जातो रक्तदण्डवान्न वेति सन्देहोऽप्युपपादनीयः । इदं पुनरिहावधेयं विशेष्ये विशेषणमिति न्यायेन जायमाने जातिमानिति ज्ञाने न जातित्वप्रकारकघटत्वज्ञानत्वेन हेतुता विशकलितजातित्वघटत्वज्ञानादपि तादृशबुद्ध्युत्पादादिति विशिष्टवैशिष्ट्यावगाहिबुद्धिपरमेवेदं एवं च ज्ञानपदं निश्चयार्थकतया व्याख्येयमिति । ननु निर्विकल्पकस्य वैशिष्ट्यानवगाहित्वमसिद्धं विशेषणतासन्निकर्षेण घटघटत्वयोरिव तत्समवायस्यापि निर्विकल्पके भानसम्भवादत आह ॥ **वैशिष्ट्यनिष्ठेति** ॥ एवं प्रकारता-

तथाहि वैशिष्ट्यानवगाहि ज्ञानस्य प्रत्यक्षं न भवति घटमहं जानामीति प्रत्ययात् तत्रात्मनि ज्ञानं प्रकारीभूय भासते ज्ञाने घटस्तत्र घटत्वं। यः प्रकारः स एव विशेषणमित्युच्यते विशेषणे यद्विशेषणं तद्विशेषणतावच्छेदकमित्युच्यते विशेषणतावच्छेदकप्रकारकं ज्ञानं विशिष्टवैशिष्ट्यज्ञाने कारणं निर्विकल्पके च घटत्वादिकं न प्रकारस्तेन घटत्वा-

प्रभा.

थाहीति ॥ विषयानवगाहीति ॥ ज्ञानस्य प्रत्यक्षं विषयानवगाहि न भवतीत्यन्वयः। ज्ञानविषयकप्रत्यक्षमात्रं विषयावगाह्येवेत्यर्थः। ज्ञानविषयकप्रत्यक्षत्वं विषयविषयकत्वव्याप्यमिति यावत्। एतादृशव्याप्यव्यापकभावे अनुभवं प्रमाणयति ॥ घटमहं जानामीति प्रत्ययादिति ॥ इत्येवानुभवादित्यर्थः। केवलं जानामीत्यनुभवाभावादिति भावत्। तथाच तादृशव्याप्यव्यापकभावानङ्गीकारे जानामीत्यनुभवापत्तेरिति भावः। एतावता व्याप्यव्यापकभावे प्रमाणं प्रदर्श्य निर्विकल्पकस्यातीन्द्रियत्वसाधनाय भूमिकामाह ॥ तत्रेत्यादि ॥ तत्र तादृशानुभवे। सप्तम्यर्थो निरूपितत्वं. तस्य भासधात्वर्थभूतविषयत्वे अन्वयः आत्मनीत्यत्र सप्तम्यर्थो विशेष्यतानिरूपितत्वं तस्यापि भासधात्वर्थे अन्वयः ॥ प्रकारीभूयेति ॥ प्रकारत्वाभिन्नेत्यर्थः। तस्यापि भासधात्वर्थे विषयत्वे अन्वयः आद्यन्तार्थः आधयत्वं तस्य ज्ञाने अन्वयः तथाच घटमहं जानामीत्यनुभवनिरूपितात्मनिष्ठविशेष्यतानिरूपितप्रकारत्वाभिन्नविषयताश्रयीभूतं ज्ञानमित्यन्वयबोधः। ज्ञाने घट इत्यत्रापि तत्रेत्यस्य प्रकारीभूय भासते इत्यस्य चानुषङ्गः ॥ तथाच पूर्वोक्तरीत्यैवान्वयबोधः ॥ तत्र घटत्वमिति ॥ तत्र घटे घटत्वमित्यर्थः। अत्राप्युभयोरनुषङ्गेण पूर्वोक्तरीत्यैवान्वयबोधः। ननु विशेषणत्वं व्यावर्तकत्वं तच घटस्य न संभवति तस्य ज्ञानाभिन्नेच्छादावपि विषयतया वर्तमानत्वेन ज्ञाननिष्ठेतरभेदानुमापकत्वरूपव्यावर्तकत्वासंभवादित्याशङ्कां विशेषणपदस्य विशेषणोपलक्षणोपसर्जनसाधारणप्रकारताश्रयपरत्वस्वीकारेण परिहरति ॥ यः प्रकार इति ॥ तथाच ज्ञानांशे घटादेर्व्यावर्तकत्वाभावेऽपि विद्यमानत्वे सत्यव्यावर्तकत्वरूपोपसर्जनत्वाश्रयत्वेऽपि भासमानवैशिष्ट्यप्रतियोगित्वरूपप्रकारत्वसत्त्वात् नोक्ताशङ्केति भावः। ननु घटस्य व्यावर्तकत्वाभावात् घटत्वस्य व्यावर्तकतावच्छेदकत्वरूपविशेषणतावच्छेदकत्वासंभव इत्याशङ्कां परिहरति ॥ विशेषणे यद्विशेषणमिति ॥ तथाच घटत्वस्य व्यावर्तकतावच्छेदकत्वाभावेऽपि घटत्वस्य विशेषणव्यावर्तकत्वरूपविशेषणतावच्छेदकत्वसत्त्वान्नोक्ताशङ्केति भावः। घटघटत्वयोर्विशेषणत्वविशेषणतावच्छेदकत्वोपपादनस्य प्रयोजनं वक्तुमादौ कार्यकारणभावं दर्शयति ॥ विशेषणतावच्छेदकेति ॥ विशेषणतावच्छेदकप्रकारकनिर्णय इत्यर्थः ॥ विशिष्टवैशिष्ट्येति ॥ विशिष्टवैशिष्ट्यावगाहिप्रत्यक्षत्वावच्छिन्न इत्यर्थः ॥ कारणमिति ॥ वाच्यमिति शेषः। अन्यथा रक्तत्वदण्डत्वदण्डविषयकनिर्विकल्पकोत्तरं रक्तदण्डवानिति विशिष्टवैशिष्ट्यावगाहिबुद्ध्यापत्तेरिति भावः। इदानीं कारणाभावान्निर्विकल्पकं न प्रत्यक्षमित्याह ॥ निर्विकल्पक इति ॥ एवंचेत्यादिः चोऽवधारणे तस्य नञर्थेन सहान्वयः नैव प्रकार इत्यर्थः। घटत्वादिनिष्ठप्रकारता निर्विकल्पकानिरूपितैवेति फलितोऽर्थः। यथाश्रुते निर्विकल्पकनिरूपितप्रकारत्वाप्रसिद्ध्या तदभावविशिष्टघटत्वादेस्सुतरामप्रसिद्ध्या वाक्यस्याप्रामाण्यापत्तेः। तथाच घटत्वादिनिष्ठप्रकारतानिरूपकत्वसामान्याभाववन्निर्विकल्पकमिति भावार्थः ॥ तेनेति ॥ निर्विकल्पकस्य घटत्वाद्यप्रकारकत्वेनेत्यर्थः। अनेन विशे-

दिनकरीयम्.

रूपकं निर्विकल्पकस्वरूपं। लक्षणं तु प्रकारताशून्यत्वादिकं प्रत्येकमेवेति ध्येयम्। निर्विकल्पके मूलोक्तमतीन्द्रि-

रामरुद्रीयम्.

शून्यत्वं विशेष्यताशून्यत्वं च लक्षणं सम्भवतीति सूचयन्नाह ॥ वैशिष्ट्येत्यादि ॥ निर्विषयत्वापत्तिरिति ॥ त्रिविधविषयतानामप्यसत्त्वादिति भावः ॥ तुरीयविषयताया एवेति ॥ प्रकारतादित्रितयभिन्नविषयताया इत्यर्थः ॥ प्रत्येकमेवेति ॥ एकत्र लक्षणे इतरविषयताशून्यत्वानिवेशे प्रयोजनाभावादिति भा-

दिविशिष्टघटादिवैशिष्ट्यभानं ज्ञाने न सम्भवति घटत्वाद्यप्रकारकं च घटादिविशिष्टज्ञानं न सम्भवति जात्यखण्डोपाध्यतिरिक्तपदार्थज्ञानस्य किञ्चिद्धर्मप्रकारकत्वनियमात् ॥

## प्रभा.

षणतावच्छेदकप्रकारकनिर्णयरूपकारणासत्त्वमाविष्कृतम् ॥ **घटत्वादिविशिष्टेति** ॥ ज्ञानांशे घटत्वादिविशिष्टवैशिष्ट्यावगाहि प्रत्यक्षमित्यर्थः ॥ **न संभवतीति** ॥ नोत्पत्तुमर्हतीत्यर्थः । तथाच विशिष्टवैशिष्ट्यावगाहिप्रत्यक्षं प्रति विशेषणतावच्छेदकप्रकारकनिर्णयस्य हेतुतया निर्विकल्पकस्य घटत्वादिप्रकारकनिर्णयानात्मकत्वेन तदुत्तरं ज्ञानांशे घटत्वविशिष्टवैशिष्ट्यावगाहिनो घटं जानामीत्याकारकप्रत्यक्षस्यासंभवादिति भावः । नच निर्विकल्पकस्य तादृशनिर्णयानात्मकतया कारणाभावेन घटमहं जानामीत्याकारकनिर्विकल्पकगोचरविशिष्टवैशिष्ट्यावगाहिप्रत्यक्षासंभवेऽपि विशेष्ये विशेषणमिति रीत्या निर्विकल्पकगोचरतादृशप्रत्यक्षे बाधकाभावः विशेषणज्ञानरूपकारणसत्त्वादिति वाच्यं । तथासति कुण्डली चैत्रः रक्तो मैत्र इति समूहालम्बनानन्तरं रक्तं चैत्रं जानामि कुण्डलिनं मैत्रं जानामीत्यनुव्यवसायापत्त्या विशिष्टवैशिष्ट्यानवगाहिज्ञानानुव्यवसायानभ्युपगमात् । ननु विशिष्टज्ञानसामान्यं प्रति विशेषणज्ञानस्य हेतुत्वे मानाभावः घट इति ज्ञानोत्तरं घटज्ञानज्ञानाभावेऽपि घटं जानामीत्याकारकघटज्ञानप्रकारकप्रत्यक्षोत्पत्तेः एवं विशिष्टवैशिष्ट्यावगाहिप्रत्यक्षमात्रेऽपि विशेषणतावच्छेदकप्रकारकनिर्णयस्य हेतुत्वे मानाभावः घटप्रकारकज्ञानविशेष्यकनिर्णयाभावेऽपि घट इति ज्ञानोत्तरं घटं जानामीत्याकारकघटविशिष्टज्ञानवैशिष्ट्यावगाहिप्रत्यक्षोत्पत्तेः । एवंच निर्विकल्पकस्य घटत्वप्रकारकनिर्णयानात्मकतया तद्गोचरघटत्वविशिष्टवैशिष्ट्यावगाह्यनुव्यवसायासंभवेऽपि स्वरूपतो घटविशिष्टज्ञानवैशिष्ट्यावगाहिनिर्विकल्पकगोचरानुव्यवसाये बाधकाभावान्न निर्विकल्पस्यातीन्द्रियत्वमित्यत आह ॥ **घटत्वादीति** ॥ अप्यर्थे चकारः घटत्वाद्यप्रकारकमपीत्यर्थः ॥ **घटादिविशिष्टज्ञानमिति** ॥ घटादिविशिष्टज्ञानवैशिष्ट्यावगाहिप्रत्यक्षमित्यर्थः । तत्र हेतुमाह ॥ **जात्यतिरिक्तेति** ॥ जात्यतिरिक्तपदार्थनिष्ठप्रकारत्वविशेष्यत्वान्यतरनिरूपितविषयितायाः तादृशपदार्थनिष्ठविशेष्यतानिरूपिताकिंचिद्धर्मनिष्ठप्रकारतानिरूपितप्रकारत्वव्याप्यत्वादित्यर्थः । पदार्थज्ञानस्येत्यत्र ज्ञानपदमप्येतादृशार्थलाभाय नतु तस्य व्याप्यकोटौ निवेशः व्यर्थत्वात्तेन यथाश्रुते निर्विकल्पकस्यापि जात्यतिरिक्तपदार्थविषयकत्वेन तत्र किंचिद्धर्मप्रकारत्वाभावेऽपि न क्षतिः । नच तादृशविषये मानाभाव इति वाच्यं । तथासति घट इत्यादिप्रतीतेरपि स्वरूपतो घटविषयकत्वे बाधकाभावेन तस्यापि नि

## दिनकरीयम्.

यत्वं साधयति ॥**तथाहीत्यादिना**॥ ज्ञानस्य प्रत्यक्षं वैशिष्ट्यानवगाहि न भवतीत्यन्वयः ॥ **इति प्रत्यादिति** ॥ घटाद्यवगाहित्वेनैव ज्ञानप्रत्यक्षस्यानुभवसिद्धत्वादित्यर्थः ॥ **तत्र घटमहं जानामीति प्रत्यये** ॥ **घटत्वादिविशिष्टघटादिवैशिष्ट्यभानं ज्ञाने न सम्भवतीति** ॥ नच विशेष्ये विशेषणमिति रीत्यैव निर्विकल्पकानुव्यवसायोऽस्त्विति वाच्यम् । रक्तः पटो घटो द्रव्यमिति समूहालम्बनानन्तरं रक्तं घटं जानामीति प्रतीत्यापत्त्या विशिष्टवैशिष्ट्यविषयताशून्यज्ञानानुव्यवसायानभ्युपगमादिति ॥

## रामरुद्रीयम्.

वः ॥ **समूहालम्बनेति** ॥ विशेष्ये विशेषणमिति न्यायेनानुव्यवसायोपगमे रक्तत्वघटयोः पूर्वमुपस्थित्या तादृशानुव्यवसायसम्भवाद्विशिष्टवैशिष्ट्यावगाहित्वे तु पूर्वं रक्तो घट इति ज्ञानविरहान्न तादृशानुव्यवसाय इति भावः । यद्यपि घटत्वप्रकारकशाब्दबोधोत्तरोत्पन्ननिर्विकल्पकस्य तादृशानुव्यवसायः सम्भवत्येव तथापि पूर्वं घटत्वज्ञानसत्त्वे विशिष्टप्रत्यक्षस्य सामग्रीसत्त्वाच्चक्षुःसंयोगानन्तरं विशिष्टप्रत्यक्षमेव स्वीक्रियते नतु निर्विकल्पकमत एव स्थिरचक्षुःसंयोगस्थले घट इति विशिष्टप्रत्यक्षधारैवोपेयते न तु निर्विकल्पकान्तरितप्रत्यक्षधारेति मन्तव्यम् । अथैवमपि निर्विकल्पकस्य घटत्वरूपविषयोपरागेण प्रत्यक्षं दुर्वारमेव जातीतरस्यैव स्वरूपतः प्रकारत्वानभ्युपगमेन तस्य ज्ञाने विषयितया स्वरूपत एव प्रकारत्वसम्भवादिति मैवं जातेस्समवायेनैव स्वरूपतः प्रकारत्वाभ्युपगमादन्यथा कालो घटो ज्ञानं पट इत्यादिप्रत्ययापत्तेः तादृशप्रतीतेरनुभववि-

महत्त्वं षड्विधे हेतुः इन्द्रियं करणं मतम् ॥ ५८ ॥

**महत्त्वमिति** ॥ द्रव्यप्रत्यक्षे महत्त्वं समवायसम्बन्धेन कारणम् । द्रव्यसमवेतानां गुणकर्मसामान्यानां प्रत्यक्षे स्वाश्रयसमवायसम्बन्धेन द्रव्यसमवेतसमवेतानां गुणत्वकर्मत्वादीनां प्रत्यक्षे स्वाश्रयसमवेतसमवायसम्बन्धेन कारणमिति ॥ **इन्द्रियमिति** ॥ अत्रापि षड्विध इत्यनुष-

**प्रभा.**

विकल्पकत्वापत्तेः घटवद्भूतलमित्यादिप्रतीतेरपि स्वरूपतो घटप्रकारकत्वसंभवेन तस्या विशिष्टवैशिष्ट्यावगाहित्वानुपपत्तेश्च । नचेष्टापत्तिः अनुभवविरोधापत्तेः सिद्धान्तविरोधापत्तेश्चेति दिक् । प्राञ्चस्तु किंचिन्निष्ठप्रकारताशालिप्रत्यक्षसामान्य एव विशेषणज्ञानस्य विशिष्टवैशिष्ट्यावगाहिप्रत्यक्षसामान्य एव विशेषणतावच्छेदकप्रकारकनिर्णयस्य हेतुत्वं लाघवात् कार्यतावच्छेदके ज्ञानाद्यतिरिक्तनिवेशे गौरवात् । नचैवं घटादिप्रकारकज्ञानोत्तरं घटं जानामीत्याकारकं ज्ञानप्रकारकं घटादिविशिष्टज्ञानवैशिष्ट्यावगाहि च प्रत्यक्षं न स्यात् ज्ञानरूपविशेषणस्य ज्ञानाभावात् घटादिप्रकारकज्ञानविशेष्यकनिर्णयरूपकारणाभावाच्चेति वाच्यं । घट इति ज्ञानोत्तरं प्रथमतो ज्ञानत्वादिनिर्विकल्पकं तदुत्तरं घटज्ञानमित्याकारकघटविषयकज्ञानत्वप्रकारकज्ञानविशेष्यकनिर्णयः तदुत्तरमेव घटादिविशिष्टज्ञानवैशिष्ट्यावगाह्यनुव्यवसायस्वीकारात् क्षणविलम्बस्य शपथनिर्णेयत्वात् । न चैवं निर्विकल्पके घटत्वाप्रकारकत्ववत् घटाप्रकारकत्वस्याप्यावश्यकत्वेन मुक्तावल्यां तेन घटादिविशिष्टवैशिष्ट्यभानमात्मनि न संभवतीति अनुक्त्वा तेन घटत्वादिविशिष्टवैशिष्ट्यभानं ज्ञाने न संभवतीत्युक्तौ बीजाभाव इति वाच्यम् । घटविशिष्टवैशिष्ट्यावगाहित्वस्य घटत्वविशिष्टवैशिष्ट्यावगाहित्वव्याप्यतया निर्विकल्पकस्य घटत्वप्रकारकनिर्णयानात्मकतया कारणाभावेन घटत्वविशिष्टवैशिष्ट्यावगाहित्वरूपव्यापकधर्मावच्छिन्नानुत्पत्तौ. व्यापकधर्मावच्छिन्नाभावे सुतरां व्याप्यधर्मावच्छिन्नाभाव इति न्यायेन घटविशिष्टज्ञानवैशिष्ट्यावगाहित्वावच्छिन्नाभावस्यापि सुवचत्वादित्याशयेन घटविशिष्टवैशिष्ट्यावगाहित्वमात्मनि न संभवतीत्यनुक्त्वा घटत्वविशिष्टवैशिष्ट्यावगाहित्वं ज्ञाने न संभवतीत्युक्तम् । अत एव घटत्वाद्यप्रकारकं चेत्यादिना उक्तव्याप्यव्यापकभावासंभवमाशङ्क्य जात्यतिरिक्तपदार्थज्ञानस्येत्युत्तरग्रन्थेन तत्समर्थनं च सङ्गच्छते इत्याहुः ॥ **मूले महत्त्वं षड्विधे हेतुरिति** ॥ लौकिकविषयतासंबन्धेन जन्यप्रत्यक्षसामान्यं प्रति महत्त्वं नियतपूर्ववृत्तीत्यर्थः । न त्वनन्यथासिद्धत्वघटितकारणताश्रयं श्रावणादौ तस्य कारणत्वे मानाभावात् किंतु श्रावणत्वमानसत्वान्यप्रत्यक्षप्रमितिविभाजकोपाधिभेदेन कार्यकारणभावचतुष्टयं बोध्यम् । ननु चाक्षुषत्वाद्यवच्छिन्नं प्रत्यपि महत्त्वस्य न समवायादिसंबन्धेन हेतुत्वं रूपादौ चाक्षुषाद्युत्पत्त्या तत्र समवायेन महत्त्वाभावादित्याशङ्कां विशिष्य कार्यकारणभावं प्रदर्श्य परिहरति ॥ **द्रव्यप्रत्यक्ष इति** ॥ द्रव्यवृत्तिलौकिकविषयतासंबन्धेन चाक्षुषं प्रति स्पार्शनं प्रति चेत्यर्थः ॥ **समवायेति** ॥ समवायसंबन्धावच्छिन्नकारणताश्रयमित्यर्थः ॥ **गुणकर्मसामान्यानामिति** ॥ इदं च स्वरूपकीर्तनं नतु कार्यतावच्छेदकप्रविष्टं गौरवात् प्रयोजनाभावाच्च । एवंच द्रव्यसमवेतवृत्तिलौकिकविषयतासंबन्धेन श्रावणत्वमानसत्वान्यचाक्षुषत्वादिप्रत्येकधर्मावच्छिन्नं प्रतीत्यर्थः ॥ **स्वाश्रयसमवायेति** ॥ समवायघटितसामानाधिकरण्यसंबन्धावच्छिन्नकारणताश्रयमित्यर्थः ॥ **द्रव्यसमवेतसमवेतेति** ॥ द्रव्यसमवेतसमवेतवृत्तिलौकिकविषयतासंबन्धेन निरुक्तचाक्षुषत्वादिप्रत्येकधर्मावच्छिन्नं प्रतीत्यर्थः ॥ **स्वाश्रयेति** ॥ स्वसमवायिघटितसामानाधिकरण्यसंबन्धावच्छिन्नकारणताश्रयमित्यर्थः ॥ **मूले इन्द्रियमिति** ॥ इन्द्रियविभाजकचक्षुस्त्वाद्यवच्छिन्नमित्यर्थः । कार्याप्रदर्शनप्रयुक्तन्यूनतां परिहरति ॥ **मुक्तावल्यामत्रापीति** ॥ **अनुषज्यत इति** ॥ महत्त्वं षड्विधे हेतुरिति कारि-

**दिनकरीयम्.**

**महत्त्वं षड्विध इति** ॥ यद्यपि श्रावणादौ महत्त्वस्य हेतुत्वे प्रयोजनाभावः तथापि द्रव्यसमवेतप्रत्यक्षत्वादेस्तज्जन्यतावच्छेदकस्य श्रावणादिसाधारण्यात् श्रावणाद्यन्यत्वनिवेशे गौरवात् प्रयोजनाभावाच्च

ड्यते । इन्द्रियत्वं न जातिः पृथिवीत्वादिना साङ्कर्यात् । शब्देतरोद्भूतविशेषगुणानाश्रयत्वे सति ज्ञानकारणमनःसंयोगाश्रयत्वमिन्द्रियत्वम् । आत्मादिवारणाय सत्यन्तम् । उद्भूतविशेषगुणस्य श्रोत्रे सत्त्वाच्छब्देतरेति । विशेषगुणस्य रूपादेश्चक्षुरादावपि सत्त्वादुद्भूतेति । उद्भूतत्वं तु न जातिः शुक्लत्वादिना साङ्कर्यात् । न च शुक्लत्वादिव्याप्यं नानैवोद्भूतत्वमिति वाच्यम् । उद्भूतरूपत्वादिना चाक्षुषादौ जनकत्वानुपपत्तेः किन्तु शुक्लत्वादिव्याप्यं नानैवानुद्भूतत्वं तदभावकूटश्चोद्भूतत्वं तच्च संयोगादावप्यस्ति तथा च

## प्रभा.

कास्थषड्विध इति पदमनुषज्यत इति भावः । तथाच चाक्षुषत्वादिप्रत्येकधर्मावच्छिन्ननिरूपितव्यापारसंबन्धावच्छिन्नकारणताश्रयीभूतं इन्द्रियविभाजकचक्षुस्त्वादिप्रत्येकधर्मावच्छिन्नमित्यर्थः । तादृशकारणतावच्छेदकाः चक्षुस्त्वादिप्रत्येकधर्मा इति भावः । ननु जन्यप्रत्यक्षं प्रति इन्द्रियत्वेन एकहेतुता अस्तु निरुक्तकार्यकारणभावषट्कापेक्षया लाघवादित्याशङ्कामिन्द्रियत्वस्यानुगतत्वाभावप्रतिपादनेन परिहरति ॥ इन्द्रियत्वमिति ॥ आत्मादिवारणायेति ॥ आत्मादावतिव्याप्तिवारणायेत्यर्थः । आदिना चर्मरुधिरमेदोमांसादेः परिग्रहः एतेनात्मभिन्नत्वरूपलघुविशेषणेनैवात्मनि अतिव्याप्तिवारणसंभवे गुरुतरसत्यन्तदळं व्यर्थमिति केश्चिदुक्तं प्रत्युक्तम् । तावता आदिपदग्राह्येषु अतिव्याप्तिरवारणात् । विशेषपदस्य प्रयोजनं वक्तुं भूमिकामाह ॥ उद्भूतत्वं त्विति ॥ जनकत्वानुपपत्तेरिति ॥ एकैकस्य कारणतावच्छेदकत्वे व्यभिचारात् कूटस्य एकत्रावर्तमानतया कारणतावच्छेदकत्वासंभवादिति भावः अत्र उद्भूतत्वजातीनां नानात्वेऽपि उद्भूतत्वसप्तकान्यतमत्वस्य सर्वोद्भूतत्वजातिषु अनुगतस्य संभवेन तेन रूपेण तासां कारणतावच्छेदकत्वे तादृशान्यतमत्वावच्छिन्नवत्त्वेन रूपस्य कारणत्वे बाधकाभावात् विशेषपदं व्यर्थमिति प्रतिभाति। अथ शब्देतरोद्भूतविशेषगुणेषु यावत्सु तादृशविशेषगुणत्वस्यैकस्याभावेन विशेषगुणव्यक्तिभेदेन भिन्नतया घटीयरूपादिनिष्ठं यत्तादृशविशेषगुणत्वं तदाश्रयानधिकरणत्वघटितलक्षणस्य चर्मादिषु सत्त्वेनातिव्याप्तिस्तदवस्थेति चेदत्र प्राञ्चः शब्देतरोद्भूतविशेषगुणाश्रयभूताः यावत्यो व्यक्तयः तावदन्यतमत्वावच्छिन्नप्रतियोगिताकभेदवत्त्वस्य सत्यन्तदळतात्पर्यार्थतया न पूर्वोक्तातिव्याप्तिरित्याहुः । अपरेतु यावन्तश्श-

## दिनकरीयम्.

षड्विध इत्युक्तमिति ध्येयम् ॥ आत्मादिवारणायेति ॥ आत्मादौ योऽतिव्याप्तिरूपो दोषस्तद्वारणमित्यर्थः । सत्यन्तदाने च शब्दादितरे ये उद्भूतविशेषगुणाः सुखादयस्तदाश्रयत्वस्यैवात्मनि सत्त्वान्नातिव्याप्तिरिति भावः ॥ श्रोत्रे सत्त्वादिति ॥ तथा च तत्राव्याप्तिरिति भावः । विशेषपदस्य प्रयोजनं वक्तुं भूमिकामाह ॥ उद्भूतत्वमिति ॥ जनकत्वानुपपत्तेरिति ॥ एकैकस्य कारणतावच्छेदकत्वे व्यभिचारात् कूटस्यैकत्रावृत्तितया कारणतानवच्छेदकत्वादिति भावः ॥ तदभावकूटश्चोद्भूतत्वमिति ॥ तथा च ताद-

## रामरुद्रीयम्.

रुद्धत्वादिति ध्येयम् ॥ षड्विध इत्युक्तमिति ॥ तथा च षड्विध इत्यस्य षड्विधसाधारणप्रत्यक्षत्वावच्छिन्न इत्येवार्थो न तु श्रावणत्वाद्यवच्छिन्न इति तदर्थ इति भावः ॥ आत्मादाविति ॥ अत्रादिपदेन चर्ममनस्संयोगस्य ज्ञानकारणत्वपक्षे तत्सङ्ग्रहः अत एव लघुभूतस्यापि आत्मभिन्नत्वस्य परित्यागस्तथासति आत्मभिन्ने चर्मण्येवातिप्रसङ्गात् नवीनमते तु शब्देतरेत्यत्र शब्दपदं ज्ञानेच्छाकृतीनामप्युपलक्षणं बोध्यं तैरीश्वरस्यैव श्रोत्रेन्द्रियत्वोपगमेन अन्यथा श्रोत्रे अव्याप्तिप्रसङ्गादेवं तन्मते अनुद्भूतविशेषगुणवदसमवेतभूतमेव मन इति न तत्राप्यव्याप्तिरिति ध्येयम् ॥ भूमिकामिति ॥ प्रयोजनसम्पादिकां युक्तिमित्यर्थः । उद्भूतत्वस्य प्रत्यक्षजनकतावच्छेदकजातिरूपत्वे तादृशजातेः संयोगादिसाधान्यगुणे कल्पकाभावेन उद्भूतगुणशून्यत्वोक्तावपि चक्षुरादावव्याप्त्यप्रसक्तेरनुद्भूतत्वाभावकूटस्य तत्त्व एव संयोगादावनुद्भूतत्वजातौ मानाभावेन तानादाया-

शब्देतरोद्भूतगुणः संयोगादिश्चक्षुरादावप्यस्त्यतो विशेषेति । कालादिवारणाय विशेष्यदलम् । इन्द्रियावयवविषयसंयोगस्यापि प्राचां मते प्रत्यक्षजनकत्वादिन्द्रियावयववारणाय नवीनमते कालादौ रूपाभावप्रत्यक्षे सन्निकर्षघटकतया कारणीभूतचक्षुःसंयोगाश्रयस्य कालादेर्वारणाय मनःपदम् । ज्ञानकारणमित्यपि तद्वारणाय ॥ **करणमिति** ॥ असाधारणं का-

## प्रभा.

ब्देतरोद्भूतविशेषगुणास्तावदन्यतमत्वावच्छिन्नावच्छेदकताकप्रतियोगिताकभेदवत्त्वस्य सत्यन्तदळतात्पर्यार्थतया नोक्तातिव्याप्तिरित्याहुः । अन्येतु उद्भूतरूपरसगन्धस्पर्शान्यतमत्वावच्छिन्नावच्छेदकताकप्रतियोगिकभेद-आत्मत्वावच्छिन्नप्रतियोगिताकभेद-एतदुभयवत्त्वस्य सत्यन्तदळतात्पर्यार्थतया नोक्तातिव्याप्तिरिति प्राहुः । अस्मद्गुरुचरणास्तु उद्भूतस्पर्शत्वावच्छिन्नावच्छेदकताकप्रतियोगिताकभेद-आत्मत्वावच्छिन्नप्रतियोगिताकभेद-उभयवत्त्वस्यैव सत्यन्तदळतात्पर्यार्थतया नोक्तातिव्याप्तिर्न वा गौरवमिति व्याचक्रुः ॥ **विशेष्यदळमिति** ॥ ननु तथापि कालमनस्संयोगस्यापि कालोपाधिविधया ज्ञानकारणत्वेन कालादौ विशिष्टलक्षणसत्त्वात् अतिव्याप्तिस्तदवस्थेति चेत् अत्र प्राञ्चः ज्ञानकारणत्वं कालिकसंबन्धानवच्छिन्नज्ञाननिष्ठकार्यतानिरूपितकारणत्वरूपं लक्षणघटकमिति कालादिमनस्संयोगे तादृशकारणत्वाभावात् न कालादौ अतिव्याप्तिरित्याहुः । अत्र ज्ञानकारणत्वं ज्ञाननिष्ठप्रत्यक्षप्रमितिविभाजकोपाध्यवच्छिन्नकार्यतानिरूपितकारणत्वरूपं लक्षणघटकं अतः कालादिमनस्संयोगस्य तादृशकारणत्वाभावात् न तत्रातिव्याप्तिः । एवंच चर्मरुधिरादिमनस्संयोगस्य जन्यज्ञानसामान्यकारणत्वेऽपि विवक्षितकारणत्वाभावात् तदाश्रयेष्वतिव्याप्त्यप्रसक्त्या सत्यन्तदळं न निवेशनीयम् । आलोकसंयोगस्य चाक्षुषं प्रति कारणतया आलोकसंयोगाश्रयत्वमादायालोकेऽतिव्याप्तिवारणाय चरमदळे मनःपदमावश्यकमिति ध्येयम् । अथवा ज्ञानकारणमनस्संयोगाश्रयत्वमित्यस्य ज्ञाननिष्ठकार्यतानिरूपितव्यापारसंबन्धावच्छिन्नकारणत्वमर्थः । एवंच कालादेर्व्यापारसंबन्धावच्छिन्नकारणत्वाभावादेवातिव्याप्तिवारणे मनःपदं व्यर्थम् । नच प्राचां मते इन्द्रियावयवानामपि चाक्षुषं प्रति संयोगेन कारणतया इन्द्रियावयवेऽतिव्याप्तिवारणाय मनःपदं सार्थकमिति वाच्यं । तेषां मते चाक्षुषं प्रति इन्द्रियावयवानां तेन संबन्धेन कारणत्वे मानाभावात् अन्यथा इन्द्रियवदिन्द्रियावयवानामपि प्रत्यक्षप्रमाणत्वापत्तेः । अत एव आलोकसंयोगवत्संयोगसंबन्धेनालोकस्यापि चाक्षुषं प्रति हेतुतया निरुक्तकारणत्वसत्त्वेन प्रभास्वरूपालोके गुरुचरणपरिष्कृतसत्यन्तदळार्थसत्त्वेन तत्रातिव्याप्तिरिति कैश्चिदुक्तमपास्तं चाक्षुषं प्रति तेन संबन्धेन प्रभायाः कारणत्वेऽपि तादृशसंयोगस्य न व्यापारत्वं संयोगस्य व्यापारत्वे तु तेन संबन्धेन प्रभायाः न कारणत्वं अन्यथा तस्याः प्रत्यक्षप्रमाणत्वापत्तेः तस्मात् ज्ञाननिष्ठप्रत्यक्षप्रमितिविभाजकोपाध्यवच्छिन्नकार्यतानिरूपितकारणताश्रयमनस्संयोगवत्त्वं ज्ञाननिष्ठकार्यतानिरूपितव्यापारसंबन्धावच्छिन्नकारणत्वं तादृशकारणतावद्वृत्तीन्द्रियविभाजकधर्मवत्त्वं घ्राणादिमनोन्तान्यतमत्वं वा सत्यन्तदळाघटितं मनःपदार्थाघटितं लघुरूपमिन्द्रियसामान्यलक्षणमेव निर्दुष्टमिति प्रतिभाति । ननु मूले इन्द्रियं करणं मतमित्यत्र फलायोगव्यवच्छिन्नकारणस्यैव करणपदार्थत्वे इन्द्रियस्यातादृशत्वेनासङ्गतिः अतः प्राचीनाभिमतकरणपदार्थमाह ॥ **मुक्तावल्यां असाधारणमिति** ॥ ननु

## दिनकरीयम्.

शकूटस्य कारणतावच्छेदकत्वमिति नोक्तदोष इति भावः । इन्द्रियावयववारणायेति मनःपदमित्यनेनान्वितम् । नवीनमते मनःपदप्रयोजनमाह ॥ **कालादाविति** ॥ समवायेन घटाद्यभावादीनां काले सत्त्वेऽपि न

## रामरुद्रीयम्.

व्याप्तिदानसम्भवाद्भूमिकात्वमवसेयम् ॥ **नोक्तदोष इतीति** ॥ एकत्रावृत्तित्वप्रयुक्तकारणत्वानुपपत्तिरूपदोष इत्यर्थः ॥ **इन्द्रियावयवेति** ॥ इन्द्रियावयवार्थावयवयोः संयोगस्यापि प्राचां मते

रणं करणम् । असाधारणत्वं व्यापारवत्त्वम् ॥ ५८ ॥

विषयेन्द्रियसम्बन्धो व्यापारः सोऽपि षड्विधः ।
द्रव्यग्रहस्तु संयोगात् संयुक्तसमवायतः ॥ ५९ ॥
द्रव्येषु समवेतानां तथा तत्समवायतः ।
तत्रापि समवेतानां शब्दस्य समवायतः ॥ ६० ॥
तद्वृत्तीनां समवेतसमवायेन तु ग्रहः ।
विशेषणतया तद्वदभावानां ग्रहो भवेत् ॥ ६१ ॥
यदि स्यादुपलभ्येतेत्येवं यत्र प्रसज्यते ।
प्रत्यक्षं समवायस्य विशेषणतया भवेत् ॥ ६२ ॥

व्यापारः सन्निकर्षः । षड्विधं सन्निकर्षमुदाहरणद्वारा प्रदर्शयति ॥ द्रव्यग्रह इति ॥

**प्रभा.**

कार्यत्वानवच्छिन्नकार्यतानिरूपितकारणतारूपासाधारणत्वस्य व्यापारेऽपि सत्त्वादतिव्याप्तिरत आह ॥ **असाधारणत्वं चेति** ॥ तथाच व्यापारे व्यापारवत्त्वाभावात् नातिव्याप्तिरिति भावः । नच तथापि घटादेरपि चक्षुस्संयोगरूपव्यापारवत्त्वेन विषयविधया कारणत्वेन च करणत्वापत्तिरिति वाच्यं । व्यापारवत्कारणमित्यस्य व्यापारसंबन्धावच्छिन्नकारणताश्रयस्य विवक्षितत्वेन घटादेरतादृशत्वेन करणत्वापत्त्यभावात् । परेतु प्रत्यक्षत्वावच्छिन्नकार्यतानिरूपितकारणत्वरूपप्रत्यक्षकरणत्वस्य सन्निकर्षेऽपि सत्त्वात् तत्रातिव्याप्तिवारणाय व्यापारवत्त्वे सतीति घटादेर्व्यापारवत्त्वेऽपि सकलविषयवृत्त्यनुगतविषयत्वाप्रसिद्धया विषयत्वेन प्रत्यक्षत्वेन कार्यकारणभावे मानाभावात् तत्रातिव्याप्त्यप्रसक्त्या व्यापारवत्त्वे सति कारणत्वमित्यस्य यथाश्रुतार्थ एव निर्दुष्ट इत्याहुः । अन्येतु प्रत्यक्षकारणत्वं प्रत्यक्षप्रमितिविभाजकोपाध्यवच्छिन्नकार्यतानिरूपितकारणत्वं नतु प्रत्यक्षत्वावच्छिन्ननिरूपितकारणत्वं इन्द्रियत्वस्यानुगतत्वाभावेन प्रत्यक्षत्वेनेन्द्रियत्वेन कार्यकारणभावाप्रसिद्धया तादृशकारणताघटितकरणत्वस्याप्यप्रसिद्धेः । एवं च चाक्षुषत्वाद्यवच्छिन्ननिरूपितकारणत्वस्य चक्षुस्संयोगादावपि सत्त्वेनातिव्याप्तिवारणाय व्यापारवत्त्वे सतीति विशेषणं घटादेः तादृशकारणत्वाभावात्तत्रातिव्याप्त्यप्रसक्त्या व्यापारवत्त्वे सतीत्यस्य यथाश्रुतार्थ एव निर्दुष्ट इति प्राहुः ॥ ५८ ॥

ननु जन्यत्वघटितव्यापारत्वस्य शब्दनिष्ठश्रोत्रसमवाये अभावादाह ॥ **व्यापारस्सन्नि-**

**दिनकरीयम्.**

तत्प्रत्यक्षं योग्यानुपलब्धेरभावादतो रूपाभावपर्यन्तानुधावनम् ॥ **तद्वारणायेति** ॥ कालादेर्वारणायेत्यर्थः ॥ ५८ ॥

**रामरुद्रीयम्.**

ज्ञानकारणतया तमादायेन्द्रियानयवे अतिव्याप्तिवारणाय मनःपदमिति भावः ॥ **योग्यानुपलब्धेरिति** ॥ यदि काले घटः स्यात्तदा घटवत्तया उपलभ्येतेत्यापत्तेः कालस्यायोग्यत्वेन असम्भवादिति भावः । काले यदि रूपं स्यात्तदा उपलभ्येतेत्यापत्तिस्तु सम्भवति नीरूपत्वेनैव कालस्यायोग्यतायाः सम्पादनीयतया रूपसत्त्वे तदनिर्वाहादिति भावः ॥ **मूले तद्वारणायैवेति** ॥ कालस्येन्द्रियत्ववारणायैवेत्यर्थः । यद्यपि ज्ञानकरणत्वोपादानेऽपि कालविधया कालमनस्संयोगस्यापि ज्ञानकारणतया तद्दोषतादवस्थ्यं समवायेन कारणत्वविवक्षणे तु क्वापि कार्ये कालमनःसंयोगस्य समवायेनाकारणत्वात् ज्ञानपदमनर्थकं तथापि समवायेन कारणतालाभायैव ज्ञानपदमथवा दैशिकपरत्वादिकारणदिङ्मनःसंयोगमादाय दिश्यतिव्याप्तिवारणाय तत्पदमिति भावः ॥ ५८ ॥

द्रव्यप्रत्यक्षमिन्द्रियसंयोगजन्यम् । द्रव्यसमवेतप्रत्यक्षमिन्द्रियसंयुक्तसमवायजन्यम् । एवमग्रेऽपि । वस्तुतस्तु द्रव्यचाक्षुषं प्रति चक्षुःसंयोगः कारणं द्रव्यसमवेतचाक्षुषं प्रति चक्षुः-

## प्रभा.

**कर्ष इति** ॥ मूले द्रव्यग्रहस्तु संयोगादित्यत्र ग्रहपदस्य यथाश्रुतार्थकत्वे द्रव्यविषयकानुमित्यादेरिन्द्रियसंयोगजन्यत्वाभावात् अव्याप्तिरतो ग्रहपदस्य प्रत्यक्षपरत्वं पञ्चम्याः जन्यत्वार्थकत्वामति बोधनाय विशिष्टार्थमाह ॥ **द्रव्यप्रत्यक्षमिति** ॥ द्रव्यवृत्तिलौकिकविषयतासंबन्धेन प्रत्यक्षमित्यर्थः । यथाश्रुते समवायादिना प्रत्यक्षं प्रति इन्द्रियसंयोगस्य कारणत्वाभावेऽपि न क्षतिः ॥ **द्रव्यसमवेतप्रत्यक्षमिति** ॥ द्रव्यसमवेतवृत्तिलौकिकविषयतासंबन्धेन प्रत्यक्षमित्यर्थः ॥ **एवमग्रेऽपीति** ॥ द्रव्यसमवेतसमवेतवृत्तिलौकिकविषयातासंबन्धेन प्रत्यक्षं प्रति इन्द्रियसंयुक्तसमवेतसमवायस्य कारणत्वमित्यादिकामित्यर्थः । ननु द्रव्यवृत्तिलौकिकविषयतासंबन्धेन प्रत्यक्षं प्रति इन्द्रियसंयोगस्य हेतुत्वे त्वक्प्रभासंयोगात्प्रत्यक्षापत्तिः । तादृशसंयोगस्यापि कारणतावच्छेदकाक्रान्तत्वात् । यदिच त्वक्चक्षुर्भ्यां आत्मसंयोगस्येव त्वक्प्रभासंयोगस्यापि प्रत्यक्षसामान्यप्रतिबन्धकत्वमनुभवानुरोधात् स्वीक्रियत इति नोक्तदोष इति विभाव्यते तदा प्रभाचक्षुःसंयोगकाले चाक्षुषान्यज्ञानं जायतामितीच्छाकाले प्रभानुमितिसामग्रीसत्त्वेऽपि प्रभाप्रत्यक्षापत्तिः प्रत्यक्षमात्रं प्रति तादृशसामग्र्या अप्रतिबन्धकत्वात् । एवं चक्षुःसंयुक्तसमवायसन्निकर्षात् घटीयरूपे प्रत्यक्षमिव घटीयस्पर्शे प्रत्यक्षापत्तिरित्यादिदोषसत्त्वात् इन्द्रियत्वस्याननुगतत्वेन तद्घटितसंयोगत्वादेरप्यननुगततया परस्परव्यभिचारादित्यादिदोषसत्त्वाच्च कथमीदृशकार्यकारणभाव इति प्राचीनमते दोषं हृदि निधाय नवीनमतमाह ॥ **वस्तुतस्त्विति** ॥ प-

## दिनकरीयम्.

जन्यत्वघटितस्य व्यापारत्वस्य श्रोत्रशब्दसम्बन्धे समवायरूपेऽभावादाह ॥ **व्यापारः सन्निकर्ष इति** ॥ **द्रव्यप्रत्यक्षमिति** ॥ द्रव्यवृत्तिलौकिकविषयतासम्बन्धेन प्रत्यक्षमित्यर्थः ॥ **द्रव्यसमवेतेति** ॥ द्रव्यसमवेतवृत्तिलौकिकविषयतासम्बन्धेन प्रत्यक्षमित्यर्थः ॥ **एवमग्रेऽपीति** ॥ द्रव्यसमवेतसमवेतवृत्तिलौकिकविषयतासम्बन्धेन प्रत्यक्षमिन्द्रियसंयुक्तसमवेतसमवायजन्यमित्यर्थः । ननु द्रव्यप्रत्यक्षे इन्द्रियसन्निकर्षत्वेन हेतुत्वे त्वक्प्रभासंयोगाच्चाक्षुषापत्तिः एवमन्धकारे घटचक्षुःसंयोगात् स्पार्शनापत्तिश्चेत्यत आह ॥ **वस्तुतस्त्विति** ॥ नन्वेवमात्मप्रत्यक्षानुरोधेन मनःसंयोगस्य ज्ञानादिप्रत्यक्षानुरोधेन मनःसंयुक्तसमवायस्य

## रामरुद्रीयम्.

ननु विषयेन्द्रियसम्बन्धो व्यापार इति मूलमसङ्गतं शब्दश्रोत्रसम्बन्धस्य समवायस्य नित्यतया तज्जन्यत्वे सति तज्जन्यजनकत्वरूपव्यापारत्वस्यासम्भवात् अत एवैतदस्वरसेनैव व्यापारपदं सन्निकर्षार्थकतया विवृतं मुक्तावल्यामित्याह ॥ **जन्यत्वेत्यादि** ॥ वस्तुतस्तु तत्र समवायोऽपि व्यापार एव कथमन्यथा शब्दप्रत्यक्षे श्रोत्रेन्द्रियस्य करणत्वं व्यापारवत्कारणस्यैव करणत्वात् किं तु तज्जन्यत्वं व्यापारलक्षणप्रविष्टं तदधीनसत्ताकत्वमेव शब्दप्रतियोगिकत्वविशिष्टसमवायस्यैव प्रत्यक्षजनकतया तादृशस्याकाशात्मकश्रोत्रसत्त्वाधीनसत्तावत्त्वान्न व्यापारत्वविरोध इति-मन्तव्यम् । अस्तु वा इन्द्रियस्य करणत्वोपपत्तये शब्दादेर्विषयस्यैव व्यापारत्वं प्रत्यक्षे विषयस्य कारणत्वात् शब्दादेर्विषयस्याकाशादिजन्यत्वात्सुखादेरप्यात्ममनःसंयोगजन्यत्वे मनोजन्यत्वानपायादिति विभावनीयम् । ननु द्रव्यप्रत्यक्षे इन्द्रियसंयोगस्य न समवायेन कारणतासम्भवः तस्य विषयनिष्ठस्यात्मन्यसम्भवादिति विषयतैव कार्यतावच्छेदकसम्बन्धो वाच्यस्तथा च द्रव्यविषयकप्रत्यक्षस्य घट इत्याद्याकारकस्य विषयतया घटत्वादावप्युत्पत्त्या इन्द्रियसंयोगस्य व्यभिचार इत्यतो द्रव्यप्रत्यक्षमित्यस्यार्थमाह ॥ **द्रव्यवृत्तीति** ॥ तथा च प्रत्यक्षत्वमेवेन्द्रियसंयोगजन्यतावच्छेदकं द्रव्यवृत्तिलौकिकविषयतायाः कार्यतावच्छेदकसम्बन्धत्वादेव घटत्वादौ न व्यभिचार इति भावः एवं संयुक्तसमवायादावप्यूहनीय इत्याह ॥ **द्रव्यसमवेतेति** ॥ **द्रव्यप्रत्यक्ष इति** ॥ द्रव्यवृत्तिलौकिकविषयतासम्बन्धेन प्रत्यक्ष इत्यर्थः ॥ **इन्द्रियसन्निकर्षत्वेन** इन्द्रियसंयोगत्वेन ॥ **चाक्षुषापत्तिरिति** ॥ यद्यपि चाक्षुषत्वस्येन्द्रियसंयोगजन्य-

**संयुक्तसमवायः कारणं द्रव्यसमवेतसमवेतचाक्षुषं प्रति चक्षुःसंयुक्तसमवेतसमवायः एवमन्यत्रापि विशिष्यैव कार्यकारणभावः। परन्तु पृथिवीपरमाणुनीले नीलत्वं पृथिवीपरमाणौ पृथि-**

**प्रभा.**

**वमन्यत्रापीति** ॥ द्रव्यसमवेतसमवेतचाक्षुषं प्रति चक्षुस्संयुक्तसमवेतसमवायः कारणमित्यर्थः। ननु चाक्षुषत्वाद्यवच्छिन्नं प्रति चक्षुस्संयोगत्ववादिना कार्यकारणभावस्वीकारे तत्तद्धर्मावच्छिन्नं प्रत्येव महत्त्वस्य हेतुत्वं वाच्यं अन्यथा अतिप्रसङ्गात्, तथाच प्रत्यक्षसामान्यं प्रति महत्त्वस्य हेतुतायां द्रव्यतत्समवेतादिप्रत्यक्षभेदेन प्राचां मते कार्यकारणभावत्रयं नवीनमते तु श्रावणत्वावच्छिन्नं मानसत्वावच्छिन्नं प्रति वा बाधकाभावान्महत्त्वस्य हेतुत्वानङ्गीकारेऽपि द्रव्यतत्समवेतादिभेदेन चाक्षुषं प्रति कार्यकारणभावत्रयं एवं स्पार्शनं प्रत्यपि कार्यकारणभावत्रयं एवं घ्राणजरासने प्रति कार्यकारणभावद्वयमिति दशविधकार्यकारणभावकल्पनायां गौरवमित्याशङ्कां द्रव्यचाक्षुषादिभेदेन उद्भूतरूपालोकसंयोगयोः पृथक्कारणताकल्पनाप्रयुक्तगौरवशङ्कां च महत्त्वादित्रयाणां पृथक्कारणत्वनिरासेन निरसितुं भूमिकामाह ॥ **परं त्वित्यादिना** ॥ केचित्तु संयुक्तसमवेतसमवायेनैव त्र्यणुकस्य तत्समवेतरूपस्य च चाक्षुषसंभवाच्चक्षुस्संयोगस्य तत्संयुक्तसमवायस्य चान्यथासिद्धत्वेन न सन्निकर्षत्वमित्याशङ्कानिराकरणाय तयोः पृथक्सन्निकर्षत्वं व्यवस्थापयितुं भूमिकामाह परंत्वित्यादिनेत्याहुः। तदसत् चक्षुःसंयुक्तसमवेतसमवायस्यैव सन्निकर्षत्वे नीलो घट इत्यत्र घटचाक्षुषानुरोधेन चक्षुषा कापालिकासंयोगस्य नीलचाक्षुषानुरोधेन कपालसंयोगस्य नीलत्वचाक्षुषानुरोधेन घटचक्षुस्संयोगस्य च सन्निकर्षघटकतया हेतुत्वमावश्यकम्। एवंच स्वप्रत्यक्षे एकचक्षुस्संयोगस्य स्वसमवेतचाक्षुषे अन्यचक्षुस्संयोगस्य स्वसमवेतसमवेतचाक्षुषे अपरचक्षुस्संयोगस्य घटचाक्षुषं प्रति कापालिककपालयोश्च सन्निकर्षघटकतया हेतुत्वकल्पनायां गौरवं नीलो घट इति चाक्षुषपूर्वं तादृशसंयोगत्रयस्य नियमेन वृत्तौ प्रमाणाभावः घटचाक्षुषकाले कपालसमवेतकपालत्वरूपादीनामपि नियमेन चाक्षुषापत्तिश्च। नच तदानीं कपालत्वादिनिर्विकल्पकाभावादेव न तदापत्तिरिति वाच्यं घटविषयकनिर्विकल्पकचाक्षुषकाले कपालत्वादिविषयकतादृशचाक्षुषस्य घटविषयकसविकल्पकचाक्षुषकाले कपालत्वादिविषयकतादृशचाक्षुषस्य च नियमेनापत्तेर्दुर्वारत्वात्। चक्षुस्संयोगस्य प्रत्यासत्तित्वे तु घटस्य तत्समवेतरूपादेः तत्समवेतरूपत्वादेश्च चाक्षुषं प्रत्येकस्यैव चक्षुस्संयोगस्य हेतुत्वसंभवेन लाघवं घटचक्षुस्संयोगकाले कापालिकाचक्षुस्संयोगकपालचक्षुस्संयोगयोरनियतत्वेन तदानीं नियमेन कपालत्वादिचाक्षुषापत्त्यभावश्च। तस्मात्संयोगस्य प्रत्यासत्तित्वावश्यकत्वे यत्र संयोगो बाधितः तत्रैव संयुक्तसमवायस्य प्रत्यासत्तित्वं यत्रोभयं बाधितं तत्रैव संयुक्तसमवेतसमवायस्य प्रत्यासत्तित्वमिति लाघवबाधकोभयविशिष्टयुक्तेरेव संयोगस्य संयुक्तसमवायस्य च प्रत्यासत्तित्वलाभे परंत्वित्यादिग्रन्थस्य संयोगादेस्सन्निकर्षत्वव्यवस्थापनपरत्ववर्णनमनुचितं। तस्य तत्परत्वे चक्षुस्संयोगे उद्भूतरूपावच्छिन्नत्वालोकसंयोगावच्छिन्नत्वविशेषणस्य त्वक्संयोगे उद्भूतस्पर्शाद्यवच्छिन्नविशेषणस्य घ्राणसंयोगे रसनासंयोगे च महत्त्वावच्छिन्नत्वविशेषणस्य च प्रकृतानुपयुक्तत्वेन तद्व्यवस्थापनप्रयासस्य स्वारस्याभावादिति हृदयम्। अस्मद्गुरुचरणास्तु संयोगसमवायविशेषणतानामेवं सन्निकर्षत्वं आत्मप्रत्यक्षानुरोधेन संयोगस्य शब्दप्रत्यक्षानुरोधेन समवायस्याभावप्रत्यक्षानुरोधेन विशेषणतायाश्च सन्निकर्षत्वावश्यकतया लाघवात् नच रूपादिप्रत्यक्षानुरोधेन संयुक्तसमवायादेरपि सन्निकर्षत्वमावश्यकमिति वाच्यं इन्द्रियसंयोगस्य स्वाश्रयसमवायादिसंबन्धेन हेतुत्वस्वीकारेणैव रूपादिप्रत्यक्षोपपत्तेः न तेषामपि पृथक्सन्निकर्षत्वं गौरवात् अन्यथा महत्त्वोद्भूतरूपालोकसंयोगादीनां द्रव्यप्रत्यक्षे कारणत्ववत् द्रव्यसमवेतादिप्रत्यक्षे तादृशत्रितयसमवायादीनामपि प्रत्यक्षहेतुत्वापत्तेः द्रव्यप्रत्यक्षे इन्द्रियसंयोगस्येव द्रव्यसमवेतादिप्रत्यक्षे इन्द्रियसंयुक्तसमवायादेः पृथक्सन्निकर्षत्वे यदाकदाचिच्चक्षुस्संयोगाश्रयघटादिसमवायं तादृशघटादिसमवेतसमवायं वादाय चक्षुस्संयोगशून्यकालेऽपि रूपरूपत्वादिचाक्षुषापत्तिवारणाय चक्षुस्संयोगविशिष्टसमवायादेरेव सन्निकर्षत्वस्य वाच्यतया समवायनिष्ठविशिष्टानुयोगिकत्वस्य विशेषणावच्छिन्नानुयोगिकत्वरूपस्य

वीत्वं च चक्षुषा कथं न गृह्यते तत्र परम्परयोद्भूतरूपसम्बन्धस्य महत्त्वसम्बन्धस्य च सत्त्वात्। तथा हि नीलत्वजातिरेकैव घटनीले परमाणुनीले च वर्तते तथाच महत्त्वसम्बन्धो घटनीलमादाय वर्तते रूपसम्बन्धस्तूभयमादायैव वर्तते। एवं पृथि-

प्रभा.

संयोगसमानकालीनत्वविशिष्टसंयोगाश्रयानुयोगिकत्वपर्यवसितस्य निवेशनीयतया गौरवं संयुक्तसमवाया-दिघटकसंयुक्तस्य संयुक्तसमवेतस्य च कारणत्वकल्पनेन महागौरवम्। संयुक्तसमवायादीनां येनकेन-चित्संबन्धेन हेतुत्वे रूपादिनिष्ठस्य चक्षुस्संयुक्तसमवायादेर्ज्ञानादावपि सत्त्वेन ज्ञानादिचाक्षुषापत्त्या वि-शिष्टसमवायप्रतियोगित्वादिसंबन्धेनैव संयुक्तसमवायादीनां हेतुत्वस्य वाच्यतया तादृशरूपेण संबन्ध-त्वकल्पनेन विशिष्टसमवायत्वादेः कारणतावच्छेदकत्वकल्पनेन चातिगौरवं। संयोगमात्रस्य सन्निकर्षत्वे तु ज्ञानादेः तादृशचक्षुस्संयुक्तसमवेतत्वाभावेन ज्ञानत्वादेस्तादृशचक्षुस्संयुक्तसमवेतसमवेतत्वाभावेन च ज्ञाना-दौ स्वसमवायिसमवायसंबन्धेन ज्ञानत्वादौ स्वसमवायिसमवेतसमवेतत्वसंबन्धेन चक्षुस्संयोगस्य चावर्त-मानतया न ज्ञानादेश्चाक्षुषापत्तिः। नचैवं सन्निकर्षस्य षड्विधत्वप्रवादो व्याहन्येतेति वाच्यं तादृशप्रवादस्य निर्युक्तिकत्वेनाश्रद्धेयत्वात्। अथवा द्रव्यचाक्षुषे महत्त्वावच्छिन्नोद्भूतरूपावच्छिन्नालोकसंयोगावच्छिन्नचक्षुस्सं-योगस्य समवायसंबन्धेन द्रव्यसमवेतचाक्षुषे तादृशसंयोगस्य स्वसमवायिसमवायसंबन्धेन द्रव्यसमवेतसमवे-तचाक्षुषे तादृशसंयोगस्य स्वसमवायिसमवेतसमवेतत्वसंबन्धेन हेतुतया शब्दप्रत्यक्षे श्रोत्रावच्छिन्नसम-वायस्य प्रतियोगितासंबन्धेन शब्दसमवेतप्रत्यक्षे तादृशसमवायस्य स्वप्रतियोगिसमवेतत्वसंबन्धेन हे-तुतया अभावप्रत्यक्षे विशेषणतासन्निकर्षस्य स्वरूपसंबन्धेन हेतुतया च सन्निकर्षत्रयान्यतमनिष्ठकारण-तावच्छेदकसंबन्धानां मिलितत्वात् तादृशप्रवादः समर्थनीयः। तस्मात्संयुक्तसमवेतसमवायस्य पृ-थक्सन्निकर्षत्वे प्रमाणाभावेन तादृशसन्निकर्षेण संयोगस्यान्यथासिद्धिपरतया परंत्वित्यादिग्रन्थवर्णनं व-न्ध्यापुत्रेण स्वपुत्रनिराकरणतुल्यमिति परिहसन्ति ॥ **पृथिवीपरमाणुगतनील इति** ॥ पृथिवीपरमा-णुनीलघटितचक्षुस्संयुक्तसमवेतसमवायरूपसन्निकर्षे सतीत्यर्थः ॥ **नीलत्वमिति** ॥ न गृह्यत इति परेणान्वितं ॥ **पृथिवीपरमाणाविति** ॥ पृथिवीपरमाणुघटितचक्षुस्संयुक्तसमवाये सतीत्यर्थः। वायौ तदीयस्पर्शादौ चेत्यत्रापि एवमेवार्थो बोध्यः। न गृह्यत इत्यत्र हेतुमाह ॥ **तत्रेति** ॥ नीलत्वे पृथि-वीत्वे चेत्यर्थः ॥ **परम्परयेति** ॥ स्वसमवायिसमवेतसमवायेन स्वसमवायिसमवायेन चेत्यर्थः। तदेवोपपाद-यितुं भूमिकामाह ॥ **तथाहीति** ॥ **नीलत्वजातिरिति** ॥ यत इत्यादिः। एकैवेत्यत्र एवकारः वर्त-त इत्यनेनान्वेति ॥ **घटनील इति** ॥ अत इत्यादिः। तथाच यतः नीलत्वजातिरेका अतः घटनीले परमाणुनीले च निस्सन्दिग्धा तिष्ठतीति वाक्यार्थः तदुभयवत्त्वमुपपादयति ॥ **तथा चेति** ॥ घट-

दिनकरीयम्.

प्रत्यासत्तित्वेऽपि चक्षुरादिसंयोगतत्संयुक्तसमवाययोः प्रमाणाभावः चक्षुरादिसंयुक्तसमवेतसमवायेनैव त्र्यणु-कादेः चाक्षुषाद्युपपत्तेरत आह ॥ **परन्त्विति** ॥ **परम्परया** स्वाश्रयसमवेतसमवेतत्वादिसम्बन्धेन ॥ उ-

रामरुद्रीयम्.

तानवच्छेदकत्वेनेन्द्रियसंयोगकारणवलाचाक्षुषापत्तिरुक्ता तद्वलेन प्रत्यक्षत्वावच्छिन्नस्यैव आपादनसम्भवात्त थापि जायमानं प्रत्यक्षं चाक्षुषमेवाङ्गीकार्यं न स्पार्शनं तत्रोद्भूतस्पर्शाभावात् स्पार्शने त-स्य हेतुत्वात् इन्द्रियान्तरं च द्रव्यग्राहकमेव नेत्यभिप्रायेण चाक्षुषापादनान्नासङ्गतिः एवमुत्तरत्रापि चाक्षुषे आलोकसंयोगस्य हेतुतया तदभावान्नान्धकारे चाक्षुषापत्तिरतः स्पार्शनापादनमिति बोध्यम्। अथ विशिष्य कार्यकारणभावस्योक्तयुक्त्याऽऽवश्यकत्वेऽपि यद्विशेषयोरिति न्यायेनोक्तकार्यकारणभावोऽप्यावश्यक एवेति वस्तुतस्त्वित्यादिना मूले तत्परित्यागोऽनुचित इति चेन्मैवम्। तादृशन्यासौ मानाभावात्। न चैकस्येन्द्रिय-संयोगाभावस्य प्रत्यक्षसामान्याभावप्रयोजकत्वे लाघवमेव तत्र मानमिति वाच्यम्। घ्राणेन्द्रियादिसंयोगस-त्त्वेऽपि द्रव्यानिष्ठलौकिकविषयतया प्रत्यक्षसामान्याभावसत्त्वेन तस्य तत्र प्रयोजकत्वासम्भवादिति ध्येयम्॥

वीत्वेऽपि घटादिकमादाय महत्त्वसम्बन्धो बोध्यः। एवं वायौ तदीयस्पर्शादौ च सत्तायाश्चाक्षुषप्रत्यक्षं स्यात्। तस्मादुद्भूतरूपावच्छिन्नमहत्त्वावच्छिन्नचक्षुःसंयुक्तसमवायस्य द्रव्यसमवेतप्रत्यक्षे तादृशचक्षुःसंयुक्तसमवेतसमवायस्य द्रव्यसमवेतसमवेतप्रत्यक्षे कारण-

## प्रभा.

**नीलमादायेति** ॥ घटनीलघटितस्वसमवायिसमवेतसमवेतत्वसंबन्धेनेत्यर्थः ॥ **रूपसंबन्धस्त्विति** ॥ उद्भूतरूपसंबन्धोऽपीत्यर्थः ॥ **उभयमादायेति** ॥ घटनीलमादाय परमाणुनीलमादाय चेत्यर्थः ॥ **घटादिकमादायेति** ॥ घटादिघटितस्वसमवायिसमवायसंबन्धेनेत्यर्थः । इदमुपलक्षणं घटादिकमादाय परमाणुमादाय चोद्भूतरूपसंबन्धोऽपि बोध्यः । महत्त्वाभावाधिकरणघटितचक्षुस्सान्निकर्षाच्चाक्षुषमापाद्य उद्भूतरूपानधिकरणघटितचक्षुस्सान्निकर्षात्तदापादयति ॥ **एवमिति** ॥ **वायाविति** ॥ वायुघटितचक्षुस्संयुक्तसमवाये सतीत्यर्थः ॥ **तदीयस्पर्शादाविति** ॥ वायवीयस्पर्शादिघटितचक्षुस्संयुक्तसमवेतसमवाये सतीत्यर्थः । आदिना तत्समवेतपरिमाणादेः परिग्रहः ॥ **तस्मादिति** ॥ उक्तापत्तिदोषादित्यर्थः उक्तापत्तिवारणायेति फलितोऽर्थः ॥ **उद्भूतरूपावच्छिन्नेति** ॥ समवायघटितसामानाधिकरण्यसंबन्धेन उद्भूतरूपविशिष्टेत्यर्थः । अत्र चक्षुर्घटितचक्षुस्संयुक्तसमवेतसमवायसन्निकर्षाच्चक्षुष्ट्वादीनां—चाक्षुषापत्तिवारणाय उद्भूतेति ॥ **महत्त्वावच्छिन्नेति** ॥ तादृशसंबन्धेन महत्त्वादिविशिष्टेत्यर्थः । एतस्य चक्षुस्संयुक्तपदार्थैकदेशे चक्षुस्संयोगे अन्वयः ॥ **समवायस्येति** ॥ कारणत्वमित्ति परेणान्वयः ॥ **द्रव्यसमवेतप्रत्यक्ष इति** ॥ द्रव्यसमवेतवृत्तिलौकिकविषयतासंबन्धेन चाक्षुष इत्यर्थः ॥ **तादृशचक्षुस्संयुक्तेति** ॥ समवायघटितसामानाधिकरण्यसंबन्धेन महत्त्वोद्भूतरूपविशिष्टचक्षुस्संयोगविशिष्टानुयोगिकसमवायस्येत्यर्थः ॥ **द्रव्यसमवेतसमवेतप्रत्यक्ष इति** ॥ तादृशसमवेतवृत्तिलौकिक

## दिनकरीयम्.

**द्भूतरूपावच्छिन्नमहत्त्वावच्छिन्नचक्षुःसंयुक्तसमवेतसमवायस्येति** ॥ अत्र चक्षुर्घटितचक्षुःसन्निकर्षाच्चक्षुष्ट्वादीनां प्रत्यक्षवारणायोद्भूतेति। उद्भूतरूपावच्छिन्नेति महत्त्वावच्छिन्नेति चक्षुःसंयुक्तपदार्थैकदेशसंयोगेनान्वेति। तथा च महत्त्वावच्छिन्नचक्षुःसंयुक्तसमवेतसमवायस्य त्रसरेणावभावात् तच्चाक्षुषाद्यनुपपत्तिरतः संयोगस्य प्रत्यासत्तित्वमावश्यकमिति भावः। संयुक्तसमवेतसमवायेन संयुक्तसमवायस्य नान्यथासिद्धिरित्याह ॥ **द्रव्यसमवेतेति** ॥ **तादृशेति** ॥ महत्त्वावच्छिन्नेत्यर्थः । तथा च महत्त्वावच्छिन्नचक्षुःसंयुक्तसमवायस्य त्रसरेणुरूपेऽभावाच्चाक्षुषाद्यनुपपत्त्या संयुक्तसमवायस्य प्रत्यासत्तित्वमिति भावः। एतत्प्रसङ्गेन पूर्वं रूपावच्छिन्नत्वमग्रे चालोकसंयोगावच्छिन्नत्वं चक्षुःसंयोगे तत्प्रयोजनं चाभिहितमिति बोध्यम्।

## रामरुद्रीयम्.

**एवं** विशिष्यैव कार्यकारणभावे ॥ **चक्षुर्घटितेति** ॥ परकीयचक्षुर्घटितेत्यर्थः । स्वस्मिन्स्वप्रतियोगिकसंयोगानुयोगित्वासम्भवात् ॥ **संयुक्तपदार्थैकदेश इति** ॥ यद्यपि सामानाधिकरण्यसम्बन्धेन संयोगे रूपावच्छिन्नत्वनिवेशापेक्षया संयुक्त एव समवायेन रूपावच्छिन्नत्वनिवेश एव लाघवं तथापि विभिन्नावयवावच्छेदेनालोकचक्षुस्संयोगाभ्यां दण्डादिप्रत्यक्षवारणायाग्रे चक्षुःसंयोगे आलोकसंयोगनिष्ठावच्छेदकतानिरूपकत्वस्य विवक्षणीयतया तत्रैव महत्त्वोद्भूतवैशिष्ट्यं निवेशितं एकत्रैकं विशेषणं अपरत्र विशेषणद्वयमिति स्वीकारे अर्धजरतीयन्यायापत्तेरिति भावः। वस्तुत उक्तलाघवानुरोधेन चक्षुस्संयुक्त एव विशेषणद्वयमुचितमेकत्र विशेषणत्रयोपगमे परस्परविशेषणविशेष्यभावे विनिगमनाविरहेण कार्यकारणभावाधिक्यप्रसङ्गादित्यवधेयम्। ननूक्तग्रन्थस्य संयुक्तसमवेतसमवायेनैवोपपत्तौ संयोगसंयुक्तसमवाययोर्वैयर्थ्यमित्याशङ्क्यैव अवतारिततया संयोगमहत्त्वावच्छिन्नत्वनिवेशेनैव तादृशशङ्कानिरासादुद्भूतरूपावच्छिन्नत्वविशेषणप्रदर्शनं मूले विफलमित्याशङ्कां परिहरति ॥ **एतदिति** ॥ तथा च स्फुटत्वयोपेक्षानर्हत्वादेव तत्र विशेषणद्वयमभिहितमिति न दोष इति भावः। अत्र चाग्रे चेत्यादिकं यथाऽऽलोकसंयोगावच्छिन्नत्वोपादानं प्रयोजनान्तरार्थमेव न तु संयोगसंयुक्तसम-

त्वं वाच्यम् । इत्थं च परमाणुनीलादौ न नीलत्वादिपरिग्रहः परमाणौ चक्षुःसंयोगस्य महत्त्वावच्छिन्नत्वाभावात् । एवं वाय्वादौ न सत्तादिचाक्षुषं तत्र चक्षुःसंयोगस्य रूपावच्छिन्नत्वाभावात् । एवं यत्र घटस्य पृष्ठावच्छेदेनालोकसंयोगः चक्षुःसंयोगस्त्वग्रावच्छेदेन तत्र घटप्रत्यक्षाभावादालोकसंयोगावच्छिन्नत्वं चक्षुःसंयोगे विशेषणं देयम् । एवं द्रव्यस्पार्शनप्रत्यक्षे त्वक्संयोगः कारणं द्रव्यसमवेतस्पार्शनप्रत्यक्षे त्वक्संयुक्तसमवायः द्रव्यसमवेतसमवेतस्पार्शनप्रत्यक्षे त्वक्संयुक्तसमवेतसमवायः । अत्रापि महत्त्वावच्छिन्नत्वमुद्भूतस्पर्शावच्छिन्नत्वं च पूर्ववदेव बोध्यम् । एवं गन्धप्रत्यक्षे घ्राणसंयुक्तसमवायः गन्धसमवेतस्य घ्राणजप्रत्यक्षे घ्राणसंयुक्तसमवेतसमवायः । रासनप्रत्यक्षे रसनासंयुक्तसमवायः रससमवेतरासनप्रत्यक्षे रसनासंयुक्तसमवेतसमवायः कारणम् । शब्दप्रत्यक्षे श्रोत्रावच्छिन्नसमवायः श-

## प्रभा

विषयतासंबन्धेन चाक्षुष इत्यर्थः । एतादृशरूपेण सन्निकर्षस्य हेतुत्वे उक्तापत्तिर्नेत्याह ॥ **इत्थं चेति** ॥ महत्त्वोद्भूतरूपादिघटितरूपेण चक्षुःसन्निकर्षस्य हेतुत्वे चेत्यर्थः ॥ **परमाणुनीलादाविति** ॥ आदिना पीतादिपरिग्रहः परमाणुनीलादिघटितचक्षुःसन्निकर्षे सतीत्यर्थः ॥ **नीलत्वादीति** ॥ आदिना पीतत्वादिपरिग्रहः तदुपपादयति ॥ **परमाणाविति** ॥ **महत्त्वावच्छिन्नत्वाभावादिति** ॥ परमाणोर्महत्त्वाभावात् चक्षुषि महत्त्वेऽपि समवायघटितसामानाधिकरण्यसंबन्धेन महत्त्वविशिष्टचक्षुःसंयोगस्य चक्षुष्येव वर्तमानतया परमाणोर्विशिष्टाधिकरणत्वाभावेन विशिष्टाधिकरणसमवेतसमवायरूपसन्निकर्षाभावान्नीलत्वादिचाक्षुषमिति भावः ॥ **वाय्वादाविति** ॥ आदिना भर्जनकपालस्थवह्न्यादेः वाय्वादिसमवेतस्पर्शादेश्च परिग्रहः । वाय्वादिघटितचक्षुःसंयुक्तसमवाये सति तादृशसमवेतसमवाये च सतीत्यर्थः ॥ **तत्रेत्यादि** ॥ वाय्वादिवृत्तिचक्षुःसंयोगस्येत्यर्थः ॥ **रूपानवच्छिन्नत्वादिति** ॥ उद्भूतरूपानवच्छिन्नत्वादित्यर्थः ॥ **आलोकसंयोगावच्छिन्नत्वमिति** ॥ एकावच्छेदकावच्छिन्नत्वसंबन्धेनालोकसंयोगविशिष्टत्वमित्यर्थः ॥ **रसनासंयुक्तसमवेतसमवाय इति** ॥ अत्रापि घ्राणसंयोगे रसनासंयोगे च महत्त्वावच्छिन्नत्वं बोध्यम् । अन्यथा परमाणुगन्धघ्राणजप्रत्यक्षतत्समवेतरसरासनप्रत्यक्षयोरापत्तेः । **श्रोत्रावच्छिन्नसमवाय इति** ॥ केवलश्रोत्रानुयोगिकसमवाय इत्यर्थः ॥ महत्त्वावच्छिन्नत्वानिवेशे प्रयोजनाभावादिति भावः । नच तत्र केवलसमवायस्यैव सन्निकर्षत्वमास्तां किमवच्छिन्नत्वनिवेशेनेति वाच्यं । तथासति श्रोत्रदेशे अनुत्पन्नशब्दस्यापि केवलसमवायरूपसन्निकर्षवत्तया श्रावणत्वापत्तेः ॥ नच तादृशविशेषणेऽपि विशिष्टसमवायशुद्धसमवाययोरैक्यात् कथं तद्वारणमिति वाच्यं । यच्छब्दो यद्देशा-

## दिनकरीयम्

स्पार्शनप्रत्यक्षे त्वक्सन्निकर्षस्य कारणत्वं प्रपञ्चयति ॥ **एवमित्यादिना** ॥ **पूर्ववदेवेति** ॥ परमाणुघटितत्वक्सन्निकर्षेण स्पर्शत्वस्पार्शनवारणाय महत्त्वावच्छिन्नत्वं प्रभाघटितसन्निकर्षेण स्पर्शत्वस्पार्शनवारणायोद्भूतस्पर्शावच्छिन्नत्वादिविशेषणं बोध्यमित्यर्थः ॥ **श्रोत्रावच्छिन्नेति** ॥ सकलपुरुषाणां सर्वशब्दप्र-

## रामरुद्रीयम्

वाय्वोः सन्निकर्षत्वोपपत्त्यर्थं तथोद्भूतरूपावच्छिन्नत्वनिवेशनमपि चक्षुरादेः चाक्षुषत्वनिरासनायैवेति दृष्टान्तविधयैवोक्तं तेन वक्ष्यमाणग्रन्थस्योक्ताशङ्कयाऽनवतारितत्वेऽपि न क्षतिः । प्रभायां सत्तास्पार्शनवारणं त्वक्संयोगे उद्भूतरूपावच्छिन्नत्वानिवेशान्न सम्भवतीति स्पर्शाद्युपधावनम् । श्रोत्रावच्छिन्नत्वस्य समवायविशेषणस्य फलमाह ॥ **सकलेति** ॥ नन्विन्द्रियसम्बद्धविशेषणतया समवायाभावयोः प्रत्यक्षमिति वदतो मूलकारस्येन्द्रियसम्बद्धविशेषणतात्वेन विशेषणताया विभाग इति ग्रन्थकाराणामाशयो लभ्यते स चासङ्गतः इन्द्रियेण कालिकेन सम्बद्धे घटादौ विशेषणतया घटत्वाभावादेः प्रत्यक्षत्वानुपपत्तेः किं तु

व्दसमवेतश्रावणप्रत्यक्षे श्रोत्रावच्छिन्नसमवेतसमवायः कारणम् । अत्र च सर्वं प्रत्यक्षं लौकिकं बोध्यम् । वक्ष्यमाणमलौकिकप्रत्यक्षमिन्द्रियसंयोगादिकं विनापि सम्भवति । एवमात्मप्रत्यक्षे मनःसंयोगः आत्मसमवेतमानसप्रत्यक्षे मनःसंयुक्तसमवायः आत्मसमवेतसमवेतमानसप्रत्यक्षे मनःसंयुक्तसमवेतसमवायः कारणम् । अभावप्रत्यक्षे समवायप्रत्यक्षे चेन्द्रियसम्बद्धविशे-

## प्रभा.

वच्छेदेनोत्पद्यते तादृशशब्दं प्रति तद्देशानुयोगिकत्वविशिष्टसमवायत्वेन समवायस्य सन्निकर्षत्वाभ्युपगमात् कर्णविवरावच्छेदेन जायमानशब्दस्य कर्णविवरानुयोगिकत्वविशिष्टसमवायत्वेन समवायस्य संसर्गत्वं भेर्यवच्छेदेन जायमानशब्दस्य तु समवायस्य भेर्यनुयोगिकत्वविशिष्टसमवायत्वेन संसर्गत्वेऽपि भेरीशब्दस्य कर्णविवरावच्छेदेनानुत्पद्यमानतया कर्णविवरानुयोगिकत्वविशिष्टसमवायत्वेन समवायस्य संसर्गत्वानभ्युपगमात् । तथाच श्रोत्रावच्छिन्नसमवाय इत्यत्रावच्छिन्नपदस्यानुयोगिकत्वविशिष्टार्थकतया श्रोत्रशब्दस्य कर्णविवरविशिष्टाकाशार्थकतया च कर्णविवरविशिष्टाकाशानुयोगिकत्वविशिष्टसमवायसन्निकर्ष इत्यर्थः । विशिष्टानुयोगिकत्वस्य विशेषणविशेष्योभयानुयोगिकतया पर्यवसन्नतया कर्णविवरानुयोगिकत्वाकाशानुयोगिकत्वोभयविशिष्टसमवायत्वेन समवायस्य सन्निकर्षत्वं फलितम् । एवंच कर्णविवरावच्छेदेन जायमानशब्दस्यैव तादृशसमवायत्वेन समवायस्य संसर्गतया तादृशसमवायरूपसन्निकर्षवशात् कर्णविवरावच्छेदेनानुत्पन्नशब्दानां प्रत्यक्षापत्तेरभावात् । तस्मात् नवीनमते महत्त्वस्य सन्निकर्षघटकतयैव कारणतया पृथक्कारणत्वाभावेन न पूर्वोक्तगौरवावकाशः । प्राचां मते द्रव्यप्रत्यक्षादिकं प्रति महत्त्वावच्छिन्नेन्द्रियसंयोगादेर्हेतुत्वं पूर्वोक्तदोषवारणाय द्रव्यचाक्षुषत्वाद्यवच्छिन्नं प्रति चक्षुस्संयोगत्वादिनापि हेतुत्वमावश्यकं एवं सामान्यकार्यकारणभावबलात् आकाशनिष्ठमहत्त्वजीवनिष्ठमहत्त्वानां बहूनां कारणत्वं कल्पनीयमिति महागौरवं इन्द्रियत्वस्यैकस्याभावेन सामान्यकार्यकारणभावासंभवश्चेति दूषणं बोध्यम् ॥ **अत्र चेति** ॥ उक्तकार्यकारणभावस्थले चेत्यर्थः ॥ **सर्वप्रत्यक्षमिति** ॥ अत इत्यादिः । चाक्षुषस्पार्शनादिभेदेनानेकविधं प्रत्यक्षमित्यर्थः ॥ **लौकिकं बोध्यं** लौकिकविषयतासंबन्धेन कार्यमिति ज्ञेयमित्यर्थः ॥ **वक्ष्यमाणमलौकिकप्रत्यक्षमिति** ॥ यत इत्यादिः ॥ **आत्मप्रत्यक्ष इति** ॥ आत्मवृत्तिलौकिकविषयतासंबन्धेन प्रत्यक्ष इत्यर्थः ॥ **मनस्संयोग इति** ॥ केवलमनस्संयोग इत्यर्थः । महत्त्वावच्छिन्नत्वनिवेशे प्रयोजनाभावात् एवमुत्तरत्रापि ॥ **अभावप्रत्यक्ष इति** ॥ अत्र यद्यपि समवायप्रत्यक्षे अभावप्रत्यक्ष इत्येव वक्तुमुचितं क्रमिकत्वात्तथापि अभावप्रत्यक्षस्य सर्वमतसिद्धतया तत्प्रत्यक्षे विशेषणतायास्सन्निकर्षत्वोपपादने ग्रन्थकारस्य निर्भरः समवायप्रत्यक्षस्य एकदेश्यनुमतत्वेन तत्प्रत्यक्षे विशेषणतायास्सन्निकर्षत्वोपपादने ग्रन्थकर्तुर्न निर्भर इत्येतादृशार्थसूचनायाभावप्रत्यक्षे समवायप्रत्यक्षे चेति वैपरीत्येनोक्तमिति ध्येयम् ॥ **इन्द्रियसंबद्धेति** ॥ यद्यपि इन्द्रियसंयुक्तविशेषणता इन्द्रियसंयुक्तसमवेतविशेषणतेत्यादिक्रमेण बाहुल्यं तथापि विशेषणतात्वेन एकरूपेण विभागः । नचैवं समवायत्वेन चतुर्णामनुगमप्रसङ्ग इति वाच्यं स्वतन्त्रे-

## दिनकरीयम्.

प्रत्यक्षापत्तिरतः श्रोत्रावच्छिन्नेति ॥ **इन्द्रियसम्बद्धेति** ॥ यद्यपीन्द्रियसंयुक्तविशेषणता इन्द्रियसंयुक्तसमवेतविशेषणतेत्यादिक्रमेण बाहुल्यमेव तथापि विशेषणतात्वेनैव रूपेण विभागः । नचैवं

## रामरुद्रीयम्.

संयुक्तविशेषणतात्वादिनैव सन्निकर्षता वाच्येति विभागोऽपि तेन तेन रूपेणैव कार्यस्तथा च सन्निकर्षस्य षड्विधत्वव्याघात इत्याशङ्क्य निराचष्टे ॥ **यद्यपीति** ॥ यद्यपीयमाशङ्काऽग्रे मूलकृतैव क्रियते समाधीयते चोक्तसमाधानेनैवेति व्याख्याने एतदाशङ्कायास्तत्समाधानस्य च वैफल्यमेव तथापि विशेषणतानां विशेषणतात्वेन विभागे संयुक्तसमवायादीनां चतुर्णां केवलसमवायविभाजकसमवायत्वेनानुगमसम्भवेन संयोगसमवायविशेषणतात्रयः सन्निकर्षा इत्येव कुतो नोक्तमित्याक्षेपस्य मू-

षणता हेतुः। वैशेषिकमते तु समवायो न प्रत्यक्षः। अत्र यद्यपि विशेषणता नानाविधा तथा हि भूतलादौ घटाद्यभावः संयुक्तविशेषणतया गृह्यते। सङ्ख्यादौ रूपाद्यभावः संयुक्तसमवेतविशेषणतया सङ्ख्यात्वादौ रूपाद्यभावः संयुक्तसमवेतसमवेतविशेषणतया शब्दाभावः केवलश्रोत्रावच्छिन्नविशेषणतया कादौ खत्वाद्यभावः श्रोत्रावच्छिन्नसमवेतविशेषणतया कत्वादौ घत्वाद्यभावः श्रोत्रावच्छिन्नसमवेतसमवेतविशेषणतया ( एवं कत्वाद्यवच्छिन्नाभावे गत्वाभावादिकं श्रोत्रावच्छिन्नविशेषणविशेषणतया घटाभावादौ पटाभावः चक्षुःसंयुक्तविशेषणविशेषणतया एवमन्यत्राप्यूह्यं ) तथापि विशेषणतात्वेन एकैव सा गण्यते अन्यथा षोढा सन्निकर्ष इति प्राचां प्रवादो व्याहन्येतेति ॥

## प्रभा.

च्छस्य नियन्तुमशक्यत्वात् ॥ वैशेषिकमत इति ॥ पृथिव्यां गन्धस्य समवायो न जल इति प्रतीत्या समवायस्य नानात्ववादिनव्यमते अतीन्द्रियवृत्तिसमवायस्याप्रत्यक्षत्वेऽपि योग्यवृत्तिसमवायस्य प्रत्यक्षत्वान्नवीनमत इत्यनुक्त्वा वैशेषिकमत इत्युक्तमिति ध्येयम् ॥ समवायो न प्रत्यक्ष इति ॥ संबन्धप्रत्यक्षे यावदाश्रयप्रत्यक्षस्य हेतुत्वादिति भावः। नच तादृशकार्यकारणभावे मानाभाव इति वाच्यं तथा सति घटपटसंयोगवद्घटाकाशसंयोगस्यापि प्रत्यक्षापत्तेः। नच संयोगप्रत्यक्षे यावदाश्रयप्रत्यक्षस्य हेतुत्वाङ्गीकारेणैव उक्तदोषवारणे तादृशकार्यकारणभावे मानाभाव एवेति वाच्यं तथासति भूतले आकाशात्यन्ताभावविशेषणताप्रत्यक्षापत्तेः भूतलस्य प्रत्यक्षविषयत्वात्। नचाकाशात्यन्ताभावविशेषणतायाः आकाशाभावत्वेनातीन्द्रियतया न तदापत्तिरिति वाच्यं विशेषणताया अभावरूपत्वे घटात्यन्ताभावस्य विशेषणतायाः अभावरूपायाः योग्यतया आकाशादौ तस्याः प्रत्यक्षापत्तेर्दुर्वारत्वात् तस्मात्संबन्धप्रत्यक्षे यावदाश्रयप्रत्यक्ष-

## दिनकरीयम्.

समवायत्वेन चतुर्णामनुगमप्रसङ्गः परिभाषाया अपर्यनुयोज्यत्वात् ॥ समवायो न प्रत्यक्ष इति ॥ सम्बन्धप्रत्यक्षे यावदाश्रयप्रत्यक्षस्य हेतुत्वादिति भावः। ननु विशेषणतया तद्बुद्धिस्यासङ्गतं विशेषणताप्रत्यासत्तेरभावात्। नच तत्प्रत्यासत्तेरनभ्युपगमेऽभावप्रत्यक्षानुपपत्तिरिति वाच्यं इष्टापत्तेरनुपलम्भस्यैव तत्प्रत्यक्षस्योपगमात्। नच समवायप्रत्यक्षानुरोधात् विशेषणताप्रत्यासत्तिस्वीकारः तस्यानुपगमादत एवाभावप्रत्यक्षे इन्द्रियं न करणं किं तु योग्यानुपलब्धिरेवेति भाट्टा-

## रामरुद्रीयम्.

लङ्कृता तादृशसमाधानोपर्यनिराकृततया तन्निरासायैव मूलोक्तार्थस्यानुवाद इति विभावनीयम् ॥ परिभाषायाः षड्विधस्सन्निकर्ष इति शास्त्रकारीयसङ्केतस्य ॥ अपर्यनुयोज्यत्वादिति ॥ संयोगादिभेदेन त्रिविधः सन्निकर्ष इत्येव कुतो नोक्तमित्याक्षेपानर्हत्वादित्यर्थः तथा विभागेऽपि क्षतिविरहादिति भावः। मूले वैशेषिकमते समवायो न प्रत्यक्ष इत्युक्तं तत्र युक्तेरनुक्तत्वात्तत्र युक्तिमाह ॥ सम्बन्धप्रत्यक्ष इति ॥ समवायस्यैकतया एकदा भाविभूतसकलाश्रयव्यक्तीनां ज्ञानासम्भवादिति भावः। न्यायमते तु सम्बन्धप्रत्यक्षत्वं न कार्यतावच्छेदकं सम्बन्धत्वस्य अनुगतस्य निर्वक्तुमशक्यत्वात् सांसर्गिकविषयतावत्त्वस्य कथञ्चित्सुवचत्वेऽपि तादृशसम्बन्धत्वस्य घटत्वादिसाधारणतया तत्प्रत्यक्षे व्यभिचारापत्तेः अपि तु संयोगप्रत्यक्षत्वमेव कार्यतावच्छेदकमतः समवायस्य तन्मते न प्रत्यक्षत्वानुपपत्तिरिति भावः। समवायप्रत्यक्षानुरोधादित्यस्य विशेषणतायास्सन्निकर्षत्वमिति शेषः ॥ तस्य समवायप्रत्यक्षस्य ॥ अनुपगमादस्वीकारादित्यर्थः। भट्टैरिति शेषः। तैः समवायस्यैवानङ्गीकारादवयवावयव्यादीनां स्वरूपस्यैव तन्मते सम्बन्धत्वादिति भावः ॥ अत एव ॥ विशेषणताप्रत्यासत्तेरभावादेवेत्यर्थः। ननु यदि स्यादुपलभ्येतेत्येवं यत्र प्रसज्य-

**अत्राभावप्रत्यक्षे योग्यानुपलब्धेः कारणत्वं तथाहि भूतलादौ घटादिज्ञाने जाते घटाभावादि-**

## प्रभा.

मेव हेतुरिति नियमः स्वीकार्य इति वैशिषिकन्व्योभयात्मकनवीनाभिप्रायः । प्राञ्चस्तु संबन्धप्रत्यक्ष इत्यादि-नियमे मानाभावः यावदाश्रयप्रत्यक्षं विनापि प्रमेयत्वादिना संबन्धप्रत्यक्षजननात् नच संबन्धत्वेन प्रत्यक्षे तद्धेतुरिति वाच्यं सर्वसंबन्धसाधारणसंबन्धत्वस्याभावात् संयोगसमवायाद्यन्यतमत्वरूपसंबन्धत्वस्यानुगत-त्वेऽपि तेन रूपेण संयोगादिप्रत्यक्षे यावदाश्रयप्रत्यक्षस्य हेतुत्वे मानाभावात् संयोगत्वेन संयोगप्रत्यक्षस्य कार्यतावच्छेदकाक्रान्ततया यावदाश्रयप्रत्यक्षं विना तदापत्तेर्दुर्वारत्वाच्च । नच संसर्गतावच्छेदकरूपेण संस-र्गप्रत्यक्षे तद्धेतुरिति वाच्यं संसर्गतावच्छेदकानां संयोगत्वसमवायत्वादीनां भिन्नतया तन्निष्ठावच्छेदकताना-मपि समवायस्वरूपादिरूपनानासंबन्धावच्छिन्नत्वेन भिन्नतया संसर्गतावच्छेदकधर्मावच्छिन्नविषयताशालि-प्रत्यक्षत्वस्याप्यननुगतत्वात् किन्तु संसर्गतावच्छेदकसंयोगत्वादिकं विशिष्योपादाय तत्तद्धर्मावच्छिन्नलौकिक-विषयताशालिप्रत्यक्षत्वमनुगतं कार्यतावच्छेदकं वाच्यं तत्रापि संयोगत्वावच्छिन्नलौकिकविषयताशालिप्रत्य-क्षं प्रति तद्धर्मावच्छिन्नाश्रययावत्प्रत्यक्षस्य हेतुत्वं न संभवति संयोगत्वावच्छिन्नाश्रययावद्द्रव्याणां प्रत्यक्षाप्र-सिद्धया कस्यापि संयोगस्य लौकिकप्रत्यक्षानुपपत्तेः । परन्तु संयोगत्वावच्छिन्नतत्तत्संयोगनिष्ठलौकिकविषय-ताशालिप्रत्यक्षं प्रति तदाश्रययावद्व्यक्तिप्रत्यक्षस्य हेतुत्वमिति रीत्या व्यक्तिविशेषमन्तर्भाव्यैव कार्यकारणभा-वो वाच्यः । एवंच समवायत्वावच्छिन्नसमवायनिष्ठलौकिकविषयताशालिप्रत्यक्षं प्रति समवायाश्रययावद्व्यक्ति-प्रत्यक्षस्य हेतुत्वानङ्गीकारेऽपि बाधकाभावात् तादृशकार्यकारणभावस्याप्रामाणिकतया समवायस्य लौकिक प्रत्यक्षस्वीकारे न किमपि बाधकमिति वदन्ति । मीमांसकास्तु अभावप्रत्यक्षे यदि प्रमाणं स्यात् तदनुरोधेन विशेषणतापि सन्निकर्षस्स्यात् तस्यैवासिद्धत्वात् किन्तु अभावस्यानुपलब्धिप्रमाणजन्यानुपलम्भात्मकप्रमिति-विषयत्वमेव तैस्समवायानङ्गीकारेणैव तत्प्रत्यक्षानुरोधेनापि विशेषणता न स्वीकार्येति वदन्ति ॥ तन्मतं दूषयति ॥ **मूले यदि स्यादिति** ॥ तथाचानुपलब्धिसहकृतेनेन्द्रियेणैवाभावप्रत्यक्षसंभवे अनुपलम्भप्र-मित्यन्तरं तत्करणत्वेनानुपलब्धिरूपप्रमाणं च न स्वीकार्यं गौरवादिति भावः उक्तार्थमेव प्रकाशयति ॥ **मुक्तावल्यां अभावप्रत्यय इति** ॥ **कारणत्वमिति** ॥ कारणत्वमेवेत्यर्थः । न करणत्वमिति भावः ए-तदेवोपपादयति ॥ **तथाहीत्यादिना** ॥ **घटादिज्ञान इति** ॥ तदिन्द्रियजन्यसंयोगादिसंबन्धावच्छि-

## दिनकरीयम्.

न्नामाक्षेपं दूषयितुं मूले यदि स्यादिति । तथा चेन्द्रियाणामभावप्रत्यक्षे जननीये योग्यानुपलब्धेः सहकारिता-मात्रेण निर्वाहेऽतिरिक्तप्रमाणकल्पनमनुचितमिति भावः । तत्र योग्यानुपलब्धेरभावप्रत्यक्षे हेतुत्वे युक्ति-माह ॥ **तथा हीति** ॥ **घटादिज्ञाने** घटादिभ्रमे । न च घटादिभ्रमहेतुदोष एव तत्प्रतिबन्धकः अ-

## रामरुद्रीयम्.

ते विशेषणतया तद्वदभावानां ग्रहो भवेदित्यनेन मूलेन नोक्तभट्टमतनिराकरणं सम्भवति तत्र तादृशमतनिरासकयुक्तेरस्फुरणादतस्तद्भावमाह ॥ **तथाचेति** ॥ **निर्वाह इति** ॥ विशेषणतासन्नि-कर्षेणाभावप्रत्यक्षोपगमे तया पिशाचादीनामप्यभावप्रत्यक्षापत्तिरित्यनिर्वाहः योग्यानुपलब्धेरभावग्राह-कत्वे तु पिशाचस्यायोग्यतया योग्यप्रतियोग्युपलम्भाभावरूपकारणाभावेन न तत्प्रत्यक्षापत्तिरिति भा-वः । इदानीं तु अभावग्राहकसन्निकर्षसत्त्वेऽपि सहकारिणो योग्यानुपलम्भस्याभावादेव न पिशाचा-भावादिप्रत्यक्षापत्तिरिति भावः ॥ **अनुचितमिति** ॥ यद्यप्यनुपलब्धेः कारणत्वकल्पनं विशेषण-तासन्निकर्षकल्पनं चापेक्ष्य अनुपलब्धौ प्रमाणत्वकल्पनमेवोचितं तथापि अनुपलब्धेर्व्यापाराभावेन व्या-पारवत्कारणत्वघटितप्रमाणत्वासम्भवात् अभावज्ञानस्य अधिकरणाविषयकस्य अननुभवेन अनुपलब्धि-जन्याभावज्ञाने अधिकरणभानानुपपत्तेश्चाभावज्ञानस्य प्रत्यक्षरूपताया एव स्वीकरणीयत्वात्तथासति चा-भावस्य विशेषणतयाधिकरणस्य च संयोगादिना एकस्मिन्नेव ज्ञाने भानसम्भवान्नानुपपत्तिरिति भा-वः । ननु घटस्य प्रमारूपज्ञानदशायामभावप्रत्यक्षमेव न सम्भवति घटसत्त्व एव तत्प्रमासम्भ-

कं न ज्ञायते तेनाभावोपलम्भे प्रतियोग्युपलम्भाभावः कारणम् । तत्र योग्यताप्यपेक्षिता सा

## प्रभा.

न्नघटत्वाद्यवच्छिन्नप्रकारताशाल्यनाहार्यनिश्चय इत्यर्थः ॥ **घटाभावादिकं न ज्ञायत इति** ॥ तदिन्द्रियजन्यसंयोगादिसंबन्धावच्छिन्नघटत्वाद्यवच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नलौकिकप्रकारताशाल्यनाहार्यज्ञानत्वावच्छिन्नं न जायत इत्यर्थः । अत्र प्रतिबन्धकतावच्छेदकप्रतिबध्यतावच्छेदककोटौ प्रविष्टविशेषणानां प्रयोजनं तु स्फुटत्वान्नोक्तम् । विशेष्यतासंबन्ध एव प्रतिबन्धकतावच्छेदकसंबन्धः प्रतिबध्यतावच्छेदकसंबन्धश्चेति हृदयम् ॥ **तेनेति** ॥ तादृशज्ञानत्वावच्छिन्नं प्रति तादृशनिश्चयत्वावच्छिन्नस्य प्रतिबन्धकत्वेनेत्यर्थः ॥ **अभावोपलम्भ इति** ॥ विशेष्यतासंबन्धेन तादृशज्ञानत्वावच्छिन्न इत्यर्थः ॥ **प्रतियोग्युपलम्भाभाव इति** ॥ विशेष्यतासंबन्धावच्छिन्नतादृशनिश्चयत्वावच्छिन्नप्रतियोगिताकाभाव इत्यर्थः ॥ **कारणमिति** ॥ अभावीयदैशिकविशेषणतासंबन्धावच्छिन्नकारणताश्रय इत्यर्थः । एतावता प्रतियोग्यनुपलम्भस्य हेतुत्वं प्रसा-

## दिनकरीयम्.

न्यथा भ्रमोत्पत्तिकाले तदभावप्रत्यक्षापत्तिरिति वाच्यम् । विनश्यदवस्थदोषाद्यत्र भ्रमस्तत्र भ्रमोत्पत्तिकाले प्रतिबन्धकीभूतदोषाभावस्य सत्त्वादभावप्रत्यक्षापत्तेः ॥ **अभावोपलम्भे** तदिन्द्रियजन्यतत्सम्बन्धावच्छिन्नतदभावलौकिकप्रत्यक्षे ॥ **प्रतियोग्युपलम्भाभाव इति** ॥ तदिन्द्रियजन्यानाहार्यतत्संसर्गकतत्प्रकारकोपलम्भाभाव इत्यर्थः । इन्द्रियान्तरजन्ये आनुमानिके च तदुपलम्भे सत्यपि तदभावप्रत्यक्षात्तदिन्द्रियजन्येति । अभावप्रत्यक्षहेतुप्रतियोग्यारोपसत्त्वेऽप्यभावप्रत्यक्षादनाहार्येति ॥ **तत्र** प्रतियोग्युपलम्भाभावे ॥ **अपेक्षितेति** ॥ तेन न जलपरमाण्वादौ पृथिवीत्वाभावादेः प्रत्यक्षमिति भावः । मणिकृन्मतानुसारेण योग्यतां

## रामरुद्रीयम्.

वेन तदानीमभावे विशेषणतासन्निकर्षस्यैव अभावादतो ज्ञानपदं भ्रमार्थकमित्याह ॥ **घटादिभ्रम इति** ॥ ननु घटभ्रमकाले घटाद्यभावप्रत्यक्षानुदयेन अभावप्रत्यक्षे प्रतियोगिभ्रमजनकदोषाभावस्यैव कारणत्वमस्तु न तु प्रतियोग्युपलम्भाभावस्य तत्कारणता तथासत्यपि भ्रमोत्पत्तिकाले अभावप्रत्यक्षापत्तेरवारणादित्याशङ्कते ॥ **न चेति** ॥ दोषाभावस्याभावप्रत्यक्षकारणत्वेऽपि यत्र विनश्यदवस्थापन्नदोषात् घटादिभ्रमः तत्र भ्रमानन्तरमभावप्रत्यक्षवारणाय प्रतियोगिन उपलम्भाभावस्यापि कारणत्वमावश्यकमिति समाधत्ते ॥ **विनश्यदवस्थेति** ॥ वस्तुतः प्रतिबन्धकाभावस्य कार्यकालवृत्तित्वेन कारणतया प्रतियोग्युपलम्भस्याभावप्रत्यक्षप्रतिबन्धकतया कारणीभूताभावप्रतियोगित्वेन प्रतिबन्धकताया दुरपह्नवतया चाभावप्रत्यक्षोत्पत्तिकालेऽपि प्रतियोग्युपलम्भाभावस्यापेक्षिततया दोषप्रतिबन्धकतां विनैव उपपत्तिरित्यवधातव्यम् ॥ **तदिन्द्रियजन्येतीति** ॥ कारणतावच्छेदककोटौ कार्यतावच्छेदककोटौ चेति शेषः ॥ **अभावप्रत्यक्षहेत्विति** ॥ इदञ्चाभावप्रत्यक्षे प्रतियोग्यारोपस्यापि कारणत्वमिति प्राचीनमताभिप्रायेण । न चैवं यत्र प्रसज्यत इत्यनेन मूलकारेणापि तादृशापत्तिसहकारेणैवाभावस्य प्रत्यक्षोपगमात्तादृशापत्तेरपि घटप्रकारकतया स्वमतेऽपि तस्य हेतुता सिद्धैवेत्याशङ्कनीयम् । घटप्रकारकोपलम्भविषयः स्यादित्यापत्तेर्भूतले घटप्रकारकत्वात् यद्यत्र घटः स्यादिति तु आपत्तिकारणीभूतमापादकवत्ताज्ञानप्रदर्शनपरमेव नत्वापत्तिविषयाभिलापरूपं तथाचापत्तेः कारणत्वेऽपि तस्याः घटप्रकारकत्वेन स्वमते प्रतियोग्यारोपस्य कारणत्वाप्रसक्तेरित्येतादृशापत्तियोग्यतैवापेक्षिता नत्वापत्तिरपीत्यग्रे वक्ष्यमाणत्वाच्चेति मन्तव्यम् ॥ **अनाहार्येतीति** ॥ एवमेकसंसर्गेण प्रतियोगिप्रकारकज्ञानसत्त्वेऽप्यन्यसंसर्गेणाभावप्रत्यक्षोत्पत्त्या उभयत्र संसर्गनिवेश इत्यपि बोध्यम् । ननु मूले अभावप्रत्यक्षजनकप्रतियोगितावच्छेदकावच्छिन्नतत्सम्बन्धावच्छिन्नप्रकारतानिरूपिततदधिकरणनिष्ठविशेष्यताशाल्युपलम्भाभावे योग्यता निवेशिता तत्प्रयोजनं तु नोक्तमतस्तत्प्रयोजनं प्रदर्शयन् तद्वैयर्थ्यशङ्कामपाकरोति ॥ **तेनेत्यादि** ॥ तथा च तदनिवेशे जलपरमाणुविशेष्यकसमवायावच्छिन्नपृथिवीत्वत्वावच्छिन्नप्रकारकोपलम्भाभावरूपकारणबलात्तत्र पृथिवीत्वाभावप्रत्यक्षापत्तिरिति भावः ॥ **मणिकृन्मतेति** ॥ अनेन च योग्यप्रतियोगिप्रकारकयोग्याधिकरणविशेष्यकोपलम्भप्रति

**च प्रतियोगिसत्त्वप्रसञ्जनप्रसञ्जितप्रतियोगिकत्वरूपा तदर्थश्च प्रतियोगिनो घटादेः सत्त्वप्रसक्त्या प्रसञ्जित उपलम्भरूपः प्रतियोगी यस्य सोऽभावप्रत्यक्षे हेतुः। तथाहि यत्रालोकसंयोगादिकं वर्तते तत्र यद्यत्र घटः स्यात्तर्हि उपलभ्येतेत्यापादयितुं शक्यते त—**

## प्रभा.

ध्य तन्निष्ठयोग्यतायाः उपयोगित्वं व्यवस्थापयितुं योग्यतापदार्थं निर्वक्ति ॥ **तत्रेत्यादि** ॥ अत्र प्रतियोगि यस्येति बहुव्रीहिसमासाश्रयणात्प्रतियोगिसत्त्वारोपजन्यारोपविषयोपलम्भप्रतियोगिकत्वरूपयोग्यत्वमभावे लभ्यते। एवंचाभावप्रत्यक्षात्पूर्वं नियमेनारोपसत्त्वे प्रमाणाभावात् यत्रारोपाभावः तत्राभावप्रत्यक्षानुपपत्तेः आरोपघटितयोग्यताया निवेशे गौरवाच्च प्रतियोगिसत्त्वस्यापादकतया उपलम्भस्यापाद्यतया चापादकापाद्ययोः व्याप्यव्यापकभावस्य नियमात् प्रतियोगिसत्त्वनिष्ठव्याप्यतानिरूपितव्यापकताश्रयोपलम्भप्रतियोगिकत्वमेवारोपाघटितं लघुरूपयोग्यत्वं निवेशनीयमिति हृदयम्। ननु घटादिसत्त्वे आलोकशून्यकाले भूतलादौ तत्प्रत्यक्षानुत्पत्त्या तदुपलम्भे तत्सत्त्वनिष्ठव्याप्यतानिरूपितव्यापकत्वस्यैवाप्रसिद्ध्या तादृशव्यापकताश्रयोपलम्भप्रतियोगिकत्वरूपयोग्यत्वस्य सुतरामप्रसिद्ध्या नोक्तानुपलब्धेः कारणत्वमित्याशङ्कां प्रतियोगिसत्त्वस्य व्याप्यत्वोपपादनेन परिहरति ॥ **तथाहीत्यादिना** ॥ **यत्रेति** ॥ यदेत्यपि पूरणीयम् ॥ **आलोकसंयोगादिकं वर्तत इति** ॥ आलोकसंयोगावच्छिन्नोद्भूतरूपावच्छिन्नमहत्त्वावच्छिन्नचक्षुःसंयोगो यदा यत्र वर्तते इति समुदायार्थः ॥ **तत्रेति** ॥ तदेत्युपलक्षकम् ॥ **आपादयितुं शक्यत इति** ॥ घटादिरूपविषयातिरिक्तघटादिनिष्ठविषयता-

## दिनकरीयम्.

निर्वक्ति ॥ **सा चेति** ॥ **प्रसञ्जितः** आपादितः ॥ **स** उपलम्भाभावः ॥ **अभावप्रत्यक्षे हेतुरिति** ॥ अत्र तदधिकरणविषयकाभावप्रत्यक्षे तदधिकरणकतदापादककापत्तियोग्यतदुपलम्भस्य विषयतासम्बन्धावच्छिन्नप्रतियोगिताकोऽभावो हेतुरित्यर्थः। उपलम्भे तदधिकरणकतदापादककापत्तियोग्यत्वं च तत्प्रतियोगिसत्त्व-

## रामरुद्रीयम्.

योगिकत्वरूपयोग्यतानिर्वचनमपि सम्भवतीति सूचितम् ॥ **एवमिति** ॥ स्तम्भादिविशेष्यकपिशाचोपलम्भस्य जलपरमाण्वादौ पृथिवीत्वोपलम्भस्य च योग्यप्रकारकत्वयोग्यविशेष्यकत्वविरहेणैव पिशाचाभावस्य जलपरमाण्वादौ पृथिवीत्वाभावस्य च अप्रत्यक्षत्वोपपादनसम्भवादिति भावः ॥ **मूले प्रतियोगिसत्त्वेति** ॥ प्रतियोगिसत्त्वस्य प्रत्यक्षविषयाभावप्रतियोगिसत्त्वस्य प्रसञ्जनेन आपत्त्या आहार्यारोपेणेत्यर्थः। आपत्तावापाद्यव्याप्यापादकवत्ताज्ञानस्य हेतुतया निर्घटदेशादौ प्रतियोगिसत्त्वज्ञानस्याहार्यत्वाचेति भावः। प्रसञ्जित इत्यस्यार्थमाह ॥ **आपादित इति** ॥ ननु जलादिविशेष्यकप्रतियोगिसत्त्वप्रसञ्जनप्रसञ्जितोपलम्भस्य विशेष्यतासम्बन्धेन अभावस्य जलपरमाण्वादौ सत्त्वेन तत्र पृथिवीत्वाभावस्य प्रत्यक्षत्वापत्तिः। समावायावच्छिन्नभूतलविशेष्यकघटप्रकारकोपलम्भाभावस्य घटवत्यपि भूतले सत्त्वेन तत्र विशेष्यतासंबन्धेन घटाभावप्रत्यक्षापत्तिः। न च घटाभावे सन्निकर्षाभावादेव नेयमापत्तिरिति वाच्यम्। अधिकरणान्तरान्तर्भावेन घटाभावे सन्निकर्षस्यापि सत्त्वात्। न च समवाय एव कार्यतावच्छेदकसम्बन्धो वाच्यः आत्मनि च तादृशोपलम्भस्य सत्त्वादेवाभावविरहान्न तत्र समवायेन भूतलविशेष्यकघटाभावप्रत्यक्षापत्तिरिति वाच्यम्। तथा सति तदधिकरणकतदापादककापत्तियोग्यत्वस्य तदधिकरणावृत्तिधर्मावच्छिन्नप्रतियोगिसत्त्वनिष्ठव्याप्तिनिरूपकत्वस्यैव वक्ष्यमाणतया भूतलातिरिक्तविशेष्यकघटप्रकारकोपलम्भदशायामपि भूतलविशेष्यकघटाभावप्रत्यक्षानुपपत्तेः तादृशोपलम्भाभावस्यात्मन्यभावादतो निष्कृष्टकार्यकारणभावं दर्शयति ॥ **अत्रेति** ॥ **तदधिकरणविषयकाभावप्रत्यक्ष इति** ॥ तदधिकरणनिष्ठलौकिकविषयतासम्बन्धेन तदभावप्रकारकप्रत्यक्षं प्रतीत्यर्थः ॥ **तदुपलम्भस्य** ॥ यदभावप्रत्यक्षं जननीयं तत्प्रकारकोपलम्भस्य ॥ **तत्प्रतियोगिसत्त्वेति** ॥ यत्प्रतियोगिकाभावप्रत्यक्षं जननीयं तत्प्रतियोगिसत्त्वेत्यर्थः। ननु मूले आपादित इत्युक्त्या आपादनमेवापेक्षितमिति लभ्यते तत्कथं

त्र घटाभावादेः प्रत्यक्षं भवति अन्धकारे तु नापादयितुं शक्यते तेन घटाभावादेरन्धका-

## प्रभा.

शालिचाक्षुषसामग्र्यास्सत्त्वादिति भावः ॥ **तत्रेति** ॥ तदेत्युपलक्षकं तादृशाधिकरण इत्यर्थः ॥ **भवतीति** ॥ तादृशोपलम्भस्य विशेष्यतासंबन्धावच्छिन्नप्रतियोगिताकाभावसत्त्वादिति भावः । तथाच तादृशचक्षुस्सन्निकर्षसहकृततन्निष्ठव्याप्यतानिरूपितव्यापकताश्रयत्वतदुपलम्भस्य विशेष्यतासंबन्धावच्छिन्नप्रतियोगिताकाभावः तत्प्रतियोगिकाभावनिष्ठलौकिकविषयताशालिप्रत्यक्षे हेतुरिति समुदितग्रन्थतात्पर्यार्थः । यद्वा तन्निष्ठव्याप्यतानिरूपितव्यापकत्वं तन्निष्ठकारणतानिरूपितकार्यत्वमेवेति तादृशकारणत्वघटितयोग्यत्वविशिष्टानुपलब्धेः हेतुत्वमित्यर्थः । अथवा तादृशचक्षुस्सन्निकर्षसहकृतविषयविशेषनिष्ठकारणतानिरूपितकार्यत्वस्य उपलम्भे लाभेन उपलम्भस्य तन्निष्ठलौकिकप्रकारताशालित्वं तद्व्यापकतन्निष्ठप्रकारतानिरूपिततदधिकरणनिष्ठलौकिकविषयताशालिप्रत्यक्षत्वं वा लभ्यते । एवंच तन्निष्ठप्रकारताशालिप्रत्यक्षस्य लौकिकविशेष्यतासंबन्धावच्छिन्नप्रतियोगिताकत्वरूपयोग्यताविशिष्टाभावः तादृशप्रत्यक्षे हेतुरिति तत्त्वमिति हृदयम् । नच स्वीयघटादिनिष्ठप्रकारतानिरूपितलौकिकविशेष्यतासंबन्धावच्छिन्नचाक्षुषत्वाद्यवच्छिन्नप्रतियोगिताकत्वरूपयोग्यत्वविशिष्टाभावस्य घटादिप्रतियोगिकाभावनिष्ठलौकिकविषयताशालिचाक्षुषत्वाद्यवच्छिन्नं प्रति हेतुत्वमिति पर्यवसितम् । एवंच अन्धकारविशिष्टगृहनिष्ठघटात्यन्ताभावस्य चाक्षुषत्वापत्तिः तादृशगृहे निरुक्तयोग्यानुपलम्भसत्त्वात् इति वाच्यं तादृशगृहे घटादिसत्त्वे तदभावरूपविषयाभावादेव तत्प्रत्यक्षापत्त्यभावात् तत्र घटाद्यभावसत्त्वे तु आलोकसंयोगाद्यवच्छिन्नचक्षुःसंयुक्तविशेषणतारूपसन्निकर्षाभावेनैव तत्प्रत्यक्षापत्त्यभावात् एतेन पृथिवीत्वनिष्ठप्रकारतानिरूपितलौकिकविशेष्यतासंबन्धावच्छिन्नचाक्षुषत्वाद्यवच्छिन्नप्रतियोगिताकाभावरूपयोग्यानुपलम्भस्य जलपरमाणौ सत्त्वात् तत्र पृथिवीत्वाभावप्रत्यक्षापत्तिरिति कैश्चित्प्रलपितमपास्तम् । परमाणोर्महत्त्वाभावेन पृथिवीत्वाभावनिष्ठजलपरमाणुनिरूपितविशेषणताया महत्त्वाद्यवच्छिन्नचक्षुस्संयोगविशिष्टनिरूपितविशेषणतात्वाभावात्

## दिनकरीयम्.

निष्ठव्याप्तिनिरूपकत्वं अत्रच तदापादककापत्तिर्यत्र नोत्पन्ना तत्र तदभावप्रत्यक्षानुपपत्तिरिति योग्यत्वनिवेशः । नच प्रतियोगिसत्त्वस्योपलम्भव्याप्यत्वं न निर्विशेषितस्य उपलम्भकसामग्र्यन्तरविरहे प्रतियोगिसत्त्वेऽप्युपलम्भाभावात् किं तु महत्त्वोद्भूतरूपाद्यवच्छिन्नस्यैव एवं च महत्त्वादिविशिष्टपृथिवीत्वस्योपलम्भव्याप्यत्वाज्जलपरमाणौ पृथिवीत्वाभावप्रत्यक्षापत्तिरिति वाच्यम् । तदधिकरणावृत्तिधर्मानवच्छिन्नत्वस्य योग्यताघटकीभूतव्याप्त्यंशे निवेशात् महत्त्वस्य जलपरमाण्ववृत्तित्वेन तादृशव्याप्तौ तादृशधर्मानवच्छिन्नत्वाभावात् । न च

## रामरुद्रीयम्.

योग्यता विवक्षितेत्यत आह ॥ **तत्रेति** ॥ भूतलादौ चक्षुःसंयोगानन्तरमापादनं विनापि घटो नास्तीति प्रतीतेरनुभवसिद्धतया योग्यतानिवेश इति भावः । ननु घटादिसत्त्वेऽपि चक्षुःसंयोगाद्यभावे घटोपलम्भानुदयान्न केवलप्रतियोगिसत्त्वस्य व्यापकता उपलम्भ इति क्वाप्यभावप्रत्यक्षं न स्यात् । यदि च प्रतियोगिसत्त्वातिरिक्तप्रतियोग्युपलम्भकारणकूटविशिष्टप्रतियोगिसत्त्वव्यापकता विवक्षितेत्युच्यते तदा परमाणौ पृथिवीत्वाभावप्रत्यक्षवारणमशक्यमेवेत्याशङ्कते ॥ **नचेति** ॥ वाच्यमिति परेणान्वयः ॥ **सामग्र्यन्तरेति** ॥ तादृशसामग्रीघटकप्रतियोगिसत्त्वातिरिक्तकारणेत्यर्थः । यथाश्रुते यत्किञ्चित्सामग्रीसत्त्वे तदन्तरविरहेऽपि प्रतियोग्युपलम्भादसङ्गत्यापत्तेः । महत्त्वोद्भूतरूपेत्युपलक्षणं प्रतियोगिसत्त्वातिरिक्तप्रतियोग्युपलम्भकारणकूटावच्छिन्नस्यैव प्रतियोगिसत्त्वस्योपलम्भव्याप्यत्वात् । नचैवं तथाविधनानाचक्षुःसंयोगव्यक्तीनां त्वक्संयोगव्यक्तीनां च एकत्रासम्भवेन तादृशप्रतियोगिसत्त्वं न कुत्रापीति वाच्यम् । यत्किञ्चिदनुभवनिष्ठकार्यतानिरूपितकारणतावच्छेदका यावन्तः प्रतियोगिसत्त्वातिरिक्ततत्तदवच्छिन्नकूटविशिष्टे प्रतियोगिसत्त्वव्यापकताया विवक्षणीयत्वात् ॥ **तदधिकरणेति** ॥ यदधिकरणविशेष्यकाभावप्रत्यक्षत्वं कार्यतावच्छेदकं तदधिकरणेत्यर्थः । तथा चैतल्लाभायैव पूर्वं तदधिकरणकतदापादककेत्यत्र तदधिकरणकेत्युक्तमिति भावः ॥ **तादृशधर्मानवच्छिन्नत्वाभावादिति** ॥ परमाण्ववृत्तिधर्मावच्छिन्नत्वाभावाभावादित्यर्थः । तथा च

रे न चाक्षुषप्रत्यक्षं स्पार्शनप्रत्यक्षं तु भवत्येव आलोकसंयोगं विनापि स्पार्शनप्रत्यक्षस्यापाद-

## प्रभा.

स्थूलजलनिरूपिततन्निष्ठविशेषणतया: तादृशत्वेऽपि तादृशविशेषणताघटकद्रव्य एव तादृशाभावप्रत्यक्षस्वीकारेण स्थूलजलघटिततादृशविशेषणतासन्निकर्षबलात् न जलपरमाणौ पृथिवीत्वाभावचाक्षुषमिति हृदयम्। नन्वन्धकारविशिष्टगृहवृत्तिघटाभावस्यालोकसंयोगाद्यवच्छिन्नचक्षुस्संयुक्तविशेषणतारूपलौकिकसन्निकर्षविरहात् घटाभावस्पार्शनमपि न स्यादत आह ॥ **स्पार्शनप्रत्यक्षं त्विति** ॥ **आलोकसंयोगं विनापीति** ॥

## दिनकरीयम्.

गन्धवदणुभिन्नत्वविशिष्टस्यापि पृथिवीत्वस्य तदुपलम्भव्याप्यत्वात् गन्धवदणुभिन्नत्वस्य जलपरमाणुवृत्तित्वाच तद्दोषतादवस्थ्यमिति वाच्यम्। योग्यताघटकव्याप्तौ प्रतियोगिग्राहकातिरिक्तधर्मानवच्छिन्नत्वस्यापि निवेशात् गन्धवदणुभिन्नत्वादेश्च प्रतियोगिग्राहकातिरिक्तत्वेन तादृशधर्मानवच्छिन्नत्वस्योक्तव्याप्तावभावात्। न च प्रतियोगिग्राहकत्वं प्रतियोगिग्रहजनकत्वं तच्च गन्धवदणुभिन्नत्वपृथिवीत्वोभयसमूहालम्बनात्मकलौकिकप्रत्यक्षे विषयविधया हेतुत्वात् गन्धवदणुभिन्नत्वस्याप्यक्षतमिति वाच्यम्। प्रतियोगिप्रकारतानिरूपितलौकिकविशेष्यताविरहप्रयोजकीभूताभावप्रतियोगित्वस्यैव प्रतियोगिग्राहकत्वपदार्थत्वात्। अथैवं पिशाचत्वप्रकारतानिरूपितलौकिकविशेष्यत्वाप्रसिद्धया तद्घटितनिरुक्तयोग्यानुपलम्भविरहात्तदभावप्रत्यक्षं न स्यादिति चेन्न। नहि वयं सर्वत्राभावप्रत्यक्षे निरुक्तयोग्यानुपलम्भस्य हेतुत्वं ब्रूमः किं तु योग्यस्याभावप्रत्यक्षे। अयोग्यपिशाचत्वाद्यभावप्रत्यक्षे तु तदधिकरणीयत्वप्रसञ्जनप्रसञ्जितप्रतियोगिकस्तदधिकरणीयत्वोपलम्भस्य विषयतासम्बन्धावच्छिन्नाभाव एव प्रतियोगिनिष्ठो हेतुः अत्राप्यापादनस्य सर्वत्रासम्भवेन तदधिकरणीयत्वप्रसञ्जनप्रसञ्जितत्वं तदधिकरणीयत्वनिष्ठव्याप्तिनिरूपकत्वं जातित्वादिविशिष्टस्य स्तम्भवृत्तित्वस्योपल-

## रामरुद्रीयम्.

तदधिकरणपदेन जलपरमाणूपादाने प्रतियोगिसत्त्वनिष्ठजलपरमाणुवृत्तिधर्मानवच्छिन्नव्याप्तिनिरूपकोपलम्भाप्रसिद्धया तदभावरूपकारणविरहादेव न जलपरमाणौ पृथिवीत्वाभावप्रत्यक्षमिति भावः। ननु महत्त्वस्थाने गन्धवदणुभिन्नत्वं निवेश्य तद्विशिष्टत्वे सति इन्द्रियसंयोगादिविशिष्टपृथिवीत्वसत्त्वस्य पृथिवीत्वोपलम्भव्याप्यतया तस्य जलपरमाणुवृत्तितया च जलपरमाणौ पृथिवीत्वाभावप्रत्यक्षापत्तिरित्याशङ्कते ॥ **नचेति** ॥ **प्रतियोगिग्राहकेति** ॥ प्रतियोगिप्रत्यक्षजनकेत्यर्थः। गन्धवदणुभिन्नत्वं तु न प्रत्यक्षजनकं तथासति जलपरमाणौ जलत्वादिप्रत्यक्षापत्तेरिति भावः ॥ **विरहप्रयोजकीभूतेति** ॥ यद्यपि कारणाभावस्यैव कार्यविरहप्रयोजकतयोक्तविशेष्यतायामकारणस्य महत्त्वस्याप्यभावो नोक्तविशेष्यताविरहे प्रयोजकः सम्भवति तथापि लौकिकविषयतासम्बन्धेन प्रत्यक्षं प्रति महत्त्वस्य कारणतया लौकिकविषयतया प्रत्यक्षाभावस्य लौकिकविषयत्वाभावसमनियततया तदभिन्नत्वेन लौकिकविषयत्वाभावे प्रयोजकता महत्त्वाभावे अक्षतैव यद्वा व्यापकाभावे प्रयोजकस्य च व्याप्याभावप्रयोजकतानियमेन निरुक्तविशेष्यताविरहप्रयोजकत्वं महत्त्वाभावस्याक्षतमेव लौकिकविशेष्यत्वाभावप्रयोजकेत्युक्तावपि महत्त्वाभावस्य सङ्ग्रहेऽपि इन्द्रियसंयोगादीनां अभावासङ्ग्रहात्प्रतियोगिप्रकारतानिरूपितत्वस्य विशेष्यताविशेषणत्वेनोपादानम्। यद्यप्येवमप्यालोकसंयोगासङ्ग्रहो दुर्वार एव अन्धकारे स्पार्शनोत्पत्त्या पृथिवीत्वप्रकारतानिरूपितलौकिकविशेष्यतासामान्याभावे आलोकसंयोगाभावस्याप्रयोजकत्वात् विशेष्यतायां चाक्षुषनिरूपितत्वमादाय तत्सङ्ग्रहे च त्वक्संयोगासङ्ग्रहस्तथापि चाक्षुषनिरूपिततादृशविशेष्यत्वाभावस्पार्शननिरूपिततादृशविशेष्यत्वाभावान्यतरप्रयोजकाभावप्रतियोगित्वेन सर्वेषामेव सङ्ग्रहः सम्भवतीति विभावनीयम् ॥ **प्रतियोगिनिष्ठ इति** ॥ तदधिकरणनिष्ठलौकिकविशेष्यतानिरूपिताभावनिष्ठप्रकारतानिरूपितप्रतियोगित्वसम्बन्धावच्छिन्नप्रकारतासम्बन्धेन योग्याभावप्रत्यक्ष इति शेषः ॥ **व्याप्तिनिरूपकत्वमिति** ॥ ननु स्तम्भवृत्तित्वं नोपलम्भव्याप्यं पिशाचे स्तम्भवृत्तित्वसत्त्वेऽपि तत्प्रकारकोपलम्भस्य विषयतया पिशाचे विरहादित्यत आह ॥ **जातित्वादिविशिष्टस्येति** ॥ आदिना इन्द्रियसंयुक्तसमवायादिपरिग्रहः। तथा च पिशाचे जातित्वविरहान्न व्याप्तिभङ्ग इति

## प्रभा .

तथाच चाक्षुषत्वावच्छिन्नं प्रत्येव आलोकसंयोगावच्छिन्नत्वघटितविशेषणताया हेतुतया तादृशाभावस्पार्शनं प्रत्युद्भूतस्पर्शावच्छिन्नमहत्त्वावच्छिन्नत्वकसंयुक्तविशेषणताया एव हेतुत्वेन तादृशविशेषणतायाः तादृशगृहनिष्ठघटाद्यभावेऽपि सत्त्वात् तत्र न घटाभावस्पार्शनानुपपत्तिरिति भावः । वस्तुतस्तु अभावोपलम्भे योग्यानुपलब्धेः प्रमाणत्वेन तत्रेन्द्रियस्य करणत्वाभावादिन्द्रियसंयुक्तविशेषणतायाः कुतः सन्निकर्षत्वमिति मीमांसकाक्षेपं क्लृप्तप्रमाणेनाभावप्रत्यक्षे जननीये योग्यानुपलब्धेः सहकारित्वमात्रेण निर्वाहे न तस्याः प्रमाणान्तरत्वं गौरवादित्यभिप्रायेण परिहरति ॥ **मूले यदि स्यादिति** ॥ उक्ताशयमेव प्रकाशयति ॥ **मुक्तावल्यां अभावप्रत्यय इति** ॥ **कारणत्वमिति** ॥ कारणत्वमेवेत्यर्थः एवकारेण करणत्वं व्यवच्छिद्यते योग्यताविशिष्टानुपलब्धेः कारणत्वं व्यवस्थापयितुं केवलानुपलब्धेः कारणत्वं निराकरोति ॥ **तथा हीत्यादि** ॥ **भूतलादौ घटादिज्ञाने जात इति** ॥ भूतलादिविशेष्यक-संयोगसंबन्धेन घटादिप्रकारकानाहार्यचाक्षुषज्ञाने जात एवेत्यर्थः । एवकारेण स्पार्शनमानुमानिकं च घटादिप्रकारकज्ञानं व्यवच्छिद्यते ॥ **घटाभावादिकं न ज्ञायत इति** ॥ भूतलादावित्यादिः । संयोगसंबन्धावच्छिन्नघटत्वाद्यवच्छिन्नप्रतियोगिताकाभावनिष्ठलौकिकप्रकारताशालिचाक्षुषं लौकिकविषयतासंबन्धेन भूतलादौ न जायत इत्यर्थः ॥ **तेनेति** ॥ तादृशचाक्षुषस्याजायमानत्वेनेत्यर्थः ॥ **अभावोपलम्भ इति** ॥ लौकिकविशेष्यतासंबन्धेन तादृशचाक्षुष इत्यर्थः ॥ **प्रतियोग्युपलम्भाभाव इति** ॥ संयोगसंबन्धेन घटादिप्रकारकचाक्षुषस्य तादृशविशेष्यतासंबन्धावच्छिन्नप्रतियोगिताकाभाव एव कारणमित्यर्थः । ननु घटादिप्रकारकनिश्चयत्वावच्छिन्नाभावः कारणं तथा सति इन्द्रियान्तरजन्ये आनुमानिके वा घटादिनिश्चये घटाभावादिचाक्षुषानुपपत्तिः । एवकारघटितवाक्यार्थस्तु —तत्रेति अत इत्यादिः प्रतियोग्युपलम्भाभाव इत्यर्थः ॥ **योग्यताप्यपेक्षितेति** ॥ अतिरिक्तः कश्चन धर्मोऽपि कारणतावच्छेदकतया स्वीकार्य इत्यर्थः । मणिकारमतानुसारेण योग्यत्वं वक्तुं मणिग्रन्थमुदाहृत्य तदर्थमाह ॥ **सा चेत्यादिना** ॥ **स उपलम्भाभाव इति** ॥ घटादिसत्त्वापादककापत्तिविषयोपलम्भाभाव इत्यर्थः। घटादिसत्त्वस्यापादकत्वेन उपलम्भस्यापाद्यत्वेन चापादकापाद्ययोर्व्याप्यव्यापकभावलाभात् घटादिसत्त्वनिष्ठव्याप्यतानिरूपितव्यापकताश्रयोपलम्भप्रतियोगिताकाभाव इति फलितोऽर्थः । तेन तदापादककापत्तिर्यत्र नोत्पन्ना तत्र निरुक्तकारणाभावादभावप्रत्यक्षानुपपत्तिरिति दूषणस्य नावकाशः। ननु घटादिसत्त्वं न उपलम्भव्याप्यं अन्धकारविशिष्टगृहे घटादिसत्त्वेऽप्युपलम्भाभावादित्याशङ्कां परिहरति ॥ **तथाहीत्यादि** ॥ **यत्रालोकसंयोगादिकं वर्तत इति** ॥ यस्मिन्नधिकरणे आलोकसंयोगाद्यवच्छिन्नचक्षुस्संयोगो वर्तत इत्यर्थः ॥ **तत्र यद्यत्र घटस्स्यादित्यादि** ॥ तथाच केवलघटसत्त्वस्य उपलम्भाव्याप्यत्वेऽपि आलोकसंयोगादिसमवहितघटसत्त्वस्योपलम्भव्याप्यत्वात् तादृशव्यापकताश्रयोपलम्भप्रसिद्धया तदभावस्य कारणत्वं संभवत्येवेति भावः । अत्रालोकसंयोगादिसमवहितघटादिसत्त्वनिष्ठव्याप्यतानिरूपितव्यापकताश्रयत्वस्य न प्रतियोगितावच्छेदककोटिप्रवेशः गौरवात्प्रयोजनाभावात् किंतु तादृशव्यापकताश्रयोपलम्भः घटादिप्रकारकलौकिकचाक्षुषमेवेति तादृचचाक्षुषत्वरूपप्रतियोगितावच्छेदकधर्मपरिचायक एव स धर्मः एवंच लौकिकविशेष्यतासंबन्धावच्छिन्नघटादिप्रकारकचाक्षुषत्वावच्छिन्नप्रतियोगिताकत्वरूपयोग्यताविशिष्टाभावः लौकिकविशेष्यतासंबन्धेनाभावादिनिष्ठलौकिकप्रकारताशालिचाक्षुषत्वावच्छिन्नं प्रति कारणमिति कार्यकारणभावः फलितः । एवंच घटाभावादिस्पार्शनेऽपि घटादिस्पार्शनाभावः निरुक्तयोग्यत्वेन कारणमिति । तथाच तादृशव्यापकताश्रयोपलम्भप्रतियोगिकत्वरूपयोग्यत्वं लौकिकविशेष्यतासंबन्धावच्छिन्नघटादिप्रकारकचाक्षुषत्वाद्यवच्छिन्नप्रतियोगिताकत्वरूपमेव पर्यवसितं अतः इन्द्रियान्तरजन्यस्यानुमानिकस्य वा घटादिनिर्णयस्याभावस्य निरुक्तयोग्यत्वरूपकारणतावच्छेदकानाक्रान्ततया तादृशनिर्णयकाले न घटाभावादिचाक्षुषानुपपत्तिरिति । ननु जलपरमाणौ पृथिवीत्वप्रकारकचाक्षुषस्य लौकिकविशेष्यतासंबन्धेनाभावसत्त्वात् तत्र पृथिवीत्वाभावचाक्षुषापत्तिः एवमन्धकारादिविशिष्टगृहे घटादिप्रकारकचाक्षुषस्य लौकिकविशेष्यतासंब-

यितुं शक्यत्वात्। गुरुत्वादिकं यदयोग्यं तदभावस्तु न योग्यः तत्र गुरुत्वादिप्रत्यक्षस्या-

## प्रभा.

न्धेनाभावसत्त्वात् तत्र घटाभावचाक्षुषापत्तिरिति चेन्न। तत्र योग्यानुपलम्भसत्त्वेऽपि जलपरमाणौ महत्त्वावच्छिन्नत्वघटितचक्षुस्संयुक्तविशेषणतारूपसन्निकर्षाभावान्न तत्र चाक्षुषापत्तिः। एवमन्धकारादिविशिष्टगृहे आलोकसंयोगावच्छिन्नत्वघटितचक्षुस्संयुक्तविशेषणतारूपसन्निकर्षाभावान्न घटाभावादिचाक्षुषापत्तिरिति विश्वनाथपञ्चाननस्य निगूढाभिप्राय इति प्रतिभाति। केचित्तु अपेक्षितेति तेन जलपरमाण्वादौ पृथिवीत्वाभावादेर्न प्रत्यक्षमिति भावः। मणिकृन्मतानुसारेण योग्यतां निर्वक्ति॥ **साचेति**॥ प्रसञ्जितः आपादितः स उपलम्भाभावः॥ **अभावप्रत्यक्षे हेतुरिति**॥ तत्र तदधिकरणविषयकतदभावप्रत्यक्षे तदधिकरणकतदापादककापत्तियोग्यतदुपलम्भस्य विषयतासंबन्धावच्छिन्नप्रतियोगिताकाभावो हेतुरित्यर्थः। उपलम्भे तदापादककापत्तियोग्यत्वं च तत्प्रतियोगिसत्त्वनिष्ठव्याप्तिनिरूपकत्वं अत्र च तदापादककापत्तिर्यत्र नोत्पन्ना तत्र तदभावप्रत्यक्षानुपपत्तिरिति योग्यत्वनिवेशः। नच प्रतियोगिसत्त्वस्य उपलम्भव्याप्यत्वं न निर्विशेषितस्य उपलम्भसामग्र्यन्तराविरहे प्रतियोगिसत्त्वेऽप्युपलम्भाभावात् किंतु महत्त्वोद्भूतरूपावच्छिन्नस्यैव एवंच महत्त्वादिविशिष्टस्यैव पृथिवीत्वस्योपलम्भव्याप्यत्वाज्जलपरमाणौ पृथिवीत्वाभावप्रत्यक्षापत्तिरिति वाच्यं तदधिकरणावृत्तिधर्मानवच्छिन्नत्वस्य योग्यताघटकीभूतव्याप्त्यंशे निवेशात् महत्त्वस्य जलपरमाण्ववृत्तित्वेन तादृशव्याप्तौ तादृशधर्मानवच्छिन्नत्वाभावात्। नच गन्धवदणुभिन्नत्वविशिष्टस्यापि पृथिवीत्वस्य तदुपलम्भव्याप्यत्वात् गन्धवदणुभिन्नत्वस्य जलपरमाणुवृत्तित्वाच्च तद्दोषतादवस्थ्यमिति वाच्यम्। योग्यताघटकव्याप्तौ प्रतियोगिग्राहकातिरिक्तधर्मानवच्छिन्नत्वस्यापि निवेशात् गन्धवदणुभिन्नत्वादेश्च प्रतियोगिग्राहकातिरिक्तत्वेन तादृशधर्मानवच्छिन्नत्वस्य उक्तव्याप्तावभावात्। नच प्रतियोगिग्राहकत्वं प्रतियोगिग्रहजनकत्वं तच्च गन्धवदणुभिन्नत्वपृथिवीत्वोभयसमूहालम्बनात्मकलौकिकप्रत्यक्षे विषयविधया हेतुत्वात् गन्धवदणुभिन्नत्वस्याप्यक्षतमिति वाच्यं प्रतियोगिप्रकारतानिरूपितलौकिकविशेष्यताविरहप्रयोजकीभूताभावप्रतियोगित्वस्यैव प्रतियोगिग्राहकपदार्थत्वात्। अथैवं पिशाचत्वप्रकारतानिरूपितलौकिकविशेष्यत्वाप्रसिद्ध्या तद्घटितयोग्यानुपलम्भविरहात् तदभावप्रत्यक्षं न स्यात् इति चेन्न। नहि वयं सर्वत्राभावप्रत्यक्षे निरुक्तयोग्यानुपलम्भस्य हेतुत्वं ब्रूमः किन्तु योग्यस्याभावप्रत्यक्षे अयोग्यपिशाचत्वाद्यभावप्रत्यक्षे तु तदधिकरणीयत्वप्रसञ्जनप्रसञ्जितप्रतियोगिकस्य तदधिकरणीयत्वोपलम्भस्य विषयतासंबन्धावच्छिन्नाभाव एव प्रतियोगिनिष्ठो हेतुः अत्राप्यापादनस्य सर्वत्रासम्भवेन तदधिकरणीयत्वप्रसञ्जनेन प्रसञ्जितत्वं तदधिकरणीयत्वनिष्ठव्याप्तिनिरूपकत्वं जातित्वादिविशिष्टस्य स्तम्भवृत्तित्वस्योपलम्भव्याप्यत्वात् स्तम्भे पिशाचत्वाभावप्रत्यक्षं जातित्वादिविशिष्टस्य पिशाचवृत्तित्वस्योपलम्भाव्याप्यत्वान्न पिशाचे स्तम्भत्वाभावप्रत्यक्षं। एवं तादात्म्येन स्तम्भवृत्तित्वपिशाचवृत्तित्वयोरुपलम्भव्याप्यत्वाव्याप्यत्वाभ्यां स्तम्भपिशाचयोः पिशाचभेदस्तम्भभेदयोः प्रत्यक्षत्वाप्रत्यक्षत्वे उपपादनीये इति॥ **न चाक्षुषमिति**॥ अनुपलम्भे विद्यमानेऽपि निरुक्तयोग्यताविशिष्टस्य तस्य तत्राभावा-

## दिनकरीयम्.

म्भव्याप्यत्वात् स्तम्भे पिशाचत्वाभावप्रत्यक्षं जातित्वादिविशिष्टस्य पिशाचवृत्तित्वस्योपलम्भाव्याप्यत्वान्न पिशाचे स्तम्भत्वाभावप्रत्यक्षम्। एवं तादात्म्येन स्तम्भवृत्तित्वपिशाचवृत्तित्वयोरुपलम्भव्याप्यत्वाव्याप्यत्वाभ्यां स्तम्भपिशाचयोः पिशाचभेदस्तम्भभेदयोः प्रत्यक्षत्वाप्रत्यक्षत्वे अप्युपपादनीये इति॥ **न चाक्षुषप्रत्यक्षमिति**॥ अनुपलम्भे विद्यमानेऽपि निरुक्तयोग्यताविशिष्टस्य तस्य तत्राभावादिति भावः॥

## रामरुद्रीयम्.

भावः। अथैवं वह्नौ पिशाचत्वाभावोऽप्येतादृशयोग्यानुपलम्भेनैव गृह्यत इत्यायातं तच्च न संम्भवति वह्निवृत्तित्वविशिष्टतृणादिजन्यतावच्छेदकजातीनामप्रत्यक्षतया जातित्वादिविशिष्टवह्निवृत्तित्वस्योपलम्भाव्याप्यत्वात्। न च जातित्वादिशब्देन योग्यतापि ग्राह्या चेत्तथा च तृणादिजन्यतावच्छेदकजातीनामयोग्यतया न व्याप्तिभङ्ग इति वाच्यम्। तथासति पिशाचत्वस्याप्ययोग्यतया तस्य स्तम्भावृत्तित्वेऽपि तत्त्वेनोपलम्भासम्भवेन तदापादना-

## प्रभा.

दिति भावः ॥ **आपादयितुं शक्यत्वादिति** ॥ तथाच समानेन्द्रियजन्योपलम्भव्याप्यत्वस्य योग्यताघटकत्वात् न तत्र चाक्षुषमिति भावः । ननु जातित्वादिविशिष्टस्य तेजोवृत्तित्वस्योपलम्भव्याप्यत्वात्तेजसि गुरुत्वाभावप्रत्यक्षापत्तिः एवं स्तम्भे पिशाचत्वाभावप्रत्यक्षवत् पिशाचाभावप्रत्यक्षापत्तिरित आह ॥ **गुरुत्वादिकमिति** ॥ आदिपदेन पिशाचादिपरिग्रहः अयोग्यपिशाचत्वादिजातेरभावस्य प्रत्यक्षत्वात् गुरुत्वादि-

## दिनकरीयम्.

**आपादयितुं शक्यत्वादिति** ॥ तथा च समानेन्द्रियजन्योपलम्भव्याप्यत्वस्य योग्यताघटकत्वान्न तत्र चाक्षुषमिति भावः । ननु जातित्वादिविशिष्टस्य तेजोवृत्तित्वस्योपलम्भव्याप्यत्वात् तेजसि गुरुत्वाभावप्रत्यक्षापत्तिः एवं स्तम्भे पिशाचत्वाभावस्यापि प्रत्यक्षापत्तिरित आह ॥ **गुरुत्वादिकमिति** ॥ आदिपदेन पिशाचादिपरिग्रहः । अयोग्यस्य पिशाचत्वादिजातेरभावस्य प्रत्यक्ष–

## रामरुद्रीयम्.

सम्भवेन पिशाचत्वाभावप्रत्यक्षस्यैव असम्भवादिति चेन्न । प्रत्यक्षप्रतिबन्धकत्वाभावविशिष्टत्वेन जातित्वस्य विशेषणीयत्वात् तादृशजातीनां च तादात्म्येन प्रत्यक्षप्रतिबन्धकत्वात् न तासु व्याप्तिभङ्गः पिशाचत्वं तु न प्रत्यक्षप्रतिबन्धकं योग्यावृत्तित्वेनैव तस्यायोग्यतया तत्प्रत्यक्षापादनासम्भवात् तत्प्रतिबन्धकताकल्पने बीजाभावात् ॥ **न पिशाचादाविति** ॥ यद्यपि पिशाचे स्तम्भत्वाभावप्रत्यक्षापत्तिर्नोक्तयोग्यानुपलम्भेन सम्भवति अयोग्यप्रतियोगिकाभावप्रत्यक्ष एव तस्य कारणतायाः पूर्वमुक्तत्वादेतत्कथनमफलं तथापि स्तम्भत्वस्योपलक्षणतया मनस्त्वाद्यभावप्रत्यक्षापत्तिनिरासपरत्वान्न वैयर्थ्यमिति ध्येयम् । ननु योग्यवृत्तिजातेरेव यथा योग्यत्वं तथा योग्यजात्यन्यतरप्रतियोगिकाभावस्यैव योग्यत्वमित्युक्त्यैव पिशाचाद्यभावप्रत्यक्षवारणं सम्भवति अन्धकारे घटाद्यभावस्य जलपरमाणौ पृथिवीत्वाभावस्य च प्रत्यक्षवारणाय महत्त्वोद्भूतरूपावच्छिन्नालोकसंयोगावच्छिन्नेन्द्रियसंयुक्तविशेषणताया एवाभावग्राहकत्वमास्थीयतां किमुक्तगुरुतरयोग्यानुपलब्धिद्वयस्य कारणतयेत्याशङ्कानिरासायाह ॥ **एवमिति** ॥ तथा चोक्तरीत्या स्तम्भे पिशाचभेदप्रत्यक्षोपपादनस्यासम्भवादेन गुरुभूताया योग्यानुपलब्धेः कारणताङ्गीकृतेति भावः ॥ **शक्यत्वादितीति** ॥ ननु यद्यन्धकारेऽपि घटादेः स्पार्शनोपलम्भापादनसम्भवेन घटाद्यभावस्य स्पार्शनं जायते तदा चाक्षुषमपि स्यात् अन्धकारे घटसत्त्वे स्पार्शनोत्पत्त्या प्रतियोगिसत्त्वातिरिक्तप्रतियोगिप्रकारतानिरूपितचाक्षुषनिरूपितलौकिकविशेष्यत्वाभावप्रयोजकाभावप्रतियोगितावच्छेदकावच्छिन्नकूटतथाविधस्पार्शननिरूपितलौकिकविशेष्यत्वाभाव--प्रयोजकाभावप्रतियोगितावच्छेदकावच्छिन्नकूटैतदन्यतरविशिष्टप्रतियोगिसत्त्वानिष्ठव्याप्तिनिरूपकत्वस्य यत्किञ्चिदिन्द्रियजन्यघटोपलम्भे सत्त्वेन प्रतियोग्युपलम्भाभावे योग्यतासत्त्वात् । यदि च प्रतियोग्युपलम्भे प्रमेयत्वादिना व्याप्तिनिरूपकता सर्वत्रैव सम्भवतीति किञ्चिदिन्द्रियजन्यप्रतियोग्युपलम्भत्वाभावे योग्यतासत्त्वात् व्याप्तिनिरूपकत्वावच्छिन्नैव व्याप्तिनिरूपकता योग्यतालक्षणे निवेशनीया तथा चान्धकारे घटाभावचाक्षुषवारणाय प्रतियोग्युपलम्भा यद्यदिन्द्रियजन्याः प्रसिद्धाः प्रत्येकं तत्तदिन्द्रियजन्यप्रतियोग्युपलम्भत्वावच्छिन्ना व्याप्तिनिरूपकता विवक्षणीयेति विभाव्यते तदा घटाभावस्य स्पार्शनमपि न स्यादित्याशङ्कां भाववर्णनेन निराकरोति ॥ **तथा चेति** ॥ **समानेति** ॥ तथा च तदभावचाक्षुषत्वाद्यवच्छिन्नं प्रति तत्प्रतियोगिचाक्षुषाद्यभावत्वेन विशिष्यैव हेतुता योग्यताघटकव्याप्तिनिरूपकतापि प्रतियोगिचाक्षुषत्वाद्यवच्छिन्नैव निवेश्या । एवं च व्याप्तावपि चाक्षुषाद्युपलम्भकारणकूटविशिष्टप्रतियोगिसत्त्वानिष्ठत्वमेव निवेशनीयमिति न पूर्वोक्तान्यतरघटनापीति लाघवमिति भावः । नचैवमिन्द्रियान्तरजन्योपलम्भसत्त्वेऽपीन्द्रियान्तरेणाभावप्रत्यक्षापत्तिरिति वाच्यम् इष्टत्वात् । लौकिकसन्निकर्षजन्यबुद्धौ समानेन्द्रियजन्यविरोधिनिश्चयस्यैव प्रतिबन्धकत्वादिति भावः । पिशाचादीत्यादिना परमाण्वाद्यतीन्द्रियसङ्ग्रहः । नन्वेवं गुरुत्वादिकमिति व्यर्थं यदयोग्यं तदभावस्तु न योग्य इत्यस्यैव वक्तुमुचितत्वादित्यत आह ॥ **अयोग्यस्येत्यादि** ॥ तथा च गुरुत्वादिकमिति पदं तादात्म्येन प्रत्यक्षप्रतिबन्धकजातिभिन्नसामान्यपरमेव तेन वह्निनिष्ठजात्यभावस्य स्तम्भादौ न

पादयितुमशक्यत्वात् वायावुद्भूतरूपाभावः पाषाणे सौरभाभावः गुडे तिक्ताभावः वह्नावं-

प्रभा.

कामित्युक्तम् ॥ **न योग्यः** न प्रत्यक्षविषयः ॥ **अशक्यत्वादिति** ॥ निरुक्तयोग्यताघटकव्याप्तौ प्रतियोग्य-वृत्तिधर्मानवच्छिन्नत्वस्य निवेशात्प्रकृते च जातित्वविशिष्टतेजोवृत्तित्वस्योपलम्भव्याप्यत्वेऽपि जातित्वस्य गुरुत्वावृत्तित्वेन तादृशव्याप्यत्वे प्रतियोग्यवृत्तिधर्मानवाच्छिन्नत्वाभावादिति भाव इत्याहुः ॥ केचित्कल्पे पृथिवीत्वाभावादेर्न प्रत्यक्षमिति भाव इति। इदमापाततः जलपरमाणौ केवलप्रतियोग्युपलम्भाभावसत्त्वेऽपि महत्त्वावच्छिन्नत्वघटितचक्षुस्संयुक्तविशेषणतारूपसन्निकर्षविरहादेव तत्प्रत्यक्षापत्त्यभावादिति हृदयम्। तदधिकरणावृत्तिधर्मानवच्छिन्नत्वस्य योग्यताघटकव्याप्तौ निवेशादिति इदमापाततः कारणत्वस्य स्वस्वव्याप्येतरयावत्कारणसत्त्वे यत्सत्त्वे अग्रिमक्षणे यत्सत्त्वं यदभावे अग्रिमक्षणे यदभाव इत्येतादृशान्वयव्यतिरेकयोरेव वक्तव्यत्वात् स्वस्वव्याप्येतरसकलसामग्रीविशिष्टयत्सत्त्वेत्युक्तौ असंभवः। घटप्रागभावविशिष्टदण्डसत्त्वे घटसत्त्वासंभवात् घटप्रागभावघटयोरेककालावृत्तित्वात् एवंच पृथिवीत्वस्यापि विषयविधया उपलम्भकारणत्वेन पृथिवीत्वेतरप्रत्यक्षजनकसामग्रीकालोत्तरकालावच्छेदेन पृथिवीत्वाधिकरणे वर्तमानो योऽभावः तदप्रतियोगित्वमेव व्यापकत्वमुपलम्भस्य वाच्यमिति पृथिवीत्वनिष्ठव्याप्यताया उपलम्भसामग्र्यन्तरानवच्छिन्नतया विशिष्टपृथिवीत्वस्य व्यर्थविशेषणघटितधर्मेण व्याप्यतायां प्रमाणाभावेन विशिष्टपृथिवीत्वनिष्ठव्याप्यतामादायोक्तदोषासङ्गतेः उक्तदोषवारणाय व्याप्यतायां तदधिकरणावृत्तिधर्मानवाच्छिन्नत्वविशेषणदानासङ्गतेश्चेति हृदयम् नच गन्धवदणुभिन्नत्वविशिष्टस्यापीत्यादि । इदमापाततः पृथिवीत्वनिष्ठलौकिकविषयताशालिचाक्षुषत्वव्यापकद्रव्यवृत्तिलौकिकविषयताशालिचाक्षुषत्वावच्छिन्नं प्रति महत्त्वाद्यवच्छिन्नचक्षुःसंयोगस्य हेतुतया तत्सत्ताकाल एव पृथिवीत्वनिष्ठलौकिकविषयताशालिचाक्षुषसंभवात् चक्षुस्संयोगोत्पत्तिक्षणस्यापि तादृश-चक्षुस्संयोगाधिकरणतया तत्क्षणे पृथिवीत्वचाक्षुषानुत्पत्त्या उत्तरक्षणघटितमेव व्यापकत्वं वाच्यम्। तथाच तादृशचक्षुस्संयोगाधिकरणक्षणोत्तरक्षणावच्छेद्यः पृथिवीत्वसमानाधिकरणो योऽभावः तदप्रतियोगित्वरूपमेव व्यापकत्वं पर्यवसितं। एवंच पृथिवीत्वनिष्ठस्य तादृशचाक्षुषरूपकार्यनिरूपितव्याप्यत्वस्यावच्छेदकं केवलपृथिवीत्वत्वमेव नतु गन्धवदणुभिन्नत्वविशिष्टपृथिवीत्वत्वं स्वसमानाधिकरण-व्याप्यतावच्छेदकपृथिवीत्वत्वरूपधर्मान्तरघटितत्वेन प्रमेयधूमत्वादिवत्तस्यानवच्छेदकत्वात्। इत्थंच गन्धवदणुभिन्नत्वविशिष्टपृथिवीत्वस्य व्याप्यत्वाप्रसिद्धया तद्घटितयोग्यत्वस्य सुतरामभावेन अप्रसिद्धयोग्यानुपलब्धिमादाय जलपरमाणौ पृथिवीत्वाभावचाक्षुषापादनं तादृशापत्तिवारणाय व्याप्यतायां प्रतियोगिग्राहकेत्यादिविशेषणदानं तादृशविशेषणस्य यथाश्रुतार्थमादाय दोषवारणाय प्रतियोगिप्रकारतानि-

दिनकरीयम्.

त्वात् गुरुत्वादिकमित्युक्तम् ॥ **न योग्यः** न प्रत्यक्षविषयः ॥ **अशक्यत्वादिति** ॥ निरुक्तयोग्यताघटकव्याप्तौ प्रतियोग्यवृत्तिधर्मानवच्छिन्नत्वस्य निवेशात् प्रकृते च जातित्वविशिष्टतेजोवृत्तित्वस्योपलम्भव्याप्यत्वेऽपि जातित्वस्य गुरुत्वावृत्तित्वेन तादृशव्याप्यत्वे प्रतियोग्यवृत्तिधर्मानवाच्छिन्नत्वाभावादिति भावः। न च तदधिकरणीयत्वप्रसञ्जनप्रसञ्जितप्रतियोगिकस्तदधिकरणीयत्वोपलम्भस्याभाव ऐन्द्रियकघटाभावादिप्रत्यक्षे हेतुरास्तां किं पूर्वोक्तयोग्यानुपलम्भहेतुतयेति वाच्यम्। तथा सति परमाण्वादौ महत्त्वाभावप्रत्यक्षानुपपत्तेरिति ॥ **वायावुद्भूतरूपाभाव इति** ॥ रूपत्वावच्छिन्नाभावस्यातीन्द्रियानुद्भूतरूपप्रतियो-

रामरुद्रीयम्.

प्रत्यक्षापत्तिरिति भावः। ननु न योग्य इत्यस्य गुरुत्वादिकं यदयोग्यं तद्वद्गुरुत्वाद्यभावोऽपीत्यर्थकत्वे आपादयितुमशक्यत्वादित्यन्तहेतोर्मूलोक्तस्यासङ्गतिः गुरुत्वादिवत्तस्याप्रत्यक्षत्वादित्यस्यैव वक्तुमुचितत्वादतस्तस्य न प्रत्यक्ष इत्यर्थकतामाह ॥ **न प्रत्यक्षेति** ॥ **ऐन्द्रियकेति** ॥ इन्द्रियग्राह्यं यत् घटादि तदभावप्रत्यक्षेऽपीत्यर्थः ॥ **परमाण्वादाविति** ॥ परमाणौ महत्त्वसत्त्वे तद्वृत्तित्वेन परमाणूपलम्भापादनस्य कर्तुं शक्यतया परमाणावपि महत्त्वाभावस्य प्रत्यक्षत्वोपगमादिति भावः ॥ **प्रत्यक्षानुपपत्तेरिति** ॥ परमाणोरयो-

## प्रभा.

रूपितलौकिकविशेष्यतेत्यादिपरिष्कारकरणं च वन्ध्यापुत्रकर्तृकशशशृङ्गकरणकगगनारविन्दकर्मकभेदनतुल्यमिति प्रतिभाति । तदधिकरणीयत्वप्रसञ्जनप्रसञ्जितप्रतियोगिक इत्यादि । अत्रायोग्यपिशाचत्वाद्यभावप्रत्यक्षस्य प्रकारान्तरेणोपपत्तिं संपाद्य तदधिकरणीयेत्यादि द्वितीययोग्यानुपलब्धेः हेतुत्वं न मूलकाराभिप्रेतमिति केचित्कारेणैवाग्रे दूषणीयत्वेन नास्माभिर्दूष्यत इति हृदयम् । जातित्वादीत्यादिविशिष्टस्य स्तम्भवृत्तित्वस्योपलम्भव्याप्यत्वादिति । इदमापाततः केवलस्तम्भसमवेतत्वव्यक्तेरेवोपलम्भव्याप्यत्वसम्भवेन जातित्ववैशिष्ट्यस्य व्यर्थविशेषणत्वेन तद्घटितरूपेण व्याप्यत्वासंभवात् गुरुत्वत्वजातेः कालिकसंबन्धेन स्तम्भवृत्तित्वात् जातित्वादिविशिष्टं यत्संबन्धसामान्यावच्छिन्नस्तम्भनिरूपितवृत्तित्वं तस्य गुरुत्वत्वसाधारणत्वेन उपलम्भाव्याप्यत्वाच्च । नच गुरुत्वस्य स्तम्भसमवेतत्वात् व्यभिचार इति वाच्यं अनेकसमवेतत्वघटितजातित्वस्य जातिव्यक्तिभेदेन भिन्नतया जातित्वव्यक्तेस्तत्तद्व्यक्तित्वेन व्याप्यतावच्छेदककोटिप्रवेशापेक्षया जातिनिष्ठस्तम्भसमवेतत्वव्यक्तेरेव व्याप्यत्वौचित्यात् स्तम्भसमवेतत्वव्यक्तेरुपलम्भव्याप्यत्वमुक्तादिशा उपपादनीयमिति प्रतिभाति । अनुपलम्भे विद्यमानेऽपि निरुक्तयोग्यताविशिष्टस्य तस्य तत्राभावादिति भाव इति । इदमापाततः घटादिनिष्ठलौकिकविषयताशालिचाक्षुषत्वव्यापकद्रव्यनिष्ठलौकिकविषयताशालिचाक्षुषत्वावच्छिन्नजनकमहत्त्वावच्छिन्नालोकसंयोगाद्यवच्छिन्नचक्षुस्संयोगाद्यधिकरणक्षणोत्तरक्षणघटितस्यैव घटादिव्यापकत्वस्य पूर्वोक्तयुक्त्या उपलम्भस्य वक्तव्यतया घटाधिकरणालोकसंयोगाद्यधिकरणदेशे प्रसिद्धतादृशोपलम्भप्रतियोगित्वरूपयोग्यताविशिष्टानुपलम्भस्यान्धकारविशिष्टगृहेऽपि सत्त्वात्तस्मादन्धकारविशिष्टगृहवृत्तिघटाभावादेरालोकसंयोगाद्यवच्छिन्नचक्षुस्संयुक्तविशेषणतारूपसन्निकर्षाभावादेवान्धकारविशिष्टगृहे घटाभावादेर्न चाक्षुषमित्येव वक्तव्यमिति प्रतिभाति । ननु जातित्वविशिष्टतेजोवृत्तित्वस्येत्यादि । इदमापाततः जातित्वविशिष्टतेजोवृत्तित्वस्य चक्षुष्ट्वजातौ घर्षणादिना जातखण्डचक्षुस्संवर्तमानतद्व्याप्यजातौ तपोविशेषाज्जायमानादिव्यचक्षुर्निष्ठवैजात्ये च सत्त्वात्तत्रोपलम्भाभावेन तादृशतेजोवृत्तित्वस्य उपलम्भाव्याप्यत्वात्कथं तेजसि तदापत्तिः । नच तस्योपलम्भाव्याप्यत्वेऽपि आदिपदग्राह्यसत्तात्वविशिष्टतेजोवृत्तित्वस्य उपलम्भव्याप्यतया तदादाय तेजसि तदापत्तौ बाधकाभाव इति वाच्यं तथा सति केवलसत्तात्वस्य व्याप्यत्वसंभवेन तेजोवृत्तित्वविशेषणस्य व्यर्थतया व्यर्थविशेषणघटितधर्मावच्छेदेन व्याप्तेरभावात्तद्दीत्यापि तेजसि गुरुत्वाभावप्रत्यक्षापत्तेरभावादिति प्रतिभाति । प्रतियोग्यवृत्तिधर्मानवच्छिन्नत्वनिवेशादिति । इदमापाततः जातित्वविशिष्टस्तम्भसमवेतत्वशरीरघटकजातिनिष्ठस्तम्भसमवेतत्वव्यक्तेरेव व्याप्यत्वसम्भवेन जातित्वविशिष्टत्वविशेषणवैयर्थ्यस्योपपादितत्वेन केवलस्तम्भसमवेतत्वव्यक्तिनिष्ठव्याप्यतायां प्रतियोग्यवृत्तिधर्मानवच्छिन्नत्वस्यापि सत्त्वाज्जातित्वविशिष्टतेजोवृत्तित्वस्यैवोपलम्भाव्याप्यत्वस्योपपादितत्वेन तन्निष्ठव्याप्यत्वाप्रसिद्ध्या तत्र तादृशधर्मानवच्छिन्नत्वविशेषणदानस्य सुतरामसंभवात् तेजस्त्वरूपजातिनिष्ठतेजस्समवेतत्वव्यक्तेरुपलम्भव्याप्यत्वेन तद्दोषतादवस्थ्यमिति तु न शङ्क्यम् तद्व्यक्तिनिष्ठव्याप्यतायाः तादृशधर्मानवच्छिन्नत्वस्यापि सत्त्वेन तेन वारणासंभवात् तस्मात्केचिन्मतमप्रामाणिकमिति प्रतिभाति । ननु गुरुत्वादिनिष्ठप्रकारतानिरूपितलौकिकविशेष्यत्वाप्रसिद्ध्या तेन संबन्धेन गुरुत्वादिचाक्षुषाभावरूपयोग्यानुपलम्भविरहात्कुत्रापि गुरुत्वाभावप्रत्यक्षानुपपत्तिरित्याशङ्कामिष्टापत्त्या परिहरति ॥ **गुरुत्वादिकमित्यादि** ॥ आदिना पिशाचादृष्टादेः परिग्रहः ॥ **तत्रेति** ॥ गुरुत्वाद्यधिकरण इत्यर्थः ॥ **अशक्यत्वादिति** ॥ तथाचान्यत्र प्रसिद्धस्यैवापादनसंभवेन गुरुत्वादिनिष्ठलौकिकप्रकारताया एवाप्रसिद्ध्या तच्छालिप्रत्यक्षाप्रसिद्धेरिति भावः । इदानीं चक्षुरादिमनोन्तानामेकैकेन्द्रियजन्यमेकैकेन्द्रियमात्रग्राह्यगुणप्रतियोगिकाभावलौकिकप्रत्यक्षं क्रमेणोपपादयति ॥ **वाय्वादित्यादिना** ॥ रूपत्वावच्छिन्नाभावस्य अतीन्द्रियादिप्रतियोगिकतया वक्ष्यमाणयोग्यमात्रप्रतियोगिकत्वाभावात् प्रत्यक्षानुपपत्तिरिति तादृशाभावव्यावर्तनायोद्भूतरूपमुपात्तं तथाचालोकसामान्याभावे आलोकसंयोगावच्छिन्नचक्षुस्संयुक्तविशेषणताया अप्रसिद्ध्या तदनवच्छिन्नचक्षुस्संयुक्तविशेषणताया एव यथा तत्प्रत्यक्षकारणत्वं तथा उद्भूतरूपाभावे उद्भूतरूपावच्छिन्नचक्षुस्संयुक्तविशेषणताया अप्रसिद्ध्या तदनवच्छिन्नविशेषणताया एव

नुष्णत्वाभावः श्रोत्रे शब्दाभावः आत्मनि सुखाद्यभावः एवमादयस्तत्तदिन्द्रियैर्गृह्यन्ते त-त्तत्प्रत्यक्षस्यापादयितुं शक्यत्वात् संसर्गाभावप्रत्यक्षे प्रतियोगिनो योग्यता तन्त्रं अन्योन्याभाव-

प्रभा.

तत्कारणत्वावश्यकत्वात् वाय्वावुद्भूतरूपाभावचाक्षुषं भवतीति भावः ॥ **सौरभाभाव इति** ॥ उद्भूतसौरभाभाव इत्यर्थः ॥ **तिक्ताभाव इति** ॥ उद्भूततिक्ताभाव इत्यर्थः । आदिपदात्प्रभादावुद्भूतस्पर्शाभावपरिग्रहः । ननु पिशाचत्वप्रकारतानिरूपितलौकिकप्रत्यक्षाप्रसिद्धया तदभावरूपयोग्यानुपलम्भविरहात् स्तम्भादौ पिशाचत्वाभावप्रत्यक्षानुपपत्तिरत आह ॥ **संसर्गाभावेति** ॥ **प्रतियोगियोग्यत्वमिति** ॥ योग्यमात्रप्रतियोगिकत्वमित्यर्थः । अयोग्याप्रतियोगिकत्वे सति योग्यधर्मावच्छिन्नप्रतियोगिताकत्वमिति फलितोऽर्थः । अत्र पृथिवीत्वसामान्याभावप्रत्यक्षवारणाय सत्यन्तं घटादिनिष्ठगुरुत्वव्यक्तिनिष्ठतद्व्यक्तित्वावच्छिन्नावच्छेदकताकप्रतियोगिताकाभावात्मकतद्व्यक्तिमदत्यन्ताभावप्रत्यक्षवारणाय विशेष्यदलम् ॥ **तन्त्रमिति** ॥ निरुक्तानुपलब्धिकार्यतावच्छेदककोटिप्रविष्टाभावांशे उपलक्षणमित्यर्थः । तथाच पिशाचत्वाद्यभावस्य तदुपलक्षितत्वाभावात्तादृशाभावप्रत्यक्षस्य तदुपलक्षितत्वाभावनिष्ठलौकिकविषयताशालिचाक्षुषत्वादिरूपकार्यतावच्छेदकानाक्रान्ततया तत्र निरुक्तयोग्यानुपलम्भविरहेऽपि न क्षतिः तत्र पिशाचत्वादिरूपायोग्यजातिप्रतियोगिकत्वोपलक्षिताभावनिष्ठलौकिकविषयताशालिचाक्षुषं प्रत्येव केवलप्रतियोग्यनुपलम्भसहितमहत्त्वाद्यवच्छिन्नचक्षुस्संयुक्तविशेषणताया हेतुतया गुरुत्वाद्यभावानां तादृशजातिप्रतियोगिकत्वाभावेन तत्प्रत्यक्षस्य तदुपलक्षिताभावनिष्ठलौकिकविषयताशालिचाक्षुषत्वरूपकार्यतावच्छेदकानाक्रान्ततया केवलप्रतियोग्यनुपलम्भसहितनिरुक्तविशेषणतासन्निकर्षबलान्न गुरुत्वाभावचाक्षुषापत्तिरिति बोध्यम् । अन्येतु अतीन्द्रियप्रतियोगिकाभावनिष्ठलौकिकविषयताशालिप्रत्यक्षे केवलप्रतियोग्यनुपलम्भसहितनिरुक्तविशेषणतासन्निकर्षो हेतुः लौकिकविषयतासंबन्धेन प्रत्यक्षे जातिभिन्नातीन्द्रियप्रतियोगिकात्यन्ताभावस्य तादात्म्यसंबन्धेन प्रतिबन्धकत्वमिति प्रतिबन्धकसत्त्वान्न गुरुत्वाद्यभावप्रत्यक्षापत्तिरित्याहुः । ननु अन्योन्याभावप्रत्यक्षेऽपि निरुक्तयोग्यानुपलब्धेर्हेतुत्वे स्तम्भे पिशाचान्योन्याभावप्रत्यक्षानुपपत्तिः समवायेन पिशाचत्वनिष्ठप्रकारतानिरूपितलौकिकविशेष्यताया इव तादात्म्येन पिशाचनिष्ठप्रकारतानिरूपितलौकिकविशेष्य-

दिनकरीयम्.

गिकत्वेन प्रत्यक्षासम्भवादुद्भूतेति । एवमादय इत्यादिना प्रभाया उद्भूतस्पर्शाभावपरिग्रहः । प्रत्यक्षे विषयत्वेन कारणत्वस्य क्लृप्तत्वात्तेनैव गुरुत्वाद्यतीन्द्रियाभावप्रत्यक्षवारणे तदनुरोधेन तदधिकरणीयत्वेत्यादिद्वितीययोग्यानुपलम्भस्य हेतुता न स्वीकार्येत्यभिप्रायवान् संसर्गाभावे योग्यत्वमाह ॥ **संसर्गेति** ॥ **प्रतियो-**

रामरुद्रीयम्.

ग्यतया तद्वृत्तित्वस्योपलम्भाव्याप्यत्वादिति भावः ॥ **प्रत्यक्ष इति** ॥ विषयतया लौकिकप्रत्यक्षं प्रतीत्यर्थः ॥ **विषयत्वेनेति** ॥ लौकिकप्रत्यक्षविषयतोपलक्षितत्वेनेत्यर्थः ॥ **क्लृप्तत्वादिति** ॥ विषयासत्त्वदशायां तद्विषयकलौकिकप्रत्यक्षवारणाय तत्तल्लौकिकप्रत्यक्षे तत्तद्व्यक्तित्वेन तादात्म्येन कारणताया आवश्यकतया यद्विशेषयोरिति न्यायेन सामान्यतः कार्यकारणभावस्याप्यावश्यकत्वादिति भावः ॥ **गुरुत्वाद्यभाववारणेति** ॥ तेषु प्रत्यक्षवारणसम्भव इत्यर्थः । तेषां लौकिकप्रत्यक्षविषयत्वोपलक्षितत्वाभावेनैव तेषु लौकिकविषयतासम्बन्धेन प्रत्यक्षापत्तेरयोगादिति भावः ॥ **तदनुरोधेन** ॥ तेषां प्रत्यक्षापत्तिवारणानुरोधेन । न च पिशाचत्वाभावप्रत्यक्षार्थमेव द्वितीययोग्यानुपलब्धिस्वीकार इति पूर्वमुक्ततया तदभावे प्रथमयोग्यानुपलब्धेस्तत्रासम्भवात्पिशाचत्वाभावप्रत्यक्षं न स्यादिति वाच्यम् । योग्यप्रतियोगिकाभावप्रत्यक्ष एव प्रथमयोग्यानुपलब्धिकारणतायाः पूर्वमुक्तत्वेन तदभावे पिशाचत्वाभावप्रत्यक्षे बाधकाभावात् । न चैवमयोग्यप्रतियोगिकाभावप्रत्यक्षे योग्यानुपलब्धेरकारणत्वापत्तिरिति वाच्यं इष्टत्वात् । पूर्वमयोग्यस्याभावप्रत्यक्षे योग्यानुपलब्धेः कारणत्वाभावे गुरुत्वाद्यभावस्यापि प्रत्यक्षं स्यादित्यापत्तिवारणार्थमेव अयोग्याभावप्रत्यक्षे तद्धेतुतास्वीकारादिति भावः ॥ **संसर्गाभावप्रत्यक्ष इत्यादि** ॥ यद्यप्येतादृशाभिप्राये संसर्गाभावे योग्यताप्रदर्शनमफल-

प्रत्यक्षेऽधिकरणयोग्यत्वम् । अतः स्तम्भादौ पिशाचादिभेदोऽपि चक्षुषा गृह्यते । एवं प्रत्यक्षं

## प्रभा.

त्वस्याप्यप्रसिद्धया निरुक्तयोग्यानुपलम्भविरहात् अन्योन्याभावप्रत्यक्षे केवलप्रतियोग्यनुपलम्भस्य हेतुत्वे स्तम्भे पिशाचवदन्योन्याभावस्यापि प्रत्यक्षापत्तिरित्याशङ्कां कार्यतावच्छेदककोटौ योग्यत्वमुपलक्षणतया निवेश्य परिहरति ॥ **अन्योन्याभावप्रत्यक्ष इति** ॥ जात्यवच्छिन्नप्रतियोगिताकत्वयोग्यधर्मावच्छिन्नप्रतियोगिताक-

## दिनकरीयम्.

**गिनो योग्यतेति** ॥ योग्यमात्रप्रतियोगिकत्वे सति योग्यधर्ममात्रावच्छिन्नप्रतियोगिताकत्वमित्यर्थः । अत्र द्रव्यसामान्याभाववारणाय मात्रेति । गुरुत्ववद्घटात्यन्ताभाववारणाय विशेष्यदलम् । रूपगुरुत्वान्यतराव-च्छिन्नाभाववारणाय विशेष्यदले मात्रेति ॥ **अधिकरणयोग्यतेति** ॥ योग्याधिकरणवृत्तित्वमित्यर्थः । इ-

## रामरुद्रीयम्.

मेव तादृशयोग्यत्वाकल्पनेऽपि गुरुत्वाभावादौ विषयत्वाभावेन अप्रत्यक्षत्वस्य पिशाचत्वाभावादौ विषयत्वा-भावेन अप्रत्यक्षत्वस्य चोपपत्तेः । न च गुरुत्वाभावादेः प्रत्यक्षाविषयत्वोपलक्षितत्वाभावे किं प्रयोजकमित्या-काङ्क्षानिरासायैव संसर्गाभावे योग्यता प्रदर्शितेति वाच्यम् । गुरुत्वादौ विषयत्वाभावो यथा तादात्म्येन गु-रुत्वत्वादिना प्रत्यक्षप्रतिबन्धकताप्रयुक्तस्तथा प्रत्यक्षे सामान्यतः संसर्गाभावत्वेन प्रतिबन्धकत्वासम्भवेऽ-पि गुरुत्वाभावादीनां तत्तद्व्यक्तित्वेन प्रत्यक्षप्रतिबन्धकत्वकल्पनयैव तेषां विषयत्वाभावोपपादनसम्भवात्तथा-पि तत्तदभावानां तत्तद्व्यक्तित्वेन अनन्तप्रतिबन्धकताकल्पने गौरवमित्यभिप्रायेणैव योग्यताप्रदर्शनमिति बोध्यम् । ननु केयं योग्यता नाम न तावज्जातिरूपेति शक्यते वक्तुं अभावावृत्तित्वप्रसङ्गात् नापि प्रत्यक्ष-प्रयोजकोपाधिरूपा सप्तातिरिक्तपदार्थस्य सिद्धान्ते अभावात् । न चाभावरूपैव सेति वाच्यम् । कस्याभाव-रूपा सेत्याक्षेपस्य तथाप्यनुद्धारादिति मैवं । प्रतिबन्धकाभावत्वस्यैव योग्यतारूपत्वोपगमात् घटादियोग्यत्व-स्य गुरुत्वाद्ययोग्यत्वस्य चोपपादनसम्भवात् । न चैवं गुरुत्वाभावादीनां गुरुत्वप्रतियोगिकाभावत्वेनैकप्रतिब-न्धकतासम्भवेऽपि परमाण्वादिगतानन्तरूपादीनां च मनस्त्वपिशाचत्वादीनां च अभावव्यक्तीनां तत्त-द्व्यक्तिप्रतियोगिकाभावत्वेन अनन्तप्रतिबन्धकताकल्पनेन गौरवमपरिहार्यमेवेति वाच्यम् । योग्यमात्रप्रति-योगिकत्वे सति योग्यमात्रधर्मावच्छिन्नप्रतियोगिताकान्यसंसर्गाभावत्वेनैकप्रतिबन्धकतायाः प्रदर्शनायैव ए-तादृशयोग्यतानिर्वचनादिति ध्येयम् । अथैवमपि पिशाचत्वादीनां संसर्गाभावप्रत्यक्षानुपपत्तिरशक्यसमाधि-रेव निरुक्तप्रतिबन्धकतावच्छेदकधर्माक्रान्तत्वात्तेषामभावानामिति चेन्न । अन्योन्याभावभिन्नत्वरूपसंसर्गा-भावत्वस्य पिशाचत्वाभावादावभावेन प्रतिबन्धकतावच्छेदकानाक्रान्तत्वात् । पिशाचत्वात्यन्ताभावस्य पि-शाचभेदसमनियततया तदभिन्नत्वाद्वक्ष्यमाणान्योन्याभावयोग्यतायास्तत्र सत्त्वाच्च न प्रत्यक्षानुपपत्तिः । य-दि च समनियताभावानामनैक्यमते पिशाचत्वाभावप्रत्यक्षानुपपत्तिरिति विभाव्यते तदास्तु पिशाचत्वं ना-स्तीति प्रतीतावपि पिशाचभेद एव विषयः मणिकारमते मूले महीरुहो न विहङ्गमसंयोगीति प्रतीतेर्विहङ्गम-संयोगात्यन्ताभावविषयकत्ववत् प्रकृतग्रन्थस्य समनियताभावैक्यपक्षमवलम्ब्यैव प्रवृत्तिरित्यस्यापि सुवच-त्वाच्च तदनैक्यपक्षमवलम्ब्यैव द्वितीययोग्यानुपलब्धेः पूर्वं हेतुताङ्गीकारस्यापि सयुक्तिकत्वाच्चेति विभावनी-यं सुधीभिः । ननु प्रतियोगिनिष्ठयोग्यतायाः संसर्गाभावे असत्त्वात्कथं तस्याः संसर्गाभावयोग्यतात्वमित्य-भिप्रायेणाह ॥ **योग्यमात्रेति** ॥ **द्रव्यसामान्याभाववारणायेति** ॥ तत्प्रत्यक्षत्ववारणायेत्यर्थः । एव-मग्रेऽपि गुरुत्ववद्घटात्यन्ताभावेत्यस्य गुरुत्वावच्छिन्नघटादिनिष्ठप्रतियोगिताकात्यन्ताभावोऽर्थस्तेन गुरुधर्मस्या-भावप्रतियोगितानवच्छेदकतया गुरुत्वघटत्वोभयधर्मावच्छिन्नाभावस्याप्रसिद्धत्वेऽपि न क्षतिः अत एव नात्र मात्रपदव्यावृत्तिस्सम्भवतीति तद्व्यावृत्तिमन्यत्रैव दर्शयति ॥ **रूपेति** ॥ रूपस्य गुरुत्वस्येव सत्त्वादुभ-यावच्छिन्नाभावस्याप्रसिद्धया अन्यतरावच्छिन्नेति । एतच्चापाततः रूपवान्नास्तीति यत्र प्रतीतिः तत्रैवान्यतरवा-न्नास्तीति प्रतीतेर्लाघवाद्रूपमात्रस्यैव तादृशप्रतियोगितावच्छेदकत्वौचित्यान्मात्रपदप्रयोजनं रूपावच्छिन्नाभा-वप्रत्यक्षवारणमेव उद्भूतानुद्भूतरूपयोर्योग्यायोग्ययोर्द्वयोरेव तदभावप्रतियोगितावच्छेदकत्वादिति मन्तव्यम् ॥

लौकिकालौकिकभेदेन द्विविधं तत्र लौकिकप्रत्यक्षे षोढा सन्निकर्षा वर्णिताः ॥ ५९ ॥—॥ ६२ ॥

**अलौकिकस्तु व्यापारस्त्रिविधः परिकीर्तितः ।**
**सामान्यलक्षणो ज्ञानलक्षणो योगजस्तथा ॥ ६३ ॥**

अलौकिकसन्निकर्षस्त्विदानीमुच्यते ॥ अलौकिकस्त्विति ॥ व्यापारः सन्निकर्षः ॥ सा-

**प्रभा.**

स्वान्यतरवत्त्वोपलक्षितान्योन्याभावनिष्ठलौकिकविषयताशालिचाक्षुषत्वाद्यवच्छिन्न इत्यर्थः ॥ **अधिकरण-योग्यत्वमिति** ॥ तन्त्रमित्यनुषङ्गेणान्वयः केवलप्रतियोग्यनुपलम्भसहितालोकसंयोगाद्यवच्छिन्नचक्षुस्संयुक्तविशेषणता हेतुरित्यर्थः । अधिकरणस्य योग्यत्वोक्त्या तन्निष्ठचक्षुस्संयोगस्यालोकसंयोगाद्यवच्छिन्नत्वलाभादिति भावः । एवंच पिशाचवदन्योन्याभावस्य निरुक्तान्यतरवत्त्वरूपयोग्यताविरहेण तत्प्रत्यक्षस्य कार्यतावच्छेदकानाक्रान्ततया न तदापत्तिरिति । पिशाचान्योन्याभावतद्घटान्योन्याभावयोस्तु तादृशान्यतरवत्त्वरूपयोग्यतावत्त्वेन निरुक्तकारणबलात्स्तम्भादौ पिशाचभेदतद्घटव्यक्तिभेदयोः प्रत्यक्षसंभव इति भावः । अथान्योन्याभावनिष्ठलौकिकविषयताशालिप्रत्यक्षे केवलप्रतियोग्यनुपलम्भसहितनिरुक्तविशेषणता हेतुः तादृशप्रत्यक्षं प्रति निरुक्तान्यतरवत्त्वरूपयोग्यत्वाभावविशिष्टस्य तादात्म्यसंबन्धेन प्रतिबन्धकत्वं स्वीक्रियत इति प्रतिबन्धकसत्त्वात्स्तम्भादौ न पिशाचवदन्योन्याभावादेः प्रत्यक्षं इति कश्चित् इत्यास्तां विस्तरः ॥ ५९ ॥ ६० ॥ ६१ ॥ ६२॥

**मूले अलौकिकस्तु व्यापार इत्यादि** ॥ अत्रावधारणार्थकतुशब्दः त्रिविध इत्युत्तरं योज्यः । केचित्तु धूमत्वसामान्यलक्षणाया इन्द्रियजन्यत्वाभावाद्व्यापारत्वमसङ्गतं अत आह व्यापारस्सन्निकर्ष इत्यवतरणिकामाहुः तदसत् । धूमत्वादेरिन्द्रियाजन्यत्ववत् इन्द्रियासम्बद्धत्वात्तत्संबन्धत्वस्यापि अनुपपत्तेः तदसंबद्धस्य तत्संबन्धत्वे प्रमाणाभावात् नच इन्द्रियसंबद्धविशेष्यकज्ञानप्रकारताविशिष्टधूमत्वादेरेव प्रत्यासत्तित्वस्य वक्ष्यमाणतया तद्घटकेन्द्रियसंयोगादेस्संबन्धत्वेन विशिष्टस्यापि तत्संबद्धतया विशिष्टस्यापि तत्संबन्धत्वे बाधकाभाव इति वाच्यं । तथा सति इन्द्रियसंयोगस्य इन्द्रियसंबद्धविशेष्यकज्ञानस्य वा

**दिनकरीयम्.**

दं चाभावग्राहकयोग्यसन्निकर्षप्रदर्शनार्थं तेन स्तम्भ इवं वाय्वादौ न पिशाचान्योन्याभावप्रत्यक्षमिति भावः । अन्योन्याभावे योग्यता तु जात्यवच्छिन्नप्रतियोगिताकत्वजात्यतिरिक्तयोग्यधर्मावच्छिन्नप्रतियोगिताकत्वान्यतरदेव तेन स्तम्भे पिशाचान्योन्याभावपिशाचवदन्योन्याभावयोः प्रत्यक्षत्वाप्रत्यक्षत्वोपपत्तिरित्यन्यत्र विस्तरः ॥ ५९ ॥ ॥ ६० ॥ ॥ ६१ ॥ ॥ ६२ ॥

धूमत्वादिसामान्यलक्षणाया इन्द्रियजन्यत्वाभावात् व्यापारत्वकथनमसङ्गतमत आह ॥ **व्यापारः सन्निकर्ष इति** ॥ यद्यपि धूमत्वादेरिन्द्रियप्रतियोगिकत्वाभावात् सन्निकर्षत्वमयुक्तं तथापि संयोगस्येन्द्रिय-

**रामरुद्रीयम्.**

**योग्यसन्निकर्षेति** ॥ इन्द्रियसंयुक्तयोग्यविशेषणतारूपाभावग्राहकसन्निकर्षप्रदर्शनपरमेवेदं नत्वन्योन्याभावयोग्यताप्रदर्शनपरमिति भावः ॥ **तेनेति** ॥ एतादृशसन्निकर्षस्यैवाभावग्राहकत्वेनेत्यर्थः । अन्योन्याभावयोग्यताया मूलेऽनुक्तत्वात्तामेवाह ॥ **अन्योन्येति** ॥ नन्वेतादृशयोग्यतायाः किमित्यन्योन्याभावप्रत्यक्षप्रयोजकता कल्पनीयेत्याशङ्कायामाह ॥ **तेनेति** ॥ पिशाचभेदप्रत्यक्षोपपत्तये जात्यवच्छिन्नप्रतियोगिताकत्वोपादानं घटवदन्योन्याभावादेः प्रत्यक्षोपपत्तये जात्यतिरिक्तेत्यादि उपात्तमिति बोध्यम् । नन्विन्द्रियसन्निकृष्टयोग्यविशेषणता अभावग्राहकसन्निकर्ष इत्युक्तं तत्र योग्यत्वं महत्त्वोद्भूतरूपावच्छिन्नत्वमेवान्यस्य दुर्वचत्वात्तथा च परमाणौ महत्त्वाभावस्य वायावुद्भूतरूपाभावस्य च प्रत्यक्षं न स्यादित्यत आह ॥ **अन्यत्र विस्तर इति** ॥ अयं भावः महत्त्वाभावप्रत्यक्षे इन्द्रियसंयुक्तोद्भूतरूपवद्विशेषणता सन्निकर्षः उद्भूतरूपाभावप्रत्यक्षे चेन्द्रियसंयुक्तमहद्विशेषणतैव सन्निकर्षः कारणमतो नानुपपत्तिरिति ॥ ५९ ॥ ६० ॥ ६१ ॥ ६२ ॥

**सन्निकर्ष इतीति** ॥ ननु सन्निकर्षत्वमिन्द्रियसम्बन्धत्वमेव तदपि सामान्यस्येन्द्रियप्रतियोगिकत्वाभावेन

**मान्यलक्षण इति** ॥ सामान्यं लक्षणं यस्येत्यर्थः । तत्र लक्षणपदेन यदि स्वरूपमुच्यते तदा सामान्यस्वरूपा प्रत्यासत्तिरित्यर्थो लभ्यते तच्चेन्द्रियसम्बद्धविशेष्यकज्ञानप्रकारीभूतं बोध्यं तथा हि यत्रेन्द्रियसंयुक्तो धूमादिस्तद्विशेष्यकं धूम इति ज्ञानं यत्र जातं तत्र ज्ञाने धूमत्वं प्रकारस्तत्र धूमत्वेन सन्निकर्षेण धूमा इत्येवंरूपं सकलधूमविषयकं ज्ञानं जायते। अत्र यदीन्द्रियसम्बद्धमित्येवोच्यते तदा धूलीपटले धूमभ्रमानन्तरं सकलधूमविषयकं ज्ञानं न

## प्रभा.

इन्द्रियजन्यत्वेनैव विशिष्टस्यैव तज्जन्यत्वघटितव्यापारत्वसंभवेन कारिकास्थव्यापारशब्दस्य मुख्यार्थपरत्वे बाधकाभावात् विश्वनाथपञ्चाननस्य व्यापारशब्दस्य मुख्यार्थपरित्यागस्वीकारे उक्तबीजासंभवात् । वस्तुतस्तु स्मृतिनिर्विकल्पकसाधारणसामान्यविषयकज्ञानमात्रस्यैव. नवीनमते सामान्यलक्षणापदार्थतया यत्र घटत्वस्मरणेन सकलघटविषयकं चाक्षुषं तत्र तादृशस्मृतेर्व्यापारत्वासंभवादित्यत आह ॥ **मुक्तावल्यां सन्निकर्ष इति** ॥ विषयेन्द्रियसंबन्ध इत्यर्थः । नच स्मरणस्य इन्द्रियसंबन्धत्वाभावात्कथं चक्षुरादिसंबन्धत्वमिति वाच्यं । तन्मते इन्द्रियजन्यबोधसामग्रीसमवहितस्यैव स्मरणस्य फलोपधायकतया स्वीयलौकिकसंबन्धघटितसामग्रीसमवधानकालीनत्वरूपचक्षुरादिसंबन्धवत्त्वेन स्मरणस्य चक्षुरादिसंबन्धत्वानपायान्नोक्तदोष इति प्रतिभाति । ननु मूले सामान्यलक्षण इत्यत्र कर्मधारयसमासे लक्षणशब्दस्य नित्यनपुंसकत्वेन पुल्लिङ्गत्वानुपपत्तिः नवीनमते सामान्यज्ञानस्यैव प्रत्यासत्तित्वेन तस्य सामान्यस्वरूपत्वाभावाच्चेत्याशङ्कां बहुव्रीहिसमासाश्रयणेन परिहरति ॥ **सामान्यमित्यादि** ॥ **तत्रेति** ॥ बहुव्रीहिसमास इत्यर्थः सप्तम्यर्थो घटकत्वं तस्य लक्षणपदार्थे अन्वयः अत्र लक्षणपदस्य स्वरूपार्थकत्वपक्षे दोषस्य वक्ष्यमाणत्वात् यदि स्वरूपमित्युक्तं । केचित्तु यद्यपि धूमत्वादेरिन्द्रियप्रतियोगिकत्वाभावात्सन्निकर्षत्वमयुक्तं तथापि संयोगस्येन्द्रियप्रतियोगिकत्वात्तद्घटितेन्द्रियसंयुक्तविशेष्यकज्ञानप्रकारीभूतधूमत्वादेः प्रत्यासत्तितानिर्वाह इत्याहुः तदसत् संयोगस्येन्द्रियप्रतियोगिकत्वेन तद्घटितप्रकारताविशिष्टधूमत्वादेः प्रत्यासत्तितानिर्वाहेऽपि श्रोत्रसमवायस्य श्रोत्रप्रतियोगिकत्वाभावेन तद्घटितप्रकारताविशिष्टशब्दत्वादेः प्रत्यासत्तित्वासंभवात् । ननु धूमत्वरूपसामान्यलक्षणायाः नित्यत्वेन सर्वदा विद्यमानतया सर्वदा सकलधूमविषयकप्रत्यक्षापत्तिरत आह ॥ **तच्चेत्यादि** ॥ तथाच केवलसामान्यं न प्रत्यासत्तिः किंत्वीदृशप्रकारताविशिष्टसामान्यमेवेति भावः । ईदृशसामान्यस्य प्रत्यासत्तित्वस्वीकारे नोक्तदोष इत्याह ॥ **तथाहीति** ॥ **यत्रेति** ॥ यदेत्यर्थः तस्य प्रकारपदार्थेन सहान्वयः ॥ **तत्र** तादृशज्ञाने निरूपितत्वं सप्तम्यर्थः तस्य प्रकारपदार्थैकदेशप्रकारत्वेऽन्वयः । तथाच धूमत्वं इन्द्रियसंबद्धधूमादिविशेष्यकधूमत्वप्रकारकज्ञाननिरूपितप्रकारताविशिष्टं यदा भवतीति विशिष्टवाक्यार्थः ॥ **तत्रेति** ॥ तदैवेत्यर्थः । तस्य जायत इति परेणान्वयः ॥ **धूमत्वेनेति** ॥ निरुक्तप्रकारताविशिष्टधूमत्वेनेत्यर्थः । तथाच न सर्वदा सकलधूमविषयकप्रत्यक्षापत्तिरिति भावः ॥ **अत्रेति** ॥ लाघवादित्यादिः निरुक्तप्रत्यासत्तावित्यर्थः घटकत्वं सप्तम्यर्थः तस्येन्द्रियसंबद्धमित्यनेनान्वयः तथाच निरुक्तप्रत्यासत्तिघटकेन्द्रियसंबद्धसामान्यस्य प्रत्यासत्तित्वस्वीकारेणैव सर्वदा सकलधूमविषयकप्रत्यक्षापत्तेर्वारणे तादृशप्रकारताविशिष्टसा-

## दिनकरीयम्.

प्रतियोगिकत्वात् तद्घटितस्येन्द्रियसंयुक्तविशेष्यकज्ञानप्रकारीभूतधूमत्वादेः प्रत्यासत्तितानिर्वाहः ॥ **तच्च** सामान्यस्वरूपं च ॥ **अत्र यदीति** ॥ इन्द्रियसम्बद्धसामान्यं प्रत्यासत्तिरित्युच्यते तदेत्यर्थः । ननु यत्र चक्षुः-

## रामरुद्रीयम्.

दुरुपपादमेवेत्याशङ्क्य समाधत्ते ॥ **यद्यपीति** ॥ **प्रत्यासत्तितानिर्वाह इति** ॥ यद्यप्येवमपि ज्ञानलक्षणयोगजधर्मयोरिन्द्रियप्रतियोगिकत्वानुपपत्तिस्तदवस्थैव तथापि कालिकेन स्वाश्रयत्वविशिष्टयोस्तयोः सन्निकर्षत्वाभ्युपगमादाश्रयत्वस्य स्वप्रतियोगिकत्वादेवेन्द्रियप्रतियोगिकत्वस्य ज्ञानस्य विषयतया विषयवृत्तितया धर्मस्य स्वजन्यज्ञानविषयतावच्छेदकत्वोपलक्षितधर्मसम्बन्धेन विषयवृत्तितया च तदनुयोगिकत्वस्याप्युपप-

स्यात् तत्र धूमत्वेन सह इन्द्रियसम्बन्धाभावात् । मन्मते त्विन्द्रियसम्बद्धं धूलीपटलं तद्विशेष्यकं धूम इति ज्ञानं तत्र प्रकारीभूतं धूमत्वं प्रत्यासत्तिः । इन्द्रियसम्बन्धश्च लौकिको ग्राह्यः । इदं

प्रभा.

मान्यस्य न प्रत्यासत्तित्वं गौरवादिति भावः ॥ यत्रेति ॥ यदेत्यर्थः ॥ तत्रेति ॥ तदेत्यर्थः । तदुपपादयति ॥ तत्रेति ॥ तदेत्यर्थः ॥ इन्द्रियसंबन्धाभावादिति ॥ धूलीपटलस्यैव इन्द्रियसंयुक्तत्वादिति भावः । तादृशप्रकारताविशिष्टसामान्यस्य प्रत्यासत्तित्वे नोक्तदोष इत्याह ॥ मन्मते त्वित्यादि ॥ ननु सुरभि चन्दनमिति चन्दनांशे लौकिकं सौरभांशेऽलौकिकं चाक्षुषं यत्र जातं तत्र ज्ञानलक्षणात्मकचक्षुस्संबन्धविशिष्टसौरभविशेष्यकतादृशज्ञानप्रकारीभूतसौरभत्वप्रत्यासत्त्या सकलसौरभविशेष्यकचाक्षुषापत्तिः नचेष्टापत्तिः सामान्यप्रत्यासत्त्या बहिरिन्द्रियेण सर्वांशेऽलौकिकभानस्यानुभवविरुद्धत्वात् । नच इन्द्रियसंबद्धमुख्यविशेष्यकज्ञानप्रकारीभूतसामान्यस्यैव प्रत्यासत्तित्वोपगमान्नोक्तापत्तिरिति वाच्यं । मुख्यविशेष्यताघटितरूपेण प्रत्यासत्तित्वे प्रमाणाभावादत एव घटचक्षुस्संयोगेनायं घट इति ज्ञानानन्तरं भूतलभासकसामग्रीसत्त्वे घटवद्भूतलमिति ज्ञानं असत्त्वे पुनरयं घट इति ज्ञानमेव जायत इति । एवं विनश्यदवस्थापन्नभूतलचक्षुस्संयोगाद्यत्र घटवद्भूतलमिति ज्ञानं जातं तदुत्तरक्षणे भूतलभासकसामग्र्यभावेन घटचक्षुस्संयोगमात्रेणायं घट इति ज्ञानमेव जायत इति च तत्र तत्रोक्तं सङ्गच्छते । एवंच विनश्यदवस्थचक्षुस्संयोगात्सुरभि चन्दनमिति चन्दनांशे लौकिकचाक्षुषोत्तरं चन्दनांशे लौकिकप्रत्यक्षजनकसामग्र्यभावेन तादृशसौरभत्वसामान्यप्रत्यासत्त्या सकलसौरभचाक्षुषापत्तिर्दुर्वारा । यदिच इन्द्रियसंबद्धविशेष्यकेत्यत्र इन्द्रियसंबद्धनिष्ठलौकिकविशेष्यताकेत्यर्थकतया उक्तसौरभचाक्षुषस्य तादृशत्वाभावेन सकलसौरभविशेष्यकचाक्षुषत्वापत्तिर्नेति विभाव्यते तदा विनश्यदवस्थचक्षुस्संयोगात् घटचाक्षुषोत्तरं तादृशज्ञानरूपेन्द्रियसंबन्धविशिष्टलौकिकविशेष्यताशालितादृशचाक्षुषज्ञानप्रकारीभूतघटत्वप्रत्यासत्त्या सकलघटविषयकचाक्षुषापत्तिर्दुर्वारैवेत्यत आह ॥ इन्द्रियसंबन्धश्चेति ॥ अत्र इन्द्रियसंबन्धत्वं नेन्द्रियप्रतियोगिकलौकिकसंबन्धत्वं शब्दनिष्ठाकाशरूपश्रोत्रसमवायस्याकाशप्रतियोगिकत्वाभावात् किन्तु प्रतियोगिताकत्वानुयोगिकत्वान्यतरसंबन्धेन इन्द्रियसंबन्ध एवेन्द्रियसंबन्धत्वं इन्द्रियप्रतियोगिकत्वेन्द्रियानुयोगिकत्वान्यतरविशिष्टो यः लौकिकसंबन्धः तद्वत्त्वं । एवंच

दिनकरीयम्.

सन्निकर्षेण धूम इति ज्ञानं जनितं तत्र चक्षुःसंयोगं विनापि तादृशज्ञानमादायेन्द्रियसम्बद्धविशेष्यकज्ञानप्रकारस्य धूमत्वादेर्धूमान्तरे सत्त्वाद्धूमान्तराणां सामान्यलक्षणया ज्ञानापत्तिः । न च तदा धूमो नेन्द्रियसम्बद्धः ज्ञानलक्षणात्मकसन्निकर्षस्य धूमे सत्त्वात् । न च तत्रैकक्षणे सामान्यलक्षणाजन्यज्ञानस्वीकारे क्षतिविरह इति

रामरुद्रीयम्.

त्या नानुपपत्तिः । नन्वेवं व्यापारविरहेणालौकिकप्रत्यक्षे इन्द्रियस्य करणत्वं कथमुपपादनीयमिति चेत् संयोगस्यैव व्यापारत्वोपगमेनेति गृहाण । कथमन्यथा स्मरणाद्यात्मकज्ञानलक्षणप्रत्यासत्तेः करणीभूतेन्द्रियाजन्यत्वात्तस्या व्यापारत्वासम्भवेन इन्द्रियस्य करणत्वमिति भावः । चक्षुःसन्निकर्षेणेत्यस्य विनश्यदवस्थापन्नेत्यादिः । तेन चक्षुःसंयोगं विनापीत्यस्य नासङ्गतिः ॥ धूमान्तर इति ॥ प्रत्यक्षभूतधूमभिन्नधूम इत्यर्थः । प्रत्यक्षधूमव्यक्तेर्द्वितीयक्षणे तज्ज्ञानरूपज्ञानलक्षणप्रत्यासत्त्या अलौकिकप्रत्यक्षं इष्टमेवेत्यत अन्तरपदम् ॥ ज्ञानापत्तिरिति ॥ पूर्वं धूमान्तर एव सन्निकर्षस्योपपादिततया तस्यैव ज्ञानापादनं लभ्यत इति नेष्टापत्तिसम्भवः ॥ सम्बद्ध इति ॥ इन्द्रियसम्बन्धस्य विशेषणतया सन्निकर्षघटकत्वोपगमान्नोक्तापत्तिरिति भावः ॥ एकक्षण इति ॥ एतत्पूर्वं चक्षुःसंयोगसत्त्वेन सामान्यलक्षणया ज्ञानोत्पत्ताविष्टापत्तेः ज्ञाननाशानन्तरं च ज्ञानप्रकारत्वविरहादेव आपत्त्यसम्भवादिति भावः । न चैवमपि ज्ञानद्वितीयतृतीयक्षणयोरापत्तिसम्भवादेकक्षण इत्यसङ्गतमिति वाच्यम् । यत्र तत्पूर्वक्षणे घटत्वप्रकारकज्ञानमासीत्तत्र जायमानज्ञानस्यैव सामान्यलक्षणया सकलधूमविषयकतया क्षणद्वयेऽपि तादृशज्ञानस्य सर्ववादिसिद्धतया तृतीयक्षण एव तदापत्तिः कर्तव्येत्यभिप्रायेणैकक्षणाभिधानात् ॥ क्षतिविरह इति ॥ क्षणस्यातिसूक्ष्मत्वेन तत्क्षणे तादृशज्ञानानुत्पादस्य प्रमाणेन निश्चेतुमश-

च बहिरिन्द्रियस्थले बोध्यम् । मानसस्थले तु ज्ञानप्रकारीभूतं सामान्यं प्रत्यासत्तिः ॥ ६३ ॥

## प्रभा.

नोक्तदोषः तत्र तादृशलौकिकसंबन्धवन्निष्ठलौकिकविशेष्यताकत्वं न लौकिकसंबन्धोपलक्षितव्यक्तिनिष्ठलौकिकविशेष्यताकत्वरूपं विनश्यदवस्थचक्षुस्संयोगजन्यायंघटइत्याकारकज्ञानस्यापि तादृशलौकिकविशेष्यताकतया तदुत्तरं सकलघटविषयकचाक्षुषापत्तेः । नापि तादृशलौकिकसंबन्धविशिष्टनिष्ठलौकिकविशेष्यताकत्वरूपं अयं घट इत्याकारकज्ञानस्य चक्षुस्संयोगाविषयकतया तज्ज्ञानीयघटनिष्ठलौकिकविशेष्यतायाः चक्षुस्संयोगरूपविशेषणानवच्छिन्नत्वेन विशिष्टवृत्तित्वासंभवात्तादृशज्ञानोत्तरं सकलघटविषयकचाक्षुषानुपपत्तेः किन्तु स्वसामानाधिकरण्यस्वसमानकालीनत्वोभयसंबन्धेन तादृशलौकिकसंबन्धविशिष्टलौकिकविशेष्यताकत्वरूपमेव वाच्यं अतो नोक्तदोषलेश इति प्रतिभाति । नचैवमपि तादृशलौकिकविषयताशाल्ययंघट इति स्पार्शनोत्तरं सकलविषयकस्पार्शनवत् सकलघटविषयकचाक्षुषस्याप्यापत्तिः सामग्र्या अविशिष्टत्वात् इति वाच्यं । सकलघटविषयकचाक्षुषत्वावच्छिन्नं प्रति तादृशलौकिकविशेष्यताशालिचाक्षुषप्रकारताविशिष्टघटत्वस्यैव प्रत्यासत्तित्वस्वीकारेणैतादृशस्पार्शनस्योत्तरं सकलघटविषयकचाक्षुषापत्तेरभावात् । ननु गुरुत्वत्वेन यत्किंचिद्गुरुत्वोपस्थित्यनन्तरं सकलगुरुत्वविषयकमानसप्रत्यक्षानुपपत्तिः गुरुत्वेन सह मनसः लौकिकसन्निकर्षस्य गुरुत्वे लौकिकविशेष्यतायाश्चाभावात् तादृशलौकिकविशेष्यताशालिमानसप्रकारताविशिष्टगुरुत्वत्वरूपसामान्यस्याप्रसिद्धत्वादत आह ॥ **इदं चेति** ॥ निरुक्तप्रकारताविशिष्टसामान्यमित्यर्थः अवधारणार्थकश्चशब्दः बहिरिन्द्रियस्थल इत्युत्तरं योज्यः बहिरिन्द्रियजन्यसकलघटविषयकप्रत्यक्ष एवेत्यर्थः ॥ **बोध्यमिति** ॥ प्रत्यासत्तिविधया कारणमिति बोध्यमित्यर्थः ॥ **मानसस्थल इति** ॥ मनःकरणकसकलघटादिविषयकप्रत्यक्ष इत्यर्थः अवधारणार्थकतुशब्दस्सामान्यमित्युत्तरं योज्यः ज्ञानप्रकारीभूतसामान्यमेव सन्निकर्ष इत्यन्वयः तथाच केवलज्ञानप्रकारताविशिष्टसामान्यमेव सन्निकर्षः नतु निरुक्तप्रकारताविशिष्टसामान्यं प्रत्यासत्तिरिति एवकारघटितवाक्यार्थः ॥ ६३ ॥

## दिनकरीयम्.

वाच्यम् । तन्मूलकज्ञानधारापत्तेर्दुर्वारत्वादित्यत आह ॥ **लौकिको ग्राह्य इति** ॥ अत्र लौकिकसन्निकर्षस्य विशेषणविधया घटकत्वं बोध्यम् अन्यथा तत्र धूमे पूर्वकालीनचक्षुःसंयोगमादाय तद्दोषतादवस्थ्यमिति ध्येयम् । इदमुपलक्षणं यत्र चक्षुःसंयोगे विद्यमानेऽपि दोषवशान्न धूमचाक्षुषं किन्तु धूमत्वप्रकारकं स्मरणं तत्र धूमत्वसामान्यलक्षणाजन्यज्ञानापत्तिवारणाय सामान्यलक्षणाघटकज्ञाने तदिन्द्रियजन्यत्वस्य वाच्यत्वात् । नन्विन्द्रियसम्बद्धेत्यत्र लौकिकसम्बन्धः ज्ञानप्रकारेत्यत्र ज्ञानस्य तदिन्द्रियजन्यत्वं चेद्विवक्षितं तदाणुत्वेन यत्किञ्चिदणूपस्थितावणुत्वसामान्यलक्षणया सकलाणुगोचरो मानसबोधो न स्यात् तदाणौ मनसो लौकिकसम्बन्धस्य ज्ञाने मनोजन्यत्वस्य चाभावादत आह ॥ **इदं चेति** ॥ तथा च बहिरिन्द्रियेण सामान्यलक्षणया ज्ञाने जननीये तद्विवक्षितं न तु मानससामान्यलक्षणाजन्यज्ञान इति नोक्तदोष इति भावः ॥ ६३ ॥

## रामरुद्रीयम्.

क्यत्वादिति भावः ॥ **तन्मूलकेति** ॥ आपाद्यमानज्ञानव्यक्तिमूलकेत्यर्थः ॥ **ज्ञानधारेति** ॥ सामान्यलक्षणया प्रत्यक्षे लौकिकसन्निकर्षस्य अहेतुत्वेन पूर्वपूर्वज्ञानव्यक्तेरेव सन्निकर्षसम्पादकत्वादिति भावः । यद्यपि सिद्धान्तेऽपि घट इति ज्ञानानन्तरं मनसा सामान्यप्रत्यासत्तिजन्यज्ञानधारा इष्टैव तथाप्यत्र चाक्षुषसामान्यप्रत्यासत्तिजन्यज्ञानस्य यत्किञ्चित्सामान्याश्रयांशे लौकिकत्वनियमेन इष्टापत्त्यसम्भवेन चाक्षुषतादृशज्ञानधाराया एवापादनान्नानुपपत्तिरित्यवधेयम् ॥ **विशेषणविधयेति** ॥ विशेषणत्वेनेत्यर्थः । विशेषणत्वं च विशेष्यान्वयित्वं सन्निकर्षविशेष्यभूतसन्निकर्षवता विशेष्यतासम्बन्धेन अन्वयिनि ज्ञाने समानकालीनत्वसम्बन्धेन सन्निकर्षस्य विवक्षणाद्विशेषणत्वमिति भावः । वाच्यत्वादित्यस्य विशेषणतयेत्यादिः । तथा च तदिन्द्रियेण सामान्यलक्षणया ज्ञाने जननीये तदिन्द्रियजन्यतदिन्द्रियलौकिकसन्निकर्षवद्विशेष्यकज्ञानप्रकारीभूतं सामान्यं सन्निकर्ष इति भावः ॥ **मनोजन्यत्वस्य चेति** ॥ यद्यपि ज्ञानसामान्यस्यैव मनोजन्यतया उपस्थितौ म-

आसत्तिराश्रयाणां तु सामान्यज्ञानमिष्यते ।
तादिन्द्रियजतद्धर्मबोधसामग्र्यपेक्षिता ॥ ६४ ॥

परन्तु समानानां भावः सामान्यं तच्च क्वचिन्नित्यं धूमत्वादि क्वचिच्चानित्यं घटादि यत्रैको घटः संयोगेन भूतले समवायेन कपाले वा ज्ञातस्तदनन्तरं च सर्वेषामेव तद्धटादिमतां भूतलादीनां कपालादीनां वा ज्ञानं भवति । तत्रेदं बोध्यं परन्तु सामान्यं येन सम्बन्धेन ज्ञायते तेन सम्बन्धेनाधिकरणानां प्रत्यासत्तिः किन्तु यत्र तद्धटनाशानन्तरं त-

## प्रभा.

ननु संयोगसंबन्धेन घटादिव्यक्तिप्रकारकभूतलविशेष्यकचाक्षुषोत्तरं संयोगसंबन्धेन तद्धटप्रकारकतद्धटाश्रययावद्व्यक्तिविशेष्यकं सर्वानुभवसिद्धं चाक्षुषं न स्यात् तद्धटादेः तादृशप्रकारतावत्त्वेऽपि तस्य सामान्यरूपत्वाभावात्तादृशप्रकारताविशिष्टसामान्यस्यैव सामान्यलक्षणापदार्थत्वादित्याशङ्कां तद्धटादेरपि योगव्युत्पत्त्या सामान्यपदार्थत्वमङ्गीकृत्य परिहरति ॥ **परं त्वित्यादिना** ॥ **समानानां भाव इति** ॥ एकधर्मावच्छिन्नसाधारणधर्म इत्यर्थः ॥ **तच्चेति** ॥ निरुक्तसामान्यं चेत्यर्थः ॥ **क्वचिदिति** ॥ किंचिदित्यर्थः एवमग्रेऽपि धूमत्वादिरूपयत्किंचित्सामान्यं नित्यमित्यर्थः ॥ **तद्धटवतामिति** ॥ संयोगेन तद्धटवतां समवायेन तद्धटवतामित्यर्थः ॥ **भूतलादीनामिति** ॥ आदिना संयोगेन तद्धटाधिकरणद्रव्यान्तरस्य समवायेन तद्धटाधिकरणकपालानां च परिग्रहः ॥ **तत्रेदं बोध्यमिति** ॥ तादृशस्थले निरुक्तप्रकारताविशिष्टघटादिरूपमनित्यसामान्यं प्रत्यासत्तिरिति वक्तव्यमित्यर्थः । तथाच नोक्ताशङ्केति भावः । ननु समवायसंबन्धेन घटत्वप्रकारकचाक्षुषोत्तरं कालिकसंबन्धेन घटत्वाश्रययावद्विषयकचाक्षुषापत्तिः निरुक्तप्रकारताविशिष्टघटत्वस्य कालिकसंबन्धेन जन्ये महाकाले च सत्त्वादत आह ॥ **परं त्विति** ॥ **येन संबन्धेनेति** ॥ इन्द्रियसंबद्धविशेष्यकज्ञानीययत्संबन्धावच्छिन्नप्रकारताविशिष्टं भवतीत्यर्थः ॥ **तेन संबन्धेन अधिकर-**

## दिनकरीयम्.

आसत्तिराश्रयाणान्त्वित्यादिमूलमवतारयितुं भूमिकां रचयति ॥ **परन्त्वित्यादिना** ॥ भूतल इत्यस्य ज्ञात इत्यनेनान्वयः । भूतलादीनामित्यादिना संयोगेन तद्धटाधिकरणद्रव्यान्तरपरिग्रहः ॥ **तत्रेदं बोध्यमिति** ॥ ज्ञायमानमनित्यं सामान्यं तत्र प्रत्यासत्तिरिति बोध्यमित्यर्थः । परम्परया प्रत्यासन्नस्य घटत्वादेरेव प्रत्यासत्तित्वसम्भवात् किंत्वित्यादिना वक्ष्यमाणदोषासङ्गतिरत आह ॥ **परन्त्विति** ॥ तथा च घटत्वस्य परम्परया कपालादावज्ञानाद्वक्ष्यमाणदोषसङ्गतिः ॥ **तेन सम्बन्धेनेति** ॥ अन्यथा समवायेन ज्ञानप्रकारीभूतघटत्वादिसामान्यप्रत्यासत्त्या कालादिज्ञानापत्तेरिति भावः ॥ **किन्त्विति** ॥ एवं चेत्यर्थः ॥ **कि-**

## रामरुद्रीयम्.

नोजन्यत्वमस्त्येव तथापि स्मरणस्यापि कालोपाधिविधया इन्द्रियजन्यत्वेन तद्वारणाय तदिन्द्रियनिष्ठजनकतानिरूपिततत्प्रत्यक्षविभाजकोपाध्यवच्छिन्नजन्यताया एव विवक्षणीयतया तादृशमनोजन्यतायाः सुखादिज्ञान एव सत्त्वान्नासङ्गतिः ॥ **भूमिकामिति** ॥ अवतारणानुकूला युक्तिरेव तद्भूमिका । ज्ञायमानसामान्यमित्यत्र जातेरेव सामान्यपदार्थत्वे अनित्यसामान्यस्यैव अप्रसिद्ध्या तत्र दोषदानानुपपत्त्या तद्वारणार्थं सामान्यमुपेक्ष्य तज्ज्ञानस्य प्रत्यासत्तित्वोपगमवैयर्थ्यमित्यानित्यस्य सामान्यत्वव्यवस्थापनमुत्तरग्रन्थावतारणोपयुक्तमिति बोध्यम् ॥ **मूले समानानामिति** ॥ तथा च प्रकृते सामान्यपदं यौगिकमेव न तु पारिभाषिकमिति भावः ॥ **परिग्रह इति** ॥ यद्यपि समवायेन तद्धटाधिकरणं कपाल एवेति मूले कपालादीनामित्यसङ्गतं तथापि तद्धटादिमतामिति पूर्ववाक्यस्थादिपदेन पटादेरपि परिग्रहात्तदनुरोधेन यत्रैको घट इति तत्पूर्ववाक्यस्थघटपदस्यापि पटाद्युपलक्षकत्वेन आदिपदेन तन्त्वादिसङ्ग्रहसम्भवान्नासङ्गतिः । कालादीत्यादिना विषयतया धूमत्वादिमतां ज्ञानादीनां परिग्रहः । अव्यवहितपूर्वोक्तयुक्त्यैवोत्तरत्र आपादनीयतया किन्त्वित्यसङ्गतमतस्तस्यैवं चेत्यर्थकतामाह ॥ **एवञ्चेत्यर्थ इति** ॥ यद्यप्यत्रैतद्धटवान् कपाल इति प्रत्यक्षे परम्परासम्बन्धेन कपा-

द्धटवतः स्मरणं जातं तत्र सामान्यलक्षणया सर्वेषां तद्धटवतां भानं न स्यात् सामान्यस्य तदानीमभावात् । किञ्चेन्द्रियसम्बद्धविशेष्यकं घट इति ज्ञानं यत्र जातं तत्र [illegible] द्विने इन्द्रियसम्बन्धं विनापि तादृशज्ञानप्रकारीभूतसामान्यस्य सत्त्वात् तादृशज्ञा[illegible] न-न्यते तस्मात्सामान्यविषयकं ज्ञानं प्रत्यासत्तिः न तु सामान्यमित्याह ॥ आसत्तिरिति ॥

## प्रभा.

**णानां प्रत्यासत्तिरिति** ॥ बोध्यमिति शेषः । तथाच विशेष्यतासंबन्धेन निरुक्तप्रकारतावच्छेदकसंबन्धावच्छिन्नघटत्वादिनिष्ठप्रकारतानिरूपिततत्संबन्धावच्छिन्नतानिष्ठाधेयतानिरूपिताधिकरणताश्रययावन्निष्ठविशेषणताशालिचाक्षुषत्वाद्यवच्छिन्नं प्रति, तादृशलौकिकविशेष्यताशालिचाक्षुषत्वाद्यवच्छिन्ननिरूपिततत्संबन्धावच्छिन्नप्रकारताविशिष्टघटत्वादेः तादृशप्रकारतावच्छेदकसंबन्धेन हेतुत्वमिति कार्यकारणभावो लब्ध इति न पूर्वोक्तदोषावकाश इति भावः । एतावता प्रबन्धेन प्राचीनमतसिद्धं ज्ञायमानसामान्यस्य प्रत्यासत्तित्वमुपपाद्य इदानीं आसत्तिराश्रयाणां इत्यादिमूलोक्तं नवीनमतसिद्धसामान्यज्ञानप्रत्यासत्तित्वं सिद्धान्तयितुं प्राचीनमतं दूषयति ॥ **किञ्चेत्यादिना** ॥ **कुतो न जन्यत इति** ॥ अत्रातीतादिलिङ्गकानुमितिं प्राचीना यथा नाङ्गीकुर्वन्ति तथा अतीतसामान्यप्रत्यासत्तिजन्यालौकिकप्रत्यक्षस्याप्यनङ्गीकारात् तन्मते आद्यदूषणमलग्नकं द्वितीये विनश्यदवस्थचक्षुस्संयोगजन्यघटादिचाक्षुषमादाय न तदापत्तिः तज्ज्ञानीयघटादिनिष्ठलौकिकविशेष्यतायाः सामानाधिकरण्यैककालीनत्वोभयसंबन्धेन चक्षुस्संयोगविशिष्टत्वाभावेन विशिष्टलौकिकविशेष्यताशालिचाक्षुषनिरूपितप्रकारताविशिष्टसामान्यस्याभावात् । यदितु तादृशप्रकारताश्रयसामान्यस्य केवलसामान्यानतिरिक्ततया घटत्वप्रकारकचाक्षुषशून्यकालेऽपि केवलसामान्यमाहिम्ना सकलघटविषयकचाक्षुषापत्तिरित्युच्यते तदा प्रकारतासंबन्धेन तादृशज्ञानविशिष्टसामान्यस्यैव प्रत्यासत्तित्वोपगमेन चाक्षुषशून्यकाले प्रकारतासंबन्धेन तादृशज्ञानविशिष्टसामान्यत्वरूपप्रत्यासत्तितावच्छेदकावच्छिन्नस्याभावाद्विकल्पद्वयघटितद्वितीयदूषणमप्यलग्नं । यदपि चैत्रीयतादृशज्ञानप्रकारीभूतसामान्यप्रत्यासत्त्या मैत्रस्य तद्धर्माश्रयसकलघटविषयकप्रत्यक्षापत्तिवारणाय तत्पुरुषीयत्वस्य निवेशनीयतया पुरुषभेदेनानन्तकार्यकारणभावः सामान्यज्ञानस्य प्रत्यासत्तित्वे तु आत्मनिष्ठप्रत्यासत्त्या हेतुत्वान्न तत्पुरुषीयत्वनिवेशनामिति तदपि न । नवीनमतेऽपि तत्पुरुषीयत्वनिवेशावश्यकत्वस्य अनुपदं वक्ष्यमाणत्वात् तस्मात्प्राचीनमते इन्द्रियभेदेन कार्यकारणकल्पनागौरवं च दोषः । नवीनमते तल्लाघवमेव गुण इति प्रतिभाति ॥ **तस्मादिति** ॥ उक्तदोषादित्यर्थः ॥ **सामान्यज्ञानमित्यादि** ॥ किंत्वित्यादिः नतु सामान्यं प्रत्यासत्तिः

## दिनकरीयम्.

**त्रेति** ॥ **कुतो न जन्यत इति** ॥ इदमापाततः सामान्यलक्षणाघटकीभूतलौकिकसन्निकर्षस्य विशेषणत्वविवक्षणेन कालान्तरीयसंयोगमादायैवोक्तातिप्रसङ्गस्याभावादिति । तस्मात् पूर्वोक्तदोष एवात्र कल्पे बोध्यः ।

## रामरुद्रीयम्.

लांशे घटत्वस्यापि प्रकारता कल्पयितुं शक्यते तन्नाशानन्तरं कपालादिप्रत्यक्षस्यैव तत्कल्पकस्य सत्त्वात् । न चैवमपि तादृशशाब्दादिस्थले का गतिरिति वाच्यम् । तत्रापि विशिष्टवैशिष्ट्यबोधमर्यादया मतुबर्थसम्बन्धे निरूपितत्वसम्बन्धेन घटस्येव तद्विशेषणतापन्नघटत्वस्यापि अन्वयसम्भवात्समवायसंयोगयोरिव स्वाश्रयाश्रयत्वस्यापि मतुपा बोधयितुं शक्यत्वाच्च तथापि यत्र तद्व्यक्तिमानित्याकारकशाब्दादिज्ञानं तत्र घटत्वस्य कथञ्चित्प्रकारत्वासम्भवेन अनुपपत्तिर्द्रष्टव्या ॥ **कुतो न जन्यत इतीति** ॥ अत्र यद्यपि परदिनेऽयं घट इति ज्ञानं यदि स्मरणादिरूपं तदा तदिन्द्रियजन्यत्वाभावादेव नापत्तिर्यदि चाक्षुषं तदा चक्षुःसंयोगावश्यकतेति नापत्तिसम्भवः तथापि अलौकिकचाक्षुषमादाय आपत्तिर्बोध्या ॥ **विशेषणत्वविवक्षणेनेति** ॥ विशेष्यतासमानकालीनतद्विशेष्यताव्यावर्तकत्वेनेत्यर्थः अन्यथा यत्र धूमचक्षुःसंयोगे सत्यपि धूमस्मरणमूलकं धूमकालीनो घट इति धूमांशे अलौकिकचाक्षुषं तदा धूमत्वप्रत्यासत्त्या चक्षुषा सकलधूमविषयकचाक्षुषा-

आसत्तिः प्रत्यासत्तिरित्यर्थः । तथा च सामान्यलक्षण इत्यत्र लक्षणशब्दस्य विषयोऽर्थः तेन सामान्यविषयकं ज्ञानं प्रत्यासत्तिरित्यर्थो लभ्यते । ननु चक्षुःसंयोगादिकं विनापि

## प्रभा.

[1]किंतु सामान्यज्ञानमिति योजना यथाश्रुते सामान्यस्य प्रत्यासत्तित्वनिराकरण एव उक्तदोषाणां उपयोगित्वेन ज्ञानस्य प्रत्यासत्तित्वे अनुपयोगात् असाङ्गत्यापत्तेः अव्यवधानरूपासत्तेः प्रकृतानुपयोगित्वान्मूलस्थासत्तिपदस्यार्थमाह ॥ मुक्तावल्यां प्रत्यासत्तिरित्यर्थ इति ॥ सामान्यज्ञानस्य सामान्यलक्षणापदार्थत्वमुपपादयितुं लक्षणापदार्थमाह ॥ तथाचेति ॥ सामान्यलक्षण इत्यत्रेति ॥ घटकत्वं सप्तम्यर्थः । तस्य लक्षणशब्देऽन्वयः । तथाच सामान्यलक्षण इति वाक्यघटकलक्षणशब्दस्य विषयोऽर्थः फलितः ॥ तेनेति ॥ लक्षणशब्दस्य विषयार्थकत्वेनेत्यर्थः ॥ सामान्यविषयकं ज्ञानमित्यादि ॥ निर्विकल्पकसाधारणं स्मृतिसाधारणं च सामान्यविषयकज्ञानत्वं प्रत्यासत्तितावच्छेदकमित्यर्थः । तथाच निर्विकल्पकोत्तरं स्मरणोत्तरं च सामान्यलक्षणाजन्यज्ञानमेव तन्मते इष्टमिति भावः । अत्र समवायसंबन्धेन तद्धर्माश्रययावद्व्यक्तिविषयकप्रत्यक्षत्वावच्छिन्नं प्रति समवायसंबन्धेन तद्धर्मविषयकज्ञानत्वेन कारणमिति कार्यकारणभावः । अथवा सामान्यविषयकं ज्ञानमिति स्वविषयसामान्यवत्त्वसंबन्धेन ज्ञानत्वावच्छिन्नं प्रत्यासत्तिरित्यर्थः । एवंच स्वीयप्रकारताश्रयतद्धर्मवत्त्वसंबन्धेन प्रत्यक्षत्वावच्छिन्नं प्रति स्वीयविषयताश्रयतद्धर्मवत्त्वसंबन्धेन ज्ञानत्वावच्छिन्नं प्रत्यासत्तिविधया कारणमित्यर्थः फलितः । नचैतत्पक्षे चैत्रस्य घटत्वज्ञानदशायां मैत्रस्य स्वीयप्रकारताश्रयघटत्ववत्त्वसंबन्धेन प्रत्यक्षापत्तिवारणाय तादृशसंबन्धेन तत्पुरुषीयप्रत्यक्षत्वावच्छिन्नं प्रति स्वनिरूपितविषयताश्रयघटत्ववत्त्वसंबन्धेन तत्पुरुषीयज्ञानत्वेन हेतुत्वस्य वाच्यतया पुरुषभेदेनानन्तकार्यकारणभावापत्तिरिति वाच्यम् । आत्मनिष्ठप्रत्यासत्त्या कार्यकारणभावाभिप्रायकपक्षे यावद्व्यक्तिविषयकत्वस्य कार्यतावच्छेदककोटिप्रवेशेन सामान्यविषयकत्वस्य कारणतावच्छेदककोटिप्रवेशेन च विषयभेदेन कार्यकारणभावस्यावश्यकतया विषयापेक्षया पुरुषाणामल्पत्वेन पुरुषभेदेनानन्तकार्यकारणभावाभिप्रायकद्वितीयकल्पस्यैव युक्तत्वादित्यास्तां विस्तरः । ननु मूले तदिन्द्रियजेत्याद्यसङ्गतं मनःकरणकघटत्वप्रकारकसकलघटविशेष्यकप्रत्यक्षस्य मनःकरणकघटत्वप्रकारतानिरूपितयत्किञ्चिद्घटनिष्ठलौकिकविशेष्यताशालिप्रत्यक्षाप्रसिद्ध्या तत्सामग्र्याः सुतरामप्रसिद्धत्वात् अनुपपत्तेरित्याक्षेपं तादृशमूलस्य बहिरिन्द्रियकरणकसामान्यलक्षणाजन्यज्ञान एवोक्तसामग्र्या उपयोगित्वपरत्वस्वीकारेण वारयितुं मूले इन्द्रियशब्दस्य मनस्त्वान्येन्द्रियविभाजकोपाध्यवच्छिन्नपरत्वं स्वीकृत्य विशि-

## दिनकरीयम्.

न च तत्र स्वसमवायिसमवायादिसम्बन्धेन घटत्वादेरेवासत्तितया पूर्वोक्तदोषोऽपि न सम्भवतीति वाच्यम्। स्वसमवायिसमवायादिना घटत्वं कपालादौ यदा न ज्ञातं किं तु तद्घट एव समवायादिना ज्ञातं तदुत्तरमपि तद्घटाश्रयकपालादीनां ज्ञानस्य सर्वानुभवसिद्धस्य घटत्वप्रत्यासत्त्या उपपादनासम्भवात् । एवं ज्ञायमानसामान्यस्य प्रत्यासत्तित्वे चैत्रीयज्ञानविषयसामान्यप्रत्यासत्त्या मैत्रस्य तदाश्रयप्रत्यक्षापत्तिभिया तत्पुरुषीयत्वनिवेशस्यावश्यकतया गौरवं ज्ञानस्य प्रत्यासत्तित्वे तु पुरुषनिष्ठप्रत्यासत्त्या हेतुत्वान्न तत्पुरुषीयत्वनिवेश इति लाघवमित्यपि बोध्यम ॥ तेन सामान्यविषयकज्ञानमिति ॥ इन्द्रियसम्बद्धविशेष्यकं सामान्यज्ञानमित्यर्थः यद्वा सामान्यविषयकं ज्ञानमित्यर्थः । सामान्यविषयकज्ञानत्वं प्रत्यासत्तितावच्छेदकमिति यावत् । तथा चात्र कल्पे इन्द्रियसम्बद्धविशेष्यकत्वप्रकारकत्वतदिन्द्रियजन्यत्वानि ज्ञानस्य विशेषणानि नोपादेयानि । पूर्वमते तु बहिरिन्द्रियजन्यत्वादेर्निवेशेन इन्द्रियभेदेन कार्यकारण-

## रामरुद्रीयम्.

पत्तेरिति भावः । ननु तद्घटवान् तद्व्यक्तिमान्वा कपाल इति ज्ञानस्य कपालांशे घटत्वप्रकारकत्वस्य प्रत्यक्षासिद्धत्वेऽपि उत्तरकालीनकार्यानुरोधेन तत्र तदनुमेयमित्यस्वरसात्सामान्यप्रत्यासत्तित्वपक्षे तत्पुरुषीयनिवेशप्रयुक्तगौरवमाह ॥ एवमिति ॥ पुरुषनिष्ठप्रत्यासत्त्या ॥ समवायेन ॥ इन्द्रियसम्बद्धेति ॥ नन्वे-

सामान्यज्ञानं यत्र वर्तते तत्र सकलघटादीनां चाक्षुषप्रत्यक्षं स्यादत आह ॥ तादिति ॥ अस्यार्थः यदा बहिरिन्द्रियेण सामान्यलक्षणया ज्ञानं जननीयं तदा यत्किञ्चिद्धर्मिणि तत्सामान्यस्य तदिन्द्रियजन्यज्ञानस्य सामग्र्यपेक्षिता सा च सामग्री चक्षुःसंयोगालोकसं-

प्रभा.

धर्थमाह ॥ अस्यार्थ इति ॥ बहिरिन्द्रियेणेति ॥ मनस्त्वान्येन्द्रियाविभाजकोपाधिविशिष्टेने-त्यर्थः । तृतीयार्थः करणत्वं तस्य ज्ञाने अन्वयः ॥ ज्ञानं जननीयमिति ॥ मानसत्वान्यप्रत्यक्षप्रमिति-विभाजकोपाध्यवच्छिन्नं सम्पादनीयमित्यर्थः ॥ यत्किञ्चिद्धर्मिणीत्यादि ॥ घटादिरूपयत्किञ्चिद्धर्मिनिष्ठ-लौकिकविशेष्यताशालिघटत्वादिप्रकारकमानसत्वान्यप्रत्यक्षप्रमितिविभाजकोपाध्यवच्छिन्नजनकसामग्री सामा-न्यलक्षणाजन्यनिरुक्तप्रमितिविभाजकोपाध्यवच्छिन्नपूर्वमवश्यमपेक्षितेत्यर्थः । तथाच सामान्यलक्षणाजन्यस्वा-यप्रकारताश्रयघटत्वादिमत्त्वसंबन्धेन चाक्षुषत्वावच्छिन्नपूर्वं घटत्वादिनिष्ठप्रकारतानिरूपितयत्किंचिद्घटनिष्ठ-लौकिकविशेष्यताशालिचाक्षुषजनकसामग्री एवं तादृशसंबन्धेन स्पार्शनादिपूर्वं निरुक्तलौकिकविशेष्यताशा-लिस्पार्शनादिसामग्री अवश्यं सम्पादनीया नतु तादृशसंबन्धेन मानसत्वावच्छिन्नपूर्वं एतादृशलौकिकविशेष्य-ताशालिमानससामग्री अपेक्षिता तादृशमानसस्यैवाप्रसिद्धत्वेन तत्सामग्र्याः सुतरां अप्रसिद्धत्वादिति तात्प-र्यार्थः । तादृशसामग्री केत्याशङ्कायामाह ॥ साचेति ॥ अवधारणार्थकचशब्दः संयोगादिकमित्युत्तरं योज्यः ॥ चक्षुःसंयोगालोकसंयोगेति ॥ महत्त्वावच्छिन्नोद्भूतरूपावच्छिन्नालोकसंयोगावच्छिन्नचक्षुःसंयोगेत्यर्थः । आदिपदान्महत्त्वावच्छिन्नोद्भूतस्पर्शावच्छिन्नत्वक्संयोगादेः परिग्रहः । तथाचैतन्मते सामान्य-लक्षणाजन्यघटत्वादिप्रकारकचाक्षुषत्वादिव्यापकं घटत्वादिप्रकारतानिरूपितघटत्वाद्याश्रयकिञ्चिन्निष्ठलौकिक-विशेष्यताशालिचाक्षुषत्वादिकमिति व्यापकधर्मावच्छिन्ने आपादकसामग्र्यभावेन व्यापकधर्मावच्छिन्नानुत्प-त्तौ सुतरां व्याप्यधर्मावच्छिन्नानुत्पत्तिरिति नियमात् सामान्यलक्षणाजन्यघटत्वादिप्रकारकचाक्षुषादिपूर्वं व्यापकधर्मावच्छिन्नोत्पादकसामग्र्याः नियमेन सत्त्वमाविष्कृतं । सामान्यलक्षणाजन्यघटत्वादिप्रकारकमान-सत्वव्यापकं न घटत्वादिप्रकारतानिरूपितघटत्वाद्याश्रयकिञ्चिन्निष्ठलौकिकविशेष्यताशालिमानसत्वं तादृशमान-

दिनकरीयम्.

भावभेदकल्पनेन च गौरवमिति भावः । एतन्मते च निर्विकल्पकसाधारणं स्मरणसाधारणं च सामान्यज्ञानमात्रं प्रत्यासत्तिः तथा च घटत्वप्रकारकप्रत्यक्षत्वं कार्यतावच्छेदकं घटत्वज्ञानत्वं च कारणतावच्छेदकं स्वप्रकारीभूतघटत्वाश्रयत्वं कार्यतावच्छेदकः सम्बन्धः स्वविषयघटत्वाश्रयत्वं च कारणता-वच्छेदकः सम्बन्धः चक्षुःसंयोगादिशून्यकाले पूर्वोक्तातिप्रसङ्गस्य वक्ष्यमाणतदिन्द्रियजन्यत्वादित्यादिनैव वारणादिति ध्येयम् । अणुत्वज्ञानमात्रेणैव सकलाणुगोचरमानसबोधोदयादाह ॥ बहिरिति ॥ आलोकसं-

रामरुद्रीयम्.

तत्कल्पे सामान्यज्ञानमात्रस्य प्रत्यासत्तित्वेऽपि न दोषः इन्द्रियसम्बन्धाभावदशायां सामान्यप्रत्यासत्त्या ज्ञा-नोत्पादस्य मूलकृतैव वारणीयत्वादित्यभिप्रायेणाह ॥ यद्वेति ॥ एतत्कल्पे लाघवान्तरमपि प्रदर्शयति ॥ तथाचेति ॥ कल्पनेन चेति ॥ चकारेण पूर्वोपदर्शितविशेषणत्रयघटितत्वेन कारणतावच्छेदकशरीरगौर-वस्य समुच्चयः यद्यपि सामान्यप्रकारकत्वस्थाने सामान्यविषयकत्वप्रवेशो ज्ञानप्रत्यासत्तित्वपक्षेऽप्यविशिष्ट ए-व तथापि त्रितयघटितत्वं कारणतावच्छेदकस्येति दर्शयितुमेतदुत्कीर्तनमिति ध्येयम् । निर्विकल्पस्मरणसा-धारणत्वं स्वान्तर्गतनिर्विकल्पकादिकत्वं इदं च सामान्यज्ञानमात्रशब्दार्थे सामान्यज्ञानसामान्ये विवक्षितं निर्ग-लितकार्यतावच्छेदककारणतावच्छेदकधर्मसंबन्धानेतन्मतानुसारेण दर्शयति ॥ तथाचेति ॥ सामान्यल-क्षणाजन्यप्रत्यक्षे नियमेन घटत्वस्य प्रकारतया भानोपपत्तये घटत्वप्रकारकत्वस्य कार्यतावच्छेदकघटकतया उपादानम् । न चैवमपि प्रत्यक्षे सन्निकर्षं विना भानासम्भवाद्घटत्वे सामान्यप्रत्यासत्त्यभावात्कथं घटत्वस्य स्मरणादिना सामान्यज्ञानेन जन्ये प्रत्यक्षे भानमिति वाच्यम् । ज्ञानप्रत्यासत्तेस्तत्र सत्त्वात् ॥ स्वकार-

योगादिकं तेनान्धकारादौ चक्षुरादिना तादृशं ज्ञानं न जन्यते ॥ ६४ ॥

**विषयी यस्य तस्यैव व्यापारो ज्ञानलक्षणः ।**

ननु ज्ञानलक्षणा प्रत्यासत्तिर्यदि ज्ञानरूपा सामान्यलक्षणाऽपि ज्ञानरूपा तदा तयोर्भेदो न स्यादत आह ॥ **विषयीति** ॥ सामान्यरूपा प्रत्यासत्तिर्हि तदाश्रयस्य ज्ञानं जनयति ।

**प्रभा.**

सस्यैवाप्रसिद्धत्वादतः व्यापकधर्मावच्छिन्नोत्पादकसामग्र्या अप्रसिद्धत्वान्न तादृशमानसे सामग्र्यन्तरापेक्षेत्यर्थं हृदि निधाय चाक्षुषादावेव तादृशसामग्र्या नियमेन सत्त्वमाविष्कृतं । ननु सामान्यलक्षणजन्यज्ञाने उक्तसामग्र्या अपि कारणत्वमभिप्रेतं अन्यथासिद्धत्वात् । अतः सामान्यलक्षणाया नेन्द्रियभेदेन कार्यकारणभावप्रसक्तिरिति भावः ॥ ६४ ॥

**भेदो न स्यादिति** ॥ सामान्यज्ञानत्वरूपप्रत्यासत्तितावच्छेदकस्य एकत्वादिति भावः ॥ **सामान्यज्ञानरूपा प्रत्यासत्तिर्हीत्यादि** ॥ स्वप्रकारीभूतसामान्यवत्त्वसंबन्धेन प्रत्यक्षं प्रति स्वविषय-

**दिनकरीयम्.**

योगादिकमित्यादिना दोषाभावपरिग्रहः ॥ **न जन्यत इति** ॥ अयमाशयः यदा घटे चक्षुःसन्निकर्षादिघटिता चाक्षुषादिसामग्री तदुत्तरक्षणे घट इति चाक्षुषं तदा सैव सामान्यलक्षणा तदोत्तरक्षणे सकलघटविषयकं ज्ञानं न जन्यत इति प्राचीनमते क्षणैकविलम्बः कल्प्यते तत्र च मानाभावः यदैव घट इति चाक्षुषमुत्पद्यते तदैव सन्निकृष्टघटांशे लौकिकमन्यघटांशेऽलौकिकमित्यभ्युपगमात्तथा च सामान्यलक्षणाजन्यघटत्वप्रकारकचाक्षुषत्वस्य व्यापकं घटत्वप्रकारकलौकिकचाक्षुषत्वमिति फलितम् । तथा च चक्षुःसन्निकर्षादिशून्यकाले व्यापकधर्मावच्छिन्नजनकसामग्र्याः सहकारिण्या विरहादेव न चाक्षुषं सामान्यलक्षणया ज्ञानमिति ॥ ६४ ॥

**यदि ज्ञानरूपेति** ॥ अत्रत्यो यदिशब्दः सामान्यलक्षणाऽपीत्युत्तरं योज्यः । सामान्यलक्षणास्वीकारे

**रामरुद्रीयम्.**

**णीभूतेति** ॥ एतच्चापाततस्तथासति घटत्वसामान्यलक्षणादिजन्यप्रत्यक्षे निखिलघटादिभाननियमानुपपत्तेः किंत्वलौकिकविषयतैव कार्यतावच्छेदकसम्बन्धः सन्निकृष्टघटांशे च विषयताद्वयमुपगम्यते प्रयोजकसत्त्वादिति मन्तव्यम् । ननु सामान्यस्य प्रत्यासत्तित्वनये पूर्वोक्तरीत्या कार्यकारणभावे लाघवसत्त्वेऽपि सामान्यलक्षणप्रत्यासत्त्या तदिन्द्रियजन्यप्रत्यक्षं प्रति तदिन्द्रियजन्यतद्धर्मप्रकारकलौकिकप्रत्यक्षस्य नानाकारणघटितगुरुभूतसामग्र्याः तत्सहकारित्वं कल्पनीयमितीन्द्रियभेदेन सामान्यप्रत्यासत्तिजन्यप्रत्यक्षे गुरुतरसामग्रीकारणताकल्पनस्यावश्यकतया नैतन्मते लाघववार्तापि । न च प्राचीनमते पुरुषभेदेन अनन्तकार्यकारणभावः कल्पनीयः नवीनमते तदभावाल्लाघवमिति वाच्यम् । एतन्मतेऽपि सामग्र्यास्तत्पुरुषीयचक्षुःसंयोगादिघटितत्वेन लौकिकसम्बन्धेन तत्पुरुषीयचाक्षुषं प्रति तेन सम्बन्धेन तत्पुरुषीयचक्षुःसंयोगादिघटितसामग्र्याः कारणताकल्पनस्यावश्यकतया तादृशलाघवस्याप्यभावात् अन्यथा पुरुषान्तरीयचक्षुःसंयोगादिघटितसामग्रीतः पुरुषान्तरस्य निमीलितनयनस्यापि सामान्यज्ञानवतः सामान्यप्रत्यासत्तिजन्यचाक्षुषापत्तेरित्याशङ्कामाशयवर्णनेन निराकरोति ॥ **अयमाशय इति** ॥ **चाक्षुषादिसामग्रीति** ॥ विशिष्टचाक्षुषादिसामग्रीत्यर्थः । तेन निर्विकल्पकस्यापि लोपः अन्यथा तदुत्तरक्षणे घट इति विशिष्टचाक्षुषानुपपत्तेरिति ध्येयम् ॥ **इत्यभ्युपगमादिति** ॥ इदं च मानाभावे हेतुः ॥ **व्यापकधर्मावच्छिन्नेति** ॥ अयं भावः । व्याप्यधर्मावच्छिन्नस्योत्पत्तौ व्यापकधर्मावच्छिन्नसामग्र्याः प्रयोजकत्वस्य क्लृप्ततया तत एव तत्पुरुषीयचक्षुःसंयोगादिघटितसामग्रीविरहदशायां तत्पुरुषीयसामान्यप्रत्यासत्तिजन्यघटत्वादिप्रकारकचाक्षुषापादनं न सम्भवति नव्यमते अतिरिक्तकार्यकारणभावस्य अकल्पनाल्लाघवमक्षतमेवेति ॥ ६४ ॥

ज्ञानरूपा यदीत्यत्र यदिशब्दस्य पूर्वान्वयित्वं न सम्भवति ज्ञानलक्षणाया ज्ञानरूपतायाः सर्ववादिसिद्धत्वादतस्तद्भ्रमवारणायाह ॥ **अत्रत्य इति** ॥ वक्ष्यमाणस्य व्याख्येयग्रन्थार्थत्वाभावादाह ॥ **अयम-**

ज्ञानलक्षणाप्रत्यासत्तिस्तु यद्विषयकं ज्ञानं तस्यैव प्रत्यासत्तिः । अत्रायमर्थः । प्रत्यक्षे सन्निकर्षं विना भानं न सम्भवति । तथा च सामान्यलक्षणां विना धूमत्वेन सकलधूमानां वह्नित्वेन सकलवह्नीनां च भानं कथं भवेत् तदर्थं सामान्यलक्षणा स्वीक्रियते । नं च सकलवह्निधूमभानाभावे का क्षतिरिति वाच्यम् । प्रत्यक्षधूमे वह्निसम्बन्धस्य गृहीतत्वात् अन्यधूमस्य चानुपस्थितत्वात् धूमो वह्निव्याप्यो नवेति संशयानुपपत्तेः । मन्मते तु सामान्यलक्षणया सकलधूमोपस्थितौ कालान्तरीयदेशान्तरीयधूमे वह्निव्याप्यत्वसन्देहः सम्भवति । न च सामान्यलक्षणास्वीकारे प्रमेयत्वेन सकलप्रमेयज्ञाने जाते सार्वज्ञ्यापत्तिरिति वाच्यम् । प्रमेयत्वेन सकलप्रमेयज्ञाने जातेऽपि विशिष्य सकलपदार्थानामज्ञातत्वेन सार्वज्ञ्याभावात् । एवं ज्ञानलक्षणाया अस्वीकारे सुरभि चन्दनमिति ज्ञाने सौरभभानं कथं स्यात् । यद्यपि सामा-

## प्रभा.

सामान्यवत्त्वेन सामान्यप्रत्यासत्तेर्हेतुत्वादिति भावः ॥ **यद्विषयकं ज्ञानमित्यादि** ॥ तथाच अलौकिकविषयतासंबन्धेन प्रत्यक्षं प्रति विषयतासंबन्धेन ज्ञानप्रत्यासत्तेर्हेतुत्वादिति भावः एवंच उभयोः प्रत्यासत्त्योः ज्ञानस्वरूपत्वेऽपि फलवैचित्र्यात् प्रत्यासत्तितावच्छेदकसंबन्धभेदेन कार्यकारणभावद्वयं स्वीकार्यमिति निगूढाभिप्रायः । अत्र एककार्यकारणभावेनापरकार्यकारणभावस्य चारितार्थ्यं निराकर्तुमभिप्रायं वर्णयति ॥ **अत्रेति** ॥ सामान्यलक्षणाज्ञानलक्षणोभयत्वावच्छिन्न इत्यर्थः घटकत्वं सप्तम्यर्थः तस्य च सामान्यलक्षणा स्वीक्रियत इत्यत्र सामान्यलक्षणायामन्वयः ॥ **अयमर्थ इति** ॥ अयं भाव इत्यर्थः ॥ **प्रत्यक्षे सन्निकर्षं विनेति** ॥ प्रत्यक्षनिरूपितविषयत्वं सन्निकर्षं विना स्थातुं नार्हतीत्यर्थः । तथाच सन्निकर्षस्य प्रत्यक्षनिरूपितविषयत्वव्यापकत्वेन व्यापकीभूतसन्निकर्षाभावे व्याप्यभूतविषयत्वस्यापि अभावप्रसङ्गादिति भावः । अत्रेष्टापत्तिं वारयितुमाह ॥ **धूमत्वेनेत्यादि** ॥ अन्यथेत्यादिः ॥ अन्यथा सकलधूमवह्निषु सन्निकर्षाभावे कथं सर्वे धूमाः सर्वे वह्नय इत्याकारकसकलधूमविषयकं प्रत्यक्षं सकलधूमादिषु तद्विषयत्वं च अनुभवसिद्धं तत्कथं निर्वहतीत्यर्थः । तथाचानुभवविरोधान्नेष्टापत्तिर्वक्तुं शक्येति भावः । तादृशानुभवानङ्गीकारे दोषं वक्तुं आक्षिपति ॥ **नच सकलेति** ॥ **प्रत्यक्षधूमे** सन्निकर्षधूमे ॥ **वह्निसंवन्धस्य** वह्निसामानाधिकरण्यस्य ॥ **गृहीतत्वादिति** ॥ चक्षुरादिना निर्णीतत्वादित्यर्थः ॥ **अन्यधूमस्य** असन्निकर्षधूमस्य अवधारणार्थकश्चशब्दः अनुपस्थितत्वादित्युत्तरं योज्यः । एतावता सामान्यलक्षणायाः कारणत्वानङ्गीकारे दोषं प्रदर्श्य ज्ञानलक्षणायाः कारणत्वानङ्गीकारे दोषमाह ॥ **एवमिति** ॥ **सौरभभानं कथं स्यादिति** ॥ सौरभस्य चाक्षुषनिरू-

## दिनकरीयम्.

बीजमाह ॥ **अत्रेति** ॥ **अयमर्थः** अयमभिप्रायः ॥ **भानं** विषयता ॥ **न सम्भवतीति** ॥ प्रत्यक्षविषयतायाः सन्निकर्षाश्रयत्वव्याप्यत्वादिति भावः ॥ **वह्निसम्बन्धस्य गृहीतत्वादिति** ॥ तथा च प्रत्यक्षधूमे व्याप्तेर्निर्णयान्न तद्विशेष्यको व्याप्यत्वसंशयः सम्भवतीति भावः ॥ **अनुपस्थितत्वादिति** ॥ तथा च धर्मिज्ञानाभावान्न तद्विशेष्यकोऽपि व्याप्यत्वसंशयः सम्भवतीति भावः । ज्ञानलक्षणास्वीकारे बीजमाह ॥ **एवमित्यादिना** ॥ **कथं स्यादिति** ॥ चन्दनखण्डस्य चाक्षुषे जायमाने उपस्थितसौरभभानं न स्यात् सौरभांशे चक्षुःसन्निकर्षाभावादित्यर्थः । सौरभत्वप्रकारकलौकिकप्रत्यक्षसामग्र्याः सहकारिण्या विरहेण सौरभ-

## रामरुद्रीयम्.

भिप्राय इति ॥ **सन्निकर्षाभावादिति** ॥ योग्यवृत्तित्वविशिष्टसन्निकर्षाभावादित्यर्थः । तेन चन्दने चक्षुःसंयोगदशायां सौरभेऽपि चक्षुस्संयुक्तसमवायस्य आवश्यकत्वेऽपि न क्षतिः । अथवा सुरभि चन्दनमिति भ्रमात्मकप्रत्यक्षाभिप्रायेण इदमुक्तमिति मासङ्गतिः । ननु सुरभि चन्दनमिति प्रत्यक्षे सौरभत्वप्रकारकज्ञान इव सामान्यलक्षणप्रत्यासत्त्यैव सौरभभानं सम्भवतीत्याशङ्कां निराकरोति ॥ **सौरभस्येति** ॥ ननु मूले यत्र

न्यलक्षणयाऽपि सौरभभानं सम्भवति तथापि सौरभत्वजातिभानं ज्ञानलक्षणया । एवं यत्र धूमत्वेन धूलीपटलं ज्ञातं तत्र धूलीपटलस्यानुव्यवसाये भानं ज्ञानलक्षणया ॥

प्रभा.

पितविषयत्वं न स्यादित्यर्थः तथाच सौरभेण सह चक्षुषः लौकिकसन्निकर्षाभावेन सौरभत्वप्रकारतानिरूपितसौरभत्वाश्रयकिंचिन्निष्ठलौकिकविशेष्यताशालिचाक्षुषाप्रसिद्धया तादृशचाक्षुषजनकसामग्र्याः सुतरामप्रसिद्धत्वेन तत्समानकालीनसामान्यप्रत्यासत्तेरभावात् सौरभे मानसान्यप्रत्यक्षानिरूपितविषयत्वं न संभवतीति भावः । ननु सामान्यलक्षणाजन्यतद्धर्मनिष्ठप्रकारतानिरूपिततद्धर्माश्रययावन्निष्ठविशेष्यताशालिचाक्षुषत्वाद्यवच्छिन्नं प्रति तद्धर्मनिष्ठप्रकारतानिरूपिततद्धर्माश्रययत्किंचिन्निष्ठलौकिकविशेष्यताशालिचाक्षुषादि–तद्धर्मावच्छिन्नप्रकारतानिरूपिततद्धर्मसमवायसमवायिकिंचिन्निष्ठलौकिकविशेष्यताशालिचाक्षुषयोः अन्यतरजनकसामग्र्या एव सहकारित्वं स्वीक्रियते एवंच सौरभत्वप्रकारतानिरूपितसौरभत्वाश्रयकिंचिन्निष्ठलौकिकविशेष्यताशालिचाक्षुषादेरप्रसिद्धत्वेऽपि सौरभत्वावच्छिन्नप्रकारतानिरूपितसौरभत्वसमवायसमवायिकिंचिन्निष्ठलौकिकविशेष्यताशालिचाक्षुषादेः प्रसिद्धत्वेनान्यतरसामग्र्याः प्रसिद्धत्वात्तत्समानकालीनसौरभत्वज्ञानरूपसामान्यप्रत्यासत्त्यैव सुरभि चन्दनमिति चाक्षुषे सौरभत्वप्रकारेण सकलसौरभत्वस्य विषयत्वं संभवतीति न ज्ञानलक्षणापेक्षेत्याक्षिपति ॥ **यद्यपीत्यादिना** ॥ **सामान्यलक्षणयापीति** ॥ सामान्यलक्षणयैवेत्यर्थः ॥ **सौरभभानमिति** ॥ चाक्षुषे सौरभत्वप्रकारेण सकलसौरभस्य विषयत्वं संभवतीत्यर्थः तथाच ज्ञानलक्षणा न स्वीकार्येति भावः ॥ **सौरभत्वजातिभानमिति** ॥ सुरभि चन्दनमिति चाक्षुषे सौरभत्वभानमित्यर्थः । जातिग्रहणं तादृशचाक्षुषे सौरभत्वस्य स्वरूपतो विषयत्वसंरक्षणाय । तथाच तादृशचाक्षुषे सौरभत्वस्य स्वरूपत एव भानात् तस्य सामान्यप्रत्यासत्त्या अनिर्वाहादिति भावः । एतावता स्थलविशेषे जातेः स्वरूपतो भाननिर्वाहार्थं ज्ञानलक्षणाया आवश्यकत्वमुपपाद्य इदानीं स्थलविशेषे जात्यतिरिक्तपदार्थस्य किंचिद्रूपेण भाननिर्वाहार्थमपि ज्ञानलक्षणाया आवश्यकत्वमुपपादयति ॥ **एवमित्यादिना** ॥ **अनुव्यवसाये भानमिति** ॥ धूमत्वेन धूलीपटलविषयकज्ञानप्रकारकधूमज्ञानवानहमित्याकारकप्रत्यक्षानिरूपितविषयत्वमित्यर्थः ॥ **ज्ञानलक्षणयेति** ॥ ज्ञानलक्षणयैवेत्यर्थः । धूलीपटलेन सह मनसः लौकिकसन्निकर्षाभावात् स्वविषयधूमत्ववत्त्वसंबन्धेन सामान्यलक्षणायास्तत्रावर्तमानत्वाच्चेति भावः । केचित्तु सौरभत्वस्य भानमिति स्वरूपतः सौरभत्वस्य भानमित्यर्थः ज्ञानलक्षणया ज्ञानलक्षणयैव तदानीं सौरभत्वांशे धर्मान्तरस्याग्रहीततया सामान्यलक्षणया तद्भानानिर्वाहादिति भावः । ननु धर्मान्तरस्य सौरभत्वांशे अग्रहेऽपि सौरभत्वसामान्यलक्षणयैव सौरभत्वादेर्भानमस्तु सौरभत्वप्रकारकसौरभविशेष्यकत्वस्यैव सामान्यलक्षणायाः कार्यतावच्छेदकत्वादिति चेन्न सौरभत्वविषयताप्रयोजिकायाः सामान्यलक्षणायाः स्वविषयसौरभत्वादिरूपसंबन्धस्य सौरभत्वे अभावेन सामान्यलक्षणया तद्भानानिर्वाहात् सौरभत्वसामान्यलक्षणायाः कार्यतावच्छेदके सौरभत्वप्रकारकत्वनिवेशे प्रयोजनाभावाच्च ।

दिनकरीयम्.

त्वसामान्यलक्षणयाऽपि सौरभभानं न सम्भवतीति भावः । सुरभि चन्दनमित्यादौ सौरभादेर्भानं सौरभत्वादिसामान्यलक्षणयैव सम्भवति सौरभत्वप्रकारकलौकिकप्रत्यक्षसौरभत्वावच्छिन्नप्रकारकप्रत्यक्षान्यतरसामग्री-सहकारेणैव तस्याः फलजनकत्वाङ्गीकारात् प्रकृते च द्वितीयसामग्र्याः सहकारिण्याः सत्त्वादित्यभिप्रायेणाह ॥ **यद्यपीति** ॥ **सौरभत्वस्य भानमिति** ॥ स्वरूपतः सौरभत्वस्य भानमित्यर्थः ॥ **ज्ञानलक्षणया**

रामरुद्रीयम्.

पीत्याद्याशङ्का न सङ्गच्छते उक्तरीत्या सामान्यलक्षणया सौरभभानस्यासम्भवादतः तद्भावमाह ॥ **सुरभीत्यादि** ॥ अत्र च सौरभत्वावच्छिन्नप्रकारकेत्यपपाठः । ज्ञानलक्षणप्रत्यासत्त्यनङ्गीकारे सौरभप्रकारकप्रत्यक्षसामग्र्या एव उपादातुं शक्यत्वात् । किंतु सौरभत्वप्रकारकप्रत्यक्षेत्येव पाठः । सौरभत्वप्रकारकालौकिकमानससामग्रीसत्त्वेन एतादृशपाठे अनुपपत्त्यभावादिति ध्येयम् ॥ **स्वरूपत इति** ॥ प्रमेयत्वादि-

**योगजो द्विविधः प्रोक्तो युक्तयुञ्जानभेदतः ॥ ६५ ॥**

**योगज इति** ॥ योगाभ्यासजनितो धर्मविशेषः श्रुतिपुराणादिप्रतिपाद्य इत्यर्थः। युक्तयुञ्जानरूपयोगिद्वैविध्याद्धर्मस्यापि द्वैविध्यमिति भावः ॥ ६५ ॥

## प्रभा.

नच ज्ञानलक्षणायाः कारणत्वान्तरकल्पने गौरवभियैव सामान्यप्रकारकत्वस्य कार्यतावच्छेदके प्रवेश इति शङ्क्यं विशेषणज्ञानहेतुतयैव निर्वाहे ज्ञानलक्षणायाः कारणत्वान्तरकल्पनाविरहादिति । ननु विशेषणज्ञानजन्यतावच्छेदकं विशिष्टबुद्धित्वं ज्ञानलक्षणायास्तु विशिष्टप्रत्यक्षत्वं इति न क्लृप्तेन निर्वाहः एवं यत्र ज्ञानलक्षणया स्वविषयमुख्यविशेष्यकं मानसं तत्र विशेषणज्ञानकारणतया न निर्वाह इत्यत आह एवमित्याहुः। अस्मिन्कल्पे सौरभत्वसामान्यलक्षणायाः कार्यतावच्छेदककोटौ सौरभत्वानिवेशे प्रयोजनाभावाच्चेति दूषणमापाततः सौरभत्वादौ प्रत्यासत्तितावच्छेदकसंबन्धेन सामान्यप्रत्यासत्त्यभावेन तादृशप्रत्यक्षनिरूपितविषयत्वासंभवस्य दर्शितत्वात् प्रयोजनाभावेन तस्य कार्यतावच्छेदककोटयप्रवेशकथनं तदुपरि ज्ञानलक्षणायाः कारणत्वान्तराकल्पनरूपलाघवप्रमाणेन सौरभत्वादिप्रकारकत्वस्य कार्यतावच्छेदकप्रवेशाशङ्कनं तत्परिहाराय विशेषणज्ञानहेतुतया ज्ञानलक्षणायाश्चारितार्थ्यमङ्गीकृत्य पृथक्कारणत्वानङ्गीकारप्रयुक्तलाघवस्थापनं च निर्युक्तिकमेवं धूलीपटलं धूमत्वेन यत्र ज्ञातमित्यादिमुक्तावलीग्रन्थावतरणाय नन्वित्यादिना विशेषणज्ञानकार्यतावच्छेदकं विशिष्टबुद्धित्वं ज्ञानलक्षणायाः कार्यतावच्छेदकं विशिष्टप्रत्यक्षत्वमिति कार्यतावच्छेदकभेदेन क्लृप्तेन निर्वाहाभावात् । यत्र घटज्ञानानन्तरं घटमुख्यविशेष्यकं मानसं जातं तत्र विशेषणज्ञानहेतुतया

## दिनकरीयम्.

ज्ञानलक्षणयैव । तदानीं सौरभत्वांशे धर्मान्तरस्याग्रहीततया सामान्यलक्षणया तज्ज्ञानानिर्वाहादिति भावः। ननु धर्मान्तरस्य सौरभत्वांशेऽग्रहेऽपि सौरभत्वसामान्यलक्षणयैव सौरभत्वादेर्भानमस्तु सौरभत्वप्रकारकसौरभविशेष्यकत्वस्यैव तत्कार्यतावच्छेदकत्वादिति चेन्न । सौरभत्वादिविषयताप्रयोजिकायाः सामान्यलक्षणायाः स्वविषयसौरभत्वादिमत्त्वरूपसम्बन्धस्य सौरभत्वे अभावेन सामान्यलक्षणया तज्ज्ञानानिर्वाहात् । सौरभत्वसामान्यलक्षणायाः कार्यतावच्छेदके सौरभत्वप्रकारकत्वनिवेशे प्रयोजनाभावाच्च । नच ज्ञानलक्षणायाः कारणत्वान्तरकल्पने गौरवभियैव सामान्यप्रकारकत्वस्य कार्यतावच्छेदके निवेश इति वाच्यम् । विशेषणज्ञानहेतुतयैव निर्वाहे ज्ञानलक्षणायाः कारणत्वान्तरकल्पनाविरहादिति । ननु विशेषणज्ञानजन्यतावच्छेदकं विशिष्टबुद्धित्वं ज्ञानलक्षणायास्तु विशिष्टप्रत्यक्षत्वमिति न क्लृप्तेन निर्वाहः एवं यत्र ज्ञानलक्षणया स्ववि-

## रामरुद्रीयम्.

सामान्यलक्षणयां प्रमेयत्वादिना तज्ज्ञानसम्भवेऽपि स्वरूपतः सौरभत्वभानं ज्ञानलक्षणानङ्गीकारे न सम्भवतीति भावः। धर्मान्तरेत्यत्रान्तरपदं सम्पातायातं सौरभत्वांशे कस्यापि प्रकारतयाऽभानादिति बोध्यम् ॥ **तज्ज्ञानानिर्वाहादिति** ॥ सौरभत्वज्ञानरूपसामान्यप्रत्यासत्तेः सौरभत्वप्रकारतानिरूपितालौकिकविषयतासंसर्गस्य कार्यतावच्छेदकसम्बन्धत्वेऽपि प्रत्यक्षे सन्निकृष्टस्यैव भानमिति नियमेन सौरभत्वे सामान्यप्रत्यासत्तेः कारणतावच्छेदकसम्बन्धेनाभावादिति भावः। अलौकिकविषयतासंबन्धेन प्रत्यक्षत्वावच्छिन्नं प्रत्येव सौरभत्वादिज्ञानस्य कारणता स्वीकार्या सौरभत्वादेः प्रकारतया भानं तु विशेषणज्ञानरूपकारणान्तरबलादेवोपस्थिताबाधितधर्मान्तरभानमपि सामान्यप्रत्यासत्तिजन्यप्रत्यक्षे इष्यत एव प्रत्यक्षसन्निकर्षानाश्रयस्य न भानमिति नियमोऽपि नाङ्गीक्रियत एव घटादिचाक्षुषे पटादेरभानं तु तद्भासककारणाभावादेव सम्भवतीत्याशयेनाह ॥ **कार्यतावच्छेदक इति** ॥ तथाविधसम्बन्ध इत्यर्थः ॥ **विशिष्टप्रत्यक्षत्वमिति** ॥ तत्प्रकारकप्रत्यक्षं प्रति तज्ज्ञानत्वेन कारणत्वमित्यभिप्रायेणेदं तथा च कार्यतावच्छेदकधर्मभेदेन कार्यकारणभावयोर्भिन्नत्वादेकेन परस्यान्यथासिद्धिर्न सम्भवतीति भावः। ननु प्रत्यक्षे ज्ञानप्रत्यासत्तेः कारणताऽनङ्गीकरणीया विशेषणज्ञानकारणतायां तु युक्तिः पूर्वमुपदर्शितैवेत्यत आह ॥ **एवं यत्रेति** ॥ **स्ववि-**

युक्तस्य सर्वदा भानं चिन्तासहकृतोऽपरः ।

**युक्तस्येति** ॥ युक्तस्य तावद्योगजधर्मसहायेन मनसा आकाशपरमाण्वादिनिखिलपदार्थगोचरं ज्ञानं सर्वदैव भवितुमर्हति द्वितीयस्य चिन्ताविशेषोऽपि सहकारीति ॥

इति श्रीविश्वनाथपञ्चाननभट्टाचार्यविरचितायां सिद्धान्तमुक्तावल्यां प्रत्यक्षपरिच्छेदः ॥

## प्रभा.

निर्वाहाभावाच्च ज्ञानलक्षणायाः पृथक्कारणत्वव्यवस्थापनपूर्वकगौरवदर्शनञ्च गगनारविन्दे सौरभ्यविचारतुल्यमितिप्रतिभाति ॥ **चिन्ताविशेषोऽपीति** ॥ चिन्ताविशेषयोगाभ्यासजनितधर्मविशेषोभयसहकृतमनसा युञ्जानस्याकाशपरमाण्वादिसकलपदार्थविषयकमानसप्रत्यक्षं भवतीत्यर्थः । इदमुपलक्षणं यद्यदिन्द्रियस्य यद्यत् योग्यं स्थूलं सूक्ष्मं सन्निकृष्टमसन्निकृष्टं भूतं भव्यं च तत्सर्वमपि योगाभ्यासजनितधर्मविशेषसहकृततत्तदिन्द्रियेणापि गृह्यते । परंतु चक्षुरादियोग्यं त्वगादिना न गृह्यत इत्येवावश्यमङ्गीकार्यम् । अन्यथा तत्राप्यतिशयो दृष्टः स्वस्वार्थानतिलङ्घनात् स्थूलसूक्ष्मादिबुद्धौ स्यात् न रूपे श्रोत्रवृत्तितेति प्रशस्तपादाचार्योक्तिविरोधापत्तेरित्यपि बोध्यं । एतादृशवचनार्थस्तु इत्थं तत्रेति योगाभ्यासजनितधर्मविशेष इत्यर्थः । अपिशब्दः अतिशय इत्युत्तरं योज्यः । अतिशय इति । मनस्सहकारेण आकाशपरमाण्वादिसकलपदार्थविषयकप्रत्यक्षजननसामर्थ्यातिरिक्तसामार्थ्यविशेषोऽपीत्यर्थः । दृष्ट इति । प्रमित इत्यर्थः । प्रामाणिक इति यावत् । कीदृशकार्यजनने उक्तसामर्थ्यविशेष उपयुज्यत इत्यत आह । स्वस्वेत्यादि । स्वस्वार्थानातिलङ्घनादित्यत्र ल्यब्लोपे पञ्चमीविधानात् स्वस्वार्थाननतिलङ्घयेत्यर्थः । तत्तदिन्द्रिययोग्ययावदर्थान्विषयीकृत्येति यावत् । उक्तार्थमेव विवृणोति । स्थूलसूक्ष्मादीति । आदिना सन्निकृष्टासन्निकृष्टातीतादेः परिग्रहः । तथाच स्थूलसूक्ष्मसन्निकृष्टासन्निकृष्टातीतादिविषयकबाह्यतत्तदिन्द्रियजन्यप्रत्यक्ष इति फलितार्थः । एतावता तादृशधर्मे बाह्येन्द्रियेणातीतादितत्तदिन्द्रिययोग्यसकलपदार्थविषयकप्रत्यक्षजननसामर्थ्यविशेषमुपपाद्य इदानीं तादृशधर्मे तत्तदिन्द्रियेण तत्तदिन्द्रियायोग्यसकलपदार्थविषयकप्रत्यक्षजननसामर्थ्यविशेषाभावमुपपादयति । न रूप इति । यत इत्यादिः । रूपे श्रोत्रवृत्तिता न स्यादिति योजना । श्रोत्रवृत्तिता श्रोत्रग्राह्यता । न स्यादिति नास्तीत्यर्थः । तथाच यतः रूपे श्रोत्रग्राह्यता नास्ति अतस्तादृशधर्मे तत्तदिन्द्रियेण तत्तदिन्द्रियायोग्यसकलपदार्थविषयकप्रत्यक्षजननसामर्थ्यविशेषोऽपि नास्तीत्यर्थः । इति सङ्क्षेपः ।

इति श्रीमदाळूरवंशपयःपारावारराकासुधाकररायनृसिंहपण्डित-
कृतमुक्तावळीप्रभायां प्रत्यक्षपरिच्छेदः समाप्तः ॥

## दिनकरीयम्.

षयमुख्यविशेष्यकं मानसं तत्र विशेषणज्ञानकारणतयैव निर्वाह इत्यत आह ॥ **एवमिति** ॥ **ज्ञानलक्षणया** ज्ञानलक्षणयैव । तत्र धूमत्वज्ञानरूपसामान्यलक्षणायाः स्वविषयधूमत्वाश्रयत्वसम्बन्धेन धूलीपटलेऽभावेन सामान्यलक्षणयाऽनुव्यवसाये धूलीपटलभानासम्भवादिति भावः ॥ ६५ ॥

**सर्वदैवेति** ॥ ध्यानाद्यभावेऽपीत्यर्थः ॥

इति श्रीभारद्वाजकुलाम्बुधिपूर्णचन्द्रभट्टबालकृष्णात्मज-
महादेवभट्टविरचिते मुक्तावलीप्रकाशे प्रत्यक्षखण्डम् ॥

## रामरुद्रीयम्.

**षयमुख्यविशेष्यकमिति** ॥ तथा च तद्विषयकलौकिकप्रत्यक्षं प्रति तद्विषयकज्ञानत्वेन कारणत्वमावश्यकमन्यथा घटादिविशेष्यकालौकिकभानेन घटादेर्भानस्यालौकिकत्वापत्तेरिति भावः ॥ **इत्यत आहेति** ॥ इत्यभिप्रायेण ज्ञानलक्षणप्रत्यासत्तेः प्रयोजनमाहेत्यर्थः इति शिवम् ॥

॥ इति दिनकरीयतरङ्गिण्यां प्रत्यक्षतरङ्गः ॥

## कारिकावली ।

### मुक्तावली-प्रभा-दिनकरीय-रामरुद्रीयसमन्विता ।

### ॥ अनुमानखण्डम् ॥

**व्यापारस्तु परामर्शः करणं व्याप्तिधीर्भवेत् ॥ ६६ ॥**
**अनुमायां ज्ञायमानं लिङ्गं तु करणं नहि ॥**
**अनागतादिलिङ्गेन न स्यादनुमितिस्तदा ॥ ६७ ॥**

अथानुमितिं व्युत्पादयति ॥ व्यापारस्त्विति ॥ अनुमितौ व्याप्तिज्ञानं करणं परामर्शो व्यापारः । तथा हि । येन पुरुषेण महानसादौ धूमे वह्निव्याप्तिर्गृहीता पश्चात् स एव

**प्रभा.**

प्रत्यक्षनिरूपणानन्तरमनुमितिनिरूपणेऽवसरसङ्गतिं सूचयितुमाह ॥ **अथेति** ॥ प्रत्यक्षनिरूपणानन्तरमित्यर्थः । तथाच प्रत्यक्षमप्यनुमितिरित्यादिविभागवाक्यात् प्रथमतः प्रत्यक्षस्योपस्थितौ तत्रैवानुमितिनिरूपणप्रतिबन्धिका किं प्रत्यक्षमित्याकारिका जिज्ञासा जायते अनन्तरं प्रत्यक्षनिरूपणेन तादृशजिज्ञासानिवृत्तौ अनन्तरोपस्थितानुमितेरेव वक्तव्यतया अवसरसङ्गतित्वलाभादिति भावः । नच विभागवाक्ये अनुमितेरेव प्रथमनिर्देशः कुतो न कृत इति वाच्यं स्वतन्त्रेच्छेन मुनिना गौतमादिना प्रमाणविभागवाक्ये प्रथमतः प्रत्यक्षस्यैव निर्देशात् तदनुसारेण मूलकृतापि विभागवाक्ये प्रथमतः प्रत्यक्षनिर्देशस्य कृतत्वादिति । केचित्तु उपजीव्योपजीवकभावसङ्गत्या प्रत्यक्षनिरूपणानन्तरमनुमितिनिरूपणमित्याहुः तदसत् अनुमितौ प्रत्यक्षोपजीवकत्वस्येव प्रत्यक्षेऽनुमित्युपजीवकत्वस्यापि सत्त्वेन प्रकृते तस्यानन्तर्याभिधाननियामकत्वासंभवात् । एतत्तत्वं मथुरानाथकृतचिन्तामणिटिप्पण्यामनुसन्धेयम् । परमतनिराकरणपूर्वकस्वमतसिद्धान्तस्यैव कथकसंप्रदायसिद्धतया नवीनमतसिद्धपरामर्शनिष्ठकरणत्वं स्वस्य नाभिमतमिति सूचयितुमादौ व्यापारमाह ॥ **मूले व्यापारस्तु परामर्श इत्यादि** ॥ अत्र तुशब्दोऽवधारणार्थकः । तथाच परामर्शो व्यापार एवेत्यर्थः एवकारेण नवीनमतसिद्धपरामर्शनिष्ठकारणत्वव्यवच्छेदो लभ्यते तर्हि प्राचीनमते किं करणमित्याशङ्कायामाह ॥ **करणं व्याप्तिधीरिति** ॥ प्राचीनमतमेवोपन्यस्यति ॥ **मुक्तावल्यां व्याप्तिज्ञानं करणमित्यादि** ॥ व्याप्तिज्ञानपरामर्शयोः करणत्वव्यापारत्वे उदाहरणद्वारा दर्शयति ॥ **तथाहीत्यादिना** ॥ **येन पुरुषेण महानसादावित्यादि** ॥ महानसाद्यवच्छेदेन धूमनिष्ठवह्निनिरूपिता व्याप्तिः यत्पुरुषीयवर्तमा-

**दिनकरीयम्.**

**अनुमितिमिति** ॥ सङ्गतिश्चात्र प्रत्यक्षेणोपजीव्योपजीवकभावो बोध्यः । करणे निर्दिष्ट एव व्यापारे जिज्ञासोदयान्मूले पश्चान्निर्दिष्टमपि करणं प्रथमं दर्शयति ॥ **व्याप्तिज्ञानमिति** ॥ **परामर्शो व्यापार इति** ॥ ननु व्यापारत्वं तज्जन्यत्वे सति तज्जन्यजनकत्वं तच्च परामर्शे न सम्भवति वह्निव्याप्यधूमवान् पर्वत इति परामर्शे व्याप्तिज्ञानजन्यत्वस्याभावात् महानसीयवह्निव्याप्तिज्ञानस्य तदानीमभावेन व्यभिचा-

**रामरुद्रीयम्.**

**सङ्गतिश्चात्रेति** ॥ प्रत्यक्षनिरूपणानन्तरमनुमाननिरूपणे सङ्गतिश्चेत्यर्थः । सप्तम्यर्थः प्रयोजकत्वम् । सङ्गतिपदार्थे तदन्वयो बोध्यः । अनन्तराभिधानप्रयोजकजिज्ञासाजनकज्ञानविषयस्मरणानुकूलसम्बन्धो निरूपणीयनिष्ठा सङ्गतिः । तथाहि प्रत्यक्षनिरूपणानन्तरमनुमाननिरूपणे प्रयोजकजिज्ञासा अनुमानज्ञानं मे भवत्वित्याकारिका तज्जनकज्ञानमनुमानज्ञानं मदिष्टसाधनमित्याकारकं तद्विषयोऽनुमानं तत्स्मरणानुकूलसम्बन्धः अनु-

पुरुषः कश्चित्पर्वतादावनवच्छिन्नमूलां धूमरेखां पश्यति तदनन्तरं धूमो वह्निव्याप्य इ-

**प्रभा .**

नध्वंसप्रतियोगिग्रहविषयीभूतेत्यर्थः । तेन व्याप्तिस्मरणोपयोग्यनुभवजन्यसंस्कारस्य सत्त्वमाविष्कृतम् ॥ **स एव पुरुष इति** ॥ तादृशसंस्कारवान् पुरुष एवेत्यर्थः । इदं च तन्निष्ठसंस्कारस्य उद्बुद्धत्वसम्पादनायाभिहितम् ॥ **क्वचित्पर्वतादाविति** ॥ सर्वपर्वतैस्सह चक्षुस्संबन्धाभावादिति भावः ॥ **अनवच्छिन्नमूलामिति** ॥ पर्वतासंबद्धधूमरेखाया वह्निसामानाधिकरण्याभावेन वह्निव्याप्यत्वाभाववत्त्वात् तज्ज्ञानस्य व्याप्तिसंबन्धिज्ञानत्वाभावेन उद्बोधकत्वासंभवात् अनवच्छिन्नमूलामित्युक्तं पर्वतसंबद्धामन्तरावच्छेदरहितामित्यर्थः । ए-

**दिनकरीयम्.**

रादतस्तदुपपादयति ॥ **तथाहीत्यादिना** ॥ **पश्यतीति** ॥ धूमदर्शनस्य व्याप्तिस्मरणे उद्बोधकविधया

**रामरुद्रीयम्.**

माननिष्ठप्रत्यक्षकार्यत्वं सङ्गतिः । अत्रानन्तराभिधानप्रयोजकजिज्ञासाजनकज्ञानं सङ्गतिनिरूपकज्ञानप्रयोज्यत्वेन विशेषणीयम् । तेन घटादिनिरूपणानन्तरमपि सम्बन्धविशेषज्ञानाधीनप्रत्यक्षज्ञाने तत्कार्यत्वेन अनुमानस्मरणसम्भवेऽपि प्रत्यक्षकार्यत्वे न घटादिनिरूपितसङ्गतित्वापत्तिः । अनुमानज्ञानस्य घटज्ञानाप्रयोज्यत्वात् । प्रकृते च चक्षुरादिना अनुमानस्य व्याप्तिज्ञानस्य जननादनुमाने प्रत्यक्षप्रमाणकार्यत्वरूपोपजीवकत्वमिति भावः । एवमनुमितावपि परामर्शरूपप्रत्यक्षप्रमितिजन्यत्वमस्तीति प्रत्यक्षप्रमानिरूपणोत्तरमनुमितिनिरूपणमिति बोध्यम् । अथ दीपदानं मदीयचक्षुस्साधनं भवितुमर्हति दीपश्चक्षुरुत्तमामिति वेदेन चक्षुस्साधनत्वेन बोधितत्वादित्यनुमानेन दीपदाने यत्र प्रवृत्तिस्तत्र तज्जनितचक्षुरादिव्यक्तेरनुमानोपजीवकतया अनुमाननिरूपणानन्तरमेव प्रत्यक्षं किमिति न निरूपितमिति । न च उपजीवकत्वं कार्यतारूपमेव नतु प्रयोज्यतारूपमिति चक्षुरादौ साक्षादनुमानजन्यत्वाभावान्नानुमाननिरूपणानन्तरं प्रत्यक्षनिरूपणापत्तिरिति वाच्यम् । तथासति शक्तिज्ञानात्मकोपमितेः पदार्थस्मरण एवोपयोगात् साक्षाच्छाब्दबोधाजनकत्वेनोपमित्यनन्तरं शाब्दनिरूपणानुपपत्तेः । न चादृष्टाद्वारकमुपजीवकत्वमनन्तराभिधाननियामकमिति वाच्यम् । यत्रेष्टसाधनतानुमानेन दर्पणादौ प्रवृत्तिस्तत्र दर्पणेन महाचक्षुर्नाशे तज्जन्यखण्डचक्षुर्व्यक्तावदृष्टाद्वारकोपजीवकत्वस्यापि सम्भवात् । यदि च प्रत्यक्षप्रमाणत्वावच्छेदेन नानुमानोपजीवकत्वं मनःश्रवणयोरजन्यत्वादनुमानं च निखिलमेव मनोरूपेन्द्रियजन्यमिति न वैपरीत्यापादनसम्भव इति विभाव्यते तदा ईश्वरीयव्याप्तिज्ञानस्याप्यनुमितिस्वरूपयोग्यत्वेनानुमापकतया तत्र प्रत्यक्षोपजीवकत्वाभावेन प्रत्यक्षानन्तरमनुमाननिरूपणस्याप्यनुपपत्तिरिति चेत् । मैवम् । नहि यद्यत्सङ्गतं भवति तत्तदनन्तरं निरूपणीयमिति नियमः येनानुमाननिरूपणानन्तरं प्रत्यक्षनिरूपणापत्तिः । किंतु यद्यदनन्तरं निरूप्यं भवति तत्तत्सङ्गतं भवतीत्येवं व्याप्तिः नासङ्गतं प्रयुञ्जीतेत्यभियुक्तोक्तेः । एवं च कारणे कार्ये वा ज्ञाते किमस्य कार्यं कारणं वेति जिज्ञासोदयेन उपजीवकत्वमुपजीव्यत्वं च द्वयमपि सङ्गतिः । अत एव चिन्तामणावनुमितिनिरूपणानन्तरमनुमाननिरूपणमपि सङ्गच्छते । न च कार्यत्वकारणत्वयोर्द्वयोरपि सङ्गतित्वे सङ्गतेः षोढात्वं व्याहन्येत तथाचोक्तं सप्रसङ्ग उपोद्घातो हेतुताऽवसरस्तथा । निर्वाहकैक्यकार्यैक्ये षोढा सङ्गतिरिष्यत इति वाच्यम् । हेतुताया निरूपकतासम्बन्धेन आश्रयतासम्बन्धेन च सङ्गतित्वेन कार्यत्वस्य हेतुतायामेवान्तर्भावात् । कारणतानिरूपकत्वस्यैव कार्यतारूपत्वात् । तत्र उपोद्घातादिभिन्नः स्मरणप्रयोजकसम्बन्धः प्रसङ्गः । प्रकृतोपपादकत्वमुपोद्घातः । न चैतस्य प्रयोजकतात्मकहेतुतया गतार्थता शङ्कनीया । अनुमितिलक्षणोपोद्घातसङ्गत्या विशिष्टपरामर्शस्यानुमितिहेतुताव्यवस्थापनात् नहि लक्षणे विशिष्टपरामर्शहेतुत्वं साक्षात्परम्परया वा कारणं किंतु उपपादकमेवेति ध्येयम् । अवसरोऽनन्तरवक्तव्यत्वं यथा प्रत्यक्षनिरूपणानन्तरं तत्कार्यत्वेनानुमानोपमानयोरुभयोर्निरूपणप्राप्तौ बहुवादिसम्मतत्वेन प्रथममनुमान एव जिज्ञासोदयेन अनुमाननिरूपणेन प्रतिबन्धकजिज्ञासानिवृत्तावबसरसङ्गत्या उपमाननिरूपणमिति मन्तव्यम् । निर्वाहकैक्यं एकप्रयोजकप्रयोज्यत्वम् । कार्यैक्यं एक-

**त्येवंरूपं व्याप्तिस्मरणं तस्य भवति प श्चाच्च वह्निव्याप्यधूमवानयमिति ज्ञानं भवति स एव परा-मर्श इत्युच्यते। तदनन्तरं पर्वतो वह्निमानित्यनुमितिर्जायते। अत्र प्राचीनास्तु व्याप्यत्वेन ज्ञाय-**

## प्रभा.

तावता संस्कारस्य धूमदर्शनरूपोद्बोधकसमवहितत्वमाविष्कृतम् ॥**इत्येवंरूपमिति**॥ धूमे वह्निव्याप्यत्वमित्या-कारकस्मरणस्वीकारे वक्ष्यमाणपरामर्शानुपपत्तिः विशेषणतावच्छेदकप्रकारकनिर्णयाभावादित्याशङ्कानिराकर-णाय एवंरूपमित्युक्तमिति ध्येयम् ॥ **तस्य भवतीति** ॥ तस्यैव भवतीत्यर्थः । अनुभवस्मरणयोः सामा-नाधिकरण्येन कार्यकारणभावादिति भावः ॥ **पश्चादिति** ॥ तादृशस्मरणानन्तरमित्यर्थः॥ **ज्ञानं भवती-ति** ॥ पूर्वं विशेषणतावच्छेदकप्रकारकनिर्णयसत्त्वादिति भावः ॥ **इत्युच्यत इति** ॥ परामर्शशब्देन व्य-वह्रियत इत्यर्थः । नच विशिष्टवैशिष्ट्यावगाहिपरामर्शं प्रति विशेषणतावच्छेदकप्रकारकनिर्णयविधया व्या-प्तिस्मरणस्य हेतुत्वेऽपि विशेष्ये विशेषणमिति रीत्या जायमानपरामर्शं प्रति तादृशव्याप्तिस्मरणस्य हेतुत्वे मानाभावात् व्याप्तिज्ञानस्य कारणतायां व्यभिचार इति वाच्यं विशेष्ये विशेषणमिति रीत्या जायमानप-रामर्शस्य पक्षविशेष्यकसाध्यप्रकारकसंशयनिवर्तकत्वाभावेन तादृशपरामर्शोत्तरं पुनस्संशयोत्पत्तौ बाधकाभा-वेन तादृशसंशयाविरोधिपरामर्शस्यानुमितिकारणत्वासंभवात् हेत्वंशेऽधिकरणांशे वृत्तित्वांशे च निश्चयत्वानि-वेशप्रयुक्तलाघवाच्च व्याप्तिविशिष्टवैशिष्ट्यावगाहिनिश्चयस्यैवानुमितिकारणत्वावश्यकतया व्याप्तिज्ञानस्यानु-मितिकरणतायां व्यभिचाराप्रसक्तेः। नच स्मरणात्मकपरामर्शस्थले व्याप्तिज्ञानस्य करणतायां व्यभिचारो दुर्वा-र इति वाच्यम् ! तत्रापि व्याप्तिविषयकसंस्कारसत्त्वात् प्रयोजनाभावात् ज्ञानत्वमनिवेश्य व्याप्तिविषयकत्वेनै-व करणत्वस्वीकारात् अत एव व्याप्तिविषयकत्वनिवेशने प्रयोजनविरहेण परामर्शद्वारा केवलज्ञानत्वेनैव क-रणत्वमिति तत्र तत्रोक्तं सङ्गच्छते । नच तथापि व्याप्तिज्ञानत्वव्याप्तिविषयकत्वज्ञानत्वादीनां परामर्शत्व-व्यापकतया व्यापकधर्मपुरस्कारेणापि कारणतायां प्रमाणाभावेन तेन तेन रूपेण कारणत्वाप्रसक्त्या कुतः क-रणत्वमिति मनस्त्वेनैव करणत्वमिति वाच्यं व्याप्यधर्मावच्छिन्नमद्वारीकृत्य व्यापकधर्मपुरस्कारेण कारणत्व-स्यैवानङ्गीकारात् अत एव घटं प्रति दण्डादेः द्रव्यत्वादिना साक्षाद्धेतुता निराकृता ग्रन्थकृता अन्यथा प-दज्ञानत्वस्य पदार्थस्मृतित्वव्यापकज्ञानत्वघटिततया तेन रूपेण शाब्दप्रमितिकरणत्वानापत्तेः। नच तत्रापि मनस एव करणत्वमिति वाच्यं तथा सत्यनुमित्युपमितिशाब्दबोधेषु मनस एव करणत्वापत्त्या तुल्यन्या-येन चक्षुस्संयोगादिसहकृतस्य त्वक्संयोगादिसहकृतस्य एवं घ्राणसंयोगादिसहकृतस्य मनस एव चाक्षुषादि-प्रमितिकरणत्वसंभवेन चक्षुरादीनामपि प्रत्यक्षप्रमाणत्वानुपपत्तेः । तस्मादुक्तरीत्या पदज्ञानादीनां शाब्दादि-प्रमितिकरणत्वस्यावश्यं वाच्यतया व्याप्तिज्ञानस्यापि करणत्वं निराबाधमेवेत्यास्तां विस्तरः ॥ **व्याप्यत्वेन ज्ञायमानमित्यादि** ॥ व्याप्यत्वप्रकारकवर्तमानग्रहविषयीभूतमित्यर्थः । तथाच लिङ्गविशे-

## दिनकरीयम्.

हेतुत्वसम्पत्त्यर्थं यादृशविशेषणविशिष्टस्य धूमस्य सम्बन्धितया ज्ञानं तादृशधूमदर्शनस्यैव व्याप्तिस्मृतावुद्बो-धकत्वमित्यभिप्रायेणाविच्छिन्नत्वमुक्तम् ॥ **एवंरूपं व्याप्तिस्मरणमिति** ॥ उद्बुद्धसंस्कारस्य पूर्वं सत्त्वा-दिति भावः ॥ **स एव परामर्श इति** ॥ तथा च स्मरणात्मकज्ञानस्य पूर्वं सत्त्वात् न व्यभिचार इति भावः । नच तथापि यत्र व्याप्तिघटकानां पदार्थानां विशृङ्खलोपस्थितिमूलको विशेष्ये विशेषणं तत्रा-पि विशेषणमिति रीत्या परामर्शस्तत्र विशिष्टव्याप्तिज्ञानस्य व्यभिचारो दुरुद्धर एवेति वाच्यम् । व्याप्त्यंशे निश्चयत्वानिवेशप्रयुक्तलाघवेन विशिष्टस्य वैशिष्ट्यमिति रीत्या परामर्शस्यैवानुमितिहेतुत्वादित्यभिप्रायात् ।

## रामरुद्रीयम्.

कार्यानुकूलत्वमिति दिक् ॥ **सम्बन्धितयेति** ॥ व्याप्तिसम्बन्धितयेत्यर्थः ॥ **विशेष्ये विशेषणमिती-ति** ॥ विशिष्टवैशिष्ट्यावगाहित्वे वह्निव्याप्यो धूम इति ज्ञानं विना शाब्दपरामर्शासम्भवादिति भावः ॥ **ला-घवेनेति** ॥ व्याप्तितदभाववद्धूमवान्पर्वत इति व्याप्त्यंशे संशयाकारपरामर्शादनुमितिवारणाय धूमांश इव व्याप्त्यंशे निश्चयत्वं निवेशनीयामिति गौरवम् । विशिष्टवैशिष्ट्यावगाहिज्ञानस्य कारणत्वे तु कारणीभूतविशे-

मानं लिङ्गमनुमितिकरणमिति वदन्ति तद्दूषयति ॥ **ज्ञायमानमिति** ॥ लिङ्गस्यानुमित्यकरणत्वे युक्तिमाह ॥ **अनागतादीति** ॥ यद्यनुमितौ लिङ्गं करणं स्यात्तदाऽनागतेन लिङ्गेन विनष्टेन चानुमितिर्न स्यादनुमितिकरणस्य लिङ्गस्य तदानीमभावादिति ॥ ६६ ॥ ६७ ॥

## प्रभा.

व्यकज्ञानप्रकारताविशिष्टव्याप्तेः करणत्वं न संभवति तस्याः साक्षात्संबन्धेन पक्षनिष्ठत्वाभावात् किन्तु व्याप्तिप्रकारकलिङ्गविशेष्यकज्ञानस्य व्याप्तिप्रकारकवर्तमानग्रहविशेष्यताविशिष्टलिङ्गस्य वेत्यत्र विनिगमकाभावात् तादृशलिङ्गस्यापि करणत्वमक्षतमिति भावः ॥ **लिङ्गस्य तदानीमभावादिति** ॥ अत्रातीतादिलिङ्गकानुमितेरेव तैरनभ्युपगमात् अतीतादिलिङ्गकस्थलेऽनुमित्यनुत्पत्तौ तेषामिष्टापत्तिरेव । किंच वर्तमानग्रहविशेष्यताविशिष्टलिङ्गस्यैव तेषां मते करणतया परामर्शस्य मानसप्रत्यक्षात्मकस्य लिङ्गजन्यत्वाभावेऽपि विशेषणतावच्छेदकप्रकारकनिर्णयविधया विशेषणीभूतव्याप्तिप्रकारकज्ञानजन्यत्वेन तादृशविशिष्टलिङ्गजन्यत्वस्या-

## दिनकरीयम्.

स्मरणात्मकपरामर्शे व्याप्तिज्ञानस्य व्यभिचार इत्यपि न । संस्कारसम्बन्धेन पूर्वं व्याप्तिज्ञानस्य सत्त्वात् । अत्र नव्याः व्याप्तिज्ञानत्वस्य परामर्शत्वव्यापकतयाऽनुमितिं प्रति हेतुत्वमेव नास्ति कुतः करणत्वं अन्यथा कपालादेर्घटं प्रति द्रव्यत्वेन हेतुतापत्तिः तस्मादनुमितिं प्रति मनस्त्वेनैव कारणत्वमित्याहुः ॥ **लिङ्गमनुमितिकरणमिति** ॥ अनुमितौ परामर्शमात्रं न हेतुरपि तु लिङ्गपरामर्शः । तथा च विशिष्टस्य कारणताग्रहे विशेषणस्यापि कारणताग्रहात् परामृश्यमानलिङ्गस्य लिङ्गपरामर्शस्य वा हेतुतेत्यत्र विनिगमनाविरहादुभयोर्हेतुतासिद्धौ तत्र च व्यापाराभावान्न परामर्शस्य करणता किं तु लिङ्गस्यैवेत्याशयः ॥ **लिङ्गस्य तदानीमभावादिति** ॥ न च परामर्शरूपव्यापारसम्बन्धेन तदानीं लिङ्गमस्त्येवेति वाच्यम् । अतीतादिलिङ्गस्य परामर्शाजनकतया परामर्शस्य तद्व्यापारत्वासम्भवात् । इदमुपलक्षणं लिङ्गस्य हेतुत्वे चैत्रीयपरामर्शविषयाल्लिङ्गान्मैत्रस्यानुमितिप्रसङ्गः तत्तत्पुरुषीयत्वनिवेशे गौरवं अस्मन्मते सामानाधिकरण्यप्रत्यासत्त्या हेतुहेतुमद्भावेनैवातिप्रसङ्गाभावान्न तत्पुरुषीयत्वनिवेश इति लाघवमित्यपि बोध्यम् ॥ ६६ ॥ ६७ ॥

## रामरुद्रीयम्.

षणतावच्छेदकप्रकारकनिश्चयेन प्रतिबन्धादेव व्याप्त्यंशे संशयासम्भवेन तन्निवेशे प्रयोजनाभावादिति भावः ॥

**संस्कारसम्बन्धेनेति** ॥ स्वजन्यसंस्कारसम्बन्धेनेत्यर्थः । स्वजन्यसंस्कारसमवायान्यतरसम्बन्धेन व्याप्तिज्ञानस्य परामर्शहेतुत्वान्न कुत्रापि व्यभिचार इति भावः ॥ **परामर्शत्वव्यापकतयेति** ॥ तादात्म्येन परामर्शस्याव्याप्यत्वं ग्राह्यं ॥ **कारणत्वमेव नास्तीति** ॥ नियतपूर्ववर्तितावच्छेदकव्याप्यसत्त्वे व्यापकधर्मेण हेतुतायामन्यथासिद्धेरिति भावः ॥ **परामर्शमात्रमिति** ॥ ज्ञानमात्रमित्यर्थः । परापूर्वकमृशधातोः ज्ञानार्थकत्वादिति भावः ॥ **लिङ्गेति** ॥ व्याप्तिविशिष्टपक्षधर्मताविशिष्टहेतुर्लिङ्गं विषयितासम्बन्धेन तद्विशिष्टज्ञानमेव अनुमितिहेतुर्बोध्यमित्यर्थः ॥ **कारणताग्रहादिति** ॥ असति बाधके विशिष्टस्य कारणताग्राहकप्रमाणेन विशेषणांशेऽपि कारणताग्रहात् अत एवारुणया पिङ्गाक्ष्यैकहायन्या गवा सोमं क्रीणातीत्यत्र तृतीयया गोविशेषणीभूतानामारुण्यादीनामपि सोमक्रयणसाधनता प्रतीयत इति मीमांसकानां सिद्धान्तोऽपि सङ्गच्छत इति भावः । विनिगमनाविरहेणापि लिङ्गस्य कारणता सिध्यतीत्याह ॥ **परामृश्यमानेति** ॥ **किन्त्विति** ॥ परामर्शस्यैव विषयविधया लिङ्गजन्यत्वसम्भवादिति भावः ॥ **तद्व्यापारत्वासम्भवादिति** ॥ शाब्दादिपरामर्शस्य अतीतादिलिङ्गाजन्यतया लिङ्गव्यापारत्वासम्भवादित्यर्थः ॥ **अनुमितिप्रसङ्ग इति** ॥ पक्षनिष्ठस्य लिङ्गस्य समवायेनानुमितिं प्रति हेतुत्वासम्भवेनोद्देश्यतासम्बन्धेनानुमितिं प्रति हेतुतावच्छेदकसम्बन्धेन लिङ्गस्य कारणतायाः स्वीकरणीयत्वादिति भावः ॥ **अस्मन्मते** परामर्शहेतुतावादिमते ॥ **सामानाधिकरण्यप्रत्यासत्त्या** ॥ एकात्मानुयोगिकसमवायसम्बन्धेन कार्यकारणभावान्नैकपुरुषीयपरामर्शादन्यस्यानुमित्यापत्तिरिति भावः ॥ ६६ ॥ ६७ ॥

व्याप्यस्य पक्षवृत्तित्वधीः परामर्श उच्यते ॥

**व्याप्यस्येति** ॥ व्याप्तिविशिष्टस्य पक्षेण सह वैशिष्ट्यावगाहिज्ञानमनुमितिजनकं तच्च पक्षे व्याप्य इति ज्ञानं पक्षो व्याप्यवानिति ज्ञानं च अनुमितिस्तु पक्षे व्याप्य इति

## प्रभा.

प्यनपायात् । एवंच तादृशमानसप्रत्यक्षात्मकपरामर्शरूपव्यापारसंबन्धेन तदानीं तादृशलिङ्गस्यापि सत्त्वेन व्यभिचाराप्रसक्तिः अतीतादिलिङ्गविषयकस्मरणात्मकपरामर्शात् अनुमितिस्थलेऽपि नवीनैः संस्कारसाधारण-व्याप्तिप्रकारकलिङ्गविशेष्यकत्वमात्रेणैव करणत्वस्य स्वीकृतत्वेन तत्र व्याप्तिप्रकारकसंस्कारस्यैव तन्मते करणत-या तादृशपरामर्शस्य तादृशसंस्कारजन्यत्वे सिद्धे तादृशव्याप्तिप्रकारतानिरूपितविशेष्यताविशिष्टातीतादिलिङ्ग-जन्यत्वस्याप्यक्षतत्वेन तादृशस्मरणस्य व्यापारत्वसिद्धौ तद्द्वारातीतादिलिङ्गस्यापि सत्त्वमस्त्येवेति तादृशलि-ङ्गस्य करणतायां न कुत्रापि व्यभिचारस्य प्रसक्तिः । यच्चोक्तं चैत्रस्य परामर्शदशायां पक्षे मैत्रस्य विशेष्य-तासंबन्धेन अनुमित्यापत्तिः चैत्रीयपरामर्शद्वारा ज्ञायमानलिङ्गस्य पक्षे सत्त्वात विशेष्यतासंबन्धेन तत्पुरु-षीयानुमितित्वावच्छिन्नं प्रति तत्पुरुषीयपरामर्शद्वारा ज्ञायमानलिङ्गस्यानुमितिकरणत्वमङ्गीकृत्य तादृशाति-प्रसङ्गवारणे तत्पुरुषभेदेन कार्यकारणबाहुल्यं कारणतावच्छेदकगौरवं च । मन्मतेतु समवायेनानुमितिं प्रति समवायेन परामर्शस्य हेतुत्वेन तद्द्वारा व्याप्तिज्ञानस्य हेतुत्वेन च तत्पुरुषीयत्वनिवेशाप्रसक्त्या न गौरवावकाश इति तदपि न । समवायघटितसामानाधिकरण्यप्रत्यासत्त्या हेतुत्वपक्षे पर्वतविशेष्यकवह्निविधेयकानुमितिं प्रति वह्निव्याप्यधूमादिप्रकारकपर्वतविशेष्यकनिश्चयत्वेन पर्वतादिरूपविषयविशेषनिवेशस्यैव कार्यकारणभावो वाच्यः अन्यथा महानसादिविशेष्यकतादृशपरामर्शात्पर्वतादिविशेष्यकानुमित्यापत्तेः । एवंच पर्वतादिरूपविषयविशे-षनिवेशस्यावश्यकत्वे विषयापेक्षया पुरुषाणामल्पत्वेन तत्पुरुषीयत्वनिवेशप्रयुक्तगौरवाभावात् त-स्मात् ज्ञायमानलिङ्गस्य अनुमितिकरणतापक्षे संयोगसमवायादिरूपनानासंबन्धानां कारणतावच्छेदकसंबन्ध-त्वकल्पनेन वर्तमानग्रहविशेष्यताविशिष्टधूमादेरेव करणतया अनेकवर्तमानकालानां कारणतावच्छेदकत्वकल्प-नेन च गौरवामित्येव तन्मते दूषणमिति प्रतिभाति ॥ ६६ ॥ ॥ ६७ ॥

मूले परामर्शलक्षणमाह ॥ **व्याप्यस्येत्यादि** ॥ **पक्षवृत्तित्वधीरिति** ॥ पक्षसंबन्धज्ञानमित्यर्थः । तथा च व्याप्तिविशिष्टस्य पक्षसंबन्धविषयकनिश्चयः परामर्श इति फलितम् । तदेवाह ॥ **मुक्तावल्यां व्याप्ति-विशिष्टस्येति** ॥ **अनुमितिजनकमिति** ॥ व्यापारविधया अनुमितिकारणमित्यर्थः । तथाच व्याप्त्य-वच्छिन्नविषयतानिरूपितपक्षतावच्छेदकावच्छिन्नविषयताशालिनिश्चयत्वं परामर्शत्वमिति भावः । नच वह्नि-व्याप्यधूमे पर्वतः वह्निव्याप्यधूमः पर्वतवान् इत्याकारकनिश्चयस्यापि तादृशलक्षणाक्रान्ततया तज्ज्ञानादपि अनुमित्यापत्तिरिति वाच्यं व्याप्त्यवच्छिन्नविषयतानिरूपितपक्षनिरूपिताधेयत्वनिष्ठसांसर्गिकविषयत्वहे-तुतावच्छेदकसंबन्धनिष्ठसांसर्गिकविषयत्वान्यतरनिरूपितपक्षतावच्छेदकावच्छिन्नविषयताशालिनिश्चयत्वस्यैव लक्षणत्वेन उक्तज्ञानयोर्धूमादिरूपहेतुनिरूपिताधेयत्वनिष्ठसांसर्गिकविषयत्वपर्वतादिप्रतियोगिकसंयोगादिनिष्ठसां-सर्गिकविषयत्वान्यतरशालित्वेऽपि पक्षनिरूपिताधेयत्वविषयताघटितपरामर्शलक्षणाभावात् न ताभ्यामनुमित्या-पत्तिरिति । उक्तार्थमेव प्रकाशयति ॥ **तच्चेति** ॥ पक्षनिरूपिताधेयत्वविषयताघटितलक्षणलक्षितं चेत्यर्थः ॥ **ज्ञानं चेति** ॥ चेत्यवधारणे । तथाच उक्तज्ञानद्वयमेव तादृशलक्षणलक्षितं ननु व्याप्ये पक्षो व्याप्यः पक्षवा-

## दिनकरीयम्.

तच्च व्याप्यस्य पक्षेण सह वैशिष्ट्यावगाहिज्ञानं च । ननु परस्परं व्यभिचार इत्यत आह ॥ **अनु-मितिस्त्विति** ॥ कार्यतावच्छेदकस्य परस्परानुमितिव्यावृत्तत्वान्न व्यभिचारः । पक्षविशेष्यकत्वमेव सर्वत्रा-

## रामरुद्रीयम्.

**परस्परेति** ॥ पक्षविशेष्यकपरामर्शोत्तरानुमितौ व्याप्यविशेष्यकपरामर्शस्य तदुत्तरानुमितौ पक्षवि-शेष्यकपरामर्शस्य व्यभिचार इत्यर्थः ॥ **सर्वत्रानुमिताविति** ॥ प्रसिद्धसाध्यकसकलानुमितावित्यर्थः ।

ज्ञानात् पक्षे साध्यमित्याकारिका पक्षो व्याप्यवानिति ज्ञानात् पक्षः साध्यवानित्याका-
रिका । द्विविधादपि परामर्शात् पक्षः साध्यवानित्येवानुमितिरित्यन्ये । ननु वह्निव्याप्यधूम-

प्रभा.

निति ज्ञानद्वयमिति भावः । ननु निरुक्तपरामर्शत्वावच्छिन्नकारणतानिरूपितानुमितिनिष्ठकार्यतावच्छे-
दकं पक्षसाध्यविशेष्यकानुमितिसाधारणपर्वताद्युद्देश्यकानुमितित्वमेव वाच्यं एकानुमितिमात्रवृत्तिधर्म-
स्य कार्यतावच्छेदकत्वे अपरानुमित्यनापत्तेः । एवंच वह्निव्याप्यवानयमिति परामर्शकाले घटादिविषयकप्र-
त्यक्षसामग्रीसत्त्वे पर्वतविशेष्यकवह्निप्रकारकानुमित्यन्यज्ञानं जायतामितीच्छाकाले पर्वतोद्देश्यकवह्निविधेयका-
नुमितित्वावच्छिन्नापत्तिः पर्वतविशेष्यकतादृशानुमितौ उक्तेच्छायाः अनुपयोगित्वेऽपि घटादिप्रत्यक्ष इव पर्व-
तप्रकारकवह्निविशेष्यकानुमितौ उक्तेच्छायाः अनुकूलत्वात् । नचेष्टापत्तिः पक्षविशेष्यकोक्तपरामर्शात् पक्षप्र-
कारकसाध्यविशेष्यकानुमितिस्वीकारस्य कस्याप्यननुमतत्वादित्यत आह ॥ **अनुमितिस्त्विति** ॥ **सा-
ध्यवानित्याकारिकेति** ॥ अत्र पर्वताद्युद्देश्यकवह्न्यादिविधेयकानुमितित्वव्याप्यधर्मौ च पर्वतादिविशेष्य-
कवह्न्यादिप्रकारकानुमितित्वपर्वतादिप्रकारकवह्न्यादिविशेष्यकानुमितित्वे तत्र पर्वतादिप्रकारकवह्न्यादिविशे-
ष्यकानुमितित्वावच्छिन्नं प्रति पर्वतादिप्रकारकवह्न्यादिव्याप्यविशेष्यकनिश्चयत्वावच्छिन्नं कारणं पर्वतादिवि-
शेष्यकवह्न्यादिप्रकारकानुमितित्वावच्छिन्नं प्रति पर्वतादिविशेष्यकवह्न्यादिव्याप्यप्रकारकनिश्चयत्वावच्छिन्नं
कारणमिति फलितम् । एवंच पर्वतविशेष्यकवह्निप्रकारकानुमित्यन्यज्ञानं जायतामितीच्छाविशिष्टघटा-
दिप्रत्यक्षसामग्रीसमवहित-वह्निव्याप्यधूमवान्पर्वत इति परामर्शस्थले न पर्वतो वह्निमानित्यनुमितिस्संभवति
उक्तेच्छाविशिष्टघटादिप्रत्यक्षसामग्र्याः प्रतिबन्धिकायाः सत्त्वात् । पर्वते वह्निरित्याकारकानुमितौ तूक्तसाम-
ग्र्याः अप्रतिबन्धकत्वेऽपि तादृशानुमितिकारणस्य वह्निव्याप्यधूमः पर्वते इत्याकारकपरामर्शस्याभावेन ता-
दृशानुमितेरप्यसंभवः । तस्मात्परामर्शविशेषाभावेन प्रतिबन्धकाभावरूपकारणविशेषाभावेन चानुमितिवि-
शेषानुत्पत्तौ विशेषसामग्रीसमवहितसामान्यसामग्र्या एव पर्वतोद्देश्यकवह्निविधेयकानुमितिसामान्योत्पादक-
त्वेन तादृशप्रत्यक्षसामग्रीसमवहिततादृशपरामर्शस्थले केवलसामान्यसामग्रीबलात् पर्वतोद्देश्यकवह्निविधेयका-
नुमितित्वावच्छिन्नापत्तिर्न संभवतीति विश्वनाथपञ्चाननभट्टाचार्यस्याभिप्राय इति हृदयम् । अन्येतु पर्वतो व-
ह्निमानित्याकारिकैवानुमितिः नतु पर्वते वह्निरित्याकारिका कथकसंप्रदायविरुद्धत्वात् अत एव पर्वतो व-
ह्निमानित्याकारक एव न्यायघटकीभूतप्रतिज्ञाप्रयोगः नतु पर्वते वह्निरित्याकारकः । तथाच पर्वतविशेष्यकव-
ह्निप्रकारकानुमितित्वावच्छिन्नं प्रत्येव व्याप्यपक्षोभयवैशिष्ट्यावगाहिनिश्चयत्वावच्छिन्नं हेतुरिति फलितम् । ए-
वंच उक्तेच्छाविशिष्टघटादिप्रत्यक्षसामग्रीकालीनपक्षविशेष्यकोक्तपरामर्शस्थले उक्तेच्छाविशिष्टघटादिप्रत्यक्ष-
सामग्र्याः प्रतिबन्धकत्वेन तदभावरूपकारणाभावात् नानुमित्यापत्तिरिति वदन्ति तन्मतमुपन्यस्यति ॥ **द्वि-
विधादपीति** ॥ अत्र पक्षप्रकारकानुमितिर्यथा अप्रामाणिकी तथा पक्षप्रकारकपरामर्शोऽप्यप्रामाणिकः क-

दिनकरीयम्.

नुमितौ नियतमिति नवीनमतमाह ॥ **द्विविधादपीति** ॥ पक्षविशेष्यकव्याप्यविशेष्यकोभयपरामर्शादपी-
त्यर्थः । कारणतावच्छेदकं च परामर्शद्वयसाधारणं व्याप्यपक्षोभयवैशिष्ट्यावगाहिनिश्चयत्वमतो न व्यभिचार

रामरुद्रीयम्.

तेन पृथिवीतरत्वाभावव्यापकाभावप्रतियोगिगन्धवती पृथिवीति व्यतिरेकिपरामर्शादप्रसिद्धसाध्यविशेष्यका-
नुमित्युपगमेऽपि न क्षतिरिति मन्तव्यम् । नन्वेवं परस्परजन्यानुमितौ व्यभिचारो दुर्वार इत्याशङ्कायामाह
॥ **कारणतावच्छेदकं चेति** ॥ **व्याप्यपक्षोभयेति** ॥ यद्यपि निश्चयत्वमुभयसाधारणमेकं दुर्वचं तद-
भावाप्रकारकत्वे सति तत्प्रकारकत्वरूपनिश्चयत्वस्य प्रकारीभूतव्याप्यपक्षरूपधर्मविशेषघटितत्वात् तत्प्रकार-
तावच्छेदकसम्बन्धाननुगमाच्च सांसर्गिकविषयतायाः विशिष्यानिवेशे कालिकादिना व्याप्यपरामर्शादप्यनुमि-
त्यापत्तेरनुगतैकरूपेण कारणत्वं दुर्घटं तथापि हेतुतावच्छेदकसम्बन्धावच्छिन्नाधेयत्वसंबन्धावच्छिन्नप्रतियो-
गिताकपक्षतावच्छेदकावच्छिन्नाभावप्रकारत्वानिरूपिता या हेतुतावच्छेदकसम्बन्धान्यसम्बन्धावच्छिन्ना

वान् पर्वत इति ज्ञानं विनापि यत्र पर्वतो धूमवानिति प्रत्यक्षं ततो वह्निव्याप्यो धूम इति स्मरणं तत्र ज्ञानद्वयादेवानुमितेर्दर्शनात् व्याप्तिविशिष्टवैशिष्ट्यावगाहिज्ञानं सर्वत्र न कारणं किन्तु व्याप्यतावच्छेदकप्रकारकपक्षधर्मताज्ञानत्वेन कारणत्वस्यावश्यकत्वात्

प्रभा .

थकसंप्रदायविरुद्धत्वात् अत एव तथाचायमित्याकारक एव न्यायघटकीभूतोपनयप्रयोगः ननु तथाचास्मिन्निति तथाच पर्वतादिविशेष्यकवह्न्यादिप्रकारकानुमितिं प्रति वह्न्यादिनिरूपितव्याप्तिप्रकारतानिरूपितहेतुप्रकारतानिरूपितपक्षविशेष्यताशालिनिश्चयो हेतुरिति फलितम् । व्याप्यस्य पक्षवृत्तित्वमित्यादिकारिकाया अयमेवार्थोऽवसेयः । तथाचोक्तस्थले तादृशेच्छाविशिष्टप्रत्यक्षसामग्रीकाले प्रतिबन्धकाभावरूपकारणाभावादेव नानुमित्यापत्तिरित्यस्वरसं हृदि निधाय अन्य इत्युक्तमिति हृदयम् । मीमांसकमतमुपन्यस्य दूषयति ॥ नन्वित्यादिना ॥ तत्र तस्मिन्नात्मनि ॥ ज्ञानद्वयादेवेति ॥ विशिष्टज्ञानं विनापीत्यर्थः ॥ अनुमितेर्दर्शनादिति ॥ विशिष्टज्ञानोत्पत्तिसमय एवानुमितेरनुभवसिद्धत्वादिति भावः ॥ व्याप्तिविशिष्टवैशिष्ट्यावगाहिज्ञानमिति ॥ तादृशनिश्चयत्वावच्छिन्नमित्यर्थः ॥ सर्वत्रानुमितित्वावच्छिन्ने ॥ न कारणमिति ॥ व्यतिरेकव्यभिचारादिति हेतुः पूरणीयः । तथाच ज्ञानद्वयाव्यवहितोत्तरक्षणोत्पत्तिकानुमितौ

दिनकरीयम् .

इति भावः । द्विविधयोरपि परामर्शयोः स्वस्वाव्यवहितोत्तरानुमितिं प्रति ताद्रूप्येण हेतुत्वमित्यपि केचित् । वस्तुतस्त्वनुभवानुरोधात् पक्षविशेष्यकपरामर्शस्यैव हेतुत्वमत एव वह्निव्याप्यधूमवांश्चायमित्याकारकः पक्षविशेष्यक एवोपनयः सर्वसम्मत इति ध्येयम् । मीमांसकः शङ्कते ॥ नन्विति ॥ ज्ञानं विनापीत्यस्यानुमितेर्दर्शनादित्यनेनान्वयः ॥ ज्ञानद्वयादेव ज्ञानद्वयादपि ॥ विशिष्टवैशिष्ट्यावगाहिज्ञानमिति ॥ भावप्रधानो निर्देशः ॥ सर्वत्र न कारणमिति ॥ अनुमितित्वावच्छिन्नं प्रति कारणतावच्छेदकमित्यर्थः ॥ आवश्यकत्वादिति ॥ व्याप्यतावच्छेदकप्रकारकपक्षधर्मताज्ञानत्वस्योभयमतसिद्धनियतपूर्ववृत्तिताव-

रामरुद्रीयम् .

व्याप्त्यवच्छिन्ना विषयता तन्निरूपिता या हेतुतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकव्याप्त्यभावप्रकारत्वानिरूपितहेतुतावच्छेदकसम्बन्धावच्छिन्नाधेयत्वसम्बन्धान्यसम्बन्धावच्छिन्ना पक्षतावच्छेदकावच्छिन्ना विषयता तच्छालिज्ञानत्वेनानुगतकारणत्वं सम्भवति प्रकारतायामेव संसर्गावच्छिन्नत्वं न विशेष्यतायामपीति सिद्धान्तादिति भावः । एवमपि व्याप्यप्रतियोगिकाभावत्वेन अभावनिवेशे आलोकाभाववति धूमप्रकारकनिश्चयसंग्रहस्य व्याप्यसामान्याभावनिवेशे च वह्निव्याप्यधूमवान्न वेति संशयवारणस्य, चासम्भव एव अप्रामाण्यज्ञानानामपि विभिन्नाकाराणामेकैकनिश्चयकारणतावच्छेदककोटावभावा निवेशनीयाइत्यतोऽपि नानुगतहेतुतासम्भव इत्यभिप्रायेण मतान्तरमुपन्यस्यति ॥ द्विविधयोरिति ॥ ताद्रूप्येणेति ॥ पक्षविशेष्यकत्वेन व्याप्यविशेष्यकत्वेनेत्यर्थः । स्वमतमुपदर्शयति ॥ वस्तुतस्त्विति ॥ अनुभवानुरोधादिति ॥ पक्षविशेष्यकादेव परामर्शादनुमितिर्न व्याप्यविशेष्यकादनुमितिरित्यनुभवानुरोधादित्यर्थः । स्वोक्ते प्राचां सम्मतिमाह ॥ अत एवेति ॥ वह्निव्याप्यधूमवानिति नवीनमताभिप्रायेणोक्तम् । प्राचीनमते तु तथा चायमित्युपनयाकार इति मन्तव्यम् । ननु वह्निव्याप्यधूमवान् पर्वत इति शाब्दादिपरामर्शस्थले ज्ञानद्वयं विनापि मीमांसकैरप्यनुमितिस्वीकारात् ज्ञानद्वयादेवेत्येवकारासङ्गतिरित्यतस्तस्याप्यर्थकतामाह॥ ज्ञानद्वयादपीति ॥ विशिष्टवैशिष्ट्यावगाहिज्ञानं न सर्वत्र कारणमिति मूलस्य सर्वत्र नानुमित्यव्यवहितपूर्ववर्तित्यर्थकत्वे अग्रे अतो विशिष्टवैशिष्ट्यावगाहिनिश्चयत्वं नानुमितिजनकतावच्छेदकमिति पूरणीयमुक्तवाक्यस्य साक्षाद्विशिष्टपरामर्शत्वेन हेतुत्वनिरासकत्वादिति प्रयासाधिक्यमतः तद्ग्रन्थस्य विशिष्टपरामर्शत्वेन हेतुतानिरासकत्वं सम्पादयन्नाह ॥ भावप्रधानो निर्देश इति ॥ एतदनुरोधेन सर्वत्र न कारणत्वमित्यस्यार्थमाह ॥ अनुमितित्वावच्छिन्नं प्रतीति ॥ आवश्यकत्वादित्यस्य उभयवादिसिद्धनियतपूर्ववर्तितावच्छेदकत्वादित्यर्थकतामाह ॥ व्याप्य-

तत्र विशिष्टज्ञानकल्पने गौरवाच्चेति चेन्न ; व्याप्यतावच्छेदकाज्ञानेऽपि वह्निव्याप्यवानिति ज्ञानादनुमित्युत्पत्तेर्लाघवाच्च व्याप्तिप्रकारकपक्षधर्मताज्ञानत्वेन हेतुत्वम् । किं च धूमवान् पर्वत इति ज्ञानादनुमित्यापत्तिः व्याप्यतावच्छेदकीभूतधूमत्वप्रकारकस्य पक्षधर्मताज्ञानस्य सत्त्वात् । न च गृह्यमाणव्याप्यतावच्छेदकप्रकारकपक्षधर्मताज्ञानस्य हेतुत्वमिति वा-

## प्रभा.

व्यतिरेकव्यभिचारात् अनुमितित्वावच्छिन्नं प्रति व्याप्तिविशिष्टवैशिष्ट्यावगाहिनिश्चयत्वेन कारणत्वं न संभवतीति भावः । एतावता नैयायिकमतसिद्धरूपेण कारणत्वे दोषमुपपाद्य स्वमतसिद्धरूपेण कारणत्वमुपपादयति ॥ **किंत्विति** ॥ अनुमितिं प्रतीति शेषः ॥ **पक्षधर्मताज्ञानत्वेनेति** ॥ तादृशनिश्चयत्वेनेत्यर्थः ॥ **आवश्यकत्वादिति** ॥ तेन रूपेण क्लृप्तनियतपूर्ववृत्तिताकत्वादित्यर्थः । ननु ज्ञानद्वयस्थले विशिष्टज्ञानं परिकल्प्य व्यभिचारो वारणीय इत्यत आह ॥ **विशिष्टज्ञानेति** ॥ **व्याप्यतावच्छेदकेति** ॥ धूमत्वालोकत्वादिरूपव्याप्यतावच्छेदकप्रकारकनिर्णयशून्यकालेऽपीत्यर्थः ॥ **वह्निव्याप्यवानिति** ॥ वह्निमदन्यावृत्तिमानित्यर्थः । यद्यपि अन्तरा निर्धर्मितावच्छेदकव्याप्तिविशिष्टवैशिष्ट्यावगाहिज्ञानस्यानुमितिहेतुत्वं न संभवति व्यभिचारज्ञानाप्रतिबध्यत्वात् अन्यथा व्यभिचारस्य हेत्वाभासत्वानापत्तेः तथापि पर्वतवृत्तिः वह्निमदन्यवृत्तिरिति निश्चये पर्वतवृत्तिः वह्निमदन्यावृत्तिरिति व्याप्तिज्ञानानुदयेन तादृशज्ञानस्यापि व्यभिचारज्ञानप्रतिबध्यत्वेनानुमितिहेतुत्वावश्यकतया वह्निव्याप्यवान् पर्वत इत्याकारकहेतुतावच्छेदकाविषयकज्ञानस्यापि पक्षवृत्तौ वह्निव्याप्यत्वावगाहित्वेन तादृशज्ञानस्य व्यभिचारज्ञानप्रतिबध्यत्वसंभवेनोक्तानुपपत्त्यभावात् । ननु हेतुतावच्छेदकाविषयकनिरुक्तपरामर्शोत्तरं हेतुतावच्छेदकविषयकं परामर्शं कल्पयित्वैव अनुमितिस्वीकारात् हेतुतावच्छेदकघटितरूपेण हेतुतायां नोक्तव्यभिचारप्रसक्तिरित्यत आह ॥ **लाघवाच्चेति** ॥ व्याप्यतावच्छेदकप्रकारकत्वापेक्षया व्याप्तिप्रकारकत्वस्य लघुत्वादित्यर्थः । नन्वेतन्मते कारणतावच्छेदकलाघवसत्त्वेऽपि ज्ञानद्वयस्थले विशिष्टज्ञानकल्पनागौरवं परं विशिष्यत इत्याशङ्कां अन्वयव्यभिचारात् मीमांसकमतसिद्धरूपेण कारणत्वं न संभवत्येवेति परिहरति ॥ **किंचेति** ॥ **गृह्यमाणव्याप्यतेति** ॥ वर्तमानग्रहविषयीभूतव्याप्य-

## दिनकरीयम्.

च्छेदकताकत्वादित्यर्थः । ननु ज्ञानद्वयस्थलेऽपि विशिष्टज्ञानं कल्पनीयमतो न व्यभिचार इत्यत आह ॥ **विशिष्टज्ञानेति** ॥ **व्याप्यतावच्छेदकेति** ॥ अयमालोको धूमो वेति सन्देहदशायां व्याप्यतावच्छेदकप्रकारकनिर्णयाभावेऽपीत्यर्थः ॥ **वह्निव्याप्यवानिति** ॥ वह्न्यभाववदवृत्तिमानित्यर्थः । न तु धूमसमानाधिकरणेत्यादिरूपव्याप्तिविशिष्टवानित्यर्थः । अत्र हेतुतावच्छेदकमानानैयत्यात् ॥ **अनुमित्युत्पत्तेरिति** ॥ तथा च व्याप्यतावच्छेदकप्रकारकपक्षधर्मताज्ञानस्य तत्र व्यभिचारान्न तेन रूपेण हेतुत्वमिति भावः । ननु तत्र फलबलाद्व्याप्यतावच्छेदकप्रकारकं ज्ञानं कल्पनीयमतो न व्यभिचार इत्यत आह ॥ **लाघवाच्चेति** ॥ व्याप्यतावच्छेदकप्रकारकत्वापेक्षया व्याप्तिप्रकारकत्वस्य लघुत्वादित्यर्थः । नन्वस्तु तवावच्छेदकलाघवं तथापि पूर्वोक्तकल्पनलाघवमेव मीमांसकानां मूलयुक्तिर्भविष्यतीत्यत आह ॥ **किंचेति** ॥ **न च गृह्यमाणेति** ॥ अत्र शानचा ग्रहस्य वर्तमानताया अभिधानान्न कालान्तरीयतादृशग्रहमादाय दोषः । व्याप्तिप्रकारकं ज्ञानमि-

## रामरुद्रीयम्.

**तावच्छेदकेत्यादि** ॥ तथा चानन्यथासिद्धत्वमात्रं मीमांसकैः कल्पनीयं नैयायिकैस्तूभयं कल्पनीयमिति गौरवमिति भावः । ननु व्याप्यतावच्छेदकानिर्णये वह्निव्याप्यवानिति शाब्दपरामर्शोऽपि न सम्भवत्येवं धूमव्यापकवह्निसमानाधिकरणवृत्तिधूमत्वादेरेव व्याप्तित्वादित्याशङ्कानिरासायाह ॥ **वह्न्यभाववदवृत्तीति** ॥ **फलबलादिति** ॥ अनुमितिरूपकार्येण कारणानुमानसम्भवादिति भावः ॥ **लघुत्वादिति** ॥ उभयत्रापि व्यभिचारस्याविशिष्टतया लघुरूपेणैव कारणतायाः कल्पयितुमुचितत्वादिति भावः ॥ **मूलयुक्तिरिति** ॥ व्याप्यतावच्छेदकप्रकारकपक्षधर्मताज्ञानहेतुतासाधकयुक्तिरित्यर्थः ॥ **शानचेति** ॥ लटः शतृशानचाविति

च्यम् । चैत्रस्य व्याप्तिग्रहे मैत्रस्य पक्षधर्मताज्ञानात् अनुमितिः स्यात् । यदि तत्पुरुषीयगृह्यमाणव्याप्यतावच्छेदकप्रकारकं तत्पुरुषीयपक्षधर्मताज्ञानं तत्पुरुषीयानुमितौ हेतुरित्युच्यते तदाऽनन्तकार्यकारणभावः । मन्मते तु समवायसम्बन्धेन व्याप्तिप्रकारकपक्षधर्मताज्ञानं समवायसम्बन्धेनानुमितिं जनयतीति नानन्तकार्यकारणभावः । यदि तु व्याप्तिप्रकारकं पक्षधर्मताज्ञानं च स्वतन्त्रं कारणमित्युच्यते तदा कार्यकारणभावद्वयं वह्निव्याप्यो धूम आलोकवान् पर्वत इति ज्ञानादप्यनुमितिः स्यात् । इत्थं च यत्र ज्ञानद्वयं तत्रापि

## प्रभा

तेत्यर्थः । तेन न कालान्तरीयज्ञानविषयत्वमादाय दोषप्रसक्तिः ॥ **स्वतन्त्रकारणमिति** ॥ समवायेनानुमितिं प्रति व्याप्तिप्रकारकनिश्चयत्वेन पक्षधर्मताविषयकनिश्चयत्वेन च समवायसंबन्धेन कारणत्वमित्युच्यत इत्यर्थः । एवंच न तत्पुरुषीयत्वनिवेशप्रयुक्तगौरवमिति भावः । ननु न्यायमतेऽपि एकस्य कारणविधया अपरस्य व्यापारविधया हेतुत्वमावश्यकमिति कार्यकारणभावद्वयमावश्यकमेवेत्यत आह ॥ **वह्निव्याप्य इत्यादि** ॥ **अनुमितिः स्यादिति** ॥ व्याप्तिप्रकारकनिश्चयस्य पक्षधर्मताविषयकनिश्चयस्य च सत्त्वादित्याशयः । अत्र तद्धर्मावच्छिन्नलिङ्गकानुमितिं प्रति तद्धर्मावच्छिन्नविषयकव्याप्तिनिश्चयत्वेन तद्धर्मावच्छिन्नप्रकारकपक्षविशेष्यकनिश्चयत्वेन च समवायघटितसामानाधिकरण्यप्रत्यासत्त्या हेतुत्वे नोक्तदोषप्रसक्तिः । अथवा स्वीयव्याप्तिनिष्ठप्रकारतानिरूपितविशेष्यतावच्छेदकावच्छिन्नत्वस्वसमानाधिकरणज्ञानीयत्वोभयसंबन्धेन वर्तमानग्रहविशिष्टप्रकारतानिरूपितपक्षविशेष्यताशालिनिश्चयत्वेन ज्ञानद्वयविशिष्टपरामर्शोभयसाधारणलघुरूपेण मीमांसकमते हेतुत्वमिति न काप्यनुपपत्तिः । परंतु न्यायप्रवर्तकगङ्गेशोपाध्यायानां विशिष्टपरामर्शं विनानुमितेरेवानुभाविकत्वाभावेन तेषामनुभवानुरोधेन ज्ञानद्वयस्थलेऽपि विशिष्टज्ञानस्य हेतुत्वं कल्पनीयम् । अत एव वह्निव्याप्यधूमवानयमिति न्यायघटकीभूततया गङ्गेशोपाध्यायानामुपनयप्रयोगः वह्निव्याप्यो धूमः धूमवानयमिति उपनयप्रयोगाभावश्च सङ्गच्छते । यदिच आनुभाविकत्वाभावेऽपि क्षणैकविलम्बासहनमात्रेण ज्ञानद्वयात् विशिष्टज्ञानोत्पत्ति-

## दिनकरीयम्.

ति स्वतन्त्रमित्यनेनान्वयि ॥ **इत्युच्यत इति** ॥ इत्थंच न तत्पुरुषीयत्वं निवेश्यते चैत्रस्य व्याप्तिग्रहकाले तच्छून्यस्य मैत्रस्यानुमित्यापत्तेरभावान्मैत्रात्मनि स्वतन्त्रहेतुभूतव्याप्तिज्ञानाभावादिति भावः । ननु व्याप्तिप्रकारकपक्षधर्मताज्ञानत्वेन पक्षधर्मताविषयकव्याप्तिप्रकारकज्ञानत्वेन वा हेतुतेत्यत्र विनिगमनाविरहेण हेतुताद्वयं तत्रापीत्यत आह ॥ **वह्निव्याप्य इति** ॥ **अनुमितिः स्यादिति** ॥ न्यायनये तु व्याप्तिप्रकारतानिरूपितहेतुप्रकारतानिरूपितपक्षविशेष्यताशालिज्ञानत्वेन हेतुत्वस्य विवक्षितत्वात् न तादृशज्ञानात्तत्वा धूमो वह्निव्याप्यो धूमवान् पर्वत इति ज्ञानादनुमित्यापत्तिस्तत्र व्याप्तिप्रकारतानिरूपितधूमविशेष्यतायाः पर्वतविशेष्यतानिरूपितप्रकारतानात्मकत्वादिति भावः । ननु ज्ञानद्वयस्थले विशिष्टज्ञानकल्पने कल्पनागौरवं

## रामरुद्रीयम्.

सूत्रेण वर्तमानार्थकलस्थानिकत्वेन शतृशानचोर्विधानादिति भावः ॥ **तत्रापीति** ॥ यद्यपि व्याप्यतावच्छेदकप्रकारकपक्षविशेष्यकनिश्चयत्वेन पक्षविशेष्यकव्याप्यतावच्छेदकप्रकारकनिश्चयत्वेन वा कारणत्वमित्यत्र विनिगमनाविरहेण मीमांसकमते कार्यकारणभावचतुष्टयापत्त्या न्यायमते विनिगमनाविरहेण कारणताद्वयापादनमसङ्गतं तथापि व्याप्तिप्रकारत्वहेतुप्रकारत्वपक्षविशेष्यत्वानां त्रयाणां विशेषणविशेष्यभावे विनिगमनाविरहेण गुरुभूतकार्यकारणभावषट्कापत्त्या मीमांसकमते न गौरवमित्यर्थे तात्पर्यान्नासङ्गतिरिति भावः ॥ **मूले आलोकवानिति** ॥ यद्यपि व्याप्यतावच्छेदकानां धूमत्वादीनां निवेशे न तदापत्तिः धूमत्वप्रकारकपक्षधर्मताज्ञानस्य धूमविशेष्यकव्याप्तिज्ञानसहकारेणैव फलजनकत्वस्योपगन्तव्यत्वात् तथापि व्याप्यतावच्छेदकानां निवेशे व्याप्यतावच्छेदकभेदेन अनन्तकार्यकारणभावापत्त्या गौरवमिति बोध्यम् ॥ **व्याप्तिप्रकार-**

विशिष्टज्ञानं कल्पनीयं फलमुखगौरवस्यादोषत्वात् ॥

**व्याप्तिः साध्यवदन्यास्मिन्नसम्बन्ध उदाहृतः ॥ ६८ ॥**

व्याप्यो नाम व्याप्त्याश्रयः तत्र व्याप्तिः केत्यत आह ॥ **व्याप्तिरिति** ॥ वह्निमान् भू-

## प्रभा.

क्षण एवानुमितिः स्वीक्रियते तदा तुल्ययुक्त्या अवयवसंयोगासमवायिकारणावयवक्रियया अवयवसंयोगोत्पत्तिक्षण एव द्रव्योत्पत्त्यापत्तेः । नचैवं सति तादृशद्रव्यं प्रति अवयवक्रियाया एव असमवायिकारणतया तन्नाशादवयविनाशापत्तिरिति वाच्यं सर्वत्र द्रव्यनाशं प्रति असमवायिकारणनाशस्य हेतुत्वे मानाभावात् संयोगादिनाशे असमवायिकारणक्रियानाशस्य व्यभिचारात् यथा हेतुत्वाभावः परंतु क्वचिद्विभागात् क्वचिदाश्रयनाशादेव तथा द्रव्यनाशोऽपि क्वचिद्विभागात् क्वचिदाश्रयनाशादेवेति वक्तुं शक्यत्वात् तस्मादनुभवान्यथानुपपत्त्या अवयवसंयोगोत्पत्तिक्षणे द्रव्योत्पत्तिमनङ्गीकृत्य तद्द्वितीयक्षण एव क्षणैकविलम्बेन द्रव्योत्पत्तिस्वीकारवत् ज्ञानद्वयस्थलेऽपि विशिष्टज्ञानोत्पत्तिसमये अनुमितिमनङ्गीकृत्य तादृशानुभवान्यथानुपपत्त्या क्षणैकविलम्बेन विशिष्टज्ञानोत्पत्तिद्वितीयक्षण एवानुमितिः स्वीकार्येति विशिष्टज्ञानत्वेन हेतुत्वमावश्यकमित्यनुभवविरोध एव मीमांसकमते दोष इति प्रतिभाति ॥ **इत्थं चेति** ॥ लाघवादिना विशिष्टज्ञानत्वेन हेतुतासिद्धौ चेत्यर्थः ॥ **फलमुखगौरवस्येति** ॥ फलं गौरवज्ञानप्रतिबध्यं विशिष्टज्ञानत्वेन कारणताज्ञानं तन्मुखं तत्प्रयोज्यं गौरवं गौरवज्ञानं तस्येत्यर्थः ॥ **अदोषत्वादिति** ॥ प्रतिबन्धकत्वासम्भवादित्यर्थः । अत्र विशिष्टज्ञानत्वेन रूपेण कारणताग्रहं प्रति विशिष्टज्ञानत्वधर्मिकगौरवज्ञानं प्रतिबन्धकमिति वाच्यम् । विशिष्टज्ञानत्वनिष्ठगौरवं यत्किंचिदनुमित्यव्यवहितपूर्वकालावच्छेदेनावश्यकल्पनीयस्वाश्रयकत्वरूपादन्यदुर्वचं तथाच विशिष्टज्ञानत्वेन कारणत्वे निर्णीते निर्णीतकारणत्वान्यथानुपपत्त्या ज्ञानद्वयोत्तरकालीनानुमितिव्यक्तिपूर्वमपि विशिष्टज्ञानं कल्पनीयं नतु तेन रूपेण कारणत्वनिर्णयाभाव इत्यन्वयव्यतिरेकाभ्यां विशिष्टज्ञानत्वधर्मिकनिरुक्तगौरवज्ञानस्य विशिष्टज्ञानत्वेन कारणताग्रहप्रयोज्यत्वलाभेन तेन रूपेण कारणत्वनिर्णयात् पूर्वं निरुक्तगौरवज्ञानासंभवेन उत्तरकालीनगौरवज्ञानस्य पूर्वोत्पन्नकारणत्वग्रहप्रतिबन्धकत्वासंभवादित्याशयः ॥

मूले परामर्शनिरूपणानन्तरं व्याप्तिनिरूपणे प्रकृतघटकत्वरूपोपोद्धातसङ्गतिमाह ॥ **व्याप्यो नाम**

## दिनकरीयम्.

न्यायमते दूषणं भविष्यतीत्यत आह ॥ **इत्थं चेति** ॥ **फलमुखगौरवस्यादोषत्वादिति** ॥ फलं कार्यकारणभावग्रहस्तन्मुखं तदधीनं गौरवं गौरवज्ञानमित्यर्थः । विशिष्टज्ञानत्वावच्छेदेन कारणत्वग्रहे विशिष्टज्ञानत्वधर्मिकगौरवनिश्चयो विरोधी वाच्यः तच्च गौरवं प्रमाणान्तरासिद्धतत्तदनुमित्यव्यवहितपूर्ववर्तिस्वाश्रयकत्वमेव तादृशगौरवनिश्चयो विशिष्टज्ञानत्वेन कारणत्वनिश्चयाधीनः स्वघटकीभूततत्तदनुमित्यव्यवहितपूर्ववर्तिस्वाश्रयनिर्णयं विना न सम्भवतीति कार्यकारणभावनिर्णयात् पूर्वं गौरवनिर्णयाभावान्न तादृशगौरवं दोष इति भावः ॥

मूले परामर्शलक्षणानन्तरं व्याप्तिनिरूपणे सङ्गतिमुपोद्घातं निरूपयन्नाह ॥ **व्याप्यो नामेति** ॥ त-

## रामरुद्रीयम्.

**तानिरूपितहेतुप्रकारतेति** ॥ इदं च प्रकारताविशेष्यतयोरभेदवादिमताभिप्रायेण । भट्टाचार्यमते तु व्याप्तिप्रकारतानिरूपितविशेष्यतावच्छिन्नप्रकारतानिरूपितपक्षविशेष्यताशालित्वेन वक्तव्यं एकनिष्ठप्रकारताविशेष्यतयोरवच्छेद्यावच्छेदकभावस्वीकारात् विशेष्यताप्रकारतयोरभेदस्वीकारे रक्तदण्डवानिति बुद्धौ रक्तरूपविशेष्यकदण्डाभावनिश्चयप्रतिबध्यत्वापत्तेः दण्डप्रकारतानिरूपितरक्तरूपनिष्ठविशेष्यताशालित्वात्तादृशबुद्धेरिति ध्येयम् । वक्ष्यमाणगौरवस्य कारणतानिश्चयानधीनत्वादाह ॥ **गौरवज्ञानमिति** ॥ **प्रमाणान्तरेति** ॥ कार्यलिङ्गकानुमानातिरिक्तप्रमाणेत्यर्थः ॥ **स्वाश्रयकत्वं** स्वाश्रयवृत्तित्वम् ॥ **निश्चयाधीन इति** ॥ तादृशकारणतानिश्चये सत्येव कार्यलिङ्गेन तत्तदनुमित्यव्यवहितपूर्ववृत्तित्वविशिष्टपरामर्शस्य निर्णयसम्भवादिति भावः ॥ **स्वघटकीभूतेति** ॥ गौरवघटकीभूतेत्यर्थः ॥ **न तादृशेति** ॥ स्वोत्तरोत्पन्नगौरवज्ञानस्य स्वप्रतिबन्धकत्वासम्भव इति भा-

मादित्यादौ साध्यो वह्निः साध्यवान् महानसादिस्तदन्यो जलह्रदादिस्तदवृत्तित्वं धूमस्येति लक्षणसमन्वयः । धूमवान् वह्नेरित्यादौ साध्यवदन्यस्मिंस्तप्तायःपिण्डादौ वह्नेः सत्त्वान्नातिव्याप्तिः । अत्र येन सम्बन्धेन साध्यं तेनैव सम्बन्धेन साध्यवान् बोध्यः अन्यथा समवायसम्बन्धेन वह्निमान्वह्नेरवयवस्तदन्यो महानसादिस्तत्र धूमस्य विद्यमानत्वादव्याप्तिप्रसङ्गात् । साध्यवदन्यश्च साध्यवत्त्वावच्छिन्नप्रतियोगिताकभेदवान् बोध्यः तेन यत्किञ्चिद्वह्निमतो महानसादेर्भिन्ने पर्वतादौ धूमसत्त्वेऽपि न क्षतिः । येन सम्बन्धेन हेतुता तेनैव

## प्रभा.

**व्याप्त्याश्रय इति** ॥ व्याप्यस्य पक्षवृत्तित्वेत्यादिकारिकाघटकव्याप्यपदार्थः व्याप्त्याश्रय इत्यर्थः ॥ **तत्र व्याप्तिरिति** ॥ व्याप्त्याश्रयघटकीभूता व्याप्तिरित्यर्थः ॥ **येन संबन्धेन साध्यमिति** ॥ अत्र साध्यशब्दस्य भावप्रधानानिर्देशात् यत्संबन्धावच्छिन्नसाध्यतेत्यर्थः । साध्यतावच्छेदको यः संबन्ध इति यावत् ॥ **तेनैव संबन्धेनेति** ॥ साध्यतावच्छेदकसंबन्धेनेत्यर्थः ॥ **समवायसंबन्धेनेति** ॥ अव्याप्त्यभिधानमिदं यत्किञ्चित्संबन्धेन साध्यवत्त्वनिवेशाभिप्रायेण यदि च संबन्धसामान्येन साध्यवत्त्वं विवक्ष्यते तदा नित्यगुणादेरेव संबन्धसामान्येन साध्यवदन्यतया तन्निरूपितहेतुतावच्छेदकीभूतसंयोगसंबन्धावच्छिन्नवृत्तित्वाप्रसिद्धया अव्याप्तिः । धूमवान्वह्निप्रकारकप्रमाविशेष्यत्वादित्यादौ संबन्धसामान्येन साध्यवदन्यनित्यगुणादिनिरूपितस्वरूपसंबन्धावच्छिन्नप्रतियोगिताकवृत्तित्वाभावसत्त्वादतिव्याप्तिश्चेति बोध्यम् । केचित्तु यदि संबन्धसामान्येन साध्यवत्त्वं विवक्ष्यते तदा धूमवान् वह्नेरित्यादावतिव्याप्तिर्बोध्येत्याहुः तदसत् संयोगसंबन्धेन वह्निहेतुकस्थले संबन्धसामान्येन साध्यवदन्यनित्यगुणादिनिरूपितहेतुतावच्छेदकीभूतसंयोगसंबन्धावच्छिन्नवृत्तित्वाप्रसिद्धया अतिव्याप्त्यप्रसक्तेः ॥ **साध्यवत्त्वावच्छिन्नेत्यादि** ॥ साध्यतावच्छेदकावच्छिन्नावच्छेदकताकप्रतियोगिताकभेदवानित्यर्थः । अत्र साध्यवन्निष्ठप्रतियोगिताकभेदानिवेशे साध्यनिष्ठावच्छेदकताकप्रतियोगिताकभेदनिवेशे च दोषमाह ॥ **तेनेति** ॥ **यत्किंचिद्वह्निमतो महानसादेर्भिन्न इति** ॥ महानसादेः

## दिनकरीयम्.

**त्रेति** ॥ घटकत्वं सप्तम्यर्थः ॥ **अव्याप्तिप्रसङ्गादिति** ॥ अव्याप्त्यभिधानमिदं येनकेनचित्सम्बन्धेन साध्यवत्त्वविवक्षणाभिप्रायेण । यदि च सम्बन्धसामान्येन साध्यवत्त्वं विवक्ष्यते तदा धूमवान् वह्नेरित्यादाव-

## रामरुद्रीयम्.

वः ॥ **उपोद्घातमिति** ॥ व्याप्यपक्षोभयवैशिष्ट्यावगाहिज्ञानस्य व्याप्तिज्ञानसाध्यत्वेनोपोद्घातसङ्गत्या परामर्शनिरूपणानन्तरं व्याप्तिनिरूपणमिति भावः ॥ **घटकत्वमिति** ॥ तदविषयकप्रतीत्यविषयत्वं तद्घटकत्वं व्याप्यघटकीभूता व्याप्तिः केत्यर्थः पर्यवसितः । साध्यवदन्यावृत्तित्वलक्षणे साध्यतावच्छेदकसम्बन्धेन साध्यवत्त्वाविवक्षणे वह्निमान् धूमादित्यादौ अव्याप्तिर्मूलोक्ता न सङ्गच्छते साध्यवत्त्वावच्छिन्नभेदस्य संयोगेन साध्यवति पर्वतादावसम्भवादित्यतस्तद्ग्रन्थभावमाह ॥ **येनकेनचिदिति** ॥ यत्किञ्चित्सम्बन्धेनेति तदर्थः । तथा च समवायेन वह्निमदन्यत्वस्य पर्वतादौ सत्त्वान्नाव्याप्त्यसंगतिरिति भावः । यद्यपि विषयितादिकृतविशेषणतादियत्किञ्चित्सम्बन्धेन साध्यवदन्यस्मिन्हेतोर्वृत्त्या सर्वत्रासम्भव एवेत्यव्याप्त्यभिधानं मूलकृतोऽसङ्गतं तथापि इदं घटभिन्नसंयोगसंयुक्तसमवेतसविषयकान्यत्वविशिष्टतद्रूपवान् तद्घटभिन्नान्यत्वविशिष्टतद्रूपवान्वा तद्रसादित्यादौ लक्षणसम्भवादव्याप्त्यभिधानमिति बोध्यम् । ननु सम्बन्धसामान्येन साध्यवत्त्वं विवक्षणीयमतो नाव्याप्तिरित्यत आह ॥ **यदि चेति** ॥ **अतिव्याप्तिरिति** ॥ धूमशून्यायोगोलकादेरपि सम्बन्धसामान्यान्तर्गतकालिकादिना धूमवत्त्वेन धूमासमानकालीनपदार्थस्यैव धूमवदन्यत्वात् वह्नयधिकरणस्य धूमासमानकालस्याप्रसिद्धेरिति भावः । यदि च धूमासमानकालीनः प्रलयोत्पन्नपरमाणुक्रियादिरेव तत्र हेतुतावच्छेदकसंयोगेन वृत्त्यप्रसिद्धयैव नातिव्याप्तिरिति विभाव्यते तदा तदभिप्रायेणैवादिपदेन वह्निमत्त्वप्रकारकप्रमाविशेष्यत्वस्य स्वरूपसम्बन्धेन हेतोरुपसंग्रह इति मन्तव्यम् ॥ **मूले साध्यवत्त्वा-**

सम्बन्धेन साध्यवदन्यावृत्तित्वं बोध्यं तेन साध्यवदन्यस्मिन् धूमावयवे धूमस्य समवायसम्बन्धेन सत्त्वेऽपि न क्षतिः। साध्यवदन्यावृत्तित्वं च साध्यवदन्यवृत्तित्वत्वावच्छिन्नप्रतियोगिताकाभावः तेन धूमवान् वह्नेरित्यत्र साध्यवदन्यजलह्रदादिवृत्तित्वाभावेऽपि नातिव्याप्तिः। अत्र यद्यपि द्रव्यं गुणकर्मान्यत्वविशिष्टसत्त्वादित्यादौ विशिष्टसत्तायाः शुद्धसत्तायाश्चैक्यात् साध्यवदन्यास्मिन् गुणादौ तदवृत्तित्वं नास्ति तथापि हेतुतावच्छेदकरूपेणावृत्तित्वं वाच्यं हेतुतावच्छेदकं वृत्तितानवच्छेदकमिति फलितोऽर्थः ॥ ६८ ॥

## प्रभा.

यत्किंचिद्वह्निमतो भिन्न इति योजनया महानसादेः भिन्ने यत्किंचिद्वह्निमतो भिन्न इत्यर्थलाभः। तथाच साध्यवन्निष्ठप्रतियोगिताकभेदनिवेशे महानसत्वाद्यवच्छिन्नप्रतियोगिताकभेदमादायाव्याप्तिः द्वितीयपक्षे यत्किंचिद्वह्न्यवच्छिन्नप्रतियोगिताकभेदमादायाव्याप्तिरिति भावः। नचैवं घटो द्रव्यं पृथिवीत्वादित्यादौ स्वरूपतो द्रव्यत्वसाध्यकस्थले साध्यतावच्छेदकाप्रसिद्ध्या तत्र तद्घटितलक्षणमव्याप्तमिति वाच्यं साध्यतासमानियतधर्मातिरिक्तधर्मानवच्छिन्नावच्छेदकताया एव लक्षणे निवेशेनोक्तानुपपत्तेरभावात्। ननु निरुक्तसाध्यवद्भेदवत्त्वं यदि संबन्धसामान्येन तदा वह्निमान् धूमादित्यादावव्याप्तिः पर्वतादेरपि कालोपाधितया कालिकसंबन्धेन निरुक्तभेदवत्त्वात्। नचाभावीयविशेषणतया भेदवत्त्वविवक्षणान्नाव्याप्तिरिति वाच्यम्। तथा सति घटभिन्नः पटत्वादित्यादावव्याप्त्यापत्तेः घटभेदावच्छिन्नप्रतियोगिताकभेदस्य घटत्वात्मकतया तस्य दैशिकविशेषणतयाधिकरणाप्रसिद्धेरिति चेन्न साध्यवत्ताग्रहाविरोधितानियामकसंबन्धेन साध्यवद्भेदस्य विवक्षितत्वान्नाव्याप्तिः। नचैवमप्यव्याप्यवृत्तिमदन्योन्याभावस्याप्यव्याप्यवृत्तितामते कपिसंयोगी एतद्वृक्षत्वादित्यादावव्याप्तिः कपिसंयोगवद्भेदवत्त्वस्य वृक्षे सत्त्वादिति वाच्यं तन्मते साध्यवद्भिन्ने प्रतियोगिभिन्नत्वस्यापि विवक्षितत्वान्नाव्याप्तिरिति। अत्र साध्यवदन्यानिरूपितहेतुतावच्छेदकसंबन्धावच्छिन्नवृत्तित्वत्वव्याप्यप्रतियोगिताकाभावस्तादृशवृत्तित्वत्वव्यापकप्रतियोगिताकाभावस्तादृशवृत्तित्वत्वसमनियतप्रतियोगिताकाभावो वा लक्षणघटक इति कल्पत्रये प्रथमकल्पे स्वयं दूषणमाह ॥ तेनेत्यादि ॥ इदमुपलक्ष-

## दिनकरीयम्.

तिव्याप्तिर्बोध्या ॥ **अवृत्तित्वं नास्तीति** ॥ विशिष्टाधेयताया अनतिरिक्तत्वादिति भावः ॥ **फलितोऽर्थ इति** ॥ तथा च तन्निष्ठाधिकरणतानिरूपकतावच्छेदकस्यैव तन्निरूपिताधेयतावच्छेदकत्वनियमेन विशिष्टसत्तात्वस्य गुणाधेयतानवच्छेदकत्वान्नाव्याप्तिरिति भावः ॥ ६८ ॥

## रामरुद्रीयम्.

**वच्छिन्नेति** ॥ साध्यतावच्छेदकावच्छिन्नपर्याप्तप्रतियोगितावच्छेदकताकभेदवानित्यर्थः। यथाश्रुते साध्यस्यैव साध्यवत्त्वरूपतया तत्तद्व्यक्तिमद्भेदस्य महानसीयवह्निमद्भेदस्य च वारणासम्भवात् इदं च गुरुधर्मस्यापि प्रतियोगितावच्छेदकत्वमताभिप्रायेण तेन द्रव्यत्वादिसाध्यकस्थले द्रव्यत्वस्वरूपसाध्यतावच्छेदकविशिष्टपर्याप्तावच्छेदकताया गुरुधर्मस्यानवच्छेदकतामतेऽप्रसिद्धावपि न क्षतिरिति ध्येयम्। एवं साध्यवदन्यवृत्तित्वत्वावच्छिन्नेति मूलस्यापि तादृशवृत्तित्वत्वपर्याप्तावच्छेदकताकेत्यर्थो बोध्यः। अन्यथा वह्निमदन्यह्रदवृत्तित्वाभावस्य वारणानुपपत्तेः एवं साध्यवदन्यवृत्तित्वं साध्यवदन्यानुयोगिकत्वविशिष्टहेतुतावच्छेदकसम्बन्धप्रतियोगित्वमेव न तु साध्यवदन्यानिरूपिततत्सम्बन्धावच्छिन्नाधेयत्वं वृत्त्यनियामकसम्बन्धेन हेतुतायां तदप्रसिद्धेः तादृशाधेयतानवच्छेदकं हेतुतावच्छेदकमित्यत्रापि तादृशप्रतियोगितानवच्छेदकमित्येवार्थ इति ध्येयम् ॥ **विशिष्टाधेयताया इति** ॥ यद्यपि विशिष्टस्यानतिरिक्तत्वादित्येव वक्तव्यं तच्च मूले उक्तमेव तथापि विशिष्टस्यानतिरिक्तत्वेऽपि विशिष्टनिष्ठाधेयताया अतिरिक्तत्वेन शुद्धसत्तापर्याप्ताधेयताया गुणादिनिरूपितत्वेऽपि विशिष्टपर्याप्ताधेयताया न गुणादिनिरूपितत्वमित्याशङ्कानि-

**अथवा हेतुमन्निष्ठविरहाप्रतियोगिना ॥**
**साध्येन हेतोरैकाधिकरण्यं व्याप्तिरुच्यते ॥ ६९ ॥**

ननु केवलान्वयिनि ज्ञेयत्वादौ साध्ये साध्यवदन्यस्याप्रसिद्धत्वादव्याप्तिः किञ्च सत्ता-

## प्रभा.

णम् । द्वितीयपक्षे धूमवदन्यनिरूपिततादृशवृत्तित्वघटैतदुभयत्वावच्छिन्नप्रतियोगिताकाभावस्यापि तादृशत्वेन तादृशाभावमादाय वह्निहेतावतिव्याप्त्यापत्तेः तृतीयपक्षेऽप्ययोगोळकनिरूपितसंयोगसंबन्धावच्छिन्न-वृत्तित्वायोगोळकान्यधूमवदन्यनिरूपितसंयोगसंबन्धावच्छिन्नवृत्तित्वैतदुभयत्वावच्छिन्नप्रतियोगिताकाभावस्य तादृशत्वेन तमादाय तत्रैवातिव्याप्त्यापत्तेः । यदिच तादृशवृत्तित्वत्वव्यापकवैशिष्ट्यव्यासज्यवृत्तिधर्मानव-च्छिन्नप्रतियोगिताकाभावो निवेश्यते तदातिगौरवमिति हृदयं । नचैवं तादृशवृत्तित्वत्वावच्छिन्नप्रतियोगि---ताकाभावनिवेशेऽपि पूर्वक्षणवृत्तित्वविशिष्टतादृशवृत्तित्वत्वावच्छिन्नप्रतियोगिताकाभावमादायोक्तातिव्याप्ति-स्तदवस्थेति वाच्यं तादृशवृत्तित्वत्वपर्याप्तावच्छेदकताकप्रतियोगिताकाभावस्यैव विवक्षणात् उक्ताभावीयप्र-तियोगितावच्छेदकतायाः पूर्वक्षणान्तर्भावेणैव पर्याप्ततया तादृशभावस्य लक्षणाघटकत्वात् । नचैवं तादृश-वृत्तित्वत्वावच्छिन्नस्य व्यधिकरणसंबन्धेनाभावमादायोक्तस्थलेऽतिव्याप्तिस्तदवस्थेति वाच्यं तादृशवृत्तित्वत्वाव-च्छिन्नप्रतियोगितायां स्वरूपसंबन्धावच्छिन्नत्वनिवेशेन व्यधिकरणसंबन्धावच्छिन्नप्रतियोगिताकाभावस्य तादृश-त्वाभावेन तमादाय उक्तातिव्याप्त्यप्रसक्तेः ॥ **गुणादौ तद्वृत्तित्वन्नास्तीति** ॥ गुणादिनिरूपितहेतुतावच्छे-दकसंबन्धावच्छिन्नवृत्तित्वत्वावच्छिन्नप्रतियोगिताकाभाववत्त्वं विशिष्टसत्तारूपहेतौ नास्तीत्यर्थः । विशेष्यवृत्ति-प्रतियोगिकविशिष्टानुयोगिकाभावानभ्युपगमादिति भावः ॥ **हेतुतावच्छेदकरूपेणावृत्तित्वमिति** ॥ ताद-शवृत्तित्वं हेतुतावच्छेदकरूपावच्छिन्नं नेत्यर्थः । तथाच साध्यवदन्यनिरूपितवृत्तित्वं यद्धर्मावच्छिन्नं तद्धर्मभि-न्नहेतुतावच्छेदकवत्त्वमिति फलितम् । ननु धूमवान्वह्नेरित्यादावतिव्याप्तिः शैवालनिष्ठं तादृशवृत्तित्वं शैवाल-त्वावच्छिन्नमेवेति तद्भिन्नत्वस्य वह्नित्वे सत्त्वादिति । यदिच तादृशवृत्तित्वं यद्यद्धर्मावच्छिन्नं तत्तद्भिन्नत्वं नि-वेश्यते तदाऽतिगौरवं अतः फलितार्थमाह ॥ **हेतुतावच्छेदकमिति** ॥ तथाच तादृशवृत्तितावच्छेदक-त्वसामान्याभावलाभेन विशिष्टसत्तात्वस्य गुणनिष्ठाधिकरणतानिरूपकतानवच्छेदकत्वेन तन्निरूपिताधेयताव-च्छेदकत्वाभावस्यापि सत्त्वान्नाव्याप्तिरिति भावः ॥ ६८ ॥

लक्षणान्तरप्रणयने बीजमाह ॥ **नन्विति** ॥ केवलान्वयिन्यनुमानानङ्गीकारात्तन्मते तत्राव्याप्त्यभिधानम-सङ्गतमित्यत आह ॥ **किंचेति** ॥ अथवा केवलान्वयिन्यव्याप्तिमुक्त्वा व्यतिरेकिण्यव्याप्तिमाह ॥ किंचेति ॥ केचित्तु केवलान्वयिनि केवलान्वयित्वग्रहदशायां पक्षतारूपकारणविरहेणैव नानुमितिः व्यतिरेकित्वग्रहदशा-

## दिनकरीयम्.

अथवेत्यादिलक्षणमवतारयितुमाद्यलक्षणे दोषमाह ॥ **नन्विति** ॥ ननु केवलान्वयित्वज्ञानकाले पक्षतात्म-कसंशयाभावान्नैवानुमितिः तच्छून्यकाले तु भ्रमात्मकव्याप्तिज्ञानादनुमितिर्भवत्येवेत्यत आह ॥ **किंचेति** ॥ इत्यादावित्यादिना संयोगेन हेतुतायां गुणवान् घटादित्यादेः सङ्ग्रहः । ननु स्वाधिकरणावृत्तिसाध्यवदन्योन्या-भावकत्वं लक्षणार्थस्तथा च नेयमव्याप्तिरिति चेन्न । वह्निमान् धूमादित्यादौ धूमाधिकरणे वह्निमदन्योन्या-भावस्य कालिकसम्बन्धेन वृत्तेरव्याप्त्यापत्तेः साध्यवत्ताग्रहविरोधितानियामकसम्बन्धेनावृत्तित्वस्यावश्यं वि-वक्षणीयतया सत्ताभाववान् जात्यभावादित्यादावव्याप्तेः जात्यभावाधिकरणे साध्यवत्ताग्रहविरोधितानियाम-

## रामरुद्रीयम्.

दशायैव तदुक्तामिति बोध्यम् ॥ **केवलान्वयित्वेति** ॥ भेदप्रतियोगितानवच्छेदकत्वरूपकेवलान्वयित्वनि-श्चयकाल इत्यर्थः । पक्षताघटकेत्यपपाठः । साध्यसन्देहस्यैव पक्षतात्वात् सिद्ध्यभावरूपपक्षतायाः सन्देहाघटितत्वाच्च किन्तु पक्षतात्मकेत्येव पाठः तथा च वाच्यो नवेति संशयाभावादेवं नानुमि-तिरिति भावः । वस्तुतः सिद्धान्ते सिषाधयिषाविरहविशिष्टसिद्ध्यभावस्यैव पक्षतात्वोपगमात् मी-मांसकमते केवलान्वयिसाध्यकानुमित्यनङ्गीकाराद्द्वितीयदूषणाभिधानमिति युक्तमुत्पश्यामः ॥ न च

वान् जातेरित्यादौ साध्यवदन्यस्मिन् सामान्यादौ हेतुतावच्छेदकसम्बन्धेन समवायेन वृत्तेरप्रसिद्धत्वादत आह ॥ अथवेति ॥ हेतुमति निष्ठा वृत्तिर्यस्य स तथा विरहोऽभावः तथा च हेत्वधिकरणवृत्तिर्योऽभावस्तदप्रतियोगिना साध्येन सह हेतोः सामानाधिकरण्यं व्याप्तिरुच्यते । अत्र यद्यपि वह्निमान् धूमादित्यादौ हेत्वधिकरणपर्वतादिवृत्त्यभावप्रतियोगित्वं तत्तद्वह्न्यादेरस्तीत्यव्याप्तिः । नच समानाधिकरणवह्निधूमयोरेव व्याप्तिरिति

## प्रभा.

यां भ्रमात्मकपरामर्शादेवानुमितिरित्यत आह किंचेतीत्यवतरणिकामाहुः । तदसत् तथा सति हेतुमात्रेऽपि भ्रमात्मकव्याप्तिज्ञानादनुमितिसंभवे सद्धेतावव्याप्तिवारणाय विशेषणदानस्यासद्धेतावतिव्याप्तिवारणाय विशेषणान्तरदानस्य च वैयर्थ्यापत्तेः तस्मादसद्धेतौ लक्षणासत्त्वस्येव सद्धेतौ लक्षणसत्त्वस्यावश्यकतया केवलान्वयिनि तदप्रतिपादनेनोत्तरग्रन्थानुत्थितेस्तादृशग्रन्थस्यावतारिकारूपत्वाभावात् व्यतिरेकित्वभ्रमं विनापि अनुमितेरानुभाविकत्वाच ॥ **समवायेन वृत्तेरप्रसिद्धत्वादिति** ॥ नच साध्यवदन्यनिरूपितहेतुतावच्छेदकस्वरूपैतदन्यतरसंबन्धावच्छिन्नवृत्तित्वाभावविवक्षणान्नाव्याप्तिः सामान्यादिनिरूपितसमवायसंबन्धावच्छिन्नवृत्तित्वस्याप्रसिद्धत्वेऽपि स्वरूपसंबन्धावच्छिन्नवृत्तित्वस्य प्रसिद्धत्वादिति वाच्यम् । तथा सत्ययं कालः कालिकसंबन्धेनाकाशाभावादित्यादौ अव्याप्त्यापत्तेः तत्र साध्यवद्भिन्ने नित्ये कालिकसंबन्धेन वृत्तित्वस्याप्रसिद्धत्वेऽप्यन्यतरसंबन्धान्तर्गताभावीयविशेषणतासंबन्धेन हेतोर्वृत्तित्वात् । नच स्वाधिकरणावृत्तिसाध्यवदन्योन्याभावकत्वस्यैव लक्षणार्थत्वस्वीकारात् नोक्ताव्याप्तिः जात्यधिकरणे साध्यवत्ताग्रहविरोधितानियामकदैशिकविशेषणतासंबन्धेन सत्तावदन्योन्याभावस्यासत्त्वादिति वाच्यम् तथा सति सत्ताभाववान् जात्यभावादित्यादौ अव्याप्त्यापत्तेः जात्यभावरूपहेत्वधिकरणे सामान्यादौ साध्यवत्ताग्रहविरोधितानियामकसमवायसंबन्धेन वृत्तेरप्रसिद्धत्वात् । परेतु सत्तावान् जातेरित्यादौ स्वाधिकरणेत्यादिव्याप्तिज्ञानं करणं सत्ताभाववान् जात्यभावादित्यादौ साध्यवदन्येत्यादिव्याप्तिज्ञानं करणमित्याहुः तदसत् संयोगसंबन्धावच्छिन्नघटाभावे साध्ये विषयितया हेतौ घटे लक्षणद्वयस्याव्याप्तेः विषयितया हेत्वधिकरणे संयोगेन साध्यवदन्ये भूतले विषयितया च वृत्तेरप्रसिद्धेः । स्वतन्त्रास्तु अत्यन्ताभावाप्रतियोगित्वमात्रं न केवलान्वयित्वं आकाशाभावस्य केवलान्वयित्वानुपपत्तेः किंतु वृत्तिमत्त्वघटितमेव वाच्यम् तत्र हेतुतावच्छेदकसंबन्धेन यत्किंचिदधिकरणं तन्निरूपितत्वमपि निवेशनीयम् । तथाच हेतुतावच्छेदकसंबन्धेन यत्किंचिदधिकरणनिष्ठात्यन्ताभावाप्रतियोगित्वं केवलान्वयित्वमिति लक्षणं फलितम् । एवंच सत्तावान् जातेरित्यादौ सत्ताया अपि निरुक्तकेवलान्वयित्वसत्त्वेन तत्साध्यकहेतोरपि केवलान्वयित्वात् केवलान्वयिन्यव्याप्तिरित्यनेनैव चारितार्थ्ये पृथक् तत्राव्याप्त्यभिधानं तद्वारणाय परिष्कारान्तरकरणं चासङ्गतमित्याहुः । मूले हेतुमन्निष्ठविरहेत्यत्र निपूर्वकष्ठाधातोः वृत्तित्वार्थकतया धर्मिलाभाय बहुव्रीहिमाह ॥ **मुक्तावल्यां हेतुमतीत्यादि** ॥ **तत्तद्वह्न्यादेरस्तीत्यव्याप्तिरिति** ॥ यद्यपि निष्कृष्टकल्पेऽपि गुणवान् द्रव्यत्वादित्यादौ विषयितासंबन्धेन गुणत्वविशिष्टज्ञानादेरभावस्यापि हेतुसमानाधिकरणतया साध्यतावच्छेदकस्य गुणत्वस्य तादृशाभावीयप्रतियोगितावच्छेदकत्वेनाव्याप्तिवारणाय हेतुसमानाधिकरणाभावे साध्यतावच्छेदकताघटकसंबन्धावच्छिन्नावच्छेदकताकप्रतियोगिताकत्वस्य विशेषणी-

## दिनकरीयम्.

कसम्बन्धेन समवायेन वृत्तेरप्रसिद्धेः । नच सत्तावान् जातेरित्यादौ स्वाधिकरणेत्यादिव्याप्तिज्ञानं करणं सत्ताभाववान् जात्यभावादित्यादौ तु साध्यवदन्येत्यादिव्याप्तिज्ञानं करणमिति वाच्यम् । तथापि संयोगसम्बन्धावच्छिन्नघटाभावे साध्ये विषयितया हेतौ घटे लक्षणद्वयस्याप्यव्याप्तिः तत्र विषयितया हेत्वधिकरणज्ञाने साध्यवत्ताग्रहविरोधितानियामकसंयोगेन घटाधिकरणे हेतुतावच्छेदकविषयितया वृत्तेरप्रसिद्धेः । नन्वति-

## रामरुद्रीयम्.

**त्तावानित्यादि** ॥ साध्यसाधनभेदेन व्याप्तिभेदस्यावश्यकतया शब्दैक्यस्यानुपादेयत्वादिति भा-

वाच्यं तत्तद्वह्न्यादेरप्युभयाभावसत्त्वादेकसत्त्वेऽपि द्वयं नास्तीति प्रतीतेः गुणवान् द्रव्यत्वादित्यादावव्याप्तिश्च । तथापि प्रतियोगितानवच्छेदकं यत् साध्यतावच्छेदकं तदवच्छिन्नसामानाधिकरण्यं व्याप्तिरिति वाच्यम् । ननु रूपत्वव्याप्यजातिमत्त्वान् पृथिवीत्वादित्यादौ साध्यतावच्छेदिका रूपत्वव्याप्यजातयस्तासां च शुक्लत्वादिजातीनां नील-

## प्रभा.

यतया वह्निनिष्ठतद्व्यक्तित्वावच्छिन्नाभावस्य प्रतियोगितावच्छेदकतायाः तद्व्यक्तित्वनिष्ठायाः स्वरूपसंबन्धावच्छिन्नत्वेन साध्यतावच्छेदकताघटकसमवायसंबन्धावच्छिन्नत्वाभावेन न तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकाभावमादायाव्याप्तिप्रसक्तिः । तथापि महानसीयवह्नित्वावच्छिन्नप्रतियोगिताकाभावमादायाव्याप्तौ तादृशग्रन्थतात्पर्यात् महानसीयवह्नित्वनिष्ठावच्छेदकतायाः तादृशसमवायसंबन्धावच्छिन्नत्वान्महानसीयत्वादेरपि महानसाद्यनुयोगिकसंयोगरूपत्वात् । ननु हेतुसमानाधिकरणाभावीयप्रतियोगितायां वैशिष्ट्यव्यासज्यवृत्तिधर्मानवच्छिन्नत्वस्य विशेषणान्नोक्ताभावमादायाव्याप्तिरत आह ॥ **गुणवानित्यादि** ॥ तथाच द्रव्यत्वस्य एकव्यक्तितया समानाधिकरणयोरेव व्याप्तिरित्युक्तावपि सर्वेषां गुणानां साधनसमानाधिकरणत्वेन रूपत्वाद्यवच्छिन्नप्रतियोगितायाश्च वैशिष्ट्यव्यासज्यवृत्तिधर्मानवच्छिन्नत्वेन च तत्राव्याप्तिरिति भावः । अत्रैतत्कल्पे हेत्वधिकरणकिंचिद्व्यक्तिनिष्ठाभावीयवैशिष्ट्यव्यासज्यवृत्तिधर्मानवच्छिन्नप्रतियोगिताशून्यसाध्यसामानाधिकरण्यं व्याप्तिरित्युक्तौ न कोऽपि दोषः । उक्तस्थले सर्वेषां गुणानां अधिकरणद्वयान्तर्भावेन तादृशप्रतियोगितावत्त्वेऽपि किंचिद्व्यक्तिशब्दस्य स्वाभिमतैकव्यक्त्यर्थकतया हेत्वधिकरणीभूतैतत्पटव्यक्तिनिष्ठाभावीयवैशिष्ट्यव्यासज्यवृत्तिधर्मानवच्छिन्नप्रतियोगित्वमेतत्पटव्यक्तिभिन्नसमवेतगुणेष्वेव प्रसिद्धम् । तच्छून्यं च एतत्पटव्यक्तिसमवेतरूपादिकमेव साध्यं प्रसिद्धमिति तत्राव्याप्तेरभावात् तत्राव्याप्तिवारणायानवच्छेदकत्वगर्भलक्षणकरणं यद्यप्ययुक्तं तथापि व्यधिकरणयोरपि व्याप्यव्यापकभावाभिप्रायकनिष्कृष्टकल्पे वह्निमान् धूमात्

## दिनकरीयम्.

रिक्तोभयाभावे मानाभाव इत्यत आह ॥ **एकसत्त्वेऽपीति** ॥ इदमुपलक्षणं विशिष्टाभावमादायाव्याप्तिरित्यपि बोध्यम् । ननु वैशिष्ट्यव्यासज्यवृत्तिधर्मानवच्छिन्नप्रतियोगिताकत्वेनाभावविशेषणान्नाव्याप्तिरत आह ॥ **गुणवानिति** ॥ अत्र हेतोरेकव्यक्तितया समानाधिकरणयोरेव व्याप्तिरित्युक्तावपि न निस्तार इति भावः। एतद्रूपवानेतद्रसादित्यादौ लक्षणसत्त्वादसम्भवाभावादाह ॥ **अव्याप्तिश्चेति** ॥ **इति वाच्यमिति** ॥ गु-

## रामरुद्रीयम्.

णः ॥ **अतिरिक्तोभयाभाव इति** ॥ प्रत्येकाभावातिरिक्तोभयाभाव इत्यर्थः । तथा च वह्निसत्त्वेऽपि वह्निघटोभयं नास्तीति प्रतीत्या नाभावद्वयं तादृशप्रतीतिविषयः । अपित्वतिरिक्ताभाव एवेति भवत्येवाव्याप्तिरिति भावः ॥ **विशिष्टाभावमिति** ॥ महानसीयत्वाविशिष्टवह्न्यभावमित्यर्थः ॥ ननु वैशिष्ट्यव्यासज्यवृत्तिधर्मानवच्छिन्नप्रतियोगिताकाभावनिवेशेऽपि वह्निमान् धूमादित्यत्रैव तत्तद्व्यक्त्यभावमादायाव्याप्तिसम्भवे स्थलान्तरेऽव्याप्तिप्रदर्शनं किमर्थमित्याशङ्कां निरस्यन्नाह ॥ **अत्रेति** ॥ अथ प्रतियोगितानवच्छेदकसाध्यतावच्छेदकमित्युक्तावपि नाव्याप्तिपरिहारः हेत्वधिकरणपर्वतादौ महानसीयवह्न्यभावादिसत्त्वेन तत्प्रतियोगितायां महानसीयत्वादिसहितस्य वह्नित्वादेरवच्छेदकत्वात् । न चानवच्छेदकत्वमवच्छेदकतापर्याप्त्यनधिकरणत्वं अवच्छेदकतापर्याप्तिश्चोभयस्मिन् न तु प्रत्येकमतो नाव्याप्तिरिति वाच्यम् । प्रत्येकावृत्तेरुभयवृत्तित्वासम्भवेनोभयोरवच्छेदकतापर्याप्त्यधिकरणत्वे प्रत्येकस्य तथात्वस्यावश्यकत्वात् । न च प्रत्येकमवच्छेदकतासत्त्वेऽप्यवच्छेदकतायाः व्यासज्यवृत्तित्वेन प्रत्येकमुभयभेदवत्पर्याप्तिसम्बन्धेनावच्छेदकत्वावच्छिन्नभेदो वह्नित्वे अक्षत एवेति वाच्यम् । तथासति महानसीयवह्निमान् धूमादित्यादौ महानसीयवह्न्यभावप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिताकभेदस्य प्रत्येकं महानसीयत्ववह्नित्वयोरसत्त्वेनातिव्याप्तिप्रसङ्गादिति चेन्नैवम् । हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकताप-

घटादिवृत्त्यभावप्रतियोगितावच्छेदकत्वमस्तीत्यव्याप्तिरिति चेन्न । तत्र परम्परया रूपत्वव्या-

## प्रभा.

गुणवान् द्रव्यत्वादित्यादौ नानाव्यक्तिसाध्यकसद्धेतुमात्रे अव्याप्तिः महानसीयधूमस्यापि पर्वतीयवह्निनिरू-पितव्याप्यत्वस्य वक्तव्यतया पर्वतीयवह्नेः धूमाधिकरणमहानसनिष्ठाभावप्रतियोगित्वेनाप्रतियोगितद्वह्निसा-मानाधिकरण्यस्य महानसीयधूमेऽभावेन एवंरीत्या चालिनीन्यायेन सर्वेषां वह्नीनां धूमत्वावच्छिन्नसमानाधि-करणाभावप्रतियोगित्वेनाप्रतियोगिसाध्याप्रसिद्ध्या तत्सामानाधिकरण्यं न कस्मिंश्चिद्धूम इत्यव्याप्तिः तद्वारण-मेवानवच्छेदकत्वगर्भलक्षणकरणे मूलमिति प्रतिभाति । नच तथापि वह्निमान् धूमादित्यादौ अव्याप्तिः हे-तुसमानाधिकरणाभावीयमहानसीयवह्नित्वावच्छिन्नप्रतियोगितायां महानसीयत्वविशिष्टवह्नित्वस्यावच्छेदकत्वे-न केवलवह्नित्वस्यावच्छेदकत्वात् विशिष्टवह्नित्वस्य शुद्धवह्नित्वानतिरिक्तत्वादिति वाच्यम् अनवच्छेदकत्वश-ब्देनावच्छेदकत्वपर्याप्त्यनाधिकरणत्वविवक्षणात् उक्ताभावप्रतियोगितावच्छेदकतायाः महानसीयत्वाद्यन्तर्भा-वेन पर्याप्ततया केवलवह्नित्वस्य तत्पर्याप्त्यनधिकरणत्वान्नोक्ताव्याप्तेः । अन्ये तु तादृशप्रतियोगितायाः सा-ध्यतावच्छेदकतदितरोभयानवच्छिन्नत्वेन विशेषणीयत्वात् महानसीयवह्न्यभावीयप्रतियोगितायाश्च वह्नित्व-महानसीयत्वोभयावच्छिन्नत्वेन लक्षणाघटकतया घटाद्यभावीयप्रतियोगिताया एव तादृशत्वेन तदनवच्छेद-कत्वस्य वह्नित्वे सत्त्वान्नाव्याप्तिरित्याहुः ॥ **परम्परयेति** ॥ स्वाश्रयप्रतियोगिकसमवायानुयोगित्वसंबन्धे-

## दिनकरीयम्.

णत्वस्य द्रव्यत्वसमानाधिकरणाभावप्रतियोगितानवच्छेदकत्वान्नाव्याप्तिरिति भावः ॥ **परम्परया** स्वा-

## रामरुद्रीयम्.

र्याप्त्यनवच्छेदकसाध्यतावच्छेदकतापर्याप्त्यवच्छेदकमित्यस्य विवक्षितत्वात् वह्निमान्धूमादित्यादौ वह्नित्वादे-र्निरवच्छिन्नैव यद्यपि साध्यतावच्छेदकता तथापि साध्यतावच्छेदकतापर्याप्त्यवच्छेदकं वह्नित्वनिष्ठं तद्व्यक्ति-त्वं तच्च न महानसीयवह्न्यभावप्रतियोगितावच्छेदकतापर्याप्त्यवच्छेदकं व्यासज्यवृत्तिधर्मपर्याप्तिरेकमात्रवृत्ति-धर्मस्यानवच्छेदकत्वात् अन्यथाकाशाविति प्रयोगापत्तेः । न चैवं घटपटावित्यादौ घटमात्रवृत्तिधर्मस्य कथं घटपटगतद्वित्वपर्याप्त्यवच्छेदकत्वेन भानमिति वाच्यम् । एकमात्रवृत्त्युद्देश्यतावच्छेदकताकस्थल एव द्वित्व-पर्याप्त्यनवच्छेदकत्वस्योद्देश्यतावच्छेदके भानोपगमात् अत्र तु महानसीयत्ववह्नित्वोभयत्वमेवेति नाव्याप्तिः । न वा महानसीयवह्निसाध्यकव्यभिचारिण्यतिव्याप्तिरिति परमरहस्यमनुसन्धेयम् । परे तु हेतुसमानाधिकरणा-भावप्रतियोगितायां साध्यतावच्छेदकतदितरोभयानवच्छिन्नत्वं विशेषणमुपादायोक्ताव्याप्तिर्वारणीया महान-सीयवह्न्यभावादिप्रतियोगिताया वह्नित्वतद्भिन्नमहानसीयत्वाभ्यामवच्छिन्नतया लक्षणाघटकतया घटाद्यभा-वीयप्रतियोगिताया एव लक्षणघटकत्वाद्व्यभिचारिणि साध्याभावस्य लक्षणघटकत्वोपपत्तये तदितरेति । सद्धेतौ तथाविधप्रतियोगिताप्रसिद्धये च साध्यतावच्छेदकेति । न चैवमपि तद्वह्निवृत्तित्वविशिष्टवह्नित्ववान्ना-स्तीति प्रतीतिविषयाभाववारणमशक्यमेव यदि च प्रतियोगितावच्छेदकतायां निरवच्छिन्नत्वविशेषणमुपा-दीयते तदा तद्वह्नित्वत्वेन वह्नित्वस्य साध्यतावच्छेदकतायां व्यभिचारिण्यतिव्याप्तिरिति वाच्यम् । साध्यता-वच्छेदकतादिभेदेन व्याप्तेर्भिन्नतया निरवच्छिन्नसाध्यतावच्छेदकताकस्थलीयलक्षण एव प्रतियोगितावच्छे-दकतायां निरवच्छिन्नत्वविशेषणस्योपादेयत्वात् । न चैवमपि वह्नित्वावच्छिन्नसाध्यतावच्छेदकताकस्थ-लीयसद्धेतौ तद्वह्निवृत्तित्वविशिष्टवह्नित्ववान्नास्तीति प्रतीतिविषयाभावमादायाव्याप्तिरिति वाच्यम् । सा-वच्छिन्नसाध्यतावच्छेदककस्थलीयलक्षणे प्रतियोगितावच्छेदकतायां साध्यतावच्छेदकतावच्छेदकतदितरोभया-नवच्छिन्नत्वविशेषणस्याप्युपादेयत्वात् । अथैवमपि यत्र प्रमेयस्यैव साध्यतावच्छेदकता तादृशसद्धेतुस्थले प्रमे-यरूपसाध्यतावच्छेदके तदितराप्रसिद्धयोक्तविशेषणोपादानासम्भवः तादृशस्थले तद्विशेषणानुपादाने च प्रमेयव-द्घटाद्यभावमादायाव्याप्तिर्दुर्वारेति चेन्न । दण्डयादिसाध्यके परम्परया दण्डत्वस्येवात्रापि परम्परया प्रमेयत्वस्यैव साध्यतावच्छेदकत्वोपगमादिति वदन्ति । ननु परम्परया रूपत्वन्यूनवृत्तिजातित्वस्य साध्यतावच्छेदकत्वेऽपि साक्षात्सम्बन्धेन तादृशजातित्वविशिष्टस्य पृथिव्यामभावसत्त्वेन साध्यतावच्छेदकं न तादृशाभावप्रतियोगि-

प्यजातित्वस्यैव साध्यतावच्छेदकत्वात् नहि तादृशधर्मावच्छिन्नाभावः क्वापि पृथिव्यामस्ति रूपत्वव्याप्यजातिमान्नास्तीति बुद्ध्यापत्तेः । साध्यादिभेदेन व्याप्तेर्भेदात् तादृशस्थले साध्यतावच्छेदकतावच्छेदकं प्रतियोगितावच्छेदकतानवच्छेदकमित्येव लक्षणघटकमित्यपि वदन्ति । हेत्वधिकरणंच हेतुतावच्छेदकविशिष्टाधिकरणं वाच्यम् । तेन द्रव्यं गुणकर्मान्यत्वविशिष्ट-

प्रभा.

नेत्यर्थः । उक्तपरम्परासंबन्धेन रूपत्वव्याप्यजातित्वस्यानवच्छेदकत्वमुपपादयति ॥ **नहीत्यादि** ॥ **तादृशधर्मावच्छिन्नाभाव इति** ॥ उक्तपरम्परासंबन्धावच्छिन्नरूपत्वव्याप्यजातित्वनिष्ठावच्छेदकतानिरूपितसमवायसंबन्धावच्छिन्नप्रतियोगिताकाभाव इत्यर्थः । पृथिव्यां तादृशाभावस्वीकारेऽनिष्टमाह ॥ **इति बुद्ध्यापत्तेरिति** ॥ नन्वेवं सति तत्र परम्परया जातित्वस्यैव साध्यतावच्छेदकत्वेन जातिमानित्येवानुमितिः स्यान्नतु जातिमद्वानिति अनुमितिरिति वाच्यं इष्टापत्तेः तद्व्यक्तित्वहेतुकस्थल एव रूपत्वव्याप्यजातीनां कासांचिदनवच्छेदकत्वसंभवेन तत्रैव जातिमद्वानित्यनुमितेः स्वीकारादिति भावः । पृथिवीत्वहेतुकस्थलेऽपि तादृशजातिमद्वानित्यनुमितिमुपपादयितॄणां मतमाह ॥ **साध्यादिभेदेनेति** ॥ साध्यतावच्छेदकविशिष्टस्य साधनतावच्छेदकविशिष्टस्य च भेदेनेत्यर्थः ॥ **व्याप्तेर्भेदादिति** ॥ व्याप्तेः साध्यतावच्छेदकसाधनतावच्छे-

दिनकरीयम्.

श्रयसमवायेन । तथा चोक्तपरम्परया यदवच्छेदकं तदन्यत्वस्य जातित्वे सत्त्वान्नाव्याप्तिरिति भावः ॥ **तादृशधर्मावच्छिन्नाभावः** ॥ उक्तपरम्परया रूपत्वव्याप्यजातित्वावच्छिन्नस्य समवायेनाभावः । नास्तीत्यत्र पृथिव्यामित्यनुषज्यते । मतान्तरमाह ॥ **साध्यादीति** ॥ आदिना साधनादिपरिग्रहः ॥ **व्याप्तेर्भेदादिति** ॥ व्याप्तिज्ञानस्य कारणताभेदादित्यर्थः । पूर्वोक्तरीत्या निर्वाहे तत्र साध्यतावच्छेदकतावच्छेदकधर्मिकप्रतियोगितावच्छेदकतानवच्छेदकत्वप्रकारकज्ञानस्य हेतुत्वं नोचितं कारणतावच्छेदकगौरवात् । नच पूर्वोक्तरीत्या जातिमानित्येवानुमितिः स्यान्न तु जातिमत्त्वानित्याकारिकेति वाच्यम् । पृथिवीत्वादिहेतुके जातिमानित्येवानुमित्याकारो जातिमत्त्वानित्याकारस्तु तद्व्यक्तित्वहेतुक इत्यदोष इत्यपि वदन्तीत्यनेनास्वरसः सूचितः ॥ **शु-**

रामरुद्रीयम्.

तानवच्छेदकमिति कथमव्याप्तिनिरास इत्यत आह ॥ **तथाचेति** ॥ रूपवान् पृथिवीत्वादित्यादौ विषयितया रूपत्ववतो ज्ञानादेस्समवायेनाभावस्य पृथिव्यामपि सत्त्वेनाव्याप्त्यापत्त्या प्रतियोगितावच्छेदकतायां साध्यतावच्छेदकतावच्छेदकसंबन्धावच्छिन्नत्वस्य निवेशनीयतया तादृशपरम्परासम्बन्धावच्छिन्नावच्छेदकताविरहस्य साध्यतावच्छेदकेऽक्षतत्वान्नाव्याप्तिरिति भावः । ननु साध्यसाधनभेदेन व्याप्तेर्भेदोपगमो नोचितः उक्तरीत्या व्याप्तेरेकशब्दाभिलप्यमानत्वसम्भवादित्यत आह ॥ **व्याप्तिज्ञानस्येति** ॥ अयं भावः कदाचिद्रूपत्वन्यूनवृत्तिजातिमानित्याकारिका कदाचिच्च तादृशजातिमत्त्वानित्याकारिकानुमितिरिति सर्वानुभवसिद्धं तच्च कारणवैलक्षण्यं विना न सम्भवतीति यदा तादृशजातित्वस्य विधेयतावच्छेदकतया भानं तदा तादृशानुमितौ परम्परया प्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदकधर्मिकं ज्ञानं कारणं यदा तु तादृशजातित्वस्य विधेयतावच्छेदकतावच्छेदकत्वेन भानं तदा तादृशानुमितौ साध्यतावच्छेदकतावच्छेदकधर्मिकं प्रतियोगितावच्छेदकतानवच्छेदकत्वज्ञानं कारणमिति व्याप्तिज्ञानकारणताभेद एव पर्यवसानं एवञ्च मूले साध्यसाधनभेदेनेत्यस्य साध्यतावच्छेदकसाधनतावच्छेदकभेदेनेत्येवार्थ इति ध्येयम् ॥ **जातिमानित्येवेति** ॥ वह्निमानित्याद्यनुमितौ यद्धर्मिकमनवच्छेदकत्वज्ञानं तस्यैव विधेयतावच्छेदकतया भाननियमादिति भावः । इष्टापत्त्या समाधत्ते ॥ **पृथिवीत्वादीति** ॥ नन्वेवं रूपत्वन्यूनवृत्तिजातिमद्वानित्याकारानुमितेः तन्मतेऽपलापापत्तिरित्यत आह ॥ **जातिमद्वानिति** ॥ **तद्व्यक्तित्वेति** ॥ नीलघटादिनिष्ठतद्व्यक्तित्वादेर्हेतुत्वे तद्व्यक्तिनिष्ठाभावप्रतियोगितानवच्छेदकत्वस्य नीलत्वादिजातौ बाधितत्वादिति भावः । ननु मूले द्रव्यं विशिष्टसत्त्वादित्यत्राव्याप्त्यभिधानमसङ्गतं समवायस्य हेतुतावच्छेदकसम्बन्धत्वे तेन सम्बन्धेन सत्ताभिन्नविशिष्टसत्ता-

सत्त्वादित्यादौ शुद्धसत्ताधिकरणगुणादिनिष्ठाभावप्रतियोगित्वेऽपि द्रव्यत्वस्य नाव्याप्तिः। हेतुतावच्छेदकसम्बन्धेन हेत्वधिकरणं बोध्यं तेन समवायेन धूमाधिकरणतदवयवनिष्ठाभावप्रतियोगित्वेऽपि वह्नेर्नाव्याप्तिः । अभावश्च प्रतियोगिव्यधिकरणो बोध्यः तेन कपिसंयोगी एतद्वृक्षत्वादित्यत्र मूलावच्छेदेनैतद्वृक्षवृत्तिकपिसंयोगाभावप्रतियोगित्वेऽपि कपिसंयोगस्य नाव्याप्तिः । नच प्रतियोगिव्यधिकरणत्वं यदि प्रतियोग्यनाधिकरणवृत्तित्वं तदा तथैवाव्याप्तिः प्रतियोगिनः कपिसंयोगस्यानधिकरणे गुणादौ वर्तमानो योऽभावस्तस्यैव वृक्षे मूलावच्छेदेन सत्त्वात् । यदि तु प्रतियोग्यधिकरणावृत्तित्वं तदा संयोगी सत्त्वादित्यादावति-

## प्रभा

दकघटितत्वादिति भावः। अत्र पृथिवीत्वहेतुकस्थले जातिमद्वानित्यनुमित्यनङ्गीकारे बाधकाभावेन प्रतियोगितावच्छेदकतानवच्छेदकत्वसाध्यतावच्छेदकतावच्छेदकत्वघटितलक्षणकमरणनुचितं गौरवात् प्रयोजनाभावाच्चेत्यस्वरसं हृदि निधाय वदन्तीत्युक्तमिति ध्येयम् ॥ **नाव्याप्तिरिति** ॥ नच विशिष्टसत्तायाः समवायेन हेतुत्वे व्यभिचारित्वापत्त्या विशिष्टनिरूपिताधारतासंबन्धेनैव हेतुत्वं वाच्यम् एवंच शुद्धसत्ताया अपि तेन संबन्धेन गुणादावववर्तमानतया अव्याप्त्यभावेन विशिष्टाधिकरणत्वनिवेशनमफलमिति वाच्यम् साध्याभाववन्निष्ठाधिकरणतानिरूपकतावच्छेदकहेतुतावच्छेदकत्वस्यैव व्यभिचारपदार्थत्वेन केवलसमवायस्य हेतुतावच्छेदकसंबन्धत्वेऽपि विशिष्टसत्तारूपहेतोः व्यभिचारित्वाभावेन प्रकृते विशिष्टाधिकरणतायाः हेतुतावच्छेदकसंबन्धत्वस्वीकारे प्रमाणाभावेनोक्ताव्याप्तेर्वारणाय तन्निवेशस्यावश्यकत्वात् । अत्र हेतुतावच्छेदकविशिष्टाधिकरणत्वं न विशिष्टनिष्ठाधेयतानिरूपिताधारत्वमुक्तदोषतादवस्थ्यात् किन्तु हेतुतावच्छेदकावच्छिन्नाधेयतानिरूपिताधारत्वं लक्षणघटकमिति बोध्यम् ॥ **वृक्षे सत्त्वादिति** ॥ अधिकरणभेदेन अभावभेदे मानाभावा-

## दिनकरीयम्.

**द्धसत्ताधिकरणेति** ॥ नच विशिष्टनिरूपिताधिकरणतायाः हेतुतावच्छेदकसम्बन्धत्वे कथं तेन सम्बन्धेन सत्ताधिकरणं गुणः समवायस्य तथात्वे तु द्रव्यत्वे साध्ये विशिष्टसत्ताया व्यभिचारित्वात्तत्राव्याप्त्यभिधानमसङ्गतमिति वाच्यम् । साध्याभाववद्वृत्तितावच्छेदकहेतुतावच्छेदकस्यैव व्यभिचारपदार्थतया शुद्धसमवायसम्बन्धस्य हेतुतावच्छेदकसम्बन्धत्वेऽपि विशिष्टसत्त्वस्य हेतोर्व्यभिचारित्वाभावात् नाव्याप्तिरिति । नच हेतुतावच्छेदकविशिष्टसत्तात्वाविशिष्टसत्त्वस्य गुणे सत्त्वादेव विवक्षणेऽपि कथमव्याप्तिपरिहार इति वाच्यम् । हेतुतावच्छेदकावच्छिन्ननिरूपिताधिकरणत्वस्य विवक्षितत्वाद्विशिष्टसत्तात्वस्य गुणनिष्ठाधिकरणतानिरूपिताधेयतानवच्छेदकतया तदवच्छिन्ननिरूपिताधिकरणत्वस्य गुणेऽभावादिति ॥ **तथैव** तदवस्थैव ॥ **तस्यैव वृक्ष इति** ॥ अधिकरणभेदेनाभावभेदानभ्युपगमादिति भावः ॥ **प्रतियोग्यधिकरणावृत्तित्वं** प्रति-

## रामरुद्रीयम्.

याः साध्याभाववति गुणे सत्त्वेन व्यभिचारितयाऽलक्ष्यत्वात् । यदि च विशिष्टसत्तात्वावच्छिन्नाधिकरणतैव हेतुतावच्छेदकसम्बन्धः तेन च गुणावृत्तित्वं तस्या इति लक्ष्यत्वम् । न चैवं तेन सम्बन्धेन सत्तामात्रस्यैव हेतुताऽस्तु तेन सम्बन्धेन विशिष्टसत्त्वस्य हेतुत्वे व्यर्थविशेषणतापत्तिरिति वाच्यम् । शुद्धसत्ताप्रतियोगित्वस्य विशिष्टसत्ताधिकरणतायामनङ्गीकारादित्युच्यते तदा हेतुतावच्छेदकसम्बन्धनिवेशेनैवाव्याप्तिपरिहाराद्धेतुतावच्छेदकधर्मनिवेशो विफल इत्याशङ्कय समवाय एव हेतुतावच्छेदकसम्बन्धः तेन सम्बन्धेन साध्याभाववद्वृत्तित्वं नालक्ष्यताप्रयोजको व्यभिचारः किन्तु साध्याभाववन्निरूपिततत्सम्बन्धावच्छिन्नाधेयतावच्छेदकहेतुतावच्छेदकवत्त्वमेव तथा । तथाच न व्यभिचारित्वं विशिष्टसत्त्वस्येति समाधत्ते ॥ **नचेत्यादि** ॥ **न च हेतुतावच्छेदकविशिष्टेति** ॥ हेतुतावच्छेदकीभूतविशिष्टसत्तात्वाविशिष्टा सत्तैव तदधिकरणं गुणोऽपीति भावः । प्रदर्शिताव्याप्तौ पूर्वोक्ताव्याप्तिभेदाभावेन तथैवेत्यस्य सादृश्यार्थकता न घटते

व्याप्तिः सत्ताधिकरणे गुणादौ यः संयोगाभावस्तस्य प्रतियोग्यधिकरणद्रव्यवृत्तित्वादिति वाच्यं हेत्वधिकरणे प्रतियोग्यनधिकरणवृत्तित्वविशिष्टस्य विवक्षितत्वात् । स्वप्रतियोग्यनधिकरणीभूतहेत्वधिकरणवृत्त्यभाव इति निष्कर्षः । प्रतियोग्यनधिकरणत्वं प्रतियोगितावच्छेदकावच्छिन्नानाधिकरणत्वं वाच्यं । तेन विशिष्टसत्तावान् जातेरित्यादौ जात्यधिकरणगुणादौ विशिष्टसत्ताभावप्रतियोगिसत्ताधिकरणत्वेऽपि न क्षतिः । अत्र साध्यतावच्छेदकसम्बन्धेन प्रतियोग्यनधिकरणत्वं बोध्यं तेन ज्ञानवान् सत्त्वादित्यादौ सत्ताधि-

## प्रभा.

दिति भावः ॥ **अतिव्याप्तिरिति** ॥ ननु द्रव्ये संयोगसामानाधिकरण्यवत्यपि संयोगाभावे सत्तायामिव गुणे न संयोगसामानाधिकरण्यमिति प्रतीत्या गुणावच्छेदेन संयोगसामानाधिकरण्याभावस्यापि सत्त्वेन तस्यापि प्रतियोगिव्यधिकरणाभावतया कथमतिव्याप्तिः । नचैवं सति कपिसंयोगी एतद्वृक्षत्वादित्यादौ कपिसंयोगाभावस्य गुणादौ प्रतियोगिसामानाधिकरण्याभावसत्त्वेन प्रतियोगिव्यधिकरणतया अव्याप्तिरिति वाच्यम् हेत्वधिकरणावच्छेदेन प्रतियोगिसामानाधिकरण्याभाववत्त्वस्यैव प्रतियोगिवैयधिकरण्यपदार्थत्वात् एतादृशप्रतियोगिवैयधिकरण्यलाभायैव हेतुसामानाधिकरण्यविशेषणोपादानात् न तद्वैयर्थ्यमिति चेन्न। सत्ता न संयोगिवृत्तित्वाभाववती संयोगिवृत्तित्वाभावो न सत्तावृत्तिरिति सकलजनसिद्धप्रतीतिबाधितत्वेन उक्तप्रतीतेः सत्तानिष्ठसंयोगसामानाधिकरण्यनिरूपकत्वाभावस्य गुणादिनिष्ठस्यावगाहित्वावश्यकतया सामानाधिकरण्यस्याव्याप्यवृत्तित्वे प्रमाणाभावात् प्रतियोग्यधिकरणवृत्तिभिन्नत्वरूपप्रतियोग्यधिकरणावृत्तित्वविवक्षणाद्वा उक्तातिव्याप्त्यसङ्गतेः ॥ **हेत्वधिकरणे प्रतियोग्यनधिकरणत्वस्येति** ॥ हेत्वधिकरणनिष्ठप्रतियोग्यनधिकरणत्वस्येत्यर्थः ॥ **विवक्षितत्वादिति** ॥ प्रतियोग्यनधिकरणवृत्तित्वघटकप्रतियोग्यनधिकरणशब्देन विवक्षितत्वादित्यर्थः । नन्वेवं सति पृथक् हेतुसामानाधिकरण्यविशेषणं व्यर्थं सद्धेतौ साध्याभावस्य एतादृशप्रतियोगिवैयधिकरण्याभावेनैव वारणादित्यत आह ॥ **स्वप्रतियोग्यनधिकरणेति** ॥ **निष्कर्ष इति** ॥ तथाच हेतुसामानाधिकरण्यविशेषणवैयर्थ्ये इष्टापत्तिः । निरुक्तप्रतियोगिवैयधिकरण्यलाभायैव तद्विशेषणदानादिति भावः । अस्मद्गुरुचरणास्तु अभावान्तनिष्कर्ष इति अभावपदस्य उक्तार्थलाक्षणिकत्वाद्विनिगमनाविरहात् इतरपदानां सर्वेषां च तात्पर्यग्राहकत्वाच्च न तद्विशेषणवैयर्थ्यमिति व्याचक्रुः ॥ **न क्षतिरिति** ॥ तथाच विशिष्टसत्ताभावस्य प्रतियोगितावच्छेदकघटितनिरुक्तप्रतियोगिवैयधिकरण्यसत्त्वेन तस्यापि लक्षणघटकतया नातिव्याप्तिरिति भावः । ननु ज्ञानवान् सत्त्वादित्यादौ प्रतियोगितावच्छेदकसंबन्धेन प्रतियोग्यनधिकरणत्वघटितलक्षणकरणेऽप्यतिव्याप्तिवारणसंभवात् साध्यतावच्छेदकसंबन्धघटितलक्षणकरणं व्य-

## दिनकरीयम्.

योग्यधिकरणवृत्तिभिन्नत्वम् ॥ **विवक्षितत्वादिति** ॥ प्रतियोगिव्यधिकरणपदेन विवक्षितत्वादित्यर्थः । नन्वेवं हेतुसमानाधिकरणेत्यस्य वैयर्थ्यं सत्तावान् जातेरित्यादौ सत्ताद्यभावस्य निरुक्तप्रतियोगिवैयधिकरण्याभावादव्याप्तिविरहादत आह ॥ **स्वप्रतियोग्यनधिकरणेति** ॥ **निष्कर्ष इति** ॥ प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावान्त इति निष्कर्षः । तथा च हेतुसमानाधिकरणत्वविशेषणबलादेव तादृशप्रतियोगिवैयधिकरण्यलाभान्न तद्वैयर्थ्यमिति भावः ॥ **सत्ताधिकरणत्वेऽपीति** ॥ तथा च विशिष्टसत्ताभावो न प्रतियोगिव्यधिकरणः अभावान्तरप्रतियोगितायाश्चानवच्छेदकमेव विशिष्टसत्तात्वमित्यतिव्याप्तिः ॥ **न क्षतिः** नातिव्याप्तिः । एवमग्रेऽपि । ननु प्रतियोगितावच्छेदकसम्बन्धेनैव प्रतियोग्यनाधिकरणत्वमुच्यतां

## रामरुद्रीयम्.

इत्यत आह ॥ **तदवस्थैवेति** ॥ **तथा चेति** ॥ वस्तुतः प्रतियोगिव्यधिकरणत्वं हेतावेव विशेषणम् । तच्च प्रतियोग्यनधिकरणवृत्तित्वं तद्विशिष्टहेत्वधिकरणवृत्तित्वमभावविशेषणं तथा च लाघवात्प्रतियोग्यनधि-

करणघटादेर्विषयतया ज्ञानाधिकरणत्वेऽपि न क्षतिः । इत्थं च वह्निमान् धूमादित्यादौ धूमाधिकरणे समवायेन वह्निविरहसत्त्वेऽपि न क्षतिः । ननु प्रतियोगितावच्छेदकावच्छिन्नस्य यस्यकस्याचित्प्रतियोगिनोऽनधिकरणत्वं तत्सामान्यस्य वा यत्किञ्चित्प्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वं वा विवक्षितम् ; आद्ये कपिसंयोगी एतद्वृक्षत्वादित्यत्र तथैवाव्याप्तिः कपिसंयोगाभावप्रतियोगितावच्छेदकावच्छिन्नो वृक्षावृत्तिकपिसंयोगोऽपि भवति तदनधिकरणं वृक्ष इति । द्वितीये तु प्रतियोगिव्यधिकरणाभावाप्रसिद्धिः सर्वस्यैवाभावस्य पूर्वक्षणवृत्तित्वविशिष्टस्वाभावात्मकप्रतियोगिसमानाधिकरणत्वात् । नच वह्निमान् धूमादित्यादौ घटाभावादेः पूर्वक्षणवृत्तित्वविशिष्टस्वाभावात्मकप्रतियोग्यधिकरणत्वं यद्यपि पर्वतादेस्तथापि साध्यतावच्छेदकसम्बन्धेन तत्प्रतियोग्यनधिकरणत्वमस्त्येवेति कथं प्रतियोगिव्यधिकरणाभावाप्रसिद्धिरिति वाच्यम् । घटाभावे यो वह्न्यभावस्तस्य घटा-

## प्रभा.

र्थमित्यत आह ॥ **इत्थं चेति** ॥ प्रतियोगितावच्छेदकसंबन्धेन प्रतियोग्यनधिकरणत्वमपहाय साध्यतावच्छेदकसंबन्धेन प्रतियोग्यनधिकरणत्वविवक्षणे चेत्यर्थः ॥ **न क्षतिरिति** ॥ तथाच वह्निमान् धूमादित्यादौ समवायेन वह्न्यभावस्य प्रतियोगितावच्छेदकसंबन्धेन प्रतियोगिवैयधिकरण्येऽपि साध्यतावच्छेदकसंयोगेन तथात्वाभावान्नाव्याप्तिरिति भावः । नच प्रतियोगितावच्छेदकसंबन्धेन प्रतियोग्यनधिकरणत्वघटितलक्षणेऽपि अग्रिमप्रतियोगितायां साध्यतावच्छेदकसंबन्धावच्छिन्नत्वनिवेशान्नाव्याप्तिरिति वाच्यं संबन्धद्वयनिवेशे गौरवापत्तेरिति हृदयम् ॥ **तत्सामान्यस्य वेति** ॥ अधिकरणत्वमिति पूर्वेणान्वयः । प्रतियोगितावच्छेदकीभूताः यावन्तो धर्माः तत्तदवच्छिन्नाधेयतानिरूपिताधिकरणतावच्छेदकूटवत्त्वं वेति फलितार्थः ॥ **यत्किंचिदिति** ॥ प्रतियोगितावच्छेदककिंचिद्धर्मावच्छिन्नाधेयतानिरूपिताधिकरणतावच्छिन्नत्वमित्यर्थः ॥ **पूर्वक्षणवृत्तित्वविशिष्टेति** ॥ पूर्वक्षणवृत्तित्वविशिष्टं यत्स्वं घटाभावादिः तस्य योऽभावः तदात्मकेत्यर्थः ।

## दिनकरीयम्.

तावतापि ज्ञानवान् सत्त्वादित्यादावनतिप्रसङ्गादित्यत आह ॥ **इत्थं चेति** ॥ साध्यतावच्छेदकसम्बन्धेन प्रतियोग्यनधिकरणविवक्षणे चेत्यर्थः ॥ **वह्निविरहसत्त्वेऽपीति** ॥ तथा च प्रतियोगितावच्छेदकसमवायेन प्रतियोगिव्यधिकरणतादृशाभावप्रतियोगितावच्छेदकत्वाद्वह्नित्वस्याव्याप्तिः । साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वेनाग्रिमप्रतियोगिताविशेषणे तु सम्बन्धद्वयप्रवेशेन गौरवमिति भावः ॥ **न क्षतिः** नाव्याप्तिः । समवायेन वह्न्यभावस्य साध्यतावच्छेदकसंयोगेन प्रतियोग्यनधिकरणहेत्वधिकरणवृत्तित्वाभावादिति भावः ॥ **तत्सामान्यस्य** ॥ प्रतियोगितावच्छेदकावच्छिन्नसामान्यस्य ॥ **यत्किञ्चिदिति** ॥ यत्किञ्चित्प्रतियोगितावच्छेदकं तदवच्छिन्नसामान्यस्य वेत्यर्थः ॥ **पूर्वक्षणवृत्तित्वविशिष्टेति** ॥ पूर्वक्षणवृत्तित्ववि-

## रामरुद्रीयम्.

करणहेत्वधिकरणवृत्तित्वमभावविशेषणं वक्तुमुचितमिति भावो मूलकारस्येति युक्तमुत्पश्यामः ॥ **गौरवमितीति** ॥ अथ यत्र वह्निप्रतियोगिकसंयोगेन वह्नेः साध्यता तत्र घटाभावादिर्न प्रतियोगिव्यधिकरणः साध्यतावच्छेदकसम्बन्धेन तत्प्रतियोगितावच्छेदकावच्छिन्नाधिकरणाप्रसिद्धेः । न च तत्तद्वह्निव्यक्त्यभाव एव लक्षणघटकोऽस्त्विति वाच्यम् । रूपवान्पृथिवीत्वादित्यादौ विषयितया रूपत्ववतोऽभावमादायाव्याप्तिवारणाय प्रतियोगितावच्छेदकतायां साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नत्वनिवेशस्यावश्यकतया तत्तद्व्यक्त्यभावप्रतियोगितावच्छेदकतायास्तत्सम्बन्धावच्छिन्नत्वाभावेन तस्य लक्षणाघटकत्वात् । न च तृणादिजन्यतावच्छेदकवैजात्यावच्छिन्नाभाव एव तथाविधः प्रसिध्यतीति वाच्यम् । एवमपि तद्रूपप्रतियोगिकत्वविशि-

भावात्मकतया घटाभावस्य वह्निरपि प्रतियोगी तदधिकरणं च पर्वतादिरित्येवंक्रमेण प्रतियोगिव्यधिकरणस्याप्रसिद्धत्वात् । यदि घटाभावादौ वह्न्यभावादिर्भिन्न इत्युच्यते तदा धूमाभाववान् वह्न्यभावादित्यादावव्याप्तिः तत्र साध्यतावच्छेदकसम्बन्धः स्वरूपसम्बन्धस्तेन सर्वस्यैवाभावस्य पूर्वक्षणवृत्तित्वविशिष्टस्वाभावात्मकप्रतियोग्यधिकरणत्वं हेत्वधि-

## प्रभा.

तथाच पूर्वक्षणवृत्तित्वविशिष्टघटाभावाभावस्य पूर्वक्षणवृत्तित्वविशिष्टघटाभावात्मकस्य केवलघटाभावानतिरिक्ततया केवलघटाभावीयप्रतियोगिताया अपि पूर्वक्षणवृत्तित्वविशिष्टघटाभावाभावे सत्त्वात्प्रतियोगिव्यधिकरणाभावाप्रसिद्ध्या असंभव इति भावः । अभावाधिकरणकाभावमात्रस्य अधिकरणरूपत्वमिति मतमाश्रित्य परिहरति ॥ **घटाभाव इति** ॥ नन्वभावाधिकरणकाभावमात्रस्याभेदे अभावमात्रस्य भेदविलोपप्रसङ्गः । नचेष्टापत्तिः घटाधिकरणे पटाभावप्रत्ययवत् घटाभावप्रत्ययापत्तेः अतः अभावाधिकरणकाभावमात्रस्याभेदास्वीकारे उक्ताप्रसिद्ध्यसंभवेनासंभवाभावात् अभावसाध्यकसद्धेतुनात्रे अव्याप्तिमाह ॥ **तदेति** ॥ यद्यपि अभावमात्रस्य भेदाभावेऽपि क्षतिविरहः घटाभावत्वादीनां धर्माणां भेदस्वीकारेणैव घटाधिकरणे घटाभावत्वावच्छिन्ननिरूपिताधिकरणत्वानङ्गीकारेणैव घटाभावप्रत्ययवारणसंभवात् विशिष्टसत्तायाश्शुद्धसत्तायाश्चैक्येऽपि गुणादौ विशिष्टसत्तात्वावच्छिन्ननिरूपिताधिकरणत्वानङ्गीकारेण गुणो विशिष्टसत्तावानिति प्रत्ययवारणवत् एवंच उक्ताप्रसिद्धिवारणमावश्यकमेव तथाप्येवंरीत्याभावमात्रस्यैक्यस्वीकारे पदार्थमात्रस्य भेदविलोपप्रसङ्गः घटपटयोरैक्येऽपि यत्र घटवद्भूतलमिति प्रत्ययः तत्रैव घटत्वावच्छिन्ननिरूपिताधिकरणत्वं नान्यत्रेत्येवंरीत्यातिप्रसङ्गवारणसंभवात् । तथाचापसिद्धान्त इत्येव दूषणं सारम् । केचित्तु ध्वंसप्रागभावाभ्यामत्यन्ताभा-

## दिनकरीयम्.

शिष्टस्य स्वस्य घटाभावादेर्योऽभावस्तदात्मकेत्यर्थः । घटाभावाद्यधिकरणेऽपि पूर्वक्षणवृत्तित्वविशिष्टघटाभावादेरभावस्योत्तरक्षणावच्छेदेन सत्त्वादिति भावः । न च पूर्वक्षणवृत्तित्वविशिष्टस्य घटाभावादेरभावः स्वाभावस्य प्रतियोगी न घटाभावादेरिति वाच्यम् । पूर्वक्षणवृत्तित्वविशिष्टस्य घटाभावादेर्योऽभावस्तदभावस्य पूर्वक्षणवृत्तित्वविशिष्टघटाभावानतिरेकितया विशिष्टघटाभावप्रतियोगिनस्तस्य शुद्धघटाभावप्रतियोगित्वात् तथा च प्रतियोगिव्यधिकरणाभावाप्रसिद्ध्याऽसम्भव इति भावः ॥ **घटाभावात्मकतयेति** ॥ अभावाधिकरणकाभावस्याधिकरणानतिरिक्तत्वादिति भावः । इत्यादावित्यादिना अभावसाध्यकसद्धेतुमात्रपरिग्रहः ॥ **स्वरूपसम्बन्ध इति** ॥ अभावीयविशेषणतेत्यर्थः ॥ **पूर्वक्षणवृत्तित्वविशिष्टस्वाभावेति** ॥ पूर्वक्ष-

## रामरुद्रीयम्.

त्वसमवायेन तद्रूपसाध्यकसद्धेतावगतेस्साध्यस्यैव तेन सम्बन्धेनाधिकरणाप्रसिद्धेरिति चेन्न । विशेषरूपेण संसर्गतानभ्युपगमात । तदभ्युपगमे तु साध्यतावच्छेदकसम्बन्धसामान्ये यदभावप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिकत्वहेत्वधिकरणीभूतयत्किञ्चिद्व्यक्त्यनुयोगिकत्वोभयाभावः तादृशाभाव एव हेत्वधिकरणे प्रतियोगिव्यधिकरण इति निर्वचनीयम् । एवंच घटाभावादिरेव तादृशः प्रसिध्यति यत्किञ्चिद्घटादिसंयोगे वह्नित्वावच्छिन्नप्रतियोगिकत्वपर्वताद्यनुयोगिकत्वोभयाभावसत्त्वात् वह्न्यभावस्यापि हेत्वधिकरणे प्रतियोगिव्यधिकरणत्वापत्त्या वह्निमान्धूमादित्यादावव्याप्तिरतस्सामान्यपदम् । व्यभिचारिणि साध्याभावस्य लक्षणघटकत्वोपपत्तये यत्किञ्चित्पदं तेनायोगोलकं यत्किञ्चित्पदेनोपादायोभयाभावोपपत्तेर्लक्षणघटकता साध्याभावस्यापीति ध्येयम् । एवं विशेषरूपेण संसर्गताभ्युपगमे यत्र वह्नित्वप्रतियोगिकसमवायेन वह्नित्वस्य साध्यतावच्छेदकता तत्र हेतुसमानाधिकरणाभावीयप्रतियोगितावच्छेदकतायाः साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नाया अप्रसिद्ध्याऽव्याप्तिरतः प्रतियोगितावच्छेदकतायां साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नत्वं न निवेशनीयं परन्तूक्ताव्याप्तिवारणाय साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नात्वच्छेदकत्वीयस्वरूपसम्बन्धेन प्रतियोगितावच्छेदकत्वाभावो विवक्षणीय इति विभावनीयम् ॥ **मूले भिन्न इत्युच्यत इति** ॥ अन्यथा वह्नि-

करणस्येति । तृतीये तु कपिसंयोगाभाववानात्मत्वादित्यादावव्याप्तिः तत्रात्मवृत्तिः कपिसंयोगाभावाभावः कपिसंयोगस्तस्य गुणत्वात्तत्प्रतियोगितावच्छेदकं गुणसामान्याभावत्वमपि तदवच्छिन्नानधिकरणत्वं हेत्वधिकरणस्यात्मन इति । मैवं यादृशप्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वं हेतुमतस्तादृशप्रतियोगितानवच्छेदकत्वस्य विवक्षितत्वात् । ननु

प्रभा.

वस्य विरोधमङ्गीकुर्वतां प्राचां मते द्रव्ये संयोगसामान्याभावासंभवेनात्मत्वरूपहेतोः विरुद्धत्वमत आह कपीत्यवतरणिकामाहुः तदसत् द्रव्ये संयोगसामान्याभावानङ्गीकर्तॄणां प्राचां मते आत्मनि कपिसंयोगसामान्याभावाङ्गीकारे प्रमाणाभावादात्मनः कपिसंयोगध्वंसप्रागभावान्यतरवत्त्वेन ताभ्यां विरोधस्याप्यक्षतत्वात् । यत्त्वोक्तमुत्पत्तिकालावच्छेदेन घटे गुणसामान्याभावसत्त्वात् घटत्वहेतावव्याप्त्यभावात् आत्मत्वपर्यन्तानुधावनमिति तदपि न प्राचीनैरुत्पत्तिकालावच्छेदेन घटे गुणसामान्याभावस्याप्यनङ्गीकृतत्वेन घटत्वहेतावव्याप्त्यप्रसक्त्यात्मत्वपर्यन्तानुधावनस्य उक्तबीजासंभवात् नवीनमत एव इदमनुमानमङ्गीकर्तव्यमवश्यम् । यद्यप्येतन्मते आत्मनि प्रळयाद्यवच्छेदेन संयोगसामान्याभावस्यापि सत्त्वात्तस्यैव साध्यत्वं संभवति तथापि खण्डप्रळयेऽपि आत्मनि ब्रह्माण्डान्तरीयकपिसंयोगसत्त्वात् सकलब्रह्माण्डानामेकदा नाशे प्रमाणाभावात् महाप्रळये मानाभावाच्चेत्याक्षेपे एकदा सकलब्रह्माण्डनाशं वा महाप्रळयं वा प्रसाध्यैव संयोगसामान्याभावसाधनसंभवेन प्रयासाधिक्यमिति तत्सौलभ्याय प्रतिज्ञावाक्ये कपिपदमुपात्तम् । तदपि कपिसंयोगत्वं न प्रतियोगितावच्छेदकं अपितु संयोगनिष्ठतद्व्यक्तित्वमेवेति सूचनाय । तथाच यत्किंचित्संयोगवत्यपि तत्संयोगव्यक्तिनाशकाले तद्व्यक्त्यत्यन्ताभावसत्त्वसंभवात् प्रयासाभाव इत्येव सारम् ॥ आत्मत्वादिति ॥ नवीनमते उत्पत्तिकालावच्छेदेन घटे गुणसामान्याभावस्यापि संभवेन घटत्वहेतावव्याप्त्यभावेन नात्मत्वपर्यन्तानुधावनमिति हृदयं । समाधत्ते ॥ यादृशेति ॥ यादृशप्रतियोगितेत्यन्वयः । तथाच कपिसंयोगाभाववानात्मत्वादित्यादौ

दिनकरीयम्.

णवृत्तित्वविशिष्टं यत्स्वं घटाभावादि तदभावात्मकेत्यर्थः । प्राचां मते द्रव्ये संयोगसामान्याभावानङ्गीकारादाह ॥ कपीति ॥ घटाभावीययत्किञ्चित्प्रतियोगितावच्छेदकघटत्वावच्छिन्नानधिकरणत्वस्य हेत्वधिकरणे सम्भवान्न प्रतियोगिव्यधिकरणाभावाप्रसिद्धिनिबन्धनाव्याप्तिः सम्भवतीति भावः । घटत्वहेतुके यत्किञ्चित्प्रतियोगितावच्छेदकगुणसामान्याभावत्वावच्छिन्नानधिकरणत्वं हेत्वधिकरणस्य घटादेर्न सम्भवति उत्पत्तिकाले घटे गुणसामान्याभावसत्त्वादत आत्मपर्यन्तानुधावनम् । तृतीयविवक्षानुसारेण समाधत्ते ॥ यादृशेति ॥ यादृश्याः प्रतियोगितायाः अवच्छेदकावच्छिन्नानधिकरणत्वं हेतुमतस्तादृशप्रतियोगितावच्छेदकतानाश्रयत्वमित्यर्थः ॥ विवक्षितत्वात् ॥ अप्रतियोगिपदेन विवक्षितत्वात् । कपिसंयोगाभाववानात्मत्वादित्यादौ गुणसामान्याभावत्वावच्छिन्नप्रतियोगिताया एव यादृशप्रतियोगितापदेनोपादातुं शक्यतया तदनवच्छेदकत्वस्य कपिसंयोगाभावत्वे सत्त्वान्नाव्याप्तिरिति भावः । अत्र च यद्धर्मविशिष्टानधिकरणत्वं हेत्वधिकरणस्य तद्धर्मभिन्नसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यस्य लघोर्निर्दुष्टत्वसम्भवेऽपि यथा सन्निवेशे न वैयर्थ्यमिति भावः । साध्यतावच्छेदकसम्बन्धेन प्रतियोग्यनधिकरणत्वाविवक्षणेऽव्याप्तिमाशङ्कते ॥ नन्विति ॥ म-

रामरुद्रीयम्.

मति घटशून्यदेशे वह्निर्नास्तीति घटवति वह्निशून्ये घटो नास्तीति प्रत्ययस्य चापत्तेरिति भावः ॥ तृतीयविवक्षेति ॥ यत्किञ्चित्प्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वविवक्षानुसारेणेत्यर्थः ॥ अप्रतियोगिपदेनेति ॥ इदञ्च यथाश्रुतमूलाभिप्रायेणोक्तम् । वस्तुतस्तादृशप्रतियोगितानवच्छेदकत्वमेव साध्यतावच्छेदके विवक्षणीयम् । अन्यथा वह्निमान्धूमादित्यत्रैवाव्याप्तेः पूर्वमुपदर्शितत्वादिति बोध्यम् ॥ अत्र चेति ॥ साध्यतावच्छेदकसम्बन्धेन यद्धर्मावच्छिन्नवदन्यत्वं हेतुमतस्तदन्यसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं व्याप्तिरित्यर्थः । न च प्रतियोगितानवच्छेदकानन्तधर्मभेदनिवेशे गौरवमिति वाच्यम् । गुरुधर्मस्याभाव-

कालो घटवान् कालपरिमाणादित्यत्र प्रतियोगिव्यधिकरणाभावाप्रसिद्धिः हेत्वधिकरणस्य महाकालस्य जगदाधारतया सर्वेषामेवाभावानां साध्यतावच्छेदकसम्बन्धेन कालिकविशेषणतया प्रतियोग्यधिकरणत्वात् । अत्र केचित् महाकालभेदविशिष्टघटाभावस्तत्र प्रतियोगिव्यधिकरणः महाकालस्य घटाधारत्वेऽपि महाकालभेदविशिष्टघटानाधारत्वात् महाकाले महाकालभेदाभावात् । वस्तुतस्तु प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोग्यनधिकरणीभूतहेत्वधि-

## प्रभा.

गुणसामान्याभावत्वावच्छिन्नप्रतियोगितैव तादृशीति तदनवच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वाल्लक्षणसमन्वयः । अत्र साध्यतावच्छेदकसंबन्धेन यद्धर्मावच्छिन्नानधिकरणत्वं हेतुमतः तद्धर्मभिन्नसाध्यतावच्छेदकावच्छिन्नसाध्यसामानाधिकरण्यस्य लक्षणत्वं न संभवति । धूमे साध्ये वह्निहेतावतिव्याप्त्यापत्तेः । तादृशयत्किंचिद्घटत्वभिन्नत्वस्य धूमत्वे सत्त्वात् यद्यद्धर्मावच्छिन्नानधिकरणत्वं हेतुमतः तत्तद्धर्मभिन्नत्वमित्युक्तौ गौरवात् मूलोक्तप्रतियोगित्वघटितलक्षणस्य परिष्काररूपत्वासंभवाच्चेति हृदयम् ॥ **महाकालान्यत्वविशिष्टघटाभाव इति** ॥ कालिकविशेषणतादैशिकविशेषणतोभयघटितसामानाधिकरण्यसंबन्धेन महाकालान्यत्वविशिष्टघटस्य कालिकसंबन्धेन अभाव इत्यर्थः ॥ **महाकालभेदाभावादिति** ॥ तथाच विशेषणविशेष्योभयसंबन्धाभ्यां विशेषणविशेष्योभयसत्त्वं यत्र तत्रैव विशिष्टाधिकरणत्वमिति नियमात् दैशिकविशेषणतया महाकाले महाकालभेदासत्त्वेन महाकालान्यत्वविशिष्टाधिकरणत्वं न संभवतीति खण्डकाले प्रसिद्धतादृशविशिष्टाधिकरणत्वस्याभावः हेत्वधिकरणे महाकाले वर्तत इति तादृशप्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वान्नाव्याप्तिरिति भावः । ननु कालिकसंबन्धेन विशेषणविशेष्योभयसत्त्वं यत्र तत्रैव विशिष्टाधिकरणत्वमिति नियमान्तरस्य सर्वाधारत्वान्यथानुपपत्त्या स्वीकरणीयतया तद्बलात्कालिकसंबन्धेन महाकालान्यत्वघटयोः महाकाले सत्त्वेन पूर्वोक्तसंबन्धद्वयघटितसामानाधिकरण्यसंबन्धेन महाकालान्यत्वविशिष्टघटस्यापि कालिकसंबन्धेन सत्त्वसंभवात् अव्याप्तिस्तदवस्थेत्यत आह ॥ **वस्तुतस्त्विति** ॥ केचित्तु महाकालमात्र—

## दिनकरीयम्.

हाकालभेदविशिष्टघटाभाव इति ॥ अभावीयविशेषणताघटितसामानाधिकरण्यसम्बन्धेन महाकालभेदविशिष्टस्य घटस्याभाव इत्यर्थः ॥ **महाकाले महाकालभेदाभावादिति** ॥ अभावीयविशेषणतासम्बन्धेन महाकालभेदाभावादित्यर्थः । सामानाधिकरण्यघटकीभूतविशेषणविशेष्यसम्बन्धाभ्यां यत्र विशेषणविशेष्योभयसत्त्वं तत्रैव विशिष्टाधिकरणत्वोपगमादिति भावः । ननु महाकालमात्रवृत्तिविशेषणतासम्बन्धेन साध्यतायां महाकालान्यत्वविशिष्टघटाभावोऽपि न प्रतियोगिव्यधिकरणस्तत्र तेन सम्बन्धेन महाकालान्यत्वविशिष्टघटाधिकरणाप्रसिद्धेरत आह ॥ **वस्तुत इति** ॥ अत्र प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोग्यनधिकरण-

## रामरुद्रीयम्.

प्रतियोगितानवच्छेदकत्वमते गुरुधर्मघटितकम्बुग्रीवादिमद्भेदस्याप्यप्रसिद्धया साम्यादिति भावः ॥ **अभावीयविशेषणतेति** ॥ दैशिकविशेषणतेत्यर्थः । न त्वभावप्रतियोगिकविशेषणतेति तदर्थः । तथासति कालिकविशेषणताया अप्यभावप्रतियोगिकत्वेन तद्व्यावृत्तेरसम्भवादेवमग्रेऽपि बोध्यम् ॥ **महाकालभेदाभावादितीति** ॥ ननु दैशिकविशेषणतया महाकाले महाकालभेदासत्त्वेऽपि कालिकसम्बन्धेन तत्र महाकालभेदविशिष्टघटसत्त्वे बाधकाभावः तेन सम्बन्धेन तस्य जगदाधारत्वादित्याशङ्कायामाह ॥ **सामानाधिकरण्येति** ॥ **विशेषणेति** ॥ विशेषणविशेष्यप्रतियोगिकसंसर्गाभ्यामित्यर्थः ॥ **महाकालमात्रवृत्तीति** ॥ महाकालानुयोगिकविशेषणतया साध्यत्व इत्यर्थः ॥ **अप्रसिद्धेरिति** ॥ यद्यपि पूर्वोक्तोभयाभावघटितप्रतियोगिवैयधिकरण्यप्रवेशे गगनाभाव एव तत्रापि प्रसिध्यति तथापि गगनादेरपि कालिकसम्बन्धेन महाकालवृत्तित्वमस्त्येव अन्यथा पूर्ववृत्तिताघटितशब्दादिकारणत्वं गगनादौ न स्यादवृत्तित्वप्रवादस्तु कालिकदिक्कृतविशेषणतातिरिक्तसंसर्गेणावृत्तित्वादेव । अत एव जगतामाश्रयो मत इति मूलमपि सङ्गच्छत इति भावः ।

करणवृत्त्यभावप्रतियोगितासामान्ये यत्सम्बन्धावच्छिन्नत्वयद्धर्मावच्छिन्नत्वोभयाभावस्तेन सम्बन्धेन तद्धर्मावच्छिन्नस्य तद्धेतुव्यापकत्वं बोध्यम्। इत्थं च कालो घटवान् कालपरिमाणादित्यादौ संयोगसम्बन्धेन घटाभावप्रतियोगिनोऽपि घटस्यानाधिकरणे हेत्वधिकरणे महाकाले वर्तमानः स एव संयोगेन घटाभावस्तस्य प्रतियोगितायां कालिकसम्बन्धावच्छिन्नत्वघटत्वा-

## प्रभा.

वृत्तिविशेषणतया घटस्यापि साध्यतायां कालपरिमाणरूपहेतावव्याप्तिस्तेन संबन्धेन महाकालान्यत्वविशिष्ट-घटस्याधिकरणाप्रसिद्धया लक्षणाभावादत आह वस्तुतस्त्विस्यवतारिकामाहुः तदसत् महाकालमात्रवृत्ति-विशेषणतात्वं महाकालभिन्नावृत्तित्वविशिष्टमहाकालवृत्तित्वविशिष्टविशेषणतात्वादन्यद्दुर्वचं तत्र घटकीभूत-महाकालभिन्नत्वं महाकालत्वावच्छिन्नप्रतियोगिताकभेदरूपमेव तत्प्रतियोगितावच्छेदकं महाकालत्वंच कालिकसंबन्धेन जगदाधारत्वरूपमेव तदेव हि महाकालनिष्ठतव्यक्तित्वमपीत्यनेकपदार्थघटिततादृशविशेषणता-त्वेन संसर्गतायां मानाभावात् उक्तरीत्या पूर्वोक्तानुमान एवाव्याप्तिसंभवे संबन्धान्तरेण घटादिसाध्यकानुमान-पर्यन्तानुधावनवैयर्थ्याच्च ॥ **हेत्वधिकरणवृत्त्यभावप्रतियोगितासामान्य इति** ॥ प्रतियोगितावच्छेदकसंबन्धेन स्वावच्छेदकावच्छिन्नानधिकरणहेत्वधिकरणकप्रतियोगितासामान्य इत्यर्थः॥ **तेन संबन्धेन तद्धर्मावच्छिन्नस्य तद्धेतुव्यापकत्वमिति** ॥ तत्संबन्धघटितं तद्धर्मावच्छिन्नं तद्धेतुनिरूपितं व्यापकत्वमि-त्यर्थः ॥ **व्यापकसामानाधिकरण्यमिति** ॥ तथाच तादृशप्रतियोगितासामान्ये यत्संबन्धावच्छिन्नत्व-यद्धर्मावच्छिन्नत्वोभयाभावः तत्संबन्धावच्छिन्नतद्धर्मावच्छिन्नसामानाधिकरण्यं व्याप्तिरिति भावः। वह्निमान् धूमादित्यादौ संयोगसंबन्धावच्छिन्नघटाभावीयप्रतियोगितायाः साध्यतावच्छेदकसंबन्धावच्छिन्नत्वात् समवायेन वह्न्यभावीयप्रतियोगितायाः साध्यतावच्छेदकधर्मावच्छिन्नत्वाच्चाव्याप्तिवारणायोभयाभाव इत्युक्तम्। केचित्तु साध्यसाधनभेदेन व्याप्तेर्भेदादित्यत्र हेतुसमानाधिकरणेत्यादिव्याप्तेस्सत्त्वात् तज्ज्ञानमेव कारणं कालो घटवान् कालपरिमाणादित्यादौ तु साध्यवदन्येत्यादियथाश्रुतव्याप्तेः स्वाधिकरणेत्यादिपरिष्कृतव्याप्तेर्वा सत्त्वात् तज्ज्ञानमेव कारणमिति कालपरिमाणादिहेतौ स्वाधिकरणेत्यादिव्याप्तेस्सत्त्वादुभयाभावघटितपरिष्कारकरणं व्यर्थमित्याहुः। अस्मद्गुरुचरणास्तु प्रतियोगितावच्छेदकावच्छिन्नानाधिकरणहेत्वधिकरणवृत्त्यभाव-प्रतियोगितासामान्य इत्यत्र हेत्वधिकरणे प्रतियोगितावच्छेदकावच्छिन्नानाधिकरणत्वं प्रतियोगितावच्छेदकावच्छिन्नावच्छेदकताकप्रतियोगिताकभेदवत्त्वमेव पर्यवसितमिति तादृशभेदवद्वृत्तित्वस्य हेतौ लक्षणवाक्यात् लाभे तुल्यवित्तिवेद्यतया तादृशभेदेऽपि हेत्वधिकरणवृत्तित्वं लब्धम्। तथाच हेतुसमानाधिकरणान्योन्याभावीयप्रतियोगितावच्छेदकतासामान्ये यत्संबन्धावच्छिन्नत्वयद्धर्मावच्छिन्नत्वोभयाभावः तत्संबन्धावच्छिन्नतद्धर्माव-

## दिनकरीयम्.

हेत्वधिकरणवृत्त्यभावीयसाध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगितानवच्छेदकत्वघटितलक्षणकरणेऽपि कालो घटवान् कालपरिमाणादित्यादावव्याप्तिस्तदवस्थैव साध्यतावच्छेदकसम्बन्धावच्छिन्नतादृशप्रतियोगिताया अ-प्रसिद्धेरतः प्रतियोगिताधर्मिकोभयाभावपर्यन्तानुधावनं समवायेन वह्न्यभावप्रतियोगितायां वह्नित्वावच्छिन्नत्वसत्त्वात् संयोगेन घटाभावप्रतियोगितायां साध्यतावच्छेदकसंयोगावच्छिन्नत्वस्य सत्त्वात् वह्निमान् धूमादित्यादावव्याप्तिवारणाय यत्सम्बन्धावच्छिन्नत्वयद्धर्मावच्छिन्नत्वयोर्निवेशः। संयोगेन घटाभावप्रतियोगिता-

## रामरुद्रीयम्.

ननु प्रतियोगिताधर्मिकोभयाभावघटितलक्षणमनर्थकं प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगिवैयधिकरण्यनिवेशे समवायादिना घटाद्यभावस्यैव प्रसिद्धिसम्भवादित्याशङ्क्य तथोक्तावपि समवायेन वह्न्यभावमादायाव्याप्तिवारणायोत्तरत्र प्रतियोगितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वस्यावश्यं निवेशनीयतया समवायेन घटाद्यभावीयतादृशप्रतियोगित्वाप्रसिद्ध्याऽव्याप्तितादवस्थ्यादिति समाधत्ते ॥ **अत्रेति** ॥ एकैकाभावनिवेशेऽव्याप्तिप्रदर्शनेनोभयाभावनिवेशं सार्थकयति ॥ **समवायेनेति** ॥ सामान्यपदमतिव्याप्तिवारक-

वच्छिन्नत्वोभयाभावसत्त्वान्नाव्याप्तिः । ननु प्रमेयवह्निमान् धूमादित्यादौ प्रमेयवह्नित्वाव-च्छिन्नत्वमप्रसिद्धं गुरुधर्मस्यानवच्छेदकत्वादिति चेन्न । कम्बुग्रीवादिमान्नास्तीति प्रतीत्या कम्बुग्रीवादिमत्त्वावच्छिन्नप्रतियोगिताविषयीकरणेन गुरुधर्मस्याप्यवच्छेदकत्वस्वीकारादिति सङ्क्षेपः ॥ ६९ ॥

## प्रभा.

च्छिन्नसामानाधिकरण्यं व्याप्तिरिति परिष्करणीयम् । एवंच कालो घटवान् कालपरिमाणादित्यादौ समवायेन घट वदन्योन्याभावमादाय लक्षणसमन्वय इति व्याचक्षुरिति सङ्क्षेपः ॥ **गुरुधर्मस्याप्यवच्छेदकत्वस्वीकारा-दिति** ॥ ननूक्तप्रतीतिः कम्बुग्रीवादिमन्निष्ठप्रतियोगिताकाभावविषयिण्येवेति नेयं गुरुधर्मस्यावच्छेदकत्वसाध-का । नच तादृशप्रतीतेः गुरुधर्मस्यावच्छेदकत्वाविषयकत्वे यत्किंचिद्घटवति कम्बुग्रीवादिमान्नास्तीति वाक्यस्य प्रामाण्यापत्तिवारणाय नञर्थाभावे कम्बुग्रीवादिमत्पदार्थकम्बुग्रीवादिमत्त्वविशिष्टस्यैव शाब्दबोधे प्रतियोगिता-संबन्धेन भानस्वीकारात् अभावे यद्धर्मविशिष्टवैशिष्ट्यमवगाहते तत्र तद्धर्मावच्छिन्नप्रतियोगिताकत्वमित्येव नि-यमेन कम्बुग्रीवादिमत्त्वावच्छिन्नप्रतियोगिताकाभावसिद्ध्या गुरुधर्मस्यापि प्रतियोगितावच्छेदकत्वमवश्य-मङ्गीकर्तव्यमिति वाच्यं अभावे यद्धर्मविशिष्टवैशिष्ट्यमवगाहते तत्र तद्धर्मसमनियतधर्मावच्छिन्नप्रतियोगिता-कत्वमित्येव नियमोऽङ्गीकर्तव्यः अन्यथा गन्धवद्घटो नास्ति पृथिवीघटो नास्ति द्रव्यघटो नास्ति प्रमेयघटो नास्तीत्यादिप्रतीत्या कम्बुग्रीवादिमत्त्वस्येव गन्धवद्घटत्वादीनामप्यवच्छेदकत्वसिद्ध्या अप्रामाणिकानन्ताभाव-कल्पनापत्तेः । एवंच कम्बुग्रीवादिमान्नास्तीत्यादिप्रतीतेः कम्बुग्रीवादिमत्त्वसमनियतघटत्वावच्छिन्नप्रतियो-गिताकाभाव एव कम्बुग्रीवादिमत्त्वविशिष्टवैशिष्ट्यावगाहित्वं स्वीक्रियते ननु तद्घटत्वावच्छिन्नप्रतियोगिता-काभावे तद्घटत्वस्य कम्बुग्रीवादिमत्त्वसमनियतत्वाभावादतो यत्किंचिद्घटवति न तादृशप्रतीत्यापत्तिः । तस्मा-द्गुरुधर्मस्य प्रतियोगितावच्छेदकत्वे प्रमाणं मृग्यमित्यस्वरसात् संक्षेप इति ॥ यद्वा ननु यत्किंचिद्घटवति कम्बुग्रीवादिमान्नास्तीति वाक्यस्य प्रामाण्यापत्तिवारणाय उक्तरीत्याप्रामाणिकानन्ताभावकल्पनापत्तिवारणा-य च यादृशाभावे यद्धर्मविशिष्टवैशिष्ट्यमवगाहते तस्य तद्धर्मावच्छिन्नप्रतियोगिताकत्वतद्धर्मघटकसमनियत-धर्मावच्छिन्नप्रतियोगिताकत्वान्यतरवत्त्वमित्येव नियमः स्वीक्रियते । एवंच कम्बुग्रीवादिमान्नास्ति घ्राण-ग्राह्यगुणो नास्तीत्यादिप्रतीतौ कम्बुग्रीवादिमत्त्वघ्राणग्राह्यगुणत्वादिरूपधर्मस्य स्वघटकसमनियतधर्माप्रसि-द्ध्या कम्बुग्रीवादिमत्त्वादिरूपगुरुधर्मावच्छिन्नप्रतियोगिताकाभावसिद्धावपि प्रमेयवह्निमान्नास्तीत्यादिप्रतीत्या न प्रमेयवह्नित्वाद्यवच्छिन्नप्रतियोगिताकाभावसिद्धिः तद्धर्मघटकतद्धर्मसमनियतकेवलवह्नित्वावच्छिन्नप्रतियो-गिताकाभावसिद्ध्यैवोक्तनियमनिर्वाहात् । एवं च उक्तस्थलेऽव्याप्तिर्दुर्वारेत्यत आह ॥ **संक्षेप इति** ॥

## दिनकरीयम्.

यां धूमत्वावच्छिन्नत्वघटितोभयाभावसत्त्वादतिव्याप्तिवारणाय सामान्ये इति ॥ **अप्रसिद्धमिति** ॥ तथा चा व्याप्तिरिति भावः । यदि च कम्बुग्रीवादिमान्नास्तीत्यादौ कम्बुग्रीवादिमत्प्रतियोगिताकाभाव एव विषयो न तु कम्बुग्रीवादिमत्त्वे तत्प्रतियोगितावच्छेदकत्वमपीत्युच्यते तदा यत्किञ्चिद्घटवत्यपि कम्बुग्रीवादिमान्नास्तीति वाक्यस्य प्रामाण्यापत्तिरिति हृदि निधाय सङ्क्षेप इति ॥ ६९ ॥

## रामरुद्रीयम्.

तया सार्थकयति ॥ **संयोगेनेति** ॥ **हृदि निधायेति** ॥ तथा चैतस्यार्थस्यानुक्तत्वादेवैतदर्थसूचनाय सङ्क्षेप इत्युक्तमिति भावः । नन्ववच्छेदकत्वमवगाहत एव कम्बुग्रीवादिमान्नास्तीति प्रतीतिः तत्र स्वरूपस-म्बन्धरूपं किं स्वनतिरिक्तवृत्तित्वं तदपि न प्रतियोगितावच्छेदकशून्यावृत्तित्वं तथासति गुणे सत्ता नास्ती-ति प्रतीत्यापत्तेः गुणे विशिष्टसत्ताभावसत्त्वाद्विशिष्टसत्तात्वशून्ये सत्तात्वस्यावृत्तित्वात् अपि तु स्वावच्छिन्न-व्यापकतावच्छेदकप्रतियोगितावच्छेदककत्वमेव तथात्वम् । सत्तात्वावच्छिन्नव्यापकतावच्छेदकत्वस्य विशि-ष्टसत्तात्वे विरहादेव न गुणे सत्ता नास्तीति प्रतीत्यापत्तिः । नापि घटवति कम्बुग्रीवादिमान्नास्तीति प्रती-

**सिषाधयिषया शून्या सिद्धिर्यत्र न तिष्ठति ।**
**स पक्षस्तत्र वृत्तित्वज्ञानादनुमितिर्भवेत् ॥ ७० ॥**

पक्षवृत्तित्वमित्यत्र पक्षत्वं किं तदाह ॥ **सिषाधयिषयेति** ॥ सिषाधयिषाविरह-

**प्रभा.**

तथाच गुरुधर्मस्य स्वरूपसंबन्धरूपावच्छेदकत्वाभावेऽपि हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकं यत् घटत्वं तदनतिरिक्तवृत्तित्वरूपपारिभाषिकावच्छेदकत्वस्य कम्बुग्रीवादिमत्त्वे सत्त्वेन तद्रीत्या प्रमेयवह्नित्वस्यापि पारिभाषिकावच्छेदकत्वसिद्धया तदवच्छिन्नत्वघटितोभयाभावस्यापि सत्त्वेन प्रमेयवह्निमान् धूमादित्यादौ नाव्याप्तिरिति दिक् ॥ इति व्याप्तिवादः ॥ ६९ ॥

मूलेऽनुमितिलक्षणैककार्यकारित्वसङ्गत्या व्याप्तिनिरूपणानन्तरं पक्षधर्मता निरूपणीया तामुपेक्ष्य आदौ पक्षतानिरूपणे प्रकृतघटकत्वरूपोपोद्घातसङ्गतिमाह ॥ **मुक्तावल्यां पक्षवृत्तित्वमित्यत्रेति** ॥ तथाच पक्षतायाः

**दिनकरीयम्.**

मूले पक्षतानिरूपणे सङ्गतेरप्रदर्शनात् तां प्रदर्शयति ॥ **पक्षवृत्तित्वमित्यत्रेति** ॥ तथा च प्रकृतस्य

**रामरुद्रीयम्.**

व्यापत्तिः । घटवन्निष्ठाभावप्रतियोगितावच्छेदकस्य कम्बुग्रीवादिमत्त्वावच्छिन्नव्यापकतानवच्छेदकत्वादिति । न च कम्बुग्रीवादिमत्त्वावच्छिन्नव्यापकतावच्छेदकत्वं तदवच्छिन्नसमानाधिकरणाभावप्रतियोगितानवच्छेदकत्वमेव वाच्यं तथाचाप्रसिद्धितादवस्थ्यं घटसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वत्वापेक्षया कम्बुग्रीवादिमत्त्वावच्छिन्नवन्निष्ठाभावप्रतियोगितावच्छेदकत्वत्वस्य गुरुत्वेन तदवच्छिन्नाभावाप्रसिद्धया तद्घटितोक्तावच्छेदकताया असम्भव इति वाच्यम् । कम्बुग्रीवादिमत्समानाधिकरणाभावप्रतियोगितावच्छेदकं यद्यत्तत्तद्भेदकूटस्यैव व्यापकतावच्छेदकत्वेनोपगन्तव्यत्वात्तस्य च प्रसिद्धत्वादिति चेन्मैवम् । घटो नास्तीति प्रतीत्या हि घटत्वादेः स्वरूपसम्बन्धरूपमवच्छेदकत्वं सिध्यतीति वक्तव्यम् । तत्र च नञर्थाभावे घटस्य घटत्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेनान्वयात्तादृशप्रतीत्या घटत्वादेरवच्छेदकत्वावगाहनाद्यथा तादृशप्रतीतिः घटत्वादेरवच्छेदकत्वे मानं तथा कम्बुग्रीवादिमान्नास्तीति प्रतीत्या कम्बुग्रीवादिमत्त्वे निरुक्तावच्छेदकत्वानवगाहनात्कथन्तस्य तादृशावच्छेदकत्वं तत्प्रतीतिगोचर इति घटोनास्तीतिवदियमपि स्वरूपसंबन्धरूपमेवावच्छेदकत्वं कम्बुग्रीवादिमत्त्वेऽवगाहत इति तद्बलाद्गुरुरपि भवत्यवच्छेदकः प्रतियोगिताया इति ग्रन्थकृत्तात्पर्यात् । न च गुरुधर्मे स्वरूपसम्बन्धरूपावच्छेदकत्वस्य बाधादुक्तप्रतीतौ स्वावच्छिन्नव्यापकतावच्छेदकावच्छिन्नप्रतियोगितासम्बन्धेनैव प्रतियोगिनोऽभावे अन्वयोऽभ्युपेयते घटो नास्तीत्यादौ तु लाघवाद्घटत्वावच्छिन्नप्रतियोगितासम्बन्धेनैव घटादेरन्वयोऽभ्युपगन्तुमुचित इति वाच्यम् । समानाकारकप्रतीत्योरेकत्र प्रतियोग्यंशे प्रकारीभूतधर्मावच्छिन्नप्रतियोगितासंसर्गावगाहित्वमपरत्र तादृशधर्मावच्छिन्नव्यापकतावच्छेदकधर्मावच्छिन्नप्रतियोगितासंसर्गावगाहित्वमिति कल्पनस्यानुचितत्वेन लाघवादुभयत्रैव प्रतियोगिविशेषणीभूतधर्मावच्छिन्नप्रतियोगितासंसर्गावगाहिताकल्पनस्यैव उचितत्वेन गुरुधर्मस्य नावच्छेदकत्वमित्यत्रैव प्रमाणदौर्लभ्यं प्रतीत्यनुरोधेनैव अवच्छेदकतासिद्धेरुपगन्तव्यत्वादिति ध्येयम् । ननु प्रतियोगिताधर्मिकोभयाभावघटितलक्षणे गुरुधर्मावच्छिन्नसाध्यकाव्याप्त्यापत्तिरेव न सम्भवति गुरुधर्मस्य साध्यतावच्छेदकताया असम्भवादिति कथमेतदिति चेन्न । स्वरूपसम्बन्धरूपावच्छेदकताया एव गुरुधर्मे प्राचीनैरङ्गीकारात् साध्यतावच्छेदकताया विषयताविशेषरूपत्वेन गुरुधर्मस्यापि तत्सम्भवादिति हृदयम् ॥ ६९ ॥

पक्षवृत्तित्वमित्यत्रेतीति मूले किमित्युत्तरमितीति पूरणीयम् । तथा च पक्षवृत्तित्वघटकं पक्षत्वं मज्जिज्ञासाविषय इति हेतोस्तत्पक्षत्वमाहेत्यर्थः । नन्वेतावता का सङ्गतिः प्रदर्शितेत्याशङ्कायामाह ॥ **तथा चेति** ॥ ननु परामर्शनिरूपणानन्तरं पक्षतानिरूपणे भवतूपोद्घातसङ्गतिः व्याप्तिनिरूपणाव्यवहितोत्तरं पक्ष-

विशिष्टसिद्ध्यभावः पक्षता तद्वान् पक्ष इत्यर्थः । सिषाधयिषामात्रं न पक्षता विनापि सिषाधयिषां घनगर्जितेन मेघानुमानात् । अत एव साध्यसन्देहोऽपि न पक्षता विनापि साध्यसन्देहं तदनुमानात् । सिद्धौ सत्यामपि सिषाधयिषासत्त्वेऽनुमितिर्भवत्येव अतः सिषाधयिषाविरह-

## प्रभा

अनिरूपणे तदाश्रयवृत्तित्वरूपपक्षधर्मतानिरूपणं न संभवतीति प्रथमतस्तदेव निरूपितमिति भावः ॥ सिसाधयिषामात्रस्य पक्षतात्ववादिनां मतमुपन्यस्य दूषयति ॥ **सिसाधयिषामात्रमिति** ॥ **घनगर्जितेनेति** ॥ मेघानां विजातीयशब्देनेत्यर्थः ॥ **मेघानुमानात्** उपरिदेशे मेघानुमितेः । तथाचोपरिदेशो मेघवान् अवच्छेदकतासंबन्धेन विजातीयशब्दवत्त्वात् इत्यनुमानात् सिसाधयिषां विनापि मेघानुमितेरिति भावः ॥ **साध्यसन्देहोऽपीति** ॥ अत्र साध्यसन्देहः न साध्यप्रकारकसन्देहः पर्वते वह्निर्न वेति संशयस्य पक्षतात्वानुपपत्तेः नापि पक्षसाध्यान्यतरकोटिकः वह्निः पर्वतनिष्ठाभावप्रतियोगी न वेति संशयस्य पक्षतात्वानुपपत्तेः किंतु प्राचीनैः समानविषयकत्वेन प्रतिबन्धकत्वस्वीकारेण साध्यप्रकारकपक्षविशेष्यकनिश्चयत्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यत्वेन पूर्वोक्तसंशयाननुगमय्य तादृशप्रतिबध्यताशालिसंशयत्वं पक्षतालक्षणं वाच्यम् । तत्र बाधेऽतिव्याप्तिवारणाय संशयत्वनिवेशः । अत्र संशयत्वं च न साध्यतदभावोभयप्रकारकज्ञानत्वरूपं साध्यविशेष्यकसंशयेऽव्याप्तेः घटः प्रमेयो न वेत्यादिसंशयेऽव्याप्तेश्च तत्र प्रमेयत्वाभावाप्रसिद्धेः किंतु ज्ञानभेदेन विषयिताभेदास्वीकारात् स्वनिष्ठविषयिताघटितधर्मावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यत्वं विषयाघटितं सर्वसाधारणं संशयत्वं वाच्यम् । एवंच पर्वतो वह्निमानवेत्यादिसंशयं स्वपदेनोपादाय तन्निष्ठा या विषयिता पर्वतविशेष्यतानिरूपितवह्निप्रकारतानिरूपितप्रकारिताख्यविषयिता तद्घटितधर्मः पर्वतविशेष्यकवह्निप्रकारकनिश्चयत्वं तदवच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यत्वस्य स्वस्मिन् सत्त्वात् साध्यवत्तानिश्चयप्रतिबध्यत्वस्यापि सत्त्वाच पर्वतो वह्निमान्न वेति संशयेषु लक्षणसमन्वयः । तथाच साध्यवत्तानिश्चयप्रतिबध्यत्वे सति स्वनिष्ठविषयिताघटितधर्मावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यत्वं पक्षतासामान्यलक्षणमिति प्राञ्चो वदन्ति तद्दूषयति ॥ **विनापि साध्यसन्देहमिति** ॥ तादृशपक्षता क्वचिद्विशेषणाभावप्रयुक्ता क्वचिद्वि-

## दिनकरीयम्

परामर्शस्य घटकतया पक्षधर्मत्वमपि प्रकृतं तदुपपादकत्वरूपोपोद्घातसङ्गत्या पक्षतानिरूपणम् । व्याप्तिनिरूपितैककार्यकारित्वमेव सङ्गतिरिति बोध्यम् । मूले पक्षतालक्षणस्य स्पष्टतयाऽनुक्तेः पक्षतालक्षणं स्वातन्त्र्येण प्रदर्शयन् मूलार्थमाह ॥ **सिषाधयिषाविरहेति** ॥ घनगर्जितेन मेघानुमितिस्थलेऽव्याप्त्यापत्त्या सिषाधयिषामात्रस्य पक्षतात्वं निषेधति ॥ **सिषाधयिषामात्रं न पक्षतेति** ॥ **मेघानुमानात्** मेघानुमितेः ॥ **अत एव** वक्ष्यमाणदूषणादेव । सिषाधयिषाविरहरूपविशेषणस्य प्रयोजनमाह ॥ **सिद्धौ**

## रामरुद्रीयम्

तानिरूपणे का सङ्गतिरित्यत आह ॥ **व्याप्तिनिरूपितेत्यादि** ॥ **एककार्यकारित्वं** एककार्यप्रयोजकत्वं । प्रयोजकत्वञ्च कारणकारणतावच्छेदकसाधारणं तेनानुमितौ पक्षतायाः कारणत्वेऽपि व्याप्तेर्विषयविधया कारणतावच्छेदकत्वेऽपि च न क्षतिः अत एव सद्धेतुनिरूपणानन्तरं हेत्वाभासनिरूपणेऽप्येककार्यकारित्वसङ्गतिप्रदर्शनं दीधितिकृतां सङ्गच्छते स्वोक्तसद्धेतोः परामर्शेनानुमितेर्जननात् परोक्तप्रतिहेतोर्दुष्टत्वेन ज्ञानस्य प्रतिबन्धकनिरासद्वाराऽनुमितावुपयोगाच्च । वस्तुतस्तूपोद्घातोऽपि व्याप्तिनिरूपिता सङ्गतिर्भवत्येव तदभिधानानन्तराभिधानप्रयोजकजिज्ञासाजनकज्ञानविषयत्वस्यैव तन्निरूपिततत्सङ्गतित्वात् व्याप्तिनिरूपणानन्तरमप्येकपरामर्शविषयत्वेन पक्षवृत्तित्वस्मरणे वृत्तित्वघटकं किं पक्षत्वमिति जिज्ञासोत्पादसम्भवात् अत एव पक्षतानिरूपणानन्तरं परामर्शस्य कारणताव्यवस्थापने दीधित्युक्तानुमितिलक्षणोपोद्घातस्य पक्षतानिरूपितसङ्गतित्वमुपपादितं गदाधरभट्टाचार्यैरिति ध्येयम् ॥ **स्पष्टतयेति** ॥ सिषाधयिषाविरहविशिष्टसिद्ध्यभावो यत्र स पक्ष इत्युक्तावप्यर्थात्तादृशाभावः पक्षतेति लाभसम्भवात्स्पष्टतयेत्युक्तम् ॥ **अव्याप्त्यापत्त्येति** ॥ पक्षे पक्षताभावापत्त्येत्यर्थः । नच सिषाधयिषाविरहविशिष्टसिद्धेः समवायेन पुरुषे

विशिष्टत्वं सिद्धौ विशेषणं तथा च यत्र सिद्धिर्नास्ति तत्र सिषाधयिषायां सत्यामसत्यामपि पक्षता। यत्र सिषाधयिषाऽस्ति तत्र सिद्धौ सत्यामसत्यामपि पक्षता। यत्र सिद्धिरस्ति सिषाधयिषा च नास्ति तत्र न पक्षता सिषाधयिषाविरहविशिष्टसिद्धेः सत्त्वात्। ननु यत्र परामर्शानन्तरं सिद्धिः ततः सिषाधयिषा तत्र सिषाधयिषाकाले परामर्शनाशान्नानुमितिः यत्र सिद्धिपरामर्शसिषाधयिषाः क्रमेण भवन्ति तत्र सिषाधयिषाकाले सिद्धेर्नाशात्प्रतिबन्धकाभावादेवानुमितिः यत्र सिषाधयिषासिद्धिपरामर्शास्तत्र परामर्शकाले सिषाधयिषैव नास्ति एवमन्यत्रापि सिद्धिकाले परामर्शकाले च न सिषाधयिषा योग्याविभुगुणानां यौगपद्यनिषेधात् तत्कथं सिषाधयिषाविरहविशिष्टत्वं सिद्धेर्विशेषणमिति चेन्न। यत्र वह्निव्याप्यधूमवान् पर्वतो

## प्रभा.

शेष्याभावप्रयुक्ता क्वचिदुभयाभावप्रयुक्तेत्युपपादयति ॥ **तथाचेत्यादि** ॥ तथाच पक्षताविरहस्थलमुपपादयति ॥ **यत्र त्वित्यादिना** ॥ अत्र सिसाधयिषाविरहविशिष्टत्वं समवायद्वयघटितसामानाधिकरण्यसंबन्धावच्छिन्नसिसाधयिषानिष्ठप्रतियोगिताकाभावस्याभावीयदैशिकविशेषणतारूपवैशिष्ट्यं समवायसंबन्धावच्छिन्नसिसाधयिषानिष्ठप्रतियोगिताकाभावस्य दैशिकविशेषणतासमवायोभयघटितसामानाधिकरण्यकालिकविशेषणत्वरूपवैशिष्ट्यं वा सिद्धौ निवेश्यम्। तेन सिसाधयिषाकालेऽपि कालिकसंबन्धेन सिसाधयिषाविरहवैशिष्ट्यसत्त्वेऽपि नानुमित्यनुपपत्तिरिति बोध्यम् ॥ **एवमन्यत्रापीति** ॥ यत्र सिसाधयिषापरामर्शसिद्धयः सिद्धिसिसाधयिषापरामर्शाः परामर्शसिसाधयिषासिद्धयो वा तत्रापीत्यर्थः ॥ **कथमिति** ॥ सिसाधयिषाकालीनानुमितिनिर्वाहरूपप्रयोजनासंभवेन व्यर्थत्वादिति भावः ॥

## दिनकरीयम्.

**सत्यामिति** ॥ **अत इति** ॥ तत्रानुमितिनिर्वाहकपक्षतासिद्ध्यर्थमिति भावः ॥ **तत्र सिषाधयिषायां सत्यामसत्यामपीति** ॥ सत्यामुभयाभावप्रयुक्तस्यासत्यां विशेष्याभावमात्रप्रयुक्तस्योक्तविशिष्टाभावस्य सत्त्वादिति भावः ॥ **सिद्धौ सत्यामसत्यां चेति** ॥ सत्यां विशेषणाभावमात्रप्रयुक्तस्यासत्यां तूभयाभावप्रयुक्तस्य विशिष्टाभावस्य सत्त्वादिति भावः ॥ **सिद्धेः सत्त्वादिति** ॥ सिद्धेः सत्त्वेन तदभावरूपपक्षताया अभावादिति भावः। सिषाधयिषाविरहवैशिष्ट्यं च सिद्धावेककालावच्छेदेनैकात्मवृत्तित्वं तेन सिषाधयिषाकालीनसिद्धेः कालिकसम्बन्धेन सिषाधयिषाविरहविशिष्टत्वसत्त्वेऽपि न क्षतिः। परामर्शरूपकारणसत्त्वे सिद्धिरूपविरोधिसत्त्वे यद्यनुमित्सा स्यात्तदा तस्या उत्तेजकत्वं वाच्यं नचैतत्सम्भवतीत्याशङ्कते ॥ **ननु यत्रेति** ॥ **परामर्शानन्तरं** परामर्शद्वितीयक्षणे ॥ **ततः** सिद्ध्युत्पत्तिद्वितीयक्षणे ॥ **क्रमेण** अव्यवधानेन ॥ **एवमन्यत्रापीति** ॥ यत्र परामर्शसिषाधयिषासिद्धयः क्रमेण भवन्ति एवं सिद्धिसिषाधयिषापरामर्शाः एवं सिषाधयिषापरामर्शसिद्धयश्चेत्यर्थः ॥ **सिद्धिकाले परामर्शकाले चेति** ॥ सिद्धिपरामर्शो-

## रामरुद्रीयम्.

सत्त्वेऽपि पक्षे तदभावसत्त्वात्पक्षतापत्तिरिति वाच्यम्। विशेष्यतासम्बन्धेन वर्तत इति तदर्थात् ॥ **अत इतीति** ॥ चतुर्थ्यन्तात्तसिरिति भावः ॥ **एककालेति** ॥ एकक्षणेत्यर्थः। तेन न स्थूलकालमादायातिप्रसङ्गः ॥ **विरोधिसत्त्वे** प्रतिबन्धकसत्त्वे ॥ **अनुमित्सा स्यात्** ॥ अनुमित्सा वर्तेतेत्यर्थः। अन्यथा परामर्शाभावेऽनुमितेरेवानुत्पत्त्या सिषाधयिषाया उत्तेजकत्वकल्पने बीजाभावात्प्रतिबन्धकसत्त्वे कार्योत्पादार्थमेवोत्तेजकस्य कल्पनीयत्वात् सिद्ध्यसत्त्वे प्रतिबन्धकाभावादेव कार्योत्पादसम्भवेनोत्तेजकस्यैवानपेक्षितत्वात् सिषाधयिषाभावे धर्मिणोऽसत्त्वेन कस्योत्तेजकत्वं कल्पनीयमिति भावः। सिद्धिमात्रकाले परामर्शमात्रकाले च सिषाधयिषायाऽसम्भवात्सिद्धिकाल इत्यादिमूलमसङ्गतमतो व्याचष्टे ॥ **सिद्धीति** ॥ ननु वह्निव्याप्यधूमवान्पर्वतो वह्निमानिति प्रत्यक्षानन्तरं सिषाधयिषैव न सम्भवति इष्टसाधनताज्ञानाभावात् उपायेच्छां प्रति

वह्निमानिति प्रत्यक्षं स्मरणं वा ततः सिषाधयिषा तत्र पक्षतासम्पत्तये तद्विशेषणस्यावश्यकत्वात् । इदं तु बोध्यं यादृशयादृशसिषाधयिषासत्त्वे सिद्धिसत्त्वे यल्लिङ्गकानुमितिस्तादृशतादृशसिषाधयिषाविरहविशिष्टसिद्ध्यभावस्तल्लिङ्गकानुमितौ पक्षता तेन सिद्धिपरामर्शसत्त्वे यत्किञ्चित् ज्ञानं जायतामितीच्छायामपि नानुमितिः वह्निव्याप्यधूमवान् पर्वतो वह्निमानिति प्र-

## प्रभा ।

**स्मरणं वेति** ॥ संभवस्थलाभिप्रायकोऽयं विकल्पः । अनुमितीष्टसाधनताविषयकमिति शेषः । तथाच तादृशप्रत्यक्षस्मरणान्यतरपूर्वमनुमितिविशेष्यकेष्टसाधनताज्ञानस्वीकारे इच्छासामग्र्याः प्राबल्यात् इच्छैव स्यात् नतु तादृशान्यतरदन्यतरोत्पत्त्यनन्तरमिष्टसाधनताज्ञानस्वीकारे इच्छोत्पत्तिकाले तादृशान्यतरस्य नाशात् कारणाभावादेव नानुमितिरिति तादृशविशेषणवैयर्थ्यापत्त्या तादृशप्रत्यक्षस्मरणयोरेव इष्टसाधनताविषयकत्वमङ्गीकृतमिति भावः । सिसाधयिषायाः अनुमितिसामान्यं प्रति सामान्यरूपेणोत्तेजकत्वे दोषं वक्तुं स्वसिद्धान्तमाह ॥ **यादृशेति** ॥ घटानुमित्सासत्त्वे सिद्ध्यसत्त्वे वह्न्यनुमित्युत्पादात् सिद्धिकालेऽपि तदिच्छाबलात् वह्न्यनुमित्यापत्तिः अतस्सिद्धिसत्त्व इति । ननु वह्न्यनुमितिगोचरेच्छात्वेन उत्तेजकत्वं वाच्यं तावतैव सिद्धिकाले घटानुमितीच्छाबलात् वह्न्यनुमित्यापत्तिवारणसंभवादत आह ॥ **तेनेति** ॥ तत्तद्व्यक्तित्वेनेच्छाया उत्तेजकत्वेनेत्यर्थः । तथाचानुमितिगोचरेच्छात्वेनोत्तेजकत्वे यत्किंचिज्ज्ञानं जायतामितीच्छायामपि सिद्धिसत्त्वे वह्न्यनुमित्यापत्त्या न तेन रूपेण उत्तेजकत्वमिति भावः । यत्किंचिज्ज्ञानं जायतामित्यस्यैतदुत्तरमित्यादिः अन्यथा सिद्ध्यादिरूपयत्किंचिज्ज्ञानस्य सिद्धत्वादिच्छाया अनुत्पत्तिरेव स्यात् ॥ **नानुमितिरिति** ॥ नचानुमितेरप्येतदुत्तरकालीनयत्किंचिज्ज्ञानत्वात् तदिच्छाबलात् सिद्धिकाले अनुमित्युत्पत्तौ बाधकाभाव इति वाच्यम् मानससामग्र्याः अनुमिति-

## दिनकरीयम्.

मयक्षण इत्यर्थः ॥ **कथमिति** ॥ किमर्थमित्यर्थः ॥ **इति प्रत्यक्षमिति** ॥ अनुमितीष्टसाधनताविषयकमिति शेषः । प्रत्यक्षोत्पत्तेः पूर्वमनुमितीष्टसाधनताधीस्वीकारे इच्छासामग्र्या प्रतिबन्धात् प्रत्यक्षमेव न स्यात् ॥ **यादृशयादृशेति** ॥ घटानुमितिर्जायतामितीच्छासत्त्वेऽपि पर्वतो वह्निमानिति सिद्ध्यसत्त्वे वह्निमानित्यनुमित्युत्पत्तेः पर्वतो वह्निमानिति सिद्धिसत्त्वेऽपि तदिच्छाबलात्तादृशानुमित्यापत्तिरत उक्तम् ॥ **सिद्धिसत्त्व इति** ॥ इदं चोत्तेजकेच्छादिव्यक्तेः परिचायकम् । उत्तेजकत्वं तु तत्तद्व्यक्तित्वेनैवेति बोध्यम् ॥ **तेन** तत्तदिच्छाया उत्तेजकत्वेन । यत्किञ्चिज्ज्ञानमित्यस्यैतदुत्तरकालीनमित्यादिः अन्यथा यत्किञ्चिज्ज्ञानस्य सर्वदा सिद्धत्वेन तद्रूपेणेच्छाविरहात् ॥ **नानुमितिरिति** ॥ नानुमित्यापत्तिरित्यर्थः । तदिच्छायास्तद्व्यक्तित्वेनोत्तेजकत्वानभ्युपगमादिति भावः । नच यत्किञ्चिज्ज्ञानं जायतामित्येतादृशेच्छाकाले सिद्धिसत्त्वेऽप्यनुमितिर्भवत्येवेति वाच्यम् । अनुमितिसामग्रीसत्त्वे आत्मादिविषयकयत्किञ्चिन्मानसादिसामग्रीसत्त्वनियमेन यत्किञ्चिन्मानसाद्युत्पत्त्यैव तादृशेच्छाविषयासिद्धेः तत्रानुमित्युत्पत्ताविष्टापत्त्यसम्भवात् । नन्वनुमितिरवप्रका-

## रामरुद्रीयम्.

इष्टसाधनताज्ञानस्य हेतुत्वादिष्टसाधनताज्ञानस्य तादृशप्रत्यक्षात्पूर्वमेवोपगमे प्रत्यक्षमेव न सम्भवति बलवदिच्छासामग्र्या प्रतिबन्धात् प्रत्यक्षानन्तरं तदुपगमे सिषाधयिषाक्षणे प्रत्यक्षमेव न तिष्ठतीत्याशङ्कानिरासाय शेषं पूरयति ॥ **अनुमितीत्यादि** ॥ **परिचायकं रूपमिति** ॥ ययदिच्छासत्त्वे सिद्धिसत्त्वे अनुमितिरित्यन्तं तत्तद्व्यक्तित्वेन विशिष्येच्छाव्यक्तीनां ज्ञानसम्पादकमित्यर्थः । तत्तद्व्यक्तित्वेनैवेत्येवकारेणानुमितिरित्यन्तभागस्योत्तेजकतावच्छेदककोटिप्रवेशो व्यवच्छिद्यते । ननु यत्किञ्चिज्ज्ञानं जायतामितीच्छैव न सम्भवति सिद्धे वस्तुनि इच्छानुत्पत्तेर्यत्किञ्चिज्ज्ञानस्य सिद्धत्वात् । न च सिद्धेऽपि सिद्धत्वेनाज्ञानदशायामिच्छादर्शनान्नानुपपत्तिरिति वाच्यम् । सिद्धत्वज्ञानाभावेऽपि उत्पन्नज्ञानादिव्यक्ताविच्छानुत्पत्त्या ज्ञानादिव्यतिरिक्तस्थल एव सिद्धत्वज्ञानं प्रतिबन्धकं ज्ञानादौ तु सिद्धिमात्रं विरोधीति सिद्धान्तात् । अत एवोक्तं सिद्धेः इच्छाविरहादिति तत्र तत्र ग्रन्थकृद्भिरित्यतो व्याचष्टे ॥ **एतदुत्तरकालीनमित्यादि** ॥ **अनुमितिसामग्रीस-**

त्यक्षसत्त्वे प्रत्यक्षातिरिक्तं ज्ञानं जायतामितीच्छायांतु भवत्येव । एवं धूमपरामर्शसत्त्वे आलोकेन वह्निमनुमिनुयामितीच्छायामपि नानुमितिः । सिषाधयिषाविरहकाले यादृशासिद्धिसत्त्वे

## प्रभा.

सामग्रीकाले नियमेन सत्त्वेन यत्किंचिन्मानसोत्पत्त्यापीच्छाया निवृत्तत्वानुमित्यसंभवात् । नन्वनुमितित्वप्रकारकेच्छात्वेनोत्तेजकत्वं वाच्यं तेनैव यत्किंचिज्ज्ञानत्वप्रकारकेच्छाया वारणसंभवादत आह ॥ **वह्निव्याप्येत्यादि** ॥ अत्र केचित् शाब्दसामग्रीकाले सिद्ध्यात्मकप्रात्यक्षिकपरामर्शसत्त्वे प्रत्यक्षातिरिक्तं ज्ञानं जायतामिति इच्छायां शाब्दबोधोत्पत्त्यैव इच्छाविषयसिद्धेः न तत्रानुमितिरिति शाब्दसामग्र्यसत्त्व इत्यपि पूरणीयमित्याहुः तदसत् शाब्दसामग्र्याः पदार्थस्मृतिघटितत्वेन प्रत्यक्षात्मकतादृशसिद्धिकाले तादृशस्मृतेरसंभवात् तादृशसिद्धिपूर्वं शाब्दसामग्रीस्वीकारे शाब्दसामग्र्याः प्रबलत्वेन तदुत्तरं शाब्द एव स्यात् ननु प्रात्यक्षिकतादृशपरामर्शः तादृशप्रात्यक्षिकपरामर्शोत्तरं पदार्थस्मृतिघटितशाब्दसामग्रीस्वीकारे तदुत्तरमेव तादृशेच्छोत्पत्त्या तत्काले तादृशपरामर्शाभावादेवानुमित्युत्पत्तेरसंभवात् तस्मात्तादृशप्रात्यक्षिकपरामर्शकाले शाब्दसामग्र्या असंभवितत्वेन पूरणमनुचितमिति यथाश्रुतमुक्तावलीग्रन्थ एव निर्दुष्ट इति प्रतिभाति ॥ **नानुमितिरिति** ॥ नानुमितिसामान्यापत्तिरित्यर्थः । तथाच प्रकृते धूमलिङ्गकेच्छाविरहविशिष्टसिद्ध्यभावरूपकारणविरहात् धूमलिङ्गकानुमित्यनुत्पत्तौ धूमान्यलिङ्गकपरामर्शविरहात् धूमान्यलिङ्गकानुमित्यनुत्पत्तौ च विशेषसामग्रीसहिताया एव सामान्यसामग्र्याः फलोपधायकत्वेनानुमितिविशेषोत्पादकसामग्र्यभावात् केवलालोकलिङ्गकेच्छाकालीनसिद्ध्यात्मकधूमपरामर्शान्नानुमितिसामान्यापत्तिरिति भावः । अत्र केचित् पर्वतोद्देश्यकवह्निविधेयकानुमितिर्जायतामित्याकारकेच्छाव्यक्तयो यावत्यः तासां तत्तद्व्यक्तित्वेन उत्तेजकत्वे गौरवात् ताः पर्वतोद्देश्यकत्वविशिष्टवह्निविधेयकत्वप्रकारताशाल्यनुमितिगोचरेच्छात्वेनानुगमय्य तेन रूपेणैवोत्तेजकत्वं वाच्यं लाघवात् । एवंच पर्वतेऽनुमितिर्जायतामितीच्छाव्यक्तयो यावत्यः तासां वह्न्यनुमितिर्जायतामितीच्छाव्यक्तयो यावत्यस्तासां चानुगतेन रूपेणोत्तेजकत्वं वाच्यम् । लाघवादशाब्दज्ञानं जायतामिति प्रत्यक्षातिरिक्तं ज्ञानं जायतामितीच्छानान्तु अशाब्दज्ञानत्वप्रकारकेच्छात्वादिना उत्तेजकत्वं न संभवति सिद्ध्यात्मकपरामर्शकाले यत्किंचिन्मानसोत्पत्त्यापि इच्छाविषयसिद्धेः एवं प्रत्यक्षातिरिक्तं ज्ञानं जायतामितीच्छानामपि प्रत्यक्षान्यज्ञानत्वप्रकारकेच्छात्वादिनोत्तेजकत्वं न संभवति पर्वतज्ञानरूपोद्बोधकसहकृतसंस्कारमहिम्ना व्याघ्रादिस्मरणोत्पत्त्यापि विषयसिद्धेः अत एव तासां तत्तद्व्यक्तित्वेनैवानुमितिविशेषे उत्तेजकत्वं वाच्यं तथाच अनुगतीकृतानां निरुक्तेच्छानामनुगतधर्मावच्छिन्नसमवायसंबन्धावच्छिन्नप्रतियोगिताकाभावस्य निरुक्तवैशिष्ट्यमननुगतानां निरुक्तेच्छानां तु तत्तद्व्यक्तित्वावच्छिन्नसमवायसंबन्धावच्छिन्नप्रतियोगि-

## दिनकरीयम्.

रकेच्छात्वेनानुगतरूपेणैवोत्तेजकत्वं वाच्यं तावतैव यत्किञ्चिज्ज्ञानं जायतामितीच्छावारणसम्भवान्नतु तत्तद्व्यक्तित्वेनोत्तेजकत्वं कल्प्यं गौरवादित्यत आह ॥ **वह्निव्याप्येति** ॥ प्रत्यक्षातिरिक्तं ज्ञानमित्यस्य शाब्दसामग्र्यसत्त्वे इत्यादिः । शाब्दसामग्रीसत्त्वे शाब्दबोधेनैवेच्छाविषयसिद्धिसम्भवात् । भवत्येवेत्यनुमितिरित्यनेन सम्बद्ध्यते तथाचानुमितित्वप्रकारकेच्छात्वेनोत्तेजकत्वे तत्रानुमितिर्न स्यादिति भावः । तल्लिङ्गकत्वप्रवेशस्य फलमाह ॥ **एवमित्यादिना** ॥ **नानुमितिरिति** ॥ इच्छायास्तत्तद्व्यक्तित्वेनोत्तेजकतया तदि-

## रामरुद्रीयम्.

**त्व इति** ॥ अनुमितिसामग्र्यभावे तादृशेच्छाबलादनुमितावित्यापत्तिरेव न सम्भवति तत्सत्त्वे परामर्शादिसत्त्वेनात्मनो मानससामग्रीसत्त्वेन तादृशमानसोत्पत्त्यापीच्छाया विषयसिद्ध्या अनुमित्युत्पादासम्भवायादृशेच्छाया अनुमितिं विना न विषयसिद्धिस्तादृशेच्छाया एवोत्तेजकत्वोपगमादिति भावः । ननु वह्निव्याप्यधूमवान् पर्वतो वह्निमानिति प्रत्यक्षानन्तरं वह्नेः प्रत्यक्षातिरिक्तं ज्ञानं जायतामितीच्छाबलेन वह्नेर्नानुमितिः सम्भवति वह्निविषयकशाब्दबोधेनापि तादृशेच्छाविषयसिद्धिसम्भवादित्याशङ्कानिरासाय पूरयति ॥ **शाब्दसामग्र्यसत्त्व इत्यादिरिति** ॥ तथा च तदानीं वह्नेश्शाब्दासम्भवेनानुमित्यैवेच्छाया विषयसिद्धिर्भव-

## प्रभा.

ताकाभावकूटस्य निरुक्तवैशिष्ट्यं च सिद्धौ निवेशनीयमित्याहुः । वस्तुतस्तु यादृशयादृशसिसाधयिषासत्त्वे सिद्धिसत्त्वे यल्लिङ्गकःनुमितिरिति मुक्तावलीग्रन्थाद्धूमलिङ्गकानुमितिस्सिद्धिकाले यादृशयादृशसिसाधयिषामहिम्ना जायते तादृशतादृशसिसाधयिषाव्यक्तीः प्रातिस्विकरूपेणोपादाय तत्तत्सिसाधयिषाव्यक्त्यभावकूटविशिष्टासिद्ध्यभावः धूमलिङ्गकानुमितौ पक्षतेत्यर्थो लभ्यते । ननु तत्र वह्निव्याप्यधूमालोकोभयवान् पर्वतः पर्वतो वह्निमानिति सिद्धिकाले धूमालोकोभयलिङ्गकानुमितीच्छाबलाद्धूमालोकोभयलिङ्गकानुमित्युत्पत्त्या धूमलिङ्गकानुमितावेतस्या उत्तेजकत्वे वह्निव्याप्यधूमवान् पर्वतः पर्वतो वह्निमानिति सिद्ध्यात्मकपरामर्शकालेऽपि तदिच्छाबलाद्धूमलिङ्गकानुमित्यापत्तेः । नचेष्टापत्तिः उभयलिङ्गकानुमित्युत्पत्त्यैव तदिच्छाविषयसिद्धेरिति चेन्न यल्लिङ्गतावच्छेदकावच्छिन्नलिङ्गताकत्वविशिष्टानुमितिः यादृशयादृशसिसाधयिषामहिम्ना सिद्धिसत्त्वे जायते तादृशतादृशसिसाधयिषाव्यक्त्यभावकूटविशिष्टसिद्ध्यभावस्तल्लिङ्गतावच्छेदकावच्छिन्नलिङ्गताकानुमितौ पक्षतेत्यर्थे मुक्तावलीग्रन्थतात्पर्यात्सिद्ध्यात्मकनिरुक्तोभयत्वावच्छिन्नलिङ्गकपरामर्शसत्त्वे निरुक्तोभयत्वावच्छिन्नलिङ्गताकत्वप्रकारकानुमितिगोचरेच्छाबलात् उभयत्वावच्छिन्नलिङ्गताकानुमितेरेवोत्पत्त्या धूमत्वावच्छिन्नलिङ्गताकानुमितौ निरुक्तेच्छायाः अनुत्तेजकत्वेन सिद्ध्यात्मकधूमत्वावच्छिन्नविषयताशालिपरामर्शसत्त्वे निरुक्तेच्छाबलात् धूमत्वावच्छिन्नलिङ्गताकानुमित्यापत्तेरभावात् । नचैवमपि वह्निव्याप्यधूमवान् वह्निव्याप्यालोकवान् पर्वतः पर्वतो वह्निमानित्यादिसिद्ध्यात्मकपरामर्शकाले धूमत्वावच्छिन्नलिङ्गकत्वालोकत्वावच्छिन्नलिङ्गकत्वोभयविशिष्टानुमितिर्जायतामितीच्छायां धूमत्वावच्छिन्नलिङ्गकत्वालोकत्वावच्छिन्नलिङ्गकत्वोभयविशिष्टानुमितेरेवोत्पत्त्या धूमत्वावच्छिन्नलिङ्गताकत्वविशिष्टानुमितेरप्युत्पत्त्या धूमत्वावच्छिन्नलिङ्गताकत्वविशिष्टानुमितावपि निरुक्तेच्छाया उत्तेजकत्वलाभेन सिद्ध्यात्मकवह्निव्याप्यधूमवान् पर्वत इति परामर्शकालेऽपि निरुक्तेच्छाबलात् धूमत्वावच्छिन्नलिङ्गताकानुमित्यापत्तिः नचेष्टापत्तिः निरुक्तलिङ्गताकत्वोभयविशिष्टानुमित्युत्पत्त्यैव इच्छाविषयसिद्धेरिति वाच्यम् निरुक्तेच्छाया निरुक्तलिङ्गताकत्वद्वयविशिष्टानुमितावेव उत्तेजकतया धूमत्वावच्छिन्नलिङ्गकत्वान्यकिंचिल्लिङ्गकत्वाभावविशिष्टानुमितिं प्रति धूमत्वावच्छिन्नलिङ्गताकत्वप्रकारत्वान्यकिंचिल्लिङ्गकत्वप्रकारत्वानिरूपितानुमितिगोचरेच्छाया एव उत्तेजकत्वेन निरुक्तेच्छायास्तादृशत्वाभावात् सिद्ध्यात्मकवह्निव्याप्यधूमवान् पर्वत इति परामर्शकाले निरुक्तेच्छाबलात् धूमत्वावच्छिन्नलिङ्गताकत्वविशिष्टानुमित्यापत्तेरभावात् । एवं सिद्ध्यात्मकधूमपरामर्शकाले धूमेनानुमिनुयामितीच्छयेव द्रव्येणानुमिनुयां धूमालोकान्यतरेणानुमिनुयां धूमलिङ्गकत्वालोकलिङ्गकत्वान्यतरविशिष्टानुमितिर्जायतामित्यादीच्छयापि निरुक्तधूमलिङ्गकत्वविशिष्टानुमित्युत्पत्तेः तादृशानुमितौ निरुक्तेच्छानामप्युत्तेजकत्वामिति यादृशयादृशेच्छासत्त्व इत्यादिग्रन्थाभिप्रायः । अत्र निरुक्तेच्छानां तेन तेन रूपेण उत्तेजकत्वे गौरवात् धूमत्वावच्छिन्नलिङ्गकत्वान्यकिंचिल्लिङ्गकत्वाभावविशिष्टानुमितिसामान्यं प्रति तल्लिङ्गतावच्छेदकावच्छिन्नलिङ्गताकत्वप्रकारत्वान्यकिंचिल्लिङ्गकत्वप्रकारत्वानिरूपितानुमितिनिष्ठविषयताशालीच्छात्वेन उत्तेजकत्वं वाच्यम् । नचैवं द्रव्यलिङ्गकानुमितिर्जायतामित्यादीच्छानामसंग्रहप्रसङ्गः तासां तु द्रव्यलिङ्गकत्वादिप्रकारताशालित्वेन तादृशप्रकारतायाः धूमत्वावच्छिन्नलिङ्गकत्वप्रकारत्वान्यत्वादिति वाच्यम् । किंचिल्लिङ्गकत्वप्रकारतायाः धूमत्वसमानाधिकरणाव्यासज्यवृत्तिधर्मनिष्ठप्रकारतानिरूपितधूमत्वाश्रयनिष्ठप्रकारतानिरूपितव्याप्तित्वरूपलिङ्गत्वनिष्ठप्रकारतानिरूपितप्रयोज्यत्वनिष्ठप्रकारतारूपतादृशाव्यासज्यवृत्तिधर्मविशिष्टनिष्ठलिङ्गताकत्वनिष्ठप्रकारत्वान्यत्वेनापि विशेषणीयत्वात् । एवंच द्रव्यलिङ्गकानुमितिर्जायतामितीच्छीयाया द्रव्यलिङ्गकत्वप्रकारतायाः धूमत्वावच्छिन्नव्याप्तिप्रयोज्यत्वरूपधूमत्वावच्छिन्नलिङ्गकत्वप्रकारत्वान्यत्वेऽपि धूमत्वसमानाधिकरणाव्यासज्यवृत्तिद्रव्यत्वस्य धूमे प्रकारतया तादृशधूमस्य लिङ्गत्वरूपव्याप्तौ प्रकारतया तादृशव्याप्तेश्च प्रयोज्यत्वे प्रकारतया भानात् निरुक्तधूमत्वसमानाधिकरणाव्यासज्यवृत्तिधर्मविशिष्टनिष्ठलिङ्गताकत्वप्रकारत्वान्यत्वाभावात् किंतु तादृशी प्रकारता आलोकादिलिङ्गकत्वप्रकारतैव तदनिरूपितानुमितिनिष्ठविषयताशालीच्छात्वस्य निरुक्तसकलेच्छासाधारणत्वात् तेन रूपेणानुगमे बाधकाभावः धूमालोकोभयलिङ्गका-

नानुमितिस्तादृशी सिद्धिर्विशिष्यैव तत्तदनुमितिप्रतिबन्धिका वक्तव्या तेन पर्वतस्तेजस्वी पा-

## प्रभा

नुमितिर्जायतामितीच्छीयधूमालोकोभयत्वावच्छिन्नलिङ्गकत्वप्रकारताया निरुक्तधूमत्वावच्छिन्नलिङ्गकत्वप्रकारत्वान्यत्वेऽपि धूमालोकोभयत्वस्य धूमत्वसमानाधिकरणतया तादृशोभयत्वविशिष्टनिष्ठलिङ्गताकत्वनिष्ठप्रकारतान्यत्वाभावात् किंतु पूर्वोक्तरीत्या आलोकावच्छिन्नलिङ्गताकत्वादिप्रकारतैव तादृशीति तदनिरूपितानुमितिनिष्ठविषयताशालीच्छात्वरूपानुगतधर्मस्य धूमालोकोभयलिङ्गकानुमितिर्जायतामितीच्छायामपि सत्त्वेन तादृशेच्छाबलात् सिद्धयात्मककेवलधूमपरामर्शसत्त्वेऽनुमित्यापत्तेः अतः धूमत्वसमानाधिकरणधर्मे अव्यासज्यवृत्तित्वं निवेशितम् । तथाच उभयत्वस्याव्यासज्यवृत्तित्वाभावात् तादृशधर्मविशिष्टनिष्ठलिङ्गताकत्वप्रकारत्वात्मकनिरूप्यनिरूपकभावापन्नप्रयोज्यत्वनिष्ठप्रकारत्वसामान्यस्यापि धूमालोकोभयत्वावच्छिन्नलिङ्गकत्वप्रकारतायां सत्त्वेन तादृशकिंचिल्लिङ्गकत्वप्रकारत्वानिरूपितविषयताशालीच्छात्वरूपानुगतधर्मानाक्रान्ततया निरुक्तेच्छाबलात् सिद्धयात्मककेवलधूमपरामर्शसत्त्वे तादृशानुमित्यापत्तेरभावात् । नचैवं सति धूमलिङ्गकत्वालोकलिङ्गकत्वान्यतरविशिष्टानुमितिर्जायतामितीच्छाया असंग्रहप्रसङ्गः तादृशेच्छीयाया आलोकलिङ्गकत्वप्रकारतायाः निरुक्तधूमत्वावच्छिन्नलिङ्गकत्वप्रकारतान्यत्वात् निरुक्तधर्मविशिष्टनिष्ठलिङ्गताकत्वानिष्ठप्रकारत्वान्यत्वाच तादृशकिंचिल्लिङ्गकत्वप्रकारत्वानिरूपितानुमितिनिष्ठविषयताशालीच्छात्वरूपानुगतधर्माभावादिति वाच्यम् । एकधर्मावच्छिन्नप्रकारताया ऐक्यपक्षे अन्यतरत्वावच्छिन्नाया धूमलिङ्गकत्वालोकलिङ्गकत्वप्रकारताया ऐक्येन दोषाभावात् प्रकारभेदेन प्रकारताभेदे तु धूमलिङ्गकत्वप्रकारत्वान्यप्रकारतायाः धूमलिङ्गकत्वावृत्तिधर्मावच्छिन्नत्वेन विशेषणीयत्वात् अन्यतरत्वावच्छिन्नालोकलिङ्गकत्वप्रकारतायाः धूमलिङ्गकत्वावृत्तिधर्मावच्छिन्नत्वाभावेन दोषाभावात् । एवं पर्वतोद्देश्यकत्ववह्निविधेयकत्वप्रकारत्वान्यप्रयोज्यत्वावृत्तिस्वरूपसंबन्धावच्छिन्नप्रकारतानिरूपितत्वेनापि अनुमितिनिष्ठविषयता विशेषणीया तेन पर्वते वह्नयनुमितिर्जायतामित्यादीच्छानामपि सङ्ग्रहः । धूमलिङ्गकत्वप्रकारकेच्छासङ्ग्रहाय प्रयोज्यत्वावृत्तीति । अनुमितित्वप्रकारकेच्छासङ्ग्रहाय प्रकारतायां स्वरूपसंबन्धावच्छिन्नत्वनिवेशः । तथाच निरुक्तधूमत्वावच्छिन्नलिङ्गकत्वप्रकारत्वान्यतादृशलिङ्गकत्वावृत्तिधर्मावच्छिन्नधूमत्वसमानाधिकरणाव्यासज्यवृत्तिधर्मावीशिष्टनिष्ठालिङ्गताकत्वानिष्ठप्रकारतान्या च या किंचिल्लिङ्गकत्वप्रकारता तदनिरूपिता पर्वतोद्देश्यकत्ववह्निविधेयकत्वप्रकारत्वान्यप्रयोज्यत्वावृत्तिस्वरूपसंबन्धावच्छिन्नप्रकारत्वानिरूपिता च या अनुमितिनिष्ठविषयता तच्छालीच्छात्वेन सामान्यरूपेण निरुक्तेच्छानां सर्वासां योऽभावः तद्वैशिष्ट्यं अशाब्दज्ञानं जायतामित्यादीच्छानां तु उक्तदोषेणानुगमासंभवेन तासां तत्तद्व्यक्तित्वावच्छिन्नाभावकूटवैशिष्ट्यं च सिद्धौ निवेशनीयमिति विश्वनाथपञ्चाननस्य निगूढाभिप्राय इति यादृशयादृशसिसाधयिषेत्यादिग्रन्थपर्यालोचनया प्रतिभाति । स्वतन्त्रास्तु सिद्ध्युत्तरानुमितौ सिसाधयिषैव पक्षता सिद्ध्यनुत्तरानुमितौ च सिद्ध्यभाव एव पक्षता अनुमितिमात्रे व्याप्तिपक्षधर्मत्वादिकं प्रयोजकमित्याहुः । उपाध्यायमतानुयायिनस्तु सिसाधयिषासिद्ध्यभावयोरन्यतरत्वावच्छिन्नं पक्षतेत्याहुः । तदसत् सिसाधयिषायास्समवायेन सिद्ध्यभावस्य दैशिकविशेषणतया हेतुत्वस्य वक्तव्यतयान्यतरत्वावच्छिन्नस्य एकसंबन्धेन हेतुत्वासंभवात् ॥ **विशिष्य वक्तव्येति** ॥ पर्वतत्वपर्याप्तावच्छेदकतानिरूपितविशेष्यतानिरूपितवह्नित्वपर्याप्ताव-

## दिनकरीयम्.

च्छाव्यक्तेरनुत्तेजकत्वादिति भावः । इदं तु बोध्यं पर्वते वह्नयनुमितिर्जायतामित्याद्यनुगतेच्छानां पर्वतत्वावच्छिन्नोद्देश्यकत्वप्रकारतानिरूपितवह्निविधेयकत्वप्रकारताशाल्यनुमितिगोचरेच्छात्वेनानुगतरूपेणैवोत्तेजकत्वं ।

## रामरुद्रीयम्.

तीत्यभिप्रायः॥ **तदिच्छाव्यक्तेरिति** ॥ धूमपरामर्शकालीनाया आलोकेन वह्निमनुमिनुयामितीच्छाव्यक्तेरित्यर्थः ॥ **अनुत्तेजकत्वादिति** ॥ पर्वतत्वावच्छिन्नोद्देश्यकवह्नित्वावच्छिन्नविधेयकधूमत्वावच्छिन्नलिङ्गकानुमितिप्रतिबन्धकताया अनुत्तेजकत्वादित्यर्थः तादृशप्रतिबन्धकतानिरूपितावच्छेदकतावदभावाप्रतियोगित्वादिति यावत् ॥ **अनुमितिगोचरेच्छात्वेनेति** ॥ अनुमितित्वावच्छिन्नाविधेयकेत्युक्तौ पर्वतोद्देश्यकवह्नि-

## दिनकरीयम्.

प्रत्यक्षातिरिक्तं ज्ञानं जायतामित्याद्यननुगतेच्छानां तु तत्तद्व्यक्तित्वेन न तु सकलेच्छानां तत्तद्व्यक्तित्वेन गौरवादिति सिषाधयिषाकाले पर्वतो वह्निमानिति सिद्धिसत्त्वेऽपि पर्वतो वह्निमानित्यनुमित्युत्पत्तेस्तादृशासि-

## रामरुद्रीयम्.

विधेयकज्ञानं मे जायतामित्यादीच्छानामसंग्रहापत्तिरिति तत्परित्यागः । नन्वेतादृशेच्छाया उत्तेजकत्वे सिद्धिसत्त्वे पर्वतोद्देश्यकवह्निविधेयकप्रत्यक्षादिसामग्रीकालेऽपि तादृशेच्छाबलात्तादृशानुमित्यापत्तिरिति वाच्यम्। प्रत्यक्ष उद्देश्यत्वविधेयत्वयोरप्रमाणकत्वात् । न चैवमनुमितिगोचरत्वनिवेशोऽपि व्यर्थः तादृशेच्छाया अनुमितिमात्रविषयकत्वादिति वाच्यम् । पर्वतोद्देश्यकवह्निविधेयकप्रत्यक्षं जायतामिति विसंवादीच्छाबलादनुमित्यापत्तिवारणाय तदावश्यकत्वात् । न चैवं शाब्दबोधेऽप्युद्देश्यकत्वाविधेयकत्वयोरङ्गीकारात्तादृशेच्छाबलात्तादृशशाब्दसामग्रीसत्त्वेऽपि सिद्धिसत्त्वे अनुमित्यापत्तिरिति वाच्यम् । पर्वतो वह्निमानिति शाब्दबोधे पर्वते वह्निमत एव तादात्म्येन प्रकारतया पर्वतत्वावच्छिन्नोद्देश्यतानिरूपितवह्नित्वावच्छिन्नविधेयतायास्तत्रासत्त्वात् तादृशवह्निविधेयताकत्वप्रकारताशाल्यनुमितिविषयकेच्छात्वेनैवोत्तेजकतायाः स्वीकरणीयत्वात् । अथैवमपि पर्वते वह्निमतस्तादात्म्येन साध्यतायां पर्वते वह्निमद्विधेयकशाब्दसामग्रीदशायां सिद्धिसत्त्वेऽपि पर्वतत्वावच्छिन्नोद्देश्यतानिरूपितवह्निमत्त्वावच्छिन्नविधेयताशालिज्ञानं जायतामितीच्छाबलात्पर्वतोद्देश्यकवह्निविधेयकानुमित्यापत्तेरिति चेन्न । शाब्दबोधेऽप्युद्देश्यताविधेयतयोरुपगमे एतादृशेच्छानामपि वह्निविधेयकानुमितिस्थले तत्तद्व्यक्तित्वेनैवोत्तेजकतायाः स्वीकरणीयत्वाल्लघूपायसम्भवस्थले एव गौरवस्य स्वीकर्तुमनुचितत्वात् । वस्तुतस्तु शाब्दबोधे विधेयत्वादिकमप्रामाणिकमेव अनुमितावेव तदङ्गीकार आवश्यकः अन्यथा पर्वतो वह्निमानित्यनुमितितात्पर्येण पर्वतमनुमिनोमीत्यादिप्रयोगापत्तेरनुमितेर्विधेयत्वादिमत्त्वेऽन्यत्र द्वितीयाया विषयित्वार्थकत्वेऽप्यनुमित्यर्थकधातुसमभिव्याहारे विधेयत्वस्य द्वितीयार्थतामुद्देश्यत्वस्य सप्तम्यर्थतामुपगम्य तादृशप्रयोगवारणसम्भवात् । न च प्रकारित्वमेव तत्र द्वितीयार्थोऽस्तु तावतापि पर्वतमनुमिनोमीति प्रयोगवारणसम्भवादिति वाच्यम् । तथापि पर्वतत्वमनुमिनोमीत्यादिप्रतीत्यापत्तेः अत एवोक्तं गदाधरभट्टाचार्यैरनुमित्यर्थकधातुयोगे विधेयत्वं विधेयित्वं वा द्वितीयार्थ इति शाब्दार्थकधातुयोगे तु विषयित्वस्य द्वितीयार्थत्वेऽपि न क्षतिः पर्वतं शृणोमीति प्रयोग इष्टापत्तेस्सप्तम्यास्तु अनुमित्यर्थकधातुभिन्नधातुयोगे सर्वत्र विशेष्यत्वमेवार्थः । यदि चैवं सति पर्वते पर्वतं शृणोमीति प्रयोगापत्तिः पर्वतविशेष्यकशाब्दस्यापि पर्वतविषयकत्वादिति विभाव्यते तदा सप्तम्यन्तपदसमभिव्याहारस्थले तादात्म्यातिरिक्तसम्बन्धावच्छिन्नप्रकारितैव द्वितायार्थोऽस्तु अतिरिक्तान्तोपादानात्पर्वते वह्निमन्तं शृणोमीति न प्रयोग इति ध्येयम् । अथैवमपि धूमपरामर्शमात्रदशायां पर्वतोद्देश्यतानिरूपितवह्निविधेयताकालोकलिङ्गकानुमितिर्जायतामितीच्छाबलाद्धूमलिङ्गकवह्न्यनुमित्यापत्तिः तादृशेच्छाया अपि तादृशसाध्यविधेयकत्वप्रकारकत्वादनुमितिविषयकत्वाच्च । न च किञ्चिल्लिङ्गकत्वाप्रकारकत्वमपीच्छाविशेषणं देयमतो न तादृशेच्छाबलादुक्तानुमित्यापत्तिरिति वाच्यम् । तथासति तादृशवह्निविधेयताकधूमलिङ्गकानुमितिर्जायतामितीच्छासत्त्वेऽपि धूमलिङ्गकवह्न्यनुमितिर्न स्यात् । नच तद्धर्मावच्छिन्नलिङ्गकानुमितौ तदन्यधर्मावच्छिन्नलिङ्गकत्वाप्रकारिकैवेच्छोत्तेजिका वाच्येति धूमलिङ्गकत्वप्रकारकेच्छायास्सङ्ग्रहो भिन्नलिङ्गकत्वप्रकारकेच्छाया वारणञ्च सम्भवतीति वाच्यम् । एवमपि तादृशवह्निविधेयताका धूमलिङ्गकानुमितिरालोकलिङ्गकानुमितिश्च जायतामितीच्छाबलाद्धूमलिङ्गकानुमितेरशक्योपपादनत्वादिति चेत् मैवं तद्धर्मावच्छिन्नलिङ्गकानुमितौ निरुक्तवह्निविधेयकत्वप्रकारतानिरूपिता तद्धर्मान्यधर्मावच्छिन्नलिङ्गकत्वप्रकारकत्वानिरूपितानुमितिनिष्ठविशेष्यताशालीच्छात्वेनैवोत्तेजकत्वस्योपगन्तव्यत्वात् । उक्तसमूहालम्बनेच्छायां त्वनुमितौ विशेष्यताद्वयमेका धूमलिङ्गकत्वप्रकारतानिरूपिता अपरा चालोकलिङ्गकत्वप्रकारतानिरूपिता समूहालम्बने प्रकारताभेदेनैव विशेष्यताभेदादन्यथा वृक्षः कपिसंयोगवान्तदभाववांश्चेति समुच्चयस्य वृक्षः कपिसंयोगी न वेति संशयस्य च भेदो न स्यादेकधर्मावच्छिन्नविशेष्यकसमूहालम्बनेऽपि प्रकारताभेदेन विशेष्यताभेदः संशये चोभयप्रकारतानिरूपि-

षाणमयो वह्निमानिति ज्ञानसत्त्वेऽप्यनुमितेर्न विरोधः परंतु पक्षतावच्छेदकसामानाधिकरण्येन साध्यसिद्धावपि तदवच्छेदेनानुमितेर्दर्शनात् पक्षतावच्छेदकावच्छेदेनानुमितिं प्रति पक्षताव-च्छेदकावच्छेदेन साध्यसिद्धिरेव प्रतिबन्धिका पक्षतावच्छेदकसामानाधिकरण्येनानुमितिं प्रति तु सिद्धिमात्रं विरोधि । इदंतु बोध्यं यत्रायं पुरुषो न वेति संशयानन्तरं पुरुषत्वव्याप्यक-

## प्रभा..

च्छेदकतानिरूपितप्रकारताशाल्यनुमितित्वावच्छिन्नं प्रति तादृशप्रकारताशालिनिश्चयत्वेन प्रतिबन्धकता वक्तव्येत्यर्थः ॥ **तेनेति** ॥ विशिष्य प्रतिबध्यप्रतिबन्धकभावस्वीकारेणेत्यर्थः ॥ **न विरोध इति** ॥ पर्वतस्ते-जस्वीति ज्ञानस्य वह्नित्वावच्छिन्नप्रकारताकत्वाभावात् पाषाणमयो वह्निमानिति ज्ञानस्य पर्वतत्वावच्छिन्नविशेष्य-कत्वाभावादिति भावः । एवं पर्वतस्सुन्दरवह्निमान् सुन्दरपर्वतो वह्निमानिति ज्ञानयोरपि वह्नित्वपर्याप्ताव-च्छेदकताकप्रकारताकत्वाभावात् पर्वतत्वपर्याप्तावच्छेदकतानिरूपितविशेष्यताकत्वाभावाच्चाप्रतिबन्धकत्वमि-ति बोध्यम् ॥ **पक्षतावच्छेदकसामानाधिकरण्येन साध्यसिद्धावपीति** ॥ प्राचीनमते पक्षतावच्छे-दकपर्याप्तावच्छेदकतानिरूपितयत्किंचित्पर्वतनिष्ठविशेष्यतानिरूपितनिरुक्तसाध्यनिष्ठप्रकारताशालिसिद्धावपी-त्यर्थः । नवीनमते पर्वतत्वावच्छिन्नविशेष्यतानिरूपितशुद्धसंयोगसंबन्धावच्छिन्नवह्नित्वावच्छिन्नप्रकारताशा-लिसिद्धावपीत्यर्थः ॥ **तदवच्छेदेनेति** ॥ प्राचीनमते पक्षतावच्छेदकावच्छिन्ननिखिलपक्षनिष्ठविशेष्यतानिरू-पितसंयोगसंसर्गकवह्नित्वावच्छिन्नप्रकारताशाल्यनुमितेरित्यर्थः । नवीनमते पक्षतावच्छेदकावच्छिन्नविशेष्यता-निरूपितपक्षतावच्छेदकव्यापकत्वविशिष्टसंयोगपर्याप्तसांसर्गिकविषयतानिरूपितसाध्यतावच्छेदकावच्छिन्नप्र-कारताशाल्यनुमितेरित्यर्थः । एवमुत्तरत्रापि मतभेदेनार्थो ज्ञेयः ॥ **प्रतिबन्धिकेति** ॥ तथाच प्राचीनमते पर्व-तत्वावच्छिन्नपर्वतनिष्ठविशेष्यताशाल्यनुमितिं प्रति पर्वतत्वावच्छिन्ननिखिलपर्वतनिष्ठविशेष्यताशालितादृश-निश्चयः प्रतिबन्धकः । नवीनमते पर्वतत्वावच्छिन्नविशेष्यतानिरूपितसंयोगनिष्ठसांसर्गिकविषयताशालिता-दृशानुमितिं प्रति पर्वतत्वावच्छिन्नविशेष्यतानिरूपितपर्वतत्वव्यापकत्वविशिष्टसंयोगपर्याप्तसांसर्गिकविषयता-

## दिनकरीयम्.

द्वेन तादृशानुमितिप्रतिबन्धकत्वं स्यादत उक्तं सिषाधयिषाविरहकाले इति ॥ **विशिष्येति** ॥ पर्वतो वह्निमा-नित्यनुमितौ पर्वतत्वावच्छिन्नविशेष्यतानिरूपितवह्नित्वावच्छिन्नप्रकारताशालिनिश्चयत्वेन प्रतिबन्धकता वक्त-व्येत्यर्थः । तत्प्रयोजनमाह ॥ **तेनेति** ॥ सिद्धिरेवेत्येवकारेण सामानाधिकरण्येन सिद्धिव्यवच्छेदः ॥ **सा-मानाधिकरण्येनानुमितिं प्रति त्विति** ॥ सामानाधिकरण्यमात्रेणानुमितिं प्रतीत्यर्थः । अन्यथाऽवच्छेद-कावच्छेदेनानुमितेरपि सामानाधिकरण्यावगाहितया तद्व्यवच्छेदाप्रतीतेः ॥ **सिद्धिमात्रमिति** ॥ पक्षविशेष्य-कसाध्यप्रकारकनिश्चयत्वेन विरोधित्वमित्यर्थः । उपाध्यायास्तु सिषाधयिषाविरहविशिष्टसिद्धिप्रत्यक्षसामग्र्यो-रन्यतरस्याभावः पक्षता तेन सिद्धिकाले समानविषयकप्रत्यक्षसामग्रीकालेऽपि च नानुमित्यापत्तिरित्याहुस्त-

## रामरुद्रीयम्.

त्तैकविशेष्यतेत्येव तयोर्वैलक्षण्यात् इत्थञ्च धूममात्रलिङ्गकानुमितित्वमेवैतादृशेच्छाविरहविशिष्टसिद्ध्यभावका-र्यतावच्छेदकं वाच्यम् । अन्यथा धूमालोकोभयपरामर्शाभ्यां धूमलिङ्गकत्ववदालोकलिङ्गकानुमितिर्जायतामि-त्येकविशिष्टेऽपरवैशिष्ट्यावगाहीच्छावलात्तादृशानुमाने वह्न्यनुमितावुक्तसिद्ध्यभावस्य व्यभिचारापत्तेः । अथ-वा किञ्चिल्लिङ्गत्वाप्रकारकत्वमेवेच्छाविशेषणमुपादेयं धूमलिङ्गकत्वप्रकारकेच्छायाः पृथगेवोत्तेजकत्वस्य कल्पनी-यतया तदसङ्ग्रहो न दोषायेति कृतं पल्लवितेन । यादृशसिद्धिसत्त्वे पर्वतो वह्निमानिति नानुमितिः तादृशसिद्धिः ता-दृशानुमितौ प्रतिबन्धिकेत्युक्तौ तादृशानुमितौ पर्वतो वह्निमानित्याकारकसिद्धेरपि प्रतिबन्धकत्वं स्यात् तादृशसि-द्धिसत्त्वेऽपि सिषाधयिषयानुमित्युत्पादादत उक्तम्॥ **सिषाधयिषेत्यादि** ॥ **पर्वतत्वावच्छिन्नेति** ॥ सिषा-धयिषाविरह इत्यादिकं परिचायकमात्रं अन्यथा विशेष्येत्यस्य वैयर्थ्यापत्तेरिति भावः । भिन्नविषयकप्रत्यक्षसाम ग्रीसत्त्वेऽपि सिषाधयिषां विनैवानुमित्युत्पादात् प्रत्यक्षसामग्रीत्यस्य समानविषयकप्रत्यक्षसामग्रीपरतां दर्शय-

रादिमानयमिति ज्ञानं तत्रासत्यामनुमित्सायां पुरुषत्वस्य प्रत्यक्षं भवति न त्वनुमितिः अतोऽनुमित्साविरहविशिष्टसमानविषयकप्रत्यक्षसामग्री कामिनीजिज्ञासावत्स्वातन्त्र्येण प्रतिब-

## प्रभा.

शालितादृशनिश्चयः प्रतिबन्धक इति भावः ॥ **सिद्धिमात्रं विरोधीति** ॥ तथाच प्राचीनमते पर्वतत्वावच्छिन्नयत्किंचित्पर्वतान्यावृत्तिविशेष्यताशालितादृशानुमितिं प्रति पर्वतत्वावच्छिन्नपर्वतनिष्ठविशेष्यताशालितादृशनिश्चयः प्रतिबन्धकः नवीनमते पर्वतत्वावच्छिन्नविशेष्यतानिरूपितसंयोगपर्याप्तसांसर्गिकविषयताशालितादृशानुमितिं प्रति पर्वतत्वावच्छिन्नविशेष्यतानिरूपितसंयोगनिष्ठसांसर्गिकविषयताशालितादृशनिश्चयः प्रतिबन्धक इति भावः। नन्वयं पुरुषो न वेति संशयोत्तरं पुरुषत्वव्याप्यकरादिमानयमिति विशेषदर्शने पुरुषत्वविधेयकानुमितिः कथं न जायते पुरुषत्वप्रत्यक्षसामग्र्या इव पुरुषत्वानुमितिसामग्र्या अपि सत्त्वादित्याशङ्कायां पक्षतादिरूपकारणसत्त्वेऽपि प्रतिबन्धकान्तरसत्त्वान्नानुमितिः किंतु प्रत्यक्षमेवेति समाधत्ते ॥ **इदन्तु बोध्यमित्यादिना** ॥ **पुरुषत्वस्य प्रत्यक्षं संभवतीति** ॥ अयं पुरुषो वा न वेति संशयोत्तरकालीनपुरुषत्वप्रत्यक्षानुसरणं तत्काले अनुमितिसामग्र्यकल्पनाप्रयुक्तलाघवाय तत्प्रत्यक्षे विशेषदर्शनतया हेतुभूतस्य व्याप्यदर्शनस्यैव परामर्शरूपत्वात् वह्न्यादिप्रत्यक्षे तु वह्निसंयोगादिरूपवह्निप्रत्यक्षसामग्रीकाले वह्निव्याप्यधूमवान् पर्वत इति परामर्शस्य कल्पनीयतया प्रयासाधिक्यापत्तेः ॥ **कामिनीजिज्ञासावदिति** ॥ कामिनीजिज्ञासाया ग्राह्याभावाद्यनवगाहित्वेऽपि तादृशजिज्ञासात्वेन यथा प्रतिबन्धकता तथा तादृशप्रत्यक्षसामग्र्या अपि ग्राह्याभावाद्यनवगाहित्वेऽपि तादृशसामग्रीत्वेन प्रतिबन्धकतेत्यर्थः। ननु अनुमितौ प्रत्यक्षसामग्र्याः प्रतिबन्धकत्वे भिन्नविषयेऽपि घटादिप्रत्यक्षसामग्रीकाले वह्न्याद्यनुमितिरपि न स्यादत आह ॥

## दिनकरीयम्.

दूषयितुं प्रत्यक्षसामग्र्यभावस्य पक्षताकुक्ष्यप्रवेशे प्रत्यक्षसामग्रीकाले कथं नानुमितिरित्युत्कटशिष्यजिज्ञासानुत्पादार्थं प्रथमतः स्वसिद्धान्तमाह ॥ **इदं तु बोध्यमित्यादिना** ॥ संशयोत्तरप्रत्यक्षं प्रति हेतुभूतस्य विशेषदर्शनस्य सत्त्वादिति भावः। एतादृशप्रत्यक्षसामग्रीविशेषपर्यन्तानुधावनं च तद्विषयेऽनुमितिसामग्रीसम्पत्तिदर्शनार्थं अन्यथा स्वातन्त्र्येणानुमितिसामग्रीप्रदर्शनेन प्रयासापत्तेः ॥ **स्वातन्त्र्येणेति** ॥ पक्षताकुक्ष्यप्रविष्टत्वेनेत्यर्थः। शाब्दसिद्धौ सत्यामशाब्दज्ञानं जायतामितीच्छायामनुमितेरुत्पादात्सिद्धावनुमितिगोचरेच्छात्वेन तादृशेच्छाकाले प्रत्यक्षसामग्रीकालेऽनुमित्यनुत्पादेन सामग्र्यामनुमितित्वप्रकारकेच्छात्वेनोत्तेजकत्वस्यावश्यकतया एकरूपेणोत्तेजकत्वासम्भवात् एवमुभयत्र सिषाधयिषाविरहस्य नैकसम्बन्धेन विशेषणत्वं

## रामरुद्रीयम्.

ति ॥ **तेनेति** ॥ ननु वह्न्यादौ चक्षुःसन्निकर्षदशायां वह्निव्याप्यधूमवान्पर्वत इति ज्ञानवतो वह्नेः प्रत्यक्षं नानुमितिरित्येव मूले कुतो नोक्तं किं संशयोत्तरप्रत्यक्षस्थलानुरोधेनेत्याशङ्कानिरसितुमाह ॥ **एतादृशेति** ॥ **तद्विषये** प्रत्यक्षविषये। विषयित्वं सप्तम्यर्थः तस्य चानुमितावन्वयःतथा च प्रत्यक्षविषयसाध्यविषयकानुमितिसामग्रीप्रदर्शनार्थमित्यर्थः ॥ **स्वातन्त्र्येणेति** ॥ प्रत्यक्षसामग्र्यनन्तर्गतत्वेनेत्यर्थः ॥ **प्रयासापत्तेरिति** ॥ एकसामग्रीप्रदर्शनेनैवोभयसामग्रीप्रदर्शनोपपत्तौ पृथक् पृथक् सामग्रीप्रदर्शनस्यानुचितत्वादिति भावः। ननु पक्षताकुक्ष्यप्रविष्टत्वेन प्रत्यक्षसामग्र्याः प्रतिबन्धकत्वे किं लाघवं प्रत्युत पक्षताकुक्षिप्रविष्टत्वेन प्रतिबन्धकत्व एव लाघवं एकप्रतिबन्धकतयैवोपपत्तेरित्याशङ्कांनिराकर्तुमेकप्रतिबन्धकतैव न सम्भवति भिन्नभिन्नरूपेणैवेच्छायाः सिद्धौ सामग्र्याश्चोत्तेजकत्वस्य वाच्यत्वादित्याह ॥ **शाब्देत्यादि** ॥ नील इत्यादिवाक्यजन्यशाब्देत्यर्थः ॥ पर्वतो वह्निमानित्यादिवाक्यजन्यसिद्धेः अप्रतिबन्धकत्वादिति बोध्यम् ॥ **अनुमितिगोचरेच्छात्वेनेति** ॥ यथोक्तानुमितिगोचरेच्छानिष्ठतद्व्यक्तित्वेनेत्यर्थः। उक्तानानुगतेच्छानां तद्व्यक्तित्वेनैवोत्तेजकतायाः पूर्वमुक्तत्वादिति ध्येयम् ॥ **अनुमित्यनुत्पादेनेति** ॥ प्रत्यक्षेणैव तादृशेच्छाया विषयसिद्धिसम्भवादिति भावः ॥ **अनुमितित्वप्रकारकेच्छात्वेनेति** ॥ यद्यप्येवं सति वह्निप्रत्यक्षसामग्रीकाले प्रत्यक्षातिरिक्तं ज्ञानं जायतामितीच्छया वह्नेरनुमितिर्न स्यात् तथापि प्रत्यक्षान्यत्वप्रकारकेच्छात्वेनापि प्रत्यक्षसामग्र्या उत्तेजक-

न्धिका एवं परामर्शानन्तरं विना प्रत्यक्षेच्छां पक्षादेः प्रत्यक्षानुत्पत्तेः प्रत्यक्षेच्छाविरहविशिष्टानुमितिसामग्री भिन्नविषयकप्रत्यक्षे प्रतिबन्धिकेति संक्षेपः ॥ ७० ॥

## प्रभा.

**एवमित्यादि** ॥ **अनुमितिसामग्रीति** ॥ अनुमितिसामग्र्येवेत्यर्थः । तन्निष्ठलौकिकविषयताशालिप्रत्यक्षं प्रति प्रत्यक्षेच्छाविरहविशिष्टतदन्यनिष्ठविधेयताशाल्यनुमितिसामग्री प्रतिबन्धिका नत्वनुमितीच्छाविरहविशिष्टतदन्यनिष्ठलौकिकविषयताशालिप्रत्यक्षसामग्री तन्निष्ठविधेयताशाल्यनुमितौ प्रतिबन्धिकेति फलितार्थः । तथाच तन्निष्ठविधेयताकानुमितिं प्रति अनुमित्साविरहविशिष्टतन्निष्ठलौकिकविषयताशालिप्रत्यक्षसामग्र्याः प्रतिबन्धकत्वान्नोक्तानुपपत्तिरिति भावः । केचित्तु तादृशसिद्ध्यभावस्य पक्षतात्वे समानविषयकप्रत्यक्षसामग्रीकाले कॢप्तकारणबलादनुमित्यापत्तिवारणाय उपाध्यायाः सिद्धिसमानविषयकप्रत्यक्षसामग्र्योरन्यतरत्वेन प्रतिबन्धकत्वं तादृशान्यतरत्वावच्छिन्नप्रतियोगिताकाभावस्य पक्षतात्वं चाङ्गीकुर्वन्ति तन्मतं दूषयितुं समानविषयकप्रत्यक्षसामग्र्याः पृथक् प्रतिबन्धकत्वमाह अत्रेदं बोध्यमित्यादिना ॥ **स्वातन्त्र्येणेति** ॥ पक्षताकुक्ष्यप्रविष्टत्वेनेत्यर्थः । शाब्दसिद्धौ सत्यामशाब्दज्ञानं जायतामितीच्छायामनुमितेरुत्पादात्सिद्धावनुमितिगोचरेच्छात्वेन तादृशेच्छाकाले प्रत्यक्षसामग्रीसत्त्वेऽनुमित्यनुत्पादात् साभ्यामनुमितित्वप्रकारकेच्छात्वेन उत्तेजकत्वस्यावश्यकतया एकरूपेण उत्तेजकत्वासंभवात् एवं सिसाधयिषाविरहस्य सिद्धौ समवायघटितसामानाधिकरण्यप्रत्यासत्त्या विशेषणत्वं वक्तव्यं चक्षुस्संयोगरूपसामग्र्यां तु स्वाश्रयचक्षुस्संयुक्तमनःप्रतियोगिकविजातीयसंयोगघटितसामानाधिकरण्येनैकरूपेण तयोः प्रतिबन्धकत्वासंभवादित्याहुः तदसत् अनुमितिसामान्यं प्रति सिसाधयिषाविरहविशिष्टसिद्धिप्रत्यक्षसामग्र्यन्यतरत्वावच्छिन्नाभावस्य कारणत्वं तदा स्यात् सर्वत्र यदि तादृशान्यतरत्वावच्छिन्नाभावः प्रसिद्धस्स्यात् तदेव न । तथाहि गुरुत्वाद्यतीन्द्रियविधेयकानुमितौ गुरुत्वादिनिष्ठलौकिकविषयताशालिप्रत्यक्षाप्रसिद्धया तादृशप्रत्यक्षजनकसामग्रीसिद्ध्यन्यतरत्वावच्छिन्नप्रतियोगिताकाभावरूपपक्षतायाः सुतरामप्रसिद्धत्वेन तत्रानुमित्यनुत्पत्तेः । नच तादृशप्रत्यक्षाप्रसिद्धावपि घटादिनिष्ठलौकिकविषयताशालिप्रत्यक्षसामग्र्याः प्रसिद्धत्वेन तादृशसामग्रीगुरुत्वादिसिद्ध्यन्यतरत्वावच्छिन्नाभावरूपपक्षतायाः प्रसिद्धत्वेन तद्बलादेव गुरुत्वाद्यनुमित्युत्पत्तिसंभव इति वाच्यम् । अनुमितिसामान्याप्रतिबन्धकप्रत्यक्षसामग्र्याः अनुमितिसामान्यकारणपक्षताप्रतियोगिकोटौ निवेशे मानाभावादन्यथानुमितिसामान्याप्रतिबन्धकत्वेन तादृशसामग्रीतुल्यगगनादि प्रतियोगिकोटौ निवेश्य तादृशान्यतमत्वावच्छिन्नाभावस्यापि पक्षताविधया कारणत्वापत्तेः । नचानुमितिसामान्ये ईदृशपक्षतायाः अकारणत्वेऽपि सेन्द्रियपदार्थानुमितौ ईदृशपक्षता हेतुरास्तामिति वाच्यं । अतीन्द्रियपदार्थानुमितौ एकस्याः पक्षतायाः कारणत्वावश्यकतया कार्यकारणभावद्वयापत्तेः तादृशानुमितौ कारणत्वेन कॢप्तपक्षतयैव सेन्द्रियपदार्थानुमितेरुत्पत्तिसंभवेन निरुक्तान्यतराभावस्य पक्षतात्वे मानाभावात् कारणसमुदायत्वरूपसामग्रीत्वावच्छिन्नस्यैकसंबन्धेनात्मनि पक्षे चावर्त-

## दिनकरीयम्.

सिद्धौ समवायघटितसामानाधिकरण्येन चक्षुःसंयोगादिरूपसामग्र्यां तु स्वाश्रयचक्षुःसंयुक्तमनःप्रतियोगिकविजातीयसंयोगघटितसामानाधिकरण्येनेत्येकरूपेण तयोः प्रतिबन्धकत्वासम्भवादित्याशय इति दिक् । नन्वनुमितिं प्रति प्रत्यक्षसामग्र्याः स्वातन्त्र्येण प्रतिबन्धकत्वे भिन्नविषयेऽपि प्रत्यक्षसामग्रीकालेऽनुमित्यनुपपत्तिः । मन्मते तु अनुमानातिरिक्तप्रकृतसाध्यसाधकमानत्वेन पक्षताकुक्षौ तस्याः प्रवेशेनोक्तापत्त्यनवकाशादत आह ॥ **एवमिति** ॥ **अनुमितिसामग्री प्रतिबन्धिकेति** ॥ तथा च भिन्नविषयकानुमिति-

## रामरुद्रीयम्.

त्वस्य कल्पनीयत्वाददोषः ॥ **चक्षुस्संयोगादिरूपेति** ॥ यद्यपि चक्षुस्संयोगमात्रं न सामग्री तथाप्येकक्षणवृत्तित्वसम्बन्धेन तत्पुरुषीयविशेषणज्ञानादिविशिष्टचक्षुःसंयोगस्य सामग्रीत्वसम्भवो बोध्यः ॥ **विजातीयेति** ॥ परात्ममनःसंयोगव्यावृत्तवैजात्यावच्छिन्नेत्यर्थः ॥ **स्वातन्त्र्येणेति** ॥ पक्षताकुक्ष्यप्रविष्टत्वेनेत्यर्थः । प्रत्यक्षसामग्रीत्वमात्रेणेति यावत् ॥ **अनुमानातिरिक्तेति** ॥ सिषाधयिषाविरहविशिष्टसिद्ध्य-

अनैकान्तो विरुद्धश्चाप्यसिद्धः प्रतिपक्षितः ।
कालात्ययापदिष्टश्च हेत्वाभासाश्च पञ्चधा ॥ ७१ ॥

हेत्वाभासान् विभजते ॥ अनैकान्त इत्यादि ॥ तल्लक्षणं तु यद्विषयकत्वेन ज्ञान-

## प्रभा.

मानतया तद्घटितान्यतरत्वावच्छिन्नस्यैकसंबन्धेन प्रतिबन्धकत्वासंभवेन प्रतिबन्धकतावच्छेदकसंबन्धाप्रसिद्धया तत्संबन्धावच्छिन्नान्यतरनिष्ठप्रतियोगिताकाभावस्य सुतरामप्रसिद्धत्वेन तस्य पक्षतात्वासंभवाच्च तस्मात्तादृशाभावस्य पक्षतात्वं नोपाध्यायमतासिद्धं तथात्वेऽप्रसिद्धयादिदूषणं परित्यज्य सिद्धौ सामग्र्यां च एकरूपेण सिसाधयिषाया उत्तेजकत्वासंभवरूपदोषकथनमुभयत्र सिसाधयिषाविरहस्य एकसंबन्धेन विशेषणत्वासंभवरूपदोषकथनं च तन्मते उक्तदोषास्फूर्तिप्रयुक्तमेव तथात्वे वा इदंतु बोध्यमित्यादिमुक्तावलीग्रन्थस्योपाध्यायमतखण्डनपरत्वं न संभवति इति तन्मते विश्वनाथपञ्चाननेन तादृशदोषाभावानामप्यनुक्तत्वेन तन्मतखण्डनज्ञापकाभावात् । नच पक्षताकुक्ष्यप्रविष्टत्वेनेत्यर्थः स्वातन्त्र्येणेति ग्रन्थ एव ज्ञापक इति वाच्यं स्वातन्त्र्येणेति ग्रन्थस्य तदर्थकत्वे बाधबुद्धिवदित्यपहाय कामिनीजिज्ञासावदिति सामग्र्याः कामिनीजिज्ञासासाम्यप्रतिपादनवैयर्थ्यापत्तेः । तस्मादिदन्तु बोध्यमित्यादिग्रन्थस्य उक्तरीत्यार्थवर्णनं संप्रदायविरुद्धमिति प्रतिभाति । ननु तन्निष्ठविधेयताकानुमितिं प्रति अनुमित्साविरहविशिष्टतन्निष्ठलौकिकविषयताशालिप्रत्यक्षसामग्रीत्वेन प्रतिबन्धकत्वं न संभवति कार्याधिकरणे आत्मनि पक्षे वा सामग्रीत्वावच्छिन्नस्यासत्त्वादत आह ॥ संक्षेप इति ॥ तथाच कालिकसंबन्धेन तत्पुरुषीयतादृशानुमितिं प्रति तत्पुरुषीयतादृशप्रत्यक्षजनकसामग्रीत्वावच्छिन्नस्य कालिकसंबन्धेन प्रतिबन्धकत्वसंभवान्न काप्यनुपपत्तिरिति भाव इत्यास्तां विस्तरः ॥ ७० ॥

**हेत्वाभासानिति** ॥ सद्धेतुनिरूपणानन्तरं विजयलक्षणैककार्यकारित्वसङ्गत्या प्रसङ्गसङ्गत्या वेत्यादिः । ननु सद्धेत्वसद्धेत्वोर्व्याप्तिपक्षधर्मत्वरूपसत्त्वदोषरूपासत्त्वयोः कथमेककार्यकारित्वमिति चेन्न व्याप्तिपक्षधर्मतावत्त्वरूपसत्त्वेन हेतुनिरूपणे तेन रूपेण हेतोर्ज्ञाने जाते तदनन्तरं सभायां तादृशहेतुप्रयोगेन यथा विजयः

## दिनकरीयम्.

सामग्र्यभावघटितप्रत्यक्षसामग्र्यास्तत्राभावान्न पूर्वोक्तस्थलेऽनुमित्यनुपपत्तिरिति भावः । यद्वाऽनुमितिसामग्री प्रतिबन्धिका अनुमितिसामग्र्येव प्रतिबन्धिका न तु भिन्ने विषये प्रत्यक्षसामग्र्यनुमितौ प्रतिबन्धिकेत्यर्थः । तथा च प्रत्यक्षसामग्र्याः समानविषयकानुमितिं प्रत्येव प्रतिबन्धकतया न पूर्वोक्तानुमित्यनुपपत्तिरिति भावः ॥ ७० ॥

**हेत्वाभासानिति** ॥ विजयलक्षणैककार्यकारित्वमत्र सङ्गतिर्बोध्या । ननु लक्षणात्मकसाधारणधर्मज्ञानं विना विशेषे जिज्ञासानुदयाद्विभागो निष्प्रयोजक इत्यतो लक्षणमाह ॥ **तल्लक्षणं त्विति** ॥

## रामरुद्रीयम्.

मित्युपधायकातिरिक्तासिद्ध्युपधायकान्यतरत्वेन प्रतिबन्धकत्वादिति पर्यवसितोऽर्थः । यथाश्रुते सचक्षुषोऽनुमित्यनुपपत्तेरिति बोध्यम् । ननु प्रत्यक्षसामग्री यथा भिन्नविषयकानुमितिसामग्र्यभावघटिता तथा भिन्नविषयकानुमितिसामग्र्यपि प्रत्यक्षसामग्र्यभावघटितेति भिन्नविषयकप्रत्यक्षानुमित्योस्सामग्रीसमवधानदशायामनुमित्यनुपपत्तिरशक्यसमाधिरेवानुमितिं प्रति प्रत्यक्षसामग्रीत्वेन प्रतिबन्धकतया तदभावघटितभिन्नविषयकानुमितिसामग्र्यभावादित्यत आह ॥ **यद्वेति** ॥ ७० ॥

विजयलक्षणेत्यादेः सद्धेतुनिरूपणानन्तरमसद्धेतुनिरूपण इत्यादिः । वादिनो विजयस्वरूपं यदेकं कार्यं तत्कारित्वं तत्प्रयोजकत्वमित्यर्थः । स्वोक्तहेतोस्सद्धेतुत्वप्रतिपादनेनेव परोक्तप्रतिहेतोर्दुष्टत्वप्रतिपादनेनापि कथायां वादिनो विजयादिति भावः । विजयेत्युपलक्षणमनुमितिलक्षणतत्त्वनिर्णयोऽप्यत्रैकं कार्यमित्यपि बोध्यम् ॥ **साधारणधर्मज्ञानं विनेति** ॥ तद्धर्मावान्तरधर्मप्रकारकज्ञानगोचरेच्छां प्रति तद्धर्मज्ञानस्य हेतुत्वादिति भावः ॥ **निष्प्रयोजक इति** ॥ नास्ति प्रयोजको यस्मिन्निति व्युत्पत्त्या प्रयोजकशून्य इत्यर्थः । विभागे हि

**स्यानुमितिविरोधित्वं तत्त्वम् । तथाहि व्यभिचारादिविषयकत्वेन ज्ञानस्यानुमितिविरोधित्वात्ते**

## प्रभा

तथा दोषवत्त्वरूपासत्त्वेन हेतोर्निरूपणेन तेन रूपेण हेतुज्ञाने जाते परेण तादृशासद्धेतुप्रयोगे कृते त्वया असद्धेतुः प्रयुक्त इत्युक्त्या सभायां तादृशासद्धेत्वप्रयोगेन वा विजयसंभवात् विजयलक्षणैककार्यकारित्वं हेतोरक्षतम् । एवं व्याप्तिपक्षधर्मत्वरूपसत्त्वदोषवत्त्वरूपासत्त्वयोरपि विजयलक्षणैककार्यकारित्वं ज्ञेयम् । तथाच तादृशसङ्गत्या सद्धेतुनिरूपणानन्तरं असद्धेतुं निरूपयति तादृशसङ्गत्या व्याप्तिपक्षधर्मतानिरूपणानन्तरं हेतुदोषान्निरूपयतीति मतभेदेनार्थो ज्ञेयः । हेतुवदाभासन्त इति व्युत्पत्त्या हेतोराभासा इति व्युत्पत्त्या च हेत्वाभासशब्देन दुष्टहेतूनां हेतुदोषाणां च लाभादिति भावः । केचित्तु नतु मूले हेत्वाभाससामान्यलक्षणस्याकथनान्न्यूनत्वपरिहाराय स्वयं लक्षणमाह तल्लक्षणं त्वित्यवतरणिकामाहुः तदसत् विभागवाक्यादेव तावदन्यतमत्वरूपदोषलक्षणस्य तद्वत्त्वरूपदुष्टलक्षणस्य चोपस्थितत्वात् तथापि शिष्यबुद्धिवैशद्याय मणिकारोक्तं सामान्यलक्षणमेव स्वयमाह ॥ **तल्लक्षणं त्विति** ॥ मणिकारोक्तहेतुदोषसामान्यलक्षणं त्वित्यर्थः । दोषलक्षणोक्त्या दोषवत्त्वरूपदुष्टलक्षणस्याप्युक्तप्रायत्वादित्याशयः ॥ यद्विषयकत्वेनेत्यत्र तृतीयार्थोऽवच्छिन्नत्वं तस्यानुमितिविरोधित्वेऽन्वयः । ज्ञानस्येत्यत्र षष्ठ्यर्थो वर्तमानत्वं तस्य च यद्विषयकत्वेऽन्वयः । अनुमितिविरोधित्वमनुमितिनिष्ठप्रतिबध्यतानिरूपितप्रतिबन्धकत्वम् । तथाच ज्ञाननिष्ठयद्विषयकत्वावच्छिन्नमनुमितिनिष्ठप्रतिबध्यतानिरूपितप्रतिबन्धकत्वं हेत्वाभाससामान्यलक्षणम् । दोषसामान्ये लक्षणमुपपादयति ॥ **तथाहीत्यादि** ॥ **व्यभिचारादिविषयकत्वेन ज्ञानस्येति** ॥ ज्ञाननिष्ठव्यभिचारादिविषयकत्वेनेत्यर्थः । तथाच साध्यतावच्छेद-

## दिनकरीयम्

हेत्वाभासलक्षणं त्वित्यर्थः । लक्ष्ये लक्षणं ग्राहयति ॥ **तथा हीति** ॥ ते व्यभिचारादयः । ननु यद्विषयकत्वेनेत्यत्र तृतीयार्थोऽवच्छेदकत्वं तथा च वह्निमान् धूमादित्यत्र वह्न्यभावेऽतिव्याप्तिः पर्वतविशेष्यकवह्न्यभावप्रकारकनिर्णयत्वेन वह्न्यनुमितिं प्रति प्रतिबन्धकत्वेन वह्न्यभावविषयकत्वस्य प्रतिबन्धकतावच्छेदककोटिप्रविष्टत्वात् । न च स्वरूपसम्बन्धरूपावच्छेदकतापर्याप्त्यधिकरणत्वमनतिरिक्तवृत्तित्वं वावच्छेदकत्वं तृतीयार्थः वह्न्यभावविषयकत्वस्यावच्छेदककोटिप्रविष्टत्वेऽप्यवच्छेदकतापर्याप्त्यनधिकरणत्वादतिरिक्तवृत्तित्वाच्च नातिव्याप्तिरिति वाच्यम् । पर्याप्तिनिवेशेऽसम्भवापत्तेः अप्रामाण्यज्ञानानास्कन्दितत्वस्याधिकस्य प्रतिबन्धकतावच्छेदककोटिप्रविष्टत्वात् अनतिरिक्तवृत्तित्वरूपावच्छेदकत्वनिवेशे ह्रदो वह्निमान् धूमादित्या-

## रामरुद्रीयम्

व्यजिज्ञासाया एव प्रयोजकत्वादिति भावः ॥ **हेत्वाभासलक्षणं त्विति** ॥ हेतोराभासा दोषा इति व्युत्पत्त्या हेतुदोषलक्षणन्त्वित्यर्थः। यद्यपि दुष्टहेतूनामेव विभजनात् दुष्टहेतुलक्षणमेव वक्तव्यं तथापि दोषज्ञाने जाते दोषवत्त्वरूपदुष्टलक्षणस्य ज्ञातुं शक्यत्वाददोषः। एवञ्च मूले हेत्वाभासानिति पदं हेतुवदाभासन्त इति व्युत्पत्त्या दुष्टहेतुपरमेवेति मन्तव्यम् ॥ **वह्न्यभावेऽतिव्याप्तिरिति** ॥ तथा च सद्धेतोरपि दुष्टतापत्तेरिति भावः ॥ **न चेति** ॥ नन्ववच्छेदकतापर्याप्तिनिवेशे वह्न्यभाववद्ध्रदादवसंभव एव वह्न्यभाववद्ध्रदविषयकत्वेऽप्यवच्छेदकतापर्याप्तिविरहादप्रामाण्यज्ञानानास्कन्दितत्वानाहार्यनिश्चयत्वान्तर्भावेनैवावच्छेदकतापर्याप्तेः। न चैतत्त्रितयसहितयद्विषयकत्वे प्रतिबन्धकतावच्छेदकतापर्याप्तिस्तत्त्वमिति विवक्षणान्न दोष इति वाच्यम्। विशिष्टविषयकत्वेन प्रतिबन्धकत्वे वह्नित्वादिना गुणाद्यवगाहिभ्रमाणां प्रतिबन्धकत्वानुपपत्त्या निरूप्यनिरूपकभावापन्नविषयिताशालिनिश्चयत्वेनैव प्रतिबन्धकताया वक्तव्यतया विशिष्टविषयकत्वादिसमुदायत्वस्य न्यूनवृत्तितया पर्याप्त्यनवच्छेदकत्वान्न च प्रमात्मकज्ञानीयनिरूप्यनिरूपकभावापन्नविषयितैव विशिष्टविषयितेति निरूप्यनिरूपकभावापन्नविषयितात्वेन विशिष्टविषयितानां प्रतिबन्धकतावच्छेदकतापर्याप्तिरक्षतैवेति वाच्यम् । प्रत्येकावृत्तेस्समुदायावृत्तिनियमेनैकदेशातिव्याप्तिवारणाय पर्याप्त्यवच्छेदकतापर्यन्तनिवेशस्यावश्यकतया यादृशविशिष्टविषयितायामवच्छेदकतापर्याप्तिः कथञ्चिदप्यसम्भवादत आह ॥ **अनतिरिक्तवृत्तित्वं वेति** ॥ प्रतिबन्धकताशून्यावृत्तित्वमेव प्रतिबन्धकतावच्छेदकत्वं तथा च वह्न्यभावप्रकारकत्वादेरप्रतिबन्धकनिर्धर्मिता-

**दोषाः । यद्विषयकत्वं च यादृशविशिष्टविषयकत्वं तेन बाधभ्रमस्यानुमितिविरोधित्वेऽपि न क्षतिः तत्र पर्वतो वह्न्यभाववानिति विशिष्टस्याप्रसिद्धत्वान्न हेतुदोषः । न**

## प्रभा ।

कनिष्ठहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वरूपव्यभिचारग्रहस्य साध्यतावच्छेदके हेतुसमानाधिकरणाभावप्रतियोगितानवच्छेदकत्वावगाहिव्याप्तिज्ञाने ग्राह्याभावावगाहितया प्रतिबन्धकतावच्छेदकतया तत्त्वस्य धूमत्वनिष्ठवह्निसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वे सत्त्वात् येनकेनापि संबन्धेन तद्वत्त्वस्य व्यभिचारिहेतावपि सत्त्वाच्च उभयत्र लक्षणसमन्वय इति भावः । ननु यद्विषयकत्वेनेत्यत्र तृतीयार्थोऽवच्छेदकत्वं यदि स्वरूपसंबन्धविशेषः तदा वह्निमान् धूमादित्यादौ वह्न्यभावादावतिव्याप्तिः पर्वतविशेष्यकवह्निप्रकारकानुमितिं प्रति पर्वतविशेष्यकवह्न्यभावप्रकारकनिश्चयत्वेन प्रतिबन्धकतया वह्न्यभावविषयकत्वस्यापि प्रतिबन्धकतावच्छेदककोटिप्रविष्टत्वात् । नच यद्विषयकत्वं तादृशप्रतिबन्धकतानिरूपितस्वरूपसंबन्धरूपावच्छेदकत्वपर्याप्त्यधिकरणं तत्त्वमिति लक्षणं करणीयम् एवंच पर्वतो वह्न्यभाववानिति निश्चयनिष्ठप्रतिबन्धकतानिरूपितस्वरूपसंबन्धरूपावच्छेदकतापर्याप्तेः पर्वतविशेष्यकत्वाद्यन्तर्भावेनैव सत्त्वेन केवलवह्न्यभावविषयतायाः पर्याप्त्यनधिकरणत्वादिति वाच्यम् । पर्याप्तिनिवेशे असंभवापत्तेः अप्रामाण्यज्ञानानास्कन्दितत्वान्तर्भावेनावच्छेदकतापर्याप्तिसत्त्वेन केवलवह्न्यभाववद्धृदविषयतायाः तत्पर्याप्त्यनधिकरणत्वात् । अत एवानतिरिक्तवृत्तित्वरूपावच्छेदकत्वमपि न लक्षणघटकं विशिष्टहृदस्य केवलहृदानतिरिक्तत्वेन प्रतिबन्धकताशून्यहृदइतिज्ञानेऽपि वह्न्यभावविशिष्टहृदविषयत्वसत्त्वादत आह ॥ **यद्विषयकत्वमपि यादृशविशिष्टविषयकत्वमिति** ॥ यद्रूपावच्छिन्नविषयतानिरूपितविषयित्वमित्यर्थः । एवंच तत्त्वमित्यस्यापि तद्वत्त्वमित्यर्थो बोध्यः । तथाच यद्रूपावच्छिन्नविषयतानिरूपितविषयिता प्रकृतानुमितिनिष्ठप्रतिबध्यतानिरूपितप्रतिबन्धकतानतिरिक्तवृत्तिः तद्धर्मवत्त्वं दोषसामान्यलक्षणमित्यर्थलाभात् हृदो वह्निमान् धूमादित्यादौ केवलहृदत्वावच्छिन्नविषयतानिरूपितविषयितायाः हृद इति ज्ञानवृत्तित्वेन प्रकृतानुमितिप्रतिबन्धकतातिरिक्तवृत्तित्वेऽपि वह्न्यभाववद्धृदत्वावच्छिन्नविषयतानिरूपितविषयिताया हृद इति ज्ञानावृत्तित्वेन प्रतिबन्धकतानतिरिक्तवृत्तितया तादृशवह्न्यभावविशिष्टहृदत्वमादाय तादृशहृदे लक्षणसमन्वयः संभवतीति भावः । एवं विवक्षणे पर्वतो वह्निमान् धूमादित्यादिसद्धेतुमात्रे कस्यचिद्दोषत्वं हेतोर्दुष्टत्वं च नास्तीत्याह ॥ **तेनेति** ॥ तेनापीत्यर्थः । यद्रूपावच्छिन्नविषयकत्वस्य प्रकृतानुमितिप्रतिबन्धकतानतिरिक्तवृत्तित्वविवक्षणेनापीत्यर्थः । ॥ **बाधभ्रमस्य** ॥ पर्वतविशेष्यकवह्न्यभावप्रकारकनिश्चयस्य ॥ **अनुमितिविरोधित्वेऽपि** ॥ अनुमितिप्रतिबन्धकत्वेऽपि ॥ **न क्षतिः** ॥ न कस्यचित् दोषत्वापत्तिः । तत्र हेतुमाह ॥ **तत्रेत्यादि** ॥ तत्र पर्वतविशेष्यकवह्न्यभावप्रकारकनिश्चयनिष्ठप्रतिबन्धकत्वेऽपि विशिष्टस्याप्रसिद्धत्वादित्यनतिरिक्तवृत्तित्वरूपावच्छेदकताश्रयो यद्धर्मावच्छिन्नविषयकत्वं तादृशधर्मस्याप्रसिद्धत्वादित्यर्थः ॥ **न हेतुदोष इति** ॥ अत एवेत्यादिः । एवंच सद्धेतुस्थले दोषस्याप्रसिद्धत्वादेव न हेतोः दुष्टत्वापत्तिरिति फलितार्थः । तथाच पर्वतविशे-

## दिनकरीयम् ।

दौ वह्न्यभावविशिष्टहृदादावव्याप्त्यापत्तेः प्रतिबन्धकत्वाभाववति हृद इत्येतादृशज्ञाने वह्न्यभावविशिष्टहृदविषयकत्वस्य सत्त्वात् विशिष्टहृदस्य हृदानतिरेकादत आह ॥ **यद्विषयकत्वं चेति** ॥ एतद्विवक्षणप्रयोजनमाह ॥ **तेनेति** ॥ **बाधभ्रमस्य** बाधभ्रमसाधारणस्य पर्वतविशेष्यकवह्न्यभावप्रकारकत्वादेरित्यर्थः ॥ **अनुमितिविरोधित्वेऽपि** अनुमितिविरोधितावच्छेदकत्वेऽपि ॥ **न क्षतिः** न वह्न्यभावादावतिव्याप्तिः । इतरथा वह्न्यभावविषयकत्वस्य पर्वतविशेष्यकवह्न्यभावप्रकारकत्वरूपानुमितिप्रतिबन्धकतावच्छेदककोटिप्रविष्टत्वात्तत्रातिव्याप्तिः स्यादिति भावः । यादृशविशिष्टेति विवक्षिते तु तत्र नातिव्याप्तिरित्याह ॥ **तत्रेत्यादिना** ॥ न च वह्न्यभावविशिष्टपर्वतस्याप्रसिद्धत्वेऽपि यादृशविशिष्टपदेन वह्न्यभावत्वविशिष्टं वह्न्यभावमुपादाय तत्रातिव्याप्तिरिति वाच्यम् । यादृशविशिष्टेति विवक्षणेऽनतिरिक्तवृत्तित्वस्यैवावच्छेदकत्वस्य लक्षणे निवेशनीयतया वह्न्यभावविषयकत्वस्य प्रतिबन्धकत्वाभाववति वह्न्यभाव इति ज्ञाने

च वह्न्यभावव्याप्यपाषाणमयत्ववानिति परामर्शकाले वह्निव्याप्यधूमस्याभासत्वं न स्यात् तत्र वह्न्यभावव्याप्यवान् पक्ष इति विशिष्टस्याप्रसिद्धत्वादिति वाच्यं इष्टापत्तेः

## प्रभा.

प्यकवह्न्यभावप्रकारकनिश्चयस्य प्रकृतानुमितिप्रतिबन्धकत्वेऽपि तादृशप्रतिबन्धकतानतिरिक्तवृत्तियद्रूपावच्छिन्नविषयकत्वं तद्रूपस्याप्रसिद्धत्वेन सद्धेतुस्थले न कस्याचित् दोषत्वापत्तिः दोषस्याप्रसिद्धत्वादेव हेतोर्दुष्टत्वापत्तिरपि नेति भावः । अत्र तद्वत्ताबुद्धौ न तदभावव्याप्यवत्तानिश्चयत्वेन प्रतिबन्धकत्वं वह्न्यभावव्याप्यपाषाणमयत्ववान् पर्वत इति निश्चयस्य पर्वतो वह्निमानिति विशिष्टबुद्धिं प्रति प्रतिबन्धकत्वानापत्तेः वह्न्यभावव्याप्यपाषाणमयत्वस्याप्रसिद्धत्वात् किंतु तद्धर्मविशेष्यकतदभावव्याप्यत्वप्रकारकनिश्चयविशिष्टतद्धर्मप्रकारकनिश्चयत्वेन प्रतिबन्धकत्वं वैशिष्ट्यं च एककालावच्छिन्नैकात्मवृत्तित्वरूपं वाच्यमिति तदनुरोधेन तदभावव्याप्यत्वेन गृह्यमाणधर्मविशिष्टस्यैव सत्प्रतिपक्षदोषत्वमिति वदतां प्राचीनानां मतमाक्षिप्य दूषयति ॥ **नचेत्यादि** ॥ **विशिष्टस्येति** ॥ वह्न्यभावव्याप्यपाषाणमयत्ववान् पर्वत इत्याकारकनिश्चयनिष्ठप्रतिबन्धकतानतिरिक्तवृत्तियद्रूपावच्छिन्नविषयकत्वं तद्रूपस्याप्रसिद्धत्वेन तदाश्रयदोषस्य सुतरामप्रसिद्धत्वादित्यर्थः । तथाच हेतोः दुष्टत्वं न स्यादिति भावः ॥ **इष्टापत्तेरिति** ॥ सद्धेतोः सत्प्रतिपक्षत्वे मानाभावादित्यर्थः ।

## दिनकरीयम्.

वृत्तेस्तत्रातिव्याप्तिरभावात् । नन्वेवं पूर्वोक्तरीत्या वह्न्यभावविशिष्टह्रदादावव्याप्तिरिति वाच्यम् । यादृशविशिष्टविषयकत्वेनेत्यस्य यद्रूपावच्छिन्नविषयकत्वेनेत्यर्थकत्वात्तत्त्वमित्यस्य च तद्वत्त्वमित्यर्थकत्वात् ह्रद इति ज्ञाने वह्न्यभावावच्छिन्नविषयकत्वाभावात् । अथात्रानतिरिक्तवृत्तित्वरूपस्यावच्छेदकत्वस्य विवक्षणेऽनुमितिप्रतिबन्धकत्वाभाववति ह्रदो वह्निमान्नेति संशये वह्न्यभाववान् ह्रदो वह्निमानित्याहार्यनिश्चयेऽप्रामाण्यज्ञानास्कन्दिततादृशनिश्चये च वह्न्यभावविशिष्टह्रदविषयकत्वस्य सत्त्वादसम्भव इति चेन्न । ज्ञानस्येत्यत्र ज्ञानपदस्यानाहार्याप्रामाण्यज्ञानानास्कन्दितनिश्चयपरतया तादृशनिश्चयनिष्ठं यादृशविशिष्टविषयकत्वमनुमितिप्रतिबन्धकतानतिरिक्तवृत्ति तत्त्वमित्यर्थलाभादिति दिक् । सत्प्रतिपक्षस्यानित्यदोषत्ववादी शङ्कते ॥ **न चेति** ॥ **विशिष्टस्याप्रसिद्धत्वादिति** ॥ पाषाणमयत्वे वह्न्यभावव्याप्यत्वाभावादिति भावः ॥ **इष्टा-**

## रामरुद्रीयम्.

वच्छेदकज्ञानसाधारणत्वान्न वह्न्यभावादावतिव्याप्तिरिति भावः ॥ **पूर्वोक्तरीत्येति** ॥ विशिष्टस्य शुद्धानतिरिक्ततया ह्रद इत्यप्रतिबन्धकज्ञानस्यापि विशिष्टविषयकतयेत्यर्थः । एवंरीत्या क्वापि लक्षणागमनादव्याप्तिपदं केवलं लक्षणासर्वपरमेव तथा चासम्भव एवेति पर्यवसितम् ॥ **यद्रूपावच्छिन्नेति** ॥ नन्वेवं तत्त्वं वह्न्यभाववद्ध्रदत्वादावेव न तु दोषे वह्न्यभाववद्ध्रदादाविति कथं तस्य दोषलक्षणत्वमत आह ॥ **तत्त्वमित्यस्येति** ॥ ननु यद्रूपपदेन वह्न्यभाववद्ध्रदत्वमेव ग्राह्यं तच्च सामानाधिकरण्यसम्बन्धेन वह्न्यभावविशिष्टह्रदत्वमेव कर्मधारयोत्तरभावप्रत्ययस्य पदार्थतावच्छेदकद्वयसामानाधिकरण्यवाचकत्वादिति दीधितयुक्तेः तदवच्छिन्ना च विषयिता न प्रतिबन्धकीभूतज्ञाने ह्रदो वह्न्यभाववानिति ज्ञाने सामानाधिकरण्यसम्बन्धेन ह्रदत्वे वह्न्यभावस्याप्रकारत्वादित्यत आह ॥ **वह्न्यभावावच्छिन्नेति** ॥ तथा च वह्न्यभावह्रदत्वोभयमेव तत्र यद्रूपपदेन ग्राह्यं न तूक्तविशिष्टं येनोक्तदोषः स्यात् निर्धर्मितावच्छेदककवह्न्यभावविशिष्टह्रदत्ववानित्यप्रतिबन्धकज्ञानेऽप्युक्तयद्रूपावच्छिन्नविषयतासत्त्वेनासंभवश्च स्यादिति भावः । ह्रद इति ज्ञानेऽपि ह्रदत्वावच्छिन्नविषयितासत्त्वात् वह्न्यभावावच्छिन्नविषयत्वाभावादेवोभयावच्छिन्नविषयिताविरह इति सूचनायैव ग्रन्थकृता वह्न्यभावावच्छिन्नविषयिताविरहमात्रं प्रदर्शितम्न तु वह्न्यभावमात्रं यद्रूपपदग्राह्यमिति तदभिप्रायः तथा सति केवलवह्न्यभावावच्छिन्नविषयिताया अप्रतिबन्धकवह्न्यभाववानिति निर्धर्मितावच्छेदकज्ञानसाधारण्येन वह्न्यभावमात्रं यद्रूपपदेनोपादाय लक्षणागमनादिति बोध्यम् । अथैवं वह्न्यभावह्रदत्वोभयावच्छिन्नं विषयित्वं वह्न्यभावह्रदत्वोभयनिष्ठप्रकारतानिरूपितविशेष्यतानिरूपकत्वमेव तच्चाप्रतिबन्धक एकत्र द्वयमिति रीत्या वह्न्यभावह्रदत्वोभयप्रकारके वह्न्यभावावच्छिन्नविशेष्यकह्रदत्वप्रकारके च ज्ञाने वर्तत इति

## रामरुद्रीयम् ।

तादृशविषयितायाः प्रतिबन्धकतातिरिक्तवृत्तित्वादसम्भव इति चेदत्र केचित् यद्रूपावच्छिन्नप्रकारतानिरूपितयद्रूपावच्छिन्नविशेष्यतानिरूपकत्वमनुमितिप्रतिबन्धकतानतिरिक्तवृत्ति तद्रूपावच्छिन्नविशिष्टतद्रूपावच्छिन्नो दोष इत्यर्थे तात्पर्यात् वह्न्यभावत्वावच्छिन्नप्रकारतानिरूपितहृदत्वावच्छिन्नविशेष्यतानिरूपकत्वस्यानुमितिप्रतिबन्धकतानतिरिक्तवृत्तित्वाद्भवति वह्न्यभावत्वावच्छिन्नविशिष्टो हृदत्वावच्छिन्नो दोष इत्याहुः। तदसत् तथासति घटो न द्रव्यमित्यनुमितिप्रतिबन्धकीभूतघटो द्रव्यमिति निश्चयविषयशुद्धद्रव्यत्वविशिष्टघटादावव्याप्तिप्रसङ्गात् यद्रूपावच्छिन्नप्रकारतात्वेन द्रव्यत्वप्रकारताया उपादातुमशक्यत्वात्तस्या निरवच्छिन्नत्वात्। परेतु यद्रूपपदेन वह्न्यभावधर्मितावच्छेदकतापन्नहृदत्वादिकमेव ग्राह्यम्। धर्मितावच्छेदकतापन्नहृदत्वावच्छिन्नत्वं च स्वविषयितायां धर्मितावच्छेदकतानिरूपितत्वनिरूपकतावच्छेदकताकत्वं हृदो वह्न्यभाववानिति ज्ञानीयविषयितानिरूपकतावच्छेदकतैव वह्न्यभावधर्मितावच्छेदकतानिरूपिता एकनिष्ठैकज्ञानीयप्रकारताविशेष्यतयोर्भेदवादिमते निरूप्यनिरूपकभाववत् धर्मितावच्छेदकत्वविषयितानिरूपकतावच्छेदकतयोरपि निरूप्यनिरूपकभावोऽभ्युपेयते हृदत्वावच्छिन्नविशेष्यकवह्न्यभावप्रकारकज्ञान एव वह्न्यभावधर्मितावच्छेदकतापन्नहृदत्वावच्छिन्नविषयकत्वं प्रतीत्यनुरोधादिति वदन्ति। केचित्तु वह्न्यभावहृदत्वोभयप्रकारकज्ञानस्य समूहालम्बनतया तत्र प्रकारताभेदेन विशेष्यताया भिन्नत्वेन न तत्रोभयप्रकारतानिरूपितविशेष्यतानिरूपकत्वं वह्न्यभावधर्मितावच्छेदकज्ञानीयविषयितावारणाय प्रकृतानुमित्यनिरूपितप्रतिबन्धकतानवच्छेदकत्वेन विशेषणीया यद्रूपावच्छिन्नविषयिता उक्तज्ञाने उभयप्रकारतानिरूपितैकविशेष्यतासत्त्वेऽपि तस्या वह्न्यभाववान् हृद इति ज्ञाननिरूपितप्रकृतानुमित्यनिरूपितप्रतिबन्धकतावच्छेदकत्वात्तामादाय नासम्भव इत्याहुः। तदप्यसत्। वह्न्यभाववद्धृदादिविषयिताया अपि हृदो न वह्न्यभाववानित्यादिज्ञाननिरूपितप्रतिबन्धकतायामवच्छेदकत्वेनासम्भवप्रसङ्गात्॥ प्रतिबध्यताभेदेन प्रतिबन्धकताभेदादिति॥ अथ जातित्वेन हृदत्वावगाहिजातिमान्वह्न्यभाववानित्यप्रतिबन्धकज्ञानेऽपि यद्रूपावच्छिन्नविषयितासत्त्वेनासंभवापत्त्या यद्रूपावच्छिन्नविषयकत्वसमानाधिकरणाभावप्रतियोगितावच्छेदकं यद्यद्रूपावच्छिन्नविषयितात्वं तत्तद्रूपावच्छिन्नविषयिताशून्यज्ञानीयत्वेन विशेषणीया यद्रूपावच्छिन्नविषयिता एवं च तादृशज्ञानीययद्रूपावच्छिन्नविषयिता स्वरूपसंबन्धरूपावच्छेदकतावती तद्रूपावच्छिन्नो दोष इत्युक्त्यैव सामञ्जस्ये व्यर्थमनतिरिक्तवृत्तित्वरूपावच्छेदकत्वानुधावनं हृदत्वावच्छिन्नविषयिताशून्यज्ञानीयवह्न्यभावविषयकत्वस्य प्रतिबन्धकतानवच्छेदकत्वेनैकदेशातिव्याप्तेरयोगादिति चेन्न। संयोगः संयोगवानिति बाधभ्रमविषयसंयोगत्वविशिष्टेऽतिव्याप्तेर्दुर्वारत्वात् तत्र संयोगत्वाद्यवच्छिन्नविषयितानां संयोगत्वविशिष्टविषयकत्वव्यापकत्वात् संयोगवत्संयोगाप्रसिद्ध्या तदवच्छिन्नविषयिताया यद्रूपावच्छिन्नविषयितात्वेन ग्रहीतुमशक्यत्वात्। न च संयोगावच्छिन्नैव विषयिता संयोगत्वविशिष्टविषयकत्वाव्यापिका तत्रास्ति संयोगवतस्तत्र विषयत्वेऽपि संयोगनिष्ठविषयितानिरूपकतायां व्यधिकरणीभूय संयोगस्यावच्छेदकत्वादिति वाच्यम्। संयोगत्वेन संयोगप्रकारकोक्तभ्रमे तस्याप्यभावात्। अथैवमप्यभावत्वेन हृदत्वावगाहिन्यामभाववान् वह्न्यभाववानिति बुद्धावपि वह्न्यभावहृदत्वोभयावच्छिन्नविषयितासत्त्वेन तत्र च यद्यद्रूपावच्छिन्नविषयितात्वमुक्तोभयावच्छिन्नविषयितासमानाधिकरणाभावप्रतियोगितावच्छेदकं तत्तद्रूपावच्छिन्नविषयिताशून्यत्वमप्यक्षतमेव अभावत्वावच्छिन्नविषयितात्वस्यातथात्वात्तादृशबुद्धेरनुमितिप्रतिबन्धकत्वाच्चासम्भवो दुर्वार इति मैवम्। यत्सम्बन्धावच्छिन्नयद्रूपावच्छिन्नविषयितात्वं तादृशाभावप्रतियोगितावच्छेदकतत्सम्बन्धावच्छिन्नतद्रूपावच्छिन्नविषयिताशून्यत्वस्य ज्ञानविशेषणत्वेन विवक्षणीयत्वात् उक्तज्ञानस्य च स्वाविधसमवायसम्बन्धावच्छिन्नाभावत्वावच्छिन्नविषयितावत्त्वेन वारणसम्भवात्। न चैवमपि यत्र तत्तद्व्यक्तित्वेन हृदादेः पक्षता तत्राभावत्वेन तद्व्यक्तित्वावगाह्यप्रतिबन्धकज्ञानवारणमशक्यमेवेति वाच्यम्। तद्व्यक्तित्वस्य जात्यतिरिक्तस्य स्वरूपतो भानासम्भवेन तद्व्यक्तीतरावृत्तित्वेनैव तस्य पक्षतावच्छेदकताया वक्तव्यतयाऽभावत्वेन तत्तद्व्यक्तित्वावगाहिज्ञानस्य यद्रूपावच्छिन्नविषयकत्वात्। यदि चानवस्थाभयेन तद्व्यक्तित्वं जात्यतिरिक्तमपि स्वरूपतो भासत इत्येवाङ्गीकरणीयं गत्यन्तराभावादिति विभाव्यते तदा स्वनि-

## रामरुद्रीयम्

रूपितविषयितानिरूपितत्वस्वाभिन्नत्वोभयसम्बन्धेन यद्रूपावच्छिन्नविषयिताविशिष्टयद्रूपावच्छिन्नविषयितात्व तादृशाभावप्रतियोगितावच्छेदकं तद्रूपावच्छिन्नविषयिताविशिष्टतद्रूपावच्छिन्नविषयिताशून्यज्ञानीयत्वेन लक्षणताविच्छेदकीभूतयद्रूपावच्छिन्नविषयिता विशेषणीया वह्न्यभाववत्त्वावच्छिन्नप्रकारतानिरूपितविशेष्यतानिरूपिताभावत्वावच्छिन्नप्रकारताशालित्वादेवाभाववान् वह्न्यभाववानिति ज्ञानवारणमवसेयं वह्न्यभाववत्त्वावच्छिन्नप्रकारतानिरूपितविशेष्यतानिरूपितस्वात्मकाभावत्वावच्छिन्नप्रकारताया वह्न्यभाववान् ह्रद इति ज्ञानेऽपि सत्त्वेन तद्रूपावच्छिन्नविषयिताविशिष्टतद्रूपावच्छिन्नविषयितात्वस्याभावप्रतियोगितावच्छेदकत्वोपपत्तये स्वभिन्नत्वप्रवेश इति निपुणतरमूहनीयम्। यद्यप्येवं सति अनतिरिक्तवृत्तित्वानुधावनमफलं संसर्गत्वावच्छिन्नप्रकारतानिरूपितसंसर्गविषयितानिरूपितसंयोगत्वावच्छिन्नावशेष्यताशालित्वादेवोक्तभ्रमवारणसम्भवेनोक्तप्रयोजनासम्भवात् तथापि पाषाणमयो न वह्निमानिति ज्ञानकालीनस्य पर्वतः पाषाणमय इति ज्ञानस्याप्यवच्छेदकधर्मदर्शनविधयाऽनुमितिप्रतिबन्धकत्वेन तद्विषये पाषाणमयपर्वतेऽतिव्याप्तिः अनतिरिक्तवृत्तित्वानिवेशे तु पाषाणमयो न वह्निमानिति ज्ञानशून्यकालीनतादृशज्ञानस्याप्रतिबन्धकत्वान्नातिव्याप्तिः ॥ **तादृशनिश्चयनिष्ठमिति** ॥ तथा च ज्ञानस्येत्यत्र षष्ठ्यर्थो निष्ठत्वं तस्य च यद्विषयकत्वेऽन्वयः तथा च वह्न्यभाववद्ध्रदविषयकत्वस्यानुमितिप्रतिबन्धकतातिरिक्तवृत्तित्वेऽपि तादृशनिश्चयवृत्तित्वविशिष्टस्य तस्यानतिरिक्तवृत्तित्वान्नासम्भव इति भावः। यद्यपि विशेष्यीभूतवह्न्यभाववद्ध्रदविषयकत्वस्य प्रतिबन्धकतातिरिक्तवृत्तित्वात् विशिष्टेऽपि तस्मिन्ननतिरिक्तवृत्तित्वं दुर्घटं विशिष्टस्य शुद्धानतिरिक्ततया गुणान्यत्वविशिष्टसत्तायामपि गुणवृत्तित्वाभ्युपगमात्। नच तादृशनिश्चयवृत्तित्वविशिष्टयद्रूपावच्छिन्नविषयितात्वमनुमितिप्रतिबन्धकताशून्यनिरूपिताधेयतानवच्छेदकमिति विवक्षणीयमिति वाच्यम्। तादृशविशिष्टविषयितात्वस्य वैशिष्ट्यविषयितात्वोभयरूपतया तयोः प्रत्येकं प्रतिबन्धकताशून्यवृत्तितावच्छेदकतयोभयस्मिंस्तादृशवृत्तितानवच्छेदकत्वस्योपपादयितुमशक्यत्वात्तथापि स्वव्यापकतत्कत्वमेवानतिरिक्तवृत्तित्वं तथाच तादृशनिश्चयवृत्तित्वविशिष्टयद्रूपावच्छिन्नविषयिताव्यापकमनुमितिप्रतिबन्धकत्वं तद्रूपावच्छिन्नो दोष इत्यर्थपर्यवसानाद्व्यापकताशरीरे च विशिष्टाधिकरणताप्रवेशान्नोक्तदोषावकाशः तादृशनिश्चयवृत्तित्वविशिष्टयद्रूपावच्छिन्नविषयितात्वावच्छिन्नाधिकरणतायां वा प्रतिबन्धकताशून्यावृत्तित्वं विवक्षणीयमिति ध्येयम्। अत्रेदमवधेयम्। जलवत्त्वावच्छेदेन वह्न्यभाववत्त्वघटितस्य वह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रदस्य बाधादावनन्तर्भूतत्वेन असंभवल्लक्ष्यभावस्यावच्छेदकधर्मदर्शनविधया अनुमितिप्रतिबन्धकतानतिरिक्तवृत्तिविषयिताकतया तत्रातिव्याप्तिः। न च पक्षे साध्यग्रहप्रतिबन्धकतावच्छेदकतया सत्प्रतिपक्षाभिन्नतया च बाध एव तदन्तर्भावोऽस्त्विति वाच्यम्। तथासति यो यत्र यादृशोऽपि हेत्वाभासस्तत्र तद्व्याप्योऽपि तत्रैवान्तर्भवतीत्यत्र तदवच्छेदकस्यापि तदन्तर्भावानुक्त्या न्यूनताप्रसङ्गात् तस्मादवच्छेदकधर्मदर्शनविधया प्रतिबन्धकता न हेत्वाभासलक्षणघटिकेत्येव ग्रन्थकृतां तात्पर्यमित्यङ्गीकरणीयत्वात्। नच ज्ञानवैशिष्ट्यानवच्छिन्नत्वेन प्रतिबन्धकता विशेषणीया अवच्छेदकधर्मदर्शनस्य ज्ञानविशिष्टज्ञानत्वेनैव प्रतिबन्धकतया नोक्तविशिष्टेऽतिव्याप्तिरिति वाच्यम्। तथासति जलव्यापको वह्न्यभावो जलवान् ह्रद इति ज्ञानद्वयकालेऽपि ह्रदो वह्निमानित्यनुमित्यनुत्पादेन सत्प्रतिपक्षविषयकज्ञानस्यापि ज्ञानविशिष्टज्ञानत्वेनैव प्रतिबन्धकताया वक्तव्यतया तत्राव्याप्तिप्रसङ्गात्। न च व्यापकसामानाधिकरण्यरूपव्याप्तिघटितस्य सत्प्रतिपक्षता न स्वीक्रियते किन्तु वह्निमद्वृत्तिमत्पक्षस्यैव सत्प्रतिपक्षता अन्यथा जलव्यापकवह्न्यभावकालीनजलवद्ध्रदादावतिप्रसङ्गापातादिति वाच्यम्। एवमपि साध्यव्यापकीभूताभावप्रतियोगिहेतुरूपविरोधाव्याप्तेरपरिहारात्तस्यापि पक्षधर्मताज्ञानकालीनप्रतिबन्धकज्ञान एव विषयत्वात्। न चैवं तद्विषयकत्वस्य प्रतिबन्धकतातिरिक्तवृत्तित्वात्कथं सामान्यलक्षणाक्रान्तता पक्षवृत्तित्वविशिष्टस्य तादृशहेतोरेव विरोधत्वोपगमे पर्वतो वह्निमान् जलादित्यादौ वह्निव्यापकीभूताभावप्रतियोगिजलादेर्विरोधत्वानुपपत्तेः पक्षावृत्तित्वादिति वाच्यम्। यद्रूपावच्छिन्नविषयकनिश्चयसामान्येऽनुमित्यप्रतिबन्धकत्वपक्षधर्मताग्रहकालीनत्वोभयाभावः तद्रूपावच्छिन्नो दोष इत्येवोक्तलक्षणपर्यवसितार्थ इत्युपगमादिति। तत्राति-

**अन्यथा बाधस्याप्यनित्यदोषत्वापत्तेः । तस्मात्तत्र वह्न्यभाववद्व्याप्यपाषाणमयत्ववानिति परामर्शकाले वह्निव्याप्यधूमस्य नाभासत्वं भ्रमादनुमितिप्रतिबन्धमात्रं हेतुस्तु न दुष्टः इत्थं च**

## प्रभा.

**अन्यथा** ॥ निश्चयघटितसत्प्रतिपक्षदोषमङ्गीकृत्य सद्धेतोस्सत्प्रतिपक्षत्वे ॥ **बाधस्यापीति** ॥ साध्याभाववत्त्वेन गृह्यमाणपक्षतावच्छेदकावच्छिन्नस्यापीत्यर्थः ॥ **अनित्यदोषत्वापत्तेरिति** ॥ तादृशनिश्चयकाले दोषत्वापत्तेरित्यर्थः । नचेष्टापत्तिः तत्काले हेतोः बाधितत्वापत्तेरित्यर्थः । नन्वनतिरिक्तवृत्तित्वरूपावच्छेदकत्वस्य लक्षणघटकत्वे व्यभिचारादावव्याप्तिः प्रतिबन्धकताशून्ये धूमाभाववद्वृत्तित्वामिति ज्ञानेऽपि व्यभिचारविषयकत्वस्य सत्त्वादत आह ॥ **इत्थंचेति** ॥ पारिभाषिकावच्छेदकत्वस्य लक्षणघटकत्वे

## दिनकरीयम्.

**पत्तेरिति** ॥ तथा च सद्धेतूनां प्रतिपरामर्शेऽपि न दुष्टत्वमिति भावः ॥ **अन्यथा** . प्रतिबन्धकीभूतभ्रमविषयस्यापि दोषत्वे ॥ **अनित्यदोषत्वापत्तेरिति** ॥ पक्षे साध्याभावभ्रमदशायां सद्धेतावपि दोषवत्त्वापत्तेरित्यर्थः ॥ **इत्थं च** यादृशविशिष्टविषयकत्वेन ज्ञानस्य प्रतिबन्धकत्वं तादृशविशिष्टस्य दोषवत्त्वे च । हेत्वादिकमित्यादिना साध्याभावविशिष्टपक्षपरिग्रहः । यादृशविशिष्टपदेन व्यभिचारत्वादिविशिष्टं व्यभिचारादिकमादाय लक्षणं न सम्भवति व्यभिचारविषयकत्वस्य प्रतिबन्धकताशून्ये व्यभिचार इति ज्ञाने वृत्तित्वेनातिरिक्तवृत्तित्वात् किं तु व्यभिचारादिविशिष्टं हेत्वादिकमादायैवेति व्यभिचारादिविशिष्टं हेत्वादिकमेव दोष इति भावः । ननु व्यभिचारादिविशिष्टस्य हेतोर्दोषत्वे तद्वत्त्वस्य हेतावभावाद्धेतौ दुष्टत्वव्यवहारो न स्यात् । न च तादात्म्येन तद्वत्त्वं विवक्षणीयमिति वाच्यम् । तथा सति वह्न्यभावविशिष्टह्रदादेः तादा-

## रामरुद्रीयम्.

व्याप्तिवारणाय प्रकृतानुमितिप्रतिबन्धकतानवच्छेदककिञ्चिदवच्छिन्नविषयिताशून्यत्वेन तादृशनिश्चयो विशेषणीयः उक्तविशिष्टविषयकनिश्चयश्च तथाविधविषयतात्वावच्छिन्नविषयिताशाल्येवेति न तत्रातिव्याप्तिः ह्रदो वह्न्यभाववानिति निश्चयस्यापि तथाविधह्रदत्वप्रकारतानिरूपितानिरवच्छिन्नविशेष्यताशालित्वादुक्तं किञ्चिदवच्छिन्नेति । यद्यप्येवंसति एकदेशातिव्याप्तिरेकदेशविषयकस्यापि ह्रदो वह्न्यभाववानिति निश्चयस्यैव तथात्वात्तथापि निश्चये यद्रूपावच्छिन्नविषयित्वाघटकविषयिताशून्यत्वमपि निवेश्य सापि निरसनीया एकदेशविषयकतादृशनिश्चयस्याप्रसिद्धेः तादृशविषयितासमानाधिकरणभेदप्रतियोगितावच्छेदकत्वमेव तदघटकमिति ध्येयम् । इत्थंच जातिमान् वह्न्यभाववानिति ज्ञानवारणायोक्तगुरुतरविशेषणमपि न देयमेवेति तदीयविषयितायाः प्रतिबन्धकतानवच्छेदकत्वादेव तद्वारणसम्भवादेवंच ग्रन्थकृल्लेखनस्वरसाद्यद्रूपपदेन वह्न्यभावह्रदत्वोभयोपादानेऽपि न क्षतिः उक्तप्रतिबन्धकज्ञानयोरेतद्विशेषणेनैव वारणात् । एवं प्रमेयत्वादिविशिष्टव्यभिचारादावतिव्याप्तिस्तद्वारणाय तादृशविशिष्टान्तराघटितत्वनिवेशोऽपि नोपादेय एवेति महालाघवम् । अथैवं स्वरूपसम्बन्धरूपावच्छेदकत्वानिवेशेऽपि क्षत्यभावादनतिरिक्तवृत्तित्वनिवेशनमफलमिति चेत्परित्यज्यतां तदपि तावताप्यनाहार्यत्वादिविशेषणानिवेशेन लाघवातिशयस्यैव सम्पत्तेरिति । वस्तुत उक्तविशिष्टेऽतिव्याप्तिवारणाय स्वातन्त्र्येणैव प्रतिबन्धकतानवच्छेदककिञ्चिदवच्छिन्नविषयताशून्यज्ञानविषयत्वरूपं विशेषणमुपादेयम् । एकदेशादावतिव्याप्तिवारणायाव्यापकविषयिताशून्यत्वादिविशेषितनिश्चयवृत्तियद्रूपावच्छिन्नविषयत्वामित्यादिविशेष्यदलमित्यत्रैव ग्रन्थकृत्तात्पर्यमिति दिक् । केचित्तूक्तविशिष्टेऽतिव्याप्तिवारणाय यादृशविशिष्टविषयकनिश्चयविशिष्टयादृशविशिष्टविषयकनिश्चयत्वमनुमितिप्रतिबन्धकतानतिरिक्तवृत्तिज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकतानवच्छेदकतादृशविशिष्टविषयिताद्वयशून्यप्रतीतिविषयत्वेन तादृशविशिष्टो विशेषणीयः विशिष्टद्वयाविषयितायां ज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकतानवच्छेदकत्वविशेषणात् वह्न्यभावविषयकनिश्चयविशिष्टवह्न्यभाववद्ध्रदविषयकनिश्चयत्वस्यानुमितिप्रतिबन्धकतानतिरिक्तवृत्तित्वेऽपि न वह्न्यभाववद्ध्रदादावसम्भवप्रसङ्ग इत्याहुः ॥ **व्यभिचारत्वादिविशिष्टमिति** ॥ वह्निर्धूमस्य व्यभिचारी पक्षे साध्यस्य बाध इत्यादिव्यवहारात् साध्याभाववद्वृत्तित्वस्य व्यभिचारपदार्थत्वेन साध्याभावस्यैव बाधपदार्थत्वेन प्रसिद्धतया साध्याभाववद्वृत्तित्व-

साध्याभाववद्वृत्तिहेत्वादिकं दोषः तद्वत्त्वं च हेतौ येनकेनापि सम्बन्धेनेति नव्याः । परे तु यद्विषयकत्वेन ज्ञानस्यानुमितिविरोधित्वं तद्वत्त्वं हेत्वाभासत्वं सत्प्रतिपक्षे विरोधिव्याप्त्यादिकमेव तथा तद्वत्त्वं च हेतोर्ज्ञानरूपसम्बन्धेन नचैवं वह्निमान् धूमादित्यादौ पक्षे बाधभ्रमस्य साध्याभावविषयकत्वेनानुमितिविरोधित्वात् ज्ञानरूपसम्बन्धेन तद्वत्त्वस्यापि सत्त्वात् सद्धेतोरपि बाधितत्वापत्तिरिति वाच्यम् तत्र ज्ञानस्य सम्बन्धत्वाकल्पनात् अत्र सत्प्रतिपक्षित इति व्यवहारेण तत्कल्पनात् तत्र बाधित इति व्यवहाराभावादित्याहुः ।

## प्रभा ।

येत्यर्थः ॥ साध्याभाववद्वृत्तीति ॥ एतस्य दोषत्वं साध्याभाववद्वृत्तित्वस्य व्याप्तित्वपक्षेऽन्यथा हेतुसमानाधिकरणेत्यादिव्याप्तिज्ञाने साध्याभाववद्वृत्तित्वेन हेतुविशेष्यकनिरुक्तव्यभिचारज्ञानस्याप्रतिबन्धकत्वात् निष्कृष्टकल्पे तु साधनसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वाविशिष्टसाध्यतावच्छेदकमेव व्यभिचाररूपो दोषः तद्विषयतायाः प्रकृतानुमितिप्रतिबन्धकतानतिरिक्तवृत्तित्वात् । हेत्वादिकमित्यादिपदेन साध्याभावविशिष्टपक्षपरिग्रहः । ननु एतस्य व्यभिचारपदार्थत्वे तद्वत्त्वस्य हेतावभावात् कथं हेतोः दुष्टत्वव्यवहारः कालिकादिसंबन्धेन तद्वत्त्वमादाय दुष्टत्वोपपादने नित्यहेतावमूर्तहेतौ च तादृशव्यभिचारानुपपत्तिः निरुक्तसंबन्धेन तद्वत्त्वाभावात् अत आह ॥ तद्वत्त्वं चेति ॥ येनकेनापीति ॥ एकज्ञानविषयत्वेनेत्यर्थः । नचैवं सति धूमसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वविशिष्टरासभत्वादेरपि व्यभिचारपदार्थतया निरुक्तसंबन्धेन तद्वत्त्वस्य धूमे सत्त्वात् वह्नौ साध्येऽपि धूमस्य दुष्टत्वव्यवहारापत्तिरिति वाच्यम् । तद्धेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वविशिष्टतद्धर्मात्मकव्यभिचारस्य तद्धर्मावच्छिन्नसाध्यकतद्धेतोरेव दुष्टताव्यवहारनियामकत्वस्वीकारेण वह्नित्वावच्छिन्नसाध्यतायां रासभत्वघटितव्यभिचारस्य निरुक्तसंबन्धेन धूमहेतोः दुष्टत्वव्यवहारनियामकत्वाभावात् । प्राचस्तु दुष्टानामेव हेतूनां विभजनात् तेषामेव लक्षणं वक्तव्यं तदुपयोगितयैव दोषस्वरूपनिर्वचनमिति वदन्ति तन्मतमुपन्यस्यति ॥ परे त्विति ॥ यद्विषयकत्वेनेति ॥ यन्निष्ठविषयतानिरूपितविषयितयेत्यर्थः । अत्रावच्छेदकत्वं स्वरूपसंबन्धविशेषः लाघवात् पारिभाषिकावच्छेदकत्वनिवेशे प्रयोजनाभावाच्च । ननु स्वरूपसंबन्धरूपावच्छेदकत्वस्य लक्षणघटकत्वे वह्न्यभावव्याप्यपाषाणमयत्ववान् पर्वत इति ज्ञानस्यानुमितिप्रतिबन्धकत्वेन तन्निरूपितस्वरूपसंबन्धरूपावच्छेदकताश्रयवह्न्यभावव्याप्त्यादेरपि दोषत्वेन येनकेनापि संबन्धेन तद्वत्त्वमुपादाय सद्धेतोरपि सत्प्रतिपक्षितत्वापत्तिरित्याशङ्काभिप्रायेण पारिहरति ॥ सत्प्रतिपक्ष इति ॥ व्याप्त्यादिकमेवेत्येवकारेण

## दिनकरीयम् ।

त्वेन धूमेऽभावेन ह्रदपक्षके धूमस्य दुष्टत्वं न स्यादत आह ॥ तद्वत्त्वं चेति ॥ न च वह्निव्यभिचारविशिष्टद्रव्यत्वादेर्धूमेऽपि सत्त्वादतिव्याप्तिरिति वाच्यम् । यादृशविशिष्टविषयज्ञानत्वेन यद्धेतुकानुमितिप्रतिबन्धकत्वं तादृशविशिष्टाश्रयतद्धेतुत्वस्यैव दुष्टत्वादिति । सत्प्रतिपक्षादेरनित्यदोषत्ववादिनां मतमाह ॥ परे त्विति ॥ न च वह्न्यभावादिव्याप्तेर्यत्पदेनोपादातुं शक्यत्वेऽपि तस्या धूमावृत्तितया न धूमस्य दुष्टत्वं स्यादत आह ॥ तद्वत्त्वं चेति ॥ ज्ञानेति ॥ एकज्ञानविषयत्वेन तद्वत्त्वमित्यर्थः ॥ तद्वत्त्वस्य साध्याभाववत्त्वस्य ॥ तत्र बाधकालीनधूमादिसद्धेतावित्यर्थः ॥ अत्र प्रतिपरामर्शकालीने धूमादिसद्धेतौ ॥ तत्कल्पनात् ज्ञानस्य सम्बन्धत्वकल्पनात् । ननु सद्धेतावपि बाधित इति व्यवहारेण सम्बन्धत्वकल्पनं ज्ञानस्य भविष्यतीत्यत आह ॥ तत्रेति ॥ बाधभ्रमकालीने सद्धेतावित्यर्थः । प्रत्युतायं न बाधितः पुरुषस्तु भ्रान्त इत्येव

## रामरुद्रीयम् ।

स्यैव प्रकृते व्यभिचारपदार्थता बोध्या । व्यभिचारादिकमित्यादिना साध्याभावरूपबाधपरिग्रहः ॥ तादृशविशिष्टाश्रयतद्धेतुत्वस्येति ॥ तथा च वह्न्यभाववद्वृत्तिद्रव्यत्वमिति ज्ञानस्य तद्धूमहेतुकानुमितावप्रति-

अनुमितिविरोधित्वं चानुमितितत्करणान्यतरविरोधित्वं तेन व्यभिचारिणि नाव्याप्तिः । दोषज्ञानं च यद्धेतुविषयकं तद्धेतुकानुमितौ प्रतिबन्धकं तेनैकहेतौ व्यभिचारज्ञाने हेत्वन्तरेणानुमित्युत्पत्तेस्तदभावानवगाहित्वाच्च व्यभिचारज्ञानस्यानुमितिविरोधित्वाभावेऽपि न क्षतिरिति संक्षेपः । यादृशसाध्यपक्षकहेतौ यावन्तो दोषास्तावदन्यान्यत्वं तत्र हेत्वाभा-

## प्रभा.

तादृशव्याप्तिविशिष्टहेतुविशिष्टपक्षस्याप्रसिद्धत्वेऽपि न क्षतिः । एकदेशस्यापि दोषत्वे बाधकाभावादित्यर्थो लभ्यते । अत्र सम्प्रतिपक्षस्य बाधव्याप्यतया व्याप्यसत्त्वे व्यापकसत्त्वावश्यंभावात् सद्धेतोः बाधितत्वमावश्यकमेव । यदि तथा व्यवहाराभावात् तस्याबाधितत्वमुच्यते तदा व्यापकनिवृत्त्या व्याप्यनिवृत्तेः सत्प्रतिपक्षितत्वमपि नाङ्गीकर्तव्यमेव भ्रमादेव सत्प्रतिपक्षितत्वव्यवहारोपपत्तेरित्यस्वरस आहुरित्यनेन सूचितः ॥ **नाव्याप्तिरिति** ॥ नन्वनुमितिपदस्य तादृशान्यतरपरत्वेऽपि व्यभिचारेऽव्याप्तिस्तदवस्थैव धूमत्वधर्मिकवह्निसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वग्रहेऽपि आलोकसमानाधिकरणाभावप्रतियोगितानवच्छेदकधूमत्वघटितव्याप्तिग्रहादित्यत आह ॥ **दोषज्ञानमिति** ॥ व्यभिचारज्ञानमित्यर्थः ॥ **यद्धेतुविषयकमिति** ॥ यद्धेतुविशेष्यकयद्धेतुघटितव्यभिचारप्रकारकमित्यर्थः ॥ **तद्धेतुकानुमिताविति** ॥ तद्धेतुघटितनिरुक्ताव्यभिचरितसाध्यसामानाधिकरण्यप्रकारकतद्धेतुविशेष्यकव्याप्तिज्ञानकरणकानुमितितत्करणान्यतरस्मिन्नित्यर्थः ॥ **तेनेति** ॥ हेतुविशेषान्तर्भावेन प्रतिबध्यप्रतिबन्धकभावस्वीकारेणेत्यर्थः ॥ **एकहेतौ व्यभिचारज्ञानेऽपीति** ॥ वह्निविशेष्यकवह्निसमानाधिकरणाभावप्रतियोगितावच्छेदकधूमत्वात्मकव्यभिचारनिश्चयात्किंचित्संबन्धावच्छिन्नप्रकारताशालिनिश्चयेऽपीत्यर्थः ॥ **हेत्वन्तरेणेति** ॥ आलोकनिरूपितव्यभिचाराभावविशिष्टधूमत्वावच्छिन्नसामानाधिकरण्यरूपव्याप्तिप्रकारकालोकविशेष्यकव्याप्तिज्ञानकरणकानुमितितत्करणान्यतरोत्पादादित्यर्थः । व्यभिचारज्ञानस्यानुमितिविरोधित्वाभावेऽपीति योजना ॥ **अनुमितिविरोधित्वाभा-**

## दिनकरीयम्.

व्यवहारादिति भावः । तादृशव्यवहारयोः स्वानुभवमात्रसाक्षिकत्वमाहुरित्यस्वरसबीजम् । यथाश्रुतविरोधित्वत्यागे बीजमाह ॥ **तेनेत्यादिना** ॥ ननु तद्धेतुकतत्साध्यकानुमितिं प्रति तद्धेतौ तत्साध्यव्यभिचारग्रहाभावो हेतुर्वाच्यस्तत्राह ॥ **तदभावेति** ॥ **न क्षतिः** नाव्याप्तिः । नन्वत्र लक्षणेऽवच्छेदकत्वं न स्वरूपसम्बन्धविशेषः पूर्वोक्तदोषादित्यनतिरिक्तवृत्तित्वमेव निवेशनीयं तथा च धूमवान् वह्नेरित्यादौ प्रमेयत्वविशिष्टव्यभिचारेऽतिव्याप्तिस्तद्विषयकत्वस्य प्रतिबन्धकतानतिरिक्तवृत्तित्वादत आह ॥ **संक्षेप इति** ॥

## रामरुद्रीयम्.

बन्धकत्वान्न तादृशद्रव्यत्वविशिष्टत्वेऽपि धूमस्य धूमो दुष्ट इति व्यवहारापत्तिरिति भावः ॥ **ननु तद्धेतुकेति** ॥ न च तद्धेतुकत्वं तत्परामर्शोत्तरत्वं तथाचोभयपरामर्शोत्तरं यत्र एकहेतौ व्यभिचारज्ञानं तत्रानुमितेरुभयहेतुकत्वेन तत्र व्यभिचार इति वाच्यम् । अव्यवहितोत्तरत्वसम्बन्धेन तद्धेतुधर्मिकव्यभिचारज्ञानविशिष्टान्यत्वस्यैव प्रकृते तद्धेतुकत्वरूपत्वादिति । प्रकृतानुमितिप्रतिबन्धकतावच्छेदकमित्यस्य विषयविधयेत्यादिः । तथा च यादृशविशिष्टविषयकत्वमनुमितिप्रतिबन्धकतानतिरिक्तवृत्ति तादृशविशिष्टान्तराघटितत्वे सति यादृशविशिष्टविषयकत्वं तथाविधं तादृशविशिष्टो दोष इति पर्यवसितोऽर्थः अघटितत्वस्य तदविषयकप्रतीतिविषयत्वरूपत्वेन स्वस्मिन्स्वाविषयकप्रतीतिविषयत्वाभावादसम्भव इत्यन्तरपदं तच्च न स्वभिन्नार्थकं व्यभिचारादेः प्रमेयत्वविशिष्टव्यभिचाराभिन्नत्वेनातिव्याप्तिवारणासम्भवात् किन्तु स्वाविषयकप्रतीतिविषयत्वं यद्यपि प्रमेयत्वमवृत्तिप्रमेयत्वादित्यादाववृत्तित्वाभाववद्वृत्तिप्रमेयत्वरूपव्यभिचारेऽव्याप्तिस्तस्य वृत्तिप्रमेयत्वरूपबाधघटितत्वात् तथापि प्रतिबन्धकतायामेव विशिष्टान्तरविषयकत्वानवच्छिन्नत्वं देयं व्याप्तिज्ञानप्रतिबन्धकतायां बाधविषयिताव्यापकत्वविरहेणोक्ताव्याप्तिविरहादिति विभावनीयम् । केचित्तु स्वसजातीयविशिष्टान्तराघटितत्वनिवेशान्नोक्तदोषः बाधस्य हेत्वाभासविभाजकरूपेण व्यभिचारसजातीयत्वविरहादित्याहुः

प्रभा.

**वेऽपीति** ॥ अनुमितितत्करणान्यतरविरोधित्वाभावेऽपीत्यर्थः ॥ **न क्षतिरिति** ॥ न व्यभिचारेऽव्याप्तिरित्यर्थः । ननु तद्धेतुघटितनिरुक्तव्यभिचारप्रकारकतद्धेतुविशेष्यकज्ञानस्य साक्षात्तद्धेतुकानुमितिं प्रत्येव प्रतिबन्धकत्वमास्तामनुमितिपदस्य लक्षणाया अकल्पनेन लाघवादत आह ॥ **तदभावानवगाहित्वाच्चेति** ॥ तथाच निरुक्तव्यभिचारज्ञानस्य ग्राह्याभावानवगाहित्वेन तद्धेतुकानुमितिं प्रति प्रतिबन्धकत्वासंभवात् अनुमितिपदस्यानुमितितत्करणान्यतरलक्षणाकल्पनमावश्यकमिति भावः । तदभावानवगाहित्वाच्च व्यभिचारज्ञानस्यानुमितिप्रतिबन्धकत्वाभावेऽपि न क्षतिरित्यपरा योजना । अत्रानुमितिप्रतिबन्धकत्वाभावेऽपीत्यस्य साक्षादनुमितिप्रतिबन्धकत्वाभावेऽपीत्यर्थः ॥ **न क्षतिरिति** ॥ अनुमितिपदस्य नानुमितितत्करणान्यतरपरत्वानुपपत्तिरित्यर्थः । अत्र प्रकृतानुमितिप्रतिबन्धकताशून्येच्छादावपि वह्न्यभाववद्धृदत्वाद्यवच्छिन्नविषयितायाः सत्त्वेनानतिरिक्तवृत्तित्वाभावादसंभववारणाय ज्ञानवृत्तित्वार्थकज्ञानस्येति पदमुपात्तम् । तथाचेच्छादेः ज्ञानत्वाभावेन तन्निष्ठविषयितायाः ज्ञानवृत्तित्वाभावान्नासंभव इति भावः । ननु तथापि तादृशप्रतिबन्धकताशून्ये हृदो वह्निमान्नवेति संशये वह्निमान् हृदो वह्न्यभाववानित्याहार्यज्ञाने हृदो वह्न्यभाववान् इदं ज्ञानमप्रमेत्यप्रामाण्यज्ञानानास्कन्दितज्ञाने च वह्न्यभाववद्धृदत्वावच्छिन्नविषयितायाः सत्त्वेनासंभवतादवस्थ्यमिति चेन्न ज्ञानपदस्यानाहार्याप्रामाण्यज्ञानानास्कन्दितनिश्चयपरत्वस्वीकारेण पूर्वोक्तज्ञानानां तादृशत्वाभावान्नोक्तदोषः । ननु तथापि प्रकृतानुमितिप्रतिबन्धकताशून्ये निरुक्ताहार्यज्ञानादौ अनाहार्याप्रामाण्यज्ञानानास्कन्दितनिश्चयवृत्तित्वविशिष्टवह्न्यभाववद्धृदत्वावच्छिन्नविषयतानिरूपितविषयिताया अपि सत्त्वमस्त्येव केवलवह्न्यभाववद्धृदत्वावच्छिन्नविषयतानिरूपितविषयितायास्तत्र सत्त्वात् विशेष्यवृत्तेः विशिष्टानुयोगिकाभावानभ्युपगमादिति चेन्न तादृशनिश्चयवृत्तित्वविशिष्टयद्रूपावच्छिन्नविषयितात्वं तादृशप्रतिबन्धकताशून्यवृत्तितानवच्छेदकं तद्रूपस्यैव लक्षणत्वस्वीकारेण केवलवह्न्यभाववद्धृदत्वावच्छिन्नविषयतानिरूपितविषयितात्वस्य तादृशाहार्यादिनिरूपितवृत्तितावच्छेदकत्वेऽपि तादृशनिश्चयवृत्तित्वविशिष्टविषयितात्वस्य वृत्तितानवच्छेदकत्वान्नोक्तदोषः । यदि तादृशनिश्चयवृत्तित्वविशिष्टवह्न्यभाववद्धृदत्वावच्छिन्नविषयतानिरूपितविषयितात्वस्य तादृशविषयितानिष्ठतादृशनिश्चयत्वसामानाधिकरण्यरूपत्वे निरुक्तपरिष्कारेण दोषवारणेऽपि तादृशनिश्चयवृत्तित्वविशिष्टनिरुक्तविषयितात्वस्य विषयितात्वघटितत्वपक्षे उक्तपरिष्कारेण दोषवारणासंभवः विषयितात्वस्य तादृशाहार्यादिवृत्तितावच्छेदकत्वेन निरुक्तविशिष्टविषयितात्वस्यापि अवच्छेदकत्वात् विशेष्यवृत्तेरिति न्यायादिति विभाव्यते तदा स्वव्यापकप्रतिबन्धकताकत्वरूपं प्रतिबन्धकतानतिरिक्तवृत्तित्वमेव निवेशनीयम् । तथाच तादृशनिश्चयवृत्तित्वविशिष्टयद्रूपावच्छिन्ननिरूपितविषयिताव्यापिका प्रकृतानुमितिप्रतिबन्धकता तद्रूपवत्त्वं लक्षणमिति पर्यवसितम् । एवं चाहार्यादिज्ञानस्य केवलनिरुक्तविषयितात्वावच्छिन्नाधिकरणत्वेऽपि तादृशनिश्चयवृत्तित्वविशिष्टनिरुक्तविषयितात्वावच्छिन्नाधिकरणत्वाभावेनानाहार्यादिनिश्चयस्यैव तदधिकरणतया तत्र प्रकृतानुमितिप्रतिबन्धकतायाःसत्त्वेन तस्या व्यापकत्वाक्षतेः बाधादौ लक्षणसमन्वय इति दिक् । नन्वनुमितितत्करणान्यतरविरोधित्वं न तादृशान्यतरनिष्ठप्रतिबध्यतानिरूपितप्रतिबन्धकत्वं पर्वतो वह्निमान् धूमादित्यादौ वह्न्यभाववद्धृदस्य दोषत्वापत्तेः पर्वतो वह्निमान् हृदश्च वह्निमान् इत्याकारकप्रकृतानुमितिनिष्ठहृदविशेष्यकवह्निप्रकारकबुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतायास्तादृशनिश्चयवृत्तित्वविशिष्टवह्न्यभाववद्धृदत्वावच्छिन्नविषयतानिरूपितविषयिताव्यापकत्वात् नापि तादृशान्यतरत्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकत्वं तत् व्यभिचारज्ञानस्य व्याप्तिज्ञानमात्रप्रतिबन्धकतया बाधादेश्चानुमितिमात्रप्रतिबन्धकतया तादृशान्यतरत्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताया आश्रयासिद्ध्यादिनिश्चय एव प्रसिद्धत्वेनाश्रयासिद्ध्यादिषु लक्षणसमन्वयेऽपि व्यभिचारबाधादावव्याप्तेर्दुर्वारत्वादिति चेन्न लक्षणघटकीभूतानुमितिपदस्यानुमितितत्करणान्यतरपरत्वे विश्वनाथपञ्चाननस्य न निर्भरः किंतु साध्यव्याप्यहेतुमान् पक्षस्साध्यवानिति समूहालम्बनात्मकानुमितिपरत्व एव । तथाच तादृशानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकत्वरूपमेवानुमितिविरोधित्वं लक्षणघटकमिति न व्यभिचारादावव्याप्तिः व्यभिचा-

## प्रभा.

रादिनिश्चयस्यापि तादृशानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रातिबन्धकताश्रयत्वादेतत्सर्वं हृदि निधायानुमितिविरोधित्वं चेति चशब्दः प्रयुक्तः तादृशचशब्दस्यानुमितितत्करणान्यतरविरोधित्वमित्युत्तरं योजनयानुक्तसमुच्चायकेन चशब्देनोक्तानुमितिलाभात् । ननु प्रमेयत्वविशिष्टव्यभिचारादावतिव्याप्तिः तादृशनिश्चयवृत्तित्वविशिष्टप्रमेयत्वविशिष्टव्यभिचारादिविषयिताया अपि निरुक्तप्रकृतानुमितिप्रतिबन्धकतानातिरिक्तवृत्तित्वादिति चेन्न विशिष्टान्तराघटितत्वेन यद्रूपस्य विशेषणीयत्वात् अन्यत् विशिष्टं विशिष्टान्तरमिति व्युत्पत्त्या धूमाभाववद्वृत्तित्वविशिष्टप्रमेयवह्नित्वापेक्षया केवलतादृशवह्नित्वस्यान्यत्वाभावेन स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वरूपशून्यत्वं निवेशनीयं विशिष्टशब्देन प्रकृतानुमितिप्रतिबन्धकतानतिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकं बोध्यम् । तदघटितत्वं च तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वमिति स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं यत्प्रकृतानुमितिनिष्ठप्रतिबध्यतानिरूपितप्रतिबन्धकतानतिरिक्तवृत्तिविषयतानिरूपकतावच्छेदकं तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वमेव विशिष्टान्तराघटितत्वमिति फलितम् । एवंच धूमाभाववद्वृत्तित्वविशिष्टप्रमेयवह्नित्वावच्छिन्नाविषयकधूमाभाववद्वृत्तिवह्निरित्याकारकप्रतीतिविषयतावच्छेदकं निरुक्तप्रकृतानुमितिप्रतिबन्धकतानतिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकं च केवलधूमाभाववद्वृत्तिवह्नित्वमेव तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वाभावाद्धूमाभाववद्वृत्तिप्रमेयवह्नित्वस्य निरुक्तविशिष्टान्तराघटितधर्मत्वाभावेन प्रमेयत्वविशिष्टव्यभिचारादावतिव्याप्तेरभावात् । नन्वेवमपि बाधादावव्याप्तिस्तदवस्था ह्रदो वह्निमानित्यनुमितिप्रतिबन्धकत्वाभाववति वह्न्यभावं धर्मितावच्छेदकीकृत्य ह्रदत्वप्रकारकज्ञाने एकत्र द्वयमिति रीत्या वह्न्यभावह्रदत्वोभयप्रकारकह्रदनिष्ठनिरवच्छिन्नविशेष्यताशालिनिश्चये च वह्न्यभाववद्ह्रदत्वावच्छिन्नविषयतानिरूपितविषयितायास्सत्त्वादत आह ॥ **संक्षेप इति** ॥ तथाच तादृशनिश्चयवृत्तित्वविशिष्टयद्रूपावच्छिन्नप्रकारतानिरूपितयद्रूपावच्छिन्नविषयतानिरूपितविषयिताव्यापिका या प्रकृतानुमितिप्रतिबन्धकता तद्रूपावच्छिन्नविशिष्टतद्रूपस्यैव दोषलक्षणत्वस्वीकारेण निरुक्तज्ञानयोर्वह्न्यभावत्वावच्छिन्न-

## दिनकरीयम्.

प्रकृतानुमितिप्रतिबन्धकतावच्छेदकान्तराघटितत्वेनानुमितिविरोधितावच्छेदकं विशेषणीयं प्रमेयत्वविशिष्टव्यभिचारश्च प्रकृतानुमितिप्रतिबन्धकतावच्छेदकीभूतो यो व्यभिचारस्तद्घटित एवेति न तत्रातिप्रसङ्ग इति दिक् । नन्वत्रानुमितितत्करणज्ञानान्यतरप्रतिबन्धकत्वमन्यतरनिष्ठप्रतिबध्यतानिरूपकत्वघटितं यदि तदा पर्वतो वह्निमान् धूमादित्यादौ वह्न्यभावविशिष्टह्रदस्यापि दोषताप्रसङ्गः तस्य पर्वतो वह्निमान् ह्रदो वह्निमानिति समूहालम्बनात्मकप्रकृतानुमितिनिष्ठप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकत्वात् । यदि च तादृशान्यत-

## रामरुद्रीयम्.

तन्न मनोरमम् विशिष्टान्तराघटितत्वाघटितहेत्वाभासविभाजकरूपेणैव साजात्यं विवक्षणीयम् । अन्यथा व्यभिचारविशिष्टमेयत्वादौ हेत्वाभासविभाजकरूपस्यैवाभावेन स्वपदेन तस्योपादातुमशक्यत्वेन विशिष्टान्तरघटितं यन्मेयत्वविशिष्टव्यभिचारादि तदन्यत्वस्य तत्र सत्त्वात्तत्रातिव्याप्त्यापत्तेः तथा च बाधोऽपि व्यभिचारसजातीय एव विशिष्टान्तराघटितत्वात्तद्घटितबाधत्वस्य व्यभिचारेऽपि सत्त्वादिति ध्येयम् । यदि च स्वपदमनुयोगिपरमेव स्वसजातीयं यद्विशिष्टान्तरं तदविषयकप्रतीतिविषयत्वमेव लक्षणम् । विशेष्यदलं नैवोपादेयमुदासीनघटादेः स्वसजातीयाप्रसिद्ध्यैव तत्रातिव्याप्तिविरहात् साजात्यमपि सम्पूर्णहेत्वाभासविभाजकरूपेणैव विवक्षणीयं मेयत्वविशिष्टव्यभिचारादौ शुद्धव्यभिचारत्वस्यापि सत्त्वेन व्यभिचारस्य तत्सजातीयत्वसम्भवात् । इत्थं च व्यभिचारविशिष्टमेयत्वस्य स्वसजातीयाप्रसिद्धेरेव नातिव्याप्तिरित्युच्यते तदा मूलविरोधातिरिक्तो नैतन्मते दोष इति ध्येयम् । अत्र च प्रमेयत्वविशिष्टव्यभिचारो दोष इति व्यवहाराभावात्तद्वारणायासौ बोध्यः । यद्यपि विशिष्टान्तराघटितत्वनिवेशेऽपि तादृशव्यवहारो दुर्निवारः तथाविधस्य शुद्धव्यभिचारत्वस्यापि तत्र सत्त्वेन तेन रूपेण तस्य दोषत्वे इष्टापत्तिसम्भवात् तथापि विशिष्टान्तराघटितत्वस्य लक्षणे प्रवेशे तेन रूपेणोद्देश्यतावच्छेदकधर्मबोधकत्वनियमोपगमात् दोषपदस्य मेयत्वविशिष्टव्यभिचारत्वस्य तथा-

**आद्यः साधारणस्तु स्यादसाधारणकोऽपरः ।**
**तथैवानुपसंहारी त्रिधानैकान्तिको भवेत् ॥ ७२ ॥**

**सत्वम् । पञ्चत्वकथनं तत्सम्भवस्थलाभिप्रायेण । एवंच साधारणाद्यन्यतमत्वमनैकान्तिक-**

**प्रभा.**

प्रकारतानिरूपितह्रदत्वावच्छिन्नविषयिताशालित्वाभावेन वह्न्यभावप्रकारकह्रदत्वावच्छिन्नविशेष्यकनिश्चये एतादृशविषयितासत्त्वेन तत्र तत्प्रतिबन्धकताया अप्यक्षततया व्यापकत्वसत्त्वेन वह्न्यभावत्वावच्छिन्नविशिष्टह्रदत्ववत्त्वस्य वह्न्यभाववद्ध्रदे सत्त्वादुक्ताव्याप्तेरनवकाशात् । सद्धेतुस्थले पर्वतविशेष्यकवह्न्यभावप्रकारकनिश्चयस्य पर्वतो वह्निमानित्यनुमितिनिरूपितप्रतिबन्धकतासत्त्वेऽपि तत्र वह्न्यभावत्वावच्छिन्नप्रकारतानिरूपितपर्वतत्वावच्छिन्नविषयतायास्सत्त्वेऽपि च वह्न्यभावत्वावच्छिन्नविशिष्टपर्वतत्ववत्त्वाप्रसिद्ध्या न कस्यचिद्दोषत्वापत्तिरिति भाव इति दिक् । ननु निर्वह्निर्वह्निमान् धूमादित्यादौ वह्निविशिष्टरूपाश्रयासिद्धावव्याप्तिः वह्न्यभावरूपपक्षतावच्छेदकावच्छिन्नविशेष्यकवह्निप्रकारकज्ञानस्य स्वविरोधिधर्मधर्मितावच्छेदककस्वप्रकारकज्ञानत्वस्वरूपाहार्यत्वेनानुमितिरूपत्वाभावात् प्रकृतानुमितेरप्रसिद्धेरित्याशङ्कायां सार्वभौममतानुसारेण गदाधरभट्टाचार्यकृतपरिष्काररीत्या वारणसंभवेऽपि तादृशपरिष्कारस्य दुर्ग्रहतया बालानां बोधो न संभवतीति मणिकारोक्तसामान्यलक्षणं परित्यज्य दीधितिकाराभिमतमनुमित्यघटितं सामान्यलक्षणमेवाह ॥ **यादृशेति** ॥ **संभवस्थलेति** ॥ वायू रूपवान् स्पर्शवदन्यत्वादित्यादौ सर्वे दोषास्संभवन्तीति तथोक्तमिति भावः ।

**दिनकरीयम्.**

रत्वावच्छिन्नप्रतिबध्यतानिरूपकत्वघटितं तदा तादृशान्यतरत्वस्य कस्यचित्प्रतिबध्यतानवच्छेदकतयासम्भवः तादृशान्यतरत्वव्यापकप्रतिबध्यतानिवेशे च व्यभिचारादौ बाधादौ चाव्याप्तिः व्यभिचारादेरनुमित्यविरोधितया बाधादेश्च व्याप्तिज्ञानाविरोधितया तत्प्रतिबध्यतायास्तथाविधान्यतरत्वाव्यापकत्वात् किं च तद्धर्मावच्छिन्नपक्षकतद्धर्मावच्छिन्नसाध्यकतद्धर्मावच्छिन्नहेतुकानुमितितत्करणज्ञानान्यतराविरोधित्वं लक्षणे निवेशनीयं अन्यथा पर्वतो वह्निमान् धूमादित्यादौ पर्वतादेः काञ्चनमयत्वाभावो हेत्वाभासः स्यात् । एवं च निर्वह्निः पर्वतो वह्निमान् धूमादित्यादौ न कोऽपि हेत्वाभासः स्यात् तादृशानुमितेरप्रसिद्धेरत आह ॥ **यादृशसाध्येति** ॥ **सम्भवेति** ॥ वायुर्गन्धवान् स्नेहादित्यादौ सर्वहेत्वाभाससम्भव इति भा-

**रामरुद्रीयम्.**

त्वान्न तादृशव्यवहारापत्तिरित्यवधेयम् । ननु तादृशान्यतरत्वव्याप्ययत्किञ्चिद्धर्मावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकता यद्रूपावच्छिन्नविषयिताव्यापिका तद्रूपावच्छिन्नो दोष इत्युक्तौ न दोषः वस्तुतोऽत्रानुमितिपदं पक्षे साध्यतद्व्याप्यहेतूभयविधेयकसमूहालम्बनानुमितिपरमतो न कोऽपि दोषः । तादृशानुमितित्वव्यापकप्रतिबध्यतानिवेशेन समूहालम्बनानुमितिमादाय दोषवारणासम्भवात् । व्याप्तिश्चान्वयतो व्यतिरेकतश्च निवेश्या तेन साधारण्यानुपसंहारित्वयोर्नैकतरासङ्ग्रहादित्यत आह ॥ **किंचेति** ॥ **मूले यादृशसाध्येति** ॥ तद्धर्मावच्छिन्नसाध्यपक्षहेतुकानुमितित्वेन किमुद्दिश्य न्यायप्रयोगे यद्यद्धर्मावच्छिन्ने दोषव्यवहारस्सम्प्रदायसिद्धस्तावदन्यान्यत्वं तत्रत्यदोषसामान्यलक्षणमित्यर्थः। तेन निर्वह्निः पर्वतो वह्निमानित्यनुमितेरप्रसिद्धावपि न क्षतिः एवं च निर्वह्निपर्वते वह्निसाधने बाधो दोष इत्यादिव्यवहारेऽपि निर्वह्निपर्वतोद्देश्यकत्ववह्निविधेयकत्वप्रकारकानुमितिविषयकेच्छया न्यायप्रयोगे तादृशान्यतमो बाध इत्येवार्थः । यद्यपि प्रमेयं गगनवदित्यादौ गगनाभाववत्प्रमेयभिन्नाप्रसिद्ध्या लक्षणमव्याप्तं धर्माणामन्यतमत्वेन निवेशेऽपि प्रमेयपक्षतावच्छेदकस्थले अप्रसिद्धितादवस्थ्यम् वह्न्यभावभिन्नत्वे सति ह्रदत्वभिन्नो यस्तदन्यत्वस्य केवलह्रदत्वसाधारण्येन ह्रदो दोष इति व्यवहारापत्तिश्च तथापि यद्यद्धर्मावच्छिन्ने दोषव्यवहारस्तत्तदवच्छिन्नविषयितान्यतमविषयितानिरूपकतावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्नो दोष इति विवक्षया न दोषः एकविधदोषस्थलेऽपि विशेषणविशेष्यभावतद्व्याप्यभेदेनान्यतमाप्रसिद्धिरपनेया । एतल्लक्षणे प्रमेयत्वाविशिष्टान्य-

त्वम् । साधारणः साध्यवदन्यवृत्तिः तेन च व्याप्तिज्ञानप्रतिबन्धः क्रियते । असाधारणः साध्यासमानाधिकरणो हेतुः तेन साध्यसामानाधिकरण्यग्रहः प्रतिबध्यते । अन्ये तु सपक्षावृत्तिरसाधारणः सपक्षश्च निश्चितसाध्यवान् इत्थं च शब्दोऽनित्यः शब्दत्वादित्यादौ

## प्रभा.

इदानीमाद्यः साधारणस्तु स्यादित्यादिविभागवाक्याल्लब्धं तावदन्यतमत्वमेवानैकान्तिकसामान्यलक्षणमिति स्फुटीकरणाय एवं साधारणेत्याद्युक्तमिति ध्येयम् । मूलोक्तसाधारणादिलक्षणानां प्रचीनानुमतत्वेन तेषां मध्ये केषांचिल्लक्षणानां नवीनमतरीत्या दुष्टत्वेन तन्मते साधारणादीनां स्वयं लक्षणमाह ॥ **साध्यवदन्यवृत्तिरिति** ॥ एतस्य साधारणत्वं साध्यवदन्यावृत्तित्वस्य व्याप्तित्वाभिप्रायेणोक्तम् । एतज्ज्ञानं प्रत्येव तादृशसाधारणज्ञानस्य प्रतिबन्धकत्वात् । वस्तुतः साधनसमानाधिकरणान्योन्याभावप्रतियोगितावच्छेदकत्वविशिष्टसाध्यं तादृशात्यन्ताभावप्रतियोगितावच्छेदकत्वविशिष्टसाध्यतावच्छेदकं वा साधारणपदार्थो ज्ञेयः । तज्ज्ञानस्य सिद्धान्तव्याप्तिघटकाव्यभिचारांशग्रहप्रतिबन्धकत्वात् ॥ **साध्यसामानाधिकरण्यग्रह इति** ॥ व्याप्तिघटकीभूतसाध्यसामानाधिकरण्यांशग्रह इत्यर्थः । असाधारणस्यानित्यदोषत्ववादिनां मतमाह ॥ **अन्ये त्विति** ॥ ननु सपक्षः पक्षभिन्नसाध्यवानेव तथाच पक्षभिन्नावृत्तिरसाधारण इत्यर्थः फलितः एवंच पक्षे साध्यनिश्चयदशायामपि भेदस्य व्याप्यवृत्तित्वेन पक्षभिन्नत्वाभावात् कथमसाधारणस्यानित्यदोषत्वमत आह ॥ **सपक्षश्चेति** ॥ अत्रैतन्मते हेतोस्सपक्षावृत्तित्वज्ञानस्य व्याप्तिज्ञानप्रतिबन्धकत्वाभावात्पक्षधर्मताज्ञानप्रतिबन्धकत्वाभावादनुमितिप्रतिबन्धकत्वाभावाच्च हेतुनिष्ठसपक्षावृत्तित्वस्य न हेत्वाभासत्वं परन्तु हेतोस्सपक्षावृत्तित्वज्ञाने सपक्षवृत्तित्वघटितपञ्चरूपोपपन्नत्वेन लिङ्गस्य पञ्चावयववाक्यात् बोधासंभवेन मानसपरामर्शासंभवात् परस्यानुमितिर्न संभवतीति सपक्षवृत्तित्वज्ञानाविघटकतया उपाधिवद्दूषकत्वमित्याहुरित्यनेनास्वरसस्सूचितः । केचित्तु एतन्मते साधारणादित्रयाणां एकहेत्वाभासत्वानुपपत्तिरस्वरसबीजमित्याहुः तदसत् एतन्मते निरुक्तासाधारणस्य हेत्वा-

## दिनकरीयम्.

वः । हेत्वाभासलक्षणमुक्त्वा मूले वक्ष्यमाणेष्वनैकान्तिकादिलक्षणेषु कश्चिद्दोषं हृदि निधाय स्वयमनैकान्तिकादीनां लक्षणान्याह ॥ **एवमिति** ॥ साधारणादीत्यादिना असाधारणानुपसंहारिणोः परिग्रहः । नन्वेतस्यानुमितितत्करणज्ञानान्यतरविरोधिज्ञानविषयत्वाभावात् कथं हेत्वाभासत्वमित्यतो दूषकताबीजमाह ॥ **तेन चेति** ॥ एवमग्रेऽपि ॥ **क्रियत इति** ॥ व्याप्तिघटकाव्यभिचारांशे व्यभिचारज्ञानस्य प्रतिबन्धकत्वादिति भावः ॥ **प्रतिबध्यत इति** ॥ व्याप्तिघटकीभूतसामानाधिकरण्यग्रहः प्रतिबध्यत इत्यर्थः । एवं च साधारणासाधारणानुपसंहारिणां व्याप्तिज्ञानप्रतिबन्धकतारूपदूषकताबीजैक्येनैकहेत्वाभासत्वमुपपद्यते साधारणेनाव्यभिचारग्रहस्यासाधारणेन सामानाधिकरण्यग्रहस्यानुपसंहारिणा च व्यतिरेकव्याप्तिग्रहस्य प्रतिबन्धादिति भावः । प्राचीनमतमाह ॥ **अन्ये त्विति** ॥ पक्षे साध्यसन्देहदशायामेवासाधारणस्य हेत्वाभासता न तु निश्चयदशायां तदा पक्षस्यैव सपक्षत्वेन निश्चितसाध्यवद्व्यावृत्तत्वाभावादित्यनित्यदोषत्वं तस्येत्याह ॥ **इत्थं चेति** ॥ असाधारण्यघटकसपक्षत्वस्य निश्चयघटितत्वेत्यर्थः ॥ ॥ **तत्र निश्चितसा-**

## रामरुद्रीयम्.

भिचारादौ दोषव्यवहारविरहाद्विशिष्टान्तराघटितत्वं नोपादेयमेव । नन्वेतादृशसामान्यलक्षणस्य क्वचिद्दोषद्वयसाधारण्येन क्वचिद्दोषत्रयसाधारण्येन च हेत्वाभासानां पञ्चधा विभागोऽसङ्गत इत्यत आह ॥ **वायुरित्यादि** ॥ तथा च तत्तत्स्थलीयदोषसामान्यलक्षणमभिप्रेत्यैव पञ्चधा विभागकरणमिति भावः ॥ **क्वचिदिति** ॥ यत्सपक्षे विपक्षे चेत्यत्र सपक्षवृत्तित्वनिवेशनमनर्थकं विरुद्धस्यानैकान्तिकत्वे इष्टापत्तेः धर्मिण एकत्वेऽपि विशेषणभेदेन विशिष्टस्य प्रतिबन्धकज्ञाने विषयितया साङ्कर्यविरहेण विभागोपपत्तिरिति भावः ॥ **व्याप्तिघटकाव्यभिचारांश इति** ॥ इदञ्च साध्यवदन्यावृत्तित्वे सति साध्यसामानाधिकरण्यं व्याप्तिरित्यभिप्रायेण व्यापकसामानाधिकरण्यस्य व्याप्तित्वे तु स्वसमानाधिकरणाभावप्रतियोगितावच्छेदक एव सा-

यदा पक्षे साध्यानिश्चयस्तदा नासाधारण्यं तत्र हेतोर्निश्चयादिति वदन्ति । अनुपसंहारी च अत्यन्ताभावाप्रतियोगिसाध्यकादिः अनेन च व्यतिरेकव्याप्तिज्ञानप्रतिबन्धः क्रियते। विरुद्धस्तु साध्यव्यापकीभूताभावप्रतियोगी अयं च साध्याभावग्रहसामग्रीत्वेन प्रतिबन्धकः। सत्प्रतिपक्षे तु प्रतिहेतुः साध्याभावसाधकः अत्र हेतुरेक एवेति विशेषः साध्याभावसा-

**प्रभा.**

भासत्वे प्रमाणसत्त्व एव एकहेत्वाभासत्वानुपपत्तेर्दोषत्वं तत्रैव प्रमाणाभावात् तस्य प्रागुपपादितत्वात् । साध्यकादिरित्यादिपदात् अत्यन्ताभावाप्रतियोगिसाधनपरिग्रहः । तत्र सर्वपक्षकस्थले पक्षैकदेशदृष्टान्तेन घटपक्षकस्थले पटादिदृष्टान्तेनान्वयव्याप्तिग्रहसंभवादाह ॥ अनेन चेति ॥ केचित्तु साधारणेनाव्यभिचारांशग्रहस्यासाधारणेन सामानाधिकरण्यांशग्रहस्यानुपसंहारिणा च व्यतिरेकव्याप्तिज्ञानस्य प्रतिबन्धात् व्याप्तिज्ञानप्रतिबन्धकत्वरूपदूषकताबीजैक्येन त्रयाणामेकहेत्वाभासत्वमुपपद्यत इत्याहुः तदसत् दूषकताबीजैक्यमात्रेण एकहेत्वाभासत्वे बाधसत्प्रतिपक्षविरुद्धानामपि दूषकताबीजैक्येन एकहेत्वाभासत्वापत्तेः साध्याप्रसिद्ध्यादेरपि व्याप्तिज्ञानप्रतिबन्धकत्वरूपदूषकताबीजैक्येनानैकान्तिकत्वापत्तेश्च तस्माद्दूषकताबीजैक्यं नैकहेत्वाभासत्वनियामकं परन्तु स्वतन्त्रेच्छेन महर्षिणा गौतमादिना बाधादीनां दूषकताबीजैक्येऽपि पृथग्घेत्वाभासत्वमङ्गीकृतम् । एवं साध्याप्रसिद्ध्यादेरप्यनैकान्तिकानन्तर्गतत्वमङ्गीकृतं साधारणादित्रयाणां च एकहेत्वाभासत्वमेवाङ्गीकृतमिति तदनुरोध एव एकहेत्वाभासत्वे हेत्वाभासान्तरत्वे वा बीजमिति युक्तम् ॥ **साध्यव्यापकीभूतेति** ॥ साध्याभावनिरूपितव्यतिरेकव्याप्तिविशिष्टहेतुरित्यर्थः । तथाच साध्याभावव्याप्तिविशिष्टहेतुमत्पक्षस्यैव सत्प्रतिपक्षतया तयोर्भेद इति भावः । नन्वेतस्य विरुद्धत्वे तस्य साध्याभाववत्पक्षरूपत्वाभावात् साध्याभावव्याप्यहेतुविशिष्टपक्षरूपत्वाभावाच्च तज्ज्ञानस्य प्रतिबन्धकत्वासंभवेन कथं दोषत्वमत आह ॥ **अयं चेति** ॥ तथाच निरुक्तविरुद्धविषयकज्ञानस्य साध्याभावनिरूपितव्याप्तिप्रकारकहेतुविशेष्यकज्ञानरूपतया तत्प्रकारकानुमितिकरणत्वेन तादृशव्याप्तिज्ञानघटितसमुदायस्य तत्सामग्रीत्वेन प्रतिबन्धकत्वं उपपद्यत इति भावः । नन्वेवं साध्याभावव्याप्तिविशिष्टहेतुरेव सत्प्रतिपक्षोऽस्तु लाघवात् नतु तादृशहेतुविशिष्टपक्षः गौरवात् उक्तरीत्या तज्ज्ञानस्य परम्परानुमितिप्रतिबन्धकत्वसंभवात् एवं च सति कथमनयोर्भेद इति यदि ब्रूयात्तदाप्याह ॥ **सत्प्रतिपक्षे त्विति** ॥ ननु विरुद्धज्ञानस्य साध्याभावग्रहसामग्रीत्वेन प्रतिबन्धकत्वेऽपि विरुद्धत्वावच्छिन्नविषयताशालिनिश्चयत्वेनाप्रतिबन्धकत्वात् तस्य हेत्वाभासत्वानुपपत्तिः तदवस्थैव । नच साध्याभावनिरूपितव्याप्तिविशिष्टहेतुविशिष्टपक्ष एव विरुद्धः तज्ज्ञानस्य तादृशनिश्चयत्वेन प्रतिबन्धकत्वासंभवात् न तस्य हेत्वाभासत्वानुपपत्तिरिति वाच्यम् तथा सति सत्प्रतिपक्षविरुद्धयोः एकहेत्वाभासरूपत्वेन भिन्नहेत्वाभासत्वानुपपत्तिरित्याशङ्क्य भेदकान्तरं प्रदर्श्य परिहरति ॥ **प्रतिहेतुरिति** ॥ स्वसाध्यविरुद्धसाध्या

**दिनकरीयम्.**

ध्यवति पक्षे । साधारणादित्रयाणामेकहेत्वाभासत्वानुपपत्तिरस्वरसो वदन्तीत्यनेन सूचितः ॥ **व्यतिरेकव्याप्तिग्रहप्रतिबन्ध इति** ॥ केवलान्वयिसाध्यके चान्वयव्याप्तिज्ञानादेवानुमितिरिति भावः । नन्वेवं साध्याभावसाधकात् सत्प्रतिपक्षाद्विरुद्धस्य भेदो न स्यादत आह ॥ **सत्प्रतिपक्षे त्विति** ॥ **प्रतिहेतुः** प्र-

**रामरुद्रीयम्.**

धारणे बोध्यः तदभावज्ञानस्यैव तज्ज्ञानप्रतिबन्धकत्वादिति ध्येयम् ॥ **एकहेत्वाभासत्वानुपपत्तिरिति** ॥ निश्चितसाध्यवदवृत्तित्वज्ञानस्य नीलघटाभावज्ञानस्य घटवत्ताज्ञान इव साध्यसामानाधिकरण्यज्ञाने प्रतिबन्धकताविरहेण दूषकताबीजाभावेनासाधारणस्य हेत्वाभासत्वानुपपत्तिरिति भावः । ननु केवलान्वयिसाध्यकहेतोर्दुष्टत्वे तत्साध्यकानुमित्युपपत्तये व्यापकसामानाधिकरण्यमेव व्याप्तिरिति नैयायिकसिद्धान्तो विरुध्यत इत्याशङ्क्याह ॥ **व्यतिरेकेति** ॥ प्रतिबन्धकपदं प्रतिबन्धकग्रहविषयार्थकं तस्य च केवलान्वयिसाध्यशब्दार्थेऽत्यन्ताभावाप्रतियोगिसाध्येऽन्वयः ॥ **भेदो न स्यादिति** ॥ यद्यपि साध्याभावव्याप्यवान्पक्षः सत्प्रति-

धक एव हेतुः साध्यसाधकत्वेनोपन्यस्त इत्यशक्तिविशेषोपस्थापकत्वाच्च विशेषः । सत्प्रतिपक्षः साध्याभावव्याप्यवान् पक्षः । अगृहीताप्रामाण्यकसाध्यव्याप्यवत्त्वोपस्थितिका-

## प्रभा.

भावव्याप्यः स्वभिन्नहेतुरित्यर्थः ॥ अत्र **विरुद्धहेतुरेक एवेति** ॥ स्वसाध्यविरुद्धसाध्याभावव्याप्यः स्वमेवेति भेदः । ननु अनुमितिप्रतिबन्धरूपफलैक्येऽपि साध्याभावव्याप्तिविशिष्टहेतुविशिष्टपक्षरूपसत्प्रतिपक्षविरुद्धस्वरूपस्यैक्येऽपि हेतुभेदाभेदाभ्यां एकस्यैव सत्प्रतिपक्षत्वाविरुद्धत्वे स्वीक्रियेते यदि तदा साध्यभेदादन्वयव्याप्त्यादिभेदाच्च एकजातीयस्यैव नानासत्प्रतिपक्षत्वापत्तिरत आह ॥ **साध्याभावेत्यादि** ॥ **अशक्तिविशेषोपस्थापकत्वादिति** ॥ साध्याभावव्याप्यस्यैव तव साध्यव्याप्यत्वभ्रम इति स्थापनावादिनं प्रति भ्रमरूपाशक्तिविशेषसूचकत्वादित्यर्थः । तथाच विरुद्धस्थले पुरुषनिष्ठाशक्तिविशेषदोषज्ञापकत्वं सत्प्रतिपक्षे न तथेति दोषविशेषज्ञापकत्वाज्ञापकत्वरूपफलभेदात्तयोर्भेद इति भावः । ननु सत्प्रतिपक्षे साध्यव्याप्यसाध्याभावव्याप्ययोरेकस्मिन् पक्षेऽवर्तमानतया एकपक्षवृत्तिहेत्वोरन्यतरस्य व्याप्यत्वभ्रमाङ्गीकार आवश्यक इति भ्रमरूपाशक्तिसूचकत्वमावश्यकमेवासद्धेतुमात्रे पक्षे साध्यस्य हेतौ साध्यव्याप्यत्वस्य पक्षे हेतुमत्त्वस्येत्यादेः भ्रमसंभवेन तादृशाशक्तिसूचकत्वमसद्धेतुमात्रस्य निराबाधमिति न तद्भेदकमिति अस्वरसादाह ॥ **चेति** ॥ चशब्दस्यानुक्तसमुच्चायकतया साध्यतदभावोभयानुमितिप्रतिबन्धरूपफलकत्वाभावादित्यर्थो लब्धः । तथाच सत्प्रतिपक्षस्य साध्यतदभावोभयानुमितिप्रतिबन्धफलकत्वात् विरुद्धस्यैकानुमितिप्रतिबन्धफलकत्वादिति फलभेदादुभयोः भेद इति भावः । अत एव विश्वनाथपञ्चाननः परस्पराभावव्याप्यवत्ताज्ञानात् परस्परानुमितिप्रतिबन्धः फलमिति वक्ष्यति । प्राचीनमतं व्यावहारिकं सत्प्रतिपक्षलक्षणमाह ॥ **अगृहीतेति** ॥ साध्यव्याप्यवत्तापरामर्शशून्यकालेऽपरपरामर्शसत्त्वेऽपि सत्प्रतिपक्षव्यवहाराभावात् कालीनान्तमुपस्थितिविशेषणम् । पुरुषान्तरीयतादृशपरामर्शकाले पुरुषान्तरस्यापरपरामर्शसत्त्वेऽपि तथा व्यवहाराभावात् उपस्थितौ एकात्मवृत्तित्वमपि निवेशनीयम् । तथाच एककालावच्छिन्नैकात्मवृत्तित्वसंबन्धेन तादृशोपस्थितिविशिष्टविषय इति पर्यवसितोऽर्थः । परामर्शद्वयसत्त्वेऽप्यन्यतरस्मिन्नप्रामाण्यग्रहकाले सत्प्रतिपक्षव्यवहाराभावात् उभयत्राप्रामाण्यज्ञानानास्कन्दितत्वविशेषणम् । साध्यव्याप्यवत्तापरामर्शकालीनेत्यत्र साध्यनिरूपितव्याप्तिप्रकारतानिरूपितहेतुतावच्छेदकावच्छिन्नप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यताशालिनिश्चयकालीनेत्यर्थ आवश्यकः अन्यथा नित्यत्वव्याप्यश्रावण-

## दिनकरीयम्.

तिकूलो द्वितीयो हेतुः । ननु यदि दूषकताबीजैक्येऽपि हेतुभेदे सत्प्रतिपक्षो हेत्वैक्ये विरुद्धरूपं हेत्वाभासान्तरमित्युच्यते तदा यत्रान्वयिना हेत्वन्तरेण प्रतिरोधस्तत्र सत्प्रतिपक्षो यत्र तु व्यतिरेकिणा तत्र हेत्वाभासान्तरं स्यादतो भेदकान्तरमप्याह ॥ **साध्याभावेति** ॥ वस्तुगत्या साध्याभावसाधके हेतावेव तव साध्यसाधकत्वभ्रम इति स्थापनावादिनं प्रति भ्रमरूपाशक्तिसूचकत्वं विरुद्धस्य न त्वेवं सत्प्रतिपक्षस्येति भावः ॥ **साध्याभावव्याप्येति** ॥ एवं साध्यवदन्यत्वव्याप्यवान् पक्षः पक्षनिष्ठौ साध्याभावसाध्यवदन्यत्वव्याप्यावपि बोध्यौ अन्यतमत्वादिनाऽनुगमान्न विभागव्याघातः । सत्प्रतिपक्षव्यवहारौपयिकमन्येषां सत्प्रतिपक्षलक्षणमाह ॥ **अगृहीतेति** ॥ नित्यत्वव्याप्यशब्दत्ववत्ताज्ञानशून्यकालीनानित्यत्वव्याप्यकृतकत्वपराम-

## रामरुद्रीयम्.

पक्षः विरोधस्तु साध्यव्यापकाभावप्रतियोगी प्रकृतो हेतुरिति स्वरूपभेदो वर्तत एव तथापि यथा साधारणादीनां परस्परवैलक्षण्येऽपि दूषकताबीजस्यैक्येन एकहेत्वाभासत्वं तथा सत्प्रतिपक्षविरोधयोरपि विरोध्यनुमितिसामग्रीत्वेन प्रतिबन्धकतारूपदूषकताबीजैक्यादेकहेत्वाभासत्वं स्यादिति भावः ॥ **अन्वयिना** अन्वयव्याप्तिमता ॥ **व्यतिरेकिणा** व्यतिरेकव्याप्तिमता ॥ **अशक्तीति** ॥ तथाचाशक्तिसूचकत्वमेव दूषकताबीजं विरोधभिन्नमिति भावः ॥ **बोध्याविति** ॥ नन्वेवं चतुष्टयस्यानुगतरूपाभावात्कथमेकरूपेणैषां विभागः यदि च साध्याभावोत्थापकत्वेन विभागस्तदा विरुद्धोऽप्येतन्मध्य एवान्तर्भूत इत्यत आह ॥ **अन्यतमत्वेति** ॥ आदिनैतच्चतुष्टयविषयकधीविषयतावच्छेदकधर्मवत्त्वपरिग्रहः । सत्प्रतिपक्षव्यवहारोपयोगिनामित्य-

लीनागृहीताप्रामाण्यकतदभावव्याप्यवत्त्वोपस्थितिविषयस्तथेत्यन्ये । अत्र च परस्पराभावव्याप्यवत्ताज्ञानात् परस्परानुमितिप्रतिबन्धः फलम् । अत्र केचित् यथा घटाभावव्याप्यवत्ताज्ञानेऽपि घटचक्षुःसंयोगे सति घटवत्ताज्ञानं जायते यथा च शङ्खे सत्यपि पीतत्वाभावव्याप्यशङ्खत्ववत्ताज्ञाने सति पित्तादिदोषे पीतः शङ्ख इति धीरेवं कोटिद्वयव्याप्यदर्शनेऽपि कोटिद्वयस्य प्रत्यक्षरूपः संशयो भवति तथा सत्प्रतिपक्षस्थले संशयरूपानुमितिर्भवत्येव यत्र चैककोटिव्याप्यदर्शनं तत्राधिकबलतया द्वितीयकोटिभानप्रतिबन्धान्न

## प्रभा.

स्याप्रसिद्ध्या तद्घटितदोषाभावेन तद्व्यवहारानुपपत्तेः । द्वितीयपरामर्शस्तु विशिष्टविषयक एव ग्राह्यः अन्यथा सद्धेतुस्थले तादृशपरामर्शविषयपर्वतस्य प्रसिद्ध्या तथा व्यवहारापत्तेः । एतन्मते सत्प्रतिपक्षस्यानित्यदोषत्वेन सद्धेतौ तथात्वव्यवहारस्य इष्टत्वे तु द्वितीयपरामर्शोऽपि साध्याभावनिरूपितव्याप्तिप्रकारतानिरूपितहेतुप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यताशालिनिश्चयरूपो ज्ञेयः । अत्र व्यावहारिकसत्प्रतिपक्षलक्षणस्य हेत्वाभाससामान्यलक्षणानाक्रान्ततया अजिज्ञासितत्वेन तस्याभिधाने अर्थान्तरदोष इत्यस्वरसं हृदि निधायान्य इत्युक्तम् । सत्प्रतिपक्षस्य संशयाकारानुमितिफलकत्वं दूषकताबीजमिति वदतो रत्नकोशकारस्य मतमाह ॥ **अत्र केचिदिति** ॥ तत्तदभावव्याप्यवत्तानिश्चयस्य तत्तदभावभानप्रतिबन्धकस्य सत्त्वात् कथं संशयाकारानुमितिरित्याशङ्कां तदभावव्याप्यवत्तानिश्चयस्य प्रतिबन्धकत्वनिरासेन निरसितुं तस्य प्रतिबन्धकत्वे व्यभिचारमाह ॥ **यथेत्यादि** ॥ **इति धीरिति** ॥ तथाच स्थलद्वये व्यभिचारेण तादृशनिश्चयस्य प्रतिबन्धकत्वे मानाभाव इति भावः । ननु तथापि विशेषदर्शनस्थले संशयोऽप्रामाणिक इत्याशङ्कायां प्रत्यक्षस्थल एव तत्प्रसिद्धिमाह ॥ **एवं कोटिद्वयेति** ॥ ननु संशयं प्रति तादृशनिश्चयस्याप्रतिबन्धकत्वे एककोटिव्याप्यवत्तानिश्चयस्थलेऽपि कोटिद्वयोपस्थितिमहिम्ना संशयापत्तिरत आह ॥ **यत्र चेति** ॥ **अधिकबलतयेति** । एककोट्युपस्थितेः तद्व्याप्यदर्शनरूपकारणान्तरविशिष्टतयेत्यर्थः । न-

## दिनकरीयम्.

र्शसत्त्वेऽपि सत्प्रतिपक्षव्यवहाराभावात् कालीनान्तमुपस्थितिविशेषणम् । गृहीताप्रामाण्यकानित्यत्वव्याप्यवत्ताज्ञानकालीनानित्यत्वव्याप्यकृतकत्वपरामर्शसत्त्वेऽपि तद्व्यवहाराभावादगृहीताप्रामाण्यकेति प्रथमोपस्थितिविशेषणम् । तादृशकालीनानित्यत्वव्याप्यवत्तापरामर्शसत्त्वेऽपि तत्राप्रामाण्यग्रहकाले तथा व्यवहाराभावादगृहीताप्रामाण्यकत्वं द्वितीयोपस्थितिविशेषणम् । व्यवहारमात्रोपयोगिनो निरुक्तरूपस्य प्रकृतानुपयोगः उपस्थितिघटितस्योक्तरूपस्य स्वरूपसत एवोपयुक्तस्याभासतायामप्रयोजकत्वादित्यस्वरसं सूचयति ॥ **अन्य इति** ॥ सत्प्रतिपक्षस्य दूषकताबीजं दर्शयति ॥ **अत्रेत्यादिना** ॥ सत्प्रतिपक्षस्य संशयजनकत्वं दूषकताबीजं न त्वनुमितिप्रतिबन्धकत्वं तदभावव्याप्यवत्ताज्ञानस्यानुमितिप्रतिबन्धकत्वे मानाभावादिति रत्नकोशकारमतं दूषयितुमुपन्यस्यति ॥ **अत्र केचिदित्यादिना** ॥ **अनुमितिर्भवत्येवेति** ॥ अनुमितिं प्रति तदभा-

## रामरुद्रीयम्.

नेनैतादृशस्थले प्राचां सत्प्रतिपक्षव्यवहारमात्रं नत्वयं हेतुदोषात्मकस्सत्प्रतिपक्ष इति सूचितम् । प्रथमोपस्थितेत्युपलक्षणं समबलविरोधिपरामर्शद्वयसत्त्व एव तथा व्यवहारादित्यवधेयम् ॥ **प्रकृतानुपयोगः** हेत्वाभासनिरूपणप्रस्तावे उपयोगाभावः । नन्वयमेव सत्प्रतिपक्षाभिधो हेत्वाभास इति कुतो नोपयोग इत्यत आह ॥ **उपस्थितीति** ॥ विरोधिपरामर्शद्वयस्य स्वरूपसत एव परामर्शकार्यप्रतिबन्धकत्वं ननु ज्ञातस्य यादृशरूपावच्छिन्नज्ञानमनुमितिप्रतिबन्धकं तद्रूपावच्छिन्नस्यैव हेत्वाभासतया नैतस्य हेत्वाभासतासम्भव इति भावः ॥ **सूचयतीति** ॥ ननु रत्नकोशकारमते तद्वत्ताज्ञाने तदभावव्याप्यवत्ताज्ञानस्याप्रतिबन्धकत्वेन परस्परानुमितिप्रतिबन्धस्य सत्प्रतिपक्षस्थलेऽसम्भवेऽपि निश्चयोत्पादने क्लृप्तशक्तिकयोस्तत्तदभावव्याप्य-

**संशयः फलबलेन चाधिकबलसमबलभावः कल्प्यत इत्याहुस्तन्न । तदभावव्याप्यवत्ताज्ञाने सति तदुपनीतभानविशेषशाब्दबोधादेरनुदयाल्लौकिकसन्निकर्षाजन्यदोषविशेषाजन्यज्ञानमात्रे तस्य प्रतिबन्धकता लाघवान्न तूपनीतभानविशेषे शाब्दबोधे च पृथक् प्रतिबन्धकता गौरवात् । तथा च प्रतिबन्धकसत्त्वात् कथमनुमितिः नहि लौकिकसन्निकर्षस्थले**

प्रभा.

नुभयभासकसामग्र्याः संशयोत्पादकत्वे पित्तादिदोषकालीनकोटिद्वयोपस्थितिवशात् पीतो न वेति संशयाप त्तिरत आह ॥ **फलबलेनेति** ॥ तथाच तत्र पीतत्वप्रकारकनिश्चयस्यैवोत्पत्त्या पित्तादिदोषस्यापि प्रतिबन्धकत्वं कल्प्यते दूरत्वादिदोषे सत्यपि कोटिद्वयव्याप्यवत्ताज्ञानस्थले संशयस्यैवोत्पत्त्या तत्र समबलत्वमेव स्वीक्रियत इति भावः ॥ **लौकिकसन्निकर्षाजन्येत्यादि** ॥ नन्वत्र लौकिकसन्निकर्षाजन्यत्वं न लौकिकसन्निकर्षजन्यत्वाभाववत्त्वं लौकिकसन्निकर्षजन्येऽपि ज्ञानान्तरनिष्ठस्य लौकिकसन्निकर्षजन्यत्वस्याभावसत्त्वात् । नापि तादृशजन्यत्वसामान्याभाववत्त्वं सकलसन्निकर्षसाधारणसन्निकर्षत्वस्य तेन रूपेण कारणत्वस्य चाभावेन तादृशसामान्याभावाप्रसिद्धेः । नच लौकिकसन्निकर्षजन्यव्यक्तयो यावत्यः तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदकूटवत्त्वमेव तदर्थ इति वाच्यम् तथा सति गौरवापत्तेः एककोटिव्याप्यदर्शनोत्तरं अयं पुरुषो न वेति संशयापत्तेश्च तस्य पुरोवृत्त्यंशे लौकिकसन्निकर्षजन्यत्वादिति चेन्न लौकिकविषयत्वान्यतन्निष्ठविषयताशालित्वस्य विवक्षितत्वात् । एवं दोषविशेषाजन्यत्वमपि पूर्वोक्तरीत्या दोषविशेषजन्यव्यक्तयो यावत्यस्तत्तद्भेदकूटरूपत्वे गौरवात् एवमनाहार्यत्वस्यापि तादृशभेदकूटरूपत्वे गौरवाच्चेति लौकिकविषयता दोषविशेषप्रयोज्यविषयताश्च साक्षात्कारत्वव्यञ्जकविषयतात्वेनानुगमय्य तादृशविषयतायां तादृशाभावनिष्ठावच्छेदकत्वानिरूपितत्वं निवेशनीयम् । तथाच साक्षात्कारत्वव्यञ्जकविषयत्वान्यतदभावनिष्ठावच्छेदत्वानिरूपिततन्निष्ठविषयताशालिबुद्धित्वावच्छिन्नं प्रति तदभावव्याप्यवत्तानिश्चयत्वेन प्रतिबन्धकत्वमिति फलितम् ॥ **नतूपनीतेति** ॥ दोषविशेषाप्रयोज्यालौकिकविषयताशालिबुद्धौ तन्निष्ठविषयताशालिशाब्दबोधादौ चेत्यर्थः ॥ **गौरवादिति** ॥ प्रतिबध्यप्रतिबन्धकभावबाहुल्यप्रयुक्तस्य प्रतिबन्धकाभावानां प्रतिबध्यतावच्छेदकभेदेन कारणत्वस्य भेदादित्यर्थः । ननु तदभावव्याप्यवत्तानिश्चयोत्तरं लौकिकसन्निकर्षजन्यविशिष्टबुद्धेरानुभाविकतया तदनुरोधेन प्रतिबध्यतावच्छेदककोटौ लौकिकसन्निकर्षाधिज-

दिनकरीयम्.

वव्याप्यवत्ताज्ञानस्य प्रतिबन्धकत्वे मानाभावात् क्लृप्ततत्तदभावानुमितिसामग्रीभ्यामेव तत्तदभावकोटिकसंशयानुमित्युत्पत्तौ संशयानुमितिं प्रत्युभयव्याप्यवत्तानिश्चयत्वेनातिरिक्तहेतुताकल्पनप्रयुक्तगौरवाभावाच्चेति भावः । ननु यद्युभयभासकसत्त्व उभयभानं तदा पित्तादिदोषसत्त्वेऽपि पीतत्वशुक्लत्वोभयस्मृतावुभयोर्भानापत्तिरित्यत आह ॥ **फलबलेनेति** ॥ तथा च तत्र पीतत्वसाक्षात्कारस्यैवानुभविकतया शुक्लत्वग्रहे पित्तरूपदोषस्य प्रतिबन्धकत्वं कल्पयित्वा पीतत्वसाक्षात्कारसामग्र्या अधिकबलवत्त्वमेवं दूरत्वदोषे सत्यपि स्थाणुत्वपुरुषत्वयोः स्मृतौ संशयस्यैवोदयात्तत्सामग्र्याः समबलवत्त्वमेव कल्प्यत इति भावः ॥ **ज्ञानमात्रे** तादृशज्ञानत्वावच्छिन्ने ॥ **विशेषे** दोषविशेषाजन्ये ॥ **गौरवात्** कार्यकारणभावद्वयकल्पने गौरवादिति भावः ॥ **कथमनुमितिरिति** ॥ अनुमितेरपि तत्प्रतिबध्यतावच्छेदकाक्रान्तत्वादिति भावः । कथं तर्ह्यु-

रामरुद्रीयम्.

वत्ताज्ञानयोर्मिलितयोस्साध्यसंशयहेतुत्वं कल्पनीयमिति गौरवमित्याशङ्कान्निराकर्तुमाह ॥ **क्लृप्तेति** ॥ अयं भावः तत्तत्परामर्शस्य तत्तद्विधेयकानुमितित्वमेव कार्यतावच्छेदकं न तु निश्चयत्वमपि तद्घटकम् । परन्तु एकैकपरामर्शसत्त्वे कोट्यन्तरभासकसामग्र्यभावात् निश्चयात्मिकाऽनुमितिर्भवति उभयपरामर्शसत्त्वे च कारणबलादुभयकोट्योर्विरोधितया भानेऽर्थात्संशयो भवतीति नाधिककार्यकारणभावकल्पनं तन्मत इति ॥ **उभयस्मृताविति** ॥ संशये कोटिद्वयस्योपनयसन्निकर्षेणैव भानात् पीतत्वशुक्लत्वरूपकोटिद्वयोपस्थितौ पि-

प्रत्यक्षमिव सत्प्रतिपक्षस्थले संशयाकारानुमितिः प्रामाणिकी येनानुमितिभिन्नत्वेनापि विशेषणीयम् । यत्र च कोटिद्वयव्याप्यवत्ताज्ञानं तत्रोभयत्राप्रामाण्यज्ञानात् संशयो नान्यथाऽगृहीताप्रामाण्यकस्यैव विरोधिज्ञानस्य प्रतिबन्धकत्वादिति । असिद्धिस्तु आश्रयासिद्ध्याद्यन्यतमः आश्रयासिद्धिः पक्षे पक्षतावच्छेदकस्याभावः यत्र काञ्चनमयः पर्वतो वह्निमानिति साध्यते तत्र पर्वतो न काञ्चनमय इति ज्ञाने विद्यमाने काञ्चनमये पर्वते परामर्शप्रतिबन्धः फलम् । स्वरूपासिद्धिस्तु पक्षे व्याप्यत्वाभिमतस्याभावः तत्र च ह्रदो द्रव्यं धूमादित्यादौ पक्षे व्याप्यत्वाभिमतस्य हेतोरभावे ज्ञाते पक्षे व्याप्यहेतुमत्ताज्ञानरूपस्य परामर्शस्य प्रतिबन्धः फलम् । साध्याप्रसिद्ध्यादयस्तु व्याप्यत्वासिद्धिमध्येऽन्तर्भूताः । साध्ये साध्यतावच्छेदकस्याभावः साध्याप्रसिद्धिः एतज्ज्ञाने जाते काञ्चनमयवह्निमानित्यादौ साध्यतावच्छेदकविशिष्टसाध्यपरामर्शप्रतिबन्धः फलम् । एवं हेतौ हेतुतावच्छेदकाभावः साधनाप्रसिद्धिः यथा काञ्चनमयधूमादित्यादौ अत्र हेतुतावच्छेदकवि-

## प्रभा.

न्यत्ववत्संशयाकारानुमितेरप्यानुभाविकतया तदनुरोधेनानुमितिभिन्नत्वमपि तत्कोटौ निवेश्यतामित्यत आह ॥ **नहीत्यादि ॥ प्रामाणिकीति** ॥ उभयमतसिद्धेत्यर्थः । नन्वेवं कोटिद्वयव्याप्यवत्तानिश्चयोत्तरं कोटिद्वयस्य प्रात्यक्षिकसंशयश्च कथमित्यत आह ॥ **यत्रेति ॥ प्रतिबन्धकत्वादिति** ॥ इदमुपलक्षणम् । कपिसंयोगतदभावरूपकोटिद्वयांशे लौकिकसन्निकर्षसत्त्वे तादृशसंशयस्य लौकिकसन्निकर्षाजन्यत्वघटितप्रतिबध्यतावच्छेदकानाक्रान्तत्वात् तज्ज्ञानेऽप्रामाण्यज्ञानं विनापि तादृशसंशयस्संभवतीत्यपि बोध्यम् ॥ **पक्षे व्याप्यत्वाभिमतस्येति** ॥ ननु हेत्वभावविशिष्टपक्षस्य साध्यव्याप्यहेत्वभावविशिष्टपक्षस्य वा स्वरूपासिद्धित्वमास्तां किमभिमतत्वघटिततन्निर्वचनेनेति चेन्न धूमाभाववान् ह्रद इति ज्ञानेऽपि धूमांशे अधिकावगाहिवह्निव्याप्यधूमवान्ह्रदइतिविशिष्टबुद्धेः नवीनैः स्वीकृतत्वेन केवलहेत्वभाववत्पक्षस्य स्वरूपासिद्धत्वासंभवात् वायुर्गन्धवान् स्नेहादित्यादौ असिद्धिरूपदोषस्यापि वक्तव्यतया गन्धव्याप्यस्नेहाभावविशिष्टवायुरूपस्वरूपासिद्धयप्रसिद्ध्या तस्यापि स्वरूपासिद्धिपदार्थत्वासंभवात् अभिमतहेत्वभाव इत्युक्तम् । तथाच प्रकृतसाध्यनिरूपितव्याप्तिप्रकारतानिरूपितहेतुतावच्छेदकावच्छिन्नप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यताशालिबुद्धित्वावच्छिन्नं प्रति स्वीयव्याप्तिप्रकारतानिरूपितविशेष्यतावच्छेदकावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नत्वस्वसमानाधिकरणज्ञानीयत्वोभयसंबन्धेन वर्तमानग्रहविशिष्टप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यताशालिनिश्चयत्वेन भ्रमप्रमासाधारण्येन प्रतिबन्धकत्वं फलितमिति तदनुरोधेन साध्यव्याप्यत्वप्रकारकवर्तमानग्रहविशेष्यताश्रयहेत्वभावविशिष्टपक्षस्यैव स्वरूपासिद्धित्वं वक्तव्यमित्याशयः । एतदेवोदाहरणद्वारा उपपादयति ॥ **तत्र चेत्यादिना** ॥ ज्ञानादेरित्यादिपदात् पक्षधर्मताज्ञानपरिग्रहः । हेतुतानवच्छेदकत्वमपीत्यपिना

## दिनकरीयम्.

भयव्याप्यवत्तानिश्चयात् प्रात्यक्षिकः संशय इत्याशङ्क्य न भवत्येव तान्यावत्तन्निश्चये प्रामाण्यं न गृह्यत इत्याह ॥ **यत्र चेति** ॥ आश्रयासिद्ध्यादीत्यादिना स्वरूपासिद्धिव्याप्यत्वासिद्ध्योः परिग्रहः । साध्याप्रसिद्ध्यादीनामाधिक्यं निराकरोति ॥ **साध्याप्रसिद्ध्यादयस्त्विति** ॥ आदिना साधनाप्रसिद्धिपरिग्रहः ।

## रामरुद्रीयम्.

सदोषादपि संशय एव स्यान्न पीतत्वनिश्चय इति भावः ॥ **आधिक्यमिति** ॥ मूले नीलधूमादिहेतुकस्थल एव व्याप्यत्वासिद्धेरभिधानादिति भावः । अत्र चाव्यभिचारविशिष्टसाध्यसामानाधिकरण्याभावतद्व्याप्यावपि व्याप्यत्वासिद्धी बोध्यावन्यतमत्वेनानुगमः दूषकताबीजं व्याप्तिज्ञानप्रतिबन्धकतावच्छेदकत्वम् । न चैवं दूषकताबीजस्यैक्येन व्यभिचारस्य हेत्वाभासान्तरत्वं न स्यादिति वाच्यम् । दूषकताबीजस्यैक्येऽपि बा-

शिष्टहेतुज्ञानाभावात् तद्धेतुकव्याप्तिज्ञानादेरभावः फलम् । एवं वह्निमान् नीलधूमादित्यादौ गुरुतया नीलधूमत्वस्य हेतुतानवच्छेदकत्वमपि व्याप्यत्वासिद्धिरित्यपि वदन्ति । बा-

## प्रभा.

साध्याप्रसिद्धिसाधनाप्रसिद्धयोः परिग्रहः ॥ **व्याप्यत्वासिद्धिरिति** ॥ अत्र नीलधूमत्वस्य गुरुतया व्याप्यतानिरूपितस्वरूपसंबन्धरूपावच्छेदकत्वाभावेन व्याप्तौ तदवच्छिन्नत्वाभावेन हेतौ व्याप्यनवच्छेदकनीलधूमत्वावच्छेदेन व्याप्यभावस्यापि सत्त्वमावश्यकम् । नच नीलधूमे निरुक्तव्याप्यत्वासिद्धिसत्त्वेऽपि तज्ज्ञानस्य व्याप्तिज्ञानाविरोधित्वेन हेत्वाभासत्वं न संभवतीति वाच्यम् प्राचीनमते नीलधूमत्वाश्रययावन्निष्ठनीलधूमत्वावच्छिन्नविशेष्यताशालिव्याप्तिज्ञानरूपनीलधूमत्वावच्छेदेन व्याप्तिप्रकारकज्ञानस्यैवानुमितिकारणतया तज्ज्ञानं प्रति निरुक्तनीलधूमत्वावच्छेदेन व्याप्यभाववत्ताज्ञानरूपव्याप्यत्वासिद्धिज्ञानस्य ग्राह्याभावावगाहितया प्रतिबन्धकत्वेन तस्य हेत्वाभासत्वं संभवतीति प्राचीनानामाशयः । एतदभिप्रायेणैव व्याप्यत्वासिद्धत्वं उक्तमिति ध्येयम् । नव्यास्तु नीलधूमत्वस्य लघुधूमत्वघटितत्वेन गुरुतया व्याप्यतानिरूपितस्वरूपसंबन्धरूपावच्छेदकत्वासंभवेऽपि अनतिरिक्तवृत्तित्वरूपावच्छेदकत्वमेव लक्षणघटकं वाच्यं अन्यथा इयं पृथिवी घ्राणग्राह्यगुणादित्यादौ गन्धत्वसमनियतस्य घ्राणग्राह्यगुणत्वस्य गुरुतया स्वरूपसंबन्धरूपावच्छेदकत्वाभावेन तत्रापि व्याप्यत्वासिद्ध्यापत्तेः । नच घ्राणग्राह्यगुणत्वस्य गन्धत्वसमनियतत्वेऽपि नीलधूमत्वादिवत् लघुधर्मघटितत्वाभावात् तस्य तादृशावच्छेदकत्वे बाधकाभाव इति वाच्यम् अवच्छेदकत्वस्यानेकपदार्थस्वरूपसंबन्धरूपत्वकल्पनागौरवस्य लघुधर्मघटितत्वे तदघटितत्वे वा तुल्यतया तदघटितत्वस्य तादृशावच्छेदकत्वानियामकत्वात् धूमप्रागभावनिष्ठव्याप्यतायां तु धूमप्रागभावत्वसमनियतलघुधर्मान्तराभावेन तस्य स्वरूपसंबन्धरूपावच्छेदकत्वसंभवेऽपि उक्तस्थले तदसंभवेन लक्षणे स्वरूपसंबन्धरूपावच्छेदकत्वानिवेशासंभवात् । एवंच नीलधूमत्वस्यानतिरिक्तवृत्तित्वरूपव्याप्यतावच्छेदकत्वसत्त्वेन तदवच्छेदेन व्याप्यभावरूपव्याप्यत्वासि-

## दिनकरीयम्.

केषांचिन्मतमाह ॥ **एवं वह्निमानित्यादिना** ॥ वदन्तीत्यनेनास्वरसस्तद्बीजं तु नीलधूमे व्याप्तिसत्त्वात् कथं व्याप्यत्वासिद्धिः । नच तत्र व्याप्तिसत्त्वेऽपि नीलधूमत्वस्यानवच्छेदकतया तदवच्छेदेन व्याप्यत्वासिद्धिरेवेति वाच्यम् । अनतिरिक्तवृत्तित्वरूपावच्छेदकत्वस्य नीलधूमत्वेऽपि सत्त्वात् । स्वरूपसम्बन्धरूपावच्छेदकत्वाभावाद्व्याप्यत्वाप्रसिद्धिरित्यपि न । तथा सति पशुमान् सास्नादिमत इत्यादावपि व्याप्यत्वासिद्ध्यापत्तेः । सास्नाद्यपेक्षया गोत्वादिजातेर्लघुत्वेन सास्नादेः स्वरूपसंबन्धरूपावच्छेदकत्वाभावात् । अस्तु वा नीलधूमत्वादेः स्वरूपसम्बन्धरूपावच्छेदकत्वाभावात्तदवच्छेदेन व्याप्त्यभावरूपव्याप्यत्वासिद्धिर्न तु हेत्वाभासत्वं अनुमितितत्कारणीभूतव्याप्तिज्ञानाविरोधित्वात् । नच वह्निमदन्यावृत्तिप्रमेयवानिति प्रमेयत्वसामानाधिकरण्येन व्याप्य-

## रामरुद्रीयम्.

घसत्प्रतिपक्षयोरिव व्यभिचारासिद्ध्योर्मुनिना पृथगुपदेशेन हेत्वाभासान्तरतासम्भवात् ॥ **अस्वरस इति** ॥ सूचित इति शेषः ॥ **सत्त्वादिति** ॥ नीलधूमस्य धूमानतिरिक्ततया धूमव्याप्तिविरहादिति भावः । अनवच्छेदकतयेत्यस्य व्याप्तेरित्यादिः ॥ **तदवच्छेदेनेति** ॥ यो धर्मो यस्यानवच्छेदकस्तदवच्छेदेन तदभावः मूलावच्छेदेन वृक्षे कपिसंयोगाभाववदिति भावः ॥ **अवच्छेदकत्वाभावादिति** ॥ तन्मूलस्य वृक्षवृत्तिकपिसंयोगानतिरिक्तवृत्तित्वेऽपि स्वरूपसम्बन्धरूपावच्छेदकत्वाभावादेव मूलावच्छेदेन वृक्षे कपिसंयोगाभावोपगमादिति भावः ॥ **व्याप्यत्वासिद्ध्यापत्तेरिति** ॥ स्वरूपसम्बन्धरूपावच्छेदकत्वं यस्य नास्ति तदवच्छेदेन व्याप्यत्वाभावोपगमे व्यर्थविशेषणत्वाभावेऽपि गुरुधर्मेण हेतुतायां सर्वत्र व्याप्यत्वासिद्धिप्रसङ्गादिति भावः । ननु गुरुधर्मेण हेतुतायां सर्वत्र व्याप्यत्वासिद्धिरिष्टैवेत्यत आह ॥ **अस्तु वेति** ॥ **अविरोधित्वादिति** ॥ हेतुतावच्छेदकांशे व्याप्यत्ववच्छेदकतानवगाहिनोऽपि व्याप्तिप्रकारकपक्षधर्मताज्ञानस्यानुमितिहेतुत्वोपगमादत एव व्याप्यंशे निर्धर्मितावच्छेदकादपि वह्निव्याप्यवानिति शाब्दपरामर्शादप्यनुमितिरङ्गीक्रियत इति भावः । मीमांसकमतानुयायी शङ्कते ॥ **नचेति** ॥ तथा चोक्तपरामर्शस्थलेऽपि वह्निव्याप्यो व-

**धस्तु पक्षे साध्याभावादिः एतस्य त्वनुमितिप्रतिबन्धः फलम् तद्धर्मिकतदभावनिश्चयो लौकिकसन्निकर्षाजन्यदोषविशेषाजन्यतद्धर्मिकतज्ज्ञानमात्रे विरोधीति न तु संशयसाधारणं पक्षे**

## प्रभा.

द्धेत्सुतरामभावेन नीलधूमादिहेतोर्न दोषवत्त्वम् किंतु पर्वते नीलधूमेन वह्निस्त्वया साध्य इति समयबन्धस्थलेऽधिकोक्त्या पुरुषस्य निग्रहस्थानाभावेऽपि तच्छून्यस्थले नीलधूमहेतुप्रयोगे पुरुषस्यैवाधिकोक्तिरूपनिग्रहस्थानरूपदोषवत्त्वमित्याहुरेतदभिप्रायेणैव वदन्तीत्युक्तमिति ध्येयम् ॥ **साध्याभावादिरिति** ॥ आदिपदात्साध्यवदन्यत्वपरिग्रहः ॥ **तद्धर्मिकेत्यादि** ॥ अनाहार्याप्रामाण्यज्ञानानास्कन्दिततद्धर्मावच्छिन्नविशेष्यतानिरूपिततद्धर्मावच्छिन्नप्रतियोगिताकाभावनिर्णय इत्यर्थः ॥ **लौकिकसन्निकर्षेत्यादि** ॥ तद्धर्मिकसाक्षात्कारत्वव्यञ्जकविषयतान्या तदभावनिष्ठावच्छेदकत्वानिरूपिता या तन्निष्ठप्रकारता तच्छालिज्ञानत्वावच्छिन्न इत्यर्थः। यथाश्रुतार्थकरणे उक्तगौरवादिदोषापत्तेः। अत्र केचित् शङ्खांशे अनुभूयमानस्य पीतद्रव्यस्य पीतिम्न एव पित्तदोषसहकृतचक्षुस्संयुक्तसमवायसन्निकर्षात् शङ्खः पीत इति पीतरूपानिष्ठलौकिकविषयताशाल्यारोपस्वीका-

## दिनकरीयम्.

वगाहिज्ञानादनुमित्यापत्तिवारणाय हेतुतावच्छेदकावच्छेदेन व्याप्तिज्ञानस्यैव कारणतया तद्विरोधितया निरुक्तव्याप्यत्वासिद्धिर्हेत्वाभास इति वाच्यम्। तावताप्यनतिरिक्तवृत्तिरूपावच्छेदकत्वज्ञानस्य कारणत्वे न किंचिद्बाधकम्। तत्र स्वरूपसम्बन्धरूपावच्छेदकत्वाभावग्रहस्य प्राह्याभावानवगाहितयाऽविरोधित्वात् तस्माद्व्यर्थविशेषणस्थले न व्याप्यत्वासिद्धिः हेत्वाभासः पुरुषस्त्वधिकेन निगृह्यत इति ॥ साध्याभावादिरित्यादिना साध्यवदन्यत्वस्य पक्षावृत्तिसाध्यादेश्च परिग्रहः ॥ **तद्धर्मिकतदभावनिश्चयः** अनाहार्याप्रामाण्यज्ञानानास्कन्दिततद्धर्मिकतदभावनिश्चयः। बाधबुद्ध्युत्तरक्षणे लौकिकसन्निकर्षजन्यविशिष्टबुद्धेरानुभविकत्वादाह ॥ **लौकिकसन्निकर्षाजन्येति** ॥ नन्वेवं तदिन्द्रियजन्यलौकिकबाधनिश्चयोत्तरं तदिन्द्रियजन्यलौकिकतद्विशिष्टबुद्ध्यापत्तिरिति चेन्न। अलौकिकत्वं प्रतिबध्यतावच्छेदककोटावनिवेश्य तदिन्द्रियजन्यतद्विशिष्टबुद्धौ तदिन्द्रियजन्यलौकिकतदभावनिश्चयत्वेन प्रतिबन्धकत्वोपगमात् तदिन्द्रियजन्योपनीतभानात्मकबाधनिश्चयोत्तरं तदिन्द्रियजन्यलौकिकतद्विशिष्टबुद्ध्युदयात् प्रतिबन्धकतावच्छेदककोटौ लौकिकत्वनिवेशः। नच लौकिकतदिन्द्रियजन्याभावप्रमास्थले तदधिकरणे प्रतियोगिनोऽसत्त्वादेव न तद्विशिष्टलौकिकप्रत्यक्षापत्तिरित्यलं तथाविधप्रतिबध्यप्रतिबन्धकभावेनेति वाच्यम्। यत्र प्रतियोग्यधिकरण एव सन्निकृष्टाधिकरणान्तरवृत्तेरभावस्य लौकिकप्रत्यक्षात्मकारोपो दोषेण जनितस्तदुत्तरं तदधिकरणे प्रतियोगिनो लौकिकप्रत्यक्षापादनात् तत्राभावलौकिकप्रत्यक्षजनकदोषस्य प्रतिबन्धकत्वादेव नेयमापत्तिरन्यथाऽभावारोपोत्पत्तिक्षणे प्रतियोगिप्रत्यक्षापत्तिरिति तु न यत्र विनश्यदवस्थदोषेणाभावलौकिकप्रत्यक्षात्मकारोपस्तदुत्तरं प्रतियोगिप्रत्यक्षापादनात्

## रामरुद्रीयम्.

द्धिव्याप्य इति ज्ञानान्तरतोऽनुमितिर्नान्यथेति भावः ॥ **तावतापि** ॥ उक्तस्थलेऽनुमितिवारणानुरोधेनापि । उपसंहरति ॥ **तस्मादिति** ॥ गुरुधर्मस्य हेतुतावच्छेदकत्वस्थले सर्वत्र प्राचीनैर्व्याप्यत्वासिद्धिर्नाङ्गीक्रियते। अपितु स्वसमानाधिकरणव्याप्यतावच्छेदकधर्मान्तरघटितस्य तथात्वस्थल एवेत्यभिप्रायेणाह ॥ **व्यर्थविशेषणस्थल इति** ॥ **अधिकेनेति** ॥ अधिकोक्तेर्निग्रहस्थानत्वेन धूमादित्युक्त्यैव सामञ्जस्ये नीलपदप्रयोगस्याधिकत्वादिति भावः। साध्यादेश्चेत्यादिना साध्याभाववत्पक्षसाध्यवदन्यपक्षयोः परिग्रहः। प्रतिबध्यतावच्छेदककोटौ लौकिकसन्निकर्षाजन्यत्वनिवेशस्य फलमाह ॥ **बाधबुद्ध्युत्तरक्षण इति** ॥ **एवं** प्रतिबध्यतावच्छेदककोटावलौकिकत्वनिवेशे ॥ **तद्विशिष्टबुद्ध्यापत्तिरिति** ॥ समानेन्द्रियजन्यबाधबुद्ध्युत्तरलौकिकसन्निकर्षेणापि तद्विशिष्टबुद्धेरनुपगमाद्भावेष्टापत्तिरपि संभवतीति भावः ॥ **अलौकिकत्वं** लौकिकसन्निकर्षाजन्यत्वम्। ननु लौकिकाभावप्रमायां सत्यां प्रतियोगिनि लौकिकसन्निकर्षासंभवादेव न लौकिकतद्वत्ताबुद्ध्यापत्तिरिति किं समानेन्द्रियस्थले प्रतिबध्यप्रतिबन्धकभावान्तरेणेति शङ्कते ॥ **नचेति** ॥ **प्रतियोगिप्रत्यक्षापादनात्** तत्प्रत्यक्षापादनसंभवात्। लौकिकाभावभ्रमस्थले प्रयोजनमुपपाद्य प्रमास्थले तदाह ॥

## प्रभा.

रेण तस्य लौकिकसन्निकर्षाजन्यत्वघटितप्रतिबध्यतावच्छेदकानाक्रान्ततयैव वारणे दोषविशेषाजन्यत्वविशेषणं व्यर्थमित्याक्षिप्य पित्तद्रव्यस्यान्तरावस्थानदशायां पित्तद्रव्यनिष्ठपीतरूपे लौकिकसन्निकर्षाभावेन ज्ञानलक्षणाप्रत्यासत्त्यैव पीतः शङ्ख इत्याद्यारोपस्याङ्गीकर्तव्यत्वेन तस्य लौकिकसन्निकर्षाजन्यत्वविशेषणेनावारणात् दोषविशेषाजन्यत्वविशेषणमावश्यकमिति समाधानमाहुः तत्र पित्तद्रव्यस्यान्तरावस्थानदशायामपि पित्तद्रव्यघटितचक्षुस्संयुक्तसमवायस्य पित्तद्रव्ये पीतचाक्षुष एव कारणत्वं न शङ्खांशे पीतचाक्षुष इति नियमात्तादृशनियमानङ्गीकारे घटादिरूपद्रव्यघटितमहत्त्वावच्छिन्नोद्भूतरूपावच्छिन्नचक्षुस्संयुक्तसमवायसन्निकर्षवशात् पृथिवीपरमाणौ पृथिवीत्वादिचाक्षुषापत्तेः । तस्मात् यादृशद्रव्यघटितः चक्षुस्संयुक्तसमवायः तस्य तादृशद्रव्यांश एव तत्समवेतानां प्रत्यक्षे कारणत्वस्यावश्यं वाच्यतया पित्तद्रव्यघटितचक्षुस्संयुक्तसमवायस्य शङ्खांशे पित्तरूपप्रत्यक्षे कारणत्वासंभवेन ज्ञानलक्षणयैव तत्प्रत्यक्षस्योपपादनीयतया पीतद्रव्यस्यान्तरावस्थानदशायां तादृशभ्रमस्यादायापि तादृशविशेषणस्य प्रयोजनासंभवात् तादृशाक्षेपाप्रसक्तया तत्परिहाराय फल्गुपरिहारस्यायुक्तत्वात् । केचित्तु तादृशप्रतिबध्यप्रतिबन्धकभावाङ्गीकारेऽपि यत्र घटवति भूतल एव समीपदेशवृत्तिघटाभावस्य दोषविशेषसहकृतचक्षुस्संयुक्तविशेषणतासन्निकर्षात् भ्रमात्मकनिश्चयः तत्र चक्षुस्संयोगरूपलौकिकसन्निकर्षबलात् घटानिष्ठलौकिकप्रकारताशालिबुद्ध्यापत्तिवारणाय यत्र घटाभाववति भूतल एव घटाभावनिष्ठलौकिकविषयताशालिचाक्षुषनिर्णयकाले समी–

## दिनकरीयम्.

यत्राभावलौकिकप्रमासमकालं तद्द्वितीयक्षणे वा तदधिकरणे प्रतियोगिप्रकारकानुभूयमानारोपजनकदोषसमवधानं तत्राभावप्रमोत्तरं प्रतियोगिनो लौकिकप्रत्यक्षात्मकारोपापादनवारणाय वा इंद्रियभेदेन तथाविधप्रतिबध्यप्रतिबन्धकभावोपगमात् शङ्खो न पीतः वंशो नोरग इति निश्चयेऽपि पित्तमण्डूकवसाञ्जनादिदोषवशाच्छङ्खः पीतः वंश उरग इत्यारोपोदयात्तत्र व्यभिचारवारणायाह ॥ **दोषविशेषेति** ॥ दोषसामान्याजन्यत्वनिवेशे भ्रममात्रस्यैव बाध्याप्रतिबध्यत्वापत्तिरतो विशेषेति । तथा च पित्तमण्डूकवसाञ्जनादिदोषान् विशिष्योपादाय तदजन्यत्वं प्रतिबध्यतावच्छेदककोटौ निवेशनीयमिति भावः । नच पित्तद्रव्यात्मकदोषाजन्यत्वनिवेशो व्यर्थः शङ्खः पीत इति भ्रमे शङ्खांशेऽनुभूयमानस्यैव पित्तद्रव्यपीतिम्न आरोपोपगमेन तदंशेऽपि लौकिकत्वादलौकिकत्वस्य प्रतिबध्यतावच्छेदके निवेशादेव तत्र व्यभिचारवारणादिति वाच्यम् । पित्तद्रव्यस्यान्तरानवस्थानदशायामपि तत्पीतिम्नः शङ्खादौ प्रत्यक्षोदयेन स्मर्यमाणारोपस्यैव तत्र नवीनैः स्वीकारात्तदंशे तस्यालौकिकत्वात् तथा सति शङ्खः पीत इति प्रत्यक्षोत्तरं पीतं साक्षात्करोमीति साक्षात्कारित्वप्रहानुपपत्तिस्तद्व्यञ्जकलौकिकविषयतायास्तत्राभावादिति तु न लौकिकविषयताया इव दोषविशेषजन्यत्वस्यापि साक्षात्कारित्वव्यञ्जकत्वादन्यथाऽयमुरग इति स्मर्यमाणारोपे साक्षात्कारित्वप्रहानुपपत्तेः शङ्खो न पीत इत्यादितदिन्द्रियजन्यबाधबुद्ध्युत्तरं पित्तादिदोषवशात्तदिन्द्रियजन्यः शङ्खः पीत इत्यारोपो यद्यनुभवसिद्धस्तदा पूर्वोक्तेन्द्रियभेदभिन्नप्रतिबध्यप्रतिबन्धकभावेऽपि दोषविशेषाजन्यत्वं प्रतिबध्यतावच्छेदके निवेशनीयमिति ध्येयम् । ननु बाधप्रतिबध्यतावच्छेदककोटौ लौकिकान्यत्वस्य निवेशे बाधनिश्चयोत्तरं लौकिकसन्निकर्षजन्यसंशयापत्तिरिति चेत्

## रामरुद्रीयम्.

**यत्राभावेति** ॥ **समवधानमिति** ॥ इदंच प्रमातः पूर्वमेव तादृशदोषसमवधाने बाधप्रमैव न सम्भवति प्रतियोगिभ्रमजनकदोषेण प्रतिबन्धादित्यभिप्रायेणोक्तमिति बोध्यम् । दोषविशेषाजन्यत्वनिवेशस्य प्रयोजनमाह ॥ **शङ्खो न पीत इत्यादि** ॥ **भ्रममात्रस्यैवेति** ॥ दोषं विना भ्रमानुत्पत्तेरिति भावः ॥ **मण्डूकेति** ॥ भेकवसाञ्जनरूपदोषाद्वंश उरगस्य प्रत्यक्षभ्रमोत्पादादिति भावः । आदिना इन्द्रजालमन्त्रादिदोषाणां सङ्ग्रहः ॥ **तद्व्यञ्जकेति** ॥ साक्षात्कारत्वजातिव्यञ्जकेत्यर्थः । यद्यनुभवसिद्ध इत्यनेन वस्तुतस्तादृशानुभव एव नास्ति किमर्थं समानेन्द्रियस्थलीयप्रतिबध्यतावच्छेदके तन्निवेशनीयमिति सूचितम् ॥ **संशयापत्तिरितीति** ॥ संशयनिश्चयसाधारणतद्वत्ताबुद्धित्वस्यैव प्रतिबध्यतावच्छेदकत्वेन संशये पृथक्प्रति-

## प्रभा.

पदेशवृत्तिघटस्यारोपजनकदोषसमवधानं तत्र तादृशदोषविशेषसहकृतचक्षुस्संयोगेन लौकिकविषयताशालिबुद्धयापत्तिवारणाय वा प्रतिबध्यतावच्छेदककोटौ लौकिकसन्निकर्षाजन्यत्वमनिवेश्य तदिन्द्रियजन्यतत्प्रकारकबुद्धित्वावच्छिन्नं प्रति तदिन्द्रियजन्यतदभावनिष्ठलौकिकविषयताशालिनिश्चयत्वेन पृथक् प्रतिबन्धकत्वं वक्तव्यम् । यदि शङ्खो न पीतः वंशो नोरग इति लौकिकबाधनिश्चयोत्तरं शङ्खः पीतः वंश उरग इति दोषविशेषजन्यविशिष्टबुद्धिः प्रामाणिकी तदा इन्द्रियभेदेन भिन्नप्रतिबध्यप्रतिबन्धकभावेऽपि प्रतिबध्यतावच्छेदककोटौ दोषविशेषाजन्यत्वं निवेश्यमित्याहुः तदसत् घटवति भूतले घटाभावनिष्ठलौकिकविषयताशालिचाक्षुषोऽसिद्धः घटाभावनिष्ठचक्षुस्संयुक्तविशेषणतायां घटाधिकरणदेशस्याघटकत्वात्तद्घटिताविशेषणतायास्ताद्विषयकाभावलौकिकविषयताशालिप्रत्यक्ष एव कारणत्वस्वीकारात् अन्यथा देशान्तरघटितालोकसंयोगाद्यवच्छिन्नचक्षुस्संयुक्तविशेषणतासन्निकर्षवशादन्धकारवृत्तिघटाभावस्य लौकिकचाक्षुषापत्तेः । तस्मात् घटवति भूतले घटाभावस्योक्तसंनिकर्षाभावेन तत्र घटाभावनिष्ठलौकिकविषयताशालिबाधनिर्णयाप्रसिद्ध्या तदुत्तरं सुतरां घटादिनिष्ठलौकिकविषयताशालिबुद्ध्यापादनासंभवेन तादृशापत्तिवारणाय इन्द्रियभेदेन प्रतिबध्यप्रतिबन्धकभावान्तरकल्पनमयुक्तम् । यत्र घटाभाववति घटाभावनिष्ठलौकिकविषयताशालिबाधनिश्चयसमकालं घटशून्यदेशविषयकघटप्रकारकारोपजनकदोषसमवधानं तत्र समीपदेशवर्तिचक्षुस्संयुक्तघटस्य लौकिकविषयताशालिविशिष्टबुद्ध्यापादनं न संभवति यद्देशवृत्तिघटस्य चक्षुस्संयुक्तत्वं तद्देशविषयकघटप्रत्यक्ष एव चक्षुस्संयोगस्य हेतुत्वाभ्युपगमात् अन्यथा देशान्तरवर्तिनः आलोकसंयोगाद्यवच्छिन्नचक्षुस्संयोगविशिष्टघटस्यान्धकारे लौकिकभ्रमात्मकचाक्षुषापत्तेः । एवंच घटाभावाधिकरणदेशे घटस्यैवाविद्यमानतया देशान्तरवर्तिघटस्यात्र भ्रमे ज्ञानलक्षणाया एव प्रत्यासत्तित्वेन देशान्तरवृत्तिघटनिष्ठचक्षुस्संयोगबलात् घटाभावाधिकरणदेशविषयकघटानिष्ठलौकिकविषयताशालिबुद्धेरेवाप्रसिद्ध्या तादृशलौकिकबाधनिश्चयोत्तरं तादृशबुद्ध्यात्मकारोपासंभवेन तादृशापत्तिवारणायापि इन्द्रियभेदेन प्रतिबध्यप्रतिबन्धकभावस्य कल्पनमयुक्तम् । यदिच देशान्तरवर्तिनश्चक्षुस्संयुक्तघटस्य घटशून्यदेशे आरोपजनकदोषसहकृतचक्षुस्संयोगवशात् बाधनिश्चयश्च

## दिनकरीयम्.

त्र । भूतलं घटवदित्याद्याकारकलौकिकप्रत्यक्षोत्पत्तिकाले स्वातन्त्र्येण कथञ्चिदुपस्थितस्य घटाभावादेर्भूतले । प्रकारतया भानवारणाय समानधर्मितावच्छेदककतत्कोटिकलौकिकप्रत्यक्षसामग्र्या विपरीतकोटिभानप्रतिबन्धकत्वमवश्यमङ्गीकरणीयम् । तथा च बाधनिश्चयोत्तरमपि नापत्तिर्लौकिकसन्निकर्षजन्यसंशयस्य तत्कोटिकलौकिकप्रत्यक्षसामग्र्याः प्रतिबन्धिकायाः सत्त्वेन विपरीतकोटिभानासम्भवात् । तर्हि क्वापि लौकिकसन्निकर्षजन्यसंशयो न स्यादिति चेदोम् । ज्ञानलक्षणाप्रत्यासत्त्यैव पूर्वोपस्थितकोट्योर्भानसम्भवादिति । यत्तु संशयपूर्वं तत्कोट्यंशे लौकिकसन्निकर्षसत्त्वे कथं संशयस्य न लौकिकत्वं कथं वा तत्र संशये विपरीतकोटिभानं तत्कोटिकलौकिकप्रत्यक्षसामग्र्याः प्रतिबन्धिकायाः सत्त्वादिति तन्न । तत्र लौकिकसन्निकर्षसत्त्वेऽपि संशयजनकदूरत्वादिदोषस्य लौकिकप्रत्यक्षप्रतिबन्धकस्य सत्त्वेन लौकिकप्रत्यक्षसामग्र्यभावादुभयोपपत्तेरित्य-

## रामरुद्रीयम्.

बन्धकताया अभावादिति भावः । लौकिकसन्निकर्षजन्यसंशय एव न सम्भवति एककोटिकलौकिकप्रत्यक्षसामग्र्या विरोधिकोटिभानप्रतिबन्धकत्वादन्यथा भूतलं घटवदिति निश्चयकालेऽपि संशयापत्तेरिति कथं बाधनिश्चयोत्तरं लौकिकसन्निकर्षजन्यसंशयापत्तिरिति समाधत्ते ॥ **भूतलमित्यादि** ॥ **तर्हीति** ॥ एककोटिलौकिकप्रत्यक्षसामग्र्या विपरीतकोटिभानप्रतिबन्धकत्व इत्यर्थः ॥ **क्वापि** बाधनिश्चयानुत्तरमपि ॥ **संशयो न स्यादिति** ॥ दूरस्थस्थाण्वादिधर्मिकस्थाणुत्वादिसंशयो न स्यादित्यर्थः । उक्ताशङ्कायामिष्टापत्तिमाह ॥ **ओमिति** ॥ **न लौकिकत्वं** न लौकिकसन्निकर्षजन्यत्वं । लौकिकसन्निकर्षसत्त्वे कोटिभाने बाधकाभावादिति भावः ॥ **उभयोपपत्तेरिति** ॥ संशये लौकिकसन्निकर्षजन्यत्वस्य विपरीतकोटिभानस्य चोपपत्तेरित्यर्थः । लौकिकसन्निकर्षसत्त्वेऽपि तस्य दूरत्वदोषेण कोट्यभासकत्वादिति भावः । अन्यत्र विस्तर इत्यनेन संशयजनकदोषसामा-

साध्यसंसृष्टत्वज्ञानमनुमितिकारणं तद्विरोधितया च बाधसत्प्रतिपक्षयोर्हेत्वाभासत्वमिति युक्तम् अप्रसिद्धसाध्यकानुमित्यनापत्तेः साध्यसंशयादिकं विनाप्यनुमित्युत्पत्तेश्च । एवं सा-

प्रभा.

न्यकाले तस्मिन् देशे घटनिष्ठलौकिकविषयताशालिभ्रम आनुभाविक इत्युच्यते तदा शङ्खो न पीतः वंशो नोरग इति पीतत्वाद्यभावनिष्ठलौकिकविषयताशालिबाधनिश्चयोत्तरं पीतः शङ्खः वंश उरगः इत्याकारकप्रत्यक्षस्वीकारवत् घटाभावनिष्ठलौकिकविषयताशालिबाधनिश्चयोत्तरमपि सामग्रीवशात् घटनिष्ठलौकिकविषयताशालिप्रत्यक्षमप्यवश्यमङ्गीकर्तव्यमेव विनिगमकाभावात् तथाचोक्तापत्तेरिष्टापत्तिदोषग्रस्ततया तादृशप्रतिबध्यप्रतिबन्धकभावे प्रमाणलेशास्फूर्तेः तदयुक्तमिति प्रतिभाति । केचित्तु बाध्यप्रतिबध्यतावच्छेदककोटौ लौकिकाजन्यत्वनिवेशात् बाधनिश्चयोत्तरं लौकिकसन्निकर्षजन्यसंशयापत्तिरित्याक्षिपन्ति तदसत् घटघटाभावयोरप्यविरुद्धत्वज्ञाने सति भूतलं घटवत् घटाभाववच्चेति घटांशे लौकिकसमुच्चयात्मकं ज्ञानं बाधनिश्चयोत्तरमिष्यत एव तत्र संशयोत्पादकविशेषादर्शनसाधारणादिधर्मदर्शनरूपसंशयसामग्र्यभावेनैव संशयापत्त्यभावात् फलबलेनैव सामग्रीकल्पनात् । यत्तु तदुत्तरं भूतलं घटवदिति लौकिकप्रत्यक्षोत्पत्तिकाले कथंचिदुपस्थितस्य घटाभावस्य भूतले प्रकारतया भानवारणाय समानधर्मितावच्छेदककतत्कोटिलौकिकप्रत्यक्षसामग्र्याः विपरीतकोटिभानप्रतिबन्धकत्वमवश्यमङ्गीकर्तव्यम् तथाच न बाधनिश्चयोत्तरमपि लौकिकसन्निकर्षजन्यसंशयापत्तिः तत्कोटिलौकिकप्रत्यक्षसामग्र्याः प्रतिबन्धिकायास्सत्त्वेन विपरीतकोटिभानासंभवादिति परिहरन्ति तदप्यसत् घटवत् भूतलमिति लौकिकप्रत्यक्षोत्पत्तिकाले कोट्योरविरुद्धत्वज्ञाने सति समुच्चयस्य विरुद्धत्वज्ञानविशिष्टसंशयसामग्रीसत्त्वे संशयस्येष्टत्वेन तादृशसामग्र्याः प्रतिबन्धकत्वकल्पनायां प्रमाणाभावात्तदुपरि क्वापि लौकिकसन्निकर्षजन्यसंशयो न स्यादित्याक्षिप्य इष्टापत्तेर्ज्ञानलक्षणाप्रत्यासत्त्यैव कोट्योस्संशयाङ्गीकारादिति परिहरन्ति तदपि न उक्तरीत्या लौकिकसन्निकर्षोत्तरमपि संशयसंभवात् तदुपरि यत्त्वित्यादिना संशयात् पूर्वं लौकिकसन्निकर्षसत्त्वे कथं संशयस्य अलौकिकत्वं कथं वा संशये विपरीतकोटिभानं लौकिकप्रत्यक्षसामग्र्याः प्रतिबन्धिकायाः सत्त्वादिति कस्यचिन्मतमाक्षिप्य लौकिकसन्निकर्षसत्त्वेऽपि संशयजनकदूरत्वादिदोषस्य प्रतिबन्धकस्य सत्त्वेन तदभावघटितलौकिकप्रत्यक्षसामग्र्यभावात् उभयोपपत्तेरिति दूषितम् तदपि मन्दं दूरत्वादिदोषस्य लौकिकविषयताशालिप्रत्यक्षप्रतिबन्धकत्वे प्रमाणाभावात् किंतु तदग्रहतत्संशयान्यतरप्रयोजकत्वमेव । यथा तादृशदोषवशात् शतयोजनात्मकचन्द्रपरिमाणाग्रहः परन्तु अन्यगतपरिमाणेनैव चन्द्रस्य ग्रहः एवं तादृशदोषवशात् पुरुषत्वतदभावान्यतरस्मिन् लौकिकसन्निकर्षे सत्यपि पुरुषत्वसंशयः तथाहि दूरत्वदोषस्थले सर्वत्रापि लौकिकविषयताया दूरत्वप्रतिबध्यतावच्छेदकत्वे प्रमाणाभाव एवेति सारम् । अत्र साध्याभावप्रकारकत्वासिसाधयिषाकालीनत्वान्यतरविशिष्टपक्षविशेष्यकसाध्यप्रकारकज्ञानत्वावच्छिन्नं पक्षतेति प्राचीनैकदेशिमतमुपन्यस्य दूषयति ॥ **न त्वित्यादिना** ॥ **कारणमिति** ॥ पक्षताविषयेत्यादिः । नन्वेवं सति बाधादिनिश्चयकाले पक्षताविरहादेवानुमित्यभावोपपत्तौ न तन्निश्चयस्य प्रतिबन्धकत्वमिति बाधादेर्हेत्वाभासत्वन्न स्यादित्यत आह ॥ **तद्विरोधितयेति** ॥ निरुक्तपक्षताविरोधितयेत्यर्थः ॥ **अप्रसि-**

दिनकरीयम्.

न्यत्र विस्तरः । कस्यचिन्मतं दूषयति ॥ **न त्विति** ॥ इति युक्तमित्यनेनान्वयः । नन्वेवं बाधनिश्चयकाले संसृष्टत्वज्ञानाभावादेवानुमित्यभावोपपत्तौ बाधनिश्चयस्य नानुमितिविरोधित्वमिति हेत्वाभासत्वं न स्यादत आह ॥ **तद्विरोधितयेति** ॥ अनुमितिकारणीभूतस्य साध्यसंसृष्टत्वज्ञानस्य विरोधितयेत्यर्थः । नन्व-

रामरुद्रीयम्.

न्याभावे तु सन्निकृष्टकोटेर्निश्चय एवेति सूचितम् ॥ **कस्यचिन्मतमिति** ॥ ननु संशयपक्षतावादिन इति भावः । श्रुत्यात्मनिश्चयवतोऽपि सिषाधयिषयाऽनुमित्युपपत्तये निश्चयसाधारणसाध्यसंसर्गज्ञानत्वेनैवैतन्मते कारणतायाः प्रतिपादितत्वादिति विभावनीयम् ॥ **मूले अप्रसिद्धेति** ॥ पूर्वमगृहीतसाध्याविधेयकेत्यर्थः । तथा च पृथिवीतरत्वव्यापकाभावप्रतियोगिगन्धवती पृथिवीति व्यतिरेकिपरामर्शजन्यसाध्यविशेष्यिकायाः

**व्याभावज्ञाने प्रमात्वज्ञानमपि न प्रतिबन्धकं मानाभावाद्गौरवाच्च अन्यथा सत्प्रतिपक्षादाव-**

## प्रभा.

**उद्गाध्यकेति** ॥ तथाच इतरत्वव्यापकीभूताभावप्रतियोगिगन्धवती पृथिवीति परामर्शात् पृथिव्यामितरभेद इति पृथिवीतराभिन्नेति वा मतभेदेनानुमितेर्दर्शनात्तत्र निरुक्तपक्षताविरहान्न तस्याः कारणत्वमिति भावः । नन्वन्वयव्याप्तिज्ञानकरणकानुमितिमात्र एव निरुक्तपक्षतायाः हेतुत्वस्वीकारान्नोक्तव्यभिचारप्रसक्तिरित्यत आह ॥ **साध्यसंशयादिकं विनेति** ॥ तथाच घनगर्जितेन मेघानुमितेः पूर्वं साध्यसंशयाभावात् सिषाधयिषाकालीनासिद्ध्यभावाच्च निरुक्तपक्षतायाः व्यभिचारेण कारणत्वासंभवात् । नहि तत्र परामर्शोत्तरं साध्यसंशयस्संभवति परामर्शस्य विशेषदर्शनविधया संशयप्रतिबन्धकत्वादिति भावः । अत्रानुमितिं प्रति पक्षविशेष्यकसाध्याभावप्रकारकनिश्चयत्वेन प्रतिबन्धकत्वं न संभवति तत्सत्त्वेऽप्यप्रामाण्यज्ञानकालेऽनुमित्युत्पत्तेः । किन्तु पक्षविशेष्यकसाध्याभावप्रकारकज्ञानधर्मिकप्रमात्वनिश्चयत्वेनैव प्रतिबन्धकत्वं वाच्यम् अतः तादृशप्रमात्वमेव बाधः । सद्धेतुस्थले बाधनिश्चयस्य भ्रमत्वनियमेन तत्र प्रमात्वरूपदोषाप्रसिद्ध्या न हेतौ बाधितत्वमिति प्राचीनैकदेशिमतं दूषयति ॥ **एवमित्यादिना** ॥ **प्रमाणाभावादिति** ॥ तादृशप्रमात्वनिश्चयस्य ग्राह्याभावानवगाहित्वेन प्रतिबन्धकत्वं न संभवतीत्यर्थः । नन्विदं प्रमेत्याकारकह्रदविशेष्यकवह्न्यभावप्रकारकज्ञानव्यक्तित्वावच्छिन्नविशेष्यकप्रमात्वप्रकारकनिश्चयस्य प्रमेयत्वादिना प्रमात्वप्रकारकस्य ह्रदत्ववति ह्रदत्वप्रकारकत्वरूपप्रमात्वप्रकारकस्य वा निश्चयस्याप्रामाण्यज्ञानकालीनस्याप्रतिबन्धकतया तादृशज्ञानत्वावच्छिन्नविशेष्यकत्वह्न्यभाववद्विशेष्यकत्वविशिष्टवह्न्यभावप्रकारकत्वत्वरूपप्रमात्वत्वावच्छिन्नप्रकारताशालिनिश्चयस्यैव प्रतिबन्धकत्वं वाच्यम् । एवंच तादृशनिश्चयस्य ह्रदांशे वह्न्यभावावगाहित्वान्नोक्तदोष इत्यत आह ॥ **गौरवादिति** ॥ ह्रदविशेष्यकवह्न्यभावप्रकारकनिश्चयत्वापेक्षया तादृशज्ञानविशेष्यकप्रमात्वप्रकारकनिश्चयत्वस्य गुरुधर्मत्वादित्यर्थः । गौरवान्न तेन रूपेण प्रतिबन्धकत्वमिति भावः । ननु निरुक्तप्रमात्वप्रकारकनिश्चयत्वस्य गुरुत्वेऽपि लघुधर्मसमनियतत्वाभावात्तेन रूपेण प्रतिबन्धकत्वमव्याहतमित्याशङ्कां प्रतिबन्द्या परिहरति ॥ **अन्यथेति** ॥ गुरुधर्म·

## दिनकरीयम्.

प्रसिद्धसाध्यकानुमितिः कुत्रापि न भवत्येवेत्यत आह ॥ **साध्यसंशयेति** ॥ ननु संशयशून्यकालेऽपि सिषाधयिषाकालीनसाध्यनिश्चयात्मकं साध्यसंसृष्टत्वज्ञानमस्त्येवेत्यत आह ॥ **आदीति** ॥ आदिना सिषाधयिषाकालीनासिद्धिपरिग्रहः । न च संशयोत्पत्त्यैवानुमितिरिति वाच्यम् सति विशेषदर्शने संशयायोगात् । पक्षविशेष्यकसाध्याभावज्ञाने प्रमात्वनिश्चयोऽनुमितिप्रतिबन्धकस्तदभावः कारणमतस्तादृशप्रमात्वमेव बाध इति प्राचीनमतं दूषयति ॥ **एवमिति** ॥ **प्रमात्वज्ञानमपि** प्रमात्वनिश्चयोऽपि ॥ **मानाभावादिति** ॥ ग्राह्याभावानवगाहिनस्तादृशज्ञानस्य विरोधित्वे मानाभावादित्यर्थः । ननु पक्षे साध्याभावज्ञानेऽपि तत्राप्रामाण्यज्ञानकालेऽनुमितेरुदयान्न साध्याभावज्ञानं प्रतिबन्धकमस्मन्मते तु तदा साध्याभावज्ञानप्रमात्वनिश्चयाभावादेवात्रानुमित्युत्पत्तिरित्यत आह ॥ **गौरवादिति** ॥ तथा च तत्रानुमितिनिर्वाहाय संशयनिश्चयसाधारणाप्रामाण्यज्ञानाभाव एव प्रतिबन्धकतावच्छेदककोटौ निवेश्यते न तु पक्षविशेष्यकसाध्याभावज्ञानप्रमात्वनिश्चयत्वेन प्रतिबन्धकत्वं गौरवादित्यर्थः । यत्र पक्षे साध्याभावज्ञानमस्ति न तु प्रामाण्यज्ञानं न वाऽप्रामाण्यज्ञानं तत्राप्यनुमितिर्न भवत्येवेति भावः । साध्याभाववत्पक्षघटितप्रमात्वविषयकत्वेऽनुमितिप्रतिबन्धकतानतिरिक्तवृत्तित्वसत्त्वात्तस्याभासत्वं दुर्वारमिति तु न, प्रमेयत्वविशिष्टव्यभिचारादेरिव तादृशविशिष्टान्तरघटितत्वेनाभासत्वायोगादिति । नन्वगृहीताप्रामाण्यकसाध्याभावनिश्चयस्य प्रतिबन्धकत्वे प्रथमोपस्थितप्रमात्वनिश्चय एव तथा स्यादत आह ॥ **अन्यथेति** ॥ सत्प्रतिपक्षादावित्यादिना विरोधा·

## रामरुद्रीयम्.

पृथिव्यामितरभेद इत्यनुमितेरभावापत्तेरित्यर्थः । उत्तरदूषणमवतारयति ॥ **नन्वप्रसिद्धेति** ॥ **न भवत्येवेति** ॥ आचार्यमते सर्वत्रान्वयव्याप्तिज्ञानस्यैवानुमितिहेतुतया व्यतिरेकसहचारेणापि अन्वयव्याप्तिरेव गृह्यत इति तैरङ्गीकारादुभयपरामर्शादनुमितेरसिद्धत्वादन्वयव्याप्तेःसाध्यघटितमूर्तिकत्वेन व्याप्तिज्ञानसमय एव

पि तदभावव्याप्यवत्ताज्ञाने प्रमात्वविषयकत्वेन प्रतिबन्धकतापत्तेः किन्तु भ्रमत्वज्ञानानास्क-

## प्रभा.

स्य लघुधर्मस्यानियतत्वाभावेनावच्छेदकत्वस्वीकार इत्यर्थः ॥ प्रतिबन्धकत्वापत्तेरिति ॥ तथा च सद्धेतौ साध्याभावव्याप्यवत्ताज्ञानस्य भ्रमरूपत्वेन प्रमात्वरूपदोषाप्रसिद्धया न सत्प्रतिपक्षादिरूपदोषवत्त्वम् । असद्धेतुस्थले सत्प्रतिपक्षादिज्ञानविष्ठप्रमात्वानां भिन्नभिन्नतया स्वरूपभेदात् क्वचित् फलभेदाच्च नैकहेत्वाभासत्वापत्तिश्चेति भावः । नच ग्रन्थकाराभिमतबाधनिश्चयादिनिष्ठप्रमात्वानामेव बाधादिरूपदोषत्वमस्तु तन्निर्णयस्य निरुक्तरूपेण प्रतिबन्धकत्वे बाधकाभावादिति वाच्यम् तथा सति तादृशप्रमात्वनिश्चयेऽप्रामाण्यज्ञानकाले अनुमित्युत्पादाय तादृशप्रमात्वज्ञानधर्मिकप्रमात्वनिश्चयत्वेन तत्राप्युक्तदोषवारणाय तादृशज्ञानधर्मिकप्रमात्वनिश्चयत्वेन प्रतिबन्धकतेत्यनवस्थापत्तेः । ननु निरुक्तप्रमात्वज्ञाने अप्रामाण्यज्ञानकाले अनुमित्युत्पादाय तादृशज्ञानधर्मिकप्रमात्वज्ञानत्वेन हेतुता न स्वीक्रियते येनानवस्था स्यात् किंत्वप्रामाण्यज्ञानानास्कन्दितनिरुक्तप्रमात्वनिश्चयत्वेनैव प्रतिबन्धकत्वमिति नोक्तदिशानवस्था नवा तादृशप्रमात्वानां बाधादिरूपत्वे क्षतिरिति चेत् तर्हि बाधादिनिश्चयस्यैव प्रतिबन्धकत्वं तेन रूपेणास्तां तदनुरोधेन बाधादेरेव दोषत्वमङ्गीक्रियतामित्यत आह ॥ किन्त्विति ॥ अवधारणार्थस्तुशब्दो बाधबुद्धिरित्युत्तरं योज्यः ।

## दिनकरीयम्.

दिपरिग्रहः । प्रतिबन्धकतापत्तिरित्यस्यानुमित्यादावित्यादिः । ननु साध्याभावज्ञानप्रमात्वज्ञानेऽनुमितिप्रतिबन्धस्तदभावे तु नेत्यन्वयव्यतिरेकाभ्यां प्रमात्वज्ञानस्यानुमितिप्रतिबन्धकत्वमत आह ॥ किं त्विति ॥

## रामरुद्रीयम्.

साध्यज्ञानावश्यकत्वादिति भावः ॥ सिद्धिपरिग्रह इति ॥ सिद्धिस्साध्यनिश्चयः सिद्धिसत्त्वे सिषाधयिषां विना नानुमितिरतः कालीनान्तम् । तथा च घनगर्जितेन मेघानुमितिस्थले संशयनिश्चययोर्द्वयोरप्यभावेन साध्यवत्ताज्ञानं नानुमितिहेतुरिति भावः । घनगर्जितेन मेघानुमितिस्थलेऽपि संशयं कल्पयित्वा क्षणविलम्बेनैवानुमितिरुपेयते अतो नानुपपत्तिरित्याशङ्कते ॥ न चेति ॥ संशयोत्पत्त्यैवेति पाठः ॥ सतीति ॥ गर्जितश्रवणानन्तरमेव मेघव्याप्यगर्जितवत्तापरामर्शोत्पत्त्या तेन मेघाभावकोटिकसंशयप्रतिबन्धादित्यर्थः । न च विशेषदर्शनेन प्रतिबन्धादभावकोटिभानासम्भवान्मनसा निश्चय एवास्त्विति वाच्यम् । तथासति सिद्धेः प्रतिबन्धकत्वेनानुमित्यनुपपत्तेः । क्षणविलम्बेन कल्प्यत इति चेत् परामर्शस्यैव नाशापत्त्याऽनुमित्यनिर्वाहादिति भावः । अत्राप्यन्तरपदं प्रामादिकमेवोक्तस्थले पूर्वसंशयाभावादिति ध्येयम् । यदि चैतत्पाठप्रामाण्येऽप्याग्रहः तदा संशयं विनेत्यादिमूलस्य व्याप्तिस्मरणादिना परामर्शोत्पत्तिक्षणे पूर्वं संशयस्य नाशादित्यभिप्रायकतां परिकल्प्य घनगर्जितस्थलेऽपि संशयोत्पत्त्यनन्तरमेवानुमितिरित्यभिप्रायश्च कल्पयित्वैव संयोजनीयम् । न च साध्याभावज्ञानस्य ज्ञानत्वेन निवेशे संशयधर्मिकप्रमात्वनिश्चयदशायामपि अनुमितिप्रतिबन्धापत्तिरिति वाच्यम् इष्टापत्तेः साध्याभावांशे निश्चितप्रामाण्यकस्य संशयस्यापि साध्याभावनिश्चयसमशीलत्वादन्यथोभयत्रापि निश्चयत्वनिवेशेनैवैतन्मते गौरवापत्तिरिति भावः ॥ ग्राह्याभावानवगाहिन इति ॥ यद्धर्मावच्छिन्ने साध्यवत्त्वमवगाहतेऽनुमितिस्तदवच्छिन्ने ग्राह्यसाध्यस्याभावानवगाहिन इत्यर्थः । तेन साध्याभाववति साध्याभावप्रकारकत्वमिति प्रामाण्यनिश्चयस्य साध्याभावावगाहित्वेऽपि नानुपपत्तिः ॥ न साध्याभाववत्तानमिति ॥ न साध्याभावनिश्चय इत्यर्थः । प्रतिवादिना साध्याभावनिश्चयस्यैव प्रतिबन्धकत्वोपगमादित्यनुधेयम् ॥ गौरवादिति ॥ पक्षविशेष्यकत्वापेक्षया पक्षविशेष्यकसाध्याभावज्ञानविशेष्यकत्वस्य साध्याभावनिश्चयत्वापेक्षया साध्याभाववति साध्याभावप्रकारकत्वनिश्चयत्वस्य चातिगुरुत्वादित्यर्थः । नन्वप्रामाण्यज्ञानानास्कन्दिततद्रूपावच्छिन्नविषयकनिश्चयत्वमनुमितिप्रतिबन्धकतानतिरिक्तवृत्ति तद्रूपावच्छिन्नत्वमेव हि हेत्वाभासलक्षणं तच्च साध्याभाववति प्रकृतपक्षे साध्याभावप्रकारकत्वरूपप्रामाण्यसाधारण्येन अधिकं तु प्रविष्टमित्यादिन्यायादिति तादृशप्रामाण्यस्य हेत्वाभासता त्वन्मतेऽपि दुर्वारेत्याशङ्कां निराकरोति ॥ साध्याभाववत्पक्षेत्यादि ॥ आभासत्वायोगादित्यत्र पूर्ववाक्यस्थं तस्येत्यनुषज्यते ॥

न्दितबाधबुद्धेः प्रतिबन्धकता तत्र भ्रमत्वशङ्काविघटनेन प्रामाण्यज्ञानं क्वचिदुपयुज्यते । न च बाधस्थले पक्षे हेतुसत्त्वे व्यभिचारः पक्षे हेत्वभावे स्वरूपासिद्धिरेव दोष इति वाच्यं बाधज्ञानस्य व्यभिचारज्ञानादेर्भेदात् । किंच यत्र परामर्शानन्तरं बाधबुद्धिस्तत्र व्यभिचा-

## प्रभा.

भ्रमत्वज्ञानानास्कन्दितबाधबुद्धिरेवेति पर्यवसितोऽर्थः । भवत्वित्यर्थकः किंशब्दः प्रतिबन्धकतेत्युत्तरं योज्यः । तथाचाप्रामाण्यज्ञानानास्कन्दितनिरुक्तप्रमात्वनिश्चयत्वेन प्रतिबन्धकत्वं परिकल्प्य तादृशनिश्चयनिष्ठप्रमात्वानां बाधादिदोषत्वपरिकल्पनापेक्षया अप्रामाण्यज्ञानानास्कन्दितसाध्याभाववत्पक्षविषयकनिश्चयत्वेन तेषां प्रतिबन्धकत्वं परिकल्प्य साध्याभाववत्पक्षादीनामेव बाधादिरूपत्वमुचितं तद्विषयतायाः प्रतिबन्धकतावच्छेदकत्वस्योभयमतसिद्धत्वादिति भावः । नचैवं बाधनिश्चये यदा न प्रामाण्यज्ञानं नवा अप्रामाण्यज्ञानं तदानुमितिर्न स्यादिति वाच्यम् प्रमात्वज्ञाने प्रमात्वज्ञानमप्रमात्वज्ञानं च यदा नास्ति तदानुमित्यापत्तावियापत्तेस्त्वयापि वक्तव्यत्वादिति ॥ **स्वरूपासिद्धिरेवेति** ॥ तथाच बाधस्थले व्यभिचारस्वरूपासिद्धयन्यतरसत्त्वनियमेन तज्ज्ञानादेवानुमित्यनुत्पत्तौ बाधस्य न हेत्वाभासत्वमिति भावः ॥ **भेदादिति** ॥ तथाच बाधस्थले व्यभिचारस्वरूपासिद्धयन्यतरनियमेऽपि बाधज्ञानस्यानुमितिप्रतिबन्धकत्वात् व्यभिचारज्ञानस्याव्यभिचारांशग्रहप्रतिबन्धकत्वात् स्वरूपासिद्धिज्ञानस्य पक्षधर्मताज्ञानप्रतिबन्धकत्वाच्च त्रयाणां फलभेदात् बाधस्य हेत्वाभासत्वं व्यभिचारादिभिन्नदोषत्वं चाङ्गीकर्तव्यमिति भावः । ननु त्रयाणां फलभेदेऽप्यावश्यकव्यभिचारादिदोषविषयकज्ञानाद्व्याप्त्यादिज्ञानानुत्पत्तौ तादृशानुमित्यनुत्पत्तेरपि संभवाद्धेतोर्दुष्टत्वसंभवाच्च बाधस्य हेत्वाभासत्वमनावश्यकमित्यत आह ॥ **किंचेति** ॥ तथाच परामर्शोत्तरकालीनबाधज्ञानस्थले व्यभिचारज्ञानादेर्व्याप्तिज्ञानप्रतिबन्धद्वारा अनुमित्यनुत्पादफलत्वाभावेन तत्रानुमित्यापत्त्या हेतोर्दुष्टत्वानुपपत्त्या च बाधज्ञानस्यानुमितिप्रतिबन्धकत्वं तद्विषयबाधरूपदोषमादायैव हेतोर्दुष्टत्वं

## दिनकरीयम्.

**क्वचिदुपयुज्यत इति** ॥ तथा चानुमितितत्कारणज्ञानान्यतरं प्रति साक्षात्प्रतिबन्धकीभूतज्ञानविषयत्वाभावान्न साध्याभावज्ञानप्रमात्वं हेत्वाभास इति भावः । व्यभिचारज्ञानादेरित्यादिनाऽसिद्धिज्ञानपरिग्रहः ॥ **भेदादिति** ॥ तथा च बाधस्थलेऽसिद्धिव्यभिचारान्यतरनियमेऽपि बाधज्ञानस्य व्यभिचारादिविषयकत्वाभावेन तस्य हेत्वाभासान्तरत्वमिति भावः । न च हेतुमान् पक्षः साध्याभाववानित्याकारक एव बाधग्रहः कुतो न भवति सामग्रीसत्त्वात् तथा च व्यभिचारात्मिकैव बाधबुद्धिरिति वाच्यम् । परामर्शात्मकाव्यभिचारज्ञानरूपप्रतिबन्धकसत्त्वेन बाधबुद्धेर्व्यभिचारविषयकत्वासम्भवात् एकत्र हेतौ व्यभिचाराव्यभिचारविषयैकनिश्चयासम्भवाच्च । नन्वयोगोलकपक्षकधूमसाध्यकवह्निहेतुके बाधलौकिकप्रत्यक्षवद्व्यभिचारलौकिकप्रत्यक्षम-

## रामरुद्रीयम्.

**प्रथमोपस्थितेति** ॥ उक्तप्रतिबन्धकतावच्छेदकधर्मस्य प्रमात्वाभावघटितत्वेन प्रतियोगिज्ञानविधया प्रमात्मकज्ञानस्य प्रतिबन्धकतावच्छेदकधर्मज्ञानात्पूर्वमपेक्षितत्वेन प्रथमोपस्थितत्वलाघवादेव साध्याभावप्रमात्वस्य हेत्वाभासत्वमुचितमिति भावः ॥ **विरोधादीति** ॥ यद्यपि व्यभिचारादीत्येव वक्तुमुचितं तथापि सत्प्रतिपक्षस्येव विरोधस्यापि साक्षादनुमितिप्रतिबन्धकत्वं व्यभिचारादीनां तु अनुमित्यादाविस्यादिपदग्राह्यपरामर्श एवेति तथाभिधानमिति ध्येयम् । साक्षादित्यनेन प्रतिबन्धकत्वोपयोगिज्ञानव्यावृत्तिः ॥ **तस्येति** ॥ बाधस्येत्यर्थः ॥ **व्यभिचारविषयकत्वासम्भवादिति** ॥ ननु परामर्शोत्तरं बाधबुद्धेर्व्यभिचारविषयकत्वासम्भवेऽपि परामर्शे एव बाधग्रहात्मकोऽस्तु तथा च साध्यव्याप्यहेतुमान्पक्षः साध्याभाववानिति व्यभिचारविषयकबाधबुद्धिसम्भव इत्याशङ्कायामाह ॥ **एकत्रेति** ॥ प्रतिबन्धकाभावस्य कार्यकालवृत्तित्वेन कारणत्वादिति भावः । इदमुपलक्षणम् । एकत्र पक्षे साध्यव्याप्यसाध्याभावविषयकज्ञानासम्भवाच्चेत्यपि द्रष्टव्यम् ॥ **बाधलौकिकेति** ॥ विरोधिज्ञानप्रतिबध्यतावच्छेदककोटौ लौकिकसन्निकर्षाजन्यत्वनिवेशनायोगोल-

रज्ञानादेरकिञ्चित्करत्वाद्बाधस्यानुमितिप्रतिबन्धकत्वं वाच्यम्। एवं यत्रोत्पत्तिक्षणावच्छिन्ने घटादौ गन्धव्याप्यपृथिवीत्ववत्ताज्ञानं तत्र बाधस्यैव प्रतिबन्धकत्वं वाच्यम्। नच पक्षे घटे गन्धसत्त्वात् कथं बाध इति वाच्यम्। पक्षतावच्छेदकदेशकालावच्छेदेनानुमितेरनुभवसिद्धत्वादिति। बाधतद्व्याप्यभिन्ना ये हेत्वाभासास्तद्व्याप्या अपि तन्मध्य एवान्तर्भवन्ति अन्यथा हेत्वाभासाधिक्यप्रसङ्गात्। बाधव्याप्यसत्प्रतिपक्षो भिन्न एव स्वतन्त्रेच्छेन मुनिना पृथगुपदेशात् सत्प्रतिपक्षव्याप्यस्तु न प्रतिबन्धक इति प्रघट्टकार्थः॥ ७१ ॥ ७२ ॥

## प्रभा.

.चोपपादनीयमिति भावः। वस्तुतो बाधस्थले व्यभिचारस्वरूपासिद्धयन्यतरनियमोऽपि स्थलविशेषे नास्तीत्याह ॥ **एवमिति** ॥ **बाधस्यैवेति** ॥ तथाच हेतोस्साध्यवदन्यवृत्तित्वाभावात् घटावृत्तित्वाभावाच न व्यभिचारस्वरूपासिद्धयोस्सत्त्वमिति भावः ॥ **अन्यथेति** ॥ व्यभिचारादिव्याप्यानामपि व्यभिचाराद्यनन्तर्गतत्व इत्यर्थः ॥ **आधिक्यप्रसङ्गादिति** ॥ तथाच ते च पञ्चेति भाष्यविरोधापत्त्या इष्टापत्तेर्वक्तुमशक्यत्वादिति भावः ॥ **न प्रतिबन्धक इति** ॥ साध्याभावव्याप्यवत्पक्षस्यैव सत्प्रतिपक्षतया तद्व्याप्यवत्ताज्ञानस्य साध्यानुमितिप्रतिबन्धकत्वे मानाभावादिति भावः ॥ ७१ ॥ ७२ ॥

## दिनकरीयम्.

पि व्याप्तिनिश्चये सत्यपि भविष्यतीत्यत आह ॥ **किञ्चेति** ॥ **अकिञ्चित्करत्वादिति** ॥ व्यभिचारज्ञानं ह्यनुमितौ न साक्षात्प्रतिबन्धकं किन्तु परामर्शप्रतिबन्धद्वारा तथा च परामर्शोत्तरकालीनं व्यभिचारज्ञानमकिञ्चित्करमिति तत्र बाधबुद्धिरेव प्रतिबन्धिकेति भावः। व्यभिचाराद्यसङ्कीर्णमपि बाधं प्रदर्शयति ॥ **एवमित्यादिना** ॥ **बाधस्यैवेति** ॥ तत्र पक्षे हेतुसत्त्वान्न स्वरूपासिद्धिः प्रतियोगिव्यधिकरणसाध्याभाववद्वृत्तित्वरूपस्य व्यभिचारस्य चाभावादिति भावः। बाधतद्व्याप्यभिन्ना ये हेत्वाभासास्तद्व्याप्या अपि तन्मध्य एवान्तर्भवन्तीति पाठः। बाधः साध्याभावविशिष्टपक्षादिस्तद्व्याप्यस्सत्प्रतिपक्षस्ताभ्यां भिन्ना व्यभिचारविरुद्धासिद्धास्तद्व्याप्यानां तत्रैवान्तर्भाव इत्यर्थः। व्यभिचारादेरिव व्यभिचारादिव्याप्यस्यापि व्याप्तिग्रहप्रतिबन्धकज्ञानविषयत्वेन पञ्चहेत्वाभासानन्तर्गतत्वे तस्यातिरिक्तहेत्वाभासत्वं स्यादित्यर्थः ॥ **न प्रतिबन्धक इति** ॥ साध्याभावव्याप्यव्याप्यवत्ताज्ञानस्य साध्यवत्ताज्ञानविरोधित्वे मानाभावादिति भावः ॥ ७२ ॥

## रामरुद्रीयम्.

कधर्मिकपरामर्शोत्तरमपि तद्धर्मिकलौकिकबाधबुद्धेरपि तदुत्तरमपि वह्निधर्मिकधूमाभाववदयोगोलकवृत्तित्वरूपव्यभिचारविषयकलौकिकप्रत्यक्षं भविष्यतीत्यर्थस्तथा च बाधबुद्धेर्व्यभिचारविषयकत्वमुपपद्यत एवेति भावः ॥ **तत्रेति** ॥ अनुमितावित्यर्थः। ननु स्वरूपासिद्ध्यभावेऽपि व्यभिचारोऽस्त्येवोत्पत्तिक्षणावच्छेदेन गन्धाभाववति घटे पृथिवीत्वस्य सत्त्वादित्यत आह ॥ **प्रतियोगिव्यधिकरणेति** ॥ व्यभिचारघटकसाध्याभावे प्रतियोगिवैयधिकरण्यस्याप्रवेशे कपिसंयोग्येतद्वृक्षत्वादित्यादिसद्धेतोरपि व्यभिचारित्वापत्तिरिति भावः। अथोक्तसद्धेतोर्बाधितत्वापत्तिवारणाय प्रतियोगिव्यधिकरणसाध्याभाववत्पक्षादिरेव बाधत्वेनाङ्गीकरणीयः एवमुक्तहेतोस्सत्प्रतिपक्षितत्ववारणाय प्रतियोगिव्यधिकरणसाध्याभावव्याप्यवत्पक्षस्यैव सत्प्रतिपक्षत्वमप्यङ्गीकरणीयम्। यत्तु साध्यस्य प्रतियोगिवैयधिकरण्यघटितसाध्याभावव्याप्तिमता विरोधाभावेन सत्प्रतिपक्षग्रहस्य साध्यग्रहाविरोधित्वात्प्रतियोगिवैयधिकरण्याघटितव्याप्तिघटित एव सत्प्रतिपक्षोऽङ्गीक्रियत इति नोक्तसद्धेतोः साध्याभावव्याप्यवत्पक्षत्वमिति तन्न तथासति प्रतियोगिवैयधिकरण्याघटिततदभावव्याप्यवत्ताज्ञानस्यैव सर्वत्र तद्वत्ताबुद्धिप्रतिबन्धकत्वमित्यायातं तथा च पूर्वं ग्रन्थकारोक्तस्यानुमितिकारणपरामर्शस्य साध्यसंशयप्रतिबन्धकत्वस्यानुपपत्तेः अनुमितिकारणपरामर्शे प्रतियोगिवैयधिकरण्यघटितव्याप्तेरेव विषयत्वात् तस्मात्प्रतियोगिवैयधिकरण्यघटितव्याप्तिघटितस्यापि साध्याभावव्याप्यस्य साध्यविरोधित्वसंभवेन तस्यैव सत्प्रतिपक्षत्वमुचितम्। एवं चोत्पत्तिक्षणावच्छिन्नघटे यत्र गन्धस्साध्यते न तत्र बाधः सम्भवति गन्धाभावस्य घटे

यः सपक्षे विपक्षे च भवेत्साधारणस्तु सः ।
यस्तूभयस्माद्व्यावृत्तः स त्वसाधारणो मतः ॥ ७३ ॥

यः सपक्ष इति ॥ सपक्षविपक्षवृत्तिः साधारण इत्यर्थः । सपक्षो निश्चितसाध्यवान् । विपक्षः साध्यवद्भिन्नः । विरुद्धवारणाय सपक्षवृत्तित्वमुक्तम् । वस्तुतो विपक्षवृत्तित्वमेव वाच्यं विरुद्धस्य साधारणत्वेऽपि दूषकताबीजस्य भिन्नतया तस्य पार्थक्यात् ॥ यस्तूभयस्मादिति ॥ सपक्षविपक्षव्यावृत्त इत्यर्थः । सपक्षः साध्यवत्तया निश्चितः । विपक्षः साध्यशून्यतया निश्चितः । शब्दोऽनित्यः शब्दत्वादित्यादौ यदा शब्देऽनित्यत्वस्य सन्देहस्तदा सपक्षत्वं विपक्षत्वं च घटादीनामेव तद्व्यावृत्तं च शब्दत्वमिति तदा तदसाधारणम् । यदा तु शब्देऽनित्यत्वानिश्चयस्तदा नासाधारणं इदं तु प्राचीनमते । नवीनमतं तु पूर्वमुक्तम् ॥ ७३ ॥

तथैवानुपसंहारी केवलान्वयिपक्षकः ।
यः साध्यवति नैवास्ति स विरुद्ध उदाहृतः ॥ ७४ ॥

केवलान्वयीति ॥ सर्वमभिधेयं प्रमेयत्वादित्यादौ सर्वस्यैव पक्षत्वात् सामानाधिकरण्यग्र-

**प्रभा.**

**दूषकताबीजस्येति** ॥ अव्यभिचारज्ञानप्रतिबन्धसामानाधिकरण्यग्रहप्रतिबन्धरूपदूषकताबीजस्येत्यर्थः । निश्चयघटितसपक्षत्वविपक्षत्वनिवेशप्रयोजनमुदाहरणं च दर्शयति ॥ **शब्दोऽनित्य इत्यादिना** ॥ इदं निश्चयघटितासाधारण्यलक्षणं ॥ **प्राचीनमत इति** ॥ साधारणस्यानित्यदोषत्ववादिप्राचीनमतानुसारेणेत्यर्थः ॥ **उक्तमिति** ॥ असाधारणस्साध्यासमानाधिकरण इति ग्रन्थेनोक्तमित्यर्थः ॥ ७३ ॥

**दिनकरीयम्.**

**दूषकताबीजस्य भिन्नतयेति** ॥ साधारणस्याव्यभिचारज्ञाने विरुद्धस्य सामानाधिकरण्यग्रहे प्रतिबन्धकत्वादिति भावः । असाधारण्यघटकं सपक्षत्वं निश्चयगर्भं न तु साध्यवत्त्वमात्रमित्याह ॥ **सपक्ष इति** ॥ एवमग्रेऽपि । सपक्षत्वविपक्षत्वयोर्निश्चयत्वनिवेशस्य फलमाह ॥ **शब्द इत्यादिना** ॥ **पूर्वमुक्तमिति** ॥ असाधारणः साध्यासमानाधिकरणो हेतुरित्यादिनोक्तमित्यर्थः ॥ ७३ ॥

**केवलान्वयिपक्षक इति** ॥ अत्र पक्षता साध्यसंशयरूपा गृह्यते तेन सर्वमभिधेयं प्रमेयत्वादित्यादौ यदा सिद्धिः सिषाधयिषा च तदा साध्यनिश्चयसम्भवेन सामानाधिकरण्यघटितव्याप्तिग्रहसम्भवात्तस्य

**रामरुद्रीयम्.**

प्रतियोगिसमानाधिकरणत्वादिति । मैवम् । यत्र देशकालयोः स्वरूपसम्बन्धरूपपक्षतावच्छेदकत्वं तत्र तदवच्छेदेन साध्याभाववत्त्वस्यापि बाधत्वाङ्गीकारादिति ध्येयम् । अत्र न सत्प्रतिपक्षोऽपि प्रतियोगिव्यधिकरणगन्धाभावव्याप्यस्य घटेऽसम्भवादत एवासङ्कीर्णबाधोदाहरणमिदम् । अन्यथा सत्प्रतिपक्षसङ्कीर्णत्वेन बाधस्य हेत्वाभासान्तरतात्रापि न स्यात् (अन्यथा) सत्प्रतिपक्षस्य बाधव्याप्यत्वं नानुपपन्नं व्यापकस्याधिकदेशवृत्तित्वे क्षतिविरहात् । न च गन्धाभावस्य केवलस्य संयोगाभाववत्केवलान्वयितया प्रतियोगिवैयधिकरण्यघटितव्याप्तिघटितगन्धाभावव्याप्यवत्त्वस्यात्रापि सम्भवेनैतस्यापि सत्प्रतिपक्षसङ्कीर्णत्वैवेति वाच्यम् । एतादृशस्य सत्प्रतिपक्षत्वाङ्गीकारे घटो गन्धवान् पृथिवीत्वाद्दत्यादिसद्धेतोरपि दुष्टत्वापत्तिरित्यलं पल्लवितेन ॥ **इति पाठ इति** ॥ क्वचित्पुस्तके तत्पदरहितस्य पाठस्य दर्शनादेतदभिहितम् ॥ ७१ ॥ ७२ ॥ **अग्रेऽपि** विपक्षत्वनिर्वचनेऽपि । साध्याभाववन्मात्रं न विपक्ष इत्येतल्लाभायैव निश्चितत्वांशनिवेश इति भावः ॥ **गृह्यत इति** ॥ ननु सिषाधयिषाविरहविशिष्टसिद्ध्यभावरूपेति शेषः । साध्यनिश्चयेत्यादि सम्भवादित्यन्तं सद्धेतुत्वे

हस्थलान्तराभावान्नानुमितिः इदं तु. न सम्यक् पक्षैकदेशे सहचारग्रहेऽपि क्षतेरभावात् अस्तु वा सहचाराग्रहः तावताप्यज्ञानरूपासिद्धिरेव न हेत्वाभासत्वं तस्य तथापि केवलान्वयिसाध्यकत्वं तत्त्वमित्युक्तम् ॥ यः साध्यवतीति ॥ एवकारेण साध्यवत्त्वावच्छेदेन

## प्रभा.

केवलान्वयिपक्षक इति मूलस्यात्यन्ताभावाप्रतियोगिपक्षतावच्छेदकावशिष्टसाध्यसंशयरूपपक्षतोपलक्षितपक्षतावच्छेदकावच्छिन्नवृत्तिरित्यर्थः तत्र पक्षताया विशेषणत्वे प्रयोजनाविरहात् गौरवाच्च पक्षतावच्छेदकावच्छिन्ने उपलक्षणतया पक्षतारूपसाध्यसन्देहप्रदर्शनं तु तदधीनहेतुविशेष्यकसाध्यसामानाधिकरण्यसंशयलाभाय पक्षे साध्यसन्देहे हेतौ साध्यसामानाधिकरण्यसंशयस्यावश्यावर्जनीयत्वात् तथाच हेतौ साध्यसंशये सति सामानाधिकरण्यविशिष्टव्याप्तिनिश्चयः प्रतिबध्यत इति मूलाभिप्रायः । इममेवार्थमुदाहरणद्वारोपपादयति ॥ **सर्वमभिधेयमिति** ॥ **नानुमितिरिति** ॥ व्याप्तिज्ञानानुत्पत्त्येत्यादिः ॥ **क्षतेरभावादिति** ॥ तादृशसहचारनिश्चयकालेऽपि निरुक्तपक्षतोपलक्षितसर्वत्वावच्छिन्नवृत्तित्वरूपानुपसंहारित्वस्य सत्त्वादित्यर्थः । तथाच सर्वत्वावच्छिन्नविशेष्यकसाध्यसंशयकालेऽपि घटत्वावच्छिन्नविशेष्यकसाध्यनिश्चयबाधकाभावेन तदधीनव्याप्तिनिश्चयोत्पत्त्या तदधीनानुमित्युत्पत्त्या च निरुक्तानुपसंहारित्वज्ञानस्यान्यतरप्रतिबन्धकत्वाभावात् न तस्य हेत्वाभासत्वमिति भावः । ननु प्राचीनमते समानविषयकत्वेनैव प्रतिबन्धकत्वात् पर्वतत्वावच्छिन्ने साध्यसंशयकाले घटत्वावच्छिन्नेऽपि साध्यनिश्चयो न भवत्येवेत्यत आह ॥ **अस्तु वेति** ॥ **असिद्धिरेवेति** ॥ पुरुषस्येत्यादिः ॥ **तस्येति** ॥ सहचारग्रहस्येत्यर्थः । तथाच तस्य स्वरूपसत एवानुमित्युत्पादप्रयोजकतया तादृशान्यतरप्रतिबन्धकज्ञानविषयत्वाभावात् न हेत्वाभासत्वमिति भावः ॥ **तत्त्वमित्युक्तमिति** ॥ अनुपसंहारित्वमित्युक्तमित्यर्थः । इदमुपलक्षणम् । व्यतिरेकव्याप्तिज्ञानप्रतिबन्धफलकत्वमप्युक्तमिति बोध्यम् । यस्साध्यवति नैवास्तीति यथाश्रुतमूलात् साध्यवन्निरूपितवृत्तित्वसामान्याभाववत्त्वं विरुद्धत्वमित्यर्थो लभ्यते तच्च निरुक्तासाधारणस्वरूपमेवेति मूलमन्यथा व्याचष्टे ॥ **एवकारेणेत्यादि** ॥ तथाच

## दिनकरीयम्.

सद्धेतोरलक्ष्यतया सिषाधयिषाविरहविशिष्टसिद्ध्यभाववविशिष्टस्य पक्षस्य तदा केवलान्वयित्वेऽपि तत्र नास्ति व्याप्तिः । अनुपसंहारिणो हेत्वाभासत्वमुपपादयति ॥ **सर्वमभिधेयमित्यादिना** ॥ **सामानाधिकरण्यग्रहस्थलान्तराभावादिति** ॥ संशयोत्पत्तिक्षणे निश्चयवारणाय निश्चयं प्रति संशयसामग्र्याः प्रतिबन्धकत्वस्यावश्यं वाच्यतया प्रकृते सर्वत्र साध्यसन्देहसत्त्वे तत्पूर्वं तत्सामग्र्याः सत्त्वेन साध्यनिश्चयस्य कुत्राप्यसम्भवेन व्यापकसाध्यसामानाधिकरण्यविशिष्टप्रमेयत्वादिरूपव्याप्तिग्रहानुत्पादान्न तत्रानुमितिरित्यनुपसंहारिणो हेत्वाभासत्वमिति भावः ॥ **क्षतेरभावादिति** ॥ तदानीमपि केवलान्वयिपक्षताकत्वस्यानुपसंहारित्वस्य क्षतेरभावादित्यर्थः । तथा च तत्रानुपसंहारित्वस्य सत्त्वात्तस्य व्याप्तिज्ञानानुत्पादप्रयोजकत्वाभावाद्धेत्वाभासत्वानुपपत्तिरिति भावः । न च संशयसामग्र्याः सत्त्वात् कथं पक्षैकदेशे साध्यनिश्चय इति वाच्यम् । सर्वत्वधर्मितावच्छेदककसंशयसामग्रीसत्त्वेऽपि घटत्वादिधर्मितावच्छेदककसाध्यनिश्चयोत्पादे बाधकाभावात् समानप्रकारकत्वेनैव विरोधात् । समानविषयकत्वेन प्रतिबन्धकत्वेऽप्याह ॥ **अस्तु वेति** ॥ तस्य

## रामरुद्रीयम्.

हेतुः ॥ **पक्षस्येति** ॥ तथा च मूले पक्षपदं पक्षतापरं भावप्रधाननिर्देशत्वादन्यथा आकाशात्यन्ताभावो नित्यो ध्वंसप्रागभावभिन्नाभावत्वादित्यादेरनुपसंहारित्वाभावेनानुपपत्तिरिति ध्येयम् । ननु संशयस्य निश्चयाप्रतिबन्धकत्वेन सर्वत्र साध्यसन्देहसत्त्वेऽपि क्वचित् साध्यनिश्चयसम्भवेन सामानाधिकरण्यनिश्चयो न दुर्घट इत्यत आह ॥ **संशयोत्पत्तीति** ॥ **तदानीमपि** घटोऽभिधेय इत्यादिनिश्चयदशायामपीत्यर्थः ॥ **क्षतेरभावादितीति** ॥ तादृशनिश्चयकालेऽपि सर्वमभिधेयं न वेति संशयसम्भवात्सर्वत्वावच्छेदेन निश्चयाभावादिति भावः । ननु किमेतावतेत्यत आह ॥ **तथा चेति** ॥ **समानप्रकारकत्वेनैवेति** ॥ तद्धर्मितावच्छेदककसंशयसामग्र्या

हेत्वभावो बोधितः तथा च साध्यव्यापकीभूताभावप्रतियोगित्वं तदर्थः ॥ ७४ ॥

आश्रयासिद्धिराद्या स्यात् स्वरूपासिद्धिरप्यथ ।
व्याप्यत्वासिद्धिरपरा स्यादसिद्धिरतस्त्रिधा ॥ ७५ ॥
पक्षासिद्धिर्यत्र पक्षो भवेन्मणिमयो गिरिः ।
ह्रदो द्रव्यं धूमवत्त्वादत्रासिद्धिरथापरा ॥ ७६ ॥
व्याप्यत्वासिद्धिरपरा नीलधूमादिके भवेत् ।
विरुद्धयोः परामर्शे हेत्वोः सत्प्रतिपक्षता ॥ ७७ ॥
साध्यशून्यो यत्र पक्षस्त्वसौ बाध उदाहृतः ।
उत्पत्तिकालीनघटे गन्धादिर्यत्र साध्यते ॥ ७८ ॥

असिद्धिं विभजते ॥ **आश्रयासिद्धिरित्यादि** ॥ **पक्षासिद्धिरिति** ॥ आश्रयासिद्धिरित्यर्थः ॥ **अपरेति** ॥ स्वरूपासिद्धिरित्यर्थः ॥ **नीलधूमादिक इति** ॥ नीलधूमत्वादिकं गुरुतया न हेतुतावच्छेदकं स्वसमानाधिकरणव्याप्यतावच्छेदकधर्मान्तराघटितस्यैव व्याप्यतावच्छेदकत्वात् ।

## प्रभा.

साध्याधिकरणत्वावच्छेद्यहेत्वभाववत्त्वं विरुद्धत्वमिति स्वरूपयोर्भेदात नोक्तदोष इति भावः । ननु व्याप्यवृत्तेरवच्छेदकानपेक्षणाद्धेत्वभावे तदवच्छिन्नत्वमप्रसिद्धं यदि व्यापकत्वमर्थः तदा हेत्वभावे साध्याधिकरणत्वव्यापकत्वानिवेशापेक्षया लाघवेन साध्यव्यापकत्वनिवेशनमेवोचितमित्याभिप्रायेण फलितार्थमाह ॥ **तथाचेति** ॥ **तदर्थ इति** ॥ मूलस्य तात्पर्यविषयीभूतार्थ इत्यर्थः ॥ ७४ ॥

**स्वसमानाधिकरणेत्यादि** ॥ तादृशधर्मान्तरघटितं यद्यत् स्वं तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदकूटविशिष्टधर्मस्यैवेत्यर्थः । तेन यथाश्रुते तद्वह्निमान् तद्धूमादित्यादौ तद्धूमानिष्ठतद्व्यक्तित्वस्य स्वसमानाधिकरणव्याप्यतावच्छेदकधर्मान्तराप्रसिद्ध्या तस्य व्याप्यतावच्छेदकत्वानुपपत्तिरिति दूषणस्य नावकाशः धूमत्वस्यापि तादृशस्वात्मकधर्मघटितत्वेन व्याप्यतावच्छेदकत्वानुपपत्तिरतोऽन्तरेति । अत्रान्तरत्वं न स्वाभिन्नत्वं धूमत्वस्य नीलधूमत्वभिन्नत्वाभावात् । नापि तदविषयकप्रतीतिविषयत्वं धूमत्वज्ञानस्यापि तदभिन्ननीलधूमत्वविषयकत्वात् । किन्तु तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वमेव स्वभिन्नत्वं बोध्यम् धूमप्रागभावत्वस्य निरुक्तस्वभिन्नत्वाश्रयाभावत्वघटितत्वात् स्वसमानाधिकरणधर्मे व्याप्यतावच्छे-

## दिनकरीयम्.

सहचाराग्रहस्य । तस्य स्वरूपसत एव विरोधित्वेन तज्ज्ञानस्यानुमित्यनुत्पादप्रयोजकत्वाभावादिति भावः । न च तत्र सहचाराग्रहप्रयोजकः संशय एव हेत्वाभासस्तस्यापि स्वरूपसत एव विरोधित्वात् । न च संशयविषयस्य साध्याभावविशिष्टपक्षादेरेव तत्राभासत्वमिति वाच्यम् । सर्वमभिधेयमित्यादावभिधेयत्वाभावविशिष्टपक्षाप्रसिद्धेरित्यन्यत्र विस्तरः ॥ **तदर्थ इति** ॥ तेनासाधारणे नातिव्याप्तिरिति भावः ॥ ७४ ॥

## रामरुद्रीयम्.

एव तद्धर्मितावच्छेदककनिश्चयप्रतिबन्धकत्वेन घटत्वावच्छिन्ने चाभिधेयत्वव्याप्यघटपदवाच्यत्ववत्तानिश्चयसत्त्वेन तदवच्छिन्ने संशयसामग्र्यभावादिति भावः ॥ **समानविषयकत्वेनेति** ॥ तद्विशेष्यकसंशयसामग्र्याः तद्विशेष्यकनिश्चयप्रतिबन्धकत्वे त्वित्यर्थः । ननु सर्वमभिधेयमित्यादौ साध्याभावविशिष्टपक्षाप्रसिद्धावपि संशयविषयसाध्यादेरेवाभासत्वमस्तु इत्यत आह ॥ **अन्यत्रेति** ॥ पर्वतो वह्निमानित्यादौ हेत्वाभासवारणाय यद्रूपावच्छिन्नविषयकत्वमनुमितिप्रतिबन्धकतानातिरिक्तवृत्ति तद्रूपावच्छिन्नस्यैव हेत्वाभासत्वेनाङ्गीकरणीयतया साध्यादेरतथात्वादिति भावः ॥ ७३ ॥ ७४ ॥

**धूमप्रागभावत्वसङ्ग्रहाय स्वसमानाधिकरणेति ॥ विरुद्धयोरिति ॥ कपिसंयोगतदभावव्याप्यवत्तापरामर्शेऽपि न सत्प्रतिपक्षत्वमत उक्तं विरुद्धयोरिति । तथा च स्वसाध्यविरुद्धसाध्याभावव्याप्यवत्तापरामर्शकालीनसाध्यव्याप्यवत्तापरामर्शविषय इत्यर्थः ॥ साध्यशून्य**

प्रभा.

दकत्वानिवेशनम् । धूमप्रागभावत्वघटकाभावत्वस्यातथात्वान्नानुपपत्तिः । केचित्तु नन्वेवं सति वह्निमदन्यावृत्तित्वस्य वह्निव्याप्यतावच्छेदकत्वानुपपत्तिः तस्य वह्नित्वरूपनिरुक्तधर्मघटितत्वात् धूमान्यान्यत्वादेरपि व्याप्यतावच्छेदकत्वभिया धर्मान्तरस्य विशेष्यविधया घटकत्वविवक्षणासंभवादिति चेन्न स्वसमानाधिकरणपदेन स्वव्यापकत्वस्य विवक्षणाद्धर्मान्तरस्य स्वव्यापकत्वं च स्वघटकसाध्यसंबन्धितावच्छेदकत्वेन अन्यथा धूमालोकान्यतरत्वस्य वह्निव्याप्यतावच्छेदकत्वापत्तेः धूमत्वालोकत्वयोः प्रत्येकमन्यतरत्वव्यापकत्वादित्याहुः तदसत् प्राचीनमते वह्निमदन्यावृत्तित्वस्यैव वह्निव्याप्तिरूपतया तस्य व्याप्यतावच्छेदकत्वासंभवात् स्वस्य स्वानवच्छेदकत्वनियमात् । अस्तु वा वह्निमदन्यावृत्तित्वस्य तथात्वम् । तथापि वह्निमदन्यावृत्तित्वावच्छिन्नप्रतियोगिताकाभावरूपस्याखण्डतया घटाभावादेरिव पदार्थान्तरघटितत्वाभावेन वह्नित्वघटितत्वाभावात् । यच्चोक्तं धूमान्यान्यत्वादेर्व्याप्यतावच्छेदकत्वापत्तिभिया धर्मान्तरस्य विशेष्यविधया घटकत्वनिवेशासंभवादिति तदपि न धूमभिन्नभेदरूपस्य धूमान्यान्यत्वस्य धूमत्वरूपतया

## दिनकरीयम्.

**धूमप्रागभावत्वेति** ॥ तस्य व्याप्यतावच्छेदकीभूतधूमत्वघटितत्वेन तत्संग्रहो न स्यादिति भावः। स्वस्य स्वाविषयकप्रतीतिविषयत्वरूपस्वाघटितत्वाभावाद्धर्मान्तरेति । नच नीलधूमत्वस्यापि तादृशधर्मान्तराघटितत्वमस्त्येव धूमत्वस्य नीलधूमत्वाभिन्नत्वाभावादिति वाच्यम् । स्वाविषयकप्रतीतिविषयत्वस्य स्वपर्याप्तावच्छेदकतानिरूपकप्रकारतानिरूपितावच्छेदकतापर्याप्त्यनधिकरणत्वपर्यवसितस्य तदर्थत्वात् शुद्धधूमत्वपर्याप्तावच्छेदकताकप्रकारत्वनीलत्वादिविशिष्टधूमत्वपर्याप्तावच्छेदकताकप्रकारत्वयोर्भेदात् । नन्वेवं वह्निमदन्यावृत्तित्वस्य वह्निव्याप्यतावच्छेदकतानुपपत्तिस्तस्य वह्नित्वरूपतादृशधर्मान्तरघटितत्वात् धूमान्यान्यत्वादेर्व्याप्यतावच्छेदकत्वापत्तिभिया धर्मान्तरस्य विशेष्यविधया घटकत्वविवक्षणस्याशक्यत्वादिति चेन्न स्वसमानाधिकरणपदेन स्वव्यापकत्वस्य विवक्षितत्वात् वह्नित्वस्य वह्निमदन्यावृत्तित्वाव्यापकत्वाद्धूमत्वस्य धूमान्यान्यत्वव्यापकत्वाच्चोक्तदोषासम्भवात् । स्वव्यापकत्वं च धर्मान्तरस्य स्वघटकसाध्यसम्बन्धितावच्छेदकत्वेन अन्यथा धूमालोकान्यतरत्वस्य वह्निव्याप्यतावच्छेदकत्वापत्तेः धूमत्वालोकत्वयोः प्रत्येकमन्यतरत्वाव्यापकत्वादिति। विरुद्धयोः परामर्शे हेत्वोरित्यत्र विरुद्धयोर्हेत्वोः परामर्श इति भ्रमवारणायाह ॥ **स्वसाध्येति** ॥ स्वं सत्प्रतिपक्षत्वेनाभिमतो हेतुः तत्साध्यविरुद्धो यः साध्याभाव इत्यर्थः । ननूत्पत्तिकालीनघट इ-

## रामरुद्रीयम् .

ननु धूम इति प्रतीतेरपि विशिष्टधूमादिविषयकत्वं शुद्धस्य विशिष्टानतिरिक्तत्वादतस्तदर्थमाह ॥ **स्वेति** ॥ **तदर्थत्वात्** अन्तरपदार्थत्वात् ॥ पर्याप्तिः प्रत्येकवृत्तित्वे तु पर्याप्तिसम्बन्धेन तादृशावच्छेदकत्वावच्छिन्नभिन्नत्वमेव पर्याप्त्यनधिकरणत्वस्थाने वक्तव्यं प्रत्येकमुभयभिन्नत्वस्यैव केवलधूमत्वे विशेषणविशेष्योभयपर्याप्त्यवच्छेदकत्वावच्छिन्नभेदसत्त्वादिति ध्येयम् ॥ **वह्निमदन्यावृत्तित्वस्येति** ॥ पर्वतो वह्निमान् वह्निमदन्यावृत्तेरिति सन्न्यायप्रयोगस्य सर्वसम्मतत्वेनेष्टापत्त्यसम्भवादिति भावः । ननु धर्मान्तराघटितत्वं विशेष्यविधया धर्मान्तरघटितं यत्तदन्यत्वमेव धूमत्वस्य विशेष्यविधया नीलधूमत्वघटकत्वेऽपि वह्निमदन्यावृत्तित्वे वह्नित्वस्य न तथा घटकत्वमिति न तस्य व्याप्यतानवच्छेदकतापत्तिरित्यत आह ॥ **धूमान्यान्यत्वादेरिति** ॥ **साध्यसम्बन्धितावच्छेदकत्वेन** ॥ साध्यव्यापकतावच्छेदकत्वेन । स्वसमानाधिकरणाभावप्रतियोगितानवच्छेदकत्वेन स्वसमानाधिकरणाभावप्रतियोगितानवच्छेदकतादृशधर्मवत्त्वमेव व्यापकत्वमिति भावः॥ **इति भ्रमेति** ॥ यथार्थत्वे पर्वतो वह्निमान्धूमादित्यादौ वह्न्यभावव्याप्यपाषाणमयत्वस्य परामर्शदशा-

**इति ॥ पक्षः पक्षतावच्छेदकाविशिष्ट इत्यर्थः । तेन घटे गन्धसत्त्वेऽपि न क्षतिः । एवं मूलावच्छिन्नो वृक्षः कपिसंयोगीत्यत्रापि बोध्यम् ॥ ७५ ॥ ७६ ॥ ७७ ॥ ७८ ॥**

**इति श्रीविश्वनाथपञ्चाननभट्टाचार्यविरचितायां सिद्धान्तमुक्तावल्यां अनुमानखण्डम् ॥**

## प्रभा.

तस्य व्याप्यतावच्छेदकत्वात् । अत एव नहि घटभिन्नभेदो घटत्वादतिरिच्यते मानाभावादिति दीधितिकारोक्तिरपि सङ्गच्छते। एवंच वह्निमदन्यावृत्तित्वस्य तादृशधर्मान्तराघटितत्वेन व्याप्यतावच्छेदकत्वसंभवात् स्वसमानाधिकरणपदस्य स्वव्यापकत्वपरत्वे बीजाभावः । यच्चोक्तं धूमालोकान्यतरत्वस्य व्याप्यतावच्छेदकत्वापत्तिवारणाय स्वघटकसाध्यसंबन्धितावच्छेदकत्वेन स्वव्यापकत्वं बोध्यमिति तदपि न धूमभेदालोकभेदोभयावच्छिन्नप्रतियोगिताकभेदरूपस्यान्यतरत्वस्याखण्डतया धूमत्वादेरिव पदार्थान्तरघटितत्वाभावेन व्याप्यतावच्छेदकत्वे क्षतिविरहात्। वस्तुतस्तु व्याप्यतावच्छेदकधर्मान्तराघटितस्य व्याप्यतावच्छेदकत्वादित्येव नियमः धर्मान्तरशब्दस्य स्वभिन्नधर्म इत्येवार्थः धर्मे स्वभिन्नत्वमपि स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वमेव तद्घटितं यथाश्रुतार्थकरणे उक्तदोषापत्तेः। तदघटितत्वमिति तद्घटितं यद्यत् स्वं तत्तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वमेव नतु तत्तद्व्यक्तित्वादिभिन्नप्रतियोगिताकभेदकूटरूपं धूमत्वे नीलधूमत्वभिन्नत्वाभावेन व्याप्यतावच्छेदकत्वानुपपत्तेः। प्रतियोगिकोटौ प्रविष्टं तद्घटितत्वं तदभिन्नत्वरूपमेव ग्राह्यम् । अन्यथानिवेशे स्वसमानाधिकरणत्वनिवेशापत्त्या गौरवापत्तेः । तथाच स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं यद्व्याप्यतावच्छेदकं तदभिन्नं यद्यत्स्वं तत्तदवच्छिन्नविषयकत्वाभावकूटवत्प्रतीतिविषयतावच्छेदकस्यैव व्याप्यतावच्छेदकत्वादिति नियमः । धूमत्वस्य तु धूमप्रागभावत्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वेऽपि व्याप्यतावच्छेदकत्वेऽपि च तद्घटितस्वपदार्थस्याप्रसिद्ध्या स्वपदेन धूमप्रागभावत्वस्य उपादानासंभवे नीलधूमत्वादिकमेव स्वपदेनोपादाय निरुक्तव्याप्यतावच्छेदकं धर्मान्तरं धूमत्वं गृहीत्वा तदभिन्नत्वरूपतद्घटितत्वाश्रयीभूतं यद्यत् स्वं नीलधूमत्वादिकं प्रसिध्यतीति तदवच्छिन्नप्रतीतिविषयतावच्छेदकत्वाभाववत्प्रतीतिविषयतावच्छेदकत्वस्य धूमप्रागभावत्वे स-

## दिनकरीयम्.

त्यादिमूलोक्तमयुक्तं तत्र पक्षे घटे गन्धशून्यत्वाभावादत आह ॥ **पक्षतावच्छेदकेति** ॥ कालस्येव देशस्यापि पक्षतावच्छेदकत्वे बाधसम्भवात्तदप्रदर्शनेन मूलस्य न्यूनतां परिहर्तुमाह ॥ **एवमिति** ॥ **बोध्यमिति** ॥ तत्र पक्षे वृक्षे संयोगसत्त्वेऽपि पक्षतावच्छेदकमूलावच्छेदेन संयोगाभावादिति भावः ॥ ७५ ॥ ७६ ॥ ॥ ७७ ॥ ७८ ॥

इति श्रीभारद्वाजकुलाम्बुधिपूर्णचन्द्रबालकृष्णभट्टात्मजमहादेवभट्टविरचिते मुक्तावलीप्रकाशेऽनुमानखण्डं समाप्तम् ॥

## रामरुद्रीयम्.

यां सत्प्रतिपक्षत्वानुपपत्तेः प्राचीनैः तत्रापि सत्प्रतिपक्षत्वाङ्गीकारादिति भावः । साध्यसाध्याभावयोरविरोधस्थले तूभयपरामर्शसत्त्वेऽपि न सत्प्रतिपक्षव्यवहार इति मन्तव्यम् ॥ **गन्धशून्यत्वाभावादिति** ॥ निरवच्छिन्नवृत्तिकगन्धाभावविरहादित्यर्थः । तेनोत्पत्तिकालावच्छेदेन घटे गन्धाभावसत्त्वेऽपि न क्षतिः । पक्षपदस्य पक्षतावच्छेदकविशिष्टार्थत्वे तूत्पत्तिकालीनत्वविशिष्टघटनिरूपितगन्धाभावनिष्ठाधेयताया निरवच्छिन्नत्वेन भवति तादृशगन्धाभाववद्विशिष्टपक्षो बाध इति भावः । अथवा गन्धशून्यत्वाभावात् गन्धभावाभावादित्यर्थः। गन्धवत्त्वादिति यावत्। तथा च प्रतियोगिव्यधिकरणसाध्याभाववत्पक्षस्यैव बाधत्वेन कथमत्र बाध इति भावः। पक्षपदस्य पक्षतावच्छेदकविशिष्टार्थकत्वे च देशकालयोः पक्षतावच्छेदकत्वस्थले पक्षतावच्छेदकावच्छेदेन साध्याभाववत्त्वस्यापि पृथक् बाधतया न बाधानुपपत्तिरिति भावः ॥ ७५ ॥ ७६ ॥ ७७ ॥ ७८ ॥

इति दिनकरीयतरङ्गिण्यामनुमानतरङ्गः ॥

ग्रामीणस्य प्रथमतः पश्यतो गवयादिकम् ।
सादृश्यधीर्गवादीनां या स्यात् सा करणं मतम् ॥ ७९ ॥
वाक्यार्थस्यातिदेशस्य स्मृतिर्व्यापार उच्यते ।
गवयादिपदानां तु शक्तिधीरुपमाफलम् ॥ ८० ॥

उपमितिं व्युत्पादयति ॥ ग्रामीणस्येति ॥ यत्रारण्यकेन केनचिद्ग्रामीणायोक्तं गोसदृशो गवयपदवाच्य इति पश्चाद्ग्रामीणेन क्वचिदरण्यादौ गवयो दृष्टः तत्र गोसादृश्यदर्शनं

प्रभा ।

स्वात् तस्य व्याप्यतावच्छेदकत्वोपपत्तिः । यद्यपि धूमत्वविशिष्टनीलधूमत्वस्य धूमत्वभिन्नत्वमस्त्येव तथापि तस्य नीलत्वधूमत्वोभयात्मकतया तत्र धूमत्वभिन्नत्वाभावादिति परन्तु स्वसमानाधिकरणत्वस्य स्वाभिन्नत्वव्यापकतया धूमत्वे स्वसामानाधिकरण्यरूपव्यापकत्वस्याभावात् व्याप्यभूतस्वाभिन्नत्वस्याप्यभाव इति स्फुटीकरणाय स्वसमानाधिकरणत्वं धर्मान्तरे निवेशनीयमिति प्रतिभाति । एतेनोक्तनियमे पारिभाषिकं तद्घटितत्वं निवेश्य धूमप्रागभावत्वसङ्ग्रहाय धर्मान्तरे स्वसमानाधिकरणत्वनिवेशनं प्रक्षालनाद्धीति न्यायग्रस्तमिति दूषणमपास्तम् । विरुद्धयोः परामर्श इति मूलस्य विरुद्धौ यौ साध्यतदभावौ तत्साधकयोर्हेत्वो परामर्शकाले सत्प्रतिपक्षतेत्यभिप्रायेण विरुद्धत्वविशेषणप्रयोजनमाह ॥ कपिसंयोगेत्यादि ॥ विरुद्धयोरितीति ॥ विरुद्धत्वेन गृह्यमाणयोरित्यर्थः । तेनाविरुद्धयोस्साध्यतदभावयोरपि विरुद्धत्वज्ञानकाले उभयव्याप्यवत्तापरामर्शसत्त्वे सत्प्रतिपक्षत्वोपपत्तिः । नन्वेवं सत्प्रतिपक्षत्वं न हेत्वाभासरूपं तज्ज्ञानस्यानुमितितत्करणान्यतरज्ञानाविरोधित्वात् किन्तु व्यावहारिकं तत् वाच्यमित्यनतिप्रसक्तं तत्स्वरूपमाह ॥ तथा चेति ॥ स्वं हेत्वभिमतपरं तत्साध्यस्य विरुद्धत्वेन गृह्यमाणः यस्साध्याभावः तद्व्याप्यत्वप्रकारतानिरूपितहेतुतावच्छेदकावच्छिन्नप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यताशालिनिश्चयकालीनप्रकृतसाध्य—व्याप्यत्वप्रकारतानिरूपितहेतुतावच्छेदकावच्छिन्नप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यताशाली यो निश्चयः तद्विषयत्वरूपसत्प्रतिपक्षत्वावच्छिन्नः तादृशव्यवहाराश्रय इत्यर्थः । तेन साध्यव्याप्यहेतोः हेतुविशिष्टपक्षस्य वा प्रसिद्धत्वेऽपि नोक्तोभयपरामर्शानुपपत्तिः । प्रतियोग्यनवच्छेदककालावच्छिन्नपक्षकस्थलेऽसंकीर्णबाधमुदाहृत्य न्यूनतापरिहाराय प्रतियोग्यनवच्छेदकदेशावच्छिन्नपक्षकस्थले तमुदाहरति ॥ एवमिति ॥ तथाच केवलवृक्षे कपिसंयोगसत्त्वेऽपि पक्षतावच्छेदकमूलावच्छेदेन कपिसंयोगाभावसत्त्वादिति भावः ॥ ७५ ॥ ७६ ॥ ७७ ॥ ७८ ॥

॥ इति मुक्तावलीप्रभायामनुमानपरिच्छेदस्समाप्तः ॥

प्रसङ्गसङ्गत्यावसरसङ्गत्या वानुमाननिरूपणानन्तरमनुमितिनिरूपणानन्तरं च उपमानमुपमितिं च निरूपयितुं कारणाभावादुपमानमेव नोत्पत्तुमर्हतीति शङ्कानिरासायादौ तत्साधनं प्रदर्शयति ॥ मूले ग्रामीणस्येति ॥ ननु ग्रामीणस्य गवि सास्नादीनां प्रत्यक्षविषयत्वेनारण्यं प्रविष्टस्य तस्य चक्षुस्सन्निकर्षादेव गो-

दिनकरीयम् ।

अवसरसङ्गतिमभिप्रेत्याह ॥ उपमितिमिति ॥ तत्र गवये ॥ सादृश्यदर्शनं सादृश्यप्रत्यक्षम् ॥ तदुप-

रामरुद्रीयम् ।

**अवसरसङ्गतिमिति** ॥ प्रतिबन्धकीभूतशिष्यजिज्ञासानिवृत्त्या अवश्यवक्तव्यत्वमवसरः प्रकृते चानुमानोपमानयोर्द्वयोरपि प्रत्यक्षोपजीवकत्वेऽप्यनुमानस्य बहुवादिसम्मतत्वेन निरसनीयाल्पवादिविप्रतिपत्तिकत्वेन सुगमतया अनुमान एव प्रायशो व्युत्पित्सोः प्रथमतो जिज्ञासा जायत इत्यनुमाननिरूपणेन प्रतिबन्धकीभूतशिष्यजिज्ञासानिवृत्त्या अवश्यवक्तव्यत्वमुपमानस्येत्यवसरसङ्गत्याऽनुमाननिरूपणानन्तरमुपमान-निरूपणमिति भावः ॥ **सादृश्यप्रत्यक्षमिति** ॥ सादृश्यज्ञानस्य प्रत्यक्षान्यस्यैवोपमितिकरणत्व उपमान-

**यज्ज्ञातं तदुपमितिकरणं तदनन्तरं गोसदृशो गवयपदवाच्य इत्यतिदेशवाक्यार्थस्मरणं**

## प्रभा.

सदृशव्यक्तेर्दर्शनरूपधर्मिज्ञानेन गोसादृश्यप्रकारकेदन्त्वावच्छिन्नविशेष्यकप्रत्यक्षसंभवेऽपि तदुत्तरं सादृश्याव-च्छिन्नविशेष्यकगवयपदवाच्यत्वप्रकारकस्मरणासंभवः अनुभूतस्यैव स्मरणसंभवादित्याशङ्कां तस्यानुभवसत्त्व-प्रदर्शनेन परिहरति ॥ **मुक्तावल्यां यत्रेति** ॥ यस्मा इत्यर्थः । यस्मै ग्रामीणायेत्यर्थः ॥ **पश्चादिति** ॥ आरण्यकेन उक्तवाक्यश्रवणजन्यवाक्यार्थानुभवोत्तरमित्यर्थः ॥ **ग्रामीणेनेति** ॥ तेन ग्रामीणेनेत्यर्थः ॥ **तत्रेति** ॥ दर्शनविषयव्यक्तावित्यर्थः ॥ **गोसादृश्यदर्शनमिति** ॥ दर्शनविषयगवयव्यक्तित्वावच्छिन्नवि-शेष्यकगोनिरूपितसादृश्यात्मकसास्नादिमत्त्वप्रकारकप्रत्यक्षमित्यर्थः ॥ **जातमिति** ॥ यदित्यादिः ॥ **तदुप-मितिकरणमिति** ॥ तदेवोपमितिकरणमित्यर्थः । इदन्तु मिश्रमतमनुसृत्योक्तम् । केचित्तु अतिदेशवा-क्यार्थशाब्दबोधः करणं अतिदेशवाक्यार्थस्मरणं व्यापारः सादृश्यविशिष्टपिण्डदर्शन सहकारीति संप्रदायमत-न्तु सहकारितयावश्यकसादृश्यविशिष्टपिण्डदर्शनस्यैव करणत्वं युक्तमित्युपेक्षितमित्याहुः। तदसत् तन्मते श-क्तिज्ञानस्यार्थस्मृताविव सादृश्यविशिष्टपिण्डदर्शनस्यापि अतिदेशवाक्यार्थस्मृतावेवोपयोगित्वेन उपमितावसह-कारितया तस्य करणत्वकल्पनायामुक्तयुक्तेरसंभवात् । परन्तु अतिदेशवाक्यार्थस्मृतौ अतिदेशवाक्यार्थशा-ब्दबोधसादृश्यविशिष्टपिण्डदर्शनयोः कारणत्वेऽपि तादृशस्मृतिद्वारा सादृश्यविशिष्टपिण्डदर्शनस्य उपमितौ सं-स्कारमद्वारीकृत्य हेतुत्वे लाघवं तादृशशाब्दबोधस्य तु तादृशस्मृतिद्वारा हेतुत्वसंभवेऽपि संस्कारमद्वारीकृत्य तन्न संभवतीति गौरवं हृदि निधायैव तन्मतमुपेक्षितमिति हृदयम् । उपा-ध्यायास्तु सादृश्यविशिष्टपिण्डदर्शनोत्तरमेव यत्रातिदेशवाक्यार्थशाब्दबोधः तत्र नातिदेशवाक्यार्थस्मरणापे-क्षा तादृशशाब्दबोधस्यैव सत्त्वात् तथाच तत्र व्यभिचारादुपमितौ तादृशस्मृतिद्वारा तादृशसादृश्यविशिष्टपि-ण्डदर्शनं न करणं किन्तु सादृश्यज्ञानमात्रं करणं विशेषणज्ञानविधया तज्जन्यमतिदेशवाक्यार्थज्ञानं सादृश्य-विशिष्टपिण्डदर्शनं च द्वयं व्यापार इत्याहुः तन्न । सादृश्यविशिष्टपिण्डदर्शनोत्तरं यत्रातिदेशवाक्यार्थशाब्द-बोधः तत्र द्वयोर्व्यापारत्वकल्पनाप्रयुक्तगौरवभिया मिश्रैरुपमितेरनभ्युपगमात् । किन्तु तादृशशाब्दबोधोत्तरं पुनस्सादृश्यविशिष्टपिण्डदर्शनेन तादृशस्मृतौ जातायां तदुत्तरमुपमितेरभ्युपगमात् । नच पुनस्सादृश्यविशि-ष्टपिण्डदर्शनकल्पनेन तादृशस्मृतिकल्पनेन क्षणविलम्बकल्पनेन च गौरवमिति वाच्यम् लाघवात् सादृश्यवि-शिष्टपिण्डदर्शनस्य करणत्वसिद्धौ ईदृशगौरवस्य फलमुखत्वेनादोषत्वामिति । अन्येतु वाक्यज्ञानं करणं वाक्या-र्थानुभवादिकं व्यापार इत्याहुः तन्न । बहूनां व्यापारत्वकल्पने गौरवात् प्रसिद्धसाधर्म्यात् साध्यस्य साधन-मुपमानमिति सूत्रविरुद्धत्वाच्च प्रसिद्धगवादेस्साधर्म्यात् सादृश्यज्ञानात्साध्यस्य गवयादिपदवाच्यत्व-

## दिनकरीयम्.

**मितिकरणमिति** ॥ नवीनमतेनैतत् । अतिदेशवाक्यार्थशाब्दबोधः करणमतिदेशवाक्यार्थस्मरणं व्या-पारः सादृश्यविशिष्टपिण्डदर्शनं सहकारीति साम्प्रदायिकमतं तु सहकारितयाऽऽवश्यकसादृश्यविशिष्टपिण्ड-

## रामरुद्रीयम्.

स्य प्रत्यक्षोपजीवकत्वमेव न सम्भवति सादृश्यविषयकलौकिकप्रत्यक्षानन्तरमेवोपमितिरनुभूयत इत्यभिप्रा-येण ज्ञानपदं प्रत्यक्षपरतया व्याख्यातमिति बोध्यम् ॥ **एतदिति** ॥ गवयधर्मिकगोसादृश्यप्रत्यक्षस्य कारण-त्वाभिधानमित्यर्थः । साम्प्रदायिकमतमुपदर्शयति ॥ **अतिदेशवाक्यार्थशाब्दबोध इति** ॥ **वाक्या-र्थस्मरणमिति** ॥ व्यापारद्वारा तज्जन्यस्यापि तद्द्वारत्वोपगमादिति भावः । नन्वेवमुद्बोधकान्तरवशा-द्यत्रातिदेशवाक्यार्थस्मरणं तत्र सादृश्यविशिष्टपिण्डदर्शनं विनाप्युपमितिप्रसङ्ग इत्यत आह ॥ **सादृश्यवि-शिष्टेति** ॥ साम्प्रदायिकमतोपेक्षायां बीजमाह ॥ **सहकारितयेति** ॥ **युक्तमिति** ॥ तदतिरिक्तस्य कारणान्तरस्य कल्पने गौरवादिति भावः । ननु सादृश्यविशिष्टपिण्डदर्शनस्योपमानत्वेऽतिदेशवाक्यार्थस्मरण-स्य तद्व्यापारत्वानुपपत्तिः तज्जन्यत्वे सति तज्जन्यजनकस्यैव व्यापारत्वात् स्मरणस्य च स्वसमानप्रकार-कानुभवजन्यत्वनियमादिति मूलोक्तमतिदेशवाक्यार्थस्मरणस्य व्यापारत्वमसङ्गतमित्याशङ्कां निराकुरुते ॥

**यज्जायते तदेव व्यापारः तदनन्तरं गवयो गवयपदवाच्य इति ज्ञानं यज्जायते तदुप-**

## प्रभा.

स्य साधनं सिद्धिः उपमानमुपमितिरिति सूत्रार्थत्वादिति ध्येयम् ॥ **गवयो गवयपदवाच्य इति ज्ञानं ज्ञायते तदुपमितिरिति** ॥ तदेवोपमितिरित्यर्थः । एवकारेण गोसादृश्यावच्छिन्नविशेष्यकगवयपदवाच्यत्वप्रकारकज्ञानस्योपमितित्वव्यवच्छेदः अन्यथा तादृशज्ञानस्य गोसदृशो गवयपदवाच्य इत्याकारकवाक्यज्ञानाधीनत्वेन शाब्दबोधात्मकतया उपमितेः प्रमित्यन्तरत्वानुपपत्तेः गवयत्वावच्छिन्नविशेष्यकगवयपदवाच्यत्वप्रकारकज्ञानस्य गवयपदजन्यगवयत्वविशिष्टोपस्थितिं विना शाब्दबोधरूपत्वासंभवात् प्रकृतवाक्ये सदृशपदस्यैव सत्त्वात् । नच प्रत्यक्षेण गोसादृश्यस्य सास्नादेर्गवयत्वस्य वा उपस्थितौ गवयत्वावच्छेदेनैव कथं गवयपदवाच्यत्वोपमितिः । नच सादृश्यावच्छेदेनेति वाच्यम् तुल्योपस्थितिकत्वेऽपि गवयत्वजात्यपेक्षया गोसादृश्यस्य गौरवज्ञानेन तदवच्छेदेन गवयपदवाच्यत्वोपमितेरनुदयात् । नच धर्मान्तरविशिष्टगोसादृश्यज्ञानात् गवयत्वावच्छिन्नविशेष्यकगवयपदवाच्यत्वोपमितेरनुदयात् तत्तद्धर्मविशिष्टसादृश्यज्ञानं तत्तद्धर्मावच्छेदेनोपमितौ करणं वाच्यम् तथाच गवयत्वानुपस्थितिकाले यदा अवयवसंस्थानरूपगुरुधर्मविशिष्टसादृश्यज्ञानं तद्धर्मावच्छेदेन गवयपदवाच्यत्वोपमित्यापत्तिरिति वाच्यम् इष्टापत्तेः तस्य गुरुधर्मत्वेन तद्धर्मविशिष्टविशेष्यकोपस्थितेर्भ्रमत्वेन तस्यास्तादृशधर्मावच्छेदेन गवयपदवाच्यत्वासाधकत्वात् । टीकाकारास्तु वैधर्म्यविशिष्टपिण्डदर्शनमप्युपमानम् । तथाहि कुतश्चित् पुरुषात्पश्वादिविरुद्धधर्मा करभ इति वाक्यश्रवणानन्तरं तादृशविरुद्धधर्मावच्छिन्नविशेष्यक-

## दिनकरीयम्.

दर्शनस्यैव करणत्वं युक्तमित्युपेक्षितम् ॥ **स्मरणं यज्जायत इति** ॥ सादृश्यविशिष्टपिण्डदर्शनस्योद्बोधकविधया तादृशवाक्यार्थस्मारकत्वादिति भावः ॥ **तदेव व्यापार इति** ॥ एतेन सादृश्यविशिष्टपिण्डदर्शनोत्तरं यत्रातिदेशवाक्यार्थबोधस्तत्रातिदेशवाक्यार्थस्मरणापेक्षाभावान्नातिदेशवाक्यार्थस्मृतिव्यापारकं सादृश्यविशिष्टपिण्डदर्शनं करणं किन्तु सादृश्यज्ञानमात्रं करणं विशेषणज्ञानविधया तज्जन्यमतिदेशवाक्यार्थज्ञानं सादृश्यविशिष्टपिण्डदर्शनं च द्वयं व्यापार इति कस्यचिन्मतं प्रत्युक्तम् । यत्र सादृश्यविशिष्टपिण्डदर्शनोत्तरमतिदेशवाक्यार्थशाब्दबोधस्तत्रोपमित्यनभ्युपगमात् किन्तु तदुत्तरं पुनः सादृश्यविशिष्टपिण्डदर्शनं ततोऽतिदेशवाक्यार्थस्मरणं तदुत्तरमेवोपमितिरिति भावः ॥ **गवयो गवयपदवाच्य इति ज्ञानं यज्जायत इति** ॥ एतेनोपमितिर्न प्रमि-

## रामरुद्रीयम्.

**सादृश्येति** ॥ तथा चातिदेशवाक्यार्थस्मरणस्य पूर्वतनशाब्दबोधजन्यत्वेऽपि तत्रोद्बोधकविधया सदृशपिण्डदर्शनमपि कारणमेवेति नानुपपत्तिरिति भावः ॥ **एतेनेति** ॥ अतिदेशवाक्यार्थस्मरणव्यापारकसदृशपिण्डदर्शनस्यैवोपमितिकरणत्वोपवर्णनेनेत्यर्थः ॥ **बोध इति** ॥ शाब्दबोध इत्यर्थः ॥ **अभावादिति** ॥ अनुभवात्मकातिदेशवाक्यार्थज्ञानस्यैव सत्त्वादिति भावः । नन्वेवं तादृशस्थले किं करणं को व्यापारः शाब्दबोधस्य सदृशपिण्डदर्शनाजन्यत्वेन तद्व्यापारत्वासम्भवादित्याशङ्कायामेकदेशिमतानुसारेण करणव्यापारौ प्रदर्शयति ॥ **किन्त्वित्यादि** ॥ **सादृश्यज्ञानमात्रमिति** ॥ मात्रपदेन गवयत्वावच्छिन्नविशेष्यकत्वांशस्य प्रतिक्षेपः ॥ **द्वयमिति** ॥ उभयोरपि विशेषणज्ञानविधया सादृश्यज्ञानजन्यत्वात् सदृशपिण्डदर्शनमतिदेशवाक्यार्थज्ञानंच विनोपमितेरनुदयेन तयोरुपमितिकारणत्वाच्च विनिगमनाविरहादिति भावः । एतेनेत्यनेनोक्तमर्थं प्रकटयति ॥ **यत्रेत्यादि** ॥ **अनभ्युपगमादिति** ॥नन्वेवं तादृशस्थलेऽप्युपमितेरनुभवसिद्धतया अनुभवापलापप्रसङ्ग इत्यत आह ॥ **किन्त्विति** ॥ **तदुत्तरमेवेति** ॥ तथा च क्षणद्वयविलम्बेनोपमितेरुपपादनसम्भवान्नानुभवापलापापत्तिरिति भावः ॥ **गवयो गवयपदवाच्य इतीति** ॥ पिण्डे चक्षुस्संयोगानन्तरं योग्यवृत्तितया गवयत्वजातेरपि प्रत्यक्षेण ग्रहणात्तदवच्छिन्नधर्मिकमेव गोसादृश्यज्ञानं गोपदवाच्यत्वप्रकारिकोपमितिरपि नानुपपन्नेति मूलाभिप्रायः । यत्तु गोसदृशो गवयपदवाच्य इत्यारण्यकवाक्याज्जायमानश्शाब्दबोध एवोपमितिः न तु प्रमित्यन्तरं न चैवं गोसादृश्यस्यैव गवयपदवाच्यतावच्छेदकत्वमुपमितिविषयो न तु गवयत्वस्येति वाच्यम् इष्टत्वादित्याह तन्मतं दूषयति ॥ **एतेनेति** ॥ उपमितेर्गवयो ग-

## प्रभा.

करभपदवाच्यत्वप्रकारकशाब्दबोधजन्यसंस्कारवता कुत्रचित् अतिस्थूलत्वातिदीर्घत्वशुण्डादण्डादिसमुदायरूपपश्वादिवैधर्म्यप्रकारकेदन्त्वावच्छिन्नविशेष्यककरभपदवाच्यत्वप्रकारकस्मरणम् तदनन्तरं करभः करभपदवाच्य इत्युपमितिरुत्पद्यते तस्मात्तदप्युपमानमित्याहुः । अत्र सादृश्यविशिष्टपिण्डदर्शनस्येव वैधर्म्यविशिष्टपिण्डदर्शनस्याप्युपमानत्वस्वीकारे युक्तेस्तौल्येऽपि प्रसिद्धसाधर्म्यात् साध्यस्य साधनमुपमानमिति सूत्रेण साधर्म्यज्ञानस्यैवोपमानत्वप्रतिपादनात् वैधर्म्यविशिष्टपिण्डदर्शनस्य तदप्रतिपादनाच्च तदनुयायिभिस्तस्योपमानत्वानङ्गीकारेण तस्योपमानत्वं न सर्वसम्मतमिति हृदयम् । अत्रान्यदप्युपमानमिति भाष्यम् । अन्यदपि शक्तिपरिच्छित्तिभिन्नपरिच्छित्तिरपि उपमानमुपमितिरित्यर्थात् कार्यकारणभावपरिच्छित्तिरूपाप्युपमि-

## दिनकरीयम्.

त्यन्तरं किन्तु शाब्दबोधात्मिकैव गोसदृशो गवय इत्यत्र सदृशपदोपस्थितसादृश्यावच्छेदेन गवयपदवाच्यत्वग्रहस्य गोसदृशो गवयपदवाच्य इत्याकारकस्यैवोपमितिस्वरूपत्वादित्यपास्तम् । गवयत्वावच्छेदेन गवयपदवाच्यत्वविषयिण्या उपमितेर्गवयपदजन्यगवयत्वविशिष्टोपस्थितिं विना शाब्दबोधरूपत्वासम्भवादिति । न च गोसादृश्यस्य गवयत्वस्य च प्रत्यक्षेणोपस्थितौ कथं गवयत्वावच्छेदेनैव गवयपदवाच्यत्वोपमितिर्न तु सादृश्यावच्छेदेनेति वाच्यम् । उपस्थितेस्तौल्येऽपि गवयत्वजात्यपेक्षया गोसादृश्यस्य गौरवज्ञानेन तदवच्छेदेन गवयपदवाच्यत्वोपमितेरनुदयात् गवयपदाद्गवयत्वप्रकारकशाब्दबोधानुपपत्तेश्च तत्प्रकारकशाब्दबोधे तदवच्छेदेन शक्तिग्रहस्य हेतुत्वात् । न च द्रव्यत्वविशिष्टे सादृश्यज्ञानात् गवयत्वावच्छेदेन गवयपदवाच्यत्वोपमितेरनुदयात् तद्धर्मविशिष्टे सादृश्यज्ञानं तद्धर्मावच्छेदेनोपमितिजनकं वाच्यं तथा च यदा गवयत्वादिजात्यनुपस्थितिस्तदा सादृश्यस्य संस्थानादिगुरुधर्मविशिष्टे ग्रहात्तदवच्छेदेन गवयादिपदवाच्यत्वोपमित्यापत्तिरिति वाच्यम् इष्टापत्तेः तस्याः भ्रमत्वेन तादृशगुरुधर्मावच्छेदेन गवयादिपदवाच्यत्वासाधकत्वादिति ।

## रामरुद्रीयम्.

वयपदवाच्य इत्याकारकत्वेनेत्यर्थः ॥ **गवयत्वविशिष्टोपस्थितिं विनेति** ॥ उक्तवाक्यघटकगवयपदश्रवणेऽपि तदानीं गवयत्वजातेरप्रत्यक्षतया तद्विशिष्टे शक्तिग्राहकप्रमाणाभावेन च वृत्त्या गवयपदजन्यगवयत्वावच्छिन्नोपस्थितेरसम्भवेन तदवच्छिन्नधर्मिकगोपदवाच्यत्वप्रकारकशाब्दबोधासम्भवेन तादृशोपमितेः प्रमित्यन्तरत्वावश्यकत्वादिति भावः । ननु गवयत्वावच्छेदेनैव गवयपदवाच्यत्वप्रकारिकोपमितिः न तु गोसादृश्यावच्छेदेनेत्यत्रैव प्रमाणं न पश्यामो येन उपमितेः प्रमित्यन्तरताऽऽवश्यकी स्यादित्याशङ्कते ॥ **नचेति** ॥ त्वन्मत इति शेषः । स्वमते तु गवयत्वजातिप्रत्यक्षात्पूर्वमेव शाब्दबोधात्मकोपमितेरुपगमादिति ध्येयम् ॥ **अनुदयादिति** ॥ ननु प्रत्यक्षेण गवयत्वोपस्थित्यनन्तरं गौरवज्ञानेन प्रतिबन्धात् गोसादृश्यावच्छेदेन गवयपदवाच्यत्वज्ञानासम्भवेऽपि तत्प्रत्यक्षात्पूर्वमेवारण्यकपुरुषवाक्यात्तादृशशाब्दबोधोत्पत्तौ बाधकाभाव इत्यत आह ॥ **गवयपदादिति** ॥ अनुभूयते च गवयपदात्तादृश एव शाब्दबोध इति भावः । नन्वस्तु गवयपदाद्गवयत्वप्रकारकशाब्दबोधोपपत्तये गवयो गवयपदवाच्य इत्युपमित्या गवयत्वस्य गवयपदवाच्यत्वावच्छेदकत्वसिद्धिः तथाप्यतिदेशवाक्यात् गोसादृश्यसामानाधिकरण्येनैव गवयपदवाच्यत्वावगाहिशाब्दबोध इत्यत्र मानाभावः गोसादृश्यावच्छेदेनापि गवयपदवाच्यत्वावगाहिशाब्दबोधोत्पत्तौ बाधकाभावात् । न च गवयत्वावच्छिन्ने गवयपदवाच्यत्वावगाहिज्ञानसामग्र्येव तत्र बाधिकेति वाच्यम् । तादृशज्ञानं प्रति गवयत्वावच्छिन्नधर्मिकगोसादृश्यादिज्ञानस्य कारणत्वेन प्रत्यक्षेण गवयत्वानुपस्थितिदशायां तादृशज्ञानघटितोपमितिसामग्र्या असम्भवात्तथाचोक्तशाब्दबोधबलादेव गोसादृश्यस्यापि गवयपदवाच्यतावच्छेदकत्वसिद्धिर्निष्प्रत्यूहैवेत्याशङ्कते ॥ **न चेति** ॥ **ग्रहादिति** ॥ शाब्दबोधात्मकग्रहादित्यर्थः । तादृशशाब्दबोधोत्पत्तावपि गोसादृश्यस्य गुरुत्वेन तत्र गवयपदवाच्यतावच्छेदकत्वस्य बाधितत्वात् बाधितार्थविषयकत्वेन तस्य भ्रमत्वात् न ततो विषयसिद्धिरिति समाधत्ते ॥ **इष्टापत्तेरित्यादि** ॥ सादृश्यविशिष्टपिण्डदर्शनमिव वैधर्म्यविशिष्टपिण्डदर्शनमपि क्वचिदुपमितौ करणम् । अत्र जलादिविधर्मगुणवती पृथिवीपदवाच्येत्यतिदेशवाक्यार्थस्म-

## प्रभा.

तिः । तथाहि मुद्गपर्णसदृशौषधिर्ज्वरहरेति वाक्यं वैद्यस्य श्रुत्वा तदर्थबोधनान्तरं मुद्गपर्णसादृश्यविशिष्टौषधिदर्शनेन मुद्गपर्णसादृश्यविशिष्टविशेष्यकज्वरहरत्वप्रकारकातिदेशवाक्यार्थस्मरणानन्तरं इयं ज्वरहरेत्याकारककार्यकारणभावपरिच्छेदात्मकोपमितिमङ्गीकुर्वन्ति दीधितिकाराः तन्मते उपमितित्वमेव लक्षणं बोध्यम् । ननु उपमानं न मानान्तरं प्रत्यक्षत एव तदर्थसिद्धेरिति चेन्न उपमानस्याप्रमाणत्वे गोसदृशो गवय इति वाक्यजन्यशाब्दबोधरहितस्यापि गवयव्यक्तिनिष्ठचक्षुस्संयोगबलात् तादृशगवयपदवाच्यत्वज्ञानापत्तेः अत एव तज्ज्ञानं न मानसं। ननु गवयपदं गवयत्वविशिष्टवाचकं अनुपपत्तिप्रतिसन्धानं विनापि तत्र वृद्धैः प्रयुज्यमानत्वात् यदनुपपत्तिप्रतिसन्धानं विनापि वृद्धैः प्रयुज्यते तत् तस्य वाचकं यथा गोपदं गवि प्रयुज्यते न प्रयुज्यते च गोसदृश इति यत्तद्भ्यां व्याप्त्या गवयपदस्य गवये शक्तिग्रहसंभवान्नोपमानस्य प्रमाणान्तरत्वमिति चेन्न व्याप्त्याद्यप्रतिसन्धानदशायामुपमिनोमि नानुमिनोमीति विलक्षणप्रतीतिसिद्धाया विलक्षणप्रतीतेर्नानुमितित्वमिति तत्करणस्यानुमानत्वासंभवात्। अत एव तादृशप्रतीतेर्न शाब्दत्वं पदज्ञानाजन्यत्वात्। न स्मृतिः अननुभूतार्थस्मरणासंभवादिति हृदयम् । उपमितित्वजातिमत्त्वं संज्ञासंज्ञिसंबन्धज्ञानत्वं वा उपमितिलक्षणमिति बोध्यम् । अत एव कुसुमाञ्जलौ संबन्धस्य परिच्छेदः संज्ञायास्संज्ञिना सह, प्रत्यक्षादेरसाध्यत्वात् उपमानं फलं विदुरित्यनेन संज्ञासंज्ञिसंबन्धज्ञानत्वमुपमितित्वमित्युक्त्या तादृशज्ञानस्य प्रत्यक्षा-

## दिनकरीयम्.

इदमुपलक्षणं वैधर्म्यविशिष्टपिण्डदर्शनं करणं जलादिविधर्मगुणवती पृथिवीत्यतिदेशवाक्यार्थस्मृतिर्व्यापारः पृथिवीत्वावच्छेदेन पृथिवीपदवाच्यत्वोपमितिः फलमित्यपि बोध्यम् । ननूपमानस्य प्रमाणान्तरत्वे मानाभावः न च प्रत्यक्षादिप्रमितिविजातीयप्रमितिकरणत्वात् तस्य प्रमाणान्तरत्वं उपमितेः प्रत्यक्षादिप्रमितितो विजातीत्वाभावादिति चेन्न । चक्षुरादिव्यापारविगमेऽपि उपमितेरुत्पादेन चाक्षुषत्वाद्यसम्भवान्न वा मानसत्वं मानसोत्तरमनुत्पद्यमानाया उपमिनोमीति प्रतीतेर्विषयत्वात् उपमित्यनन्तरं साक्षात्करोमीति प्रतीतेरनुदयेन तत्र प्रत्यक्षत्वसत्त्वे प्रमाणाभावाच्च अन्यथाऽनुमितेरपि मानसत्वापत्तेः । नाप्यनुमितिः व्याप्त्यादिज्ञानं विनाप्यु-

## रामरुद्रीयम्.

रणं व्यापारः पृथिवी पृथिवीपदवाच्येत्युपमितिरित्याह ॥ **इदमुपलक्षणमिति** ॥ ननु नोपमानस्य प्रमाणान्तरत्वं गवयो गवयपदवाच्य इत्युपमितिस्थानाभिषिक्तस्य गवयांशे लौकिकस्य गवयपदवाच्यत्वांशे अलौकिकस्य चाक्षुषस्यैवोपगमसम्भवात् । न च चक्षुर्व्यापारोपरमेऽप्यतिदेशवाक्यार्थस्मरणेनोपमितिदर्शनात् न तत्र चाक्षुषत्वसम्भव इति वाच्यम् । एवमप्यलौकिकमानसप्रत्यक्षत्वसम्भवेनोपमितेर्विजातीयप्रमितित्वे मानाभावादित्याशङ्कयोपमिनोमीत्यनुव्यवसायसाक्षिकीं विलक्षणप्रमितिं व्यवस्थाप्य तत्करणत्वेनोपमानस्य प्रमाणान्तरत्वं व्यवस्थापयति ॥ **नन्वित्यादि** ॥ **साक्षात्करोमीति प्रतीतेरनुदयेनेति** ॥ ननु लौकिकविषयतैव साक्षात्कारत्वव्यञ्जिका मनसस्तु बहिर्विषये लौकिकसन्निकर्षाभावेन लौकिकविषयत्वाभावात् उपमितेर्मानसप्रत्यक्षत्वेऽपि तदुत्तरन्न साक्षात्करोमीति प्रतीतिसम्भवः व्यञ्जकाभावा दन्यथा स्वर्गविषयकालौकिकमानसोत्तरमपि स्वर्गं साक्षात्करोमीति प्रतीत्यापत्तेः इत्थञ्चोपमिनोमीति प्रतीतेरपि सादृश्यज्ञानोत्तरमानसमेव विषयोऽस्तु नतु विजातीयप्रमितिरित्यस्वरसादाह ॥ **अन्यथेति** ॥ **अनुमितेरपीति** ॥ व्याप्तिज्ञानोत्तरमानसस्यैवानुमिनोमीति प्रतीतिविषयत्वसंभवादिति भावः । तथा चानुमिनोमीत्यनुव्यवसायविषयीभूतानुमितिर्यथा प्रमित्यन्तरं तथोपमिनोमीति विलक्षणानुव्यवसायविषयीभूतोपमितिरपीति भावः । ननु गवयो गवयपदवाच्यः गोसदृशत्वाद्यन्नैवं तन्नैवमिति व्यतिरेक्यनुमितिरूपैवोपमितिरस्तूपमिनोमीति प्रतीतेरपि शक्तिविधेयकानुमितिरिव विषयोऽस्त्वित्याशङ्कान्निराचष्टे ॥ **नापीति** ॥ **सङ्क्षेप इति** ॥ नानुमिनोमि न

मितिः न त्वयं गवयपदवाच्य इत्युपमितिः गवयान्तरे शक्तिग्रहाभावप्रसङ्गात् ॥ ७९-८० ॥

इति श्रीविश्वनाथपञ्चाननभट्टाचार्यविरचितायां सिद्धान्तमुक्तावल्यामुपमानखण्डम् ॥

---

**प्रभा.**

यसाध्यत्वप्रतिपादनेन तादृशज्ञानस्य करणतया उपमानस्याचार्याणां पृथक्प्रमाणत्वव्यवस्थापनमपि सङ्गच्छत इत्यास्तां विस्तरः ॥ ७९ ॥ ८० ॥

इति मुक्तावलीप्रभायामुपमानपरिच्छेदस्समाप्तः ॥

---

**दिनकरीयम्.**

दयात् । न शाब्दं पदज्ञानाजन्यत्वात् । न स्मृतिः अननुभूतार्थस्य स्मरणायोगादिति सङ्क्षेपः ॥ ७९ ॥ ८० ॥

इति श्रीभारद्वाजकुलाम्बुधिपूर्णचन्द्रबालकृष्णभट्टात्मजमहादेवभट्टविरचिते मुक्तावलीप्रकाशे उपमानखण्डं समाप्तम् ॥

---

**रामरुद्रीयम्.**

शृणोमि न स्मरामि किन्तूपमिनोमीति प्रतीतेरपि प्रमित्यन्तरमेवोपमितिरिति भावः ॥ ७९ ॥ ८० ॥

इति श्रीमद्रामरुद्रसूरिविरचितायां दिनकरीयतरङ्गिण्यामुपमानतरङ्गः ॥

---

मुक्तावली-प्रभा-दिनकरीय-रामरुद्रीयसमन्विता ।

॥ शब्दखण्डम् ॥

पदज्ञानं तु करणं द्वारं तत्र पदार्थधीः ॥
शाब्दबोधः फलं तत्र शक्तिधीः सहकारिणी ॥ ८१ ॥

शाब्दबोधप्रकारं दर्शयति ॥ **पदज्ञानं त्विति** ॥ न तु ज्ञायमानं पदं करणम् । तदभावेऽपि मौनिश्लोकादौ शाब्दबोधात् ॥ **पदार्थधीरिति** ॥ पदजन्यपदार्थस्मरणं व्यापारः । अन्यथा पदज्ञानवतः प्रत्यक्षादिना पदार्थोपस्थितावपि शाब्दबोधापत्तेः । तत्रापि वृत्त्या

**प्रभा.**

उपजीव्योपजीवकभावसङ्गत्या उपमानानिरूपणानन्तरं शब्दप्रमाणमुपमितिनिरूपणानन्तरं शाब्दप्रमितिं च निरूपयति ॥ **मूले पदज्ञानं त्विति** ॥ आप्तोपदेशः शब्दश्चेति सूत्रपठितस्य शब्दस्यैव प्रमाणत्वे मौनिश्लोकादौ दोषस्य वक्ष्यमाणतया सूत्रे चेत्युपदेशाद्वाक्यज्ञानमपि शब्दप्रमाणमिति टीकाकृद्व्याख्यानुसारेण पदज्ञानस्य करणत्वमभिहितमिति बोध्यम् ॥ **मुक्तावल्यां शाब्दबोधप्रकारमिति** ॥ शाब्दबोधजनककारणकलापमित्यर्थः । पदज्ञानं त्वित्यत्र एवंकारार्थकतुशब्दान्निषेध्यार्थमाह ॥ **नतु ज्ञायमानमिति** ॥ अत्र हेतुमाह ॥ **तदभावेऽपीति** ॥ पदोच्चारणाभावेऽपीत्यर्थः ॥ **मौनिश्लोकादाविति** ॥ मौनिकर्तृकवाक्यबोधकलिप्यादावित्यर्थः । आदिपदात् द्वित्वादिबोधकहस्तचेष्टादेः परिग्रहः ॥ **पदजन्येति** ॥ पदज्ञानजन्येत्यर्थः ॥ **अन्यथेति** ॥ पदज्ञानजन्यत्वानिवेश इत्यर्थः ॥ **पदज्ञानवत इति** ॥ इदं च करणसत्त्वप्रतिपादनाय ॥ **प्रत्यक्षादिनेति** ॥ आदिनानुमानपरिग्रहः । ननु पदार्थधीरित्यत्र धीपदस्य स्मृतिपरतया प्र-

**दिनकरीयम्.**

उपजीव्योपजीवकभावसङ्गतिमभिप्रेत्याह ॥ **मूले पदज्ञानं त्विति** ॥ एवकारार्थकस्य मूलस्थतुशब्दस्य व्यवच्छेद्यं स्पष्टयति ॥ **मुक्तावल्यां न तु ज्ञायमानमिति** ॥ मौनिश्लोकादावित्यादिना द्वित्वादिबोधकविजातीयहस्तचेष्टादेः संग्रहः ॥ **अन्यथा** पदार्थज्ञानमात्रस्य व्यापारत्वे ॥ **तत्रापि** पदजन्यपदार्थोपस्थितावपि॥ घटक-

**रामरुद्रीयम्.**

**उपजीव्योपजीवकभावेति** ॥ अत्रातिदेशवाक्यजन्यशाब्दबोधस्यैवोपमानत्वमिति प्राचीनमते शब्दस्यार्थज्ञानजन्यत्वेन शब्दस्यैव तन्मते प्रमाणत्वेन च शब्दोपमानयोः स्वरूपत उपजीव्योपजीवकभावः । शक्तिज्ञानात्मकोपमितिजन्यत्वेन शाब्दबोधोपमित्योरप्युपजीव्योपजीवकभावो बोध्यः । सादृश्यज्ञानमेवोपमानमिति नवीनमते तु उपमितिद्वारा शाब्दबोधनिष्ठस्योपमानोपजीवकत्वस्य स्वाश्रयकरणत्वरूपपरम्परासंबन्धेन शब्दनिष्ठत्वं बोध्यमिति भाव इति केचिदाहुः । तन्न श्रद्धेयम् । सादृश्यज्ञानात्मकोपमानजन्यत्वस्य साक्षात्सम्बन्धेनैवोपमितौ सत्त्वादुपमितेरपि पदज्ञानरूपत्वेन शब्दप्रमाणरूपत्वात् स्वरूपत एव सङ्गतिसम्भवात् । यद्यपि शाब्दबोधस्योपमानत्वनये उपमानेऽपि शब्दोपजीवकत्वमस्तीति शब्दनिरूपणानन्तरमेवोपमानं कुतो न निरूपितमिति वक्तुं शक्यते तथापि सङ्गतेरनन्तराभिधानव्याप्यत्वाभावेन न दोषः । प्रपञ्चितं चेदमुपमानखण्ड एव ॥ **एवकारार्थकस्येति** ॥ एवकारार्थोऽर्थो यस्येति मध्यमलोपसमासेनैवकारार्थबोधकस्येत्यर्थः ॥ **हस्तचेष्टादेरिति** ॥ तथा च मौनिश्लोकस्थले विजातीयहस्तचेष्टास्थले च शब्दोच्चारणाभावेन ज्ञायमानपदाभावाच्छाब्दबोधो न स्यात् । पदज्ञानस्य करणत्वमिति नवीनमते तु लिप्या हस्तचेष्टया च सङ्केतितपदज्ञानाद्भवति शाब्दबोध इति भावः ॥ **पदार्थज्ञानमात्रस्येति** ॥ यद्यपि प्रत्यक्षादिना घटादिज्ञाने पदज्ञा-

पदजन्यत्वं बोध्यम् । अन्यथा घटादिपदात् समवायसंबन्धेन आकाशस्मरणे जाते आका–

प्रभा.

त्यक्षादिना जायमानज्ञानस्याताद्दशत्वेन न तदापत्तिरिति वाच्यम् । प्रत्यक्षादिनेत्यादिपदेन पदज्ञानभिन्नो– द्बोधकस्यापि ग्रहणेन ताद्दशोद्बोधकजन्यपदार्थस्मृतिमादाय शाब्दबोधापत्तेः दुर्वारत्वात् । ननु पदार्थ– प्रत्यक्षादेः पदज्ञानाजन्यतया तस्य व्यापारत्वासंभवात् द्वारं तत्र पदार्थधीरिति मूलेन पदार्थज्ञानस्य व्यापा- रविधयैव हेतुत्वप्रतिपादनात् कथमापत्तिः नच पदार्थप्रत्यक्षादेरपि कालोपाधिविधया पदज्ञानजन्यत्वात् व्या– पारत्वोपपत्तिरिति वाच्यं तथा सति पदज्ञानजन्यत्वनिवेशेऽपि कालविधया पदज्ञानजंन्यत्वमादाय शाब्द– बोधापत्तिवारणाय पदज्ञाननिष्ठसमवायसंबन्धावच्छिन्नकारणतानिरूपितकार्यत्वरूपपदज्ञानजन्यत्वस्यैव निवे- शनीयतया प्रत्यक्षादेस्ताद्दशव्यापारत्वाभावात् कथमापत्तिरिति चेन्न । घटपदवदाकाशमित्याकारकविशिष्टवै- शिष्ट्यावगाहिमानसप्रत्यक्षस्यापि घटपदत्वप्रकारकज्ञानजन्यतया घटपदलिङ्गज्ञानजन्याकाशपक्षकविभु- त्वविधेयकानुमितेरपि ताद्दशतया घटपदानुभवजन्यघटपदस्मृतेरपि ताद्दशतया च उक्तज्ञानानां व्यापारत्वसंभवे- नाकाशविभुत्वघटपदादीनां शाब्दबोधापत्त्या पदज्ञानजन्यत्वस्यावश्यकत्वात् । नच पदार्थस्मृतेस्साक्षात्पदज्ञान- जन्यत्वविलक्षणात् पदविषयकस्मृतेश्च संस्कारद्वारा पदज्ञानजन्यत्वेऽपि साक्षात्पदज्ञानजन्यत्वस्यैव व्यापारत्वघट- कत्वेन तदभावान्नोक्तापत्तिरिति वाच्यं तथा सति पदज्ञानस्यापि सिद्धान्तिमते वृत्तिज्ञानद्वारैवार्थस्मारकत्वेन सा- क्षाज्जन्यत्वघटितव्यापारत्वाभावात् द्वारं तत्र पदार्थधीरिति मूलविरोधापत्तेः । तस्मात् साक्षात्परम्परासाधार- णजन्यत्वघटितव्यापारत्वस्यैव मूलकाराभिप्रेतत्वेन वाच्यतया उक्तपदानुभवजन्यपदस्मृतिमादाय तच्छाब्द- बोधापत्तिवारकतया पदज्ञानजन्यत्वविशेषणस्यावश्यकत्वात् । नच तथापि पदज्ञानजन्यत्वविशेषणेऽपि उक्तपदा- नुभवजन्यपदस्मृतेरपि ताद्दशव्यापारतया तदुत्तरं तच्छाब्दबोधापत्तिर्दुर्वारेति वाच्यं पदज्ञानजन्यत्वस्योद्बोधक- विधया पदज्ञाननिष्ठकारणतानिरूपितकार्यत्वरूपस्यैव निवेशादुक्तपदस्मृतौ तु पदानुभवस्योद्बोधकविधया हेतु- त्वाभावेन तस्यास्ताद्दशपदार्थस्मृतिरूपत्वाभावेन नोक्तापत्त्यवकाश इति विश्वनाथपञ्चाननस्य निगूढाभिप्रायः ॥ अत्रापीति ॥ पदज्ञाननिष्ठोद्बोधकत्वरूपसंबन्धिज्ञानत्वावच्छिन्नकारणतानिरूपितकार्यताश्रय इत्यर्थः । घटक- त्वं सप्तम्यर्थः तस्य जन्यत्वेऽन्वयः ॥ वृत्त्येति ॥ वृत्तिज्ञानेनेत्यर्थः । सहार्थे तृतीया । तथाच वृत्तिज्ञानसहकृ– तपदज्ञाननिष्ठसंबन्धिज्ञानत्वावच्छिन्नकारणतानिरूपितकार्यताश्रयपदार्थज्ञानं व्यापार इति फलितम् ॥ अन्य- थेति ॥ वृत्तिज्ञानसहकृतत्वानिवेश इत्यर्थः ॥ घटादिपदादिति ॥ घटादिपदज्ञानादित्यर्थः ॥ समवा- यसंबन्धेनेति ॥ समवायसंबन्धज्ञानेनेत्यर्थः । सहार्थे तृतीया । तथाच वृत्तिज्ञानसहकृतत्वानिवेशे समवा- यसंबन्धज्ञानसहकृतपदज्ञाननिष्ठसंबन्धिज्ञानत्वावच्छिन्नकारणतानिरूपितकार्यताश्रयाकाशस्मरणबलात् आ- काशस्य शाब्दबोधापत्तेः । निरुक्तवृत्तिज्ञानसहकृतत्वनिवेशे तु वृत्तिज्ञानसहकृतघटपदज्ञानस्याकाशस्मृतावहेतु- तया नाकाशादिशाब्दबोधापत्तिरिति भावः । ननु वृत्तेश्शक्तिरूपतया गङ्गापदस्य तीरे शक्त्यभावेन वृत्तिज्ञा- नसहकृतगङ्गापदज्ञानजन्यतीरस्मृतेरभावात् गङ्गापदज्ञानात् तीरविषयकशाब्दबोधानुपपत्तिरत आह ॥ वृ-

दिनकरीयम्.

त्वं सप्तम्यर्थः ॥ **अन्यथा** वृत्त्येत्यस्यानुपादाने । ननु वृत्तिर्यदि शक्तिस्तदा गङ्गापदात् तीरादेर्बोधो न स्यात् । तत्र

रामरुद्रीयम्.

नजन्यत्वाभावेन पदज्ञानव्यापारत्वमसम्भवदुक्तिकमेव तथापि घटपदबोध्योऽयं घट इत्यस्याप्युपनयसन्नि- कर्षविधया पदज्ञानजन्यत्वेन व्यापारत्वसम्भवो बोध्यः । अयं घट इति शाब्दबोधस्य तु पदज्ञानजन्यत्वं सु- लभमेवेति भावः ॥ **घटकत्वमिति** ॥ पदजन्यपदार्थोपस्थितिघटकं पदजन्यत्वं वृत्तिरूपसम्बन्धसह– कारेण बोध्यमिति मूलार्थो बोध्य इति भावः । ननु वृत्तिरूपसम्बन्धज्ञानस्य सहकारित्वं कुत इति चेदित्थम् । एकसम्बन्धिज्ञानमपरसम्बन्धिस्मारकं इति रीत्या पदपदार्थयोर्वृत्तिरूपसम्बन्धज्ञाने सत्येव पदज्ञानात् पदार्थ- स्मरणं जायते न तु पदज्ञानमात्रे । हस्तिहस्तिपकयोः सम्बन्धाज्ञाने हस्तिपकदर्शनेऽपि हस्तिनोऽस्मरणा- दिति सम्बन्धज्ञानस्य सम्बन्धिज्ञानसहकारित्वमावश्यकमिति । इत्थञ्च पदजन्येत्यादिमूले पदज्ञानजन्येत्या-

शस्यापि शाब्दबोधापत्तेः । वृत्तिश्च शक्तिलक्षणान्यतरसम्बन्धः । अत्रैव शक्तिज्ञानस्योपयोगः । पूर्वं शक्तिग्रहाभावे पदज्ञानेऽपि तत्सम्बन्धेन तत्स्मरणानुत्पत्तेः ; पदज्ञानस्य हि एकसम्बन्धिज्ञानविधया पदार्थोपस्थापकत्वम् । शक्तिश्च पदेन सह पदार्थस्य सम्बन्धः । साचास्मात्पदा-

## प्रभा.

**त्तिश्चेति** ॥ वृत्तिशब्दार्थश्चेत्यर्थः । एवकारार्थकचशब्दः संबन्ध इत्युत्तरं योज्यः ॥ **शक्तिलक्षणान्यतर इति** ॥ शक्तित्वलक्षणात्वरूपप्रकारद्वयान्यतरविशिष्टसंबन्ध एवेत्यर्थः । तथाच वृत्तिशब्दस्य नानार्थकतया तीरस्मृतेश्शक्तिज्ञानसहकृतगङ्गापदज्ञानजन्यत्वाभावेऽपि लक्षणाज्ञानसहकृतगङ्गापदज्ञानजन्यत्वान्न गङ्गापदात्तीरबोधानुपपत्तिरिति भावः । ननु शक्तिज्ञानलक्षणाज्ञानान्यतरसहकृतपदज्ञानजन्यपदार्थोपस्थितेः शाब्दबोधहेतुत्वे शक्तिज्ञानादेश्शाब्दबोधकरणत्वापत्तिरित्यत आह ॥ **अत्रैवेति** ॥ पदार्थस्मृतावेवेत्यर्थः । एवकारेण शाब्दबोधव्यवच्छेदः ॥ **शक्तिज्ञानस्येति** ॥ वृत्तिज्ञानस्येत्यर्थः ॥ **उपयोग इति** ॥ कारणत्वमित्यर्थः ॥ तथाच वृत्तिज्ञानस्य शाब्दबुद्धावन्यथासिद्धत्वेन कारणत्वाभावान्न करणत्वापत्तिरिति भावः । ननु तर्हि पदार्थस्मृतावपि तस्याहेतुत्वमस्त्वित्यत आह ॥ **पूर्वमिति** ॥ पदार्थस्मृतिपूर्वकालमित्यर्थः । पदज्ञानोत्पत्तिक्षण इति यावत् ॥ **शक्तिग्रहाभाव इति** ॥ वृत्तिग्रहाभाव इत्यर्थः ॥ **पदज्ञानेऽपीति** ॥ पदज्ञाने जातेऽपीत्यर्थः । एतेन वृत्तिज्ञानातिरिक्तस्मृतिसामग्रीसत्त्वमाविष्कृतम् ॥ **तत्संबन्धेनेति** ॥ पदसंबन्धितावच्छेदकघटत्वादिप्रकारेणेत्यर्थः ॥ **तत्स्मरणानुत्पत्तेरिति** ॥ घटादिस्मरणाजननादित्यर्थः । तथाच वृत्तिज्ञानाभावे पदज्ञानादिघटितस्मृतिसामग्रीसत्त्वेऽपि पदसंबन्धितावच्छेदकघटत्वादिप्रकारकघटादिविशेष्यकस्मरणानुत्पत्त्या वृत्तिज्ञानस्य स्मृतिहेतुत्वमावश्यकमिति भावः । ननु स्मृतावन्यथानुपपत्त्या वृत्तिज्ञानस्य हेतुत्वेऽपि तेन पदज्ञानस्यान्यथासिद्धत्वमस्त्वित्यत आह ॥ **पदज्ञानस्य हीति** ॥ पदज्ञानस्यापीत्यर्थः ॥ **पदार्थोपस्थापकत्वमिति** ॥ पदार्थस्मारकत्वमित्यर्थः । तथाच हस्तिनो हस्तिपकस्याधाराधेयभावसंबन्धावच्छिन्नत्वेऽपि यथा हस्तिदर्शन एव हस्तिपकस्मरणं तथा पदपदार्थयोः संबन्धज्ञानसत्त्वेऽपि पदश्रवणोत्तरमेवार्थस्मरणमनुभवसिद्धमित्यनुभवबलात् वृत्तिरूपसंबन्धज्ञानस्येव संबन्धिज्ञानविधया पदज्ञानविधया पदज्ञानस्यापि हेतुत्वमावश्यकमिति भावः । अत्रच वृत्तिश्शक्तिलक्षणान्यतरात्मिकैव तत्र मूले शक्तेरनिरूपणात् स्वयं शक्तिन्निरूपयति ॥ **शक्तिश्चेति** ॥ अप्यर्थे चकारः । तथाच शक्तिः लक्षणा च पदपदार्थसंबन्ध इत्यर्थः । तया अतिरिक्तपदार्थत्ववादिमीमांसकमतन्निरसितुं क्लृप्तपदार्थेष्वन्तर्भावयति ॥ **साचेति** ॥ शक्तिश्चेत्यर्थः । अवधारणार्थः चशब्दः रूपेत्युत्तरं योज्यः । तथाच शक्तिरीश्वरेच्छारूपैव नातिरिक्ता गौरवादिति भावः ॥ **अस्मात्पदादिति** ॥ एतत्पदज्ञानादित्यर्थः । जन्यत्वं पञ्चम्यर्थः तस्य धात्वर्थे बोधेऽन्वयः तव्यप्रत्ययस्य विषयतात्वावच्छिन्नमर्थः । तथाच तत्पदज्ञानजन्यबोधविषयतात्वावच्छिन्नप्रकारतानिरूपितविशेष्यतासंबन्धेनेश्वरेच्छावत्त्वं तत्पदशक्यत्वमिति भावः । एतेनेश्वरेच्छाया जगन्मात्रविषयकत्वात् गङ्गापदाच्छक्त्यैव तीरबोधसंभवे लक्षणास्वीकारो नोचित इति दूषणमपास्तम् । तीरे

## दिनकरीयम्.

शक्त्या पदजन्यतीरोपस्थितेरभावादत आह ॥ **वृत्तिश्चेति** ॥ **अन्यतरसम्बन्धः** अन्यतरात्मकः सम्बन्धः **अत्रैव** पदजन्यपदार्थोपस्थितावेव ॥ **साचेति** ॥ यद्यपीश्वरेच्छाया ऐक्यात् घटशब्दात् घटो बोद्धव्य इति ईश्वरे

## रामरुद्रीयम्.

दिरेवार्थो बोध्यः एकसम्बन्धिज्ञानस्यैवापरसम्बन्धिस्मारकत्वादिति ॥ **तीरोपस्थितेरभावादिति** ॥ गङ्गापदशक्यप्रवाहसम्बन्धस्य तीरे गृहीतत्वादेव गङ्गापदेन प्रवाहोपस्थितौ तीरोपस्थितिसम्भवेन तीरे गङ्गापदशक्यत्वकल्पनादिति भावः । अन्यतरसम्बन्ध इत्यत्र षष्ठीतत्पुरुषभ्रमं निराकुरुते ॥ **अन्यतरात्मक इति** ॥ **पदजन्यपदार्थोपस्थितावेवेति** ॥ शक्तिज्ञानाभावेऽपि शक्यसम्बन्धरूपलक्षणाग्रहस्याप्यसम्भवेन पदपदार्थयोः सम्बन्धज्ञानाभावात् पदज्ञानेन शाब्दबोधप्रयोजकीभूतपदार्थस्मरणोत्पादनासम्भवात् ।

**दयमर्थो बोद्धव्य इतीश्वरेच्छारूपा । आधुनिके नाम्नि शक्तिरस्त्येव । एकादशेऽहनि पिता**

## प्रभा.

गङ्गापदवाच्यत्वाभावात् तीरादिनिष्ठविशेष्यतायाः गङ्गापदजन्यबोधविषयत्वप्रकारतानिरूपितत्वेऽपि तीरादिनिष्ठविशेष्यताया न विशिष्टबोधनिरूपितविषयतात्वावच्छिन्नप्रकारतानिरूपितत्वं किन्तु केवलविषयतात्वावच्छिन्नप्रकारतानिरूपितत्वमेवेति निरुक्तविशेष्यतासंबन्धेन ईश्वरेच्छायास्तीरादावभावेन तद्रूपतत्पदशक्यत्वाभावात् तीरादौ गङ्गापदस्य लक्षणावश्यकीति भावः । नच निरुक्तविशेष्यतासंबन्धेन ईश्वरेच्छावत्त्वं ईश्वरज्ञानवत्त्वं ईश्वरकृतिमत्त्वं वा तत्पदशक्यत्वमित्यत्र विनिगमनाविरहात् त्रयाणामपि तच्छक्तिरूपत्वापातिरिति वाच्यं अनादितात्पर्यज्ञानस्य हेतुत्वानुरोधेन ईश्वरेच्छाया ईदृशाकारत्वस्य क्लृप्तत्वेन तस्या एव शक्तिरूपत्वस्वीकारात् ईश्वरज्ञानकृत्योस्तु ईदृशाकारत्वे प्रमाणाभावेनाक्लृप्ततया तयोश्शक्तिरूपत्वासंभवात् । ननु एकादशेऽहनि पित्रुच्चरितनाम्नः पुत्रे शक्तिर्न स्यात् तत्रेश्वरेच्छाया अभावादित्याशङ्क्य तत्रापीश्वरेच्छारूपशक्तिमुपपाद्य परिहरति ॥ **आधुनिक इति** ॥ आधुनिकैः पित्रादिभिः एकादशेऽहनि उच्चरितनाम्नीत्यर्थः ॥ **शक्तिरस्त्येवेति** ॥ ईश्वरेच्छारूपशक्तिरस्त्येवेत्यर्थः । एतदेवोपपादयति ॥ **एकादशेऽहनीति** ॥ पुत्रस्येति पदाध्याहारेण एकाद-

## दिनकरीयम्.

च्छा पटेऽप्यस्तीत्यतिप्रसङ्गः एवं गङ्गापदजन्यबोधविषयत्वप्रकारकेच्छायास्तीरेऽपि सत्त्वाच्छक्त्यैव तीरबोधोपपत्तेर्लक्षणोच्छेदापत्तिस्तथापि गङ्गापदवाच्यत्वव्यवहारस्य तीरेऽभावाद्गङ्गादिपदजन्यबोधविषयतात्वावच्छिन्नप्रकारतानिरूपितविशेष्यतासम्बन्धेनेश्वरेच्छैव गङ्गादिपदानां शक्तिः । तीरादिनिष्ठविशेष्यताया गङ्गादिपदजन्यबोधविषयत्वप्रकारतानिरूपितत्वेऽपि न तस्यास्तादृशविषयतात्वेन तादृशप्रकारतानिरूपितत्वमपि तु शुद्धविषयतात्वेनेति नातिप्रसङ्गो न वा लक्षणोच्छेदप्रसङ्ग इति ॥ **आधुनिके नाम्नि** आधुनिकैः पित्रादिभिरेकादशेऽह-

## रामरुद्रीयम्.

तथा चैतदभिप्रायेणैव कारिकायां शक्तिधियः पदज्ञानसहकारित्वमुक्तमिति भावः ॥ **अतिप्रसङ्ग इति** ॥ घटपदबोध्यत्वप्रकारकेच्छायाः घटपदशक्तित्वे तस्या ईश्वरमात्रवृत्तित्वेन घटे घटपदशक्तिर्न स्यादिति विशेष्यतासम्बन्धेनैव तादृशेच्छावत्त्वं शक्तिरित्युपेयम् । तथा च ईश्वरस्य अनेकेच्छाकल्पने गौरवात् घटपदात् घटो बोद्धव्यः पटपदात् पटो बोद्धव्य इति समूहालम्बनरूपैकेच्छाव्यक्तेरेव तत्राङ्गीकरणीयतया तस्याश्च विशेष्यतासम्बन्धेन पटेऽपि सत्त्वेन घटपदशक्यत्वप्रसङ्ग इति भावः ॥ **तीरेऽपि सत्त्वादिति** ॥ भगवदिच्छायाः सन्मात्रविषयकत्वेन गङ्गापदाल्लक्षणया तीरबोधस्यापि जायमानत्वेन तद्विषयत्वस्यापि ईश्वरेच्छायामावश्यकत्वादिति भावः ॥ **नातिप्रसङ्गो न वा लक्षणोच्छेदप्रसङ्ग इति** ॥ तत्पदजन्यबोधविषयतात्वावच्छिन्नप्रकारतानिरूपितविशेष्यतासम्बन्धेन ईश्वरेच्छावत्त्वस्य तत्पदशक्यत्वाभ्युपगमेनेश्वरेच्छानिरूपितघटपदजन्यबोधविषयतात्वावच्छिन्नप्रकारतानिरूपितविशेष्यतायाः पटादावसत्त्वेन न पटादेस्तादृशविशेष्यतासम्बन्धेनेश्वरेच्छावत्त्वमिति न पटादेर्घटपदशक्यत्वमिति भावः । अन्यथा तदभाववति तत्प्रकारकत्वेनेश्वरेच्छाया विसंवादित्वापत्तेः । तीरादौ गङ्गापदवाच्यत्वव्यवहाराभावेनेश्वरेच्छायां गङ्गापदजन्यबोधविषयस्तीरं भवत्वित्याकारकता न स्वीक्रियते अपि तु विषयता गङ्गापदजन्यबोधीया भवतु तीरं विषयतावद्भवत्वित्येवंरीत्या विशकलितव्यपदेशेन विषयतात्वेनैव गङ्गापदजन्यबोधविषयतायास्तीरे भगवदिच्छावगाहनात्तीरादौ गङ्गापदजन्यबोधविषयतात्वावच्छिन्नप्रकारतानिरूपितविशेष्यतासम्बन्धेनेश्वरेच्छावत्त्वमिति तीरादौ गङ्गापदशक्यत्वाभावात् तीरादिविषयकशाब्दबोधनिर्वाहाय लक्षणाङ्गीकारोऽप्यावश्यक इति भावः । एतेन विशेषणे यद्विशेषणं तस्यैव प्रकारतावच्छेदकत्वेन गङ्गापदजन्यबोधविषयस्तीरं भवत्विति ईश्वरेच्छानिरूपिततीरनिष्ठविशेष्यतायां गङ्गापदजन्यबोधविषयतात्वावच्छिन्नप्रकारतानिरूपितत्वं नाभ्युपेयते किन्तु शुद्धविषयतात्वावच्छिन्नप्रकारतानिरूपितत्वमेवेति ग्रन्थकारोक्तिर्न सङ्गच्छत एवेति केषाञ्चिदाक्षेपो निरवकाशः । आधुनिकसङ्केतिते तु न शक्तिरिति मूलग्रन्थविरुद्धं आधुनिके नाम्नि शक्तिरस्त्येवेति मूलं इत्याशङ्क्य आधुनिके नाम्नि इत्यस्य नामविशेषपरतामाह ॥ **आधुनिक इ-**

**नाम कुर्यादितीश्वरेच्छायाः सत्त्वात् । आधुनिकसङ्केतिते तु न शक्तिरिति सम्प्रदायः । नव्यास्तु ईश्वरेच्छा न शक्तिः किन्त्विच्छैव तेनाधुनिकसङ्केतितेऽपि शक्तिरस्त्येवेत्याहुः ।**

## प्रभा.

शाहकालीनपुत्रबोधकनामत्वावच्छिन्नजनकोच्चारणकर्ता पितेत्येवं श्रुतिवाक्यार्थः । तथाच चैत्रपदत्वादिना पुत्रे भगवदिच्छारूपशक्त्यभावेऽपि एकादशाहकालीनपितृकर्तृकोच्चारणजन्यनामत्वरूपसामान्यरूपेण भगवदिच्छाया उक्तश्रुत्या पुत्रे सत्त्वप्रतिपादनात् पुत्रस्य तादृशपित्रुच्चरितपदशक्यत्वमस्तीति भावः । नन्वेवमपि आधुनिकमात्रसङ्केतितनदीवृद्ध्यादिपदानां शक्तिर्न स्यात् निरुक्तसंबन्धेन भगवदिच्छाया अभावादित्याशङ्क्य इष्टापत्त्या परिहरति ॥ **आधुनिकसङ्केतिते त्विति** ॥ आधुनिकमात्रसङ्केतितनदीवृद्ध्यादिपद इत्यर्थः ॥ **न शक्तिरिति** ॥ भगवदिच्छायास्तत्राभावादिति भावः । तर्हि नद्यादिपदात् कथं शाब्दबोध इति चेत् शक्तिभ्रमादेवेति गृहाण । संप्रदायमते सर्वज्ञपाणिन्यादीनां भ्रान्तिकल्पनमनुचितमित्यस्वरसं हृदि निधाय नवीनमतमाह ॥ **नव्यास्त्विति** ॥ **न शक्तिरिति** ॥ उक्तदोषापत्तेरिति शेषः ॥ **किन्त्विच्छैवेति** ॥ निरुक्तविशेष्यतासंबन्धेन केवलेच्छायास्तत्रापि सत्त्वादिति भावः । नवीनमतेऽपभ्रंशात्मकगर्गर्यादिपदेऽपि इदं पदमिममर्थं बोधयत्वित्याधुनिकेच्छारूपशक्तेस्सत्त्वादभ्रान्तस्यापि तत्पदाच्छाब्दबोधापत्तिरित्यस्वरसं हृदि निधायाहुरित्युक्तमिति ध्येयम् । अत्र नापभ्रंशितवै इत्यादिश्रुत्या साधूनेव प्रयुञ्जीतेति व्याकरणेन चापभ्रंशशब्दानां प्रयोगनिषेधः साधुशब्दप्रयोगे फलातिशयश्च सिद्धः । शब्दानामपभ्रंशत्वं व्याकरणाशिक्षितत्वमेव तच्छिक्षितत्वमेव साधुत्वम् । तथाच गर्गर्यादिशब्दानां व्याकरणाशिक्षितत्वेन प्रयोगाप्रसिद्ध्या असच्छब्दव्यावृत्तैव शक्तिर्वाच्या तादृशशक्तिरस्मात्साधुशब्दादयमर्थो बोद्धव्य इत्याकारकेच्छैव एवंच गर्गर्यादिशब्दादयमर्थो बोद्धव्य इत्याकारकेच्छासत्त्वेऽपि साधुपदज्ञानजन्यबोधविषयतात्वावच्छिन्नप्रकारतानिरूपितविशेष्यतासंबन्धेन निरुक्तेच्छायाः कुत्राप्यवर्तमानतया न तस्याश्शक्तिरूपत्वं किन्तु गर्गर्यादिशब्दानां साधुपदत्वभ्रान्तिमतः साधुपदज्ञानघटितविशेष्यतासंबन्धेन निरुक्तेच्छावत्त्वभ्रमरूपशक्तिभ्रमसंभवात् तस्यैव गर्गर्यादिशब्दाच्छाब्दबोधः नान्यस्येति नवीनमतमेव साध्विति प्रतिभाति । ननु यदि शक्तिग्रहस्तदा पदार्थोपस्थितिशाब्दबोधयोरुत्पत्तिस्स्यात् न तदेव संभवति प्रमाणाभावादित्याशङ्क्य प्रमाणं

## दिनकरीयम्.

नि सङ्केतिते नाम्नि ॥ **इतीश्वरेच्छाया इति** ॥ एकादशाहकालीनपित्रुच्चारणविषयनामत्वेन सामान्यरूपेणेत्यर्थः ॥ **आधुनिकसङ्केतिते तु** ॥ आधुनिकमात्रसङ्केतिते नदीवृद्ध्यादिपदे तु ॥ सम्प्रदायमतेऽस्वरसं हृदि निधाय नवीनमतं दर्शयति ॥ **नव्यास्त्विति** ॥ **न शक्तिरिति** ॥ तथा सत्याधुनिकसङ्केतितान्नद्यादिपदाच्छाब्दबोधो न स्यादिति भावः । मतद्वयेऽप्यपभ्रंशात्मकगर्गर्यादिपदे शक्तिभ्रमादेव बोध इत्यवधेयम् ॥

## रामरुद्रीयम्.

**त्यादि** ॥ मूले एकादशेऽहनि पिता नाम कुर्यादित्यनन्तरं श्रुत्येति पूरणीयम् । ईश्वरेच्छायाः सत्त्वादित्यस्य संकेतिततत्तत्पदजन्यबोधविषयत्वप्रकारकतत्तदर्थविशेष्यकभगवदिच्छायाः सत्त्वादित्यर्थः । नन्वसाधुशब्दानामपि क्वचित्सङ्केतदर्शनात् तेषां तद्रूपेण भगवदिच्छाया अवगाहो न प्रामाणिकः । अनन्तप्रकारताविशेष्यताव्यक्तिकल्पने गौरवं चेत्यभिप्रायेणाह ॥ **एकादशाहकालीनेति** ॥ तथाच एकादशाहकालीनपित्रुच्चारितशब्दजबोधविषयः पित्रादिसङ्केतितविशेष्यो भवत्वित्याकारकमेव भगवदिच्छाकल्पनमिति भावः । नन्वेवमप्याधुनिकसङ्केतिते तु इत्यादिमूलमसङ्गतमेव एकादशेऽहनि पित्रादिसङ्केतितनाम्नि शक्तिस्वीकारादतो मात्रपदं पूरयति ॥ **आधुनिकमात्रेति** ॥ मात्रपदेनेश्वरव्यावृत्तिः । पूर्वोक्तनाम्नां सामान्यरूपेणेश्वरसङ्केतसत्त्वात् तेषु शक्तिसत्त्वेऽपि न क्षतिरिति भावः ॥ **अस्वरसमिति** ॥ वक्ष्यमाणमित्यर्थः । अस्वरसं प्रकटयति ॥ **तथा सतीति** ॥ शक्तिभ्रमं लक्षणाग्रहं च विनेत्यादिः । तेन शक्तिभ्रमादिना शाब्दबोधसम्भवेऽपि न क्षतिः । इदमुपलक्षणम् । ईश्वरानङ्गीकर्तॄणां प्राभाकरादीनां ईश्वरेच्छारूपशक्तिग्रहासम्भवेन शाब्दबोधानुपप-

शक्तिग्रहस्तु व्याकरणादितः । तथाहि—

शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद्व्यवहारतश्च ।
वाक्यस्य शेषाद्विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः ॥

धातुप्रकृतिप्रत्ययादीनां शक्तिग्रहो व्याकरणाद्भवति । क्वचित् सति बाधके त्यज्यते । यथा वैयाकरणैराख्यातस्य कर्तरि शक्तिरुच्यते। चैत्रः पचतीत्यादौ कर्त्रा सह चैत्रस्याभेदान्वयः। तच्च गौरवात् त्यज्यते किन्तु कृतौ शक्तिर्लाघवात्। कृतिश्चैत्रादौ प्रकारीभूय भासते। नच

## प्रभा.

प्रदर्श्य परिहरति॥ **शक्तिग्रह इति** ॥ अवधारणार्थकतुशब्दः व्याकरणादित इत्युत्तरं योज्यः । तथाच व्याकरणादित एव शक्तिग्रहसंभवान्न पदार्थस्मृत्यादेरनुपपत्तिरिति भावः । व्याकरणोपमानादिक्रमेण वक्ष्यमाणशक्तिग्राहकप्रमाणदर्शने आचार्योक्तिं प्रमाणयति ॥ **तथाहीत्यादि** ॥ **वृद्धा इति** ॥ तथाचाचार्योक्तिक्रमेण व्याकरणादिकं प्रदर्श्यत इति भावः । व्याकरणेन शक्तिग्रहस्थलं दर्शयति ॥ **धात्वित्यादि** ॥ भूधात्वादीत्यर्थः । प्रकृतीति निपातरूपे ॥ **प्रत्ययेति** ॥ स्वादितिबादीत्यर्थः । आदिना ङीप्संनियोगेन विहितानुगागमादिपरिग्रहः एतेषामित्यर्थः॥ **शक्तिग्रह इति**॥ अर्थविशेषे शक्तिग्रह इत्यर्थः॥ **व्याकरणादिति** ॥ भू सत्तायां डुपचष्पाके इत्यादिव्याकरणादित्यर्थः॥ **भवतीति** ॥ जायत इत्यर्थः॥ ननु सर्वत्र व्याकरणेन निर्णीततत्तत्पदशक्यार्थस्वीकारे स्वसिद्धान्तविरोध इत्यत आह ॥ **क्वचिदिति** ॥ कुत्रचिदित्यर्थः ॥ **सति बाधक इति** ॥ स्वसिद्धान्तविरोधे सतीत्यर्थः॥ **त्यज्यत इति** ॥ व्याकरणेन तत्पदजन्यशक्यत्वप्रकारकनिर्णयविशेष्यार्थः तत्पदशक्यत्वेन न व्यवह्रियत इत्यर्थः । नच तर्हि व्याकरणस्याप्रमाणत्वापत्तिरिति वाच्यं तस्य स्वाभिमतार्थे शक्तिग्राहकत्वस्वीकारेणाप्रमाणत्वाभावात्। इममेवार्थं प्रकाशयति॥ **यत्रेत्यादिना** ॥ **यथेति** ॥ चैत्रः पचतीत्यादिवाक्य इत्यर्थः । घटकत्वं सप्तम्यर्थः तस्याख्यातस्येत्यनेनान्वयः॥ **कर्तरि शक्तिरुच्यत इति** ॥ अयमभिप्रायः । लः कर्मणि च भावे चाकर्मकेभ्य इति सूत्रे कर्तरि कृदिति सूत्रस्थं कर्तरीति पदं अनुवर्तते तथाच सकर्मकेभ्यो धातुभ्यो लकाराः सकर्मकधातुसमभिव्याहृतलकारा इति यावत् कर्तरि कर्मणि च स्युरिति कर्तृवाचकाः कर्मवाचकाः स्युरिति फलितार्थः । सकर्मकधातुसमभिव्याहृतयगाद्यनुत्तरलकाराः कर्तृवाचकाः तादृशयगाद्युत्तरलकाराः कर्मवाचका इति फलितार्थः । एवमकर्मकेभ्यो धातुभ्यो लकाराः अकर्मकधातुसमभिव्याहृतलकारा इति यावत्। कर्तरि भावे च स्युः कर्तृवाचकाः भाववाचका भवन्तीत्यर्थः । भाववाचकत्वं निरर्थकत्वम् । अकर्मकधातुसमभिव्याहृतयगाद्यनुत्तरलकाराः कर्तृवाचकाः तादृशयगाद्युत्तरलकाराः निरर्थका इति फलितार्थः।तत्रोदाहरणानि चैत्रस्तण्डुलं पचति चैत्रेण तण्डुलः पच्यत इत्यादीनि चैत्रस्तिष्ठति चैत्रेण स्थीयत इत्यादीनि च। तत्र पचतीत्यत्र तिबङ्शप्प्रत्ययसमभिव्याहृतत्वेन यगादिसमभिव्याहृतत्वाभावात् कर्त्रर्थकत्वं पच्यते तण्डुल इत्यादौ तिबः यक्समभिव्याहृतत्वेन कर्मवाचकत्वं चैत्रस्तिष्ठतीत्यत्र तिबङ्शप्प्रत्ययसमभिव्याहृतत्वेन यगाद्यसमभिव्याहृततया कर्तृवाचकत्वं चैत्रेण स्थीयत इत्यत्र तिबः यक्समभिव्याहृतत्वेन निरर्थकत्वं च सिद्धम् । शाब्दबोधे तु आख्यातार्थकर्तृकर्मणोः प्रथमान्तार्थेन सहाभेदेनान्वयः धात्वर्थमुख्यविशेष्यतया च शाब्दबोधः । एवंच चैत्रस्तण्डुलं पचति चैत्रेण पच्यते तण्डुल इत्यत्रच तण्डुलकर्मकश्चैत्रकर्तृकः पाकः इति कर्त्राख्यातस्थले कर्माख्यातस्थले च बोधः । चैत्रस्तिष्ठति चैत्रेण स्थीयत इत्यत्रच चैत्रकर्तृका स्थितिरिति कर्त्राख्यातस्थले भावाख्यातस्थले च बोध इति

## दिनकरीयम्.

**व्याकरणादिति** ॥ भू सत्तायां वर्तमाने लडित्यादिव्याकरणादित्यर्थः॥ **लाघवादिति** ॥ कृति-

## रामरुद्रीयम्.

त्तिरित्यपि द्रष्टव्यम् ॥ **मूले धातुप्रकृतीति** ॥ धातुप्रातिपदिकेत्यर्थः॥ प्रत्ययाः विभक्तितद्धिताख्यातकृतः।

कर्तुरनभिधानाच्चैत्रादिपदोत्तरं तृतीया स्यादिति वाच्यम् । कर्तृसङ्ख्यानभिधानस्य तत्र तन्त्रत्वा-

प्रभा.

दिक् । उक्तार्थमेव सङ्क्षेपेणाह ॥ चैत्रः पचतीत्यादाविति ॥ तत्रेति ॥ कर्तुश्शक्यत्वं चेत्यर्थः । अवधारणार्थकश्चशब्दः त्यज्यत इत्युत्तरं योज्यः ॥ गौरवादिति ॥ कर्तृत्वस्य शक्यतावच्छेदकत्वे गौरवादित्यर्थः । नैयायिकाभिमतशक्यार्थमाह ॥ किन्त्विति ॥ लाघवादिति ॥ कृतित्वजातेश्शक्यतावच्छेदकत्वेन लाघवादित्यर्थः । ननु कृतेराख्यातार्थत्वे प्रथमान्तार्थेन सहाभेदेनान्वयः बाधित इत्यत आह ॥ कृतिरिति ॥ शाब्दबोध इत्यादिः ॥ चैत्रादाविति ॥ चैत्रादिनिष्ठविशेष्यतानिरूपितप्रकारतात्वावच्छिन्नविषयतावतीत्यर्थः । तथाचैतन्मते धात्वर्थविशेष्यकबोधस्य सर्वत्रानभ्युपगमेन प्रथमान्तार्थमुख्यविशेष्यकशाब्दबोधस्यैव स्वीकार्यतया कृतिप्रकारकचैत्रादिविशेष्यकबोधो नानुपपन्न इति भावः ॥ कर्तुरनभिधानादिति ॥ कर्तुराख्यातवाच्यत्वाभावादित्यर्थः ॥ चैत्रादिपदोत्तरमिति ॥ चैत्रः पचतीत्यादिवाक्यघटकचैत्रादिपदोत्तरमित्यर्थः ॥ तृतीयास्यादिति ॥ तथाचानभिहित इत्यधिकृत्य पठितेन कर्तृकरणयोस्तृतीयेत्यनुशासनेनाख्यातेन कर्त्रनभिधानस्थले कर्तृबोधार्थं तृतीयाविधानात् प्रकृते कर्त्राख्यातेन कृतेरेवाभिहितत्वेन कर्तुरनभिधानात् कर्तृबोधार्थं तृतीयापत्त्या चैत्रेण पचतीत्येव प्रयोगस्स्यान्न स्याच्च चैत्रः पचतीति प्रयोग इति भावः ॥ कर्तृसंख्यानभिधानस्येति ॥ आख्यातपदप्रयोज्यकर्तृभूतचैत्रादिविशेष्यकसंख्याप्रकारकबोधाभावस्येत्यर्थः ॥ तन्त्रेति ॥ तृतीयायाः प्रयोजकत्वादित्यर्थः । तथाच लः कर्मणीत्यादिसूत्रघटकानुवृत्तसप्तम्यन्तकर्तृपदस्य कर्तृसंख्यालाक्षणिकतया कर्तृसंख्यावाचकलकार इत्यर्थः तद्वीत्यानभिहितइत्यधिकारे सूत्रस्याप्याख्यातेन कर्तृगतसंख्यायामनभिहितायामित्यर्थकतया तादृशसंख्याबोधार्थं कर्तृकरणयोस्तृतीयेति सूत्रेण तृतीया विधेया प्रकृते आख्यातेन कर्तृगतैकत्वादिसंख्याभिधानात् तादृशाधिकारीयतृतीयाविधायकसूत्रस्याप्रवृत्त्या चैत्रः पचतीति प्रयोग एव साधुरिति भावः । नन्वाख्यातार्थसंख्या प्रकृते कर्त-

दिनकरीयम्.

त्वजातेः शक्यतावच्छेदकत्वे लाघवादित्यर्थः ॥ न च कर्तुरनभिधानादिति ॥ अनभिहित इत्यधिकारीयेण कर्तृकरणयोस्तृतीयेत्यनेन कर्तरि तृतीयाविधानादिति भावः ॥ तत्र तृतीयायाम् ॥ तन्त्र-

रामरुद्रीयम्.

आदिना समासादिपरिग्रहः । समासादावपि वैयाकरणैः शक्त्यङ्गीकारात् । तत्र भू सत्तायामित्यादि धातोः शक्तिग्राहकम् । पाचकादिप्रातिपदिकस्यापि व्याकरणाच्छक्तिग्रहः पचधातोः पाकार्थकत्वस्य तदुत्तरकृत्प्रत्ययस्य कर्तृत्वार्थकत्वस्य च तत्र प्रतिपादनात् । तत्र गवादिप्रधानप्रातिपदिकानां कोशादेव शक्तिग्रह इति मन्तव्यम् । वस्तुतो धातुप्रकृतीत्यस्य धातुरूपप्रकृतीत्यर्थः । धातौ प्रकृतित्वप्रदर्शनंच प्रत्ययतो वैलक्षण्यद्योतनायैव । अत एव आदिना समासादिवृत्तीनां संग्रहोऽपि सङ्गच्छते । तेषामपि प्रातिपदिकत्वादिति सारम् । वर्तमाने लडित्यादिकं तु प्रत्यये शक्तिग्राहकमिति विवेकः ॥ कृतित्वजातेरिति ॥ किञ्चिदविशेषितस्य एकस्य कृतित्वस्य शक्यतावच्छेदकत्वे लाघवं कृतित्वविशिष्टानामनन्तकृतीनां शक्यतावच्छेदकत्वे गौरवम् । जातेरेव स्वरूपभानाभ्युपगमेन कृतेः स्वरूपतः शक्यतावच्छेदकत्वासम्भवादिति भावः । नवीनैर्वैयाकरणैस्तु आश्रयमात्र एव कर्तृकर्माख्यातयोः शक्तिः स्वीक्रियते कृत्यादिव्यापारफलयोर्धातुनैव लाभात् आश्रयत्वंचाखण्डोपाधिरिति तन्मते न गौरवम् । परंतु लः कर्तरीत्यादिमूलभूतसूत्रविरोध एव । न च कर्तरीत्यस्य आश्रय इत्येवार्थ इति वाच्यम् । तथा सति स्वतन्त्रः कर्तेति सूत्रकृत्परिभाषाया वैयर्थ्यापत्तेः । स्वशास्त्रे यत्र कर्तृपदप्रयोगस्तत्रायमर्थ इति ज्ञापयितुमेव परिभाषादरात् । स्वातन्त्र्यंच कारकान्तरव्यापारानधीनव्यापारवत्त्वं तच्चातिगुरुभूतमेव । इत्थंच फलव्यापारयोर्धातुराश्रये तु तिङः स्मृताः इति कारिकापि सूत्रविरुद्धैव । किंच कर्तृपदस्य लक्षणयैवाश्रयार्थकत्वं वाच्यम् । कृतिमत एव तस्य मुख्यार्थत्वात् । तथाच वरं तदपेक्षया कृतावेव लक्षणाकल्पनम् । आश्रयत्वस्य अखण्डोपाधिरूपत्वे मानाभावादाधारतारूपस्य तस्य स्वरूपसम्बन्धरूपत्वेनाननुगतत्वादिति मन्तव्यम् ॥ अनभिहित इत्यधिकारीयेणेति ॥ अनभिहिताधिकारसूत्रान-

त्। सङ्ख्याभिधानयोग्यश्च कर्मत्वाद्यनवरुद्धः प्रथमान्तपदोपस्थाप्यः। कर्मत्वादीत्यस्येतर-विशेषणत्वेन तात्पर्याविषयत्वमर्थः। तेन चैत्र इव मैत्रो गच्छतीत्यादौ न चैत्रे सङ्ख्यान्वयः।

प्रभा.

येनान्वेति नान्यत्रेत्यत्र किं प्रमाणमत आह ॥ **संख्याभिधानेति** ॥ आख्यातार्थसंख्याप्रकारकशाब्द-बोधविशेष्यतायामित्यर्थः ॥ **योग्य इति** ॥ अधिकरणमित्यर्थः ॥ **कर्मत्वाद्यनवरुद्ध इति** ॥ कर्मत्वादिवि-शेषणत्वेन तात्पर्याविषय इत्यर्थः ॥ **प्रथमान्तेति** ॥ प्रथमान्तपदज्ञानजन्योपस्थितिविषय इत्यर्थः। तथा चाख्यातार्थसंख्यानिष्ठप्रकारतानिरूपितविशेष्यतासंबन्धेन शाब्दबुद्धिं प्रति कर्मत्वादिविशेषणत्वतात्पर्यज्ञानास-हकृतप्रथमान्तपदनिरूपितवृत्तिज्ञानजन्योपस्थितेर्विशेष्यतासंबन्धेन कारणत्वादेतादृशकारणस्य कर्त्राख्यातस्थ-ले कर्तर्येव सत्त्वेन तत्रैव निरुक्तसंबन्धेन तादृशशाब्दबोधो जायते नान्यत्रेति भावः। अत्र चैत्रः तण्डुलः पचति चैत्रः काष्ठः पचतीत्यादौ कर्मत्वकरणत्वादिलाक्षणिकप्रथमान्तपदोपस्थाप्यतण्डुलकाष्ठादेस्तादृशसंख्या-न्वयवारणाय कर्मत्वाद्यनवरुद्धत्वविशेषणं। तादृशविशेषणस्य यथाश्रुतार्थकत्वे उक्तस्थले तण्डुलकाष्ठादेः शा-ब्दबोधात्पूर्वं शाब्दबोधीयकर्मत्वादिनिरूपितविशेषणत्वशून्यत्वात् तद्दोषतादवस्थ्यं अतस्तादृशयथाश्रुतार्थ-मपहाय निरुक्ततात्पर्याविषयत्वरूपपर्यवसितार्थानुसरणमिति हृदयम्। कर्मत्वादिघटितानिरुक्तार्थस्य पूर्वद-लार्थत्वे वक्ष्यमाणदोषावारणात् कर्मत्वाद्यघटितपूर्वदलपर्यवसितार्थमाह ॥ **कर्मत्वादीति** ॥ कर्मत्वाद्यनव-रुद्ध इति वाक्यस्येत्यर्थः ॥ **इतरविशेषणत्वेनेति** ॥ प्रतियोगित्वसंबन्धानवच्छिन्नविशेषणत्वेनेत्यर्थः ॥ **अर्थ इति** ॥ प्रतिपाद्यार्थ इत्यर्थः। तथाच कर्मत्वादिनिरूपितविशेषणत्वस्याधेयतासंबन्धावच्छिन्नत्वात् प्रतियो-गित्वसंबन्धानवच्छिन्नत्वेन प्रतियोगित्वसंबन्धानवाच्छिन्नविशेषणत्वतात्पर्याविषयत्वस्य कर्मत्वाद्यनवरुद्ध इति वाक्यतात्पर्यार्थत्वसंभवादित्यर्थः ॥ **तेनेति** ॥ कर्मत्वाद्यनवरुद्ध इति वाक्यस्य निरुक्तार्थपरत्वस्वीकारेणेत्यर्थः ॥

दिनकरीयम्.

**स्यात्** प्रयोजकत्वात् ॥ ननु कर्तृसङ्ख्याभिधान एव किं प्रयोजकमित्याशङ्क्य तत्प्रयोजकं दर्शयति ॥ **संख्याभिधानेति** ॥ चैत्रः पचति तण्डुल इत्यादौ कर्मत्वादिलाक्षणिकप्रथमान्तपदोपस्था-प्यतण्डुलादिव्युदासायाह ॥ **कर्मत्वाद्यनवरुद्ध इति** ॥ ननु चैत्र इव मैत्रो गच्छतीत्यत्राख्यातेनैकवचन-त्वरूपेणोक्तायाः सङ्ख्यायाश्चैत्रेऽन्वयः स्यात्। कर्मत्वाद्यनवरुद्धत्वात् प्रथमान्तपदोपस्थाप्यत्वाच्च। किंच पक्वमन्नं भुज्यत इत्यादावन्नादौ संख्यान्वयानुपपत्तिः। पाककर्मत्वस्यान्नेऽन्वयेन कर्मत्वाद्यनवरुद्धत्वाभावादत आह ॥ **कर्मत्वादीत्यस्येति** ॥ तथाच कर्मत्वपदमितरपरमनवरुद्धत्वं च विशेषणतया अविवक्षितत्वम्।

रामरुद्रीयम्.

न्तरपठितकर्तृकरणयोस्तृतीयेति सूत्रेणेत्यर्थः ॥ **किं प्रयोजकमित्याशङ्क्येति** ॥ चैत्रस्तण्डुलं पचतीत्यादौ चैत्रगतसङ्ख्यैवाख्यातेनाभिधीयते नतु तण्डुलादिगतेत्यत्र नियामकाभावे चैत्रेण पच्यते तण्डुल इत्या-दावपि चैत्रगतसंख्याभिधानसम्भवेन तृतीया न स्यादित्याशङ्कायामिति पर्यवसितार्थः ॥ **प्रथमान्तपदोपस्था-प्येति** ॥ पदस्य तु मूल एवाग्रे यत्र तण्डुलं पचतीति प्रयोगे द्वितीयायाः कर्मत्वेनैव तात्पर्यं तत्र तण्डुले स-ङ्ख्यान्वयवारणं प्रयोजनं दर्शयिष्यतीति तदुपेक्षितम्। न च कर्मत्वाद्यविवक्षायां द्वितीयैव न साधु कर्म-णि द्वितीयेति तद्विधानादिति वाच्यम्। असाधुत्वेऽपि प्रयोजनप्रदर्शने बाधकाभावात् साधुप्रयोग एव प्र-योजनं दर्शनीयमिति नियमाभावात्। अपभ्रंशादपि शाब्दबोधोत्पत्त्या तत्र शाब्दबोधापादनसम्भवादिति ध्येयम् ॥ **नन्वित्यादि** ॥ कर्मत्वाद्यनवरुद्धत्वं यदि द्वितीयादिकारकविभक्त्यर्थाविशेषणत्वं तदा चैत्र इवे-त्यादौ चैत्रस्य इवार्थसादृश्य एव विशेषणत्वेऽपि कारकविभक्त्यर्थकर्मत्वादावविशेषणत्वेनाख्यातार्थसङ्ख्या-या मैत्र इव चैत्रेऽपि अन्वयः स्यादतः कर्मत्वाद्यनवरुद्धत्वं निर्वक्तीति भावः। एवं कर्मत्वाद्यनवरुद्धत्वं यदि कर्मत्वाद्यनन्वितत्वं तदा पक्वमन्नं भुज्यत इत्यादौ पाककर्मत्वेनान्विते अन्ने आख्यातार्थसङ्ख्याया अन्वयो न स्यादत इदमावश्यकमिति भावः। इत्थंच इतरानन्वितत्वेन तात्पर्याविषयत्वमित्यस्य परित्यागोऽनुचित इ-ति ध्येयम्। नन्वितरार्थं कर्मादिरर्थं अपार्थम्। निरोधनत्वेन तात्पर्याविषयत्वार्थं कर्मत्वानवरुद्धत्वे पदा-

## प्रभा.

**न चैत्र इति ॥** इवार्थसादृश्ये निरूपितत्वसंबन्धेनैव चैत्रस्य विशेषणतया प्रतियोगित्वसंबन्धानवच्छिन्नविशेषणत्वतात्पर्यविषयत्वादिति भावः । अत्र विशेषणतायाः प्रतियोगित्वसंबन्धानवच्छिन्नत्वाविशेषणात् चैत्र एव पचतीत्यादौ एवकारार्थघटकभेदे प्रतियोगित्वसंबन्धेन चैत्रस्य शाब्दबोधविषयत्वेन तत्प्रकारकतात्पर्यविषयत्वेऽपि प्रतियोगित्वसंबन्धानवच्छिन्नविशेषणत्वतात्पर्याविषयत्वस्यापि सत्त्वान्न तादृशसंख्यान्वयानुपपत्तिरिति भावः । नन्वेवमपि चैत्रः चैत्रं पश्यतीत्यादौ चैत्रस्य निरुक्तविशेषणत्वतात्पर्यविषयत्वात् तादृशसंख्यान्वयानुपपत्तिर्दुर्वारेति वाच्यं तादृशतात्पर्याविषयत्वमित्यस्य निरुक्तविशेषणत्वतात्पर्येण उच्चरितत्वानाश्रयप्रकृतवाक्यघटकपदोपस्थाप्यत्वरूपार्थविवक्षया उक्तस्थले प्रथमान्तचैत्रपदस्य तादृशत्वेन तदुपस्थाप्यत्वस्य चैत्रे सत्त्वात् तत्र न तादृशसंख्यान्वयानुपपत्तिरित्यपि ध्येयम् । अत्र प्रथमदलस्य तात्पर्यघटितार्थकथनं शाब्दबोधसामान्ये तात्पर्यज्ञानस्य हेतुत्वमिति प्राचीनमतानुसारेण अन्यथा चैत्र इव मैत्रो गच्छतीत्यादौ यदा चैत्रे न विशेषणत्वतात्पर्यं तदा नवीनमते सत्यन्तदलार्थसत्त्वात् प्रथमान्तपदोपस्थाप्यत्वाच्च तत्र तादृशसंख्यान्वयापत्तेर्दुर्वारत्वात् परंतु प्रतियोगित्वसंबन्धानवच्छिन्नतन्निष्ठप्रकारताशालिशाब्दबोधत्वावच्छिन्नजन्यतानिरूपितज्ञाननिष्ठजनकतानिरूपितविषयतासंबन्धावच्छिन्नावच्छेदकताशून्यप्रकृतवाक्यघटकपदो-—

## दिनकरीयम्.

वस्तुतस्त्वितरस्यापि न विवक्षा । अविशेषणत्वमात्रस्य विवक्षितत्वात् । अविशेषणत्वं प्रकारताशून्यत्वं तस्य च शाब्दबोधात् पूर्वं चैत्रादावपि सत्त्वाच्चैत्र इव मैत्रो गच्छतीत्यादौ चैत्रेऽपि सङ्ख्यान्वयापत्तिः । न च चैत्रीयं सादृश्यमित्यवान्तरवाक्यार्थबोधस्य पूर्वं सत्त्वात् कथमविशेषणत्वं चैत्रस्येति वाच्यम् । यत्र खलेकपोतन्यायेन बोधस्तत्र चैत्रीयं सादृश्यमित्यवान्तरवाक्यार्थबोधस्य पूर्वमभावादतो विशेषणत्वतात्पर्याविषयत्वपर्यन्तानुधावनम् । न च चैत्र एव पचति चैत्रश्चैत्रं पश्यतीत्यादावेवकारार्थेऽन्यस्मिन् कर्मादौ च चैत्रस्य

## रामरुद्रीयम्.

पादानेनैव सामञ्जस्यादित्यस्वरसात् कर्मत्वाद्यनवरुद्धत्वमिति समुदायस्यैव विशेषणत्वेन तात्पर्याविषयत्वपरतामाह ॥ **वस्तुतस्त्विति** ॥ नन्वितराविशेषणत्वं परित्यज्येतरविशेषणत्वेन तात्पर्याविषयत्वपर्यन्तानुधावनमफलमित्याशङ्कां निरसितुं तत्प्रयोजनं दर्शयन्नाह ॥ **अविशेषणत्वमिति** ॥ **एवकारार्थेऽन्यस्मिन्निति** ॥ एवकारार्थस्त्रिविधः । अन्ययोगव्यवच्छेदः अयोगव्यवच्छेदः अत्यन्तायोगव्यवच्छेदश्चेति । अत्र विशेष्यसङ्गतैवकारस्यान्ययोगव्यवच्छेदोऽर्थः । यथा चैत्र एव पचतीत्यादौ चैत्राद्यन्यस्मिन् पाककर्तृत्वयोगो व्यवच्छिद्यते । तत्रान्यस्मिन् योगे व्यवच्छेदे च पृथगेवैवकारस्य शक्तिः । अन्यरूपार्थस्तु चैत्रांशे विशेष्यविधया भासते । सम्बन्धरूपयोग एवाख्यातार्थकृतेः प्रतियोगित्वेनान्वयः । तादृशयोगस्याभावरूपव्यवच्छेदे प्रतियोगित्वेनान्वयः । अभावश्च अन्यस्मिन् प्रकारविधया भासते । तथा च चैत्रः पाकानुकूलकृतिमान् चैत्रान्यः पाकानुकूलकृतिसम्बन्धाभाववानित्याकारक एव शाब्दबोधो भवति । एवंच उक्तस्थले सम्बन्धस्य केवलान्वयित्वेन सम्बन्धाभावाप्रसिद्ध्या शक्तिग्रह एव न सम्भवति इत्यपि प्रत्युक्तम् । विशेषणसङ्गतैवकारस्य चायोगव्यवच्छेदोऽर्थः । यथा शङ्खः पाण्डुर एवेत्यादौ शङ्खे पाण्डुरायोगो व्यवच्छिद्यते । क्रियासङ्गतैवकारस्य च अत्यन्तायोगव्यवच्छेदोऽर्थः । यथा नीलं सरोजं भवत्येवेत्यादौ सरोजे नीलभवनस्यात्यन्तायोगो व्यवच्छिद्यते न त्वयोगो व्यवच्छिद्यते । क्वचित्सरोजे नीलत्वासम्बन्धस्यापि सत्त्वादिति ध्येयम् । यद्यप्ययोगेऽप्यत्यन्तत्वं सरोजत्वव्यापकत्वमेव वाच्यमन्यस्य दुर्वचत्वात् तथा च सरोजनिष्ठभेदप्रतियोगितानवच्छेदकनीलत्वसम्बन्धाभावस्याप्रसिद्ध्या तद्व्यवच्छेदो दुर्घटः । तथाप्ययोगे अत्यन्तत्वस्य सरोजनिष्ठभेदप्रतियोगितानवच्छेदकत्वरूपस्य व्यवच्छेद एवात्यन्तायोगव्यवच्छेदपदार्थ इति नोक्तानुपपत्तिः । ननु एवकारातिरिक्तविशेषणत्वेन तात्पर्याविषयत्वमेव कर्मत्वाद्यनवरुद्धत्वं वाच्यम् । अतः चैत्रस्य एवकारार्थान्यस्मिन् विशेषणत्वेऽपि न तत्र सङ्ख्यान्वयानुपपत्तिरत एवेतरपदमपि सार्थकमित्याशङ्कायामाह ॥ **चैत्र इत्यादि** ॥ अत्र द्वितीयार्थे कर्मत्व एव चैत्रस्य विशेषणत्वेन तात्पर्यविषयत्वाच्चैत्रे स-

## प्रभा.

पस्थाप्यत्वरूपमेवोभयमतसाधारणं कर्मत्वाद्यनवरुद्धत्वम् । चैत्र एव पचतीत्यादौ चैत्रे संख्यान्वयोपपत्तये प्रकारतायां प्रतियोगित्वसंबन्धानवच्छिन्नत्वनिवेशः । उदासीनप्रथमान्ततण्डुलपदस्यापि तादृशतया तदुपस्थाप्यतण्डुले तण्डुलं पचतीति स्ववाक्यघटकाख्यातार्थसंख्यान्वयापत्तिवारणाय पदे प्रकृतवाक्यघटकत्वनिवेशः प्रकृतवाक्यघटकत्वं च तादृशवाक्यजन्यशाब्दबोधजनकतावच्छेदकाकाङ्क्षादिमत्त्वं चैत्रः चैत्रं पश्यतीत्यादौ तादृशावच्छेदकताशून्यप्रकृतवाक्यघटकं प्रथमान्तचैत्रपदमेवेति तदुपस्थाप्यत्वात्तत्र तादृशसंख्यान्वयोपपत्तिः । चैत्रेण स्थीयत इत्यादिभावाख्यातस्थले स्थाधातोः पच्यते पचतीत्यादिप्रथमान्तपदासमभिव्याहृतवाक्यघटककर्मकर्त्राख्यातपदयोश्च तादृशपदत्वात्तदुपस्थाप्यस्थितौ कर्मत्वकर्तृत्वयोश्चाख्यातार्थसंख्यान्वयापत्तिवारणाय द्वितीयदलं । स्थाधातोः कर्मकर्त्राख्यातपदयोश्च प्रथमान्तत्वाभावेन नोक्तदोषः । यदि प्रथमदले प्रकृतवाक्यघटकपदोपस्थाप्यत्वस्थाने प्रकृतवाक्यघटकनामोपस्थाप्यत्वं निवेश्यते तदा निरुक्तस्थलीयस्थाधात्वादीनां नामत्वाभावेन स्थित्यादीनां निरुक्तनामप्रतिपाद्यत्वरूपप्रथमदलार्थत्वाभावेनैव दोषाप्रसक्तेः द्वितीयदलं व्यर्थमेवेति

## दिनकरीयम्.

विशेषणत्वात् कथं तत्र सङ्ख्यान्वय इति वाच्यम् । विशेषणत्वमात्रेण तात्पर्याविषयत्वस्य विवक्षितत्वात चैत्रस्य उक्तस्थले विशेषणत्वमुख्यविशेष्यत्वाभ्यां तात्पर्यविषयत्वात् तत्र सङ्ख्यान्वयोपपत्तिः । यदि च चैत्र इव मैत्र इत्यादौ चैत्रादेर्यदा न विशेषणत्वं तदा चैत्रेऽपि सङ्ख्यान्वयापत्तिः । न च शाब्दबोधे तात्पर्यज्ञानस्य हेतुत्वान्नियमिति वाच्यम् । नानार्थातिरिक्तस्थले शाब्दबोधे तात्पर्यज्ञानस्य हेतुत्वे मानाभावादि-

## रामरुद्रीयम्.

ङ्ख्यान्वयो न स्यादिति भावः ॥ **विशेषणत्वमात्रेणेति** ॥ मुख्यविशेष्यत्वेन तात्पर्याविषयत्वे सति विशेषणत्वेन तात्पर्यविषयत्वं तदभावः संख्यान्वये नियामक इति भावः । ननु नानार्थकसैन्धवादिपदात् कदाचिल्लवणस्यैव कदाचिदश्वस्यैव बोध इति नियमनिर्वाहाय तादृशस्थल एव तात्पर्यज्ञानस्य हेतुत्वं न तु सर्वत्र एकार्थकपदस्थले तद्धेतुत्वकल्पने बीजाभावादेवञ्च चैत्र इवेत्यादौ चैत्रादेरिवार्थे यदा न विशेषणत्वे तात्पर्यं तदा चैत्रादौ संख्यान्वयः स्यादित्याशङ्कते ॥ **यदि चेत्यादिना** ॥ **नानार्थातिरिक्तस्थल इति** ॥ इदमुपलक्षणम् । तात्पर्यासत्त्वेऽपि भ्रमात्मकतात्पर्यज्ञानसम्भवेन शाब्दबोधमात्रे तात्पर्यज्ञानस्य हेतुत्वेऽपि चैत्रे संख्यान्वयापत्तिर्द्रष्टव्या ॥ **तदेत्यादि** विशेषणत्वमात्रप्रयोजकं यच्चैत्र इवेत्यादौ प्रथमान्तचैत्रपदं तदनुपस्थाप्यत्वमेवाविशेषणत्वपदेनात्र विवक्षितम् । तथा च चैत्र इवेत्यत्र प्रथमान्तचैत्रपदस्य इवार्थे विशेषणत्वमात्रप्रयोजकतया तदुपस्थाप्यत्वेन न तत्र सङ्ख्यान्वयः । चैत्र एव पचतीत्यादौ चैत्रे सङ्ख्यान्वयोपपत्तये मात्रपदम् । मुख्यविशेष्यत्वाप्रयोजकत्वे सति विशेषणत्वप्रयोजकत्वं विशेषणत्वमात्रप्रयोजकत्वम् । यद्यपि चैत्र इवेत्यादावपि चैत्रपदजन्यपदार्थस्मरणे चैत्रो मुख्यविशेष्यतयैव भासत इति न तस्यापि विशेषणत्वमात्रप्रयोजकत्वं तथापि शाब्दबोधनिरूपितविशेषणत्वमात्रप्रयोजकत्वमिह विवक्षितमिति न कोऽपि दोषः । न चात्र प्रथमान्तेति व्यर्थमिति वाच्यम् । चैत्रश्चैत्रं पश्यतीत्यत्र द्वितीयान्तचैत्रपदस्य विशेषणत्वमात्रप्रयोजकतया तदुपस्थाप्यत्वस्य चैत्रे सत्त्वेन तत्र सङ्ख्यान्वयोपपत्तये तदुपादानस्यावश्यकत्वात् । न चैवमपि चैत्रः पचति चैत्र इव मैत्रः सुन्दर इति वाक्यद्वयजन्यसमूहालम्बनशाब्दबोधः तत्र चैत्रे सङ्ख्यान्वयो न स्यात् तत्र तथाविधप्रथमान्तपदोपस्थाप्यत्वस्यैव तदानीमसत्त्वादिति वाच्यम् । यत्र यत्प्रथमान्तपदाख्यातपदाभ्यां स्वप्रयोज्यपरस्परनिरूप्यनिरूपकभावापन्नविषयताशालिशाब्दबोधो जन्यते विशेषणतामात्रप्रयोजकतत्प्रथमान्तपदोपस्थाप्यत्वाभावस्याख्यातार्थसङ्ख्यान्वयप्रयोजकत्वोपगमादित्युक्तस्थले पचतीत्याख्यातपदचैत्रइवेत्यादिभिन्नवाक्यस्थचैत्रपदाभ्यां न तादृशशाब्दबोधो जन्यत इति न सङ्ख्यान्वयानुपपत्तिः । अतस्तत्पदमपि ग्रन्थस्थं साधु सङ्गच्छत इति ध्येयम् । ननु तण्डुलं पचतीत्यत्र तण्डुलस्य कर्मत्वांशे विशेषणत्वविवक्षाभावे द्वितीयैव नोपपद्यते । कर्मत्वांशे प्रत्ययार्थस्य विशेषणत्वेन विवक्षायामेव कर्मणि द्वितीयेत्यनेन तदुत्तरं द्वितीयाविधानात् । इत्थं च न विशेषणत्वे तात्पर्यमिति मूलमसङ्गतमत आह ॥ **न विशेषणत्व इ**

यत्र कर्मादौ न विशेषणत्वे तात्पर्यं तद्वारणाय प्रथमान्तेति । यद्वा धात्वर्थातिरिक्ताविशेषणत्वं प्रथमदलार्थः । तेन चैत्र इव मैत्रो गच्छतीत्यत्र चैत्रादेर्वारणम् । स्तोकं पचतीत्यादौ

प्रभा.

प्रतिभाति । प्राचीनमते द्वितीयदलप्रयोजनमाह ॥ यत्रेति ॥ प्रथमान्तपदासमभिव्याहृतकर्माख्यातपदवाच्यकर्मत्वादावित्यर्थः । आदिपदात्तादृशकर्त्राख्यातपदवाच्यकर्तृत्वपरिग्रहः ॥ न विशेषणत्वतात्पर्यमिति ॥ प्रतियोगित्वसंबन्धानवच्छिन्नविशेषणत्वतात्पर्येणानुच्चरितपदप्रतिपाद्यत्वमित्यर्थः ॥ तद्वारणायेति ॥ तादृशपदप्रतिपाद्यकर्मत्वादावाख्यातार्थसंख्यान्वयापत्तिवारणायेत्यर्थः । तथाच चैत्रेण पच्यते तण्डुलं पचतीत्यादिप्रथमान्तपदासमभिव्याहृतकर्मकर्त्राख्यातस्थले चैत्रकर्तृकपाकजन्यं कर्मत्वं तण्डुलकर्मकपाकानुकूला कृतिरित्याकारककर्मत्वकर्तृत्वमुख्यविशेष्यकबोधस्यैवानुभवसिद्धत्वात् तादृशबोधतात्पर्येण प्रथमान्तपदासमभिव्याहृतानिरुक्तवाक्यानामुच्चारितत्वाच्च निरुक्तविशेषणत्वतात्पर्येणानुच्चरितं निरुक्तवाक्यघटककर्माख्यातादिपदमेव तत्प्रतिपाद्यत्वस्य कर्मत्वादौ सत्त्वात् तत्र तादृशसंख्यान्वयापत्तिवारणाय द्वितीयदलमावश्यकमिति भावः । नन्वेवं सति द्वितीयदलं व्यर्थं न च निरुक्तभावाख्यातस्थलीयस्थाधात्वादिवारकतया द्वितीयदलसार्थक्यस्योक्तत्वादिति वाच्यं प्रथमदलघटकपदप्रतिपाद्यत्वस्थाने नामप्रतिपाद्यत्वस्वीकारेणैव उक्तस्थाधात्वादीनामतादृशत्वेन तदर्थेष्वाख्यातार्थसंख्यान्वयापत्तिवारणादित्याशङ्कामिष्टापत्त्या परिहृत्य दलद्वयस्य कार्यपर्यवसानरूपार्थमाह ॥ यद्वेति ॥ धात्वर्थेति ॥ धात्वर्थातिरिक्तानिर्दिष्टितनिरुक्तविशेषणत्वतात्पर्येणानुच्चरिततादृशनामप्रतिपाद्यत्वमित्यर्थः ॥ प्रथमदलार्थ इति ॥ कर्मत्वाद्यनवरुद्ध इति वाक्यप्रतिपाद्य इत्यर्थः । धात्वर्थातिरिक्तत्वविशेषणदानपक्षेऽपि चैत्र इव मैत्रो गच्छतीत्यादौ दोषो नास्तीत्याह ॥ तेनेति ॥ धात्वर्थातिरिक्तत्वविशेषणेनापीत्यर्थः ॥ चैत्रादेर्वारणमिति ॥ भवतीति ॥ कृत्वेति शेषः । चैत्रादेराख्यातार्थसंख्यान्वयवारणमित्य-

दिनकरीयम्.

त्युच्यते तदा विशेषणत्वमात्रप्रयोजकप्रथमान्ततत्तत्पदानुपस्थाप्यत्वं बोध्यम् ॥ न विशेषणत्वे तात्पर्यं न विशेषणत्वमात्रे तात्पर्यम् ॥ तथाच तण्डुलं पचतीत्यादौ यदि विशेषणत्वमुख्यविशेष्यत्वाभ्यां तण्डुलबोधे तात्पर्यं तत्र तण्डुले सङ्ख्यान्वयवारणाय प्रथमान्तेत्यादीति भावः । इदमुपलक्षणम् । चैत्रेण सुप्यत इत्यादौ धात्वर्थस्वापादौ सङ्ख्यान्वयवारणाय प्रथमान्तपदोपस्थाप्यत्वस्यावश्यकत्वात् । द्वितीयदलस्य प्रकारान्तरेण प्रयोजनं वक्तुमन्यथा प्रथमदलार्थमाह ॥ यद्वेति ॥ चैत्रादेर्वारणमिति ॥ तस्य सादृश्ये

रामरुद्रीयम्.

त्यादि ॥ विशेषणत्वमुख्यविशेष्यत्वाभ्यामित्यादि ॥ यत्र तण्डुलकर्मकपाकानुकूलव्यापारवांस्तण्डुल इति शाब्दबोधे तात्पर्यं तत्र तण्डुलेऽपि संख्यान्वयवारणाय प्रथमान्तेत्यादीति भावः । ननु तण्डुलं पचतीत्यत्र यदोक्तबोधे तात्पर्यं तदा तण्डुलेऽप्याख्यातार्थसंख्यान्वये इष्टापत्तिरेवेति यदि ब्रूयात्तदा स्थलान्तरे प्रथमान्तेत्यादेः प्रयोजनं दर्शयति ॥ इदमिति ॥ तथा च चैत्र इवेत्यादौ चैत्रे संख्यान्वयवारणाय कर्मत्वादीत्यादि । चैत्रेण सुप्यत इत्यादौ स्वापे तदन्वयवारणाय प्रथमान्तेत्यादीति प्रयोजनमपि साधुप्रयोग एव सम्भवतीति भावः ॥ द्वितीयदलस्येति ॥ तण्डुलं पचतीत्यत्र आख्यातार्थस्य व्यापारस्य तण्डुले विशेषणत्वेनान्वयतात्पर्ये भावनान्वयिन्येव संख्यान्वय इति नियमात्तत्र संख्यान्वयोऽप्यावश्यकः । एवं सङ्ख्याया अभिहितत्वे प्रथमाप्यावश्यकी । उभयप्राप्तौ परं कारकमिति नियमात् द्वितीयापेक्षया अभिहिते कर्तुः प्रथमाया बलवत्त्वात् । तथा चैत्रश्चैलं पश्यतीतिवत् तण्डुलस्तण्डुलं पचतीति प्रयोगः साधुः । वस्तुतस्तु कर्मकर्ता तु कर्मवदिति कर्माभिन्नकर्तुः कर्मत्वातिदेशात् यगात्मनेपदयोरावश्यकत्वेन पच्यते तण्डुलः स्वयमेवेत्येव प्रयोगः साधुः । साधुप्रयोग एव प्रयोजनं दर्शनीयमित्यभिप्रायेण स्तोकं पचतीत्यादौ क्रियाविशेषणे सङ्ख्यान्वयवारणं प्रथमान्तेत्यादेः प्रयोजनमुक्तमित्यर्थः । भावनात्वं कर्तृत्वकर्मत्वान्यतरत्वम् । अपादानं सम्प्रदानं ततोऽधिकरणं तथा । करणं कर्म कर्तेति कारकाणां क्रमो मत इत्यवधेयम् ॥ द्विती-

स्तोकादेर्वारणाय द्वितीयदलम् । तस्य द्वितीयान्तपदोपस्थाप्यत्वाद्वारणमिति । एवं व्यापा-

प्रभा.

र्थः ॥ **स्तोकमिति** ॥ तदेत्यादिः ॥ **स्तोकादेर्वारणायेति** ॥ आदिना मृदु पचतीत्यादिवाक्यघट-कमृदुत्वादेः परिग्रहः । स्तोकादेराख्यातार्थसङ्ख्यान्वयवारणायेत्यर्थः । स्तोकपदादे' नामत्वादिति भावः ॥ **द्वितीयदळमिति** ॥ द्वितीयदळमपीत्यर्थः । आवश्यकं भवेदिति शेषः ॥ **वारणमिति** ॥ तस्यैवेत्यादिः । धात्वर्थातिरिक्तविशेषणस्यैवेत्यर्थः ॥ **वारणमिति** ॥ भवेदिति शेषः । प्रथमदळार्थत्वनिराकरणमित्यर्थः । प्रयोजनाभावादिति भावः । तथाच प्रथमदळघटकविशेषणतायां धात्वर्थातिरिक्तनिरूपितत्वनिवेशस्य द्वितीयदळसार्थक्यसम्पादनान्यप्रयोजनविरहेण व्यर्थतया तादृशविशेषणघटितप्रथमदळमुपादाय स्तोकादौ तादृशसङ्ख्यान्वयापत्तिवारणाय द्वितीयदळसार्थक्यसम्पादनस्य प्रक्षालनाद्धीति न्यायकवळिततत्वेनानुचिततया प्रथमदळे तादृशविशेषणपरित्यागेन स्तोकादौ तादृशसङ्ख्यान्वयाप्रसक्त्या द्वितीयदळनिराकरणमेव लाघवात् युक्तम् । परंतु निरुक्तप्रथमदळार्थः प्रथमान्तपदोपस्थाप्य एवेति स्फुटप्रतिपत्त्यर्थमेव द्वितीयदळमुपात्तमिति विश्वनाथपञ्चाननस्य निगूढाभिप्राय इति । इदमुपलक्षणम् । नैयायिकमते लः कर्मणीत्यादिसूत्रेऽनुवृत्तसप्तम्यन्तकर्तृपदस्य कर्तृत्वलाक्षणिकत्वमेव एवं कर्मणि द्वितीया कर्तृकरणयोस्तृतीयेति सूत्रघटकसप्तम्यन्तकर्मकर्त्रादिपदानामपि कर्मत्वकर्तृत्वादिलाक्षणिकत्वमेव ग्रामं गच्छतीत्यादौ द्वितीयादिना कर्मत्वादिबोधनात् तथाच सकर्मकधातुसमभिव्याहृतयगाद्यनुत्तरलकाराः कर्तृत्ववाचकाः तादृशधातुसमभिव्याहृतयगाद्युत्तरलकाराः कर्मत्ववाचकाः एवमकर्मकधातुसमभिव्याहृतयगाद्यनुत्तरलकाराः कर्तृत्ववाचकाः तादृशधातुसमभिव्याहृतयगाद्युत्तरलकाराः निरर्थका इत्युक्तरीत्यैव सूत्रार्थः पर्यवसितः । एवंच चैत्रः पचतीत्यादौ आख्यातेन कर्तृत्वबोधनात् अनभिहित इत्यधिकृत्य पठितकर्तृकरणयोस्तृतीयेति सूत्रस्याप्रवृत्त्या चैत्रादिपदोत्तरं तृतीयापत्तेरभावात् । इत्थंच प्रथमा-

दिनकरीयम्.

विशेषणत्वादिति भावः ॥ **द्वितीयान्तपदोपस्थाप्यत्वादिति** ॥ प्रथमान्तपदोपस्थाप्यत्वाभावादित्यर्थः । अत्र कल्पे चैत्र एव पचतीत्यादौ चैते सङ्ख्यान्वयोपपादनं सुधीभिर्विभावनीयम् । इदं त्ववधेयम् । सङ्ख्यान्वयबोधं प्रति न स्वातन्त्र्येण प्रथमान्तपदोपस्थाप्यत्वं हेतुः । आख्यातेन भावनानवगाहिसङ्ख्यान्वयबोधस्य कुत्राप्यजननात् । सङ्ख्यान्वयबोधत्वव्यापकभावनान्वयबोधत्वावच्छिन्नहेतुभूततादृशप्रथमान्तपदोपस्थाप्यत्वरूपकारणविरहेणैव प्रथमान्तपदानुपस्थाप्ये सङ्ख्यान्वयापत्त्यसम्भवात् । न च निरुक्तप्रथमान्तपदोपस्थाप्यत्वस्य जन्यतावच्छेदकं संख्यान्वयबोधत्वं भावनान्वयबोधत्वं वेत्यत्र विनिगमनाविरहः । सङ्ख्यान्वयमविषयीकृत्यापि भावनान्वयबोधस्यानुभवसिद्धतया भावनान्वयबोधत्वस्य जन्यतावच्छेदकत्वेन सङ्ख्यान्वयबोधत्वस्य तथात्वे मानाभावात् । लकारसामान्यस्य व्यापारोऽर्थ इति मीमांसकमतं दूषयति ॥ **गौर-**

रामरुद्रीयम्.

**यान्तेति** ॥ क्रियाविशेषणानां कर्मत्वं नपुंसकलिङ्गता चेति वार्तिकेन कर्मत्वानुशासनात् क्रियाविशेषणानां द्वितीयान्तत्वादिति भावः ॥ **विभावनीयमिति** ॥ धात्वर्थातिरिक्तविशेषणत्वमात्रेण तात्पर्यविषयत्वमेव कर्मत्वाद्यनवरुद्धत्वमेतत्कल्पेऽपि विवक्षणीयमिति भावः ॥ **सङ्ख्यान्वयमविषयीकृत्येति** ॥ दाराः सन्तीत्यादौ नित्यबहुवचनान्तदारशब्दार्थे आख्यातार्थबहुत्वसङ्ख्याया बाधितत्वादिति भावः । तथाच लः कर्तरीत्यत्रापि कर्तृपदस्य भावप्रधाननिर्देशत्वात् कर्तृत्वमेवार्थः । कर्तृत्वं च क्रियानुकूलकृतिमत्त्वं मुख्यं गौणञ्च क्रियानुकूलव्यापारवत्त्वमाश्रयत्वं वा नश्यतीत्यादौ प्रतियोगित्वमपीति बोध्यम् । एवञ्चानभिहिते इत्यधिकारीयकर्तृकरणयोस्तृतीयेत्यादावपि कर्तृत्वकरणत्वयोरित्यादिरेवार्थः । यत्र कर्मत्वं कर्तृत्वं करणत्वं चाभिहितं तत्र प्रथमैव न द्वितीयातृतीये । कर्मणि द्वितीयेति तद्विधायकसूत्राणां अनभिहिताधिकारस्थत्वात् प्रातिपदिकार्थस्य मुख्यविशेष्यत्वविवक्षायां सम्बोधने लकाराद्यभिहितकर्तृत्वाद्याश्रये प्रथमाया एव विधानात् । एतेनाख्यातेन तद्गतसंख्यानभिधानस्यैव तद्बोधकपदोत्तरतृतीयाप्रयोजकत्वे दाराः सन्तीत्यादौ आख्यातेन दारेषु बहुत्वस्य बाधितत्वेनाबोधनाद्दारैरिति तृतीयापत्तिरित्यपि प्रत्युक्तमित्य-

रेऽपि न शक्तिर्गौरवात्। रथो गच्छतीत्यादौ तु व्यापारे आश्रयत्वे वा लक्षणा। जानाती-

## प्रभा.

न्तपदसमभिव्याहारज्ञाने सत्याख्यातार्थभावनाप्रकारकशाब्दबोधः निरुक्तसमभिव्याहारज्ञानाभावे भावनामुख्यविशेष्यकशाब्दबोध एव जायत इति न काप्यनुपपत्तिरित्यपि बोध्यम्। केचित्तु इदं त्ववधेयम्। संख्यान्वयबोधं प्रति न स्वातन्त्र्येण प्रथमान्तपदोपस्थाप्यत्वं हेतुः आख्यातेन भावनामविषयीकृत्य संख्यान्वयबोधस्य कुत्राप्यजननात् संख्यान्वयबोधत्वव्यापकभावनान्वयबोधत्वावच्छिन्नहेतुभूततादृशप्रथमान्तपदोपस्थाप्यत्वरूपकारणविरहेणैव प्रथमान्तपदानुपस्थाप्ये संख्यान्वयापत्त्यभावात्। नच निरुक्तप्रथमान्तपदोपस्थाप्यत्वस्य जन्यतावच्छेदकं भावनान्वयबोधत्वं संख्यान्वयबोधत्वं वेत्यत्र विनिगमनाविरहस्सङ्ख्यामविषयीकृत्यापि भावनान्वयबोधस्यानुभवसिद्धत्वेन भावनान्वयबोधत्वस्य जन्यतावच्छेदकत्वावश्यकत्वेन सङ्ख्यान्वयबोधत्वस्य तथात्वे मानाभावात् इत्याहुः तदसत् आख्यातार्थभावनाप्रकारकबोधत्वस्य तादृशसङ्ख्याप्रकारकबोधत्वनिरूपितव्यापकत्वेऽपि न तदवच्छिन्नकारणेन तादृशसङ्ख्याप्रकारकबोधनिर्वाहः। तथाहि भावनाप्रकारकबोधं प्रति केवलप्रथमान्तपदनिरूपितवृत्तिज्ञानजन्योपस्थितेर्हेतुत्वं तादृशसङ्ख्यान्वयबोधं प्रति तु निरुक्तविशेषणवत्तात्पर्येणानुच्चारितनामपदनिरूपितवृत्तिज्ञानजन्योपस्थितेर्हेतुत्वमिति कारणतावच्छेदकभेदात् नैकेनापरस्य चारितार्थ्यम्। नचैवं चैत्र इव मैत्रो गच्छतीत्यादौ चैत्रेऽपि तादृशभावनान्वयबोधापत्तिः निरुक्तकारणसत्त्वादिति वाच्यम्। तथापि चैत्रे गमनानुकूलकृत्यभावेन योग्यताज्ञानरूपकारणविरहात्तत्र तादृशान्वयबोधापत्तिविरहाद्योग्यताभ्रमाच्छाब्दभ्रमस्येष्टत्वात्। नच निरुक्तभावनाप्रकारकशाब्दबोधजनकतावच्छेदककेवलनिरुक्तप्रथमान्तपदोपस्थाप्यत्वेनाख्यातार्थसंख्याप्रकारकबोधं प्रत्यपि हेतुत्वं शक्यते वक्तुं तथा सति चैत्र इव मैत्रो गच्छतीत्यादौ चैत्रेऽपि तादृशसङ्ख्यान्वयबोधापत्तेः निरुक्तकारणसत्त्वात् तस्मात्तादृशभावनाप्रकारकबोधत्वतादृशसंख्याप्रकारकबोधत्वयोः व्याप्यव्यापकभावसत्त्वेऽपि व्यापकधर्मावच्छिन्नजनकसामग्र्या व्याप्ययत्किंचिद्धर्मावच्छिन्नोत्पत्त्यसंभवेन तदवच्छिन्नं प्रति कारणतया उक्तसामग्र्यवश्यमभ्युपेयेत्यवधेयम्। ननु लकारसामान्यस्य न कृतौ शक्तिः रथो गच्छतीत्यादौ रथे कृत्यभावेनाख्यातस्य व्यापारे लक्षणापत्तेः किंतु व्यापारमात्रे शक्तिः रथो गच्छतीत्यादावपि गमनानुकूलव्यापारस्य रथे सत्त्वेन शक्त्यैव बोधोपपत्तेरिति वदतो मीमांसकस्य मतं निरस्यति॥ **एवमिति** ॥ **व्यापारेऽपीति** ॥ अपिना कर्ता समुच्चीयते। तथाच लकारसामान्यवाच्यो यथा कर्ता न भवति तथा व्यापारोऽपीति भावः। तत्र हेतुमाह ॥ **गौरवादिति** ॥ तथाच गौरवात् कर्तृत्वं यथा नाख्यातपदशक्यतावच्छेदकं तथा जन्यत्वघटितव्यापारत्वमपि न शक्यतावच्छेदकं गौरवादिति भावः। नच कृतौ शक्तिकल्पनमन्यत्र लक्षणाकल्पनमिति गौरवमिति वाच्यम् ईदृशगौरवस्य फलमुखत्वेनादोषत्वादिति उक्तार्थमेव प्रकाशयति ॥ **रथो गच्छतीति** ॥ ननु रथनिष्ठगमनानुकूलव्यापारः तक्षकादिकर्तृकविलक्षणसंयोग एव स च गमनशून्यकालेऽप्यस्तीति तदापि रथो गच्छतीति प्रयोगापत्तेः अनुकूलतासंबन्धेन गमनविशिष्टविलक्षणसंयोगवत्त्वमेव तादृशप्रयोगनियामकं वाच्यम् एवं चानुकूलतासंबन्धेन गमनविशिष्टव्यापारस्यैव निरूपितत्वसंबन्धेन गमनविशिष्टाश्रयत्वस्यैव नियामकत्वस्वीकारेणैवातिप्रसङ्गवारणे व्यापारे लक्षणा न स्वीकार्या व्यापारविषयकबोधस्याननुभवात् गौरवाच्चेति मणिकारमतानुसारेणाह ॥ **आश्रयत्वे वेति** ॥ **लक्षणेति** ॥ निरूढलक्षणेत्यर्थः ॥ **जानातीत्यादाविति** ॥ आत्मेत्यादिः। आदिना इच्छाकृत्योः परिग्रहः।

## दिनकरीयम्.

वादिति ॥ जन्यत्वादिघटितस्य व्यापारत्वस्य कृतित्वजात्यपेक्षया गुरुत्वादिति भावः। नन्वाख्यातस्य न यत्नार्थकत्वं रथो गच्छतीत्यादौ तदभावेऽप्याख्यातपदप्रयोगादत आह ॥ **रथ इति** ॥ रथो गच्छतीत्यत्र गमनानुकूलव्यापारस्य न बोधः किन्तु गमनाश्रयत्वस्यैवेति नवीनमतमाश्रित्याह ॥ **आश्रयत्वे वेति** ॥ **लक्षणा** निरूढ-

## रामरुद्रीयम्.

पि विभावनीयम् ॥ **जन्यत्वादीति** ॥ तज्जन्यत्वे सति तज्जन्यजनकस्यैव व्यापारपदार्थत्वादिति भावः ॥ **तदभावेऽपीति** ॥ रथस्याचेतनत्वेन यत्नाभावेऽपीत्यर्थः ॥ **गमनानुकूलव्यापारस्येति** ॥ उत्तरदेश-

त्यादौ स्वाश्रयत्वे नश्यतीत्यादौ तु प्रतियोगित्वे निरूढलक्षणा । उपमानाद्यथा शक्तिग्रहस्त-

## प्रभा.

केचित्तु चक्षुर्जानातीत्यादौ व्यापारे जनकत्वे वा लक्षणास्वीकारात् जानातीत्यादावाख्यातस्याश्रयत्वलक्षणा-नियमो न संभवतीत्यत आह ॥ अदीति आदिना इच्छति यतत इत्यादेः परिग्रह इत्याहुः तदसत् । तथा सति मे मनः कामयते मे मनः करोतीत्यादिप्रयोगस्यापि सत्त्वेन तदनुरोधेन तत्रापि जनकत्वलक्षणाया आवश्यकत्वेनाश्रयत्वलक्षणानियमस्य तत्राप्यसंभवेन नियमरक्षणायादिपदामित्यवतरणिकाया असंभवात् तस्माद्व्याहृतात्मपदघटितजानातीत्यादिप्रयोगघटकाख्यातस्यैवाश्रयत्वे निरूढलक्षणेत्यत्रैव मूलकाराभिप्रायो वाच्य इति । इदमत्रावधेयम् । तण्डुलं पचति चैत्र इत्यत्र कर्मत्वं द्वितीयार्थः । कर्मणि द्वितीयेत्यनुशासनेन कर्मत्वार्थे द्वितीयाविधानात् कर्तुरीप्सिततमं कर्मेति सूत्रेण-तण्डुलादेः कर्मत्वविधानात् कारकत्वेन क्रियाया उपस्थितत्वात् कर्तुः क्रियया तज्जन्यफलशालितमेति यावत् यदीप्सिततमं यदत्यन्ताभिलाषविषयः तत्कारकं कर्मसंज्ञं स्यादिति सूत्रार्थः । अस्मिन्सूत्रे ईप्सिततमत्वानिवेशे कर्तुः क्रियाजन्यफलशालित्वं कर्मत्वमिति लब्धम् । तथाच वृक्षात्पर्णं पततीत्यत्र वृक्षपदोत्तरं द्वितीयापत्तिः वृक्षस्यापि पतनक्रियाजन्यविभागरूपफलाश्रयत्वेन कर्मसंज्ञायां कर्मणि द्वितीयेति द्वितीयाविभक्तिविधायकसूत्रस्य प्रवृत्तेः । ननु तस्य कर्मसंज्ञावारणाय कर्तुरीप्सितं कर्मेत्येवास्तु वृक्षादेरीप्सितत्वाभावेनैव कर्मसंज्ञानिरासात् तस्य अपादानसंज्ञाविधायकध्रुवमपायेऽपादानमितिसूत्रेण ईप्सितत्वाप्रतिपादनात् अपायो विश्लेषः तस्मिन्साध्ये ध्रुवमवधिभूतं कारकं अपादानसंज्ञं स्यादिति सूत्रार्थात् । अत्र विश्लेषशब्देन विभाग उच्यते तस्मिन्साध्ये कार्ये सति अवधिभूतमिति तज्जनकक्रियाशून्यतदाश्रय इत्यर्थः विभागजनकक्रियाशून्यविभागाश्रयोऽपादानमिति फलितम् । तथाच स्वनिष्ठभेदप्रतियोगितावच्छेदकक्रियाजन्यविभागाश्रयत्वमपादानत्वमिति लब्धम् । अत्र केवलक्रियाजन्यविभागाश्रयत्वस्य पर्णेऽपि सत्त्वात् पर्णात्पर्णं पततीति प्रयोगापत्तिः अतः क्रियायां स्वनिष्ठभेदप्रतियोगितावच्छेदकत्वानिवेशः । एवंच पर्णक्रियायां पर्णनिष्ठभेदप्रतियोगितावच्छेदकत्वाभावेन तस्यापादानत्वाप्रसक्त्या न तादृशप्रयोगापत्तिरिति भावः । शाब्दबोधस्तु वृक्षादित्यत्र पञ्चम्या विभागजनकत्वं भेदप्रतियोगितावच्छेदकत्वं चार्थः तदेकदेशभूतविभागे भेदे चाधेयतासंबन्धेन प्रकृत्यर्थवृक्षादेरन्वयः विशिष्टपञ्चम्यर्थस्य धात्वर्थपतनेऽन्वयः तस्य पर्णेऽन्वयः तथाच वृक्षवृत्तिविभागजनकवृक्षवृत्तिभेदप्रतियोगितावच्छेदकक्रियाश्रयः पर्णमित्याकारकः । एवंच वृक्षस्येप्सितत्वे प्रमाणाभावेनैव वृक्षं पर्णं पततीति प्रयोगापत्तिवारणे कर्तुरीप्सिततमं कर्मेति सूत्रे तमब्ग्रहणं व्यर्थमिति चेन्न तथा स-

## दिनकरीयम्.

लक्षणा क्वचित्तथैव पाठः । चक्षुर्जानातीत्यादौ व्यापारे जनकत्वे वा लक्षणास्वीकाराज्जानातीत्यादावाख्यातस्याश्रयत्वे लक्षणानियमो न सम्भवतीत्यत आह ॥ **आदाविति** ॥ आदिना इच्छति यतत इत्यादेः संग्रहः । इदमत्र बोध्यम् । तण्डुलं पचति चैत्र इत्यादौ कर्मत्वं द्वितीयार्थः । तत्र तण्डुलस्याधेयतयान्वयः कर्मत्वस्य पाके पाकस्याख्यातार्थकृतौ तस्याश्चैत्र इति तण्डुलकर्मकपाकानुकूलकृतिमांश्चैत्र इति बोधः । चैत्रेण पच्यते तण्डुल इत्यत्र कृतिस्तृतीयार्थस्तस्यामाधेयतया चैत्रादेरन्वयस्तस्याश्च धात्वर्थपाके तस्यात्मनेपदार्थफले तस्य चाश्रयतासम्बन्धेन तण्डुले इति चैत्रवृत्तिकृतिजन्यपाकजन्यफलाश्रयस्तण्डुल इत्यन्वयबोधः । कृतां तु कर्ता कर्म चार्थः । चैत्रः पक्ता

## रामरुद्रीयम्.

संयोगानुकूलक्रिया गमधात्वर्थः । तदाश्रयत्वमेव रथो गच्छतीत्यादौ रथे प्रतीयते ननु तादृशक्रियानुकूलाश्वादिसंयुक्तरज्ज्वादिसंयोगवत्त्वमिति भावः ॥ **निरूढलक्षणेति** ॥ अनादितात्पर्यविषयलक्षणेत्यर्थः ॥ **आदिनेति** ॥ तथा च जानातीत्यत्र आख्यातस्याश्रयत्वे लक्षणानियामकाभावेऽपीच्छति यतत इत्यादौ तन्नियमो वर्तत एवेति भावः । इदंच चैत्रादिपदस्य तत्तच्छरीरावच्छिन्नात्मपरतामभ्युपगम्योक्तम् । चैत्रो गौरः कृशस्सच्छाय इत्यादिप्रयोगानुरोधेन यदि तेषां तत्तच्छरीरपरत्वं तदाऽऽख्यातस्य लक्षणयावच्छेदकत्वार्थकत्वमेवेति मन्तव्यम् । इदानीं शाब्दबोधप्रकारमाह ॥ **कृतामिति** ॥ कृत्प्रत्ययानामित्यर्थः ॥ **अर्थ इति** ॥ ननु कर्तृत्वं कर्मत्वं वेति शेषः । चैत्रः पक्तेत्यादौ मास्त्वभेदान्वयबोधः । कृदर्थकर्तृत्वादेश्चैत्रादौ आश्रयतयैवान्व-

प्रभा.

ति विप्राय गां ददातीतिवत् विप्रं गां ददातीति प्रयोगापत्तिः विप्रस्यापि क्रियाजन्यफलशालित्वेन ईप्सितत्वात्। तथाहि कर्मणा यमभिप्रैति स संप्रदानमिति सूत्रेण तस्य संप्रदानत्वं विप्राय गां ददातीत्यत्र कर्मणा दानक्रियया तज्जन्यफलभागितयेति यावत् यमभिप्रैति यमभिसंबन्धुं वाञ्छति तादृशफलभागित्वेनेच्छाविषयो य इति यावत। स संप्रदानसंज्ञस्स्यादिति सूत्रार्थः। अत्र विप्रायेत्यत्र चतुर्थ्याः निरूपितत्वमर्थः गामित्यत्र द्वितीयायास्स्वत्वरूपफलमर्थः दाधातोः स्वस्वत्वध्वंसानुकूलव्यापारोऽर्थः। तथाचब्राह्मणनिरूपितगोनिष्ठस्वत्वजनकस्वस्वत्वध्वंसानुकूलव्यापारानुकूलकृतिमान् देवदत्त इति शाब्दबोधः। एवंच गौरिव विप्रस्यापि दानक्रियाजन्यफलशालित्वेनेच्छाविषयत्वात् विप्रस्यापि कर्मत्वापत्त्या विप्रं गां ददातीति प्रयोगापत्तिर्दुर्वारा तमब्ग्रहणे तु विप्रस्येप्सितत्वेऽपि ईप्सिततमत्वे प्रमाणाभावेन कर्मत्वाप्रसक्त्या विप्रशब्दोत्तरं न द्वितीयापत्तिः तस्मात् सूत्रे तमब्ग्रहणमावश्यकम्। नन्वेवं सति ग्रामं गच्छन् तृणं स्पृशतीत्यत्र तृणशब्दोत्तरं द्वितीया न स्यात् तस्येप्सिततमत्वाभावात् कर्मसंज्ञाया अभावेन कर्मणि द्वितीयेति विभक्तिविधायकसूत्रस्याप्रसक्तेरिति चेत्र उक्तसूत्रेण तृणस्य कर्मसंज्ञाया अप्राप्तत्वेऽपि ईप्सिततमवत् अनीप्सितमपि क्रियाजन्यफलशालिकारकं कर्मसंज्ञं स्यात् इत्यर्थकेन तथायुक्तं चानीप्सितमिति सूत्रेणैव तस्यापि कर्मसंज्ञायास्संभवात् न तृणशब्दोत्तरं द्वितीयानुपपत्तिः। अत्र ईप्सिततमत्वादिघटितसूत्रद्वयप्रणेतुः पाणिन्याचार्यस्य ईप्सिततमानीप्सितसाधारणक्रियाजन्यफलशालित्वरूपकर्मत्व एव तात्पर्यमित्याशयेन नैयायिका अपि क्रियाजन्यफलशालित्वं कर्मत्वमिति सर्वत्र व्यवहरन्ति। नच कर्मत्वस्येप्सिततमत्वाघटितत्वे आश्रयतासंबन्धेन क्रियाजन्यफलवत्त्वरूपकर्मत्वविवक्षया विप्राय गां ददातीत्यादौ संप्रदानविप्रादेर्निरूपकतासंबन्धेन दानक्रियाजन्यस्वत्वरूपफलवत्त्वेऽपि आश्रयतासंबन्धेन स्वत्वरूपफलवत्त्वाभावात् तस्य कर्मसंज्ञायाः विप्रादिशब्दोत्तरं द्वितीयापत्तेश्च वारणेऽपि वृक्षात्पर्णं पततीत्यादौ वृक्षादेराश्रयतासंबन्धेन पतनक्रियाजन्यविभागरूपफलवत्त्वात् कर्मसंज्ञायाः वृक्षादिपदोत्तरं द्वितीयापत्तिर्दुर्वारेति वाच्यं कर्मत्वघटकफले धात्वर्थस्यापि विशेषणीयत्वात् प्रकृते पतधातोरकर्मकत्वेन फलस्य धात्वर्थत्वाभावेन उक्तापत्त्यभावात्। अत्र फलावच्छिन्नव्यापारार्थकधातुत्वस्यैव सकर्मकधातुत्वे द्वितीयार्थस्य धात्वर्थैकदेशे फलेऽन्वयापत्त्या कर्माख्यातस्थले फलस्य द्विधा भानापत्त्या च धातोः फले व्यापारे च पृथक् शक्तिमङ्गीकृत्य फलार्थकधातुत्वं सकर्मकधातुत्वमिति भट्टाचार्यसार्वभौमप्रभृतयस्सिद्धान्तयन्ति अत एव फलव्यापारयोर्धातुराश्रये तु तिङः स्मृता इति हरिकारिकापि सङ्गच्छते। एवं च जन्यतासंबन्धेन क्रियाविशिष्टधात्वर्थफलाश्रयत्वं कर्मत्वमिति फलितम्। नचैवं सति ग्रामस्येव चैत्रस्यापि तादृशफलाश्रयत्वात् कर्मसंज्ञासत्त्वेन चैत्रो ग्रामं गच्छतीतिवत् चैत्रः स्वं गच्छतीति प्रयोगापत्तिरिति वाच्यम् धात्वर्थे फले जन्यतासंबन्धेन क्रियावैशिष्ट्यमपहाय स्वावच्छिन्नप्रतियोगिताकभेदवद्वृत्तित्वसंबन्धेनैव क्रियावैशिष्ट्यस्य निवेशनीयतया तेन संबन्धेन क्रियाविशिष्टधात्वर्थफलाश्रयत्वस्य ग्राम एव सत्त्वेन चैत्रे अभावान्नोक्तापत्तिः। ग्रामं गच्छति चैत्र इत्यत्र ग्रामपदोत्तरं द्वितीयाया आधेयत्वमर्थः तस्य निरूपकतासंबन्धेन धात्वर्थे फलेऽन्वयः तस्य स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वसंबन्धेन धात्वर्थक्रियायामन्वयः तस्या अनुकूलतासंबन्धेनाख्यातार्थकृतावन्वयः तस्याः प्रथमान्तार्थचैत्रे आश्रयतासंबन्धेनान्वयः। तथाच ग्रामनिष्ठाधेयतानिरूपकसंयोगरूपफलसमानाधिकरणभेदप्रतियोगितावच्छेदकक्रियानुकूलकृतिमान् चैत्र इत्याकारको बोधः। चैत्रेण गम्यते ग्राम इत्यत्र चैत्रपदार्थस्याधेयतासंबन्धेन तृतीयार्थकृतावन्वयः कृतेश्च जन्यतासंबन्धेन धात्वर्थक्रियायामन्वयः तस्याः स्वावच्छिन्नप्रतियोगिताकभेदवद्वृत्तित्वसंबन्धेन धात्वर्थसंयोगरूपफलेऽन्वयः तस्य निरूपितत्वसंबन्धेनाख्यातार्थाश्रयत्वेऽन्वयः तस्य स्वरूपसंबन्धेन प्रथमान्तार्थग्रामेऽन्वयः। तथाच चैत्रवृत्तिकृतिजन्यक्रियावच्छिन्नप्रतियोगिताकभेदवद्वृत्तिसंयोगादिरूपफलनिरूपिताश्रयत्ववान् ग्राम इत्याकारकशाब्दबोधः। अनयैव दिशा सर्वत्र शाब्दबोध ऊह्यः। एवं कर्तरि कर्मणि च विहितानां तिबादिप्रत्ययानां कर्तृत्वकर्मत्वाद्यर्थकत्वेऽपि कर्तरि कृदिति सूत्रेण कर्तरि भावकर्मणोरित्यधिकृत्य पठितपचो व इति सूत्रेण कर्मणि च विहितानां कृत्प्रत्ययानां कर्त्राद्यर्थकत्वमेव न कर्तृत्वाद्यर्थकत्वम्। तथाच सति चैत्रः पक्ता तण्डुलः पक्व इत्यादौ पच्धातूत्तरश्रूयमाण-

**थोक्तम्** । एवं कोशादपि शक्तिग्रहः । सति बाधके क्वचित् त्यज्यते । यथा नीलादिपदानां नीलरूपादौ नीलविशिष्टे च शक्तिः कोशेन व्युत्पादिता तथापि लाघवान्नीलादावेव शक्तिः नीलादिविशिष्टे तु लक्षणेति । एवमाप्तवाक्यादपि । यथा कोकिलः पिकशब्दवाच्य इत्यादि-

## प्रभा.

तृचप्रत्ययवप्रत्ययादीनां कर्तृत्वाद्यर्थकत्वेन तादृशकर्तृत्वादेश्चैत्रादिपदार्थेन सहाभेदेनान्वयस्य बाधितत्वात् भेदेनान्वयप्रसक्त्या नामार्थयोरिति व्युत्पत्तिविरोधापत्तेः कर्त्राद्यर्थकत्वे तु कर्त्रादेश्चैत्रादिना अभेदेनान्वयसंभवान्न व्युत्पत्तिविरोध इति बोध्यम् ॥ **उक्तमिति** ॥ उपमाननिरूपणावसर इत्यादिः ॥ **कोशादपीति** ॥ अप्येकदन्तहेरम्बलम्बोदरगजानना इत्यादिकोशादपीत्यर्थः । अपिशब्द उक्तसमुच्चायकः ॥ **सति बाधक इति** ॥ गौरवरूपबाधके सतीत्यर्थः ॥ **क्वचिदिति** ॥ अनुपदं वक्ष्यमाणस्थल इत्यर्थः ॥ **त्यज्यत इति** ॥ शक्यत्वं नाङ्गीक्रियत इत्यर्थः । तादृशस्थलमुदाहरति ॥ **यथेति** ॥ **नीलादिपदानामिति** ॥ अत्र यद्यपि शुक्लादिपदानामित्येव वक्तुमुचितं शुक्लादिकमनेकधेति रूपविभागकारिकया शुक्लस्यैव प्रथममुपस्थितत्वात् तथापि नीलो घट इत्यादिप्रयोगस्यैव प्राचुर्येण प्रयोगप्राचुर्यानुसारेण नीलादिपदानामित्युक्तमिति बोध्यम् ॥ **कोशेनेति** ॥ गुणे शुक्लादयः पुंसि गुणिलिङ्गास्तु तद्वतीत्यादिकोशेनेत्यर्थः ॥ **व्युत्पादितेति** ॥ गुणवाचकशुक्लादिपदानां पुँल्लिङ्गत्वस्य गुणिवाचकतादृशशुक्लादिशब्दानां गुणिलिङ्गत्वस्य च प्रतिपादनद्वारा गुणवाचकत्वगुणिवाचकत्वयोरपि प्रतिपादनादिति भावः । नच गुणवाचकत्वशुक्लादिशब्दानां पुँल्लिङ्गत्वेन शुक्लं रूपमिति प्रयोगानुपपत्तिः शुक्लो रूपमिति प्रयोगापत्तिश्चेति वाच्यं गुणे शुक्लादय इति कोशघटकगुणशब्दस्य विशेष्यार्थकतया तादृशगुणिशब्दस्य विशेषणार्थकतया च विशेष्यवाचकशुक्लादिशब्दाः पुंसि विशेषणवाचकशुक्लादिशब्दाः गुणिलिङ्गा इत्यर्थलाभात् शुक्लं रूपमित्यत्र शुक्लशब्दस्य विशेषणवाचकत्वेन नपुंसकलिङ्गत्वं न पुँल्लिङ्गत्वं विशेष्यवाचकत्वाभावादित्यत्र कोशतात्पर्यात् ॥ **तथापीति** ॥ कोशेनोभयत्र शक्तिप्रतिपादनेऽपीत्यर्थः ॥ **लाघवादिति** ॥ नीलत्वजातेश्शक्यतावच्छेदकत्वे लाघवादित्यर्थः ॥ **लक्षणेति** ॥ अनन्तनीलादिव्यक्तीनां शक्यतावच्छेदकत्वे गौरवादिति भावः । यत्तु नीलो घट इत्यादौ गुणवचनान्मतुबो लुगिष्ट इति गुणवाचकशब्दात्परं श्रूयमाणस्य मतुबो लुक् स्यादित्यर्थकेन व्याकरणेन नीलादिपदोत्तरं लुप्तमतुवा स्मारितवैशिष्ट्यं विषयीकृत्यैव शाब्दबोधसंभवेन नीलादिपदानां नीलादिविशिष्टे

## दिनकरीयम्.

तण्डुलः पक्व इत्यादावभेदान्वयनुरोधान्नामार्थयोर्भेदान्वयबोधस्याव्युत्पन्नत्वादित्यन्यत्र विस्तरः ॥ **तथोक्तमिति** ॥ उपमाननिरूपणावसर इति शेषः ॥ **शक्तिग्रह इति** ॥ भवतीति शेषः ॥ **कोशेन व्युत्पादितेति** ॥ गुणे शुक्लादयः पुंसि गुणिलिङ्गास्तु तद्वतीति कोशस्य उभयत्र शक्तिग्राहकत्वादिति भावः ॥ **लाघवादिति** ॥ नीलादिमत्त्वापेक्षया नीलत्वादिजातेर्लघुतयैव शक्यतावच्छेदकत्वादिति भावः ॥ **नीलादिविशिष्टे तु लक्षणे-**

## रामरुद्रीयम्.

यसंभवादत आह ॥ **नामार्थयोरिति** ॥ निपातातिरिक्तनामार्थयोरित्यर्थः । तेन घटो नास्तीत्यादौ घटादेर्नञर्थे भेदेनान्वयेऽपि न क्षतिः ॥ **भेदेन** अभेदातिरिक्तसंबन्धेन ॥ **अव्युत्पन्नत्वात्** ॥ निराकाङ्क्षत्वादित्यर्थः । नामार्थयोस्तथाऽन्वयबोधेऽप्याकाङ्क्षास्वीकारे भूतलं घट इत्यादावपि भूतलवृत्तिर्घट इति बोधापत्तिरिति भावः । ननु पक्वपदोत्तरचैत्रादिपदत्वरूपसमभिव्याहारज्ञानं भेदान्वयबोधे प्रयोजकं तदभावादेव भूतलं घट इत्यादौ न भेदान्वयबोध इत्यत आह ॥ **अन्यत्र विस्तर इति** ॥ अनन्ततत्तत्समभिव्याहाराणां भेदान्वयबोधप्रयोजकत्वकल्पनामपेक्ष्य नामार्थस्य प्रत्ययार्थेन सममेव भेदान्वयबोधे आकाङ्क्षा न तु नामार्थेनापीति कल्पनस्यैवोचितत्वादिति भावः ॥ **शक्तिग्राहकत्वादिति** ॥ सप्तम्याः कोशे वाचकत्वार्थकत्वाद्वाचकत्वस्य शक्ततारूपत्वादिति भावः ॥ **नीलादिमत्त्वेति** ॥ नीलपीतादिरूपापेक्षयेत्यर्थः ॥ **लघुतयैवेति** ॥ अनन्तानां नीलत्वादिविशिष्टानां नीलादिरूपाणां शक्यतावच्छेदकत्वकल्पनामपेक्ष्य एकस्या

शब्दात् पिकादिशब्दानां कोकिले शक्तिग्रहः । एवं व्यवहारादपि यथा प्रयोजकवृद्धेन घटमानयेत्युक्तं तच्छ्रुत्वा प्रयोज्यवृद्धेन घट आनीतस्तदवधार्य पार्श्वस्थो बालो घटानयनरूपकार्यं घटमानयेति शब्दप्रयोज्यमित्यवधारयति । ततश्च घटं नय गां बधानेत्यादि-

प्रभा।

लक्षणाकल्पनमयुक्तमिति तन्न तथा सत्यस्मृतमतुप्प्रत्ययस्य तादृशवाक्याच्छाब्दबोधानापत्त्या लक्षणाया आवश्यकत्वात् ॥ व्यवहारादिति ॥ शक्तिग्रह इत्यनुषज्यते ॥ यथेत्यादि ॥ **प्रयोजकवृद्धेनेति** ॥ इतरेच्छानधीनेच्छावदभिन्नेनेत्यर्थः ॥ **तच्छ्रुत्वेति** ॥ तादृशवाक्यं श्रुत्वेत्यर्थः । तादृशवाक्यजन्यशाब्दबोधोत्तरमिति शेषः ॥ **प्रयोज्यवृद्धेनेति** ॥ अन्येच्छाधीनेच्छावदभिन्नेनेत्यर्थः ॥ **आनीत इति** ॥ समीपदेशं प्रापित इत्यर्थः ॥ **तदवधार्येति** ॥ तत्सर्वं निश्चित्येत्यर्थः प्रयोजकवृद्धप्रयुक्तवाक्यं श्रुत्वा प्रयोज्यवृद्धगमनं च दृष्ट्वा घटानयनं च दृष्ट्वेति फलितार्थः ॥ **पार्श्वस्थ इति** ॥ समीपस्थ इत्यर्थः ॥ **बाल इति** ॥ घटादिपदानां घटादावगृहीतशक्तिक इत्यर्थः ॥ **घटानयनरूपकार्यमिति** ॥ प्रयोज्यवृद्धसमवेतकृतिसाध्यघटानयनमित्यर्थः ॥ **घटमानयेति शब्दप्रयोज्यमिति** ॥ प्रयोजकवृद्धकर्तृकघटमानयेतिशब्दज्ञानाधीनप्रयोज्यवृद्धसमवेतशाब्दबोधप्रयोज्यमित्यर्थः । घटानयने शाब्दबोधप्रयोज्यत्वं च तादृशशाब्दबोधोत्तरकालीनघटानयनविशेष्यकेष्टसाधनताज्ञानादिजन्यत्वेन बोध्यम् ॥ **इत्यवधारयतीति** ॥ इत्याकारकानुमितिमान् भवतीत्यर्थः । तादृशशब्दश्रवणशून्यकालीनप्रवृत्त्यविषयत्वे सति प्रवृत्तिविषयत्वात् इति व्यतिरेकिहेतुनेति पूरणीयम् ॥ **ततश्चेति** ॥ तादृशावधारणानन्तरमित्यर्थः ॥ **घटं नय गां बधानेत्यादिवाक्यादिति** प्रयोजकवृद्धकर्तृकतादृशवाक्यादित्यर्थः । प्रयोजकवृद्धोच्चरिततादृशवाक्यश्रवणाधीनप्रयोज्यवृद्धसमवेतशाब्द-

दिनकरीयम्.

ति ॥ गुणवचनान्मतुपो लुगिष्ट इति स्मरणाल्लुप्तेन मतुपैव विशिष्टार्थबोधसम्भवेऽलं लक्षणयेत्यपि वदन्ति ॥ **तत्** घटानयनम् ॥ ननु व्यवहारेणानयनादिनानुमितघटानयनादिधर्मिककार्यज्ञाने पदानां कारणत्वम् लाघवात् पदत्वावच्छेदेनैव गृहीतम् । एवंच साक्षात्परम्परया वा कार्यत्वान्वितविषयकशाब्दत्वावच्छिन्नं प्रति

रामरुद्रीयम्.

नीलत्वादिजातेः स्वरूपतः शक्यतावच्छेदकत्वे लाघवाज्जातेः स्वरूपतोऽपि भानसंभवेन स्वरूपतः तथात्वे बाधकाभावादिति भावः ॥ **गुणवचनादिति** ॥ गुणवाचकान्नीलादिशब्दान्मतुपस्तदस्यास्तीत्यर्थे विहितस्य मतुबर्थकप्रत्ययस्य लोपः व्याकरणप्रणेतृभिरिष्ट इत्यर्थकाद्गुणवचनादिति व्याकरणस्मृतेरिति समुदायार्थः । अत्र नीलो घटोऽस्तीत्यादौ सर्वत्रैव शाब्दबोधात्पूर्वं लुप्तमतुबर्थकप्रत्ययकल्पनामपेक्ष्य नीलादिरूपविशिष्टे नीलादिपदानां लक्षणाकल्पनमेव न्याय्यः । किंच अस्मृतमतुपः पुरुषस्य शाब्दबोधानुपपत्तिरनुभूयते च तादृशानुपूर्वीज्ञानान्मतुपोऽस्मरणेऽपि शाब्दबोध इत्यस्वरसोऽपिवदन्तीभ्यां सूचितः ॥ **कार्यज्ञान इति** ॥ अभेदसंबन्धेन कार्यप्रकारकज्ञान इत्यर्थः । यद्यपि कार्यत्वे लिङादेः शक्तिकल्पनमुचितं तस्य घटानयनादौ प्रकारतया भानोपगमेनैव घटानयनं कार्यमिति निर्वाहात् अनन्तकार्यरूपधर्मिणि तेषां शक्तिकल्पनमनुचितं गौरवादित्यभेदेन कार्यप्रकारकबोधे पदानां सामर्थ्यावधारणोक्तिरसङ्गता । तथापि प्राभाकरैः वेदलिङादेः कार्यत्वेनापूर्वविषयकशाब्दबोधः स्वीक्रियते । अत्र चापूर्वस्य पूर्वमनुपस्थितत्वेन तत्र शक्तिग्रहासंभव इत्याशङ्क्य सामान्यलक्षणानङ्गीकर्तृभिस्तैरेव स्वमते यथानुभूते गवि गृहीतशक्तिकत्वाद्गवादिपदायोग्यताबलात्पूर्वाननुभूतगवादिविषयकशाब्दबोधो भवति तथा मन्मतेऽपि घटादौ कार्यत्वेन गृहीतशक्तिकलिङादितोऽपि यजेतेत्यादौ यागजन्यकार्यमिति घटादिरूपकार्ये यागजन्यत्वस्य बाधितत्वेन योग्यताबलादपूर्वविषयकशाब्दबोधो भवतीति समाहितत्वात्कार्यबोध इत्युक्तमित्यवधेयम् । जातिशक्तिवादिना तदन्तरशक्यतावच्छेदकपदे विशिष्ट एव शक्तत्वमुपेयते । तत्र शक्त्या निरवच्छिन्नत्वैकत्वयोरसंभवादित्यपि बोध्यम् । इत्थं चाग्रे कार्यताविषयकशाब्दबोध इति मूलस्यैव कार्यत्वावच्छिन्नविषयकशाब्दबोध इत्येवार्थो बोध्यः ॥ **लाघवादिति** ॥

**वाक्यादावापोद्वापाभ्यां घटादिपदानां कार्यान्वितघटादौ शक्तिं गृह्णाति । इत्थंच भूतले**

## प्रभा.

बोधादिति यावत् । प्रयोज्यत्वं पञ्चम्यर्थः तस्यावापे उद्वापे चान्वयः प्रयोज्यत्वं च तादृशशाब्दबोधोत्तरकालीने-ष्टसाधनताज्ञानाधीनप्रवृत्तिजन्यत्वेनोपपादनीयम् । "गां बधानेत्यत्रादिपदात् गां विसृजेति वाक्यपरिग्रहः ॥ **आवापोद्वापाभ्यामिति** ॥ घटस्यानयननयनाभ्यामित्यर्थः । इदमुपलक्षणम् । बन्धनमोचनाभ्यामित्यपि बोध्यम् । सर्वत्राभेदे तृतीया तस्य कार्यान्वितघटादावित्यत्र कार्येऽन्वयः ॥ **घटादिपदानामिति** ॥ आदिना गवादेः परिग्रहः ॥ **घटादाविति** ॥ घटगवादावित्यर्थः ॥ **शक्तिं गृह्णातीति** ॥ शक्तिमनुमिनोतीत्यर्थः । अत्र प्रयोजकवृद्धप्रयुक्तघटमानयेतिवाक्यश्रवणाधीनशाब्दबोधप्रयोज्यप्रयोज्यवृद्धकृतिजन्यघटानयनं दृष्ट्वा पूर्वोक्तरीत्या घटानयनकार्यं घटमानयेति शब्दप्रयोज्यमिति समीपस्थबालः अनुमिनोति अनन्तरं घटं नयेति प्रयोज्यवृद्धप्रयुक्तवाक्यश्रवणोत्तरकालिनशाब्दबोधप्रयोज्यप्रयोज्यवृद्धसमवेतकृतिजन्यघटकर्मकनयनं दृष्ट्वा तादृशबालः प्रयोज्यवृद्धकर्तृकघटकर्मकनयनं प्रयोजकवृद्धोच्चरितघटंनयेतिशब्दप्रयोज्यमित्यनुमिनोति । एवं गां बधानेति तदुच्चारितवाक्यप्रयोज्यं प्रयोज्यवृद्धकर्तृकगोकर्मकबन्धनमित्युक्तप्रणाल्या अनुमिनोति । एवमेव गां विसृजेति वाक्यस्थले अनुमितिर्बोध्या । एतादृशानुमित्यनन्तरं एकघटस्यैवानयननयने दृष्ट्वा एकगोरेव बन्धनमोचने च दृष्ट्वा समीपस्थबालः घटपदमानयननयनात्मककार्यान्वितघटशक्तं गोपदं बन्धनमोचनात्मककार्यान्वितगोशक्तमनुपपत्तिप्रतिसन्धानं विना तादृशकार्यान्वितघटगोबोधतात्पर्येण वृद्धकर्तृकोच्चारणजन्यत्वादिति व्यतिरेक्यनुमानात् घटादिपदानां कार्यान्वितघटादौ शक्तिमनुमिनोतीति तादृशग्रन्थसमुदायार्थ इत्यवधेयम् । ननु शक्तिर्द्विविधा स्मारिकी आनुभाविकी चेति घटादिपदानां स्मारिकीशक्तिः लाघवात् घटत्वादिजातावेव यत्र शक्यतावच्छेदकं नाना यथा पशुपदशक्यतावच्छेदकं लोमलाङ्गूलादि यत्र वा शक्यतावच्छेदकं गुरु यथा लिङाख्यातपदशक्यतावच्छेदकं कृतिसाध्यत्वं तत्र व्यक्तावेव स्मारिका शक्तिः एतत्तत्त्वं जातावेव शक्तिरित्यादितन्मतव्याख्यानावसरे स्फुटमुपपादयिष्यामः । तत्र स्मृतिद्वारा ज्ञाता सती शाब्दबोधोपयोगिनी शक्तिः स्मारकशक्तिः घटादिपदानामानुभाविकी शक्तिः कार्यान्वितघटादौ । सा च कार्यान्वितघटादिविषयकशाब्दत्वावच्छिन्नकार्यतानिरूपितकारणतानिरूपितविषयतासंबन्धावच्छिन्नावच्छेदकत्वरूपैव नेश्वरेच्छारूपा अत एव इयं शक्तिः स्वरूपसत्युपयुज्यते न ज्ञाता अत एव च घटादिपदात् कार्यान्वितघटादिविषयकशाब्दबोध एव भवति । न केवलघटादिविषयकशाब्दबोधः । एवं

## दिनकरीयम्.

पदत्वेन कारणतेति कार्यकारणभावः पर्यवसितः । इयमेव कार्यान्विते पदानामानुभाविकी शक्तिः । एवंच कार्यत्वान्वितविषयकशाब्दत्वव्यापकीभूतकार्यताविषयकशाब्दत्वावच्छिन्नजनककार्यतावाचकलिङादिपदाभावात् कथं कोशादितः शक्तिग्रह इति प्रभाकराक्षेपं तन्मतदूषणेन दूषयितुं तन्मतसिद्धमर्थं प्रदर्शयति ॥ **इत्थं चेत्यादिना** ॥ एतेन स्मारकशक्तिप्रसङ्गे अनुभावकशक्तिप्रदर्शनमनुचितमित्याशङ्का निरस्ता । ननु

## रामरुद्रीयम्.

तत्तत्पदत्वावच्छेदेन नानाकारणताग्रहकल्पने गौरवात्तदपेक्षया पदत्वावच्छेदेनैव कारणताग्रहकल्पने लाघवादित्यर्थः ॥ **आनुभाविकीति** ॥ शाब्दबोधानुभवजनिकेत्यर्थः ॥ **शक्तिः** सामर्थ्यं । तन्मते पदानां शक्तिर्द्विविधा स्मारिका आनुभाविकी चेति । तत्र स्मारिका शक्तिः कार्याननन्विते घटादावेव । एवंच घटादिपदात्केवलघटादिस्मरणमुपपद्यते । आनुभाविकी तु कार्यान्वितघटादावेवेति मन्तव्यम् । नन्वत्र नीलो घट इत्यादौ लिङाद्यभावेऽपि पदमात्रस्यैव कार्यान्वितविषयकशाब्दबोधकारणत्वेन तादृशशाब्दबोधः स्यादेवेत्यत आह ॥ **एवंचेति** ॥ व्याप्यधर्मावच्छिन्नस्य कारणेन कार्योत्पादने व्यापकधर्मावच्छिन्नस्य कारणापेक्षणात् लिङादिकं विना न तादृशशाब्दबोध इति भावः ॥ **कार्यताविषयकेति** ॥ कार्यत्वावच्छिन्नविषयकस्यापि कार्यताविषयकत्वादित्थमभिधानम् । एवं कार्यताविशिष्टवाचकस्यापि कार्यतावाचकत्वादेव कार्यतावाचकेत्युक्तमित्यपि बोध्यम् ॥ **एतेनेति** ॥ उक्तरीत्या एतद्ग्रन्थस्यावतारणेनेत्यर्थः ॥ **स्मारकशक्तिप्रसङ्ग इति** ॥

नीलो घट इत्यादिशब्दान्न शाब्दबोधः । घटादिपदानां कार्यान्वितघटादिबोधे सामर्थ्यात् कार्यताबोधं प्रति च लिङादीनां सामर्थ्यात्तदभावाच्च न शाब्दबोध इति केचित् । तन्न । प्रथमतः कार्यान्वितघटादौ शक्त्यवधारणेऽपि लाघवेन पश्चात्तस्य परित्यागौचित्यात् । अत एव चैत्र पुत्र-

## प्रभा

च कार्यान्वितघटादिविषयकशाब्दत्वावच्छिन्नं प्रति घटपदत्वादिना प्रयोजकत्वे सिद्धे यद्विशेषयोरिति न्याया-ल्लाघवाच्च कार्यान्वितघटादिविषयकशाब्दबोधसामान्यं प्रति पदत्वेन प्रयोजकतेति सिद्धम् । तत्रापि केषांचित् पदानां साक्षात्कार्यान्वितबोधप्रयोजकत्वं धातुपदानां तु कार्यस्यानयनादेः कार्यान्वितघटाद्यन्वितत्वेन परम्परया कार्यान्वितविषयकशाब्दप्रयोजकत्वमिति फलितम् तथाच पदात् कार्यान्वितविषयकशाब्दबोधे जननीये कार्यान्वितविषयकशाब्दत्वव्यापककार्यताविषयकशाब्दत्वावच्छिन्नजनकसामग्री अवश्यमपेक्षितव्या । एवंच व्याकरणाप्तवाक्यकोशादौ व्यापकधर्मावच्छिन्नोत्पादककार्यतास्मृतिप्रयोजकशक्तिविशिष्टलिङाद्यभावाच्छाब्द-सामान्यानुत्पत्त्या व्याकरणादिकं कथं शक्तिग्राहकप्रमाणमिति प्राभाकराक्षेपं निरसितुं आदौ तन्मतमुपन्यस्य दूषयति ॥ **इत्थं चेति** ॥ पदानां कार्यान्वितविषयकशाब्दसामान्यप्रयोजकत्वसिद्धौ चेत्यर्थः ॥ **इत्यादिशब्दादिति** ॥ इत्यादिवाक्यघटकतत्तत्पदादित्यर्थः ॥ **न शाब्दबोध इति** ॥ शाब्दबोधो नोत्पत्तुमर्हतीत्यर्थः । कारणाभावादिति शेषः । कारणाभावमेवोपपादयति ॥ **घटादिपदानामिति** ॥ **बोधे सामर्थ्यादिति** ॥ बोध एव प्रयोजकत्वादित्यर्थः । केवलघटादिविषयकशाब्दजननासमर्थत्वादिति यावत् । प्रयोज्यप्रयोजकवृद्धव्यवहारेण पदानां कार्यान्वितविषयकशाब्दजननसमर्थत्वेन निर्णीतत्वादिति भावः । घटादिपदानां केवलघटादिविषयकबोधासमर्थत्वेऽपि कार्यान्वितघटादिविषयकशाब्दबोधसमर्थतया निरुक्तस्थले तादृशबोधः कुतो न जायत इत्याशङ्कां व्यापकधर्मावच्छिन्नप्रयोजकपदाभावान्न तादृशशाब्दबोध इति वारयितुं व्यापकधर्मावच्छिन्नप्रयोजकपदान्याहावाह ॥ **कार्यताबोधं प्रति चेति** ॥ चावधारणे सच तदभावादित्युत्तरं योज्यः कार्यान्वितघटादिविषयकशाब्दत्वव्यापककार्यताविषयकशाब्दत्वावच्छिन्नं प्रतीत्यर्थः ॥ **लिङादीनामिति** ॥ लिङ्लोट्तव्यप्रत्ययानामित्यर्थः ॥ **सामर्थ्यादिति** ॥ प्रयोजकत्वादित्यर्थः । कार्यताबोधजनककार्यत्वस्मृतिप्रयोजकत्वादिति यावत् ॥ **तदभावाच्चेति** ॥ तादृशलिङाद्यभावाच्चेत्यर्थः ॥ **न शाब्दबोध इति** ॥ तथाच लिङाद्यभावेन कार्यताविषयकशाब्दत्वावच्छिन्नानुत्पत्तौ व्यापकधर्मावच्छिन्नानुत्पत्तौ सुतरां व्याप्यधर्मावच्छिन्नानुत्पत्तिरिति नियमेन कार्यान्वितघटादिविषयकशाब्दस्याप्यनुत्पत्तिरिति भावः ॥ **प्रथमत इति** ॥ घटादिपदानामित्यादिः । घटानयनादिकार्यस्य घटमानयेत्यादिवाक्यप्रयोज्यत्वनिश्चयोत्तरमित्यर्थः ॥ **शक्त्यवधारणेऽपीति** ॥ पूर्वोक्तव्यतिरेकिलिङ्गेन शक्त्यनुमितावपीत्यर्थः ॥ **लाघवेनेति** ॥ कार्यान्वितघटत्वाद्यपेक्षया केवलघटत्वादेश्शक्यतावच्छेदकत्वे लाघवमिति लाघवज्ञानसहकृतमनसेत्यर्थः । इदमुपलक्षणं अनन्यलभ्यस्यैव शब्दार्थत्वेन कार्यत्वं लिङादिलभ्यं तदाश्रयं च धातुलभ्यं अन्वयश्च संसर्गमर्यादया भासत इति ज्ञानसहकृतमनसेत्यपि बोध्यम् । **पश्चादिति** । कार्यान्वितघटादौ शक्यनुमित्युत्तरमित्यर्थः ॥ **तस्येति** ॥ कार्यान्वितत्वे घटादिपदशक्यतावच्छेदकत्वस्येत्यर्थः ॥ **परित्यागौचित्यादिति** ॥ निराकरणस्यौचित्यादर्जनीयत्वादित्यर्थः । तथाच तादृशलाघवज्ञानादिसहकृतमनसा घटादिपदं घटादिमात्रशक्तमित्यप्रामाण्यज्ञानानास्कन्दितमानसप्रत्यक्षोदयेन पूर्वानुमितावप्रामाण्यग्रहसंभवात् न कार्यान्वितत्वस्य शक्यतावच्छेदकत्वं

## दिनकरीयम्

भूतले नीलो घट इत्यादितः कार्यताविषयकबोधापत्तिः । तत्र तादृशपदानां सामर्थ्यावधारणादिति त्वयैवोक्तत्वादित्यत आह ॥ **कार्यताबोधं प्रति चेति** ॥ **सामर्थ्यात्तदभावादिति** ॥ कार्यताबोधं प्रति लिङादिपदानां स्वजन्यकार्यत्वोपस्थितिद्वारा हेतुत्वम् । घटादिपदानां कार्यत्वानुभवं प्रति हेतुत्वेऽपि घटादिपदेषु कार्यत्वस्मारकशक्त्यभावेन स्मारकशक्त्या कार्यत्वोपस्थापकलिङादिपदाभावान्न भूतले घट इत्यादितः शाब्दबोध इति भावः ॥ **लाघवेनेति** ॥ कार्यत्वान्वितघटशाब्दत्वापेक्षया घटशाब्दत्वस्य कार्यता-

स्ते जातः कन्या ते गर्भिणीत्यादौ मुखप्रसादमुखमालिन्याभ्यां सुखदुःखे अनुमाय तत्कारणत्वेन परिशेषाच्छाब्दबोधं निर्णीय तद्धेतुतया तं शब्दमवधारयन्ति । तथाच व्यभिचारान्न कार्यान्विते शक्तिः। न च तत्र तं पश्येत्यादिशब्दान्तरमध्याहार्यं मानाभावात् चैत्र पुत्रस्ते जातो मृतश्चेत्यादौ

**प्रभा.**

प्रमाणाभावादिति भावः ॥ **अत एवेति** ॥ घटादिपदानां केवलघटत्वावच्छिन्ने शक्तिस्वीकारादेवेत्यर्थः ॥ **इत्यादाविति** ॥ इत्यादिवाक्यं शृण्वति चैत्र इत्यर्थः ॥ **मुखप्रसादमुखमालिन्याभ्यामिति** ॥ मुखप्रसादः अधरविश्रमितहासाश्रुतान्निष्ठकरुणाकटाक्षादिः । मुखमालिन्यंच मुखवैरूप्याश्रोदृष्ट्यादि ताभ्यां लिङ्गाभ्यामित्यर्थः ॥ **सुखदुःखे अनुमायेति** ॥ तथाच चैत्रस्सुखी विजातीयसंयोगसंबन्धेन निरुक्तप्रसादविशिष्टमुखवत्त्वात् अयं दुःखी विजातीयसंयोगसंबन्धेन निरुक्तमालिन्यविशिष्टमुखवत्त्वात् इति व्यतिरेक्यनुमानात् सुखदुःखानुमित्यनन्तरमिति भावः ॥ **तत्कारणत्वेनेति** ॥ अनुमितसुखदुःखासाधारणकारणत्वेनेत्यर्थः ॥ **परिशेषादिति** ॥ सुखादिविशेष्यकनिरुक्तवाक्यज्ञानाधीनशाब्दबोधेतरासाधारणकारणकत्वाभावानुमित्युत्तरकालीनतादृशकारणकत्वाभावघटितलिङ्गज्ञानादित्यर्थः। तथाच चैत्रसमवेतसुखदुःखे सासाधारणकारणके जन्यगुणत्वादित्यनुमानात् असाधारणकारणजन्यत्वे सिद्धे चैत्रसमवेतसुखं न चन्दनवनितादिसंबन्धासाधारणकारणकं तत्संबन्धशून्यकालीनोत्पत्तिमत्त्वात् तादृशदुःखं न कण्टकादिसंबन्धासाधारणकारणकं तत्संबन्धशून्यकालीनोत्पत्तिमत्त्वात् इत्यनुमानात्तादृशशाब्दबोधेतरासाधारणकारणकत्वाभावसिद्धौ तादृशसुखं दुःखं वा निरुक्तवाक्यज्ञानाधीनशाब्दबोधासाधारणकारणकं तदितरासाधारणकारणकत्वाभावे सति सासाधारणकारणकत्वादित्यनुमानात् तादृशसुखदुःखयोस्तादृशशाब्दबोधजन्यत्वानुमितौ तादृशशाब्दबोधस्य तादृशसुखादिजनकत्वं चैत्र पुत्रस्ते जात इत्यादिवाक्यस्य तादृशशाब्दबोधप्रयोजकत्वं चावधारयतीति भावः ॥ **तथाचेति** ॥ चैत्र पुत्रस्ते जात इत्यादिवाक्यस्योक्तपरिशेषानुमानात् चैत्रसमवेतसुखदुःखासाधारणकारणशाब्दबोधप्रयोजकत्वसिद्धौ चेत्यर्थः ॥ **व्यभिचारादिति** ॥ कार्यान्वितविषयकशाब्दत्वस्य शाब्दत्वसमानाधिकरणाभावप्रतियोगित्वेनाप्रतियोगित्वघटितव्यापकत्वासंभवादित्यर्थः ॥ **कार्यान्विते न शक्तिरिति** ॥ तथाच पदानां कार्यान्वितशक्तत्वे कार्यान्वितविषयकशाब्दबोधस्यैवावश्यकतया निरुक्तवाक्यस्थले कार्यान्वितविषयकशाब्दत्वव्यापककार्यताविषयकशाब्दत्वावच्छिन्नप्रयोजकलिङादिपदाभावात् व्यापकधर्मावच्छिन्नानुत्पत्त्या सुतरां व्याप्यधर्मावच्छिन्नोत्पत्त्यसंभवेन तद्व्याप्यकेवलशाब्दत्वावच्छिन्नस्याप्यनुत्पत्त्यापत्तेः घटादिपदानां केवलघटादौ शक्तिस्वीकारे च कार्यताविशिष्टमविषयीकृत्यापि शाब्दबोधसंभवेन कार्यताविषयकशाब्दत्वस्य कार्यान्वितविषयकशाब्दत्वव्यापकत्वेऽपि कार्यान्वितविषयकशाब्दत्वस्य केवलशाब्दत्वव्यापकत्वे प्रमाणाभावेन कार्यान्वितविषयकशाब्दत्वव्यापककार्यताविषयकशाब्दत्वावच्छिन्नप्रयोजकलिङाद्यभावेऽपि प्रकृते क्षत्यभावात्। तस्मात् घटादिपदानां केवलघटादावेव शक्तिरावश्यकीत्यखण्डार्थः ॥ **तत्रेति** ॥ चैत्र पुत्रस्ते जात इति वाक्य इत्यर्थः ॥ **तं पश्येत्यादीति** ॥ आदिना तां त्यजेत्यस्य संग्रहः ॥ **शब्दान्तरमिति** ॥ चैत्र पुत्रस्ते जात इत्यादिवाक्यप्रयोक्त्रानुच्चरितवाक्यमित्यर्थः ॥ **अध्याहार्यमिति** ॥ निरुक्तवाक्यघटकतयानुसन्धेयमित्यर्थः। तथाच कार्यतावाचकलोट्पदसत्त्वात् पदानां

**दिनकरीयम्.**

वच्छेदकत्वे लाघवेनेत्यर्थः ॥ **अत एव** कार्यत्वाविषयकबोधं प्रति पदानां हेतुत्वादेव ॥ **तत्कारणत्वेन** सुखदुःखयोः कारणत्वेन ॥ **तद्धेतुतया** तादृशशाब्दबोधहेतुतया ॥ **व्यभिचारादिति** ॥ घटादिपदैः कार्यताविषयक एव बोधो जन्यत इति नियमे व्यभिचारादित्यर्थः कार्यत्वाविषयकबोधस्य चैत्र पुत्रस्ते जात इत्यादिपदैर्जननादिति भावः ॥ **अध्याहार्यमिति** ॥ तथाच तत्रापि लोडादिजन्यकार्यत्वोपस्थितेः

**रामरुद्रीयम्.**

स्मारकशक्तिग्राहकत्वेनैव व्याकरणादीनां प्रकृतग्रन्थे उपन्यस्तत्वादिति भावः ॥ **पदानामिति** ॥ लिङादिपदानामित्यर्थः। घटादिपदानां स्वजन्यकार्यत्वोपस्थित्यभावादिति मन्तव्यम् ॥ **मूले प्रथमत इति** ॥ कार्या-

तदभावाच्च । इत्थंच लाघवादन्वितघटेऽपि शक्तिं त्यक्त्वा घटपदस्य घटमात्रे शक्तिमवधारयति ।

## प्रभा.

कार्यान्विते शक्तिस्वीकारेऽपि नोक्तस्थले शाब्दबोधानुपपत्तिरिति भावः । यद्यपि तं पश्येत्यादौ धात्वर्थदर्शने लोडर्थकृतिसाध्यत्वमसंभवि ज्ञानं प्रति कृतेः कारणत्वाभावात् तथापि चक्षुस्संयोगं प्रति कृतेः कारणतया कृतिसाध्यचक्षुस्संयोगजन्यकृतिजन्यत्वेन दर्शनस्यापि परम्परया कृतिसाध्यत्वसंभवात् दृशधातोर्दर्शनानुकूलव्यापारार्थकत्वे तु साक्षात्कृतिसाध्यत्वस्यापि संभवाच्च ॥ भानाभावादिति ॥ अश्रुततादृशवाक्यानुसन्धानानन्तरमेव निरुक्तवाक्यात् शाब्दबोधो नान्यथेति नियमे भानाभावादित्यर्थः । नियमाभ्युपगमपक्षेऽपि दोषमाह ॥ चैत्र इति ॥ तदभावाच्चेति ॥ पश्येति कार्यतावाचकलोडन्तदृशधातुपदाध्याहारासंभवाच्चेत्यर्थः । प्राणसंयोगविशिष्टशरीरस्यैव पुत्रपदार्थतया नष्टे प्राणसंयोगविशिष्टत्वाभावेन तस्य दर्शनकर्मत्वासंभवादिति भावः । भट्टास्तु घटादिपदानामन्यलभ्यत्वात् कार्यान्वितघटादौ शक्त्यनभ्युपगमेऽपि अनन्यलभ्यत्वात् समभिव्याहृतपदार्थान्वयविशिष्टघटादौ शक्तिरावश्यकी न केवलघटादौ तथा सति पदार्थद्वयसंसर्गस्यापदार्थत्वेन तस्य शाब्दबोधे भानानापत्तेः । नच तस्य संसर्गतयैव भानमस्त्विति वाच्यम् तत्प्रकारकशाब्दबोधस्यैवानुभवसिद्धत्वात् । अत एव घटमित्यादिवाक्यजन्यशाब्दबोधस्य बाधज्ञानप्रतिबध्यत्वमपि सङ्गच्छते । अनुभवापलापे घटमित्यादिवाक्यात् आधेयतासंसर्गकघटप्रकारककर्मत्वविशेष्यकशाब्दबोधस्यैव स्वीकार्यतया तस्याधेयतासंसर्गस्य वृत्त्यनियामकत्वेन तत्संबन्धावच्छिन्नघटत्वावच्छिन्नप्रतियोगिताकाभावाप्रसिद्ध्या तत्प्रकारकनिर्णयरूपप्रतिबन्धकस्य सुतरामप्रसिद्धत्वेन बाधनिर्णयनिवर्त्यत्वानुपपत्तेः । तस्मात् घटादिपदानां समभिव्याहृतपदार्थान्वयविशिष्टघटादावेव शक्तिरावश्यकीत्याहुः । तन्मतनिराकरणव्याजेन स्वमतमुपसंहरति ॥ इत्थंचेति ॥ चोऽवधारणे । समभिव्याहृतपदार्थान्वयविशिष्टघटत्वादेः घटादिपदशक्यतावच्छेदकत्वे गौरवादिदोषादेवेत्यर्थः । लाघवादित्यस्यावधारयतीत्यनेनान्वयः ॥ अन्वितघटेऽपि शक्तिं त्यक्त्वेति ॥

## दिनकरीयम्.

सत्त्वेन कार्यताविषयकबोधस्यैवोत्पादान्न तादृशनियमे व्यभिचार इति भावः ॥ तदभावाच्चेति ॥ तं पश्येत्यादिकार्यताबोधकपदाध्याहारासम्भवाच्चेत्यर्थः । भट्टमतं प्रक्षिपन् स्वमतमुपसंहरति ॥ इत्थं चेति ॥ लाघवादिति ॥ अन्वितघटे शक्तिकल्पनापेक्षया घटमात्रे तत्कल्पने लाघवादित्यर्थः । यवपदस्येत्यस्य देहलीदीपन्यायेनान्वयः । तत्र हि तादृशद्विविधव्यवहारेण कङ्गौ दीर्घशूके वा यवपदस्य शक्तिरिति सन्देहे सति

## रामरुद्रीयम्.

न्वितघटशाब्दत्वापेक्षया घटशाब्दत्वे लाघवज्ञानात्पूर्वमित्यर्थः ॥ भट्टमतं प्रक्षिपन्निति ॥ तन्मतं निरस्यन्नित्यर्थः । शाब्दबोधे पदानुपस्थितार्थभानोपगमे घटोऽस्तीत्यादौ पटविषयकशाब्दबोधापत्त्या पदादुपस्थितार्थ एव शाब्दबोधे भासत इति नियमः स्वीकार्यः । तथाच पदार्थद्वयसंसर्गस्य तु पदानुपस्थाप्यत्वे तादृशनियमभङ्गः स्यादिति इतरान्विते पदानां शक्तिरिति भट्टाः । तत्र च इतरत् पदार्थान्तरं तदन्विते तत्प्रतियोगिकसंसर्गविशिष्टे घटादौ घटादिपदानां शक्तिरित्यर्थः । तत्रेतरस्य पदान्तरादेव लाभान्न तदन्तर्भावेन घटादिपदानां शक्तिरुपेयते । किंत्वितरप्रतियोगिकत्वोपलक्षिततत्तत्संसर्गविशिष्टघटादावेवेति भट्टमतं तदप्यनुपादेयमेव घटविषयकशाब्दत्वापेक्षया अन्वितघटादिविषयकत्वस्य गुरुत्वादिति मूलग्रन्थतात्पर्यम् । नचैवं घटोऽस्तीत्यादितः पटादिविषयकशाब्दबोधापत्तिरिति वाच्यं संसर्गताभिन्नतत्तन्निष्ठविषयताशालिशाब्दत्वावच्छिन्नं प्रति पदजन्यतत्तद्विषयकोपस्थितित्वेन हेतुत्वात् प्रकारविशेष्यमर्यादया शाब्दबोधे पदानुपस्थितस्य भानासम्भवात् संसर्गभानं तु शाब्दबोधे पदद्वयसमभिव्याहाररूपविशेषाकाङ्क्षानियाम्यमेवेति न तत्रानियमः । अनन्यलभ्यश्शब्दार्थ इति न्यायानुरोधादपि संसर्गे न शक्तिरुपेयते । संसर्गस्याकाङ्क्षालभ्यत्वादिति भावः ॥ यवपदस्येत्यस्येति ॥ देहलीदीपेति ॥ देहलीस्थो दीपः भवनान्तर्बहिस्स्थविश्ववस्तुप्रकाशकत्वेन सम्बध्नाति तथोक्तषष्ठ्यन्तपदमपि पूर्वतनशक्तिग्रहे उत्तरत्र प्रयोगे चान्वेतीत्यर्थः । तत्र हीत्यादिमूलग्रन्थेऽन्वयप्रकारमाह ॥ तत्र हीति ॥ यवमयश्चरुर्भवतीत्यत्र हीत्यर्थः । शक्तिनिर्णये वाक्यशेषापेक्षा सन्दे-

एवं वाक्यशेषादपि शक्तिग्रहः । यथा यवमयश्चरुर्भवतीत्यत्र यवपदस्य दीर्घशूकविशेषे आर्याणां प्रयोगः कङ्गौ तु म्लेच्छानाम् । तत्रहि यत्रान्या ओषधयो म्लायन्तेऽथैते मोदमाना इवोत्तिष्ठन्ति वसन्ते सर्वसस्यानां जायते पत्रशातनम् । मोदमानाश्च शोभन्ते यवाः कणिकशालिनः ॥ इति

प्रभा.

स्वसमभिव्याहृतपदार्थसंसर्गविशिष्टघटत्वाद्यवच्छिन्नेऽपि शक्तिमस्वीकृत्येत्यर्थः। अपिशब्दः कार्यान्वितघटे शक्त्यस्वीकारसमुच्चायकः। नचैवं सत्यन्वयस्यापदार्थतया तत्प्रकारकबोधासंभवेन तादृशबोधानुभवापलापापत्तिरिति वाच्यं घटमित्यादिवाक्यादाधेयतासंसर्गकघटादिप्रकारकशाब्दबोधाङ्गीकर्तॄणां तथानुभवे मानाभावात् । नचैवं सति घटमित्यादिवाक्यजन्यशाब्दबोधस्य उक्तरीत्या बाधनिर्णयप्रतिबध्यत्वानुपपत्तिरिति वाच्यम् इष्टापत्तेः ज्ञानमात्रस्य बाधनिर्णयप्रतिबध्यत्वानियमात् तत्संबन्धेन तत्प्रकारकबुद्धौ तत्संबन्धेन तदभावनिर्णयस्येव तत्संबन्धाभावनिर्णयस्यापि बाधनिर्णयविधया प्रतिबन्धकत्वस्वीकारेण निरुक्तशाब्दबोधस्य घटाधेयत्वाभावानिर्णयात्मकबाधनिर्णयप्रतिबध्यत्वस्यापि संभवाच्च । तथाच घटमित्यादिवाक्यघटकघटपदं कर्मत्वान्वयविशिष्टघटत्वावच्छिन्नशक्तं कर्मत्वविशेष्यकघटाधेयत्वप्रकारकबोधतात्पर्येण वृद्धकर्तृकोच्चारणजन्यत्वादिति व्यतिरेक्यनुमानात् घटपदविशेष्यकान्वयविशिष्टघटत्वावच्छिन्नशक्तत्वानुमित्युत्तरमन्वयविशिष्टघटत्वं गुर्विति गौरवज्ञाने सति तादृशगुरुधर्मावच्छिन्नशक्तत्वाविधेयकानुमितावप्रामाण्यग्रहसंभवात् प्रमाणाभावेन तादृशगुरुधर्मावच्छिन्ने शक्तिर्न स्वीकार्येति भावः ॥ **घटमात्र इति** ॥ केवलघटत्वावच्छिन्न इत्यर्थः ॥ **शक्तिमवधारयतीति** ॥ लाघवज्ञानसहकृतात् घटपदं केवलघटत्वावच्छिन्नशक्तं अनुपपत्तिप्रतिसन्धानं विना केवलघटबोधतात्पर्येण वृद्धकर्तृकोच्चारणजन्यत्वादित्यनुमानादप्रामाण्यज्ञानानास्कन्दितघटपदविशेष्यककेवलघटत्वावच्छिन्नशक्तत्वानुमितिमान् अन्वयविशिष्टघटशक्तत्वानुमितावुक्तरीत्या अप्रामाण्यज्ञानोत्तरं निरुक्तलाघवज्ञानसहकृतमनस्सन्निकर्षादप्रामाण्यज्ञानानास्कन्दितघटपदविशेष्यककेवलघटत्वावच्छिन्नशक्तत्वप्रकारकमानसप्रत्ययवान् वा भवतीति तात्पर्यार्थः ॥ **एवमिति** ॥ वक्ष्यमाणप्रकारेणेत्यर्थः ॥ **वाक्यशेषादिति** ॥ शिष्टवाक्यादित्यर्थः । कृदभिहितन्यायात् परिसंख्यावाक्यादिति यावत् । तादृशवाक्यजन्यशाब्दबोधादिति फलितार्थः ॥ **शक्तिग्रह इति** ॥ भवतीति शेषः । शक्तिग्रहप्रकारमेवाह ॥ **यथेति** ॥ यवमय इत्यत्र विकारार्थे मयट्प्रत्ययः तथाच यवविकारीभूतचरुभवनमिष्टसाधनमिति शाब्दबोधः भवतीत्यत्र भूधातूत्तरलट्प्रत्ययेन इष्टसाधनत्वबोधनात् ॥ **इत्यत्र यवपदस्येति** ॥ एतादृशश्रुतिघटकयवपदस्येत्यर्थः ॥ **प्रयोग इति** ॥ शक्त्या बोधतात्पर्येणोच्चारणमित्यर्थः ॥ **कङ्गौ त्विति** ॥ तुरवधारणे । प्रियङ्गुतण्डुल एवेत्यर्थः ॥ **तत्र हीति** ॥ दीर्घशूकविशिष्टप्रियङ्गुतण्डुलयोर्हीत्यर्थः । आर्यम्लेच्छव्यवहाराभ्यां मध्यस्थेन शक्तिमत्तया सन्दिह्यमानयोः तयोर्द्वयोरिति यावत् । घटकत्वं सप्तम्यर्थः तस्य दीर्घशूकविशिष्ट इत्युत्तरेणान्वयः । श्रुतिरूपवाक्यशेषमाह ॥ **यत्रेति** ॥ यदेत्यर्थः ॥ **अन्या इति** ॥ दीर्घशूकविशिष्टान्या इत्यर्थः ॥ **म्लायन्त इति** ॥ म्लानवत्यो भवन्तीत्यर्थः । विपर्णाः शुष्का वृद्धिरहिताश्च भवन्तीति यावत् ॥ **अथेति** ॥ तदेत्यर्थः ॥ **एत इति** ॥ ये दीर्घशूकविशिष्टा इत्यर्थः ॥ **मोदमाना इवेति** ॥ मोदमाना एवेत्यर्थः । सपर्णाः आर्द्राः वृद्धिमन्तश्च सन्त एवेति यावत् ॥ **उत्तिष्ठन्तीति** ॥ परिदृश्यमानास्तिष्ठन्तीत्यर्थः । ते यवा इति शेषः । स्मृतिरूपवाक्यशेषमाह ॥ **वसन्त इति** ॥ **सर्वसस्यानामिति** ॥ दीर्घशूकाविशिष्टान्यसस्यानामित्यर्थः ॥ **पत्रशातनमिति** ॥ पत्राणां शातनं पतनं म्लानं वेत्यर्थः ॥ जायत इति पूर्वेणान्वयः ॥ **मोदमानाश्चेति** ॥ यत इत्यादिः । वृद्धिमन्त आर्द्रास्सपर्णाश्चेत्यर्थः चोऽवधारणे ॥ **कणिकशालिन इति** ॥ बीजवन्त इत्यर्थः । कणिकं बीजमास्त्रियामिति कोशात् ॥ **यवा इति** । एत एवेत्यादिः । सस्यविशेषा एव यवपदवाच्या इत्यर्थः ॥ **इति वाक्यशेषादिति** ॥ इत्याकारकश्रुतिस्मृत्यात्मकवाक्यशेषजन्यशाब्दबोधात्मकेतरसस्यव्यावर्तकध-

दिनकरीयम्.

यवपदस्य वाक्यशेषाद्दीर्घशूके शक्तिर्निर्णीयत इत्यन्वयः । नन्वस्तु यवपदस्य वाक्यशेषात् दीर्घशूके शक्तिः ॥

वाक्यशेषाद्दीर्घशूके शक्तिर्निर्णीयते कङ्गौ तु शक्तिभ्रमात् प्रयोगः। नानाशक्तिकल्पने गौरवात्। हर्यादिपदे तु विनिगमकाभावात् नानाशक्तिकल्पनम्। एवं विवरणादपि शक्तिग्रहः। विवरणं तु तत्समानार्थकपदान्तरेण तदर्थकथनम्। यथा घटोऽस्तीत्यस्य कलशोऽस्तीत्यनेन विवरणेन घट-

## प्रभा.

पदज्ञानादित्यर्थः । तादृशज्ञानसहकृतमनस्सन्निकर्षादिति यावत् ॥ **निर्णीयत इति** ॥ तदस्त्वेनेत्यादिः । अ-प्रामाण्यज्ञानानास्कन्दितमानसप्रत्यक्षविषयीक्रियत इत्यर्थः । ननु प्रियङ्गुतण्डुले यवपदशक्त्यभावे म्लेच्छानां शक्त्या प्रियङ्गुतण्डुलबोधतात्पर्येण कथं यवपदोच्चारणमत आह ॥ **कङ्गौ त्विति** ॥ अवधारणार्थकतुशब्दः भ्रमादित्युत्तरं योज्यः ॥ **भ्रमादिति** ॥ शक्तिभ्रमादेवेत्यर्थः ॥ **प्रयोग इति** ॥ निरुक्ततात्पर्येण यवपदोच्चा-रणमित्यर्थः । ननु प्रियङ्गुतण्डुलेऽपि शक्तिस्वीकारान्न म्लेच्छानां शक्तिभ्रम इत्यत आह ॥ **नानाशक्तीति** ॥ एकपदस्यानेकशक्तिस्वीकार इत्यर्थः ॥ **गौरवादिति** ॥ तथाच दीर्घशूकविशिष्ट इव प्रियङ्गुतण्डुलेऽपि श-क्तिस्वीकारे दीर्घशूकविशिष्टत्वादिरूपशक्यतावच्छेदकभेदाच्छक्तिभेदापत्त्याप्रामाणिकानन्तशक्तिकल्पनागौर-वप्रसङ्गादिति भावः। ननु कथं हर्यादिपदस्य यमत्वानिलत्वादिरूपनानाधर्मावच्छिन्ने नानाशक्तिकल्पनमत आह ॥ **हर्यादिपदे त्विति** ॥ अवधारणार्थकतुशब्दः विनिगमनाविरहादित्युत्तरं योज्यः ॥ **विनिगमनाविरहादि-ति** ॥ एकत्रैव शक्तिर्नान्यत्रेत्यत्र युक्त्यभावादेवेत्यर्थः ॥ **नानाशक्तिकल्पनमिति** ॥ शक्यतावच्छेदकभेदे-नानेकशक्तिकल्पनमित्यर्थः । तथाच यवपदस्य दीर्घशूकविशिष्टे शक्तिग्राहकवाक्यशेषरूपप्रमाणसत्त्वेऽपि प्रियङ्गुतण्डुले शक्तिग्राहकप्रमाणाभावेन दीर्घशूकविशिष्टत्वादिरूपधर्मभेदेन नानाशक्तिकल्पनस्याप्रामाणिकत-याप्रामाणिकानन्तशक्तिकल्पनायां गौरवेण प्रियङ्गुतण्डुलेऽपि शक्तिर्न कल्प्यते । हर्यादिपदस्य तु यमत्वानि-लत्वादिधर्मभेदेनानेकशक्तिकल्पककोशरूपप्रमाणसत्त्वेनानेकशक्तिकल्पनायाः प्रामाणिकत्वाददोषतया बाध-काभावेन निरुक्तनानाधर्मावच्छिन्ने नानाशक्तिकल्पनमावश्यकमिति भावः विवरणपदार्थमाह ॥ **विवरणं त्वि-ति** ॥ **तत्समानार्थकेति** ॥ तत्पदशक्यतावच्छेदकावच्छिन्नशक्ततत्पदभिन्नपदेनेत्यर्थः । ज्ञानजन्यत्वं तृतीया-र्थः । तस्य कथनपदार्थेऽन्वयः ॥ **तदर्थकथनमिति** तत्पदशक्यतावच्छेदकावच्छिन्नप्रतिपादनमित्यर्थः । हस्त-चेष्टादिविशेषदर्शनजन्यद्वित्वत्वाद्यवच्छिन्नविषयकप्रतिपत्तेर्विवरणत्ववारणाय प्रतिपत्तौ पदज्ञानजन्यत्वनिवेशः । पदश्रवणजन्यत्वं तदर्थः । तेन निरुक्तचेष्टाविशेषदर्शनरूपोद्बोधकजन्यद्वित्वादिबोधकपदस्मरणाधीनतादृ-शप्रतीतेः न विवरणत्वापत्तिः घटपदस्यापि घटपदशक्यतावच्छेदकावच्छिन्नशक्तपदत्वेन तच्छ्रवणाधीनघटत्वा-वच्छिन्नविषयकप्रतिपत्तेः घटपदविवरणरूपत्वापत्तिवारणाय पदे तत्पदभिन्नत्वनिवेशः घटपदस्य घटपदाभि-न्नत्वाभावान्नोक्तदोषः । तत्पदाभिन्नत्वं च तत्पदघटकतावच्छेदकवर्णत्वव्याप्यजात्यवच्छिन्नानुपूर्व्यनाश्रयत्वं बोध्यम् । तेनाद्युच्चारितघटपदघटकवर्णापेक्षयानन्तरोच्चरितघटपदघटकवर्णानां भिन्नत्वेन तदानुपूर्वीविशिष्टाद्यु-च्चरितघटपदाभिन्नत्वस्यापि अनन्तरोच्चरितघटपदे सत्त्वेऽपि नोक्तदोषापात्तिः । वसन्ते सर्वसस्यानामित्यादिव-चनघटकपदानां निरुक्तयवपदभिन्नत्ववत्त्वेन तादृशवचनश्रवणेन दीर्घशूकविशिष्टत्वावच्छिन्नविषयकप्रतिपत्ति-संभवात् तस्यापि विवरणत्वापत्तिवारणाय तत्पदशक्यतावच्छेदकावच्छिन्नशक्तत्वं तत्पदाभिन्नपदविशेषणं वस-न्त इत्यादिवचनघटकपदानां मध्ये एकस्यापि पदस्य निरुक्तशक्तत्वाभावात् तादृशवचनश्रवणाधीनदीर्घशूकवि-शिष्टत्वावच्छिन्नप्रतिपत्तेर्न विवरणत्वापत्तिः । अत्र कलशपदश्रवणाधीनघटप्रतिपत्तेः घटपदविवरणरूपत्वं घटप-दस्य घटे शक्तिमजानतः पुरुषस्यैव बोध्यम्। घटपदकलशपदयोः घटे शक्तिं जानतः पुरुषस्य कलशपदश्रव-णाधीनघटप्रतिपत्तेः प्रयोजनाभावेन घटपदविवरणरूपत्वानङ्गीकारात् । एवं कलशपदस्य घटे शक्तिं जानतः पुरुषस्यैव कलशपदश्रवणाधीनघटोपस्थितेस्संभवात् तस्यैव तदुपस्थितेर्विवरणरूपत्वमिति हृदयम् । विवरणा-त् शक्तिग्रहस्थलमुदाहरति ॥ **यथेति** ॥ **इत्यत्रेति** ॥ घटपदस्येति शेषः । इति वाक्यघटकेत्यर्थः । त-

## दिनकरीयम्.

कङ्गावपि शक्तिसत्त्वे बाधकाभाव इत्यत आह ॥ **नानाशक्तीति** ॥ कथं तर्हि हर्यादिपदे नानाशक्तिकल्पनेत्यत आह ॥ **हर्यादिपदे त्विति** ॥ **विनिगमकाभावादिति** ॥ तत्र कोशस्योभयत्र तुल्यत्वात् प्रकृते च वाक्यशे-

पदस्य कलशे शक्तिग्रहः । एवं पचतीत्यस्य पाकं करोतीत्यनेन विवरणात् आख्यातस्य यत्नार्थकत्वं कल्प्यते । एवं प्रसिद्धपदस्य सान्निध्यादपि शक्तिग्रहः । यथा इह सहकारतरौ

## प्रभा.

स्याध्याहृतघटपदेऽन्वयः ॥ इत्यनेनेति ॥ इतिवाक्यघटककलशपदेनेत्यर्थः । ज्ञानजन्यत्वं तृतीयार्थः तस्य विवरणपदार्थप्रतिपत्तावन्वयः ॥ विवरणेनेति ॥ घटे शक्तिग्रह इति शेषः । पूर्वं लाघवादाख्यातस्य यत्नार्थकत्वमुक्तं इदानीं विवरणेनापि यत्नार्थकत्वं सिध्यतीत्याह ॥ एवमित्यादिना ॥ पचतीत्यस्येति ॥ पचतीति वाक्यघटकपचधातोराख्यातस्य चेत्यर्थः ॥ पाकं करोतीति ॥ विवरणादिति ॥ एतादृशवाक्यघटकद्वितीयान्तपाकपदज्ञानजन्यपाकत्वावच्छिन्नविषयकबोधात् एतादृशवाक्यघटककृधातुपदज्ञानजन्यकृतित्वावच्छिन्नविषयकबोधाच्चेत्यर्थः । पाकपदेन पचधातोः विवरणं दृष्टान्तार्थं यथापचधातोः पाकत्वावच्छिन्ने शक्तिमजानतः पाकपदस्य पाकत्वावच्छिन्ने शक्तिं जानतः पुंसः पचधातुशक्यतावच्छेदकपाकत्वावच्छिन्नशक्तपाकपदश्रवणाधीनपाकत्वावच्छिन्नविषयकबोधात्मकविवरणात् पचधातोः पाकत्वावच्छिन्ने शक्तिग्रहः तथाख्यातस्य यत्नत्वावच्छिन्ने शक्तिमजानतः कृधातोः यत्नत्वावच्छिन्ने शक्तिं जानतः पुंसः पचतीतिवाक्योच्चारणोत्तरकालीनोच्चारणजन्यपाकंकरोतीतिवाक्यघटककृपदश्रवणजन्ययत्नत्वावच्छिन्नबोधात् आख्यातस्य यत्नत्वावच्छिन्ने शक्तिग्रह इति तात्पर्यार्थः ॥ यत्नार्थकत्वमिति ॥ यत्नत्वावच्छिन्नशक्तत्वमित्यर्थः ॥ कल्प्यत इति । अनुमीयत इत्यर्थः । मानसप्रत्यक्षविषयीक्रियत इति वार्थः । तथाचाख्यातपदं यत्नत्वावच्छिन्नशक्तं यत्नत्वावच्छिन्नशक्तातिङन्तकृधातुप्रतिपादितार्थप्रतिपादकत्वात् यद्यद्धर्मावच्छिन्नशक्तपदप्रतिपादितार्थप्रतिपादकं भवति तत्तद्धर्मावच्छिन्नशक्तं पाकपदेन विवृतपचधातुवदिति यत्तद्भ्यां व्याप्त्या पचधातुदृष्टान्तेनाख्यातपदस्य यत्नत्वावच्छिन्नशक्तत्वानुमितिः पचतीतिवाक्यश्रवणोत्तरं तादृशवाक्यघटकाख्यातस्य यत्नत्वावच्छिन्ने शक्तेरगृहीतत्वात् अनुत्पन्नशाब्दबोधस्यानन्तरोच्चरितपाकंकरोतीतिवाक्यघटककृधातोः यत्नत्वावच्छिन्ने शक्तेर्गृहीततया तादृशवाक्यश्रवणोत्तरकालीनशाब्दबोधवतः पचधातुस्थाने पाकपदं आख्यातस्थाने कृधातुश्च प्रयुक्त इत्यौचित्यावर्जनीयमानसज्ञानसंभवेन तादृशज्ञानसहकृतमनस्सन्निकर्षात् आख्यातपदं यत्नत्वावच्छिन्नशक्तमित्यप्रामाण्यज्ञानानास्कन्दितमानसप्रत्यक्षं वा निरङ्कुशं भवतीति भावः ॥ प्रसिद्धपदसान्निध्यादिति ॥ पिकादिपदस्येत्यादिः । कोकिलादिनिष्ठासाधारणधर्मवाचकपदसहोच्चारितत्वज्ञानादित्यर्थः । तादृशस्थलमुदाहरति ॥ यथेति ॥ इह सहकारतराविति ॥ एतत्सहकारतरावित्यर्थः । सप्तम्या अवच्छेद्यत्वमर्थः । वीथ्यां कोलाहल इत्यादौ सप्तम्यास्तदर्थकत्वदर्शनात् तस्य रु शब्द इति सूत्रसिद्धरुधात्वर्थध्वनावन्वयः । तथाच सहकारतर्ववच्छेद्यमधुराभिन्नशब्दानुकूलकृतिमान् पिक इति बोधः अत्र माधुर्यं पञ्चमादिस्वरत्वरूपं पिकः कूजति पञ्चमामिति कोशात् एवंच मधुरशब्दानुकूलकृतेः गायकविशेषसाधारणत्वेन पिकासाधारणधर्मत्वाभावात् सहकारतरावित्युक्तम् । पुरुषविशेषकर्तृकगानस्य सहकारतर्ववच्छेद्यत्वाभावात्तद्वारणं काकाद्युच्चरितशब्दस्यापि तद

## दिनकरीयम्.

षस्यैव विनिगमकत्वादिति भावः ॥ आख्यातस्य यत्नार्थकत्वमिति ॥ न च विवरणस्य कथं शक्तिग्राहकत्वं तद्वाचकपदाभावादिति वाच्यम् । आख्यातं यत्नत्वविशिष्टे शक्तं यत्नत्वविशिष्टशक्तकरोतिप्रतिपादितार्थप्रतिपादकत्वादित्यनुमानविधया तस्य शक्तिग्राहकत्वात् ॥ प्रसिद्धपदस्येति ॥ प्रसिद्धार्थकपदस्येत्यर्थः । तिङर्थधर्मिणि नामार्थान्वयस्याव्युत्पन्नतया नेदं शक्तिग्रहस्योदाहरणमिति तु न । यो यः शूद्रस्य पचति द्विजोऽन्नं सोऽतिनिन्दित इत्यादौ तिङर्थधर्मिणि तथान्वयदर्शनेन तादृशनियमस्यासिद्धेः ।

## रामरुद्रीयम्.

दृस्थल एव सम्भवतीत्यभिप्रायेण तादृशेत्यादि सत्यन्तं पूरयति ॥ तादृशेति ॥ तद्वाचकेति ॥ शक्तिवाचकपदाभावादित्यर्थः । कोशे तु विनायको विघ्नराज इत्यादौ सप्तम्या वाचकत्वार्थकतया वाचकतायाश्च शक्तिनिरूपकतारूपतया तद्वाचकपदमस्त्येवेति भावः । अमरा निर्जरा देवा इत्यादौ एते शब्दा एकार्थवाचका इत्यध्याहाराच्छक्तिग्राहकत्वमित्यपि बोध्यम् ॥ प्रसिद्धार्थकपदस्येति ॥ प्रसिद्धार्थकपदसमभिव्या-

मधुरं पिको रौतीत्यादौ पिकशब्दस्य कोकिले शक्तिग्रह इति । तत्र जातावेव शक्तिग्रहो न तु व्यक्तौ व्यभिचारादानन्त्याच्च व्यक्तिं विना जातिभानस्यासम्भवात् व्यक्तेरपि भान-

## प्रभा.

वच्छेद्यत्वात् तद्वारणाय माधुर्यविशिष्टाभिन्नत्वं धात्वर्थे निवेशितं काकादिकर्तृकताद्दशध्वनेः मधुरत्वाभावेन तद्वारणम् ॥ **इत्यादाविति** ॥ इत्यादिवाक्य इत्यर्थः । घटकत्वं सप्तम्यर्थः तस्य पिकपदेऽन्वयः ॥ **शक्तिग्रह इति** ॥ तथाच निरुक्तवाक्यजन्यबोधोत्तरं एताद्दशासाधारणधर्मविशिष्टः कोकिल एव नान्य इति मानसिकनिश्चयसंभवेन ताद्दशनिश्चयसहकृतमनस्सन्निकर्षात् कोकिल एव पिकपदवाच्य इत्यप्रामाण्यज्ञानानास्कन्दितमानसप्रत्यक्षं भवतीति भावः । इदानीं प्रसङ्गसङ्गत्या जात्यादिविशिष्टव्यक्तौ शक्तिव्यवस्थापनाय जातिशक्तिवादिमीमांसकमतं निरसितुं तन्मतमुपन्यस्यति ॥ **जातावेवेति** ॥ जातिविशिष्टशक्तिवादिमतेऽपि विशिष्टस्य विशेषणविशेष्याभ्यामनतिरिक्ततया जातिशक्तिस्वीकारस्यावश्यकत्वाल्लाघवाच्चेति भावः । एवकारव्यवच्छेद्यार्थमाह ॥ **नत्विति** ॥ **व्यक्तावेिति** ॥ शक्तिरिति शेषः । विशेष्यं नाभिधा गच्छेत् क्षीणशक्तिर्विशेषण इति तन्मतसिद्धत्वात् । अत इत्यादिः अभिधा शक्तिः विशेष्यं धर्मिणं न गच्छेत् बोधयितुं न समर्था कुत इत्याकाङ्क्षायां हेतुगर्भविशेषणमाह क्षीणशक्तिरिति । यत इत्यादिः । विशेषणमात्रबोधनसमर्था शक्तिरित्यर्थः' तथाचाभिधारूपशक्तेर्विशेषणबोधनमात्रसमर्थत्वेन धर्मिबोधने सामर्थ्याभावात् तत्र शक्तिस्वीकारो निष्प्रयोजनक इति तेषां अभिप्रायः धर्मिणि शक्तिस्वीकारे स्वमते प्रयोजनाभावमुक्त्वा परमते बाधकमाह ॥ **व्यभिचारादिति** ॥ यत्किंचिद्धर्मिणि शक्तिस्वीकारे घटादिपदात् शक्तिमत्त्वेनानिर्णीतव्यक्तेरपि शाब्दबोधोदयेन तत्र शक्तिज्ञानकारणतायां व्यभिचारादित्यर्थः ॥ **आनन्त्यादिति** ॥ सर्वासु व्यक्तिषु शक्तिस्वीकार इत्यादिः । व्यक्तिभेदेनेश्वरेच्छा-

## दिनकरीयम्.

प्रसङ्गात् परमतनिराकरणपूर्वकं स्वमते जात्यादिविशिष्टे शक्तिं व्यवस्थापयितुं मीमांसकमतमाह— **जातावेवेति** ॥ जातिविशिष्टे शक्तिस्वीकारे जातावपि शक्तिग्रहस्यावश्यकता नागृहीतविशेषणन्यायात् । तथाच जातावेव शक्तिर्लाघवात् । तदुक्तं विशेष्यं नाभिधा गच्छेत् क्षीणशक्तिर्विशेषणे इति भावः । यस्यांकस्यांचिद्व्यक्तौ शक्तिः सर्वासु वेति विकल्प्य आद्ये दोषमाह ॥ **व्यभिचारादिति** ॥ अगृहीतशक्तिकव्यक्तावपि शाब्दबोधोदयेन तत्र शक्तिज्ञानाभावात् व्यभिचार एवेति भावः । द्वितीये तमाह ॥ **आनन्त्यादिति** ॥ व्यक्तिभेदेन शक्तिभेदाच्छक्त्यानन्त्यमित्यर्थः ॥ **असम्भवादिति** ॥ जातिभासकसा-

## रामरुद्रीयम्.

हारोऽप्यनुमानविधयैव शक्तिग्राहकः । तथाह्युक्तवाक्यादिहाम्रवृक्षे मधुररावकर्ता पिकपदवाच्य इत्येव बोधः । पिकपदस्य पूर्वं शक्तिग्रहाभावात् कोकिलदर्शनानन्तरं कोकिलः पिकपदवाच्यः सहकारतरौ मधुररावकर्तृत्वादित्यनुमानादेव शक्तिग्रह इति ध्येयम् ॥ **प्रसङ्गादिति** ॥ प्रसङ्गसङ्गतेरित्यर्थः ॥ **नागृहीतेति** ॥ नागृहीतविशेषणा बुद्धिर्विशिष्टेपूपजायत इति न्यायः । अगृहीतं .अविषयीकृतं विशेषणं ययेति व्युत्पत्त्या विशेषणाविषयिणी बुद्धिर्विशिष्टेषु नोपजायते विशिष्टविषयिणी न भवतीत्यर्थः । सप्तम्या विषयत्वार्थकत्वात् ॥ **लाघवादिति** ॥ घटत्वविशिष्टनानाघटेषु शक्तिकल्पनामपेक्ष्य शुद्धैकघटत्वे शक्तिकल्पने लाघवादित्यर्थः ॥ **विशेष्यमित्यादि** ॥ अभिधा पदशक्तिः विशेष्यं न गच्छेत् न प्राप्नोति । कुत इत्याकाङ्क्षायामाह ॥ **क्षीणेति** ॥ क्षीणशक्तिर्विशेषण इत्यनन्तरं सदिति पूरणीयम् । तथाच यतो विशेषणं प्राप्य पदशक्तिः क्षीणशक्तिः क्षीणसामर्थ्या भवति अतो विशेष्यं नाभिधा गच्छेत् न प्राप्नुयादिति पर्यवसितार्थः । वक्ष्यमाणरीत्या विशेषणशक्तात् पदादेव विशिष्टविषयकशाब्दबोधोपपत्तौ विशेष्यांशे शक्तिकल्पने बीजाभावादिति भावः । व्यक्तौ शक्तिस्वीकारे व्यभिचारादानन्त्याच्चेति दूषणद्वयं मूलेऽभिहितम् । तयोस्सङ्गमनीयं विकल्प्य दूषयति ॥ **यस्यामिति** ॥ **व्यभिचारादितीति** ॥ तद्विषयकशाब्दबोधं प्रति तद्धर्मिकशक्तिज्ञानमेव हेतुर्वाच्यः । अन्यथा घटादिपदात् पटादिशाब्दबोधापत्तेः । तथाच एकघटव्यक्तावेव घटपदशक्तिस्वीकारे घटान्तरविषयकशाब्दबोधोत्पत्त्या ताद्दशकार्यकारणभावे व्यभिचार इति भावः ॥ द्वितीयकल्पे दूषणमाह ॥ **आनन्त्यमिति** ॥

मिति केचित् । तन्न । शक्तिं विना व्यक्तिभानानुपपत्तेः । न च व्यक्तौ लक्षणा । अनुपप-

## प्रभा.

विषयत्वरूपशक्तीनां भिन्नत्वेन तदानन्त्यादित्यर्थः । तथाचानन्तशक्तिकल्पनायां गौरवाद्व्यक्तौ शक्तिर्न स्वीकार्येति भावः । नन्वेवं सति शाब्दबोधे व्यक्तिभानानुपपत्तिरत आह ॥ **व्यक्तिं विनेति** ॥ व्यक्तिमविषयीकृत्येत्यर्थः ॥ **जातिभानस्येति** ॥ स्वरूपतो जातिविषयत्वस्येत्यर्थः ॥ **असंभवादिति** ॥ व्यक्त्यविषयकस्वरूपतोजातिनिष्ठविषयताशालिबोधौपयिकसामग्र्यभावादिति भावः ॥ **व्यक्तेरपि भानमिति** ॥ अन्यथानुपपत्त्या व्यक्तेरपि विषयत्वमित्यर्थः । तथाच स्वरूपतो जातिप्रकारकव्यक्तिविशेष्यकशाब्दबोधं प्रति जातिशक्तिज्ञानत्वेन हेतुत्वात्तादृशकारणबलात् शाब्दबोधे जातेरिव व्यक्तेरपि विषयत्वमावश्यकमिति भावः । अत्र यद्यपि व्यक्तावेव शक्तिं परिकल्प्य निरुक्तशाब्दबोधं प्रति व्यक्तिशक्तिज्ञानत्वेन हेतुत्वं शक्यते वक्तुं तथाप्यनन्तशक्तिकल्पनागौरवभिया व्यक्तिशक्तिस्वीकारासंभवात् तज्ज्ञानस्य हेतुत्वमुपेक्षितमिति हृदयम् ॥ **शक्तिं विनेति** ॥ व्यक्तौ शक्त्यस्वीकार इत्यर्थः ॥ **व्यक्तिभानानुपपत्तेरिति** ॥ व्यक्तेःशाब्दबोधविषयत्वानुपपत्तेरित्यर्थः । वृत्तिज्ञानसहकृतपदज्ञानजन्यपदार्थोपस्थितेःशाब्दबोधहेतुत्वात् । अन्यथा गामानयेति वाक्यज्ञानाधीनशाब्दबोधे घटादेरपि विषयत्वापत्तेः । शक्यत्वाविशेषादिति भावः । कुब्जशक्तिवादिनस्तु गवादिपदानां गोत्वे गवि च शक्तिः परन्तु जातौ शक्तिर्ज्ञाता सत्युपयुज्यते व्यक्तौ शक्तिः कुब्जा सत्युपयुज्यते । जातिशक्तेर्ज्ञातत्वं च शाब्दबोधजनकस्मृतिनिरूपितशक्तिज्ञाननिष्ठकारणतानिरूपितविषयतासंबन्धावच्छिन्नशक्तिनिष्ठावच्छेदकतायां जातिविषयकत्वावच्छिन्नत्वमेव । तादृशावच्छेदकतायां व्यक्तिविषयत्वानवच्छिन्नत्वमेव शक्तेर्व्यक्त्यंशे कुब्जत्वं । तादृशशक्तिग्रहस्य गोपदनिरूपितगोत्वविषयकशक्तिमती गौरित्येवाकारः । एतादृशशक्तिज्ञाने गोत्वविषयकत्वेन शक्तेर्विषयत्वात् गोत्वांशे शक्तेर्ज्ञातत्वं । गोविषयकत्वेन शक्तेरविषयत्वात् तदंशे कुब्जत्वम् । तथाच गोविशेष्यकगोपदनिरूपितगोत्वविषयकशक्तिप्रकारकज्ञानसहकृतगोपदज्ञानात् कारणतावच्छेदककोटौ गोविषयकत्वनिवेशेन गोत्वस्येव गोरपि स्मृतिसंभवात् गोपदान्न गोविषयकशाब्दबोधानुपपत्तिः तच्छाब्दबोधं प्रति तच्छक्तपदज्ञानत्वेन हेतुत्वात् शक्तिज्ञानसहकृतगोपदज्ञानात् घटादिविषयकशाब्दबोधापत्तिर्नेत्याहुः तन्न गोत्वे यदि शक्तिरित्यादिग्रन्थेन जातिशक्तिपक्षस्य मूलकृतैव दूषणीयत्वात् गोत्वप्रकारकगोविशेष्यकस्मृतौ गोत्वावच्छिन्नविशेष्यतानिरूपितगोत्वविषयकत्वावच्छिन्नगोपदनिरूपितशक्तिनिष्ठप्रकारताशालिज्ञानत्वेन न हेतुत्वं कारणतावच्छेदककोटौ गोत्वविषयकत्वनिवेशे गौरवात् प्रयोजनाभावाच्च । किंतु गौर्गोपदशक्येत्याकारकगोत्वावच्छिन्नविशेष्यतानिरूपितगोपदनिरूपितशक्तिनिष्ठप्रकारताशालिज्ञानत्वेनैव हेतुत्वं लाघवात् तावतैव गोत्वप्रकारकगोविशेष्यकस्मृतिसंभवाच्च । एवंच शक्तिनिष्ठनिरुक्तावच्छेदकतायां जातिविषयकत्वावच्छिन्नत्वे प्रमाणाभावेन शक्तेर्निरुक्तज्ञातत्वकुब्जत्वयोरप्रामा-

## दिनकरीयम्.

मग्र्या एव व्यक्तिभासकत्वादिति भावः । इदमेव कथमिति चेत् व्यक्तिविशेष्यकजातिप्रकारकशाब्दबोधे जातिविषयकशक्तिज्ञानत्वेन हेतुत्वात् । न च तादृशबोधे व्यक्तिशक्तिज्ञानत्वेन हेतुत्वमुपगम्य व्यक्तावेव शक्तिः किं नाङ्गीक्रियत इति वाच्यम् । तथा सति उक्तानन्त्यादिदोषप्रसङ्गादिति ॥ **शक्तिं विनेति** ॥ पदजन्यपदार्थोपस्थितेः शाब्दबोधं प्रति हेतुतया व्यक्तिशक्तिं विना तद्भानानिर्वाहादिति भावः ॥ **लक्षणेति** ॥

## रामरुद्रीयम्.

सकलव्यक्तिषु शक्तिस्वीकारे व्यक्तीनामानन्त्येन शक्तीनामानन्त्यमिति द्वितीयदूषणसङ्गतिरिति भावः । मूले व्यक्तौ शक्त्यभावे शाब्दबोधे व्यक्तिभानासम्भव इत्याशङ्कायां व्यक्तिं विना जातिभानासम्भवात् व्यक्तिभानमित्युक्तम् । तन्न सङ्गच्छते । यत्र गोत्वमुख्यविशेष्यकस्मरणं तत्र व्यक्तिं विनापि जातिभानात् एवं व्यक्तिभासकसामग्रीमन्तरेण शाब्दबोधे व्यक्तिभानासम्भवाच्चेत्यतस्तद्ग्रन्थं व्याचष्टे ॥ **जातीति** ॥ **हेतुत्वादिति** ॥ तथाच जातिविशेष्यकशक्तिज्ञानं शाब्दबोधे जातिभासकम् । तदेव व्यक्तिभासकमपीति भावः ॥ **पदजन्येति** ॥ तद्विषयकशाब्दबोधं प्रति तद्विषयकपदजन्योपस्थितेर्हेतुतया जातिपदयोरेव सम्बन्धग्रहेण प-

त्तिप्रतिसन्धानं विनापि व्यक्तिबोधात् । न च व्यक्तिशक्तावानन्त्यम् । सकलव्यक्तावेक-स्या एव शक्तेः स्वीकारात् । न चाननुगमः । गोत्वादेरेवानुगमकत्वात् । किंच गौः शक्येति

## प्रभा.

णिकत्वाच्च । ननु गवादिपदानां न व्यक्तौ शक्तिः किन्तु लक्षणैव तावतैव वृत्तिज्ञानजन्य-पदज्ञानजन्यव्यक्तिस्मरणसंभवेन व्यक्तेश्शाब्दबोधविषयत्वसंभवादिति मतं दूषयति ॥ **नचेति** ॥ नहीत्यर्थः ॥ **व्यक्तौ लक्षणेति** ॥ व्यक्तौ स्वारसिकलक्षणेत्यर्थः । निरूढलक्षणायां वक्ष्यमाणदो-षासङ्गतेः ॥ **अनुपपत्तिप्रतिसन्धानं विनापीति** ॥ गामानयेत्यादौ गोत्वादेरानयनकर्मत्वान्वयानुपप-त्तिप्रतिसन्धानात् गोपदस्य गवि लक्षणास्वीकारेऽपि गौरस्ति तां पश्येत्यादौ गोत्वादेरस्तित्वदर्शनकर्मत्वान्व-यानुपपत्तिप्रतिसन्धानरूपलक्षणानियामकस्याभावेन तत्र लक्षणायाः स्वीकर्तुमशक्यत्वादिति भावः । यत्तु गवा-दिपदानां न व्यक्तौ लक्षणा युगपद्वृत्तिद्वयविरोधात् सकृदुच्चरितश्शब्दः सकृदेवार्थं गमयतीति न्यायादत एव गङ्गायां घोष इत्यादौ गङ्गापदात् शक्त्या प्रवाहोपस्थितिं लक्षणया तीरोपस्थितिं च संपाद्य प्रवाहस्य घोषान्व-यानुपपत्तिप्रतिसन्धानात् शाब्दबोधविषयत्वासंभवेऽपि बाधकाभावाल्लक्ष्यार्थस्य शाब्दबोधविषयत्वमित्याक्षि-प्य युगपद्वृत्तिद्वयविरोधेन शक्तिज्ञानलक्षणाज्ञानोभयसहकृतैकपदज्ञानाधीनशक्यार्थलक्ष्यार्थोभयविषयकस्मृतेः शाब्दबोधहेतुत्वं निराकृत्य तादृशवाक्यघटकगङ्गापदश्रवणाच्छक्तिज्ञानसहकृतात् प्रवाहोपस्थितौ तत्र सम-भिव्याहृतपदार्थान्वयानुपपत्तिप्रतिसन्धानानन्तरं पुनः स्मृतगङ्गापदाल्लक्षणाज्ञानसहकृताज्जायमानतीरस्मरणे नैव तीरविषयकशाब्दबोध इति लक्षणावादे मथुरानाथतर्कवागीशभट्टाचार्यलेखनमपि सङ्गच्छत इति तन्न । सति तात्पर्ये गङ्गायां मत्स्यघोषौ स्त इति वाक्यघटकगङ्गापदश्रवणात् शक्तिज्ञानलक्षणाज्ञानसहकृताच्छक्यार्थप्रवा-हलक्ष्यार्थतीरोभयविषयकस्मृत्या प्रवाहतीरोभयविषयकशाब्दबोधस्य सर्वानुभवसिद्धत्वेन सर्वत्र युगपद्वृत्तिद्व-यविरोधे मानाभावात् सकृदुच्चरित इत्याद्युक्तन्यायस्यापि तात्पर्याभावस्थल एव प्रवृत्तिस्वीकारात् । गङ्गायां घोष इत्यादौ शक्यार्थलक्ष्यार्थोभयबोधे तात्पर्याभावेन युगपद्वृत्तिद्वयविरोधप्रसक्त्या तादृशशक्यलक्ष्योभयस्मृ-तेश्शाब्दबोधहेतुत्वासंभवात् गङ्गापदस्मरणं पुनः परिकल्प्य लक्षणाज्ञानसहकृततादृशस्मरणजन्यतीरोपस्थित्या

## दिनकरीयम्.

तावतैव वृत्त्या पदजन्यपदार्थोपस्थितेर्निर्वाहादिति भावः ॥ **अनुपपत्तिप्रतिसन्धानं विनापीति** ॥ गामानयेत्यादौ गोत्वजातेरानयनान्वयानुपपत्त्या गोपदस्य गवि लक्षणास्वीकारेऽपि गौरस्तीत्यादौ गोत्वजाते-रस्तित्वाद्यन्वयानुपपत्तेर्लक्षणाबीजस्याभावेन लक्षणायाः स्वीकर्तुमशक्यत्वादिति भावः । स्वमते पूर्वोक्त-दोषमाशङ्क्य वारयति ॥ **न चेत्यादिना** ॥ **एकस्या इति** ॥ ईश्वरेच्छारूपायास्तस्या एकत्वादित्यर्थः ॥ **न चाननुगम इति** ॥ गोव्यक्तीनामननुगततया विषयतासम्बन्धेन शक्तिज्ञानकारणतायामवच्छेदक-त्वासम्भव इत्यर्थः ॥ **गोत्वादेरेवेति** ॥ तथाच गोशाब्दबोधे गोत्वविशिष्टविषयकशक्तिज्ञानत्वेन हेतुत्वा-

## रामरुद्रीयम्.

दरूपैकसम्बन्धिज्ञानाज्जातिरूपसम्बन्ध्यन्तरस्यैव स्मरणं भवति न तु व्यक्तेरिति पदजन्यव्यक्तिस्मरणाभावेन व्यक्तिशाब्दबोधानिर्वाहात् व्यक्तौ शक्तिरावश्यकीति भावः । ननु व्यक्तौ पदस्य लक्षणास्वीकारेऽपि शक्त्या पदजन्यव्यक्तिस्मरणाभावेन कथं व्यक्तिविषयकशाब्दबोध इत्याशङ्कायामाह ॥ **तावतैवेति** ॥ **निर्वाहा-दिति** ॥ शक्तिलक्षणयोर्द्वयोरपि वृत्तित्वादिति भावः ॥ **पूर्वोक्तेति** ॥ शक्त्यानन्त्यप्रसङ्गरूपेत्यर्थः ॥ **अननुग-ततयेति** ॥ अननुगतानतिप्रसक्तधर्मावच्छिन्नतयेत्यर्थः ॥ **अवच्छेदकत्वासम्भव इति** ॥ व्यक्तिषु तथाविधैकधर्मसत्त्वे तदवच्छिन्नविषयकशाब्दं प्रति तदवच्छिन्नविशेष्यकशक्तिज्ञानत्वेन हेतुतासम्भवाच्छक्ति-ज्ञाननिष्ठकारणतायां विषयविधया शक्तेरेवावच्छेदकत्वं सम्भवति न तादृशधर्माभाव इत्यर्थः । न च तद्विष-यकशाब्दबोधं प्रति तद्विषयकशक्तिज्ञानं हेतुरस्त्विति वाच्यम् । तथा सति शक्तिज्ञानाविषयस्य पूर्वाननुभू-तगवादेः शाब्दबोधानुपपत्तेरिति भावः । व्यक्तीनां गोत्वेनानुगमे व्यक्तेर्यथा शक्तिज्ञाननिष्ठकारणतायामवच्छे-दकत्वसम्भवस्तथोपपादयति ॥ **तथाचेति** ॥ **गोशाब्दबोधे** ॥ गोत्वावच्छिन्नविषयकशाब्दबोधे इत्य-

प्रभा.

तीरविषयकशाब्दबोध इत्यभिप्रायकतया तल्लेखननिर्वाहाच्च । तस्मात् व्यक्तौ लक्षणापक्षे मूलोक्तदोष एव युक्त इत्यस्वरसं भाति । व्यक्तिशक्तिपक्षे उक्तदोषं वारयितुं तमनुवदति ॥ **नचेति** ॥ **एकस्या एव शक्तेरिति** भावः । नैवेत्यर्थः ॥ **स्वीकारादिति** ॥ अङ्गीकारादित्यर्थः । तथाचेश्वरेच्छाविषयत्वस्य शक्तिरूपत्वे तस्य विषयरूपतया व्यक्तिभेदेन भिन्नत्वेऽपि भगवदिच्छारूपशक्तेरेकत्वेन व्यक्तिभेदेऽप्यभिन्नतया न गौरवावकाश इति भावः । ननु व्यक्तौ शक्तिस्वीकारे गोव्यक्तीनां अनेकत्वात् एकैकव्यक्तिविशेष्यकशक्तिज्ञानस्यान्यगोस्मृतिपूर्वमवर्तमानत्वेन एवमन्यगोविशेष्यकशक्तिज्ञानस्य एतद्गोविषयकस्मृतिपूर्वमवर्तमानत्वेन परस्परं व्यभिचारितया गोविषयकस्मृतिसामान्यं प्रति कथं गोविशेष्यकशक्तिज्ञानत्वेन हेतुत्वमित्याशङ्कां परिहरति ॥ **नचाननुगम इति** ॥ व्यक्त्यनेकत्वप्रयुक्तव्यक्तिशक्तिज्ञानहेतुत्वासंभवो नैवेत्यर्थः । तत्र हेतुमाह ॥ **गोत्वादेरिति** ॥ एवकारः अनुगमकत्वादित्युत्तरं योज्यः ॥ **अनुगमकत्वादिति** ॥ गोसामान्यनिरूपितासाधारणधर्मत्वादित्यर्थः । तथाच गोव्यक्तीनां अननुगतत्वेऽपि गोत्वप्रकारकगोविशेष्यकस्मृतिं प्रति गोत्वावच्छिन्नविशेष्यताशालिशक्तिज्ञानत्वावच्छिन्नस्य नियतपूर्ववृत्तित्वेनाव्यभिचारितया तेन रूपेण हेतुतायां न किमपि बाधकमिति भावः । एतावता मीमांसकदूषितां व्यक्तिशक्तिं प्रसाध्य तन्मतसिद्धां शक्यतावच्छेदकत्वासमानाधिकरणजातिशक्तिं निरसितुमादौ जातिशक्तिग्रहस्वरूपं विकल्प्य दूषयति ॥ **किंचेति** ॥ केचित्तु ननु सर्वत्र पदजन्यपदार्थोपस्थितेर्हेतुत्वे मानाभावः कथमन्यथा शाब्दबोधे संसर्गभानं नचैवं पदानुपस्थितघटादेरपि भानापत्तिरिति वाच्यम् गोविशेष्यकगोत्वप्रकारकशाब्दबोधं प्रति गोत्वशक्तिज्ञानत्वेन हेतुत्वस्योक्तत्वात् एतादृशातिप्रसङ्गविरहादित्यत आह किंचेतीत्यवतरणिकामाहुः । तदसत् सर्वत्र पदजन्यपदार्थोपस्थितेर्हेतुत्वानङ्गीकारे पदार्थस्मृतिं विनापि केवलशक्तिज्ञानाच्छाब्दबोधापत्तेः गोत्वप्रकारकगोविशेष्यकशाब्दबोधं प्रति गोत्वशक्तिज्ञानत्वेन हेतुत्वे गोत्वविशेष्यकगोत्वपदनिरूपितशक्तिज्ञानादपि गोत्वप्रकारकशाब्दबोधापत्तेः । नच तन्मते गोत्वपदस्य गोत्वत्व एव शक्तत्वात् कथमापत्तिरिति वाच्यं नैयायिकमते येषां पदानां जातिः प्रवृत्तिनिमित्तं तेषां पदानामेव जातौ परैः शक्तिस्वीकारात् येषां गुरुधर्मः शक्यतावच्छेदकः तेषां व्यक्तावेव शक्तिः यथा पश्वादस्य लोमलाङ्गूलादिविशिष्टे शक्तिः तत्र शक्यतावच्छेदकीभूतलोमादीनां बहुतया बहूनां शक्यत्वे गौरवात् परमते लोमादिविशिष्टव्यक्तावेव शक्तिरेवं च गोत्वपदस्य शक्यतावच्छेदकतया न्यायमतसिद्धानेकपदार्थघटितगोत्वत्वे शक्तिस्वीकारे गौरवात् गोत्वपदस्य गोत्व एव परमतेऽपि शक्तेः क्लृप्तत्वेन तदापत्तेर्दुर्वारत्वात् । नच तादृशशाब्दं प्रति गोपदनिरूपितगोत्वशक्तिज्ञानत्वेन हेतुत्वस्वीकारान्नोक्तापत्तिरिति वाच्यं तथा सति उक्षा भद्रो बलीवर्द ऋषभो वृषभो वृषः अनड्वान्सौरभेयो गौरुस्राणां संहतिरौक्षकमिति कोशात् उक्षाभद्रबलीवर्दादिशब्दानां पुरुषगोवाचकगोशब्दसमानार्थकतया माहेयी सौरभेयी गौरुस्रा माहा च शृङ्गिणीति कोशात् माहेय्यादिपदानां स्त्रीगोवाचकगोशब्दसमानार्थकतया च तत्तत्पदनिरूपितगोत्वशक्तिज्ञानजन्यतादृशशाब्दबोधे गोपदनिरूपितगोत्वशक्तिज्ञानस्य व्यतिरेकव्यभिचारग्रस्तत्वेन हेतुत्वानुपपत्तेः तस्मात् पदविशेषघटितरूपेण शक्तिज्ञानस्य कारणत्वासंभवेन गोत्वपदनिरूपितगोत्वशक्तिज्ञानात् तादृशशाब्दबोधापत्तेर्दुर्वारत्वात् ॥ **गौरशक्येतीति** ॥ तत्रे-

दिनकरीयम्.

न्नोक्तदोष इति भावः । ननु सर्वत्र पदजन्यपदार्थोपस्थितेर्हेतुत्वे मानाभावः । कथमन्यथा शाब्दबोधे संसर्गज्ञानम् । न चैवं पदानुपस्थितघटादेरपि भानापत्तिरिति वाच्यम् । गोविशेष्यकगोत्वप्रकारकशाब्दबोधं

रामरुद्रीयम्.

र्थः ॥ **सर्वत्रेति** ॥ तद्विषयकशाब्दबोधसामान्ये तद्विषयकपदजन्योपस्थितित्वेन हेतुत्वे मानाभाव इत्यर्थः ॥ **उक्तत्वादिति** ॥ तथा च घटत्वेन घटपदशक्तिज्ञानरहितस्य घटविषयकशाब्दबोधापत्तिर्न सम्भवतीति भावः । न चैवमपि तादृशशक्तिज्ञानवतः पटोऽस्तीति शब्दादपि तादृशशाब्दबोधापत्तिरिति वाच्यं तादृशशक्तिज्ञानसहकारेण पदजन्यघटत्वोपस्थितेरपि तादृशशाब्दबोधहेतुत्वोपगमादिति भावः । शक्तिज्ञानं च न सा-

शक्तिग्रहो यदि तदा व्यक्तौ शक्तिः । यदितु गोत्वं शक्यमिति शक्तिग्रहस्तदा गोत्वप्रकारकपदार्थस्मरणं शाब्दबोधश्च न स्यात् समानप्रकारकत्वेन शक्तिज्ञानस्य पदार्थस्मरणं शाब्दबोधं प्रति च हेतुत्वात् । किंच गोत्वे यदि शक्तिस्तदा गोत्वत्वं शक्यतावच्छेदकं

## प्रभा.

त्यादिः ॥ **यदीति** ॥ अभिमत इति शेषः । व्यक्ता इति सावधारणं व्यक्तावेवेत्यर्थः ॥ **शक्तिरिति** ॥ मुख्यशक्तिरित्यर्थः । शक्यतावच्छेदकत्वासमानाधिकरणशक्तिरिति यावत् । सिद्धेति शेषः । नचोक्तशक्तिज्ञानस्य तैर्भ्रमत्वस्वीकारात् न व्यक्तिशक्तिसाधकत्वमिति वाच्यं तैरन्यथाख्यात्यनभ्युपगमेन गौश्शक्येति ज्ञानद्वयस्यैव भ्रमस्थानाभिषिक्ततया केवलशक्येत्याकारकशक्तिज्ञानस्य जातिविशेष्यकत्वेऽपि शक्यत्वांशे निर्धर्मितावच्छेदककतया विपरीतज्ञानाप्रतिबध्यत्वेन गोत्वस्मृत्यजनकतया तद्द्वारा शाब्दबोधहेतुत्वासंभवादित्याशयः ॥ **यदि त्विति** ॥ अवधारणार्थकतुशब्दश्शक्यमित्युत्तरं योज्यः ॥ **गोत्वं शक्यमिति शक्तिग्रह इति** ॥ गोत्वं शक्यमित्येव शक्तिग्रह इत्यर्थः । एतत्करेण निर्धर्मितावच्छेदककनिरुक्तज्ञानस्य शक्तिग्रहरूपत्वव्यवच्छेदः । अभिमत इति शेषः ॥ **गोत्वप्रकारकपदार्थस्मरणमिति** ॥ निरुक्तशक्तिग्रहादित्यादिः ॥ **शाब्दबोधश्चेति** ॥ तादृशस्मरणाभावादित्यादिः ॥ **न स्यादिति** ॥ नोत्पत्तुमर्हतीत्यर्थः । तयोरनुत्पत्तौ उत्पादकसामग्र्यभावरूपनिमित्तं वक्तुमुत्पादकसामग्रीं दर्शयति ॥ **समानप्रकारकत्वेनेत्यादि** ॥ समानप्रकारकत्वेन शक्तिज्ञानस्य पदार्थस्मरणं प्रति हेतुत्वादिति योजना ॥ **शाब्दबोधमिति** ॥ पदार्थस्मरणस्येत्यादिः । तथाच समानप्रकारकत्वेन पदार्थस्मरणस्य शाब्दबोधं प्रति हेतुत्वादित्यपरा योजना । चकारः पूर्वोक्तकार्यकारणभावसमुच्चायकः । अत्रैव विश्वनाथपञ्चाननस्य निगूढाभिप्रायः । एतेन यथाश्रुते पदार्थस्मृतिद्वारा शाब्दबोधं प्रति शक्तिज्ञानस्य हेतुत्वलाभात् शाब्दबोधं प्रति शक्तिज्ञानस्यान्यथासिद्धत्वव्यवस्थापकात्रैवशक्तिज्ञानस्योपयोग इति पूर्वग्रन्थविरोधः शक्तिज्ञानस्य पदार्थस्मृतिद्वारा शाब्दबोधहे-

## दिनकरीयम्.

प्रति गोत्वशक्तिज्ञानत्वेन हेतुत्वस्योक्तत्वादेतादृशातिप्रसङ्गविरहादित्यत आह ॥ **किञ्चेति** ॥ **तदा व्यक्तौ शक्तिरिति** ॥ गौः शक्येति विशिष्टज्ञानं प्रमात्मकमेव त्वन्मतेऽन्यथाख्यात्यभावात् । प्रमायाश्च वस्तुसाधकत्वादिति भावः ॥ **समानप्रकारकत्वेनेति** ॥ ईदृशशक्तिज्ञानस्य गोत्वप्रकारकत्वाभावेन गामानयेत्यादौ गोत्वप्रकारकस्मरणशाब्दबोधयोरनुपपत्तिरित्यर्थः । न च गोपदं गोत्वे शक्तमित्येतादृशशक्तिग्रहस्यैव शाब्दबोधे हेतुत्वात् तस्य च शक्यत्वांशे गोत्वप्रकारकत्वान्न तत्प्रकारकशाब्दबोधानुपपत्तिरिति वाच्यम् । शक्तिग्रहे यदंशे गोत्वादिप्रकारकत्वं शाब्दबोधस्यापि तदंशे गोत्वादिप्रकारकत्वमित्येतादृशसमानप्रकारकत्वस्य परमते सिद्धान्तितत्वात् । अत एवापूर्ववादेऽपूर्वस्य पूर्वमनुपस्थितत्वात् कथं तत्र शक्तिग्रह इत्याशङ्क्य कार्यत्वेन घटादिषु शक्तिग्रहात् योग्यतया शाब्दबोधेऽपूर्वभानमित्युक्तं तैरिति । ननु कार्यत्वाद्युपाधिप्रकारकशाब्दबोधस्थले तादृशसमानप्रकारकत्वस्य तदनुमतत्वेऽपि जातिप्रकारकशाब्दबोधस्थले तादृशसमानप्रकारकत्वं

## रामरुद्रीयम्.

क्षाच्छाब्दबोधे हेतुः किंतु संस्कारद्वारा । तेन शाब्दबोधाव्यवहितप्राक्क्षणे सर्वत्र शक्तिज्ञानाभावे न क्षतिः । **किंचेतीति** ॥ ननु गौर्गोपदशक्येति शक्तिज्ञानस्य शाब्दबोधहेतुत्वेऽपि न व्यक्तौ शक्तिसिद्धिः । उक्तज्ञानस्य भ्रमत्वाङ्गीकारात् । न हि भ्रमाद्वस्तुसिद्धिरिति न्यायादत आह ॥ **गौरित्यादि** ॥ **शाब्दबोधानुपपत्तिरिति** ॥ गोत्वगोपदयोरेव शक्तिरूपसम्बन्धज्ञानाद्गोत्वबोधस्यैव स्मरणत्वमुपपद्यते न तु व्यक्तेरपीत्याशयेन स्मरणपरित्यागः ॥ **यदंश इति** ॥ स्वात्मकयद्धर्माश्रयांश इत्यर्थः । तदंश इत्यत्रापि तद्धर्माश्रयांश इत्यर्थः । तत्पदद्वयं एकधर्मपरम् । तथा च स्वाश्रयगोत्वादिप्रकारकज्ञानं स्वाश्रयगोत्वादिप्रकारकशाब्दं प्रत्येव हेतुरिति शक्यत्वांशे गोत्वप्रकारकशक्तिज्ञानात् व्यक्तौ गोत्वप्रकारकशाब्दबोधानुपपत्तिः । शक्तेर्गोत्वाश्रयत्वादित्यर्थः । यदंश इत्यादेर्यथाश्रुतार्थकत्वं न संभवति । तथा सति अग्रे वक्ष्यमाणस्य कार्यत्वावच्छिन्ने घटादेः शक्तिज्ञानात्कार्यत्वेनापूर्वविषयकशाब्दबोधस्यानुपपत्तेरिति मन्तव्यम् ॥ तैः प्राभाकरैरित्यर्थः । **जातिप्रकारकेति** ॥ तत्रैव श-

**प्रभा.**

त्ुत्वे पदज्ञानस्येव शक्तिज्ञानस्यापि प्रमाणत्वापत्तेरित्यादिदूषणमप्यपास्तम् । तथाच निरुक्तशक्तिज्ञानस्य गोत्वप्रकारकत्वाभावेन गोत्वप्रकारकस्मरणानुपपत्तिः तादृशस्मरणाभावात् गोत्वप्रकारकशाब्दबोधानुपपत्ति रिति भावः । नच गोपदं गोत्वशक्तामित्याकारकशक्तिज्ञानस्य गोत्वप्रकारकतया तद्बलाद्गोत्वप्रकारकस्मरणोत्पत्तौ ततस्तत्प्रकारकशाब्दबोधोत्पत्तौ च बाधकाभाव इति वाच्यं पदविशेष्यकशक्तिज्ञाने येन संबन्धेन येन रूपेण यस्य प्रकारत्वं तद्बलात् तेन संबन्धेन तत्प्रकारकतद्विशेष्यकस्मृतेरेवाभ्युपगमात् अन्यथा पश्वादिपदानां परैरपि पश्वादावेव शक्तेस्स्वीकृततया पशुपदं पशौ शक्तमिति पदविशेष्यकशक्तिज्ञानादाधेयत्वसंबन्धेन पशुप्रकारकस्मरणापत्तेः । एवंच गोत्वपदं गोत्वशक्तामिति गोत्वशक्तिज्ञानादिव गोपदं गोत्वशक्तमिति शक्तिज्ञानादपि गोत्वत्वप्रकारकगोत्वविशेष्यकस्मृतेरेवाङ्गीकरणीयतया निरुक्तशक्तिज्ञानात् स्वरूपतो गोत्वप्रकारकगोविशेष्यकस्मरणानुपपत्तेर्दुर्वारत्वात् ततः स्वरूपतो गोत्वप्रकारकगोविशेष्यकशाब्दबोधानुपपत्तेः सुतरां दुर्वारत्वात् । केचित्तु समानप्रकारकत्वेनेति ईदृशशक्तिज्ञानस्य गोत्वप्रकारकत्वाभावेन गामानयेत्यादौ गोत्वप्रकारकस्मरणशाब्दबोधयोरनुपपत्तिरित्यर्थः । नच गोपदं गोत्वशक्तमित्येतादृशशक्तिज्ञानस्यैव शाब्दबोधहेतुत्वात् तस्य शक्त्यंशे गोत्वप्रकारकत्वान्न तत्प्रकारकशाब्दबोधानुपपत्तिरिति वाच्यम् । शक्तिग्रहे येन संबन्धेन गोत्वादिप्रकारकत्वं शाब्दबोधस्यापि तेन संबन्धेन गोत्वादिप्रकारकत्वमित्येतादृशसमानप्रकारकत्वस्य परमते सिद्धान्तितत्वात् अत एवापूर्ववादे अपूर्वस्य पूर्वमनुपस्थितत्वात् कथं तत्र शक्तिग्रह इत्याशङ्क्य कार्यत्वेन घटादिषु शक्तिग्रहायोग्यतया शाब्दबोधे अपूर्वस्य भानमित्युक्तं तैरित्याहुः तदसत् शक्तिग्रहे यदंशे गोत्वादिप्रकारकत्वं शाब्दबोधस्यापि तदंशे गोत्वादिप्रकारकत्वमित्येतादृशसमानप्रकारकत्वस्य परमते सिद्धान्तितत्वादिति यदुक्तं तन्निर्युक्तिकम् । तथा सति पशुपदं पशुशक्तमिति शक्तिज्ञानस्य गोत्वपदं गोत्वे शक्तमित्यादिशक्तिज्ञानस्य चाधेयतासंबन्धेन पशुगोत्वादिप्रकारकतया आधेयतया पशुगोत्वादिस्मरणापत्तेः । ततः पशुगोत्वादिप्रकारकशाब्दबोधापत्तेश्च । अत एवेत्याद्युपष्टम्भकग्रन्थघटकस्यापूर्वस्य पूर्वमनुपस्थितत्वात् कथं तत्र शक्तिग्रह इत्याशङ्काग्रन्थस्य गवादिपदानां गोत्वादिशक्तत्ववल्लिङ्पदस्यापि कार्यत्वशक्तत्वात् शाब्दबोधात् पूर्वमपूर्वस्यानुपस्थितत्वेऽपि लिङ्पदं कार्यत्वशक्तामिति शक्तिग्रहसंभवात् अतः कार्यत्वप्रकारकस्मृतेश्शाब्दबोधस्य च संभवाचाक्षेपस्यासाङ्गत्यापत्त्या शक्तिग्रहे येन संबन्धेन यदंशे कार्यत्वप्रकारकत्वं तदंश एव स्मृतौ शाब्दबोधे च कार्यत्वप्रकारकत्वमिति नियममङ्गीकृत्योक्तशक्तिज्ञानस्याधेयतासंबन्धेनैव शक्त्यंश एव कार्यत्वप्रकारकतया कार्यत्वप्रकारककार्यविशेष्यकस्मरणस्य शाब्दबोधस्य चासंभवेन तत्संभवाय कार्यं लिङ्पदशक्यं लिङ्पदं वा कार्यशक्तमित्येतादृशमेव शक्तिज्ञानमङ्गीकृत्य तद्ग्रहस्य कार्यांश एव कार्यत्वप्रकारकतया कार्यत्वप्रकारककार्यविशेष्यकस्मरणशाब्दयोरुपपत्तिर्वाच्या । एवंच सत्यपूर्वस्य शाब्दबोधात् पूर्वमनुपस्थितत्वात् कथं तत्र शक्तिग्रह इत्याक्षेपसङ्गतिरित्यभिप्रायकत्वभ्रमेणैव उपष्टम्भकतया तादृशशङ्काग्रन्थो लिखितः तन्निर्युक्तिकं जातिप्रकारकशाब्दबोधस्थले पदानां जातिशक्तेस्तदनुमतत्वेऽपि उपाधिप्रकारकशाब्दबोधस्थले उपाधिविशिष्टव्यक्तिशक्तेरेव तदनुमततया वैदिकवाक्यघटकलिङ्पदं कार्यत्वविशिष्टशक्तं कार्यत्वविशिष्टं वा लिङ्पदशक्यमित्युभयविधशक्तिग्रहस्यापि कार्यांश एव कार्यत्वप्रकारकतया कार्यविशेष्यककार्यत्वप्रकारकस्मरणस्य शाब्दबोधस्य चानुपपत्त्यभावात् पदविशेष्यकशक्तिग्रहस्यापि संग्राह्यतया तन्निराकरणाभावेऽपि तादृशाक्षेपसङ्गतेः तादृशशक्तिग्रहनिराकरणे उपष्टम्भकतया तादृशशङ्काग्रन्थलेखनानौचित्यात् । किंच वैदिकलिङ्पदस्य कार्यशक्तेस्तदनुमतत्वे कथं तत्र शक्तिग्रह इत्याक्षेपासङ्गतिः स्यात् कार्यरूपापूर्वे लिङ्पदशक्त्यभावात् कार्यत्वेन घटादिषु शक्तिग्रहादिति परिहारोऽप्यसङ्गतस्स्यात् लिङः कार्यविशिष्टे तैः शक्त्यनुपगमात् । तस्मान्मुक्तावलीग्रन्थो नैवं व्याख्येय इति । ननु गोपदशक्तिज्ञानस्य न गोत्वं गोपदशक्यमित्याकारकत्वं स्वीक्रियते येन स्वरूपतो गोत्वप्रकारकस्मरणशाब्दबोधयोरनुपपत्तिः स्यात् किन्तु शक्तिसंबन्धेन स्वरूपतो गोत्वप्रकारकगोपदविशेष्यकगोपदं गौरित्याकारकमेव गोपदशक्तिज्ञानं गोपदं न गौरिति विपरीतज्ञानप्रतिबध्यत्वं स्वीक्रियते तदेव स्वरूपतो गोत्वप्रकारकस्मृतिकारणमिति

वाच्यम् । गोत्वत्वं तु गवेतरासमवेतत्वे सति सकलगोसमवेतत्वम् । तथाच गोत्व-

## प्रभा.

नोक्तदोषावकाशः नचैतादृशशक्तिज्ञानस्य स्मृतिहेतुत्वे गोत्वं न गोपदशक्यमिति बाधज्ञानकाले स्वरूपतो गोत्वप्रकारकस्मरणाद्यापत्तिरिति वाच्यं इष्टापत्तेः तादृशबाधज्ञानकाले गोत्वं गोपदशक्यमिति शक्तिज्ञानानुदयेन गोत्वत्वप्रकारकस्मरणाद्यसंभवेऽपि तादृशस्मरणाद्युत्पत्तौ बाधकाभावात्समवायसंबन्धेनेव शक्तिसंबन्धेनापि तैर्जातेः स्वरूपतो भानस्वीकारान्नोक्तशक्तिज्ञानस्यालीकत्वेत्यत आह ॥ **किंचेति** ॥ केचित्तु ननु कार्यत्वाद्युपाधिप्रकारकशाब्दबोधस्थले तादृशसमानप्रकारकत्वस्य तदनुमतत्वेऽपि जातिप्रकारकशाब्दबोधस्थले तादृशसमानप्रकारकत्वं न तदनुमतमत आह किंचेतीत्यवतरणिकामाहुः तदसत् जातिप्रकारकशाब्दबोधस्थले तादृशसमानप्रकारकत्वस्य तदनुमतत्वाभावेऽपि शक्तिग्रहे जातेर्येन रूपेण भानं तेन रूपेण जातेः स्मरणादिकमिति नियमोऽवश्यं वाच्यः अन्यथा गोत्वपदं गोत्वशक्तमिति ज्ञानात् जातित्वादिनापि गोत्वस्मरणाद्यापत्तेः । एवंच गोपदं गोत्वशक्तमिति शक्तिज्ञानस्य गोत्वत्वेन गोत्वप्रकारकतया तादृशशक्तिज्ञानात् स्वरूपतो गोत्वस्मरणानुपपत्तेर्दुर्वारत्वात् उक्तशक्तिज्ञानस्य हेतुत्वासंभवात् ॥ **गोत्वे यदि शक्तिरिति** ॥ तवेत्यादिः । गोत्वे शक्तिर्यदीत्यन्वयः । गोपदात् गोत्वं बोद्धव्यमित्याकारकेश्वरेच्छारूपा शक्तिर्यदीत्यर्थः । अभिमतेति शेषः ॥ **शक्यतावच्छेदकं वाच्यमिति** ॥ शक्यतावच्छेदकत्वेनावश्यमङ्गीकार्यमित्यर्थः । गोपदजन्यबोधविषयतात्वावच्छिन्नप्रकारतानिरूपितभगवदिच्छीयविशेष्यताया गोपदशक्यत्वरूपत्वात् तादृशविशेष्यतावच्छेदकताया एव गोपदशक्यतावच्छेदकत्वरूपत्वादिति भावः । ननु गोत्वत्वस्य शक्यतावच्छेदकत्वेऽपि न गौरवावकाशः तस्य तद्व्यक्तित्वरूपत्वादत आह ॥ **गोत्वत्वमिति** ॥ अवधारणार्थकतुशब्दः निखिलगोसमवेतत्वमित्युत्तरं योज्यः तथाच गोत्वत्वं गवेतरासमवेतत्वे सति निखिलगोसमवेतत्वरूपमेव न तद्व्यक्तित्वरूपं तस्य गोत्वभिन्नेऽपि वर्तमानतयाऽव्यावर्तकत्वादिति भावः । नच गोत्वनिष्ठतद्व्यक्तित्वमेव गोत्वत्वमस्त्विति वाच्यं गोत्वनिष्ठेत्यत्र गोत्वपदार्थतावच्छेदकगोत्वत्वस्यापि तद्व्यक्तित्वरूपतया तद्व्यक्तित्वविशिष्टनिष्ठतद्व्यक्तित्वमेव गोत्वत्वमिति पर्यवसितम् । एवंच तद्व्यक्तित्वस्य गोत्वभिन्नवृत्तितया उक्तदोषावारणात् । नच गवेतरासमवेतत्वविशिष्टनिखिलगोसमवेतत्वसमानाधिकरणतद्व्यक्तित्वमेव गोत्वत्वमिति नोक्तदोषावकाश इति वाच्यं तथासति गवेतरासमवेतत्वे सति निखिलगोसमवेतत्वस्यैव गोत्वत्वरूपत्वसंभवेन तद्घटितानिरुक्तधर्मस्य गुरुतया गोत्वत्वरूपत्वासंभवादित्याशयः । केचित्तु शक्यतावच्छेदकं वाच्यमिति गोत्वधर्मिकशक्यत्वज्ञानस्य पदधर्मिकगोत्वादिशक्तिज्ञानस्य वा शाब्दबोधहेतुत्वे गोत्वत्वावच्छिन्नगोत्वविषयतानिवेश आवश्यकः निर्धर्मितावच्छेदककशक्तिज्ञानस्य गोत्वाद्यंशे निष्प्रकारकशक्तिज्ञानस्य वा विपरीतज्ञानाविरोधिनः शाब्दबोधाहेतुत्वात् । तथाच गोत्वत्वे शक्यतावच्छेदकत्वावगाहितादृशप्रमाया विषयसाधकत्वात् गोत्वत्वे शक्यतावच्छेदकत्वासिद्धिरित्याहुः तदसत् गोत्वधर्मिकशक्तिज्ञानस्य हेतुत्वपक्षे गोत्वत्वावच्छिन्नगोत्वविषयतानिवेशस्यावश्यकत्वेऽपि गोपदधर्मिकगोत्वादिशक्तिज्ञानस्य हेतुत्वपक्षे गोत्वत्वावच्छिन्नगोत्वविषयतानिवेशस्यानावश्यकत्वात् गोपदं गौरित्याकारकज्ञानस्य स्वरूपतो गोत्वप्रकारकज्ञानत्वात् । यच्चोक्तं

## दिनकरीयम्.

न तदनुमतमत आह ॥ **किञ्चेति** ॥ **शक्यतावच्छेदकं वाच्यमिति** ॥ गोत्वधर्मिकशक्यत्वज्ञानस्य गोपदधर्मिकगोत्वादिशक्तिज्ञानस्य वा शाब्दबोधहेतुत्वे गोत्वत्वावच्छिन्नगोत्वविषयताया निवेश आवश्यकः निर्धर्मितावच्छेदककशक्तिज्ञानस्य गोत्वाद्यंशे निष्प्रकारकशक्तिज्ञानस्य वा विपरीतज्ञानाविरोधिनः शाब्द--

## रामरुद्रीयम्.

क्यैक्यं निरवच्छिन्नत्वसम्भवेन लाघवसम्भवादिति भावः । अत एव तैरपि पशुपदस्य लोमलाङ्गूलादिविशिष्टव्यक्तावेव शक्तिरुपेयते न तु लाङ्गूल एव तेषां आनन्त्यात् स्वरूपतो भानासम्भवाच्चेति ध्येयम् ॥ **विपरीतज्ञानाविरोधिन इति** ॥ समानधर्मितावच्छेदककयोर्बाधविशिष्टबुद्ध्योरेव प्रतिबध्यप्रतिबन्धकभावान्निर्धर्मितावच्छेदककविशिष्टबुद्धेर्बाधबुद्ध्यप्रतिबध्यतया गोत्वजातिर्न गोपदशक्येति बुद्धिदशायामप्युक्तशक्तिज्ञानात् गोपदात्

क्तीनां शक्यतावच्छेदकेऽनुप्रवेशात् तवैव गौरवम् । तस्मात् तत्तज्जात्याकृतिविशिष्ट-

प्रभा

निर्धर्मितावच्छेदककशक्तिज्ञानस्य गोत्वाद्यंशे निष्प्रकारकशक्तिज्ञानस्य वा विपरीतज्ञानाविरोधिनश्शाब्दबोधाहेतुत्वादिति तदपि न गोपदवाच्यमित्याकारकनिर्धर्मितावच्छेदककशक्तिज्ञानस्य गोत्वाद्यंशे विपरीतज्ञानाविरोधित्वेऽपि गोपदं गौरित्याकारकस्य गोत्वाद्यंशे निष्प्रकारकशक्तिज्ञानस्य गोपदं न गौरिति विपरीतज्ञानविरोधित्वेन शाब्दबोधहेतुत्वात् । यदुक्तं गोत्वत्वे शक्यतावच्छेदकत्वावगाहितादृशप्रमाया विषयसाधकत्वात् गोत्वत्वे शक्यतावच्छेदकत्वसिद्धिरिति तदपि मन्दम् । गोत्वं गोपदशक्यमिति ज्ञानस्य गोपदनिरूपितशक्तिप्रकारतानिरूपितविशेष्यतानिरूपितगोत्वत्वनिष्ठावच्छेदकताकत्वेऽपि गोत्वत्वनिष्ठशक्यतावच्छेदकत्वावगाहित्वे प्रमाणाभावात् । अन्यथा व्यक्तिशक्तिवादिनां मते द्रव्यं गोपदशक्यमिति प्रमित्या द्रव्यत्वस्यापि गोपदशक्यतावच्छेदकत्वसिद्धयापत्तेः । मीमांसकमतेऽपि लोमलाङ्गूलविशिष्टं पशुपदशक्यमिति प्रमावद्द्रव्यं पशुपदशक्यमिति प्रमाया अपि संभवेन तादृशप्रमया द्रव्यत्वस्यापि पशुपदशक्यतावच्छेदकत्वापत्तेः । तस्मात् गोत्वं गोपदशक्यमिति प्रमितेः गोत्वत्वनिष्ठगोपदशक्यतावच्छेदकत्वावगाहित्वे प्रमाणाभावात् नोक्तदिशा गोत्वत्वस्य शक्यतावच्छेदकत्वसिद्धिरिति मुक्तावलीग्रन्थो नैवं व्याख्येय इति प्रतिभाति । मीमांसकमते गवेतरासमवेतत्वघटितगोत्वत्वस्य गोपदशक्यतावच्छेदकत्वस्वीकारे पर्यवसितदोषमाह ॥ **तथा चेति** ॥ **शक्यतावच्छेदकानुप्रवेशादिति** ॥ शक्यतावच्छेदककोटिप्रविष्टत्वेन शक्यतावच्छेदकत्वावश्यकत्वादित्यर्थः ॥ **तवैव गौरवमिति** ॥ मीमांसकस्यैवानिवार्यगौरवदोष इत्यर्थः । तथाच न्यायनये अनेकव्यक्तिशक्तिकल्पनागौरवस्य मीमांसकमतेऽनेकव्यक्तिषु शक्यतावच्छेदकत्वकल्पनागौरवतुल्यतया एतन्मते गुरुधर्मस्य शक्यतावच्छेदकत्वकल्पनागौरवं परमतिरिच्यत इति भावः । केचित्तु तवैव गौरवमिति । नच गोत्वत्वावच्छिन्नविषयकशक्तिज्ञानस्य कारणत्वेऽपि स भ्रमः नतु तस्य विषयसाधकत्वमिति वाच्यम् । तथा सति प्रतीतेः

दिनकरीयम्.

बोधाहेतुत्वात् । तथाच गोत्वत्वे शक्यतावच्छेदकत्वावगाहितादृशप्रमाया विषयसाधकत्वाद्गोत्वत्वे शक्यतावच्छेदकत्वसिद्धिरिति भावः ॥ **तवैव गौरवमिति** ॥ न च गोत्वत्वावच्छिन्नविषयकशक्तिज्ञानस्य

रामरुद्रीयम्.

गोत्वप्रकारकशाब्दबोधापत्तिः । निर्धर्मितावच्छेदककशक्तिज्ञानस्य हेतुत्वाभ्युपगम इति भावः । अनुभवविरुद्धं चेदम् । न हि गोत्वत्वेन गोत्वावगाहिनो गोत्वं न गोपदशक्यमिति बाधबुद्धिकाले गोपदात् गोत्वविषयकशाब्दबोधः केनाप्यङ्गीक्रियत इत्याशयात् । यद्यपि स्वरूपतो गोत्वप्रकारकस्येयं गौरित्याकारकस्य बोधस्य नेयं गौरिति बाधबुद्धिप्रतिबध्यत्वात् शक्त्यंशे स्वरूपतो गोत्वप्रकारकमपि गोपदं न गोत्वशक्तमिति बाधबुद्धिप्रतिबध्यमेवेति गोत्वत्वेन गोत्वस्य प्रकारत्वं नावश्यकं । तथापि समवायेनैव जातेः स्वरूपतः प्रकारत्वमभ्युपगम्यते नान्यसम्बन्धेनेति नियमः । अन्यथा ज्ञानं गुण इतिवज्ज्ञानं घट इत्यादिव्यवहारापत्तेः । ज्ञाने विषयतया घटत्वसत्त्वाच्छक्त्यंशे तु गोत्वस्याधेयतासम्बन्धेनैव प्रकारता वाच्या । तथा च गोत्वत्वेनैव गोत्वभानमङ्गीकार्यमित्यत्रैव तात्पर्यम् ॥ **इत्थंच** ॥ विपरीतज्ञानमविरोधी यस्मिन्निति व्युत्पत्त्या ॥ **विपरीतज्ञानाप्रतिबध्यस्येति** ॥ विपरीतज्ञानाविरोधिन इत्यर्थः । प्रथमज्ञानस्याप्रतिबध्यत्वे निर्धर्मितावच्छेदककत्वं हेतुः । द्वितीयस्य तु तथात्वे प्रतिबध्याप्रसिद्धिरेव हेतुरिति विभावनीयम् ॥ **शक्यतावच्छेदकत्वसिद्धिरितीति** ॥ न च प्रतीतौ शक्यताया गोत्वत्वसामानाधिकरण्यमेव विषयो न तु तदवच्छिन्नत्वमपीति वाच्यम् । प्रतीतीनां विशिष्टवैशिष्ट्यावगाहित्वस्य औत्सर्गिकत्वेन तत्परित्यागस्यानौचित्याद्विशिष्टवैशिष्ट्यबोधे च विशेषणतावच्छेदकविशेष्यतावच्छेदकयोर्धर्मिपारतन्त्र्येण विशेषणविशेष्ययोरवच्छिन्नत्वादिसम्बन्धेन भानोपगमादिति भावः ॥ **न चेति** ॥ तटस्थानामियमाशङ्का न तु प्राभाकराणां तैर्भ्रमानङ्गीकारादिति ध्येयम् । ननूत्सर्गबाधकयोरेको बाधनियम एव । प्रकृते च अनन्तव्यक्तीनां शक्यतावच्छेदककोटिप्रवेशगौरवमेव विशेष्यावगाहितायां बाधकं जागर्त्येव । वस्तुतो विशिष्टवैशिष्ट्यबोधे संसर्गांश एव विशेषणतावच्छेदकविशेष्य-

## प्रभा.

कारणतावच्छेदकत्वांशेऽपि भ्रमत्वस्य वक्तुं शक्यतया कारणतावच्छेदकत्वादीनां कुत्रापि सिद्धिर्न स्यात् मास्तु गोत्वत्वादीनां अवच्छेदकत्वं तथापि गवेतरासमवेतत्वघटितगोत्वत्वादेः धर्मितावच्छेदकतायात्मकविषयतायाः शाब्दबोधकारणातायामवच्छेदककोटिप्रवेशप्रयुक्तगौरवं दुर्वारमेवेत्याहुः तदसत् अन्यथाख्यात्यनङ्गीकर्तृमीमांसकमते गोत्वं गोपदशक्यमित्याकारकज्ञानस्य भ्रमस्थानाभिषिक्ततया ज्ञानद्वयरूपत्वेन केवलगोपदशक्यमिति ज्ञानस्य निर्धर्मितावच्छेदकतया विपरीतज्ञानाविरोधित्वेन स्मृतिहेतुत्वासंभवात् । नैयायिकमतमाश्रित्य अन्यथाख्यात्यङ्गीकारेण गोपदानिरूपितगोत्वनिष्ठशक्तेर्निरवच्छिन्नत्वेतु तादृशशक्तिज्ञानस्य किंचिद्धर्मावच्छिन्नविशेष्यताकस्यैव विपरीतज्ञानविरोधित्वेन स्मारकतया गोत्वत्वावच्छिन्नविशेष्यताशालिशक्तिज्ञानादिव जातित्वावच्छिन्नविशेष्यताशालिशक्तिज्ञानादपि स्वरूपतो गोत्वादिप्रकारकस्मरणाद्यापत्तेः मन्मते तु शक्यतावच्छेदकावच्छिन्नविशेष्यताशालिशक्तिज्ञानस्यैव तत्प्रकारकस्मृतिहेतुतयोक्तदोषाप्रसक्तेः उक्तशक्तिज्ञानस्य भ्रमत्वेऽभ्रान्तस्य गामानयेति वाक्याच्छाब्दबोधानापत्तेः तस्य तादृशशक्तिज्ञानाभावेन गोत्वादिप्रकारकस्मरणासंभवात् । यच्चोक्तं मास्तु गोत्वत्वादीनामवच्छेदकत्वं तथापि गवेतरासमवेतत्वादिघटितगोत्वत्वादेर्धर्मितावच्छेदकतायात्मकविषयतायाः शाब्दबोधकारणतायां अवच्छेदककोटिप्रवेशप्रयुक्तगौरवं दुर्वारमेवेति तदपि न गोपदजन्यबोधविषयतात्वावच्छिन्नप्रकारतानिरूपितगोपदाद्गोत्वं बोद्धव्यमित्याकारकभगवदिच्छीयविशेष्यतारूपगोपदनिरूपितगोत्वनिष्ठशक्यतायां गोत्वत्वस्यावच्छेदकत्वेऽपि गोपदात् स्वरूपतो गोत्वप्रकारकबोधस्यैव जायमानतया गोत्वत्वस्य गोपदजन्यबोधविषयत्वाभावेन गोपदजन्यबोधविषयनिष्ठानिरुक्तेच्छीयविशेष्यतावच्छेदकत्वरूपगोपदशक्यतावच्छेदकत्वाभावात् शक्यतावच्छेदकाप्रसिद्ध्या गोत्वे शक्तिर्निरवच्छिन्नैवेति वदताम्मते शक्तिसंबन्धावच्छिन्ननिरवच्छिन्नगोत्वनिष्ठप्रकारतानिरूपितगोपदत्वावच्छिन्नविशेष्यताशालिज्ञानत्वेन गोपदं गौरित्याकारकशक्तिज्ञानस्य हेतुतया गोत्वत्वावच्छिन्नविषयतायाः शाब्दबोधकारणतावच्छेदककोटिप्रवेशाप्रसक्त्या तत्प्रयुक्तगौरवस्य सुतरामप्रसक्तत्वात् । तस्मात् विश्वनाथपञ्चाननस्य नायमभिप्राय इति दिक् । अत्र तत्पदजन्यबोधविषयतात्वावच्छिन्नप्रकारतानिरूपितेश्वरेच्छीयविशेष्यत्वस्य तत्पदशक्यत्वरूपत्वमिव तादृशविशेष्यतावच्छेदकत्वं तत्पदशक्यतावच्छेदकत्वमित्येव तान्त्रिकानुमतं नतु तत्पदजन्यबोधविषयव्यक्तिनिष्ठतादृशविशेष्यतावच्छेदकत्वं तादृशबोधविषयव्यक्तिनिष्ठत्वनिवेशे गौरवात् प्रयोजनाभावाच्च । नचैवं सति गोत्वत्वस्यापि तादृशविशेष्यतावच्छेदकत्वेन गोपदशक्यतावच्छेदकत्वापत्त्या गौरवापत्तेः तत्प्रकारकशाब्दबोधापत्तेश्च शक्यतावच्छेदककोटौ तादृशविशेषणमावश्यकमिति वाच्यम् । तादृशापत्तिवारणाय शक्यतावच्छेदककोटौ तादृशविशेषणदानापेक्षया व्यक्त्यावेव गोपदजन्यबोधविषयतात्वावच्छिन्नप्रकारतानिरूपितगोपदाद्गोरूपार्थो बोद्धव्य इत्याकारकेच्छाविशेष्यत्वरूपगोपदशक्यत्वं गोत्व एव तादृशविशेष्यतावच्छेदकत्वरूपगोपदशक्यतावच्छेदकत्वं चाङ्गीकृत्यैवोक्तापत्तिद्वयवारणस्यैवोचितत्वात् । नचैवं सति तत्पदात् बोधविषयतावच्छेदकधर्मावच्छिन्नो बोद्धव्य इत्याकारकेश्वरेच्छीयतत्पदजन्यबोधविषयतात्वावच्छिन्नप्रकारतानिरूपितविशेष्यतावच्छेदकतावच्छेदकत्वरूपतत्पदशक्यतावच्छेदकतावच्छेदकत्वस्य बुद्धिविषयतावच्छेदकत्वे सत्त्वात् पशुपदशक्यतावच्छेदकतावच्छेदकलोमत्वादिना लोमादिप्रकारकशाब्दबोधवत् तत्पदात् बुद्धिविषयतावच्छेदकत्वेनैव घटत्वादिप्रकारकशाब्दबोधापत्तिरिति वाच्यम् । घटादिपदात्स्वरूपतो घटत्वादिप्रकारकशाब्दस्यैव सर्वानुभवसिद्धत्वात् बुद्धिविषयतावच्छेदकत्वप्रकारेण घटत्वादिप्रकारकशाब्दबोधस्यैवानुभवविरुद्धतया तादृशबोधवारणाय तत्पदजन्यबोधविषयत्वसमानाधिकरणत्वोपलक्षिततादृशेच्छीयविशेष्यतावच्छेदकतावच्छेदकत्वरूपतत्पदशक्यतावच्छेदकतावच्छेदकत्वमङ्गीकृत्य बोधविषयतावच्छेदकत्वस्य तादृशेच्छीयविशेष्यतावच्छेदकतावच्छेदकत्वेऽपि तत्पदजन्यबोधविषयत्वाभावात् तदुपलक्षितत्वाभावेन तस्य तत्पदशक्यतावच्छेदकतावच्छेदकत्वनिराकरणेन तदादिपदात् बुद्धिविषयतावच्छेदकत्वावगाहिशाब्दबोधस्य सर्वैरपि वारणीयतया प्रकृते गवादिपदात्स्वरूपतो गोत्वप्रकारकबोधस्यैव सर्वानुभव-

73

तत्तद्व्यक्तिबोधानुपपत्त्या कल्प्यमाना शक्तिर्जात्याकृतिविशिष्टव्यक्तावेव विश्राम्यतीति ॥

**प्रभा.**

सिद्धत्वेन सेश्वरमीमांसकमते गोपदात् गोत्वं बोद्धव्यमित्याकारकेश्वरेच्छारूपशक्तिस्वीकारे गवेतरासमवेतत्वघटितगोत्वत्वस्य तादृशेच्छीयविशेष्यतावच्छेदकत्वरूपशक्यतावच्छेदकत्वात् गौरवापत्त्या तत्प्रकारकशाब्दबोधापत्त्या च तद्वारणाय गोपदजन्यबोधविषयत्वसमानाधिकरणत्वोपलक्षिततादृशेच्छीयविशेष्यतावच्छेदकत्वरूपगुरुभूततत्पदशक्यतावच्छेदकत्वमङ्गीकृत्य गोत्वत्वस्य गोपदशक्यतावच्छेदकत्वनिराकरणे नोक्तदोषद्वयनिराकरणं प्रक्षाळनाद्धीति न्यायकबळितत्वेनानुचितं । निरवच्छिन्नत्वसावच्छिन्नत्वाभ्यां शक्तेर्द्वैविध्यकल्पनं क्वचित् जातिशक्तिकल्पनं क्वचिद्व्यक्तिशक्तिकल्पनमित्येव दोषः । निरीश्वरमीमांसकमते अतिरिक्तपदार्थरूपशक्तिकल्पनागौरवमेव दोषः । गोपदात् गोरूपार्थो बोद्धव्य इत्याकारकेश्वरेच्छारूपशक्तिवादिनैयायिकप्रभृतिमते तत्पदजन्यबोधविषयत्वाविशेषितकेवलतादृशेच्छीयविशेष्यतावच्छेदकत्वरूपशक्यतावच्छेदकत्वस्वीकारः शक्तेर्द्वैविध्याकल्पनं सर्वपदानां व्यक्तावेव शक्तिकल्पनं अतिरिक्तपदार्थरूपशक्त्यस्वीकारश्चेत्येव गुण इति प्रतिभाति । मीमांसकमतनिराकरणपूर्वकं स्वमतमुपसंहरति ॥ **तस्मादिति** ॥ उक्तदोषेण जातिशक्तिस्वीकारासंभवादित्यर्थः ॥ **तत्तज्जात्याकृतिविशिष्टेति** ॥ केवलव्यक्तौ शक्तिस्वीकार इत्यादिः । तत्तज्जातितत्तदाकृतिविशिष्टेत्यर्थः । गोत्वघटत्वादिजातिसास्नादिमत्त्वकम्बुग्रीवादिमत्त्वादिरूपाकृतिविशिष्टेति यावत् ॥ **तत्तद्व्यक्तिबोधानुपपत्त्येति** ॥ गोघटादिव्यक्तिबोधानुपपत्त्येत्यर्थः ॥ **कल्प्यमानेति** ॥ तादृशबोधनिर्वाहायेत्यादिः । सर्वानुमतेत्यर्थः ॥ **शक्तिरिति** ॥ गोपदात् सास्नादिमत्त्वविशिष्टगौर्बोद्धव्या घटादिपदात् कम्बुग्रीवादिमत्त्वविशिष्टघटादिर्बोद्धव्य इत्याकारकेच्छारूपशक्तिरित्यर्थः ॥ **व्यक्तावेवेति** ॥ तत्तज्जात्याकृतिविशिष्टतत्तद्व्यक्तावेवेत्यर्थः ॥ **विश्राम्यतीति** ॥ स्थास्यतीत्यर्थः । अत्र सास्नादिमत्त्वमविषयीकृत्य गवा

**दिनकरीयम्.**

कारणत्वेऽपि स भ्रमो न तु तस्य विषयसाधकत्वमिति वाच्यम् । तथा सति प्रतीतेः कारणतावच्छेदकत्वांशेऽपि भ्रमत्वस्य वक्तुं शक्यतया कारणतावच्छेदकत्वादीनां कुत्रापि सिद्धिर्न स्यात् । अस्तु वा गोत्वत्वादीनामनवच्छेदकत्वं तथापि गवेतरासमवेतत्वादिघटितगोत्वत्वादेर्धर्मितावच्छेदकतायात्मकगोविषयतायाः शाब्दबोधकारणतावच्छेदककोटिप्रवेशप्रयुक्तं गौरवं दुर्वारमेवेति । स्वमतमुपसंहरति ॥ **तस्मादिति** ॥ **जात्याकृतिविशिष्टव्यक्तावेवेति** ॥ अवयवसंस्थानविशेषरूपायाः आकृतेः शक्यत्वेऽपि न जातिवत्तदवच्छेदकत्वम् । सामानाधिकरण्यसम्बन्धस्य शक्यतावच्छेदकतावच्छेदकत्वकल्पने गौरवात् । अत्र च परस्परपरित्यागेन परस्परस्य बोधाभावात् त्रिष्वेकैव शक्तिः । एतद्बोधनायैव सूत्रे जात्या

**रामरुद्रीयम्.**

तावच्छेदकावच्छिन्नप्रतियोगिताकत्वानुयोगिताकत्वयोर्बाध उपेयते न तूक्तरीत्या प्रकारत्वं प्रतीतेर्भिन्नाकारकत्वापत्तेरित्यस्वरसादाह ॥ **अस्तु वेति** ॥ **गोविषयताया इति** ॥ गोत्वत्वस्य गोघटितमूर्तिकत्वादिति भावः । मूले जात्याकृतिविशिष्टव्यक्तौ शक्तिप्रतिपादनाज्जात्याकृत्योर्द्वयोरेव शक्यतावच्छेदकत्वमित्यापतितम् । तन्न सङ्गच्छते । लाघवाज्जातिमात्रस्यैव शक्यतावच्छेदकत्वौचित्यात् । न च त्रिष्वप्येकैव शक्तिरिति वक्ष्यमाणतया गोत्वस्य शक्यतान्यूनवृत्तितया कथं तदवच्छेदकतासम्भव इति वाच्यम् । व्यक्तिवृत्तित्वविशिष्टशक्यताव्यापकत्वेन शुद्धशक्यतात्वावच्छिन्नानतिप्रसक्तत्वेन च विशिष्टशक्यतायामवच्छेदकत्वसम्भवात् । अन्यथोभयोः शक्यतावच्छेदकत्वेऽपि तद्दोषतादवस्थ्यात् । एवं त्रयाणामेकशक्तिमत्त्वेऽपि कस्यचिद्विशेषणतया कस्यचिद्विशेष्यतया भानमपि मतद्वयेऽपि व्युत्पत्तिवैचित्र्येणैवोपपादनीयमिति भावः ॥ **अवयवसंस्थानं** अवयवसंयोगः ॥ **सामानाधिकरण्येति** ॥ शक्ये गवि सामानाधिकरण्यसम्बन्धेनैवावयवसंयोगसत्त्वादिति भावः । इदमुपलक्षणम् । शुद्धगोत्वजातेरवयवसंयोगापेक्षया शरीरलाघवं नानासंयोगव्यक्तीनामवच्छेदकताकल्पनमपेक्ष्य एकस्या जातेस्तत्कल्पनेऽपि लाघवमप्यनुसन्धेयम् ॥ **एकैवेति** ॥ नानाशक्तिकनानार्थहर्यादिपदादेकैकस्यार्थस्य शाब्दबोधादिति भावः ॥ **एकवचनमि-**

## प्रभा.

दिपदात्केवलगोत्वादिप्रकारकशाब्दबोधस्याननुभवात् त्रिष्वेकैव शक्तिः एतल्लाभायैव जात्याकृतिव्यक्तयः पदार्थ इत्येकवचनम्। नच गवादिपदात् सास्नादिमत्त्वाद्यविषयकशाब्दबोधस्याननुभवेऽपि पदानां सास्नादिमत्त्वादौ पृथगेव शक्तिर्वाच्या सामानाधिकरण्यरूपपरम्परासंबन्धेनाकृतिविशेषस्य शक्यतावच्छेदकतावच्छेदकत्वकल्पनापेक्षया लाघवादिति वाच्यम्। परम्परासंबन्धस्य शक्यतावच्छेदकत्वकल्पनापेक्षया अनतिरिक्तशक्तिकल्पनायाः गवादिपदानां नानार्थकत्वकल्पनासम्पादकत्वेनातिरिक्तशक्तिकल्पनाया एव गुरुत्वादिति प्राञ्चः। नव्यास्तु गवादिपदादाकृतिविशेषानुपस्थितावपि केवलगोत्वादिप्रकारेण शाब्दबोधस्यानुभवसिद्धत-

## दिनकरीयम्.

कृतिव्यक्तयः पदार्थ इत्येकवचनमिति सम्प्रदायः। नव्यास्तु संस्थानानुपस्थितावपि गोत्वादिना गवाद्यन्वयबोधाज्जातिविशिष्टव्यक्तावेव शक्तिः। संस्थाने च पृथगेव शक्तिः। व्युत्पत्तिवैचित्र्याच्च संस्थानव्यक्त्योरेकपदार्थयोरपि परस्परमन्वयबोधः। सौत्रं पदार्थ इत्येकवचनं तु जातिव्यक्त्योरेकशक्तिलाभायैवेत्याहुः। तच्छब्दस्य वक्तृबुद्धिविषयतावच्छेदकीभूतघटत्वाद्यवच्छिन्ने शक्तिः। अथ घटत्वादीनां शक्यतावच्छेदकत्वे शक्यतावच्छेदकभेदाच्छक्तिभेदापत्तिः। न च शक्यतावच्छेदकभेदेऽपि शक्यतावच्छेदकतावच्छेदकस्य बुद्धिविषयतावच्छेदकत्वस्य ऐक्यान्न शक्तिभेद इति वाच्यम्। तस्य शक्यतावच्छेदकतावच्छेदकत्वे शाब्दबोधे तद्भानापत्तेरिति चेन्न। बुद्धिविषयतावच्छेदकत्वस्योपलक्षणतया शक्यतावच्छेदकतावच्छेदकत्वात्! उपलक्षणस्य च शाब्दबोधे भानानङ्गीकारात्। घटत्वादेश्च शक्यतावच्छेदकत्वं विशेषणत्वेनैव। अतस्तस्य शाब्दबोधे भानम्। विशेषणत्वं च तत्तत्पदजन्यबोधविषयत्वेन शक्तिविषयत्वम्। उपलक्षणत्वं च तत्तत्पदजन्यबोधविषयत्वेन शक्त्यविषयत्वमिति। एवमिदमदादिष्वपि। तत्रापीदमेतदोः प्र-

## रामरुद्रीयम्.

**ति** ॥ एकवचनार्थैकत्वस्य पदार्थत्वे पदशक्तिरूपेऽन्वय एव सूत्रकर्तुः तात्पर्यादिति भावः। जातिविशिष्टव्यक्तावेवेत्यनन्तरं एकेति पूरणीयम्। अन्यथा आकृतावपि पृथक्शक्तिस्वीकारादेवकारासङ्गतिरिति ध्येयम्। नन्वेकपदार्थयोः परस्परं नान्वयबोधः। अन्यथा हरिपदार्थयोरश्वसूर्ययोरपि परस्परमन्वयप्रसङ्गात्। नचाभेदान्वये योग्यतैव नास्ति भेदान्वये चाकाङ्क्षाविरहः नामार्थयोर्भेदेनान्वयस्याव्युत्पन्नत्वादिति वाच्यम्। तथा सत्याकृतेरपि व्यक्त्याश्रयतयान्वयानुपपत्तेः। तस्मान्नामद्वयोपस्थापितार्थयोरेव भेदान्वये निराकाङ्क्षत्वस्योपगन्तव्यत्वादित्यत आह ॥ **व्युत्पत्तीति** ॥ तथा चैकपदार्थयोः परस्परमन्वयेऽन्यत्राकाङ्क्षाविरहेऽपि एवकारार्थानामिवाकृतिव्यक्त्योरपि अन्वये आकाङ्क्षा कल्प्यते अनुभवानुरोधादिति भावः। नन्वेवमपि सूत्रे एकवचनानुपपत्तिः त्रिषु शक्तेरैक्याभावादित्यत आह ॥ **सौत्रमिति** ॥ आहुरित्यस्वरसोद्भावनम्। तद्बीजन्तु पदार्थतावच्छेदके शक्तिसत्त्वे एकत्वस्य बाधितत्वेनैकवचनार्थान्वयानुपपत्तिरेवेति ध्येयम्। प्रसङ्गात्तदादिशब्दानां शक्यतावच्छेदकानाह ॥ **तच्छब्दस्येति** ॥ वक्ता तच्छब्दोच्चारकः तदीयज्ञानविषयतायामवच्छेदकं घटत्वादि तदवच्छिन्ने तदुच्चरिततत्पदस्य शक्तिरित्यर्थः। यद्यपि लाघवाद्बुद्धिस्थे इत्येव वक्तुमुचितं तथापि सोऽस्तीत्यादौ अनुभवसिद्धस्य घटत्वेन घटबोधस्योपपत्तये गौरवमप्यङ्गीकृतमिति ध्येयम् ॥ **शक्तिभेदापत्तिरिति** ॥ शक्तिभेदे तदादीनामपि नानार्थत्वापत्तिरिति भावः। नचेष्टापत्तिः तथा सति सकृदुच्चरित इति न्यायेन तावित्यादावेकदा घटपटयोर्बोधानुपपत्तेः। नानार्थप्रकरणे तदादीनां कोशे अनुक्तेश्चेति भावः ॥ **तद्भानापत्तेरिति** ॥ पश्वादिपदजन्यशाब्दबोधे लोमलाङ्गूलत्वादेस्तथाविधस्य भानदर्शनादिति भावः। प्रकृते च सोऽस्तीत्यादौ घटोऽस्तीत्येव बोधोऽनुभवसिद्धः न तु बुद्धिविषयतावच्छेदकावच्छिन्नोऽस्तीत्याकारक इति नेष्टापत्तिसम्भव इति मन्तव्यम् ॥ **उपलक्षणतयेति** ॥ तत्पदजन्यशाब्दबोधविषयत्वेन भगवदिच्छायामविषयत्वे सति तत्पदशक्यतावच्छेदकत्वानुगमकत्वमुपलक्षणतया तत्पदशक्यतावच्छेदकत्वम्। वस्तुतस्तु शाब्दबोधविषयतावच्छेदका ये धर्मास्तत्तदवच्छिन्नाः तत्पदजन्यबोधविषया भवन्त्वित्याकारकभगवदिच्छायां बोधविषयतावच्छेदकत्वस्य तत्प-

### प्रभा.

या त्रिष्वेकशक्तिकल्पनाया असंभवेनानायत्या आकृतिविशेषे शक्तिरवश्यं वाच्या । नचैवं सति हरिशब्दवाच्ययमानिलादेरिव गवादिशब्दवाच्याकृतिविशेषगवादेरपि परस्परान्वयबोधापत्तिरिति वाच्यम् सति तात्पर्ये एकपदशक्ययोरपि परस्परान्वयबोधस्य सर्वसम्मतत्वात् । अन्यथा फलव्यापारयोः पृथक् धातुनिरूपितशक्त्यङ्गीकर्तृसिद्धान्तिपक्षे तयोरेकपदशक्यत्वेन परस्परान्वयबोधानुपपत्तेः । तस्मादाकृतौ भिन्नैव शक्तिरित्याहुः । अत्रानुभवभेदात्पक्षद्वयस्य युक्तत्वेऽपि केवलव्यक्तावेव शक्तेस्सयुक्तिकं वक्ष्यमाणतया विशिष्टशक्तिकल्पने प्रमाणाभाव इत्यस्वरसः कल्पद्वयेऽपि बोद्धव्य इति दिक् । वैयाकरणप्रभृतयः

### दिनकरीयम्.

त्यक्षविषयेऽदसः परोक्षबुद्धिविषये शक्तिः । अत एव तेषां विभिन्नार्थकत्वम् । एवमेतत्तदोरपि । इदमः प्रत्यक्षगतं समीपतरवर्ति चैतदो रूपं अदसस्तु विप्रकृष्टं तदिति परोक्षे च विजानीयादित्यपि वदन्ति । किम्पदस्य जिज्ञासाविषयत्वविशिष्टे शक्तिः सर्वपदस्य व्यापकत्वे । सर्वे घटा रूपवन्त इत्यादौ घटत्वव्यापकं रूपवत्त्वमिति बोधात् । त्वम्पदस्य तत्कालीनसम्बोध्यचैत्रत्वादि शक्यतावच्छेदकम् । एवमहम्पदस्य तत्कालीनस्वतन्त्रोच्चारयितृचैत्रत्वादि । स्वातन्त्र्योक्त्या च वाच्यस्त्वया मद्वचनात् स

### रामरुद्रीयम्.

दजन्यबोधविषयत्वेनाविषयत्वं तस्योपलक्षणविधया शक्यतावच्छेदकतावच्छेदकत्वं यद्यपि बोधविषयतावच्छेदकत्वं विषयतारूपं विषयभेदेन भिन्नमेवेति तथापि बोधविषयतावच्छेदकतात्वरूपानुगतैकधर्मावच्छिन्नत्वादेकत्वव्यपदेशः । एवमेवाविषयत्वस्थाने विषयत्वं निवेश्य विशेषणविधया शक्यतावच्छेदकतावच्छेदकत्वं निर्वाच्यम् । तच्च रोमलाङ्गूलत्वादिकमेवेति विभावनीयम् ॥ **प्रत्यक्षबुद्धिविषय इति** ॥ तादृशबुद्धिविषयतावच्छेदकावच्छिन्न इत्यर्थः । बुद्धिश्च वक्तुरेव ग्राह्या । इत्थंच अयमित्यादिपदाद्घटत्वादिना घटादिबोधनिर्वाहः । अयं घट इत्यादौ तु एतद्देशतत्कालवृत्तित्वादिकमेव वक्तुः प्रत्यक्षविषयतावच्छेदकमतो नाभेदान्वयानुपपत्तिः ॥ **अत एवेति** ॥ यतः प्रत्यक्षविषये इदमेतदोः परोक्षबुद्धिविषये अदसः शक्तिस्तत एवेत्यर्थः ॥ **तेषामिदमेतददसाम्** ॥ **भिन्नार्थकत्वमिति** ॥ इदमेतदोरेकोऽर्थः । तदन्यस्त्वदसोऽर्थः । अदसो योऽर्थः तदन्यस्तु इदमेतदोरिति रीत्या भिन्नार्थकत्वमित्यर्थः ॥ **एवमिति** ॥ भिन्नार्थकत्वमित्यर्थः ॥ **एतत्तदोरपीति** ॥ एतदः प्रत्यक्षविषयार्थकत्वं तदन्यस्तु सामान्यतो बुद्धिविषयार्थकत्वमिति भावः । केषाञ्चिन्मतमाह ॥ **इदम इति** ॥ **प्रत्यक्षगतं** प्रत्यक्षविषयीभूतमित्यर्थः । शक्यमिति शेषः । एवमुत्तरत्रापि ॥ **समीपतरवृत्ति चेति** ॥ चकारेण प्रत्यक्षगतमित्यस्य अनुकर्षः । रूपमित्यस्य स्वरूपमित्यर्थः ॥ **विप्रकृष्टं तदिति** ॥ प्रत्यक्षगतमित्यर्थः ॥ **परोक्षे चेति** ॥ सप्तम्या वाचकत्वमर्थः । तथा चादसः परोक्षवाचकत्वं विजानीयादित्यर्थः पर्यवसितः ॥ **जिज्ञासाविषयत्वविशिष्ट इति** ॥ ज्ञातुमिच्छाविषयः किंशब्दार्थ इत्यर्थः । इच्छा उच्चारयितुरेव किंशब्देन प्रत्याय्यते तथा च को घट इत्यादौ घटो मदीयजिज्ञासाविषय इति शाब्दबोध इति भावः ॥ **व्यापकत्व इति** ॥ उद्देश्यतावच्छेदकनिरूपिते विधेयतावच्छेदकनिष्ठ इति शेषः । सर्वे घटा इत्यादौ घटनिष्ठाभावप्रतियोगितानवच्छेदकरूपवत्त्वमेव रूपे घटत्वव्यापकत्वमिति बोध्यम् । त्वम्पदस्येत्यपपाठः । किंतु युष्मत्पदस्येत्येव पाठः । अन्यथा युवामित्यादौ शक्त्यभावापत्तेः । त्वमित्यस्य स्वमते पदत्वाभावाच्चेति ध्येयम् ॥ **सम्बोध्यचैत्रत्वादिकं** सम्बोध्यत्वसमानाधिकरणं चैत्रत्वादिकमित्यर्थः । कर्मधारयोत्तरभावप्रत्ययस्य एकपदार्थतावच्छेदकसमानाधिकरणापरपदार्थतावच्छेदकबोधकत्वात्तत्कालीनसम्बोध्यत्वंच तत्कालोच्चरितसम्बोधनप्रथमान्तचैत्रादिपदाव्यवहितोत्तरवाक्यजन्यशाब्दबोधाश्रयत्वेन वक्तुरिच्छाविषयत्वं चैव त्वया भुज्यतामित्यादौ चैत्रादिपदोत्तरप्रथमया चैत्रादिविशेषणत्वेन एतादृशमेव सम्बोध्यत्वं प्रतिपाद्यते तत्समानाधिकरणत्वोपलक्षितचैत्रत्वादिकमेव युष्मच्छब्दशक्यतावच्छेदकमिति भावः ॥ **एवमस्मत्पदस्येति** ॥ प्रागुक्तेन शक्यतावच्छेदकमित्यनेनान्वेति ॥ **स्वतन्त्रेति** ॥ स्वतन्त्रोच्चारणकर्तृत्वसमानाधिकरणचैत्रत्वादिकमित्यर्थः ।

**शक्तं पदम्। तच्चतुर्विधम्। क्वचिद्यौगिकं क्वचिद्रूढं क्वचिद्योगरूढं क्वचिद्यौगिकरूढम्। तथाहि। यत्रावयवार्थ एव बुध्यते तद्यौगिकम्। यथा पाचकादिपदम्। यत्रावयवशक्ति-**

### प्रभा.

पदानामिव वाक्यस्यापि शक्तिमङ्गीकुर्वन्ति तन्मतं निराकर्तुमाह ॥ **शक्तं पदमिति** ॥ पदमेव शक्तमित्यर्थः। एवकारेण वाक्यशक्तत्वव्यवच्छेदः। युक्तिं तु गभीरायां नद्यां घोष इत्यादिग्रन्थेन स्वयमेव वक्ष्यति ॥ **क्वचिदिति** ॥ किञ्चित्पदमित्यर्थः। एवमग्रेऽपि। यौगिकादिपदानां क्रमेण लक्षणमाह ॥ **यत्रेति** ॥ यादृशपद इत्यर्थः। घटकत्वं सप्तम्यर्थः तस्य त्ववयवे अन्वयः। तथा च यादृशपदघटकावयवप्रतिपाद्यार्थ एवेत्यर्थः ॥ **बुध्यत इति** ॥ प्रमितिविषयतावान् भवतीत्यर्थः। इदं

### दिनकरीयम्.

राजेत्यादौ न मत्पदात् कवेर्बोध इत्यास्तां विस्तरः ॥ इति शक्तिग्रन्थः ॥ शक्तं पदं विभजते ॥ **शक्तं पदमिति** ॥ **क्वचिदिति** ॥ किञ्चिदित्यर्थः। एवमग्रेऽपि। मण्डलादीत्यत्र बहुपुस्तकेषु

### रामरुद्रीयम्.

उच्चारणं चैतादृशार्थवाचकत्वेनाभिमतस्यास्मच्छब्दस्यैवेति ध्येयम्। उच्चारणे स्वतन्त्रत्वं चान्योच्चारणानधीनत्वं। अन्योच्चारणाननुवादकत्वमिति यावत् ॥ **न कवेर्बोध इति** ॥ पद्यस्थास्मच्छब्दस्य उच्चारणकर्तृत्वेऽपि कवे परकीयोच्चारणानुवादकत्वात्तदुच्चरितास्मच्छब्दान्न कवेर्बोध इति भावः। एवंच युष्मदस्मच्छब्दशक्यतावच्छेदकघटकतत्तत्कालोच्चरितत्वयत्रोच्चारणमपि स्वतन्त्रमेव ग्राह्यम्। तेन गर्जं भजं क्षणं मूढेत्यादौ सम्बोधनप्रथमान्तमूढपदोत्तर-मयाहवं निहतोऽस्त्वेवेतिवाक्यजन्यबोधाश्रयत्वेनेच्छाविषयत्वेऽपि सुरथस्य न मेधामहर्षिणो-क्तायुष्मत्पदाच्छाब्दबोध इति मन्तव्यम्॥ **पदं विभजत इति** ॥ यद्यपि शक्तं पदमिति न पदविभागरूपं किंतु पदलक्षणमेव। तथाच विभजत शक्तमित्यनुपपन्नमेव। तथापि इतिशब्दस्याद्यार्थकतया पदविभागस्य पदसामान्यलक्षणाभिधानानन्तरत्वनियमेन च नानुपपत्तिरिति ध्येयम्। नचैवमपि केवलयौगिकं पाचकादिपदमेव। तच्च न किञ्चिदर्थे शक्तम्। तस्य वाक्यत्वादिति यौगिकस्य सामान्यलक्षणानाक्रान्ततया तद्विभागोऽनुपपन्न एवेति वाच्यं पचधातूत्तराकप्रत्ययस्यैव पाचकपदरूपतया तस्य कर्तरि शक्ततया पदत्वेन तद्विभागे बाधकाभावादिति भावः। एकस्यैव पदस्य एकस्मिन्नर्थे यौगिकत्वं अन्यस्मिन्नर्थे रूढत्वं न सम्भवति। उच्चारणभेदेन पदभेदादिति सकृदुच्चरितन्यायाच्चेत्याशयेन क्वचिदित्यस्य किञ्चिदर्थकतामाह ॥ **क्वचिदितीति** ॥ यत्तु ननु मूले मण्डपादिशब्दानां रूढमध्ये परिगणनमनुपपन्नम्। मण्डं पिबति रक्षतीति वा मण्डपमिति व्युत्पत्त्या तेषां मण्डपानकर्तृत्वाद्यर्थकत्वस्य सम्भवेन यौगिकरूढमध्य एव अन्तर्भावः स्यादित्याह मण्डलादीत्यत्रेतीत्यवतार्य तथाच गृहविशेषवाचकं मण्डलपदमेव नतु मण्डपपदम् तच्च न क्वापि यौगिकमिति न तस्य रूढमध्ये परिगणनानुपपत्तिरिति भाव इति व्याचक्रुः। तन्न चारुतरं यौगिकरूढस्यापि यौगिकत्वरूढत्वयोरर्थविशेषे सम्भवेन मण्डपपदस्य गृहविशेषे रूढतया रूढमध्ये परिगणनसम्भवात्। अत एव मूले यत्रावयवार्थ एव बुध्यते तद्यौगिकमित्येव यौगिकलक्षणमुक्तम्। यत्तावयवशक्तिनिरपेक्षया समुदायशक्त्या गृह्यते तद्रूढमित्येव रूढलक्षणमुक्तम्। तत्र यौगिकलक्षणे योगरूढे यौगिकत्ववारणाय एवकारः। न चैवमपि यौगिकरूढस्योद्भिदादिपदस्योद्भेदनकर्त्राद्यर्थे यौगिकत्वं स्यादिति वाच्यम् इष्टापत्तेः। रूढलक्षणेऽपि योगरूढे रूढतावारणार्थेव निरपेक्षयेत्यन्तम्। यौगिकरूढस्य उद्भिच्छब्दस्यापि यागविशेषरूपार्थे रूढत्वमिष्टमेव। गृह्यत इत्यस्यार्थो बुध्यत इत्यर्थः। एवञ्च मण्डपपदस्य गृहरूपार्थे रूढत्वसम्भवेन न रूढमध्ये परिगणनानुपपत्तिरिति मन्तव्यम्। नच यत्रेत्यस्य यादृशानुपूर्व्यवच्छिन्नेत्यर्थकतया यौगिकरूढस्थले एकानुपूर्व्यवच्छिन्नस्यैव स्थलविशेषे अवयवार्थमात्रस्य कदाचित्समुदायार्थमात्रस्य बोधकत्वेन न तत्र रूढत्वानुपपत्तिरिति वाच्यम्। प्रयासगौरवात्। यौगिकरूढस्य यौगिकत्वे रूढत्वे च इष्टापत्तौ क्षतिविरहात्। यौगिकरूढभिन्नयोरपि केवलयौगिककेवलरूढयोरपि सत्त्वेन विभागव्याघाताभावात्। एकादशेऽहनि पित्रा क्वचित् पाचकादिपदस्य सङ्केतितत्वसम्भवात् तेषामपि यौ-

प्रभा.

च प्रमाणोपम्यासाय न लक्षणघटकता व्यर्थत्वात्। एवञ्च निरुक्तपदघटितशक्ततावच्छेदकत्वशून्यसमुदायत्वं यौगिकत्वमिति फलितम्। अपभ्रंशशब्दसमुदायनिष्ठसमुदायत्वस्यापि शक्ततावच्छेदकत्वशून्यतया तत्रातिव्याप्तिवारणाय पदघटितत्वं समुदायत्वविशेषणं। अपभ्रंशशब्दानां ईश्वरेच्छारूपशक्तिमत्त्वात्मकपदत्वभावात् नातिव्याप्तिः। पङ्कजपदत्वरूपसमुदायत्वस्यापि पदघटितत्वात् तत्रातिव्याप्तिवारणाय समुदायत्वे शक्ततावच्छेदकत्वशून्यत्वनिवेशः। नचेदं लक्षणं वाक्यमात्रेऽतिव्याप्तमिति वाच्यम्। कृत्तद्धितसमासभिन्नवाक्यघटकपदानां पृथक् विभक्तिमत्त्वेन विशिष्टवाक्योच्चारणं विनापि बोधनसमर्थतया अवयवत्वानङ्गीकारात्र तादृशवाक्यस्य यौगिकत्वापत्तिः कृत्तद्धितादिवाक्यानां पाचकादिपदवत् यौगिकत्वमिष्टमेवेत्याशयात्। अथवा वाक्यावृत्तित्वेनापि समुदायत्वस्यं विशेषणीयत्वात्। नचैवं सति पाचकादिपदस्य पदद्वयघटितसमुदायत्वरूपवाक्यत्वसत्त्वात् उक्तलक्षणमसंभवग्रस्तमिति वाच्यम्। प्रकृते शाब्दबोधनिष्ठकार्यतानिरूपितपदान्तरविषयकज्ञानासहकृतज्ञाननिष्ठकारणतानिरूपितविषयतासंबन्धावच्छिन्नावच्छेदकताश्रयपदद्वयघटितसमुदायत्वरूपवाक्यत्वस्यैवाभिप्रेततया पाचकादिपदघटकपचधातुकृत्प्रत्ययाभ्यां पदार्थोपस्थितावपि समभिव्याहृतपदान्तरमविषयीकृत्य शाब्दबोधाजननात् पाचकादिपदे निरुक्तपदद्वयघटितसमुदायत्वरूपवाक्यत्वाभावेनासंभवाप्रसक्तेः। अन्ये तु यत्रावयवार्थ एव बुध्यत इति यादृशपदघटकावयवार्थो बोधविषय इत्यर्थः एवकारेण अवयवार्थातिरिक्तस्य शाब्दबोधविषयत्वव्यवच्छेदः तथाचावयवार्थविषयकशाब्दनिष्ठकार्यतानिरूपितज्ञाननिष्ठकारणतानिरूपितविषयतासंबन्धावच्छिन्नावच्छेदकताश्रयपदघटितं अवयवार्थतावच्छेदकान्यधर्मावच्छिन्नविषयताशालिशाब्दनिष्ठकार्यतानिरूपितज्ञाननिष्ठकारणतानिरूपितविषयतासंबन्धावच्छिन्नावच्छेदकतानवच्छेदकं च यत्समुदायत्वं तद्रूपत्वं यौगिकत्वमिति फलितम्। पाचकपदत्वावच्छिन्नविषयकज्ञानस्य साकाङ्क्षपदान्तरज्ञानसहकृतस्य अवयवार्थतावच्छेदकावच्छिन्नविषयताशालिशाब्दबोधकारणत्वेऽपि तदघटितधर्मावच्छिन्नविषयताशालिशाब्दबोधनिष्ठकार्यतानिरूपितपदार्थस्मृतिरूपव्यापारसंबन्धावच्छिन्नकारणत्वाभावात् तादृशकारणतानिरूपितविषयतासंबन्धावच्छिन्नावच्छेदकतावच्छेदकत्वशून्यत्वस्य पाचकपदत्वरूपसमुदायत्वे अक्षतत्वात् लक्षणसमन्वयः। अपभ्रंशसमुदाये अतिव्याप्तिवारणाय समुदायत्वे तादृशपदघटितत्वरूपप्रथमदलनिवेशः। योगरूढपङ्कजादिपदे अतिव्याप्तिवारणाय तादृशावच्छेदकतानवच्छेदकत्वनिवेशः। पङ्कजपदत्वावच्छिन्नविषयकज्ञानस्य साकाङ्क्षपदज्ञानसहकृतस्य पद्मत्वावच्छिन्नविषयताशालिशाब्दनिष्ठकार्यतानिरूपितस्मृतिरूपव्यापारसंबन्धावच्छिन्नकारणताश्रयत्वेन तादृशकारणतानिरूपितविषयतासंबन्धावच्छिन्नपङ्कजपदनिष्ठावच्छेदकतावच्छेदकत्वस्य वा पङ्कजपदत्वरूपसमुदायत्वे सत्त्वेनातिव्याप्त्यभावात्। घटमानयेति वाक्ये घटकर्मकानयनानुकूलकृतिविशिष्टचैत्रत्वावच्छिन्नविषयकशाब्दनिष्ठकार्यतानिरूपिततावद्धर्मविषयकस्मृतिरूपव्यापारसंबन्धावच्छिन्नानुपूर्वीविशेषाश्रयतावत्पदविषयकज्ञाननिष्ठकारणतानिरूपितविषयतासंबन्धावच्छिन्नतावत्पदनिष्ठावच्छेदकतायां तावत्पदनिष्ठसमुदायत्वस्यानतिरिक्तवृत्तित्वरूपावच्छेदकताश्रयत्वेन तादृशावच्छेदकतानाश्रयसमुदायत्वस्य तत्राभावात् न वाक्येऽतिव्याप्तिप्रसक्तिरित्याहुः। अपरे तु स्मृतिनिष्ठकार्यतानिरूपितज्ञाननिष्ठकारणतानिरूपितविषयतासंबन्धावच्छिन्नावच्छेदकताशून्यशक्तिनिरूपकतावच्छेदकसमुदायत्वं यौगिकत्वं। पाचकादिपदे अवयवशक्तिज्ञानस्यैव स्मारकतया समुदायशक्तिज्ञानस्य स्मारकत्वाभावात् लक्षणसमन्वयः। योगरूढपदे अतिव्याप्तिवारणाय शक्तौ तादृशावच्छेदकताशून्यत्वनिवेशः। वाक्यसमुदायत्वस्य शक्ततावच्छेदकत्वाभावात् न वाक्यमात्रे अतिव्याप्तिः। नच स्मृत्यनुपयुक्ततादृशशक्तिस्वीकारो निरर्थक इति वाच्यं पदत्वान्यथानुपपत्त्या तादृशशक्तिकल्पनस्यावश्यकत्वादित्याहुः। वस्तुतस्तु पदघटितशक्ततावच्छेदकत्वशून्यसमुदायत्ववत्त्वमेव मूलकाराभिमतं यौगिकत्वं। पदघटितत्वंच लाघवात् पदाभिन्नावृत्तित्वमेव। नचैवं वाक्यस्य पदसमुदायरूपस्य व्यासज्यवृत्तिधर्मावच्छिन्नानुयोगिताकभेदानभ्युपगमेन पदाभिन्नत्वाभावात् वाक्यगतसमुदायत्वस्यापि तादृशत्वेन तमादाय वाक्ये अतिव्याप्तिरिति वाच्यं व्यासज्यवृत्तिधर्मावच्छिन्नानुयोगिताकभेदस्य मूलकारानुमतत्वात्। अत एव उभयं नैकमित्यस्य सर्वसिद्धत्वादित्यात्मवादे विश्वनाथपञ्चाननेन लेखनं सङ्गच्छते। अ-

**नैरपेक्ष्येण समुदायशक्तिमात्रेण बुध्यते तद्रूढम् । यथा गोमण्डलादिपदम् । यत्र तु अ-**

**प्रभा.**

थवा पदघटितत्वं पदनिष्ठभेदप्रतियोगितावच्छेदकताशून्यत्वं एकं नोभयमिति प्रतीतेः सर्वसिद्धत्वेन पद-त्वावच्छिन्ने पदसमुदायत्वरूपवाक्यत्वावच्छिन्नप्रतियोगिताकभेदस्य सर्वमतसिद्धत्वात् । एवंच वाक्यग-तसमुदायत्वस्य अपभ्रंशशब्दसमुदायत्वस्यापभ्रंशशब्दघटितसमुदायत्वस्य वा पदनिष्ठभेदप्रतियोगितावच्छे-दकत्वेन अनवच्छेदकसमुदायरूपत्वाभावात् न तादृशसमुदायत्वमादायातिव्याप्तिः । नचेदं लक्षणं पाचका-दिपदे असंभवग्रस्तं पाचकपदसमुदायत्वस्य पच्धात्वादिनिष्ठभेदप्रतियोगितावच्छेदकत्वादिति वाच्यम् । प्रकृ-ते पदशब्देन पदान्तरसमभिव्याहारज्ञानाभावप्रयुक्तशाब्दबोधसमर्थत्वरूपपदत्वस्य विवक्षितत्वात् पाचकादि-पदस्य पदान्तरसमभिव्याहारज्ञानेनैव एकत्वाश्रयः पाचकः पाचकजन्यं कर्मत्वमित्याकारकशाब्दबोधसमर्थ-तया तादृशसमभिव्याहारज्ञानाभावे सति तादृशशाब्दासमर्थतया च तस्यैतादृशपदत्वासंभवः घटमित्यादि-वाक्यस्य नीलघटमित्यादिवाक्यस्य वा पदान्तरसमभिव्याहारज्ञानं विनापि तत्तद्वाक्यघटकपदानां आसत्त्या-दिज्ञानद्वारा शाब्दबोधसमर्थत्वात् तेषां न निरुक्तपदत्वानुपपत्तिः । अपभ्रंशशब्दस्यासमर्थत्वेऽपि तस्य नि-रुक्तसमभिव्याहारज्ञानविरहप्रयुक्तत्वाभावात् निरुक्तसमभिव्याहारज्ञानसत्त्वेऽपि तादृशवाक्येन शाब्दाजनना-त् । अथवा प्रकृते पदनिष्ठभेदशब्देन पदत्वानुयोगितावच्छेदककभेदस्य विवक्षितत्वात् । एवंच पाचकपदे पदत्व-सत्त्वेन प्रतियोगिवृत्तित्वेन प्रतियोगयवृत्तिधर्मस्यैव भेदानुयोगितावच्छेदकत्वेन पाचकपदसमुदायत्वस्य ताद-शप्रतियोगितानवच्छेदकत्वान्नोक्तदोषः । नच शक्तत्वरूपपदत्वस्य पदव्यक्तिभेदेन भिन्नतया असंभवतादव-स्थ्यमिति वाच्यम् । प्रकृते वाच्यतासंबन्धेन पदपदवत्त्वस्य सकलपदानुगतपदत्वस्य विवक्षि-तत्वात् । तथाच तादृशपदनिष्ठभेदप्रतियोगितावच्छेदकत्वाभावशक्ततावच्छेदकत्वाभावोभयविशिष्टसमुदायत्वं यौगिकत्वमिति फलितम् । एवंच न कोऽपि दोष इति प्रतिभाति । यौगिकमुदाहरति ॥ **यथा पाचका-दिपदमिति ॥ यत्र अवयवशक्तिनैरपेक्ष्येणेति** ॥ यत्र यादृशपदे । घटकत्वं सप्तम्यर्थः तस्यावय-वेऽन्वयः । अवयवशक्तिनैरपेक्ष्येण अवयवशक्तिं विनेत्यर्थः । अवयवशक्त्यभावेऽपीति यावत् ॥ **समुदाय-शक्तिमात्रेणेति** ॥ मात्रपदेन अवयवशक्त्यप्रयोज्यत्वं लभ्यते ॥ **बुध्यत इति** ॥ अर्थ इत्यादिः । अनुभूयत इत्यर्थः । इदंच प्रमाणोपन्यासाय नतु तस्य लक्षणघटकता व्यर्थत्वात् । तथाच पदाघटितशक्त-तावच्छेदकसमुदायत्ववत्त्वं रूढत्वमिति लक्षणं फलितम् । अत्र योगरूढपदे अतिव्याप्तिवारणाय पदाघटि-तत्वं समुदायत्वविशेषणं । अपभ्रंशशब्दसमुदाये अतिव्याप्तिवारणाय शक्ततावच्छेदकत्वं समुदायत्वविशे-षणमिति । अन्येतु यत्रावयवशक्तिनैरपेक्ष्येणेति यादृशपदघटकावयवशक्त्यप्रसिद्धिप्रयुक्ततज्ज्ञानजन्यस्मरणा-भावेऽपीत्यर्थः । समुदायशक्तिमात्रेणेति निरुक्तशक्तिज्ञानजन्यस्मरणमात्रेणेत्यर्थः । मात्रपदात् तादृशस्मरणान्य-जन्यत्वव्यवच्छेदः तृतीयार्थो जन्यत्वं तस्य बोधे अन्वयः । बुध्यत इति । अर्थ इत्यादिः । शाब्दबोधविषयतावा-न् भवतीत्यर्थः । तथाच रूढ्यर्थतावच्छेदकधर्मावच्छिन्नविषयताशालिशाब्दनिष्ठकार्यतानिरूपितस्मृतिरूपव्यापा-रसंबन्धावच्छिन्नज्ञाननिष्ठकारणतानिरूपितविषयतासंबन्धावच्छिन्नपदनिष्ठावच्छेदकतावच्छेदकं रूढ्यर्थताव-च्छेदकधर्मान्यधर्मावच्छिन्नविषयताशालिशाब्दनिष्ठकार्यतानिरूपितस्मृतिरूपव्यापारसंबन्धावच्छिन्नज्ञाननिष्ठ-कारणतानिरूपितविषयतासंबन्धावच्छिन्नावच्छेदकताश्रयपदाघटितं च यत्समुदायत्वं तद्वत्त्वं रूढत्वमिति फलि-तम् । एतल्लक्षणघटकदलानां प्रयोजनं पूर्वोक्तदिशाऽवधेयमित्याहुः । रूढपदमुदाहरति ॥ **यथा गवादिपद-मिति** ॥ केचित्तु यथा गोपदंमण्डलादिपदमिति मूलपाठभ्रमेण मण्डलादीत्यत्र बहुपुस्तकेषु मण्डपादीति पाठः स प्रामादिक इत्याहुः तदसत् मण्डपपदेन रूढ्या वितानबोधनेऽपि मण्डं पातीति व्युत्पत्त्या मण्डपानकर्तुरपि बोधनात् मण्डपपदस्य रूढपदोदाहरणत्वं न संभवतीत्याशयेन मण्डलादीति पाठः समर्थितः तथात्वे रूढ्या देशविशेषवाचकमण्डलादिपदस्य मण्डं लातीति व्युत्पत्त्या मण्डादानकर्तृ-वाचकत्वेन यौगिकरूढतया मण्डलपदस्यापि रूढपदोदाहरणत्वासंभवात् । तस्मात्केषुचित्पुस्तकेषु मण्डपादीति पाठः केषुचित्पुस्तकेषु मण्डलादीति केषुचिद्गवादीति पाठः । पाठत्रयमध्ये आद्यपाठद्व-

वयवशक्तिविषये समुदायशक्तिरप्यस्ति तद्योगरूढम् । यथा पङ्कजादिपदम् । तथाहि । पङ्कजपदं अवयवशक्त्या पङ्कजनिकर्तृरूपमर्थं बोधयति समुदायशक्त्या च पद्मत्वेन रूपेण पद्मं बोधयति । नच केवलावयवशक्त्या कुमुदेऽपि प्रयोगः स्यादिति वाच्यम् । रूढिज्ञानस्य केवलयौगिकार्थबुद्धौ प्रतिबन्धकत्वादिति प्राञ्चः। वस्तुतस्तु समुदायशक्त्युपस्थि-

## प्रभा.

यस्यापि दुष्टत्वेन प्रामादिकत्वं परिकल्प्य निर्दुष्टत्वात् अन्त्यपाठ एव स्वीकार्य इति ॥ **यत्त्ववयवशक्तिविषय इति** ॥ यादृशपदघटकावयवनिरूपितशक्त्याश्रय इत्यर्थः । तुशब्दः क्वाचित्काभिप्रायः । तथाच अवयवशक्त्याश्रयकिंचिद्धर्मिणीति फलितम् । एतेन जलूकादेरपि अवयवशक्त्याश्रयतया तत्र रूढिशक्त्यभावात् व्यापकत्वासंभवेन पङ्कजपदस्य योगरूढत्वानुपपत्तिरिति दूषणं प्रत्युक्तम् ॥ **समुदायशक्तिरपीति** ॥ अपिशब्दः उक्तसमुच्चायकः । एवंच रूढिशक्तिनिरूपकतावच्छेदकं रूढिशक्तिसमानाधिकरणशक्तिनिरूपकपदघटितं रूढिशक्यतावच्छेदकसमानाधिकरणधर्मावच्छिन्नशक्तपदघटितं वा यत्समुदायत्वं तद्वत्त्वं योगरूढत्वमिति लक्षणं पर्यवसितम् । यौगिकरूढे अतिव्याप्तिवारणाय सामानाधिकरण्यनिवेश इति ॥ योगरूढमुदाहरति ॥ **यथेति** ॥ उदाहृतपदे योगरूढत्वमुपपादयति ॥ **तथाहीत्यादिना** ॥ **बोधयतीति** ॥ पङ्कजनिकर्तृत्वेनेत्यादिः ॥ **केवलावयवशक्त्येत्यादि** ॥ रूढिज्ञानासहकृतावयवशक्तिज्ञानजन्यार्थस्मृत्येत्यर्थः ॥ **कुमुदेऽपीति** ॥ अपिना खनित्रादिपरिग्रहः ॥ **प्रयोगस्स्यादितीति** ॥ शाब्दबोधविषयत्वापत्तिरित्यर्थः । तथाच उद्भित्पदस्य यागविशेषे रूढिज्ञानकालेऽपि खनित्रादौ तात्पर्यज्ञानसत्त्वे केवलावयवशक्तिज्ञानप्रयोज्योर्ध्वभेदनकर्तृत्वप्रकारकशाब्दबोधविषयत्ववत्पङ्कजपदस्य पद्मे रूढिज्ञानकाले कुमुदेऽपि अवयवशक्तिज्ञानप्रयोज्यपङ्कजनिकर्तृत्वप्रकारकशाब्दबोधविषयत्वापत्तिरिति भावः । प्राचीनमतानुसारेण समाधत्ते ॥ **रूढिज्ञानस्येति** ॥ रूढिप्रकारकज्ञानस्येत्यर्थः ॥ **केवलयौगिकार्थबुद्धाविति** ॥ रूढ्यर्थतावच्छेदकावच्छिन्नविशेष्यत्वानिरूपितरूढ्यर्थतावच्छेदकसमानाधिकरणावयवार्थतावच्छेदकावच्छिन्नविषयताशालिशाब्दत्वावच्छिन्न इत्यर्थः ॥ **प्रतिबन्धकत्वादिति** ॥ स्वनिरूपितप्रकारताश्रयाभाववत्त्वसंबन्धेनेत्यादिः । एतेन उद्भित्पदस्य यागविशेषे रूढिज्ञानकाले निरुक्तसंबन्धेन खनित्रादौ

## दिनकरीयम्.

मण्डपादीति पाठः । स प्रामादिकः ॥ **प्रतिबन्धकत्वादिति** ॥ न च रूढिज्ञानस्य यौगिकार्थबुद्धौ प्रतिबन्धकत्वे पद्मेऽपि योगार्थस्य पङ्कजनिकर्तृत्वस्य बोधो न स्यादिति वाच्यम् । पद्मत्वावच्छिन्न-

## रामरुद्रीयम्.

गिकत्वानुपपत्तिः । रूढलक्षणे अवयवशक्तिरहितस्येत्युपेक्ष्य अवयवशक्तिनिरपेक्षस्येत्येतावत्पर्यन्तानुसरणवैयर्थ्यापाताच्चेति ध्येयम् । वस्तुतो दाक्षिणात्यामरकोशादौ मण्डपास्तु जले गृह इति पाठदर्शनात् गौडास्तु जपाशब्दस्थाने जवेतिवत् मण्डपस्थाने मण्डपेत्येव प्रयुञ्जते इति गौडग्रन्थपरम्परया मुक्तावल्यां बहुपुस्तकेषु मण्डपशब्दमुपलभ्य ग्रन्थकृता तदभिहितमिति बोध्यम् ॥ **मूले अवयवशक्तिविषय इति** ॥ अवयवशक्तिज्ञानजन्यशाब्दबोधविषय इत्यर्थः । समुदायशक्तिरप्यस्तीत्यस्य समुदायशक्तिस्मारितार्थविषयकत्वमप्यस्तीत्यर्थः । यथाश्रुते पाचकादिपदस्यापि योगरूढत्वापत्तेः । पाककर्तरि प्रयुक्तस्य एकादशेऽहनि पितृसङ्केतितपाचकपदस्यावयवशक्तिविषये समुदायशक्तिसत्त्वात् । अस्माकं पङ्कजपदादित एव पद्मत्वावच्छिन्ने पङ्कजनिकर्त्रायभेदान्वयबोधेऽनादितात्पर्योपगमात् । पाककर्त्राद्यभिन्नः पाचक इति शाब्दबोधस्य अनुदयेन तस्य योगरूढत्वापत्तिविरहादिति बोध्यम् ॥ **मूले स्यादिति** ॥ कुमुदेऽपि अवयवार्थमात्रस्याबाधितत्वेन तदर्थविषयकबोधेच्छया तत्रापि पङ्कजपदप्रयोगसम्भवादिति भावः । केवलेत्यस्य समुदायशक्तिस्मारितार्थाविषयकेत्यर्थः । यौगिकार्थज्ञाने अवयवार्थज्ञानेत्यर्थः ॥ **नचेत्यादि** ॥ आपातत इयमाशङ्का । मूलोक्तकेवलपदानुसन्धाने एतस्यानुदयादिति सुधीभिर्विभावनीयम् ॥ **प्रतिबन्धकत्व**

तपद्मेऽवयवार्थपङ्कजनिकर्तुरन्वयो भवति सान्निध्यात् । यत्र तु रूढ्यर्थस्य बाधः प्रतिस-

.प्रभा.

रूढिज्ञानसत्त्वात् खनित्रादिबोधतात्पर्यज्ञानसत्त्वेऽपि उद्भिदादावयवशक्तिज्ञानप्रयोज्यखनित्रादिविषयकशाब्दबोधानुपपत्तिरिति दूषणस्य नावकाशः । अत्र रूढिज्ञानस्य निरुक्तशाब्दत्वावच्छिन्नं प्रति न प्रतिबन्धकत्वं ग्राह्याभावाद्यनवगाहित्वात् जनकज्ञानाविरोधित्वाच्च । नचैवं सति अनुमितौ सिद्धेः प्रतिबन्धकत्वं न स्यादिति वाच्यं अनायत्या मणिमन्त्रादिन्यायेन सिद्धेरनुमितिप्रतिबन्धकत्वस्य सर्वानुमतत्वात् । अतस्तु पद्मे रूढिज्ञानकालेऽपि पङ्कजपदात् कुमुदादिविषयकावयवशक्तिज्ञानप्रयोज्यनिरुक्तविषयताशालिशाब्दत्वावच्छिन्नापत्तेः प्रकारान्तरेण वारयितुं शक्यत्वात् न रूढिज्ञानस्य मणिमन्त्रादिन्यायेन प्रतिबन्धकत्वमिति प्राचीनमते दोषमुपपादयतां गङ्गेशोपाध्यायानां मतमाह ॥ **वस्तुतस्त्विति** ॥ गङ्गेशोपाध्यायानामभिमतार्थस्त्वित्यर्थः । अवधारणार्थकतुशब्दः पद्म इत्युत्तरं योज्यः ॥ **समुदायशक्त्युपस्थितेरिति** ॥ रूढिज्ञानजन्यस्मृतिविषयपद्म एवेत्यर्थः ॥ **अवयवार्थेति** ॥ योगशक्तिज्ञानजन्यस्मृतिविषयपङ्कजनिकर्तृत्वावच्छिन्नस्येत्यर्थः ॥ **अन्वयो भवतीति** ॥ तादात्म्यसंबन्धावच्छिन्नविषयताशालिशाब्दबोधो जायत इत्यर्थः । अत्र हेतुमाह ॥ **सान्निध्यादिति** ॥ प्राथमिकोपस्थितिविषयत्वादित्यर्थः । व्यक्तिवचनानां सन्निहितविशेषपरत्वमिति नियमादिति भावः । व्यक्तिवचनानां कििञ्चिद्व्यक्तितात्पर्यकाणां सन्निहितविशेषपरत्वमिति नियमात् उपस्थितार्थविशेषपरत्वादित्यर्थः । तथाच पद्मे तात्पर्यसत्त्वात् तदेव पङ्कजनिकर्तृतया योगशक्तिज्ञानजन्योपस्थितिविषयो भवति न कुमुदादि अनुपस्थितत्वात् । इत्थंच कुमुदान्वयबोधौपयिकवृत्तिज्ञानजन्यपङ्कजनिकर्तृत्वप्रकारककुमुदादिविशेष्यकोपस्थितिघटितसामग्र्यभावादेव केवलावयवशक्त्या शाब्दबोधापत्तिवारणे मणिमन्त्रादिन्यायेन रूढिज्ञानस्य न प्रतिबन्धकत्वं प्रमाणाभावादित्याशयः । ननु यत्र गृहे वर्तमानकुमुदबोधतात्पर्येण पङ्कजमानयेत्युक्तं तत्र रूढ्यर्थपद्मस्य गृहवृत्तित्वानयनकर्मत्वयोः बाधप्रतिसन्धानेन तस्य शाब्दबोधविषयत्वासंभवात् अवयवशक्तिमात्रेण कुमुदबोधापत्तिः । मम तु रूढिज्ञानस्य प्रतिबन्धकत्वस्य सत्त्वात् न तदापत्तिरिति प्राचीनाक्षेपं कुमुदत्वेन बोधतात्पर्यसत्त्वे लक्षणयैव कुमुदबोधः तादृशतात्पर्यासत्त्वे त्विष्टापत्तिरिति क्रमेण परिहरति ॥ **यत्रेति** ॥ यादृशपङ्कजमानयेतिवाक्यघटकपङ्कज इत्यर्थः । निरूपितत्वं सप्तम्यर्थः तस्य रूढावन्वयः यादृशपङ्कजमानयेतिवाक्यघटकपङ्कजपदनिरूपितरूढिशक्त्याश्रयपदस्येति फलितोऽर्थः ॥ **बाध इति** ॥ समभिव्याहृतप-

.दिनकरीयम्.

विशेष्यत्वानिरूपितपङ्कजपदयोगजन्यपङ्कजनिकर्तृत्वावच्छिन्नविषयताशालिबोधं प्रति रूढिज्ञानस्य प्रतिबन्धकत्वेन पद्मधर्मिकयोगार्थबुद्धेः प्रतिबध्यतावच्छेदकानाक्रान्तत्वादिति । विरोधिविषयकज्ञानस्य प्रतिबन्धकत्वं जनकज्ञानविघटकत्वेनैवेति नियमभङ्गमस्वरसं प्राञ्च इत्यनेन सूचयन् मणिकारमतमाह ॥ **वस्तुतस्त्विति** ॥ **सान्निध्यादिति** ॥ रूढ्यर्थस्य सन्निहितोपस्थितिकत्वादित्यर्थः । व्यक्तिवचनानां सन्निहितविशेषप-

.रामरुद्रीयम्.

**द्वेति** ॥ प्रतिबन्धकत्व इत्यस्य विरोध्यविषयकज्ञानस्येत्यादिः । तेनानुमितौ परामर्शाविरोधिनोऽपि बाधनिश्चयस्यानुमितिप्रतिबन्धकत्वेऽपि नानियमानुपपत्तिरिति ध्येयम् ॥ **सान्निध्यादिति** ॥ ननु मूले पद्मत्वावच्छिन्नस्य सन्निहितोपस्थितिविषयत्वेन तत्र पङ्कजनिकर्तुरवयवार्थस्याभेदान्वय एव भवति न तूक्तप्रतिबध्यप्रतिबन्धकभावः प्रामाणिक इत्युक्तं नवीनैः । तन्न सङ्गच्छते । कुमुदतात्पर्येणापि योगव्युत्पत्त्या पङ्कजपदप्रयोगस्येष्टत्वेन तत्रापि पङ्कजनिकर्तृभिन्नं पद्ममिति बोधापत्तेः । न च तत्र पद्मत्वावच्छिन्नस्योपस्थितिविरहादेव नेयमापत्तिरिति वाच्यम् । पङ्कजेत्यस्य पद्मे स्मारकशक्तिसत्त्वात्ततः पद्मस्मरणस्यावश्यकत्वादित्याशङ्कानिरासाय सान्निध्यादित्यनेन तत्र पङ्कजपदस्य पद्मरूपार्थे तात्पर्यसत्त्वादित्येवोक्तमित्याह ॥ **व्यक्तिवचनानामिति** ॥ घटपटादिव्यक्तिवाचकानामित्यर्थः । जातिपरशब्दव्यावृत्त्यर्थं विशेषोपादानम् ॥ **सन्निहितपरत्वं** अव्यवहितोपस्थितव्यक्तितात्पर्यकत्वमित्यर्थः । अत एव घटमानयेत्युक्तौ सन्निधाने घटसत्त्वे न दूरस्थघटानयने लोकः प्रवर्तत इति भावः । तथा चोपस्थितप-

न्धीयते तत्र लक्षणया कुमुदादेर्बोधः । यत्र तु कुमुदत्वेन रूपेण बोधे न तात्पर्यज्ञानं पद्मस्य च बाधस्तत्र चावयवशक्तिमात्रेण निर्वाह इत्याहुः । यत्र स्थलपद्मादा-

**प्रभा.**

दार्थेनेत्यादिः अन्वयासंभव इत्यर्थः ॥ **प्रतिसन्धीयत इति** ॥ निर्णीयत इत्यर्थः । कुमुदत्वादिना बोधतात्पर्यमिति शेषः ॥ **तत्रेति** ॥ तादृशवाक्यघटकपङ्कजपद इत्यर्थः । सप्तम्यर्थो निरूपितत्वं तस्य लक्षणायामन्वयः ॥ **लक्षणयेति** ॥ कुमुदत्वावच्छिन्नविशेष्यकलक्षणाज्ञानजन्यकुमुदत्वप्रकारकस्मरणेनेत्यर्थः ॥ **कुमुदादेर्बोध इति** ॥ कुमुदत्वादिप्रकारकशाब्दबोध इत्यर्थः ॥ **यत्रेति** ॥ यादृशवाक्यघटकपङ्कजपद इत्यर्थः । सप्तम्यर्थो विशेष्यत्वं तस्य ज्ञानेऽन्वयः ॥ **कुमुदत्वेनेति** ॥ कुमुदत्वावच्छिन्नविषयताशालिप्रतीतीच्छयोत्तरितत्वप्रकारकज्ञानाभाव इत्यर्थः ॥ **पद्मस्येति** ॥ पद्मत्वावच्छिन्नस्येत्यर्थः । अप्यर्थकचशब्दः बाध इत्युत्तरं योज्यः ॥ **बाध इति** ॥ समभिव्याहृतपदार्थेन सहेत्यादिः । अन्वयासंभवनिर्णयोऽपीत्यर्थः ॥ **तत्रावयवशक्तिमात्रेणेति** ॥ तादृशवाक्यघटकपङ्कजपदनिरूपितावयवशक्तिज्ञानजन्यकुमुदविशेष्यकपङ्कजनिकर्तृत्वप्रकारकस्मृत्यैवेत्यर्थः ॥ **निर्वाह इति** ॥ पङ्कजनिकर्तृत्वप्रकारककुमुदविशेष्यकशाब्दबोधसंभव इत्यर्थः । कुमुदत्वप्रकारकबोधजनकतात्पर्यज्ञानघटितसामग्र्यभावादिति भावः । एवंचोक्तदिशा सर्वत्र निर्वाहे रूढिज्ञानस्य मणिमन्त्रादिन्यायेन निरुक्तविषयताशालिशाब्दं प्रति प्रतिबन्धकत्वमप्रामाणिकमेवेत्याशयः । अत्र पङ्कजमानयेतिवाक्यविशेषघटकपङ्कजपदाद्योगरूढिभ्यां पद्मत्वपङ्कजनिकर्तृत्वोभयप्रकारेण पद्मस्मृत्यनन्तरं पद्मे समभिव्याहृतपदार्थान्वयानुपपत्तिप्रतिसन्धानस्थले कुमुदत्वप्रकारकबोधतात्पर्येण ज्ञानकालेऽपि पुनःस्मृतपङ्कजपदात् लक्षणाज्ञानाधीनकुमुदत्वप्रकारकस्मरणशाब्दबोधयोः उपपादनवत् तादृशस्थले तादृशतात्पर्यज्ञानाभावकालेऽपि पुनःस्मृतपङ्कजपदात् लक्षणाज्ञानाधी-

**दिनकरीयम्.**

रत्वनियमादिति भावः । व्यक्तिवचनानां किञ्चिद्व्यक्तितात्पर्यकाणां सन्निहितपरत्वं उपस्थितविशेषपरत्वमित्यर्थः । तथाच पद्मे तात्पर्यसत्त्वेन रूढ्यर्थयोगार्थयोः परस्परान्वयबोधजनकसामग्र्यन्तरसत्त्वेन च रूढ्यर्थ एव योगार्थान्वयो न कुमुदादाविति न रूढिज्ञानस्य यौगिकार्थबुद्धौ प्रतिबन्धकत्वम् । एवं रूढ्यर्थयोगार्थयोः परस्परान्वयबोधसामग्रीस्थल एव न कुमुदादेः पङ्कजपदात् बोधः । यत्र तु तयोः परस्परमन्वयबोधसामग्रीविरहस्तत्र कुमुदादेर्बोधो भवत्येव । परं तु कुमुदत्वेन रूपेण कुमुदत्वविशिष्टपङ्कजनिकर्तृत्वेन वा लक्षणया शुद्धपङ्कजनिकर्तृत्वेन तु शक्त्यैवेत्याह ॥ **यत्र तु रूढ्यर्थेत्यादिना** ॥ प्रतिसन्धीयत इत्यनन्तरं कुमुदत्वेन बोधे च तात्पर्यमिति पूरणीयम् ॥ **लक्षणयेति** ॥ पङ्कजनिकर्तृकुमुदत्वेन बोधो लक्षणयेत्यर्थः । रूढ्यर्थयोगार्थयोः परस्परसामग्रीविरहोपलक्षणमेतत् । तेन रूढ्यर्थबाधप्रतिसन्धानासत्त्वेऽपि यत्र सामग्र्यन्तरविरहस्तत्रापि लक्षणया कुमुदादेर्बोधो भवत्येव ॥ **अवयवशक्तिमात्रेणेति** ॥ मात्रपदेन लक्षणाना-

**रामरुद्रीयम्.**

द्मत्वावच्छिन्नपरत्वे पंङ्कजपदस्य तात्पर्यविषयीभूतस्य पङ्कजनिकर्तुः पद्मेऽन्यभेदान्वयबोधे योग्यतासत्त्वात्तत्र भवति तादृशान्वयबोधः । यत्र तु कुमुदतात्पर्येणैव अत्र पङ्कजमस्तीति प्रयुज्यते तत्र पद्मे एतद्देशवृत्तित्वस्य बाधितत्वेन कुमुद एव तात्पर्यनिश्चयसत्त्वात् तात्पर्यविषयस्य पङ्कजनिकर्तुः कुमुदस्य पद्मे भेदसत्त्वाद्योग्यताया विरहेण तत्र न तादृशान्वयबोध इति भावः । नन्वेतद्देशे रूढ्यर्थस्य पद्मस्य बाधनिश्चयेऽपि पद्मकुमुदातिरिक्तपङ्कजनिकर्तृपदार्थतात्पर्येण पङ्कजनिकर्तृत्वमात्रतात्पर्येण वा कुमुदस्यैव वा बोधे तात्पर्यं तत्र लक्षणया कुमुदबोधाभावात्तदन्यथासङ्गतिरित्यतः पूरयति ॥ **कुमुदत्वेनेति** ॥ **तेनेति** ॥ बाधः प्रतिसन्धीयत इत्यस्य सामग्रीविरहोपलक्षणत्वेनेत्यर्थः ॥ **सामग्र्यन्तरेति** ॥ प्रामादिकोऽयं पाठः । कारणान्तरविरह इत्येव वक्तुमुचितत्वात् । सामग्रीपदं सामग्रीघटककारणमात्रपरमत्र द्रष्टव्यम् । अन्तरपदं बाधाभावभिन्नपरं तच्च कारणं रूढ्यर्थस्मरणादिकमेवेति ध्येयम् । ननु योगरूढस्थले

**वप्यवयवार्थस्य बाधस्तत्र समुदायशक्त्या पद्मत्वेन रूपेण बोधः। यदितु स्थलपद्मं विजातीयमेव तदा लक्षणयैवेति । यत्र तु यौगिकार्थरूढ्यर्थयोः स्वातन्त्र्येण बोधस्तद्यौगिकरूढम् ।**

प्रभा.

नकुमुदत्वप्रकारकस्मरणशाब्दबोधयोरुपपत्त्युपपादनमेवोचितं कुमुदत्वस्य पङ्कजनिकर्तृत्वापेक्षया शीघ्रोपस्थितिविषयत्वात्। एवञ्च तादृशतात्पर्यज्ञानाभावस्थलेऽपि पङ्कजनिकर्तृत्वप्रकारकस्मृतिशाब्दबोधयोरसंभवात् तत्रावयवशक्तिमात्रेण निर्वाह इत्युक्तिरसङ्गता । किञ्च कुमुदं पङ्कजमानयेत्यादौ व्यक्तिवचनानां सन्निहितविशेषपरत्वमिति न्यायेन कुमुदत्वावच्छिन्नस्यैव पद्मत्वावच्छिन्नापेक्षया प्रथममुपस्थितत्वेन तत्रैव योगार्थान्वयापत्तेः । नच सन्निहितविशेषपरत्वमिति भाष्यस्य एकपदेन प्रथमोपस्थितपरत्वमित्यर्थः एवंच प्रकृते कुमुदस्य भिन्नपदोपस्थाप्यत्वान्न तत्र योगार्थान्वयापत्तिरिति वाच्यं भाष्यस्य उक्तार्थत्वे पङ्कजपदसमुदायापेक्षया तद्घटकपङ्कपदजनिधातुडप्रत्ययानां भिन्नपदत्वेन पद्मेऽपि योगार्थानन्वयापत्तिप्रसङ्गात् । तस्मादनायत्या अनुमितौ सिद्धेरिव रूढिज्ञानस्य मणिमन्त्रादिन्यायेन प्रतिबन्धकत्वमङ्गीकृत्यैव उक्तस्थले प्रथमोपस्थितकुमुदपदार्थे पङ्कजपदयोगार्थान्वयबोधो वारणीय इत्यरुचिं हृदि निधायाहुरित्युक्तमिति ध्येयम् ॥ **यत्र स्थलपद्मादावपीति** ॥ अवयवशक्त्यनाश्रयपद्मबोधतात्पर्येण प्रयुक्तपङ्कजपदरूढ्यर्थस्थलपद्मादावित्यर्थः । आदिपदाच्चिसितपद्मपरिग्रहः ॥ **अवयवार्थस्येति** ॥ तादृशपङ्कजपदनिरूपितावयवशक्त्याश्रयस्येत्यर्थः ॥ **बाधः** अन्वयानुपपत्तिप्रतिसन्धानं । वर्तत इति शेषः ॥ **तत्र समुदायशक्त्येति** ॥ तादृशपङ्कजपदनिरूपितसमुदायशक्तिज्ञानजन्यपद्मत्वप्रकारकस्मृत्येत्यर्थः ॥ **पद्मत्वेन रूपेण बोध इति** ॥ पद्मत्वप्रकारेणैव शाब्दबोध इत्यर्थः । ननु पङ्कजनिकर्तृत्वप्रकारेणापि शाब्दबोधः निरुक्तानुपपत्तिप्रतिसन्धानरूपप्रतिबन्धकसत्त्वेन तदभावघटितसामग्र्यभावादिति भावः । ननु पङ्कनिष्ठकारणतानिरूपितपद्मनिष्ठकार्यतावच्छेदकतया सिद्धपद्मत्वजातेः तादृशकार्यताशून्यस्थलपद्मादिवृत्तित्वे मानाभावः अन्यथा घटादावपि तादृशजातिस्वीकारापत्तेः नच तादृशकार्यताशून्यत्वस्य घटादिसाधारणत्वेऽपि व्यवहारबलात् स्थलपद्मादावेव तादृशजातिः स्वीक्रियते न घटादौ तादृशव्यवहाराभावादिति वाच्यम् । तथा सति पादं पङ्कजं मुखं पङ्कजमिति व्यवहारबलात् पादमुखादावपि तादृशजातिस्वीकारापत्तेः । नचेष्टापत्तिः तैजसशरीरावयवपादमुखादावपि तादृशपद्मत्वसत्त्वेन पृथिवीत्वादिना सङ्करप्रसङ्गात् स्थलपद्मादौ तादृशजातिर्न स्वीकार्येत्याशयेनाह ॥ **यदि त्विति** ॥ विभाव्यत इति शेषः । इत्यर्थकः तुशब्दः विजातीयमेवेत्युत्तरं योज्यः । तथाच स्थलपद्मं विजातीयमेव इति यदि विभाव्यत इत्यर्थः फलितः ॥ **लक्षणयैवेति** ॥ पद्मसादृश्यप्रकारेण स्थलपद्मबोध इति शेषः। तात्पर्यानुपपत्तिप्रयोज्यपद्मसादृश्यावच्छिन्नविशेष्यकपङ्कजपदनिरूपितलक्षणाप्रकारकज्ञानजन्यपद्मसादृश्यप्रकारकस्थलपद्मविशेष्यकस्मरणेनैवेत्यर्थः। यौगिकरूढलक्षणमाह ॥ **यत्रेति** ॥ यादृशपदनिरूपितावयवशक्त्याश्रयस्य यादृशपदनिरूपितरूढिशक्त्याश्रयस्य चेत्यर्थः ॥ **स्वातन्त्र्येणेति** ॥ तादात्म्यानवगाहिबोध इत्यर्थः । इदंच रूढ्यर्थयोगार्थयोरनैक्ये प्रमाणोपन्यासाय न तस्यापि लक्षणघटकता व्यर्थत्वात् । लक्षणंतु रूढिनिरूपक-

## दिनकरीयम्.

दरः सूचितः ॥ **निर्वाहः** पङ्कजनिकर्तृत्वेन कुमुदशाब्दबोधनिर्वाह इत्यर्थः ॥ **पद्मत्वेन बोधः** पद्मत्वेनैव बोधः ॥ **लक्षणयैवेति** ॥ रूढ्यर्थतावच्छेदकपद्मत्वजातेस्तत्राभावेन रूढ्या तद्बोधनासम्भवादिति भावः ॥ ८१ ॥

## रामरुद्रीयम्.

पङ्कजनिकर्तृभिन्नं पद्ममिति बोधस्योपगमो नोचितः। सकृदुच्चरित इति न्यायविरोधादत एव यौगिकरूढस्थले एकार्थबोध इति चेन्न । एकपदोपस्थाप्ययोगरूढ्यर्थयोरभेदेनान्वयबोधे आकाङ्क्षावैचित्र्यस्यैव योगरूढस्थले तादृशव्युत्पत्तिसङ्कोचस्यावश्यकत्वादिति भावः ॥ **मूले यत्र त्विति** ॥ यादृशैकानुपूर्व्यवच्छिन्न इत्यर्थः। तेनोच्चारणभेदेन उद्भिदपदस्य भेदेऽपि न क्षतिः। उच्चरित इति शेषः पूरणीयः ॥ **स्वा-**

यथोद्भिदादिपदम् । तत्र हि ऊर्ध्वभेदनकर्ता तरुगुल्मादिर्बुध्यते यागविशेषोऽपीति ॥ ८१ ॥

**लक्षणा शक्यसम्बन्धस्तात्पर्यानुपपत्तितः ।**

**लक्षणा शक्यसंबन्ध इति** ॥ गङ्गायां घोष इत्यादौ गङ्गापदस्य शक्यार्थे प्रवाहरूपे घोषस्यान्वयानुपपत्तिस्तात्पर्यानुपपत्तिर्वा यत्र प्रतिसन्धीयते तत्र लक्षणयैव तीरस्य बोधः ।

**प्रभा.**

तावच्छेदकरूढयर्थतावच्छेदकासमानाधिकरणधर्मावच्छिन्नशक्तपदघटितसमुदायत्ववत्त्वं । पङ्कजादिपदे अतिव्याप्तिवारणाय रूढ्यर्थतावच्छेदकासमानाधिकरणधर्मावच्छिन्नशक्तत्वं पदविशेषणं । यौगिकपाचकादिपदे अतिव्याप्तिवारणाय रूढिनिरूपकतावच्छेदकत्वं समुदायत्वविशेषणं । रूढगवादिपदेऽतिव्याप्तिवारणाय तादृशपदघटितत्वं समुदायत्वविशेषणम् । अन्येतु रूढिशक्यतावच्छेदकावच्छिन्नविषयताशालिशाब्दनिष्ठकार्यतानिरूपितज्ञाननिष्ठकारणतानिरूपितविषयतासंबन्धावच्छिन्नावच्छेदकतावच्छेदकं रूढिशक्यतावच्छेदकासमानाधिकरणधर्मावच्छिन्नविषयताशालिशाब्दनिष्ठकार्यतानिरूपितज्ञाननिष्ठकारणतानिरूपितविषयतासंबन्धावच्छिन्नावच्छेदकताश्रयपदघटितं च यत्समुदायत्वं तद्वत्त्वं यौगिकरूढत्वं लक्षणघटकपदप्रयोजनं पूर्ववद्बोध्यमित्याहुः । यौगिकरूढमुदाहरति ॥ **यथेति** ॥ उद्भिदादीत्यादिना मण्डपादिपरिग्रहः । लक्षणमुपपादयति ॥ **तत्रेति** ॥ तादृशपदेनेत्यर्थः सर्वविभक्तिषु त्रलो विधानात् । अवयवशक्त्येति शेषः । अवयवशक्तिज्ञानजन्योर्ध्वभेदनकर्तृत्वादिप्रकारकस्मृत्येत्यर्थः ॥ **ऊर्ध्वभेदनकर्तेति** ॥ तादृशकर्तृत्वविशिष्ट इत्यर्थः ॥ **तरुगुल्मादिरिति** ॥ आदिपदात् मण्डपानकर्तृत्वविशिष्टपुरुषादेस्संग्रहः ॥ **बुध्यत इति** ॥ बोधविषयतावान् भवतीत्यर्थः ॥ **यागविशेषोऽपीति** ॥ समुदायशक्त्येत्यादिः । उद्भिन्नामकयागविशेषोऽपीत्यर्थः । अपिशब्दः उक्तसमुच्चायकः बुध्यत इति पूर्वेणान्वयः । अत इति शेषः अतः कारणात् उद्भिदादिपदं यौगिकरूढमिति संबन्ध इति ॥ ८१ ॥

लक्षणा शक्यसंबन्ध इति मूलस्य तात्पर्यानुपपत्त्या कल्प्यमानलक्षणा शक्यसंबन्धरूपेति योजनया आदौ लक्षणाबीजप्रदर्शनपरत्वमित्याशयेनादौ लक्षणाबीजमेव प्रदर्शयति ॥ **गङ्गायामित्यादिना** ॥ एतेन सति धर्मिणि धर्माश्चिन्तनीया इति न्यायेन लक्षणास्वरूपसिद्धेः पूर्वं शक्यसंबन्धरूपलक्षणप्रदर्शनमनुचितमित्याशङ्का निरस्ता । लक्षणाबीजत्वेनान्वयानुपपत्तेः । मूलाप्रतिपाद्यत्वेऽपि अन्वयानुपपत्तेर्लक्षणाबीजत्वपक्षे दोषस्य स्वयं वक्ष्यमाणत्वात् तत्पक्षमनुवदति ॥ **अन्वयानुपपत्तिरिति** ॥ **यत्र प्रतिसन्धीयत इति** ॥ यदा ज्ञायत इत्यर्थः ॥ **तत्रेति** ॥ तदैवेत्यर्थः । तात्पर्यानुपपत्तिप्रतिसन्धानाभावे प्रवाहवृत्तिर्घोष इति भ्रमात्मकशाब्दबोधसंभवेन लक्षणाया व्यर्थत्वादिति भावः ॥ **लक्षणयैवेति** ॥ पुनस्स्मृतगङ्गापदनिरूपितलक्षणाज्ञानजन्यतीरत्वप्रकारकस्मृत्येत्यर्थः ॥ **तीरस्य बोध इति** ॥ तीरत्वावच्छिन्नविषयकबोध इत्यर्थः ॥ **सा चे-**

**दिनकरीयम्.**

लक्षणा द्विविधा जहत्स्वार्थाऽजहत्स्वार्था च । तत्राद्यां प्रदर्शयति ॥ **गङ्गायामिति** ॥ वक्ष्यमाणा-

**रामरुद्रीयम्.**

**तन्त्र्येणेति** ॥ अर्थान्तरमविषयीकृत्येत्यर्थः । इदंच योगरूढव्यावृत्त्यर्थमुक्तम् ॥ **मूले यागविशेषोऽपीति** ॥ उद्भिदा यजेत पशुकाम इत्यादावित्यर्थः । उद्भिदस्तरुगुल्माद्या इत्यादौ तरुगुल्माद्या ऊर्ध्वभेदनकर्तार इति बोध इति भावः ॥ ८१ ॥

**जहत्स्वार्थेति** ॥ जहत्स्वार्थं ययेति व्युत्पत्त्या शब्दार्थाविषयकलक्ष्यार्थविषयकशाब्दबोधजनिका गङ्गापदादेस्तीरादौ लक्षणा । अत्र स्वपदं लक्षकत्वेनाभिमतपदपरं अर्थपदं शक्यार्थपरम् । एवमग्रेऽपि बोध्यम् । एवमेव न जहत्स्वार्थं ययेति व्युत्पत्त्या अजहत्स्वार्था । छत्रिण इत्यादौ छत्रिघटितपथिकसमुदायत्वेन छत्रिपदस्य बोधजनिका छत्रिघटितैकसमुदायत्वावच्छिन्ने लक्षणेत्यर्थः ॥**आद्यामिति**॥ जहत्स्वार्थामित्यर्थः ॥ **वक्ष्यमाणास्वरसादिति** ॥ अन्वयानुपपत्तेर्लक्षणाबीजत्वे यष्टीः प्रवेशयेत्यादौ यष्टिपदस्य यष्टिधरे

सा च शक्यसम्बन्धः । तथाहि : प्रवाहरूपशक्यार्थसम्बन्धस्य तीरे गृहीतत्वात् तीरस्य स्मरणम् । ततः शाब्दबोधः । परन्तु यद्यन्वयानुपपत्तिर्लक्षणाबीजं स्यात् तदा यष्टीः प्रवेशयेत्यत्र लक्षणा न स्यात् । यष्टिषु प्रवेशान्वयस्यानुपपत्तेरभावात् । तेन तत्प्रवेशे भोजनतात्पर्यानुपपत्त्या यष्टिधरेषु लक्षणा । एवं काकेभ्यो दधि रक्ष्यतामित्यादौ काकपदस्य दध्युपघातके लक्षणा । सर्वतो दधिरक्षायास्तात्पर्यविषयत्वात् । एवं छत्रिणो गच्छ-

प्रभा.

ति ॥ निरुक्तप्रमाणसिद्धलक्षणा चेत्यर्थः । अवधारणार्थकचशब्दः शक्यसंबन्ध इत्युत्तरं योज्यः । एवंच लक्षणा शक्यसंबन्ध एव न पदार्थान्तरमित्यर्थः फलितः । सा लक्षणा द्विविधा जहत्स्वार्था अजहत्स्वार्था चेति तत्राद्यामुदाहृतस्थले उपपादयति ॥ **तथाहीत्यादिना** ॥ **प्रवाहरूपेति** ॥ उदाहृतवाक्यघटकगङ्गापदशक्यार्थस्यानुपपत्तिप्रतिसन्धानानन्तरं पुनस्स्मृतगङ्गापदनिरूपितस्येत्यादिः ॥ **तीर इति** ॥ तीरत्वावच्छिन्न इत्यर्थः ॥ **तीरस्य स्मरणमिति** ॥ तीरत्वविशिष्टविषयकस्मरणमित्यर्थः ॥ **ततः** तादृशस्मरणात् ॥ **शाब्दबोध इति** ॥ तीरत्वविशिष्टशाब्दबोध इत्यर्थः । अन्वयानुपपत्तेर्लक्षणाबीजत्वं निराकरोति ॥ **परन्त्विति** ॥ **यष्टीः प्रवेशयेत्यत्रेति** ॥ यष्टिधरबोधतात्पर्येण प्रयुक्ततादृशवाक्यघटकयष्टिपदस्येत्यर्थः ॥ **लक्षणा न स्यादिति** ॥ यष्टिधरे लक्षणा न स्यादित्यर्थः । तत्र हेतुमाह ॥ **यष्टिष्विति** ॥ दण्डेष्वित्यर्थः ॥ **प्रवेशान्वयेति** ॥ गृहप्राप्त्यन्वयानुपपत्तेरभावादित्यर्थः ॥ **तेनेति** ॥ तात्पर्यानुपपत्तेः लक्षणाबीजत्वस्वीकारेणेत्यर्थः ॥ **प्रवेशस्येति** ॥ यष्टीनां गृहप्रवेशस्येत्यर्थः । भोजनतात्पर्यविषयत्वाभावादिति शेषः । भोक्तॄणां प्रवेशस्यैव तात्पर्यविषयत्वादिति भावः ॥ **भोजनतात्पर्येति** ॥ भोजनतात्पर्यविषयत्वानुपपत्तिप्रतिसन्धानेनेत्यर्थः ॥ **लक्षणेति** ॥ आवश्यकीति शेषः । इदमवधेयं यष्टीः प्रवेशयेत्यत्र गृहमित्यध्याहार्यं प्रवेशयेत्यस्य ण्यन्तधातुत्वात् गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणिकर्ता स णौ इति सूत्रेण कर्मसंज्ञाविधानात् गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणां धातूनां योगे अणि कर्ता अण्यन्ते यः कर्ता स णौ ण्यन्ते कर्मसंज्ञः स्यादिति सूत्रार्थः । यष्टयः गृहं प्रविशन्ति ताः प्रेरयेत्यर्थबोधतात्पर्येणैव यष्टीः गृहं प्रवेशयेति प्रयोगात् यष्टिपदार्थस्य कर्मसंज्ञायां कर्मणि द्वितीयेति सूत्रेण यष्टिपदोत्तरं द्वितीया । अत्र संयोगजनकव्यापारकर्तृत्वनिर्वाहकव्यापारः ण्यन्तधात्वर्थः तद्घटकसंयोगे द्वितीयान्तगृहपदार्थगृहवृत्तित्वस्यान्वयः तादृशधात्वर्थघटककर्तृत्वे द्वितीयान्तयष्टिपदार्थवृत्तित्वस्यान्वयः । अत एव साक्षाद्धात्वर्थतावच्छेदकफलशालित्वात् यष्टिपदार्थस्य मुख्यकर्मत्वं लोट्पदार्थः कृतिः तथाच गृहवृत्तिसंयोगजनकव्यापारानुकूलयष्टिपदार्थवृत्तिकर्तृत्वनिर्वाहानुकूलव्यापारानुकूलकृतिमांस्त्वमिति शाब्दबोधलाभ इति । अजहत्स्वार्थलक्षणामुदाहरति ॥ **एवमिति** ॥ **इत्यादौ काकपदस्येति** ॥ इत्यादिवाक्यघटककाकपदस्येत्यर्थः ॥ **दध्युपघातक इति** ॥ दधिनाशकत्वावच्छिन्न इत्यर्थः ॥ **लक्षणेति** ॥ अजहत्स्वार्थलक्षणेत्यर्थः । काकपदस्य लक्षणायां बीजमाह ॥ **सर्वत इति** ॥ दध्युपघातकेभ्यस्सर्वेभ्य इत्यर्थः ॥ **दधिरक्षाया इति** ॥ दधिनिष्ठनाशप्रतियोगिताया इत्यर्थः ॥ **तात्पर्यविषयत्वादिति** ॥ तथाच तादृशतात्पर्यानुपपत्त्या लक्षणास्वीकार इति भावः । अत्र काकपदार्थस्य भीत्रार्थानां भयहेतुरिति सूत्रेण अपादानसंज्ञा भीत्यर्थकधातूनां त्राणार्थकधातूनां च योगे भयहेतुः अपादानसंज्ञः स्यादिति सूत्रार्थात् प्रकृते दधिनाशभीतिहेतुत्वात् काकादेरपादानत्वं अपादाने पञ्चमीति सूत्रेण काकपदोत्तरं पञ्चमी च । काकेभ्य इत्यत्र पञ्चम्याः जन्यत्वमर्थः व्यापारो नाशानुत्पत्तिश्च धात्वर्थः एकपदार्थयोरपि व्युत्पत्तिवैचित्र्यात् विशेषणविशेष्यभावेनान्वयः । परन्तु कर्त्राख्यातस्थले व्यापार अनुकूलतासंबन्धेन अनुत्पत्तेः कर्माख्यातस्थले अनुत्पत्तौ प्रयोज्यतासंबन्धेन व्यापारस्यान्वय इति शेषः । तथाच दध्युपघातकजन्यनाशोत्पत्तिप्रतियोगिकत्वत्कर्तृकव्यापारप्रयोज्याभावाधिकरणं दधीति शाब्दबोधो भवतीति बोध्यम् ।

दिनकरीयम्.

स्वरसादाह ॥ **तात्पर्यानुपपत्तिर्वेति** ॥ **सा च** लक्षणा च । द्वितीयां प्रदर्शयति ॥ **एवं काकेभ्य इ-**

न्तीत्यादौ छत्रिपदस्यैवैकसार्थवाहित्वे लक्षणा । इयमेवाजहत्स्वार्थलक्षणेत्युच्यते । एकसार्थ-

**प्रभा.**

अजहत्स्वार्थायाः उदाहरणान्तरमाह ॥ **एवमिति** ॥ **छत्रिणो गच्छन्तीति** ॥ योद्धुमित्यादिः ॥ **इत्यादौ छत्रिपदस्येति** ॥ तादृशवाक्यघटकच्छत्रिपदस्येत्यर्थः । एवकारेणान्तःपुरं छत्रिणो गच्छन्तीति वाक्यघटकच्छत्रिपदस्य लक्षणाव्यवच्छेदः ॥ **एकसार्थवाहित्व इति** ॥ एकसार्थवाहित्वविशिष्ट इत्यर्थः । छत्रिपदातिगजतुरगादिघटितसमुदायत्वावच्छिन्न इति फलितोऽर्थः ॥ **इयमेवेति** ॥ शक्यसाधारणधर्मावच्छिन्नलक्षणैवेत्यर्थः ॥ **अजहत्स्वार्थलक्षणेति** ॥ न जह्यते न त्यज्यते स्वार्थः स्वशक्यार्थः ययेति व्युत्पत्त्या शक्यसाधारणलक्षणाया एव अजहत्स्वार्थशब्दार्थत्वादिति भावः ॥ **उच्यत इति** ॥ तान्त्रिकैरित्यादिः । तान्त्रि-

**दिनकरीयम्.**

ति ॥ **दध्युपघातके** काकबिडालादिसाधारणदध्युपघातकत्वविशिष्टे ॥ **एकसार्थवाहित्वे** एकसार्थवाहित्वविशिष्टे । छत्रिपदलक्षणाभिधानं च वाक्यलक्षणावादिमताभिप्रायेण । न्यायमते तु छत्रपदस्यैव एकसार्थवाहित्वे

**रामरुद्रीयम्.**

लक्षणानुपपत्तिरूपास्वरसादित्यर्थः ॥ **मूले एकसार्थवाहित्वेनेति** ॥ एकस्सार्थः समुदायत्वं तद्विषयकबुद्धिविषयत्वरूपम् ॥ तद्वाहित्वेन तद्वत्त्वेनेत्यर्थः ॥ तृतीयार्थोऽवच्छिन्नत्वं तस्य च लक्षणापदार्थे लक्ष्यतायामन्वयो बोध्यः ॥ **मूले इयमेव चेति** ॥ काकपदस्य दध्युपघातके छत्रिपदस्य छत्रिघटितसमुदाये लक्षणैव चेत्यर्थः । क्वचिन्मूले एकसार्थवाहित्वे लक्षणेति पाठो दृश्यते । तदभिप्रायेण व्याचष्टे ॥ **एकसार्थवाहित्वविशिष्ट इति** ॥ ननु छत्रीत्यस्य मूलोक्तलक्षणा न सङ्गच्छते । छत्रमस्यास्तीत्यर्थे छत्रपदोत्तरं ताद्धितेनिप्रत्ययेनैव छत्रीत्यस्य निष्पन्नतया प्रकृतिप्रत्ययसमुदायरूपत्वेन तस्य वाक्यत्वाद्वाक्ये च शक्तिविरहेण लक्षणाया अप्यसम्भवादित्यत आह ॥ **छत्रीत्यादि** ॥ **वाक्यलक्षणावादिमतेति** ॥ वैयाकरणैः राजपुरुषादिसमासस्य राजस्वत्ववत्पुरुषे पाचकच्छत्र्यादिपदस्य पाककर्तृच्छत्रसम्बन्ध्यादौ शक्त्यङ्गीकारादिति भावः । ननु नेदं मतं विचारसहम् । समासे राजपदस्य राजसम्बन्धिनि लक्षणया पुरुषपदस्य पुरुषे शक्त्या च राजसम्बन्ध्यभिन्नः पुरुष इति बोधोपपत्तौ समासे स्वतन्त्रशक्तिकल्पने छत्र्यादौ च छत्रार्थकच्छत्रपदसम्बन्ध्यर्थकेनिप्रत्ययाभ्यामेव छत्रसंबन्धीति बोधोपपत्तौ छत्रीत्यस्य छत्रसंबन्धिनि शक्तिकल्पने च बीजाभावात् अन्यथा निरर्थकनानाशक्तिकल्पनागौरवप्रसङ्गात् । नच समासादौ शक्तिस्वीकार आवश्यकः । अन्यथा ऋद्धस्य राजमातङ्गा इत्यादिप्रयोगापत्तेः तत्रहि राजमातङ्गपदार्थतावच्छेदके राजन्यभेदेन ऋद्धपदार्थस्यान्वयो न सम्भवति । पदार्थः पदार्थेनान्वेति न तु पदार्थतावच्छेदकेनेति नियमात् । राजपदस्यैव राजार्थकत्वे तु तत्र ऋद्धपदार्थस्याभेदेनान्वये न किञ्चिद्बाधकमिति तादृशप्रयोगो दुर्वार इति वाच्यम् । राजपदस्य राजसम्बन्धिलक्षकतया राज्ञः पदार्थतावच्छेदकत्वसंभवाच्छक्यतावच्छेदकस्येव लक्ष्यतावच्छेदकस्यापि पदार्थतावच्छेदकत्वात् । छत्रीत्यादौ छत्रादौ पदार्थान्तरस्यान्वयबोधाभावस्तु वृत्तस्य न विशेषणयोगो विशेषणयुक्तस्य न वृत्तिरिति समासकृत्तद्धितादिरूपवृत्त्यैकदेशार्थस्य पदार्थान्तरेणानन्वयनियमरूपव्युत्पत्त्यन्तरादेवेत्यस्वरसादाह ॥ **न्यायमते त्विति** ॥ वस्तुतो वृत्त्यैकदेशार्थेऽपि दासशातनादौ चैत्रत्वशरकरणत्वादिरूपपदार्थान्तरस्य भेदसम्बन्धेन चैत्रस्य दासभार्या शरैः शातितपत्र इत्यादौ अन्वयबोधदर्शनादभेदसम्बन्धेन तत्र पदार्थान्तरान्वयोऽव्युत्पन्न इत्यवश्यमङ्गीकरणीयम् । तथा चाभेदेनान्वयप्रयोजकसमानविभक्तिकपदोपस्थाप्यत्वाभावादभेदेनान्वयबोधवारणसम्भवे वृत्तस्येत्यादिव्युत्पत्त्यनङ्गीकारेऽपि न क्षतिः । नच चैत्रस्य पितेत्यादौ पितृपदार्थतावच्छेदकघटकजनकत्वे चैत्रनिरूपितत्वस्य षष्ठ्यन्तार्थस्यान्वयदर्शनात् पदार्थतावच्छेदकेऽपि अभेदेनैव पदार्थान्तरस्यान्वयोऽव्युत्पन्न इत्यवश्यमङ्गीकरणीयम् । तथाविधान्वयबोधस्य च समानविभक्तिकपदोपस्थाप्यत्वादेरभावादेव वारणसम्भवे पदार्थः पदार्थेनान्वेतीत्यादिव्युत्पत्तिकल्पनमपि नावश्यकमिति वाच्यम् । तथासति गवि पशुर्गौरित्यादितो गोवृत्तिलोमलाङ्गूलवान् गौरित्यादिबोधापत्तिः । चैत्रस्य पितेत्यादौ तु ससम्बन्धिकपदशक्यतावच्छेदकेऽपि पदा-

**वाहित्वेन रूपेण छत्र्यच्छत्रिबोधात्। यदि चान्वयानुपपत्तिर्लक्षणाबीजं स्यात् तदा क्वचित् गङ्गापदस्य तीरे क्वचित् घोषपदस्य मत्स्यादौ लक्षणेति नियमो न स्यात्। इदं**

## प्रभा.

काभिमतमजहत्स्वार्थाया लक्षणं छत्रिपदलक्षणायां उपपादयति ॥ **एकसार्थवाहित्वेनेति** ॥ छत्रिपदलक्षणयेत्यादिः छत्र्यादिघटितसमूहत्वप्रकारेणेत्यर्थः ॥ **छत्र्यच्छत्रिबोधादिति** ॥ छत्र्यादिविषयकशाब्दबोधजननादित्यर्थः। तथाच शक्यसाधारणधर्मावच्छिन्नविषयकशाब्दजनकस्मृतिनिरूपितज्ञाननिष्ठकारणतानिरूपितविषयतासंबन्धावच्छिन्नावच्छेदकताश्रयलक्षणात्वस्यैव अजहत्स्वार्थलक्षणालक्षणत्वेन प्रकृते छत्रिपदलक्षणायां तादृशलक्षणसत्त्वेन लक्षणसमन्वय इति भावः। ननु छत्रिपदस्य वाक्यतया शक्त्यभावेन कथं लक्षणेति चेदत्र प्राञ्चः वाक्यस्य लक्षणाविरहेऽपि स्वबोध्यसंबन्धरूपलक्षणावादिमतमाश्रित्य छत्रिशब्दस्य लक्षणाङ्गीकार इत्याहुः। अपरे तु छत्रशब्दस्य एकसार्थवाहित्वे लक्षणा मतुबः संबन्धी अर्थः। तथाचैकसार्थवन्तो गच्छन्तीति बोधः। अत्र एकसार्थवाहित्वं नैकसार्थगमनवत्त्वं निराकाङ्क्षत्वेन यान्तीत्यस्य अनन्वयप्रसङ्गात् किंतु छत्र्यादिघटितसमूहत्वं। नचैवं सत्यजहत्स्वार्थत्वविरोध इति वाच्यम्। वाक्यलक्षणावादिमतानुसारेणैव अजहत्स्वार्थत्वोक्तिरित्याहुः। अन्येतु मत्वर्थेन् प्रत्ययस्यैव छत्र्यादिघटितसमूहत्वावच्छिन्नलक्षणा छत्रपदं तात्पर्यग्राहकं लक्षणाया अजहत्स्वार्थत्वाभिधानं वाक्यलक्षणावादिमतानुसारेणैवेत्याहुः। अस्मद्गुरुचरणास्तु छत्रिशब्दस्य छत्रविशिष्टत्वावच्छिन्ने यौगिकत्वं राजत्वावच्छिन्ने रूढत्वमिति योगरूढत्वान्नोक्तदोषप्रसक्तिरिति व्याचक्रुः। ननु सर्वत्र तात्पर्यानुपपत्तेः लक्षणाबीजत्वे मानाभावः तादृशानुपपत्तिज्ञानत्वस्य गुरुत्वात् किन्तु यत्रान्वयानुपपत्तिप्रतिसन्धानाभावः तत्रैवानायत्या तात्पर्यानुपपत्तिप्रतिसन्धानस्य लक्षणाग्राहकत्वं। नच लक्षणाग्रहं प्रति क्वचित्तात्पर्यानुपपत्तिज्ञानस्य क्वचिदन्वयानुपपत्तिज्ञानस्य हेतुत्वे कार्यकारणभावद्वयापत्तिरिति वाच्यम् लक्ष्यतावच्छेदकघटितलक्षणाज्ञानत्वस्य एतत्पदस्य एतदर्थप्रतीतीच्छयोच्चरितत्वमनुपपन्नमित्याकारकतात्पर्यानुपपत्तिज्ञाननिष्ठपदविशेषार्थविशेषघटिततात्पर्यानुपपत्तिज्ञानत्वस्य च भिन्नभिन्नतया परस्परव्यभिचारेण तत्तल्लक्षणाज्ञानत्वावच्छिन्नं प्रति तत्तत्तात्पर्यानुपपत्तिज्ञानत्वेनानन्तकार्यकारणभावस्यावश्यकत्वेन गङ्गायां घोष इत्यादौ तीरत्वावच्छिन्नलक्षणाग्रहं प्रति गङ्गापदशक्ये घोषाधारत्वमनुपपन्नमित्याकारकान्वयानुपपत्तिज्ञानस्यैव हेतुत्वमुचितं लाघवात् न त्वत्रापि निरुक्ततात्पर्यानुपपत्तिज्ञानत्वेन हेतुत्वं गौरवात् इति सिंहगुहावलोकनन्यायेन प्राचामाशङ्कां परिहरति ॥ **यदि चेति** ॥ गङ्गायां घोष इत्यादावित्यादिः। चोऽवधारणे स चान्वयानुपपत्तिरित्युत्तरं योज्यः ॥ **अन्वयानुपपत्तिरिति** ॥ गङ्गापदशक्ये घोषपदशक्याधारत्वान्वयानुपपत्तिज्ञानमेवेत्यर्थः ॥ **लक्षणाबीजं स्यादिति** ॥ लक्षणाग्राहकं

## दिनकरीयम्.

लक्षणा प्रत्ययार्थश्च सम्बन्धी। तथाचैकसार्थवन्तो गच्छन्तीत्यन्वयः। एकसार्थवाहित्वं चैकसार्थ एव न त्वेकसार्थगन्तृत्वम्। नैराकाङ्क्ष्येण यान्तीत्यस्यानन्वयापत्तेः। नचाजहत्स्वार्थतोक्तिर्विरुद्धेति वाच्यम्। वाक्यलक्षणावादिमतेनैव तदभिधानादिति ॥ **क्वचित्** गङ्गापदस्य तीरे तात्पर्यग्रहस्थले ॥ **क्वचित्** घोषपदस्य म-

## रामरुद्रीयम्.

र्थान्तरान्वयस्य व्युत्पन्नतया नान्वयबोधानुपपत्तिः। ससम्बन्धिकं च पदं नियतसंबन्धाकाङ्क्षोत्थापकमित्यवधेयम् ॥ **एकसार्थवाहित्व इति** ॥ एकसमुदायत्व इत्यर्थः। यद्यपि छत्रपदस्य छत्रिघटितसमुदाये लक्षणोपगमेऽपि संभवति निर्वाहः तथापि संभवति प्रत्ययस्य सार्थक्ये तत्परित्यागस्यानुचितत्वादेवमभिहितमित्यवधेयम् ॥ **एकसार्थ एवेति** ॥ एकसमुदायत्व एवेत्यर्थः ॥ **नैराकांक्ष्येणेति** ॥ उद्देश्यतावच्छेदकविधेययोरैक्ये अभेदेनान्वयस्याव्युत्पन्नतया गमनकर्तृत्वविशिष्टे गमनकर्तृत्वस्याश्रयतयान्वयबोधे आकाङ्क्षाविरहादिति भावः। **नचेति**। छत्रपदस्य छत्रिघटितसमुदायलक्षकत्वे तज्जन्यशाब्दबोधे छत्ररूपमुख्यार्थस्य मुख्यविशेष्यतया भानाभावादिति ध्येयम् ॥ **वाक्यलक्षणेति** ॥ एतच्चापातत एव समाधानम्। वस्तुतः स्वजन्यबोधे

तु बोध्यम् । शक्यार्थसम्बन्धो यदि तीरत्वेन रूपेण गृहीतस्तदा तीरत्वेन तीरबोधः यदि तु गङ्गातीरत्वेन रूपेण गृहीतस्तदा तेनैव रूपेण स्मरणम् । अत एव लक्ष्यतावच्छेदके न

## प्रभा.

स्यादित्यर्थः ॥ **क्वचिदिति** ॥ तीरवृत्तिर्घोष इति बोधतात्पर्येण उच्चरितगङ्गायांघोषइतिवाक्य इत्यर्थः । सप्तम्यर्थो घटकत्वं तस्य च गङ्गापदेऽन्वयः ॥ **गङ्गापदस्येति** ॥ गङ्गापदस्यैवेत्यर्थः ॥ तीरे लक्षणेति योजना ॥ **क्वचिदिति** ॥ मत्स्यतात्पर्येण उच्चरितगङ्गायांघोषइतिवाक्य इत्यर्थः । अत्रापि सप्तम्यर्थो घटकत्वं तस्य घोषपदे अन्वयः ॥ **घोषपदस्येति** ॥ घोषपदस्यैवेत्यर्थः ॥ **मत्स्यादाविति** ॥ मत्स्यत्वावच्छिन्नकच्छपत्वावच्छिन्न इत्यर्थः ॥ **इति नियम इति** ॥ इति व्यवस्थेत्यर्थः । तथाचान्वयानुपपत्तिप्रतिसन्धानस्यैव गङ्गायां घोष इति वाक्यघटकगङ्गापदस्य घोषपदस्य वा तीरमत्स्यादौ लक्षणाग्राहकत्वे तीरबोधतात्पर्येणोच्चरिततादृशवाक्ये मत्स्यादिबोधतात्पर्येणोच्चरिततादृशवाक्ये च गङ्गापदलक्षणयैव घोषपदलक्षणयैव वान्वयानुपपत्तिप्रति-सन्धाननिवृत्तेः संभवात् निरुक्तव्यवस्थानुपपन्ना स्यात् तात्पर्यानुपपत्तिप्रतिसन्धानस्य लक्षणाग्राहकत्वे तु तीरबोधतात्पर्येणोच्चरिततादृशवाक्ये घोषपदस्य मत्स्यादौ लक्षणाज्ञानेन मत्स्यादिबोधतात्पर्येणोच्चरिततादृशवाक्ये गङ्गापदस्य तीरे लक्षणाज्ञानेन च तत्तत्तात्पर्यविषयशाब्दबोधानिष्पत्त्या निरुक्ततात्पर्यानुपपत्तिप्रतिसन्धानानिवृत्तेः तन्निवृत्त्यर्थं तीरबोधतात्पर्येणोच्चरिततादृशवाक्ये गङ्गापदस्यैव तीरे मत्स्यादिबोधतात्पर्येणोच्चरिततादृशवाक्ये घोषपदस्यैव मत्स्यादौ लक्षणेति व्यवस्था आवश्यकीति । एवंच तत्तल्लक्षणाज्ञानत्वेन तत्तदर्थविषयकशाब्दबोधोत्पत्तौ निरुक्ततात्पर्यानुपपत्तिप्रतिसन्धाननिवृत्तेः संभवान्नोक्तदोष इति भावः । ननु लक्षणाज्ञानस्य कथं स्मारकत्वं न तावत्तत्पदलक्ष्यतावच्छेदकप्रकारकस्मृतिं प्रति तत्तत्पदलक्ष्यतावच्छेदकावच्छिन्नविशेष्यकतत्तत्पदनिरूपितलक्षणाप्रकारकज्ञानत्वेन हेतुत्वं तथा सति तीरत्ववत् गङ्गातीरत्वस्यापि गङ्गापदलक्ष्यतावच्छेदकतया गङ्गापदलक्ष्यतावच्छेदकगङ्गातीरत्वावच्छिन्नविशेष्यकगङ्गापदनिरूपितलक्षणाज्ञानात् केवलतीरत्वप्रकारकस्मरणापत्तेः तादृशस्मृतितः तत्प्रकारकशाब्दबोधापत्तेः । नच तुल्ययुक्त्या शक्तिज्ञानस्यापि स्मारकत्वानुपपत्तिः हर्यादिपदस्य नानाशक्यतावच्छेदककत्वेन हरिपदशक्यतावच्छेदकयमत्वावच्छिन्नविशेष्यकहरिपदनिरूपितशक्तिज्ञानात् अनिलत्वादिप्रकारकस्मृत्याद्यापत्त्या व्यभिचार इति वाच्यम् तन्निष्ठतत्पदशक्यतावच्छेदकावच्छिन्नविशेष्यकतत्पदनिरूपितशक्तिज्ञानस्य तन्निष्ठतत्पदशक्यतावच्छेदकप्रकारकस्मृतिं प्रत्येव हेतुत्वस्वीकारेण यमनिष्ठहरिपदशक्यतावच्छेदकयमत्वावच्छिन्नविशेष्यकहरिपदनिरूपितशक्तिज्ञानात् अनिलत्वादिप्रकारकस्मरणाद्यापत्तेरभावात् अनिलत्वस्य यमावृत्तित्वात् एकधर्मिणि एकपदनिरूपितरूढिशक्यतावच्छेदकद्वयानभ्युपगमात् लक्षणास्थले गङ्गातीरे तीरत्वगङ्गातीरत्वरूपलक्ष्यतावच्छेदकद्वयसत्त्वेन गङ्गापदलक्ष्यतावच्छेदकगङ्गातीरत्वावच्छिन्नगङ्गापदलक्ष्यनिष्ठविशेष्यताशालिगङ्गापदनिरूपितलक्षणाज्ञानात् शुद्धतीरत्वप्रकारकस्मरणाद्यापत्तेर्दुर्वारत्वादित्याशङ्कां हर्यादिपदस्थले उक्तदोषवारणाय शक्तिज्ञानस्य व्यक्तिविशेषघटितरूपेण स्मृतिकारणत्वं गौरवात् परित्यज्य शक्यतावच्छेदकाविशेषघटितरूपेणैव कारणत्वस्य वाच्यतया तुल्यन्यायेन लक्षणाग्रहस्यापि व्यक्तिविशेषघटितरूपे-

## दिनकरीयम्.

त्यादौ तात्पर्यग्रहस्थले ॥ **तेनैव रूपेणेति** ॥ न च गङ्गायामित्यादौ गङ्गातीरत्वेन बोधे जहत्स्वार्थत्वहानिरिति वाच्यम् । तीरत्वेन लक्षणायामेव जहत्स्वार्थत्वस्य सर्वसम्मतत्वात् । गङ्गातीरत्वेन भाने त्वजहत्स्वार्थैव लक्षणेति । एवं पूर्वोक्तस्थले यष्टीः प्रवेशय मञ्चाः क्रोशन्तीत्यादावपि यष्टिधरत्वमञ्चस्थत्वादिना बोधे अजहत्स्वार्थैव लक्षणेति ध्येयम् ॥ **अत एव** तद्धर्मविशिष्टे लक्षणाग्रहस्य तेन रूपेणोपस्थितिशाब्दबोधौ प्रति हेतुत्वादेव । एवञ्च

## रामरुद्रीयम्.

शक्यार्थस्य विशेषणतया भानेऽपि नाजहत्स्वार्थताभङ्गः । यादृशलक्षणया शक्यार्थस्य कथञ्चिदपि न बोधः तस्या एव जहत्स्वार्थत्वात् । अत एव गङ्गापदस्य यत्र गङ्गातीरत्वेन लक्षणा साजहत्स्वार्था । यत्र तु तीरत्वेन लक्षणा तत्रैव जहत्स्वार्थेति न्यायमतेऽपि छत्रीत्यादौ अजहत्स्वार्थलक्षणोपपादनमिति ध्येयम् ॥ **तीरत्वेनेति** ॥ इदमपि पूर्वोक्तिविरुद्धमेव छत्रिघटितसमुदायलक्षकच्छत्रपदस्य विशेषणतया छत्रबोधकत्वेन

लक्षणा तत्प्रकारकबोधस्य तत्र लक्षणां विनाप्युपपत्तेः । परं त्वेवंक्रमेण शक्यतावच्छेद-

प्रभा.

ण स्मृतिकारणत्वं परित्यज्य लक्ष्यतावच्छेदकविशेषघटितरूपेण कारणत्वाङ्गीकारेण परिहरति ॥ **इदं तु बोध्यमित्यादिना** ॥ **शक्यार्थसंबन्ध इति** ॥ लक्षणेत्यर्थः ॥ **यदीति** ॥ यदेत्यर्थः ॥ **तीरत्वेनेति** ॥ तीरत्वावच्छिन्नविशेष्यतानिरूपितज्ञानीयप्रकारतावानित्यर्थः । तीरत्वावच्छिन्नविशेष्यकगङ्गापदनिरूपितलक्षणाप्रकारकग्रहो यदेत्यर्थः ॥ **तदेति** ॥ तदव्यवहितोत्तरक्षण इत्यर्थः ॥ **तीरत्वेन रूपेण तीरबोध इति** ॥ तीरत्वप्रकारकतीरविशेष्यकस्मृत्यनन्तरमित्यादिः । तीरत्वप्रकारकतीरविशेष्यकशाब्दबोध इत्यर्थः ॥ **यदि त्विति** ॥ यदेत्यर्थः । अवधारणार्थकतुशब्दः रूपेणेत्युत्तरं योज्यः ॥ **गङ्गातीरत्वेनेत्यादि** ॥ गङ्गातीरत्वावच्छिन्नविशेष्यतानिरूपितज्ञानीयप्रकारताश्रय इत्यर्थः । एतस्य शक्यसंबन्ध इति पूर्वेणान्वयः । गङ्गापदनिरूपितलक्षणाप्रकारकगङ्गातीरत्वपर्याप्तावच्छेदकताकग्रहो यदेति फलितोऽर्थः ॥ **तदेति** ॥ तादृशग्रहाव्यवहितोत्तरक्षण इत्यर्थः ॥ **तेनैव रूपेण बोध इति** ॥ गङ्गातीरत्वप्रकारकस्मरणोत्तरमित्यादिः । गङ्गातीरत्वप्रकारक एव तीरविशेष्यकशाब्दबोध इत्यर्थः । तथाच तद्धर्मावच्छिन्नविशेष्यकलक्षणाज्ञानस्य तद्धर्मप्रकारकस्मृत्यादिकं प्रत्येव हेतुतया गङ्गातीरत्वावच्छिन्नविशेष्यकलक्षणाज्ञानात् न शुद्धतीरत्वप्रकारकस्मरणाद्यापत्तिरिति भावः । ननु गङ्गातीरत्वस्यापि गङ्गापदलक्ष्यतावच्छेदकत्वे तद्धर्मावच्छिन्नविशेष्यकलक्षणाज्ञानात् तद्धर्मप्रकारकस्मरणशाब्दबोधयोरुत्पत्त्या तस्याः जहत्स्वार्थत्वानुपपत्तिः । शक्यार्थाविषयकशाब्दबोधप्रयोजकलक्षणाया एव जहत्स्वार्थलक्षणापदार्थत्वादिति चेदत्र प्राञ्चः शुद्धतीरत्वावच्छिन्नलक्षणाया एव जहत्स्वार्थत्वस्वीकारात् गङ्गातीरत्वावच्छिन्नलक्षणाया जहत्स्वार्थत्वाभावेऽपि न क्षतिरिति व्याचक्रुः । नव्यास्तु लक्ष्यनिष्ठविषयत्वानिरूपितशक्यनिष्ठविषयत्वानिरूपकशाब्दबोधप्रयोजकलक्षणाया एव जहत्स्वार्थलक्षणापदार्थत्वात् प्रकृते शुद्धतीरत्वावच्छिन्नलक्षणायाः गङ्गातीरत्वावच्छिन्नलक्षणायाश्च तादृशशाब्दबोधप्रयोजकलक्षणात्वात् उभयोरपि जहत्स्वार्थत्वोपपत्तिरिति प्राहुः । अस्मद्गुरुचरणास्तु समभिव्याहृतपदार्थनिष्ठविषयतानिरूपितशक्यार्थनिष्ठविषयतानिरूपकशाब्दबोधप्रयोजकलक्षणात्वमेव जहत्स्वार्थत्वं प्रकृते गङ्गातीरत्वावच्छिन्नलक्षणाज्ञानाधीनशाब्दबोधीयगङ्गानिष्ठविषयतायाः समभिव्याहृतसप्तमीपदार्थाधेयत्वविषयतानिरूपितत्वाभावेन गङ्गातीरत्वावच्छिन्नलक्षणाया अपि निरुक्तलक्षणाक्रान्ततया जहत्स्वार्थत्वोपपत्तिरिति व्याचक्रुः । वस्तुतस्तु शक्यसाधारणधर्मानवच्छिन्नविषयताप्रयोजकलक्षणात्वं शक्यसाधारणधर्मानवच्छिन्नलक्षणात्वं वा जहत्स्वार्थत्वमिति गङ्गातीरत्वावच्छिन्नलक्षणाया अपि ईदृशलक्षणाश्रयत्वेन जहत्स्वार्थत्वं निराबाधमेवेति प्रतिभाति । यत्तु शक्यावृत्तिलक्षणात्वं जहत्स्वार्थत्वमिति तन्न काकेभ्यो दधि रक्ष्यतामिति वाक्यघटककाकपदनिरूपितदध्युपघातकमात्रनिष्ठाजहल्लक्षणायामतिव्याप्तेः काकवृत्तिदध्युपघातकत्वसजातीयदध्युपघातकत्वरूपलक्षणायाः काकबिडालादिभेदेन भिन्नतया बिडालादिवृत्तिदध्युपघातकत्वरूपलक्षणायाः शक्यावृत्तिलक्षणारूपत्वादिति । एवं च यष्टीः प्रवेशय मञ्चाः क्रोशन्तीत्यादौ यष्टिधरत्वमञ्चस्थपुरुषत्वादिना बोधेऽपि यष्टिपदनिरूपितयष्टिधरत्वावच्छिन्नलक्षणायाः मञ्चादिपदनिरूपितमञ्चस्थपुरुषत्वाद्यवच्छिन्नलक्षणायाश्च शक्यसाधारणधर्मानवच्छिन्नलक्षणात्वेन जहत्स्वार्थत्वमव्याहतमेवेति हृदयम् ॥ **अत एवेति** ॥ वृत्तिज्ञानस्मरणशाब्दबोधानां समानप्रकारकत्वेन कार्यकारणभावस्वीकारादेवेत्यर्थः ॥ **लक्ष्यतावच्छेदकेऽपीति** ॥ लक्ष्यतावच्छेदकतीरत्वादावपीत्यर्थः ॥ **न लक्षणेति** ॥ गङ्गापदशक्यप्रवाहसंयुक्तसमवायरूपलक्षणा न स्वीक्रियत इत्यर्थः । तीरत्ववृत्तितादृशसमवायस्य प्रयोजनविरहेण लक्षणात्वानुपगमादिति भावः । ननु कथं तर्हि शाब्दबोधे तीरत्वादिरूपलक्ष्यतावच्छेदकभानमत आह ॥ **तत्प्रकारकबोधस्येति** ॥ तीरत्वप्रकारकशाब्दबोधस्येत्यर्थः ॥ **लक्षणां विनापीति** ॥ लक्ष्यतावच्छेदक इत्यादिः । तीरत्वादिवृत्तिप्रवाहसंयुक्तसमवायस्य लक्षणात्वानभ्युपगमेऽपीत्यर्थः ॥ **उपपत्तेरिति** ॥ तीरत्वादिप्रकारकशाब्दबोधनिर्वाहादित्यर्थः । तथाच तीरे आश्रयतासंबन्धेन गङ्गापदलक्षणासत्त्वात् यथा तीरस्मरणशाब्दबोधयोरुपपत्तिः तथा तीरत्वेऽप्यवच्छेदकतासंबन्धेन तादृशलक्षणासत्त्वात् तत्प्रकारकस्मरणशाब्दबोधयोरपि नानुपपत्तिरिति भावः । नच अपदार्थतीरत्वादेः शा-

केऽपि शक्तिर्न स्यात् तत्प्रकारकशक्यार्थस्मरणं प्रति तत्पदस्य सामर्थ्यमित्यस्य सुवचत्वादिति विभावनीयम् । यत्र तु शक्यार्थस्य परम्परासम्बन्धरूपा लक्षणा सा लक्षि-

**प्रभा.**

ब्दबोधविषयत्वे घटादेरपि विषयत्वापत्तिरिति वाच्यम् प्रकृते अपदार्थत्वस्य पदजन्यप्रतीत्यविषयत्वरूपत्वस्वीकारेण लक्षणया गङ्गापदजन्यस्मृत्यादौ तीरत्वस्यापि विषयत्वेन तस्यापदार्थत्वाभावात् । यद्वा वृत्तिशून्यत्वं तत् तीरत्वस्यापि अवच्छेदकतासंबन्धेन वृत्तिमत्त्वात् । एवंच घटादेः गङ्गापदजन्यबोधाविषयत्वात् स्वरूपावच्छेदकत्वान्यतरसंबन्धेन गङ्गापदनिरूपितवृत्तिमत्त्वाभावाच्च निरुक्तापदार्थत्वात् न तस्य शाब्दबोधविषयत्वापत्तिरिति । नन्वेवं सति घटादिपदानां घटत्वादिविशिष्टे शक्तिस्वीकारो निरर्थकः घटत्वादेरपि घटपदजन्यप्रतीतिविषयत्वात् अवच्छेदकतासंबन्धेन घटपदनिरूपितशक्तिमत्त्वाच्च तस्यापि घटादिपदार्थत्वेन तादृशशाब्दबोधविषयत्वसंभवादित्याक्षेपमिष्टापत्त्या परिहरति ॥ **परं त्विति** ॥ ॥ **एवं क्रमेणेति** ॥ तीरत्वादौ पृथग्लक्षणाभावेऽपि अवच्छेदकतासंबन्धेन लक्ष्यनिष्ठलक्षणासत्त्वात् यथा स्मृत्यादिविषयत्वोपपत्तिः तद्रीत्येत्यर्थः ॥ **शक्तिर्न स्यादिति** ॥ शक्तिर्माभूदित्यर्थः । तत्र हेतुमाह ॥ **तत्प्रकारकेति** ॥ शक्यतावच्छेदकघटत्वादिप्रकारकस्मरणं शाब्दबोधं प्रति चेत्यर्थः ॥ **तत्पदस्येति** ॥ शक्तघटादिपदस्येत्यर्थः ॥ **सामर्थ्यमिति** ॥ शक्तिज्ञानद्वारा स्मृत्यादिप्रयोजकत्वमित्यर्थः ॥ **इत्यस्येति** ॥ एतादृशयुक्तिरूपप्रमाणस्यापीत्यर्थः ॥ **सुवचत्वादिति** ॥ उक्तप्रायत्वादित्यर्थः ॥ **इति विभावनीयमिति** ॥ इति निपुणतरमालोचनीयमित्यर्थः । तथाच गङ्गादिपदानां तीरादिरूपव्यक्तिमात्रे लक्षणैव उक्तयुक्त्या घटादिपदानां घटादिव्यक्तिमात्र एव शक्तिरपि सिध्यतीति भावः । लक्षितेन लक्ष्यते ज्ञायते अनेनेति व्युत्पत्त्या लक्षितपदवाच्यत्वं लक्षितलक्षणापदार्थः । साच न शक्तिर्न वा लक्षणेति तस्याः वृत्त्यन्तरत्वमावश्यकमिति प्राचीनैकदेशिमतं निराकर्तुं लक्षणायामन्तर्भावमाह ॥ **यत्र त्विति** ॥ यादृशपद इत्यर्थः । सप्तम्यर्थो निरूपितत्वं तस्य प्राथमिकलक्षणायामन्वयः अवधारणार्थकतुशब्दः सेत्युत्तरं योज्यः ॥ **लक्षणेति** ॥ या लक्षणेत्यर्थः ॥ **सेति** ॥ तादृशपद इत्यादिः । तादृशलक्षणैवेत्यर्थः ॥ **लक्षितलक्ष-**

**दिनकरीयम्.**

पदानुपस्थाप्यस्यापि लक्ष्यतावच्छेदकस्य शाब्दे भानं सुकरम् । अतिप्रसङ्गस्य तद्धर्मविशिष्टेत्यादिनैव वारणादिति भावः । इदमुपलक्षणं गङ्गापदशक्यप्रवाहसम्बन्धस्य तीरत्वे बाधादित्यपि द्रष्टव्यम् । लक्षितलक्षणाया आधिक्यमाशङ्क्य जहत्स्वार्थायामन्तर्भावमाह ॥ **यत्र त्विति परम्परासम्बन्धरूपेति** ॥ स्ववाच्यरेफद्वयघटितप-

**रामरुद्रीयम्.**

तत्राप्यजहत्स्वार्थलक्षणोपपादनमिति तस्यामप्यजहत्स्वार्थत्वसम्भवादिति ध्येयम् । न च केवलसमुदायत्वेन यत्र छत्रपदस्य लक्षणा तत्रैवाजहत्स्वार्थत्वविरोधो न चेत्यादिना पूर्वमाशङ्कित इति न पूर्वोत्तरग्रन्थविरोध इति वाच्यम् । एवमपि यत्र छत्रिघटितसमुदायत्वेन छत्रपदस्य लक्षणा तत्रैवाजहत्स्वार्थत्वोपपत्तेरिति समाधानस्यैव कार्यत्वाद्वाक्यलक्षणावादिमताभिप्रायेणाजहत्स्वार्थत्वोपपादनस्यानौचित्यात् । अत एव ग्रन्थकृतैव यत्र तीरत्वेन गङ्गापदस्य लक्षणा तत्रैव गङ्गापदस्य जहत्स्वार्थलक्षणायाः सर्वसम्मतत्वादिति वक्ष्यते । तत्र हि सर्वपदमहिम्ना गङ्गातीरत्वेन लक्षणायामपि जहत्स्वार्थत्वस्य केषाञ्चिदनुमतत्वं लक्ष्यते । तच्च शक्यार्थस्य पदार्थान्तरेण साकं यत्रान्वयबोधस्तत्रैवाजहत्स्वार्थत्वमिति मताभिप्रायेणैव घटत इति मन्तव्यम् ॥ **अतिप्रसङ्गस्येति** ॥ वृत्त्या पदजन्योपस्थित्यविषयस्यापि शाब्दबोधे भानोपगमे घटादिपदात् पटादिविषयकशाब्दबोधप्रसङ्गस्येत्यर्थः । तथाच यद्धर्मावच्छिन्नविशेष्यकशक्यसम्बन्धग्रहः तद्धर्मावच्छिन्नविशेष्यकमेव पदार्थस्मरणं शाब्दबोध इति नियमोपगमेनैव घटादिपदान्न पटादिविषयकशाब्दबोधापत्तिरिति भावः ॥ **प्रवाहसम्बन्धस्येति** ॥ तथा च शक्यसम्बन्धरूपलक्षणाया लक्ष्यतावच्छेदके तीरत्वेऽभावादपि लक्ष्यतावच्छेदके न लक्षणेति भावः । यद्यपि तीरत्वेऽपि संयुक्तसमवायरूपशक्यसम्बन्धोऽस्त्येव तथापि

**तल्लक्षणेत्युच्यते । यथा द्विरेफादिपदे रेफद्वयस्य सम्बन्धो भ्रमरपदे ज्ञायते भ्रमरपदस्यं च**

### प्रभा.

**णेति** ॥ लक्षितलक्षणापदार्थ इत्यर्थः ॥ **इत्युच्यत इति** ॥ इति व्यवह्रियत इत्यर्थः । तथाच द्विरेफमानयेत्यादौ द्विरेफपदेन लक्षणया भ्रमरपदानुपस्थितेः भ्रमरपदेन शक्त्या भ्रमरस्यानुपस्थितेश्च उक्तयोगार्थासंभवेन लक्षितपदवाच्यत्वरूपवृत्त्यन्तरेऽपि तादृशपदस्य रूढेरेव वक्तव्यतया तदपेक्षया स्ववाच्यरेफद्वयघटितपदवाच्यत्वरूपपरम्परासंबन्ध एव लक्षितलक्षणापदस्य रूढिस्वीकार उचितः वृत्त्यन्तराकल्पनलाघवसत्त्वादिति प्राचीनैकदेशिभिन्ननैयायिकानामाशयः । परम्परासंबन्धरूपलक्षणामुदाहरति ॥ **यथेति** ॥ **द्विरेफादिपद इति** ॥ द्विरेफमानयेत्यादिवाक्यघटकद्विरेफादिपद इत्यर्थः ॥ **रेफद्वयस्येति** ॥ द्विरेफपदशक्यरेफद्वयस्येत्यर्थः ॥ **संबन्ध इति** ॥ घटितत्वसंबन्ध इत्यर्थः ॥ **भ्रमरपद इति** ॥ भ्रमरपदनिष्ठ इत्यर्थः ॥ **ज्ञायत इति** ॥ अनुभूयत इत्यर्थः । इदंच प्रमाणोपन्यासाय न तु तस्यापि लक्षणापदार्थघटकता व्यर्थत्वात् । एवमुत्तरत्रापि ॥ **भ्रमरपदस्येति** ॥ द्विरेफपदवाच्यरेफद्वयघटितभ्रमरप-

### दिनकरीयम्.

दवाच्यत्वादिरूपा । न च द्वौ रेफौ यत्रेति व्युत्पत्त्या द्विरेफपदेन स्वशक्यरेफद्वयसम्बन्धिभ्रमरपदं लक्ष्यते । भ्रमरपदेन च शक्त्या भ्रमरः कल्प्यते इत्येतावतैव सामञ्जस्येऽलं द्विरेफपदस्य भ्रमरे परम्परासम्बन्धरूपलक्षणया । एवञ्च

### रामरुद्रीयम्.

युगपद्वृत्तिद्वयविरोधेन शक्तिद्वयेनेव लक्षणाद्वयेनापि एकदैव पदार्थद्वयशाब्दबोधस्यानुपगमेनैकपदात्तीरतीरत्वयोर्बोधानुपपत्तिरिति ग्रन्थकृतां तात्पर्यम् । गङ्गायां घोषमत्स्यौ स्त इत्यादिप्रयोगस्य प्रामाण्योपगमे तु सजातीयवृत्तिद्वयेनैव युगपन्नार्थद्वयविषयकशाब्दबोध इत्यवधेयम् । अत उक्तस्थले गङ्गापदादेकदैव तीरप्रवाहयोर्बोधेऽपि न क्षतिरिति मन्तव्यम् ॥ **मूले परं त्वित्यादि** ॥ अत्रेदमवधेयम् । शक्यतावच्छेदके शक्त्यस्वीकारे पृथिवीपदात् कदाचिदष्टद्रव्यातिरिक्तद्रव्यत्वेन कदाचित् गन्धवत्त्वेन कदाचित्पृथिवीत्वेन च शाब्दबोधापत्तिः । पृथिवी पृथिवीपदशक्येतिवदष्टद्रव्यातिरिक्तद्रव्यं गन्धवान्वा पृथिवीपदशक्यमित्याकारकस्य शक्तिज्ञानस्य सम्भवात्तीरं गङ्गातीरं वा प्रवाहसंयोगवदिति लक्षणाग्रहेण शक्तिग्रहस्य तुल्ययोगक्षेमत्वात् । तथाच लक्षणया यत्किञ्चिदेकधर्मावच्छिन्नविषयक एव शाब्दबोध इति यथा न नियमस्तथा शक्यार्थबोधेऽपि नियमो न स्यात् । शक्यतावच्छेदके शक्तिस्वीकारे तु पृथिवीपदात् पृथिवीत्वेनैव शाब्दबोध इति नियम उपपद्यते । पृथिवीपदस्य पृथिवीत्वपृथिव्योरेव शक्ततया शक्त्या शक्यार्थस्यैव शाब्दबोधे भानमिति नियमेन च तदुपपादनसम्भवात् । लक्षणया लक्ष्यस्यापि शाब्दबोधे भानोपगमेन लक्षणया कदाचित् तीरत्वेन कदाचित् गङ्गातीरत्वेन शाब्दबोधो भवत्येव । इदमत्र पुनश्चिन्त्यम् । धर्मितावच्छेदके शक्यतावच्छेदकत्वावगाहिशक्तिज्ञानमेव शाब्दबोधहेतुरुपेयते । शक्यतावच्छेदकंच सर्वत्र लघ्वन्यूनानतिरिक्तवृत्तिरेव धर्मः सम्भवति लघौ गुरौ स्वरूपसंबन्धरूपावच्छेदकत्वास्वीकारात् । अत एव पृथिवी पृथिवीपदशक्येति शक्तिज्ञानमेव प्रमा शक्तेः पृथिवीत्वावच्छिन्नत्वात् । ननु जलाद्यष्टद्रव्यातिरिक्तद्रव्यं तथेत्यादिशक्तिज्ञानं तेषां गुरुत्वेन शक्यतानवच्छेदकत्वात् । शक्यसंबन्धरूपप्रवाहसंयोगस्य तु स्वरूपसंबन्धरूपावच्छेदकत्वे मानाभावः । तीरं प्रवाहसम्बन्धवदितिवद्गङ्गातीरं भूखण्डं प्रवाहसंयोगीति प्रतीतेः सर्वजनानुभवसिद्धत्वात् । पृथिवी पृथिवीपदशक्येति बोधस्यैव प्रमात्वं नत्वष्टद्रव्यातिरिक्तद्रव्यं तथेत्यादिशक्तिज्ञानस्य तथात्वमित्यस्य सर्वसम्मतत्वात् शक्तिप्रतीतीनां स्वरूपसम्बन्धरूपावच्छेदकत्वावगाहित्वसिद्ध्या शक्तेः तथाविधावच्छेदकत्वं प्रामाणिकमेव घटो नास्तीत्यादिप्रतीतौ घटत्वस्येव प्रतियोगितावच्छेदकत्वम् । इत्थंच शक्यतावच्छेदके शक्तिविरहेऽपि पृथिवीपदात् शक्तिप्रमया पृथिवीत्वप्रकारकशाब्दबोधः । शक्तिभ्रमेण तु गन्धवत्त्वादिनापि शाब्दबोध इति । अत एव भ्रान्तस्य गन्धवत्त्वावच्छेदेनापि शक्तिज्ञानसम्भवादिति परैरपरिशीलितः पन्थाः ॥ **कल्प्यत इति** ॥ उपस्थाप्यत इत्यर्थः । अवयवशक्त्या द्विरेफपदाद्भ्रमरपदस्य स्मरणं भवति । तेनच स्मरणात्मकपदज्ञानेन

सम्बन्धो भ्रमरे ज्ञायते तत्र लक्षितलक्षणेत्युच्यते । किन्तु लाक्षणिकं पदं नानुभावकम् । लाक्षणिकार्थस्य शाब्दबोधे तु पदान्तरं कारणम् । शक्तिलक्षणान्यतरसम्बन्धेनेतरपदार्थान्वि-

## प्रभा.

दस्येत्यर्थः ॥ संबन्ध इति ॥ वाच्यत्वरूपसंबन्ध इत्यर्थः ॥ भ्रमर इति ॥ भ्रमरानिष्ठ इत्यर्थः ॥ तत्रेति ॥ तादृशद्विरेफपद इत्यर्थः ॥ लक्षितलक्षणेत्युच्यत इति ॥ एतस्य पूर्वोक्त एवार्थः । ननु तच्छाब्दबोधे तच्छक्तपदज्ञानत्वेन हेतुत्वमावश्यकं अन्यथा कुमतिः पशुरित्यादिलाक्षणिकपदद्वयघटितवाक्यादपि शाब्दबोधापत्तेः । एवंच गङ्गायां घोष इत्यादौ गङ्गापदस्य तीरलाक्षणिकतया तीरशक्तपदज्ञानाभावात् कथं तीरविषयकबोध इत्यत आह ॥ किन्त्विति ॥ लाक्षणिकमिति ॥ तदर्थलाक्षणिकपदज्ञानमित्यर्थः ॥ नानुभावकमिति ॥ तदर्थविषयकशाब्दबोधजनकमेवेत्यर्थः । तेन गङ्गायां घोषमत्स्यौ स्त इति वाक्यघटकतीरलाक्षणिकगङ्गापदज्ञानात् प्रवाहबोधेऽपि न क्षतिः ॥ लाक्षणिकार्थस्येति ॥ किन्त्वित्यादिः । लक्षणाज्ञानाधीनोपस्थितिविषयार्थविषयकशाब्दबोध इत्यर्थः ॥ पदान्तरमिति ॥ शक्तिज्ञानाधीनार्थोपस्थापकपदज्ञानमित्यर्थः । नन्वेवं सति कुमतिः पशुः घटश्चेति वाक्यादपि शाब्दबोधापत्तिः शक्तघटपदज्ञानसत्त्वात् तदर्थविषयकशाब्दबोधे तच्छक्तपदज्ञानत्वेन हेतुत्वमिति नियमभङ्गप्रसङ्ग-

## दिनकरीयम्.

लक्षितेन लक्षणा ज्ञापनमिति लक्षितलक्षणाशब्दार्थोऽप्यस्त्विति वाच्यम् । तथा सति द्विरेफमानयेत्यादितः कर्मत्वादौ भ्रमरपदार्थान्वयानुपपत्तेः । प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वादिति । ननु तच्छाब्दबोधे तच्छक्तपदज्ञानत्वेन हेतुत्वाल्लाक्षणिकशाब्दबोधः कथं स्यादित्यत आह ॥ किन्त्विति ॥ पदान्तरं समभिव्याहृतं शक्तं पदम् ॥ शक्तिलक्षणेति ॥ अन्यतरसम्बन्धेन य इतरपदार्थस्तदन्वितो यः स्वार्थः । कुमतिः पशुरित्यादिस-

## रामरुद्रीयम्.

कटकविशेषार्थस्मरणं शाब्दबोधश्चेति रीत्या शक्त्यैव द्विरेफपदात् साक्षात्सम्बन्धरूपनिरूढलक्षणाया निर्वाह्यतया भ्रमरबोधनिर्वाहे शक्यपरम्परासम्बन्धरूपलक्षितलक्षणास्वीकारोऽनुचित इति भावः । नन्वेवं द्विरेफपदे लक्षितलक्षणेति सर्वसिद्धप्रवादस्य का गतिरित्यत आह ॥ लक्षितेनेति ॥ द्विरेफपदलक्षितेन भ्रमरपदेन लक्षणं शाब्दबोधरूपं ज्ञानम् । आकारान्तप्रयोगस्तु उपासनैव क्रियते श्रवणानन्तरागतेत्यादिवदिति भावः ॥ प्रत्ययानामिति ॥ यस्मात् प्रत्ययो विधीयते सा प्रकृतिः तदर्थो वृत्त्या तज्जन्योपस्थितिविषयो यः तदन्वितस्वार्थबोधकत्वादित्यर्थः । प्रत्ययाश्च विभक्तिकृत्तद्धिताख्याताः । तथाच द्विरेफपदेन लक्षणयोपस्थितं भ्रमरपदमेव न तु तदर्थ इति कथं तत्र विभक्त्यर्थकर्मत्वान्वय इत्यनुपपत्तिः स्यादतः शक्यस्य रेफद्वयस्य स्वघटितपदवाच्यत्वरूपपरम्परासम्बन्धात्मिकया लक्षितलक्षणया द्विरेफपदात् भ्रमरोपस्थित्यर्थं तादृशलक्षणास्वीकार आवश्यक इति भावः ॥ मूले नानुभावकमिति ॥ शाब्दानुभवजनकं नेत्यर्थः । तथाच लाक्षणिके पदे स्मारिका शक्तिरेव नानुभाविकीति भावः । ननु तर्हि लाक्षणिकार्थस्य कथं शाब्दबोधे भानमित्याशङ्क्य लाक्षणिकपदसमभिव्याहृतशक्तपदान्तरमेव लाक्षणिकार्थान्वितस्वार्थशाब्दबोधं प्रति कारणमिति शक्तपदान्तरादेव शाब्दबोधे लाक्षणिकार्थस्यापि भानमिति समाधत्ते ॥ लाक्षणिकार्थस्येति ॥ सामर्थ्यावधारणात् ॥ शक्त्यवधारणादित्यर्थः । मूलस्थपदान्तरमित्यस्य लाक्षणिकपदभिन्नार्थकत्वेन सकलशक्तपदानामपि लाक्षणिकार्थशाब्दबोधजनकत्वं प्रतीयते । तच्चायुक्तम् । गङ्गायां घोष इत्यत्र घोषपदस्यैव तीरशाब्दबोधजनकतायाः सर्वानुभवसिद्धत्वादतो व्याचष्टे ॥ पदान्तरमिति ॥ समभिव्याहृतमिति ॥ तल्लाक्षणिकपदसमभिव्याहृतमित्यर्थः तथा च तल्लाक्षणिकपदसमभिव्याहृतं शक्तं पदं तत्स्मारितलक्ष्यार्थविषयकशाब्दबोधजनकमिति भावः ॥ इतरपदार्थ इति ॥ इतरपदजन्यस्मृतिविषय इत्यर्थः । तत्रेतरपदे तृतीयार्थस्य स्वविषयकज्ञानसहितवैशिष्ट्यपदस्य वान्वयः ॥ कुमतिरिति ॥ कुत्सिता मतिर्यस्य स कुमतिरिति बहुव्रीहावुत्तरपदस्य कुत्सितज्ञानवल्लाक्षणिकतया पूर्वपदस्य तात्पर्यग्राहकतया

तस्वशक्यार्थशाब्दबोधं प्रति पदानां सामर्थ्यावधारणात्। वाक्ये तु शक्तेरभावाच्छक्यसम्बन्धरूपा लक्षणाऽपि नास्ति। यत्र तु गभीरायां नद्यां घोष इत्युक्तं तत्र नदीपदस्य नदीतीरे लक्षणा गभीरपदार्थस्य नद्या सहाभेदेनान्वयः। क्वचिदेकदेशान्वयस्यापि स्वीकृतत्वात्। यदि

प्रभा.

ऽथ पदान्तरज्ञानस्य हेतुत्वस्वीकारादत आह ॥ **शक्तिलक्षणान्यतरसंबन्धेनेति** ॥ शक्तिज्ञानसहकृतपदज्ञानजन्योपस्थितिविषयार्थलक्षणाज्ञानसहकृतपदज्ञानजन्योपस्थितिविषयार्थान्यतरानिष्ठविषयतानिरूपिततदर्थविषयताशालिशाब्दबोधं प्रतीत्यर्थः ॥ **पदानामिति** ॥ तदर्थशक्तपदज्ञानसामान्यस्येत्यर्थः ॥ **सामर्थ्यावधारणादिति** ॥ निरुक्तपदज्ञानसामान्यस्य शाब्दबोधाव्यभिचारित्वेन अप्रामाण्यज्ञानानास्कन्दितकारणत्वनिश्चयसंभवादित्यर्थः। तथा च कुमतिः पशुः घटश्चेत्यत्र घटपदार्थघटस्य निरुक्तान्यतरनिष्ठविषयतानिरूपितविषयतानाश्रयत्वात् तादृशवाक्यघटकपश्वादिपदार्थस्य तादृशविषयताश्रयत्वेऽपि तादृशार्थशक्तपदज्ञानरूपकारणाभावाच्च न तादृशवाक्यात् शाब्दबोधापत्तिः तच्छाब्दबोध इत्यादिनियमस्य शक्तिज्ञानसहकृतेत्यादिनियम एव पर्यवसानात् न तादृशनियमभङ्गप्रसङ्गः गङ्गायां घोष इत्यत्र घोषपदार्थस्य निरुक्तान्यतरनिष्ठविषयतानिरूपितविषयताश्रयतया तीरवृत्तिर्घोष इत्यादिशाब्दबोधस्य कार्यतावच्छेदकाक्रान्तत्वेऽपि तत्र घोषशक्तपदज्ञानस्यापि सत्त्वात् न तादृशबोधानुपपत्तिश्चेति भावः। एतावता नैयायिकमताभिमतपदलक्षणां व्यवस्थाप्य मीमांसकाभिमतवाक्यलक्षणां निराकरोति ॥ **वाक्ये त्विति** ॥ अवधारणार्थकतुशब्दः शक्त्यभावादित्युत्तरं योज्यः ॥ **शक्त्यभावादिति** ॥ शक्त्यभावादेवेत्यर्थः। असमस्तवाक्ये शक्तिः केनाप्यनभ्युपगमात् समस्तवाक्ये शक्तिः वैयाकरणानुमतत्वेऽपि अग्रे दूषणीयत्वाच्च वाक्यमात्रे शक्तौ प्रमाणाभावादिति भावः ॥ **शक्यसंबन्धरूपलक्षणापीति** ॥ वाक्यशक्तेरप्रसिद्ध्या शक्यसंबन्धरूपलक्षणाप्यप्रसिद्धेत्यर्थः। ननु तर्हि गभीरायां नद्यां घोष इत्यादौ नदीपदलक्ष्यार्थनदीतीरैकदेशनद्या गभीरपदार्थान्वयासंभवात् कथं शाब्दबोध इत्यत आह ॥ **यत्र त्विति** ॥ यादृशमित्यर्थः। सर्वविभक्तिषु त्रलो विधानात्। अप्यर्थकतुशब्दः नदीपदस्येत्युत्तरं योज्यः ॥ **इत्युक्तमिति** ॥ इति वाक्यं प्रयुक्तमित्यर्थः ॥ **तत्र नदीपदस्येति** ॥ तादृशवाक्यघटकनदीपदस्यापीत्यर्थः ॥ **गभीरपदार्थस्येति** ॥ गाम्भीर्यविशिष्टस्येत्यर्थः ॥ **नद्या सहेति** ॥ नदीपदार्थैकदेशनद्या सहेत्यर्थः। ननु तर्हि पदार्थः पदार्थेन अन्वेति न पदार्थैकदेशेनेति व्युत्पत्तिभङ्ग इत्यत आह ॥ **क्वचिदिति** ॥ शरैश्शातितपत्र इत्यादावित्यर्थः ॥ **एकदेशान्वयस्येति** ॥ शातितपदार्थैकदेशशातनतृतीयार्थशरकरणत्वयोः अन्वयबोधस्येत्यर्थः। अथवा शातितपत्र इत्यत्र उत्तरपदस्यैव शातितपत्रविशिष्टवृक्षलाक्षणिकतया पूर्वपदस्य तात्पर्यग्राहकत्वेन पत्रपदार्थैकदेशशातनतृतीयार्थशरकरणत्वयोरन्वयबोधस्येत्यर्थः ॥ **स्वीकृतत्वा-**

दिनकरीयम्.

वैलक्षणिकस्थले शाब्दबोधस्यानुभवसिद्धतया लाक्षणिकार्थस्याप्यानुभावकत्वमिति नव्याः। ननु शक्यसंबन्धो न लक्षणा तथा सति वाक्यस्य शक्यासिद्ध्या तत्र लक्षणा न स्यादिति मीमांसकाक्षेपमिष्टापत्त्या निराकुरुते ॥ **वाक्ये त्विति** ॥ ननु गभीरायां नद्यां घोष इत्यादौ नदीपदस्य नदीतीरे लक्षणास्वीकारे गभीरपदार्थस्यैकदेशान्वयापत्त्या पदलक्षणाया असम्भवेन वाक्यलक्षणावश्यकीत्यत आह ॥ **यत्र गभीरेति** ॥ **क्वचिदिति** ॥ चैत्रस्य गुरुकुलमित्यादावित्यर्थः ॥ **स्वीकृतत्वादिति** ॥ पदभेदेन

रामरुद्रीयम्.

निरर्थकतया कुमतौ पशुत्वस्य बाधितत्वेन पशुपदस्यापि पशुसदृशे लाक्षणिकतया कुमतिः पशुरित्यत्र कस्यापि शक्तपदस्याभावात् तत्र शाब्दबोधो न स्यादिति तत्र शाब्दबोधोपपत्तये लाक्षणिकपदेऽप्यानुभाविकी शक्तिरवश्यमङ्गीकरणीयेति भावः ॥ **गुरुकुलमित्यादि** ॥ कुलमिति सम्पातायातम्। चैत्रस्य गुरुरित्यत्रापि गुरुत्व एव चैत्रनिरूपितत्वस्यान्वयात्। नच गुरावेव चैत्रसम्बन्धोऽन्वीयतामिति वाच्यम्। तथासति चैत्रपुत्रा-

तत्रैकदेशान्वयो न स्वीक्रियते तदा नदीपदस्य गभीरनदीतीरे लक्षणा गभीरपदं तात्पर्यग्राह-

प्रभा.

दिति ॥ सर्वानुमतत्वादित्यर्थः । तथाच पदार्थैकदेशेनापि अन्वयबोधस्य सर्वानुमततया तादृश-व्युत्पत्तौ मानाभाव इति भावः । ननु व्यभिचाराच्छैरश्शातितपल इत्यादिससम्बन्धिकस्थले तादृशव्युत्पत्त्य-नङ्गीकारेऽपि ससम्बन्धिकातिरिक्तस्थले तादृशव्युत्पत्तिरावश्यकी अन्यथा ऋद्धस्य राजमातङ्गा इत्यादिवाक्य-स्यापि प्रामाण्यापत्तेः तत्र राजपदलक्ष्यैकदेशराज्ञि ऋद्धपदोत्तरं श्रूयमाणषष्ठ्यर्थाभेदान्वयसंभवात् । एवंच गभीरायां नद्यां घोष इत्यत्र नदीपदस्य ससम्बन्धिकत्वाभावात् तदर्थैकदेशनद्या सह गभीरपदार्थगाम्भी-र्यविशिष्टस्याभेदेनान्वयबोधासंभवात् पदलक्षणया न निर्वाह इत्याशङ्कां ससम्बन्धिकातिरिक्तस्थले तादृशनि-यमाङ्गीकारेऽपि प्रकारान्तरेण वारयति ॥ यदीति ॥ तत्रेति ॥ गभीरायां नद्यामिति वाक्यघटकगभी-रपदार्थगाम्भीर्यविशिष्ट इत्यर्थः ॥ एकदेशान्वय इति ॥ तादृशवाक्यघटकनदीपदार्थैकदेशनद्या सहाभे-देनान्वय इत्यर्थः ॥ न स्वीक्रियत इति ॥ स्वीकर्तुं न शक्यत इत्यर्थः । इति विभाव्यत इति शेषः । तथाच एतादृशशाब्दबोधः स्वीकर्तुं न शक्यत इति यदि विभाव्यत इति योजना ॥ तदा नदीपदस्ये-ति ॥ तादृशवाक्यघटकनदीपदस्येत्यर्थः ॥ तात्पर्यग्राहकमिति ॥ तथाचैतादृशस्थले तादृशनियमा-ङ्गीकारेऽपि बाधकाभावात् पदलक्षणयैवाभिमतशाब्दबोधसंभव इति भावः । यद्यपि गभीरायां नद्यामि-त्यत्र विनिगमकाभावात् गभीरपदस्यैव तादृशार्थे लक्षणामङ्गीकृत्य नदीपदस्य तात्पर्यग्राहकत्वस्वीकारेणा-प्यभिमतशाब्दबोधनिर्वाहः तथापि गभीरनद्यां घोष इति समासवाक्यघटकगभीरशब्दस्य तादृशार्थलक्षणायां नदीपदोत्तरश्रूयमाणसप्तम्यर्थान्वयित्वे गभीरपदलक्ष्यार्थान्वये प्रत्ययानामित्याद्दिनियमभङ्गापत्तेः गभीर-पदस्य सप्तमीप्रकृतित्वाभावात् अतस्तत्रोत्तरपदलक्षणाया आवश्यकत्वात् सर्वत्राप्युत्तरपदलक्षणैव युक्ते-त्यभिप्रायेण गभीरायां नद्यामित्यत्र नदीपदलक्षणाभिधानमिति ध्येयम् । मीमांसकैकदेशिनस्तु शक्यसंबन्धो न लक्षणा येन वाक्ये शक्त्यभावप्रयुक्तशक्यसंबन्धरूपलक्षणानुपपत्तिस्स्यात् किन्तु स्वबोध्यसंबन्ध एव आनुपूर्वीविशेषावच्छिन्नवाक्यस्य विशिष्टार्थबोधकत्वान्न स्वबोध्यत्वाप्रसिद्धिः । एवंच गभीरा-भिन्नद्याः गभीरायां नद्यामिति सप्तम्यन्तपदद्वयघटितसमुदायबोध्यत्वेन तत्संबन्धितीरे तादृशसमुदायस्य

दिनकरीयम्.

व्युत्पत्तिभेदात् प्रकृते तथा व्युत्पत्त्यकल्पनादिति भावः ॥ नदीपदस्येति ॥ न च विनिगमनाविरहेण गभीरपदस्य लक्षणा नदीपदं तात्पर्यग्राहकमित्यस्यापि वक्तुं शक्यत्वात् कथं नदीपदमात्रे लक्षणाभिधा-नामिति वाच्यम् । प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वव्युत्पत्तेरुत्तरपद एव लक्षणाया युक्तत्वात् । अत्र मीमांसकमतानुयायिनः । वाक्यलक्षणयैवोपपत्तौ गभीरपदस्य तात्पर्यग्राहकत्वकल्पनमयुक्तम् । न च वा-क्ये शक्त्यभावाच्छक्यसम्बन्धरूपा लक्षणापि न सम्भवतीति वाच्यम् । स्वबोध्यसम्बन्धस्यैव लक्षणापदार्थ-त्वाद्गङ्गायां घोष इत्यादौ गङ्गापदबोध्यस्य प्रवाहस्य सम्बन्धस्तीरे इति तत्र लक्षणा गभीरायां नद्यामिति वाक्यस्य बोध्या गभीराभिन्ना नदी तत्सम्बन्धस्तीरे इति वाक्येऽपि लक्षणा । एवं समासात्मके चित्रगुरिति वाक्ये-ऽपि चित्रगुपदस्यावयवशक्त्या चित्राभिन्ना गौः बोध्या स्वजन्यबोधविषयस्यैव स्वबोध्यत्वात् तत्सम्बन्धस्य

रामरुद्रीयम्.

दावपि तथा प्रयोगप्रसङ्गात् चैत्रपुत्रस्यापि कस्यचित् गुरुत्वाच्चैत्रसम्बन्धित्वाच्चेति ध्येयम् । ननु गुर्वादिपदस्य ससम्बन्धिकत्वेन तदर्थैकदेशे पदार्थान्तरान्वयसम्भवेऽपि नदीपदस्यातथात्वात् कथं तदेकदेशे गभीरपदा-र्थस्यान्वय इत्यत आह ॥ पदभेदेनेति ॥ व्युत्पत्तिभेदात् आकाङ्क्षाभेदात् ॥ प्रकृत इति ॥ एत-द्वाक्यस्थनदीपद इत्यर्थः ॥ उत्तरपद एवेति ॥ यद्यपि गभीरायां नद्यां घोष इत्यस्यैव पूर्वमुदाहृतत्वेन त-त्र गभीरपदोत्तरमपि सप्तमी श्रूयत एवेति नेयमनुपपत्तिस्तथापि विशेषणविभक्तेः सर्वत्र निरर्थकत्वेन तस्याः सा-र्थकत्वोपगमस्यायुक्तत्वात् । घोषपदेन गभीरायामित्यस्यानासन्नत्वाच्छाब्दबोधानुपपत्तेश्च । गभीरायां घोष इ-त्यादौ सर्वथानुपपत्तेश्च न तथोपगमसम्भव इति भावः ॥ गङ्गापदजन्यबोधेति ॥ गङ्गापदशक्यार्थस्मरणरूपे-

## प्रभा.

लक्षणोपपत्तिः । एवं चित्रगुरित्यादिसमासवाक्ये एकदेशविकृतमनन्यवद्भवतीति न्यायेन चित्रा गौरिति वाक्यस्यापि सत्त्वेन तद्बोध्यचित्राभिन्नगोसंबन्धस्य चित्रगोस्वामिनि सत्त्वात् लक्षणोपपत्तिरिति क्रमेण सर्वत्र वाक्यलक्षणयैव निर्वाहे तादृशसमुदायघटकैकपदस्य लक्षणाकल्पनं अपरपदस्य तात्पर्यग्राहकत्ववर्णनमनुचितं परन्तु लक्षणाशरीरे शक्यस्यैतन्मते शक्यत्वेन न निवेशः किन्तु स्वबोध्यत्वेनैव विशेष इत्याहुः तन्न स्वबोध्यसंबन्ध इत्यत्र स्वबोध्यत्वं न स्वनिष्ठबोधकतानिरूपितबोध्यत्वं मौनिश्लोकस्थले पदाभावेन स्वबोध्याप्रसिद्धेः किन्तु स्वविषयकज्ञानजन्यज्ञानविषयत्वरूपं वाच्यं तथा सति गङ्गायामिति सप्तम्यन्तज्ञानेनापि प्रवाहोपस्थितिसंभवेन तत्संबन्धितीरे तादृशसप्तम्यन्तस्यापि लाक्षणिकत्वापत्तेः । नच तत्त्वावच्छिन्नविषयताशालिज्ञानजन्यज्ञानस्य स्वबोध्यत्वशरीरे निवेशात् नैष दोषः सप्तम्यन्तसमुदायत्वावच्छिन्नविषयकज्ञानस्य प्रवाहोपस्थित्यहेतुत्वादिति वाच्यम् । एवमपि अपभ्रंशशब्दत्वावच्छिन्नविषयकज्ञानस्यापि शक्तिभ्रमसहकृतस्यार्थस्मारकतया तादृशार्थसंबन्धिनि लाक्षणिकत्वापत्तेः । नचेष्टापत्तिः तादृशशब्दस्यापि वृत्तिमत्त्वेन साधुत्वापत्तेः । नच शक्तिप्रमासहकृततादृशज्ञानस्य लक्षणाघटकत्वान्नापभ्रंशशब्दस्य साधुत्वमिति वाच्यम् । तथा सति वाक्ये शक्त्यभावेन शक्तिप्रमासहकृतवाक्यत्वावच्छिन्नविषयताशालिज्ञानजन्यज्ञानाप्रसिद्ध्या तद्घटितलक्षणाप्रसिद्धेर्दुर्वारत्वात् । नच वाक्यलक्षणावादिमते नद्यामिति सप्तम्यन्तसमुदायस्यापि लाक्षणिकत्वस्येष्टत्वात् शब्दनिष्ठविषयतायां तत्त्वावच्छिन्नत्वनिवेशे प्रयोजनाभावेन पदसमुदायरूपवाक्यविषयकज्ञानस्यापि प्रत्येकपदशक्तिप्रमासहकृतस्य तत्तदर्थस्मारकतया वाक्यस्यापि लाक्षणिकत्वं दुर्वारमिति वाच्यम् तथापि शक्यसंबन्धापेक्षया शक्तिप्रमासहकृतशब्दज्ञानजन्यज्ञानविषयसंबन्धस्य गुरुत्वेन लक्षणात्वानङ्गीकारात् । न

## दिनकरीयम्.

स्वामिनि सत्त्वादित्याहुः । तन्न । स्वबोध्यत्वं हि न स्वजन्यबोधविषयत्वम् । गङ्गायां घोष इत्यादौ गङ्गायामित्यस्यापि लाक्षणिकत्वापत्तेरतस्तत्त्वेन बोधकत्वं वाच्यम् । न चैतावतापि निर्वाहः अपभ्रंशस्यापि लाक्षणिकत्वापत्तेरतस्तत्त्वावच्छिन्ना या शक्त्यवच्छिन्ना बोधकता सैव निवेश्या । तथाच कथं वाक्यस्य लक्षकत्वम् ।

## रामरुद्रीयम्.

त्यर्थः । वाक्यजन्यबोधस्तु शाब्दबोधरूप एवेति भावः ॥ गङ्गायामित्यस्यापीति ॥ गङ्गायां घोष इत्यत्र गङ्गापद एव लक्षणा सर्वानुमता नतु गङ्गायामिति वाक्ये पदलक्षणायामनुपपत्तेरभावात् गङ्गायामिति वाक्यजन्यस्यापि गङ्गातीरवृत्तिरिति शाब्दबोधस्य गङ्गाविषयकत्वात्तत्सम्बन्धस्य तीरे सत्त्वात् तादृशवाक्यस्यापि तीरे लाक्षणिकत्वापत्तिरिति भावः । इदञ्च गङ्गातीरत्वेन शक्यसम्बन्धग्रहमभिप्रेत्योक्तम् । तीरत्वेन तथात्वे तु प्रवाहस्य न वाक्यजन्यबोधविषयत्वमित्यवधेयम् ॥ तत्त्वेनेति ॥ यादृशानुपूर्व्यवच्छिन्नस्य लक्षकत्वमभिमतं तादृशानुपूर्व्यवच्छिन्नजनकतानिरूपितजन्यताशालिबोधविषयसम्बन्ध एव तादृशानुपूर्व्यवच्छिन्नस्य लक्षणा वाच्येति भावः । एवंच गङ्गायामित्यानुपूर्वी शाब्दबोधजनकतावच्छेदिकेति न वाक्यलक्षणापत्तिः । यद्यपि गङ्गातीरवृत्तिरित्याकारकशाब्दबोधं प्रत्याकाङ्क्षाज्ञानविधया गङ्गापदोत्तरसप्तमीरूपसमभिव्याहारज्ञानस्य कारणत्वमावश्यकम् । अन्यथा सप्तम्युत्तरगङ्गापदज्ञाने तादृशशाब्दबोधापत्तेः । तथापि तादृशानुपूर्व्यवच्छिन्नविषयकज्ञानमेव शाब्दबोधजनकं न तु तादृशानुपूर्व्यवच्छिन्नमेवेति नेदानीं वाक्यलाक्षणिकत्वापत्तिरिति भावः । न चैवं पदज्ञानमेव शाब्दबोधकारणं न तु पदमिति तदानुपूर्व्यवच्छिन्नजनकतानिरूपितजन्यताशालिबोधाप्रसिद्ध्या पदस्यापि लाक्षणिकत्वानुपपत्तिरिति वाच्यम् । ज्ञायमानपदस्य करणत्वाभिप्रायेणैतदभिधानात् । ननु मौनिश्लोकादौ पदाभावेऽपि शाब्दबोधोत्पत्त्या मतमिदं न विचारसहमिति तादृशानुपूर्व्यवच्छिन्नज्ञानजन्यबोधविषयसंबन्ध एव तादृशानुपूर्व्यवच्छिन्नस्य लक्षणेत्यवश्यमङ्गीकरणीयम् । तथाचागतमेव वाक्यस्य लाक्षणिकत्वमित्यत आह ॥ न चैतावतेति ॥ तत्त्वावच्छिन्नेति ॥ तत्त्वं तादृशानुपूर्वी तदवच्छिन्ना तन्निष्ठावच्छेदकतानिरूपिका शक्त्यवच्छिन्ना विषयितासम्बन्धावच्छिन्नशक्तिनिष्ठावच्छेदकतानिरूपिका

## प्रभा.

च पदान्यावृत्तिविषयताशालिज्ञानस्य लक्षणघटकत्वस्वीकारेणैव अपभ्रंशशब्दस्य लाक्षणिकत्ववारणे शाब्दज्ञाने शक्तिप्रमासहकृतत्वनिवेशस्यापि व्यर्थत्वेन लक्षणापदार्थाघटकतया न गौरवावकाश इति वाच्यं तथा सति समवायसंबन्धज्ञानसहकृतपदज्ञानेनाकाशस्मृत्या पटादौ तत्संबन्धज्ञानरूपघटपदलक्षणाज्ञानसहकृतघटपदस्मरणात् पटादिस्मरणाद्यापत्तेः । शक्तिप्रमासहकृतत्वविशेषणे तु घटपदसमवायस्य घटपदशक्तिरूपत्वाभावेन तादृशज्ञानात् न पटादिस्मृत्यापत्तिः तस्मात् शक्तिप्रमासहकृतत्वविशेषणस्यावश्यकतया निरुक्तज्ञानविषयसंबन्धस्य गुरुत्वात् लक्षणारूपत्वमप्रामाणिकमेवेति । केचित्तु गभीरायां नद्यामित्यत्र सप्तम्यन्तस्य गभीरनदीतीरलाक्षणिकत्वे घोषे तादृशतीराधेयत्वबोधानुपपत्तिः आधेयताबोधकपदाभावात् नामार्थयोर्भेदसंबन्धेनान्वयस्याव्युत्पन्नत्वात् आधेयतासंबन्धेन तीरस्य घोषान्वयासंभवात् गभीरायां नदीति सप्तमीशून्यस्य तीरलक्षकत्वे सप्तम्यर्थाधेयत्वादौ तादृशतीरादेरन्वयानुपपत्तिः प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वव्युत्पत्तेः गभीरायां नदीति भागस्य सप्तमीप्रकृतित्वाभावात् । नच गभीरायां नद्यामिति सप्तम्यन्तस्य गभीरनदीतीरवृत्तित्वे लक्षणाऽस्त्विति शङ्क्यम् तादृशवृत्तित्वस्य घोषादावन्वयानुपपत्तेः नामार्थयोर्भेदसंबन्धेनान्वयस्य अव्युत्पन्नत्वात् सप्तम्यन्तभागस्य तादृशतीरवृत्तौ लक्षणामुपगम्य तस्याभेदेन घोषादावन्वय इत्यपि न अभेदान्वयबोधे समानविभक्तिकत्वस्य तन्त्रत्वादित्यास्तां विस्तर इत्याहुः तदसत् । नामार्थयोर्भेदसंबन्धेनान्वयस्याव्युत्पन्नतया गभीरायां नद्यामिति समुदायलक्ष्यार्थगभीरनदीतीरस्याधेयतासंबन्धेन घोषादावन्वयासंभवादिति यदुक्तं तदयुक्तं सप्तमीघटितसमुदायस्य नामत्वाभावात् नद्यन्तस्यैव नामत्वं ननु स्यादिघटितसमुदायस्येति सिद्धान्तात् । सप्तम्यन्तसमुदायस्य गभीरनदीतीरवृत्तित्वलाक्षणिकत्वमुपगम्य तस्य स्वरूपसंबन्धेन घोषादावन्वयपक्षेऽपि नामार्थयोरिति व्युत्पत्तिभङ्गरूपदूषणं यदुक्तं तदपि न कृत्प्रत्ययघटितसमुदायस्य धातुत्वाभाववत्सुब्विभक्तिघटितसमुदायस्य नामत्वाभावात् । अत एव व्युत्पत्तिवादे क्रियाविशेषणानां कर्मत्वेन स्तोकं

## दिनकरीयम्.

वस्तुतस्तु स्वबोध्यत्वं यदि स्वजन्यशाब्दबोधविषयत्वं तदा गङ्गायां घोष इत्यादौ गङ्गापदे लक्षणानुपपत्तिः गङ्गापदेन तत्र प्रवाहशाब्दबोधाजननेन प्रवाहस्य गङ्गापदबोध्यत्वाभावात् । किन्तु शक्त्या स्वजन्यज्ञानविषयत्वं तद्वाच्यम् । न च शक्त्येत्यधिकम् । समवायेन घटपदस्मारिताकाशस्यापि स्वबोध्यत्वापत्त्या तत्सम्बन्धज्ञानाद्घटपदेन पटादेः शाब्दबोधप्रसङ्गात् । एवञ्च शक्यसम्बन्धापेक्षया शक्त्या स्वबोध्यसम्बन्धस्य गुरुत्वान्न तस्य लक्षणात्वमिति । किञ्च गभीरायां नद्यामिति सप्तम्यन्तस्य गभीरनदीतीरलक्षकत्वे घोषे तादृशतीराधेयताबोधानुपपत्तिः । आधेयताबोधकपदाभावात् नामार्थयोर्भेदसम्बन्धेनान्वयस्याव्युत्पन्नतया आधेयतासं॰

## रामरुद्रीयम्.

ज्ञाननिष्ठबोधजनकता या सैवेत्यर्थः । तथाच तादृशानुपूर्व्यवच्छिन्नशक्तिज्ञानजन्यबोधविषयसम्बन्धस्तदानुपूर्व्यवच्छिन्नस्य लक्षणेति पर्यवसानात् वाक्यस्य च शक्त्यभावात् तस्य लक्षकत्वासम्भव इति भावः । ननु शक्त्यभावेऽपि वाक्यस्यैवापभ्रंशस्यापि लाक्षणिकत्वमिष्यत एवेति यदि ब्रूयात्तदाप्याह ॥ **वस्तुत इति** ॥ **लक्षणानुपपत्तिरिति** ॥ तीरत्वावच्छिन्ने शक्यसम्बन्धग्रहे शुद्धतीरत्वावच्छिन्नविषयकशाब्दबोधोत्पत्त्या प्रवाहस्य शाब्दबोधाविषयत्वादिति भावः ॥ **स्वजन्यज्ञानेति** ॥ स्वजन्यस्मरणेत्यर्थः । यद्यपि शक्त्येत्यनुपादानेऽपि वाक्यलक्षणानिरासः सम्भवति पदस्यैवार्थस्मारकत्वेन वाक्यस्य स्मारकत्वाभावात् । तथापि वाक्यवाक्यार्थयोर्बोध्यबोधकभावसम्बन्धज्ञाने वाक्यस्यापि वाक्यार्थस्मारकत्वसम्भवात्तज्जन्यस्मृतिविषयसम्बन्धस्यैव लक्षणात्वोपगमे लक्षणायाः शक्त्यघटकतया लक्षणायाः शक्यसम्बन्धरूपत्वे न लाघवावकाशः । अतः शक्त्येत्युपात्तम् । ननु यत्किञ्चित्पदस्य तत्पर्याप्तिभियैव तात्पर्यापत्त्यैव गौरवमप्यस्तीति ब्रूयात् तदाप्याह ॥ **किञ्चेति** ॥ **नामार्थयोरिति** ॥ नच नामार्थत्वं वृत्त्या नामजन्यस्मृतिविषयत्वं वाक्यंच न नामेति कथं गभीरनदीतीरस्य बोधः । यदिच वाक्य-

## प्रभा.

पाक इत्येव स्यात् ननु स्तोकः पाक इत्याक्षिप्य पाकस्य कृदन्तसमुदायार्थत्वविवक्षायां कृत्प्रत्ययघटितसमुदायस्य धातुत्वाभावात् स्तोकः पाक इति प्रयोगोपपत्तिः पाकस्य पच्धातुमात्रार्थकत्वविवक्षायां स्तोकं पाक इति प्रयोगोऽपि स्यादेवेति गदाधरभट्टाचार्योक्तिरपि सङ्गच्छते । यच्चोक्तं सप्तम्यन्तसमुदायस्य गभीरनदीतीरवृत्तित्वविशिष्टे लाक्षणिकत्वमङ्गीकृत्य तस्याभेदसंबन्धेन घोषादावन्वयपक्षे अभेदान्वयबोधे समानविभक्तिकत्वस्य तन्त्रत्वात् सप्तम्यन्तसमुदायस्य समानविभक्त्यन्तत्वाभावात् नाभेदान्वयबोधसंभव इति दूषणं तदपि न नीलघट इति समासवाक्यस्थले अभेदेनान्वयबोधोपपत्तये समानविभाक्तिकत्वस्य तन्त्रत्वं परित्यज्य विरुद्धविभक्तिराहित्यस्यैवाभेदान्वयनियामकतायास्सिद्धान्तसिद्धतया प्रकृते सप्तम्यन्तसमुदायस्य समानविभाक्तिमत्त्वाभावेऽपि विरुद्धविभक्तिराहित्यरूपाभेदान्वयबोधनियामकस्य सत्त्वात् नाभेदेनान्वयबोधानुपपत्तिरिति दिक् । एतावता वाक्यसामान्यस्य शक्त्यभावेन शक्तिप्रमासहकृतनद्यादिपदवृत्तिविषयताशालिज्ञानजन्यज्ञानविषयरूपस्वबोध्याप्रसिद्धया तत्सम्बन्धरूपलक्षणायाः अप्रसिद्धत्वेन वाक्यसामान्यलक्षणाया असंभवमुपपाद्य समस्तवाक्यस्थले पदलक्षणया अभिमतशाब्दबोधोपपत्तिः कृता । इदानीं बहुव्रीह्यादिसमस्तवाक्यानामपि क्रमेण पदलक्षणया अभिमतशा-

## दिनकरीयम्.

बन्धेनापि तीरस्य घोषादावन्वयासम्भवात् । गभीरायां नदीति सप्तमीशून्यस्य तीरे लक्षकत्वे सप्तम्यर्थाधेयत्वादौ तादृशतीरादेरनन्वयापत्तिः । प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वव्युत्पत्तेः । गभीरायां नदीति भागस्य सप्तमीप्रकृतित्वाभावात् । न च गभीरायां नद्यामिति सप्तम्यन्तस्य गभीरनदीतीरवृत्तित्वे लक्षणास्त्विति शङ्क्यम् । तादृशतीरवृत्तित्वस्य घोषादावन्वयानुपपत्तेः । नामार्थयोर्भेदसम्बन्धेनान्वयस्याव्युत्पन्नत्वात् । सप्तम्यन्तभागस्य तादृशतीरवृत्तौ लक्षणामुपगम्य तस्याभेदेन घोषादावन्वय इत्यपि न । अभेदेनान्वयबोधे समानविभक्तिकत्वस्य तन्त्रत्वादित्यास्तां विस्तरः । एवमवयवलक्षणैव न तु वाक्ये लक्षणे-

## रामरुद्रीयम्.

स्य पदसमूहरूपतया समूहस्य प्रत्येकानतिरिक्ततया वाक्यजन्यस्मरणस्यापि नामजन्यत्वमक्षतमेवेत्युच्यते तदा तत्र प्रत्ययजन्यत्वस्याप्यवर्जनीयतया गभीरनदीतीरस्य प्रत्ययार्थत्वसम्भवेन प्रत्ययार्थस्य नामार्थे भेदेनान्वयोपगमात् नानुपपत्तिरिति वाच्यम् । तथा सति गभीरनदीतीरीयरजनेति बोधतात्पर्येण गभीरायां नदी रजनेति प्रयोगापत्तेः वाक्यलक्षणावादिभिरपि गभीरायां रजनेत्यत एव तादृशबोधोपगमे इष्टापत्तेरयोगादिति भावः ॥ **सप्तमीप्रकृतित्वाभावादिति** ॥ प्रातिपदिकेत्यत एव सुब्विभक्तेर्विधानात् । प्रत्ययविध्युद्देश्यस्यैव प्रकृतित्वादर्थवदधातुरित्यनेन प्रत्ययधातुभिन्नशक्तस्यैव प्रातिपदिकसंज्ञाविधानेन गभीरायां नदीत्यस्य किञ्चिदर्थाशक्तत्वेन सप्तमीप्रकृतित्वाभावादिति भावः । न चैवं नीलोत्पलं पाचकमित्यादौ पाचकनीलोत्पलसमुदायादेर्वाक्यतया किञ्चिदर्थाशक्तत्वेन तेषां विभक्तिप्रकृतित्वं न स्यादिति वाच्यम् । कृत्तद्धितसमासाश्चेति सूत्रान्तरेण तेषामपि प्रातिपदिकत्वविधानेन कृत्तद्धितान्तसमासानां विभक्तिप्रकृतित्वसम्भवात् । वस्तुतः प्रकृत्यर्थत्वं वृत्त्या प्रकृतिजन्यबोधविषयत्वमेव । तच्च प्रकृतिघटितसमुदायजन्यबोधविषये गभीरनदीतीरेऽप्यक्षतम् । समुदायस्य प्रत्येकानतिरिक्ततया प्रकृतिघटितसमुदायजन्यस्य प्रकृतिजन्यतानपायात् । प्रकृतिमात्रजन्यत्वनिवेशे प्रयोजनविरहात् । चैत्रस्य गामानयेत्यादौ चैत्रसम्बन्धिगोः प्रत्ययार्थकर्मत्वेऽन्वयदर्शनेन तन्निवेशासम्भवाच्च वृत्तौ प्रकृतिनिरूपितत्वमपि न शक्यते विवक्षितुम् । वाक्यलक्षणाङ्गीकर्तृमते नीलोत्पलादिप्रकृतिनिरूपिताप्रसिद्धेरित्यापाततो रमणीयमेतल्लक्षणमिति प्रतिभाति ॥ **समानविभक्तिकेति** ॥ गभीरायां नद्यामिति समुदायस्य किञ्चिद्विभक्तेरप्यप्रकृतित्वादिति भावः । अथ राजपुरुष इत्यादौ राजपदस्याविभक्तिकत्वेऽपि पुरुषपदाव्यवहितपूर्वराजपदार्थस्य राजसम्बन्धिनि पुरुषेऽभेदेनान्वयदर्शनात् प्रकृतेऽपि सप्तम्यन्तवाक्यस्य घोषपदाव्यवहितपूर्वतया तदर्थस्य गभीरनदीतीरवृत्तेर्घोषेऽभेदान्वये बाधकाभावादिदमसङ्गतम् । न चाव्यवहितपूर्ववृत्तिनः शक्तत्वरूपपदत्वमपि तादृशान्वयबोधे प्रयोजकम् ।

कम् ॥ बहुव्रीहावप्येवम् । तत्र हि चित्रगुपदादौ यद्येकदेशान्वयः स्वीक्रियते तदा गोपदस्य गोमति लक्षणा गवि चित्राभेदान्वयः । यदि त्वेकदेशान्वयो न स्वीक्रियते तदा गोपदस्य चित्रगोमति लक्षणा चित्रपदं तात्पर्यग्राहकम् । एवमारूढवानरो वृक्ष इत्यत्र वानरपदे वानरारोहकर्मणि लक्षणा आरूढपदं च तात्पर्यग्राहकम् । एवमन्यत्रापि । तत्पुरुषे तु पूर्वपदे लक्षणा । तथाहि । राजपुरुष इत्यादौ राजपदार्थेन सह पुरुषादिपदार्थस्य साक्षान्नान्वयो निपाता-

## प्रभा.

ब्दबोधोपपत्तिमाह ॥ **बहुव्रीहाविति** ॥ अत्र बहुव्रीहित्वं शेषो बहुव्रीहिरित्यधिकारविहितत्वं बोध्यम् । अपिशब्दः असमस्तवाक्यसमुच्चायकः ॥ **एवमिति** ॥ पदलक्षणया अभिमतशाब्दबोधनिर्वाह इत्यर्थः । एतदेवोपपादयति ॥ **तत्रेति** ॥ बहुव्रीहिसमासात्मक इत्यर्थः ॥ **चित्रगुपदादाविति** ॥ चित्रगुरित्यादिवाक्य इत्यर्थः । घटकत्वं सप्तम्यर्थः तस्य प्राथमिकतदेत्युत्तरगोपदेन द्वितीयतदेत्युत्तरगोपदेन चान्वयः ॥ **यद्येकदेशान्वयः स्वीक्रियत इति** ॥ शरैश्शातितपत्र इत्यादौ पदार्थैकदेशान्वयस्य सर्वानुमतत्वेन तादृशव्युत्पत्तौ मानाभाव इति भावः सर्वत्रैकदेशान्वयस्वीकारे ऋद्धस्य राजमातङ्ग इत्यादिप्रयोगस्यापि साधुत्वापत्त्या ससम्बन्धिकातिरिक्तस्थले तादृशव्युत्पत्त्यङ्गीकारस्याभेदसंबन्धेन पदार्थः पदार्थेनान्वेतीत्येतादृशव्युत्पत्त्यङ्गीकारस्यावश्यकत्वात् प्रकृते एकदेशान्वयो न संभवतीत्यस्वरसं हृदि निधाय यदीत्युक्तमिति ध्येयम् ॥ **गवीति** ॥ गोपदलक्ष्यार्थैकदेशगवीत्यर्थः ॥ **यदि त्विति** ॥ अवधारणार्थकतुशब्दः न स्वीक्रियत इत्युत्तरं योज्यः ॥ **न स्वीक्रियत इति** ॥ स्वीकर्तुं न शक्यत एवेत्यर्थः । इति विभाव्यत इति शेषः । यदीत्यस्याध्याहृतविभाव्यत इत्यनेनान्वयः । तथाच ऋद्धस्य राजमातङ्ग इति प्रयोगवारणाय ससम्बन्धिकातिरिक्तस्थले तादृशव्युत्पत्तेः ससम्बन्धिकातिरिक्तेति विशेषणमपहाय अभेदसंबन्धेन पदार्थः पदार्थेनान्वेति न पदार्थैकदेशेनेति व्युत्पत्तेर्वा आवश्यकतया प्रकृतेऽपि एकदेशेनान्वयः स्वीकर्तुं न शक्यत एवेति यदि विभाव्यत इति समुदितवाक्यार्थः ॥ **एवमन्यत्रापीति** ॥ षष्ठीबहुव्रीहिस्थले पदलक्षणया अभिमतशाब्दबोधोपपादनप्रणालिकयैव आरूढवानर इत्यादिद्वितीयादिबहुव्रीहिस्थलेऽप्यभिमतशाब्दबोधनिर्वाहः कार्य इत्यर्थः ॥ **तत्पुरुषे त्विति** ॥ अत्र तत्पुरुषत्वं तत्पुरुष इत्यधिकारविहितत्वरूपं बोध्यम् । तत्पुरुषसामान्ये त्वित्यर्थः । अवधारणार्थकतुशब्दः पूर्वपद इत्युत्तरं योज्यः ॥ **पूर्वपद इति** ॥ पूर्वपद एवेत्यर्थः । एतेन राजपुरुष इत्यादौ पुरुषपदं राजसंबन्धिपुरुषलाक्षणिकं राजपदं तात्पर्यग्राहकमिति मतमपास्तं पूर्वपदस्य संबन्धिनि लाक्षणिकत्वस्वीकारेणैवाभिमतशाब्दबोधोपपत्तेः । संभवति सार्थकत्वे निरर्थकत्वकल्पनाया अन्याय्यत्वादिति न्यायेन तत्पुरुषे पूर्वपदस्य तात्पर्यग्राहकत्वस्वीकारानौचित्यात् ॥ **लक्षणेति** ॥ संबन्धिनि निरूढलक्षणेत्यर्थः । उक्तार्थमेवोपपादयति ॥ **तथाहीति** ॥ इत्यादावित्यत्र सप्तम्यर्थो घटकत्वं । तस्य राजपदार्थ इत्यत्र राजपदेनान्वयः ॥ **राजपदार्थेन सहेति** ॥ राजपदशक्यार्थेन सहेत्यर्थः ॥ **साक्षान्नान्वय इति** ॥ विभक्त्यर्थमद्वारीकृत्य भेदसंबन्धेनान्वयो न सं-

## दिनकरीयम्.

त्यर्थः ॥ **गोपदस्येति** ॥ प्रत्ययार्थान्वयानुरोधेनोत्तरपदलक्षणाया युक्तत्वादिति भावः ॥ **गोमति** गोस्वामिनि ॥ **न स्वीक्रियत इति** ॥ गोधर्मिकान्वयबोधे गोधर्मिकवृत्तिज्ञानस्य हेतुतया आवश्यकत्वात् । अन्यथा चित्रव्रजोऽस्तीत्यादावपि व्रजपदार्थस्य गोस्थानरूपस्यैकदेशे गवि चित्रान्वयप्रसङ्गात् । यद्यपि घट-

## रामरुद्रीयम्.

नीलघटमित्यादौ नीलघटेत्यस्य वाक्यत्वेन पदत्वाभावेऽपि तदर्थस्य नीलघटसम्बन्धिनो रूपादावभेदेनान्वयादर्शनादिति चेन्न । घोषो गभीरायां नद्यामिति वाक्यादपि तादृशशाब्दबोधस्यानुभवसिद्धत्वेन तत्राप्यव्यवहितपूर्वत्वसमानविभक्तिकत्वयोरभावादभेदान्वयबोधानुपपत्तेर्वज्रलेपायमानत्वादिति विभावनीयम् ॥

तिरिक्तनामार्थयोर्भेदेनान्वयस्याव्युत्पन्नत्वात् । अन्यथा राजा पुरुष इत्यत्रापि तथान्वयबोधः स्यात् । पटो न घट इत्यादौ घटपटाभ्यां नञः साक्षादेवान्वयान्निपातातिरिक्तेति ।

## प्रभा.

भवतीत्यर्थः । तथान्वयस्वीकारे बाधकमाह ॥ **निपातातिरिक्तेति** ॥ भूतले घट इत्यादौ सप्तम्यर्थाधेयत्वद्वारा भूतलस्य घटेऽन्वयात् साक्षादित्युक्तम् । विभक्त्यर्थमद्वारीकृत्येत्यर्थः ॥ **अन्वयस्येति** ॥ अन्वयबोधस्येत्यर्थः ॥ **अव्युत्पन्नत्वादिति** ॥ तान्त्रिकाणामनभिमतत्वादित्यर्थः । तथाच निपातातिरिक्तनामार्थनिष्ठविभक्त्यर्थातिरिक्तभेदसंबन्धावच्छिन्नप्रकारतानिरूपितविशेष्यतासंबन्धेन शाब्दबोधं प्रति नामपदनिरूपितवृत्तिज्ञानजन्योपस्थितेर्विशेष्यतासंबन्धेन प्रतिबन्धकत्वमिति अव्युत्पन्नत्वादित्यन्तग्रन्थेन फलितम् । तादृशप्रतिबध्यप्रतिबन्धकभावानङ्गीकारे बाधकमाह ॥ **अन्यथेति** ॥ तादृशप्रतिबध्यप्रतिबन्धकभावानङ्गीकार इत्यर्थः ॥ **राजा पुरुष इत्यत्रापीति** ॥ राजपदपुरुषपदाभ्यामिति शेषः । प्रथमान्तराजपदपुरुषपदघटितवाक्येऽपीत्यर्थः । घटकत्वं सप्तम्यर्थः तस्याध्याहृतपदद्वयेऽन्वयः अपिशब्दः राजपुरुष इति समाससमुच्चायकः ॥ **तथान्वयेति** ॥ स्वत्वसंबन्धेन राजप्रकारकपुरुषविशेष्यकशाब्दबोधापत्तेरित्यर्थः । तथाच तादृशप्रतिबध्यप्रतिबन्धकभाव आवश्यक इति भावः । उक्तप्रतिबध्यप्रतिन्धकभावाङ्गीकारेऽपि

## दिनकरीयम्.

शून्यमित्यादावेकदेशान्वयो दृश्यते तथापि तादात्म्येन तथान्वयो न स्वीक्रियत इति हृदयम् ॥ **निपातातिरिक्तेति** ॥ निपातपदमव्ययस्याप्युपलक्षणम् । तेन चन्द्र इवेत्यादाविवार्थसादृश्ये चन्द्रस्य प्रतियोगितयान्वयोपपत्तिः ॥ **अन्यथा** अव्ययनिपातातिरिक्तनामार्थयोरपि भेदेनान्वयबोधस्वीकारे ॥ **तथान्वयबोध इति** ॥ भेदेनान्वयबोधः स्यादित्यर्थः ॥ **साक्षादेव** प्रत्ययार्थमद्वारीकृत्यैव । भूतले घट इत्यादावाधेयतासंसर्गेणापि घटभूतलयोरन्वयात् साक्षादित्यस्यापि व्युत्पत्तौ निवेशादिति भावः ॥ **नञः** नञर्थान्योन्याभावस्य ॥

## रामरुद्रीयम्.

**घटशून्यमिति** ॥ शून्यपदस्याभाववदर्थकतया तदेकदेशेऽभाव एव घटत्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन घटपदार्थस्यान्वयस्वीकारादिति भावः ॥ **तथान्वय इति** ॥ तादृशान्वय इत्यर्थः । पदार्थैकदेशे पदार्थान्तरस्य तादात्म्येनैवान्वयो न स्वीक्रियते भेदसम्बन्धेन तु स्वीक्रियत एवेति भावः । व्रजपदार्थैकदेशे गवि चित्रपदार्थस्याभेदेनान्वयाभावेन बहुव्रीहौ गोपदार्थैकदेशगव्यपि चित्रपदार्थस्याभेदान्वयासम्भवाच्चित्रपदस्य तात्पर्यग्राहकत्वमेवाङ्गीकरणीयमिति भावः ॥ **मूले आरूढवानर इति** ॥ आरूढो वानरो यमिति विग्रहवाक्येन यत्कर्मकारोहणकर्ता वानर इति बोधात् बहुव्रीहिसमासे विग्रहवाक्यात् यादृशविशेषणविशेष्यभावापन्नार्थबोधो भवति समासवाक्यात्तद्विपरीतविशेषणविशेष्यभावापन्नार्थबोध इति नियमेन वानरकर्तृकारोहणकर्मवृक्ष इति बोधस्योपगन्तव्यतया वानरपदस्य वानरकर्तृके लक्षणां स्वीकृत्य आरूढपदस्यारोहकर्मणि लक्षणास्वीकारे पदद्वये लक्षणापत्तिः । बहुव्रीहावुत्तरपद एव समासप्रयुक्तलक्षणेति नियमस्योत्तरपदार्थप्राधान्यनियमस्य च भङ्गापत्तिः स्यादिति वानरपदस्यैव वानरारोहकर्मणि लक्षणा आरूढपदं तात्पर्यग्राहकमेवेति भावः । ननु निपातमात्रार्थस्य च नामार्थान्तरेण भेदान्वयस्वीकारे चन्द्र इव मुखमित्यादौ इवार्थे सादृश्ये चन्द्रस्य निरूपितत्वसम्बन्धेनान्वयो न स्यात् । चादयोऽद्रव्ये निपाता इत्यनुशासने द्रव्यभिन्नार्थकानां चादीनामेव निपातसंज्ञाविधानात् इवशब्दस्य चादिगणमध्ये पाठाभावादित्याशङ्कां निराकुरुते ॥ **निपातपदमिति** ॥ तथा चात्र निपातपदमव्ययार्थकमेवेति निपातानामव्ययत्वादेव लाभसम्भवादिति भावः ॥ **प्रत्ययार्थमद्वारीकृत्यैवेति** ॥ विभक्त्यर्थभिन्नसम्बन्धेनैवेत्यर्थः । ननु मूले निपातातिरिक्तेत्यस्य भेदेनेत्यस्य च प्रयोजनमुक्तं न तु साक्षादित्यस्येति नियमे साक्षात्पदमनर्थकमित्याशङ्कां निराकुरुते ॥ **भूतल इत्यादि** ॥ **आधेयतासंसर्गेणापीति** ॥ अपिना स्वरूपसम्बन्धेन घटे भूतलवृत्तित्वान्वयस्य समुच्चयः ॥ **अन्वयादिति** ॥ यद्यपि घटे भूतलवृत्तित्वप्रकारकबोधस्वीकारेणैवोपपत्तौ आधेयतया

नीलो घट इत्यादौ नामार्थयोरभेदसम्बन्धेनान्वयाद्भेदेनेति । न च राजपुरुष इत्यादौ लुप्तविभक्तेः स्मरणं कल्प्यमिति वाच्यम् । अस्मृतविभक्तेरपि ततो बोधोदयात् । तस्मात् राजपुरुष इत्यादौ राजसम्बन्धिनि लक्षणा । तस्य च पुरुषेण सहाभेदान्वयः । द्वन्द्वे तु धवखदिरौ

## प्रभा ।

राजपुरुष इत्यादौ प्रकारान्तरेण शाब्दबोधनिर्वाहात् राजपदस्य लक्षणा नाङ्गीकार्येत्याशयेन शङ्कते ॥ **नचेति ॥ राजपुरुष इत्यादाविति ॥** इत्यादिसमासवाक्य इत्यर्थः । राजपदोत्तरामिति शेषः । घटकत्वं सप्तम्यर्थः तस्याध्याहृतराजपदे अन्वयः ॥ **लुप्तविभक्तेरिति ॥** समासत्वाल्लुप्तषष्ठीविभक्तेरित्यर्थः ॥ **स्मरणं कल्प्यतामिति ॥** राजपदसमभिव्याहृतत्वेनानुसन्धीयतामित्यर्थः । तथाच अनुसन्धीयमानविभक्त्यर्थस्वत्वद्वारा राजपदार्थपुरुषपदार्थयोरन्वयबोधान्नोक्तनियमभङ्गः नवा पूर्वपदलक्षणेति भावः ॥ **अस्मृतविभक्तेरपीति ॥** षष्ठीलोपमजानतः पुरुषस्यापीत्यर्थः ॥ **ततो बोधोदयादिति ॥** तादृशवाक्यश्रवणाधीनशाब्दबोधोत्पत्तेरित्यर्थः ॥ **तस्मादिति ॥** राजपदशक्यार्थस्य पुरुषपदार्थेन सह साक्षाद्भेदसंबन्धेनान्वयासंभवादित्यर्थः ॥ **राजपुरुष इत्यादाविति ॥** राजपदस्येति शेषः ॥ **राजसंबन्धिनीति ॥** राजस्वत्वविशिष्ट इत्यर्थः ॥ **लक्षणेति ॥** निरूढलक्षणेत्यर्थः ॥ आवश्यकीति शेषः ॥ **तस्येति ॥** राजपदलक्ष्यार्थराजसंबन्धिन इत्यर्थः ॥ **अन्वय इति ॥** स्वीकार्य इति शेषः । तथाच राजपुरुष इत्यादौ राजपदस्य राजसंबन्धिनि लक्षणाज्ञानाधीनार्थोपस्थित्या अभेदसंबन्धेन राजसंबन्धिप्रकारकः पुरुष-

## दिनकरीयम् ।

**स्मरणं कल्प्यमिति ॥** तथा चात्रापि प्रत्ययार्थद्वारैव राजपुरुषयोरन्वयान्नोक्तव्युत्पत्तिविरोध इति भावः ॥ परे तु राजपुरुष इत्यादितत्पुरुषे न लक्षणा । व्युत्पत्तिवैचित्र्येण स्वत्वादिसंसर्गेणैव राज्ञः पुरुषादाव-

## रामरुद्रीयम् ।

भूतलस्यापि घटे प्रकारत्वोपगमोऽनुचितः पदार्थस्य संसर्गविधया भानानङ्गीकारात् । तथापि भूतले घट इति वाक्यजन्यज्ञानानन्तरं घटो भूतलीयो न वेति संशयानुत्पादस्याप्यनुभवसिद्धतया आधेयतया भूतलाभाववान् घटः प्रमेय इति विशिष्टवैशिष्ट्यावगाहिप्रत्यक्षं प्रति तादृशशाब्दसामग्र्याः प्रतिबन्धकत्वाकल्पनाप्रयुक्तलाघवेन विभक्त्यर्थस्य संसर्गविधयापि भानमादृतम् । तादृशवाक्यजन्यबोधस्य घटो भूतलीय इत्याकारकत्वे घटे आधेयतया भूतलाभावज्ञानमपि बाधज्ञानमेवेति तदभावावगाहिघटितशाब्दबोधसामग्रीसत्त्वे विशेष्यतावच्छेदकप्रकारकनिर्णयघटितोक्तप्रत्यक्षसामग्र्येव न तिष्ठतीत्येतादृशप्रत्यक्षे तादृशशाब्दसामग्र्याः प्रतिबन्धकत्वं न कल्पनीयमिति लाघवमिति भावः । घटः पटो नेत्यत्रात्यन्ताभावो नञा न बोधयितुं शक्यते नञोऽत्यन्ताभावबोधेऽनुयोगिवाचकपदोत्तरं सप्तम्यपेक्षणादतो नञर्थोऽन्योन्याभाव एवेत्याह ॥ **नञर्थेति ॥ प्रत्ययार्थद्वारैवेति ॥** षष्ठीस्मारितस्वत्वसम्बन्धेनैवेत्यर्थः । अथवा स्वत्वे राजपदार्थान्वयः स्वत्वस्यैव पुरुषेऽन्वयो न तु राजपुरुषयोरित्यर्थः । उभयत्रापि षष्ठीविषयकस्मरणकल्पनमावश्यकमिति भावः ॥ **मूले अस्मृतविभक्तेरपीति ॥** यद्यपि तत्पुरुषे पूर्वपदस्य स्वार्थविशेषितविग्रहवाक्यार्थविभक्त्यर्थविशिष्टे निरूढलक्षणोपगमेन तत्तद्विभक्त्यस्मरणे पूर्वपदस्य तत्तदर्थे निरूढलक्षणानिर्णय एव न सम्भवतीति लक्षणारूपवृत्तिज्ञानाभावादेव पदजन्यपदार्थस्मरणाभावेन शाब्दबोधो न सम्भवत्येवेति अस्मृतविभक्तेः शाब्दबोधोपपादनं दुर्वचम् । तथापि विभक्तिस्मरणं विना निरूढलक्षणार्थस्यानिर्णयेऽपि सामान्यलक्षणाज्ञानं तदधीनपदार्थस्मरणं च न सम्भवत्येव । निरूढलक्षणाज्ञानादेव पदार्थस्मरणमिति न नियमः । तथा सति गङ्गायां घोष इत्यादौ गङ्गापदात्तीरस्मरणानुपपत्तेः । एवञ्च तत्तत्स्थलेषु नानाविभक्तिस्मरणकल्पनमपेक्ष्य लक्षणया राजपदाद्राजसम्बन्ध्युपस्थितिं कल्पयित्वाभेदशाब्दबोधोपगम एवोचितो लाघवात् । राजपुरुष इति कर्मधारये त्वन्वयानुपपत्त्यादिलक्षणाबीजाभावेन राजाभिन्नः पुरुष इति शक्यार्थाभेदबोध एव स्वीक्रियत इति भावः ॥ मतान्तरमाह ॥ **परे त्विति ॥ व्युत्पत्तिवैचित्र्येणेति ॥** पुरुषविशेष्यकस्वत्वसंसर्गकराजप्रकार-

## प्रभा.

विशेष्यकः शाब्दबोधो निराबाधो भवतीति भावः । नचैवं सति राजपुरुष इति वाक्यस्य कर्मधारयत्वापत्तिः अभेदे कर्मधारय इत्यनुशासनेन अभेदविषयकशाब्दबोधस्थले कर्मधारयविधानादिति वाच्यम् समानार्थकपदद्वयघटितविग्रहबोध्यसमासस्यैव कर्मधारयत्वस्वीकारात् राज्ञः पुरुष इति विग्रहवाक्यघटकपदयोरन्वयानुपपत्त्यभावात् राजपदस्य राजसंबन्धिनि लक्षणाया असंभवेन एकार्थकत्वाभावात् राजपुरुष इत्यस्य कर्मधारयत्वापत्तेरभावात् । नचैवं सति अभेदे कर्मधारय इत्यनुशासनविरोध इति वाच्यम् पदे तुल्याधिकरणे विज्ञेयः कर्मधारय इत्यनुशासनेन पदे तुल्याधिकरणे एकधर्मिनिष्ठवृत्तिनिरूपके पदे सति तादृशपदद्वयसमासः कर्मधारय इति विज्ञेय इत्यर्थकेन एकधर्मिनिष्ठवृत्तिनिरूपकपदद्वयघटितविग्रहबोध्यसमासत्वं कर्मधारयत्वमिति लाभात् अभेदे कर्मधारय इत्यस्याप्येतदर्थकत्वलाभाच्च अनुशासनविरोधाभावात् । नच राजपुरुष इत्यत्र राजपदस्य राजसंबन्धिनि लक्षणास्वीकारे राज्ञः पुरुष इत्यस्य विग्रहत्वानुपपत्तिः समाससमानार्थकसमासारम्भकवाक्यस्यैव विग्रहत्वेन समासजन्यशाब्दबोधसमानप्रकारकबोधजनकत्वरूपसमानार्थकत्वाभावादिति वाच्यम् । विग्रहलक्षणे लाघवेन समासजन्यशाब्दबोधसमानविषयकशाब्दबोधजनकत्वरूपसमानार्थकत्वस्यैव निवेशात् नतु समानप्रकारकत्वस्यापि गौरवात् । एवञ्च तादृशविग्रहस्य तादृशशाब्दबोधजनकत्वरूपसमानार्थकत्वसत्त्वान्न विग्रहत्वानुपपत्तिः । एतेन व्याससमासयोः समानप्रकारकबोधजनकत्वरूपसमानार्थकत्वरक्षणाय समासघटकराजपदस्य राजसंबन्ध एव लक्षणा वाच्येति मिश्रानुयायिमतमपास्तं तथा सति राजपदार्थराजसंबन्धस्य पुरुषे भेदसंबन्धेनान्वयस्य वक्तव्यतया नामार्थयोरिति व्युत्पत्तिविरोधापत्तेः । नच नामार्थयोरिति व्युत्पत्तौ निपातातिरिक्तत्ववत् समासातिरिक्तत्वविशेषणस्यापि दानात् न व्युत्पत्तिविरोध इति वाच्यम् । विग्रहलक्षणे समानप्रकारकबोधजनकत्वरूपसमानार्थकत्वं निवेश्य तल्लाभाय समासघटकराजपदस्य राजसंबन्धित्वे लक्षणां स्वीकृत्य राजपदलक्ष्यार्थराजसंबन्धस्य पुरुषे भेदसंबन्धेनान्वये नामार्थयोरिति व्युत्पत्तिभङ्गापत्त्या तत्परिहाराय व्युत्पत्तौ समासातिरिक्तविशेषणदानस्य प्रक्षालनाद्धीति न्यायकवलितत्वेनायुक्तत्वात् अनुभवसिद्धराजसंबन्धिप्रकारकपुरुषविशेष्यकशाब्दबोधापलापापत्तेश्च विग्रहलक्षणे समा-

## दिनकरीयम्.

न्वयबोधस्वीकारात् । अन्यथा दृश्यते राजमातङ्गास्तस्यैवामी तुरङ्गमा इत्यादौ तच्छब्देन राज्ञः परामर्शो न स्यात् । तस्यैकदेशत्वादित्याहुः ॥ द्वन्द्वे तु इतरेतरद्वन्द्वे तु । धवखदिराविव्यत्र धवत्वं खदि-

## रामरुद्रीयम्.

कशाब्दबोधं प्रति राजपदाव्यहितोत्तरपुरुषपदत्वरूपानुपूर्वीज्ञानस्य कारणत्वादित्यर्थः । तथाच अत एव राजपुरुष इत्यादौ तादृशशाब्दबोधवारणसम्भवेन नोक्तापत्तेरवकाश इति भावः ॥ **परामर्शो न स्यादिति** ॥ तत्पदेन पूर्ववाक्यस्थपदार्थस्यैव परामर्शो न तु तादृशपदार्थतावच्छेदकस्यापीति नियमः । अन्यथात्र शुक्लो घटोऽस्ति स न द्रव्यमिति स्वारसिकप्रयोगापत्तेः । तथाच राजपदस्य राजसम्बन्ध्यर्थकत्वे तत्पदेन राज्ञः परामर्शो न स्यादिति भावः । आहुरित्यस्वरसोद्भावनम् । तद्बीजं तु एवं सति राज्ञः पुरुष इत्यादावपि स्वत्वसंसर्गकबोधस्वीकार एवोचितः । अतिप्रसङ्गस्य षष्ठ्यन्तराजपदसमभिव्याहारज्ञानस्य तादृशशाब्दबोधनियामकत्वोपगमेनैव वारणसम्भवात् । न चैवं व्याससमासवाक्यज्ञानयोः परस्परजन्यत्वे व्यभिचारेण कारणतैवानुपपन्नेति वाच्यम् । तत्तदानुपूर्वीज्ञानाव्यवहितोत्तरत्वस्यापि कार्यतावच्छेदककोटौ निवेशनीयतया व्यभिचाराप्रसक्तेः । अन्यथा त्वन्मतेऽपि राजस्वत्वं पुरुष इत्यतः तादृशशाब्दबोधवारणाय षष्ठ्यन्तराजपदसमभिव्याहारज्ञानस्य राजस्वत्वप्रकारकशाब्दबोधहेतुतायाः कल्पनीयतया पर्यायपदान्तरघटितवाक्यादपि तादृशशाब्दबोधोत्पत्त्या व्यभिचारस्य दुर्वारत्वात् । यदि च पुरुषो न राज्ञ इत्यादौ आश्रयतया स्वत्वाद्यभाव एव नञा बोधनीयः वृत्त्यनियामकसंबन्धस्याभावप्रतियोगितानवच्छेदकतया स्वत्वादिसंबन्धेन राजाद्यभावस्य नञा बोधयितुमशक्यत्वादिति स्वत्वादेर्विभक्त्यर्थत्वमावश्यकमित्युच्यते तदा वृत्त्यनियामकसम्बन्धस्या-

**प्रभा.**

नविषयकबोधजनकत्वरूपसमानार्थकत्वनिवेशे तु राजसंबन्धे लक्षणाया अनावश्यकतया राजसंबन्धि-लक्षणयैव समानविषयकबोधजनकत्वरूपसमानार्थकत्वनिर्वाहात् व्युत्पत्तौ समासातिरिक्तत्वविशेषणस्यानावश्यकतया लाघवं अभेदसंबन्धेन राजसंबन्धिप्रकारकपुरुषविशेष्यकशाब्दबोधोपपत्तिश्चेति ध्येयम् । अन्येतु राजपुरुष इत्यादिसमासघटकराजपदस्य शक्यार्थराज्ञ एव स्वत्वादिसंबन्धेन पुरुषे अन्वयसंभवात् न तत्पुरुषे लक्षणा नचैवं सति नामार्थयोरिति व्युत्पत्तिविरोध इति वाच्यम् तादृशव्युत्पत्तौ समासातिरिक्तत्वस्य विशेषणीयत्वात् । नच तथापि राजा पुरुष इति वाक्यादपि तादृशशाब्दबोधापत्तिरिति वाच्यम् तादृशशाब्दबोधे राजपदाव्यवहितोत्तरपुरुषपदत्वरूपानुपूर्वीप्रकारकज्ञानस्य हेतुत्वस्वीकारेण राजा पुरुष इत्यादौ तादृशकारणाभावेन स्वत्वादिसंसर्गकबोधापत्त्यभावात् । अन्यथा संबन्धिनि लक्षणास्वीकारे दर्शते राजमातङ्गाः तस्यैवामी तुरङ्गमाः इत्यत्र तच्छब्देन पदार्थैकदेशत्वेन राज्ञः परामर्शो न स्यादित्याहुः तन्न तच्छब्दस्य बुद्धिविषयतावच्छेदकत्वोपलक्षितधर्मावच्छिन्नशक्ततया सति तात्पर्ये पदार्थैकदेशराज्ञोऽपि तच्छब्देन परामर्शे बाधकाभावात् पदार्थः पदार्थेनान्वेतीति व्युत्पत्तिसङ्कोचे मानाभावात् निरुक्तस्थले स्वत्वादिसंसर्गकबोधे निरुक्तानुपूर्वीज्ञानस्य हेतुत्वकल्पनायां गौरवात् अनुभवसिद्धाभेदसंबन्धेनराजसंबन्धिप्रकारकबोधापलापापत्तेश्चेति दिक् ॥ **द्वन्द्वे तु धवखदिरावित्यादाविति** ॥ धवखदिरावित्याद्यभिन्नेतरेतरद्वन्द्वे त्वित्यर्थः । परस्परानन्वितार्थ-

**दिनकरीयम्.**

त्वं च प्रत्येकं नोद्देश्यतावच्छेदकम् । सुपामुद्देश्यतावच्छेदकव्याप्यसङ्ख्यावबोधकत्वस्याकाशावित्यादिवाक्ये प्रामाण्यापत्तिभिया क्लृप्तत्वेन धवद्वयस्य खदिरद्वयस्य वा बोधापत्तेः। परन्तु खदिरपदस्य धवखदिरसाहित्याश्र-

**रामरुद्रीयम्.**

भावप्रतियोगितावच्छेदकत्वे को दोष इति वक्तव्यं अभावान्तरकल्पने गौरवमिति चेत् समनियताभावानामैक्येन तादृशाभावस्य राजस्वत्वाभावरूपत्वाभ्युपगमेनाभावान्तराकल्पनात्। न च स्वत्वादिसम्बन्धावच्छिन्नप्रतियोगिताकल्पने गौरवमिति वाच्यम् । स्वत्वादिषु विभक्तीनां शक्तिकल्पनं विभक्तिजन्यस्वत्वाद्युपस्थितीनां शाब्दबोधहेतुताकल्पनं तादृशोपस्थितीनां भिन्नविषयकप्रत्यक्षादिप्रतिबन्धकतावच्छेदककोटौ प्रवेशं चापेक्ष्य तादृशप्रतियोगिताव्यक्तिकल्पनस्यैव लघुत्वादिति विभक्तेः सङ्ख्याभिन्नार्थकतैव न स्यादिति । किञ्च राजसम्बन्धिनि राजपदस्य स्वारसिकलक्षणाग्रहदशायां तादृशलाक्षणिकराजपदघटितराजपुरुष इति कर्मधारयाद्राजसम्बन्ध्यभिन्नः पुरुष इत्यादिबोधस्य सर्वानुमततया तादृशानुपूर्वीज्ञानस्य द्विविधशाब्दबोधहेतुताकल्पने गौरवम् । अपि च राजसम्बन्ध्यभिन्नः पुरुषः प्रमेय इत्यादिविशिष्टवैशिष्ट्यावगाहिप्रत्यक्षं प्रति तादृशानुपूर्वीज्ञानघटितशाब्दसामग्र्याः प्रतिबन्धकत्वकल्पने गौरवम् । मन्मते च बाधाभावादिघटितशाब्दसामग्रीकाले विशेष्यतावच्छेदकप्रकारकानिर्णयघटितप्रत्यक्षसामग्र्या एवासत्त्वेन प्रत्यक्षापत्त्ययोगात्तदकल्पनात् । न च त्वयापि स्वत्वसम्बन्धेन राजाभाववान् पुरुषः प्रमेय इति तादृशप्रत्यक्षं प्रति पृथक् तादृशशाब्दसामग्र्याः प्रतिबन्धकत्वं कल्पनीयमिति साम्यमिति वाच्यम् । राजकीयभिन्नसम्बन्धः प्रमेय इति प्रत्यक्षं प्रत्यपि स्वत्वस्य संसर्गतावादिना तादृशशाब्दसामग्र्याः प्रतिबन्धकत्वस्य कल्पनीयतया पूर्वोक्तप्रतिबन्धकत्वकल्पनस्य तन्मतेऽधिकत्वादित्यलं विस्तरेण ॥ मूले द्वन्द्वे न लक्षणेत्युक्तं तन्न सङ्गच्छते । अहिनकुलमित्यादौ समाहारद्वन्द्वे उत्तरपदस्य अहिनकुलसमुदाये लक्षणायाः स्वतःसिद्धत्वादतो द्वन्द्वपदमितरेतरद्वन्द्वपरमित्याह ॥ **इतरेतरेति** ॥ मूले विभक्त्यर्थद्वित्वप्रकारेणेत्यत्र विभक्त्यर्थः कर्मत्वं तस्मिन् प्रकारतया धवखदिरौ बुध्येते इत्यर्थो बोध्यः ॥ **सुपामिति** ॥ आकाशाविति वाक्यस्य प्रामाण्याभ्युपगमेनैतन्निर्वाहः । विभक्त्यर्थद्वित्वादेरुद्देश्यतावच्छेदकव्याप्तिविशिष्टसङ्ख्यायाः स्वात्मकपर्याप्त्याख्यस्वरूपसंबन्धेनैव स्वप्रकृत्यर्थे अन्वयो नियत इत्युपेयम् । अन्यथा घटाकाशगतद्वित्वस्य केवलपर्याप्त्याख्यसम्बन्धेन समवायेन चाकाशेऽपि सत्त्वेन तादृशप्रयोगस्य प्रामाण्यापत्तेः । तथाचाकाशत्वव्याप्यद्वित्वाप्रसिद्ध्याकाशस्य तादृशपर्याप्तिसम्ब-

छिन्धीत्यादौ तु धवश्च खदिरश्च विभक्त्यर्थद्वित्वप्रकारेण बुध्यते तत्र न लक्षणा न च साहित्ये लक्षणेति वाच्यम् । साहित्यशून्ययोरपि द्वन्द्वदर्शनात् । न चैकक्रियान्वयित्वरूपं साहित्य-

## प्रभा.

कानेकपदघटितसमासत्वं द्वन्द्वत्वं द्विवचनाद्यन्ततादृशसमासत्वमितरेतरद्वन्द्वत्वमिति बोध्यम् ॥ **धवश्च खदिरश्चेति** ॥ धवखदिरपदाभ्यामिति शेषः । द्वन्द्व इत्यत्र सप्तम्यर्थो घटकत्वं तस्याध्याहृतपदद्वयेऽन्वयः अप्यर्थकतुशब्दः तत्रेत्युत्तरं योज्यः ॥ **तत्रेति** ॥ इतीत्यादिः इतरेतरद्वन्द्वघटकपदेऽपीत्यर्थः । तथाच धवखदिरावित्याद्यभिन्नेतरेतरद्वन्द्वघटकधवखदिरपदाभ्यां धवः खदिरश्च विभक्त्यर्थद्वित्वप्रकारेण बुध्यत इति तादृशद्वन्द्वघटकपदेऽपि न लक्षणेति समुदितवाक्यार्थः । ननु धवखदिरावित्यत्र धवत्वं खदिरत्वं च न द्विवचनार्थद्वित्वविशेष्यतावच्छेदकं सुपामुद्देश्यतावच्छेदकव्याप्यसङ्ख्याबोधकत्वनियमात् अन्यथा आकाशावित्यादिवाक्यस्यापि प्रामाण्यापत्तेः एवंच प्रकृते धवद्वयनिष्ठद्वित्वखदिरद्वयनिष्ठद्वित्वयोरेव प्रत्येकं धवत्वखदिरत्वव्याप्यत्वेन धवद्वयखदिरद्वयबोधापत्तेः अतस्साहित्याश्रये द्वन्द्वस्य लक्षणा वाच्या अन्यथा साहित्ये द्विवचनबहुवचने द्वन्द्वसमासो वेति सूत्रात् साहित्ये गम्यमान एव द्विवचनबहुवचने भवतः द्वन्द्वसमासश्च भवतीत्यर्थकात् साहित्याश्रये लक्षणानङ्गीकारे द्विवचनद्वन्द्वसमासानुपपत्तिस्स्यात् । तथाच साहित्यस्यैव उद्देश्यतावच्छेदकतया धवद्वयादिगतद्वित्वस्य साहित्यव्याप्यत्वाभावेन धवखदिरोभयगतद्वित्वस्यैव तद्व्याप्यत्वात् न धवद्वयादिबोधोपपत्तिः नवा धवखदिरोभयबोधानुपपत्तिरिति मीमांसकाक्षेपं दूषयितुमनुवदति ॥ **नचेति** ॥ **साहित्य इति** ॥ सहवृत्तित्वरूपसाहित्याश्रय इत्यर्थः ॥ **साहित्यशून्ययोरपीति** ॥ सामानाधिकरण्यशून्यधवखदिरोभयबोधतात्पर्येणोच्चरितधवखदिरपदयोरपीत्यर्थः ॥ **द्वन्द्वदर्शनादिति** ॥ द्वन्द्वावयव-

## दिनकरीयम्.

ये लक्षणोपगम्यते । एवञ्चोद्देश्यतावच्छेदकीभूततादृशसाहित्यव्याप्यत्वं न धवद्वयवृत्तिद्वित्वस्य न वा खदिरद्वयवृत्तिद्वित्वस्य अपितु धवखदिरोभयवृत्तिद्वित्वस्येति न धवद्वयादेर्बोध इति मीमांसकमतं शङ्कते ॥ **नच साहित्य इति** ॥ साहित्याश्रये इत्यर्थः । सहवृत्तित्वरूपं साहित्यं लक्ष्यमुतैकक्रियान्वयित्वमिति विकल्प्याद्यं दूष-

## रामरुद्रीयम्.

न्धेन न तद्वत्त्वमिति नोक्तवाक्यस्य प्रामाण्यापत्तिः । एवञ्च तादृशपर्याप्तिसम्बन्धेन तद्वत्त्वं द्वित्वस्योद्देश्यतावच्छेदकव्याप्यत्व एव पर्यवसितं भवतीत्युद्देश्यतावच्छेदकव्याप्यद्वित्वादिसङ्ख्याप्रमाजनकत्वं विभक्तीनामित्यर्थः । प्रमोपादानादाकाशावित्यादिवाक्ययोग्यताभ्रमे घटाकाशगतद्वित्वस्य आकाशे प्रकारतावगाहिशाब्दबोधोत्पत्तावपि न क्षतिः । नचोक्तस्थले तादृशपर्याप्तेरप्रसिद्धतया कथं तदवगाहिभ्रमः सम्भवतीति वाच्यम् । एकत्वादिपर्याप्तेराकाशत्वव्याप्यतया तेन व्यधिकरणसम्बन्धेन घटाकाशगतद्वित्वस्य भ्रमे प्रकारत्वोपगमात् । एतेनोद्देश्यतावच्छेदकव्याप्यद्वित्वस्यैव द्विवचनशक्यत्वे आकाशावित्यादिवाक्यात् भ्रमात्मकोऽपि शाब्दबोधो न स्यादाकाशत्वव्याप्यद्वित्वाप्रसिद्ध्या विभक्तेस्तद्बोधकत्वासम्भवादिति प्रत्युक्तम् । उक्तरीत्या भ्रमस्योपपादितत्वात् । द्वित्वमात्रे विभक्तेः शक्तिभ्रमेण तादृशशाब्दबोधोपपादनमसत् । तथा सति तादृशवाक्यजन्यशाब्दबोधस्य भ्रमत्वानुपपत्तेः घटाकाशगतद्वित्वस्य आकाशे पर्याप्त्यादिसम्बन्धेनाबाधितत्वादिति बोध्यम् । अत्र चैत्रो मैत्रश्च गच्छत इत्यादावाख्यातेनोद्देश्यतावच्छेदकचैत्रत्वाद्यव्याप्यद्वित्वादेरपि बोधनात् विभक्तीनामित्युपेक्ष्य सुपामित्युक्तमित्यवधेयम् । न च सिद्धान्ते घटपटावित्यादौ केवलपर्याप्तिसम्बन्धेनैव द्वित्वान्वयात् सुपामित्यत्तैकधर्मोद्देश्यतावच्छेदकस्थल इत्यस्य पूरणीयतयोक्तस्थले धर्मद्वयस्योद्देश्यतावच्छेदकतया इदमसङ्गतमिति वाच्यम् । सिद्धान्ते तथात्वेऽपि मीमांसकमते साहित्यस्यैवोद्देश्यतावच्छेदकतया पूरणस्यानावश्यकत्वात् । घटपटौ तिष्ठत इत्यादौ तु तिङो न सङ्ख्याबोधकता सुपैव सङ्ख्याबोधनादिति मन्तव्यम् ॥ **सहवृत्तित्वमिति** ॥ एकदेशवृत्तित्वमित्यर्थः ॥ **लक्ष्यं** लक्ष्यतावच्छे-

मस्तीति वाच्यम्। क्रियाभेदेऽपि धवखदिरौ पश्य छिन्धीत्यादिदर्शनात् साहित्यस्याननुभवाच्च अत एव राजपुरोहितौ सायुज्यकामौ यजेयातामित्यत्र लक्षणाभावात् द्वन्द्व आश्रीयते। तस्मात्

## प्रभा.

त्वेन अनुभूयमानत्वादित्यर्थः। तादृशपदद्वयघटितद्वन्द्वस्यापि प्रामाणिकत्वादिति फलितार्थः। तथाच तत्र साहित्यस्य बाधितत्वात् न तादृशसाहित्याश्रये लक्षणेति भावः ॥ **एकक्रियान्वयित्वेति** ॥ एकजातीयक्रियान्वयित्वेत्यर्थः ॥ **साहित्यमस्तीति** ॥ तथाच व्यधिकरणधवखदिरयोरप्येकजातीयक्रियान्वयित्वरूपपारिभाषिकसाहित्यसत्त्वात् समासस्य तदाश्रयलक्षणायां न बाधकमिति भावः ॥ **क्रियाभेदेऽपीति** ॥ एकजातीयक्रियान्वयित्वशून्यधवादिबोधतात्पर्येण उच्चरितधवादिपदेऽपीत्यर्थः ॥ **इत्यादौ दर्शनादिति** ॥ इत्यादिवाक्यघटकद्वन्द्वावयवत्वानुभवादित्यर्थः। यद्यपि धवखदिरावित्यादौ दर्शनादित्यस्यैव वक्तुं शक्यतया वाक्यस्य पश्य छिन्धीति क्रियावाचकपदान्तर्भावो व्यर्थः तथापि द्वन्द्वावयवपदयोरेकजातीयक्रियान्वयित्वाभाववद्धवखादिरबोधतात्पर्येण उच्चरितत्वस्फुटीकरणाय क्रियावाचकपदघटनेति ध्येयम्। ननु प्रकृते एकजातीयक्रियान्वयित्वरूपसाहित्यं न ब्रूमः किन्तु एकशाब्दबोधीयक्रियान्वयित्वरूपमेव एवंच धवखदिरौ पश्य छिन्धीत्यादौ धवविषयकदर्शनाश्रयः खदिरकर्मकच्छेदनानुकूलकृतिमांश्चेत्याकारकैकशाब्दबोधस्यैव जायमानतया एकशाब्दबोधीयक्रियान्वयित्वरूपसाहित्यस्यैव धवखदिरयोरसत्त्वान्नानुपपत्तिरत आह ॥ **साहित्यस्येति** ॥ एकशाब्दबोधीयक्रियान्वयित्वरूपसाहित्यस्यैवेत्यर्थः ॥ **अननुभवादिति** ॥ प्रकृतवाक्यजन्यशाब्दबोधाविषयत्वादित्यर्थः। तथाच एतादृशसाहित्याश्रये लक्षणाङ्गीकारेण धवखदिरौ छिन्धीत्यादिवाक्यादेतादृशसाहित्यप्रकारेण धवखदिरस्मरणशाब्दबोधापत्तेः धवत्वादिप्रकारेण धवखदिरविषयकस्मरणशाब्दबोधानुपपत्तेश्च। नचेष्टापत्तिः अनुभवविरोधादिति भावः। उक्तार्थे उपष्टम्भकमाह ॥ **अत एवेति** ॥ इतरेतरद्वन्द्वे साहित्यस्याननुभवादेवेत्यर्थः ॥ **इत्यत्रेति** ॥ एतादृशश्रुतिघटकराजपुरोहिताविति समास इत्यर्थः ॥ **लक्षणाभावादिति** ॥ लक्षणाभावादेवेत्यर्थः ॥ **द्वन्द्व आश्रीयत इति** ॥ द्वन्द्वः अङ्गीक्रियत इत्यर्थः। तथाच एतादृशश्रुतिघटकराजपुरोहितावित्यस्य पुरोहितश्च पुरोहितश्च पुरोहितौ राज्ञः पुरोहितौ राजपुरोहितौ इति षष्ठीतत्पुरुषो वा राजा च पुरोहितश्च राजपुरोहिताविति द्वन्द्वो वेति सन्दिह्यानन्तरं तत्पुरुषपक्षे लक्षणापत्त्या द्वन्द्व एवाङ्गीकृतः। यदि द्वन्द्वेऽपि साहित्याश्रये लक्षणा तर्हि तत्पुरुषतुल्यतया तत्पुरुषोपेक्षायां बीजाभावात् तत्सिद्धान्तविरोधापत्तेरिति भावः। केचित्तु इदमुपलक्षणं चैत्रमैत्रौ गच्छत इत्यादौ चैत्रादिपदस्य यदि साहित्यविशिष्टेऽपि लक्षणा तदा साहित्यस्य व्यासज्यवृत्तितया तदवच्छेदेनाव्यासज्यवृत्तेः गमनकर्तृत्वस्यान्वयासंभव इति ध्येयमित्याहुः तदसत् सहवृत्तित्वैकक्रियान्वयित्वादिरूपसाहित्यस्य व्यासज्यवृत्तित्वे प्रमाणाभावेन तस्याप्यव्यासज्यवृत्तितया तदवच्छेदेन अव्यासज्यवृत्तिगमनकर्तृत्वान्वये बाधकाभावात्। स्वमतमुपसंहरति ॥ **तस्मादिति** ॥ साहित्यस्याननुभवात्

## दिनकरीयम्.

यति ॥ **साहित्यशून्ययोरपीति** ॥ द्वितीयं शङ्कते ॥ **न चैकेति** ॥ **अननुभवाच्चेति** ॥ वस्तुगत्यैकक्रियान्वयित्वस्य धवखदिरयोः सत्त्वेऽप्येकक्रियान्वयित्वस्य शाब्दबोधाभावादित्यर्थः। इदमुपलक्षणम्। चैत्रमैत्रौ

## रामरुद्रीयम्.

दकम् ॥ **एकक्रियान्वयित्वं** एकोक्त्युपस्थाप्यार्थान्वयित्वम् ॥ **मूले साहित्यशून्ययोरिति** ॥ गोत्वाश्वत्वयोरित्यर्थः। गोत्वाश्वत्वे पश्येत्यादौ दर्शनरूपक्रियान्वयित्वस्य सत्त्वान्न द्वन्द्वानुपपत्तिः। अतो द्वितीये दूषणान्तरमाह ॥ **पश्य छिन्धीति** ॥ यथाक्रमं धवे दर्शनस्य खदिरे छेदनस्य तात्पर्येणापि ॥ **दर्शनात्** ॥ द्वन्द्वदर्शनादित्यर्थः। साहित्यस्याननुभवादिति दूषणमपि द्वितीयकल्पाभिप्रायेणैवेत्याशयेन व्याचष्टे ॥ **वस्तुगत्येति** ॥ **शाब्दबोधाभावादिति** ॥ एकक्रियान्वयित्वं हि एकक्रियाविषयतानिरूपितसंसर्गतानिरूपितशाब्दबो-

**साहित्यादिकं नार्थः किन्तु वास्तवभेदो यत्र तत्र द्वन्द्वः । न च नीलघटयोरभेद इत्यादौ**

## प्रभा.

निरुक्तश्रुतिघटकराजपुरोहिताविव्यस्य द्वन्द्वत्वसिद्धान्तविरोधापत्तेश्चेत्यर्थः ॥ **साहित्यादिकमिति** ॥ सहवृत्तित्वरूपमुख्यसाहित्यमित्यर्थः । आदिपदेनैकक्रियान्वयित्वादिरूपगौणसाहित्यपरिग्रहः ॥ **नार्थः** न द्वन्द्वलक्ष्यतावच्छेदकमित्यर्थः । द्वन्द्वस्थले साहित्यावच्छिन्ने न लक्षणेति भावः । नच द्वन्द्वस्थले साहित्यावच्छिन्ने लक्षणानङ्गीकारे आकाशावित्यादिवाक्यस्य प्रामाण्यापत्तिवारणाय सुपामुद्देश्यतावच्छेदकव्याप्यसङ्ख्याबोधकत्वनियमस्यावश्यकतया धवखदिरावित्यत्र धवखदिरोभयगतद्वित्वस्य धवत्वादिरूपोद्देश्यतावच्छेदकव्याप्यत्वाभावेन धवद्वयादिगतद्वित्वस्यैव धवत्वव्याप्यतया धवद्वयादिबोधापत्तिरित्युक्तदोषस्तदवस्थ एवेति वाच्यम्। आकाशावित्यादिवाक्यस्य प्रामाण्यापत्तिवारणाय सुपां प्रकृत्यर्थपर्याप्तसङ्ख्याबोधकत्वनियमस्य प्रकृततात्पर्यविषयताशून्यावृत्तिसङ्ख्याबोधकत्वाभावमिति वा नियमस्य स्वीकारेणैव आकाशाविति वाक्यस्य प्रामाण्यापत्तिवारणे सुपामुद्देश्यतावच्छेदकव्याप्यसङ्ख्याबोधकत्वनियमस्य प्रयोजनान्तरविरहेणानङ्गीकारात्। एवञ्च धवखदिरावित्यत्र धवद्वयादिगतद्वित्वस्य धवखदिरोभयात्मकप्रकृत्यर्थपर्याप्तत्वाभावेन न धवद्वयादिबोधापत्तिः धवखदिरोभयगतद्वित्वस्य तु प्रकृत्यर्थपर्याप्तत्वात् न धवखदिरोभयबोधानुपपत्तिरिति ध्येयम् । भट्टाचार्यसार्वभौमास्तु सुपामुद्देश्यतावच्छेदकव्याप्यसङ्ख्याबोधकत्वनियमः घटावित्यत्र एकधर्मावच्छिन्नोद्देश्यकस्थल एव स्वीक्रियते नतु सर्वत्र प्रयोजनाभावात् एवंच धवखदिरावित्यादौ न धवखदिरगतद्वित्वबोधानुपपत्तिरिति व्याचक्रुः । ननु द्वन्द्वस्थले साहित्याबोधने साहित्ये द्विवचनबहुवचने द्वन्द्वसमासो वेत्यनुशासनात् प्रकृते साहित्यस्य अबोधनेन धवखदिरावित्यादौ द्विवचनद्वन्द्वसमासयोरनुपपत्तिरित्युक्तदोषस्तदवस्थ इति चेन्न उक्तस्थले पदार्थस्मृतिशाब्दबोधयोरसाहित्यस्याविषयत्वेऽपि शाब्दबोधोत्तरकालीनमानसप्रत्यक्षे निरुक्तसाहित्यस्य विषयत्वात् साहित्य इत्यस्य सूत्रस्य प्राप्त्या द्विवचनाद्यनुपपत्तेरभावादिति दिक् । ननु धवखदिरावित्यत्र उक्तरीत्या द्विवचनद्वन्द्वयोरसाधुत्वेऽपि द्वन्द्वे साहित्यं न प्रयोजकं द्वन्द्वात्पूर्वं धवादिषु एकक्रियान्वयित्वरूपसाहित्याभावात् अतो द्वन्द्वप्रयोजकमाह ॥ **किन्त्विति** ॥ केचित्तु यदि द्वन्द्वे न लक्षणा तदा कर्मधारयात् द्वन्द्वस्य को विशेष इत्यत आह किन्त्वितीत्यवतरणिकामाहुः तदसत् द्वन्द्वकर्मधारययोर्भेदासंभवविचारस्याप्रकान्ततया तयोर्वैलक्षण्यव्यवस्थापनस्याजिज्ञासितत्वेन किन्त्वित्यादिग्रन्थस्य तत्परताया अयुक्तत्वात् ॥ **वास्तवभेद इति** ॥ वस्तुप्रतियोगिकभेद इत्यर्थः । समासघटकपदनिरूपितवृत्त्याश्रययोरन्यतरप्रतियोगिकभेद इति यावत् ॥ **यत्रेति** ॥ तादृशवृत्त्याश्रययादृशान्यतरनिष्ठ इत्यर्थः ॥ **तत्रेति** ॥ तादृशान्यतरपदार्थ इत्यर्थः ॥ **द्वन्द्व इति** ॥ तादृशान्यतरभेदे तात्पर्यविषये सति यद्वाक्यं प्रयुज्यते तादृशसमासवाक्यं द्वन्द्व इत्यर्थः । अ-

## दिनकरीयम्.

गच्छत इत्यादौ चैत्रादिपदस्य यदि साहित्यविशिष्टे लक्षणा तदा साहित्यस्य व्यासज्यवृत्तितया तदवच्छेदेनाव्यासज्यवृत्तेः गमनकर्तृत्वस्यान्वयासंभव इत्यपि बोध्यम् । ननु यदि द्वन्द्वे न लक्षणा तदा कर्मधारयात् द्वन्द्वस्य को विशेष इत्यत आह ॥ **किन्त्विति** ॥ चार्थे द्वन्द्व इत्यनुशासनम् । तत्र चार्थश्च-

## रामरुद्रीयम्.

धविषयत्वमेव । तच्च न शाब्दबोधविषयः । स्वस्मिन् स्वविषयकत्वस्याननुभवादिति भावः । वस्तुतस्त्ववृत्तीनामपि कालिकसम्बन्धेन वृत्तितामते एकमहाकालवृत्तित्वमक्षतमेवेति न क्वापि द्वन्द्वानुपपत्तिरित्याशङ्कायामेव साहित्यस्येत्यादि दूषणमभिहितम् । एककालवृत्तित्वादेः शाब्दबोधविषयत्वाननुभवाच्चेति तदर्थ इति युक्तमुत्पश्यामः ॥ **व्यासज्यवृत्तितयेति** ॥ यद्यप्येकदेशवृत्तित्वं एकक्रियान्वयित्वं च न व्यासज्यवृत्ति तथापि पक्षद्वये दूषणाभिधानादपेक्षाबुद्धिविषयत्वमेव साहित्यं वाच्यम्। तच्च व्यासज्यवृत्त्येवेति भावः । एतच्चापाततः । द्वौ गच्छत इत्यादौ व्यासज्यवृत्तिद्वित्वाद्यवच्छेदेनापि गमनकर्तृत्वान्वयस्य सर्वसम्मतत्वादिति विभावनीयम् ॥ **कर्मधारयादिति** ॥ कर्मधारये पदद्वये लक्षणाविरहेण लक्षणाविरहितसमासत्वस्य द्वन्द्वकर्मधारयोभयसा-

कथमिति वाच्यम् । तत्र नीलपदस्य नीलत्वे घटपदस्य घटत्वे लक्षणा । अभेद इत्यस्य चाश्रया-

## प्रभा.

थवा वास्तवभेदो यत्रेति यादृशपदद्वयनिरूपितवृत्तिमतोः परस्परभेद इत्यर्थः । प्रामाणिक इति शेषः । तत्र द्वन्द्व इति तादृशपदयोरेव द्वन्द्वसमास इत्यर्थः । तादृशपदद्वयघटितसमास एव द्वन्द्वसमास इत्यर्थः । भेदस्य वास्तवत्वकथनं अज्ञातस्यैव तस्य द्वन्द्वप्रयोजकत्वसूचनाय । तथाच चार्थे द्वन्द्व इति सूत्रं तस्य समुच्चयान्वाचयेतरेतरसमाहाराश्चत्वारश्चार्थाः अत्र समुच्चयान्वाचययोराविलम्बेन पदार्थद्वयोपस्थापकत्वयुगपत्समभिव्याहृतक्रियान्वयित्वबोधोभयतात्पर्येण उच्चरितत्वरूपसामर्थ्याभावात् समासासंभवेन इतरेतरसमाहारयोर्निरुक्तसामर्थ्यवत्वात् समाससंभवेन च समुच्चयान्वाचयातिरिक्तचार्थे द्वन्द्वसमास इत्यर्थः स्वीकार्यः । तत्र चार्थस्य भेदव्याप्यत्वात् भेदे सति द्वन्द्व इत्याशयेन वास्तवभेदो यत्रेत्यनेन भेदस्यैव द्वन्द्वप्रवृत्तिनियामकत्वमुक्तमिति न पूर्वोक्तसाहित्याबोधप्रयुक्तद्वन्द्वानुपपत्तिशङ्केति ध्येयम् ॥ **नीलघटयोरभेद इत्यादाविति** ॥ आदिना शरीरेन्द्रियविषया इत्यादिपरिग्रहः । इत्यादिवाक्यघटकनीलपदघटपदयोरित्यर्थः ॥ **कथमिति** ॥ कथं द्वन्द्वावयवत्वमित्यर्थः । तादृशपदद्वयघटितद्वन्द्वः कथमिति यावत् । द्वन्द्वप्रयोजकप्रकृतवाक्यघटकपदद्वयानिरूपितवृत्त्याश्रयान्यतरनिष्ठनादृशान्यतरप्रतियोगिकभेदस्याभावादिति भावः । यद्यपि नीलघटयोरित्यादौ कथमित्येव शङ्का कर्तुमुचिता तथापि नीलघटयोः द्वन्द्वप्रयोजकनिरुक्तभेदासत्त्वस्फुटीकरणाय अभेदपदघटनेति ध्येयम् ॥ **तत्रेति** ॥ नीलघटयोरिति समास इत्यर्थः । सप्तम्यर्थो घटकत्वं तस्य नीलपदे घटपदे चान्वयः ॥ **वृत्तिरिति** ॥ लक्षणेत्यर्थः । तथाच तयोर्भेदसत्त्वात् न द्वन्द्वानुपपत्तिरिति भावः । ननु तर्हि तत्र कथमभेदान्वय इत्यत आह ॥ **अभेद इत्यस्येति** ॥ अभेद इति वाक्यस्येत्यर्थः ॥

## दिनकरीयम्.

त्वारः । समुच्चयान्वाचयेतरेतरयोगसमाहारभेदात् । तत्र समुच्चयान्वाचययोः सामर्थ्याभावान्न समासः । इतरेतरसमाहारयोः सामर्थ्यसत्त्वात्तत्र समासः । तत्र चार्थस्य भेदव्याप्यत्वात् भेदे द्वन्द्व इत्याशयः । इत्यादावित्यादिपदेन प्रमाणप्रमेयेत्यादिसूत्रपरिग्रहः ॥ **कथमिति** ॥ यदि समासघटकपदार्थयोर्यत्र भेदस्तत्रैव द्वन्द्वस्तदा नीलघटयोर्भेदाभावात् कथं द्वन्द्वः । एवं प्रमाणप्रमेयेत्यादिसूत्रे आत्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गास्तु प्रमेयमिति सूत्रोपात्तद्वादशविधप्रमेयान्तर्गतमनोबुद्धीन्द्रियाणां प्रमाणत्वेन प्रमाणप्रमेययोर्भेदाभावात् कथं द्वन्द्व इत्यर्थः ॥ **लक्षणेति** ॥ तथाच तयोर्भेदसत्त्वात् द्वन्द्व इति भावः । नन्वभेद इत्यसङ्गतं नीलत्वघटत्वयोरभेदाभावादत आह ॥ **अभेद इत्यस्येति** ॥ केचित्तु पदार्थत्वं पदजन्यप्रतीतिविषयत्वम् । तथाच क्वचित् पदार्थभेदात् क्वचित् पदार्थतावच्छेदकभेदात् द्वन्द्वः । प्रकृते च नील-

## रामरुद्रीयम्.

धारणत्वादिति भावः ॥ **समुच्चयेति** ॥ घटं पटं चानयेत्यत्र चार्थः समुच्चयः । तत्र च घटपटयोः समासनिष्ठानयनक्रियान्वयित्वेन सापेक्षत्वान्न समासः । एवं भिक्षामट गां चानयेत्यत्र चार्थोऽन्वाचयः । अत्रापि भिक्षागवोः समासनिष्ठक्रियासापेक्षत्वादेवासामर्थ्यादेव न समासः किंतु रामश्च लक्ष्मणश्च रामलक्ष्मणौ अहिश्च नकुलश्च अहिनकुलमिति इतरेतरसमाहारयोरेव यत्र चार्थत्वं तत्रैव समास इति भावः । परन्तु यत्र पदार्थयोर्भेदस्तत्रैव चकारः प्रयुज्यत इति समुच्चयान्वाचयेतरेतरसमाहारेषु चार्थो भेद एव । तस्मिन् भेदे समस्यमानपदार्थयोर्वस्तुतो वर्तमाने सति द्वन्द्वसमासो भवतीति चार्थे द्वन्द्व इति सूत्रार्थः ॥ **प्रमाणप्रमेयेत्यादीति** ॥ प्रमाणस्य प्रमेयाभिन्नत्वेन तत्र द्वन्द्वो न स्यादिति भावः । तथाच नीलघटयोरित्यत्र नीलत्वघटत्वयोर्यथा नीलघटपदयोर्लक्षणा तथा प्रमाणप्रमेयेत्यादिसूत्रेऽपि प्रमाणत्वादौ प्रमाणादिपदस्य लक्षणा अभेदपदस्याश्रयाभेद इव पदार्थपदस्यापि पदार्थतावच्छेदके लक्षणेत्यभिप्रायः ॥ **पदजन्येति** ॥ विशेषणविशेष्यविधया पदार्थतावच्छेदकस्य च पदार्थस्य च पदजन्यप्रतीतेर्विषयत्वेन पदार्थतावच्छेदकयोः पदार्थयोर्वा भेदे द्वन्द्वसाधुः । नीलघटयोरित्यादौ पदार्थतावच्छेदकभेदादेव द्वन्द्वस्य साधुता । नचैवं पदार्थयोर्भेदः कथं द्वन्द्वस्य साधुतानियामक इति वाच्यम् । घटश्च घटश्च घटावित्यत्र द्वन्द्वोपपत्तये पदार्थभेदस्य द्वन्द्वसा-

भेद इत्यर्थः । समाहारद्वन्द्वे तु यदि समाहारोऽप्यनुभूयत इत्युच्यते तदाहिनकुलमित्या-

## प्रभा.

**आश्रयाभेद इति** ॥ एकव्यक्तिसमवेतत्वमित्यर्थः ॥ **इत्यर्थ इति** ॥ प्रयोक्तृतात्पर्यविषयार्थ इत्यर्थः। तथाच प्रकृतवाक्यघटकाभेदशब्दस्य एकव्यक्तिसमवेतत्वे लक्षणेति भावः। अन्येतु पदार्थत्वं पदनिरूपितवृत्तिमत्त्वतदवच्छेदकत्वान्यतरवत्त्वम्। एवंच क्वचित्पदानिरूपितवृत्तिमद्भेदात् क्वचित्पदनिरूपितवृत्तिमत्त्वावच्छेदकभेदाच्च द्वन्द्व इति लब्धम्। प्रकृते नीलपदनिरूपितवृत्तिमत्त्वावच्छेदकनीलरूपघटपदशक्यतावच्छेदकघटत्वयोर्भेदात् द्वन्द्वस्साधुः। अथवा भेदे द्वन्द्व इत्यत्र भेदशब्दः पदार्थतावच्छेदकभेदपर एव अन्यतरपरत्वकल्पनायां गौरवात्। नचैवं सति घटा इत्यादौ पदार्थतावच्छेदकभेदाभावेन द्वन्द्वस्याप्रसक्त्या तदपवादकसरूपैकशेषो न स्यादिति वाच्यं इष्टापत्तेः बहुवचनान्तघटशब्देनैव बहुघटबोधसंभवात्। नच सकृदुच्चरितन्यायसत्त्वात् कथमेकघटशब्देन अनेकघटबोध इति वाच्यं सकृदर्थं गमयतीत्यत्र सकृच्छब्दस्य बोधविशेषणतया एकशाब्दबोधं जनयतीत्यर्थलाभात् एकघटशब्देन अनेकघटबोधेऽप्युक्तव्युत्पत्तिविरोधाभावात्। नच तथापि सरूपैकशेषविधेः निर्विषयत्वापत्तिरिति वाच्यं नानार्थकहरयइत्यादौ तद्विधेस्सार्थक्यसंभवादित्याहुः। तन्न क्वचित्पदार्थभेदस्य क्वचित्पदार्थतावच्छेदकभेदस्य द्वन्द्वप्रयोजकतायां भेदे द्वन्द्व इत्यत्र भेदशब्दस्य पदार्थतावच्छेदकभेदपरतायां सर्वत्र प्राप्तसरूपैकशेषविधेः नानार्थकहरय इत्यादिमात्रपरतायां चातिगौरवात्॥ **समाहारद्वन्द्वेति** ॥ इदंच अहिनकुलमित्युत्तरवाक्येन साकाङ्क्षं समाहारद्वन्द्वत्वंच परस्परानन्वितार्थकानेकपदघटितैकवचनान्तसमासत्वरूपं। अप्यर्थकतुशब्दः इत्यादावित्युत्तरं योज्यः॥ **यदि समाहार इति** ॥ इदन्तु समाहारबोधकसमासत्वं समाहारद्वन्द्वत्वमिति मतानुसारेणोक्तम्। वस्तुतस्तु अहिनकुलमित्यादौ अहित्वनकुलत्वाभ्यामेव अहिनकुलबोधस्य अनुभवसिद्धतया समाहारस्याननुभवसिद्धत्वमित्याशयेन यदीत्युक्तम्॥

## दिनकरीयम्.

त्वघटत्वयोः पदार्थतावच्छेदकयोर्भेदात् द्वन्द्वः। अस्तु वा पदार्थतावच्छेदकभेद एव द्वन्द्वः। नचैवं घटा इत्यादौ द्वन्द्वस्याप्रसक्तत्वेन तदपवादकः सरूपैकशेषो न स्यादिति वाच्यम्। इष्टापत्तेः। तत्र घटपदोपस्थापितेषु बहुत्वान्वयादेव बहुघटबोधसम्भवात्। सकृदुच्चरित इत्यादिव्युत्पत्तौ मानाभावात्। सरूपैकशेषविधेर्हरी इत्यादौ सार्थकत्वात्। अस्तु वा सकृदित्यादिव्युत्पत्तिः। परन्तु सकृदित्यर्थपदार्थैकदेशे वृत्तौ विशेषणम्। वस्तुतो बोधविशेषणमेव तदिति न दोष इत्याहुः ॥ **समाहार इति** ॥ अहिनकुलमित्यादौ अहिनकुल-

## रामरुद्रीयम्.

धुतानियामकत्वोपगमात्। नच तत्र सरूपाणामेकशेष इति सूत्रेण पदान्तरस्य लोपविधानात् द्वन्द्व एव नास्तीति कृतं पदार्थभेदस्य द्वन्द्वसाधुतानियामकत्वोपगमेनेति वाच्यम्। सरूपैकशेषस्य द्वन्द्वसमासापवादकत्वेन द्वन्द्वस्य साधुतास्थल एव सरूपैकशेषविधेः प्रवर्तनीयतया तत्र च पदार्थतावच्छेदकघटत्वस्य भेदाभावेन पदार्थयोर्घटव्यक्त्योर्भेदादेव द्वन्द्वस्य साधुतामुपपाद्य तदपवादकसरूपैकशेषविधेः प्रवर्तनीयत्वादिति भावः। न चैवं नीलघट इति कर्मधारयस्थलेऽपि पदार्थतावच्छेदकभेदसत्त्वेन द्वन्द्वप्रवृत्त्या कर्मधारयोच्छेदापत्तिरिति वाच्यम्। समस्यमानपदार्थयोरभेदविवक्षायामेव कर्मधारयविधानाद्विशेषेण सामान्यबाधादभेदविवक्षाभाव एव द्वन्द्वसमासविधेरभ्युपगमादिति ध्येयम् ॥ **सकृदुच्चरित इति** ॥ एकवारोच्चरितपदादेकस्यैवार्थस्य बोधेन घटपदादेकदा नानाघटबोधासम्भवादित्याशङ्कायामिदमुक्तम्। न चैवं सरूपाणामिति सूत्रवैयर्थ्यम्। एकघटपदेनैव नानाघटोपस्थितिसम्भवेन पदान्तरं कल्पयित्वा तल्लोपविधानस्याप्युचितत्वादिति ॥ **एकशेषविधेरिति** ॥ हरिपदे सूर्यत्वसिंहत्वादिपदार्थतावच्छेदकानां भेदेन द्वन्द्वप्रसक्त्या तत्रैव तदपवादकसरूपैकशेषविधेः सार्थकत्वादिति भावः। ननु सकृदुच्चरित इति व्युत्पत्त्यनभ्युपगमे सैन्धवादिपदादेकदैव लवणाश्वयोर्बोधापत्तिः। न च तात्पर्यज्ञानस्य नियामकत्वान्नानुपपत्तिरिति वाच्यम्। तात्पर्यसत्त्वेऽप्येकदा लवणाश्वयोर्बोधाननुभवादित्यत आह ॥ **अस्तु वेति** ॥ **पदार्थैकदेश इति** ॥ सकृदर्थमित्यत्रार्थशब्दार्थः वृत्त्या पदबोध्यः। तदेकदेशवृत्तौ सकृदित्यर्थस्यैकत्वस्यान्वयः।

**दौ परपदेऽहिनकुलसमाहारे लक्षणा पूर्वपदं तु तात्पर्यग्राहकम् । न च भेरीमृदङ्गं वादयेत्यत्र कथं समाहारस्यान्वयः । अपेक्षाबुद्धिविशेषरूपस्य तस्य वादनासम्भवादिति वाच्यम् । परम्परासम्बन्धेन तदन्वयात् । एवं पञ्चपूलीत्यादावपि । परे त्वहिनकुलमित्यादावहिर्नकुलश्च**

## प्रभा.

**तदेति** ॥ समाहारस्यानुभवसिद्धत्वपक्ष इत्यर्थः ॥ **अहिनकुलमित्यादाविति** ॥ इत्यादावपीत्यर्थः । बहुव्रीहौ उत्तरपदस्य यथा लक्षणा तथा समाहारद्वन्द्वेऽप्युत्तरपदस्य लक्षणेत्यपिशब्दादवगम्यते ॥ **अहिनकुलसमाहारे लक्षणेति** ॥ इदंतु प्राचीनैकदेशिमते । वैयाकरणमते उक्तार्थे समाहारद्वन्द्वस्य शक्तिरित्यपि ध्येयम् । पूर्वपदलक्षणां परिकल्प्य उत्तरपदस्य तात्पर्यग्राहकत्वे तु प्रकृत्यर्थान्वितस्वार्थबोधकत्वं प्रत्ययानामिति व्युत्पत्तिविरोधापत्तेः उत्तरपदस्यैव लक्षणा युक्तेत्यभिप्रायेण पूर्वपदं त्वित्युक्तम् । पूर्वपदमेवेत्यर्थः ॥ **इत्यत्र कथमिति** ॥ इतिवाक्ये प्रामाण्यं कथमित्यर्थः । बाधितार्थकत्वादिति भावः । तदेवोपपादयति ॥ **समाहारस्येति** ॥ **वादनासंभवादिति** ॥ वादनकर्मत्वाभावादित्यर्थः ॥ **परम्परासंबन्धेनेति** ॥ प्रकृत्यर्थसमाहार इत्यादिः । स्वाश्रयवृत्तित्वसंबन्धेनेत्यर्थः ॥ **तदन्वयादिति** ॥ द्वितीयार्थवादनकर्मत्वान्वयादित्यर्थः । तथाच प्रकृत्यर्थसमाहारे स्वरूपसंबन्धेन प्रत्ययार्थवादनकर्मत्वाभावेऽपि ...सामानाधिकरण्यसंबन्धेन तत्सत्त्वात् भेरीमृदङ्गं वादयेत् अहिनकुलमित्यादौ न बाधितार्थकत्वप्रयुक्ताप्रामाण्यापत्तिरित्यर्थः । एवमितिशब्दः अपीत्युत्तरं योज्यः ॥ **इत्यादाविति** ॥ आदिशब्देन पञ्चवटीत्यादिपरिग्रहः । अपिशब्दः अहिनकुलमिति वाक्यसमुच्चायकः ॥ **एवमिति** ॥ यथा अहिनकुलमित्यादौ उत्तरपदलक्षणा तथा पञ्चपूलीत्यादावपि उत्तरपदस्यैव पञ्चपूलसमाहारे लक्षणा पञ्चपदं तात्पर्यग्राहकमित्यर्थः । पञ्चपूलीत्यादौ तद्धितार्थोत्तरपदसमाहारे चेति सूत्रेण तद्धितार्थे विषये उत्तरपदे च परतस्समाहारे च वाच्ये दिक्सङ्ख्ये समस्येते इत्यर्थकेन तत्पुरुषसमासः सङ्ख्यापूर्वो द्विगुरित्यनेन तद्धितार्थेत्यत्र उक्तसङ्ख्यापूर्वो द्विगुस्स्यादित्यर्थकेन द्विगुसंज्ञा ( तत्पुरुषत्वे सति संज्ञान्यत्वे सति सङ्ख्यावाचकपदपूर्वकसमानाधिकरणनामसमुदायत्वं द्विगुतत्पुरुषद्विगुकर्मधारयसाधारणद्विगुत्वं बोध्यम् । प्रथमसत्यन्तेन बहुव्रीहिव्युदासः द्वितीयसत्यन्तेन त्रिकूटं पञ्चगव्यमित्यादिद्विगुभिन्नकर्मधारयव्युदासः त्रिकूटशब्दपञ्चगव्यशब्दयोरर्थविशेषे रूढत्वेन संज्ञान्यत्वाभावात् ) अकारान्तोत्तरपदो द्विगुः स्त्रियमिष्ट इत्यनुशासने-

## दिनकरीयम्

योः समाहार इति प्रतीतेरनुभवसिद्धत्वमित्यर्थः । वस्तुतस्तत्राहिनकुलमात्रप्रतीतेर्नोत्तरपदे समाहारलक्षणा न वा शक्तिरित्यभिप्रेत्योक्तं यदीति ॥ **पूर्वपदमिति** ॥ प्रत्ययानामिति व्युत्पत्तेर्विनिगमकत्वादिति भावः ॥ **कथमिति** ॥ कथं समाहारबोध इत्यर्थः । तत्र हेतुमाह ॥ **वादनासम्भवादिति** ॥ अभिघाताख्यसंयोगावच्छिन्नक्रियाया एव वादनपदार्थतया धात्वर्थतावच्छेदकीभूततादृशाभिघाताख्यसंयोगस्य समाहारेऽसम्भवेन वादनकर्मत्वासम्भवादित्यर्थः ॥ **परम्परासम्बन्धेन** स्वाश्रयवृत्तित्वरूपेण ॥ **तदन्वयात्** वादनकर्मत्वान्वयात् ॥ **एवमिति** ॥ उत्तरपदे समाहारलक्षणेत्यर्थः । नव्यमतमाह ॥ **परे त्विति** ॥ बुध्यत इत्यस्य न तु समाहारोऽपीति शेषः । ननु यदि समाहारो न बुध्यते तदै-

## रामरुद्रीयम्.

तथाच सकृदुच्चरितश्शब्द एकया वृत्त्या स्वबोध्यमर्थं बोधयतीति व्युत्पत्त्यर्थकतया घटत्वावच्छिन्नैकशक्तेर्नानाघटबोधोपपत्तिरिति भावः । ननु हरयस्तिष्ठन्तीत्यादौ तात्पर्यसत्त्वे सिंहसूर्यादीनामपि बोधोऽनुभवसिद्ध इति नानावृत्त्यापि नानार्थानामेकदा नानार्थबोधकत्वमङ्गीकरणीयमित्याशयेनाह ॥ **वस्तुत इति** ॥ तथा चैकपदज्ञानादेक एव शाब्दबोधो न तु क्रमिकशाब्दबोधद्वयमित्येवोक्तव्युत्पत्तेः पर्यवसितार्थ इति भावः । घटा इत्यादेरप्येकशेषोदाहरणत्वेन व्याकरणप्रतिपादितत्वादाहुरित्युक्तम् ॥ **समाहारबोध इति** ॥ द्वितीयार्थकर्मत्वविशेष्यकसमाहारप्रकारकशाब्दबोध इत्यर्थः ॥ **मूले वादनासम्भवादि-**

बुध्यते । प्रत्येकमेकत्वान्वयः । समाहारसंज्ञा च यत्रैकत्वं नपुंसकत्वं च प्राणितूर्येत्यादिसूत्रे-णोक्तं तत्रैव अन्यत्रैकवचनमसाध्विव्याहुः । पितरौ श्वशुरावित्यादौ पितृपदे जनकद्-

प्रभा.

न स्त्रीलिङ्गत्वंच । नचोक्तानुशासनेन पञ्चपात्रमित्यादावपि स्त्रीलिङ्गान्तत्वं स्यादिति वाच्यम् पात्राद्यन्तस्य नेत्यनुशासनेन तस्य निषेधात् न कोऽपि दोष इति ध्येयम् । समाहारद्वन्द्वस्थले निरुक्तसमाहारस्य अननुभवसिद्धत्ववादिनवीनमतमाह ॥ **परे त्विति** ॥ **इत्यादाविति** ॥ अहिनकुलपदाभ्यामिति शेषः । सप्तम्यर्थो घटकत्वं तस्याध्याहृतपदद्वयेऽन्वयः । अध्याहृतपदद्वयसमभिव्याहृततृतीयाद्विवचनस्य तज्ज्ञानकरणकत्वमर्थः ॥ **बुध्यत इति** ॥ नतु समाहारोपीति शेषः । बोधविषयतावान् भवतीत्यर्थः । तथाच अहिनकुलमित्यादिवाक्यघटकाहिपदनकुलपदविषयकज्ञानकरणकशाब्दबोधविषयतावान् अहित्वावच्छिन्नो नकुलत्वावच्छिन्नश्चेति फलितार्थः । नन्वेवं सति एकवचनार्थैकत्वस्य क्वान्वयः अहिनकुलयोरेकत्वाभावात् मम तु अहिनकुलसमाहारस्य एकत्वात् एकत्वान्वयः सुकर इत्यत आह ॥ **प्रत्येकमिति** ॥ अहिनकुलरूपप्रकृत्यर्थप्रत्येकव्यक्तावित्यर्थः ॥ **एकत्वान्वय इति** ॥ ममापि निराबाध इति शेषः । तथाच समाहारस्याननुभवात् प्रयोजनाभावाच्च समाहारस्थले समाहारे लक्षणाङ्गीकारो व्यर्थ इति भावः । नन्वेवं सति कथं समाहारसंज्ञा समाहारबोधकसमासत्वरूपयोगार्थाभावादत आह ॥ **समाहारसंज्ञा चेति** ॥ समाहारसंज्ञापीत्यर्थः ॥ **यत्रेति** ॥ यादृशद्वन्द्व इत्यर्थः ॥ **एकत्वमिति** ॥ एकवचनान्तत्वमित्यर्थः ॥ **नपुंसकत्वं चेति** ॥ नपुंसकलिङ्गत्वं चेत्यर्थः ॥ **प्राणितूर्येत्यादिसूत्रेणेति** ॥ द्वन्द्वश्च प्राणितूर्यसेनाङ्गानामिति सूत्रेण एषां द्वन्द्वः एकवत्स्यादित्यर्थकेन येषां च विरोधश्शाश्वतिक इति सूत्रेण तेषां द्वन्द्वः एकवत्स्यादित्यर्थकेन स नपुंसकमिति सूत्रेण समाहारे द्वन्द्वो द्विगुश्च नपुंसकस्स्यादित्यर्थकेन चेत्यर्थः ॥ **उक्तमिति** ॥ प्रथमसूत्रद्वयेन एकत्वं तृतीयसूत्रेण नपुंसकत्वञ्च प्राप्तमित्यर्थः । नच प्राचीनमते पाणिपादं अहिनकुलमित्यादौ समाहारस्यानुभवसिद्धत्वेन समाहारस्य एकत्वादेव समासस्यापि एकवचनान्तत्वप्राप्तेः एकवचनान्तत्वविधायकमुक्तसूत्रद्वयं व्यर्थमिति वाच्यं तन्मते प्राण्यङ्गादीनां समाहारद्वन्द्व एव नतु इतरेतरयोग इति नियमलाभाय उक्तसूत्रद्वयप्रणयनात् । एवंच समाहारसंज्ञा तन्मते अन्वर्थैवेति ध्येयम् ॥ **तत्रैवेति** ॥ तादृशद्वन्द्व एवेत्यर्थः ॥ समाहारसंज्ञापीति पूर्वेणान्वयः । तथाच नवीनमते समाहारसंज्ञा नान्वर्था किन्तु नदीवृद्धयादिसंज्ञावत् पारिभाषिक्येवेत्यर्थः । नन्वेवं सति तादृशसंज्ञा निरर्थिकेत्यत आह ॥ **अन्यत्रेति** ॥ एतादृशसंज्ञारहितद्वन्द्व इत्यर्थः ॥ **एकवचनमिति** ॥ एकवचनमपीत्यर्थः । एकवचनान्तत्वं नपुंसकत्वञ्चेति यावत् ॥ **असाध्विति** ॥ व्याकरणाशिक्षितत्वरूपसाधुत्वाभाववदित्यर्थः । तथाच एकवचनान्तत्वनपुंसकलिङ्गत्वयोः साधुत्वरक्षणार्थमेतादृशसंज्ञाकरणमिति भावः । एतन्मते समाहारसंज्ञायाः पारिभाषिकत्वाङ्गीकार एव दोष इत्यस्वरसं हृदि निधाय आहुरित्युक्तमिति ध्येयम् ॥

दिनकरीयम्.

कत्वस्य कुत्रान्वयः । समाह्रियमाणयोरेकत्वाभावादत आह ॥ **प्रत्येकमिति** ॥ तत्रैकवचनं साधुत्वार्थमित्यपि वदन्ति । ननु पाणिपादमित्यादेः समुदायस्य समाहारबोधकत्वाभावे कथं तस्य समाहारसंज्ञेत्यत आह ॥ **समाहारसंज्ञेति** ॥ **तत्रैवेति** ॥ तथाच पारिभाषिक्येव सा अन्वर्थत्वेऽन्यत्रातिप्रसङ्गादिति भावः । ननु तादृशसंज्ञायाः किं प्रयोजनमत आह ॥ **अन्यत्रेति** ॥ समाहारातिरिक्तद्वन्द्व इत्यर्थः । तथाच नित्यैकवचनक्लीबलिङ्गत्वादिपदसंस्कारार्थत्वान्न तस्या वैयर्थ्यमिति भावः ॥ **पितरौ**

रामरुद्रीयम्.

**ति** ॥ शब्दजनकसंयोगानुकूलव्यापारो वादनपदार्थः । धात्वर्थतावच्छेदकसंयोगे द्वितीयार्थाधेयत्वान्वयो वाच्यः ; संयोगे बुद्धिवृत्तित्वस्य बाधादिति भावः ॥ **अन्वर्थत्व इति** ॥ समाहारसंज्ञायाः समाहारबोधकत्वप्रयुक्तत्व इत्यर्थः ॥ **अन्यत्रेति** ॥ असमुदायपदेष्वित्यर्थः ॥ **अतिप्रसङ्गात्** समाहारसंज्ञातिप्रसङ्गात् ॥ **पदसंस्कारार्थत्वादिति** ॥ पदस्पृहानुकूलोऽपि पदस्य संस्कारो विलक्षणधर्मः स च नपुंस-

म्पत्योः श्वशुरपदे स्त्रीजनकदम्पत्योर्लक्षणा । एवमन्यत्रापि । घटा इत्यादौ तु न लक्षणा ।

## प्रभा .

**पितराविति** ॥ जनकदम्पत्योर्बोधतात्पर्येणोच्चारितपितराविति वाक्य इत्यर्थः। यथाश्रुते दत्तकस्य पितृद्वयसंभवेन सरूपैकशेषत्वप्राप्त्या जनकदम्पत्योर्लक्षणेति मूलग्रन्थविरोधापत्तेः ॥ **श्वशुराविति** ॥ स्त्रीजनकदम्पत्योर्बोधतात्पर्येणोच्चारितश्वशुराविति वाक्य इत्यर्थः । यथाश्रुते द्विभार्यस्य श्वशुरद्वयसंभवेन सरूपैकशेषत्वप्राप्त्या स्त्रीजनकदम्पत्योर्लक्षणेति मूलग्रन्थविरोधापत्तेः ॥ **इत्यादाविति** ॥ इत्यादिवाक्य इत्यर्थः। घटकत्वं सप्तम्यर्थः तस्य पितृपदे श्वशुरपदे चान्वयः। आदिपदात् स्वसृभ्रातृभयबोधतात्पर्येणोच्चरितभ्रातरावित्यादेः परिग्रहः। अत्र पिता मात्रेति सूत्रेण मात्रा सह उक्तौ पितावशिष्यत इत्यर्थकेन पितरावित्यत्र श्वशुरः श्वश्र्वा इति सूत्रेण श्वश्र्वा सहोक्तौ श्वशुरश्शिष्यत इत्यर्थकेन श्वशुरावित्यत्र भ्रातृपुत्रौ स्वसृदुहितृभ्यामिति सूत्रेण स्वसृदुहितृभ्यां सहोक्तौ भ्रातृपुत्रौ शिष्येते इत्यर्थकेन भ्रातरौ पुत्रावित्यत्र च विरूपैकशेष इति ध्येयम् । अन्येतु विरूपैकशेषस्थलेऽपि लुप्तमात्रादिशब्दस्मरणेनैव मात्रादिशब्दबोधसंभवात् न पित्रादिशब्दस्य लक्षणेत्याहुः तन्न पितरौ नमस्कुर्त्येत्यत्र द्वितीयार्थकर्मत्वस्य मातर्यन्वयानुपपत्तेः लुप्तमातृशब्दस्य द्वितीयाप्रकृतित्वाभावात् प्रत्ययानामिति व्युत्पत्तेः अस्मृतमातृशब्दस्य ततो बोधानुपपत्तेश्च । केचित्तु पितरौ श्वशुरावित्यादाविति चैत्रस्य पितरावित्यादिविरूपैकशेषस्थल इत्यर्थः लक्षणेति एकस्य चैत्रादेः पितृद्वयासंभवेन तत्र विरूपैकशेषं विना गत्यन्तराभावादिति भाव इति व्याकुर्वन्ति तदसत् एकस्यापि दत्तकस्य पितृद्वयसंभवेन विरूपैकशेषं विनापि सुग्रहत्वेन गत्यभावाभावात् ॥ **एवमन्यत्रापीति** ॥ एवंशब्दः अपीत्युत्तरं योज्यः। अपिशब्दः पितरावित्याद्युक्तवाक्यसमुच्चायकः । ब्राह्मणीब्राह्मणोभयबोधतात्पर्येणोच्चरितब्राह्मणावितिवाक्यघटकब्राह्मणपदे शिवाशिवोभयबोधतात्पर्येणोच्चरिताशिवावितिवाक्यघटकशिवपदे चेत्यर्थः ॥ **एवमिति** ॥ लक्षणेत्यर्थः । तथाच यथा पितरावित्यत्र पितृशब्दस्य जनकदम्पत्योर्लक्षणा तथा उक्ततात्पर्येणोच्चारितब्राह्मणौशिवावित्यत्रापि ब्राह्मणशब्दशिवशब्दयोः ब्राह्मणीब्राह्मणयोः शिवाशिवयोः लक्षणेति समुदितवाक्यार्थः । अत्र पुमान् स्त्रियेति सूत्रेण स्त्रिया सहोक्तौ पुमान् शिष्यत इत्यर्थकेन विरूपैकशेष इति ध्येयम् ॥ **घटा इत्यादाविति** ॥ बहुवचनान्तघटादिपद इत्यर्थः । अवधारणार्थकतुशब्दः लक्षणेत्युत्तरं

## दिनकरीयम् .

**श्वशुरावित्यादाविति** ॥ चैत्रस्य पितरावित्यादौ विरूपैकशेषस्थल इत्यर्थः ॥ **लक्षणेति** ॥ एकस्य चैत्रादेः पितृद्वयासम्भवेन तत्र विरूपैकशेषं विना गत्यभावादिति भावः । विरूपैकशेषत्वेऽपि तत्र लुप्तमात्रादिशब्दस्मरणेनैव शाब्दबोधान्न लक्षणेत्यन्ये ॥ **एवमन्यत्रापीति** ॥ पुमान् स्त्रियेत्यनेन यत्रैकशेषस्तत्र दम्पतिपूजाप्रकरणे ब्राह्मणावानयेत्यादौ शिवौ नमस्कुर्यादित्यादौ भ्रातरौ पुत्रावित्यत्रापि प्रमाणान्तरेण स्त्रीपरत्वज्ञाने भ्रातृपुत्रौ स्वसृदुहितृभ्यामिति विरूपैकशेषात् भ्रातृपदे भ्रातृस्वस्रोः पुत्रपदे च पुत्रदुहित्रोर्लक्षणेत्यर्थः ॥ **न लक्षणेति** ॥ बहुत्वान्वययोग्यानेकोपस्थितेः शक्तित एव सम्भवादिति भावः ॥

## रामरुद्रीयम्.

कत्वनित्यैकवचनान्तत्वरूपः तदर्थत्वात् तत्प्रयोजकत्वात् समाहारद्वन्द्व एव तथोपगमादिति भावः ॥ **विरूपैकशेषेति** ॥ सरूपाणामेकशेष इति सूत्रेण समानानुपूर्वीकपदानामेकशेषविधानात् विभिन्नानुपूर्वीकपदस्थले पिता माता श्वशुरः श्वश्र्वा भ्रातृपुत्रौ स्वसृदुहितृभ्यामित्यादिना मातृश्वश्र्वादिशब्दानां लोपो विधीयते तत्रावशिष्टस्य पितृपदस्यैव जनकदम्पत्योर्लक्षणा । समभिव्याहृतपदसत्त्वे तदर्थनिरूपितजनकत्वमेव प्रतीयते । तदभावे तु उच्चारयितुरेवेति मन्तव्यम् ॥ **पितृद्वयेति** ॥ जनकपुंस्त्वावच्छिन्नस्यैव पितृशब्दार्थत्वादिति भावः । गत्यभावादित्यनेन सरूपघटादिपदस्थले एकेनैव घटपदेन नानाघटबोधसम्भवाल्लक्षणां विनापि गतिः सूचिता । आहुरित्यनेनास्मिन् कल्पे अस्वरसः सूचितः। तद्बीजन्तु अस्मृतमातृशब्दस्यापि शाब्दबोधानुभवो नानास्मृतिव्यक्तिकल्पने गौरवं च ॥ **प्रमाणान्तरेण** अनुमानादिना ॥ **स्त्रीपरत्वज्ञाने** भ्रातृपदस्य भ्रातृभगिन्युभयतात्पर्यकत्वज्ञाने पुत्रपद-

**घटत्वेन रूपेण नानाघटोपस्थितिसम्भवात् । कर्मधारयस्थले तु नीलोत्पलमित्यादावभेदसम्बन्धेन नीलपदार्थे उत्पलपदार्थे प्रकारः । तत्र च न लक्षणा । अत एव निषादस्थपतिं याजयेदित्यत्र न तत्पुरुषो लक्षणापत्तेः । किन्तु कर्मधारयो लक्षणाभावात् । नच निषादस्य सङ्करजातीयत्वेन वेदानधिकाराद्याजनासम्भव इति वाच्यम् । निषादस्य विद्याप्रयुक्तेस्तत**

## प्रभा.

योज्यः ॥ **न लक्षणेति** ॥ लक्षणैव नेत्यर्थः । शक्त्यैव अनेकघटबोधसम्भवात् प्रयोजनाभावेन लक्षणा नैव स्वीक्रियत इति भावः । एतदेवोपपादयति ॥ **घटत्वेनेति** ॥ **सम्भवादिति** ॥ तथाच अनेकघटबोधतात्पर्यज्ञानसहकृतेन शक्तिज्ञानसहकृतेन घटपदज्ञानेन अनेकघटोपस्थितौ बाधकाभावादिति भावः ॥ **कर्मधारयस्थल इति** ॥ कर्मधारयत्वञ्च तत्पुरुषत्वे सति समस्यमानपदार्थाभेदबोधकविग्रहकत्वं । बहुव्रीहिवारणाय सत्यन्तं राजपुरुष इत्यादितत्पुरुषवारणाय विशेष्यदळम् । नीलोत्पलमित्याद्यभिन्नकर्मधारय इत्यर्थः । सप्तम्यर्थो घटकत्वं तस्य नीलपदे उत्पलपदे चान्वयः ॥ **उत्पलपदार्थे प्रकार इति** ॥ उत्पलपदार्थनिष्ठविशेष्यतानिरूपितशाब्दबोधीयप्रकारताश्रय इत्यर्थः ॥ **तत्र चेति** ॥ इतीत्यादिः । तादृशकर्मधारयेऽपीत्यर्थः । तादृशकर्मधारयघटकोत्तरपदेऽपीति यावत् । अप्यर्थकचशब्देन घटा इत्यत्र लक्षणाभावस्समुच्चीयते । एतेनोक्तस्थले नीलोत्पलमित्यत्र नीलपदस्य नीलविशिष्टे अभेदसम्बन्धेन बोधानुरोधात् लक्षणाया आवश्यकतया तदपेक्षया उक्तस्थले उत्पलपदस्य नीलविशिष्टोत्पले लक्षणा नीलपदं तात्पर्यग्राहकमित्येव वक्तुमुचितमिति मतमपास्तं नीलमुत्पलमिति विग्रहघटकनीलपदस्य नीलविशिष्टे लक्षणाया आवश्यकत्वेनात्रापि तत्स्वीकारात् संभवति सार्थकत्वे निरर्थकत्वकल्पनाया अन्याय्यत्वाच ॥ **न लक्षणेति** ॥ तत्पुरुषबहुव्रीह्योरिव पूर्वोत्तरपदयोः न निरूढलक्षणेत्यर्थः । समासप्रयुक्तादृशलक्षणाया अनङ्गीकारेऽपि अभिमतशाब्दबोधनिर्वाहादिति भावः ॥ **अत एवेति** ॥ कर्मधारये समासप्रयुक्तलक्षणायाः अनङ्गीकारादेवेत्यर्थः ॥ **न तत्पुरुष इति** ॥ न बहुव्रीहिरित्यपि बोध्यम् ॥ **लक्षणापत्तेरिति** ॥ पूर्वोत्तरपदयोर्निरूढलक्षणापत्तेरित्यर्थः ॥ **कर्मधारय इति** ॥ कर्मधारय एवेत्यर्थः । स्वीक्रियत इति शेषः ॥ **लक्षणाभावादिति** ॥ समासप्रयुक्तलक्षणाभावादित्यर्थः । लक्षणास्वीकारप्रयुक्तगौरवसत्त्वेऽपि अन्यथानुपपत्त्या तत्पुरुषबहुव्रीह्यन्यतरावलम्बनमावश्यकमित्यभिप्रायेणाक्षिपति ॥ **न चेति** ॥ **सङ्करजातीयत्वेनेति** ॥ संव्यवहार्यसङ्करत्वेनेत्यर्थः । असंव्यवहार्यसङ्कराणां चण्डालानामसंभाष्यत्वादिति भावः ॥ **वेदानधिकारादिति** ॥ तथाच शूद्रवत् वर्णसङ्करा इति निर्णयसिन्धूदाहृतब्राह्मीवचनेन संव्यवहार्यसङ्कराणां शूद्रतुल्यत्वप्रतिपादनात् न स्त्रीशूद्रौ वेदमधीयातामित्यनेन शूद्रस्य वेदोच्चारणकर्तृत्वनिषेधप्रतिपादनात् तत्तुल्यसंव्यवहार्यसङ्कराणामपि वेदोच्चारणकर्तृत्वनिषेधलाभ इति भावः ॥ **याजनासंभव इति** ॥ पुरोहितस्येत्यादिः । निषादस्य यागकर्तृत्वासंभवप्रयुक्तयाजकत्वासंभव इत्यर्थः । तथाच निषादस्य वेदोच्चारणकर्तृत्वनिषेधप्रयुक्तयागकर्तृत्वासंभवस्य सिद्धत्वादनायत्या श्रुतिघटकनिषादस्थपतीत्यस्य तत्पुरुषबहुव्रीह्यन्यतररूपत्वमावश्यकमिति भावः ॥ **विद्याप्रयुक्तेरिति** ॥ यागोपयुक्तवेदाध्ययनप्राप्तेरपीत्यर्थः ॥ **तत एवेति** ॥

## दिनकरीयम्.

**न तत्पुरुष इति** ॥ स्वीक्रियत इति शेषः ॥ **वेदानधिकारादिति** ॥ स्त्रीशूद्रौ नाधीयातामित्यनेन निषेधादिति भावः ॥ **याजनासम्भव इति** ॥ अध्ययनविधिसिद्धज्ञानाभावादिति भावः ॥ **तत एवेति** ॥

## रामरुद्रीयम्.

स्य पुत्रीपुत्रोभयतात्पर्यकत्वज्ञाने चेत्यर्थः । इदंच लक्षणायां बीजप्रदर्शनं । तात्पर्यानुपपत्तेर्लक्षणाबीजत्वादिति भावः ॥ **अध्ययनविधिसिद्धेति** ॥ अर्थी समर्थो विद्वानित्यादिना यागोपयुक्तद्रव्यवतः शक्तिमतो ज्ञानवतश्च यागेऽधिकारित्वप्रदर्शने ज्ञानस्य च स्वाध्यायोऽध्येतव्य इति श्रुत्या प्रयोजनवदर्थप्रतीतिजनकस्वाध्यायो वेदः कर्तव्य इत्यर्थकतया वेदाध्ययनेनैव ज्ञानसम्पादनस्य बोधितत्वात् । उक्तनिषेधश्रुत्या च निषादस्याध्ययनस्य निषिद्धत्वाद्वेदाध्ययनजन्यज्ञानाभावेन निषादस्य यजनासम्भवः ॥ तदसंभवे तया-

एव कल्पनात् । लाघवेन मुख्यार्थस्यान्वये तदनुपपत्त्या कल्पनायाः फलमुखगौरवतयाऽदोषत्वादिति । उपकुम्भमर्धपिप्पलीत्यादौ परपदे तत्सम्बन्धिनि लक्षणा पूर्वपदार्थप्रधानतया

**प्रभा.**

यागकर्तृत्वप्राप्तित एवेत्यर्थः ॥ **कल्पनादिति** ॥ अन्यथानुपपत्त्या कल्पनीयत्वादित्यर्थः । ननु कर्मधारयपक्षमाश्रित्य निषादस्य यागाधिकारकल्पनं वेदाधिकारकल्पकमिति प्रक्षालनाद्धीति न्यायकवलितत्वात् कर्मधारयपक्षो नाश्रयणीय इत्यत आह ॥ **लाघवेनेति** ॥ लक्षणाया अभावप्रयुक्तलाघवेनेत्यर्थः ॥ **मुख्यार्थान्वय इति** ॥ निषादस्येत्यादिः । कर्मधारयपक्षावलम्बनेन यागकर्तृत्वसिद्धावित्यर्थः ॥ **तदनुपपत्त्येति** ॥ प्रमाणसिद्धयागकर्तृत्वानुपपत्त्येत्यर्थः ॥ **कल्पनाया इति** ॥ यागोपयुक्तवेदाध्ययनकल्पनाया इत्यर्थः ॥ **फलमुखगौरवतयेति** ॥ फलं निषादस्य यागकर्तृत्वसिद्धिः तन्मुखं तत्प्रयोज्यं तत्सत्ताधीनसत्ताकमिति यावत् गौरवं वेदाध्ययनकल्पनारूपं तस्येत्यर्थः ॥ **अदोषत्वादिति** ॥ यागकर्तृत्वविघटकत्वाभावादित्यर्थः । तथाच निषादस्य यागकर्तृत्वानङ्गीकारे तन्निर्वाहकवेदाध्ययनकल्पनाया अप्यनावश्यकतया तत्कल्पनाया यागकर्तृत्वनिर्णयाधीनत्वेन यागकर्तृत्वविघटकत्वाभावात् तत्सिद्ध्युपजीव्यस्य तद्विघटकत्वाभावादिति भावः। नन्वेवं न स्त्रीशूद्रावित्यादिश्रुतिविरोधापत्तिः । नच श्रुतिघटकशूद्रपदस्य निषादेतरशूद्रपरत्वस्वीकारात् न विरोध इति वाच्यं तथा सति निषादस्य कृत्स्नवेदाधिकारापत्तेः । नच अध्ययनपदस्यैव यागोपयुक्ताध्ययनेतराध्ययनपरत्वात् नोक्तदोष इति वाच्यं तथा सति शूद्रान्तरस्यापि यागोपयुक्ताध्ययनापत्तिरिति चेन्न अध्ययनपदस्य प्रमाणान्तरेण प्राप्ताध्ययनेतराध्ययनपरत्वात् निषादस्य श्रुतिबोधितयागकर्तृत्वनिर्वाहकयागोप-

**दिनकरीयम्.**

श्रुतिबोधितयाजनानुपपत्त्यैवेत्यर्थः । ननु निषादस्य विद्याकल्पने गौरवमत आह ॥ **लाघवेनेति** ॥ ननु स्त्रीशूद्रौ नाधीयातामिति श्रुतेरप्रामाण्यापत्तिभियः लाघवमकिञ्चित्करम् । शूद्रपदस्य निषादेतरशूद्रपरत्वे निषादस्य वेदान्तराध्ययनप्रसङ्गः । अध्ययनपदस्य यागोपयुक्ताध्ययनेतराध्ययनपरत्वे च शूद्रान्तरस्यापि यागोपयुक्ताध्ययनप्रसङ्ग इति चेन्न । तत्र विशेषतः प्राप्ताध्ययनेतराध्ययनपरत्वादध्ययनपदस्य । तेन निषादस्य यागोपयुक्ताध्ययनेतराध्ययननिषेधः शूद्रान्तरस्य त्वध्ययनमात्रनिषेधः सिध्यतीति ॥ **अदोषत्वादिति** ॥ ननु लक्षणाकल्पनेऽपि न दोषः । शक्यसम्बन्धरूपलक्षणायाः क्लृप्तत्वात् । न च शाब्दबोधं प्रति लक्षणा-

**रामरुद्रीयम्.**

जनस्याप्यसम्भव इति भावः ॥ **गौरवं** कल्पनागौरवमित्यर्थः ॥ **लाघवमकिञ्चित्करमिति** ॥ लक्षणाकल्पनाप्रयुक्तलाघवं दोषावहमित्यर्थः । उक्तश्रुतेरप्रामाण्यापत्त्या शक्यार्थान्वये लाघवेऽपि तदनादरणीयमिति भावः । ननु मा हिंस्यात् सर्वा भूतानीति निषेधविधिना हिंसामात्रस्य निषिद्धत्वे वायव्यं श्वेतमालभेत भूतिकाम इति यागे पशुहिंसाविधानबलाद्विहितहिंसातिरिक्तहिंसानिषेधपरत्वमेव यथोक्तनिषेधविधेः स्वीक्रियते तथात्रापि निषादस्थपतिमिति विधानबलान्न स्त्रीशूद्रावित्यादिनिषेधवाक्ये शूद्रपदं वा निषादातिरिक्तशूद्रपरमधिपूर्वकायधात्वर्थो वा यागोपयुक्ताध्ययनभिन्नाध्ययनार्थकोऽङ्गीकरणीयः यथाश्रुतेऽप्रामाण्यापत्तेरित्याशङ्कां निराकुरुते ॥ **तत्रेति** ॥ विशेषतः विशेषविधानेन प्राप्तं यदध्ययनं तदतिरिक्ताध्ययनमेव उक्तश्रुतेस्तात्पर्यार्थः । तथाच निषादस्थपतिमिति विधिना प्राप्तं निषादस्य यागोपयुक्तवेदाध्ययनं तदतिरिक्तवेदाध्ययनमात्रं शूद्रमात्रस्य निषिद्धमिति भावः ॥ **अदोषत्वादिति** ॥ ननु निषादस्थपतिमित्यत्र कर्मधारयोपगमे लाघवं तत्पुरुषोपगमे निषादपदस्य निषादसम्बन्धिनि लक्षणायाः कल्पनीयतया गौरवात् । एवञ्च विधितो निषादस्य याजने प्राप्ते तदनुरोधेन निषादस्याध्ययनकल्पनेऽपि न कल्पनागौरवम् । फलमुखगौरवस्यादोषत्वादित्युक्तम् । तदिदमसङ्गतम् । शक्यसम्बन्धरूपलक्षणायाः सर्वसिद्धतया तस्या अकल्पनीयत्वादिति तत्पुरुषोपगमेऽपि न किञ्चिद्गौरवं अतः कर्मधारयमुपगम्य निषादस्याध्ययनकल्पनमेव गौरवग्रस्तामिति शङ्कते ॥ **नन्विति** ॥ लक्षणायाः क्लृप्तत्वेऽपि तज्ज्ञानस्य वेदजन्यशाब्दं प्रति हेतुत्वकल्पने गौरवमक्षुण्णमेवेति शङ्कते ॥ **न चेति** ॥ लौकिकशाब्दबोधानुरोधेन लक्षणाज्ञानस्यापि लाक्षणिकार्थवि-

## प्रभा .

युक्ताध्ययनप्राप्त्या तदितराध्ययनाप्राप्त्या च तदतिरिक्ताध्ययननिषेधलाभात् शूद्रान्तरस्याध्ययनलेशस्याप्यप्राप्तत्वेन अध्ययनसामान्यनिषेधलाभात् न काप्यनुपपत्तिरिति दिक् । ननु शक्तेरिव शक्यसंबन्धरूपलक्षणाया अपि क्लृप्ततया निषादस्थपत्यधिकरणे लाक्षणिकपदघटिततत्पुरुषादिपक्षनिरासपूर्वककर्मधारयव्यवस्थापने बीजाभावः । नच एतादृशश्रुतिवाक्यजन्यशाब्दबोधे लक्षणाज्ञानस्य हेतुत्वकल्पनाधिक्यमेव तद्व्यवस्थापनबीजमिति वाच्यं निषादसंबन्ध्यभिन्नस्थपतिबोधतात्पर्येणोच्चरितनिषादस्थपतिरिति लौकिकतत्पुरुषवाक्यजन्यशाब्दबोधे लक्षणाज्ञानस्य हेतुत्वावश्यकतया वैदिकवाक्यजन्यतादृशशाब्दबोधे अधिकस्याकल्पनादिति चेन्न शक्तिज्ञानं विना शक्यसंबन्धरूपलक्षणाज्ञानस्यासंभवेन शक्तिज्ञानस्य तादृशवैदिकवाक्यजन्यशाब्दबोधात् पूर्वमुभयमतसिद्धत्वेऽपि तव लक्षणाज्ञानकल्पनाया अप्यावश्यकत्वेन तत्प्रयुक्तगौरवस्य दुर्वारत्वादिति दिक् ॥ **उपकुम्भं अर्धपिप्पलीत्यादाविति** ॥ उपकुम्भमित्याद्यव्ययीभावे अर्धपिप्पलीत्यादितत्पुरुषे चेत्यर्थः । अव्ययीभावत्वं च अव्ययीभाव इत्यधिकारविहितत्वरूपं तत्पुरुषस्वरूपञ्चोक्तमेव । उपकुम्भमित्यादौ कुम्भस्य समीपमित्यस्वपदविग्रहः अव्ययीभावसमासस्य नित्यसमासत्वात् । नित्यसमासत्वमविग्रहत्वं स्वाघटकपदघटितविग्रहकत्वं वेति बोध्यम् । एवं अर्धपिप्पलीत्यत्रापि पिप्पल्याः अर्धमिति विग्रह ऊह्यः ॥ **परपद इति** ॥ कुम्भपदे पिप्पलीपदे चेत्यर्थः ॥ **संबन्धिनीति** ॥ कुम्भसंबन्धिनि पिप्पलीसंबन्धिनि चेत्यर्थः ॥ **लक्षणेति** ॥ निरूढलक्षणेत्यर्थः ॥ **पूर्वपदार्थ इति** ॥ उपपदार्थविशेष्यकतयैवेत्यर्थः । चकारस्या-

## दिनकरीयम् .

ज्ञानस्य हेतुत्वकल्पनमधिकमिति वाच्यम् । निषादानां स्थपतिरिति व्युत्पत्त्या निषादसम्बन्ध्यभिन्नस्थपत्यनुभवस्य लौकिकवाक्ये क्लृप्तत्वात् तदनुरोधेन लक्षणाज्ञानहेतुत्वस्य सर्वसिद्धत्वेन वेदेऽधिकस्याकल्पनादिति चेन्न । शक्यसम्बन्धरूपलक्षणाज्ञानस्य शक्तिज्ञानं विनासम्भवेन शक्तिज्ञानस्य तत्रोभयसिद्धतया भवन्मते वैदिकवाक्यजन्यशाब्दबोधात् पूर्वं लक्षणाज्ञानव्यक्तिकल्पनागौरवस्य वज्रलेपत्वादिति ॥ **उपकुम्भमर्धपिप्पलीत्यादाविति** ॥ अत्र कुम्भस्य समीपमित्यस्वपदविग्रहः । अव्ययीभावस्य नित्यसमासत्वात् ॥ **पूर्वपदार्थप्रधानतयेति** ॥ कुम्भपदलक्षितस्य कुम्भसम्बन्धिन उपपदार्थसमीपेऽभेदान्वयात् कुम्भसम्बन्ध्यभिन्नसमीपमित्युपपदार्थविशेष्यकोऽन्वयबोध इत्यर्थः । केचित्तु उपपदार्थः सामीप्यं न तु समीपं समीपे उपपदलक्षणास्वीकारे तु पदद्वयलक्षणापेक्षया कुम्भपदस्यैव कुम्भसमीपे लक्षणा उपपदं तात्पर्यग्राहकं कुम्भ-

## रामरुद्रीयम् .

षयकशाब्दबोधं प्रति हेतुतायाः क्लृप्ततया तत एव वैदिकशाब्दस्याप्युपपत्त्या वेदस्थले कार्यकारणभावान्तरकल्पनाविरहादिति समाधत्ते ॥ **निषादानामिति** ॥ लक्षणाज्ञानहेतुताया आधिक्यविरहेऽपि वेदजन्यशाब्दबोधव्यक्तीनामव्यवहितपूर्वकालसंबन्धज्ञानव्यक्तीनामनन्तानां कल्पनाप्रयुक्तगौरवं वज्रलेपरूपमेव । न च तन्मतसिद्धशक्तिज्ञानव्यक्तिकल्पनास्थानीयलक्षणाज्ञानकल्पनामिति नाधिक्यमिति वाच्यम् । शक्यसम्बन्धरूपलक्षणाज्ञाने विशेषणज्ञानविधया शक्तिज्ञानस्यावश्यकतया शक्तिज्ञानव्यक्तीनां वेदजन्यशाब्दबोधात्पूर्वमुभयवादिसिद्धत्वादिति समाधत्ते ॥ **शक्यसम्बन्धरूपेति** ॥ **अस्वपदेति** ॥ समस्यमानपदमात्रघटितविग्रहकसमासस्य स्वपदविग्रहस्य समासस्य तादृशविग्रहवाक्यं स्वपदविग्रहवाक्यमित्युच्यते । स एव नित्यसमास इति व्यवह्रियते । स्वपदमात्रघटितविग्रहवाक्यसिद्ध्यर्थमेव समासविधेः वैकल्पिकत्वस्याङ्गीकारादिति भावः ॥ **उपपदार्थविशेष्यक इति** ॥ नचैवं उपकुम्भादागत इत्यादौ विभक्त्यर्थापादानत्वादौ समीपादेरन्वयो न स्यात् । प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वनियमात् । उपपदाव्यवहितोत्तरकुम्भपदस्यैव विभक्तिप्रकृतित्वादिति वाच्यं । पदभेदेन व्युत्पत्तिभेदस्वीकारात् । पूर्वपदार्थप्रधानसमासस्थले तादृशसमस्तपदविभक्त्योरव्यवहितपूर्वापरभावस्यैव तादृशशाब्दबोधनियामकत्वोपगमेन उक्तव्युत्पत्तेस्तादृशस्थले सङ्कोचोपगमादिति भावः । कुम्भपदस्यैव कुम्भसमीपे लक्षणा उपपदं तात्पर्यग्राहकम् एवञ्च प्रत्ययानामिति व्युत्पत्तेरपि न सङ्कोचकल्पनमिति केचिदाहुः तन्मतमुपन्यस्यति ॥ **केचित्त्विति** ॥ **कुम्भसमीपमितीति** ॥ यद्यपि कुम्भपद-

**चान्वयबोध इति । इत्थंच समासे न क्वापि शक्तिः । पदशक्त्यैव निर्वाहादिति ॥**

## प्रभा.

वधारणार्थकत्वादिति भावः ॥ **अन्वयबोध इति** ॥ अभेदसंबन्धेन कुम्भसंबन्धिविशिष्टं समीपं अभेदसंबन्धेन पिप्पलीसंबन्धिविशिष्टं अर्धमिति च शाब्दबोध इत्यर्थः । यद्यपि राजपुरुष इत्यादितत्पुरुषे लक्षणाया निराकृतत्वादिदानीं अर्धपिप्पलीत्यादितत्पुरुषे लक्षणानिराकरणं पुनरुक्तं तथापि राजपुरुष इत्यादौ पूर्वपदलक्षणया समासलक्षणा निराकृता अर्धपिप्पलीत्यादौ तु उत्तरपदलक्षणया सा निराक्रियत इति न पौनरुक्त्यमिति हृदयम् । परेतु उपकुम्भमित्यादौ कुम्भादिपदलक्ष्यार्थकुम्भादिसंबन्धिनः उपायर्थैकदेशसामीप्यादावभेदेनान्वयः नतु समीपे तथा सत्युपपदार्थसमीपत्वावच्छिन्ने कुम्भपदलक्ष्यार्थस्य कुम्भसामीप्यरूपकुम्भसंबन्धविशिष्टस्याभेदेनान्वयस्य वक्तव्यतया सामीप्यस्य द्विधा भानापत्तेः । अस्मन्मते तु कुम्भपदस्य कुम्भनिरूपिते लक्षणास्वीकारेण कुम्भनिरूपिताभिन्नसामीप्यवदिति बोधस्यैव जायमानतया सामीप्यस्य द्विधा भानापत्तेरभावात् । नचैवं पदार्थः पदार्थेनान्वेतीत्यादिव्युत्पत्तिविरोध इति वाच्यम् । ससंबन्धिकातिरिक्तस्थल एव तादृशव्युत्पत्तिस्वीकारादित्याहुः तन्न उपपदस्य ससंबन्धिकपदत्वे प्रमाणाभावात् उपकुम्भमिति वाक्यात् शाब्दबोधानापत्तेश्च कुम्भनिरूपिताभिन्नसामीप्यनिष्ठप्रकारतानिरूपितविशेष्यताया निरवच्छिन्नत्वेन ( निर्धर्मितावच्छेदकतयैवावच्छिन्नत्वेन ) निर्धर्मितावच्छेदककानुमितेरिव तादृशशाब्दबोधस्याप्यळीकत्वात् । नच तादृशसामीप्यावच्छिन्नविशेष्यककुम्भपदसमभिव्याहृतैकवचनार्थैकत्वप्रकारकशाब्दबोधस्य सधर्मितावच्छेदकतया नानुपपत्तिरिति वाच्यम् तथापि तादृशैकवचनज्ञानाधीनैकत्वानुपस्थितिदशायामनुभवसिद्धतद्वाक्यजन्यशाब्दबोधानुपपत्तेर्दुर्वारत्वात् । यच्चोक्तं सामीप्यस्योद्देश्यतावच्छेदकतया विधेयतावच्छेदकतया च भानस्वीकारस्याप्रामाणिकतया घटो घट इति वाक्यस्येव उपकुम्भमिति वाक्यस्याप्रामाण्यापत्तिरिति तदपि न घटो नीलघट इति वाक्यस्थल इव विधेयतावच्छेदककोटावाधिकावगाहिशाब्दबोधस्य सर्वानुमततया प्रामाणिकत्वेन तादृशवाक्यस्याप्रामाण्यापत्त्यभावादिति । परेतु उपकुम्भमित्यादौ उपपदार्थस्सामीप्यं तत्र कुम्भपदशक्यार्थकुम्भस्य निरूपितत्वसंबन्धेनान्वयः उपपदस्य निपाततया तदर्थे भेदसम्बन्धेन अन्वये निपातातिरिक्तनामार्थयोरित्यादिव्युत्पत्तिभङ्गाभावात् एवंच निरूपितत्वसम्बन्धेन कुम्भविशिष्टं सामीप्यमिति बोधः । संबन्धप्रकारकबोधस्यानुभवसिद्धत्वे तु तदर्थं कुम्भपदस्य कुम्भनिरूपितत्वात्मककुम्भसंबन्धे लक्षणा वाच्या एवञ्च कुम्भसंबन्धविशिष्टसामीप्यमित्यन्वयबोध इत्याहुः तन्न तथा सति उपकुम्भमिति वाक्यात् सर्वानुभवसिद्धसमीपविषयकशाब्दबोधापलापापत्तेः । अन्येतु उपकुम्भमित्यादौ उपपदार्थसामीप्यस्य कुम्भपदार्थेन सहान्वये अनुभवसिद्धसमीपविषयकशाब्दबोधानुपपत्तेः तादृशशाब्दबोधनिर्वाहाय उपपदस्य सामीप्यविशिष्टे लक्षणास्वीकारे सर्वपदलाक्षणिकतया अननुभावकत्वापत्तेः अतः कुम्भपदस्यैव कुम्भसमीपे लक्षणा उपपदं तात्पर्यग्राहकमित्येव वाच्यम् एवञ्च कुम्भ-

## दिनकरीयम्.

समीपमिति चान्वयबोध इत्याहुः । अत्र यद्यप्यर्धपिप्पलीति तत्पुरुषे शक्तिनिराकरणं पुनरुक्तं पूर्वं तत्पुरुषे तन्निरासात् । तथापि पूर्वमुत्तरपदार्थप्रधानराजपुरुषादौ तन्निराकरणं पूर्वपदलक्षणया इहच पूर्वपदार्थप्रधानेऽर्धपिप्पलीत्यादितत्पुरुषे उत्तरपदलक्षणया तन्निराकरणमिति भेदादपौनरुक्त्यमिति ध्येयम् । वैयाकरणमतं दूषयति ॥ **इत्थं चेति** ॥ **पदशक्त्यैवेति** ॥ समासघटकीभूतपदशक्तिलक्षणाभ्यामित्यर्थः ॥

## रामरुद्रीयम्.

स्यैव कुम्भसमीपार्थकत्वेन न कुम्भसमीपमित्यन्वयबोधाकारः । किन्तु स्मरणमेवेत्यन्वयबोध इत्यसङ्गतम् । तथाप्यव्ययोत्तरमपि विभक्तिसत्त्वेन तदर्थसङ्ख्याप्रकारकबोधतात्पर्येण कुम्भसमीपमेकमिति शाब्दबोध इत्यमिप्रायः । आहुरित्यस्वरसोद्भावनम् । तद्बीजन्तु समासानन्तर्भावेन क्वाप्युपपदस्य प्रयोगाभावेन उपपदस्य सामीप्यार्थकताया निश्चेतुमशक्यतयास्वपदविग्रहस्थलेऽपि समासान्तर्गतपदान्तरेणैव विग्रहवाक्यस्वीकाराच्च समीपपदस्य सामीप्यविशिष्टार्थकतया उपपदस्यापि तदर्थकताया एवोचितत्वात् । सम्भवति सार्थकत्वे किञ्चित्पदस्य निरर्थकताकल्पनमयुक्तमिति मन्तव्यम् ॥ **शक्तिनिराकरणमिति** ॥ यद्यपि राजपुरुष इ-

आसत्तिर्योग्यताकाङ्क्षातात्पर्यज्ञानमिष्यते ॥ ८२ ॥
कारणं सन्निधानं तु पदस्यासत्तिरुच्यते ।

**प्रभा.**

समीपामिति बोध इत्याहुः तन्न द्वितीयपदार्थानन्वितपदार्थशाब्दबोधस्याप्रामाणिकत्वात् । नचैवं सति चित्रगुरित्यादावपि शाब्दबोधानुपपत्तिः गोपदस्यैव चित्रगोस्वामिलक्षकत्वेन तस्यैकपदार्थत्वादिति वाच्यं इष्टापत्तेः । चित्रपदार्थस्य गोस्वामिलक्षकगोपदार्थैकदेशगव्यन्वयपक्षेऽपि चित्राभिन्ना या गौः तत्स्वामीति बोधस्यैव स्वीकार्यतया तस्य निर्धर्मितावच्छेदककत्वेन पदद्वयस्य सार्थकत्वपक्षेऽप्यप्रामाणिकत्वेन तन्मात्रात् शाब्दबोधाभावस्य सर्वानुमतत्वात् एकवचनादिरूपपदान्तरज्ञानाधीनार्थोपस्थितिकाल एव चित्रगुरित्यादिवाक्यात् शाब्दबोधस्य सर्वानुमतत्वात् । नचैवं सति उपकुम्भमित्यत्रापि एकवचनज्ञानाधीनैकत्वोपस्थितिकाल एव शाब्दबोधः स्वीक्रियतामिति वाच्यं एकवचनानुपस्थितिकाले तद्वाक्यादनुभवसिद्धशाब्दबोधस्यापलापापत्तेर्दुर्वारत्वादिति । अत्र राजपुरुष इत्यादिसमाससामान्यस्य राजपुरुषादिरूपविशिष्टार्थे शक्त्यैव विशिष्टार्थबोधसंभवे समासस्थलीयशाब्दबोधे लक्षणाज्ञानस्यापि न हेतुत्वं गौरवात् । नचैवं राजादिपदानां शक्तिमजानतोऽपि पुंसः राजपुरुष इति समासः राजसंबन्धिपुरुषशक्त इति शक्तिज्ञानसंभवेन तस्य तादृशवाक्यात् शाब्दबोधापत्तिरिति वाच्यम् समासशक्तेः व्यवहारादिना ग्रहीतुमशक्यतया व्याकरणेनैव सा ग्राह्या व्याकरणं तु अवयवशक्तिबोधनद्वारैव समुदायशक्तिबोधकमिति समासशक्तिग्रहे अवयवशक्तिग्रहस्यापि हेतुतया समासघटकराजादिपदानां शक्तिमजानतः पुरुषस्य समासस्यापि शक्तिग्रहासंभवेन उक्तदोषासंभवात् तस्मात् समाससामान्यस्य शक्तिस्वीकारेणैवाभिमतशाब्दबोधनिर्वाहे पदलक्षणा नाङ्गीकार्येति वैयाकरणमतं दूषयति ॥ **इत्थं चेति** ॥ समासस्य लक्षणानिराकरणप्रकारेणैवेत्यर्थः ॥ **समास इति** ॥ समाससामान्य इत्यर्थः ॥ **न क्वापि शक्तिरिति** ॥ कुत्रचिदपि शक्तिर्नास्तीत्यर्थः । कुत्रचिदित्यनेन समासत्वावच्छेदेन शक्त्यभाव‍लाभः । तथाच समासत्वावच्छेदेन यथा लक्षणाभावः तथा शक्त्यभावोऽपि सिद्ध इति समुदितवाक्यार्थः । तत्र हेतुमाह ॥ **पदशक्त्यैवेति** ॥ क्लृप्तसमासघटकावयवनिरूपितशक्तिलक्षणाभ्यामेवेत्यर्थः ॥ **निर्वाहादिति** ॥ अभिमतशाब्दबोधसंभवादित्यर्थः । तथाच समासशक्तिवादिमतेऽपि समासघटकपदानां शक्तेः तत्संबन्धरूपलक्षणायाश्च क्लृप्ततया उभयमतसिद्धशक्तिलक्षणाभ्यामेवाभिमतशाब्दबोधनिर्वाहे समाससामान्येऽपि अतिरिक्तशक्तिर्नाङ्गीकार्या प्रमाणाभावात् अनन्यलभ्यस्यैव शब्दार्थत्वादिति भावः । ननु एतावता शाब्दसामान्यं प्रति वृत्तिज्ञानसहकृतपदज्ञानजन्यपदार्थस्मृतिद्वारा पदज्ञानसामान्यस्य हेतुत्वमित्यायातं तदनुपपन्नं गिरिर्भुक्तमग्निमान् देवदत्तेनेत्यादौ वह्निना सिञ्चतीत्यादौ घटः कर्मत्वं आनयनं कृतिः इत्यादौ च तादृशव्यापारद्वारा पदज्ञानसत्त्वेऽप्यभिमतशाब्दबोधानुदयात् अतः आसत्तिज्ञानादेः सहकारिकारणत्वभङ्गीकृत्य व्यभिचारं वारयति ॥ **मूले आसत्तीति** ॥ आसत्तियोग्यताकाङ्क्षेत्यादिमूलेन द्वन्द्वोत्तरं श्रू-

**दिनकरीयम्.**

आसत्तिर्योग्यताकाङ्क्षेति मूलादासत्तेः स्वरूपसत्या एव कारणत्वं लभ्यते न तु योग्यताज्ञानादिवदासत्तिज्ञानस्य । ज्ञानपदस्य समासघटकत्वेन समासाघटकासत्तिपदार्थेनानन्वयात् । स्वरूपसत्याश्च आसत्तेः कारणत्वं न सम्भवति गिरिर्भुक्तमित्यादौ गिरिपदाग्निमत्पदयोरव्यवधानभ्रमेण शाब्दबोधोदयेन व्यभिचारादतो

**रामरुद्रीयम्.**

त्यादौ तत्पुरुषे पूर्वपदस्य लक्षणैव पूर्वं प्रतिपादिता न तु तत्पुरुषे शक्तिर्निराकृता । अर्धपिप्पलीति तत्पुरुषेऽपि न पूर्वपदेऽपि लक्षणा किन्तूत्तरपद एवेति इदानीं अभिधानाच्च पौनरुक्त्यशङ्कावकाशः । अग्रे च तत्र तत्र समासेषु समासघटकपदानां शक्त्या लक्षणया वा तत्तद्विशिष्टबोधोपपत्तौ न क्वापि समासे शक्तिः कल्प्यते गौरवादिति समासमात्रे शक्तिरेकदैव निराकरिष्यत इति नानुपपत्तिः । तथापि तत्पुरुषे पूर्वपदलक्षणाभिधानं समासे शक्तिनिराशायेति तदुक्त्यैव क्वचित्तत्पुरुषे उत्तरपदलक्षणयैव निर्वाहेण तत्रापि न शक्तिकल्पनमिति लाभसम्भवात् पौनरुक्त्यशङ्कावकाशः कथञ्चिदुपपादनीयः ॥

**आसत्तिरित्यादि** ॥ आसत्तिज्ञानं योग्यताज्ञानमाकाङ्क्षाज्ञानं तात्पर्यज्ञानं च शाब्द-बोधे कारणम् । तत्रासत्तिपदार्थमाह ॥ **सन्निधानं त्विति** ॥ यत्पदार्थेन यत्पदार्थस्यान्वयोऽपेक्षितस्तयोरव्यवधानेनोपस्थितिः शाब्दबोधे कारणम् । तेन गिरिर्भुक्तमग्निमान् देवद-

### प्रभा.

यमाणज्ञानशब्दस्य प्रत्येकमभिसंबन्धादासत्त्यादिज्ञानं लभ्यते । इष्यते कारणमिति मूलेन कारणशब्दस्य शाब्दबोधकारणपरत्वस्वीकारात् शाब्दकारणमिष्यत इत्यर्थलाभ इत्यभिप्रायेण प्रतीकं धृत्वा फलितार्थमाह ॥ **मुक्तावळ्यामासत्तियोग्यतेत्यादि** ॥ **कारणमिति** ॥ फलितमिति शेषः । अत्र मुक्तावळ्यां बहुषु पुस्तकेषु आसत्तिर्योग्यतेत्यादिमूलपाठाभिप्रायेण आसत्तिर्योग्यतेत्यादिप्रतीकधारणं दृश्यते तच्च प्रामादिकं अन्यथा आसत्तिर्योग्यतेत्यादिमूलघटकासत्तिपदस्य समासाघटकतया तदर्थस्य समासघटकज्ञान पदार्थेन सहान्वयासंभवेन स्वरूपसत्या: तस्याः शाब्दहेतुत्वासंभवेन चासत्तीतिप्रतीकधारणपूर्वकं आसत्तिज्ञानमित्यर्थ इति व्याख्यानकरणमेव युक्तं नत्वासत्तिर्योग्यतेत्यादिप्रतीकधारणपूर्वकासत्तिज्ञानंयोग्यताज्ञा-नमित्यादिव्याख्याकरणं योग्यतादिज्ञानस्य समासबलेनैव लाभेन स्वारसिकलक्षणया आसत्तिपदार्थासत्तिज्ञानेन सह योग्यताज्ञानादेः तुल्यतया प्रतिपादने बीजाभावात् । तस्माद्विश्वनाथपञ्चाननस्य आसत्तियोग्यतेत्यादिसमस्तपाठ एवाभिमतः तस्य एतदभिप्रायकत्वस्वीकारादेव आसत्तियोग्यतेत्यादिप्रतीकधारणपूर्वकमासत्तिज्ञानमित्यादितुल्यप्रतिपादनसङ्गतेरिति प्रतिभाति ॥ **तत्रेति** ॥ शाब्दबोधकारणज्ञानविषयासत्त्यादि-

### दिनकरीयम्.

मूलस्थमासत्तिपदमासत्तिज्ञानपरतया व्याचष्टे ॥ **आसत्तिज्ञानमिति** ॥ आसत्तियोग्यतेति विसर्गशून्यपाठस्तु ऋजुरेव । ननु सन्निधानं तु पदस्यासत्तिरुच्यते इति मूलोक्तस्यासत्तिलक्षणस्य गिरिर्भुक्तमित्यत्रातिव्याप्तिः । तत्रापि गिरिपदभुक्तपदयोरव्यवधानसत्त्वादतो व्याचष्टे ॥ **यत्पदार्थेति** ॥ **अपेक्षितः** तात्पर्य-विषयः ॥ **तयोरिति** ॥ तयोः पदयोरित्यर्थः । तादृशपदयोरव्यवधानमासत्तिस्तदुपस्थितिः कारणमित्यर्थः । तथा च गिरिपदार्थभुक्तपदार्थयोरन्वयो न तात्पर्यविषयोऽपि तु गिरिपदार्थाग्निमत्पदार्थयोरेवेति तयोरव्यवधानाभावान्नातिव्याप्तिरिति भावः ॥ **तेन** एतादृशयत्तत्पदार्थगर्भासत्तिनिर्वचनेन । ननु नीलो घटो

### रामरुद्रीयम्.

**विसर्गशून्येति** ॥ आसत्तीत्यस्य निर्विभक्तिकत्वेन समासान्तर्गतत्वसम्भवेन आसत्त्यादितात्पर्यान्तानां द्वन्द्वसमासमाश्रित्य तेषां ज्ञानमिति षष्ठीतत्पुरुषाश्रयणेन आसत्त्यादिज्ञानलाभसम्भवादिति भावः । सन्निधानं तु पदस्येति मूलकारिकायां चोपपदसान्निध्यमासत्तिरिति यथाश्रुतार्थः प्रतीयते । तत्र चोपपदयोः यत्र न परस्परान्वयबोधजनकत्वं तत्र पदयोः सान्निध्यस्यासत्तित्वापत्तिरिति दोषस्य स्पष्टतया तस्यैव ग्रन्थकर्तुः स्वाभिमतासत्तेर्निर्वचनबीजतां प्रदर्शयन्नाह ॥ **नन्वित्यादि** ॥ वस्तुतः सन्निधानमित्यादि मूलं प्राचीना एवं परिष्कुर्वन्ति ययोः पदयोः परस्परमन्वयबोधजनकत्वे तात्पर्यं तयोः पदयोरव्यवधानमासत्तिः । तस्याः स्वरूपसत्याः शाब्दबोधकारणत्वे गिरिर्भुक्तमित्यादौ गिरिपदाग्निमत्पदयोरव्यवधानभ्रमाच्छाब्दबोधस्य अनुभवसिद्धतया तदपलापापत्तिः । तस्मात् भ्रमप्रमासाधारणं तादृशपदयोरव्यवधानज्ञानमेव शाब्दबोधहेतुतयोपगन्तव्यमिति तन्मतं निरूपयितुं मूलकृदुपन्यस्यति ॥ **अन्वयप्रतियोगीत्यादि** ॥ अन्वयश्शाब्दबोधविषयीभूतस्संसर्गः । तत्प्रतियोग्यनुयोगिपदेत्यस्य तत्प्रतियोग्यनुयोगिबोधकपदेत्यर्थः । मतमेतद्दूषयति ॥ **वस्तुत इति** ॥ **अनपेक्षितत्वादिति** ॥ शाब्दबोधानुपूर्वीनियमनाभावादित्यर्थः । तथा चोक्तासत्तिज्ञानस्य हेतुता व्यभिचारेण वक्तुमशक्येति भावः । न चोक्तव्यतिरेकव्यभिचार एवासिद्ध इति वाच्यम् । पदद्वयेनाप्यव्यवधानेन पदार्थद्वयस्योपस्थितिज्ञाने पदाव्यवधानज्ञानं विनापि शाब्दबोधस्यानुभवसिद्धत्वादिति भावः । स्वमतेनासत्तिं निर्वक्ति ॥ **यत्पदार्थेनेत्यादि** ॥ **तात्पर्यविषय इति** ॥ तात्पर्यविषयत्वनिश्चय इत्यर्थः ॥ **तादृशपदयोरिति** ॥ तादृशपदज्ञानयोरित्यर्थः ॥ **तदुपस्थितिरिति** ॥ तेनोपस्थितिस्तदुपस्थितिरिति

तेनेत्यादौ न शाब्दबोधः । नीलो घटो द्रव्यं पट इत्यादावासत्तिभ्रमाच्छाब्दबोधः । आसत्तिभ्रमेण शाब्दभ्रमाभावेऽपि न क्षतिः । ननु यत्र छत्री कुण्डली वासस्वी देवदत्त इत्याद्युक्तं

प्रभा.

त्यिर्थः । घटकत्वं सप्तम्यर्थः तस्यासत्तावन्वयः ॥ आसत्तिपदार्थमाहेत्यादि ॥ आसत्तिस्वरूपमाहेत्यर्थः । अत्र सन्निधानन्तु पदस्यासत्तिरुच्यते इति मूलादासत्तेः पदाव्यवधानरूपत्वं लब्धं तच्च गिरिर्भुक्तमग्निमान् देवदत्तेनेति अनासन्नवाक्येऽतिव्याप्तं गिरिपदभुक्तपदयोरव्यवधानसत्त्वात् अतो मूलमन्यथा व्याचष्टे ॥ यत्पदार्थेनेति ॥ यत्पदार्थनिष्ठविषयतानिरूपितयत्पदार्थनिष्ठविषयताशालिशाब्दबोध इत्यर्थः ॥ अभिमत इति ॥ तात्पर्यविषय इत्यर्थः ॥ तयोरिति ॥ तादृशपदयोरित्यर्थः ॥ अव्यवधानेनेति ॥ अव्यवहितपूर्वत्वाव्यवहितोत्तरत्वान्यतरत्त्वेनोपस्थितिरित्यर्थः । तथाच तात्पर्यविषयशाब्दबोधविषयतत्तदर्थोपस्थितिनिरूपितज्ञाननिष्ठकारणतानिरूपितविषयतासंबन्धावच्छिन्नावच्छेदकताश्रयनिष्ठनिरुक्ताव्यवधानत्वं तच्छाब्दबोधौपयिकासत्तिरिति फलितम् ॥ तेनेति ॥ एतादृशासत्तिज्ञानस्य शाब्दबोधहेतुत्वस्वीकारेणेत्यर्थः ॥ न शाब्दबोध इति ॥ अभ्रान्तस्येत्यादिः । तथाच गिरिर्भुक्तमिति वाक्यात् अभ्रान्तस्य शाब्दबोधानुदयेन गिरिपदभुक्तपदयोरव्यवधानस्य निरुक्तावच्छेदकताश्रयनिष्ठत्वाभावान्नातिव्याप्तिरिति भावः । आसत्तिघटकशाब्दबोधे तात्पर्यविषयत्वनिवेशप्रयोजनमाह ॥ तात्पर्येति ॥ यत इत्यादिः ॥ नीलो घट इत्यादि ॥ अत इत्यादिः नीलपदार्थघटपदार्थयोरन्वयबोधतात्पर्येणोच्चारितनीलोघटोद्रव्यंपटइतिवाक्य इत्यर्थः ॥ आसत्तिभ्रमादिति ॥ नीलपदघटपदयोरित्यादिः । आसत्तिभ्रमादेवेत्यर्थः नीलपदघटपदयोः तात्पर्यघटितासत्त्यभावादिति भावः ॥ शाब्दबोध इति ॥ अभेदसंबन्धेन नीलप्रकारकघटविशेष्यकशाब्दबोध इत्यर्थः । ननु उक्तस्थले नीलपदघटपदाभ्यां जायमानशाब्दबोधस्य भ्रमत्वापत्तिः नीलपदघटपदयोः आसत्तिज्ञानस्य भ्रमत्वात् आसत्तिभ्रमस्य शाब्दभ्रमहेतुत्वादित्याशङ्कां आसत्तिभ्रमस्य शाब्दभ्रमहेतुत्वनिराकरणेन परिहरति ॥ आसत्तिभ्रमेणेति ॥ शाब्दभ्रमाभावेऽपीति ॥ आसत्तिभ्रमजन्यशाब्दस्य भ्रमत्वाभावेऽपीत्यर्थः । आसत्तिभ्रमस्य शाब्दभ्रमजनकत्वानङ्गीकारेऽपीति यावत् ॥ न क्षतिरिति ॥ सर्वत्र आसत्ति-

दिनकरीयम्.

द्रव्यं पट इत्यत्र नीलपदार्थपटपदार्थयोर्यत्रान्वयो वक्तुस्तात्पर्यविषयो न तु नीलपदार्थघटपदार्थयोस्तत्र नीलपदघटपदयोरासत्तिर्न स्यात् । तत्तदर्थान्वयस्य तात्पर्यविषयत्वाभावात् । अत्रेष्टापत्तिमाह ॥ नीलो घट इत्यादिना ॥ तर्हि तत्र नीलो घट इति कथं शाब्दबोध इत्यत आह ॥ भ्रमाच्छाब्दबोध इति ॥ तथा च भ्रमाच्छाब्दबोधमात्रं न तु तत्रासत्तिरिति भावः । ननु तत्र यद्यासत्तिभ्रमस्तदा शाब्दबोधोऽपि भ्रमात्मकः स्यात् । न चेष्टापत्तिः । घटे नीलस्य सत्त्वेन विषयबाधाभावादासत्तिभ्रमाच्छाब्दभ्रमानङ्गीकारे चासत्तिभ्रमाच्छाब्दभ्रम इति प्राचीनगाथाविरोध इत्यत आह ॥ आसत्तिभ्रमेणेति ॥ न क्षतिरिति ॥ आस-

रामरुद्रीयम्.

व्युत्पत्त्या तादृशासत्तिविशिष्टपदजन्योपस्थितिरित्यर्थः । यथाश्रुते अव्यवधानज्ञानस्यानपेक्षत्वादिति पूर्वमूलविरोधापत्तेरित्थंच पदद्वयोपस्थित्योरव्यवधानमेवासत्तिः । सा च स्वरूपसत्येव शाब्दबोधकारणम् । नातः पूर्वमूलविरोधः । अत एवासत्तिर्योग्यतेति मूलकारिकायां आसत्तेः समासानन्तर्गतत्वेन निर्देशोऽपि साधु सङ्गच्छते । तस्याः स्वरूपसत्या एव शाब्दबोधकारणत्वात् । न चैवमप्यासत्तिभ्रमाच्छाब्दबोध इत्यग्रिममूलविरोधः आसत्तिज्ञानस्य शाब्दबोधे कारणत्वादिति मन्तव्यम् । आसत्तिभ्रमादित्यस्य भ्रमनिर्वाह्यासत्तेरित्यर्थकत्वादुक्तासत्तेः तात्पर्यनिश्चयघटितत्वेन नीलघटपदार्थयोरन्वये वक्तुः तात्पर्यविरहेण तात्पर्यभ्रमेणैव तत्रासत्तेर्निर्वाह्यत्वादिति ध्येयम् ॥ भ्रमादिति ॥ भ्रमनिर्वाह्यासत्तिरित्यर्थः । ययोः पदयोः परस्परान्वयबोधजनकत्वेन वक्तुस्तात्पर्यविषयत्वनिश्चयस्तयोरव्यवधानस्यैव आसत्तितया तादृशतात्पर्यविषयकनिश्चयस्य भ्रमरूपत्वादित्यवधेयम् । एवञ्चासत्तिभ्रमाच्छाब्दभ्रमाभावेऽपीत्यग्रिममूलेऽपि भ्रमप्रयोज्यासत्तेः शाब्दभ्रमाभावेऽपीत्यर्थो वर्णनीयः । नातः पूर्वोक्तमूलग्रन्थसन्दर्भविरोधः ॥ प्रमात्मक इति ॥ प्रमया आत्मा स्वरूपं य-

## प्रभा.

भ्रमस्थले न शाब्दप्रमानुपपत्तिरित्यर्थः। तथाच आसत्तिभ्रमस्य न शाब्दभ्रमजनकत्वं मानाभावात् किन्तु योग्यताभ्रमस्यैव। प्रकृते घटपदार्थे नीलपदार्थवत्त्वज्ञानस्य प्रमात्वेन भ्रमरूपत्वाभावात् जायमानशाब्दबोधस्य भ्रमत्वाभावेऽपि न क्षतिः। एवंच आसत्तिभ्रमात् शाब्दभ्रम इति प्रवादस्य निर्युक्तिकत्वादनादेयत्वमिति भावः। नच उक्तासत्तेः श्लोकघटकतत्तत्पदयोरभावात् अभ्रान्तस्य तज्ज्ञानासंभवेन तत्र शाब्दबोधानुपपत्तिरिति वाच्यं इष्टापत्तेः योजनावाक्यादेवाभिमतशाब्दबोधस्वीकारात्। एवं मौनिश्लोकस्थले पदाभावेऽपि तत्तत्पदाव्यवधानानुसन्धानादेव शाब्दबोधस्सम्पादनीयः। नव्यास्तु निरुक्ताव्यवधानरूपासत्तिज्ञानाविळम्बेन शाब्दबोधविळम्बस्य क्वाप्यदर्शनेन प्रमाणाभावात् शाब्दबोधे निरुक्तासत्तिज्ञानं न कारणं किन्तु तत्तत्पदार्थविषयकशाब्दबोधे वृत्तिज्ञानसहकृतपदज्ञानजन्यतत्तदर्थस्मृतेः कारणत्वस्य क्लृप्ततया तादृशस्मृतिरेवासत्तिरित्याहुः तत्र घटःकर्मत्वमानयनंकृतिरितिवाक्यघटकानिराकाङ्क्षघटपदकर्मत्वादिपदविषयकवृत्तिज्ञानसहकृतज्ञानजन्यघटकर्मत्वादिविषयकस्मृतितः अभ्रान्तस्य घटकर्मकानयनानुकूलकृतिमानितिशाब्दबोधापत्तिवारणाय तत्तदर्थविषयकशाब्दबोधं प्रति वृत्तिज्ञानसहकृतसाकाङ्क्षपदज्ञानजन्यतत्तदर्थस्मृतेः कारणत्वमावश्यकम्। एवं गिरिर्भुक्तमग्निमान् देवदत्तेनेत्यादिवाक्यघटकानासन्नगिरिपदाग्निमत्पदविषयकवृत्तिज्ञानसहकृतज्ञानजन्यपर्वतवह्न्यादिविषयकस्मृतितः अभ्रान्तस्य वह्निमदभिन्नः पर्वत इत्याकारकशाब्दबोधापत्तिवारणाय तत्तदर्थविषयकशाब्दबोधे वृत्तिज्ञानसहकृतनिरुक्तासत्तिमत्पदज्ञानजन्यतत्तदर्थस्मृतेः कारणत्वमावश्यकं। एवंच वृत्तिज्ञानसहकृतपदज्ञानजन्यपदार्थस्मृतित्वेन व्यापारविधया कारणत्वं साकाङ्क्षपदज्ञानजन्यत्वघटितरूपेण निरुक्तासत्तिमत्पदज्ञानघटितरूपेण च स्मृतेः पृथक्कारणत्वं पदार्थस्मृतौ च साक्षात्पदज्ञानत्वेन निरुक्तासत्तिमत्पदज्ञानत्वेन च हेतुत्वमिति अनन्तकार्यकारणभावकल्पनापेक्षया लाघवेन पदार्थस्मृतिहेतुतया अभिमतसाकाङ्क्षपदज्ञानत्वावच्छिन्ननिरुक्तासत्तिमत्पदज्ञानत्वावच्छिन्नयोः शाब्दबोधे हेतुत्वस्यैवोचितत्वात्। एतदभिप्रायेणैव आसत्तिज्ञानादेः शाब्दबोधहेतुत्वं विश्वनाथपञ्चाननेनाङ्गीकृतमिति हृदयम्। ननु निरुक्तासत्तिमत्पदज्ञानस्य शाब्दबोधहेतुत्वे छत्री कुण्डली वासस्वी देवदत्त इत्याद्यनेकविशेषणवाचकपदघटितवाक्यस्थले निरुक्तासत्तिमत्पदज्ञानासंभवेन शाब्दबोधानुपपत्तिरित्याशङ्कते ॥ **नन्विति** ॥ **यत्रेति** ॥ यादृशबोधे तात्पर्यविषये सतीत्यर्थः । यादृशबोधे तात्पर्येणैवेति

## दिनकरीयम्.

त्तिभ्रमस्य न शाब्दभ्रमप्रयोजकत्वं किन्तु योग्यताभ्रमस्य। आसत्तिभ्रमाच्छाब्दभ्रम इति प्राचीनगाथा तु निर्युक्तिकत्वादश्रद्धेयेति भावः। क्वचित्पुस्तके न शाब्दबोध इत्यनन्तरं नीलो घट इत्यतः पूर्वं तात्पर्यगर्भासत्तिरिति पाठः। स च यत इत्यादिपूरणेन यतस्तात्पर्यगर्भा तात्पर्यविषयीभूतान्वयबोधविषयीभूतार्थबोधकपदाव्यवधानरूपा पूर्वनिरुक्तासत्तिरतो न शाब्दबोध इत्यर्थकतया व्याख्येयः। पाठान्तरं काल्पनिकमिति। न चोक्ताया आसत्तेः श्लोकेऽभावाद्विशेषदर्शने पदाव्यवधानभ्रमस्यापि तत्राभावाच्छाब्दबोधो न स्यादिति वाच्यम्। श्लोकादौ योजनावाक्यादेवान्वयबोधोपगमात्। नव्यास्तु उक्तासत्तिर्मौनिश्लोके न सम्भवति। तत्र पदाभावेन पदाव्यवधानासम्भवात् उक्तासत्तिज्ञानविलम्बेन शाब्दबोधविलम्बाभावाच्च। किन्त्वव्यवधानेन वृत्त्या पदजन्यपदार्थोपस्थितिरासत्तिस्तत्राप्यव्यवधानांशो न निवेश्यते। शाब्दबोधं प्रति पदजन्यपदार्थोपस्थितेः कारणतयाव्यवधानेनैव तत्सम्भवात्। तस्माद्वृत्त्या पदजन्यपदार्थोपस्थितिरासत्तिरित्याहुः। नन्वव्यवधानेन

## रामरुद्रीयम्.

स्येति व्युत्पत्त्या प्रमाप्रयुक्तशाब्दबोधस्येत्यर्थः। इदञ्च भाववर्णनमेव प्रकृतग्रन्थे तयोरभावात्। तथाच भ्रमप्रयुक्तासत्तेरेव तत्र शाब्दबोधो न तु प्रमाप्रयुक्तासत्तेरपीति ग्रन्थतात्पर्यमिति भावः ॥ **श्लोके इति** ॥ तत्र क्रियाकारकपदयोः पदान्तरेण व्यवधानेऽपि शाब्दबोधस्यानुभवसिद्धत्वादिति भावः ॥ **पदाव्यवधानेति** इत्थं नैतदनुपदस्यैवासत्तिज्ञानमेव शाब्दबोधे कारणमङ्गीकरिष्यामः। न तु स्वरूपसत्या आसत्तेरिति शङ्कानिरासायैवेत्युक्तम्। तेन ग्रन्थकृता स्वरूपसत्या आसत्तेः कारणत्वोपगमेऽपि नैतद्ग्रन्थासङ्गतिरित्यवधेयम् ॥ **योजनावाक्यादिति** ॥ शाब्दबोधोपपत्तये अव्यवहितोच्चरितक्रियाकारकपदादेवेत्यन्वयः ॥ **अव्यवधानेनैव**

**तत्रोत्तरपदस्मरणेन पूर्वपदस्मरणस्य नाशादव्यवधानेन तत्तत्पदस्मरणाभाव इति चेन्न । प्रत्येकपदानुभवजन्यसंस्कारैश्चरमं तावत्पदविषयकस्मरणस्याव्यवधानेनोत्पत्तेः । नानासन्निकर्षैरेकप्रत्यक्षस्येव नानासंस्कारैरेकस्मरणोत्पत्तेरपि सम्भवात् । तावत्पदसंस्कारसहितचरमव-**

## प्रभा.

यावत् ॥ **इत्याद्युक्तमिति** ॥ इत्याद्यनेकविशेषणवाचकपदघटितवाक्यं प्रयुक्तमित्यर्थः ॥ **तत्रेति** ॥ तादृशशाब्दबोधाव्यवहितप्राक्क्षण इत्यर्थः । एतस्य तत्तत्पदस्मरणाभाव इत्यनेनान्वयः ॥ **उत्तरपदस्मरणेनेति** ॥ इनिप्रत्ययान्तकुण्डलपदस्मरणेनेत्यर्थः ॥ **पूर्वपदेति** ॥ मतुबन्तच्छत्रपदस्मरणस्येत्यर्थः ॥ **नाशादिति** ॥ योग्यविभुविशेषगुणानां स्वोत्तरवृत्तिगुणनाश्यत्वनियमादिति भावः ॥ **अव्यवधानेनेति** ॥ निरुक्तासत्तिमत्त्वप्रकारेणेत्यर्थः ॥ **तत्तत्पदस्मरणाभाव इति** ॥ न तस्य हेतुत्वसंभव इति शेषः । निरुक्तासत्तिमत्पदविषयकज्ञानं न तिष्ठतीत्यर्थः ॥ **प्रत्येकपदानुभवजन्येति** ॥ तत्तत्पदविषयकप्रत्येकपदानुभवजन्यतत्तत्पदविषयकप्रत्येकसंस्कारैरित्यर्थः ॥ **चरममिति** ॥ प्रत्येकसंस्कारविषयसर्वपदानां उद्बोधकसमवधानानन्तरमित्यर्थः ॥ **तावद्विषयकेति** ॥ उद्बुद्धसंस्कारविषयीभूतानि यावन्ति पदानि तावत्पदविषयकैकस्मरणस्येत्यर्थः ॥ **अव्यवधानेनोत्पत्तेरिति** ॥ न तस्य हेतुत्वानुपपत्तिरिति शेषः । एकक्षणावच्छेदेन उत्पत्तौ बाधकाभावादित्यर्थः । नानासंस्कारैः तत्तत्संस्कारविषययावद्विषयकैकस्मरणोत्पत्तिं दृष्टान्तमुखेन द्रढयति ॥ **नानासन्निकर्षैरिति** ॥ इच्छाविशिष्टानुमितिसामग्र्यभावविशिष्टनानासन्निकर्षैरित्यर्थः । अन्यथा घटत्वाद्यनुमितिर्जायतामिति इच्छाविशिष्टघटत्वादिव्याप्यतद्व्याप्तिवानयमितिपरामर्शकाले घटादिचक्षुस्संयोगसत्त्वेऽपि घटत्वादिप्रत्यक्षानुदयादसाङ्गत्यापत्तेः ॥ **एकप्रत्यक्षस्येवेति** ॥ घटत्वादिप्रकारेण प्रत्यक्षं प्रति घटचक्षुस्संयोगस्य पटत्वादिप्रकारकप्रत्यक्षं प्रति पटचक्षुस्संयोगस्य च हेतुतया एकैकसन्निकर्षसत्त्वे एकैकप्रत्यक्षोत्पत्तेः युगपदनेकसन्निकर्षसत्त्वे घटत्वादिप्रकारेण घटपटाद्यनेकविषयकैकप्रत्यक्षोत्पत्तेरिवेत्यर्थः ॥ **नानासंस्कारैरिति** ॥ तत्तत्पदविषयकानेकसंस्कारैरित्यर्थः ॥ **एकस्मरणोत्पत्तेरपीति** ॥ तावत्पदविषयकैकस्मरणोत्पत्तेरपीत्यर्थः । अपिशब्दादेकैकपदसंस्कारजन्यैकैकपदस्मरणोत्पत्तेस्समुच्चयः ॥ **संभवादिति** ॥ अबाधितत्वादित्यर्थः । ननु एकदा तावत्पदोद्बोधकसत्त्वे मानाभावेन नानासंस्काराणामनुद्बुद्धत्वात् कथं नानापदविषयकैकस्मरणमत आह ॥ **तावत्पदेति** ॥ **संस्कारसहितेति** ॥ समवायघटितसामानाधिकरण्यसं-

## दिनकरीयम्.

पदोपस्थितिः शाब्दबोधे कारणमित्ययुक्तम् । अनेकपदघटितवाक्यस्थलेऽव्यवधानेन पदोपस्थित्यसम्भवादित्याशङ्कते ॥ **नन्विति** ॥ **अव्यवधानेनोत्पत्तेरिति** ॥ अभेदेऽप्यव्यवधानसम्भवादिति भावः । ननु तद्विशेष्यकतत्प्रकारकस्मृतिं प्रति तद्विशेष्यकतत्प्रकारकसंस्कारत्वेन जनकत्वात् कथं प्रत्येकपदसंस्कारैर्नानापदविशेष्यकस्मरणं भिन्नविषयकत्वादत आह ॥ **नानासन्निकर्षैरिति** ॥ **सम्भवादिति** ॥ तथाच यथा

## रामरुद्रीयम्.

**तत्सम्भवादिति** ॥ पदद्वयजन्योपस्थितिरूपयोर्व्यवहितत्वे शाब्दबोधाव्यवहितप्राक्क्षणे एकोपस्थितिव्यक्तिनाशस्यावश्यकतया उपस्थितिरूपायाः शाब्दबोधात् प्रागासत्त्या एव दुर्घटत्वादिति भावः । आहुरित्यनेन नव्यमतेऽस्वरसः सूचितः । तद्बीजं तु एवं सति पदजन्यपदार्थोपस्थितेः कारणत्व एव पर्यवसानादासत्तेः शाब्दबोधकारणतायास्सर्वसिद्धाया विलयप्रसङ्ग इति । न च मौनिश्लोकादौ पदाभावात् कथमासत्तिरिति वाच्यम् । पदाभावेऽप्यानुमानिकपदज्ञानस्यावश्यकत्वात् । अन्यथा पदज्ञानरूपकारणाभावेन मौनिश्लोकादौ शाब्दबोधस्यैवानुपपत्तेः । एवञ्च ययोः पदयोरन्वयबोधजनकत्वे मौनिनस्तात्पर्यमुपगम्यते तयोरव्यवधानेनानुमानिकज्ञानं वर्तत एवेति न ग्रन्थकृन्मते शाब्दबोधानुपपत्तिरिति विभावनीयम् ॥ **अभेद इति** ॥ तत्तत्पदस्मरणव्यक्तीनां परस्परं अभेद इत्यर्थः । तथा च तत्तत्पदविषयकसमूहालम्बनमेकमेव स्मरणं भवति । तत्र समूहालम्बनपदार्थस्मृतेस्तत्तच्छाब्दबोध इति भावः ॥ **तद्विशेष्यकेत्यादि** ॥ तत्तद्विशेष्यक-

र्णज्ञानस्योद्बोधकत्वात् । कथमन्यथा नानावर्णैरेकपदस्मरणम् । परं तु तावत्पदार्थानां स्मरणादेकदैव खलेकपोतन्यायेन तावत्पदार्थानां क्रियाकारकभावेनान्वयरूपः शाब्दबोधो भव-

**प्रभा.**

बन्धेन संस्कारोपलक्षितेत्यर्थः । इदंच तादृशचरमवर्णज्ञानव्यक्तेरेव तत्तद्व्यक्तित्वेन उद्बोधकत्वमिति बोधनाय नतु तस्याप्युद्बोधकतावच्छेदककोटिप्रवेशः गौरवात् प्रयोजनाभावाच्चेति ध्येयम् । चरमवर्णज्ञानस्योद्बोधकत्वानङ्गीकारे बाधकमाह ॥ **कथमन्यथेति** ॥ कथमिति स्मरणमित्युत्तरं योज्यः ॥ **अन्यथेति** ॥ चरमवर्णज्ञानस्योद्बोधकत्वानङ्गीकार इत्यर्थः ॥ **नानावर्णैरिति** ॥ नानावर्णविषयकप्रत्येकसंस्कारैरित्यर्थः ॥ **एकपदस्मरणमिति** ॥ आनुपूर्वीविशेषविशिष्टवर्णसमुदायात्मकैकपदस्मरणमित्यर्थः । तथाच चरमवर्णज्ञानस्योद्बोधकत्वानङ्गीकारे उत्तरवर्णज्ञानेन पूर्ववर्णानुभवस्य नष्टत्वेन एकदा तावद्वर्णसमुदायात्मकपदज्ञानासंभवात् अर्थस्मरणानुपपत्त्या तन्निर्वाहाय प्रत्येकवर्णानुभवजनितप्रत्येकसंस्कारैश्चरमवर्णज्ञानरूपोद्बोधकसहकृतैः तादृशतावद्वर्णसमुदायात्मकपदस्मरणमङ्गीकर्तव्यं तच्च चरमवर्णज्ञानस्योद्बोधकत्वानङ्गीकारे न निर्वहतीत्यन्यथानुपपत्त्या प्रकृते चरमवर्णज्ञानस्योद्बोधकत्वावश्यकत्वेन नानापदविषयकैकस्मरणेऽपि तस्यैवोद्बोधकत्वं अवश्यक्लृप्तत्वादिति भावः । अत्र उक्तरीत्या नानापदविषयकैकस्मरणासिद्धौ वृत्तिज्ञानसहकृततत्तत्पदज्ञानस्य तत्तदर्थस्मारकतया तत्तदर्थविशेष्यकवृत्तिज्ञानसहकृततावत्पदविषयकस्मरणवतः तावत्पदार्थविषयकानेकस्मरणानामेकदा उत्पत्त्यसंभवेन तावत्पदार्थविषयकैकस्मरणस्यैवाङ्गीकार्यतया तज्जन्यशाब्दबोधस्य विशिष्टबोधात्मकत्वमेव नतु कुत्रापि विशिष्टवैशिष्ट्यावगाहिबोधरूपत्वं पूर्वं विशेषणतावच्छेदकप्रकारकनिर्णयाभावादिति प्राचां

**दिनकरीयम्.**

घटचक्षुःसंयोगस्य पटप्रत्यक्षांशे कारणत्वाभावेऽपि घटचक्षुःसंयोगपटचक्षुःसंयोगाभ्यामेकं प्रत्यक्षं तथा तत्तत्पदगोचरसंस्कारस्य भिन्नविषयकत्वांशेऽजनकत्वेऽपि तत्तत्संस्कारजन्यस्मरणमेकमेव जायते बाधकाभावादिति भावः ॥ **अन्यथा** नानासंस्काराणामेकस्मरणजनकत्वाभावे ॥ **नानावर्णैरिति** ॥ नानावर्णानां प्रत्येकसंस्कारैरित्यर्थः ॥ **एकपदस्मरणं** नानावर्णगोचरमेकपदस्मरणम् । पदस्मरणवदाशुतरविनाशिनां क्रमिकाणां पद-

**रामरुद्रीयम्.**

तत्तत्प्रकारकस्मरणं प्रति तत्तद्विशेष्यकतत्तत्प्रकारकसंस्कारस्यैव हेतुतया यावदर्थविशेष्यकयावदर्थप्रकारकस्मरणं जायते तावदर्थविशेष्यकतावदर्थप्रकारकसंस्कारस्यैव हेतुतया प्रत्येकपदविषयकसंस्कारैः कथं नानापदविषयकस्मरणोत्पत्तिः । समानविशेष्यकत्वसमानप्रकारकत्वाभ्यामेव स्मृतिसंस्कारयोः कार्यकारणभावादित्यभिमानः । यथाश्रुतं तु न सङ्गच्छते । यद्यद्विशेष्यकं यद्यत्प्रकारकं स्मरणं तत्तद्विशेष्यकतत्तत्प्रकारकसंस्कारव्यक्तीनां सत्त्वेनानुपपत्त्यभावात् । सिद्धान्ते तु तद्विशेष्यकतत्प्रकारकस्मरणं प्रति तद्विशेष्यकतत्प्रकारकसंस्कारत्वेनैव हेतुता । तावदर्थविशेष्यकस्मरणे तु तावदर्थविशेष्यक एव संस्कारो हेतुरिति नानासंस्कारैस्समूहालम्बनरूपैकस्मरणस्य नानुपपत्तिरिति हृदयम् ॥ **बाधकाभावादिति** ॥ तत्तत्संस्कारजन्यवाक्यस्मरणस्यैकव्यक्तित्वादिति भावः ॥ **नानावर्णगोचरेति** ॥ वर्णसमुदायस्यैव पदरूपत्वेन एतादृशपदस्मरणस्य वर्णसमुदायविषयकानुभवाभावेन तावद्वर्णविषयकसंस्काराभावात् प्रत्येकवर्णविषयकसंस्कारैरेव समूहालम्बनतावद्वर्णविषयकपदस्मरणस्योपगन्तव्यत्वादिति भावः । इदमत्र अवधेयम् । यद्यपि संसर्गप्रतियोग्यनुयोगिबोधकपदज्ञानयोरव्यवधानरूपासत्तेः शाब्दबोधजनकत्वकल्पने प्रयोजनविरहः । स्वजन्यपदार्थोपस्थितिद्वारा पदद्वयज्ञानसत्त्वाच्छाब्दबोधोत्पत्तिसंभवेन व्यवहितपदज्ञानयोः प्रकारकशाब्दबोधप्राक्क्षणोत्पत्त्यसम्भवेनैव व्यवहितपदज्ञानाभ्यां शाब्दबोधापादनासम्भवात् । अव्यवहितपूर्वत्वस्यासत्तौ सत्त्वेऽपि अनन्यथासिद्धत्वकल्पने प्रयोजनाभावात् । तथापि यत्र प्रथमं घटपदज्ञानं ततः पटपदज्ञानं तदुत्तरक्षणे घटपदज्ञानजन्यघटरूपार्थविषयिण्युद्बोधकान्तरे शुक्लपदविषयिणी च समूहालम्बनस्मृतिः ततः शुक्लरूपार्थस्मरणं तत्र शुक्लो घट इति शाब्दबोधापत्तिवारणाय उक्तासत्तेः शाब्दबोधे हेतुत्वकल्पनस्यावश्यकत्वान्न दोषः । परं त्वित्यादिग्रन्थमवतारयति ॥ **आशुतरविनाशशालिनामित्यादि** ॥ केचिदित्यनन्तरं वृद्धा युवान

**तीति केचित्। वृद्धा युवानः शिशवः कपोताः खले यथामी युगपत् पतन्ति।**
**तथैव सर्वे युगपत्पदार्थाः परस्परेणान्वयिनो भवन्ति॥**
**अपरे तु यद्यदाकाङ्क्षितं योग्यं सन्निधानं प्रपद्यते। तेन तेनान्वितः स्वार्थः पदैरेवावगम्यते॥**

## प्रभा.

मतमादौ दर्शयति॥ **परन्त्विति**॥ **तावत्पदार्थानां स्मरणादिति**॥ तावत्पदार्थविषयकैकस्मरणादित्यर्थः॥ **एकदैवेति**॥ एककाल एवेत्यर्थः। एकस्मिन् काले अवान्तरशाब्दबोध एकस्मिन् काले महावाक्यार्थबोध इति रीत्या कालद्वये शाब्दबोधो नाङ्गीक्रियत इति फलितोऽर्थः। क्वचित्पुस्तके एकधैवेति पाठः स तु एकप्रकारविशिष्ट एव नत्ववान्तरबोधत्वमहाबोधत्वरूपप्रकारद्वयविशिष्ट इत्यर्थकरणेन समर्थनीयः। क्वचित्पुस्तके एक एवेति पाठः एक एव शाब्दबोधः नतु अवान्तरशाब्दबोधमहाशाब्दबोधोभयमित्यर्थ इत्यर्थकरणेन सोऽपि समर्थनीयः॥**खलेकपोतन्यायेनेति**॥ एतन्न्यायार्थस्तु अनुपदं वक्ष्यते॥ **तावत्पदार्थानामिति**॥ समूहालम्बनस्मृतिविषयतावत्पदार्थानामित्यर्थः॥ **क्रियाकारकभावेनेति**॥ विशेष्ये विशेषणमिति न्यायेनैवेत्यर्थः॥ **अन्वयरूपेति**॥ तात्पर्यविषयो यः पदार्थद्वयसंसर्गः तद्विषयकेत्यर्थः॥ **इति केचिदिति**॥ वदन्तीति शेषः। इति प्राञ्चो वदन्तीत्यर्थः। उक्तार्थे उदयनाचार्यसम्मतिमाह॥ **वृद्धा इति**॥ अत्र वृद्धयुवशिशुकपोतैस्सह पदद्वयव्यवहितैकपदमात्रव्यवहिताव्यवहितपदोपस्थापितपदार्थानां साम्यं बोध्यम्॥ **खले युगपत्पतन्तीति**॥ एककालावच्छेदेनखलवृत्तिसंयोगजनकक्रियानुकूलयत्नवन्त इत्यर्थः। नचैवं खले पतनक्रियाजन्यसंयोगरूपफलाश्रयत्वरूपकर्मत्वापत्तिरिति वाच्यम्। खलस्य तदाश्रयत्वेऽपि तद्वत्त्वेन ईप्सिततमत्वाभावात् धात्वर्थतावच्छेदकफलशालित्वमेव कर्मत्वमिति नवीनमते पतॄधातोः अकर्मकत्वेन केवलक्रियार्थकतया फलावच्छिन्नव्यापारार्थकत्वाभावेन धात्वर्थतावच्छेदकफलाप्रसिद्ध्या खलादेस्सुतरां कर्मत्वापत्तेरभावात्॥ **तथैवेति**॥ वृद्धयुवशिशुकपोतानां एककालावच्छेदेन खलपतनवदित्यर्थः। सर्वे पदार्थाः परस्परेण युगपदन्वयिनो भवन्तीति योजना॥ **सर्वे पदार्था इति**॥ पदद्वयादिव्यवहितपदोपस्थापिताः एकपदमात्रेण व्यवहितपदोपस्थापिता अव्यवहितपदोपस्थापिताश्च पदार्था इत्यर्थः॥ **परस्परेणेति**॥ विशेषणविशेष्यभावेनेत्यर्थः। अभेदे तृतीया तस्य अन्वयपदार्थैकदेशे विषयतायामन्वयः॥ **युगपदिति**॥ अवान्तरशाब्दबोधोत्पत्तिसमय इत्यर्थः॥ **अन्वयिनो भवन्तीति**॥ शाब्दबोधनिरूपितविषयतावन्तो भवन्तीत्यर्थः। इत्युदयनाचार्योक्तिरिति शेषः। इदानीं प्राचीनमते नानापदविषयकैकस्मरणकल्पने चरमवर्णज्ञानस्य तदुद्बोधकत्वकल्पने नानापदार्थविषयकैकस्मरणकल्पने च गौरवरूपमस्वरसं हृदि निधाय नवीनमतमाह॥ **परे त्विति**॥ वक्ष्यमाणस्वसिद्धान्ते अप्रामाणिकत्वशङ्कानिरासाय आदौ कणादसूत्रभाष्यकर्तॄणां प्रशस्तपादाचा-

## दिनकरीयम्.

जन्यपदार्थोपस्थितीनामपि मेलनासम्भवात् सर्वत्र शाब्दबोधे पदजन्यपदार्थोपस्थितिः संमूहालम्बनात्मिकैव कारणम्। एवञ्च सर्वत्र युगपदेव सकलपदार्थानां विशेष्ये विशेषणमिति न्यायेनैव शाब्दबोधो न तु विशिष्टस्य वैशिष्ट्यमिति रीत्या तज्जनकविशेषणतावच्छेदकप्रकारकनिर्णयस्य पूर्वमभावादिति। प्राचीनमतं दर्शयति॥ **परं त्वित्यादिना**॥ **एकदैवेति**॥ नतु घटमानयेत्यादौ प्रथमं घटीया कर्मतेत्यन्वयबोधस्तदनन्तरं च घटकर्मकानयनमित्यादिबोध इत्यादिक्रमेणेत्यर्थः। वृद्धा युवान इत्यस्य तदाहुरित्यादिः। अत्र वृद्धयुवशिशुभिः कपोतैश्चिरतरचिरसन्निहितकालोक्तानां पदार्थानां साम्यं बोध्यम्। केचिदित्यनेन सूचितमस्वरसं प्रकाशयन् मतान्तरमाह॥ **अपरे त्विति**॥ **यद्यदिति**॥ स्वार्थाकाङ्क्षितं स्वार्थयोग्यं यद्यत् सन्निधानं

## रामरुद्रीयम्.

इत्यादिश्लोकस्य मूले पाठात् तत्रान्वयानुपपत्तिं मन्यमानः पूरयति॥ **तदाहुरित्यादिरिति**॥ **चिरेति**॥ प्रथमोक्तपदार्थस्य वृद्धसाम्यं द्वितीयोक्तस्य तस्य युवसाम्यं सन्निहितोक्तस्य शिशुसाम्यमिति भावः॥ **स्वार्थेत्यादि**॥ स्वं घटादिपदं तस्यार्थो घटादिः तेनाकाङ्क्षितं तदुपस्थितिजन्यकिङ्कटी•

## प्रभा.

र्याणां सम्मतिमाह ॥ **यद्यदिति** ॥ यत् यदाकाङ्क्षितं यद्योग्यं यत्सन्निधानं प्रपद्यते इति योजना ॥ **यदिति** ॥ यत्पदमित्यर्थः । यदाकाङ्क्षितामिति यत्पदसाकाङ्क्षमित्यर्थः । यद्योग्यमिति यत्पदार्थाबाधितार्थकत्वरूपयोग्यतावदित्यर्थः । यत्सन्निधानमिति यत्पदनिरूपितनिरुक्तासत्तिमदित्यर्थः । प्रपद्यत इति ज्ञायत इत्यर्थः । तथाच यत्पदं यत्पदनिरूपितनिरुक्तसाकाङ्क्षत्वादिधर्मैः ज्ञायत इति फलितम् । एतेन खण्डवाक्यार्थबोधजनकाकाङ्क्षादिज्ञानसम्पत्तिर्दर्शिता । तेन तेनेति द्विरुच्चारणं सम्भवस्थलाभिप्रायेण । यथा धवखदिरौ छिन्धि धवखदिरपलाशान् छिन्धीत्यादौ तत्र द्वितीयाद्विवचनबहुवचनयोः धवखदिरपदाभ्यां धवखदिरपलाशपदैश्च समं निरुक्तसाकाङ्क्षत्वादिधर्मत्रयवत्त्वात् तत्र यत् द्विवचनादिपदं यद्यत्पदसाकाङ्क्षत्वादिधर्मत्रयविशिष्टं सत् ज्ञायते तेन तेनेत्यस्यावश्यकत्वादिति हृदयम् ॥ **तेनेति** ॥ तत्पदार्थेनेत्यर्थः । निरूपितत्वं तृतीयार्थः तस्य आन्वितपदार्थैकदेशे अन्वये अन्वयः ॥ **अन्वित इति** ॥ अभिमतान्वयविशिष्ट इत्यर्थः ॥ **स्वार्थ इति** ॥ प्राथमिकयत्पदार्थ इत्यर्थः ॥ **पदैरेवेति** ॥ अत्र एवकारः स्वार्थ इति पूर्ववाक्येन साकं योजनीयः । निरुक्तसाकाङ्क्षत्वादिधर्मत्रयविशिष्टपदज्ञानैरित्यर्थः । करणत्वं तृतीयार्थः तस्याव–गम्यत इत्यत्र धात्वर्थावगमे अन्वयः । एवञ्च एकपदार्थनिरूपिताभिमतान्वयविशिष्टापरपदार्थस्य तादृशपदज्ञानकरणकज्ञानविषयत्वप्राप्त्या तादृशविशिष्टविषयकपदज्ञानकरणकज्ञानं शाब्दबोधात्मकमेव भवतीत्येनादृशाचार्यवचनेन प्रथमं खण्डवाक्यार्थबोधः तदनन्तरं महावाक्यार्थबोध इति लभ्यत इति भाव इति ॥

## दिनकरीयम्.

प्रपद्यते स्वार्थोपस्थित्यव्यवहितोपस्थितिविषयो भवति तेन तेनैवान्वितः स्वार्थः पदैः प्रथममनुभाव्यते। अनन्तरं च महावाक्यार्थबोध इत्यर्थः । एवंच पूर्वोक्तसमूहालम्बनात्मकं पदार्थस्मरणं विनापि निर्वाह इति भावः । न च घटमानयेत्यादौ चरमपदार्थस्मृतिकाले घटादिपदार्थस्मृतेर्नाशात् समूहालम्बनस्मृतिरा–वश्यकीति वाच्यम् । तत्र घटस्मरणनाशेऽपि घटीया कर्मतेत्याकारकावान्तरशाब्दबोधस्यैव पदजन्यपदार्थोपस्थितित्वेन तेनैव घटकर्मकानयनेत्यादिमहावाक्यार्थबोधनिर्वाहात् । नहि पदजन्यपदार्थस्मृतित्वेन शाब्दबोधं प्रति हेतुत्वमपि तु शाब्दबोधसाधारणतादृशोपस्थितित्वेनैवेति । एवञ्चैतन्मते खण्डवाक्यार्थबोधपूर्वक एव महावाक्यार्थबोधः । अत एव सर्वत्र खण्डवाक्यार्थबोधरूपस्य विशेषणतावच्छेदकप्रकारकनिश्चयस्य पूर्वं सत्त्वाद्विशिष्टस्य वैशिष्ट्यमिति रीत्यैव महावाक्यार्थबोध उत्पद्यत इति । यत्र खण्डवाक्यार्थबोधना-

## रामरुद्रीयम्.

यमितिजिज्ञासाविषयीभूतं योग्यताज्ञानाधीनं कर्मत्वादि सन्निधानं घटरूपार्थविषयकसमूहालम्बनस्मृतिविषयत्वं प्रपद्यते तेन कर्मत्वादिनान्वितो यः स्वार्थो घटादिपदैरेवावगम्यते तज्जन्यशाब्दबोधविषयो भवतीति कारिकार्थ इति भावः । प्रथममित्यनेन आनयनरूपार्थोपस्थितेः पूर्वमेव घटमिति पदेन घटीया कर्मतेति शाब्दबोधो भवतीति सूचितम् ॥ **अनन्तरं चेति** ॥ खण्डवाक्यार्थविषयकशाब्दबोधानन्तरमित्यर्थः । महावाक्यार्थबोधो भवतीति मूलोक्त्या न पदार्थोपस्थित्यनन्तरमेव महावाक्यार्थबोधो भवतीति बोध्यम् । मूले तथैव पदार्थस्मृत्येत्यस्य पदज्ञानजन्यानयनादिपदार्थस्मृत्यैवेत्यर्थः । प्राचीनमते अस्वरसप्रकारं प्रकटयति ॥ **एवंचेति** ॥ **चरमपदार्थेति** ॥ आनयनादिरूपपदार्थस्मृतिकाल इत्यर्थः ॥ **नाशादिति** ॥ घटकर्मत्वयोरुपस्थित्यनन्तरं घटीया कर्मतेति खण्डवाक्यार्थबोधः । तदनन्तरमानयनादिपदज्ञानं तदनन्तरं पदार्थस्मरणमिति रीत्यैवानयनपदार्थस्मृत्या तत्काले पूर्वतनघटाद्युपस्थितेर्नाशादित्यर्थः ॥ **पदार्थोपस्थितित्वेनेति** ॥ पदार्थज्ञानत्वेनेत्यर्थः । खण्डवाक्यार्थशाब्दबोधस्यापि पदजन्यत्वादिति भावः । न हि पदजन्यपदार्थस्मृतित्वेनेति पाठेऽप्युपस्थितिपदं स्मृत्यर्थकमेव ॥ **शाब्दसाधारणेति** ॥ खण्डवाक्यार्थविषयकशाब्दबोधानुगतेत्यर्थः ॥ **तादृशोपस्थितित्वेनैव** पदजन्यज्ञानत्वेनैव । तथाच पदजन्यज्ञानत्वेन क्वचिच्छाब्दबोधस्य क्वचित्स्मरणस्य च शाब्दबोधहेतुतेति भावः । एतन्मते महावाक्यार्थबोधस्य विशिष्टवैशिष्ट्यावगाहितामुपपादयति ॥ **अत एवेति** ॥ **यत्रेति** ॥ यादृशस्थले खण्डवाक्यार्थबोधानन्तरं चरमपदस्मरणं ततस्तदर्थ-

तथाच खण्डवाक्यार्थबोधानन्तरं तथैव पदार्थस्मृत्या महावाक्यार्थबोध इत्यप्याहुः । एतेन तावद्वर्णाभिव्यङ्ग्यः पदस्फोटोऽपि निरस्तः । तत्तद्वर्णसंस्कारसहितचरमवर्णोपलम्भेन तद्व्य-

### प्रभा.

**तथाचेति** ॥ चकारेण युक्तिस्समुच्चीयते । इत्याकारकाचार्यवचनप्रमाणेन युक्त्या चेत्यर्थः ॥ खण्डवाक्यार्थबोधानन्तरमिति सावधारणं बोध्यम् ॥ **तथैव पदार्थस्मृत्येति** ॥ तथाशब्दोत्तर एवकारो विकल्पार्थकः अवान्तरशाब्दबोधात्मकपदज्ञानजन्यपदार्थज्ञानेन अवान्तरशाब्दबोधात्मकानुभवजन्यतत्समानाकारकस्मरणेन वेत्यर्थः ॥ **महावाक्यार्थबोध इति** ॥ स्वीक्रियत इति शेषः । तथाच घटमानयेत्यादौ घटीयकर्मतेत्यवान्तरशाब्दबोधानन्तरकालीनमहाशाब्दबोधात्पूर्वं घटादिस्मरणाभावेऽपि अवान्तरबोधरूपपदज्ञानजन्यपदार्थज्ञानरूपव्यापारसत्त्वात् न महाशाब्दबोधानुपपत्तिः । नवीनमते लाघवेन स्मृतित्वमनिवेश्य वृत्तिज्ञानसहकृतपदज्ञानाधीनपदार्थज्ञानत्वेनैव व्यापारत्वस्वीकारात् । यत्र त्ववान्तरशाब्दबोधनाशोत्तरमेव महाशाब्दबोधः प्रामाणिकः तत्रावान्तरशाब्दबोधसमानाकारकतज्जन्यस्मृतिरेव व्यापार इति । इत्थंच सर्वत्रावान्तरशाब्दबोधोत्तरमेव महाशाब्दबोधोत्पत्त्या तादृशबोधस्य विशिष्टवैशिष्ट्यावगाहिबोधरूपत्वमेव तत्सामग्रीसत्त्वात् अवान्तरशाब्दबोधस्यापि घटत्वादिविशिष्टवैशिष्ट्यावगाहिबोधरूपत्वमेव घटत्वादिप्रकारकस्मरणात्मकाविशेष-

### दिनकरीयम्.

शोत्तरं महावाक्यार्थबोधस्तत्रापि खण्डवाक्यार्थसमानाकारं स्मरणं कल्पयित्वा विशिष्टवैशिष्ट्यबोधनिर्वाह इत्याह ॥ **तथैव पदार्थस्मृत्येति** ॥ अत्रेदं बोध्यम् । यत्र खण्डवाक्यार्थबोधानन्तरं चरमपदस्मृतिः तदुत्तरं तदर्थस्मृतिस्तत्र खण्डवाक्यार्थानुभवस्य नाशात् समूहालम्बनस्मरणमावश्यकम् । एवंच यत्र न विशिष्टवैशिष्ट्यबोधसामग्री तत्र विशेष्ये विशेषणमिति रीत्यैव बोधः । यत्र तत्सामग्री तत्र विशिष्टस्य वैशिष्ट्यमिति रीत्येत्यन्यत्र विस्तरः । अवान्तरवाक्यार्थबोधपूर्वकमहावाक्यार्थबोधेऽवान्तरवाक्यार्थस्मरणमेव

### रामरुद्रीयम्.

स्मरणं ततो महावाक्यार्थबोधः तत्र चरमपदार्थस्मृतिकाले खण्डवाक्यार्थशाब्दबोधनाशाच्चरमपदार्थस्मरणमेव खण्डवाक्यार्थविषयकसमूहालम्बनरूपमुपगन्तव्यम् । यत्र तु खण्डवाक्यार्थशाब्दबोधजनकपदार्थस्मृतिरेव चरमपदविषयिणी समूहालम्बनरूपा तत्रैव महावाक्यार्थबोधप्राक्क्षणे खण्डवाक्यार्थशाब्दबोधसत्त्वमिति भावः । एवंच खण्डवाक्यार्थविषयकशाब्दबोधं विनापि समूहालम्बनस्मरणेन विशिष्टवैशिष्ट्यावगाहिशाब्दबोधोत्पत्तिस्वीकारे यत्र यत्किञ्चित्कारणवैगुण्येन न खण्डवाक्यार्थविषयकशाब्दबोधः किन्तु पदार्थविषयकसमूहालम्बनस्मरणमेवासीत् तत्र विशेष्ये विशेषणमिति रीत्या महावाक्यार्थबोधसामग्र्या अक्षततया तादृशरीत्या महावाक्यार्थबोधोऽपि अवर्जनीय इत्याह ॥ **अत्रेदं बोध्यमित्यादिना** ॥ **अन्यत्र विस्तर इति** ॥ प्रत्यक्षादिकं यथा विशिष्टवैशिष्ट्यरूपं विशेष्ये विशेषणमिति न्यायेन च भवति तथा शाब्दबोधोऽपि सामग्रीसमवधानासमवधानयोरुभयत्र तुल्यत्वादिति भावः । मूले वैयाकरणमतं निरस्यति ॥ **एतेनेत्यादिना** ॥ पूर्ववर्णानुभवजनितसंस्कारसहितचरमवर्णानुभवरूपोद्बोधकोद्बोधितचरमवर्णानुभवजनितसंस्कारेणैव क्रमिकतत्तद्वर्णविषयकपदस्मरणस्योपपादितत्वेनेत्यर्थः ॥ **तद्व्यञ्जकेनैवेति** ॥ स्फोटव्यञ्जकेनैवेत्यर्थः । वैयाकरणैर्घटाद्यर्थोपस्थापकः स्फोट एवेत्युच्यते । घटपदस्य क्रमिकवर्णचतुष्टयात्मकस्य कदाप्यसत्त्वेनार्थोपस्थापकत्वासम्भवात् । स्फोटस्तु ब्रह्मैव नातिरिक्तः पदार्थस्तस्यैकत्वेऽपि तत्तद्वर्णाभिव्यक्तिस्तत्तदर्थोपस्थापिका भवतीति घटपदोच्चारणदशायां न पटाद्युपस्थित्यापत्तिः । पदस्फोटवाक्यस्फोटादीनां भेदव्यवहारोऽपि पदजन्याभिव्यक्तिवाक्यजन्याभिव्यक्तिभेदादेवेति । अत्र च पदस्यार्थबोधकत्वमर्थबोधजनकज्ञानविषयत्वमेव । तच्च वर्णानामनेकत्वेऽपि चरमवर्णानुभवानन्तरक्रमिकतावद्वर्णविषयकसमूहालम्बनस्मृतितः घटरूपार्थस्मृतौ ततो घटविषयकशाब्दबोधोत्पत्त्या वर्णसमुदायरूपपदस्यापि घटबोधकत्वमुपपद्यत एव । किं घटशाब्दबोधजनकता स्फोटे स्वीकरणीया स्फोटाभिव्यक्त्यर्थं त्वयापि तादृशचरमवर्णानुभवस्य स्वीकरणीयतया तत एवार्थोपस्थापकपदस्मरणोपपत्तेरिति समुदायार्थः । अत्र वैयाकरणाः । तत्तत्पदार्थवाचकतायाः पर्याप्तिः क्रमि-

ञ्जकेनैवोपपत्तेरिति । इदं तु बोध्यम् । यत्र द्वारमित्युक्तं तत्र पिधेहीति पदस्य ज्ञानादेव

## प्रभा.

णतावच्छेदकप्रकारकनिर्णयसत्त्वात् न काप्यनुपपत्तिरिति भावः । केचित्तु अत्रेदं बोध्यम् । यत्र खण्डवाक्यार्थबोधानन्तरं चरमपदस्मृतिः तदुत्तरं तदर्थस्मृतिः तत्र खण्डवाक्यार्थानुभवस्य नाशात् समूहालम्बनस्मरणमावश्यकं एवंच यत्र न विशिष्टवैशिष्ट्यावगाहिबोधसामग्री तत्र विशेष्ये विशेषणमिति रीत्यैव बोधः यत्र तत्सामग्री तत्र विशिष्टस्य वैशिष्ट्यमिति रीत्यैव बोध इत्यन्यत्र विस्तर इत्याहुः तदसत् । यत्र खण्डवाक्यार्थबोधानन्तरं चरमपदस्मरणपूर्वकं तदर्थस्मरणं तत्रापि तादृशस्मरणस्य खण्डवाक्यार्थबोधसमानप्रकारकसमानविशेष्यकस्मरणरूपत्वस्वीकारेण समूहालम्बनस्मरणरूपत्वाङ्गीकारस्यावश्यकतया सर्वत्र विशिष्टवैशिष्ट्यबोधसामग्रीसमवधानावश्यकतया यत्र विशिष्टवैशिष्ट्यबोधसामग्री नास्ति तत्र विशेष्ये विशेषणमिति रीत्यैव बोध इति ग्रन्थस्य निर्युक्तिकत्वेनाश्रद्धेयत्वादिति । नच नवीनमते अवान्तरबोधोत्तरं महाशाब्दबोधस्वीकारे सकृदुच्चरित इत्यादिनियमविरोध इति वाच्यं । प्राचीनमते एकदोच्चरितशब्दस्यार्थस्मृतिशाब्दबोधोभयजनकत्वेन नियमभङ्गवारणाय सकृदर्थं गमयतीत्यस्य एकशाब्दबोधं जनयतीत्यर्थकत्वावश्यकतया सकृदुच्चरितशब्दः एकदा महाशाब्दबोधं जनयतीत्यर्थकरणेन नवीनमतेऽप्युक्तानियमभङ्गप्रसङ्गवारणसंभवात् । अत्र एतन्मते क्वचित्पदार्थस्मृतिमात्रस्य क्वचित्पदार्थस्मृत्यनन्तरकालीनावान्तरशाब्दबोधस्य क्वचिदवान्तरशाब्दबोधनाशकालीनतादृशशाब्दबोधसमानप्रकारकस्मरणस्य च व्यापारत्वं कल्पनीयं व्यापारत्वघटकपदज्ञानजन्यत्वमवान्तरबोधसाधारण्याय साक्षाज्जन्यत्वमपहाय प्रयोज्यत्वरूपमेव वाच्यमिति गौरवमित्यस्वरसं हृदि निधायाहुरित्युक्तमिति ध्येयम् । मीमांसकैकदेशिनस्तु शाब्दसामान्यं प्रति वृत्तिज्ञानसहकृतपदज्ञानजन्यपदार्थज्ञानत्वेन हे-

## दिनकरीयम्.

कारणं न तु समूहालम्बनस्मृतिः । न हि शाब्दबोधे पदजन्यपदार्थोपस्थितिः कारणम् । लाघवेन पदार्थोपस्थितेरेव हेतुत्वात् । अत एव द्वारमित्यादौ न पिधेहीति पदाध्याहारः किन्त्वर्थाध्याहार एवेति ॥

## रामरुद्रीयम्.

कवर्णसमुदाय एव स्वीकरणीया न तु प्रत्येकम् । तथा सति एकैकवर्णादप्यर्थप्रतीत्यापत्तेः । वर्णानां चास्थिरत्वेन पर्याप्त्यधिकरणीभूतसमुदायस्य कदाप्यसत्त्वेन क्रमिकवर्णसमुदायात्मकपदे न वाचकतापर्याप्तिसम्भव इति स्थिरपदस्फोट एव तत्तदर्थवाचकत्वेन स्वीकरणीय इति वदन्ति तदपि न विचारक्षमम् । यतो हि न वाचकत्वं समवेतं तत्समवायिकारणं वर्णसमुदाय इति न ब्रूमः । येन समवायिकारणस्य कार्यकालवृत्तित्वेन कारणतया क्रमिकवर्णसमुदाये वाचकत्वं समवायेनोत्पत्तुमर्हतीत्यनुपपत्तिः स्यात् । समुदायस्यैकस्मिन् क्षणेऽसत्त्वात् । किन्तु तत्तदर्थविषयकबोधजनकत्वेन भगवदिच्छाविषयत्वमेव तत्तदर्थवाचकत्वम् । तच्च क्रमिकेष्वपि वर्णेषु सम्भवत्येव । न चास्माच्छब्दादयमर्थो बोद्धव्य इति भगवदिच्छायास्तद्विषयताया वा वाचकत्वरूपत्वेन नैयायिकैरभ्युपगमात् तत्र जन्यत्वस्य पञ्चम्यर्थत्वात् वर्णसमुदायस्य ज्ञानरूपकार्याव्यवहितप्राक्क्षणेऽसत्त्वात् ईश्वरेच्छाया अपि विसंवादित्वापत्तिरिति अस्माच्छब्दादित्यस्य एतच्छब्दाभिव्यक्तस्फोटादित्येवार्थो वक्तव्य इति वाच्यम् । नव्यानां मते पदस्यार्थबोधाजनकत्वेन ज्ञानजन्यत्वस्यैव पञ्चम्यर्थत्वेनोपगन्तव्यत्वात् । वस्तुतस्तु वर्णसमुदायस्य न पदत्वं किंतु पूर्वपूर्ववर्णोत्तरचरमवर्णस्यैव । तस्य च ज्ञानरूपकार्याव्यवहितपूर्वक्षणवृत्तित्वं सम्भवत्येवेति नानुपपत्तिगन्धोऽपि ॥ **मूले तद्व्यञ्जकेनैवेति** ॥ पूर्वपूर्ववर्णानुभवजनितसंस्कारसहितचरमवर्णानुभवस्यैव स्फोटव्यञ्जकत्वेन वैयाकरणैस्स्वीकारात्तद्व्यञ्जकत्वेन भवदभिमतेनेत्यर्थः ॥ **उपपत्तेरिति** ॥ वर्णसमुदायात्मकपदस्मरणोपपत्तेरित्यर्थः । स्फोटव्यञ्जकत्वेन भवदङ्गीकृतस्यैव यावदर्थविषयकसंस्काराणामुद्बोधकत्वेनास्माभिरुपगन्तव्यत्वादिति भावः ॥ **न तु समूहालम्बनेति** ॥ पूर्वोक्तरीत्या समूहालम्बनपदस्मरणजन्ययावत्पदार्थविषयिणी खण्डवाक्यार्थस्मृतिरित्यर्थः । नन्वेवं पदजन्यतत्तत्पदार्थस्मरणं विना तत्तत्पदार्थविषयकशाब्दबोधः कथमुपपद्येत खण्डवाक्यार्थविषयकस्मरणस्य पदजन्यत्वाभावादित्यत आह ॥ **नहीत्यादि** ॥ मूले पदजन्यपदार्थोपस्थितेः तच्छाब्दबोधहेतुतया पिधे-

**बोधो न तु पिधानादिरूपार्थज्ञानात् । पदजन्यतत्तत्पदार्थोपस्थितेस्तत्तच्छाब्दबोधे हेतुत्वात् । किञ्च क्रियाकर्मपदानां तेनैव पदेन सह साकाङ्क्षत्वात् तेन क्रियापदं विना कथं बो-**

### प्रभा .

तुता ननु तच्छाब्दबोधे तादृशतद्धर्मज्ञानत्वेन गौरवात् तादृशसंसर्गज्ञानाभावेऽपि संसर्गशाब्दबोधोदयेन व्यभिचाराच्च । नचैवं प्रत्यक्षादिना उपस्थितघटादेरपि शाब्दबोधापत्तिरिति वाच्यम् । शाब्दसामान्यसामग्रीसत्त्वे घटादिबोधतात्पर्यज्ञानसत्त्वे इष्टत्वादिति वदन्ति तन्मतं दूषयति ॥ **इदं त्विति** ॥ तु अवधारणे अनुपदं वक्ष्यमाणमेवेत्यर्थः ॥ **बोध्यमिति** ॥ शाब्दसामग्रीघटकत्वेन स्वीकार्यमित्यर्थः तदेवाह ॥ **यत्रेति** ॥ शाब्दबोधविषयकयादृशतात्पर्येणेत्यर्थः ॥ **इत्युक्तमिति** ॥ इति वाक्यमुच्चरितमित्यर्थः ॥ **तत्रेति** ॥ तादृशतात्पर्ये इत्यर्थः । सप्तम्यर्थो विषयत्वं तस्य बोधे अन्वयः ॥ **पिधेहीत्यादि** ॥ आदिना विसृजेत्यादिपरिग्रहः । ज्ञानादेवेत्यत्र एवकारव्यवच्छेद्यार्थमाह ॥ **न त्विति** ॥ अप्यर्थकतुशब्दः ज्ञानादित्युत्तरं योज्यः ॥ **पिधानरूपेति** ॥ वृत्तिज्ञानसहकृतपदज्ञानजन्यपिधानरूपार्थज्ञानादपीत्यर्थः । केवलपदार्थज्ञानस्याहेतुत्वे कारणतावच्छेदकधर्मशून्यत्वरूपहेतुमाह ॥ **पदजन्येति** ॥ वृत्तिज्ञानसहकृतपदज्ञानजन्येत्यर्थः ॥ **पदार्थोपस्थितेरिति** ॥ इदं च सावधारणं पदार्थोपस्थितेरेवेत्यर्थः ॥ **शाब्दबोधहेतुत्वादिति** ॥ तथाच वृत्तिज्ञानसहकृतपदज्ञानजन्यपदार्थज्ञानत्वस्यैव शाब्दबोधकारणतावच्छेदकतया प्रत्यक्षादिना पदार्थज्ञानस्यैव निरुक्तकारणतावच्छेदकानाक्रान्ततया न कारणत्वसंभव इति भावः । ननु निरुक्तपदार्थज्ञानत्वं न शाब्दकारणतावच्छेदकं गौरवात् किन्तु केवलपदार्थज्ञानत्वं । नचैवमुक्तदोषापत्तिः सति तात्पर्ये पदार्थद्वयसंसर्गस्येव प्रत्यक्षादिना उपस्थितपदार्थस्यापि बोधे बाधकाभावादित्यत आह ॥ **किञ्चेति** ॥ **क्रियाकर्मपदानामिति** ॥ क्रियापदानां कर्मपदानामित्यर्थः । लोडन्तानयनपदादीनां द्वितीयान्तघटपदादीनामिति यावत् ॥ **तेनैव पदेन सहेति** ॥ आनयनपदेनैव द्वितीयान्तघटपदस्य द्वितीयान्तघटपदेनैव आङ्पूर्वकनयपदस्य साकाङ्क्षत्वात् अन्यथा घटमानयनंकृतिरिति वाक्यात् घटः कर्मत्वमानयेत्यादिवाक्यादपि घटकर्मकानयनानुकूलकृतिमानिति शाब्दबोधापत्तेरिति भावः ॥ **साकाङ्क्षत्वादिति** ॥ परस्परसमभिव्याहारज्ञानेन शाब्दबोधप्रयोजकत्वादित्यर्थः ॥ **तेनेति** ॥ क्रियापदं विना कारकपदस्याभिमतशाब्दबोधजननासमर्थत्वेनेत्यर्थः ॥ **क्रियापदं विनेति** ॥ प्रकृत इत्यादिः । लोडन्त-अपीत्युपसर्गसमभिव्याहृतधाधातुपदं वि-

### दिनकरीयम् .

प्राभाकरमतं दूषयति ॥ **इदं तु बोध्यमित्यादिना** ॥ **पदजन्येति** ॥ पदार्थोपस्थितिमात्रस्य हेतुत्वे प्रत्यक्षादिनोपस्थितस्यापि शाब्दबोधापत्तिरिति भावः । ननु प्रत्यक्षोपस्थितकलशपटादेः शाब्दबोधाभावस्तात्पर्याभावात् तत्सत्त्वे त्विष्टापत्तिरत आह ॥ **किञ्चेति** ॥ **तेनैवेति** ॥ द्वारं कर्मत्वं पिधानं कृतिरिति वाक्यात् द्वारकर्मकपि-

### रामरुद्रीयम् .

हीति पदज्ञानं विना पिधानविषयकशाब्दबोधानुपपत्तेः पदाध्याहार आवश्यक इत्युक्तम् । तन्न सङ्गच्छते । लाघवात् पदार्थोपस्थितित्वेनैव शाब्दबोधं प्रति कारणतायास्तैरङ्गीकारादित्यतस्तद्भावमाह ॥ **पदार्थोपस्थितिमात्रस्येति** ॥ प्राभाकरैर्यत्किञ्चित्पदार्थोपस्थितिसत्त्व एव तत्सहकृतपदजन्यपदार्थस्मरणाच्छाब्दबोधः स्वीक्रियते न तु यत्किञ्चित्पदज्ञानं विनापि शाब्दबोधः स्वीक्रियते । एवञ्च पदार्थोपस्थितित्वेनैव शाब्दबोधहेतुत्वे प्रत्यक्षादिनोपस्थितानां तत्तत्पदार्थानां पदज्ञानं विनैव शाब्दबोधापत्तिरिति मूलाभिप्राय इति भावः ॥ **तात्पर्याभावादिति** ॥ तात्पर्यज्ञानस्यापि शाब्दबोधहेतुत्वोपगमाद्वक्तुरिच्छाया एव तात्पर्यरूपत्वात् किञ्चित्पदस्याप्यनुच्चारणे वक्तुरिच्छारूपतात्पर्यस्यैवासम्भवादिति भावः । यत्किञ्चित्पदोच्चारणस्थले त्वध्याहृतार्थान्तरविषयकशाब्दबोधोऽपि तत एवेत्याह ॥ **तत्सत्त्वेऽपीत्यादिना** ॥ ननु कारकपदस्य क्रियापदं विना शाब्दबोधजनकत्वे द्वारं पिधानं कृतिरित्यत्रापि द्वारकर्मकपिधानानुकूलकृतिविषयकशाब्दबोधापत्तिरिति क्रियापदं विना कारकपदस्य शाब्दबोधाजनकत्वमुपेयम् । तथाच क्रियापदाध्याहार आवश्यक इति किञ्चेत्यादिमूलाशयः न संभवति द्वारमित्युक्ते प्रत्यक्षादिनोप-

धः स्यात् । तथा पुष्पेभ्य इत्यादौ स्पृहयतीत्यादिपदाध्याहारं विना चतुर्थ्यनुपपत्तेः पदाध्या-

प्रभा.

नेत्यर्थः ॥ **कथं बोधस्स्यादिति** ॥ द्वितीयान्तद्वारपदमात्रेणेत्यादिः। उक्तदोषवारणाय क्रियापदसमभिव्या-हृतकारकपदस्यैवाभिमतशाब्दबोधनिर्वाहकत्वेन पिधेहीति शब्दाध्याहारं विना द्वारकर्मकपिधानानुकूलकृति-मानिति शाब्दबोधासंभवाच्च शब्दाध्याहार आवश्यक इति भावः। नच पिधेहीत्यत्र धाधातोः अपिपूर्वकत्वे अ-कारस्य अदर्शनं कुत इति वाच्यम्। वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोरित्यनुशासनेन उपसर्गयोः अवापीतिश-ब्दयोः अल्लोपं अतः अकारस्य लोपं भागुरिरितिनामकः कश्चन ऋषिः वष्टि इच्छति इत्यर्थकेन पिधेहीत्यत्र अकारस्य लोप इति ध्येयम् । ननु घटःकर्मत्वमानयनंकृतिरितिवाक्यादभिमतशाब्दबोधापत्तिवारणाय ता-दृशशाब्दबोधौपयिकाकाङ्क्षादिमद्यत्किञ्चित्पदज्ञानत्वेन हेतुत्वं स्वीक्रियते तावतैव प्रथमान्तघटपदादेः तादृश-त्वाभावेनैव तादृशशाब्दबोधवारणसंभवात् । नचैवं द्वारं पिधानं कृतिरिति वाक्यात् द्वारं कर्मत्वं पिधेहीति वाक्याद्वा तादृशशाब्दबोधापत्तिस्तदवस्थैव तादृशयत्किंचित्पदज्ञानरूपकारणसत्त्वादिति वाच्यम् इष्टापत्तेः प्र-त्यक्षादिना घटाद्युपस्थितेरिव अनाकाङ्क्षितपदज्ञानजन्यार्थोपस्थितेरपि शाब्दबोधहेतुत्वस्वीकारादित्यत आह ॥ **तथेति** ॥ किञ्चेतिवत् तथेति दूषणान्तरद्योतकमिति ध्येयम् ॥ **पुष्पेभ्य इत्यादाविति** ॥ इत्यादिवाक्य इत्यर्थः आदिपदात् शत्रवे वध्यकायेत्यादिपरिग्रहः सप्तम्यर्थो घटकत्वं तस्य चतुर्थ्यनुपपत्तेरित्यत्र चतुर्थीविभक्त्यावन्वयः॥ **इत्यादिपदाध्याहारमिति** ॥ इत्यादितिङन्तपदाध्याहारमित्यर्थः । आदिपदात् क्रुध्यति द्रुह्यतीत्यादेः प-रिग्रहः ॥ **चतुर्थ्यनुपपत्तेरिति** ॥ स्पृहेरीप्सित इति सूत्रेण स्पृहार्थकधातुयोगे ईप्सितः सम्प्रदानसंज्ञस्स्या-दित्यर्थकेन पुष्पेभ्य इत्यत्र चतुर्थी वाच्या अर्थाध्याहारपक्षे तिङन्तस्पृहार्थकधातुयोगाभावात् चतुर्थी न स्या-

दिनकरीयम्.

धानान्वयबोधानुदयात् द्वारं पिधेहीत्यानुपूर्वीरूपाकाङ्क्षाज्ञानहेतुत्वस्यावश्यं वाच्यतया तादृशाकाङ्क्षाज्ञानार्थं पि-धेहीति पदाध्याहार आवश्यक इति भावः । ननु द्वारकर्मकपिधानानुकूलकृतिबोधे आनुपूर्वीविशेषस्य द्वारपदो-त्तराम्पदरूपस्य पिधेहीत्याकारस्य वा ज्ञानं कारणमतो न द्वारं कर्मत्वं पिधानं कृतिरित्यस्माच्छाब्दबोधापत्तिः। त-थाच द्वारमित्युक्ते पिधेहीति पदस्य नाध्याहारः । न च तादृशानुपूर्व्योः परस्परं व्यभिचारः । अव्यवहि-तोत्तरत्वस्य कार्यतावच्छेदके निवेशात् । न च यत्र द्वारं पिधानं कृतिरिति द्वारकर्मत्वं पिधेहीति चोक्तं तत्रापि द्वारकर्मकपिधानानुकूलकृतेः शाब्दबोधापत्तिरिति वाच्यम् इष्टापत्तेः। प्रत्यक्षानुमानादिनोपस्थि-तस्यैव निराकाङ्क्षपदेनोपस्थितस्यापि बोधे बाधकाभावादत आह ॥ **तथा पुष्पेभ्य इति** ॥ स्पृहयतीत्या-दीत्यादिना क्रुध्यति द्रुह्यति कुप्यति असूयति ईर्ष्यतीत्यादिपरिग्रहः ॥ **चतुर्थ्यनुपपत्तेरिति** ॥ कर्मत्वा-र्थकचतुर्थ्याः स्पृहयतियोग एवानुशासनेन बोधनादिति भावः । अत्रेदं चिन्त्यम् । अस्त्वेवंरीत्या क्वचित्प-दाध्याहारस्तावतापि तज्जन्योपस्थितित्वेन न शाब्दबोधहेतुत्वम् । लाघवेन पदार्थोपस्थितित्वस्यैव तज्जनक-

रामरुद्रीयम्.

स्थितपिधानादिविषयकशाब्दबोधोपगन्तॄणां निराकाङ्क्षितपदादुपस्थितपिधानादेः शाब्दबोधेऽपीष्टापत्तिसं-भवादित्यतस्तात्पर्यं वर्णयति ॥ **द्वारमिति** ॥ तथाच तात्पर्यसत्त्वेऽपि निराकाङ्क्षसकलपदस्थले शाब्दबोध-स्यानुभवविरुद्धत्वेन द्वारकर्मकपिधानानुकूलकृतिशाब्दबोधे द्वारं पिधेहीत्यानुपूर्वीज्ञानस्य हेतुताया आवश्य-कत्वेन क्रियापदानध्याहारे तादृशानुपूर्वीज्ञानाभावेन शाब्दबोधानुपपत्तिरिति क्रियापदाध्याहार आवश्यक इति भावः ॥ **क्रुध्यतीत्यादि** ॥ क्रुधद्रुहेर्ष्यासूयार्थधातुयोगे यं प्रति कोपस्तस्य सम्प्रदानसंज्ञाविधानात् सम्प्रदाने चतुर्थीविधानादिति भावः ॥ **अनुशासनेनेति** ॥ स्पृहि योगे इच्छाविषयस्य सम्प्रदानसंज्ञाविधाना-दिति भावः । इच्छार्थकधातुयोगे तु पुष्पादिपदोत्तरं द्वितीयैव साधुर्न चतुर्थी । तद्योगे इच्छाविषयस्य स-म्प्रदानसंज्ञाया अविधानादतश्चतुर्थीसाधुत्वोपपत्तये स्पृहयतीति पदाध्याहार आवश्यक इति समुदायतात्प-र्यम् ॥ **क्वचिदिति** ॥ पुष्पेभ्य इत्यादावित्यर्थः। चतुर्थीसाधुत्वोपपत्तये स्पृहयतीत्यादिपदाध्याहारोऽस्त्वित्य-र्थः ॥ **तज्जन्योपस्थितित्वेनेति** ॥ स्पृहादिधातुजन्योपस्थितित्वेनेत्यर्थः ॥ **न शाब्दबोधहेतुत्वमि-**

प्रभा.

त्। एवं शत्रवे वञ्चकायेत्यादावपि क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः इति सूत्रेण क्रोधाद्यर्थकधातूनां च योगे सति यं प्रति कोपः स सम्प्रदानसंज्ञस्स्यादित्यर्थकेन चतुर्थी वाच्या अर्थाध्याहारपक्षे कुप्यतीत्यादिति-ङन्तधातुयोगाभावेन चतुर्थी न स्यादिति भावः। उपसंहरति॥ पदाध्याहार इति॥ तस्मादित्यादिः चतुर्थ्य-नुपपत्तिरूपदोषादित्यर्थः पदाध्याहारपक्ष एवावश्यं स्वीकार्य इत्यर्थः। अत्र मीमांसकैकदेशिमते उक्तस्थले चतु-र्थ्यनुपपत्त्या अर्थाध्याहारासंभवेन पदाध्याहारस्यावश्यकतया सर्वत्र पदजन्यपदार्थोपस्थितेरेव हेतुत्वमावश्यकम्। नचैवं तादृशपदार्थोपस्थितित्वेन हेतुत्वे मानाभाव इति वाच्यं प्रत्यक्षादिना उपस्थितघटादेरपि शाब्दबोधापत्तेः। नचेष्टापत्तिः अश्रुतपदस्य पुंसः चक्षुस्संयोगादिना घटप्रत्यक्षाद्यनन्तरं जायमानघटादिविषयकालौकिकप्रत्य-क्षस्यापि शाब्दत्वापत्तेः शाब्दकारणपदार्थोपस्थितिसत्त्वात्। नच शाब्दबोधे पदज्ञानस्यापि हेतुत्वस्वीकारादु-क्तप्रत्यक्षस्यापि पदज्ञानजन्यत्वाभावान्न तदापत्तिरिति वाच्यम् पदज्ञानस्य साक्षाद्धेतुत्वे घटादिपदानां घटादौ अगृहीतशक्तिकस्यापि घटादिपदज्ञानाद्धटादिविषयकशाब्दबोधापत्तेः अर्थस्मृतिद्वारा हेतुत्वेतु वृत्तिज्ञानसहकृतघ-टपदज्ञानजन्यघटोपस्थितितः घटशाब्दस्येव पटशाब्दस्याप्यापत्तिवारणाय तदर्थविषयकशाब्दं प्रति तादृशपद-ज्ञानजन्यतदर्थोपस्थितित्वेनैव हेतुत्वमावश्यकम्। एवंच प्रत्यक्षादिना घटाद्युपस्थितेः कार्यतावच्छेदकानाक्रान्त-तया अर्थाध्याहारपक्षो निर्युक्तिक एव। नच तदर्थविषयकशाब्दं प्रति साक्षात्परम्परया वा तदर्थान्वितार्थोपस्था-पककिञ्चित्पदनिरूपितसाकाङ्क्षत्वादिधर्मत्रयविशिष्टपदज्ञानत्वेन किञ्चित्पदनिरूपितसाकाङ्क्षत्वादिधर्मत्रयविशिष्टप-दविषयकवृत्तिज्ञानसहकृतपदज्ञानजन्य-साक्षात्परम्परयावातदर्थान्वितार्थविषयकज्ञानत्वेन वा हेतुत्वस्वीकारा-देव उक्तदोषवारणात् अर्थाध्याहारपक्षो युक्त एवेति वाच्यम्। तथापि घटःकर्मत्वमानयनंकृतिरित्यादि-वाक्याद्घटकर्मकानयनानुकूलकृतिमानिति शाब्दबोधापत्तिवारणाय वृत्तिज्ञानसहकृतद्वितीयान्तघटपदज्ञानज-न्यघटोपस्थितित्वेन तादृशलोडन्ताङ्पूर्वकनीङ्धातुपदज्ञानजन्यानयनोपस्थितित्वेन वा हेतुतेत्यत्र विनिगमना-भावेन उभयरूपेण हेतुत्वस्यावश्यकत्वाद्गौरवं दुर्वारम्। किंच तादृशशाब्दं प्रति निरुक्तघटपदज्ञानजन्यघटो-पस्थितित्वेन हेतुत्वे घटःकर्मत्वमानयेति वाक्यात् तत्र मते तादृशशाब्दबोधापत्तिः। वृत्तिज्ञानसहकृत-लोडन्ताङ्पूर्वकनीङ्धातुपदज्ञानजन्यानयनोपस्थितित्वेन हेतुत्वे घटमानयनंकृतिरिति वाक्यात् निरुक्तशाब्दबो-धापत्तिः तादृशज्ञानद्वयान्यतरत्वेन हेतुत्वे उक्तदोषाभावेऽपि निरुक्तद्वितीयान्तघटपदज्ञानजन्यकर्मत्वोप-स्थितिनिरुक्तलोट्पदज्ञानजन्यकृत्युपस्थित्योरन्यतरत्वेन हेतुत्वमादाय विनिगमनाविरहेण तेन तेन रूपेण द्वयो-र्हेतुत्वापत्त्या एकधर्मावच्छिन्नं प्रति कार्यकारणभावद्वयापत्तिः। यदिच स्वाव्यवहितोत्तरक्षणोत्पत्तिकत्वसंबन्धेन निरुक्तघटपदज्ञानजन्यघटोपस्थितिविशिष्टनिरुक्तशाब्दं प्रति तादृशघटपदजन्यघटोपस्थित्यम्पदज्ञानजन्य-कर्मत्वोपस्थित्यन्यतरत्वेन हेतुत्वमङ्गीकृत्य एकधर्मावच्छिन्नं प्रति विनिगमनाविरहप्रयुक्तकार्यकारणभावद्वया-पत्तिर्वार्यते। तुल्ययुक्त्या स्वाव्यवहितोत्तरक्षणोत्पत्तिकत्वसंबन्धेन निरुक्ताङ्पूर्वकनीङ्धातुपदज्ञानजन्यानय-नोपस्थितिविशिष्टनिरुक्तशाब्दं प्रत्यपि तादृशाङ्पूर्वकनीङ्धातुपदज्ञानजन्योपस्थितितादृशलोट्पदज्ञानजन्य-कृत्युपस्थित्योरन्यतरत्वेन हेतुत्वस्य वक्तव्यतया एककार्यनिष्ठकार्यतावच्छेदकधर्मद्वयमादाय विनिगमनाविर-हप्रयुक्तकार्यकारणभावद्वयापत्तेः दुर्वारत्वात्। तस्मादेतन्मते विनिगमनाविरहप्रयुक्तकार्यकारणभावद्वयापत्तिः कारणस्य कार्यतावच्छेदककोटिप्रवेशः प्रत्यक्षादिना जायमानपदार्थोपस्थितेः शाब्दबोधकारणत्वकल्पनं चेत्यति-गौरवम्। नैयायिकमते एकधर्मावच्छिन्नं प्रति विनिगमनाविरहेण द्वयोर्हेतुत्वाप्रसक्त्या एकशाब्दबोधे कार्यता-वच्छेदकद्वयाङ्गीकारप्रयुक्तकार्यकारणभावद्वयाप्रसक्त्या कारणस्य कार्यतावच्छेदककोटिप्रवेशाप्रसक्त्या प्रत्यक्षा-दिना जायमानघटाद्युपस्थितेः शाब्दबोधहेतुत्वकल्पनाप्रसक्त्या चातिलाघवमित्येव सारमिति प्रतिभाति। केचित्तु अत्रेदं चिन्त्यं अस्त्वेवंरीत्या क्वचित्पदाध्याहारः तावतापि तज्जन्योपस्थितित्वेन न शाब्दबोधहेतुत्वं लाघवेन पदार्थोपस्थितित्वस्यैव जनकतावच्छेदकत्वात्। तथाच द्वारमित्यादौ कथंचिदुपस्थितस्य पिधाना-देर्बोधे बाधकाभावात् अर्थाध्याहारपक्ष एव उचित इति तन्मतव्यवस्थापनमाहुः तदसत्। लाघवमात्रेण केवलपदार्थोपस्थितित्वस्य शाब्दजनकतावच्छेदकत्वस्वीकारे द्वारं पिधेहीति वाक्यमजानतः पुरुषस्यापि प्र-

पदार्थे तत्र तद्वत्ता योग्यता परिकीर्तिता ॥ ८३ ॥

**हार आवश्यकः । योग्यतां निर्वक्ति ॥ पदार्थ इति ॥ एकपदार्थेऽपरपदार्थसंबन्धो योग्यतेत्यर्थः । तज्ज्ञानाभावाच्च वह्निना सिञ्चतीत्यादौ न शाब्दबोधः । नन्वेतस्या योग्यताया ज्ञानं शाब्दबोधात्प्राक् सर्वत्र न संभवति वाक्यार्थस्यापूर्वत्वादिति चेन्न । तत्तत्पदार्थस्मरणे सति**

## प्रभा.

त्यक्षादिना द्वाराद्युपस्थितिमात्रेण द्वारकर्मकपिधानानुकूलकृतिमानिति शाब्दबोधापत्तेः । यच्चोक्तं तादृशशाब्दबोधे द्वारपदोत्तराम्पदज्ञानस्य अपिपूर्वकलोडन्तपदज्ञानस्य वा हेतुत्वस्वीकारात् द्वारं पिधेहीति वाक्यमजानतः पुरुषस्य घटःकर्मत्वमानयनंकृतिरितिवाक्यमजानतः पुरुषस्य वा प्रत्यक्षादिना तत्तदर्थोपस्थितिबलात् न तादृशशाब्दबोधापत्तिरिति तदप्यसत् द्वारादिपदानां द्वारकर्मत्वादौ शक्तिमजानतः पुरुषस्यापि द्वारं पिधेहीति वाक्यज्ञानात् प्रत्यक्षादिना द्वाराद्युपस्थितिसहकृतात् तादृशशाब्दबोधापत्तेर्दुर्वारत्वादिति सर्वं चतुरस्रम् ॥ **योग्यतामिति** ॥ क्रमप्राप्तां योग्यतामित्यर्थः ॥ **निर्वक्तीति** ॥ निरूपयतीत्यर्थः । पदार्थे तत्र तद्वत्तेति मूलेन स्वस्मिन् स्वाधिकरणत्वं योग्यतेति लभ्यते तच्चाप्रसिद्धं तज्ज्ञानं प्रकृतानुपयुक्तञ्चेति अतस्तदर्थमाह ॥ **एकपदार्थेति** ॥ प्रकृतवाक्यघटकैकपदार्थ इत्यर्थः ॥ **अपरपदार्थसंबन्ध इति** ॥ प्रकृतवाक्यघटकापरपदार्थस्य प्रयोक्तृतात्पर्यविषयसंबन्ध इत्यर्थः । निरुक्तयोग्यताज्ञानस्य हेतुत्वानङ्गीकारे बाधकमाह ॥ **तज्ज्ञानाभावाच्चेति** ॥ **वह्निना सिञ्चतीत्यादाविति** ॥ तृतीयान्तवह्निपदतिङन्तसिच्धातुभ्यामिति शेषः । सप्तम्यर्थो घटकत्वं तस्याध्याहृतपदद्वयेऽन्वयः । सिच्धातुभ्यामित्यत्र पञ्चम्यर्थः प्रयोज्यत्वं तस्य शाब्दबोधे अन्वयः ॥ **न शाब्दोध इति** ॥ न तात्पर्यविषयशाब्दबोध इत्यर्थः । तथाच निरुक्तयोग्यताज्ञानस्य हेतुत्वानङ्गीकारे वह्निना सिञ्चतीति वाक्यज्ञानात् वह्निकरणकसेकानुकूलकृतिमानिति शाब्दबोधापत्तिः योग्यताज्ञानातिरिक्तसकलशाब्दसामग्रीसत्त्वादिति भावः ॥ **एतस्या इति** ॥ तत्तद्वाक्यघटकैकपदार्थीयापरपदार्थनिष्ठतात्पर्यविषयसंसर्गरूपाया इत्यर्थः ॥ **शाब्दबोधात्प्रागिति** ॥ तत्तच्छाब्दबोधाव्यवहितप्राक्कालावच्छेदेनेत्यर्थः ॥ **सर्वत्रेति** ॥ प्रकृतवाक्यजन्यशाब्दबोधाधिकरणेषु यावत्सु इत्यर्थः ॥ **न संभवतीति** ॥ नोत्पत्तुमर्हतीत्यर्थः । तथाच एकस्मिन् निरुक्ताधिकरणे प्रत्यक्षादिरूपनिरुक्तयोग्यताग्राहकसामग्रीवशात् तादृशशाब्दबोधात्पूर्वं तादृशयोग्यताज्ञानसंभवेऽपि यत्र न तादृशसामग्री तत्र शाब्दबोधात्पूर्वं निरुक्तयोग्यताज्ञानाभावेन व्यतिरेकव्यभिचारात् तत्तद्वाक्यजन्यतत्तच्छाब्दबोधं प्रति निरुक्तयोग्यताज्ञानस्य हेतुत्वं न संभवतीति भावः । ननु तत्तद्वाक्यजन्याभिमतशाब्दबोधात् पूर्वं तत्तदधिकरणेषु प्रत्यक्षादिना निरुक्तयोग्यताज्ञानोत्पत्त्यनन्तरमेवाभिमतशाब्दबोधः स्वीक्रियते कारणाभावे कार्यानुदयादित्याशङ्कां बाधकप्रदर्शनेन परिहरति ॥ **वाक्या-**

## दिनकरीयम्.

तावच्छेदकत्वात् । तथाच द्वारमित्यादौ कथञ्चिदुपस्थितस्य पिधानादेर्बोधे बाधकाभावादर्थाध्याहारपक्ष एवोचित इति । मूले पदार्थे तत्र तद्वत्ता योग्यता परिकीर्तितेत्यनेन तत्पदार्थे तत्पदार्थवत्त्वं योग्यतेत्युक्तम् । तच्चायुक्तमनुपयुक्तं च स्वस्मिन् स्वाधिकरणत्वाभावात् तज्ज्ञानस्य शाब्दबोधे हेतुत्वाभावाच्चेत्यतः प्रथमं तत्पदमेकपदार्थपरं द्वितीयं च तत्पदमपरपदार्थपरमित्यभिप्रायेण व्याचष्टे ॥ **एकपदार्थ इति** ॥ योग्यताज्ञानस्य शाब्दबोधहेतुत्वे मानमाह ॥ **तज्ज्ञानाभावाच्चेति** ॥ **अपूर्वत्वादिति** ॥ सर्वत्र शाब्द-

## रामरुद्रीयम्.

**ति** ॥ लाघवेन शाब्दबोधमात्रं प्रत्येव पदार्थोपस्थितित्वेनैव हेतुत्वावधारणात् । तथाच द्वारमित्यादौ पिधेहीत्यादिशब्दाध्याहारो नावश्यक इति भावः । इदमत्र चिन्त्यम् पिधानं कुर्विति शब्दप्रयोगे द्वारमिति द्वितीयापि न साधुः । कर्तृकर्मणोः कृतीत्यनेन षष्ठ्या द्वितीयाबाधनात् । तथा च पुष्पेभ्य इत्यादाविव द्वारमित्यत्रापि द्वितीयासाधुत्वोपपत्तये पिधेहीति पदाध्याहार आवश्यक एवेति ॥ **तच्चायुक्तमिति** ॥ अयुक्तत्वमेवोपपादयति ॥ **स्वस्मिन्निति** ॥ अनुपयुक्तत्वमुपपादयति ॥ **तज्ज्ञानस्येति** ॥ ननु वाक्यार्थज्ञा-

क्वचित् संशयरूपस्य क्वचिन्निश्चयरूपस्य योग्यताज्ञानस्य संभवात् । नव्यास्तु योग्यताज्ञानं न शाब्दबोधे कारणम् । वह्निना सिञ्चतीत्यादौ सेके वह्निकरणकत्वाभावरूपायोग्यतानिश्चयेन प्रतिबन्धान्न शाब्दबोधः । तदभावनिश्चयस्य लौकिकसन्निकर्षाजन्यदोषविशेषाजन्यतज्ज्ञानमात्रे

**प्रभा .**

र्थस्येति ॥ निरुक्तयोग्यत्वरूपवाक्यार्थस्येत्यर्थः ॥ **अपूर्वत्वादिति** ॥ तत्तच्छाब्दबोधात्पूर्वं तत्तच्छाब्दाधिकरणेषु सर्वेषु निश्चयाङ्गीकारासंभवादित्यर्थः । तथाच शाब्दबोधात्पूर्वं सर्वत्र तादृशनिश्चयस्वीकारे तत्तद्वाक्यजन्यशाब्दबोधस्य प्रमाणान्तरेण निर्णीतार्थविषयकत्वात् पृथक् प्रमात्वानुपपत्तिः तत्तद्वाक्यानां च गृहीतार्थकत्वेन पृथक् प्रमाणत्वानुपपत्तिश्चागृहीतार्थगन्तृ प्रमाणमित्यनुशासनादिति भावः ॥ **तत्तत्पदार्थस्मरणे सतीति** ॥ प्रकृतवाक्यघटकतत्तत्पदविषयकवृत्तिज्ञानसहकृतज्ञानजन्यतत्तदर्थविषयकस्मरणे सतीत्यर्थः । निरुक्तयोग्यतासंशायकविशेषादर्शनसहकृतकोटिद्वयोपस्थितेः सत्त्वमाविष्कृतम् ॥ **क्वचिदिति** ॥ तदुत्तरमित्यादिः । निरुक्तयोग्यतायाः प्रत्यक्षादिनिर्णयजनकसामग्रीशून्याधिकरण इत्यर्थः ॥ **संशयरूपस्येति** ॥ तथाच संशयसामग्रीसत्त्वेन आकाङ्क्षादिज्ञानादेरेव निरुक्तयोग्यतासंशयरूपत्वसंभवादिति भावः ॥ **क्वचिदिति** ॥ निरुक्तयोग्यतानिर्णायकप्रत्यक्षादिसामग्र्यधिकरण इत्यर्थः ॥ **निश्चयरूपस्येति** ॥ आकाङ्क्षादिज्ञानादेः निरुक्तयोग्यतानिश्चयरूपत्वसंभवादिति भावः ॥ **संभवादिति** ॥ तथाच तत्तद्वाक्यजन्यशाब्दसामान्यं प्रति संशयनिश्चयसाधारणनिरुक्तयोग्यताज्ञानत्वेनैव हेतुत्वप्राप्त्या तादृशशाब्दबोधात् पूर्वं सर्वत्र तदधिकरणे शाब्दबोधसमानप्रकारकनिश्चयस्यानिष्पन्नत्वात् तत्तद्वाक्यजन्यशाब्दबोधस्य प्रमाणान्तरेण प्रमितार्थविषयकत्वाभावेन पृथक्प्रमात्वं तत्करणतया च तत्तद्वाक्यज्ञानस्य पृथक्प्रमाणत्वं च नानुपपन्नमिति भावः । योग्यताज्ञानस्य शाब्दबोधहेतुतावादिनां प्राचां मते दोषं प्रकाशयन् मणिकारमतमाह ॥ **नव्यास्त्विति** ॥ **योग्यताज्ञानमिति** ॥ निरुक्तयोग्यताज्ञानत्वावच्छिन्नमित्यर्थः ॥ **न शाब्दबोधे कारणमिति** ॥ तत्तद्वाक्यजन्यशाब्दबोधसामान्यनिरूपितकारणत्वावच्छिन्नमित्यर्थः । अत्र तादृशकारणताग्राहकप्रमाणाभावादिति हेतुः पूरणीयः । ननु निरुक्तयोग्यताज्ञानस्य हेतुत्वानङ्गीकारे वह्निना सिञ्चतीत्ययोग्यवाक्यात् वह्निकरणकसेकानुकूलकृतिमानिति शाब्दबोधाभावः किन्निबन्धन इत्यत आह ॥ **वह्निनेति** ॥ **इत्यादाविति** ॥ इत्याद्ययोग्यवाक्यश्रवणे सतीत्यर्थः । एतस्य न शाब्दबोध इत्यनेनान्वयः ॥ **सेक इति** ॥ सेकविशेष्यकवह्निकरणकत्वाभावप्रकारकनिश्चयेनेत्यर्थः तृतीयार्थो निरूपितत्वं तस्य प्रतिबन्धे अन्वयः ॥ **प्रतिबन्धादिति** ॥ प्रतिबध्यताश्रयत्वादित्यर्थः ॥ **न शाब्दबोध इति** ॥ न निरुक्तशाब्दबोधसंभव इत्यर्थः । ननु अयोग्यतानिश्चयत्वावच्छिन्नप्रतियोगिताकाभावत्वेन हेतुत्वकल्पनापेक्षया निरुक्तयोग्यताज्ञानत्वेन हेतुत्वकल्पन एव लाघवं तावताप्युक्तस्थले शाब्दबोधवारणसंभवादत आह ॥ **तदभावनिश्चयस्येति** ॥ तद्धर्मावच्छिन्नविशेष्यतानिरूपिततत्संबन्धावच्छिन्नतद्धर्मावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नप्रकारताशाल्यनाहार्याप्रामाण्यज्ञानानास्कन्दितनिश्चयस्येत्यर्थः ॥ **तज्ज्ञानमात्र इति** ॥ तद्धर्मावच्छिन्नविशेष्यतानिरूपिततत्संबन्धावच्छिन्नतद्ध-

**दिनकरीयम् .**

बोधात् पूर्वमनिश्चितत्वादित्यर्थः ॥ **क्वचित् संशयस्येति** ॥ संशयनिश्चयसाधारणयोग्यताज्ञानत्वेन हेतुत्वादिति भावः । अत एव निश्चयमपि दर्शयति ॥ **क्वचिदिति** ॥ भूतले घट इति प्रात्यक्षिकनिश्चयोत्तरभाविनि शाब्दबोध इत्यर्थः ॥ **नव्यास्त्विति** ॥ ननु अयोग्यतानिश्चयस्य प्रतिबन्धकत्वे तदभावत्वेन हेतुत्वं वाच्यम् । तदपेक्षया लाघवेन योग्यताज्ञानहेतुत्वस्यैवोचितत्वादत आह ॥ **तदभावनिश्चयस्येति** ॥ बाधनिश्चयकालेऽपि लौकिकसन्निकर्षजन्यतद्विशिष्टबुद्धेरुदयादत आह ॥ **लौकिकसन्निकर्षाजन्ये-**

**रामरुद्रीयम् .**

नं विना वाक्यप्रयोगासम्भवेन वाक्यप्रयोगमूलभूतं ज्ञानं प्रत्यक्षादिरूपमेव वाच्यम् । तस्यापि शाब्दत्वे अनवस्थाप्रसङ्गात् । तथाच यादृशविषये शाब्दादिकमेव जातं नानुमित्यादिकमित्यसङ्गतमेव । एवं यद्विशेषयोरि-

प्रतिबन्धकत्वाच्छाब्दबोधं प्रत्यपि प्रतिबन्धकत्वं सिद्धम् । योग्यताज्ञानविलम्बाच्च शाब्दबोधविलम्बोऽसिद्ध इत्याहुः ॥ ८२ ॥ ८३ ॥

**प्रभा.**

र्मावच्छिन्नप्रकारताशालिज्ञानत्वावच्छिन्न इत्यर्थः । अत्रानाहार्याप्रामाण्यज्ञानानास्कन्दितबाधनिश्चयसत्त्वेऽपि विशिष्टबुद्ध्युदयात् प्रतिबन्धकतावच्छेदकानाहार्यत्वादिविशेषणद्वयनिवेशः । निरुक्तबाधनिश्चयसत्त्वेऽपि लौकिकसन्निकर्षजन्यविशिष्टबुद्ध्युदयात् प्रतिबध्यतावच्छेदककोटौ लौकिकसन्निकर्षाजन्यत्वनिवेशः । शङ्खो न पीत इत्यादिनिरुक्तबाधनिश्चयसत्त्वेऽपि पित्तादिदोषजन्यपीतश्शङ्ख इत्यादिनिरुक्तविशिष्टबुद्ध्युदयात् तत्कोटौ दोषविशेषाजन्यत्वनिवेशः । दोषसामान्याजन्यत्वनिवेशे इदं न रजतमिति प्रमात्मकनिरुक्तबाधनिश्चयोत्तरं इदं रजतमिति लौकिकसन्निकर्षाजन्यभ्रमात्मकनिरुक्तविशिष्टबुद्धिवारणाय दोषविशेषाजन्यत्वनिवेशः । पित्तमण्डूकवसाञ्जनादिदोषाजन्यत्वं तदर्थः । निरुक्तबाधनिश्चयोत्तरं आहार्यविशिष्टबुद्ध्युदयात् प्रतिबध्यतावच्छेदककोटावप्यनाहार्यत्वं निवेशनीयमिति ध्येयम् ॥ **प्रतिबन्धकत्वादिति** ॥ ग्राह्याभावावगाहित्वेन क्लृप्तप्रतिबन्धकत्वादित्यर्थः ॥ **शाब्दं प्रत्यपीति** ॥ सेकादिविशेष्यकवह्निकरणकत्वादिप्रकारकशाब्दं प्रत्यपीत्यर्थः । अपिशब्दात् आनुमानिकादिनिरुक्तविशिष्टज्ञानपरिग्रहः तस्यापि निरुक्तप्रतिबध्यतावच्छेदकाक्रान्तत्वादिति भावः ॥ **प्रतिबन्धकत्वमिति** ॥ सेकादिविशेष्यकवह्निकरणकत्वाभावादिप्रकारकनिरुक्तबाधनिश्चयस्येत्यादिः ॥ **प्रतिबन्धकत्वमिति** ॥ ग्राह्याभावावगाहित्वेन प्रतिबन्धकत्वमिति भावः । तादृशनिश्चयस्यापि निरुक्तप्रतिबन्धकतावच्छेदकाक्रान्तत्वादिति भावः ॥ **सिद्धमिति** ॥ सर्वानुमतमित्यर्थः । तथाच तत्तद्वाक्यजन्यशाब्दबोधं प्रति अयोग्यतानिश्चयरूपनिरुक्तबाधनिश्चयस्य ग्राह्याभावावगाहित्वेन प्रतिबन्धकत्वस्य क्लृप्तत्वात्तदभावस्यापि प्रतिबन्धकाभावविधया हेतुत्वं क्लृप्तमिति लाघवम् । योग्यताज्ञानहेतुत्वस्याक्लृप्ततया कल्पनीयत्वेन गौरवमिति भावः । ननु यत्र न बाधनिश्चयः न वा योग्यताज्ञानं तत्र शाब्दबोधापत्तिरत आह ॥ **योग्यताज्ञानेति** ॥ तथाचेष्टापत्तिरिति भावः । अथवा योग्यताज्ञानशून्यकाले निरुक्तबाधनिश्चयाभावमात्रेण शाब्दबोधस्याननुभाविकतया अनुभवानुरोधेन शाब्दसामान्यं प्रति निरुक्तयोग्यताज्ञानस्यैव हेतुत्वमावश्यकमत आह ॥ **योग्यताज्ञानेति** ॥ निरुक्तयोग्यताज्ञानाभावादित्यर्थः ॥ **शाब्दबोधविलम्ब इति** ॥ शाब्दबोधाभाव एवेत्यर्थः ॥ **असिद्ध इति** ॥ अप्रामाणिक इत्यर्थः । तथाच तादृशानुभवे माना-

**दिनकरीयम्.**

**ति** ॥ शङ्खो न पीत इति निश्चयेऽपि पित्तादिदोषवशात् पीतः शङ्ख इति प्रत्यक्षोदयात् दोषविशेषाजन्येत्युक्तम् । शुक्तौ नेदं रजतमिति ज्ञानोत्तरं दोषजन्यस्येदं रजतमिति भ्रमस्य वारणाय विशेषेति । पित्तमण्डूकवसाञ्जनादिदोषेत्यर्थः ॥ **तद्धानमात्रे** तद्विशिष्टबुद्धिमात्रे ॥ **सिद्धमिति** ॥ तथाचायोग्यताज्ञानस्य शाब्दबोधं प्रति प्रतिबन्धकत्वस्य क्लृप्तत्वात् तेनैव निर्वाहेऽयोग्यताज्ञानस्यातिरिक्तप्रतिबन्धकत्वं न कल्प्यत इति भावः । ननु यत्र नायोग्यताज्ञानं तत्र शाब्दबोधापत्तिरित्यत आह ॥ **योग्यताज्ञानविलम्बाच्चेति** ॥ तथाचेष्टापत्तिरिति भावः । आहुरित्यस्वरसः । तद्बीजं तु यद्विषयकमनुमित्यादिकं न जातं शाब्दबोध एव जातः तद्विशिष्टबुद्धावयोग्यताज्ञानाभावत्वापेक्षया लाघवेन योग्यताज्ञानत्वेनैव हेतुतासिद्धिः । एवञ्च यद्विषयोरिति व्याप्तिबलाच्छाब्दसामान्ये योग्यताज्ञानत्वेन हेतुतासिद्धिर्दुर्वारेति । एवमिच्छाया उत्तेजकत्वानुरो-

**रामरुद्रीयम्.**

त्यादिनियमोऽप्यप्रयोजक एवेत्यस्वरसादाह ॥ **एवमिच्छाया इत्यादि** ॥ लौकिकसन्निकर्षाजन्यदोषविशेषाजन्यतद्वत्ताबुद्धिसामान्ये तदभावनिश्चयत्वेन सामान्यतः प्रतिबन्धकता न सम्भवति । घटाभाववद्भूतलमिति निश्चयोत्तरमपि घटप्रकारकभूतलविशेष्यकचाक्षुषं मे जायतामितीच्छाबलात् घटादिरूपनयसन्निकर्षेण भूतलादौ चाक्षुषोत्पत्त्या व्यभिचारापत्तेः । किन्तु तच्चाक्षुषेच्छाविरहविशिष्टतदभावनिश्चयत्वेन विशिष्यैव प्रतिबध्यप्रतिबन्धकभावो वक्तव्यः । अनुमितिस्थले च तत्प्रकारकानुमितित्वेन तदभावनिश्चयत्वेनेच्छाविरहविशिष्टत्वमन्तर्भाव्यैव प्रतिबध्यप्रतिबन्धकभावः कल्पनीयः । परोक्षज्ञानस्याहार्यस्यानभ्युपगमात् । एवञ्च शाब्दबुद्धाव-

## प्रभा.

भावात् न तदनुरोधेन योग्यताज्ञानस्य हेतुत्वासिद्धिरिति भावः। अत्र तादृशानुभवे विवाद आहुरित्यस्वरसबीजमिति हृदयम्। केचित्तु आहुरित्यस्वरसः तद्बीजन्तु यद्विषयकमनुमिन्यादिकं न जातं शाब्दबोध एव जातः तद्विशिष्टबुद्धौ अयोग्यताज्ञानाभावत्वापेक्षया लाघवेन योग्यताज्ञानत्वेन हेतुतासिद्धिः। एवञ्च यद्विशेषयोरिति व्याप्तिबलात् शाब्दबोधसामान्ये योग्यताज्ञानत्वेन हेतुतासिद्धिर्दुर्वारैवेति एवं इच्छाया उत्तेजकत्वानुरोधेनायोग्यताज्ञानप्रतिबन्धकत्वस्य विशेषे पर्यवसानात् क्लृप्तप्रतिबध्यतावच्छेदकस्यानुमितित्वादेः शाब्दबोधसाधारण्याभावात् शाब्दबोधे अयोग्यतानिश्चयस्य अतिरिक्तप्रतिबन्धकत्वकल्पने गौरवात् लाघवेन योग्यताज्ञानहेतुत्वं युक्तमिति। नच योग्यताज्ञानस्य हेतुत्वे अप्रामाण्यनिश्चयाभावस्तत्र विशेषणं तदपेक्षया अप्रामाण्यज्ञानाभावविशिष्टायोग्यतानिश्चयाभावस्य हेतुत्वे लाघवमिति वाच्यम्। योग्यताज्ञानस्य हेतुत्वे तदभाववति तत्प्रकारकमित्येकविधाप्रामाण्यग्रहाभावनिवेशेन लाघवात् अयोग्यतानिश्चयस्य प्रतिबन्धकत्वे तु तदभावाभाववति तदभावप्रकारकं तद्वति तदभावप्रकारकमिति द्विविधाप्रामाण्यग्रहाभावनिवेशेन प्रतियोगितासंबन्धावच्छिन्नप्रतियोगिताकतदभाववति अभावे प्रतियोगितासंबन्धेन तत्प्रकारकमिति रीत्या अप्रामाण्यग्रहाभावनिवेशेन च गौरवात् बाधनिश्चयस्येव तदभावव्याप्यतदभावावच्छेदकनिश्चययोः प्रतिबन्धकत्वेन अतिगौरवाच्चेति। एवं योग्यताज्ञानस्य शाब्दबोधाजनकत्वे शाब्दसामग्रीकाले योग्यताज्ञानाभावविशिष्टात्ममानसवारणाय शाब्दबोधसामग्र्याः प्रतिबन्धकत्वं कल्पनीयमिति गौरवं योग्यताज्ञानस्य शाब्दबोधजनकत्वे तु तत्र योग्यताज्ञानाभावरूपविषयाभावादेव न तादृशं मानसमिति तत्र शाब्दबोधसामग्रीप्रतिबन्धकत्वं न कल्प्यत इति लाघवमित्याद्यवसेयमित्याहुस्तदसत्। यद्विषयकमनुमित्यादिकं न जातमित्यारभ्य हेतुत्वासिद्धिर्दुर्वारैवेत्यन्तग्रन्थः अयुक्तः अनुमित्याद्यविषयवस्तुविशेषविषयकशाब्दस्वीकारेऽपि तच्छाब्दबोधोत्तरं तज्जन्यसंस्कारात्कालान्तरे तादृशवस्तुविशेषविषयकतच्छाब्दसमानप्रकारकमानसोत्पत्त्या तस्यापि तद्विशिष्टबुद्धित्वरूपकार्यतावच्छेदकाक्रान्ततया तत्पूर्वं योग्यताज्ञानरूपकारणाभावात् व्यभिचारेण योग्यताज्ञानस्य वस्तुविशेषविशिष्टबुद्धिं प्रत्यपि हेतुत्वासंभवात्। यदि तादृशशाब्दबोधात्मकानुभवजन्यसंस्कारस्य सर्वदा अनुद्बूतत्वमङ्गीकृत्य तादृशवस्तुविशेषविषयकस्मरणाप्रसिद्ध्या तादृशवस्तुविशेषप्रकारकबुद्धिसामान्ये योग्यताज्ञानस्य हेतुतायां नोक्तव्यभिचार इत्युच्यते तदा तादृशशाब्दकारणयोग्यताज्ञानस्यापि वस्तुविशेषप्रकारकबुद्धित्वरूपकार्यतावच्छेदकाक्रान्ततया तत्पूर्वं योग्यताज्ञानरूपकारणाभावेन व्यभिचारस्य दुर्वारत्वा-

## दिनकरीयम्.

धेनायोग्यताज्ञानप्रतिबन्धकत्वस्य विशेषे पर्यवसानात् क्लृप्तप्रतिबध्यतावच्छेदकस्यानुमितित्वादेः शाब्दबोधसाधारण्याभावाच्छाब्दबोधे त्वयोग्यत्वनिश्चयस्यातिरिक्तप्रतिबन्धकताकल्पने गौरवाल्लाघवेन योग्यताज्ञानस्यैव हेतुत्वं युक्तमिति। नच योग्यताज्ञानस्य हेतुत्वेऽप्रामाण्यनिश्चयाभावस्तत्र विशेषणम्। तदपेक्षया अ-

## रामरुद्रीयम्.

योग्यतानिश्चयस्य पृथगेव प्रतिबन्धकत्वं कल्पनीयम्। तदपेक्षया लाघवेन योग्यताज्ञानहेतुताकल्पनमेवोचितमिति भावः। न च प्रत्यक्षान्यतद्वत्ताज्ञानत्वेन तदभावनिश्चयत्वेन अनुमितिस्थले प्रतिबन्धकताकल्पनाच्छाब्दबोधस्थले न प्रतिबध्यप्रतिबन्धकभावान्तरं कल्पनीयमिति वाच्यम्। प्रत्यक्षान्यत्वज्ञानत्वयोर्विशेषणविशेष्यभावे विनिगमनाविरहेण गुरुभूतप्रतिबध्यप्रतिबन्धकभावद्वयापत्त्या प्रतिबध्यतावच्छेदककोटौ शाब्दत्वानुमितित्वे निवेश्य लघुभूतप्रतिबध्यप्रतिबन्धकभावस्यैवोचितत्वादिति भावः॥ **अप्रामाण्यनिश्चयाभाव इति**॥ संशयनिश्चयसाधारणज्ञानं यत्र हेतुः तत्राप्रामाण्यसन्देहो न कारणताविघटकः। ज्ञाने अप्रामाण्यसन्देहेन विषयसन्देहस्यैव जननात् सन्देहस्यापि कारणत्वादतस्तत्राप्रामाण्यनिश्चयस्यैव कारणताविघटकत्वेन निश्चयाभाव एव कारणतावच्छेदककोटौ निवेशनीय इति निश्चयत्वांशस्य निवेशनीयतया गौरवम्। अयोग्यतानिश्चयस्य प्रतिबन्धकत्वे तु अप्रामाण्यसन्देहस्यापि प्रतिबन्धकताविघटकत्वेनाप्रामाण्यज्ञानसामान्याभाव एव प्रतिबन्धकतावच्छेदककोटौ निवेशनीय इति निश्चयत्वांशानिवेशप्रयुक्तलाघवमिति भावः। यद्यप्ययोग्यतानि-

## प्रभा

तत्रापि योग्यताज्ञानस्य हेतुत्वासंभवेन यद्विशेषयोरिति व्याप्त्यप्रसक्त्या तद्बलात् शाब्दसामान्ये योग्यताज्ञानत्वेन हेतुतासिद्धेस्सुदूरपराहतत्वात् । किञ्च एवं इच्छायाः उत्तेजकत्वानुरोधेनेत्यारभ्य योग्यताज्ञानहेतुत्वं युक्तमित्यन्तग्रन्थोऽप्ययुक्तः अनुमितिं प्रति समानाकारकनिर्णयात्मकसिद्धेः प्रतिबन्धकतायां तादृशसिद्धिकालीनानुमितीच्छाबलादनुमित्युत्पत्त्या अनुमितिर्जायतामितीच्छानां उत्तेजकत्वेऽपि निरुक्तबाधनिश्चयप्रतिबन्धकतायां तादृशबाधनिर्णयकालीननिरुक्तेच्छासहस्रबलादपि अनुमित्युत्पादस्य कस्याप्यननुमततया अलीकत्वेन तत्र तादृशेच्छानां उत्तेजकत्वे मानाभावः । यदिच बाधनिश्चयसत्त्वेऽपि प्रत्यक्षं जायतामितीच्छासत्त्वे विशिष्टप्रत्यक्षोत्पत्त्या तद्विशिष्टप्रत्यक्षत्वावच्छिन्नं प्रति इच्छाविरहविशिष्टबाधनिश्चयस्य अनुमितित्वावच्छिन्नं प्रति केवलबाधनिश्चयस्य प्रतिबन्धकत्वे व कव्ये तत्र लाघवात् शाब्दत्वावच्छिन्नं प्रति योग्यताज्ञानस्यैव हेतुत्वं स्वीक्रियत इत्याशय इत्युच्यते तथापि तादृशबाधनिश्चयोत्तरं लौकिकसन्निकर्षजन्यस्य दोषविशेषजन्यस्य च विशिष्टप्रत्यक्षस्यैवोत्पत्त्या व्यभिचारवारणाय प्रतिबध्यतावच्छेदककोटौ लौकिकसन्निकर्षाजन्यत्वदोषविशेषाजन्यत्वे निवेश्य तादृशविशेषणविशिष्टप्रत्यक्षत्वावच्छिन्नं प्रतीच्छाविरहविशिष्टबाधनिश्चयस्य अनुमितित्वरूपप्रत्येकधर्मावच्छिन्नं प्रति केवलबाधनिश्चयस्य प्रतिबन्धकत्वं वाच्यम् । एवंच अनेकप्रतिबध्यप्रतिबन्धकभावकल्पनापेक्षया तदभावानामनेकेषां कारणत्वकल्पनापेक्षया शाब्दबोधे योग्यताज्ञानस्य हेतुत्वान्तरकल्पनापेक्षया च लाघवाल्लौकिकसन्निकर्षाजन्यदोषविशेषाजन्यानाहार्यविशिष्टबुद्धित्वस्यैव निरुक्तबाधनिर्णयप्रतिबध्यतावच्छेदकत्वावश्यकतया तादृशधर्मस्य शाब्दबोधसाधारण्यात् शाब्दबोधे अयोग्यतानिश्चयस्यैव पृथक् प्रतिबन्धकत्वकल्पनाप्रयुक्तगौरवाभावेन उक्तरीत्यापि तत्र योग्यताज्ञानहेतुत्वस्यायुक्तत्वात् । एवं नच योग्यताज्ञानस्य हेतुत्वेत्यारभ्य अतिगौरवाच्चेत्यन्तग्रन्थोऽप्यलग्नः योग्यताज्ञानहेतुतापक्षे तदभाववति तत्प्रकारकत्वाभावाप्रकारकत्वे सति तत्प्रकारकज्ञानत्वरूपप्रामाण्यनिश्चयत्वावच्छिन्नप्रतियोगिताकाभावविशिष्टयोग्यताज्ञानत्वेन योग्यताज्ञानविशिष्टनिरुक्ताप्रामाण्यनिश्चयत्वावच्छिन्नप्रतियोगिताकाभावत्वेन वा हेतुतेत्यत्र विनिगमनाविरहेण गुरुतरकार्यकारणभावद्वयापत्त्या अतिगौरवेण लाघवलेशस्य अप्रसक्तेः । यच्चोक्तं अयोग्यतानिश्चयरूपबाधनिश्चयस्य प्रतिबन्धकत्वे तदभावाभाववति तदभावप्रकारकं तद्वति तदभावप्रकारक-

## दिनकरीयम्

प्रामाण्यज्ञानाभावविशिष्टायोग्यतानिश्चयाभावस्य हेतुत्वे लाघवमिति वाच्यम् । योग्यताज्ञानस्य हेतुत्वे तदभाववति तत्प्रकारकमित्येकविधाप्रामाण्यग्रहाभावनिवेशेन लाघवात् । अयोग्यतानिश्चयस्य प्रतिबन्धकत्वे तु तदभावाभाववति तदभावप्रकारकं तद्वति तदभावप्रकारकमिति द्विविधाप्रामाण्यग्रहाभावनिवेशेन प्रतियोगितासम्बन्धावच्छिन्नप्रतियोगिताकतदभाववत्यभावे प्रतियोगितासम्बन्धेन तत्प्रकारकमित्यप्रामाण्यग्र-

## रामरुद्रीयम्

श्चयाभावत्वेन कारणत्वेऽपि निश्चयत्वांशनिवेश आवश्यक एव तथापि तदप्रकारकत्वे सति तदभावप्रकारकत्वरूपायोग्यतानिश्चयत्वापेक्षया तदभाववति तत्प्रकारकत्वरूपाप्रामाण्याभाववति तादृशाप्रामाण्यप्रकारकत्वरूपाप्रामाण्यनिश्चयत्वस्य गुरुतया अयोग्यतानिश्चयत्वमेव कारणतावच्छेदककोटौ निवेशयितुमुचितमिति भावः ॥ **योग्यताज्ञानस्य हेतुत्व इत्यादि** ॥ भूतलं घटवदित्यादिशाब्दबोधे भूतलविशेष्यकघटप्रकारकज्ञानं कारणम् । तत्र चाप्रामाण्यज्ञानं घटाभाववति घटप्रकारकमित्येकविधमेव । भूतलविशेष्यकघटाभावप्रकारकनिश्चयधर्मिकं चाप्रामाण्यज्ञानं घटाभावाभाववति घटाभावप्रकारकं घटवति घटाभावप्रकारकं प्रतियोगितया घटाभाववत्यभावे प्रतियोगितया घटप्रकारकमिति त्रिविधम् । तथाच त्रिविधाप्रामाण्यज्ञाननिवेशापेक्षया एकविधाप्रामाण्यनिश्चयाभाव एव लाघवमिति भावः । एवं यत्र तदभावनिश्चयः प्रतिबन्धकस्तत्र तदभावव्याप्यवत्तानिश्चयः तदभावावच्छेदकत्वेन गृहीतो यो धर्मः तन्निश्चयः प्रतिबन्धक इति तादृशनिश्चयाभावस्य कारणता अयोग्यत्वनिश्चयाभावहेतुतावादिना कल्पनीया । योग्यताज्ञानहेतुतावादिना तु न कल्पनीया । तादृशान्यतमनिश्चयसत्त्वे योग्यताज्ञानरूपकारणविरहादेव शाब्दबोधवारणसंभवादिति

## प्रभा.

मिति द्विविधाप्रामाण्यग्रहाभावस्य प्रतियोगितासंबन्धावच्छिन्नप्रतियोगिताकतदभावाभावविशेष्यकं प्रति-योगितासंबन्धेन तत्प्रकारकमित्यप्रामाण्यग्रहाभावस्य च प्रतिबन्धकतावच्छेदककोटिप्रवेशेन गौरवमिति त-दप्यसङ्गतं यादृशाप्रामाण्यज्ञानव्यक्तीनां उत्तेजकत्वं सर्वानुमतं तत्तदप्रामाण्यज्ञानव्यक्तित्वावच्छिन्नसमवाय-संबन्धावच्छिन्नप्रतियोगिताकाभावकूटस्य एककालावच्छिन्नैकात्मवृत्तित्वसंबन्धेन प्रतिबन्धकीभूतबाधनिश्चय-विशेषणत्वेऽप्येककालावच्छिन्नत्वघटितनिरुक्तसंबन्धेन तादृशाभावकूटविशिष्टबाधनिश्चयत्वावच्छिन्नसमवायसं-बन्धावच्छिन्नप्रतियोगिताकाभावरूपप्रतिबन्धकाभावस्यैकव्यक्तितया तस्य निरुक्तगुरुरूपेण हेतुत्वेऽपि कार्यका-रणभावद्वयकल्पनापेक्षया लाघवस्यानपायान्निरुक्तप्रतिबन्धकाभावस्य स्वरूपसंबन्धरूपतद्व्यक्तित्वात्मकलघुध-र्मेण हेतुतासंभवाच्च । नचैतन्मते तत्तदप्रामाण्यज्ञानव्यक्त्यभावकूटविशिष्टबाधनिश्चयत्वेन बाधनिश्चयविशिष्ट-तादृशाभावकूटत्वेन वा प्रतिबन्धकतेत्यत्र विनिगमनाविरहात् प्रतिबध्यप्रतिबन्धकभावद्वयापत्तिरिति वाच्य-म् । बाधनिश्चयविशिष्टतादृशाभावकूटस्य ग्राह्याभावाद्यनवगाहित्वेन प्रतिबन्धकत्वाप्रसक्त्या विनिगमनाविरहप्र-युक्तप्रतिबध्यप्रतिबन्धकभावद्वयापत्तेः सुदूरपराहतत्वात् । नचैवमपि तादृशकूटविशिष्टबाधनिश्चयाभावस्य तत्त-द्व्यक्तित्वेन बाधनिश्चयविशिष्टनिरुक्तकूटाभावस्य तत्तद्व्यक्तित्वेन वा हेतुतेत्यत्र विनिगमनाविरहात् कार्यकारणभा-वद्वयापत्त्या अतिगौरवप्रसङ्ग इति वाच्यम् । निरुक्ताभावयोः समनियतत्वेन एकतया तन्निष्ठतद्व्यक्तित्वस्याप्ये-कत्वेन कारणतावच्छेदकद्वयाप्रसक्त्या सुतरां कार्यकारणभावद्वयाप्रसक्तेः । नचाभावयोरैक्ये कारणीभूताभावप्र-तियोगित्वेन बाधनिश्चयविशिष्टोत्तेजकाभावकूटस्यापि प्रतिबन्धकत्वापत्तिरिति वाच्यम् । प्रकृते तु कारणीभू-ताभावीयसमवायसंबन्धावच्छिन्नप्रतियोगिकत्वस्यैव प्रतिबन्धकत्वपदार्थत्वेन निरुक्ताभावकूटनिष्ठप्रतियोगि-त्वस्य समवायसंबन्धावच्छिन्नत्वाभावात् तादृशकूटस्य प्रतिबन्धकत्वापत्तेरभावात् । यच्चोक्तं बाधनिश्चयस्य प्रतिबन्धकतामते बाधनिश्चयस्येव तदभावव्याप्यतदभावावच्छेदकनिश्चययोरपि प्रतिबन्धकत्वावश्यकतया अतिगौरवापत्तिरिति तदप्यसङ्गतं योग्यताज्ञानहेतुतामतेऽपि योग्यताज्ञानोत्तरं बाधनिश्चयासंभवेऽपि तदभाव-व्याप्यवत्ताज्ञानादिकं प्रति योग्यताज्ञानस्याविरोधितया तदुत्तरं तदभावव्याप्यवत्तानिर्णयाद्युत्पत्तौ बाधका-भावेन यत्र योग्यताज्ञानोत्तरं तादृशनिर्णयाद्युत्पत्तिः तत्र तदुत्तरं शाब्दबोधापत्तिवारणाय तादृशशाब्दबोधं प्रति तदभावव्याप्यवत्तानिश्चयादेः प्रतिबन्धकत्वावश्यकत्वात् । अपिच योग्यताज्ञानस्य शाब्दबोधाजनक-त्वेत्यारभ्य लाघवमित्याद्यवसेयमित्यन्तग्रन्थोऽप्यलग्नः । बाधनिश्चयाभावघटितयोग्यताशाब्दसामग्रीकाले यो-ग्यताज्ञानस्य अनावश्यकतया यत्र योग्यताज्ञानाभावस्तत्र तादृशज्ञानाभावविशिष्टात्ममानसापत्तिवारणाय तादृशसामग्र्याः प्रतिबन्धकत्वावश्यकतया गौरवम् योग्यताज्ञानस्य हेतुत्वे तु तदानीं योग्यताज्ञानाभाव-रूपविषयाभावादेव न मानसप्रत्यक्षापत्तिरिति शाब्दसामग्र्याः प्रतिबन्धकत्वाकल्पनेन लाघवमित्यपि न । आत्म-नि वर्तमानाः यावन्तः पदार्थाः तत्तत्प्रकारेण आत्ममानसत्वावच्छिन्नं प्रति शाब्दसामग्र्याः पृथक् प्रतिब-

## दिनकरीयम्.

ग्रहाभावनिवेशेन च गौरवात् बाधनिश्चयस्येव तदभावव्याप्यतदभावावच्छेदकनिश्चययोः प्रतिबन्धकत्वेनाति-गौरवाच्चेति । एवं योग्यताज्ञानस्य शाब्दबोधाजनकत्वे शाब्दसामग्रीकाले योग्यताज्ञानाभावविशिष्टात्ममान-सवारणाय तत्र शाब्दसामग्र्याः प्रतिबन्धकत्वं कल्पनीयमिति गौरवात् । योग्यताज्ञानस्य शाब्दबोधजनकत्वे तु तत्र योग्यताज्ञानाभावरूपविषयाभावादेव न तादृशमानसमिति तत्र शाब्दसामग्रीप्रतिबन्धकत्वं न कल्प्यत

## रामरुद्रीयम्.

लाघवमित्याह ॥ **बाधनिश्चयस्येवेति** ॥ **शाब्दबोधाजनकत्व इति** ॥ अयोग्यताज्ञानाभावस्यैव शा-ब्दबोधकारणत्वपक्ष इत्यर्थः ॥ **शाब्दसामग्रीकाले** ॥ अयोग्यतानिश्चयाभावघटितसामग्रीसत्त्व इत्यर्थः ॥ **योग्यताज्ञानाभावेति** ॥ एकपदार्थे अपरपदार्थप्रकारकज्ञानाभाववानहमिति मानसप्रत्यक्षं प्रति भूतलं घटवदित्यादिशाब्दसामग्र्याः प्रतिबन्धकत्वं कल्पनीयमित्यर्थः । भिन्नविषये शाब्दसामग्र्या बलवत्त्वादि-ति भावः ॥ **न कल्पनीयमितीति** ॥ योग्यताज्ञानघटितशाब्दसामग्रीसत्त्वे तदभावरूपविषयाभावादेव

यत्पदेन विना यस्याननुभावकता भवेत् ॥
आकाङ्क्षा वक्तुरिच्छा तु तात्पर्यं परिकीर्तितम् ॥ ८४ ॥

आकाङ्क्षां निर्वक्ति ॥ **यत्पदेनेत्यादि** ॥ येन पदेन विना यत्पदस्यान्वयाननुभावकत्वं तेन पदेन सह तस्याकाङ्क्षेत्यर्थः । क्रियापदं विना कारकपदं नान्वयबोधं जनयति । तेन

**प्रभा.**

न्धकत्वकल्पनापेक्षया लाघवेन विषयमनिवेश्य मानसत्वावच्छिन्नं प्रति शाब्दसामग्रीत्वेनैकप्रतिबन्धकत्वस्यैवाङ्गीकरणीयतया तेनैव योग्यताज्ञानाभावविशिष्टात्ममानसकारणे तादृशमानसत्वावच्छिन्नं प्रति शाब्दसामग्र्याः प्रतिबन्धकत्वान्तराप्रसक्त्या तन्मतेऽपि गौरवाभावात् । तस्मात् योग्यताज्ञानहेतुतायां प्रमाणलेशादर्शनेन तन्मतं अनादरणीयामिति हृदयम् ॥ ८२ ॥ ८३ ॥

**यत्पदेन विनेति** ॥ यत्पदेन विनेत्यादियथाश्रुतमूलात्समभिव्याहृतपदनिष्ठशाब्दबोधजनकत्वाभावः यत्पदव्यतिरेकप्रयुक्तः स एव समभिव्याहृतपदार्थनिष्ठतत्पदनिरूपिताकाङ्क्षेत्यर्थो लभ्यते । तदनुपपन्नं तस्यास्स्वरूपसदुपयोगित्वेऽपि तज्ज्ञानस्य शाब्दबोधाजनकत्वेन तज्ज्ञानस्य हेतुत्वप्रतिपादकासत्तियोग्यतेत्यादिपूर्वग्रन्थविरोधापत्तेः । आकाङ्क्षाया अभावरूपत्वे उत्थितोत्थाप्याकाङ्क्षयोरुत्कर्षापकर्षौ न स्याताम् । अभावे उत्कर्षापकर्षाभावादिति दोषप्रदर्शनपूर्वकाकाङ्क्षाया अभावरूपतानिरासकमणिग्रन्थविरोधापत्तेश्च अतस्तादृशमूलमन्यथा व्याचष्टे ॥ **मुक्तावळ्यां येन पदेन विनेति** ॥ यत्पदव्यतिरेकप्रयुक्त इत्यर्थः ॥ **यत्पदस्येति** ॥ षष्ठ्यर्थो वर्तमानत्वं तस्याननुभावकत्वेऽन्वयः ॥ **अन्वयाननुभावकत्वमिति** ॥ तात्पर्यविषयशाब्दबोधप्रयोजकत्वाभाव इत्यर्थः ॥ **तेन पदेन सहेति** ॥ तत्पदनिरूपितनियतानुपूर्व्याश्रयत्वमित्यर्थः ॥ **तस्याकाङ्क्षेति** ॥ तत्पदनिष्ठाकाङ्क्षेत्यर्थः । एकपदस्याभिमतशाब्दबोधप्रयोजकत्वाभावः अपरपदव्यतिरेकप्रयुक्त इत्यनेन परपदसहायेनैव एकपदस्याभिमतशाब्दबोधोपयोगित्वमित्यर्थो लभ्यते । तथाच तात्पर्यविषयशाब्दबोधविषयतत्तदर्थविषयकस्मृतिनिरूपितज्ञाननिष्ठकारणतानिरूपितविषयतासंबन्धावच्छिन्नावच्छेदकताश्रयपदद्वयान्यतरानिरूपिततादृशपदद्वयान्यतरनिष्ठनियतानुपूर्व्याश्रयत्वं तादृशशाब्दबोधौपयिकाकाङ्क्षेति फ-

**दिनकरीयम्.**

इति लाघवमित्याद्यवसेयम् ॥ ८२ ॥ ८६ ॥ **तेन पदेन सह तस्येति** ॥ तत्पदविशिष्टत्वं तत्पदस्येत्यर्थः । घटमानयेत्यत्र घटपदं विना अम्पदस्यान्वयाननुभावकत्वाद्घटपदविशिष्टत्वमम्पदे आकाङ्क्षा । घटः कर्मत्वमित्यादौ कर्मत्वपदे घटपदवत्त्वं तु नाकाङ्क्षा कर्मत्वपदे घटीया कर्मतेति शाब्दबोधाननुभावकत्वस्य घटपदविरहाप्रयुक्तत्वात् । अत्र चाननुभावकत्वं तादृशपदपरिचायकं न त्वाकाङ्क्षास्वरूपान्तर्गतम् । यद्वा अननुभावकत्वमप्याकाङ्क्षास्वरूपान्तर्गतम् । शाब्दबोधे तस्य स्वरूपत एवोपयोगः । तेन जनितान्वयबोधकाद्वाक्यान्न पुनरन्वय-

**रामरुद्रीयम्.**

न प्रत्यक्षसामग्री योग्यताज्ञानाभावे तु शाब्दसामग्र्यभावात् तादृशप्रत्यक्षे इष्टापत्तिरेवेति भावः ॥ ८२ ॥ ८३ ॥

ननु मूले तेन पेदन सह तस्याकाङ्क्षेत्युक्तम् । नैतावताकाङ्क्षाज्ञानस्वरूपनिर्वाह इत्यस्वरसाद्व्याचष्टे ॥ **तत्पदविशिष्टत्वमिति** ॥ अव्यवहितपूर्ववृत्तित्वाव्यवहितोत्तरत्वान्यतरसम्बन्धेनेत्यादिः । तथाच येन पदेन विना यत्पदस्य यादृशशाब्दबोधाजनकत्वं उक्तान्यतरसम्बन्धेन तत्पदविशिष्टतत्पदत्वं तादृशशाब्दबोधप्रयोजकाकाङ्क्षेति भावः ॥ **अत्र चेति** ॥ अम्पदे घटपदाव्यवहितोत्तरत्वज्ञानसत्त्वे अम्पदे घटपदं विना शाब्दबोधाजनकत्वज्ञानविळम्बेन शाब्दबोधविळम्बस्याननुभवादम्पदस्य घटपदाव्यवहितोत्तरत्वमेवाकाङ्क्षा । अम्पदे घटपदज्ञानं विना शाब्दबोधाजनकत्वं नाकाङ्क्षाशरीरे निविष्टम् । तदुक्तिस्तु अम्पदघटपदादीनां विशिष्य ज्ञानार्थमेव । घटपदकर्मत्वपदयोस्तु न तादृशत्वं कर्मत्वपदस्य घटीया कर्मतेति शाब्दबोधाजनकताया घटपदविरहाप्रयुक्तत्वात् । घटपदसत्त्वेऽपि तस्य तथाविधशाब्दबोधाजनकत्वादिति भावः । ननु एवमपि जनितान्वयशाब्दबोधस्थले पुनः शाब्दबोधापत्तिरित्यस्वरसादाह ॥ **यद्वेति** ॥ **स्वरूपत एवे-**

**तस्याकाङ्क्षा । वस्तुतस्तु क्रियाकारकपदानां सन्निधानमासत्त्या चरितार्थम् । परं तु घटकर्म-तावोधं प्रति घटपदोत्तरद्वितीयारूपाकाङ्क्षाज्ञानं कारणम् । तेन घटः कर्मत्वमानयनं कृति-**

**प्रभा.**

लितम् । घटमानयेत्यादौ घटकर्मकानयनानुकूलकृतिमानित्यभिमतशाब्दबोधनिरूपिततादृशवाक्यज्ञाननिष्ठकारणतानिरूपितविषयतासंबन्धावच्छिन्नावच्छेदकताश्रयं द्वितीयान्तघटपदलोडन्ताङ्पूर्वकतिङन्तनीङ्धातुपदद्वयं तयोर्मध्ये आङ्पूर्वकनीङ्धातोः द्वितीयान्तघटपदोच्चारणोत्तरकालीनोच्चारितत्वरूपानियतानुपूर्व्याश्रयत्वात् तादृशद्वितीयान्तघटपदस्य तादृशनीङ्धातुपदोच्चारणपूर्वकालीनोच्चारितत्वरूपनियतानुपूर्व्याश्रयत्वाच्च तादृशपदयोः परस्परसाकाङ्क्षत्वोपपत्तिः । ननु घटमानयेति वाक्यादिवानय घटमिति वाक्यादप्यभिमतशाब्दबोधजननात् द्वितीयान्तघटपदनिरुक्तनीङ्धातुपदयोस्तत्पदोच्चारणोत्तरकालीनोच्चरितत्वतत्पदोच्चारणपूर्वकालीनोच्चरितत्वयोः मध्ये एकानुपूर्व्या नियमेन वक्तुमशक्यत्वात्तयोः पदयोरन्यतरनिरूपितान्यतरनिष्ठनियतानुपूर्व्याश्रयत्वरूपाकाङ्क्षाभावात्तादृशशाब्दबोधे तयोस्साकाङ्क्षत्वं न स्यादित्याशङ्कामिष्टापत्त्या परिहरति ॥ **वस्तुतस्त्विति** ॥ **क्रियाकारकपदानामिति** ॥ लोडन्तनीङ्धात्वादिपदद्वितीयान्तघटादिपदानामित्यर्थः ॥ **सन्निधानमासत्त्येति** ॥ तत्पदाव्यवहितोत्तरत्वतत्पदाव्यवहितपूर्वत्वान्यतरवत्त्वरूपासत्त्यभिन्नसन्निधानमेवेत्यर्थः ॥ **चरितार्थ इति** ॥ भवतीति शेषः । क्रियाकारकपदसमभिव्याहृतवाक्याधीनाभिमतशाब्दजननसमर्थ इत्यर्थः । तथाच द्वितीयान्तघटपदाव्यवहितोत्तरत्वतादृशपदाव्यवहितपूर्वत्वान्यतरवत्त्वरूपासत्तिमत्त्वप्रकारकानयनपदविषयकज्ञानादेव घटमानयेति वाक्यज्ञानाधीनाभिमतशाब्दबोधोपपत्तौ तादृशशाब्दबोधे निरुक्ताकाङ्क्षाज्ञानस्य हेतुत्वानङ्गीकारेऽपि क्षतिविरहात् क्रियाकारकपदयोः निरुक्ताकाङ्क्षाभावेऽपि न क्षतिरिति भावः । नन्वेवं सति व्यभिचारादाकाङ्क्षाज्ञानस्य शाब्दसामान्यहेतुत्वानुपपत्तिरत आह ॥ **परन्त्विति** ॥ **घटकर्मतावोधं प्रतीति** ॥ आधेयतासंबन्धेन घटप्रकारककर्मत्वविशेष्यकशाब्दत्वावच्छिन्नं प्रतीत्यर्थः ॥ **घटपदोत्तरद्वितीयारूपेति** ॥ घटपदोत्तरत्वरूपनियतानुपूर्वीप्रकारकद्वितीयाविशेष्यकाभिन्नाकाङ्क्षाज्ञानादीत्यर्थः । इदमुपलक्षणम् । द्वितीयापदपूर्वत्वरूपनियतानुपूर्वीरूपाकाङ्क्षाप्रकारकंघटपदविशेष्यकज्ञानमपि कारणं एवमनुकूलतासंबन्धेन आनयनप्रकारककृतिविशेष्यकशाब्दत्वावच्छिन्नं प्रति नीङ्धातुपदोत्तरत्वरूपनियतानुपूर्व्याकाङ्क्षाप्रकारकं लोट्पदविशेष्यकज्ञानं लोट्पदपूर्ववृत्तित्वरूपानियतानुपूर्व्यभिन्नाकाङ्क्षाप्रकारकाङ्पूर्वकनीङ्धातुविशेष्यकज्ञानं च प्रत्येकरूपेण तादृशज्ञानद्वयान्यतरत्वेन वा कारणमित्यपि बोध्यम् । तथाच घटकर्मकानयनानुकूलकृतिप्रकारकशाब्दत्वव्यापकं आधेयतासंबन्धेन घटप्रकारककर्मत्वविशेष्यकशाब्दत्वं अनुकूलतासंबन्धेनानयनप्रकारककृतिविशेष्यकशाब्दत्वञ्च तत्तद्व्यापकधर्मावच्छिन्नं प्रति तत्तदाकाङ्क्षाप्रकारकज्ञानानां हेतुत्वस्वीकारेणैव तत्तदाकाङ्क्षाज्ञानशून्यकाले व्यापकधर्मावच्छिन्नोत्पादकसामग्र्यभावेन

**दिनकरीयम्.**

बोधपत्तिः । एकपदे परपदवत्त्वांशश्च ज्ञात एवोपयुज्यते ॥ **तेन** क्रियापदेन ॥ **तस्य** कारकपदस्य ॥ अत्र चैकपदेऽपरपदवत्त्वमपरपदाव्यवहितोत्तरत्वम् । तत्र चाव्यवधानांशस्यासत्त्यैव लाभः । आसत्तेः पदाव्यवधानरूपतायाः पूर्वमुपवर्णितत्वात् । उत्तरत्वं च क्रियाकारकपदयोर्नापेक्षितम् । चैत्रः पचति पचति चैत्र इति वाक्यद्वयादप्यन्वयबोधादतः क्रियाकारकपदयोराकाङ्क्षा नास्त्येव । किन्तु प्रकृतिप्रत्यययोरेव । तत्राप्यव्यवधानांशस्यासत्त्या लाभात् प्रत्यये प्रकृत्युत्तरत्वरूपाकाङ्क्षाज्ञानं कारणमित्याह ॥ **वस्तुतस्त्वित्यादि-**

**रामरुद्रीयम्.**

**ति** ॥ तज्ज्ञानस्य शाब्दबोधे नोपयोग इति भावः । ननु क्रियाकारकपदानां सन्निधानमासत्त्या चरितार्थमिति मूलमसङ्गतम् । अव्यवधानरूपसन्निधानस्य आकाङ्क्षात्वानुपगमात् । किन्त्वुक्तान्यतरसंबन्धेनैकपदे अपरपदवत्त्वस्यैवाकाङ्क्षारूपत्वेन पूर्वमभ्युपगतत्वात् । अतस्तद्र्थं सङ्गमयितुमाह ॥ **अत्रेति** ॥ **अव्यवहितोत्तरत्वमिति** ॥ अव्यवहितोत्तरत्वादीनां सम्बन्धत्वे मानाभावादिति भावः । ननु पदाव्यवधानस्य आसत्तिरूपत्वेऽपि उत्तरत्वांशस्याकाङ्क्षात्वं स्वीकरणीयमित्यत आह ॥ **उत्तरत्वंचेति** ॥ इदं च पदयोरव्यवधानमासत्तिरिति

रित्यत्र न शाब्दबोधः। अयमेति पुत्रो राज्ञः पुरुषोऽपसार्यतामित्यादौ तु पुत्रेण सह राजपदस्य तात्पर्यग्रहसत्त्वात् तेनैवान्वयबोधः। पुरुषेण सह तात्पर्यग्रहे तु तेन सह

## प्रभा.

विशिष्टशाब्दत्वरूपव्याप्यधर्मावच्छिन्नस्याप्युत्पत्त्या व्यभिचाराभावेन व्यापकधर्मावच्छिन्नोत्पादकसामग्र्याः निरुक्तव्याप्यधर्मावच्छिन्ननियतपूर्ववृत्तित्वमव्याहतमेव । परन्तु किञ्चित्प्रयोजनाभावात् व्याप्यधर्मावच्छिन्नं प्रत्यनन्यथासिद्धत्वघटितकारणत्वं नाङ्गीक्रियत इति भावः। ननु निरुक्ततत्तद्व्यापकधर्मावच्छिन्नं प्रत्यपि तत्तदाकाङ्क्षाज्ञानस्य हेतुत्वे मानाभाव इत्याशङ्कां प्रमाणप्रदर्शनेन परिहरति ॥ **तेनेति** ॥ तत्तद्व्यापकधर्मावच्छिन्नं प्रति तत्तदाकाङ्क्षाज्ञानस्य हेतुत्वेनेत्यर्थः ॥ **इत्यत्रेति** ॥ इति वाक्यादित्यर्थः। सर्वविभक्तिषु त्रलो विधानादिति भावः। क्वचित्पुस्तके इत्यत इति पाठः स ऋजुरेव ॥ **न शाब्दबोध इति** ॥ आधेयतासंसर्गेण घटप्रकारककर्मत्वविशेष्यकशाब्दबोधः अनुकूलतासंबन्धेनानयनप्रकारककृतिविशेष्यकशाब्दबोधश्च नोत्पत्तुमर्हतीत्यर्थः। तथाच घटःकर्मत्वमितिवाक्यस्येव कर्मत्वंघटइतिवाक्यस्याप्युच्चारयितुं शक्यत्वेन घटपदकर्मपदयोः नियतानुपूर्व्याश्रयत्वरूपाकाङ्क्षाभावादभ्रान्तस्य तादृशपदयोः साकाङ्क्षत्वज्ञानाभावेन तच्छाब्दत्वरूपव्यापकधर्मावच्छिन्नोत्पत्त्यापत्तिः। निरुक्ताकाङ्क्षादिज्ञानस्य हेतुत्वे घटः कर्मत्वमित्यादिवाक्येषु निरुक्तासत्तियोग्यतायास्सत्त्वादभ्रान्तस्यासत्त्यादिज्ञानसंभवेन ततस्तच्छाब्दत्वरूपव्यापकधर्मावच्छिन्नोत्पत्तेर्दुर्वारत्वादिति भावः। इदमुपलक्षणं समासस्थलेऽप्यभेदसंबन्धेन राजसंबन्धिप्रकारकपुरुषविशेष्यकशाब्दबोधं प्रति राजपदपुरुषपदान्यतरनिरूपिततादृशान्यतरनिष्ठनियतानुपूर्वीरूपाकाङ्क्षाज्ञानं कारणं तेन राजपुरुष इति वाक्यादिव राजा पुरुष इति वाक्यात् न तादृशशाब्दबोधः। राजा पुरुष इति वाक्यस्येव पुरुषो राजा इति वाक्यस्याप्युच्चारयितुं शक्यत्वेन प्रथमान्तराजपदपुरुषपदयोः नियतानुपूर्वीरूपाकाङ्क्षाभावेनाभ्रान्तस्य तादृशाकाङ्क्षाज्ञानाभावादित्यपि बोध्यम्। ननु नियतानुपूर्व्या आकाङ्क्षारूपत्वे तज्ज्ञानस्य सर्वत्राहेतुत्वे च अयमेति पुत्रो राज्ञः पुरुषोऽपसार्यतामित्यादौ पुत्रपदषष्ठ्यन्तराजपदाभ्यामिव पुरुषपदराजपदाभ्यां शाब्दबोधापत्तिः आसत्तियोग्यतयोरुभयत्र सत्त्वात् आकाङ्क्षाया अनपेक्षितत्वादत आह ॥ **अयमेतीति** ॥ **इत्यादाविति** ॥ इत्यादिवाक्य इत्यर्थः। घटकत्वं सप्तम्यर्थः तस्य पुत्रपदराजपदयोरन्वयः ॥ **पुत्रेण सह राजपदस्येति** ॥ पुत्रपदसहकृतराजपदस्येत्यर्थः। षष्ठ्यर्थो विशेष्यत्वं तस्य ग्रहे अन्वयः ॥ **तात्पर्यग्रहादिति** ॥ राजसंबन्धप्रकारकपुत्रविशेष्यकप्रतीतीच्छयोच्चारितत्वरूपतात्पर्यप्रकारकनिश्चयादित्यर्थः ॥ **तेनैवेति** ॥ पुत्रपदार्थेनैवेत्यर्थः ॥ **अन्वयबोध इति** ॥ षष्ठ्यन्तराजपदार्थराजसंबन्धप्रकारकशाब्दबोध इत्यर्थः ॥ **पुरुषेण सहेति** ॥ पुरुषपदेन सहेत्यर्थः ॥ **तात्पर्यग्रहे त्विति** ॥ षष्ठ्यन्तराजपदस्येत्यादिः तुशब्दः क्वाचित्काभिप्रायः तथाच क्वचित्पुरुषपदसमभिव्याहृतषष्ठ्यन्तराजपदाविशेष्यकराजसंबन्धप्रकारकपुरुषाविशेष्यकप्रतीतीच्छयोच्चारितत्वरूपतात्पर्यप्रकारकानिर्णये सतीति फलितोऽर्थः ॥ **तेन सहेति** ॥ तादृशतात्पर्यज्ञानादित्यादिः। पुरुषेण सहेत्यर्थः ।

## दिनकरीयम्.

**ना** ॥ नन्वयमेति पुत्रो राज्ञ इत्यादावजनितान्वयबोधदशायां राजपदस्य पुत्रपदेनेव पुरुषपदेनाप्याकाङ्क्षासत्त्वाद्राज्ञः पुरुष इत्यन्वयबोधः स्यादत आह ॥ **अयमेतीति** ॥ तथाच राजपदपुरुषपदयोराकाङ्क्षायाः

## रामरुद्रीयम्.

प्राचीनमताभिप्रायेणोक्तम्। ग्रन्थकृन्मते तु पदज्ञानयोरव्यवधानस्यैवासत्तित्वेन तस्य च स्वरूपत एव शाब्दबोधकारणत्वेनाप्यव्यवधानांशस्यापि नासत्त्या चरितार्थता । परंतु क्रियाकारकपदज्ञानयोरव्यवधानेनैव शाब्दबोधनिर्वाहे क्रियाकारकपदयोः पौर्वापर्यस्यानियमेन च तत्रैव नाकाङ्क्षाज्ञानस्योपयोग इति । वस्तुतो मौनिश्लोकानुरोधेनाग्रे एकपदज्ञाने अपरपदज्ञानवत्त्वस्यैवाकाङ्क्षात्वेनोपगन्तव्यतया तदभिप्रायेणैवाव्यवधानांशस्यासत्त्या चरितार्थतोक्तेत्यवधेयम् ॥ **अन्वयबोधः स्यादिति** ॥ इदञ्च यत्पदेन विना यत्पदस्य नान्वयानुभावकत्वमित्यंशस्य पदद्वयपरिचायकत्वपक्षमादृत्योक्तम्। तदंशस्याप्याकाङ्क्षाशरीरान्तर्गतत्वे तु तस्य स्वरूपतः शाब्दबोधकरणत्वेन पुरुषपदं विना पुत्रपदेन सह राजपदस्य जनितान्वयबोधजनकत्वेन नेयमा·

अन्वयबोधः स्यादेव । तात्पर्यं निर्वक्ति ॥ **वक्तुरिच्छेति** ॥ यदि तात्पर्यज्ञानं कार-

**प्रभा।**

पुरुषविशेष्यक इति यावत् ॥ **अन्वयस्स्यादेवेति** ॥ राजसंबन्धप्रकारकशाब्दबोधो भवत्येवेत्यर्थः । तथाच राजसंबन्धप्रकारकपुत्रविशेष्यकशाब्दत्वस्य राजसंबन्धप्रकारकपुरुषविशेष्यकशाब्दत्वस्य वा व्यापकं निरूपितत्वसंबन्धेन राजप्रकारकसंबन्धविशेष्यकशाब्दत्वं तदवच्छिन्नं प्रति राजपदङस्पदान्यतरानिरूपित-तादृशान्यतरनिष्ठनियतानुपूर्वीरूपाकाङ्क्षाज्ञानस्य हेतुतया तादृशाकाङ्क्षाज्ञानस्य तच्छाब्दत्वरूपव्याप्यधर्मावच्छिन्नोत्पत्तेः पूर्वं नियमेन सत्त्वेऽपि कारणीभूतासत्तियोग्यताज्ञानयोस्सत्त्वेऽपि च शाब्दबोधे तात्पर्यज्ञानस्यापि हेतुतया यादृशशाब्दबोधौपयिकतात्पर्यज्ञानं तद्बलात्तादृशशाब्दबोध एव भवति नत्वन्यः ॥ कारणीभूततात्पर्यज्ञानाभावादिति ॥ उभयबोधौपयिकतात्पर्यसत्त्वे तु उभयबोधो भवत्येवेति नोक्तापत्तिप्रसक्तिरिति भावः । नच तदानीं उभयबोधस्वीकारे एकत्र विशेषणस्यान्यत्र साक्षाद्विशेषणत्वासंभवादिति नियम-

**दिनकरीयम्।**

सत्त्वेऽपि तात्पर्याभावान्न तथान्वयबोध इति भावः ॥ **स्यादेवेति** ॥ भवत्येवेत्यर्थः । ननु पुरुषेण पुत्रेण च राजपदस्य तात्पर्यज्ञानेऽपि पुत्रपदराजपदयोरेव यत्रैकवाक्यतानिश्चयः पुरुषपदराजपदयोरेकवाक्यत्वाभावनिश्चयश्च तत्र पुरुषपदेन सह निरुक्ताकाङ्क्षायाः सत्त्वाद्राज्ञः पुरुष इति बोधापत्तिरिति चेन्न । यत्पदं विमेत्यस्य समभिव्याहृतयत्पदं त्विनेत्यर्थकतया समभिव्याहारस्याप्याकाङ्क्षाशरीरे प्रवेशात् । समभिव्याहारश्चेदम्पदमेतत्पदेन सहान्वयं बोधयत्विति पदतात्पर्यम् । प्रकृते च तज्ज्ञानाभावात्तद्घटिताकाङ्क्षाज्ञानाभाव इति । समभिव्याहारस्य नाकाङ्क्षाशरीरे प्रवेशः किन्तु स्वातन्त्र्येण तज्ज्ञानं शाब्दबोधे कारणमित्यन्ये । नव्यास्तु अर्थतात्पर्यज्ञानस्य राजपदं पुरुषविषयकराजसंसर्गकप्रतीतीच्छयोच्चरितमित्याकारकज्ञानत्वादिना हेतुत्वादेवातिप्रसङ्गाभावे समभिव्याहारज्ञानस्य हेतुत्वे मानाभावः । निरुक्ततात्पर्यनिश्चये पूर्वोक्तसमभिव्याहारस्य पदतात्पर्यरूपस्य संशये व्यतिरेकनिश्चये वा भवत्येव शाब्दबोध इत्याहुरित्यन्यत्र विस्तरः । इदं तु बोध्यम् । आकाङ्क्षालक्षणे तत्पदं तत्पदज्ञानपरं मौनिश्लोकानुरोधात् अत एवाध्याहृतपदेनाप्याकाङ्क्षानिर्वाहः । अध्याहारश्चाश्रुतपदानामनुसन्धानम् । अत एव सर्वापेक्षया जघन्यत्वं तस्य । यतः स्वस्थानास्थितस्य पुनरनुसन्धानमावृत्तिः नेदीयस्स्थानान्तरस्थितस्यानुसन्धानमनुषङ्गः । दवीयस्स्थानान्तरस्थितस्यानुसन्धानमनुवृत्तिः । इयं च सिंहावलोकितमण्डूकप्लुतिगङ्गास्रोतोवत्त्रिविधेति । निराकाङ्क्षत्वज्ञानस्य प्रतिबन्धकत्वं न त्वाकाङ्क्षाज्ञानस्य हेतुत्वमिति तु न सत् । तथा सत्याकाङ्क्षाभाववद्व्याप्यतदवच्छेदकधर्मज्ञानानां प्रतिबन्धकत्वे गौरवादित्यलम् । इत्याकाङ्क्षा ॥ **वक्तुरिच्छे-**

**रामरुद्रीयम्,**

पत्तिस्सम्भवतीत्यवधेयम् ॥ **मूले अयमित्यादि** ॥ पुत्रराज्ञोर्वक्तुस्सम्बन्धबोधेच्छायां पुत्रेण सहैव राजपदार्थस्यान्वयबोधः । यदा तु पुरुषराज्ञोस्संबन्धबोधेच्छा वक्तुः तदा पुरुषराज्ञोरेवान्वयबोधो भवत्येव । तथाच तात्पर्यमेव कदाचित्पुत्रेण कदाचित्पुरुषेण बोधे नियामकं नत्वाकाङ्क्षेति भावः ॥ **नन्वित्यादि** ॥ **तात्पर्यज्ञान इति** ॥ पुरुषे पुत्रे च राजसंबन्धो भवत्विति वक्तुरिच्छाज्ञान इत्यर्थः ॥ **एकवाक्यतानिश्चय इति** ॥ राज्ञ इति पदं पुत्रपदार्थेन अन्वयबोधेच्छयोच्चरितं न तु पुरुषपदार्थेनान्वयेच्छयोच्चरितमिति निश्चयकाल इति समुदायार्थः । मतान्तरमाह ॥ **समभिव्याहारस्य नाकाङ्क्षाशरीर इत्यादि** ॥ **हेतुत्वादेवेति** ॥ न तु राजपुरुषयोस्संसर्गज्ञानं भवत्विति वक्तुरिच्छाज्ञानत्वेन तात्पर्यज्ञानं शाब्दबोधे हेतुरिति भावः ॥ **पूर्वोक्तसमभिव्याहारस्येति** ॥ इदं पदमेतत्पदेनान्वयबोधं जनयत्वित्याकारकवक्तुरिच्छारूपपदतात्पर्यस्येत्यर्थः ॥ **आकाङ्क्षालक्षण इति** ॥ तत्पदस्याव्यवहितोत्तरत्वसम्बन्धेन तत्पदवत्त्वमाकाङ्क्षेत्याकाङ्क्षालक्षण इत्यर्थः ॥ **तत्पदज्ञानपरमिति** ॥ तत्पदज्ञानस्याव्यवहितोत्तरत्वसंबन्धेन तत्पदज्ञानवत्त्वमेवाकाङ्क्षेत्यर्थः । अन्यथा मौनिश्लोके पदाभावादाकाङ्क्षानुपपत्तिरिति भावः ॥ **सर्वापेक्षयेति** ॥ अनुषङ्गाद्यपेक्षयेत्यर्थः । तेषु श्रुतपदस्यैवानुसन्धानकल्पनादिति भावः ॥ **सिंहावलोकितेत्यादि** ॥ सिंहस्तु स्व-

प्रभा

भङ्ग इति वाच्यं असति तात्पर्ये इत्यस्यापि नियमे प्रवेशात् । राजसंबन्धप्रकारेण पुत्रपुरुषोभयविशेष्यकैकशाब्दस्वीकारेण सकृदुच्चरित इति नियमभङ्गस्याप्यभावात् तद्वाक्याधीनशाब्दबोधं प्रति तादृशशाब्दबोधसमानाकारकतद्वाक्याधीनशाब्दबोधस्य प्रतिबन्धकतया निरुक्तसमूहालम्बनशाब्दबोधोत्तरं तत्समानाकारकशाब्दासंभवेऽपि प्राथमिकशाब्दबोधोत्पत्तौ बाधकाभावात्। अत्र पदद्वयान्यतरनिरूपितपदद्वयान्यतरनिष्ठनियतानुपूर्वी शाब्दसामान्यप्रयोजकाकाङ्क्षा एवंच घटीयाकर्मतेति बोधतात्पर्येणोच्चरितघटःकर्मत्वमित्यादौ घटपदोत्तरश्रूयमाणैकवचनज्ञानाधीनैकत्वोपस्थितिशून्यकालेऽपि घटादिपदात् घटकर्मत्वोपस्थितिकाले च घटपदैकवचनात्मकपदद्वयान्यतरनिरूपिततादृशान्यतरनिष्ठनियतानुपूर्वीरूपाकाङ्क्षाज्ञानाच्छाब्दबोधापत्तिवारणाय तच्छाब्दविषयार्थस्मारकपदद्वयान्यतरनिष्ठतादृशपदद्वयान्यतरनिरूपितनियतानुपूर्वी तच्छाब्दबोधप्रयोजकाकाङ्क्षा तज्ज्ञानं तच्छाब्दबोधे कारणमिति विशेषकार्यकारणभावोऽप्यावश्यकः। एवञ्च एकत्वाश्रयो घट इति बोधस्य प्रकृततात्पर्यविषयत्वाभावात्तच्छाब्दबोधजनकघटपदैकवचनोभयनिष्ठनियतानुपूर्वीज्ञानसत्त्वेऽपि तादृशैकत्वोपस्थित्यभावाच्च नैकत्वप्रकारकघटाविशेष्यकशाब्दबोधः। घटीया कर्मतेति बोधस्य तात्पर्यविषयत्वेऽपि तादृशशाब्दबोधविषयतत्तदर्थस्मारकघटपदकर्मत्वपदान्यतरनिरूपितान्यतरनिष्ठनियतानुपूर्व्या एवाप्रसिद्धतया अभ्रान्तस्य तादृशानुपूर्वीरूपाकाङ्क्षाज्ञानाभावान्न घटीया कर्मतेति शाब्दबोधः । तच्छाब्दविषयार्थोपस्थापकत्वञ्च तादृशशाब्दबोधविषयतत्तदर्थविषयकस्मृतिनिरूपितज्ञाननिष्ठकारणतानिरूपितविषयतासंबन्धावच्छिन्नावच्छेदकत्वरूपमेवेत्युक्तार्थ एव पर्यवस्यतीति न कोऽपि दोष इत्युक्तार्थ एव यत्पदेन विनेत्यादिमूलव्याख्यानकर्तुर्विश्वनाथपञ्चाननस्य निगूढाभिप्राय इति प्रतिभाति। केचित्तु स्यादेवेति भवत्येवेत्यर्थः । ननु पुरुषेण पुत्रेण च राजपदस्य तात्पर्यज्ञानेऽपि पुत्रपदराजपदयोरेव यत्रैकवाक्यतानिश्चयः पुरुषपदराजपदयोरेकवाक्यत्वाभावनिश्चयश्च तत्र पुरुषपदेन सह निरुक्ताकाङ्क्षायास्सत्त्वाद्राज्ञः पुरुष इति बोधापत्तिरिति चेन्न यत्पदं विनेत्यस्य समभिव्याहृतयत्पदं विनेत्यर्थकतया समभिव्याहारस्याकाङ्क्षाशरीरे प्रवेशात् समभिव्याहारश्चेदम्पदमेतत्पदेन सहान्वयबोधं जनयत्विति पदतात्पर्यं प्रकृते तज्ज्ञानाभावात्तद्घटिताकाङ्क्षाज्ञानाभाव इत्याक्षेपं परिहारञ्चाहुः तदसत् । एकत्र एकवाक्यत्वाभावनिश्चयस्थले निरुक्तपदतात्पर्यगर्भाकाङ्क्षाज्ञानस्य हेतुत्वस्वीकारेण पुरुषशाब्दबोधवारणेऽपि राजपदं पुत्रपदेन पुरुषपदेन च सहान्वयं बोधयत्विति उभयपदतात्पर्यज्ञानसत्त्वे उभयबोधस्यावश्यकतया पूर्वोक्तपुत्रपुरुषोभयबोधतात्पर्यज्ञानकाले उभयबोधस्वीकारेणैव सर्वसामञ्जस्ये पदतात्पर्यघटिताकाङ्क्षायां मानाभावात्। पदतात्पर्यसन्देहे व्यतिरेकनिश्चये वार्थतात्पर्यज्ञानाभावाभावाच्छाब्दबोधस्वीकारेण पदतात्पर्यनिश्चयस्याकिञ्चित्करत्वाच्च । परेतु येन पदेन विना यत्पदस्याननुभावकत्वमित्यन्तं तत्पदपरिचायकं नत्वाकाङ्क्षाकुक्षिप्रविष्टं प्रयोजनाभावात् तत्पदस्य तत्पदवत्त्वमाकाङ्क्षा घटः कर्मत्वमित्यादौ कर्मत्वपदनिष्ठघटीयाकर्मतेतिशाब्दबोधाननुभावकत्वस्य घटपदसमभिव्याहारेऽपि सत्त्वेन तादृशाननुभावकत्वस्य घटपदव्यतिरेकप्रयुक्तत्वाभावात्तत्पदेन घटपदकर्मत्वपदयोर्ग्रहणासंभवेन तत्पदस्य तत्पदवत्त्वरूपाकाङ्क्षायास्तत्राभावेन तादृशवाक्यस्य निरुक्ताकाङ्क्षत्वोपपत्तिरित्याहुः। अन्येतु येन पदेन सहेत्यादेराकाङ्क्षाकुक्षिप्रविष्टत्वमावश्यकं अन्यथा जनितान्वयबोधवाक्यादपि शाब्दबोधापत्तेः तत्पदस्य तत्पदवत्त्वरूपाकाङ्क्षाज्ञानसत्त्वात्। अतः प्रयोजकतासंबन्धेन शाब्दबोधं प्रति प्रयोजकतासंबन्धावच्छिन्नतच्छाब्दबोधसमानाकारकशाब्दबोधनिष्ठप्रतियोगिताकाभावस्याजनितान्वयबोधकत्वपर्यवसितार्थस्य प्रतिबन्धकाभावविधया हेतुत्वमङ्गीकृत्य जनितान्वयबोधवाक्याच्छाब्दबोधो वारणीयः। एवञ्च येन पदेनेत्यादिग्रन्थोऽपि शाब्दबोधं प्रति निरुक्तप्रतिबन्धकाभावरूपकारणसत्त्वप्रतिपादक एव। तस्य पृथक्कारणत्वे गौरवात् आकाङ्क्षाकुक्षावेव प्रवेशस्स्वीकृतः। परन्तु विशेषणांशस्य स्वरूपत एव कारणत्वं तत्पदस्य तत्पदवत्त्वरूपविशेष्यांशस्य ज्ञानोपयोगित्वमित्याहुः। अपरेतु अनाकाङ्क्षत्वज्ञानं प्रतिबन्धकं न त्वाकाङ्क्षाज्ञानं कारणं आकाङ्क्षाज्ञानविलम्बेन शाब्दबोधविलम्बादर्शनादित्याहुः। तन्न अनाकाङ्क्षत्वज्ञानस्य ग्राह्याभावाद्यनवगाहितया शाब्दबोधप्रतिबन्धकत्वे मानाभावात्। अन्यथा आकाङ्क्षाज्ञानाभावव्याप्यतदवच्छेदकधर्मवत्ताज्ञानानामपि प्रतिब-

णं न स्यात् तदा सैन्धवमानयेत्यादौ क्वचिदश्वस्य क्वचिल्लवणस्य बोध इति न स्यात्।

## प्रभा.

न्धकत्वापत्तेरित्यास्तां विस्तरः। तात्पर्यशब्दस्य तत्परस्य भावस्तात्पर्यमिति व्युत्पत्त्या तत्परस्य तदर्थस्मारकस्य भावः असाधारणधर्म इत्यर्थात्तदर्थस्मारकत्वरूपार्थो लभ्यते। सैन्धवादिशब्दस्य लवणाश्वोभयस्मारकत्वेन तज्ज्ञानस्य शाब्दाजनकत्वात् तद्वृत्तित्वार्थकत्वेऽपि तज्ज्ञानस्यान्यथासिद्धत्वेन शाब्दाजनकत्वात् लक्षणया तात्पर्यशब्दस्य इच्छामात्रपरत्वे श्रोतृसमवेतेच्छाया अपि तात्पर्यरूपत्वापत्त्या सैन्धवमानयेति वाक्यप्रयोक्तुरिष्टासिद्धिस्स्यात्। अतस्तात्पर्यपदस्य तत्परस्य तदर्थप्रतीतीच्छयोच्चरितस्य भावः असाधारणधर्म इत्यभिप्रायेण उच्चरितत्वसंबन्धेन प्रयोक्तृसमवेतेच्छाविशिष्टपरत्वमाह ॥ **मूले वक्तुरिच्छेति** ॥ एतत्पदादेतदर्थबोधो भवत्विति प्रयोक्तृसमवेतेच्छेत्यर्थः। उच्चरितत्वसंबन्धेन तादृशतात्पर्यप्रकारकं तादृशतात्पर्याधीनोच्चरितत्वप्रकारकं वा पदविशेष्यकश्रोतृनिष्ठज्ञानं शाब्दबोधकारणमिति मूलाभिप्रायः। एतादृशतात्पर्यज्ञानस्याहेतुत्वे बाधकमाह ॥ **मुक्तावल्यां सैन्धवमानयेत्यादि** ॥ आदिपदान्नानार्थकहरिपदादेः परिग्रहः। हरिरिष्टं ददाति हरिस्तपति हरिश्चलतीत्यादौ तात्पर्यग्राहकपदान्तरसमभिव्याहारवशात् विष्णुसूर्यवाय्वादीनां बोधादिति भावः ॥ **क्वचिदश्वस्येति** ॥ अश्वतात्पर्यग्राहकप्रयाणप्रकरणे सतीत्यर्थः ॥ **क्वचिल्लवणस्येति** ॥ लवणतात्पर्यग्राहकभोजनप्रकरणे सतीत्यर्थः ॥ **न स्यादिति** ॥ इति नियमो न स्यादित्यर्थः। तथाच तादृशतात्पर्यज्ञानस्य हेतुत्वानङ्गीकारे अश्वलवणबोधौपयिकसामग्र्या अविशिष्टत्वात्सर्वदा अश्वलवणबोधस्स्यात् एकसामग्र्या अपरबोधप्रतिबन्धकत्वे तादृशवाक्याच्छाब्दबोध एव न स्यात् तस्मात्तात्पर्यज्ञानस्य हेतुत्वमावश्यकमिति भावः। केचित्तु इदमुपलक्षणं तात्पर्यसंशये व्यतिरेकनिश्चये वा शाब्दबोधानुदयात् शाब्दबोधे तात्पर्यनिश्चयः कारणम्। यत्संशय इति व्याप्तेरित्यपि बोध्यमित्याहुः तदसत्। घटप्रकारकसंशये सति घटाभावप्रकारकनिश्चये सति वा घटप्रकारकलौकिकसन्निकर्षाजन्यदोषविशेषाजन्यघटप्रकारकप्रत्यक्षानुत्पत्त्या घटप्रकारकतादृशप्रत्यक्षं प्रति घटप्रकारकनिर्णयस्य हेतुत्वापत्तेः। किञ्च यत्संशयव्यतिरेकनिश्चयौ यत्र प्रतिबन्धकौ तन्निश्चयस्तद्धेतुरिति नियमात् व्याप्तिसंशये तद्व्यतिरेकनिश्चये च सति अनुमित्यनुदयेन अनुमितिं प्रति तयोः प्रतिबन्धकत्वावश्यकतया तादृशनियमबलेन व्याप्तिनिश्चयत्वावच्छिन्नस्य अनुमितिहेतुत्वमावश्यकमिति प्राचीनैकदेशिमतमनूद्य व्याप्तिसंशयकाले व्यभिचारनिर्णयकाले च व्याप्तिविशिष्टवैशिष्ट्यावगाहिनिश्चयात्मकपरामर्शाभावादेव अनुमितिवारणे तत्र तयोः प्रतिबन्धकत्वे मानाभा-

## दिनकरीयम्.

ति ॥ घटमानयेत्यादौ कर्मत्वविशेष्यकाधेयतासंसर्गकघटप्रकारकप्रतीतीच्छा वक्तुस्तात्पर्यं तादृशेच्छयोच्चरितामिदं वाक्यमित्याकारकं श्रोतुस्तात्पर्यज्ञानं शाब्दबोधे कारणमित्यर्थः। तत्र युक्तिमाह ॥ **सैन्धवेति** ॥ आदिना श्वेतो धावतीत्यादिपरिग्रहः। तत्र कदाचिच्छ्वेतगुणविशिष्टस्य कदाचित् कुक्कुरादेर्बोधस्य तात्पर्यज्ञाननियम्यत्वात् ॥ **क्वचिल्लवणस्येति** ॥ क्वचित्तदुभयोरित्यपि बोध्यम् ॥ **इति न स्यादिति** ॥ इति

## रामरुद्रीयम्.

गृहान्निर्गत्य दूरं गत्वा पुनः परावृत्य स्वगृहं पश्यति। तद्वदुत्तरत्र केषुचिद्वाक्येषु पूर्वतनपदस्य अन्वयो नास्ति। क्वचिदुत्तरवाक्ये पूर्वतनपदस्यान्वयः सा सिंहावलोकना। उत्तरवाक्येषु एकत्र पूर्वपदस्यान्वयः एकत्र नान्वयः पुनर्वाक्यान्तरे च तदन्वयः तत्र मण्डूकप्लुतिः। उत्तरवाक्येषु क्रमेण सर्वत्र पूर्वपदान्वयो गङ्गास्रोत इति विभागो बोध्यः। ननु मूले वक्तुरिच्छायास्तात्पर्यत्वं प्रतिपादितम्। तज्ज्ञानं शाब्दबोधे हेतुर्वाच्यः। तत्र च घटमानय पटमानयेतिवाक्यद्वयप्रयोगस्थले वक्तुरिच्छाद्वयज्ञानात्कस्माद्वाक्यात् कीदृशार्थस्य बोधो भवतीति निर्णेतुमशक्यम्। अतस्तात्पर्यज्ञानाकारं दर्शयति ॥ **तादृशेच्छयेति** ॥ तथाच स्वप्रयोज्योच्चरितत्वसम्बन्धेन यादृशवाक्यविशेष्यकं वक्तुरिच्छारूपतात्पर्यज्ञानं भवति तादृशवाक्यजन्यशाब्दबोधे कारणमिति नानियम इति भावः ॥ **तत्र कदाचिदिति** ॥ श्वेतः श्वेतवर्णो धावतीत्यर्थस्तात्पर्यविषयः कदाचित् श्वा कुक्कुर इतो धावतीत्यर्थस्तात्पर्यविषय इत्यर्थः ॥ **उभयोरित्यपीति** ॥ इदञ्च सकृदुच्चरितः शब्दः सकृदेवार्थं गमयती-

**नच तात्पर्यग्राहकाणां प्रकरणादीनां शाब्दबोधे कारणत्वमस्त्विति वाच्यम् । तेषामननुगमात् । तात्पर्यज्ञानजनकत्वेन तेषामनुगमे तु तात्पर्यज्ञानमेव लाघवात् कारणमस्तु । इत्थञ्च वेदस्थलेऽपि तात्पर्यज्ञानार्थमीश्वरः कल्प्यते । नच तत्राध्यापकतात्पर्यज्ञानं कारण-**

## प्रभा.

वादित्यर्थकेन तत्र तयोरप्रतिबन्धकत्वादिति ग्रन्थेन मणिकृतैव तादृशनियमे मानाभावमुक्त्वा अनुमितेर्व्याप्तिनिश्चयत्वेन हेतुत्वं निराकृत्य व्याप्तिज्ञानत्वेन हेतुत्वस्य व्यवस्थापितत्वादिति ॥ **तात्पर्यग्राहकप्रकरणादीनामिति** ॥ आदिना संयोगवियोगसाहचर्यादीनां परिग्रहः । तात्पर्यग्रहजनकप्रकरणादीनामेवेत्यर्थः ॥ **कारणत्वमस्त्विवति** ॥ तथाच तात्पर्यग्रहजनकत्वेन क्लृप्तानां तेषां शाब्दबोधनियतत्वपूर्ववृत्तित्वावश्यकतया शाब्दबोधनिरूपितानन्यथासिद्धत्वमात्रकल्पनेन तादृशतात्पर्यज्ञानस्य पृथक् हेतुत्वाकल्पनेन च लाघवादिति भावः ॥ **तेषामिति** ॥ प्रकरणादीनामित्यर्थः ॥ **अननुगमादिति** ॥ सर्वसाधारणानुगतानतिप्रसक्तधर्माभावादित्यर्थः । तथाच तात्पर्यग्राहकेषु सर्वेष्वनतिप्रसक्तैकधर्माभावात्प्रातिस्विकरूपेण व्यभिचारित्वाच्च तेषां न शाब्दहेतुतासंभव इति भावः ॥ **तात्पर्यज्ञानजनकत्वेनेति** ॥ तात्पर्यज्ञानजनकत्वरूपानुगतानतिप्रसक्तधर्मेणेत्यर्थः ॥ **तथा चानुगमे त्विति** ॥ प्रकरणादीनां कारणत्वे अभिमते सतीत्यर्थः । तुशब्दस्य अभिमतबोधकत्वादिति भावः । यद्यपि तात्पर्यज्ञानजनकत्वस्य व्यक्तिभेदेन भिन्नतया इदमपि न सर्वानुगतं तथापि जनकतासंबन्धेन तात्पर्यज्ञानत्वावच्छिन्नवत्त्वं सर्वानुगतं प्रसिद्धमित्याशयेन तथोक्तमिति ध्येयम् ॥ **तात्पर्यज्ञानमेव** ॥ तात्पर्यज्ञानत्वावच्छिन्नमेव ॥ **लाघवादिति** ॥ तात्पर्यज्ञानत्वावच्छिन्नरूपगुरुधर्मेण प्रकरणादीनां बहूनां कारणत्वापेक्षया तात्पर्यज्ञानत्वरूपलघुधर्मेण एकस्य कारणत्वे लाघवादित्यर्थः ॥ **कारणमस्त्विवति** ॥ उक्तलघुधर्मपुरस्कारेण कारणत्वं संभवतीत्यर्थः ॥ **इत्थं चेति** ॥ उक्तलाघवबलेन शाब्दसामान्यं प्रति तात्पर्यज्ञानसामान्यस्य हेतुत्वसिद्धौ चेत्यर्थः । तद्बोधस्यापि कार्यतावच्छेदकाक्रान्तत्वादिति भावः ॥ **तात्पर्यज्ञानार्थमिति** ॥ तात्पर्यज्ञानत्वरूपकारणतावच्छेदकावच्छिन्नसम्पत्त्यर्थमपीत्यर्थः ॥ **कल्प्यत इति** ॥ अनुमीयत इत्यर्थः । तथाच वेदवाक्याधीनशाब्दबोधस्तात्पर्यज्ञानजन्यः शाब्दत्वात् सैन्धवमानयेत्यादिवाक्याधीनशाब्दवत् इत्यनुमानात्तात्पर्यज्ञानसिद्धौ इतरेषां बाधात्तादृशज्ञानविषयतात्पर्याश्रयतया ईश्वरसिद्धिरिति भावः । उक्तानुमानसिद्धतात्पर्याश्रयो नेश्वर इत्याशङ्क

## दिनकरीयम्.

नियमो न स्यादित्यर्थः । इदमुपलक्षणम् । तात्पर्यसंशये व्यतिरेकनिश्चये वा शाब्दबोधानुदयाच्छाब्दबोधे तात्पर्यज्ञानं कारणं यत्संशय इति व्याप्तेरित्यपि बोध्यम् ॥ **प्रकरणेति** ॥ आदिना संयोगवियोगसाहचर्यादीनां परिग्रहः । प्रकरणादीनां क्लृप्तनियतपूर्ववर्तिताकत्वेन अनन्यथासिद्धत्वमात्रकल्पने लाघवादिति भावः ॥ **अननुगमादिति** ॥ तथा च परस्परजन्यशाब्दबोधे परस्परव्यभिचारेण न हेतुत्वसम्भव इति भावः ॥ **इत्थं चेति** ॥ शाब्दबोधत्वावच्छिन्नं प्रति तात्पर्यज्ञानस्य हेतुत्वे चेत्यर्थः । एवमग्रेऽपि ॥ **प्रलय-**

## रामरुद्रीयम्.

ति नियमानभ्युपगमेनोक्तं अन्यथा सैन्धवपदस्यावृत्त्यभिप्रायेण इदमुक्तमिति मन्तव्यम् ॥ **यत्संशयेति** ॥ यत्संशयव्यतिरेकनिश्चयौ यदुत्पत्तिप्रतिबन्धकौ तन्निश्चयस्तद्धेतुरनुमितौ व्याप्तिरिवेति चिन्तामणावुक्तत्वादिति भावः । संयोगस्सान्निध्यं विप्रयोगो दूरत्वं साहचर्यं एकदेशवृत्तित्वम् । घटोऽपसारणीय इति समीपस्थे घटे तात्पर्यग्रहस्सामीप्यात् । घटमत्रानयेत्यादौ घटपदस्य दूरस्थे घटे तात्पर्यग्रहो दूरत्वात् । घटं पटञ्चानयेत्यादौ घटपदपटपदयोरेकदेशवृत्तिघटपटयोस्तात्पर्यग्रहः साहचर्यात् । आदिना आभिमुख्यादिपरिग्रहः ॥ **क्लृप्तनियतपूर्ववृत्तिताकत्वेनेति** ॥ तात्पर्यज्ञानहेतुतावादिनापि तात्पर्यज्ञानार्थमेव शाब्दबोधोत्पत्तेः पूर्वं प्रकरणादीनामवश्यं स्वीकरणीयत्वादिति भावः ॥ **न हेतुतासम्भव इति** ॥ तत्तदव्यवहितोत्तरत्वस्य तत्तत्कार्यतावच्छेदककोटौ निवेशेन व्यभिचारवारणे तु अतिगुरुभूतानेककार्यकारणभावापत्तिरिति

मिति वाच्यं सर्गादावध्यापकाभावात् । नच प्रलय एव नास्ति कुतः सर्गादिरिति वाच्यम् । प्रलयस्यागमेषु प्रतिपाद्यत्वात् । इत्थं च शुकवाक्येऽपीश्वरीयतात्पर्यज्ञानं कारणम् । विसंवादिशुकवाक्ये तु शिक्षयितुरेव तात्पर्यज्ञानं कारणं वाच्यम् । अन्ये तु नानार्थादौ

**प्रभा**

ते ॥ **नचेति** ॥ **तत्रेति** ॥ वेदवाक्याधीनशाब्दबोध इत्यर्थः ॥ **सर्गादाविति** ॥ सर्गस्यादिरिति व्युत्पत्त्या सृष्ट्यव्यवहितप्राक्क्षणे जन्यद्रव्यसामान्याभावादिति भावः ॥ **प्रळय एव नास्तीति** ॥ कार्यद्रव्यानधिकरणकाल एवाप्रामाणिक इत्यर्थः ॥ **कुतः सर्गादिरिति** ॥ तादृशसृष्ट्यव्यवहितप्राक्क्षणस्सुतरामप्रामाणिक इत्यर्थः । तादृशक्षणविशेषसिद्धेः प्रळयसिद्ध्यधीनत्वादिति भावः ॥ **प्रळयस्येति** ॥ निरुक्तकालविशेषस्येत्यर्थः ॥ **आगमप्रतिपाद्यत्वादिति** ॥ धाता यथापूर्वमकल्पयन्नाहो न रात्रिर्न नभो न भूमिर्नासीत्तमो ज्योतिरभून्न चान्यदित्याद्यागमप्रतिपाद्यत्वादित्यर्थः । सर्गीयप्राथमिकपुरुषसमवेतवेदवाक्याधीनशाब्दबोधं प्रति तात्पर्यज्ञानस्य हेतुत्वावश्यकतया सर्गाव्यवहितप्राक्क्षणे पुरुषान्तराप्रसक्त्या तादृशशाब्दतात्पर्यज्ञानविषयतात्पर्याश्रयतया ईश्वरसिद्धिर्निराबाधेति भावः । वेदवाक्याधीनशाब्दकारणज्ञानविषयतात्पर्याश्रयतया ईश्वरसिद्धिमाह ॥ **इत्थञ्चेति** ॥ शाब्दसामान्यं प्रति तात्पर्यज्ञानत्वेन हेतुत्वसिद्धौ चेत्यर्थः ॥ **शुकवाक्येऽपीति** ॥

**दिनकरीयम्**

**स्य** कार्यद्रव्यानधिकरणकार्याधिकरणकालविशेषात्मकखण्डप्रलयस्य ॥ **आगमेष्विति** ॥ नाहो न रात्रिर्न नभो न भूमिर्नासीत्तमो ज्योतिरभून्न चान्यदित्याद्यागमेष्वित्यर्थः ॥ **शुकवाक्येऽपि** ॥ संवादिशुकवाक्यजन्यबोधेऽपि ॥ **शिक्षयितुरेवेति** ॥ ईश्वरेच्छाया विसंवादित्वाभावादिति भावः ॥ **अन्ये त्विति** ॥ क्वचिदित्यस्य विवरणं ॥ **नानार्थादाविति** ॥ गृहीतनानार्थवृत्तिकादावित्यर्थः । तेन गृहीतनानार्थशक्तिकस्य गृहीत-

**रामरुद्रीयम्**

भावः ॥ **अध्यापकाभावादिति** ॥ ईश्वरातिरिक्ताध्यापकाभावादित्यर्थः । तेनाध्यापकाभावे वेदात्मकवाक्यज्ञानाभावेन शाब्दबोधस्यैवासम्भवेऽपि न क्षतिः । मूले महाप्रलयस्यागमप्रतिपाद्यत्वमुक्तम् । तच्चायुक्तम् । महाप्रलयस्यागमेनाप्रतिपादितत्वात् । धाता यथापूर्वमकल्पयदित्यादिना आगमेन खण्डप्रलयस्यैव सूक्तत्वात् । अत एव महाप्रलये विवादोऽपि सङ्गच्छते आगमप्रतिपादितत्वे विवादासंभवादित्यतः प्रलयपदस्य खण्डप्रलयपरतामाह ॥ **कार्यद्रव्येति** ॥ **कार्याधिकरणेति** ॥ अदृष्टादिरूपकार्याधिकरणेत्यर्थः । यद्यपि लाघवाद्द्रव्याधिकरणत्वमेव वक्तुमुचितं तथापि प्रलये नित्यद्रव्यवृत्तितायां प्रमाणान्तरविरहेण तथा नोक्तम् । न च नित्यद्रव्याणां सदातनत्वरूपनित्यत्वानुपपत्तिरेव तत्र मानमिति वाच्यम् । ध्वंसप्रागभावाप्रतियोगित्वस्यैव नित्यतारूपत्वात् । अदृष्टस्य तु प्रलयवृत्तित्वं उत्तरसर्गानुपपत्त्या सिद्धमिति भावः । आगमे नभश्शब्दार्थोऽन्तरिक्षादिलोक एव नभसो नित्यत्वात् । तमश्शब्दार्थोऽपि परिच्छिन्नतम एव । तेजोऽभावरूपतमसो नित्यत्वात् । इत्थञ्च शुकवाक्येऽपि ईश्वरीयतात्पर्यज्ञानं कारणमिति मूलमसङ्गतम् । वाक्ये तात्पर्यज्ञानस्याहेतुत्वादित्यतस्तदर्थमाह ॥ **संवादीति** ॥ प्रमाजनकेत्यर्थः । इदञ्च वह्निना सिञ्चतीति शुकवाक्यजन्यशाब्दबोधे ईश्वरीयतात्पर्यज्ञानं न हेतुः ईश्वरस्य विसंवादीच्छापत्तेरित्यतस्तादृशवाक्यव्युदासार्थमुक्तम् । न च वक्तुरिच्छायास्तात्पर्यरूपत्वेन ईश्वरस्य शुकवाक्यवक्तृत्वाभावेन कथं ईश्वरेच्छायास्तात्पर्यरूपतेति वाच्यम् । वाक्यानुकूलप्रयत्नवत एव वक्तृत्वेन ईश्वरप्रयत्नस्य कार्यमात्रानुकूलत्वेन शुकवाक्यानुकूलत्वादिति भावः । शुकीयतात्पर्याभावेन अगत्या ईश्वरस्यैव वक्तृत्वस्वीकारादिति मन्तव्यम् । एवं शिक्षयितुः प्रयत्नस्य परम्परया शुकवाक्यानुकूलत्वेन शिक्षयितुरिच्छाया अपि तात्पर्यरूपता बोध्या । सर्वत्र नानार्थस्थले तात्पर्यज्ञानस्य हेतुत्वोपगमात् क्वचिदित्यसङ्गतमित्यभिप्रायेणैव क्वचिदित्यस्यैव विवरणं नानार्थादावितीत्याह ॥ **क्वचिदिति** ॥ ननु नानार्थत्वं यदि नानार्थशक्तत्वं तदा नानार्थलाक्षणिकस्थले कदाचित्कस्यचिदर्थस्य बोधतात्पर्यनियमो न स्यात् । अतो नानार्थगृहीतवृत्तिकत्वमेव नानार्थत्वमित्याह ॥ **गृहीतेति** ॥ गृहीतपदं तु नानार्थ-

**क्वचिदेव तात्पर्यज्ञानं कारणं तथाच शुकवाक्ये विनैव तात्पर्यज्ञानं शाब्दबोधः। वेदे त्वनादि-**

### प्रभा.

यथार्थवक्तृत्वरूपसंवादित्वविशिष्टशुकवाक्याधीनशाब्दबोधेऽपीत्यर्थः॥ **ईश्वरतात्पर्यज्ञानमिति** ॥ ईश्वरस्य यत्तात्पर्यं तज्ज्ञानमेवेत्यर्थः। एतादृशशुकोदीरितवाक्यादेतदर्थबोधो भवत्विति तात्पर्यस्य इतरेषां वक्तुमशक्यत्वादिति भावः। नन्वयथार्थवक्तृत्वरूपविसंवादित्वविशिष्टशुकोदीरितवाक्याधीनशाब्दस्यापि कार्यतावच्छेदकाक्रान्ततया तत्र तात्पर्यज्ञानस्य हेतुत्वं न संभवतीति तादृशज्ञानविषयतात्पर्यज्ञानस्य विनिगमनाविरहेण अन्यपुरुषीयत्वेन वक्तुमशक्यत्वेन तादृशतात्पर्यस्य विसंवादित्वेनेश्वरस्यापि तदाश्रयत्वासंभवात्तादृशतात्पर्यासिद्धया तज्ज्ञानस्य सुतरामप्रसिद्धत्वात् तथाच व्यभिचाराच्छाब्दसामान्ये तात्पर्यज्ञानत्वेन न हेतुत्वसंभव इत्याशङ्कां तात्पर्यज्ञानप्रतिपादनेन परिहरति ॥ **विसंवादीति** ॥ तुशब्दोऽप्यर्थे। निरुक्तविसंवादित्वविशिष्टशुकोदीरितवाक्याधीनशाब्दबोधेऽपीत्यर्थः ॥ **शिक्षयितुरिति** ॥ तात्पर्यज्ञानमिति शेषः। शुकस्य वाक्योच्चारणसामर्थ्यसम्पादकपुरुषस्येत्यर्थः। एवकारः अध्याहृततात्पर्यज्ञानमित्युत्तरं योज्यः। तात्पर्यज्ञानमेव कारणमिति फलितोऽर्थः। तथाच शिक्षकेन यादृशबोधतात्पर्येण यादृशवाक्योच्चारणे शुकस्य संवादिता शुकोदीरिततादृशवाक्याधीनतादृशशाब्दबोधे तादृशबोधविषयकतात्पर्यस्यैव प्रयोजकत्वावश्यकतया विनिगमकत्वेन तात्पर्यज्ञानस्यैव हेतुत्वसंभवाच्छाब्दसामान्ये तात्पर्यज्ञानत्वेन हेतुतायां न व्यभिचारप्रसक्तिरिति भावः। अत्र शाब्दसामान्ये तात्पर्यज्ञानस्य हेतुत्वे मानाभावः पदजन्यपदार्थोपस्थित्यादिघटितसामग्रीसत्त्वे तात्पर्यज्ञानविलम्बेन शाब्दबोधविलम्बस्याप्यननुभावकत्वात्सर्वत्र शाब्दबोधात्पूर्वं तात्पर्यज्ञानकल्पनायां गौरवाच्च। यत्र तात्पर्यज्ञानविलम्बेन शाब्दबोधविलम्बः प्रामाणिकः सैन्धवमानयेत्यादौ तत्स्थलीयशाब्दबोध एव तात्पर्यज्ञानस्य हेतुत्वमावश्यकं अन्यथा सैन्धवमानयेतिवाक्यप्रयोक्तृतात्पर्यमबुध्वा तद्वाक्यादश्वानयनबोधेनाश्वानयनकृतिप्रयोक्तृतात्पर्यविषयासिद्धया इच्छाया अनिवृत्तत्वापत्तेः। घटवद्भूतलमित्यादौ अन्यार्थसूत्रैकारशाब्दबोधस्यैव ? जननात्तात्पर्यज्ञानविलम्बेन तादृशशाब्दबोधविलम्बस्याप्रामाणिकतया शाब्दबोधेऽपि तात्पर्यज्ञानस्य हेतुत्वे मानाभाव इति वदतां गङ्गेशोपाध्यायादीनां मतमाह ॥ **अन्ये त्विति** ॥ **नानार्थादाविति** ॥ गृहीतनानार्थकपदघटितवाक्याधीनशाब्दबोध इत्यर्थः। आदिपदाद्गृहीतैकार्थशक्तिगृहीतापरपदार्थलक्षणाकपदघटितवाक्याधीनशाब्दबोधपरिग्रहः ॥ **क्वचिदेवेति** ॥ निरुक्तशाब्दबोधानां मध्ये शाब्दबोधविशेष एवेत्यर्थः। सैन्धवः प्रमेय इति नानार्थकसैन्धवपदघटितवाक्याधीनशाब्दबोधे तात्पर्यज्ञानस्य हेतुत्वे प्रमाणाभावात् गङ्गायां घोष इति गृहीतप्रवाहशक्तिकगृहीततीरलक्षणाकगङ्गापदघटितवाक्याधीनतन्मुख्यार्थस्यान्वयानुपपत्तितात्पर्यानुपपत्त्योरन्यतरज्ञानेन शाब्दबोधानुत्पत्त्या लक्षणाज्ञानसहकृतगङ्गापदघटितगङ्गायांघोषइतिवाक्यज्ञानस्यैव तीरादिस्मृतिद्वारा तीरादिविषयकशाब्दबोधजनकत्वेन इतरार्थविषयकशाब्दबोधस्य पदजन्यपदार्थज्ञानघटितसामग्र्यभावेनाप्रसक्त्या पुनस्स्मृतगङ्गापदघटितवाक्याधीनेतरविषयकशाब्दबोधेऽपि तात्पर्यज्ञानस्य हेतुत्वे प्रमाणाभावादिति भावः ॥ **कारणमिति** ॥ कारणत्वेनावश्यं स्वीकार्यमित्यर्थः। अन्यथा नानार्थकस्थलीयशाब्दबोधविशेषेऽपि तात्पर्यज्ञानस्य हेतुत्वानङ्गीकारे लवणतात्पर्येणोच्चरितसैन्धवमानयेत्यादौ अश्वबोधेनाश्वानयनप्रसक्त्या उक्तदोषापत्तेः गङ्गायां घोषमत्स्यौ स्त इति वाक्यज्ञानात् गङ्गापदं प्रवाहतीरोभयबोधतात्पर्येण उच्चारितमिति तात्पर्यज्ञानसहकृताभ्यामेव शक्तिलक्षणाज्ञानाभ्यां जायमानप्रवाहतीरोपस्थितिद्वारा प्रवाहवृत्तिर्मत्स्यः तीरवृत्तिर्घोष इति शाब्दबोधसंभवेन तात्पर्यज्ञानस्य हेतुत्वानङ्गीकारे ईदृशशाब्दबोधानुपपत्तेश्च। तस्माच्छाब्दबोधविशेषे तात्पर्यज्ञानस्य हेतुतासिद्धिरित्यर्थः ॥ **शुकवाक्य इति** ॥ संवादसंवादोभयसाधारणशुकसामान्योदीरितनानार्थकपदघटितवाक्य इत्यर्थः। सप्तम्यर्थो विशेष्यत्वं तस्य ज्ञानेऽन्वयः ॥ **विनैव तात्पर्यज्ञानमिति** ॥ तात्पर्यज्ञानं विनैवेति योजना ॥ **तात्पर्यज्ञानमिति** ॥ तदर्थप्रतीतीच्छयोच्चरितत्वरूपतात्पर्यप्रकारकज्ञानं विनैवेत्यर्थः। एवकारेण तादृशवाक्याधीनशाब्दत्वावच्छिन्ने तादृशतात्पर्यज्ञानजन्यत्वाभावो लभ्यते ॥ **शाब्दबोध इति** ॥ भवतीति शेषः। तादृशवाक्याधीनशाब्दबोध इ-

मीमांसापरिशोधिततर्कैरर्थावधारणमित्याहुः ॥ ८४ ॥

इति श्रीविश्वनाथपञ्चाननभट्टाचार्यविरचितायां सिद्धान्तमुक्तावल्यां शब्दखण्डं समाप्तम् ॥

## प्रभा.

त्यर्थः । तथाच शाब्दसामान्ये तात्पर्यज्ञानस्य हेतुत्वे मानाभावेन संवादिशुकवाक्याधीनशाब्दबोधे तात्पर्यज्ञानस्य हेतुत्वाप्रसक्त्या तादृशज्ञानविषयतात्पर्याश्रयतया ईश्वरकल्पनमयुक्तमिति भावः । अत्र नानार्थकपदघटितवाक्याधीनशाब्दसामान्येऽपि तात्पर्यज्ञानस्य हेतुत्वं न संभवति शुकस्य तदर्थप्रतीतीच्छाभावेन शुकोदीरिततादृशवाक्याधीनशाब्दबोधे व्यभिचारात् । नचेश्वरीयतादृशेच्छयोच्चरितत्वरूपतात्पर्यप्रकारकशुकवाक्यविशेष्यकज्ञानस्य हेतुत्वे बाधकाभावान्न व्यभिचार इति वाच्यम् । शुकवाक्यस्य ईश्वरेणानुच्चरितत्वादीश्वरीयतदर्थप्रतीतीच्छाया व्यधिकरणत्वेन वाक्यानुकूलशुकनिष्ठकृतौ कारणत्वासंभवादीश्वरीयतदर्थप्रतीतीच्छाजन्यकृतिजन्यकण्ठताल्वाद्यभिघातजन्यत्वरूपतात्पर्यस्यापि शुकवाक्ये असिद्धत्वात् ईश्वरेच्छायाः कार्यमात्रकारणत्वेन शुकसमवेतकृतेरीश्वरेच्छाजन्यत्वोपपादने च तत्र तादृशज्ञानजन्यत्वोपपादने च तत्र तादृशेच्छाजन्यत्वनिवेशनस्य व्यर्थतया तद्घटितोच्चरितत्वज्ञानस्य शाब्दबोधहेतुत्वे मानाभावात् । अन्यथा शुकसमवेतकृतेः कालादिजन्यत्वस्यापि सत्त्वेन कालादिजन्यत्वघटितोच्चरितत्वस्यापि हेतुत्वापत्तेः । तस्माद्यत्र तात्पर्यज्ञानस्याहेतुत्वे बाधकमुपलभ्यते तत्रैव तात्पर्यज्ञानस्यानायत्या हेतुत्वं न सर्वत्रेति शुकवाक्याधीनशाब्दबोधेऽपीश्वरतात्पर्यज्ञानमप्रामाणिकमेवेति गङ्गेशोपाध्यायानां निगूढाभिप्राय इति प्रतिभाति । ननु शाब्दसामान्ये तात्पर्यज्ञानस्य हेतुत्वानङ्गीकारे कपिञ्जलानालभेतेतिश्रुतिघटकबहुवचनेन नियमेन त्रित्वावच्छिन्नबोधो न स्यात् बहुवचनस्य त्रित्वत्वादिनानाधर्मावच्छिन्नशक्तत्वात् नानार्थकतया प्रकृते त्रित्वमात्रौपयिकनियामकाभावादत आह ॥ **वेदे त्विति** ॥ कपिञ्जलानालभेतेत्यादिवेदे त्वित्यर्थः । सप्तम्यर्थो घटकत्वं तस्य तर्कपदार्थेऽन्वयः अवधारणार्थकतुशब्दः तर्कैरित्युत्तरं योज्यः ॥ **अनादिमीमांसेति** ॥ अनादीनां गौतमादीनां महर्षीणां मीमांसाः अबाधितत्वेन निर्णीताः तर्काः लाघवविपक्षेबाधकागृहीतत्वादिरूपाः तैस्सहकृतपदैरेवेत्यर्थः ॥ **अवधारणमिति** ॥ उक्तश्रुतिघटकबहुवचनान्नियमेन त्रित्वावच्छिन्नविषयकशाब्दबोध इत्यर्थः । तथाच व्रीहीनवहन्तीति श्रुतिघटकबहुवचनस्य त्रित्वार्थकत्वे व्रीहित्रयाणामेवावहननप्राप्त्या तावन्मात्रस्य पुरोडाशचरुसाधकत्वाभावेन यागानुपयुक्तत्वरूपबाधकसत्त्वाल्लाघवस्याकिञ्चित्करत्वेन त्रित्वार्थकत्वासंभवात् पुरोडाशाद्युपयोगिनो यावन्तो व्रीहयः तावन्मात्रवृत्तिसङ्ख्यार्थकत्वेऽपि कपिञ्जलपदोत्तरबहुवच-

## दिनकरीयम्.

नानार्थलक्षणाकस्य गृहीताविभिन्नार्थशक्तिलक्षणाकस्य च सङ्ग्रहः । आदिना एकार्थगृहीतलक्षणाकस्य सङ्ग्रहः । मीमांसा लाघवज्ञानात्मकस्तर्कः ॥ **परिशोधितेति** ॥ सहकृतेत्यर्थः । तर्कोऽनुमानम् । आहुरित्य-

## रामरुद्रीयम्.

कहर्यादिपदस्यापि यदा एकस्मिन्नेवार्थे शक्तिग्रहः तदा शक्तिग्रहेणैव शाब्दबोधनियमसम्भवात् तात्पर्यज्ञानस्य शाब्दबोधनियामकत्वाभावादुपात्तम् । गृहीतनानार्थकलक्षणकल्पनावाधिकं शक्तिलक्षणयोर्द्वयोरिति भावः ॥ **विभिन्नार्थेति** ॥ एकस्मिन्नर्थे गृहीतशक्तिकस्यान्यस्मिन्नर्थे गृहीतलक्षणाकस्येत्यर्थः । नन्वेवमादिपदग्राह्यं किमित्यत आह ॥ **आदिनेति** ॥ नच शक्यसम्बन्धस्यैव लक्षणात्वेन लक्षणाज्ञाने शक्तिज्ञानमावश्यकमेव तथाच विभिन्नार्थगृहीतशक्तिलक्षणाकस्येत्यनेन पूर्वोक्तेन गतार्थमिदमिति वाच्यम् । विभिन्नार्थेत्यस्य बहुवचनान्ततया गृहीता विभिन्नार्थेषु शक्तिर्लक्षणा यस्येति विग्रहेण अनेकार्थेषु गृहीतशक्तिकस्य गृहीतलक्षणाकस्य पदस्यैव पूर्ववाक्यार्थत्वात् । मीमांसाशब्दार्थमाह ॥ **लाघवज्ञानात्मकस्तर्क इति** ॥ कपिञ्जलानालभेतेत्यत्र प्रथमोपस्थितिसंभवेन त्रित्वस्यैव बहुवचनार्थतानिश्चयः । ननु परिशोधितेत्यस्य सहकृतार्थकत्वे लाघवतर्कसहकृततर्कान्तरं किमित्याकाङ्क्षायामाह ॥ **तर्कोऽनुमानमिति** ॥ अनुमानाकारश्च कपिञ्जलानिति बहुवचनार्थस्त्रित्वादिः बहुवचनवाच्यत्वादित्येवंरूपम् । तत्र च लाघवज्ञानं सहकारि चतु-

### प्रभा.

नस्य त्वित्वार्थकत्वे बाधकाभावेन बाधकाभावविशिष्टलाघवसत्त्वात्तज्ज्ञानसहकृततत्पदज्ञानजन्यकपिञ्जलत्वित्वाद्युपस्थितिनियामकैरेव त्वित्वविषयकशाब्दबोधनिर्वाहे तत्रापि तात्पर्यज्ञानस्य हेतुत्वमप्रामाणिकमेवेति भावः। अत्र यादृशशाब्दबोधस्तात्पर्यज्ञानं विना नोत्पत्तुमर्हति तच्छाब्दव्यक्तिं प्रति तत्तत्तात्पर्यव्यक्तेर्विशिष्य कारणत्वस्य वक्तव्यतया गौरवम्। तन्मते ईदृशदोषं हृदि निधायाहुरित्युक्तमिति ध्येयम्। केचित्तु आहुरित्यस्वरसोद्भावनं तद्बीजन्तु गृहीतनानावृत्तिकपदज्ञानजन्यानुभवत्वापेक्षया लाघवेन पदजन्यानुभवत्वस्यैव तात्पर्यजन्यतावच्छेदकत्वमुचितमित्यन्यत्रानुसन्धेयमित्याहुः तदसत् तत्तच्छाब्दव्यक्तिं प्रति तत्तत्तात्पर्यज्ञानव्यक्तेः कारणत्वस्यैव विशिष्य तन्मतसिद्धतया गृहीतनानावृत्तिकपदज्ञानजन्यशाब्दत्वस्य कार्यतावच्छेदकत्वे सैन्धवः प्रमेयमित्यादौ दोषस्यैवोपस्थितत्वेन तादृशधर्मनिष्ठकार्यतावच्छेदकत्वस्य तन्मतसिद्धत्वभ्रमप्रयुक्ततादृशगौरवप्रदर्शनस्यायुक्तत्वात् पदज्ञानजन्यत्वस्याव्यावर्तकतया व्यर्थत्वेन केवलशाब्दत्व एव तात्पर्यज्ञानजन्यतावच्छेदकत्वस्य प्राचामनुमतत्वात् पदज्ञानजन्यानुभवत्वनिष्ठतात्पर्यज्ञानजन्यतावच्छेदकत्वस्य तदनुगुणेदृशलाघवप्रदानस्यायुक्तत्वादिति दिक् ॥

इति मुक्तावलीप्रभायां शब्दपरिच्छेदः ॥

### दिनकरीयम्.

स्वरसोद्भावनम्। तद्बीजं तु गृहीतनानार्थवृत्तिकपदजन्यानुभवत्वापेक्षया लाघवेन पदजन्यानुभवत्वस्यैव तात्पर्यज्ञानजन्यतावच्छेदकत्वमुचितमित्यन्यत्राधिकमनुसन्धेयम् ॥

इति शाब्दपरिच्छेदः समाप्तः ॥

### रामरुद्रीयम्.

ष्ट्वादीनामपि बहुवचनवाच्यत्वादिति। एवञ्च वेदस्थले तात्पर्यज्ञानेनार्थनिर्णय इति॥ अन्यत्राधिकमिति ॥ तात्पर्यसंशयादिस्थले शाब्दबोधानुभवादपि शाब्दबोधमात्रे तात्पर्यज्ञानस्य हेतुत्वादिति भावः ॥

इति श्रीरामरुद्रभट्टाचार्यविरचितायां मुक्तावलीविवरणदिनकरीयव्याख्यायां शब्दतरङ्गः समाप्तः ॥

पूर्वमनुभवस्मरणभेदाद्बुद्धेर्द्वैविध्यमुक्तं तत्रानुभवप्रकारा दर्शिताः स्मरणं तु सुगमतया न दार्शितं तत्र हि पूर्वानुभवः कारणम् । अत्र केचित् अनुभवत्वेन न कारणत्वं किन्तु ज्ञानत्वेनैव अन्यथा स्मरणोत्तरं स्मरणं न स्यात् समानप्रकारकस्मरणेन पूर्वसंस्कारस्य विनष्टत्वात् । मन्मते तु तेनैव स्मरणेन संस्कारान्तरद्वारा स्मरणान्तरं जन्यत इत्याहुस्तन्न । यत्र समूहालम्बनोत्तरं घटपटादीनां क्रमेण स्मरणमजानिष्ट सकलविषयकस्मरणं तु नाभूत् तत्र फलस्य संस्कारनाशकत्वाभावात् कालस्य रोगस्य वा चरमफलस्य वा संस्कारनाशकत्वं वाच्यं तथाच न क्रमिकस्मरणानुपपत्तिः । नच पुनःपुनः स्मरणात् दृढतरसंस्कारानुपपत्तिरिति वाच्यं झटित्युद्बोधकसमवधानस्य दार्ढ्यपदार्थत्वात् । नच विनिगमनाविरहादेव ज्ञानत्वेनापि जनकत्वं स्यादिति वाच्यं विशेषधर्मेण व्यभिचाराज्ञाने सामान्यधर्मेणान्यथासिद्धत्वात् । कथमन्यथा दण्डस्य भ्रमिद्वारा द्रव्यत्वेन रूपेण न कारणत्वम् । नचान्तरालिकस्मरणानां संस्कारनाशकत्वसंशयाद्व्यभिचारसंशय इति वाच्यं अनन्तसंस्कारतन्नाशकल्पनापेक्षया चरमस्मरणस्यैव लाघवात् संस्कारनाशकत्वकल्पनेन व्यभिचारसंशयाभावात् ॥ इति स्मृतिप्रक्रिया ॥ इदानीं

**साक्षात्कारे सुखादीनां करणं मन उच्यते ।**
**अयौगपद्यात् ज्ञानानां तस्याणुत्वमिहोच्यते ॥ ८५ ॥**

### दिनकरीयम् .

**सुगमतयेति** ॥ सुगमस्य स्वयमप्यूहितुं शक्यतया दुरूह एवादौ सुधियां जिज्ञासोदयादिति भावः । तथा चावसरसङ्गत्यानुभवानन्तरं स्मरणनिरूपणमिति भावः ॥ **तत्र हि स्मरणे हि** ॥ **स्मरणं न स्यादिति** ॥ अनुभवस्य नष्टत्वादिति भावः । ननु अनुभवस्य व्यापारद्वारा कारणत्वं तच्च कार्याव्यवहितपूर्वक्षणवृत्तिस्वस्वव्यापारान्यतरकत्वं तच्चानुभवनाशेऽपि तज्जन्यसंस्कारस्य सत्त्वान्निराबाधमत आह ॥ **समानप्रकारकेति** ॥ **नष्टत्वादिति** ॥ तथा च तादृशमपि कारणत्वमनुभवे न सम्भवतीति भावः ॥ **तेनैव** संस्कारनाशकेन समानप्रकारकस्मरणेनैव ॥ **संस्कारान्तरद्वारेति** ॥ स्मरणस्य तृतीयक्षणे नाशेन स्वरूपतो हेतुत्वासम्भवादिति भावः ॥ **फलस्य** प्रत्येकविषयकक्रमिकस्मरणरूपस्य ॥ **संस्कारनाशकत्वाभावादिति** ॥ समानप्रकारकत्वाभावादिति भावः ॥ **कालस्य रोगस्य वेति** ॥ अन्यथा उक्तसमूहालम्बनसंस्कारस्यानाशप्रसङ्गादिति भावः । नचेष्टापत्तिः जन्यभावत्वेन विनाशित्वनियमात् । ननु कालादेः कालत्वादिना नाशकत्वे संस्कारमात्रस्य क्षणिकत्वापत्तिस्तद्व्यक्तित्वेन तथात्वे गौरवमत आह ॥ **चरमफलस्य वेति** ॥ चरमफले वैजात्यं कल्पयित्वा तेन रूपेण नाशकत्वं वाच्यमिति भावः ॥ **न क्रमिकेति** ॥ न स्मरणोत्तरस्मरणमित्यर्थः ॥ **दार्ढ्यपदार्थत्वादिति** ॥ तथा च पुनःपुनः स्मरणान्न दृढतरसंस्कारोत्पत्तिः किं तु विद्यमानसंस्कारस्यैव पुनःपुनः स्मरणेन झटित्युद्बोधकसमवधानं जायते उद्बुद्धाच्च तस्मात् स्मरणान्तरामिति भावः ॥ **व्यभिचारसंशय इति** ॥ अनुभवत्वेन हेतुत्वे व्यभिचारसंशय इत्यर्थः । तथा च न विशेषधर्मेण व्यभिचारज्ञानमिति भावः ॥ **व्यभिचारसंशयाभावादिति** ॥ सकृदनुभूतस्थले संस्कारनाशकचरमस्मृतेस्तदानीमभावेन संस्कारनाशाभावादनुभवत्वेन हेतुत्वेऽपि न व्यभिचारसन्देह इति भावः । यद्यप्यनन्तसंस्कारतन्नाशकल्पनागौरवस्य फलमुखत्वेनादोषत्वं अन्यथा विशिष्टज्ञानकल्पनागौरवभियानुमितिं प्रति विशिष्टज्ञानत्वेन हेतुताविलयप्रसङ्गात् तथापि ज्ञानत्वेन हेतुत्वे उपेक्षात्मकतत्तत्स्मृतिव्यक्तिभेदस्य कारणतावच्छेदककोटिनिवेशेन गौरवमनुभवत्वेन स्मृतिहेतुत्वे तु तत्तत्स्मृतिव्यक्तिभेदानिवेशे लाघवमिति लाघवज्ञानरूपोत्तेजकसत्त्वात् व्यभिचारशङ्काकिञ्चित्करीत्यत्र तात्पर्यम् । इति स्मरणनि-

क्रमप्राप्तं मनो निरूपयितुमाह ॥ **साक्षात्कार इति** ॥ एतेन मनसि प्रमाणं दर्शितम् । तथा हि सुखसाक्षात्कारः सकरणकः जन्यसाक्षात्कारत्वात् चाक्षुषसाक्षात्कारवदित्यनुमानेन मनसः करणत्वसिद्धिः। नचैवं दुःखादिसाक्षात्काराणामपि करणान्तराणि स्युरिति वाच्यं लाघवादेकस्यैव सकलसाक्षात्कारकरणतया सिद्धेः। एवं सुखादीनामसमवायिकारणसंयोगाश्रयतया मनसः सिद्धिर्बोद्धव्या। तत्र मनसोऽणुत्वे प्रमाणमाह ॥ **अयौगपद्यादिति** ॥ ज्ञानानां चाक्षुषरासनादीनामयौगपद्यमेककालोत्पत्तिर्नास्तीत्यनुभवसिद्धम् । तत्र नानेन्द्रियाणां सत्यपि विषयसन्निधाने यत्सम्बन्धादेकेनेन्द्रियेण ज्ञानं जन्यते यदसम्बन्धाच्च परैर्ज्ञानं नोत्पाद्यते तन्मनसो विभुत्वे चासन्निधानं न सम्भवतीति न विभु मनः। नच तदानीमदृष्टविशेषोद्बोधकविलम्बादेव तज्ज्ञानविलम्ब इति वाच्यं तथा सति चक्षुरादीनामप्यकल्पनापत्तेः। न च दीर्घशष्कुलीभक्षणादौ नानावधानभाजां च कथमेकदानेकेन्द्रियजन्यज्ञानमिति वाच्यं मनसोऽतिलाघवात् झटिति नानेन्द्रियसम्बन्धान्नानाज्ञानोत्पत्तेः उत्पलशतपत्रभेदादिव यौगपद्यप्रत्ययस्य भ्रान्तत्वात्। नच मनसः सङ्कोचविकाशशालित्वादुभयोपपत्तिरिति वाच्यं नानावयवतन्नाशादिकल्पने गौरवाल्लाघवान्निरवयवस्याणुरूपस्यैव मनसः कल्पनमिति सङ्क्षेपः ॥ इति द्रव्यपदार्थो व्याख्यातः ॥ ८५ ॥

## दिनकरीयम् .

रूपणम् ॥ **जन्यसाक्षात्कारत्वादिति** ॥ ईश्वरीयसाक्षात्कारे व्यभिचारवारणाय जन्येति। नन्वतिलाघवात्त्वगिन्द्रियस्य प्राणस्य वा करणत्वमस्त्वत आह ॥ **एवमिति** ॥ **असमवायिकारणसंयोगाश्रयतयेति** ॥ भावकार्यस्य सासमवायिकारणकत्वनियमादिति भावः ॥ **तन्मनसो विभुत्वे चेति** ॥ तदसन्निधानं मनसो विभुत्वे न सम्भवतीत्यर्थः ॥ **तथा सतीति** ॥ दृष्टसामग्रीसत्त्वेऽप्यदृष्टविलम्बात्कार्यविलम्बाङ्गीकार इत्यर्थः ॥ **चक्षुरादीनामपीति** ॥ चाक्षुषतद्विरहयोरदृष्टतद्विरहाभ्यामुपपत्तेरिति भावः ॥ **भ्रान्तत्वादिति** ॥ अव्यवहितकालोत्पत्तिकत्वस्य दोषत्वादिति भावः ॥ **उभयोपपत्तिरिति** ॥ मनसः सङ्कोचे एकेन्द्रियमात्रसम्बन्धादेकमेव ज्ञानं विकाशे तु नानेन्द्रियैर्मनसस्सम्बन्धाद्युगपन्नानाज्ञानानामुपपत्तिरिति भावः। यद्यपि नानेन्द्रियैर्मनःसन्निकर्षकाले चाक्षुषाद्युत्पत्तिकाले रासनाद्यनुत्पादस्य रासनादिकं प्रति चाक्षुषसामग्र्याः प्रतिबन्धकत्वेनैवोपपत्तेर्मनसो विभुत्वेऽपि बाधकाभावस्तथापि तथा प्रतिबन्धकत्वे गौरवमित्यभिप्रायः। नच त्वङ्मनोयोगस्य ज्ञानमात्रहेतुत्वाच्चाक्षुषसामग्रीकाले स्पार्शनसामग्र्या नियमतः सत्त्वात् स्पार्शनापत्तिर्मनसोऽणुत्वपक्षेऽपि दुर्वारैवेति वाच्यं अनन्यगत्या स्पार्शनं प्रति चाक्षुषादिसामग्र्याः प्रतिबन्धकत्वस्वीकारादेवमपि रासनादिप्रत्यक्षे चाक्षुषादिसामग्रीप्रतिबन्धकत्वाकल्पनप्रयुक्तलाघवस्याणुत्वपक्षे निष्प्रत्यूहत्वात्। यद्वा ज्ञानसामान्यं प्रति त्वङ्मनःसंयोगस्याहेतुत्वमित्यभिप्रायः। अत एव तदसम्बन्धात्त्वगादिभिः परैर्ज्ञानं नोत्पाद्यत इत्युक्तं प्राक्। यथा च त्वङ्मनोयोगस्य ज्ञानसामान्यं प्रत्यजनकत्वेऽपि सुषुप्तौ ज्ञानानुत्पादनिर्वाहस्तथोपपादितमधस्तात्। एवं मनसो विभुत्वे आत्ममनःसंयोगानुपपत्तिरात्ममनसोः कर्माभावेन कर्मजन्यसंयोगस्य विभुत्ववादिमतेऽसम्भवादजन्यसंयोगे मानाभावात् यदपि भौतिका एव परमाणवो मनांसि अनन्तधर्मिणामतिरिक्तायाश्च जातेः कल्पनामपेक्ष्य क्लृप्तानामेव धर्मिणां तादृूप्येण हेतुत्वस्य युक्तत्वात् नियमस्त्वदृष्टोपग्रहादिति नव्यैरुक्तं तदपि न यत्संयोगव्यतिरेकात् सुषुप्तिकाले कार्यानुत्पादस्तस्य मनसोऽवश्यमङ्गीकरणीयत्वात्। नच कालविशेषस्य प्रतिबन्धकत्वादेव सुषुप्तिकाले कार्यानुत्पाद इति वाच्यं अनन्तानां कालविशेषाणां प्रतिबन्धकत्वे गौरवात्। नचोदासीनमनःसंयोगस्य सुषुप्तिप्राक्काले सत्त्वादापत्तिस्तदवस्थैवेत्यदृष्टविशेषाकृष्टं मन एव ज्ञानादिहेतुत्वेन वक्तव्यं तदपेक्षया चादृष्टविशेषाकृष्टभौतिकपरमाणू

अथ द्रव्याश्रिता ज्ञेया निर्गुणा निष्क्रिया गुणाः ।
रूपं रसः स्पर्शगन्धौ परत्वमपरत्वकम् ॥ ८६ ॥
द्रवत्वस्नेहवेगाश्च मता मूर्तगुणा अमी ।
धर्माधर्मौ भावना च शब्दो बुद्ध्यादयोऽपि च ॥ ८७ ॥
एतेऽमूर्तगुणाः सर्वे विद्वद्भिः परिकीर्तिताः ।
सङ्ख्यादयो विभागान्ता उभयेषां गुणा मताः ॥ ८८ ॥

द्रव्यं निरूप्य गुणान् निरूपयति ॥ अथेत्यादिना ॥ गुणत्वजातौ किं मानमिति चेदिदं द्रव्यकर्मभिन्ने सामान्यवति या कारणता सा किञ्चिद्धर्मावच्छेद्या निरवच्छेद्यकारणताया

## प्रभा.

अथ द्रव्याश्रिता इति मूलस्थाथशब्दस्य केवलमङ्गलार्थकत्वे द्रव्यगुणयोस्सङ्गत्यप्रदर्शनेन न्यूनतापत्तिरत आनन्तर्यार्थत्वमपि वाच्यम् । एवंच विभागवाक्यात् द्रव्यस्यैव प्रथममुपस्थितत्वेन तत्रैवादौ जिज्ञासा जायते तन्निरूपणेन तन्निवृत्तावश्यवक्तव्यत्वरूपावसरसङ्गत्या निरूप्यन्त इति क्रियाध्याहारेण गुणा निरूप्यन्त इति वाक्यार्थो लभ्यते । अतस्सङ्गतिलाभायाथशब्दस्यानन्तर्यार्थकत्वमपि सूचयति ॥ मुक्तावळ्यां द्रव्यं निरूप्येति ॥ द्रव्यनिरूपणानन्तरमित्यर्थः ॥ गुणान्निरूपयतीति ॥ गुणानां विशिष्य साधर्म्यवैधर्म्ये वक्तुमादौ गुणसामान्यलक्षणमाहेत्यर्थः । अत्र गुणत्वजातिमत्त्वं गुणसामान्यलक्षणं बोध्यम् । तत्र प्रमाणं पृच्छति ॥ गुणत्वजाताविति ॥ इदमिति ॥ अनुमानमित्यर्थः । यद्यपि गुणत्वजातौ प्रत्यक्षमेव प्रमाणमिति शक्यते वक्तुं तथापि पामराणां रूपादिषु प्रत्यक्षतो गुणत्वाग्रहात्पामराणामपि चतुर्विंशत्यां गुणेषु गुणत्वजातिसिद्ध्यर्थमनुमानप्रमाणप्रदर्शनमिति हृदयम् । गुणत्वजातिसिद्धेः प्राक् गुणनिष्ठकारणतात्वेन पक्षत्वासंभवादाह ॥ द्रव्यकर्मभिन्न इति ॥ द्रव्यसामान्यभेदकर्मसामान्यभेदोभयविशिष्ट इत्यर्थः सामान्यसमवायाभावानां विषयतया स्वप्रत्यक्षहेतुतायास्सत्त्वात्तादृशकारणताव्यावर्तनाय सामान्यवतीत्युक्तम् । एवंच तादृशभेदद्वयविशिष्टसामान्यवन्निष्ठकारणतात्वेन पक्षत्वं लभ्यते । ननु रूपादिशब्दान्तगुणसाधारणकारणताया अप्रसिद्धत्वात् कथं निरुक्तरूपेण पक्षत्वमिति चेदत्र प्राञ्चः रूपादिषु सर्वेष्वेककारणताया अप्रसिद्धत्वेऽपि प्रत्येकं प्रसिद्धाः याः कारणताः तासां निरुक्तरूपेण तावदन्यतमत्वेन वा पक्षत्वसंभवान्नोक्तदोष इत्याहुः । तन्न तथा सति पृथिव्याद्यात्मान्तवृत्तिप्रत्येककारणताः मनोभिन्नवृत्तित्वेन तावदन्यतमत्वेन वा पक्षीकृत्य कारणतात्वहेतुना किंचिद्धर्मावच्छिन्नत्वसाधनसंभवेन पृथिव्याद्यष्टद्रव्येष्वन्यूनानतिरिक्तवृत्तिजातिस्वीकारापत्तेः नचेष्टापत्तिः उक्तरीत्या अप्रामाणिकानेकजातिकल्पनापत्तेः । अस्मद्गुरुचरणास्तु वाच्यतासंबन्धेन व्यवहारं प्रत्यन्वयव्यतिरेकाभ्यां व्यवहर्तव्यस्य हेतुतया वाच्यतासंबन्धावच्छिन्ना या गुणइत्याकारकशब्दनिष्ठा कार्यता तन्निरूपिततादात्म्यसंबन्धावच्छिन्नकारणताया एव रूपादिशब्दान्तवृत्तेः प्रसिद्धत्वान्न पक्षाप्रसिद्धिः । अथवा स्वानुकूलकृतिमत्त्वसंबन्धेन व्यवहारं प्रति समवायसंबन्धेन व्यवहर्तव्यज्ञानस्य हेतुतया गुणइत्याकारकशब्दनिष्ठा या तादृशसंबन्धावच्छिन्नकार्यता तन्निरूपितसमवायसंबन्धावच्छिन्नज्ञाननिष्ठकारणतानिरूपितविषयतासंबन्धावच्छिन्नावच्छेदकताया एव रूपादिशब्दान्तवृत्तेः प्रसिद्धत्वात्तादृशावच्छेदकताया एव पक्षत्वसंभवान्मुक्तावळीस्थप्रतिज्ञावाक्यघटककारणतापदस्य कारणतावच्छेदकसाधारणप्रयोजकत्वपरतया तादृशावच्छेदकताया एव कारणत्वशब्दार्थत्वान्न पक्षाप्रसिद्धिरिति व्याचक्रुः । आ-

## दिनकरीयम्.

नामेव तद्धेतुत्वमुचितमिति वाच्यं तस्य भौतिकत्वे पृथिवीत्वं जलत्वादिकं वेत्यत्र विनिगमकाभावादुभयकल्पने चजातिसाङ्कर्यं तदेतदभिप्रेत्योक्तम् ॥ सङ्क्षेप इति ॥ इति द्रव्यपदार्थव्याख्यानम् ॥ ८५ ॥

अवसरसङ्गतिमभिप्रेत्याह ॥ द्रव्यं निरूप्येति ॥ तस्मिन्निरूपिते प्रतिबन्धकीभूतजिज्ञासानिवृत्तेरिति भावः । इति चेदिदमिति पाठः । ननु रूपत्वस्य सत्ताया वा गुणनिष्ठकारणतावच्छेदकत्वं स्यादित्याशङ्क्या-

**असम्भवात्। नहि रूपत्वादिकं सत्ता वा तत्रावच्छेदिका न्यूनाधिकदेशवृत्तित्वादतश्चतुर्विंश- त्यनुगतं किञ्चिद्वाच्यं तदेव गुणत्वमिति ॥ द्रव्याश्रिता इति ॥ यद्यपि द्रव्याश्रितत्वं न लक्षणं कर्मादावतिव्याप्तेः तथापि द्रव्यत्वव्यापकतावच्छेदकसत्ताभिन्नजातिमत्त्वं तदर्थः। भवति**

## प्रभा.

चार्यमतानुयायिनस्तु ज्ञायमानलिङ्गस्यानुमितिकरणतया द्रव्यं इतराभिन्नमित्याकारिकायां द्रव्यत्वावच्छेदेने- तरभेदविधेयकानुमितौ रूपादिशब्दान्तगुणानां सर्वेषां लिङ्गविधया हेतुत्वात् तस्याः प्रसिद्धत्वेन तस्या एव पक्षत्वसंभव इत्याहुः। अन्येतु अतीतादौ व्यभिचारेण लिङ्गस्य करणत्वासंभवेऽपि लिङ्गज्ञानस्यानुमितिकार- णत्वसंभवात् पूर्वानुमितिनिरूपितलिङ्गज्ञाननिष्ठकारणतानिरूपितविषयतासंबन्धावच्छिन्नावच्छेदकतायाश्चतु- र्विंशतिगुणवृत्तेः प्रसिद्धतया प्रतिज्ञावाक्यघटककारणत्वशब्दस्य प्रयोजकत्वपरतया निरुक्तकारणतावच्छेद- कताया अपि कारणत्वशब्दार्थत्वेन तस्या एव पक्षत्वमिति प्राहुः। दीधितिकृतस्तु गुणपदशक्यतावच्छेदक- तया गुणत्वजातिसिद्धिः असति बाधके शक्यतावच्छेदकतयापि जातिसिद्धेस्सर्वसम्मतत्वादित्याहुः। वस्तु- तस्तु गुणत्वविशिष्टवैशिष्ट्यावगाहिबुद्धित्वावच्छिन्नं प्रति गुणत्वप्रकारकनिश्चयत्वेन गुणत्वप्रकारकबुद्धित्वाव- च्छिन्नं प्रति गुणत्वज्ञानत्वेन वा हेतुतायाः सकलनैयायिकाभिमततया तादृशकारणतैव पक्षः तस्या द्रव्यकर्मभिन्नसामान्यवन्निष्ठकारणतारूपत्वात् तादृशकारणतायां विषयतासंबन्धावच्छिन्नावच्छेदकतया सि द्धगुणत्वस्य व्यक्त्यैक्यादिरूपबाधकाभावात् जातिरूपत्वं तस्य विनिगमनाविरहादन्यथानुपपत्तेश्च सकलगुण- वृत्तित्वं सिध्यति। एतादृशार्थं हृदि निधाय निरुक्तकारणताद्वयसङ्ग्रहाय द्रव्यकर्मभिन्नसामान्यवन्निष्ठकारणते- ति पक्षनिर्देशः कृत इति प्रतिभाति ॥ **किंचिद्धर्मावच्छेद्येति** ॥ किंचिद्धर्मनिष्ठावच्छेदकतानिरूपिकेत्य- र्थः। तत्रावच्छेदकतायां किंचिद्धर्मनिष्ठत्वमव्यावर्तकं किंचिद्धर्मावृत्त्यवच्छेदकताया अप्रसिद्धत्वात् किंतु स्वरूपकीर्तनमिति हृदयम् ॥ **असंभवादिति** ॥ अप्रसिद्धत्वादित्यर्थः। ननु निरुक्तविषयतासंबन्धावच्छि- न्नावच्छेदकत्वं रूपत्वादेस्सत्ताया वास्त्वित्यत आह ॥ **नहीति** ॥ **तत्रावच्छेदिकेति** ॥ निरुक्तविषयता- संबन्धावच्छिन्नावच्छेदकतावतीत्यर्थः ॥ **न्यूनाधिकेति** ॥ रसादिकं विषयीकृत्यापि गुण इति बुद्धेर्जायमा- नत्वात् द्रव्यं कर्म च विषयीकृत्यापि तादृशबुद्धेरजायमानत्वाच्च तन्निरूपितकारणतायां न्यूनवृत्तितया रूपत्वादे- रधिकदेशवृत्तितया सत्त्वस्य चावच्छेदकत्वासंभवादिति भावः ॥ **अत इति** ॥ कृप्तधर्माणामवच्छेदकत्वासंभ- वादित्यर्थः ॥ **चतुर्विंशत्यनुगतमिति** ॥ रूपादिशब्दान्तमात्रसमवेतमित्यर्थः ॥ **वाच्यमिति** ॥ निरु- क्तकारणतावच्छेदकतयावश्यं स्वीकार्यमित्यर्थः ॥ **तदेवेति** ॥ तादृशकारणतावच्छेदकतया सिद्धधर्म एवे- त्यर्थः ॥ **गुणत्वमिति** ॥ गुणत्वशब्दवाच्यमित्यर्थः। एवकारेण रूपत्वादेस्सत्त्वस्य वा गुणत्वशब्दवाच्यत्वं व्यवच्छिद्यते ॥ **द्रव्याश्रितत्वमिति** ॥ द्रव्यनिरूपितसंबन्धसामान्यावच्छिन्नवृत्तिमत्त्वमित्यर्थः ॥ **न लक्ष- णमिति** ॥ न व्यावर्तकमित्यर्थः। कर्मादावित्यादिना अलक्ष्यमात्रपरिग्रहः ॥ **अतिव्याप्तेरिति** ॥ वर्त-

## दिनकरीयम्.

ह ॥ **नहीति** ॥ रूपत्वादीत्यादिना रसत्वादिपरिग्रहः। यद्यपि गुणत्वजातौ प्रत्यक्षमेव प्रमाणं रूपादिषु संयुक्त- समवेतसमवायेन गुणत्वप्रत्यक्षसम्भवात्तथाप्यतीन्द्रियरूपादौ तत्प्रत्यक्षासम्भवेन तत्साधारण्यं गुणत्वस्य न घ- टत इत्यनुमानं प्रदर्शितम्। नच रूपत्वादिना साङ्कर्यभियातीन्द्रियरूपादौ गुणत्वसिद्धिः गुरुत्वादौ तु धर्मिग्राह- कमानेन तत्सिद्धिरित्यनुमानप्रदर्शनं व्यर्थमिति वाच्यं रूपादावप्यापामरसाधारणगुणइतिप्रत्ययस्याप्रसि- द्धेः। इदमत्र बोध्यं सकलगुणसाधारणी एका कारणता नास्त्येवेति कथं तदवच्छेदकतया गुणत्वजातिसि- द्धिः नच चतुर्विंशतिगुणेषु प्रत्येकं याः कारणतास्तासामेव पक्षतया तादृशसकलकारणतावच्छेदकतया गुण- त्वजातिसिद्धिरिति वाच्यं तथा सति द्रव्यकर्मरूपभिन्नसामान्यवति या कारणता सा किञ्चिद्धर्मावच्छिन्नेत्य- नुमानेन रूपभिन्नत्रयोविंशतिगुणसाधारणवैजात्यस्यापि सिद्धिप्रसङ्गात् पारिमाण्डल्यस्य क्वाप्यकारणतया गुणत्वस्याप्यतिप्रसक्ततयानवच्छेदकत्वाच्चेत्यन्यत्र विस्तरः ॥ **कर्मादावतिव्याप्तेरिति** ॥ आदिना सा-

हि गुणत्वं द्रव्यत्वव्यापकतावच्छेदकं तद्वत्ता च गुणानामिति। द्रव्यत्वं कर्मत्वं वा न द्रव्यत्व-व्यापकतावच्छेदकं गगनादौ द्रव्यकर्मणोरभावात् द्रव्यत्वत्वं सामान्यत्वादिकं वा न जाति-रिति तद्व्युदासः ॥ निर्गुणा इति ॥ यद्यपि निर्गुणत्वं कर्मादावप्यस्ति तथापि सामान्यवत्त्वे सति कर्मान्यत्वे च सति निर्गुणत्वं बोध्यम्। जात्यादीनां न सामान्यवत्त्वं कर्मणो न कर्मान्यत्वं द्रव्यस्य न निर्गुणत्वमिति तत्र नातिव्याप्तिः। निष्क्रिया इति स्वरूपकथनं न तु लक्षणं गगनादावतिव्याप्तेः ॥ वेगा इति ॥ वेगेन स्थितस्थापकोऽप्युपलक्षणीयः ॥ मूर्तगुणा

## प्रभा.

मानत्वादिरित्यर्थः। यदिच द्रव्यनिरूपितसमवायसंबन्धावच्छिन्नवृत्तिमत्त्वमेव द्रव्याश्रितत्वशब्देनोच्यते तदा आदिपदात् कर्मादित्रिकस्य द्रव्यस्य च ग्रहणं बोध्यम् ॥ **द्रव्यत्वव्यापकतावच्छेदकेति** ॥ अत्र जातेर्न तादृशावच्छेदकत्वेन निवेशः गौरवात् प्रयोजनाभावाच्च। किंतु गगनवृत्तिसमवेतत्वेन। तथाच गगनवृत्तिसमवेतसत्ताभिन्नजातिमत्त्वं लक्षणमिति फलितम्। एतस्य गगनरूपद्रव्यवृत्तित्वघटिततया मूलोक्तद्रव्याश्रितत्वपरिष्कारूपतापि सङ्गच्छत इति न लक्षणान्तरत्वशङ्केति ध्येयम्। सत्ताजातिमादायातिव्याप्तिवारणाय जातौ सत्ताभिन्नत्वनिवेशः ॥ **निर्गुणत्वमिति** ॥ गुणात्यन्ताभाववत्त्वमित्यर्थः। कर्मादावित्यादिना सामान्यादिपरिग्रहः। अप्यस्तीत्यपिना गुणपरिग्रहः। तेन निर्गुणत्वस्य गुणादिषट्कवृत्तित्वप्रतिपादनादतिव्याप्तिरेव नासंभव इत्यर्थो लभ्यते ॥ **बोध्यमिति** ॥ गुणसामान्यलक्षणं बोध्यमित्यर्थः। लक्षणघटकविशेषणद्वयस्य विशेष्यस्य च प्रयोजनमाह ॥ **जात्यादीनामित्यादिना** ॥ **तत्रेति** ॥ तेष्वित्यर्थः। तत्र निर्गुणत्वस्य च केवलगुणात्यन्ताभावरूपत्वे उत्पत्तिकालावच्छेदेन घटादौ गुणसामान्याभावसत्त्वात् विशेषणद्वयसत्त्वाच्चातिव्याप्तिवारणाय गुणाधिकरणावृत्तित्वविशिष्टगुणात्यन्ताभावस्यैव लक्षणघटकत्वावश्यकतया गौरवात्तदपेक्षया लाघवेन निरुक्तविशिष्टाभावघटकगुणाधिकरणावृत्तित्वविशिष्टवत्त्वमेव प्रकृते निर्गुणत्वशब्दार्थो वाच्यः तादृशविशिष्टवत्त्वस्य समवायेन लक्षणत्वस्वीकारेणैव सामान्यादावतिव्याप्तिवारणसंभवात् पृथक् सामान्यवत्त्वविशेषणं व्यर्थं कर्मण्यतिव्याप्तिवारणाय तादृशविशिष्टे कर्मावृत्तित्वमेव देयम्। एवंच गुणवदवृत्तिः कर्मावृत्तिः यः समवायेन तद्वत्त्वं गुणसामान्यलक्षणमिति फलितमिति न काप्यनुपपत्तिः। एतेन यथाश्रुते लक्षणस्य विशेषणविशेष्यभावे विनिगमनाविरहप्रयुक्तलक्षणत्रयापत्तिः त्रितयस्य लक्षणत्वे लक्षणतावच्छेदकसंबन्धाप्रसिद्धिरिति दूषणस्य नावकाशः। विश्वनाथपञ्चाननस्यापि तथापीत्यादिना पृथक्सामान्यवत्त्वस्य गुणात्यन्ताभावरूप-निर्गुणत्वस्य च लक्षणघटकत्वे न तात्पर्यं गुणादिर्निर्गुणक्रिय इति मूलघटकनिर्गुणशब्दस्य यथाश्रुतार्थकत्वे उत्पत्तिकालीनघटादावतिव्याप्तेः प्रतियोगिवैयधिकरण्यघटितनिरुक्ताभावार्थकत्वे विशेष्यांशस्य व्यर्थत्वेन तद्घटितधर्मस्य व्यावर्तकत्वासंभवाच्च गुणवदवृत्तिधर्मवत्त्वमङ्गीकृत्य गुणादीनां तादृशधर्मवत्त्वस्य लक्षणत्वप्रतिपादनात् इदानीन्तननिर्गुणशब्दस्यापि तदर्थकत्वावश्यकतया तादृशशब्दप्रतिपाद्यतादृशधर्मे कर्मावृत्तित्वं निवेश्य समवायेन तादृशधर्मवत्त्वस्य गुणलक्षणत्वे दोषाभावादेतादृशलघुलक्षण एव तात्पर्यमिति प्रतिभाति ॥ **स्वरूपकथनमिति** ॥ वस्तुतो गुणे क्रिया नास्तीति स्फुटप्रतिपत्त्यर्थमित्यर्थः ॥ **नतु लक्षणमिति** ॥ अप्यर्थकस्तुशब्दः लक्षणपदोत्तरं योज्यः। कर्मात्यन्ताभावस्य लक्षणत्वप्रतिपादनमपि नेत्यर्थः। कर्मात्यन्ताभावस्य लक्षणत्वे दोषमाह ॥ **गगनादाविति** ॥ आदिना कालादिपरिग्रहः। अत्र

## दिनकरीयम्.

मान्यपरिग्रहः। लक्ष्ये लक्षणसत्त्वं प्रतिपादयति ॥ **भवति हीति** ॥ द्रव्यत्वव्यापकतावच्छेदकेत्यस्य फलमाह ॥ **द्रव्यत्वमिति** ॥ जातिपदस्य कृत्यमाह ॥ **द्रव्यत्वत्वमिति** ॥ सत्तारूपजातिमादाय द्रव्यादावतिव्याप्तिवारणाय सत्ताभिन्नेति ॥ **तथापि सामान्यवत्त्वे सतीति** ॥ सत्यन्तयोर्विशेष्यस्य च फलमाह ॥ **जात्यादीनामिति** ॥ **तत्र** तेषु ॥ **गगनादावतिव्याप्तेरिति** ॥ आदिना कालादिपरिग्रहः। यथाश्रुते चैतत् सामान्यवत्त्वे सति कर्मान्यत्वे च सति कर्मवदवृत्तिपदार्थविभाजकोपाधिमत्त्वेऽतिव्याप्तेर-

**इति ॥ अमूर्तेषु न वर्तन्त इत्यर्थः । लक्षणं तु तावदन्यान्यत्वम् । एवमग्रेऽपि ॥ अमूर्तगुणा इ-**

**प्रभा ।**

निष्क्रियशब्दस्य गगनादावतिव्याप्तिवारणाय कर्मवदवृत्तिपदार्थविभाजकोपाधिमत्त्वपरतया साधर्म्यनिरूपणे विश्वनाथेनैव स्वीकृतत्वात् इदानीं समवायेन तादृशोपाधिमत्त्वस्य लक्षणत्वमात्रेण सामान्यादावतिव्याप्त्य-प्रसक्तेः तादृशोपाधौ कर्मावृत्तित्वविशेषणेनैव कर्मण्यतिव्याप्त्यप्रसक्तेश्च गुणघटितलक्षणस्येव कर्मघटितलक्ष-णस्यापि निर्दुष्टत्वसंभवात् निष्क्रिय इति शब्दस्यापि लक्षणपरत्व एव विश्वनाथस्य निर्भरः । स्वरूपकथनं न तु ल-क्षणमिति प्रतिपादनं तु यथाश्रुतमनुसृत्य न तत्र निर्भर इति प्रतिभाति । केचित्तु गगनादावतिव्याप्तेरिति आ-दिना कालादिपरिग्रहः यथाश्रुते चैतत् सामान्यवत्त्वे कर्मान्यत्वे च सति कर्मवदवृत्तिपदार्थविभाजकोपाधिम-त्त्वे अतिव्याप्तेरभावादित्याहुः । तदसत् तादृशोपाधिमत्त्वस्य समवायेन लक्षणत्वस्वीकारेणैव सामान्यादाव-तिव्याप्त्यप्रसक्तेः पृथक् सामान्यवत्त्वविशेषणदानवैयर्थ्यात् तादृशोपाधौ कर्मावृत्तित्वविशेषणेनैव कर्मण्यति-व्याप्तिवारणे लक्षणे कर्मान्यत्वविशेषणस्यापि विशेषणविशेष्यभावविनिगमनाविरहप्रयुक्तदोषसम्पादकस्य व्यर्थत्वाच्च ॥ **मूले द्रवो गुरुत्वकमिति** ॥ द्रवत्वं गुरुत्वमित्यर्थः । मुक्तावल्यां वेगपदेन स्थितस्थापकोऽ-प्युपलक्षणीय इति पाठः मूलस्थवेगपदं स्थितस्थापकपदोपलक्षकमित्यर्थः । केचित्तु इदमुपलक्षणं वेगाश्चेत्यत्र चकारेण अनुक्तसमुच्चायकेन गुरुत्वस्यापि सङ्ग्रह इत्याहुः तदसत् द्रवत्वस्नेहवेगाश्च मता मूर्तगुणा अमी इति मूलपाठ इत्याशयेन तादृशमूले गुरुत्ववाचकपदाभावात् न्यूनतापरिहाराय चशब्देन गुरुत्वस्य सङ्ग्रहो वाच्यः मूलस्य चशब्दघटितत्वे चशब्देन स्थितस्थापकगुरुत्वयोः परिग्रह इति व्याख्यामकृत्वा वेगपदेन स्थितस्थापकोऽ-प्युपलक्षणीय इति विश्वनाथव्याख्यायाः निर्बीजत्वापत्तेः चशब्देन तस्यापि ग्रहणसंभवात् । तस्मात् द्रवो गु-रुत्वकं स्नेहो वेगो मूर्तगुणा अमी इति मूलपाठसत्त्व एव तादृशव्याख्या सङ्गच्छत इति तादृशमूले गुरुत्ववा-चकपदसत्त्वात् चशब्दाभावाच्च इदमुपलक्षणमित्यादि केषांचिद्व्याख्यानमप्रामाणिकमेवेति । मूर्तगुणा अमी इति यथाश्रुतमूलात् निरुक्तगुणान्यतमत्वावच्छिन्नस्य मूर्तव्यक्तिवृत्तित्वविशिष्टगुणत्वं लक्षणमित्यर्थो लभ्यते तच्च न संभवति सङ्ख्यादावतिव्याप्तेः । यदि मूर्तत्वव्याप्यतावच्छेदकपरिमाणावृत्तिगुणवृत्तिजातिमत्त्वरूपं मूर्तगुणत्वं लक्षणं अतो नोक्तातिव्याप्तिरिति विचिन्त्यते तदा गौरवं अतो व्याकुरुते ॥ **मुक्तावल्यां अमूर्तेषु न वर्तन्त इति** ॥ तथाच मूर्तगुणा इति मूलस्य सावधारणतया अमूर्तावृत्तिगुणत्वं शब्दत एव लभ्यत इति भावः । अमूर्तावृत्तिगुणत्वं च मूर्तत्वाभावसमानाधिकरणपरिमाणान्यतरावृत्तिगुणवृत्तिजातिमत्त्वं स्वसमानाधिकरणपरिमाणान्यतरवृत्तित्वसंबन्धेन मूर्तत्वाभावविशिष्टान्यगुणवृत्तिजातिमत्त्वं वा तेन घटा-दिवृत्त्येकत्वादौ नातिव्याप्तिः । गुणविभाजकरूपत्वादिजातिमादाय संस्कारविभाजकवेगत्वस्थितस्थापकत्व-जातिमादाय च सर्वत्र लक्षणसमन्वयो बोध्यः । जातावृत्तित्वान्तविशेषणेन आत्मविशेषगुणानां शब्दस्य सङ्ख्यादीनां च व्युदासः । गुणवृत्तित्वविशेषणेन कर्मणो द्रव्यस्य च व्युदासः । समवायेन तादृशधर्मस्य लक्षणत्वलाभाय जातिग्रहणम् । एवं उत्तरलक्षणेऽपि बोध्यम् । मूले एतेऽमूर्तगुणा इत्यनेन अकारप्रश्लेषात् शब्दात्मविशेषगुणान्यतमत्वावच्छिन्नस्यामूर्तवृत्तित्वविशिष्टगुणत्वं लक्षणमिति लभ्यते तच्च न संभवति गगनादिगतैकत्वादौ अतिव्याप्तेः । यदि मूर्तत्वाभावव्याप्यतावच्छेदकमहत्त्वावृत्तिजातिमत्त्वरूपममूर्तवृत्ति-

**दिनकरीयम् ।**

भावात् । वेगेन स्थितस्थापकोऽप्युपलक्षणीय इति पाठः । वेगपदस्य भावनान्यसंस्कारपरत्वादिति भावः । इदमुपलक्षणं वेगाश्चेत्यत्र चकारेणानुक्तसमुच्चायकेन गुरुत्वस्यापि संग्रहात् । ननु मूर्तगुणत्वं मूर्तवृत्तिगुणत्वं तच्च सङ्ख्यादावतिव्याप्तमत आह ॥ **अमूर्तेष्विति** ॥ तथा चामूर्तावृत्तिगुणत्वं प्रदर्शितगुणानां साधर्म्य-मित्यर्थः । नचैतदपि मूर्तमात्रवृत्तिसङ्ख्यायामतिव्याप्तमिति वाच्यं अमूर्तगुणवृत्तिसंस्कारत्वान्यगुणत्वव्याप्य-जातिशून्यगुणत्वस्य मूर्तत्वव्याप्यतावच्छेदकगुणवृत्तिजातिमत्त्वस्य वा विवक्षितत्वात् । अत्र चाद्ये शून्यान्ते न सङ्ख्यादेर्बुद्ध्यादेश्च व्युदासः वेगस्थितस्थापकोपसंग्रहाय संस्कारत्वान्येति । द्वितीयेऽवच्छेदकान्तेन सङ्ख्या-त्वादेर्वृत्तित्वान्तेन कर्मत्वादेर्व्युदासः । मूले एतेऽमूर्तगुणा इत्यत्राकारप्रश्लेषो बोध्यः । ननु धर्मेत्यादि-

ति ॥ मूर्तेषु न वर्तन्त इत्यर्थः ॥ उभयेषामिति ॥ मूर्तामूर्तगुणा इत्यर्थः ॥ ८६ ॥ ८७ ॥ ८८ ॥

संयोगश्च विभागश्च सङ्ख्या द्वित्वादिकास्तथा ।
द्विपृथक्त्वादयस्तद्वदेतेऽनेकाश्रिता गुणाः ॥ ८९ ॥

अनेकाश्रिता इति ॥ संयोगविभागद्वित्वादीनि द्विवृत्तीनि त्रिचतुष्ट्वादिकं त्रिचतुरादिवृत्तीति बोध्यम् ॥ ८९ ॥

## प्रभा.

गुणत्वं लक्षणं अतो नोक्तातिव्याप्तिरिति विभाव्यते तदा गौरवं अतो व्याचष्टे ॥ **मुक्तावल्यां मूर्तेषु न वर्तन्त इति** ॥ तथाच अमूर्तगुणा इति मूलस्य सावधारणत्वस्वीकारात् उक्तार्थलाभ इति भावः । मूर्तावृत्तिगुणत्वं च मूर्तत्वसमानाधिकरणमहत्त्वान्यतरावृत्तिगुणवृत्तिजातिमत्त्वं स्वसमानाधिकरणमहत्त्वान्यतरसमवेतत्वसंबन्धेन मूर्तत्वविशिष्टान्यगुणवृत्तिजातिमत्त्वं वा तेन गगनादिगतैकत्वादौ नातिव्याप्तिः । ननु सङ्ख्यादिश्च विभागान्त उभयेषां गुणो मत इति मूलेन सङ्ख्यादिपञ्चकान्यतमत्वावच्छिन्नस्योभयवृत्तिगुणत्वं लक्षणमिति लभ्यते तच्च न संभवति घटादिगतैकत्वादावव्याप्तेः । यदिचोभयवृत्तितावच्छेदकगुणविभाजकधर्मवत्त्वमेवोभयवृत्तिगुणत्वमित्युच्यत इति विभाव्यते तदा रूपादीनां तादृशत्वेन तत्रातिव्याप्तिः अतः उभयपदार्थमाह ॥ **मुक्तावल्यां मूर्तामूर्तगुणा इत्यर्थ इति** ॥ मूर्तामूर्तगुणत्वं च स्वसमानाधिकरणसमवेतत्वस्वाभावसमानाधिकरणसमवेतत्वोभयसंबन्धेन मूर्तत्वविशिष्टवेगावृत्तिजातिमत्त्वं स्ववृत्तिसमवेतत्वसंबन्धेन कालविशिष्टरूपावृत्तिजातिमत्त्वं वा । तेन घटादिगतैकत्वादौ गगनादिगतैकत्वादौ च नाव्याप्तिः ॥ ८६ ॥ ८७ ॥ ८८ ॥

**मूले द्विपृथक्त्वादयस्तद्वदिति** ॥ द्वित्वादय इव द्विपृथक्त्वादयोऽप्यनेकाश्रिता इत्यर्थः । नन्वेतेऽनेकाश्रिता गुणा इति मूलेन संयोगविभागद्वित्वद्विपृथक्त्वाद्यन्यतमत्वावच्छिन्नस्यानेकाश्रितत्वं लक्षणमिति लभ्यते तदनुपपन्नमनेकपदस्य बहुत्वविशिष्टार्थकतया संयोगादेस्तद्वृत्तित्वाभावात् अव्याप्त्यापत्तेरतः अनेकाश्रितशब्दार्थमाह ॥ **मुक्तावल्यां संयोगेति** ॥ **द्विवृत्तीनीति** ॥ पदार्थद्वयवृत्तीनीत्यर्थः ॥ **त्रिचतुष्ट्वादिकमिति** ॥ त्रित्वचतुष्ट्वादिकमित्यर्थः ॥ **त्रिचतुरादिवृत्तीति** ॥ पदार्थत्रयादिवृत्तीत्यर्थः ॥ **बोध्यमिति** ॥ अत इत्यादिः । केषांचित् पदार्थद्वयवृत्तित्वात् केषांचित्पदार्थत्रयादिवृत्तित्वात् सर्वेषामनेकाश्रितत्वलाभाय मूलस्थानेकपदस्यैकत्वान्यसङ्ख्यावत्परत्वं वाच्यमित्यर्थः । तथाच नोक्ताव्याप्तिरिति भावः।

## दिनकरीयम्.

मूलेनैतेषाममूर्तवृत्तिगुणत्वं साधर्म्यमुक्तम् तत्सङ्ख्यादावतिव्याप्तमत आह ॥ **मूर्तेष्विति** ॥ मूर्तावृत्तिगुणत्वमेव तेषां साधर्म्यमित्यर्थः । नच तथाप्यमूर्तमात्रवृत्तिसङ्ख्यादावतिव्याप्तिरिति वाच्यं मूर्तगुणवृत्तिसंस्कारत्वान्यगुणत्वव्याप्यजातिशून्यगुणत्वस्य मूर्तत्वाभावव्याप्यतावच्छेदकपरिमाणावृत्तिजातिमत्त्वस्य वा विवक्षितत्वात् । आद्ये शून्यान्तेन सङ्ख्यादिरूपादिव्युदासः सत्तामादायासम्भववारणाय गुणत्वव्याप्येति । कर्मण्यतिव्याप्तिवारणाय विशेष्यीभूतगुणत्वस्य निवेशः । द्वितीये परममहत्त्वत्वजातिमादायातिव्याप्तिवारणाय परिमाणावृत्तीति । ननूभयेषां गुणा इति मूलेन सङ्ख्यादिपञ्चानामुभयवृत्तिगुणत्वं साधर्म्यमुक्तं तच्च रूपादावतिव्याप्तमत उभयपदं मूर्तामूर्तपरतया व्याचष्टे ॥ **मूर्तामूर्तेति** ॥ नच मूर्तमात्रवृत्तिसङ्ख्यादावव्याप्तामिति वाच्यं कालवृत्तिवृत्तिगुणत्वव्याप्यजातिमत्त्वस्य द्रव्यत्वसमव्यापकतावच्छेदकजातिमत्त्वस्य वा विवक्षितत्वात् ॥ ८६ ॥ ८७ ॥ ८८ ॥

नन्वनेकाश्रितत्वं संयोगादावव्याप्तमनेकपदस्य बहुत्वविशिष्टे शक्तत्वादत आह ॥ **संयोगेति** ॥ तथा चैकत्वभिन्नसङ्ख्याविशिष्टवाचकत्वमनेकपदस्येति न तत्राव्याप्तिरिति भावः । स्वाश्रयप्रतियोगिकान्योन्याभावसमानाधिकरणगुणत्वस्य विवक्षितत्वान्न तत्राव्याप्तिरित्यपि केचित् ॥ ८९ ॥

अतः शेषगुणाः सर्वे मता एकैकवृत्तयः।
बुद्धयादिषट्कं स्पर्शान्ताः स्नेहः सांसिद्धिको द्रवः ॥ ९० ॥
अदृष्टभावनाशब्दा अमी वैशेषिका गुणाः।

**अत इति ॥** रूपरसगन्धस्पर्शैकत्वपरिमाणैकपृथक्त्वपरत्वापरत्वबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नगुरुत्वद्रवत्वस्नेहसंस्कारादृष्टशब्दा इत्यर्थः ॥ **बुद्धयादीति ॥** बुद्धिसुखदुःखेच्छाद्वेषप्रयत्ना इत्यर्थः ॥ **स्पर्शान्ताः** रूपरसगन्धस्पर्शा इत्यर्थः ॥ **द्रवो** द्रवत्वम् ॥ **वैशेषिकाः** विशेषा एव

**प्रभा.**

नन्वेकत्वान्यसङ्ख्यावत्समवेतत्वं न लक्षणं घटादिगतैकत्वादावतिव्याप्तेः तस्याप्येकत्वान्यद्वित्वादिसङ्ख्यासमवायिनि घटादौ समवेतत्वात्। नच तादृशसङ्ख्यापर्याप्त्यधिकरणसमवेतत्वस्य तदर्थत्वान्नातिव्याप्तिरिति वाच्यम्। घटादिसमुदायस्य तादृशपर्याप्त्यधिकरणत्वे तद्घटकस्यापि पर्याप्त्यधिकरणत्वात् समुदायस्यैकदेशानतिरिक्तत्वादिति चेन्न समवेतत्वस्यैकत्वान्यसङ्ख्यावन्निरूपितत्वेन न निवेशः गौरवात् किन्तु व्यक्तिद्वयनिरूपितत्वेन तथाच व्यक्तिद्वयनिरूपितसमवायसंबन्धावच्छिन्नाधेयत्वरूपानेकाश्रितत्वं लक्षणमिति लभ्यते। एकत्वादिनिष्ठसमवेतत्वस्य व्यक्तिद्वयनिरूपितत्वाभावात् नातिव्याप्तिः। त्रित्वादिनिष्ठसमवेतत्वस्यापि अधिकं त्विति न्यायेन व्यक्तिद्वयनिरूपितत्वानपायान्नाव्याप्तिप्रसक्तिः। सामान्ये अतिव्याप्तिवारणायाधेयतायां निवेशनीयं गुणनिष्ठत्वम्। एवंच व्यक्तिद्वयनिरूपितगुणवृत्तिसमवायसंबन्धावच्छिन्नाधेयतावत्त्वं स्वसमवेतत्वस्वान्यनिरूपितगुणनिष्ठसमवेतत्वोभयसंबन्धेन किंचिद्विशिष्टत्वं वा अनेकाश्रितत्वं फलितम्। अतो न कुत्रापि दोष इति ध्येयम्। एतेन प्रत्येकपर्याप्त्यङ्गीकर्तृमते एकघटव्यक्तेरपि पर्याप्तिसंबन्धेनैकत्वान्यसङ्ख्यावत्त्वात् निरुक्तलक्षणस्य तादृशैकत्वेऽतिव्याप्तिर्दुर्वारैवेति दूषणमपास्तम्। स्वाश्रयप्रतियोगिकान्योन्याभावसमानाधिकरणगुणत्वं तदित्यन्ये। तन्न तत्तद्व्यक्तित्वेन लक्षणत्वे आपाततः तल्लक्षणसंभवेऽपि निरुक्तान्यतरत्वेन लक्ष्यत्वे स्वत्वस्य तत्तद्व्यक्तिविश्रान्तत्वेनाव्याप्तेर्दुर्वारत्वात् तस्य सामान्यलक्षणत्वासंभवात्॥ ८९ ॥

अतश्शेषगुणास्सर्वे मता एकैकवृत्तय इति मूलात् संयोगश्च विभागश्चेति मूलप्रतिपाद्यगुणान्यगुणानां एकैकवृत्तित्वं लक्षणमिति लभ्यते। तादृशगुणान्यगुणत्वस्य लक्ष्यतावच्छेदकत्वे तादृशगुणानां विशिष्याज्ञानेन लक्षणोपपादनासंभवात् अतस्तादृशगुणत्वेन लक्ष्यत्वं परित्यज्य तादृशगुणानां तावदन्यतमत्वेन लक्ष्यत्वलाभाय अतश्शेषगुणा इति मूलप्रतिपाद्यगुणानाह ॥ **मुक्तावल्यां रूपरसगन्धेत्यादि ॥** तथाच निरुक्तगुणान्यगुणानां विशिष्य ज्ञान एव तावदन्यतमत्वेन लक्ष्यज्ञानसंभवात् तादृशलक्षणोपपादनं सुकरमिति भावः। एकैकवृत्तित्वं च स्वसमवेतत्वस्वभिन्नसमवेतान्यत्वस्ववृत्तिगुणवत्त्वैतत्त्रितयसंबन्धेन किंचिद्विशिष्टत्वम्। अत्र संयोगादिवारणाय स्वभिन्नसमवेतान्यत्वस्य संसर्गकोटिप्रवेशः। कर्मादिवारणाय स्ववृत्तिगुणत्वस्य तत्कोटिप्रवेशः। स्ववृत्तित्वं च कालिकसम्बन्धेन बोध्यम्। तेन गुणत्वस्य समवायसंबन्धेन यत्किंचिद्द्रव्यवृत्तित्वाभावेऽपि न क्षतिः। गुणत्ववत्त्वं च समवायेन विवक्षितं तेन कर्मादेः कालिकेन गुणत्ववत्त्वेऽपि नातिव्याप्तिः उभयसंबन्धेन किंचिद्विशिष्टत्वस्य लक्षणत्वे रूपादिव्यक्तेरपि यत्किंचित्स्वभिन्नतद्घटसमवेतत्वेन तदन्यत्वाभावात् तादृशोभयसंबन्धेन सुतरां किंचिद्विशिष्टत्वस्याप्रसिद्धत्वात् असंभवापत्तेः स्वसमवेतत्वघटितैतात्त्रितयसंबन्धेन किंचिद्विशिष्टत्वस्य लक्षणत्वे तु तद्रूपादिव्यक्तेरपि स्वपदार्थयद्व्यक्तिसमवेतत्वं तदन्यव्यक्तिसमवेतत्वाभावेन तदन्यत्वसत्त्वात् तद्घटितत्रितयसंबन्धेन किंचिद्विशिष्टत्वरूपलक्षणसत्त्वेनासंभवाभावात्। अस्मद्गुरुचरणास्तु स्वसमवेतत्वस्वभिन्नसमवेतत्वैतदुभयसंबन्धेन किंचिद्विशिष्टं यद्यत्तत्तद्व्यक्तिभेदकूटवत्त्वगुणत्वाधिकरणत्वोभयमेकैकवृत्तित्वमिति व्याचक्रुः। केचित्तु स्वसमानाधिकरणान्योन्याभावप्रतियोगितानवच्छेदकैकत्वकत्वं स्वाश्रयान्योन्याभावव्यापकात्यन्ताभावप्रतियोगित्वं वा मूलाभिप्रेतं एकैकव्यक्तिवृत्तित्वमित्याहुः तदसत्। विशेषाणामपि तादृशत्वेन तत्रातिव्याप्त्यापत्तेः स्वत्वघटितत्वेनाननुगमाच्चेति दिक् ॥ **स्वार्थे ठ-**

**सङ्ख्यादिरपरत्वान्तो द्रवोऽसांसिद्धिकस्तथा ॥ ९१ ॥**
**गुरुत्ववेगौ सामान्यगुणा एते प्रकीर्तिताः।**

**वैशेषिकाः स्वार्थे ठक्।** विशेषगुणा इत्यर्थः॥ **सङ्ख्येति** ॥ सङ्ख्यापरिमाणपृथक्त्वसंयोगदि-

प्रभा.

**गिति** ॥ विनयादिभ्यष्ठगिति सूत्रेण विनयादिभ्यः ठग्विधानात् विशेषशब्दस्यापि विनयाद्याकृतिगणपठितत्वात् विशेषशब्दोत्तरमपि स्वार्थकठक्प्रत्ययसंभवादिति भावः ॥ **विशेषगुणा इत्यर्थ इति** ॥ तथाच बुद्ध्यादिषट्कमित्यादिकारिकाप्रतिपाद्यबुद्ध्यादिशब्दान्यतमत्वावच्छिन्नस्य विशेषगुणत्वं लक्षणमिति भावः। विशेषगुणत्वं च तेजस्संयोगजन्यशब्दान्यतरवृत्तिद्रवत्वावृत्तिजातिजलत्वात्मत्वान्यतरव्याप्यतावच्छेदकजात्योरन्यतरवत्त्वं तादृशद्रवत्वावृत्तिजाति-स्वव्याप्यतावच्छेदकत्वसंबन्धेनजलत्वविशिष्टजाति- तादृशसंबन्धेनात्मत्वविशिष्टजातीनामन्यतमवत्त्वं मनोवृत्त्यन्योन्याभावप्रतियोगितावच्छेदकतावच्छेदकगुरुत्वावृत्तिगुणविभाजकजातिसांसिद्धिकत्वभावनात्वान्यतमवत्त्वं वा। आद्ये स्पर्शान्तानां शब्दस्य च सङ्ग्रहाय प्रथमजातौ तादृशान्यतरवृत्तित्वविशेषणम्। नैमित्तिकद्रवत्ववारणाय गुणत्वादिकमादायातिव्याप्तिवारणाय च तत्रैव द्रवत्वावृत्तित्वविशेषणम्। स्नेहसांसिद्धिकद्रवत्वयोस्संग्रहाय द्वितीयजातौ जलत्वव्याप्यतावच्छेदकत्वविशेषणम्। बुद्ध्यादिभावनान्तानां सङ्ग्रहाय तत्रैवात्मत्वव्याप्यतावच्छेदकत्वविशेषणं अनुगमाय जलत्वात्मत्वान्यतरत्वेन निवेशः। द्वितीयेऽपि विशेषणानां प्रयोजनं उक्तप्रायम्। तृतीये तु सङ्ख्यादावतिव्याप्तिवारणाय अवच्छेदकान्तं जातिविशेषणम्। गुरुत्वादावतिव्याप्तिवारणाय जातौ गुरुत्वावृत्तित्वं। कालिकपरत्वादावतिव्याप्तिवारणाय गुणविभाजकत्वं। सांसिद्धिकद्रवत्वभावनयोस्सङ्ग्रहाय अन्यतमत्वेन त्रयाणां निवेश इति। सङ्ख्यादिरपरत्वान्त इति कारिकाप्रतिपाद्यगुणानां अन्यतमत्वेन लक्ष्यत्वलाभायादिपदप्रतिपाद्यगुणान् विशिष्य प्रतिपादयति ॥ **मुक्तावल्यां संख्यापरिमाणेत्यादि** ॥ मूले गुरुत्ववेगावित्यत्र वेगपदं स्थितस्थापकोपलक्षकं तेन स्थितस्थापकस्यापि सङ्ग्रहः। तथाच तादृशमूलप्रतिपाद्या यावन्तो गुणाः तावदन्यतमत्वावच्छिन्नस्य सामान्यगुणत्वं लक्षणमिति भावः। सामान्यगुणत्वं च स्वसमवेतसमवेतत्वसंबन्धेन मनोविशिष्टभावनाव्यक्त्यसमवेतजातिगुरुत्वनैमित्तिकद्रवत्वस्थितस्थापकान्यतमसमवेतसांसिद्धिकद्रवत्वभावनान्यतरासमवेतजा-

दिनकरीयम्.

एकैकवृत्तय इति मूलस्य स्वसमानाधिकरणान्योन्याभावप्रतियोगितानवच्छेदकैकत्वका इत्यर्थः। यद्वा स्वाश्रयान्योन्याभावव्यापकात्यन्ताभावप्रतियोगिन इत्यर्थः ॥ **स्वार्थे ठगिति** ॥ विनयादिभ्यः स्वार्थे ठग्विधानाद्विशेषशब्दस्य तदन्तर्गतत्वाद्विनयादेराकृतिगणत्वादिति भावः ॥ **विशेषगुणा इत्यर्थ इति** ॥ विशेषगुणत्वं च भावनान्यो यो वायुवृत्तिवृत्तिस्पर्शावृत्तिधर्मसमवायी तदन्यत्वे सति गुरुत्वाजलद्रवत्वान्यगुणत्वम्। अत्र जात्यादावतिव्याप्तिवारणाय विशेष्यम्। गुरुत्वनैमित्तिकद्रवत्वयोर्वारणाय गुरुत्वेत्यादि। सांसिद्धिकद्रवत्वसङ्ग्रहायाजलेति। संयोगादिवारणाय सत्यन्तम्। भावनायामव्याप्तिवारणायाद्यमन्यान्तं सत्यन्तघटकसमवायिविशेषणम्। सत्तादिकमादायासम्भववारणाय स्पर्शसङ्ग्रहाय च स्पर्शावृत्तीति। सङ्ख्या आदिर्यस्यापरत्वमन्ते यस्येति व्युत्पत्त्या परिमाणपरत्वयोरेव ग्रहणमिति भ्रमवारणायादिपदग्राह्यगुणान् विशिष्य दर्शयति ॥ **संख्यापरिमाणेत्यादिना** ॥ गुरुत्ववेगावित्यत्र मूले वेगपदं भावनातिरिक्तसंस्कारपरं तेन स्थितस्थापकस्यापि परिग्रहः ॥ **मूले सामान्यगुणा इति** ॥ तत्त्वं च रूपस्पर्शान्यत्वे सति द्रव्यविभाजकोपाधिव्याप्यतावच्छेदकसंयोगविभागवेगद्रवत्वावृत्तिजातिशून्यगुणत्वं। द्रव्यविभाजकतावच्छेदकं पृथिवीत्वादि तद्व्याप्यतावच्छेदकं च गन्धत्वादि तच्छून्यत्वस्य सङ्ख्यादौ सत्त्वाल्लक्षणसमन्वयः। अत्र जलीयशुक्लरूपे वायोरनुष्णाशीतस्पर्शे च पृथिव्यादिशुक्लरूपस्पर्शव्यावृत्तजातिविशेषे मानाभावाच्छुक्लरूपानुष्णाशीतस्पर्शयोरतिव्याप्तिवारणाय सत्यन्तम्। शब्दविशेषजनकतावच्छेदकजात्यवच्छिन्नकठिनावयवद्वयविभागे तेजोवेगातिशयेऽत्यन्ताग्निसंयोगनाश्यतावच्छेदकवैजात्यावच्छिन्नघृतादिवृत्तिद्रवत्वे चाव्याप्तिवारणायावृ-

सङ्ख्यादिरपरत्वान्तो द्रवत्वं स्नेह एव च ॥ ९२ ॥
एते तु द्वीन्द्रियग्राह्या अथ स्पर्शान्तशब्दकाः ।
बाह्यैकैकेन्द्रियग्राह्या गुरुत्वादृष्टभावनाः ॥ ९३ ॥
अतीन्द्रिया विभूनां तु ये स्युर्वैशेषिका गुणाः ।
अकारणगुणोत्पन्ना एते तु परिकीर्तिताः ॥ ९४ ॥

भागपरत्वापरत्वानीत्यर्थः ॥ द्वीन्द्रियेति ॥ चक्षुषा त्वचापि ग्रहणयोग्याः ॥ बाह्येति ॥ रू-

प्रभा.

त्वोरन्यतरवत्त्वम् । सङ्ख्याद्यपरत्वान्तानां वेगस्य च संग्रहायान्यतरघटकतया प्राथमिकजात्यन्तनिवेशः । भावनावारणाय गुणत्वादिकमादाय अतिव्याप्तिवारणाय च प्राथमिकजातौ भावनाव्यक्त्यवृत्तित्वविशेषणम् । गुरुत्वादिसंग्रहाय अन्यतरघटकतया द्वितीयजात्यन्तनिवेशः । सांसिद्धिकद्रवत्वादौ अतिव्याप्तिवारणाय गुणत्वादिकमादाय तद्वारणाय च तादृशजातौ अन्यतरासमवेतत्वविशेषणमिति । सङ्ख्यादिरपरत्वान्तो द्रवत्वं स्नेह एव चेति मूलस्थचशब्देन वेगस्य संग्रहः । स्थितस्थापकस्यातीन्द्रियत्वं संस्कारग्रन्थे स्वयमेव वक्ष्यति । एवंच तावदन्यतमत्वावच्छिन्नस्य लक्ष्यत्वलाभः । एते तु द्वीन्द्रियग्राह्या इति मूलस्थावधारणार्थकतुशब्देन द्वीन्द्रियग्राह्यत्वस्य पूर्वोक्तगुणान्यतमाभिन्नावृत्तित्वलाभात् तस्य व्यावर्तकत्वरूपलक्षणत्वं लभ्यते तदनुपपन्नं रूपादीनां चक्षुर्द्वयग्राह्यत्वात् परमाण्वादिसङ्ख्यादीनां इन्द्रियग्राह्यत्वाभावाच्च । अतः द्वीन्द्रियग्राह्यत्वशब्दार्थमाह ॥ मुक्तावल्यां चक्षुषा त्वचापीति ॥ ग्रहणयोग्या इति ॥ ज्ञाननिरूपितलौकिकविषयत्वाश्रयजातिमन्त इत्यर्थः । तथाच चाक्षुषनिरूपितलौकिकविषयत्वस्पार्शननिरूपितलौकिकविषयत्वोभयविशिष्टभावनाव्यक्त्यवृत्तिगुणवृत्तिजातिमत्त्वं लक्षणमिति भावः । रूपादावतिव्याप्तिवारणाय जातौ उभयविशिष्टत्वनिवेशः । संस्कारत्वगुणत्वादिजातिमादाय भावनादावतिव्याप्तिवारणाय जातौ भावनाव्यक्त्यवृत्तित्वनिवेशः । द्रव्यकर्मणोरतिव्याप्तिवारणाय तत्रैव गुणवृत्तित्वनिवेश इति । अथ स्पर्शान्तशब्दका इति मूलात् स्वार्थककप्रत्ययान्तशब्दपदघटितात् रूपादिचतुष्टयशब्दान्यतमत्वावच्छिन्नस्य लक्ष्यत्वं लभ्यते । बाह्यैकैकेन्द्रियग्राह्या इति मूलात् सावधारणेन्द्रियपदघटितात् बाह्यैकैकेन्द्रियमात्रग्राह्यत्वस्य लक्षणत्वं लभ्यते । बाह्यैकैकेन्द्रियमात्रग्राह्यत्वं च चाक्षुषनिरूपितलौकिकविषयत्वस्पार्शननिरूपितलौकिकविषयत्वोभयशून्यमानसानिरूपितलौकिकविषयताश्रयमहत्त्वावृत्तिगुणवृत्तिजातिमत्त्वं । सङ्ख्यात्वादिकमादाय संख्यादावतिव्याप्तिवारणाय जातौ तादृशोभयशून्यत्वविशेषणम् । गुरुत्वत्वधर्मत्वादिजातिमादायातिव्याप्तिवारणाय तत्रैव मानसानिरूपितलौकिकविषयताश्रयत्वविशेषणम् । त्रसरेणुमहत्त्वसमवेतापकर्षात्मकतादृशजातिमादायातिव्याप्तिवारणाय तत्रैव महत्त्वावृत्तित्वविशेषणम् । प्रभात्वरूपतादृशजातिमादायातिव्याप्तिवारणाय तत्रैव गुण-

दिनकरीयम्.

त्यन्तं जातिविशेषणम् । कर्मादौ तद्वारणाय विशेष्यम् । पृथिवीत्वादिव्याप्यतावच्छेदकतत्तत्सङ्ख्यात्वादिशून्यत्वस्य तत्तत्सङ्ख्यायामभावादव्याप्तिवारणाय जातिपदं । द्रव्यविभाजकतावच्छेदकरूपोपाधेश्च व्यापकत्वं तत्तद्व्यक्तित्वेन विवक्षितं न तु तादृशोपाधित्वेन अन्यथा सङ्ख्यात्वादेरपि तादृशजातित्वादसम्भवापत्तेरिति। सङ्ख्यादिरपरत्वान्तो द्रवत्वं स्नेह एव चेत्यत्र मूले स्नेहपदं वेगस्याप्युपलक्षकं स्थितस्थापकस्य त्वतीन्द्रियत्वं वक्ष्यते । ननु द्वीन्द्रियग्राह्यत्वं रूपादावतिव्याप्तं तेषां मनसापि ग्रहणात् बाह्येन्द्रियद्वयग्राह्यत्वमपि तत्रैवातिव्याप्तं रूपादीनां चक्षुर्द्वयादिना ग्रहणादतीन्द्रियसङ्ख्यादावव्याप्तं च तत्रेन्द्रियग्राह्यत्वस्यैवाभावादत आह ॥ चक्षुषा त्वचापीति ॥ चक्षुस्त्वगुभयग्रहणयोग्यत्वं तदर्थः । चक्षुस्त्वगुभयग्राह्यभावनावृत्त्यन्यधर्मसमवायिगुणत्वमिति तु निष्कर्षः । संस्कारत्वादिकमादाय भावनायामतिव्याप्तिवारणाय भावनावृत्त्यन्येति। कर्मादौ तद्वारणाय गुणत्वस्य निवेशः । ननु बाह्यैकैकेन्द्रियग्राह्यत्वं सङ्ख्यादावतिव्याप्तं तेषामुभयग्राह्यत्वेऽप्ये-

पादीनां चक्षुरादिग्राह्यत्वात् ॥ विभूनामिति ॥ बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मभावना-शब्दा इत्यर्थः ॥ अकारणेति ॥ कारणगुणेन कार्ये ये गुणा उत्पाद्यन्ते ते कारणगुणपूर्वका

## प्रभा.

वृत्तित्वविशेषणम् । जातिघटितलक्षणकरणात् नातीन्द्रियरूपादावव्याप्तिः । मूलोक्तलक्षणं लक्ष्ये योजयति ॥ **मुक्तावल्यां रूपादीनामिति** ॥ रूपरसगन्धस्पर्शशब्दानामित्यर्थः ॥ **चक्षुरादिग्राह्यत्वादिति** ॥ चक्षुरादिबाह्यैकैकेन्द्रियमात्रग्राह्यत्वादित्यर्थः । तथाच निरुक्तजातिघटितपरिष्कृतलक्षणसत्त्वाल्लक्षणसमन्वय इति भावः । गुरुत्वादृष्टभावना इति मूलस्थभावनापदं स्थितस्थापकाणुत्वोभयोपलक्षकं तेन स्थितस्थापकस्यापि संग्रहः । तथाच तावदन्यतमत्वावच्छिन्नस्यातीन्द्रियत्वं लक्षणमिति भावः । अत्रातीन्द्रियत्वं न प्रत्यक्षाविषयत्वं जगन्मात्रस्य ईश्वरप्रत्यक्षाविषयत्वेन योगिप्रत्यक्षविषयत्वेन च तदभावाप्रसिद्धेः । नापि प्रत्यक्षनिरूपितलौकिकविषयताशून्यत्वं परमाणुरूपादौ अतिव्याप्तेः । किन्तु साक्षात्कारानिरूपितलौकिकविषयताशून्यगुणवृत्तिजातिमत्त्वं तदिति बोध्यम् । आत्ममनःसंयोगस्य वैजात्यपुरस्कारेण हेतुत्वपक्षे संयोगावृत्तित्वमपि जातिविशेषणं वाच्यं वायुत्वमनस्त्वादिजातिमादायातिव्याप्तिवारणाय जातौ गुणवृत्तित्वविशेषणमिति ॥ **विभूनान्तु ये स्युर्वैशेषिका गुणा इति** ॥ त इति शेषः । अवधारणार्थकतुशब्दः बहुवचनान्ततच्छब्दोत्तरं योज्यः । तथाच त एव अकारणगुणोत्पन्ना इति अध्याहृततच्छब्दघटितकारिकार्थः अकारणगुणोत्पन्नत्वस्य तदितरावृत्तित्वलाभात् तस्य विभुविशेषगुणलक्षणत्वं लभ्यते तेषां विशिष्य अज्ञाने वक्ष्यमाणलक्षणोपपादनासंभवात् तदुपपादनाय विभुविशेषगुणत्वस्याननुगतत्वात् अनुगतलक्ष्यतावच्छेदकलाभाय च विभुविशेषगुणशब्दप्रतिपाद्यगुणान्विशिष्याह ॥ **मुक्तावल्यां बुद्धिसुखेत्यादि** ॥ तथाच तावदन्यतमत्वेन लक्ष्यत्वस्वीकारात् तस्य विशिष्य तावद्गुणघटितत्वात् अनुगतत्वाच्च नोक्तदोषद्वयावकाश इति भावः । मूलेऽकारणगुणोत्पन्ना इत्यत्र कारणे गुणाः कारणगुणाः तद्भिन्नाः अकारणगुणाः तैः उत्पन्ना इति विग्रहात् स्वाश्रयसमवायिसमवेतगुणान्यगुणजन्यत्वं लक्षणमिति लभ्यते तदनुपपन्नं आत्मादेः कारणाभावेन असंभवप्रसङ्गात् अतो विग्रहान्तरमाह ॥ **मुक्तावल्यां कारणगुणेनेत्यादि** ॥ तथाच कारणगुणैरुत्पन्नाः कारणगुणोत्पन्नाः न कारणगुणोत्पन्नाः अकारणगुणोत्पन्ना इति विग्रहात् स्वसमवायिसमवायिसमवेतगुणासमवायिकारणकं यद्यत्त्वं तत्तद्व्यक्तित्वावच्छिन्नभेदकूटविशिष्टगुणत्वं लक्षणमिति लभ्यत इति नासंभवावकाश इति भावः । नचेदं नित्यरूपादौ पाकजरूपादौ अवयवावयविनोर्द्वित्वद्विपृथक्त्वातिरिक्तद्वित्वद्विपृथक्त्वादौ कर्मजन्यसंयोगविभागवेगेषु नैमित्तिकद्रवत्वे परत्वापरत्वयोश्चातिव्याप्तमिति वाच्यं स्वाश्रयसमवायिसमवायित्वसंबन्धेन स्वविशिष्टकिंचित्संबद्धं यद्यत्त्वं तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदकूटविशिष्टपरिमाणावृत्तिगुणवृत्तिजातिमत्त्वस्य विवक्षितत्वात् । उक्तगुणेषु रूपत्वादीनां रूपादिनिष्ठपाकजन्यतावच्छेदकवैजात्यानां द्वित्वत्वद्विपृथ-

## दिनकरीयम्.

कग्राह्यत्वानपायादव्याप्तं चातीन्द्रियरूपादौ तेषामिन्द्रियग्राह्यत्वस्यैवाभावादत आह ॥ **रूपादीनामिति** ॥ **चक्षुरादीति** ॥ चक्षुरादिनैवेत्यर्थः । तथा चैकैकमात्रग्राह्यत्वस्य विवक्षितत्वात् सङ्ख्यादौ नातिव्याप्तिः ॥ **ग्राह्यत्वात्** ग्रहणयोग्यत्वात् । तेन नातीन्द्रियरूपादावव्याप्तिः तथा च चक्षुस्त्वगुभयाग्राह्यबहिरिन्द्रियग्राह्यगुणसमवेतजातिमत्त्वमेतेषां लक्षणमिति भावः । नच त्रसरेणुनिष्ठापकर्षस्य चक्षुरिन्द्रियेणैव ग्रहणात् तत्रातिव्याप्तिरिति वाच्यं परिमाणान्यत्वेनापि गुणस्य विशेषणीयत्वात् । मूले गुरुत्वादृष्टभावनेत्यत्र भावनापदं वेगभिन्नसंस्कारपरम् । तेन स्थितस्थापकस्यापि सङ्ग्रहः । नचातीन्द्रियत्वमिन्द्रियजन्यप्रत्यक्षाविषयत्वं यदि तदा गुरुत्वादावसम्भवस्तेषामलौकिकप्रत्यक्षविषयत्वात् लौकिकप्रत्यक्षाविषयत्वविवक्षणे चातीन्द्रियरूपादावतिव्याप्तिरिति वाच्यं लौकिकसाक्षात्कारविषयगुणत्वन्यूनवृत्तिसंस्कारत्वान्यधर्मसमवाय्यन्यगुणत्वस्य विवक्षितत्वात् । सत्तादिकमादायासम्भववारणाय गुणत्वन्यूनवृत्तीति । भावनास्थितस्थापकयोरव्याप्तिवारणाय संस्कारत्वान्येति । जात्यादावतिव्याप्तिवारणाय गुणपदम् । मूलेऽकारणगुणोत्पन्ना इत्यत्र न कारणमकारणं तस्य गुणा इति भ्रमनिराकरणायाह ॥ **मुक्तावल्यां कारणगुणेनेति** ॥ समवायिकारणसमवेतगुणेनेत्यर्थः ।

रूपादयो वक्ष्यन्ते । बुद्ध्यादयस्तु न तादृशा आत्मादेः कारणाभावात् ॥ ९० ॥ ९१ ॥ ॥ ९२ ॥ ९३ ॥ ९४ ॥

अपाकजास्तु स्पर्शान्ता द्रवत्वं च तथाविधम् ।
स्नेहवेगगुरुत्वैकपृथक्त्वपरिमाणकम् ॥ ९५ ॥
स्थितस्थापक इत्येते स्युः कारणगुणोद्भवाः ।
संयोगश्च विभागश्च वेगश्चैते तु कर्मजाः ॥ ९६ ॥

अपाकजास्त्विति ॥ पाकजरूपादीनां कारणगुणपूर्वकत्वाभावादपाकजा इत्युक्तम् ॥

**प्रभा.**

त्त्वत्वादिजातीनां संयोगत्वविभागत्ववेगत्वादीनां कर्मजन्यतावच्छेदकसंयोगविभागवेगनिष्ठवैजात्यानां अणुपरिमाणनिष्ठवैजात्यस्य च निरुक्तसंबन्धेन स्वविशिष्टकिंचिद्धर्मविशिष्टत्वात् परममहत्त्वत्वजातेः महत्त्ववृत्तित्वात् आत्मत्वादिजातेः गुणावृत्तित्वाच्च न कुत्राप्यतिव्याप्तिः । बुद्ध्यादयस्तु न तथा आत्मादेः कारणाभावादिति ग्रन्थेन बुद्ध्याद्याश्रयात्माकाशयोः कारणाप्रसिद्धेरेव मुख्यतया प्रतिपादनात् उक्तलक्षण एव विश्वनाथपञ्चाननस्य निर्भर इति प्रतिभाति । अस्मद्गुरुचरणास्तु अकारणगुणोत्पन्नत्वं कारणगुणोत्पन्नावृत्तिधर्मवत्त्वमेव तत्र कारणगुणोत्पन्नानां न तत्त्वेन निवेशः गौरवात् किंतु क्रियाविशिष्टत्वेन । तथाच समवायघटितसामानाधिकरण्येन क्रियाविशिष्टासमवेतमहत्त्वावृत्तिगुणवृत्तिजातिमत्त्वं अकारणगुणपूर्वकत्वमिति फलितम् । एवंच निरुक्तरूपत्वादितद्व्याप्यनिखिलजातीनां निरुक्तसंबन्धेन क्रियाविशिष्टे समवेतत्वात् परममहत्त्वत्वस्य महत्त्ववृत्तित्वात् आत्मत्वादेः गुणावृत्तित्वाच्च न कुत्राप्यतिव्याप्तिः । ज्ञानत्वादेरपि कालिकसंबन्धेन क्रियाविशिष्टज्ञानादौ समवेतत्वात् असंभववारणाय निरुक्तसंबन्धेन क्रियाविशिष्टत्वं उक्तमिति व्याचक्रुः ॥ ९० ॥ ९१ ॥ ९२ ॥ ९३ ॥ ९४ ॥

अपाकजास्तु स्पर्शान्ता इति मूलेन तेजस्संयोगाजन्यरूपादेः वक्ष्यमाणलक्षणलक्ष्यत्वं लब्धम् । तत्रापाकजत्वविशेषणप्रयोजनमाह ॥ **मुक्तावल्यां पाकजरूपादीनामिति ॥ कारणगुणपूर्वकत्वाभावादिति ॥** तथाच तत्साधारणधर्मस्य लक्ष्यतावच्छेदकत्वे वक्ष्यमाणलक्षणस्याव्याप्त्यापत्त्या तद्व्यावृत्तमेव लक्ष्यतावच्छेदकं

**दिनकरीयम्.**

अत्र कारणत्वमविवक्षितं समवायित्वमात्रं बोध्यम् ॥ **न तादृशा इति** ॥ तथा च कारणगुणैरुत्पन्नाः कारणगुणोत्पन्नाः न कारणगुणोत्पन्ना अकारणगुणोत्पन्ना इति विग्रहेण स्वाश्रयसमवायिसमवेतगुणजन्यत्वं कारणगुणोत्पन्नत्वं तादृशगुणाजन्यत्वमकारणगुणपूर्वकत्वमिति भावः । यद्यपीदं नित्यरूपे जन्येऽपि च पाकजादौ अवयवावयविनोर्द्वित्वद्विपृथक्त्वातिरिक्तद्वित्वपृथक्त्वादौ कर्मजन्यसंयोगविभागवेगेषु पाकजद्रवत्वे चातिव्याप्तं तथाप्यकारणगुणोत्पन्नमात्रवृत्तिगुणत्वसाक्षाद्व्याप्यजातिमत्त्वं विवक्षितमित्यदोषः । अकारणगुणोत्पन्नमात्रवृत्तित्वं च निरुक्तकारणगुणोत्पन्नावृत्तित्वं । रूपनिष्ठपाकजन्यतावच्छेदकवैजात्यं संयोगविभागवेगनिष्ठकर्मजन्यतावच्छेदकवैजात्यमणुपरिमाणनिष्ठवैजात्यं परममहत्त्वत्वं चादायातिव्याप्तिवारणाय गुणत्वसाक्षाद्व्याप्येति । संस्कारत्वान्यगुणत्वव्याप्याव्याप्यत्वे सति गुणत्वव्याप्यत्वं तदर्थः । अन्यथा भावनात्वस्य गुणत्वसाक्षाद्व्याप्यत्वाभावाद्भावनायामव्याप्तिप्रसङ्गात् । इत्थमपि परत्वापरत्वयोरतिव्याप्तिरवशिष्यते सापि परत्वापरत्ववृत्तित्वेन जातेर्विशेषणीयत्वान्निरसनीयेति ध्येयम् ॥ ९० ॥ ९१ ॥ ९२ ॥ ९३ ॥ ९४ ॥

**मूले स्युः कारणगुणोद्भवा इति** ॥ कारणगुणोत्पन्नत्वं च न पूर्वोक्तं स्वाश्रयसमवायिसमवेतगुणजन्यत्वं हस्तपुस्तकसंयोगविभागादिजन्यकायपुस्तकसंयोगविभागादावतिव्याप्तेः । नच स्वाश्रयसमवायिमात्रसमवेतगुणजन्यत्वं तत् हस्तपुस्तकसंयोगादिश्च न स्वाश्रयसमवायिमात्रसमवेत इति वाच्यं तथाप्यवयवावयविनोरेकत्वाभ्यां जनितेऽवयवावयविद्वित्वादावतिव्याप्तेः तथापि स्वाश्रयसमवायिमात्रसमवेतस्वसजातीयगु-

**तथाविधं अपाकजम् । तथैकत्वमपि बोध्यम् । ॥ संयोगश्चेति ॥ कर्मजन्यत्वं यद्यपि न**

## प्रभा ।

वाच्यमिति भावः ॥ **अपाकजमिति** ॥ सांसिद्धिकद्रवत्वमित्यर्थः । निरुक्तमूलेन एकत्वस्याप्रतिपादनात् न्यूनता-परिहारायाह ॥ **तथैकत्वमपीति** ॥ यथा निरुक्तगुणानां लक्ष्यत्वं तथैकत्वमपि लक्ष्यतया स्वीकार्यमित्यर्थः । तथा च तादृशगुणान्यतमत्वावच्छिन्नस्य कारणगुणजन्यत्वं लक्षणमिति भावः । अत्र कारणगुणजन्यत्वं च समवायघटितसामानाधिकरण्यसंबन्धावच्छिन्नकारणतानिरूपितकार्यत्वं । नचेदं लक्षणं नित्यरूपादौ कर्मजवेगे च अव्याप्तमिति वाच्यम् तादृशकार्यतासमानाधिकरणपाकजन्यतावच्छेदकवैजात्याभावविशिष्टभावनाव्यक्त्यवृत्तिजातिमत्त्वस्य विवक्षितत्वात् उक्तस्थले नित्यरूपादेः तादृशरूपत्वादिजातिमत्त्वात् कर्मजवेगस्य तादृशवेगत्वजातिमत्त्वाच्च अव्याप्तेरभावात् । पाकजरूपादावतिव्याप्तिवारणाय जातौ पाकजन्यतावच्छेदकवैजात्याभावविशिष्टत्वविशेषणम् । वैशिष्ट्यं च दैशिकविशेषणतासमवायोभयघटितसामानाधिकरण्यरूपं बोध्यम् । तेन केवलदैशिकविशेषणतया तादृशवैजात्याभावविशिष्टरूपत्वादिजातेः पाकजरूपादौ सत्त्वेन नोक्तातिव्याप्तिप्रसङ्गः । इत्थंच रूपत्वादिजातेः अपाकजरूपाद्यन्तर्भावेनैव तादृशसामानाधिकरण्यसंबन्धेन तादृशवैजात्याभावविशिष्टत्वात् पाकजरूपादेः विशिष्टरूपत्वादिजातिमत्त्वाभावेन न तेष्वतिव्याप्तिप्रसक्तिः । संस्कारत्वजातिमादाय भावनायां अतिव्याप्तिवारणाय जातौ भावनाव्यक्त्यवृत्तित्वविशेषणम् । एवंच न कोऽपि दोष इति प्रतिभाति ॥ अस्मद्गुरुचरणास्तु अपाकजजन्यरूपादिक्रियाजन्यभिन्नवेगैतदुभयघटितान्यतमत्वावच्छिन्नस्यैव लक्ष्यत्वेन मूलकारस्य तात्पर्यविषयतया तत्र तादृशकार्यत्वरूपलक्षणमेव निर्दुष्टमिति व्याचक्रुः । केचित्तु यद्यपि कारणगुणोत्पन्नत्वं च न पूर्वोक्तं स्वाश्रयसमवायिसमवेतगुणजन्यत्वं हस्तपुस्तकसंयोगविभागादिजन्यकायपुस्तकसंयोगविभागादावतिव्याप्तेः नच स्वाश्रयसमवायिमात्रसमवेतगुणजन्यत्वं तत् हस्तपुस्तकसंयोगविभागादिश्च न स्वाश्रयसमवायिमात्रसमवेत इति वाच्यम् तथाप्यवयवावयविनोः एकत्वाभ्यां जनिते अवयवावयविद्वित्वादावतिव्याप्तेः तथापि स्वाश्रयसमवायिमात्रसमवेतस्वसजातीयगुणजन्यत्वं तत् अवयवैकत्वादेरवयवावयविद्वित्वसजातीयत्वाभावात् तत्रातिव्याप्तेरभावात् । नच संख्यात्वेन तयोः साजात्यमस्तीति तद्दोषतादवस्थ्यं गुणत्वव्याप्यव्याप्यजात्या साजात्यस्य विवक्षितत्वात् अवयवावयविरूपादीनां नीलत्वादिना साजात्यस्य सत्त्वान्नासंभवः । ननु तथापि नित्यरूपे सङ्ख्याप्रचयजन्यपरिमाणे कर्मजवेगे चाव्याप्तिरिति चेन्न स्वाश्रयसमवायिमात्रसमवेतस्वसजातीयगुणजन्यवृत्तिजातिमत्त्वस्य विवक्षितत्वान्नित्यरूपादौ तादृशरूपत्वादिकमादाय लक्षणसमन्वयात् । अत्र सङ्ख्यात्वपृथक्त्वत्वातिरिक्तत्वेन भावनावृत्त्यन्यत्वेन च तादृशजातिर्विशेषणीया । तेन तादृशसङ्ख्यात्वं पृथक्त्वत्वं चादाय द्वित्वद्विपृथक्त्वादौ नातिव्याप्तिः । नवावयववेगजन्यावयविवेगवृत्तिसत्तागुणत्वसंस्कारत्वादिकमादाय अतिव्याप्तिर्भावनायां । नन्वेवं जातिघटितलक्षणकरणे तादृशरूपत्वादिजातिमादाय पाकजरूपादावतिव्याप्तिरिति वाच्यं तादृशजातिमत्त्वे सति अपाकजत्वस्य विवक्षितत्वादिति सर्वं चतुरश्रमित्या-

## दिनकरीयम् ।

णजन्यत्वं तत् अवयवैकत्वादेरवयवावयविद्वित्वसजातीयत्वाभावेन तत्रातिव्याप्त्यभावात् । नच सङ्ख्यात्वेन तयोः साजात्यमस्तीति तद्दोषतादवस्थ्यं गुणत्वव्याप्यव्याप्यजात्या साजात्यस्य विवक्षितत्वात् । अवयवावयविरूपादीनां नीलत्वादिना साजात्यसत्त्वान्नासम्भवः । ननु तथापि नित्यरूपे सङ्ख्याप्रचयजन्यपरिमाणे कर्मजवेगे चाव्याप्तिरिति चेन्न स्वाश्रयसमवायिमात्रसमवेतस्वसजातीयगुणजन्यवृत्तिजातिमत्त्वस्य विवक्षितत्वात् नित्यरूपादौ तादृशरूपत्वादिकमादाय लक्षणसमन्वयात् । अत्र च सङ्ख्यात्वपृथक्त्वत्वातिरिक्तत्वेन भावनावृत्त्यन्यत्वेन तादृशजातिर्विशेषणीया तेन तादृशसङ्ख्यात्वं पृथक्त्वत्वं चादाय द्वित्वद्विपृथक्त्वादौ नातिव्याप्तिः नवावयववेगजन्यावयविवेगवृत्तिसत्तागुणत्वसंस्कारत्वान्यादाय भावनायामतिव्याप्तिः । नचैवं जातिघटितलक्षणे तादृशरूपत्वादिजातिमादाय पाकजरूपादावतिव्याप्तिरिति वाच्यं तादृशजातिमत्त्वे सत्यपाकजत्वस्य विवक्षितत्वादिति सर्वं चतुरश्रम् । लक्ष्यतावच्छेदकेऽपाकजत्वविशेषणस्य प्रयोजनमाह ॥ **मुक्तावल्यां पाकजरूपादीनामिति** ॥ **कारणगुणपूर्वकत्वाभावात्** कारणगुणपूर्वकत्वव्यवहाराभावात् ।

साधर्म्यं घटादावतिव्याप्तेः संयोगजसंयोगेऽव्याप्तेश्च तथापि कर्मजन्यवृत्तिगुणत्वव्याप्यजातिमत्त्वं बोध्यम्। एवमन्यत्रापि क्वचिदूह्यम् ॥ ९५ ॥ ९६ ॥

**प्रभा.**

हुः। तदसत् स्वाश्रयसमवायिसमवेतगुणजन्यत्वं न तादृशगुणनिष्ठसंबन्धसामान्यावच्छिन्नकारणतानिरूपितकार्यत्वरूपं जन्यमात्रेऽतिव्याप्तेः। किंतु समवायघटितसामानाधिकरण्यसंबन्धावच्छिन्नकारणतानिरूपितकार्यत्वरूपमेव तत्। एवंच तादृशकारणतायां निरुक्तगुणनिष्ठत्वमपि न निवेशनीयं प्रयोजनाभावात्। निरुक्तसंबन्धावच्छिन्नकारणता कारणगुणनिष्ठैवेत्येतादृशकारणताघटितलक्षणलाभायैव मूलकृता कारणगुणोद्भवा इत्युक्तम्। एवंच हस्तपुस्तकसंयोगादिजन्यकायपुस्तकसंयोगादौ निरुक्तलक्षणाभावेनातिव्याप्त्यप्रसक्तेरायदूषणमयुक्तम्। अवयवावयविनोरेकत्वाभ्यां जनिते अवयवावयविद्वित्वादावपि समवायघटितसामानाधिकरण्यसंबन्धावच्छिन्नकारणताघटितलक्षणाभावादेवातिव्याप्त्यप्रसक्तेः द्वितीयदूषणमप्ययुक्तम्। एवं तादृशकार्यतासामानाधिकरण्यदैशिकविशेषणतासमवायोभयघटितसामानाधिकरण्यसंबन्धेन पाकजन्यतावच्छेदकवैजात्याभावविशिष्टभावनाव्यक्त्यवृत्तिजातिमत्त्वस्य लक्षणत्वस्वीकारेणैव सकलदोषवारणसंभवे नित्यरूपादावतिव्याप्तिवारणाय स्वाश्रयसमवायिमात्रसमवेतस्वसजातीयगुणजन्यवृत्तिजातिमत्त्वरूपलक्षणकरणं तादृशसंख्यात्वादिजातिमादाय द्वित्वद्विपृथक्त्वादावतिव्याप्तिवारणाय जातौ संख्यात्वपृथक्त्वातिरिक्तत्वविशेषणदानं तादृशरूपत्वादिजातिमादाय पाकजरूपादावतिव्याप्तिवारणाय विशेषणविशेष्यभावे विनिगमनाविरहप्रयुक्तलक्षणद्वयसम्पादकापाकजत्वविशेषणदानं च विश्वनाथपञ्चाननसिद्धान्तापरिज्ञानपूर्वकमेव। एवंस्थिते सर्वं चतुरस्रमिति तदुक्तौ मूलं चिन्त्यमिति दिक्। केचित्तु अत्र पाकजरूपरसगन्धस्पर्शपाकजद्रवत्वद्वित्वद्विपृथक्त्वादिसंयोगविभागपरत्वापरत्वानां न कारणगुणपूर्वकत्वं न वा अकारणगुणपूर्वकत्वं साधर्म्यमिति ज्ञेयमित्याहुः तदसत् उक्तगुणानां अपाकजास्तु स्पर्शान्ता इत्यादिकारिकाप्रतिपाद्यतावद्गुणान्यतमत्वरूपलक्ष्यतावच्छेदकानाक्रान्तत्वेन निरुक्तकारणगुणपूर्वकत्वरूपलक्षणानाश्रयत्वेन चैवमुक्तगुणानां विभूनां तु ये स्युर्वैशेषिका गुणा इति कारिकाप्रतिपाद्यतावद्गुणान्यतमत्वरूपलक्ष्यतावच्छेदकानाक्रान्तत्वेन निरुक्ताकारणगुणपूर्वकत्वरूपलक्षणानाश्रयत्वेन च यदुक्तं यस्य साधर्म्यमिति न्यायेन निरुक्तकारणगुणपूर्वकत्वाकारणगुणपूर्वकत्वयोः तादृशगुणवैधर्म्यस्य सिद्धत्वात् पुनः अत्रेत्यादिध्येयमित्यन्तेन तयोस्तावद्गुणसाधर्म्याभावप्रतिपादनस्यासङ्गतत्वात्। अन्यथा तयोर्नित्यसाधर्म्याभावस्यापि प्रतिपादनापत्तेः। संयोगश्च विभागश्च वेगश्चैते तु कर्मजा इति मूलेन तावदन्यतमत्वावच्छिन्नस्य कर्मजत्वं लक्षणमिति लभ्यते। तादृशलक्षणस्य यथाश्रुते क्वचिद्दोषमाशङ्क्य निराकरोति ॥ **मुक्तावल्यां कर्मजन्यत्वं यद्यपीति** ॥ **न साधर्म्यमिति** ॥ न लक्षणमित्यर्थः। तत्र हेतुमाह ॥ **घटादाविति** ॥ **अतिव्याप्तेरिति** ॥ कार्यमात्रं प्रति क्रियाया हेतुत्वादिति भावः। ननु यथाश्रुतकर्मजत्वं न लक्षणं किंतु समवायसंबन्धावच्छिन्नक्रियानिष्ठकारणतानिरूपितसमवायसंबन्धावच्छिन्नकार्यत्वरूपं तत्र अवयवक्रियाजन्यावयविक्रियायामतिव्याप्तिवारणाय कारणतायां समवायसंबन्धावच्छिन्नत्वनिवेशः। चक्रभ्रम्यादिजन्यघटादावतिव्याप्तिवारणाय कार्यतायां समवायसंबन्धावच्छिन्नत्वनिवेशः। एवंच न पूर्वोक्तातिव्याप्तिरत आह ॥ **संयोगजसंयोग इति** ॥ तादृशसंयोगादावित्यर्थः। आदिना विभागजविभागवेगजवेगयोः परिग्रहः ॥ **कर्मजन्यवृत्तीति** ॥ तादृशकार्यतासामानाधिकरणेत्यर्थः ॥ सत्तागुणत्वमादायातिव्याप्तिवारणाय गुणत्वव्याप्येति। तत्र गुणत्वव्याप्यस्य न तत्त्वेन निवेशः तादृशसंस्कारत्वजातिमादाय भावनास्थितस्थापकयोः अतिव्याप्तेर्गौरवाच्च किंतु भावनाव्यक्त्यवृत्तित्वेन। तथाच तादृशकार्यतासमानाधिकरणभा-

**दिनकरीयम्.**

अत्र पाकजरूपरसगन्धस्पर्शपाकजद्रवत्वद्वित्वादिद्विपृथक्त्वादिसंयोगविभागपरत्वापरत्वानां न कारणगुणपूर्वकत्वं नवा अकारणगुणपूर्वकत्वं साधर्म्यमिति ध्येयम् ॥ **एवमन्यत्रापीति** ॥ अथ प्रादेशिक इत्यादिमूलेन संयोगादिद्वयविभुविशेषगुणानामव्याप्यवृत्तित्वं साधर्म्यं प्रदर्शनीयं तत्रापि यथाश्रुते कर्मादावतिव्याप्तेरीश्वरज्ञानादावव्याप्तेश्चाव्याप्यवृत्तिवृत्तिगुणत्वव्याप्यजातिमत्त्वं बोध्यमित्यर्थः ॥ ९५ ॥ ९६ ॥

स्पर्शान्तपरिमाणैकपृथक्त्वस्नेहशब्दके ।
भवेदसमवायित्वमथ वैशेषिके गुणे ॥ ९७ ॥
आत्मनः स्यान्निमित्तत्वमुष्णस्पर्शगुरुत्वयोः ।
वेगेऽपि च द्रवत्वे च संयोगादिद्वये तथा ॥ ९८ ॥
द्विधैव कारणत्वं स्यादथ प्रादेशिको भवेत् ।
वैशेषिको विभुगुणः संयोगादिद्वयं तथा ॥ ९९ ॥

पृथक्त्वेत्यत्र त्वप्रत्ययस्य प्रत्येकमन्वयादेकत्वं पृथक्त्वं च ग्राह्यं पृथक्त्वपदेन चैकपृथक्त्वम् ॥ भवेदसमवायित्वमिति ॥ घटादिरूपरसगन्धस्पर्शाः कपालादिरूपरसगन्धस्पर्शेभ्यो भवन्ति एवं कपालादिपरिमाणादीनां घटादिपरिमाणाद्यसमवायिकारणत्वं शब्दस्यापि द्वितीयशब्दं प्रति एवं स्थितस्थापकैकपृथक्त्वयोरपि ज्ञेयम् ॥ निमित्तत्वमिति ॥ बुद्ध्यादी-

प्रभा.

वनाव्यत्त्यवृत्तिजातिमत्त्वं लक्षणमिति फलितम् । अतो न काप्यनुपपत्तिरिति ॥ एवमिति ॥ कर्मजत्वलक्षणमित्यर्थः ॥ अन्यत्रापीति ॥ उत्तरलक्षणेष्वपीत्यर्थः ॥ क्वचिदिति ॥ जातिघटितलक्षणाकरणे यादृशयादृशलक्षणानां दोषप्रसक्तिः तत्तल्लक्षणमेवेत्यर्थः ॥ ऊह्यमिति ॥ जातिघटितं कार्यमित्यर्थः ॥ ९५ ॥ ९६ ॥ स्पर्शान्तपरिमाणैकपृथक्त्वस्नेहशब्दके भवेदसमवायित्वमिति मूले स्पर्शपदं उष्णत्वजातिशून्यस्पर्शपरं तस्योभयकारणत्वलक्षणलक्ष्यत्वात् । एवं भवेदसमवायित्वमिति मूलं सावधारणम् । एवंच उक्तगुणान्यतमत्वावच्छिन्नस्यासमवायिकारणत्वमेव लक्षणमिति लभ्यते । तल्लक्ष्ये उपपादयति ॥ मुक्तावल्यां घटादीत्यादिना ॥ द्वितीयशब्दं प्रतीति ॥ असमवायिकारणत्वमिति पूर्वेणान्वयः । मूलस्य न्यूनतां परिहरति ॥ एवमिति ॥ ज्ञेयमिति ॥ उक्तलक्षणलक्ष्यत्वं वाच्यमित्यर्थः । तथाच उक्तगुणान्यतमत्वावच्छिन्नस्य निमित्तकारणत्वशून्यत्वे सति समवायसंबन्धावच्छिन्नकार्यतानिरूपितसमवायसंबन्धावच्छिन्नकारणत्वसमवायसंबन्धावच्छिन्नकार्यतानिरूपितसमवायघटितसामानाधिकरण्यसंबन्धावच्छिन्नकारणत्वान्यतरवत्त्वं लक्षणमिति भावः । अत्र शब्दसाधारण्याय प्राथमिककारणत्वस्य रूपादिसाधारण्याय द्वितीयकारणत्वस्य चान्यतरत्वेन लक्षणत्वमङ्गीकृतम् । नचैवमपि प्राचां मते पाकजरूपादौ उभयमतेऽपि चरमावयविरूपादौ अन्त्यशब्दे चाव्याप्तिरतिव्याप्तिश्चात्मविशेषगुणेष्विति वाच्यम् । तादृशकारणत्वान्यतरसमानाधिकरणा स्वसमवायिसंयुक्तसमवेतत्वसमानाधिकरणकालिकसंबन्धानवच्छिन्नप्रत्यक्षत्वासमानाधिकरणकार्यतानिरूपितकारणताश्रयीभूतं यद्यत् स्वं तावदन्यतमासमवेतद्वित्वद्विपृथक्त्वान्यतरासमवेतात्मविशेषगुणान्यतमासमवेता च या जातिस्तादृशजातिमत्त्वस्य सत्यन्तघटितलक्षणवाक्येन विवक्षितत्वात् । अत्र जातिघटितलक्षणकरणात् रूपत्वरसत्वगन्धत्वानुष्णाशीतत्वपरिमाणत्वैकत्वत्वैकपृथक्त्वत्वस्नेहत्वशब्दत्वस्थितस्थापकत्वरूपतादृशजातीरादाय सर्वत्र लक्षणसमन्वयः । जातौ प्राथमिकान्यतमासमवेतत्वविशेषणात् उभयकारणत्वलक्षणलक्ष्योष्णस्पर्शादौ नातिव्याप्तिः । रूपादीनामपि कालोपाधिविधया कार्यमात्रहेतुत्वात् तेषामपि तावदन्यतमत्वाश्रयत्वेन रूपत्वादीनां तावदन्यतमासमवेतत्वाभावात् असंभववारणायान्यतमकोटिप्रविष्टकार्यतायां कालिकसंबन्धानवच्छिन्नत्वनिवेशः । विषयविधया स्वप्रत्यक्षकारणस्य द्रव्यादिचाक्षुषकारणस्य च रूपादेः तादृशान्यतमत्वाश्रयत्वात् असंभवतादवस्थ्यवारणायान्यतमकोटिप्रविष्टकार्यतायां प्रत्यक्षत्वासमानाधिकरणत्वनिवेशः । संख्यात्वपृथक्त्वत्वादिरूपतादृशजातिमादाय द्वित्वद्विपृथक्त्वादौ अतिव्याप्तिवारणाय जातौ द्वित्वद्विपृथक्त्वान्यतरासमवेतत्वनिवेशः । आत्मविशेषगुणेषु अतिव्याप्तिवारणाय जातौ द्वितीयान्यतमासमवेतत्वनिवेश इति ध्येयम् । अथ वैशेषिके गुणे आत्मनस्स्यान्निमित्तत्वं इति मूलेन निमित्तत्वशब्दस्य सावधारणत्वस्वीकारात् निमित्तत्वशब्दस्य निमित्तकारणत्वतत्कार्यत्वोभयपरत्वस्वीकाराच्चात्मविशेषगुणान्यतमत्वावच्छिन्नस्य ज्ञानादिनिष्ठसमवायसंव-

नामिच्छादिनिमित्तत्वादिति भावः ॥ **द्विधैवेति** ॥ असमवायिकारणत्वं निमित्तकारणत्वं च । तथा हि उष्णस्पर्श उष्णस्पर्शस्यासमवायिकारणं पाकजे निमित्तम् । गुरुत्वं गुरुत्वपतनयोरसमवायिकारणमभिघाते निमित्तम् । वेगो वेगस्पन्दनयोरसमवायि अभिघाते निमित्तम् । द्रवत्वं द्रवत्वस्पन्दनयोरसमवायि संग्रहे निमित्तम् । भेरीदण्डसंयोगः शब्दे निमित्तं भेर्याकाशसंयोगेऽसमवायी । वंशदलद्वयविभागः शब्दे निमित्तं वंशदलाकाशविभागेऽसमवायीति ॥ **प्रादेशिकः** अव्याप्यवृत्तिः ॥ ९७ ॥ ९८ ॥ ९९ ॥

## प्रभा.

न्धावच्छिन्नकार्यतानिरूपितसंयोगान्यवृत्तिसमवायसंबन्धावच्छिन्नकारणत्वज्ञानादिनिष्ठसमवायसंबन्धावच्छिन्नकारणतानिरूपितसमवायसंबन्धावच्छिन्नकार्यतान्यतरवत्त्वं लक्षणमिति लभ्यते। तेन न सुखादावव्याप्तिः। आत्ममनस्संयोगेऽतिव्याप्तिवारणाय कारणतायामेवकारार्थासमवायिकारणत्वाभावपर्यवसितार्थसंयोगान्यवृत्तित्वविशेषणम् । नचैतस्य लक्षणत्वे यादृशनिर्विकल्पकं सविकल्पकमजनयित्वैव नष्टं तत्राव्याप्तिरिति वाच्यम् । तादृशनिर्विकल्पके प्रमाणाभावात् । अथवा कारणत्वशरीरे संयोगान्यवृत्तित्वमनिवेश्य निरुक्तकारणत्वकार्यत्वान्यतरसमानाधिकरणसंयोगान्यवृत्तिजातिमत्त्वस्य विवक्षितत्वात् तादृशज्ञानत्वादिजातिमादाय सर्वत्र लक्षणसमन्वयः संयोगत्वगुणत्वादिजातिमादायातिव्याप्तिपरिहारश्चेति । उष्णस्पर्शगुरुत्वयोः वेगेऽपि च द्रवत्वे च संयोगादिद्वये तथा द्विधैव कारणत्वं स्यादिति अप्यर्थकैवकारघटितमूलात् उक्तगुणान्यतमत्वावच्छिन्नस्य कारणताद्वयवत्त्वं लक्षणमिति लभ्यते तच्चानुपपन्नं समवायिकारणत्वघटितोभयकारणत्वस्य गुणेषु बाधितत्वादतः द्विविधकारणत्वपदार्थमाह ॥ **मुक्तावल्यामसमवायिकारणत्वमिति** ॥ तथाचासमवायिकारणत्वनिमित्तकारणत्वघटितोभयत्वावच्छिन्नस्य उक्तगुणेष्वबाधितत्वान्नोक्तदोष इति भावः । अबाधितत्वमेवोपपादयति ॥ **तथाहीत्यादिना** ॥ **असमवायीति** ॥ अवयवगतोष्णस्पर्शः अवयविगतोष्णस्पर्शासमवायिकारणमित्यर्थः । एवमग्रेऽपि ॥ **पाकज इति** ॥ विजातीयतेजस्संयोगजन्यरूपादावित्यर्थः । कार्यैकार्थप्रत्यासत्त्यापि गुरुत्वस्यासमवायिकारणत्वमस्तीति बोधनाय गुरुत्वपतनयोरित्युक्तम् ॥ **संग्रह इति** ॥ सक्त्वादीनां विजातीयसंयोग इत्यर्थः ॥ **भेरीदण्डसंयोग इति** ॥ भेरीदण्डयोः संयोग इत्यर्थः । भेर्याकाशसंयोगेऽसमवायीति सप्तम्यन्तः पाठः । भेर्यवच्छिन्नाकाशनिष्ठदण्डसंयोग इत्यर्थः ॥ भेर्याकाशसंयोगोऽसमवायीति प्रथमान्तसंयोगपदघटितपाठस्तु प्रामादिकः भेरीदण्डसंयोगस्यासमवायिकारणत्वस्याप्रतिपादनात् । अथवा दण्डशब्दो दण्डावयवपरः । भेर्याकाशसंयोग इति ॥ भेर्याकाशाभ्यां दण्डसंयोग इत्यर्थः । अत्राकाशग्रहणं दृष्टान्तार्थम् । तथाच दण्डावयवाकाशयोः नोदनसंयोगः यथा दण्डाकाशसंयोगेऽसमवायि तथा दण्डावयवभेर्योरभिघातसंयोगोऽपि भेरीदण्डयोगे असमवायि इत्यर्थलाभात् दण्डावयवभेरीसंयोगस्य शब्दनिमित्तत्वाच्च नोक्तानुपपत्तिः । इदमुपलक्षणम् । हस्तभित्त्योरभिघाताख्यसंयोगशब्दनिमित्तं कायभित्तिसंयोगे असमवायीत्यपि बोध्यम् । केचित्तु यद्यपि भेरीदण्डसंयोगस्य शब्दनिमित्तत्वं ननु तत्र तस्यासमवायिकारणत्वं भेर्याकाशसंयोगस्यासमवायित्वं ननु तत्र तस्य निमित्तत्वमित्येकव्यक्तेः न द्विविधहेतुत्वं तथापि संयोगसजातीयस्य द्विविधहेतुत्वमस्त्येवेति भाव इति प्रथमान्ताकाशसंयोगशब्दघटितपाठाभिप्रायेणाक्षेपं परिहारं चाहुः तदसत् सप्तम्यन्ताकाशसंयोगशब्दघटितपाठपक्षे मदुक्तार्थ-

## दिनकरीयम्.

मूले एकपृथक्त्वस्नेहशब्दक इत्यत्रैकत्वमेकपृथक्त्वं चेत्यर्थो बोध्यः। वैशेषिके गुण इत्यत्रात्मन इत्यस्यान्वयः ॥ **मुक्तावल्यामुष्णस्पर्श इति** ॥ अवयवगत उष्णस्पर्श इत्यर्थः ॥ **उष्णस्पर्शस्य** अवयविगतोष्णस्पर्शस्य । एवमग्रेऽपि । कारणैकार्थप्रत्यासत्त्या कार्यैकार्थप्रत्यासत्त्या च गुरुत्वस्यासमवायिकारणत्वमिति प्रदर्शनाय गुरुत्वपतनयोरित्युभयमुक्तम् । एवमग्रेऽपि ॥ **संग्रहे** सक्त्वादिसंयोगविशेषे । भेर्याकाशसंयोगोऽसमवायीति प्रथमान्तसंयोगपदघटितः पाठः । भावकार्यस्यासमवायिकारणजन्यत्वनियमाद्भेर्याकाशसंयोगस्य शब्दे प्रत्य-

## प्रभा.

रीत्या भेरीदण्डसंयोगस्याभिमतकारणताद्वयवत्त्वसंभवे प्रथमान्तताद‍ृशपाठमङ्गीकृत्य ताद‍ृशाक्षेपकरणस्य एकस्मिन्नुभयहेतुत्वप्रतिपादनाशक्तिसूचकस्य सजातीयद्विविधहेतुत्वप्रतिपादनरूपपरिहारस्य च प्रक्षालनाद्धीति न्यायकबळितत्वादिति । नचासमवायिकारणत्वनिमित्तकारणत्वोभयवत्त्वलक्षणं चरमावयविसमवेतोष्णस्पर्शादावव्याप्तमतिव्याप्तं च रूपादाविति वाच्यम् । समवायसंबन्धावच्छिन्नकार्यतानिरूपितसमवायसंबन्धावच्छिन्नकारणत्वताद‍ृशकार्यतानिरूपितसमवायघटितसामानाधिकरण्यसंबन्धावच्छिन्नकारणत्वान्यतरसमानाधिकरणस्वसमवायिसंयुक्तसमवेतत्वसमानाधिकरणकालिकसंबन्धानवच्छिन्नप्रत्यक्षत्वासमानाधिकरणकार्यतानिरूपितकारणताश्रयीभूतं यत्स्वं तावदन्यतमसमवेतशीतस्पर्शभावनाकर्मान्यतमासमवेतजातिमत्त्वस्य विवक्षितत्वात् । तत्र ताद‍ृशोष्णत्वादिजातिमादाय चरमावयविसमवेतोष्णस्पर्शादावपि लक्षणसमन्वयः । भेर्यवच्छिन्नदण्डाकाशसंयोगं प्रति भेरीदण्डसंयोगस्य समवायप्रत्यासत्त्यैवासमवायिकारणतया तत्संग्रहाय लक्षणे प्राथमिकासमवायिकारणत्वप्रवेशः । उष्णस्पर्शसंग्रहाय द्वितीयासमवायिकारणत्वप्रवेशः । अनुगमाय तयोरन्यतरत्वेन प्रवेशः । रूपत्वादिजातिमादायातिव्याप्तिवारणाय जातौ निमित्तकारणत्वपर्यवसितार्थान्यतमसमवेतत्वनिवेशः । रूपादीनामपि कालविधया कालिकसंबन्धेन कार्यमात्रं प्रति हेतुतया तेषामपि तावदन्यतमत्वाश्रयत्वात् तत्समवेतरूपत्वादिजातिमादायातिव्याप्तिवारणायान्यतमघटककार्यतायां कालिकसंबन्धानवच्छिन्नत्वनिवेशः । रूपादीनामपि स्वप्रत्यक्षद्रव्यादिप्रत्यक्षनिष्ठताद‍ृशकार्यतानिरूपितकारणतावत्त्वेनान्यतमत्वाश्रयत्वात् तत्समवेतरूपत्वादिजातिमादाय अतिव्याप्तितादवस्थ्यवारणायान्यतमघटककार्यतायां प्रत्यक्षत्वासमानाधिकरणत्वनिवेशः । स्पर्शत्वसंस्कारत्वकर्मत्वगुणत्वादिरूपताद‍ृशजातीरादाय शीतभावनास्थितस्थापककर्मस्वतिव्याप्तिवारणाय जातौ ताद‍ृशान्यतमासमवेतत्वनिवेश इति हृदयम् । नचैवमपि ताद‍ृशजातौ ताद‍ृशकारणत्वान्यतरसमानाधिकरणत्वविशेषणं व्यर्थं रूपत्वादीनां ताद‍ृशान्यतमसमवेतत्वाभावेनैवातिव्याप्तिवारणादिति वाच्यम् चैत्रायात्मकशरीरसमवायिहस्तसंयुक्तकपालादिसमवेतघटादिनिष्ठताद‍ृशकार्यतानिरूपितकारणतावत्त्वेन निरुक्तान्यतमत्वाश्रयतया तत्समवेतचैत्रत्वादिजातिमादायातिव्याप्त्यापत्तेः । यद्यपि जातौ शीतभावनाकर्मान्यतमासमवेतत्वविशेषणस्थाने शीतभावनाद्रव्यकर्मान्यतमासमवेतत्वनिवेशेनैव चैत्रत्वादिजातिमादायातिव्याप्तिवारणे कारणत्वान्यतरसामानाधिकरण्यरूपगुरुविशेषणं व्यर्थमिति प्रतिभाति तथापि द्विविधकारणत्वघटितलक्षणस्य परिष्कारो न भवतीति तदुपेक्षितामिति हृदयम् ॥ **वंशदळद्वयविभागः शब्दे निमित्तं वंशाकाशविभागेऽसमवायीति** ॥ नच दळद्वयविभागोत्तरकालीनदळद्वयसंयोगनाशस्यैव शब्दनिमित्तत्वमस्त्विति वाच्यम् नाशस्य शब्दनिमित्ततायाः अप्रामाणिकत्वात् विभागोत्पत्तिद्वितीयक्षण एव शब्दोत्पत्तिसंभवे क्षणविलम्बेन शब्दोत्पत्तिस्वीकारस्यानुचितत्वाच्चान्यथा दळस्योत्तरसंयोगोत्पत्तिद्वितीयक्षण एव शब्दोत्पत्तिमङ्गीकृत्य उत्तरसंयोगस्यैव निमित्तत्वापत्तेः । इदमुदाहरणं च कारणमात्रविभागजकारणाकारणविभागाङ्गीकर्तृमतानुसारेणैव । सिद्धान्तिमते आकुञ्चितधनुषः हस्तक्रियाजन्यहस्तविभागः शब्दे निमित्तं शरीरधनुर्विभागेऽसमवायीत्युदाहरणं बोध्यम् । अथ प्रादेशिको भवेत् वैशेषिको विभुगुणसंयोगादिद्वयं तथेति मूलेन बुद्ध्यादिसंस्कारान्तशब्दसंयोगविभागैतदन्यतमत्वावच्छिन्नस्य प्रादेशिकत्वं लक्षणमिति लभ्यते तच्चानुपपन्नं प्रकृष्टदेशवृत्तित्वरूपप्रादेशिकत्वस्य रूपादिसाधारणत्वात् अतः प्रादेशिकपदार्थमाह ॥ **मुक्तावल्यामव्याप्यवृत्तिरिति** ॥ दैशिकाव्याप्यवृत्तिरि-

## दिनकरीयम्.

समवायिकारणत्वमावश्यकमिति भावः । यद्यपि भेरीदण्डसंयोगस्य शब्दे निमित्तत्वं न तु तत्र तस्यासमवायिकारणत्वं भेर्याकाशसंयोगस्यासमवायिकारणत्वं न तु तत्र तस्य निमित्तत्वमित्येकव्यक्तेर्न द्विविधहेतुत्वं तथापि संयोगजातीयस्य द्विविधहेतुत्वमस्त्येवेति भावः । एवमग्रेऽपि । मूले संयोगादिद्वये तथेत्यनन्तरं द्वित्वैवेत्यस्य प्राक् परापरत्वद्वित्वादिद्विपृथक्त्वादिके पुनरिति पाठः क्वचित्पुस्तके प्रमादादायातः परत्वादीनामकारणत्वेन द्विविधकारणत्वस्य तत्राभावात् । नच परत्वादीनामपि स्वध्वंसप्रत्यक्षं प्रति हेतुत्वात् कथमकार-

**चक्षुर्ग्राह्यं भवेद्रूपं द्रव्यादेरुपलम्भकम् ।**
**चक्षुषः सहकारी स्याच्छुक्लादिकमनेकधा ॥ १०० ॥**

**चक्षुरिति** ॥ रूपत्वजातिस्तु प्रत्यक्षसिद्धा । रूपशब्दोल्लेखिनी प्रतीतिर्नास्तीति चेन्मास्तु रूपशब्दप्रयोगः तथापि नीलपीतादिष्वनुगतजातिविशेषोऽनुभवसिद्ध एव रूपशब्दाप्रयोगेऽपि नीलो वर्णः पीतो वर्ण इति वर्णशब्दोल्लेखिनी प्रतीतिरस्त्येव । एवं नीलत्वादिकमपि प्रत्यक्षसिद्धम् । नचैकैका एव नीलरूपादिव्यक्तय इत्येकव्यक्तिवृत्तित्वान्नीलत्वादिकं न जाति-

## प्रभा.

त्यर्थः । तेन कालिकाव्याप्यवृत्तिरूपादौ नातिव्याप्तिः । नचेश्वरज्ञानादेः दैशिकाव्याप्यवृत्तित्वाभावात् अव्याप्तिरिति वाच्यम् दैशिकाव्याप्यवृत्तिवृत्तिवेगावृत्तिजातिमत्त्वस्य विवक्षितत्वात् । संस्कारत्वगुणत्वादिजातिमादायातिव्याप्तिवारणाय जातौ वेगावृत्तित्वनिवेशः । तादृशज्ञानत्वादिजातिमादाय ईश्वरज्ञानादौ लक्षणसमन्वयः । अत्र निरुक्तगुणान्यतमत्वस्य दैशिककालिकविशेषणत्वोभयसंबन्धेन लक्ष्यतावच्छेदकत्वस्वीकारात् ईश्वरज्ञानादेस्तादृशोभयसंबन्धेन निरुक्तान्यतमत्वरूपलक्ष्यतावच्छेदकानाक्रान्ततया तत्र लक्षणाभावेऽप्यक्षतेः जातिघटितपरिष्कारे प्रयोजनाभावेन यथाश्रुतमेव साध्विवत्यस्मद्गुरुचरणाः ॥ ९७ ॥ ९८ ॥ ९९ ॥

एतावता गुणानां साधर्म्यं प्रतिपाद्य यदुक्तं यस्य साधर्म्यमिति न्यायेन वैधर्म्यस्य स्फुटत्वात् तदुपेक्ष्य संप्रति उद्देशक्रमानुसारेण रूपादीनां लक्षणमाह ॥ **मूले चक्षुर्ग्राह्यमिति** ॥ अत्र लक्ष्यतावच्छेदकरूपत्वजातौ प्रमाणमाह ॥ **मुक्तावल्यां रूपत्वजातिरिति** ॥ **प्रत्यक्षसिद्धेति** ॥ अनुगतप्रतीतिसिद्धेत्यर्थः । यथाश्रुते परमाणुरूपाणां अनुद्भूताभिभूतरूपाणां च प्रत्यक्षाविषयत्वेन तत्साधारण्येन रूपत्वजात्यसिद्धिप्रसङ्गात् । ननु रूपाभिन्नाविशेष्यकरूपत्वप्रकारकप्रतीतौ मानाभावः । नच तादृशप्रतीत्यनङ्गीकारे रूपमात्रे रूपशब्दप्रयोगो न स्यात् व्यवहारं प्रति व्यवहर्तव्यतावच्छेदकप्रकारकज्ञानस्य हेतुत्वादिति वाच्यं इष्टापत्तेः यद्यद्रूपावच्छिन्ना कारणता तत्तद्रूपं कारणतावच्छेदकमित्यादौ धर्ममात्र एव रूपशब्दप्रयोगादित्यभिप्रायेणाशङ्कते ॥ **रूपशब्दोल्लेखिनीति** ॥ रूपशब्दजन्यबोधसमानाकारकप्रतीतिरित्यर्थः ॥ **नास्तीति** ॥ रूपभिन्नाविशेष्यिका न भवतीति विभाव्यते चेदित्यर्थः । प्रकारान्तरेण तादृशप्रतीतिं साधयितुमाक्षिप्तार्थमङ्गीकरोति ॥ **मास्त्विति** ॥ रूपशब्दप्रयोगः तादृशप्रतीतिनिर्वाहको माभूदित्यर्थः । ननु तर्हि तादृशप्रतीत्यप्रसिद्ध्यानुगतलक्ष्यतावच्छेदकाप्रसिद्धिरित्याशङ्क्यां प्रकारान्तरेणानुगतलक्ष्यतावच्छेदकसम्पादनेन परिहरति ॥ **तथापीत्यादिना** ॥ **नीलपीतादिष्विति** ॥ नीलपीतादिमात्रेष्वित्यर्थः ॥ **अनुगतजातिविशेष इति** ॥ लक्ष्यतावच्छेदकजातिविशेष इत्यर्थः । नीलपीतादिनिखिललक्ष्यभिन्नावृत्तिलक्ष्यतावच्छेदकजातिविशेष इति समुदायार्थः ॥ **अनुभवसिद्ध एवेति** ॥ अनुगतप्रतीतिविषयो भवत्येवेत्यर्थः । ननु अनुगतप्रतीतेरप्रसिद्धत्वस्योक्तत्वात् कथं तद्विषय इत्यत आह ॥ **रूपशब्दाप्रयोगेऽपीति** ॥ रूपशब्दप्रयोगस्य तादृशानुगतप्रतीतिनिर्वाहकत्वाभावेऽपीत्यर्थः ॥ **नीलो वर्ण इति** ॥ नीलादिलक्ष्यमात्र एव वर्णशब्दप्रयोगात्तन्निर्वाहाय वर्णशब्दजन्यबोधसमानप्रकारकलक्ष्यमात्रविशेष्यकप्रतीतिरवश्यं स्वीकार्येति समुदायार्थः । तथाच तादृशानुगतप्रतीत्या बाधकाभावेन वर्णत्वजातिसिद्धौ तादृशजातिरेव रूपत्वशब्देनापि व्यवह्रियत इति रूपत्वजातेर्लक्ष्यतावच्छेदकत्वं सुकरमिति भावः ॥ **नीलत्वादिकमपीति** ॥ आदिना रूपत्वव्याप्यजातिमात्रस्य संग्रहः । अपिना रूपत्वजातिः समुच्चीयते ॥ **प्रत्यक्षसिद्धमिति** ॥ इति वदन्तीति शेषः । अनुगतप्रतीतिसिद्धमित्यर्थः । तथाच यथा रूपत्वजातिरनुगतप्रतीतिसिद्धा तथा नीलत्वादिजातिरपी-

## दिनकरीयम्.

णत्वामिति वाच्यं ध्वंसप्रत्यक्षातिरिक्तं प्रत्यकारणत्वस्योक्तत्वात् । विस्तरस्त्वन्यत्रानुसन्धेयः । मुक्तावल्यामव्याप्यवृत्तिरित्यस्य दैशिकेत्यादिस्तेन रूपादौ नातिव्याप्तिः ॥ ९७ ॥ ९८ ॥ ९९ ॥

रिति वाच्यं नीलो नष्टो रक्त उत्पन्न इत्यादिप्रतीतेर्नीलादेरुत्पादविनाशशालितया नानात्वात्। अन्यथा एकनीलनाशे जगदनीलतामापद्येत । नच नीलसमवायरक्तसमवाययोरेवोत्पादविनाशविषयकोऽसौ प्रत्यय इति वाच्यं प्रतीत्या समवायानुल्लेखात्। नच स एवायं नील इति प्रत्यक्षबलाल्लाघवाच्चैक्यमिति वाच्यं प्रत्यक्षस्य तज्जातीयविषयत्वात् सैवेयं गुर्जरीतिवत् ।

## प्रभा.

ति भावः । अत्र नीलो वर्ण इत्यादिप्रयोगवत् अकारादयो वर्णा ब्राह्मणादयश्चत्वारो वर्णा इत्यादिव्यवहारस्य रूपभिन्नेऽपि दर्शनात् नीलादिरूपमात्रविशेष्यकवर्णशब्दजन्यबोधसमानाकारकानुगतप्रतीतेः अप्रसिद्धत्वाद्वर्णशब्दोल्लेखिप्रतीत्यापि नीलादिषु नानुगतजातिसिद्धिरित्यस्वरसं हृदि निधाय इति वदन्तीत्युक्तमिति ध्येयम् । वस्तुतस्तु द्रव्यवृत्तिलौकिकविषयतासंबन्धेन चाक्षुषत्वावच्छिन्नं प्रति समवायसंबन्धेनोद्भूतरूपत्वावच्छिन्नस्य हेतुतया कारणतावच्छेदकघटकतया नीलादिनिखिलरूपमात्रवृत्तिरूपत्वजातिसिद्धिः । नच परमाण्वादिरूपस्य चाक्षुषाहेतुतया तादृशकारणतावच्छेदकतया सिद्धरूपत्वादिजातेस्तत्साधारण्यासंभव इति वाच्यं परमाण्वादिसमवेतरूपस्य चाक्षुषाजनकत्वेऽपि स्वरूपयोग्यतास्वीकारे बाधकाभावात् । नचैवं सति परमाण्वादेश्चाक्षुषापत्तिः चाक्षुषत्वावच्छिन्नं प्रति महत्त्वस्याहेतुत्वात् । तथापि चाक्षुषत्वव्यापकप्रत्यक्षत्वावच्छिन्नं प्रति महत्त्वस्य हेतुतया परमाण्वादौ महत्त्वाभावेन प्रत्यक्षत्वावच्छिन्नानुत्पत्त्या व्यापकधर्मावच्छिन्नोत्पत्त्यभावेन सुतरां व्याप्यधर्मावच्छिन्नानुत्पत्तिरिति नियमेन चाक्षुषत्वावच्छिन्नापादनासंभवात्। अत्र व्याप्यधर्मावच्छिन्नोत्पत्तौ व्यापकधर्मावच्छिन्नोत्पादकसामग्र्या अपि प्रयोजकत्वेन परमाण्वादौ महत्त्वरूपप्रयोजकाभावान्न चाक्षुषापत्तिरित्यस्मद्गुरुचरणाः। नचैवमपि चक्षुरादेर्महत्त्ववत्त्वाद्रूपवत्त्वाच्च चाक्षुषत्वावच्छिन्नापत्तिर्दुर्वारेति वाच्यं चक्षुरादिगतरूपस्य रूपत्वजातिमत्त्वेऽपि उद्भूतत्वाभावेन उद्भूतत्वविशिष्टरूपत्वरूपकारणतावच्छेदकविशिष्टत्वाभावाच्चक्षुरादेर्न चाक्षुषत्वप्रसक्तिः। अथवा रूपवति रूपान्तरानुत्पत्त्या समवायेन रूपं प्रति समवायेन रूपस्य प्रतिबन्धकत्वं वाच्यं एवंच तादृशप्रतिबन्धकतावच्छेदकतया नीलादिरूपमात्रवृत्तिरूपत्वजातिसिद्धिः। एवं नीलपीतादिमति नीलपीताद्यन्तरानुत्पत्त्या समवायेन नीलादिकं प्रति समवायेन नीलादेः प्रतिबन्धकत्वं वाच्यं एवं च तादृशप्रतिबन्धकताच्छेदकतयैव नीलत्वादिजातिसिद्धिर्बोध्या । विश्वनाथपञ्चाननस्याप्यत्रैव निर्भर इति प्रतिभाति ॥ **अन्यथेति** ॥ नीलादीनामेकव्यक्तित्वस्वीकार इत्यर्थः ॥ **एकनीलनाश इति** ॥ एकव्यक्तिसमवेतनीलस्याश्रयनाशादिना नाशे सतीत्यर्थः ॥ **आपद्येतेति** ॥ तथाच विषयाभावेन कुत्रापि नीलाचाक्षुषं न स्यादिति भावः । समवायस्य नानात्ववादी शङ्कते ॥ **नचेति** ॥ **असौ प्रत्यय इति** ॥ नीलो नष्टः रक्त उत्पन्न इत्यादिप्रत्यय इत्यर्थः । तथाच नीलादेः एकव्यक्तित्ववन्नित्यत्वस्वीकारे बाधकाभावान्नोक्तानुपपत्तिरिति भावः ॥ **प्रतीत्येति** ॥ नीलो नष्टः रक्त उत्पन्न इत्यादिवाक्यजन्यशाब्दप्रतीत्येत्यर्थः ॥ **समवायानुल्लेखादिति** ॥ समवायस्याविषयीकरणादित्यर्थः । समवायस्य तादृशशाब्दप्रतीतिविषयत्वासंभवादिति यावत् । तथाच नीलो नष्ट इत्यादिवाक्यस्य समवायानुपस्थापकत्वात् तादृशशब्दोल्लेखिनीलोनष्ट इत्यादिप्रतीतावपि समवायस्य विषयत्वं न संभवति मानाभावादिति भावः ॥ **इति प्रत्यक्षादिति** ॥ इत्याकारकाभेदावगाहिप्रत्यक्षबलादित्यर्थः ॥ **लाघवाच्चेति** ॥ एकस्य तादृशप्रत्यक्षविषयत्वप्रयुक्तलाघवाच्चेत्यर्थः ॥ **ऐक्यमिति** ॥ नीलादीनामेकव्यक्तित्वमित्यर्थः ॥ **प्रत्यक्षस्येति** ॥ स एवायं नील इति प्रत्यक्षस्येत्यर्थः ॥ **तज्जातीयविषयत्वादिति** ॥ पूर्वानुभूतनीलव्यक्तिसजातीयनीलव्यक्तिविषयकत्वादित्यर्थः । ननु सजातीयावगाहितादृशप्रत्यक्षमदृष्टचरमित्याशङ्कां तादृशप्रत्यक्षप्रदर्शनेन परिहरति ॥ **सैवेयमिति** ॥ चैत्रदुहिता घूर्जरी मैत्रदुहितृघूर्जर्येवेति प्रत्यक्षमित्यर्थः । तथाचानायत्या एतादृशप्रत्यक्षस्य सजातीयविषयकत्वावश्यकतया न पूर्वोक्ताशङ्केति भावः । ननु नीलादीनां अनेकत्वकल्पने तेषामुत्पत्तिविनाशकल्पने च गौ-

## दिनकरीयम्

नीलत्वादीत्यादिना रक्तत्वादिपरिग्रहः ॥ **अन्यथा** नीलादीनामेकव्यक्तित्वे । ननु लाघवादेव नी

**लाघवं तु प्रत्यक्षबाधितं अन्यथा घटादीनामप्यैक्यप्रसङ्गात् उत्पादविनाशबुद्धेः समवायालम्बनेनोपपत्तेरिति । एतेन रसादिकमपि व्याख्यातम् ॥ चक्षुर्ग्राह्यमिति ॥ चक्षुर्ग्राह्यविशे-**

## प्रभा ।

स्वात् लाघवात् एकव्यक्तित्वमेव स्वीकार्यमित्यत आह ॥ **लाघवं त्विति** ॥ अवधारणार्थकतुशब्दः बाधितमित्युत्तरं योज्यः ॥ **प्रत्यक्षबाधितमिति** ॥ नीलो नष्टः रक्त उत्पन्न इति प्रात्यक्षिकबाधज्ञानसंवलितमेवेत्यर्थः । तथाचेदृशबाधज्ञानमिलितत्वान्नोक्तलाघवं वस्तुसाधकमिति भावः । ननु नीलो नष्ट इत्यादिप्रतीतेस्समवायालम्बनत्वस्वीकारात् न बाधरूपत्वमित्याशङ्कां प्रतिबन्द्या परिहरति ॥ **अन्यथेति** ॥ तस्य बाधज्ञानरूपत्वं निराकृत्य लाघवस्य वस्तुसाधकत्व इत्यर्थः ॥ **घटादीनामपीति** ॥ घटत्वाद्यवच्छिन्नानामित्यर्थः ॥ **ऐक्येति** ॥ एकैकव्यक्तित्वापत्तेरित्यर्थः । ननु घटो नष्ट इति बाधकप्रत्ययस्य सत्त्वात् नैकव्यक्तित्वसिद्धिरित्यत आह ॥ **उत्पादविनाशबुद्धेरिति** ॥ घटो नष्टः घट उत्पन्न इत्यादिप्रतीतेरित्यर्थः ॥ **समवायालम्बनेनेति** ॥ समवायोत्पत्तिविनाशविषयकत्वस्वीकारेणैवेत्यर्थः ॥ **उपपत्तेरिति** ॥ प्रमात्वनिर्वाहादित्यर्थः । तथाच प्रतीत्या समवायानुल्लेखेऽपि नीलो नष्ट इत्यादिप्रतीतेः समवायोत्पत्तिविनाशविषयकत्वमङ्गीकृत्य लाघवस्य बाधकाभावविशिष्टत्वं सम्पाद्य नीलादीनां एकव्यक्तित्वस्वीकारे तुल्ययुक्त्या विनष्टो घट इत्याकारकप्रतीतेरपि समवायोत्पत्तिविनाशविषयकत्वसंभवात् घटादीनामेकैकव्यक्तित्वापत्तेः तस्मात् घटो नष्ट इति वाक्याधीनशाब्दबोधे घटादिसमवायस्याविशेष्यत्वात् तादृशशब्दोल्लेखिप्रत्यक्षस्यापि समवायविषयकत्वासंभवेन घटोत्पत्तिविनाशविषयकत्वस्यैवावश्यमङ्गीकर्तव्यतया लाघवस्याकिंचित्करत्वात् घटादीनामनेकत्ववत् तुल्ययुक्त्या नीलादीनामप्यनेकत्वमवश्यमङ्गीकार्यमिति भावः ॥ **एतेनेति** ॥ रूपत्वनीलत्वादिजातेः नीलादीनां नित्यत्वैकत्वनिरासस्य च व्यवस्थापकप्रमाणप्रदर्शनेनेत्यर्थः ॥ **रसादिकमिति** ॥ रसत्वमधुरत्वादिकं मधुरादिव्यक्तेः नित्यत्वैकत्वनिराकरणं एवं गन्धत्वसुरभित्वादिकं स्पर्शत्वशीतत्वादिकं सुरभ्यादिशीतादिव्यक्तेर्नित्यत्वैकत्वनिराकरणं चेत्यर्थः ॥ **व्याख्यातमिति** ॥ साधितप्रायमित्यर्थः । तुल्ययुक्तेरिति भावः । चक्षुर्ग्राह्यमिति मूलस्य यथाश्रुतार्थकत्वे संयोगादावतिव्याप्तिः तादृशमूलस्य चक्षुर्ग्राह्यविशेषगुणपरत्वे सांसिद्धिकद्रवत्वादावतिव्याप्तिरतो ग्राह्यमिति मूलस्य सावधारणत्वाङ्गीकारेण उक्तदोषं वारयितुं ग्राह्यमित्यन्तप्रतीकधारणेन सावधारणमूलार्थमाह ॥ **मुक्तावल्यां चक्षुर्ग्राह्यमितीति** ॥ चक्षुर्ग्राह्यमित्यन्तसावधारणमूलस्येत्यर्थः । विशेषगुण इत्यस्य विशेषसहितो गुण इति मध्यमपदलोपिसमासः । गुणनिष्ठविशेषश्च त्वगग्राह्यत्वम् । तथाच त्वगग्राह्यत्वे सति चक्षुर्ग्राह्यत्वं लक्षणमिति फलितमतो नोक्तदोष इति भावः । न चैवमपि प्रभायां रूपत्वादौ चातिव्याप्तिः गुणत्वमपि लक्षणे निवेश्य तद्वारणे प्रभाभित्तिसंयोगेऽतिव्याप्तिः पारिभाषिकविशेषगुणत्वं लक्षणे निवेश्य तद्वारणे चक्षुर्मात्रग्राह्यसांसिद्धिकद्रवत्वविशेषादावतिव्याप्तिरव्याप्तिश्च परमाणुरूपादाविति वाच्यं त्वगग्राह्यचक्षुर्ग्राह्यगुणवृत्तिजातिमत्त्वस्य विवक्षितत्वात् । एवंच सांसिद्धिकद्रवत्वत्वादेः त्वगग्राह्यत्वाभावात् प्रभात्वस्य गुणवृत्तित्वाभावात् रूपत्वत्वादेः जातिरूपत्वाभावाच्च नातिव्याप्तिः नवा परमाणुरूपादेः तादृशरूपत्वजातिमत्त्वादव्याप्तिः । अस्मद्गुरुचरणास्तु त्वगग्राह्यत्वस्य त्वगिन्द्रियजन्यज्ञानाविषयत्वरूपत्वे रूपत्वस्यापि कालोपाधिविधया त्वग्जन्यचाक्षुषविषयत्वात् ज्ञानलक्षणया त्वगिन्द्रियकरणकस्पार्शनविषयत्वाच्चासंभववारणाय त्वक्त्वा-

## दिनकरीयम् ।

रुणादिव्यक्त्यैक्यं सेत्स्यतीत्यत आह ॥ **लाघवं त्विति** ॥ **प्रत्यक्षबाधितमिति** ॥ नीलो नष्टो रक्त उत्पन्न इत्यादिप्रत्यक्षबाधितमित्यर्थः ॥ **अन्यथेति** ॥ लाघवमात्रेण नीलारुणादीनामैक्याभ्युपगम इत्यर्थः । ननूत्पन्नो घटो विनष्टो घट इत्यादिप्रतीतेर्न घटादेरैक्यमित्यत आह ॥ **उत्पादेति** ॥ **एतेन** ईदृशजातिसाधकप्रमाणेन ॥ **रसादिकं** रसत्वादिकम् । आदिना गन्धत्वादिपरिग्रहः । संयोगादावतिव्याप्तिमाशङ्क्याह ॥ **चक्षुर्ग्राह्यमितीति** ॥ चक्षुर्ग्राह्यमित्यस्येत्यर्थः । तेन चक्षुरिति प्राक् प्रतीकधारणेऽपि न पौन-

षगुण इत्यर्थः । एवमग्रेऽपि ॥ द्रव्यादेरिति ॥ उपलम्भकं उपलब्धिकारणम् । इदमेव विवृणोति ॥ चक्षुष इति ॥ द्रव्यगुणकर्मसामान्यानां चाक्षुषप्रत्यक्षं प्रति उद्भूतरूपं कारणम् ॥ शुक्लादिकमनेकधेति ॥ तच्च रूपं शुक्लनीलपीतरक्तकर्बुरादिभेदादनेकप्रकारकं भवति ; ननु कथं कर्बुरमतिरिक्तं रूपं भवति । इत्थम् । नीलपीताद्यवयवारब्धोऽवयवी

प्रभा.

वच्छिन्नकारणताकज्ञाननिरूपितलौकिकविषयताशून्यत्वरूपत्वं वाच्यम् । एवंच चक्षुर्ग्राह्यत्वस्य चक्षुर्जन्यज्ञानविषयत्वरूपत्वे शब्दत्वस्यापि कालोपाधिविधया चक्षुर्जन्यश्रावणविषयत्वात् ज्ञानलक्षणया इयं वीणा सम्यक् शब्दायतीति चाक्षुषविषयत्वाचातिव्याप्तिवारणाय चक्षुष्ट्वावच्छिन्नकारणताकज्ञाननिरूपितलौकिकविषयतावत्त्वरूपत्वं वाच्यम् । एवंच स्पार्शनचाक्षुषयोः निरुक्तज्ञानत्वेन निवेशे गौरवात् स्पार्शनत्वचाक्षुषत्वाभ्यां निवेशः कार्यः । तथाच स्पार्शनत्वावच्छिन्ननिरूपितलौकिकविषयताशून्यचाक्षुषत्वावच्छिन्ननिरूपितलौकिकविषयताश्रयगुणवृत्तिजातिमत्त्वरूपलघुलक्षणं पर्यवसितं अतो न कश्चिद्दोष इति व्याचक्रुः । अत्र चक्षुर्ग्राह्यमिति सावधारणयथाश्रुतमूलाच्चक्षुर्भिन्नाग्राह्यत्वचक्षुर्ग्राह्यत्वयोरेव लाभेन रूपत्वस्यापि चक्षुर्भिन्नमनसा ग्राह्यत्वात् असंभववारणाय निरुक्तदोषवारणाय च लाघवाय चाक्षुषत्वावच्छिन्ननिरूपितलौकिकविषयताशून्यलौकिकविषयताश्रयगुणवृत्तिजातिमत्त्वं लघुलक्षणं कार्यं अतो न कोऽपि दोष इति प्रतिभाति ॥ एवमग्रेऽपीति ॥ स्पर्शलक्षणेऽपि रूपलक्षणोक्तरीत्या दोषप्रदर्शनं तद्वारणप्रकारः लघुलक्षणपरिष्कारश्च ज्ञेय इत्यर्थः । द्रव्यादेरुपलम्भकमिति मूलं रूपस्य प्रयोजनप्रदर्शनपरतया सङ्गमयितुं उपलम्भकपदार्थमाह ॥ उपलब्धिकारणमिति ॥ सहकारिकारणमित्यर्थः । रूपे उपलब्धिकरणत्वाभावादिति भावः । ननु उपलब्धिकारणत्वं न जन्यज्ञानसामान्यकारणत्वरूपं अनुमित्यादावस्याकारणत्वात् । नापि जन्यप्रत्यक्षकारणत्वं तत मानसे तस्याहेतुत्वात् । नवा मानसत्वावच्छिन्नानिरूपितद्रव्यवृत्तिलौकिकविषयताशालिप्रत्यक्षकारणत्वरूपं तत् प्राचां मते रूपे तत्संभवेऽपि नवीनमते तदसंभवात् इत्याशङ्कां तस्य नवीनमतासिद्धचाक्षुषकारणत्वप्रदर्शनेन परिहर्तुं चक्षुषः सहकारी स्यादिति मूलात्तल्लाभाय तन्मूलमवतारयति ॥ इदमेवेति ॥ नवीनमतासिद्धचाक्षुषकारणत्वमेवेत्यर्थः ॥ विवृणोतीति ॥ स्पष्टं बोधयतीत्यर्थः । चक्षुषस्सहकारी स्यादिति मूलेन चक्षुःकरणकज्ञानमात्रे रूपं कारणमिति लभ्यते तत्र चक्षुःकरणकं ज्ञानं किंविषयकं किंधर्मावच्छिन्नमिति शिष्यजिज्ञासानिवृत्त्यर्थं फलितार्थमाह ॥ द्रव्यगुणेत्यादि ॥ चाक्षुषप्रत्यक्षं प्रतीति ॥ चाक्षुषत्वावच्छिन्नं प्रतीत्यर्थः । चाक्षुषत्वं प्रत्यक्षत्वव्याप्यमिति स्फुटप्रतिपत्त्यर्थं चाक्षुषप्रत्यक्षं प्रतीत्युक्तं ननु प्रत्यक्षत्वस्यापि कार्यतावच्छेदककोटिप्रवेशस्तदनुमतः व्यर्थत्वात् ॥ उद्भूतरूपमिति ॥ रूपमात्रस्य हेतुत्वे चक्षुरादेः चाक्षुषापत्तेः अत उद्भूतत्वविशेषणम् । अत्र प्राचीनमते चित्रमादाय रूपस्य सप्तविधत्वात् चित्ररूपानङ्गीकर्तृनवीनमते रूपस्य षड्विधत्वात् पक्षद्वयाभिमतविभागबोधनायाह ॥ मूले शुक्लादिकमिति ॥ अनेकधेति ॥ प्राचीनमते सप्तविधमित्यर्थः । नवीनमते षड्विधमित्यर्थः । अनेकधेति मूलात् तन्मूलकर्तुः मतद्वयसिद्धविभागबोधनाभिप्राय उन्नीयते । अन्यथा भिन्नं शुक्लादि सप्तधेति मूलापत्तेः । अत्र चित्ररूपस्य प्राचीनमात्रमताभिमतत्वात् तत्साधनाय तन्मतसिद्धविभागमनुवदति ॥ मुक्तावल्यां तद्रूपमिति ॥ उक्तलक्षणलक्षितरूपमित्यर्थः ॥ कर्बुरादिभेदादिति ॥ कर्बुरहरितकपिशभेदादित्यर्थः ॥ अनेकप्रकारकमिति ॥ सप्तप्रकारान्यतमविशिष्टमित्यर्थः ॥ कर्बुरमिति ॥ कर्बुरशब्दवाच्यमित्यर्थः ॥ कथमतिरिक्तमिति ॥ कुत्र-

दिनकरीयम्.

त्त्यम् ॥ विशेषगुण इति ॥ विलक्षणगुण इत्यर्थः । वैलक्षण्यं च चक्षुर्भिन्नाग्राह्यत्वम् । नच तथापि प्रभाभित्तिसंयोगेऽतिव्याप्तिरिति वाच्यं चक्षुर्मात्रग्राह्यत्वस्य चक्षुर्मात्रगृहीतस्नेहविशेषेऽतिव्याप्त्यापत्त्या चक्षुर्मात्रग्राह्यत्वस्य जातिविशेषणत्वं स्वीकृत्य चक्षुर्मात्रग्राह्यजातिमद्गुणत्वविवक्षणस्यावश्यकतया तेनैव प्रभाभित्तिसंयोगेऽतिव्याप्तिवारणादिति । प्रभात्वमादाय प्रभायामतिव्याप्तिवारणाय गुणपदम् ॥ एवमग्रे-

न तावन्नीरूपोऽप्रत्यक्षत्वप्रसङ्गात् । नापि व्याप्यवृत्तिनीलादिरूपमुत्पद्यते पीतावच्छेदेनापि नीलोपलब्धिप्रसङ्गात् । नाप्यव्याप्यवृत्तिनीलादिकमुत्पद्यते व्याप्यवृत्तिजातीयगुणानामव्याप्यवृत्तित्वे विरोधात् । तस्मान्नानाजातीयरूपैरवयविनि विजातीयं चित्रं रूपमारभ्यते । अत एवैकं चित्ररूपमित्यनुभवोऽपि नानारूपकल्पने गौरवात् । इत्थं च नीलादीनां पीताद्यारम्भे प्रति-

## प्रभा.

शुक्लाद्यन्यतमभिन्नं कथमित्यर्थः ॥ अव्याप्यवृत्तिनीलादिसमुदायस्यैव नवीनमते कर्बुरशब्दवाच्यत्वादिति भावः ॥ **इत्थमिति** ॥ वक्ष्यमाणप्रकारेणातिरिक्तं भवतीत्यर्थः । अतिरिक्तत्वसाधकप्रमाणमाह ॥ **नीलपीतादीति** ॥ नीलपीतरक्ततन्त्वाद्यारब्धपटादिरित्यर्थः ॥ **न तावन्नीरूप इति** ॥ तावदिति वाक्यालङ्कारे । न रूपवद्भिन्न इत्यर्थः ॥ **अप्रत्यक्षत्वप्रसंगादिति** ॥ द्रव्यवृत्तिलौकिकविषयतासंबन्धेन चाक्षुषं प्रति समवायेन उद्भूतरूपस्य हेतुत्वादिति भावः ॥ **व्याप्यवृत्तिनीलादिरूपमिति** ॥ तन्तुषु यावन्ति रूपाणि तत्तद्रूपासमवायिकारणकतत्तद्रूपसजातीयव्याप्यवृत्तिनीलादिसमुदाय उत्पद्यत इत्यर्थः ॥ **पीतावच्छेदेनापीति** ॥ अपिना हरिताद्यवच्छेदेनापि समुच्चीयते । तथाच यावदवयवावच्छेदेनेत्यर्थलाभः । यावदवयवावच्छेद्यत्वं व्याप्यवृत्तित्वमेवेति भावः ॥ **नीलोपलब्धिप्रसङ्गादिति** ॥ नीलाद्येकैकस्यैवोपलब्धिप्रसङ्गादित्यर्थः । तथाच नीलादेर्व्याप्यवृत्तितया नानारूपवदवयवारब्धपटे एकरूपव्यक्तेरेवोत्पत्तिसंभवेन एकरूपस्यैव प्रत्यक्षं स्यात् नान्यरूपस्येति त्वत्पक्षे परस्परविरोधेनानुभवविरोधः । व्याप्यवृत्तित्वपक्षे परस्परविरोधेन नीलादीनामुत्पत्तेरेवासंभवेन चित्रः पट इति प्रत्यक्षानुपपत्तिश्चेति भावः ॥ **अव्याप्यवृत्तिनीलादिकमिति** ॥ दैशिकाव्याप्यवृत्तिनीलादिकमित्यर्थः । तथाचैतत्पक्षेऽवयवेषु यावन्ति रूपाणि तत्तद्रूपासमवायिकारणकतत्तद्रूपाणां अवयविनि विरोधाभावेन उत्पत्तिसंभवात् न प्रत्यक्षत्वानुपपत्तिरिति भावः ॥ **व्याप्यवृत्तिसजातीयेति** ॥ व्याप्यवृत्तिवृत्तिसविषयावृत्तिजातिमतामित्यर्थः । गुणत्वमपि न निवेशनीयं प्रयोजनाभावात् । जातौ सविषयावृत्तित्वविशेषणात् तादृशेश्वरज्ञानादिसजातीयास्मदादिज्ञानादेरव्याप्यवृत्तित्वेऽपि न क्षतिः ॥ **विरोधादिति** ॥ एकत्र वर्तमानत्वासंभवादित्यर्थः । तथाच परमाणुसमवेतनीलादिव्यक्तेर्व्याप्यवृत्तितया पटादिसमवेतनीलादेः तत्सजातीयत्वेन न तेषामव्याप्यवृत्तित्वं तयोर्विरोधादिति भावः ॥ **तस्मादिति** ॥ अव्याप्यवृत्तिनीलादेरेकत्रैकदा वृत्तित्वासंभवात् नीलादीनामव्याप्यवृत्तित्वासंभवाच्चेत्यर्थः ॥ **नानाजातीयरूपैरिति** ॥ अवयवसमवेतनीलादिरूपैरित्यर्थः ॥ **विजातीयमिति** ॥ नवीनमतासिद्धरूपविभाजकधर्मान्यतमभिन्नरूपविभाजकजात्यवच्छिन्नमित्यर्थः ॥ **आरभ्यत इति** ॥ उत्पद्यत इत्यर्थः ॥ **अत एवेति** ॥ उभयमतसिद्धनीलाद्यपेक्षया अतिरिक्तरूपस्वीकारादेवेत्यर्थः ॥ **अनुभव इति** ॥ उपपद्यत इति शेषः । अतिरिक्तरूपानङ्गीकारे नीलादीनां बहुत्वात् एकत्वप्रकारकानुभवो न स्यादिति भावः । ननु वृक्षाणां बहुत्वेऽपि समुदायगतमेकत्वमादाय एकं वनमिति प्रतीतिवत् नीलादीनां बहुत्वेऽपि एकं चित्रमिति प्रतीतौ न किमपि बाधकमित्यत आह ॥ **नानारूपेति** ॥ नीलादिरूपेष्वनेकेषु चित्रमिति प्रतीतिविषयतास्वीकारे गौरवादित्यर्थः । नन्वेवं सति समवायेन नीलादिकं प्रति समवायघटितसामानाधिकरण्यसंबन्धेन नीलादेः कारणत्वस्योभयसिद्धतया तद्बलान्नानारूपवदवयवारब्धावयविन्यपि नीलाद्युत्पत्तिवारणाय एतन्मते समवायेन नीलादिकं प्रति समवायघटितसामानाधिकरण्यसंबन्धेन नीलान्य-

## दिनकरीयम्.

पि रसस्पर्शलक्षणेऽप्येषा रीतिर्बोध्येत्यर्थः ॥ **अप्रत्यक्षत्वप्रसङ्गादिति** ॥ द्रव्यचाक्षुषं प्रति समवायसम्बन्धेनोद्भूतरूपस्य हेतुत्वादिति भावः ॥ **व्याप्यवृत्तिजातीयेति** ॥ व्याप्यवृत्तिवृत्तिजातिश्च सविषयावृत्तिर्बोध्या तेन व्याप्यवृत्तीश्वरज्ञानजातीयस्यास्मदादिज्ञानस्याव्याप्यवृत्तित्वेऽपि न क्षतिः । ननु वृक्षाणां बहुत्वेऽप्येकं वनमितिवद्रूपसमुदायगतमेकत्वमादायैकं चित्रमित्यनुभवोपपत्तिरत आह ॥ **नानेति** ॥ **गौरवादिति** ॥ चित्रमिति प्रतीतिविषयताया अनेकत्र कल्पने गौरवादित्यर्थः । ननु चित्ररूपाधिकरणे घटादौ स्वा-

बन्धकत्वकल्पनादवयविनि न पीताद्युत्पत्तिः। एतेन स्पर्शोऽपि व्याख्यातः ॥ रसादिकमपि

**प्रभा.**

रूपादेः प्रतिबन्धकत्वं कल्पनीयमिति गौरवमत आह ॥ **इत्थंचेति** ॥ निरुक्तलाघवात् विजातीयरूपसिद्धौ चेत्यर्थः ॥ **पीताद्यारम्भ इति** ॥ पीतत्वाद्यवच्छिन्न इत्यर्थः ॥ **प्रतिबन्धकत्वकल्पनादिति** ॥ उक्तरीत्या प्रतिबन्धकत्वस्वीकारादित्यर्थः ॥ **अवयविनीति** ॥ नानारूपवदवयवारब्धावयविनीत्यर्थः ॥ **न पीताद्युत्पत्तिरिति** ॥ न पीताद्युत्पत्त्यापत्तिरित्यर्थः। तथाच विजातीयरूपानङ्गीकर्तृमतेऽपि नानारूपवदवयवारब्धावयविनि नीलावयवावच्छेदेन नीलोत्पत्तेरिव पीतावयवावच्छेदेनापि नीलोत्पत्तिवारणाय समवायेन तदवयवावच्छेद्यनीलं प्रति तदवयवघटितसमवायघटितसामानाधिकरण्यसंबन्धेन नीलान्यरूपत्वेन प्रतिबन्धकत्वावश्यकत्वेन साम्यं चित्रमिति प्रतीतिविषयताया अनेकेषु कल्पनागौरवं परमतिरिच्यत इति भावः। नव्यास्तु पीतावयवावच्छेदेन नीलोत्पत्तिवारणाय नोक्तप्रतिबध्यप्रतिबन्धकभावः कल्प्यते येन साम्यं स्यात् किन्तु समवायेन तदवयवावच्छेदेन नीलं प्रति तदवयवघटितसमवायघटितसामानाधिकरण्यसंबन्धेन नीलस्य हेतुत्वं अनयैव रीत्या पीतादीनामपि कारणत्वं स्वीक्रियते तावतैव न पीतावयवावच्छेदेन नीलोत्पत्त्यापत्तिः पीतावयवघटितसमवायघटितसामानाधिकरण्यसंबन्धेन नीलरूपाभावात् चित्रमिति प्रतीतिविषयतायाः अनेकेषु कल्पनागौरवमपि न दोषावहं अतिरिक्तधर्मिकल्पनापेक्षया क्लृप्तेषु विषयत्वरूपधर्मकल्पनागौरवस्य न्याय्यत्वात्। एवंच प्राचां मते अनेकप्रतिबध्यप्रतिबन्धकभावकल्पनमप्रामाणिकातिरिक्तधर्मिकल्पनं च परमतिरिच्यत इति। यदि चित्रमिति प्रतीतिविषयताया अनेकेष्वकल्पनालाघवप्रमाणमात्रेण चित्ररूपस्यातिरिक्तत्वं स्वीक्रियते तदा वनमिति प्रतीतिविषयताया अनेकवृक्षेषु अकल्पनालाघवप्रमाणेन वनस्याप्यतिरिक्तत्वापत्तेः। यच्चोक्तं व्याप्यवृत्तिजातीयानामव्याप्यवृत्तित्वे विरोधादिति तदपि न परमाणुद्वयसंयोगस्यावच्छेदकाभावेन व्याप्यवृत्तितया संयोगमात्रस्य व्याप्यवृत्तित्वापत्त्या तयोर्विरोधे मानाभावात्। तस्मात् एतादृशलाघवस्याकिंचित्करतयातिरिक्तचित्रं नाङ्गीकर्तव्यमिति प्राहुः ॥ **एतेनेति** ॥ रूपस्थलोक्तयुक्तिसजातीययुक्त्येत्यर्थः ॥ **स्पर्शोऽपीति** ॥ अपिना रूपसमुच्चयः। यथा रूपं व्याख्यातं तथा स्पर्शोऽपि व्याख्यातप्राय इत्यर्थः। तथाच प्राचीनानां मते रूपस्येव स्पर्शस्यापि व्याप्यवृत्तितया नानास्पर्शवदवयवारब्धद्रव्ये परस्परविरोधेन मृदुस्पर्शाद्युत्पत्त्यसंभवात् तद्द्रव्यस्य स्पार्शनानुपपत्त्या चित्ररूपवत् चित्रस्पर्शोऽप्यङ्गीकार्यः। नवीनमते नानास्पर्शवदवयवारब्धद्रव्ये नानास्पर्शोत्पत्तौ रूपस्थलोक्तरीत्या बाधकाभावेन मृदुस्पर्शादिसमुदायस्यैवोक्तरीत्या चित्र इति प्रतीति-

**दिनकरीयम्.**

श्रयसमवेतत्वसम्बन्धेन कपालनीलादीनां कारणानां सत्त्वात् कथं तत्र न नीलाद्युत्पत्तिरित्यत आह ॥ **इत्थं चेति** ॥ उक्तलाघवेन चित्ररूपसिद्धौ चेत्यर्थः ॥ **प्रतिबन्धकत्वकल्पनादिति** ॥ समवायेन नीलं प्रति स्वसमवायिसमवेतत्वसम्बन्धेन नीलातिरिक्तरूपत्वेन पीतरूपं प्रति पीतातिरिक्तरूपत्वेन प्रतिबन्धकत्वमिति रीत्या प्रतिबध्यप्रतिबन्धकभावकल्पनादन्यथा नानाजातीयरूपवत्कपालारब्धे घटे नीलकपालाद्यवच्छेदेन पीतोत्पादापत्तेर्दुर्वारत्वादिति भावः। अत्र नव्याः नानाजातीयरूपवत्कपालारब्धे घटे पीतकपालावच्छेदेन नीलापत्तिवारणाय न पूर्वोक्तः प्रतिबध्यप्रतिबन्धकभावः कल्प्यते किं त्ववच्छेदकतासम्बन्धेन नीलादिकं प्रति समवायेन नीलादेः कारणत्वं कल्प्यते चित्ररूपाङ्गीकारे तु समवायेन नीलादिकं प्रति स्वाश्रयसमवेतत्वसम्बन्धेन नीलत्वादिना हेतुत्वस्य पूर्वोक्तप्रतिबध्यप्रतिबन्धकभावस्य च कल्पनाद्गौरवमित्याहुस्तन्न अवच्छेदकतासम्बन्धघटितोक्तकार्यकारणभावाङ्गीकारेऽप्यवच्छेदकतासम्बन्धेन कपालादौ जायमानस्य नीलादेः समवायेन घटादाविव गगनादावप्युत्पत्तिवारणाय समवायेन नीलादिकं प्रति स्वाश्रयसमवेतत्वसम्बन्धेन नीलादेः हेतुत्वस्य तवाप्यावश्यकत्वात्। किंच चित्रमिति प्रतीतिविषयताया अनेकत्र कल्पने गौरवमेकत्र कल्पने लाघवमिति लाघवानुरोधेनातिरिक्तचित्ररूपसिद्धौ पूर्वोक्तप्रतिबध्यप्रतिबन्धकभावकल्पनागौरवस्य न दोषत्वं फलमुखत्वादित्यन्यत्र विस्तरः ॥ **स्पर्शोऽपि व्याख्यात इति** ॥ कोमलकठिनस्पर्शवदवयवाभ्या-

नाव्याप्यवृत्ति । किंतु नानाजातीयरसवदवयवैरारब्धेऽवयविनि रसाभावेऽपि न क्षतिः तत्र रसनयावयवरस एव गृह्यते रसनेन्द्रियादीनां द्रव्यग्रहे सामर्थ्याभावात् अवयविनो नीरसत्वेऽपि क्षतेरभावात् । नव्यास्तु तत्राव्याप्यवृत्त्यैव नानारूपं नीलादेः पीतादिप्रतिबन्धकत्वकल्पने गौरवात् । अत एव लोहितो यस्तु वर्णेन मुखे पुच्छे च पाण्डुरः । श्वेतः खुरविषाणाभ्यां स नीलो वृष उच्यत इत्यादिशास्त्रमप्युपपद्यते । नच व्याप्याव्याप्यवृत्तिजातीययोर्द्वयोर्विरोधः मानाभावात् । नच लाघवादेकं रूपं अनुभवविरोधात् । अन्यथा घटादेरपि लाघवादैक्यं स्यात् । एतेन स्पर्शादिकमपि व्याख्यातमिति वदन्ति ॥ १०० ॥

## प्रभा.

विषयत्वसंभवेनातिरिक्तचित्रस्पर्शो नाङ्गीकर्तव्य इति भावः ॥ **रसादिकमपीति** ॥ प्राचीनमत इत्यादिः ॥ आदिना गन्धपरिग्रहः । अपिना स्पर्शस्समुच्चीयते । तथाच यथा स्पर्शो न दैशिकाव्याप्यवृत्तिः तथा रसो गन्धश्च न दैशिकाव्याप्यवृत्तिरिति भावः । ननु तर्हि मधुरादिनानारसवदवयवारब्धावयविनो नीरसत्वापत्तिरित्यत्रेष्टापत्तिमाह ॥ **किंत्विति** ॥ **न क्षतिरिति** ॥ पृथिव्यादेरस्पर्शत्वे यो दोषः सः अवयविविशेषस्य नीरसत्वस्वीकारे नास्तीत्यर्थः । दोषाभावमुपपादयति ॥ **तत्रेति** ॥ नानारसवदवयवारब्धनीरसावयविनीत्यर्थः ॥ **रसनयेति** ॥ अवयवरस एव रासननिरूपितलौकिकविषयतावानित्यर्थः । तथाचावयवानामपि रसनेन्द्रियसंयुक्तत्वेन तत्समवायरूपसन्निकर्षस्यावयवरसे सत्त्वादिति भावः ॥ **रसनेन्द्रियादीनामिति** ॥ आदिना घ्राणश्रोत्रयोः परिग्रहः ॥ **द्रव्यग्रह इति** ॥ द्रव्यवृत्तिलौकिकविषयतासंबन्धेन प्रत्यक्ष इत्यर्थः ॥ **सामर्थ्याभावादिति** ॥ कारणत्वाभावादित्यर्थः । द्रव्यनिष्ठलौकिकविषयताशालिरासनादेरप्रसिद्धत्वादिति भावः ॥ **अवयविन इति** ॥ नानारसवदवयवारब्धावयविन इत्यर्थः ॥ **नीरसत्वेऽपीति** ॥ रसवद्भिन्नत्वेऽपीत्यर्थः ॥ **क्षतेरभावादिति** ॥ द्रव्यरासनानुपपत्तिरूपबाधकाभावादित्यर्थः । इदमुपलक्षणम् । सुरभ्यसुरभ्यवयवारब्धावयविनो निर्गन्धत्वेऽपि न क्षतिः । घ्राणेन्द्रियेणावयवगन्धस्यैव प्रत्यक्षस्वीकारात् द्रव्यस्य घ्राणजप्रत्यक्षविषयत्वाप्रसिद्धिश्चेत्यपि बोध्यम् । अत्र नानारसवत्त्र्यणुकत्रयारब्धचतुरणुके प्राचीनमते परस्परविरोधेन रसानुत्पत्त्या तत्र रसस्य रासनानुपपत्तिः रूपं विहायान्येषां त्रसरेणुसमवेतानां गुणानां प्रत्यक्षायोग्यतया त्रसरेणुरसं विषयीकृत्य चतुरणुकादिविशेष्यकरासनासंभवात् तस्मात्तत्र रसप्रत्यक्षानुरोधेन चित्ररसोऽपि अवश्यमङ्गीकार्य इत्यर्थः । एवं नानागन्धवत्त्रसरेणुद्वयारब्धचतुरणुकादौ तन्मते परस्परविरोधेन गन्धानुत्पत्त्या तत्र गन्धघ्राणजानुपपत्तिः त्र्यणुकगन्धस्यायोग्यत्वात् तद्गन्धं विषयीकृत्य चतुरणुकादिविशेष्यकतद्गन्धप्रकारकघ्राणजप्रत्यक्षासंभवात् । तस्मात् चित्ररूपस्पर्शवत् चित्ररसगन्धावपि अवश्यमङ्गीकार्यौ तावेव चित्रमिति प्रतीतिविषयाविति प्रतिभाति । नवीनमते नानारसवदवयवारब्धावयविन्यव्याप्यवृत्तिनानारसोत्पत्तौ नानागन्धवदवयवारब्धद्रव्ये अव्याप्यवृत्तिनानागन्धोत्पत्तौ चोक्तरीत्या बाधकाभावेन तादृशावयविनि नानारसगन्धानामेव रासनादिप्रत्यक्षविषयत्वं चित्रो रस इत्यादिप्रतीतिविषयत्वं च स्वीक्रियत इति चित्ररसादिकमप्रामाणिकमेवेति ॥ १०० ॥

## दिनकरीयम्.

मारब्धे घटादौ स्पर्शानङ्गीकारे घटस्य स्पार्शनानापत्तिरित्यादिरीत्या चित्रस्पर्शोऽप्यावश्यक इति भावः ॥ **अवयविनो नीरसत्वेऽपि क्षतेरभावादिति** ॥ नच चित्रो रस इति प्रतीतिविषयतयातिरिक्तचित्रसिद्धिरिति वाच्यं तादृशप्रतीतेरवयवगतनानारसैरुपपत्तेरातिरिक्तचित्ररसतत्प्रागभावध्वंसादिकल्पने गौरवात् । नचैवं द्व्यणुकरसस्यायोग्यतया मधुरादिरसप्रतीतिनियामकत्वासम्भवेनास्तु त्र्यणुके मधुरादिरसः चतुरणुकाद्यन्त्यावयविपर्यन्तं मधुरादिरसवत्त्वे मानाभावः त्र्यणुकगतमधुररसेनैव मधुरादिप्रत्ययोपपत्तेरिति वाच्यं समवायेन मधुररसं प्रति स्वसमवायिसमवेतत्वसम्बन्धेन मधुररसत्वेन हेतुतायास्त्र्यणुकगतमधुररसान्यथानुपपत्त्या क्लृप्ततया तादृशकारणबलाच्चतुरणुकादौ मधुरादिरसोत्पत्तेर्दुर्वारत्वात् ॥ १०० ॥

जलादिपरमाणौ तु नित्यमन्यत् सहेतुकम् ।
रसस्तु रसनाग्राह्यो मधुरादिरनेकधा ॥ १०१ ॥
सहकारी रसज्ञाया नित्यतादि च पूर्ववत् ।
घ्राणग्राह्यो भवेद्गन्धो घ्राणस्यैवोपकारकः ॥ १०२ ॥
सौरभश्चासौरभश्च स द्वेधा परिकीर्तितः ।
स्पर्शस्त्वगिन्द्रियग्राह्यस्त्वचः स्यादुपकारकः ॥ १०३ ॥
अनुष्णाशीतशीतोष्णभेदात् स त्रिविधो मतः ।
काठिन्यादि क्षिताविव नित्यतादि च पूर्ववत् ॥ १०४ ॥

**जलादीति** ॥ जलपरमाणौ तेजःपरमाणौ च रूपं नित्यं पृथिवीपरमाणुरूपं तु न नित्यं तत्र पाकेन रूपान्तरोत्पत्तेः । नहि घटस्य पाकानन्तरं तदवयवोऽपक्व उपलभ्यते । नहि रक्तकपालस्य कापालिका नीलावयवा भवन्ति । एवं क्रमेण परमाणावपि पाकसिद्धेः ॥ **अन्यत्** जलतेजःपरमाणुरूपाभिन्नं रूपम् ॥ **सहेतुकं** जन्यम् । रसं निरूपयति ॥ **रसस्त्विति** ॥

## प्रभा.

जलादिपरमाणौ तु नित्यमन्यत्सहेतुकमिति मूलं तत्र पृथिवीपरमाणुरूपस्य पाकजत्वेनानित्यतया असाङ्गत्यापत्तेः अतः पृथिवीं व्यावर्तयति ॥ **जलादीति** ॥ आदिना तेजःपरमाणुपरिग्रहः । सप्तम्यन्तपरमाणुपदोत्तरश्रूयमाणावधारणार्थकतुशब्दव्यवच्छेद्यं स्वयमेवाह ॥ **अन्यदिति** ॥ जलतेजःपरमाणुसमवेतरूपभिन्नरूपमात्रमित्यर्थः ॥ **सहेतुकमिति** ॥ जन्यमित्यर्थः । यद्यपि अन्यदनित्यकमित्येव वक्तुमुचितं रूपस्य नित्यानित्यभेदेन द्वैविध्यनिरूपणस्यैव प्रकृतत्वात् तथापि रूपस्य जन्यत्वप्रतिपादनेन रूपस्य भावत्वात् जन्यभावत्वस्य नाशप्रतियोगित्वरूपानित्यत्वव्याप्यत्वाच्च तेनानित्यत्वस्यापि उपस्थितिसंभवेन ध्वंसप्रागभावावृत्तिभ्यां प्रागभावाप्रतियोगित्वध्वंसाप्रतियोगित्वरूपनित्यत्वप्रागभावप्रतियोगित्वध्वंसप्रतियोगित्वरूपानित्यत्वाभ्यां रूपस्य द्वैविध्यप्रतिपादनाय नित्यमन्यदनित्यकमित्यनुक्त्वा नित्यमन्यत्सहेतुकमित्युक्तं तदेव प्रकाशयति ॥ **मुक्तावल्यां जलपरमाणाविति** ॥ पृथिवीपरमाणुरूपस्यानित्यत्वे हेतुमाह ॥ **तत्रेति** ॥ पृथिवीपरमाणावित्यर्थः ॥ **पाकेनेति** ॥ विजातीयाग्निसंयोगेनेत्यर्थः ॥ **रूपान्तरोत्पत्तेरिति** ॥ रूपनाशरूपान्तरोत्पत्तेः प्रामाणिकत्वादित्यर्थः । प्रमाणमेव दर्शयति ॥ **नहीति** ॥ **घटस्येति** ॥ अत्र घटशब्दोऽवयविमात्रोपलक्षकः ॥ **पाकानन्तरमिति** ॥ विजातीयाग्निसंयोगाद्रूपनाशोत्तरकालीनरूपान्तरोत्पत्त्यनन्तरामित्यर्थः ॥ **तदवयव इति** ॥ तत्तदवयविनः अवयव इत्यर्थः ॥ **अपक उपलभ्यत इति** ॥ पाकाधीनरूपशून्यत्वविशिष्टस्सन् प्रत्यक्षविषय इत्यर्थः । नहीत्यस्यानुषङ्गेण पाकाधीनरूपशून्यतया न प्रत्यक्षविषय इत्यर्थः फलितः । तथाच प्रत्यक्षप्रमाणेन चरमावयविनोऽवयवेषु कपालादिषु विजातीयतेजस्संयोगसिद्धिरिति भावः ॥ **नहि रक्तकपालस्य कापालिका इति** ॥ अत्र कपालशब्दः चरमावयविनोऽवयवमात्रोपलक्षकः । कापालिकाशब्दः तदवयवावयवमात्रोपलक्षकः ॥ **नीलावयवा भवन्तीति** ॥ पाकाधीनतत्तदवयविसमवेतरूपविजातीयरूपवन्तो भवन्तीति फलितोऽर्थः । तथाच त्रसरेणुपर्यन्तावयवेषु पाकाधीनावयविसमवेतरूपविजातीयरूपादर्शनात् अवयविनीव त्रसरेणुपर्यन्तावयवेष्वपि प्रत्यक्षप्रमाणेन पाकोऽवश्यमङ्गीकार्य इति भावः ॥ **एवमिति** ॥ त्रसरेणुपर्यन्तावयवेष्वपि पाकसाधकप्रमाणतुल्यप्रमाणेनेत्यर्थः ॥ **क्रमेणेति** ॥ द्व्यणुके पाकानुमितिद्वारेत्यर्थः ॥ **पाकसिद्धेरिति** ॥ त्रसरेणुदृष्टान्तेनेत्यादिः । पाकानुमितिसंभवादित्यर्थः । तथाच द्व्यणुकं पाकजन्यरूपवत् पाकजन्यरूपाश्रयसमवायित्वात् त्रसरेणुवदित्यनुमानेन द्व्यणुके पाकसिद्धौ पार्थिवपरमाणुः पाकजन्यरूपवान् तादृशद्व्यणुकसमवायित्वात्त्रसरेणु-

**सहकारीति** ॥ रासनज्ञाने रसः कारणमित्यर्थः ॥ **पूर्ववदिति** ॥ जलपरमाणौ रसो नित्यः अन्यः सर्वोऽपि रसोऽनित्य इत्यर्थः । गन्धं निरूपयति ॥ **घ्राणग्राह्य इति** ॥ **उपकारक इति** ॥ घ्राणजन्यज्ञाने सहकारी स इत्यर्थः । सर्वोऽपि गन्धोऽनित्य एव । स्पर्शं निरूपयति ॥ **स्पर्श इति** ॥ **उपकारक इति** ॥ स्पार्शनप्रत्यक्षे स्पर्शः कारणमित्यर्थः ॥ **अनुष्णाशीत इति** ॥ पृथिव्यां वायौ च स्पर्शोऽनुष्णाशीतः जले शीतः तेजस्युष्णः । कठिनसुकुमारस्पर्शौ पृथिव्यामेवेत्यर्थः । कठिनत्वादिकं तु न संयोगगतो जातिविशेषः चक्षुर्ग्राह्यत्वा-

**प्रभा.**

पत् इत्यनुमानात् परमाणावपि पाकसिद्धिरिति भावः ॥ **रूपभिन्नमिति** ॥ तादृशरूपभिन्नरूपमनित्यमित्यर्थः । मूले रसं लक्षयति ॥ **रसस्त्विति** ॥ **रसनाग्राह्य इति** ॥ रसनेन्द्रियकरणकज्ञाननिरूपितलौकिकविषयतावानित्यर्थः । यद्यपीदं परमाण्वादिरसेऽव्याप्तमतिव्याप्तं च रसत्वादौ तथापि रासननिरूपितलौकिकविषयताश्रयरूपासमवेतजातिमत्त्वस्य विवक्षितत्वान्नोक्तदोषावकाशः ॥ **मधुरादिरनेकधेति** ॥ प्राचीनमते चित्ररसमादाय सप्तधा नवीनमते षड्विध इत्यर्थः । उक्तार्थ एव विश्वनाथपञ्चाननस्य निर्भरः अन्यथा एकमतमात्रतात्पर्यस्वीकारे मधुरादिश्च सप्तधेति मधुरादिश्च षड्विध इति वा कारिकापत्तेः । सहकारी रसज्ञाया इति यथाश्रुतकारिकया रसनेन्द्रियजन्यमात्रे रसः कारणमिति लभ्यते तच्चानुपपन्नं स्वसमवेतरूपादिजनने रसस्यासहकारित्वात् अतो भावार्थमाह ॥ **मुक्तावल्यां रासनज्ञान इति** ॥ रासनत्वजात्यवच्छिन्न इत्यर्थः । एवमग्रेऽपि ॥ **मूले घ्राणग्राह्य इति** ॥ घ्राणेन्द्रियकरणकज्ञाननिरूपितलौकिकविषयताश्रय इत्यर्थः । यद्यपीदं परमाण्वादिगन्धे अव्याप्तं गन्धत्वादावतिव्याप्तं च तथापि घ्राणजनिरूपितलौकिकविषयताश्रयरसासमवेतजातिमत्त्वस्य विवक्षितत्वान्नोक्तदोषावकाशः । सौरभश्चासौरभश्चेत्यादिना गन्धस्य द्वैविध्यप्रतिपादनं नवीनमतानुसारेण । प्राचीनमते चित्रगन्धमादाय त्रैविध्यं बोध्यम् । परमाणुगन्धस्यापि पाकजत्वेनानित्यतया नित्यत्वादिना विभागो नेत्याह ॥ **सर्वो गन्ध इति** ॥ यद्यपि स्पर्शस्त्वगिन्द्रियग्राह्य इति सावधारणमूलात् त्वग्भिन्नकरणकज्ञाननिरूपितलौकिकविषयताशून्यत्वे सति लौकिकविषयतावत्त्वं लक्षणमिति लभ्यते तच्चानुपपन्नं परमाण्वादिस्पर्शेऽव्याप्तेः स्पर्शत्वादावतिव्याप्तेश्च तथापि तादृशलौकिकविषयताशून्यत्वलौकिकविषयत्वोभयसमानाधिकरणगुणविभाजकधर्मवत्त्वविवक्षणान्नोक्तदोषः । तत्र त्वग्भिन्नकरणकज्ञाननिरूपितत्वेन न लौकिकविषयताप्रवेशः गौरवात् किन्तु स्पार्शनत्वावच्छिन्नानिरूपितलौकिकविषयताशून्यत्वलौकिकविषयतावत्त्वोभयविशिष्टजातिमत्त्वं लक्षणमिति फलितम् । यदि वायोः स्पार्शनाङ्गीकर्तृनवीनमते तादृशवायुत्वजातिमादाय वायावतिव्याप्तिरिति विभाव्यते तदा गुणवृत्तित्वमपि जातौ निवेश्योक्तदोषो वारणीय इति । अस्मद्गुरुचरणास्तु चाक्षुषत्वावच्छिन्ननिरूपितलौकिकविषयताव्यवच्छेदकावधारणघटितस्पर्शस्त्वगिन्द्रियग्राह्य इति मूलात् चाक्षुषत्वावच्छिन्ननिरूपितलौकिकविषयताशून्यत्वस्पार्शनानिरूपितलौकिकविषयत्वोभयविशिष्टगुणवृत्तिजातिमत्त्वमेव पदलब्धं लक्षणमिति व्याचक्रुः । त्वक्समवेतैकत्वादौ स्पर्शस्य कारणत्वाभावात् कथमुपकारकत्वमत आह ॥ **मुक्तावल्यां स्पार्शनप्रत्यक्ष इति** ॥ स्पार्शनत्वावच्छिन्न इत्यर्थः । मूलेऽनुष्णाशीतशीतोष्णभेदादित्यनेन त्रैविध्यं स्पर्शस्य प्रतिपादितं त्रिविधस्पर्शाश्रयं क्रमेणोपपादयति ॥ **मुक्तावल्यां पृथिव्या इति** ॥ जलस्य स्पर्शः शीतः तैजसः स्पर्श उष्ण इति सर्वत्र स्पर्शपदार्थान्वयाय वायोश्चानुष्णाशीत इत्यनुक्त्वा वायोः स्पर्शः अनुष्णाशीत इत्युक्तम् । इदमुपलक्षणं पृथिव्या अनुष्णाशीतः त्रिविधः सुकुमारकठिनचित्रभेदात् तत्र नवनीतादिस्पर्शः सुकुमारः पाषाणादिस्पर्शः कठिनः नानास्पर्शवदवयवारब्धपृथिवीस्पर्शः चित्रस्पर्श इत्यपि बोध्यम् । गुणवचनब्राह्मणादिभ्यः कर्मणि चेति सूत्रे चकारेण गुणवाचकपदोत्तरं स्वार्थे ष्यञ्विधानात् काठिन्यादि क्षितावेवेत्यत्र कठिनपदोत्तरश्रूयमाणष्यञ्प्रत्ययोऽपि स्वार्थक एवेत्यभिप्रायेण प्रतीकमधृत्वा काठिन्यपदार्थमादिपदार्थं चाह ॥ **कठिनसुकुमारस्पर्शादीति** ॥ कठिनः

पत्तेः ॥ **पूर्ववदिति** ॥ जलतेजोवायुपरमाणुस्पर्शा नित्यास्तद्भिन्नास्त्वनित्या इत्यर्थः॥ १०१ ॥ १०२ ॥ १०३ ॥ १०४ ॥

**एतेषां पाकजत्वं तु क्षितौ नान्यत्र कुत्रचित् ।**
**तत्रापि परमाणौ स्यात् पाको वैशेषिके नये ॥ १०५ ॥**

**एतेषां** रूपरसगन्धस्पर्शानाम् ॥ **नान्यत्रेति** ॥ पृथिव्यां हि रूपरसगन्धस्पर्शपरावृत्तिः पावकसंयोगादुपलभ्यते। नहि शतधा ध्मायमानेऽपि जले रूपादिकं परावर्तते । जले सौर-

### प्रभा.

संयोगः मृदुः संयोग इति प्रतीतेः कठिनत्वादिकं संयोगगतजातिविशेष एवेति नवीनैकदेशिमतं दूषयति ॥ **कठिनत्वादिकमिति** ॥ आदिना मृदुत्वादिपरिग्रहः ॥ **चक्षुर्ग्राह्यतापत्तेरिति** ॥ यो गुणो यदिन्द्रियग्राह्य इति नियमादिति भावः । नचैवं सति कठिनः संयोग इति प्रतीतेः अगतिकत्वापत्तिरिति वाच्यं तत्प्रतीतेः कठिनस्पर्शतद्वदन्यासमवेतसंयोगयोर्भेदाग्रहमूलकत्वेन भ्रमत्वात् । केचित्तु कठिनः संयोग इति प्रतीतिस्तु कठिनस्पर्शवद्द्रव्यप्रतियोगिकत्वमवगाहत इति भाव इत्याहुः तदसत् प्रतीत्या प्रतियोगित्वानुल्लेखात् । नच कठिनपदस्य कठिनस्पर्शवद्द्रव्यप्रतियोगिकत्वविशिष्टे लक्षणास्वीकारान्नोक्तानुपपत्तिरिति वाच्यं तथा सति कठिनस्पर्शवन्मात्रसमवेतविभागस्यापि तादृशतया कठिनो विभाग इत्यपि प्रतीत्यापत्तेः । नच कठिनस्संयोग इति प्रतीतौ तादृशद्रव्यप्रतियोगिकत्वसंबन्धेन स्पर्शनिष्ठकाठिन्यमेव संयोगे भासते विभागनिष्ठतादृशद्रव्यप्रतियोगिताकत्वस्य काठिन्यसंबन्धत्वानभ्युपगमात् न विभागे तादृशप्रत्ययापत्तिः अत एव स्फटिकादिभिन्ने लौहित्यस्य स्वाश्रयसंयोगो न संबन्धः किन्तु स्फटिकादावेवेति सिद्धान्तवागीशभट्टाचार्यलेखनमपि सङ्गच्छत इति वाच्यम्। जातेस्समवायातिरिक्तसंबन्धेन स्वरूपतो मानाभावात् । अन्यथा रूपत्वं द्रव्यत्ववदितिवत् द्रव्यमित्यादिप्रमापत्तेः रूपत्वं द्रव्यमित्यादिवाक्यस्य प्रामाण्यापत्तेश्च रूपत्वादौ स्वसमवायिसमवेतत्वसंबन्धेन द्रव्यत्वसत्त्वादिति । नित्यतादि च पूर्ववदिति यथाश्रुतमूलात् रूपादीनामिव नित्यत्वादिकं बोध्यमित्यर्थो लभ्यते तच्चानुपपन्नं जलतेजःपरमाणुसमवेतरूपस्यैव नित्यत्वेन तदन्यरूपमात्रस्यानित्यत्वेन तद्रीत्या जलतेजःपरमाणुसमवेतस्पर्शस्यैव नित्यत्वस्य तदन्यस्पर्शमात्रस्यानित्यत्वस्य च लाभेन वायुपरमाणुसमवेतस्पर्शस्यापि अनित्यत्वलाभेन बाधापत्तेः। अतः पूर्ववदिति मूलस्य तात्पर्यमाह ॥ **मुक्तावल्यां जलेत्यादि** ॥ **तद्भिन्ना इति** ॥ जलतेजोवायुपरमाणुसमवेतस्पर्शभिन्ना इत्यर्थः ॥ १०१ ॥ १०२ ॥ १०३ ॥ १०४ ॥

एतेषां पाकजत्वमिति मूलस्थषष्ठीबहुवचनान्तैतच्छब्दस्य नित्यानित्यभेदेन द्विविधस्पर्शानामित्यर्थस्वीकारे रूपादीनां पृथिव्यवच्छेदेनापि पाकजन्यत्वाप्राप्त्यासाङ्गत्यापत्तिः अत एतच्छब्दस्य तात्पर्यार्थमाह ॥ **मुक्तावल्यां रूपरसेति** ॥ पाकजत्वं तु क्षिताविति मूलस्थावधारणार्थकतुशब्दस्य सप्तम्यन्तक्षितिपदोत्तरं योजनया क्षितावेव पाकजत्वमित्यर्थो लभ्यते तत्र व्यवच्छेद्यार्थं स्वयमेव दर्शयति ॥ **नान्यत्र कुत्रचिदिति** ॥ कुत्रचिदित्यनेन जलाद्यवच्छेदेन रूपादेः पाकजत्वाभावो लभ्यते । एतदेवोपपादयति ॥ **मुक्तावल्यां पृथिव्यां हीति** ॥ यत इत्यर्थकहिशब्दः पावकसंयोगादित्युत्तरं योज्यः । यत उपलभ्यते अतः रूपरसगन्धस्पर्शपरावृत्तिरित्यर्थः। तथाच पृथिव्यां विजातीयतेजस्संयोगानन्तरं पूर्वरूपादिचतुष्टयान्यतमविजातीयरूपादिचतुष्टयोपलब्धेः पूर्वरूपादिचतुष्टयनाशपूर्वकतादृशचतुष्टयान्यतमविजातीयरूपादिचतु-

### दिनकरीयम्.

ननु घटावयवेऽप्यायातु पाको न तु परमाणावत आह ॥ **नहि रक्तेति** ॥ **न संयोगगत इति** ॥ कठिनः संयोग इति प्रतीतिस्तु कठिनस्पर्शवद्द्रव्यप्रतियोगिकत्वमवगाहत इति भावः ॥ १०१ ॥ १०२ ॥ १०३ ॥ १०४ ॥

भमौष्ण्यं चान्वयव्यतिरेकाभ्यामुपाधेरेवेति निर्णीयते पवनपृथिव्योः शीतस्पर्शादिवत् । तत्रापि पृथिवीष्वपि मध्ये परमाणावेव रूपादीनां पाक इति वैशेषिका वदन्ति। तेषामयमाशयः। अवयविनावष्टब्धेष्ववयवेषु पाको न सम्भवति परन्तु वह्निसंयोगेनावयविषु विनष्टेषु

## प्रभा.

ष्टयोत्पत्तिः विजातीयतेजस्संयोगादवश्यमङ्गीकार्येति भावः । जलादौ रूपादेः अपरावृत्तिमुपपादयति ॥ **न हीति** ॥ इदं परावर्तत इत्यनेन संबध्यते ॥ **शतधा ध्मायमानेऽपीति** ॥ अनेन जले पूर्वरूपादिनाशपूर्वकपूर्वरूपादिविजातीयरूपाद्युत्पादकविजातीयतेजस्संयोगसत्त्वमाविष्कृतम् ॥ **रूपादिकं परावर्तत इति** ॥ पूर्वरूपादिनाशपूर्वकपूर्वरूपादिविजातीयरूपादिकमुत्पत्तिमदित्यर्थः । तादृशवैजात्येनानुपलभ्यमानत्वादिति हेतुरूह्यः । तथाच जले विजातीयरूपाद्युत्पादकविजातीयतेजस्संयोगसत्त्वेऽपि तादृशरूपाद्यनुत्पत्तेः दैशिकविशेषणतासंबन्धेन पूर्वरूपादिनाशं प्रति समवायादिसंबन्धेन पूर्वरूपादिविजातीयरूपादिकं प्रति च तादात्म्यसंबन्धेन पृथिव्या हेतुत्वमावश्यकमिति जले तादृशकारणाभावात् न रूपादिपरावृत्तिरिति भावः । ननु विजातीयरूपादिकं प्रति जलस्य हेतुत्वानङ्गीकारे तत्र गन्धोष्णस्पर्शयोरुत्पत्त्यसंभवेन तत्र तत्प्रत्यक्षानुपपत्तिरत आह ॥ **जल इति** ॥ **सौरभमिति** ॥ प्रतीयमानमित्यादिः । असौरभमित्यपि बोध्यम् । अत्र सौरभशब्दः गन्धमात्रोपलक्षक इत्यस्मद्गुरुचरणाः ॥ **औष्ण्यमिति** ॥ उष्णस्पर्श इत्यर्थः ॥ **अन्वयव्यतिरेकाभ्यामिति** ॥ पृथिवीतेजस्संयोगसत्ताकालीनसौरभाद्युपलब्धिपृथिवीतेजस्संयोगसत्ताशून्यकालीनसौरभाद्यनुपलब्धिभ्यामित्यर्थः ॥ **उपाधेरेवेतीति** ॥ पृथिवीतेजोनिष्ठमेवेतीत्यर्थः । जलासमवेतमिति यावत् ॥ **निर्णीयत इति** ॥ अनुमीयत इत्यर्थः । तथाच जलविशेष्यकोपलब्धिप्रकारताविशिष्टसौरभासौरभादिकं जलासमवेतं पृथिव्याद्युपाधिसंबन्धसत्ताकालीनजलविशेष्यकोपलब्धिप्रकारत्वतादृशोपाधिसंबन्धसत्ताशून्यकालीनजलविशेष्यकोपलब्धिप्रकारताशून्यत्वोभयवत्त्वादित्यनुमानात्सौरभादौ जलासमवेतत्वसिद्धिरिति भावः । अत्र यदुपाधिसत्ताकालीनयद्विशेष्यकोपलब्धिप्रकारत्वोपाधिसंबन्धसत्ताशून्यकालीनयद्विशेष्यकोपलब्धिप्रकारताशून्यत्वोभयवद्भवति तत्तदसमवेतमिति सामान्यमुखव्याप्तौ दृष्टान्तमाह ॥ **पवनपृथिव्योरिति** ॥ पवनपृथिव्यन्यतरविशेष्यकोपलब्धिप्रकारताविशिष्टशीतस्पर्शादिवदित्यर्थः । आदिना उष्णस्पर्शपरिग्रहः । तथाच पवनपृथिव्यन्यतरविशेष्यकोपलब्धिप्रकारताविशिष्टशीतस्पर्शादि जलादिसंबन्धसत्ताकालीनतादृशान्यतरविशेष्यकोपलब्धिप्रकारत्वजलादिसंबन्धसत्ताशून्यकालीनतादृशान्यतरविशेष्यकोपलब्धिप्रकारताशून्यत्वोभयविशिष्टं भवतीति यथा तादृशान्यतरासमवेतं भवति तथा प्रकृतेऽपि सामान्यमुखव्याप्त्या पृथिव्यादौ भासमानशीतस्पर्शादिदृष्टान्तेन जले भासमानसौरभादेरपि जलासमवेतत्वासिद्धौ जलविशेष्यकसौरभादिप्रतीतेरप्यनायत्या उपाधिभूतपृथिव्यादिसमवेतसौरभादिविषयकत्वावश्यकत्वात् भ्रमत्वमेवावश्यमङ्गीकार्यमिति भावः । मतद्वयमध्ये नवीनमतस्य दूषणीयतया आदौ तन्मतमुपन्यस्यति ॥ **मूले तत्रापि परमाणौ स्यादिति** ॥ तत्र तच्छब्दोत्तरत्रल्प्रत्ययः निर्धारणसप्तम्यर्थक इत्याभिप्रायेण त्रल्प्रत्ययान्ततच्छब्दार्थमाह ॥ **मुक्तावल्यां पृथिवीष्वपीति** ॥ नैयायिकमतेऽपि परमाणौ पाकसत्त्वाद्वैशेषिक इत्यसङ्गतमतः परमाणाविति मूलस्य सावधारणत्वाभिप्रायेणार्थमाह ॥ **परमाणावेवेति** ॥ मूलस्थपाकशब्दस्य ससम्बन्धिकतया सम्बन्धिवाचकपदं पूरयति ॥ **रूपादीनां पाक इति** ॥ विजातीयतेजस्संयोगजन्यपूर्वरूपादिचतुष्टयनाशपूर्वकपूर्वरूपादिचतुष्टयान्यतमविजातीयरूपाद्युत्पत्तिरित्यर्थः । वैशेषिके नय इति मूलस्य भावार्थमाह ॥ **इति वैशेषिका वदन्तीति** ॥ इति इत्यर्थम् । द्व्यणुकादिषु पाकासंभवमिति यावत् । वैशेषिका वदन्तीत्यर्थः । द्व्यणुकादिषु पाकासंभवः कुत इत्याशङ्कां सयुक्तिकाभिप्रायप्र-

## दिनकरीयम्.

**रूपादीनां पाक इति** ॥ रूपादीनां परावृत्तिरित्यर्थः ॥ **पाको न सम्भवतीति** ॥ रूपादिपरावृत्तिफलकतेजःसंयोगो न सम्भवतीत्यर्थः । रूपादिपरावृत्तिर्न सम्भवतीति यावत् । रूपादिनाशं प्रति

## प्रभा.

दर्शनेन परिहरति ॥ **तेषामिति** ॥ वैशेषिकाणामित्यर्थः ॥ **अयमाशय इति** ॥ वक्ष्यमाणयुक्तिसहितोऽभिप्राय इत्यर्थः ॥ **अवयविनावष्टब्धेष्ववयवेष्विति** ॥ समवायेन घटादिविशिष्टेषु कपालेषु घटादिषु चेत्यर्थः ॥ **पाको न संभवतीति** ॥ युगपद्विजातीयतेजःसंयोगाधीनपूर्वरूपादिनाशपूर्वकपूर्वरूपादिविजातीयरूपाद्युत्पत्तिर्न संभवतीत्यर्थः। बाह्यावयवानां वह्न्यवयवैः सह विजातीयसंयोगसंभवेऽपि घटादिरूपप्रतिबन्धकसत्त्वात् वह्न्यवयवानां अन्तःप्रवेशासंभवेनान्तरावयवेषु वह्न्यवयवानां विजातीयसंयोगासंभवेन सर्वावयवेषु विजातीयतेजस्संयोगरूपकारणाभावादिति भावः। केचित्तु पाको न संभवतीति रूपादिपरावृत्तिफलकतेजस्संयोगो न संभवतीत्यर्थः रूपादिपरावृत्तिः न संभवतीति यावत् रूपादिनाशं प्रति साक्षात्परम्परासाधारणसर्वावयवावच्छेदेन तेजस्संयोगस्य हेतुतया अवयविना अवष्टब्धेष्ववयवेषु सत्सु अवयविनि रूपादिनाशो न संभवति तद्धेतोस्सर्वावयवावच्छेदेन तेजस्संयोगस्याभावादिति भाव इत्याहुः। तदसत् केवलरूपादिनाशं प्रति सर्वावयवावच्छेदेन तेजस्संयोगस्य हेतुत्वं न संभवति आश्रयनाशजन्यरूपादिनाशे व्यभिचारात्। नचाश्रयनाशाजन्यरूपादिनाशं प्रत्येव तादृशसंयोगस्य हेतुत्वस्वीकारात् नोक्तव्यभिचार इति वाच्यम्। तथापि परमाणुरूपादिनाशे व्यभिचारस्य दुर्वारत्वात्। नच तादृशावयविरूपादिनाशं प्रत्येव तादृशसंयोगस्य हेतुत्वान्नोक्तदोष इति वाच्यं तथापि परमाणुरूपादिनाशं प्रति विजातीयतेजस्संयोगस्य हेतुत्वावश्यकतया कार्यकारणभावद्वयापत्तेः परमाणुरूपादिनाशे क्लृप्तनियतपूर्ववृत्तिताकविजातीयतेजस्संयोगेनैव अवयविन्यपि रूपादिनाशसंभवेन तत्र सर्वावयवावच्छेदेन तेजस्संयोगस्यान्यथासिद्धत्वाच्च। वस्तुतस्तु यत्किंचिदवयवावच्छेदेनावयविनिष्ठतेजस्संयोगात् अवयविनि रूपादिनाशवारणायाङ्गीकृतं सर्वावयवावच्छेदेन तेजस्संयोगहेतुत्वमयुक्तं यत्किंचिदवयवावच्छेदेन अवयविनि तेजस्संयोगकाले सर्वावयवेषु तेजस्संयोगसत्त्वेऽवयविनि रूपादिनाशस्येष्टत्वात् तेषु तेजस्संयोगासत्त्वे यावदवयवरूपादिनाशकाभावात् यावदवयवेषु रूपादिनाशासंभवेन सुतरां अवयविनि रूपादिनाशासंभवात् अवयवरूपादिनाशमन्तरा अवयविनि तन्नाशानङ्गीकारात् यावदवयवेषु अवयविनि च युगपदेव रूपादिनाशस्य तन्मतसिद्धत्वात्। तस्मात् सुन्दोपसुन्दन्यायेन यावदवयवरूपादिनाशकसामग्र्याः अवयविरूपादिनाशकसामग्र्याश्च समानकालीनाया एव फलोपधायकत्वामिति तदुपपादनं निर्युक्तिकमिति प्रतिभाति। परमतसिद्धद्व्यणुकादिपाकासंभवमुक्त्वा स्वमतसिद्धपरमाणुपाकमुपपादयति ॥ **परन्त्विति** ॥ **वह्निसंयोगेनेति** ॥ परमाणुष्वित्यादिः। वह्निप्रतियोगिकनोदनाभिघातान्यतरात्मकविजातीयसंयोगेनेत्यर्थः। तृतीयार्थः प्रयोज्यत्वं तस्य नष्टशब्दघटकनशधात्वर्थनाशेऽन्वयः। तथाच तादृशाग्निसंयोगेन परमाणुषु क्रिया जायते ततः परमाण्वन्तरविभागः तत आरम्भकसंयोगनाशः ततो द्व्यणुकनाशः ततस्त्र्यणुकादिमहावयविपर्यन्तनाश इति भावः। उक्तार्थबोधनायैवावयविष्विति बहुवचनमुपात्तम् ॥ **विनष्टेष्विति** ॥ वर्तमानध्वंसप्रतियोगिक्षणवृत्तिनाशविशिष्टेष्वित्यर्थः। द्व्यणु–

## दिनकरीयम्.

साक्षात्परम्परासाधारणसर्वावयवावच्छेदेन तेजःसंयोगस्य हेतुतयावयविनावष्टब्धेष्ववयवेषु सत्सु अवयविनि रूपादिनाशो न सम्भवति तद्धेतोः सर्वावयवावच्छेदेन तेजःसंयोगस्याभावादिति भावः। नच विद्यमानेऽपि घटादौ सर्वावयवावच्छेदेन तेजःसंयोगः कुतो नोत्पद्यत इति वाच्यं तथा सत्यारम्भकसंयोगावच्छेदेनावयविनि तेजःसंयोगोत्पादकाले तदवच्छेदेनावयवेष्वपि नोदनाभिघातयोरन्यतरस्योत्पादनियमेनावयवेषु विभागहेतुक्रियोत्पादेनारम्भकसंयोगनाशादवयविनाशापत्तेः। नचावयवेषु तेजोभिघातानन्तरं पञ्चमक्षण एवावयविनाशसम्भवेन तत्पूर्वमवयविनि रूपादिनाशोत्पादाभ्युपगमे बाधकाभाव इति वाच्यं तत्र पूर्वावयविनाशावयव्यन्तरोत्पादयोरावश्यकत्वात् पूर्वावयविनि रूपादिपरावृत्तिजनकविजातीयतेजःसंयोगस्य मानाभावेनाकल्पनात् अवयविरूपनाशे आश्रयनाशस्य हेतुत्वात् पाकजन्यत्वस्य कार्यतावच्छेदककोटिप्रवेशे गौरवादवयविनाशं विना पाकेनावयविरूपनाशासम्भवादवयविनीलादाववयवनीलादेर्हेतुतायां व्यभिचारापत्त्या पाकेमावयविनि नीलाद्युत्पादसम्भवाच्चेत्यभिमानः ॥ **अवयविषु नष्टेष्विति** ॥ घटाद्यारम्भककपालादिपरमा-

स्वतन्त्रेषु परमाणुष्वेव पाकः । पुनश्च पक्वपरमाणुसंयोगाद्द्व्यणुकादिक्रमेण पुनर्महावयविपर्यन्तोत्पत्तिः तेजसामतिशयितवेगवशात् पूर्वव्यूहनाशो झटिति व्यूहान्तरोत्पत्तिश्चेति । अत्र द्व्यणुकादि स्वविनाशमारभ्य कतिभिः क्षणैः पुनरुत्पत्त्या रूपादिमद्भवतीति जिज्ञासायां शिष्यबुद्धिवैशद्याय क्षणप्रक्रिया । तत्र विभागजविभागानङ्गीकारे नवक्षणा । तदङ्गीकारे तु विभागः किञ्चि–

## प्रभा .

कादिमहावयविपर्यन्तनाशानन्तरामिति यावत् ॥ **स्वतन्त्रेष्विति** ॥ आरम्भकसंयोगरहितेष्वित्यर्थः ॥ **परमाणुष्वेवेति** ॥ एवकारेणारम्भकसंयोगविशिष्टपरमाणुषु पाकव्यवच्छेदः ॥ **पाक इति** ॥ विजातीयाग्निसंयोगाधीनपूर्वरूपादिनाशपूर्वकपूर्वरूपादिविजातीयरूपाद्युत्पत्तिरित्यर्थः ॥ **पुनश्चेति** ॥ अनन्तरामित्यर्थः ॥ **पक्वपरमाणुसंयोगादिति** ॥ पूर्वरूपादिविजातीयरूपादिमत्परमाणुद्वयसंयोगादित्यर्थः । अग्निसंयोगाधीनपरमाणुसमवेतद्रव्यारम्भानुगुणक्रियाजन्यतादृशपरमाणुद्वयसंयोगादिति यावत् ॥ **द्व्यणुकादिक्रमेणेति** ॥ परमाणुद्वयसंयोगात् द्व्यणुकोत्पत्तिः द्व्यणुकत्रयसंयोगात् त्र्यणुकोत्पत्तिः त्र्यणुकचतुष्टयसंयोगाच्चतुरणुकोत्पत्तिः इत्यादिक्रमेणेत्यर्थः ॥ **पुनर्महावयविपर्यन्तोत्पत्तिरिति** ॥ पुनश्शब्दो वाक्यालङ्कारे घटमृत्पिण्डप्रतिमादिरूपमहावयविपर्यन्तव्यूहान्तरोत्पत्तिरित्यर्थः । ननु तर्हि पूर्वव्यूहनाशो व्यूहान्तरोत्पत्तिः उत्पन्नव्यूहे पूर्वव्यूहभेदश्च कुतो नोपलभ्यत इत्यत आह ॥ **तेजसामिति** ॥ वह्निसूक्ष्मावयवानामित्यर्थः ॥ **अतिशयितवेगवशादिति** ॥ विजातीयवेगाधीनक्रियावशादित्यर्थः । तादृशक्रियाजन्यवह्न्यवयवपरमाणुसंयोगाधीनपरमाणुक्रियाजन्यविभागजन्यारम्भकसंयोगनाशात् वह्न्यवयवपरमाणुसंयोगरूपोत्तरसंयोगजन्यवह्न्यवयवसमवेतपूर्वक्रियानाशाव्यवहितोत्तरक्षणोत्पन्नवह्न्यवयवसमवेतक्रियान्तराधीनवह्न्यवयवपरमाणुसंयोगान्तरजन्यपरमाणुसमवेतक्रियाजन्यारम्भकसंयोगाच्चेति यावत् ॥ **पूर्वव्यूहनाश इत्यादि** ॥ अव्यवधानेन द्व्यणुकप्रभृतिचरमावयविपर्यन्तनाशः द्व्यणुकप्रभृतिचरमावयविपर्यन्तोत्पत्तिश्चेत्यर्थः । तथाच क्षणभेदाज्ञानान्न पूर्वव्यूहनाशाद्युपलब्धिः पूर्वव्यूहसाजात्यदोषात्पूर्वव्यूहभेदानुपलब्धिश्चेति भावः ॥ **द्व्यणुकादीति** ॥ इदं च रूपादिमत् भवतीत्यनेनान्वेति । आदिना त्र्यणुकादिपरिग्रहः ॥ **स्वविनाशमारभ्येति** ॥ द्व्यणुकादिप्रतियोगिकनाशोत्पत्त्यधिकरणक्षणप्रभृतीत्यर्थः ॥ **कतिभिः क्षणैरिति** ॥ कतिक्षणान्तरितक्षणैरित्यर्थः ॥ **पुनरुत्पत्त्येति** ॥ स्वसजातीयद्व्यणुकाद्युत्पत्त्यनन्तरमित्यर्थः । द्व्यणुकादिनाशानन्तरकालीनपूर्वद्व्यणुकादिसजातीयद्व्यणुकाद्युत्पत्त्यनन्तरमुत्पन्नद्व्यणुकादिकं पूर्वद्व्यणुकादिनाशोत्पत्त्यधिकरणक्षणप्रभृति कियत्क्षणान्तरितक्षणे रूपादिमद्भवतीति फलितार्थः ॥ **इति जिज्ञासायामिति** ॥ इत्याकारकशिष्यसमवेतज्ञानगोचरेच्छायामित्यर्थः ॥ **शिष्यबुद्धिवैशद्यायेति** ॥ शिष्यस्य तादृशजिज्ञासानिवर्तकानाहार्याप्रामाण्यज्ञानानास्कन्दितनिश्चयात्मकविषयनिष्पत्तय इत्यर्थः ॥ **प्रक्रियेति** ॥ द्व्यणुकादिनाशोत्पत्त्यधि

## दिनकरीयम् .

णुपर्यन्तेष्वग्निसंयोगेन पूर्वोक्तरीत्या घटादिद्व्यणुकपर्यन्तेषु नाशसम्भवादिति भावः ॥ **स्वतन्त्रेषु** कार्यद्रव्यध्वंसविशिष्टेषु । ननु तत्र संस्थानभेदादिः कथं न प्रतीयत इत्यत आह ॥ **तेजसामिति** ॥ व्यूहः संस्थानम् ॥ **वैशद्यं** उत्पत्तिः ॥ **प्रक्रिया** द्व्यणुकनाशादिरूपाद्युत्पत्तिक्षणनिरूपणम् । क्रियत इति शेषः ॥ **विभागजविभागानङ्गीकार इति** ॥ कारणाकारणविभागात् कार्याकार्यविभागवत्कारणमात्रविभागात् कारणाकारणविभागानङ्गीकार इत्यर्थः । द्रव्यारम्भकसंयोगप्रतिद्वन्द्विविभागजनकक्रियायास्तदनारम्भकसंयोगप्रतिद्वन्द्विविभागाजनकत्वनियमे मानाभावादिति भावः । अत्र च विभागग्रन्थे वक्ष्यमाणविकसत्कमलभङ्गप्रसङ्गभिया उक्तनियमाङ्गीकार आवश्यकः एवं च द्व्यणुकारम्भकपरमाणुक्रियया यत्र द्व्यणुकारम्भकसंयोगप्रतिद्वन्द्विविभागो जनितस्तत्र तया तत्परमाणुक्रियया तत्परमाण्वाकाशादिसंयोगप्रतिद्वन्द्विविभागोत्पत्तिर्न सम्भवति नच मास्तु तत्र परमाण्वाकाशविभागः का क्षतिरिति वाच्यं परमाणावुत्तरदेशसंयोगानुत्पत्त्या परमाणुगतक्रियानाशानुपपत्तेश्च अतस्तादृशपरमाण्वाकाशविभागजनकः परमाण्वोर्विभागो वाच्य इत्यभिप्रायवानाह ॥ त·

सापेक्षो विभागं जनयेत् निरपेक्षस्य तत्त्वे कर्मत्वं स्यात् संयोगविभागयोरनपेक्षं कारणं

प्रभा.

करणक्षणप्रभृत्युत्पत्स्यमानद्व्यणुकादिसमवेतरूपाद्युत्पत्त्याधिकरणक्षणानिरूपणामित्यर्थः । क्रियत इति शेषः ॥ **तत्रेति** ॥ विभागजविभागानङ्गीकारतदङ्गीकारपक्षद्वय इत्यर्थः । घटकत्वं सप्तम्यर्थः । तस्याङ्गीकारेऽनङ्गीकारे चान्वयः ॥ **विभागजविभागानङ्गीकार इति** ॥ कारणमात्रविभागजन्यकारणाकारणविभागानङ्गीकारपक्ष इत्यर्थः । तथाच कारणाकारणविभागोत्तरकालीनकार्याकार्यविभागस्थले शरीरक्रियाया यावदवयवक्रियाजन्यत्वेन शरीरावयवेषु यावत्सु क्रियाशून्यकाले शरीरे क्रियाया असंभवेन हस्तक्रियाजन्यहस्तपुस्तकविभागोत्तरकालीनशरीरपुस्तकविभागस्य शरीरक्रियाजन्यत्वासंभवात् व्यधिकरणत्वेन हस्तक्रियाजन्यत्वासंभवाच्च कार्याकार्यविभागात्मकशरीरपुस्तकविभागस्य कारणाकारणविभागात्मकहस्तपुस्तकविभागजन्यत्वस्वीकारेऽपि परमाणुक्रियायाः परमाणुद्वयविभागे परमाण्वाकाशविभागे च वैयधिकरण्याभावेन हेतुत्वसंभवात्परमाणुद्वयविभागात्मककारणमात्रविभागस्य परमाण्वाकाशविभागात्मककारणाकारणविभागहेतुत्वे मानाभाव इति भावः । नच परमाणुद्वयविभागजनकपरमाणुक्रियायाः परमाण्वाकाशविभागजनकत्वस्वीकारोऽयुक्तः विभागग्रन्थे वक्ष्यमाणविकसत्कमलकुड्मलभङ्गप्रसङ्गभियाङ्गीकृत-द्रव्यारम्भकसंयोगप्रतिद्वन्द्विविभागजनकक्रियायास्तदनारम्भकसंयोगप्रतिद्वन्द्विविभागजनकत्वाभावनियमविरुद्धत्वादिति वाच्यं पद्मारम्भकसंयोगप्रतिद्वन्द्विविभागजनककर्मविशेषस्य कुड्मलारम्भकसंयोगप्रतिद्वन्द्विविभागविशेषाजनकत्वेऽपि दलाकाशसंयोगनाशकदलाकाशविभागजनकत्वे बाधकाभावेन विकसत्कमलकुड्मलभङ्गप्रसङ्गाभावात् तादृशविभागजनकत्वस्य तादृशविभागाजनकत्वव्याप्यत्वपर्यवसितोक्तनियमस्यानावश्यकत्वात्तादृशनियमस्य तदारम्भकसंयोगप्रतिद्वन्द्विविभागजनककर्मणः तदनारम्भकयत्किंचिद्द्रव्यारम्भकसंयोगप्रतिद्वन्द्विविभागजनकत्वार्थकत्वस्वीकाराद्वा विकसत्कमलकुड्मलभङ्गप्रसङ्गाभावात् । अत एव कर्मणो वैलक्षण्येन दलकर्मणोऽतथात्वेऽपि कपालकर्मणः तथात्वे बाधकाभावात् कारणमात्रविभागजविभागास्वीकार इति तरङ्गिण्यां मुकुन्दभट्टोक्तिरपि सङ्गच्छते । एवंच परमाणुद्वयविभागजनकपरमाणुक्रियायाः परमाण्वाकाशविभागजनकत्वे बाधकाभावात् कारणमात्रविभागजकारणाकारणविभागो निष्प्रामाणिकः अन्यथा कारणमात्रसंयोगजकारणाकारणसंयोगस्यापि स्वीकारापत्तेरित्याशयः । अत्र विकसत्कमलकुड्मलभङ्गप्रसङ्गभियाङ्गीकृतोक्तनियमस्य यथाश्रुतार्थकत्ववादिनवीनैकदेशिमते परमाणुद्वयविभागजनकक्रियायाः परमाण्वाकाशविभागजनकत्वासंभवात् परमाणुद्वयविभागस्यैव तज्जनकत्वं वाच्यमित्याशयेनाह ॥ **तदङ्गीकारे त्विति** ॥ तुशब्दः निरुक्तविभागजविभागाङ्गीकारस्य स्वासम्मतत्वद्योतकः । केचित्तु तदङ्गीकारे त्विति अनयोः पक्षयोः प्रथमपक्ष एव सम्यक् यदवच्छेदेन कमलारम्भकसंयोगः तदवच्छेदेन क्रियानुत्पत्त्या च न विकसत्कमलकुड्मलभङ्गप्रसङ्ग इति बोध्यमित्याहुः तदसत् दलानामग्रावच्छेदेन क्रियया अग्रावच्छेदेन विभागः ततः कुड्मलारम्भकसंयोगनाशः ततः दलानां मूलावच्छेदेन पद्मारम्भकविजातीयसंयोगो जायते । एवं दलानां मूलावच्छेदेन जायमानविजातीयक्रियया दलानां मूलावच्छेदेन विभागः ततः पद्मारम्भकसंयोगनाशः ततः दलानां अग्रावच्छेदेन कुड्मलारम्भकविजातीयसंयोगो जायते इति तदवच्छेदेन जायमानक्रियाया एव तदवच्छेद्यसंयोगनाशकत्वमिति नियमे मानाभावात् क्रियाया दैशिकाव्याप्यवृत्तितया कमलारम्भकसंयोगावच्छेदकावयवविशेषावच्छेद्यत्वे मानाभावाच्च । तस्मात्कमलारम्भकसंयोगावच्छेदकावच्छेदेन क्रियानुत्पत्तेः विकसत्कमलकुड्मलभङ्गप्रसङ्गनिराकरणद्वारा प्रथमपक्षस्य निर्दुष्टत्वव्यवस्थापकत्वं न संभवति ॥ **विभाग इति** ॥ कारणमात्रविभाग इत्यर्थः ॥ **किंचित्सापेक्ष एवेति** ॥ स्वोत्तरोत्पन्नकिंचिद्वस्तुसहकृत एवेत्यर्थः ॥ **विभागं जनयेदिति** ॥ कारणाकारणविभागजननसमर्थो भवेदित्यर्थः ॥ **निरपेक्षस्येति** ॥ कारणमात्रवि-

दिनकरीयम्.

**दङ्गीकारे त्विति** ॥ अनयोः पक्षयोः प्रथमपक्ष एव सम्यक् यदवच्छेदेन कमलारम्भकसंयोगस्तदवच्छेदेन क्रियानुत्पत्त्या च न विकसत्कमलभङ्गप्रसङ्ग इति ध्येयम् ॥ **तत्त्वे** विभागजनकत्वे ॥ **कर्मत्वं** कर्मलक्षण-

## प्रभा

भागस्येत्यादिः । स्वोत्तरोत्पन्नकिञ्चिदसहकृतस्येत्यर्थः ॥ **तत्त्व इति** ॥ विभागजनकत्व इत्यर्थः ॥ **कर्मत्वं स्यादिति** ॥ कर्मलक्षणस्यातिव्याप्तिस्स्यादित्यर्थः । अत्र संयोगविभागयोः अनपेक्षं कारणं कर्मेति सूत्रस्य संयोगे विभागे वानपेक्षं कारणं कर्मेति लक्षणद्वये तात्पर्यम् । तत्र संयोगविभागपदयोर्यथाश्रुतार्थकत्वे कारणाकारणसंयोगविभागयोः अतिव्याप्तिः तयोः कार्याकार्यसंयोगविभागनिरूपितनिरपेक्षकारणत्वात् अतः स्वप्रयोज्यत्वस्वसामानाधिकरण्योभयसंबन्धेन कर्मविशिष्टसंयोगविभागार्थकत्वं वाच्यम्। अत्र प्रयोज्यत्वं कार्याकार्योभयसाधारणं बोध्यम्। एवञ्च संयोगजसंयोगस्य विभागजविभागस्य वा निरुक्तोभयसंबन्धेन कर्मविशिष्टत्वाभावात् सूत्रस्थसंयोगादिशब्देन तयोरुपादानासंभवेन कारणाकारणसंयोगादौ नातिव्याप्तिप्रसक्तिः। तथाच तादृशसंयोगकारणत्वं तादृशविभागकारणत्वं वा कर्मलक्षणमिति प्राप्तम्। तत्र प्रथमलक्षणे संयोगसमवायिकारणे पूर्वसंयोगविनाशे चातिव्याप्तिवारणाय सूत्रकृता निरपेक्षत्वं कारणतायां निवेशितम्। तत्त्वंच समवायसंबन्धावच्छिन्नत्वमेव संयोगसमवायिकारणनिष्ठकारणतायाः पूर्वसंयोगनाशनिष्ठकारणतायाश्च समवायसंबन्धावच्छिन्नत्वाभावेनैव तत्रातिव्याप्त्यप्रसक्तेः । नचोत्तरसंयोगं प्रति विभागस्यापि तादृशकारणत्वात् तत्रातिव्याप्तिरिति वाच्यं विभागं प्रति असमवायिकारणत्वेन क्लृप्ताक्रिययैवोत्तरसंयोगसंभवे विभागस्य तत्रान्यथासिद्धत्वादातिव्याप्त्यप्रसक्तेः । एवं द्वितीयलक्षणेऽपि विभागसमवायिकारणेऽतिव्याप्तिवारणाय सूत्रकृतोक्तं निरपेक्षत्वं न समवायसंबन्धावच्छिन्नत्वमात्रं तथा सति विभागसमवायिकारणेऽतिव्याप्त्यभावेऽपि नवीनैकदेशिमते परमाणुद्वयविभागेऽतिव्याप्त्यापत्तेः तस्य परमाण्वाकाशविभागनिरूपितसमवायसंबन्धावच्छिन्नकारणतावत्त्वात् किन्तु विभागाव्यवहितपूर्वक्षणोत्पत्तिकत्वविशिष्टसमवायसंबन्धावच्छिन्नत्वम् । तथाच विभागाव्यवहितपूर्वक्षणोत्पत्तिकत्वतादृशविभागनिरूपितसमवायसंबन्धावच्छिन्नकारणत्वैतदुभयवत्त्वरूपं द्वितीयलक्षणं पर्यवसन्नम् । नित्यानां विभागसमवायिकारणानां उत्पत्त्यभावात् अनित्यद्व्यणुकादेः विभागाव्यवहितपूर्वोत्पत्त्यभावाच्च विभागसमवायिकारणे नातिव्याप्तिः परमाणुद्वयविभागस्य तु पूर्वसंयोगनाशादिद्वारककारणतावत्त्वेन विभागाव्यवहितपूर्वोत्पत्त्यभावात् न तत्राप्यतिव्याप्तिः । कारणतायां समवायसंबन्धावच्छिन्नत्वनिवेशात् परमाण्वाकाशविभागजनकद्व्यणुकनाशे नातिव्याप्तिः । इत्थंच परमाणुद्वयविभागाव्यवहितोत्तरक्षण एव परमाण्वाकाशविभागस्वीकारे विभागघटितकर्मलक्षणस्य परमाणुद्वयविभागेऽतिव्याप्त्यापत्त्या परमाणुद्वयसंयोगादिनाशानन्तरमेव परमाण्वाकाशविभागो वाच्य इति निरपेक्षस्य तत्त्वे कर्मत्वं स्यादिति ग्रन्थस्य विश्वनाथपञ्चाननिगूढतात्पर्यविषयार्थ इति प्रतिभाति । स्वतन्त्रास्तु संयोगविभागयोः अनपेक्षं कारणं कर्मेति लक्षणद्वयप्रतिपादकसूत्रस्थसंयोगपदं संयोगाजन्यसंयोगपरं सूत्रस्थविभागपदं च विभागाजन्यविभागपरं नातः संयोगाद्यसमवायिकारणसंयोगादावतिव्याप्तिः । तादृशसंयोगादिसमवायिकारणे तादृशसंयोगकारणपूर्वसंयोगनाशे चातिव्याप्तिवारणाय सूत्रेऽनपेक्षपदम् । तदर्थश्च समवायसंबन्धावच्छिन्नत्वं कारणताविशेषणम् । एवंच संयोगादिसमवायिकारणनिष्ठकारणतायाः पूर्वसंयोगनाशनिष्ठसंयोगकारणतायाश्च समवायसंबन्धावच्छिन्नत्वाभावान्न तत्रातिव्याप्तिः । इत्थंच परमाणुद्वयविभागोत्पत्त्यव्यवहितोत्तरक्षणे परमाण्वाकाशविभागोत्पत्तावपि न परमाणुद्वयविभागेऽतिव्याप्तिः परमाण्वाकाशविभागस्य विभागाजन्यविभागरूपत्वाभावेन क्रियाजन्यतावच्छेदकवैजात्यशून्यत्वात् । तस्मात् तादृशवैजात्याश्रयनिरूपितासमवायिकारणत्वलक्षणस्य प·

## दिनकरीयम्

स्यातिव्याप्तिः । संयोगविभागयोरनपेक्षं कारणं कर्मेति सूत्रस्य संयोगस्य विभागस्य वानपेक्षं कारणं कर्मेति लक्षणद्वये तात्पर्यमित्यभिप्रायेण द्वितीयलक्षणस्य तत्रातिव्याप्त्यभिधानमिदम् । वस्तुतस्तु संयोगविभागयोरनपेक्षं कारणं कर्मेति सूत्रं तत्र संयोगस्यानपेक्षं कारणमित्युक्तौ कारणाकारणसंयोगेऽतिव्याप्तिस्तस्य कार्याकार्यसंयोगे किञ्चिदनपेक्ष्य कारणत्वात् एवं विभागस्यानपेक्षमित्युक्तौ कारणाकारणविभागेऽतिव्याप्तिरत उक्तं संयोगविभागयोरिति । अनपेक्षत्वं च स्वोत्तरोत्पन्नभावानपेक्षत्वम् । अन्यथा कर्मणोऽपि संयोगजनने द्रव्यस्य पूर्वसंयोगनाशस्य चापेक्षणादसम्भवापत्तेः । विभागासमवायिकारणत्वे सति संयोगहेतुत्वं वा

## प्रभा.

रमाणुद्वयविभागेऽतिव्याप्त्यप्रसक्तेः निरपेक्षस्य तत्त्वे कर्मत्वं स्यादिति कर्मलक्षणस्य परमाणुद्वयविभागेऽतिव्याप्तिप्रतिपादकमुक्तावलीग्रन्थस्स्वलग्न एवेत्याहुः। केचित्तु तत्त्वे विभागजनकत्वे कर्मत्वं कर्मलक्षणस्यातिव्याप्तिः संयोगविभागयोरनपेक्षं कारणं कर्मेति सूत्रे संयोगस्य विभागस्य वानपेक्षं कारणं कर्मेति लक्षणद्वये तात्पर्याभिमानेन द्वितीयलक्षणस्य तत्रातिव्याप्त्यभिधानमिदं। वस्तुतस्तु संयोगविभागयोरनपेक्षं कारणं कर्मेति सूत्रं तत्र संयोगस्यानपेक्षं कारणमित्युक्तौ कारणाकारणसंयोगेऽतिव्याप्तिः तस्य कार्याकार्यसंयोगे किंचिदनपेक्ष्य कारणत्वात्। एवं विभागस्यानपेक्षं कारणमित्युक्तौ कारणाकारणविभागेऽतिव्याप्तिः अत उक्तं संयोगविभागयोरिति। अनपेक्षत्वं च स्वोत्तरोत्पन्नभावानपेक्षत्वं अन्यथा कर्मणोऽपि संयोगजनने द्रव्यस्य पूर्वसंयोगनाशस्य चापेक्षणात् असंभवापत्तेः। विभागासमवायिकारणत्वे सति संयोगहेतुत्वं वा तत्। पूर्वदेशविभागस्तु नोत्तरदेशसंयोगे कारणं व्यवहाराभावेनान्यथासिद्धेः संयोगस्य विभागं प्रति कारणत्वाभावादेव नासमवायिकारणत्वमिति न तत्रातिव्याप्तिः। इत्थंच कारणमात्रविभागस्य पूर्वदेशसंयोगनाशं द्रव्यनाशं वा अनपेक्ष्य कारणाकारणविभागजनकत्वेऽपि न तत्रातिव्याप्तिः तस्य विभागजनकत्वेऽपि संयोगविभागोभयजनकत्वाभावादिति ध्येयमित्याहुः। तदसत् परमाणुद्वयविभागस्य परमाण्वाकाशविभागनिरूपितनिरपेक्षकारणत्वपक्षे परमाणुद्वयविभागे द्वितीयकर्मलक्षणस्य विश्वनाथपञ्चाननकर्तृकातिव्याप्तिप्रतिपादनस्य संयोगविभागयोरित्यादिसूत्रस्य लक्षणद्वयतात्पर्यविषयकभ्रममूलकत्वे कार्याकार्यविभागनिरूपितनिरपेक्षकारणतया सर्वमतसिद्धकारणाकारणविभागेऽतिव्याप्तिमनुपन्यस्य परमाण्वाकाशविभागासमवायिकारणतया एकदेश्यनुमतपरमाणुद्वयविभागेऽतिव्याप्तिप्रतिपादनस्य निर्बीजत्वापत्तेः परमाणुद्वयविभागस्य परमाण्वाकाशविभागं प्रति निरपेक्षकारणत्वानङ्गीकर्तृमतेऽपि कारणाकारणविभागेऽतिव्याप्त्यापत्तेर्दुर्वारत्वात्। तस्मान्निरपेक्षस्य तत्त्व इत्यादिग्रन्थस्यास्मदुक्तार्थ एव विश्वनाथपञ्चाननतात्पर्यस्य अवश्यमङ्गीकरणीयतया तादृशग्रन्थस्य तदीयाभिमानमूलकत्ववर्णनं स्वीयाभिमानमूलकमेव। एवं वस्तुतस्त्वित्यादिना कार्याकार्ययोस्संयोगविभागजनककारणाकारणसंयोगादावतिव्याप्तिवारणाय सूत्रस्य संयोगजनकत्वविभागजनकत्वोभयवत्त्वरूपैकलक्षणपरत्वस्वीकारोऽप्ययुक्तः सूत्रस्थसंयोगादिपदयोः संयोगादिविशेषपरत्वस्वीकारेणैव कारणाकारणसंयोगादावतिव्याप्तिवारणे संयोगादिद्वयघटितस्य तज्जनकत्वद्वयघटितस्य च एकलक्षणस्य गौरवेण सूत्रस्य तत्परत्वाभावात्। यच्चोक्तं तादृशजनकताद्वयघटितैकलक्षणस्य समवायिकारणेऽतिव्याप्तिवारणाय सूत्रोपात्तानपेक्षत्वस्य द्रव्यादिसहकृतकर्मसाधारण्यायानपेक्षत्वं स्वोत्तरोत्पन्नभावानपेक्षत्वरूपमिति तदप्युक्तम्। समवायसंबन्धावच्छिन्नत्वरूपनिरपेक्षत्वस्य कारणताविशेषणत्वस्वीकारेणैव उक्तातिव्याप्तिवारणे गुरुभूतस्वोत्तरोत्पन्नभावानपेक्षत्वरूपनिरपेक्षत्वस्य उक्तलक्षणघटकतायां मानाभावात् स्वत्वस्याननुगततया स्वपदार्थभूतैकैककर्मव्यक्त्युत्तरोत्पन्नभावानपेक्षत्वविशिष्टनिरुक्तजनकताद्वयवत्त्वरूपलक्षणस्यान्यक्रियायामसत्त्वेनाव्याप्त्यापत्तेः। स्वोत्तरोत्पन्नभावानपेक्षं यद्यत्त्वं तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदकूटविशिष्टनिरुक्तजनकताद्वयवत्त्वस्यातिगुरुत्वाद्दुर्ज्ञेयत्वाच्च लक्षणत्वासंभवाच्च। यच्च विभागासमवायिकारणत्वे सति संयोगहेतुत्वं वा तदित्यादिनातिव्याप्त्यादिदोषरहिततादृशजनकताद्वयघटितलघुभूतैकलक्षणकरणं तदपि न सम्यक् तथा सति सूत्रोपात्तनिरपेक्षत्वरूपविशेषणवैयर्थ्येन सूत्रविरोधापत्तेः। नच विभागासमवायिकारणत्वस्य समवायसंबन्धावच्छिन्नकारणताघटिततया तत्र समवायसंबन्धावच्छिन्नत्वरूपनिरपेक्षत्वस्यापि घटकतया न तद्विरोध इति वाच्यम्। तथापि तादृशनिरपेक्षत्वस्य संयोगहेतुतायां प्रयोजनाभावात् विशेषणत्वासंभवेन उभयत्र निरपेक्षत्वप्रतिपादकसूत्रविरोधापत्तेर्दुर्वारत्वात्। नच विभागासमवायिकारणविभागस्यापि कालविधया संयोगहेतुत्वादतिव्याप्तिवारणाय संयोगहेतुतायामपि समवायसंबन्धावच्छिन्नत्वरूपनिरपेक्षत्वनिवेशस्यावश्यकतया न सूत्रविरोधप्रसक्तिरिति वाच्यं तथाप्येकलक्षणस्य तादृशजनकताद्वयघटितत्वेन गौरवस्य दुर्वारत्वात्। तस्मात्सूत्रस्थसंयोगादिपदस्य संयोगादिविशेषपरत्वस्वीकारेणैव एकैकतादृशजनकत्वस्य निर्दुष्टत्वेन लघुत्वेन च लक्षणत्वसंभवात् सूत्रस्य लक्षणद्वयपर-

कर्मेति हि वैशेषिकसूत्रं स्वोत्तरोत्पन्नभावानपेक्षत्वं तस्यार्थः अन्यथा कर्मणाप्युत्तरसंयोगो-त्पत्तौ पूर्वसंयोगनाशापेक्षणादव्याप्तिः स्यात् तत्र यदि द्रव्यारम्भकसंयोगविनाशविशिष्टं का-लमपेक्ष्य विभागजविभागः स्यात् तदा दशक्षणा । अथ द्रव्यनाशविशिष्टं कालमपेक्ष्य वि-भागजविभागः स्यात् तदैकादशक्षणा । तथा हि अथ नवक्षणा । अग्निसंयोगात् परमाणौ कर्म । ततः परमाण्वन्तरेण विभागः । तत आरम्भकसंयोगनाशः । ततो द्व्यणुकनाशः १ ततः परमाणौ श्यामादिनाशः २ ततो रक्ताद्युत्पत्तिः ३ ततो द्रव्यारम्भानुगुणा क्रिया ४ ततो विभागः ५ ततः

## प्रभा.

त्वं परित्यज्य गुरुभूततादृशजनकताद्वयघटितैकलक्षणपरत्ववर्णनं एकैकतादृशजनकत्वरूपलक्षणद्वयस्य दुष्टत्वप्रकारकस्वीयभ्रान्तिमूलकमेवेति प्रतिभाति ॥ **तत्रेति** ॥ किंचित्सापेक्षविभागस्य विभाग-जनकत्वपक्ष इत्यर्थः ॥ **द्रव्यारम्भकसंयोगनाशविशिष्टकालमपेक्ष्येति** ॥ परमाणुद्वयसंयोगना-शोत्पत्त्यधिकरणक्षणाव्यवहितोत्तरक्षण इत्यर्थः ॥ **विभागजविभागः स्यादिति** ॥ परमाण्वाकाशविभा-गो यदि स्वीक्रियत इत्यर्थः । इदन्तु कन्दलीकारमतमाश्रित्य तन्मते कारणाकारणविभागं प्रति आरम्भक-संयोगस्य प्रतिबन्धकतया कारणमात्रविभागस्यारम्भकसंयोगनाशद्वारैव हेतुत्वादिति भावः ॥ **द्रव्यना-शविशिष्टं कालमपेक्ष्येति** ॥ द्व्यणुकनाशोत्पत्त्यधिकरणक्षणाव्यवहितोत्तरक्षण इत्यर्थः । एतस्य विभाग-जविभागस्स्यादित्यनुषङ्गेणान्वयः । इदंच नवीनैकदेशिमतमाश्रित्य तन्मते कारणाकारणविभागं प्रति द्रव्य-स्य प्रतिबन्धकतया तदभावस्य हेतुत्वेन परमाणुद्वयविभागस्य द्व्यणुकनाशद्वारैव परमाण्वाकाशविभागं प्रति हेतुत्वादिति भावः । इदानीं द्व्यणुकनाशोत्पत्तिक्षणप्रभृति नवदशैकादशक्षणेषु अव्यवहितपूर्वक्षणोत्पन्नद्व्यणुके रूपादिमत्त्वं क्रमेणोपपादयति ॥ **तथाहीत्यादिना** ॥ **अग्निसंयोगादिति** ॥ अग्निप्रतियोगिकपरमाणु-समवेतविजातीयतेजःसंयोगादित्यर्थः ॥ **परमाणौ कर्मेति** ॥ द्व्यणुकारम्भकपरमाणुसमवेतपरमाणुद्वयवि-भागोपधायकक्रियेत्यर्थः । परमाणुसमवेतविलक्षणक्रियां प्रति विजातीयतेजस्संयोगस्य हेतुत्वादिति भावः ॥ **परमाण्वन्तरेणेति** ॥ द्व्यणुकारम्भकपरमाण्वन्तरेणेत्यर्थः । द्व्यणुकारम्भकपरमाणुद्वयसमवेतविभाग इति यावत् ॥ **आरम्भकसंयोगनाश इति** ॥ द्व्यणुकासमवायिकारणसंयोगनाश इत्यर्थः ॥ **द्व्यणुकनाश इति** असमवायिकारणनाशस्य द्रव्यनाशे हेतुत्वदिति भावः ॥ **परमाणौ श्यामादिनाश इति** ॥ अग्न्यन्तरसंयोग-जन्यपरमाणुसमवेतश्यामादिनाश इत्यर्थः । द्व्यणुकनाशकाग्निसंयोगस्य द्व्यणुकनाशसमय एव नाशादिति भावः एतत्तत्त्वं एकस्मादग्निसंयोगान्न रूपनाशोत्पादाविति ग्रन्थव्याख्यानावसरे स्फुटतरमुपपादयिष्यामः । नचारम्भ-कसंयोगनाशकाले द्व्यणुकनाशकाले वा परमाणौ श्यामादिनाशोऽस्तु द्व्यणुकनाशपूर्वं पूर्वाग्निसंयोगसत्त्वादिति वाच्यं द्व्यणुकेनावष्टब्धत्वेन रूपादिनाशासंभवादिति भावः ॥ **रक्तोत्पत्तिरिति** ॥ श्यामादिनाशकाग्निसंयोगा-दन्यस्मादग्निसंयोगाद्वा रक्ताद्युत्पत्तिरित्यर्थः ॥ **ततो द्रव्यारम्भानुगुणक्रियेति** ॥ द्रव्यारम्भानुगुणक्रियां प्र.

## दिनकरीयम्.

तत् पूर्वदेशविभागस्तु नोत्तरदेशसंयोगे कारणं व्यवहाराभावेनान्यथासिद्धेः संयोगस्य विभागं प्रति कार-णत्वाभावादेव नासमवायिकारणत्वमिति न तत्रातिव्याप्तिः इत्थं च कारणमात्रविभागस्य पूर्वसंयोगनाशं द्र-व्यनाशं चानपेक्ष्य कारणाकारणविभागजनकत्वेऽपि नातिव्याप्तिः तस्य विभागजनकत्वेऽपि संयोगविभागो-भयजनकत्वाभावादिति ध्येयम् ॥ **द्रव्यारम्भकसंयोगविनाशविशिष्टं कालमपेक्ष्येति** ॥ द्रव्यार-म्भकसंयोगनाशोत्पत्त्यधिकरणक्षणोत्तरक्षण इत्यर्थः । कारणता तु द्रव्यारम्भकसंयोगनाशत्वेनैव लाघवादिति ध्येयम् । एवमग्रेऽपि नवदशैकादशक्षणाः प्रक्रियाः क्रमेणोपपादयति ॥ **तथा हीत्यादिना** ॥ **परमाणौ कर्म** द्व्यणुकारम्भकपरमाण्वोर्मध्ये एकस्मिन् परमाणौ कर्म ॥ **परमाण्वन्तरेण** द्व्यणुकारम्भकप-रमाण्वन्तरेण ॥ **आरम्भकेति** ॥ द्व्यणुकारम्भकेत्यर्थः ॥ **ततः परमाणौ श्यामादिनाश इति** ॥

**पूर्वसंयोगनाशः ६ तत आरम्भकसंयोगः ७ ततो द्व्यणुकोत्पत्तिः ८ ततो रूपाद्युत्पत्तिः ९ इति नवक्षणा । ननु श्यामादिनाशक्षणे रक्तोत्पत्तिक्षणे वा परमाणौ द्रव्यारम्भानुगुणा क्रियास्त्विति चेन्न अग्निसंयुक्ते परमाणौ यत्कर्म तद्विनाशमन्तरेण गुणोत्पत्तिमन्तरेण च तत्र परमाणौ क्रियान्तराभावात् कर्मवति कर्मान्तरानुत्पत्तेः निर्गुणे द्रव्ये द्रव्यारम्भानुगुणक्रियानुत्पत्तेश्च**

## प्रभा.

ति तादात्म्यसंबन्धेन रूपादिचतुष्टयान्यतमविशिष्टस्य स्पर्शविशिष्टस्य वा कारणतया परमाणौ रक्ताद्युत्पत्त्यनन्तरं तादृशसमवायिकारणसत्त्वादिति भावः । नन्वारम्भकसंयोगनाशक्षणे प्रतिबन्धकस्य विनश्यदवस्थापन्नकर्मणस्सत्त्वात् तदानीं परमाणौ क्रियान्तरोत्पत्त्यसंभवेऽपि श्यामादिनाशक्षणे कर्मणो वर्तमानतया प्रतिबन्धकाभावेन तदानीं तत्र कर्मोत्पत्तौ बाधकाभावात् इत्याशयेनाक्षिपति॥ **नन्वित्यादिना॥ अग्निसंयुक्त इति** ॥अग्न्यन्तरसंयुक्त इत्यर्थः । एतेन श्यामादिनाशकरक्ताद्युत्पादकविजातीयतेजस्संयोगसत्त्वमाक्षिप्तम् ॥ **तद्विनाशमन्तरेणेति** द्व्यणुकानाशोत्पत्तिक्षणोत्पत्तिकोत्तरसंयोगासमवायिकारणक्रियानाशं विनेत्यर्थः । तथाच श्यामादिनाशक्षण एव कर्मणो नाशसंभवेन तत्पूर्वक्षणावच्छेदेन परमाणौ क्रियात्वावच्छिन्नप्रतियोगिताकाभावस्यासत्त्वात् कारणस्य कार्यपूर्ववृत्तित्वनियमात्र श्यामादिनाशक्षणे तत्र क्रियान्तरोत्पत्तिसंभव इति भावः । रक्ताद्युत्पत्तिक्षणे क्रियान्तरोत्पत्तिं वारयति ॥ **गुणोत्पत्तिमन्तरेण चेति** ॥ रूपादिचतुष्टयान्यतमोत्पत्तिं विना चेत्यर्थः । चकारस्तु उक्तसमुच्चायकः ॥ **तत्र परमाणाविति** ॥ विजातीयाग्निसंयोगविशिष्टपरमाणावित्यर्थः ॥ **क्रियान्तराभावादिति** ॥ द्व्यणुकारम्भानुगुणक्रियोत्पत्त्यसंभवादित्यर्थः । ननु श्यामादिनाशपूर्वक्षणावच्छेदेन परमाणौ तादृशक्रियाभावस्यासत्त्वेऽपि क्रियान्तरोत्पत्तौ किं बाधकमतो बाधकमाह ॥ **कर्मवतीति** ॥ तथाच समवायेन क्रियां प्रति क्रियात्वावच्छिन्नाभावस्य समवायेन हेतुतया श्यामादिनाशक्षणपूर्वक्षणे परमाणौ क्रियासत्त्वेन कर्मणो दैशिकव्याप्यवृत्तितया तादृशक्रियात्वावच्छिन्नाभावरूपकारणाभावान्न श्यामादिनाशक्षणे तादृशक्रियोत्पत्त्यापत्तिरिति भावः । ननु श्यामादिनाशक्षणे परमाणोः रूपादिचतुष्टयान्यतमाभावविशिष्टत्वेऽपि तत्र रक्ताद्युत्पत्तिक्षणे द्रव्यारम्भानुगुणक्रियोत्पत्तौ किं बाधकमतो बाधकमाह ॥ **निर्गुणे द्रव्य इति** ॥ रूपादिचतुष्टयान्यतमाभावविशिष्टे द्रव्य इत्यर्थः । यश्चाश्रुते परमाणौ श्यामादिनाशक्षणेऽप्येकत्वादिगुणसत्त्वादसाङ्गत्यापत्तेः॥ **द्रव्यारम्भानुगुणक्रियानुत्पत्तेश्चेति** ॥ द्व्यणुकासमवायिकारणसंयोगासमवायिकारणक्रियोत्पत्त्यसंभवादित्यर्थः । चकारश्चोक्तसमुच्चायकः । तथाच पृथिव्यादिचतुष्टयपरमाणुष्वेव तादृशक्रियोत्पत्त्या मनसि तादृशक्रियानुत्पत्त्या च अन्वयव्यतिरेकाभ्यां तादृशक्रियां प्रति रूपादिचतुष्टयान्यतमविशिष्टद्रव्यस्य तादात्म्यसंबन्धेन हेतुत्वमावश्यकमिति न रक्ताद्युत्पत्तिकाले तादृशक्रियोत्पत्त्यापत्तिरिति भावः । अत्र क्रियाविशेषं प्रति निरुक्तान्यतमविशिष्टस्य तादात्म्येन हेतुत्वेऽपि घटादिरूपचरमावयविनि तादृशक्रियानुत्पत्त्या समवायेन तादृशक्रियां प्रति द्रव्यानारम्भकद्रव्यस्य प्रतिबन्धकत्वावश्यकतया तेनैव मनस्यपि तादृशक्रियोत्पत्त्यापत्तिवारणे निरुक्तकार्यकारणभावे मानाभावात् । रक्ताद्युत्पत्तिक्षणे तत्र तादृशक्रियोत्पत्तौ बाधकाभावेन का-

## दिनकरीयम्.

परमाणुगतरूपनाशं प्रति द्व्यणुकात्मकद्रव्यस्य प्रतिबन्धकतया तत्पूर्वं श्यामनाशासम्भवादिति भावः ॥ **द्रव्यारम्भकेति** ॥ द्व्यणुकारम्भकेत्यर्थः ॥ **आरम्भकेति** ॥ द्व्यणुकारम्भकेत्यर्थः ॥ **तद्विनाशमन्तरेणेति** ॥ द्व्यणुकनाशोत्पत्तिक्षणोत्पत्तिकोत्तरसंयोगेन श्यामनाशक्षण एव पूर्वक्रियानाश इति भावः ॥ **परमाणौ क्रियान्तराभावादिति** ॥ तस्मिन् परमाणौ क्रियान्तराभावादित्यर्थः । अत्र हेतुमाह ॥ **कर्मवतीति** ॥ कर्मवति कर्मान्तरानुदयेन कर्मोत्पत्तौ कर्मणः प्रतिबन्धकत्वकल्पनादिति भावः । गुणोत्पत्तिमन्तरेण कर्मानुत्पत्तौ हेतुमाह ॥ **निर्गुण इति** ॥ कारणमात्रविभागस्य कारणाकारणविभागजनकत्वाभावपक्ष एव परमाण्वन्तरे कर्मचिन्तनं विनैव ग्रन्थान्तरेऽष्टक्षणा प्रक्रियोक्ता सा च निर्गुणे द्रव्यारम्भानुगुणक्रियोत्पत्तौ बाधकाभावेन रक्तोत्पत्तिक्षण एव द्रव्यारम्भानुगुणक्रियोत्पत्तिः सम्भवतीत्यभिप्रायेण समर्थनीया ॥

तथापि परमाणौ श्यामादिनिवृत्तिसमकालं रक्ताद्युत्पत्तिः स्यादिति चेन्न पूर्वरूपादिध्वंसस्यापि रूपान्तरे हेतुत्वात्। अथ दशक्षणा साचारम्भकसंयोगनाशविशिष्टं कालमपेक्ष्य विभागेन विभागजनने सति स्यात्। तथा हि अग्निसंयोगात् द्व्यणुकारम्भकपरमाणौ कर्म। ततो विभागः। तत आरम्भकसंयोगनाशः। ततो द्व्यणुकनाशविभागजविभागौ १ ततः श्यामनाशपूर्वसंयोगनाशौ २ ततो रक्तोत्पत्त्युत्तरसंयोगौ ३ ततो वह्निनोदनजन्यपरमाणुक-

**प्रभा.**

रणमात्रविभागजविभागानङ्गीकर्तृमतेऽपि परमाण्वन्तरे कर्मचिन्तनं विनैव द्व्यणुकनाशोत्पत्तिक्षणप्रभृति पुनरुत्पन्नद्व्यणुके अष्टमक्षणेऽपि रूपादिमत्त्वं संभवतीत्यपि वदन्ति। शङ्कते॥ **तथापीति**॥ परमाणौ श्यामादिनिवृत्तिक्षणे रक्ताद्युत्पत्तिक्षणे वा द्रव्यारम्भानुगुणक्रियोत्पत्त्यसंभवेऽपीत्यर्थः॥ **श्यामादिनिवृत्तिसमकालमिति**॥ श्यामनाशोत्पत्त्यधिकरणक्षण एवेत्यर्थः॥ **रक्ताद्युत्पत्तिस्स्यादिति**॥ तत्काले प्रतिबन्धकीभूतपूर्वरूपादेः अभावादित्याशयः। तथाच विभागजविभागानङ्गीकर्तृमतेऽपि एकक्षणस्य लोपेनाष्टमक्षणे रूपादिमत्त्वं दुर्वारमिति भावः॥ **पूर्वरूपादिध्वंसस्यापीति**॥ अपिना विजातीयतेजस्संयोगसमुच्चयः॥ **रूपान्तरहेतुत्वादिति**॥ रक्ताद्युत्पत्त्यव्यवहितपूर्वक्षणवृत्तित्वेनावश्यकत्वादित्यर्थः। तथाच रूपादिमति रूपाद्यन्तरानुत्पत्त्या समवायेन रूपादिकं प्रति समवायसंबन्धावच्छिन्नप्रतियोगिताकरूपाभावस्य प्रतिबन्धकाभावविधया हेतुत्वमावश्यकं न श्यामादिनाशस्यापि अन्यथासिद्धत्वात्। इत्थंच श्यामादिनिवृत्तिकाले रक्ताद्युत्पत्तिर्न संभवति। अव्यवहितपूर्वक्षणे परमाणौ प्रतिबन्धकाभावरूपकारणाभावात्। उत्तरक्षणे तु रक्ताद्युत्पत्तिस्संभवति पूर्वक्षणे प्रतिबन्धकाभावघटकश्यामादेर्नाशादिति भावः। विभागजविभागानङ्गीकर्तृमते द्व्यणुकनाशक्षणप्रभृति नवमक्षणे रूपादिमत्त्वमुपपाद्य तदङ्गीकर्तृमते दशमक्षणे रूपादिमत्त्वं उपपादयति॥ **अथेति**॥ **दशक्षणेति**॥ द्व्यणुकनाशक्षणप्रभृति पुनरुत्पन्नद्व्यणुकस्य दशमक्षणे रूपादिमत्त्वमित्यर्थः॥ **साचेति**॥ तादृशक्षणे रूपादिमत्त्वनिर्वाह इत्यर्थः। अवधारणार्थकचशब्दः सतीत्युत्तरं योज्यः॥ **आरम्भकसंयोगनाशविशिष्टं कालमपेक्ष्येति**॥ परमाणुद्वयसंयोगनाशोत्पत्त्यधिकरणक्षणाव्यवहितोत्तरक्षण इत्यर्थः॥ **विभागेन विभागजनने सतीति**॥ कारणमात्रविभागजन्यकारणाकारणविभागाङ्गीकर्तृकन्दलीकारमताश्रयणे सत्येवेत्यर्थः॥ **स्यादिति**॥ भवेदित्यर्थः। तत्पक्षे तदुपपादयति॥ **तथाहीत्यादिना**॥ **अग्निसंयोगादिति**॥ द्व्यणुकनाशकपरमाणुक्रियां प्रति अन्वयव्यतिरेकाभ्यां विजातीयाग्निसंयोगस्य हेतुत्वावधारणादिति भावः। एवमग्रेऽपि॥ **द्व्यणुकारम्भकपरमाणौ कर्मेति**॥ उदासीनपरमाणुसमवेतकर्मणा आरम्भकसंयोगनाशकविभागानुपपत्तेरिति भावः॥ **द्व्यणुकनाशविभागजविभागाविति**॥ द्व्यणुकनाशपरमाण्वाकाशविभागावित्यर्थः। द्व्यणुकनाशं प्रति असमवायिकारणनाशविधया हेतुभूतस्य परमाण्वाकाशविभागं प्रति व्यापारविधया हेतुभूतस्य चारम्भकसंयोगनाशस्याव्यवहितपूर्वक्षणावच्छेदेन परमाणौ सत्त्वादिति भावः॥ **श्यामादिनाशपूर्वसंयोगनाशाविति**॥ अग्न्यन्तरसंयोगाधीनश्यामादिनाशः परमाण्वाकाशविभागाधीनपरमाण्वाकाशसंयोगनाशश्चेत्यर्थः। द्व्यणुकनाशपूर्वक्षणे परमाणोरवयविनावष्टब्धत्वेन तदा तत्र विजातीयतेजस्संयोगाभावेन द्व्यणुकनाशक्षणे श्यामादिनाशासंभवादिति भावः॥ **ततो रक्तोत्पत्त्युत्तरसंयोगाविति**॥ श्यामादिनाशकाग्निसंयोगात् अन्यस्मादग्निसंयोगाद्वा रक्तोत्पत्तिः

**दिनकरीयम्.**

**विभागेन विभागजनन इति**॥ कारणमात्रविभागेन कारणाकारणविभागजनने सतीत्यर्थः॥ **विभागजविभागाविति**॥ अरम्भकसंयोगनाशस्य तृतीयक्षण एवोत्पन्नतया चतुर्थक्षणे परमाण्वाकाशविभागः सम्भवतीति भावः॥ **ततः श्यामनाशपूर्वसंयोगनाशाविति**॥ परमाणुश्यामनाशपरमाण्वाकाशसंयोगनाशावित्यर्थः। परमाणुश्यामनाशं प्रति द्व्यणुकनाशस्य हेतुत्वात् पूर्वं परमाणुश्यामनाशासम्भवादिति भावः॥ **रक्तोत्पत्त्युत्तरसंयोगाविति**॥ उत्तरसंयोगं विना पूर्वकर्मणो नाशासम्भवेन द्रव्यारम्भानुगुण-

र्मणो नाशः ४ ततोऽदृष्टवदात्मसंयोगाद्द्व्यारम्भानुगुणा क्रिया ५ ततो विभागः ६ ततश्च पूर्वसंयोगनाशः ७ तत आरम्भकसंयोगः ८ ततो द्व्यणुकोत्पत्तिः ९ ततो रक्तोत्पत्तिः १० ॥ अथैकादशक्षणा वह्निसंयोगात् परमाणौ कर्म । ततो विभागः । ततो द्रव्यारम्भकसंयोगनाशः । ततो द्व्यणुकनाशः १ ततो द्व्यणुकनाशविशिष्टं कालमपेक्ष्य विभागजविभागश्यामनाशौ २ ततः पूर्वसंयोगनाशरक्तोत्पत्ती ३ तत उत्तरदेशसंयोगः ४ ततो वह्निनोदनजन्यः परमाणौ कर्मणो नाशः ५ ततोऽदृष्टवदात्मसंयोगाद्द्व्यारम्भानुगुणा क्रिया ६ ततो विभागः ७ ततः पूर्वसंयोगनाशः ८ ततो द्रव्यारम्भकोत्तरसंयोगः ९ ततो द्व्यणुकोत्पत्तिः १० ततो रक्ताद्युत्पत्तिः ११ ॥ मध्यमशब्दवदेकस्मादग्निसंयोगान्न रूपनाशोत्पादौ ता-

## प्रभा.

परमाण्वाकाशसंयोगनाशाधीनपरमाण्वाकाशसंयोगान्तरं चेत्यर्थः ॥ **वह्निनोदनजन्यपरमाणुकर्मणो नाश इति** ॥ कर्मणः स्वजन्योत्तरसंयोगनाश्यत्वादिति भावः । अत्र वह्निपरमाणुसंयोगस्य नोदनत्वकथनं परमाणुक्रियायाः तादृशसंयोगजन्यत्वकथनं च स्वरूपकीर्तनमात्रमिति ध्येयम् ॥ **अदृष्टवदात्मसंयोगादिति** ॥ तादृशसंयोगसहकृतपरमाण्वग्निसंयोगात् अदृष्टसहकृतपरमाण्वग्निसंयोगाद्वेत्यर्थः ॥ **द्रव्यारम्भानुगुणक्रियेति** ॥ द्व्यणुकासमवायिकारणपरमाणुद्वयसंयोगासमवायिकारणक्रियेत्यर्थः ॥ **एकादशक्षणेति** ॥ द्व्यणुकनाशक्षणप्रभृत्युत्पत्स्यमानद्व्यणुकस्य एकादशक्षणे रक्तादिमत्त्वोपपादनमित्यर्थः । क्रियते तथाहीति शेषः ॥ **द्व्यणुकनाशविशिष्टं कालमपेक्ष्येति** ॥ द्व्यणुकनाशोत्पत्त्यधिकरणक्षणाव्यवहितोत्तरक्षण इत्यर्थः ॥ **विभागजविभागश्यामनाशाविति** ॥ परमाणुद्वयविभागजन्यपरमाण्वाकाशविभागः श्यामादिनाशश्चेत्यर्थः । तथाच द्रव्यनाशद्वारैव कारणमात्रविभागस्य कारणाकारणविभागं प्रति हेतुत्वमिति नवीनैकदेशिमते द्व्यणुकनाशानन्तरमेव परमाण्वाकाशविभागसंभवात् द्व्यणुकनाशक्षण एव परमाण्वोरवयविनावष्टब्धत्वेन तदैव तत्र विजातीयतेजस्संयोगोत्पत्त्या तदुत्तरक्षण एव तत्र श्यामादिनाशसंभवादिति भावः ॥ **पूर्वसंयोगनाशरक्तोत्पत्ती इति** ॥ रक्ताद्युत्पत्ती इत्यर्थः । पूर्वं परमाण्वाकाशसंयोगनाशकपरमाण्वाकाशविभागस्य रक्ताद्युत्पत्तौ प्रतिबन्धकाभावविधया कारणीभूतश्यामाद्यभावस्य च सत्त्वादिति भावः ॥ **उत्तरदेशसंयोग इति** ॥ पुनराकाशादिना परमाणुसंयोग इत्यर्थः । पूर्वक्षणे संयोगप्रतिबन्धकसंयोगस्य नाशादिति भावः ॥ **कर्मणो नाश इति** ॥ कर्मणः स्वप्रयोज्योत्तरसंयोगनाश्यत्वादिति भावः । अत्र द्व्यणुकनाशकाग्निसंयोगस्यैव श्यामादिनाशकत्वं रक्ताद्युत्पादकत्वं चास्त्विति शङ्कां श्यामादिनाशकाग्निसंयोगस्य रक्ताद्युत्पादकत्वमप्यस्त्विति शङ्कां च क्रमेण निरस्यति ॥ **मध्यमशब्दवदिति** ॥ यद्यपि मध्यमशब्दस्य स्वजनकशब्दनाशकत्वं स्वसजातीयशब्दोत्पादकत्वं च साधारणधर्मः अग्निसंयोगस्य नैतादृशसाधारणधर्मस्तिष्ठतीति मध्यमशब्दवदिति दृष्टान्तकथनमसङ्गतं तथापि केवलोत्पादकत्वनाशकत्वोभयवत्त्वरूपासाधारणधर्ममादायैव प्रथमशङ्कास्थले स्वनाशकत्वस्वसजातीयोत्पादकत्वोभयवत्त्वरूपासाधारणधर्ममादाय द्वितीयशङ्कास्थले च मध्यमशब्दस्य दृष्टान्तत्वोपन्यास इति हृदयम् ॥ **एकस्मादग्निसंयोगादिति** ॥ द्व्यणुकनाशकाग्निसंयोगाच्छ्यामादिनाशकाग्निसंयोगाच्चेत्यर्थः ॥ **रूपनाशोत्पादाविति** ॥ श्यामादिनाशरक्ताद्युत्पादावित्यर्थः । श्यामनाशः रक्ताद्युत्पत्तिश्चेति यावत् । नेति पूर्वेणान्वयः । व्यतिरेकदृष्टान्तः तथाच मध्यमशब्दस्य यथा नाशकत्वमुत्पादकत्वं च संभवति तथा एकस्यैव तेजस्संयोगस्य द्व्यणुकनाशकत्वं श्यामादिनिवृत्तिपूर्वकरक्ताद्युत्पादकत्वं च न संभवति ए-

## दिनकरीयम्.

क्रियाद्युत्पत्तिरिति भावः । एवमग्रेऽपि । अत्र य एवाग्निसंयोगो द्व्यणुकनाशकः स एव श्यामनाशे रक्तोत्पादे च हेतुरिति केषाञ्चिन्मतं पुनरग्न्यन्तरसंयोगादिति भाष्यविरुद्धं नादरणीयमित्यभिप्रेत्याह ॥ **मध्यमशब्दवदिति** ॥ **एकस्मादिति** ॥ द्व्यणुकनाशकादेकस्मादित्यर्थः । यथा मध्यमशब्दात् पूर्वशब्दनाशोत्तरश-

**वत्कालमेकस्याग्नेरस्थिरत्वात् किं च नाशक एव यद्युत्पादकस्तदा नष्टे रूपादावग्निनाशे नी-**

## प्रभा ।

वं मध्यमशब्दस्य यथा यत्किंचिच्छब्दात्मकस्वनाशकत्वं शब्दान्तररूपस्वसजातीयोत्पादकत्वं च संभवति तथा एकस्यैव अग्निसंयोगस्य श्यामादिनाशकत्वं श्यामादिसजातीयरक्ताद्युत्पादकत्वं च न संभवतीति व्यतिरेकदृष्टान्तपूर्वकतादृशग्रन्थतात्पर्यार्थः । प्रथमकल्पे हेतुमाह ॥ **तावत्कालमिति** ॥ श्यामादिनिवृत्तिक्षणे तदव्यवहितपूर्वक्षणे चेत्यर्थः ॥ **एकस्याग्नेरिति** ॥ द्व्यणुकनाशकाग्निसंयोगस्येत्यर्थः ॥ **अस्थिरत्वादिति** ॥ अवर्तमानत्वादिति भावः । तथाच यादृशाग्निसंयोगात्परमाणौ यदा द्व्यणुकासमवायिकारणसंयोगनाशकं कर्म जायते तदैव तादृशाग्निसंयोगासमवायिकारणस्य अग्निसमवेतकर्मणो नाशः कर्मणः स्वजन्यसंयोगनाश्यत्वात् तदुत्तरक्षणे परमाणुद्वयविभागः अग्नौ कर्म च पूर्वक्षणे परमाणुद्वयविभागासमवायिकारणपरमाणुकर्मणः अग्निक्रियाकारणस्य प्रतिबन्धकीभूतक्रियानाशसहकृतवेगाभिघातादेश्च सत्त्वात् तत आरम्भकसंयोगनाशः अग्निक्रियाजन्यविभागश्च ततो द्व्यणुकादिनाशः अग्निसंयोगनाशश्च जायत इति अव्यवहितपूर्वक्षणे विजातीयाग्निसंयोगस्य नाशात् उत्तरक्षणे तादृशाग्निसंयोगात् श्यामादिनाशो न संभवतीति अन्यस्मादग्निसंयोगादेव श्यामादिनाशोऽवश्यमङ्गीकार्यः । अत एव पुनरग्न्यन्तरसंयोगादिति भाष्यमपि सङ्गच्छत इति भावः । श्यामादिनाशकाग्निसंयोगस्य रक्ताद्युत्पादकत्वाभावरूपद्वितीयपक्षसाधनाय तादृशाग्निसंयोगस्यैकस्य रक्ताद्युत्पादकत्वस्वीकारे नाशकतावच्छेदकोत्पादकतावच्छेदकवैजात्ययोः प्रकृतसंयोगे समावेशेन जातित्वानुपपत्तिरूपबाधकस्य स्फुटत्वात् । प्रकारान्तरेण तादृशाग्निसंयोगस्योत्पादकत्वं विकल्प्य दूषयति ॥ **किंचेति** ॥ **नाशक एव यद्युत्पादक इति** ॥ एवकारेण नाशकान्यवृत्तित्वमुत्पादकत्वे लभ्यते । एवंच उत्पादकत्वस्य तद्वदन्यावृत्तित्वरूपनाशकत्वव्याप्यत्वलाभात् यदि रक्ताद्युत्पादकतावच्छेदकवैजात्यं श्यामादिनाशकतावच्छेदकवैजात्यव्याप्यं तदेति पर्यवसितोऽर्थः ॥ **नष्टे रूपादाविति** ॥ विनश्यदवस्थापन्नविजातीयपरमाण्वग्निसंयोगेनेत्यादिः । श्यामादौ नष्टे सतीत्यर्थः ॥ **अग्निनाश इति** ॥ तादृशाग्निसंयोगस्य

## दिनकरीयम् ।

रूपोत्पादौ भवतस्तथैकस्मात् द्व्यणुकनाशकादग्निसंयोगाच्छ्यामनाशरक्तोत्पादौ न भवत इति व्यतिरेके दृष्टान्तः ॥ **तावत्कालमिति** ॥ श्यामनाशोत्पत्त्यव्यवहितपूर्वक्षणपर्यन्तमित्यर्थः ॥ **अग्नेः** द्व्यणुकनाशकाग्निसंयोगस्य । एवमग्नेऽपि ॥ **अस्थिरत्वादिति** ॥ यदा परमाणावग्निसंयोगात् द्व्यणुकासमवायिकारणसंयोगविनाशकपरमाणौ कर्म तदैव नोदनाभिघातान्यतरात्मकस्याग्निपरमाणुसंयोगस्य जनकं यदग्निकर्म तस्य विनाशः कर्मणः स्वजन्यसंयोगविनाश्यत्वात् तदुत्तरक्षणे पुनरग्नौ कर्म कारणीभूतवेगाभिघातादेः स्वसमानाधिकरणकर्मध्वंसरूपसहकारिणश्च सत्त्वात् ततो विभागस्ततो द्व्यणुकनाशसमकालमग्निपरमाणुसंयोगस्य नाशेन श्यामरूपोत्पत्त्यव्यवहितपूर्वक्षणपर्यन्तं तस्यास्थिरत्वादिति भावः । ननु मास्तु द्व्यणुकनाशकाग्निसंयोगस्य परमाणुश्यामनाशकत्वं रक्तोत्पादकत्वं च परं तु द्व्यणुकनाशसमकालोत्पन्नाग्न्यन्तरसंयोगस्य परमाणौ श्यामनाशकत्वं रक्तोत्पादकत्वं चास्तु नच श्यामनाशकतावच्छेदकरक्तोत्पादकतावच्छेदकजात्योः साङ्कर्यापत्तिरिति वाच्यम् । उत्पादकतावच्छेदकजातेः नाशकतावच्छेदकजातिव्याप्यत्वोपगमादत आह ॥ **किंचेति** ॥ **नाशक एव यद्युत्पादक इति** ॥ एवकारेण नाशकतावच्छेदकवद्भिन्नावृत्तित्वरूपा व्याप्तिरुत्पादकतावच्छेदके लभ्यते तथा च यद्युत्पादकतावच्छेदकं नाशकतावच्छेदकव्याप्यं तदेत्यर्थः ॥ **नष्टे रूपादौ** रूपपरम्परायां नष्टायाम् ॥ **अग्निनाशे** चरमाग्निसंयोगनाशे । परमाणौ पाकेन रूपोत्पत्तिस्थले प्रथमाग्निसंयोगादिना रूपोत्पत्तिस्तेनैव रूपनाशः पुनरग्निसंयोगानन्तरं पुनारूपोत्पत्तिसम्भवेऽपि चरमाग्निसंयोगोत्तरं तेन रूपोत्पादेन तद्रूपस्य तेनैवाग्निसंयोगेन नाशसम्भवात् तदग्निसंयोगस्यापि नाशे रूपान्तरोत्पादासम्भवेन नीरूपश्चिरं परमाणुः स्यादित्यर्थः । नच चरमाग्निसंयोगेन विनश्यदवस्थेनैव रूपोत्पत्तिस्तदुत्तरक्षणे च न तद्रूपनाशः पूर्वक्षणेऽग्निसंयोगाभावादिति वाच्यं असमवायिकारणस्य कार्यसहभावेनैव हेतुतया न्यायवैशेषिकसिद्धतया विनश्यदवस्थेन चरमाग्निसंयोगेन रूपोत्पादासम्भवादिति । परमाणुरिति

**रूपश्चिरं परमाणुः स्यात् उत्पादकश्चेन्नाशकस्तदा रक्तोत्पत्तौ तदग्नेर्नाशे रक्ततरता न स्या-**

## प्रभा.

श्यामादिनाशकाले नाशे सतीत्यर्थः ॥ **नीरूपश्चिरं परमाणुस्स्यादिति** ॥ श्यामादिनाशकाले विजातीयाग्निसंयोगनाशेनोत्तरक्षणे रक्ताद्युत्पत्त्यसंभवेन सर्वदा रूपाद्यभाववानेव परमाणुः स्यादित्यर्थः। नच श्यामादिनाशसमकालोत्पन्नाग्न्यन्तरसंयोगेन श्यामादिनाशाव्यवहितोत्तरक्षणे तत्र रक्ताद्युत्पत्तौ बाधकाभाव इति वाच्यम् । तथाप्युत्पादकाग्निसंयोगस्यैव निरुक्तव्याप्यव्यापकभावभङ्गापत्तिमहिम्ना उत्पन्नरक्तादिनाशकत्वावश्यकतया पुनरग्न्यन्तरसंयोगात् पुना रूपाद्युत्पत्तिस्वीकारेऽपि तेनैवाग्निसंयोगेनोक्तनियमबलात् तादृशरूपादेरपि नाशावश्यकतया परमाणोर्नीरूपत्वापत्तेर्दुर्वारत्वादिति । नच विनश्यदवस्थचरमाग्निसंयोगेनैव रूपोत्पत्तिः तदुत्तरक्षणे च न तद्रूपनाशः पूर्वमग्निसंयोगाभावादिति न नीरूपत्वापत्तिरिति वाच्यं चरमाग्निसंयोगस्य सर्वत्र विनश्यदवस्थत्वे प्रमाणाभावेन यत्र अग्निसंयोगो न तादृशः तत्र नीरूपत्वापत्तेर्दुर्वारत्वात् उत्पादकतावच्छेदकजातेर्नाशकतावच्छेदकजातिव्याप्यत्वपक्षे विनश्यदवस्थचरमाग्निसंयोगस्य तैरुत्पादकत्वानभ्युपगमात् असमवायिकारणस्य कार्यसहभावेन कारणतायाः सर्वमतसिद्धतया तादृशसंयोगस्योत्पादकतया अप्रामाणिकत्वाच्चेति भावः । ननूक्तसाङ्कर्यवारणयोत्पादकतावच्छेदकवैजात्यस्य नाशकतावच्छेदकवैजात्यव्याप्यत्वं न स्वीक्रियते येन परमाणोस्सदा नीरूपत्वापत्तिस्स्यात् किन्तूक्तसाङ्कर्यवारणाय नाशकतावच्छेदकवैजात्यस्यैवोत्पादकतावच्छेदकवैजात्यव्याप्यत्वं स्वीक्रियते तावतापि विनश्यदवस्थापन्नाग्निसंयोगजन्यश्यामादिनाशक्षणोत्पत्तिकाग्न्यन्तरसंयोगस्य रक्ताद्युत्पादकतावच्छेदकवैजात्याश्रयस्य नाशकतावच्छेदकवैजात्याभाववत्त्वेऽपि न क्षतिः व्यापकवति व्याप्याभावस्यादोषत्वात् । तथाच श्यामादिनाशसमकालोत्पन्नाग्न्यन्तरसंयोगस्य रक्ताद्युत्पादकत्वेऽपि तत्र नाशकतावच्छेदकवैजात्यानङ्गीकरेण तादृशसंयोगेन रूपादिनाशासंभवादेव परमाणोः सदा रूपाद्यभाववत्त्वापत्तेरभावादिति चेन्न एकस्मादग्निसंयोगाद्रक्तोत्पत्तिः कस्माच्चिदग्निसंयोगात् रक्ततरोत्पत्तिरन्यस्मात् अग्निसंयोगात् रक्ततमोत्पत्तिश्चानुभवसिद्धा तन्निर्वाहाय रक्तरक्ततररक्ततमोत्पादकतावच्छेदकपरस्परवैयधिकरण्यापन्नवैजात्यत्रयं तत्तत्संयोगेषु प्रत्येकं वर्तमानमवश्यमङ्गीकार्यम् । तथाच तादृशवैजात्यत्रयघटकस्य कस्यापि वैजात्यस्य नाशकतावच्छेदकवैजात्यव्यापकत्वं न संभवति वैजात्यान्तराधिकरणे विनाशजनकतावच्छेदकवैजात्यसत्त्वात् तस्माद्वैजात्यत्रयाङ्गीकारपक्षे नाशकत्वावच्छेदकवैजात्यस्योत्पादकतावच्छेदकवैजात्यव्याप्यत्वाप्रसिद्ध्या तादृशव्याप्यव्यापकाभावाङ्गीकारेण परमाणोर्नीरूपत्वापत्तिवारणमत्यन्तासंभावितमेवेति अत्र परमाणोस्सर्वदा नीरूपत्वापत्तिकथनं वैशेषिकमतमाश्रित्य । नैयायिकमते तु अवयविनामपि नीरूपत्वापत्तिर्बोध्या । ननु रक्ताद्युत्पादकतावच्छेदकवैजात्यस्य श्यामादिनाशकतावच्छेदकवैजात्यव्याप्यत्वं तादृशवैजात्यव्यापकत्वं वा न स्वीक्रियते अपितु तयोरैक्यमेव येन साङ्कर्यदोषः प्रसज्येत । एवंच चरमाग्निसंयोगस्य रक्ताद्युत्पादकस्य तन्नाशस्वरूपयोग्यत्वेऽपि तादृशसंयोगस्यानुभवानुरोधेन रूपादिनाशं प्रति प्रतिबन्धकत्वस्वीकारात् तादृशाग्निसंयोगाद्रूपादिनाशासंभवेन न पूर्वोक्तनीरूपत्वापत्तिदोषसंभव इति अतोऽस्मिन् पक्षेऽपि दोषमाह ॥ **नाशकश्चेदुत्पादक इति** ॥ नाशकतावच्छेदकं यद्युत्पादकतावच्छेदकं तदेत्यर्थः ॥ **रक्तोत्पत्ताविति** ॥ श्यामादिनाशकचरमाग्न्यन्तरसंयोगेन रक्ताद्युत्पत्तावित्यर्थः ॥ **तदग्निनाश इति** ॥ रक्ताद्युत्पत्तिसमकालोत्पन्नचरमाग्न्यन्तरसंयोगनाशकपरमाण्वन्तरविभागेन चरमाग्निसंयोगनाशे सतीत्यर्थः । तथाचादौ परमाणावग्निसंयोगः । अग्न्यन्तरकर्म च त-

## दिनकरीयम्

वैशेषिकमताभिप्रायेण । न्यायनये पूर्वोक्तरीत्या घटादेरपि नीरूपत्वप्रसङ्गो बोध्यः । ननु रक्तोत्पादकतावच्छेदकवैजात्यं श्यामनाशकतावच्छेदकवैजात्यव्याप्यमिति न ब्रूमः परं तु वैजात्ययोरभेदं तेन न साङ्कर्यमत आह ॥ **उत्पादकश्चेदिति** ॥ नाशक उत्पादकश्चेदिति योजना। नाशकतावच्छेदकमेव यद्युत्पादकतावच्छेदकं तदेत्यर्थः ॥ **रक्ततरता न स्यादिति** ॥ अयं भावः रूपनाशकतावच्छेदकं विलक्षणाग्नि-

तु । अथ परमाण्वन्तरे कर्मचिन्तनात् पञ्चमादिक्षणेऽपि गुणोत्पत्तिः। तथा हि एकत्र परमा-

## प्रभा.

तोऽग्निसंयोगात् परमाणौ कर्म तादृशाग्निसंयोगजनककर्मनाशः अग्न्यन्तरस्य पूर्वदेशविभागश्च ततः परमाणु-द्वयविभागः तदग्नौ कर्म अग्न्यन्तरस्य पूर्वदेशसंयोगनाशश्च तत आरम्भकसंयोगनाशः तादृशकर्मजन्यविभागः परमाणौ चरमाग्न्यन्तरसंयोगश्च ततो द्वयणुकनाशः तदग्निपरमाणुसंयोगनाशः अग्न्यन्तरकर्मनाशश्च ततश्चरमाग्निसंयोगजन्यः परमाणौ श्यामादिनाशः पुनरग्न्यन्तरकर्म च ततः रक्तोत्पत्तिः चरमाग्न्यन्तरसंयोगनाशकविभागश्च ततश्चरमाग्न्यन्तरसंयोगनाशसंभवादिति भावः ॥ **रक्ततरता न स्यादिति** ॥ रक्ततमता न स्यादित्यपि बोध्यम् । अत्र श्यामादिनाशकतावच्छेदकाग्निसंयोगनिष्ठवैजात्यस्यैव यदि रक्ताद्युत्पादकतावच्छेदकत्वं तदा एकवैजात्यस्यैव रक्तरक्ततररक्ततमोत्पादकतावच्छेदकत्वावश्यकतया कारणतावच्छेदकभेदाभावेन रक्तरक्ततरत्वादिवैलक्षण्यानुपपत्तिः । क्वचिद्रक्तोत्पत्तिः क्वचिद्रक्ततरोत्पत्तिः क्वचिद्रक्ततमोत्पत्तिरिति नियमानुपपत्तिश्च कार्यवैचित्र्यस्य कारणतावच्छेदकभेदाधीनत्वेन प्रकृते तदभावात् कार्यविशेषोत्पत्तेः कारणविशेषाधीनत्वेन प्रकृते तदभावाच्च । नचेष्टापत्तिः घटादिरक्तापेक्षया कुङ्कुममाणिक्यादिरक्ते तारतम्यस्यानुभूयमानत्वेन तत्परमाणुरक्तेऽपि तदावश्यकत्वात् तत्परमाणुष्वपि रक्ततराद्युत्पत्तेः आवश्यकत्वाच्च । तस्मान्नाशकतावच्छेदकवैजात्यविरुद्धमेव उत्पादकतावच्छेदकवैजात्यमवश्यमङ्गीकार्यम् । एवंच रक्तोत्पादकतावच्छेदकवैजात्यव्याप्यरक्ततराद्युत्पादकतावच्छेदकवैजात्यद्वयाङ्गीकारात् कारणतावच्छेदकभेदसत्त्वेन कुङ्कुममाणिक्यादिरक्तेषु घटादिरक्तापेक्षया अनुभूयमानरक्ततारतम्यस्य नानुपपत्तिः विजातीयाग्निसंयोगस्यैव रक्तादिजनकत्वात् कुत्रचिदेव रक्ततराद्युत्पत्तिः न सर्वत्रेति नियमोपपत्तिश्चात एव पुनरप्यन्यस्मादग्निसंयोगादिति भाष्यमपि सङ्गच्छत इति विश्वनाथपञ्चाननस्याशयः । केचित्तु वस्तुतो रक्ततारतम्यस्य पूर्वरूपविशेषध्वंसविशेषसहकृतत्वात् भाष्यस्य द्वयणुकनाशाग्निसंयोगापेक्षयान्यपरत्वादुत्पादकविनाशकयोरग्निसंयोगयोरेकत्वानेकत्वे अनियते एवेति बोध्यमित्याहुः। तदसत् रक्ततारतम्यस्य पूर्वरूपविशेषध्वंससहकृतत्वं न संभवति घटाद्यारम्भकपरमाणुषु तेजस्संयोगाधीनानेकरक्तध्वंसानन्तरोत्पन्नेऽपि रक्तरूपे तारतम्यस्य तादृशपरमाण्वारब्धघटादिरूपे तारतम्यस्य चादर्शनाभावात् द्वयणुकनाशकाग्निसंयोगस्य श्यामादिनाशं प्रत्येव हेतुत्वस्य निरुक्तत्वेन तद्द्वारा रक्तादिहेतुत्वस्य सुतरामप्रसक्त्या पुनरप्यग्न्यन्तरसंयोगादिति भाष्यस्य द्वयणुकनाशकाग्निसंयोगापेक्षया अन्याग्निसंयोगपरत्वासंभवाच्च । यच्चोक्तमुत्पादकविनाशकयोरग्निसंयोगयोरेकत्वानेकत्वे अनियते एवेति तदप्यसङ्गतं कदाचिदुत्पादकनाशकाग्निसंयोगयोः भिन्नत्वं कदाचिदभिन्नत्वमित्यायातम् । तथा सत्युत्पादकतावच्छेदकनाशकतावच्छेदकजात्योः साङ्कर्यापत्तेरिति । वस्तुतस्तु नाशकतावच्छेदकोत्पादकतावच्छेदकजात्योर्विरुद्धत्वमेव परन्तु अग्निसंयोगनिष्ठरक्तोत्पादकतावच्छेदकवैजात्यव्याप्यमेव रक्ततराद्युत्पादकतावच्छेदकवैजात्यद्वयं तादृशवैजात्ययोः पृथिवीत्वव्याप्यघटत्वपटत्वयोरिव विरुद्धत्वमेवेति प्रतिभाति । अन्ये तु द्वयणुकनाशानन्तरं पुनरुत्पन्नद्वयणुकस्य द्वयणुकनाशक्षणप्रभृति पञ्चमषष्ठसप्तमाष्टमक्षणेषु रूपादिमत्त्वं वदन्ति तन्मतोपन्यासायादौ हेतुं प्रदर्शयति ॥ **परमाण्वन्तर इति** ॥ द्वयणुकनाशककर्मवत्परमाणुभिन्नोत्पत्स्यमानद्वयणुकारम्भकपरमाणावित्यर्थः ॥ **कर्मचिन्तनादिति** ॥ उ-

## दिनकरीयम् .

संयोगत्वं तदेव यद्युत्पादकतावच्छेदकं तदा कार्यतावच्छेदकमपि सामान्यतः पृथिवीपरमाणुरूपत्वं त्वया वाच्यं तथा सति क्वचिद्रक्ततरता क्वचिच्च रक्ततमता परमाणौ न स्यात् कार्यवैचित्र्यस्य कारणतावच्छेदकभेदाधीनत्वादिति । सिन्दूरादौ रक्ततारतम्यस्यानुभविकतया तत्परमाणुषु तस्यावश्यंभावादिति भावः । इदं च पूर्वरूपनाशकाग्निसंयोगमात्रस्योत्तररूपहेतुत्वमित्यभिप्रायेण पुनरन्यस्मादग्निसंयोगादिति भाष्यानुरोधेन चोक्तम् । वस्तुतो रक्ततारतम्यस्य पूर्वरूपविशेषध्वंसकृतत्वाद्भाष्यस्य द्वयणुकनाशकाग्निसंयोगापेक्षयान्यपरत्वादुत्पादकविनाशकयोरग्निसंयोगयोरेकत्वानेकत्वेऽनियम एवेति ध्येयम् ॥ **परमाण्वन्तर इति** ॥ द्यणुकनाशकक्रियावत्परमाणुभिन्नद्यणुकान्तरारम्भकपरमाणावित्यर्थः ॥ **कर्मचिन्तनादिति** ॥ द्वयणुकारम्भ-

णौ कर्म ततो विभागः। तत आरम्भकसंयोगनाशपरमाण्वन्तरकर्मणी। ततो द्व्यणुकनाशः परमाण्वन्तरकर्मजन्यविभाग इत्येकः कालः १ ततः श्यामादिनाशो विभागाच्च पूर्वसंयोगनाशश्चेत्येकः कालः २ ततो रक्तोत्पत्तिर्द्रव्यारम्भकसंयोगश्चेत्येकः कालः ३ अथ द्व्यणुकोत्पत्तिः ४ ततो रक्तोत्पत्तिः ५ इति पञ्चक्षणा ॥ द्रव्यनाशसमकालं परमाण्वन्तरे कर्मचिन्तनात् षष्ठे गुणोत्पत्तिः। तथाहि परमाणुकर्मणा परमाण्वन्तरविभागः । तत आरम्भकसंयोगनाशः । ततो द्व्यणुकनाशपरमाण्वन्तरकर्मणी १ अथ श्यामादिनाशः परमाण्वन्तरे कर्मजो विभागश्च २ ततो रक्तोत्पत्तिः परमाण्वन्तरे पूर्वसंयोगनाशश्च ३ ततः परमाण्वन्तरसंयोगः ४ ततो द्व्यणुकोत्पत्तिः ५ अथ रक्तोत्पत्तिः ६ इति षट्क्षणा ॥ एवं श्यामनाशक्षणे परमाण्वन्तरे कर्मचिन्तनात् सप्तक्षणा । तथा हि परमाणौ कर्म । ततः परमाण्वन्तरेण विभागः। ततः आरम्भकसंयोगनाशः । ततो द्व्यणुकनाशः १ ततः श्यामादिनाशपरमाण्वन्तरकर्मणी २ ततो रक्तोत्पत्तिः परमाण्वन्तरे कर्मजविभागश्च ३ ततः परमाण्वन्तरेण पूर्वसंयोगनाशः ४ ततः परमाण्वन्तरेण संयोगः ५ ततो द्व्यणुकोत्पत्तिः ६ ततो रक्तोत्पत्तिः ७ इति सप्तक्षणा ॥ एवं रक्तोत्पत्तिसमकालं परमाण्वन्तरे कर्मचिन्तनादष्टक्षणा। तथा हि परमाणौ कर्म । ततः परमाण्वन्तरविभागः । तत आरम्भकसंयोगनाशः । ततो द्व्यणुकनाशः १ ततः श्यामनाशः २ ततो रक्तोत्पत्तिपरमाण्वन्तरकर्मणी ३ ततः परमाण्वन्तरकर्मजविभागः ४ ततः परमाण्वन्तरे पूर्वसंयोगनाशः ५ ततः परमाण्वन्तरसंयोगः ६ ततो द्व्यणुकोत्पत्तिः ७ अथ रक्तोत्पत्तिः ८ इत्यष्टक्षणा ॥ १०५ ॥

## प्रभा.

त्पन्नद्व्यणुकारम्भकसंयोगनाशाद्युत्पत्तिक्षणे उत्पत्स्यमानद्व्यणुकारम्भककर्मोत्पत्तिस्वीकारादित्यर्थः ॥ **पञ्चमादिक्षणेऽपीति** ॥ द्व्यणुकनाशक्षणप्रभृतीत्यादिः ।अपिशब्दो नवमाद्युक्तक्षणसमुच्चायकः ॥ **गुणोत्पत्तिरिति** ॥ रक्तादिमत्त्वमित्यर्थः । संभवतीति शेषः। संभवप्रकारमेवाह॥ **तथाहीति** ॥ अत्रारम्भकसंयोगनाशक्षणे परमाण्वन्तरे कर्मोत्पत्तिपक्षे द्व्यणुकनाशक्षणप्रभृति पञ्चमक्षणे रूपादिमत्त्वं द्व्यणुकनाशक्षणे परमाण्वन्तरे तदुत्पत्तिपक्षे षष्ठक्षणे रूपादिमत्त्वं श्यामादिनाशक्षणे परमाण्वन्तरे तदुत्पत्तिपक्षे सप्तमक्षणे रूपादिमत्त्वं रक्तोत्पत्तिक्षणे परमाण्वन्तरे तदुत्पत्तिपक्षेऽष्टमक्षणे रूपादिमत्त्वं संभवतीति फलितम् । तत्रैतेषु क्षणेषु द्व्यणुकस्य रूपादिमत्त्वं क्रमेणोपपादयति ॥ **एकत्र परमाणौ कर्मेत्यादिना** ॥ **अष्टक्षण**

## दिनकरीयम्.

कसंयोगनाशाद्युत्पत्त्यादिक्षणे द्व्यणुकान्तरारम्भककर्मचिन्तनादित्यर्थः । पञ्चमादीत्यत्रादिना षष्ठसप्तमाष्टमक्षणानां परिग्रहः ॥ **इत्यष्टक्षणा इति** ॥ ननु यत्रैकस्मिन् परमाणावग्निसंयोगसमकालं परमाण्वन्तरे कर्मोत्पत्तिस्तदुत्तरक्षणेषु क्रमेणैकत्र क्रियाविभागपूर्वसंयोगनाशद्व्यणुकनाशाः अपरत्र विभागपूर्वसंयोगनाशोत्तरसंयोगोत्पत्तिद्व्यणुकोत्पत्तिरूपोत्पत्तयस्तत्र द्विक्षणा । एवं यत्रैकस्मिन् परमाणौ कर्मोत्पत्तिसमकालं परमाण्वन्तरे कर्मोत्पत्तिस्तत्र त्रिक्षणा । एवं यत्रैकस्मिन् परमाणौ विभागसमकालं परमाण्वन्तरे कर्मोत्पत्तिस्तत्र चतुःक्षणापि सम्भवति प्रक्रियेति चेन्न द्व्यणुकनाशमन्तरेण परमाणौ श्यामादिनिवृत्तिस्तामन्तरेण च रक्तोत्पत्तिर्न सम्भवतीत्युक्तप्रायम् । इत्थं च द्व्यणुकनाशक्षणे परमाणुश्यामनाशक्षणे रक्तोत्पत्तिक्षणे वा द्व्यणुकान्तरोत्पत्तौ द्वित्रिचतुःक्षणा प्रक्रिया वाच्या । नचैतेषु क्षणेषु द्व्यणुकान्तरोत्पत्तिः सम्भवति तथा सति तत्पूर्वक्षणेषु परमाणोररक्तत्वेन तदारब्धद्व्यणुकस्याप्यरक्तत्वप्रसङ्गादित्यन्यत्र विस्तरः ॥ १०५ ॥

## प्रभा

इति ॥ द्व्यणुकनाशक्षणप्रभृति अष्टमक्षणे उत्पत्स्यमानस्य द्व्यणुकस्य रूपादिमत्त्वं संभवतीति फलितार्थः । अत्रारम्भकसंयोगनाशाद्युत्पत्तिक्षणे उत्पन्नद्व्यणुकनाशककर्मवत्परमाणुभिन्नपरमाणौ उत्पत्स्यमानद्व्यणुकारम्भकसंयोगजनकक्रियोत्पत्तिः प्रामाणिकी यदि तदा पञ्चमादिक्षणेषु रूपादिमत्त्वमपि प्रामाणिकं भवेत् सैवाप्रामाणिकी । तथाहि आरम्भकसंयोगनाशक्षणे परमाण्वन्तरस्यापि श्यामत्वेनारक्ततया रक्तद्रव्यारम्भानुगुणक्रियोत्पत्त्यसंभवात् द्रव्यारम्भानुगुणक्रियां प्रति समवायेन द्रव्यस्य प्रतिबन्धकतया आरम्भकसंयोगनाशक्षणे परमाणौ द्रव्याभावरूपकारणाभावेन तदा तत्र तादृशक्रियोत्पत्त्यसंभवात् श्यामरूपनाशक्षणे रक्तद्व्यणुकारम्भकपरमाण्वोर्नीरूपत्वेन रूपवत्परमाणुरूपसमवायिकारणस्यासत्त्वात् रक्तोत्पत्तिक्षणे रूपवद्द्रव्यारम्भकसंयोगोत्पत्त्यसंभवाच्च पञ्चमक्षणे रूपादिमत्त्वमप्रामाणिकमेव । एवं द्व्यणुकनाशक्षणे परमाण्वोः श्यामत्वेनारक्ततया रक्तद्रव्यारम्भानुगुणक्रियोत्पत्त्यसंभवात् द्रव्यारम्भानुगुणक्रियां प्रति समवायेन द्रव्यस्य प्रतिबन्धकतया आरम्भकसंयोगनाशक्षणे द्रव्याभावरूपकारणाभावेन तदुत्तरक्षणे द्व्यणुकनाशोत्पत्त्यधिकरणक्षणे द्रव्यारम्भानुगुणक्रियोत्पत्त्यसंभवाच्च षष्ठक्षणेऽपि रूपादिमत्त्वमप्रामाणिकमेव । एवं द्व्यणुकनाशक्षणे परमाण्वोश्श्यामत्वेनारक्ततया तदुत्तरक्षणे श्यामादिनाशोत्पत्त्यधिकरणक्षणे परमाण्वोर्नीरूपत्वेन तदानीं च रक्तरूपविशिष्टपरमाणुस्वरूपसमवायिकारणाभावात् परमाण्वोः श्यामनाशक्षणे रक्तद्रव्यारम्भानुगुणक्रियोत्पत्त्यसंभवात् सप्तमक्षणेऽपि रूपादिमत्त्वमप्रामाणिकमेव । एवं श्यामादिनाशक्षणे परमाण्वोर्नीरूपत्वेन रूपादिविशिष्टपरमाणुस्वरूपसमवायिकारणस्य तदानीमसत्त्वेन तदुत्तरक्षणे रक्तोत्पत्त्याश्रये तत्र रूपवद्द्रव्यारम्भानुगुणक्रियोत्पत्त्यसंभवात् अष्टमक्षणेऽपि रूपादिमत्त्वमप्रामाणिकमेव । न च उत्पन्नद्व्यणुकारम्भकपरमाण्वन्तरे पूर्वोक्तदोषेण आरम्भकसंयोगनाशक्षणेषु उत्पत्स्यमानद्व्यणुकारम्भकसंयोगजनकक्रियोत्पत्त्यसंभवेऽपि द्व्यणुकादिद्वारा घटाद्यारम्भकपरमाणुसामान्यभिन्नोदासीनरक्तपरमाणुषु आरम्भकसंयोगनाशक्षणेषु तादृशक्रियोत्पत्तौ बाधकाभावात् पञ्चमादिक्षणेषु रूपादिमत्त्वमपि प्रामाणिकमेवेति वाच्यम् उत्पन्नद्व्यणुकारम्भकोदासीनरक्तपरमाणूनां उत्पत्स्यमानद्व्यणुकानुपादानत्वेन तेषु द्व्यणुकारम्भानुगुणक्रियोत्पत्त्यसंभवात् अन्यथा अग्नियन्त्रनिक्षिप्तघटस्योपादानभूतपरमाणवो यावन्तः तावत्समसङ्ख्याकद्व्यणुकोत्पत्त्यापत्तिः तद्घटारम्भकयावत्परमाणुषु प्रत्येकं तत्तद्घटोपादानपरमाणुसमसङ्ख्याकतत्तद्घटानारम्भकोदासीनपरमाणुसंयोगानामपि द्व्यणुकारम्भकत्वात् । नचेष्टापत्तिः अग्नियन्त्रे निक्षिप्तघटापेक्षया तद्घटनाशानन्तरकालीनोत्पत्स्यमानघटस्याधिकावयवजन्यत्वेनोत्कृष्टमहत्त्वापत्त्या प्रत्यक्षविरोधापत्तेः । तस्मादुत्पन्नद्व्यणुकारम्भकसंयोगनाशकक्रियावद्भिन्नतादृशद्व्यणुकोपादानपरमाणौ तादृशद्व्यणुकानुपादानोदासीनरक्तपरमाणौ वा आरम्भकसंयोगादिनाशक्षणे उत्पत्स्यमानद्व्यणुकारम्भानुगुणक्रियोत्पत्तेरप्रामाणिकतया द्व्यणुकनाशप्रभृति पञ्चमादिक्षणेषूत्पत्स्यमानस्य द्व्यणुकस्य रूपादिमत्त्वमपि अप्रामाणिकमेवेति तन्मतमनुपादेयमेव । तत्सर्वं हृदि निधाय परमाण्वन्तरे कर्मोत्पत्तेः पञ्चमादिक्षणेऽपीत्युक्त्वा स्वस्यासम्मतत्वसूचनायैव परमाण्वन्तरे कर्मचिन्तनादित्युक्तं विश्वनाथपञ्चाननेनेति प्रतिभाति । अपरे तु द्व्यणुकनाशसमकालं द्व्यणुकोत्पत्तिस्वीकारात् द्वितीयक्षणे-तादृशनाशसमकालं आरम्भकसंयोगोत्पत्तिस्वीकारात् तृतीयक्षणे तादृशनाशसमकालं परमाण्वन्तरस्य पूर्वसंयोगनाशस्वीकारात् चतुर्थक्षणे च रूपादिमत्त्वं संभवति तथाहि उत्पन्नद्व्यणुकनाशकक्रियावत्परमाणुभिन्नपरमाणावुत्पत्स्यमानद्व्यणुकारम्भकसंयोगानुगुणक्रियाजनकादृष्टविशेषसहकृताग्न्यन्तरसंयोगः ततस्तस्मिन् परमाणौ द्रव्यारम्भानुगुणक्रियाद्व्यणुकनाशकक्रियासमवायिपरमाणावग्निसंयोगश्च ततः परमाण्वन्तरपूर्वदेशविभागः परमाणौ द्व्यणुकनाशकक्रिया च ततः परमाण्वन्तरस्य पूर्वदेशसंयोगनाशः परमाणुद्वयविभागश्च ततः अरम्भकसंयोगोत्पत्तिः पूर्वपरमाणुद्वयसंयोगनाशश्च ततः द्व्यणुकान्तरोत्पत्तिः पूर्वद्व्यणुकनाशश्च ततः रक्तोत्पत्तिरिति । एवमेकस्मिन् परमाणौ द्व्यणुकनाशकक्रियाजनकाग्निसंयोगोत्पत्तिसमकालं परमाण्वन्तरे द्व्यणुकान्तरारम्भानुगुणक्रियाजनकादृष्टविशेषसहकृताग्न्यन्तरसंयोगोत्पत्तिश्च ततः तस्मिन् परमाणौ द्व्यणुकनाशकक्रियान्यपरमाणौ द्रव्यारम्भानुगुणक्रिया च ततः परमाण्वन्तरविभागः परमाणुद्वयविभागश्च ततः परमाण्वन्तरस्य पूर्वदेशसंयोगनाशः परमाणुद्वयसंयोगनाशश्च ततः परमाण्वन्तरेण एतत्परमाणौ आरम्भसंयोगः

नैयायिकानां तु नये द्व्यणुकादावपीष्यते ।

**नैयायिकानामिति** ॥ नैयायिकानां मते द्व्यणुकाद्यवयविन्यपि पाको भवति । तेषामयमाशयः। अवयविनां सच्छिद्रत्वाद्वह्नेः सूक्ष्मावयवैः संयुक्तेषु सत्स्वन्तःप्रविष्टैरवयवेष्ववष्टब्धेष्वपि पाको न विरुध्यते अनन्तावयवितन्नाशकल्पने गौरवम् । इत्थंच सोऽयं घट इत्यादिप्रत्यभिज्ञा स-

## प्रभा.

द्व्यणुकनाशश्च ततः द्व्यणुकान्तरोत्पत्तिः ततः रक्ताद्युत्पत्तिरिति । एवमग्निसंयोगात् परमाणौ द्व्यणुकनाशकं कर्म तदैव परमाण्वन्तरे द्व्यणुकान्तरारम्भानुगुणक्रियाजनकादृष्टविशेषसहकृतान्यन्तरसंयोगश्च ततः परमाणुद्वयविभागः परमाण्वन्तरे द्व्यणुकान्तरारम्भानुगुणक्रिया च ततः परमाणुद्वयसंयोगनाशः परमाण्वन्तरस्य पूर्वदेशविभागश्च ततो द्व्यणुकनाशः परामाण्वन्तरैतत्परमाण्वोः आरम्भकसंयोगनाशश्च तत उत्तरसंयोगः ततः द्व्यणुकान्तरोत्पत्तिः ततः रक्ताद्युत्पत्तिरिति च रीत्या द्वित्रिचतुर्षु क्षणेषु द्व्यणुकान्तरस्य रूपादिमत्त्वं सुकरमेवेत्याहुः । तन्न । द्व्यणुकनाशक्षणे द्व्यणुकान्तरोत्पत्तिर्न संभवति पूर्वक्षणे परमाणौ प्रतिबन्धकीभूतद्व्यणुकसत्त्वेन तदभावरूपकारणाभावात् द्रव्यवति द्रव्यान्तरानुत्पत्त्या समवायेन द्रव्यं प्रति समवायसंबन्धावच्छिन्नप्रतियोगिताकद्रव्याद्यभावस्य हेतुतायाः सकलतन्त्रसिद्धत्वात् द्व्यणुकनाशात्पूर्वं आग्नियन्त्रानिक्षिप्तघटारम्भकपरमाणूनां सर्वेषामपि श्यामत्वेनारक्ततया तेषां श्यामनाशक्षणे रक्तसमवायिद्व्यणुकान्तरोत्पादकत्वासंभवात् उदासीनरक्तपरमाण्वन्तरेण एतत्परमाणोस्संयोगात् रक्तद्व्यणुकोत्पत्तेर्निरस्तत्वाच्च द्वितीयक्षणे रूपादिमत्त्वासंभवात् श्यामादिनाशक्षणे द्व्यणुकान्तरोत्पत्तिस्वीकारे द्व्यणुकनाशक्षणे द्व्यणुकान्तरोत्पत्तिस्वीकारपक्षे उक्तदूषणत्रयमध्ये प्रथमदोषासंभवेऽपि दोषद्वयस्याविशिष्टत्वात् तृतीयक्षणे रूपादिमत्त्वासंभवात् रक्ताद्युत्पत्तिक्षणे द्व्यणुकान्तरोत्पत्तिर्न संभवति पूर्वक्षणे परमाणोः अरक्तत्वात् नीरूपत्वाच्च चतुर्थक्षणेऽपि रूपादिमत्त्वासंभवादिति दिक् ॥ १०५ ॥

**द्व्यणुकाद्यवयविन्यपीति** ॥ द्व्यणुकादिचरमावयविपर्यन्तावयविसमुदायेऽपीत्यर्थः । अपिशब्दात् परमाणुपरिग्रहः ॥ **पाको भवतीति** ॥ विजातीयतेजस्संयोगाधीनपूर्वरूपादिनाशपूर्वकपूर्वरूपादिविजातीयरूपाद्युत्पत्तिर्भवतीत्यर्थः । तदुत्पत्तिप्रकारमेवाह ॥ **तेषामिति** ॥ नैयायिकानामित्यर्थः ॥ **अयमाशय इति** ॥ आशयोऽयमिति योजना । अभिप्रायो वक्ष्यमाण इत्यर्थः । ग्राह्य इति शेषः । आशयमेवोपपादयति ॥ **अवयविनामिति** ॥ घटादीनामित्यर्थः ॥ **सच्छिद्रत्वादिति** ॥ वह्नेः सूक्ष्मावयवानां प्रवेशमात्रयोग्यच्छिद्रवत्त्वस्य स्वभावसिद्धत्वादित्यर्थः ॥ **वह्नेस्सूक्ष्मावयवैरिति** ॥ वह्न्युपादानद्व्यणुकत्र्यणुकरूपावयवैरित्यर्थः ॥ **संयुक्तेषु सत्स्विति** ॥ घटादिरूपावयविष्वित्यादिः ॥ **अन्तःप्रविष्टैरिति** ॥ अवयव्यन्तःप्रविष्टैः वह्नेस्सूक्ष्मावयवैरित्यर्थः । तृतीयार्थः प्रतियोगित्वं तस्य पाकपदार्थविजातीयतेजस्संयोगेऽन्वयः ॥ **अवयवेष्ववष्टब्धेष्वपीति** ॥ अवयविना सहेत्यादिः । अवयविनावष्टब्धेष्ववयवेष्वपीत्यर्थः । अपिना अवयव्यनवष्टब्धावयवपरिग्रहः ॥ **पाक इति** ॥ पूर्वरूपादिनाशपूर्वकपूर्वरूपादिविजातीयरूपाद्युत्पत्तिफलकविजातीयतेजस्संयोग इत्यर्थः ॥ **न विरुध्यत इति** ॥ अवयविना न बाध्यत इत्यर्थः । घटादेः सच्छिद्रत्वात् तस्य घटोपादानयावदवयवेषु वह्न्यवयवप्रतियोगिकविजातीयतेजस्संयोगविघटकत्वासंभवादिति भावः । अवयविनाशानङ्गीकारे बाधकाभावमुक्त्वा तदङ्गीकारे बाधकमप्याह ॥ **अनन्तावयवीति** ॥ **इत्थंचेति** ॥ अवय-

## दिनकरीयम्.

अवयविन्यपीत्यपिना परमाणुपरिग्रहः ॥ **तेषाम्** नैयायिकानाम् ॥ **अयं** वक्ष्यमाणः ॥ **अवष्टब्धेष्वपीति** ॥ अवयविनावष्टब्धेष्वपीत्यर्थः ॥ **पाकः** रूपादिपरावृत्तिः ॥ **न विरुध्यत इति** ॥ साक्षात्परम्परासाधारणसकलावयवावच्छेदेन तेजःसंयोगस्य रूपादिनाशहेतुत्वे मानाभावेनारम्भकसंयोगावच्छेदेन विजातीयतेजःसंयोगादेव रूपादिनाशसम्भवेऽप्यारम्भकसंयोगावच्छेदेन तेजःसंयोगस्याभिघातादेस्तदानीं तत्सद्भावे मानाभावेन पूर्वोक्तरीत्या अवयविनाशस्याप्रसक्तेः सर्वावयवावच्छेदेन तेजःसंयोगस्य रूपादिनाशक-

ङ्गच्छते यत्र तु न प्रत्यभिज्ञा तत्रावयविनाशोऽपि स्वीक्रियत इति ॥ सङ्ख्यां निरूपयितुमा–

**प्रभा.**

विनाशानङ्गीकारे चेत्यर्थः ॥ **प्रत्यभिज्ञा सङ्गच्छत इति** ॥ तादृशप्रत्यभिज्ञायाः प्रमात्वमुपपद्यत इत्यर्थः । अवयविनाशास्वीकारे उत्तरोत्पन्नावयविनि विनष्टपूर्वावयविनो भेदाभावेन अभेदावगाहिप्रत्यभिज्ञायाः प्रमात्वमुपपन्नमिति भावः । अत्र नैयायिकानां तु नये द्व्यणुकादावपीष्यत इति मूलस्थतुशब्दइष्यतइतिशब्दाभ्यां प्राचीनमते अस्वरसस्सूच्यते । तद्बीजन्तु अग्नियन्त्रनिक्षिप्तघटादेः पूर्वरूपादिनाशपूर्वकरूपान्तरादिमत्त्वस्वीकारे अग्नियन्त्रादानीतघटादेः वक्रत्वच्छिद्रत्वयोरनुपपत्तिः अवक्राच्छिद्रघटस्यैव अग्नियन्त्रनिक्षिप्तत्वात् अतः अभेदस्य प्रत्यक्षबाधितत्वात् अग्नियन्त्रनिक्षिप्तघटादितः अग्नियन्त्रादानीतघटादेः भेदोऽवश्यमङ्गीकार्यः । स च भेदः अग्नियन्त्रनिक्षिप्तघटादेः नाशं विना नोपपद्यत इत्यन्यथानुपपत्त्या तादृशघटादेर्नाशः अवश्यमङ्गीकार्यः । घटादिरूपचरमावयविनाशस्तु कपालादिरूपावयवनाशं विना नोत्पत्तुमर्हतीति क्रमेण द्व्यणुकान्तावयविमात्रनाशसिद्धौ द्व्यणुकनाशस्य परमाणोः नित्यत्वेन तन्नाशाधीनत्वासंभवेन वैशेषिकमतोक्तपरमाण्वग्निसंयोगाधीनपरमाणुक्रियाजन्यविभागजन्यारम्भकसंयोगनाशाधीनत्वमेव वाच्यम् । पुनश्चादृष्टविशेषसहकृतपरमाण्वग्निसंयोगाधीनद्रव्यारम्भानुगुणक्रियावशात् द्व्यणुकादिक्रमेण घटान्तरोत्पत्तिर्वाच्या । तत्र कुलालस्य भोक्तुर्वा दुरदृष्टसहकृतसामग्रीतः क्वचिच्छिद्रघटोत्पत्तिः । नच यत्र पूर्वापरघटयोर्भेद उपलभ्यते तत्रोक्तरीत्या वक्तव्यत्वेऽपि यत्र न तादृशभेदोपलब्धिः तत्र पूर्वघटादावेव विजातीयाग्निसंयोगवशात् पूर्वरूपादिनाशपूर्वकरूपाद्यन्तरोत्पत्तौ बाधकाभावादवयविनाशो नाङ्गीकर्तव्य इति वाच्यम् । बहुषु घटेष्वग्नियन्त्रनिक्षिप्तेषु सत्सु तद्घटारम्भकसकलपरमाणुष्वपि पूर्वरूपादिनाशपूर्वकरूपाद्यन्तरोत्पत्त्यर्थं नैयायिकैरपि विजातीयतेजस्संयोगाङ्गीकारस्यावश्यकतया कारणसत्त्वेन सर्वेषु घटारम्भकपरमाणुषु द्व्यणुकनाशकक्रियोत्पत्तेः सर्वघटनाशस्यावश्यकत्वात् छिद्रादिघटारम्भकपरमाण्वग्निसंयोगाच्छिद्रादिघटारम्भकपरमाण्वग्निसंयोगयोः वैलक्षण्ये प्रमाणाभावात् । नचैवं सति क्वचित् सोऽयं घट इति प्रत्यभिज्ञा कथमिति वाच्यम् । प्रमाणेन पूर्वघटनाशसिद्धौ क्वचित्तादृशप्रत्यभिज्ञायाः तदेवौषधमित्यादिप्रत्यभिज्ञाया इव सजातीयाभेदविषयकत्वस्वीकारेणैवोपपन्नत्वात् । केचित्तु सर्वावयवावच्छेदेन तेजस्संयोगस्य रूपादिनाशकत्वेऽपि नाशकतावच्छेदकवैजात्यस्य नोदनत्वाभिघातत्वविरुद्धस्यैवाङ्गीकरणीयतया नोदनाभिघातभिन्नतेजस्संयोगाद्रूपादिनाशेऽपि तेनावयविनाशस्यासंभवात् । अस्तु वा रूपादिनाशकतावच्छेदकवैजात्यस्य नोदनत्वाभिघातत्वव्याप्यत्वं तथाप्यवयव्यभिघातकाले अवयवाभिघातोत्पादनियमे मानाभावः । अस्तु वा तथा नियमः तथाप्यवयवाभिघातादेः नियमतो द्रव्यारम्भकसंयोगविरोधिविभागहेतुक्रियाजनकत्वे मानाभाव एव विभागं प्रति क्रियायास्तत्तद्व्यक्तित्वेनैव हेतुतया तत्तत्क्रियाधीनविभागं प्रति तत्तत्पूर्वदेशस्य

**दिनकरीयम्.**

त्वेऽपि नाशकतावच्छेदकवैजात्यस्य नोदनत्वाभिघातत्वादिविरुद्धस्यैवाङ्गीकरणीयतया नोदनाभिघातभिन्नतेजःसंयोगाद्रूपादिनाशेऽपि तेनावयविनाशस्यासम्भवात् । अस्तु वा रूपादिनाशकतावच्छेदकवैजात्यस्य नोदनाभिघातत्वव्याप्यत्वं तथाप्यवयव्यभिघातादिकालेऽवयवाभिघातोत्पादनियमे मानाभावः । आस्तां वा तथा नियमः तथाप्यवयवाभिघातादेर्नियमतो द्रव्यारम्भकसंयोगविरोधिविभागहेतुक्रियाजनकत्वे मानाभाव एव । विभागं प्रति क्रियायास्तत्तद्व्यक्तित्वेनैव हेतुतया तत्तत्क्रियाधीनविभागं प्रति तत्तत्पूर्वदेशस्य विशिष्य हेतुतया च तज्जन्यक्रियायास्तादृशविभागहेतुत्वासिद्धेरिति भावः । यदप्युक्तं वैशेषिकैरवयविरूपं प्रत्यवयवरूपहेतुताया व्यभिचारापत्त्या नावयविनि पाकेन रूपोत्पाद इति तदपि न अवयवरूपादेर्विजातीयरूपादिकं प्रत्येव हेतुतया व्यभिचाराप्रसक्तेः । एतेनावयविरूपनाशे आश्रयनाशहेतुतायां व्यभिचारापत्त्या पाकेनावयविरूपनाशासम्भव इत्यप्यपास्तम् । आश्रयनाशजन्यतावच्छेदककोटौ वैजात्यस्य निवेशनीयत्वादिति अवयविपाकानभ्युपगमे साधकाभावमुक्त्वा तत्र बाधकमप्याह ॥ **अनन्तेति** ॥ इत्थं च अवयविनाशानङ्गीकारे च ॥ **प्रत्यभिज्ञा सङ्गच्छत इति**॥ पूर्वावयविनाशे तूत्तरोत्पन्नावयविनि पूर्वावयविनोरभेदाभावेनाभेदाव-

**प्रभा.**

विशिष्य हेतुतया च तज्जन्यक्रियायाः तादृशविभागहेतुत्वासिद्धेरिति भावः। यदुक्तं वैशेषिकैरवयविरूपं प्रति अवयवरूपहेतुतायां व्यभिचारापत्त्या नावयविनि पाकेन रूपोत्पाद इति तदपि न अवयवरूपादेः विजातीयरूपादिकं प्रत्येव हेतुतया व्यभिचाराप्रसक्तेः। एतेन अवयविरूपनाशे आश्रयनाशहेतुतायां व्यभिचारापत्त्या पाकेनावयविरूपनाशासंभव इत्यपि परास्तम्। आश्रयनाशजन्यतावच्छेदककोटौ वैजात्यस्य निवेशनीयत्वादिति प्राचीनमतसमर्थनमाहुः तदसत् सर्वावयवावच्छेदेन तेजस्संयोगस्य रूपादिनाशकत्वेऽपीति यदुक्तं तदनुपपन्नं घटे स्वीययावदवयवावच्छेद्याग्निसंयोगस्वीकारे तादृशाग्निसंयोगस्यानवच्छेदकावयवाप्रसिद्ध्या व्याप्यवृत्तित्वापत्तेः तादृशसंयोगस्य रूपादिनाशकतायाः प्रागेव निरस्तत्वाच्च। यच्चोक्तं नाशकतावच्छेदकवैजात्यस्य नोदनत्वाभिघातत्वविरुद्धस्यैवाङ्गीकरणीयतया नोदनाभिघातभिन्नतेजस्संयोगात् रूपादिनाशेऽपि तेनावयविनाशस्यासंभवादिति तदप्यनुपपन्नं संयोगजसंयोगस्यैव नोदनाभिघातभिन्नतया तादृशसंयोगस्य रूपादिनाशकत्वे मानाभावात् अग्निक्रियाजन्याग्निपरमाणुसंयोगे रूपादिनाशकत्वस्यैव सर्वसम्मतत्वात् परमाणौ संयोगजसंयोगे मानाभावाच्च सर्वतन्त्रेषु क्रियाजन्यसंयोगस्याभिघातत्वनोदनत्वाभिन्नप्रकारद्वयान्यतरवत्त्वस्यैव प्रतिपादितत्वेन तादृशधर्मद्वयान्यतरशून्यक्रियाजन्यसंयोगे मानाभावात् तादृशसंयोगरूपादिनाशकत्वसंभवावयविनाशकत्वासंभवविचारस्य बन्ध्यापुत्रे पुत्रोत्पादकत्वपुत्रिकानुत्पादकत्वविचारतुल्यत्वात्। यच्चोक्तमस्तु वेत्यारभ्य मानाभाव इत्यन्तं तदपि न कारणाकारणसंयोगादेव कार्याकार्यसंयोगस्य स्वीकरणीयतया अवयवेषु अग्निप्रतियोगिकाभिघाताभावे कारणाभावेनावयविनि अग्निप्रतियोगिकाभिघातानुत्पत्त्या अवयविन्यग्न्यभिघातकाले अवयवेष्वपि अग्न्यभिघातस्यावश्यकत्वात्। यच्चोक्तं अस्तु वा तथा नियमः इत्यारभ्य हेतुत्वासिद्धेरित्यन्तं तदपि न अग्नियन्त्रनिक्षिप्तसकलघटारम्भकपरमाणूनां मध्ये च्छिद्रादिघटोत्पत्त्यन्यथानुपपत्त्या केषुचित् परमाणुषु वर्तमानाग्न्यभिघातादेः द्व्यणुकारम्भकसंयोगनाशक्रियाजनकत्वस्य त्वयाप्यवश्यं वाच्यतया अवैलक्षण्येन सर्वपरमाणुषु वर्तमानाग्न्यभिघातादेरपि तादृशक्रियाहेतुत्वस्यावश्यकत्वात् अवयवाभिघातमात्रस्य तादृशक्रियाजनकत्वनियमाभावेऽपि परमाणुसमवेताग्न्यभिघातादेः तादृशक्रियाजनकत्वनियमे बाधकाभावाच्च द्व्यणुकनाशसमकालोत्पन्नपरमाणुसमवेताग्न्यन्तराभिघातादिजन्यक्रियया आरम्भकसंयोगनाशानुत्पत्तेश्च प्रतियोगिरूपकारणाभावेनैव निर्वाहात्। एवं क्रियायाः तत्तद्व्यक्तित्वेनैव हेतुतयेत्यसङ्गतं तथा सति एकस्याः हस्तक्रियायाः हस्तपुस्तकविभागहस्ताकाशविभागादेश्च तत्तद्व्यक्तित्वेनानन्तकार्यकारणभावापत्त्या गौरवापत्तेः। किंतु अनुयोगितासंबन्धेन विभागाजन्यविभागत्वावच्छिन्नं प्रति तादृशविभागमात्रवृत्तिवैजात्यावच्छिन्नं प्रति वा समवायसंबन्धेन क्रियात्वेन लाघवाद्धेतुत्वं वाच्यम्। एवं तत्तत्क्रियाधीनविभागं प्रति तत्तत्पूर्वदेशस्य विशिष्य हेतुतयेति ग्रन्थस्य अग्न्यभिघातादिजन्यद्व्यणुकसमवायिकारणैकपरमाणुसमवेतक्रियया तादृशपरमाण्वन्तरेण विभागोत्पत्तिवारणाय तत्तत्क्रियाजन्यविभागं प्रति तत्तत्पूर्वदेशस्य विशिष्य हेतुत्वं वाच्यम्। एवंच तादृशक्रियाजन्यविभागे पारमाणुरूपपूर्वदेशस्य विशिष्य हेतुत्वानङ्गीकारात् परमाण्वन्तरेण एतत्परमाणोर्विभागानुत्पत्तौ कारणाभावात् न द्व्यणुकारम्भकसंयोगनाश इत्यभिप्रायकतया प्रकृतोपयोगित्वं वाच्यम्। तच्च न संभवति अग्नियन्त्रनिक्षिप्तसकलघटारम्भकसकलपरमाणूनां मध्ये केषुचित् परमाणुषु जायमानाग्न्यभिघातादिजन्यैकपरमाणुसमवेतक्रियाजन्यविभागं प्रति परमाण्वन्तररूपपूर्वदेशस्यापि छिद्रघटाद्युत्पत्त्यनुरोधेन हेतुत्वावश्यकतया तदनुरोधेन बह्वथाभिघातादिजन्यैकपरमाणुक्रियाजन्यविभागमात्रे पूर्वदेशस्य सामान्यरूपेणैव हेतुत्वावश्यकत्वात् तादृशक्रियाजन्यविभागं प्रति पूर्वदेशस्य विशिष्य हेतुतायां प्रमाणाभावेन तद्ग्रन्थस्य तदभिप्रायकत्वासंभवात्। नच छिद्रादिघटोत्पत्त्यनुरोधेन केषुचित् परमाणुषु समवेता या अग्न्यभिघातादिजन्यक्रिया तज्जन्यविभागे परमाण्वन्तररूपपूर्वदेशस्यापि हेतुत्वेऽपि निखिलपरमाणुसमवेततादृशक्रियाजन्यविभागे एकपरमाण्वन्तररूपपूर्वदेशस्य हेतुत्वानङ्गीकारेण परमाण्वन्तरविभागानुत्पत्त्या आरम्भकसंयोगनाशाभावेन सर्वत्र नावयविनाशप्रसक्तिरिति वाच्यम्। सर्वत्रावयविनाशं विनाप्यवयवेष्ववयविषु च प्राचीनमतसिद्धपूर्वरूपादिनाशपूर्वकरूपाद्यन्तरोत्पत्तेः क्वचिदवयविनाशाङ्गीकारेणैव निरस्तत्वात् अग्न्यभिघातादिज-

**गणनाव्यवहारे तु हेतुः सङ्ख्याभिधीयते ॥ १०६ ॥**
**नित्येषु नित्यमेकत्वमनित्येऽनित्यमिष्यते ।**
**द्वित्वादयः परार्धान्ता अपेक्षाबुद्धिजा मताः ॥ १०७ ॥**

**६ ॥ गणनेति ॥ गणनाव्यवहारासाधारणं कारणं सङ्ख्येत्यर्थः ॥ नित्येष्विति ॥**

**प्रभा.**

न्यपरमाणुक्रियायामवैलक्षण्येन तादृशैकक्रियाजन्यविभागे परमाण्वन्तररूपपूर्वदेशस्य हेतुत्वं तादृशक्रियान्तरजन्यविभागे तादृशपूर्वदेशस्याहेतुत्वमित्यत्र नियामकाभावात् परमाणुसमवेततादृशक्रियामात्रस्य आरम्भकसंयोगविरोधिविभागजनकत्वावश्यकत्वाच्च सर्वत्रावयविनाशो दुर्वार इति । यच्चोक्तं यदुक्तं वैशषिकैरित्यादि रूपोत्पाद इत्यन्तग्रन्थेन नवीनमतमुपन्यस्य तदपि नेत्यारभ्य व्यभिचाराप्रसक्तेरित्यन्तग्रन्थेन तन्मतदूषणं तदपि न सम्यक् अवयविरूपादिकं प्रति अवयवरूपादेः हेतुतायां अवयविनाशानङ्गीकर्तृमते तेजस्संयोगजन्यावयविरूपादौ व्यभिचारवारणाय तेजस्संयोगाजन्यावयविरूपादिषु वैजात्यमङ्गीकृत्य तादृशवैजात्यावच्छिन्नं प्रति अवयवरूपादेः हेतुत्वाङ्गीकारे अनन्तवैजात्यकल्पनाप्रयुक्तातिगौरवापत्तेः । तथाहि रूपादिषु चतुर्षु रूपत्वादिव्याप्यवैजात्यचतुष्टयाङ्गीकारो न संभवति शुक्लत्वादिना मधुरत्वादिना सुरभित्वादिना स्पर्शगतकठिनत्वादिना च साङ्कर्यापत्तेः । किंतु प्राचीनमते शुक्लत्वादिव्याप्यवैजात्यसप्तकं चित्ररसमादाय मधुरत्वादिव्याप्यवैजात्यसप्तकं चित्रगन्धमादाय सुरभित्वादिव्याप्यवैजात्यत्रयं स्पर्शगतकठिनत्वादिव्याप्यवैजात्यद्वयं वावयविस्पर्शमात्रवृत्त्यनुष्णाशीतत्वव्याप्यवैजात्यं च साङ्कर्यवारणाय कल्पनीयम् । तत्तद्वैजात्यावच्छिन्नं प्रति अवयवरूपत्वादिना कारणत्वं च व्यभिचारवारणायाङ्गीकर्तव्यम् । एवंच विंशतिवैजात्यकल्पनात् तत्तद्वैजात्यावच्छिन्नं प्रति अवयवरूपत्वादिना विंशतिकार्यकारणभावकल्पनाच्चातिगौरवम् । नवीनमते अवयविनि पाकेन रूपाद्यनुत्पादात् समवायेनावयविरूपादिकं प्रति समवायघटितसामानाधिकरण्येन रूपादेः कारणत्वसंभवेन न पूर्वोक्तगौरवावकाश इति । यच्चावयविरूपादिनाशं प्रति आश्रयनाशहेतुतायां अवयविनि पाकेन रूपादिनाशाङ्गीकर्तृमते नवीनोक्तं व्यभिचाररूपदूषणं एतेनेत्यादिपरास्तमित्यन्तग्रन्थेनानूद्याश्रयनाशजन्यतावच्छेदककोटौ वैजात्यस्य निवेशनीयत्वादिति ग्रन्थेन तादृशव्यभिचारनिराकरणं तदपि न सम्यक् अवयवरूपादिजन्यतावच्छेदकतया सिद्धविंशतिजातिरूपादाय तत्तज्जात्याश्रयप्रतियोगिकरूपादिनाशं प्रति आश्रयनाशनाश्यतावच्छेदकतया विंशतिवैजात्यान्तराण्यङ्गीकृत्य तत्तद्वैजात्याश्रयप्रतियोगिकरूपादिनाशं प्रति वाश्रयनाशस्य हेतुत्वम् । नाद्यः तेजस्संयोगजन्यरूपादेरपि कदाचिदाश्रयनाशानाश्यत्वेनानुपपत्तेः । नान्त्यः अवयवरूपादिजन्यतावच्छेदकवैजात्यानां मध्ये एकैकवैजात्यस्याश्रयनाशनाश्यतावच्छेदकवैजात्यानां मध्ये एकैकवैजात्यस्य अवयविरूपादिजन्ये आश्रयनाशनाश्ये च रूपादौ सत्त्वेन साङ्कर्यापत्त्यावयवरूपादिजन्यतावच्छेदकधर्माणां तादृशनाश्यतावच्छेदकधर्माणां च जातित्वानुपपत्तेः । तस्माद्विजातीयरूपादिनाशं प्रति आश्रयनाशस्य हेतुत्वमङ्गीकृत्य व्यभिचारवारणमत्यन्तासङ्गतमेव । नवीनमते तु अवयविरूपादिकं प्रति अवयवरूपादेः अवयविरूपादिनाशं प्रति आश्रयनाशस्य पृथिवीपरमाणुरूपादिकं प्रति विजातीयतेजस्संयोगस्य तादृशरूपादिचतुष्टयनाशं प्रति विजातीयतेजस्संयोगस्य च हेतुतायां बाधकाभावात् अनेकवैजात्यस्य तादृशवैजात्यभेदेनानेककार्यकारणभावस्य च कल्पनायाः अप्रसक्त्या अतिलाघवमिति दिक् ॥ **संख्यान्निरूपयितुमाहेति** ॥ सङ्ख्यात्वावच्छिन्नं क्रमशो लक्षणादिमत्त्वेन प्रतिपादयितुमादौ लक्षणमाहेत्यर्थः । गणनाव्यवहारे तु हेतुरिति मूलस्थावधारणार्थकतुशब्देन तादृशव्यवहारेतरकारणत्वाभावप्रतिपादनादसाधारणकारणत्वं लभ्यत इत्यभिप्रायेण पर्यवसितार्थमाह ॥ **मुक्तावल्यां गणनाव्यवहारासाधारणकारणमिति** ॥ एकः द्वौ इत्यादि-

**दिनकरीयम्.**

गाहिनी प्रत्यभिज्ञा न स्यादिति भावः । कालादावतिव्याप्तिमाशङ्क्याह ॥ **असाधारणमिति** ॥ वस्तुतो गणनं सङ्ख्यात्वं तत्प्रकारको व्यवहारस्तत्प्रकारकं प्रमात्मकं ज्ञानं तद्धेतुस्तद्विषय इत्यर्थान्न कालादावतिव्या-

नित्येषु परमाण्वादिषु एकत्वं नित्यम्। अनित्ये घटादावेकत्वमनित्यमित्यर्थः। द्वित्वादयस्तु

प्रभा.

शब्दनिष्ठवाच्यतासंबन्धावच्छिन्नकार्यतानिरूपितसमवायसंबन्धावच्छिन्नकारणत्वं सङ्ख्यालक्षणमित्यर्थः। तथा च एकत्वसत्त्वे एक इति व्यवहारः उभयत्वावच्छिन्ने एकत्वासत्त्वात् तादृशव्यवहाराभाव इत्यन्वयव्यतिरेकाभ्यां व्यवहारं प्रति एकत्वादिरूपव्यवहर्तव्यस्य हेतुत्वाल्लक्षणसमन्वय इति भावः। यद्यपि एक इति शब्दघटितलक्षणं द्वित्वादावव्याप्तं द्वावित्यादिशब्दघटितलक्षणन्तु एकत्वेऽव्याप्तमिति नानुगतलक्षणसंभवः तथापि सङ्ख्यावाचकशब्दत्वेन एकादिशब्दाननुगमय्य तादृशशब्दत्वावच्छिन्नवाच्यतासंबन्धावच्छिन्नकार्यताघटितलक्षणस्य एकत्वादिपरार्धपर्यन्तसङ्ख्यासु सत्त्वात् नोक्तदोषावकाशः। नचैवमपि यादृशैकत्वादिसङ्ख्यया तादृशव्यवहारो न जातः तादृशैकत्वादावव्याप्तिरिति वाच्यम् तादृशकारणत्वसमानाधिकरणरूपाव्यापकजातिमत्त्वस्य विवक्षितत्वात्। नन्वेवं सति एक इत्याकारकशब्दत्वावच्छिन्नवाच्यतासंबन्धावच्छिन्नकार्यतानिरूपितसमवायसंबन्धावच्छिन्नकारणत्वसमानाधिकरणरूपाव्यापकजातिमत्त्वस्यापि लक्षणत्वसंभवात् सङ्ख्यावाचकशब्दत्वेन एकत्वादिशब्दाननुगमय्य तद्घटितलक्षणकरणप्रयासो विफल इति चेत् इष्टमेवैतल्लक्षणस्य लक्षणान्तरादूषकत्वात्। एवं निरुक्तकारणतावच्छेदकतया सङ्ख्यापदशक्यतावच्छेदकतया वा सिद्धसङ्ख्यात्वजातिमत्त्वमपि सङ्ख्यासामान्यलक्षणं बोध्यम्। परन्तु प्रथमस्य लक्षणत्वे सङ्ख्यात्वजातेर्लक्ष्यतावच्छेदकत्वं सङ्ख्यात्वजातेर्लक्षणत्वे प्रथमस्यैव लक्ष्यतावच्छेदकत्वमिति हृदयम्। केचित्तु वस्तुतो गणनं सङ्ख्यात्वं तत्प्रकारको व्यवहारः तत्प्रकारकं प्रमात्मकं ज्ञानं तद्धेतुस्तद्विषय इत्यर्थान्न कालादावतिव्याप्तिः। अत्रापि सङ्ख्यात्वजातिरेव लक्षणं इतरत्तु सङ्ख्यात्वजातौ प्रमाणतयोक्तं एवमग्रेऽपीति ध्येयमित्याहुः। तदसत् गुणस्सङ्ख्येत्याकारकगुणत्वावच्छिन्नविशेष्यकसङ्ख्यात्वप्रकारकप्रमानिरूपितविशेष्यत्वस्य गुणमात्रे सत्त्वादतिव्याप्त्यापत्तेः ईश्वरीयसङ्ख्यात्वप्रकारकप्रमायाः सर्वविषयकत्वेन तादृशप्रमानिरूपितविशेष्यत्वस्य पदार्थमात्रे सत्त्वात् सर्वत्रातिव्याप्त्यापत्तेश्च। नच सङ्ख्यात्वत्वावच्छिन्नप्रकारतानिरूपितप्रमीयविशेष्यत्वस्य लक्षणत्वे तात्पर्यात् नोक्तातिव्याप्तिरिति वाच्यं तथा सति तद्घटकसङ्ख्यात्वस्यैव लघोर्लक्षणत्वसंभवे शेषवैयर्थ्येन मूलस्थगुणशब्दस्य व्यवहारशब्दस्य हेतुशब्दस्य च सङ्ख्यात्वतत्प्रकारकप्रमातद्विषयेषु लाक्षणिकत्वाभिधानप्रयासवैफल्यात्। यदुक्तं तत्रापि सङ्ख्यात्वजातिरेव लक्षणं इतरत्तु सङ्ख्यात्वजातौ प्रमाणतयोक्तमिति तदपि न सम्यक् गणनाव्यवहारे तु हेतुरिति मूलस्य गणनाव्यवहारासाधारणकारणमिति मुक्तावलीग्रन्थस्य च सङ्ख्यात्वजातौ प्रमाणपरत्वे कारणतावच्छेदकतया जातिसिद्धेः सर्वमतसिद्धतया मूले मुक्तावल्यां च सङ्ख्यायाः तादृशव्यवहारहेतुत्वप्रतिपादनं सङ्ख्यात्वजातौ प्रमाणोपन्यासाय लक्षणन्तु सङ्ख्यात्वजातिमत्त्वमेवेत्यनुक्त्वा मूलाद्युक्तगणनादिपदानां लाक्षणिकत्वं परिकल्प्य सङ्ख्यानिष्ठप्रकारतानिरूपितप्रमीयविशेष्यत्वरूपार्थे मूलकारस्य तात्पर्यं इतरत्त्वित्यादिग्रन्थेन तादृशप्रमाविषयत्वस्य सङ्ख्यात्वजातौ प्रमाणपरत्वोपपादनस्य शिरोवेष्टनेन नासिकास्पर्शनतुल्यत्वादिति। एवं एकत्वादिपरार्धपर्यन्तसङ्ख्यानां प्रत्येकं विशेषलक्षणान्यप्युक्तरीत्या ऊह्यानि। एकत्वादिसङ्ख्यात्वव्याप्यसकलजातिसिद्धिरपि उक्तरीत्या साधनीयेति ॥ १०६ ॥

नन्तु नित्येषु नित्यमेकत्वमित्यादिमूलेन नित्यमात्रवृत्त्येकत्वस्य नित्यत्वं अनित्यमात्रवृत्त्येकत्वस्यानित्यत्वं च लभ्यते तच्चायुक्तम्। गुणरूपसङ्ख्याया एव प्रकृतत्वेन तस्य सकलनित्यान्तर्गतनित्यरूपादिवृत्तित्वाभावात् सकलानित्यान्तर्गतानित्यरूपादिवृत्तित्वाभावाच्च अतो मूलस्थनित्यानित्यपदे नित्यानित्यद्रव्यपरतया व्याचष्टे ॥ **मुक्तावल्यां नित्येषु परमाण्वादिष्वित्यादिना** ॥ अपेक्षाबुद्धिविशेषविषयत्वरूपद्वि-

दिनकरीयम्.

त्तिः। तत्रापि सङ्ख्यात्वजातिरेव लक्षणमितरत्तु सङ्ख्यात्वजातौ प्रमाणतयोक्तं एवमग्रेऽपीति ध्येयम्॥ **द्वित्वादय इति** ॥ एकत्वान्यसङ्ख्यामात्रमपेक्षाबुद्धिरूपनिमित्तकारणजन्यमित्यर्थः। असमवायिकारणं तु द्वित्वं प्रति समवायिकारणगतयावदेकत्वमिति बोध्यम्। ननु योग्यद्वित्वादावपेक्षाबुद्धेर्हेतुत्वेऽप्ययोग्यद्वित्वादौ तद्धेतुत्वे मानाभाव इति चेन्न योग्यद्वित्वादेरपेक्षाबुद्धिजन्यत्वेऽतीन्द्रियद्वित्वादावप्यनेकसङ्ख्यात्वादिना तदनु-

व्यासज्यवृत्तिसङ्ख्या अपेक्षाबुद्धिजन्याः ॥ १०६ ॥ १०७ ॥

अनेकाश्रयपर्याप्ता एते तु परिकीर्तिताः ।
अपेक्षाबुद्धिनाशाच्च नाशस्तेषां निरूपितः ॥ १०८ ॥

**अनेकेति** ॥ यद्यपि द्वित्वादिसंबन्धः प्रत्येकं घटादावपि वर्तते तथापि एको द्वाविति प्रत्ययाभावात् एको न द्वाविति प्रत्ययसद्भावाच्च द्वित्वादीनां पर्याप्तिलक्षणः कश्चित्सम्बन्धोऽ–

**प्रभा.**

त्वादीनामपेक्षाबुद्धिजन्यत्वाभावात् अपेक्षाबुद्धिजा मता इति मूलमसङ्गतमतो द्वित्वादिपदं गुणरूपद्वित्वादिपरतया व्याचष्टे ॥ **मुक्तावल्यां द्वित्वादयस्तु संख्या इति** ॥ द्वित्वादयो गुणा इत्यर्थः ॥ **अपेक्षाबुद्धिजन्या इति** ॥ अपेक्षाबुद्धिनिष्ठविशेष्यतासंबन्धावच्छिन्नकारणतानिरूपितकार्यताश्रया इत्यर्थः । तत्र समवायसंबन्धेन कालिकसमवायोभयसंबन्धेनैकत्वत्वावच्छिन्नं प्रत्यवयवगतैकत्वस्य समवायसंबन्धेन द्वित्वत्वाद्यवच्छिन्नं प्रति समवायिकारणनिष्ठयावदेकत्वस्य चासमवायिकारणत्वमिति बोध्यम् । अस्मद्गुरुचरणास्तु द्रव्यस्यैव कारणत्रितयजन्यत्वनियमात् भावकार्यमात्रस्य तादृशजन्यत्वनियमे मानाभावात् एकत्वादेरसमवायिकारणजन्यत्वाभावेऽपि न क्षतिरिति व्याचक्रुः । नन्वपेक्षाबुद्धेर्द्वित्वादिहेतुत्वेऽपेक्षाबुद्ध्युत्पत्तिद्वितीयक्षणे द्वित्वाद्युत्पत्तिवत् तृतीयक्षणेऽपि न कथं द्वित्वाद्यन्तराद्युत्पत्तिः कारणसत्त्वादिति चेन्न तत्पुरुषीयापेक्षाबुद्धिजन्यद्वित्वादिकं प्रति तादृशद्वित्वादेः प्रतिबन्धकत्वेन तदभावरूपकारणाभावात् अपेक्षाबुद्धिद्वितीयक्षणे द्वित्वाद्युत्पत्त्यापत्तेरापादनासंभवात् अत एव धारावाहिकापेक्षाबुद्धिभिः प्रतिक्षणं द्वित्वाद्युत्पत्त्यापत्तेरपि नावकाशः प्रतिबन्धकाभावरूपकारणाभावात् ॥ १०७ ॥

अनेकाश्रयपर्याप्ता इति मूलात् द्वित्वादीनां पर्याप्त्याख्यस्वरूपसंबन्धेन व्यक्तिद्वयादिष्वेव वर्तमानत्वं नैकव्यक्तावित्यर्थो लभ्यते तच्चानुपपन्नं पर्याप्तौ प्रमाणाभावादित्याशङ्कायां पर्याप्तिसाधनयाक्षिपति ॥ **मुक्तावल्यां यद्यपीति** ॥ **द्वित्वादिसंबन्ध इति** ॥ द्वित्वादेस्समवायाख्यस्संबन्ध इत्यर्थः ॥ **प्रत्येकं घटादावपीति** ॥ एकैकघटादिव्यक्तावपीत्यर्थः । अपिना व्यक्तिद्वयादिस्समुच्चीयते । तथाच यथा जातेः समवायेन एकव्यक्तिपर्याप्तत्वमुभयपर्याप्तत्वं न तथा द्वित्वादेरपीति पर्याप्तिस्वीकारो निरर्थक इति भावः ॥ **प्रत्ययसद्भावाच्चेति** ॥ तथाच पर्याप्त्यनङ्गीकारे एको न द्वित्ववानिति प्रत्ययाभाववत् एको न द्वाविति प्रत्ययोऽपि न स्यात् एको द्वित्ववानिति प्रतीतिवत् एको द्वाविति प्रत्ययोऽपि स्यात् । अतः समवायातिरिक्तः पर्याप्त्याख्यः विलक्षणः संबन्धः द्वौ न द्वाविति प्रतीतिविषयो वाच्य इति भावः । तत्र चशब्दो निरुक्तादृशप्रत्ययाभावसमुच्चायकः नतु तादृशप्रत्ययाभावरूपप्रथमहेतौ अस्वरससूचक इति हृदयम् । केचित्तु नन्वेकत्वस्य न्यूनवृत्तितया द्वित्वाधारतानवच्छेदकत्वात् न तथा प्रत्यय इत्यत आह ॥ **एको न द्वावितीति** ॥ एकत्वावच्छेदेन द्वित्ववद्भेदाभावादेकत्वादेः न्यूनवृत्तितया द्वित्ववद्भेदानवच्छेदकत्वादिति प्रथमहेतावस्वरसं उत्तरहेतावपि तादृशदोषप्राप्तिं चाहुः तदसत् एको द्वित्ववानिति प्रतीतेः सर्वानुभवसिद्धतया तद्बलात्

**दिनकरीयम्.**

मनात् । अथापेक्षाबुद्धेर्द्वित्वहेतुत्वे कथमविरलक्रमेण यावदपेक्षाबुद्धिसत्त्वं न द्वित्वाद्युत्पत्तिः । अत्र केचित् अपेक्षाबुद्धेरुत्पत्तिसम्बन्धेन हेतुत्वान्न यावदपेक्षाबुद्धिमत्त्वं द्वित्वाद्युत्पत्तिरिति तन्न धारावाहिकापेक्षाबुद्धिभिः सर्वत्र धारावाहिकद्वित्वाद्युत्पत्तेर्दुर्वारत्वात् भगवदपेक्षाबुद्ध्या धारावाहिकद्वित्वाद्युत्पत्तेर्दुर्वारत्वाच्च तद्बुद्धेर्नित्यत्वेनोत्पत्तिसम्बन्धेन तद्धेतुत्वस्य दुर्वचत्वात् । वस्तुतस्तु तत्तत्पुरुषीयापेक्षाबुद्धिजन्यानेकसङ्ख्यात्वाद्यवच्छिन्नं प्रति तत्तत्पुरुषीयापेक्षाबुद्धिजन्यानेकसङ्ख्यादेः प्रतिबन्धकत्वाभ्युपगमान्न यावदपेक्षाबुद्धिसत्त्वं द्वित्वाद्युत्पत्तिरिति ॥ १०६ ॥ १०७ ॥

**प्रत्येकं घटादाविति** ॥ तथा चानेकाश्रयपर्याप्तेति मूलमसङ्गतामिति भावः । नन्वेकत्वस्य न्यूनवृत्तितया द्वित्वाधारतानवच्छेदकत्वान्न तथा प्रत्यय इत्यत आह ॥ **एको न द्वावितीति** ॥ एकत्वावच्छे-

नेकाश्रयोऽभ्युपेयते।प्रथममपेक्षाबुद्धिस्ततो द्वित्वोत्पत्तिः ततो विशेषणज्ञानं द्वित्वत्वनिर्विकल्पा-

## प्रभा.

न्यूनवृत्त्येकत्वस्यापि द्वित्वाधारतावच्छेदकत्वसंभवात् । नहि कारणतावच्छेदकत्वादाविवाधिकरणतावच्छेद-कत्वेऽपि अन्यूनानतिरिक्तवृत्तित्वं नियामकं तथा सति पृथिवी द्रव्यत्ववती पृथिवी नीलरूपवतीत्यादिप्रमात्मक-प्रतीत्यनापत्तेः पृथिवीत्वस्य द्रव्यत्वाधिकरणतान्यूनवृत्तित्वात् नीलानीलाधिकरणतातिरिक्तवृत्तित्वाच्च । तस्मा-द्विषयतावच्छेदकत्व इवाधिकरणतावच्छेदकत्वेऽपि अन्यूनानतिरिक्तवृत्तित्वं न नियामकम् । एवं चातिरिक्त-पर्याप्त्यनङ्गीकारे समवायेन द्वित्ववति द्वित्ववद्भेदाभावेन एकत्वादेः द्वित्ववद्भेदव्यधिकरणतया तदनवच्छेदक-त्वादित्यनुक्त्वा न्यूनवृत्तितया द्वित्ववद्भेदानवच्छेदकत्वादित्यसङ्गततात्पर्यवर्णने बीजं मृग्यमिति ॥ **पर्याप्ति-लक्षण इति** ॥ पर्याप्तिस्वरूप इत्यर्थः ॥ **कश्चनेति** ॥ कॢप्तसंबन्धातिरिक्त इत्यर्थः ॥ **अनेकाश्रय इति** ॥ व्यक्तिद्वयादावेवेत्यर्थः । तथाचैकत्वविशिष्टे पर्याप्तिसंबन्धेन द्वित्वाभावात्तेन संबन्धेन द्वित्ववद्भेदस-त्त्वाच्चैको द्वाविति प्रत्ययाभावः एको न द्वाविति प्रत्ययश्चोपपद्यत इति भावः । जगदीशतर्कालङ्कारप्रभृतय-स्तु उभयादेः प्रत्येकानतिरिक्ततया उभयादौ वर्तमानपर्याप्तिरेकैकव्यक्तावपि अवश्यमङ्गीकार्येत्याहुः । तन्मते केवलपर्याप्तेः द्वित्वादिसंबन्धत्वस्वीकारेण उक्तदोषवारणासंभवात् उद्देश्यतावच्छेदकव्याप्यत्वविशिष्टपर्याप्तेरेव द्वित्वादिसंबन्धत्वं वाच्यम् । एवंच द्वित्वादिपर्याप्तेर्द्वित्वादिरूपतया एकत्वव्याप्यद्वित्वादिपर्याप्तेरप्रसिद्ध्या एको द्वाविति प्रत्ययाभावः उभयत्वादिव्याप्यद्वित्वादिपर्याप्तेः प्रसिद्धतया तादृशपर्याप्त्यव्यापकैकत्वावच्छेदेन ता-दृशपर्याप्तिसंबन्धेन द्वित्ववद्भेदसत्त्वात् एको न द्वाविति प्रत्ययश्चोपपादनीयः । एको द्वित्ववानिति प्रत्ययः एको न द्वित्ववानिति प्रत्ययाभावश्च द्वित्वनिष्ठप्रकारतायां तन्निष्ठभेदप्रतियोगितावच्छेदकतायां चावच्छेदकसंबन्ध-तया समवायस्य भानमङ्गीकृत्यैव समर्थनीय इति । अन्ये त्वाकाशाविति वाक्यस्य प्रामाण्यापत्त्या पर्याप्त्य-ङ्गीकार आवश्यकः नच समवायेनेव पर्याप्तिसंबन्धेन द्वित्वस्याकाशे सत्त्वात् पर्याप्त्यङ्गीकारेऽपि तद्वाक्य-स्यापि प्रामाण्यापत्तिर्दुर्वारैवेति वाच्यं उद्देश्यतावच्छेदकव्याप्यत्वविशिष्टपर्याप्तेरेव द्वित्वसंबन्धत्वोपगमात् आकाशत्वव्याप्यद्वित्वपर्याप्तेरप्रसिद्धत्वात् द्वित्वपर्याप्तेर्द्वित्वस्वरूपतया तस्य घटादावपि सत्त्वात् नचोद्देश्य-तावच्छेदकव्याप्यत्वविशिष्टसमवायस्य द्वित्वसंसर्गतां स्वीकृत्य आकाशाविति प्रयोगवारणसंभवादलं पर्या-प्त्येति वाच्यं तथा सति घटाविति प्रयोगस्य प्रामाण्यानुपपत्तेः समवायस्य एकत्वेन घटत्वव्याप्यसमवाय-स्याप्रसिद्धेरित्यन्यत्र विस्तर इत्याहुः । तन्न आकाशे समवायसंबन्धेन द्वित्वरूपपर्याप्तिसंबन्धेन वा द्वित्वसत्त्वेऽपि सुपामुद्देश्यतावच्छेदकव्याप्यसङ्ख्याबोधकत्वनियमेन आकाशत्वव्याप्यद्वित्वसङ्ख्याया अप्रसिद्धत्वादेव आकाशा-विति वाक्यस्य प्रामाण्यापत्तिवारणे विशिष्टपर्याप्तिस्वीकारस्यानावश्यकतया उक्तरीत्यातिरिक्तपर्याप्तिसाधना-संभवात् । यच्चोक्तं समवायेनेव द्वित्वात्मकस्वरूपसंबन्धेनापि द्वित्वस्याकाशे सत्त्वात् पर्याप्तिस्वीकारेऽपि तादृ-शवाक्यस्य प्रामाण्यापत्तिं वारयितुं उद्देश्यतावच्छेदकव्याप्यत्वविशिष्टपर्याप्तेरेव द्वित्वसंबन्धत्वात् आकाशत्व-व्याप्यद्वित्वपर्याप्तेरप्रसिद्धत्वात् इति । तदप्ययुक्तम् । तथा सति आकाशो द्वित्ववानिति प्रत्ययस्यानापत्तेः तादृशवाक्यस्य प्रामाण्यानुपपत्तेश्च तादृशपर्याप्तेरप्रसिद्धत्वात् पर्याप्तेरेवैतावकारेणान्यस्य द्वित्वसंबन्धत्वनि-राकरणात् । मन्मते तु सुपामुद्देश्यतावच्छेदकव्याप्यसङ्ख्याबोधकत्वनियमेनाकाशावित्यादिवाक्यस्यैवाप्रामा-ण्यं द्वाविति प्रत्ययमात्रस्योद्देश्यतावच्छेदकव्याप्यपर्याप्तिसंबन्धेन द्वित्वप्रकारकत्वात् आकाशौ द्वाविति

## दिनकरीयम्.

देन द्वित्ववद्भेदाभावादेकत्वादेर्न्यूनवृत्तितया द्वित्ववद्भेदानवच्छेदकत्वादिति भावः ॥ **अनेकाश्रय इति** ॥ उभयाद्याश्रय इत्यर्थः । तथा च तादृशप्रतीतेर्न द्वित्ववद्भेदाधारतावच्छेदकत्वमेकत्वे विषयः किं तु पर्याप्ति-सम्बन्धेन द्वित्वं तद्वद्भेदो वा एकत्वावच्छिन्ने प्रकारः इत्थं च पर्याप्तिसम्बन्धेन द्वित्वस्य प्रत्येकमभावादेको द्वावि-त्यप्रत्ययस्यैको न द्वाविति प्रत्ययस्य चोपपत्तिरिति भावः । अत्र बहवः उभयादेः प्रत्येकानतिरिक्ततया प्रत्येक-मपि पर्याप्तिसम्बन्धेन द्वित्वमस्त्येवेति पर्याप्त्यङ्गीकारेऽप्येको द्वावित्यप्रत्ययस्यैको न द्वाविति प्रत्ययस्य च कथमु-पपत्तिः यदि चैको न द्वाविति प्रतीतिबलात् द्वित्ववद्भेदावच्छेदकत्वं स्वरूपसम्बन्धविशेषरूपमेकत्वे स्वीक्रियते

त्मकं ततो द्वित्वत्वविशिष्टप्रत्यक्षमपेक्षाबुद्धिनाशश्च ततो द्वित्वनाश इति । यद्यपि ज्ञानानां द्विक्षणमात्रस्थायित्वं योग्यविभुविशेषगुणानां स्वोत्तरवृत्तिगुणनाश्यत्वात् तथाप्यपेक्षाबुद्धेस्त्रिक्षणावस्थायित्वं कल्प्यते । अन्यथा निर्विकल्पककालेऽपेक्षाबुद्धेर्नाशात् द्वित्वस्यैव नाशः

## प्रभा.

प्रत्ययाभावः समवायेन केवलपर्याप्तिसंबन्धेन वा एकव्यक्तेरपि द्वित्ववत्त्वात् आकाशो द्वित्ववानिति प्रत्ययस्याकाशो द्वित्ववानिति वाक्यस्य च प्रामाण्योपपत्तिः विशिष्टपर्याप्तेरिव केवलपर्याप्तेः समवायस्य च द्वित्वसंबन्धत्वस्वीकारादित्यपेक्षाबुद्धिनाशाच्च तेषां नाशो निरूपित इति मूलादपेक्षाबुद्धिनाशस्य द्वित्वादिनाशकत्वं लभ्यते तच्च न संभवति जन्यज्ञानमात्रस्य तृतीयक्षणे नाशेन द्वित्वनिर्विकल्पकक्षण एवापेक्षाबुद्धेरपि नाशात्तदुत्तरं द्वित्वनाशेन द्वित्वनिष्ठलौकिकविषयताशालिप्रत्यक्षानुपपत्तेः अतः अपेक्षाबुद्धेः क्षणत्रितयावस्थायित्वमङ्गीकृत्य द्वित्वत्वनिष्ठप्रकारतानिरूपितद्वित्वनिष्ठलौकिकविषयताशालिप्रत्यक्षोपपादनाय प्राचीनमतसिद्धप्रणालिकामाह ॥ **प्रथममिति** ॥ इन्द्रियसन्निकर्षानन्तरमित्यर्थः ॥ **अपेक्षाबुद्धिरिति** ॥ अनेकधर्मावच्छिन्नविशेष्यकैकत्वप्रकारकप्रत्यक्षमित्यर्थः ॥ **द्वित्वोत्पत्तिरिति** ॥ द्वित्वाद्युत्पत्तिरित्यर्थः ॥ **विशेषणज्ञानं द्वित्वत्वनिर्विकल्पात्मकमिति** ॥ द्वित्वत्वद्वित्वोभयनिष्ठतुरीयविषयताशालिज्ञानमित्यर्थः। तथाच द्वित्वोत्पत्तिकाले उद्बोधकघटितस्मृतिसामग्र्यादिसत्त्वेऽपि समानविषये लौकिकप्रत्यक्षसामग्र्याः प्राबल्येन लौकिकप्रत्यक्षोत्पत्तेरावश्यकतया पूर्वं विशेषणज्ञानाभावात् सविकल्पकासंभवेन निर्विकल्पकोत्पत्तेरावश्यकत्वादिति भावः॥ **द्वित्वत्वविशिष्टमिति** ॥ द्वित्वत्वानिष्ठलौकिकप्रकारताशालिप्रमात्मकप्रत्यक्षमित्यर्थः ॥ **अपेक्षाबुद्धिनाशश्चेति** ॥ प्रतियोगितासंबन्धेन अपेक्षाबुद्धिनाशं प्रति स्वप्रागभावाधिकरणक्षणवृत्तित्वस्वसमानकालीनत्वोभयसंबन्धेन गुणत्वेन हेतुत्वादिति भावः ॥ **ज्ञानान्तरमिति** ॥ यथेत्यादिः । अपेक्षाबुद्ध्यन्यज्ञानत्वावच्छिन्नमित्यर्थः ॥ **द्विक्षणमात्रस्थायीति** ॥ तृतीयक्षणवृत्तिध्वंसप्रतियोगीत्यर्थः । तत्र हेतुमाह ॥ **योग्यविभुविशेषगुणानामित्यादिना** ॥ शब्दत्वबुद्धित्वसुखत्वदुःखत्वेच्छात्वद्वेषत्वयत्नत्वानां मध्ये प्रतियोगितासंबन्धेन स्वाश्रयप्रतियोगिकत्वकालिकविशेषणत्वोभयसंबन्धेन एकैकजातिविशिष्टं प्रति स्वाव्यवहितपूर्ववृत्तित्वसंबन्धेन गुणत्वेन हेतुत्वादित्यर्थः । तथा अपेक्षाबुद्ध्यात्मकज्ञानमपीति शेषः । द्विक्षणमात्रस्थायीति पूर्वेणान्वयः । तथाचोक्तकारणबलात् अपेक्षाबुद्ध्यन्यज्ञानं यथा द्विक्षणमात्रस्थायि तथापेक्षाबुद्ध्यात्मकज्ञानमपि तादृशकारणबलात् द्विक्षणमात्रस्थाय्येवेति समुदितार्थः ॥ **त्रिक्षणावस्थायित्वमिति** ॥ चतुर्थक्षणवृत्तिध्वंसप्रतियोगित्वमित्यर्थः ॥ **कल्प्यत इति** ॥ स्वीक्रियत इत्यर्थः ॥ **अन्यथेति** ॥ अपेक्षाबुद्धेः चतुर्थक्षणवृत्तिध्वंसप्रतियोगित्वानङ्गीकार इत्यर्थः ॥ **निर्विकल्पककाल इति** ॥ निर्विकल्पकोत्पत्तिकाल इत्यर्थः ॥

## दिनकरीयम्.

न तु द्वित्वावच्छेदकत्वमेको द्वावित्यप्रत्ययादिति विभाव्यते तदा समवायपक्षेऽपि तुल्यमिति पर्याप्त्यङ्गीकारो निरर्थक इति चेदत्राहुः । आकाशाविति वाक्यस्य प्रामाण्यापत्त्या पर्याप्त्यङ्गीकार आवश्यकः । नच समवायेनेव पर्याप्तिसम्बन्धेनापि द्वित्वस्याकाशे सत्त्वात् पर्याप्त्यङ्गीकारेऽपि तद्वाक्यप्रामाण्यं दुर्वारमिति वाच्यं उद्देश्यतावच्छेदकव्याप्यत्वविशिष्टपर्याप्तेरेव द्वित्वसम्बन्धत्वोपगमात् आकाशत्वव्याप्यद्वित्वपर्याप्तेरप्रसिद्धत्वात् द्वित्वपर्याप्तेर्द्वित्वस्वरूपतया तस्य घटादावपि सत्त्वात् । नचोद्देश्यतावच्छेदकव्याप्यत्वविशिष्टसमवायस्य द्वित्वसंसर्गतां स्वीकृत्याकाशाविति प्रयोगवारणसम्भवादलं पर्याप्त्येति वाच्यं तथा सति घटाविति प्रयोगस्य प्रामाण्यानुपपत्तेः समवायस्यैकत्वेन घटत्वव्याप्यसमावायस्याप्रसिद्धेरित्यन्यत्र विस्तरः । अपेक्षाबुद्धिनाशाच्च तेषां नाश इति मूलस्य तृतीयक्षणे अपेक्षाबुद्धिनाशाच्चतुर्थक्षणे द्वित्वादीनां नाश इति नार्थः । परं तु चतुर्थक्षणेऽपेक्षाबुद्धिनाशात् पञ्चमक्षणे इत्यर्थ इति ज्ञापनाय वैशेषिकप्रक्रियां प्रदर्शयति ॥ **प्रथममित्यादिना** ॥ **द्वित्वत्वविशिष्टप्रत्यक्षं** द्वित्वत्वविशिष्टलौकिकप्रत्यक्षम् ॥ **अन्यथा** अपेक्षाबुद्धेर्द्विक्षणमात्रावस्थायित्वे ॥ **द्वित्वस्यैव नाश इति** ॥ द्वित्वस्य नाश एवेत्यर्थः । ननु तदानीं द्वित्वाभावेऽपि तत्पूर्वक्षणे द्वित्वसत्त्वान्न द्वित्व-

स्यात् न तु द्वित्वप्रत्यक्षं तदानीं विषयाभावात्। विद्यमानस्यैव चक्षुरादिना ज्ञानजननोपगमात्। तस्माद्द्वित्वप्रत्यक्षादिकमपेक्षाबुद्धेर्नाशकं कल्प्यते। नचापेक्षाबुद्धिनाशात् कथं द्वित्वनाश

प्रभा.

**अपेक्षाबुद्धेर्नाशादिति** ॥ अव्यवहितपूर्वक्षणे कारणतावच्छेदकसंबन्धेन गुणत्वावच्छिन्नरूपकारणसत्त्वादिति भावः ॥ **द्वित्वस्यैव नाश इति** ॥ द्वित्वस्य नाश एवेत्यर्थः ॥ **नतु द्वित्वप्रत्यक्षमिति** ॥ द्वित्वत्वावच्छिन्नद्वित्वनिष्ठलौकिकविषयताशालिप्रत्यक्षं क्वापि नोत्पत्तुमर्हतीत्यर्थः ॥ **तदानीं विषयाभावादिति** ॥ द्वित्वप्रत्यक्षोत्पत्तिक्षणे विषयरूपकारणाभावादित्यर्थः। ननु तदानीं विषयाभावेऽप्यव्यवहितपूर्वक्षणे द्वित्वरूपकारणसत्त्वात् न तत्प्रत्यक्षानुपपत्तिः अत आह ॥ **विद्यमानस्यैवेति** ॥ उत्पत्स्यमानप्रत्यक्षसमानकालीनस्यैवेत्यर्थः ॥ **चक्षुरादिनेति** ॥ ज्ञाने चक्षुरादिकरणकत्वनिवेशनं लौकिकविषयताशालिप्रत्यक्षलाभाय इन्द्रियकरणकस्यैव लौकिकविषयताशालित्वात् स्वासमानकालीनपदार्थनिष्ठलौकिकविषयताशालित्वात्मकप्रत्यक्षस्यालीकत्वादिति यावत्। तथाच प्रत्यक्षे विषयस्य कार्याव्यवहितपूर्वकालवृत्तित्वकार्यकालवृत्तित्वाभ्यामेव हेतुत्वस्वीकारात् द्वित्वादिनिर्विकल्पककाले अपेक्षाबुद्धेर्नाशस्वीकारे तादृशनिर्विकल्पकोत्पत्तिद्वितीयक्षणे द्वित्वादिरूपविषयस्यापि नाशात् तदा तादृशविषयरूपकारणाभावेन द्वित्वादिनिष्ठलौकिकविषयताशालिसविकल्पात्मकप्रत्यक्षोत्पत्तिर्न स्यात्। नचेष्टापत्तिः तदुत्तरं द्वित्वं साक्षात्करोमि इत्याद्यनुव्यवसायो न स्यादिति भावः ॥ **तस्मादिति** ॥ द्वित्वत्वावच्छिन्नद्वित्वनिष्ठलौकिकविषयताशालिप्रत्यक्षानुपपत्तिरूपबाधकवशादित्यर्थः ॥ **द्वित्वप्रत्यक्षादिकमिति** ॥ द्वित्वत्वाद्वित्वनिष्ठलौकिकविषयताशालिनिर्विकल्पकादिकमेवेत्यर्थः। आदिना त्रित्वत्वात्रित्वनिष्ठलौकिकविषयताशालिनिर्विकल्पकादेः परिग्रहः ॥ **अपेक्षाबुद्धेर्नाशकमिति** ॥ अपेक्षाबुद्धेर्नाशजनकमित्यर्थः ॥ **कल्प्यत इति** ॥ स्वीक्रियत इत्यर्थः। तथाच प्रतियोगितासंबन्धेनापेक्षाबुद्धिनाशं प्रति स्वप्रागभावाधिकरणक्षणवृत्तित्वस्वसमानकालीनत्वोभयसंबन्धेन गुणत्वेन हेतुत्वस्य पूर्वोक्तस्य आवश्यकतया तादृशकारणबलात् द्वित्वसविकल्पकक्षण एवापेक्षाबुद्धेर्नाशसंभवेन तादृशसविकल्पकोत्पत्तिद्वितीयक्षण एव द्वित्वादिनाशान्न तादृशसविकल्पकानुपपत्तिरिति भावः। यत्तु द्वित्वादिनिर्विकल्पकक्षणेऽपेक्षाबुद्धिनाशस्वीकारे द्वित्वादिनिष्ठलौकिकविषयताशालिसविकल्पकासंभवेऽपि तन्निष्ठालौकिकविषयताशालिप्रत्यक्षे बाधकाभावात् अपेक्षाबुद्धेः क्षणत्रयावस्थायित्वकल्पनमफलम्। नचैवं सति द्वित्वत्वादिनिर्विकल्पकोत्तरं द्वित्वत्वादिप्रकारकद्वित्वादिविशेष्यकप्रत्यक्षानुपपत्तिः उपनीतं विशेषणतयैव भासत इति नियमान्निर्विकल्पकस्य विशेषणतावच्छेदकप्रकारकज्ञानानात्मकतया द्वित्वत्वविशिष्टप्रकारकज्ञानस्याप्यसंभवादिति वाच्यम् तदानीं चक्षुस्संयोगघटितद्रव्यग्राहकसामग्र्याः आवश्यकत्वेन द्वित्वविशेष्यकप्रत्यक्षासंभवेऽपि घटपटौ द्वाविति विशेष्ये विशेषणमिति रीत्या घटांशे लौकिकस्य द्वित्वांशेऽलौकिकस्य प्रत्यक्षस्योत्पत्तौ बाधकाभावादिति। तन्न। प्राचीनमते निर्विकल्पकस्याप्रत्यासत्तित्वेन विशेष्ये विशेषणमिति रीत्यापि तादृशज्ञानासंभवात् तादृशज्ञानानन्तरं द्वित्वं साक्षात्करोमीत्यनुव्यवसायानुपपत्तेश्च लौकिकविषयताया एव साक्षात्कारत्वव्यञ्जकत्वात्। तस्मादपेक्षाबुद्धेः त्रिक्षणावस्थायित्वं अनायत्याङ्गीकार्यमिति प्राचीननवीनमतासिद्धान्तः। नवीनमतानुयायिनस्तु अपेक्षाबुद्धेस्त्रिक्षणावस्थायित्वे मानाभावः। नच तादृशानुव्यवसायानुपपत्तिः द्वित्वोत्पत्तिकालोत्पत्तिकपूर्वानुभवजनितसंस्कारजन्यद्वित्वत्वप्रकारकस्मरणात् द्वित्वोत्पत्तिद्वितीयक्षणे लौकिकद्वित्वत्वविशिष्टवैशिष्ट्यावगाहिप्रत्यक्षोत्पत्तिसंभवेन तादृशप्रत्यक्षमादायोक्तानुव्यसायोपपत्तेः।

दिनकरीयम्.

प्रत्यक्षानुपपत्तिरत आह ॥ **विद्यमानस्यैवेति** ॥ सम्बद्धं वर्तमानं च गृह्यते चक्षुरादिनेत्यनुरोधाल्लौकिकप्रत्यक्षं प्रति द्वित्वादेर्विषयस्य कार्यसहभावेन हेतुत्वादिति भावः। ननु योग्यविभुविशेषगुणनाशं प्रति स्वोत्तरवर्तिविशेषगुणत्वेन हेतुतयापेक्षाबुद्ध्युत्तरक्षणोत्पन्नस्मृत्या संस्कारेण वापेक्षाबुद्धिनाशः केन वारणीय इत्याशङ्कामुपसंहारव्याजेन परिहरति ॥ **तस्मादिति** ॥ **द्वित्वप्रत्यक्षादिकमिति** ॥ द्वित्वद्वित्वत्वनिर्विकल्पकमित्यर्थः। आदिना त्रित्वद्विपृथक्त्वादिप्रत्यक्षपरिग्रहः। योग्यविभुविशेषगुणत्वस्य स्वत्वस्य चानुगत-

इति वाच्यं कालान्तरे द्वित्वप्रत्यक्षाभावात् । अपेक्षाबुद्धिस्तु तदुत्पादिका तन्नाशात्तन्नाशः तन्ना-

## प्रभा

अन्यथा सुखाद्युत्पत्तिद्वितीयक्षणोत्पन्नसुखत्वादिनिर्विकल्पकानन्तरं सुखादेरेव नाशेनाहं सुखीत्याकारकसुखादिनिष्ठलौकिकविषयताशालिप्रत्यक्षानुपपत्त्या सुखादेरपि त्रिक्षणावस्थायित्वप्रसङ्गादित्याहुः । तन्न द्वित्वोत्पत्तिक्षणे नियमे द्वित्वत्वप्रकारकस्मृतौ मानाभावेन यत्र न तादृशस्मरणं तत्र द्वित्वत्वविशिष्टवैशिष्ट्यावगाहिलौकिकप्रत्यक्षानुत्पत्त्या तादृशानुव्यवसायानुपपत्तेर्दुर्वारत्वात् तदानीं नियमेन तादृशस्मृतिस्वीकारे तुल्ययुक्त्या घटादिचक्षुस्संयोगोत्पत्तिक्षणेऽपि नियमेन घटत्वादिप्रकारकस्मृतेरावश्यकतया घटादिचक्षुस्संयोगानन्तरं सर्वत्र घटत्वादिविशिष्टवैशिष्ट्यावगाहिलौकिकप्रत्यक्षस्यैवावश्यकत्वेन केवलघटत्वविशिष्टलौकिकप्रत्यक्षस्य तत्कारणनिर्विकल्पकस्य च विलयप्रसङ्गाच्च । यच्चोक्तं सुखत्वनिर्विकल्पकोत्पत्तिद्वितीयक्षणे सुखस्य नाशादहं सुखीति लौकिकप्रत्यक्षानुपपत्त्या सुखादेरपि त्रिक्षणावस्थायित्वापत्तिरिति तदप्यसङ्गतम् सुखत्वादिनिर्विकल्पकोत्तरं विशेष्ये विशेषणमिति रीत्याहं सुखीत्याकारकालौकिकप्रत्यक्षोत्पत्तौ बाधकाभावात् सुखोत्पत्तिकालोत्पत्तिकसुखत्वप्रकारकस्मृतिमादाय द्वितीयक्षणेऽहं सुखीति लौकिकप्रत्यक्षस्यापि क्वचित्संभवात् तादृशस्थल एव सुखं साक्षात्करोमीत्यनुव्यवसायोऽपि उपपद्यते । तस्माच्छब्दसुखादेस्तृतीयक्षणवृत्तिध्वंसप्रतियोगित्वस्य सर्वमतसिद्धतया तदनुरोधेन सुखोत्पत्तिद्वितीयक्षणोत्पत्तिक-अहंसुखीत्याद्याकारकप्रत्यक्षस्य सुखोत्पत्तितृतीयक्षणोत्पत्तिकतादृशप्रत्यक्षस्य च सुखत्वादिप्रकारकस्मृत्युत्तरोत्पत्तिकत्वतदभावाभ्यां लौकिकत्वालौकिकत्वोपपादनेऽपि द्वित्वादिपरार्धपर्यन्तानां सर्वेषां तृतीयक्षणवृत्तिध्वंसप्रतियोगित्वस्य सर्वमतासिद्धतया द्वित्वादिपरार्धपर्यन्तानां सर्वेषां क्षणिकत्वं परिकल्प्य द्वित्वत्वादिप्रकारकस्मृत्युत्पत्त्यनधिकरणद्वित्वाद्युत्पत्त्यधिकरणक्षणतृतीयक्षणोत्पन्नानां द्वे द्रव्ये इत्याकारकाणां सकलप्रत्यक्षाणां द्वित्वाद्यंशेऽलौकिकत्वकल्पनापेक्षया तादृशसकलप्रत्यक्षोत्तरं साक्षात्करोमीत्यनुव्यवसायापलापापेक्षया च लाघवादपेक्षाबुद्धेः त्रिक्षणावस्थायित्वकल्पनमेव युक्तम् । एवंच सर्वेषां द्वित्वादिपरार्धपर्यन्तानां चतुर्थक्षण एव नाशसंभवाद्द्वित्वाद्युत्पत्तिक्षणतृतीयक्षणोत्पत्तिकानां द्वे द्रव्ये इत्याकारकाणां सकलप्रत्यक्षाणां द्वित्वाद्यंशे लौकिकत्वं द्वे द्रव्ये इत्याकारकतादृशसकलप्रत्यक्षोत्तरं साक्षात्करोमीत्यनुव्यवसायश्च उपपद्यत इति सकलग्रन्थकाराभिप्रायः ॥ **कथं द्वित्वनाश इति** ॥ किमर्थं द्वित्वनाश इत्यर्थः । स्वीकार्य इति शेषः । तथाचैकत्वनाशस्येव द्वित्वादिनाशस्यापि आश्रयनाशजन्यत्वस्वीकारान्न चतुर्थक्षणे द्वित्वादिनाश इति भावः ॥ **कालान्तर इति** ॥ अपेक्षाबुद्धिनाशानन्तरमित्यर्थः ॥ **द्वित्वप्रत्यक्षाभावादिति** ॥ द्वित्वादिनिष्ठलौकिकविषयताशालिप्रत्यक्षानुत्पत्तेरित्यर्थः । नन्वपेक्षाबुद्धिनाशादन्यदेव नाशकमस्त्वत आह ॥ **अपेक्षाबुद्धिस्त्विति** ॥ अपेक्षाबुद्धिरेवेत्यर्थः ॥ **तदुत्पादिकेति** ॥ द्वित्वादिनिरूपितासाधारणकारणतावतीत्यर्थः ॥ **तन्नाश इति** ॥ अपेक्षाबुद्धिनाश-

## दिनकरीयम्

स्याभावेन स्वोत्तरोत्पन्नगुणत्वस्यानुगतस्याभावात्तत्तद्व्यक्तित्वेनैव नाश्यनाशकभावस्य वाच्यतया द्वित्वत्वविशिष्टप्रत्यक्षरूपकार्यानुरोधेन द्वित्वद्वित्वत्वनिर्विकल्पकस्यैव तद्व्यक्तित्वेनापेक्षाबुद्धिनाशकत्वं कल्प्यते । न तु द्वितीयक्षणोत्पन्नस्मरणादेरिति भावः । ननु द्वित्वत्वविशिष्टद्वित्वप्रत्यक्षमुपनीतभानात्मकमेवास्तु अलं तदुपपत्तये त्रिक्षणावस्थायित्वकल्पनेनापेक्षाबुद्धेः नच द्वित्वत्वांशे उपनीतभानसम्भवेऽपि द्वित्वांशेनोपनीतभानत्वमुपनीतं च विशेषणतयैवेति नियमादिति वाच्यं यतो द्वित्वत्वविशिष्टद्वित्वप्रत्यक्षं हि जायमानं द्रव्यांशे द्वित्वप्रकारकमेव भवति द्वे द्रव्ये इत्याकारकं निर्विकल्पकोत्तरक्षणे द्वे द्रव्ये इत्याकारकं द्वित्वत्वविशिष्टद्वित्वप्रकारकं प्रत्यक्षं न सम्भवति । तत्पूर्वं विशेषणतावच्छेदकद्वित्वत्वप्रकारकद्वित्वज्ञानासम्भवादिति तु न विशेष्ये विशेषणमिति रीत्यैव द्वे द्रव्ये इत्याकारकप्रत्यक्षसम्भवादिति चेन्न । निर्विकल्पकस्याप्रत्यासत्तितया द्वे द्रव्ये इत्युपनीतभानासम्भवात्तस्योपनीतभानरूपत्वे तदुत्तरं द्वित्वं साक्षात्करोमीत्यनुव्यवसायानुपपत्तेश्च । तस्मात् त्रिक्षणावस्थायित्वमपेक्षाबुद्धेरिति वैशेषिकाणामाशयः । नव्यास्तु उत्पत्स्यमानद्वित्वस्य द्वित्वत्वसामान्यलक्षणया पूर्वमनुभवात् द्वित्वोत्पत्तिसमय एव द्वित्वत्वप्रकारकमुत्पद्यमानद्वित्वस्मरणं तेन तदुत्तरक्षणे इदानीं द्वे द्रव्ये इति वि-

शक इति कल्पनात् । अत एव तत्पुरुषीयापेक्षाबुद्धिजन्यद्वित्वादिकं तेनैव गृह्यत इति कल्प्यते । नचापेक्षाबुद्धेर्द्वित्वप्रत्यक्षे कारणत्वमस्त्विति वाच्यं लाघवेन द्वित्वं प्रत्येव कारणत्वस्यैवोचि-

## प्रभा.

एवेत्यर्थः ॥ **तन्नाशक इति** ॥ द्वित्वादिनाशजनक इत्यर्थः ॥ **इति कल्पनात्** इत्याकारककल्पनायाः आवश्यकत्वादित्यर्थः । तथाच द्रव्यनाशं प्रत्यसमवायिकारणनाशहेतुतायाः क्लृप्ततया प्रकृते द्वित्वादिनाशं प्रत्यपि द्वित्वाद्यसाधारणकारणापेक्षाबुद्धिनाशस्यैव कारणत्वं स्वीक्रियते कारणनाशस्य कार्यनाशहेतुतायाः क्लृप्तत्वात् नान्यस्य अक्लृप्तत्वादिति भावः । नन्वपेक्षाबुद्धेर्द्वित्वादिहेतुत्वे चैत्रीयापेक्षाबुद्धिजन्यद्वित्वस्य चैत्रस्येवापेक्षाबुद्धिशून्यमैत्रस्यापि प्रत्यक्षापत्तिः सन्निकर्षादिघटितसामग्र्याःसत्त्वात् अत आह ॥ **अत एवेति** ॥ अपेक्षाबुद्धेः द्वित्वादिहेतुत्वस्य आवश्यकत्वादेवेत्यर्थः ॥ **तेनैव गृह्यत इति** ॥ तद्भिन्नपुरुषेण न गृह्यत इत्यर्थः ॥ **इति कल्प्यत इति** ॥ इत्यङ्गीक्रियत इत्यर्थः । तथाच द्वित्वादिनिष्ठलौकिकविषयतासंबन्धेन तत्पुरुषीयप्रत्यक्षव्यक्तिं प्रति तत्पुरुषीयापेक्षाबुद्धिजन्यद्वित्वादेः तादात्म्यसंबन्धेन तत्तद्व्यक्तित्वेन हेतुत्वस्वीकारात् नोक्तापत्तिरिति भावः । केचित्तु नन्वपेक्षाबुद्धेर्द्वित्वोत्पादकत्वे चैत्रीयापेक्षाबुद्धिजन्यद्वित्वस्यापेक्षाबुद्धिशून्येन मैत्रेण ग्रहणापत्तिः सन्निकर्षादिघटितसामग्र्याःसत्त्वात् तद्वारणाय विषयतासंबन्धेन तत्पुरुषीयद्वित्वप्रत्यक्षे तद्भिन्नपुरुषीयापेक्षाबुद्धिजन्यद्वित्वादेः तादात्म्यसंबन्धेन प्रतिबन्धकताकल्पने गौरवमत आह ॥ अत एवेति ॥ पूर्वोक्तयुक्त्यापेक्षाबुद्धेर्द्वित्वोत्पादकत्वस्यावश्यकत्वादेव ॥ तनैव गृह्यत इति कल्प्यत इति ॥ तद्भिन्नेन न गृह्यत इति कल्प्यत इत्यर्थः । तथाच अन्यथानुपपत्त्या पूर्वोक्तप्रतिबध्यप्रतिबन्धकभावकल्पनं न दोषायेति भाव इत्याहुः । तदसत् लौकिकप्रत्यक्षे विषयहेतुतायाः क्लृप्तत्वात् मदुक्तरीत्यैवोक्तापत्तिवारणे पुरुषभेदेन प्रतिबध्यप्रतिबन्धकभावकल्पनाया गौरवग्रस्तत्वात् विषयतासंबन्धेन तत्पुरुषीयप्रत्यक्षे तदन्यपुरुषीयापेक्षाबुद्धिजन्यद्वित्वस्य तादात्म्येन प्रतिबन्धकत्वे तादृशसकलद्वित्वेषु तदन्यपुरुषीयापेक्षाबुद्धिजन्यद्वित्वत्वस्य जन्यत्वघटितत्वेनाननुगततया अनुगतरूपाभावेन तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदकूटस्य हेतुत्वावश्यकतया बहूनां हेतुत्वकल्पनेन विषयनिष्ठक्लृप्तहेतुत्वस्याप्यङ्गीकारेण अतिगौरवाच्च । तस्मादत एवेत्यादिमुक्तावलीग्रन्थस्योक्तरीत्या तात्पर्यवर्णनं मूलकारानभिप्रेतमेवेति प्रतिभाति । स्वतन्त्रास्तु क्लृप्तैकत्वद्वयादिविषयकत्वेनैव द्वावित्यादिप्रत्ययोपपत्तेः अतिरिक्तद्वित्वादिसङ्ख्यायां प्रमाणाभावः नचैकत्वद्वयस्य व्याप्यवर्तमानतया कुत्रापि द्वावित्यादिप्रत्ययानुपपत्तिरिति वाच्यम् द्वित्वत्वादेरेतन्मते एकत्वद्वयान्यतरत्वादिरूपतया अयमेकोऽयमेक इत्याकारकबुद्धिविषयत्वरूपतया वा तादृशद्वित्वत्वाद्यवच्छिन्नस्य पर्याप्तिसंबन्धेनैकत्रावर्तमानतयोभयत्र वर्तमानतया च एको द्वावित्यादिप्रत्ययस्यैको न द्वाविति प्रत्ययस्य चोपपत्तेः । अपेक्षाबुद्धेः तादृशद्वित्वादिप्रत्यक्षहेतुत्वस्वीकारात् न सर्वदा द्वित्वादिप्रत्यक्षापत्तिः एवं चापेक्षाबुद्धिव्यक्तिभेदेन द्वित्वाद्यकल्पनेन तन्नाशाकल्पनेन तत्सामग्र्यकल्पनेन चातिलाघवमपीत्याहुः। इदं च मतं सर्वसिद्धान्तविरुद्धत्वात् श्रुत्यादिविरुद्धत्वाच्चानुपादेयमेवेति । नन्वपेक्षाबुद्धेः द्वित्वादिहेतुत्वे मानाभावः । न

## दिनकरीयम्.

शिष्टवैशिष्ट्यावगाहिलौकिकप्रत्यक्षसम्भवादलमपेक्षाबुद्धेस्त्रिक्षणावस्थायित्वेन अन्यथा सुखाद्युत्पादद्वितीयक्षणे सुखत्वनिर्विकल्पकमनन्तरक्षणे च सुखनाशादहं सुखीति लौकिकप्रत्यक्षं न सम्भवतीति सुखशब्दादेरपि त्रिक्षणावस्थानप्रसङ्गादिति प्राहुः। नन्वपेक्षाबुद्धेर्द्वित्वोत्पादकत्वे चैत्रीयापेक्षाबुद्धिजन्यद्वित्वस्यापेक्षाबुद्धिशून्येन मैत्रेण ग्रहणापत्तिः सन्निकर्षादिघटितसामग्र्याः सत्त्वात्तद्वारणाय विषयतासम्बन्धेन तत्पुरुषीयप्रत्यक्षे तद्भिन्नपुरुषीयापेक्षाबुद्धिजन्यद्वित्वादेस्तादात्म्येन प्रतिबन्धकत्वकल्पने च गौरवमत आह ॥ **अत एवेति** ॥ पूर्वोक्तयुक्त्यापेक्षाबुद्धेर्द्वित्वोत्पादकत्वस्यावश्यकत्वादेव ॥ **तेनैव गृह्यत इति** ॥ **कल्प्यत इति** ॥ तद्भिन्नेन न गृह्यत इति कल्प्यत इत्यर्थः । तथा चान्यथानुपपत्त्या पूर्वोक्तप्रतिबध्यप्रतिबन्धकभावकल्पनागौरवं न दोषायेति भावः । ननु कालान्तरे द्वित्वप्रत्यक्षवारणाय द्वित्वप्रत्यक्षं प्रत्येवापेक्षाबुद्धेर्हेतुत्वमस्तु न तु द्वित्वं प्रतीत्याशङ्कते ॥ **नचेति** ॥ **लाघवेनेति** ॥ द्वित्वप्रत्यक्षत्वापेक्षया द्वित्वत्वस्य कार्यतावच्छेदकस्य लघुत्वादिति भावः ।

**प्रभा.**

चैवं सति अपेक्षाबुद्धिशून्यकालेऽपि द्वित्वोत्पत्तिसंभवेनैकत्वप्रत्यक्षमिव सर्वदा सन्निकर्षबलात् द्वित्वादिप्रत्यक्षमपि कुतो नोत्पद्यत इति वाच्यम् तत्प्रत्यक्षं प्रत्येव तस्या हेतुत्वस्वीकारेणोक्तापत्तिविरहात् । नच विनिगमनाविरहः एकस्मिन्नपेक्षाबुद्धिव्यक्तिभेदेनानन्तद्वित्वादिकल्पनागौरवस्य विनिगमकत्वादित्यभिप्रायेणाशङ्कते ॥ **नचेत्यादि** ॥ **लाघवेनेति** ॥ अयं भावः । द्वित्वादिकं प्रत्यपेक्षाबुद्धेः निमित्तकारणत्वानङ्गीकारे एकत्वस्येव नित्यगतद्वित्वादेः नित्यत्वप्राप्त्या अनित्यगतद्वित्वादेः अनित्यत्वप्राप्त्या च परमाणुद्वयगतद्वित्वपरमाण्वाकाशादिगतद्वित्वानामनन्तानामेकदैकत्र समावेशापत्तिः । एवं घटाद्युत्पत्त्यनन्तरं एकत्वोत्पत्तिवत् एतद्घटव्यक्तिभिन्नद्रव्यव्यक्तयो यावत्यः तावद्व्यक्तिसङ्ख्यासमसङ्ख्याकद्वित्वानामुत्पत्त्यापत्तिः । एवं घटोत्पत्तिद्वितीयक्षण एव तस्मिन्नेव घटे कोटिकोटिद्वित्वादीनामप्युत्पत्त्यापत्तिः समवायिकारणसत्त्वात् असमवायिकारणसत्त्वात् ईश्वरादृष्टादिरूपनिमित्तकारणसत्त्वाच्च । इत्थं चैकैकस्मिन्द्रव्ये एककालावच्छेदेन अप्रामाणिककोटिकोटिद्वित्वाद्युत्पत्तिस्वीकारापेक्षया नित्यमात्रवृत्तिनित्यद्वित्वादीनां अनन्तानां कल्पनापेक्षया चातिलाघवात् द्वित्वादावेवापेक्षाबुद्धेः कारणता वाच्या । एवंच ययोरपेक्षाबुद्धिः तयोरेव द्वित्वोत्पत्तिस्वीकारान्नाप्रामाणिकानन्तद्वित्वादिकल्पनाप्रसक्तिः तस्मात् द्वित्वादावेवापेक्षाबुद्धेः कारणत्वं प्रामाणिकम् । अत एव तस्याखिलैकत्वेभ्योऽनेकविषयबुद्धिसहितेभ्यो निष्पत्तिः तन्नाशाच्च नाश इति भाष्योक्तिरपि सङ्गच्छत इति ध्येयम् । केचित्तु लाघवेनेति द्वित्वप्रत्यक्षत्वापेक्षया द्वित्वत्वस्यैव कार्यतावच्छेदकत्वस्य लघुत्वादिति भावः । ननु द्वित्वप्रत्यक्षनिष्ठं लौकिकविषयताद्वित्वत्वमेव कार्यतावच्छेदकमिति न गौरवं नचान्तरेणापि अपेक्षाबुद्धिं द्वित्वप्रत्यक्षापत्तिः एतावताप्यवारितैवेति वाच्यम् । द्वित्वत्वाविषयकद्वित्वप्रत्यक्षस्यालीकतया अव्यापकीभूतद्वित्वत्वावच्छिन्नजनकसामग्रीविरहादेव तद्वारणादिति चेन्न उत्पादकसामग्र्या व्यञ्जकताङ्गीकारे घटाद्युत्पादकसामग्र्या अपि घटादिव्यञ्जकत्वापत्त्या सत्कार्यवादापत्तेरिति लाघवेनेति ग्रन्थस्याभिप्रायमाहुः । तदसत् द्वित्वप्रत्यक्षत्वापेक्षया द्वित्वत्वजातेः लघुत्वेऽपि अपेक्षाबुद्धिव्यक्तिभेदेनानन्तद्वित्वादिकल्पनागौरवग्रस्ततया तत्पुरुषीयद्वित्वादिप्रत्यक्षं प्रति तदन्यपुरुषीयापेक्षाबुद्धिजन्यद्वित्वादेः प्रतिबन्धकत्वकल्पनागौरवग्रस्ततया तत्तद्व्यक्तिभेदकूटस्य कारणत्वकल्पनागौरवग्रस्ततया च तादृशलाघवस्याकिञ्चित्करत्वात् । द्वित्वप्रत्यक्षत्वस्य कार्यतावच्छेदकत्वे तु अपेक्षाबुद्धिव्यक्तिभेदेन द्वित्वाद्यकल्पनादुक्तरीत्यानन्तद्वित्वादेर्द्वित्वप्रत्यक्षं प्रति प्रतिबन्धकत्वाकल्पनात्तत्तद्द्वित्वाद्यभावकूटस्य हेतुत्वाकल्पनाच्चातिलाघवम् । तस्मादुक्तरीत्या द्वित्वादिप्रत्यक्षत्वस्य द्वित्वत्वाद्यपेक्षया गौरवप्रदर्शनमकिञ्चित्करम् । नच लाघवात् द्वित्वत्वस्य कार्यतावच्छेदकत्वे सिद्धेऽनन्तद्वित्वादिकल्पनागौरवं न दोषाय फलमुखत्वादिति वाच्यम् कारणतावच्छेदकलाघवस्योत्तरकालीनवस्त्वन्तरकल्पनागौरवग्रस्तस्यादोषत्वेऽपि कार्यतावच्छेदकलाघवस्य दोषग्रस्तस्य दुष्टत्वसम्पादकत्वादन्यथा वह्निव्याप्यवत्तापरामर्शकार्यतावच्छेदकताया वह्निविधेयकानुमितित्वस्य गुरुतया केवलानुमितित्वजातावेव स्वीकारापत्तेः तदनुरोधेन तादृशपरामर्शादनुमित्यन्तरोत्पत्त्यापत्तेश्च । वस्तुतस्तु तत्तद्द्वित्वादिप्रकारकप्रत्यक्षव्यक्तित्वावच्छिन्नं प्रति तत्तदपेक्षाबुद्धिव्यक्तेः तत्तद्व्यक्तित्वेन हेतुतया कार्यतावच्छेदकगौरवस्याप्यप्रसक्तेर्द्वित्वादिप्रत्यक्षं प्रत्येव हेतुत्वमावश्यकमिति । यच्च लौकिकविषयतासंबन्धेन द्वित्वत्वमेवापेक्षाबुद्धिनिष्ठकारणतानिरूपितप्रत्यक्षनिष्ठकार्यतावच्छेदकमिति नोक्तगौरवप्रसक्तिः । नच तथा सत्यपेक्षाबुद्धिशून्यकाले द्वित्वप्रत्यक्षापत्तिर्दुर्वारा द्वित्वप्रत्यक्षं प्रत्यपेक्षाबुद्धेः कारणत्वालाभादिति वाच्यम् द्वित्वत्वाविषयकद्वित्वविषयकप्रत्यक्षाप्रसिद्ध्या द्वित्वनिष्ठलौकिकविषयताशालिप्रत्यक्षत्वव्यापकं द्वित्वत्वनिष्ठलौकिकविषयताशालिप्रत्यक्षत्वमिति अपेक्षाबुद्धिशून्यकाले द्वित्वत्वनिष्ठलौकिकविषयताशालिप्रत्यक्षानुत्पत्तौ व्यापकधर्मावच्छिन्नाभावे सुतरां व्याप्यधर्मावच्छिन्नाभाव इति नियमेन द्वित्वनिष्ठलौकिकविषयताशालिप्रत्यक्षोत्पत्त्यापत्तेरपि वारणसंभवादित्यर्थकनन्वित्यादितद्वारणादित्यन्तग्रन्थस्य इति चेन्नेत्यादिसत्कार्यवादापत्तेरित्यन्तग्रन्थेन खण्डनं कृतम् । तदपि न समवायिकारणासमवायिकारणघटितकारणकलापस्यैव द्वित्वोत्पादकसामग्रीरूपतया तादृशसामग्रीमात्रस्य व्यञ्जकत्वाभ्युपगम एवोक्तदोषप्रसक्तेः । प्रकृते उत्पादकसामग्रीभिन्नव्यञ्जकसामग्र्या उभयमतसिद्धतयोत्पादकसामग्रीघटकत्वेन

तत्वात् । अतीन्द्रिये द्व्यणुकादावपेक्षाबुद्धिर्योगिनाम् । सर्गादिकालीनपरमाण्वादावीश्वरीयापेक्षाबुद्धिः ब्रह्माण्डान्तरवर्तियोगिनामपेक्षाबुद्धिर्वा द्वित्वादिकारणमिति ॥ १०८ ॥

## प्रभा.

भवदभिमतयत्किञ्चित्कारणस्य व्यञ्जकसामग्रीप्रविष्टत्वाङ्गीकारमात्रेण सत्कार्यवादापत्तेरसंभवात्तैः पृथक् उत्पादकसामग्र्यनभ्युपगमादिति । नन्विमौ द्वाविति घटपटादिविशेष्यकद्वित्वादिप्रकारकलौकिकप्रत्यक्षबलात् घटपटादिविशेष्यकानेकैकत्वप्रकारकापेक्षाबुद्ध्यात्मककारणसंभवाच्च घटपटादौ द्वित्वाद्युत्पत्तिसंभवेऽपि परमाण्वादिरूपातीन्द्रियद्रव्ये द्वित्वादिप्रत्यक्षस्यापेक्षाबुद्धेश्चाननुभाविकतया प्रमाणाभावेन क्लृप्तकारणाभावेन च न तत्र द्वित्वाद्युत्पत्तिसंभवः। नचेष्टापत्तिः। द्व्यणुकादिपरिमाणं प्रति परमाण्वादिगतद्वित्वादिसङ्ख्याया एवासमवायिकारणतया परमाण्वादौ तदभावात् द्व्यणुकादेः परिमाणाभावप्रसङ्गात् परमाणुद्वयमित्यादिप्रामाणिकव्यवहारानुपपत्तिप्रसङ्गाच्चेत्यत आह ॥ **अतीन्द्रिये द्व्यणुकादाविति** ॥ आदिना परमाणुपरिग्रहः ॥ **योगिनामिति** ॥ तथाच परमाणुविशेष्यकास्मदाद्यपेक्षाबुद्ध्यसंभवेऽपि सर्वज्ञयोगिनां अपेक्षाबुद्ध्यैव परमाण्वादिषु द्वित्वाद्युत्पत्तिसंभवान्नोक्तदोष इति भावः। नन्विदानीं योगिनामपेक्षाबुद्धिवशात् तत्र द्वित्वाद्युत्पत्तिसंभवेऽपि सर्गादौ योगिनामसत्त्वात् तदा तत्र कथं द्वित्वाद्युत्पत्तिरत आह ॥ **सर्गादिकालीनेति** ॥ आदिना प्रळयपरिग्रहः । तथाच सर्गे प्रळये च योगिनामसत्त्वेऽपि ईश्वरीयापेक्षाबुद्धिवशात् तत्र द्वित्वाद्युत्पत्तौ बाधकाभाव इति भावः। नन्वीश्वरीयापेक्षाबुद्धेः द्वित्वाद्युत्पादकत्वे तस्या नित्यत्वेन नाशाभावान्नाशकाभावेन तज्जन्यद्वित्वादेरपि नाशानुपपत्त्या नित्यद्वित्वादेरपि स्वीकारापत्तिरत आह ॥ **ब्रह्माण्डान्तरवर्तियोगिनामिति** ॥ तथाच महाप्रळये मानाभावात् सकलब्रह्माण्डानां एकदा नाशानङ्गीकाराच्चैकसर्गोत्पत्तिकाले तस्य प्रळयकाले वा ब्रह्माण्डान्तरवर्तियोगिनामपेक्षाबुद्धिवशात् परमाणुषु द्वित्वाद्युत्पत्तौ बाधकाभाव इति भावः। नन्वीश्वरीयापेक्षाबुद्धेः द्वित्वाद्युत्पादकत्वेऽपि न क्षतिः तत्तत्कार्यं प्रति तत्तत्कालस्य कारणतया ईश्वरीयापेक्षाबुद्धिजन्यद्वित्वादेः कारणीभूततत्तत्कालविशेषनाशादेव नाशस्वीकारात् क्वचिदाश्रयनाशस्य हेतुत्ववत् क्वचित्कालविशेषनाशस्य द्वित्वादिनाशकत्वे बाधकाभावात् अपेक्षाबुद्धिनाशाच्चेति मूलस्थचशब्दास्यानुक्तसमुच्चायकतया आश्रयनाशकालविशेषनाशयोरपि तन्नाशकत्वलाभात् । नचेश्वरीयापेक्षाबुद्धेः द्वित्वाद्युत्पादकत्वे घटादावपि तादृशापेक्षाबुद्धिवशात् द्वित्वाद्युत्पत्त्यापत्तिरिति वाच्यम् । इष्टापत्तेराश्रयना—

## दिनकरीयम्.

ननु द्वित्वप्रत्यक्षनिष्ठं लौकिकविषयितया द्वित्वत्वमेव कार्यतावच्छेदकमिति न गौरवं नचान्तरेणाप्यपेक्षाबुद्धिं द्वित्वप्रत्यक्षापत्तिरेतावताप्यवारितैवेति वाच्यं द्वित्वत्वाविषयकद्वित्वप्रत्यक्षस्यालीकतया व्यापकीभूतद्वित्वत्वावच्छिन्नजनकसामग्रीविरहादेव तद्वारणादिति चेन्न उत्पादकसामग्र्या व्यञ्जकत्वाङ्गीकारे घटाद्युत्पादकसामग्र्या अपि घटादिव्यञ्जकत्वापत्त्या सत्कार्यवादापत्तेरिति । नन्वपेक्षाबुद्धेर्द्वित्वाद्युत्पादकत्वं न सम्भवति द्व्यणुकस्यास्मदीयप्रत्यक्षागोचरतया तत्रापेक्षाबुद्ध्यसम्भवेन तत्र त्रित्वानुत्पत्त्यापत्तेः नचेष्टापत्तिः भावकार्यस्यासमवायिकारणजन्यत्वनियमेन द्व्यणुकगतत्रित्वं विना त्र्यणुकपरिमाणानुत्पत्तेः परिमाणस्य स्वसमानजातीयोत्कृष्टपरिमाणजनकत्वनियमेन द्व्यणुकपरिमाणस्य तत्रासमवायिकारणत्वासम्भवादत आह ॥ **अतीन्द्रिये द्व्यणुकादाविति** ॥ आदिना परमाणुपरिग्रहः । सर्गादौ योगिनामभावादाह ॥ **ईश्वरीयेति** ॥ नन्वेश्वरीयापेक्षाबुद्धेर्द्वित्वोत्पादकत्वे तद्द्वित्वस्य नित्यत्वप्रसङ्गः ईश्वरीयापेक्षाबुद्धेर्नित्यत्वेन तन्नाशनाश्यत्वस्य तादृशद्वित्वे वक्तुमशक्यत्वादिति वाच्यं तद्द्वित्वस्येश्वरीयापेक्षाबुद्धिसहकारिविशेषस्य क्षणविशेषस्य नाशादेव नाशोपपत्तेः क्षणविशेषस्येश्वरीयापेक्षाबुद्धिसहकारित्वानङ्गीकारे सर्गाद्यकालीनपरमाणुद्वित्वोत्पत्तेः पूर्वं तद्द्वित्वोत्पादापत्तेः अपेक्षाबुद्धिनाशाच्चेति मूलस्याश्रयनाशोपलक्षकत्ववदीश्वरीयापेक्षाबुद्धिसहकारिविशेषक्षणविशेषनाशोपलक्षकत्वस्वीकाराच्च न तद्विरोधः एतेन घटाद्युत्पत्तिद्वितीयक्षणे भगवदपेक्षाबुद्ध्या तत्र द्वित्वादिकं जन्यत इति परास्तम् । तदानीं सहकारिक्षणविशेषस्याभावेन भगवदपेक्षाबुद्ध्या द्वित्वादेरजननात्तदानीं तत्र द्वित्वोत्पादे मानाभावाच्च एतदस्वरसादाह ॥ **ब्रह्माण्डान्तरेति** ॥ १०८ ॥

अनेकैकत्वबुद्धिर्या सापेक्षाबुद्धिरिष्यते ।

अपेक्षाबुद्धिः केत्यत आह ॥ अनेकैकत्वेति ॥ अयमेकोऽयमेक इत्याकारिकेत्यर्थः । इदं तु बोध्यं यत्रानियतैकत्वज्ञानं तत्र त्रित्वादिभिन्ना बहुत्वसङ्ख्योत्पद्यते यथा सेनावनादाविति कन्दलीकारः । आचार्यास्तु त्रित्वादिकमेव बहुत्वं मन्यन्ते । तथा च त्रित्वत्वादि

**प्रभा .**

शादेव तन्नाशसंभवात् । सर्गाद्यकालीनक्षणविशेषसहकृततादृशापेक्षाबुद्धेरेव द्वित्वाद्युत्पादकत्वस्वीकारात् घटाद्युत्पत्तिक्षणस्य तादृशक्षणविशेषरूपत्वाभावेन कालविशेषरूपसहकारिकारणाभावात् घटाद्युत्पत्तिद्वितीयक्षणे भगवदपेक्षाबुद्ध्या तत्र द्वित्वाद्युत्पत्तेरसंभवाच्चेति चेन्न भगवदपेक्षाबुद्धिजन्यपरमाणुसमवेतद्वित्वादिनिरूपितसहकारिकारणताश्रयक्षणविशेषनाशस्यैव तादृशद्वित्वादिनाशकत्वस्वीकारे कारणीभूतक्षणविशेषस्य द्वित्वाद्युत्पत्तिकाले नाशाद्द्वित्वाद्युत्पत्तिद्वितीयक्षणे द्वित्वादिनाशापत्तेरेवमाश्रयनाशस्य स्वसमवेतकार्यनाशं प्रत्येव हेतुतया द्वित्वादिनाशत्वेन आश्रयनाशत्वेन च कार्यकारणभावे मानाभावात् आश्रयनाशदृष्टान्तेन क्षणविशेषनाशस्य द्वित्वादिनाशहेतुत्वव्यवस्थापनस्याप्यसंभवात् । तस्मादाश्रयनाशस्य क्षणविशेषनाशस्य वा द्वित्वादिनाशत्वावच्छिन्नं प्रति द्वित्वादिनाशव्यक्तित्वावच्छिन्नं प्रति वा कारणतायां प्रमाणाभावेन अपेक्षाबुद्धिनाशाच्चेति मूलस्थचशब्दस्य तादृशोभयपरत्वासंभवात् अवधारणार्थकत्वमेवावश्यकमिति भगवदपेक्षाबुद्धेर्द्वित्वाद्युत्पादकत्वमप्रामाणिकमेवेति ॥ १०८ ॥

**केत्यत आहेति** ॥ कीदृशीति शिष्यजिज्ञासायां तन्निवृत्त्यर्थमपेक्षाबुद्धिस्वरूपमाहेत्यर्थः । नन्वनेकैकत्वबुद्धिरिति मूलात् अनेकपदार्थविशेष्यकैकत्वप्रकारकज्ञानमपेक्षाबुद्धिरित्यर्थो लभ्यते तथा सत्येक एक इत्याकारकनिर्धर्मितावच्छेदककैकत्वप्रकारकज्ञानादपि द्वित्वाद्युत्पादापत्तेः अतस्तादृशमूलं सधर्मितावच्छेदककतादृशज्ञानपरतया व्याचष्टे ॥ **मुक्तावल्यामयमेकोऽयमेक इति** ॥ अनेकपदार्थनिष्ठसावच्छिन्नानेकविशेष्यतानिरूपितैकत्वत्वावच्छिन्नप्रकारताशालिप्रत्यक्षरूपेत्यर्थः । नन्वेतादृशापेक्षाबुद्धेर्द्वित्वाद्युत्पादकत्वे यत्र दशैकादशादिपदार्थविशेष्यकैकत्वप्रकारकज्ञानं तत्र बुहुत्वसङ्ख्याया इव दशत्वादेरप्युत्पत्त्यापत्तिः कारणसत्त्वान्नचेष्टापत्तिः तादृशापेक्षाबुद्ध्युत्तरं इमे बहव इत्याकारकबहुत्वविषयकप्रत्यक्षस्यैवानुभवसिद्धत्वात् इमे दशेत्याद्याकारकदशत्वादिप्रत्यक्षस्यानुभाविकत्वाच्चेत्याशङ्कां कन्दलीकारमतनिराकरणपूर्वकमाचार्यमतानुसारेण निराकर्तुं आदौ कन्दलीकारमतमाह ॥ **इदन्तु बोध्यमिति** ॥ **यत्रेति** ॥ यद्द्रव्यनिष्ठसावच्छिन्नानेकविशेष्यताकमित्यर्थः ॥ **अनियतैकैकत्वज्ञानमिति** ॥ सङ्ख्यात्वव्याप्यद्वित्वत्वाद्यवच्छिन्नाप्रकारकमेकत्वप्रकारकप्रत्यक्षमित्यर्थः ॥ **तत्रेति** ॥ तत्द्द्रव्य इत्यर्थः ॥ **त्रित्वादिभिन्नेति** ॥ त्रित्वत्वादिपरार्धत्वत्वान्तसङ्ख्याविभाजकधर्मान्यतमशून्येत्यर्थः । बहुत्वसङ्ख्योत्पत्तिस्थलमुदाहरति ॥ **यथेति** ॥ **सेनावनादाविति** ॥ रथगजतुरगपदातिसमुदायस्सेना वृक्षादीनां समूहो वनं आदिना सभापरिग्रहः महतां समाजः सभा । एतेषु द्रव्येष्वित्यर्थः । अयं भावः अनेकद्रव्यविशेष्यकं द्वित्वत्वाद्यवच्छिन्नप्रकारकं एकत्वत्वावच्छिन्नप्रकारताकं च यत्प्रत्यक्षं तदेव नियतैकत्वज्ञानं तत्स्वरूपं च इमौ द्वौ अयमेक इमे त्रयः अयमेक इत्याकारकं तस्मादेव त्रित्वत्वाद्यवच्छिन्नमुत्पद्यते सेनावनादौ तु इमे शतं अयमेक इत्याद्याकारकापेक्षाबुद्ध्यभावात् तत्र एकोत्तरशतत्वाद्यवच्छिन्नसङ्ख्या नोत्पद्यते किंतु अयमेकोऽयमेक इत्याद्याकारकानेकद्रव्यविशेष्यकद्वित्वत्वाद्यवच्छिन्नाप्रकारकैकत्वत्वावच्छिन्नप्रकारकानियतैकत्वज्ञानात्मकापेक्षाबुद्धिवशात् तादृशबहुत्वसङ्ख्या उत्पद्यत इति ॥ **इति कन्दलीकार इति** ॥ इत्यर्थं कन्दलीकार आहेत्यर्थः ॥ **त्रित्वादिकमेवेति** ॥ आदिना

**दिनकरीयम् .**

**इत्यतः** इत्याकाङ्क्षातः । नन्वेकत्वांशे निर्धर्मितावच्छेदकैकत्वज्ञानात् द्वित्वाद्युत्पत्त्यापत्तिरतो व्याचष्टे ॥ **अयमेक इति** ॥ तत्तद्व्यक्तिमात्रनिष्ठेदन्त्वावच्छिन्नविशेष्यतानिरूपितैकत्वप्रकारताशालिनी बुद्धिरपेक्षाबुद्धिपदार्थ इति भावः । कचित्पुस्तके इदं तु बोध्यमित्याद्यवधेयमित्यन्तः पाठः स चैवं व्याख्येयः । यत्रा-

व्यापिका बहुत्वत्वजातिर्नातिरिच्यते। सेनावनादावुत्पन्नेऽपि त्रित्वादौ त्रित्वत्वाद्यग्रहो दोषात्। इत्थं चेतो बहुतरेयं सेनेति प्रतीतिरुपपद्यते बहुत्वस्य सङ्ख्यान्तरत्वे तु तत्तारतम्या-

प्रभा।

चतुष्ट्वादिपरार्धत्वान्तसङ्ख्यापरिग्रहः। एवकारेण तद्भिन्नत्वव्यवच्छेदः। तथाच बहुत्वं त्रित्वादिपरार्धत्वान्तान्यतमभिन्नं न किन्तु तदात्मकमेवेत्यङ्गीकुर्वन्तीति फलितार्थः॥ **तथाचेति**॥ बहुत्वस्य त्रित्वादावभिन्नत्वे चेत्यर्थः॥ **त्रित्वत्वादिव्यापिकेति**॥ त्रित्वत्वादिपरार्धत्वत्वान्तान्यतमव्यापिकैवेत्यर्थः। नन्वेवं सति निरुक्तनियतैकत्वप्रकारकज्ञानस्येव निरुक्तानियतैकत्वज्ञानस्यापि त्रित्वाद्युत्पादकत्वावश्यकतया सेनावनादौ तादृशानियतैकत्वादिज्ञानात् त्रित्वाद्युत्पादापत्तिः इष्टापत्तौ त्रित्वत्वाद्यवच्छिन्नलौकिकप्रकारताशालिसाक्षात्कारापत्तिरत आह॥ **सेनावनादाविति**॥ **त्रित्वत्वाद्यग्रह इति**॥ त्रित्वत्वाद्यवच्छिन्नलौकिकविषयताशालिप्रत्यक्षाभाव इत्यर्थः॥ **दोषादिति**॥ कारणाभावात् त्रित्वत्वादावनियतैकत्वज्ञानजन्यतावच्छेदकत्वाभावरूपदोषाच्चेत्यर्थः। अयं भावः त्रित्वत्वाद्यवच्छिन्नलौकिकविषयतासंबन्धेन त्रित्वत्वादिनिष्ठलौकिकविषयतासंबन्धेन वा तत्पुरुषीयप्रत्यक्षं प्रति द्वित्वत्वाद्यवच्छिन्नप्रकारकं एकत्वत्वाद्यवच्छिन्नप्रकारकं च यदनेकद्रव्यविशेष्यकतत्पुरुषीयप्रत्यक्षं जन्यतावच्छेदकत्वसंबन्धेन तद्विशिष्टत्रित्वत्वादिविशिष्टस्य जन्यतावच्छेदकत्वसंबन्धेन तादृशप्रत्यक्षविशिष्टत्रित्वत्वादेर्वा तादात्म्यसंबन्धेन हेतुत्वम्। एवं बहुत्वत्वावच्छिन्नलौकिकविषयतासंबन्धेन बहुत्वत्वनिष्ठलौकिकविषयतासंबन्धेन वा तत्पुरुषीयप्रत्यक्षं प्रति द्वित्वत्वाद्यवच्छिन्नाप्रकारकमेकत्वावच्छिन्नैकत्वत्रित्वनिष्ठप्रकारताकं च यदनेकपदार्थविशेष्यकतत्पुरुषीयप्रत्यक्षं जन्यतावच्छेदकत्वसंबन्धेन तद्विशिष्टबहुत्वत्वविशिष्टस्य तादृशजन्यतावच्छेदकत्वसंबन्धेन तादृशप्रत्यक्षविशिष्टबहुत्वत्वस्य वा तादात्म्यसंबन्धेन हेतुत्वमित्याचार्यमते कार्यकारणभावः फलितः। एवंच घटपटादौ यदा द्वित्वत्वावच्छिन्नप्रकारकमेकत्वत्वावच्छिन्नप्रकारकं चानेकद्रव्यविशेष्यकप्रत्यक्षं यस्य पुरुषस्य भवति तदुत्तरं त्रित्वत्वाद्यवच्छिन्नोत्पत्त्या तदुत्तरक्षणे तस्य पुरुषस्य त्रित्वत्वादिप्रकारेण त्रित्वादिप्रत्यक्षं भवति यदा तु द्वित्वत्वाद्यनवच्छिन्नाप्रकारकमेकत्वावच्छिन्नविशेष्यक-एकत्वत्रितयादिनिष्ठप्रकारताशाल्ययमेकोऽयमेकइत्याकारकप्रत्यक्षं यस्य पुरुषस्य भवति तदुत्तरक्षणे बहुत्वत्वावच्छिन्नत्रित्वादेः उत्पत्तावपि त्रित्वत्वादेर्निरुक्तनियतापेक्षाबुद्धिकार्यतावच्छेदकत्वाभावात् तादृशकार्यतावच्छेदकत्वसंबन्धेन तादृशापेक्षाबुद्धिविशिष्टत्रित्वत्वादिविशिष्टत्रित्वादिरूपकारणाभावेन तदुत्तरक्षणे तस्य पुरुषस्य त्रित्वत्वादिप्रकारेण त्रित्वादेर्न लौकिकप्रत्यक्षं किन्तु बहुत्वत्वादेर्निरुक्तानियतापेक्षाबुद्धिकार्यतावच्छेदकत्वेन तदुत्तरमुत्पन्नत्रित्वादेः इमे बहव इत्याकारकबहुत्वत्वप्रकारेणैव लौकिकप्रत्यक्षं भवति जन्यतावच्छेदकत्वसंबन्धेन तादृशापेक्षाबुद्धिविशिष्टबहुत्वत्वविशिष्टत्रित्वादिरूपकारणसत्त्वात् सेनावनादौ तु कदापि कस्यापि पुरुषस्य द्वित्वत्वाद्यवच्छिन्नप्रकारकतादृशापेक्षाबुद्ध्यनुत्पत्तावपि द्वित्वत्वाद्यवच्छिन्नाप्रकारकतादृशापेक्षाबुद्ध्युत्पत्त्या तदुत्तरक्षणे शतत्वसहस्रत्वादेः उत्पत्तावपि जन्यतावच्छेदकत्वसंबन्धेन द्वित्वत्वाद्यवच्छिन्नप्रकारकतादृशापेक्षाबुद्धिविशिष्टत्रित्वत्वादिविशिष्टत्रित्वादिरूपकारणाभावात् जन्यतावच्छेदकत्वसंबन्धेन द्वित्वत्वाद्यवच्छिन्नाप्रकारकनिरुक्तानियता-

दिनकरीयम्।

नियतैकत्वेति एकत्वविशेष्यकसङ्ख्यात्वनियतत्रित्वादिप्रकारकज्ञानशून्यकालीनमनेकैकत्वज्ञानमित्यर्थः। यद्वा एकत्वांशे निर्धर्मितावच्छेदककमेकत्वसङ्ख्यायोगिन इत्याकारकज्ञानमित्यर्थः॥ **सेनावनादाविति**॥ तत्र नियतैकत्वज्ञानाभावात्तस्यैव सहस्रत्वादिसङ्ख्योत्पादकत्वादिति भावः॥ **उत्पन्नेऽपीति**॥ अनियतैकत्वज्ञानस्यापि त्रित्वाद्युत्पादकत्वादिति भावः॥ **दोषात्** नियतानेकैकत्वज्ञानाभावात्। अनियतानेकैकत्वज्ञानस्य त्रित्वोत्पत्तिकारणत्वेऽपि त्रित्वांशे त्रित्वत्वप्रकारकप्रत्यक्षे नियतानेकैकत्वज्ञानस्यैव हेतुतया तं विना न त्रित्वत्वादिप्रकारकं प्रत्यक्षमिति भावः॥ **उपपद्यत इति**॥ इतो बहुतरेयत्र बहुत्वे स्वसजातीयनिरूपितोत्कर्षः प्रतीयते। तथा च चतुष्ट्वादिरूपे बहुत्वे त्रित्वादिरूपस्वसजातीयनिरूपितोत्कर्षस्य सत्त्वात्तादृशप्रतीतिरुपपद्यत इति भावः॥ **सङ्ख्यान्तरत्वे** त्रित्वाद्यतिरिक्तसङ्ख्यात्वे॥ **तत्तारतम्याभावादिति**॥ ब-

परिमाणं भवेन्मानव्यवहारस्य कारणम् ॥ १०९ ॥
अणु दीर्घं महद्ध्रस्वमिति तद्भेद ईरितः ।
अनित्ये तदनित्यं स्यान्नित्ये नित्यमुदाहृतम् ॥ ११० ॥
सङ्ख्यातः परिमाणाच्च प्रचयादपि जायते ।
अनित्यं द्व्यणुकादौ तु सङ्ख्याजन्यमुदाहृतम् ॥ १११ ॥

भावान्नोपपद्येदित्यवधेयम् ॥ परिमाणं निरूपयति ॥ परिमाणमिति ॥ मान-

## प्रभा.

पेक्षाबुद्धिविशिष्टबहुत्वत्वादिविशिष्टत्रित्वादिरूपकारणसत्त्वाच्च इमे शतं सहस्रमित्याद्याकारकशतत्वाद्यवच्छिन्न-लौकिकविषयताशालिप्रत्यक्षानुत्पत्तिः इमे बहव इत्याकारकबहुत्वत्वावच्छिन्नत्रित्वादिनिष्ठलौकिकविषयताशालिप्रत्यक्षोत्पत्तिश्च भवतीति न किंचिदनुपपन्नमिति ॥ इत्थं चेति ॥बहुत्वस्य त्रित्वादिरूपत्वस्वीकार एवेत्यर्थः। **इतो बहुतरेयं सेनेति** ॥ इयं सेना इतो बहुतरा बहुतमेत्यर्थः ॥ **इति प्रतीतिरुपपद्यत इति** ॥ इत्याकारकप्रत्यक्षं प्रमात्वेनाभ्रान्तैर्ज्ञातुं शक्यत इत्यर्थः । तत्सेनापर्याप्तसहस्रत्वादिरूपबहुत्वसङ्ख्याधिकलक्षत्वादिरूपबहुत्वसङ्ख्यापर्याप्त्यधिकरणत्वस्यैतत्सेनायां सत्त्वादिति भावः । कन्दळीकारमतं दूषयति ॥ **बहुत्वस्येति** ॥ **संख्यान्तरत्वे त्विति** ॥ क्लृप्तसङ्ख्याविभाजकधर्मान्यतमशून्यसङ्ख्यारूपत्वमते त्वित्यर्थः । तुरवधारणे ॥ **तारतम्याभावादिति** ॥ अत्र बहुत्वत्वजातेरेकत्वात् तद्व्याप्यानेकवैजात्यानङ्गीकारे प्रमाणाभावाच्च तत्सेनापर्याप्तबहुत्वसङ्ख्यावधिकोत्कर्षस्यालीकतया तादृशोत्कर्षाश्रयबहुत्वसङ्ख्यापर्याप्त्यधिकरणत्वस्यैतत्सेनायां सुतरामप्रसिद्ध्या तादृशप्रतीतेर्भ्रमत्वेन अभ्रान्तानां प्रमात्वप्रत्ययानुपपत्तिः तादृशप्रत्ययोपपादनायं बहुत्वेऽनेकवैजात्याङ्गीकारे क्लृप्तत्रित्वादिभिन्नबहुत्वसङ्ख्याकल्पने तत्रानन्तवैजात्यकल्पने चातिगौरवात् तदपेक्षया बहुत्वस्य क्लृप्तत्रित्वादिरूपत्वमङ्गीकृत्य तत्त क्लृप्तत्रित्वत्वादिरूपानन्तवैजात्यमादाय तारतम्यप्रत्ययस्य प्रमात्वप्रतिपादनानौचित्यादित्याशयः । नच बहुत्वस्य त्रित्वाद्यभिन्नत्वे बहुत्वत्वावच्छिन्नप्रकारताशालिनिश्चयकाले त्रित्वत्वाद्यवच्छिन्नप्रकारकसंशयो न स्यात् त्रित्वत्वादेः बहुत्वत्वादिरूपेण निश्चितत्वादिति वाच्यम् बहुत्वत्वावच्छिन्नप्रकारकनिश्चयस्य तद्धर्मावच्छिन्नाभावप्रकारकबुद्धिं प्रत्येव प्रतिबन्धकतया तादृशनिश्चयकाले त्रित्वत्वाद्यवच्छिन्नप्रकारकसंशयोत्पत्तौ बाधकाभावात् ॥ इति सङ्ख्याग्रन्थः ॥ परिमाणं मानव्यवहारकारणमिति भाष्यानुसारेण परिमाणलक्षणमाह ॥ **मूले परिमाणमिति** ॥ मानव्यवहारकारणत्वस्य कालमात्रे आकाशादौ च सत्त्वादतिव्याप्तिरत आह ॥ **मुक्तावळ्यां मानव्यवहारासाधारणं परिमाणमिति** ॥ घटो महानित्यादिशब्दनिष्ठवाच्यतासंबन्धावच्छिन्नकार्यतानिरूपितसमवायसंबन्धावच्छिन्नकारणत्वं परिमाणलक्षणमित्यर्थः । अत्रापि सङ्ख्यालक्षणोक्तरीत्या अव्याप्तिवारणाय तादृशकारणत्वसमानाधिकरणरूपासमवेतजातिमत्त्वमेव परिमाणसामान्यलक्षणम् । एवं तादृशकारणत्वसमानाधिकरणदीर्घत्वावृत्तिजातिमत्त्वं महत्त्वलक्षणम् । एवं महत्पदस्थाने दीर्घादिपदं अणुपदं च निक्षिप्य तादृशजातिरूपदीर्घत्वत्वह्रस्वत्वत्वाणुत्वत्वमादाय दीर्घत्वह्रस्वत्वाणुत्वानां लक्षणं बोध्यम् । इदमुपलक्षणम् । परिमाणपदशक्यतावच्छेदकतया सिद्धजातिविशेषरूपपरिमाणत्वं परिमाणसामान्यलक्षणम् । एवं अणुत्वादिपदशक्यतावच्छेदकतया सिद्धजातिविशेषरूपाणुत्वत्वादिमत्त्वं अणुत्वादिचतुर्णां विशेषलक्षणमित्यपि बोध्यम् ।अत्राणुत्वं परिमाणं महत्त्वं परिमाणमित्याद्यनुगतप्रतीत्या परिमाणत्वजातिसिद्धिः । तादृशजातिविशेषवत्त्वं परिमाणसामान्यलक्षणम् । एवं अणुत्वं महत्त्वं दीर्घत्वं ह्रस्वत्वमित्यनुगतप्रतीत्याणुत्वत्वादिजातिरपि सिध्यति । तत्तज्जातिविशेषवत्त्वं अणुत्वादि-

## दिनकरीयम्.

हुत्वे स्वसजातीयोत्कर्षाभावात्तव मते तस्यैकरूपत्वादिति भावः । नच बहुत्वस्य त्रित्वादिरूपत्वे बहुत्वनिश्चये कथं त्रित्वादिसंशय इति वाच्यं समानप्रकारकनिश्चयस्यैव संशयविरोधितया बहुत्वत्वप्रकारकनिश्चयस्य त्रित्वत्वा-

व्यवहारासाधारणं कारणं परिमाणमित्यर्थः। तच्चतुर्विधम्। अणु महद्दीर्घं ह्रस्वं चेति॥ तत् परिमाणम्। नित्यमित्यत्र परिमाणमित्यनुषज्यते। जायत इत्यत्रापि परिमाणमित्यनुवर्तते। अनित्यमिति पूर्वेणान्वितम्। तथा चानित्यपरिमाणं सङ्ख्याजन्यं परिमाणजन्यं प्रचयजन्यं चेत्यर्थः। तत्र सङ्ख्याजन्यमुदाहरति॥ अनित्यमिति॥ द्व्यणुकस्य त्रसरेणोश्च परिमाणं प्रति परमाणुपरिमाणं द्व्यणुकपरिमाणं वा न कारणं परिमाणस्य स्वसमानजातीयोत्कृष्टपरिमाणजनकत्वात् द्व्यणुकस्याणुपरिमाणं तु परमाण्वणुत्वापेक्षया नोत्कृष्टम्। त्रसरेणुपरिमाणं तु न सजातीयम्। अतः परमाणौ द्वित्वसङ्ख्या द्व्यणुकपरिमाणस्य द्व्यणुके त्रित्वसङ्ख्या च त्रसरेणुपरिमाणस्यासमवायिकारणमित्यर्थः॥ १०९॥ ११०॥ १११॥

## प्रभा.

परिमाणविशेषाणां लक्षणमित्यस्मद्गुरुचरणाः॥ अणु दीर्घं महद्ध्रस्वमिति तद्भेद ईरित इति मूलस्य अणु महद्दीर्घं ह्रस्वं चेति भाष्योक्तपरिमाणविभागक्रमविपरीतविभागक्रमपरतया अनुपादेयत्वशङ्कानिरासाय तादृशमूलस्य प्रतीकमधृत्वा भाष्योक्तविभागक्रमपर्यवसानं पूरणसंवलितमाह॥ **मुक्तावल्यां तच्चतुर्विधमिति**॥ अण्वादिशब्दानां परिमाणविशेषवति अणुत्वादिपरिमाणविशेषे च शक्तत्वात् अणुत्वत्वादिरूपप्रकारचतुष्टयान्यतमावच्छिन्नं अणुत्वमहत्त्वदीर्घत्वह्रस्वत्वरूपपरिमाणमिति समुदितवाक्यार्थः। नच ह्रस्वत्वदीर्घत्वयोः अणुत्वमहत्त्वभिन्नपरिमाणरूपत्वे प्रमाणाभावात् परिमाणस्य द्वैविध्यमेवेति वाच्यं घटाद्यवधिकाणुतया प्रतीयमानेऽपि दण्डादौ घटावधिकह्रस्वत्वव्यवहाराभावात् दण्डावधिकमहत्त्ववत्तया अनुभूयमानेऽपि घटादौ तदवधिकदीर्घत्वव्यवहाराभावाच्च ह्रस्वत्वदीर्घत्वयोः अणुत्वमहत्त्वातिरिक्तपरिमाणत्वावश्यकतया परिमाणस्य चातुर्विध्यावश्यकत्वात्॥ **संख्याजन्यमिति**॥ सङ्ख्यामात्रजन्यमित्यर्थः॥ **परिमाणजन्यमिति**॥ परिमाणमात्रजन्यमित्यर्थः॥ **प्रचयजन्यमिति**॥ परिमाणप्रचयोभयजन्यमित्यर्थः। इदमुपलक्षणम्। प्रचयादपि जायत इति मूलस्थानुक्तसमुच्चायकापिशब्देन सङ्ख्यापरिमाणोभयत्वावच्छिन्नात् सङ्ख्यापरिमाणप्रचयत्रितयत्वावच्छिन्नाच्च परिमाणं जायत इत्यपि बोध्यम्॥ **तत्रेति**॥ निरुक्तपरिमाणेषु मध्य इत्यर्थः॥ **संख्याजन्यमिति**॥ प्राथमिकसङ्ख्यामात्रजन्यपरिमाणमित्यर्थः॥ **उदाहरतीति**॥ प्रदर्शयतीत्यर्थः। अनित्यद्व्यणुकादौ तु सङ्ख्याजन्यमुदाहृतमिति मूले आदिपदेन त्र्यणुकस्य लाभात् अवधारणार्थकतुशब्दस्य सङ्ख्याजन्यमित्युत्तरं योजनया सङ्ख्याजन्यमेवेत्यर्थलाभाच्च द्व्यणुकपरिमाणं त्रसरेणुपरिमाणं च सङ्ख्याजन्यमेवेति फलितम्। तत्र द्व्यणुकत्र्यणुकपरिमाणयोः सङ्ख्यासमवायिकारणकत्वं एवकारलब्धसङ्ख्याभिन्नासमवायिकारणत्वाभावं चोपपादयति॥ **मुक्तावल्यां द्व्यणुकस्य त्रसरेणोश्चेति**॥ उभयत्र समवायसंबन्धावच्छिन्नाधेयत्वं षष्ठ्यर्थः। तस्य परिमाणेऽन्वयः॥ **न कारणमिति**॥ नासमवायिकारणमित्यर्थः। तत्र हेतुमाह॥ **परिमाणस्येति**॥ एतद्वाक्यार्थस्तु परिमाण्डल्यभिन्नानां कारणत्वमिति मूलव्याख्याभूतमुक्तावलीव्याख्यानावसरे सयुक्तिकं विचारित इति पुनर्न विचार्यते॥ **न सजातीयमिति**॥ इदमुपलक्षणं परमाणोर्निरवयवद्रव्यत्वेन पारिमाण्डल्यवत्त्वेन च तयोः शिथिलसंयोगासंभवात् द्व्यणुकानां सावयवद्रव्यारब्धत्वाभावात् तेषामपि शिथि-

## दिनकरीयम्.

दिप्रकारकसंशयाविरोधित्वात्॥ **अणु महदित्यादि**॥ यद्यप्यणुत्वमेव ह्रस्वत्वमस्तु महत्त्वमेव दीर्घत्वमस्त्विति कुतश्चातुर्विध्यं तथापि तदवधिकाणुतया प्रतीयमानेऽपि तदवधिकह्रस्वत्वाव्यवहारात्तदवधिकमहत्त्ववत्तया प्रतीयमानेऽपि तदवधिकदीर्घत्वाव्यवहाराच्च ह्रस्वत्वदीर्घत्वयोरतिरिक्तपरिमाणतया तच्चातुर्विध्यं बोध्यम्॥ **सङ्ख्याजन्यमुदाहरतीति**॥ सङ्ख्यामात्रजन्यमुदाहरतीत्यर्थः। न सजातीयमित्यनन्तरं विजातीयसंयोगरूपः प्रचयस्तु न द्व्यणुकादौ तत्सत्त्वेऽपि वा तस्याकिञ्चित्करत्वादिति पूरणीयम्॥ **द्वित्वसंख्या** द्वित्वसङ्ख्यामात्रम्। एवमग्रेऽपि॥ १०९॥ ११०॥ १११॥

परिमाणं घटादौ तु परिमाणजमुच्यते ।
प्रचयः शिथिलाख्यो यः संयोगस्तेन जन्यते ॥ ११२ ॥
परिमाणं तूलकादौ नाशस्त्वाश्रयनाशतः ।

परिमाणजन्यं परिमाणमुदाहरति ॥ **परिमाणं घटादाविति** ॥ घटादिपरिमाणं कपालादिपरिमाणजन्यम् । प्रचयजन्यमुदाहर्तुं प्रचयं निर्वक्ति ॥ **प्रचय इति** ॥ परिमाणं चाश्र-

**प्रभा.**

लसंयोगे मानाभावः सावयवत्वमात्रेण मूलावयवेष्विव द्व्यणुके प्रचयसंयोगस्वीकारेऽपि त्र्यणुके परिमाणेषु तारतम्यस्य केनापि प्रमाणेनाननुभूतत्वात् द्व्यणुकत्र्यणुकपरिमाणयोः प्रचयासमवायिकारणकत्वेऽपि मानाभाव इत्यपि बोध्यम् ॥ **अत इति** ॥ उक्तरीत्या द्व्यणुकत्र्यणुकपरिमाणयोः परिमाणप्रचयासमवायिकारणकत्वासंभवादित्यर्थः । द्व्यणुकादिपरिमाणयोः सङ्ख्यातिरिक्तासमवायिकारणकत्वाभावमुपपाद्य इदानीं सङ्ख्यासमवायिकारणकत्वमुपपादयति ॥ **परमाणौ द्वित्वसंख्येति** ॥ तत्समवेतद्वित्वसङ्ख्यैवेत्यर्थः ॥ **द्व्यणुकपरिमाणस्येति** ॥ असमवायिकारणमित्युत्तरेणान्वयः ॥ **द्व्यणुके त्रित्वसंख्या चेति** ॥ तत्समवेतत्रित्वसङ्ख्यैवेत्यर्थः ॥ १०९ ॥ ११० ॥ १११ ॥

**परिमाणजन्यमिति** ॥ परिमाणमात्रजन्यमित्यर्थः ॥ **घटादिपरिमाणमिति** ॥ कपालद्वयारब्धघटादिपरिमाणमित्यर्थः ॥ **कपालादिपरिमाणजन्यमिति** ॥ कपालादिपरिमाणमात्रजन्यमित्यर्थः । अत्र यादृशकपालद्वयेन प्रचयस्तादृशकपालद्वयारब्धघटसमवेतमहत्त्वं प्रत्यवयवगतप्रचयस्य हेतुत्वासंभवात् द्व्यणुकेऽपि महत्त्वोत्पत्त्यापत्त्या द्वित्वत्वेन द्वित्वसङ्ख्यायाः महत्त्वहेतुत्वासंभवेन कपालगतद्वित्वसङ्ख्यायाः घटसमवेतमहत्त्वहेतुत्वासंभवाच्च । नच द्वित्वस्य द्वित्वत्वेन उक्तापत्तिभिया महत्त्वोत्पादकत्वासंभवेऽपि तादृशघटव्यक्तिसमवेतमहत्त्वव्यक्तिं प्रति कपालद्वयगतद्वित्वस्य तद्गतपरिमाणस्य वासमवायिकारणत्वमित्यत्र विनिगमनाविरहात् तत्र द्वित्वस्यापि हेतुत्वमावश्यकमिति वाच्यं अवयवमहत्त्वोत्कर्षेणावयविमहत्त्वोत्कर्षस्यान्यत्र दर्शनस्यैव विनिगमकत्वात् । तस्मात् घटविशेषगतमहत्त्वपरिमाणं कपालादिपरिमाणमात्रजन्यमिति हृदयम् ॥ **प्रचयजन्यमुदाहर्तुमिति** ॥ परिमाणे प्रचयजन्यत्वं दर्शयितुमित्यर्थः । प्रचयमात्रासमवायिकारणकपरिमाणे मानाभावादिति भावः । अत्र प्रचितमहावयवद्वयारब्धतूलादिसमवेतमहत्त्वस्य अप्रचितमहावयवद्वयारब्धघटादिपरिमाणापेक्षया महत्त्वशून्यद्व्यणुकत्रयारब्धत्र्यणुकसमवेतमहत्त्वापेक्षयां च अतिशयदर्शनादित्याशयः ॥ **प्रचयं निर्वक्तीति** ॥ आदौ प्रचयस्वरूपं दर्शयतीत्यर्थः । प्रचयस्वरूपाज्ञाने प्रचयजन्यत्वेन परिमाणनिरूपणासंभवादिति भावः । इदमुपलक्षणम् । कपालत्रयारब्धघटादिसमवेतपरिमाणं सङ्ख्यापरिमाणोभयजन्यं कपालादिद्वयारब्धघटादिसमवेतमहत्त्वापेक्षया महत्त्वशून्यावयवत्रयारब्धत्रसरेण्वपेक्षया चोत्कृष्टत्वात् । एवं प्रचितमहावयवत्रयारब्धतूलकादिसमवेतपरिमाणं सङ्ख्यापरिमाणप्रचयत्रितयजन्यं प्रचितमहावयवद्वयारब्धतूलादिसमवेतमहत्त्वापेक्षया अप्रचितमहावयवत्रयारब्धघटादिसमवेतमहत्त्वापेक्षया चोत्कृष्टत्वात् । एवं चानित्यं परिमाणं पञ्चधा पर्यवसितमित्यपि बोध्यम् ॥ **मूले प्रचयशिथि-**

**दिनकरीयम्.**

**परिमाणजन्यं** परिमाणमात्रजन्यम् ॥ **कपालादिपरिमाणजन्यम्** ॥ कपालादिपरिमाणमात्रजन्यमित्यर्थः । अप्रचितमहत्कपालद्वयारब्धे घटे यन्महत्परिमाणं तत्र कपालगतद्वित्वसङ्ख्या न कारणं द्वित्वसङ्ख्याया महत्त्वाजनकत्वात् अन्यथा द्व्यणुकेऽपि महत्त्वोत्पादापत्तेः । नचोक्तापत्त्या द्वित्वत्वेन परिमाणाजनकत्वेऽपि घटगतमहत्त्वं प्रति कपालगतमहत्त्वस्य कपालगतद्वित्वस्य वा हेतुत्वमित्यत्र विनिगमनाविरह इति वाच्यं कपालगतमहत्त्वोत्कर्षेण घटगतमहत्त्वोत्कर्षस्यानुभविकतया कपालमहत्त्वस्य तत्रावश्यं हेतुताया वाच्यत्वात् यत्र कपाले न प्रचयस्तत्र प्रचयस्यापि हेतुत्वासम्भवात्तत्र घटपरिमाणं कपालपरिमाणमात्रजन्यमिति भावः ॥ **प्रचय इतीति** ॥ **मूले शिथिलाख्य इति** ॥ किञ्चिदवयवावच्छेदेनावयवान्तरासंयोगिनि

## प्रभा.

**ख्य इति ॥** प्रचयत्वं च अवयवसंयोगगतो जातिविशेषः । तादृशजातिविशेषावच्छिन्न एव शिथिल इत्युच्यत इत्यर्थः । किञ्चिदवयवावच्छेद्यावयवान्तरसंयोगाभावविशिष्टमहावयवनिष्ठसंयोगः प्रचय इति प्राञ्चः । महत्पदमत्र न देयं तेन परमाणुसंयोगस्य प्रचयत्वेऽपि न क्षतिरित्येकदेशिनः । भूयोऽवयवावच्छेदेनावयवान्तरासंयोगिन्यवयवे वर्तमानसंयोगः प्रचयः तेन परमाणुसंयोगो द्व्यणुकसंयोगो वा न प्रचय इति नव्याः । अत्र दीर्घत्वं जन्यमहत्त्वाधिकरणत्र्यणुकादावेव न त्वाकाशादावेवं ह्रस्वत्वं जन्याणुत्वाधिकरणद्व्यणुकेष्वेव न परमाणुष्विति प्राञ्चः । दीर्घत्वं ह्रस्वत्वं नित्यानित्यभेदेन द्विविधं नित्यं दीर्घत्वं आकाशादौ अनित्यं दीर्घत्वं जन्यमहत्त्वसमानाधिकरणमित्युक्तमेव नित्यं ह्रस्वत्वं परमाणुष्वेव अनित्यं ह्रस्वत्वं जन्याणुत्वाधिकरणद्व्यणुकसमवेतमित्युक्तमेवेत्याचार्याः । परमाणुद्व्यणुकयोर्ह्रस्वत्वेन केनाप्यननुभूतत्वात् आकाशादिविभुचतुष्टयस्य दीर्घत्वेन केनाप्यननुभूतत्वाच्च ह्रस्वत्वदीर्घत्वयोः जन्यमहत्त्वसमानाधिकरणत्वमेव वाच्यं अत एव सूची दण्डात् ह्रस्वा दण्डः सूचितो दीर्घ इति सार्वजनीनलौकिकप्रत्यक्षमप्युपपद्यत इत्यस्मद्गुरुचरणाः । स्वतन्त्रास्तु अणुत्वं महत्त्वं चेति पारिमाणं द्विविधमेव ह्रस्वत्वदीर्घत्वयोः अवयवसंयोगविशेषरूपत्वात् तादृशसंयोगविशेषविषयकत्वेनैव ह्रस्वो दीर्घ इति प्रत्यक्षोपपत्तेः । अन्यथा इदं वर्तुलं इदं चतुरश्रमित्याद्यनुभवानुरोधेन वर्तुलत्वादीनामपि परिमाणान्तरत्वापत्तेरित्याहुः । इदंचाणु महद्दीर्घं ह्रस्वं चेति भाष्यविरुद्धत्वेन वर्तुलत्वचतुरश्रत्वयोरिव ह्रस्वत्वदीर्घत्वयोः संयोगविशेषरूपत्वासंभवात् उपेक्षितम् । वस्तुतस्तु पारिमाणं मानव्यवहारकारणं अणु महद्दीर्घं ह्रस्वं चेति भाष्यं तत्र कारणमित्यन्तं लक्षणपरं अणु महदिति भाष्यं द्वैविध्येन परिमाणविभागपरं दीर्घं ह्रस्वं चेति भाष्यं द्वैविध्येन महत्त्वविभागपरं भाष्यस्थानुक्तसमुच्चायकचशब्देन परममहत्त्वलाभात् ।तथाच तत्र पारिमाणं द्विविधं अणुत्वमहत्त्वभेदात् महत्त्वमपि त्रिविधं दीर्घत्वह्रस्वत्वपरममहत्त्वभेदात् इति भाष्यार्थः फलितः । अत्र दीर्घत्वं चतुरणुकादिसकलजन्यद्रव्यवृत्तिमहत्त्वरूपं ह्रस्वत्वन्तु त्र्यणुकमात्रवृत्तिमहत्त्वरूपं परममहत्त्वं विभुवृत्ति क्वचित्सूच्यादौ दण्डाद्यवधिकह्रस्वत्वव्यवहारः त्रसरेण्वादावणुत्वव्यवहारवत् भाक्त इति बोध्यम् । नचापकृष्टमहत्त्वस्यैव दीर्घत्वह्रस्वत्वरूपत्वे दण्डावधिकमहत्त्ववत्तया प्रतीयमानघटादौ दण्डावधिकदीर्घत्वप्रत्ययापत्तिः तदवधिकमहत्त्वस्यैव तदवधिकदीर्घत्वरूपत्वात् । एवं घटावधिकदीर्घत्ववत्तया प्रतीयमाने दण्डादौ घटावधिकमहत्त्वप्रत्ययापत्तिः तदवधिकदीर्घत्वस्यैव तदवधिकमहत्त्वरूपत्वात् इति वाच्यम् । घटो दीर्घो दण्डो महान् इति प्रत्ययस्य इष्टत्वात् । दण्डात् घटो दीर्घ इत्यादिप्रत्ययस्य च तदपेक्षया दीर्घत्वप्रत्यक्षं प्रति तदवयवघटकैकावयवाग्रावच्छेद्यापरावयवसंयोगपरम्परापर्याप्तसङ्ख्याधिकसङ्ख्यापर्याप्त्यधिकरणतादृशावयवसंयोगवत्त्वज्ञानस्यैव हेतुत्वात् घटे दण्डावयवघटकैकावयवाग्रावच्छेद्यापरावयवसंयोगपरम्परापर्याप्तसङ्ख्याधिकसङ्ख्यापर्याप्त्यधिकरणतादृशावयवसंयोगवत्त्वाभावात् अभ्रान्तस्य तादृशसंयोगवत्त्वज्ञानासंभवेन कारणाभावान्नापत्तिः निरुक्तसंयोगपरम्परावत्त्वज्ञानस्य सावधिकदीर्घत्वप्रकारकप्रत्यक्षाहेतुत्वे दीर्घत्वस्य महत्त्वातिरिक्तपरिमाणरूपत्ववादिमतेऽपि दण्डे दीर्घत्वस्य वर्तमानतया दण्डो घटाद्दीर्घ इति प्रत्यक्षवत् ताळवृक्षाद्दीर्घ इति प्रत्यक्षापत्तेर्दुर्वारत्वात् । तज्ज्ञानस्य हेतुत्वे तु ताळवृक्षावयवघटकैकैकावयवाग्रावच्छेद्यापरावयवसंयोगपरम्परापर्याप्तसङ्ख्याधिकसङ्ख्यापर्याप्त्यधिकरणतादृशावयवसंयोगपरम्परावत्त्वस्य दण्डेऽभावात् अभ्रान्तस्य तज्ज्ञानासंभवेन मतद्वयेऽपि दण्डे तादृशप्रत्यक्षापत्तिवारणं सुकरमेव । एवं दण्डनिष्ठमहत्त्वस्य घटनिष्ठमहत्त्वावधिकोत्कर्षानाश्रयत्वात् दण्डो घटापेक्षया महानिति प्रत्यक्षस्यापि मतद्वये नावकाशः । अनयैव दिशा घटो दण्डाद्ध्रस्व इति प्रत्यक्षं व्यवहारो वा मतद्वयेऽप्युपपादनीयः । परन्तु ह्रस्वत्वदीर्घत्वयोः महत्त्वातिरिक्तपरिमाणरूपत्वमते प्रत्यक्षं वास्तवं व्यवहारोऽपि मुख्यः निष्कृष्टमते निरुक्तप्रत्यक्षव्यवहारौ त्रसरेणावणुत्वप्रत्यक्षतद्व्यवहारतुल्याविति विशेषः । एवंचाणुत्वमहत्त्वरूपपरिमाणद्वयेनैव सर्वत्र सामञ्जस्ये परिमाणस्य चातुर्विध्यकल्पनागौरवं एकस्मिन्नेव दण्डादौ परिमाणद्वयकल्पनागौरवं च दीर्घत्वादेः परिमाणान्तरत्ववादिमते परमवशिष्यते । नच परिमाणद्वैविध्ये तच्चतुर्विधमित्यादिमुक्तावलीग्रन्थविरोध इति वाच्यम् । तस्य फलतश्चातुर्विध्ये तात्पर्यान्न विरोध इति प्रतिभाति । परिमाणं तूलकादौ नाशस्त्वाश्रयनाशत इति मूलेन नाशशब्दोत्तरश्रूयमाणा-

यनाशादेव नश्यतीत्याह ॥ नाश इति ॥ अर्थात्परिमाणस्यैव । नचावयविनाशः कथं परिमाणनाशकः सत्यप्यवयविनि त्रिचतुरादिपरमाणुविश्लेषे तदुपचये चावयविनः प्रत्यभिज्ञानेऽपि परिमाणान्तरस्य प्रत्यक्षसिद्धत्वादिति वाच्यं परमाणुविश्लेषे हि द्व्यणुकस्य नाशोऽवश्यमभ्युपेयः तन्नाशे च त्र्यणुकनाशः । एवं क्रमेण महावयविनो नाशस्यावश्यकत्वात् । सति च नाशकेऽनभ्युपगममात्रेण नाशस्यापलपितुमशक्यत्वात् । शरीरादाववयवोपचयेऽसमवायिकारणनाशस्यावश्यकत्वादवयविनाश आवश्यकः । नच पटादिनाशेऽपि तन्त्वन्तरसंयोगात्

## प्रभा.

वधारणार्थकतुशब्दस्य नाशत इत्युत्तरयोजनया आश्रयनाशादेव नाश इत्यर्थो लभ्यते तत्र तादृशनाशः कस्येत्याकाङ्क्षायां तूलादेरेवाव्यवहितपूर्वमुपस्थितत्वात् तन्नाशस्याश्रयनाशजन्यत्वप्रतिपादकत्वशङ्कानिरासाय मूलस्थनाशशब्दस्य परिमाणनाशपरत्वमाह ॥ मुक्तावल्यामर्थादिति ॥ परिमाणनिरूपणस्य प्रकृतत्वादित्यर्थः। केचित्तु यद्वा अर्थात् पारिशेषादित्यर्थः । नच परिशेषोऽसिद्धः रूपादेरप्याश्रयनाशनाश्यत्वादिति वाच्यं आश्रयनाशत इति मूलस्याश्रयनाशमात्रादित्यर्थकतया रूपादेराश्रयनाशमात्रानाश्यत्वाभावेन परिशेषसंभवात् । नच मूलस्य तादृशार्थकत्वे प्रयोजनाभाव इति वाच्यं क्रियाविभागादिक्रमेण यत्किञ्चिदवयवनाशेऽपि शरीरनाशस्य मीमांसकैरनभ्युपगमात् तत्र परिमाणनाशस्यानुभाविकत्वाच्च आश्रयनाशमात्रनाश्यत्वस्य परिमाणे तैरनङ्गीकारात् तन्मतनिराकरणाय मूलस्य तादृशार्थकत्वमिति ध्येयमित्याहुः । तदसत् रूपादेराश्रयनाशनाश्यत्वेन परिशेषासिद्ध्याशङ्कनमाश्रयनाशत इति मूलस्याश्रयनाशमात्रनाश्यत्वार्थकत्वाङ्गीकारेण तादृशशङ्कानिराकरणं चायुक्तम् । यादृशरूपादेराश्रयनाशनाश्यत्वं (परिमाणवृत्तिपरमाणोरवृत्तित्वे सति वृत्तित्वादित्यत्रपारिशेषात्मरूपनिष्ठप्रतियोगित्वस्य तादृशपक्षत्वाभावेन रूपादेराश्रयनाशनाश्यत्वं)? तादृशरूपादेः आश्रयनाशमात्रनाश्यत्वस्यापि सत्त्वात् मूलस्य तादृशार्थकत्वाङ्गीकारस्याकिञ्चित्करत्वात् रूपत्वाद्यवच्छेदेन जन्यरूपत्वाद्यवच्छेदेन वा आश्रयनाशनाश्यत्वस्यैवाप्रसिद्धया तत्र परिशेषासिद्धिरूपदोषस्याप्यप्रसक्तत्वेन मूलस्याश्रयनाशमात्रनाश्यत्वार्थकत्वाङ्गीकारस्य निर्बीजत्वात् । नच मुक्तावलीग्रन्थस्य तादृशपारिशेषार्थत्वासंभवेऽपि स्वाश्रयप्रतियोगिकत्वकालिकविशेषणत्वोभयसंबन्धेन गुणविभाजकधर्मविशिष्टत्वव्यापकाश्रयनाशजन्यत्वाश्रयप्रतियोगित्वस्य परिमाण एव सत्त्वात् अर्थादिति मुक्तावलीग्रन्थस्यैतादृशपरिशेषार्थकत्वे बाधकाभाव इति वाच्यम् निरुक्तोभयसंबन्धेन गुणविभाजकस्नेहत्वविशिष्टा ये ये ध्वंसास्तेषु सर्वेष्वपि आश्रयनाशजन्यत्वसत्त्वेन तादृशजन्यत्वाश्रयप्रतियोगित्वस्य स्नेहेऽप्यक्षततया परिशेषासिद्धेर्दुर्वारत्वात् । यच्चोक्तं मूलस्य तादृशार्थकत्वे प्रमाणाभावमाशङ्क्य यत्किञ्चिदवयवनाशाधीनमहाशरीरनाशानङ्गीकर्तृमीमांसकमते यत्किञ्चिदवयवनाशस्थले शरीरनाशाभावेऽपि तादृशशरीरे परिमाणनाशस्यानुभाविकत्वात् तन्मते परिमाणस्याश्रयनाशमा-

## दिनकरीयम्.

महत्यवयवे वर्तमानः संयोगः प्रचय इत्येके । अत्र महत्पदं न देयं परमाणुसंयोगस्य प्रचयत्वे क्षतिविरहादित्यन्ये । भूयोऽवयवावच्छेदेनावयवान्तरासंयोगिन्यवयवे वर्तमानः संयोगः प्रचयस्तेन परमाणुसंयोगो द्व्यणुकसंयोगो वा न प्रचय इत्यपरे । अत्र प्रचयरहितैस्त्रिभिर्महावयवैरारब्धस्य यन्महत्परिमाणं तत्सङ्ख्यापरिमाणोभयजन्यं महदवयवारब्धमहत्त्वादतिशयितत्वात् अल्पावयवारब्धमहत्त्वादतिशयितत्वाच्च प्रचिताभ्यां महावयवाभ्यामारब्धे यन्महत्परिमाणमतिशयितं तत्परिमाणप्रचयोभयजन्यं अप्रचितमहावयवारब्धात् त्र्यणुकमहत्त्वाच्च । तादृशातिशयदर्शनात् प्रचितैर्महद्भिरारब्धस्य महत्परिमाणं सङ्ख्यापरिमाणप्रचयजन्यं प्रचितमहावयवद्वयारब्धमहत्त्वादपि तस्योत्कृष्टत्वादिति ध्येयम् । दिङ्मात्रस्य मूले प्रदर्शितत्वादित्यन्यत्र विस्तरः । केचित्तु दीर्घमिति प्रतीतेरवयवसंयोगविशेषेणैवोपपत्तेः दीर्घत्वं न परिमाणमन्यथा वर्तुलत्वचतुरस्रत्वादीनां परिमाणान्तरत्वापत्तेरित्याहुः ॥ अर्थादिति ॥ प्रकरणादित्यर्थः । यद्वार्थात्परिशेषादित्यर्थः ।

परिमाणाधिक्यं न स्यादिति वाच्यं तत्रापि वेमाद्यभिघातेनासमवायिकारणतन्तुसंयोगनाशात् पटनाशस्यावश्यकत्वात्। किंच तन्त्वन्तरस्य तत्पटावयवत्वे पूर्वं तत्पट एव न स्यात् तन्त्वन्तररूपकारणाभावात् । तन्त्वन्तरस्यावयवत्वाभावे च न तेन परिमाणाधिक्यं संयुक्तद्रव्यान्तरवत् तस्मात्तत्र तन्त्वन्तरसंयोगे सति पूर्वं पटनाशस्ततः पटान्तरोत्पत्तिरित्यवश्यं स्वीकार्यम् । अवयविनः प्रत्यभिज्ञानं तु साजात्येन दीपकलिकादिवत् । नच पूर्वतन्तव एव तन्त्वन्तरसहकारात्पूर्वपटे सत्येव पटान्तरमारभन्तामिति वाच्यं मूर्तयोः समानदेशताविरोधात् तत्र पटद्वयासम्भवात् एकदा नानाद्रव्यस्य तत्रोपलम्भस्य बाधितत्वाच्च । तस्मात्पूर्वस्य द्रव्यस्य प्रतिबन्धकस्य विनाशे द्रव्यान्तरोत्पत्तिरित्यस्यावश्यमभ्युपेयत्वात् ॥ ११२ ॥

सङ्ख्यावत्तु पृथक्त्वं स्यात् पृथक्प्रत्ययकारणम् ॥ ११३ ॥
अन्योन्याभावतो नास्य चरितार्थत्वमिष्यते ।
अस्मात् पृथगिदं नेति प्रतीतिर्हि विलक्षणा ॥ ११४ ॥

पृथक्त्वं निरूपयति ॥ सङ्ख्यावदिति ॥ पृथक्प्रत्ययासाधारणकारणं पृथक्त्वम् । तन्नित्यतादिकं सङ्ख्यावत् । तथा हि नित्येष्वेकत्वं नित्यमनित्येष्वनित्यम् । अनित्यमेकत्वं तु आश्रयद्वितीयक्षणे चोत्पद्यते आश्रयनाशान्नश्यति तथैकपृ-

प्रभा.

त्वनाश्यत्वाभावात् तन्मतनिराकरणायैव मूलस्य तादृशार्थकत्वाङ्गीकार इति तदप्यसङ्गतं मूलस्य तादृशार्थकत्वेऽपि परिशेषाप्रसिद्धेर्दर्शितत्वेनोक्तरीत्या मीमांसकमतनिराकरणासंभवात् । वस्तुतो मीमांसकमते यत्किञ्चिदवयवनाशानन्तरं महावयविनाशं विना तत्परिमाणनाशाङ्गीकारो निष्प्रामाणिकः तुल्ययुक्त्या अवयवोपचयापचयस्थलेऽपि पूर्वशरीरनाशं विना पूर्वपरिमाणनाशपूर्वकपरिमाणान्तरोत्पत्तेर्वक्तुं शक्यतया चैत्रादिशरीराणां एकैकव्यक्तित्वेन एकव्यक्तितया चैत्रत्वादीनां जातित्वानुपपत्तेः उत्पत्तिक्षण इवैकावयवनाशद्वितीयक्षणेऽपि अवयविनो निष्परिमाणत्वात्साक्षात्कारानुपपत्तेः यादृशावयविनोऽवयवानां क्रमेण नाशस्तादृशावयविनो यावदवयवनाशपर्यन्तं नाशाभावेन तादृशावयविन्येकैकावयवनाशप्रयुक्तपूर्वपरिमाणनाशपूर्वकपरिमाणान्तरोत्पत्तेरावश्यकतया एकत्रानेकपरिमाणनाशकल्पनेनानेकपरिमाणकल्पनेनैकस्यावयवपरिमाणस्यानन्तपरिमाणासमवायिकारणत्वकल्पनेन चाप्रामाणिकातिगौरवप्रसङ्गाच्च । तस्मादवयविनाशं विना परिमाणनाशोऽसिद्ध इति तन्मतनिराकरणायार्थादिति मुक्तावलीग्रन्थस्यासंभवद्युक्तिकपरिशेषार्थकत्वकथनमयुक्तमिति प्रतिभाति ॥ इति परिमाणग्रन्थः ॥ ११२ ॥

पृथक्प्रत्ययासाधारणकारणमिति ॥ एतस्य गणनाव्यवहारासाधारणकारणमिति सङ्ख्याग्रन्थरीत्यार्थोऽवसेयः । एकत्वादीनां विशेषलक्षणरीत्यैव एकपृथक्त्वादीनां विशेषलक्षणान्य-

दिनकरीयम्.

नच परिशेषोऽसिद्धः रूपादेरप्याश्रयनाशनाश्यत्वादिति वाच्यं आश्रयनाश इति मूलस्याश्रयनाशमात्रादित्यर्थकतया रूपादेराश्रयनाशमात्रनाश्यत्वाभावेन परिशेषसम्भवात् । नच मूलस्य तादृशार्थकत्वे प्रयोजनाभाव इति वाच्यं क्रियाविभागादिक्रमेण यत्किञ्चिदवयवनाशेऽपि शरीरादिनाशस्य मीमांसकैरनभ्युपगमात् तत्र परिमाणनाशस्यानुभविकत्वाच्चाश्रयमात्रनाशनाश्यत्वस्य च परिमाणे तैरनङ्गीकारात् तन्मतनिराकरणाय मूलस्य तादृशार्थकत्वादिति ध्येयम् । द्वितीयक्षणे चोत्पद्यत इत्यनन्तरं स्वाश्रयावयवगतैकत्वासमवायिकारणकं चेति पूरणीयम्

थक्त्वमपि द्वित्वादिवच्च द्विपृथक्त्वादिकमपीत्यर्थः । नन्वयमस्मात् पृथगित्यादावन्योन्याभा-

## प्रभा.

प्यूह्यानि ॥ **आश्रय इति** ॥ अनित्यघटपटादिरूपाश्रय इत्यर्थः ॥ **द्वितीयक्षणे चोत्पद्यत इति** ॥ द्वितीयक्षणे उत्पद्यते चेति योजना । आद्यक्षणे अनित्याश्रयोत्पत्तिस्वीकारे तस्य समवायिकारणत्वानुपपत्तिरिति द्वितीयक्षण इत्युक्तम् । तथाच अनित्यमेकत्वमाश्रयसमवायिकारणकामिति उत्पद्यत इत्यन्तस्यार्थः फलितः । तदुत्तरं योजितचकारेण स्वाश्रयावयवगतैकत्वासमवायिकारणकं चेति समुच्चीयते ॥ **तथैकपृथक्त्वमपीति** ॥ व्यक्तिद्वयासमवेतपृथक्त्वमपीत्यर्थः । नित्ये वर्तमानमेकपृथक्त्वं नित्यमनित्ये वर्तमानं तदनित्यम् । तच्चाश्रयसमवायिकारणकं आश्रयावयवगतैकपृथक्त्वासमवायिकारणकं आश्रयनाशनाश्यं चेति फलितोऽर्थः ॥ **द्वित्वादिवत् द्विपृथक्त्वादिकमपीति** ॥ द्वित्वादिकं यथा समवायिकारणगतानेकैकत्वासमवायिकारणकं अयमेकः अयमेकः इमौ द्वौ अयमेक इमे त्रय इत्याद्यपेक्षाबुद्धिजन्यं अपेक्षाबुद्धिनाशात् क्वचिदाश्रयनाशान्नश्यति च तथा द्विपृथक्त्वादिकमपि स्वाश्रयसमवेतानेकैकपृथक्त्वासमवायिकारणकं इदमेकपृथक् इदमेकपृथक् इमे द्विपृथक् इदमेकपृथक् इमानि त्रिपृथगित्याकारकापेक्षाबुद्धिजन्यं च तादृशापेक्षाबुद्धिनाशात् क्वचिदाश्रयनाशाच्च नश्यति चेति भावः।अत्र द्विपृथक्त्वं नोभयसमवेतपृथक्त्वं त्रिपृथक्त्वस्याप्याधिक्यं त्विति न्यायेन उभयसमवेतत्वात् । एवं त्रिपृथक्त्वादिकमपि न त्रितयसमवेतपृथक्त्वादिरूपं चतुःपृथक्त्वादेरप्युक्तरीत्या त्रितयसमवेतत्वात् । नचोभयपर्याप्तपृथक्त्वं द्विपृथक्त्वमेवं त्रितयादिपर्याप्तपृथक्त्वमेव त्रिपृथक्त्वादिकामिति नोक्तदोषः । त्रिपृथक्त्वादेरुभयादिसमवेतत्वेऽपि उभयादिपर्याप्तत्वाभावादिति वाच्यम् । प्रत्येकपर्याप्तिवादिमते त्रिपृथक्त्वादेरप्युभयादिपर्याप्तत्वेन तद्दोषतादवस्थ्यात् किंतु त्रितयासमवेतोभयसमवेतपृथक्त्वमेव द्विपृथक्त्वं एवं चतुष्टयासमवेतत्रितयादिसमवेतपृथक्त्वादिकमेव त्रिपृथक्त्वादिकामिति न कोऽपि दोषः । वस्तुतस्तु यथैकत्वादिपदशक्यतावच्छेदकतया सिद्धैकत्वत्वादिजातिविशेषवत्त्वमेकत्वत्वादिकं तथैकपृथक्त्वादिपदशक्यतावच्छेदकतया सिद्धैकपृथक्त्वत्वादिजातिविशेषवत्त्वमेवैकपृथक्त्वत्वादिकमपीति न काप्यनुपपत्तिरिति प्रतिभाति । ननु घटः पटात् पृथगिति प्रतीत्यैकपृथक्त्वसिद्धावपि द्विपृथक्त्वादौ मानाभावः । नच घटौ पटात् पृथगिति प्रतीतिरेव द्विपृथक्त्वादौ मानमिति वाच्यं तादृशप्रतीतेः प्रत्येकसमवेतक्लृप्तपृथक्त्वद्वयविषयकत्वेनैवोपपत्तेरिति चेन्न । घटौ पटात् पृथक् इत्यत्र घटद्वयसमवेतत्वेन पृथक्त्वभानात् एकैकपृथक्त्वस्य घटद्वयासमवेतत्वेन तादृशप्रतीतेर्भ्रमत्वप्रसङ्गात् । नचैकपृथक्त्वद्वयान्यतरत्वेनैकपृथक्त्वेन वा पृथक्त्वद्वयावगाहित्वस्वीकारान्न भ्रमत्वप्रसङ्गः । घटद्वयेऽपि निरुक्तरूपेणैकपृथक्त्वसत्त्वादिति वाच्यम् । तथा सति घटौ द्वावित्यादिप्रतीतेः एकत्वत्वेन एकत्वद्वयान्यतरत्वादिना वा एकत्वद्वयाद्यवगाहित्वेनैवोपपत्तेरतिरिक्तद्वित्वादिपरार्धपर्यन्तसङ्ख्याया अपि अस्वीकारापत्तेः । नचेष्टापत्तिः अनुभवविरोधात् सर्वसिद्धान्तविरोधाच्च । यदि चैकस्मिन्नपि निरुक्तरूपेणैकत्वसत्त्वात् एको द्वावित्यादिप्रत्ययापत्त्यातिरिक्तद्वित्वादिस्वीकार आवश्यक इति विभाव्यते तदाकाशाद्येकव्यक्तावपि निरुक्तरूपेणैकपृथक्त्वसत्त्वात् आकाशमेकपृथगिति प्रतीतिवदाकाशं द्विपृथक् त्रिपृथक् इत्यादिप्रत्ययापत्तिवारणायातिरिक्तद्विपृथक्त्वादिस्वीकारोऽप्यावश्यक एवेति रीत्या द्विपृथक्त्वादिस्वीकारे बाधकाभावात् बाधकाभावविशिष्टनिरुक्तप्रतीत्या द्विपृथक्त्वादिसिद्धिर्निष्प्रत्यूहेति प्राचामाशयः । केचित्तु घटौ पटात्पृथगित्यादिप्रतीतेः पटावधिकैकपृथक्त्वद्वयादिनाप्युपपत्तेरुभयसमवेतपृथक्त्वादौ मानाभाव इत्याक्षिप्य घटौ पटात्पृथगिति प्रतीत्या उभयसमवेतपृथक्त्वासिद्धेस्तेनैव घटः पटात् पृथगिति प्रतीत्युपपत्तेः एकपृथक्त्वे प्रमाणाभाव इत्यस्यापि वक्तुं शक्यत्वात् तस्मात् विनिगमनाविरहात् उभयमङ्गीकार्यमिति परिहारमाहुः ।

## दिनकरीयम्.

**एकपृथक्त्वं** एकसमवेतपृथक्त्वम् ॥ **द्वित्वादिवच्चेति** ॥ तथा च द्विपृथक्त्वादौ समानाधिकरणान्येकपृथक्त्वान्यसमवायिकारणानि इदमेकं पृथगिदमेकं नानैकपृथक्त्वविषयिण्यपेक्षाबुद्धिर्निमित्तकारणं तादृशबुद्धिनाशात् क्वचिदाश्रयनाशात् क्वचिदुभाभ्यां द्विपृथक्त्वं नश्यतीति भावः । अत्रोभयसमवेतं पृथक्त्वं द्विपृथक्त्वं

**वो भासते तत्कथं पृथक्त्वं गुणान्तरं स्वीक्रियते। नच पृथक्त्वमेवास्तु न त्वन्योन्याभाव इति वाच्यं रूपं न घट इति प्रतीत्यनापत्तेः। न हि रूपे घटावधिकं पृथक्त्वं गुणान्तरमस्ति न वा घटे घटावधिकं पृथक्त्वमस्ति येन परम्परासम्बन्धः कल्प्यत इत्यत आह ॥ अस्मादि-**

**प्रभा।**

तदसत् द्विपृथक्त्वाङ्गीकारपक्षे द्विपृथक्त्वासमवायिकारणतया अनेकैकपृथक्त्वज्ञानरूपापेक्षाबुद्धिनिष्ठद्विपृथक्त्वादिजनकतानिरूपितविषयतासंबन्धावच्छिन्नावच्छेदकतया चैकपृथक्त्वाङ्गीकारस्याप्यावश्यकत्वात् तस्मादन्यथानुपपत्तिरूपविनिगमकसत्त्वेनोक्तरीत्या द्विपृथक्त्वसाधनं परिहासास्पदमेवेति । अन्ये तु घटौ पटात्पृथगिति प्रतीतेः पटावधिकैकपृथक्त्वद्वयावगाहित्वेनाप्युपपत्तेः द्विपृथक्त्वादौ मानाभावः अन्यथा चैत्रमैत्रौ यज्ञदत्तात् परौ अपराविव्यादिप्रतीत्या द्विपरत्वद्व्यपरत्वादिसिद्ध्यापत्तेरित्याहुः। तत्र द्विपरत्वादिस्वीकारे तत्र तुल्ययुक्त्या आश्रयगतैकपरत्वद्वयस्याप्यसमवायिकारणत्वावश्यकतया एकपरत्वद्वयविषयकापेक्षाबुद्धेरपि निमित्तकारणत्वावश्यकतया च यत्र यत्र द्विपरत्वोत्पत्तिः तत्र तत्र तत्पूर्वं नियमेनैकपरत्वद्वयोत्पत्तेरावश्यकतया तत्सामग्रीकल्पनावश्यकतया च अतिगौरवप्रसङ्गात् द्वित्वादिप्रत्यक्षस्य द्वित्वादिनाशकतावत् एकपरत्वादिप्रत्यक्षस्याप्येकपरत्वादिनाशकतावश्यकतया एकपरत्वादिद्वयविषयकापेक्षाबुद्धिद्वितीयक्षणे द्वयोरेकपरत्वयोः नाशेन द्विपरत्वाद्यनुत्पत्तिप्रसङ्गाच्चासमवायिकारणस्य कार्यसहभावेनैव हेतुत्वात् तस्मात् द्विपरत्वादिस्वीकारे प्रमाणाभावेन प्रमाणाभावरूपबाधकसत्त्वात् भाष्यकाराद्यनुमतत्वाच्च नोक्तप्रतीत्या द्विपरत्वादिसिद्धिरिति ॥ **अयमस्मात्पृथगित्यादाविति** ॥ इत्यादिप्रत्यक्ष इत्यर्थः । आदिना इमावस्मात्पृथगित्यादिप्रत्यक्षपरिग्रहः ॥ **अन्योन्याभाव इति** ॥ अन्योन्याभाव एवेत्यर्थः ॥ **भासत इति** ॥ विषयतावानित्यर्थः ॥ **तदिति** ॥ तस्मादित्यर्थः । उक्तप्रतीतेरन्योन्याभावविषयकत्वादिति यावत् ॥ **कथमिति** ॥ कस्माद्धेतोरित्यर्थः ॥ **गुणान्तरं स्वीक्रियत इति** ॥ क्लृप्तगुणातिरिक्तगुणत्वेनाङ्गीक्रियत इत्यर्थः । पृथक्त्वरूपधर्मिणि तस्य गुणत्वे च प्रमाणाभावादिति भावः । ननु पृथगिति प्रत्यय इव घटो नेत्यादिनिखिलप्रतीतावपि पृथक्त्वस्यैव विषयत्वाङ्गीकारात् प्रमाणान्तराभावेनान्योन्याभावस्यैवालीकत्वमस्त्वित्यभिप्रायेणाशङ्कते ॥ **नचेति** ॥ **पृथक्त्वमेवास्त्विति** ॥ उक्तप्रतीतौ पृथक्त्वमेव विषयोऽस्त्विति भावः । एवकारव्यवच्छेद्यं विवृणुते ॥ **न त्विति** ॥ नैव विषय इत्यर्थः । प्रतीत्यनापत्तेरित्यत्र हेतुमाह ॥ **नहीति** ॥ नन्वन्योन्याभावरूपगौणपृथक्त्वमस्त्येवेति शङ्कानिरसितुं गुणान्तरमित्युक्तम् । तथाच गुणे गुणानङ्गीकारेण घटावधिकपृथक्त्वस्य रूपेऽभावात् अन्योन्याभावस्य त्वन्यानभ्युपगमाच्चेति भावः। ननु समवायेन गुणे गुणासत्त्वेऽपि एकार्थसमवायेन तत्र तत्सत्त्वे बाधकाभावात् एकार्थसमवायेन घटनिष्ठपृथक्त्वं विषयीकृत्यैव तादृशप्रतीत्युपपत्तेरतिरिक्तान्योन्याभावो नाङ्गीकर्तव्य इति शङ्कां निरस्यति ॥ **नवेति** ॥ वाशब्दोऽवधारणे नैवेत्यर्थः । एतस्यास्तीत्यनेनान्वयः । तथाच घटो घटात्पृथगिति प्रतीत्यापत्त्या घटे घटावधिकपृथक्त्वं नाङ्गीकर्तव्यमेवेति भावः ॥ **परम्परासंबन्ध इति** ॥ समवायघटितसामानाधिकरण्यसंबन्ध इत्यर्थः ॥ **कल्प्यत इति** ॥ रूपं न घट इत्यादिप्रतीतिविषयत्वेनाभ्युपेयत इत्यर्थः । इदमुपलक्षणम् । प्रतीतेः क्वचित्समवायेन क्वचित्समवायघटितसामानाधिकरण्यसंबन्धेन पृथक्त्वविषयकत्वमङ्गीकृत्यान्योन्याभावनिराकरणे गुणत्वं न कर्मत्वमित्यादिप्रतीत्यनापत्तेश्च परम्परासंबन्धेनापि गुणत्वे पृथक्त्वाभावात् घटत्वं न घटत्वमित्यादिप्रतीत्यापत्तिः घटे पृथक्त्वसत्त्वेन घटत्वेऽपि तादृशसामानाधिकरण्यसंबन्धेन पृथक्त्वसत्त्वादित्यपि बो-

**दिनकरीयम्।**

त्रितयसमवेतं पृथक्त्वं त्रिपृथक्त्वमिति रीत्या बोध्यम् । ननु घटौ पटात् पृथगित्यादिप्रतीतेः पटावधिकैकपृथक्त्वद्वयादिनाप्युपपत्तेरुभयसमवेतपृथक्त्वादौ मानाभाव इति चेन्न घटौ पटात् पृथगिति प्रतीत्योभयसमवेतपृथक्त्वे सिद्धे तेनैव घटः पटात् पृथगिति प्रतीत्युपपत्तेरेकपृथक्त्वे प्रमाणाभाव इत्यस्यापि वक्तुं शक्यत्वात् तस्माद्विनिगमनाविरहादुभयमङ्गीकार्यम् ॥ **परम्परासम्बन्धः कल्प्यत इति** ॥ सामानाधिकरण्यरूपपरम्परास-

**ति ॥ ननु शब्दवैलक्षण्यमेव न त्वर्थवैलक्षण्यमिति चेन्न विनार्थभेदं घटात् पृथगितिवद्घटो नेत्यत्रापि पञ्चमीप्रसङ्गात् । तस्माद्यदर्थकयोगे पञ्चमी सोऽर्थो नञर्थान्योन्याभावतो**

## प्रभा.

ध्यम् । केचित्तु इदमुपलक्षणम् । ननु जात्यवधिकपृथक्त्व एव मानाभावः अस्तु वा तत्तथापि तादृशसामानाधिकरण्यस्य संबन्धत्वं नाङ्गीकुर्म इत्यत आह गुणत्वमिति लक्षणं प्रतीतेः सामानाधिकरण्यरूपपरम्परासंबन्धविषयकत्वमङ्गीकृत्यान्योन्याभावानङ्गीकारे एतद्घटरूपं एतद्घटात्पृथगिति प्रतीत्यनुपपत्तेः एतद्रूपमेतद्रूपात्पृथगिति प्रतीत्यापत्तेश्च । अन्योन्याभावस्यातिरिक्तस्याभ्युपगमे तु पृथक्पदस्यान्योन्याभावपरतया सर्वमुपपादनीयमित्याहुः । तदसत् अतिरिक्तान्योन्याभावानङ्गीकर्तृमते एतद्घटरूपं एतद्घटात्पृथगिति प्रतीत्यनुपपत्तिरूपप्रथमदूषणस्य मुक्तावलीकारोक्तरूपंनघटइतिप्रतीत्यनुपपत्तिरूपदूषणपर्यवसिततया पृथगुपादानवैयर्थ्यात् एतद्रूपमेतद्रूपात् पृथगिति प्रतीत्यापत्तिरूपद्वितीयदूषणमप्यलग्नम् । एतद्रूपावधिकपृथक्त्वस्यैवाप्रसिद्ध्याश्रये एतद्रूपावधिकपृथक्त्वस्य सुतरामप्रसिद्ध्या विषयाभावेन तदापादनस्य सुतरामसंभवात् द्रव्याभिन्नावधिकत्वमपि पृथक्त्वेऽङ्गीकृत्य घटे तद्रूपावधिकपृथक्त्वस्वीकारे तद्रूपनिष्ठस्य तद्रूपावधिकपृथक्त्वसामानाधिकरण्यस्य संबन्धत्वानङ्गीकारेणैव तादृशप्रतीत्यापत्तिवारणसंभवाच्चेति ॥ **मूले अन्योन्याभावत इति** ॥ अन्योन्याभावविषयकत्वाङ्गीकारेणेत्यर्थः ॥ **अस्येति** ॥ पृथक्त्वप्रत्ययस्येत्यर्थः ॥ **चरितार्थत्वमिति** ॥ सविषयकत्वमित्यर्थः । प्रमात्वमिति यावत् । नेष्यत इति योजनया नोपपादयितुं शक्यत इत्यर्थः । अथवा अन्योन्याभावत इति अन्योन्याभावेन सहेत्यर्थः । अस्येति ॥ पृथक्त्वस्येत्यर्थः ॥ चरितार्थत्वमिति ॥ अभिन्नत्वमित्यर्थः । इष्यत इत्यस्य नेत्यनेन संबन्धात् नाङ्गीकर्तुं शक्यत इत्यर्थः । तत्र हेतुमाह ॥ **अस्मात्पृथगिति** ॥ घटात्पृथगिति प्रतीतित इत्यर्थः ॥ **इदन्नेति** ॥ **प्रतीतिरिति** ॥ घटो नेति प्रतीतिरित्यर्थः ॥ **हीति** ॥ यत इत्यर्थः ॥ **विलक्षणेति** ॥ सर्वानुमतवैलक्षण्यवतीत्यर्थः । तथाचानुभवसिद्धवैलक्षण्यान्यथानुपपत्त्या अतिरिक्तपृथक्त्वाङ्गीकार आवश्यक इति भावः । ननु प्रतीतिनिष्ठवैलक्षण्यन्नार्थभेदप्रयुक्तं किन्तु वाचकशब्दभेदप्रयुक्तमेवेति शङ्कान्निरासितुमाक्षिपति ॥ **मुक्तावल्यां नन्विति** ॥ **शब्दवैलक्षण्यमेवेति** ॥ प्रतीतिवैलक्षण्यमित्यादिः । शब्दवैलक्षण्यकृतमेवेत्यर्थः । एवकारव्यवच्छेद्यमर्थं स्वयमेवाह ॥ **न त्वर्थवैलक्षण्यमिति** ॥ न त्वर्थवैलक्षण्यकृतमेवेत्यर्थः । अर्थवैलक्षण्यं विना शब्दवैलक्षण्यस्यापि दुरुपपादतया तदर्थमर्थवैलक्षण्यमवश्यमङ्गीकर्तव्यमित्याशयेन समाधत्ते ॥ **विनार्थभेदमिति** ॥ अर्थवैलक्षण्यानङ्गीकार इत्यर्थः ॥ **घटात्पृथगितिवदिति** ॥ पृथक्पदसमभिव्याहृतघटपदोत्तरमिवेत्यर्थः ॥ **घटो नेत्यत्रापीति** ॥ नञ्पदसमभिव्याहृतघटपदोत्तरमपीत्यर्थः ॥ **पञ्चमीप्रसङ्गादिति** ॥ पञ्चम्यापत्तेरित्यर्थः । तथाच भिन्नपदसमभिव्याहृतघटादिपदोत्तरमपि पञ्चम्युपपत्तये अन्यारादितरर्तेत्यादिसूत्रघटकान्यपदस्य अन्योन्याभावार्थकशब्दमात्रपरत्वावश्यकत्वात् नञ्पदस्यापि तादृशत्वेन तत्समभिव्याहृतघटपदोत्तरमपि पञ्चम्यापत्त्या घटान्नेति प्रयोगस्य साधुतापत्तेर्घटो नेत्यस्यासाधुतापत्तेश्चेति भावः । यद्यपि पृथक्पदस्यान्योन्याभावार्थकत्वानङ्गीकर्तृप्राचां मतेऽपि अन्यादिशब्दस्यान्योन्याभावार्थकतया घटादन्य इत्यादिप्रयोगदृष्टान्तेन घटो नेत्यत्र पञ्चम्यापादनसंभवात् तत्पक्षे एतादृशदोषमनुद्भाव्य पृथक्शब्दस्यान्योन्याभावार्थकत्वाङ्गीकर्तृनवीनमत एव तादृशदोषापादने घटादन्य इति प्रयोगदृष्टान्तमपहाय घटात्पृथगिति प्रयोगदृष्टान्तानुसरणे च बीजाभावः तथापि प्राचां मते सूत्रस्थान्यपदस्यान्योन्याभावार्थकविभक्तिमच्छब्दपरत्वस्वी-

## दिनकरीयम्.

म्बन्धविषयकत्वमुक्तप्रतीतेः कल्प्यमित्यर्थः । इदमुपलक्षणम् । प्रतीतेः सामानाधिकरण्यरूपपरम्परासम्बन्धविषयकत्वमङ्गीकृत्यान्योन्याभावानङ्गीकारे एतद्घटरूपमेतद्घटात् पृथगिति प्रतीत्यनुपपत्तेः । एतद्रूपमेतद्रूपात् पृथगिति प्रतीत्यापत्तेश्च अन्योन्याभावस्यातिरिक्तस्याभ्युपगमे तु पृथक्पदस्यान्योन्याभावलक्षणया सर्वमुपपादनीयमिति ॥ **पञ्चमीप्रसङ्गादिति** ॥ अन्योन्याभावार्थकपदयोगस्य पञ्चमीप्रयोजकस्य तत्र स-

**भिन्नो गुणान्तरं कल्प्यत इति ॥ ११३ ॥ ११४ ॥**

**प्रभा.**

कारेण नञ्पदस्यातादृशतया घटो नेत्यत्र पञ्चम्यापादनासंभवात् नवीनमत एव एतद्दूषणमभिहितम् । नवीनमते सूत्रस्थान्यपदस्यान्योन्याभावार्थकविभक्तिमच्छब्दपरत्वस्वीकारे पृथक्शब्दस्यान्योन्याभावार्थकत्वेऽपि विभक्तिमत्त्वाभावात् पृथक्शब्दयोगे पञ्चम्यप्राप्त्या घटात्पृथगिति प्रयोगानुपपत्तेः सूत्रस्थान्यपदस्यान्योन्याभावार्थकपदसामान्यपरत्वस्यैव स्वीकार्यत्वेन घटो नेत्यत्र पञ्चम्यापत्तिरूपदोषसङ्गतिःविभक्तिशून्यान्योन्याभावार्थकपृथक्शब्दप्रयोगे यथा पञ्चमी तथा तादृशनञ्पदप्रयोगेऽपि पञ्चम्यापत्तिरिति तुल्यदृष्टान्तेन दोषदानाय घटादन्य इत्यादिप्रयोगरूपदृष्टान्तं परित्यज्य घटात्पृथगिति प्रयोगरूपदृष्टान्तानुसरणमिति ध्येयम् । नच घटस्यान्योन्याभाव इत्यादौ मतद्वयेऽप्युक्तसूत्रबलात् पञ्चम्यापादनसंभवे तादृशस्थलमुपेक्ष्य घटो नेत्यत्र पञ्चम्यापादने किं बीजमिति वाच्यं सूत्रस्थान्यपदस्य प्रतियोगित्वत्वावच्छिन्नविषयतानिरूपितान्योन्याभावत्वावच्छिन्नविषयताशालिबोधतात्पर्येणोच्चरितान्योन्याभावार्थकशब्दपरतया घटस्यान्योन्याभाव इत्यत्रान्योन्याभावशब्दस्य संबन्धत्वावच्छिन्नविषयतानिरूपितान्योन्याभावनिष्ठविषयताशालिबोधतात्पर्येणोच्चरितत्वात् अन्योन्याभाव इति शब्दश्रवणे कस्यान्योन्याभाव इति संबन्धाकाङ्क्षाया एवोदयात् शेषे षष्ठीति सूत्रेण संबन्धसामान्ये षष्ठीविधानात् तत्र संबन्धत्वावच्छिन्नविषयतानिरूपितान्योन्याभावनिष्ठविषयताशालिबोधस्यैव जायमानत्वाच सूत्रस्थान्यपदेनान्योन्याभावपदस्य ग्रहणासंभवेन घटस्यान्योन्याभाव इत्यत्र मतद्वयेऽपि पञ्चम्यापादनासंभवात् घटो नेत्यत्रैव तदापादनं कृतमिति हृदयम् ॥ **तस्मादिति** ॥ पृथक्शब्दस्यान्योन्याभावार्थकत्वमते उक्तस्थले पञ्चम्यापत्तिरूपदोषादित्यर्थः ॥ **यदर्थकयोगे पञ्चमीति** ॥ यादृशार्थकपदयोगेन घटादिपदोत्तरं पञ्चमी साध्वी भवतीत्यर्थः ॥ **सोऽर्थ इति** ॥ तादृशोऽर्थ इत्यर्थः ॥ **अन्योन्याभावतो भिन्न इति** ॥ अन्योन्याभावापेक्षयातिरिक्त एवेत्यर्थः ॥ **गुणान्तरमिति** ॥ क्लृप्तगुणातिरिक्तगुण एवेत्यर्थः ॥ **कल्प्यत इति** ॥ घटः पटात्पृथगित्यादिप्रतीत्या विषयीक्रियत इत्यर्थः । तथाचान्योन्याभावपृथक्त्वयोरैक्ये नञ्पदसमभिव्याहारस्थलेऽपि पञ्चम्यापत्त्या रूपादिगुणानां निरुक्तप्रमितिविषयत्वासंभवेन चातिरिक्तगुणतया च पृथक्त्वमङ्गीकार्यमेवेति भावः । ननु पृथक्शब्दस्यान्योन्याभावार्थकत्वाभावे तस्य निरुक्तसूत्रप्रतिपाद्यपदत्वाभावेन तद्योगे पञ्चम्यनुपपत्तिरिति चेन्न पृथग्विनानानाभिस्तृतीयान्यतरस्यां इति सूत्रेण पृथगादिशब्दयोगे द्वितीयातृतीयापञ्चमीविभक्तीनां विकल्पेन विधानात् तादृशप्रमाणेनैव पृथक्पदयोगस्थले सर्वत्र पञ्चम्युपपत्तेः न काप्यनुपपत्तिरिति विश्वनाथपञ्चाननस्य निगूढाभिप्रायः । प्राचीनमतानुयायिनस्तु सूत्रस्थान्यपदस्य पृथक्त्ववाचकशब्दपरतया तादृशशब्दयोग एव पञ्चमीप्राप्त्या नञः पृथक्त्ववाचकत्वाभावात् घटो नेत्यादौ न पञ्चम्यापत्तिः नचैवं घटादन्य इत्यादौ पञ्चम्यनुपपत्तिः अन्यभिन्नशब्दादेरपि पृथक्त्ववाचकत्वात् अन्योन्याभावार्थकशब्दयोगे प्रतियोग्यनुयोगिवाचकपदयोः समानविभक्तिकत्वनियमेनान्यादिशब्दानां अन्योन्याभावार्थकत्वासंभवात् । नच घटस्यान्योन्याभावः घट इत्यत्रान्योन्याभावपदस्यान्योन्याभावार्थकतया तत्समभिव्याहृतप्रतियोग्यनुयोगिवाचकपदयोः समानविभक्तिकत्वाभावेनोक्तनियमासंभव इति वाच्यं प्रतियोगिनिष्ठप्रकारतानिरूपितप्रतियोगितात्वावच्छिन्नविषयतानिरूपितान्योन्याभावनिष्ठविषयताशालिबोधौपयिकान्योन्याभावार्थकपदयोग एव प्रतियोग्यनुयोगिवाचकपदयोः समानविभक्तिकत्वनियमाङ्गीकारात् अन्योन्याभावपदस्य तादृशशाब्दबोधौपयिकत्वाभावेनोक्तनियमभङ्गाभावात् । एवंच न काप्यनुपपत्तिरित्याहुः । तन्नान्यादिपदस्य पृथक्त्वरूपगुणवाचकत्वस्वीकारे गुणत्वं कर्मत्वादन्यदित्यादिप्रतीतिप्रयोगयोः अनुपपत्तिः गुणादौ गुणानङ्गीकारेण गुणत्वे कर्मत्वावधिकपृथक्त्वाभावात् गुणत्वाश्रये पृथक्त्वाभावेनाश्रयनिष्ठपृथक्त्वमादायापि तदुपपादनासंभवात् । तस्मात् अन्यभिन्नादिशब्दानां अन्योन्याभावार्थकत्वं अवश्यमङ्गीकार्यमिति नोक्तरीतिरादरणीयेति । नव्यास्तु पृथक्त्वमन्योन्याभाव एव न गुणान्तरं प्रमाणाभावात् नचैवं सति घटो नेत्यत्र पञ्चम्यापत्तिर्घटात्पृथगित्यत्र पञ्चम्यनुपपत्त्या सूत्रस्थान्यपदस्यान्योन्याभावार्थकविभक्तिमत्पदपरत्वासंभवेनान्योन्याभावार्थकपदसामान्ययो-

**अप्राप्तयोस्तु या प्राप्तिः सैव संयोग ईरितः ।**
**कीर्तितस्त्रिविधस्त्वेष आद्योऽन्यतरकर्मजः ॥ ११५ ॥**

संयोगं निरूपयति ॥ अप्राप्तयोरिति ॥ तं विभजते ॥ कीर्तित इति ॥ एष सं-

**प्रभा.**

गस्यात्रापि सत्त्वादिति वाच्यम्। घटस्यान्योन्याभाव इत्यादौ पञ्चम्यापत्तिवारणाय सूत्रस्थान्यपदस्य प्रतिया-गिनिष्ठप्रकारतानिरूपितप्रतियोगितात्वावच्छिन्नप्रकारतानिरूपितान्योन्याभावनिष्ठविषयताशालिबोधौपयिका-न्योन्याभावार्थकशब्दपरत्वावश्यकतया घटो नेत्यत्र प्रतियोगितासंसर्गकबोधस्यैव जायमानतया नञ्पदस्य घटनिष्ठप्रकारतानिरूपितप्रतियोगितात्वावच्छिन्नसांसर्गिकविषयतानिरूपितान्योन्याभावनिष्ठविषयताशालिबो-धौपयिकत्वेऽपि तादृशप्रतियोगितात्वावच्छिन्नप्रकारतानिरूपितान्योन्याभावनिष्ठविषयताशालिबोधौपयिक-त्वाभावेन तत्र पञ्चम्यापत्तेरभावात्। एतेन घटो नेत्यत्र पञ्चम्यापत्तिवारणाय केषांचित्सूत्रस्थान्यपदस्या-न्योन्याभावार्थकनिपातातिरिक्तपदपरत्ववर्णनं प्रत्युक्तम्। पृथक्शब्दस्यापि निपातत्वेन घटात्पृथगित्यत्रापि पञ्चम्यनुपपत्तेः घटस्यान्योन्याभाव इत्यत्रान्योन्याभावपदस्य निपातातिरिक्ततया तत्र पञ्चम्यापत्तेश्च। नचैवं सति अन्यारादितरर्तेत्यादिसूत्रेणैव पृथक्शब्दप्रयोगेऽपि पञ्चम्युपपत्तौ पृथग्विनेत्यादिसूत्रे पुनः पृथक्पदग्र-हणमनर्थकमिति वाच्यम्। पूर्वसूत्रेण पृथक्शब्दयोगे पञ्चम्याः प्राप्तत्वेऽपि तृतीयाद्वितीयापञ्चमीविभक्तीनां विकल्पेन प्राप्तिलाभाय पृथग्विनेत्यादिसूत्रे पुनः पृथक्पदग्रहणमावश्यकमिति रीत्या पृथक्त्वस्य गुणान्तरत्व प्रमाणाभावात् अन्योन्याभावरूपत्वमेवेत्याहुः। तत्र तद्घटस्तद्घटैतद्घटोभयस्मादन्यः इत्यादिप्रतीतिव्यवहार-वत्प्रामाणिकानां एतद्घटः तद्घटैतद्घटोभयस्मात्पृथगिति प्रतीतिव्यवहाराभावात् काणादशास्त्रप्रवर्तकगङ्गेशो-पाध्यायानुमतत्वाच्च अन्योन्याभावातिरिक्तमेव पृथक्त्वं गुणान्तरमवश्यमङ्गीकार्यमिति दिक् ॥ ११३ ॥ ११४ ॥ इति पृथक्त्वग्रन्थः ॥

मूलेऽप्राप्तयोस्तु या प्राप्तिरित्यादिना संयोगस्वरूपमुक्तम्। तत्र प्राप्तिस्संबन्धः सच समवायोऽ-पीत्यतः अप्राप्तयोरित्युक्तम्। असंबद्धत्वेन वर्तमानयोरित्यर्थः। संबन्धानधिकरणसंबन्धान्तराधिकरणकाल-वर्तिनोरिति यावत्। तथाच तादृशयोस्संबन्धो न समवाय इति तादृशसंयोगस्य स्वरूपत्वे न किमपि बाध-कमिति भावः। लक्षणन्तु संयोगस्संयुक्तप्रत्ययनिमित्तमिति भाष्यस्थसंयुक्तप्रत्ययशब्दस्य संयुक्ताविति प्र-त्ययो यस्मादिति व्युत्पत्त्या संयुक्ताविति व्यवहारो लभ्यते तत्र निमित्तं प्रतिपाद्यतासंबन्धावच्छिन्नतादृश-व्यवहारनिष्ठकार्यतानिरूपितसमवायसंबन्धावच्छिन्नकारणतावदित्यर्थलाभात् तादृशकारणत्वं संयोगस्य लक्षण-मिति लभ्यते। यादृशसंयोगाश्रये तेन संबन्धेन तादृशव्यवहारो न जातः तादृशसंयोगे निरुक्तकारणत्वरूप-लक्षणाभावादव्याप्तिवारणाय तादृशकारणत्वसमानाधिकरणरूपावृत्तिजातिमत्त्वं तादृशकारणतावच्छेदकतया सिद्धसंयोगत्वजातिमत्त्वं वा लक्षणं वाच्यमिति न कोऽपि दोषः। संयोगं विभजते ॥ कीर्तितस्त्रि-

**दिनकरीयम्.**

त्वादिति भावः। अत्र नव्याः अन्योन्याभाव एव पृथक्त्वं न तु गुणान्तरं। नच घटो नेत्यत्र पञ्चम्यापत्तिरन्यो-न्याभावविशिष्टार्थकपदयोग एवान्यारादितरर्ते इत्यादिसूत्रेण पञ्चमीविधानात् नञस्तु नान्योन्याभावविशिष्टा-र्थकत्वं परं त्वन्योन्याभावार्थकत्वमित्यस्यान्यत्र सिद्धान्तितत्वात्। यदि च घटाद्भेद इत्यादौ पञ्चम्यनुपप-त्त्या भेदार्थकपदयोगः पञ्चमीप्रयोजकतयान्यारादिति सूत्रेण बोध्यत इति घटो न पट इत्यत्र पञ्चम्यापत्ति-र्दुर्वारेति विभाव्यते तथापि निपातातिरिक्तान्योन्याभावार्थकपदयोगस्यैव पञ्चमीप्रयोजकत्वं कल्प्यते अनुशा-सनस्य प्रयोगानुरोधित्वादित्याहुः ॥ ११३ ॥ ११४ ॥

मूलेऽप्राप्तयोरित्यादिना संयोगस्वरूपमुक्तं तत्र प्राप्तिः सम्बन्धः स च समवायोऽपीत्यत उक्तम् ॥ **अप्राप्तयोरिति** ॥ लक्षणं तु संयोगत्वं जातिरिति ॥ **मूले आद्योऽन्यतरकर्मज इति** ॥ ननु संयोगत्वं नान्यतरकर्मणः कार्यतावच्छेदकमुभयकर्मजसंयोगे संयोगजसंयोगे च व्यभिचारादिति चेन्न विजातीयक-

### प्रभा.

**विधस्त्वेष इति** ॥ एष उक्तलक्षणलक्षितसंयोगः त्रिविधस्त्वित्यत्र तुशब्दः प्राधान्येन संयोगस्य त्रैविध्येऽनास्थासूचनाय मूलकारस्य तत्रैव निर्भरस्वीकारे कर्मजस्संयोगजश्चेति विभागभाष्यविरोधापत्तेः। परन्तु संयोगः द्विविधः कर्मजस्संयोगजश्च कर्मजोऽपि द्विविधः एककर्मज उभयकर्मजश्चेति विभाग एव निर्भरः । एवंच फलतः संयोगस्य त्रैविध्यपर्यवसानाभिप्रायेण त्रिविध इत्युक्तमेवं विभागस्य त्रैविध्यप्रतिपादकोत्तरमूलग्रन्थोऽपि अनयैव रीत्या समर्थनीयः । अत्र कर्मजसंयोगत्वं क्रियानिष्ठासमवायिकारणताकसंयोगत्वरूपं संयोगाजन्यसंयोगं प्रति क्रियात्वावच्छिन्नस्यासमवायिकारणत्वात् क्रियात्वावच्छिन्नासमवायिकारणतानिरूपिततादृशसंयोगनिष्ठकार्यतावच्छेदकतया सिद्धो यस्संयोगत्वव्याप्यो जातिविशेषः तद्वत्त्वं वा । भाष्यस्थकर्मजशब्दोऽपि कर्मजसंयोगमात्रवृत्तिवैजात्यावच्छिन्नपर एव नातः कर्मजसंयोगत्वरूपविभाजकधर्मस्य कर्मजत्वविशिष्टसंयोगत्वं संयोगजत्वविशिष्टकर्मजत्वं वेति विनिगमनाविरहेण संयोगव्यक्तिभेदेन भिन्नस्वरूपसंबन्धरूपकर्मजत्वघटितत्वेनानेकत्वेऽपि दोषः । एवं संयोगजसंयोगत्वं संयोगासमवायिकारणकसंयोगत्वं कर्माजन्यसंयोगं प्रति संयोगत्वावच्छिन्नस्यापि समवायिकारणत्वात् संयोगत्वावच्छिन्नासमवायिकारणतानिरूपिततादृशसंयोगनिष्ठकार्यतावच्छेदकतया सिद्धसंयोगत्वव्याप्यजातिविशेषवत्त्वं वा संयोगजसंयोगत्वम् । भाष्यस्थसंयोगजशब्दोऽपि संयोगासमवायिकारणकसंयोगमात्रवृत्तिवैजात्यावच्छिन्नपर एव नातः संयोगजसंयोगत्वरूपविभाजकधर्मस्य विनिगमनाविरहेण स्वरूपसंबन्धरूपजन्यत्वघटितत्वेन चानेकत्वेऽपि दोषः । एवं कर्मजसंयोगविभाजकान्यतरकर्मजत्वं नान्यतरात्मकक्रियाजन्यत्वं फलीभूतसंयोगाश्रयान्यतरसमवेतक्रियाजन्यत्वं एकक्रियाजन्यत्वं वा तस्योभयक्रियाजन्यसंयोगेऽपि सत्त्वात् । नापि स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकक्रियानिष्ठासमवायिकारणतावच्छेदकत्वरूपं मेषद्वयनिष्ठक्रिययोरपि प्रत्येकं तादृशसंयोगसमानाधिकरणभेदप्रतियोगितावच्छेदकतया तन्निष्ठासमवायिकारणताकत्वस्य तादृशसंयोगेऽपि सत्त्वात् किन्तु स्वासमवायिकारणक्रियाव्यक्तिद्वयकं यद्यत्स्वं तत्तद्व्यक्तिभेदकूटवत्त्वक्रियाजन्यतावच्छेदकतया सिद्धनिरुक्तवैजात्याश्रयत्वोभयवत्त्वं क्रियाव्यक्त्यसहकृतक्रियानिष्ठासमवायिकारणतानिरूपितसंयोगनिष्ठकार्यतावच्छेदकतया सिद्धा क्रियाजन्यतावच्छेदकतया सिद्धवैजात्यव्याप्या या जातिः तद्वत्त्वं वा अन्यतरकर्मजसंयोगत्वं अतो नाननुगमः । एवं कर्मजसंयोगविभाजकोभयकर्मजत्वं न कर्मद्वयासमवायिकारणकत्वं कर्मद्वयगतद्वित्वावच्छिन्नस्यैकदा एकत्रावर्तमानत्वेन तेन रूपेणासमवायिकारणत्वासंभवात् । नापि स्वनिरूपितासमवायिकारणताश्रयक्रियाव्यक्तिद्वयकत्वं अननुगमात् । किंतु कर्मसहकृतकर्मनिष्ठासमवायिकारणतानिरूपितसंयोगनिष्ठकार्यतावच्छेदकतया सिद्धा क्रियाजन्यतावच्छेदकवैजात्यव्याप्या च या जातिः तादृशजातिमत्त्वरूपमेव तदिति न काप्यनुपपत्तिः । ननु संयोगाजन्यसंयोगं प्रति क्रियासामान्यस्य तादृशसंयोगविशेषं प्रति अन्यतरकर्मणः उभयकर्मणो वा कथं कारणत्वं इषुपर्वतसंयोगाधिकरणपर्वते क्रियात्वावच्छिन्नाभावेन संयोगाजन्यसंयोगमात्रे क्रियासामान्यस्य संयोगाजन्यसंयोगविशेषं प्रति क्रियाव्यक्त्यसहकृतक्रियायाश्च हेतुत्वासंभवात् संयोगाजन्यसंयोगविशेषरूपोभयकर्मस्थलीयसंयोगं प्रति क्रियायाः सामान्यरूपेण हेतुत्वाभावेन तत्तद्व्यक्तित्वेन व्यभिचारित्वेन तत्र कर्मसहकृतकर्मणोऽपि हेतुत्वासंभवादिति चेदत्र केचित् कार्याव्यवहितप्राक्क्षणावच्छेदेन कार्यतावच्छेदकावच्छिन्नयत्किञ्चिद्व्यक्त्यधिकरणीभूतयावद्व्यक्तिवृत्त्यभावप्रतियोगितानवच्छेदकधर्मवत्त्वमेव कारणताघटकम् । एवंच कार्याव्यवहितप्राक्क्षणावच्छेदेन कार्यतावच्छेदकावच्छिन्नयत्किञ्चिद्व्यक्त्यधिकरणयावद्व्यक्तिषु कारणाभाववत्त्वमेव व्यभिचारः प्रकृते इषोरपि तादृशयावदन्तर्गततया तत्र क्रियाभावासत्त्वादिति दिगित्याहुः । तदसत् ईदृशधर्मवत्त्वस्य कारणताघटकत्वे शब्दं प्रत्याकाशस्य कारणत्वानुपपत्तिः आकाशस्य यावत्त्वाभावात् । नच कार्यतावच्छेदकाश्रययत्किञ्चिद्व्यक्त्यधिकरणयावन्निष्ठत्वं तादृशयत्किञ्चिद्व्यक्त्यधिकरणताव्यापकत्वरूपमेव तस्य घटभेदादौ प्रसिद्धत्वान्नाकाशस्य कारणत्वानुपपत्तिरिति वाच्यम् तथाप्याकाशभेदस्यापि तादृशाधिकरणत्वसमानाधिकरणाभावप्रतियोगितानवच्छेदकाभावत्वादिमत्त्वेन तस्यापि व्यापकतयोक्तानुपपत्तेर्दुर्वारत्वात् । नच तादृशाधिकरण-

## प्रभा.

त्वसमानाधिकरणाभावप्रतियोगितावच्छेदका यावन्तो धर्माः तत्तद्व्यक्तिभेदकूटविशिष्टं कारणतावच्छेदकसंबन्धावच्छिन्नयद्यद्धर्मावच्छिन्नप्रतियोगिताकाभावत्वं तत्तद्धर्मभेदकूटविशिष्टधर्मवत्त्वस्य कारणताघटकत्वस्वीकारान्नोक्तानुपपत्तिः आकाशत्वावच्छिन्नप्रतियोगिताकभेदत्वस्यापि शब्दाश्रयत्वसमानाधिकरणाभावप्रतियोगितावच्छेदकतया तत्तद्व्यक्तिभेदकूटवत्त्वाभावेनाकाशत्वस्यापि तादृशभेदकूटविशिष्टतत्तद्भेदत्वाश्रयनिरूपितप्रतियोगितावच्छेदकतत्तद्धर्मव्यक्तित्वावच्छिन्नप्रतियोगिताकभेदकूटवत्त्वादिति वाच्यम् कारणत्वघटकतादृशधर्मवत्त्वशरीरे कार्यतावच्छेदकाश्रयस्य यत्किञ्चिद्व्यक्तित्वेन निवेशे भेदकूटद्वयनिवेशे व्यापकत्वघटितव्यापकत्वनिवेशे च प्रयोजनविरहेण व्यर्थतया तादृशधर्मवत्त्वघटितकारणत्वस्याप्रामाणिकत्वात् सकलतान्त्रिकसिद्धान्तविरुद्धत्वाच्च । नच पर्वतेषुसंयोगादौ इष्वादिक्रियाकारणत्वान्यथानुपपत्तिरेव ईदृशकारणत्वस्वीकारे मानमिति वाच्यम् तत्सामानाधिकरण्यावच्छेदकान्यथासिद्ध्यनिरूपकधर्मवत्त्वरूपतान्निरूपितकारणत्वस्य पर्वतेष्वादिसंयोगासमवायिकारणेष्वादिक्रियायां सत्त्वेनान्यथानुपपत्त्यभावादिति । अस्मद्गुरुचरणास्तु प्रतियोगितासंबन्धेन संयोगाजन्यसंयोगं प्रति समवायेन क्रियाहेतुत्वस्वीकारान्नोक्तानुपपत्तिः । पर्वतेषुसंयोगादेरिष्वादिक्रियाजन्यत्वेनेष्वादिप्रतियोगिकत्वादिष्वादेरेव कार्यतावच्छेदकीभूतप्रतियोगितासंबन्धेन पर्वतेष्वादिसंयोगाधिकरणत्वेन तत्र क्रियाया अपि सत्त्वात् । नचैवं सत्यसमवायिकारणस्थले समवायस्य कार्यतावच्छेदकसंबन्धत्वनियमभङ्गप्रसङ्ग इति वाच्यं तादृशनियमे मानाभावात् समवायिकारणस्थल एव तथा नियमात् । परन्तु समवायसंबन्धेन कार्याधिकरणे कारणतावच्छेदकसंबन्धेन समवायेनैकार्थसमवायेन वा कारणत्वस्यैवासमवायिकारणतायां नियामकत्वस्वीकारान्न पृथिवीपरमाणुवृत्तिरूपध्वंसादौ तेजस्संयोगस्यासमवायिकारणत्वापत्तिरिति व्याचक्षुः । वस्तुतस्तु कारणतावच्छेदकसंबन्धेन स्वावच्छिन्नोत्तरक्षणावच्छेदेन स्वावच्छिन्नसमानाधिकरणाभावीयकार्यतावच्छेदकसंबन्धावच्छिन्नप्रतियोगितानवच्छेदककार्यतावच्छेदकधर्मकमुक्तान्यथासिद्ध्यनिरूपकं च यत्त्वं तादृशधर्मवत्त्वमेव कारणत्वं नचेदृशधर्मवत्त्वस्य कारणतारूपत्वे मानाभाव इति वाच्यं अनन्यथासिद्धनियतपश्चाद्भावित्वं कार्यत्वमिति प्राचीनसिद्धान्तस्यैव मानत्वात् । एवंच स्वात्मककर्मासहकृतकर्मत्वावच्छिन्नोत्तरक्षणावच्छेद्यः कारणतावच्छेदकसमवायसंबन्धावच्छिन्नतादृशकर्मत्वावच्छिन्नाधिकरणनिष्ठाभावः न संयोगाजन्यसंयोगवृत्तिवैजात्यावच्छिन्नाभाव इति तस्यानवच्छेदकतया तादृशधर्मकान्यथासिद्ध्यनिरूपकं स्वं तादृशकर्मत्वमिति नोक्तानुपपत्तिः । अथवानियतरासभादेः अनन्यथासिद्धत्वविशेषणेनैव वारणसंभवात् कारणताशरीरे व्यापकत्वविशेषणं व्यर्थमेव । इत्थंच कार्याव्यवहितपूर्वकालावच्छेद्या या कार्यतावच्छेदकसंबन्धेन कार्याधिकरणनिरूपितकारणतावच्छेदकसंबन्धावच्छिन्नवृत्तिता तदवच्छेदकान्यथासिद्ध्यनिरूपकधर्मवत्त्वमेव कारणत्वम् । एवंच संयोगाजन्यसंयोगरूपपर्वतेष्वादिसंयोगवृत्तिवैजात्यरूपकार्यतावच्छेदकावच्छिन्नसमवायसंबन्धावच्छिन्नाधिकरणात्मकेषुनिरूपितसमवायसंबन्धावच्छिन्नवृत्तितायास्तादृशकार्याव्यवहितपूर्वकालावच्छिन्नायाः इष्वादिक्रियायां सत्त्वेन तादृशवृत्तितावच्छेदकान्यथासिद्ध्यनिरूपकधर्मः कर्मासहकृतकर्मत्वमिति इष्वादिक्रियायामपि तादृशधर्मवत्त्वरूपकारणत्वसत्त्वान्नोक्तानुपपत्तिप्रसक्तिर्नवा दोषान्तरप्रसक्तिरिति प्रतिभाति । अत्रेदं बोध्यं संयोगविभाजकक्रियाजन्यतावच्छेदकवैजात्यव्याप्यवैजात्यावच्छिन्नं प्रति क्रियान्तरासहकृतक्रियायाः क्रियान्तरसहकृतक्रियायाश्च न तेन रूपेण हेतुत्वं विशेषणविशेष्यभावे विनिगमनाविरहेण गुरुरूपेण तादृशवैजात्यव्याप्यैकैकधर्मावच्छिन्नं प्रति कार्यकारणभावद्वयापत्तेः किन्तु क्रियान्तरासहकृतक्रियावृत्तिवैजात्येन क्रियान्तरसहकृतक्रियावृत्तिवैजात्येन च हेतुत्वं वाच्यम् । तत्र यादृशकर्मभ्यां मेषयोस्संयोगः तयोः प्रत्येककर्मणा मेषाकाशादिसंयोगस्यापि जायमानतया तयोः कर्मणोः क्रियान्तरासहकृतक्रियावृत्तिवैजात्यस्याप्यावश्यकत्वात् । क्रियावृत्तितादृशवैजात्ययोः व्याप्यव्यापकभाव एवाङ्गीकरणीय इति न कोऽपि दोषः । परन्तु क्रियान्तरासहकृतक्रियया जायमानेष्वादिपर्वतसंयोगस्याभिघातरूपतया तादृशक्रियया जायमानतूलादिपर्वतसंयोगस्य नोदनादिरूपतया तादृशक्रियाजन्यतावच्छेदकवैजात्यस्य नोदनत्वादिना साङ्कर्यवारणाय तादृशक्रियाजन्यतावच्छेदकं नोदनत्वाभिघातत्वव्याप्य-

तथोभयस्पन्दजन्यो भवेत् संयोगजोऽपरः।
आदिमः श्येनशैलादिसंयोगः परिकीर्तितः॥ ११६॥

प्रभा-

वजात्यद्वयमङ्गीकार्यम्। एवं क्रियान्तरसहकृतक्रियया जायमानमेषद्वयसंयोगादेरभिघातरूपतया तादृशक्रियया जायमानतूलद्वयसंयोगादेश्च नोदनरूपतया च तादृशक्रियाजन्यतावच्छेदकवैजात्यस्यापि नोदनत्वादिना साङ्कर्यवारणाय प्रत्येकं नोदनत्वाभिघातत्वव्याप्यवैजात्यद्वयमवश्यमङ्गीकार्यम्। एवंच क्रियासामान्यजन्यतावच्छेदकसंयोगविभाजकवैजात्यव्याप्यानां वैजात्यानां चतुष्ट्वात् कीदृशवैजात्याभ्यां कर्मजसंयोगस्य द्वैविध्यमित्यत्र विनिगमनाविरहेण कर्मजसंयोगस्य द्वैविध्येन विभागासंभवात् चातुर्विध्येन विभागस्याप्रामाणिकत्वात् सकलतान्त्रिकसिद्धान्तविरुद्धत्वाच्च कर्मजसंयोगस्य विभागकरणं निर्युक्तिकमेव। वस्तुतस्तु क्रियान्तरासहकृतक्रियावृत्तिवैजात्यस्य तत्सहकृतक्रियायामपि उक्तरीत्या सत्त्वेन क्रियासहकृतक्रियावृत्तिवैजात्यव्यापकत्वादुत्क्षेपणत्वादिना तस्य साङ्कर्याभावेऽपि कर्मसहकृतकर्मवृत्तिवैजात्यस्योत्क्षेपणत्वादिना साङ्कर्यवारणाय कर्मसहकृतक्रियायामुत्क्षेपणत्वादिव्याप्यवैजात्यचतुष्टयं स्वीकार्यम्। तत्र परस्परव्यभिचारवारणायैकैकवैजात्यावच्छिन्नसहकृतापरवैजात्यावच्छिन्नजन्यतावच्छेदकं नोदनत्वादिव्याप्यवैजात्यद्वयमिति रीत्या क्रियासहकृतक्रियाजन्यसंयोगेषु वैजात्याष्टकाङ्गीकार आवश्यकः। एवं उत्क्षेपणादिकर्मभ्यां संयोगे मानाभावेनोत्क्षेपणावक्षेपणाभ्यां आकुञ्चनप्रसारणाभ्यामेव संयोगो व्याप्यः। तत्रापि परस्परव्यभिचारावारणायैकवैजात्यावच्छिन्नासहकृतापरवैजात्यावच्छिन्नजन्यतावच्छेदकनोदनादिव्याप्यवैजात्याष्टकविरुद्धमेव एकवैजात्यावच्छिन्नसहकृतापरवैजात्यावच्छिन्नजन्यतावच्छेदकनोदनादिव्याप्यवैजात्यचतुष्टयमवश्यमङ्गीकार्यमेव। एवंच कीदृशवैजात्याभ्यां कर्मजसंयोगस्य द्वैविध्यमित्यत्र विनिगमकाभावात् द्वादशधा विभागस्याप्रामाणिकत्वात् भाष्यकाराद्यननुमतत्वाच्च कर्मजसंयोगस्योक्तरीत्या विभागकरणमप्रामाणिकमेव। आद्योऽन्यतरकर्मज इत्यादि मूलन्तु एकया क्रियया यथा संयोगः यथा च क्रियाद्वयेनैकसंयोगो जायते तथा त्रिभिः कर्मभिश्चतुर्भिः कर्मभिर्वा एकस्संयोगो न जायत इति शिष्यबोधतात्पर्येणोच्चारितं नतु विभागपरं अत एव कर्मजोऽपि द्विधैव परिकीर्तित इत्यादिना कर्मजसंयोगस्य द्वैविध्येन विभागकरणमप्रेतनं साधु सङ्गच्छते किन्तु कर्मजस्संयोगजश्चेति भाष्यरीत्या संयोगस्य द्वैविध्यप्रतिपादकमेवानयैव रीत्या विभागस्थलेऽपि सर्वमूह्यमिति प्रतिभाति॥ ननु भवेत्संयोगजोऽपर इति मूलेन संयोगजसंयोगः प्रतिपादितः तत्र प्रमाणाभावः कपालक्रियाजन्यकपालतरुसंयोगोत्तरकालीनकुम्भतरुसंयोगं प्रत्यपि समवायघटितसामानाधिकरण्यसंबन्धेन कपालक्रियाया एव हेतुत्वसंभवात् अवयविसमवेतक्रियां प्रत्यवयवसमवेतक्रियायाः समवायघटितसामानाधिकरण्यसंबन्धेनैव हेतुत्वस्य क्लृप्तत्वादिति चेन्न कपालतरुसंयोगजनककपालक्रियाया कुम्भतरुसंयोगकाले कपालतरुसंयोगेन नाशादसमवायिकारणस्य कार्यसहभावेन हेतुतया तदभावात् तेन कुम्भतरुसंयोगोत्पत्त्यसंभवात् तत्र कपालतरुसंयोगोत्तरं कुम्भतरुसंयोगापलापे कुम्भसंयोगी वृक्ष इति सर्वानुभवसिद्धप्रतीतिव्यवहारयोरनुपपत्तेः तस्मात् संयोगजसंयोगाङ्गीकार आवश्यकं इति। केचित्तु वस्तुतो यत्र कपालक्रियया कपालान्तरेण तरुणा चैकस्मिन् क्षणे संयोगः तदुत्तरक्षणे घटोत्पत्तिः कपालक्रियानाशश्च तत्र नाशकस्योत्तरसंयोगस्य पूर्वं सत्त्वात् तदुत्तरक्षणे कुम्भतरुसंयोगानुपपत्तिः पूर्वक्षणे कपालक्रियानाशात् तस्मात् कपालतरुसंयोग एव तत्र कारणमिति संयोगासिद्धिर्निराबाधैवेत्याहुः। तदसत् वृक्षकपालसंयोगजनककपालक्रियाजन्यकपालद्वयसंयोगस्य घटारम्भकत्वे प्रमाणाभावात् चक्रावच्छेविजातीयकपालद्वयसंयोगस्यैव घटासमवायिकारणत्वात् अन्यथा संयोगेन घटं प्रति तादात्म्येन चक्रस्य संयोगेन दण्डस्य च हेतुत्वानुपपत्तेः वृक्ष एव संयोगेन घटोत्पत्तिस्वीकारेण संयोगसंबन्धावच्छिन्नोत्पत्त्यवच्छेदकतासंबन्धेन

## दिनकरीयम्

मत्वेन विजातीयसंयोगत्वेन समवायेन हेतुहेतुमद्भावात् उभयकर्मजसंयोगादौ च तादृशवैजात्याभावेन व्यभिचाराभावात्। एवमुभयकर्मणः संयोगस्यापि च संयोगं प्रति हेतुत्वं बोध्यम्॥ **मूले भवेत् संयोगजोऽपर इति**॥ ननु संयोगजसंयोगे मानाभावः यत्र कपालक्रियया कपालतरुसं-

मेषयोः सन्निपातो यः स द्वितीय उदाहृतः ।
कपालतरुसंयोगात् संयोगस्तरुकुम्भयोः ॥ ११७ ॥
तृतीयः स्यात् कर्मजोऽपि द्विधैव परिकीर्तितः ।
अभिघातो नोदनं च शब्दहेतुरिहादिमः ॥ ११८ ॥

योगः ॥ सन्निपातः संयोगः ॥ द्वितीयः उभयकर्मजः ॥ तृतीय इति ॥ संयोगजसंयोग इत्यर्थः । तृतीयः स्यादिति पूर्वेणान्वितम् ॥ आदिमः अभिघातः ॥ द्वितीयो नो-

प्रभा.

घटस्यासत्त्वात् । नचात्र तरुशब्दश्चक्रलक्षक एवेति वाच्यं तथापि कपालचक्रसंयोगजनककपालक्रियाजन्यकपालद्वयसंयोगस्य चक्रावच्छेद्यत्वाभावेनारम्भकसंयोगत्वानङ्गीकाराच्चक्रसंयुक्तकपाले कपालान्तरक्रियाजन्यकपालद्वयसंयोगस्य चक्रावच्छेद्यत्वेऽपि तादृशसंयोगजनकक्रियया कपालचक्रसंयोगे मानाभावात् । अस्तु वा तादृशक्रियया युगपत् कपालद्वयसंयोगः कपालान्तरचक्रसंयोगश्च तथापि तत्तदुत्तरक्षणोत्पन्नघटे जायमानचक्रघटसंयोगस्य चक्रक्रियाजन्यत्वमेवाभ्युपेयते क्रियाघटितसामग्र्याः प्राबल्यात् । नच तरुशब्दस्याकाशलक्षकत्वस्वीकारात् यत्र कपालक्रियया कपालाकाशसंयोगः कपालद्वयसंयोगश्च तदुत्तरक्षणे घटोत्पत्तिः तदनन्तरं जायमानघटाकाशसंयोगस्य न घटकर्मासमवायिकारणकत्वं उत्पत्तिकालिकघटे कर्माभावात् कपालक्रियायाश्च घटोत्पत्तिकाले नाशेनासमवायिकारणत्वासंभवात् । अतः तत्र कपालाकाशसंयोगस्यासमवायिकारणत्वावश्यकतया संयोगजसंयोगसिद्धिर्निराबाधेति वाच्यं घटोत्पत्तिद्वितीयक्षणे घटाकाशसंयोगानङ्गीकारे क्षतिविरहात् अनवरतपरिस्पन्दमानपवनक्रियाजन्यपवनघटसंयोगाच्चक्रक्रियाजन्यचक्रघटसंयोगाद्वा जायमानघटक्रिययैव घटाकाशसंयोगोत्पत्तिस्वीकारात् तावतैवाकाशादेः विभुत्वोपपादनसंभवात् कपालतरुसंयोगादित्यादिमूलप्रतिपाद्यकपालक्रियाजन्यकपालतरुसंयोगोत्पत्तिद्वितीयक्षणोत्पत्तिककुम्भतरुसंयोगस्य कपालक्रियायाः कार्यसमानकालीनत्वाभावात् तदसमवायिकारणकत्वासंभवेन कपालतरुसंयोगासमवायिकारणकत्वादेव संयोगजसंयोगसिद्धिसंभवे एतादृशस्थलविशेषगवेषणप्रयासवैफल्याच्च । नच कार्यनाशजनकनाशप्रतियोग्यसमवायिकारणस्यैव कार्यसमानकालीनत्वात् क्रियायाःअतादृशत्वेन पूर्ववृत्तित्वमात्रेण हेतुत्वस्य वक्तुं शक्यतया कपालक्रियाजन्यकपालतरुसंयोगजनककपालक्रियायाःकुम्भसरुसंयोगपूर्वकालीनतया तादृशसंयोगं प्रत्यसमवायिकारणत्वसंभवादुक्तरीत्या संयोगजसंयोगसिद्धिर्न भवतीत्याशयेन स्थलविशेषान्वेषणं कृतमिति वाच्यम् । तथा सति विनश्यदवस्थापन्नक्रिययाप्युत्तरसंयोगोत्पत्तिसंभवात् क्रियाया उत्तरसंयोगनाश्यत्वमिति सकलतान्त्रिकसिद्धान्तविरोधापत्तेः । तस्मात् क्रियाया अपि कार्यकालवृत्तितयैवासमवायिकारणत्वावश्यकतया यथाश्रुतमूलप्रतिपाद्यस्थल एव संयोगजसंयोगसिद्धिसंभवे एतादृशस्थलविशेषपर्यन्तानुसरणवैफल्यमनिवार्यमेव । नचोक्तदोषात् हस्तक्रियया हस्ततरुसंयोगोत्तरं शरीरतरुसंयोगोत्पत्त्यसंभवेऽपि हस्ततरुसंयोगकाले तादृशसंयोगोत्पत्तौ बाधकाभावात् संयोगजसंयोगोऽनङ्गीकर्तव्य एवेति वाच्यम् । अवयवावयविभ्यां तरुसंयोगस्यैकक्रियाजन्यत्वे मानाभावात् । अन्यथा यावदवयवक्रियाजन्यशरीरक्रियायाः स्वजन्योत्तरसंयोगरूपनाशकाभावेनाश्रयनाशपर्यन्तस्थायित्वापत्तेः हस्तक्रिययैव हस्तपूर्वदेशविभागः शरीरपूर्वदेशविभागश्च ततो हस्ततद्देशसंयोगनाशः शरीरतद्देशसंयोगनाशश्च ततो हस्ततरुसंयोगः शरीरतरुसंयोगश्चेति रीत्या हस्तक्रियाया एव शरीरपूर्वदेशविभागादिपूर्वकशरीरतरुसंयोगोत्पादकत्वात् हस्तक्रियाजन्यशरीरक्रियायाः शरीरपूर्वदेशविभागादिपूर्वकशरीरतरुसंयोगस्वरूपोत्तरसंयोगोत्पादकत्वासंभवेन शरीरक्रियाजन्योत्तरसंयोगाप्रसिद्धेः तस्मात् हस्तक्रियायाः शरीरतरुसंयोगजनकत्व-

दिनकरीयम्.

योगस्ततः कुम्भतरुसंयोगस्तत्र कपालक्रियया एव तरुसंयोगस्तत्र कपालक्रियाया एव कुम्भतरुसंयोगं प्रति कारणत्वं न तु कपालतरुसंयोगस्येति चेन्न समवायेन संयोगं प्रति समवायेन क्रियायाः कारणत्वात् कुम्भे समवायेन क्रियाया अभावेन कुम्भे तरुसंयोगानुपपत्तेः क्रियायाः सामानाधिकरण्यसम्बन्धेन हेतुत्वान्तरक-

**शब्दाहेतुर्द्वितीयः स्यात् विभागोऽपि त्रिधा भवेत् ।**

दनाख्यः **संयोग इति** ॥ विभक्तप्रत्ययासाधारणकारणं विभागं निरूपयति ॥ **विभाग इति** ॥

## प्रभा.

मप्रामाणिकमेवेति । ननु यत्रादौ हस्तक्रिया ततो द्वितीयक्षणे शरीरक्रिया तत्र हस्तक्रिया चतुर्थक्षणे हस्ततरुसंयोगः शरीरक्रियाजन्यशरीरपूर्वदेशसंयोगनाशश्च तदुत्तरक्षणे जायमानशरीरतरुसंयोगः हस्ततरुसंयोगजन्यः शरीरक्रियाजन्यो वेत्यत्र विनिगमनाविरहः । नहि तस्योभयजन्यत्वं संभवति जातिसाङ्कर्यापत्तेरिति चेन्न शरीरक्रियायाः संयोगजनकत्वानङ्गीकारे उत्तरसंयोगरूपनाशकाभावेन शरीरनाशपर्यन्तस्थायित्वावश्यकतया शरीरे क्रियान्तरानुपपत्तिप्रसङ्गात् कर्मवति कर्मान्तरानुपपत्तेः तस्मात् क्रियासामान्यस्य संयोगजनकत्वमावश्यकं न संयोगसामान्यस्य संयोगजनकत्वं क्रियारूपासमवायिकारणविरहस्थल एव संयोगस्य तज्जनकत्वस्वीकारात् । एवंच क्रियाघटितसामग्र्याः प्राबल्यात् उभयसामग्रीसमवधानस्थले शरीरतरुसंयोगस्य शरीरक्रियाजन्यत्वस्यैव स्वीकारेणोक्तानुपपत्त्यभावात् । नव्यास्तु हस्ततरुसंयोगशरीरक्रियोभयसमवधानकालीनशरीरतरुसंयोगस्य विनिगमनाविरहेणोभयजन्यत्वमावश्यकं साङ्कर्यस्य जातिबाधकत्वानङ्गीकारादित्याहुः । तन्न तथासत्येकव्यक्तिकादीनामपि जातिबाधकत्वानापत्तेः । नच तेषां तथात्वे तद्व्यक्तित्वादीनां जातित्वापत्त्या घटत्वकलशत्वकुम्भत्वादीनां विभिन्नजातित्वापत्त्या सामान्यादिष्वप्रामाणिकानन्तजातिस्वीकारापत्त्या चातिगौरवात् तेषां जातिबाधकत्वमावश्यकमिति वाच्यम् । युक्तेस्तौल्येन साङ्कर्यस्यापि जातिबाधकत्वावश्यकत्वात् अत एव व्यक्तेरभेदस्तुल्यत्वं सङ्करोऽथानवस्थितिरित्याद्युदयनाचार्योक्तिरपि सङ्गच्छते । अपरेतु संयोगक्रिययोः एकैकसमवधानस्थले एकैकसंयोगोत्पत्तेरिव कारणद्वयसमवधानस्थले संयोगोत्पत्तेरावश्यकतया प्रकृते हस्ततरुसंयोगशरीरक्रियाभ्यां संयोगद्वयमावश्यकं तत्र द्वित्वाद्यनुपलम्भस्तु सजातीयसङ्कररूपदोषादित्याहुः । तन्न एकस्मिन्नेकदा तत्संयोगवति तत्संयोगान्तरानभ्युपगमात् प्रतिबन्धकीभूतक्रियाघटितसामग्रीसत्त्वेन संयोगजसंयोगोत्पत्त्यसंभवाच्च । यत्तु हस्ततरुसंयोगशरीरक्रियाभ्यां चित्रसंयोगात्मकविजातीयसंयोगो जात इति न साङ्कर्यस्य जातिबाधकत्वहानिः नवैकत्रैकदा तत्संयोगवति तत्संयोगान्तरस्वीकारप्रसक्तिरिति तन्न चित्रसंयोगस्य भाष्यकाराद्यननुमतत्वात् प्रमाणाभावाच्चेति दिक् । एकक्रियाजन्यसंयोगं क्रियाद्वयेन जायमानं संयोगं चोदाहरति ॥ **आदिम इत्यादिना** ॥ कर्मसंयोगं विभजते ॥ **कर्मजोऽपीति** ॥ कर्मजसंयोगोऽपीत्यर्थः । अपिना संयोगसामान्यद्वैविध्यं समुच्चीयते अभिघातरूपमाह ॥ **शब्दहेतुरिति** ॥ अवच्छेदकतासंबन्धावच्छिन्नशब्दनिष्ठकार्यतानिरूपितसमवायसंबन्धावच्छिन्नकारणताश्रय इत्यर्थः ॥ **आदिम इति** ॥ अभिघात

## दिनकरीयम् .

ल्पनापेक्षया समवायेन संयोगस्यैव हेतुत्वकल्पनौचित्यात् । वस्तुतो यत्र कपालक्रियया कपालान्तरेण तरुणा चैकस्मिन् क्षणे संयोगस्तदुत्तरक्षणे घटोत्पत्तिः कपालक्रियानाशश्च नाशकस्योत्तरसंयोगस्य पूर्वं सत्त्वात् तदुत्तरक्षणे कुम्भतरुसंयोगानुपपत्तेः पूर्वक्षणे कपालक्रियाया नाशात्तस्मात् कपालसंयोग एव तत्र कारणमिति संयोगजसंयोगसिद्धिर्निराबाधैवेति । अत्र केचित् कथं संयोगस्य त्रैविध्यमन्यतरकर्मजन्यसंयोगस्याप्रसिद्धेः यत्रेषुक्रिययेषुवृक्षयोः संयोगस्तत्र संयोगाधिकरणे वृक्षे क्रियाविरहेण व्यभिचारादन्यतरकर्मणः संयोगं प्रति कारणत्वस्य वक्तुमशक्यत्वादित्याहुः तन्न कार्याव्यवहितपूर्वक्षणावच्छेदेन कार्यतावच्छेदकावच्छिन्नयत्किञ्चिद्व्यक्त्यधिकरणीभूतयावद्व्यक्तिवृत्तिकाभावप्रतियोगितानवच्छेदकधर्मवत्त्वमेव कारणताघटकमेवं च कार्याव्यवहितपूर्वक्षणावच्छेदेन कार्यतावच्छेदकावच्छिन्नयत्किञ्चिद्व्यक्त्यधिकरणयावद्व्यक्तिषु कारणाभाववत्त्वमेव व्यभिचारः । नचैवंविधो व्यभिचारः प्रकृते इषोरपि तादृशयावदन्तर्गततया तत्र क्रियाभावासत्त्वादिति दिक् । नन्वेवं यत्र हस्तक्रिया ततो द्वितीयक्षणे शरीरक्रिया तत्र चतुर्थक्षणे हस्ततरुसंयोगस्तस्मिन्नेव क्षण शरीरक्रियाजन्यशरीरपूर्वदेशसंयोगनाशस्तदुत्तरक्षणे शरीरतरुसंयोगो जायते तस्य च हस्ततरुसंयोगजन्यत्वं शरीरक्रियाजन्यत्वं वेत्यत्र विनिगमनाविरहः । नचोभयमेव तत्र हेतुः जातिसङ्करप्रसङ्गादिति चेन्न तत्र संयोगद्वयस्यैवोपगमात् द्वित्वाग्रहस्तु सादृश्यदोषादित्येके तत्र चित्रसंयोग एवोत्पद्यते कारणत्वं तु तत्र संयोग-

प्रभा.

इत्यर्थः । नोदनस्वरूपमाह ॥ **शब्दाहेतुरिति** ॥ निरुक्तकारणताशून्य इत्यर्थः ॥ **द्वितीय इति** ॥ नोदन इत्यर्थः । लक्षणन्तु निरुक्तकारणतावच्छेदकतया अभिघातपदशक्यतावच्छेदकतया वा सिद्धाभिघातत्वाख्यजातिविशेषवत्त्वम् । एवं नोदनपदशक्यतावच्छेदकतया सिद्धनोदनत्वाख्यजातिविशेषवत्त्वं नोदनलक्षणमिति बोध्यम् ॥ इति संयोगनिरूपणम् ॥ ननु विभागसामान्यलक्षणमप्रतिपाद्य विभागोऽपि त्रिधा भवेदिति मूलेन विभागस्य त्रैविध्यमुक्तं तदयुक्तमजिज्ञासितत्वात् । नच मूलस्थविभागशब्देन विभागत्वरूपजातिविशेषस्य लक्षणत्वलाभाल्लक्षणस्यापि प्रतिपादितत्वेनाजिज्ञासितत्वाभावात् त्रैविध्यस्य नायुक्तत्वमिति वाच्यम् । तस्य जातित्वे मानाभावादित्याशङ्कां प्रमाणप्रतिपादनेन परिहरति ॥ **मुक्तावल्यां विभक्तप्रत्ययासाधारणकारणमिति** ॥ यद्यपि विभागपदशक्यतावच्छेदकतयापि विभागत्वजातिसिद्धिर्भवति तथापि विभागो विभक्तप्रत्ययनिमित्तमिति भाष्यकारोक्तकारणतावच्छेदकतया विभागत्वजातिसाधनायैतदभिहितं प्रतिपाद्यतासंबन्धावच्छिन्नविभक्तप्रत्ययनिष्ठकार्यतानिरूपितसमवायसंबन्धावच्छिन्नकारणतावदिति समुदितवाक्यार्थः । नचैतस्य विभागलक्षणत्वे यादृशविभागाश्रये विभक्तप्रत्ययः कस्यापि न जातः तत्राव्याप्तिरिति वाच्यम् । तादृशकारणत्वसमानाधिकरणरूपावृत्तिजातिमत्त्वस्य तादृशकारणतावच्छेदकतया सिद्धजातिविशेषवत्त्वस्य वा विवक्षितत्वान्नोक्तदोष इति भावः । विभागोऽपि त्रिधा भवेदिति मूलस्य प्राधान्येन त्रैविध्येन विभागे न तात्पर्यम् । कर्मजो विभागजश्चेति भाष्यविरोधापत्तेः । अतस्तादृशमूलस्य विभागस्त्रिधा भवेदिति योजनया प्राधान्येन द्वैविध्यवति पर्यवसाने त्रैविध्यमपि विभागस्य संभवतीति तात्पर्यार्थो वाच्यः । एवंच विभागो द्विविधः कर्मजो विभागजश्च कर्मजोऽपि द्विविधः एकक्रियाजन्यः उभयक्रियाजन्यश्चेति विभागे मुख्यतात्पर्यात् न भाष्यविरोधः नवा त्रैविध्यप्रतिपादकमूलविरोध इति भावः । अत्र कर्मजविभागवत्त्वं क्रियात्वावच्छिन्नासमवायिकारणतानिरूपितविभागनिष्ठकार्यतावच्छेदकतया सिद्धजातिविशेषः एवं विभागजविभागत्वं विभागत्वावच्छिन्नासमवायिकारणतानिरूपितविभागनिष्ठकार्यतावच्छेदकतया सिद्धो जातिविशेषः ताभ्यामेव विभागसामान्यस्य द्वैविध्यं एवं एकक्रियाजन्यविभागत्वं कर्मासहकृतकर्मनिष्ठासमवायिकारणतानिरूपितविभागनिष्ठकार्यतावच्छेदकतया सिद्धविभागसामान्यविभाजककर्मजन्यतावच्छेदकवैजात्यव्याप्यजातिविशेषः । एवं उभयक्रियाजन्यविभागत्वं कर्मसहकृतकर्मनिष्ठासमवायिकारणतानिरूपितविभागनिष्ठकार्यतावच्छेदकतया सिद्धतादृशवैजात्यव्याप्यजातिविशेषः ताभ्यामेव कर्मजविभागस्यापि द्वैविध्यमिति बोध्यम् । वस्तुतस्तु यद्यपि क्रियान्तरासहकृतक्रियायाः न क्रियान्तरासहकृतक्रियात्वेन हेतुत्वं एकवैजात्यावच्छिन्नं प्रति विशेषणविशेष्यभावेऽपि विनिगमनाविरहप्रयुक्तकार्यकारणभावद्वयापत्तेः एकक्रियाजन्यविभागे वैजात्यद्वयस्वीकारो न संभवति तुल्यव्यक्तिकत्वरूपदोषग्रस्तत्वात् । किंतु कर्मासहकृतकर्ममात्रवृत्तिवैजात्येन हेतुत्वं तादृशधर्मस्य कर्ममात्रवृत्त्युत्क्षेपणत्वादिधर्मचतुष्टयव्यापकतया साङ्कर्याप्रसक्तेः । तथापि कर्मसहकृतकर्मणः तादृशवैजात्यवृत्तिपुरस्कारेण हेतुत्वं तादृशकर्मण उत्क्षेपणादिरूपतयोत्क्षेपणत्वादिनां साङ्कर्येण तादृशकर्ममात्रवृत्तिधर्मस्य जातिरूपत्वासंभवात् उत्क्षेपणत्वादिव्याप्यनानाजातिस्वीकारे तादृशविभागवृत्त्येकैकवैजात्यावच्छिन्नं प्रति उत्क्षेपणत्वादिव्याप्यैकैकवैजात्यावच्छिन्नव्यभिचारेण कारणतानुपपत्तेः तत्तद्वैजात्यपुरस्कारेण क्रियान्तरासहकृतकर्मणां कारणत्वनिर्वाहाय उत्क्षेपणादिरूपैकक्रियाजन्यविभागेषु वैजात्यचतुष्टयं स्वीकृत्य कार्यकारणभावचतुष्टयस्वीकारे कर्मसहकृतकर्मणामपि तुल्ययुक्त्योत्क्षेपणत्वादिव्याप्यवैजात्यचतुष्टयस्वीकारस्य जन्यविभागानामपि वैजात्यचतुष्टयस्वीकारस्य तादृशवैजात्यपुरस्कारेण कार्यकारणभावचतुष्टयस्वीकारस्य चापत्तेः नचेष्टापत्तिः । कर्मजन्यतावच्छेदकवैजात्यव्याप्यवैजात्यानामष्टसङ्ख्यात्वेन ताभ्यां वैजात्याभ्यां कर्मजविभागस्य द्वैविध्यमित्यत्र विनिगमनाविरहात् अष्टधाविभागस्याप्रामाणिकत्वाच्च । तस्मात् कर्मजविभागस्य द्वैविध्ये प्रमाणाभावात् भाष्यकाराद्यननुमतत्वाच्च । विभागोऽपि त्रिधा भवेदिति मूलमेककर्मोद्भवस्त्वाद्य इत्यादिमूलं च कर्मजविभागस्य न द्वैविध्यपरं किन्त्वेकक्रियया यथा विभागः यथा वा कर्मद्वयेन विभागः तथा त्रिभिः कर्मभिश्चतुर्भिः क-

**एककर्मोद्भवस्त्वाद्यो द्वयकर्मोद्भवोऽपरः॥ ११९ ॥**
**विभागजस्तृतीयः स्यात् तृतीयोऽपि द्विधा भवेत् ।**
**हेतुमात्रविभागोत्थो हेत्वहेतुविभागजः॥ १२० ॥**

**एककर्मेति** ॥ तदुदाहरणं तु श्येनशैलविभागादिकं पूर्ववद्बोध्यम् ॥ **तृतीयोऽपि** विभागजविभागः कारणमात्रविभागजन्यः कारणाकारणविभागजन्यश्चेति द्विविधः । आद्यस्तावद्यत्रैककपाले कर्म ततः कपालद्वयविभागः ततो घटारम्भकसंयोगनाशस्ततो घटनाशस्ततस्तेनैव कपालविभागेन सकर्मणः कपालस्याकाशविभागो जन्यते तत आकाशसं-

प्रभा.

र्मभिर्वा नैको विभाग इति बोधतात्पर्यकं कर्मजो विभागजश्चेति विभागसामान्यद्वैविध्यपरं चेति प्रतिभाति । कारणमात्रविभागजकारणाकारणविभागस्याप्रामाणिकत्वं तस्यैकदेश्यनुमतत्वं च पाकप्रक्रियायां विभागजविभागानङ्गीकारे नवक्षणा तदङ्गीकारे त्वित्यादिमुक्तावलीव्याख्यानावसरे सप्रमाणं स्फुटतरं प्रपञ्चितम् । इदानीं नवीनैकदेशिमतानुसारेण वैशद्याय विभागजविभागस्य द्वैविध्यमाह ॥ **मूले तृतीयोऽपि द्विधा भवेदिति** ॥ **हेतुमात्रविभागोत्थ इति** ॥ कारणमात्रविभागासमवायिकारणककारणाकारणविभाग इत्यर्थः ॥ **हेत्वहेतुविभागज इति** ॥ कारणाकारणविभागासमवायिकारणकार्याकार्यविभाग इत्यर्थः । तत्रैकदेश्यनुमतमाद्यमुपपादयति ॥ **मुक्तावल्यामाद्यस्तावदिति** ॥ **यत्रेति** ॥ यदेत्यर्थः ॥ **एककपाले कर्मेति** ॥ अत्र कपालपदमवयवमात्रोपलक्षकम् । एवमुत्तरत्रापि इदमुपलक्षणम् यदा द्वयोरवयवयोः कर्मेत्यपि बोध्यम् ॥ **तत इति** ॥ एतस्यावृत्त्या तस्मात् तदनन्तरमित्यर्थः एवमुत्तरत्रापि ॥ **घटारम्भकसंयोगनाश इति** ॥ अत्र घटपदमवयविमात्रोपलक्षकं एवमुत्तरत्रापि ॥ **तत इति** ॥ अवयविनाशानन्तरकालीनत्वमात्रार्थकस्य तत इत्यस्य जन्यत इत्यनेनान्वयः ॥ **तेनैवेति**॥ निरुक्तावयविद्वयविभागेनैवेत्यर्थः ॥ **सकर्मण इति** ॥ कर्मनाशकोत्तरसंयोगाभावादिति भावः ॥ **आकाशविभाग इति** ॥ विभुसामान्यविभाग इत्यर्थः । आकाशलक्षणस्य विभुसामान्यलाक्षणिकत्वादिति भावः ॥ **जन्यत इति** ॥ तथाच अवयवविभ्वोः विभागानङ्गीकारेऽनित्यावयवरूपाश्रयनाशात् अनित्यावयवविभुसंयोगस्य नाशसंभवेऽपि नित्यावयवविभुसंयोगस्य नाशकाभावेन नित्यत्वापत्त्या तादृशविभागाङ्गीकार आवश्यक इति भावः । केचित्तु एवं कपालाकाशसंयोगस्य प्रतिबन्धकस्य सत्त्वेनोत्तरदेशसंयोगानुत्पत्त्या कर्मणोऽपि नित्यत्वापत्तिः उत्तरसंयोगस्यैव स्वजनककर्मनिवर्तकत्वादिति भाव इत्याहुः । तदसत् कपालद्वयविभागेन कपालाकाशविभागानङ्गीकारे कपालाकाशसंयोगनाशासंभवात् प्रतिबन्धकसत्त्वेन पुनः कपालाकाशसंयोगासंभवेऽपि कपालद्वयविभागजन्यकपालद्वयसंयोगनाशात् कपालस्य भूम्यादिदेशेन सहोत्तरसंयोगोत्पत्तौ बाधकाभावेन तेन कपालकर्मणोऽपि नाशसंभवेन नित्यत्वापत्तेरभावात् । नहि यावत्पूर्वदेशसंयोगनाशे सत्येवोत्तरदेशसंयोग इति नियमः तथा सति हस्तसंयुक्तदण्डक्रियया भेरीदण्डसंयोगानुपपत्तेः हस्तदण्डसंयोगरूपप्रतिबन्धकसत्त्वात् । तस्मात् ययोः संयोगस्य नाशः तयोः पुनः संयोगो न जायत इत्येव नियमो वाच्यः एवंच कपालाकाशसंयोगनाशाभावेऽपि कपालद्वयसंयोगनाशेन देशान्तरेण कपालस्योत्तरसंयोगसंभवात् तेन कपालकर्मणो नाशसंभवाच्च न कर्मणो नित्यत्वप्रसक्तिरिति कपालाकाशविभागानङ्गीकारेऽस्मदुक्तदूषणमेव समायातीति । अत्र सिद्धान्तमतानुयायी श-

दिनकरीयम् .

कर्मोभयत्वेनेति चित्रसंयोगो विजातीय एवेति न साङ्कर्यमित्यपरे इत्यन्यत्र विस्तरः ॥ **पूर्ववदिति** ॥ संयोगवदित्यर्थः ॥ **तेनैव कपालविभागेनेति** ॥ तेन कपालविभागेनैवेत्यर्थः । एवकारेण कर्मणो व्युदासः ॥ **कपालस्याकाशविभागो जन्यत इति** ॥ अन्यथा कपालाकाशसंयोगस्य नाशकाभावेन नित्यत्वापत्तिरेव कपालाकाशसंयोगस्य प्रतिबन्धकस्य सत्त्वेनोत्तरसंयोगानुत्पत्त्या कर्मणोऽपि नित्यत्वापत्तिः उत्त-

योगनाशः तत उत्तरदेशसंयोगस्ततः कर्मनाश इति । नच तेन कर्मणैव कथं देशान्तरविभागो न जन्यत इति वाच्यं एकस्य कर्मण आरम्भकसंयोगप्रतिद्वन्द्विविभागजनकत्वस्यानारम्भकसंयोगप्रतिद्वन्द्विविभागजनकत्वस्य च विरोधात् । अन्यथा विकसत्कमलकुड्मलभङ्गप्रसङ्गात् । तस्माद्यदीदमनारम्भकसंयोगप्रतिद्वन्द्विविभागं जनयेत् तदारम्भकसंयोगप्रतिद्वन्द्विविभागं न जनयेत् । नच कारणविभागेनैव द्रव्यनाशात् पूर्वं कुतो देशान्तरविभागो न जन्यत इति वाच्यं आरम्भकसंयोगप्रतिद्वन्द्विविभागवतोऽवयवस्य सति द्रव्ये देशान्तरविभागा-

प्रभा.

ङ्कते ॥ **नचेति** ॥ **तेनैव कर्मणेति** ॥ तेन कर्मणैवेत्यर्थः । एवकारेण विभागस्य हेतुत्वं व्यवच्छिद्यते ॥ **देशान्तरविभाग इति** ॥ विभुपदार्थेन विभाग इत्यर्थः ॥ **कथं न जन्यत इति** ॥ विभागं प्रति क्रियाघटितसामग्र्याः प्राबल्येन प्रकृते तत्सत्त्वादिति भावः ॥ **एकस्य कर्मण इति** ॥ एकस्यावयवकर्मण इत्यर्थः ॥ **विरोधादिति** ॥ आरम्भकसंयोगप्रतिद्वन्द्विविभागजनककर्मणः अनारम्भकसंयोगप्रतिद्वन्द्विविभागाजनकत्वनियमादिति भावः । तादृशनियमानङ्गीकारे बाधकमाह ॥ **अन्यथेति** ॥ **विकसत्कमलकुड्मलभङ्गप्रसङ्गादिति** ॥ विकसत्कमलस्य कुड्मलस्यापि नाशप्रसङ्गादित्यर्थः । अत्रेयमापत्तिः निरुक्तनियमस्य यथाश्रुतार्थमनुसृत्य पाकक्रियायां उपवर्णितनिष्कृष्टार्थानुसरणे न कोऽपि दोष इति हृदयम् ॥ **तस्मादिति** ॥ निरुक्तभङ्गप्रसङ्गपरिहाराय तयोर्विरोधस्वीकारस्यावश्यकत्वादित्यर्थः । तथाच परमाणुसमवेतक्रियावृत्तिः नाकाशादिविभागजनिका परमाणुद्वयविभागजनकत्वात् यद्यदारम्भकसंयोगप्रतिद्वन्द्विविभागजनकं तन्नानारम्भकसंयोगप्रतिद्वन्द्विविभागजनकं यथा विकसत्कमलकुड्मलकर्मेति सामान्यमुखव्याप्त्या परमाण्वादिकर्मविशेषे परमाण्वाकाशवृत्तिविभागजनकत्वाभावसिद्धया परिशेषात् कारणमात्रविभागजविभागसिद्धिर्निराबाधेति भावः । निरुक्तहेतौ व्यभिचारशङ्कानिवर्तकतर्कमाह ॥ **यदीति** ॥ **इदमिति** ॥ परमाणुसमवेतक्रियाव्यक्तिरित्यर्थः ॥ **अनारम्भकसंयोगेति** ॥ आकाशादिविभागजनिका यदीत्यर्थः ॥ **आरम्भकसंयोगेति** ॥ परमाणुद्वयविभागजनिका न भवेदित्यर्थः । नचेष्टापत्तिः द्व्यणुकनाशानापत्तेः तत्रापि नेष्टापत्तिः उपलभ्यमानस्य त्र्यणुकादिमहावयविपर्यन्तनाशस्यापलापापत्तेरित्याशयः । ननूक्तरीत्या परमाणुद्वयविभागस्य परमाण्वाकाशादिविभागासमवायिकारणत्वस्वीकारे परमाणुद्वयसंयोगनाशकाल एव परमाण्वाकाशादिविभागः कुतो नोत्पद्यते कारणत्वसत्त्वादित्यभिप्रायेण शङ्कते ॥ **न चेति** ॥ **कारणविभागेनैवेति** ॥ परमाणुद्वयविभागेनैवेत्यर्थः । कारणयोः समवायिकारणयोः विभागेनेति व्युत्पत्त्या द्व्यणुकादितत्तद्द्रव्यसमवायिकारणद्वयवृत्तिपरमाणुद्वयविभागादिलाभादिति भावः ॥ **पूर्वमिति** ॥ द्व्यणुकादिनाशात्पूर्वमित्यर्थः ॥ **देशान्तरविभाग इति** ॥ आकाशादि-

दिनकरीयम् .

रसंयोगस्यैव स्वजनककर्मनिवर्तकत्वादिति भावः । अमुमर्थं हृदि निधायोक्तम् ॥ **तत उत्तरदेशसंयोगस्ततः कर्मनाश इति** ॥ **तेन कर्मणैवेति** ॥ कपालद्वयविभागजनककर्मणैवेत्यर्थः ॥ **देशान्तरविभागः** कपालाकाशादिविभागः ॥ **आरम्भकेत्यादि** ॥ आरम्भकसंयोगः कपालद्वयसंयोगादिस्तत्प्रतिद्वन्द्वी तद्विरोधी तन्नाशक इति यावत् । एवमग्रेऽपि ॥ **अनारम्भकसंयोगः** कपालाकाशसंयोगादिः ॥ **अन्यथेति** ॥ आरम्भकसंयोगप्रतिद्वन्द्विविभागजनककर्मणोऽनारम्भकसंयोगप्रतिद्वन्द्विविभागजनककर्मणश्चैक्य इत्यर्थः ॥ **विकसदिति** ॥ तत्साग्रावच्छेदेनानारम्भकसंयोगप्रतिद्वन्द्विविभागजनककर्मणः सत्त्वात्तेन कर्मणा मूलावच्छिन्नारम्भकसंयोगविरोधिविभागोत्पत्तिस्तेन चारम्भकसंयोगनाशस्तेन कमलनाशः स्यादिति भावः ॥ **कारणविभागेनैव** कारणमात्रविभागेनैव कपालद्वयविभागादिनेति यावत् ॥ **पूर्वं** घटाद्यात्मकद्रव्यनाशात् पूर्वं । तथा च पूर्वोक्तं ततो घटनाशस्ततः कपालस्याकाशविभागो जन्यत इत्यसङ्गतमिति भावः ॥ **सति द्रव्ये द्रव्यनाशं विना देशान्तरविभागासम्भवादिति** ॥ अन्यथा कारणमात्रविभागे कर्मलक्ष-

सम्भवात् । द्वितीयस्तावद्यत्र हस्तक्रियया हस्ततरुविभागस्ततः शरीरेऽपि विभक्तप्रत्ययो भवति तत्र च शरीरतरुविभागे हस्तक्रिया न कारणं व्यधिकरणत्वात् । शरीरे तु क्रिया नास्त्येव अवयविकर्मणो यावदवयवकर्मनियतत्वात् । अतस्तत्र कारणाकारणविभागेन कार्याकार्यविभागो

## प्रभा.

विभाग इत्यर्थः ॥ **कुतो न जन्यत इति** ॥ कारणसत्त्वादिति भावः ॥ **आरम्भकसंयोगप्रतिद्वन्द्विविभागवतोऽवयवस्येति** ॥ विभुपदार्थनिष्ठविभागसमवायिकारणासमवायिकारणयोः सत्त्वमाविष्कृतम् ॥ **सति द्रव्य इति** ॥ अनेन द्रव्याभावरूपासाधारणनिमित्तकारणासत्त्वमाविष्कृतम् ॥ **देशान्तरविभागासंभवादिति** ॥ तथाच समवायिकारणासमवायिकारणयोः सत्त्वेऽपि तत्र समवायेन द्रव्यस्य प्रतिबन्धकतया तदभावरूपकारणाभावात् न द्व्यणुकादिनाशात्पूर्वं तादृशविभागापत्तिरिति भावः । नच तत्र समवायेन द्रव्यस्य प्रतिबन्धकसत्त्वे मानाभाव इति वाच्यम् । एकदेशिमते सति द्रव्ये तादृशविभागाननुभवस्यैव प्रमाणत्वात् अन्यथा दाहं प्रति मण्यादेः प्रतिबन्धकताविलयप्रसङ्गात् अत एव संयोगविभागयोरनपेक्षं कारणं कर्मेति सूत्रप्रतिपाद्यकर्मलक्षणमपि सङ्गच्छते । इतरथा परमाणुद्वयविभागादेरपि तादृशलक्षणाक्रान्ततयातिव्याप्तत्वेन सूत्रस्याप्यप्रामाण्यापत्तेः एतत्तत्त्वं निरपेक्षस्य तत्त्वे कर्मत्वं स्यादिति ग्रन्थविवरणावसर एव स्फुटतरं सयुक्तिकं च प्रपञ्चितम् ॥ **द्वितीयस्तावदिति** ॥ कारणाकारणविभागजन्यकार्याकार्यविभाग इत्यर्थः । तावच्छब्दो वाक्यालङ्कारे यथेत्यर्थको वा ॥ **यत्रेति** ॥ यस्मिन् क्षण इत्यर्थः । तस्य विभाग इत्यनेनान्वयः ॥ **तत इति** ॥ हस्ततरुविभागोत्पत्त्यधिकरणक्षणतृतीयक्षण इत्यर्थः । शरीरेऽपीत्यपिना हस्तपरिग्रहः ॥ **क्वचिदिति** ॥ तरौ हस्तान्यतच्छरीरावयवानां यावतां न संयोगाभावकाल इत्यर्थः । तथाच हस्ते यथा विभक्तप्रत्ययः तथा शरीरे विभक्तप्रत्ययो जायत इत्यर्थः ॥ **तत्रचेति** ॥ शरीरतरुविभक्तप्रत्यय इत्यर्थः । विषयत्वं सप्तम्यर्थः अस्य विभागेऽन्वयः एवकारार्थकचशब्दस्य नञा अन्वयः ॥ **न कारणमिति** ॥ नैव कारणमित्यर्थः ॥ **व्यधिकरणत्वादिति** ॥ समवायघटितसामानाधिकरण्याभावादित्यर्थः । नच हस्तक्रियायाः समवायेन शरीरवृत्तित्वेऽप्येकार्थसमवायेन शरीरवृत्तित्वात् कथं वैयधिकरण्यमिति वाच्यं संयोगग्रन्थे हस्तशरीराभ्यां तरुसंयोगस्यैकक्रियाजन्यत्वनिराकरणप्रस्तावे हस्तशरीराभ्यां विभागस्यापि एकक्रियाजन्यत्वासंभवस्य दर्शितत्वात् । तस्मात् क्रियायाः संयोग इव विभागेऽपि न समवायघटितसामानाधिकरण्यप्रत्यासत्त्या हेतुत्वं किन्तु समवायेनैवान्यथानुपपत्त्या हेतुत्वं वाच्यम् । एवं च हस्तक्रियायाः समवायेन शरीरावृत्तितया तेन संबन्धेन शरीरतरुविभागहेतुत्वासंभवात् विभागजविभागाङ्गीकार आवश्यक इति भावः । ननु तथापि शरीरक्रिययैव शरीरतरुविभाग आस्तामत आह ॥ **शरीरे त्विति** ॥ अवधारणार्थकतुशब्दो नास्तीत्युत्तरं योज्यः ॥ **नास्तीति** ॥ नास्त्येवेत्यर्थः । तत्र हेतुमाह ॥ **अवयविकर्मण इति** ॥ शरीरादिकर्मण इत्यर्थः ॥ **यावदवयवकर्मनियतत्वादिति** ॥ यावदवयवघटकप्रत्येकावयवसमवेता यावत्यः क्रियास्तावत्प्रत्येकनिरूपितजन्यतावत्त्वादित्यर्थः । शरीरादिसमवेतकर्मत्वस्य शरीराद्यवयवयावद्घटकप्रत्येकसमवेतयावत्क्रियाघटकप्रत्येकनिरूपितजन्यत्वव्याप्यत्वादिति यावत् । तथा च कर्मणो दैशिकाव्याप्यवृत्तित्ववारणायोक्तनियमाङ्गीकारस्यावश्यकतया एकावयवसमवेतक्रियामात्रेण शरीरक्रियोत्पत्तिर्न संभवतीति भावः ॥ **अत इति** ॥ एकावयवसमवेतक्रियामात्रेण शरीरक्रियानुत्पत्तेरित्यर्थः ॥ **तत्रेति** ॥ तादृशशरीर इत्यर्थः ॥ **कारणाकारणविभागेनेति** ॥ हस्ततरुविभागादिनैवेत्यर्थः ॥ **कार्याकार्यविभाग इति** ॥ शरीरतरुविभागादिरित्यर्थः ॥ **जन्यत इति** ॥ अवश्यं स्वीकार्य इत्यर्थः । तथाच विभागजविभागसिद्धिर्निष्प्रत्यूहेति भावः । एतावता विभागं निरूप्य विभागस्य संयोगनाशरूपतावादिनां मतं निरसितुं आदौ स्वसिद्धान्तमुप-

## दिनकरीयम्.

णस्यातिव्याप्त्यापत्तेरिति भावः । वस्तुतः कर्मलक्षणस्य तत्र नातिव्याप्तिः तत्प्रकारस्तु पाकजप्रक्रियायां सप्रपञ्चं प्रदर्शितोऽस्माभिः ॥ **द्वितीय इति** ॥ कारणाकारणविभागजन्य इत्यर्थः ॥ **यावदवयवकर्म-**

जन्यत इति । अत एव विभागो गुणान्तरं अन्यथा शरीरे विभक्तप्रत्ययो न स्यात् अतः संयोगनाशेन विभागो नान्यथासिद्धो भवति ॥ ११५ ॥ ११६ ॥ ११७ ॥ ११८ ॥ ११९ ॥ १२० ॥

## प्रभा.

न्यसति ॥ **अत एवेति** ॥ विभागजविभागाङ्गीकारस्यावश्यकत्वादेवेत्यर्थः ॥ **विभाग इति** ॥ विभागपदार्थ इत्यर्थः ॥ **गुणान्तरमिति** ॥ कॢप्तगुणातिरिक्तगुण एवेत्यर्थः ॥ न संयोगध्वंसरूप इति यावत् । तत्स्वरूपत्वे बाधकमाह ॥ **अन्यथेति** ॥ संयोगध्वंसरूपत्व इत्यर्थः ॥ **शरीर इति** ॥ शरीरादिरूपान्त्यावयविमात्र इत्यर्थः ॥ **विभक्तप्रत्यय इति** ॥ वृक्षादिना विभक्तप्रत्यय इत्यर्थः ॥ **न स्यादिति** ॥ विषयाभावादित्यर्थः । तथाच विभागस्य संयोगध्वंसरूपत्वे हस्तक्रियाजन्यहस्ततरुसंयोगध्वंसस्य शरीरावृत्तित्वात् शरीरे क्रियाया अभावाच्च शरीरतरुसंयोगे ध्वंसोत्पत्त्यसंभवेन विषयाभावात् शरीरं विभक्तमिति सर्वानुभवसिद्धप्रत्ययानुपपत्तिरिति भावः ॥ **अत इति** ॥ विभक्तप्रत्ययानुपपत्तिरूपबाधकवशादित्यर्थः ॥ **संयोगनाशेनेति** ॥ सर्वमतसिद्धसंयोगनाशस्य विभागपदार्थत्वाङ्गीकारेणेत्यर्थः ॥ **विभागो नान्यथासिद्ध इति** ॥ गुणरूपविभागनिराकरणं न संभवतीत्यर्थः । नच हस्ततरुसंयोगध्वंसशरीरतरुसंयोगध्वंसयोः तरौ तत्सामानाधिकरण्यसत्त्वात् तरौ शरीरतरुसंयोगध्वंसोत्पत्तिसंभवेन विषयाबाधात् न तरौ विभक्तं शरीरमिति प्रत्ययानुपपत्तिरिति वाच्यम् । हस्ततरुसंयोगध्वंसस्य शरीरतरुसंयोगनाशहेतुत्वे हस्ततरुसंयोगध्वंसानां बहूनां विनिगमकाभावात् अनुगमकाभावाच्च तत्तद्व्यक्तित्वेनैकैकशरीरतरुसंयोगनाशव्यक्तिं प्रति हेतुत्वापत्त्या महागौरवात् किंच गुणरूपविभागानङ्गीकारे विभक्तप्रत्यये संयोगध्वंस एव विषयो वाच्यः । तथासति हस्तो वृक्षाद्विभक्तः शरीरं वृक्षात् विभक्तमिति चानुगताकारप्रत्ययानुपपत्तेः हस्ततरुसंयोगशरीरतरुसंयोगध्वंसानां बहुत्वात् अनुगमकरूपाभावाच्च । अपि च विभक्तप्रत्ययस्य संयोगध्वंसविषयकत्वे बहूनां हस्ततरुसंयोगध्वंसानां विनिगमकाभावेन *विषयत्वावश्यकतया* गौरवं यावन्तः संयोगध्वंसान्विषयीकृत्य विभक्तप्रत्ययः प्रामाणिकः तावत्संयोगध्वंसानां पुनः संयोगोत्पत्त्यनन्तरकालेऽपि सत्त्वात् तदानीमपि विभक्तप्रत्ययापत्तिश्च । नच तत्संयोगासमानकालीनतत्संयोगध्वंसानामेव तद्विभक्तप्रत्ययविषयत्वस्वीकारान्नोक्तापत्तिः हस्ततरुसंयोगध्वंसानां पूर्वं विभक्तप्रत्ययविषयाणां पुनः हस्ततरुसंयोगादिकाले सत्त्वेऽपि तादृशसंयोगासमानकालीनत्वाभावात् विषयाभावेन न तदानीं हस्तादौ तादृशविभक्तप्रत्ययापत्तिरिति वाच्यम् । चरमहस्ततरुसंयोगादिध्वंसातिरिक्तसकलहस्ततरुसंयोगादिध्वंसानां कदाचित् हस्ततरुसंयोगादिसमानकालीनतया इदानीन्तनतादृशसंयोगध्वंसानां अतादृशत्वेन वृक्षादौ हस्तादौ वा कदापि विभक्तप्रत्ययानापत्तेस्तस्मात् गुणरूपविभागमङ्गीकृत्यैव सर्वदोषः परिहरणीयः । अत एव घटात्पटो विभक्त इत्यत्र पञ्चम्याः सकलग्रन्थकाराणां अवधित्वार्थकत्वोपवर्णनं विभागो विभक्तप्रत्ययनिमित्तं कर्मजो विभागजश्चेति भाष्यं संयोगविभागाविति गुणविभागसूत्रं च साधु सङ्गच्छत इति । यत्तूक्तदोषवारणाय गुणरूपविभागाङ्गीकारस्यावश्यकत्वेऽपि विभागजविभागे मानाभाव एव । एवं हस्तक्रियायाः समवायेन हस्ततरुविभागे हेतुत्ववत् समवायघटितसामानाधिकरण्येन शरीरतरुविभाग-

## दिनकरीयम् .

**नियतत्वादिति** ॥ क्रियाया व्याप्यवृत्तित्वनियमादिति भावः ॥ **अत एव** वक्ष्यमाणयुक्तेरेव ॥ **शरीरे विभक्तप्रत्ययो न स्यादिति** ॥ यत्र हस्तक्रियया हस्ततरुविभागस्तत्र शरीरे विभागप्रत्ययः सर्वानुभवसिद्धः स च विभागं विना नोपपद्यते नच शरीरतरुसंयोगनाश एव तद्विषय इति वाच्यं विभागानङ्गीकारे शरीरतरुसंयोगनाशस्यैवासम्भवात् । न हि तत्र हस्तक्रिया शरीरतरुसंयोगनाशिका व्यधिकरणत्वादतस्तत्र हस्ततरुविभागेन शरीरतरुविभागो जन्यते तेन च शरीरतरुसंयोगनाशो जन्यत इत्युपेयत इति विभागसिद्धिः । ननु हस्ततरुसंयोगनाश एव शरीरतरुसंयोगनाशकोऽस्तु तरौ तदुभयसामानाधिकरण्यसत्त्वात् । मास्तु विभागजविभागो हस्ततरुविभागस्तु कर्मजन्यशरीरतरुसंयोगनाशकतया सिध्यतीत्यप्यत एवापास्तम् । हस्त-

## प्रभा.

हेतुत्वस्यापि संभवादिति तन्न हस्तक्रियाया उक्तसंबन्धेन शरीरतरुविभागहेतुत्वस्वीकारे हस्तादिरूपयावदवयवक्रियोत्तरकालीनशरीरक्रियायाः शरीरनाशपर्यन्तस्थायित्वापत्तिः हस्तक्रियाया हस्ततरुविभागकाले उक्तरीत्या शरीरतरुविभागस्यापि जायमानत्वेन तत्कालोत्पत्तिकशरीरक्रियायाः शरीरतरुविभागादिपूर्वकोत्तरसंयोगोत्पादकत्वाभावेन स्वजन्योत्तरसंयोगरूपनाशकाभावादिति । केचित्तु ननु हस्ततरुसंयोगनाश एव शरीरतरुसंयोगनाशकोऽस्तु तरौ तदुभयसामानाधिकरण्यसत्त्वात् किंच हस्तक्रियैव स्वसमवायिसमवेतत्वसंबन्धेन शरीरनिष्ठशरीरतरुसंयोगनाशहेतुरस्तु वैयधिकरण्याभावादिति चेन्न । आश्रयनाशाजन्यगुणनाशस्य विरोधिगुणजन्यत्वनियमेन शरीरकर्मजन्यशरीरतरुसंयोगं प्रति हस्ततरुसंयोगस्याकारणत्वेन च शरीरतरुसंयोगनाशे हस्ततरुसंयोगनाशस्याकारणत्वात् । यच्चोक्तं हस्तक्रियैव स्वसमवायिसमवेतत्वसंबन्धेन तत्र कारणमिति तदपि न साक्षात्सम्बन्धेन जनकत्वनियमस्यासति बाधके सङ्कोचकल्पनानुपपत्तेः । वस्तुतस्तु संयोगाभावो विभागः विभागाभावो वा संयोग इत्यत्र विनिगमनाविरहेणोभयोरतिरिक्तत्वं अत एव घटात्पटो विभक्त इति प्रत्यय उपपद्यते संयोगनाशात्मकत्वे नाशस्य सावधिकत्वाभावेन तथा प्रत्ययानुपपत्तेरित्याक्षेपं परिहारं चाहुः । तदसत् आश्रयनाशाजन्यगुणनाशस्येत्यारभ्याकारणत्वादित्यन्तग्रन्थेन प्रथमदोषनिराकरणमयुक्तं अपेक्षाबुद्धिनाशजन्ये द्वित्वादिनाशे द्विपृथक्त्वादिनाशे परत्वादिनाशे च विरोधिगुणजन्यत्वाभावेन व्यभिचारात् । आश्रयनाशाजन्येत्यत्र आश्रयपदस्य कारणमात्रपरत्वमङ्गीकृत्योक्तव्यभिचारवारणे कर्मनाशाजलस्पर्शादित्यादिवचनप्रतिपाद्यकरतोयात्मकनदीलङ्घनक्रियाजन्यधर्मनाशे व्यभिचारेण तादृशनियमस्य पलायितत्वात् कर्मजन्यशरीरतरुसंयोगं प्रति हस्ततरुसंयोगस्य कार्यतावच्छेदकं न शरीरतरुसंयोगत्वं व्यभिचारात् किन्तु कर्माजन्यसंयोगमात्रवृत्तिवैजात्यमेव । एवंच तादृशवैजात्यावच्छिन्नं प्रति शरीरतरुसंयोगस्य हेतुत्वे बाधकाभावेन तन्नाशे तन्नाशस्यापि कारणत्वसंभवाच्च । नच शरीरक्रियाजन्यशरीरतरुसंयोगस्य यस्य हस्ततरुसंयोगनाशोत्तरं नाशः तत्संयोगे हस्ततरुसंयोगस्याकारणत्वेन तन्नाशस्य कारणनाशानात्मकतया कथं तत्र तस्य हेतुत्वमिति वाच्यं तथाप्यन्यथानुपपत्त्यान्वयव्यतिरेकाभ्यां तत्र तस्य हेतुत्वाङ्गीकारस्यावश्यकत्वात् । यच्च तदपि नेत्यारभ्य सङ्कोचकल्पनानुपपत्तेरित्यन्तग्रन्थेन द्वितीयदोषनिराकरणं तदपि नावयविक्रियां प्रति अवयवक्रियायाः समवायघटितसामानाधिकरण्येनैव हेतुतया तस्याः साक्षात्संबन्धेन जनकत्वे मानाभावात् बाधकवशात् कार्यतावच्छेदककोटौ क्रियान्यत्वानिवेश्य क्रियान्यकार्यत्वावच्छिन्नं प्रति तादृशनियमस्वीकारे बाधकस्य तुल्यत्वात् कार्यतावच्छेदककोटावभावान्यत्वमपि निवेश्य क्रियान्यभावकार्यत्वावच्छिन्नं प्रत्येव तादृशनियमस्वीकारौचित्यात् । यच्च वस्तुतस्त्वित्याद्युभयोरतिरिक्तत्वमित्यन्तग्रन्थेन संयोगविभागयोः विनिगमनाविरहप्रयुक्तगुणत्वव्यवस्थापनं तदपि न सम्यक् द्रव्यासमवायिकारणविलयापत्त्या गुणरूपसंयोगस्य सर्वैरप्यङ्गीकरणीयत्वेन द्रव्यासमवायिकारणान्यथानुपपत्तेरेव विनिगमकत्वात् । नह्यवयवविभागासमवायिकारणान्यथानुपपत्तिः गुणरूपविभागाङ्गीकारे विनिगमिका विभागस्य गुणत्वासिद्धेः प्राक् उक्तानुपपत्तेः विनिगमकत्वासंभवात् । यच्चात एवेत्यारभ्य तथाप्रत्ययानुपपत्तेरित्यन्तग्र-

## दिनकरीयम्.

तरुसंयोगनाशेनैव तदुपपत्तेः किं च हस्तक्रियैव स्वसमवायिसमवेतत्वसम्बन्धेन शरीरनिष्ठा शरीरतरुसंयोगनाशे हेतुरस्तु वैयधिकरण्याभावादिति चेन्न आश्रयनाशाजन्यगुणनाशस्य विरोधिगुणजन्यत्वनियमेन शरीरकर्मजन्यशरीरतरुसंयोगं प्रति हस्ततरुसंयोगस्याकारणत्वेन च शरीरतरुसंयोगनाशे हस्ततरुसंयोगनाशस्याजनकत्वात् यच्चोक्तं हस्तक्रियैव स्वसमवायिसमवेतत्वसम्बन्धेन तत्र कारणमिति तदपि न साक्षात्सम्बन्धेन जनकत्वनियमस्यासति बाधके सङ्कोचकल्पनानुपपत्तेः । वस्तुतस्तु संयोगाभावो विभागो विभागाभावो वा संयोग इत्यत्र विनिगमनाविरहेणोभयोरप्यतिरिक्तत्वम् । अत एव घटात् पटो विभक्त इति प्रत्यय उपपद्यते संयोगनाशात्मकत्वे नाशस्य सावधिकत्वाभावेन तथाप्रत्ययानुपपत्तेरिति तदिदमभिप्रेत्योक्तम् ॥ अतः संयोगेत्यादि ॥ ११५ ॥ ११६ ॥ ११७ ॥ ११८ ॥ ११९ ॥ १२० ॥

परत्वं चापरत्वं च द्विविधं परिकीर्तितम् ।
दैशिकं कालिकं चापि मूर्त एव तु दैशिकम् ॥ १२१ ॥
परत्वं मूर्तसंयोगभूयस्त्वज्ञानतो भवेत् ।
अपरत्वं तदल्पत्वबुद्धितः स्यादितीरितम् ॥ १२२ ॥

परापरव्यवहारनिमित्ते परत्वापरत्वे निरूपयति ॥ परत्वं चेति ॥ दैशिकमिति ॥

**प्रभा.**

न्थेन विभागस्य गुणत्वानङ्गीकारे नाशस्य सावधिकत्वाभावात् संयोगनाशस्य घटप्रतियोगिकत्वाभावाचाव-धित्वाद्यर्थकपञ्चमीघटितस्य घटात्पटः पृथगितिप्रयोगानुपपत्तिः तस्य गुणत्वे च तादृशप्रयोगोपपत्तिरिति बाधकप्रदर्शनपूर्वकोपष्टम्भकप्रदर्शनं तदपि हेयमेव । घटादन्य इत्यादौ पञ्चम्याः प्रतियोगित्वार्थकत्ववद्वला-हकाद्विद्योतते विद्युदित्यत्र पञ्चम्याः अवच्छेद्यत्वार्थकत्ववच घटाद्विभक्त इत्यत्र पञ्चम्या आधेयत्वार्थकत्वमङ्गी-कृत्य घटवृत्तिसंयोगध्वंसवान् पट इति बोधौपयिकतया तादृशप्रयोगसमर्थनसंभवेन तस्योपष्टम्भकत्वासंभवात् तस्मादुक्तरीत्या विभागस्य गुणत्वव्यवस्थापनमकिञ्चित्करमेवेति । वस्तुतस्तु विभागस्य संयोगात्यन्ताभावरू-पत्वं न संभवति संयुक्तेऽपि घटादौ किञ्चिदवच्छेदेन संयोगात्यन्ताभावसत्त्वेन विभक्तप्रत्ययापत्तेः नापि सं-योगानधिकरणवृत्तित्वविशिष्टसंयोगात्यन्ताभावरूपत्वं घटपटसंयोगशून्यकालेऽपि विभक्तप्रत्ययानापत्तेः ताह-शसंयोगात्यन्ताभावस्य घटादाववर्तमानत्वात् अत एव न संयोगान्योन्याभावरूपत्वं संयुक्तेऽपि तथा प्रत्यया-पत्तेः । नापि संयोगप्रागभावरूपत्वं घटपटयोश्चरमसंयोगोत्पत्त्यनन्तरं तादृशसंयोगनाशे तत्र विभक्तप्रत्यया-नुपपत्तेः तत्र पुनस्संयोगानुत्पत्त्या तत्र संयोगप्रागभावरूपविषयसत्त्वे मानाभावात् । अन्यथा चरमसंयोगो-त्पत्त्यनन्तरमपि तत्र कोटिकोटिसंयोगप्रागभावस्वीकारापत्तेः नापि संयोगध्वंसरूपता संयुक्तेऽपि घटादौ तथा प्रत्ययापत्तेः पूर्वकालीनसंयोगध्वंसरूपविषयस्य च सत्त्वात् । नच घटपटविभागस्य घटपटसंयोगानधिकरणक्ष-णवृत्तित्वविशिष्टसंयोगध्वंसरूपत्वस्वीकारात् तत्संयुक्तघटादौ न तथाप्रत्ययापत्तिरिति वाच्यं विशिष्टस्य क्षणघ-टितत्वस्यातीन्द्रियत्वेन घटो विभक्त इत्यादिलौकिकप्रत्यक्षानुपपत्तेः तस्मात् अन्यथानुपपत्त्या विभागस्य गुणान्तरत्वमवश्यमङ्गीकार्यमिति प्रतिभाति ॥ ११५ ॥ ११६ ॥ ११७ ॥ ११८ ॥ ११९ ॥ १२० ॥

मूले परत्वं चापरत्वं चेत्यादिना विभागकरणमयुक्तं तयोस्सामान्यधर्मात्मकलक्षणप्रकारकज्ञानाभावेनाजि-ज्ञासितत्वात् तदप्रतिपादनेन मूलकारस्य न्यूनतेत्याक्षेपं लक्षणप्रतिपादनेन स्वयं परिहरति ॥ **मुक्तावल्यां परापरेति** ॥ तथाचायमस्मात्परः अपर इत्याकारकशब्दनिष्ठप्रतिपाद्यतासंबन्धावच्छिन्नकार्यतानिरूपितस-मवायसंबन्धावच्छिन्नकारणत्वस्य तादृशकारणतासमानाधिकरणरूपावृत्तिजातिमत्त्वस्य तादृशकारणतावच्छे-दकतया सिद्धपरत्वादिजातिमत्त्वस्य वा परत्वापरत्वलक्षणत्वलाभान्न न्यूनतेति भावः । यद्यपि परत्वादिपद-शक्यतावच्छेदकतयापि परत्वत्वादिजातिसिद्धिर्भवति तथापि परत्वापरत्वे परापरप्रत्ययानिमित्ते इति भाष्यो-क्तकारणतावच्छेदकतया तत्सिद्धिसम्पादनाय तयोस्तादृशव्यवहारानिमित्तत्वप्रदर्शनमिति हृदयम् ॥ **मूर्त ए-व तु दैशिकमिति** ॥ मूल एवकारोक्तश्रूयमाणतुशब्दो दैशिकमित्युत्तरं योज्यः मूर्त एवेत्येवकारेणामूर्तग-गनादिचतुष्टयावृत्तित्वं लभ्यते दैशिकपदेन दैशिकपरत्वं अपरत्वं च दैशिकपदोत्तरं योजितापयर्थकतुशब्देन कालिकपरत्वं अपरत्वं च लभ्यते एवंच कालिकपरत्वापरत्वे यथा गगनादिचतुष्टयान्यतमावर्तिनी तथा दैशिकपर-त्वापरत्वे अपि तादृशान्यतमावर्तिनी किन्तु मूर्तवर्तिनी इत्यर्थः फलितः । कालिकपरत्वापरत्वयोः आश्रयस्तु जन्य-द्रव्यमिति मुक्तावल्यां वक्ष्यति । तथाच विभौ दिक्संयोगरूपासमवायिकारणाभावेन तत्र दैशिकपरत्वापरत्वोत्प-त्त्यसंभव इति भावः । केचित्तु मूले मूर्त एव तु दैशिकमिति विभुद्रव्ये विप्रकृष्टदेशमात्रवृत्तित्वसन्निकृष्टदेशमात्रवृ-

**दिनकरीयम्.**

**मूले मूर्त एव तु दैशिकमिति** ॥ विभुद्रव्ये विप्रकृष्टदेशमात्रवृत्तित्वसन्निकृष्टदेशमात्रवृत्तित्वबुद्धे-र्नैमित्तकारणस्य दिक्संयोगस्यासमवायिकारणस्य चाभावादिति भावः । दैशिकपरत्वस्य निमित्तकारणमाह ॥

दैशिकपरत्वं बहुतरमूर्तसंयोगान्तरितत्वज्ञानादुत्पद्यते एवं तदल्पीयस्त्वज्ञानादपरत्वमुत्पद्यते अत्रावधित्वार्थं पञ्चम्यपेक्षा यथा पाटलिपुत्रात् काशीमपेक्ष्य प्रयागः परः पाटलिपुत्रात् कुरुक्षेत्रमपेक्ष्य प्रयागोऽपर इति ॥ १२१ ॥ १२२ ॥

प्रभा.

त्तित्वबुद्धेर्निमित्तकारणस्य दिक्संयोगस्यासमवायिकारणस्य चाभावादिति भाव इत्याहुः। तदसत् विभौ तादृशपरत्वाद्यनुत्पत्तौ द्वितीयहेतुसंभवेऽपि प्रथमहेतोरलग्नकत्वात् तथाहि विप्रकृष्टदेशमात्रवृत्तित्वादिज्ञानस्य न तत्र हेतुत्वं परमाणोरवृत्तितया तादृशवृत्तित्वज्ञानासंभवेन तत्र परत्वाद्यनुत्पादापत्तेः । नच विप्रकृष्टदेशादिवृत्तित्वं तादृशदेशादिसंयुक्तत्वरूपमेव तस्य परमाणावपि सत्त्वान्नोक्तदोष इति वाच्यम् । तथापि विप्रकृष्टत्वादेर्बहुतरमूर्तसंयोगान्तरितत्वापेक्षया अन्यस्य दुर्वचतया मूलकारोक्ततज्ज्ञानत एव सामञ्जस्ये बहुतरमूर्तसंयोगान्तरितत्वादिरूपविप्रकृष्टत्वादिविशिष्टदेशमात्रवृत्तित्वज्ञानस्य पृथग्घेतुतायां मानाभाव एवेति दैशिकपरत्वेऽपरत्वे च निमित्तकारणमाह ॥ **परत्वमिति** ॥ दैशिकपरत्वमित्यर्थः । अग्रेतनापरत्वशब्दस्यापि दैशिकापरत्वमित्यर्थः मूर्त एव तु दैशिकमिति ग्रन्थेन तस्यैवोपस्थितत्वात् । ननु सूर्यसंयोगभूयस्त्वज्ञानस्य दैशिकपरत्वनिमित्तत्वं सूर्यसंयोगाल्पत्वज्ञानस्य दैशिकापरत्वनिमित्तत्वं च मूलोक्तमयुक्तं तस्य विशेष्यतासंबन्धेन परत्वाद्याश्रयावृत्तित्वेन परत्वादिव्यधिकरणत्वात् समूहालम्बनात्मकतादृशज्ञानमादाय सामानाधिकरण्योपपादने समीपस्थेऽपि तादृशज्ञानबलात्तादृशपरत्वोत्पत्त्यापत्तेरित्याशङ्कां तादृशमूलस्य तात्पर्यार्थप्रदर्शनेन परिहरति ॥ **मुक्तावल्यां बहुतरेति** ॥ अपरत्वाश्रयनिष्ठतदवधिकमूर्तसंयुक्तसंयोगपरम्पराघटकसंयोगसमुदायपर्याप्तसङ्ख्याधिकसङ्ख्यापर्याप्त्यधिकरणत्वनिष्ठतदवधिकमूर्तसंयुक्तसंयोगपरम्पराघटकसंयोगसमुदायकत्वज्ञानादित्यर्थः । सूर्यशब्दस्य मूर्तपरत्वात् ॥ **अल्पीयस्त्वज्ञानादिति** ॥ अल्पतरमूर्तसंयोगान्तरितत्वज्ञानादित्यर्थः । परत्वाश्रयनिष्ठतदवधिकमूर्तसंयुक्तसंयोगपरम्पराघटकसंयोगसमुदायपर्याप्तसङ्ख्यान्यूनसङ्ख्यापर्याप्त्यधिकरणत्वनिष्ठतदवधिकमूर्तसंयुक्तसंयोगपरम्पराघटकसंयोगसमुदायकत्वज्ञानादिति यावत् । यद्यपि परत्वादौ निरुक्तान्तरितत्वज्ञानस्य हेतुत्वापेक्षया द्रव्योत्पत्तिद्वितीयक्षण एव परत्वाद्युत्पत्तिमङ्गीकृत्य सर्वदा सर्वेषां तत्प्रत्यक्षवारणाय तत्प्रत्यक्ष एव तादृशज्ञानस्य हेतुत्वमुचितं अपेक्षाबुद्धिव्यक्तिभेदेनानन्तपरत्वाद्युत्पत्तिस्वीकारापेक्षया लाघवात् तथापि सङ्ख्यानिरूपणे द्रव्योत्पत्तिद्वितीयक्षणे द्वित्वाद्युत्पत्तिस्वीकारपक्षोक्तगौरवरीत्या अत्राप्येकैकस्मिन्नप्रामाणिककोटिकोटिपरत्वादिस्वीकारप्रयुक्तमहागौरवस्य प्रसक्ततया परत्वादावेव तादृशबुद्धेर्हेतुत्वमङ्गीकृत्यापेक्षाबुद्धिव्यक्तिभेदेन परत्वादिस्वीकारस्यैवोचितत्वादेतदभिप्रायेणैव तत्रासमवायिकारणप्रदर्शनात् प्रागेव एतादृशबुद्धिरूपनिरुक्तकारणं मूलकृता प्रदर्शितम् । ननु परत्वादौ किं मानं न तावत्प्रत्यक्षं तादृशशब्दोल्लेखिप्रत्यक्षाभावादित्याशङ्कापरिहाराय तादृशशब्दमुदाहर्तुं आदौ तादृशप्रयोगघटकावधिवाचकपदस्य पञ्चम्यन्तत्वं साधयति ॥ **अत्रेति** ॥ परत्वादिविषयकशाब्दबोधोपयोगिवाक्य इत्यर्थः ॥ **अवधित्वार्थमिति** ॥ अवधित्वविषयकशाब्दबोधार्थमित्यर्थः ॥ **पञ्चम्यपेक्षेति** ॥ पञ्चमीविभक्तिमत्त्वेनावधिवाचकपदप्रयोग आवश्यक इत्यर्थः । तादृशप्रयोगमुदाहरति ॥ **यथेति** ॥ **पाटलिपुत्रादिति** ॥ अवधितानिरूपकत्वं पञ्चम्यर्थः तस्य परपदार्थैकदेशपरत्वेऽन्वयः ॥ **काशीमपेक्ष्येति** ॥ काशीनिरूपितेत्यर्थः । काश्यपेक्षयेति पाठे अपेक्षितकाश्येत्यर्थः कृदभिहितो भाव इति न्यायात् निरूपकत्वमपेक्षितार्थः तृतीयार्थो निरूपितत्वं तस्यापि परत्वेऽन्वयः एवंच पाटलिपुत्रनिष्ठावधितानिरूपककाशीनिरूपितपरत्वाश्रयः प्रयाग इति शाब्दबोधः । एवं पाटलिपुत्रात्कुरुक्षेत्रमपेक्ष्य कुरुक्षेत्रापेक्षयेति पाठे वा प्रयागोऽपर इति वाक्यस्थलेऽप्युक्तरी-

## दिनकरीयम्.

**बहुतरेति** ॥ बहुतरसंयोगान्तरितत्वं तदेव विप्रकृष्टत्वं तद्विषयिण्यपेक्षाबुद्धिर्दैशिकपरत्वं प्रति निमित्तकारणमित्यर्थः ॥ **तदल्पीयस्त्वेति** ॥ अल्पसंयोगान्तरितत्वरूपसन्निकृष्टत्वविषयिण्यपेक्षाबुद्धिर्दैशिकापरत्वं प्रति निमित्तकारणमित्यर्थः ॥ १२१ ॥ १२२ ॥

तयोरसमवायी तु दिक्संयोगस्तदाश्रये ।
दिवाकरपरिस्पन्दभूयस्त्वज्ञानतो भवेत् ॥ १२३ ॥
परत्वमपरत्वं तु तदीयाल्पत्वबुद्धितः ।
अत्र त्वसमवायी स्यात् संयोगः कालपिण्डयोः ॥ १२४ ॥

**तयोः दैशिकपरत्वापरत्वयोः ॥ असमवायी** असमवायिकारणम् ॥ **तदाश्रये** दैशिकपरत्वापरत्वाश्रये ॥ **दिवाकरेति** ॥ अत्र परत्वमपरत्वं कालिकं ग्राह्यम् । यस्य सूर्यप–

प्रभा.

त्यैवार्थो वर्णनीयः। तथाचावाधिवाचकपदोत्तरं द्वितीयादिः न संभवति द्वितीयादेरवधित्वावाचकत्वात् आनुशासनिकातिरिक्तस्थले सुब्विभक्तेर्लक्षणाया असंभवेन द्वितीयादेरवधित्वादिलाक्षणिकत्वासंभवाच्च षष्ठीविभक्तेरवधित्वादिशक्तत्वेऽपि शेषषष्ठयास्संबन्धसामान्यशक्ततया संबन्धत्वेनावधित्वबोधेऽप्यवधित्वत्वेनावधित्वाबोधात् तदवधिकपरत्वादिप्रत्यक्षं नैतादृशशब्दोल्लेखीति तादृशप्रत्ययाभावेन परत्वाद्यसिद्धयापत्त्या तत्सिद्धयर्थं पञ्चम्यन्तावधिवाचकपदघटितवाक्योदाहरणमावश्यकमिति भावः। ननु काशीनिष्ठपाटलिपुत्रावधिकसंयुक्तसंयोगपरम्पराघटकसंयोगसमुदायपर्याप्तसङ्ख्यापेक्षया प्रयागनिष्ठपाटलिपुत्रावधिकसंयुक्तसंयोगपरम्पराघटकसंयोगसमुदायस्याधिकसङ्ख्यापर्याप्त्यधिकरणत्वेन तज्ज्ञानात् प्रयागे यथा पाटलिपुत्रावधिककाशीनिरूपितपरत्वोत्पत्तिः तथा तदवधिकप्रयागनिष्ठसंयुक्तसंयोगपरम्पराघटकसंयोगसमुदायपर्याप्तसङ्ख्यापेक्षया काशीनिष्ठप्रयागघटितसव्यापसव्यसंयुक्तसंयोगपरम्पराघटकसंयोगसमुदायस्याप्यधिकसङ्ख्यापर्याप्त्यधिकरणत्वेन तज्ज्ञानात् काश्यामपि पाटलिपुत्रावधिकप्रयागनिरूपितपरत्वोत्पत्त्यापत्तिरिति चेन्न। तन्निष्ठसंयुक्तसंयोगपरम्परासामान्यघटकसंयोगसमुदायस्य निरुक्तसङ्ख्यापेक्षया अधिकसङ्ख्यापर्याप्त्यधिकरणत्वज्ञानं न परत्वोत्पादकं काशीनिष्ठपाटलिपुत्रावधिका या काचित्संयुक्तसंयोगपरम्परा तद्घटकसंयोगसमुदायपर्याप्तसङ्ख्यापेक्षया काशीनिष्ठपाटलिपुत्रावधिकप्रयागघटितसव्यापसव्यसंयुक्तसंयोगपरम्परान्तरघटकसंयोगसमुदायस्याधिकसङ्ख्यापर्याप्त्यधिकरणत्वेन तज्ज्ञानात् काश्यां पाटलिपुत्रावधिककाशीनिरूपितपरत्वस्याप्युत्पत्त्यापत्तेः। किन्तु काशीनिष्ठा यावत्यः पाटलिपुत्रावधिकसंयुक्तसंयोगपरम्परास्तावद्घटकोत्कर्षानाश्रयसंयुक्तसंयोगपरम्पराघटकसंयोगसमुदायपर्याप्तसङ्ख्यापेक्षया तादृशपरम्पराघटकसंयोगसमुदायस्याधिकसङ्ख्यापर्याप्त्यधिकरणत्वज्ञानमेव परत्वोत्पादकं प्रयागे काशीनिष्ठतादृशपरम्पराघटकसंयोगसमुदायपर्याप्तसङ्ख्यापेक्षया तादृशपरम्पराघटकसंयोगसमुदायस्याधिकसङ्ख्यापर्याप्त्यधिकरणत्वाभावात् तज्ज्ञानाभावेन काश्यां न पाटलिपुत्रावधिककाशीनिरूपितपरत्वोत्पत्त्यापत्तिः । एवंच पाटलिपुत्रावधिकप्रयागनिष्ठसंयुक्तसंयोगपरम्पराघटकसंयोगसमुदायपर्याप्तसङ्ख्यापेक्षया पाटलिपुत्रावधिककाशीनिष्ठप्रयागघटितसव्यापसव्यसंयुक्तसंयोगपरम्पराघटकसंयोगसमुदायस्याधिकसङ्ख्यापर्याप्त्यधिकरणत्वेऽपि प्रयागनिष्ठा यावत्यः पाटलिपुत्रावधिकसंयुक्तसंयोगपरम्परास्तावद्घटकोत्कर्षानाश्रयसंयुक्तसंयोगपरम्पराघटकसंयोगसमुदायपर्याप्तसङ्ख्यापेक्षया पाटलिपुत्रावधिकाः काशीनिष्ठा यावत्यः संयुक्तसंयोगपरम्पराः तावद्घटकोत्कर्षानाश्रयसंयुक्तसंयोगपरम्पराघटकसंयोगसमुदायस्याधिकसङ्ख्यापर्याप्त्यधिकरणत्वाभावादभ्रान्तस्य तज्ज्ञानाभावेन काश्या न पाटलिपुत्रावधिकप्रयागनिरूपितपरत्वापत्तिः । अनयैव दिशा प्रयागस्य पाटलिपुत्रावधिककाशीनिरूपितापरत्वापत्तिरपि परिहरणीयेत्यास्तां विस्तरः ॥ १२१ ॥ १२२ ॥

**तयोरसमवायी स्यादिति** ॥ मूलस्थतच्छब्दस्य परत्वापरत्वसामान्यपरत्वे दिक्संयोगस्य कालिकपरत्वाद्यसमवायिकारणत्वाभावादसङ्गतेरतःषष्ठयन्ततत्पदं परत्वादिविशेषपरतया व्याकरोति ॥ **मुक्तावल्यां दैशिक**

दिनकरीयम् .

कालिकपरत्वापरत्वे जन्य एवेत्यत्र जन्यपदं सप्तम्यन्तं नित्ये तत्पूर्वोत्पन्नत्वरूपज्येष्ठत्वबुद्धेस्तदनन्तरोत्पन्नत्वरूपकनिष्ठत्वबुद्धेर्निमित्तकारणस्य कालसंयोगरूपासमवायिकारणस्य चाभावादिति भावः ॥

**रिस्पन्दापेक्षया यस्य सूर्यपरिस्पन्दोऽधिकः स ज्येष्ठः यस्य न्यूनः स कनिष्ठः । कालिक-परत्वापरत्वे जन्यद्रव्य एव ॥ अत्र कालिकपरत्वापरत्वयोः ॥ १२३ ॥ १२४ ॥**

## प्रभा.

**परत्वापरत्वयोरिति** ॥ मूलस्थासमवायिशब्दस्य न समवायीति व्युत्पत्त्या समवायिकारणभिन्नसामान्यबोधकत्वादसङ्गतिः अतस्तादृशपदस्य कारणविशेषपरत्वमाह ॥ **असमवायिकारणमिति** ॥ **तदाश्रय इति** ॥ मूलस्थतच्छब्दस्य कालिकपरत्वादिपरत्वे तदाश्रयनिष्ठादिक्संयोगस्यैवासमवायिकारणत्वं लभ्यते तथा सति परमाणुदिक्संयोगस्यासमवायिकारणत्वालाभेन परमाणौ दैशिकपरत्वाद्यनुत्पत्तिप्रसङ्गात् अतः तदाश्रय इति मूलस्थतत्पदं दैशिकपरत्वादिपरतया व्याचष्टे॥ **दैशिकपरत्वापरत्वाश्रय इति**॥ कालिकपरत्वादौ निमित्तकारणमसमवायिकारणं चाह ॥ **मूले दिवाकरेत्यादि** ॥ परत्वमपरत्वं च तदीयाल्पत्वबुद्धित इति मूलस्थपरत्वादिशब्दात् झटिति कालिकपरत्वापरत्वाद्युपस्थितिः न भवति । पूर्वं दैशिकपरत्वादेरेवोपस्थितत्वेन तस्यानुपस्थितत्वादतो मूलस्थपरत्वादिशब्दस्य कालिकपरत्वाद्यर्थकत्वमाह ॥ **अत्रेति** ॥ **परत्वमपरत्वं चेति** ॥ कारिकाघटकामित्यर्थः । ननु दिवाकरपरिस्पन्देत्यादियथाश्रुतमूलात् दिवाकरपरिस्पन्दविशेष्यकभूयस्त्वादिप्रकारकज्ञानस्य कालिकपरत्वादिनिमित्तत्वं लभ्यते तदयुक्तं तज्ज्ञानस्य कालिकपरत्वादिव्यधिकरणत्वात् समूहालम्बनात्मकतादृशज्ञानमादाय विषयतासंबन्धघटितसामानाधिकरण्योपपादने कनिष्ठेऽपि तेन संबन्धेन तादृशज्ञानसत्त्वात् परत्वोत्पत्त्यापत्तिः । अतः तादृशमूलस्य प्रतीकमधृत्वा तात्पर्यार्थमाह ॥ **यस्येति** ॥ यदुत्पत्तिप्रभृतिकालिकपरत्वबुद्ध्युत्पत्तिकालपर्यन्तं जायमानसूर्यक्रियासमुदायपर्याप्तसङ्ख्यापेक्षयेत्यर्थः ॥ **यस्य सूर्यपरिस्पन्द इति** ॥ यदुत्पत्तिप्रभृतिकालिकपरत्वबुद्ध्युत्पत्तिकालपर्यन्तं जायमानसूर्यक्रियासमुदाय इत्यर्थः ॥ **अधिक इति** ॥ अधिकसङ्ख्यापर्याप्त्यधिकरणमित्यर्थः ॥ **स ज्येष्ठ इति** ॥ तादृशाधिकरणमेव कालिकपरत्वाश्रयः तद्विशेषज्येष्ठत्वाश्रयश्चेत्यर्थः । तथाच समवायेन तदवधिकपरत्वं प्रति तदुत्पत्तिप्रभृतिकालिकपरत्वबुद्ध्युत्पत्तिकालपर्यन्तं जायमानसूर्यपरिस्पन्दसमुदायपर्याप्तसङ्ख्याधिकसङ्ख्यापर्याप्त्यधिकरणसूर्यपरिस्पन्दसमुदायावधिभूतोत्पत्त्याश्रयत्वज्ञानं निमित्तकारणमेव समवायेन तदवधिकज्येष्ठत्वं प्रति तज्जन्मप्रभृतिकालिकपरत्वबुद्ध्युत्पत्तिपर्यन्तं जायमानसूर्यपरिस्पन्दसमुदायपर्याप्तसङ्ख्याधिकसङ्ख्यापर्याप्त्यधिकरणतपनपरिस्पन्दसमुदायावधिभूतजन्माश्रयत्वज्ञानं निमित्तकारणमित्यर्थलाभान्न पूर्वोक्तदोषप्रसक्तिरिति भावः ॥ **यस्येति** ॥ यस्य सूर्यपरिस्पन्दापेक्षयेति आदावनुवर्तते सूर्यपरिस्पन्द इति यस्येत्युत्तरमनुवर्तते अर्थस्तु पूर्वरीत्या ज्ञेयः ॥ **न्यून इति** ॥ न्यूनसङ्ख्यापर्याप्त्यधिकरणमित्यर्थः ॥ **स कनिष्ठ इति** ॥ निरुक्तन्यूनसङ्ख्यापर्याप्त्यधिकरणमेव कालिकापरत्वाश्रयस्तद्विशेषकनिष्ठत्वाश्रयश्चेत्यर्थः । कार्यकारणभावश्च कालिकपरत्वे तद्विशेषज्येष्ठत्वे च बहुतरतपनपरिस्पन्दान्तरितोत्पन्नत्वतादृशजन्मत्वज्ञानहेतुत्वरीत्या ज्ञेयः अत्र ज्येष्ठत्वादिः कालिकपरत्वादिविशेषः नतु कालिकपरत्वादिसामान्यरूपं प्रामाणिकानां प्राणशून्यघटादौ ज्येष्ठत्वादिबुद्धेरनुदयात् केवलकालिकपरत्वादिबुद्धेरनुदयाच्च शरीरे चोभयबुद्ध्युदयाच्चेति बोध्यम् । नन्वेतादृशापेक्षाबुद्धेः कालिकपरत्वादिहेतुत्वे नित्ये परमाण्वादौ कालिकपरत्वाद्यनुत्पत्त्यापत्तिरित्याशङ्कामिष्टापत्त्या परिहरति ॥ **कालिकेति** ॥ **जन्यद्रव्य एवेति** ॥ जन्यद्रव्यवर्तिनी एवेत्यर्थः । नित्यद्रव्यावर्तिनी इति यावत् । नन्वेतादृश्यापेक्षाबुद्धेः कालिकपरत्वादिनिमित्तत्वे जन्यगुणादौ तादृशपरत्वाद्युत्पत्त्यापत्तिरित्याशङ्कां कारणान्तरविरहप्रदर्शनेन परिहरति ॥ **मूलेऽत्र त्विति** ॥ कालिकपरत्वादावित्यर्थः ॥ **असमवायी स्यादिति** ॥ असमवायिकारणं भवतीत्यर्थः ॥ **संयोगः कालपिण्डयोरिति** ॥ कालजन्यद्रव्ययोरित्यर्थः । तथाच कालिकपरत्वादिकं प्रति जन्यद्रव्यकालसंयोगस्यासमवायिकारणतया जन्यगुणादौ समवायेन तादृशासमवायिकारणाभावेन न तादृशपरत्वाद्युत्पत्तिरिति भावः । इदमुपलक्षणं भावकार्यं प्रति द्रव्यस्यैव समवायिकारणतया जन्यगुणादौ तादात्म्येन द्रव्याभावान्न गुणोत्पत्त्यापत्तिरित्यपि बोध्यं अत्र दैशिकपरत्वादौ अवधिनिरूपकयोरैक्याभावात् । एकस्मिन्नेकनिरूपितं भिन्नावधिकं परत्वादिकमुत्पद्यते एवमेकस्मिन्नेकावधिकाभिन्ननिरूपितं परत्वादिकमुत्पद्यते यथा प्रयागे काशीनिरूपितमेव पाटलिपुत्रावधिकं परत्वं कुरुक्षेत्रावधिक-

अपेक्षाबुद्धिनाशेन नाशस्तेषां निरूपितः ।
बुद्धेः प्रपश्चः प्रागेव प्रायशोऽपि निरूपितः ॥ १२५ ॥
अथावशिष्टोऽप्यपरः प्रकारः परिकीर्त्यते ।
अप्रमा च प्रमा चेति ज्ञानं द्विविधमिष्यते ॥ १२६ ॥
तच्छून्ये तन्मतिर्या स्यादप्रमा सा निरूपिता ।
तत्प्रपञ्चो विपर्यासः संशयोऽथ प्रदर्श्यते ॥ १२७ ॥

**तेषां दैशिककालिकपरत्वापरत्वानाम् । निरूपणक्रमप्राप्तां बुद्धिं निरूपयति ॥ बुद्धेरिति ॥**

## प्रभा.

मपरत्वं चोत्पद्यते अन्यथा पाटलिपुत्रात् काश्यपेक्षया प्रयागः परः कुरुक्षेत्रात् काश्यपेक्षया प्रयागोऽपर इति सर्वानुभवसिद्धप्रतीत्यनुपपत्तेः एवं प्रयागे पाटलिपुत्रावधिकमेव काशीनिरूपितं परत्वं कुरुक्षेत्रनिरूपितमपरत्वं चोत्पद्यत इत्यङ्गीकार्यं अन्यथा पाटलिपुत्रात् काश्यपेक्षया प्रयागः परः कुरुक्षेत्रापेक्षया प्रयागोऽपर इति सर्वानुभवसिद्धप्रतीत्यापत्तेः । कालिकपरत्वादौ त्ववधिनिरूपकयोर्भेदाभावादवध्याभिन्ननिरूपकभेदेनैव कालिकपरत्वादिकमुत्पद्यते यथा लक्ष्मणे शत्रुघ्नावधिकं तन्निरूपितं परत्वं रामावधिकं तन्निरूपितापरत्वं चोत्पद्यत इत्यङ्गीकार्यम् । अन्यथा लक्ष्मणः शत्रुघ्नात्परः रामादपर इति सर्वानुभवसिद्धप्रतीत्यनुपपत्तेः अत एव लक्ष्मणः शत्रुघ्नात् शत्रुघ्नापेक्षया परः रामात् रामापेक्षया अपर इति न नियमेन प्रयोगः एकपद्यस्यापि तन्निष्ठावधितानिरूपकत्वतन्निरूपितत्वयोः प्रतिपादनसंभवादिति विश्वनाथस्य निगूढाभिप्राय इति प्रतिभाति । नवीनैकदेशिनस्तु निरुक्तबहुतरसूर्यसंयोगान्तरितत्वमेव दैशिकपरत्वं निरुक्ताल्पतरसंयोगान्तरितत्वं तदपरत्वं एवं निरुक्तबहुतरतपनसंयोगान्तरितोत्पन्नत्वं कालिकपरत्वं तादृशसंयोगान्तरितजन्मत्वं ज्येष्ठत्वं निरुक्ताल्पतरतत्संयोगान्तरितोत्पन्नत्वरूपमेव कालिकपरत्वं निरुक्ताल्पतरतपनपरिस्पन्दान्तारितजन्मत्वमेव कनिष्ठत्वमस्तु लाघवान्नतु तज्ज्ञानजन्यातिरिक्तगुणरूपं तादृशापेक्षाबुद्धिव्यक्तिभेदेनानन्तपरत्वादिकल्पने तत्सामग्रीकल्पने तन्नाशकल्पने चातिगौरवादित्याहुः । तन्न दैशिकपरत्वादेर्निरुक्तसूर्यसंयोगान्तरितत्वादिरूपत्वे तस्याप्यतीन्द्रियत्वेन घटादावपि कस्यापि दैशिकपरत्वादिनिष्ठलौकिकाविषयताशालिप्रत्यक्षानुपपत्तेः साक्षात्करोमीत्यनुव्यवसायानुपपत्तेश्च । एवं कालिकपरत्वादेर्निरुक्तबहुतरतपनपरिस्पन्दान्तरितत्वोत्पन्नत्वादिरूपत्वे ज्येष्ठत्वादेर्निरुक्तबहुतरतपनपरिस्पन्दान्तरितजन्मत्वादिरूपत्वे चोत्पत्तिजन्मनोरतीन्द्रियतया तल्लौकिकप्रत्यक्षानुपपत्तेः जन्यगुणादावपि निरुक्तबहुतरतपनपरिस्पन्दान्तरितोत्पन्नत्वादेस्सत्त्वेन भ्रान्तानां कालिकपरत्वादिप्रत्ययापत्तेश्चेति दिक् ॥ १२३ ॥ १२४ ॥

अपेक्षाबुद्धिनाशेन नाशस्तेषामुदाहृत इति मूलस्थेदंशब्दस्याव्यवहितपूर्वोपस्थितकालिकपरत्वादिमात्रपरत्वे दैशिकपरत्वादेर्नाशकाप्रदर्शनेन न्यूनता स्यात् अतो मूलस्थेदंशब्दस्य दैशिककालिकसाधारणपरत्वादिमात्रपरत्वमाह ॥ **मुक्तावल्यां दैशिककालिकपरत्वापरत्वानामिति** ॥ ननु ग्रन्थान्तरे अपरत्वनिरूपणानन्तरं गुरुत्वनिरूपणं दृश्यते तदुपेक्ष्यात्र बुद्धिनिरूपणे किन्नियामकमित्याशङ्कां नियामकप्रदर्शनेन परिहरति ॥ **मुक्तावल्यां निरूपणक्रमप्राप्तामिति** ॥ गुणविभागकारिकाक्रमोपस्थितामित्यर्थः । तथाच ग्रन्थान्तरे गुणविभागवाक्यस्यापरत्वपदाव्यवहितोत्तरगुरुत्वपदघटितत्वात् तद्रीत्या तत्रापरत्वनिरूपणानन्तरं गुरुत्वनिरूपणमावश्यकं अत्रतु गुणविभागकारिकायाः अपरत्वपदाव्यवहितोत्तरबुद्धिपदघटितत्वादपरत्वनिरूप-

## दिनकरीयम्.

**मूलेऽपेक्षाबुद्धिनाशेनेति** ॥ स्वनिमित्तकारणविप्रकृष्टत्वादिबुद्धीनां नाशेनेत्यर्थः । नव्याः पुनर्बहुतरसंयोगान्तारितत्वरूपविप्रकृष्टत्वाल्पसंयोगान्तारितत्वरूपसन्निकृष्टत्वाभ्यां दैशिकपरत्वापरत्वादिव्यवहारस्य बहुतरस्पन्दान्तारितजन्यत्वरूपज्येष्ठत्वाल्पतरस्पन्दान्तारितजन्यत्वरूपकनिष्ठत्वाभ्यां च कालिकपरत्वादिव्यव-

**तत्र अप्रमां निरूपयति ॥ तच्छून्य इति ॥ तदभाववति तत्प्रकारकं ज्ञानं भ्रम इत्यर्थः ॥ तत्प्रपञ्चः अप्रमाप्रपञ्चः ॥ १२५ ॥ १२६ ॥ १२७ ॥**

**प्रभा.**

णानन्तरं बुद्धिनिरूपणमावश्यकमिति भावः । ननु ग्रन्थान्तरे गुणविभागक्रमानुसारेणात्रापि गुणविभागः कुतो न कृत इति चेन्न तादृशविभागक्रमस्य गुणविभागसूत्रघटकपरत्वापरत्वबुद्धय इति सूत्रविरुद्धत्वेन तादृशविभागक्रममुपेक्ष्य सूत्रोक्तगुणविभागक्रमेणैवात्रापि गुणविभागः कृत इत्युक्ताशङ्कायाः अनवकाशात् ॥ **मूले बुद्धेः प्रपञ्च इति** ॥ बुद्धेः प्रकार इत्यर्थः ॥ **प्रागेव** आत्मनिरूपणावसर एव ॥ **प्रायशोऽपीति** ॥ अनुभवत्वादिरूपकतिपय इत्यर्थः। तस्य प्रपञ्चपदार्थेऽभेदेनान्वयः । अपिशब्दः अथेत्युत्तरं योज्यः ॥ **अथेति** ॥ कतिपयप्रकारे निरूपितेऽपीत्यर्थः ॥ **अवशिष्टोऽपीति** ॥ आत्मग्रन्थे अनिरूपितोऽपीत्यर्थः । अपिशब्दः प्रकारपदोत्तरं योज्यः ॥ **अपर इति** ॥ अप्रमात्वादिरूप इत्यर्थः ॥ **प्रकार इति** ॥ बुद्धिधर्मोऽपीत्यर्थः ॥ **परिकीर्त्यत इति** ॥ निरूप्यत इत्यर्थः। तथाचात्मनिरूपणावसरेऽनुभवत्वस्मृतित्वाभ्यां बुद्धेर्निरूपितत्वेऽपि तदा बुद्धित्वव्याप्यसकलधर्मैरनिरूपितत्वेन न्यूनतापत्त्या तत्परिहाराय गुणविभागकारिकाया अपरत्वोपस्थित्युत्तरकालोपस्थितित्वरूपप्रसङ्गसङ्गत्यावशिष्टधर्मैर्बुद्धिर्निरूप्यत इत्यर्थः । प्रतिज्ञातार्थमेवाह ॥ **अप्रमाचे त्यादिना** ॥ यद्यपि ग्रन्थान्तरे यथार्थत्वायथार्थत्वाभ्यामेव विभागो दृष्टो नत्वयथार्थत्वयथार्थत्वाभ्यामिति तद्रीत्यैवात्रापि विभागो युक्तः तथापि प्रमालक्षणस्य भ्रमभिन्नत्वघटितस्याग्रे वक्तव्यतया तस्याप्रमात्वघटितत्वेन तदुपस्थितिं विना विशिष्टलक्षणज्ञानासंभवादुक्तरीत्या विभागेऽप्रमालक्षणस्य प्रथमतोऽजिज्ञासितत्वेन तल्लक्षणवाक्यस्य प्रथमतो वक्तुमशक्यत्वात् प्रथमतोऽप्रमात्वोपस्थितिनिर्वाहायाप्रमात्वप्रमात्वाभ्यामत्र विभागकरणमिति । वस्तुतस्त्वप्रमाया लक्षणविभागोभयकरणमावश्यकं ननु प्रमायाः तस्याः लक्षणमात्रस्यैव वक्तव्यत्वादतः प्रमानिरूपणापेक्षया अप्रमानिरूपणस्य कष्टत्वेन कष्टमनुभुज्य सुखं भोक्तव्यमिति न्यायादादावप्रमानिरूपणमेव कर्तव्यमितीच्छया बुद्धेर्विभागोऽपि तथैव कृतः । नच प्रमानिरूपणस्यापि प्रमात्वस्य स्वतोग्राह्यत्ववादिमतनिराकरणपूर्वकपरतोग्राह्यत्वव्यवस्थापनक्षमत्वेन कष्टतरतयोक्तन्यायोऽत्रापि प्रसज्यत एवेति वाच्यम्। अप्रमानिरूपणस्याप्यप्रमात्वस्य स्वतोग्राह्यत्ववादिमतनिराकरणपूर्वकपरतोग्राह्यत्वव्यवस्थापनक्षमत्वेन कष्टतरत्वस्यात्रापि तुल्यत्वात् द्वैविध्येन विभागकरणे द्विविधाप्रमात्वोत्पादकसामग्रीप्रदर्शनप्रयुक्तकष्टं परमतिरिच्यत इति प्रतिभाति । एतेन प्रमात्वस्य तद्वति तत्प्रकारकानुभवत्वरूपस्याप्रमात्वाघटितस्यापि वक्ष्यमाणतया प्रथमतोऽप्रमात्वोपस्थितेरनावश्यकत्वात् तन्निर्वाहाय वैपरीत्येन विभागकरणमयुक्तमिति दूषणं प्रत्युक्तम्॥ **मुक्तावल्यामप्रमान्निरूपयतीति** ॥ अप्रमां लक्षयित्वा विभजत इत्यर्थः। तच्छून्ये तन्मतिर्या स्यादिति मूलात्तन्निष्ठप्रतियोगिताकाभावनिष्ठविषयतानिरूपिततन्निष्ठविषयताशालिज्ञानत्वं तद्भ्रमत्वमित्यर्थो लभ्यते तदयुक्तं घटेऽपि घटत्वस्य विशिष्टाभावोभयाभावसत्त्वात् घटविशेष्यकघटत्वप्रकारकप्रमायामतिव्याप्तिवारणायाप्रमात्वघटकप्रतियोगितायां वैशिष्ट्यव्यासज्यवृत्तिधर्मानवच्छिन्नत्वमपि निवेश्यम् । समवायेन घटत्वप्रमाया अपि संयोगसंबन्धावच्छिन्नघटत्वानिष्ठप्रतियोगिताकाभाववद्घटाविशेष्यकत्वात्तत्रातिव्याप्तिवारणाय तत्संबन्धावच्छिन्नतन्निष्ठतादृशप्रतियोगिताकाभाववन्निष्ठविषयतानिरूपिततत्संबन्धावच्छिन्नतन्निष्ठविषयताशालिज्ञानत्वं तत्संबन्धेन तद्भ्रमत्वमिति विवक्षणीयम् । तादृशभ्रमत्वघटकविषयतयोः विशेष्यतात्वादिना निवेशे तु अत्र रजतत्वमिति भ्रमस्य इदन्त्वावच्छिन्नसमवायसंबन्धावच्छिन्नाधेयत्वसंबन्धावच्छिन्नशुक्तिनिष्ठप्रकारतानिरूपितरजतत्वनिष्ठविशेष्यताकस्य रजतत्वभ्रमत्वानुपपत्तिः तस्य रजतत्वप्रकारकत्वाभावात् शुक्तिविशेष्यकत्वाभावाच्च । अतो विषयतात्वेनैव निवेशः कृतः। नचैवमपि तादृशभ्रमीयरजतत्वनिष्ठविषयतायाः विशेष्यतारूपत्वेन समवायसंबन्धावच्छिन्नत्वाभावात् तत्संबन्धेन रजतत्वभ्रमत्वानुपपत्तिर्दुर्वारैवेति

**दिनकरीयम्.**

हारस्योपपत्तेर्न तयोर्गुणान्तरत्वम् । अत्र च यत्काले ज्येष्ठत्वबुद्धिरुत्पद्यते तत्कालमादाय स्पन्दनन्यूनाधिकताबसेया अतो न कनिष्ठेऽधिकजीविनि परत्वव्यवहारापात्तिरिति वदन्ति ॥ **तदभाववतीति** ॥ **इदं न**

आद्यो देहेष्वात्मबुद्धिः शङ्खादौ पीततामतिः ।
भवेन्निश्चयरूपा या संशयोऽथ प्रदर्श्यते ॥ १२८ ॥
किंस्विन्नरो वा स्थाणुर्वेत्यादिबुद्धिस्तु संशयः ।
तदभावाप्रकारा धीस्तत्प्रकारा तु निश्चयः ॥ १२९ ॥

**आद्य इति** ॥ विपर्यास इत्यर्थः । शरीरादौ निश्चयरूपं यदात्मत्वप्रकारकं ज्ञानं गौरोऽहमित्याकारकम् । एवं शङ्खादौ पीतः शङ्ख इत्याकारकं यत् ज्ञानं निश्चयरूपं तद्भ्रम इति ॥ **किंस्विदिति** ॥ किंस्विदिति वितर्के । निश्चयस्य लक्षणमाह ॥ **तदभावेति** ॥ तदभावाप्रकारकं तत्प्रकारकं ज्ञानं निश्चयः ॥ १२८ ॥ १२९ ॥

## प्रभा.

वाच्यम् । तत्संबन्धावच्छिन्नवैशिष्ट्यव्यासज्यवृत्तिधर्मानवच्छिन्नतन्निष्ठप्रतियोगिताकाभाववन्निष्ठतत्संबन्धाघटिततत्संबन्धावच्छिन्नविषयतानिरूपिततत्संबन्धातिरिक्तसंबन्धानवच्छिन्नतान्निष्ठविषयताशालिज्ञानत्वस्यैव तत्संबन्धेन भ्रमत्वरूपत्वस्वीकारेण समवायसंबन्धावच्छिन्नाधेयत्वसंबन्धावच्छिन्नेदन्त्वावाच्छिन्नशुक्तिनिष्ठप्रकारतानिरूपितरजतत्वनिष्ठाविशेष्यताशालिभ्रमस्य समवायेन रजतत्वप्रकारकशुक्तिविशेष्यकभ्रमस्य वा तादृशविषयताशालिज्ञानत्वरूपभ्रमत्वस्याक्षतत्वान्नोक्तानुपपत्तिप्रसक्तिः । यद्यत्र रजतत्वामिति ज्ञानस्य रजतत्वांशे तादृशाधेयतासंबन्धेन शुक्तिभ्रमत्वमेव स्वीक्रियते ननु समवायेन रजतत्वभ्रमत्वमित्युच्यते तदानिरुक्तानुपपत्तेः सुतरामप्रसक्त्यैतादृशपरिष्कारे प्रयोजनविरहात् तत्संबन्धावच्छिन्नतन्निष्ठप्रतियोगिताकाभाववन्निष्ठविषयतानिरूपिततत्संबन्धावच्छिन्नतन्निष्ठविषयताशालिज्ञानत्वं तत्संबन्धेन तद्भ्रमत्वमिति यथाश्रुतमेव सम्यगिति मूलाशयः । उक्ताशयमेव प्रकाशयति ॥ **मुक्तावल्यां तदभाववतीति** ॥ तत्संबन्धावच्छिन्नतन्निष्ठतादृशप्रतियोगिताकाभाववतीत्यर्थः ॥ **तत्प्रकारकमिति** ॥ तत्संबन्धावच्छिन्नतन्निष्ठविषयतानिरूपकमित्यर्थः । तथाच तत्संबन्धावच्छिन्नतान्निष्ठतादृशप्रतियोगिताकाभाववन्निष्ठज्ञानीयविषयतानिरूपिततत्संबन्धावच्छिन्नतन्निष्ठविषयतानिरूपितविषयित्वसंबन्धेन तद्धर्मविशिष्टत्वं तेन संबन्धेन तद्भ्रमत्वमिति फलितम् । तत्र रजतत्वप्रमायां अतिव्याप्तिवारणाय तत्संबन्धावच्छिन्नविषयतायां तादृशनिरूपितत्वनिवेशः । तादृशप्रमीयरजतत्वनिष्ठविषयताया अपि शुक्तित्वाभाववन्निष्ठविषयतानिरूपितत्वादतिव्याप्तिवारणाय तत्संबन्धावच्छिन्नविषयतायाः तन्निष्ठत्वनिवेशः । रजतत्वनिष्ठप्रमीयविषयताया अपि संयोगेन रजतत्वाभाववन्निष्ठविषयतानिरूपितत्वात् अतिव्याप्तिवारणाय तन्निष्ठप्रतियोगित्वविषयत्वयोरेकसंबन्धावच्छिन्नत्वनिवेशः । इच्छादावतिव्याप्तिवारणाय विषयतायां ज्ञानीयत्वनिवेशः । इदंच भ्रमविशेषलक्षणं धर्मसंबन्धविशेषघटितत्वात् अतो वृक्षः कपिसंयोगीति प्रमायामेतल्लक्षणसत्त्वेऽपि नातिव्याप्तिः वक्ष्यमाणस्य परिष्कृतकपिसंयोगभ्रमलक्षणस्य तत्रावर्तमानत्वात् अत्र भगवज्ज्ञानानिरूपितज्ञानसामान्यनिरूपितविषयतानिरूपितविषयित्वं भ्रमसामान्यलक्षणमिति बोध्यम् । अप्रमां विभजते ॥ **मूले तत्प्रपञ्चो विपर्यासस्संशयोऽथ प्रदर्श्यत इति** ॥ अत्राथशब्दस्तत्प्रपञ्च इति पूर्वं योज्यः । तादृशाथशब्दस्याप्रमायाः लक्षणप्रदर्शनानन्तरमित्यर्थः ॥ **तत्प्रपञ्च इति** ॥ तस्या अप्रमाया प्रपञ्चो विभाजकधर्म इत्यर्थः । तथाचाप्रमां लक्षयित्वा विपर्ययत्वसंशयत्वाभ्यां विभज्यत इत्यर्थः फलितः । अप्रमां विभज्य स्वरूपमाह ॥ **आद्य इति** ॥ विपर्यय इत्यर्थः ॥ **देहेष्वात्मबुद्धिरिति** ॥ देहात्मनोरभेदावगाही देहे आत्मत्वप्रकारकः आत्मनि देहत्वप्रकारकः देहोऽहमहं देह इत्याकारकः आत्मत्वविशेष्यकसमवायसंबन्धावच्छिन्नाधेयत्वसंसर्गकशरीरप्रकारकः चेष्टावत्त्वरूपशरीरत्वाविशेष्यकस्समवायसंबन्धावच्छिन्नाधेयत्वसंबन्धेन आत्मप्रकारकः देहे आत्मत्वमात्मनि देहत्वमित्याकारको वा निश्चय इत्यर्थः । मूढमात्रप्रसिद्धविपर्ययस्वरूपमुक्त्वा पण्डितेष्वपि प्रसिद्धविपर्ययस्वरूपमाह ॥ **शङ्खादाविति** ॥ आदिना वराटिकादेः परिग्रहः ॥ **पीतता-**

**स संशयो मतिर्या स्यादेकत्राभावभावयोः ।**
**साधारणादिधर्मस्य ज्ञानं संशयकारणम् ॥ १३० ॥**

संशयं लक्षयति ॥ **स संशय इति** ॥ एकधर्मिकविरुद्धभावाभावप्रकारकं ज्ञानं सं-

### प्रभा.

**मतिरिति** ॥ पीतरूपनिर्णय इत्यर्थः । तथाच शङ्खादेः पीतरूपस्य च वैशिष्ट्यावगाही शङ्खः पीतः शङ्खे पीतरूपमित्याद्याकारकनिर्णयः विपर्यय इत्यर्थः फलितः । इदमुपलक्षणम् । शङ्खादेः पीतरूपवतश्च तादात्म्यावगाही पीतश्शङ्ख इत्याद्याकारकनिर्णयस्वरूपविपर्ययोऽपि बोध्यः । संशयस्वरूपमाह ॥ **किंस्विदिति** ॥ इदंतु वितर्के ॥ **नरो वेति** ॥ नरत्वतदभावकोटिकेत्यर्थः ॥ **स्थाणुर्वेति** ॥ स्थाणुत्वतदभावकोटिकेत्यर्थः । यथाश्रुते भावद्वयकोटिकसंशयाप्रसिद्ध्या असाङ्गत्यापत्तेः । निश्चयत्वं चायमर्थो निश्चित इति प्रतीतिसाक्षिको जातिविशेषः । सच ज्ञानत्वरूप एव ज्ञानसामान्यस्य किंचिदंशे निश्चयरूपत्वात् । एवंच ज्ञानत्वरूपनिश्चय सामान्यलक्षणस्य स्फुटत्वात् तदुपेक्ष्य निश्चयविशेषलक्षणमाह ॥ **तदभावाप्रकारेति** ॥ इदंच संशयवारणाय ॥ **निश्चय इति** ॥ तन्निश्चय इत्यर्थः । ह्रदो वह्न्यभाववान् पर्वतो वह्निमानिति समूहालम्बनात्मकनिश्चयसङ्ग्रहाय लक्षणे एकधर्मिविशेष्यकत्वमपि निवेशनीयम् । नच घटः प्रमेय इत्यादिनिश्चयेऽव्याप्तिः प्रमेयत्वाभावाप्रसिद्धेरिति वाच्यम् । प्रतियोगितासंबन्धावच्छिन्नतन्निष्ठप्रकारतानिरूपिताभावत्वावच्छिन्नप्रकारत्वानिरूपकत्वस्य विवक्षितत्वात् । नन्वेवमपि पर्वतो वह्निमान्वह्न्यभाववांश्चेति समुच्चयेऽव्याप्तिर्दुर्वारा तस्य निरुक्तप्रकारत्वानिरूपकत्वाभावादिति चेदत्र सिद्धान्तवागीशभट्टाचार्यप्रभृतयः संशयसमुच्चययोर्वैलक्षण्याय संशये कोट्योर्विरोधस्य संसर्गतया भानस्वीकारात् तन्निष्ठप्रकारतानिरूपितज्ञानीयविशेष्यताकत्वतादृशविशेष्यतासमानाधिकरणतद्विरोधविशिष्टदैशिकविशेषणतासंबन्धावच्छिन्नप्रकारतानिरूपितविशेष्यतानिरूपकत्वाभावैतदुभयवत्त्वं तन्निश्चयत्वमिति नोक्ताव्याप्तिरित्याहुः । तर्कालङ्कारभट्टाचार्यप्रभृतयस्तु संशयसमुच्चययोर्वैलक्षण्याय भावाभावनिरूपितविशेष्यतयोरवच्छेद्यावच्छेदकभावः स्वीक्रियते समुच्चयीयविषयतयोर्न तथा प्रतियोगितासंबन्धावच्छिन्नतन्निष्ठप्रकारतानिरूपिताभावत्वावच्छिन्नप्रकारतानिरूपितविशेष्यतानवच्छेदकतन्निष्ठप्रकारतानिरूपितज्ञानीयविशेष्यताकत्वं तन्निश्चयत्वमिति न काप्यनुपपत्तिरिति प्राहुरिति दिक् ॥ १२५ ॥ १२६ ॥ १२७ ॥ १२८ ॥ १२९ ॥

ननु स संशयो मतिर्या स्यादेकत्राभावभावयोरिति मूलादेकवृत्तिभावाभावविषयकज्ञानत्वं संशयत्वमित्यर्थो लभ्यते तच्च न संभवति वृक्षे कपिसंयोगतदभावाविति निश्चयेऽतिव्याप्तेरित्याशङ्कापरिहारायान्यथा मूलार्थमाह ॥ **मुक्तावल्यामेकधर्मिकेति** ॥ एकविशेष्यताकेति एकविशेष्यत्वावच्छिन्नविशेष्यताकेति वार्थः । तेन मतद्वये समुच्चयेऽतिव्याप्तेर्व्युदासः ॥ **विरुद्धेति** ॥ विरोधसंसर्गावगाहीत्यर्थः । तेन भवानन्दमते तत्रा-

### दिनकरीयम्.

प्रमायामतिव्याप्तिवारणाय । तदभाववद्विशेष्यकतदभावप्रकारकप्रमायामतिव्याप्तिवारणाय तत्प्रकारकमिति । इच्छायामतिव्याप्तिवारणाय ज्ञानमिति । तदभावाप्रकारकमिति संशयेऽतिव्याप्तिवारणाय । अत्र च तद्विशेष्यकत्वावच्छिन्नतदभावप्रकारताशून्यतद्विशेष्यकत्वावच्छिन्नतत्प्रकारकत्ववज्ज्ञानत्वं यत्र तत्र तन्निश्चयत्वमवसेयं न तु यथाश्रुतं महानसोऽयं वह्निमान्न वा पर्वतो वह्निमानित्यस्य पर्वते वह्निनिश्चयत्वानापत्तेः । ज्ञानपदं चेच्छायामतिव्याप्तिवारणाय ॥ १२३ ॥ १२४ ॥ १२५ ॥ १२६ ॥ १२७ ॥ १२८ ॥ १२९ ॥

**एकधर्मिकेति** ॥ ह्रदपर्वतौ वह्नितदभाववन्ताविति ज्ञानेऽतिव्याप्तिवारणायैकधर्मिकेति एकधर्मितावच्छेदकविशिष्टविशेष्यकत्वावच्छिन्नेत्यर्थः । तेन पर्वतो वह्निमान् द्रव्यं वह्न्यभाववदिति ज्ञानव्युदासः वृक्षः संयोगवान् तदभाववांश्चेति समुच्चयवारणाय विरुद्धेति । विरोधावगाहित्वं तदर्थः । घटो द्रव्यं पृथिवी चेति ज्ञानवारणाय भावाभावेति । इच्छाव्युदासार्थं विशेष्यभागः । वस्तुतस्तु एकधर्मावच्छिन्नविशेष्यकत्वनिवेशे विभिन्नरूपेणैकधर्मितावच्छेदककज्ञानस्य संशयत्वापत्तिः एकधर्मावच्छिन्नविशेष्यतावच्छेदकताकत्व-

प्रभा.

तिव्याप्तिव्युदासः । तथाच तद्विरोधविशिष्टदैशिकविशेषणतासंसर्गावच्छिन्नप्रकारतानिरूपकत्वं तत्संशयत्वम् । एतन्मते संशयस्तु भावाभावप्रकारक एवेति स्फुटीकरणाय भावाभावप्रकारकमित्युक्तं नतु लक्षणघटकं प्रयोजनाभावात् । तर्कालङ्कारमते तन्निष्ठप्रकारतानिरूपिता या प्रतियोगितासंबन्धावच्छिन्नतन्निष्ठप्रकारतानिरूपिताभावत्वावच्छिन्नप्रकारतानिरूपिता च विशेष्यता तन्निरूपकत्वं तत्संशयत्वं केवलविशेष्यत्वाभिन्नविशेष्यताकत्वमित्युक्तौ पर्वतो वह्निमानिति ज्ञानीयविशेष्यत्वस्यापि स्वाभिन्नतया तत्रातिव्याप्तेः अतो भावाभावप्रकारतानिरूपितविशेष्यत्वयोरभिन्नत्वोपपादानं भट्टाचार्यसार्वभौममते तन्निष्ठप्रकारतानिरूपितविशेष्यत्वावच्छिन्ना या प्रतियोगितासंबन्धावच्छिन्नतन्निष्ठप्रकारतानिरूपिताभावत्वावच्छिन्नप्रकारतानिरूपिता विशेष्यता तन्निरूपकत्वं तत्संशयत्वम् । केवलविशेष्यत्वावच्छिन्नविशेष्यताकत्वमित्युक्तौ विशेष्यं वह्निमदिति ज्ञानीयवह्निनिष्ठप्रकारतानिरूपितविशेष्यत्वस्यापि विशेष्यत्वावच्छिन्नतया तत्रातिव्याप्त्यापातिरत ईदृशविशेष्यतयोरवच्छेद्यावच्छेदकभावप्रदर्शनमिति रीत्या मतभेदेन संशयस्य लक्षणत्रयं पर्यवसितमिति भावः । अत्र ज्ञानविशेष एव तादृशलक्षणसत्त्वान्नान्यत्रेति स्फुटीकरणाय मूले मुक्तावल्यां च संशयलक्षणवाक्ये मतिपदप्रयोगो ज्ञानपदप्रयोगश्च नतु ज्ञानत्वस्य लक्षणे प्रवेशलाभाय गौरवात् प्रयोजनाभावाच्चेति हृदयम् । केचित्तु हृदपर्वतौ वह्नितदभाववन्ताविति ज्ञानेऽतिव्याप्तिवारणायैकविशेष्यकेति एकधर्मितावच्छेदकविशिष्टविशेष्यताकत्वावच्छिन्नेत्यर्थः । तेन पर्वतो वह्निमान् द्रव्यं वह्न्यभाववदिति ज्ञानव्युदासः वृक्षस्संयोगवांस्तदभाववांश्चेति समुच्चयवारणाय ॥ विरुद्धेति ॥ विरोधावगाहित्वमित्यर्थः । घटो द्रव्यं पृथिवी चेति ज्ञानवारणाय भावाभावेति । इच्छाव्युदासार्थं विशेष्यभागः । वस्तुतस्तु एकधर्मावच्छिन्नविशेष्यताकत्वानिवेशे विभिन्नरूपेणैकधर्मितावच्छेदककज्ञानस्य संशयत्वापत्तिरेकधर्मावच्छिन्नविशेष्यतावच्छेदकताकत्वानिवेशे च निरवच्छिन्नविशेष्यतावच्छेदकताकसंशयासङ्ग्रहप्रसङ्गः विभिन्नरूपेण धर्मितावच्छेदकतावच्छेदकावगाहिज्ञानस्य संशयत्वप्रसङ्गश्चेति स्वीयैककोटिप्रकारतावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकीभूतापरकोटिप्रकारताशालिज्ञानत्वं संशयत्वमिति ध्येयमित्याहुः तदसत् संशयसमुच्चययोर्वैलक्षण्याय संशय एव कोट्योर्विरोधसंसर्गावगाहित्वस्वीकारात् पर्वतहृदौ वह्नितदभाववन्ताविति ज्ञानस्य निश्चयरूपतया तादृशज्ञानीयवह्न्यभावनिष्ठप्रकारताया विरोधसंसर्गावच्छिन्नत्वाभावेन तादृशप्रकारताघटितलक्षणस्य तत्रासत्त्वात् अतिव्याप्त्यप्रसक्त्यैकधर्मिकत्वविशेषणस्योक्तप्रयोजनासंभवात् पर्वतो वह्निमान् द्रव्यं वह्न्यभाववदिति ज्ञानस्यापि विरोधविशिष्टदैशिकविशेषणतासंबन्धावच्छिन्नप्रकारताकत्वाभावादेव तत्रातिव्याप्त्यप्रसक्त्या एकधर्मिकेत्यस्य एकधर्मितावच्छेदकविशिष्टविशेष्यकत्वावच्छिन्नार्थकत्वस्याप्ययुक्तत्वात् । यच्च घटो द्रव्यं पृथिवी चेति ज्ञानवारणाय भावाभावेति इच्छाव्युदासार्थं विशेष्यभाग इति च तदुभयमप्ययुक्तं घटो द्रव्यं पृथिवी चेति ज्ञानस्येच्छायाश्च विरोधसंसर्गावच्छिन्नप्रकारताकत्वाभावादेव तत्रातिव्याप्त्यप्रसक्त्या प्रकारतायां भावाभावनिष्ठत्वविशेषणस्य ज्ञानत्वरूपविशेष्यभागस्य च व्यर्थत्वात् । यच्चोक्तं वस्तुतस्त्वित्यादिना एकधर्मावच्छिन्नविशेष्यकत्वानिवेशे विभिन्नरूपेणैकधर्मितावच्छेदककस्य पर्वतत्ववान् वह्निमान् जातिमान् वह्न्यभाववानिति ज्ञानस्य संशयत्वापातिः तस्य संशयत्ववारणायैकधर्मावच्छिन्नविशेष्यतावच्छेदकत्वानिवेशे च निरवच्छिन्नविशेष्यतावच्छेदकताकस्य पर्वतो वह्निमान्नवेति संशयस्यासङ्ग्रहप्रसङ्गः विभिन्नरूपेण धर्मितावच्छेदकतावच्छेदकावगाहिनः नीलत्ववद्वान् गन्धवान् जातिमद्वान् गन्धाभाववानिति ज्ञानस्य संशयत्वप्रसङ्गश्चेति तदप्ययुक्तं पर्वतत्ववान् वह्निमान् जातिमान् वह्न्यभाववानिति ज्ञानस्य कोट्योर्विरोधसंसर्गावगाहित्वे प्रमाणाभावेन तद्घटितलक्षणस्य तत्रातिव्या-

दिनकरीयम्.

निवेशे च निरवच्छिन्नविशेष्यतावच्छेदकताकसंशयासङ्ग्रहप्रसङ्गः । विभिन्नरूपेण धर्मितावच्छेदकतावच्छेदकावगाहिज्ञानस्य संशयत्वप्रसङ्गश्चेति स्वीयैककोटिप्रकारतावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकीभूतापरकोटिप्रकारताशालिज्ञानत्वं संशयत्वमिति ध्येयम् । यत्तु संशयत्वं जातिविशेष इति तन्न चाक्षुषत्वादिना सङ्करप्रसङ्गात् । सन्दिग्ध इति क्रियापदम् । सन्देहवान् भवतीत्यर्थः । एवमग्रेऽपि । समा-

**शय इत्यर्थः ॥ साधारणेति ॥ उभयसाधारणो यो धर्मस्तज्ज्ञानं संशयकारणं यथा उच्चैस्त्वं स्थाणुपुरुषसाधारणं गृहीत्वायं स्थाणुर्न वेति सन्दिग्धे । एवमसाधारणधर्मज्ञानमपि कारणं यथा शब्दत्वस्य नित्यानित्यव्यावृत्तत्वं गृहीत्वा शब्दो नित्यो न वेति सन्दिग्धे । विप्रतिपत्तिस्तु शब्दो नित्यो न वेत्यादिशब्दात्मिका न संशयकारणं शब्दव्याप्तिज्ञानादीनां**

**प्रभा ।**

प्यप्रसक्त्या एकधर्मावच्छिन्नविशेष्यतावच्छेदकताकत्वविवक्षाया अप्रसक्तेः । तथा विवक्षायामपि पर्वतो वह्निमान्नवेति संशयासङ्ग्रहप्रसङ्गस्य नीलत्ववद्वान् गन्धवान् जातिमद्वान् गन्धाभाववानित्यादिनिश्चयस्य संशयत्वप्रसङ्गस्य च सुतरामप्रसक्तेः । यच्च स्वीयैककोटिप्रकारतावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकीभूतापरकोटिप्रकारताशालिज्ञानत्वं संशयत्वमिति निर्गलितसंशयत्वनिर्वचनं तदप्यन्तासङ्गतं समानाकारकज्ञानव्यक्तिभेदेन विषयताभेदमनङ्गीकुर्वत्यैवैतादृशसंशयत्वस्य वक्तव्यत्वात् स्वशब्देन पर्वतो वह्निमान्न वेति संशयस्यैव पर्वतो वह्निमान् वह्नयभाववांश्चेति समुच्चयस्यापि ग्रहीतुं शक्यतया परिष्कृतलक्षणस्यापि समुच्चयातिव्याप्तेर्दुर्वारत्वादिति । अस्मद्गुरुचरणास्तु संशयत्वं चायमर्थस्सन्दिग्ध इति प्रतीतिसाक्षिको जातिविशेषः । नच चाक्षुषत्वादिना साङ्कर्यान्न तस्य जातिरूपतेति वाच्यम् । चाक्षुषत्वादिव्याप्यनानाजातिस्वीकारात् संभवति जातित्वे उपाधित्वकल्पनाया अनुचितत्वात् अन्यथा पृथिवीत्वाभाववति सुवर्णघटादौ वर्तमानस्य घटत्वस्य घटत्वाभाववति पटादौ वर्तमानस्य पृथिवीत्वस्य च पार्थिवघटे समावेशरूपसाङ्कर्येण घटत्वस्यापि जातित्वानुपपत्तेः । नचेष्टापत्तिः पृथिवीत्वादिव्याप्यानेकघटत्वस्वीकारेण सङ्करं परिहृत्य तस्य जातित्वव्यवस्थापकभाष्यादिग्रन्थविरोधापत्तेः अत एव गदाधरभट्टाचार्यैरवच्छेदकत्वनिरुक्तौ नानाघटत्वजातिरङ्गीकृतं तस्मात्संशयत्वं जातिविशेष एव स संशयो मतिर्या स्यादिति मूलं च तत्तत्संशयलक्षणपरमिति व्याचक्रुः । एतावता संशयस्य स्वरूपं लक्षणं चोपपाद्य इदानीं तस्य वक्ष्यमाणसूत्रक्रमानुसारेण सामग्रीमाह ॥ **मूले साधारणादीति** ॥ साधारणपदार्थमाह ॥ **मुक्तावल्यामुभयसाधारणो यो धर्म इति** ॥ कोटिद्वयसहचारितत्वेन गृह्यमाणो यो धर्म इत्यर्थः । तेन घटत्वतदभावसहचरितपटत्ववानयमिति भ्रमादयं घटो नवेति संशयोपपत्तिः ॥ **तज्ज्ञानमिति** ॥ तत्प्रकारकनिश्चय इत्यर्थः । एतादृशनिश्चयस्य संशयहेतुतामुपपादयति ॥ **यथेति** ॥ **उच्चैस्त्वमिति** ॥ स्थाणवस्थाणुसाधारणमुच्चैस्त्वमिति योजना । स्थाणवस्थाणुसहचरितत्वेन गृह्यमाणमुच्चैस्त्वमित्यर्थः ॥ **गृहीत्वेति** ॥ संशयधर्मिणीत्यर्थः ॥ सन्दिग्ध इति क्रियापदम् । सन्देहवान् भवतीत्यर्थः । तथाच स्थाण्वस्थाणुसहचरितत्वेन वर्तमानग्रहविषयधर्मप्रकारकपुरोवृत्तिविशेष्यकज्ञानात् पुरोवृत्तिविशेष्यकस्थाणुत्वतदभावकोटिकसंशयो भवतीति भावार्थः । अत्र साधारणधर्मवद्धर्मिज्ञानजन्यकोट्युपस्थितेरेव संशयजनकत्वं तादृशधर्मिज्ञानस्य तु प्रयोजकत्वमन्यथासिद्धत्वादिति प्राचां मतम् । यथाकथञ्चित् कोटिद्वयोपस्थितिसहकृतसाधारणधर्मवद्धर्मिज्ञानस्यैव संशयजनकत्वं कोटिद्वयोपस्थित्युत्पत्तिक्षण एव संशयोत्पत्तिसंभवात् क्षणविलम्बकल्पनायां मानाभावात् तादृशधर्मिज्ञानजन्यकोटिद्वयोपस्थितेस्संशयहेतुत्वस्वीकारे कोटिद्वयोपस्थितेस्तादृशधर्मिज्ञानजन्यकोटिद्वयोपस्थितित्वेन हेतुत्वे गुरुरूपेणकारणत्वापत्तेः तत्तद्व्यक्तित्वेन हेतुत्वं न संभवति व्यभिचारात् कार्यतावच्छेदककोटौ कारणवैशिष्ट्यं निवेश्य व्यभिचारवारणेऽनन्तकार्यकारणभावापत्तेः क्षणविलम्बकल्पनापत्तेश्चेति नवीनानां मतम् । एवमग्रेऽपीति हृदयम् । साधारणादिधर्मस्येति मूलस्थादिपदार्थान् क्रमेणाह ॥ **एवमिति** ॥ **असाधारणधर्मज्ञानमिति** ॥ कोटिद्वयाधिकरणावृत्तित्वेन गृह्यमाणधर्मप्रकारकनिश्चय इत्यर्थः । तादृशनिश्चयस्य संशयहेतुत्वस्थलमुदाहरति ॥ **यथेति** ॥ **शब्दत्वस्य नित्यानित्यव्यावृत्तत्वं गृहीत्वेति** ॥ नित्यत्वाधिकरणावृत्तित्वानित्यत्वाधिकरणावृत्तित्वोभयप्रकारकवर्तमानग्रहविषयशब्दत्वप्रकारकनिश्चयोत्तरमित्यर्थः ॥ **सन्दिग्ध इति** ॥ सन्देहवान् भवतीत्यर्थः समानानेकधर्मोपपत्तेः विप्रतिपत्तेरित्यादिसूत्रेण भावाभावरूपार्थप्रतिपादकवाक्यज्ञानरूपविप्रतिपत्तेरप्यर्थस्मृतिद्वारा संशयहेतुत्वप्रतिपादनात्तदनुरोधेन संशयात्मकशाब्दबोधोऽप्यवश्यमङ्गीकार्य इति मतं निराकरोति ॥ **विप्रति-**

निश्चयमात्रजनकत्वस्वाभाव्यात् । किंतु तत्र शब्देन कोटिद्वयज्ञानं जन्यते संशयस्तु मानस एवेति । एवं ज्ञाने प्रामाण्यसंशयाद्विषयसंशय इति । एवं व्याप्यसंशयादपि व्यापकसंशय

## प्रभा.

**पत्तिस्त्विति** ॥ एवार्थकस्तुशब्दः नेत्युत्तरं योज्यः । शब्दो नित्यो नवेत्यादीत्यादिपदात् पर्वतो वह्निमान्नवेत्यादेः परिग्रहः ॥ **शब्दात्मिकेति** ॥ शब्दज्ञानात्मकेत्यर्थः । विप्रतिपत्तिरिति पूर्वेणान्वयः ॥ **न संशयकारणमिति** ॥ अर्थस्मृतिद्वारा संशयकारणं नैव भवतीत्यर्थः । तथाच तादृशविप्रतिपत्तेरर्थस्मृतिद्वारा संशयजनकतानङ्गीकारात् प्रमाणाभावेन संशयात्मकशाब्दबोधोऽपि नाङ्गीकर्तव्य इति भावः । निरुक्तविप्रतिपत्तेः संशयाजनकत्वं व्यवस्थापयति ॥ **शब्दव्याप्तिज्ञानादीनामिति** ॥ शब्दज्ञानत्वविशिष्टस्य व्याप्तिज्ञानत्वविशिष्टस्य चेत्यर्थः । ज्ञानादीत्यादिपदादतिदेशवाक्यार्थज्ञानस्य परिग्रहः । तत्र व्याप्तिज्ञानातिदेशवाक्यार्थज्ञानयोरुपादानं दृष्टान्तार्थमिति बोध्यम् ॥ **निश्चयमात्रेति** ॥ कृत्स्ननिश्चय इत्यर्थः । प्रत्यक्षान्यनिश्चय इति यावत् ॥ **जनकत्वस्वाभाव्यादिति** ॥ जनकत्वरूपासाधारणधर्मवत्त्वादित्यर्थः । तथाच शब्दज्ञानं न संशयजनकं प्रत्यक्षान्यनिश्चयकारणत्वात् व्याप्तिज्ञानादिवदित्यनुमानाद्विप्रतिपत्तेः संशयाजनकत्वसिद्धिरिति भावः । ननु विप्रतिपत्तेस्संशयाजनकत्वे निरुक्तसूत्रस्याप्रामाण्यापत्तिरत आह ॥ **किंत्विति** ॥ **तत्रेति** ॥ विप्रतिपत्तिस्थल इत्यर्थः एतत्संशय इत्युत्तरेणान्वयः ॥ **शब्देनेति** ॥ शक्तिज्ञानसहकृतशब्दज्ञानेनेत्यर्थः ॥ **कोटिद्वयज्ञानमिति** ॥ भावाभावरूपकोटिद्वयस्मरणमात्रमित्यर्थः ॥ **जन्यत इति** ॥ तथाच कोटिद्वयव्याप्यवत्ताज्ञानस्थले परस्परप्रतिबन्धाद्यथानुमितिसामान्यानुत्पत्तिः तथा भावाभावरूपकोटिद्वयविषयकशाब्दसामग्रीसत्त्वे एकैकशाब्दं प्रत्यपरशाब्दसामग्र्याः प्रतिबन्धकत्वाद्विप्रतिपत्तिस्थले शाब्दसामान्यानुत्पत्तिरिति भावः । ननु तत्र कथमनुभूयमानसंशयोपपत्तिरत आह ॥ **संशयस्त्विति** ॥ संशयोऽपीत्यर्थः ॥ **मानस एवेति** ॥ मनःकरणको न विप्रतिपत्तिकरणक इत्यर्थः । तथाच मतद्वयेऽपि तत्र तादृशकोटिद्वयस्मृतिसहकृतमनसैव संशयोत्पत्तिस्वीकारात् विप्रतिपत्तेरिति सूत्रस्थपञ्चम्याः प्रयोजकत्वपरत्वाच्च नोक्तदोषप्रसक्तिरिति भावः ॥ **ज्ञाने प्रामाण्यसंशयाद्विषयसंशय इति** ॥ केचित्तत्र प्रामाण्यपदमप्रामाण्यस्याप्युपलक्षकं तेन प्रामाण्यसंशयस्याप्रामाण्यसंशयस्य च विषयसंशये स्वातन्त्र्येण महत्त्वमिति भाव इत्याहुः । एतन्मते घटवद्भूतलमिति ज्ञानं प्रमा न वेति प्रामाण्यसंशयस्य घटवद्विशेष्यकत्वविशिष्टघटप्रकारकत्वतदभावैतदुभयात्मकप्रामाण्यतदभावकोटिकतया तस्य घटाभावोपस्थितिरूपत्वाभावात् । कारणाभावेन तदुत्तरविषयसंशयोपपत्तेरतः प्रामाण्यसंशयादित्यस्य यथाकथञ्चित् कोटिद्वयोपस्थितिकालीननिरुक्तप्रामाण्यसंशयादित्यर्थं परिकल्प्य तन्मतं सङ्गमनीयम् । अस्मद्गुरुचरणास्तु प्रामाण्यसंशयादिति भ्रमभिन्नत्वतदभावरूपप्रामाण्यतदभावकोटिकसंशयादित्यर्थः । तथाच घटाभावादिमद्विशेष्यकत्वविशिष्टघटादिप्रकारकत्ववद्भिन्नत्वरूपप्रामाण्यतादृशरूपभिन्नत्वाभावात्मकघटाभावादिमद्विशेष्यकत्वविशिष्टघटादिप्रकारकत्वरूपाप्रामाण्यैतदुभयकोटिकसंशयस्य घटतदभावाद्यात्मककोटिद्वयोपस्थितिरूपतया तादृशप्रामाण्यसंशयोत्तरं नियमेन विषयसंशय आवश्यक इति भावः । एवंच प्रामाण्यपदं नाप्रामाण्योपलक्षकं नवा प्रामाण्यसंशयादिति वाक्यं कोटिद्वयोपस्थितिकालीनप्रामाण्यसंशयपरं गौरवादिति व्याचक्रुः ॥ **व्याप्यसंशयादिति** ॥ वह्न्यादिव्या-

## दिनकरीयम्.

नानेकधर्मोपपत्तेर्विप्रतिपत्तेरित्यादिसूत्रे विप्रतिपत्तिवाक्यजन्यशाब्दसंशयस्योक्तत्वात् साधारणधर्मासाधारणधर्मज्ञानजन्यसंशयवद्विप्रतिपत्तिवाक्यजन्यस्तृतीयोऽपि संशय इति मतनिरासायाह ॥ **विप्रतिपत्तिस्त्विति** ॥ व्याप्तिज्ञानादीनामित्यादिनाऽतिदेशवाक्यार्थज्ञानपरिग्रहः । ननु तर्हि सूत्रस्थपञ्चम्यनुपपत्तिरित्यत आह ॥ **किंत्विति** ॥ तथा च सूत्रस्थपञ्चमी प्रयोजकतायामिति भावः । एवं ज्ञाने प्रामाण्यसंशयाद्विषयसंशय इत्यत्र प्रामाण्यपदमप्रामाण्यस्याप्युपलक्षकं तेन प्रामाण्यसंशयस्याप्रामाण्यसंशयस्य च विषयसन्देहे स्वातन्त्र्येण हेतुत्वमिति भावः ॥ **एवं व्याप्येति** ॥ अथ व्याप्यसंशयस्य व्यापकसंशयहेतुत्वे किं मानं कोटि-

## प्रभा.

प्यत्वेन गृह्यमाणधूमादिकोटिकसंशयादित्यर्थः ॥ व्यापकसंशय इति ॥ ननु वह्न्यादिकोटिकसंशय इत्यर्थः । ननु व्याप्यसंशयस्य व्यापकसंशयहेतुत्वे मानाभावः विशेषादर्शनकोटिद्वयस्मरणादित एव तत्संभवात् । नच केवलवह्निव्याप्यधूमवान्न वा पर्वत इत्यादिसंशयस्य व्यापकसंशयहेतुत्वेऽपि व्यापकतदभावसामानाधिकरण्येन गृह्यमाणौ यौ व्याप्यतदभावौ तत्कोटिकज्ञानरूपव्याप्यसंशयस्य व्यापकतदभावरूपकोटिद्वयस्मारकतया तद्द्वारा तादृशसंशयस्य व्यापकसंशयहेतुत्वे बाधकाभाव इति वाच्यम् । तादृशसंशयस्य कोटिद्वयस्मारकत्वेऽपि व्यापकसंशयं प्रत्यन्वयव्यतिरेकाभ्यां कोटिद्वयोपस्थितेरेव जनकत्वस्वीकारेण निरुक्तव्याप्यसंशयस्यान्यथासिद्धत्वादिति चेन्न महानसादौ वह्निं ह्रदादौ वह्न्यभावं च स्मरतः पर्वतादिकं पश्यतो धूमादिरूपव्याप्यसंशयवत्त्वे वह्निसंशयोत्पत्तेः तादृशव्याप्यसंशयासत्त्वे वह्निसंशयानुत्पत्तेश्च गृहीतत्वेनान्वयव्यतिरेकाभ्यां तस्यापि संशयहेतुत्वस्वीकारात् अत एव व्याप्यस्योत्कटकोटिकसंशयात् व्यापकस्योत्कटकोटिकसंशयः कारणोत्कर्षेणैव कार्योत्कर्षसंभवादिति गङ्गेशोपाध्यायप्रभृतीनां तत्र तत्र लेखनं सङ्गच्छते । नच व्याप्यसंशयस्य व्यापकसंशयहेतुत्वं न सूत्रकाराभिमतमिति वाच्यम् । सूत्रस्थचकारस्यानुक्तसमुच्चायकत्वेन व्याप्यसन्देहादेरपि लाभात् । तथाहि समानानेकधर्मोपपत्तेर्विप्रतिपत्तेरुपलब्ध्यनुपलब्ध्यव्यवस्थातश्च विशेषापेक्षो विमर्शः संशय इति सूत्रं तस्यार्थः कोटिद्वयसहचरितत्वेन गृह्यमाणधर्मः अनेकस्मात् सपक्षविपक्षाद्व्यावृत्तत्वेन गृह्यमाणो धर्मः अनेकधर्मः तयोरुपपत्तिर्ज्ञानं तस्माद्विप्रतिपत्तिः भावाभावकोटिद्वयप्रतिपादकं वाक्यं तस्मादत्र पञ्चम्याः प्रयोजकत्वमर्थः नतु हेतुत्वं उपलब्धिः तद्वति तत्प्रकारकत्वरूपं प्रामाण्यमनुपलब्धिः प्रामाण्यविरोधि तदभाववति तत्प्रकारकत्वरूपभ्रमत्वं तयोरव्यवस्था संशयः । तथाच तद्वति तत्प्रकारकत्वतदभावैतदुभयकोटिकसंशयजन्यः तदभाववति तत्प्रकारकत्वतदभावैतदुभयकोटिकसंशयजन्यश्च विषयसंशय इति फलितार्थः । अथवा उपलब्धिः भ्रमभिन्नत्वरूपप्रामाण्यं तदभाववति तत्प्रकारकत्वावच्छिन्नत्वरूपामिति यावत् अनुपलब्धिः तादृशाभिन्नत्वाभावः तदभाववति तत्प्रकारकत्वरूपाप्रामाण्यमिति यावत् तयोरव्यवस्था निरुक्तोभयकोटिकसंशयः एवंच निरुक्तप्रामाण्याप्रामाण्यरूपकोटिद्वयावगाहिसंशयजन्यो विषयसंशय इति तात्पर्यार्थः । चकाराद्व्याप्यसन्देहजन्यव्यापकसन्देहसाधनाव्यापकव्याप्यत्वसन्देहजन्यसाधनाव्यापकत्वसन्देहयोः परिग्रहः । विशेषापेक्षो विमर्श इति तु तल्लक्षणं एकधर्मिकभावाभावप्रकारकत्वरूपविशेषवान्विमर्शः ज्ञानमिति इत्यादिकं बोध्यमित्यत्रादिपदात् साधनाव्यापकव्याप्यत्वसन्देहजन्यसाधनाव्यापकत्वसन्देहपरिग्रहः । अत्र साधारणधर्मज्ञानादेः तादृशज्ञानत्वादिना न संशयसामान्यहेतुत्वं व्यभिचारादनायत्या स्वावच्छिन्नाव्यवहितोत्तरक्षणोत्पत्तिकत्वसं-

## दिनकरीयम्.

स्मरणादित एव तत्सम्भवात् क्वाचित्तदनुविधानस्य तु व्याप्यतदभावयोर्व्यापकतदभावसाहचर्यस्य गृहीतत्वेन तत्स्मरण एवोपक्षीणत्वात्तदग्रहे तु व्याप्यसंशयात् व्यापकसंशयस्याप्यभावादिति चेदत्राहुः । महानसे हुताशनो न जलह्रद इति स्मरतां पर्वतादिकमपि पश्यतां धूमादिसंशयभावाभावाभ्यां हुताशनसंशयभावाभावदर्शनात्तस्यापि तद्धेतुत्वम् । अत एवोत्कटकोटिकव्याप्यसंशयात् व्यापकस्याप्युत्कटकोटिकः संशयः कारणोत्कर्षेणैव कार्योत्कर्षात् । नचैतद्भगवत्सूत्रकृदनभिमतमिति वाच्यं सूत्रस्थचकारस्याप्यनुक्तसमुच्चायकत्वात् तथाहि समानानेकधर्मोपपत्तेर्विप्रतिपत्तेरुपलब्ध्यनुपलब्ध्यव्यवस्थातश्च विशेषापेक्षो विमर्शः संशय इति सूत्रं तस्य चार्थमाहुर्भाष्यकृत्प्रमुखाः । समानधर्मः कोटिद्वयसहचरितधर्मः अनेकस्मात्सपक्षविपक्षात् व्यावृत्तो धर्मः अनेकधर्मः तयोरुपपत्तिर्ज्ञानं तस्माद्विप्रतिपत्तिर्विरुद्धकोटिप्रतिपादकं वाक्यं तस्मादत्र पञ्चम्याः प्रयोजकत्वमर्थो न हेतुत्वं उपलब्धिः प्रामाण्यं अनुपलब्धिः प्रामाण्यविरोधिभ्रमत्वं तयोरव्यवस्थातश्च संशयः । एवंच प्रामाण्यसंशयजन्यो भ्रमत्वसंशयजन्यश्च विषयसंशयः चकारो व्याप्यसन्देहादिजन्यव्यापकसन्देहादेः सङ्ग्राहकः । विशेषापेक्षो विमर्श इति तु लक्षणं एकधर्मिकभावाभावप्रकारकत्वरूपविशेषवान् विमर्शो ज्ञानमिति तदर्थः । इत्यादिकमित्यादिना साधनाव्यापकव्याप्यत्वसन्देहादितः साध्यव्यापकत्वसन्देहो बोध्यः । साधारणज्ञानादेः कार्यतावच्छेदके चाव्यहितोत्तरत्वं देयं तेन परस्परं न व्यभिचारः । ननु साधारणधर्मज्ञानादेरिव ध-

इत्यादिकं बोध्यम् । किंतु संशये धर्मिज्ञानं धर्मीन्द्रियसन्निकर्षो वा कारणमिति ॥ १३० ॥

**दोषोऽप्रमाया जनकः प्रमायास्तु गुणो भवेत् ।**
**पित्तदूरत्वादिरूपो दोषो नानाविधो मतः ॥ १३१ ॥**

**दोष इति** ॥ अप्रमां प्रति दोषः कारणं प्रमां प्रति गुणः कारणं तत्रापि पित्तादिरूपा दोषा अननुगताः तेषां कारणत्वमन्वयव्यतिरेकाभ्यां सिद्धम् । गुणस्य प्रमाजनकत्वं त्वनुमानात् सिद्धम् । यथा प्रमा ज्ञानसामान्यकारणभिन्नकारणजन्या जन्यज्ञानत्वादप्र-

## प्रभा.

बन्धेन कारणतावच्छेदकतत्तद्धर्मविशिष्टत्वावाच्छिन्नं प्रति तत्तद्धर्मावच्छिन्नस्य कारणत्वं बोध्यमिति । ननु साधारणधर्मज्ञानादेरिव धर्मिज्ञानस्यापि संशयजनकत्वात्तत्कृतसंशयविभागः कथं न कृत इत्यत आह ॥ **संशय इति** ॥ संशयसामान्य इत्यर्थः । तथाच धर्मिज्ञानजन्यत्वस्य संशयत्वसमव्याप्यत्वात् न तद्विभाजकमिति भावः । ननु धर्मिज्ञानं संशयकारणं धर्मिज्ञानं विनापि सति धर्मीन्द्रियसन्निकर्षे संशयस्येष्टत्वादित्याशयेनाह ॥ **धर्मीन्द्रियसन्निकर्षो वेति** ॥ संयोगसंयुक्तसमवायादिरूपतादृशसन्निकर्ष इत्यर्थः ॥ १३० ॥

एतावता अप्रमां विभज्येदानीं तत्सामग्रीं दर्शयति ॥ **मूले दोष इति** ॥ **अप्रमाया जनक इति** ॥ भगवज्ज्ञानानिरूपितज्ञानसामान्यनिरूपितविषयतात्वावच्छिन्नं प्रति तदभाववन्निष्ठविषयतानिरूपितज्ञानसामान्यानिरूपिततन्निष्ठप्रकारतात्वावच्छिन्नं प्रति वा कारणमित्यर्थः । प्रसङ्गसङ्गत्या प्रमासामग्रीमप्यत्रैव दर्शयति ॥ **प्रमाया इति** ॥ कालिकसमवायोभयघटितसामानाधिकरण्यसंबन्धेन ज्ञानत्वविशिष्टं प्रति तद्वद्विशेष्यकत्वावच्छिन्नानुभवनिष्ठतत्प्रकारकत्वावाच्छिन्नं प्रति वा गुणः कारणमित्यर्थः । ननु निरुक्ताप्रमासामान्यं प्रति न दोषत्वेन हेतुत्वं पित्तादिसकलदोषसाधारणदोषत्वस्याभावात् । नचाप्रमासामान्यजनकतावच्छेदकतया सिद्धजातिविशेषरूपानुगतदोषत्वसंभवात् नोक्तानुपपत्तिरिति वाच्यं द्रव्यत्वादिना साङ्कर्येण तस्य जातित्वासंभवादित्यत आह ॥ **पित्तदूरत्वादिरूपो दोषो नानाविध इति** ॥ पित्तत्वादिरूपनानाधर्मावच्छिन्न एवेत्यर्थः । दोषत्वं नैकं प्रमाणाभावात् किन्तु दूरत्वादिरूपमेवेति फलितार्थः । तथाचानुगतदोषत्वाभावेऽपि अप्रमासामान्यं प्रति यावन्तो दोषास्तावदन्यतमत्वेन यादृशदोषोत्तरं यादृशाप्रमा प्रामाणिकी तत्तदप्रमात्वावच्छिन्नं प्रति तत्तद्दोषत्वेन वा हेतुत्वे न किमपि बाधकमिति भावः । ननु प्रमाणाभावादप्रमां प्रति दोषाणां न कारणत्वमित्याशङ्कां प्रमाणप्रदर्शनेन परिहरति ॥ **मुक्तावल्यां तेषां कारणत्वमिति** ॥ **अन्वयव्यतिरेकादेवेति** ॥ अन्वयव्यतिरेकसहचारज्ञानसहकृतप्रत्यक्षप्रमाणादेवेत्यर्थः । एवकारादनुमानरूपप्रमाणव्यवच्छेदः । यद्यपि अप्रमा ज्ञानसामान्यकारणभिन्नकारणजन्या जन्यज्ञानत्वादित्यनुमानादपि दोषाणामप्रमाकारणत्वं सिद्धमिति प्रमायाः गुणजन्यत्वासिद्धेः प्रागन्वयव्याप्तौ दृष्टान्तासंभवेऽपि व्यतिरेकव्याप्तौ परमाण्वादिरूपनित्यानामेव दृष्टान्तत्वसंभवात् । ननु तथापि प्रमाया गुणजन्यत्वसिद्धेः प्राक् तत्र साध्यसन्देहाहितव्यभिचारसन्देहसंभवात् ईदृशव्यभिचारसन्देहस्य पक्षीयव्यभिचारसंशयरूपत्वाभावेन व्याप्तिज्ञानप्रतिबन्धकत्वात् । तथाच तत्र व्याप्तिज्ञानरूपानुमानस्यैवानुत्पत्त्यानुमानप्रमाणेन दोषाणां कारणत्वं न सिध्यतीत्याशयेनान्वयव्यतिरेकादेव सिद्धमित्युक्तमिति ध्येयम् । गुणस्य प्रमाजनकत्वे प्रमाणाभावशङ्कामपि प्रमाण-

## दिनकरीयम्.

मिज्ञानस्यापि संशयहेतुत्वात्तत्कृतः संशयविभागः कथं न प्रदर्शित इत्यत आह ॥ **संशये धर्मिज्ञानमिति** ॥ संशये संशयमात्रे तथा च धर्मिज्ञानजन्यतावच्छेदकस्य संशयत्वसमव्याप्यत्वान्न तद्विभाजकतावच्छेदकमिति भावः । ननु धर्मिज्ञानस्य संशयहेतुत्वे मानाभावः । नच धर्मिज्ञानमन्तरेण संशयः स्यादिति वाच्यं सति धर्मीन्द्रियसन्निकर्षे इष्टत्वादत आह ॥ **धर्मीन्द्रियेति** ॥ १३० ॥

पित्तादीत्यादिना मण्डूकवसाञ्जनादेः परिग्रहः । अनुमानसिद्धत्वमेव प्रदर्शयति ॥ **यथेति** ॥ भग-

मावत्। नच दोषाभाव एव कारणमस्त्विति वाच्यं पीतः शङ्ख इति ज्ञानस्थलेऽपि पित्तरू-पदोषसत्त्वाच्छङ्खत्वप्रमानुत्पत्तिप्रसङ्गात् विनिगमनाविरहादनन्तदोषाभावकारणत्वमपेक्ष्य गु-

प्रभा.

प्रदर्शनेन परिहरति ॥ **गुणस्य प्रमाजनकत्वं त्विति** ॥ अप्यर्थकतुशब्दः अनुमानादित्युत्तरं योज्यः ॥ **अनुमानात् सिद्धमिति** ॥ अनुमानादपि सिद्धमित्यर्थः। अनुमानात् निरुक्तप्रत्यक्षप्रमाणाच्च सिद्धमिति यावत्। अनुमानं दर्शयति ॥ **प्रमेत्यादि** ॥ अत्र ज्ञानत्वरूपप्रमात्वं समवायकालिकोभयसंबन्धेन प्रमापदवाच्यत्वं वा स्वरूपकालिकोभयसंबन्धेन पक्षतावच्छेदकं नातः अवच्छेदकावच्छेदेन साध्यत्वे भगवज्ज्ञाने बाध इति बोध्यम्। **ज्ञानसामान्यकारणभिन्नकारणजन्येति** ॥ अत्र ज्ञानसामान्यकारणत्वं न ज्ञानत्वावच्छिन्नकारणत्वरूपं ज्ञानस्य नित्यवृत्तितया कार्यतानवच्छेदकत्वात्। नच कालिकसमवायोभयसंबन्धेन तस्य कार्यतावच्छेदकत्वस्वीकारान्नोक्तदोष इति वाच्यम्। तथा सत्यपि पक्षे निरुक्तकारणताश्रयाभिन्नचक्षुरादिजन्यत्वमादाय सिद्धसाधनापत्तेः। नच ज्ञाननिष्ठकालिकसंबन्धानवच्छिन्नकार्यतानिरूपितकारणतात्वेन कॢप्ता यावन्तः पदार्थाः तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदकूटविशिष्टार्थनिष्ठकारणतानिरूपितकालिकसंबन्धानवच्छिन्नजन्यत्वस्यैव साध्यत्वस्वीकारेण चक्षुरादेस्तादृशभेदकूटविशिष्टत्वाभावात् तज्जन्यत्वमादाय न सिद्धसाधनप्रसक्तिरिति वाच्यम्। तथा सति वक्ष्यमाणविशेषणवद्विशेष्येन्द्रियसन्निकर्षसाध्यवत्पक्षविशेष्यकपरमर्शादिरूपगुणस्यापि सन्निकर्षत्वपरामर्शत्वादिना निरुक्तकारणतावत्त्वेन कॢप्तत्वात्तत्तद्भेदकूटविशिष्टपदार्थरूपत्वाभावेन तज्जन्यत्वासिद्ध्यातिरिक्तवस्तुजन्यत्वमादायार्थान्तरप्रसङ्गात्। किन्तु निरुक्तकारणतावच्छेदकत्वेन कॢप्तार्थां यावन्तो धर्माः तत्तद्व्यक्तिभेदकूटविशिष्टधर्मावच्छिन्ननिरूपितजन्यत्वं मूलकाराभिमतं साध्यमिति न सिद्धसाधनं नवार्थान्तरामिति हृदयम् ॥ **जन्यज्ञानत्वादिति** ॥ कालिकसमवायोभयसंबन्धेन ज्ञानत्ववत्त्वादित्यर्थः ॥ **अप्रमावदिति** ॥ भगवज्ज्ञानानिरूपितज्ञानसामान्यनिरूपितविषयतानिरूपितविषयतावादिति शङ्खादिविशेष्यकपीतरूपादिप्रकारकज्ञानवादिति वार्थः। अत्र पक्षैकदेशस्य रूपान्तरेण दृष्टान्तत्वमिति हृदयम्। अर्थान्तरमाशङ्क्य निराचष्टे ॥ **न चेति** ॥ **दोषाभाव एवेति** ॥ एवकारेण गुणव्यवच्छेदः। तथाच दोषसत्त्वे प्रमानुत्पत्त्या तत्र दोषस्य प्रतिबन्धकत्वं वाच्यम्। एवंच प्रतिबन्धकाभावविधया कॢप्तकारणताकदोषाभावेनैव प्रमोत्पत्तिनिर्वाहात् गुणस्यान्यथासिद्धत्वमिति भावः। दोषस्य प्रतिबन्धकत्वासंभवप्रदर्शनेन परिहरति ॥ **पीतश्शङ्ख इति** ॥ **ज्ञानस्थल इति** ॥ तादृशज्ञानविशेष्यकशङ्ख इत्यर्थः ॥ **पित्तरूपदोषसत्त्वादिति** ॥ पित्तद्रव्यरूपदोषस्यावश्यं स्वीकरणीयत्वादिति भावः ॥ **शङ्खप्रमेति** ॥ शङ्खत्वप्रकारकप्रमेत्यर्थः तथाच तत्र शङ्खत्वप्रकारकप्रमाया अप्यनुत्पत्त्यापत्त्या न दोषस्य प्रतिबन्धकत्वसंभव इति भावः। ननु पित्तद्रव्यरूपदोषसत्त्वे शुक्लत्वप्रकारकप्रमाया एवानुत्पत्तिः न शङ्खत्वप्रकारकप्रमाया इत्यनुभवबलात् शुक्लत्वप्रकारकप्रमां प्रत्येव दोषाभावस्य हेतुत्वं स्वीक्रियत इति। तादृशदोषसत्ताकाले शङ्खत्वप्रमोत्पत्तौ बाधकाभाव इत्यत आह ॥ **विनिगमनाविरहादिति** ॥ गुणस्यापि हेतुत्वस्वीकारादिति शेषः। अत्र प्रमायां दोषाभावो न हेतुः गौरवात् किन्तु गुण एवेति प्राचीनैकदेशिमतं दूषयितुं तन्मतमुपन्यस्यति ॥ **अनन्तेति** ॥ पित्तद्रव्यमण्डूकवसाञ्जनदूरत्वसजातीयसंवलनादिरूपाणां अनन्तानां दोषाणां ये तत्तद्धर्मावच्छिन्नप्रतियोगिताकाभावाः तेषां तेन रूपेण तत्तत्प्रमाणत्वावच्छिन्नं प्रति हेतुत्वापेक्षयेत्यर्थः। **गुणकारणताया एवेति** ॥ प्रत्यक्षप्रमां प्रति विशेषणवद्विशेष्येन्द्रियसन्निकर्षत्वेनानुमित्यादिप्रमां प्रति

दिनकरीयम्.

वज्ज्ञाने व्यभिचारवारणाय हेतौ जन्येति। अर्थान्तरं निराकुरुते ॥ **नचेति** ॥ ननु पित्तात्मकदोषाभावः श्वैत्यप्रमायामेव कारणं न शङ्खत्वप्रमायामत आह ॥ **विनिगमनाविरहादिति** ॥ प्रमायां दोषाभावः कारणं गुणो वा कारणमित्यत्र विनिगमनाविरहादिति भावः। वस्तुतो गुणहेतुतायामेव लाघवं विनिगमक-

णस्य कारणताया न्याय्यत्वात् । नच गुणसत्त्वेऽपि पित्तेन प्रतिबन्धाच्छङ्खे न श्वैत्यज्ञानं अतः पित्तादिदोषाभावानां कारणत्वमवश्यं वाच्यं तथा च किं गुणस्य हेतुत्वकल्पनेनेति वाच्यं तथाप्यन्वयव्यतिरेकाभ्यां गुणस्यापि हेतुत्वासिद्धेः । एवं भ्रमं प्रति गुणाभावः कारणमित्यस्यापि सुवचत्वात् । तत्र दोषाः के इत्याकाङ्क्षायामाह ॥ पित्तेति ॥ क्वचित् पीतादिभ्रमे पित्तं दोषः क्वचिच्चन्द्रादेः स्वल्पपरिमाणभ्रमे दूरत्वं दोषः क्वचिच्च वंशोरगभ्रमे मण्डूकवसाञ्जनमित्येवंरूपा दोषा अननुगता एव भ्रान्तिजनका इत्यर्थः ॥ १३१ ॥

## प्रभा.

साध्यवत्पक्षविशेष्यकपरामर्शत्वादिना हेतुताया एवेत्यर्थः ॥ **न्याय्यत्वादिति** ॥ लाघवरूपप्रमाणसिद्धत्वादित्यर्थः । तथाच प्रत्यक्षादिप्रमाणानां मध्ये एकैकप्रमां प्रति निरुक्तदोषाभावानां प्रत्येकरूपेणानन्तहेतुत्वम् । एवमनुमित्यादिप्रमां प्रति साध्यशून्यपक्षविशेष्यकपरामर्शाभावादेः तेन तेन रूपेणानन्तहेतुत्वं वाच्यमिति अनन्तगौरवं तदपेक्षयातिलाघवात् प्रत्यक्षादिप्रमादौ गुणानां विशेषणवद्विशेष्येन्द्रियसन्निकर्षत्वादिना कार्यकारणभावचतुष्टयाङ्गीकार एव उचित इति भावः । एतावता तन्मतमुपन्यस्य इदानीं दोषाभावस्यान्यथानुपपत्त्या कारणत्वावश्यकत्वप्रदर्शनेन तन्मतन्निरस्य दोषाभावगुणयोः कारणत्वं व्यवस्थापयितुमाक्षिपति ॥ **नचेति** ॥ **गुणसत्त्वेऽपीति** ॥ शुक्लरूपत्वाच्छङ्खेन्द्रियसंयोगरूपगुणसत्त्वेऽपीत्यर्थः ॥ **तेन प्रतिबन्धादिति** ॥ पित्तद्रव्यरूपप्रतिबन्धकवशादित्यर्थः ॥ **शङ्खे न श्वैत्यज्ञानमिति** ॥ शङ्खविशेष्यकशुक्लरूपप्रकारकज्ञानं नोत्पद्यत इत्यर्थः ॥ **अत इति** ॥ निरुक्तगुणरूपकारणसत्त्वेऽपि शुक्लप्रमानुत्पत्तिवशादित्यर्थः ॥ **कारणत्वमवश्यं वाच्यमिति** ॥ अननुगतरूपेणानन्तहेतुत्वमन्यथानुपपत्त्यावश्यं स्वीकार्यमित्यर्थः ॥ **तथाचेति** ॥ दोषाभावानां हेतुत्वस्यावश्यकत्वे चेत्यर्थः ॥ **किं गुणस्येति** ॥ गुणस्य हेतुत्वाङ्गीकारेण किं प्रयोजनमित्यर्थः । तथाचावश्यकदोषाभावेनैव निर्वाहे गुणस्यापि न हेतुत्वं अन्यथासिद्धत्वादिति भावः ॥ **तथापीति** ॥ दोषाभावानां हेतुत्वस्यावश्यकत्वेऽपीत्यर्थः ॥ **अन्वयव्यतिरेकाभ्यामिति** ॥ पटादौ पीतरूपात्मकविशेषणवद्विशेष्येन्द्रियसन्निकर्षसत्त्वात् पीतरूपप्रकारकप्रमोत्पत्तिः पित्तरूपदोषाभावस्याविशिष्टत्वेऽपि सुवर्णधर्म्यन्तरघटितसन्निकर्षवशात् पीतरूपप्रकारकभ्रमात्मकलौकिकप्रत्यक्षोत्पत्तावपि सुवर्णस्य पीतरूपत्वाभावेन तत्र विशेषणवद्विशेष्येन्द्रियसन्निकर्षरूपगुणाभावात् पीतरूपप्रकारकप्रमाया अनुत्पत्तिरित्यन्वयव्यतिरेकाभ्यामित्यर्थः ॥ **हेतुत्वसिद्धेरिति** ॥ तथाच निरुक्तान्वयव्यतिरेकाभ्यां गुणस्यापि हेतुत्वावश्यकतया न तेन गुणस्यान्यथासिद्धत्वमिति भावः ॥ **एवमिति** ॥ उक्तयुक्त्या प्रमां प्रति गुणस्येव दोषाभावस्यापि यथा कारणत्वं तथेत्यर्थः ॥ **भ्रमं प्रतीति** ॥ भगवज्ज्ञानानिरूपितप्रत्यक्षत्वाद्यवच्छिन्ननिरूपितविषयताशालित्वावच्छिन्नं प्रतीत्यर्थः ॥ **गुणाभाव इति** ॥ विशेषणविशेष्येन्द्रियसन्निकर्षत्वसाध्यवत्पक्षविशेष्यकपरामर्शत्वाद्यवच्छिन्नाभाव इत्यर्थः ॥ **कारणमिति** ॥ तथाच पित्तादिदोषस्याविशिष्टत्वेऽपि शङ्खादाविव पीतपटादौ पीतरूपभ्रमानुत्पत्त्या विशेषणवद्विशेष्येन्द्रियसन्निकर्षरूपगुणस्य प्रतिबन्धकत्वमङ्गीकृत्य तदभावस्य तत्र हेतुत्वं वाच्यं पीतपटादौ तु तादृशप्रतिबन्धकाभावरूपकारणाभावान्न तदापत्तिरिति भावः ॥ **इत्यस्यापीति** ॥ इत्याकारकभ्रमगुणाभावयोः कार्यकारणभावस्यापीत्यर्थः ॥ **सुवचत्वादिति** ॥ अव-

## दिनकरीयम् ।

मस्तीत्याह ॥ **अनन्तेति** ॥ **न्याय्यत्वादिति** ॥ अनुगतगुणत्वस्याग्रे वक्ष्यमाणत्वान्न तद्धेतुत्वमतेऽयं दोष इति भावः ॥ **तथा च** दोषाभावानां हेतुत्वस्यावश्यकत्वे च ॥ **गुणस्यापीति** ॥ तथा च पित्तादिदोषाभावसत्त्वेऽपि विशेषणवद्विशेष्यसन्निकर्षरूपगुणाभावान्न शङ्खे पीतत्वप्रमेति दोषाभावेन न गुणस्यान्यथासिद्धिरिति भावः ॥ **एवं** एवं सति अन्वयव्यतिरेकसत्त्वेऽपि यद्यन्यथासिद्धत्वं तदेत्यर्थः ॥ **गुणाभावः** गुणाभाव एव न तु दोषः कारणं स्यादिति भावः ॥ १३१ ॥

प्रत्यक्षे तु विशेष्येण विशेषणवता समम् ।
सन्निकर्षो गुणस्तु स्यादथ त्वनुमितौ पुनः ॥ १३२ ॥
पक्षे साध्यविशिष्टे तु परामर्शो गुणो भवेत् ।
शक्ये सादृश्यबुद्धिस्तु भवेदुपमितौ गुणः ॥ १३३ ॥
शाब्दबोधे योग्यतायास्तात्पर्यस्याथ वा प्रमा ।
गुणः स्याद्भ्रमभिन्नं तु ज्ञानमत्रोच्यते प्रमा ॥ १३४ ॥

अथ के गुणा इत्याकाङ्क्षायां प्रत्यक्षादौ क्रमेण गुणान् दर्शयति ॥ **प्रत्यक्षे त्विति** ॥ प्रत्यक्षे विशेषणवद्विशेष्यसन्निकर्षो गुणः । अनुमितौ साध्यवति साध्यव्याप्यवैशिष्ट्यज्ञानं गुणः । एवमग्रेऽप्यूह्यम् । प्रमां निरूपयति ॥ **भ्रमभिन्नमिति** ॥ १३२ ॥ १३३ ॥ १३४ ॥

ननु यत्र शुक्तिरजतयोरिमे रजते इति ज्ञानं जातं तत्र रजतांशेऽपि प्रमा न स्यात् ।

**प्रभा.**

इयं वाच्यत्वादित्यर्थः । अन्यथा उक्तदोषापत्तेरिति भावः । अत्र प्रत्यक्षप्रमां प्रत्येव पित्तादिदोषाभावस्यापि उक्तदोषवारणाय हेतुत्वं वाच्यम् । एवं प्रत्यक्षभ्रमं प्रत्येव गुणाभावस्याप्युक्तदोषवारणाय हेतुत्वं वाच्यं न त्वनुमित्यादौ साध्यतत्पक्षविशेष्यकपरामर्शादिरूपगुणसत्त्वे साध्याभाववत्पक्षविशेष्यकपरामर्शादिरूपदोषाप्रसक्त्या प्रमानुमित्यादौ न हेतुत्वं तादृशदोषाभावस्य प्रमाणाभावात् । एवं साध्याभाववत्पक्षविशेष्यकपरामर्शादिरूपदोषसत्त्वे साध्यवत्पक्षविशेष्यकपरामर्शादिरूपगुणसत्त्वाप्रसक्त्या भ्रमानुमित्यादौ तादृशगुणाभावस्यापि न हेतुत्वं प्रमाणाभावादित्यपि बोध्यम् ॥ १३१ ॥

**एवमग्रेऽप्यूह्यमिति** ॥ उपमितिप्रमायां शक्यविशेष्यकसादृश्यप्रकारकज्ञानं शाब्दप्रमायां योग्यताप्रमा तात्पर्यप्रमा वा गुण इति बोध्यमित्यर्थः । इदमुपलक्षणं तत्र प्रत्यक्षादिप्रमाचतुष्टयसाधारणभगवज्ज्ञानानिरूपितानुभवसामान्यानिरूपिततन्निष्ठप्रकारतानिरूपिततदाश्रयनिष्ठविशेष्यताशालित्वावच्छिन्नं प्रति तत्समानाकारकभगवज्ज्ञानव्यक्तित्वावच्छिन्नमेकमेव गुणः लाघवादित्यपि बोध्यम् । भ्रमभिन्नन्तु ज्ञानमत्रोच्यते प्रमेति मूलं न प्रमासामान्यलक्षणपरं भ्रमस्यापि किञ्चिदंशे प्रमात्वेन लक्ष्यतया तत्र भगवज्ज्ञानानिरूपितविषयताशालिज्ञानभिन्नत्वरूपभ्रमभिन्नत्वघटितलक्षणस्याव्याप्तिप्रसङ्गात् किन्तु तदभाववन्निष्ठविशेष्यतानिरूपिततन्निष्ठप्रकारताशालिज्ञानाभिन्नतत्प्रकारकज्ञानत्वरूपप्रमाविशेषलक्षणपरं एवंच इदन्त्वेन शुक्त्यादिविशेष्यकरजतत्वादिप्रकारकज्ञानस्य शुक्तिनिष्ठइदन्त्वाभाववद्विशेष्यकइदन्त्वप्रकारकज्ञानभिन्नत्वात्तस्येदन्त्वप्रमात्वमुपपद्यते रजतत्वाभाववद्विशेष्यकरजतत्वप्रकारकज्ञानभिन्नत्वाभावात् न तस्य रजतत्वांशे प्रमात्वमिति बोध्यम् ॥ १३२ ॥ १३३ ॥ १३४ ॥

एतल्लक्षणं दूषयित्वा उत्तरलक्षणमवतारयति ॥ **नन्विति** ॥ नच भ्रमस्य किञ्चिदंशे प्रमात्वेन लक्ष्यत्वेऽपि भगवज्ज्ञानानिरूपितविषयताभिन्नविषयताशालित्वरूपभ्रमभिन्नत्वस्य प्रमासामान्यलक्षणघटकत्वस्वीकारेणैव एतादृशसामान्यलक्षणस्यापि भ्रमे समन्वयसंभवात् । अव्याप्त्यप्रसक्त्या उक्तमूलस्य प्रमाविशेषलक्षणपरत्वे बीजाभाव इति वाच्यं निरुक्तपारिभाषिकभ्रमभिन्नत्वस्य भ्रमभिन्नन्तु ज्ञानमित्यादिकारिकाघटकपदप्रतिपाद्यत्वाभावेन मूलकाराननुमतत्वात् निरुक्तसामान्यलक्षणघट–

**दिनकरीयम्.**

**एवमग्रेऽप्यूह्यमिति** ॥ उपमितौ शक्ये सादृश्यज्ञानं शाब्दबोधे योग्यतायाः तात्पर्यस्य वा प्रमैव गुण इति भावः ॥ १३२ ॥ १३३ ॥ १३४ ॥

अथवा तत्प्रकारं यज्ज्ञानं तद्वद्विशेष्यकम् ।
तत्प्रमा न प्रमा नापि भ्रमः स्यान्निर्विकल्पकम् ॥ १३५ ॥

तज्ज्ञानस्य भ्रमभिन्नत्वाभावादत आह ॥ अथवेति ॥ तद्वद्विशेष्यकत्वे सति तत्प्रकारकं ज्ञानं

प्रभा.

कज्ञानत्वस्यैव प्रमासामान्यलक्षणत्वसंभवेन शेषवैयर्थ्यापत्तेश्च तस्मान्मूलस्य सामान्यलक्षणपरत्वासंभवात् प्रमाविशेषलक्षणपरत्वमावश्यकमिति ॥ **यत्रेति** ॥ यदीत्यर्थः तस्य ज्ञानेन सहान्वयः ॥ **शुक्तिरजतयोरिति** ॥ इदन्त्वेन शुक्तिरजतोभयविशेष्यकरजतत्वप्रकारकसमूहालम्बनात्मकं यत् ज्ञानं जातमित्यर्थः ॥ **तत्रेति** ॥ तादृशज्ञानमित्यर्थः ॥ **रजतांशेऽपि प्रमा न स्यादिति** ॥ शुक्तिविषयकत्वावच्छेदेन यथा रजतत्वप्रमात्वशून्यं तथा रजतविषयकत्वावच्छेदेनापि रजतत्वप्रमात्वशून्यं स्यादित्यर्थः । तत्र हेतुमाह ॥ **तज्ज्ञानस्येति** ॥ निरुक्तसमूहालम्बनज्ञानस्येत्यर्थः ॥ **भ्रमभिन्नत्वाभावादिति** ॥ रजतत्वाभाववद्विशेष्यकरजतत्वप्रकारकज्ञानसामान्यभिन्नत्वाभावादित्यर्थः । यद्यपि रजतत्वाभाववन्निष्ठविशेष्यतानिरूपितरजतत्वप्रकारताशालिज्ञानाभिन्नरजतत्वप्रकारताशालिज्ञानत्वस्य मूलप्रतिपाद्यस्य रजतत्वप्रमालक्षणापेक्षया तादृशप्रकारताभिन्नं रजतत्वप्रकारताशालिज्ञानत्वस्यैव रजतत्वप्रमालक्षणत्वमुचितं द्विधा ज्ञानत्वप्रवेशापेक्षया लाघवात्तस्य मूलघटकपदाप्रतिपाद्यत्वेऽपि मूलतात्पर्यार्थत्वसंभवात् । एवं चोक्तसमूहालम्बनस्य रजतांशे निरुक्तरजतत्वप्रमात्वोपपादनसंभवाल्लक्षणान्तरानुसरणे निरुक्तानुपपत्तेर्न प्रसक्तिः । अत एव भ्रमभिन्नत्वं न यथाश्रुतं आंशिकप्रमायां अव्याप्तेः किन्तु भ्रमत्वघटकनिरूप्यनिरूपकभावापन्नविषयताभिन्नविषयताशालित्वमित्यस्मद्गुरुचरणोक्तिरपि सङ्गच्छते। तथापि तन्निष्ठप्रकारतायां तन्निष्ठविशेष्यतानिरूपितत्वघटितवक्ष्यमाणलक्षणापेक्षया तन्निष्ठप्रकारतायां तदभाववन्निष्ठविशेष्यतानिरूपिततन्निष्ठप्रकारताभिन्नत्वघटितनिरुक्ततत्तत्प्रमालक्षणस्यापि गुरुत्वादेतल्लक्षणं परित्यज्य लक्षणान्तरमनुसृतमिति हृदयम् । ननु तत्प्रकारकं यज्ज्ञानं तद्वद्विशेष्यकमिति यथाश्रुतमूलात्तत्प्रकारकत्वविशिष्टतद्वद्विशेष्यकत्वविशिष्टज्ञानत्वं तत्प्रमालक्षणमिति लभ्यते तच्चानुपपन्नमिदन्त्वावच्छिन्नरजतविशेष्यकद्रव्यत्वप्रकारकेदन्त्वावच्छिन्नशुक्तिविशेष्यकरजतत्वप्रकारकेदं द्रव्यमिदं रजतमिति समूहालम्बनात्मकरजतस्य रजतत्ववद्विशेष्यकत्वात् शुक्त्यंशे रजतत्वप्रकारकत्वाच्च तत्र रजतत्वप्रमालक्षणस्यातिव्याप्त्यापत्तेरित्याशङ्कां तन्मूलस्य तात्पर्यार्थप्रकाशनेन परिहरति ॥ **मुक्तावल्यां तद्वद्विशेष्यकमिति** ॥ तद्वद्विशेष्यकत्वावच्छिन्नतत्प्रकारकत्ववज्ज्ञानत्वं तत्प्रमालक्षणमित्यर्थः ययोर्विषयतयोर्निरूप्यनिरूपकभावः ज्ञाननिष्ठतादृशविषयतानिरूपकत्वयोरेवावच्छेद्यावच्छेदकभावस्वीकारात् तद्वन्निष्ठविशेष्यतानिरूपिततज्ज्ञानीयतन्निष्ठप्रकारताकत्वं तत्प्रमालक्षणमिति फलितम् । एवंच निरुक्तसमूहालम्बनात्मकज्ञानीयरजतत्वनिष्ठप्रकारतायाः रजतत्ववन्निष्ठविशेष्यतानिरूपितत्वाभावात् तद्घटितलक्षणस्य न तत्रातिव्याप्तिप्रसक्तिः इच्छादावतिव्याप्तिवारणाय ज्ञानत्वनिवेशः तदपि प्रकारतायां ज्ञाननिरूपितत्वलाभाय नतु स्वातन्त्र्येण तस्य निवेशः । तथासति तादृशप्रकारताकत्वविशिष्टज्ञानत्वस्य लक्षणत्वे तज्ज्ञानत्वविशिष्टतादृशप्रकारताकत्वमादाय विशेषणविशेष्यभावे विनिगमनाविरहप्रयुक्तलक्षणद्वयस्वीकारापत्तेः तादृशप्रकारताकत्वज्ञानत्वोभयत्वावच्छिन्नस्य लक्षणत्वे लक्षणतावच्छेदकासाधारणसंबन्धाप्रसिद्ध्यासंभवापत्तेः अत्र तद्वन्निष्ठविशेष्यत्वं तत्संबन्धिनिष्ठत्वमेव न तु तदधिकरणनिष्ठत्वं घटादिविशेष्यकतादात्म्येन द्रव्यादिप्रकारकप्रमायामव्याप्त्यापत्तेः नचैवमपि घटपटोभयं घट इत्याकारकघटत्वप्रकारकभ्रमस्यापि घटत्वसंबन्धिनिष्ठविशेष्यतानिरूपिततज्ज्ञानीयघटत्वप्रकारताकत्वात् घटत्वप्रमालक्षणस्यातिव्याप्तिरिति वाच्यं विशेष्यतायां

दिनकरीयम्.

नन्वेवं रङ्गरजतयोरिमे रजतरङ्गे इति ज्ञानेऽतिव्याप्तिरत आह ॥ **तद्वद्विशेष्यकत्वे सतीति** ॥ तद्वद्विशेष्यकत्वावच्छिन्नतत्प्रकारकत्ववज्ज्ञानमित्यर्थः । सतिसप्तम्या अवच्छिन्नत्वार्थकत्वात् । तत्प्रकारकभ्रमेऽतिव्याप्तेस्तद्वद्विशेष्यकेति । रजत एव द्रव्यमिति ज्ञाने रजतत्वप्रमात्वापत्तिरतस्तत्प्रकारकेति । ज्ञानपदं च

प्रमेत्यर्थः। अथैवं स्मृतेरपि प्रमात्वं स्यात्ततः किमिति चेत्तथा सति तत्करणस्यापि प्रमाणान्तरत्वं स्यादिति चेन्न यथार्थानुभवकरणस्यैव प्रमाणत्वेन विवक्षितत्वात् । इदं तु बोध्यं येन सम्बन्धेन यद्वत्ता तेन सम्बन्धेन तद्वद्विशेष्यकत्वं तेन सम्बन्धेन तत्प्रकारकत्वं वाच्यं तेन

प्रभा.

तत्संबन्धिनिष्ठत्वमपहाय तत्संबन्धितावच्छेदकावच्छिन्नत्वस्यैव निवेशनीयतया निरुक्तज्ञानीयघटपटोभयनिष्ठविशेष्यतावच्छेदकघटपटोभयत्वस्य घटत्वसंबन्धितावच्छेदकावच्छिन्नत्वाभावात् तत्संबन्धितावच्छेदकत्वाभावेनातिव्याप्त्यभावात् । नचैवमपि घट इत्याद्याकारकनिर्धर्मितावच्छेदककप्रमायामव्याप्तिः विशेष्यतायाः घटत्वादिसंबन्धितावच्छेदकावच्छिन्नत्वाभावात् तत्संबन्धितावच्छेदकावच्छिन्नत्वस्थाने तत्संबन्धितानवच्छेदकानवच्छिन्नत्वन्निवेश्य उक्ताव्याप्तिवारणे प्रमेयवान् घट इत्याद्याकारकप्रमेयावच्छिन्नविशेष्यकघटत्वादिप्रकारकप्रमायामव्याप्तिः दुर्वारा । तत्र प्रमेयत्वेन प्रमेयमात्रस्यैव विशेष्यतावच्छेदकत्वेन घटत्वादिसंबन्धितानवच्छेदकत्वादेरपि विशेष्यतावच्छेदकत्वादिति वाच्यं तत्संबन्धितावच्छेदकतानवच्छेदकावच्छिन्नावच्छेदकत्वानिरूपितविशेष्यताया एव लक्षणघटकत्वात् निरुक्तज्ञानीयविशेष्यतावच्छेदकतावच्छेदकप्रमेयत्वस्य घटत्वादिसंबन्धितावच्छेदकतानवच्छेदकत्वाभावेन तत्राव्याप्तेरभावात् । इत्थंच स्वसंबन्धितावच्छेदकतानवच्छेदकधर्मानवच्छिन्नावच्छेदकत्वानिरूपितत्वस्वनिष्ठज्ञानीयप्रकारतानिरूपितत्वोभयसंबन्धेन तद्धर्मविशिष्टविशेष्यताकत्वं तद्धर्मप्रमाया लक्षणमिति फलितमतो नोक्तदोषः । निर्धर्मितावच्छेदककभ्रमानभ्युपगमेन न तत्रातिव्याप्तिः । नच वह्न्यभावत्वादिना पदार्थान्तरावगाहिह्रदो वह्न्यभाववानित्याद्याकारकस्यान्तरा निर्धर्मितावच्छेदककभ्रमस्य भट्टाचार्यसार्वभौमैरङ्गीकृततया तादृशभ्रमीयवह्न्यभावत्वनिष्ठप्रकारतानिरूपितपदार्थान्तरनिष्ठविशेष्यतायाः निरवच्छिन्नत्वेन निरुक्तावच्छेदकत्वानिरूपितत्वात् निरुक्तप्रमालक्षणस्य तादृशभ्रमेऽतिव्याप्तिरिति वाच्यम्। निर्धर्मितावच्छेदककभ्रमाङ्गीकर्तृमते यथाश्रुततत्संबन्धिनिष्ठविशेष्यतायाः तत्संबन्धितावच्छेदकतानवच्छेदकावच्छिन्नावच्छेदकत्वानिरूपितत्वस्यापि निवेशनीयत्वात् निरुक्तभ्रमीयवह्न्यभावत्वनिष्ठप्रकारतानिरूपितपदार्थान्तरनिष्ठविशेष्यतायाः तादृशावच्छेदकत्वानिरूपितत्वेऽपि तत्संबन्धिनिष्ठत्वाभावात् नातिव्याप्तिप्रसक्तिः । एवंच तत्संबन्धिनिष्ठत्वतत्संबन्धितावच्छेदकतानवच्छेदकावच्छिन्नावच्छेदकत्वानिरूपितत्वज्ञानीयतन्निष्ठप्रकारतानिरूपितत्वएतत्त्रितयसंबन्धेन तद्धर्मविशिष्टविशेष्यताशालित्वं तत्प्रमात्वमिति फलितमिति न कोऽपि दोष इति दिक्। अस्मद्गुरुचरणास्तु विशेषणसंशयाद्विशिष्टसंशय इति विशेषणभ्रमात् विशिष्टभ्रमस्यैव स्वीकार्यतया पदार्थान्तरे वह्न्यभावत्वप्रकारकभ्रमोत्तरं पर्वतादौ वह्न्यभावत्वविशिष्टप्रकारकभ्रम एव स्वीकार्यः नतु वह्न्यभावत्वावच्छिन्नपदार्थान्तरनिष्ठप्रकारतानिरूपितपर्वतादिनिष्ठविशेष्यताशालिभ्रमोऽपि अन्यथा तस्य विशिष्टवैशिष्ट्यावगाहिज्ञानानात्मकतया विशेषणतावच्छेदकप्रकारकनिर्णयशून्यकालेऽपि तदुत्पत्त्यापत्तेः नच तज्ज्ञानं विशेष्ये विशेषणमिति रीत्या जायमानमेवेति विशेषणतावच्छेदकप्रकारकनिर्णयशून्यकाले तदुत्पत्तौ बाधकाभाव इति वाच्यम् वह्निमान् ह्रद इत्याकारकवह्नित्वावच्छिन्नप्रकारतानिरूपितह्रदत्वावच्छिन्नविशेष्यताशालिबुद्धिप्रतिबन्धकत्वानुपपत्तेः तादृशज्ञानस्य वह्नित्वावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नप्रकारताशालिनिश्चयत्वरूपप्रतिबन्धकतावच्छेदकरूपानाक्रान्तत्वात्। किञ्च तन्मते पदार्थान्तरविशेष्यकरजतत्वप्रकारकइदंरजतमितिभ्रमवत् केवलरजतमिति तादृशभ्रमस्यापि स्वीकारापत्तिः भ्रमत्वाविशेषात् नचेष्टापत्तिः मीमांसकानां भ्रमस्थाने ज्ञानद्वयमङ्गीकृत्यान्यथाख्यातिनिराकरणस्यानुचितत्वापत्तेः नैयायिकानां निर्धर्मितावच्छेदककभ्रमस्थाने ज्ञानद्वयस्वीकारासंभवेनान्यथाख्यातिरवश्यमभ्युपेयेति प्रबलदूषणमनभिधाय मीमांसकमते दूषणान्तराभिधानस्यानुचितत्वापत्तेश्च । अपिच इदं रजतं नवेति संशयवत् तुल्ययुक्त्या रजतं नवेति संशयस्यापि स्वीकारापत्तिः भ्रमत्वाविशेषात् नचेष्टापत्तिः धर्मिज्ञानसाधारणादिधर्मज्ञानानां हेतुत्वविलयापत्त्या सर्वसिद्धान्तविरोधापत्तेः तस्मात् निर्धर्मितावच्छेदककभ्रमोऽप्रामाणिक एव । भट्टाचार्यसार्वभौमप्रभृतीनां तादृशभ्रमाङ्गीकारस्तु प्रौढवादमात्रमेवात एव भ्रममात्रस्य सर्वं ज्ञानं धर्मिण्यभ्रान्तं

कपालादौ संयोगादिना घटादिज्ञाने नातिव्याप्तिः। एवं सति निर्विकल्पकं प्रमा न स्यात् तस्य सप्रकारकत्वाभावादत आह ॥ न प्रमेति ॥ ननु वृक्षे कपिसंयोगज्ञानं भ्रमः प्रमा च स्यादिति चेन्न प्रतियोगिव्यधिकरणकपिसंयोगाभाववति संयोगज्ञानस्य भ्रमत्वात्। नच वृक्षे कपिसंयोगाभावावच्छेदेन संयोगज्ञानं भ्रमो न स्यात् तत्र संयोगाभावस्य प्रतियोगिसमानाधि-

## प्रभा

प्रकारे तु विपर्यय इति धर्मितावच्छेदकांशे याथार्थ्यप्रतिपादकभणिकारोक्तिरपि सङ्गच्छत इति व्याचक्षुः। अत्रेदमपि लक्षणं व्यतिरेकिधर्मप्रकारकप्रमाया एव। केवलान्वयिधर्मप्रकारकप्रमायास्तु ज्ञानीयतद्धर्मप्रकारताकत्वमात्रमिति हृदयम् ॥ **एवं सतीति** ॥ प्रकारताघटितप्रमाविशेषलक्षणस्वीकार इत्यर्थः ॥ **निर्विकल्पकमिति** ॥ घटत्वादिनिर्विकल्पकमित्यर्थः ॥ **प्रमा न स्यादिति** ॥ प्रमापि न स्यादित्यर्थः घटत्वादिप्रमाभ्रमयोः लक्षणलक्षितं न भवेदित्यर्थः तत्र हेतुमाह ॥ **तस्येति** ॥ घटत्वादिनिर्विकल्पकस्येत्यर्थः ॥ **सप्रकारकत्वाभावादिति** ॥ प्रकारतानिरूपकत्वाभावादित्यर्थः। नन्वेवं सति ज्ञानस्याप्रमात्वप्रमात्वनिर्विकल्पकत्वरूपधर्मैस्त्रैविध्यस्यैव वक्तव्यतया तदपहायाप्रमाचप्रमाचेत्यादिना ज्ञानस्य द्वैविध्यप्रतिपादने मूलकारस्य न्यूनतेति चेन्न। तत्र लघुभूतप्रमाविशेषलक्ष्याभावेऽपि तदभाववन्निष्ठविशेष्यतानिरूपिततन्निष्ठप्रकारताभिन्नज्ञानीयतन्निष्ठप्रकारताकत्वरूपनिरुक्तगुरुभूतप्रमाविशेषलक्षणत्वात् निर्विकल्पकस्यापि तत्प्रमात्वमव्याहतमित्याशयेन मूलकृता द्वैविध्यमभिहितं लघुभूततद्वद्विशेष्यतानिरूपितत्वघटिततत्प्रमात्वस्य तत्राभावात् तादृशप्रमात्वावच्छिन्नत्वमव्याहतमित्याशयेन न प्रमा नापि भ्रमस्स्यादिति ग्रन्थेन प्रमात्वावच्छिन्नत्वमभिहितमिति न पूर्वोक्तग्रन्थविरोधः नवा मूलकारस्य न्यूनतेति ध्येयम्। ननु सर्वप्रमासु गुरुभूतनिरुक्तप्रमालक्षणस्वीकारे वृक्षः कपिसंयोगीति ज्ञानीयकपिसंयोगनिष्ठप्रकारतायाः कपिसंयोगाभाववन्निष्ठविशेष्यतानिरूपितकपिसंयोगनिष्ठप्रकारताभिन्नत्वाभावात् तादृशज्ञानस्य प्रमात्वानुपपत्तिः तस्य लघुभूतप्रमालक्षणमात्रलक्ष्यत्वमङ्गीकृत्य प्रमात्वोपपादने वृक्षांशे तादृशज्ञानस्य कपिसंयोगत्वप्रमात्वयोरापत्तिरित्याशङ्कामन्यादृशभ्रमत्वाङ्गीकारेण परिहर्तुमाक्षिपति ॥ **नन्विति** ॥ **वृक्षे कपिसंयोगज्ञानमिति** ॥ वृक्षविशेष्यककपिसंयोगप्रकारकज्ञानमित्यर्थः ॥ **भ्रमः प्रमा च स्यादिति** ॥ उक्तभ्रमलक्षणस्य लघुभूततत्प्रमालक्षणस्य च तत्र सत्त्वादिति भावः ॥ **प्रतियोगिव्यधिकरणेति** ॥ कपिसंयोगानधिकरणं यत् कपिसंयोगाभाववत् तद्विशेष्यककपिसंयोगप्रकारकज्ञानस्यैवेत्यर्थः ॥ **भ्रमत्वादिति** ॥ कपिसंयोगभ्रमत्वस्वीकारादित्यर्थः। तथा चाधिकरणांशे कपिसंयोगाभावविशेषणस्य व्यर्थतया तदपहाय कपिसंयोगानधिकरणविशेष्यककपिसंयोगप्रकारकज्ञानत्वमेव कपिसंयोगभ्रमलक्षणं वाच्यं तस्य च वृक्षः कपिसंयोगीति ज्ञाने असत्त्वान्नोक्तापत्तिरिति भावः। प्रकारान्तरेण भ्रमलक्षणं परिष्कर्तुं निरुक्तभ्रमलक्षणस्य मूले वृक्षः कपिसंयोगीति भ्रमेऽव्याप्तिमाशङ्कते ॥ **नचेति** ॥ **वृक्ष इति** ॥ वृक्षविशेष्यकमूलावच्छेद्यकपिसंयोगाप्रकारकं मूले वृक्षः कपिसंयोगीति ज्ञानमित्यर्थः ॥ **भ्रमो न स्यादिति** ॥ कपिसंयोगभ्रमलक्षणलक्षितं न स्यादित्यर्थः। अत्र हेतुमाह ॥ **तत्र कपिसंयोगाभावस्येति** ॥ वृक्षवृत्तिकपिसंयोगाभावस्येत्यर्थः ॥ **प्रतियोगिसमानाधिकरणत्वादिति** ॥ कपिसंयोगसमानाधिकरणत्वादित्यर्थः। वृक्षस्य कपिसंयोगाभावनिष्ठकपिसंयोगसामानाधिकर-

## दिनकरीयम्

तथाविधेच्छायामतिव्याप्तिवारणाय ॥ **एवं सति** तत्प्रकारकत्वस्य प्रमात्वघटकत्वे सति ॥ **भ्रमः प्रमा च स्यादिति** ॥ लक्षणद्वयस्य तत्र सत्त्वादिति भावः। नन्वेवं लक्षणाननुगम इत्यत आह ॥ **लक्ष्यस्येति** ॥ अथ पाकरक्ते घटे श्यामरूपवत्ताप्रतीतेः प्रमात्वं स्यादिति चेदिष्टमेवैतत् घटस्य कदाचिच्छ्यामत्वात् वर्तमानस्य प्रमात्वघटकत्वात्। अत्र यद्यपि स्मृत्यन्यज्ञानत्वरूपानुभवत्वस्य निवेशे वैयर्थ्यात् ज्ञानत्वघटितमेव प्रमात्वं सुवचं तथापि तस्य स्मृतिसाधारणतया तत्करणस्य प्रमाणान्तरतापत्त्या शास्त्रे प्रमाणव्यवहारौपयिकरूपमनुभवत्वघटितमेवानुमन्यन्ते ते तान्त्रिकाः। वस्तुतस्तु विशिष्टवैशिष्ट्यानुभवे विशेषण-

करणत्वादिति वाच्यं तत्र संयोगाभावावच्छेदेन संयोगज्ञानस्य भ्रमत्वाल्लक्ष्यस्याननुगमाल्लक्षण-

प्रकारतादिशून्यं हि सम्बन्धानवगाहि तत् ।
प्रमात्वं न स्वतोग्राह्यं संशयानुपपत्तितः ॥ १३६ ॥

स्याननुगमेऽपि न क्षतिः ॥ प्रमात्वमिति ॥ मीमांसका हि प्रमात्वं स्वतोग्राह्यमिति वदन्ति।

## प्रभा.

ण्यनिरूपकत्वादिति यावत् । तथाच वृक्षस्य कपिसंयोगाधिकरणतया तद्वद्भिन्नत्वाभावेन तादृशभेदघटितक-पिसंयोगभ्रमलक्षणस्य मूले वृक्षः कपिसंयोगीति भ्रमेऽव्याप्तिस्स्यादिति भावः ॥ **तत्रेति** ॥ वृक्ष इत्यर्थः ॥ **संयोगाभावावच्छेदेनेति** ॥ कपिसंयोगाभावावच्छेदकावच्छेदेनेत्यर्थः कपिसंयोगानवच्छेदकदेशावच्छे-देनेति यावत् ॥ **संयोगज्ञानस्येति** ॥ कपिसंयोगप्रकारकज्ञानत्वावच्छिन्नस्यैवेत्यर्थः ॥ **भ्रमत्वादिति** ॥ क-पिसंयोगभ्रमपदार्थत्वादित्यर्थः । तथाच तद्वति तद्विशेष्यकतदनवच्छेदकावच्छेद्यतत्प्रकारकज्ञानत्वस्यैव तद्विशे-ष्यकतत्प्रकारकभ्रमलक्षणत्वस्वीकारात् वृक्षविशेष्यकमूलावच्छेद्यकपिसंयोगप्रकारके मूले वृक्षः कपिसंयोगीति भ्रमेऽपि तादृशलक्षणसत्त्वान्नाव्याप्तिरिति भावः एवमेवाव्याप्यवृत्तिधर्मान्तरप्रकारकभ्रममात्रेऽप्युक्तलक्षणमेव स्वीकार्यमिति । ननु व्याप्यवृत्तिधर्मप्रकारकभ्रमस्यैकविधं लक्षणमव्याप्यवृत्तिधर्मप्रकारकभ्रमस्यान्यविधं लक्षण-मिति लक्षणाननुगम इत्यत आह ॥ **लक्ष्यस्येति** ॥ व्याप्यवृत्त्यव्याप्यवृत्तिधर्मप्रकारकभ्रमस्येत्यर्थः ॥ **अ-ननुगमादिति** ॥ विभिन्नरूपेण लक्ष्यत्वस्वीकारादित्यर्थः ॥ **लक्षणाननुगमेऽपीति** ॥ विभिन्नरूपेण ल-क्षणत्वेऽपीत्यर्थः ॥ **न क्षतिरिति** ॥ नाव्यप्तिरित्यर्थः तथाच व्याप्यवृत्तिधर्मप्रकारकभ्रमशब्दवाच्यत्वाव-च्छिन्नं प्रति तदभाववन्निष्ठविशेष्यतानिरूपितज्ञानीयतान्निष्ठतत्प्रकारताकत्वस्य लक्षणत्वस्वीकारात् तद्विशेष्य-काव्याप्यवृत्तिधर्मप्रकारकभ्रमशब्दप्रतिपाद्यत्वावच्छिन्नं प्रति तन्निष्ठतदनवच्छेदकावच्छेद्यज्ञानीयतन्निष्ठप्रकार-ताकत्वस्य लक्षणत्वस्वीकाराच्च तत्र तत्रोक्ताननुगमप्रयुक्ताव्याप्तेरनवकाश इति भावः । अत्र प्राथमिकभ्रमल-क्षणस्य प्रमेयत्वाद्यवच्छिन्नविशेष्यकघटत्वप्रकारकप्रमेयोघटइत्यादिप्रमायां अतिव्याप्तिः तादृशप्रमीयविशेष्य-तायाः प्रमेयमात्रवृत्तित्वेन घटत्वशून्यपटादावपि सत्त्वात् । नच विशेष्यतायां तदभाववन्निष्ठत्वमपहाय त-त्पटवृत्तित्वस्य निवेशान्नातिव्याप्तिः निरुक्तप्रमीयविशेष्यतायाः घटेऽपि सत्त्वादिति वाच्यम् । एवं सति घ-टपटोभयं घट इति घटपटोभयत्वावच्छिन्नविशेष्यकघटत्वप्रकारकभ्रमे अव्याप्त्यापत्तेः तादृशभ्रमीयविशेष्यता-याः उभयवृत्तित्वेन घटेऽपि सत्त्वात् अतस्तत्संबन्धितानवच्छेदकावच्छिन्नविशेष्यतानिरूपितज्ञानीयतन्निष्ठप्र-कारताकत्वं तद्भ्रमलक्षणमिति वाच्यम् । निरुक्तप्रमीयविशेष्यतावच्छेदकप्रमेयत्वस्य घटत्वसंबन्धितानवच्छेद-कत्वाभावान्नातिव्याप्तिः निरुक्तभ्रमीयविशेष्यतावच्छेदकघटपटोभयत्वस्य घटत्वसंबन्धितानवच्छेदकतया न तत्रातिव्याप्तिः एवंचाव्याप्यवृत्त्यधिकरणताया अप्यव्याप्यवृत्तितया वृक्षवृत्तिकपिसंयोगाधिकरणतायाः अ-पि शाखादिरूपावच्छेदकाङ्गीकारात् मूलावच्छिन्नो वृक्षः कपिसंयोगी उत्पत्तिकालीनो घटो गन्धवानित्याद्यव्याप्य-वृत्तिधर्मप्रकारकभ्रमस्यापि कपिसंयोगगन्धादिसंबन्धितानवच्छेदकमूलदेशोत्पत्तिकालावच्छिन्नविशेष्यताकतया तत्रापि व्याप्यवृत्तिधर्मप्रकारकभ्रमस्थलीयलक्षणसंभवात् उभयत्र एकजातीयलक्षणासंभवशङ्कया लक्षणद्वयं प्र-दर्श्य लक्षणाननुगमप्रयुक्तदोषवारणाय मूलकृतां लक्ष्याननुगमप्रदर्शनं व्याप्यवृत्तिधर्मप्रकारकभ्रमस्थलीययथा-श्रुतलक्षणाभिप्रायेणेति प्रतिभाति । एतावता ज्ञानस्य प्रमात्वाप्रमात्वाभ्यां द्वैविध्यं अप्रमात्वादेस्तदभाववद्विशे-ष्यकतत्प्रकारकत्वं तद्वद्विशेष्यकतत्प्रकारकत्वस्वरूपत्वं च दर्शितम् । इदानीं तादृशप्रमात्वस्य नैयायिकम-तसिद्धपरतोग्राह्यत्वव्यवस्थापनाय मीमांसकमतसिद्धस्वतोग्राह्यत्वं निराकरोति ॥ **मूले प्रामाण्यमिति** ॥ य-

## दिनकरीयम्.

तावच्छेदकप्रकारकनिर्णयस्य कारणतया तज्जन्यतावच्छेदककोटिप्रविष्टतयानुभवत्वस्य जातिविशेषत्वे सिद्धे ज्ञानत्वस्यानुभवत्वाघटकत्वान्नानुभवत्वस्य वैयर्थ्यमिति कृतं पल्लवितेन । प्रामाण्यं न स्वतोग्राह्यमिति मूलेन स्वतोग्राह्यत्वं निषिध्यते तत्र स्वतस्त्ववादिनः के इत्याकाङ्क्षायामाह ॥ **मीमांसका हीति** ॥ स्वप्र-

तत्र गुरूणां मते ज्ञानस्य स्वप्रकाशकत्वात्तज्ज्ञानप्रामाण्यं तेनैव गृह्यत इति । भट्टानां मते ज्ञानमतीन्द्रियं ज्ञानजन्या ज्ञातता प्रत्यक्षा तया च ज्ञानमनुमीयते । मुरारिमिश्राणां मतेऽनु-

प्रभा.

यद्यपि अप्रमा च प्रमा चेति विभागकारिकया अप्रमात्वस्यैव प्रथममुपस्थितत्वात्तस्यैवादौ परतोग्राह्यत्वव्यवस्थापनमुचितं तथाप्यप्रमात्वस्य प्राभाकरमतेऽलीकत्वात् तद्धर्मिणि प्रकाराभावस्य व्यवसायाविषयत्वात् भट्टादिमतेऽपि अप्रमात्वं परतोग्राह्यमेवेति तस्य स्वतोग्राह्यत्ववादिनिराकरणाप्रसक्त्या सौलभ्यात् आदौ तदुपस्थितत्वेऽपि परतोग्राह्यत्वव्यवस्थापनमकृत्वा प्रमात्वस्य स्वतोग्राह्यत्वनिराकरणपूर्वकपरतोग्राह्यत्वव्यवस्थापनस्य कष्टतया कष्टमनुभुज्य सुखं भोक्तव्यमिति न्यायेन सर्वैरपि प्रमात्वस्यैव परतोग्राह्यत्वेन व्यवस्थापितत्वात् तदनुसारेण मूलकृतापि तथैव कृतमिति ध्येयम् । ननु मीमांसकमतसिद्धं स्वतोग्राह्यत्वमप्रतिपाद्य मूले तन्निराकरणमयुक्तं तस्यैवाज्ञानादित्याशङ्कां मतभेदेन सिद्धस्वतोग्राह्यत्वप्रतिपादनेन परिहृत्य तन्मूलं सङ्गमयितुमादौ तन्मतमुपन्यस्यति ॥ **मुक्तावल्यां मीमांसका हीति** ॥ **प्रमात्वमिति** ॥ तद्वद्विशेष्यकत्वावच्छिन्नतत्प्रकारकत्वपर्यवसितप्रमात्वमित्यर्थः । तत्तन्मतसिद्धस्वतोग्राह्यत्वं क्रमेणोपपादयति ॥ **तत्रेति** ॥ त्रिषु मीमांसकेषु मध्य इत्यर्थः ॥ **गुरूणां मत इति** ॥ प्राभाकरमत इत्यर्थः ॥ **स्वप्रकाशकत्वादिति** ॥ स्वाभिन्नज्ञानविषयत्वावश्यकत्वादित्यर्थः तथाच ज्ञानस्य तद्गतप्रामाण्यस्य वा ज्ञानान्तरग्राह्यत्वे तादृशज्ञानान्तरस्य तद्गतप्रामाण्यस्य च ग्रहार्थं ज्ञानान्तरापेक्षायामनवस्थापत्त्या स्वप्रकाशरूपत्वमावश्यकमिति भावः ॥ **तज्ज्ञानप्रामाण्यमिति** ॥ तज्ज्ञाननिष्ठनिरुक्तप्रमात्वमित्यर्थः ॥ **तेनैव गृह्यत इति** ॥ तद्ग्राहकसामग्रीमात्रेण गृह्यत इत्यर्थः तद्ग्राहकयावत्सामग्रीग्राह्यमिति यावत् तज्ज्ञाननिष्ठनिरुक्तप्रमात्वं स्वाश्रयग्राहकसामग्रीत्वव्यापकस्वग्राहकसामग्रीत्वकं स्वाश्रयग्रहत्वव्यापकविषयितानिरूपकं वेति फलितोऽर्थः । तथाच तादृशसामग्रीकत्वं तादृशविषयतानिरूपकत्वं वा तन्मते स्वतस्त्वमिति भावः । ननु तन्मते ज्ञानस्य स्वाभिन्नज्ञानविषयत्वेऽपि स्वस्य स्वनिष्ठप्रामाण्यावगाहित्वे प्रमाणाभाव इति चेन्न तादृशशब्दोल्लेखिप्रत्ययस्यैव मानत्वात् । तथाहि तन्मते अयं घटो घटमहं जानामीत्येव ज्ञानोल्लेखः तत्र घटपदार्थघटत्वविशिष्टस्य द्वितीयार्थघटत्वनिष्ठप्रकारतानिरूपितविशेष्यतायां आधेयत्वसंबन्धेनान्वयः तस्य ज्ञाधात्वर्थज्ञाने निरूपकत्वसंबन्धेनान्वयः तस्यास्मत्पदार्थे समवायेनान्वयः तथाच घटत्ववन्निष्ठघटत्वनिष्ठप्रकारतानिरूपितविशेष्यतानिरूपकत्वविशिष्टज्ञानाश्रयोऽहमिति शाब्दबोधः । एवं चैतादृशशाब्दबोधस्य ज्ञानांशे घटत्वनिष्ठप्रकारतानिरूपितघटत्ववन्निष्ठविशेष्यताकत्वरूपप्रमात्वविषयकतया तादृशशब्दोल्लेखिप्रत्ययस्यापि प्रमात्वविषयकत्वमव्याहतम् । नच निरुक्तप्रमात्वस्यानुपस्थितत्वात् अनुव्यवसाये विशेषणतया भानासंभव इति वाच्यम् प्राभाकरमते विशिष्टबुद्धौ विशेषणज्ञानस्याहेतुत्वात् प्रमात्वविशिष्टवैशिष्ट्यावगाहिबुद्धौ प्रमात्वप्रकारकनिर्णयस्याहेतुत्वाच्च तत्रानुपस्थितस्यापि प्रमात्वस्य भाने बाधकाभाव इति । अनुमानग्राह्यत्वेन सिद्धसाधनवारणाय स्वग्राहकसामग्रीत्वे स्वाश्रयग्राहकसामग्रीत्वसमानाधिकरणत्वं विषयतायां स्वाश्रयग्रहत्वसमानाधिकरणत्वं च परित्यज्य तत्र तत्र तद्व्यापकत्वं निवेशितम् ॥ **ज्ञानमतीन्द्रियमिति** ॥ ज्ञानसामान्यं लौकिकविषयताशून्यमित्यर्थः । आत्मसमवेतवृत्तिलौकिकविषयतासंबन्धेन प्रत्यक्षं प्रति धर्माधर्मादेरिव ज्ञानस्यापि तादात्म्यसंबन्धेन प्रतिबन्धकत्वादित्याशयः ॥ **ज्ञानजन्यज्ञाततेति** ॥ ज्ञानजन्यविषयसमवेतपदार्थान्तररूपेत्यर्थः ॥ **प्रत्यक्षेति** ॥ ज्ञातो घट इति प्रत्यक्षनिरूपितलौकिकविषयतावतीत्यर्थः । तथाच प्रत्यक्षप्रमाणेन ज्ञाततायाः सिद्धत्वान्नैयायिकानां प्रमाणाभावप्रयुक्तत्वाळिकत्वोक्तिरसङ्गतेति भावः ॥ **तथाचेति** ॥ प्रत्यक्षप्रमाणसिद्धज्ञाततया चेत्यर्थः समुदायार्थचशब्दः ज्ञानमित्युत्तरं योज्यः ॥ **ज्ञानमनुमीयत इति** ॥ ज्ञानं तद्गतप्रामाण्यं चानुमीयत इत्यर्थः । तथाचैत-

दिनकरीयम् ·

**काशकत्वादिति** ॥ स्वविषयकत्वादित्यर्थः ॥ **तेनैव गृह्यत इति** ॥ ज्ञाने गृह्यमाणे । तन्निष्ठज्ञानत्वादिधर्मवत्तन्निष्ठप्रामाण्यस्यापि ग्रहे बाधकाभावात्तन्मते सर्वं ज्ञानमयं घटो घटमहं जानामीत्याद्याकारकमिति भावः ॥ **तया चेति** ॥ अयमत्रानुमानप्रकारः इयं ज्ञातता घटविशेष्यकघटत्वप्रकारकज्ञानजन्या घटवृत्ति-

**व्यवसायेन ज्ञानं गृह्यते । सर्वेषामपि मते तज्ज्ञानविषयकज्ञानेन तज्ज्ञानप्रामाण्यं गृह्यते**

## प्रभा.

ज्ज्ञातता घटविशेष्यकघटत्वप्रकारकज्ञानजन्या घटसमवेतघटत्वप्रकारकज्ञाततात्वात् घटसमवेतघटत्वप्रकारकज्ञाततान्तरवदित्यनुमानात् या यत्समवेतयत्प्रकारकज्ञाततात्ववती सा तद्विशेष्यकतत्प्रकारकज्ञानजन्या पटसमवेतपटत्वप्रकारकज्ञाततावदित्यनुमानाद्वा ज्ञानं तद्गतप्रामाण्यं च सिध्यतीति भावः । ननु तल्लिङ्गकपरामर्शोत्पत्तिः तेन तद्गतप्रामाण्यानुत्पत्तिश्च कथमिति चेदित्थं घटचक्षुस्संयोगानन्तरं अयं घट इति प्रत्यक्षं ततो विषये समवायेन स्वरूपेण वा ज्ञाततोत्पत्तिः तदुत्तरक्षणे इन्द्रियसंबन्धविशेषणतया ज्ञाततायाः तस्यां तादृशविशेषणविशेषणतया घटत्वप्रकारकत्वस्य उपनयादिसन्निकर्षवशादाधेयतासंबन्धेन घटस्य च घटवृत्तिः घटत्वप्रकारिकाज्ञाततेत्याकारकप्रत्यक्षं तदुत्तरक्षणे तादृशप्रत्यक्षरूपोद्बोधकसहकृतेन एतज्ज्ञानीयसंस्कारेण एतज्जन्मीयसंस्कारेण जन्मान्तरसंस्कारेण वा घटसमवेतघटत्वप्रकारकज्ञाततात्वं घटविशेष्यकघटत्वप्रकारकज्ञानजन्यत्वव्याप्यमिति व्याप्तिस्मरणं तदुत्तरक्षणे तादृशज्ञानजन्यत्वव्याप्यज्ञाततात्ववतीयमिति स्वरूपसंबन्धेन व्याप्यवत्तापरामर्शःतदुत्तरक्षणे ज्ञाततायां ज्ञानजन्यत्वावगाहिनि ज्ञाने निरुक्तप्रामाण्यावगाहिनी चानुमितिर्भवति एतन्मते स्वाश्रयानुमितिजनकसामग्रीत्वव्यापकत्वग्राहकसामग्रीत्वकत्वं स्वाश्रयानुमितित्वव्यापकविषयताकत्वं वा स्वतस्त्वमिति हृदयम् । ननूक्तप्रणाळ्या घटे ज्ञाततात्प्रत्यक्षोत्तरं इयं ज्ञातता ज्ञानसामान्यजन्या ज्ञाततात्वात् पटादिवृत्तिज्ञाततावदित्यनुमानात् घटसमवेतज्ञातताविशेष्यकज्ञानसामान्यजन्यत्वविधेयकानुमित्युत्पत्तौ तादृशानुमितिसामग्र्या अपि स्वाश्रयविषयकानुमितिजनकसामग्रीत्वात्तत्र स्वग्राहकसामग्रीत्वाभावात् निरुक्तानुमितेरपि स्वाश्रयविषयकानुमितित्वात् तत्र स्वनिष्ठविषयतानिरूपितविषयित्वाभावाच्च प्रमात्वे भट्टमतासिद्धस्वतस्त्वासंभव इति चेन्न । स्वाश्रयनिष्ठसविशेष्यकसप्रकारकत्वविषयकानुमितिजनकसामग्रीत्वव्यापकस्वग्राहकसामग्रीकत्वस्य तादृशानुमितित्वव्यापकविषयितानिरूपकत्वस्य वा तन्मते स्वतस्त्वरूपत्वेन निरुक्तानुमितौ तत्सामग्र्यां च व्याप्याभावेन व्यापकाभावेऽपि क्षत्यभावात् प्रमात्वेन तन्मतसिद्धस्वतस्त्वानुपपत्तिः । नन्वेवमपि पूर्वोक्तप्रणाळ्या घटव्यक्तिसमवेतज्ञातताविशेष्यकज्ञानसामान्यजन्यत्वानुमित्युत्तरं एतद्व्यक्तिसमवेतज्ञातताजनकज्ञानमप्रमा घटत्वप्रकारकज्ञातताजनकज्ञानत्वात् घटत्वप्रकारकज्ञानत्वाद्वा मृत्पिण्डव्यक्तिसमवेतघटत्वप्रकारकज्ञातताजनकज्ञानवदित्यनुमानात् तादृशज्ञानविशेष्यकाप्रमात्वविधेयकानुमित्युत्पत्तौ तादृशानुमितेरपि स्वाश्रयनिष्ठविशेष्यकत्वसप्रकारकत्वविषयकत्वात् तत्र स्वविषयकत्वाभावात् तादृशानुमितिजनकसामग्र्या अपि स्वाश्रयनिष्ठसविशेष्यकत्वादिविषयकानुमितिजनकसामग्रीत्वात् तत्र स्वविषयकानुमितिजनकसामग्रीत्वरूपव्यापकाभावात् प्रमात्वे भट्टमतसिद्धनिरुक्तस्वतस्त्वानुमितिर्दुर्वारेति चेन्न । स्वाश्रयनिष्ठसविशेष्यकत्वादिविषयकानुमितौ स्वाश्रयविशेष्यकाप्रामाण्यग्रहासमवहितत्वस्य तादृशानुमितिजनकसामग्र्यां तादृशाप्रामाण्यप्रकारकज्ञानजनकदोषासमवहितत्वं च विशेषणीयत्वात् निरुक्तानुमितेः स्वात्मकतादृशाप्रामाण्यग्रहसमवहितत्वात् तादृशानुमितिसामग्र्याश्चाप्रमात्वरूपसाध्यशून्यज्ञानरूपपक्षविशेष्यकपरामर्शरूपदोषसमवहितत्वाच्च प्रमात्वेन तन्मतासिद्धस्वतस्त्वानुपपत्तिः । एवंच स्वाश्रयविशेष्यकाप्रामाण्यप्रकारकज्ञानजनकदोषासमवहितस्वाश्रयनिष्ठसाविशेष्यकत्वसप्रकारकत्वविषयकानुमितिजनकसामग्रीत्वव्यापकस्वग्राहकसामग्रीत्वकत्वं स्वाश्रयविशेष्यकाप्रामाण्यग्रहासमवहितस्वाश्रयनिष्ठसाविशेष्यकत्वादिविषयकानुमितित्वव्यापकविषयितानिरूपकत्वं वा तन्मतसिद्धानिर्गळितस्वतस्त्वमिति न काप्यनुपपत्तिः ॥ **मिश्राणां मते त्विति** ॥ अत्राप्यर्थकतुशब्दः अनुव्यवसायेनेत्युत्तरं योज्यः ॥ **अनुव्यवसायेनेति** ॥ प्राथमिकानुव्यवसायेनापीत्यर्थः ॥ **ज्ञानं गृह्यत इति** ॥ ज्ञानं तद्गतनिरुक्तप्रामाण्यं च विषयीक्रियत इत्यर्थः । ननु विषयचक्षुस्संयोगानन्तरं पुरोवृत्तिविशेष्यकरजतत्वप्रकारकज्ञाने सति रजतविशेष्यकेष्टसाधनताज्ञानाधीनरजतप्रवृत्त्युत्तरं रजतलाभे रजतं रजततया जाना-

## दिनकरीयम्.

घटत्वप्रकारकज्ञाततात्वात् या यद्वृत्तिर्यत्प्रकारिका ज्ञातता सा तद्विशेष्यकतत्प्रकारकज्ञानसाध्या यथा पटे पटत्वप्रकारिका ज्ञाततेति ॥ **अनुव्यवसायेनेति** ॥ ननु ज्ञानज्ञानस्य विषयाविषयकत्वात् कथं विषयग-

**विषयनिरूप्यं हि ज्ञानमतो ज्ञानवित्तिवेद्यो विषयः तन्मतं दूषयति ॥ न स्वतोग्राह्यमि-**

## प्रभा.

मीत्यनुव्यसायः तादृशप्रवृत्त्युत्तरं शुक्त्यादिलाभे शुक्तिं रजतत्वया जानामीत्यनुव्यवसायश्च भवति तादृशानु-व्यवसाययोः प्रमात्वाप्रमात्वविषयकत्वेऽपि पुरोवृत्तिविशेष्यकरजतत्वप्रकारकज्ञानगोचरप्रवृत्तिपूर्वकालीनइदंर-जतंजानामीत्यनुव्यवसायस्य व्यवसायविषयरजतत्वादिविषयकत्वेऽपि तद्वद्विशेष्यकत्वादिघटितप्रमात्वविषय-कत्वे मानाभाव इति चेन्न । प्रथमानुव्यवसायस्यापि प्रत्यक्षप्रमाणेनैव निरुक्तप्रामाण्यविषयकत्वसंभवात् त-थाहि निरुक्तप्राथमिकानुव्यवसाये मनस्संयुक्तसमवायेन ज्ञानस्येव मनस्संयुक्तसमवेतविशेषणतया प्रकारतानि-रूपितविशेष्यतानिरूपकत्वस्य प्रकारतानिरूपकत्वावच्छिन्नविशेष्यतानिरूपकत्वस्य वा ज्ञानं व्यवसायरूपज्ञान-लक्षणासन्निकर्षवशात् प्रकारतायामाधेयतासंबन्धेन रजतत्वस्य विशेष्यतायां तेनैव संबन्धेन रजतत्वाश्रयस्य च भानं संभवति । एवं च प्राथमिकानुव्यवसायस्यापि व्यवसायांशे रजतत्वनिष्ठप्रकारतानिरूपितरजतत्वाश्र-यनिष्ठविशेष्यतानिरूपकत्वरूपाप्रामाण्यावगाहित्वात् रजतत्वनिष्ठप्रकारतानिरूपकत्वावच्छिन्नरजतत्वाश्रयनिष्ठ-विशेष्यतानिरूपकत्वरूपाप्रामाण्यावगाहित्वाद्वा तन्मते निरुक्तप्रामाण्यस्य न प्राथमिकानुव्यवसायविषयत्व-हानिः । तथाच स्वाश्रयविषयकप्रत्यक्षजनकसामग्रीत्वव्यापकस्वग्राहकसामग्रीत्वकत्वं तादृशप्रत्यक्षत्वव्यापक-विषयतानिरूपकत्वं वा मिश्रमतसिद्धनिर्गळितस्वतस्त्वमिति हृदयम् । अस्मद्गुरुचरणास्तु यथा ज्ञानप्रत्यक्षेण प्रामाण्यं गृह्यते तथा ज्ञानानुमित्या इदं ज्ञानं प्रमेति वाक्यजन्यबोधेनापि प्रामाण्यं गृह्यत इति अनुमित्या-देः परित्यागे मानाभावात् व्याप्यकोटौ स्वाश्रयग्रहत्वेनैव निवेश उचितः नच जानामीत्यादिवाक्यजन्य-बोधस्य रजतविशेष्यकरजतत्वप्रकारकज्ञाननिष्ठतद्व्यक्तित्वावच्छिन्नविशेष्यकाप्रामाण्यप्रकारकइदंज्ञानमप्रमेति भ्रमस्य च स्वाश्रयग्रहत्वात् तत्र स्वविषयकत्वरूपव्यापकाभावात् स्वतस्त्वभङ्ग इति वाच्यम् । भट्टम-तोक्तरीत्या स्वाश्रयनिष्ठसविशेष्यकत्वादिविषयकज्ञानजनकस्वाश्रयविशेष्यकाप्रामाण्यादिप्रकारकभ्रमजन-कदोषासमवहितसामग्रीत्वव्यापकत्वस्य स्वग्राहकसामग्रीत्वे स्वाश्रयनिष्ठसविशेष्यकत्वादिविशेष्यकस्वाश्रय-विशेष्यकाप्रामाण्यादिप्रकारकभ्रमासमवहितग्रहत्वव्यापकत्वस्य स्वनिष्ठविषयताया वा निवेशनीयत्वात् न स्वतस्त्वभङ्ग इति व्याचक्रुः । ननु त्रिपुटीप्रत्यक्षवादिगुरुमते घटादिविषयकज्ञानस्यैव तादृशज्ञानविषयकत्वात् भट्टमते स्वाश्रयनिष्ठसविशेष्यकत्वादिविशेष्यकाप्रामाण्यग्रहासमवहितानुमितेर्विषयविषयकत्वाच्च तन्मतद्वये ज्ञानज्ञानस्य ज्ञानाविषयकतादृशानुमितेश्च विषयघटितप्रामाण्यावगाहित्वसंभवेऽपि मिश्रमते ज्ञानविषयकप्रत्य-क्षमात्रस्य न ज्ञानविषयपटादिविषयकत्वं घटं जानामीत्यनुव्यवसायस्य घटादिविषयकत्वेऽपि ज्ञानत्वमात्रेण ज्ञानविषयकं जानामीत्यनुव्यवसायस्य विषयविषयकत्वाभावादेवं च प्रामाण्ये तन्मतसिद्धज्ञानविषयकप्रत्यक्षत्व-व्यापकविषयतानिरूपकत्वरूपस्वतस्त्वं बाधितमित्याशङ्कां परिहरति ॥ **विषयनिरूप्यं हि ज्ञानमिति** ॥ हि यतः किंचिन्निष्ठविषयतानिरूपकमेवेत्यर्थः ॥ **ज्ञानमिति** ॥ ज्ञानसामान्यमित्यर्थः यतो ज्ञानत्वं विषयताव्याप्यं इति समुदितार्थः । निर्विषयत्वस्य ज्ञानत्वे प्रमाणाभावादिति भावः ॥ **अत इति** ॥ ज्ञानमात्रस्य सविषय-कत्वादित्यर्थः ॥ **ज्ञानावित्तिवेद्य इति** ॥ ज्ञाननिष्ठलौकिकविषयताशालिज्ञाननिरूपितविषयतावानित्यर्थः ॥ **विषय इति** ॥ लौकिकविषयताश्रयज्ञाननिरूपितविषयतावानित्यर्थः । तज्ज्ञाननिष्ठलौकिकविषयताशालि-प्रत्यक्षं तज्ज्ञानविषयविषयकमिति फलितोऽर्थः । तथाच ज्ञानमात्रस्य सविषयकत्वसिद्धौ घटादिज्ञा-ननिष्ठलौकिकविषयताशालिप्रत्यक्षं घटत्वादिविशिष्टविषयकं घटत्वप्रकारकघटादिविशेष्यकानिर्णयजन्यत्वा-द्घटवद्भूतलमित्यादिप्रत्यक्षवदित्यनुमानात् ज्ञानप्रत्यक्षमात्रस्य ज्ञानविषयविषयकत्वसिद्धिरिति भावः । नचाप्रयो-जकत्वं विशिष्टवैशिष्ट्यावगाहिप्रत्यक्षत्वेन विशेषणतावच्छेदकप्रकारकानिर्णयत्वेन कार्यकारणभावरूपानुकूलत-र्कसत्त्वात् तस्मात् घटादिज्ञानरूपव्यवसायमात्रस्य घटत्वादिप्रकारकानिर्णयात्मकतया कारणवत्त्वेन तदुत्तरं

## दिनकरीयम् .

टितप्रामाण्यं तस्य विषय इत्यतो ज्ञानज्ञानस्य विषयविषयकत्वे प्रमाणमाह ॥ **विषयनिरूप्यमिति** ॥ वि-षयाविषयकप्रत्यक्षाविषय इत्यर्थः ॥ **ज्ञानवित्तिवेद्यो विषय इति** ॥ विषयविषयकतानियतस्वविषयक-

**ति** ॥ **संशयेति** ॥ यदि ज्ञानस्य प्रामाण्यं स्वतोग्राह्यं स्यात् तदानभ्यासदशापन्नज्ञाने प्रामाण्यसंशयो न स्यात् तत्र हि यदि ज्ञानं ज्ञातं तदा त्वन्मते प्रामाण्यं ज्ञातमेवेति कथं

**प्रभा.**

जायमानव्यवसायनिष्ठलौकिकविषयताशालिप्रत्यक्षमात्रस्य न ज्ञानत्वमात्रेण ज्ञानाविषयकजानामीत्यनुव्यवसायरूपता किन्तु ज्ञानांशे घटत्वादिविशिष्टवैशिष्ट्यावगाहिघटमहंजानामीत्याद्यनुव्यवसायरूपतैवेति विषयघटितप्रमात्वेन तन्मतसिद्धस्वतस्त्वस्य नानुपपत्तिरिति। केचित्तु ननु ज्ञानज्ञानस्य विषयाविषयकत्वात् । कथं विषयघटितप्रामाण्यं तस्य विषय इत्यतो ज्ञानज्ञानस्य विषयविषयकत्वे प्रमाणमाह विषयनिरूप्यं हीति विषयाविषयकप्रत्यक्षाविषयक इत्यर्थः ज्ञानवित्तिवेद्यो विषय इति विषयविषयतानियतस्वविषयताकप्रत्यक्षज्ञानमित्यर्थः। अतो न साध्यहेत्वोः वैयधिकरण्यं तथाच ज्ञानविषयविषयतानियतस्वविषयताकप्रत्यक्षकं विषयाविषयकप्रत्यक्षाविषयत्वे सति प्रत्यक्षविषयत्वात् इत्यनुमानं ज्ञानप्रत्यक्षस्य विषयविषयकत्वे प्रमाणमिति भाव इत्याहुः तदसत् उक्तहेतोः कथञ्चिदपि विषयं निरूप्य शब्दप्रतिपाद्यत्वाभावात् निरुक्तसाध्यस्य ज्ञानवित्तिवेद्यशब्दप्रतिपाद्यत्वाभावाच्चोदक्षरत्वापत्तेः किञ्च जानामीति वाक्यजन्यशाब्दबोधेऽपि ज्ञानविषयतायास्सत्त्वात् तत्र ज्ञानविषयविषयत्वाभावेन विषयविषयितानियतस्वविषयत्वाप्रसिद्धया विशिष्टसाध्याप्रसिद्धेः स्वविषयिताकप्रत्यक्षकत्वे विषयविषयिताव्याप्यत्वसत्त्वेन विषयविषयितानियतस्वविषयिताशालिप्रत्यक्षत्वकत्वस्य साध्यत्वस्वीकारे दृष्टान्तपक्षसाधारणस्वत्वस्याभावेन एकैकस्वत्वघटितसाध्यस्यान्यत्वाभावात् हेतोर्व्यभिचारित्वापत्तेः। अपिच स्वविषयिताशालिप्रत्यक्षत्वे विषयविषयित्वव्याप्यत्वज्ञानमन्तरा विशिष्टसाध्यज्ञानासंभवेन उक्तहेतौ विशिष्टसाध्यनिरूपितव्याप्यत्वज्ञानस्य सुतरामसंभवात् प्रथमतस्तज्ज्ञानस्यावश्यकत्वे तादृशज्ञानविषयस्वविषयताशालिप्रत्यक्षत्वलिङ्गेनानुव्यवसाये विषयविषयित्वसाधनेनैव इष्टसिद्धेः विषयाविषयकप्रत्यक्षाविषयत्वघटितहेत्वन्तरे तादृशप्रत्यक्षत्वकत्वव्याप्यत्वज्ञानं सम्पाद्य तादृशहेत्वन्तरेण विषयविषयित्वाविधेयकविषयविषयित्वसिद्धिपर्यवसिततादृशप्रत्यक्षत्वकत्वसाधने प्रयोजनविरहात् किंच विषयाविषयकप्रत्यक्षाप्रसिद्धया तद्विषयत्वघटितहेतोः सुतरामप्रसिद्धत्वात् । ननु ज्ञानपदस्य घटादिज्ञानविशेषपरतया विषयपदस्य स्वविषयार्थकतया च घटादिज्ञानस्य स्वविषयविषयत्वव्याप्यस्वविषयताशालिप्रत्यक्षत्वकं घटादिज्ञानविषयाविषयकप्रत्यक्षाविषयत्वे सति प्रत्यक्षविषयत्वात् यद्यद्विषयाविषयकप्रत्यक्षाविषयत्वे सति प्रत्यक्षनिरूपितविषयतावद्भवति तत् स्वविषयविषयत्वव्याप्यस्वविषयताशालिप्रत्यक्षत्वकं भवति यथा घटादीच्छावत् इत्यनुमानपर्यवसानात् घटादिज्ञानविषयाविषयकपटादिप्रत्यक्षस्यैव प्रत्यक्षसिद्धत्वात् न तद्घटितहेतोरप्रसिद्धिरिति चेन्न। ज्ञानप्रत्यक्षस्य ज्ञानविषयविषयकत्वासिद्धेः प्राक् घटादिज्ञानस्य घटाद्यविषयकप्रत्यक्षाविषयत्वस्यासिद्धया तद्घटितहेतोस्सुतरामप्रसिद्धत्वेन तेन हेतुना निरुक्तसाध्यसाधनासंभवात् तस्मात् विषयनिरूप्यं हीत्यादिमुक्तावलीग्रन्थस्य नोक्तार्थसंभव इति दिक् ॥ **तन्मतमिति** ॥ प्राभाकराद्यभिमतनिरुक्तस्वतस्त्वमित्यर्थः संशयानुपपत्तित इति मूलेन प्रामाण्यस्य स्वतस्त्वपक्षे संशयानुपपत्तिरुक्ता तत्र हेतुप्रदर्शनाय तन्मूलार्थमाह ॥ **यदीति** ॥ **अनभ्यासदशापन्नेति** ॥ नैयायिकैः प्रमात्वेनानिर्णीतेत्यर्थः ॥ **ज्ञाने प्रामाण्यसंशयो न स्यादिति** ॥ मीमांसकानां तादृशज्ञानविशेष्यकप्रमात्वसंशयो न स्यादित्यर्थः ॥ **ज्ञातमेवेति** ॥ निर्णीतमेवेत्यर्थः तव मते तज्ज्ञानविषयकज्ञानस्य तज्ज्ञानप्रामाण्यावगाहित्वनियमादिति भावः । ननु प्राभाकरमते घटादिज्ञानस्यैव तज्ज्ञानविषयकत्वात् तज्ज्ञाननिष्ठप्रामाण्यावगाहित्वावश्यकतया संशयानुपपत्तिसत्त्वेऽपि भट्टादिमते प्राथमिकघटादिज्ञानस्य तज्ज्ञानाविषयकतया प्रमात्वविषयकत्वाभावात् प्राथमि-

**दिनकरीयम्.**

ताकप्रत्यक्षकं ज्ञानमित्यर्थः। अतो न साध्यहेत्वोर्वैयधिकरण्यम् । तथा च ज्ञानं विषयविषयकतानियतस्वविषयकताकप्रत्यक्षकं विषयाविषयकप्रत्यक्षाविषयत्वे सति प्रत्यक्षविषयकत्वादित्यनुमानं ज्ञानप्रत्यक्षस्य विषयविषयकत्वे प्रमाणमिति भावः। भट्टमते च प्रत्यक्षस्थानाभिषिक्ता ज्ञाततालिङ्गकानुमितिरेव बोध्येत्यन्यत्र विस्तरः ॥ **अनभ्यासदशापन्नेति** ॥ अनवधृतप्रामाण्यसजातीयेत्यर्थः ॥ **ज्ञातमेव** निश्चितमेव ॥ **गन्धव-**

**संशयः यदि तु ज्ञानं न ज्ञातं तर्हि धर्मिज्ञानाभावात् कथं संशयस्तस्मात् ज्ञाने प्रामाण्यम-**
**प्रमा.**

कताद्दशज्ञानोत्तरं तन्मते संशयो नानुपपन्न इत्यत आह ॥ **यदि त्विति** ॥ अवधारणार्थकतुशब्दः ज्ञानमित्युत्तरं योज्यः यदेत्यर्थः ॥ **ज्ञानं न ज्ञातमिति** ॥ ज्ञानमेव न निर्णीतमित्यर्थः ॥ **धर्मिज्ञानाभावादिति** ॥ धर्मितावच्छेदकप्रकारकज्ञानाभावादित्यर्थः ॥ **कथं संशय इति** ॥ तथाच निर्धर्मितावच्छेदककसंशयाप्रसिद्धया संशये धर्मितावच्छेदकप्रकारकनिर्णयहेतुतायाः आवश्यकत्वेन प्रकृते तदभावात् तदप्रामाण्यसंशयानुपपत्तिरिति भावः । इदमुपलक्षणं नष्टघटादौ लौकिकविषयतासंबन्धेन प्रत्यक्षवारणाय लौकिकविषयतासंबन्धेन प्रत्यक्षं प्रति तादात्म्यसंबन्धेन विषयत्वेन घटात्मकसंयोगादेः परकीयज्ञानादेश्च प्रत्यक्षवारणाय तत्पुरुषसमवेतवृत्तिलौकिकविषयतासंबन्धेन मानसं प्रति विषयस्य तादात्म्यसंबन्धेन तत्पुरुषमात्रसमवेतत्वेनात्मसमवेतवृत्तिलौकिकविषयतासंबन्धेन मानसं प्रति मनस्संयुक्तसमवायस्य सन्निकर्षविधया च हेतुताया आवश्यकतया घटादिप्रत्यक्षोत्पत्तेः पूर्वं कारणीभूतघटादिरूपविषयस्य तन्निष्ठनिरुक्तसन्निकर्षस्य चाभावात् घटादिप्रत्यक्षोत्पत्तिकाले घटादिज्ञाननिष्ठलौकिकविषयताशालिप्रत्यक्षासंभवेन तस्य ताद्दशज्ञाननिष्ठप्रामाण्यावगाहित्वाप्रसक्त्या गुरुमतसिद्धस्वतस्त्वस्य बाधितत्वात् तन्मतमयुक्तम् । ज्ञातो घट इति प्रतीतेः घटांशे ज्ञाननिरूपितविषयत्वावगाहित्वस्वीकारेणैवोपपत्तेः प्रमाणान्तराभावाच्च ज्ञाततया अप्रसिद्धत्वेन तल्लिङ्गकज्ञानानुमितेस्सुतरामप्रसिद्धत्वेन तत्र प्रामाण्यावगाहित्वासंभवात् ज्ञानस्यातीन्द्रियत्वे घटं जानामीत्याद्याकारकज्ञाननिष्ठलौकिकविषयताशालिप्रत्यक्षापलापापत्तेः आत्मसमवेतवृत्तिलौकिकविषयतासंबन्धेन मानसं प्रति तादात्म्यसंबन्धेन ज्ञानत्वेन प्रतिबध्यप्रतिबन्धकभावान्तरकल्पनापत्तेश्च ज्ञानस्य सेन्द्रियत्वावश्यकत्वाच्च भट्टमतमपि निर्युक्तिकमेव । घटत्वादिनिष्ठप्रकारतानिरूपितसमवायनिष्ठसांसर्गिकविषयतानिरूपितघटनिष्ठविशेष्यताकज्ञानत्वं घटज्ञानप्रमात्वं तच्च न प्राथमिकानुव्यवसायवेद्यं घटघटत्वसमवायएतात्रितयघटितत्वेनानुव्यवसाये घटघटत्वभासकव्यवसायात्मकोपनायकज्ञानसत्त्वेऽपि ताद्दशव्यवसायस्य समवायनिष्ठसांसर्गिकविषयताशालित्वेन तस्य समवायांशे उपनायकत्वानङ्गीकारात् अन्यथा सामानाधिकरण्यसंबन्धेन प्रमेयत्वविशिष्टो घट इति ज्ञानात् निखिलप्रमेयप्रकारकालौकिकप्रत्यक्षापत्तेः सामानाधिकरण्यघटकतया निखिलप्रमेयस्यापि संसर्गतया भानात् । तस्मात्तत्संसर्गकज्ञानस्य तदुपनीतभाने उपनायकत्वासंभवेन घट इत्यादिव्यवसायस्य समवायनिष्ठसांसर्गिकविषयताभिन्नविषयताशालित्वाभावेन च समवायभासकोपनायकज्ञानाभावात् प्राथमिकानुव्यवसायस्य समवायघटितप्रमात्वविषयकत्वासंभवात् मिश्रमतं हेयमित्यपि बोध्यम् । कण्टकोद्धारास्तु तद्वद्विशेष्यकत्वावच्छिन्नतत्प्रकारकत्वमेव तत्प्रमात्वं तद्वद्विशेष्यकत्वादेर्मनस्संयुक्तसमवेतविशेषणतासन्निकर्षवशात् प्राथमिकानुव्यवसायविषयत्वेऽपि ताद्दशविशेषणतायाः संसर्गत्वे मानाभावोऽवच्छिन्नत्वांशे मनस्सन्निकर्षाभावेन चावच्छिन्नघटितप्रमात्वस्य न प्राथमिकानुव्यवसाये विषयत्वं किन्तु प्राथमिकानुव्यवसायानन्तरं प्रवृत्तौ सत्यां विषयलाभे व्यवसायात्मकज्ञाने समर्थप्रवृत्तिजनकत्वलिङ्गेन प्रमात्वानुमित्युत्तरं अनुमित्यात्मकज्ञानलक्षणासन्निकर्षवशात् ताद्दशप्रमात्वस्य द्वितीयानुव्यवसायविषयत्वमेवात एव प्राथमिकानुव्यवसायोत्तरं इदं ज्ञानं प्रमा न वेति संशयोपपत्तिः तस्मान्मिश्रमते प्रमात्वस्य स्वतस्त्वमप्रामाणिकमेवेत्याहुः । वस्तुतस्तु चक्षुस्सन्निकर्षवशात् इदं जलमिति व्यवसायोत्तरं इदं जलं जानामि इदं जलत्वेन जानामीत्याद्याकारक एव प्रथमानुव्यवसायः नतु केवलं जलं जानामीत्याकारकः पूर्वमिदन्त्वोपस्थितिरूपोपनायकज्ञानसत्त्वात् प्रमात्वं तद्वन्निष्ठत्वविशेषितविशेष्यताघटितं भ्रमत्वं च तदभाववन्निष्ठत्वविशेषितविशेष्यताघटितमेव । एवंच निरुक्तप्रथमानुव्यवसायस्य समवायसंबन्धावच्छिन्नजलत्वादिनिष्ठप्रकारतानिरूपितवास्तवजलत्वाश्रयनिष्ठविशेष्यताकत्वविषयकत्वेऽपि इदं जलमिति व्यवसायस्य इदन्त्वेन रूपेण मरुमरीचिकारूपवस्तुविशेष्यकत्वे ताद्दशप्रथमानुव्यवसायस्य ताद्दशजलत्वनिष्ठप्रकारतानिरूपितवास्तवजलत्वाभाववन्निष्ठाविशेष्यताकत्वविषयकत्वेऽपि च प्रत्युत्तरकालीनविषयलाभालाभात्पूर्वं विशेषदर्शनाभावान्निरुक्तप्रकारतानिरूपिततत्तद्व्यक्तित्वावच्छिन्नविशेष्यतायां जलत्ववन्निष्ठत्वजलत्वाभाववन्निष्ठत्वान्यतरनिश्चयाभावेन ताद्दशान्य-

**नुमेयम् । तथा हि इदं ज्ञानं प्रमा संवादिप्रवृत्तिजनकत्वात् यन्नैवं तन्नैवं यथाप्रमा इदं पृथिवीत्वप्रकारकं ज्ञानं प्रमा गन्धवति पृथिवीत्वप्रकारकज्ञानत्वात् एवमिदं जलत्वप्रकारकं ज्ञानं प्रमा स्नेहवति जलत्वप्रकारकज्ञानत्वात् । नच हेतुज्ञानं कथं जातमिति वाच्यं पृथिवीत्वप्रकारकत्वस्य स्वतोग्राह्यत्वात् । तत्र गन्धग्रहेण गन्धवद्विशेष्यकत्वस्यापि सुग्रहत्वात् तत्प्र-**

**प्रभा.**

तरविशिष्टविशेष्यत्वघटितप्रमात्वभ्रमत्वान्यतरविषयकत्वासंभवात् प्रवृत्त्युत्तरन्तु जलादिविषयलाभे दूरत्वादिदोषाभावात् शीतस्पर्शादिरूपविशेषदर्शनाच्च निरुक्तप्रकारतानिरूपिततत्तद्व्यक्तित्वावच्छिन्नविशेष्यतायां जलत्ववद्वृत्तित्वानिश्चयसंभवेन तादृशवृत्तित्वविशिष्टविशेष्यत्वघटितप्रमात्वविषयकत्वस्य जलमेव जलत्वेन जानामीत्याकारकानुव्यवसायस्योत्पत्तिसंभवादीदृशानुव्यवसायस्यैव तादृशप्रमात्वविषयकत्वं प्रवृत्त्युत्तरं जलादिविषयालाभे तु दूरत्वादिदोषात् मरुमरीचिकात्वतेजस्त्वादिरूपजलत्वविरुद्धधर्मदर्शनाच्च प्रथमानुव्यवसायविषयजलत्वप्रकारतानिरूपिततद्व्यक्तित्वावच्छिन्नविशेष्यतायां जलत्वाभाववद्वृत्तित्वनिश्चयसंभवेन तादृशवृत्तित्वविशिष्टविशेष्यत्वघटितभ्रमत्वविषयकस्य जलत्वेन जलभिन्नमेव जानामीत्याकारकानुव्यवसायस्योत्पत्तिसंभवात् ईदृशद्वितीयानुव्यवसायस्यैव निरुक्तभ्रमत्वविषयकत्वं तस्मात्प्रथमानुव्यवसायस्य सर्वमतेऽपि निरुक्तप्रमात्वभ्रमत्वविषयकत्वं सर्वथैव न संभवतीत्येव तत्त्वमिति प्रतिभाति ॥ **तस्मादिति** ॥ संशयानुपपत्त्यादिदोषेण ज्ञानप्रमाणस्य मतत्रयसिद्धस्वतस्त्वासंभवादित्यर्थः ॥ **ज्ञाने प्रामाण्यमिति** ॥ ज्ञाननिष्ठोद्देश्यतानिरूपितानुमितिनिरूपितविधेयतावत्प्रमात्वमित्यर्थः अनुमानप्रकारमाह ॥ **तथा हीति** ॥ **इदं ज्ञानमिति** ॥ घटादिज्ञानमित्यर्थः । घटादिज्ञानस्य तद्व्यक्तित्वेन पक्षत्वलाभायेदम्पदघटितपक्षनिर्देशः ॥ **प्रमेति** ॥ घटत्वादिनिष्ठप्रकारतानिरूपितसमवायनिष्ठसांसर्गिकविषयतानिरूपितघटानिष्ठविशेष्यताकत्वमित्यर्थः ॥ **संवादीति** ॥ समर्थेत्यर्थः तद्वति तत्प्रकारकेति यावत् ॥ **जनकत्वादिति** ॥ प्रयोजकत्वादित्यर्थः । अत्र प्रमात्वेन निर्णीतघटादिज्ञानान्तरं दृष्टान्तो बोध्यः । ननु प्रामाण्यस्य स्वतोग्राह्यत्वानङ्गीकारे लौकिकसन्निकर्षवशात् गन्धवती पृथिवीत्याकारकगन्धवद्विशेष्यकपृथिवीत्वप्रकारकनिर्णयानन्तरकालीन-गन्धवतिपृथिवीत्वं जानामीत्यनुव्यसायोत्तरमपि निरुक्तव्यवसाये कथं न पृथिवीत्वप्रमात्वसंशयः कारणीभूतकोटिद्वयोपस्थितिसत्त्वात् तव मते पृथिवीत्वप्रमात्वस्यानुव्यवसायाविषयत्वात् पुरोवृत्तिपदार्थे इष्टसाधनताज्ञानाधीनप्रवृत्त्युत्पत्तेः पूर्वं प्रवृत्तौ विषयलाभाधीनसंवादित्वनिर्णयाभावात् पक्षे तादृशप्रवृत्तिजनकत्वहेतोरनिर्णीतत्वेनानुमानग्राह्यत्वाभावाच्चेति मिश्राणामाक्षेपं परिहरति ॥ **इदं पृथिवीत्वप्रकारकं ज्ञानमिति** ॥ तादृशज्ञानस्य तत्तद्व्यक्तित्वेन पक्षत्वलाभायेदम्पदघटितपक्षनिर्देशः एवमुत्तरत्रापि ॥ **गन्धवतीति** ॥ गन्धवन्निष्ठज्ञानीयविशेष्यतानिरूपितपृथिवीत्वनिष्ठप्रकारतानिरूपकत्वात् स्वाश्रयनिरूपितगन्धवन्निष्ठविशेष्यतानिरूपितपृथिवीत्वनिष्ठप्रकारतानिरूपकत्वसंबन्धेन ज्ञानत्ववत्त्वादिति वार्थः ॥ अतो न विशेषणविशेष्यभावे विनिगमनाविरहप्रयुक्तो गौरवावकाशः न वा हेतुतावच्छेदकसंबन्धाप्रसिद्धिः एवमेवाग्रिमहेतुवाक्यस्याप्यर्थो बोध्यः ॥ तेन तत्रापि न तादृशदोषः अत्र पृथिवीत्वप्रमात्वेन निर्णीतज्ञानान्तरं दृष्टान्तो बोध्यः अनयैव दिशा तद्धर्मव्याप्यधर्मावच्छिन्नविशेष्यताकतत्प्रकारकज्ञानमात्रे प्रामाण्यमनुमेयमित्याह ॥ **एवमिति** ॥ **जलत्वप्रकारकज्ञानत्वादिति** ॥ इत्याद्यनुमानात् प्रवृत्तिपूर्वमेव प्रमात्वसिद्धिरिति शेषः ॥ **हेतुज्ञानमिति** ॥ पक्षे हेतुनिर्णय इत्यर्थः ॥ **स्वतोग्राह्यत्वादिति** ॥ व्यवसायस्य पृथिवीत्वप्रकारकत्वेन व्यवसायस्यैव तन्निष्ठपृथिवीत्वप्रकारकत्वस्याप्यनुव्यवसायविषयत्वादित्यर्थः ॥ **तत्रेति** ॥ पुरोवृत्तावित्यर्थः ॥ **गन्धग्रहेणेति** ॥ गन्धप्रत्यक्षात्मकोपनायकज्ञानेनेत्यर्थः ॥ **गन्धवद्विशेष्यकत्वस्यापीति** ॥ अपिना पृथिवीत्वप्रकारकत्वसमुच्चयः ॥ **सुग्र-**

**दिनकरीयम्.**

**तीति** ॥ व्याप्यवति व्यापकप्रकारकत्वस्य व्यापकवति व्यापकप्रकारकत्वव्याप्यत्वादिति भावः । ननु कथं तर्हि प्रामाण्यस्यानुमेयता गन्धवति पृथिवीत्वप्रकारकत्वस्येव पृथिवीत्ववति पृथिवीत्वप्रकारकत्वादेरपि प्र-

**कारकत्वावच्छिन्नतद्विशेष्यकत्वं परं न गृह्यते संशयानुरोधात् । ननु सर्वेषां ज्ञानानां यथार्थत्वात्**

## प्रभा.

**इत्यादिति** ॥ अनुव्यवसायविषयत्वादित्यर्थः। तथाच पक्षे हेतुनिर्णयान्न प्रमात्वानुमित्यनुपपत्तिरिति भावः। ननु गन्धवति पृथिवीत्वप्रकारकत्वस्येव तुल्ययुक्त्या पृथिवीत्ववति पृथिवीत्वप्रकारकत्वस्याप्यनुव्यवसायविषयत्वानुमित्यसंभवात् प्रमात्वस्य कुतोऽनुमेयतेत्यत आह ॥ **तत्प्रकारकत्वावच्छिन्नेति** ॥ तत्प्रकारकत्वावच्छिन्नत्वविशिष्टतद्विशेष्यकत्वरूपप्रमात्वमित्यर्थः ॥ **परं न गृह्यत इति** ॥ प्रथमानुव्यवसायवेद्यं न भवेदित्यर्थः। तद्विशेष्यकत्वनिष्ठतत्प्रकारकत्वावच्छिन्नत्वेन सह मनःसन्निकर्षाभावादिति भावः। ननु लाघवाद्वस्तुतो अवच्छेद्यावच्छेदकभावापन्नतद्विशेष्यकत्वतत्प्रकारकत्वोभयमेव प्रमात्वमस्तु किं निरुक्तप्रमात्वेनेत्यत आह ॥ **संशयानुरोधादिति** ॥ प्रथमानुव्यवसायोत्तरं सर्वमतसिद्धसंशयानुपपत्तेरित्यर्थः तथाच संशयान्यथानुपपत्त्या निरुक्तावच्छिन्नत्वविशिष्टतद्विशेष्यकत्वमेव प्रमात्वं वाच्यम् तच्चोक्तरीत्या न प्रथमानुव्यवसायवेद्यमिति तद्ग्रहार्थमनुमानमावश्यकमिति भावः । इदमुपलक्षणं घटत्वादिनिष्ठप्रकारतानिरूपितसमवायनिष्ठसांसर्गिकविषयतानिरूपितघटादिनिष्ठविशेष्यताकत्वरूपप्रमात्वस्य समवायघटितत्वेन न प्राथमिकानुव्यवसायवेद्यत्वं अयं घट इति व्यवसायस्य समवायनिष्ठसांसर्गिकविषयताकत्वेन समवायभाने उपनायकत्वासंभवात् ज्ञानान्तराभावाच्चेत्यपि बोध्यम् । एवंच प्रमात्वस्य स्वतोग्राह्यत्वाभावेऽपि उक्तलिङ्गेन प्रमात्वानुमितिसंभवात् मिश्राणामाक्षेपो युक्त इति इदं पृथिवीत्वप्रकारकज्ञानमित्यारभ्य संशयानुरोधादित्यन्तग्रन्थतात्पर्यार्थः। ननु लाघवादङ्गीकृतस्य वस्तुतोऽवच्छेद्यावच्छेदकभावापन्नतद्विशेष्यकत्वतत्प्रकारकत्वोभयरूपप्रामाण्यस्य स्वतोग्राह्यत्वेऽपि कथं संशयानुपपत्तिः प्रथमानुव्यवसायस्य धर्मितावच्छेदकसामानाधिकरण्येन प्रामाण्यावगाहित्वस्वीकारेण तस्य धर्मितावच्छेदकावच्छेदेन प्रामाण्यावगाहि-तत्सामानाधिकरण्येन प्रामाण्याभावावगाहिसंशयविरोधित्वाभावादिति चेन्न। प्रथमानुव्यवसायसामान्यस्य सामानाधिकरण्येन प्रामाण्यावगाहित्वे तदुत्तरं जायमानसंशयसामान्यस्य सामानाधिकरण्येन च प्रामाण्याभावावगाहित्वे च प्रमाणाभावात् यादृशप्रथमानुव्यवसायोऽवच्छेदकावच्छेदेन वस्तुतो अवच्छेद्यावच्छेदकभावापन्नतद्विशेष्यकत्वतत्प्रकारकत्वावगाही तदुत्तरमनुभूयमानप्रमात्वसंशयानुपपत्त्या तादृशप्रथमानुव्यवसायस्य यादृशप्रथमानुव्यवसायोत्तरमवच्छेदकावच्छेदेन प्रामाण्याभावावगाहिसंशयः प्रामाणिकः तादृशानुव्यवसायस्य च प्रामाण्यानवगाहित्वोपपादनाय तत्प्रकारकत्वावच्छिन्नत्वविशिष्टतद्विशेष्यकत्वस्यैव प्रमात्वरूपत्वावश्यकतया तस्य प्रथमानुव्यवसायविषयत्वासंभवात् स्वतोग्राह्यत्वस्य सुदूरपराहतत्वात् नतूक्तयुक्त्या प्रामाण्यस्यावच्छिन्नत्वाविशेषिततद्विशेष्यकत्वरूपत्वस्वीकारे तद्ग्रहस्यानुपयुक्तत्वात् तदनुमानवैफल्यम् । तथाहि जलज्ञानानन्तरं तत्र प्रामाण्यसंशये सति तदधीनइदंजलं नवेति विषयसंशयोत्पत्त्या जलार्थिनः निष्कम्पप्रवृत्तिर्न संभवतीति तत्र विषयसंशायकप्रामाण्यसंशयनिरासद्वारा प्रामाण्यनिश्चयस्योपयोगो वाच्यः। तन्निश्चयस्यानुमितिरूपत्वे तत्पूर्वं तत्कारणीभूतनिरुक्तप्रमात्वव्याप्यं स्नेहवाद्विशेष्यकत्वाविशिष्टजलत्वप्रकारकत्वामिति व्याप्तिघटकव्यभिचारशङ्कानिरासार्थमनुपेक्षणीयस्य तद्विशेष्यक-

## दिनकरीयम्.

त्वक्षसम्भवादत आह ॥ **तत्प्रकारकत्वेति** ॥ **संशयानुरोधादिति** ॥ यद्यपि ज्ञाने प्रामाण्यनिश्चयो धर्मितावच्छेदकसामानाधिकरण्येन जायते सन्देहस्तु धर्मितावच्छेदकसामानाधिकरण्येन प्रामाण्याभावावगाही धर्मितावच्छेदकावच्छेदेन प्रामाण्यावगाहीति कथं संशयानुपपत्तिः । तथापि प्रवृत्त्युपयुक्तस्य धर्मितावच्छेदकावच्छेदेन प्रामाण्यग्रहस्य स्वतस्त्वे संशयानुपपत्तिर्दूषणमिति ध्येयम् । नच प्रामाण्यग्राहकसामग्रीसत्वात् कथमग्रिमसंशयानुरोधेन प्रामाण्याग्रह इति वाच्यं तत्राग्रिमसंशयानुरोधेन संशयजनकदोषस्य प्रामाण्यनिश्चयप्रतिबन्धकत्वकल्पनादित्याशयात् । ननु यदि प्रामाण्यमनुमेयं तदा प्रामाण्यग्रहवैयर्थ्यं तथा हि अयं पुरुष इति निश्चये प्रामाण्यसन्देहेनार्थसन्देहस्यायं पुरुषो न वेत्याकारकस्योत्पत्त्या पुरुषार्थिनः प्रवृत्तिर्न सम्भवति तत्र प्रामाण्यानिश्चये च न तत्संशयाधीनोऽर्थसन्देह इति प्रामाण्यग्रहस्य प्रवृत्तावुपयोगः प्रामाण्यग्रहस्यानुमित्यात्मकत्वे च प्रामाण्यानुमापककरादिमति पुरुषत्वप्रकारकत्वादिरूपहेतुग्रहे तद्घटकतया पु-

**प्रमालक्षणे तद्वद्विशेष्यकत्वविशेषणं व्यर्थम्। नच रङ्गे रजतार्थिनः प्रवृत्तिर्भ्रमजन्या न स्यात्तव मते भ्रमस्याभावादिति वाच्यम्। तत्र हि दोषाधीनस्य पुरोवर्तिनि स्वतन्त्रोपस्थितरज-**

**प्रभा.**

त्वविशिष्टतत्प्रकारकत्वस्य व्याप्यतया गृह्यमाणधर्मवद्विशेष्यकत्वविशिष्टव्यापकप्रकारकत्वव्याप्यत्वादिति नियमस्य प्रकृते प्राप्त्यर्थं स्नेहरूपगुणे जलत्वव्याप्यत्वनिश्चयस्यापेक्षणीयतया पुरोवृत्तिनि जलत्वव्याप्यत्वेन गृह्यमाणस्नेहवत्तानिर्णयेनैव इदं जलं न वेति जलत्वाभावकोटिकसंशयानुत्पत्तेः प्रामाण्यानुमानमफलमिति चेन्न स्वतस्त्वसिद्धिशङ्काविरहस्थले निरुक्तनियमप्रापकस्नेहादिविशेष्यकजलत्वव्याप्यत्वनिश्चयस्यानावश्यकतया तत्र विषयसंशायकप्रामाण्यसंशयनिरासायोक्तानुमितेरावश्यकत्वात्। इदमुपलक्षणं प्रामाण्यस्यानुमेयत्ववत् द्वितीयानुव्यवसायवेद्यत्वमपि संभवति तथाहि जलं जानामीति प्राथमिकानुव्यवसायोत्तरं प्रवृत्तौ सत्यां जललाभे सति जलमेव समवायेन जलत्वेन जानामीति द्वितीयानुव्यवसायः जलत्वसमवायज्ञानानामुपस्थितिवशाज्जायते तत्र तन्मतसिद्धप्रामाण्यमपि विषय इत्यपि बोध्यं तत्रोक्तलिङ्गेन प्राथमिकानुव्यवसायोत्तरकालीनप्रमात्वानुमित्युत्तरं जलत्वादिप्रकारकप्रमावानहमित्यनुव्यवसायः तादृशद्वितीयानुव्यवसायविषयत्वमेव तन्मतसिद्धप्रमात्वस्य वाच्यमित्यस्मद्गुरुचरणाः। प्राभाकरश्शङ्कते ॥ **नन्विति** ॥ **सर्वेषां ज्ञानानामिति** ॥ घटत्वादिधर्मप्रकारकज्ञानमात्रस्येत्यर्थः ॥ **यथार्थत्वादिति** ॥ घटत्वादिमन्निष्ठविशेष्यताकत्वादित्यर्थः। घटत्वादिमन्निष्ठविशेष्यताकत्वस्य घटत्वादिप्रकारकज्ञानत्वव्यापकत्वादिति समुदितवाक्यार्थः ॥ **प्रमालक्षण इति** ॥ घटत्वादिप्रमालक्षण इत्यर्थः घटकत्वं सप्तम्यर्थः अन्वयश्चास्य तद्वद्विशेष्यकत्वविशेषणे ॥ **तद्वद्विशेष्यकत्वविशेषणमिति** ॥ घटत्वादिमन्निष्ठविशेष्यताकत्वविशेषणमित्यर्थः ॥ **व्यर्थमिति** ॥ अतिव्याप्त्यवारकमित्यर्थः अलक्ष्यस्यैवालीकत्वादिति भावः यथाश्रुतन्तु न सम्यक् अन्यथाख्यात्यङ्गीकर्तृमतेऽपि भ्रमस्यापि किञ्चिदंशे प्रमात्वेन ज्ञानत्वरूपप्रमात्वस्यैव प्रमासामान्यलक्षणतया तस्य तद्वद्विशेष्यकत्वाघटितत्वेन तादृशविशेषणवैयर्थ्यशङ्काया असाङ्गत्यापत्तेः ॥ **रङ्गे रजतार्थिन इति** ॥ रजतार्थिनः रङ्गे भ्रमजन्या प्रवृत्तिर्न स्यादिति योजना ॥ **भ्रमजन्येति** ॥ इदन्त्वेन रङ्गविशेष्यकरजतत्वप्रकारकज्ञानजन्येत्यर्थः ॥ **रङ्गे प्रवृत्तिरिति** ॥ रङ्गविशेष्यकरजतत्वप्रकारिका प्रवृत्तिरित्यर्थः। तैर्ज्ञानमात्रस्य तदभाववति तत्प्रकारकत्वानभ्युपगमेऽपि इच्छादेस्तदभ्युपगमादिति भावः ॥ **न स्यादिति** ॥ नोत्पद्येतेत्यर्थः तथाच विशेष्यतासंबन्धेन तद्धर्मप्रकारकप्रवृत्तौ विशेष्यतासंबन्धेन तद्धर्मप्रकारकेच्छायास्तेन संबन्धेन तद्धर्मप्रकारकेच्छायां तेन संबन्धेन तद्धर्मप्रकारकज्ञानस्य च हेतुत्वमिति रीत्या ज्ञानेच्छादीनां समानप्रकारकत्वेन विशेष्यतासंबन्धघटितसामानाधिकरण्यप्रत्यासत्त्या कार्यकारणभावस्य सकलतान्त्रिकमतसिद्धत्वात्। तव मते रङ्गविशेष्यकरजतत्वप्रकारकज्ञानाप्रसिद्ध्या कारणाभावेन रजतार्थिनः रङ्गे प्रवृत्त्यनुपपत्तिरिति भावः। विसंवादिप्रवृत्तौ विशिष्टभ्रमहेतुतावादिमते तद्धेतुतया पूर्वं भेदाग्रहसत्त्वस्यावश्यकतया तस्यैव तादृशप्रवृत्तौ हेतुत्वमस्त्वित्याशयेन विसंवादिप्रवृत्त्यादौ कारणभेदं प्रकल्प्य समाधत्ते ॥ **तत्रेति** ॥ इदन्त्वेन रङ्गगोचररजतार्थिरजतत्वप्रकारकप्रवृत्तावित्यर्थः। ननु रङ्गे रजतभेदसत्त्वेन सामग्रीबलात् भेदप्रकारकप्रत्यक्षोत्पत्त्या भेदाग्रहासत्त्वात् कथं रङ्गे रजतार्थिनः प्रवृत्तिरित्यत आह ॥ **दोषाधीनस्येति** ॥ निरुक्तभेदग्रहप्रतिबन्धकदोषप्रयोज्यस्येत्यर्थः। तथाच तत्र रजतभेदप्रत्यक्षसामग्रीसत्त्वेऽपि दोषात्मकप्रतिबन्धकसत्त्वेन तदभावरूपकारणाभावात् तत्प्रत्यक्षानुत्पत्त्या

**दिनकरीयम्.**

रोवर्तिनि पुरुषत्वव्याप्यकरादिग्रहस्यावश्यकतया तेनैवायं पुरुषो न वेति सन्देहप्रतिबन्धसम्भवादलं प्रामाण्यानुमानेनेति चेन्न करादौ पुरुषत्वव्याप्यत्वग्रहं विनापि करादिमति पुरुषत्वप्रकारकत्वहेतोः पुरुषत्वघटितप्रामाण्यव्याप्यत्वग्रहसम्भवेन प्रामाण्यानुमानसम्भवात्। एवं न्यायमतेऽनुमितेरिव द्वितीयानुव्यवसायस्यापि प्रामाण्यग्राहकत्वमित्यन्यत्र विस्तरः। गुरुः शङ्कते ॥ **नन्विति** ॥ **व्यर्थमिति** ॥ व्यावर्त्याया अन्यथाख्यातेरभावादिति भावः ॥ **भ्रमजन्येति** ॥ न्यायनये भ्रमजन्या प्रवृत्तिस्तव मते न स्यादित्यर्थः ॥ **भ्रमस्यान्यथाख्यातेः** ॥ **तत्र** रङ्गगोचरविसंवादिरजतार्थिप्रवृत्तौ। रजते इदं रजतमिति ज्ञानकाले रजतभेदाग्रहसत्त्वा

**तभेदाग्रहस्य हेतुत्वात्। सत्यरजतस्थले तु विशिष्टज्ञानस्य सत्त्वात्तदेव कारणं अस्तु वा तत्रापि रजतभेदाग्रहः स एव कारणमिति। नचान्यथाख्यातिः सम्भवति रजतप्रत्यक्षका-**

## प्रभा।

भेदाग्रहसत्त्वेन तत्र रजतार्थिप्रवृत्तौ बाधकाभाव इति भावः॥ **पुरोवृत्तिनीति**॥ इदन्त्वेन ज्ञायमानलिङ्गात्मकपूर्ववृत्तिनीत्यर्थः॥ इदं रजतमिति विशिष्टज्ञानात्मकोपस्थितिविषयरजतभेदाग्रहस्य रजतात्मकपुरोवृत्तिनि सत्त्वादङ्ग इव रजतेऽपि विसंवादिप्रवृत्तिवारणाय स्वतन्त्रोपस्थितेति पुरोवृत्तिनिष्ठविषयत्वानिरूपितवर्तमानग्रहविषयताश्रय इत्यर्थः। तथाच सत्यरजतस्थले रजतस्य पुरोवृत्तिनिष्ठविषयतानिरूपितज्ञानीयाविषयताश्रयतया निरुक्तविषयताश्रयत्वाभावेन तादृशोपस्थितरजतभेदाग्रहस्य सुतरामसत्त्वेन कारणाभावात् रजते न विसंवादिप्रवृत्त्यापत्तिरिति भावः। अत्र पुरोवृत्तिनीत्यत्र सप्तम्याः भेदग्रहाभावान्वयिवृत्तित्वार्थकतया स्वतन्त्रपदस्य पुरोवृत्तिनिष्ठविषयत्वानिरूपितविषयताशाल्यर्थकतया उपस्थितपदस्य पुरोवृत्त्युपस्थितिरजतोपस्थित्युभयपरतया तदुत्तरश्रूयमाणक्तप्रत्ययस्य भेदग्रहाभावान्वयितत्कालावच्छिन्नैकात्मवृत्तित्वरूपवैशिष्ट्यलाक्षणिकतया रजतभेदाग्रहशब्दस्य रजतभेदप्रकारकज्ञानत्वावच्छिन्नविशेष्यतासंबन्धावच्छिन्नप्रतियोगिताकाभावार्थकतया च पुरोवृत्तिविशेष्यकरजतभेदप्रकारकज्ञानप्रतिबन्धकदोषप्रयोज्यः पुरोवृत्तिनिष्ठैककालावच्छिन्नैकात्मवृत्तित्वसंबन्धेन पुरोवृत्तिनिष्ठविषयत्वानिरूपितविषयताशालिपुरोवृत्त्युपस्थितिरजतोपस्थित्युभयविशिष्टश्च यः रजतभेदप्रकारकज्ञानत्वावच्छिन्नविशेष्यतासंबन्धावच्छिन्नप्रतियोगिताकाभावः सः रजतार्थिविसंवादिप्रवृत्तौ कारणमित्यर्थो लभ्यते तत्र विषयनिष्ठप्रत्यासत्त्या कार्यकारणभावबोधनाय पुरोवृत्तिनीत्युक्तम्। रजतभेदविशिष्टपुरोवृत्तौ रजतभेदग्रहाभावस्य सत्त्वप्रतिपादनाय दोषाधीनस्येत्युक्तं नतु पुरोव्यक्तिवृत्तित्वदोषाधीनत्वयोरपि कारणतावच्छेदकप्रवेशः गौरवात्प्रयोजनाभावाच्च एवंच विशेष्यतासंबन्धेन रजतभिन्नविशेष्यकरजतत्वप्रकारकप्रवृत्तिं प्रति रजतावृत्तिविशेष्यतासंबन्धेन रजतत्वप्रकारकप्रवृत्तिं प्रति वा एककालावच्छिन्नैकात्मवृत्तित्वसंबन्धेन पुरोवृत्तिनिष्ठविषयत्वानिरूपितविषयताशालिपुरोवृत्त्युपस्थितिरजतोपस्थित्युभयविशिष्टरजतभेदप्रकारकज्ञानत्वावच्छिन्नविशेष्यतासंबन्धावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नस्य दैशिकविशेषणतासंबन्धेन हेतुत्वमिति फलितमतो न कोऽपि दोषः उक्तार्थ एव विश्वनाथपञ्चाननस्य निर्भर इति प्रतिभाति॥ **सत्यरजतस्थले त्विति**॥ रजतगोचररजतार्थिप्रवृत्तौ त्वित्यर्थः तुशब्दः कार्यकारणभावान्तरद्योतनाय॥ **विशिष्टज्ञानसत्त्वादिति**॥ पुरोवृत्तिविशेष्यकतादात्म्यसंबन्धेन रजतप्रकारकज्ञानस्य समवायेन रजतत्वप्रकारकज्ञानस्य वा प्रसिद्धत्वादित्यर्थः॥ **तदेवेति**॥ तादृशविशिष्टज्ञानमेवेत्यर्थः एवकारेण भेदाग्रहहेतुत्वव्यवच्छेदः तथाच विशेष्यतासंबन्धेन रजतविशेष्यकरजतत्वप्रकारकप्रवृत्तिं प्रति रजतनिष्ठविशेष्यतासंबन्धेन रजतत्वप्रकारकप्रवृत्तिं प्रति वा विशेष्यतासंबन्धेन लघुभूतरजतत्वप्रकारकज्ञानत्वेन हेतुत्वस्वीकारान्न काप्यनुपपत्तिरिति भावः। नन्वेवमपि विसंवादिप्रवृत्त्यादिभेदेन कार्यकारणभावद्वयकल्पनाप्रयुक्तगौरवं तव दुर्वारमित्याशङ्कां उभयसाधारणैककार्यकारणभावप्रदर्शनेन परिहरति॥ **अस्तु वेति**॥ वाशब्दः कल्पान्तरद्योतनाय तत्रापि रजतगोचररजतार्थिप्रवृत्तावपीत्यर्थः अपिना

## दिनकरीयम्।

द्विसंवादिप्रवृत्त्यापत्तिवारणाय दोषाधीनस्येत्युक्तम्। न्यायनये दोषाधीनो यो रजतभ्रमस्तत्स्थानाभिषिक्तरजतभेदाग्रहस्यैव तन्मते दोषाधीनतया रजते रजतभेदाग्रहस्य दोषानधीनत्वादिति भावः। यत्र रङ्गगोचरमेतद्रजतवद्भूतलमिति ज्ञानं तत्र विसंवादितादृशप्रवृत्तिवारणाय स्वतन्त्रोपस्थितेति रजतविशेषणं। मुख्यविशेष्यतयोपस्थितत्वं तदर्थः। वस्तुतो रङ्गगोचरादेतद्रजतवद्भूतलमिति ज्ञानादपि प्रवृत्तिरिष्टैवेति स्वतन्त्रोपस्थितत्वं न देयमिति ध्येयम्॥ **हेतुत्वादिति**॥ न्यायनयेऽपीदं रजतमिति भ्रमे हेतुतया रजतभेदाग्रहस्य तत्रावश्यकतया तस्यैव हेतुत्वं युक्तं तद्धेतोरिति न्यायादिति भावः। कार्यकारणभावद्वयकल्पनापेक्षया लाघवादाह॥ **अस्तु वेति**॥ **तत्रापि** सत्यरजतगोचरप्रवृत्तावपि। अपिना रङ्गगोचरप्रवृत्तिपरिग्रहः॥ **रजतभेदाग्रहः** रजतभेदासंसर्गग्रहाभावः। यथाश्रुते रजते नेदं रजतमिति ग्रहेऽपि प्रवृत्त्यापत्तेः प्राभाकरम-

## प्रभा.

रङ्गगोचररजतार्थिप्रवृत्तिरुपमुच्यते ॥ भेदाग्रह एवेति ॥ निरुक्तसंबन्धेन धर्मधर्म्युपस्थितिद्वयविशिष्टभेदा-
ग्रह एवेत्यर्थः एवकारेण विशिष्टज्ञानहेतुत्वव्यवच्छेदः । तथाच विशेष्यतासंबन्धेन रजतत्वप्रकारकप्रवृत्तिसा-
मान्यं प्रत्युपस्थितौ पुरोवृत्तिनिष्ठविषयत्वानिरूपितविषयताशालित्वरूपस्वातन्त्र्यविशेषणमपहाय एककाला-
वच्छिन्नैकात्मत्ववृत्तिसंबन्धेन इदन्त्वावच्छिन्नोपस्थितिरजतोपस्थितिद्वयविशिष्टरजतभेदप्रकारकज्ञानत्वाव-
च्छिन्नविशेष्यतासंबन्धावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नस्य वा दैशिकविशेषणतया हेतुत्वस्वीकारात्
नास्माकं कार्यकारणभावद्वयकल्पनाप्रयुक्तगौरवप्रसक्तिरिति भावः । ननु प्रवृत्तिसामान्ये निरुक्तभेदाग्रहस्य
हेतुत्वे नैयायिकमतासिद्धरजतविशेष्यकरजतभेदप्रकारकनेदंरजतमितिभ्रमस्थानाभिषिक्तइदन्त्वावच्छिन्नवि-
षयकोपस्थितिरजतभेदशब्दोपस्थितिद्वयकालेऽपि तत्र प्रवृत्त्यापत्तिः अन्यथाख्यात्यनङ्गीकारेण रजते निरुक्त-
भेदाग्रहसत्त्वादिति चेन्न रजतभेदाग्रह इति वाक्यघटकरजतभेदग्रहशब्देन रजतभेदस्य ग्रहो यस्मादिति व्युत्प-
त्त्या रजताभेदग्रहाभावलाभात् । तथाच विशेष्यतासंबन्धावच्छिन्नरजताभेदग्रहत्वावच्छिन्नप्रतियोगिताका-
भावस्य पूर्वोक्तसंबन्धेन रजतभेदोपस्थितिविशिष्टस्य दैशिकविशेषणतासंबन्धेन प्रतिबन्धकत्वं दैशिकविशेष-
णतासंबन्धावच्छिन्नतादृशाभावत्वावच्छिन्नप्रतियोगिताकाभावस्य पूर्वोक्तसंबन्धेन धर्मधर्म्युपस्थितिद्वयविशि-
ष्टस्य दैशिकविशेषणतासंबन्धेन प्रवृत्तिसामान्यं प्रति हेतुत्वमिति लब्धम् । एवंच नेदं रजतमिति तादृशो-
पस्थितिद्वयकाले रजतस्वरूपपुरोव्यक्तौ रजताभेदग्रहनिष्ठनिरुक्तसंबन्धावच्छिन्नप्रतियोगिताकाभावरूपप्रतिब-
न्धकस्य रजतभेदोपस्थितिविशिष्टस्यैव सत्त्वेन तदभावरूपकारणाभावान्न प्रवृत्त्यापत्तिः इदन्त्वेन रङ्गविषयकेदं-
रजतमिति तादृशोपस्थितिद्वयकाले रङ्गे प्रवृत्त्युपपत्तये प्रतिबन्धकीभूतनिरुक्ताभावे रजतभेदोपस्थितिवैशिष्ट्य-
निवेशः । नचैवमपि पटो न रजतमित्युपस्थितिइदन्त्वेनरङ्गगोचरइदंरजतमित्युपस्थितिद्वय-एतत्त्रितयकाले रङ्गे
रजतार्थप्रवृत्तिर्न स्यात् निरुक्तोपस्थितिविशिष्टप्रतिबन्धकीभूतनिरुक्ताभावसत्त्वादिति वाच्यम् । रङ्गविशेष्यक-
रजतभेदग्रहप्रतिबन्धकदोषस्योत्तेजकत्वस्वीकारात् प्रकृते रङ्गे रजतभेदसत्त्वेऽपि चक्षुस्सन्निकर्षसत्त्वेऽपि च रजत-
भेदप्रत्यक्षानुत्पत्त्या तत्र तत्प्रतिबन्धकदोषसत्त्वस्यावश्यकत्वेन तादृशोत्तेजकाभावविशिष्टप्रतिबन्धकासत्त्वान्न
तत्र तादृशप्रवृत्त्यनुपपत्तिः। एवंच निरुक्तप्रतिबन्धकरजतभेदोपस्थितिवैशिष्ट्यं न निवेशनीयं रजतभेदोपस्थिति-
शून्यकालीनरङ्गविषयकेदंरजतमितिभ्रमस्थानाभिषिक्तज्ञानद्वयकाले निरुक्तप्रतिबन्धकसत्त्वेऽपि तस्य तादृशभे-
दग्रहप्रतिबन्धकदोषरूपोत्तेजकविशिष्टत्वेन उत्तेजकाभावविशिष्टप्रतिबन्धकासत्त्वात् । इत्थंच यदा रङ्गे नेदं रजत-
मिति ज्ञानाभावः इदन्त्वेन रङ्गोपस्थित्यभावः रजतोपस्थित्यभावो वा तदा रङ्गे निरुक्तप्रतिबन्धकासत्त्वात् प्रवृत्ति-
वारणाय कारणीभूतनिरुक्ताभावे धर्म्युपस्थितिधर्मोपस्थितिद्वयवैशिष्ट्यमपि निवेशनीयम् । केवलेदमित्युपस्थिति-
काले केवलरजतमित्युपस्थितिकाले वात्र प्रवृत्तेरननुभवादिति दिक् । केचित्तु नच रङ्गे रजतभ्रमजनकदोष एव
उत्तेजकोऽस्तु किं रजतभेदग्रहप्रतिबन्धकदोषस्य उत्तेजकत्वस्वीकारेण एवंच रजतभेदोपस्थितिवैशिष्ट्यमपि
प्रतिबन्धके विशेषणन्न देयमेव रजतभेदानुपस्थितिकाले रङ्गे इदं रजतमिति ज्ञानादप्रवृत्तिप्रसङ्गाभावात् तत्र रज-

## दिनकरीयम्.

ते तत्र रजते भेदग्रहाभावस्य सत्त्वादन्यथान्यथाख्यात्यापत्तेरिति । यद्यपि पुरोवर्तिविशेष्यकस्य रजतभेदा-
संसर्गग्रहस्य समवायेनाभावो विशेषणतयात्मनिष्ठः प्रतिबन्धकस्तदभावः कारणमिति फलितम् । तथाच र-
ङ्गे इदं न रजतमिति ग्रहेऽपि प्रवृत्त्यापत्तिः रङ्गविशेष्यकरजतभेदासंसर्गग्रहस्यान्यथाख्यात्यनङ्गीकर्तृमतेऽप्र-
सिद्धत्वेन तदभावस्य प्रतिबन्धकत्वासम्भवात् तथापि विषयतासम्बन्धेन प्रवृत्तिं प्रति रजतभेदासंसर्गग्रहस्य
विशेष्यतासम्बन्धावच्छिन्नप्रतियोगिताको योऽभावः स विशेषणतासम्बन्धेन प्रतिबन्धक इति विषयनिष्ठत-
या प्रतिबध्यप्रतिबन्धकभावकल्पनान्नोक्तदोषः । एवं च तत्पुरुषीयत्वं प्रतिबध्यप्रतिबन्धकत्वयोरवच्छेदक-
कोटौ निवेशनीयमतो न पुरुषभेदमादाय दोषः । नचैवं रङ्गे इदं रजतमिति भ्रमानन्तरं तत्र प्रवृत्तिर्न स्यात्
रजतभेदासंसर्गग्रहस्यान्यथाख्यात्यापत्त्या तत्रानङ्गीकारेण तदभावरूपस्य प्रतिबन्धकस्य सत्त्वादिति वा-
च्यं रजतभेदोपस्थितिविशिष्टस्यैव रजतभेदासंसर्गग्रहाभावरूपस्य प्रतिबन्धकत्वोपगमात् । नचैवमपि रङ्गे इदं

**रणस्य रजतेन्द्रियसन्निकर्षस्याभावात् रङ्गे रजतबुद्धेरनुपपत्तिरिति चेन्न सत्यरजतस्थले प्रवृत्तिं प्रति विशिष्टज्ञानस्य हेतुतायाः क्लृप्तत्वात् अन्यत्रापि तत्कल्पनात्। न च संवादिप्रवृत्तौ**

**प्रभा.**

तभेदासंसर्गाग्रहस्य प्रतिबन्धकस्य रजतभ्रमजनकदोषरूपोत्तेजकविशिष्टत्वादिति वाच्यं रङ्गे इदं रजतमिति भ्रमस्य न्यायमतसिद्धस्य तन्मते अभावेन तत्र तादृशदोषस्यानङ्गीकारादित्याक्षेपं परिहारं चाहुः । तदुभयमप्यसत् रङ्गे रजतभेदरूपाविषयसत्त्वे तत्प्रत्यक्षसामग्रीसत्त्वेऽपि च यादृशदोषवशात् तादृशप्रत्यक्षानुत्पत्तिः सामग्रीसत्त्वे तादृशदोषस्यैव रङ्गे रजतभ्रमजनकत्वसंभवेन तयोर्भेदे मानाभावात् । अन्यथा शङ्खो न पीत इति ज्ञानप्रतिबन्धकदोषशङ्खःपीतइतिभ्रमजनकदोषयोरपि भेदापत्तेः । नचेष्टापत्तिः अप्रामाणिकानन्तदोषकल्पनापत्तेः यच्चोक्तं भ्रमजनकदोषस्योत्तेजकत्वपक्षे प्रतिबन्धके रजतभेदोपस्थितिवैशिष्ट्यानिवेशप्रयुक्तलाघवमिति तदपि न सम्यक् रजतभेदग्रहप्रतिबन्धकदोषस्य उत्तेजकत्वपक्षेऽपि प्रयोजनविरहेण तत्र तादृशोपस्थितिवैशिष्ट्यानिवेशात् । तस्मादाक्षेपकरणमसङ्गतम् । यच्च इदं रजतमिति भ्रमस्य न्यायमतसिद्धस्य तन्मते अभावेन तत्र तादृशदोषस्यानङ्गीकारादिति परिहारप्रदर्शनं तदप्यसङ्गतम् । प्राभाकरमतेऽतिरिक्तभ्रमाभावेऽपि भ्रमस्थानाभिषिक्तज्ञानद्वयस्य भ्रमशब्दवाच्यस्य प्रसिद्धतया यादृशदोषणैव नैयायिकमते भ्रमोत्पत्तिस्तादृशदोषैणैवान्वयव्यतिरेकाभ्यां परैः भ्रमस्थानाभिषिक्तज्ञानद्वयस्वीकारेण तन्मते भ्रमशब्दवाच्यज्ञानद्वयजनकदोषस्य प्रसिद्धत्वात्परिहारकरणमप्यसङ्गतामिति । ननु प्रवृत्तिसामान्ये निरुक्तभेदाग्रहत्वेन हेतुत्वापेक्षया लाघवात् इष्टतावच्छेदकप्रकारकज्ञानत्वेन हेतुत्वमित्याशङ्कां परिहरति ॥ **नचेति** ॥ नहीत्यर्थः । अन्यथाख्यातिरित्यर्थः । नैयायिकाभिमततदभाववति तत्प्रकारकज्ञानामित्यर्थः ॥ **संभवतीति** ॥ प्रामाणिकमित्यर्थः । तत्र हेतुमाह ॥ **रजतप्रत्यक्षेति** ॥ रजतत्वप्रकारकप्रत्यक्षेत्यर्थः ॥ **रजतसन्निकर्षस्येति** ॥ रजतघटितचक्षुस्संयुक्तसमवायस्येत्यर्थः ॥ **अभावादिति** ॥ रजतस्य चक्षुस्संयुक्तत्वाभावेन रजतत्वेऽसत्त्वादित्यर्थः । तथाच रजतस्य चक्षुस्संयुक्तत्वाभावेन रङ्गस्य चक्षुस्संयुक्तत्वेऽपि रजतत्वे तत्समवायाभावेन च लौकिकसन्निकर्षाभावात् गौरवेण ज्ञानलक्षणायाः प्रत्यासत्तित्वाकल्पनाच्च रङ्गे रजतत्वभासकसामग्र्यभावेन रङ्गविशेष्यकरजतत्वप्रकारकप्रत्यक्षस्य कदाप्यनुत्पत्त्या व्यभिचारात्प्रवृत्तिसामान्ये विशिष्टज्ञानत्वेन हेतुत्वं न संभवतीति भावः । यद्यपि रङ्गं रजततया जानामीत्यनुव्यवसाय एवान्यथाख्यातौ प्रमाणमिति वक्तुं शक्यते तस्य रङ्गविशेष्यकरजतत्वप्रकारकज्ञानविषयकत्वात् तथापि तादृशानुव्यवसायस्य परैः रजतत्वप्रकारकत्ववद्भेदाग्रहकालीनतादृशप्रकारकत्वोपस्थितिविशिष्टरङ्गविषयकज्ञानोपस्थितिरूपत्वस्यैव स्वीकरणीयतया असाधकत्वात् । तदुपेक्ष्य अनुमानेनान्यथाख्यातिं साधयितुमादौ भूमिकामारचयति ॥ **सत्यरजतस्थले प्रवृत्तिं प्रतीति** ॥ रजतत्वप्रकारकरजतविशेष्यकप्रवृत्तिं प्रतीति रजते विशेष्यतासंबन्धेन रजतत्वप्रकारकप्रवृत्तिं प्रतीति वार्थः ॥ **विशिष्टज्ञानस्येति** ॥ इदन्त्वेन रजतविशेष्यकरजतत्वप्रकारकज्ञानस्येति रजतनिष्ठाविशेष्यतासंबन्धेन रजतत्वप्रकारकज्ञानस्येति वार्थः ॥ **हेतुताया इति** ॥ लघुधर्मावच्छिन्ननियतपूर्ववृत्तिताया इत्यर्थः । इच्छाया एव कारणत्वेन यथाश्रुतासङ्गतेः । एवमग्रेऽपि ॥ **क्लृप्तत्वादिति** ॥ अन्वयव्यतिरेकाभ्यामित्यादिः । उभयमतेऽपि प्रत्यक्षप्रमाणसिद्धत्वादित्यर्थः ॥ **अन्यत्रापीति** ॥ रङ्गविशेष्यकरजतत्वप्रकारकप्रवृत्तिं प्रत्यपी-

**दिनकरीयम् .**

रजतं घटो न रजतमिति ज्ञानानन्तरमप्रवृत्त्यापत्तिरिति वाच्यं रजतभेदग्रहप्रतिबन्धकदोषस्योत्तेजकत्वकल्पनात् तत्र रङ्गे रजतभेदग्रहानुत्पत्त्या तत्प्रतिबन्धकदोषस्य स्वीकरणीयत्वात् । नच रङ्गे रजतभ्रमजनकदोष एवोत्तेजकोऽस्तु किं रजतभेदग्रहप्रतिबन्धकदोषस्योत्तेजकत्वस्वीकारेण एवं च रजतभेदोपस्थितिवैशिष्ट्यमपि प्रतिबन्धके विशेषणं न देयं रजतभेदानुपस्थितिकाले रङ्गे इदं रजतमिति ज्ञानादप्रवृत्तिप्रसङ्गाभावात् तत्र रजतभेदासंसर्गग्रहस्य प्रतिबन्धकस्य रङ्गे रजतभ्रमजनकदोषरूपोत्तेजकविशिष्टत्वादिति वाच्यं रङ्गे इदं रजतमिति भ्रमस्य न्यायमतसिद्धस्य तन्मतेऽभावेन तत्र तादृशदोषस्यानङ्गीकारात् । सम्भवतीत्यनन्तरं येन विसंवादिप्रवृत्तौ तद्धेतुत्वं स्यादिति पूरणीयम् ॥ **सन्निकर्षस्याभावादिति** ॥ ज्ञानलक्षणायाः प्रत्यासत्य-

**तत्कारणं विसंवादिप्रवृत्तौ च भेदाग्रहः कारणमिति वाच्यं लाघवेन प्रवृत्तिमात्रे तस्य हेतुत्वकल्पनात्। इत्थंच रङ्गे रजतत्वविशिष्टबुद्ध्यनुरोधेन ज्ञानलक्षणाप्रत्यासत्तिकल्पनेऽपि न**

## प्रभा.

ति रङ्गनिष्ठविशेष्यतासंबन्धेन रजतत्वप्रकारकप्रवृत्तिं प्रत्यपीति वार्थः । संवादिप्रवृत्तिदृष्टान्तेनेति इत्यादिः । **तत्कल्पनादिति** ॥ रङ्गविशेष्यकरजतत्वप्रकारकज्ञानहेतुत्वस्य रङ्गनिष्ठविशेष्यतासंबन्धेन रजतत्वप्रकारकज्ञानहेतुत्वस्य वा अनुमानादित्यर्थः । तथाच पुरोवृत्तिविशेष्यकेष्टतावच्छेदकप्रकारकज्ञानजन्या पुरोवृत्तिनिष्ठविशेष्यतासंबन्धेन इष्टतावच्छेदकप्रकारकज्ञानजन्या वा प्रवृत्तित्वात् संवादिप्रवृत्तिवदित्यनुमानात् विसंवादिप्रवृत्तिहेतुतया अन्यथाख्यातिसिद्धिरिति भावः । नन्वयं हेतुरसाधकः सन्दिग्धव्यभिचारित्वात् । नचेदृशव्यभिचारसन्देहस्य पक्षे साध्यसन्देहाधीनत्वेन पक्षीयव्यभिचारसंशयरूपतया व्याप्तिनिर्णयाप्रतिबन्धकत्वात् नासाधकत्वं हेतोरिति वाच्यं व्यभिचाररूपैककोटिभानप्रतिबन्धकानुकूलतर्कविरहेण व्यभिचारशङ्कापरम्पराया एव जायमानत्वात् तादृशानुकूलतर्कविरहविशिष्टव्यभिचारसंशयसामग्रीरूपप्रतिबन्धकसत्त्वेन व्याप्तिनिश्चयासंभवादित्यभिप्रायेणाशङ्कते ॥ **नचेति** ॥ **संवादिप्रवृत्ताविति** ॥ इष्टे विशेष्यतासंबन्धेन इष्टतावच्छेदकप्रवृत्तावित्यर्थः ॥ **तदिति** ॥ इष्टनिष्ठविशेष्यतासंबन्धेन इष्टतावच्छेदकप्रकारकज्ञानमित्यर्थः ॥ **कारणमिति** ॥ लघुधर्मावच्छिन्ननियतपूर्ववृत्तित्वेन उभयमतसिद्धमित्यर्थः ॥ **विसंवादिप्रवृत्ताविति** ॥ विशेष्यतासंबन्धेन इष्टभिन्नविशेष्यकेष्टतावच्छेदकप्रकारकप्रवृत्तावित्यर्थः ॥ **भेदाग्रह इति** ॥ निरुक्तभेदाग्रह एवेत्यर्थः ॥ **कारणमिति** ॥ इष्टनिष्ठविशेष्यतासंबन्धेन इष्टतावच्छेदकप्रकारकज्ञानं संवादिनियतपूर्ववृत्तित्वेनोभयमतसिद्धं इष्टभिन्नपुरोवृत्तिविशेष्यकेष्टतावच्छेदकप्रकारकज्ञानन्तु विसंवादिप्रवृत्तिनियतपूर्ववृत्तित्वेन नोभयमतसिद्धं तैरन्यथाख्यात्यनभ्युपगमादिति समुदितार्थः । तथाच एतादृशमतद्वयवाक्यश्रवणानन्तरं मध्यस्थस्य पक्षात्मकविसंवादिप्रवृत्तौ निरुक्तसाध्यसन्देहजननात् हेतावपि तदधीनव्यभिचारसंशयस्यानिवार्यत्वेन व्याप्तिनिश्चयासंभवाद्धेतोरसाधकत्वमेवेति भावः ॥ **लाघवेनेति** ॥ लाघवज्ञानेनेत्यर्थः । विसंवादिप्रवृत्त्यादिभेदेन निरुक्तभेदाग्रहत्वनिरुक्तविशिष्टज्ञानत्वाभ्यां कार्यकारणभावद्वयकल्पनापेक्षया प्रवृत्तिसामान्ये एकरूपेण एककार्यकारणभावकल्पने लाघवमिति लाघवज्ञानेन प्रवृत्तिसामान्ये गुरुरूपेण एककारणत्वकल्पनापेक्षया लघुरूपेण एककारणत्वकल्पने लाघवमिति लाघवज्ञानेन चेति फलितार्थः । तथाच प्राथमिकगौरवज्ञानेन विसंवादिप्रवृत्त्यादिभेदेन कार्यकारणभावद्वयासिद्धावपि प्राथमिकलाघवज्ञानेन प्रवृत्तिसामान्ये निरुक्तभेदाग्रहत्वेनापि हेतुत्वप्राप्त्या द्वितीयगौरवज्ञानेन तद्रूपेणापि हेतुत्वासिद्धौ द्वितीयलाघवज्ञानेन प्रवृत्तिसामान्ये निरुक्तविशिष्टज्ञानत्वे हेतुत्वसिद्धौ ईदृशकार्यकारणभावग्रहस्वरूपानुकूलतर्कस्य जागरूकत्वात् अनुकूलतर्कविरहविशिष्टव्यभिचारसंशयसामग्रीरूपप्रतिबन्धकासत्त्वेन व्याप्तिनिश्चयोत्पत्तेः उक्तहेतोरसाधकत्वस्य निर्विवादतया उक्तानुमानात् पक्षात्मकविसंवादिप्रवृत्तावपि निरुक्तविशिष्टज्ञानजन्यत्वसिद्धिर्निष्प्रत्यूहेति भावः ॥ **इत्थं चेति** ॥ उक्तानुमानात् विसंवादिप्रवृत्तावपि विशिष्टज्ञानजन्यत्वसिद्धौ चेत्यर्थः ॥ **रङ्गे रजतत्वविशिष्टबुद्ध्यनुरोधेनेति** ॥ रङ्गविशेष्यकरजतत्वप्रकारकप्रवृत्तिप्रयोजकरङ्गविशेष्यकरजतत्वप्रकारकज्ञाननिर्वाहायेत्यर्थः ॥ **ज्ञानलक्षणाप्रत्यासत्तिकल्पनेऽपीति** ॥ ज्ञानलक्षणायाः प्रत्यासत्तित्वकल्पनाप्रयुक्तगौरवानिर्णये सत्यपीत्यर्थः ॥ **न क्षतिरिति** ॥ न प्रवृत्तित्वविशिष्टज्ञानत्वाभ्यां कार्यकार-

## दिनकरीयम्.

न्तरस्य कल्पनं तु गौरवदोषदुष्टमित्यभिमानः। हेतुताया इत्यस्यान्वयव्यतिरेकाभ्यामिति शेषः ॥ **अन्यत्रापि** ॥ रङ्गगोचररजतार्थिप्रवृत्तावपि **तत्कल्पनात्** ॥ विशिष्टज्ञानहेतुत्वकल्पनात्। नचात्र मानाभाव इति वाच्यं रङ्गे रजतार्थिप्रवृत्तिरिष्टप्रवृत्तिविषयाविशिष्टज्ञानसाध्या प्रवृत्तित्वाद्रजते रजतत्वप्रकारकप्रवृत्तिवदित्यनुमानस्यैव तत्र मानत्वात् अत्राप्रयोजकत्वमाशङ्कते ॥ **न चेति** ॥ **लाघवेनेति** ॥ संवादिविसंवादिभेदेन कार्यकारणभावद्वयमपेक्ष्य प्रवृत्तिमात्रे विशिष्टज्ञानस्यैव हेतुत्वकल्पनालाघवेनेत्यर्थः । तथा च लाघवज्ञानरूपानुकूलतर्कस्य सत्त्वान्नाप्रयोजकत्वमिति भावः । रजतांशेऽपि सन्निकर्षाभावान्नान्यथाख्यातिः सम्भवतीति प्राभाकरोक्तं दू

क्षतिः फलमुखगौरवस्यादोषत्वात् । किंच यत्र रङ्गरजतयोरिमे रजते रङ्गे वेति ज्ञानं जातं तत्र न कारणबाधोऽपि । अपि च यत्र रङ्गरजतयोरिमे रजतरङ्गे इति ज्ञानं तत्रोभयत्र

## प्रभा.

णभावग्रहानुपपत्तिप्रसक्तिरित्यर्थः ॥ **फलमुखगौरवस्येति** ॥ फलं निरुक्तकार्यकारणभावग्रहः तन्मुखं तत्प्रयोज्यं यत् गौरवं गौरवज्ञानं तस्येत्यर्थः ॥ **अदोषत्वादिति** ॥ निरुक्तकार्यकारणभावग्रहाविघटकत्वादित्यर्थः तथाचोक्तानुमानात् कार्यकारणभावानुमितेः पूर्वं ज्ञानलक्षणायाः प्रत्यासत्तित्वस्वीकाराप्रसक्त्या गौरवज्ञानाभावात् अनुमित्युत्पत्तौ विसंवादिप्रवृत्तौ सिद्धकारणताकविशिष्टज्ञानान्यथानुपपत्त्या ज्ञानलक्षणायाः प्रत्यासत्तित्वकल्पनाप्रयुक्तगौरवज्ञानस्य कार्यकारणभावग्रहोपजीवकत्वेन तादृशग्रहप्रतिबन्धकत्वासंभवात् तदुपजीवकत्वस्य तदुत्तरकालीनोत्पत्त्याश्रयत्वनियमादिति भावः । नन्वेतादृशगौरवज्ञानस्य कार्यकारणभावग्रहोत्तरकालीनतया तदप्रतिबन्धकत्वेऽपि उत्पन्नतादृशज्ञाने अप्रामाण्यज्ञानसम्पादकत्वमव्याहतामिति तेन तत्रा प्रामाण्यप्रमोत्पत्तौ प्रमाया एव वस्तुसाधकत्वात् उक्तानुमितेरप्रमात्वेन विशिष्टज्ञानस्य विसंवादिप्रवृत्तिनिरूपितकारणत्वेन प्रमितत्वाभावात् अन्यथाख्यातेर्नावश्यकत्वेत्याशङ्कां स्थलविशेषे अन्यथाख्यातेरावश्यकत्वप्रदर्शनेन परिहरति ॥ **किंचेति** ॥ **रङ्गरजतयोरिमे रजते इति ज्ञानमिति** ॥ रङ्गरजताभ्यां चक्षुस्संयोगोत्तरकालीनं रजतत्वप्रकारकं इदन्त्वेन रङ्गविशेष्यकं रजताविशेष्यकं च यदिदं रजतमिदंरजतमिति ज्ञानं जातमित्यर्थः ॥ **तत्रेति** ॥ तादृशसूमूहालम्बनात्मकप्रत्यक्ष इत्यर्थः ॥ **न कारणबाधोऽपीति** ॥ चक्षुस्संयुक्तसमवायरूपलौकिकसन्निकर्षासंभवोऽपि नेत्यर्थः अपिना ज्ञानलक्षणात्मकालौकिकसन्निकर्षासंभवः समुच्चीयते । तथाचोक्तानुमानेन विशिष्टज्ञानस्य विसंवादिप्रवृत्तिप्रयोजकत्वानुमितौ लौकिकसन्निकर्षविरहस्थले सिद्धकारणताकविशिष्टज्ञानान्यथानुपपत्त्या ज्ञानलक्षणायाः प्रत्यासत्तित्वकल्पनाप्रयुक्तगौरवज्ञानेनोत्पन्नानुमितावप्रामाण्यज्ञानोत्पत्तावपि लौकिकसन्निकर्षसंभवस्थले तादृशकल्पनाया अप्रसक्तत्वेन गौरवज्ञानाभावादुत्पन्नानुमितौ अप्रामाण्यज्ञानानुत्पत्त्या विसंवादिप्रवृत्तिहेतुतया क्वचिदन्यथाख्यात्यभ्युपगमस्यावश्यकत्वात्तावतैव वादिनिवृत्तिरिति भाव इति केचित् । वस्तुतस्तु विसंवादिप्रवृत्तिसाधारणप्रवृत्तित्वावच्छिन्नं प्रत्येव भेदाग्रहः कारणमिति न कार्यकारणभावकल्पनागौरवं नच विशिष्टज्ञानत्वापेक्षया इष्टभेदग्रहाभावत्वस्य कारणतावच्छेदकत्वे गौरवमिति वाच्यं रजतत्वविशिष्टानुमित्यादौ रजतभेदाग्रहत्वेन कारणत्वे तत्रैव प्रवृत्तिसाधारणरजतत्वविशिष्टविषयकत्वस्यैव कार्यतावच्छेदकत्वकल्पनेनैव निर्वाहात् । न्यायमते तु प्रवृत्तित्वावच्छिन्नं प्रति विशिष्टज्ञानत्वेन हेतुत्वान्तरकल्पने गौरवमिति तदनुरोधेन कल्पनीयभ्रमात्मकरजतज्ञानार्थं

## दिनकरीयम् .

षणमुद्धरति ॥ **इत्थं चेति** ॥ प्रवृत्तिमात्रे विशिष्टबुद्धेर्हेतुत्वसिद्धौ चेत्यर्थः ॥ **फलमुखेति** ॥ कार्यकारणभावग्रहात्मकफलात् पूर्वं गौरवस्यानिर्णयात् गौरवसन्देहस्य चाप्रतिबन्धकत्वादिति भावः । नन्वस्तु संवादिविसंवादिप्रवृत्तिसाधारणप्रवृत्तित्वावच्छिन्नं प्रत्येव भेदाग्रहः कारणमिति न कार्यकारणभावद्वयकल्पनागौरवम् । नच विशिष्टज्ञानत्वापेक्षयेष्टभेदग्रहाभावत्वस्य कारणतावच्छेदकत्वे गौरवमिति वाच्यं रजतत्वविशिष्टानुमित्यादौ रजतभेदाग्रहत्वेन कारणत्वे तत्रैव प्रवृत्तिसाधारणरजतत्वविशिष्टविषयकत्वस्यैव कार्यतावच्छेदकत्वकल्पनेनैव निर्वाहात् न्यायनये तु प्रवृत्तित्वावच्छिन्नं प्रति विशिष्टज्ञानहेतुत्वेन हेतुत्वान्तरकल्पने गौरवमिति न तदनुरोधेन कल्पनीयभ्रमात्मकरजतज्ञानार्थं ज्ञानलक्षणाप्रत्यासत्त्यादर इति कारणबाधाद्बाधितमेव मिथ्याज्ञानमित्याशङ्कां मनसि निधाय स्थलविशेषे कारणबाधाभावादनिवार्यमेव मिथ्याज्ञानमित्याह ॥ **किंचेत्यादिना** ॥ यत्र रजते रजतभेदग्रहो न वा रङ्गे रजतभेदग्रहस्तत्र सति युगपदिन्द्रियसन्निकर्षे रजतरङ्गयोरिमे रजते इति ज्ञाने न किमपि बाधकं रजतत्वेन समं संयुक्तसमवायस्य सत्त्वात् तादृशं च ज्ञानं रङ्गांशे न प्रमात्मकं विशेषणवद्विशेष्यसन्निकर्षरूपप्रमासामग्र्यभावात् किंत्वन्यथाख्यातिरेवेति भावः । ननु तत्तद्विशेष्ये तत्तद्विशिष्टबुद्धिं प्रति तत्तद्विशेषणे तत्तद्विशेष्यघटितसन्निकर्षो हेतुरन्यथातिप्रसङ्गात् तथा च कथं रजतघटितसंयुक्तसमवायेन रङ्गे रजतत्वग्रह इत्यत आह ॥ **अपि चेति** ॥

युगपत्प्रवृत्तिनिवृत्ती स्यातां रङ्गे रङ्गभेदग्रहे रजते रजतभेदग्रहे चान्यथाख्यातिभयात् त्वन्मते दोषादेव रङ्गे रजतभेदाग्रहस्य रजते रङ्गभेदाग्रहस्य च सत्त्वात् । किंचानुमितिं प्रति

### प्रभा.

ज्ञानलक्षणाप्रत्यासत्त्यादर इति कारणबाधात् बाधितमेव मिथ्याज्ञानमित्याशङ्कां मनसि निधाय स्थलविशेषे कारणबाधाभावादनिवार्यमेव मिथ्याज्ञानमित्याह किंचेत्यादिनेत्यवतारयन्ति तदसत् रजतभेदाग्रहकार्यतावच्छेदकप्रवृत्तिसाधारणरजतत्वविशिष्टविषयकत्वं न रजतत्वप्रकारतानिरूपितरजतनिष्ठविषयतानिरूपकत्वं तस्य विसंवादिप्रवृत्तिसाधारण्याभावेन न्यूनवृत्तित्वान्नापि रजतत्वप्रकारकत्वं तस्य बाधज्ञानाप्रतिबध्यनिर्धर्मितावच्छेदककरजतत्वप्रकारकज्ञानसाधारणतयातिप्रसक्तत्वात् किन्तु किंचिद्धर्मावच्छिन्नविशेष्यकरजतत्वप्रकारकत्वरूपं वाच्यम्। एवंच सधर्मितावच्छेदककप्रवृत्तिमात्रस्य तादृशत्वेऽपि निर्धर्मितावच्छेदककरजतत्वप्रकारकज्ञानप्रयोज्यतत्समानाकारकप्रवृत्तेः तादृशकार्यतावच्छेदकानाक्रान्ततया तादृशप्रवृत्तौ विशिष्टज्ञानहेतुतायाः तवाप्यावश्यकत्वान्न नैयायिकमते गौरवप्रसक्तिः। नच निर्धर्मितावच्छेदककप्रवृत्त्यस्वीकारे क्षतिविरह इति वाच्यं तथा सति स्वर्गोद्देश्यकयागविधेयकप्रवृत्तेः स्वर्गत्वयागत्वांशे निर्धर्मितावच्छेदककत्वादेः स्वीकार्यतया स्वर्गकामो यजेतेति श्रुतेः प्रवृत्त्युपयोगित्वाभावेन तादृशविधेरप्रवर्तकत्वापत्तेः एवंच रजतत्वादिविशिष्टानुमित्यादिसाधारणरजतभेदनिर्णयाभावे कार्यतावच्छेदकप्रवृत्तिसाधारण्याय ज्ञानत्वाप्रवेशेऽपि तस्य निर्धर्मितावच्छेदककप्रवृत्तिसाधारण्याभावेन तादृशप्रवृत्तिं प्रति विशिष्टज्ञानत्वेन हेतुत्वांशकल्पनस्य प्राभाकरमतेऽप्यावश्यकतया तदपेक्षया प्रवृत्तिव्यावृत्तसधर्मितावच्छेदककरजतत्वविशिष्टबुद्धित्वावच्छिन्नं प्रति रजतभेदनिर्णयाभावत्वेन हेतुत्वं स्वीकृत्य लाघवात्प्रवृत्तिसामान्ये विशिष्टज्ञानत्वेन हेतुत्वाङ्गीकर्तृनैयायिकमते गौरवस्यानवकाशः । तथाच तादृशकार्यकारणभावग्रहात्मकानुकूलतर्कसहकृतानुमानात् विसंवादिप्रवृत्तिहेतुतयान्यथाख्यातिसिद्धौ तदर्थं ज्ञानलक्षणायाः प्रत्यासत्तित्वस्वीकारोऽप्यावश्यक एव तस्मादुक्तरीत्या किंचेत्यादिग्रन्थावतरणमयुक्तमिति एतावता लाघवात्प्रवृत्तिसामान्ये विशिष्टज्ञानस्य हेतुत्वमङ्गीकृत्य तदनुरोधेन विसंवादिप्रवृत्तिहेतुतया अन्यथाख्यातिं प्रसाध्य इदानीं प्रवृत्तिसामान्ये निरुक्तभेदाग्रहहेतुत्वं अनिष्टप्रदर्शनपूर्वकं निराकृत्यान्यथानुपपत्त्या तत्र विशिष्टज्ञानहेतुत्वं वाच्यं तदनुरोधेनान्यथाख्यातिस्वीकारोऽप्यावश्यक इत्याहुः ॥ **अपिचेति** ॥ **यत्रेति** ॥ यदेत्यर्थः ॥ **रङ्गरजतयोरिति** ॥ तद्व्यक्तित्वेन रङ्गरजतोभयविशेष्यमित्यर्थः ॥ **इमे रजतरङ्गे इति ज्ञानमिति** ॥ रङ्गांशे रजतत्वप्रकारकं रजतांशे रङ्गत्वप्रकारकं इदं रजतं इदं रङ्गमिति ज्ञानं जातमित्यर्थः तदा तव भेदाग्रहविशिष्टज्ञानद्वयस्यैव उत्पत्तेरिति शेषः ॥ **तत्रेति** ॥ तादृशकालोत्तरकालमित्यर्थः ॥ **उभयत्रेति** ॥ रङ्गव्यक्तौ रजतव्यक्तौ चेत्यर्थः ॥ **युगपदिति** ॥ एकक्षण इत्यर्थः ॥ **प्रवृत्तिनिवृत्ती स्यातामिति** ॥ एकैकप्रवृत्तिनिवृत्त्युभयोत्पत्त्यापत्तेरित्यर्थः । ननु प्रवृत्ताविष्टभेदग्रहस्य निवृत्तौ द्विष्टभेदग्रहस्य च हेतुतया एकैकत्र एकदा तदुभयकारणासत्त्वान्नोक्तापत्तिरित्याशङ्कां तदुभयसत्त्वप्रदर्शनेन परिहरति ॥ **रङ्गे रङ्गभेदग्रह इत्यादिना** ॥ रङ्गे रङ्गभेदग्रह इति रङ्गविशेष्यकरङ्गभेदप्रकारकज्ञानस्वीकार इत्यर्थः ॥ **रजते रजतभेदग्रहे चेति** ॥ रजतविशेष्यकरजतभेदप्रकारकज्ञानस्वीकारे चेत्यर्थः ॥ **अन्यथाख्यातिभियेति** ॥ अन्यथाख्यातिस्वीकारापत्त्येत्यर्थः ॥ **त्वन्मत इति** ॥ प्राभाकरमत इत्यर्थः ॥ **रङ्गे रङ्गभेदाग्रहस्येति** ॥ सत्त्वादित्यनेनान्वयः रङ्गभेदप्रकारकग्रहनिष्ठविशेष्यतासंबन्धावच्छिन्नप्रतियोगिताकाभावस्य रङ्गवृत्तित्वेनावश्यं स्वीकार्यत्वादित्यर्थः ॥ **रजते रजतभेदाग्रहस्य चेति** ॥ रजतभेदप्रकारकग्रहनिष्ठविशेष्यतासंबन्धावच्छिन्नप्रतियोगिताकाभावस्य रजतवृत्तित्वेनावश्यं स्वीकार्यत्वाच्चेत्यर्थः । एतावता रङ्गविषयकनिवृत्तिसामग्रीं

### दिनकरीयम्

अन्यथाख्यातिभयादित्यनन्तरं रङ्गे रङ्गभेदाग्रहस्य रजते रजतभेदाग्रहस्येति पूरितस्य सत्त्वादित्यनेनान्वयः । अनेन रङ्गेऽनिष्टभेदाग्रहरूपा निवृत्तिसामग्री रजते इष्टभेदाग्रहरूपा प्रवृत्तिसामग्री च प्रदर्शिता रङ्गे रजतभेदाग्रहस्येत्यादिना च रङ्गे इष्टभेदाग्रहरूपा प्रवृत्तिसामग्री रजतेऽनिष्टभेदाग्रहरूपा निवृत्तिसामग्री च प्रदर्शिता ॥ **दोषादेवेति** ॥ त्वन्मते न्यायाभिमतभ्रमस्थलाभिषिक्तभेदाग्रहं प्रति दोषस्य हेतुत्वादिति भावः ।

प्रभा.

रजतविषयकप्रवृत्तिसामग्रीं च प्रदर्श्य इदानीं रङ्गविषयकप्रवृत्तिसामग्रीं रजतविषयकनिवृत्तिसामग्रीं च प्रदर्शयति ॥ **दोषादेवेति** ॥ रङ्गे रजतभेदग्रहप्रतिबन्धकाद्रजते रङ्गभेदग्रहप्रतिबन्धकाच्च वर्तुलत्वचाकचिक्यरजतसमुदायमध्यनिष्ठत्वादिधर्मदर्शनरूपदोषादेवेत्यर्थः एवकारेणान्यथाख्यातिभीतेर्व्यवच्छेदः ॥ **रङ्गे रजतभेदाग्रहस्येत्यादि** ॥ रजतभेदप्रकारकग्रहनिष्ठविशेष्यतासंबन्धावच्छिन्नप्रतियोगिताकाभावस्य रङ्गवृत्तित्वेनावश्यं स्वीकार्यत्वात् रङ्गभेदप्रकारकग्रहनिष्ठविशेष्यतासंबन्धावच्छिन्नप्रतियोगिताकाभावस्य रजतवृत्तित्वेनावश्यं स्वीकार्यत्वाच्चेत्यर्थः । एतेन रङ्गविषयकप्रवृत्तिसामग्री रजतविषयकनिवृत्तिसामाग्री च प्रदर्शिता तथाचैककर्तृसामग्रीद्वयसत्त्वात् तदुभयोत्पत्त्यापत्तिः परस्परसामग्र्याः परस्परप्रतिबन्धकत्वे एकैकस्या अप्यनुत्पत्तिप्रसङ्गः उभयोत्पत्तेरिव एकैकस्याप्यनुत्पत्तेः प्राभाकरस्यासम्मतत्वेन इष्टापत्तेर्वक्तुमशक्यत्वात् । तस्मात् भेदाग्रहस्य प्रवृत्तिनिवृत्तिकारणत्वं परित्यज्य प्रवृत्ताविष्टतावच्छेदकप्रकारकज्ञानस्य निवृत्ताविष्टतावच्छेदकप्रकारकज्ञानस्यान्यथानुपपत्त्या हेतुत्वमङ्गीकृत्यैव प्राभाकरेणाप्युक्तदोषः परिहरणीय इति तन्मते अन्यथाख्यातिसिद्धिर्निराबाधेत्यखण्डार्थः । केचित्तु ननु तत्तद्विशेष्ये तत्तद्विशिष्टबुद्धिं प्रति तत्तद्विशेषणे तत्तद्विशेष्यघटितसन्निकर्षो हेतुः अन्यथातिप्रसङ्गात् तथाच कथं रजतघटितसंयुक्तसमवायेन रङ्गे रजतत्वग्रह इत्यत आह अपिचेत्यवतरणिकामाहुः तदसत् । तत्तद्धर्मिविशेष्यकतत्तद्धर्मप्रकारकप्रत्यक्षं प्रति तत्तद्धर्मनिष्ठतत्तद्धर्मिघटितेन्द्रियसन्निकर्षस्य हेतुत्वेऽपीतररूपनिष्ठपार्थिवभागघटितचक्षुस्संयुक्तसमवायात् लौकिकनिष्ठजपाकुसुमघटितचक्षुस्संयुक्तसमवायाच्च पीतं सुवर्णं लोहितः स्फटिक इति प्रत्यक्षानापत्तेः पीतरूपांशे लौहित्यांशे च तादृशप्रत्यक्षस्य ज्ञानलक्षणाजन्यत्वस्वीकारे सुवर्णनिष्ठपीतरूपं स्फटिकनिष्ठलौहित्यमिति प्रत्यक्षानापत्तेः उपनीतं विशेषणतयैव भासत इति नियमात् । किञ्च तादृशप्रत्यक्षस्य पीतरूपाद्यंशे ज्ञानलक्षणाजन्यत्वे तत्तद्धर्मनिष्ठविषयतायाः तादृशालौकिकसन्निकर्षप्रयोज्यत्वेन लौकिकविषयत्वरूपत्वाभावात् तादृशप्रत्यक्षानन्तरं पीतं साक्षात्करोमि लौहित्यं साक्षात्करोमीति साक्षात्कारत्वग्रहानापत्तेः साक्षात्कारित्वव्यञ्जकलौकिकविषयतायाः अभावात् । नहि तत्प्रत्यक्षं दोषविशेषजन्यं येन पीतरूपादिनिष्ठविषयतायाः दोषविशेषप्रयोज्यत्वेन लौकिकविषयताया इव दोषविशेषप्रयोज्यविषयताया अपि साक्षात्कारत्वव्यञ्जकत्वात् तद्ग्रह उपपद्येत तथासति दोषविशेषस्य सकलजनसाधारण्याभावात् कस्यचिद्दोषविशेषवतः पीतश्शङ्खः वंश उरग इति प्रत्यक्षकाले दोषविशेषशून्यस्य शङ्खो न पीतः वंशो नोरग इति प्रत्यक्षवत् कस्यचित् पीतं सुवर्णं लोहितः स्फटिकः इति प्रत्यक्षस्य काले कस्यचित् पुरुषस्य सुवर्णं न पीतं स्फटिको न लोहित इति प्रत्यक्षापत्तेः नचेष्टापत्तिः सकलजनानुभवबाधितत्वात् । तस्मादिन्द्रियसन्निकर्षस्य यद्धर्मिविशेषघटितरूपेण प्रत्यक्षहेतुत्वमप्रामाणिकमेव । यच्चोक्तमन्यथातिप्रसङ्गात् इति तदपि न रजतसमुदायमध्यनिविष्टरङ्गे इदं रजतमिति प्रत्यक्षस्यानुभवसिद्धत्वात् तादृशप्रत्यक्षानुरोधेन रङ्गनिष्ठरजतसमुदायमध्यनिविष्टत्वादेस्तद्धेतुत्वं स्वीक्रियते न घटादिनिष्ठतादृशनिविष्टत्वादेः घटादाविदं रजतमिति प्रत्यक्षाभावात् अत एवारोपे सति निमित्तानुसरणं नतु निमित्तमस्तीत्यारोप इति मणिकारोक्तेः स्फटिकादिभिन्ने सन्नपि लौहित्यस्य स्वाश्रयसंयोगो न संबन्धः किन्तु स्फटिकादावेवेति सिद्धान्तवागीशभट्टाचार्योक्तिरपि सङ्गच्छते । एवंच रजतत्वनिष्ठरजतघटितसंयुक्तसमवायेन रङ्गे रजतत्वप्रत्यक्षवत् घटादौ न तत्प्रत्यक्षापत्तिः घटादिनिष्ठरजतमध्यनिविष्टत्वादेस्तद्धेतुत्वानभ्युपगमात् कल्पनाया अनुभवानुसारित्वात् यच्च कथं रजतघटितसंयुक्तसमवायेन रङ्गे रजतत्वग्रह इत्यत आह । अपिचेति तदप्यसंगतमिति । अपिचेत्यादिग्रन्थस्य युगपत्प्रवृत्तिनिवृत्त्युभयोत्पत्त्यापादनद्वारा इष्टभेदाग्रहस्य प्रवृत्तिहेतुत्वनिराकरणपरत्वेन रजतत्वनिष्ठरजतघटितसंयुक्तसमवायेन तादृशाशङ्कानिरासकरङ्गविशेष्यकरजतत्वप्रकारकप्रत्यक्षहेतुत्वव्यवस्थापनपरत्वाभावादपिचेत्यादिग्रन्थस्य तादृशावतरणिकाया अत्यन्तासंभावितत्वात् अपिचेत्यादिग्रन्थस्य तादृशावतरणिकाभिप्रायकत्वेऽवतरणिकाग्रन्थेन प्रवृत्तौ विशिष्टज्ञानहेतुत्वनिराकरणात् अवतार्यापिचेत्यादिग्रन्थेन भेदाग्रहस्य तद्धेतुत्वनिराकरणाच्च स्वपरपक्षोभयनाशकत्वेन विश्वनाथपञ्चाननस्य उन्मत्तत्वापत्तेश्चेति दिक् । एतावता प्रवृत्तिसामान्येऽन्यथानुपपत्त्या विशिष्टज्ञानस्य हेतुत्वव्यवस्थापनद्वारा अ-

**भेदाग्रहस्य हेतुत्वे जलह्रदे वह्निव्याप्यधूमवद्भेदाग्रहादनुमितिर्निराबाधा। यदि च विशिष्टज्ञानं कारणं तदायोगोळके वह्निव्याप्यधूमज्ञानमनुमित्यनुरोधादापतितं सेयमुभयतःपाशा**

## प्रभा.

न्यथाख्यातिं प्रसाध्य इदानीं दाढर्याय प्रकारान्तरेणाप्यन्यथाख्यातिं साधयति ॥ **किंचेति** ॥ **अनुमितिं प्रतीति** ॥ अनुमितिसामान्यं प्रतीत्यर्थः ॥ **भेदाग्रहस्येति** ॥ व्याप्यत्ववद्भेदाग्रहविशिष्टव्याप्योपस्थितिकालीनहेतुप्रकारकपक्षविशेष्यकनिश्चयस्य व्याप्यवद्भेदाग्रहकालीनव्याप्यविशिष्टविषयकोपास्थितिविशिष्टपक्षग्रहस्य व्याप्यत्ववद्भेदाग्रहविशिष्टव्याप्योपस्थितिकालीनहेतूपस्थितिहेतुमद्भेदाग्रहकालीनहेतुविशिष्टविषयकोपस्थितिविशिष्टपक्षग्रहस्य चेत्यर्थः ॥ **हेतुत्व इति** ॥ वह्निव्याप्यप्रमेयत्ववान् पर्वतः वह्निव्याप्यमहानसीयधूमव्यक्तिमान्पर्वतः वह्निव्याप्यरजतत्ववान्पर्वत इति विशिष्टज्ञानानङ्गीकर्तृप्राभाकरमते तत्र तादृशभ्रमस्थानाभिषिक्तज्ञानद्वयस्यैव स्वीकरणीयतया तादृशज्ञानोत्तरं तन्मते पर्वते वह्न्यनुमित्युत्पत्तये त्वन्यतमत्वेन हेतुत्वस्वीकार इति भावार्थः ॥ **जलह्रद इति** ॥ जले ह्रद एवेत्यर्थः जलत्वरूपसामान्यधर्मावच्छिन्ने ह्रदत्वरूपविशेषणधर्मावच्छिन्ने वेति यावत् ॥ **वह्निव्याप्यधूमवद्भेदाग्रहादिति** ॥ तादृशभेदप्रतिबन्धकदोषविशेषप्रयोज्यतादृशभेदप्रकारकग्रहनिष्ठविशेष्यतासंबन्धावच्छिन्नप्रतियोगिताकाभावरूपकारणबलादित्यर्थः ॥ **अनुमितिरिति** ॥ विशेष्यतासंबन्धेन वह्निविधेयकानुमितिरित्यर्थः ॥ **निराबाधेति** ॥ अवश्यमङ्गीकार्येत्यर्थः। तथाच तदनङ्गीकारेऽन्वयव्यभिचारात् अनुमितिसामान्ये निरुक्तभेदाग्रहस्य हेतुत्वानुपपत्तिः तदङ्गीकारे त्वन्यथाख्यातिसिद्धिरिति भावः ॥ **यदि चेति** ॥ विशिष्टज्ञानं च कारणं यदीति योजना विशिष्टज्ञानं चेति चकारः एवकारार्थे साध्यव्याप्यत्वप्रकारतानिरूपितहेतुप्रकारतानिरूपितपक्षविशेष्यताशालिज्ञानमेवेत्यर्थः ॥ **कारणं यदीति** ॥ अनुमितिसामान्यनिरूपितकारणतावत्त्वेन तव यद्यभिमतामित्यर्थः विशिष्टज्ञानत्वेन कारणत्वस्य तन्मतासिद्धत्वाभावात् यदीत्युक्तम्। तथाच तैरपि अनुमितिसामान्ये विशिष्टज्ञानत्वेन हेतुत्वस्वीकारेण जलादिपक्षकस्थले वह्निव्याप्यधूमप्रकारकजलादिविशेष्यकज्ञानरूपकारणाप्रसिद्धया तन्मते जलादौ न वह्न्यादिविधेयकानुमित्यङ्गीकारत्रसक्तिरिति भावः ॥ **तदेति** ॥ तथापीत्यर्थः अनुमितिसामान्ये विशिष्टज्ञानस्य हेतुत्वपक्षाश्रयणेऽपीति यावत् एतस्यापतितमित्यनेनान्वयः ॥ **अयोगोळक इत्यादि** ॥ तप्तायःपिण्डविशेष्यकवह्निव्याप्यधूमप्रकारकज्ञानमित्यर्थः ॥ **अनुमित्यनुरोधादिति** ॥ तप्तायःपिण्डविशेष्यकवह्निविधेयकसर्वानुभवसिद्धानुमित्यनुपपत्तिभयादित्यर्थः ॥ **आपतितमिति** ॥ अवश्यमङ्गीकार्यमित्यर्थः। तथाच वह्निव्याप्यधूमवदयःपिण्डमिति भ्रमस्थानाभिषिक्तज्ञानद्वयोत्तरं तप्तायःपिण्डं वह्निमदित्यनुमितेः त्वयापि विषयबाधाभावेन स्वीकरणीयतया तादृशानुमितिपूर्वं तादृशविशिष्टज्ञानास्वीकारे व्यतिरेकव्यभिचारात् अनुमितिसामान्ये विशिष्टज्ञानस्य हेतुत्वासंभवः तत्पूर्वं तत्स्वीकारे तु अन्यथाख्यातिसिद्धिर्निष्प्रत्यूहेति भावः। केचित्तु ननु रङ्गे रजतभेदाग्रहप्रयोजकदोषस्य प्रतिबन्धकत्वकल्पनान्न रङ्गे निवृत्तिरेवं रजते रङ्गभेदाप्रयोजकदोषस्य प्रतिबन्धकत्वान्न रजते प्रवृत्तिरिति कथं युगपत्प्रवृत्तिनिवृत्त्योरापादनमत आह किंचेतीत्यवतरन्ति। तदसत् तादृशदोषस्य केवलदोषत्वेन तादृशनिवृत्तिप्रतिबन्धकत्वे रङ्गे इदं न रजतमिति प्रमोत्तरमपि निवृत्त्यनुपपत्तिः दोषसामान्यान्तर्गततदूषणत्वादिदोषसत्त्वात्तादृशभेदाग्रहप्रयोजकत्वविशिष्टदोषत्वेन तत्प्रतिबन्धकत्वे दो-

## दिनकरीयम्.

इदं चेष्टभेदाग्रहः प्रवृत्तिकारणमनिष्टभेदाग्रहो निवृत्तिकारणमिति यथाश्रुताभिप्रायेण इष्टभेदोपस्थितिविशिष्टेष्टभेदासंसर्गाग्रहः प्रतिबन्धकस्तदभावः कारणमिति दर्शितनिष्कर्षे तु रजतभेदोपस्थितिविशिष्टरजतभेदासंसर्गाग्रहस्य प्रतिबन्धकस्य रङ्गेऽभावादिति रीत्या सामग्री बोध्या। ननु रङ्गे रजतभेदाग्रहप्रयोजकदोषस्य प्रतिबन्धकत्वान्न रङ्गे निवृत्तिरेवं रजते रङ्गभेदासंसर्गग्रहप्रयोजकदोषस्य प्रतिबन्धकत्वान्न रजते प्रवृत्तिरिति कथं युगपत्प्रवृत्तिनिवृत्त्योरापादनमित्यत आह ॥ **किंचेति** ॥ **भेदाग्रहस्य** व्याप्यवद्भेदाग्रहस्य ॥ **अनुमितिर्निराबाधेति** ॥ सति बाधाभावेऽन्यथाख्यातिरूपानुमितिर्निराबाधेत्यर्थः ॥ **आपतितमिति** ॥

रज्जुः । इत्थं चान्यथाख्यातौ प्रत्यक्षमेव प्रमाणं रङ्गं रजततयावेदिषामित्यनुभवादिति

## प्रभा.

षप्रयोज्यत्वविशिष्टतादृशभेदाग्रहत्वेन प्रतिबन्धकत्वमादाय विनिगमनाविरहप्रयुक्तप्रतिबध्यप्रतिबन्धकभावद्वयापत्तिः लाघवाद्रङ्गे केवलरजतभेदाग्रहत्वेन निवृत्तिप्रतिबन्धकत्वे रजते केवलरङ्गभेदाग्रहत्वेन प्रवृत्तिप्रतिबन्धकत्वे च रङ्गे इदं रजतमिति ज्ञानं रजते इदं रङ्गमिति ज्ञानं यदा जातं तत्र मूलोक्तरीत्या प्रवृत्तिनिवृत्तिप्रतिबन्धकतादृशभेदाग्रहद्वयसत्त्वेनोभयत्र प्रवृत्तिनिवृत्तिद्वयानुपपत्तिः तादृशदोषस्य तद्व्यक्तित्वेन प्रतिबन्धकत्वे तादृशदोषस्य तत्समानकालीनवायुसंयोगादिव्यक्तीनां वा तद्व्यक्तित्वेन प्रतिबन्धकत्वमित्यत्र विनिगमकाभावादप्रामाणिकानन्तप्रतिबध्यप्रतिबन्धकभावकल्पनापत्तिः तस्मादुक्तस्थले रङ्गविषयकनिवृत्तौ रजतभेदाग्रहप्रयोजकदोषस्य रजतविषयकप्रवृत्तौ रङ्गभेदाग्रहप्रयोजकदोषस्य प्रतिबन्धकत्वासंभवेनोभयत्र युगपत् प्रवृत्तिनिवृत्त्युभयापादनवारणासंभवात् उक्तरीत्या किंचेत्यादिग्रन्थावतरणमयुक्तमेवेति । एतावता बहुभिर्हेतुभिरन्यथाख्यातिं प्रसाध्य इदानीं प्रत्यक्षमपि प्रमाणमित्याह ॥ **इत्थं चेति** ॥ उक्तरीत्या अन्यथाख्यातिसिद्धौ चेत्यर्थः ॥ **प्रत्यक्षमिति** ॥ प्रत्यक्षमपीत्यर्थः । एवकारः प्रमाणमित्युत्तरं योज्यः ॥ **प्रमाणमिति** ॥ प्रमाणमेवेत्यर्थः तत्र हेतुमाह ॥ **रङ्गमिति** ॥ रङ्गविशेष्यकरजतत्वप्रकारकज्ञानवानहमिति मानसप्रत्यक्षादित्यर्थः । तथाच प्रत्यक्षेणान्यथाख्यातिर्निष्प्रत्यूहेति भावः । केचित्तु ननु ह्रदे वह्निव्याप्यधूमवद्भेदाग्रहान्न ह्रदो वह्निमान् इत्यन्यथाख्यातिरूपानुमितिः परन्तु अगृहीतासंसर्गकज्ञानद्वयमेवात्रोत्पद्यते नच तत्र विशिष्टज्ञानोत्पत्तौ बाधकाभावः व्याप्यवद्भेदाग्रहस्य ह्रदो वह्निमानित्यन्यथारूपानुमितिकारणस्य सत्त्वादिति वाच्यम् अन्यथाख्यातौ प्रमाणाभावेन तादृशकार्यकारणभावस्याकल्पनात् अतस्तत्र प्रमाणं दर्शयति । इत्थंचेति यद्वा ननु अनुमितिं प्रति विशिष्टज्ञानस्यैव हेतुत्वं यत्र च न तादृशविशिष्टबोधसामग्री तत्र लिङ्गासंसर्गाग्रहात् लिङ्गयसंसर्गाग्रहस्यैव परैरुपगमान्नायःपिण्डे वह्न्यनुमितिरित्यनुरोधादन्यथाख्यातिसिद्धिरित्यत आह इत्थंचेतीत्यवतरणिकामाहुः तदसत् ह्रदे वह्निव्याप्यधूमवद्भेदाग्रहस्य ह्रदे वह्निविधेयकानुमितिजनकत्वे अन्वयव्यभिचारेणानुमितिमात्रे व्याप्यवद्भेदाग्रहस्य तन्मतसिद्धहेतुत्वविलयप्रसङ्गः ह्रदे तादृशभेदाग्रहस्य वह्निमद्भेदाग्रहकालीनवह्निज्ञानह्रदज्ञानोभयहेतुत्वमपि न संभवति तप्तायःपिण्डे वह्निव्याप्यधूमवद्भेदाग्रहकालेऽपि चक्षुस्सन्निकर्षाद्वह्निप्रत्यक्षोत्पत्तिवत् ह्रदे तादृशभेदग्रहकालेऽपि दोषविशेषवशात् तत्र नैयायिकमते वह्निप्रकारकभ्रमोत्पत्त्या परैः तत्रागृहीतासंसर्गकतादृशज्ञानद्वयस्यैव स्वीकार्यत्वेन व्यतिरेकव्यभिचारात् । यच्च ह्रदे वह्निविधेयकानुमितिकारणस्य वह्निव्याप्यधूमवद्भेदाग्रहस्य सत्त्वात् तत्र वह्निविधेयकानुमित्युत्पत्तिरावश्यकीति नचेत्यादिनाक्षिप्यान्यथाख्यातौ प्रमाणाभावेन तादृशकार्यकारणभावाकल्पनादिति समाहितं तदपि न सम्यक् धूमलिङ्गकवह्निविधेयकानुमितिं प्रति निरुक्तवह्निव्याप्यधूमवद्भेदाग्रहस्य हेतुत्वे परमते तादृशानुमितेराकस्मिकत्वापत्तेः । अन्यथाख्यातिभिया वह्निव्याप्यधूमप्रकारकपक्षविशेष्यकविशिष्टज्ञानहेतुत्वस्य निरस्तत्वान्न चेष्टापत्तिः बौद्धमतप्रवेशापत्तेस्तस्माद्वह्निविधेयकतादृशानुमितिं प्रति वह्निव्याप्यधूमवद्भेदाग्रहस्य हेतुत्वस्यान्यथानुपपत्त्यावश्यं स्वीकार्यत्वेन तादृशकारणबलात् ह्रदेऽपि वह्न्यनुमित्युत्पत्तेरावश्यकत्वादन्यथाख्यातिसिद्धेर्निष्प्रत्यूहत्वेन अनुमितिं प्रति भेदाग्रहस्य हेतुत्वपक्षे अन्यथाख्यातिव्यवस्थापकमुक्तावलीस्थपूर्वग्रन्थनिरासपूर्वकतया इत्थंचेत्याद्युत्तरग्रन्थस्य प्रथमावतरणिका युक्तैव । यच्च विशिष्टज्ञानस्यैव अनु-

## दिनकरीयम्.

अन्यथाख्यातिरूपमापतितमित्यर्थः । ननु ह्रदे वह्निव्याप्यधूमवद्भेदाग्रहान्न ह्रदो वह्निमानित्यन्यथाख्यातिरूपानुमितिः परं त्वगृहीतासंसर्गकं ज्ञानद्वयमेवात्रोत्पद्यते नच तत्र विशिष्टज्ञानोत्पत्तौ बाधकाभावः । व्याप्यवद्भेदाग्रहस्य ह्रदो वह्निमानित्यन्यथाख्यातिरूपानुमितिकारणस्य सत्त्वादिति वाच्यं अन्यथाख्यातौ प्रमाणाभावेन तादृशकार्यकारणभावस्याकल्पनादतस्तत्र प्रमाणं प्रदर्शयति ॥ **इत्थं चेति** ॥ यद्वा नन्वनुमितिं प्रति विशिष्टज्ञानस्यैव हेतुत्वं यत्र च न तादृशविशिष्टबोधस्य सामग्री तत्र लिङ्गासंसर्गाग्रहाल्लिङ्गयसंसर्गाग्रहस्यैव परैरुपगमान्नायःपिण्डे वह्न्यनुमित्यनुरोधादन्यथाख्यातिरित्यत आह ॥ इत्थं चेति ॥ व-

सङ्क्षेपः ॥ १३५ ॥ १३६ ॥

प्रभा.

मितिहेतुत्वमिति नैयायिकमताश्रयणेऽपि प्राभाकरस्यान्यथाख्यातेरावश्यकत्वप्रतिपादकयदिचविशिष्टज्ञानं कारणमित्यादिमुक्तावळीग्रन्थनिरासपूर्वकतया इत्थंचेत्याद्युत्तरग्रन्थस्य यद्वेत्यादिना द्वितीयावतरणं तदप्यसङ्गतं चक्षुस्संयुक्तसमवायसन्निकर्षवशात् वह्निव्याप्यह्रदत्ववान् ह्रद इति ह्रदत्वविशिष्टज्ञानोत्पत्त्या तदुत्तरं ह्रदे वह्न्यनुमित्यापत्तेः विशिष्टबोधशब्दस्य पक्षे हेतुविशिष्टबोधहेतौ व्याप्तिविशिष्टबोधतदुभयपरत्वं स्वीकृत्य तादृशानुमित्यापत्तिनिवारणेऽपि लिङ्गासंसर्गाग्रहस्य लिङ्गयसंसर्गाग्रहहेतुत्वमप्रामाणिकमेव ह्रदे वह्निव्याप्यधूमवद्भेदग्रहकालेऽपि नैयायिकमतसिद्धह्रदविशेष्यकवह्निप्रकारकप्रात्यक्षिकभ्रमस्थानाभिषिक्तवह्न्यसंसर्गाग्रहे व्यतिरेकव्यभिचारात् । नच लिङ्गासंसर्गाग्रहोत्तरवृत्तिलिङ्ग्यसंसर्गाग्रहं प्रति तस्य हेतुत्वस्य स्वीकारात् नोक्तव्यभिचार इति वाच्यम् । तथासति घटादिज्ञानोत्तरवृत्तित्वविशिष्टवह्न्यसंसर्गाग्रहं प्रति घटादिज्ञानस्य हेतुत्वापत्तेः नचेष्टापत्तिः सकलतान्त्रिकासम्मतत्वात् । वस्तुतो विशिष्टबोधसामग्रीविरहस्थल एव दुर्लभः सर्वत्र लौकिकप्रत्यक्षसामग्र्यसंभवेऽपि अलौकिकप्रत्यक्षानुमित्युपमितिशाब्दबोधान्यतमसामग्र्यास्सुलभत्वात् किंचानुमितिं प्रति विशिष्टज्ञानस्यैव हेतुत्वपक्षावलम्बनेन साध्यविशिष्टहेतुविशिष्टपक्षबोधकसामग्रीविरहस्थले लिङ्गासंसर्गाग्रहात् लिङ्गसंसर्गाग्रहस्वीकारेऽपि तादृशविशिष्टबोधसामग्रीसमवधानस्थले विशिष्टज्ञानरूपकारणोत्पत्त्या तत्र अनुमितेरावश्यकतया कपिसंयोगव्याप्यकपिविभागवान् मूलावच्छिन्नो वृक्ष इति प्रमात्मकपरामर्शात् मूलावच्छिन्नः वृक्षः कपिसंयोगीत्यनुमितेरावश्यकतया तथाप्यन्यथाख्यातिसिद्धेर्निष्प्रत्यूहत्वात् । यदि चात्र विशिष्टपरामर्शसत्त्वेऽप्यन्यथाख्यात्यापत्तिमात्रेणानुमितिमपलप्यान्यसंसर्गाग्रहः स्वीक्रियते तदा विशिष्टपरामर्शस्यासंसर्गाग्रहहेतुत्वप्राप्तेः पर्वतेऽपि तादृशपरामर्शोत्तरमसंसर्गाग्रहस्वीकारापत्त्या अनुमितिमात्रोच्छेदापत्तेः चार्वाकमतप्रवेशापत्तेश्च तस्मादित्थंचेत्यादिग्रन्थस्य यद्वेत्यादिना द्वितीयावतरणमयुक्तमेवेति । अत्र शुक्तिविशेष्यकरजतत्वप्रकारकज्ञानमङ्गीकृत्य तत्स्थानेऽगृहीतासंसर्गकरजतस्मरणपुरोवृत्त्यनुभवोभयस्वीकारेऽनन्तरं रजतं पश्यामीत्यनुव्यवसायानुपपत्तिः पूर्वं रजतप्रत्यक्षाभावात् । एवंच वह्निव्याप्यधूमवान् ह्रद इति भ्रमस्थानाभिषिक्तज्ञानोत्तरं ह्रदो वह्निमानिति भ्रमात्मकानुमितिस्थानाभिषिक्तनिरुक्तज्ञानद्वयस्वीकारे तदुत्तरं वह्निमनुमिनोमीत्यनुव्यवसायानुपपत्तिः पूर्वं वह्न्यनुमितेरभावात् एवं ताम्रादिप्रतिमासु अयं गोसदृश इति भ्रमस्थानाभिषिक्ततादृशज्ञानद्वयोत्तरं गवयत्वेन रूपेण पुरोवृत्तिविशेष्यकगवयपदवाच्यत्वप्रकारकभ्रमात्मकोपमितिस्थानाभिषिक्ततादृशज्ञानद्वयस्वीकारे तदुत्तरं गवयपदवाच्यत्वमुपमिनोमीत्यनुव्यावसायानुपपत्तिः पूर्वं गवयपदवाच्यत्वोपमितेरभावात् एवंच वह्निना सिञ्चतीति वाक्यात् वह्निकरणत्वप्रकारकसेचनविशेष्यकशाब्दभ्रमस्थानाभिषिक्ततादृशज्ञानद्वयस्वीकारे तदुत्तरं वह्निकरणत्वं शाब्दयामीत्यनुव्यवसायानुपपत्तिः पूर्वं तद्विषयकशाब्दबोधाभावात् उक्तस्थले तादृशानुव्यवसायानामपलपेऽन्यत्रापि पश्यामि अनुमिनोमि उपमिनोमि शाब्दयामीत्यनुव्यवसायस्यापलपितुं शक्यतया प्रत्यक्षत्वादिप्रमितिविभाजकधर्मचतुष्टयासिद्ध्यापत्तेः तत्तदवच्छिन्ननिरूपितकरणताश्रयप्रत्यक्षादिप्रमाणचतुष्टयस्याप्यप्रसिद्ध्यापत्तेश्च नचेष्टापत्तिः सकलतान्त्रिकसिद्धान्तविरोधापत्तेः प्रमाणषट्कवादिभवत्सिद्धान्तविरोधापत्तेश्च । किंच ज्ञानलक्षणायाः प्रत्यासत्तित्वानङ्गीकारे घटं जानामीत्याद्यनुव्यवसायानुपपत्तिः घटादिना मनसः लौकिकसन्निकर्षाभावात् तस्मादन्यथाख्यातिः ज्ञानलक्षणप्रत्यासत्तिश्च त्वयाप्यवश्यमङ्गीकार्येति प्रतिभाति । उक्तार्थं हृदि निधायैव विश्वनाथपञ्चाननेन समाप्तिद्योतक-इतिपदमात्रमनुक्त्वा इति सङ्क्षेप इत्युक्तम् । केचित्तु ननु तादृशानुव्यवसायो नेदंविशेष्यकज्ञाने रजतत्वप्रकारकत्वविशिष्टबुद्धिरूपः परन्तु रजतत्वप्रकारकत्वासंसर्गाग्रहरूप एवेत्यत आह ॥ स-

दिनकरीयम्.

कारोऽप्यर्थः । ननु तादृशानुव्यवसायो नेदंविशेष्यकज्ञाने रजतत्वप्रकारकत्वविशिष्टबुद्धिरूपः परं तु रजतत्वप्रकारकत्वासंसर्गाग्रहरूप एवेत्यत आह ॥ सङ्क्षेप इति ॥ विद्यमानेऽपि भेदग्रहे आहार्यप्रत्यक्षोत्पादादिच्छाया उत्तेजकत्वं वाच्यं इच्छानामुत्तेजकत्वानुरोधेन चानुमितित्वादीनामेव कार्यतावच्छेदकत्वात् प्रवृ-

व्यभिचारस्याग्रहोऽथ सहचारग्रहस्तथा ।
हेतुर्व्याप्तिग्रहे तर्कः क्वचिच्छङ्कानिवर्तकः ॥ १३७ ॥

पूर्वं व्याप्तिरुक्ता तद्ग्रहोपायस्तु न दर्शित इत्यतस्तं दर्शयति ॥ व्यभिचारस्येति ॥ व्यभिचाराग्रहः सहचारग्रहश्च व्याप्तिग्रहे कारणम् । व्यभिचारग्रहस्य व्याप्तिग्रहे प्रतिबन्ध-

**प्रभा**

क्षेप इति ॥ विद्यमानेऽपि भेदग्रहे आहार्यप्रत्यक्षोत्पादादिच्छाया उत्तेजकत्वं वाच्यम् इच्छानामुत्तेजकत्वा-नुरोधेन चानुमितित्वादीनामेव कार्यतावच्छेदकत्वात् प्रवृत्तित्वावच्छिन्नं प्रति भेदाग्रहत्वेन पृथक्कारणत्वे गौरवापत्त्या विशिष्टज्ञानत्वेनैव हेतुता कल्पनीयेति विसंवादिप्रवृत्त्यनुरोधेनान्यथाख्यातिर्दुर्वारैवेति भाव इति ग्रन्थेनोक्तानुव्यवसायस्यागृहीतासंसर्गकज्ञानद्वयरूपत्वप्रतिपादनद्वारा अन्यथाख्यातिसाधकत्वनिराकरणेन स-ङ्क्षेप इति ग्रन्थमुत्थाप्य सङ्क्षेपपदस्य भावार्थवर्णनेनान्यथाख्यातिसाधनमाहुः तदसत् नैयायिकमते लौकिकस-न्निकर्षाजन्यदोषविशेषाजन्यानाहार्यतत्प्रकारकबुद्धित्वावच्छिन्नं प्रति अनाहार्याप्रामाण्यज्ञानानास्कन्दिततद-भावप्रकारकनिश्चयत्वेन तद्वद्भेदप्रकारकनिश्चयत्वेन वा प्रतिबन्धकत्वस्वीकारात् नेच्छाया उत्तेजकत्वं अस्तु वा प्रतिबध्यतावच्छेदककोटौ लाघवात् अनाहार्यत्वमनिवेश्य इच्छाया उत्तेजकत्वाङ्गीकारः अस्तु च तदनु-रोधेनानुमितित्वादीनामेव कार्यतावच्छेदकत्वस्वीकारः अस्तुच लाघवात् प्रवृत्तित्वावच्छिन्नं प्रति विशिष्टज्ञान त्वेन हेतुत्वं तथापि तादृशकार्यकारणभावमहिम्ना विसंवादिप्रवृत्तिपक्षकप्रवृत्तित्वलिङ्गकानुमानेन अन्यथा-ख्यातिसाधनमयुक्तम् । तन्मते अन्यथाख्यातेस्सिद्धत्वात् अन्यथाख्यात्यनङ्गीकर्तृप्राभाकरमते तु आहार्य-प्रत्यक्षाप्रसिद्धया तदनुरोधेन इच्छाया उत्तेजकत्वानावश्यकतया अनुमितित्वादिकमनिवेश्य प्रवृत्तिसाधारणे रजतत्वादिविषयकत्वमात्रस्य निरुक्तभेदाग्रहकार्यतावच्छेदकत्वे बाधकाभावात् प्रवृत्तित्वावच्छिन्नं प्रति वि-शिष्टज्ञानत्वेन पृथग्धेतुत्वे प्रमाणाभावेनोक्तानुमानानवतारात् । तन्मते अन्यथाख्यात्यसिद्ध्यापत्तेर्दुर्वारत्वात् तस्माद्विश्वनाथपञ्चाननस्य मौढ्यापत्त्या मुक्तावलीस्थसङ्क्षेपपदस्य तादृशार्थपरत्वमयुक्तमेवेति ॥ १३६ ॥

ननु प्रामाण्यं परतोग्राह्यं सति व्याप्तिनिश्चये स्यात् स एव नोत्पत्तुमर्हतीति निश्चायकसामग्र्यभावा-दित्याशङ्कापरिहाराय व्यभिचारस्याग्रहोऽपीत्यादिमूलेन तदुपायः प्रदर्श्यते स चायुक्तः तत्कारणीभूतव्याप्तिस्व-रूपाज्ञानादित्याशङ्कां परिहरति ॥ मुक्तावल्यां पूर्वं व्याप्तिरुक्तेति ॥ अनुमानपरिच्छेद एव अ-थवा हेतुमन्निष्ठेत्यादिना निर्दुष्टव्याप्तिर्निरूपितेत्यर्थः । तथाच तादृशनिरूपणेन व्याप्तिस्वरूपज्ञानस्य उत्पन्न-त्वात्परतोग्राह्यत्वव्यवस्थित्यनुकूलत्वरूपोपोद्घातसङ्गत्या अनुमानप्रामाण्यव्यवस्थापनानन्तरं व्याप्तिग्रहोपायनि-रूपणं युक्तमेवेति भावः ॥ तद्ग्रहोपायस्त्विति ॥ व्याप्तिग्रहोपायस्त्वित्यर्थः । कुत इत्यर्थकतुशब्दः न द-र्शित इत्यनेन संबध्यते ॥ न दर्शित इति ॥ परतोग्राह्यत्वव्यवस्थापनानन्तरं कुतो न निरूपित इत्यर्थः । व्याप्तिस्वरूपज्ञानरूपकारणसत्त्वात् प्रकृतसिद्ध्यनुकूलत्वरूपपरतोग्राह्यत्वनिरूपितोपोद्घातसङ्गतिमत्त्वाच्च उपा-यानिरूपणे न्यूनतेति भावः ॥ इत्यत इति ॥ एतादृशशङ्कापरिहारायेति फलितार्थः ॥ तं दर्शयतीति ॥ उ-पायं निरूपयतीत्यर्थः । व्यभिचारस्याग्रहोऽपि सहचारग्रहस्तथेति मूलस्य व्यभिचारस्याग्रहः व्यभिचारस्य सहचारग्रह इत्यर्थभ्रमं व्यभिचारज्ञानाभावस्य सहचारग्रहस्य च तृणारणिन्यायेन वैकल्पिककारणत्वभ्रमं च व्या-वर्तयितुं तन्मूलार्थमाह ॥ मुक्तावल्यां व्यभिचाराग्रह इति ॥ संशयनिश्चयसाधारणव्यभिचारज्ञान-

**दिनकरीयम् .**

त्तित्वावच्छिन्नं प्रति भेदग्रहाभावत्वेन पृथक्कारणत्वे गौरवापत्त्या विशिष्टज्ञानत्वेनैव तत्र हेतुता कल्पनीयेति विसंवादिप्रवृत्त्यनुरोधेनान्यथाख्यातिर्दुर्वारैवेति भावः ॥ १३५ ॥ १३६ ॥

ननु प्रामाण्यमनुमानगम्यं तदा भवेद्यद्यनुमानं प्रमाणं भवेत्तदेव न सम्भवति व्याप्तेर्ग्राहकाभावेना-ज्ञानादित्यतः प्रामाण्यानुमितिप्रयोजकतया व्यभिचारस्याग्रहोऽथ सहचारग्रहस्तथेति मूलेन व्याप्तिग्रहोपायो दर्श्यते स चायुक्तः स्वकारणीभूतव्याप्तिस्वरूपज्ञानाभावादित्यत आह ॥ पूर्वं व्याप्तिरुक्तेति ॥ व्यभिचारा-

कत्वात्तदभावः कारणमित्यर्थः। एवमन्वयव्यतिरेकाभ्यां सहचारग्रहस्यापि हेतुता भूयोदर्शनं तु न कारणं व्यभिचारास्मृतौ सकृद्दर्शनेऽपि क्वचिद्व्याप्तिग्रहात् क्वचिद्व्यभिचारशङ्कावि-

प्रभा.

त्वावच्छिन्नप्रतियोगिताकाभाव इत्यर्थः॥ **सहचारग्रहश्चेति** ॥ साधनविशेष्यकसाध्यसामानाधिकरण्यप्रकारकग्रहश्चेत्यर्थः अग्रहशब्दोत्तरं श्रूयमाणसमुच्चयार्थकापिशब्दस्य ग्रहपदोत्तरं योजनया ग्रहपदोत्तरं श्रूययाणसाध्यसाधनोभयार्थकमूलस्थतया शब्दस्य सहचारपदपूर्वं योजनया च उक्तार्थलाभात्॥ **व्याप्तिग्रह इति** ॥ व्याप्तिनिश्चय इत्यर्थः। व्यभिचारज्ञानाभावसहचारज्ञानयोः व्याप्तिनिश्चयकारणत्वं क्रमेणोपपादयति॥ **व्यभिचारग्रहस्येति**॥ साध्यतावच्छेदकधर्मिकसाधनसमानाधिकरणप्रतियोगितावच्छेदकत्वरूपव्यभिचारप्रकारकज्ञानत्वावच्छिन्नस्यत्येर्थः॥ **व्याप्तिग्रह इति**॥ व्याप्तिघटकसाधनसमानाधिकरणाभावप्रतियोगितानवच्छेदकत्वविशिष्टसाध्यतावच्छेदकनिर्णय इत्यर्थः॥ **प्रतिबन्धकत्वादिति**॥ ग्राह्याभावावगाहितया प्रतिबन्धकत्वादित्यर्थः॥ **तदभाव इति**॥ तादृशव्यभिचारज्ञानसामान्याभावत्वरूपलिङ्गविशिष्ट इत्यर्थः॥ **कारणमिति**॥ यथेत्यादिः। व्याप्तिघटकाव्यभिचारांशनिश्चयनिरूपितकारणत्वविधेयकानुमित्युद्देश्य इत्यर्थः। तथाच व्याप्तिघटकाव्यभिचारांशनिश्चयहेतुत्वात् विशिष्टव्याप्तिग्रहोपयोगित्वमिति भावः॥ **एवमिति** ॥ तथेत्यर्थः॥ **अन्वयव्यतिरेकाभ्यामिति**॥ नियमघटितान्वयव्यतिरेकाभ्यामित्यर्थः तादृशान्वयव्यतिरेकग्रहसहकृतप्रत्यक्षप्रमाणेनेति यावत्। रासभादौ घटादिकं प्रति नियमाघटितान्वयव्यतिरेकग्रहसत्त्वेऽपि तत्सहकृतचक्षुषा अभ्रान्तस्य कारणत्वप्रत्यक्षानुत्पत्त्या यथाश्रुतासङ्गतेः॥ **सहचारज्ञानस्यापीति** ॥ निरुक्तसाध्यसाधनसहचारनिर्णयस्यापीत्यर्थः। अपिशब्दाद्व्यभिचारज्ञानाभावस्य परिग्रहः॥ **हेतुतेति** ॥ बोध्येति शेषः। तथा च प्रतिबन्धकाभावत्वालिङ्गेन तादृशव्यभिचारज्ञानाभावे यथा तत्कारणत्वं निर्णीयते तथा निरुक्तसहचारज्ञानेऽपि निरुक्तान्वयव्यतिरेकसहकृतप्रत्यक्षेण तत्कारणत्वं निर्णीयत इति समुदितग्रन्थतात्पर्यार्थः। यद्यपि सामानाधिकरण्यज्ञाने विशेषणज्ञानविधयैव हेतुत्वं शक्यते वक्तुं व्याप्तेः साध्यसामानाधिकरण्यविशिष्टहेतुतावच्छेदकरूपतया सामानाधिकरण्यघटितत्वेन तज्ज्ञानस्य विशेषणज्ञानरूपत्वात् दीधितिकारप्रभृतिभिः विशेषणज्ञानत्वेनैव तस्य हेतुत्वप्रतिपादनाच्च तथापि साध्यवदन्यावृत्तित्वरूपव्याप्तेः स्वावच्छिन्नसमानाधिकरणाभावप्रतियोगितानवच्छेदकसाध्यतावच्छेदकधर्मवत्त्वरूपव्याप्तेर्वा सामानाधिकरण्याघटिततया तादृशव्याप्तिग्रहे सामानाधिकरण्यज्ञानस्य विशेषणज्ञानविधया हेतुत्वं न संभवतीति सकलव्याप्तिग्रहे तादृशज्ञानस्य हेतुत्वसिद्ध्यर्थं तादृशप्रत्यक्षप्रमाणमुपन्यस्तमिति ध्येयम्। अत्र सकृद्दर्शनं न व्याप्तिग्राहकं रासभवह्न्योः सकृत्सहचारदर्शने व्याप्त्यग्रहात् किंतु भूयोदर्शनं तथा एवंच वह्निशून्यदेशेऽपि रासभदर्शनेन भूयोदर्शनरूपकारणाभावात् रासभादौ न व्याप्तिग्रह इति प्राचीनैकदेशिमतं दूषयति॥ **भूयोदर्शनमिति** ॥ भूयस्सु स्थानेषु साध्यसाधनसहचारदर्शनं भूयसां साध्यानां साधनानां सहचारदर्शनं साध्यसाधनसहचारविषयकबहुत्वविशिष्टदर्शनं चेत्यर्थः एतादृशत्रिविधभूयोदर्शनलाभायैव अनुक्तसमुच्चायकचार्थकतुशब्दप्रयोगः॥ **न कारणमिति** ॥ न व्याप्तिनिश्चयकारणमित्यर्थः निरुक्तत्रिविधभूयोदर्शनस्य हेतुत्वाभावे व्यतिरेकव्यभिचाररूपहेतुं वक्तुं इतरकारणसम्पत्तिमाह॥ **व्यभिचारास्मृताविति** ॥ व्यभिचारज्ञानसामान्याभावरूपप्रतिबन्धकाभावसत्त्व इत्यर्थः। अत्र स्मृतिपदं ज्ञानमात्रोपलक्षकं व्यभिचारानुभवकालेऽपि व्याप्त्यनिश्चयात्॥ **सकृद्दर्शनेऽपीति** ॥ निरुक्तत्रिविधभूयोदर्शनान्यतमशून्यत्वविशिष्टसाध्यसाधनसहचारविषयकैकदर्शनेऽपीत्यर्थः॥ **क्वचिदिति** ॥ एतद्रूपवान् एतद्रसादित्यादावित्यर्थः॥ **व्याप्तिग्रहादिति** ॥ एतद्रसविशेष्यकैतद्रूपनिरूपितव्याप्तिप्रकारकनिश्चयोत्पत्तेरित्यर्थः तथाच एतद्रूपवान् एतद्रसादित्यादौ साध्यसाधनयोरनेकाधिकरणाप्रसिद्धिप्रयुक्तानेकाधिकरणावच्छेद्यसाध्यसाधनसहचारदर्शनरूपकारणाप्रसिद्ध्या साध्यसाधनयोरे-

दिनकरीयम्.

ग्रहस्य व्याप्तिग्राहकतामुपपादयति॥ **व्यभिचारग्रहस्येति** ॥ सहचारग्रहस्य तामुपपादयति॥ **एवमिति** ॥ भूयोदर्शनस्य कारणत्वं खण्डयति॥ **भूयोदर्शनं त्विति** ॥ व्यतिरेकव्यभिचारमाह॥ **सकृद्दर्शने**ऽ-

**धूननद्वारा भूयोदर्शनमुपयुज्यते यत्र तु भूयोदर्शनादपि शङ्का नापैति तत्र विपक्षे बाधकतर्कोऽपेक्षितः तथा हि वह्निविरहिण्यपि धूमः स्यादिति यद्याशङ्का भवति तदा सा वह्निधू-**

**प्रभा .**

कत्वप्रयुक्तानेकसाध्यसाधनसहचारदर्शनरूपकारणाप्रसिद्धया ज्ञानानां यौगपद्याभावेनापेक्षाबुद्धयन्यसाध्यसाधनसहचारविषयकदर्शनगतात्रित्वाद्यवच्छिन्नस्य एकदा वृत्तित्वाप्रसिद्धया च निरुक्तत्रितयभूयोदर्शनान्यतमाभावेऽपि व्यभिचारज्ञानाभावसहकृतसाध्यसाधनसहचारविषयकसकृद्दर्शनाद्व्याप्तिग्रहोत्पत्तेः व्यतिरेकव्यभिचारेण निरुक्तभूयोदर्शनस्य न व्याप्तिनिश्चयहेतुत्वमिति भावः । नन्वेवं सति व्याप्त्यवगमो भूयोदर्शनातर्काद्वेति भाष्यविरोध इत्यत आह ॥ **क्वचिदिति** ॥ व्याप्तिग्रहविशेष इत्यर्थः ॥ **व्यभिचारशङ्काविधूननद्वारेति** ॥ हेतुसंबन्धितत्तदधिकरणेषु साध्याभावभ्रमप्रयुक्ततत्तदधिकरणघटितसाधनसमानाधिकरणाभावप्रतियोगितावच्छेदकसाध्यतावच्छेदकविशेष्यकज्ञानजनकसामग्रीविघटनद्वारेत्यर्थः ॥ **भूयोदर्शनमिति** ॥ अनेकतत्तदधिकरणान्तर्भावेन साध्यसाधनसहचारदर्शनमित्यर्थः ॥ **उपयुज्यत इति** ॥ पूर्ववृत्तित्वरूपप्रयोजकतावदित्यर्थः । तथाच हेतुसंबन्धितत्तदधिकरणे साध्याभावभ्रमप्रयुक्ततत्तदधिकरणघटितसाधनसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वरूपव्यभिचारप्रकारकसाध्यतावच्छेदकविशेष्यकज्ञानस्य हेतुसंबन्धितत्तदधिकरणेषु साध्याभावभ्रमविरोधिहेतुसंबन्धितत्तदधिकरणविशेष्यकसाध्यप्रकारकज्ञानरूपभूयोदर्शनं विना निवृत्त्यसंभवात् एतादृशभूयोदर्शनस्य व्याप्तिज्ञानाव्यवहितपूर्ववृत्तित्वघटितकारणत्वाभावेऽपि व्याप्तिज्ञानपूर्ववृत्तित्वरूपप्रयोजकत्वमक्षतमेवेति भाष्यस्थपञ्चम्या एतादृशप्रयोजकत्वपरत्वात् न तद्विरोध इति भावः । तत्र व्याप्तिग्रहं प्रति व्यभिचारज्ञानाभावत्वरूपगुरुरूपेण हेतुत्वापेक्षया तर्कयामीत्यनुभवेन जिज्ञासाविशेषानिवर्तकतावच्छेदकत्वेन वा सिद्धमानसत्वव्याप्यजातिविशेषरूपवत्त्वेन हेतुत्वं युक्तम् । नच स्वतस्सिद्धव्यभिचारशङ्काविरहस्थले तर्काभावेऽपि व्याप्तिज्ञानोत्पत्तेः व्यतिरेकव्यभिचारेण व्याप्तिज्ञानसामान्ये तर्कस्य हेतुत्वासंभवः व्याप्तिज्ञानविशेषे तादृशव्यभिचाराभावेऽपि तस्यान्यत्र क्लृप्तेत्याद्यन्यथासिद्धत्वं यदि स्वतस्सिद्धशङ्काविरहस्थलेऽपि तर्कं कल्पयित्वैव व्याप्तिज्ञानोत्पत्तिं स्वीकुर्वतां व्यतिरेकव्यभिचाराप्रसक्त्या व्याप्तिज्ञानसामान्य एव तस्य हेतुत्वमित्युच्यते तदा स्थलविशेषे तस्य कल्पनागौरवमिति वाच्यं लाघवात् व्याप्तिज्ञानसामान्ये तत्त्वेन हेतुतासिद्धौ ईदृशकल्पनायाः फलमुखत्वेनादोषत्वात् । तस्माद्व्याप्तिज्ञानसामान्ये तर्कस्य हेतुत्वं निराबाधमिति यत् प्राचीनैकदेशिमतं तदपि प्रतिबन्धकाभावस्य कार्यमात्रहेतुतायाः क्लृप्तत्वात् व्यभिचारज्ञानाभावस्य व्याप्तिज्ञानहेतुत्वमुभयवादिसिद्धं व्यभिचारज्ञानस्य व्याप्तिज्ञानप्रतिबन्धकत्वे हेत्वाभाससामान्यलक्षणस्य व्यभिचारादावव्याप्त्यापत्तेः तस्मात् अन्यथानुपपत्त्या व्यभिचारज्ञानाभावस्य व्याप्तिज्ञानसामान्यहेतुत्वेनोभयमतेऽपि क्लृप्ततया तेनैव सर्वत्र व्याप्तिज्ञानोत्पत्तौ तस्य हेतुत्वमप्रामाणिकमेवेति दूषणीयम् तदुपरि तर्कस्य हेतुत्वानङ्गीकारे तस्य अतद्धेतुत्वप्रतिपादकतर्काद्वेति भाष्यविरोध इति प्रसक्तत्वकृताशङ्कां भाष्यस्थपञ्चम्याः प्रयोजकत्वपरत्वाङ्गीकारेण परिहर्तुमादौ तस्य प्रयोजकत्वमुपपादयति ॥ **यत्रेति** ॥ यादृशाधिकरणविशेषघटितव्यभिचार इत्यर्थः विषयत्वं सप्तम्यर्थः तस्य शङ्कायामन्वयः ॥ **भूयोदर्शनादपीति** ॥ भूयस्सु स्थानेषु साध्यसाधनसहचारदर्शनादपीत्यर्थः अपिशब्दस्तत्पदोत्तरं योज्यः ॥ **शङ्का नापैतीति** ॥ शङ्का न निवर्तत इत्यर्थः ॥ **तत्र विपक्ष इति** ॥ तादृशाधिकरणविशेषघटितव्यभिचारविषयकशङ्कायां इत्यर्थः ॥ **बाधकतर्क इति** ॥ निवर्तकतया तर्कोऽपीत्यर्थः ॥ **अपेक्षित इति** ॥ अवश्यं सम्पादनीय इत्यर्थः तथाच सन्निहितैतत्कालीनधूमसंबन्धितत्तदधिकरणेषु वह्न्यभावभ्रमप्रयुक्तवह्नित्वधर्मिकतत्तदधिकरणघटितधूमसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वरूपव्यभिचारप्रकारकज्ञानं तत्तदधिकरणविशेष्यकवह्न्यभावप्रकारकभ्रमविरोधितत्तदधिकरणविशेष्यकवह्निप्रकारकप्रत्यक्षरूपभूयोदर्शनान्निवर्तत इति तादृशभूयोदर्शनं यथा क्वचिद्व्याप्तिग्रहप्रयोजकं तथा असन्निहितका

**दिनकरीयम्.**

**पीति** ॥ भूयोदर्शनस्याहेतुत्वेऽपि क्वचित्प्रयोजकतया तदादर इत्याह ॥ **क्वचिदिति** ॥ **तर्कोऽपेक्षित**

**मयोः कार्यकारणभावस्य प्रतिसन्धानान्निवर्तते यद्ययं वह्निमान्न स्यात्तदा धूमवान्न स्यात् कारणं विना कार्यानुत्पत्तेः । यदि च क्वचित्कारणं विनापि कार्यं भविष्यति तदाहेतुक एव**

प्रभा.

लान्तरीयधूमसंबन्धितत्तदधिकरणेषु साध्याभावभ्रमप्रयुक्तवह्नित्वधर्मिकतत्तदधिकरणविशेषघटितसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वरूपव्यभिचारज्ञानं तत्तदधिकरणविशेष्यकवह्न्यभावप्रकारकभ्रमविरोधितत्तदधिकरणविशेष्यकवह्निप्रकारकप्रत्यक्षरूपभूयोदर्शनं किञ्चिज्ज्ञानां न संभवति सर्वज्ञानां तादृशभूयोदर्शनं व्यधिकरणतया नास्मदादितत्तदधिकरणविशेष्यकवह्न्यभावप्रकारकभ्रमविरोधीति सर्वज्ञतादृशभूयोदर्शनात् न निवर्तत इति तादृशव्यभिचारज्ञाननिरासकतया अवश्यं तत्स्वीकार इति क्वचिद्व्याप्तिज्ञानप्रयोजकत्वं तर्कस्याप्यक्षतमिति नोक्तभाष्यविरोध इति समुदितग्रन्थतात्पर्यार्थः । स्थलविशेषे व्यभिचारशङ्कानिवर्तकवक्ष्यमाणतर्के कारणीभूतापाद्यव्याप्यापादकवत्तानिश्चयप्रतिबन्धकव्यभिचारशङ्कानुत्पत्तिकारणं आदौ दर्शयति ॥ **तथाहीत्यादिना** ॥ **वह्निविरहिण्यपीति** ॥ संयोगसंबन्धावच्छिन्नवह्नित्वावच्छिन्नप्रतियोगिताकाभाववत्यपीत्यर्थः ॥ **धूमस्स्यादिति** ॥ संयोगेन धूमोत्पत्तिः स्यादिति संयोगसंबन्धावच्छिन्नोत्पत्त्यवच्छेदकतासंबन्धेन धूमस्स्यादिति वार्थः । अपिना संयोगेन वह्निमति धूमोत्पत्तिः समुच्चीयते तेन संयोगेन धूमोत्पत्त्यवच्छेदकाधिकरणे संयोगेन वह्निमत्त्वनिर्णयेन स्वावच्छिन्नोऽन्यवह्नितोत्तरक्षणावच्छेद्यः यः स्वावच्छिन्नतद्व्याप्येतरयावत्कारणाधिकरणवृत्त्यभावः तत्प्रतियोगिरूपकार्योत्पत्तिकत्वरूपान्वयव्यभिचारशङ्काया वह्नित्वेऽनुत्पत्तिः संयोगेन धूमोत्पत्त्यवच्छेदकाधिकरणविशेषे वह्न्यभावभ्रमेण संयोगेन धूमोत्पत्त्यवच्छेदकाधिकरणवृत्त्यभावप्रतियोगितावच्छेदकत्वरूपव्यतिरेकव्यभिचारप्रकारकवह्नित्वविशेष्यकशङ्काया उत्पत्तिश्च लभ्यत इति ॥ **यद्याशङ्का भवतीति** ॥ इत्याशङ्का यदि भवतीति योजना वह्नित्वधर्मिकनिरुक्तव्यतिरेकव्यभिचारशङ्कायाः तत्सामग्रीकाल एव जायमानत्वात् यदीत्युक्तम् ॥ **तदा सेति** ॥ तादृशसमवधानकालीननिरुक्तव्यतिरेकव्यभिचारशङ्केत्यर्थः ॥ **वह्निधूमयोः कार्यकारणभावस्येति** ॥ धूमनिष्ठकार्यत्वस्य वह्निनिष्ठकारणत्वस्य चेत्यर्थः । धूमसमानाधिकरणाभावप्रतियोगितानवच्छेदकत्वान्यथासिद्धयनिरूपकत्वोभयविशिष्टवह्नित्ववत्त्वरूपवह्निनिष्ठधूमकारणत्वस्येति फलितार्थः ॥ **प्रतिसन्धानादिति** ॥ निश्चयादित्यर्थः प्रयोज्यत्वं पञ्चम्यर्थः तस्य निवृत्तिपदार्थेऽन्वयः ॥ **निवर्तत इति** ॥ उत्पत्त्यभाववतीत्यर्थः इदानीं संयोगेन धूमोत्पत्त्यवच्छेदकाधिकरणघटितानिरुक्तव्यभिचारशङ्काजनकतदधिकरणविशेष्यकवह्न्यभावभ्रमनिवर्तकतर्कमाह ॥ **यदीति** ॥ **अयमिति** ॥ धूमोत्पत्त्यवच्छेदकतया निर्णीतपदार्थ इत्यर्थः ॥ **वह्निमान्न स्यादिति** ॥ संयोगेन वह्निमद्भेदवान् स्यादिति वार्थः ॥ **धूमवान्न स्यादिति** ॥ संयोगसंबन्धावच्छिन्नोत्पत्त्यवच्छेदकत्वसंबन्धेन धूमवान्न स्यात् धूमनिष्ठसंयोगसंबन्धावच्छिन्नोत्पत्त्यवच्छेदकत्ववान् न स्यादिति वार्थः । अत्रापाद्यव्याप्यापादकवत्ताज्ञानस्य तद्धेतुतया तादृशतर्के धूमनिष्ठसंयोगसंबन्धावच्छिन्नोत्पत्त्यवच्छेदकत्वाभावरूपापाद्यव्याप्तिविशिष्टवह्न्यभावरूपापादकवत्ताज्ञानं हेतुस्तत्रापादके आपाद्यव्यभिचारज्ञानं प्रतिबन्धकं तदपि धूमवह्न्योः पूर्वोक्तकार्यकारणभावग्रहान्निवर्तत इति न तर्कानुमितिरित्याह ॥ **कारणं विनेति** ॥ कारणतावच्छेदकसंबन्धेन कारणाभाववति कार्यनिष्ठकार्यतावच्छेदकसंबन्धावच्छिन्नोत्पत्त्यवच्छेदकत्वस्य सत्त्वासंभवादित्यर्थः । तथाच कारणतावच्छेदकसंबन्धेन कारणाभावस्य कार्यनिष्ठकार्यतावच्छेदकसंबन्धावच्छिन्नोत्पत्त्यवच्छेदकत्वाभावव्याप्यतया आवश्यकत्वेन वह्निरूपकारणाभावेऽपि कार्यकारणभावग्रहबलात् तादृशावच्छेदकत्वाभावव्यभिचारशङ्कानुत्पत्त्या तादृशावच्छेदकत्वाभावनिरूपितव्याप्यत्वस्य सुग्रहत्वात्तादृशतर्कोत्पत्तिर्निराबाधेति भावः । ननु उक्तरीत्या तादृशतर्कावतारः धूमवह्न्योः कार्यकारणभावनि-

दिनकरीयम्.

इति ॥ शङ्कापनयनार्थं तर्कोऽपेक्षित इत्यर्थः । तद्दर्शयति ॥ **तथा हीत्यादिना** ॥ **यद्ययमिति** ॥ अयं धूमवान् पर्वतः ॥ **कारणं विनेति** ॥ तथा च धूमो वह्निव्यभिचारी स्याद्वह्निजन्यो न स्यादिति तर्काकारो बोध्यः यथाश्रुते वह्निमान्न स्याद्धूमवान्न स्यादिति तर्कस्य विषयपरिशोधकस्य व्याप्तिग्रहानौपयि-

**भविष्यतीति तत्राप्याशङ्का भवेत् तदा सा स्वक्रियाव्याघातादपसारणीया यदिहि कारणं विना कार्यं स्यात्तदा धूमार्थं वह्नेस्तृप्त्यर्थं भोजनस्य च नियमत उपादानं तवैव न स्यादिति ।**

## प्रभा.

श्चये सति स्यात् स एव न संभवति धूमवह्निजन्यत्वसंशयरूपप्रतिबन्धकसत्त्वात् अथवा धूमो यदि वह्निजन्यो न स्यात्तर्हि स्वसमानाधिकरणवह्निमदन्यस्वाव्यवहितप्राक्क्षणकान्यत्वाविशिष्टस्य स्वसमानाधिकरणवह्निमदन्यवह्नितत्समवधानेतरयावत्कारणाधिकरणक्षणकत्वस्याभाववान् स्यादित्यनिष्टप्रसञ्जनात्मकतर्कादेव धूमे वह्निजन्यत्वसंशयनिवृत्तेः तादृशकार्यकारणभावनिश्चयो न विरुध्यत इति चेन्न तादृशतर्के प्रत्यपि आपाद्यव्यतिरेकनिश्चयस्य हेतुतया प्रकृते स्वसमानाधिकरणवह्निमदन्यस्वाव्यवहितप्राक्क्षणकान्यत्वविशिष्टस्वसमानाधिकरणवह्निमदन्यवह्नितत्समवधानेतरयावत्कारणाधिकरणक्षणकत्वरूपापाद्यव्यतिरेकघटकसत्त्वान्तानिश्चये वह्निं विनापि भविष्यतीति शङ्कायाः विशेष्यांशनिश्चये अहेतुक एव भविष्यतीति शङ्कायाश्च प्रतिबन्धकत्वेन विशिष्टात्मकापाद्ये व्यतिरेकस्य निश्चयरूपकारणाभावात् निरुक्ततर्कानवताराात् ईदृशशङ्काद्वयपरिहाराय तर्कान्तरानुसरणे अनवस्थापत्तेरित्याशङ्कां उक्तशङ्काद्वयस्य तर्कान्तरानुसरणं विना निवृत्तिमुपपाद्य परिहरति ॥ **यदिचेति** ॥ भवतीत्युत्तरेण संबध्यते ॥ **क्वचिदिति** ॥ धूमविशेष इत्यर्थः ॥ **कारणं विनापीति** ॥ वह्निं विनापीत्यर्थः । तस्य भविष्यतीत्यनेनान्वयः । अपिना वह्निसत्ताकालीनधूमोत्पत्तिः समुच्चीयते तथाच वह्निसत्त्वे यथा धूमो भविष्यति तथा वह्निं विना कश्चन न धूमो भाविष्यतीति फलितार्थः वह्निं विना भविष्यत्त्वं स्वसमानाधिकरणवह्निमदन्यस्वाव्यवहितप्राक्क्षणकत्वरूपतर्कशङ्कायाः तादृशप्राक्क्षणिकान्यत्वरूपापाद्यव्यतिरेकघटकसत्त्वन्तनिर्णयविघटकत्वं कोटिद्वयोपस्थितिकाल एव तादृशशङ्काद्वयस्य जायमानतया यदिचेत्युक्तम् ॥ **अहेतुक एवेति** ॥ धूमः किं निर्हेतुक एव भविष्यतीत्यर्थः एतत्कोटिकशङ्काया आपाद्यव्यतिरेकघटकस्वसमानाधिकरणवह्निमदन्यवह्नित्समवधानेतरयावत्कारणाधिकरणक्षणकत्वरूपविशेष्यनिर्णयविघटकत्वं ॥ **तदा सेति** ॥ कोटिद्वयोपस्थितिकालीनानिरुक्तशङ्काद्वयमित्यर्थः ॥ **स्वक्रियाव्याघातादिति** ॥ स्वं तर्कप्रयोक्ता पुरुषः तस्य या क्रिया क्रियते प्रवर्त्यतेऽनेनेति व्युत्पत्त्या धूमविशेष्यकवह्न्यन्वयव्यतिरेकानुविधायित्वज्ञानं तत्स्वरूपो व्याघातः विरोधि तस्मादित्यर्थः ॥ **अपसारणीयेति** ॥ निरसनीयेत्यर्थः नतु निरुक्तान्वयव्यतिरेकानुविधायित्वज्ञानस्य तादृशशङ्काद्वयप्रतिबन्धकत्वे मानाभावः ग्राह्याभावावनवगाहित्वादित्याशङ्काया अन्यथानुपपत्त्या मणिमन्त्रादिन्यायेनैव तस्य प्रतिबन्धकत्वं वाच्यमित्याह ॥ **यदीति** ॥ एतस्याध्याहृतेन इत्याशङ्का भवतीत्यनेनान्वयः ॥ **कारणं विना कार्यं स्यादिति** ॥ धूमः स्वसमानाधिकरणवह्निमदन्यस्वाव्यवहितप्राक्क्षणको न वेत्याकारिकाशङ्का अन्वयव्यतिरेकानुविधायित्वज्ञानसत्त्वेऽपि यदि भवतीति समुदितग्रन्थार्थः ॥ **धूमार्थं वह्नेरिति** ॥ उपादानमित्युत्तरेणान्वयः । भोजनस्य चेत्यत्र चकारेण परप्रतिपत्त्यर्थं शब्दस्येति समुच्चीयते स्थलत्रयेऽपि षष्ठ्यर्थो विषयत्वं तस्योपादानपदार्थैकतावन्वयः ॥ **तवैवेति** ॥ निरुक्तान्वयव्यतिरेकानुविधायित्वज्ञानस्य तादृशशङ्काद्वयप्रतिबन्धकत्वानङ्गीकर्तुरेवेत्यर्थः ॥ **न स्यादिति** ॥ नोत्पद्येतेत्यर्थः तथाचान्वयव्यतिरेकानुविधायित्वज्ञानस्य तादृशशङ्काद्वयप्रतिबन्धकत्वानङ्गीकारे तादृशज्ञानोत्तरं तादृशशङ्कोत्पत्तिसंभवेन वह्न्यादाविष्टसाधनताज्ञानानुत्पत्त्या धूमादिकार्यार्थं वह्न्यादौ नियमेन तवैव प्रवृत्त्यनुपपत्तेः तस्मादन्यथानुपपत्त्या विरोध्यविषयकस्यापि तादृशज्ञानस्य मणिमन्त्रादिन्यायेन प्रतिबन्धकत्वं स्वीकार्यमतः न तदर्थं तर्कान्तरापेक्षाप्रयुक्तानवस्थाप्रसक्तिरिति भावः । केचित्तु यद्ययमिति अयं धूमवान् पर्वतः कारणं विनेति तथाच धूमो वह्निव्यभिचारी स्यात् तर्हि वह्निजन्यो न स्यादिति तर्कावकाशो बोध्यः यथाश्रुतवह्निमान्न स्याद्धूमवान् न स्यादिति तर्कस्य विषयपरिशोधकस्य व्याप्तिग्रहानौपयिकतया असङ्गतेरिति मुक्तावलीग्रन्थस्य तात्पर्यार्थमाहुस्तदसत् धूमो वह्निव्यभिचारी स्या-

## दिनकरीयम् ।

कतयासङ्गतेः ॥ **तत्रापि** तादृशतर्ककारणीभूतकार्यकारणभावग्रहेऽपि ॥ **आशङ्का भवेत्** ॥ आशङ्का प्रतिबन्धिका भवेत् । व्याघातमेव दर्शयति ॥ **यदि हीत्यादिना** ॥ ननु तर्के प्रत्यापाद्यव्याप्यापादकवत्ताज्ञानं का

**यत्र स्वत एव शङ्का नावतरति तत्र न तर्कापेक्षापीति तदिदमुक्तम् ॥ तर्कः क्वचिच्छङ्कानिवर्तक इति ॥ १३७ ॥**

## प्रभा.

दिति तर्कस्य कथञ्चिदपि यद्ययं वह्निमान्न स्यात् तर्हि धूमवान्न स्यादितिमुक्तावलीग्रन्थप्रतिपाद्यत्वाभावेन उदक्षरत्वापत्तेः यच्च यथाश्रुततादृशग्रन्थप्रतिपाद्यतर्कस्य विषयपरिशोधकस्य व्याप्तिग्रहानुपयुक्ततया असङ्गतेरिति तदप्ययुक्तम् तर्के हेत्वधिकरणविशेष्यकसाध्याभावशङ्कानिवर्तकत्वादन्यस्य विषयपरिशोधकत्वस्य दुर्वचतया हेत्वधिकरणे साध्याभावशङ्कानिवर्तकतादृशतर्कस्य तादृशशङ्काधीननिरुक्तव्यभिचारशङ्कानिवर्तकत्वस्याप्यक्षतत्वात् धूमो वह्निव्यभिचारी स्यादित्यादि तर्केण व्यभिचारशङ्कानिरासेऽपि देशान्तरीयकालान्तरीयहेतुसंबन्धितत्तदधिकरणेषु साध्याभावशङ्कायाः पुनः व्यभिचारशङ्काया उत्पत्तेरावश्यकतया तादृशव्यभिचारशङ्काया हेतुसंबन्धितत्तदधिकरणेषु साध्याभावशङ्कानिवर्तकतत्प्रदर्शनं विना अत्यन्तोच्छेदासंभवाच्च परन्तु धूमो वह्निव्यभिचारी स्यादित्यादितर्कस्य साक्षाद्व्यभिचारशङ्कानिवर्तकत्वं निर्वह्निस्स्यादित्यादितर्कस्य तु परम्परया तन्निवर्तकत्वमिति वस्तुगतिः ॥ **यत्रेति** ॥ यत्साध्यहेत्वोः व्याप्तिज्ञान इत्यर्थः विरोधित्वं सप्तम्यर्थः । तस्य शङ्कायामन्वयः ॥ **स्वत एवेति** ॥ केवलान्वयित्वग्रहप्रयुक्ततत्साध्यतदभावरूपकोटिद्वयोपस्थितिविरहादेवेत्यर्थः ॥ **शङ्केति** ॥ तद्धेत्वधिकरणे तत्साध्याभावशङ्काप्रयुक्तव्यभिचारशङ्केत्यर्थः ॥ **नावतरतीति** ॥ नोत्पत्तुमर्हतीत्यर्थः तादृशहेत्वधिकरणविशेष्यकसाध्याभावशङ्कारूपकारणविरहादिति भावः ॥ **तत्रेति** ॥ तत्साध्यहेत्वोर्व्याप्तिज्ञान इत्यर्थः ॥ **न तर्कापेक्षेति** ॥ सामग्रीविरहादेव व्यभिचारशङ्कानुत्पत्तेः तन्निवर्तकतर्को नाङ्गीकर्तव्य इत्यर्थः तथाच नानवस्थेति भावः उक्तार्थस्य मूलाप्रतिपाद्यत्वान्न्यूनतेति शङ्कापरिहाराय तस्य मूलकारानुमतत्वं प्रकाशयति ॥ **तदिति** ॥ तदेवेत्यर्थः पूर्वोक्तमेवेति यावत् इदमित्यादितर्कः क्वचित् शङ्कानिवर्तक इति मूलोक्तमिदमित्यर्थः । तथाच न न्यूनतेति भावः । ननु तर्कसामान्यस्य साक्षात्परम्परया वा व्यभिचारज्ञानप्रतिबन्धकत्वे प्रमाणाभावः वह्निव्यभिचारित्वरूपापादके वह्निजन्यत्ववदवृत्तित्वरूपवह्निजन्यत्वाभावात्मकापाद्यव्याप्यत्वप्रकारकज्ञानस्य च तत्कारणत्वेन तत्पूर्वमावश्यकतया तेनैव व्यभिचारज्ञाननिवृत्तेः तद्विरुद्धज्ञानकालीनतद्वत्ताज्ञानस्य तद्विरुद्धतया ज्ञायमानधर्मप्रकारकज्ञानप्रतिबन्धकत्वादिति चेदत्र मणिकारप्रभृतयः अनाहार्यतादृशज्ञानस्य निरुक्तज्ञानप्रतिबध्यत्वेऽपि आहार्यज्ञानस्य केनाप्यप्रतिबध्यत्वान्निरुक्तज्ञानकाले आहार्यव्यभिचारादिज्ञानोत्पत्तौ बाधकाभावेन तन्निरासार्थं तर्कस्यावश्यकत्वात् । नच तर्कानङ्गीकारेऽपि तेन कथं तादृशशङ्कानिरास इति वाच्यम् अनिष्टप्रसञ्जनात्मकतर्केणापाद्यज्ञाने द्वेषस्यैवोत्पत्त्या तेन चात्र प्रतिबन्धात् तादृशज्ञानस्य इष्टत्वाभावेनापादकज्ञाने इष्टसाधनताज्ञानानुत्पत्त्या कारणाभावेन इच्छाया अनुत्पत्त्या आहार्यशङ्काया उत्पत्त्यसंभवात् तादृशशङ्कां प्रति इच्छायाः कारणत्वादिति रीत्या तर्कस्य तादृशशङ्कानिवर्तकत्वमित्याहुः । उपाध्यायप्रभृतयस्तु व्यभिचारज्ञानस्य व्याप्तिज्ञानप्रतिबन्धकतायां तर्कस्य उत्तेजकत्वस्वीकारात् तर्ककाले व्यभिचारज्ञानसत्त्वेऽप्युत्तेजकाभावविशिष्टव्यभिचारज्ञानाभावरूपकारणसंभवात् तत्सम्पादकत्वरूपं औपचारिकमेव व्यभिचारशङ्कानिवर्तकत्वं तस्येत्याहुः । दीधितिकारप्रभृतयस्तु आहार्यज्ञानसाधारणतत्प्रकारकबुद्धित्वावच्छिन्नं प्रति तदापादकतर्कत्वेन मणिमन्त्रादिन्यायेनानुमितौ सिद्धेरिव तर्कस्यापि प्रतिबन्धकत्वं आवश्यकमिति प्राहुः । तर्को द्विविधः साक्षाद्व्यभिचारशङ्कानिवर्तकः परम्परया च आद्यः धूमो वह्निव्यभिचारी स्यात् वह्निजन्यो न स्यादिति । द्वितीयस्तु वह्न्यभाववान् स्यात् तर्हि धूमाभाववान् स्यादिति । ए-

## दिनकरीयम्.

रणं तत्र व्याप्तिज्ञानप्रतिबन्धकव्यभिचारशङ्कानिवर्तकस्तर्कोऽपेक्षित एवमग्रेऽपीत्यनवस्थेत्यत आह ॥ **यत्रेति** ॥ **स्वत एव** शङ्कासामग्रीविरहादेव । न तर्कापेक्षेत्यनन्तरमतो नानवस्थेति शेषः । ननु तर्कस्य न व्यभिचारशङ्कानिवर्तकत्वं तर्ककारणीभूतव्याप्तिज्ञानेनैव तन्निवृत्तेः सम्भवादिति चेदत्र केचित् अनाहार्यशङ्कायास्तर्ककारणीभूतव्याप्तिज्ञानेन निराससम्भवेऽप्याहार्यशङ्कायास्ततो निवृत्तिर्न सम्भवति आहार्यज्ञानस्य तदप्रतिबध्यत्वात् किं तु तर्केणैव तथा हि अनिष्टप्रसञ्जनात्मकेन तर्केणापादकज्ञाने आपाद्यज्ञानरूपानिष्टसाधनत्व-

**साध्यस्य व्यापको यस्तु हेतोरव्यापकस्तथा ।**
**स उपाधिर्भवेत् तस्य निष्कर्षोऽयं प्रदर्श्यते ॥ १३८ ॥**

इदानीं परकीयव्याप्तिग्रहप्रतिबन्धार्थमुपाधिं निरूपयति ॥ साध्यस्येति ॥ साध्य-

**प्रभा**

तस्य धूमवति वह्न्यभावशङ्कानिरासद्वारा हेतुताव्यभिचारशङ्कानिरासकत्वात् अयमेव तर्को विषयपरिशोधक इति व्यवह्रियते इदंत्ववधेयं तर्के त्रयो दोषाः इष्टापत्तिः मूलशैथिल्यं विपर्यये तर्ककोटिमात्रापर्यवसानं चेति ह्रदो निर्वह्निः स्यात् निर्धूमः स्यादित्यादितर्के आद्यो दोषः ह्रदो यदि निर्वह्निस्स्यात् तर्हि द्रव्यं न स्यादित्यादितर्के द्वितीयः वह्न्यभावादेर्द्रव्यत्वाभावाद्यव्याप्यत्वात् रूपे चक्षुर्ग्राह्यत्वशङ्कानिरासतात्पर्यके रूपं चक्षुरितराग्राह्यत्वे सति चक्षुर्ग्राह्यं न स्यात् तर्हि ग्राह्यं न स्यादित्यादितर्के तृतीयः एतादृशतर्कोत्तरं आहार्याभावरूपग्राह्यत्वलिङ्गेन चक्षुरितराग्राह्यत्वविशिष्टचक्षुर्ग्राह्यत्वाभावत्वावच्छिन्नप्रतियोगिताकाभावत्वरूपविशिष्टाभावत्वेनापादकाभावरूपस्य चक्षुर्भिन्नाग्राह्यत्वचक्षुर्ग्राह्यत्वोभयस्य तादृशान्यतरस्य वा सिद्धावपि तेन रूपेण चक्षुर्ग्राह्यत्वमात्रस्य व्यापकतावच्छेदकाभिमतकोटितावच्छेदकचक्षुर्ग्राह्यत्वेन चक्षुर्ग्राह्यत्वस्य वा असिद्धेः विपर्यये आपाद्याभावेनापादकाभावसाधनेन तत्कोटिमात्रापर्यवसानं व्यापकतावच्छेदकविशिष्टाभावत्वेन चक्षुर्ग्राह्यत्वरूपाभिमतकोटिमात्रासिद्धिः व्यापकतावच्छेदकचक्षुर्ग्राह्यत्वत्वेन चक्षुर्ग्राह्यत्वरूपकोटयसिद्धिर्वेत्यस्यैव विपर्यये तत्कोटिमात्रापर्यवसानशब्दार्थत्वेन प्रकृते तादृशदोषसंभवात् उक्तदोषत्रयान्यतमाविशिष्ट एव तर्काभास इति तादृशान्यतमशून्यतर्क एव सत्तर्क इति गीयत इति दिक् ॥ १३७ ॥

ननु व्याप्तिग्रहोपायनिरूपणानन्तरं उपाधिनिरूपणमयुक्तं उपाधेर्व्याप्तिग्रहोपायासङ्गतत्वादित्याशङ्कां सङ्गतिप्रदर्शनेन स्वयं परिहरति ॥ इदानीमिति ॥ व्याप्तिग्रहोपायनिरूपणानन्तरामित्यर्थः ॥ **उपाधिं निरूपयतीति** ॥ प्रसङ्गसङ्गत्येत्यादिः उपाधेर्लक्षणं स्वरूपं च प्रदर्शयतीत्यर्थः तथाच व्याप्तिज्ञानप्रतिबन्धकतावच्छेदकव्यभिचारानुमापकत्वेन उपाधेस्स्मरणात् स्मृतस्य उपेक्षानर्हत्वरूपप्रसङ्गसङ्गत्या तन्निरूपणानन्तरं उपाधिनिरूपणमिति नोक्ताशङ्केति भावः । ननु साध्यस्य व्यापको यस्त्वित्यादिमूलेन साध्यव्यापकत्वघटितमुपाधिलक्षणमुक्तं तदयुक्तं धूमादेतुरमिति विधेयत्वरूपसाध्यत्वाभावाद्वह्न्यादेस्तदनुमापकरूपसाधनत्वाभा-

**दिनकरीयम्**

ज्ञानजननद्वारा आपादकज्ञाने द्वेषो जन्यते तेन चापादकज्ञाने इच्छाप्रतिबन्धः क्रियते एवं चेच्छारूपकारणविरहादेव नाहार्यशङ्कोत्पत्तिरित्यर्थवशसम्पन्नमेव तर्के तन्निवर्तकत्वमिति । केचित्तु तर्कस्य शङ्कानिवर्तकत्वं व्याप्तिज्ञानकारणीभूतो यो व्यभिचारशङ्काविरहस्तत्सम्पादकत्वं एवं च व्यभिचारशङ्काप्रतिबन्धकतायां तर्कस्योत्तेजकतयोत्तेजकाभावविशिष्टव्यभिचारशङ्काविरहसम्पादकत्वमक्षुण्णमेव तर्कस्येत्याहुः । परे तु तदापादकापत्तित्वेनाहार्यानाहार्यसाधारणतद्विशिष्टबुद्धित्वावच्छिन्नं प्रति प्रतिबन्धकतया तर्कस्य व्यभिचारशङ्कानिवर्तकत्वमित्याहुः । तर्कश्चाहार्यारोपविशेषः तत्त्वं च मानसत्वव्याप्यो जातिविशेषस्तर्कयामीत्यनुभवाज्जिज्ञासाविशेषनिवर्तकतया वा सिद्ध इति । तर्कश्च द्विविधो विषयपरिशोधको व्याप्तिग्राहकश्चेति । तत्र विषयपरिशोधको निर्वह्निः स्यान्निर्धूमः स्यादित्यादिः । धूमो यदि वह्निव्यभिचारी स्याद्वह्निजन्यो न स्यादित्यादिश्च व्याप्तिग्राहकः । विस्तरस्त्वन्यत्रानुसन्धेयः ॥ १३७ ॥

**इदानीं** व्याप्तिग्रहोपायनिरूपणोत्तरं व्याप्तिनिश्चयाभावप्रयोजकव्यभिचारशङ्काकारणज्ञानविषयत्वेनोपाधेः स्मरणे सति । तथा च प्रसङ्गसङ्गत्योपाधिनिरूपणमिति भावः । सिद्धिविषयत्वरूपसाध्यत्वस्य सिद्धिजनकत्वरूपसाधनत्वस्य च सोपाधावभावादाभिमतेति । यो यदवच्छिन्नव्यापकत्वे सति यदवच्छिन्नाव्यापकः स तदवच्छिन्नसाध्यकतदवच्छिन्नहेतावुपाधिरित्यर्थः । यथाश्रुतेऽभिमतस्य विशेषणत्वे यत्र न तदभिमानस्तत्राव्याप्तिः स्यात् यदवच्छिन्नविवक्षणाद्गुणकर्मान्यत्वविशिष्टसत्तावाञ्जातिमत्त्वादित्यादौ संयोगी गुणकर्मान्यत्वविशिष्टसत्त्वादित्यादौ च नाव्याप्त्यतिव्याप्ती । व्यापकत्वाव्यापकत्वे एकप्रकारेणैकसम्बन्धेन च वि-

त्वाभिमतव्यापकत्वे सति साधनत्वाभिमताव्यापकत्वमुपाधिरित्यर्थः। ननु स श्यामो मित्रातनयत्वादित्यत्र शाकपाकजन्यत्वं नोपाधिः स्यात् तस्य साध्यव्यापकत्वाभावात् श्यामत्वस्य घटादावपि सत्त्वात्। एवं वायुः प्रत्यक्षः प्रत्यक्षस्पर्शाश्रयत्वादित्यत्रोद्भूतरूपवत्त्वं नो-

## प्रभा.

वाचेत्याशङ्कां परिहरति ॥ **मुक्तावल्यां साध्यत्वाभिमतेति** ॥ साध्यतावच्छेदकत्वेनाभिमतधूमत्वावच्छिन्नेत्यर्थः ॥ **साधनत्वाभिमतेति** ॥ साधनत्वावच्छेदकत्वेनाभिमतवह्नित्वाद्यवच्छिन्नेत्यर्थः तेन गुणकर्मान्यत्वविशिष्टसत्तावान् जातेरित्यादौ संयोगी गुणकर्मान्यत्वविशिष्टसत्त्वादित्यादौ च द्रव्यत्वादौ अव्याप्तेरतिव्याप्तेश्च नावकाशः। व्यापकत्वाव्यापकत्वे एकधर्मावच्छिन्नत्वेन एकसंबन्धावच्छिन्नत्वेन च विवक्षणीये इति तेन वह्निमान् धूमादित्यादौ एकरूपेण एकसंबन्धेन साध्यव्यापकस्य द्रव्यत्वादेः रूपान्तरेण संबन्धान्तरेण च साधनाव्यापकत्वेऽपि नातिव्याप्तिः तथाच तत्संबन्धघटितसाध्यतावच्छेदकत्वेनाभिमतधर्मावच्छिन्नव्यापकतावच्छेदकतत्संबन्धघटितसाधनतावच्छेदकत्वेनाभिमतधर्मावच्छिन्नाव्यापकतावच्छेदकधर्मविशिष्टं तद्धर्मावच्छिन्नसाध्यकतद्धर्मावच्छिन्नहेतौ तेन रूपेण उपाधिरिति फलितम्। अत्र साध्यतावच्छेदकत्वादिनाभिमतत्वं न विशेषणं यत्र न तादृशाभिमानः तत्रत्योपाधावव्याप्त्यापत्तेः किन्तु अनुगमार्थमुपलक्षणं तदिति बोध्यम्। यद्यपि उपाधिपदस्य साध्यव्यापकत्वादिविशिष्टरूढत्वेऽपि उप स्वसमीपवर्तिनि स्वीयधर्ममादधातीति योगेन तस्य साध्यव्यापकत्वविशिष्टबोधकत्वात् साध्यसमव्यापकत्वघटितमेवोपाधिलक्षणमावश्यकं तथापि हेतौ स्वव्यभिचारेण साध्यव्यभिचारोन्नायकत्वादिरूपदूषकताबीजस्य विषमव्यापकेऽपि सत्त्वात्तस्यापि उपाधित्वमिष्टमिति नवीनमतानुसारेण साध्यव्याप्यत्वरूपयोगार्थाघटितं उपाधिलक्षणमेव कृतमिति हृदयम् ॥ **स श्याम इति** ॥ अत्र तच्छब्दः काकपरः न श्याममित्रातनयव्यक्तिपरः ध्वंसो विनाशी जन्यत्वादित्यादिवक्ष्यमाणेन पौनरुक्त्यापत्तेः काकपरत्वे प्रथमहेतोः स्वरूपासिद्धत्वरूपदोषान्तरसङ्कीर्णव्यभिचारित्वात् वक्ष्यमाणजन्यत्वरूपहेतोर्बाधितत्वरूपदोषान्तरसङ्कीर्णव्यभिचारित्वाच्च न पौनरुक्त्यप्रसक्तिः। वस्तुतस्तु तच्छब्दस्य मित्रातनयविशेषपरत्वेऽपि न पौनरुक्त्यं मित्रातनयत्वहेतोः केवलव्यभिचारित्वात् जन्यत्वहेतोः बाधितत्वरूपदोषान्तरसङ्कीर्णव्यभिचारित्वाच्च। नच तस्य बाधितत्वे प्रमाणाभाव इति वाच्यम्। ध्वंसस्य ध्वंसस्वीकारे घटोन्मज्जनप्रसङ्गरूपबाधकस्यैव प्रमाणत्वादित्यत्रेत्याद्यसन्न्यायघटकहेतुपदप्रतिपाद्यहेताविस्यर्थः ॥ **शाकपाकजत्वमिति** ॥ शाकाद्याहारपरिणामजन्यत्वमिति तदर्थः ॥ **तस्येति** ॥ शाकपाकजत्वस्येत्यर्थः ॥ **साध्यव्यापकत्वाभावादिति** ॥ केवलसाध्यव्यापकत्वाभावादित्यर्थः एतदेवोपपादयति ॥ **श्यामत्वस्येति** ॥ श्यामत्वरूपसाध्यस्येत्यर्थः ॥ **घटादाविति** ॥ आदिपदेन शाकपाकजत्वशून्यश्यामद्रव्यमात्रपरिग्रहः अपिशब्दाच्छाकपाकजेऽपि श्यामत्वसत्त्वं समुच्चीयते तथाच शाकपाकजत्वस्य श्यामत्वसमानाधिकरणत्वेऽपि तद्व्यापकत्वाभावात् केवलसाध्यव्यापकत्वघटितोपाधिलक्षणं तत्राव्याप्तमिति भावः। यद्यपि स श्याम इत्यादौ शाकपाकजत्वस्य वायुः प्रत्यक्ष इत्यादौ उद्भूतरूपस्य ध्वंसो विनाशीत्यादौ भावत्वस्य चोपाधित्वानङ्गीकारेऽपि क्षतिविरहात् तत्र निरुक्तलक्षणासत्त्वेऽपि क्षतिविरहः नच तेषां अनुपाधित्वे तत्तद्धेतूनामनौपाधिकत्वापत्त्या व्यभिचारे चावश्यमुपाधिरिति नियमभङ्गप्रसङ्ग इति वाच्यम् व्यभिचारनिरूपकाधिकरणान्यत्वा-

## दिनकरीयम्.

वच्छिते तेन द्रव्यत्वत्वेन समवायसम्बन्धेन च वह्निं प्रति व्यापकस्य द्रव्यत्वस्य द्वित्वादिना संयोगादिसम्बन्धेन च धूमं प्रत्यव्यापकत्वेऽपि वह्निमान् धूमादित्यत्र द्रव्यत्वादौ नातिव्याप्तिः ॥ **स श्याम इति** ॥ काकः श्यामो मित्रातनयत्वादित्यादावित्यर्थः। तेन वक्ष्यमाणेन ध्वंसो विनाशी जन्यत्वादित्यनेन न पौनरुक्त्यं अस्य साधनावच्छिन्नसाध्यव्यापकत्वादग्रिमस्य साधनरूपपक्षधर्मावच्छिन्नसाध्यव्यापकत्वात्। साध्याव्यापकत्वमुपपादयति ॥ **श्यामत्वस्येति** ॥ ननु साधनावच्छिन्नसाध्यव्यापकत्वं विवक्षणीयमतो नोक्ताव्याप्तिरतः पक्षधर्मावच्छिन्नसाध्यव्यापकोपाधावव्याप्तिमाह ॥ **एवं वायुरिति** ॥ अत्र प्रत्यक्षं प्रत्युद्भूतरू-

पाधिः स्यात् प्रत्यक्षत्वस्यात्मादिषु सत्त्वात् तत्र च रूपाभावात् । एवं ध्वंसो विनाशी जन्यत्वादित्यत्र भावत्वं नोपाधिः स्याद्विनाशित्वस्य प्रागभावेऽपि सत्त्वात् तत्र भावत्वाभावादिति चेन्न यद्धर्मावच्छिन्नसाध्यव्यापकत्वं तद्धर्मावच्छिन्नसाधनाव्यापकत्वमित्यर्थे तात्प-

## प्रभा.

देरेव निरुक्तलक्षणलक्षितस्य उपाधित्वस्वीकारात् तत्तद्धेतूनामनुपाधित्वाभावेन उक्तनियमभङ्गानवकाशात् तथापि शाकाद्याहारपरिणामजन्यमित्रातनय एव श्यामोत्पत्त्या तादृशपरिणामजन्यत्वस्यैव तदुत्पत्तिनियामकत्वात्तस्यैव मुख्योपाधित्वं एवंच प्राचां मते बहिर्द्रव्यप्रत्यक्षमात्रे उद्भूतरूपस्य कारणतया तस्यैव मुख्योपाधित्वं एवमेव प्रागभाववृत्तिप्रतियोगिताभिन्नप्रतियोगितासंबन्धेन नाशं प्रति जन्यभावत्वेन हेतुत्वेनाभावत्वस्यापि कारणतावच्छेदकत्वात्तत्र तस्यैव मुख्योपाधित्वमिति प्राचीनैकदेशिमतानुसारेण तेषां लक्ष्यत्वमङ्गीकृत्योक्तलक्षणस्य तत्राव्याप्तिरभिहितेति ध्येयम् । केचित्तु ननु साधनावच्छिन्नसाध्यव्यापकत्वं विवक्षणीयमतो नोक्तातिव्याप्तिः अतः पक्षधर्मावच्छिन्नसाध्यव्यापकोपाधावव्याप्तिमाह एवं वायुरित्यवतरन्ति तदसत् उपाधिलक्षणस्य साधनावच्छिन्नत्वघटितस्यात्र ग्रन्थकाराभिमतत्वे वायुः प्रत्यक्षः प्रत्यक्षस्पर्शाश्रयत्वादित्यादिस्थलीयोद्भूतरूपेऽपि तादृशोपाधिलक्षणसत्त्वेनाव्याप्त्यप्रसक्तेः नच वायुः प्रत्यक्षः द्रव्यत्वादितिमूलपाठाभिप्रायेणेयमवतरणिका तत्रत्योद्भूतरूपात्मकोपाधौ साधनावच्छिन्नत्वघटितलक्षणस्याप्यभावेनाव्याप्तिप्रसक्तेरिति वाच्यम् । तथा सति स श्यामो द्रव्यत्वादिति मूलपाठस्यापि संभवेन तत्स्थलीयशाकपाकजत्वरूपोपाधौ साधनावच्छिन्नसाध्यव्यापकत्वघटितलक्षणस्याप्यभावेनाव्याप्तेरनुद्धारात् वायुः प्रत्यक्ष इत्यनन्तरं द्रव्यत्वादित्येव मूलपाठः स श्याम इत्युत्तरं मित्रातनयत्वादित्येव मूलपाठ इत्यत्र युक्त्यभावेन उभयत्र द्रव्यत्वादिति पाठः स श्याम इत्यत्र मित्रातनयत्वादिति वायुः प्रत्यक्ष इत्यत्र प्रत्यक्षस्पर्शाश्रयत्वादिति पाठो वा स्वीकर्तव्य इत्युभयथाप्युक्तावतरणिका अयुक्तैव तस्मात् स्थलत्रयस्यापि समानत्वेन पूर्वस्थलीयोपाधौ अव्याप्त्यलग्नप्रदर्शनपूर्वकतया एवमित्याद्युत्तरकल्पनावतरणे बीजं मृग्यमिति प्रतिभाति ॥ **यद्धर्मावच्छिन्नसाध्यव्यापकत्वमिति** ॥ सामानाधिकरण्यसंबन्धेन यद्धर्मविशिष्टसाध्यतावच्छेदकसंबन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नवन्निष्ठान्योन्याभावप्रतियोगितानवच्छेदकत्वमित्यर्थः ॥ **तद्धर्मावच्छिन्नसाधनाव्यापकत्वमिति** ॥ निरुक्तसंबन्धेन तद्धर्मविशिष्टसाधनत्वावच्छेदकसंबन्धावच्छिन्नसाधनतावच्छेदकधर्मावच्छिन्नवन्निष्ठान्योन्याभावप्रतियोगितावच्छेदकत्वमित्यर्थः तेन स श्यामो मित्रातनयत्वादित्यत्र शाकपाकजत्वरूपोपाधेः कालिकसंबन्धेन मित्रातनयत्वविशिष्टश्यामत्वाव्यापकत्वेऽपि नाव्याप्तिः नवा वह्निमान् धूमादित्यादौ सामानाधिकरण्यसंबन्धेन पर्वतनिष्ठतद्व्यक्तित्वविशिष्टवह्नित्वावच्छिन्ननिरूपितनिरुक्तव्यापकताश्रयवदार्द्रेन्धनसंयोगव्यक्तेः कालिकसंबन्धेन तादृशव्यक्तित्वविशिष्टधूमत्वावच्छिन्नाव्यापकत्वेऽपि न तत्रातिव्याप्तिः । एवमेवाव्यापकत्वव्यापकत्वघटकसंबन्धविशेषधर्मविशेषप्रयोजनन्तु उभयमूह्यम् । नन्वेवमपि वायुः प्रत्यक्षः प्रत्यक्षस्पर्शाश्रयत्वादित्यत्र उद्भूतरूपवत्त्वेऽव्याप्तिः यत्पदार्थबहिर्द्रव्यत्वावच्छिन्नत्ववति प्रत्यक्षघटादौ कुडयादिवृत्तित्वविशिष्टरूपवद्भेदस्य रूपकुडयत्वोभयवद्भेदस्य च सत्त्वात् कुडयादिसमवेतरूपव्यक्तिमद्भेदस्य सत्त्वाच्च । एवं वह्निमान् धूमादित्यादौ रूपेऽतिव्याप्तिः रूपत्वेन पर्वतत्वविशिष्टवह्निव्यापकत्वात् तत्पर्वतवृत्तित्वविशिष्टरूपत्वेन रूपघटत्वोभयत्वेन रूपनिष्ठतद्व्यक्तित्वेन वा पर्वतत्वविशिष्टधूमाव्यापकत्वाच्चेति चेन्न यद्धर्माधिकरणसाध्यतावच्छेदकसंबन्धेन साध्यतावच्छेदकावच्छिन्नाधिकरणनिष्ठान्योन्याभावप्रतियोगितानिरूपितयत्संबन्धावच्छिन्नावच्छेदकतानवच्छेदकः यद्धर्माधिकरणसाधनतावच्छेदकसंबन्धेन साधनतावच्छेदकावच्छिन्नाधिकरणनिष्ठान्योन्याभावप्रतियोगितानिरूपिततत्संबन्धावच्छिन्नावच्छेदकतावच्छे-

## दिनकरीयम्.

पस्याव्यापकत्वे रूपत्वस्य सुतरामव्यापकत्वमित्युद्भूतपदं व्यर्थं तथाप्युपाधेः साध्यव्यापकत्वे कार्यकारणभावलक्षणानुकूलतर्कदर्शनार्थं तदिति ध्येयम् । पक्षधर्मावच्छिन्नसाध्यव्यापकत्वोक्तौ तु पूर्वोक्तशाकपाकजत्वा-

र्यात् मित्रातनयत्वावच्छिन्नश्यामत्वस्य व्यापकं शाकपाकजत्वं तदवच्छिन्नसाधनाव्यापकं च। एवं पक्षधर्मबहिर्द्रव्यत्वावच्छिन्नप्रत्यक्षत्वस्य व्यापकमुद्भूतरूपवत्त्वं एवं बहिर्द्रव्यत्वावच्छि-

प्रभा.

दकश्च यो धर्मः तद्वत्त्वं तद्धर्मावच्छिन्नसाध्यकतद्धर्मावच्छिन्नहेतुकसंबन्ध्युपाधित्वमिति विवक्षणान्नोक्तदोषः व्यापकत्वाव्यापकत्वघटकप्रतियोगितावच्छेदकतयोः एकसंबन्धावच्छिन्नत्वविवक्षणात् । नापि संबन्धभेद-निबन्धनदोषप्रसक्तिः यद्धर्मविशिष्टसाध्यनिरूपितव्यापकत्वमपहाय यद्धर्माश्रयघटितस्य केवलसाध्यनिरूपित-व्यापकत्वस्य निवेशाद्धूमवान्वह्नेरित्यादौ महानसपर्वतान्यतरत्वविशिष्टधूमत्वस्य केवलधूमत्वघटिततया ता-दृशान्यतरत्वविशिष्टधूमत्वावच्छिन्ननिरूपितव्यापकत्वाप्रसिद्धावपि आर्द्रेन्धनादौ नाव्याप्तिः । यद्यपि साधनावच्छिन्नसाध्यव्यापकत्वघटितं पक्षधर्मावच्छिन्नसाध्यव्यापकत्वघटितं वा उपाधिलक्षणमुचितं तद्धर्मा-वच्छिन्नत्वाविशेषितसाधनाव्यापकत्वघटितत्वेन लघुत्वात् स श्याम इत्यादिस्थले तथीमयशाकपाकजत्वोद्भू-तरूपवत्त्वाभावत्वरूपोपाधिष्वेतादृशलक्षणसत्त्वेनोक्ताव्याप्त्यनवकाशाच्च तथापि काकः श्यामः मित्रातनयत्वा-दित्यत्र शाकपाकजत्वन्नोपाधिस्स्यात् मित्रातनयत्वस्य साधनत्वाभावात्पक्षधर्मत्वाभावात् एवं आत्मा प्रत्यक्षः द्रव्यत्वादित्यत्र उद्भूतरूपत्वं नोपाधिस्स्यात्तत्र प्रत्यक्षस्पर्शाश्रयत्वस्य साधनत्वाभावात् बहि-र्द्रव्यत्वस्य पक्षधर्मत्वाभावाच्च एवं प्रागभावो विनाशी प्रमेयत्वादित्यत्र भावत्वन्नोपाधिः स्यात् जन्यत्वस्य साधनत्वाभावात् पक्षधर्मत्वाभावाच्च अतः श्यामत्वविनाशित्वप्रत्यक्षत्वसाध्यकासद्धेतुमात्रे शाकपाकजत्वादित्रयाणामुपाधित्वोपपत्तये गुर्वपि निरुक्तोपाधिलक्षणमेवाङ्गीकृतम् । अत्र यद्यपि उपाध्यधिकर-णसाध्याधिकरणोपाधिशून्यसाध्यव्यभिचारनिरूपकाधिकरणैतदन्यतरत्वावच्छिन्नसाध्यव्यापकत्वघटितमेवोपा-धिलक्षणमुचितं केवलसाधनाव्यापकत्वघटितत्वेन लाघवात् निरुक्तोपाधिष्वाव्याप्त्यभावाच्च तथापि श्यामत्वसा-ध्यकासद्धेतुसामान्यस्थलीयशाकपाकजत्वरूपोपाधौ मित्रातनयत्वरूपधर्मावच्छिन्नसाध्यव्यापकत्वघटितोपाधि-लक्षणस्यापि संभवात् प्रत्यक्षत्वसाध्यकासद्धेतुमात्रस्थलीयोद्भूतरूपवत्त्वस्वरूपोपाधौ बहिर्द्रव्यत्वावच्छिन्नसा-ध्यव्यापकत्वघटितोपाधिलक्षणस्यापि संभवाद्विनाशित्वसाध्यकासद्धेतुमात्रस्थलीयभावत्वरूपोपाधौ जन्यत्वाव-च्छिन्नसाध्यव्यापकत्वघटितोपाधिलक्षणस्यापि संभवाच्च तद्धर्मघटितलक्षणासङ्ग्रहे न्यूनतेति तत्सङ्ग्रहाय गुर्वपि यद्धर्मावच्छिन्नेत्यादिलक्षणमेवादृतम् । अत एवान्ततः तदन्यतरत्वावच्छिन्नसाध्यव्यापकत्वं साधनाव्यापकत्वं चोपाधेस्संभवतीति अग्रिमग्रन्थेऽन्तत इति पदं साधु सङ्गच्छते । नच किञ्चिद्धर्मावच्छिन्नसाध्यव्यापकत्वघटि-तमेवोपाधिलक्षणमस्तु निरुक्तलाघवसत्त्वात् व्यभिचारिस्थलीयसर्वोपाधिषु लक्षणसमन्वयाच्चेति वाच्यम् त-थासति वह्निमान् धूमादित्यादौ पर्वतीयार्द्रेन्धनस्य उपाधित्वापत्तेः तस्य तत्पर्वतत्वादिरूपकिञ्चिद्धर्मावच्छिन्न-साध्यव्यापकत्वात् महानसान्तर्भावेन साधनाव्यापकत्वाच्च । यद्धर्मावच्छिन्नेत्यादिलक्षणस्वीकारे तु पर्वतत्वरूप-धर्मावच्छिन्नसाध्यव्यापकस्य पर्वतीयार्द्रेन्धनस्य पर्वतत्वविशिष्टधूमाव्यापकत्वाभावेन न तस्योपाधित्वप्रसक्ति-रिति दिक् ॥ **इत्यर्थे तात्पर्यादिति** ॥ साध्यस्य व्यापको यस्त्वित्याद्मूलस्योक्तार्थबोधतात्पर्येण प्रयुक्तत्वा-दित्यर्थः । तथाच मूलस्थसाध्यपदस्य यद्धर्मावच्छिन्नसाध्यपरत्वात् मूलस्थसाधनपदस्य यद्धर्मावच्छिन्नसाधनप-रत्वाच्चोक्तार्थलाभ इति भावः एतादृशपरिष्कृतलक्षणस्य नोक्तोपाधिष्वव्याप्तिप्रसक्तिरित्याह ॥ **मित्रातनय-त्वावच्छिन्नस्येत्यादिना** ॥ **उद्भूतरूपवत्त्वमिति** ॥ ननु आत्मान्यद्रव्यवृत्तिलौकिकविषयतासंबन्धेन प्रत्यक्षं प्रत्युद्भूतरूपत्वावच्छिन्नस्य व्यापकत्वे सुतरां रूपत्वावच्छिन्नस्य तथेत्युद्भूतपदं व्यर्थमिति चेत् अत्र के-चित् उपाधेस्साध्यव्यापकत्वे कार्यकारणभावलक्षणानुकूलतर्कदर्शनार्थं तदिति ध्येयमित्याहुः तदसत् विषयता-संबन्धेन प्रत्यक्षं प्रति उद्भूतरूपस्यात्मघटीयरूपादिप्रत्यक्षे व्यभिचारेणाहेतुत्वात् । नच प्राचां मते बहिर्द्र-व्यप्रत्यक्षमात्र एव उद्भूतरूपस्य हेतुतया नोक्तव्यभिचारप्रसक्तिरिति वाच्यम् उद्भूतरूपशून्यघटीयरूपादावपि विषयतासंबन्धेन रूपवान् घट इत्याकारकबहिर्द्रव्यप्रत्यक्षोत्पत्त्या व्यभिचारतादवस्थ्यात् । नच बहिर्द्रव्यवृत्तिलौकिकविषयतासंबन्धेन प्रत्यक्षं प्रति उद्भूतरूपस्य हेतुत्वे न किमपि बाधकमिति वाच्यम् । तथापि तादृशसंबन्धघटितकार्यकारणभावमहत्त्वस्य तादृशसंबन्धावच्छिन्नप्रत्यक्षनिष्ठव्याप्यतानिरूपितोद्भूतरूप-

न्नसाधनस्याव्यापकं च। एवं ध्वंसो विनाशी जन्यत्वादित्यत्र जन्यत्वावच्छिन्नसाध्यव्यापकं भावत्वं । सद्धेतौ त्वेतादृशधर्मो नास्ति। यदवच्छिन्नस्य साध्यस्य व्यापकं तदवच्छिन्नस्य साधनस्य चाव्यापकं किञ्चित् स्यात् व्यभिचारिणि तु उपाध्यधिकरणं यत्साध्याधिकरणं य-

**प्रभा**

त्त्वावच्छिन्नव्यापकताग्राहकानुकूलतर्कत्वेऽपि साध्यतावच्छेदकीभूतशुद्धविषयतासंबन्धावच्छिन्नप्रत्यक्षनिष्ठव्याप्यतानिरूपितोद्भूतरूपनिष्ठनिरुक्तव्यापकताग्राहकानुकूलतर्कत्वे प्रमाणाभावात् । अन्यथा धूमवह्न्योः संयोगसंबन्धघटितकार्यकारणभावग्रहस्य समवायसंबन्धावच्छिन्नधूमनिष्ठव्याप्यतानिरूपितवह्नित्वावच्छिन्नव्यापकताग्राहकानुकूलतर्कत्वापत्तिः। नच संबन्धस्यैव साध्यतावच्छेदकसंबन्धत्वस्वीकारात् नोक्तदोषप्रसक्तिरिति वाच्यम् तथा सति तादृशसंबन्धेन केवलसाध्यं प्रत्येवोद्भूतरूपस्य व्यापकत्वसंभवात् अव्याप्त्यप्रसक्त्या प्रत्यक्षस्यात्मनि सत्त्वात् तत्रोद्भूतरूपाभावादिति उद्भूतरूपेऽव्याप्तिप्रतिपादकपूर्वपक्षग्रन्थस्योन्मत्तप्रलपितत्वापत्तेः । तत्र तेन संबन्धेन साध्यासत्त्वात् तस्मात् उक्तरीत्या उद्भूतपदस्य तादृशप्रयोजनपरत्ववर्णनमयुक्तमेव । अस्मद्गुरुचरणास्तु प्राचीनाभिमतोपाधिपदयोगरूढ्यर्थतावच्छेदकसाध्यसमव्याप्तत्वघटितोपाधित्वाश्रयप्रदर्शनायोद्भूतपदं केवलरूपस्य पक्षधर्मावच्छिन्नसाध्यव्यापकत्वे तादृशप्रत्यक्षशून्यचक्षुरादावपि केवलरूपसत्त्वेन तस्य तादृशसाध्यव्यापकत्वाभावात् नच तादृशप्रत्यक्षशून्यपरमाणुषु उद्भूतरूपसत्त्वात् तस्यापि साध्यव्याप्यत्वमिति वाच्यं प्रकृते उद्भूतपदस्य प्रत्यक्षविषयार्थकत्वेन प्रत्यक्षविषयरूपस्य पक्षधर्मावच्छिन्नसाध्यसमव्याप्तत्वस्याव्याहतत्वात् नच प्रथमानुमानस्थलीयशाकपाकजत्वस्याग्रिमानुमानस्थलीयाभावत्वस्य च प्राचीनाभिमतोपाधित्वानाश्रयतया वायुः प्रत्यक्ष इत्यादिमाध्यमिकानुमानस्थलीयोपाधिमात्रस्य तदभिमतोपाधित्वप्रदर्शनफलकतया उद्भूतपदसार्थक्यवर्णनं सन्दर्भविरुद्धमिति वाच्यम् । उपाधेः यद्धर्मावच्छिन्नसाध्यव्यापकत्वं तद्धर्मावच्छिन्नोपाधेरेव साध्यव्याप्यत्वस्य तन्मतसिद्धतया मित्रातनयत्वावच्छिन्नश्यामत्वव्यापकशाकपाकजत्वस्य मित्रातनयत्वविशिष्टशाकपाकजत्वेन रूपेण केवलसाध्यव्यापकत्वस्याप्यक्षतत्वात् एवं जन्यत्वावच्छिन्नानित्यत्वव्यापकभावत्वस्य जन्यत्वविशिष्टभावत्वत्वेन विनाशित्वव्याप्यत्वसत्त्वात् तस्मात् प्रकृते बहिर्द्रव्यत्वावच्छिन्नप्रत्यक्षत्वाव्यापकोद्भूतरूपत्वस्य केवलरूपत्वेन बहिर्द्रव्यत्वविशिष्टरूपत्वेन वा प्रत्यक्षव्याप्यत्वाभावात् अत्रापि प्राचीनाभिमतोपाधिप्रदर्शनफलकतया उद्भूतपदसार्थक्येन सन्दर्भविरोधप्रसक्तिरिति व्याचक्रुः। अत्र बहिर्द्रव्यत्वावच्छिन्नप्रत्यक्षाधिकरणेषु यावत्सु रूपसिद्धावेव रूपे तादृशप्रत्यक्षत्वव्यापकतानिश्चयो भवतीति तादृशयावत्सु रूपसत्त्वे प्रत्यक्षमेव प्रमाणमिति बोधयितुं तादृशयावदधिकरणविशेष्यकप्रत्यक्षप्रमाणकरणकप्रमितिविषयार्थकं उद्भूतपदमुपात्तमित्येव सारमिति प्रतिभाति किञ्चिद्धर्मावच्छिन्नसाध्यव्यापकत्वे सति साधनाव्यापकत्वरूपोपाधित्वस्वीकारपक्षे सद्धेतुमात्रे प्रसक्तातिव्याप्तिः अस्मिन्पक्षे नास्तीत्याह ॥ **सद्धेतौ त्विति** ॥ अवधारणार्थकतुशब्दः नास्तीत्युत्तरं योज्यः॥ **एतादृशधर्म इति** ॥ अनुपदं वक्ष्यमाणधर्म इत्यर्थः ॥ **नास्तीति** ॥ अप्रसिद्ध एवेत्यर्थः तादृशधर्ममाह ॥ **यदवच्छेदेनेति** ॥ यद्धर्मविशिष्टवह्न्यादिरूपसाध्यानिरूपितानिरुक्तव्यापकताविशिष्टमित्यर्थः इदं तु अग्रिमकिञ्चित्पदार्थस्तुविशेषणं तदवच्छिन्नसाधनस्येत्यादितद्धर्मविशिष्टधूमादिरूपसाधनानिरूपितानिरुक्ताव्यापकताविशिष्टमित्यर्थः एतस्य भवेदित्यर्थकः स्यादित्यनेनान्वयः तथाच सद्धेतुस्थले तद्धर्मावच्छिन्नसाध्यव्यापकत्वाश्रयमात्रस्य तत्तद्धर्मावच्छिन्नसाध्याव्यापकत्वाभावात् तत्र तादृशोपाधिरसिद्ध एवेति भावः सौलभ्याय व्यभिचारिमात्रे उपाधित्वघटकानुगततादृशधर्ममाह ॥ **व्यभिचारिणीति** ॥ व्यभिचारिमात्र इत्यर्थः। अत्र वायुः प्रत्यक्षः द्रव्य-

**दिनकरीयम्**

व्याप्तिरिति भावः । अव्याप्तीः परिहरति ॥ **मित्रातनयत्वेत्यादिना** ॥ **व्यभिचारिणि त्वित्यादि** ॥ वायुः प्रत्यक्षो द्रव्यत्वादित्यादौ प्रत्यक्षत्वरूपसाध्याधिकरणमात्मा उद्भूतरूपात्मकोपाधिशून्यं साध्यव्यभिचाराधिकरणं गगनं तदन्यतरत्वावच्छिन्नसाध्यव्यापकत्वस्योद्भूतरूपेऽभावादुक्तमुपाध्यधिकरणमिति । उद्भूत-

चोपाधिशून्यं साध्यव्यभिचाराधिकरणं तदन्यतरत्वावच्छिन्नस्य साध्यस्य व्यापकत्वं साधनस्य चाव्यापकत्वमुपाधेरन्ततः सम्भवतीति ॥ अत एव लक्ष्यमप्युपाधिस्वरूपमेतदनुसारेण दर्शयति ॥ सर्वे इत्यादिना ॥ स्वसाध्येति ॥ स्वं च साध्यं च स्वसाध्ये तयोर्व्यभिचारितेत्यर्थः ॥ १३८ ॥ १३९ ॥

सर्वे साध्यसमानाधिकरणाः स्युरुपाधयः ॥
हेतोरेकाश्रये येषां स्वसाध्यव्यभिचारिता ॥ १३९ ॥

प्रभा.

त्वादित्यादौ साध्याधिकरणीभूतात्मत्वोपाधिशून्यसाध्यव्यभिचारनिरूपकाकाशान्यतरत्वावच्छिन्नसाध्यव्यापकत्वाभावात् रूपस्वरूपोपाधौ अव्याप्तिवारणाय उपाध्यधिकरणमिति उपाध्यधिकरणपरमाणुतादृशाकाशान्यतरत्वावच्छिन्नसाध्याप्रसिद्ध्या रूपेऽतिव्याप्तिवारणाय साध्याधिकरणमिति । तादृशघटसाध्यव्यभिचारनिरूपकाधिकरणपरमाणु-एतदन्यतरत्वावच्छिन्नसाधनाव्यापकत्वाभावात्तत्रातिव्याप्तिः अत उपाधिशून्यमिति तादृशघटोपाधिशून्यपरमाणुरूपैतदन्यतरत्वावच्छिन्नसाधनाव्यापकत्वाभावात्तत्रैवातिव्याप्तिः अतस्साध्यव्यभिचारनिरूपकाधिकरणमिति ॥ अत इति ॥ निरुक्तस्थलीयोपाधिषु यद्धर्माश्रयघटितसाध्यनिरूपितव्यापकत्वं संभवति तत्तद्धर्मान्तरास्फूर्ताविल्यर्थः ॥ तदन्यतरत्वावच्छिन्नेत्यादि ॥ तदन्यतरत्वाश्रयघटितकेवलसाध्यतावच्छेदकावच्छिन्ननिरूपितव्यापकत्वमित्यर्थः ॥ साधनाव्यापकत्वं चेति ॥ तादृशान्यतरत्वाधिकरणघटिततादृशसाधनतावच्छेदकावच्छिन्ननिरूपिताव्यापकत्वं तादृशान्यतरत्वधिकरणघटिततादृशसाधननिरूपिताव्यापकत्वं चेत्यर्थः ॥ उपाधेरिति ॥ उपाधिसामान्यस्येत्यर्थः ॥ संभवतीति ॥ तथाच नोपाधिमात्रेऽतिव्याप्तिरिति भावः ॥ अत एवेति ॥ एतादृशोपाधिलक्षणस्य मूलकाराभिमतत्वादेवेत्यर्थः ॥ लक्ष्यमपीति ॥ एतदनुसारेण उपाधिस्वरूपं लक्ष्यमपि दर्शयतीति योजना ॥ एतदनुसारेण उक्तलक्षणानुसारेण ॥ उपाधिस्वरूपं लक्ष्यमपि उपाध्यभिन्नलक्ष्यमात्रमपि ॥ दर्शयतीति॥ तथाच साध्यव्यापको यस्त्विल्यादिमूलस्य केवलसाध्यव्यापकत्वादिघटितोपाधिलक्षणाभिप्रायकत्वेन शाकपाकजत्वादीनां तादृशलक्षणानाक्रान्ततयाव्याप्तिवारणाय व्यभिचारनिरूपकाधिकरणान्यत्वत्वादेरेव लक्ष्यतावच्छेदकत्वमङ्गीकृत्य तेषामलक्ष्यत्वस्यै-

दिनकरीयम्.

पाधिकरणपरमाण्वाकाशान्यतरत्वावच्छिन्नसाध्याप्रसिद्ध्या तद्दोषतादवस्थ्यमतः साध्याधिकरणमिति । उद्भूतरूपाधिकरणं यत्प्रत्यक्षत्वाधिकरणं घटादिस्तद्वृत्तिद्रव्यत्वाव्यापकधर्मावच्छिन्नसाध्यव्यापकत्वाभावादुक्तं यच्चेत्यादि । तत्रापि साध्यव्यभिचाराधिकरणपरमाणुघटान्यतरत्वावच्छिन्नद्रव्यत्वात्मकसाधनव्यापकत्वादुपाधिशून्यमिति । तत्रैवोपाध्यधिकरणसाध्याधिकरणं घट उपाधिशून्यमधिकरणमात्मा तदन्यतरत्वावच्छिन्नसाध्यव्यापकत्वाभावात् ॥ साध्यव्यभिचाराधिकरणमिति ॥ उद्भूतरूपाधिकरणं यत्प्रत्यक्षत्वाधिकरणं घटः यच्चोद्भूतरूपशून्यं प्रत्यक्षत्वाभावाधिकरणमतीन्द्रियरूपादि तदन्यतरत्वावच्छिन्नद्रव्यत्वरूपसाधनाव्यापकत्वस्योद्भूतरूपेऽभावात् साध्याभावाधिकरणमिति परित्यज्य साध्यव्यभिचाराधिकरणमित्युक्तं तदर्थश्च साधननिष्ठसाध्यव्यभिचारनिरूपकाधिकरणत्वम् ॥ अन्तत इति ॥ तादृशधर्मान्तरस्य स्फूर्ताविरयर्थः । नच साध्यव्यापकत्वं साध्यनिष्ठव्याप्तिनिरूपकत्वं तथा च शुद्धसाध्यव्यापके धूमादिनिष्ठव्याप्तेः केवलधूमत्वावच्छिन्नत्वात् कथं तादृशधर्मान्तरावच्छिन्नधूमादिनिष्ठव्याप्तिनिरूपकत्वमार्द्रेन्धनादीनामिति वाच्यं तद्धर्माधिकरणीभूतसाध्याधिकरणनिष्ठाभावाप्रतियोगित्वरूपस्यैव तद्धर्मावच्छिन्नसाध्यव्यापकत्वस्य लक्षणे प्रवेशो न तु यद्धर्मावच्छिन्नसाध्यनिष्ठव्याप्तिनिरूपकत्वस्येत्याशयात् । धूमवान् वह्नेरित्यादावयःपिण्डमहानसान्यतरत्वावच्छिन्नसाध्यव्यापकं व्यजनवत्त्वादिकं सङ्ग्राह्यमेवेति ध्येयम् ॥ अत एव यद्धर्मावच्छिन्नत्वघटितनिरुक्तलक्षणस्य तात्पर्यविषयत्वादेव ॥ एतदनुसारेण निरुक्तलक्षणानुसारेण ॥ स्वस्य साध्यमिति षष्ठीतत्पुरुषभ्रमं व्यावर्तयितुमाह ॥ स्वं

98

प्रभा.

व वक्तुमुचितत्वेन तेषां लक्ष्यत्वप्रतिपादकसर्वेसाध्यसमानाधिकरणा-इत्यादिमूलविरोधापत्तेः । तस्मात् साध्यस्य व्यापको यस्त्वित्यादिमूलस्य यद्धर्मावच्छिन्नेत्याद्युपाधिलक्षणाभिप्रायकत्वमवश्यमङ्गीकरणीयमिति भावः ॥ **मूले सर्वे इत्यादि** ॥ ते सर्वे साध्यसमानाधिकरणा उपाधय इति योजना भवतीति शेषः ते क इत्याकाङ्क्षायामाह ॥ **हेतोरिति** ॥ धूमादिसाध्यवह्निहेतोरित्यर्थः ॥ **एकाश्रय इति** ॥ एकाधिकरणावच्छेदेनेत्यर्थः ॥ **येषामिति** ॥ यद्यद्धर्मावच्छिन्नानामित्यर्थः घटकत्वं षष्ठ्यर्थः तस्य स्वसाध्येति द्वन्द्वघटकस्वरूपपदार्थघटकप्रत्येकधर्मावच्छिन्नेऽन्वयः तादृशद्वन्द्वघटकसाध्यपदस्य साध्यतावच्छेदकत्वेनाभिमतधूमत्वाद्यवच्छिन्नमर्थः तथाच यद्यद्धर्मावच्छिन्नसमुदायघटकप्रत्येकधर्मावच्छिन्ननिरूपितवह्न्यादिरूपप्रकृतहेतुनिष्ठा व्यभिचारिता तादृशहेतुनिष्ठप्रकृतसाध्यनिरूपितव्यभिचारित्वनिरूपकाधिकरणावच्छेद्या तद्धर्मावच्छिन्नास्सर्वे साध्यसमानाधिकरणाः केवलसाध्यस्य व्यापकाव्यापकाश्चोपाधयो भवन्ति तावदन्यतमत्वेन उपाधिलक्षणलक्ष्या भवन्तीति कारिकासमुदायार्थः फलितः । अत्र वायुः प्रत्यक्षः प्रत्यक्षत्वादित्यत्र द्रव्यत्वहेतोः आत्मावच्छेदेनात्मभिन्नत्वव्यभिचारित्वात् आकाशाद्यन्तर्भावेन प्रकृतसाध्यव्यभिचारित्वाच्च । आत्मभिन्नत्वस्यापि साध्यसमानाधिकरणत्वेन लक्ष्यतावच्छेदकाक्रान्ततया तस्य पक्षधर्मावच्छिन्नसाधनाव्यापकत्वघटितलक्षणाभावात् अव्याप्तिवारणाय लक्ष्यतावच्छेदककोटौ एकाश्रय इति विशेषणम् । एवंच द्रव्यत्वनिष्ठप्रकृतसाध्यव्यभिचारित्वनिरूपकगगनादिरूपाधिकरणावच्छेदेन तादृशहेतोरात्मभिन्नत्वव्यभिचारित्वाभावात् तस्य लक्ष्यत्वाभावेन नाव्याप्तिरिति भावः । नचैवमप्यात्मघटान्यतरत्वस्यापि लक्ष्यत्वापत्तिः द्रव्यत्वनिष्ठप्रत्यक्षव्यभिचारित्वनिरूपकाकाशाद्यवच्छेदेन प्रकृतहेतोस्तादृशान्यतरत्वव्यभिचारित्वात्र चेष्टापत्तिः पक्षधर्मावच्छिन्नसाध्यव्यापकत्वघटकोपाधिलक्षणाभावेन तत्राव्याप्तिप्रसङ्गादिति वाच्यम् । एकाश्रय इति मूलस्य साधारणतया प्रकृतहेतुनिष्ठप्रकृतसाध्यव्यभिचारित्वनिरूपकाधिकरणान्याधिकरणावच्छेदेन प्रकृतहेतोः स्वव्यभिचारित्वाभावलाभेन प्रकृते तादृशाधिकरणान्यपटाद्यवच्छेदेनापि द्रव्यत्वहेतोरात्मघटान्यतरत्वस्य व्यभिचारितया तादृशान्यतरत्वस्य लक्ष्यत्वासंभवात् । नचैवं सत्युपाधेर्लक्ष्यत्वपरिचायकशरीरस्यावधारणार्थघटितत्वेनैव सामञ्जस्ये तत्र प्रकृतहेतुनिष्ठप्रकृतसाध्यव्यभिचारित्वनिरूपकाधिकरणावच्छेदेन प्रकृतहेतोः स्वव्यभिचारित्वविशेषणं व्यर्थमिति वाच्यम् । तथासति गुणादिभेदस्यापि लक्ष्यत्वापत्तिः द्रव्यत्वनिष्ठप्रत्यक्षव्यभिचारित्वनिरूपकपरमाण्वाकाशादिभिन्नाधिकरणावच्छेदेन द्रव्यत्वहेतोः गुणादिभेदव्यभिचारित्वाभावसत्त्वात् नचेष्टापत्तिः तत्र साधनाव्यापकत्वघटितोपाधिलक्षणाभावेनाव्याप्तिप्रसङ्गात् । तद्दलदाने तु द्रव्यत्वनिष्ठप्रत्यक्षव्यभिचारित्वनिरूपकपरमाण्वाद्यवच्छेदेन प्रकृतहेतौ गुणादिभेदव्यभिचारित्वाभावान्न लक्ष्यत्वापत्तिः तथाच प्रकृतहेतुनिष्ठप्रकृतसाध्यव्यभिचारित्वनिरूपकाधिकरणनिष्ठाभावप्रतियोगितावच्छेदकाः तादृशाधिकरणभिन्नहेत्वधिकरणनिष्ठाभावप्रतियोगितावच्छेदकाश्च ये धर्माः केवलप्रकृतसाध्यवन्निष्ठाभावप्रतियोगितावच्छेदका अनवच्छेदका वा तद्धर्मावच्छिन्नान्यतमत्वावच्छिन्नं प्रकृतसाध्यप्रकृतहेतुस्थलीयोपाधिलक्षणलक्ष्यमिति फलितम् । नचैवमपि वायुः प्रत्यक्षः द्रव्यत्वादित्यत्र रूपस्य द्रव्यत्वनिष्ठप्रत्यक्षव्यभिचारित्वनिरूपकाधिकरणान्यात्मरूपहेत्वधिकरणनिष्ठाभावप्रतियोगित्वेन रूपस्यावच्छेदकत्वाभावात् लक्ष्यत्वानुपपत्तिः नचेष्टापत्तिः निरुक्तलक्षणस्यातिव्याप्त्यापत्तेरिति वाच्यम् । उपाधेर्लक्ष्यत्वपरिचायकस्यापि साध्यविशेषघटिततया साध्यादिभेदेन भिन्नत्वात् वायौ प्रत्यक्षसाध्यकव्यभिचारिहेतुमात्रस्थलीयोपाधिलक्ष्यत्वपरिचायकशरीरे प्रकृतहेतुनिष्ठप्रकृतसाध्यव्यभिचारित्वनिरूपकाधिकरणान्यात्मान्यहेत्वधिकरणनिष्ठाभावप्रतियोगितानवच्छेदकत्वघटितस्यैव परिचायकस्याभिमततया रूपस्वरूपोपाधेः तादृशाधिकरणान्यात्मान्यहेत्वधिकरणघटादिनिष्ठाभावप्रतियोगितानवच्छेदकत्वरूपत्ववत्त्वान्न लक्ष्यत्वानुपपत्तिः । शब्दैक्यन्तु अकिञ्चित्करमेव सर्वत्र व्यभिचारीणि अन्ततः साध्यप्रकारकप्रमाविशेष्यत्वव्यभिचारनिरूपकाधिकरणान्यत्वतादृशान्यत्वप्रकारकप्रमाविशेष्यत्वरूपोपाधीनां बहूनामेव लक्ष्यत्वान्न तावदन्यतमत्वरूपलक्ष्यतावच्छेदकाप्रसिद्धिरिति दिक् । अन्येतु यद्धेत्वधिकरणवृत्तितावच्छेदकत्वयत्साध्याभावव्याप्यतावच्छेदकत्वोभययद्यद्धर्मावच्छिन्नप्रतियोगिताकाभाववत्वं यद्यद्धर्मावच्छिन्नावच्छेदकताकप्रतियोगिताकभेदकत्वं

व्यभिचारस्यानुमानमुपाधेस्तु प्रयोजनम् ।

उपाधेर्दूषकताबीजमाह ॥ व्यभिचारस्येति ॥ उपाधिव्यभिचारेण हेतौ साध्यव्यभिचारा-

प्रभा.

वा भवति तत्तद्धर्मावच्छिन्नान्यतमत्वं तत्साध्यकतद्धेतुस्थलीयोपाधित्वं अत्र धूमवान् वह्नेरित्यादौ द्रव्यत्वत्वाव-च्छिन्नप्रतियोगिताकाभावत्वस्य तद्भेदत्वस्य वा वह्न्यादिरूपहेत्वधिकरणनिष्ठधूमादिरूपसाध्याभावव्याप्यतावच्छेदकत्वात् द्रव्यत्वेऽतिव्याप्तिवारणाय तादृशाभावत्वे तादृशभेदत्वे च यद्धेत्वधिकरणवृत्तितावच्छेदकत्वाविशेषणं घटत्वाभावत्वघटभेदत्वयोरपि वह्न्यादिरूपहेत्वधिकरणवृत्तितावच्छेदकत्वात् घटत्वस्योपाधित्ववारणाय यत्साध्याभावव्याप्यतावच्छेदकत्वमपि तादृशाभावत्वे तादृशभेदत्वे च निवेशितं विशेषणविशेष्यभावे विनिगमनाविरहप्रयुक्तदोषवारणाय धर्मद्वयस्योभयत्वेन निवेशः । संयोगेनार्द्रेन्धनाभावस्यार्द्रेन्धनसंयोगाभावस्य तवाव्याप्यवृत्तित्वेन केवलान्वयितया तादृशाभावत्वस्य धूमाभावव्याप्यतावच्छेदकत्वाभावात् आर्द्रेन्धनसंयोगस्योपाधित्वानुपपत्तिवारणाय यद्धर्मावच्छिन्नावच्छेदकताकप्रतियोगिताकभेदत्वं वेति पक्षान्तरानुसरणं तद्धर्ममात्रस्य लक्षणत्वे तद्धर्माणां अननुगमादितरभेदसाधने भागासिद्ध्यापत्त्या तत्तद्धर्मावच्छिन्नान्यतमत्वस्य तल्लक्षणत्वमभिमतं सद्धेतुत्वमात्रे साध्याभावव्याप्यस्य हेतुसमानाधिकरणत्वाभावेन न कस्याप्युपाधित्वप्रसक्तिरित्याहुः तन्न वायुः प्रत्यक्षः द्रव्यत्वादित्यत्र रूपस्योपाधित्वानुपपत्तिः रूपवद्भेदस्य प्रत्यक्षाभावव्याप्यत्वाभावात् एतेन इदं लक्ष्यतावच्छेदकत्वस्वरूपं लक्षणन्तु पूर्वोक्तमेवेति अन्यैरुक्तं तत्प्रत्युक्तं रूपस्य एतादृशलक्ष्यतावच्छेदकानाक्रान्ततया अलक्ष्यत्वेन निरुक्तोपाधिलक्षणस्यातिव्याप्त्यापत्तेरिति अत्र स्वं च साध्यं चेति कर्मधारये येषां इत्यस्यानन्वयापत्तेः ॥ व्यभिचारितेति ॥ पदपूरणान्वयेन समुदायत्वावच्छिन्नव्यभिचारित्वस्यैव लाभेन समुदायत्वावच्छिन्नस्यैव लक्ष्यत्वप्राप्त्या समुदायभिन्नसमुदायघटकरूपादावतिव्याप्त्यापत्तिः तादृशसमुदायघटकत्वस्य लक्ष्यतावच्छेदकत्वमङ्गीकृत्योक्तातिव्याप्तिवारणे द्रव्यत्वघटितार्द्रेन्धनादिसमुदायत्वावच्छिन्नव्यभिचारित्वस्यापि निरुक्तैकावच्छिन्नत्वेन तद्घटकत्वरूपलक्ष्यतावच्छेदकाश्रयद्रव्यत्वे उपाधिलक्षणाभावात् अव्याप्त्यापत्तेः स्वपदार्थस्याभेदेन साध्यीये प्रयोजनविरहाच्च । अतो निरुक्तार्थलाभाय मूलस्थस्वसाध्यपदस्य द्वन्द्वसमासत्वबोधनाय स्वपदार्थं विग्रहं चाह ॥ मुक्तावल्यां स्वमुपाधिरित्यादि ॥ १३८ ॥ १३९ ॥

मूले व्यभिचारस्येति ॥ साध्यव्यभिचारस्येत्यर्थः ॥ उपाधेस्त्विवति ॥ अत्रावधारणार्थकतुशब्दः पूर्वस्थितानुमानमित्युत्तरं योज्यः तेन सत्प्रतिपक्षानुमितिफलकत्वमुपाधौ व्यवच्छिद्यते अत एवाग्रे केचिदित्यादिना तन्मतमुपन्यस्य दूषणं सूचयति । तथाचोपाधेर्व्यभिचारितासंबन्धेन साध्यव्यभिचारानुमापकत्वमेवेति समुदितयथाश्रुतमूलार्थः इदमयुक्तं व्यभिचारितायाः संबन्धत्वे मानाभावात् अत एव यदभावो व्यभिचारविरोधी तत्त्वमिति मणिकारोक्तोपाधिलक्षणवाक्यस्य यस्य व्यभिचारितासंबन्धावच्छिन्नप्रतियोगिताकाभावस्साध्यव्यभिचारविरोधी तत्त्वमुपाधित्वमित्यर्थकत्वे व्यभिचारितायास्संबन्धत्वे मानाभावेन तद्घटितलक्षणाप्रसिद्धिं हृदि निधाय मूलस्थयदभावशब्दस्य यद्व्याप्यत्वाभावार्थकत्ववर्णनं दीधितिकृतां सङ्गच्छत इत्याशङ्कां तादृशमूलस्य तात्पर्यार्थप्रदर्शनेन परिहरति ॥ मुक्तावल्यां उपाधिव्यभिचारेणेत्यादि ॥ तथाच मूले व्यभिचारस्येत्यत्र साध्यस्येत्यादिपूरणे उपाधेरित्युत्तरं व्यभिचारस्येति पदानुवृत्त्या च साध्यनिरूपितव्यभिचारानुमानं उपाधिनिरूपितव्यभिचारस्य फलमित्यर्थलाभान्नोक्तानुपपत्तिरिति भावः । ननु सर्वत्र उपाधिव्यभिचारस्य साध्यव्यभिचारानुमापकत्वं न संभवति क्वचिदुपाधिव्यभिचारस्य साध्यव्यभिचारित्वव्याप्यत्वाभावात् तथाहि धूमवा-

दिनकरीयम्.

चेति ॥ नव्यास्तु यदभावेन यद्वदन्यत्वेन वा साधनवति साध्याभाव उन्नीयते स उपाधिर्लाघवात् अत एव जलत्वतेजस्त्वयोस्तदुभयत्वेन रूपेण न क्वचिदप्युपाधित्वमित्याहुः । तद्धर्मवत्युपाधिव्यभिचारेण तद्धर्माधिकरणीभूतं यदुपाध्यभावाधिकरणं तद्वृत्तित्वेन वायुः प्रत्यक्षः प्रमेयत्वादित्यादौ तु प्रमेयत्वं प्रत्यक्षत्वव्यभिचारि बहिर्द्रव्ये उद्भूतरूपव्यभिचारित्वादित्यादि द्रष्टव्यम् ॥ १३८ ॥ १३९ ॥

**नुमानमुपाधेः प्रयोजनमित्यर्थः । तथा हि यत्र शुद्धसाध्यव्यापक उपाधिस्तत्र शुद्धेनैवोपाधिव्यभिचारेण साध्यव्यभिचारानुमानं यथा धूमवान् वह्नेरित्यादौ वह्निर्धूमव्यभिचारी तद्व्यापकार्द्रेन्धनसंयोगव्यभिचारित्वादिति व्यापकव्यभिचारिणो व्याप्यव्यभिचारावश्यकत्वात् । यत्र तु किञ्चिद्धर्मावच्छिन्नसाध्यस्य व्यापक उपाधिस्तत्र तद्धर्मवति उपाधिव्यभिचारेण साध्यव्यभिचारानुमानम् । यथा स श्यामो मित्रातनयत्वादित्यादौ मित्रातनयत्वं श्यामत्वव्यभिचारि मित्रातनये शाकपाकजत्वव्यभिचारित्वादिति । बाधानुन्नीतपक्षेतरस्तु साध्यव्यापक—**

प्रभा.

न्वह्नेरित्यादिना आर्द्रेन्धनादिरूपोपाध्यभावस्य साध्याभावव्याप्यतया तादृशोपाधिव्यभिचारस्यापि साध्यव्यभिचारव्याप्यत्वात् तस्य तदनुमापकत्वसंभवेऽपि स श्यामो मित्रातनयत्वात् वायुः प्रत्यक्षः प्रत्यक्षस्पर्शाश्रयत्वादित्यादौ शाकपाकजत्वाभावोद्भूतरूपाभावात्मकोपाध्यभावयोः श्यामत्वाभावप्रत्यक्षाभावरूपसाध्याभावव्याप्यत्वाभावेन तादृशोपाधिव्यभिचारित्वस्य तादृशसाध्याभावव्यभिचारित्वव्याप्यत्वं सुतरां न संभवति शाकपाकजत्वे व्यभिचारेण काकत्वादौ श्यामत्वव्यभिचारित्वाभावात् रूपत्वरूपोपाधिव्यभिचारिण्यात्मत्वादौ रूपत्वादौ च प्रत्यक्षत्वरूपसाध्यव्यभिचारित्वाभावाच्च कथं सर्वत्र उपाधिव्यभिचारस्य साध्यव्यभिचारानुमापकत्वमित्यतः प्रकारान्तरेण तदुपपादयति ॥ **तथाहीति** ॥ **यत्रेति** ॥ यादृशहेतावित्यर्थः ॥ **शुद्धसाध्यव्यापक इति** ॥ सर्वोऽप्युपाधिरित्यादिः महानसायोगोळकान्यतरत्वादिरूपनिरुक्तयद्धर्माविशेषितसाध्यतावच्छेदकावच्छिन्ननिरूपितव्यापकत्वविशिष्टोऽपीत्यर्थः । भवतीति शेषः ॥ **तत्रेति** ॥ तादृशहेतावित्यर्थः ॥ **शुद्धेनोपाधिव्यभिचारेणेति** ॥ तादृशान्यतरत्वाद्यघटितेनोपाधिव्यभिचारत्वावच्छिन्नलिङ्गेनैवेत्यर्थः ॥ **साध्यव्यभिचारानुमितिरिति** ॥ साध्यव्यभिचारित्वावच्छिन्नविधेयकानुमितिरित्यर्थः । तदुदाहरति ॥ **धूमवानित्यादिना** ॥ उक्तानुमाने व्यभिचारशङ्कानिवर्तकतर्कमाह ॥ **व्यापकव्यभिचारिण इति** ॥ **आवश्यकत्वादिति** ॥ अन्यथोपाधेः साध्यव्यापकत्वं भवत्येवेत्याशयः अत्र धूमवान् वह्नेरित्यादौ आर्द्रेन्धनाभावाधिकरणं यत् महानसायोगोळकान्यतरत्वरूपयद्धर्माधिकरणं तद्वृत्तित्वरूपोपाधिव्यभिचारस्य धूमरूपसाध्यव्यभिचारित्वव्याप्यत्वेऽपि तादृशोपाध्यभावाधिकरणीभूतयद्धर्माधिकरणवृत्तित्वस्य केवलोपाध्यभावाधिकरणवृत्तित्वरूपस्वसमानाधिकरणव्याप्यतावच्छेदकधर्मान्तरघटितत्वेन व्याप्यतावच्छेदकत्वासंभवात् तेन रूपेणोपाधिव्यभिचारस्य न साध्यव्यभिचारानुमापकत्वमित्याशयेन शुद्धेनोपाधिव्यभिचारेणेत्युक्तमिति ध्येयम् ॥ **यत्रेति** ॥ यादृशहेतावित्यर्थः ॥ **किंचिद्धर्मावच्छिन्नसाध्यव्यापक इति** ॥ मित्रातनयत्वादिरूपयद्धर्मविशिष्टसाध्यव्यापकताविशिष्ट एवेत्यर्थः ॥ **उपाधिरिति** ॥ तत्स्थलीयसर्वोऽप्युपाधिरित्यर्थः तादृशव्यापकत्वमेव तत्स्थलीयसकलोपाधिसाधारणमिति समुदितग्रन्थतात्पर्यार्थः ॥ **तत्रेति** ॥ तादृशहेतावित्यर्थः ॥ **तद्धर्मवति उपाधिव्यभिचारेणेति** ॥ तद्धर्माधिकरणोपाध्यभावाधिकरणवृत्तित्वत्वविशिष्टलिङ्गेनैवेत्यर्थः ॥ **साध्यव्यभिचारानुमानमिति** ॥ साध्याभाववद्वृत्तित्वत्वावच्छिन्नविधेयकानुमितिरित्यर्थः तदुदाहृत्योपपादयति ॥ **यथा स श्यामो मित्रातनयत्वादित्यादि** ॥ आदिना वायुः प्रत्यक्षः प्रत्यक्षस्पर्शाश्रयत्वादित्यादेः परिग्रहः ॥ **मित्रातनये शाकपाकजत्वव्यभिचारित्वादिति** ॥ शाकपाकजत्वाभावाधिकरणमित्रातनयवृत्तित्वादित्यर्थः इदमुपलक्षणं प्रत्यक्षस्पर्शाश्रयत्वं प्रत्यक्षत्वव्यभिचारि बहिर्द्रव्ये रूपव्यभिचारित्वादित्यादिकं बोध्यं बहिर्द्रव्ये रूपव्यभिचारित्वादिति रूपाभाववद्बहिर्द्रव्यवृत्तित्वादित्यर्थः तथाच शाकपाकजत्वव्यभिचारित्वस्य पाकत्वादिसाधारणतया तन्मात्रवृत्तिधर्मेण श्यामत्वव्यभिचारित्वव्याप्यत्वासंभवेऽपि रूपत्वरूपोपाधिव्यभिचारित्वस्यात्मत्वादिरूपत्वादिसाधारणधर्मतया तन्मात्रवृत्तिधर्मेण प्रत्यक्षव्यभिचारित्वाभावेऽपि च शाकपाकजत्वाभाववन्मित्रातनयवृत्तित्वस्य काकत्वाद्यवृत्तितया रूपाभाववद्बहिर्द्रव्यवद्वृत्तित्वस्यात्मत्वादिरूपत्वाद्यवृत्तितया तत्तन्मात्रवृ-

ताग्राहकप्रमाणाभावात् स्वव्याघातकत्वाच्च नोपाधिः। बाधोन्नीतस्तु उपाधिर्भवत्येव यथा वह्निरनुष्णः कृतकत्वादित्यादौ प्रत्यक्षेण वह्नावनुष्णत्वग्रहे वह्नीतरत्वमुपाधिः । यस्योपाधेः साध्यव्यापकता सन्दिह्यते स सन्दिग्धोपाधिः पक्षेतरस्तु सन्दिग्धोपाधिरपि नोद्भावनीयः कथकस-

प्रभा.

त्तिधर्मेण तत्तत्साध्यव्यभिचारित्वव्याप्यत्वात् तत्तद्रूपेण तत्तदुपाधिव्यभिचारित्वस्य तत्तत्साध्यव्यभिचारित्वानुमापकत्वमव्याहतमेवेति नोक्तानुपपत्तिप्रसक्तिरिति भावः । ननु पक्षेतरत्वेऽतिव्याप्तिः धूमादौ एकावच्छेदेन स्वसाध्यव्यभिचारित्वरूपपक्षतावच्छेदकाश्रये उपाधिलक्षणसत्त्वादित्यत आह ॥ **बाधानुन्नीतपक्षेतरस्त्विति** ॥ तुशब्दोऽवधारणे तेन बाधोन्नीतपक्षेतरत्वस्य अनुपाधित्वं व्यवच्छिद्यते तादृशव्यवच्छेद्यार्थमेव बाधोन्नीतपक्षेतरस्त्वित्यादिवक्ष्यमाणग्रन्थेन प्रकाशयिष्यति। बाधेन प्रकृतसाध्याभाववत्त्वेनानुन्नीतः अनिर्णीतपक्षः पक्षतावच्छेदकावच्छिन्नः तद्भेद इत्यर्थः ॥ **साध्यव्यापकताग्राहकेति** ॥ प्रकृतसाध्यव्यापकत्वप्रकारकतादृशपक्षेतरत्वविशेष्यकनिर्णयजनकेत्यर्थः ॥ **प्रमाणाभावादिति** ॥ सामग्र्यभावादेवेत्यर्थः तथाच पक्षे साध्याभावनिश्चयस्यैव पक्षेतरत्वे साध्यव्यापकतानिर्णायकतया तदभावात्तादृशपक्षेतरत्वे साध्याव्यापकत्वनिर्णयाभावप्रयुक्तविशिष्टोपाधित्वानिर्णयाभावेन न तत्रातिव्याप्तिरिति भावः। ननु निरुक्तपक्षेतरत्वे लक्ष्यतावच्छेदकसन्देहात् साध्यव्यापकत्वादिघटितलक्षणसन्देहाच्च न सन्दिग्धोपाधित्वमावश्यकं एवंच हेतौ तादृशोपाधिव्यभिचारेण साध्यव्यभिचारानुमानसंभवात् दूषकत्वमावश्यकमेवेत्यत आह ॥ **स्वव्याघातकत्वाचेति** ॥ उपाधिमात्रस्य दूषकत्वव्याघातकत्वाच्चेत्यर्थः तथाच बाधानुन्नीतपक्षेतरत्वस्याप्युपाधित्वे सकलानुमानेऽप्येतादृशोपाधिसंभवेन तद्भानेन तत्तत्साध्यव्यभिचारानुमानमात्रोच्छेदापत्त्या उपाधिव्यभिचारे साध्यव्यभिचारिव्याप्यत्वनिर्णयाधीनायाःप्रकृतहेतुविशेष्यकप्रकृतसाध्यव्यभिचारित्वानुमितेः सुतरामप्रसिद्धत्वेन तदनुमापकत्वरूपदूषकत्वानुपपत्तेः साध्यव्यापकत्वादिना सन्दिग्धतादृशपक्षेतरत्वादेः दोषत्वं नाङ्गीकर्तव्यमिति भावः बाधानुन्नीतपक्षेतरास्त्वित्यत्रावधारणार्थकतुशब्देन बोधितं बाधोन्नीतपक्षेतरत्वस्य उपाधित्वं द्रढयति ॥ **बाधोन्नीतपक्षेतरस्त्विति** ॥ बाधेन साध्याभाववत्त्वेन उन्नीतः निर्णीतपक्षतावच्छेदकावच्छिन्नः तदितरस्तदन्यत्वमित्यर्थः अवधारणार्थकतुशब्दः भवतीत्युत्तरं योज्यः ॥ **उपाधिर्भवतीति** ॥ उपाधिर्भवतीत्येवेत्यर्थः उदाहरणद्वारा तस्योपाधित्वमुपपादयति ॥ **वह्निरित्यादि** ॥ **वह्नीतरत्वमुपाधिरिति** ॥ तथाच पक्षात्मकवह्नौ उष्णत्वात्मकसाध्याभावनिश्चयरूपकारणबलाद्वह्नीतरत्वे साध्यव्यापकत्वनिश्चयसंभवेन तद्घटितोपाधित्वस्य निश्चितत्वादिति भावः । ननु यादृशस्थलीयोपाधेरुपाधित्वसन्देहितोपाधिव्यभिचारसंशय एव जातः तादृशहेतौ उपाधिव्यभिचारात्मकहेतुनिश्चयाभावात् साध्यव्यभिचारानुमित्यसंभवेन तत्स्थलीयोपाधेर्व्यभिचारोन्नायकत्वरूपदूषकत्वानुपपत्तिरत आह ॥ **यस्योपाधेरिति** ॥ वस्तुत उपाधित्वाश्रयस्य यस्येत्यर्थः साध्यव्यापकत्वादिकमित्यादिना साधनाव्यापकत्वविशिष्टोपाधित्वयोः परिग्रहः ॥ **सन्दिह्यत इति** ॥ दोषाधीनवर्तमानसन्देहविषयतावादित्यर्थः ॥ **स सन्दिग्धोपाधिरिति** ॥ तादृशसन्दि-

दिनकरीयम्.

ननु पक्षेतरत्वेऽतिव्याप्तिः । नच तस्य लक्ष्यत्वमेव एकाश्रये येषामित्यादिमूलेन प्रदर्शितस्य लक्ष्यतावच्छेदकस्य तत्राभावात् तत्र हेतौ पक्षेतरत्वव्यभिचारस्य पक्षमादायैव सम्भवात् साध्यव्यभिचारस्य तमादायासम्भवादत आह ॥ **बाधानुन्नीतेति** ॥ **स्वव्याघातकत्वादिति** ॥ उपाधिमात्रस्य दूषकत्वव्याघातकत्वादित्यर्थः । पक्षेतरत्वस्योपाधित्वे सर्वत्रानुमाने पक्षेतरत्वस्योपाधेः सम्भवादनुमानमात्रोच्छेदापत्त्या व्यभिचारानुमानाधीनस्योपाधेर्दूषकत्वस्यासम्भवादिति भावः । ननु तथापि यत्र साध्यव्यापकताग्राहकं प्रमाणमस्ति तत्र पक्षेतरत्वे लक्षणातिव्याप्तिर्दुर्वारेत्यत आह ॥ **बाधोन्नीतस्त्विति** ॥ बाधेन पक्षे साध्याभाववत्तया उन्नीतः साध्यव्यापकत्वेन निश्चित इत्यर्थः ॥ **सन्दिग्धोपाधिरपीति** ॥ पक्षे साध्यसन्देहेन साध्यव्यापकतासन्देहस्य पक्षेतरत्वे सम्भवादिति भावः । न च स्वव्याघातकत्वेनानुपाधित्वादेवानुद्भावन-

म्प्रदायानुरोधात् । केचित्तु सत्प्रतिपक्षोत्थापनमुपाधेः फलं तथा हि अयोगोलकं धूमवद्वह्नेरित्यादौ अयोगोलकं धूमाभाववत् आर्द्रेन्धनाभावादिति सत्प्रतिपक्षसम्भवात् । इत्थं च साधनव्यापकोऽपि कचिदुपाधिः यथा करका पृथिवी कठिनसंयोगवत्त्वादित्यादौ अनुष्णा-

## प्रभा.

ग्धोपाधिरेवेत्यर्थः एतदुत्तरं नोद्भावनीय इत्युत्तरग्रन्थस्थोद्भावनीय इति वाक्यस्यानुषङ्गात् तादृशोपाधिरुद्भावनीय एवेत्यर्थलाभः । तथाच धूमवान् वह्नेरित्यादौ आर्द्रेन्धनादेरुपाधित्वसंशयानन्तरं हेतावुपाधित्वव्यभिचारनिर्णयरूपलिङ्गनिश्चयाभावेन साध्यव्यभिचारानुमित्यसंभवेऽपि उपाधित्वसंशयोत्तरं हेतौ व्यभिचारितासंबन्धेन उपाधिव्यभिचारसंशयस्यैवावश्यकत्वात् तादृशसंशयस्य व्याप्यसंशयविधया साध्यव्यभिचारसंशयहेतुत्वाच्च । ईदृशसान्दिग्धोपाधेरपि दूषकत्वात् तदुद्भावनमावश्यकमिति भावः । ननु पर्वतो वह्निमान् धूमादित्यादिसद्धेतुस्थलेऽपि यदा पर्वतेतरत्वे साध्यव्यापकतासन्देहप्रयुक्त उपाधित्वसन्देहस्तदा हेतौ उपाधिव्यभिचारसन्देहसंभवात् तदधीनसाध्यव्यभिचारसन्देहसंभवाच्च तस्यापि दूषकत्वावश्यकतया सद्धेतौ तदुद्भावनमावश्यकम् । नच स्वव्याघातकत्वरूपोक्तदोषग्रस्तत्वान्न तदुद्भावनमिति वाच्यम् यत्रोपाधेस्साध्यव्यापकत्वनिर्णायकतर्कावतरः यथा धूमवान् वह्नेरित्यादौ आर्द्रेन्धनादेर्धूमव्यापकताग्राहककार्यकारणभावग्रहात्मकतर्कः तत्र व्यापकव्यभिचारेण व्याप्यव्यभिचारानुमितिस्संभवति आर्द्रेन्धनव्यभिचारित्वरूपलिङ्गे वह्नीतरत्वविशेष्यकधूमव्यभिचारित्वरूपसाध्यव्यापकत्वसन्देहाभिमतोपाधित्वसन्देहाधीनतादृशोपाधिव्यभिचारसन्देहसत्त्वेऽपि व्यभिचारसंशयस्य व्याप्तिग्रहप्रतिबन्धकतायामनुकूलतर्कस्योत्तेजकतया प्रकृते तादृशोत्तेजकाभावविशिष्टप्रतिबन्धकाभावरूपकारणबलादार्द्रेन्धने व्यभिचारित्वरूपहेतौ धूमव्यभिचारित्वरूपसाध्यनिरूपितव्याप्तिनिश्चयोत्पत्तौ बाधकाभावेन तादृशसाध्यव्यभिचारानुमित्युत्पत्तेः तादृशोपाधेरेव व्यभिचारोन्नायकत्वरूपदूषकत्वस्य व्याघाताप्रसक्तेः तस्मादुक्तसद्धेतौ तदुद्भावनमावश्यकमत आह ॥ **पक्षेतरस्त्विति** ॥ सद्धेतुस्थलीयपक्षेतरस्त्वित्यर्थः अवधारणार्थकतुशब्दः नोद्भावनीय इत्युत्तरं योज्यः ॥ **सन्दिग्धोपाधिरपीति** ॥ प्रकृतसाध्यव्यापकत्वसन्देहाधीनतद्घटितोपाधित्वप्रकारकसंशयविषयोऽपीत्यर्थः ॥ **नोद्भावनीय इति** ॥ दोषत्वेन व्यवहर्तव्य इत्यर्थः तत्र हेतुमाह ॥ **कथकेति** ॥ कथकानां भाष्यकारप्रभृतीनां सम्प्रदायः दोषत्वतात्पर्येण प्रयुज्यमानत्वं तदनुरोधात् तादृशहेतोरित्यर्थः । तथाच धूमादिसद्धेतुस्थलीयपर्वतेतरत्वादौ वह्न्यादिरूपसाध्यव्यापकत्वसन्देहाहितोपाधित्वसन्देहात् हेतावप्युपाधित्वव्यभिचारसंशयसंभवेऽपि तादृशसंशयस्य धूमादौ वह्न्यादिव्यभिचारशङ्कानिवर्तकतर्कविरहविशिष्टस्यैव साध्यव्यभिचारसन्देहाजनकतया प्रकृते धूमवह्न्योः कार्यकारणभावग्रहात्मकानुकूलतर्कसत्त्वेन वह्निव्यभिचारित्वसंशयजननासामर्थ्यात् नोद्भावनीय इति भावः । व्यभिचारस्यानुमानं उपाधेस्तु प्रयोजनमिति मूलस्थानुमानपदोत्तरं योजितावधारणार्थकतुशब्देन निषेध्यसत्प्रतिपक्षोत्थापकत्वमतं दूषयितुं तन्मतमुपन्यस्यति ॥ **केचित्त्विति** ॥ **सत्प्रतिपक्षोत्थापनमिति** ॥ पक्षे स्वाभावलिङ्गकसाध्याभावानुमितिमात्रमित्यर्थः ॥ **उपाधेः फलमिति** ॥ स्वात्मकोपाधिनिष्ठदूषकत्वमित्यर्थः तदुपपादयति ॥ **तथाहीत्यादिना** ॥ **सत्प्रतिपक्षसंभवादिति** ॥ तथाच प्राथमिकानुमानस्थलीयोपाधितावच्छेदकार्द्रेन्धनत्वाद्यवच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नलिङ्गकतत्स्थलीयपक्षतावच्छेदकावच्छिन्नविशेष्यकसाध्यतावच्छेदकावच्छिन्नप्रति-योगिताकाभावत्वावच्छिन्नविधेयताकानुमितेरभ्रान्तस्यापि संभवेन प्रथमानुमाने आर्द्रेन्धनस्य दूषकत्वेनोद्भावनमावश्यकमिति भावः ॥ **इत्थंचेति** ॥ निरुक्तसत्प्रतिपक्षोत्थापकत्वमात्रेण दूषकत्वे चेत्यर्थः ॥ **साधन-**

## दिनकरीयम्.

सम्भवे सम्प्रदायमात्रे तद्धेतुत्वकथनमसङ्गतमिति वाच्यं यत्र साध्यव्यापकताग्राहकतर्कावतारस्तत्र व्यापकव्यभिचारिणो व्याप्यव्यभिचारावश्यम्भावेन व्यभिचारानुमापकत्वरूपस्य दूषकत्वस्य व्याघातासम्भवात् । सत्प्रतिपक्षोन्नायकत्वेनोपाधेर्दूषकतावादिनां मतमाह ॥ **केचित्त्विति** ॥ **इत्थं चेति** ॥ सत्प्रतिपक्षोत्थापकत-

शीतस्पर्शवत्त्वम्। नचात्र स्वरूपासिद्धिरेव दूषणमिति वाच्यं सर्वत्रोपाधेर्दूषणान्तरसङ्कार्यात्। अत्र च साध्यव्यापकः पक्षावृत्तिरुपाधिरित्याहुः ॥ शब्दोपमानयोरिति ॥ वैशेषिकाणां

**शब्दोपमानयोर्नैव पृथक्प्रामाण्यमिष्यते ॥ १४० ॥**
**अनुमानगतार्थत्वादिति वैशेषिकं मतम् ।**

मते प्रत्यक्षमनुमानं च प्रमाणं शब्दोपमानयोस्तु अनुमानविधयैव प्रामाण्यम् । तथा हि दण्डेन गामानयेत्यादिलौकिकपदानि यजेतेत्यादिवैदिकपदानीव तात्पर्यविषयस्मारितपदा-

## प्रभा.

**व्यापकोऽपीति** ॥ साध्यव्यापकताश्रय इत्यादिः अपिना साधनाव्यापकः समुच्चीयते तथाच साध्यव्यापकः साधनाव्यापकः यथा उपाधिः तथा साध्यव्यापकः साधनव्यापकश्च उपाधिर्भवतीति समुदितार्थः । द्वितीयमुपाधिमुदाहरति ॥ **यथेत्यादिना** ॥ **अनुष्णाशीतस्पर्शवत्त्वमिति** ॥ उपाधिपदस्य पूर्वग्रन्थस्थस्यात्रानुषङ्गः । तथाच तस्य साध्यव्यापकस्य साधनाव्यापकत्वेऽपि पक्षे तदभावेन साध्याभावानुमानसंभवाद्दूषकत्वमावश्यकमिति भावः ॥ **अत्रेति** ॥ कठिनसंयोगवत्त्वहेतावित्यर्थः ॥ **स्वरूपासिद्धिरेवेति** ॥ अत्राऽप्यर्थकैवकारेण स्वरूपासिद्धत्वं बाधितत्वं सत्प्रतिपक्षत्वं च दूषणमिति लभ्यते । तथाचैतादृशदोषैरेव हेतोर्दुष्टत्वसंभवे साधनव्यापकसाधारणमुपाधिलक्षणमङ्गीकृत्य तादृशोपाधिनापि हेतोर्दुष्टत्वाङ्गीकारे प्रयोजनविरह इति भावः ॥ **सर्वत्रोपाधेरिति** ॥ सर्वस्थलीयोपाधेरित्यर्थः । उपाधिमात्रस्येति यावत् ॥ **दूषणान्तरसाङ्कर्यादिति** ॥ व्यभिचारादिरूपदोषसमवहितत्वादित्यर्थः तथाच उपधेयसङ्करेऽपीत्यादिन्यायेन एकस्मिन् नानादोषसङ्करे बाधकाभावात् प्रकृतहेतौ उपाधिरूपदोषाङ्गीकारोऽप्यावश्यक इति भावः । ननूक्तस्थलेऽनुष्णाशीतस्पर्शवत्त्वस्योपाधित्वे तत्र साधनाव्यापकत्वघटितलक्षणाभावादव्याप्तिरित्याशङ्कां परिहरति ॥ **अत्र चेति** ॥ उपाधेस्सत्प्रतिपक्षोन्नायकत्वेन दूषकत्वपक्ष इत्यर्थः ॥ **साध्यव्यापक इत्यादि** ॥ साध्यव्यापकत्वे सति पक्षावृत्तित्वमुपाधिलक्षणमित्यर्थः । तथाचोक्तस्थलेऽनुष्णाशीतस्पर्शवत्त्वस्य पृथिवीत्वव्यापकत्वात् करकात्मकपक्षावृत्तित्वाच्च नाव्याप्तिरिति भावः तत्र एतादृशोपाधिलक्षणस्वीकारे पर्वतो धूमवान् वह्नेरित्यादौ आर्द्रेन्धनादौ घटो द्रव्यं सत्त्वादित्यादौ गुणान्यत्वादौ चाव्याप्तिः तेषां पक्षावृत्तित्वाभावात् किंचोपाधेस्सत्प्रतिपक्षोन्नायकत्वेन दूषकत्वे पर्वतो वह्निमान् धूमादित्यादौ आर्द्रेन्धनादेः पर्वते धूमाभावानुमापकत्वेन सत्प्रतिपक्षोन्नायकत्वाभावात् दूषकत्वानुपपत्तेः ।अपिचोपाधेस्सत्प्रतिपक्षोन्नायकत्वं न मणिकारानुमतं यदभावो व्यभिचारविरोधी तत्त्वमित्युपाधिलक्षणकरणात् अन्यथा यदभावस्साध्यविरोधीति लक्षणकरणापत्तेरित्याद्यस्वरसं विचिन्त्याहुरित्युक्तमिति ध्येयम् ॥ **मूले शब्दोपमानयोरित्यादि** ॥ यद्यप्युपमानशब्दयोरित्येव वक्तुमुचितं मूले उपमाननिरूपणानन्तरमेव शब्दस्य निरूपितत्वात् प्रमाणविभाजकसूत्रानुसाराच्च तथापि वैशेपिकाणां प्रमाणचतुष्टयानुसारिमूलोक्तनिरूपणक्रमानुसरणस्य प्रमाणविभाजकसूत्रानुसरणस्य चानपेक्षितत्वात् शब्दस्यानुमानान्तर्गतत्वव्यवस्थापनं कठिनमिति कष्टमनुभुज्य सुखं भोक्तव्यमिति स्वेच्छयैवादौ शब्दस्यानुमानान्तर्गतत्वं तैर्व्यवस्थापितमिति तदेव मूलकृताप्यनुसारितमिति नोक्तदोषप्रसक्तिः तादृशमूलार्थस्य स्फुटत्वेऽपि शब्दोपमानयोर्वैशेषिकाभिमतानुमानगतार्थत्वमुपपादयितुं मूलार्थमनुवदति ॥ **वैशेषिकाणां मत इत्यादि** ॥ विधिप्रत्ययघटितवाक्यमेव प्रमाणमिति प्राभाकरमतसाधारण्याय ॥ **दण्डेन गामभ्याजयेति** ॥ **पदानीति** ॥ कर्मकरणाकाङ्क्षानिवृत्त्यर्थं द्वितीयान्तगोपदतृतीयान्तदण्डपदघटितसमुदायस्य घटकपदानां प्रातिस्विकरूपेण तावत्पदा

## दिनकरीयम्.

या दूषकत्वे चेत्यर्थः ॥ **अत्र च** सत्प्रतिपक्षोत्थापकत्वपक्षे च ॥ **पक्षावृत्तिरिति** ॥ पक्षवृत्तित्वे तु पक्षे तदभावेन साध्याभावासाधनादिति भावः । गुरुमते लौकिकः शब्दोऽनुवादकः वैदिक एव प्रमाणं तन्मतनिराकरणायाह ॥ **वैदिकेति** ॥ अत्र स्वर्गकामो यजेतेत्यादिपदत्वेन पक्षता तेन विशेषतः संसर्गसिद्धिरिति द्रष्टव्यम् ॥ **तात्पर्यविषयेति** ॥ अत्र ब्राह्मणे विधेयादौ यदाधिकरणत्वं संसर्गे तात्पर्यं तदा विषय-

र्थसंसर्गप्रमापूर्वकाणि आकाङ्क्षादिमत्पदकदम्बकत्वात् घटमानयेति पदकदम्बकवत्। यद्वा एते

**प्रभा.**

न्यतमत्वेन वा पक्षत्वमङ्गीकृतं वैदिकशब्दः प्रमाणं लौकिकशब्दस्त्वनुवादक इति जरन्मीमांसकमतसाधारण्याय वैदिकपदानीवेत्युक्तम्। ज्योतिष्टोमेन यजेतेत्यादिपदानीवेत्यर्थः ॥ **तात्पर्यविषयेत्यादि** ॥ अत्र तात्पर्यपदं अभ्रान्तप्रयोक्तृसमवेततात्पर्यपरं तत्पूर्वकत्वसिद्धचैव शब्दस्य पृथक्प्रामाण्यनिरासंसंभवात् अत्र घटमानयेत्यादौ घटकर्मत्वयोः कर्मत्वानयनयोश्च तात्पर्याविषयकालिकसंसर्गज्ञानपूर्वकत्वसिद्धिप्रयुक्तार्थान्तरवारणाय साध्यकोटिप्रविष्टसंसर्गे तज्ज्ञाने वा तात्पर्यविषयत्वविशेषणम्। केचित्तु अत्र ब्राह्मणे विघेत्यादौ यदाधिकरणत्वसंसर्गे तात्पर्यं तदा विषयत्वादिसंसर्गेणार्थान्तरवारणाय तात्पर्यविषयत्वं संसर्गे विशेषणमित्याहुः तदसत् ब्राह्मणे विघेत्यादौ अधिकरणत्वस्य विषयत्वादेर्वा सप्तमीपदार्थत्वेन संसर्गत्वाभावात् तत्र तत्संसर्गकबोधाप्रसक्त्या तज्ज्ञानपूर्वकत्वरूपसाध्याप्रसिद्धया च तत्सिद्धिप्रयुक्तार्थान्तराप्रसक्तेः। नच विभक्त्यर्थाविवक्षायां ब्राह्मणपदार्थस्य विद्यापदार्थ एव अन्वयस्य वक्तव्यतया यदा आधेयत्वसंसर्गबोधे तात्पर्यं तदा विषयतादिसंबन्धमादायार्थान्तरदोषप्रसक्तिरिति वाच्यम्। तथासति नामार्थयोरिति व्युत्पत्तिभङ्गापत्त्या तादृशसंबन्धेन ब्राह्मणपदार्थस्य तत्रान्वयासंभवादिति दिक्। अत्र नैयायिकमते घटामित्यादिवाक्यजन्याधेयतासंबन्धेन घटप्रकारककर्मत्वविशेष्यकशाब्दबोधे घटमिति वाक्यं घटपदार्थप्रकारकाधेयत्वसंसर्गकाम्पदार्थविशेष्यकप्रतीतीच्छयोच्चरितत्वमित्याकारकतात्पर्यज्ञानमेव कारणं नतु घटप्रकारकाधेयत्वसंसर्गककर्मत्वविशेष्यकप्रतीतीच्छया उच्चरितमित्याकारकतात्पर्यज्ञानं तथासति शब्दस्य गृहीतार्थग्राहकत्वेनाप्रमाणत्वापत्तेः। एवं चाम्पदार्थविशेष्यकाधेयतासंसर्गकघटपदार्थविशेष्यकाधेयतासंसर्गकघटपदार्थप्रकारकज्ञानस्यापि तात्पर्यविषयपदार्थसंसर्गज्ञानरूपतया तादृशज्ञानपूर्वकत्वसिद्धिमादायार्थान्तरं संसर्गः कर्मत्वमाधेयतासंबन्धेन घटविशिष्टमिति घटत्वविशिष्टीयत्वेनाधेयतासंसर्गकज्ञानस्यैवाभिमतत्वादतः स्मारितत्वं पदार्थविशेषणं पदनिरूपितवृत्तिज्ञानजन्योपस्थितिविषयतावच्छेदकत्वोपलक्षिताभ्रान्तप्रयोक्तृसमवेततात्पर्यघटितधर्मावच्छिन्न इत्यर्थः। एतल्लाभायैव पदार्थ इत्युक्तं नतु तस्यापि प्रवेशः प्रयोजनाभावात् एवंचाम्पदार्थ आधेयत्वसंसर्गेण घटपदार्थीय इति ज्ञानस्य घटपदार्थत्वविशिष्टीयत्वेनाधेयत्वसंसर्गावगाहित्वेऽपि निरुक्तविषयतावच्छेदकत्वोपलक्षितघटत्वाद्यवच्छिन्नीयत्वेनाधेयत्वाद्यनवगाहित्वान्नार्थान्तरप्रसक्तिः स्मृतौ पदज्ञानजन्यत्वमपहाय पदनिरूपितवृत्तिज्ञानजन्यत्वानिवेशात्। द्रव्यं घट इति वाक्ये घटपदात्समवायेनाकाशत्वावच्छिन्नोपस्थितौ तादात्म्यसंबन्धेनाकाशत्वावच्छिन्नप्रकारकद्रव्यविशेष्यकज्ञानस्यापि घटपदज्ञानजन्यज्ञानविषयतावच्छेदकत्वोपलक्षिताकाशत्वावच्छिन्नप्रकारकतात्पर्यविषयतादात्म्यसंसर्गकज्ञानरूपतया तत्पूर्वकत्वसिद्धिमादाय नार्थान्तरावकाशः। वाक्ये कण्ठताल्वाद्यभिघातस्यैव साक्षाद्धेतुतया निरुक्तज्ञानजन्यत्वाभावाद् बाधवारणाय जन्यत्वमपहाय प्रयोज्यत्वार्थकपूर्वकत्वनिवेशः ॥ **आकांक्षादीत्यादि** ॥ आकाङ्क्षायोग्यतासत्तिमत्पदकदम्बकत्वादीत्यर्थः अत्र घटः कर्मत्वमित्यादिवाक्ये पदकदम्बकत्वरूपहेतुमति निरुक्तसाध्याभावाद्यभिचारवारणायाकाङ्क्षावत्पदविशेषणं तथाच तादृशवाक्यस्य मूलोक्तप्रत्ययनिष्ठप्रकृत्युत्तरत्वरूपाकाङ्क्षावत्त्वाभावात् न तत्र व्यभिचार इति भावः निरुक्तसाध्याभाववति वह्निना सिञ्चतीत्याद्ययोग्यवाक्ये व्यभिचारवारणाय तत्रैव योग्यतावत्त्वविशेषणं नीलो घटो द्रव्यं पट इत्यादिवाक्यघटकनीलपदघटपदघटितसमुदाये निरुक्तसाध्याभाववति व्यभिचारः आकाङ्क्षायोग्यतावत्पदकदम्बकत्वरूपहेतोस्सत्त्वात्। वस्तुतः प्रकृतिप्रत्यययोरेवाकाङ्क्षा इति सिद्धान्तितत्वात् तादृशसमुदायस्य प्रकृतिप्रत्ययसमुदायरूपत्वाभावेन आकाङ्क्षायाः अनपेक्षितत्वात्

**दिनकरीयम्.**

त्वादिसंसर्गेणार्थान्तरवारणाय तात्पर्यविषयत्वं संसर्गे विशेषणम्। तात्पर्यज्ञाने इतरपदार्थत्वेनेतरपदार्थस्य प्रवेशाद्धटत्वादिना स्मृतस्य संसर्गो न सिध्येदतः स्मारितेति। स्मारितत्वं च वृत्त्या बोध्यम्। तेन वस्तुपदात् समवायेनाकाशत्वादिनोपस्थापितेन रूपेण संसर्गसिद्ध्यभावेऽपि न क्षतिः। हेतौ चायमेति पुत्रो राज्ञः पुरुषोऽपसार्यतामित्यादौ राज्ञः पुरुष इत्यादिभागे राजपुरुषयोर्योग्यार्थयोः संसर्गे तात्पर्याभावेन साध्याभा-

पदार्था मिथस्संसर्गवन्तः योग्यतादिमत्पदोपस्थापितत्वात् तादृशपदार्थवत् दृष्टान्तेऽपि दृ-

प्रभा .

अबाधितार्थकत्वरूपयोग्यतायाः सत्त्वाच्च अतस्तत्रैवासत्तिमत्त्वविशेषणं तथाच मूलोक्ततात्पर्यगर्भासत्तेः तादृशसमुदायेऽभावात् न व्यभिचार इति भावः। केचित्तु अयमेति पुत्रो राज्ञः पुरुषोऽपसार्यतामित्यादौ राज्ञः पुरुष इति भागे राजपुरुषयोः योग्यार्थयोस्संसर्गतात्पर्याभावेन साध्याभावाद्व्यभिचार इत्याकाङ्क्षाविशेषणमित्याहुः तदसत् मूलोपात्ततात्पर्यगर्भासत्तिघटितहेत्वभावेनैव निरुक्तभागे व्यभिचाराप्रसक्तेः हेतुकोटौ मूलोपात्तासत्तिमनिवेश्य तादृशभागे व्यभिचारवारकतया आकाङ्क्षावत्त्वविशेषणदानस्य प्रक्षाळणाद्धीति न्यायकबळितत्वेनायुक्तत्वात् । किंच वस्तुतस्तु क्रियाकारकपदानां सन्निधानमासत्त्या चरितार्थमित्यादिग्रन्थेन क्रियाकारकपदानां आकाङ्क्षामनभ्युपगम्य प्रकृतिप्रत्यययोः आकाङ्क्षाभ्युपगमस्यायमेति पुत्रो राज्ञः पुरुष इत्यादौ राजपदार्थपुत्रपदार्थयोः संसर्गबोधे तात्पर्येण तत्रैवान्वयबोधस्य राजपदार्थपुरुषपदार्थयोः संसर्गबोधतात्पर्ये सति तथैवान्वयबोधस्य च विश्वनाथपञ्चाननेनैव शब्दपरिच्छेदे व्यवस्थापितत्वात् क्रियाकारकपदयोराकाङ्क्षा नास्त्येव किंतु प्रकृतिप्रत्यययोरेव तत्राप्यव्यवधानांशस्यागत्या लाभात् प्रत्यये प्रकृत्युत्तरत्वरूपाकाङ्क्षाज्ञानं कारणमित्याहेति ग्रन्थेन वस्तुतस्त्वित्यादिग्रन्थाशयस्य केचित्कारेणैव वर्णितत्वाच्च प्रकृतिप्रत्ययसमुदायभिन्नपदसमुदायमात्रे निरुक्ताकाङ्क्षादिमत्त्वघटितहेत्वभावेन भागासिद्धिप्रसङ्गात् तस्मात् प्रकृतिप्रत्ययघटितसमुदायस्य पक्षत्व एवाकाङ्क्षाघटितपदकदम्बकत्वस्य हेतुत्वं तदन्यसमुदायस्य पक्षत्वे तु केवलयोग्यतासत्तिमत्पदकदम्बकत्वस्यैव हेतुत्वमित्यवश्यं स्वीकार्यम् । एवंचायमित्यादिस्थलीयराज्ञः पुरुष इति भागस्य प्रकृतिप्रत्ययसमुदायभिन्नतया तादृशभागस्य पक्षत्वे आकाङ्क्षावत्त्वाघटितयोग्यतासत्तिमत्पदकदम्बकत्वस्यैव हेतुतया प्रकृतहेत्वघटिताकाङ्क्षावत्त्वविशेषणस्य सार्थक्यविचारः वन्ध्यापुत्रस्याभिजात्यविचारतुल्य एवेति प्रतिभाति । निरुक्तसाध्याभाववति घटमानयेत्यादिवाक्यघटकैकपदेऽपि आकाङ्क्षादिमत्पदत्वरूपहेतुसत्त्वाद्व्यभिचारवारणाय पदकदम्बकत्वादित्युक्तं तादृशपदघटितवाक्यत्वं तदर्थः । ननु तद्धर्मावच्छिन्नोद्देश्यकप्रवृत्तौ तद्धर्मप्रकारकनिश्चयस्य तद्धर्मावच्छिन्नविधेयकप्रवृत्तौ तद्धर्मावच्छिन्नविशेष्यकेष्टसाधनत्वप्रकारकनिश्चयस्य च हेतुत्वं वाच्यम् । स्वर्गत्वप्रकारकज्ञानादेव स्वर्गोद्देश्यकप्रवृत्तेः यागत्वावच्छिन्नविशेष्यकस्वर्गसाधनत्वप्रकारकनिर्णयादेव यागविधेयकप्रवृत्तेश्चोत्पत्तिदर्शनात् नतु तादृशज्ञानपूर्वकत्वनिर्णयादपि मानाभावात् अन्यथा रजतत्वविशिष्टवैशिष्ट्यावगाहिज्ञाने रजतत्वप्रकारकज्ञानपूर्वकत्वप्रकारकज्ञानादपि रजतोद्देश्यकप्रवृत्त्यापत्तिः एवंच घटादिविशेष्यकदण्डादिपूर्वकत्वज्ञानजनकसामग्र्याः दण्डाद्यनुत्पादकत्ववत् निरुक्तपदकदम्बकविशेष्यकतादृशज्ञानपूर्वकत्वप्रकारकानुमितिजनकसामग्र्या अपि तादृशज्ञानानुत्पादकतया प्रवर्तकस्य शाब्दबोधसमानाकारकज्ञानस्य पदकदम्बपक्षनिरुक्तानुमानादनिष्पन्नत्वात् तदर्थं शब्दस्य पृथक्प्रामाण्यमावश्यकमित्यतः कल्पान्तरमाह ॥ **यद्वेति** ॥ **एते पदार्था इति** ॥ घटकर्मत्वानयनादिपदार्थ इत्यर्थः अत्र बहुवचनं सं-

**दिनकरीयम्.**

वाद्व्यभिचार इत्याकाङ्क्षाविशेषणं तच्चेदं पदमनेन पदेन सहामुकसंसर्गेणैतदर्थान्वितस्वार्थबोधं जनयत्विति पदतात्पर्यार्थकं तेन नाकाङ्क्षाया इतरांशवैयर्थ्यप्रसङ्गः वह्निना सिञ्चतीत्यादिवाक्ये संसर्गप्रमापूर्वकत्वसाध्याभावेन व्यभिचारवारणाय हेतौ योग्यतापदम् । नीलो घटो द्रव्यं पट इत्यादौ नीलः इत्यादिभागे नीलपटयोराकाङ्क्षायोग्यतासत्त्वेन हेतुसत्त्वाद्व्यभिचारवारणायासत्तिपदम् । कदम्बपदं चाकाङ्क्षादीनां परस्परप्रतियोगित्वलाभाय अन्यथा साध्यस्य परस्परार्थघटितत्वेन व्यभिचारप्रसङ्गात् । नन्विष्टतावच्छेदकप्रकारकप्रवृत्तिविषयविशेष्यकज्ञानस्य प्रवर्तकतया संसर्गज्ञानपूर्वकत्वानुमितेरतादृशतया कथं प्रवर्तकत्वम् । अनुमितेर्व्यापकतावच्छेदकप्रकारकत्वनियमेन प्रमापूर्वकत्वत्वेन प्रमापूर्वकत्वसिद्धावपि पुरोवर्तिविशेष्यकरजतत्वादिप्रकारकज्ञानस्य तस्मादनुत्पत्तेस्तदर्थं शब्दप्रामाण्यस्वीकार इत्यत आह ॥ **यद्वेति** ॥ **मिथःसंसर्ग इति** ॥ तात्पर्यविषयपरस्परसंसर्गवन्त इत्यर्थः । तेन नातात्पर्यविषयसंसर्गमादायार्थान्तरम् । ननु दृष्टान्ते साध्यसिद्ध्यभावात् कथं व्याप्तिग्रह इत्यत आह ॥ **दृष्टान्तेऽपीति** ॥ ननु सर्वत्र शब्दश्रवणानन्तरमनुमितिरूपकार्यान्यथा-

प्रभा.

भवस्थलाभिप्रायेण ॥ **मिथस्संसर्गवन्त इति** ॥ प्रत्येकरूपेण संसर्गवन्त इत्यर्थः कर्मत्वमाधेयतासंबन्धेन घटवत् आनयनं निरूपकतासंबन्धेन घटकर्मत्ववत् कृतिः अनुकूलतासंबन्धेन घटकर्मकानयनवतीति चैत्र आश्रयतासंबन्धेन घटकर्मानयनानुकूलकृतिमानिति फलितार्थः । अत्र कर्मत्वादौ कालिकादिसंबन्धेन घटादिमत्त्वसिद्धिमादायार्थान्तरवारणाय संसर्गे तात्पर्यविषयत्वविशेषणं देयम् कर्मत्वं संबन्धसामान्येन घटवदिति ज्ञानस्यापि संबन्धत्वरूपसामान्यधर्मपुरस्कारेण तात्पर्यविषयाधेयतासंबन्धेन घटप्रकारकतया तादृशसिद्धिप्रयुक्तार्थान्तरवारणाय निरुक्तार्थकमिथःपदं। नच घटनिष्ठानयनकर्मत्वस्य प्रत्यक्षत एव सिद्धत्वात् सिद्धसाधनमिति वाच्यम् । तात्पर्यविषय इत्यस्य प्रयोक्तृतात्पर्यविषयवर्तमानग्रहविषयार्थकतया तादृशप्रत्यक्षस्य प्रयोगसमानकालीनत्वरूपवर्तमानत्वाभावात् न सिद्धसाधनप्रसक्तिः अत्र वर्तमानभगवज्ज्ञानादिविषयत्वमादाय च तद्दोषवारणाय वर्तमानग्रहे केवलतात्पर्यविषयत्वमपहाय प्रयोक्तृतात्पर्यविषयत्वं निवेशितम् । एवं च मदुच्चरितवाक्यं श्रोतुरेतादृशबोधं जनयत्विति प्रयोक्तृतात्पर्ये श्रोतृसमवेतबोधस्यैव विषयत्वेन भगवज्ज्ञानस्य योगिज्ञानस्य वा तादृशत्वाभावात् नोक्तदोषप्रसक्तिः। नच घटमिति वाक्ये कालिकादिसंबन्धेन घटप्रकारककर्मत्वविशेष्यकबोधजनकत्वभ्रमवता श्रोतुरप्येतादृशबोधं जनयत्विति तात्पर्येण उच्चरितघटमिति वाक्यस्थले कालिकसंबन्धस्यापि तादृशसंसर्गरूपतया कर्मत्वे तेन संबन्धेन घटसिद्धिमादायार्थान्तरप्रसङ्ग इति वाच्यं साध्यनिर्देशघटकप्रयोक्तृशब्दस्याभ्रान्तप्रयोक्तृपरत्वस्वीकारेणोक्तदोषाभावात् । तथाच कर्मत्वादिकं अभ्रान्तप्रयोक्तृतात्पर्यविषयवर्तमानग्रहविषयत्वोपलक्षिताधेयत्वादिसंबन्धेन घटादिमदित्यर्थः फलित इति ॥ **योग्यतादिमत्पदोपस्थापितत्वादिति** ॥ तत्र क्रियार्थे कारकार्थानुमापकहेतुघटकपदे आकाङ्क्षावत्त्वविशेषणस्य व्यर्थत्वात् बाधितत्वाच्च तत्साध्यकस्थलाभिप्रायेण तादृशविशेषणाघटितहेतुकरणं प्रत्ययार्थकर्मत्वादौ प्रकृत्यर्थघटाद्यनुमापकहेतुघटकपदे तु आकाङ्क्षावत्त्वविशेषणमावश्यकम् । अन्यथा प्रथमान्तघटपदनिरूपितं अबाधितार्थकत्वरूपयोग्यत्वाव्यवधानेनोच्चरितत्वरूपासत्तिमत्त्वैतदुभयं तद्विशिष्टकर्मत्वपदोपस्थाप्यत्वरूपहेतुमति कर्मत्वे निरुक्तसाध्याभावाद्व्यभिचारः घटः कर्मत्वमिति वाक्यस्य घटाभेदबोधाभिप्रायकत्वे घटकर्मत्वयोरभेदस्य बाधितत्वेन प्रयोक्तुः भ्रान्तत्वं घटाधेयत्वबोधाभिप्रायकत्वे समानविभक्तिकतादृशपदद्वयस्याधेयत्वसंबन्धेन घटप्रकारकबोधजनकत्वासंभवेन तादृशपदद्वये तादृशबोधजनकत्वप्रत्ययस्य भ्रमरूपतया तस्य तदंशे भ्रान्तत्वमिति उभयथापि तादृशवाक्यप्रयोक्तुः भ्रान्तत्वेनाभ्रान्तप्रयोक्तृतात्पर्यघटितसाध्याभावाद्व्यभिचारो दुर्वारः । तस्मात्तत्राकाङ्क्षावत्त्वविशेषणं देयम् । एवंच कर्मत्वपदस्य प्रत्ययत्वाभावात् तत्र प्रत्ययनिष्ठप्रकृत्युत्तरत्वरूपाकाङ्क्षाभावेन तद्घटितहेतोस्सुतरामभावेन न व्यभिचारप्रसक्तिः । वह्निना सिञ्चतीत्यत्र क्रियापदे तृतीयान्तवह्निपदनिरूपिताकाङ्क्षाया अनपेक्षितत्वेन केवलतृतीयान्तवह्निपदनिरूपितासत्तिमत्तृतीयापदोपस्थाप्यत्वरूपहेतुमति सेचने निरुक्तसाध्याभावाद्व्यभिचारवारणाय हेतुघटकपदे योग्यत्वविशेषणम्। नीलो घटो द्रव्यं पट इत्यादौ पटपदे नीलपदनिरूपिताकाङ्क्षाया अनपेक्षिततया निरुक्तयोग्यतावत्पदस्मारितहेतुमति नीलपदघटितसमुदाये अभ्रान्तप्रयोक्तृघटितसाध्याभावाद्व्यभिचारवारणाय हेतुघटकपदे पदाव्यवधानरूपासत्तिमत्त्वविशेषणम्। तादृशपदस्मारितत्वं च तादृशपदनिरूपितवृत्तिज्ञानजन्योपस्थितिविशेष्यत्वं तेन घटमित्यादिवाक्यघटकामादिपदात् समवायेनाकाशस्य स्मृतत्वेऽपि तत्र निरुक्तसाध्याभावेऽपि च न व्यभिचारः । नच घटःकर्मत्वमित्यादिवाक्यघटक घटादिपदसुप्पदयोः एकत्वप्रकारकघटविशेष्यकबोधोपयोग्याकाङ्क्षावत्त्वात् वह्निना सिञ्चतीत्यादिवाक्यस्य वह्नीयं करणत्वं सेकानुकूलकृतिरित्याद्यन्वयबोधौपयिकयोग्यतावत्त्वात् नीलोघटोद्रव्यंपटइत्यादिवाक्यघटकनीलघटपदयोरपि सुपा सहासत्तिमत्त्वाच्च निरुक्तहेत्वधिकरणतत्तदर्थेषु विवक्षितसाध्याभावाद्व्यभिचारस्तदवस्थ इति वाच्यम् । साध्यघटकतात्पर्यविषयबोधसमानाकारकबोधौपयिकत्वस्य हेतुघटकाकाङ्क्षादिविशेषणत्वात् एवं पूर्वोक्तानाकाङ्क्षादिवाक्यानां तादृशबोधौपयिकाकाङ्क्षावत्पदत्वाभावेन पक्षीभूततदर्थेषु तादृशपदघटितहेतोस्सुतरामभावेन तत्र निरुक्तसाध्याभावेऽपि न व्यभिचारप्रसक्तिः । नच

दृष्टान्तान्तरेण साध्यसिद्धिरिति । एवं गवयव्यक्तिप्रत्यक्षानन्तरं गवयपदं गवयत्वप्रवृत्तिनिमित्तकं असति वृत्त्यन्तरे वृद्धैस्तत्र प्रयुज्यमानत्वात् असति च वृत्त्यन्तरे वृद्धैर्यत्र यत्प्रयुज्यते तत्र तत्तत्प्रवृत्तिनिमित्तकं यथा गोपदं गोत्वप्रवृत्तिनिमित्तकम् । यद्वा गवयपदं सप्र-

प्रभा.

घटःकर्मत्वमिति वाक्याधीनस्मृतिकालेऽपि घटकर्मत्वयोः पूर्वकालीनघटमिति वाक्याधीनस्मृतिविषयत्वरूपहेतुसत्त्वात् तत्र वर्तमानप्रहघटितसाध्यस्य तदानीमभावाद्व्यभिचारो दुर्वार इति वाच्यं विषयतायाः ज्ञानसमानकालीनत्वपक्षाश्रयणात् विशेष्यतासंबन्धेन तादृशस्मृतिहेतुत्वस्वीकाराद्वा न व्यभिचार इति ॥ **तादृशपदार्थवदिति** ॥ पटमानयेतिवाक्यबोध्यपटकर्मत्वादिपदार्थवदित्यर्थः । ननु दृष्टान्तेऽपि कथं साध्यप्रसिद्धिरित्यत आह ॥ **दृष्टान्तेऽपीति** ॥ निरुक्तघटकर्मत्वादावपीत्यर्थः ॥ **दृष्टान्तान्तरेणेति** ॥ कुड्यमानयेति वाक्यबोध्यकुड्यकर्मत्वादिरूपार्थदृष्टान्तेनेत्यर्थः ॥ **साध्यसिद्धिरिति** ॥ निरुक्तसंसर्गवत्त्वरूपसाध्यानुमितिरित्यर्थः सम्पादनीयेति शेषः तथाच दृष्टान्ते पूर्वोक्तलिङ्गेन दृष्टान्तान्तरे निर्णीतसाध्यस्यानुमितिसंभवात् नोक्तदोष इति भावः । ननु दृष्टान्ते साध्यप्रसिद्धिरनुमितिरूपैव वाच्या साच दृष्टान्तान्तरे साध्यप्रसिद्ध्यधीना तत्राप्यनुमितिरूपैव सेत्यनवस्थानात् क्वापि साध्यप्रसिद्धिरनुमानान्निर्वहतीति तदर्थं शब्दस्य पृथक्प्रामाण्यमावश्यकमिति चेन्न भूतले घट इति वाक्यप्रयोगकाले भूतले घटास्तित्वं प्रत्यक्षतो यत्रावगतं तत्र निरुक्तहेतुमति तत्र भूतलास्तित्वविशिष्टघटे दृष्टान्तान्तरापेक्षां विना निरुक्तप्रहविषयत्वोपलक्षितसाध्यस्य प्रात्यक्षिकसिद्धिसंभवात् तद्दृष्टान्तेनातीतानागतासन्निकृष्टातीन्द्रियरूपार्थप्रतिपादकवाक्यस्थलेऽपि तत्तदर्थेषु पूर्वोक्तलिङ्गेन निरुक्तसाध्यानुमितिसंभवाच्च न तदर्थं शब्दस्य पृथक्प्रामाण्यमावश्यकमित्यभिप्रायः । एतावता शब्दस्यानुमानान्तर्गतत्वमुपपाद्य इदानीमुपमानस्य तदन्तर्गतत्वमुपपादयति ॥ **एवमिति** ॥ **गवयप्रत्यक्षानन्तरमिति** ॥ गवयत्वप्रकारकगवयविशेष्यकप्रत्यक्षानन्तरमित्यर्थः एतेन वक्ष्यमाणे साध्यहेत्वोरप्रसिद्धिशङ्का निरस्ता ॥ **गवयत्वप्रवृत्तिनिमित्तकमिति** ॥ गवयत्वावच्छिन्नशक्तिनिरूपकतावदित्यर्थः ॥ **असति वृत्त्यन्तर इत्यादि** ॥ तत्तद्धर्मावच्छिन्नलाक्षणिकत्वाभाववत्त्वे सति तत्तद्धर्मावच्छिन्नलाक्षणिकत्वप्रहाभाववत्त्वे सति वा तत्तद्धर्मावच्छिन्नविषयताशालिबोधतात्पर्यकाभ्रान्तकर्तृकोच्चारणजन्यत्वादित्यर्थः यद्यदेतादृशोच्चारणजन्यं तत्तद्धर्मावच्छिन्नशक्तिनिरूपकतावदिति समुदितग्रन्थार्थः । अत्र गङ्गायां घोष इति वाक्यघटकतीरत्वावच्छिन्नलाक्षणिकगङ्गापदे निरुक्तहेतुमति व्यभिचारवारणाय सत्यन्तं नच गवयपदे गवयत्वावच्छिन्नशक्तत्वानुमितिपूर्वं तद्धर्मावच्छिन्नलाक्षणिकत्वाभावानिर्णयात् कथं तद्घटितहेतुनिर्णय इति वाच्यम् । इदम्पदमत्र लाक्षणिकमित्याप्तवाक्यादेव सत्यन्तनिर्णयसंभवेनोक्तदोषानवकाशात् नच इदम्पदमत्र शक्तमित्याप्तवाक्यादेव शक्तत्वनिर्णयस्यापि संभवात् अनुमानवैफल्यमिति वाच्यम् यादृशपदे इदम्पदमत्र न लाक्षणिकमिति तद्धर्मावच्छिन्नलाक्षणिकत्वाभावबोधकशब्द एवाप्तेनोच्चरितः ननु तद्धर्मावच्छिन्नशक्तमित्यपि तादृशपदे शक्तत्वनिर्णयार्थमनुमानाङ्गीकारस्यावश्यकत्वादुपायस्योपायान्तरादूषकत्वाच्च एतदस्वरसेनैव सत्यन्तस्यान्यार्थकरणं घटादौ व्यभिचारवारणाय विशेष्यदलं पटत्वावच्छिन्नविषयकबोधतात्पर्येणानुच्चारितघटपदे निरुक्तहेतुमति घटत्वावच्छिन्नशक्तत्वरूपसाध्याभावाद्व्यभिचारवारणाय हेतुघटकोच्चारणे तद्धर्मावच्छिन्नविषयताशालिबोधतात्पर्यकत्वविशेषणं तादृशतात्पर्यजन्यत्वं तदर्थः एवंच तादृशघटपदे पटत्वावच्छिन्नबोधतात्पर्यकत्वघटितहेत्वभावात् न व्यभिचारः घटपदस्य पटत्वावच्छिन्नशक्तत्वभ्रमवता पटत्वावच्छिन्नविषयकबोधतात्पर्येणोच्चरितघटपदे निरुक्तहेतुमति पटत्वावच्छिन्नशक्तत्वरूपसाध्याभावात् व्यभिचारवारणाय हेतुघटकोच्चारणेऽभ्रान्तकर्तृकत्वविशेषणम् । एवंच तादृशघटपदोच्चारयितुः घटपदे घटशक्तत्वभ्रान्तिमत्त्वेन तादृशघटपदेऽभ्रान्तकर्तृकत्वघटितहेत्वभावान्न व्यभिचारः उक्तसामान्यमुखीव्याप्तौ दृष्टान्तमाह ॥ **यथा गोपदमिति** ॥ नच गोपदे गोत्वावच्छिन्नशक्तत्वानुमानात् प्राक् साध्यनिर्णयाभावात् कथं दृष्टान्तत्वमिति वाच्यम् तत्र वृद्धव्यवहारेणैव शक्तिग्रहसंभवात् दृष्टान्तत्वोपपत्तिः गवयपदस्थले तु अनायासेन वृद्धव्यवहार-

वृत्तिनिमित्तकं साधुपदत्वादित्यनुमानेन पक्षधर्मताबलाद्गवयत्वप्रवृत्तिनिमित्तकत्वं सिध्यति ।

**तन्न सम्यग्विना व्याप्तिबोधं शाब्दादिबोधतः ॥ १४१ ॥**

तन्मतं दूषयति ॥ **तन्न सम्यगिति** ॥ व्याप्तिज्ञानं विनापि शाब्दबोधस्यानुभवसिद्धत्वात् । न हि सर्वत्र शब्दश्रवणानन्तरं व्याप्तिज्ञाने प्रमाणमस्तीति । किंच सर्वत्र शाब्दस्थले यदि व्याप्तिज्ञानं कल्प्यते तदा सर्वत्रानुमितिस्थले पदज्ञानं कल्पयित्वा शाब्दबोध एव किं न स्वीक्रियतामिति ध्येयम् ॥ ॥ १४० ॥ १४१ ॥

## प्रभा.

स्यासंभावितया अनुमानाङ्गीकार इति इदमुपलक्षणं गवयप्रत्यक्षानन्तरं गवयत्वविशिष्टं गवयत्वपदशक्यं गवयपदनिरूपितलक्ष्यत्वाभाववत्त्वे सति गवयपदनिरूपिताभ्रान्तसमवेतवृत्तिज्ञानाधीनोपस्थितिविशेष्यत्वात् यद्धर्मावच्छिन्नं यत्पदनिरूपितलक्ष्यत्वाभाववत्त्वे सति यत्पदनिरूपिताभ्रान्तसमवेतवृत्तिज्ञानाधीनोपस्थितिविशेष्यं भवति तद्धर्मावच्छिन्नं तत्पदशक्यं यथा गोत्वावच्छिन्नमित्यनुमानात् गवयत्वावच्छिन्ने गवयपदशक्यतानुमितिरपि बोध्या एतेन गवयपदे गवयत्वावच्छिन्नशक्तत्वानुमितावपि उपमितिसमानाकारकगवयत्वावच्छिन्नविशेष्यकगवयपदशक्यत्वासिद्धेस्तदर्थमुपमानस्य पृथक्प्रामाण्यमावश्यकमिति शङ्का निरस्ता ॥ **व्याप्तिज्ञानं विनापीति** ॥ निरुक्तपदस्मारितत्वविशेष्यकनिरुक्तसंसर्गवत्त्वरूपसाध्यनिरूपितव्याप्तिप्रकारकज्ञानशून्यकालेऽपीत्यर्थः ॥ **शाब्दबोधस्येति** ॥ घटमानयेति वाक्यश्रवणानन्तरं घटकर्मकानयनानुकूलकृतिमानित्यादिबोधस्येत्यर्थः अन्यथा घटानयनादौ प्रवृत्तिर्न स्यादित्याशयः तथाच व्यतिरेकव्यभिचारात् शब्दज्ञानोत्तरकालीनानुभवसामान्ये व्याप्तिज्ञानस्य हेतुत्वं न संभवतीति भावः । ननु व्याप्तिज्ञानं विना शाब्दबोधोऽसिद्धः यत्रानुभूयमानः शाब्दबोधः तत्रापि व्याप्तिज्ञानकल्पनादत आह ॥ **नहीति** ॥ शब्दश्रवणानन्तरं सर्वत्रेति योजना ॥ **शब्दश्रवणानन्तरमिति** ॥ घटमानयेत्यादिश्रवणकालोत्तरत्वविशिष्ट इत्यर्थः ॥ **सर्वत्रेति** ॥ अनुभूयमानघटकर्मकानयनानुकूलकृतिमानित्यादिबोधपूर्वक्षणेषु सर्वेष्वित्यर्थः ॥ **व्याप्तिज्ञाने मानमिति** ॥ व्याप्तिज्ञानकल्पकप्रमाणमित्यर्थः ॥ **अस्तीति** ॥ तथाच सर्वत्र व्याप्तिज्ञानकल्पनायां प्रमाणाभावेन व्यभिचारदुर्वारत्वात् व्याप्तिज्ञानं न हेतुरिति भावः । ननु अनुमितिरूपकार्यान्यथानुपपत्तिरेव मानमित्याशङ्क्य प्रतिबन्दीमुखेन परिहरति ॥ **किञ्चेति** ॥ **कल्प्यत इति** ॥ अनुमितिरूपकार्यान्यथानुपपत्त्येत्यादिः ॥ **सर्वत्रानुमितिस्थल इति** ॥ व्याप्तिज्ञानकरणकानुमितिस्थान इत्यर्थः ॥ **पदज्ञानं कल्पयित्वेते** ॥ व्याप्तिज्ञानकाल इत्यादिः पदविषयं आकाङ्क्षादिविषयकं च स्मरणं च कल्पयित्वेत्यर्थः ॥ **शाब्दबोध एवेति** ॥ एवकारेणानुमित्यस्वीकारो लभ्यते तथाच शाब्दप्रमितिमपलप्य तत्स्थाने सर्वत्रानुमितिप्रमामङ्गीकृत्य तदन्यथानुपपत्त्या पदज्ञानोत्तरं व्याप्तिज्ञानं यदि कल्प्यते तदा सर्वत्रानुमितिप्रमामपलप्य तत्स्थाने शाब्दप्रमामङ्गीकृत्य तदन्यथानुपपत्त्या व्याप्तिज्ञानसमये पदज्ञानस्य कल्पयितुं शक्यत्वात् अनुमानस्य प्रमाणान्तरत्वोच्छेदापत्तिः । तस्मादेकेनापरस्यापलापासंभवात् शब्दस्यापि पृथक्प्रामाण्यमावश्यकं एवं युक्तितौल्येन उपमानस्यापि प्रमाणान्तरत्वमावश्यकमिति भावः इदमुपलक्षणं अनुमिनोमीत्यनुव्यवसायबलात् अनुमितित्वरूपजात्यवच्छिन्नस्येव उपमिनोमि शाब्दयामीत्यनुभवबलात् उपमितित्वशाब्दत्वरूपवैजात्यावच्छिन्नस्यापि सि-

## दिनकरीयम्.

नुपपत्त्या व्याप्तिज्ञानं कल्पनीयमित्यत आह ॥ **किंचेति** ॥ **पदज्ञानं कल्पयित्वेति** ॥ पदस्मरणं कल्पयित्वेत्यर्थः । वह्न्यादिशब्देनार्थस्येव वह्न्यादिरूपेणार्थेनापि वह्न्यादिपदस्मरणसम्भवात् वाच्यत्वादिवद्वाचकत्वादिसम्बन्धस्यापि स्मारकत्वादिति भावः । इदमुपलक्षणं आकाङ्क्षादिज्ञानं कल्पयित्वेत्यपि बोध्यम् । मणिकृतस्त्वेते पदार्थाः परस्परसंसर्गवन्तः योग्यतादिमत्पदोपस्थापितत्वादित्यनुमाने योग्यता न लिङ्गविशेषणं लिङ्गस्य निश्चितस्यैव निश्चायकतया योग्यतायाश्च संशयेऽपि शाब्दबोधदर्शनादतः पृथगेव शब्दोपमानमि-

त्रैविध्यमनुमानस्य केवलान्वयिभेदतः ।
द्वैविध्यं तु भवेद्व्याप्तेरन्वयव्यतिरेकतः ॥ १४२ ॥
अन्वयव्याप्तिरुक्तैव व्यतिरेकादिहोच्यते ।

त्रैविध्यमिति ॥ अनुमानं हि त्रिविधं केवलान्वयिकेवलव्यतिरेक्यन्वयव्यतिरेकि-

प्रभा.

द्वं एतत्कारणतया उपमानशब्दयोः पृथक्प्रामाण्यामावश्यकमिति बोध्यम् । मणिकृतस्तु एते पदार्थाः संसर्गवन्तः योग्यतादिमत्पदोपस्थापितत्वादित्यनुमानेन योग्यताया लिङ्गविशेषणत्वे तेन रूपेण पक्षे लिङ्गनिश्चयस्यानुमितिपूर्वमावश्यकत्वेन तदर्थं योग्यतानिश्चयस्यापि आवश्यकत्वेन च तस्य सिद्धिरूपत्वात् अनुमित्यनुपपत्तिः उपलक्षणत्वे हेतोर्व्यभिचारित्वापत्तेः घटमानयेति वाक्यश्रवणानन्तरं योग्यतासंशयात् अनुमानवाक्यार्थबोधानुपपत्तिश्चेति शब्दस्यापि पृथक्पृथक्प्रामाण्यमावश्यकमित्याहुः । मिश्रास्तु शब्दस्यानुमानविधयैव प्रामाण्ये घटमानयेति वाक्यं स्वरूपयोग्यं घटःकर्मत्वमानयनंकृतिरित्यादिवाक्यं स्वरूपायोग्यमिति व्यवस्था न स्यात् अनुमानस्योभयत्रापि संभवात् नच तादृशवाक्यानां आकाङ्क्षादिमत्त्वाभावात् तद्घटितहेतोस्सुतरामभावाच्च न तत्रानुमितिसंभव इति वाच्यं आकाङ्क्षादिभ्रमेणैव तत्रानुमितिसंभवात् नहि परामर्शाप्रमात्वं जायमानानुमितेरप्रमात्वप्रयोजकं विषयबाधस्यैवाप्रमात्वप्रयोजकत्वात् शब्दस्य पृथक्प्रामाण्यस्वीकारे तु स्वभावात्तस्य प्रमाणत्वमित्याहुः । परेतु घटात्पृथगित्यादौ घटावधिकपृथक्त्वप्रकारकतादृशपृथक्त्वाश्रयनिष्ठनिरवच्छिन्नविशेष्यताकशाब्दबोधस्सर्वानुभवसिद्धः सच शब्दस्य पृथक्प्रामाण्यवादिनां मते तादृशशाब्दबोधं प्रति तादृशानुपूर्व्याश्रयपदज्ञानत्वेन हेतुत्वस्वीकारादुपपद्यते । वैशेषिकाणां मते तु तत्र पृथक्पक्षकघटावच्छेदकत्वाविधेयकानुमितिस्वीकारे पृथक्त्वाश्रयस्य भानं न निर्वहति पटादिपक्षकघटावधिकपृथक्त्वविधेयकानुमितिस्वीकारे आश्रयस्य भाननिर्वाहेऽपि तन्निष्ठनिरवच्छिन्नविशेष्यताशालिबोधानिर्वाहः तस्मादनुभूयमानतादृशबोधान्यथानुपपत्त्या शब्दस्य पृथक्प्रामाण्यमावश्यकमित्याहुः तन्न निर्धर्मितावच्छेदककशाब्दबोधे मानाभावेनोक्तरीत्या शब्दस्य तद्व्यवस्थापनासंभवादिति दिक् ॥ १४० ॥ १४१ ॥

तत्र सम्यग्विना व्याप्तिबोधं शाब्दादिबोधत इत्यनेन व्याप्तेः स्मृतत्वात् प्रसङ्गसङ्गत्या इदानीं व्याप्तिं विभजते ॥ मूले द्वैविध्यं त्विति ॥ तु अवधारणे द्वैविध्यमेवेत्यर्थः एवकारेण व्याप्तेस्त्रैविध्यव्यवस्थापकमतनिरासः तन्मते व्याप्तिः त्रिविधा अन्वयव्याप्तिः व्यतिरेकव्याप्तिरन्वयव्यतिरेकव्याप्तिश्चेति अत्रान्वयसहचारमात्रप्रयोज्या अन्वयव्याप्तिः व्यतिरेकसहचारमात्रप्रयोज्या व्यतिरेकव्याप्तिः उभयसहचारप्रयोज्या अन्वयव्यतिरेकव्याप्तिरिति विभागो लक्षणं च बोध्यम् । एतादृशविभागस्य मणिकाराद्यनभिमतत्वात्तदनुरोधेन मूलकृतापि तन्निराकरणं कृतं तत्पक्षे दोषस्तु सुधीभिरूह्यः ॥ अन्वयव्यतिरेकत इति ॥ अभेदार्थकपञ्चमीस्थानाभिषिक्ततसिप्रत्ययेनान्वयाभिन्ना व्याप्तिर्व्यतिरेकाभिन्ना व्याप्तिश्चेत्यर्थो लभ्यते ॥ अन्वयव्याप्ति-

दिनकरीयम्.

ति वदन्ति । मिश्रास्त्वनुमानमुद्रया शब्दस्य बोधकत्वे घटमानयेति स्वरूपयोग्यं घटःकर्मत्वमानयनंकृतिरिति स्वरूपायोग्यमिति न स्यात् अनुमानस्योभयत्रापि सम्भवात् नचाकाङ्क्षाघटितहेत्वभावान्नानुमितिस्तत्रेति वाच्यं आकाङ्क्षाभ्रमेणानुमितिसम्भवात् विषयाबाधाच्च तस्याः प्रमात्वात् शब्दप्रामाण्ये च स्वभावान्न तादृशशब्दस्य बोधकत्वमित्याहुः । परेतु घटात् पृथगित्यादौ घटावधिकपृथक्त्वप्रकारेण निरवच्छिन्नविशेष्यताकः पृथक्त्वाश्रयस्य शाब्दबोधः सर्वानुभवसिद्धः स चास्माकं तादृशानुपूर्वीकपदज्ञानत्वेन तादृशशाब्दबोधं प्रति हेतुत्वादुपपद्यते । वैशेषिकाणां तु पृथक्त्वं घटावधिकं घटपदसाकाङ्क्षपृथक्पदस्मारितत्वादित्यनुमानेन न तन्निर्वाहः पक्षविधया पृथक्त्वस्य भानेऽपि तदाश्रयस्याभानात् नच पटं पक्षीकृत्य पटो घटावधिकपृथक्त्ववानित्यनुमित्या तन्निर्वाह इति वाच्यं पटादिनिष्ठविशेष्यतायास्तत्र पक्षतावच्छेदकीभूतपटत्वावच्छिन्नतया निरवच्छिन्नविशेष्यताकतादृशशाब्दबोधसमानाकारकत्वस्य तथाप्यनिर्वाहादित्याहुरिति दिक् ॥ १४० ॥ १४१ ॥

भेदात् । तत्र सद्विपक्षः केवलान्वयी यथा घटोऽभिधेयः प्रमेयत्वादित्यादौ । तत्र हि सर्वस्यैवाभिधेयत्वाद्विपक्षासत्त्वम् । असत्सपक्षः केवलव्यतिरेकी यथा पृथिवी इतरेभ्यो भिद्यते गन्धवत्त्वादित्यादौ तत्र हि जलादित्रयोदशभेदस्य पूर्वमसिद्धततया निश्चितसाध्यवतः सपक्षस्याभावः । सत्सपक्षविपक्षोऽन्वयव्यतिरेकी यथा वह्निमान् धूमादित्यादौ तत्र सपक्षस्य महानसादेर्विपक्षस्य जलह्रदादेश्च सत्त्वादिति । तत्र हि व्यतिरेकिणि व्यतिरेकव्याप्ति-

**साध्याभावव्यापकत्वं हेत्वभावस्य यद्भवेत् ॥ १४३ ॥**

ज्ञानं कारणं तदर्थं व्यतिरेकव्याप्तिं निर्वक्ति ॥ **साध्याभावेति** ॥ साध्याभावव्यापकीभूता-

## प्रभा.

**रुक्तैवेति** ॥ इदं च विभागवाक्यात्प्रथमोपस्थितान्वयव्याप्तिनिरूपणं विना व्यतिरेकव्याप्तिनिरूपणमसङ्गतमिति शङ्कानिरासाय अत्र नन्वनुमितिहेतुव्याप्तिज्ञाने का व्याप्तिरिति जिज्ञासयैव व्याप्तिनिरूपणात् व्यतिरेकव्याप्तेस्तादृशत्वाभावेन तन्निरूपणमयुक्तमित्याशङ्कां तज्ज्ञानस्याप्यनुमितिहेतुत्वोपन्यासेन परिहर्तुं भूमिकामाह ॥ **मुक्तावल्यामनुमानं त्रिविधमिति** ॥ **तत्रेति** ॥ लिङ्गत्रयमध्य इत्यर्थः ॥ **असद्विपक्ष इति** ॥ अत्यन्ताभावाप्रतियोगिसाध्यक इत्यर्थः यथाश्रुतार्थकत्वे सिद्धयसिद्धिव्याघातापत्तेः ॥ **विपक्षासत्त्वमिति** ॥ विपक्षस्यात्यन्ताभावाप्रतियोगित्वस्य साध्ये असत्त्वमित्यर्थः ॥ **असत्सपक्ष इति** ॥ साध्यतावच्छेदकरूपेणानिर्णीतसाध्यक इत्यर्थः तेन नोक्तदोषः ॥ **जलादित्रयोदशभेदस्येति** ॥ त्रयोदशसु भेदः त्रयोदशभेदः जलादीनां त्रयोदशभेदः तस्येति विग्रहः जलादिप्रतियोगिकचतुर्दशभेदानां मध्ये एकैकभेदस्य स्वप्रतियोगिभिन्नत्रयोदशसु प्रसिद्धस्येत्यर्थः तादृशैकैकभेदघटितभेदचतुर्दशत्वावच्छिन्नस्येति यावत् जलादिषु त्रयोदशभेदस्येति विग्रहः जलादिचतुर्दशपदार्थेषु मध्ये एकैकस्मिन् वर्तमानः तद्घटकतादितरपदार्थनिष्ठचतुर्दशत्वव्यवहारनियामकतत्तद्धर्मावच्छिन्नप्रतियोगिताकः त्रयोदशत्वावच्छिन्नो यो भेदः तस्येत्यर्थः तादृशभेदत्रयोदशत्वावच्छिन्नस्य एकैकस्मिन्नेव प्रसिद्धस्यैवेति यावत् जले प्रसिद्धो यो भेदः त्रयोदशत्वावच्छिन्नः एवं तेजसि प्रसिद्धो यो भेदः त्रयोदशत्वावच्छिन्नः एवं वाय्वादिषु सर्वेषु प्रत्येकं प्रसिद्धो यो भेदः त्रयोदशत्वावच्छिन्नः तेषां चतुर्दशत्वेन तादृशचतुर्दशत्वावच्छिन्नस्येति फलितार्थः ॥ **पूर्वमिति** ॥ अनुमितिपूर्वमित्यर्थः ॥ **असिद्धतयेति** ॥ तादृशचतुर्दशत्वेन क्वाप्यप्रसिद्धतयेत्यर्थः तादृशचतुर्दशत्वावच्छिन्नाधिकरणतायाः पृथिवीभिन्ने कुत्राप्यवर्तमानत्वात् पृथिव्यां तादृशाधिकरणतासत्त्वेऽपि अनुमितेः पूर्वं तत्रानियतत्वाच्चेति भावः यथाश्रुतं तु न सङ्गच्छते जलादित्रयोदशभेदस्य अभाव एवाप्रसिद्धत्वात् असाङ्गत्यापत्तेः ॥ **निश्चितसाध्यवतः सपक्षस्याभाव इति** ॥ साध्यतावच्छेदकतादृशचतुर्दशत्वे किञ्चिन्निष्ठविशेष्यतानिरूपितनिश्चयीयप्रकारतावच्छेदकत्वस्याभाव इत्यर्थः तेन न सिद्धयसिद्धिभ्यां व्याघातः ॥ **सत्सपक्ष इति** ॥ स्वसाध्यतावच्छेदकावच्छिन्नप्रकारताशालिनिश्चयकत्वे सति स्वसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नप्रकारताशालिनिश्चयकत्वाश्रय इत्यर्थः ॥ अन्वयव्यतिरेकिलिङ्गमुदाहरति ॥ **यथेति** ॥ अन्वयव्यतिरेकिलक्षणमुदाहरति ॥ **तत्रेति** ॥ धूमादिहेताविल्यर्थः ॥ **सपक्षस्य महानसादेरिति** ॥ वह्नित्वाद्यवच्छिन्नप्रकारतानिरूपितनिश्चयीयविशेष्यताश्रयस्य महानसादेरित्यर्थः ॥ **विपक्षस्य जलह्रदादेश्चेति** ॥ वह्नित्वावच्छिन्नप्रतियोगिताकाभावव-

## दिनकरीयम्.

**तत्र तेषु मध्ये ॥ असद्विपक्ष इति** ॥ अत्यन्ताभावाप्रतियोगिसाध्यक इत्यर्थः । यथाश्रुते सिद्धयसिद्धिव्याघातात् । अत्यन्ताभावाप्रतियोगित्वस्य च प्रमेयत्वादौ सत्त्वाल्लक्षणसमन्वयः नचैतन्न सम्भवति प्रमाविषयत्वरूपस्य तस्य नानात्वेनाननुगमादिति वाच्यं प्रमात्वस्यैव परम्परासम्बन्धेनानुगतत्वात् । इत्थं च प्रमेयत्वादेर्व्यतिरेकित्वभ्रमेऽपि केवलान्वयित्वमेवेति मन्तव्यम् ॥ **असत्सपक्ष इति** ॥ सिद्धयसिद्धिव्याघातादक्वाप्यगृहीतहेतुसहचारं यद्व्यतिरेकिसाध्यं तत्कत्वमर्थो बोध्यः ॥ **सत्सपक्षेति** ॥ गृहीतान्वय-

भावप्रतियोगित्वमित्यर्थः। अत्रेदं बोध्यम्। यत्सम्बन्धेन यदवच्छिन्नं प्रति येन सम्बन्धेन

प्रभा.

च्छिन्ननिश्चयीयप्रकारतानिरूपितविशेष्यताश्रयस्य ह्रदादेश्चेत्यर्थः॥ **सत्त्वादिति**॥ प्रसिद्धत्वेन निरुक्तलक्षणसत्त्वादित्यर्थः॥ **तत्रेति**॥ लिङ्गत्रयमध्य इत्यर्थः॥ **हि** हेतौ। साध्यतावच्छेदकरूपेण निर्णयाभावादिति यावत्॥ **व्यतिरेकिणीति**॥ व्यतिरेकिणि हेतौ सतीत्यर्थः। व्यतिरेकिलिङ्गानुमिताविति यावत्॥ **व्यतिरेकव्याप्तिज्ञानमिति**॥ तादृशज्ञानमेवेत्यर्थः॥ **तदर्थमिति**॥ तादृशज्ञानायेत्यर्थः॥ **व्यतिरेकव्याप्तिं निर्वक्तीति**॥ तादृशव्याप्तिं निरूपयतीत्यर्थः॥ **मूले साध्याभावव्यापकत्वमिति**॥ साध्यमभावो यत्रेति व्युत्पत्त्या साध्यवद्भेदः हेत्वभावस्येत्यत्रापि बहुव्रीह्याश्रयेण हेतुमद्भेदश्च लभ्यते। षष्ठीसमासाश्रयणे कपिसंयोगी एतत्त्वादित्यादावव्याप्त्यापत्तेः एतत्त्ववान् कपिसंयोगादित्यादावतिव्याप्तेश्च वारणाय साध्याभावे हेत्वभावे च प्रतियोगिवैयधिकरण्यस्य निवेशनीयतया गौरवापत्तेः। एवंच तादृशव्यापकत्वाश्रयप्रतियोगित्वं व्याप्तिरिति फलितम्। नातो व्याप्तेर्हेतुनिष्ठत्वलाभः। ननु व्यापकत्वस्य तद्वन्निष्ठात्यन्ताभावाप्रतियोगित्वरूपत्वे तादृशान्योन्याभावप्रतियोगितानवच्छेदकरूपत्वे वा तद्वत्त्वं साध्यवत्ताग्रहविरोधितानियामकसंबन्धेन वाच्यं दैशिकविशेषणतया तद्वत्त्वनिवेशे द्रव्यं भिन्नं गुणत्वादित्यादौ साध्यवद्भेदस्य द्रव्यत्वात्मकस्य दैशिकविशेषणतया अधिकरणाप्रसिद्ध्या तद्घटितव्यापकत्वस्याप्रसिद्धत्वात् अव्याप्त्यापत्तेः। नच तद्वन्निष्ठत्वं येनकेनचित्संबन्धेन धूमवद्भेदाधिकरणतप्तायःपिण्डादावपि कालिकसंबन्धेन वह्न्यादिमद्भेदसत्त्वात् धूमवान् वह्नेरित्यादावतिव्याप्त्यापत्तेश्च। नापि हेतुतावच्छेदकसंबन्धेन सत्तावान् जातेरित्यादौ सत्तावद्भेदाधिकरणसामान्यादौ हेतुतावच्छेदकसंबन्धेन समवायेन वृत्तेरप्रसिद्ध्या अव्याप्त्यापत्तेः तस्माद्व्यापकत्वं दुर्वचमिति चेन्न तद्वन्निष्ठाभावप्रतियोग्यधिकरणतानिरूपकत्वरूपव्यापकत्वस्यैव तल्लक्षणघटकत्वात्। अत्र तद्वन्निष्ठत्वं दैशिकविशेषणतया बोध्यं नातः कालिकादिसंबन्धमादाय उक्तस्थलेऽतिव्याप्तिः। नवा सत्तासाध्यकजातिरूपसद्धेतौ व्यापकत्वाप्रसिद्धिः अधिकरणत्वाभावत्वस्यैव व्यापकत्वघटकत्वात्। नचैवमपि वह्निमान् धूमादित्यादौ वह्निमद्भेदाधिकरणह्रदादावपि धूमवद्भेदाधिकरणत्वस्य विशिष्टाभावोभयाभावतद्व्यक्तित्वावच्छिन्नाभावसत्त्वाद्व्यापकत्वाप्रसिद्धिः तदवस्थेति वाच्यं तादृशाभावप्रतियोगितानवच्छेदकं यन्निरूपिताधिकरणतात्वं तत्त्वस्य विवक्षितत्वात्। नच तथापि धूमवान् वह्नेरित्यादौ वह्निमद्भेदनिष्ठप्रमेयत्वाद्यवच्छिन्नाधेयतानिरूपिताधिकरणत्वस्य धूमवद्भेदव्यापकतावच्छेदकतया तत्रातिव्याप्तिरिति वाच्यम् साध्यवद्भेदव्यापकतावच्छेदकहेतुतावच्छेदकसंबन्धावच्छिन्नयद्धर्मावच्छिन्नावच्छेदकताकप्रतियोगिताकभेदत्वावच्छिन्ननिरूपिताधिकरणतात्वं तद्धर्मवत्त्वस्य विवक्षितत्वात्। अत्रापि साध्यवद्भिन्नत्वं साध्यतावच्छेदकसंबन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नावच्छेदकताकप्रतियोगिताकभेदवत्त्वरूपमेव ग्राह्यं व्यापकताघटकप्रतियोगिता स्वरूपसंबन्धावच्छिन्ना ग्राह्या। अस्मिन् लक्षणे संबन्धविशेषधर्मविशेषनिवेशप्रयोजनं स्वयमूह्यम्। तथाच निरुक्तसाध्यवद्भेदव्यापकतावच्छेदकहेतुतावच्छेदकसंबन्धावच्छिन्नस्वावच्छिन्नावच्छेदकताकप्रतियोगिताकभेदत्वावच्छिन्ननिरूपिताधिकरणतात्वकधर्मवत्त्वरूपं व्यतिरेकव्याप्यत्वं फलितमिति न कोऽपि दोषः। विश्वनाथपञ्चाननस्याप्यत्रैव निर्भर इति प्रतिभाति। यथाश्रुतमूलप्रतिपाद्यहेत्वभावनिष्ठसाध्याभावव्यापकत्वरूपव्यतिरेकव्याप्तेः स्वरूपसंबन्धेन हेतुनिष्ठत्वाभावादसङ्गतिः अतस्संबन्धान्तरेण हेतुनिष्ठत्वमुपपादयति॥ **मुक्तावल्यां साध्याभावेति**॥ तथाच स्वाश्रयप्रतियोगित्वसंबन्धेन तादृशव्यापकत्वरूपव्याप्तेर्हेतुनिष्ठत्वात् नोक्तदोषप्रसक्तिः साध्याभावे हेत्वभावे च प्रतियोगिवैयधिकरण्यविशेषणदानाच्च नोक्तातिव्याप्त्यव्याप्त्योः प्रसक्तिरित्याशयः। ननु व्यतिरेकव्याप्तेरेतादृशत्वे वह्निमान् धूमादित्यादौ साध्याभावव्यापकीभूतधूमाभावादेः द्वित्वाद्यवच्छिन्नाभावस्य कालिकादिसंबन्धावच्छिन्नप्रतियोगिताकाभावस्य प्रतियोगित्वादतिव्याप्तिः नच तादृशाभावोऽपि लक्ष्य एवेति वाच्यं तथासति तद्वत्ताज्ञानादनुमित्यापत्तेः नचेष्टापत्तिः व्यभिचारज्ञानकालीनतादृशपरामर्शस्यानुमितिहेतुताया अप्रामाणिकत्वात् एवं निरुक्तपरामर्शाद्वह्नेरेव वह्न्यभावनिष्ठद्वित्वाद्यवच्छिन्नस्य तन्निष्ठकालिकादिसंबन्धावच्छिन्नाभावस्य च सिद्धिप्रसङ्ग इत्यत आह॥ **अत्रेदं बोध्यमिति**॥ निरुक्तपरामर्शविषयीभूतं तज्जन्य–

**येन रूपेण व्यापकता गृह्यते तत्सम्बन्धावच्छिन्नप्रतियोगिताकतद्धर्मावच्छिन्नाभाववत्ताज्ञा-नात् तत्सम्बन्धावच्छिन्नप्रतियोगिताकतद्धर्मावच्छिन्नाभावस्य सिद्धिरिति । इत्थं च यत्र विशेषणतादिसम्बन्धेनेतरत्वव्यापकत्वं गन्धात्यन्ताभावे गृह्यते तत्र गन्धाभावाभावे नेतरत्वात्यन्ताभावः सिध्यति । यत्र तु तादात्म्यसम्बन्धेनेतरव्यापकत्वं गन्धाभावस्य गृह्यते**

## प्रभा.

नुमितिविषयीभूतं च वक्ष्यमाणं ज्ञेयमित्यर्थः वक्ष्यमाणमेवाह ॥ **येन संबन्धेनेति** ॥ यत्र यत्संबन्धाव-च्छिन्नयद्धर्मावच्छिन्नव्यापकता वर्तमानग्रहविषयेत्यर्थः ॥ **तत्संबन्धावच्छिन्नेत्यादि** ॥ तत्संबन्धाव-च्छिन्नतद्धर्मावच्छिन्नप्रतियोगित्वात्मकतत्प्रतियोगित्वरूपव्यतिरेकव्याप्तिप्रकारतानिरूपिततदाश्रयप्रकारतानिरू-पितपक्षतावच्छेदकावच्छिन्नविशेष्यताशालिपरामर्शादित्यर्थः तत्संबन्धावच्छिन्नतद्धर्मावच्छिन्नव्यापकत्वप्रका-रतानिरूपिताश्रयनिष्ठप्रकारतानिरूपिततत्संबन्धावच्छिन्नतद्धर्मावच्छिन्नप्रतियोगिताकत्वरूपव्याप्तिप्रकारतानि-रूपितहेतुतावच्छेदकसंबन्धावच्छिन्नहेतुप्रकारतानिरूपितपक्षविशेष्यताशालिपरामर्शादिति फलितार्थः। नातः वह्न्यभावव्यापको धूमाभावः धूमाभावप्रतियोगिमान् पर्वत इति ज्ञानात्पर्वतो वह्निमानित्यनुमित्यापत्तिः ॥ **यत्संबन्धेन यदवच्छिन्नं प्रतीति** ॥ यत्संबन्धावच्छिन्नयद्धर्मावच्छिन्नव्यापकतानिरूपितेत्यर्थः ॥ **तत्सं-बन्धावच्छिन्नेत्यादि** ॥ व्याप्यतावच्छेदकत्वेनाभिमतधर्मसंबन्धावच्छिन्नप्रतियोगिताकाभावविधेयताकानु-मितिरित्यर्थः । तथाच वह्निमान् धूमादित्यादौ धूमाभावस्य ह्रदत्वाद्यवच्छिन्नाभावसंबन्धान्तराव-च्छिन्नप्रतियोगिताकाभावानां व्यापकतावच्छेदकीभूतधूमाभावत्वदैशिकविशेषणतासंबन्धोभयावच्छिन्नप्रति-योगिताकत्वरूपव्याप्त्यनाश्रयतया न तत्रातिव्याप्तिः एवं वह्न्यभावस्य द्रित्वाद्यवच्छिन्नाभावसंबन्धान्तरा-वच्छिन्नप्रतियोगिताकाभावानां व्याप्यतावच्छेदकीभूतदैशिकविशेषणतासंबन्धसंयोगसंबन्धावच्छिन्नवह्नित्वा-वच्छिन्नप्रतियोगिताकाभावत्वरूपधर्मैतदुभयावच्छिन्नप्रतियोगिताकाभावरूपत्वाभावात् न तद्विधेयकानुमि-त्यापत्तिरिति भावः ॥ **इत्थंचेति** ॥ व्याप्यतावच्छेदकसंबन्धधर्मावच्छिन्नप्रतियोगिताकाभावानुमितिस्वी-कारे चेत्यर्थः ॥ **यत्रेति** ॥ यदेत्यर्थः ॥ **इतरत्वव्यापकत्वमिति** ॥ पृथिवीभिन्नत्वव्याप्यत्वेनाभिमतद्रव्य-विभाजकोपाधिपदार्थविभाजकोपाधिव्यापकत्वमित्यर्थः ॥ **तत्रेति** ॥ तदेत्यर्थः ॥ **इतरत्वात्यन्ताभाव इति** तादृशजलत्वादितादृशगुणत्वादेः व्याप्यतावच्छेदकत्वेनाभिमततत्तत्संबन्धतत्तद्धर्मावच्छिन्नप्रतियोगिताकात्य-न्ताभावसमुदाय इत्यर्थः ॥ **सिध्यतीति** ॥ अनुमितिविधेयतावानित्यर्थः । तथाच एकहेतुना एकदैव तादृ-शाभावसमुदायसाधनसंभवे प्रत्येकाभावसाधनमनुचितं प्रयासाधिक्यात् प्रयोजनाभावाच्चेत्याशयः। यथाश्रुता-र्थस्तु न सङ्गच्छते पृथिवीभिन्नत्वात्यन्ताभावस्य पृथिवीत्वस्वरूपस्य पक्षे सिद्धतया तत्साधने सिद्धसाधनापत्तेः न च पृथिवीत्वस्य पृथिवीत्वत्वेन तद्व्यक्तित्वेन वा सिद्धावपि तादृशात्यन्ताभावत्वेनासिद्धत्वान्न सिद्धसाधनावकाश इति वाच्यं तादृशात्यन्ताभावत्वस्य तादृशधर्मसमनियतत्वेनातिरिक्तत्वे प्रमाणाभावेन च तत्स्वरूपत्वावश्यकतया तेन रूपेणापि सिद्धेर्निष्प्रत्यूहत्वात् ॥ **यत्रत्विति** ॥ यदेत्यर्थः अवधारणार्थकतुशब्दः व्यापकतेत्युत्तरं योज्यः ॥ **तादात्म्यसंबन्धेनेतरव्यापकतेति** ॥ तादात्म्यसंबन्धावच्छिन्नजलत्वाद्यभावत्वान्तान्यतमधर्माव-

## दिनकरीयम्.

व्यतिरेकिसाध्यकमित्यर्थः ॥ **यत्सम्बन्धेन यदवच्छिन्नं प्रतीति** ॥ यत्सम्बन्धावच्छिन्नयद्रूपावच्छिन्न-व्याप्यतानिरूपितव्यापकता गृह्यत इत्यर्थः ॥ **इतरव्याप्यतेति** ॥ इतरस्य व्याप्यतेत्यर्थः । तादात्म्येने-तरव्यापकतेति पाठे तादात्म्यसम्बन्धावच्छिन्ना या इतरनिष्ठव्याप्यता तन्निरूपितव्यापकतेत्यर्थः ॥ **तादा-त्म्यसम्बन्धेनेति** ॥ तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिकाभावः सिध्यतीत्यर्थः । येन सम्बन्धेन व्या-प्यता गृह्यत इत्यनुक्तौ तु तादात्म्येनेतरस्य व्यापकता यत्र गृहीता तत्रेतरात्यन्ताभावस्य सिद्धिः स्यादिति भावः । संयोगसम्बन्धावच्छिन्नप्रतियोगिताकवह्न्यभावेनेति सावधारणम् । तेन सम्बन्धान्तरावच्छिन्नप्रति-

**तत्र तादात्म्यसम्बन्धेनेतराभावः सिध्यति स एवान्योन्याभावः । एवं यत्र संयोगसम्बन्धेन धूमं प्रति संयोगसम्बन्धेन वह्नेर्व्यापकता गृह्यते तत्र संयोगसम्बन्धावच्छिन्नप्रतियोगिताकवह्न्यभावेन जलह्रदे संयोगसम्बन्धावच्छिन्नप्रतियोगिताकधूमाभावः सिध्य—**

## प्रभा.

च्छिन्नव्याप्यतानिरूपितव्यापकतैवेत्यर्थः ॥ **तत्रेति** ॥ तदेत्यर्थः ॥ **तादात्म्यसंबन्धेन इतराभाव इति** ॥ तादात्म्यसंबन्धावच्छिन्नजलत्वाद्यभावत्वान्तसमुदायघटकप्रत्येकधर्मावच्छिन्नप्रतियोगिताकाभावसमुदाय इत्यर्थः । इतरेषामभाव इति व्युत्पत्त्या तादृशसमुदायलाभादिति भावः । यथाश्रुते तादात्म्येन इतराभावस्य पृथिवीभिन्नत्वाद्यवच्छिन्नप्रतियोगिताकभेदरूपस्य पृथिवीत्वरूपतया उक्तदोषापत्तेः ॥ **सिध्यतीति** ॥ अनुमितिविधेयतावानित्यर्थः ॥ **स एवेति** ॥ तादात्म्यसंबन्धावच्छिन्नप्रतियोगिताकाभाव एवेत्यर्थः ॥ **अन्योन्याभाव इति** ॥ अन्योन्याभावशब्दवाच्य इत्यर्थः । ननु जलादिप्रतियोगिकभेदसमुदायत्वावच्छिन्नस्यानिश्चयात् कथं पृथिवीविशेष्यकतादृशसमुदायत्वावच्छिन्नविधेयताकानुमितिः विशेषणतावच्छेदकप्रकारकनिर्णयस्याभावात् । नच तत्र तादृशानुमितिसंभवेऽपि पृथिव्यां तादृशसमुदाय इति साध्यविशेष्यकानुमितिरेव स्वीक्रियतामिति वाच्यम् । तथासति पृथिवी इतरेभ्यो भिद्यत इति प्रतिज्ञाप्रयोगस्य नचेयं तथेत्युपनयस्य चासाङ्गत्यापत्तेः पृथिव्यामितरेभ्यो भेद इति प्रतिज्ञाप्रयोगस्य नचास्यां तथेत्युपनयप्रयोगस्य चापत्तेः। नचेष्टापत्तिः कथकसम्प्रदायविरुद्धत्वादिति चेन्न विशिष्टवैशिष्ट्यबुद्धिमात्रे न विशेषणतावच्छेदकप्रकारकनिर्णयस्य हेतुत्वं स्मृतौ व्यभिचारात् किंतु तादृशप्रत्यक्षमात्रे । एवंच प्रत्यक्षान्यज्ञानमात्रस्य तादृशकार्यतावच्छेदकानाक्रान्ततया तादृशसमुदायत्वप्रकारकनिश्चयरूपकारणाभावेऽपि पृथिवी जलादिभेदसमुदायवतीत्यनुमितेरविरोधात् तत्त्वच विशिष्टवैशिष्ट्यावगाह्यनुभवत्वमेव तादृशनिश्चयकार्यतावच्छेदकं प्रकृते तादृशनिश्चयरूपकारणाभावेन विशेष्ये विशेषणमिति रीत्यैव तादृशानुमितिः स्वीक्रियते क्वचित् विशेष्ये विशेषणमिति रीत्यानुमितिस्वीकारे बाधकाभावादित्यस्मद्गुरुचरणाः । ननु पृथिवीत्वावच्छिन्नपक्षकनिरुक्तेतरभेदसाध्यकगन्धत्वावच्छिन्नहेतोरसत्सपक्षत्वरूपकेवलव्यतिरेकित्वमनुपपन्नं पक्षैकदेशघटादावेव निरुक्तसाध्यनिर्णयसंभवेन तस्यैव पक्षत्वादिति चेन्न अनुमितेः पूर्वं घटत्वाद्यवच्छिन्नेऽपि साध्यतावच्छेदकतादृशसमुदायत्वेन साध्यनिश्चये मानाभावात् । तथाहि न तादृशनिश्चयः प्रत्यक्षात्मकः साध्यात्मकसमुदायघटककालत्वदिक्त्वाद्यवच्छिन्नप्रतियोगिताकत्वायोग्यधर्मावच्छिन्नप्रतियोगिताकत्वान्यतरवत्त्वरूपनियामकाभावात् प्रत्यक्षविषयत्वासंभवेनातीन्द्रियतया तद्घटितसमुदायवृत्तिसमुदायत्वस्याप्यतीन्द्रियत्वात्तेन रूपेण निरुक्तसाध्यस्याप्यतीन्द्रियत्वात् । नानुमितिरूपः घटत्वादिरूपप्रत्येकधर्मावच्छिन्ने तादृशसमुदायसाध्यकहेतोरपि केवलव्यतिरेकित्वावश्यकत्वात्प्रयोजनाभावेन पृथिवीत्वावच्छिन्नपक्षकतादृशानुमितेः पूर्वं घटत्वाद्यवच्छिन्नपक्षकतादृशानुमितिकल्पनानौचित्यात्। नापि शाब्दः घटः इतरेभ्यो भिद्यत इति वाक्यश्रवणानन्तरं कुत इत्याकाङ्क्षोदयेन हेतुवाक्यप्रयोगेण विना जिज्ञासानिवृत्त्यभावेन प्रतिज्ञावाक्यजन्यशाब्दबोधे अप्रामाण्यज्ञानोत्पत्त्या घटादौ अप्रामाण्यज्ञानानास्कन्दिततादृशनिश्चयस्य निरुक्तवाक्यादसंभावितत्वात्तस्मात्पृथिवीत्वावच्छिन्ने तादृशानुमितिपूर्वं घटत्वाद्यवच्छिन्ने तादृशनिश्चयस्याप्रामाणिकतया गन्धवत्त्वहेतोः केवलव्यतिरेकित्वं उपपन्नमेवेति । अत्र पक्षैकदेशे सामग्र्यभावान्न साध्यप्रसिद्धिस्संभवतीत्यभिप्रायेणाप्रसिद्धसाध्यककेवलव्यतिरेकित्वेन इतरभेदसाधकगन्धवत्त्वमु दाहृतम् । अनुमानेन पक्षैकदेशे साध्यप्रसिद्धिसम्पादने पृथिवी इतरेभ्यो भिद्यते गन्धवत्त्वादित्यादावित्यत्रादिपदग्राह्यं एतद्रूपवानेतद्रसादित्यादिस्थलीयैतद्रसादिकं आकाशं नित्यं शब्दवत्त्वादित्यादिस्थलीयशब्दवत्त्वादिकं च केवलव्यतिरेक्युदाहरण बोध्यं तत्राद्यं अप्रसिद्धसाध्यककेवलव्यतिरेकि द्वितीयं प्रसिद्धसाध्यककेवलव्यतिरेकी।

## दिनकरीयम्.

योगिताकेन न तत्सिद्धिरित्यर्थः । अनेन च येन सम्बन्धेन व्यापकता गृह्यत इत्यस्य फलं सूचितम् । प्रदर्शितरीत्यैव येन रूपेण यदवच्छिन्नेत्यनयोरपि प्रयोजनमूह्यम् । ननु साध्यसाधनसहचारज्ञानाभावात् कथं

ति। अत्र च व्यतिरेकव्याप्तिग्रहे व्यतिरेकसहचारज्ञानं कारणम्। केचित्तु व्यतिरेकसह-

## प्रभा.

त्वेव परमार्थ इति प्रतिभाति । नन्वन्वयसहचारज्ञानस्यान्वयव्याप्तिग्रहे कॢप्तकारणताकस्य प्रकृते अभावात् कथं व्यतिरेकव्याप्तिग्रह इत्यत आह ॥ अत्र चेति ॥ केवलव्यतिरेकिण्यपीत्यर्थः सप्तम्यर्थो विशेष्यत्वं तस्य ग्रहपदार्थेऽन्वयः तथाचान्वयव्यतिरेकिविशेष्यकव्यतिरेकव्याप्तिग्रहे पूर्वमन्वयसहचारग्रहसंभवेऽपि तस्यानुपयोगित्वात् तत्र यथा व्यतिरेकसहचारज्ञानं कारणं तथात्रापीति भावः । केचित्तु ननु विना साध्यप्रसिद्धिं तदभावाज्ञाने व्यतिरेकव्याप्तेर्दुर्ग्रहत्वं स्यात् साध्यप्रसिद्धौ च सिद्धसाधनमिति चेन्न साध्यस्य घटादावेव प्रसिद्धत्वात् पृथिवी इतरेभ्यो भिन्नेत्युद्देश्यप्रतीतेः असिद्धत्वान्न सिद्धसाधनं पक्षतावच्छेदकनानात्व एवांशतः सिद्धसाधनस्य दोषत्वात् अत एवानित्ये वाङ्मनसे इत्यत्रानित्या वागिति बुद्धेरुद्देश्यायाः सिद्धत्वे नांशतः सिद्धसाधनमिति। ननु तथापि घटः कथं पक्षः साध्यस्य निश्चयेन तत्सन्देहसिषाधयिषयोरभावादिति चेन्न यतस्सर्वा पृथिवी इतरभिन्ना नवेति संशयस्य तत्प्रकारकसिषाधयिषायाश्च घटादिविषयत्वात् घटत्वेन विशेषदर्शनेषु सिद्धौ वा तेन रूपेण संशयसिषाधयिषे न भवतः पृथिवीत्वेन भवत एवेति। ननु पृथिवी इतरभिन्ना पृथिवीत्वात् घटवदित्यनेनैव इतरभेदासिद्धेः व्यतिरेकिवैयर्थ्यमिति चेन्न अन्वयव्याप्तेरग्रहे व्यतिरेकव्याप्तिस्फूर्तिदशायां व्यतिरेक्यनुमितिजननसंभवेन व्यतिरेक्यनुमानप्रवृत्तेर्निष्प्रत्यूहत्वादिति मुक्तावलीग्रन्थतात्पर्यवर्णनमाहुः तदसत् । इत्थंच यत्रेतरत्वव्यापकत्वमित्यारभ्य स एवान्योन्याभाव इत्यन्तग्रन्थेन साध्यतावच्छेदकरूपेण साध्यप्रसिद्धिं विनापि व्यतिरेकव्याप्तिग्रहस्य विश्वनाथपञ्चाननेनैव उपपादितत्वात् पूर्वपक्षानुत्थानात् पक्षैकदेशे घटादौ साध्यतावच्छेदकरूपेण साध्यप्रत्यक्षसंभवस्योपपादितत्वेन परिहारानुत्थानाच्च । यच्चोक्तं पक्षतावच्छेदकनानात्व एवांशतस्सिद्धसाधनस्य दोषत्वादिति तदप्ययुक्तं वचः यथाहि घटादिकार्यं कर्तृजन्यं तथा क्षित्यङ्कुरादिकमपीति मुक्तावलीग्रन्थव्याख्यानावसरे किंचेत्यादिना केवलक्षितित्वस्य पक्षतावच्छेदकत्वे पक्षतावच्छेदकसामानाधिकरण्येन साध्यसिद्धेरुद्देश्यत्वे अंशतस्सिद्धसाधनं अवच्छेदकावच्छेदेन साध्यसिद्धेरुद्देश्यत्वे परमाणौ बाध इति ग्रन्थेन एकपक्षतावच्छेदकस्थलेऽपि अंशतस्सिद्धसाधनरूपदोषस्य स्वेनैवोक्तत्वात् । दीधितिकारप्रभृतिभिरपि पर्वतो वह्निमान् धूमादित्यादौ सामानाधिकरण्येन साध्यसिद्धेरुद्देश्यत्वे यत्किञ्चित्पर्वते साध्यसिद्धिकाले सिद्धसाधनरूपदोषस्य कण्ठरवेणोक्तत्वाच्च यच्च ननु पृथिवी इतरभिन्नेत्यारभ्य व्यतिरेकिवैयर्थ्यमिति चेदित्यन्तं तदप्ययुक्तं वचः घटे साध्यतावच्छेदकरूपेण साध्यनिश्चयासंभवस्य दर्शितत्वेन तदन्तर्भावेण अन्वयव्याप्तग्रहस्य सुतरामसंभवेन पूर्वपक्षानुत्थानात् । यच्च नेत्यारभ्य निष्प्रत्यूहत्वादित्यन्तं तदपि न युक्तिसहं अन्वयव्याप्त्यग्रहकालीनव्यतिरेकव्याप्तिग्रहादनुमितिनिर्वाहाय व्यतिरेक्यनुमानप्रवृत्त्यङ्गीकारे इतरभेदसाध्यकगन्धवत्त्वहेतोरपि वह्न्यादिसाध्यकधूमादिलिङ्गस्येवान्वयव्यतिरेकिलिङ्गतया असत्सपक्षत्वरूपकेवलव्यतिरेकित्वाभावेन लिङ्गस्य त्रैविध्यं

## दिनकरीयम्.

व्यतिरेकव्याप्तिज्ञानमित्यत आह ॥ अत्र चेति ॥ तथा च व्यतिरेकसहचारेणैव व्यतिरेकव्याप्तिग्रहान्नान्वयसहचारग्रहापेक्षेति भावः । ननु साध्यप्रसिद्धिं विना तदभावाज्ञाने व्यतिरेकव्याप्तेर्दुर्ग्रहत्वं स्यात् साध्यसिद्धौ च सिद्धसाधनमिति चेन्न । साध्यस्य घटादावेव प्रत्यक्षसिद्धत्वात् पृथिवीतरभिन्नेत्युद्देश्यप्रतीतेरसिद्धत्वान्न सिद्धसाधनं पक्षतावच्छेदकनानात्व एवांशतः सिद्धसाधनस्य दोषत्वात् । अत एवानित्ये वाङ्मनसे इत्यत्र वागितिबुद्धेरुद्देश्याया अनित्यत्वस्य सिद्धत्वे नांशतः सिद्धसाधनमिति । ननु तथापि घटः कथं पक्षः साध्यस्य निश्चयेन तत्सन्देहसिषाधयिषयोरभावादिति चेन्न यतः सर्वा पृथिवीतरभिन्ना न वेति संशयस्य तत्प्रकारकसिषाधयिषायाश्च घटविषयत्वाद्घटत्वेन विशेषदर्शने सिद्धौ वा तेन रूपेण संशयसिषाधयिषे न भवतः पृथिवीत्वेन तु भवत एवेति । ननु पृथिवीतरभिन्ना पृथिवीत्वात् घटवदित्यन्वयिनैवेतरभेदसिद्धौ व्यतिरेकिवैयर्थ्यमिति चेन्न अन्वयव्याप्तेरग्रहे व्यतिरेकव्याप्तिस्फूर्तिदशायां व्यतिरेक्यनुमितिजननसंभवेन व्यतिरेक्यनुमानप्रवृत्तेर्निष्प्रत्यूहत्वात्। आचार्यमतमाह ॥ केचित्त्विति ॥ व्यतिरेकसहचारेण अन्वयसहचारनिरपे-

चारेणान्वयव्याप्तिरेव गृह्यते न तु व्यतिरेकव्याप्तिज्ञानमपि कारणम् । यत्र व्यतिरेकसहचाराद्व्याप्तिग्रहस्तद्व्यतिरेकीत्युच्यते साध्यप्रसिद्धिस्तु घटादावेव जायते पश्चात् पृथिवीत्वावच्छेदेन साध्यत इति वदन्ति ॥ १४२ ॥ १४३ ॥

## प्रभा.

व्यवस्थाप्य केवलव्यतिरेकिलिङ्गोदाहरणत्वेन इतरभेदसाध्यकगन्धरूपलिङ्गप्रतिपादकमुक्तावलीग्रन्थविरोधापत्तेः तस्मान्नैवं व्याख्येयमिति । आचार्यानुयायिनस्तु अनुमितिसामान्ये हेतुसमानाधिकरणेत्यादिव्याप्तिज्ञानमेव कारणं सर्वमतसिद्धत्वात् नतु साध्याभावव्यापकीभूताभावप्रतियोगित्वज्ञानं कारणं अन्यथासिद्धत्वात् केवलान्वयित्वग्रहकालीनानुमितौ व्यभिचाराच्चात एव तादृशप्रतियोगित्वस्य न व्याप्तिस्वरूपत्वं नच पृथिवी इतरेभ्यो भिद्यते गन्धवत्त्वादित्यादावनुमित्युनुपपत्तिः तत्रान्वयसहचारग्रहाभावेनान्वयव्याप्तिग्रहासंभवादिति वाच्यम् तत्र व्यतिरेकसहचारज्ञानेनैवान्वयव्याप्तिज्ञानसंभवात् अन्वयसहचारज्ञानस्यैव क्वचिद्व्यतिरेकव्यभिचारज्ञानस्य स्थलविशेषे व्यभिचारशङ्कानिरासकत्वेन हेतुत्वस्वीकारात् एवं साध्यसाधनसहचारज्ञानजन्यतदन्यसहचारज्ञानाजन्यव्याप्तिज्ञानविशेष्यत्वं केवलान्वयिलिङ्गत्वं अन्वयसहचारज्ञानाजन्यव्यतिरेकसहचारव्याप्तिज्ञानजन्यव्याप्तिग्रहविशेष्यत्वं केवलव्यतिरेकिलिङ्गत्वं उभयसहचारज्ञानजन्यव्याप्तिग्रहविशेष्यत्वमन्वयव्यतिरेकित्वमिति लिङ्गस्य त्रैविध्यं बोध्यमिति वदन्ति । तन्मतमुपन्यस्यति ॥ **केचित्विति** ॥ **व्यतिरेकसहचारेण** व्यतिरेकसहचारज्ञानेनापि । अन्वयव्याप्तिरेवेत्यत्र एवकारेण साध्याभावव्यापकीभूताभावप्रतियोगित्वस्य गृह्यमाणत्वं व्यवच्छिद्यते । नन्वेवं कारणाभावाद्व्यतिरेकव्याप्तिज्ञानानुत्पत्त्या हेतोस्तादृशज्ञानविशेष्यत्वरूपव्यतिरेकिलिङ्गत्वानुपपत्तिः इत्यत इष्टापत्तिमाह ॥ **न त्विति** ॥ अवधारणार्थकतुशब्दः कारणमित्युत्तरं योज्यः ॥ **व्यतिरेकव्याप्तिज्ञानमिति** ॥ अनुमिताविल्यादिः अनुमितौ व्यतिरेकस्य व्याप्तित्वानभ्युपगमात् तज्ज्ञानं करणमेव न भवतीत्यर्थः तथाच तादृशज्ञानस्य कारणत्वाभावाद्धेतोः तज्ज्ञानविशेष्यत्वरूपव्यतिरेकिलिङ्गत्वाभावेऽपि न क्षतिरिति भावः नन्वेवं सति लिङ्गस्य व्यतिरेकित्वव्यवहारायनुपपत्तिरत आह ॥ **यत्रेति** ॥ यद्विशेष्यकेत्यर्थः ॥ **व्यतिरेकसहचारादिति** ॥ तज्ज्ञानादित्यर्थः जन्यत्वं प्रयोज्यत्वं वा पञ्चम्यर्थः ॥ **तद्व्यतिरेकीत्युच्यत इति** ॥ तल्लिङ्गं व्यतिरेकिशब्देन व्यवह्रियत इत्यर्थः तथाच व्यतिरेकसहचारज्ञानजन्यव्याप्तिज्ञानविशेष्यत्वमेव एतन्मते व्यतिरेकित्वमिति नोक्तानुपपत्तिरिति भावः । ननु कुत्रापि साध्यतावच्छेदकरूपेण साध्यप्रसिद्ध्यभावात् कथमन्वयव्याप्तिग्रह इत्यत आह ॥ **साध्यप्रसिद्धिस्त्विति** ॥ साध्यतावच्छेदकरूपेण साध्यनिर्णयोऽपीत्यर्थः ॥ **घटादावेवेति** ॥ पक्षैकदेशघटादावेवेत्यर्थः ॥ **जायत इति** ॥ घटः जलादिप्रतियोगिकभेदचतुर्दशत्वाद्यवच्छिन्नवानित्याप्तवाक्याद्बाऽऽदिः तादृशचतुर्दशत्वावच्छिन्नवान् गन्धवत्त्वात्पटादिवदित्यनुमानेन वा जायत इति तात्पर्यार्थः । नन्वेवं सति पृथिवीत्वसामानाधिकरण्येन साध्यसिद्धेः प्रतिबन्धिकायास्सत्त्वात् कथं पृथिवीतरभिन्नेत्यनुमितिरित्यत आह ॥ **पश्चादिति** ॥ उक्तरीत्या घटत्वाद्यवच्छिन्ने साध्यतावच्छेदकरूपेण साध्यनिश्चयोत्तरमित्यर्थः ॥ **साध्यत इति** ॥ निरुक्तभेदचतुर्दशत्वावच्छिन्नमित्यादिः अनुमीयत इत्यर्थः तथाच पृथिवीत्वसामानाधिकरण्येन साध्यसिद्धिसत्त्वेऽपि तस्या अवच्छेदकावच्छेदेन निरुक्तानुमितौ अप्रतिब-

## दिनकरीयम्.

व्यतिरेकसहचारेण । अन्वयव्याप्तिरेवेत्येवकारेण व्यतिरेकव्याप्तेर्व्युदासः । नन्वेवं व्यतिरेकव्याप्तिज्ञानरूपकारणाभावात् कथं व्यतिरेक्यनुमितिरत आह ॥ **न त्विति** ॥ व्यतिरेकव्याप्तिज्ञानमित्यस्यानुमिताविल्यादिः । नन्वन्वयव्याप्तिज्ञानस्यैव हेतुत्वे कथं व्यतिरेकीति व्यवहार इत्यत आह ॥ **यत्रेति** ॥ ननु पृथिवीतरेभ्यो भिद्यते पृथिवीत्वादित्यादौ साध्यस्येतरभेदादेरप्रसिद्धत्वात् कथं व्यतिरेकसहचारग्रह इत्यत आह ॥ **साध्यप्रसिद्धिस्त्विति** ॥ ननु घटादौ साध्ये निर्णीते कथं तत्रेतरभेदानुमितिरत आह ॥ **पश्चादिति** ॥ अवच्छेदकावच्छेदेनानुमितौ सामानाधिकरण्येन साध्यसिद्धेरप्रतिबन्धकत्वादिति भावः । अत्र चान्वयव्याप्तिघटक-

अर्थापत्तिस्तु नैवेह प्रमाणान्तरमिष्यते ।
व्यतिरेकव्याप्तिबुद्ध्या चरितार्था हि सा यतः ॥ १४४ ॥

**अर्थापत्तिरिति** ॥ अर्थापत्तिं प्रमाणान्तरं केचन मन्यन्ते । तथा हि यत्र देवदत्तस्य शतवर्षजीवित्वं ज्योतिःशास्त्रादवगतं जीविनो गृहासत्त्वं च प्रत्यक्षादवगतं तत्र शतवर्षजीविनो गृहासत्त्वं बहिःसत्त्वं विनाऽनुपपन्नमिति बहिःसत्त्वं कल्प्यत इति । तदप्यनुमानेन गतार्थत्वान्नेष्यते । तथा हि यत्र जीवित्वस्य बहिःसत्त्वगृहसत्त्वान्यतरव्याप्यत्वं गृ-

**प्रभा.**

न्धकत्वात् न तादृशानुमित्यनुपपत्तिरिति भावः । तत्र व्यतिरेकसहचारज्ञानस्यान्वयव्याप्तिग्रहहेतुत्वे मानाभावः कथंचिदुपयोगित्वेऽपि उक्तरीत्या घटादौ साध्यनिश्चयसत्त्वेनान्वयसहचारज्ञानस्यापि संभवात् तत्स्थलीयान्वयव्याप्तिज्ञानस्य उभयसहचारज्ञानजन्यत्वेन तत्साध्यकगन्धवत्त्वहेतोरपि निरुक्तान्वयव्यतिरेकिलिङ्गत्वात्केवलव्यतिरेकिलिङ्गविलयापत्तिः नचेष्टापत्तिः लिङ्गस्य त्रैविध्यवादिनः आचार्यस्य स्वसिद्धान्तविरोधापत्तेः तस्मात्तादृशसिद्धान्तानुसारेण साध्याभावव्यापकीभूताभावप्रतियोगित्वस्य व्याप्तित्वं तज्ज्ञानस्यानुमितिहेतुत्वमवश्यमङ्गीकार्यमत उक्तरीत्या लिङ्गस्य त्रैविध्यं वाच्यमित्यस्वरसं हृदि निधाय वदन्तीत्युक्तमिति ध्येयम् ॥ १४२ ॥ १४३ ॥

**अर्थापत्तिं प्रमाणान्तरं केचन मन्यन्त इति** ॥ अर्थापत्तित्वं चानुमितित्वादिवत् अर्थापद्यामीत्यनुभवसिद्धो जातिविशेषः तदवच्छिन्ना प्रमा रूप्या अर्थस्यापत्तिर्ज्ञानमिति योगेन चार्थापत्तिशब्दवाच्या अर्थस्यापत्तिर्ज्ञानं यस्मादिति योगेनान्यथानुपपत्तिज्ञानमर्थापत्तिशब्दवाच्यामिति प्रकृतेऽर्थापत्तिशब्देनान्यथानुपपत्तिज्ञानं ग्राह्यम् । प्रमाणान्तरं क्लृप्तप्रमाणभिन्नप्रमाणं केचन मीमांसका मन्यन्ते अङ्गीकुर्वन्तीत्यर्थः । तत्रैतन्मते अन्यथानुपपत्तिर्द्विविधा श्रुतार्थान्यथानुपपत्तिः दृष्टार्थान्यथानुपपत्तिश्चेति एवमर्थापत्तिप्रमा द्विविधा अभिधेयार्थापत्तिरभिधानार्थापत्तिश्चेति ज्ञेयम् । एतत्सर्वं क्रमेणोपपादयति ॥ **तथाहीति** ॥ यस्य देवदत्तस्येति पाठः ॥ **अवगतमिति** ॥ प्रतीतमित्यर्थः ॥ **प्रत्यक्षादवगतमिति** ॥ प्रत्यक्षप्रमाणात्प्रमितमित्यर्थः ॥ **तत्रेति** ॥ तादृशदेवदत्त इत्यर्थः ॥ **शतवर्षजीवित्वान्यथानुपपत्त्येति** ॥ तादृशानुपपत्तिज्ञानरूपप्रमाणेनेत्यर्थः यथाश्रुते अनुपपत्तिसत्त्वेऽपि तज्ज्ञानविरहितपुंसः कल्पनासंभवेनानुपपत्तेः ॥ **कल्प्यत इति** ॥ अर्थाप्यत इत्यर्थः । गृहे अवर्तमानः शतवर्षजीवी बहिस्सत्त्ववान् इत्यर्थापत्तिप्रमा जन्यत इति फलितार्थः ॥ **तदपीति** ॥ अन्यथानुपपत्तिज्ञानमपीत्यर्थः अपिनानुपलब्धिः समुच्चीयते ॥ **अनुमानेन गतार्थत्वादिति** ॥ अर्थापत्तिप्रमितेरनुमितित्वसंभवादित्यर्थः ॥ **नेष्यत इति** ॥ अनुमानाभिन्नप्रमाणत्वेन नाङ्गीक्रियत इत्यर्थः । नन्वर्थापत्तिप्रमायाः कथमनुमितिरूपत्वमित्याशङ्कां व्याप्तिप्रदर्शनेन परिहरति ॥ **तथाहीति** ॥ **जीवित्वस्येत्यादि** ॥ गृहान्यनिरूपितसंयोगसंबन्धावच्छिन्नवृत्तित्वगृहनिरूपितसंयोगसंबन्धावच्छिन्नवृत्तित्वान्यतराभावजीवित्वाभावयोर्घटत्वादौ सहचारज्ञानाधीननिरुक्तान्यतराभावव्यापकाभावप्रतियोगिजीवित्वमिति व्याप्तिग्रहजन्यतादृशजीवित्ववान् जीवीति परामर्शोत्तरं जीवी बहिस्सत्त्वगृहसत्त्वान्यतरवान् जीवित्वात् यो निरुक्तान्यतराभाववान् स जीवित्वाभा-

**दिनकरीयम्.**

तावत्पदार्थज्ञानादेवान्वयव्याप्तिज्ञानोत्पत्तौ व्यतिरेकसहचारज्ञानस्य तद्धेतुत्वे मानाभावः नच व्यतिरेकसहचारेणेत्यत्र प्रयोजकत्वं तृतीयार्थः तच्च नानुपपन्नम् अन्वयव्याप्तिज्ञानप्रतिबन्धकव्यभिचारशङ्कानिरासद्वारा व्यतिरेकसहचारज्ञानस्य तत्र प्रयोजकत्वादिति वाच्यं व्यतिरेकसहचारग्रहेऽप्यधिकरणान्तरे व्यभिचारशङ्कातादवस्थ्यात् तदधिकरणीयव्यभिचारशङ्कानिरासद्वारा तत्र तस्योपयोगित्वमित्यपि न तदधिकरणे साधनाभावग्रहमात्रेणैव तदधिकरणीयव्यभिचारशङ्कानिवृत्तेरित्यस्वरसो वदन्तीत्यनेन सूचितः ॥ १४२ ॥ १४३ ॥

**केचन मीमांसकाः** ॥ **तदपि** अर्थापत्तेः प्रमाणान्तरत्वमपि । दिवा न भुङ्क्त इत्यादावित्यादिना

हीतं तत्रान्यतरसिद्धौ जायमानायां गृहसत्त्वबाधाद्बहिःसत्त्वमनुमितौ भासते । एवं पीनो देवदत्तो दिवा न भुङ्क्त इत्यादौ पीनत्वस्य भोजनव्याप्यत्वावगमात् भोजनसिद्धौ दिवाभोजनबाधे रात्रिभोजनं सिध्यतीति । अभावप्रत्यक्षस्यानुभाविकत्वादनुपलम्भोऽपि न प्रमाणा-

प्रभा.

ववान् यथा घटत्वामिति व्यतिरेकिन्यायप्रयोगाधीनशाब्दबोधोत्तरकालीनबहिःसत्त्वगृहस्थत्वान्यतरव्याप्यजीवित्ववान् जीवी इत्याकारकमानसपरामर्शोत्तरं वेत्यर्थः ॥ **तत्रेति** ॥ जीवित्वावच्छिन्न इत्यर्थः ॥ **अन्यतरसिद्धौ जायमानायामिति** ॥ एतस्यानुमितावित्युत्तरेणान्वयः । तथाच जायमानान्यतरसिद्ध्यात्मकानुमिताविति योजनयार्थः फलितः । यद्यपि परामर्शानन्तरकालीनतादृशसिद्धिरनुमितिरूपैव तथापि स्फुटप्रतिपत्त्यर्थं अनुमितावित्युक्तमिति ध्येयम् ॥ **गृहसत्त्वबाधादिति** ॥ गृहसत्त्वाभावप्रकारकजीविविशेष्यकनिर्णयसहकृतानिरुक्तपरामर्शादित्यर्थः ॥ **बहिस्सत्त्वमिति** ॥ बहिस्सत्त्वमेवेत्यर्थः ॥ **भासत इति** ॥ विधेयताश्रय इत्यर्थः बहिस्सत्त्वमात्रस्य तादृश नुमितिनिरूपितविधेयत्वं व्यापकतावच्छेदकानिरुक्तान्यतरत्वेन तदनवच्छेदकबहिस्सत्त्वेन वेत्यन्यदेतत् । स्वतन्त्रास्तु व्यभिचाराग्रहसहकृतत्वात् बहिस्सत्त्वाभावगृहासत्त्वविशिष्टजीवित्वाभावयोः गृहस्थितघटाद्यन्तर्भावेण सहचारज्ञानात्तादृगजीवित्वविशेष्यकबहिस्सत्त्वनिरूपितव्यतिरेकव्याप्तिज्ञानोत्तरं जायमानबहिस्सत्त्वव्याप्यगृहासत्त्वविशिष्टजीवित्वाभाववान् जीवीति परामर्शात् जीवी बहिस्सत्त्ववान् गृहासत्त्वे सति जीवित्वात् यो बहिस्सत्त्वाभाववान् सः गृहासत्त्वे सति जीवित्वाभाववान् यथा गृहस्थितघट इत्यादिव्यतिरेकन्यायाधीनशाब्दबोधोत्तरकालीनबहिस्सत्त्वव्याप्यगृहासत्त्वविशिष्टजीवित्ववान् जीवीति व्यतिरेकव्याप्तिविशिष्टहेतुप्रकारकपरामर्शाद्वा जीवी बहिस्सत्त्ववानिति व्यापकतावच्छेदकबहिस्सत्त्वत्वेनैव बहिःसत्त्वविधेयकानुमितिरुत्पद्यत इत्याहुः । एतावता श्रुतार्थान्यथानुपपत्तेरनुमानभिन्नप्रमाणत्वं निरस्येदानीं दृष्टार्थान्यथानुपपत्तेस्तादृशप्रमाणत्वं निरासितुं तामुदाहरति ॥ **एवमिति** ॥ **पीनो देवदत्तो दिवा न भुङ्क्त इत्यादाविति** ॥ यादृशदेवदत्ते पीनत्वं दिवा अभुञ्जानत्वमपि दृष्टं दिवा अभुञ्जानस्य तस्य पीनत्वान्यथानुपपत्तिप्रमाणेन तादृशपुरुषविशेष्यकरात्रिभोजनप्रकारकार्थापत्तिप्रमा जन्यते इयमेव दृष्टार्थान्यथानुपपत्तिः । यद्यप्याप्तवाक्यात् देवदत्ते पीनत्वदिवाऽभुञ्जानत्वयोरवगमेऽपि पीनत्वान्यथानुपपत्तिप्रमाणजन्या दिवा अभुञ्जानपुरुषविशेष्यकरात्रिभोजनप्रकारकार्थापत्तिप्रमा संभवतीत्यत एव पीनो देवदत्तो दिवा न भुङ्क्त इति दृष्टे श्रुते वेति तत्र तत्रोक्तिस्सङ्गच्छते । तथापि श्रुतार्थान्यथानुपपत्तेरुदाहृतत्वादेतद्ग्रन्थस्यापि तत्परत्वे पौनरुक्त्यमिति दृष्टार्थान्यथानुपपत्तिमात्रपरत्वमङ्गीकृतं अत्र निरुक्तश्रुतार्थान्यथानुपपत्तिप्रमाणकार्थापत्तिः दृष्टार्थान्यथानुपपत्तिप्रमाणकार्थापत्तिश्चाभिधेयार्थापत्तिप्रमैवेति बोध्यम् । दिवा न भुङ्क्त इत्यादावित्यत्रादिपदाद्द्वारकर्मकपिधानानुकूलकृतिबोधतात्पर्येण द्वारमित्यादिवाक्यं प्रयुक्तं पिधेहीति क्रियापदं न प्रयुक्तमित्यादेः परिग्रहः । तत्र द्वारमिति वाक्ये निरुक्तप्रतीतीच्छयोच्चरितत्वरूपतात्पर्यान्यथानुपपत्तिज्ञानरूपार्थापत्तिप्रमाणेन द्वारमिति कारकपदं पिधेहीत्यध्याहृतक्रियापदविशिष्टमित्यर्थापत्तिप्रमा जायते इयमेवाभिधानार्थापत्तिप्रमेत्युच्यते एतादृशान्यथानुपपत्तिज्ञानस्य तत्करणकार्थापत्तेरनुमितिरूपत्वप्रतिपादनेन प्रामाण्यं निरसितुं व्याप्तिज्ञानं प्रदर्शयति ॥ **पीनत्वस्येति** ॥ मासोपवासिनि तापसे दिवाभोजनरात्रिभोजनान्यतराभावपीनत्वाभावयोः सहचारज्ञानेनेत्यादिः । विशेष्यत्वं षष्ठ्यर्थः ॥ **भोजनव्याप्यत्वावगमादिति** ॥ दिवाभोजनरात्रिभोजनान्यतराभावव्यापकाभावप्रतियोगित्वरूपव्याप्तिप्रकारकनिश्चयसंभवादित्यर्थः तादृशनिश्चयजन्यतादृशव्याप्तिविशिष्टपीनत्ववान् पीन इति परामर्शादिति यावत् । इदमुपलक्षणं पीनो दिवाभोजनरात्रिभोजनान्यतरवान् पीनत्वात् यो यस्तादृशान्यतराभाववान् स पीनत्वाभाववान् यथा मासोपवासी तापस इत्यादिव्यतिरेकिन्यायाधीनशाब्दबोधोत्तरकालीनतादृशपरामर्शादित्यपि बोध्यम् ॥ **भोजनसिद्धाविति** ॥ दिवाभोजनरात्रिभोजनान्यतरनिष्ठाविधेयताशाल्यनुमितावित्यर्थः ॥ **दिवाभोजनबाध इति** ॥ दिवाभोक्तृत्वाभावनिश्चये सतीत्यर्थः ॥ **रात्रिभोजनमिति** ॥ रात्रिभोजनमात्रमित्यर्थः ॥ **सिध्यतीति** ॥

न्तरं ।किं चानुपलम्भस्याज्ञातस्य हेतुत्वे ज्ञानाकरणत्वात् प्रत्यक्षं ज्ञातस्य हेतुत्वे तु तत्राप्यनुपलम्भान्तरापेक्षेत्यनवस्था । एवं चेष्टापि न प्रमाणान्तरं तस्याः सङ्केतग्राहकशब्दस्मारकत्वेन लिप्यादिसमशीलत्वाच्छब्द एवान्तर्भवति तस्मात् यदितु व्याप्त्यादिग्रहस्तत्रानुमितिरेवेति ॥ १४४ ॥

## प्रभा.

व्यापकतावच्छेदकनिरुक्तान्यतरत्वेन तदनवच्छेदकरात्रिभोजनत्वत्वेन वा विधेयताश्रयमित्यर्थः । स्वतन्त्रास्तु रात्रिभोजनाभावदिवाभुञ्जानत्वविशिष्टपीनत्वाभावयोः मासोपवासिनि तापसे सहचारज्ञानाधीनरात्रिभोक्तृत्वाभावव्यापकीभूताभावप्रतियोगित्ववद्दिवाऽभुञ्जानत्वविशिष्टपीनत्वामिति व्यतिरेकव्याप्तिप्रकारकनिश्चयोत्तरकालीननिरुक्तव्याप्तिविशिष्टदिवाऽभुञ्जानत्वविशिष्टपीनत्ववान् देवदत्त इति मानसपरामर्शात् देवदत्तो रात्रौ भुङ्क्ते दिवाऽभुञ्जानत्वे सति पीनत्वात् यो यः रात्रिभोक्तृत्वाभाववान् स दिवा अभुञ्जानत्वे सति पीनत्वाभाववान् यथा मासोपवासी तापस इति व्यतिरेकिन्यायाधीनशाब्दबोधोत्तरकालीननिरुक्तपरामर्शाद्वा रात्रिभोक्तृत्वत्वरूपव्यापकतावच्छेदकरूपेणैव रात्रिभोक्तृत्वानुमितिस्संभवतीति न दिवाभोक्तृत्वबाधज्ञानापेक्षेत्याहुः । इदमुपलक्षणम् अध्याहृतपिधेहीत्यादिक्रियापदवत्त्वाभाव द्वारकर्मकपिधानानुकूलकृतिप्रकारकबोधेच्छया उच्चरितत्वाभावयोः घटपदादौ सहचारग्रहोत्तरं जायमानाध्याहृतपिधेहीतिक्रियापदवत्त्वाभावव्यापकीभूताभावप्रतियोगिद्वारकर्मकपिधानानुकूलकृतिप्रकारकबोधेच्छया उच्चरितत्वमिति व्याप्तिज्ञानजन्यतादृशव्याप्तिविशिष्टतादृशहेतुमद्द्वारमिति परामर्शात् द्वारपदं अध्याहृतपिधेहीति क्रियापदवत् द्वारकर्मकपिधानानुकूलकृतिबोधेच्छया उच्चरितत्वात् यद्यन्निरुक्तसाध्याभाववत्तन्निरुक्तहेत्वभाववत् यथा घटपटावित्यादिव्यतिरेकन्यायाधीनशाब्दबोधोत्तरकालीननिरुक्तमानसपरामर्शाद्वा द्वारपदं अध्याहृतपिधेहिक्रियापदवदित्यनुमितिसंभवात् नार्थापत्तिः प्रमाणान्तरामित्यपि बोध्यम् । अर्थापत्तेस्तु नैवेह पृथक्प्रामाण्यमिष्यत इति मूलस्थानुक्तसमुच्चयार्थकतुशब्देन बोधितं चेष्टायाः पृथक्प्रमाणत्वं व्यवस्थापयितुं बोधितार्थमनुवदति ॥ **चेष्टापीति** ॥ चेष्टापीत्यपिनार्थापत्तिपरिग्रहः तथाचार्थापत्तिः यथा पृथक्प्रमाणं न भवति तथा चेष्टापीत्यर्थः फलितः । अत्र मानाभावादिति हेतुः पूरणीयः । ननु तर्हि घटः एको द्वौ वेति सन्दिहानस्य चेष्टाविशेषेण कथमेकत्वाद्यनुभवः तदानीं घटादिना चक्षुस्सन्निकर्षादिरूपप्रत्यक्षादिप्रमाणाभावादित्याशङ्कां क्लृप्तप्रमाणसत्त्वप्रतिपादनेन परिहरति ॥ **तस्या इति** ॥ चेष्टाया इत्यर्थः ॥ **सङ्केतग्राहकशब्दस्मारकत्वेनेति** ॥ अभिमतार्थकशब्दस्मारकत्वेनेत्यर्थः ॥ **लिप्यादिसमशीलत्वादिति** ॥ लिप्यादितुल्यत्वादित्यर्थः । आदिना पुरुषविशेषपरिग्रहः ॥ **शब्द एवान्तर्भवतीति** ॥ शब्दप्रमाणमुत्पाद्य विश्राम्यतीत्यर्थः । तथाच यथा लिपिदर्शनस्य शब्दस्मृतिद्वारा शाब्दबोधप्रयोजकत्वं यथा वा पुरुषविशेषदर्शनस्य तदुच्चारितपुरुषवाक्यस्मृतिद्वारा शाब्दबोधप्रयोजकत्वं तथा चेष्टाविशेषदर्शनस्यापि शब्दविशेषस्मृतिद्वारा शाब्दबोधप्रयोजकत्वं नतु प्रमाणत्वमिति भावः । उपसंहरति ॥ **तस्मादिति** ॥ उक्तरीत्या निरुक्तस्थले क्लृप्तप्रमाणसंभवादित्यर्थः । यदीत्युत्तरतुत्यनुक्तसमुच्चायकचार्थकतुशब्देनानुमितिरेवेत्युत्तरं योजितेन शाब्दबोधस्समुच्चीयते व्याप्तिग्रह इत्यत्रादिपदेन शब्दपरिग्रहः तथाच यत्र व्याप्तिग्रहस्तत्रानुमितिरेव यत्र शब्दग्रहः तत्र शाब्दबोध एवेत्यर्थलाभेनार्थापत्तिस्थले व्याप्तिग्रहरूपानुमानेनानुमितिसंभवात् अनुमानस्यैव प्रमाणत्वं अर्थापत्तेस्तु प्रयोजकत्वं एवं चेष्टास्थले लिप्यादिग्रहस्थल इव शब्दस्मृतिसंभवेन शाब्दबोधोत्पत्त्या शब्दस्यैव प्रमाणत्वं चेष्टायाः प्रयोजकत्वमिति भावः ॥ १४४ ॥

## दिनकरीयम्.

मयूरः पर्वतेतरस्मिन् न नृत्यति नृत्यति चेत्यस्य सङ्ग्रहः । नन्वेतद्वाक्यान्मयूरः पर्वते नृत्यतीति ज्ञानमुत्पद्यते न त्वेतद्व्यतिरेकिणः सम्भवति पर्वतनृत्यस्य साध्यस्याप्रसिद्धौ व्यतिरेकव्याप्त्यनिरूपणादिति कथं नार्थापत्तिः प्रमाणान्तरामिति चेन्न मयूरनृत्यं पर्वताधिकरणकं पर्वतेतरानधिकरणत्वे सति साधिकरणत्वात् पर्वतत्ववदित्यन्वयव्यतिरेकिणैव पर्वताधिकरणकमयूरनृत्यज्ञानसम्भवात् ॥ १४४ ॥

**सुखं तु जगतामेककाम्यं धर्मेण जायते ।**
**अधर्मजन्यं दुःखं स्यात् प्रतिकूलं सचेतसाम् ॥ १४५ ॥**

सुखं निरूपयति ॥ **सुखं त्विति** ॥ काम्यमभिलाषविषयः ॥ **धर्मेणेति** ॥ धर्मत्वेन सुखत्वेन कार्यकारणभावादिति भावः। दुःखं निरूपयति ॥ **अधर्मेति** ॥ अधर्मत्वेन दुःखत्वेन

प्रभा.

**मूले सुखन्तु जगतामेककाम्यमिति** ॥ अत्राहं सुखीति प्रतीतिसाक्षिकसुखत्वजातिमत्त्वं सुखस्य लक्षणमिति लक्ष्यनिर्देशात्सूचितमतस्सुखस्वरूपमाह ॥ **जगतामिति** ॥ सर्वपुरुषाणामित्यर्थः ॥ **एककाम्यमिति** ॥ मुख्यकामनाविषय इत्यर्थः । अन्यविषयकेच्छानधीनेच्छाविषय इति यावत् । तथाच सर्वपुरुषघटकप्रत्येकसमवेतान्यगोचरेच्छानधीनेच्छाविषयस्वरूपमिति यावत् । शर्करादिभक्षणेऽपि कस्याचित्तादृशेच्छाविषयत्वात् जगतामिति सुखसाधनस्यापि सर्वपुरुषीयकामनाविषयत्वात् मुख्यार्थकमेकपदम् । एवंच तादृशेच्छाविषयतावच्छेदकजातिमत्स्वरूपमिति फलितार्थः । तेन सर्वपुरुषीयतादृशकामनाविषयत्वस्य कस्मिन्नपि सुखेऽभावेऽपि क्षतिर्न । अथवा एकं च तत्काम्यं चेति कर्मधारयः काम्ये एकत्वं मुख्यत्वं फलत्वमिति यावत्। स्वर्गसाधनयागो मम भवत्विति सर्वपुरुषीयकामनाविषयत्वस्य यागेऽपि सत्त्वात्तद्यावर्तनाय एकत्वविशेषणम्। यागस्य फलत्वाभावान्न दोषः । तथाच तादृशकामनाविषयफलनिष्ठधर्मवत्त्वं लक्ष्यतावच्छेदकं तद्विशिष्टं सुखस्वरूपमिति भावः। अत्र लक्षणस्य लक्षणान्तरादूषकत्वादुभयमपि लक्षणं लक्ष्यतावच्छेदकं सुखपदवाच्यत्वं द्वयोर्मध्ये एकैकलक्षणस्यापरं वा बोध्यम्। दुःखलक्षणमप्येवमेवेत्यस्मद्गुरुचरणाः । अत्र तत्सुखं द्विविधं वैशेषिकं मनोरथं चेति। अत्राद्यं स्रक्चन्दनवनितासंभोगादिनिमित्तकं। धर्मस्तु तादृशसंभोगसम्पादकद्वारा उपयुज्यते । द्वितीयन्तु ज्ञाननिमित्तकं धर्मस्तु ज्ञानकारणचित्तशुद्धिसम्पादकद्वारा उपयुज्यत इति विवेकः । काम्यपदस्य कर्मविशेषपरत्वे जगतामेककाम्यमिति मूलेन निरुक्तार्थप्रतिपादनासंभवात् कामनादिविषयार्थकत्वमाह ॥ **मुक्तावल्यां अभिलाषादिविषय इति** ॥ **धर्मत्वेन सुखत्वेन कार्यकारणभावादिति भाव इति** ॥ नच नवीनैकदेशिभिर्नित्यसुखाङ्गीकारात् सुखत्वस्य नित्यवृत्तितया तादृशकार्यकारणभावोऽप्रामाणिकः । किन्तु जन्यसुखत्वेन सुखत्वावान्तरवैजात्येन वा कार्यकारणभावो वाच्य इति निरुक्तभाववर्णनमसङ्गतामिति वाच्यम् । ईश्वरे नित्यसुखाङ्गीकारे प्रमाणाभावेन एकदेशिमतस्य हेयत्वात् । नचानन्दं ब्रह्मेति श्रुतेरेवेश्वरस्य नित्यसुखत्वे प्रमाणत्वमिति वाच्यम् तत्रानन्दपदस्य दुःखाभावलाक्षणिकत्वस्वीकारात् । अन्यथा अहं ब्रह्मास्मीत्यादिश्रुतिभिः शक्त्या जीवब्रह्मणोरभेदप्रतिपादनात् तयोर्भेदविलोपापत्तेः । नचैवं सति तुल्ययुक्त्या नित्यज्ञानेच्छाकृतिमत्त्वमपि ईश्वरे न सिध्येदिति वाच्यम् । कार्यायोजनधृत्यादेरित्याद्याचार्यकारिकाप्रतिपाद्यप्राथमिककार्यपक्षकेश्वरसाधकानुमानादुपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमत्त्वरूपकर्तृत्वेनैवेश्वरासिद्धेर्वक्तव्यतया लाघवज्ञानसहकारेण नित्यत्वेन एकत्वेन ईश्वरस्येव नित्यत्वेन एकत्वेन च तत्र ज्ञानेच्छाकृतीनामपि सिद्धेरावश्यकत्वात् अन्यथा ईश्वरासिद्धिप्रसङ्गात् तस्मादीश्वरे नित्यसुखसत्त्वे प्रमाणाभावेन लघुक्लृप्तधर्मपुरस्कारेण उक्तकार्यकारणभावो युक्त इति ॥ **मूले अधर्मजन्यमिति** ॥ यद्यपि प्रथमं दुःखस्य लक्षणं स्वरूपं चोक्त्वैव उपायः प्रदर्शनीयः प्रथमतस्तदनिरूपणे तस्याज्ञानेन तत्साधनस्याजिज्ञासितत्वेन तदभिधाने अर्थान्तरापत्तेः तथैव कथकसम्प्रदायाच्च तथापि पाठक्रमादर्थक्रमो बलीयानिति न्यायेनागत्या पश्चादुक्तमपि वाक्यं प्रथममनुसन्धेयमिति नोक्तदोषावकाश इति हृदयम् । अत्राहं दुःखीति प्रतीतिसाक्षिकदुःखत्वजातिमत्त्वं दुःखसामान्यलक्षणं लक्ष्यवाचकदुःखशब्देन सूचितमिति बोध्यम् । दुःखस्वरूपमाह ॥ **प्रतिकूलं सचेतसामिति** ॥ सर्वप्राणिनामन्यगोचरद्वेषानधीनद्वेषाविशेष्यमित्यर्थः । दुःख-

दिनकरीयम्.

**धर्मत्वेनेति** ॥ इदं च प्राचां मतेनोक्तम् । नवीनमते तु नित्यं विज्ञानमानन्दं ब्रह्मेति श्रुत्या भगवतिं नित्यसुखसिद्धौ धर्मस्य कार्यतावच्छेदकं जन्यसुखत्वं सुखत्वावान्तरजातिर्वेति बोध्यम् ॥ १४५ ॥

कार्यकारणभाव इत्यर्थः ॥ प्रतिकूलमिति ॥ दुःखत्वज्ञानादेव सर्वेषां स्वाभाविकद्वेषविषय इत्यर्थः ॥ १४५ ॥

**निर्दुःखत्वे सुखे चेच्छा तज्ज्ञानादेव जायते ।**
**इच्छा तु तदुपाये स्यादिष्टोपायत्वधीर्यदि ॥ १४६ ॥**

इच्छां निरूपयति ॥ **निर्दुःखत्व इति** ॥ इच्छा द्विविधा फलविषयिणी उपायविषयिणी च फलं तु सुखं दुःखाभावश्च । तत्र फलेच्छां प्रति फलज्ञानं कारणम् । अत एव पुरुषार्थः सम्भवति यत् ज्ञातं सत्स्ववृत्तितयेष्यते स पुरुषार्थ इति तल्लक्षणात् इतरेच्छानधीनेच्छाविषयत्वं फलितोऽर्थः । उपायेच्छां प्रतीष्टसाधनताज्ञानं कारणम् ॥ १४६ ॥

## प्रभा.

साधनसुपुत्रत्यागादावपि सर्वप्राणिनां द्वेषविषयत्वस्य सत्त्वात्तद्व्यावर्तनाय द्वेषे अन्यगोचरद्वेषानधीनत्वविशेषणम् । तथाच तादृशद्वेषविषयतावच्छेदकत्वकूटविशिष्टधर्मवत्त्वं लक्ष्यतावच्छेदकं तद्विशिष्टं च दुःखस्वरूपमिति भावः । अत्र दुःखं द्विविधं वैशेषिकं मनोरथं चेति आद्यं कण्टकसंयोगादिनिमित्तकं अधर्मस्तु तत्सम्पादनद्वारा उपयुज्यते द्वितीयं व्याघ्रादिज्ञानजन्यं अधर्मस्तु तत्सम्पादनद्वारा उपयुज्यत इति बोध्यम् । अधर्मजन्यं दुःखं स्यादिति मूलेन दुःखस्याधर्मजन्यत्वं प्रतिपादितं तत्र हेतुमाह ॥ **मुक्तावल्यां अधर्मत्वेनेति** ॥ प्रतिकूलं सचेतसामिति मूलस्य उक्तार्थमेवाह ॥ **सर्वेषामिति** ॥ सर्वप्राणिनामित्यर्थः ॥ **स्वाभाविकेति** ॥ अन्यगोचरद्वेषानधीना इत्यर्थः । प्राञ्चस्तु अदृष्टस्य मुख्यप्रयोजनं भोग एव सुखदुःखे चावान्तरप्रयोजने अन्यथा सुखदुःखे जनयित्वैव धर्माधर्मयोर्नाशात् भोगानुत्पत्तिप्रसङ्गात् भोगस्य पुरुषार्थत्वाभावप्रसङ्गाच्च अत एव न्यायवार्तिकटीकायां सुखदुःखबुद्ध्युत्पादे च धर्माधर्मयोरुपयोगः नतु सुखदुःखोत्पाद इति वाचस्पतिमिश्रोक्तिस्सङ्गच्छत इत्याहुः । तन्न भोगस्य मुख्यप्रयोजनत्वेऽपि तत्रादृष्टस्य प्रयोजकत्वस्वीकारात् न भोगकाले तत्सत्त्वस्यावश्यकता अन्यथा गङ्गास्नानादेर्मुक्तेरेव मुख्यप्रयोजनतया मुक्तिकाले गङ्गास्नानादेरभावेन मुक्तेरनुत्पत्त्यापत्तेः वाचस्पतिमिश्रग्रन्थोऽपि अदृष्टस्य भोगप्रयोजकत्वाभिप्रायक एव तस्मान्न भोगानुपपत्तिः नवा भोगस्य अपुरुषार्थत्वापत्तिरिति ॥ १४५ ॥

**मूले निर्दुःखत्वे सुखे चेच्छा इति** ॥ अहमिच्छामीति प्रत्यक्षसिद्धेच्छात्वजातिमत्त्वमिच्छासामान्यस्य लक्षणम् । भगवदिच्छायामपि तादृशजातिः स्वीक्रियते तत्रापि इच्छापदप्रयोगात् अतो न तत्राव्याप्तिः । सा इच्छा द्विविधा फलेच्छा उपायेच्छेति तत्र फलेच्छास्वरूपं तत्कारणं चादावाह ॥ **निर्दुःखत्व इति** ॥ अत्र फलविशेष्यकेच्छात्वं पुरुषार्थमिच्छामीति प्रतीतिसाक्षिकेच्छात्वव्याप्यजातिविशेषवत्त्वं वा फलेच्छासामान्यलक्षणं बोध्यम् । उपायेच्छास्वरूपं तत्कारणं चाह ॥ **इच्छा तु तदुपाय इति** ॥ अत्रोपायविशेष्यकेच्छात्वं उपायमिच्छामीति प्रतीतिसाक्षिकेच्छात्वव्याप्यजातिविशेषवत्त्वं वा उपायेच्छासामान्यलक्षणमिति बोध्यम् । फलेच्छादिशब्दार्थं निर्वक्ति ॥ **मुक्तावल्यां फलविषयिणीति** ॥ फलस्वरूपमाह ॥ **फलं सुखमित्यादि** ॥ **अत एवेति** ॥ सुखदुःखाभावयोः स्वज्ञानमात्राधीनेच्छाविषयत्वादेवेत्यर्थः ॥ **पुरुषार्थस्संभवतीति** ॥ एवमुभयात्मकं फलं पुरुषार्थो भवतीत्यर्थः । पुरुषार्थस्वरूपमाह ॥ **यदिति** ॥ ज्ञातं सदेवेत्यर्थः ॥ **फलितार्थ इति** ॥ तादृशेच्छाविषयत्वमेव पुरुषार्थत्वमिति फलितार्थः । इच्छा तु तदुपाये स्यादित्यादिकारिकायाः प्रतीकमधृत्वा अर्थमाह ॥ **उपायेच्छां प्रतीति** ॥ १४६ ॥

## दिनकरीयम्.

**तत्र तयोर्मध्ये** ॥ **अत एव** फलज्ञानस्य फलेच्छां प्रति हेतुत्वादेव ॥ **पुरुषार्थः सम्भवतीति** ॥ सुखं दुःखाभावश्च पुरुषार्थः सम्भवतीत्यर्थः । ननु यज्ज्ञातमित्यादेः स्वविषयकज्ञानजन्येच्छाविषयत्वमर्थः । तथा चोपायेऽतिव्याप्तिस्तस्यापि स्वविषयकेष्टसाधनताज्ञानजन्येच्छाविषयत्वादत आह ॥ **इतरेच्छेति** ॥ १४६ ॥

**चिकीर्षा कृतिसाध्यत्वप्रकारेच्छा तु या भवेत् ।**
**तद्धेतुः कृतिसाध्येष्टसाधनत्वमतिर्भवेत् ॥ १४७ ॥**

**चिकीर्षेति** ॥ कृतिसाध्यत्वप्रकारिका कृतिसाध्यविषयिणीच्छा चिकीर्षा पाकं कृत्या साधयामीति तदनुभवात् । चिकीर्षां प्रति कृतिसाध्यताज्ञानमिष्टसाधनताज्ञानं च कारण-

**प्रभा.**

कृतिसाध्यत्वप्रकारेच्छेतिमूलस्थबहुव्रीहिसमासवाक्यप्रतिपाद्यार्थमाह ॥ **कृतिसाध्यत्वप्रकारिका कृतिसाध्यविषयिणीति** ॥ यद्यपि कृत्यसाध्यवृष्ट्यादौ कृतिसाध्यत्वभ्रमानन्तरं तद्विशेष्यकेष्टसाधनताज्ञानानन्तरं च कृतिसाध्यो वृष्ट्यादिर्मम भवत्विति चिकीर्षोदयात् तस्या वस्तुतः कृतिसाध्यविषयकत्वाभावेन तत्सङ्ग्रहानुपपत्त्या वैयर्थ्येन च चिकीर्षायां कृतिसाध्यविषयकत्वविशेषणं व्यर्थं तथापि अभ्रान्तसमवेतचिकीर्षामात्रं कृतिसाध्यविशेष्यकमेवेति स्फुटप्रतिपत्त्यर्थं चिकीर्षायां तद्विशेषणम् । लक्षणं तु कृतिसाध्यत्वप्रकारकेच्छात्वमेव चिकीर्षामीति प्रतीतिसाक्षिकोपायेच्छामात्रवृत्तिवैजात्यव्याप्यजातिविशेषवत्त्वं वेति हृदयम् । यद्यपि कर्तुमिच्छा चिकीर्षेति व्युत्पत्तिबलात्कृतिसाध्यत्वप्रकारकेच्छैव तु चिकीर्षाशब्दलभ्या तथापि दाढर्याय तस्यापि कृतिसाध्यत्वप्रकारकत्वे अनुभवमपि प्रमाणयति ॥ **पाकं कृत्येति** ॥ नच तादृशवाक्यात् कृत्या कृतिरूपसाधनेन साधयामि निष्पादयामीत्यर्थकरणेन पाकनिष्ठयत्नसाधनकनिष्पत्त्यनुकूलोऽहमिति बोधजननात्तादृशशब्दोल्लेख्यनुभवस्यापि तद्विषयकत्वावश्यकतया तस्याः कृतिसाध्यत्वप्रकारकत्वे नोक्तानुभवः प्रमाणमिति वाच्यं स्वप्रयोज्योत्पत्तिमात्रस्य स्वीयकृतिजन्यत्वनियमेन स्वयत्नं विना स्वस्य उत्पत्त्यनुकूलत्वासंभवेन कृत्येत्यस्य आनर्थक्यापत्त्या तादृशवाक्यस्य तदर्थकत्वं न संभवति किंतु कृत्या साध्यतासंबन्धेन कृतिप्रकारेण साध्यत्वप्रकारेणेति यावत् साधयामि इच्छामीत्यर्थकरणेन तादृशवाक्यात्साध्यत्वप्रकारपाकत्वावच्छिन्नविशेष्यकेच्छावानहमिति बोधजननात् शब्दोल्लिखितादृशानुभवस्यापि तद्विषयकत्वावश्यकतया चिकीर्षायाः कृतिसाध्यत्वप्रकारकत्वस्वीकारे तस्य प्रमाणत्वं संभवतीत्याशयः । ननु स्वर्गेच्छाधीना यागो मम भवत्विति इच्छा उपायेच्छा तादृशेच्छाधीना कृतिसाध्यो यागो मम भवत्वितीच्छैव चिकीर्षा उभयोरप्युपायेच्छारूपत्वात् इष्टसाधनताज्ञानरूपकारणसत्त्वे कदाचिदुपायेच्छेति शब्दवाच्ययागत्वमात्रप्रकारेण यागविशेष्यकेच्छा कदाचिच्चिकीर्षापदवाच्या कृतिसाध्यत्वविशिष्टयागत्वप्रकारेण यागविशेष्यकेच्छेति कुतः तुल्यकारणसत्त्वादित्याशङ्कां चिकीर्षायां कारणान्तरप्रदर्शनेन परिहरति ॥ **चिकीर्षां प्रतीति** ॥ तथाच कृतिसाध्यताज्ञानासमानकालीनेष्टसाधनताज्ञानात् उपायेच्छा तत्समानकालीनतादृशज्ञानात् चिकीर्षेति सामग्रीभेदान्नोक्तानुपपत्तिरिति भावः । अत्र निष्फले प्रवृत्तिवारणाय इष्टसाधनताज्ञानस्य उपायेच्छां प्रति हेतुत्वं तत्रापि इष्टत्वं न विशेषणं तज्ज्ञानशून्यकाले इष्टसाधनताज्ञानानुत्पत्तिप्रसङ्गात् । किन्तु स्वर्गादिफलानां परिचायकमतस्तज्ज्ञानापेक्षाभावान्नोक्तानुपपत्तिरिति ध्येयम् । यद्यपि तद्धर्मावच्छिन्नविशेष्यकेष्टसाधनताज्ञानस्य तद्धर्मप्रकारकेच्छां प्रति हेतुतया कृतिसाध्ययागो मदिष्टसाधनमिति कृतिसाध्यत्वविशि-

**दिनकरीयम्.**

**कृतिसाध्यताज्ञानमिति** ॥ ननु कृतिसाध्यताज्ञानस्य स्वातन्त्र्येण चिकीर्षां प्रति हेतुत्वे मानाभावः तद्धर्मावच्छिन्नविशेष्यकेष्टसाधनताज्ञानस्य तद्धर्मप्रकारकेच्छां प्रति हेतुतायाः क्लृप्तत्वात् कृतिसाध्यपाकत्वावच्छिन्नविशेष्यकेष्टसाधनताज्ञानादेव चिकीर्षायाः सम्भवादिति चेन्न । यत्र कृतिसाध्यपाकत्वेनेष्टसाधनत्वं न गृहीतमपि तु शुद्धपाकत्वेन कृतिसाध्यत्वं शुद्धपाकत्वेन चेष्टसाधनत्वं गृहीतं तत्रापि पाकगोचरप्रवृत्तेरानुभविकतया तदनुरोधेन चिकीर्षाया अप्यावश्यकत्वेन तन्निर्वाहाय कृतिसाध्यताज्ञानस्य स्वातन्त्र्येण हेतुताया आवश्यकत्वात् । अथ कृत्यसाध्यताज्ञानस्य प्रतिबन्धकत्वादेव वृष्ट्यादौ चिकीर्षानुत्पादात् कृतिसाध्यताज्ञानस्य चिकीर्षां प्रति हेतुत्वे मानाभाव इति चेन्न कृतिसाध्यत्वाभावतद्व्याप्यतदवच्छेदकधर्मज्ञानानां प्रतिबन्धकत्वकल्पनापेक्षया कृतिसाध्यताज्ञानस्य हेतुत्वे लाघवात् ॥ **इष्टसाधनताज्ञानमिति** ॥ अन्यथा नि-

म् ॥ तद्धेतुरिति ॥ अत एव वृष्ट्यादौ कृतिसाध्यताज्ञानाभावान्न चिकीर्षा ॥ १४७ ॥

बलवद्द्विष्टहेतुत्वमतिः स्यात् प्रतिबन्धिका ।
तदहेतुत्वबुद्धेस्तु हेतुत्वं कस्यचिन्मते ॥ १४८ ॥

बलवद्द्विष्टेति ॥ बलवद्द्विष्टसाधनताज्ञानं तत्र प्रतिबन्धकमतो मधुविषसम्पृक्तान्नभो-

## प्रभा.

द्वयागत्वावच्छिन्नविशेष्यकेष्टसाधनताज्ञानादेव चिकीर्षोत्पत्तिसंभवात् कृतिसाध्यताज्ञानस्य पृथक्कारणत्वमनु-चितं तथापि यत्र शुद्धयागत्वावच्छिन्नविशेष्यकमेव एकत्र द्वयमिति रीत्या कृतिसाध्येष्टसाधनत्वोभयप्रकारकं ज्ञानं जातं तदुत्तरं प्रवृत्त्यनुरोधेन चिकीर्षोत्पत्तेरावश्यकतया तदनुरोधेन कृतिसाध्यत्वप्रकारकज्ञानस्य स्वातन्त्र्येण हेतुत्वमङ्गीकृतम् । नच कृत्यसाध्यत्वप्रकारकानिर्णयस्य प्रतिबन्धकत्वमेवास्तु किं तत्प्रकारकज्ञानत्वेन हेतुतयेति वाच्यं कृत्यसाध्यत्वतद्व्याप्यधर्मवत्त्वतदवच्छेदकतया गृहीतधर्मवत्त्वप्रकारकानिर्णयानां तेन तेन रूपेणानेकप्रतिबध्यप्रतिबन्धकभावकल्पनापेक्षया कृतिसाध्यत्वप्रकारकज्ञानत्वेनैकहेतुताकल्पनस्यैवोचितत्वात् । नचैवं सति यत्र कृतिसाध्यताज्ञानं कृत्यसाध्यताज्ञानं वा नास्ति तत्र चिकीर्षानुत्पत्तिप्रसङ्ग इति वाच्यं इष्टापत्तेः तद्धर्मप्रकारकोपस्थितिशून्यकालीनतद्धर्मप्रकारकेच्छायां मानाभावात् अन्यथा सर्वदा सकलफलतदुपायविषयकेच्छापत्तिः । तस्मादन्यथानुपपत्त्या अनाहार्याप्रामाण्यज्ञानानास्कन्दितकृतिसाध्यत्वप्रकारकेच्छात्वेन पृथग्घेतुत्वमावश्यकमिति उक्तार्थमेव प्रकाशयति ॥ **अत एवेति** ॥ कृत्यसाध्यत्वप्रकारकज्ञानस्य प्रतिबन्धकत्वमनुक्त्वा कृतिसाध्यत्वप्रकारकज्ञानस्य हेतुत्वस्वीकारादेवेत्यर्थः ॥ **न चिकीर्षेति** ॥ तथाच कृत्यसाध्यत्वप्रकारकज्ञानाभावरूपकारणबलात्तत्र चिकीर्षापत्त्या कृतिसाध्यताज्ञानस्य हेतुत्वमावश्यकमिति भावः। ननु कामोऽभिलाषः रागः सङ्कल्पः कारुण्यं वैराग्यमुपगूढः भाव इत्येवमादय इति भाष्यात् मैथुनेच्छा कामः अभ्यवहारेच्छा अभिलाषः पुनःपुनः विषयानुरञ्जनेच्छा रागः अनासन्नक्रियेच्छा सङ्कल्पः स्वार्थमनपेक्ष्य परदुःखप्रहाणेच्छा कारुण्यं दोषदर्शनात् विषयपरित्यागेच्छा वैराग्यं परवञ्चनेच्छा उपगूढः अन्तर्निगूढेच्छा भावः एवमादय इत्यादिपदात् चिकीर्षा जिहीर्षा स्पृहा कापट्यं लोभ इत्यादेः परिग्रहः। कर्तुमिच्छा चिकीर्षा संहारेच्छा जिहीर्षा परद्रव्यादानेच्छा स्पृहा अवश्यकर्तव्येऽपि स्वद्रव्यापरित्यागेच्छा लोभः अन्यायेन परद्रव्यापहरणेच्छा कापट्यं इति टीकाकारव्याख्यानाच्च इच्छाया अनेकविधत्वप्रतिपादनात् अत्र तदप्रतिपादनेन मूलकारस्य न्यूनतेति चेन्न पशुकामः पुत्रकामः आरोग्यकामः ब्रह्मवर्चसकामः इत्यादिश्रुतिघटितकामपदस्य मैथुनेच्छारूपकामार्थत्वासंभवेनेच्छामात्रवाचकत्वावश्यकतया इच्छापदकामनापदयोः पर्यायत्वं श्रुतिसिद्धमिति तात्पर्येण ग्रन्थविस्तरभयेन च अनेकविधत्वेन इच्छाया अप्रतिपादनमिति न मूलकारस्य न्यूनतेति हृदयम् ॥ १४७ ॥

ननु उपायेच्छामात्रवृत्तिवैजात्यावच्छिन्नं प्रतीष्टसाधनताज्ञानस्य तादृशवैजात्यव्याप्यचिकीर्षामात्रवृत्तिवैजात्यावच्छिन्नं प्रति कृतिसाध्यताज्ञानस्य च हेतुत्वे विषसम्पृक्तान्नभक्षणादौ चिकीर्षापत्तिः तत्र तृप्तिरूपेष्टसाधनत्वकृतिसाध्यत्वज्ञानसत्त्वात् प्रवृत्त्यापत्त्या इष्टापत्तेर्वक्तुमशक्यत्वादत आह ॥ **मूले बलवद्द्विष्टेति** ॥

## दिनकरीयम्.

क्फलत्वज्ञानेऽपि चैत्यवन्दनादौ चिकीर्षापत्तिरिति भावः । अत्रेदं बोध्यं पाकविशेष्यकेष्टसाधनताज्ञानस्य कार्यतावच्छेदकं न पाकादिगोचरचिकीर्षात्वं कृतिसाध्यत्वप्रकारकत्वनिवेशे प्रयोजनविरहात् पाको जायतामितीच्छाया असङ्ग्रहापत्तेश्च किंतु पाकत्वावच्छिन्नमुख्यविशेष्यकेच्छात्वं पाकसाध्यं सुखं जायतामितीच्छायां व्यभिचारवारणाय मुख्येति । इष्टसाधनतेत्यत्रेच्छा स्वरूपसती विशेषणं तेनेच्छाज्ञानशून्यकालेऽपि चिकीर्षानिर्वाहः ॥ **अत एव** कृतिसाध्यताज्ञानस्य हेतुत्वादेव ॥ १४७ ॥

**बलवद्द्विष्टेति** ॥ द्विष्टं द्वेषविषयीभूतं । द्वेषस्य दुःखे ताद्रूप्येण ज्ञानात् । सर्पादौ तत्साधनताज्ञानात् द्वेषे बलवत्त्वं जातिविशेषः ॥ **प्रतिबन्धकमिति** ॥ ननु बलवद्द्वेषविषयसाधनत्वज्ञानस्य प्रतिबन्धकत्वे चैत्रस्यागम्यागमन-

जने न चिकीर्षा। बलवद्द्वेषः प्रतिबन्धक इत्यन्ये॥ तदहेतुत्वेति ॥ बलवदनिष्टाजनकत्वज्ञानं कारणमित्यर्थः॥ १४८॥

## प्रभा.

ताद्दृशज्ञानस्य प्रतिबन्धकत्वं किन्निरूपितमित्याकाङ्क्षां निवर्तयितुं पूरणसंवलिततादृशमूलार्थमाह ॥ **मुक्तावल्यां बलवद्द्विष्टसाधनताज्ञानमिति** ॥ बलवद्द्वेषविषयतावच्छेदकधर्मावच्छिन्ननिरूपितसाधनत्वप्रकारकज्ञानमित्यर्थः। तेन बलवद्द्वेषविषयमरणत्वावच्छिन्ननिष्ठध्वंसत्वावच्छिन्ननिरूपितसाधनत्वज्ञानकाले न चिकीर्षानुपपत्तिः द्वेषे बलवत्त्वाविशेषणाच्च कष्टं कर्मेति न्यायेन यागस्यापि नान्तरीयकदुःखप्रयोजकतया द्वेषविषयतावच्छेदकदुःखविशेषत्वावच्छिन्नसाधनताज्ञानात् यागे न चिकीर्षानुपपत्तिः। बलवत्त्वं वैजात्यमेव तच्च नान्तरीयकदुःखविषयकद्वेषव्यावृत्तं स्वसाधनकर्मसाध्येष्टनियतपूर्ववृत्ति यद्यत्त्वं तत्तद्भेदकूटविशिष्टदुःखविषयकद्वेष एव तादृशवैजात्यस्वीकारात्॥ **तत्रेति** ॥ चिकीर्षायामित्यर्थः॥ **प्रतिबन्धकमिति** ॥ तथा च विषसम्पृक्तान्नभक्षणादौ निरुक्तकारणसत्त्वेऽपि प्रतिबन्धकसत्त्वात् न चिकीर्षापत्तिरिति भावः। ननु यदा चैत्रस्यागम्यागमनजन्यतावच्छेदकनरकत्वव्याप्यजात्यवच्छिन्ने द्वेषः तदा मैत्रस्य तादृशवैजात्यावच्छिन्नसाधनताज्ञानात् चिकीर्षानुत्पत्तिप्रसङ्गः तादृशज्ञानस्यापि प्रतिबन्धकतावच्छेदकाक्रान्तत्वादिति चेन्न समवायेन तद्धर्मावच्छिन्नविशेष्यकचिकीर्षां प्रति एककालावच्छिन्नैकात्मवृत्तित्वस्वविषयतावच्छेदकावच्छिन्नसाधनत्वप्रकारतानिरूपिततद्धर्मावच्छिन्नविशेष्यताकत्वोभयसंबन्धेन द्वेषविशिष्टज्ञानत्वेन समवायेन प्रतिबन्धकत्वस्वीकारेणोक्तानुपपत्तेरभावात्॥ **बलवद्द्वेष इति** ॥ बलवद्द्विष्टसाधनत्वज्ञानाधीनद्वेष इत्यर्थः। अधीनत्वान्तमुपायद्वेषस्य परिचायकं नतु तेन रूपेणापि प्रतिबन्धकत्वं गौरवात् प्रयोजनाभावाच्च। तथाच समवायेन तद्धर्मावच्छिन्नतन्निष्ठविशेष्यताशालिचिकीर्षां प्रति तद्धर्मप्रकारकतद्विशेष्यकद्वेषत्वेन समवायेन प्रतिबन्धकत्वं स्वीक्रियते लाघवादित्याशयः। अत्र चिकीर्षां प्रति बलवद्द्विष्टसाधनताज्ञानाधीनद्वेषस्यैव प्रतिबन्धकत्वे यत्र यदा इष्टसाधनताज्ञानं द्विष्टसाधनताज्ञानजनकसामग्रीसमवधानं च तत्र तदुत्तरक्षणे द्विष्टसाधनताज्ञानस्येव इच्छाया अप्युत्पत्तिप्रसङ्गः द्वेषाभावरूपप्रतिबन्धकाभावसत्त्वात्। नचेष्टापत्तिः अपसिद्धान्तात्। किंच यत्र प्रथमक्षणे द्वेषः द्वितीयक्षणे फलेच्छा तृतीयक्षणे फलसाधनताज्ञानं तत्काले द्वेषनाशात्तदुत्तरं भवत्येवोपायेच्छा। एवं यत्र

## दिनकरीयम्.

जन्यनरके यदा बलवान् द्वेषस्तदा मैत्रस्य तादृशद्वेषशून्यस्यागम्यागमने तादृशनरकसाधनत्वज्ञानवत इच्छाप्रवृत्त्योरनुपपत्तिः। एवं चैत्रस्यैव कालान्तरे तादृशद्वेषसत्त्वेऽपि तत्तत्कालीनतत्पुरुषीयेच्छां प्रति प्रवृत्तिं प्रति च तत्कालीनतत्पुरुषीयबलवद्द्विष्टजनकत्वज्ञानस्य प्रतिबन्धकत्वं कल्प्यते यत्पुरुषस्य यदा न क्वापि द्वेषस्तत्कालतत्पुरुषान्तर्भावेन तादृशज्ञानप्रतिबन्धकत्वस्याकल्पनान्न तत्र तादृशप्रतिबन्धकाप्रसिद्ध्या तदभावरूपकारणस्याभावात्प्रवृत्त्यनुपपत्तिरिति वाच्यं यत्पुरुषस्य यदागम्यागमनजन्यनरके बलवद्द्वेषस्तदा तत्पुरुषस्य तदिच्छानुत्पादादगम्यागमनगोचरतत्पुरुषीयतत्कालीनेच्छाया अप्रसिद्ध्या तत्पुरुषतत्कालान्तर्भावेण तादृशकार्यकारणभावस्याभावेन तत्र तत्पुरुषीयागम्यागमनगोचरेच्छानुत्पादप्रयोजकस्य दुर्भिक्षापत्तेरिति चेन्न तद्धर्मप्रकारकद्वेषविशिष्टस्य तद्धर्मावच्छिन्नजनकत्वज्ञानस्य तत्र प्रतिबन्धकत्वकल्पनेनोक्तापत्त्यभावात् तद्धर्मप्रकारकद्वेषानुत्तरतादृशेच्छायां तादृशद्वेषाभावस्तादृशद्वेषोत्तरतद्गोचरेच्छायां तद्धर्मावच्छिन्नजनकत्वज्ञानाभावः कारणम्॥ **बलवद्द्वेष इति** ॥ पाकादिगोचरेच्छायां बलवद्द्वेषविषयसाधनत्वज्ञानजन्यः पाकगोचरो द्वेषः प्रतिबन्धकः पूर्वोक्तप्रतिबन्धकद्वयकल्पनापेक्षया लाघवादिति भावः। यत्र चोत्कटसुखोत्कटदुःखजनकत्वमेकस्मिन् कर्मणि गृहीतं तत्र सत्प्रतिपक्षस्थल इवेच्छाद्वेषयोरनुत्पत्तेस्तन्मते तत्र कार्यकाले द्वेषाभावस्य सत्त्वेनेच्छोत्पादापत्तिः। नच यत्र बलवद्द्विष्टसाधनत्वज्ञानेन तृतीयक्षणे द्वेषो जनितस्तदुत्तरक्षणे इच्छोत्पादापत्तिस्तत्रापीति वाच्यं तत्रेच्छोत्पादस्येष्टत्वात् क्षणविलम्बस्य शपथनिर्णेयत्वादित्यन्ये इत्यनेनास्वरसः सूचितः॥ **बलवदनिष्टाजनकत्वज्ञानमिति** ॥ अत्रापि तद्धर्मप्रकारकद्वेषोत्तरेच्छायां तद्धर्मावच्छिन्नाजनकत्वज्ञानं कारणं ता-

## प्रभा.

फलेच्छेष्टसाधनताज्ञानद्वेषाणां क्रमेणोत्पत्तिः तत्र द्वेषोत्पत्तिकाले फलेच्छारूपकारणाभावान्नोपायेच्छा एवमन्यत्रापि योग्यविभुविशेषगुणानां एकक्षणोत्पत्तेरपसिद्धान्तत्वादिति तत्र द्वेषस्य प्रतिबन्धकत्वं सुदूरपराहतं द्विष्टसाधनत्वधियः प्रतिबन्धकत्वे मरणतृप्त्युभयविषयकज्ञानोत्तरं आदौ तद्विषयकद्वेषः अनन्तरं तृप्तीच्छा ततो विषसम्पृक्तान्नभक्षणादौ द्विष्टसाधनत्वेष्टसाधनत्वोभयज्ञानं तदा इच्छासामग्रीसत्त्वेऽपि प्रतिबन्धकबलादेवोत्तरक्षणे न तादृशभक्षणविषयकेच्छेति न किञ्चिदनुपपन्नामित्यरुचिं हृदि निधाय अन्य इत्युक्तमिति ध्येयम्। केचित्तु यत्र चोत्कटसुखोत्कटदुःखजनकत्वमेकस्मिन् कर्मणि गृहीतं तत्र सत्प्रतिपक्षस्थल इव इच्छाद्वेषयोरनुत्पत्तेः त्वन्मते तत्र कार्यकाले द्वेषाभावसत्त्वेन इच्छोत्पादापत्तेः । नच यत्र बलवद्द्वेषसाधनत्वज्ञानेन तृतीयक्षणे द्वेषो जनितः तदुत्तरक्षणे इच्छोत्पादापत्तिः तत्रापीति वाच्यं तत्रेच्छाया उत्पादस्य इष्टत्वात्क्षणविलम्बस्य शपथनिर्णेयत्वात् इत्यन्य इत्यनेनास्वरसस्सूचित इत्याहुः तदसत् विषसम्पृक्तान्नभक्षणादौ तृप्तिमरणसाधनताज्ञानानन्तरं तत्र इच्छानुत्पादेऽपि द्वेषोत्पादस्य सकलतान्त्रिकानुमतत्वात् अत एव विषसम्पृक्तान्नभक्षणं द्वेक्ष्मीत्यनुभवः सङ्गच्छते । अत एव च बलवद्द्विष्टसाधनत्वज्ञानस्य चिकीर्षाप्रतिबन्धकत्वप्रतिपादनं इष्टसाधनत्वज्ञानस्य बलवद्द्वेषप्रतिबन्धकत्वाप्रतिपादनं च बलवद्द्वेषः प्रतिबन्धक इत्यन्य इत्यनेन बलवद्द्वेषस्य चिकीर्षाप्रतिबन्धकत्वप्रतिपादनं चिकीर्षायाः बलवद्द्वेषप्रतिबन्धकत्वाप्रतिपादनं मूलकृतां भाष्यकारप्रभृतीनां च सङ्गच्छते । तस्मादेकस्मिन्नुत्कटसुखोत्कटदुःखसाधनत्वज्ञानकाले बलवद्द्वेषसामग्र्याः प्रतिबन्धकत्वेन द्वेषस्य उत्पत्त्या सत्प्रतिपक्षदृष्टान्तेनेच्छाद्वेषयोरनुत्पत्तिं स्वीकृत्य उभयसामग्रीस्थले बलवद्द्वेषाभावरूपप्रतिबन्धकाभावबलादिच्छोत्पादापत्तिरूपास्वरसोत्थापनमेतन्मते न यौक्तिकं नानुभाविकं चेति । यच्च यत्र द्विष्टसाधनताज्ञानद्वितीयक्षणे इष्टसाधनताज्ञानं तृतीयक्षणे द्वेषोत्पत्तिः तत्र चतुर्थक्षणे इच्छायाः उत्पादापत्तिः पूर्वं द्विष्टसाधनताज्ञानरूपप्रतिबन्धकाभावादिति द्विष्टसाधनताज्ञानप्रतिबन्धकत्ववादिमते नचेत्यादिना दूषणं तदपि न द्विष्टसाधनताज्ञानद्वितीयक्षणे इष्टसाधनताज्ञानोत्पत्तौ मानाभावात् द्वेषसामग्र्याः प्राबल्येन तदा द्वेषोत्पत्तेरेव सर्वसम्मतत्वात् । यच्चोक्तं तत्र इच्छोत्पादस्य इष्टत्वात् शपथनिर्णेयत्वात् क्षणविलम्बस्येति तदपि न द्वेषोत्पत्तिद्वितीयक्षणोत्पन्नेष्टसाधनताज्ञानेनेच्छोत्पत्तेः सर्वैरेवाङ्गीकृतत्वात् कस्मिन्नपि मते क्षणविलम्बाप्रसक्त्या क्षणविलम्बस्य शपथनिर्णेयत्वात् कीर्तनानौचित्यादिति ॥ **बलवद्द्विष्टाजनकज्ञानमिति** ॥ अत्रापि समवायेन तद्धर्मावच्छिन्नविशेष्यकचिकीर्षां प्रति एककालावच्छिन्नैकात्मवृत्तित्वस्वविषयतावच्छेदकत्वोपलक्षितधर्मावच्छिन्ननिरूपितसाधनताभावप्रकारतानिरूपिततद्धर्मावच्छिन्नविशेष्यताकत्वोभयसंबन्धेन बलवद्द्वेषविशिष्टज्ञानत्वेन समवायेन कारणत्वमिति निष्कृष्टार्थः । तेन पुरुषान्तरीयकालान्तरीयबलवद्द्वेषमादाय नानुपपत्तिः । अत्र युद्धादौ बलवदनिष्टानुबन्धित्वसंशयेऽपि इच्छादेरुत्पत्त्या संशयनिश्चयसाधारणबलवदनिष्टाननुबन्धित्वज्ञानत्वेन हेतुत्वं वाच्यम् तादृशज्ञाने अप्रामाण्यनिश्चये सतीच्छाया अनुदयेन बलवदनिष्टाननुबन्धित्वाभाववद्विशेष्यकत्वविशिष्टबलवदनिष्टाननुबन्धित्वप्रकारकत्वरूपाप्रामाण्यप्रकारकनिश्चयानास्कन्दितत्वमपि निरुक्तकारणतावच्छेदककोटौ निवेशनीयमिति महागौरवं तादृशज्ञानस्य प्रतिबन्धकत्वे बलवदनिष्टाननुबन्धित्वप्रकारकनिश्चयत्वस्यैवोक्तयुक्त्या प्रतिबन्धकतावच्छेदकत्वावश्यकतया तत्र संशयनिश्चयसाधारणा-

## दिनकरीयम्.

द्यद्वेषानुत्तेरच्छायां तु तद्धर्मप्रकारकद्वेषाभावः कारणमिति निष्कर्षो बोध्यः। मूले कस्यचिन्मते इत्यनेनास्वरसः सूचितः। नच बलवदनिष्टाननुबन्धित्वज्ञानस्य हेतुतावच्छेदकत्वं बलवदनिष्टजनकत्वप्रकारतानिरूपिताभावविशेष्यताशालित्वादेस्तादृशानिरूप्यनिरूपकभावघटितत्वेन गौरवात्तदघटितबलवदनिष्टसाधनत्वज्ञानाभावत्वेनैव हेतुत्वं युक्तम्। नचाप्रामाण्यज्ञानानास्कन्दितबलवदनिष्टाननुबन्धित्वज्ञानत्वापेक्षयाऽप्रामाण्यनिश्चयानास्कन्दिततदनुबन्धित्वज्ञानत्वस्य प्रतिबन्धकतावच्छेदकत्वे गौरवमिति वाच्यं युद्धादौ बलवदनिष्टसाधनत्वसन्देहेऽपीच्छाप्रवृत्त्योरुदयात् बलवदनिष्टानुबन्धित्वनिश्चयस्यैवेच्छाप्रतिबन्धकतायास्तदननुबन्धित्वसंशयस्यापि च कारणतायाश्च वाच्यतया च विपरीतगौरवादिति । नच बलवदनिष्टाननुबन्धित्वज्ञानस्याप्रवर्तकत्वे

## प्रभा.

प्रामाण्यज्ञानत्वावच्छिन्नस्यैव उत्तेजकत्वेन तादृशज्ञानत्वावच्छिन्नानास्कन्दितत्वविशिष्टबलवदनिष्टानुबन्धित्वप्रकारकनिश्चयत्वावच्छिन्नप्रतियोगिताकाभावत्वस्य कारणतावच्छेदकत्वेनातिलाघवम् । बलवदनिष्टानुबन्धित्वनिश्चयः बलवदनिष्टाननुबन्धित्वज्ञानं च यदा नास्ति तदा इच्छोत्पत्त्यपलापश्चेत्यस्वरसं हृदि निधाय मूलकृता कस्यचिन्मत इत्युक्तमिति ध्येयम् । ननु बलवदनिष्टाननुबन्धित्वज्ञानस्य हेतुत्वे तस्य विध्यर्थत्वानुपपत्तिः प्रवृत्तिजनकेच्छाजनकज्ञानविषयस्यैव विध्यर्थत्वात् । नचेष्टापत्तिः न कलञ्जं भक्षयेदित्यादिवाक्यानामप्रामाण्यप्रसङ्गादिति चेन्न तज्ज्ञानस्य प्रवृत्त्यजनकत्वेऽपि प्रवृत्तिजनकेच्छाप्रतिबन्धकज्ञानविघटकत्वेन प्रवृत्तिप्रयोजकतया तद्विषयस्य तस्य विध्यर्थत्वोपपत्तेः । केचित्तु यद्यपि यत्र प्रथमक्षणे द्वेषः द्वितीयक्षणे फलेच्छा तृतीयक्षणे फलसाधनताज्ञानं तत्र तृतीयक्षणे द्वेषनाशाद्भवत्येव चतुर्थक्षणे उपायेच्छा यत्र फलेच्छादिक्रमेणैवैषामुत्पत्तिः तत्र फलेच्छादिरूपकारणाभावादेव नोपायेच्छा एवमन्यत्रापि आत्मविशेषगुणानां यौगपद्यानङ्गीकारादिति बलवदनिष्टानुबन्धित्वज्ञानस्य द्वेषस्य वा प्रतिबन्धकत्वं न युक्तं अयुक्तं च बलवदनिष्टाननुबन्धित्वज्ञानस्य हेतुत्वं तथापि द्वित्रिक्षणान्तरितेऽपि द्वेषे इच्छाप्रवृत्त्योरनुदयस्यानुभाविकतया ज्ञानयोरेव न यौगपद्यमित्यभ्युपगमाद्वा पूर्वोक्तप्रतिबन्धकत्वस्य हेतुत्वस्यावश्यकत्वमिति ध्येयमित्याहुस्तदसत् इच्छां प्रति उक्तप्रणाळ्या द्वेषस्य प्रतिबन्धकत्वासंभवेऽपि बलवदनिष्टाननुबन्धित्वज्ञानस्य हेतुत्वासंभवेऽपि च बलवदनिष्टानुबन्धित्वज्ञानप्रतिबन्धकत्वस्य मुक्तावलीस्थान्य इत्यनेन सूचितास्वरसबीजप्रदर्शनावसरे सयुक्तिकं व्यवस्थापितत्वेन यद्यपीत्याद्याक्षेपग्रन्थासङ्गतेः । यच्च द्वित्रिक्षणान्तरितेऽपि द्वेषेच्छाप्रवृत्त्योरनुदयस्यानुभाविकतयेति तदसङ्गतं द्वेषे द्वित्रिक्षणान्तरिते सति द्वेषनाशोत्तरद्वितीयक्षणे तृतीयक्षणे वा प्रतिबन्धकीभूतद्वेषाभावसत्त्वे इच्छोत्पादकसामग्रीसत्त्वे चेच्छोत्पत्तेरावश्यकतया तत्काले इच्छानुत्पत्तेरानुभाविकत्वप्रदर्शनानौचित्यात् । यदि चोक्तसकलकारणसत्त्वेऽपि प्रतिबन्धकान्तरसमवधानवशात् तत्रेच्छाया अनुत्पत्तिः तदा बलवद्द्वेषातिरिक्तस्यैव प्रतिबन्धकत्वप्राप्त्या उक्तानुभवस्तु द्वेषस्य प्रतिबन्धकत्वासाधक एव । यच्च ज्ञानयोरेव न यौगपद्यमित्यभ्युपगमाद्वेति तदप्यसङ्गतं ज्ञानयोर्यौगपद्यासंभवस्येव ज्ञानेच्छाकृत्यादीनामपि यौगपद्यासंभवस्य सप्रमाणत्वात् । तथाहि मनसोऽणुत्वेन चक्षुरादिभिस्सह एकदा मनस्संयोगासंभवेन न एकदा चाक्षुषादिप्रत्यक्षाणामुत्पत्तिः चाक्षुषादिसामग्र्या मानसप्रतिबन्धकतया न तदा मानसोत्पत्तिः समानविषयकप्रत्यक्षसामग्र्याः प्राबल्येन तत्काले नानुमित्याद्युत्पत्तिः भिन्नविषयकानुमितिसामग्र्याः प्राबल्येन तदा तादृशप्रत्यक्षाद्युत्पत्तिः घटपटाद्युभयविषयकचाक्षुषादिसामग्रीकाले तावत्पदार्थविषयकमेव चाक्षुषादिज्ञानं जायते न चाक्षुषद्वयं स्पार्शनादिद्वयं वा समूहालम्बनज्ञानस्वीकारवैफल्यापत्तेः । एवं ज्ञानेच्छादेरपि न यौगपद्यसंभवः आत्ममनस्संयोगनिष्ठज्ञानाद्युत्पादकतावच्छेदकवैजात्यानां परस्परं भिन्नत्वात् अन्यथा इच्छाद्युत्पत्तिकाले नियमेन ज्ञानोत्पत्त्यापत्तेः तस्मात् ज्ञानयोरिव ज्ञानेच्छाकृत्यादीनामपि यौगपद्यासंभवस्यापि सुसिद्धान्ततया ज्ञानाद्युत्पत्तिकाले द्वेषोत्पत्तिमङ्गीकृत्य तस्येच्छाप्रतिबन्धकत्वोपपादनं वन्ध्यापुत्रस्य सामर्थ्योपपादनतुल्यमिति ॥ १४८ ॥

द्विष्टसाधनताबुद्धिरिति मूलस्थद्विष्टपदस्य यथाश्रुतार्थकत्वे वक्ष्यमाणदूषणं हृदि निधाय तत्पदं बलवद्द्विष्टपरतया

## दिनकरीयम्.

तद्विषयस्य विध्यर्थत्वाभावान्न कलञ्जं भक्षयेदित्यादिवाक्यानामप्रामाण्यापत्तिरिति वाच्यं तज्ज्ञानस्य प्रवृत्तिजनकत्वाभावेऽपि प्रवृत्तिप्रतिबन्धकबलवदनिष्टसाधनत्वज्ञानविघटकत्वेन प्रवृत्तिप्रयोजकत्वात् प्रवृत्तिप्रयोजकज्ञानविषयस्य विध्यर्थत्वानपायात् । अत्र यद्यपि यत्र प्रथमक्षणे द्वेषः द्वितीयक्षणे फलेच्छा तृतीयक्षणे फलसाधनताज्ञानं तत्र तृतीयक्षणे द्वेषनाशात् भवत्येव चतुर्थक्षणे उपायेच्छा यत्र फलेच्छादिक्रमेणैषामुत्पत्तिस्तत्र फलेच्छारूपकारणाभावादेव नोपायेच्छा एवमन्यत्रापि आत्मविशेषगुणानां यौगपद्यानङ्गीकारादिति बलवदनिष्टानुबन्धित्वज्ञानस्य द्वेषस्य वा प्रतिबन्धकत्वं न युक्तम् न युक्तं च बलवदनिष्टाननुबन्धित्वज्ञानस्य हेतुत्वं तथापि द्वित्रिक्षणान्तरितेऽपि द्वेषे इच्छाप्रवृत्त्योरनुदयस्यानुभविकतया ज्ञानयोरेव न यौगपद्यमित्यभ्युपगमाद्वा पूर्वोक्तप्रतिबन्धकत्वस्य हेतुत्वस्य चावश्यकत्वमिति ध्येयम् ॥ १४८ ॥

द्विष्टसाधनताबुद्धिर्भवेत् द्वेषस्य कारणम् ।
प्रवृत्तिश्च निवृत्तिश्च तथा जीवनकारणम् ॥ १४९ ॥
एवं प्रयत्नत्रैविध्यं तान्त्रिकैः परिकीर्तितम् ।
चिकीर्षा कृतिसाध्येष्टसाधनत्वमतिस्तथा ॥ १५० ॥
उपादानस्य चाध्यक्षं प्रवृत्तौ जनकं भवेत् ।

द्वेषं निरूपयति ॥ द्विष्टेति ॥ दुःखोपायविषयकं द्वेषं प्रति बलवद्विष्टसाधनताज्ञानं कारणमित्यर्थः । बलवदिष्टसाधनताज्ञानं प्रतिबन्धकं तेन नान्तरीयकदुःखजनके पाकादौ न द्वेषः । प्रयत्नं निरूपयति ॥ प्रवृत्तिरिति ॥ प्रवृत्तिनिवृत्तिजीवनयोनियत्नभेदात् प्रयत्नस्त्रिविध इत्यर्थः ॥ चिकीर्षेति ॥ मधुविषसम्पृक्तान्नभोजनादौ बलवदनिष्टानुबन्धित्वेन चिकीर्षाभावान्न प्रवृत्तिरिति भावः । कृतिसाध्यताज्ञानादिवद्बलवदनिष्टाननुबन्धित्वज्ञानम-

प्रभा.

व्याचष्टे ॥ बलवद्विष्टेति ॥ तेनेति ॥ मूलस्थद्विष्टपदस्य एतादृशार्थकरणेनेत्यर्थः ॥ नान्तरीयकदुःखजनक इति ॥ प्रकृतकार्यनियतपूर्ववृत्तिप्रकृतकार्याजनकदुःखजनकेत्यर्थः । तत्र द्विष्टसाधनताज्ञानजन्यतावच्छेदकतया द्वेष्मीत्यनुगतप्रतीत्या वा सिद्धजातिविशेषरूपमेव द्वेषत्वमिति बोध्यम् ॥ प्रवृत्तिनिवृत्तिजीवनयोनियत्नभेदादिति ॥ त्रितयसाधारणप्रयत्नत्वं च प्रयत्नपदशक्यतावच्छेदकतया सिद्धो जातिविशेषः प्रवृत्तित्वं कार्यसामान्यजनकतावच्छेदकतया प्रवृत्तिपदशक्यतावच्छेदकतया वा सिद्धो जातिविशेषः निवृत्तित्वं च बलवद्द्वेषजन्यतावच्छेदकतया तत्पदशक्यतावच्छेदकतया वा सिद्धो जातिविशेषः जीवनयोनियत्नत्वं च स्वाभाविकप्राणसञ्चारजनकतावच्छेदकतया तादृशपदशक्यतावच्छेदकतया वा सिद्धो जातिविशेषः जीवनयोनियत्नपदस्य योगरूढत्वेन तादृशवैजात्यावच्छिन्न एव रूढिस्वीकारात् । केचित्तु प्रवृत्तित्वं रागजन्यतावच्छेदकतया सिद्धो जातिविशेष इत्याहुः तदसत् ईश्वरप्रयत्नस्याजन्यतया तादृशवैजात्यस्य तत्साधारण्यानुपपत्तिः । नचेष्टापत्तिः ईश्वरीयप्रयत्नस्य त्रैविध्यानाश्रयतया यत्नस्य चातुर्विध्यापत्तेः । चिकीर्षा कृतिसाध्येष्टसाधनत्वमतिस्तथा उपादानस्य चाध्यक्षमित्यादिमूलेन प्रवृत्तौ उक्तत्रयाणां हेतुत्वं प्रतिपादितम् । अत्र केवलसमवायसंबन्धेन प्रवृत्तित्वं न जन्यतावच्छेदकं ईश्वरीयप्रयत्नवृत्तित्वात् किन्तु समवायकालिकोभयसंबन्धेन तथा बोध्यम् । वस्तुत ईश्वरीयप्रयत्नव्यावृत्तप्रवृत्तित्वव्याप्यः रागजन्यतावच्छेदकतया सिद्धजातिविशेष एव समवायेन कार्यतावच्छेदक इति । तादृशप्रवृत्तौ चिकीर्षायास्साक्षात्कृतिसाध्यत्वज्ञानेष्टसाधनत्वज्ञानयोः चिकीर्षाद्वारा हेतुत्वमिति बोध्यम् इष्टसाधनत्वज्ञानं विना चिकीर्षाया अनुदयात् इष्टसाधनताज्ञानस्य चिकीर्षाद्वारा हेतुत्वेऽपि राजकीयान्दोलिकाद्यारोहणादौ कृतिसाध्यताज्ञानं विनापि केवलेष्टसाधनत्वज्ञानमात्रेणेच्छोत्पत्तेरनुभवसिद्धतया चिकीर्षाया इव कृतिसाध्यताज्ञानस्यापि साक्षात्प्रवृत्तिहेतुत्वं तदभावादेव निरुक्तारोहणादौ न प्रवृत्तिरित्यस्मद्गुरुचरणाः । ननु विषसम्पृक्तान्नभक्षणादौ प्रवृत्त्यापत्तिर्निरुक्तसकलकारणसत्वात् इत्याशङ्कां चिकीर्षारूपकारणाभावप्रदर्शनेन स्वयं परिहरति ॥ मधुविषेत्यादि ॥ तथाच चिकीर्षां प्रति बलवदनिष्टानुबन्धित्वज्ञानस्य प्रतिबन्धकतया विषसम्पृक्तान्नभक्षणादौ प्रतिबन्धकाभावरूपकारणाभावात् चि

दिनकरीयम्.

तेन द्वेषे बलवत्त्वविशेषणेन ॥ प्रवृत्तिरित्यादि ॥ प्रवृत्तित्वं च रागजन्यतावच्छेदकतया सिद्धो जातिविशेषः । निवृत्तित्वं च द्वेषजन्यतावच्छेदकतया सिद्धो जातिविशेषः । जीवनयोनियत्नत्वं च साहाजिकप्राणसञ्चारविषयकयत्नत्वम् । ननु बलवदनिष्टानुबन्धित्वज्ञानाभावस्य प्रवृत्त्यहेतुत्वे मधुविषसम्पृक्तान्नभोजने प्रवृत्त्यापत्तिरत आह ॥ मध्विति ॥ चिकीर्षाभावादिति ॥ चिकीर्षां प्रति बलवदनिष्टानुबन्धित्वज्ञानाभावस्य हेतुत्वादिति भावः ॥ कृतिसाध्यताज्ञानादिवदिति ॥ अन्यथा कृतिसाध्यताज्ञानादे-

पि स्वतन्त्रान्वयव्यतिरेकाभ्यां प्रवृत्तौ कारणमित्यपि वदन्ति । कार्यताज्ञानं प्रवर्तकमिति गुरवः । तथा हि ज्ञानस्य प्रवृत्तौ जननीयायां चिकीर्षातिरिक्तं नापेक्षितमस्ति सा च कृतिसाध्यताज्ञानसाध्या इच्छायाः स्वप्रकारकधीसाध्यत्वनियमात् चिकीर्षा हि कृतिसाध्यत्वप्रकारिकेच्छा तत्र कृतिसाध्यत्वं प्रकारस्तत्प्रकारकं ज्ञानं चिकीर्षायां तद्द्वारा च प्रवृत्तौ हेतुः न त्विष्टसाधनताज्ञानं तत्र हेतुः कृत्यसाध्येऽपि चन्द्रमण्डलानयनादौ प्रवृत्त्यापत्तेः । ननु कृत्यसाध्यताज्ञानं प्रतिबन्धकमिति चेन्न तदभावापेक्षया कृतिसाध्यत्वज्ञानस्य लघुत्वात् नच द्वयोरेव हेतुत्वं गौरवात् । ननु त्वन्मतेऽपि मधुविषसम्पृक्तान्नभोजने चैत्यवन्दने च प्र-

## प्रभा.

कीर्षानुत्पत्त्या न प्रवृत्तिरिति भावः । मतान्तरमाह ॥ **कृतिसाध्यताज्ञानादिवदिति** ॥ आदिना चिकीर्षादिपरिग्रहः ॥ **स्वतन्त्रान्वयव्यतिरेकादिति** ॥ किञ्चिदद्वारकान्वयव्यतिरेकज्ञानसहकृतमनस्सन्निकर्षादित्यर्थः ॥ **प्रवृत्तौ कारणमिति** ॥ निर्णीतप्रवृत्तिनिरूपितकारणतावदित्यर्थः । अत्र गुरुचरणप्रदर्शितयुक्त्या कृतिसाध्यताज्ञानस्य साक्षात्प्रवृत्तिहेतुत्वेऽपि बलवदनिष्टाननुबन्धित्वज्ञानस्य साक्षान्न तथात्वसंभवः बलवदनिष्टानुबन्धित्वज्ञाने सति चिकीर्षाया एवानुत्पत्तेर्नच स्वातन्त्र्येणान्वयव्यतिरेकाभावात् तस्य साक्षात्तथात्वासंभवेऽपि इष्टसाधनताज्ञानवच्चिकीर्षाद्वारा हेतुत्वमावश्यकमिति वाच्यम् । चिकीर्षां प्रति बलवदनिष्टानुबन्धित्वज्ञानाभावस्य हेतुत्वस्वीकारेणैव सामञ्जस्ये निरुक्ताननुबन्धित्वज्ञानस्य हेतुत्वाकल्पनात् । अन्यथा यदा बलवदनिष्टानुबन्धित्वज्ञानं तदननुबन्धित्वज्ञानं च नास्ति तदा सर्वानुभवासिद्धचिकीर्षापलापप्रसङ्ग इत्यस्वरसं हृदि निधायापिवदन्तीत्युक्तामिति ध्येयम् । इष्टसाधनताज्ञानादीनां साक्षात्परम्परया वा प्रवृत्तिहेतुत्वमुपपाद्य इष्टसाधनत्वादीनां त्रयाणां विध्यर्थत्वव्यवस्थापनाय कार्यताज्ञानमात्रस्य प्रवर्तकत्वमङ्गीकृत्य कार्यत्वमात्रस्य विध्यर्थत्ववादिप्राभाकरमतं निरासितुं आदौ उपन्यस्यति ॥ **कार्यताज्ञानमित्यादि** ॥ कार्यताज्ञानमेवेत्यर्थः ॥ **प्रवर्तकमिति** ॥ चिकीर्षाद्वारा प्रवृत्तिसाधकमित्यर्थः ॥ **गुरव इति** ॥ वदन्तीति शेषः ॥ **ज्ञानस्येति** ॥ कार्यताज्ञानस्येत्यर्थः ॥ **चिकीर्षातिरिक्तमिति** ॥ चिकीर्षारूपव्यापारभिन्नमित्यर्थः ॥ **नापेक्षितमस्तीति** ॥ सहकारिकारणं किमपि नास्तीत्यर्थः । तथाच कार्यताज्ञानमिष्टसाधनताज्ञानासहकृतं सत् चिकीर्षाद्वारा प्रवृत्तिजननसमर्थमिति फलितार्थः । यथाश्रुते आत्ममनस्संयोगादेरपि कारणत्वात् असाङ्गत्यापत्तेः । चिकीर्षाया व्यापारत्वमुपपादयति ॥ **साचेति** ॥ चिकीर्षेत्यर्थः । एवार्थकचकारः साध्येत्युत्तरं योज्यः । अत्र हेतुमाह ॥ **इच्छाया इति** ॥ चिकीर्षाया इत्यर्थः ॥ **स्वप्रकारकधीसाध्यत्वानियमादिति** ॥ स्वं चिकीर्षा तस्यां प्रकार एव प्रकारो यस्यां सा स्वप्रकारकधीः ॥ **तत्साध्यत्वनियमादिति** ॥ अन्वयव्यतिरेकाभ्यां तज्जन्यत्वावश्यकत्वादित्यर्थः कृत्यसाध्यताज्ञाने सति चिकीर्षानुदयादिति भावः । उक्तरीत्या कृतिसाध्यताज्ञानस्य हेतुत्वं व्यवस्थापयितुं उक्तमपि चिकीर्षापदार्थं पुनस्स्मारयति ॥ **चिकीर्षा हीति** ॥ हि यतः । तथाच यतः चिकीर्षा कृतिसाध्यत्वप्रकारकेच्छारूपेत्यर्थः ॥ **तत्रेति** ॥ अत इत्यादिः । चिकीर्षायामित्यर्थः ॥ **तद्द्वारेति** ॥ चिकीर्षाद्वारेत्यर्थः ॥ **प्रवृत्ताविति** ॥ प्रवृत्तावपीत्यर्थः । निरुक्तमिष्टसाधनत्वज्ञानासहकृतत्वं प्रकाशयति ॥ **नत्विति** ॥ **इष्टसाधनताज्ञानमिति** ॥ इष्टसाधनत्वादिज्ञानमित्यर्थः । आदिना बलवदनिष्टाननुबन्धित्वपरिग्रहः ॥ **तत्रेति** ॥ प्रवृत्तावित्यर्थः ॥ अन्यथासिद्धत्वादिति हेतुः पूरणीयः । शङ्कते ॥ **कृत्यसाध्येऽपीति** ॥ **तदभावापेक्षयेति** ॥ **कृतिसाध्यताज्ञानस्येति** ॥ तादृशज्ञानस्येत्यर्थः । **लघुत्वादिति** ॥ लघुरूपत्वादित्यर्थः ॥ **नचेति** ॥ नहीत्यर्थः ॥ **द्वयोरेवेति** ॥ निरुक्ताभावत्वज्ञानत्वाभ्यां इत्यादिः । तादृशाभाव-

## दिनकरीयम्.

रपि चिकीर्षायामेव हेतुत्वं स्यान्न तु प्रवृत्तौ व्यापारेण व्यापारिणो नान्यथासिद्धत्वमिति तु प्रकृतेऽपि समानमिति भावः । प्राभाकरमतमाह ॥ **कार्यताज्ञानमिति** ॥ **सा च** चिकीर्षा च ॥ **तद्द्वारा** कृतिसा-

**वृत्त्यापत्तिः कार्यताज्ञानस्य सत्त्वादिति चेन्न स्वविशेषणवत्ताप्रतिसन्धानजन्यकार्यताज्ञानस्य प्रवर्तकत्वात् । काम्ये हि पाकयागादौ कामना स्वविशेषणं ततश्च बलवदनिष्टाननुबन्धिका—**

**प्रभा।**

ज्ञानयोरपीत्यर्थः ॥ **गौरवादिति** ॥ निरुक्ताभावत्वस्य गुरुरूपत्वादित्यर्थः । तथाच द्वयोर्लघुधर्मरूपत्वे विनिगमनाविरहेण निरुक्तज्ञानत्वेनेव निरुक्ताभावत्वेनापि हेतुत्वमापद्येत नचैवं निरुक्ताभावत्वस्य गुरुरूपत्वादिति भावः । नचैवं सति कृत्यसाध्यताज्ञानं कृतिसाध्यताज्ञानं च यदा नास्ति तदा चिकीर्षाकृत्योरनुदयप्रसङ्ग इति वाच्यं इष्टापत्तेः अज्ञातार्थविषयकचिकीर्षापत्तिवारणाय तत्प्रकारकचिकीर्षां प्रति तत्प्रकारकज्ञानहेतुताया आवश्यकत्वात् ॥ **त्वन्मतेऽपीति** ॥ अपिशब्दः प्रवृत्त्यापत्तिरित्युत्तरं योज्यः । प्राभाकरमत इत्यर्थः ॥ **प्रवृत्त्यापत्तिरिति** ॥ चिकीर्षापत्तिस्तद्द्वारा प्रवृत्त्यापत्तिश्चेत्यर्थः ॥ **कार्यताज्ञानसत्त्वादिति** ॥ कृतिसाध्यताज्ञानसत्त्वादित्यर्थः ॥ **स्वविशेषणवत्तेत्यादि** ॥ स्वं प्रवृत्त्याश्रयः पुरुषः तद्विशेषणं तत्र वर्तमानः स्वाभिमतधर्मः सच धर्मः काम्ये कामना नित्ये शौचादीति वक्ष्यते तद्वत्ता तत्संबन्धः तत्प्रतिसन्धानं तन्निश्चयः लिङ्गज्ञानविधया तज्जन्यं यत् कार्यताज्ञानं कृतिसाध्यत्वप्रकारकानुमितिरित्यर्थः ॥ तादृशज्ञानस्यैवेत्यर्थः ॥ **प्रवर्तकत्वादिति** ॥ चिकीर्षाद्वारा प्रवृत्तिहेतुत्वस्वीकारादित्यर्थः। कृतिसाध्यत्वानुमानं चेत्थं यागादिर्मत्कृतिसाध्यः मत्कृतिं विनाऽसत्त्वे सति मदिष्टसाधनत्वात् भोजनादिवत् यन्नैवं तन्नैवं यथा गगनादीति। अत्र वृष्ट्यादौ व्यभिचारवारणाय प्रथमसत्यन्तं मदिष्टसाधनपरकृतिपाकादौ व्यभिचारवारणाय तद्दलघटककृतौ मदीयत्वनिवेशः । श्रमे व्यभिचारवारणाय विशेष्यं मदीयश्रमस्य शत्रोरिष्टसाधनत्वात् तद्दलघटकेष्टे मदीयत्वविशेषणम् । नचेयमनुमितिः कथं स्वविशेषणवत्ताज्ञानजन्येति वाच्यं स्वविशेषणकामनावत्त्वस्य कामना-

**दिनकरीयम्।**

ध्यत्वप्रकारकेच्छाद्वारा ॥ **द्वयोरेवेति** ॥ एवकारोऽप्यर्थे ॥ **स्वविशेषणेति** ॥ स्वं प्रवर्तमानः पुरुषस्तद्विशेषणं काम्ये कामना नित्ये कालशौचादि तद्वत्ता पक्षे तत्सम्बन्धः तस्य प्रतिसन्धानं ज्ञानमित्यर्थः । तस्य कार्यताज्ञानहेतुता लिङ्गज्ञानविधया तथाहि पाको मत्कृतिसाध्यः मत्कृतिं विनाऽसत्त्वे सति मदिष्टसाधनत्वादित्यनुमानम् । अत्र मदिष्टसाधनत्वमात्रोपादाने वृष्ट्यादौ व्यभिचार इति सत्यन्तम् । मदिष्टसाधने परकृतपाकादौ व्यभिचारवारणाय मत्कृतिं विनेत्यत्र मत्पदम् । श्रमे व्यभिचारवारणाय मदिष्टसाधनत्वादिति । मदीयश्रमस्य मच्छत्रोरिष्टसाधनत्वात्तद्दोषतादवस्थ्यमतस्तत्रापि मदिति । नच स्वेच्छाधीनकृतिसाध्यताज्ञानमेव प्रवर्तकमन्यथा नान्तरीयकश्रमे प्रवृत्त्यापत्तेस्तच्चोक्तानुमानान्न सिद्धमिति वाच्यं स्वेच्छाधीनकृतिसाध्यत्वस्यैव साध्यत्वात् । एवं च हेतावपि मत्कृतिं विनेत्यत्र स्वेच्छाधीनत्वं मत्कृतिविशेषणं देयम् । अन्यथाऽन्येच्छाधीनमत्कृतिसाध्ये मदिष्टसाधने नान्तरीयकजलसंयोगादौ व्यभिचारापत्तेः। एवं सति स्वेच्छाधीनमत्कृतिघटितहेत्वभावादेव श्रमे व्यभिचारवारणसम्भवात् विशेष्यदलप्रयोजनं यद्यपि न सम्भवति तथापि नीलधूमादिवद्धेत्वन्तरत्वाददोषः । एवमहमिदानीन्तनकृतिसाध्यसन्ध्यावन्दनः द्विजातित्वे सति विहितसन्ध्याकालीनशौचादिमत्त्वादित्यनुमानं यो द्विजातित्वे सति विहितसन्ध्याकालीनशौचादिमान् स तत्कालीनकृतिसाध्यसन्ध्यावन्दन इति सामान्यतो व्याप्तिरिति । नचैवंरीत्येष्टसाधनत्वहेतुकानुमानसम्भवेऽपि पक्षे स्वविशेषणवत्ताप्रतिसन्धानजन्यकार्यताज्ञानं न सम्भवति इष्टसाधनत्वस्य यागनिष्ठत्वेन पुरुषविशेषणत्वाभावात् इच्छायाश्च पुरुषविशेषणत्वेऽपि तस्या लिङ्गत्वासम्भवात् लिङ्गघटकत्वेऽपि पक्षे तद्वत्ताज्ञानानिर्वाहकत्वादिति वाच्यं काम्यसाधनताज्ञानस्यापि पक्षे यागादौ स्वविषयसाधनत्वरूपकामनासम्बन्धज्ञानात्मकत्वात् । वस्तुतस्तद्वत्ताज्ञानं तत्सम्बन्धज्ञानं तज्ज्ञानमेव वा न तु पक्षोऽपि तत्रान्तर्भूत इति काम्यसाधनताज्ञानस्यापि कामनासम्बन्धज्ञानात्मकतया कामनाज्ञानात्मकतया वानुपपत्त्यभावात् ।नतु स्वविशेषणवत्ताप्रतिसन्धानजन्यकार्यताज्ञानस्य प्रवर्तकत्वे इष्टसाधनताज्ञानशून्यकालेऽपि पाके स्वविशेषणकृत्यादिघटितहेत्वन्तरायत्र कार्यतानुमितिर्यथा पाकः स्वेच्छाधीनमत्कृतिसाध्यः श्रमादिभिन्नत्वे सति मत्कृतिव्यतिरेकप्रयुक्तव्यतिरेकप्रतियोगित्वात् यद्वा स्वेच्छाधीनमत्कृतिं विनाऽसत्त्वादिति तत्रापि प्रवृत्त्यापत्तिरत आह ॥ **काम्ये हीति** ॥ **कामना** यागपाकादिगोचरकामना ।

**भ्यसाधनताज्ञानेन कार्यताज्ञानं ततश्च प्रवृत्तिः। तृप्तश्च भोजने न प्रवर्तते तदानीं कामनायाः**

## प्रभा.

संबन्धरूपतया कामनाविषयसाधनत्वस्यापीष्टसाधनत्वपर्यवसितस्य कामनासंबन्धात्मकतया तद्घटितलिङ्गज्ञान-जन्यत्वेन स्वविशेषणवत्ताप्रतिसन्धानजन्यत्वाक्षतेः । नच निरुक्तप्रतिसन्धानजन्यकेवलकार्यताज्ञानस्य प्रवर्तकत्वे नान्तरीयकश्रमे प्रवृत्त्यापत्त्या निरुक्तहेतुना स्वेच्छाधीनकृतिसाध्यत्वं प्रसाध्य निरुक्तप्रतिसन्धानज-न्यस्वेच्छाधीनकृतिसाध्यत्वज्ञानस्य प्रवर्तकत्वं वाच्यं तच्च न संभवति स्वेच्छाधीनकृतिसाध्यत्वरूपसाध्याभा-ववत्यन्येच्छाधीनमत्कृतिसाध्यमदिष्टसाधनत्वप्रतितान्नभक्षणादौ निरुक्तहेतुसत्त्वेन व्यभिचारादिति वाच्यं हेतुघटककृतावपि स्वेच्छाधीनत्वस्य विशेषणीयत्वात् । नचैवंसति नान्तरीयकश्रमे स्वेच्छाधीनमत्कृतिं विना असत्त्वरूपसत्यन्ताभावेनैव व्यभिचाराप्रसक्तेः विशेष्यदळं व्यर्थमिति वाच्यं अळीके व्यभिचारवारकतया तद्दळसार्थक्यात् । नच तत्र व्यभिचारवारणाय सत्त्वमेव विशेष्यमस्तु लाघवादिति वाच्यं सत्त्वेष्टसाधनत्वयोर्विरुद्धत्वेन सामानाधिकरण्याभावेन धूमत्वधूमप्रागभावत्वयोरि-वोभयोरपि व्याप्यतावच्छेदकत्वसंभवान्नैकेनापरहेतोर्वैयर्थ्यम् । एवं चैवः विध्युक्तकालीनकृतिसा-ध्यसन्ध्यावन्दनकः द्विजत्वे सति विध्युक्तकालीनशौचादिमत्त्वात् यो द्विजत्वे सति विध्युक्तकाली-नशौचादिमान् स विध्युक्तकालीनकृतिसाध्यसन्ध्यावन्दनकः यथाहमित्यनुमानान्नित्ये कार्यताज्ञानं संभवतीति बोध्यम्। ननु यागादिः स्वेच्छाधीनमत्कृतिसाध्यः स्वेच्छाधीनमत्कृतिव्यतिरेकप्रयुक्तव्यतिरेकप्रति-योगित्वात् स्वेच्छाधीनमत्कृतिं विना असत्त्वे सति सत्त्वाद्वा इत्यनुमानाज्जायमानस्वेच्छाधीनकृतिप्रकारकानुमि-त्यात्मकज्ञानादपि प्रवृत्त्यापत्तिः तादृशानुमितेरपि कृतिरूपस्वविशेषणघटितहेतुप्रतिसन्धानजन्यत्वात्। नचेष्टाप-त्तिः इष्टसाधनताज्ञानशून्यकालीनतादृशकार्यताज्ञानस्य प्रवृत्तिहेतुतायास्सर्वमतविरुद्धत्वादत आह ॥ **काम्ये हीति** ॥ यागपाकादावित्यर्थः । हि यतः ॥ **कामनेति** ॥ कामनैवेत्यर्थः ॥ **स्वविशेषणमिति** ॥ स्वविशेष-णशब्देन विवक्षितेत्यर्थः। एवं विशेषणशब्दोत्तरप्रत्ययेन स्वविषयसाधनतैव विवक्षितेत्यर्थः अतो नोक्तदोष इति शेषः । तथाच स्वविशेषणवत्ताप्रतिसन्धानशब्देन कामनाविषयसाधनताज्ञानस्यैव विवक्षितत्वात् नि-रुक्तहेतुककार्यत्वानुमितेरेतादृशज्ञानाजन्यत्वेन इष्टसाधनताज्ञानशून्यकालीननिरुक्तलिङ्गककार्यताज्ञानात् न प्रवृत्त्यापत्तिरिति भावः । नन्वेवमपि विषसम्पृक्तान्नभक्षणादौ प्रवृत्त्यापत्तिः तत्रापि स्वेच्छाधीनमत्कृतिं वि-ना असत्त्वविशिष्टमदिष्टसाधनताज्ञानजन्यस्वेच्छाधीनमत्कृतिसाध्यताज्ञानसत्त्वादत आह ॥ **ततश्चेति** ॥ तत एवेत्यर्थः। निरुक्तहेतौ बलवदनिष्टाननुबन्धित्वविशेषणादेवेत्यर्थः। हेतु शरीरे बलवदनिष्टाननुबन्धित्वविशे-षणदानेन फलितमाह ॥ **बलवदिति** ॥ **तत इति** ॥ तादृशज्ञानादित्यर्थः ॥ **प्रवृत्तिरिति** ॥ वाच्येति शेषः तथाच विषसम्पृक्तान्नभक्षणादौ बलवदनिष्टाननुबन्धित्वाभावेन तद्घटितलिङ्गज्ञानाधीनकार्यताज्ञानस्य सुतराम-भावान्न प्रवृत्त्यापत्तिरिति भावः। ननु तृप्तस्यापि भोजने प्रवृत्त्यापत्तिः तत्रापि तदीयपूर्वकालीनकामनाविषयसा-धनत्वघटितलिङ्गज्ञानाधीनकार्यताज्ञानसत्त्वादत आह ॥ **तृप्तश्चेति** ॥ एवार्थकचशब्दः नेत्युत्तरं योज्यः ॥ **न प्रवर्तत इति** ॥ नैव प्रवर्तत इत्यर्थः ॥ **तदानीमिति** ॥ तृप्तिकाल इत्यर्थः ॥ **पुरुषविशेषणत्वाभावादि-**

## दिनकरीयम्.

क्वचित्तथैव पाठः। तथा च स्वविशेषणेत्यत्र विशिष्य तादृशकामनारूपमेव स्वविशेषणं वाच्यं एवं विशेषव-त्त्वमपि स्वविषयसाधनत्वरूपं वाच्यं तेन न स्वेच्छाधीनेत्यादिद्वितीयहेतुज्ञानजन्यकार्यतानुमितिस्थले प्रवृत्त्या-पत्तिरिति भावः। ननु काम्यसाधनताज्ञानजन्यकार्यताज्ञानस्य प्रवर्तकत्वे मधुविषसम्पृक्तान्नभोजने प्रवृत्त्याप-त्तिरित्यत आह ॥ **ततश्च बलवदनिष्टेति** ॥ तथा च स्वविशेषणवत्ताप्रतिसन्धाने बलवदनिष्टाननुबन्धित्व-विषयकत्वं विशेषणं देयमिति भावः । ननु तृप्तस्यापि भोजने प्रवृत्त्यापत्तिस्तस्याप्यतीतभोजनकामनाघटि-तलिङ्गजन्यकार्यताज्ञानसत्त्वादत आह ॥ **तृप्तश्चेति** ॥ **तदानीमिति** ॥ कामनायास्तदानीं पुरुषविशेष-णत्वाभावादित्यर्थः । तथा च स्वविशेषणेत्यत्र तदानीन्तनत्वं विशेषणं देयमिति भावः । ननु स्वेच्छाधीन-मत्कृतिव्यतिरेकप्रयुक्तव्यतिरेकप्रतियोगित्वादिलिङ्गज्ञानजन्यकार्यताज्ञानात् सन्ध्यावन्दने प्रवृत्त्यापत्तिः कृतेरपि

पुरुषविशेषणत्वाभावात् । नित्ये च शौचादिकं पुरुषविशेषणं तेन शौचादिज्ञानाधीनकृति-साध्यताज्ञानात् तत्र प्रवृत्तिः । ननु तदपेक्षया लाघवेन बलवदनिष्टाननुबन्धीष्टसाधनताविषयककार्यताज्ञानमेव हेतुरस्तु बलवदनिष्टाननुबन्धित्वं चेष्टोत्पत्तिनान्तरीयकदुःखा-

## प्रभा.

ति ॥ पुरुषवृत्तित्वाभावादित्यर्थः तथाच हेतुघटककामनायां तत्कालीनत्वविशेषणदानात् तत्कालीनकामनाविषयसाधनत्वघटितलिङ्गज्ञानजन्यतादृशकार्यताज्ञानं तत्कालीनप्रवृत्तिकारणमिति फलितम् । एवंच तृप्तिकालीनपुरुषे कालविशेषघटितालिङ्गज्ञानाधीनतादृशकार्यताज्ञानरूपकारणाभावात् तृप्तिकाले न तस्य प्रवृत्तिरिति भावः।ननु सर्वमते काम्ये कर्मणि इष्टसाधनताज्ञानशून्यकाले प्रवृत्तेरननुभाविकत्वात् तदनुरोधेनैतन्मते इष्टसाधनत्वघटितालिङ्गज्ञानाधीनकार्यताज्ञानस्य प्रवर्तकत्वस्वीकारे नित्ये कर्मणि इष्टाभावेन इष्टसाधनताज्ञानं विनापि प्रवृत्तेस्सर्वानुभवसिद्धतया स्वेच्छाधीनमत्कृतिं विना असत्त्वविशिष्टसत्त्वरूपलिङ्गज्ञानाधीनकार्यताज्ञानाप्रवृत्त्यापत्तेः अत आह ॥ **नित्य इति** ॥ सन्ध्यावन्दनादावित्यर्थः ॥ **शौचादिकमिति** ॥ आदिना विहितकालजीवित्वादेः परिग्रहः ॥ **पुरुषविशेषणमिति** ॥ स्वविशेषणशब्देन विवक्षितमित्यर्थः तथाच प्रकृते शुचित्वविहितकालजीवित्वादेरेव स्वविशेषणशब्दविषयतात्पर्यार्थतया स्वरूपसंबन्धस्यैव मतुवस्तात्पर्यविषयार्थतया च शुचित्वाद्याश्रयत्वरूपलिङ्गज्ञानाधीनतादृशकार्यताज्ञानस्यैव प्रवर्तकत्वलाभान्न लिङ्गान्तरज्ञानजन्यकार्यताज्ञानात् प्रवृत्त्यापत्तिरिति भावः उक्तार्थमेव प्रकाशयति ॥ **तेनेति** ॥ स्वविशेषणशब्देन शुचित्वादेर्विवक्षितत्वेनेत्यर्थः ॥ **शौचादिज्ञानाधीनकृतिसाध्यताज्ञानादिति** ॥ तादृशज्ञानादेवेत्यर्थः ॥ **तत्रेति** ॥ सन्ध्यावन्दनादिकर्मणीत्यर्थः ॥ **प्रवृत्तिरिति** ॥ संभवतीति शेषः । नैयायिकश्शङ्कते ॥ **नन्विति** ॥ **तदपेक्षयेति** ॥ बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनताज्ञानजन्यकार्यताज्ञानत्वेन हेतुत्वापेक्षयेत्यर्थः ॥ **लाघवेनेति** ॥ जन्यत्वस्य ज्ञानत्वस्य चानिवेशप्रयुक्तलाघवेनेत्यर्थः ॥ **बलवदनिष्टाननुबन्धीष्टसाधनताज्ञानमेवेति** ॥ बलवदनिष्टाननुबन्धित्वेष्टसाधनत्वकृतिसाध्यताविषयकज्ञानमेवेत्यर्थः ॥ **हेतुरस्त्विति** ॥ निरुक्तत्रितयविषयकज्ञानत्वेन कारणं भवत्वित्यर्थः । ननु बलवदनिष्टाननुबन्धित्वज्ञानस्य प्रवृत्तिहेतुत्वे मुक्तिकामस्य तीर्थयात्रादौ स्वर्गकामस्य ज्योतिष्टोमादौ प्रवृत्त्यनुपपत्तिः कायशोषणादिरूपबलवद्दुःखसाधनत्वात् एवमत्युष्णोदकस्नानादौ प्रवृत्त्यापत्तिः अल्पदुःखसाधनत्वादित्यत आह ॥ **बलवदनिष्टाननुबन्धित्वं चेति** ॥ अवधारणार्थकचकारः दुःखाजनकत्वमित्युत्तरं योज्यः ॥ **इष्टोत्पत्तिनान्तरीयकेति** ॥ इष्टोत्पत्तिनियतपूर्ववृत्तिसाधनकर्मजन्यं यद्दुःखं तदतिरिक्तदुःखाजनकत्वरूपमेवेत्यर्थः । तथाच दुःखोत्पत्तिनान्तरीयकदुःखभिन्नदुःखत्वरूपपारिभाषिकमेव दुःखनिष्ठबलवत्त्वमिह विवक्षितमिति नोक्तानुपपत्त्यापत्तिरिति भावः । नन्वेवं स-

## दिनकरीयम्.

स्वविशेषणत्वादत आह ॥ **नित्ये शौचादिकमिति** ॥ आदिना विहिततत्कर्मकालस्य परिग्रहः न च कालस्य कथं पुरुषविशेषणत्वमिति वाच्यं स्ववृत्तिजीवनवत्त्वसम्बन्धेन तस्य पुरुषविशेषणत्वात् विहितकालजीवित्वादेर्वादिपदेन ग्रहणात् तथा च नित्यगोचरप्रवृत्तिस्थले स्वविशेषणपदेन विशेष्यतत्कालीनशुचित्वादिरूपविशेषणमेव ग्राह्यमिति न पूर्वोक्तातिप्रसङ्ग इति भावः । नैयायिकः शङ्कते ॥ **नन्विति** ॥ **तदपेक्षया** बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनताज्ञानजन्यकृतिसाध्यताज्ञानापेक्षया ॥ **लाघवेनेति** ॥ नियमादिघटितजन्यत्वापेक्षया विषयत्वस्य लघुत्वादिति भावः । ननु बलवदनिष्टाजनकत्वज्ञानं न हेतुः क्वचिद्बह्वायाससाध्ये बहुतरस्यापि दुःखस्याबलवत्त्वात् क्वचिदल्पस्य दुःखस्य बलवत्त्वादनुगतस्याबलवत्त्वस्य बलवत्त्वस्य च दुर्वचत्वादित्यत आह ॥ **बलवदनिष्टाननुबन्धित्वं चेति** ॥ **इष्टोत्पत्तीति** ॥ इष्टोत्पत्तिनान्तरीयकं यद्दुःखं तदपेक्षयातिरिक्तं यद्दुःखं तदजनकत्वमित्यर्थः । एतेन मधुविषसम्पृक्तान्नभोजने प्रवृत्त्यापत्तिरपास्ता । इष्टोत्पत्तिनान्तरीयकदुःखातिरिक्तस्य मरणदुःखस्य तेन जननात् । अत्र केचित् सुखमात्रजनके कर्मणीष्टोत्पत्तिनान्तरीयकदुःखमप्रसिद्धमिति तत्र प्रवृत्त्यभावप्रसङ्ग इति तदयुक्तम् कष्टं कर्मेति न्या-

धिकदुःखाजनकत्वं बलवद्द्वेषविषयदुःखाजनकत्वं वेति चेन्न इष्टसाधनत्वकृतिसाध्यत्वयो-र्युगपज्ज्ञातुमशक्यत्वात् साध्यत्वसाधनत्वयोर्विरोधित्वात्। असिद्धस्य हि साध्यत्वं सिद्धस्य च साधनत्वम्। नचैकमेकेनैकदा सिद्धमसिद्धं चेति ज्ञायते तस्मात्कालभेदादुभयं ज्ञायत इति

## प्रभा.

ति रागान्धस्यागम्यागमनादौ प्रवृत्त्यनुपपत्तिः अस्य तादृशनरकसाधनत्वात् इत्यस्वरसादाह ॥ **बलवद्द्वेषवि-षयेति** ॥ विजातीयद्वेषविषय इत्यर्थः तथाच दुःखे बलवत्त्वं विजातीयद्वेषविषयत्वरूपमेवेति भावः । न च प्रमाणाभावाद्द्वेषे वैजात्यं न सिध्यतीति वाच्यं इष्टसाधनताज्ञानसत्त्वेऽपि यादृशद्वेषविषयसाधनताज्ञान-रूपप्रतिबन्धकवशात् नेच्छाद्युत्पत्तिः तादृशद्वेषे इच्छाप्रतिबन्धकतावच्छेदकघटकतया वैजात्यसिद्धेर्निष्प्रत्यूह-त्वात् इत्थंचेष्टोत्पत्तिनान्तरीयकदुःखविषयकद्वेषस्य रागान्धसमवेतनरकविषयकद्वेषस्य वा तादृशत्वेन तत्र तादृशवैजात्याभावान्नोक्तानुपपत्तिरित्याशयः ॥ **इष्टसाधनत्वकृतिसाध्यत्वयोरिति** ॥ इष्टोत्पत्त्य-व्यवहितपूर्वक्षणवृत्तित्वघटितेष्टसाधनत्वकृत्यव्यवहितोत्तरक्षणसंबन्धघटितकृतिसाध्यत्वयोरित्यर्थः ॥ **युग-पज्ज्ञातुमशक्यत्वादिति** ॥ एककालावच्छेदेनैकविशेष्यकज्ञानविषयताप्रयोजकसामर्थ्याभाववत्त्वादित्यर्थः तत्र हेतुमाह ॥ **साध्यत्वसाधनत्वयोरिति** ॥ क्षणविशेषघटितयोस्तयोरित्यर्थः ॥ **विरोधादिति** ॥ एकक्षणावच्छेदेनैकत्रावर्तमानत्वादित्यर्थः । विरोधमुपपादयति ॥ **असिद्धस्य हीति** ॥ असिद्धस्यैवेत्यर्थः । आद्यक्षणसंबन्धस्येति यावत् ॥ **सिद्धस्य चेति** ॥ आद्यक्षणान्यक्षणवृत्तित्वविशिष्टस्यैवेत्यर्थः तथाच कृत्यव्य-वहितोत्तरक्षणसंबन्धघटितकृतिसाध्यत्वस्य उत्पत्तिक्षण एव यागादिवृत्तित्वात् स्वर्गादिरूपेष्टसाधनत्वस्य का-लान्तरभाविस्वर्गाव्यवहितपूर्वक्षणसंबन्धित्वघटितस्य चोत्पत्तिक्षणावच्छेदेन यागाद्यवृत्तित्वाच्च तयोरेकक्ष-णावच्छेदेनैकत्रावर्तमानत्वरूपविरोधः दुर्वार इति भावः । नच इष्टाव्यवहितपूर्ववृत्तितावच्छेदकधर्मवत्त्वरूपेष्ट-साधनत्वस्योत्पत्तिक्षणावच्छेदेनापि यागादौ संभवात् कथं विरोध इति वाच्यम्। तादृशसाधनत्वस्य स्वरूप-योग्यत्वरूपतया यागादिकमिदं स्वरूपयोग्यं न फलोपधायकमिति ज्ञानात्प्रवृत्त्यनुदयेन फलोपधायकत्वज्ञानस्यै-व प्रवर्तकत्वावश्यकतया तादृशज्ञानविषयेष्टसाधनत्वस्योत्पत्तिक्षणविशिष्टयागादौ अवर्तमानत्वात्तयोर्विरोध-स्यानिवार्यत्वात् एतावता तयोर्विरोधमुपपाद्य इदानीमेकज्ञानाविषयत्वमुपपादयति ॥ **नचैवमेकेनैकदेति** ॥ एकेन एकदा इदं सिद्धं ॥ **तदसिद्धमिति** ॥ ज्ञायत इत्येकमित्युक्तं एकमेकदेशेन सिद्धमिति अपरेणासि-द्धमिति ज्ञायत इत्येकेनेत्युक्तं एकनैकं विभिन्नकालावच्छेदेन ज्ञायत इत्येकदेत्युक्तं तथाच क्षणविशेषघटित-

## दिनकरीयम्.

येन सुखजनके कर्मणि दुःखजनकत्वनियमाप्रसिद्ध्यभावात् । मिश्रास्त्विष्टोत्पत्त्यनान्तरीयकनरकदुःखाजनक-त्वमुक्तस्यार्थ इति नाप्रसिद्धिरित्याहुः । नन्वेवं सति नरकसाधनत्वेन प्रमिते परदाराधिगमनादौ रागौत्कव्या-न्न प्रवर्तेत इष्टोत्पत्त्यनान्तरीयकनरकदुःखजनकत्वेन तस्य निश्चयादित्यत आह ॥ **बलवद्द्वेषेति** ॥ द्वेषे च बलव-त्त्वं जातिविशेषः । अत एव रागान्धस्य यदागम्यागमनादिजन्यदुःखे न तादृशो द्वेषस्तदा तद्धेतावपि प्रवृत्तिः । साध्यत्वसाधनत्वयोर्विरोधमुपपादयति ॥ **असिद्धस्य हीति** ॥ आद्यक्षणवृत्तित्वविशिष्टस्य पाकादेरित्यर्थः ॥ **सिद्धस्य** अनाद्यक्षणविशिष्टस्य । कृत्यव्यवहितोत्तरक्षणसम्बन्धित्वघटितस्य कृतिसाध्यत्वस्य पाकोत्पत्ति-क्षण एव पाकवृत्तित्वात् कालान्तरभाव्योदनादिफलसाधनत्वस्यौदनाव्यवहितपूर्वक्षणसम्बन्धित्वघटितस्य चोत्पत्तिक्षणे पाकावृत्तित्वात् तयोरेकक्षणावच्छेदेनैकत्रावृत्तित्वरूपविरोधादिति भावः । यद्यपि कालान्तर-भाव्योदनाव्यवहितपूर्वक्षणवृत्तितावच्छेदकधर्मवत्त्वरूपमोदनसाधनत्वमाद्यक्षणवृत्तित्वविशिष्टेऽपि पाके सम्भ-वतीति कथं विरोधस्तथापि स्वरूपयोग्यमिदं न फलोपधायकमिति ज्ञानात् प्रवृत्त्यनुदयेन फलोपधायकत्वरू-पेष्टसाधनताज्ञानस्यैव संशयसाधारणस्य प्रवृत्तिकारणत्वं वाच्यं पूर्वोक्तं फलोपधायकत्वं चाद्यक्षणविशिष्टे या-गादौ न सम्भवतीति भावः । साध्यत्वसाधनत्वयोर्विरोधं व्युत्पाद्य तयोरेकज्ञानविषयत्वं न सम्भवतीत्या-ह ॥ **नचैकमेकेनैकदेति** ॥ अव्याप्यवृत्तिपदार्थस्य स्वस्वावच्छेदकानवगाहिज्ञानं न सम्भवति । मूले कृ-

**मैवम्। लाघवेन बलवदनिष्टाननुबन्धीष्टसाधनत्वे सति कृतिसाध्यताज्ञानस्य तत्र हेतुत्वात्। न च साध्यत्वसाधनत्वयोर्विरोधः यदाकदाचित् साध्यत्वसाधनत्वयोरविरोधादेकदा ज्ञानान्वयि–**

प्रभा.

सिद्धत्वासिद्धत्वावच्छेद्यसाधनत्वसाध्यत्वविषयकैकविशेष्यकसमूहालम्बनज्ञानमभ्रान्तस्य न संभवति तयोर्विरुद्धत्वात् अवच्छेदकानवगाहिसाध्यत्वसाधनत्वज्ञानमप्रामाणिकं मूले वृक्षः कपिसंयोगीत्याकारकप्रतीतेरेवानुभवसिद्धतया अव्याप्यवृत्तिप्रकारकज्ञानस्य स्वावच्छेदकावगाहित्वनियमादित्यभिमानः। प्राभाकरमतमुपसंहरति ॥ **तस्मादिति** ॥ उक्तरीत्या निरुक्तसाधनत्वसाध्यत्वविषयसमूहालम्बनासंभवादित्यर्थः नचेदानीमसिद्धः पाकः कृतिसाध्यः कालान्तरे सिद्धः पाकः इष्टसाधनमिति समूहालम्बनसंभवात् कथमेतदिति वाच्यं इदानीन्तनकालकालान्तरयोरनुगमकरूपाभावेन विशिष्यैव निवेशनीयतया तत्तत्कालविषयकज्ञानस्याप्यनुगतरूपेण हेतुत्वासंभवात् कालभेदेन उभयं ज्ञायत इति भिन्नक्षणावच्छेद्यैकैकज्ञाननिरूपितविषयतावदेव निरुक्तसाधनत्वसाध्यत्वोभयमित्यर्थः तथाचेष्टसाधनत्वकृतिसाध्यत्वोभयविषयकज्ञानस्याप्रामाणिकतया नैयायिकैस्तादृशोभयविषयकज्ञानत्वेन प्रवृत्तिहेतुताया वक्तुमशक्यत्वादनायत्या सर्वैरपि तादृशकार्यताज्ञानत्वेनैव प्रवृत्तिहेतुत्वं स्वीकार्यमिति प्राभाकराभिप्रायः। अत्र स्वविशेषणशब्देन काम्ये कामनैव विशिष्य ग्राह्या अन्यथा उक्तदोषापत्तेः एवं नित्येऽपि स्वविशेषणशब्देन शुचित्वविहितकालजीवित्वोभयमेव विशिष्य ग्राह्यं अन्यथा प्रामाणिकत्वस्यापि स्वविशेषणत्वेन अहमिदानीन्तनकृतिसाध्यसन्ध्यावन्दनकस्तादृशविषभक्षणकप्राणित्वादित्यनुमानजन्यविषभक्षणसाधारणकृतिसाध्यताज्ञानस्यापि प्रवर्तकत्वापत्तेरेवं च काम्यनित्यस्थलीयकार्यताज्ञानयोः कामनालिङ्गककृतिसाध्यत्वज्ञानत्वादिना विशिष्य प्रवृत्तिसामान्ये हेतुत्वं न संभवति परस्परव्यभिचारित्वात् अतः कामनाशुचित्वविहितकालजीवित्वोभयान्यतरलिङ्गककृतिसाध्यत्वज्ञानत्वेन सामान्यरूपेण हेतुत्वं वाच्यम्। तदपेक्षया काम्यनित्यसाधारणबलवदनिष्टाननुबन्धित्वादित्रितयविषयकज्ञानत्वेन लाघवाद्धेतुत्वमुचितमित्याशयेन तन्मतं दूषयति ॥ **मैवमिति** ॥ **लाघवेनेति** ॥ गुरुभूतजन्यत्वादिघटितधर्मस्य कारणतावच्छेदकत्वाप्रविष्टत्वप्रयुक्तलाघवेनेत्यर्थः ॥ **बलवदिष्टाननुबन्धीत्यादि** ॥ बलवदनिष्टाननुबन्धित्वेष्टसाधनत्वकृतिसाध्यत्वविषयकनिर्णयस्येत्यर्थः ॥ **हेतुत्वादिति** ॥ तादृशत्रितयविषयकनिश्चयत्वेनैव हेतुत्वस्वीकारादित्यर्थः पूर्वपक्षिणोक्तं साध्यसाधनत्वयोर्विरोधं परिहरति ॥ **नचेति** ॥ नहीत्यर्थः अविरोधमुपपादयति ॥ **यदाकदाचिदिति** ॥ कालविशेषघटितयोस्साध्यत्वसाधनत्वयोरेकत्र वृत्तौ बाधकाभावादित्यर्थः। तथाच एककालावच्छेदेन साध्यत्वसाधनत्वयोरेकत्रावृत्तित्वेऽपि न क्षतिः तज्ज्ञानस्य प्रवर्तकत्वानभ्युपगमात् किन्तु साध्यत्वसाधनत्वयोरनवच्छिन्नयोरविरुद्धयोः ज्ञानमेव प्रवर्तकं अव्याप्यवृत्तिज्ञानस्यावच्छेदकावगाहित्वनियमे मानाभावात् वृक्षः कपिसंयोगीत्यपि प्रतीतेस्सर्वानुभवसिद्धत्वादिति भावः। उक्तार्थमेव प्रकाशयति ॥ **एकदेति** ॥ **इदंच ज्ञानान्वयिसाध्यत्वसाधनत्वयोश्चेति** ॥ नि-

दिनकरीयम्.

क्षः संयोगीत्येव प्रतीतेः। तथा च साध्यत्वसाधनत्वयोरपि स्वस्वावच्छेदकसिद्धत्वासिद्धत्वविषयकमसिद्धः पाकः कृतिसाध्यः सिद्धश्च पाक इष्टसाधनमिति ज्ञानं समूहालम्बनरूपं वाच्यम्। तच्च न सम्भवति सिद्धत्वासिद्धत्वज्ञानयोः परस्परं विरोधित्वादित्यभिमानः ॥ **तस्मात् कालभेदादिति** ॥ न चेदानीमसिद्धः पाकः कृतिसाध्यः अग्रे च सिद्धः पाक इष्टसाधनमिति ज्ञानादेव प्रवृत्तिरस्त्विति वाच्यं इदानीन्तनाग्रेतनकालयोरननुगमात्। प्राणित्वस्यापि पुरुषविशेषणत्वेनाहमिदानीन्तनकृतिसाध्यविषभक्षणः प्राणित्वादित्याद्यनुमितिसम्भवाद्विषभक्षणसाधारणं स्वविशेषणवत्ताप्रतिसन्धानजन्यकार्यताज्ञानमिति बलवदनिष्टाननुबन्धीष्टसाधनता शौचाद्यन्यतरलिङ्गप्रतिसन्धानजन्यकार्यताज्ञानं प्रवर्तकं वाच्यं तदपेक्षया बलवदनिष्टाननुबन्धीष्टसाधनताविषयककार्यताज्ञानमतिलघ्विति तदेव काम्यनित्यसाधारणकारणत्वेन कल्प्यत इत्यभिप्रायेण प्राभाकरमतं दूषयति ॥ **मैवमिति** ॥ साध्यत्वसाधनत्वयोर्विरोधं दूषयति ॥ **नचेति** ॥ न हीत्यर्थः ॥ **यदाकदाचिदिति** ॥ यत्किञ्चित्कालीनस्य साध्यत्वस्य यत्किञ्चित्कालीनेन साधनत्वेन विरोधाभावादित्यर्थः। तथा

साध्यत्वसाधनत्वयोश्च ज्ञानात् । नव्यास्तु ममेदं कृतिसाध्यमिति ज्ञानं न प्रवर्तकमनागते तस्य ज्ञातुमशक्यत्वात् । किंतु यादृशस्य पुंसः कृतिसाध्यं यद्विशिष्टं तादृशत्वं स्वस्य प्रतिसन्धाय तत्र प्रवर्तते तेनौदनकामस्य तत्साध्यताज्ञानवतस्तदुपकरणवतः पाकः कृतिसाध्यः तादृशश्चाहमपीति प्रतिसन्धाय पाके प्रवर्तत इत्याहुः । तत्र स्वकल्पितलिप्यादिप्रवृत्तौ यौवने कामो-

## प्रभा ।

त्वच्छिन्नयोस्तयोरेवेत्यर्थः ॥ **ज्ञानादिति** ॥ ज्ञानसंभवादित्यर्थः तथाचैकदा तादृशज्ञानसंभवान्न प्रवृत्त्यनुपपत्तिरिति भावः । प्राभाकरमतं परिष्कुर्वतो नवीनस्य मतमाह ॥ **नव्यास्त्विति** ॥ **ममेदं कृतीति** ॥ इदं मत्समवेतकृतिसाध्यमिति ज्ञानमित्यर्थः ॥ **न प्रवर्तकमिति** ॥ चिकीर्षाद्वारा न प्रवृत्तिजनकमित्यर्थः । तथा च पाकोत्पत्त्यनन्तरं लौकिकसन्निकर्षबलात्तादृशपाके कृतिसाध्यत्वज्ञानसंभवेऽपि सामान्यलक्षणायाः प्रत्यासत्तित्वानङ्गीकर्तृमते भविष्यत्पाकविशेष्यकतादृशकृतिसाध्यत्वप्रकारः प्रत्यक्षासंभवात्प्रत्यक्षज्ञानाभावेन भविष्यत्पाकविशेष्यकतादृशकृतिसाध्यत्वप्रकारकानुमितेरप्यसंभवाच्च प्रवृत्त्युत्तरकालीनतादृशज्ञानस्य प्रवृत्तिहेतुत्वं न संभवतीति भावः । उक्तार्थमेव प्रकाशयति ॥ **अनागत इति** ॥ भविष्यत्पाक इत्यर्थः ॥ **तस्येति** ॥ निरुक्तकृतिसाध्यत्वस्येत्यर्थः ॥ **ज्ञातुमशक्यत्वादिति** ॥ उक्तरीत्या भविष्यत्पाकस्य ज्ञानासंभवेन तद्विशेष्यककृतिसाध्यत्वप्रकारकज्ञानस्य सुतरामसंभवादित्यर्थः ॥ **यादृशस्येति** ॥ कृत्युत्पादकयादृशसामग्रीविशिष्टस्येत्यर्थः ॥ **कृतिसाध्यमिति** ॥ कृतिविधेयताश्रयतावदित्यर्थः ॥ **यद्विशिष्टमिति** ॥ यद्धर्मावच्छिन्नं प्रमितमित्यर्थः ॥ **तादृशत्वं स्वस्य प्रतिसन्धायेति** ॥ तादृशसामग्रीमानहमिति निर्णयादित्यर्थः ॥ **तत्र प्रवर्तत इति** ॥ तद्धर्मावच्छिन्नविधेयताकप्रवृत्तिमान् भवतीत्यर्थः । ममेदं कृतिसाध्यमिति ज्ञानस्य प्रवर्तकत्वपक्षे उक्तदोषोऽत्र नास्तीत्यह ॥ **तेनेति** ॥ ईदृशज्ञानस्य प्रवर्तकत्वस्वीकारेणेत्यर्थः ॥ **ओदनकामस्येति** ॥ ओदनं मम भवत्वित्याकारकौदनरूपफलकामनाविशिष्टस्येत्यर्थः ॥ **तत्साध्यताज्ञानवत इति** ॥ पाकत्वावच्छिन्नान्यदीयपाकविशेष्यकान्यदीयकृतिसाध्यत्वप्रकारकप्रत्यक्षादिप्रमावत इत्यर्थः । षष्ठ्यर्थः समवेतत्वं तस्य कृतावन्वयः ॥ **पाकः कृतिसाध्य इति** ॥ कृतिनिरूपितविधेयताश्रयः पाक इत्यर्थः । प्रमित इति शेषः ॥ **तादृशश्चाहमपीति प्रतिसन्धायेति** ॥ निरुक्तफलेच्छादिसामग्रीमानहमपीति निश्चयादेवेत्यर्थः ॥ **पाके प्रवर्तत इति** ॥ पाकत्वावच्छिन्नविधेयताकप्रवृत्तिमान् भवतीत्यर्थः । तथाच चैत्रीयपाके चैत्रीययत्नसाध्यत्वदर्शनात् जीवनासहकृतात् जायमानमैत्रप्रयत्नेन मैत्रीयपाकोत्पत्तिमुपलभ्याहमपि मैत्रीयपाके मैत्रकृतिजन्यत्वप्रकारकप्रत्यक्षवान् ओदनकामनावांश्चेति प्रतिसन्धानात् सर्वेषामपि पाके प्रवृत्तिः संभवतीति भावः ॥ **स्वकल्पितलिप्यादिप्रवृत्ताविति** ॥ पुरुषविशेषकल्पितविजातीयलिपिविजातीयभाषादिविषयकप्रवृत्तावित्यर्थः एतस्य तदभावादित्युत्तरेण संबन्धः तथाच एतादृशविजातीयलिप्यादिनिर्मातुः एतादृशलिप्यादिप्रवृत्तिपूर्वं अन्यदीयकृतिसाध्यविजातीयलिप्याद्यप्रसिद्धिप्रयुक्तदर्शनाभावेन तादृशश्चाहमिति प्रवर्तकज्ञानस्य सुतरामसंभवेन कारणाभावेऽपि विजातीयलिप्यादिप्रवृत्तिरूपकार्योत्पत्त्या व्यभिचारात् नैतादृशज्ञानस्य प्रवर्तकत्वमिति भावः स्थलान्तरे व्यभिचारादपि तस्याप्रवर्तकत्वमाह ॥ **यौवन इति** ॥ **कामोद्रेकादिनेति** ॥ कामातिशयेनेत्यर्थः । आदिना बाल्ये अविवेकेनेत्यादेः परिग्रहः ॥ **संभोगादाविति** ॥ विजातीयसंभोगप्रवृत्तावित्यर्थः । आदिना विजातीयस्वमात्रताडनप्रवृत्ता-

## दिनकरीयम् ।

चैककालीनकृतिसाध्यत्वेष्टसाधनत्वयोर्विरोधेऽपि न क्षतिस्तथा ज्ञानस्यास्माभिः कारणत्वानङ्गीकारात् किन्तु निर्विशेषितयोः सामान्यतः कृतिसाध्यत्वेष्टसाधनत्वयोर्ज्ञानस्यैव हेतुत्वाङ्गीकारादिति भावः । तादृशं च ज्ञानं सम्भवतीत्याहुः ॥ **एकदेति** ॥ इदं च ज्ञानान्वयिज्ञानात् ज्ञानसम्भवात् मूलाद्यनवगाहिनोऽपि वृक्षः संयोगीति ज्ञानस्यानुभविकतया अव्याप्यवृत्तेर्ज्ञानं स्वावच्छेदकविषयकमेवेति नियमे मानाभावान्न पूर्वोक्तदोष इति ध्येयम् । प्राभाकरानुयायिनवीनमतमाह ॥ **नव्यास्त्विति** ॥ **ज्ञातुमशक्यत्वादिति** ॥ सामान्यलक्षण-

द्रेकादिना सम्भोगादौ च तदभावात् । इदं तु बोध्यं इदानीन्तनेष्टसाधनत्वादिज्ञानं प्रवर्तकम् । तेन भावियौवराज्ये बालस्य न प्रवृत्तिः तदानीं कृतिसाध्यत्वाज्ञानात् । एवं तृप्तश्च भोजने न प्रवर्तते तदानीमिष्टसाधनत्वाज्ञानात् । प्रवर्तते च दोषदूषितचित्तो विषादिभक्षणे तदानीं बलवदनिष्टाननुबन्धित्वज्ञानात् । नचास्तिकस्यागम्यागमनशत्रुवधादिप्रवृत्तौ कथं बलवदनिष्टाननुबन्धित्वबुद्धिर्नरकसाधनत्वज्ञानादिति वाच्यं उत्कटरागादिना नरकसाधनता-

प्रभा.

त्यादेः परिग्रहः ॥ **तदभावादिति** ॥ तथाच पुरुषान्तरकर्तृकैतादृशविजातीयसंभोगादेरप्रसिद्धया प्रवृत्तिपूर्वं विजातीयसंभोगादिदर्शनासंभवेन तादृशश्चाहमिति प्रवर्तकज्ञानस्य सुतरामभावेन व्यभिचारात् नैतादृशनिश्चयस्य प्रवर्तकत्वमिति भावः । ननु सिद्धान्तिमते केवलेष्टसाधनत्वादित्रितयविषयकज्ञानस्य प्रवर्तकत्वे वक्ष्यमाणदोषो दुर्वार इत्याशङ्कां विशेषणान्तरदानेन परिहरति ॥ **इदन्तु बोध्यमिति** ॥ अनुपदं वक्ष्यमाणमेव प्रवर्तकमिति ज्ञेयमित्यर्थः । वक्ष्यमाणमेवाह ॥ **इदानीमिष्टसाधनत्वादिज्ञानमिति** ॥ इदानीन्तनत्वस्यापि इच्छादौ निवेशेन इदानीन्तनेच्छाविषयसाधनत्वेदानीन्तनकृतिसाध्यत्वेदानीन्तनबलवद्द्वेषविषयानुबन्धित्व-एतत्त्रितयविषयकज्ञानमिति फलितार्थः ॥ **प्रवर्तकमिति** ॥ चिकीर्षाद्वारा प्रवृत्तिकारणमित्यर्थः । स्थलत्रये इदानीन्तनत्वविशेषणानां क्रमेण प्रयोजनमाह ॥ **तेनेति** ॥ कृतिसाध्यत्वघटककृतौ इदानीन्तनत्वविशेषणेनेत्यर्थः ॥ **एवमिति** ॥ इष्टसाधनत्वघटकेच्छायामिदानीन्तनत्वविशेषणेनेत्यर्थः ॥ **प्रवर्तते चेति** ॥ बलवदनिष्टाननुबन्धित्वघटकबलवद्द्वेषे इदानीन्तनत्वविशेषणेनेत्यादिः । प्रवर्तत एवेत्यर्थः ॥ **दोषदूषितचित्त इति** ॥ दोषेण सुरापानादिदोषेण दूषितं गर्हितं चित्तं यस्य स तथा ॥ **विषादिभक्षण इति** ॥ आदिना मरणसाधनौषधपरिग्रहः ॥ **तदानीमिति** ॥ विषादिभक्षणप्रवृत्त्यव्यवहितपूर्वकाल इत्यर्थः ॥ **बलवदनिष्टाननुबन्धित्वज्ञानादिति** ॥ तादृशज्ञानस्यापि संभवादित्यर्थः । तथाच विषादिभक्षणविषयकबलवद्द्वेषस्य तदानीन्तनत्वाभावेन तत्कालीनबलवद्द्वेषविषयपदार्थान्तराननुबन्धित्वस्य तत्र सत्त्वेन तदानीं तत्र तादृशज्ञानासंभवादिति भावः ॥ **नास्तिकस्येति** ॥ अस्ति परलोक इति ज्ञानरहितपुंस इत्यर्थः ॥ **अगम्यागमन इति** ॥ अगम्या गन्तुं संबद्धुमयोग्या व्यभिचारिणीति यावत् तस्या गमने संभोग इत्यर्थः ॥ **शत्रुवधादाविति** ॥ अत्रादिपदेन सुरापानादिपरिग्रहः सप्तम्यर्थौ विषयत्वं तथा चागम्यागमनादिविषयकप्रवृत्ताविति फलितार्थः ॥ **कथमिति** ॥ नियतपूर्ववृत्तिरिति शेषः ॥ **बलवदनिष्टाननुबन्धित्वबुद्धिरिति** ॥ एतादृशबुद्धिः कथं निरुक्तप्रवृत्तिनिरूपितनियतपूर्ववृत्तित्वाश्रय इत्यर्थः । तत्र हेतुमाह ॥ **नरकसाधनत्वज्ञानादिति** ॥ अगम्यागमनादिविशेष्यकबलवदनिष्टात्मकनरकसाधनत्वप्रकारकनिश्चयरूपप्रतिबन्धकसत्त्वादित्यर्थः तथाच निरुक्तनिश्चयरूपप्रतिबन्धकसत्त्वात् अगम्यागमनादिविशेष्यकबलवदनिष्टाननुबन्धित्वप्रकारकज्ञानस्य निरुक्तप्रवृत्तिपूर्वकमुत्पत्त्यसंभवेन व्यतिरेकव्यभिचारात् न प्रवृत्तिसामान्ये तस्य हेतुत्वमिति भावः ॥ **उत्कटरागादिनेति** ॥ अगम्यागमनसाधनपरभार्यारूपविषयस्य यत्पुनःपुनरनुरञ्जनं तद्विषयकोत्कटेच्छयेत्यर्थः पुनःपुनः विषयानुरञ्जनेच्छा राग इति प्रशस्तपादभाष्यात् । आदिना उत्कटत्वरूपवैजात्यावच्छिन्नसंहारेच्छारूपजिहीर्षापरिग्रहः ॥ **नरकसाधनताधीतिरोधानादि-**

दिनकरीयम्.

प्रत्यासत्त्यनङ्गीकारे प्रत्यक्षस्य पक्षज्ञानाभावेनानुमितेश्चासम्भवादिति भावः ॥ **तदभावात्** यादृशस्य पुंसः कृतिसाध्यं यद्दृष्टं तादृशत्वज्ञानाभावात् । नन्विष्टसाधनताज्ञानस्य प्रवृत्तिजनकत्वे भावियौवराज्ये प्रवृत्त्यापत्तिरत आह ॥ **इदं तु बोध्यमिति** ॥ इष्टसाधनत्वादीत्यत्रादिपदोपगृहीतस्येदानीन्तनकृतिसाध्यत्वघटककृताविदानीन्तनत्वविशेषणस्य प्रयोजनमाह ॥ **तेन भावीति** ॥ इष्टसाधनत्वघटकेच्छायां तद्विशेषणस्य प्रयोजनमाह ॥ **एवं तृप्त इति** ॥ बलवदनिष्टेत्यत्र बलवद्द्वेषे तद्विशेषणप्रयोजनमाह ॥ **प्रवर्तते चेति** ॥ **प्रवृत्तौ** प्रवृत्तेः पूर्वं ॥ **नरकसाधनत्वज्ञानादिति** ॥ नरकरूपबलवदनिष्टसाधनत्वज्ञानादित्यर्थः ॥ **उत्कटरागादिने-**

**धीतिरोधानात् । वृष्ट्यादौ तु कृतिसाध्यताज्ञानाभावान्न चिकीर्षाप्रवृत्ती किंत्विष्टसाधन-ताज्ञानादिच्छामात्रम् । कृतिश्च प्रवृत्तिरूपा बोध्या । तेन जीवनयोनियत्नसाध्यप्राणपञ्च-कसञ्चारे न प्रवृत्तिः । इत्थं च प्रवर्तकत्वानुरोधाद्विधेरपीष्टसाधनत्वादिकमेवार्थः । इत्थं**

## प्रभा.

**ति** ॥ अगम्यागमनादिविशेष्यकबलवदनिष्टानुबन्धित्वप्रकारकज्ञानोत्पत्त्यसंभवादित्यर्थः तथाच निरुक्तरागा-दिदशायां नरकास्फूर्त्या नरके बलवद्द्वेषानुत्पत्त्या वा तत्र बलवदिष्टसाधनताज्ञानं न संभवतीति प्रतिबन्धका-भावादगम्यागमनादिप्रवृत्त्यव्यवहितपूर्वकालेऽपि तादृशज्ञानोत्पत्तिसंभवेन व्यभिचाराभावात् बलवदनिष्टाननु-बन्धित्वज्ञानस्यापि प्रवृत्तिसामान्ये हेतुत्वं निराबाधमिति भावः । इष्टसाधनतादिज्ञानस्य चिकीर्षाद्वारा प्रवृत्ति-हेतुत्वेनैव सामञ्जस्ये उपायेच्छां प्रति इष्टसाधनताज्ञानस्य न पृथग्घेतुत्वं प्रयोजनाभावादित्याशङ्कां चिकीर्षा-नुत्पत्तिस्थले उपायेच्छोत्पत्तिप्रदर्शनेन परिहरति ॥ **वृष्ट्यादौ त्विति** ॥ आदिना रम्भासंभोगादेः परिग्रहः अवधारणार्थकतुशब्दः ज्ञानाभावादित्युत्तरं योज्यः ॥ **न चिकीर्षाप्रवृत्ती इति** ॥ तथाच कृतिसाध्यताज्ञानाभावादेव तत्र चिकीर्षानुत्पत्तौ तदभावात्प्रवृत्तेरपि अनुत्पत्तिरिति भावः । वृष्ट्यादावेव उपायेच्छोत्पत्तिरावश्यकीत्याह ॥ **किंत्विति** ॥ **इच्छामात्रमिति** ॥ उपायेच्छात्व-च्छिन्नमित्यर्थः उत्पद्यत इति शेषः तथाच तत्र इच्छायाः अस्वीकारे अनुभवापलापापत्त्या दृशकार्यकारणभाव आवश्यक इति भावः । ननु कृतिसाध्यताज्ञानस्य चिकीर्षाद्वारा न प्रवर्तकत्वं त्वेऽपि प्राणपञ्चकसञ्चारे प्रवृत्त्यदर्शनात् नच तत्र कृतिसाध्यताज्ञानसत्त्वेऽपि इष्टसाधनताज्ञानाभवात् तिः इष्टसाधनताज्ञानसहकृतस्यैव तस्य चिकीर्षाद्वारा प्रवर्तकत्वस्वीकारादिति वाच्यं प्राणपञ्चकसञ्च वनरूपेष्टसाधनताज्ञानस्यापि सत्त्वादित्यत आह ॥ **कृतिश्चेति** ॥ कृतिसाध्यत्वज्ञानत्वरूपप्रवर्तकत कघटककृतिश्चेत्यर्थः ॥ **प्रवृत्तिरूपा बोध्येति** ॥ तथाच कृतिसाध्यताज्ञानं प्रवर्तकमिति वाक्यघटककृ सामान्यधर्मावच्छिन्नवाचककृतिशब्दस्य प्रवृत्तित्वरूपविशेषधर्मावच्छिन्नलाक्षणिकत्वस्वीकारेण यत्नत्व न्नसाध्यताज्ञानस्यैव प्रवर्तकत्वलाभान्नोक्तव्यभिचार इति भावः । उक्तार्थमेव स्पष्टयति ॥ **तेनेति** ॥ उक्तरीत्या यत्नत्वावच्छिन्नसाध्यताज्ञानस्य प्रवर्तकत्वस्वीकारेणेत्यर्थः ॥ **जीवनयोनियत्नसाध्य इति** ॥ तन्मात्रसा-ध्य इत्यर्थः प्रवृत्त्यसाध्य इति यावत् । अनेन प्रवृत्तिजनकयत्नसाध्यताज्ञानप्रतिबन्धकतदसाध्यताज्ञानसत्त्वमा-विष्कृतं यथाश्रुते प्राणपञ्चकसञ्चारे जीवनयोनियत्नसाध्यत्वकथनस्याप्रकृततया असाङ्गत्यापत्तेः ॥ **न प्रवृ-त्तिरिति** ॥ यत्नसाध्यताज्ञानाभावादित्याशयः । अन्येतु कृतित्वावच्छिन्ननिरूपितसाध्यताज्ञानमात्रं प्रवर्तकं लक्षणायाः अकल्पनप्रयुक्तलाघवात् नच प्राणपञ्चकसञ्चारे प्रवृत्त्यापत्तिः चिकीर्षां प्रति तादात्म्यसंबन्धेन प्रा-णपञ्चकसञ्चारप्रतिबन्धकत्वस्वीकारेणैव तत्र चिकीर्षानुत्पत्तौ कारणाभावादेव प्रवृत्त्यापत्तिवारणसंभवादित्याहुः ।

## दिनकरीयम्.

**ति** ॥ अगम्यागमनादिसुखे उत्कटरागादिनेत्यर्थः ॥ **नरकेति** ॥ बलवदनिष्टेत्यर्थः ॥ **तिरोधानात्** अ-नुत्पादनात् । तादृशसुखे उत्कटरागसत्त्वेऽगम्यागमनजन्यनरके बलवद्द्वेषानुदयादिति भावः ॥ **प्रवृत्ति-रूपेति** ॥ कृतिसाध्यताज्ञानमित्यत्र प्रवृत्तित्वेन कृतेः प्रवेश इत्यर्थः । स्वेच्छाधीनकृतिसाध्यताज्ञानस्य हेतु-त्ववादिमणिकृन्मतेऽपि स्वेच्छाधीनत्वं कृतिविशेषणं प्रवृत्तिरूपकृतिलाभायैवेति भावः । इत्थं च तद्व्यापारीभू-तेच्छापि प्रवृत्तिसाध्यत्वप्रकारिका बोध्या ज्ञानेच्छयोः समानप्रकारकत्वेन हेतुहेतुमद्भावादिति ॥ **तेन प्रवृत्ति-प्रवेशेन** ॥ **प्राणपञ्चकसञ्चारे न प्रवृत्तिरिति** ॥ नच प्राणानामतीन्द्रियतयोपादानप्रत्यक्षाभावादेव न प्रा-णोपादानकसञ्चारसाध्यकप्रवृत्त्यापत्तिरिति वाच्यं प्राणवहनाड्युपादानकप्राणसञ्चारसाध्यकप्रवृत्त्यापत्तिवारणा-यैव प्रवृत्तिसाध्यताज्ञानहेतुत्वाङ्गीकारात् । यद्यपि प्राणसञ्चारावृत्तिविशेष्यतासम्बन्धेन कृतिसाध्यताज्ञानहेतुत्वा-ङ्गीकारादेव तथा प्रवृत्तिवारणं सम्भवति तथापि घटादौ जीवनयोनियत्नसाध्यत्वभ्रमात् प्रवृत्त्यापत्तिवारणाय प्रवृत्तिसाध्यत्वज्ञानत्वेन हेतुत्वमावश्यकमिति ध्येयम् । एतेन प्राणसञ्चारे प्रवृत्तिवारणाय प्रवृत्तिसाध्यताज्ञान-

## प्रभा.

तत्र सामान्यशब्दस्य विशेषपरत्वस्वीकारमात्रेण सर्वसामञ्जस्ये प्रतिबन्धकभावान्तरकल्पनाया अन्याय्यत्वात् मणिकारानुमतत्वाच्च। अत एव स्वेच्छाधीनकृतिसाध्यताज्ञानं प्रवर्तकमिति मणिकारलेखनमपि सङ्गच्छते । अन्यथा कृतिशब्दस्य यत्नत्वावच्छिन्नपरत्वग्राहकस्वेच्छाधीनत्वविशेषणवैयर्थ्यापातात्। नचैवं सति प्राणपञ्चकसञ्चारे प्रवृत्तिसाध्यत्वभ्रमकाले चिकीर्षाप्रवृत्त्योरापत्तिः कारणसत्त्वादिति वाच्यम् गुरुतरसुवर्णपिण्डोत्तूलनादौ प्रवृत्तिसाध्यत्वभ्रमाधीनचिकीर्षावशात् निष्फलप्रवृत्तेरिति प्राणपञ्चकसञ्चारेऽपि तादृशभ्रमाधीनाचिकीर्षाया तादृशप्रवृत्तेरिष्टत्वात् । नच तथापि यागादिवत् बलवन्नान्तरीयकश्रमेऽपि चिकीर्षाप्रवृत्त्योरापत्तिः प्रवृत्तिसाध्यताज्ञानरूपकारणसत्त्वादिति वाच्यम् श्रमस्य दुःखरूपतया दुःखत्वज्ञानस्येच्छासामान्यप्रतिबन्धकत्वेन तत्रेच्छासामान्यानुत्पत्तौ इच्छात्वरूपव्यापकधर्मावच्छिन्नोत्पादकसामग्र्यभावेन सुतरां चिकीर्षात्वरूपव्याप्यधर्मावच्छिन्नानुत्पत्तौ व्यापाराभावेन प्रवृत्तेरप्यसंभवात् । अन्येतु मणिकृता स्वेच्छाधीनकृतिसाध्यताज्ञानस्यैव चिकीर्षाद्वारा प्रवृत्तिहेतुत्वस्वीकारात् नान्तरीयकश्रमविषयकेच्छाया अभावेन तदधीनकृतेः सुतरामप्रसिद्धया तत्साध्यताज्ञानरूपकारणस्याप्रसिद्धत्वादेव तत्र चिकीर्षानुत्पत्तेः तदभावादेव न प्रवृत्त्यापत्तिरपीत्याहुः । तन्न दुःखत्वज्ञानस्य प्रतिबन्धकत्वाङ्गीकारं विना प्रकारान्तरेण तत्र इच्छानुत्पत्तेरुपपादयितुमशक्यतया तदङ्गीकारस्यावश्यकत्वे तत एवोक्तरीत्या नान्तरीयकश्रमे चिकीर्षाप्रवृत्त्योरापत्तिवारणसंभवात् चिकीर्षादौ प्रवृत्तिसाध्यताज्ञानस्य नोक्तगुरुरूपेण हेतुत्वं प्रयोजनाभावादिति । नच सिद्धान्तिमते यागादाविव स्वर्गादिरूपफलेऽपि प्रयत्नसाध्यताज्ञानस्य सत्त्वात् चिकीर्षारूपव्यापारसत्त्वाच्च न यागादाविव स्वर्गादावपि विधेयतासंबन्धेन प्रवृत्त्यापत्तिरिति वाच्यं स्वर्गादौ प्रयत्नसाध्यताज्ञानसत्त्वेऽपि इष्टसाधनताज्ञानाभावेन चिकीर्षोत्पत्त्यसंभवात् इष्टसाधनताज्ञानसहकृतप्रयत्नसाध्यताज्ञानस्यैव प्रवृत्तिहेतुत्वाङ्गीकारात् अन्यथा निष्फले कृतिसाध्ये चिकीर्षापत्तिः। एवंच स्वर्गादिरूपफले चिकीर्षाभावान्न प्रवृत्त्यापत्तिरिति। केचित्तु उक्तकारणबलात्सुखे विधेयतासंबन्धेन प्रवृत्त्यापत्तिवारणाय तत्संबन्धेन प्रवृत्तं फलत्वप्रकारकज्ञानस्य विशेष्यतासंबन्धेन प्रतिबन्धकत्वमङ्गीकुर्वन्ति। तदसत् उक्तरीत्या तत्र प्रवृत्त्यापत्तिवारणे एतादृशप्रतिबध्यप्रतिबन्धकभावकल्पनाया अन्याय्यत्वात् । केचित्तु वस्तुतस्तु तद्धर्मावृत्तिविषयतासंबन्धेन ज्ञानं प्रति तत्तद्धर्मभेदस्य हेतुतायास्तत्र तत्र व्यवस्थापितत्वात् । तत्रच कार्यतावच्छेदककोटौ ज्ञानत्वस्थाने गुणत्वमेव निवेशनीयम् । एवंच सुखत्वान्यवृत्तिविषयतासंबन्धेन गुणत्वस्य कृतिसाध्यताज्ञानजन्यतावच्छेदकीभूतं यत्साध्यताख्यविषयतावच्छेदकतासंबन्धेन प्रवृत्तित्वं तद्व्यापकतया तदवच्छिन्नजनकसुखत्वभेदस्य सुखत्वे अभावादेव न तत्र साध्यताख्यविषयतावच्छेदकतया प्रवृत्त्यापत्तिः व्याप्यधर्मावच्छिन्नजनकसामग्र्या फलजनने व्यापकधर्मावच्छिन्नजनकसामग्र्या अपेक्षितत्वात् अनयैव रीत्या प्राणपञ्चकसञ्चारत्वे श्रमत्वे च साध्यताख्यविषयतावच्छेदकतासंबन्धेन प्रवृत्तिवारणं बोध्यम् । एतदेव हृदि निधाय प्राणसञ्चारस्य प्रवृत्त्ययोग्यत्वादेव न तत्र प्रवृत्तिरिति मिश्रैर-

## दिनकरीयम्.

स्य हेतुत्वेऽपि प्रवृत्तिसाध्यत्वभ्रमात् प्राणसञ्चारे प्रवृत्त्यापत्तिर्दुर्वारेत्यपास्तम् । नच प्रवृत्तिसाध्यताज्ञानस्य हेतुत्वेऽपि भोजननान्तरीयके श्रमे साध्यतया प्रवृत्त्यापत्तिर्दुर्वारेति वाच्यं तादृशश्रमे चिकीर्षाविरहादेव प्रवृत्त्यनुत्पत्तेः तत्र चिकीर्षाविरहश्च श्रमस्य दुःखरूपतया दुःखत्वज्ञानस्येच्छाप्रतिबन्धकतयेच्छासामान्यसामग्रीविरहादेव एतेन नान्तरीयकश्रमे प्रवृत्त्यापत्तिवारणाय स्वेच्छाधीनकृतिसाध्यताज्ञानस्य हेतुत्वं वाच्यमिति मणिकृन्मतमपास्तम् । नच सुखे प्रवृत्तिसाध्यताज्ञानेच्छयोः सत्त्वात् तत्र साध्यताख्यविषयतासम्बन्धेन प्रवृत्त्यापत्तिरिति वाच्यं साध्यतया प्रवृत्तिं प्रति फलत्वज्ञानस्य प्रतिबन्धकत्वात् । वस्तुतस्तु तत्तद्धर्मान्यवृत्तिविषयतासम्बन्धेन ज्ञानं प्रति तत्तद्धर्मभेदस्य हेतुतायास्तत्र तत्र व्यवस्थापितत्वात् तत्र च कार्यतावच्छेदककोटौ ज्ञानत्वस्थाने गुणत्वमेव निवेशनीयम् । एवं च सुखत्वान्यवृत्तिविषयतासम्बन्धेन गुणत्वस्य कृतिसाध्यताज्ञानजन्यतावच्छेदकीभूतं यत्साध्यताख्यविषयतासम्बन्धेन प्रवृत्तित्वं तद्व्यापकतया तदवच्छिन्नजनकसुखत्वभेदस्य सुखत्वेऽभावादेव न तत्र साध्यतया प्रवृत्त्यापत्तिः व्याप्यधर्मावच्छिन्नजनकसामग्र्या फलजनने व्याप-

## प्रभा.

भिहितामिति दिगित्याहुः । तदसत् नित्ये कालिकसंबन्धाभावात् । यथा कालिकसंबन्धेन कार्यमात्रानुत्पत्तिः तथा तद्धर्मान्यवृत्तिविषयतायास्तद्धर्मे अभावेन तेन संबन्धेन ज्ञानोत्पत्तिवारणे ईदृशकार्यकारणभावस्याप्रामाणिकत्वात् अन्यथा कालिकसंबन्धेन कार्यं प्रति नित्यभेदस्य हेतुत्वापत्तिः । यच्चोक्तमेतादृशकार्यकारणभावस्तत्र तत्र व्यवस्थापित इति तदपि न प्रामाणिकैस्तादृशकार्यकारणभावव्यवस्थापनस्य क्वाप्यदर्शनात् । यच्चोक्तं कार्यतावच्छेदककोटिप्रविष्टज्ञानत्वस्थाने गुणत्वं निवेशनीयमिति तदपि मन्दं ज्ञानत्वेच्छात्वकृतित्वादिभेदेनानन्तकार्यकारणभावकल्पनागौरवभिया हि सर्वसाधारणगुणत्वस्य कार्यतावच्छेदकत्वमङ्गीकृतम् । तद्धर्मान्यवृत्तिविषयतासंबन्धेन ज्ञानत्वावच्छिन्नं प्रति तद्धर्मभेदस्य हेतुत्वमते तद्धर्मे तद्धर्मभेदरूपकारणाभावेन तेन संबन्धेन ज्ञानत्वावच्छिन्नानुत्पत्तौ तेन संबन्धेन ज्ञानाद्यभावादेव तेन संबन्धेन इच्छाद्युत्पत्तिवारणसंभवेऽतिप्रसक्तत्साधारणगुणत्वस्य कार्यतावच्छेदकत्वे मानाभावात् अन्यथा तेन संबन्धेन सत्त्वावच्छिन्नं प्रत्यपि तद्धर्मभेदस्य हेतुत्वापत्तिः । न चेष्टापत्तिः अप्रामाणिकानन्तकार्यकारणभावप्रसङ्गात् तस्मात् गुणत्वस्य प्रवृत्तित्वव्यापकत्वेऽपि तेन संबन्धेन व्यापकधर्मावच्छिन्नोत्पादकसामग्र्या अप्रसिद्धत्वात् तदभावेन सुखत्वे विधेयतावच्छेदकतासंबन्धेन प्रवृत्त्यापत्तिवारणं तद्बलेनैव प्राणसञ्चारत्वे श्रमत्वे च तेन संबन्धेन प्रवृत्तित्वावच्छिन्नापत्तिवारणं च वन्ध्यापुत्रबले शत्रुनिराकरणमिति तुल्यमिति प्रतिभाति । यच्च प्राणसञ्चारस्य प्रवृत्त्ययोग्यत्वादेव न तत्र प्रवृत्तिरिति मिश्रैरभिहितामिति स्वोक्तार्थोपष्टम्भकतया लिखितं तदपि न तादृशमिश्रग्रन्थघटकप्रवृत्त्ययोग्यत्वादेवेति वाक्यस्य प्रवृत्तिजनकसामग्र्यभावादेवेत्यर्थपरतया उपष्टम्भासङ्गतेरित्यास्तां विस्तरः ॥ **इत्थंचेति** ॥ इष्टसाधनतादित्रितयविषयकज्ञानस्य प्रवर्तकत्वे चेत्यर्थः ॥ **विधेरपीति** ॥ अपिशब्द इष्टसाधनत्वादिकमित्युत्तरं योज्यः । विधित्वावच्छिन्नस्येत्यर्थः ॥ **अर्थ इति** ॥ वाच्य इत्यर्थः । तथाच विधेराख्यातत्वेन यथा कृतिशक्तत्वं तथा विधित्वेनेष्टसाधनतादिशक्तत्वमिति फलितार्थः । अत्रेदं बोध्यं वैदिकं वाक्यं विधिनिषेधार्थवादभेदात्त्रिविधं तत्रेष्टसाधनतादिबोधकवाक्यत्वं विधित्वं यजेतेत्यादौ धात्वर्थयागादौ स्वर्गसाधनत्वादिबोधकत्वाल्लक्षणसङ्गतिः । स विधिरुत्पत्तिविधिविनियोगविध्यधिकारविधिप्रयोगविधिभेदाच्चतुर्विधः । तत्र कर्मस्वरूपमात्रप्रतिपादनविधिरुत्पत्तिविधिः यथा सोमेन यजेतेत्यादिः तस्य सोमयागादिरूपकर्ममात्रविधायकत्वात् । क्रियार्थतया किञ्चिद्वस्तुविधायको विधिः विनियोगविधिः यथा दध्ना जुहोतीत्यादिः । हो-

## दिनकरीयम्.

कधर्मावच्छिन्नजनकसामग्र्या अपेक्षितत्वात् अनयैव च रीत्या प्राणसञ्चारत्वे श्रमत्वे च साध्यताख्यविषयतावच्छेदकतासम्बन्धेन प्रवृत्तिवारणं बोध्यम् । एतदेव हृदि निधाय प्राणसञ्चारस्य प्रवृत्त्ययोग्यत्वादेव न तत्र प्रवृत्तिरिति मिश्रैरभिहितामिति दिक् ॥ **इत्थं चेति** ॥ प्रवृत्तिं प्रतीष्टसाधनत्वादिधियो हेतुत्वे चेत्यर्थः । इष्टसाधनत्वादीत्यादिना बलवदनिष्टाननुबन्धित्वकृतिसाध्यत्वयोः परिग्रहः अत्र च निष्फलप्रवृत्त्यभावादिष्टसाधनत्वस्येष्टसाधनेऽपि मधुविषसम्पृक्तान्नभोजनेऽप्रवृत्तेर्बलवदनिष्टाननुबन्धित्वस्य कृत्यसाध्ये सुमेरुशृङ्गाहरणादावप्रवृत्तेः कृतिसाध्यत्वस्य च ज्ञानं प्रवृत्तिहेतुः तच्च विधित इतीष्टसाधनत्वादिकं विध्यर्थ इति भावः । ननु भावियौवराज्यादौ प्रवृत्तिवारणायेदानीन्तनकृतिसाध्यताज्ञानादेः प्रवर्तकत्वं वाच्यं तच्च न विधिवाक्यात् ततः शक्यकृतिसाध्यत्वेष्टसाधनत्वप्रकारकज्ञानस्यैवोत्पत्तेरिति कथं प्रवर्तकं ज्ञानं विधित इति । अत्र वदन्ति न विधिः साक्षात् प्रवर्तकं ज्ञानमुत्पादयति किंतु विधिवाक्यादिष्टसाधनत्वे कृतिसाध्यत्वे चावगते किमिष्टमित्याकाङ्क्षायां स्वर्गकामादिपदसमभिव्याहारात् स्वर्गसाधनमिति ज्ञानमानुमानिकं मानसं वोत्पद्यते अन्यथा विशेषरूपेण फलज्ञानाभावात् प्रवृत्त्यनुपपत्तेः एवमिदानीन्तनत्वान्तर्भावेण कृतिसाध्यत्वादिज्ञानमनुमानादिति । अत एवोक्तं मणिकृतापि एवं विधिजन्यज्ञानजन्यं ज्ञानं प्रवर्तकमिति । अत्र भट्टपादाः लोके प्रवृत्तिर्द्वेधा स्वेच्छाधीना परप्रेरणाजन्या च । तत्राद्यायां प्रवर्तनाया अनुपयोगेऽपि द्वितीयप्रवृत्तौ सा प्रयोजिका आचार्यप्रेरणयेदं करोमीति व्यवहारात् । प्रवर्तना च प्रवर्तयितुः प्रवृत्त्यनुकूलव्यापारविशेषः स च चेतनस्याभिप्राय एव अचेतनस्य तु वेदस्याभिधानामकः कश्चिच्छब्दसमवेतः तथा चाचार्याभिप्रायज्ञानाद्यथा शिष्यः प्रवर्तते त-

## प्रभा.

मार्थतया दध्यादिविधायकत्वादयं च विनियोगविधिः अपूर्वविधिनियमविधिपरिसङ्ख्याविधिभेदात्त्रिविधः तत्र प्रमाणान्तरेणाप्राप्तप्रापको विधिरपूर्वविधिः यथा व्रीहीन्प्रोक्षतीत्यादिः लेटि स्वरूपविधिं विना व्रीहिकर्मकप्रोक्षणस्याप्राप्तत्वात् । नियतप्रवृत्तिफलको विधिः नियमविधिः यथा व्रीहीनवहन्तीत्यादिः तत्र पुरोडाशनिष्पादकव्रीहिवैतुष्यद्वारा यागोपकारकत्वेनावहननप्रवृत्तेरिव नखविदळनेऽपि प्रवृत्तिप्रसक्त्या प्रवृत्तिनियमो न स्यादिति नखविदळनादिकरणकतुषादिमोचनप्रवृत्तिभञ्जनपूर्वकावहननकरणकतुषादिमोचनप्रवृत्तिनियमनिर्वाहकत्वादीदृग्विधेर्नियमविधित्वमिति । स्वसमभिव्याहृतधात्वर्थभिन्नार्थविषयकप्रवृत्तिभञ्जको विधिः परिसङ्ख्याविधिः यथा इमामगृभ्णन्रशनामृतस्येत्यश्वाभिधानीमाधत्त इत्यादिविधिः तत्र इमामगृभ्णन्रशनामृतस्य पूर्व आयुषि विदथेषु कव्ये इत्यादिमन्त्रस्य सामान्यतो रशनाग्रहणप्रतिपादकमन्त्रालिङ्गेन गर्दभरशनादानेऽपि विनियोगलाभादश्वरशनादानकाले मन्त्रवाक्यब्राह्मणवाक्यघटकविधितः प्रथममश्वरशनाग्रहणे एतन्मन्त्रविनियोगलाभेन निराकाङ्क्षतया न गर्दभरशनाग्रहणे तादृशमन्त्रविनियोग इति लक्षणसङ्गतिः । कर्तुः फलसंबन्धबोधको विधिरधिकारविधिः यथा ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यादिविधिः यागकर्तुः स्वर्गप्रवृत्त्यापत्तिवारणाय रागान्धस्यागम्यागमनप्रवृत्त्यनुपपत्तिवारणाय च इदानीन्तनत्वविशेषितेष्टसाधनत्वादिज्ञानस्यैव प्रवर्तकता वाच्या तादृशं च ज्ञानं न विधिवाक्यजन्यं केवलेष्टसाधनत्वादिज्ञानस्यैव विधिवाक्याज्जायमानत्वादिति कथं विधेः प्रवर्तकज्ञानजनकत्वमिति चेन्न विधिवाक्यादिष्टत्वरूपसामान्यधर्मपुरस्कारेण इष्टसाधनत्वप्रकारकशाब्दोत्पत्त्यनन्तरं किमिष्टमित्याकाङ्क्षोदयात्तत्पूरणाय स्वर्गकामादिपदसमभिव्याहारवशात् यागः स्वर्गसाधनमित्याकारकमानुमानिकं मानसं वा अवश्यमङ्गीकार्यम् । अन्यथेष्टस्य विशेषरूपेणाज्ञानात् प्रवृत्त्यनुत्पत्त्या विधेः प्रवर्तकत्वानुपपत्तिः एवंच शाब्दबोधोत्तरकालीनानुमानिकादिज्ञानस्य तत्तदंशे इदानीन्तनविषयकत्वमङ्गीकृत्य तादृशज्ञानस्य प्रवर्तकत्वमुपपाद्य तत्प्रयोजकतया विधेरपि प्रवर्तकत्वमावश्यकमिति एवं विधिजन्यज्ञानजन्यज्ञानं प्रवर्तकमिति मणिकृल्लेखनमपि सङ्गच्छते । भट्टास्तु लिङर्थोऽभिधा तज्ज्ञानं प्रवर्तकं तथाहि प्रवृत्तिर्द्विविधा स्वेच्छाधीना परेच्छाधीनेति तत्राद्यप्रवृत्ताविष्टसाधनताज्ञानं कारणं द्वितीयप्रवृत्तौ गुरुप्रेरणराजाज्ञादिज्ञानं आचार्यप्रेरणया इदं करोमि राजाज्ञया इदं करोमीत्यादिव्यवहारात् प्रेरणा आज्ञादिश्च प्रवर्तयितृनिष्ठः परकीयप्रवृत्त्यनुकूलो व्यापारः प्रवर्तयिता चेतनश्चेत्तदभिप्रायरूपः अचेतनलिङादिश्चेत् तादात्म्येन तन्निष्ठः अभिधानामकः पदार्थविशेषः तन्मते धर्मधर्मिणोरभेदात् शब्दानां नित्यत्वेन तस्या अपि नित्यत्वं नतु तत्समवेतः तद्भिन्नः धर्मिभिन्नधर्मानभ्युपगमात् स्वरूपातिरिक्तसमवायानभ्युपगमाच्च एवं चाचार्याद्यभिप्रायज्ञानात् यथा शिष्यादिः प्रवर्तते तथा विधिनिष्ठाभिधाज्ञानात् सर्वे आस्तिकाः प्रवर्तन्ते तादृशाभिधैव शाब्दी भावनेत्युच्यते तन्मते शाब्दी भावना आर्थी भावना चेति भावनाया द्वैविध्यात् शब्दनिष्ठा भावना शाब्दी अर्थनिष्ठा भावना आर्थी अर्थो यागादिरात्मा च तन्निष्ठता च यागादिविषयकत्वात्माश्रितत्वरूपा इयं भावना कृतिरूपा तथाच यागादिगोचरात्माश्रिता प्रवृत्तिः आर्थीभावनेति फलितार्थः उभयभावनापि विधिवाच्या। परन्तु विधित्वं शब्दभावनाशक्ततावच्छेदकं आख्यातत्वमर्थभावनाशक्ततावच्छेदकं तदुक्तं अभिधां भावनामाहुः अन्यामेव लिङादयः । अर्थात्मभावना त्वन्या सर्वाख्यातस्य गोचर इति । उभयसाधारणभावनात्वं किं केन कथमिति अंशत्रयवद्व्यापारत्वरूपं तत्र शब्दभावनायाः फलमर्थभावनैव । करणं लिङादिपदशक्तिज्ञानं अगृहीतलिङादिपदशक्तिकस्य अप्रवृत्तेः आलस्येन वर्तमानं पुरुषं फलादावुत्कटेच्छावत्त्वरूपप्रशस्तत्वज्ञानजननद्वारा बलवद्द्वेषमपनयन् बलवदनिष्टाननुबन्धित्वज्ञानजननद्वारा वा उद्युक्तं करोतीति उद्योजयतीति स्तुत्यर्थवादरूपप्ररोचनैवेतिकर्तव्यता । अर्थभावनायान्तु फलं स्वर्गादिः करणं यागादिः प्रयाजादिकामितिकर्तव्यतेति बोध्यम् । तदुक्तं लिङोऽभिधा सैव च शब्दभावना भाव्या च तस्याः पुरुषप्रवृत्तिः । संबन्धबोधः करणं तदीयं प्ररोचना चाङ्गतयोपयुज्यते ॥ इति ॥ अस्यार्थः लिङोऽभिधेति लिङ्वाच्या शाब्दीभावनेत्यर्थः किं भाव्यमित्याकाङ्क्षायामाह भाव्या च तस्या इति । केन भाव्येत्याकाङ्क्षायां संबन्धबोध इति । अभिधायां लिङादिपदशक्तिज्ञानं करणमित्यर्थः । इतिकर्तव्यताकाङ्क्षायां प्ररोचनेति स्तुत्यर्थवादरूपेत्यर्थः । अङ्गतयेति सहकारितयेत्यर्थः । ननु चेतननिष्ठस्य

## प्रभा.

प्रवृत्त्यनुकूलव्यापारस्य तात्पर्यरूपतया लिङादिरूपचेतननिष्ठतादृशव्यापारस्य शब्दभावनारूपतया उभयसाधारणानुगतरूपाभावेनोभयघटकप्रत्येकविषयज्ञानद्वयस्याप्यनतिप्रसक्तानुगतरूपाभावात् प्रत्येकरूपेण परेच्छाधीनप्रवृत्तिमात्रे हेतुतायां परस्परं व्यभिचारित्वेन कथं ज्ञानस्य तन्मते प्रवर्तकत्वमिति चेदत्र केचित्तदनुयायिनः चेतननिष्ठतात्पर्यं अचेतननिष्ठशब्दभावनां च प्रवृत्त्यनुकूलव्यापारत्वेनानुगमय्य तादृशव्यापारत्वावच्छिन्नविषयताशालिज्ञानत्वेनानुगतरूपेण प्रवृत्तिहेतुत्वस्वीकारात् नोक्तदोष इत्याहुः । तदसत् तात्पर्यभावनानिष्ठप्रवृत्त्यनुकूलत्वस्य प्रवृत्तिनिरूपितज्ञाननिष्ठाविषयतासंबन्धावच्छिन्नावच्छेदकत्वरूपतया तस्य स्वरूपभेदेन भिन्नत्वात् अनुगतधर्मरूपत्वासंभवात्तादृशावच्छेदकत्वस्य स्वरूपातिरिक्ताखण्डोपाधिरूपत्वेऽपि जात्यखण्डोपाध्यतिरिक्तपदार्थस्य स्वरूपतोऽवच्छेदकत्वासंभवेन उभयसाधारणानुगतधर्माप्रसिद्ध्यां तयोरवच्छेदकत्वासंभवात् । अन्यथा अवच्छेदकत्वस्येव स्वरूपतः कारणत्वस्यापि स्वीकारापत्तेः । नचेष्टापत्तिः सर्वसिद्धान्तविरुद्धत्वात् प्रवृत्तिकारणतावच्छेदकत्वेन प्रवृत्तिकारणतावच्छेदकत्वे आत्माश्रयापत्तिप्रसङ्गाच्च । अन्येतु निरुक्ततात्पर्यशब्दभावनयोरन्यतरत्वेनावच्छेदकत्वस्वीकारेण तादृशान्यतरत्वावच्छिन्नविषयताशालिज्ञानत्वेन हेतुत्वसंभवात् नाननुगमः नवा आत्माश्रय इत्याहुः तन्नाचार्यादितात्पर्यस्य तादृशतात्पर्यत्वेन शब्दभावनायाश्च तादृशभावनात्वेन ज्ञानमेव प्रवर्तकं आचार्यप्रेरणया करोमीत्यादिव्यवहारात् नतु तादृशान्यतरत्वेनान्यतरज्ञानं आचार्यतात्पर्यत्वादिना तादृशतात्पर्यज्ञानाभावदशायां अखण्डभेदरूपतादृशान्यतरत्वस्य तद्व्यक्तित्वावच्छिन्नप्रकारतानिरूपिततादृशतात्पर्यनिष्ठविषयताशालिज्ञानात् तद्व्यक्तिविशिष्टवानाचार्य इत्याकारकादपि प्रवृत्त्यापत्तेः । अपरेतु स्वाव्यवहितोत्तरक्षणोत्पत्तिकत्वसंबन्धेन इष्टसाधनताज्ञानादिरूपकारणवैशिष्ट्यं प्रवृत्तौ निवेश्य तत्तत्कारणविशिष्टप्रवृत्तिं प्रति तस्य तस्य हेतुत्वस्वीकारान्न व्यभिचारप्रसक्तिः कारणस्य कार्यतावच्छेदकप्रवेशस्यादोषत्वादित्याहुः तदसत् अनन्तकार्यकारणभावाभ्युपगमे कारणवैशिष्ट्यमनिवेश्यैव तद्व्यक्तिं प्रति तद्व्यक्तेर्हेतुत्वस्वीकारेणापि व्यभिचारवारणसंभवात् ईदृशप्रयासवैफल्यात्सामान्यकार्यकारणभावापन्नस्यैव विशेषकार्यकारणभावस्वीकारादन्यथा घटविशेषं प्रति रासभविशेषस्य हेतुत्वप्रसङ्गात् । अस्मद्गुरुचरणास्तु इष्टसाधनताज्ञानजन्यस्वेच्छाधीनप्रवृत्तिमात्रे जन्यतावच्छेदकतया एकं वैजात्यमङ्गीकृत्य तदवच्छिन्नं प्रति इष्टसाधनताज्ञानस्य हेतुत्वमेवं आचार्याभिप्रायज्ञानजन्यप्रवृत्तिमात्रे एकं वैजात्यं परिकल्प्य तादृशवैजात्यावच्छिन्नं प्रति आचार्याभिप्रायस्य हेतुत्वं एवं राजाद्यभिप्रायज्ञानजन्यप्रवृत्तिमात्रे उक्तरीत्या वैजात्यं परिकल्प्य कार्यकारणभावः स्वीकार्यः । एवमेव शब्दभावनाज्ञानजन्यप्रवृत्तावपि वैजात्यं परिकल्प्य कार्यकारणभावः स्वीकार्यः चेतनाचेतनभेदेन कार्यकारणभावमङ्गीकुर्वतां भट्टानां निरुक्तार्थ एव निगूढाभिप्राय इति समादधिरे । अत्रोक्तरीत्या कार्यकारणभावस्य भट्टानुमतत्वेऽपि इष्टसाधनताज्ञानेषु आचार्यतात्पर्यविषयकज्ञानेषु शब्दभावनाविषयकज्ञानेषु च प्रवृत्तित्वावच्छिन्नजनकतावच्छेदकतया मानसत्वव्याप्यमेकवैजात्यमङ्गीकृत्य तादृशवैजात्यपुरस्कारेण सामान्यकार्यकारणभावोऽपि संभवति तत्कालीनत्वघटितेष्टसाधनताज्ञानस्य शाब्दबोधोत्तरकालीनमानसस्यैव नैयायिकमते प्रवृत्तिहेतुत्ववत् लिङादिपदज्ञानजन्यशब्दभावनाशाब्दबोधोत्तरकालीनशब्दभावनाविषयकमानसिकज्ञानस्यैव स्तुत्यर्थवादरूपवेदार्थज्ञानजन्यफलादिनिष्ठोत्कटेच्छाविषयत्वरूपप्रशस्तत्वज्ञानानन्तरभाविनः प्रवृत्तिहेतुत्वात् एवमाचार्याद्युच्चरितस्वीयतात्पर्यबोधकघटमानयेतिवाक्यश्रवणजन्यशाब्दबोधोत्तरकालमेव मानसिकस्याचार्यादितात्पर्यज्ञानस्य श्रोतुर्जायमानतया तस्यैव प्रवृत्तिहेतुत्वाच्च नोक्तदोषप्रसक्तिः । एतेन इष्टसाधनताज्ञानादिषु न वैजात्यसंभवः अनुमितित्वादिना साङ्कर्यात् तद्वारणाय तादृशजातेः मानसत्वव्याप्यत्वस्वीकारे न्यूनवृत्तितया तस्याः कारणतावच्छेदकत्वासंभव इति दूषणं प्रत्युक्तम् । सर्वत्र मानसज्ञानस्यैव प्रवर्तकत्वात् । तस्मात्सामान्यकार्यकारणभावोऽपि तन्मते संभवतीति प्रतिभाति । एतादृशरीत्या क्वचिदिष्टसाधनताज्ञानस्य क्वचित्प्रेरणादिज्ञानस्य क्वचित् शब्दभावनाज्ञानस्याननुगतरूपेणानुगतरूपेण वा हेतुत्वप्राप्त्या सर्वत्र नेष्टसाधनताज्ञानस्य हेतुत्वं व्यभिचारादित्याहुः । तत्र स्वेच्छाधीनप्रवृत्तिस्थले क्लृप्तकारणभावस्य इष्टसाधनताज्ञानस्यैव सर्वत्र हेतुत्वसंभवात् नाचार्यप्रे-

**च विश्वजिता यजेतेत्यादौ यत्र फलं न श्रूयते तत्रापि स्वर्गः फलं कल्प्यते। नन्वहरहः सन्ध्यामुपासीतेत्यादाविष्टानुत्पत्तेः प्रवृत्तिः कथम्। नचार्थवादिकं ब्रह्मलोकादि प्रत्यवायाभावो वा फलमिति वाच्यं तथा सति काम्यत्वे नित्यत्वहान्यापत्तेः कामनाभावे चाकरणापत्तेः। इत्थं च यत्र फल-**

## प्रभा.

रणादिज्ञानस्यापि हेतुत्वं मानाभावात् किंतु क्वचिदिष्टसाधनताज्ञानसम्पादनद्वारा उपयुज्यते एवं शक्तिभिन्नशब्दाभिधायां मानाभावात् न सुतरां तज्ज्ञानस्य हेतुत्वम्। अत एव पुंसान्नेष्टाभ्युपायत्वात् क्रियास्वन्यः प्रवर्तकः प्रवृत्तिहेतुं धर्मं च प्रवदन्ति प्रवर्तनामिति मण्डनमिश्रोक्तं सङ्गच्छते। प्रवृत्त्यनुकूलत्वादिष्टसाधनत्वमेव प्रवर्तनेत्यर्थ इति दिक्। नन्वेवं सति विश्वजिता यजेतेत्यादौ विशेषतः फलाश्रवणात् इष्टसाधनताज्ञानानुत्पत्त्या प्रवृत्त्यनुपपत्तिरत आह ॥ **इत्थं चेति** ॥ प्रवृत्तिमात्रे इष्टसाधनताज्ञानस्य हेतुत्वसिद्धौ चेत्यर्थः ॥ **इत्यादौ यत्रेति** ॥ इत्याद्यभिन्नयादृशवाक्य इत्यर्थः। श्रुते सतीति शेषः ॥ **फलं न श्रूयत इति** ॥ विश्वजिन्नामकयागस्य फलं विशेषरूपेण न शाब्दबोधविषयतावदित्यर्थः ॥ **अत्रापीति** ॥ निरुक्तवाक्येऽपीत्यर्थः तादृशवाक्यजन्यशाब्दबोधोत्तरमिति यावत् ॥ **स्वर्गः फलं कल्प्यत इति** ॥ अनुमीयत इति मानसविषयीक्रियत इत्येवार्थः। तथाच विश्वजिता यजेतेतिश्रुतिघटकविधिप्रत्ययादिष्टत्वरूपसामान्यरूपेणेष्टसाधनत्वविषयकशाब्दबोधानन्तरं एतादृशेष्टं स्वर्गत्ववत् विशेषरूपेण शाब्दाविषयत्वे सति प्रवर्तकविधिवाक्यप्रतिपाद्यत्वात् यन्नैवं तन्नैवं यथा तृप्त्यादीत्याद्यनुमानात् स्वर्गानुमितिः नचाप्रयोजकत्वं सः स्वर्गः स्यात् सर्वान् प्रत्यविशिष्टत्वात् इति न्यायरूपानुकूलतर्कसत्त्वात् एवमुक्तन्यायसहकृतनिरुक्तप्रतिपाद्यत्वज्ञानात् इष्टः स्वर्ग इति मानसप्रमितिमान् जायत इति भावः। प्राभाकरमतानुयायी शङ्कते ॥ **नन्विति** ॥ **इत्यादाविति** ॥ इत्यादिविधिवाक्यप्रतिपाद्यसन्ध्योपासनादिकर्मणीत्यर्थः एतस्य कथं प्रवृत्तिरित्यनेनान्वयः तत्र हेतुमाह ॥ **इष्टानुत्पत्तेरिति** ॥ तादृशकर्मणः फलानुत्पत्तेरित्यर्थः तथाच तत्रेष्टसाधनत्वाभावादभ्रान्तस्य तज्ज्ञानानुत्पत्त्या कारणाभावात् प्रवृत्तिर्न स्यादिति भावः रात्रिसत्रन्यायेन सन्ध्योपासनादेरपि अर्थवादचोदितफलसंबन्धः स्वीकार्य इति शङ्कते ॥ **नचेति ॥ आर्थवादिकं ब्रह्मलोकादीति** ॥ सन्ध्यामुपासते ये तु सततं संशितव्रताः। विधूतपापास्ते या-

## दिनकरीयम्.

थाभिधाज्ञानाद्विधिस्थले प्रवृत्तिरिति सैव लिङर्थः सैव च शब्दभावना लिङ्त्वांशेनोच्यते। अर्थभावना त्वाख्यातत्वांशेन। तदुक्तम्। अभिधां भावनामाहुरन्यामेव लिङादयः। अर्थात्मभावना त्वन्या सर्वाख्यातस्य गोचर इति। अभिधा शब्दः तन्निष्ठा भावनाऽभिधाभावना अर्थो यागादिरात्मा वा अर्थात्मकत्वं चार्थगोचरत्वमर्थाश्रितत्वं वा तथा च यागादिगोचरात्माश्रिता प्रवृत्तिरर्थभावना अत्र च शब्दभावनाया अर्थभावना भाव्या अर्थभावनायाश्च फलं स्वर्गादीति बोध्यं तदुक्तम्। लिङोऽभिधा सैव च शब्दभावाना भाव्या च तस्याः पुरुषप्रवृत्तिः। सम्बन्धबोधः करणं तदीयं प्ररोचना चाङ्गतयोपयुज्यते ॥ इति। अस्यार्थः लिङोऽभिधा वाच्या तस्याः किं भाव्यमित्याकाङ्क्षायामुक्तं भाव्या च तस्या इति। केन भाव्या इत्याकाङ्क्षायां सम्बन्धेति। सम्बन्धबोधः लिङादिपदशक्तिज्ञानं तत्रालस्येन निवर्तमानं पुरुषं स्तुतिरुत्तेजयतीति सा सहकारिणीत्याह प्ररोचनेतीति वदन्ति। तत्र लोके स्वेच्छाधीनप्रवृत्तौ इष्टसाधनताज्ञानस्य हेतुत्वेन क्लृप्तत्वादन्यत्रापि प्रवृत्तौ तदेव हेतुरस्तु किमतिरिक्तप्रवर्तनाज्ञानस्यातिरिक्तहेतुत्वेन। अत एव वेदेऽपि न प्रवर्तनाज्ञानं हेतुः शब्दशक्तिभिन्नायामभिधायां मानाभावाच्च। अत एव मण्डनमिश्राः पुंसां नेष्टाभ्युपायत्वात् क्रियास्वन्यः प्रवर्तकः। प्रवृत्तिहेतुं धर्मं च प्रवदन्ति प्रवर्तनामित्यादिना प्रवृत्त्यनुकूलत्वेनेष्टसाधनत्वमेव प्रवर्तनेत्युक्तवन्तः। नन्वेवं विश्वजिता यजेतेत्यादौ फलाश्रवणेनेष्टसाधनताज्ञानाभावात् प्रवृत्तिर्न स्यादत आह ॥ **इत्थं चेति** । इष्टसाधनत्वादेर्विध्यर्थत्वे चेत्यर्थः। ननु नित्ये सन्ध्योपासनादौ फलाभावान्नेष्टसाधनत्वज्ञानं प्रवर्तकं न वा तद्विषयो विध्यर्थ इत्यभिप्रायेण शङ्कते ॥ **नन्विति** ॥ **नचार्थवादिकमिति**॥ सन्ध्यामुपासते ये तु सततं संशितव्रताः। विधूतपापास्ते यान्ति ब्रह्मलोकं सनातनमित्यर्थवादबोधितमित्यर्थः ॥ **नित्यत्वहान्यापत्तेरिति** ॥ नित्यत्वका-

श्रुतिस्त्वर्थवादमात्रमिति चेन्न ग्रहणश्राद्धादौ नित्यत्वनैमित्तिकत्वयोरिव भरणीश्राद्धे काम्यत्वनैमित्तिकत्वयोरिव नित्यत्वकाम्यत्वयोरप्यविरोधात् । नच कामनाभावेऽकरणापत्तिः त्रिकालस्तवपाठादाविव कामनासद्भावस्यैव कल्पनात् । न तु वेदबोधितकार्यताज्ञानात् प्रवृत्तिरिति सम्भवति

## प्रभा.

न्ति ब्रह्मलोकं सनातनमित्यर्थवादप्रतिपाद्यपापनाशपूर्वकब्रह्मलोकप्राप्तिरित्यर्थः ॥ **प्रत्यवायाभावो वेति** ॥ प्रत्यवायानुत्पत्तिरित्यर्थः वाशब्दस्समुच्चयार्थः ॥ **फलमिति** ॥ तथाच नित्येऽपि आर्थवादिकफलोत्पत्तिस्वीकारेणाभ्रान्तस्यापि इष्टसाधनताज्ञानोत्पत्तेः तत्रापि प्रवृत्तिर्नानुपपन्नेति भावः ॥ **तथा सतीति** ॥ नित्यस्यापि फलसाधनत्व इत्यर्थः ॥ **काम्यत्वेनेति** ॥ सन्ध्योपासनादेः काम्यकर्मरूपत्वेनेत्यर्थः ॥ **नित्यत्वहान्यापत्तेरिति** ॥ सफलत्वे सति विधिप्रतिपाद्यत्वरूपकाम्यत्वस्य निष्फलत्वे सति विधिप्रतिपाद्यत्वरूपनित्यत्वस्य च विरोधादिति भावः । इष्टसाधनताज्ञानाधीनकार्यताज्ञानजन्यप्रवृत्तिविषयत्वरूपकाम्यत्वस्य विहितकालजीवित्वशौचादिमत्ताज्ञानाधीनकार्यताज्ञानजन्यप्रवृत्तिविषयत्वरूपनित्यत्वस्य च विरोधादिति भाव इत्यस्मद्गुरुचरणाः । ननु तस्य नित्यत्वाभाव इष्ट इत्यत आह ॥ **कामनाभाव इति** ॥ फलेच्छाभाव इत्यर्थः ॥ **अकरणापत्तेश्चेति** ॥ तथाच पुत्रकामनाशून्यस्य पुत्रेष्टेरकरणे प्रत्यवायाभाववत् ब्रह्मलोकप्राप्त्यादिकामनाशून्यस्य सन्ध्योपासनाद्यकरणे प्रत्यवायाभावः स्यादिति भावः । ननु सन्ध्योपासनादेः निष्फलत्वे सति विधिप्रतिपाद्यत्वरूपनित्यत्वमङ्गीकृत्य शौचादिमत्ताज्ञानाधीनकार्यताज्ञानात् तत्र प्रवृत्त्युपपादनेन उक्तफलश्रुतेः का गतिरित्यत आह ॥ **इत्थं चेति** ॥ उक्तयुक्त्या निष्फलत्वसिद्धौ चेत्यर्थः ॥ **फलश्रुतिरिति** ॥ फलप्रतिपादकसन्ध्यामुपासतइत्याद्यर्थवाद इत्यर्थः ॥ **तत्रेति** ॥ सन्ध्योपासनादिकर्तरीत्यर्थः ॥ **अर्थवादमात्रमिति** ॥ प्रशस्तत्वबोधमात्रतात्पर्यकः नतु फलत्वबोधतात्पर्यक इत्यर्थः । तथाच गावो वा एतत्सत्रमासताशृङ्गा सती शृङ्गाणि नो जायन्तामित्याद्यर्थवादस्य गवामयने शृङ्गविशिष्टगवां यथा प्राशस्त्यप्रतिपादनपरत्वं नतु शृङ्गकामनापूर्वकगोकर्तृकसत्रयागप्रतिपादकत्वं तथा सन्ध्योपासकस्य प्रशस्तत्वप्रतिपादनपरत्वं न तस्य निरुक्तफलसंबन्धप्रतिपादकत्वं सन्ध्यामुपासते ये त्वित्याद्यर्थवादस्येति भावः ॥ **ग्रहणश्राद्धादाविति** ॥ आदिना ग्रहणस्नानपरिग्रहः ॥ **नित्यत्वनैमित्तकत्वयोरिवेति** ॥ उपरागे श्राद्धं कुर्वीत उपरागे स्नायादिति विधिवाक्येन उपरागनिमित्तकश्राद्धस्नानयोः नित्यत्वप्रतिपादनात् उपरागनिमित्तकत्वप्रतिपादनाच्च तयोर्नित्यत्वनैमित्तिकत्ववदित्यर्थः ॥ **भरणीश्राद्ध इति** ॥ भरणीनक्षत्रनिमित्तकश्राद्ध इत्यर्थः ॥ **काम्यत्वनैमित्तिकत्वयोरिवेति** ॥ सप्तविंशतिनक्षत्राणां मध्ये एकैकनक्षत्रनिमित्तकं एकैककाम्यश्राद्धमुक्त्वा एकैकश्राद्धस्य पशुपुत्रादिरूपैकैकाभ्युदयफलं च उक्त्वा भरणीनिमित्तकश्राद्धकर्तुः तावत्फलवत्त्वस्य हरिवंशादौ प्रतिपादितत्वात्नक्षत्रनिमित्तकत्वाच्च भरणीनिमित्तकश्राद्धस्य काम्यत्वनैमित्तकत्ववदित्यर्थः ॥ **नित्यत्वकाम्यत्वयोरपीति** ॥ सन्ध्योपासनादेरित्यादिः ॥ **अविरोधादिति** ॥ स्वीकारादित्यर्थः । तथाचाहरहस्सन्ध्यामुपासीतेत्यादिविधिवाक्येन नित्यत्वप्रतिपादनात् रात्रिसत्रन्यायेन सन्ध्यामुपासते ये त्वित्याद्यर्थवादचोदितफलसाधनत्वाच्च सन्ध्योपासानादेर्नित्यत्वकाम्यत्वस्वीकारे बाधकाभावादिति भावः ॥ **कामनाभाव इति** ॥ अर्थवादचोदितकामनादिविरहिण इत्यर्थः ॥ **अकरणापत्तिरिति** ॥ पुत्रेष्ट्यादिरूपकाम्यकर्माकरणे यथा प्रत्यवायानुत्पत्तिः तथा सन्ध्योपासनाद्यकरणप्रयुक्तप्रत्यवायोत्पत्तिर्न स्यादित्यर्थः ॥ **त्रिकाल-**

## दिनकरीयम्.

म्यत्वयोर्विरोध इत्यभिमानः । ननु तयोर्विरोधित्वे मानाभावः अहरहःसन्ध्यामुपासीतेत्यादिश्रुतिसन्ध्यामुपासतइत्यर्थवादयोरेकवाक्यताबलेन तत्कालजीविफलकामस्य संवलिताधिकारः कल्प्यत इत्यत आह ॥ **कामनाभाव इति** ॥ **अकरणापत्तेरिति** ॥ अकरणे प्रत्यवायानुत्पत्त्यापत्तेरित्यर्थः । कामनारूपाधिकाराभावादनधिकृताकरणस्य प्रत्यवायजनकत्वाभावादिति भावः । ननु तथापि नित्यस्थलीयफलश्रुतेर्वैयर्थ्यमित्याशङ्क्यार्थवादतया स्तुतिमात्रे तात्पर्यं कल्प्यत इत्याह ॥ **इत्थं चेति** ॥ **कल्पनादिति** ॥ इदमुपलक्षणं अ-

स्वेष्टसाधनत्वमतिज्ञाय तादृशकार्यताज्ञानसहस्रेणापि प्रवृत्तेरसम्भवात्। यदपि पण्डापूर्वं फल-

प्रभा.

स्तवपाठादाविवेति॥ कालत्रयविहितस्तोत्रपाठादाविवेत्यर्थः। आदिना कालद्वयविहिताग्निहोत्रपरिग्रहः। तथाच सन्ध्योपासनाङ्गतया अवश्यकर्तव्यगायत्रीकवचादेः पारायणस्य त्रिसन्ध्यं कीर्तयेद्यस्तु सर्वान् कामानवाप्नुयात् इति वचनेन यथा कामनासद्भावनैयत्यं तथा सन्ध्योपासनादेरपि कामनासत्त्वमावश्यकमिति भावः इदमुपलक्षणं फलकामनायाः प्रवृत्तिप्रयोजकतया कामनादिविरहिणः सन्ध्योपासनादौ काम्यसाधनताज्ञानाभावात् प्रवृत्त्यभावेऽपि अकुर्वन्विहितं कर्म नरो भवति किल्बिषी इति वचनेन शुचि कर्म कुर्वीतेत्यादिश्रुत्या च शुचित्वादिमतः विहितकर्माननुष्ठानस्य प्रत्यवायसम्पादकत्वबोधनात् शुचित्वादिविरहिणः तदकरणस्य प्रत्यवायासम्पादकत्वबोधनाच्च कामनादिविरहिणः नित्यकर्माकरणप्रयुक्तप्रत्यवायवत्त्वमस्त्येवेति प्रत्यवायानुत्पत्तिफलकनित्यकर्मप्रवृत्त्यर्थमास्तिकस्य प्रत्यवायनिवृत्त्यादिकामना अवश्यं स्वीकार्येत्यपि द्रष्टव्यम्। केचित्तु॥ कल्पनादिति॥ इदमुपलक्षणं अर्थवादोपस्थितकामनायाः अधिकारत्वेऽपि अकुर्वन्विहितं कर्मेत्यादिना शौचे सति विहिताननुष्ठानस्य प्रत्यवायजनकत्वबोधनात् कामनासंवलितस्य शुचित्वादेर्नाधिकारत्वं किंतु नित्यस्थले फलकामनाशुचित्वाद्योरधिकारयोस्संवलनं तथाच कामनादिविरहेऽपि शुचित्वादिरूपाधिकारसत्त्वात् सन्ध्याद्यकरणस्य प्रत्यवायजनकत्वमेव कामनाया अधिकारत्वेऽपि तदधिकारवतः शौचादिविरहेण सन्ध्याद्यकरणस्य प्रत्यवायजनकत्वं न कल्प्यते शुचितत्कालजीवित्वरूपाधिकारैकदेशवतोऽपि अकरणे प्रत्यवायजनकत्वं कल्प्यते तेन संवलिताधिकारत्वेऽपि क्षतिविरहाच्चेत्यपि द्रष्टव्यम्। एतेन तत्र नियमेन फलकामनासत्त्वे मानाभावेऽपि न क्षतिरित्याहुः। तदसत् नैयायिकमते नित्ये काम्ये च कामनाया एवाधिकारत्वेन कामनावानेवाधिकारी इष्टसाधनतादित्रितयज्ञानस्यैव सर्वत्र प्रवर्तकत्वात् न शुचित्वादेरधिकारत्वं तन्मते साक्षात्परम्परया वा तज्ज्ञानस्याप्रवर्तकत्वात् अत इदमुपलक्षणमित्यारभ्य किन्तु नित्यस्थले फलकामनाशुचित्वाद्योरधिकारयोस्संवलनमित्यन्तग्रन्थोऽलग्नः। एवं कामनाविरहप्रयुक्तनित्यकर्माकरणस्य प्रत्यवायसम्पादकत्वेऽपि कामनावतः शौचादिविरहप्रयुक्तनित्यकर्माकरणमळीकमेव। नहि सकलकारणसत्त्वे कार्यानुत्पत्तिस्तत्कालजीवित्वस्य नित्यकर्मप्रयोजकत्वेऽपि शुचित्वस्य प्रयोजकत्वे मानाभावात्। अन्यथा अशुचिर्वा शुचिर्वापि काले सन्ध्यां समाचरेदिति वचनविरोधापत्तेः। नचैवं सति शुचि कर्म कुर्वीतेत्यादिश्रुतिविरोधापत्तिरिति वाच्यं तस्याः शुचित्वे काम्यसाधारणकर्मत्वावच्छिन्नप्रयोजकत्वपरत्वात् सन्ध्योपासकस्य कदाचिच्छुचित्वविरहेऽप्युक्तश्रुतिविरोधाभावात् एवमुक्तवचनेन सन्ध्यादेः विध्युक्तकालावच्छेदेनावश्यकर्तव्यत्वप्रतिपादनेन शौचाभावप्रयुक्तसन्ध्याद्यकरणस्यापि प्रत्यवायसम्पादकत्वात् तथाचेत्यारभ्य द्रष्टव्यमित्यन्तग्रन्थोऽप्यलग्नः एवं कामनाविरहप्रयुक्तेष्टसाधनताज्ञानाभावेन सन्ध्याद्यकरणप्रयुक्तप्रत्यवायोत्पत्तेरावश्यकत्वादेतेन तत्र नियमेन फलकामनासत्त्वे मानाभावेऽपि न क्षतिरित्यन्तग्रन्थोऽप्यलग्न एवेति दिक्। ननु विहितकालजीवित्वलिङ्गककार्यताज्ञानादेव नित्ये प्रवृत्त्युपपत्तेः नित्यस्य काम्यत्वकल्पनं तत्प्रवृत्ताविष्टसाधनताज्ञानस्य हेतुत्वकल्पनं चायुक्तमिति प्राभाकरनिर्गळितमतं सिंहगुहावलोकन्यायेन प्रसङ्गसङ्गत्या चेदानीं दूषय-

दिनकरीयम्.

र्थवादोपस्थितकामनाया अधिकारत्वेऽपि अकुर्वन् विहितं कर्मेत्यादिना शौचे सति विहिताननुष्ठानस्य प्रत्यवायजनकत्वबोधनात् कामनासंवलितस्य शुचित्वादेर्नाधिकारत्वं किंतु नित्यस्थले फलकामनाशुचित्वाद्योरधिकारयोः संवलनं तथा च कामनाविरहेऽपि शुचित्वादिरूपाधिकारसत्त्वात् तदा सन्ध्याद्यकरणस्य प्रत्यवायजनकत्वमेव कामनाया अधिकारत्वेऽपि तदधिकारवतः शौचादिविरहिणः सन्ध्याद्यकरणस्य प्रत्यवायजनकत्वं न कल्प्यते शुचितत्कालजीवित्वरूपाधिकारैकदेशवतोऽप्यकरणे प्रत्यवायजनकत्वं कल्प्यते न संवलिताधिकारत्वेऽपि क्षतिर्विरहाच्चेत्यपि द्रष्टव्यम्। एतेन नियमेन फलकामनासत्त्वे मानाभावेऽपि न क्षतिरिति सूचितम्। ननु नित्यगोचरप्रवृत्ताविष्टसाधनताज्ञानं कारणमेव नेत्यनेनैवोपपत्तौ किमर्थं नित्यस्यापि काम्यत्वं कल्पनीयमत आह॥ न त्विति॥ स्वेष्टसाधनत्वमिति॥ अन्वयव्यतिरेकाभ्यां प्रवृत्तित्वावच्छिन्नं प्रती-

मिति तदपि न कामनाभावेऽकरणापत्तेस्तौल्यात् । कामनाकल्पने त्वार्थवादिकं फलमेव रात्रिसत्रन्यायात् कल्प्यताम् । अन्यथा प्रवृत्त्यनुपपत्तेः तेनानुत्पत्तिं प्रत्यवायस्यान्ये मन्यन्ते । एवं सन्ध्यामुपासते ये तु सततं शंसितव्रताः । विधूतपापास्ते यान्ति ब्रह्मलोकमनामयम् ॥ एवं दद्यादहरहः श्राद्धं पितृभ्यः प्रीतिमावहन् इति प्रीत्यात्मकमेव फलमस्तु । न च पितृप्रीतिः कथं फलं व्यधिकरणत्वादिति वाच्यं गयाश्राद्धादाविवोद्देश्यत्वसम्बन्धेनैव फलजनकत्वस्य क्वचित्कल्पनात् । अत एवोक्तं शास्त्रदर्शितं फलमनुष्ठानकर्तरीत्युत्सर्ग इति । पितृ-

## प्रभा.

ति ॥ **नन्विति॥प्रवृत्तेरसंभवादिति** ॥ निष्फले प्रवृत्त्यभावेनान्वयव्यतिरेकाभ्यां प्रवृत्तित्वेन इष्टसाधनताज्ञानत्वेन कार्यकारणभावस्य निर्धारितत्वादिति भावः। अत एव कुसुमाञ्जलौ सन्ध्योपासनमफलमपि क्रियते वेदबोधितत्वादिति गुरुमतमाशङ्क्य सन्ध्योपासनं सफलं शिष्टैरनुष्ठीयमानत्वादित्यनुमानेन तस्य सफलत्वं प्रसाध्य निष्फलत्वसाधकहेतोः ज्योतिष्टोमादौ व्यभिचारप्रदर्शनेन तन्मतन्निरस्य गुरुमतं न गुरोर्मतमित्युदयनाचार्याणां हेळनमपि सङ्गच्छते । एवं सुखदुःखाभावयोरिव नित्यस्थले पण्डापूर्वं फलमिति प्राभाकरैकदेशिमतमपि दूषयति ॥ **यद्यपीति** ॥ कामनाविरहतत्सत्त्वाभ्यां विकल्प्य दूषयति ॥ **कामनाभाव इति** ॥ नियमेन पण्डापूर्वात्मकफलकामनादिविरह इत्यर्थः ॥ **अकरणापत्तेस्तौल्यादिति** ॥ इष्टसाधनताज्ञानाभावात्प्राक् अप्रवृत्तिप्रयुक्तप्रत्यवायोत्पत्तिर्न स्यादिति उक्तदोषप्रसक्तत्वादित्यर्थः ॥ **कामनाकल्पन इति** ॥ नियमेन कामनास्वीकार इत्यर्थः ॥ **रात्रिसत्रन्यायादिति** ॥ ज्योतिर्गौरायुरितीति श्रुतिप्रमाणकानां ज्योतिर्गौरायुरितिनामकानां रात्रिसत्रशब्दवाच्यकर्मणां रात्रिसत्रेण यजेतेति विधितः फलश्रवणाभावात् फलजिज्ञासायां श्रुते संभवति सति अत्यन्ताश्रुतस्वर्गफलकल्पने गौरवाद्विश्वजिन्न्यायापनोदेन प्रतितिष्ठन्ति ह वा य एता रात्रीरुपयन्ति इत्यर्थवादबोधितप्रतिष्ठारूपफलं यथा सिद्धान्तितं तथा अत्रापि लाघवात् सन्ध्यामुपासते ये इत्यार्थवादादुपस्थितब्रह्मलोकावाप्तिरूपफलमेवावश्यं स्वीकार्यमित्यर्थः ॥ **अन्यथेति** ॥ तस्य निष्फलत्व इत्यर्थः ॥ **प्रवृत्त्यनुपपत्तेरिति**॥प्रवृत्त्यनुपपत्तिरूपोक्तदोषापत्तेरित्यर्थः प्रवृत्त्यनुपपत्तेरिति पाठः प्रामाणिकः गतार्थत्वादित्यस्मद्गुरुचरणाः ॥ **तेनेति** ॥ सन्ध्योपासनादौ लाघवादर्थवादोपस्थितफलस्वीकारेणेत्यर्थः ॥ **अनुत्पत्तिं प्रत्यवायस्येति**॥प्रत्यवायस्यानुत्पानिमित्तिं योजना अनुत्पत्तिः प्रागभावपरिपालनं तस्य सन्ध्याफलत्वं तत्सत्ताधीनसत्ताकत्वरूपयोगक्षेमसाधारणं बोध्यं ॥ **तथा चेति** ॥ तथैवेत्यर्थः अर्थवादसिद्धप्रत्यवायानुत्पत्तिरूपफलमेवेति यावत ॥ **अन्य इति** ॥ नवीन इत्यर्थः ॥ **एवमिति** ॥ प्राचीन इत्यादिः वक्ष्यमाणमित्यर्थः ॥ **अनामयमिति** ॥ एतादृशार्थवादोपस्थितप्रत्यवायनिवृत्तिपूर्वकब्रह्मलोकप्राप्तिरूपफलमित्यर्थः । मनुत इत्यस्यानुषङ्गेणान्वयः ॥ **प्रीतिमावहन्नित्यादीति** ॥ इत्यर्थवादोपस्थितेत्यर्थः ॥ **अस्त्विति** ॥ अङ्गीकर्तव्यमित्यर्थः ॥ **व्यधिकरणत्वादिति** ॥ यः कर्ता स फलभोक्तेति न्यायेन पितृप्रीतेः कर्तृनिष्ठत्वाभावात्तस्याः श्राद्धफलत्वं न

## दिनकरीयम्.

ष्टसाधनताज्ञानस्य हेतुत्वादिति भावः। अत एव कुसुमाञ्जलौ सन्ध्योपासनमफलमपि क्रियते वेदबोधितत्वादित्याशङ्क्य गुरुमतमेतन्न गुरोर्मतमित्यभिधायैवोपेक्षितमाचार्यैः। यच्च पण्डापूर्वं स्वतः प्रयोजनं नित्यस्य कर्मण इति प्राभाकरमतं तदपि दूषयति ॥ **यद्यपीति** ॥ **कामनाभावे** पण्डापूर्वात्मकफलकामनाभावे ॥ **रात्रिसत्रन्यायादिति** ॥ तथा हि रात्रिसत्रशब्दवाच्यानां ज्योतिर्गौरित्यादिवाक्योत्पन्नकर्मणां फलजिज्ञासायामत्यन्ताश्रुतस्वर्गादिकल्पने गौरवाद्विश्वजिन्न्यायापवादेन प्रतितिष्ठन्तीह वा य एता रात्रीरुपयन्तीत्यर्थवादश्रुतौ प्रतिष्ठैव फलमिति सिद्धान्तितं तथात्राप्यार्थवादिकब्रह्मलोक एव फलं लाघवादित्यर्थः ॥ **अन्यथा** फलाभावे ॥ **तेन** आर्थवादिकफलकल्पने लाघवेन । तत्र तत्रार्थवादिकं फलं दर्शयति ॥ **अनुत्पत्तिमित्यादिना** ॥ **अत एव** पितृप्रीतेः श्राद्धफलत्वादेव ॥ **उत्सर्ग इति** ॥ श्राद्धादिफलस्य कर्तृमात्रगतत्वे तु व्यभिचाराभा-

णां मुक्तत्वे तु स्वस्य स्वर्गादिफलं यावन्नित्यनैमित्तिकानुष्ठानस्य सामान्यतः स्वर्गजनकत्वात्। पण्डापूर्वार्थं प्रवृत्तिश्च न सम्भवति। न हि तत्सुखदुःखाभाववत्स्वतः पुरुषार्थः न वा तत्साधनम्। प्रत्यवायानुत्पत्तौ कथं प्रवृत्तिरिति चेदित्थम्। यथा हि नित्ये कृते प्रत्यवायाभावस्तिष्ठति

## प्रभा.

संभवतीत्याशयः॥ **गयाश्राद्धादाविवेति**॥ आदिना ब्रह्मकपालश्राद्धादेः परिग्रहः गयायां पिण्डदानं च पितृप्रीतिकरं भवेदिति वचनेन गयाश्राद्धस्य पितृतृप्तिहेतुत्वप्रतिपादनात् तदनुरोधेन पितृनिष्ठतृप्तिं प्रत्युद्देश्यत्वसंबन्धेन गयाश्राद्धस्य हेतुत्वस्वीकारवदित्यर्थः॥ **क्वचिदिति**॥ अहन्यहनि कर्तव्यपितृप्रीतिफलश्राद्धादावपीत्यर्थः॥ **कल्पनादिति**॥ दद्यादहरहः श्राद्धमित्याद्युक्तवचनाविरोधापत्त्या स्वीकरणीयत्वादित्यर्थः॥ **अत एवेति**॥ क्वचित्पितृप्रीत्यादेरपि श्राद्धफलत्वस्वीकारादेवेत्यर्थः॥ **उक्तमिति**॥ भट्टैरित्यादिः॥ **शास्त्रादर्शितमिति**॥ अर्थवादाद्यनुपस्थितमेवेत्यर्थः॥ **अनुष्ठातुरिति**॥ अनुष्ठातुस्संभवतीति हेतोरित्यर्थः॥ **उत्सर्ग इति**॥ यः कर्ता स फलभोक्तेति नियम इत्यादिः बहुस्थले तथा संभवाभिप्रायक एवेत्यर्थः। ननु सार्वत्रिकः उक्तस्थले व्यभिचारादिति भावः। ननु गयाश्राद्धादेः पितृतृप्त्यादिफलकत्वं न संभवति मुक्तपितृकपुरुषानुष्ठिततादृशश्राद्धे व्यभिचारादित्याशङ्कां परिहरति॥ **पितृणामिति**॥ **मुक्तत्वे त्विति**॥ एकविंशतिदुःखध्वंसवत्त्वे त्वित्यर्थः अवधारणार्थकतुशब्दः स्वर्ग इत्युत्तरं योज्यः॥ **स्वस्येति**॥ श्राद्धकर्तुरित्यर्थः॥ **स्वर्ग इति**॥ स्वर्ग एवेत्यर्थः। तत्र हेतुमाह॥ **यावदिति**॥ सर्वस्य नैमित्तिकनित्यकर्मानुष्ठानस्येत्यर्थः॥ **सामान्यत इति**॥ विहितकर्मत्वेन रूपेणेत्यर्थः॥ **स्वर्गफलकत्वादिति**॥ स्वर्गफलकत्वाङ्गीकारादित्यर्थः तथा स स्वर्गस्स्यात्सर्वान्प्रत्यविशिष्टत्वादिति न्यायेन यत्र विशेषफलाश्रवणं श्रुतफलस्य बाधो वा तत्र स्वर्गफलप्रतिपादनात् मुक्तपितृकर्तृकश्राद्धस्य शरीररूपकारणाभावेन पितरि तृप्तिरूपफलानुत्पत्त्या तत्फलकत्वासंभवेन सामान्यशास्त्रप्रतिपाद्यस्वर्गफलकत्वस्वीकारेऽपि गयायां पिण्डदं नं चेत्यादिवचनस्य नाप्रामाण्यं सकलकारणसमवहितस्यैव गयाश्राद्धादेः तृप्त्यादिफलकत्वस्य तादृशवचनतात्पर्यार्थत्वादिति भावः। पूर्वं सन्ध्योपासनादेः पण्डापूर्वफलकत्वं न संभवतीति तस्याश्रुतत्वादिति दूषितम्। इदानीं तस्य फलत्वमेव न संभवतीति दूषयति॥ **पण्डापूर्वार्थमिति**॥ पण्डापूर्वमुद्दिश्येत्यर्थः॥ **प्रवृत्तिश्चेति**॥ सन्ध्योपासनादिविधेयकप्रवृत्तिश्चेत्यर्थः। अवधारणार्थकचशब्दः नेत्युत्तरं योज्यः॥ **न संभवतीति**॥ नैवोत्पत्तुमर्हतीत्यर्थः। एतदेवोपपादयति॥ **नहीति**॥ **तदिति**॥ पण्डापूर्वमित्यर्थः॥ **सुखदुःखाभाववदिति**॥ सुखमिव दुःखाभाव इवेत्यर्थः॥ **स्वतःपुरुषार्थ इति**॥ स्वज्ञानमात्रजन्याभिलाषाविषय इत्यर्थः तथाच पण्डापूर्वस्य सुखदुःखाभावयोरिव स्वज्ञानमात्रजन्याभिलाषाविषयत्वाभावान्न तस्य फलत्वमिति भावः। नन्वेवमपि विधेयतया प्रवृत्तिरास्तामत आह॥ **नचेति**॥ नापीत्यर्थः॥ **तत्साधनमिति**॥ फलसाधनमित्यर्थः। फलसाधनत्वपण्डत्वयोर्विरुद्धत्वादिति भावः। ननु नैयायिकमते प्रत्यवायानुत्पत्तेः कथं फलत्वं स्वतः पुरुषार्थत्वाभावात् दुःखानुत्पत्तिरूपपुरुषार्थसाधनत्वात्प्रवृत्तिरित्यपि न दुःखप्रागभावरूपदुःखानुत्पत्तेरजन्यतया तस्य फलत्वासंभवात् प्रत्यवायानुत्पत्तेः तत्साधनत्वासंभवाच्चेत्याशयेनाक्षिपति॥ **प्रत्यवायानुत्पत्ताविति**॥ प्रत्यवायप्रागभाव इत्यर्थः॥ **कथं प्रवृत्तिरिति**॥ उक्तरीत्या तस्य उद्देश्यविधेयतान्यतराभावादित्याशयः। परिहरति॥ **इत्थमिति**॥ वक्ष्यमाणप्रकारेणेत्यर्थः। तादृशप्रकारमेवाह॥ **तथाहीति**॥ **नित्ये कृते इति**॥

## दिनकरीयम्.

वान्नियम एव स्यादिति भावः पण्डापूर्वस्वीकारेऽपि तत्साधनताज्ञानस्य प्रवर्तकत्वं न सम्भवतीत्याह॥ **पण्डापूर्वार्थमिति**॥ **न वा तत्साधनमिति**॥ तथा चेच्छाविषयत्वाभावेन फलत्वाभावान्न तत्साधनताज्ञानं प्रवर्तकमिति भावः। ननु त्वन्मतेऽपि प्रत्यवायानुत्पत्तेः कथं फलत्वं स्वतः पुरुषार्थत्वाभावात् न वा दुःखानुत्पत्तिरूपपुरुषार्थसाधनत्वेन तत्रेच्छाविषयत्वं दुःखानुत्पत्तेः प्रागभावरूपायास्तदजन्यत्वादित्याशङ्क्य परिहरति॥ **प्रत्यवायेत्यादिना**॥ **अनुत्पत्ताविति**॥ उद्देश्यत्वं सप्तम्यर्थः॥ **कथं प्रवृत्तिरिति**॥ पूर्वो-

तदभावे तदभावः एवं प्रत्यवायाभावसत्त्वे दुःखप्रागभावसत्त्वं तदभावे तदभाव इति योगक्षेमसाधारणकारणताया दुःखप्रागभावं प्रत्यपि सुवचत्वात् । एवमेव प्रायश्चित्तस्यापि दुःखप्रागभावहेतुत्वमिति । ननु न कलञ्जं भक्षयेदित्यत्र विध्यर्थे कथं नञर्थान्वयः इष्टसाधनत्वाभावस्य कृतिसाध्यत्वाभावस्य च बोधयितुमशक्यत्वादिति चेन्न तत्र बाधादिष्टसाधनत्वं

## प्रभा ।

सन्ध्योपासनादिकरणे सतीत्यर्थः ॥ **प्रत्यवायाभावस्तिष्ठतीति** ॥ प्रत्यवायप्रागभावस्तिष्ठतीत्यर्थः ॥ **तदभावे तदभाव इति** ॥ सन्ध्योपासनाद्यकरणे प्रत्यवायप्रागभावनाश इति एतावता प्रत्यवायानुत्पत्तेः योगक्षेमसाधारणसन्ध्योपासनादिनिरूपितकार्यत्वमुपपाद्येदानीं दुःखानुत्पत्तिहेतुत्वमुपपादयति ॥ **एवमित्यादि** ॥ **प्रत्यवायाभावसत्त्व इति** ॥ प्रत्यवायप्रागभावसत्त्व इत्यर्थः ॥ **तदभाव इति** ॥ प्रत्यवायप्रागभावनाश इत्यर्थः ॥ **तदभाव इति** ॥ दुःखप्रागभावध्वंस इत्यर्थः ॥ **इतीति** ॥ एतादृशकरणताया इत्यर्थः इतिशब्दार्थस्य सुवचत्वादित्यग्रेतनेनान्वयः ॥ **योगक्षेमसाधारणतयेति** ॥ जन्याजन्यनिरूपिततयेत्यर्थः ॥ **दुःखप्रागभावं प्रत्यपीति** ॥ दुःखप्रागभावनिरूपितताया अपि कारणताया इत्यर्थः ॥ **सुवचत्वादिति** ॥ प्रत्यवायानुत्पत्तेः वक्तुं शक्यत्वादित्यर्थः तथाच प्रत्यवायानुत्पत्तेरन्वयव्यतिरेकाभ्यां सन्ध्योपासनादिनिरूपितनिरुक्तक्षेमसाधारणजन्यत्वदुःखानुत्पत्तिनिरूपितानिरुक्तक्षेमसाधारणजन्यत्वयोर्निराबाधतया न पूर्वोक्ताक्षेपप्रसक्तिरिति भावः। नन्वेवं सति प्रायश्चित्तस्य पापनाशकत्ववद्दुःखानुत्पत्तिहेतुत्वमपि स्यादित्यत्रेष्टापत्तिमाह ॥ **एवमेवेति** ॥ क्षेमसाधारणमेवेत्यर्थः एवकारः अध्याहरिष्यमाणेनेष्टमित्यनेनान्वेति ॥ **प्रायश्चित्तस्यापीति** ॥ पापिकर्तृकप्रायश्चित्तस्यापीत्यर्थः अपिशब्दः प्रत्यवायानुत्पत्तिसमुच्चायकः ॥ **दुःखप्रागभावहेतुत्वमिति** ॥ इष्टमिति शेषः। नव्यास्तु सन्ध्योपासनादेः प्रत्यवायप्रागभावः प्रत्यवायप्रागभावस्य दुःखप्रागभावो वा न फलं प्रागभाव एव मानाभावात् किन्तु सन्ध्योपासनादेः प्रत्यवायात्यन्ताभावस्तस्य च दुःखात्यन्ताभावः फलं तयोरपि क्षेमसाधारणकारणत्वसंभवादित्याहुः ॥ तटस्थः शङ्कते ॥ **नन्विति** ॥ **न कलञ्जं भक्षयेदित्यत्र विध्यर्थ इति** ॥ एतादृशश्रुतिघटकविधिप्रतिपाद्यबलवदनिष्टाननुबन्धित्वादिष्वित्यर्थः कलञ्जभक्षणान्वितनञर्थाभावे विध्यर्थेष्टसाधनत्वान्वये बाधकाभावाद्विध्यर्थ इत्युक्तम् ॥ **कथं नञर्थान्वय इति** ॥ नञर्थाभावस्य प्रतियोगितया कथमन्वय इत्यर्थः । ननु कुतो नान्वयसंभवः अभावे बलवदनिष्टाननुबन्धित्वादिप्रतियोगिकत्वस्याबाधितत्वादित्यत आह ॥ **इष्टसाधनत्वाभावस्येति** ॥ विध्यर्थघटकेष्टसाधनत्वान्वितनञर्थाभावस्येत्यर्थः ॥ **बोधयितुमशक्यत्वादिति** ॥ कलञ्जभक्षणनिष्ठविशेष्यतानिरूपितबोधीयप्रकारत्वासंभवादित्यर्थः इष्टसाधनत्वान्विताभावस्य कलञ्जभक्षणे बाधितत्वादिति भावः ॥ **तत्रेति** ॥ कलञ्जभक्षण इत्यर्थः ॥ **बाधादिति** ॥ इष्टसाधनत्वाद्यन्विताभावस्यासत्त्वादित्यर्थः ॥ **न विध्यर्थ इति** ॥ न प्रकृतविधितात्पर्यविषय इत्यर्थः ॥ **बलवदनिष्टाननुबन्धित्वमात्रमिति** ॥ किंत्वित्या-

## दिनकरीयम्.

करीत्या प्रत्यवायानुत्पत्तेः फलत्वाभावेन तत्साधनताज्ञानस्य प्रवृत्त्यहेतुत्वात् सन्ध्यावन्दनादौ प्रवृत्तिरित्यर्थः ॥ **प्रत्यवायाभावः** प्रत्यवायप्रागभावः ॥ **तदभावे** सन्ध्यावन्दनादिनित्याभावे ॥ **तदभावः** प्रत्यवायाभावस्याभावः ॥ **तदभावे** प्रत्यवायाभावस्याभावे ॥ **तदभावः** दुःखप्रागभावाभावो दुःखरूपः ॥ **योगक्षेमसाधारणेति** ॥ योगोऽप्राप्तस्य प्राप्तिः ॥ क्षेमः सिद्धस्य संरक्षणम्। प्रवृत्ति प्रतीष्टसाधनताज्ञानस्य हेतुतायां साधनतायाः क्षेमसाधारण्या एव प्रविष्टत्वादिति भावः । प्रागभावस्य प्रतियोगिविकल्पप्रासेन फलत्वासम्भवात् प्रत्यवायात्यन्ताभाव एव नित्यस्य फलं स्वरूपसम्बन्धविशेषात्मकक्षेमसाधारणजन्यताया अत्यन्ताभावे सत्त्वादिति तु नव्याः ॥ **एवमेव** योगक्षेमसाधारणमेव । ननु न कलञ्जमित्यत्र कलञ्जभक्षणाभाव इष्टसाधनमित्यन्वयबोधाभ्युपगमे बाधकाभावादित्यत आह ॥ **विध्यर्थे कथं नञर्थेति** ॥ विध्यर्थनञर्थयोः कथमन्वयः विध्यर्थेष्टसाधनत्वाद्यन्वितनञर्थस्याभावस्य कलञ्जभक्षणे कथमन्वय इत्यर्थः ॥

**कृतिसाध्यत्वं च न विध्यर्थः किंतु बलवदनिष्टाननुबन्धित्वमात्रं तदभावश्च नञा बोध्यते। अथवा बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वे सति कृतिसाध्यत्वं विध्यर्थः तदभावश्च नञा बोध्यमानो विशिष्टाभावो विशेष्यवति विशेषणाभावे विश्राम्यति। ननु श्ये-**

## प्रभा.

दिः तादृशाननुबन्धित्वमेवेत्यर्थः एतदेवोपपादयति ॥ **तदभावश्चेति** ॥ बलवदनिष्टाननुबन्धित्वान्वितनञर्थाभाव एवेत्यर्थः ॥ **नञा बोध्यत इति** ॥ तादृशाभावस्य कलञ्जभक्षणान्वययोग्यत्वादिति भावः। प्रकृते बलवदनिष्टाननुबन्धित्वादित्रयाणां विधितात्पर्यविषयार्थत्वेऽपि नानुपपत्तिरित्याह ॥ **अथवेति** ॥ **विध्यर्थ इति** ॥ उक्तत्रितयेऽपि प्रत्येकरूपेण विधितात्पर्यविषय इत्यर्थः ॥ **तदभावश्चेति** ॥ तद्धर्माश्रयप्रतियोगिताकाभावश्चेत्यर्थः अवधारणार्थकचशब्दः विशेषणाभाव इत्युत्तरं योज्यः ॥ **नञा बोध्यमान इति** ॥ नञ्पदाधीनोपस्थितिविषय इत्यर्थः ॥ **विशिष्टाभाव इति** ॥ एकविशिष्टापरत्वावच्छिन्नप्रतियोगिताकाभाव इत्यर्थः विशिष्टाभावो नातिरिक्तः गौरवात् क्वचिद्विशेषणाभावे क्वचिद्विशेष्याभावे क्वचित्ताभावद्वये च विशिष्टाभावत्वं स्वीक्रियते एवमुभयाभावोऽपि नातिरिक्तः गौरवात् क्वचिदुभयघटकैकाभावे उभयाभावत्वं क्वचिदुभयघटकप्रत्येकप्रतियोगिकाभावद्वय एव उभयाभावत्वं स्वीक्रियत इति नवीनमतानुसारेणाह ॥ **विशेषणाभावे विश्राम्यतीति** ॥ विशेषणाभाव एव पर्यवस्यतीत्यर्थः अतिरिक्ताभावकल्पने गौरवादिति भावः। ननु विधेः प्रत्येकधर्मावच्छिन्नशक्ततया नञ्समभिव्याहारे यद्रूपावच्छिन्नस्योपस्थितिर्नञ्समभिव्याहारे तद्धर्मावच्छिन्नाभावबोध इति नियमेन बलवदनिष्टाननुबन्धित्वादित्रितयनिष्ठप्रत्येकधर्मावच्छिन्नप्रतियोगिताकाभावत्रयबोध एवावश्यकः नत्वेकविशिष्टापरत्वावच्छिन्नाभाव एकविशिष्टापरत्वस्य विधिप्रवृत्तिनिमित्तत्वाभावादिति चेन्न अनायत्या प्रत्येकधर्मावच्छिन्ने विधेश्शक्तत्वेऽपि तत्समभिव्याहृतनञः तादृशाभावत्रयशक्तत्वे गौरवात् विधेः यद्धर्मावच्छिन्ने शक्तिः तत्समभिव्याहृतनञः तद्धर्माणां मध्ये एकैकधर्मावच्छिन्नविशिष्टापरधर्मावच्छिन्नप्रतियोगिताकैकाभावे लाघवाच्छक्तिस्वीकारे बाधकाभावादत एव घटः पटश्च नास्तीति वाक्यजन्यशाब्दबोधे घटत्वादिप्रत्येकधर्मावच्छिन्नाभावद्वयस्य विषयत्वे गौरवात् घटत्वावच्छिन्नविशिष्टपटत्वावच्छिन्नप्रतियोगिताकैकाभाव एव विषयः नतु घटपटोभयनिष्ठद्वित्वावच्छिन्नाभावः तादृशवाक्याद्द्वित्वस्यानुपस्थितत्वात् वैशिष्ट्यस्यानुपस्थितत्वेऽपि प्रतियोगितावच्छेदककोटौ संसर्गतयैव भानाङ्गीकारान्नैतन्मते दोषः इत्यस्मद्गुरुचरणोक्तिरपि सङ्गच्छते। नचैवमपि तादृशबोधे घटत्वावच्छिन्नविशिष्टपटत्वावच्छिन्नाभावः पटत्वावच्छिन्नविशिष्टघटत्वावच्छिन्नाभावो वेति विनिगमनाविरहादभावद्वयविषयकत्वं तथाप्यावश्यकमिति वाच्यं तादृशाभावयोः समनियतत्वेन ऐक्यात्। एतेन एकधर्मावच्छिन्नविशिष्टापरधर्मावच्छिन्नाभावबोधने विध्यर्थधर्मावच्छिन्नानां मध्ये एकधर्मावच्छिन्नस्यैवाभावान्वयः नापरधर्मावच्छिन्नस्येति। एवं विध्यर्थतावच्छेदकैकधर्मस्यैव साक्षान्नञर्थाभावप्रतियोगित्वावच्छेदकत्वं नापरधर्मस्य चेति। अत्र च विनिगमनाविरहप्रयुक्तोक्तदोषतादवस्थ्यमिति दूषणं प्रत्युक्तम् तादृशाभावानामैक्ये तत्र तादृशा यावन्तो धर्माः तत्तद्धर्मावच्छिन्नानां सर्वेषामप्यभावान्वयलाभात् तादृशसकलधर्माणामपि साक्षात्प्रतियोगितावच्छेदक-

## दिनकरीयम्.

**अशक्यत्वादिति** ॥ कलञ्जभक्षणे तस्य बाधादिति भावः ॥ **बलवदनिष्टाननुबन्धित्वमात्रमिति** ॥ विधेः कृतिसाध्यत्वादिषु त्रिषु शक्तिस्वीकारेण क्वचित्कस्यचित् क्वचित्कस्यचिद्विध्यर्थस्य बोधस्वीकारादिति भावः। प्रवृत्तिं प्रति कृतिसाध्यत्वविशिष्टबलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वज्ञानत्वेनैकस्यैव हेतुत्वं लाघवान्न तु कृतिसाध्यत्वादिप्रत्येकविषयकज्ञानत्वेन गौरवादतो विधेरपि विशिष्टमेव शक्यं वाच्यम्। एवं च निषेधस्थले विशिष्टाभावो विधिसमभिव्याहृतनञा बोध्यत इत्यभिप्रायवानाह ॥ **अथवेति** ॥ **विशेषणाभावे विश्राम्यतीति** ॥ एवं चेष्टसाधनत्वादिमति कलञ्जभक्षणादौ विशिष्टाभावो बोध्यमानो बलवदनिष्टाननुबन्धित्वाभावे पर्यवस्यतीति भावः। विशिष्टस्य विध्यर्थत्वे श्येने बलवदनिष्टाननुबन्धित्वरूपविशेष-

नेनाभिचरन् यजेतेत्यादौ कथं बलवदनिष्टाननुबन्धित्वमर्थः श्येनस्य मरणानुकूलव्यापारस्य हिंसात्वेन नरकसाधनत्वात्। नच वैधत्वान्न निषेध इति वाच्यं अभिचारे प्रायश्चित्तोपदेशात्

## प्रभा.

त्वलाभाच्च । केचित्तु प्रवृत्तिं प्रति कृतिसाध्यत्वविशिष्टबलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वज्ञानत्वेनैकमेव हेतुत्वं लाघवात् नतु कृतिसाध्यत्वादिप्रत्येकविषयकज्ञानत्वेन गौरवात् अतो विधेरपि विशिष्टमेव शक्यं वाच्यम् । एवंच निषेधस्थलेऽपि विशिष्टाभावो विधिसमभिव्याहृतनञा बोध्यत इत्यभिप्रायवानाह अथवेत्यवतरन्ति तदसत् । पाको मत्कृतिसाध्यः बलवदनिष्टाननुबन्धीष्टसाधनश्चेति समूहालम्बनज्ञानस्यापि प्रवृत्तिहेतुतया तादृशज्ञानस्य बलवदनिष्टाननुबन्धित्वादंशे कृतिसाध्यत्वाप्रकारकत्वात् कृतिसाध्यत्वादिविशिष्टबलवदनिष्टाननुबन्धित्वादिविषयत्वाभावेन प्रवर्तकत्वानुपपत्तेः इष्टसाधनत्वविशिष्टकृतिसाध्यत्वविशिष्टबलवदनिष्टाननुबन्धित्वज्ञानत्वादिना विनिगमनाविरहेण कार्यकारणभावत्रयापत्तेश्च । किंतु कृतिसाध्यत्वादिप्रत्येकधर्मावच्छिन्नविषयतानिरूपकतावितयविशिष्टज्ञानत्वेन हेतुत्वं लाघवात् समूहालम्बनसाधारण्याच्च एवंच निरुक्तविशिष्टविषयकज्ञानत्वेन हेतुत्वाप्रसक्त्या तदनुरोधेन विधेः विशिष्टशक्तिकल्पनमनुचितम् । नच विधेः नानाशक्यतावच्छेदकत्वरूपनानार्थकत्वकल्पनापेक्षया विशिष्टैकधर्मशक्यतावच्छेदकत्वस्वीकार एवोचित इति वाच्यम् ! विशिष्टघटकप्रत्येकधर्माणां विशेष्यविशेषणभावे विनिगमनाविरहप्रयुक्तगुरुतरकार्यतावच्छेदकत्रयस्वीकारापत्त्या तत्प्रयुक्तनानार्थकत्वस्य तदाप्यावश्यकत्वात् विश्वनाथपञ्चाननस्यापि इत्थंच प्रवर्तकत्वानुरोधात् विधेरपीष्टसाधनत्वादिकमर्थ इति मुक्तावलीग्रन्थपर्यालोचनया इष्टसाधनत्वत्वादिरूपप्रत्येकधर्मावच्छिन्नशक्तावेव तात्पर्यसत्त्वलाभाच्च । तस्माद्विशिष्टस्य विध्यर्थत्वाप्रसक्त्या अथवेत्याद्युत्तरग्रन्थप्रणेतुर्विश्वनाथपञ्चाननस्य विशिष्टशक्तविधिसमभिव्याहृतनञा विशिष्टाभाव एव बोध्यत इत्याशयवर्णनस्य स्वीयाभिप्रायस्य तदीयाशयत्वभ्रममूलकत्वेनाश्रद्धेयत्वादिति दिक् । ननु विधेस्त्रयशक्तत्वे श्येनयागस्य बलवदनिष्टाननुबन्धित्वरूपविध्यर्थाभावात् श्येनेनाभिचरन् यजेतेति विधिवाक्यस्य कथं प्रामाण्यमित्याशङ्कते ॥ **नन्विति** ॥ **श्येनेनाभिचरन् यजेतेत्यत्रेति** ॥ वैरिमरणं कामयन् श्येननामकयागं कुर्यादित्यर्थकतादृशश्रुतावित्यर्थः । सप्तम्यर्थो घटकत्वं तस्य विध्यर्थ इत्यत्र विधावन्वयः । तथाच बलवदनिष्टाननुबन्धित्वं कथमेतादृशश्रुतिघटकविधिप्रतिपाद्यं श्येनयागे तस्य बाधितत्वादिति भावः । बाधमुपपादयति ॥ **श्येनस्येति** ॥ श्येनयागस्येत्यर्थः ॥ **मरणानुकूलव्यापारस्येति** ॥ शत्रुमरणानुकूलव्यापारस्येत्यर्थः ॥ **नरकसाधनत्वादिति** ॥ न हिंस्यात् सर्वा भूतानीति निषेधविधिना हिंसासामान्यस्य निषिद्धत्वप्रतिपादनेन निषिद्धाचरणस्य नरकसाधनत्वावश्यकत्वादित्याशयः ॥ **वैधत्वान्न निषेध इति** ॥ अग्नीषोमीयं पशुमालभेतेति विधिचोदिताग्नीषोमीययागस्य पशुहिंसासाधनत्वेन नरकसाधनत्वापत्त्या न हिंस्यादिति सामान्यशास्त्रस्य विशेषविधिचोदितयागीयहिंसातिरिक्तहिंसासामान्यनिषेधपरत्वावश्यकतया प्रकृते शत्रुनाशस्यापि विधिचोदितयागीयत्वेन सामान्यशास्त्राप्रवृत्त्या श्येननामकयागस्यापि नरकसाधनत्वाभावादित्याशयः ॥ **अभिचार इति** ॥ अभिचारकर्मणि कृते सतीत्यर्थः ॥ **प्रायश्चित्तोपदेशादिति** ॥ कर्तुः प्रायश्चित्तविधानादित्यर्थः । अभिचारमहीनं च त्रिभिः कृच्छ्रैर्व्यपोहतीत्याभिचारिककर्मकर्तृकारयित्रोः अहीनयागकर्तृकारयित्रोश्च कृच्छ्रत्रयरूपप्रायश्चित्तविधानवैयर्थ्यापत्त्या न हिंस्यादिति निषेधविधेः श्येननामकयागभिन्नहिंसानिषेधपरत्वं न संभवतीत्याशयः । नचैवमग्नीषोमीयपशुहिंसाया अपि नरकसाधनत्वापत्तिः तादृशहिंसाया अपि सामान्यशास्त्रेण निषेधप्रतिपादनात् इति वाच्यं न हिंस्यादिति शास्त्रस्यानुपदिष्टप्रायश्चित्तहिंसेतरहिंसानिषेधपरत्वस्वीकारस्यावश्यक-

## दिनकरीयम्.

णबाधात्कथं विशिष्टस्य विध्यर्थस्य बोध इत्याशङ्कते ॥ **ननु श्येनेनेति** ॥ श्येनेनेति कर्मनामधेयं अभिचरन् वैरिमारणं कामयन् ॥ **कथमिति** ॥ श्येने तस्य बाधितत्वादिति भावः ॥ **अर्थः** विधिजन्यबोधविषयः ॥ **वैधत्वान्न निषेध इतीति** ॥ यज्ञीयपश्वालम्भनानुरोधेन मा हिंस्यादिति निषेधस्य वैधहिंसेतरहिंसापरत्वादिति भावः ॥ **अभिचार इति** ॥ तथा चाभिचारमहीनं च त्रिभिः कृच्छ्रैर्व्यपोहतीति तत्र प्रा.

**नच मरणानुकूलव्यापारमात्रं यदि हिंसा तदा खड्गकारस्य कूपकर्तुश्च हिंसकत्वापत्तिर्गललग्नान्नभक्षणजन्यमरणे आत्मवधत्वापत्तिश्चेति वाच्यं मरणोद्देश्यकत्वस्यापि विशेषणत्वात् । अन्योद्देश्यकाक्षिप्तनाराचहतब्राह्मणस्य तु वाचनिकं प्रायश्चित्तमिति चेन्न । श्येनवारणायादृष्टाद्वारकत्वेन विशेषणात् । अत एव काशीमरणार्थं कृतशिवपूजादेरपि न हिंसात्वं नच**

प्रभा.

तया अग्नीषोमीयपशुहिंसाया अनुपदिष्टप्रायश्चित्तहिंसारूपत्वेन सामान्यशास्त्राप्रवृत्तेः श्येननामकाभिचारकर्मणः उपदिष्टप्रायश्चित्तहिंसारूपतया सामान्यशास्त्रप्रवृत्तेरित्याशयः ॥ **मरणानुकूलव्यापारमात्रमिति** ॥ साक्षात्परम्परया मरणानुकूलव्यापारत्वावच्छिन्नमित्यर्थः ॥ **यदि हिंसेति** ॥ न हिंस्यादिति श्रुतिघटकहिंसापदार्थो यदीत्यर्थः ॥ **हिंसकत्वापत्तिरिति** ॥ खड्गकरणकूपकरणयोः परम्परया मरणानुकूलव्यापारत्वेन तत्कर्तुर्हिंसकत्वावश्यकत्वादित्याशयः । दूषणान्तरमाह ॥ **गललग्नेति** ॥ **आत्मवधत्वापत्तिश्चेति** ॥ तथाच उक्तदोषवारणाय साक्षान्मरणानुकूलव्यापारस्यैव न हिंस्यादित्यादिनिषेधविधिप्रतिपाद्यहिंसारूपत्वावश्यकतया श्येनयागस्यापि साक्षान्मरणानुकूलव्यापारत्वरूपहिंसात्वाभावेन नरकसाधनत्वाभावात् श्येने बलवदनिष्टाननुबन्धित्वरूपविध्यर्थान्वयो निराबाध एवेति भावः । अत्र खड्गकरणादेः श्येनयागस्य च हिंसात्ववारकसाक्षान्मरणानुकूलत्वनिवेशपक्षे वक्ष्यमाणं दोषं हृदि निधाय खड्गकरणादिमात्रस्य हिंसात्वं वारयति ॥ **मरणेति** ॥ **विशेषणत्वादिति** ॥ तथाच मरणोद्देश्यकमरणानुकूलव्यापारस्यैव हिंसापदार्थत्वेन खड्गकरणादेः मरणानुकूलत्वेऽपि मरणोद्देश्यकत्वाभावात् तत्कर्तुर्न हिंसकत्वापत्तिः श्येनयागस्य मरणोद्देश्यकत्वात् हिंसात्वसंभव इति भावः । ननु हिंसाया एतादृशत्वे अन्योद्देश्यकप्रादृशनाराचप्रक्षेपात् ब्राह्मणवधस्तादृशनाराचप्रक्षेपस्य मरणोद्देश्यकत्वाभावेन हिंसात्वाभावात् प्रायश्चित्तविधानानुपपत्तिः अत आह ॥ **अन्योद्देशेनेति** ॥ **वाचनिकं प्रायश्चित्तमिति** ॥ सेतौ च स्नानमात्रेण ब्रह्महत्यां व्यपोहति इति वचनेन ब्राह्मणमात्रवधस्य सेतुस्नानादिरूपप्रायश्चित्तप्रतिपादनात् तादृशब्राह्मणवधस्याप्युपदिष्टप्रायश्चित्तत्वेन हिंसात्वानपायादिति भावः । इदमुपलक्षणम् अन्योद्देश्यकनाराचप्रक्षेपस्य मरणोद्देश्यकत्वाभावेन न हिंस्यादिति निषेधशास्त्राविषयत्वेऽपि ब्राह्मणं न हन्याल्लोहितं कुर्यादिति विशेषनिषेधविधिना ब्राह्मणहननमात्रस्य निषेधप्रतिपादनात् तस्य हिंसात्वं तत्कर्तुः प्रायश्चित्तविधानं च उपपन्नमित्यपि बोध्यम् ॥ **अदृष्टाद्वारकत्वेनेति** ॥ तथाच मरणोद्देश्यकादृष्टाद्वारकमरणानुकूलव्यापारस्यैव न हिंस्यादिति विधिनिषेध्यहिंसारूपत्वस्वीकारेण श्येनयागस्यादृष्टद्वारैव वैरिमरणसाधनत्वान्न हिंसात्वमिति भावः । ननु श्येनस्य हिंसात्वे बाधकाभावेनादृष्टाद्वारकत्वविशेषणमनर्थकमत आह ॥ **अत एवेति** ॥ अदृष्टाद्वारकत्वविशेषणादेवेत्यर्थः ॥ **न हिंसात्वमिति** ॥ तथाच तादृशविशेषणानुपादाने तादृशशिवपूजनादेरपि मरणोद्देश्यकतया

दिनकरीयम्.

यश्चित्तोपदेशवैयर्थ्यापत्त्या निषेधविधेस्तदतिरिक्तपरत्वं न सम्भवतीति भावः । नचैवं यज्ञीयपशुहिंसाया अपि प्रत्यवायजनकत्वापत्तिरिति वाच्यं अनुपदिष्टप्रायश्चित्तहिंसेतरहिंसापरत्वात् मा हिंस्यादिति निषेधविधेरिति । साक्षान्मरणानुकूलव्यापार एव हिंसा न हि श्येनस्तथेति मा हिंस्यादिति निषेधाविषयत्वादस्त्येव बलवदनिष्टाननुबन्धित्वमित्यभिप्रायेण साक्षात् परम्परासाधारणमरणानुकूलव्यापारमात्रस्य हिंसात्वे दोषमाह ॥ **मरणानुकूलव्यापारमात्रं यदि हिंसा तदेति** ॥ साक्षात्परम्परासाधारणः सर्वोऽपि यदि हिंसा तदेत्यर्थः । ननु मरणोद्देश्यकत्वनिवेशेऽन्योद्देशेन प्रक्षिप्तनाराचेन यत्र ब्राह्मणमृतिस्तत्र प्रायश्चित्तं न स्यात् तस्य हिंसात्वाभावेन मा हिंस्यादिति निषेधाविषयत्वादत आह ॥ **अन्योद्देश्यकेति** ॥ **वाचनिकमिति** ॥ न तु मा हिंस्यादिति निषेधविषयतयेति भावः ॥ **अदृष्टाद्वारकत्वेनेति** ॥ श्येनस्यादृष्टद्वारैव वैरमरणसाधनत्वादिति भावः । नन्वस्तु श्येनस्य हिंसात्वं किमदृष्टाद्वारकत्वविशेषणेनेत्यत आह ॥ **अत एवेति** ॥ अदृष्टाद्वारकत्वविशेषणादेवेत्यर्थः ॥ **न हिंसात्वमिति** ॥ तथा च तादृशशिवपूजनादेर्हिंसात्ववारणायाव-

साक्षान्मरणजनकस्यैव हि हिंसात्वं श्येनस्तु न तथा । किन्तु तज्जन्यापूर्वमिति वाच्यं खड्गाघातेन ब्राह्मणे व्रणपाकपरम्परया मृते हिंसात्वानापत्तेः । केचित्तु श्येनस्य हिंसा फलं न तु मरणं तेन श्येनजन्यखड्गाघातादिरूपा हिंसाभिचारपदार्थस्तस्य च पापजनकत्वं अतः श्येनस्य वैधत्वात् पापाजनकत्वेऽपि अग्रिमपापं प्रतिसन्धाय सन्तो न प्रवर्तन्त इत्याहुः ।

## प्रभा.

परम्परया मरणानुकूलत्वाच्च हिंसात्वापत्तिस्तद्वारणाय तादृशविशेषणस्यावश्यकत्वे अर्थाच्छ्येनस्यापि वारणं भवतीति भावः । तटस्थः शङ्कते ॥ **नचेति** ॥ **हिंसात्वमिति** ॥ अस्त्विति शेषः ॥ **न तथेति** ॥ न साक्षान्मरणजनक इत्यर्थः ॥ **तज्जन्यापूर्वमिति** ॥ साक्षान्मरणजनक इत्यनुषङ्गेणान्वयः । तथाच साक्षान्मरणानुकूलव्यापारस्य हिंसात्वस्वीकारेणैव सकलदोषवारणे अदृष्टाद्वारकत्वविशेषणमनर्थकमिति भावः ॥ **खड्गघातेन व्रणपाकपरम्परया मृत इति**॥व्रणजनितरुजानुभवपरम्पराद्वारा खड्गघातजन्यमरणाश्रये पुरुषे सतीत्यर्थः ॥ **हिंसात्वानापत्तेरिति** ॥ तादृशखड्गघातस्य हिंसात्वानुपपत्तेरित्यर्थः। तथाच तादृशखड्गघातस्य हिंसात्वानुपपत्त्या साक्षान्मरणानुकूलव्यापारस्य हिंसात्वं न संभवतीति भावः । बलवदनिष्टाननुबन्धित्वविशेषणदानं विनैव श्येनस्य हिंसात्वं निराकृत्य बलवदनिष्टाननुबन्धित्वमुपपादयतां प्राचीनैकदेशिनां मतमाह ॥ **केचित्त्विति** ॥ **हिंसेति** ॥ साक्षान्मरणानुकूलव्यापार इत्यर्थः ॥ **तेनेति** ॥ साक्षान्मरणजनकव्यापारस्यैव हिंसात्वस्वीकारेणेत्यर्थः ॥ **खड्गघातादिरूपहिंसेति** ॥ तादृशहिंसैवेत्यर्थः ॥ **तस्य चेति** ॥ खड्गघातादेरेवेत्यर्थः ॥ **पापजनकत्वमिति** ॥ स्वीक्रियत इति शेषः। तथाचैतन्मते साक्षान्मरणानुकूलव्यापारस्यैवाभिचारपदार्थत्वेन खड्गघातादेरेव तादृशतया अभिचारमहीनं चेत्यादिना तस्यैव पापजनकत्वबोधनादिति भावः । ननु साक्षान्मरणजनकव्यापारस्यैव हिंसात्वमस्त्विति नचेत्यादिग्रन्थेन पूर्वमाशङ्कितत्वात्पौनरुक्त्यम् । नच पूर्वं श्येनजन्यापूर्वस्यैव हिंसात्वाशङ्कनात् अत्रतु खड्गघातादेरेव तथात्वाशङ्कनाच्च भेद इति वाच्यम् खड्गघातादिरूपाहिंसेति वाक्यघटकादिपदेन श्येनजन्यापूर्वस्यापि ग्रहणसंभवात्पौनरुक्त्यं दुर्वारमिति चेन्न। एतन्मते श्येनजन्यापूर्वस्य खड्गाभिघातं प्रत्येव व्यापारविधया हेतुत्वेन मरणं प्रत्यन्यथासिद्धत्वात् साक्षान्मरणजनकत्वाभावेन पौनरुक्त्याप्रसक्तेः । नच साक्षान्मरणजनकव्यापारस्य हिंसात्वे यादृशखड्गघातोत्तरमेव ब्राह्मणस्य न मृतिः किंतु तज्जन्यव्रणपाकपरम्परया तादृशखड्गाभिघातस्य हिंसात्वानुपपत्तिः साक्षान्मरणसाधनत्वाभावादिति वाच्यम् । एतन्मतेऽनन्यथासिद्धत्वविशेषितनियतपूर्ववृत्तितावच्छेदकधर्मवत्त्वस्यैव प्रकृते साक्षाज्जनकत्वपदार्थतया खड्गाभिघातस्य स्वजन्यसन्निपातादिदोषद्वारैव हेतुत्वाद्व्यापारेण व्यापारिणोऽन्यथासिद्धत्वाभावेन तत्रापि निरुक्तसाक्षाज्जनकत्वसत्त्वादित्याशयः । नन्वेवं सत्यास्तिकानां

## दिनकरीयम्.

श्यकेनादृष्टाद्वारकत्वविशेषणेन श्येनस्यापि हिंसात्ववारणमिति भावः। ननु साक्षान्मरणजनकत्वविशेषणादेव तादृशशिवपूजनश्येनादेर्वारणे किमदृष्टाद्वारकत्वेन गुरुविशेषणेनेति तटस्थः शङ्कते ॥ **नच साक्षादिति** ॥ अदृष्टाद्वारकत्वविशेषणं विनैव श्येने बलवदनिष्टाननुबन्धित्वमुपपादयतां मतमाह ॥ **केचित्त्विति** ॥ **हिंसा फलमिति** ॥ साक्षान्मरणफलको व्यापारः फलमित्यर्थः ॥ **तस्य** खड्गाभिघातादेः ॥ **पापजनकत्वमिति** ॥ अभिचारमहीनं चेत्यादिनाभिचारस्य पापजनकत्वबोधनात् साक्षान्मरणजनकव्यापारस्यैवाभिचारपदार्थत्वादिति भावः । नच पूर्वं नचेत्यादिना साक्षान्मरणजनकव्यापारस्यैव हिंसात्वमित्याशङ्कितत्वात् तेन पौनरुक्त्यमिति वाच्यं पूर्वं साक्षान्मरणजनकस्य श्येनजन्यापूर्वस्य हिंसात्वमाशङ्कितमिह च तथाभूतस्य खड्गाभिघातादेरिति भेदात् । नचादिपदेन श्येनजन्यापूर्वस्य तथाभूतस्य ग्रहणात् कथं भेद इति वाच्यं श्येनजन्यापूर्वस्यैतन्मते खड्गाभिघातं प्रत्येव व्यापारतया तस्य मरणजनकत्वाभावात् । नच साक्षान्मरणजनकव्यापारस्य हिंसात्वे खड्गघातेन ब्राह्मणे व्रणपाकपरम्परया मृते हिंसात्वानुपपत्तिस्तदवस्थैवेति वाच्यं तत्र खड्गघाताद्युत्तरमेव संनिपातादिदोषस्योत्पत्त्या मरणं प्रति तस्य व्यापारतया व्यापारेण व्यवधानाच्च

## प्रभा।

कथं श्येने प्रवृत्त्यभाव इत्यत आह ॥ **अग्निमेति** ॥ खड्गाभिघातजन्यपापं ज्ञात्वेत्यर्थः॥ **न प्रवर्तन्त इति** ॥ इतीति शेषः। तस्य केचिदिति पूर्वेणान्वयः। तथाच मरणजनकत्वाभावेऽपि मरणप्रयोजकत्वात् सतां प्रवृत्त्यभाव इति भावः। अत्रोक्तरीत्या श्येनस्य हिंसात्वाभावेन न हिंस्यादिति निषेधविध्यविषयत्वेऽपि अभिचारकर्मरूपतया पापजनकत्वमावश्यकम्। नच खड्गाभिघातादेरेवाभिचारत्वमिति वाच्यं तथा सति यादृशशत्रुमुद्दिश्य श्येनयागः कृतः तादृशशत्रौ खड्गघातात्पूर्वं दैवान्मृते सति तत्र श्येनजन्यखड्गघाताद्यनुत्पत्त्या अभिचारपदार्थाभावेन तादृशयागकर्तुः प्रायश्चित्तानुत्पत्तेः। तस्मादेतन्मते श्येनस्य पापजनकत्वात् पापप्रयोजकत्वाद्वा बलवदनिष्टाननुबन्धित्वेन बलवदनिष्टाननुबन्धित्वरूपविध्यर्थान्वयानुपपत्तिः तदवस्थेति। न च बलवदनिष्टाननुबन्धित्वं किंचिद्द्वारकबलवदनिष्टाननुबन्धित्वरूपविध्यर्थ इति श्येने तदबाधितमेवेति वाच्यं तथा सति विषसम्पृक्तान्नभक्षणादेरपि देहविकाराविस्मृतिद्वारा मरणसाधनत्वेन साक्षान्मरणसाधनत्वाभावात् तत्रापि प्रवृत्त्यापत्तेरित्यायस्वरसं हृदि निधाय केचिदित्युक्तमिति ध्येयम्। अत्रेदं बोध्यम्। अगम्यां गच्छेदिति लौकिकवाक्यानां अप्रामाण्यमेवागम्यागमनादेः बलवदनिष्टाननुबन्धित्वाभावात् यदि प्रामाण्यमिष्टं तदा तद्वाक्यघटकलिङः इष्टसाधनत्वकृतिसाध्यत्वलाक्षणिकत्वमेव स्वीक्रियते लौकिकलिङ्त्वात् यच्च बलवदनिष्टाननुबन्धित्वस्य विधिशक्यत्वे यागादिजन्यनान्तरीयकदुःखस्यापि यदाकदाचित् कस्यचिद्द्वेषविषयतया यागस्य बलवदनिष्टाननुबन्धित्वाभावेन यजेतेत्यादिश्रुतीनामप्रामाण्यापत्तिरिति तन्न श्रद्धेयम् इष्टोत्पत्तिनान्तरीयकदुःखाधिकदुःखविषयत्वस्यैव द्वेषनिष्ठबलवत्त्वरूपतया कदापि कस्यचिदपि नान्तरीयकदुःखद्वेषस्य तादृशत्वासंभवेन उक्तदोषाप्रसक्तेः। यच्च न कलञ्जं भक्षयेदित्यादिनिषेधविधिवत् नाश्वमेधेन यजेतेत्यादिलौकिकवाक्यानां प्रामाण्यापत्तिश्चेति तदपि मन्दमश्वमेधस्थलीयनान्तरीयकदुःखद्वेषस्य निरुक्तबलवत्त्वाभावेनाश्वमेधे बलवदनिष्टाननुबन्धित्वसत्त्वेन निरुक्तदोषाप्रसक्तेः। यच्च यदा यः पुरुषः प्रवर्तते तत्कालीनतत्पुरुषीयबलवद्द्वेषविषयाजनकत्वस्याश्वमेधासत्त्वात् नोक्तदोष इत्याक्षिप्य तदुपरि कालभेदेन पुरुषभेदेन च विधेश्शक्तिकल्पने गौरवात् कालविशेषपुरुषविशेषाणां विशिष्य ज्ञातुमशक्यतया तद्घटितबलवदनिष्टाननुबन्धित्वशक्तेर्विधिनिरूपितायाः

## दिनकरीयम्।

म्भवात् कुतस्तर्ह्यास्तिकानां श्येने न प्रवृत्तिरत आह ॥ **अग्निमेति** ॥ तथा च पातकप्रयोजकत्वान्न तत्रास्तिकानां प्रवृत्तिरिति भावः। अत्र नव्याः मास्तु श्येनस्य मा हिंस्यादिति निषेधविषयत्वं तथाप्यभिचारतया पापजनकत्वं सर्वसम्मतं अभिचारस्योपपातकमध्ये मनुना परिगणितत्वादिति कथं तस्य बलवदनिष्टाननुबन्धित्वम्। यच्चोक्तं श्येनजन्यखड्गाभिघातादेरेवाभिचारतया पापजनकत्वं न श्येनस्येति तदपि न अभिचारमहीनं चेत्त्वत्राभिचारपदेन तज्जनकश्येनादेर्ग्रहणादन्यथा प्रत्यभिचारेण यत्र न खड्गघाताद्युत्पत्तिस्तत्र प्रायश्चित्तं न स्यात्। एवमपि श्येने पापप्रयोजकतया बलवदनिष्टाप्रयोजकत्वोपपादनस्याशक्यत्वाच्च प्रवृत्तिं प्रति बलवदनिष्टाप्रयोजकत्वज्ञानस्यैव जनकतया तद्विषयस्यैव विध्यर्थत्वात्। तथा च श्येनस्य बलवदनिष्टाननुबन्धित्वमुपपाद्य विधेर्बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वविशिष्टकृतिसाध्यत्वे शक्तिरयुक्ता किंतु त्रिषु शक्तित्रयं स्वीकृत्य क्वचित् कस्यचित्क्वचित् कस्यचिदर्थस्य बोध इत्यङ्गीकरणीयम्। श्येनेनेत्यादौ तु बलवदनिष्टाननुबन्धित्वस्य बोधो न भवत्येव परं त्विष्टसाधनत्वकृतिसाध्यत्वयोरेवेति किंच विशेषणविशेष्यभावे विनिगमनाविरहेणापि विशिष्टे शक्तिर्न युक्ता नच प्रत्येकं शक्तिं स्वीकृत्य क्वचित् कस्यचिदर्थस्य बोधोपगमे नियामकाभाव इति वाच्यं तात्पर्यस्यैव नियामकत्वात् प्रत्येकशक्तिपक्षेऽगम्यां गच्छेदित्यादिवाक्यानामिष्टसाधनत्वादिप्रमाजनकतया प्रामाण्यापत्तिरित्यपि न। इष्टापत्तेः तत्राप्रामाण्यव्यवहारस्तु कदाचिद्बलवदनिष्टाननुबन्धित्वभ्रमजनकत्वनिबन्धनः। चन बलवदनिष्टाननुबन्धित्वे सतीष्टसाधनत्वे सति कृतिसाध्यः पाक इत्येव बोधो न तु कृतिसाध्यत्वे सतीत्यादिरूप इति विशिष्टशक्तिपक्षेऽपि न विनिगमनाविरह इति वाच्यं तथैव बोधो नान्यथेत्यस्य शपथनिर्णेयत्वात् तस्माद्बलवदनिष्टाननुबन्धित्वादिषु प्रत्येकं शक्तिरिति प्रथमकल्प एव युक्तः तत्रापि बलवदनिष्टाननुबन्धित्वं नार्थः। यागादिजन्यनान्तरीयकदुःखस्यापि यदाकदाचित्

आचार्यास्तु आप्ताभिप्रायो विध्यर्थः पाकं कुर्या इत्यादावाज्ञादिरूपेच्छावाचित्ववत् लिङ्मात्रस्येच्छावाचित्वं लाघवात्। एवं च स्वर्गकामो यजेतेत्यादौ यागः स्वर्गकामकृतिसाध्यतया आप्तेष्ट इत्यर्थः। ततश्चाप्तेष्टत्वेनेष्टसाधनत्वादिकमनुमाय प्रवर्तते कलञ्जभक्षणे तदभावा-

## प्रभा.

असर्वज्ञैः ज्ञातुमशक्यत्वाच्च नाश्वमेधेन यजेतेति लौकिकवाक्यवन्न कलञ्जं भक्षयेदित्यादिनिषेधविधीनामप्रामाण्यापत्तिश्च कळञ्जभक्षणादौ यदा यः पुरुषः प्रवर्तते तत्कालीनतत्पुरुषीयबलवद्द्वेषाविषयत्वस्य तत्रापि सत्त्वादिति भ्रान्तिमूलकदोषप्रदर्शनं तन्न श्रद्धेयम्। विधेः केवलबलवदनिष्टाननुबन्धित्वादिष्वेव शक्तिः विधिवाक्यात्तदुपस्थितौ तदुत्तरमनुमितिरूपं मानासिकं वा कालविशेषपुरुषविशेषघटितबलवदनिष्टाननुबन्धित्वादित्रयविषयकं जायते तदेव च साक्षात् प्रवर्तकज्ञानं अत एव विधिजन्यज्ञानजन्यज्ञानं प्रवर्तकमिति भट्टपादोक्तिरपि सङ्गच्छत इति ग्रन्थेन सकलदोषाणां पूर्वमेव वारितत्वात्। यत्तु वैदिकविधेः पापाजनकत्वमर्थः तदभावो निषेधविधिस्थले बोध्य इति तन्न श्येनयागस्यापि पापजनकतया तत्र विध्यर्थाभावेन श्येनेनाभिचरन् यजेतेति विधेरप्रामाण्यापत्तिरिति शाकं न भुञ्जीत पुष्ये नोद्वहेन्नैकः पर्वतमारोहेदित्यादिलौकिकवाक्यानां अप्रामाण्यमेव शाकभक्षणादेः बलवदनिष्टाननुबन्धित्वाभावात् यदि प्रामाण्यमनुमतं तदा रोगाजनकत्वपीडाजनकत्वमरणाजनकत्वादौ लौकिकलिङः लक्षणां परिकल्प्य तत्तदभावस्य शाकादौ अबाधितत्वेन प्रामाण्यमुपपादनीयमिति आप्ताभिप्रायो विध्यर्थः तल्लिङ्गकस्वेष्टसाधनत्वानुमितिः प्रवर्तकीत्युदयनाचार्यमतमाह ॥ **आचार्यास्त्विवति** ॥ पाकं कुर्या इत्यादिपदात् पाकं कुर्यामिति मध्यमोत्तमपुरुषयोः परिग्रहः ॥ **आज्ञादिरूपेच्छावाचित्वादिति** ॥ वाक्यघटकाज्ञादीत्यादिपदात् अध्येषणादिपरिग्रहः। तथाच पाकं कुर्याः पाकं कुर्यामिति मध्यमोत्तमपुरुषयोः यथा आज्ञाध्येषणादिरूपेच्छावाचित्वं क्लृप्तं तेन प्रथमपुरुषेऽपि इच्छावाचित्वं अनुमेयमिति भावः। उक्तार्थमेव हृदि निधायाह ॥ **तन्मात्रस्येति** ॥ विधिप्रत्ययमात्रस्येत्यर्थः ॥ **लाघवादिति** ॥ बलवदनिष्टाननुबन्धित्वत्वादित्रिरूपधर्मत्रयस्य शक्यतावच्छेदकत्वकल्पनापेक्षया एकेच्छात्वस्य शक्यतावच्छेदकत्वे लाघवादिति भावः ॥ **एवं चेति** ॥ इच्छामात्रस्य विध्यर्थत्वे चेत्यर्थः ॥ **इत्यादाविति** ॥ इत्यादिश्रुतिघटकसाकाङ्क्षत्वादिप्रकारकपदज्ञाने सतीत्यर्थः ॥ **इत्यर्थ**

## दिनकरीयम्.

यस्यकस्यचिद्बलवद्द्वेषविषयतया यजेतेत्यादीनामप्रामाण्यापत्तेः। न कलञ्जमित्यादिनिषेधविधिवदश्वमेधेन न यजेतेत्यादीनामपि प्रामाण्यापत्तेश्च। अश्वमेधादौ यदा यः पुरुषः प्रवर्तते तत्कालीनतत्पुरुषीयबलवद्द्वेषविषयाजनकत्वमर्थं इति न सत् कालभेदेन पुरुषभेदेन च विधिशक्तिकल्पने गौरवात् कालविशेषपुरुषविशेषाणां विशिष्य ज्ञातुमशक्यतया कालविशेषपुरुषविशेषान्तर्भावेण शक्तेर्दुर्ग्रहत्वाच्च। नाश्वमेधेन यजेतेत्यादिनिषेधविधिवन्न कलञ्जं भक्षयेदित्यादिनिषेधविधीनामप्रामाण्यापत्तेश्च। तत्र यदा यः पुरुषः प्रवर्तते तत्कालीनतत्पुरुषीयबलवद्द्वेषविषयाजनकत्वस्य तत्रापि सत्त्वात् किंतु वैदिकविधेः पापाजनकत्वमर्थः तदभाव एव न कलञ्जं भक्षयेदित्यादौ नञा बोध्यते शाकं न भुञ्जीतेत्यादिवाक्यस्य प्रामाण्यनिर्वाहाय रोगाजनकत्वमप्यर्थः। एवं पुष्ये नोद्वहेन्नैकः पर्वतमारोहेदित्यादावपि तत्तदनिष्टाजनकत्वमर्थो बोध्यः। नच शक्त्यानन्त्यं नरकत्वरोगत्वादीनां द्वेषविषयतावच्छेदकत्वेनोपलक्षणीभूतेनानुगमय्य तदवच्छिन्नप्रतियोगिताकाभावकूटे एकशक्त्यभ्युपगमात् रोगाद्यजनकत्वादौ लौकिकलिङो लक्षणाभ्युपगमाद्वेति वदन्ति। विध्यर्थश्चाप्ताभिप्रायः स च स्वेष्टसाधनतानुमापक इष्टसाधनताज्ञानं च प्रवर्तकमित्युदयनाचार्यमतमाह ॥ **आचार्यास्त्विवति** ॥ इत्यादावित्यादिना पाकं कुर्यामित्युत्तमपुरुषपरिग्रहः। आज्ञादीत्यादिनाध्येषणादिपरिग्रहः। तथा च पाकं कुर्याः पाकं कुर्यामिति मध्यमोत्तमपुरुषयोराज्ञाध्येषणारूपेच्छावाचित्वं क्लृप्तं तद्दृष्टान्तेन प्रथमपुरुषेऽपीच्छावाचित्वमनुमेयमिति भावः ॥ **लाघवादिति** ॥ बलवदनिष्टाननुबन्धीष्टसाधनत्वाद्यपेक्षयेच्छात्वेन विधिशक्तौ लाघवादित्यर्थः ॥ **इत्यर्थः** इति बोधः ॥ **अनुमायेति** ॥ अत्र च यागो मम स्वर्गकामस्य बलवदनिष्टननुबन्धी-

न प्रवर्तते । यस्तु वेदे पौरुषेयत्वं नाभ्युपैति तं प्रति विधिरेव तावद्गर्भ इव श्रुतिकुमार्याः

**प्रभा.**

**इति** ॥ इत्याकारकशाब्दबोध इत्यर्थः । भवतीति शेषः । ननु सकलनैयायिकैः प्रथमान्तपदसमभिव्याहारस्थले प्रथमान्तार्थमुख्यविशेष्यकशाब्दबोधस्यैव स्वीकृतत्वेन प्रकृते धात्वर्थमुख्यविशेष्यकशाब्दबोधस्वीकारः अनुचितः अन्यथा सर्वत्रापि तादृशबोधस्वीकारौचित्येन प्रथमान्तमुख्यविशेष्यकशाब्दबोधविलयप्रसङ्ग इति चेन्न आचार्यैः आप्ताभिप्रायस्य विध्यर्थत्वमात्रमङ्गीकृतम् । ननु धात्वर्थमुख्यविशेष्यकशाब्दबोधोऽपि एवं चेत्यादिमुक्तावलीग्रन्थोऽपि न यागमुख्यविशेष्यकशाब्दबोधपरः किंतु विध्यर्थांशे यागविशेष्यकबोधपर एव अन्यथा विधिप्रत्ययस्य कृतित्वावच्छिन्नशक्तत्वासंभवेन लः कर्मणीत्यादिसूत्रविरोधापत्तेः तथाच कृतिसाध्यत्वप्रकारकाप्तसमवेतेच्छाविषययागानुकूलकृतिमान् स्वर्गकाम इत्याकारकशाब्दबोधस्यैव विधिवाक्याज्जायमानतया उक्तदोषाप्रसक्तेः कृतिसाध्यत्वप्रकारकाप्ताभिप्रायमात्रस्यैव विध्यर्थत्वात् स्वर्गकामकृतित्वेन बोधस्तूत्तरकालीनमानस इति । केचित्तु प्रथमान्तपदोपस्थाप्यस्याख्यातार्थे विशेष्यत्वनियमात् आख्यातार्थस्यानुकूलत्वविषयत्वान्यतरसंबन्धेन धात्वर्थविशेष्यत्वनियमाच्च कथं प्रथमान्तपदोपस्थाप्यस्वर्गकामादेराख्यातार्थे आख्यातार्थस्य च धात्वर्थेऽन्वयः । अन्यथा चैत्रः पचतीत्यादावपि चैत्रवृत्तिकृतिसाध्यः पाक इत्यन्वयबोधापत्तेरिति चेदन्यत्र तथा नियमेऽप्यत्र न तथा नियमः व्युत्पत्तिवैचित्र्यादिति गृहाण । अत एव इष्टसाधनत्वादेर्विध्यर्थत्वपक्षेऽपि प्राचीनाः स्वर्गकामकृतिसाध्यस्स्वर्गसाधनं याग इति बोधमङ्गीकुर्वन्तीत्याक्षेपं परिहारं चाहुः। तदसत् विधिस्थले धात्वर्थमुख्यविशेष्यकबोधस्यावश्यकत्वे तदनुरोधेन सर्वत्र तादृशबोधस्यैव स्वीकर्तुं शक्यत्वात् । अन्यथा प्रथमान्तपदसमभिव्याहारस्थलेऽनियतमुख्यविशेष्यकबोधस्वीकारे नैयायिकाः वैयाकरणप्रभृतिभिः परिहास्याः स्युरत एकविधबोध एव स्वीकार्यः । अत्र धात्वर्थमुख्यविशेष्यकबोधावलम्बने वैयाकरणमतप्रवेशः स्वमतेऽपि वैयाकरणमतोक्तदोषप्रसक्तिश्चेति प्रथमान्तमुख्यविशेष्यकबोध एव सर्वत्र स्वीकार्यः स च विधिस्थलेऽप्युपपादित एवेति । यच्चोक्तमिष्टसाधनत्वादेर्विध्यर्थत्ववादिनो नैयायिकाः स्वर्गकामकृतिसाध्यः स्वर्गसाधनं याग इति बोधमङ्गीकुर्वन्तीति तत्सत्यम्। इष्टसाधनत्वकृतिसाध्यत्वांशे यागस्य विशेष्यविधयैव भानं ननु मुख्यविशेष्यतया आख्यातार्थकृतित्वावच्छिन्ने यागस्य प्रकारत्वात् यागांशे स्वर्गकामसमवेतकृतिसाध्यत्वबोधस्तु मानस एवेत्युक्त एव। तस्मात् धात्वर्थमुख्यविशेष्यकबोधस्वीकारपक्षस्य सर्वैः प्राचीनैर्नवीनैर्दूषितत्वात् तत्पक्षावलम्बनेनोक्तदूषणवारणमनुचितमेवेत्यास्तां ग्रन्थविस्तरेण ॥ **ततश्चेति** ॥ शाब्दबोधरूपकृतिसाध्यत्वप्रकारकाप्तसमवेतेच्छाविषयत्वात्मकलिङ्गज्ञानानन्तरमेवेत्यर्थः ॥ **इष्टसाधनत्वादिकमिति** ॥ आदिना बलवदनिष्टाननुबन्धित्वपरिग्रहः ॥ **अनुमायेति** ॥अनुमितिविषयीकृत्येत्यर्थः । तथाच यागः बलवदनिष्टाननुबन्धि इष्टसाधनं कृतिसाध्यत्वप्रकारकाप्तसमवेतेच्छाविषयत्वात् कृतिसाध्यत्वप्रकारकमन्मात्रसमवेतेच्छाविषयमत्कर्तृकभोजनवदित्यनुमानाद्यागादिविशेष्यकबलवदनिष्टाननुबन्धीष्टसाधनत्वप्रकारकानुमित्यात्मकप्रवर्तकज्ञानं जायत इति भावः ॥ **प्रवर्तत इति** ॥ यागादिविषयकप्रवृत्तिमान् भवतीत्यर्थः ॥ **तदभावादिति** ॥ कलञ्जभक्षणादौ कृतिसाध्यतया आप्तेष्टत्वाभावेन तल्लिङ्गकबलवदनिष्टाननुबन्धीष्टसाधनत्वविषयकप्रवर्तकज्ञानाभावादित्यर्थः । ननु वेदस्य नित्यत्वेन वक्तुरभावात् कृतिसाध्यतया आप्तेष्टत्वरूपविध्यर्थाप्रसिद्ध्या तल्लिङ्गकनिरुक्तप्रवर्तकज्ञानानुत्पत्तेः कथं यागादौ प्रवृत्तिरत आह ॥ **यस्त्विति** ॥ **पौरुषेयत्वमिति** ॥ पुरुषप्रणीतत्वमित्यर्थः ॥ **विधिरेवेति** ॥ मानमित्युत्तरेण संबध्यते ॥ **कुमार्या गर्भ इवेति** ॥ कुमार्यां गर्भ इत्यादिः । तथाच यथा पुरुषसंबन्धं विना गर्भासंभवात् कुमार्या गर्भः पुंयोगे मानं श्रुतिकुमारीमध्यस्थविधिरेव श्रुतेः पौरुषेयत्वे मानमिति समुदितार्थः । तथाच वेदस्यापौरुषेयत्वस्वीकारे आप्ताभिप्रायरूप-

**दिनकरीयम्.**

इष्टसाधनं मत्कृतिसाध्यतया आप्तेनेष्यमाणत्वात् मन्मात्रकृतिसाध्यतयेष्यमाणमद्भोजनवदित्यनुमानमवधेयम् ॥ **तदभावात्** आप्तेष्टत्वाभावेन तद्धेतुकेष्टसाधनत्वज्ञानाभावात् । ननु वेदे वक्तुरभावात् कस्येच्छा लिङा बोधनीयेत्यत आह ॥ **यस्त्विति** ॥ **विधिरेवेति** ॥ वक्तृभिन्नेच्छाया बोधने विधेः सामर्थ्या-

पुंयोगे मानम् । नच कर्त्रस्मरणं बाधकं कपिलकणादादिभिरद्यपर्यन्तं कर्तृस्मरणस्यैव प्रतीयमानत्वात् अन्यथा स्मृतीनामप्यकर्तृकत्वापत्तेः । तत्रैव कर्तृस्मरणमस्तीति चेद्वेदेऽपि छन्दांसि जज्ञिरे तस्मादित्यादिकर्तृस्मरणमस्त्येव । एवं प्रतिमन्वन्तरं चैषा श्रुतिरन्या विधीयत इत्यपि द्रष्टव्यम् । स्वयम्भूरेष भगवान् वेदो गीतस्त्वया पुरा । शिवादिऋषिपर्यन्ताः स्मर्तारोऽस्य न कारका इति तु वेदस्य स्तुतिमात्रम् । नच पौरुषेयत्वे भ्रमादिसम्भवादप्रामाण्यं

## प्रभा.

विध्यर्थघटकाप्तस्येश्वरभिन्नस्य विनिगमनाविरहेण वक्तुमशक्यतया ईश्वरभिन्नसमवेतेच्छाबोधने विधेरसामर्थ्याच्च विधिरेवेश्वरे मानमिति भावः ॥ **कर्तुरिति** ॥ वेदे कर्तुरित्यर्थः ।तथाच वेदो न पौरुषेयः अस्मर्यमाणकर्तृकत्वात् आशादिवत् इत्यनुमानमीश्वरसिद्धौ बाधकमिति भावः ॥ **कपिलकणादादिभारभ्येति** ॥ कपिलकणादगौतमप्रभृतीत्यर्थः ॥ **अद्यपर्यन्तमिति** ॥ एतत्कालीनवेदवक्तृपर्यन्तामित्यर्थः । कपिलकणादगौतमप्रभृति-एतत्कालीनवेदवक्तृनिष्ठपरम्पराघटकैर्यावद्भिर्महद्भिरिति समुदितार्थः ॥ **कर्तृस्मरणस्यैव प्रतीयमानत्वादिति** ॥ सकर्तृकत्वबोधकस्मृतिप्रणयनादित्यर्थः । नच वेदकर्तुरीश्वरस्य केनाचिददृष्टत्वादनुभवसामान्यस्यासंभवेन स्मरणासंभवात् कपिलादीनां तन्मूलकस्मृतिप्रणयनं कथमिति वाच्यम् । वेदः पौरुषेयः वाक्यसमूहत्वादित्यनुमानेन वेदकर्तुरनुमितौ तन्मूलकस्मरणस्मृतिप्रणयनयोस्संभवात् ॥ **अन्यथा** उक्तानुमानस्याप्रयोजकत्वमङ्गीकृत्य वेदस्य सकर्तृकत्वानङ्गीकार इत्यर्थः ॥ **स्मृतीनामपीति** ॥ मन्वादिस्मृतीनामपीत्यर्थः ॥ **तत्रैवेति** ॥ स्मृतिष्वेवेत्यर्थः ॥ **कर्तृस्मरणमिति** ॥ मन्वादिस्मृतिप्रणेतुरित्यर्थः ॥ **अस्तीति चेदिति** ॥ अस्तीति यदुच्यत इत्यर्थः । तथाचेत्याह गौतम इति शातातपोऽब्रवीदितीति मनुवचनादित्यादिस्मृतिघटकवचनेनैव तत्तत्स्मृतिप्रणेतॄणां स्मृतत्वान्न स्मृतीनामकर्तृकत्वापत्तिरिति भावः ॥ **इत्यादिनेति** ॥ इत्यादिवेदघटकवाक्येनेत्यर्थः । आदिना यजुस्तस्मा अजायत तस्मात्तेपानात्त्रयो वेदा अजायन्त स भूरिति व्याहरत् स भूमिमसृजत अग्निहोत्रं दर्शपूर्णमासौ यजूंषि इत्यादेः परिग्रहः ॥ **अत्रापीति** ॥ वेदेऽपीत्यर्थः । वेदस्य सकर्तृकत्वे श्रुतिप्रमाणं प्रदर्श्य स्मृतिप्रमाणमपि प्रदर्शयति ॥ **एवमिति** ॥ **इत्यपीति** ॥ एतादृशस्मृतिवाक्यमपीत्यर्थः ॥ **द्रष्टव्यमिति** ॥ प्रमाणतया स्वीकार्यमित्यर्थः । ननु वेदस्य नित्यत्वप्रतिपादकभारतादिरेव तस्य नित्यत्वे प्रमाणमित्याशङ्कते ॥ **स्वयम्भूरिति** ॥ नित्य इत्यर्थः ॥ **भगवानिति** ॥ ब्रह्मादीनामपि सर्वार्थप्रकाशक इत्यर्थः । एतद्द्वयमपि वेदविशेषणमिति बोध्यम् । तथाच एतादृशवचनेन वेदस्य नित्यत्वलाभात् न पौरुषेयत्वमिति भावः । शङ्कां परिहरति ॥ **वेदस्य स्तुतिमात्रमिति** ॥ स्मृतीतिहासपुराणापेक्षया स्वतन्त्रपुरुषानुष्ठितत्वरूपौत्कृष्ट्यप्रदर्शनपरं भारतवचनं न स्वार्थतात्पर्यकमित्यर्थः । तथाच पूर्वोक्तश्रुत्या वेदस्य पौरुषेयत्वसिद्धया भारतवचनस्य वेदनित्यत्वप्रतिपादकत्वे श्रुतिविरुद्धार्थप्रतिपादकतया भारतस्याप्रामाण्यापत्तेस्स्तावकत्वमावश्यकमिति भावः ॥ **भ्रमादिसंभवादिति** ॥ भ्रमप्रमादविप्र-

## दिनकरीयम्.

भावाद्विधिरेव वेदवक्तुरीश्वरे मानमिति भावः ॥ **नच कर्त्रस्मरणमिति** ॥ **कर्तुः** वेदकर्तुः ॥ **अस्मरणं** स्मृतिभिरबोधनम् । तथा च वेदोऽपौरुषेयः अस्मर्यमाणकर्तृकत्वादित्यनुमानं बाधकमित्यर्थः ॥ **कपिलकणादेति** ॥ कपिलकणादगौतमादिभिस्तच्छिष्यैश्चाद्यपर्यन्तामित्यर्थः ॥ **कर्तृस्मरणस्य** सकर्तृकत्वबोधकस्मृतेरित्यर्थः । नन्वीश्वरस्य वेदवक्तुः सर्गादौ केनचित्साक्षाददृष्टत्वादननुभवेऽस्मरणं तदभावे ऋषीणां स्मृतिप्रणयनं च न सम्भवतीति चेन्न पौरुषेयत्वानुमानेन वेदवक्तारमनुभूय तन्मूलकश्रुतिस्मृतिप्रणयनयोः सम्भवात् ॥ **अन्यथा** वेदे सकर्तृकत्वानङ्गीकारे ॥ **तत्रैव** स्मृतिष्वेव । वेदस्य सकर्तृकत्वे श्रुतिं प्रदर्श्य स्मृतिमपि प्रदर्शयति ॥ **एवमिति** ॥ ननु वेदस्य नित्यत्वबोधकं भारताद्येव तस्याकर्तृकत्वे प्रमाणं भविष्यतीत्याशङ्कते ॥ **स्वयम्भूरिति** ॥ नित्य इत्यर्थः । एष भगवानित्यपि वेदविशेषणम् ॥ **स्तुतिमात्रमिति** ॥ तथा च पूर्वोक्तश्रुतिस्मृत्योर्विरोधेनास्य भारतस्य न स्वार्थे तात्पर्यमपि तु स्तुतिपरत्वमिति भावः ॥ **भ्रमा-**

स्यादिति वाच्यं नित्यसर्वज्ञत्वेन निर्दोषत्वात् । अत एव पुरुषान्तरस्य भ्रमादिसम्भवान्न कपिलादेरपि कर्तृत्वं वेदस्य । किञ्च वर्णानामेवानित्यत्वस्य वक्ष्यमाणत्वात् सुतरां तत्सन्दर्भस्य वेदस्यानित्यत्वमिति सङ्क्षेपः ॥ उपादानस्येति ॥ उपादानस्य समवायिकारण-

## प्रभा.

लिप्सादिसंभवादित्यर्थः । पुरुषमात्रस्य भ्रमादिदोषवत्त्वादिति भावः ॥ **नित्यसर्वज्ञत्वेनेति** ॥ नित्यत्वविशिष्टसर्वविषयकत्वविशिष्टज्ञानाश्रयत्वेनेत्यर्थः ॥ **निर्दोषत्वादिति** ॥ भ्रमादिदोषवत्त्वासंभवादिति भावः ॥ **अत एवेति** ॥ नित्यत्वसर्वविषयकत्वोभयविशिष्टज्ञानशून्यत्वादेवेत्यर्थः । **पुरुषान्तरस्येति** ॥ ईश्वरभिन्नपुरुषस्येत्यर्थः ॥ **भ्रमादिसंभवादिति** ॥ भ्रमप्रमादादिदोषसंभवादित्यर्थः ॥ **न कपिलादेरिति** ॥ न कपिलादिपुरुषमात्रस्येत्यर्थः ॥ **कर्तृत्वं वेदस्येति** ॥ वेदकर्तृत्वमित्यर्थः। ननु नित्यसर्वज्ञपुरुषप्रणीतत्वापेक्षया लाघवात् वेदस्य नित्यनिर्दोषत्वमङ्गीकृत्य तस्यैव वेदप्रामाण्यप्रयोजकत्वं वाच्यम्। एवंच सकर्तृकत्वानुमानं बाधितमित्याशङ्क्य वेदस्य नित्यत्वे बाधकं प्रदर्श्य परिहरति ॥ **किञ्चेति** ॥ **वर्णानामेवेति** ॥ एवकारः वक्ष्यमाणत्वादित्युत्तरं योज्यः ॥ **तत्सन्दर्भस्येति** ॥ वर्णघटितानुपूर्वीविशेषावच्छिन्नवाक्यरूपस्येत्यर्थः । तथाच वर्णानां अनित्यतया तद्घटितायाः क्षणविशेषघटितायाश्चानुपूर्व्या अप्यनित्यत्वात् तद्विशिष्टवाक्यस्यानित्यत्वमावश्यकमिति भावः । अत्र कृतिसाध्यत्वप्रकारकाप्तेच्छाविषयत्वस्य विध्यर्थत्वे कलञ्जभक्षणस्य कृतिसाध्यतया कलञ्जभक्षणविशेष्यकतत्प्रकारकज्ञानिच्छेयोरीश्वरस्यापि सत्त्वावश्यकतया ईश्वररूपाप्तसमवेततादृशेच्छाविषयत्वरूपहेतोः कलञ्जभक्षणादावपि सत्त्वात् तत्र बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वरूपसाध्याभावेन व्यभिचारात् कथं तस्यानुमापकत्वं बलवदनिष्टाननुबन्धित्वादित्रितयविषयकाप्तेच्छाविषयत्वस्य हेतुत्वमङ्गीकृत्य व्यभिचारवारणे बलवदनिष्टाननुबन्धित्वादित्रयस्यैव विध्यर्थत्वमुचितं लाघवादित्यस्वरसं हृदि निधाय आचार्यास्त्वित्यत्र तुशब्दः प्रयुक्त इति ध्येयम् । ननु विधेरिष्टसाधनत्वशक्तत्वे विधित इष्टत्वेनैव स्वर्गबोधः स्यात् न स्वर्गत्वेन तद्धर्मावच्छिन्नत्वादिष्टसाधनत्वे विधेःशक्त्यभावात् नहि स्वर्गकाम इति वाक्यघटकस्वर्गपदवाच्यस्वर्गस्याभेदेन विध्यर्थैकदेशेष्टे अन्वयः संभवति इष्टस्य समासाघटकविध्यर्थैकदेशे इष्टतया तदर्थे समासघटकस्वर्गपदार्थस्याभेदेनान्वयासंभवादिति चेन्न इष्टतावच्छेदकत्वोपलक्षिततद्धर्मावच्छिन्नसाधनत्व एव विधेः शक्त्युपगमेन विधितः स्वर्गत्वावच्छिन्नसाधनत्वबोधानुपपत्त्यभा-

## दिनकरीयम्.

**दिसम्भवात्** पुरुषस्य भ्रमप्रमादादिदोषसंभवादित्यर्थः ॥ **नित्यसर्वज्ञत्वेनेति** ॥ नित्यसर्वविषयकज्ञानवत्त्वेनेत्यर्थः ॥ **निर्दोषत्वात्** भ्रमादिशून्यत्वात् ॥ **अत एव** नित्यसर्वज्ञत्वाभावादेव । ननु नित्यसर्वज्ञपुरुषप्रणीतत्वापेक्षया नित्यनिर्दोषत्वं वेदे स्वीकृत्य तदेव वेदप्रामाण्ये प्रयोजकमस्तु तथा च सकर्तृत्वानुमाने बाध इत्यतो वेदस्य नित्यत्वे बाधकमाह ॥ **किंचेति** ॥ **तत्सन्दर्भस्येति** ॥ तन्निष्ठानुपूर्वीविशेषस्येत्यर्थः । आनुपूर्व्या नित्यत्वे त्वनित्यसमवेतनित्यस्य जातित्वेनानुपूर्व्या जातित्वापत्तेरिति भावः । अत्र चाप्तेच्छाविषयत्वस्येश्वरेच्छाविषयत्वरूपस्य केवलान्वयिनः कलञ्जभक्षणेऽपि सत्त्वाद्बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वरूपसाध्यस्य च तत्राभावेन व्यभिचारात् कथं तस्य तदनुमापकत्वं बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वप्रकारकेच्छाया लिङर्थत्वे च लाघवाद्बलवदनिष्टाननुबन्धीष्टसाधनत्वमेव लिङर्थोऽस्तु कृतमाप्तेच्छयेत्यस्वरस आचार्यास्त्वित्यनेन सूचितः । नन्विष्टसाधनत्वस्य न विधितो बोधः सम्भवति स्वर्गत्वावच्छिन्नसाधनत्वस्य यागे बाधात् गङ्गास्नानादिजन्यस्वर्गे व्यभिचारात् स्वर्गनिष्ठवैजात्यावच्छिन्नसाधनत्वस्य यागे सत्त्वेऽपि तद्वैजात्यस्य विधिबोधितस्वर्गसाधनत्वान्यथानुपपत्त्या कल्पनीयस्य प्रागनुपस्थित्या तद्घटितकारणत्वे विधिशक्तिग्रहायोगादिति चेन्न स्वरूपसम्बन्धविशेषरूपाया एव कारणताया विध्यर्थत्वोपगमादित्येके । अन्यथासिद्धिनिरूपकतानवच्छेदकनियतोत्तरवर्तितावच्छेदकधर्मवत्स्वर्गकत्वमेव स्वर्गकारणत्वमित्यन्ये । वस्तुतस्तु स्वर्गनिष्ठधर्मावच्छिन्ननिरूपितानियतपूर्ववर्तितावच्छेदकधर्मवत्त्वमेव स्वर्गकारणत्वं तच्च यागे न बाधितं स्व-

निवृत्तिस्तु भवेद्द्वेषात् द्विष्टसाधनताधियः ॥ १५१ ॥

स्याध्यक्षं प्रत्यक्षं प्रवृत्तौ कारणमिति ॥ निवृत्तिरिति ॥ द्विष्टसाधनताज्ञानस्य निवृत्तिं प्रति जनकत्वमन्वयव्यतिरेकाभ्यामवधारितमिति भावः ॥ १४९ ॥ १५० ॥ १५१ ॥

## प्रभा.

वात् इष्टतावच्छेदकत्वस्य इष्टतावच्छेदकस्वर्गत्वांशे भानानभ्युपगमात् न स्वरूपतः स्वर्गत्वादिविषयकशाब्दबोधानुपपत्तिः।उपलक्षणत्वं च तत्तत्पदजन्यबोधविषयत्वेन शक्त्यविषयत्वं । विशेषणत्वं च तत्तत्पदजन्यशाब्दबोधविषयत्वेन शक्तिविषयत्वमिति । एतेन यागस्य न स्वर्गसाधनत्वं गङ्गास्नानादिजन्यस्वर्गे व्यभिचारादित्यन्यैरुक्तं प्रत्युक्तं यजधातुसमभिव्याहृतविधिप्रत्ययस्येष्टसाधनत्वोपलक्षितस्वर्गत्वव्याप्यवैजात्यावच्छिन्नबोध एव तात्पर्यात् समभिव्याहारविशेषस्यैव तात्पर्यग्राहकत्वात् । नचैवंरीत्या विधिवाक्यात् स्वर्गत्वादिरूपविशेषधर्मावच्छिन्नकारणताज्ञानात्मकप्रवर्तकज्ञानलाभात् तदर्थं पूर्वं शाब्दबोधोत्तरकालीनानुमित्यादिज्ञानकल्पनं तदुपष्टम्भकतया तत एवेत्यादिना मणिकृदुक्तिप्रदर्शनं चायुक्तमिति वाच्यम् । विधित एतादृशज्ञानसंभवेऽपि कालविशेषघटितं यदिष्टतावच्छेदकत्वोपलक्षितं स्वर्गत्वाद्यवच्छिन्नसाधनत्वादित्रयं तच्छाब्दबोधस्य विधिवाक्यादसंभवे तदर्थं पूर्वमनुमित्यादिज्ञानकल्पनं उपष्टम्भकतया मणिकारोक्तिप्रदर्शनं चाप्यावश्यकमेवेति दिक् । उपादानस्य चाध्यक्षमिति मूलस्थोपादानशब्दस्य उप समीपे आदानमिति व्युत्पत्त्या समीपप्राप्तिप्रत्यक्षं कारणमिति लभ्यते । तदनुपपन्नं तादृशप्रत्यक्षस्य प्रवृत्तिहेतुत्वाभावादत उपादानपदार्थमाह ॥ **मुक्तावल्यां समवायिकारणस्येति** ॥ तथाच तत्साध्यकप्रवृत्तिं प्रति तदुपादाननिष्ठलौकिकविषयताशालिप्रत्यक्षस्य हेतुत्वमिति भावः । ननु शब्दोद्देशेन मृदङ्गादौ प्रवृत्तिर्न स्यात् तदुपादानगगनस्य लौकिकविषयताशून्यत्वात् एवं ध्वंससाध्यकप्रवृत्तिरपि न स्यात् ध्वंसोपादानस्याप्रसिद्धत्वात् इति चेत् अत्र प्राञ्चः शब्दाद्युद्देश्यकप्रवृत्तौ मानाभावेनेष्टापत्तेः शब्दादिप्रत्यक्षमुद्दिश्यैव मृदङ्गादौ प्रवृत्तिस्वीकारादिति । नव्यास्तु उपादानपदस्याधिष्ठानमात्रपरत्वस्वीकारात् प्रकृते यागादौ हविषः शब्दे मृदङ्गादेः प्राणसञ्चारादौ तदधिष्ठाननाड्यादेरीदृशोपादानत्वसंभवात् न तदुद्देश्यकप्रवृत्त्यनुपपत्तिरिति प्राहुः । अत्र द्रव्योद्देश्यकप्रवृत्तिं प्रत्येव तदुपादानप्रत्यक्षस्य हेतुत्वमावश्यकं अन्यथा कपालादिप्रत्यक्षं विना तद्विषयकेच्छानुत्पादात् घटाद्युद्देशेन कपालादौ प्रवृत्त्यनुपपत्तेरेवंच शब्दाद्युद्देश्यकप्रवृत्तेः कार्यतावच्छेदकानाक्रान्ततया गगनादेरतीन्द्रियत्वेऽपि ध्वंसोपादानस्याप्रसिद्धत्वेऽपि च नानुपपत्तिरिति प्रतिभाति ॥ **मूले निवृत्तिस्तु भवेद्द्वेषादिति** ॥ द्विष्टतावच्छेदकत्वोपलक्षितश्रममरणदुःखत्वादिप्रकारकज्ञानजन्यो यस्तद्धर्मप्रकारकद्वेषः तादृशद्वेषो द्विष्टसाधनताज्ञानाच्च । उपाये द्वेषः तस्मादुपाये

## दिनकरीयम्.

निष्ठवैजात्यरूपस्वर्गत्वधर्मावच्छिन्नं प्रति यागस्य व्यभिचाराभावात् । ननु विधेरिष्टसाधनत्वे शक्तत्वेऽपि स्वर्गसाधनत्वस्य कथं ततो बोधः स्वर्गसाधनत्वादौ विभिन्नशक्तिकल्पने तु शक्त्यानन्त्यम् । नच विधिप्रत्ययोपस्थिते इष्टे स्वर्गपदोपस्थितस्वर्गस्याभेदेनान्वयात् स्वर्गाभिन्नेष्टसाधनत्वस्य बोधः सम्भवतीति वाच्यं स्वर्गपदस्य समासान्तर्गततया तदर्थस्यान्यत्रान्वयासम्भवादिति चेन्न स्वर्गसाधनत्वादौ विधेः शक्तिकल्पनेन तथा बोधनिर्वाहात् नचैकैकस्य बोधे विधेर्विनिगमकाभावः स्वर्गादिपदसमभिव्याहाराधीनतत्तद्धर्मघटितसाधनत्वे तात्पर्यग्रहस्यैव विनिगमकत्वात् । नचैवं विधिशक्त्यानन्त्यं स्वर्गत्वादिधर्मावच्छिन्ननिरूपितसाधनत्वेष्वेकशक्त्युपगमात् । नच शक्यतावच्छेदकभेदाच्छक्तिभेदः इष्टतावच्छेदकत्वेन स्वर्गत्वादीन्यनुगतीकृत्य तदवच्छिन्ननिरूपितसाधनत्वे एकशक्त्युपगमात् । नचेष्टतावच्छेदकत्वेनैव शाब्दबोधे स्वर्गत्वादीनां भानं स्यान्न तु स्वरूपत इति वाच्यं इष्टतावच्छेदकत्वस्योपलक्षणतया शक्तिविषयत्वाद्विशेषणस्यैव शाब्दबोधे भानोपगमात् । उपलक्षणत्वं च तत्पदजन्यबोधाविषयत्वेन शक्तिविषयत्वं तत्पदजन्यबोधविषयत्वेन शक्तिविषयत्वमेव च विशेषणत्वमित्यन्यत्र विस्तरः ॥ **समवायिकारणस्येति** ॥ तत्साध्यकप्रवृत्तिं प्रति तत्समवायिकारणात्मकतदुपादानगोचरलौकिकप्रत्यक्षस्य हेतुत्वम् । नच शब्दसाध्यकप्रवृत्तिर्मृदङ्गादौ न स्यात्तदुपादानस्य गगनस्याती-

**यत्नो जीवनयोनिस्तु सर्वदातीन्द्रियो भवेत् ।**
**शरीरे प्राणसञ्चारे कारणं तत्प्रकीर्तितम् ॥ १५२ ॥**

**यत्न इति** ॥ जीवनयोनियत्नो यावज्जीवनमनुवर्तते स चातीन्द्रियः । तत्र प्रमाणमाह ॥ **शरीर इति** ॥ प्राणसञ्चारो हि अधिकश्वासादिः प्रयत्नसाध्यः । इत्थं च प्राणसञ्चारस्य सर्वस्य यत्नसाध्यत्वानुमानात् प्रत्यक्षप्रयत्नबाधाच्चातीन्द्रिययत्नसिद्धिः स एव जीवनयोनिर्यत्नः ॥ १५२ ॥

## प्रभा.

निवृत्तिरित्यर्थः । उपायेच्छां प्रति फलेच्छाया इव उपायद्वेषं प्रति फलद्वेषहेतुत्वस्यावश्यकत्वादिति भावः । उपायद्वेषस्येव फलद्वेषस्यापि उपायविषयकनिवृत्तिकारणत्वमिति उपायद्वेषं प्रतीव तज्जन्यनिवृत्तिं प्रत्यपि अन्वयव्यतिरेकाभ्यां द्विष्टसाधनताज्ञानस्य हेतुत्वमिति चाशयेन तादृशमूलं व्याकरोति ॥ **मुक्तावल्यां निवृत्तिरितीति** ॥ स्वाभिप्रायं प्रकाशयति ॥ **द्विष्टसाधनताज्ञानस्येत्यादिना** ॥ १४९ ॥ १५० ॥ १५१ ॥

यत्नो जीवनयोनिस्तु सर्वदातीन्द्रियो भवेदिति मूलस्थसर्वदेत्यस्य प्रतीकमधृत्वार्थमाह ॥ **यावज्जीवमनुवर्तत इति** ॥ जीवनयोनियत्नं साधयितुं भूमिकामाह ॥ **प्राणसञ्चारो हीति** ॥ अवधारणार्थकहिशब्दः अधिकश्वासादिरित्युत्तरं योज्यः । अधिकश्वासादिरूप एवेत्यर्थः धावतः प्रयत्नोत्कर्षेण श्वासोत्कर्षदर्शनात् अधिकश्वासादिरूपप्राणसञ्चारस्य प्रयत्नसाध्यत्वमावश्यकमिति भावः ॥ **इत्थंचेति** ॥ एतादृशप्राणसञ्चारस्य प्रयत्नसाध्यत्वसिद्धावित्यर्थः ॥ **प्राणसञ्चारस्य सर्वस्येति** ॥ प्राणसञ्चारमात्रस्येत्यर्थः । सुषुप्तिकालीनश्वासात्मकप्राणसञ्चारस्यापीति यावत् ॥ **प्रयत्नसाध्यत्वानुमानादिति** ॥ तथाच सुषुप्तिकालीनश्वासः भोक्तृप्रयत्नजन्यः श्वासत्वात् धावतः श्वासवदिति अनुमानात् प्रत्यक्षयत्नबाधसहकृतात् अतीन्द्रिययत्नसिध्यतीति भावः । नन्वतीन्द्रिययत्नसिद्धावपि जीवनयोनियत्नोऽसिद्ध एवेत्यत आह ॥ **स एवेति** ॥ उक्तानुमानात् सिद्धातीन्द्रिययत्न एवेत्यर्थः । नव्यास्तु सुषुप्तिकालीनप्राणसञ्चाररूपश्वासं प्रति जीवनादृष्टस्य तादृशादृष्टप्रयोज्यमनोयोगरूपजीवनस्य वा हेतुत्वस्वीकारेणैवोपपत्तेः उक्तानुमानस्याप्रयोजकत्वाच्च जीवनयोनियत्ने मानाभावः अन्यथा बाह्यपदार्थप्रयत्ने ज्ञानजन्यत्वस्य सिद्धत्वात् तद्दृष्टान्तेन प्रयत्नत्वलिङ्गेन जीवनयोनियत्नेऽपि ज्ञानजन्यत्वसिद्ध्यापत्त्या सुषुप्तिकाले आत्मनि अतीन्द्रियज्ञानस्यापि स्वीकारापत्तेरिति प्राहुः ॥ १५२ ॥

## दिनकरीयम्.

न्द्रियत्वात् एवं ध्वंससाध्यकप्रवृत्तिरपि तत्समवायिनोऽप्रसिद्धेरिति वाच्यं इष्टापत्तेः शब्दसाक्षात्कारसाध्यकप्रवृत्तेरेव मृदङ्गादिगोचराया उपगमादिति प्राचीनमतानुसारेणेदम् । नवीनमते त्वधिष्ठानमात्रमुपादानं बोध्यम् । तेन यागादेर्हविः शब्दस्य मृदङ्गादिः प्राणसञ्चारादेश्च प्राणवहनाड्यादिरुपादानमिति बोध्यम् ॥ **मूले द्वेषादिति** ॥ फलगतो द्वेषो द्विष्टसाधनताज्ञानं च निवृत्तिं प्रति कारणमित्यभिप्रायेणोक्तम् ॥ १४९ ॥ १५० ॥ १५१ ॥

**प्राणसञ्चारो हीति** ॥ अधिकश्वासादिः प्राणसञ्चारो यत्नसाध्यः प्रत्यक्षयत्नसाध्यतया दृष्टः धावतः प्रयत्नोत्कर्षेण श्वासक्रियोत्कर्षदर्शनादिति भावः ॥ **इत्थं चेति** ॥ दृष्टान्तसिद्धावित्यर्थः ॥ **सर्वस्येति** ॥ एकत्र यत्नसाध्यत्वस्यानुभविकत्वेन तद्दृष्टान्तेन प्राणसञ्चारत्वावच्छेदेन सर्वत्र भोक्तृयत्नजन्यत्वानुमानादिति भावः ॥ **स एव** प्राणसञ्चारहेतुत्वेनानुमीयमान एव । नव्यास्तु जीवनयोनियत्ने मानाभावः प्राणक्रियाया अदृष्टविशेषप्रयोज्यात्ममनोयोगरूपाज्जीवनात् तत्प्रयोजकादृष्टाद्वा सम्भवादुक्तानुमानस्य चाप्रयोजकत्वात् । अन्यथैकत्र यत्ने ज्ञानजन्यत्वदृष्टान्तेन जन्ययत्नत्वावच्छेदेन ज्ञानजन्यत्वकल्पनापत्त्या सुषुप्तौ ज्ञानादेरप्यतीन्द्रियस्य कल्पनापत्तेरिति प्राहुः ॥ १५२ ॥

अतीन्द्रियं गुरुत्वं स्यात् पृथिव्यादिद्वये तु तत् ।
अनित्ये तदनित्यं स्यान्नित्ये नित्यमुदाहृतम् ॥ १५३ ॥
तदेवासमवायि स्यात् पतनाख्ये तु कर्मणि ।
सांसिद्धिकं द्रवत्वं स्यान्नैमित्तिकमथापरम् ॥ १५४ ॥
सांसिद्धिकं तु सलिले द्वितीयं क्षितितेजसोः ।
परमाणौ जले नित्यमन्यत्रानित्यमिष्यते ॥ १५५ ॥

गुरुत्वं निरूपयति ॥ **अतीन्द्रियमिति** ॥ **अनित्येति** ॥ अनित्ये द्व्यणुकादौ तद्गुरुत्वमनित्यम् । नित्ये परमाणौ नित्यम् । गुरुत्वमित्यनुवर्तते ॥ **तत्** गुरुत्वम् ॥ **असमवायि** असमवायिकारणम् ॥ **पतनाख्य इति** ॥ आद्यपतने इत्यर्थः । द्रवत्वं निरूपयति ॥ **सांसिद्धिकमिति** ॥ द्रवत्वं द्विविधं सांसिद्धिकं नैमित्तिकं चेति ॥ **द्वितीयं** नैमित्तिकम् ॥ **परमाणाविति** ॥ जलपरमाणौ द्रवत्वं नित्यमित्यर्थः ॥ **अन्यत्र** पृथिवीपरमाण्वादौ जलद्व्यणुकादौ च द्रवत्वमनित्यम् ॥ १५३ ॥ १५४ ॥ १५५ ॥

नैमित्तिकं वह्नियोगात् तपनीयघृतादिषु ।
द्रवत्वं स्यन्दने हेतुर्निमित्तं सङ्ग्रहे तु तत् ॥ १५६ ॥

कुत्रचित्तेजसि कुत्रचित् पृथिव्यां च नैमित्तिकं द्रवत्वं तत्र को वा नैमित्तिकार्थः तद्दर्शयति ॥ **नैमित्तिकमिति** ॥ **वह्नीति** ॥ अग्निसंयोगजन्यं नैमित्तिकं द्रवत्वम् । तच्च सुवर्णादिरूपे तेजसि घृतजतुप्रभृतिपृथिव्यां च वर्तत इत्यर्थः ॥ **द्रवत्वमिति** ॥ **हेतुरिति** ॥ असमवायिकारणमित्यर्थः । **सङ्ग्रहे** सक्तुकादिसंयोगविशेषे द्रवत्वं स्नेहसहितमिति बो-

**प्रभा.**

तदेवासमवायि स्यात्पतनाख्ये तु कर्मणीतिमूलस्थासमवायिशब्दस्य समवायिकारणभिन्नपरत्वे रूपादावतिव्याप्तिः अतः तत्पदं असमवायिकारणपरतया व्याचष्टे ॥ **असमवायिकारणमिति** ॥ गुरुत्व इव वेगेऽपि द्वितीयादिपतनासमवायित्वसत्त्वात् अतः मूलस्थपतनपदं आद्यपतनपरतया व्याकरोति ॥ **आद्यपतन इति** ॥ यद्यप्याद्यपतनासमवायिकारणत्वेन क्लृप्तगुरुत्वस्यैव द्वितीयादिपतनासमवायिकारणत्वसंभवे तत्र वेगस्यासमवायिकारणत्वे मानाभावेनातिव्याप्त्यप्रसक्त्या पतनशब्दस्याद्यपतनपरत्वमनर्थकं तथापि वेगं विना द्वितीयादिपतनानुत्पत्तेः अन्वयव्यतिरेकाभ्यां वेगस्य तत्कारणत्वावश्यकत्वात् निमित्तकारणतया क्लृप्तवेगस्यासमवायिकारणत्वस्वीकारेणैव सामञ्जस्ये तत्र गुरुत्वस्यापि हेतुत्वकल्पनमनुचितं गौरवादित्याशयेन तथा व्याख्यातमिति हृदयम् । तथाचाद्यपतनं सासमवायिकारणं क्रियात्वात् संयोगासमवायिकारणक्रियावदित्यनुमानात् गुरुत्वसिद्धिरिति भावः ॥ १५३ ॥ १५४ ॥ १५५ ॥

**दिनकरीयम्.**

पतनसमवायिभिन्नत्वरूपं पतनासमवायित्वं रूपादावतिव्याप्तमतो व्याचष्टे ॥ **असमवायिकारणमिति** ॥ द्वितीयादिपतनस्य वेगासमवायिकारणकत्वादाह ॥ **आद्येति** ॥ एवं च संयोगासमवधानकालीना क्रिया गुणासमवायिकारणिका क्रियात्वात् संयोगजन्यक्रियावदित्यनुमानेन गुरुत्वसिद्धिरिति भावः ॥ १५३ ॥ १५४ ॥ १५५ ॥

**अग्निसंयोगजन्यमिति** ॥ अग्निसंयोगासमवायिकारणकमित्यर्थः । वक्ष्यमाणातिप्रसङ्गादाह ॥ **स्नेहसहितमिति** ॥ तच्च सांसिद्धिकमेव । तथा च सांसिद्धिकद्रवत्वत्वेन हेतुत्वात् सुवर्णादिद्रवत्वस्य स-

द्रव्यम् । तेन द्रुतसुवर्णादीनां न सङ्ग्रहः ॥ १५६ ॥

स्नेहो जले स नित्योऽणावनित्योऽवयविन्यसौ ।
तैलान्तरे तत्प्रकर्षात् दहनस्यानुकूलता ॥ १५७ ॥

स्नेहं निरूपयति ॥ जल इति ॥ जल एवेत्यर्थः ॥ असौ स्नेहः । ननु पृथिव्यामपि तैले स्नेह उपलभ्यते नचासौ जलीयस्तथा सति दहनप्रातिकूल्यप्रसङ्गादत आह ॥ तैलान्तर इति ॥ तत्प्रकर्षात् स्नेहप्रकर्षात् । तैले उपलभ्यमानः स्नेहोऽपि जलीय एव तस्य प्रकृष्टत्वादग्नेरानुकूल्यम् । अपकृष्टस्नेहोऽपि जले तं विनाशयतीति भावः ॥ १५७ ॥

प्रभा.

अग्निसंयोगजन्यामिति ॥ अग्निसंयोगासमवायिकारणकमित्यर्थः ॥ द्रुतसुवर्णादिनेति ॥ आदिना द्रुतरजतादेः परिग्रहः । तथाच स्नेहसहितद्रवत्वस्य सांसिद्धिकद्रवत्वरूपतया सांसिद्धिकद्रवत्वत्वेन हेतुत्वस्वीकाराम्न सुवर्णद्रवत्वेन हेतुना सङ्ग्रहापत्तिरिति भावः । अस्मद्गुरुचरणास्तु जलसामान्यस्यैव सङ्ग्रहहेतुत्वमुचितं सामानाधिकरण्यसंबन्धेन सांसिद्धिकद्रवत्वस्नेहयोर्हेतुत्वापेक्षया संयोगेन तद्धेतुत्वे लाघवात् एतेनावश्यकस्नेहेनैव पिण्डीभावसंभवेन सांसिद्धिकद्रवत्वस्यान्यथासिद्धत्वमावश्यकं एकस्यान्यथासिद्धत्वे परस्य हेतुत्वे च विनिगमनाविरहादुभयहेतुत्वमावश्यकामिति केषांचित्समाधानमपि न श्रद्धेयं उभयोर्हेतुत्वास्वीकारात् । नचैवं सति द्रवत्वस्य सङ्ग्रहनिमित्तत्वप्रतिपादकनिमित्तसङ्ग्रहेतुतादिति मूलविरोध इति वाच्यम् । तत्रत्यनिमित्तशब्दः न निमित्तकारणपरः किंतु कारणवृत्त्यसाधारणधर्मपर एवेत्युक्तदोषानवकाशादिति व्याचक्रुः ॥ १५६ ॥

मूले स्नेहो जल इति ॥ तत्र स्नेहत्वं जातिविशेषः प्रत्यक्षासिद्धस्तदेव स्नेहलक्षणमिति बोध्यम् । स्नेहोऽम्भस्येवेति भाष्यानुसारेण लक्षणान्तरमाह ॥ जल इति ॥ जल एवेत्यर्थः । तथाच जलान्यानिरूपितसमवायसंबन्धावच्छिन्नवृत्तितानवच्छेदकगुणविभाजकजातिमत्त्वं जलान्यसमवेतासमवेतगुणविभाजकजातिमत्त्वं वा स्नेहलक्षणमिति भावः । तैलान्तरे तत्प्रकर्षादिति मूलेन तैलवृत्तेः स्नेहस्य प्रकृष्टत्वाद्दहनानुकूलत्वमित्यर्थो लभ्यते तथा सति पृथिव्यामपि स्नेहप्राप्त्या स्नेहलक्षणस्यासंभवग्रस्तत्वापत्तेः अतस्तन्मूलमवतारयति ॥ मुक्तावल्यां नन्वित्यादिना ॥ पृथिव्यामपीति ॥ तैल इति ॥ तैलरूपपृथिव्यामपीत्यर्थः ॥ उपलभ्यत इति ॥ प्रत्यक्षविषयतावानित्यर्थः ॥ असाविति ॥ तैल उपलभ्यमानस्नेह इत्यर्थः ॥ तथा सतीति ॥ तादृशस्नेहस्य जलीयत्व इत्यर्थः ॥ दहनप्रातिकूल्यप्रसङ्गादिति ॥ दहननाशकत्वप्रसङ्गादित्यर्थः । तथाच तादृशस्नेहस्य जलगतत्वस्वीकारे तैले जलस्वीकारावश्यकतया नाशकसत्त्वाद्दहननाशापत्तिरिति भावः ॥ स्नेहप्रकर्षादिति ॥ प्रकृष्टस्नेहादित्यर्थः ॥ तैलान्तर इत्यादिमूलस्य तात्पर्यार्थमाह ॥ तैलोपलभ्यमानस्नेहोऽपीति ॥ अप्रकृष्टस्नेहोऽपि जल इति ॥ जलगतविजातीयस्नेह एवेत्यर्थः ॥ तं विनाशयतीति ॥ दहननाशकमित्यर्थः ॥ इति भाव इति ॥ तथाच विजातीयस्नेहस्यैव दहननाशकतया तैलान्तर्वर्तिजलगतस्नेहस्य वैजात्यानाश्रयतया न ततो दहननाशापत्तिरिति भावः । अत्र स्नेहे तादृशवैजात्यमङ्गीकृत्य तेन रूपेण तस्य परम्परासंबन्धेन दहननाशकत्वकल्पनापेक्षया जल एव तादृशवैजात्यमङ्गीकृत्य तेन रूपेण जलस्य साक्षात्संबन्धेन हेतुत्वस्वीकार एवोचित इति प्रतिभाति ॥ १५७ ॥

दिनकरीयम्.

ग्रह इति भावः । नचावश्यकस्नेहहेतुत्वेनैवानतिप्रसङ्गे सांसिद्धिकद्रवत्वस्य सङ्ग्रहहेतुत्वे मानाभाव इति वाच्यं स्नेहत्वेन सांसिद्धिकद्रवत्वत्वेन वा हेतुत्वमित्यत्र विनिगमनाविरहेणोभयस्यापि हेतुत्वात् ॥ १५६ ॥

असौ तैले प्रतीयमानः स्नेहः ॥ जलीयः तैलान्तर्गतजलभागनिष्ठः ॥ तथा सति तैलान्तर्जलभागस्वीकारे ॥ दहनप्रातिकूल्यप्रसङ्गात् दहननाशप्रसङ्गात् । दहननाशं प्रति संयोगेन जलस्य हेतुत्वादिति भावः ॥ १५७ ॥

संस्कारभेदो वेगोऽथ स्थितिस्थापकभावने ।
मूर्तमात्रे तु वेगः स्यात् कर्मजो वेगजः क्वचित् ॥ १५८ ॥

संस्कारं निरूपयति ॥ संस्कारभेद इति ॥ वेगस्थितिस्थापकभावनाभेदात् संस्कारस्त्रिविध इत्यर्थः ॥ मूर्तमात्र इति ॥ कर्मजवेगजभेदाद्वेगो द्विविध इत्यर्थः । शरीरादौ हि नोदनजनितेन कर्मणा वेगो जन्यते तेन च पूर्वकर्मनाशस्तत उत्तरकर्म एवमग्रेऽपि विना च वेगं कर्मणः कर्मप्रतिबन्धकत्वात् पूर्वकर्मनाश उत्तरकर्मोत्पत्तिश्च न स्यात् यत्र वेगवता क-

प्रभा.

संस्कारपदशक्यतावच्छेदकतया सिद्धजातिविशेषवत्त्वं संस्कारसामान्यलक्षणं स्फुटमिति मत्वा तं विभजते ॥ मूले संस्कारभेद इति ॥ भिद्यतेऽनेनेति भेदशब्दस्यासाधारणधर्मपरत्वात् तन्निष्ठासाधारणधर्मो लभ्यते । वेगोऽथ स्थितस्थापकभावने इत्यत्र वेगादिशब्दानां भावप्रधानपरतया वेगत्वादित्रयं संस्कारधर्म इति फलितम् । तथाचैतादृशधर्मत्रयान्यतमःभिन्नप्रकारत्रयान्यतमविशिष्टसंस्कार इति तद्वाक्याधीनशाब्दबोध इति भावः ॥ मूर्तमात्रे तु वेगः स्यादिति ॥ अमूर्तावृत्तिर्वेग इत्यर्थः । तथाच अमूर्तसमवेतावृत्तिमनस्समवेतवृत्तिजातिमत्त्वं प्रत्यक्षासिद्धवेगत्वजातिमत्त्वं वा वेगसामान्यलक्षणमिति भावः । कर्मजो वेगजः क्वचिदिति मूलस्य वेगविभाजकपरत्वं स्पष्टयति ॥ मुक्तावल्यां वेगो द्विविध इत्यर्थ इति ॥ स्वयं तदुदाहरति ॥ शरीरादाविति ॥ स्वसमवेतवेगासमानकालीनदेहादावित्यर्थः ॥ कर्मणेति ॥ यत्नवदात्मसंयोगजन्यकर्मणैवेत्यर्थः ॥ वेग इति पूर्वेणान्वयः । पूर्वं तदधिकरणे वेगाभावेन तादृशवेगस्य वेगजन्यत्वासंभवादिति भावः । प्राचीनैकदेशिमतानुसारेण वेगस्य कर्मनाशकत्वं कर्मोत्पादकत्वं च व्यवस्थापयति ॥ तेन चेति ॥ तादृशवेगेनैवेत्यर्थः ॥ पूर्वकर्मनाश इति ॥ स्वजनककर्मनाश इत्यर्थः ॥ तत इति ॥ तादृशनाशादित्यर्थः ॥ उत्तरकर्म चेति ॥ उभयत्र जन्यत इत्यनुषङ्गेणान्वयः ॥ एवमग्रेऽपीति ॥ द्वितीयादिकर्मणा पूर्ववेगनाशः ततो वेगान्तरोत्पत्तिश्च तुल्यन्यायेन स्वीकार्येत्यर्थः । ननु वेगस्य नाशकत्वे मानाभाव इत्यत आह ॥ विना च वेगमिति ॥ तस्य कर्मनाशो न स्यादित्युत्तरेणान्वयः उत्तरसंयोगाश्रयनाशरूपनाशकयोरभावादित्याशयः । अत्रेष्टापत्तौ दोषमाह ॥ उत्तरकर्मोत्पत्तिश्चेति ॥ तत्र न स्यादित्यत्र हेतुप्रतिपादकः कर्मणः कर्मप्रतिबन्धकत्वादिति पूर्वग्रन्थ इति ध्येयम् । अत्र पूर्वोत्तरसंयोगस्यैव पूर्वकर्मनाशकतायाः सकलतान्त्रिकसिद्धतया वेगस्य क्रियानाशकत्वमप्रामाणिकमेव नचैवं सति नाशकाभावेन पूर्वक्रियारूपप्रतिबन्धकसत्त्वात् कर्मान्तरोत्पत्त्यनुपपत्तिरिति वाच्यम् उत्तरसंयोगात्पूर्वं क्रियान्तरानुत्पत्तौ बाधकाभावेन इष्टापत्तेः अन्यथा वेगस्य क्रियानाशकत्वे संयोगविभागयोरनपेक्षं कारणं कर्मेति सूत्रविरोधापत्तिः संयोगमनुत्पाद्यैव कर्मणो नाशस्वीकारेण संयोगासाधारणत्वाभावात् पूर्वसंयोगनाशावच्छिन्नोत्तरसंयोगप्रागभावो वा उत्तरसंयोगावच्छिन्नं कर्म चेति मुक्तावलीग्रन्थविरोधापत्तिश्च संयोगमनुत्पाद्यैव कर्मणो नाशस्वीकारात् । नचैवं सति वेगस्य क्रियाजनकत्वे मानाभावेन वेगस्य द्वितीयादिपतनासमवायिकारणत्वप्रतिपादकमुक्तावलीग्रन्थविरोध इति वाच्यम् । अन्वयव्यतिरेकाभ्यामेव द्वितीयादिक्रियां प्रति वेगस्य जनकत्वस्वीकारेण तादृशग्रन्थविरोधाप्रसक्तेरत एव वेगेन गच्छति वेगेन पततीत्याद्यनुभवः एतादृशप्रामाणिकव्यवहारश्च सङ्गच्छते तस्मान्मुक्तावलीपूर्वग्रन्थपर्यालोचनया विश्वनाथपञ्चाननस्य वेगस्य कर्मनाशकत्वे न निर्भर इति प्रतिभाति ॥ यत्रेति ॥ यादृश इत्यर्थः । तस्य च वेगो जन्यत इत्यत्र वेगे अन्वयः ॥ वेगवतेति ॥ वेगविशिष्टेनेत्यर्थः इदं च जायमानघटादिवेगकारणसम्पत्त्यर्थम् ॥ वातेन चलित इति ॥ तादृशवायुजन्यचलनाश्रय इत्यर्थः । स वेगजो वेग इति योजनीयः ।

दिनकरीयम्.

वेगो जन्यत इति ॥ वेगत्वं तु जातिविशेषः प्रत्यक्षसिद्धः ॥ तेनेति ॥ कर्मनाशकस्योत्तरसंयोगस्य तदानीमभावाद्वेगस्यैव कर्मनाशकत्वं कल्प्यत इति भावः ॥ तत इति ॥ पूर्वकर्मनाशानन्तरमित्यर्थः ॥ एवमग्रेऽपीति ॥ उत्तरकर्मणापि पूर्ववेगनाशस्ततो वेगान्तरोत्पत्तिरित्येषा दिगित्यर्थः ॥ विना च वेगमि-

पालेन जनिते घटे वेगो जन्यते स वेगजो वेगः ॥ १५८ ॥

स्थितिस्थापकसंस्कारः क्षितौ केचिच्चतुर्ष्वपि ।
अतीन्द्रियोऽसौ विज्ञेयः क्वचित् स्पन्देऽपि कारणम् ॥ १५९ ॥

**स्थितिस्थापकेति** ॥ **अतीन्द्रिय इति** ॥ आकृष्टशाखादीनां परित्यागे पुनर्गमनस्य स्थितिस्थापकसाध्यत्वात् ॥ **केचिदिति** ॥ चतुर्षु क्षित्यादिषु स्थितिस्थापकं केचिन्मन्यन्ते तदप्रमाणमिति भावः ॥ **असौ** स्थितिस्थापकः ॥ **क्वचित्** आकृष्टशाखादौ ॥ १५९ ॥

**प्रभा.**

तथाच वायुसंयोगसत्तानियतोत्पत्तिकानां घटादिकर्मणां सोपाधिकत्वेन वेगोत्पादकत्वं न संभवतीत्याशयः । अत्र घटादिनिष्ठनिरुक्तवेगं प्रति वायुसमवेतस्य वेगस्यासमवायिकारणत्वं न संभवति तादृशवेगसमवायिकारणघटादौ समवायेन समवायघटितसामानाधिकरण्येन वा वर्तमानत्वाभावात् किन्तु तद्गतचलनस्यैव तथात्वं एवंच वेगवद्वायुसंयोगाधीनघटादिक्रियायाः तत्समवेतवेगकारणत्वस्यावश्यकत्वेन तद्धेतुतयैव सामञ्जस्ये वायुक्रियोत्पादनसमर्थस्य वायुवेगस्य परम्परासंबन्धेन हेतुत्वकल्पनमनुचितं अन्यथासिद्धत्वात् । अन्यथा वायुक्रियाया अपि तत्कारणत्वापत्तिः । एवंच वेगजवेगे मानाभावेन वेगो द्विविध इत्यर्थ इति मुक्तावलीग्रन्थः वायुगतवेगस्य निमित्तकारणत्वाभिमानिप्राचीनैकदेशिमताभिप्रायकः । अत एव मूले कर्मजो वेगजश्च स इत्यनुक्त्वा कर्मजो वेगजः क्वचिदिति कस्मिंश्चिन्मत इत्यर्थकक्वचित्पदप्रयोगोऽपि साधु सङ्गच्छते । तस्माद्वेगस्य द्वैविध्ये विश्वनाथपञ्चाननस्य न निर्भर इति प्रतिभाति ॥ १५८ ॥

**मूले स्थितस्थापकसंस्कार इति** ॥ स्थितस्थापकत्वं क्रियाजनकतावच्छेदकतया सिद्धो जातिविशेषः तद्वत्त्वमेव स्थितस्थापकलक्षणमिति बोध्यम् । ननु स्थितस्थापके मानाभावः वेगेनैव द्वितीयादिक्रियोत्पत्तिसंभवात् इत्याशङ्कां प्रमाणप्रदर्शनेन परिहरति ॥ **मुक्तावल्यां आकृष्टशाखानामिति** ॥ तादृशशाखादीनामित्यर्थः । आदिना तादृशवेण्वादीनां परिग्रहः । तथाचाकृष्टा शाखा यैरिति व्युत्पत्त्या तादृशशाखादिनिष्ठपूर्वदेशसंयोगनाशप्रयोजकपूर्वदेशानुयोगिकसंयोगान्तरजनकक्रियानुत्पत्तिप्रयोजकयत्नवतामिति फलितार्थः ॥ **परित्याग इति** ॥ तादृशयत्नसामान्यनाशे सतीत्यर्थः ॥ **पुनर्गमनस्येति** ॥ पुनः पूर्वदेशसंयोगजनकगमनस्येत्यर्थः ॥ **स्थितस्थापकसाध्यत्वादिति** ॥ स्थितस्थापकरूपासमवायिकारणेनैवोत्पत्तेरावश्यकत्वादित्यर्थः । तथाच स्थितस्थापकानङ्गीकारे जलादावपि वेगसत्त्वेन जलादिनिष्ठपूर्वदेशसंयोगजनकक्रियानुत्पत्तिप्रयोजकपुरुषप्रयत्नाभावे सति प्रतिबन्धकाभावात् पुनः पूर्वदेशसंयोगजनकक्रियोत्पत्त्यापत्त्या उत्तरदेशसंयोगजनकक्रियाजनकवेगस्य पुनः पूर्वदेशसंयोगजनकत्वासंभवात् तादृशक्रियोत्पत्त्यर्थं स्थितस्थापकाङ्गीकार आवश्यक इति भावः । इदमुपलक्षणम् क्रियाविशेषजनकस्थितस्थापकस्य क्रियाविशेषजन्यत्ववत् स्वजन्यक्रियानाश्यत्वं अतीन्द्रियत्वमप्यस्तीति बोध्यम् । केचिच्चतुर्ष्वपीतिमूलस्थचतुश्शब्दस्य जलादिचतुष्टयार्थकत्वे पृथिव्यामपि स्थितस्थापकसत्त्वात् आकाशादौ तदसत्त्वाचासङ्गतिः अतस्तात्पर्यार्थमाह ॥ **मुक्तावल्यां चतुर्षु पृथिव्यादिष्विति** ॥ केचिदित्यनेन सूचितमस्वरसं प्रकाशयति ॥ **तदप्रमाणमिति भाव इति** ॥ जलादिष्वाकृष्टेषु

**दिनकरीयम्.**

ति ॥ वेगं विना कर्मनाशो न स्यादित्यन्वयः । नाशकान्तराभावादिति भावः । ननु पूर्वकर्मणो नाशाभावे का क्षतिरत आह ॥ **कर्मोत्पत्तिश्च न स्यादिति** ॥ अत्र हेतुः कर्मणः प्रतिबन्धकत्वादिति । अत्र केचित् उत्तरसंयोगेनैव पूर्वकर्मनाशोत्तरकर्मणोः सम्भवात् तत्पूर्वकर्मनाशकर्मोत्पत्तिस्वीकारे प्रयोजनाभावादलं वेगेन तस्माद्वेगेन गच्छतीति कर्मजनकतया प्रत्यक्षमेव वेगे प्रमाणमित्याहुः ॥ १५८ ॥

**पुनर्गमनस्येति** ॥ यथापूर्वसंयोगजनकक्रियाया इत्यर्थः ॥ **स्थितिस्थापकसाध्यत्वादिति** ॥ वेगस्य तूत्तरदेशसंयोगजनकक्रियाजनकत्वं न तु यथापूर्वसंयोगजनकक्रियाजनकत्वमिति न वेगेन स्थितिस्थापकस्यान्यथासिद्धिरिति भावः । स्थितिस्थापकत्वं जातिविशेषः । क्रियाविशेषजनकतावच्छेदकतया सिद्धः ।

भावनाख्यस्तु संस्कारो जीववृत्तिरतीन्द्रियः ।
उपेक्षानात्मकस्तस्य निश्चयः कारणं भवेत् ॥ १६० ॥

**भावनाख्य इति** ॥ तस्य संस्कारस्योपेक्षात्मकज्ञानात् संस्कारानुत्पत्तेरुपेक्षानात्मक इत्युक्तं तत्संशयात् तस्यानुत्पत्तेर्निश्चय इत्युक्तं तेनोपेक्षान्यनिश्चयत्वेन संस्कारं प्रति हेतुतेति भावः ॥ १६० ॥

स्मरणे प्रत्यभिज्ञायामप्यसौ हेतुरुच्यते ।
धर्माधर्मावदृष्टं स्याद्धर्मः स्वर्गादिकारणम् ॥ १६१ ॥
गङ्गास्नानादियागादिव्यापारः स तु कीर्तितः ।
कर्मनाशाजलस्पर्शादिना नाश्यस्त्वसौ मतः ॥ १६२ ॥

ननु स्मरणं प्रत्युपेक्षान्यनिश्चयत्वेन हेतुत्वं तेनोपेक्षादिस्थले न स्मरणम् । इत्थं च संस्कारं प्रति ज्ञानत्वेनैव हेतुतास्त्विति चेन्न विनिगमनाविरहेणापि संस्कारं प्रति उपेक्षान्यनिश्चयत्वेन हेतुतायाः सिद्धत्वात् किं चोपेक्षास्थले संस्कारकल्पनायाः गुरुत्वात् संस्कारं प्रति उपेक्षान्यत्वेन हेतुतायाः सिद्धत्वात् ॥ **असौ** संस्कारः । तत्र प्रमाणं दर्शयति ॥ **स्मरण इति** ॥ यतः स्मरणं प्रत्यभिज्ञानं च जनयत्यतः संस्कारः कल्प्यते । विना व्यापारं

**प्रभा.**

सत्सु तादृशयत्नाभावे पुनः पूर्वदेशसंयोगजनकक्रियानुत्पत्त्या लिङ्गाभावेन तत्र स्थितस्थापकसत्त्वे मानाभावादिति भावः ॥ १५९ ॥

**इत्थंचेति** ॥ स्मरणं प्रति उपेक्षान्यनिश्चयत्वेन हेतुत्वं स्वीकृत्योपेक्षात्मकज्ञानात् स्मृतिवारण इत्यर्थः ॥ **ज्ञानत्वेनैवेति** ॥ उपेक्षायन्यत्वाविशेषितज्ञानत्वेनैवेत्यर्थः ॥ **हेतुतास्त्विति** ॥ लाघवादित्याशयः । संस्कारं प्रत्युपेक्षान्यनिश्चयत्वेन हेतुतायामेव विनिगमकमस्तीत्याह ॥ **किंचेति** ॥ संस्कारं प्रति केवलज्ञानत्वेन हेतुतास्वीकार इत्यादिः ॥ **उपेक्षास्थल इति** ॥ उपेक्षाविशिष्टात्मनीत्यर्थः ॥ **संस्कारकल्पनाया गुरुत्वादिति** ॥ संस्कारकल्पनाप्रयुक्तगौरवदोषादित्यर्थः ॥ **उपेक्षान्यज्ञानत्वेनेति** ॥ तादृशज्ञानत्वेनैवेत्यर्थः ॥ **सिद्धत्वादिति** ॥ आवश्यकत्वादित्यर्थः । तथाच तेनैवानातिप्रसङ्गे स्मरणं प्रत्यपि न तेन रूपेण हेतुत्वं गौरवादित्याशयः । एतत्तत्त्वं प्रागेव दर्शितं तत्र भावनात्वं अनुभवत्वावाच्छिन्नव्यापारानवच्छिन्नकारणतानिरूपितकार्यतावच्छेदकतया सिद्धो जातिविशेषः । तद्वत्त्वमेव भावनासामान्यलक्षणमिति बोध्यम् । अस्मद्गुरुचरणास्तु भावनात्वं च स्मृतित्वावच्छिन्ननिरूपितव्यापारसंबन्धानवच्छिन्नकारणतावच्छेदकतया सिद्धो जातिविशेष इति व्याचक्रुः । ननु संस्कारस्य त्रैविध्यमप्रामाणिकं भावनायां मानाभावादित्याशङ्कां प्रमाणप्रदर्शनेन परिहरति ॥ **मूले स्मरणे प्रत्यभिज्ञायामित्यादि** ॥ उद्देश्यवाचकपदस्य प्रागपेक्षितत्वात्प्रथमतः तस्यानुसन्धानार्थं पश्चान्निर्दिष्टस्याप्यसावित्यस्यादौ अर्थमाह ॥ **मुक्तावल्यामसौ संस्कार इति** ॥ **यत इति** ॥ अनुभव इत्यादिः । यादृशव्यापारसहकारादेवेत्यर्थः ॥ **अत इति** ॥ तादृशव्यापारस-

**दिनकरीयम्.**

स्थितिस्थापकश्च क्रियाविशेषजनकः स्वजन्यक्रियानाश्योऽतीन्द्रियश्चेति मूले उक्तप्रायम् ॥ १५९ ॥

**इत्थं च** उक्तप्रकारेणोपेक्षाज्ञानात् स्मृतिवारणे च । वस्तुतः संस्कारं प्रत्युपेक्षान्यनिश्चयत्वेन हेतुत्व एव विनिगमकमस्तीत्याह ॥ **किं चेति** ॥ संस्कारकल्पनाया गुरुत्वादित्यस्य स्मृतिं प्रत्येवोपेक्षान्यनिश्चयत्वेन हेतुत्व इत्यादिः । सिद्धत्वादित्यग्रिमस्यापि पञ्चम्यन्तस्य नेत्यनेनान्वयः । उद्देश्यवाचकपदस्य प्रागपेक्षितत्वात् तथान्वयप्रदर्शनार्थमुदीच्यस्याप्यसावित्यस्य प्राक् धारणमिति बोध्यम् ॥ **तत्र संस्कारे** ॥ **अतः संस्कारः**

पूर्वानुभवस्य स्मरणादिजननासामर्थ्यात् स्वस्वव्यापारान्यतराभावे कारणत्वासम्भवात् । न

## प्रभा.

म्पत्त्यर्थमित्यर्थः ॥ **कल्प्यत इति** ॥ अनुमीयत इत्यर्थः । नन्वनुभवस्य स्वध्वंस इव स्वजन्यस्मृतावपि साक्षादेव हेतुत्वमस्तु किं संस्कारकल्पनेनेत्यत आह ॥ **विना व्यापारमिति** ॥ **पूर्वानुभवस्येति** ॥ अनुभवसामान्यस्येत्यर्थः । पूर्वत्वनिवेशे प्रयोजनाभावात् ॥ **स्मरणादिजननासमर्थत्वादिति** ॥ आदिना प्रत्यभिज्ञानपरिग्रहः । तथाच संस्काररूपव्यापारानङ्गीकारे कालान्तरभाविस्मृत्यव्यवहितपूर्ववृत्तित्वाभावेन स्मृतिहेतुत्वानुपपत्तिः । न चेष्टापत्तिः अननुभूतस्यापि स्मरणापत्तेः । एवंचानुभवस्मरणयोरन्वयव्यतिरेकाभ्यां निर्णीतकार्यकारणभावानुपपत्त्या संस्काररूपव्यापारोऽवश्यमङ्गीकार्य इति भावः । अन्ये तु संस्कारे मानाभावः अनुभवस्य साक्षादेव प्रतियोगिवैयधिकरण्यघटितस्मृतिहेतुत्वसंभवादित्याहुः । तन्न तथा सति यागादेः सुरापानादेश्च प्रतियोगिवैयधिकरण्यघटितस्वर्गादिहेतुत्वसंभवेन परेषामपूर्वकल्पनस्य स्वमते धर्मादिकल्पनस्याकिञ्चित्करतया धर्मादिपदार्थविलोपप्रसङ्गात् । नचेष्टापत्तिः कीर्तनादिनानाश्रुतिविरोधापत्तेः एवं विशेषकार्यकारणभावस्थले तद्घटं प्रति तद्घटाव्यवहितपूर्वक्षणावच्छेदेन तद्घटाधिकरणे वर्तमानतद्दण्डस्यैव तद्घटाधिकरणे यदाकदाचिद्वर्तमानसकलदण्डव्यक्तीनामपि अनन्यथासिद्धत्वघटितकारणतापत्तेः प्रतियोगिवैयधिकरण्यघटिततद्घटानिरूपितकारणत्वस्य सर्वासु तासु दण्डव्यक्तिषु सत्त्वात् तस्मादव्यवहितपूर्वकालवृत्तित्वघटितकारणत्वस्वीकारस्यावश्यकतया अनुभवस्य तादृशकारणत्वनिर्वाहाय भावनाङ्गीकार आवश्यकः । नच तथाप्यनुभवस्य स्मृत्यव्यवहितपूर्ववृत्तित्वाभावात् तद्दोषतादवस्थ्यमिति वाच्यम् कार्याव्यवहितपूर्वक्षणवृत्तिस्वस्वव्यापारान्यतरकत्वरूपकार्याव्यवहितपूर्ववृत्तित्वस्यानुभवादावप्यक्षततया न दोषलेशप्रसक्तिरेतत्सर्वं हृदि निधाय विश्वनाथपञ्चाननेन स्वस्वव्यापाराभावे कारणत्वासंभवादित्युक्तम् । केचित्तु अनुभवस्य स्वध्वंस एव व्यापारः क्लृप्तत्वात् भावनायाः अकल्पनेन लाघवाच्च । नच प्रतियोग्यभावयोरेककार्याजनकत्वनियमभङ्ग इति वाच्यम् । ध्वंसप्रागभावयोरत्यन्ताभावविरोधित्ववादिप्राचीनमते विघ्नस्यैव विघ्नध्वंसतत्प्रागभावयोरपि विघ्नात्यन्ताभावप्रतियोगितया समाप्तिरूपैककार्ये विघ्नध्वंसादेः विघ्नात्यन्ताभावस्य च विघ्नसंसर्गाभावत्वेन हेतुतया तादृशनियमे मानाभावात् । नचैवं सत्यनुभवध्वंसरूपकारणीभूताभावप्रतियोगित्वेनानुभवस्य स्मृतिप्रतिबन्धकत्वापत्तिरिति वाच्यं तादात्म्यातिरिक्तसंबन्धावच्छिन्नकारणताश्रयाभावभिन्नात्यन्ताभावप्रतियोगित्वस्यैव तन्मते प्रतिबन्धकत्वपदार्थत्वेन उक्तदोषानवकाशात् । नचैवं सत्यनुभवतृतीयक्षणे स्मरणानुपपत्तिः अनुभवध्वंसरूपव्यापाराभावादिति वाच्यं इष्टापत्तेः क्षणविलम्बस्य शपथनिर्णेयत्वेनानुभवचतुर्थक्षणादावेव स्मरणोत्पत्तिस्वीकारादित्याहुः । तन्न यस्य पुंसः हस्तिपदर्शनरूपोद्बोधकवशादेव हस्तिपदर्शनस्मरणानि बहूनि जातानि तस्य पुंसः कालान्तरे हस्तिपदर्शनरूपोद्बोधकसत्त्वेऽपि मन्मते स्मरणाभावोपपत्तिः रोगतः कालतो वा संस्कारनाशस्वीकारात् तव मते ध्वंसरूपव्यापारसत्त्वादुद्बोधकसत्त्वाच्च हस्तिस्मरणापत्तेर्दुर्वारत्वात् ।

## दिनकरीयम्.

**कल्प्यत इति** ॥ अथानुभवस्य ध्वंस एव व्यापारोऽस्तु प्रतियोग्यभावयोरेकत्राजनकत्वमित्यस्याप्रयोजकत्वात् । नचानुभवस्य स्मृतिं प्रति प्रतिबन्धकत्वापत्तिरिति वाच्यं संसर्गाभावत्वावच्छिन्नकारणताश्रयीभूताभावप्रतियोगित्वस्यैव प्रतिबन्धकतापदार्थत्वादिह च संसर्गाभावत्वेनाजनकत्वात् । नचानुभवद्वितीयक्षणोत्पन्नसंस्कारेण तृतीयक्षणे स्मरणसम्भवात् ध्वंसस्य व्यापारत्वं न सम्भवति फलस्य प्राक्कालेऽनुभवध्वंसस्याभावादिति वाच्यं तत्रापि क्षणविलम्बेनैव स्मरणाभ्युपगमादिति चेन्न संस्कारानङ्गीकारे कदाचिदनुभूतस्य सर्वदा स्मरणापत्तेः अनुभवध्वंसात्मकव्यापारस्य सर्वदा सत्त्वात् । न चोद्बोधकाभावादस्मरणमिति वाच्यं यत्र वस्तुविशेषज्ञानात्मकोद्बोधकेन दश पञ्च वा घटादेः स्मरणानि जातानि न त्वधिकानि तत्र घटादिस्मृतौ तद्वस्तुज्ञानस्यैव नियतोद्बोधकतया तत्सत्त्वे उद्बोधकाभावस्य वक्तुमशक्यत्वात् । वस्तुतस्त्वनुपदं वक्ष्यमाणापूर्वसाधकयुक्त्या संस्कारसिद्धिर्निराबाधेति ध्येयम् ॥ **स्वस्वव्यापारान्यतराभावे** ॥ कार्योत्पत्त्यव्यवहितपूर्वक्षणे स्वस्वव्यापारान्यतराभावे ॥ **कारणत्वासंभवादिति** ॥ कार्याव्यवहितप्राक्क्षणवृत्तिस्वस्वव्यापारान्यतरकत्वस्यै-

च प्रत्यभिज्ञां प्रति तत्तत्संस्कारस्य हेतुत्वे प्रत्यभिज्ञायाः संस्कारजन्यत्वेन स्मृतित्वापत्तिरिति वाच्यं अप्रयोजकत्वात् । परे त्वनुद्बुद्धसंस्कारात् प्रत्यभिज्ञानुदयादुद्बुद्धसंस्कारस्य हेतुत्वापेक्षया तत्तत्स्मरणस्यैव प्रत्यभिज्ञां प्रति हेतुत्वं कल्प्यत इत्याहुः । अदृष्टं निरूपयति ॥ धर्मेति ॥ **स्वर्गादीति** ॥ स्वर्गादिसकलसुखानां स्वर्गसाधनीभूतशरीरादीनां च साधनं धर्म इत्यर्थः । तत्र प्रमाणं दर्शयितुमाह ॥ **यागादीति** ॥ यागादिव्यापारतया धर्मः कल्प्यते ।

## प्रभा.

तस्मादनुभवध्वंसस्य न व्यापारत्वमिति ॥ **अप्रयोजकत्वादिति** ॥ संस्कारजन्यत्वस्य स्मृतित्वाप्रयोजकत्वादित्यर्थः । तथाच संस्कारजन्यत्वं न स्मृतित्वप्रयोजकं तद्ध्वंसस्यापि स्मृतित्वापत्तेः । नापि तज्जन्यत्वे सति ज्ञानत्वं कालोपाधिविधया तज्जन्यप्रत्यक्षादेरपि तथात्वापत्तेः । नवा संस्कारेतराजन्यत्वे सति ज्ञानत्वं स्मृतेरप्यात्मजन्यत्वेन स्मृतित्वानुपपत्तेः । अन्येतु संस्कारेतराव्यापारकत्वे सति ज्ञानत्वं स्मृतित्वप्रयोजकं तच्च प्रत्यभिज्ञायामास्तीति न तस्याः स्मृतित्वापत्तिरित्याहुः । तन्न विशेषणविशेष्यभावे विनिगमनाविरहेण गुरुतररूपेण द्वयोः प्रयोजकत्वापत्त्या गौरवात् संस्कारेतराव्यापारकत्वज्ञानत्वोभयत्वावच्छिन्नस्य प्रयोजकत्वं न संभवति प्रयोजकतावच्छेदकसंबन्धाप्रसिद्धेः किंतु संस्कारेतराव्यापारकत्वसंस्काराव्यापारकत्वोभयमेव तथा तादृशोभयस्य प्रत्यभिज्ञायामसत्त्वात् नोक्तदोषलेशप्रसक्तिरित्याशयः । मणिकारानुयायिमतमाह ॥ **अपरे त्विति** ॥ **कल्प्यत इति** ॥ उद्बुद्धसंस्कारत्वेन हेतुत्वापेक्षया स्मृतित्वेन हेतुत्वे लाघवादित्याशयः । अत्र मणिकारमते प्रत्यभिज्ञापूर्वं स्मरणं न संभवति प्रतिबन्धकीभूतलौकिकसामग्र्यास्सत्त्वात् स्मरणोत्तरकालीनलौकिकप्रत्यक्षसामग्र्या जनितप्रत्यभिज्ञायां स्मरणस्य हेतुत्वं न संभवति प्रत्यभिज्ञाकाले स्मरणस्य नाशात् । वस्तुतस्तदेवेदमिति प्रत्यभिज्ञायां इदन्त्वज्ञानस्यापि कारणतया स्मरणस्याताद्दशत्वेन स्मरणोत्पत्तिद्वितीयक्षणे चक्षुस्संयोगादघटितसामग्रीसम्पत्तिः तद्द्वितीयक्षणे इदन्त्वनिर्विकल्पकं तद्द्वितीयक्षण एव प्रत्यभिज्ञासंभवेन प्रत्यभिज्ञापूर्वक्षणेऽपि स्मरणस्यावर्तमानत्वात् तस्मात्प्रत्यभिज्ञां प्रति स्मरणस्य हेतुत्वमप्रामाणिकमेवेत्यस्वरसं हृदि निधायाहुरित्युक्तमिति ध्येयम् । केचित्तु तन्मते अन्तराकल्पनीयस्मृतिव्यक्तौ उद्भूतसंस्कारस्य हेतुत्वकल्पनं । अस्मन्मते तु प्रत्यभिज्ञायां तद्धेतुत्वकल्पनमिति समानं अन्तरा स्मृतिव्यक्तिकल्पने प्रत्यभिज्ञायां तद्धेतुत्वकल्पने च तत्राधिकं गौरवमित्याहुरित्यनेनास्वरसस्सूचित इत्याहुस्तदसत् । असति प्रतिबन्धके उद्भूतसंस्कारसत्त्वे च स्मरणोत्पत्तेः सर्वमतसिद्धत्वेन मणिकारानुयायिमते अन्तरा स्मृतिकल्पनाप्रयुक्तगौरवाप्रसक्तेः स्मृतिसामान्ये उद्भूतसंस्कारहेतुताया अपि सर्वमतसिद्धत्वादन्तरा स्मृतिव्यक्तावपि तद्धेतुतायाः क्लृप्तत्वेन तत्कल्पनाप्रयुक्तगौरवस्याप्यभावात् । परन्तु सिद्धान्तिमते प्रत्यभिज्ञां प्रत्युद्बुद्धसंस्कारस्य हेतुताकल्पनं पूर्वपक्षिमते स्मरणस्य हेतुत्वकल्पनामिति कल्पनागौरवस्य तुल्यत्वात् । तस्मादुक्तरीत्या तन्मते गौरवरूपदोषप्रदर्शनमप्रामाणिकमिति । स्वर्गपदस्य स्वर्गादिसकलसुखपरत्वं तन्मूलस्थादिपदस्य सुखसाधनशरीरादिपरत्वं च दर्शयति ॥ **मुक्तावल्यां स्वर्गादिसकलेत्यादि** ॥ अत्र धर्मत्वं विहितकर्ममात्रवृत्तिव्यापारानवच्छिन्नकारणतानिरूपितकार्यतावच्छेदकतया सुखत्वावच्छिन्ननिरूपितव्यापारानवच्छिन्नकारणतावच्छेदकतया वा सिद्धो जातिविशेषः तद्वत्त्वं धर्मसामान्यलक्षणमिति बोध्य-

## दिनकरीयम्.

त्र कारणतापदार्थत्वादिति भावः ॥ **अप्रयोजकत्वादिति** ॥ संस्कारजन्यत्वस्य स्मृतित्वे प्रयोजकत्वाभावादित्यर्थः । मणिकृन्मतं प्रदर्शयति ॥ **परे त्विति** ॥ त्वन्मतेऽन्तराकल्पनीयस्मृतिव्यक्तावुद्बुद्धसंस्कारस्य हेतुत्वकल्पनं मन्मते तु प्रत्यभिज्ञायां तद्धेतुत्वकल्पनामिति समानमन्तरास्मृतिव्यक्तिकल्पने प्रत्यभिज्ञायां तद्धेतुत्वकल्पने च तत्राधिकं गौरवमित्याहुरित्यनेनास्वरसः सूचितः । स्वर्गादीत्यत्र स्वर्गपदेन सुखमात्रस्यादिपदेन शरीरेन्द्रियादेः परिग्रह इति प्रदर्शयति ॥ **स्वर्गादिसकलेत्यादिना** ॥ अग्रे नरकादीनामित्यत्राप्येवम् ॥ **तत्र धर्मे** ॥ **यागादीति** ॥ आदिना होमदानपरिग्रहः यागत्वं च देवतोद्देश्यकस्वस्वत्वध्वंसवद्द्रव्यविशेष्यके-

अन्यथा यागादीनां चिरविनष्टतया निर्व्यापारतया च कालान्तरभाविस्वर्गजनकत्वं न स्यात् । तदुक्तमाचार्यैः चिरध्वस्तं फलायालं न कर्मातिशयं विनेति । ननु यागध्वंस एव व्यापारः स्यात् नच प्रतियोगितद्ध्वंसयोरेकत्राजनकत्वं सर्वत्र तथात्वे मानाभावात् नच त्वन्मते फलानन्त्यं मन्मते चरमफलस्यापूर्वनाशकत्वान्न तथात्वमिति वाच्यं कालविशेषस्य सहकारित्वादित्यत आह ॥ गङ्गास्नानेति ॥ गङ्गास्नानस्य हि स्वर्गजनकत्वेऽनन्तानां

प्रभा.

म् ॥ **मूले गङ्गास्नानादियागादिव्यापार इति** ॥ गङ्गास्नानादीत्यादिना सरस्वतीस्नानादेः परिग्रहः । यागादीत्यादिना होमादेः परिग्रहः । सारस्वतं सप्तरात्रं पञ्चरात्रं तु यामुनम् । सद्यः पुनाति गाङ्गेयं दर्शनादेव नार्मदम् ॥ इति वचनात् । यागत्वंच तस्यैव इदं भवत्विस्याकारकदेवतोद्देश्यकत्वप्रकारकस्वस्वत्वध्वंसविशिष्टद्रव्यविशेष्यकेच्छात्वं देवतोद्देश्यकत्वं च देवतानिरूपितस्वत्ववत्त्वं देवतायाश्शब्दविशेषरूपत्वे स्वरूपसंबन्धविशेषरूपं तदिति बोध्यम् । होमत्वं चाग्निसंयोगजनकक्रियानुकूलघृतादित्यागत्वव्यापारत्वम् । दानत्वं च वित्तग्रहणानिमित्तकस्वस्वत्वध्वंसपूर्वकपरस्वत्वजनकत्यागत्वमिति प्राञ्चः । श्राद्धे पित्रपेक्षया यागत्वस्य ब्राह्मणापेक्षया दानत्वस्य च सत्त्वेऽपि साङ्कर्यस्य जातिबाधकत्वे प्रमाणाभावेन यागत्वादयो मानसप्रत्यक्षसिद्धजातिविशेषा इति नव्याः । ननु व्यापारस्स तु कीर्तित इति मूलमसङ्गतं धर्मस्यैवालीकत्वादित्याशङ्कापरिहाराय प्रमाणपरतया तन्मूलं व्याचष्टे ॥ **मुक्तावल्यां यागादिव्यापारतयेति** ॥ **धर्मः कल्प्यत इति** ॥ धर्मः अवश्यं स्वीकार्य इत्यर्थः । ननु धर्मो नाङ्गीकर्तव्यः साक्षादेव यागादेः स्वर्गहेतुत्वस्वीकारात् इत्याशङ्कां बाधकदर्शनेन परिहरति ॥ **अन्यथेति** ॥ धर्मानङ्गीकार इत्यर्थः ॥ **चिरविनष्टानामिति** ॥ फलपूर्वकालवृत्तिध्वंसप्रतियोगिनामित्यर्थः । ननु चिरविनष्टस्याप्यनुभवस्य स्मृतिहेतुत्वादाह ॥ **निर्व्यापारतया चेति** ॥ अनुभवस्य संस्काररूपव्यापारवत्त्वादित्याशयः । स्वोक्तार्थे आचार्यसम्मतिमाह ॥ **चिरध्वस्तमिति** ॥ फलपूर्ववृत्तिध्वंसप्रतियोगीत्यर्थः ॥ **कर्मेति** ॥ यागादीत्यर्थः ॥ **अतिशयं विनेति** ॥ अपूर्वं विनेत्यर्थः ॥ **फलायेति** ॥ स्वर्गादिजननायेत्यर्थः ॥ **नालमिति** ॥ न समर्थमित्यर्थः । तथाच चिरविनष्टयागादेः श्रुत्यादिबोधितकारणत्वान्यथानुपपत्त्या यागादिव्यापारतया धर्माङ्गीकारस्सर्वेषामावश्यक इति भावः ॥ **व्यापारस्स्यादिति** ॥ तथाच क्लृप्तेनैव निर्वाहे धर्मकल्पनमनुचितमिति भावः ॥ **सर्वत्र तथात्व इति** ॥ प्रतियोगिध्वंसयोरेककार्याजनकत्वनियम इत्यर्थः ॥ **मानाभावादिति** ॥ प्राचां मते दुरितस्येव दुरितध्वंसतत्प्रागभावयोरपि दुरितात्यन्ताभावप्रतियोगिरूपतया दुरितसंसर्गाभावत्वेन त्रयाणामपि समासिहेतुत्वात् तादृशनियमे मानाभाव इत्याशयः अत आह ॥ **गङ्गास्नानादीति** ॥ एतादृशाक्षेपपरिहारायैव मूले गङ्गास्नानादीत्युक्तमिति भावः । ननु गङ्गास्नानादीत्युक्तिमात्रेण कथमुक्तदोषपरिहार इत्यतस्तदाशयं प्रकाशयति ॥ **गङ्गास्नानस्येति** ॥ **कल्प्यत इति** ॥ व्यापारतयेत्यादिः । इदन्तु यागस्य एकधर्मरूपत्वमिति मतानुसारेण । वस्तुतस्तु विद्युदसिप्रभृतिवृष्टिरसिपर्यन्तकर्मसमुदायस्यैव यागपदार्थतया तद्ध्वंसानां बहूनां व्यापारत्वकल्पनस्यात्राप्यावश्यकतया गौरवसाम्यात् । तस्मात् यागादिध्वंसानां गङ्गास्नानादिध्वंसानां च व्यापारत्वपक्षे कर्मनाशेत्यादिना वक्ष्यमाणमूलोक्तदोष एव निर्दुष्ट इति प्रतिभाति । केचित्तु वस्तुतस्तु यागस्यापि ध्वंसो न व्यापारः तथात्वे कीर्ति-

दिनकरीयम्.

च्छात्वम् । देवतोद्देश्यकत्वं देवतास्वत्ववद्विशेष्यकत्वम् । शब्दमयी देवतेति पक्षे तु तस्या इदमित्यारोपज्ञानविषयत्वमुद्देश्यत्वम् । होमत्वं चाग्निसंयोगानुकूलक्रियानुकूलघृतादित्यागनोदनादिव्यापारत्वम् । दानत्वं च मूल्यग्रहणं विना स्वस्वत्वध्वंसपरस्वत्वजनकत्यागत्वमिति सम्प्रदायः । यागत्वहोमत्वादयो मानसप्रत्यक्षगम्या जातिविशेषा इत्यन्ये । श्राद्धस्य पित्रपेक्षया यागत्वेन ब्राह्मणापेक्षया दानत्वेन तत्र साङ्कर्यान्नेदं युक्तमित्यपरे ॥ **अन्यथा** धर्माभावे । चिरविनष्टस्याप्यनुभवस्य स्मृतिजनकत्वादाह ॥ **निर्व्यापारतयेति** ॥ **चिरध्वस्तमिति** ॥ चिरकालनष्टं कर्मातिशयमपूर्वं विना फलाय फलज-

जलसंयोगध्वंसानां व्यापारत्वमपेक्ष्यैकमपूर्वमेव कल्प्यते लाघवादिति भावः । ननु ध्वंसोऽपि न व्यापारोऽस्तु नच निर्व्यापारस्य चिरध्वस्तस्य कथं कारणत्वमिति वाच्यं अनन्यथासिद्ध–

प्रभा.

तयागात्स्वर्गोत्पादवारणाय स्वर्गजनकतावच्छेदककोटौ कीर्तितभेदो निवेशनीयः तत्रच कीर्तितत्वस्यैकस्याभावेन कीर्तितत्वावाच्छिन्नप्रतियोगताकभेदानिवेशनमशक्यमतः कीर्तितव्यक्तीनां तत्तद्व्यक्तित्वावाच्छिन्नप्रतियोगिताक एव भेदो निवेशनीयः । एवंच दशकीर्तितयागस्थले परस्परं तत्तद्व्यक्तिभेदसत्त्वेन स्वर्गोत्पादवारणाय भेदकूटस्यैव कारणतावच्छेदकत्वमुपगन्तव्यम् । तत्रच विशेषणविशेष्यभावे विनिगमनाविरहेण कार्यकारणभावानन्त्यं अपूर्वस्वीकारे च क्षणिकतया कीर्तितयागानां मेलनासंभवेन भेदानामेकत्र निवेशे प्रयोजनाभावः यादृशकीर्तितयागादपूर्वमापादनीयं तद्भेदावच्छिन्नयागव्यक्तेरभावात्तदानीं नचापूर्वसंबन्धेन कीर्तितयागव्यक्तीनां मेळनं संभवत्येवेति स्वर्गजनकतावच्छेदककोटौ कीर्तितभेदानामेकत्र निवेश आवश्यक इति वाच्यम् । अपूर्वानुत्पत्त्यैव स्वर्गासंभवे स्वर्गजनकजनकतावच्छेदककोटौ कीर्तितभेदानामनिवेशात् कीर्तितयागात् ध्वंसोत्पादेन ध्वंसजनकतावच्छेदककोटौ कीर्तितभेदनिवेशस्यासंभवादित्यन्यैरपरिशीलितः पन्था इत्याहुः तदसत् । कीर्तितभेदकूटनिवेशस्यावश्यकत्वेऽपि तादृशभेदकूटविशिष्टयागत्वेन तादृशभेदकूटयागत्वैतदुभयत्वावच्छिन्नेन वा यागस्य हेतुतायां न विनिगमनाविरहप्रयुक्तकार्यकारणभावानन्त्यप्रसक्तिः । यच्चोक्तमपूर्वस्वीकारे तु क्षणिकतया कीर्तितयागानां मेलनासंभवेन भेदानामेकत्र निवेशे प्रयोजनाभावः यादृशकीर्तितयागादपूर्वमापादनीयं तद्भेदावच्छिन्नयागव्यक्तेस्तदानीमभावादिति तदपि मन्दम् । क्षणिकानां यागानां मेळनासंभवेऽपि इदानीन्तनकीर्तितयागव्यक्तेरपि कीर्तितयागान्तरव्यक्तिभिन्नतया कीर्तितेदानीन्तनयागादपूर्वोत्पत्तिवारणायापूर्वजनकतावच्छेदकतावच्छेदककोटौ कीर्तितयागव्यक्तिभेदकूटस्यैव निवेशनीयतया एतत्पक्षेऽपि विशेषणविशेष्यभावे विनिगमनाविरहप्रयुक्तानन्तकार्यकारणभावप्रसक्तेः दुर्वारत्वात् तस्मादहं काशीं गमिष्यामि तत्रैव निवसाम्यहं इति ब्रुवाणः सततं काशीवासफलं लभेदिति वचनात् भविष्यत्काशीगमनतन्निवासासकृत्कीर्तनस्य काशीवासफलहेतुत्वप्रतिपादनात् तद्रीत्या भविष्यत्कर्मकर्तव्यत्वसंकीर्तनं यागोपयुक्तद्रव्यसाधनतयादुष्टमेवाकृतयागस्य कृतत्वेन सङ्कीर्तनन्तु नानृतात्पातकं परमिति वचनात् दुरितसम्पादकमेव यागकरणोत्तरकालीनकीर्तनन्तु धर्मः क्षरति कीर्तनादिति वचनात् अपूर्वनाशकमेवेति सिद्धम् । एवं स्थिते यादृशकीर्तितयागात् अपूर्वमापादनीयं तादृशभेदावच्छिन्नयागव्यक्तेस्तदानीमभावादिति ग्रन्थेन कीर्तितभेदविशिष्टयागस्यापूर्वहेतुत्वाभिधानं अप्रामाणिकत्वात्सकलग्रन्थकारानुमतं केवलयागत्वेन स्वर्गत्वेन कार्यकारणभावबोधकयजेतस्वर्गकामइत्यादिश्रुतिविरुद्धं कीर्तनादिति वचनविरुद्धं चेति दोषं हृदि निधायैवान्यैरपरिशीलितामित्युक्तामिति हृदयम् ॥ **ध्वंसो न व्यापारोऽस्त्विति** ॥ यागादेरित्यादिः । ध्वंसो व्यापारो मा भवत्वित्यर्थः । निरुक्तगौरवादिति भावः ॥ **कथं कार-**

दिनकरीयम्.

नताय नालं न समर्थमित्यर्थः ॥ **तथात्वे** ध्वंसप्रतियोगिनोरेकत्र जनकत्वाभावे ॥ **एकमेवापूर्वं कल्प्यत इति** ॥ वस्तुतस्तु यागस्यापि ध्वंसो न व्यापारः तथात्वे कीर्तितयागात् स्वर्गोत्पादवारणाय स्वर्गजनकतावच्छेदककोटौ कीर्तितभेदो निवेशनीयस्तत्र च कीर्तितत्वस्यैकस्याभावेन कीर्तितत्वावच्छिन्नप्रतियोगिताकभेदनिवेशनमशक्यमतः कीर्तितव्यक्तीनां तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताक एव भेदो निवेशनीयः । एवं च दशकीर्तितयागस्थले परस्परं तत्तद्व्यक्तिभेदसत्त्वेन स्वर्गोत्पादवारणाय भेदकूटस्यैव कारणतावच्छेदकत्वमुपगन्तव्यम् । तत्र च विशेषणविशेष्यभावे विनिगमनाविरहेण कार्यकारणभावानन्त्यमपूर्वस्वीकारे तु क्षणिकतया कीर्तितयागानां मेलनासम्भवेन भेदानामेकत्र निवेशे प्रयोजनाभावः । यादृशकीर्तितयागादपूर्वमापादनीयं तद्भेदावच्छिन्नयागव्यक्तेस्तदानीमभावात् नचापूर्वसम्बन्धेन कीर्तितयागव्यक्तीनां मेलनं सम्भवतीति स्वर्गजनकतावच्छेदककोटौ कीर्तितभेदानामेकत्र निवेश आवश्यक इति वाच्यं अपूर्वानुत्पत्त्यैवास्वर्गसम्भवे स्वर्गजनकतावच्छेदककोटौ कीर्तितभेदानामनिवेशात् कीर्तितयागात् ध्वंसोत्पादेन ध्वंसजनकतावच्छे-

नियतपूर्ववर्तित्वस्य तत्रापि सत्त्वात् । अव्यवहितपूर्ववर्तित्वं हि चक्षुःसंयोगादेः कारणत्वे न तु सर्वत्र कार्यकालवृत्तित्वमिव समवायिकारणस्य कारणत्वे इत्यत आह ॥ **कर्मनाशेति** ॥ यदि ह्यपूर्वं न स्यात् तदा कर्मनाशाजलस्पर्शादिना नाश्यत्वं धर्मस्य न स्यात् । न हि तेन यागादेर्नाशः प्रतिबन्धो वा कर्तुं शक्यते तस्य पूर्वमेव वृत्तत्वादिति भावः। एतेन देवताप्रीतेरेव फलत्वमित्यपास्तम् । गङ्गास्नानादौ सर्वत्र देवताप्रीतेरसंभवाच्च देवतायाश्चेतनत्वेऽपि तत्प्रीतेरनुद्देश्यत्वात् प्रीतेः सुखरूपत्वेन विष्णुप्रीत्यादौ तदसम्भवात् जन्यसुखस्य तत्राभावात् तेन विष्णुप्रीतिजन्यत्वेन पराभिमतस्वर्गादिरेव विष्णुप्रीतिशब्देन लक्ष्यते ॥ १६१ ॥

## प्रभा.

णत्वमिति ॥ कार्याव्यवहितपूर्ववृत्तित्वाभावादित्याशयः ॥ **पूर्ववृत्तित्वस्येति** ॥ तादृशपूर्ववृत्तित्वरूपकारणत्वस्येत्यर्थः ॥ **तत्रापीति** ॥ व्यापारादिरहितयागादावपीत्यर्थः । अव्यवहितपूर्ववृत्तित्वघटितकारणत्वस्यात्राभावेऽपि न क्षतिरित्याह ॥ **अव्यवहितेति** ॥ **चक्षुस्संयोगादेरिति** ॥ आदिना त्वक्संयोगादेः परिग्रहः ॥ **कारणत्व इति** ॥ घटकत्वं सप्तम्यर्थः ॥ तथाच यतः अव्यवहितपूर्ववृत्तित्वं चक्षुस्संयोगादिरूपव्यापारनिष्ठकारणत्वघटकमेवेति समुदितवाक्यार्थः । एवकारव्यवच्छेद्यं स्पष्टयति ॥ **नतु सर्वत्रेति** ॥ नियमेन व्यापाराभिन्ननिष्ठकारणत्वघटकं नेत्यर्थः । तत्र दृष्टान्तमाह ॥ **कार्यकालवृत्तित्वमिवेति** ॥ **कारणत्व इति** ॥ घटकत्वं सप्तम्यर्थः । तथाच कार्यकालवृत्तित्वं यथा नियमेन समवायिकारणत्वघटकं नतु कारणत्वमात्रघटकं प्रागभावादौ तदभावात् तथा प्रकृतेऽपीति समुदितवाक्यार्थः ॥ **अपूर्वं न स्यादिति** ॥ यागस्य धर्मो नाङ्गीक्रियत इत्यर्थः । तेन नैयायिकैः पराभिमतापूर्वानङ्गीकारेऽपि न क्षतिः ॥ **कर्मनाशाजलस्पर्शादिनेति** ॥ कर्मनाशाख्यनदीजलसंस्पर्शादिनेत्यर्थः । आदिना कर्मनाशाजलस्पर्शात् करतोयातिलङ्घनात् गण्डकीबाहुतरणाद्धर्मः क्षरात कीर्तनादिति वचनसिद्धकरतोयाख्यनदीविलङ्घनादेः परिग्रहः ॥ **धर्मस्य न स्यादिति** ॥ यागध्वंसादेः अनावश्यकत्वेन न तस्य धर्मपदार्थत्वमित्याशयः । यागादेः धर्मत्वं नास्तीत्याह ॥ **तेनेति** ॥ कर्मनाशाजलस्पर्शादिनेत्यर्थः ॥ **यागादेरिति** ॥ आदिना गङ्गास्नानादेः परिग्रहः ॥ **तस्येति** ॥ यागादेरित्यर्थः ॥ **पूर्वमेवेति** ॥ कर्मनाशाजलस्पर्शादिपूर्वमेवेत्यर्थः ॥ **प्रवृत्तत्वादिति** ॥ उत्पन्नत्वाद्विनष्टत्वाच्चेत्यर्थः । यागस्येच्छाविशेषरूपतया क्षणिकत्वेन स्वोत्तरोत्पन्नगुणेन तृतीयक्षणे नाशादिति भावः । यत्तु धर्मः क्षरतीत्यस्य धर्मो यागादिः क्षरति फलभाङ्न भवतीत्यर्थकतया अपूर्वद्वारा यागादिजन्यस्वर्गादिफलं प्रति कर्मनाशाजलस्पर्शादेः स्वध्वंससंबन्धेन तादृश-

## दिनकरीयम्.

दककोटौ कीर्तितभेदनिवेशस्यासम्भवादित्यन्यैरपरिशीलितः पन्थाः ॥ **कारणत्व इति** ॥ घटकत्वं सप्तम्यर्थः । एवमग्रेऽपि ॥ **कार्यकालवृत्तित्वमिवेति** ॥ यथा समवायिकारणस्य कारणत्वे कार्यकालवृत्तित्वं घटकं न त्वसमवायिकारणस्य कारणत्वे तथेत्यर्थः ॥ **तेन** कर्मनाशाजलस्पर्शादिना ॥ **तस्य** यागादेः ॥ **पूर्वं** कर्मनाशाजलस्पर्शादितः पूर्वम् ॥ **वृत्तत्वादिति** ॥ उत्पन्नत्वाद्विनष्टत्वाच्चेत्यर्थः । योग्यविभुविशेषगुणानां स्वोत्तरोत्पन्नगुणनाश्यत्वादिच्छात्मकयागस्य तृतीयक्षण एव नष्टत्वादिति भावः । एवमग्रेऽपि । धर्मः क्षरतीत्यस्य धर्मो यागादिः क्षरति फलभाङ्न भवतीत्यर्थकतया कर्मनाशाजलस्पर्शादेः स्वध्वंससम्बन्धेन स्वर्गादिफलं प्रति प्रतिबन्धकत्वमेव युक्तमिति न सत् एकाश्वमेधानन्तरमश्वमेधः कृत इति कीर्तिते तदुत्तरं पुनरश्वमेधकरणेऽपि स्वर्गानुदयापत्तेः । न च तदश्वमेधजन्यस्वर्गत्वावच्छिन्नं प्रति तत्कीर्तनत्वेन प्रतिबन्धकत्वान्नाश्वमेधान्तरात् स्वर्गानुदयप्रसङ्ग इति वाच्यं यदश्वमेधस्य कीर्तनं कृतं तदश्वमेधजन्यस्वर्गाप्रसिद्धया तादृशप्रतिबध्यप्रतिबन्धकभावस्य कल्पयितुमशक्यत्वात्। तच्चापूर्वं दर्शपूर्णमासयोर्द्विविधं परमापूर्वं कलिकापूर्वं चेति । तथाहि यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाच्युतो भवति उपांशुयाजमन्तरा यजति ताभ्यामेत-

## प्रभा.

जलस्पर्शादिध्वंसानां वा प्रतिबन्धकत्वं लभ्यत इति तन्न एकस्मिन्मासि दर्शपूर्णमासकरणानन्तरं कर्मनाशा-जलस्पर्शादिकरणे सत्यन्यस्मिन् मासि कृतदर्शपूर्णमासाभ्यामपि निरुक्तप्रतिबन्धकसत्त्वेन स्वर्गानुत्पत्तिप्रसङ्गात् यागादेः कालान्तरभाविस्वर्गजनकत्वान्यथानुपपत्त्या अपूर्वमङ्गीकार्यमिति । अत्रेदं बोध्यम् । अपूर्वं द्विविधं कलिकापूर्वं परमापूर्वं चेति । तथाहि यदाग्नेयोऽष्टाकपालोऽमावास्यायां च पौर्णमास्यां चाच्युतो भवति उपांशुयाजमन्तरा यजति ताभ्यामेतदग्नीषोमीयमेकादशकपालं पूर्णमासे प्रायच्छत् ऐन्द्रं दध्यमावास्यायां ऐन्द्रं पयोऽमावास्यायामिति पञ्चभिर्वाक्यैर्विहितषडाग्नेयादिभ्यः षडुत्पत्त्यपूर्वाणि जायन्ते तान्येव कलिकापूर्वाणीत्युच्यन्ते षट्कलिकापूर्वेभ्यः परमापूर्वमिति । नन्वावश्यकषट्कलिकापूर्वैरेव स्वर्गसंभवे मध्ये परमापूर्वकल्पनं व्यर्थमिति चेन्न दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेति श्रुतिघटकद्विवचनान्तेन दर्शपूर्णमासोभयत्वावच्छिन्नस्य स्वर्गसाधनत्वप्रतिपादनात् आग्नेयादिषड्यागजन्यषट्कलिकापूर्वाणां दर्शपूर्णमासोभयत्वावच्छिन्नजन्यत्वाभावात् तेषां व्यापारत्वासंभवादुभयत्वावच्छिन्नस्य श्रुतिचोदितकारणत्वान्यथानुपपत्त्या परमापूर्वकल्पनाया आवश्यकत्वात् । नचैवं सति क्रमिकाणामाग्नेयादिषड्यागानां तृतीयक्षणवृत्तिध्वंसप्रतियोगिनां साक्षात्परमापूर्वजननासमर्थतया व्यापारतया षट्कलिकापूर्वकल्पनायां गौरवमिति वाच्यं ईदृशगौरवस्य फलमुखत्वेनादोषत्वात् । नच तथापि पञ्चकलिकापूर्वसहकृतषष्ठयागादेव परमापूर्वस्य उत्पत्तिरस्तु किं कलिकापूर्वषट्ककल्पनेनेति वाच्यं षष्ठयागस्यापि उत्तराङ्गदक्षिणादानसहकारेणैव परमापूर्वजननसमर्थतया तावत्कालं षष्ठयागस्य सत्त्वेन तज्जन्यकलिकापूर्वस्याप्यावश्यकत्वात् । अन्येतु दर्शपूर्णमासोभयस्य उभयत्वेन रूपेण परमापूर्वं प्रति स्वर्गं प्रति च हेतुत्वे गौरवादुभयसाधारणमेकं वैजात्यं स्वीकृत्य तेन रूपेण हेतुत्वमुचितमित्याहुः । अपरेतु दर्शत्रिके पूर्णमासत्रिके दर्शत्वपौर्णमासत्वरूपवैजात्यमङ्गीकृत्य तादृशवैजात्येन दण्डचक्रादिन्यायेन परमापूर्वं प्रति हेतुत्वमित्याहुः । परेतु कलिकापूर्वत्रयसहकृतदर्शत्रिकेणैकमपूर्वं तादृशेन पूर्णमासत्रिकेण एकमपूर्वं तादृशापूर्वाभ्यां सहकृतदर्शपूर्णमासाभ्यां परमापूर्वमुत्पद्यते तदेव फलशिरस्कापूर्वमित्युच्यते एतादृशापूर्वद्वारा दर्शपूर्णमासोभयत्वावच्छिन्नस्य स्वर्गहेतुत्वमिति अपूर्वनवकाङ्गीकार आवश्यक इत्याहुः । अत्र फलशिरस्कापूर्वे मानाभावात् अपूर्वाष्टकमित्यन्ये । नव्यास्तु कलिकापूर्वषट्केनैव परमापूर्वोत्पत्तिसंभवात् माध्यमिकापूर्वद्वये मानाभावेन प्राथमिकसप्तापूर्वपक्ष एव युक्त इत्याहुः । इदं अपूर्वं जातेष्टिपितृयज्ञादौ कर्तृनिष्ठमिति नव्याः । भोक्तृनिष्ठमिति साम्प्रदायिकाः । प्राभाकरास्तु क्रियायाः तृतीयक्षणे स्वरूपतो न नाशः स्थूलावस्थाया नाशेऽपि सूक्ष्मरूपेण स्वर्गभोगसमर्थदेहारम्भकावयवेषु यागसंबन्धिद्रव्यारम्भकेषु यागकर्तरि वा स्थित्वा स्वर्गं जनयतीत्याहुः तन्न ज्ञानेच्छादिरूपस्य यागस्य योग्याविभुविशेषगुणरूपतया क्षणचतुष्टयावस्थायित्वासंभवेन सूक्ष्मरूपेणाप्यवस्थानासंभवात् अन्यथा तुल्ययुक्त्या जगन्मात्रस्यैव सूक्ष्मरूपेण वर्तमानत्वापत्तिरिति दिक् ॥ १६० ॥ १६१ ॥ १६२ ॥

## दिनकरीयम्.

मग्नीषोमीयमेकादशकपालं पूर्णमासे प्रायच्छत ऐन्द्रं दध्यमावास्यायामैन्द्रं पयोऽमावास्यायामिति पञ्चभिर्वाक्यैर्विहितेभ्यः षड्भ्य आग्नेयादिभ्यः षडुत्पत्त्यपूर्वाणि तान्येव कलिकापूर्वाण्युच्यन्ते तेभ्यश्च परमापूर्वमिति । ननु षडपूर्वाण्यावश्यकानि साक्षादेव स्वर्गहेतवः सन्तु किं परमापूर्वेणेति चेन्न दर्शपूर्णमासाभ्यां यजेतेत्यनेनोभयत्वावच्छिन्नस्य स्वर्गसाधनत्वावगमादुभयत्वावच्छिन्नस्यैकव्यापारकल्पनादुत्पत्त्यपूर्वाणां चोभयत्वावच्छिन्नाजन्यत्वात् दर्शपूर्णमासाभ्यामिति विधिप्रवृत्तिसमये चिरविनष्टस्य दर्शपूर्णमासस्य व्यापारतयैकस्यैवापूर्वस्य कल्पनाच्च । नचैवमनन्तरं षण्णां यागानां क्रमिकत्वज्ञाने षडपूर्वकल्पनागौरवं तस्य फलमुखत्वात् । नच पञ्चभिः पञ्चापूर्वद्वारा षष्ठेन च साक्षादेव परमापूर्वं जन्यतामिति किं षष्ठेन कलिकापूर्वेणेति वाच्यं षष्ठेनाप्युत्तराङ्गदाक्षिणासहकारेणैव परमापूर्वजननात् तावत्कालं षष्ठस्य यागस्यानवस्थितया तज्जन्यापूर्वस्यावश्यकत्वात् । अत्र परमापूर्वं प्रति स्वर्गं प्रति च दर्शत्वपूर्णमासत्वव्यापकेन दर्शपूर्णमासोभयसाधारणवैजात्येन कारणत्वमित्येके । दर्शत्वेन पूर्णमासत्वेन च कारणत्वं दण्डचक्रवन्मिलितानां फलोपधानमित्यपरे । अत्र

**अधर्मो नरकादीनां हेतुर्निन्दितकर्मजः ।**
**प्रायश्चित्तादिनाश्योऽसौ जीववृत्ती त्विमौ गुणौ ॥ १६३ ॥**

**अधर्मेति** ॥ नरकादिसकलदुःखानां नारकीयशरीरादीनां च साधनमधर्म इत्यर्थः । तत्र प्रमाणमाह ॥ **प्रायश्चित्तेति** ॥ यदि ह्यधर्मो न स्यात्तदा प्रायश्चित्तादिना नाश्यत्वं न स्यात् न हि तेन ब्रह्महननादीनां नाशः प्रतिबन्धो वा विधातुं शक्यते तस्य पूर्वमेव विनष्टत्वादिति भावः ॥ **जीवेति** ॥ ईश्वरस्य धर्माधर्माभावादिति भावः ॥ १६२ ॥ १६३ ॥

**इमौ तु वासनाजन्यौ ज्ञानादपि विनश्यतः ।**
**शब्दो ध्वनिश्च वर्णश्च मृदङ्गादिभवो ध्वनिः ॥ १६४ ॥**
**कण्ठसंयोगादिजन्या वर्णास्ते कादयो मताः ।**

**इमौ** धर्माधर्मौ ॥ **वासनेति** ॥ अतो ज्ञानिना कृते अपि सुकृतदुष्कृतकर्मणी न

## प्रभा.

**अधर्मो नरकादीनामिति** ॥ मूलस्थादिपदार्थं विवृणोति ॥ **नरकादिसकलेति** ॥ नरकशरीरादीनामित्यत्रादिपदात् क्षयादिरोगविशिष्टेदानीन्तनदेहपरिग्रहः ॥ **प्रायश्चित्तादिनाश्योऽसाविति** ॥ मूलस्थाधर्मे प्रमाणपरत्वं स्पष्टयति ॥ **यदि हीति** ॥ अवधारणार्थकहिशब्द अधर्म इत्युत्तरं योज्यः ॥ **अधर्मो न स्यादिति** ॥ अधर्मो निषिद्धकर्मातिरिक्त एव न स्यादिति तात्पर्यार्थः ॥ **प्रायश्चित्तादीति** ॥ आदिना तत्त्वज्ञानादेः परिग्रहः ॥ **न स्यादिति** ॥ मा भवत्वित्यर्थः । नचेष्टापत्तिः कूष्माण्डैर्जुहुयाद्योऽपूत इव मन्येतेत्यादितेश्रुतेः ज्ञानाग्निस्सर्वकर्माणि भस्मसात्कुरुत इत्यादिवक्ष्यमाणस्मृतेश्च विरोधापत्तारिति भावः ॥ **तेनेति** ॥ प्रायश्चित्तादिनेत्यर्थः ॥ **ब्रह्महननादेरिति** ॥ आदिना निषिद्धकर्ममात्रपरिग्रहः ॥ **तस्येति** ॥ ब्रह्महननादेरित्यर्थः ॥ **पूर्वमिति** ॥ प्रायश्चित्तादिकरणात्पूर्वमेवेत्यर्थः ॥ जीववृत्ती त्विमौ गुणाविति मूलस्थजीववृत्तीत्यस्य जीव एव वृत्तीत्यर्थ इत्याशयेन तादृशमूलस्य भावमाह ॥ **ईश्वर इति** ॥ **धर्माधर्माभावादिति** ॥ धर्माधर्मयोरुत्पत्त्यसंभवादित्यर्थः । तथाचावच्छेदकतासंबन्धेन शरीरस्य समवायेन विहितनिषिद्धकर्मणोश्च हेतुतया ईश्वरस्य शरीराभावात् तत्समवेतक्रियाया अभावाच्च न धर्माद्युत्पत्तिसम्भवः इच्छाविशेषरूपयागादिकर्मणोऽपि शरीरसाध्यत्वादीश्वरे यागादेरप्युत्पत्त्यसम्भवात्तज्जन्यधर्मस्यापि न तत्रोत्पत्तिसम्भव इति भावः ॥ १६३ ॥

**मूले इमौ तु वासनाजन्याविति** ॥ रागजन्यावित्यर्थः । ननु धर्माधर्मौ प्रति वासनाया हेतुत्वे किं

## दिनकरीयम्.

त्र्यात्मकदर्शजन्यमपूर्वमेकं कलिकापूर्वत्रयव्यापारकम् । एवं त्र्यात्मकपूर्णमासजन्यमेकमपूर्वं कलिकापूर्वत्रयव्यापारकं ताभ्यां स्वर्गजनकापूर्वोत्पत्तिस्तच्च परमापूर्वं फलशिरस्कापूर्वमित्युच्यत इति नवापूर्वीपक्ष इत्येके । तत्रैव फलशिरस्कापूर्वे मानाभावादष्टापूर्वीत्यन्ये । कलिकापूर्वषट्केनैव परमापूर्वसम्भवात् व्यापारीभूतापूर्वद्वये मानाभावात् पूर्वोक्ता सप्तापूर्व्येव युक्तेति नव्याः । इदं चापूर्वं जातेष्टिपितृयज्ञादौ कर्तृनिष्ठमुत्पद्यत इत्येके । भोक्तृनिष्ठमिति तु सम्प्रदायः । प्राभाकरास्तु यागक्रिया सर्वात्मना नैव नश्यति किं तु सूक्ष्मरूपेण स्वर्गदेहारम्भकेषु यागसम्बन्धिद्रव्यारम्भकेषु यागकर्तर्यात्मनि वावस्थाय फलमारभत इत्याहुः । तन्न ज्ञानेच्छादिरूपस्य यागस्यात्मनो योग्यविशेषगुणतया क्षणचतुष्टयानवस्थायित्वनियमात् ज्ञानेच्छादीनां सदानुभवेन समानाधिकरणस्वोत्तरवर्तिगुणनाश्यत्वस्वीकारात् अन्यथैतद्रीत्या जगत एव सूक्ष्मरूपतया सर्वदावस्थानप्रसङ्गादित्यलं विस्तरेण ॥ १६० ॥ १६१ ॥ १६२ ॥ १६३ ॥

ननु गङ्गादिदर्शनादिना ईश्वरे कुतो न धर्मादेरुत्पत्तिरत आह ॥ **मूले इमौ तु वासनाजन्याविति** ॥ ईश्वरे मिथ्याज्ञानजन्यवासनाविरहान्न धर्मादेरुत्पत्तिरिति भावः । ननु धर्माधर्मौ प्रति वासनाया हेतुत्वे

फलायालमिति भावः ॥ **ज्ञानादपीति** ॥ अपिना भोगपरिग्रहः । ननु तत्त्वज्ञानस्य कथं धर्माधर्मनाशकत्वं नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपीति वचनविरोधात् । इत्थं च तत्त्वज्ञानिनां झटिति कायव्यूहेन सकलकर्मणां भोगेन क्षय इति चेन्न। तत्र भोगस्य वेदबोधितनाशकोपलक्षकत्वात् । कथमन्यथा प्रायश्चित्तादिना कर्मणां नाशः । तदुक्तं ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुतेऽर्जुन । क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे इति । ननु तत्त्वज्ञानिनस्तर्हि शरीरावस्थानं सुखदुःखादिकं न स्यात् । ज्ञानेन सर्वेषां कर्मणां नाशादिति चेन्न प्रारब्धेतरकर्मणामेव नाशात् । तत्तच्छरीरभोगजनकं हि यत्कर्म तत्प्रारब्धं तदभिप्रायमेव नाभुक्तमिति वचनमिति ॥

## प्रभा.

प्रमाणमत आह ॥ **मुक्तावल्यामत इति** ॥ वासनाया हेतुत्वादेवेत्यर्थः ॥ **न फलायालमिति** ॥ न धर्माधर्मोत्पादनसमर्थावित्यर्थः । तथाच ज्ञानिनः रागरूपसहकारिकारणाभावात् सुकृतदुष्कृतकर्मभ्यां न तत्र धर्माद्युत्पत्तिरिति भावः । केचित्तु ननु गङ्गादिदर्शनादीश्वरे कुतो न धर्मादेरुत्पत्तिरत आह ॥ **सूले इमौ तु वासनाजन्याविति** ॥ ईश्वरे मिथ्याज्ञानजन्यवासनाविरहात् न धर्मादेरुत्पत्तिरिति भाव इत्याहुः तदसत् गङ्गादिविषयकप्रत्यक्षमात्रस्य न धर्मादिहेतुत्वं सर्वेषामपि तादृशमानसप्रत्यक्षसत्त्वेन धर्माद्युत्पत्त्यापत्तिः किन्तु गङ्गादिनिष्ठलौकिकविषयताशालिप्रत्यक्षमेव तथा। एवं चेश्वरे तादृशप्रत्यक्षरूपकारणाभावादेव धर्माद्युत्पत्त्यप्रसक्तेः तत्प्रसक्तिपूर्वकतया इमौ त्वित्यादिमूलावतरणस्यान्याय्यत्वादिति । ननु निरुक्तवचनानुरोधात् भोगस्यैव निरुक्तधर्माधर्मनाशकत्वस्वीकारे तत्त्वज्ञानानन्तरं मोक्षो न स्यात् धर्मादिनाशकाभावादत आह ॥ **इत्थंचेति** ॥ भोगस्यैव धर्मनाशकत्वे चेत्यर्थः ॥ **झटिति कायव्यूहेनेति** ॥ एकदानेकशरीरस्वीकारेणेत्यर्थः ॥ **सकलकर्मणामिति** ॥ निखिलधर्माधर्माणामित्यर्थः ॥ **भोगेन क्षय इति** ॥ झटिति फलानुभवकारणेनेत्यर्थः ॥ **अत्र भोगस्येति** ॥ तादृशवचनघटकभुक्तपदार्थैकदेशभोगस्येत्यर्थः ॥ **उपलक्षकत्वादिति** ॥ सूचकत्वादित्यर्थः । तथाच नाभुक्तं क्षीयत इत्यस्य भोगवेदबोधितनाशकान्यतरं विना न क्षीयत इत्यर्थान्न तत्त्वज्ञानस्य धर्मादिनाशकत्वानुपपत्तिरिति भावः । नाभुक्तमित्यादिवचनस्यैतादृशार्थपरत्वे प्रमाणमाह ॥ **कथमन्यथेत्यादि** ॥ **प्रायश्चित्तादिनेति** ॥ आदिना कर्मनाशाजलस्पर्शादेः परिग्रहः धर्माणामधर्माणां च नाश इत्यर्थः कथमिति पूर्वेणान्वयः। यद्यपि कथमन्यथा कर्मनाशाजलस्पर्शादिना कर्मणां नाश इत्येव वक्तुमुचितं धर्मस्यैव प्राथमिकत्वात् आदिपदेन दुरितनाशकप्रायश्चित्तस्यापि ग्रहणसम्भवाच्च तथाप्यधर्मनिरूपणानन्तरमेव एतादृशमूलस्य प्रसक्ततया तस्यैव प्रथममुपस्थितत्वमित्याशयेन प्रायश्चित्तादीत्युक्तामिति ध्येयम् । एतावता भोगस्यैव धर्माधर्मनाशकत्वपक्षे बाधकं प्रदर्श्येदानीं ज्ञानस्यादृष्टनाशकत्वे स्मृतिं श्रुतिं च प्रमाणयति ॥ **तदुक्तमिति** ॥ गीतायां भगवतोक्तमित्यर्थः ॥ **सर्वकर्माणीति** ॥ सकलादृष्टानीत्यर्थः ॥ **भस्मसात्कुरुत इति** ॥ नाशयतीत्यर्थः । श्रुतिं दर्शयति ॥ **क्षीयन्त इति** ॥ नाशं प्राप्नुवन्तीत्यर्थः ॥ **अस्येति** ॥ ज्ञानिन इत्यर्थः ॥ **कर्माणीति** ॥ सकलादृष्टानीत्यर्थः ॥ **तस्मिन् दृष्टे परावर इति** ॥ निरवधिकपरत्वाश्रये ब्रह्मणि साक्षात्कृते सतीत्यर्थः ॥ **तर्हीति** ॥ भोगस्यैव तत्त्वज्ञानस्यापि कर्मनाशकत्व इत्यर्थः ॥ **नाशादिति** ॥ नाशस्वीकारादित्यर्थः। तथाच ज्ञानस्य सर्वनाशकत्वस्वीका-

## दिनकरीयम्.

मानाभाव इत्यत आह ॥ **मुक्तावल्यामत इति** ॥ **ज्ञानिना** तत्त्वज्ञानवता ॥ **वचनविरोधादिति** ॥ तेनादृष्टनाशमात्रे भोगस्य हेतुत्वप्रतिपादनादिति भावः ॥ **इत्थं चेति** ॥ कर्मणां भोगैकनाश्यत्वे चेत्यर्थः ॥ **अन्यथा** उपलक्षकत्वाभावे ॥ **सर्वकर्माणीति** ॥ सर्वकर्मजन्यादृष्टानीत्यर्थः ॥ **भस्मसात्कुरुते** नाशयति । स्मृतिं दर्शयित्वा श्रुतिं दर्शयति ॥ **क्षीयन्ते चेति** ॥ **तदभिप्रायमेव** प्रारब्धकर्माभिप्रायमेव ॥

सर्वः शब्दो नभोवृत्तिः श्रोत्रोत्पन्नस्तु गृह्यते ॥ १६५ ॥
वीचीतरङ्गन्यायेन तदुत्पत्तिस्तु कीर्तिता ।
कदम्बगोलकन्यायादुत्पत्तिः कस्यचिन्मते ॥ १६६ ॥

शब्दं निरूपयति ॥ **शब्द इति** ॥ **नभोवृत्तिः** आकाशसमवेतः । दूरस्थशब्दस्याग्रहणादाह ॥ **श्रोत्रेति** ॥ ननु मृदङ्गाद्यवच्छेदेनोत्पन्ने शब्दे श्रोत्रे कथमुत्पत्तिरत आह ॥ **वीचीति** ॥ आद्यशब्देन बहिर्देशदिगवच्छिन्नोऽन्यः शब्दस्तेनैव शब्देन जन्यते । तेन चापरस्तद्व्यापकः । एवं क्रमेण श्रोत्रोत्पन्नो गृह्यत इति ॥ **कदम्बेति** ॥ आद्यशब्दात् दशदिक्षु दशशब्दा उत्पद्यन्ते तैश्चान्ये दशशब्दा उत्पद्यन्त इति भावः । अस्मिन् मते कल्पनागौरवादुक्तम् ॥ **कस्यचिन्मत इति** ॥ १६४ ॥ १६५ ॥ १६६ ॥

प्रभा.

रे प्रारब्धकर्मणां भोगादेव क्षय इति वचनविरोधापत्त्या ज्ञानाग्निस्सर्वकर्माणीत्यादिस्मृतिघटकसर्वशब्दस्य प्रारब्धेतरसर्वकर्मपरत्वं स्वीकार्यमित्याशयः ॥ **तच्छरीरभोगजनकमिति** ॥ तच्छरीरावच्छेदेन भोगजनकमित्यर्थः ॥ **एतदभिप्रायकमेवेति** ॥ प्रारब्धकर्माभिप्रायकमेवेत्यर्थः ॥ **कथं श्रोत्रोत्पत्तिरिति** ॥ कर्णविवरावच्छेदेन कथमुत्पत्तिरित्यर्थः । कर्णविवरस्य तदुत्पत्त्यवच्छेदकत्वाभावादिति भावः ॥ **श्रोत्रोत्पत्तिरिति** ॥ कर्णविवरावच्छेदेन वर्तमानत्वमित्यर्थ इत्यस्मद्गुरुचरणाः ॥ **आद्यशब्दस्य बहिर्देशदिगवच्छिन्न इति** ॥ आद्यशब्दावच्छेदकदेशदिग्भिन्नदेशदिगवच्छिन्न इत्यर्थः ॥ **अन्यशब्द इति** ॥ प्रथमशब्दान्यसर्वत्वावच्छिन्नशब्द इत्यर्थः ॥ **तेनैवेति** ॥ आद्यशब्देनैवेत्यर्थः एवकारेण द्वितीयादिशब्देन शब्दोत्पत्तिपक्षो व्यवच्छिद्यते ॥ **सचेति** ॥ आद्यशब्दान्यसर्वशब्दोऽपीत्यर्थः ॥ **आद्यशब्दस्य व्यापक इति** ॥ आद्यशब्दाव्यवहितोत्तरकालक्षणोत्पत्तिक इत्यर्थः ॥ **एवं क्रमेणेति** ॥ वीचीतरङ्गन्यायेनेत्यर्थः ॥ **श्रोत्रोत्पन्न इति** ॥ श्रोत्रावच्छेदेन उत्पन्नशब्द एवेत्यर्थः ॥ **उपलभ्यत इति** ॥ प्रत्यक्षविषयतावानित्यर्थः । अयं भावः वीची यथा सर्वदिगवच्छेदेन एकदा तरङ्गान् जनयति परन्तु यद्देशदिगभिमुखो वायुस्तद्देशादिगवच्छेदेन अधिकतरङ्गान् जनयति तथा भेरीमृदङ्गाद्यवच्छेदेन जायमानशब्दः भेर्यादिभिन्नसर्वदेशावच्छेदेन सर्वदिगवच्छेदेन चैकदैव शब्दान् जनयति परन्तु यद्देशादिगभिमुखो वायुः तद्देशादिगवच्छेदेनाधिकशब्दान् जनयतीति वीचीतरङ्गन्यायेनोत्पत्तिक्रम इति । कदम्बमुकुळन्यायेन शब्दोत्पत्तिप्रकारमाह ॥ **आद्यशब्दादिति** ॥ भेर्याद्यवच्छेदेन जायमानशब्दादित्यर्थः ॥ **दशदिक्ष्विति** ॥ भेरीसमीपदेशेष्वित्यपि बोध्यम् ॥ **तैश्चेति** ॥ तादृशदशशब्दैनैवेत्यर्थः एवकारार्थे चकारात् ॥ **अन्ये दशशब्दा इति** ॥ दशदिगवच्छिन्नाः पूर्वोत्पन्नदशशब्दासमवायिकारणकास्तादृशशब्दावच्छेदकदेशसन्निहितदेशावच्छिन्नाश्शब्दा इत्यर्थः ॥ **इति भाव इति** ॥ अयं भावः आदिमं कदम्बपुष्पं एकनाळकाधिकरणविशेषे यथा स्वसमीपदेशेषु प्रागाद्यष्टदिक्षु सजातीयपुष्पाणि जनयति तादृशपुष्पाणि तस्मिन्नेवाधिकरणे तत्समीपदेशेष्वष्टदिक्षु चान्यानि सजातीयपुष्पाणि जनयन्ति तथा भेर्यवच्छेदेन जायमानशब्दः भेरीसमीपदेशावच्छेदेन दशदिक्षु शब्दान् जनयति तादृशदशशब्दास्तत्तत्समीपदेशावच्छेदेन सर्वदिगवच्छेदेन च बहून् शब्दान् जनयन्ति एवंरीत्या श्रोत्रावच्छेदेनोत्पन्नशब्दो गृह्यते अयमेव कदम्बमुकुळन्यायेनोत्पत्तिक्रमः । पक्षद्वयेऽप्याद्यशब्दोऽतीन्द्रियः भेर्याद्यवच्छेदेन जायमानत्वात् श्रोत्राद्यवच्छेदेन जायमानस्यैव प्रत्यक्षत्वसंभवादिति ॥ **अस्मिन् कल्पे इति** ॥ कदम्बमुकुळन्यायेन शब्दोत्पत्तिक्रमपक्ष इत्यर्थः ॥ **गौरवादिति** ॥ तथाच बहूनां शब्दानां शब्दा-

दिनकरीयम्.

**गौरवादिति** ॥ दशशब्दानां तत्प्रागभावानां तद्धेतुहेतुमद्भावानां च कल्पने गौरवादित्यर्थः ॥ १६४ ॥ १६५ ॥ १६६ ॥

उत्पन्नः को विनष्टः क इति बुद्धेरनित्यता ।
सोऽयं क इति बुद्धिस्तु साजात्यमवलम्बते ॥ १६७ ॥

ननु शब्दस्य नित्यत्वादुत्पत्तिकथनमसङ्गतमत आह ॥ **उत्पन्नेति** ॥ शब्दानामुत्पादविनाशप्रत्ययशालित्वादनित्यत्वमित्यर्थः । ननु स एवायं ककार इत्यादिप्रत्यभिज्ञानाच्छब्दानां नित्यत्वम् । इत्थं चोत्पादविनाशबुद्धिर्भ्रमरूपैवेत्यत आह ॥ **सोऽयमिति** ॥ **साजात्यमिति** ॥ तत्र प्रत्यभिज्ञानस्य तत्सजातीयत्वं विषयो न तु तद्व्यक्त्यभेदो विषयः । उक्तप्रतीतिविरोधात् । इत्थं च द्वयोरपि प्रतीत्योरभ्रमत्वमिति ॥ १६७ ॥

## प्रभा.

समवायिकारणकत्वकल्पनेन द्वितीयक्षणभिन्नक्षणानां निमित्तकारणत्वकल्पनेन च गौरवादित्यर्थः । अत्राद्यशब्दोत्पत्तिद्वितीयक्षण एव सर्वदिगवच्छेदेन समीपदेशे दूरदेशे च निखिलशब्दोत्पत्तिस्वीकारे भेर्यादेस्सन्निहितदेशस्थपुरुषस्य व्यवहितपुरुषस्य च युगपच्छब्दश्रवणापत्तिः यदा समीपदेशस्थपुरुषकर्णशष्कुल्यवच्छेदेन शब्दोत्पत्तिः तदैव दूरदेशस्थपुरुषकर्णशष्कुल्यवच्छेदेनापि शब्दोत्पत्तिसंभवात् । नचेष्टापत्तिः अनुभवविरोधात् तस्मात् ईदृशगौरवस्य प्रामाणिकतया न दोषत्वमेवेति कदम्बमुकुलन्यायेन शब्दोत्पत्तिपक्ष एव प्रामाणिक इति प्रतिभाति ॥ १६४ ॥ १६५ ॥ १६६ ॥

**उक्तप्रतीतिविरोधादिति** ॥ उत्पादविनाशशालिप्रत्ययविरोधादित्यर्थः ॥ **इत्थंचेति** ॥ सोऽयं क इति बुद्धेस्सजातीयविषयकत्वे चेत्यर्थः ॥ **द्वयोरपीति** ॥ उत्पन्नः को विनष्टः कइतिप्रत्यय-सोऽयं क इति प्रत्यभिज्ञयोरित्यर्थः ॥ **न भ्रमत्वमिति** ॥ सर्वांशे प्रमात्वमित्यर्थः उपपद्यत इति शेषः । मीमांसकास्तु सोऽयं ग इत्यादिप्रत्यभिज्ञाबलाद्वर्णानांनित्यत्वं नचैवं सति उत्पन्नः को विनष्टः क इत्याद्युत्पादविनाशशालिप्रतीत्यनुपपत्तिरिति वाच्यम् । तादृशप्रतीतेः कादिव्यञ्जकवाय्वादिसंयोगगतोत्पादविनाशविषयकत्वस्वीकारात् एतेन तारत्वमन्थरत्वरूपविरुद्धधर्माध्यासबलात् कादिवर्णानां भेदसिद्धौ तदनुरोधेनानित्यत्वमप्यावश्यकमितिपरास्तं तारत्वमन्थरत्वयोरपि व्यञ्जकवायुधर्मत्वस्वीकारात् । अन्यथानन्तवर्णतत्प्रागभावध्वंसतत्कार्यकारणभावकल्पनापत्त्या महागौरवप्रसङ्गात् । नचैवं सति श्रोत्रग्राह्यत्वानुपपत्तिः तयोरिति वाच्यम् । त्र्यणुकनिष्ठगुणानां मध्ये रूपमात्रस्य चक्षुर्ग्राह्यत्ववद्वायुधर्मणां मध्ये तारत्वादिमात्रस्यानायत्या तद्ग्राह्यत्वस्वीकारे क्षतिविरहादित्याहुः तन्न तुल्ययुक्त्या कत्वखत्वादेरपि वायुधर्मत्वापत्त्या वर्णमात्रस्य भेदविलोपापत्तेः किंच कादेरपि नित्यत्वे कत्वाद्यवच्छिन्नं प्रत्येव ताल्वोष्ठपुटसंयोगादीनां कारणत्वमिति लाघवम् । कादीनां नित्यत्वे तु कत्वादिप्रकारकश्रावणत्वावच्छिन्नं प्रति तेषां हेतुत्वमिति कार्यतावच्छेदकगौरवं लौकिकविषयतासंबन्धेन कत्वादेरेव कार्यतावच्छेदकत्वे कार्यतावच्छेदकघटकसंबन्धगौरवं अपिचोत्पादकसामग्र्या व्यञ्जकत्वस्वीकारे घटाद्युत्पादकसामग्र्या अपि तुल्ययुक्त्या व्यञ्जकत्वसंभवेन पदार्थमात्रस्य नित्यत्वापत्तिः । नचोक्तप्रत्यभिज्ञायास्साजात्यावलम्बने तज्जातीयोऽयमित्येव स्यात् नतु सोऽयमितीति वाच्यम् । यादृशप्रत्यभिज्ञायां जातित्वेन कत्वादेर्भानं तादृशप्रत्यभिज्ञैव तज्जातीयोऽयमित्याकारिका यस्यान्तु स्वरूपतः कत्वादिजातेर्भा-

## दिनकरीयम्.

**उक्तप्रतीतिविरोधादिति** ॥ उत्पादविनाशशालिप्रत्ययविरोधादित्यर्थः ॥ **इत्थं चेति** ॥ प्रत्यभिज्ञानस्य सजातीयविषयत्वे चेत्यर्थः ॥ **द्वयोरपीति** ॥ उत्पादप्रतीतिप्रत्यभिज्ञानयोरित्यर्थः । अत्र मीमांसकाः । स एवायं गकार इति प्रत्यभिज्ञया गकारादेस्तावत्कालावस्थानस्य विषयीकृतत्वेनान्तराभूतशब्दादिनाऽनाशेन नाशकाभावाद्वर्णनित्यत्वसिद्धिः । नच प्रत्यभिज्ञा तज्जातीयत्वविषयिणी बाधकाभावात् अन्यथा सर्वत्रापि तथाभावेऽभेदोच्छेदापत्तिः । नच तारत्वमन्दत्वरूपविरुद्धधर्माध्यासो बाधकः प्रत्यभिज्ञानबलेन तस्य नित्यत्वसिद्धौ तारत्वादेर्व्यञ्जकवायुधर्मत्वस्य कल्पनात् श्रोत्रेण वायुधर्मस्य तारत्वादेरपि ग्रहणसम्भवा-

## प्रभा.

नं तादृशप्रत्यभिज्ञा सोऽयमित्याकारिकैवेति स्वीक्रियत इति नोक्तानुपपत्तिः । यच्चोक्तं तारत्वादेः वायुधर्मत्वेऽपि श्रावणत्वमङ्गीक्रियत इति तदपि मन्दं तारत्वादेर्वायुधर्मत्वे वायुस्पर्शवत्तारत्वादेरपि त्वगिन्द्रियग्राह्यत्वापत्तेः श्रोत्रग्राह्यत्वानुपपत्तेश्च वायुमात्रसमवेतानां श्रोत्रेन्द्रियाग्राह्यत्वात् । तस्मादुत्पन्नः को विनष्टः क इत्यादिककारादिविशेष्यकोत्पत्त्यादिविषयकत्वेनानुभूयमानप्रतीतेः अननुभूयमानताल्वादिसंयोगादौ उत्पत्त्याद्यवगाहित्वस्वीकारस्याप्रामाणिकतया वर्णानामनित्यत्वमावश्यकमिति । अन्येतु उत्पन्नः कः विनष्टः क इत्यादिप्रतीतेस्सोऽयं ग इत्यादिप्रत्यभिज्ञायाश्च प्रामाण्यायोत्पादविनाशशालिप्रतीतेः कादिविषयकत्वं प्रत्यभिज्ञायाश्च ककाराद्यभिव्यज्यमानस्फोटो विषयः स्फोटो नाम स्फुटयते ज्ञाप्यते अर्थः अनेनेति व्युत्पत्त्या अर्थस्मारको नित्यश्शब्दविशेषः सच पदस्फोटवाक्यस्फोटभेदात् द्विविधः पदज्ञाप्यस्फोटः पदस्फोटः वाक्यज्ञाप्यस्फोटः वाक्यस्फोटः तन्मते वृत्त्या अर्थस्मारकत्वं स्फोटस्यैव पदवाक्ययोः स्फोटज्ञापकत्वात्परम्परया अर्थस्मारकत्वमित्याहुः तन्न उक्तरीत्या प्रत्यभिज्ञोपपत्तेः स्फोटव्यञ्जकत्वेन भवदभिमतपदवाक्ययोरेव वृत्त्या अर्थस्मारकत्वसंभवाच्च स्फोटकल्पने प्रमाणाभावात् । अपरेतु सोऽयमित्यादिप्रत्यभिज्ञाबलाद्वर्णानान्नित्यत्वं उत्पन्नः क इत्यादिप्रतीतेः ककारादिव्यञ्जकध्वनिविषयकत्वं तन्मते ध्वनेरेव श्रोत्रग्राह्यत्वादुत्पादविनाशशालित्वाच्चेत्याहुः तन्न । वर्णव्यञ्जकतयातिरिक्तध्वनिं परिकल्प्य तस्य श्रोत्रग्राह्यत्वानित्यत्वकल्पनापेक्षया लाघवेन उत्पन्नः क इत्यादिप्रतीत्या वर्णः श्रुत इत्यादि प्रतीत्या च कादीनामेवानित्यत्वश्रोत्रग्राह्यत्वस्वीकारसंभवेनातिरिक्तध्वनौ मानाभावादित्यास्तां विस्तरः । अत्रेदं बोध्यं ध्वन्यात्मकाद्यशब्दो द्विविधः संयोगासमवायिकारणको विभागासमवायिकारणकश्चेति तत्राद्यः भेरीदण्डसंयोगनिमित्तको भेर्याकाशसंयोगासमवायिकारणकः अन्त्यस्तु वंशदलद्वयविभागनिमित्तको वंशदलाकाशविभागासमवायिकारणकः द्वितीयादिध्वनिराद्यध्वन्यसमवायिकारणिक इति एवं वर्णात्मकाद्यशब्दस्संयोगासमवायिकारणक एव विभागासमवायिकारणकवर्णे मानाभावात् । सच कण्ठताल्वादिना वाय्वादिसंयोगनिमित्तकः कण्ठताल्वादिनाकाशसंयोगासमवायिकारणकः द्वितीयादिवर्णाः प्रथमादिवर्णासमवायिकारणकाः इदमपि भावकार्यमात्रस्य कारणत्रयजन्यत्वनियमाङ्गीकर्तृमतेन । निष्कृष्टमते तु तादृशनियमे मानाभावात् शब्दमात्रस्यासमवायिकारणानभ्युपगमेऽपि न क्षतिः भेरीदण्डसंयोगादिवंशदलद्वयविभागादिनिमित्तसहकृतेनाकाशेनैव ध्वनेः कण्ठताल्वादिना वाय्वादिसंयोगरूपनिमित्तसहकृतेनैवाकाशेन वर्णस्य च उत्पत्तिसंभवादेवं प्रथमादिशब्दानां स्वकार्यशब्देनैव नाशः योग्यविभुविशेषगुणानां स्वोत्तरोत्पन्नस्वसमानाधिकरणविशेषगुणनाश्यत्वनियमात् । नचैवं सति चरमशब्दस्य नाशो न स्यात् नाशकतादृशशब्दाभावादिति वाच्यं अन्त्यान्यशब्द एव तादृशनियमाङ्गीकारात् अन्त्यशब्दस्य तु स्वयमेव ना-

## दिनकरीयम्.

त् । य एव तारः स एवान्यापेक्षया मन्द इति प्रतीतेस्तारत्वमन्दत्वयोरविरोधाच्चेत्याहुः । तन्न तथा सति कत्वगत्वादेरपि व्यञ्जकवायुधर्मत्वापत्त्या ककारगकारयोरपि भेदो न सिध्येदिति वर्णैक्यापत्तेः । वस्तुतस्तु वर्णानित्यत्वपक्षे कण्ठताल्वाद्यभिघातानां कत्वादिकं कार्यतावच्छेदकं वर्णनित्यतापक्षे तु कसाक्षात्कारत्वमिति गौरवात् । नच नित्यत्वमतेऽपि लौकिकविषयितया कत्वमेव तज्जन्यतावच्छेदकमिति न गौरवावकाश इति वाच्यं कोलाहलप्रत्यक्षस्यासङ्ग्रहप्रसङ्गात् न हि कोलाहलप्रत्यक्षं कत्वादिविषयकं अन्यथा तुल्ययुक्त्या घटाद्युत्पादकस्यापि घटप्रत्यक्षत्वमेव कार्यतावच्छेदकमिति तदपि नित्यमेव स्यादिति । नचानित्यत्वमते प्रत्यभिज्ञायास्तज्जातीयत्वाविषयकत्वेन तज्जातीयोऽयमिति स्यान्न तु सोऽयमितीति वाच्यं यत्र प्रत्यभिज्ञायां जातित्वेन गत्वादेर्भानं तत्रैव तज्जातीयोऽयमित्याकारः यत्र तु स्वरूपतो भानं तत्र सोऽयमित्याकार इत्यभ्युपगमादिति । अत्रेदं बोध्यम् । शब्दो द्विविधः ध्वन्यात्मको वर्णात्मकश्च । तत्र ध्वन्यात्मकसंयोगजन्याद्यशब्दं प्रति गगनं समवायिकारणं भेर्याकाशसंयोगोऽसमवायिकारणं भेरीदण्डसंयोगादिर्निमित्तकारणम् । विभागजन्यध्वन्यात्मकाद्यशब्दं प्रति तु वंशदलाकाशविभागोऽसमवायिकारणं वंशदलद्वयविभागो निमित्तकारणम् । वर्णात्मकाद्यशब्दं प्रति तु कण्ठताल्वादिनाकाशसंयोगोऽसमवायिकारणं कण्ठताल्वादिना वाय्वादिसंयोगो निमित्त-

तदेवौषधमित्यादौ सजातीयेऽपि दर्शनात् ।
तस्मादनित्या एवेति वर्णाः सर्वे मतं हि नः ॥ १६८ ॥

इति श्रीविश्वनाथपञ्चाननकृता कारिकावली समाप्ता ॥

ननु सजातीये सोऽयमिति प्रत्यभिज्ञा कुत्र दृष्टेत्यत आह ॥ तदेवेति ॥ यदौषधं मया कृतं तदौषधमन्येनापि कृतमित्यादिदर्शनादिति भावः ॥ १६८ ॥

इति श्रीमहोपाध्यायविद्यानिवासभट्टाचार्यपुत्रश्रीयुतविश्वनाथपञ्चानन-भट्टाचार्यविरचितायां सिद्धान्तमुक्तावल्यां गुणनिरूपणम् ॥

समाप्तश्चायं ग्रन्थः ॥

## प्रभा.

श इत्युपगमात्। नचैवं सति तस्य द्वितीयक्षणे नाशापत्तिरिति वाच्यं इष्टत्वात्। नचैवं सति बौद्धमतप्रवेशापत्तिरिति वाच्यम् । तन्मते वस्तुमात्रस्य द्वितीयक्षणध्वंसप्रतियोगित्वेन चरमशब्दस्य तदङ्गीकारमात्रेण तादृशदोषासंभवात्। अन्यथा हिंसारूपधर्मस्य तदनुमतस्यास्माभिरपि स्वीकृतत्वेन सर्वेषां तन्मतप्रवेशापत्तिरिति प्राञ्चः । नवीनास्तु योग्यविभुविशेषगुणानां स्वोत्तरवृत्तित्वविशिष्टस्य नाशकत्वमित्येव नियमात् स्वव्यधिकरणस्य स्वस्य वा उत्तरक्षणवृत्तित्वविशिष्टस्य नाशकत्वं संभवतीति प्राहुरिति ॥ १६७ ॥

**तदेवौषधमित्यादाविति** ॥ मूलस्थादिपदात् पूर्वैर्युर्थ्रुक्तं तदेवेदं भक्ष्यमित्यादेः परिग्रहः । ननु तदेवौषधमित्यादौ व्यक्त्यभेद एव विषयोऽस्तु बाधकाभावादित्याशङ्कां बाधकप्रदर्शनेन परिहरति ॥ **मुक्तावल्यां यदौषधं मया कृतमिति** ॥ मयैव कृतमित्यर्थः । यथाश्रुते उभयकर्तृकौषधस्याभेदसंभवादसाङ्ग-

## दिनकरीयम्.

कारणम् । द्वितीयादिशब्दं प्रति तु आद्यशब्दोऽसमवायिकारणम् । न च भेर्याकाशसंयोगकण्ठाद्याकाशसंयोगादीनां शब्दं प्रति कारणत्वे मानाभाव इति वाच्यं भावकार्यस्यासमवायिकारणजन्यत्वनियमेन तत्कारणत्वस्वीकारात् । तादृशनियमे मानाभावे तु मास्तु तेषां कारणत्वं भेरीदण्डसंयोगादिनिमित्तकारणसहकृतेनाकाशेनैव शब्दोत्पत्तिसम्भवादिति । प्रथमादिशब्दानां च स्वकार्यशब्देनैव नाशः चरमस्य तूपान्त्यशब्देनोपान्त्यशब्दनाशेन वा नाश इति ॥ १६७ ॥

मूले तदेवौषधमित्यादिना सैवेयं दीपकलिकेत्यादेः परिग्रहः । ननु तत्रापि व्यक्त्यभेद एव विषयोऽस्त्वतो भावार्थं प्रकाशयति ॥ **यदौषधं मया कृतमित्यादिना** ॥ अत्र च स्वकर्तृकत्वस्वभिन्नकर्तृकत्वरूपविरुद्धधर्माध्यासाहितभेदप्रत्ययस्य प्रतिबन्धकस्य सत्त्वान्न व्यक्त्यभेदो विषयः किं तु तत्सजातीयाभेदो विषय इति भावः ॥ १६८ ॥

भानुं प्रणम्य परिभाव्य च शास्त्रसारं मुक्तावलीकिरण एष पितृप्रदिष्टः ।
सद्युक्तिभिर्दिनकरेण करेण सोऽयं नीतः प्रकाशपदवीं सुधियां मुदेऽस्तु ॥

मुक्तावलीप्रकाशो यः स्वाज्ञानतिमिरापहः ।
तेन सन्तोषमायातु नीलकण्ठः सतीप्रियः ॥

इति श्रीभारद्वाजकुलाम्बुधिपूर्णचन्द्रबालकृष्णभट्टात्मजमहादेवभट्ट-तनूजश्रीमद्दिनकरभट्टविरचिते न्यायसिद्धान्तमुक्तावलीप्रकाशे गुणनिरूपणम् ॥

समाप्तश्चायं ग्रन्थः ॥

प्रभा.

त्यापत्तेः । तथाच तत्र स्वमात्रकर्तृकत्वस्वभिन्नमात्रकर्तृकत्वरूपविरुद्धधर्माध्यासेनाभेदस्य वक्तुमशक्यत्वादिति भावः ॥ १६८ ॥

॥ इति गुणपरिच्छेदः ॥

**इति महोपाध्यायश्रीबालकृष्णतर्कालङ्कारभट्टाचार्यसद्गुरुप्रसादलब्धविद्यावैभव श्रीमदाल्लूरिवंशपयःपारावारराकासुधाकररायनरसिंहपण्डितकृत-मुक्तावलीप्रभा सम्पूर्णा ॥**

तर्कदुर्गमहारण्यनव्यवर्त्मानुवर्तनी ।
मुक्तावलीप्रभा हर्षं सतां वितनुतां सदा ॥

[करिगिरिशिखराग्रे सिद्धिभिष्टां जनानां
प्रतिकलमपि कुर्वन् प्रांशुभिः स्वैः कटाक्षैः ।
सरसिरुहवसत्या साकमामोदमानः
श्रियमुपचिनुयाद्वः श्रीनिधिर्देवराजः ॥]



## गङ्गारामजटीयम् ।

यस्माद्भवन्ति लोका येनोज्जीवन्ति यत्र लीयन्ते ।
तस्मै कस्मैचिदिदं भवतु परस्मै नमः पुंसे ॥

**पुटम् (२१) विषयत्वमित्यादिना**विषयत्वं ज्ञानविषयसुखेऽतिप्रसक्तमत **आचारेति** ॥ यद्यप्याचारः क्रिया तथापि विषयत्वश्रुतेः कृतिरेव विवक्षिता । विषयत्वञ्च विधेयतया बोध्यम् । तेन फले न व्यभिचारः तस्य उद्देश्य-तया कृतिविषयत्वात् । विधेयतया कृतिविषयत्वं चैत्यवन्दनादावप्यस्तीत्यतश्शिष्टेति । शिष्टत्वं च इष्टसाधनतांशे भ्रान्तिरहितत्वं नतु वेदप्रामाण्याभ्युपगन्तृत्वं तेन व्युत्क्रमेण कृते दर्शादौ न व्यभिचारः । शिष्टाचारविषयत्वं श्येनयागादावस्तीत्यतोऽविगीतेति । अविगीतत्वं च बलवदनिष्टाननुबन्धित्वम् । तेन श्येनयागादौ प्रवृत्त्युपयुक्तबलवदनिष्टाननुबन्धीष्टसाधनत्वरूपसाध्याभावेऽपि न व्यभिचार इत्युक्तं महादेवेन । अत्रेदमवसेयम् । परमतासिद्धस्यैव हेतोरनुमापकत्वम् । नचायं हेतुः परमते सिद्धः तथाहि मङ्गले समाप्तिसाधनतां सन्दिहानेन पुंसा समाप्तिसाधनताबुद्ध्या मङ्गले प्रवर्तमाने पुरुषे इष्टसाधनतांशे भ्रान्तिरहितत्वमपि सन्दिह्यत एव । किंच मङ्गलस्य समाप्तिसाधनत्वव्यवस्थापनार्थं सफलत्वं साध्यतां किं बलवदनिष्टाननुबन्धित्वस्यापि साध्यतावच्छेदककुक्षिप्रवेशेन । एवंच तदनुरोधेन बलवदनिष्टाननुबन्धित्वरूपमविगीतत्वमपि हेतुतावच्छेदककुक्षौ न निवेश्यम् । इष्टसाधनताज्ञानस्येव बलवदनिष्टाननुबन्धित्वज्ञानस्यापि प्रवृत्त्युपयोगित्वात्तस्य साध्यतावच्छेदककुक्षिनिवेशस्यावश्यकत्वे कृतिसाध्यताया अपि तन्निवेशापत्तिः । अथ मङ्गले सफलत्वसन्देहे बलवदनिष्टाननुबन्धित्वमपि सन्दिह्यते न कुर्यान्निष्फलं कर्मेत्यादिना निष्फलस्य कर्मणो बलवदनिष्टाननुबन्धित्वस्मरणात् तन्निरासाय बलवदनिष्टाननुबन्धित्वस्य साध्यप्रवेशः कृतिसाध्यतायास्तु सन्देहाभावान्न तस्यास्तत्र प्रवेश इति चेन्न । सफलत्वसन्देहाहितबलवदनिष्टाननुबन्धित्वसन्देहस्यापि सफलत्वसाधनेनैव निराससंभवेन तत्साधनवैयर्थ्यस्य दुर्वारत्वादिति दूषणत्रयं दुरुद्धरम् । अत्र दूषणान्तराण्यपि केचिदाहुः । बलवदनिष्टाननुबन्धित्वसन्देहनिरासाय साध्यतावच्छेदककोटौ तस्य प्रवेशे हेतुतावच्छेदकघटकत्वासंभवः निश्चितस्यैव निश्चायकत्वत् चैत्यवन्दनादौ व्यभिचारवारणाय शिष्टपदमिति यदुक्तम् तदयुक्तम् । चैत्यवन्दनादेर्निष्फलत्वेन त्वदुक्तरीत्या बलवदनिष्टानुबन्धितया बलवदनिष्टाननुबन्धित्वार्थकाविगीतत्वपदेनैव तद्वारणसंभवात् । एतेन शिष्टत्वं न वेदप्रामाण्याभ्युपगन्तृत्वं तेन व्युत्क्रमेण कृतदर्शादौ न व्यभिचार इति यदुक्तं तदपि प्रत्युक्तं व्युत्क्रमेण कृतदर्शादेर्निष्फलत्वेनाविगीतत्वविशेषणेनैव तद्वारणसंभवादिति । इदन्तु दूषणत्रयं न सङ्गच्छते । तथाहि अत्र शिष्टपदानुपादाने पश्वादिकृतानिष्फलकर्मणि व्यभिचारः न कुर्यादित्यादेरधिकारिविशेषपरत्वेन पश्वादिकृतनिष्फलकर्मणो बलवदनिष्टानुबन्धितया अविगीतत्वविशेषणेन तद्वारणसंभवात् । ननु वयं शिष्टपदस्य प्रयोजनमेव नास्तीति ब्रूमः किन्तु चैत्यवन्दनप्रयोजनकत्वं तस्येति यत् तदयुक्तमित्यत्रैवास्माकमाग्रह इति चेत्तदप्युपपद्यत एव । तथाहि हेतुतावच्छेदककोटिप्रविष्टबलवदनिष्टाननुबन्धित्वं न पापसामान्यजनकत्वाभावरूपं किन्तु न कुर्यादित्यादिपापविलक्षणपापजनकत्वाभावरूपं तथोक्तावपि श्येनयागादौ व्यभिचारवारणसंभवात् तस्य न कुर्यादितिश्रुतिबोधितपापाविलक्षण नाभिचरितवा इत्यादिश्रुतिबोधितपापजनकत्वात् । साध्यतावच्छेदककोटिप्रविष्टबलवदनिष्टाननुबन्धित्वन्तु पापसामान्यजनकत्वाभावरूपमेव । एवंच न कुर्यादित्यादिश्रुतिबोधितपापजनकत्वसन्देहतावच्छेदककोटिप्रविष्टबलवदनिष्टाननुबन्धित्वन्तु नित्यत्वमेव तस्य साध्यप्रवेशः । पापसामान्यजनकत्वाभावघटितसाध्याभाववति श्येनयागादौ व्यभिचारवारणायाविगीतपदमपि सार्थकम् । न कुर्यादित्यादिश्रुतिबोधितपापाविलक्षणपापजनकत्वाभावरूपाविगीतत्वघटितहेतुमति चैत्यवन्दनादौ व्यभिचारवारणाय इष्टसाधनतांशे भ्रान्तिराहितार्थकं शिष्टपदमपि देयमेव । शिष्टपदस्य वेदप्रामाण्याभ्युपगन्तृपरत्वे व्युत्क्रमेण कृते दर्शादौ व्यभिचारोऽपि सङ्गच्छते तस्य तद्विलक्षणपापाजनकत्वात् मङ्गले न कुर्यादित्यादिश्रुतिबोधितपापजनकत्वस्यैव सन्देहः नतु तद्विलक्षणपापजनकत्वस्येति तदभावघटितस्य हेतोरनिश्चितत्वं स्यादेतत् । ननु हेतुतावच्छेदकप्रविष्टबलवदनिष्टाननुबन्धित्वमन्यथा परिष्कृत्य चैत्यवन्दनादौ व्यभिचारं सम्पाद्य तद्वारणाय शिष्टपदप्रक्षेपापेक्षया यथाश्रुतबलवदनिष्टाननुबन्धित्वनिर्वक्तैव ज्यायसी प्रक्षाळना-

द्वीति न्यायादिति चेन्न यथाश्रुतबलवदनिष्टाननुबन्धित्वस्य सन्दिग्धतया हेतुतावच्छेदककोटिप्रवेशासंभवेन निरुक्तपरिष्कारस्यावश्यकत्वात् । अथैवमपि न कुर्यादित्यादिश्रुतिबोधितपापविलक्षणपापाजनकेष्टसाधनतांशे-भ्रान्तिरहितेश्वरीयकृतिविषये अस्मदादिजलताडने व्यभिचार इति चेन्न आचारविषयत्वादित्यत्र विधेयता-ख्यविषयताविवक्षणात् ईश्वरीयप्रयत्नस्य विधेयताख्यविषयतानङ्गीकारात् । अथवा आचारपदं प्रवृत्तिपरं ईश्व-रप्रयत्ने च प्रवृत्तित्वं नाङ्गीक्रियते ईश्वरो जलताडने प्रवृत्त इति व्यवहाराभावादिति । तस्मादस्मदुक्तदूषणद्वय-मेव दुष्परिहरं महादेवस्य इति मङ्गलस्य कर्तव्यत्वे अनुमानमेव प्रमाणं ननु शिष्टाचारानुमितो वेदः इदानी-मानुपूर्वीविशेषानिर्णयाभावेन तस्याबोधकत्वादिति महादेवः । अत्रेदं चिन्तयामः चेष्टादिनाप्यर्थबोधात् त-स्यातिरिक्तप्रमाणत्वमाशङ्क्य चेष्टादिना शब्दोऽनुमीयते तादृशशब्दज्ञानाच्च शाब्दबोध इति ग्रन्थकृतामुक्ति-रेव विरुध्यते तत्राप्यानुपूर्वीविशेषनिर्णयाभावेन चेष्टाद्यनुमितशब्दस्यापि अबोधकत्वात् । यदिच तत्र य-थाकथञ्चिदानुपूर्वी कल्प्यते सा तु वक्तुस्तात्पर्यविषयीभूता यदा वा तत्र न विवाद इति मन्यते तदा प्रकृ-तेऽपि मङ्गलस्य कर्तव्यताबोधकत्वेन कस्मिंश्चिद्वेदे सिद्धे याकाचिदानुपूर्वी कल्प्यतां सास्तु वास्तवकी मा वा नास्माकमाग्रहः उभयथापि शाब्दधीनिर्वाहादिति मयापि वक्तुं शक्यत एवेति ॥

**पुटम्** (५८) सादृश्यं षड्भावानन्तर्भूतं सामान्येतरवृत्तित्वे सति सामान्यवृत्तित्वात् व्यतिरेकित्वे सतीति विशेषणान्न प्रमेयत्वादौ व्यभिचार इति महादेवः । अत्रेदं चिन्तनीयं सामान्यत्वस्यापि सामान्येतरघटादि-निरूपितकालिकसंबन्धावच्छिन्नवृत्तित्वात्तत्र व्यभिचारवारणाय समवायसंबन्धावच्छिन्नवृत्तित्वस्य वक्तव्यत-या प्रमेयत्वे व्यभिचारप्रसक्तिरेव नास्तीति । नच समवायसंबन्धावच्छिन्नवृत्तित्वविवक्षणे स्वरूपासिद्धिरेव सादृश्यस्य समवायेनावृत्तित्वात् स्वरूपसंबन्धेनैव वृत्तित्वादिति वाच्यम् परमते सादृश्यस्यापि समवायाङ्गी-कारात् तैस्सादृश्यानुयोगिनि सादृश्यसमवायिकारणत्वाङ्गीकारात् । नचैवं गुणादेरपि सादृश्यसमवायिकारणत्व-स्य वाच्यतया समवायिकारणं द्रव्यमिति लक्षणस्यातिव्याप्त्यापत्तिरिति वाच्यं गुणसमवायिकारणत्वस्य द्र-व्यलक्षणत्वाभ्युपगमात् तथाच प्रमेयत्वे व्यभिचारवारणाय व्यतिरेकित्वविशेषणं व्यर्थमेव । नच सामान्येत-रयावन्निरूपितवृत्तित्वं वाच्यम् । कालिकसंबन्धावच्छिन्नवृत्तितायास्तथात्वान्न दोष इति वाच्यं यावन्निरूपिता-या एकस्या अपि वृत्तिताया अप्रसिद्धेः । नच सामान्येतरो यः तन्निरूपिता या वृत्तिता तावत्कूटाश्रयत्वं विवक्ष्यते सामान्यत्वन्तु न तथा आकाशादौ तस्य केनापि संबन्धेनावृत्तेः परम्परासंबन्धस्य वृत्तिनियामकत्वा भावादिति वाच्यं सादृश्यस्यानेकविधतया कस्मिन्नपि सादृश्ये तावत्कूटाप्रसिद्धेः । नच सामान्येतरे याव-न्तः प्रत्येकं तत्तन्निरूपितवृत्तितावच्छेदकधर्मवत्त्वं विवक्षितमिति वाच्यं तादृशप्रमेयत्वमादाय सामान्यत्वे व्यभिचारस्य दुर्वारत्वात् । नच तादृशपदार्थविभाजकोपाधिमत्त्वं तथेति वाच्यं सादृश्यत्वे पदार्थविभाज-कोपाधित्वस्य विवादग्रस्तत्वात् । ननु सादृश्यमभावादिवत् स्वरूपसंबन्धेन वर्तते । एवञ्च प्रमेयत्वस्य तत्संब-न्धावच्छिन्नप्रतियोगितावच्छेदकत्वादिति वाच्यम् तत्तद्व्यत्वमादाय तद्दोषतादवस्थ्यात् । नच स्वरूपसंबन्धा-वच्छिन्नप्रतियोगितानवच्छेदकरूपानवच्छिन्नत्वमेव तदर्थः तथाच इत्यभिप्रायेण इयमाशङ्का । तथाच सा-मान्येतरनिरूपितस्वरूपसंबन्धावच्छिन्नवृत्तित्वमेव निवेश्यमिति प्रमेयत्वे व्यभिचारवारणाय व्यतिरेकित्वविशेष-णं सार्थकमिति चेत् किमिदं व्यतिरेकित्वम् न तावदभावप्रतियोगित्वं प्रमेयत्वस्यापि समवायसंबन्धावच्छि-न्नाभावप्रतियोगित्वात् । नच स्वरूपसंबन्धावच्छिन्नत्वेन प्रतियोगिता विशेषणीयेति वाच्यं प्रमेयत्वस्यापि तादृशवैशिष्ट्यव्यासज्यवृत्तिधर्मावच्छिन्नाभावप्रतियोगित्वात् नच स्वरूपसंबन्धावच्छिन्नप्रतियोगितावच्छेदकरू पावच्छिन्नत्वं तदर्थः एवञ्च प्रमेयत्वत्वस्य तत्संबन्धावच्छिन्नप्रतियोगितानवच्छेदकत्वादिति वाच्यम् । तत्तद्व्यक्तित्वमादाय तद्दोषतादवस्थ्यात् । नच स्वरूपसंबन्धावच्छिन्नप्रतियोगितानवच्छेदकरूपा-नवच्छिन्नत्वमेव तदर्थः । तथाच प्रमेयत्वस्य तादृशप्रमेयत्वत्वानवच्छिन्नत्वान्न दोष इति वाच्यं सादृश्यस्यापि तादृशप्रमेयत्वावच्छिन्नतया स्वरूपासिद्ध्यापत्तेः । अथ सादृश्यं न षड्भावान्तर्भूतं सामान्ये-तरनिरूपितस्वरूपसंबन्धावच्छिन्नवृत्तितावच्छेदकवत्वे सति सामान्यनिरूपिततादृशवृत्तितावच्छेदकत्वे सति स्वरूपसंबन्धावच्छिन्नप्रतियोगितावच्छेदकत्वादित्यनुमाने तात्पर्यं प्रमेयत्वत्वमादाय प्रमेयत्वे व्यभिचारवा-

रणाय विशेष्यमिति चेन्न । स्वरूपासिद्ध्यापत्तेः तत्तन्निष्ठसादृश्यव्यक्तीनां परस्पराधिकरणनिष्ठात्यन्ताभावप्रतियोगित्वे सादृश्यत्वरूपसामान्यधर्मावच्छिन्नप्रतियोगिताकाभावस्यासिद्धया सादृश्यत्वे स्वरूपसंबन्धावच्छिन्नप्रतियोगितावच्छेदकत्वासत्त्वात् सादृश्यं स्वरूपसंबन्धेन न वर्तते किन्तु समवायेनेत्यङ्गीकारेण स्वरूपासिद्धिपरिहारे तु पूर्वोक्तरीत्या प्रमेयत्वे व्यभिचाराप्रसक्त्या व्यतिरेकित्वविशेषणं व्यर्थमित्यादि ॥

पुटम् (४२) दुःखवदवृत्त्यात्मानात्मवृत्तिभिन्नद्वित्वासमानाधिकरणत्वरूपमेकत्वं भासत इति वक्तुं न शक्यते ईश्वरे ज्ञानद्वयाङ्गीकारेऽपीदृशैकत्वस्य भानसंभवादित्युक्तं महादेवेन । इदं तु बोध्यम् । स्वसजातीयनिष्ठभेदप्रतियोगितानवच्छेदकतद्व्यक्तित्वस्यापि निवेशने ईश्वरे ज्ञानद्वयाङ्गीकारे प्रत्येकनिष्ठतद्व्यक्तित्वस्य स्वसजातीयज्ञानान्तरनिष्ठभेदप्रतियोगितावच्छेदकत्वेनादोष इति । साजात्यं च स्वसमवायिसमवेतत्वस्ववृत्तिगुणविभाजकोपाधिमत्त्वोभयरूपेण । स्वसमवायिसमवेतत्वानिवेशे स्ववृत्तिगुणविभाजकोपाधिमदस्मदादीयज्ञाननिष्ठभेदप्रतियोगितावच्छेदकत्वात् ईश्वरीयज्ञानगततद्व्यक्तित्वस्य बाधः स्यात् तन्मात्रनिवेशे स्वसमवायीश्वरसमवेतकृत्यादिनिष्ठभेदप्रतियोगितावच्छेदकत्वात्तद्दोषः अत उभयमुपात्तं स्वाधिकरणकालवृत्तिज्ञानान्तरनिष्ठभेदप्रतियोगितावच्छेदकत्वात् स्वसमवायीति । विषयतायाः स्वसमवायिकारणवृत्तिज्ञानान्तरनिष्ठभेदप्रतियोगितावच्छेदकत्वात् तत्समवेतत्वे सतीति । स्ववृत्तित्वं गुणविभाजकोपाधिमत्त्वं च समवायेन । तेन विषयितया स्ववृत्तिकृतिमन्निष्ठभेदप्रतियोगितावच्छेदकत्वेऽपि विषयितया स्ववृत्तिज्ञानत्ववत् कृत्यादिनिष्ठभेदप्रतियोगितावच्छेदकत्वेऽपि न दोष इति । वस्तुतस्तु स्वाधिकरणावृत्तिस्वाभिन्नज्ञानत्वमेकत्वमित्युक्तं महादेवेन । तदर्थश्च स्वाधिकरणवृत्तिस्वाभिन्नज्ञानकभिन्नत्वं । अन्यथा ईश्वरे ज्ञानद्वयाङ्गीकारेऽपि स्वाधिकरणावृत्तियत्किञ्चिज्जीवज्ञानकत्वात्तद्दोषानुद्धारात् । नच ईश्वरद्वयाङ्गीकारेऽपि प्रत्येकतज्ज्ञाने ईदृशैकत्वसंभवादिति वाच्यं स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकस्वसजातीयभिन्नत्वेन विशेषणात् ईश्वरद्वयाङ्गीकारे च एकस्यापि ज्ञानस्य तथात्वासंभवात् । साजात्यं च स्वसमानाधिकरणदुःखत्वभिन्नत्वान्यतरसमवेतत्वरूपेण । स्वसामानाधिकरण्यमन्यतरविशेषणं । अत्र दुःखवत्त्वानुपादाने स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकस्वसमानाधिकरणवद्दुःखवद्भिन्नत्ववत्समवेताप्रसिद्धयापत्तिः दुःखवद्भिन्नत्वानुपादाने ईश्वरद्वयाङ्गीकारेऽपि स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकस्वसमानाधिकरणदुःखवत्समवेतकभिन्नत्वसंभवादुद्देश्यासिद्धया अन्यतरनिवेशः । अत्रेदं चिन्तनीयं एतादृशैकत्ववत्कृतिजन्यत्वस्यानुमितिविषयत्वे पक्षतावच्छेदकसामानाधिकरण्येनानुमितेरुद्देश्यत्वे घटादावंशतस्सिद्धसाधनमिति निरुक्तशङ्काया असङ्गतेः एतादृशैकत्ववत्कृतिजन्यत्वस्य घटादावनिश्चितत्वात् ॥

पुटम् ( १०४ ) सङ्करश्च परस्परात्यन्ताभावसमानाधिकरणयोर्धर्मयोरेकत्र समावेश इत्युक्तं महादेवेन । तथाच स्वसामानाधिकरण्यस्वाभावसामानाधिकरण्यस्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वैतत्त्रितयसंबन्धेन जातिविशिष्टत्वं साङ्कर्यमिति फलितम् । ननु घटत्वस्य जलत्वेन साङ्कर्यं स्यात् तदधिकरणे कालिकसंबन्धेन वर्तमानत्वात् एवं घटत्वस्य पृथिवीत्वेन साङ्कर्यं स्यात् तदभावाधिकरणे कालिकसंबन्धेन सत्त्वात् एवं पृथिवीत्वस्य घटत्वेन साङ्कर्यं स्यात् घटत्वाधिकरणनिष्ठाभावीयसंयोगसंबन्धावच्छिन्नप्रतियोगितायास्सत्त्वात् । नच वृत्तिताद्वयं प्रतियोगित्वं च समवायेन विवक्षितमिति वाच्यं इन्द्रियत्वादेर्जातित्वानङ्गीकर्तृनये समवायसंबन्धेनावृत्तित्वात् तेजस्त्वादिना साङ्कर्यानुपपत्तेः स्वरूपसंबन्धेन विवक्षणे तु इन्द्रियत्वस्य जातित्ववादिनं प्रति तेजस्त्वादिना साङ्कर्योद्भावनानुमापके तन्मते तस्य स्वरूपसंबन्धेन वृत्तित्वानङ्गीकारात् । यत्तु स्वसामानाधिकरण्यं स्वाधिकरणासमवेतं यत्समवेतं तद्भिन्नत्वं एवं स्वाभावसामानाधिकरण्यमपि स्वाभावाधिकरणासमवेतं यत्समवेतं तत्तद्भिन्नत्वमिति तन्न अभावत्वाकाशत्वकालत्वादीनामपि घटत्वादिना साङ्कर्यादेव जातित्वाभावे असंबन्धैकवृत्तित्वतुल्यवृत्तित्वादीनां पृथक् जातिबाधकत्वकीर्तनासङ्गत्यापत्तेरिति चेन्न स्वाधिकरणनिरूपितसमवायसंबन्धावच्छिन्नवृत्तित्वस्वरूपसंबन्धावच्छिन्नवृत्तित्वान्यतरवत्त्व-स्वाभावाधिकरणनिरूपितसमवायसंबन्धावच्छिन्नवृत्तित्वस्वरूपसंबन्धावच्छिन्नवृत्तित्वान्यतरवत्त्वस्वसमानाधिकरणाभावीयसमवायसंबन्धावच्छिन्नप्रतियोगित्वस्वरूपसंबन्धावच्छिन्नप्रतियोगिकत्वोभयवत्त्वैतात्त्रितयसंबन्धेन जातिविशिष्टत्वस्य साङ्कर्यपदार्थत्वात् ॥

**पुटम् ( ९८ ) अनेकेति** ॥ अनेकत्वमेकभिन्नत्वमित्युक्तं महादेवेन । अत्रैकभिन्नत्वं एकप्रतियोगिकभेदवत्त्वं एकत्वावच्छिन्नप्रतियोगिताकभेदवत्त्वं वा । नाद्यः जलपरमाणुरूपादावपि द्वित्वाद्यवच्छिन्नैकनिष्ठप्रतियोगिताकभेदसत्त्वात् अतिव्याप्त्यापत्तेः न द्वितीयः एकत्वावच्छिन्नप्रतियोगिताकभेदस्याप्रसिद्धत्वात् । न च स्वसमानाधिकरणैकत्वव्यक्त्यवच्छिन्नप्रतियोगिताकभेदवत्त्वं विवक्षितमिति वाच्यं रूपत्वादावव्याप्त्यापत्तेः स्वसमानाधिकरणैकत्वसङ्ख्याया अप्रसिद्धेः । नचापेक्षाबुद्धिविशेषविषयत्वरूपमेकत्वमिति वाच्यं अपेक्षाबुद्धिविशेषविषयत्वरूपानेकत्वस्यैव निवेशसंभवेन एकभिन्नत्वमनेकत्वमित्यस्यासाङ्गत्यापत्तेः तादृशानेकत्ववत्समवेतत्वस्य लक्षणत्वे जलपरमाणुगतरूपादावतिव्याप्त्यापत्तेर्दुर्वारत्वात् । यदि तादृशानेकत्वव्यापकाधिकरणतानिरूपकत्वनिवेशनान्नातिव्याप्तिरित्युच्यते तदासंभव इति तान्निवेशितमिति वाच्यम् । स्वसमानाधिकरणभेदप्रतियोगिविषयकस्वानाधिकरणाविषयकधीविषयत्वस्यैवानेकत्वस्य निवेशयितुं शक्यत्वादिति चेन्न स्वप्रतियोगिवृत्तित्वस्वसामानाधिकरण्योभयसंबन्धेन भेदविशिष्टधर्मवत्त्वरूपपारिभाषिकैकभिन्नत्वस्य विवक्षितत्वात् । नच जलपरमाणुगतरूपादौ अतिव्याप्तिः तादृशानेकत्वव्यापकाधिकरणताकत्वस्य विवक्षितत्वात् । केचित्तु नित्यत्वे सत्यनेकसमवेतत्वमित्यत्र अनेकञ्च तत्समवेतत्वं चानेकसमवेतत्वमिति व्युत्पत्त्या समवायसंबन्धावच्छिन्नानेकाधेयताकत्वमित्यर्थो लभ्यते । तच्च स्वसमानाधिकरणसमवायसंबन्धावच्छिन्नाधेयताभिन्नसमवायसंबन्धावच्छिन्नाधेयतावत्त्वम् । नचाधेयभेदेनैवाधेयताभेदाङ्गीकर्तृनये एतल्लक्षणं न संभवतीति वाच्यं स्वनिरूपकाधिकरणताभिन्नाधिकरणतानिरूपकाधेयताविशिष्टाधेयतावत्त्वस्य विवक्षितत्वान्न दोष इत्याहुः ॥

**पुटम् (१२१) नित्यद्रव्यवृत्तिरिति** स्वरूपकथनं नतु लक्षणप्रविष्टं प्रयोजनाभावादित्युक्तं महादेवेन । अत्रेदमवसेयं नित्यद्रव्यवृत्तित्वं चानित्यद्रव्यावृत्तित्वं अतस्सत्तादौ नातिव्याप्तिः । नचैवं सति नित्यद्रव्यसमवेतपरिमाणादावतिव्याप्तिरिति वाच्यं नित्यद्रव्येतरासमवेतपदार्थविभाजकोपाधिशून्यत्वस्य तदर्थत्वात् । नन्वेवमपि अभावादावतिव्याप्तमिति वाच्यं समवेतत्वस्यापि प्रवेशनीयत्वात् तस्मान्नित्यद्रव्यवृत्तिरिति स्थानकथनमिति असङ्गतमिति । अन्येतु परिष्कृतविशेषलक्षणस्य समवायादावतिव्याप्तिवारणाय पूर्वोक्तलक्षणप्रविष्टमेव नित्यद्रव्यवृत्तित्वं तच्चानित्यद्रव्यावृत्तित्वमतस्समवायस्य नित्यद्रव्यवृत्तित्वेऽपि नातिव्याप्तिः । वृत्तित्वं च कालिकविशेषणत्वदैशिकविशेषणत्वान्यतरसंबन्धेन । तस्मादेतस्यापि लक्षणप्रवेशावश्यकत्वात् न लक्षणप्रविष्टमित्यसङ्गतमित्याहुः ॥

**पुटम् (११९)**.स्वभिन्नलिङ्गजन्यस्वविशेष्यकस्वसमानजातीयभेदानुमित्यविषयत्वमिति विशेषणलक्षणं परिष्कृतं महादेवेन । अत्रेदं बोध्यम् । अविषयत्वमित्यत्र अविशेष्यत्वविशेषणेनैव विशेषवान् परमाणुर्विशेषभिन्नः पृथिवीत्वादित्यनुमानविषयतामादायासंभववारणसंभवे स्वविशेष्यकपदं व्यर्थम् । नच गगनवृत्तिरितरभिन्नः गगनानुयोगिकसमवायादित्यनुमितिविशेष्यत्वात् असम्भवापत्तिवारणाय स्वमात्रविशेष्यकपरं स्वविशेष्यकपदमावश्यकमिति वाच्यम् । गगनवृत्तिविशेषः परमाण्वादिवृत्तिविशेषभिन्नः गगनानुयोगिकसमवायादित्यनुमितिविशेष्यत्वादसंभववारणाय स्वविशेष्यकेत्यत्र स्वेतरवृत्तिधर्मानवच्छिन्नत्वेन विशेष्यताया विवक्षणीयतया अविशेष्यत्वमित्यत्रापि तथा विवक्षणेन स्वेतरशब्दादिवृत्तिगगनवृत्तित्वावच्छिन्नगगनवृत्तिरितरभिन्नो गगनानुयोगिकसमवायादित्यनुमितिविशेष्यतामादायासंभवाभावेन स्वविशेष्यकपदानावश्यकत्वात् । नच तथाप्येतद्विशेषः शब्दश्च तद्विशेषभिन्नः गगनानुयोगिकसमवायादित्यनुमितीयतादृशविशेष्यतामादायासंभववारणाय स्वमात्रविशेष्यकार्थकं तद्विशेषणमावश्यकमिति वाच्यम् । एतद्विशेषस्तद्विशेषभिन्नः गगनानुयोगिकसमवायादित्यनुमितिविशेष्यतामादायासंभववारणाय स्वसमानाधिकरणावृत्तित्वेन भेदस्य विशेषणीयतया एतद्विशेषस्तद्विशेषः शब्दश्च तद्विशेषभिन्नः गगनानुयोगिकसमवायादित्यनुमितिविधेयभेदस्य स्वसमानाधिकरणगगनत्वादिवृत्तित्वेन तदीयविशेष्यतामादायासंभवाभावेन तत्पदवैयर्थ्यस्य दुर्वारत्वात् । नच विशेषो घटाद्भिन्नः इत्यनुमितिविधेयभेदस्य स्वसमानाधिकरणपदार्थान्तरवृत्तितया तेनैव तादृशासंभववारणसंभवेन स्वसमानजातीयपदवैयर्थ्यापत्त्या पदार्थविभाजकोपाधिरूपेण स्वसमानजातीयत्वविवक्षणवैयर्थ्यापत्त्या च तद्विवक्षाया असंभवेन निरुक्तासंभवो दुर्वार एवेति वाच्यं स्वसमानाधिकरणमात्रावृत्तित्वेन लिङ्गविशेषणा-

त् । नच यत्राङ्कुरविशेषे कस्याप्यनुमितिर्न जाता तादृशाङ्कुरविशेषे अतिव्याप्तिरिति वाच्यं तादृशाङ्कुरविशेषे प्रमाणाभावात् । अनुमित्यविषयत्वमित्यनेन अनुमितिविषयतासमानाधिकरणपदार्थविभाजकोपाध्यवच्छिन्न-प्रतियोगिताकभेदवत्त्वविवक्षणाद्वा न दोष इति । एतेन तद्विशेषैतद्विशेषौ विशेषान्तरभिन्नौ तद्विशेषैतद्विशे-षान्यतरत्वात् इत्याकारकानुमितिविषयतामादायासंभव इत्यपि परास्तम् । तादृशानुमितीयस्वेतरवृत्तिधर्मानव-च्छिन्नविशेष्यतासमानाधिकरणपदार्थविभाजकोपाध्यवच्छिन्नप्रतियोगिताकभेदवत्त्वविरहेणासंभव इति स्वेतरवृ-त्तिधर्मावच्छिन्नविशेष्यतानिरूपकपरं स्वविशेष्यकपदमावश्यकमित्यपि परास्तम् । तद्विशेषो विशेषान्तरभिन्नः तद्विशेषैतद्विशेषान्यतरत्वात् इत्यनुमितिविषयतामादायासंभववारणाय स्वभिन्नेत्यनेन स्वाविषयकप्रमितिविष-यत्वाविवक्षाया आवश्यकत्वात् तत एव निरुक्तविषयतामादाय दोषवारणसंभवेन स्वविशेष्यकपदं व्यर्थमे-वेति मन्तव्यम् ॥

**पुटम्** (१७५) गुणवदवृत्तित्वं च समवायस्वरूपान्यतरसंबन्धेन । समवायेन गुणवदवृत्तित्वाभिधाने तादृशस्य द्रव्यत्वप्रकारकप्रमाविशेष्यत्वस्य द्रव्ये सत्त्वादतिव्याप्तिः । अथ तेनैव तद्वत्त्वं वाच्यं तदा सामा-न्यादवव्याप्तिरिति परास्तमिति दिनकरग्रन्थः । अत्रेदमवसेयं स्वरूपसंबन्धेन गुणवदवृत्तित्वस्य तद्वत्त्वस्यापि स्वरूपसंबन्धेनैव विवक्षणेनैव द्रव्यादावतिव्याप्तिः सामान्यादावव्याप्तिश्च वारणसंभवे समवायस्वरूपान्यतरसं-बन्धेनेति व्यर्थम् । गुणादौ च गुणत्वप्रकारकप्रमाविशेष्यत्वमादायैव लक्षणसमन्वयसंभवात् । नच गुणत्वादि-कमिति मूलविरोधापत्त्या तथा विवक्षितमिति वाच्यम् । तत्र गुणत्वपदस्य गुणत्वप्रकारकप्रमा विशेष्यत्वपरतया व्याख्यानसंभवात् । नचोत्पन्नविनष्टद्रव्याङ्गीकर्तृनये गुणवदवृत्तितद्व्यक्तित्वमादायाति-व्याप्तिवारणाय गुणवद्वृत्तिधर्मशून्यत्वस्य विवक्षणीयतया विशेष्यभेदेन विशेष्यत्वादीनां भेदात् गुणवदवृत्तिद्रव्यत्वप्रकारकप्रमाविशेष्यत्वादीनां उत्पन्नविनष्टद्रव्ये अभावात् पुनस्तद्दोषतादवस्थ्यमिति समवा-यस्वरूपान्यतरसंबन्धेन गुणवद्वृत्तित्वस्य तच्छून्यत्वस्य च विवक्षणमावश्यकमिति वाच्यम् । गुणत्वाभाव-सत्त्वादिकमादायासंभववारणाय गुणसमवायिकारणतावच्छेदकावच्छिन्नप्रतियोगिताकभेदसमानाधिकरणता-वच्छेदकावच्छिन्नप्रतियोगिताकाभाववत्त्वस्य विवक्षणीयतया द्रव्यत्वप्रकारकप्रमाविशेष्यतात्वमादायोत्पन्नवि-नष्टद्रव्येऽतिव्याप्तिवारणादन्यतरसंबन्धनिवेशवैयर्थ्यस्य दुष्परिहरत्वात् । गुणवद्भेदनिवेशस्तु न संभवति उत्प-न्नविनष्टद्रव्येऽतिव्याप्तेरिति ॥

**पुटम्** (२०६) तद्धर्मावच्छिन्ननिरूपितनियतपूर्ववृत्तित्वग्रहविशेष्यतावच्छेदकत्वे सति तद्धर्मावच्छि-न्नं प्रति स्वतन्त्रान्वयव्यतिरेकशून्यत्वं तद्धर्मावच्छिन्नं प्रत्यन्यथासिद्धत्वमिति प्रथममित्यर्थः । द्वितीयान्यथा-सिद्धदण्डरूपादिवारणाय सत्यन्तम् । कपालसंयोगो घटनियतपूर्ववर्तीत्यादिग्रहे कपालस्यापि तादृशविशेष्यताव-च्छेदकत्वात् तत्रातिव्याप्तिवारणाय विशेष्यमिति प्रत्यपादि महादेवेन । नच दण्डरूपान्यः घटनियतपूर्ववृत्तीति ग्रहविशेष्यतावच्छेदकत्वात् दण्डरूपस्य उक्तातिव्याप्तिर्दुर्वारैवेति वाच्यं तद्धर्मावच्छिन्ननिरूपितनियतपूर्व-वृत्तितावच्छेदकधर्मान्तरानवच्छिन्नविशेष्यतावच्छेदकत्वस्य विवक्षितत्वात् । पूर्ववृत्तित्वं च स्वावाच्छिन्नं ग्रा-ह्यम् । अत्रच्छेदकत्वं च तद्धर्मावच्छिन्नाभावप्रयोजकीभूताभावप्रतियोगितावच्छेदकत्वविशिष्टं ग्राह्यम् । तेन पूर्ववृत्तित्वस्य दण्डत्वावच्छिन्नपूर्ववृत्तित्वग्रहविशेष्यतावच्छेदकत्वेऽपि पूर्ववृत्तित्वेऽपि च स्वस्वव्याप्ते-तरयावत्कारणविशिष्टकार्याभावप्रयोजकीभूताभावप्रतियोगितानवच्छेदकत्वान्नातिप्रसङ्गः कारणतावच्छेदकस्यै-तल्लक्षणेऽप्यक्षततया स्वेनैव परिगणितत्वात् दण्डत्वादेरलक्ष्यतया तत्रातिव्याप्तिवारणाय स्वनिष्ठावच्छेदकता-निवेशः । नन्वेवमपि कपालसंयोगत्वे अतिव्याप्तिः कपालसंयोगो घटनियतपूर्ववृत्तीत्याकारकपू-र्ववृत्तित्वग्रहविशेष्यतावच्छेदकताया नियतपूर्ववृत्तितावच्छेदककपालत्वावच्छिन्नत्वादिति चेन्न नियतपूर्व-वृत्तितावच्छेदकधर्मे स्वसमानाधिकरणत्वस्य विशेषणत्वात् कपालत्वस्य कपालसंयोगत्वसामानाधि-करण्याभावेन उक्तदोषाभावात् । नन्वेवं संयुक्तसमवेतसमवायत्वेऽव्याप्तिः संयुक्तसमवेतसमवायत्वनिष्ठायाः पूर्ववृत्तित्वग्रहविशेष्यतावच्छेदकतायाः द्रव्यसमवेतसमवेतविषयकचाक्षुषत्वावच्छिन्ननिरूपितस्वाश्रयसमवेत-त्वसंबन्धावच्छिन्ननियतपूर्ववृत्तितावच्छेदकस्वसमानाधिकरणसंयुक्तसमवायत्वावच्छिन्नत्वात् । नच नियतपू-

र्ववृत्तितावच्छेदकतावच्छेदकसंबन्धावाच्छिन्नावच्छेदकत्वानिरूपकत्वमेव तादृशधर्मान्तरानवच्छिन्नत्वं उ-क्तस्थले संयुक्तसमवायत्वनिष्ठायाः स्वाश्रयप्रतियोगिवृत्तित्वसंबन्धावच्छिन्नाया विशेष्यतावच्छेदकतावच्छेदक-ताया नियतपूर्ववृत्तित्वग्रहविशेष्यतावच्छेदकतावच्छेदकत्वरूपसंबन्धावाच्छिन्नत्वाभावान्न दोष इति वाच्यम्। तथा सति दण्डत्वनिष्ठाया दण्डरूपनिष्ठविशेष्यतानिरूपितस्वाश्रयसमवेतत्वसंबन्धावाच्छिन्नावच्छेदकताया नि-यतपूर्ववृत्तितावच्छेदकतावच्छेदकसमवायसंबन्धावच्छिन्नत्वाभावेनातिव्याप्तितादवस्थ्यादिति चेन्न । स्वाश्रय-घटितसंबन्धावच्छिन्ननियतपूर्ववृत्तितावच्छेदकत्वस्य विवक्षितत्वात् दण्डनिष्ठानियतपूर्ववृत्तिताया दण्डरूपाश्र-याघटितसमवायसंबन्धावाच्छिन्नत्वान्न दोषः। संयुक्तसमवायनिष्ठानियतपूर्ववृत्तितायास्तु संयुक्तसमवेतसमवाय-त्वाश्रयसमवायघटितसंबन्धावच्छिन्नत्वान्नाव्याप्तिरिति । नन्वत्र स्वतन्त्रान्वयव्यतिरेकशून्यत्वं न तावत्कारणा-घटितसंबन्धावच्छिन्नान्वयव्यतिरेकशून्यत्वं कारणत्वप्रवेशादात्माश्रयापत्तेः । नापि नियतपूर्ववृत्त्यघटितत्व-मेव स्वातन्त्र्यमिति युक्तं । कपालरूपस्यापि घटरूपं प्रत्यन्यथासिद्ध्यापत्तेः कपालरूपान्वयव्यतिरेकयोरुक्तनि-यतपूर्ववृत्तिकपालघटितसंबन्धावच्छिन्नत्वाद्रूपवान् रूपपूर्ववृत्तिरिति ग्रहविशेष्यतावच्छेदकत्वाच्च रूपवतः क-पालस्यापि रूपपूर्ववृत्तित्वाक्षतेः । नच तद्धर्मावच्छिन्ननिरूपितनियतपूर्ववृत्तितावच्छेदकधर्मान्तराश्रयाघटित-संबन्धावाच्छिन्नत्वमेव स्वातन्त्र्यम्। कपालत्वं च न रूपत्वावच्छिन्ननिरूपितनियतपूर्ववृत्तितावच्छेदकं न्यूनवृत्ति-त्वादिति नोपदर्शितातिव्याप्तिरिति वाच्यम्। तथापि कपालत्वादिसाधारणस्य द्रव्यसमवायित्वस्य रूपत्वाव-च्छिन्ननिरूपितनियतपूर्ववृत्तितावच्छेदकत्वसंभवात् । नच तदोक्तनियतपूर्ववृत्तितावच्छेदकाघटितनियतपूर्व-वृत्तितावच्छेदकाश्रयाघटितसंबन्धावच्छिन्नत्वमेव विवक्षितम् । द्रव्यसमवायित्वस्य तु तादृशद्रव्यत्वघटितत्वात् न दोष इति वाच्यम् । तथापि द्रव्यत्वस्यापि तादृशनियतपूर्ववृत्तितावच्छेदकत्वेन तदाश्रयघटितसंबन्धावच्छि न्नत्वादिति चेन्न । स्वजन्येतरयावन्नियतपूर्ववृत्तिसमवधानकाले यत्र यत्सत्त्वे अवश्यं यत्सत्त्वं यदभावे अव-श्यं यदभावः तद्भिन्नत्वं तत्र स्वतन्त्रान्वयव्यतिरेकशून्यत्वम् । कपालरूपे तु स्वजन्यप्रत्यक्षे यावद्घटादिरूप-नियतपूर्ववृत्तितासत्त्वे स्वाश्रयसमवेतत्वसंबन्धेन रूपसत्त्वे समवायेन रूपसत्त्वात् तदभावे तदभावाच्च न त-द्भिन्नत्वरूपस्वतन्त्रान्वयव्यतिरेकशून्यत्वमिति । अन्यथासिद्धिशून्यस्य नियता पूर्ववृत्तिता । कारणत्वं भवेत्तस्य त्रैविध्यं परिकीर्तितमिति मूलम् । अत्र कार्यनियतत्वं कार्यपदं च कार्यतावच्छेदकपरं । तथाच कार्यताव-च्छेदकताघटकसंबन्धावच्छिन्नकार्यतावच्छेदकनिष्ठव्याप्यतानिरूपितस्वनिरूपकाधिकरणनिरूपितकार्यतावच्छे-दकसंबन्धावच्छिन्नवृत्तित्वसंबन्धावच्छि व्यापकत्वं । तथाच तादृशं यत्कार्याव्यवहितप्राक्क्षणावच्छिन्नकार-णतावच्छेदकसंबन्धावच्छिन्नकारणतावच्छेदकावच्छिन्नवृत्तित्वं तद्वत्त्वं कारणत्वमिति पर्यवसितम् । अत्र व्या-प्यतायाः कार्यतावच्छेदकताघटकसंबन्धावच्छिन्नत्वानिवेशे तद्घटानुयोगिकत्वविशिष्टसमवायावच्छिन्नघटत्व-निष्ठव्याप्यतानिरूपितनिरुक्तसंबन्धावच्छिन्नव्यापकतायाः रासभनिष्ठपूर्ववृत्तितायामपि सत्त्वादतिव्याप्तिः स्यात् अतस्तन्निवेशः । कार्यतावच्छेदकनिष्ठत्वनिवेशाच्च तद्घटरूपादिनिष्ठसमवायसंबन्धावच्छिन्नव्याप्यतानिरूपि-तव्यापकताकपूर्ववृत्तितामादाय नातिव्याप्तिः। घटत्वनिष्ठसमवायसंबन्धावच्छिन्नव्याप्यतानिरूपितकालिकसं-बन्धावच्छिन्नव्यापकताश्रयपूर्ववृत्तित्ववद्रासभादावतिव्याप्तिवारणाय व्यापकतायां निरुक्तपरम्परासंबन्धावच्छि-न्नत्वनिवेशः । संबन्धघटकवृत्तितायां कार्यतावच्छेदकसंबन्धावच्छिन्नत्वनिवेशात् न रासभनिष्ठपूर्ववृत्तितानि-रूपकाधिकरणनिरूपितकालिकसंबन्धावच्छिन्नवृत्तितामादाय रासभेऽतिव्याप्तिः । नचैवं वृत्तिभेदेन वृत्तिताया भेदात् तादृशपूर्ववृत्तिताया वनस्थदण्डादौ अभावादव्याप्तिरिति वाच्यं तस्यास्स्वावच्छेदककारणतावच्छे-दकधर्मवत्त्वसंबन्धेनैव लक्षणत्वोपगमादिति । यत्तु कार्यनियतत्वे सति कार्यपूर्ववृत्तित्वं कारणत्वमिति तन्न रससामान्यं प्रति रूपसामान्यस्य कारणतापत्तेः तस्य रसव्यापकत्वात् रसाव्यवहितपूर्वकाले वृत्तित्वाच्च । नच कार्यतावच्छेदकाश्रययावद्व्यक्तिपूर्ववृत्तित्वं विवक्षितमिति न दोष इति वाच्यं यावद्व्यक्तिपूर्ववृत्तित्वस्याप्रसि-द्धत्वात् । नच दोषोऽयं भवन्मतेऽपि तुल्यः रूपनिष्ठाया रसाधिकरणवृत्तिताया रसान्तराव्यवहितप्राक्कालाव-च्छिन्नत्वादिति वाच्यम् । पूर्ववृत्तितापदेन स्वनिरूपकाधिकरणवृत्तिकार्याव्यवहितप्राक्कालावच्छिन्नवृत्तिताया विवक्षितत्वादुक्तदोषाभावात् । नच ममापि कार्यपूर्ववृत्तित्वपदेन स्वनिरूपकाधिकरणवृत्तिकार्याव्यवहितप्रा-

क्षणावच्छिन्नवृत्तित्वमेव विवक्षितमिति न दोष इति वाच्यम् यत्र पाकस्थले रसप्रतिबन्धकवशात् रूपोत्पादकाले रसो नोत्पन्नस्तदुत्तरक्षणे चोत्पन्नः तत्र निरुक्तपूर्ववृत्तितायाअपि सत्त्वात् । नच यावन्तः कार्यतावच्छेदकाश्रयाः प्रत्येकं तत्तद्व्यक्त्यव्यवहितप्राक्क्षणावच्छेदेन तत्तद्व्यक्त्यधिकरणवृत्तित्वं विवक्षितमिति वाच्यं नियतपदवैयर्थ्यापत्तेः रासभादौ तादृशपूर्ववृत्तित्वाभावेनैवातिव्याप्त्यप्रसक्तेः । नच नियतपदसमभिव्याहारादेव तादृशार्थलाभ इति वाच्यम् । तथापि नियतपदस्य सामानाधिकरण्येन व्यापकत्ववि शिष्टे लक्षणाकल्पनाप्रयुक्तगौरवस्य दुरुद्धरत्वात् पूर्ववृत्तितापदस्य सामानाधिकरण्येन व्यापकत्व विशिष्टपूर्ववृत्तितापरत्वेऽपि लक्षणाकल्पनातादवस्थ्यात् । अस्मिन्मते च नियतपदस्य व्यापकत्वावच्छिन्नार्थकतया तस्य चाभेदसंबन्धेन पूर्ववृत्तितायामन्वयेन तद्दोषाभावात् । केचित्तु कार्यतावच्छेदकताघटकसंबन्धावच्छिन्नकार्यपूर्ववृत्तितावच्छेदकनिष्ठव्याप्यतानिरूपितप्रतियोगितासंबन्धावच्छिन्नव्यापकताककार्यतावच्छेदकसंबन्धावच्छिन्नकार्याधिकरणतावन्निरूपितकार्याव्यवहितप्राक्क्षणावच्छिन्नकारणतावच्छेदकसंबन्धावच्छिन्नवृत्तिकत्वं कारणत्वं इत्यप्यूचुः । नव्यास्तु कारणत्वस्यानन्यथासिद्धनियतपूर्ववृत्तितावच्छेदकधर्मवत्त्वरूपत्वे प्रतिबन्धकाभावस्य तत्तद्व्यक्तित्वेन हेतुत्वापत्तेः यत्र न कारणत्वव्यवहारः तत्तद्भेदकूटवत्त्वस्य सर्वज्ञेनैव ज्ञेयत्वात् तत्तद्व्यक्तिभेदकूटवत्त्वसंबन्धेन कार्यविशिष्टो यो धर्मस्तद्वत्त्वं तदित्यपि न युक्तम् । तस्य संबन्धत्वसन्देहात् तस्मात्कारणत्वं पदार्थान्तरमित्याहुः । अत्र प्रतिबन्धकाभावस्य तत्तद्व्यक्तित्वेनापि हेतुत्वापत्तिरित्यर्थः । यथा चित्ररूपानङ्गीकर्तृनये नानारूपवत्कपालारब्धघटे श्वेतादिरूपापत्तिवारणाय समवायेन श्वेतरूपं प्रति स्वाश्रयसमवेतत्वसंबन्धेन श्वेतातिरिक्तरूपाभावस्य कारणत्वं कल्प्यते अत्र शुक्लेतररूपाभावत्वेन कारणत्वमिति नीलपीतरूपाभावानामपि कारणत्वापत्तिः शुक्लेतररूपाभावत्वस्येव तत्तद्व्यक्तित्वानामपि नियतपूर्ववृत्तितावच्छेदकत्वाविशेषात् । न चावश्यकॢप्तलघुनियतपूर्ववृत्तिभिन्नत्वरूपान्यथासिद्धिनिरूपकत्वात् तत्तद्व्यक्तित्वानां कारणतावच्छेदकत्वासंभवः नानाकारणतावच्छेदककल्पने गौरवादिति वाच्यं गौरवस्यात्रापि दुरुपपादत्वात् । तथाहि शुक्लेतररूपाभावत्वस्य पूर्ववृत्तितावच्छेदकत्वे लाघवं तत्तद्व्यक्तित्वानां तदवच्छेदकत्वे गौरवादिति हि वक्तव्यं तच्च न संभवति । तथाहि शुक्लेतररूपाभावो नियतपूर्ववृत्तिरिति प्रतीतिबलेन शुक्लेतररूपाभावत्वस्येव तत्तद्व्यक्तिनियतपूर्ववृत्तिरिति प्रतीतिबलेन तत्तद्व्यक्तित्वानामपि नियतपूर्ववृत्तितावच्छेदकतायाः कॢप्ततया कल्पनाभावेन लाघवगौरवविचार एव न संभवतीति । अन्यथासिद्ध्यनवच्छेदकत्वमपि तस्य न संभवतीत्येव कारणतायाः अतिरिक्तत्वे तु नानाकारणत्वकल्पने तु गौरवं स्फुटमेवेति । तदुक्तं कारणत्वमतिरिक्तमिति स्यात् ग्रन्थकारवचसामकुसृष्टेः । अन्यथा तु गुरुता कुत एव स्याद्धि कारणतयोरुभयोर्वेति । अस्यार्थः कारणत्वमिति अतिरिक्तमेव अन्यथा ग्रन्थकारवचसामकुसृष्ट्यापत्तिः क्वचित्कारणताद्वयकल्पने गौरवमित्यस्य उपपादयितुं अशक्यत्वात् यथा शुक्लेतररूपाभावत्वेन कारणत्वे लाघवं नीलपीताद्यभावत्वादिना कारणत्वे गौरवमिति ग्रन्थकारोक्तिर्न सङ्गच्छते नियतपूर्ववृत्तित्वरूपकारणत्वस्य सिद्धत्वादिति । ननु यत्र यत्र न कारणतावच्छेदकत्वव्यवहारः तत्र तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदकूटवद्धर्मवत्त्वमेव कारणत्वमित्युच्यते तथाच तत्तद्व्यक्तित्वानां कारणतावच्छेदकत्वापत्तिरित्यत आह ॥ **यत्रेति न कारणत्वव्यवहारः** न कारणतावच्छेदकत्वव्यवहारः ॥ **सर्वज्ञेनैव ज्ञेयमिति** ॥ विशिष्टबुद्धौ विशेषणबुद्धेर्हेतुतया तादृशभेदकूटज्ञानं विना तत्तद्घटितकारणत्वस्याप्यज्ञेयत्वादिति भावः । ननु संसर्गज्ञानस्य तत्संसर्गकबुद्धावहेतुतया तादृशभेदकूटवत्त्वसंसर्गककारणताग्रहः संभवत्येवेति न दुर्ज्ञेयत्वमित्यत आह ॥ **तत्तद्भेदकूटवत्त्वेति** ॥ कार्यनिरूपितकारणतावच्छेदकत्वव्यवहारो यत्र नास्ति तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदकूटवत्त्वसंबन्धेन कार्यविशिष्टधर्मवत्त्वं कारणत्वं वेत्यर्थः ॥ **संबन्धत्वसन्देहादिति** ॥ तेन रूपेण संसर्गतायां प्रमाणाभावादिति भावः ॥

**पुटम्** (१७८) तथाच सामान्यनिरूपिताधिकरणता न सामान्यादौ एकार्थसमवायस्याधिकरणत्वानियामकत्वादिति ग्रन्थः । अत्रेदं चिन्तनीयं सामान्यनिरूपिताधिकरणतायाः प्रवेशे कालिकसंबन्धावच्छिन्नसामान्यनिरूपिताधिकरणताया एव ध्वंसे सत्त्वादतिव्याप्तिवारणाय समवायसंबन्धेनाधिकरणताया अवश्यं वि-

वक्षणीयतया एतेनैवोक्तदोषवारणसंभवेनाधिकरणताया लक्षणप्रवेशस्य व्यर्थतया तथाचेत्यादिग्रन्थोऽनुपपन्नः ॥

**पुटम्** ( १०७ ) असंबन्धः प्रतियोगितानुयोगितान्यतरसंबन्धेन समवायाभावः प्रतियोगितानुयोगितान्यतरसंबन्धावच्छिन्नविलक्षणावच्छेदकताकसमवायप्रतियोगिताकाभाव इत्यर्थः । यथाश्रुते तादृशान्यतरप्रतियोगितासंबन्धेन समवायाभावस्याकाशादौ सत्त्वेन जातिबाधकत्वानुपपत्तेः नन्वत्र प्रतियोगितासंबन्धनिवेशो व्यर्थः अनुयोगितासंबन्धेन समवायाभावस्यैव वक्तव्यत्वात् । अत्र केचित् विशेषादीनामनुयोगितासंबन्धेन समवायाभावादेव जात्यभावसिद्धौ रूपहान्यादीनां पृथग्जातिबाधकतोत्कीर्तनासाङ्गत्यापत्तेरिति तदनुरोधेन प्रतियोगितासंबन्धनिवेश इत्याहुः । वस्तुतस्तु समवायत्वादीनां जातित्वादीनां समवायेऽनुयोगितासंबन्धेन समवायाभावस्यासिद्धत्वेन परमतसिद्धस्यैव साधकत्वेन तस्य समवायादौ जात्यभावसाधकत्वानुपपत्तिरिति जातिप्रतियोगितानिरूपितानुयोगितासंबन्धेन समवायाभावस्य विवक्षणीयतया गुणादावपि जातिप्रतियोगितानिरूपितानुयोगितासंबन्धेन समवायाभावस्य सत्त्वात् तस्य जातिबाधकत्वानुपपत्तिरिति प्रतियोगितासंबन्धस्यापि निवेशनम् । तथाच गुणादौ प्रतियोगितासंबन्धेन समवायसत्त्वान्नानुपपत्तिरिति बोध्यम् ॥

**पुटम्** (२५९-२६३) गन्धसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वं पृथिवीलक्षणं अत्र पृथिवीजलान्यतरत्वमादायातिव्याप्तिवारणाय जातिपदमित्युक्तं महादेवेन । तन्न समवायेन तद्वत्त्वनिवेशेन तद्वारणात् किन्तु पृथिवीजलसंयोगादिकमादायैवेति बोध्यम् । अत्रान्यदपि दूषणं केचिदाहुः । तथाहि अत्र मूर्तत्वजातिमादायातिव्याप्तिरेवं पृथिव्यादिचतुष्टये स्पर्शजनकतावच्छेदकतया पृथिव्यादित्रये रूपजनकतावच्छेदकतया पृथिवीजलयोः रसजनकतावच्छेदकतया च वैजात्याङ्गीकर्तृनये तान्यादायातिव्याप्तिः । नच गन्धसमानाधिकरणपदेन गन्धानधिकरणावृत्तित्वं विवक्षितमिति वाच्यं उत्तरदलवैयर्थ्यापत्तेः गन्धानधिकरणावृत्तिधर्मवत्त्वस्यैव सम्यक्त्वात् । नच गन्धानधिकरणवृत्तिद्रव्यत्वव्याप्यजातिशून्यत्वमिति लक्षणार्थः द्रव्यत्वव्याप्यत्वञ्च द्रव्यत्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वं नातो गुणादावतिव्याप्तिरिति वाच्यं सामान्यादावाकाशादौ चातिव्याप्तेः । नच गन्धानधिकरणवृत्तिद्रव्यत्वव्याप्यजातिशून्यत्वे सति द्रव्यत्वव्याप्यजातिमत्त्वं विवक्षितमिति वाच्यं उत्पन्नविनष्टघटाङ्गीकर्तृनये असंभवस्य दुर्वारत्वात् तन्न तादृशजात्यङ्गीकारे गन्धसमानाधिकरणद्रव्यविभाजकोपाधिमत्त्वस्य गन्धसमानाधिकरणजलावृत्तिजातिमत्त्वस्य वापि विवक्षितत्वात् । अन्येतु गन्धसमवायिकारणतावच्छेदकावच्छिन्नाभिन्नवृत्तिद्रव्यत्वव्याप्यजातिशून्यत्वे सति द्रव्यत्वव्याप्यजातिमत्त्वं विवक्षितं एतादृशार्थलाभायैव मूले गन्धहेतुरित्युक्तं उत्पन्नविनष्टघटस्यापि गन्धसमवायिकारणतावच्छेदकावच्छिन्नत्वात् न दोषः विशेष्यदलेन सामान्यादावाकाशादौ च नातिव्याप्तिरित्याहुः । तन्न तथा सति गन्धसमवायिकारणतावच्छेदकावच्छिन्नमात्रस्यैव सम्यक्त्वेन यथोक्तगुरुतरकुसृष्टिकल्पनाया निर्बीजत्वात् ॥ **यद्द्रव्यमिति** ॥ अत्र घटध्वंसप्रत्यक्षे घटोपादानानुपादेये व्यभिचारवारणाय प्रथमद्रव्यपदम् । अथवा घटध्वंसजन्यरूपध्वंसे व्यभिचारवारणाय वा मिथ्याज्ञानध्वंसजन्यकायव्यूहे नवीनमते दण्डस्वरूपदण्डप्रागभावध्वंसजन्ये घटे व्यभिचारवारणाय द्वितीयं द्रव्यपदम् । प्रतिबन्धकद्रव्यात्यन्ताभावजन्ये द्रव्ये व्यभिचारवारणाय ध्वंसपदम् । ध्वंसत्वेनेह जनकत्वं विवक्षितं तेन प्राचां मते प्रतिबन्धकसंसर्गाभावत्वेन तस्य हेतुत्वेऽपि न क्षतिः । ध्वंसजन्यत्वं चादृष्टाद्वारा विवक्षितं तेन साळग्रामध्वंसजन्यनारकीयशरीरे न व्यभिचार इति महादेवग्रन्थः । नन्वत्र ध्वंसत्वेन जनकत्वविवक्षणे प्रथमं द्रव्यपदं व्यर्थं घटध्वंसप्रत्यक्षे घटध्वंसस्य विषयत्वेन तत्तद्व्यक्तित्वेन वा जनकतया ध्वंसत्वेनाजनकत्वात् । नचैतदस्वरसेन अथवेत्यादिना स्थलान्तरमनुसृतं तत्र च समवेतकार्यनाशत्वावच्छिन्नं प्रति आश्रयीभूतावयविनाशत्वेन जनकत्वान्नानुपपत्तिरिति वाच्यम् । तथापि स्वप्रागभावध्वंसरूपदण्डजन्यघटे व्यभिचारवारकतयोपात्तं द्वितीयं द्रव्यपदं व्यर्थं दण्डस्य दण्डत्वेनैव घटजनकत्वात् नच तथापि मिथ्याज्ञानध्वंसजन्यकायव्यूहे व्यभिचारवारणाय तदवश्यमुपादेयमिति वाच्यं तस्य विचारासहत्वाभिप्रायेणैव स्वप्रागभावध्वंसात्मकदण्डानुसरणात् । तथाहि मिथ्याज्ञानध्वंसस्य कायव्यूहहेतुत्वे अस्मदादीनामपि तदापत्तेः । यद्यपि मिथ्याज्ञानप्रागभावासमानकालीनमिथ्याज्ञानध्वंसत्वेन हेतुत्वं वक्तुं शक्यते तथापि तस्य हेतुत्वमप्रामाणिकं प्रारब्धेतरकर्मजन्यादृष्टसमवहितत्त्वज्ञानजन्यादृष्टस्यैव तद्धेतुतायास्साम्प्रदायिकोक्तत्वा-

त् कर्मभिस्सहितस्य तस्य तत्त्वज्ञानस्य वैभवात्। अतनुवै शरीराणि जायन्ते सुबहून्यपीत्येवोक्तत्वात् । किञ्च मिथ्याज्ञानप्रागभावासमानकालीनमिथ्याज्ञानध्वंसत्वेन हेतुता न संभवति मिथ्याज्ञानोत्पादकप्रारब्धान्यकर्म- वशात् कायव्यूहस्थलेऽपि किञ्चिच्छरीरावच्छेदेन मिथ्याज्ञानोत्पत्तेरावश्यकत्वात् । तथाच द्वितीयं द्रव्यपदं व्यर्थमिति चेन्न । ध्वंसत्वेनेत्यस्य प्रागभावावृत्तिधर्मेणेत्यर्थात् । तथाच दण्डत्वेन जनकत्वमादाय व्यभिचार- वारणाय द्वितीयद्रव्यपदं । नच दण्डत्वमपि दण्डध्वंसप्रागभावात्मकदण्डवृत्त्येवेति वाच्यम् प्रागभावपदेन भा- वप्रतियोगिकप्रागभावस्य विवक्षितत्वादिति । स्यादेतद्विशेषणतासंसर्गावच्छिन्नयद्ध्वंसनिष्ठजनकतानिरूपितस- मवायसंबन्धावच्छिन्नजनकताशालीत्येवं विषयतया प्रत्यक्षं प्रति तादात्म्येन विषयस्य हेतुत्वात् स्वप्र- तियोगिसमवायसंबन्धेन नाशं प्रति प्रतियोगितासंबन्धेन नाशस्य हेतुत्वात् अवच्छेद्यतासंबन्धेन कायव्यूहं प्रति विशेषणतया मिथ्याज्ञानध्वंसस्य हेतुत्वात् समवायेन घटं प्रति संयोगेन दण्डस्य हेतुत्वाच्च । अदृष्टाद्वा- रकत्वमपि न देयं अवच्छेद्यतासंबन्धेन नारकीयशरीरं प्रति स्वानुकूलकृत्याश्रयत्वसंबन्धेन साळग्रामध्वंसस्य हेतुत्वादिति चेन्न जनकतावच्छेदकजन्यतावच्छेदकसंबन्धानुपादानतात्पर्येण तदुपादानादिति । ननु तथा- पि मत्कुणध्वंसजन्यपटोलिकाशलाटौ मत्कुणोपादानानुपादेये सारमेयध्वंसजन्यजम्बीरफले च व्यभिचार इति चेन्न पटोलिकाशलाट्वादौ न मत्कुणध्वंसस्य हेतुता प्रमाणाभावात् । किन्तु संयोगसंबन्धेन मत्कुणस्य मत्कुण- संयोगस्य वा हेतुत्वं मत्कुणध्वंसस्तु तत्राजनक इत्येवाभ्युपगमादिति न काप्यनुपपत्तिः । चेष्टात्वं जातिविशे- षः चेष्टेति प्रत्यक्षसिद्धः । नच शरीरत्वमेव पृथिवीत्वव्याप्यजातिः चेष्टात्वं तत्क्रियात्वमिति वाच्यम् । पृथिवी- त्वादिना साङ्कर्येण पृथिवीत्वादिव्याप्यानेकशरीरत्वजातिकल्पने गौरवादिति । अत्र चेष्टात्वस्याप्युत्क्षेपणत्वा- दिना सङ्करेणोत्क्षेपणत्वादिव्याप्यनानाचेष्टात्वजात्यङ्गीकारस्यावश्यकतया गौरवं तुल्यमेव। नच पिण्डगतरूपादेरे- व परत्वापरत्वासमवायिकारणत्वमस्त्विति वाच्यं कालिकपरत्वापरत्वयोर्वायावुत्पत्त्या व्यभिचारात् अत एव पृथिवीपिण्डसंयोगस्य न तत्र कारणत्वं पृथिव्यसंयुक्तपदार्थे तादृशपरत्वापरत्वयोरुत्पादेन व्यभिचारादिति म- हादेवः । अत्रेदं चिन्त्यं पिण्डगतरूपादेः परत्वापरत्वासमवायिकारणत्वशङ्का न युक्ता तथा सति एकस्मिन्ने- व परत्वापरत्वयोर्द्वयोरप्युत्पत्त्यापत्तेः द्वयोरपि रूपत्वावच्छिन्नस्यैव कारणत्वात् । नचैकस्मिन्नेव सामान्यतः परत्वापरत्वमुत्पद्यत एवेति वाच्यम् । यत्र यदवधिकपरत्वमुत्पन्नं तत्र तदवधिकापरत्वस्याप्युत्पत्त्यापत्तेः अ- स्माकं तु तन्निष्ठकालसंयोगाधिककालसंयोगस्य तदवधिकपरत्वहेतुत्वं तन्निष्ठकालसंयोगन्यूनसंयोगस्य तदवधि- कापरत्वहेतुत्वमिति कालिकपरत्वापरत्वयोः वायावुत्पत्त्या व्यभिचार इति यदुक्तं तदप्ययुक्तं स्पर्शस्य कारणत्वे व्यभिचाराप्रसक्तेः ॥

पुटम्(४१३)इन्द्रियत्वावच्छिन्नजनकतानिरूपितजन्यताशालित्वं प्रत्यक्षलक्षणं अनुमित्यादावतिव्याप्तिवारणाय इन्द्रियत्वावच्छिन्नेति। नच चाक्षुषं प्रति चक्षुस्त्वादिना कारणत्वस्यावश्यकतया प्रत्यक्षत्वावच्छिन्नं प्रति जन्यप्र- त्यक्षत्वावच्छिन्नं प्रति वा इन्द्रियत्वेन कारणत्वे मानाभावेनेदं लक्षणं संभवति नचावच्छेदकत्वं न स्वरूपसं- बन्धविशेषरूपं अपि त्वनतिरिक्तवृत्तित्वरूपं तथाच स्वसमानाधिकरणभेदप्रतियोगितानवच्छेदकेन्द्रियत्वजन- कतानिरूपितजन्यत्वं विवक्षितमिति वाच्यम्। तथा सति मनोनिष्ठाया अनुमितिजनकताया अपि तादृश- त्वात् अनुमित्यादावतिव्याप्तेर्दुर्वारत्वात् । नच अन्यूनवृत्तित्वमवच्छेदकत्वम् । तथाच स्वावच्छिन्नप्रतियोगि- ताकभेदासमानाधिकरणेन्द्रियत्वजनकतानिरूपितजन्यत्वं विवक्षितं मनोमात्रनिष्ठाया अनुमितिजनकताया अ- तादृशत्वान्नातिव्याप्तिरिति वाच्यं असंभवापत्तेः चक्षुस्त्वादिभेदेन तत्तदवच्छिन्नजनकताया भिन्नभिन्नत्वेन कस्यापि जनकतायास्स्वावच्छिन्नप्रतियोगिताकभेदासमानाधिकरणेन्द्रियत्वकत्वाभावात् । नचेन्द्रियत्वसमा नाधिकरणभेदप्रतियोगितावच्छेदकतानवच्छेदकस्वनिष्ठजन्यतानिरूपितजनकतात्वकत्वं समुदितलक्षणार्थः प्रत्यक्षनिष्ठजन्यतानिरूपितजनकतात्वस्य तादृशत्वाल्लक्षणसंभवः अनुमितिनिष्ठजन्यतानिरूपितजनकतात्वस्या- तादृशत्वान्नातिप्रसङ्ग इति वाच्यम् । निखिलप्रत्यक्षसाधारणानुगतस्वत्वस्यैवाभावेन स्वपदेन तत्तत्प्रत्यक्षव्यक्ते- रेवोपादेयतया कस्या अपि प्रत्यक्षव्यक्तेः स्वपदेनोपादातुमशक्यत्वात् सर्वस्या अपि प्रत्यक्षव्यक्तेः स्वनि- ष्ठतत्तज्जन्यनिरूपितजनकतात्वस्यापि तादृशत्वात् । नचेन्द्रियत्वसमानाधिकरणभेदप्रतियोगितावच्छेदक-

तानवच्छेदकस्वाश्रयनिष्ठजन्यतानिरूपितजनकताकानुभवविभाजकधर्मवत्त्वं विवक्षितं स्वपदेन प्रत्यक्षत्वस्य उपादेयतया लक्षणसमन्वयः अनुमितित्वन्तु नोपादातुं शक्यत इति नातिव्याप्तिरिति वाच्यम् । एतस्य ईश्वरप्रत्यक्षसाधारणतया ईश्वरप्रत्यक्षसाधारणलक्षणान्तरप्रणयनानुपपत्तेः । नच जन्यप्रत्यक्षस्यैव लक्ष्यत्वमिति मते जन्यप्रत्यक्षत्वमेव अनुभवविभाजकमिति नेश्वरप्रत्यक्षसाधारण्यमेतस्येति वाच्यम् । तथाप्यनुमित्याश्रयनिष्ठकार्यत्वावच्छिन्नजन्यतानिरूपितद्रव्यत्वावच्छिन्नजनकतात्वस्य इन्द्रियत्वसमानाधिकरणभेदप्रतियोगितावच्छेदकतानवच्छेदकतयानुमित्यादावतिव्याप्तेर्दुर्वारत्वादिति चेन्न जन्यतायां समवायसंबन्धावच्छिन्नत्वस्य कार्यत्वानवच्छिन्नत्वस्य वा निवेशेनादोषात् । यद्वा इन्द्रियत्वव्याप्यधर्मावच्छिन्नजनकतानिरूपितजन्यताशालित्वं विवक्षितम् । नन्वेवं मनस्त्वावच्छिन्नजनकतामादायानुमितावतिव्याप्तिः तदवस्थैव नच साक्षात्कारत्वव्याप्यधर्मावच्छिन्नत्वेन जन्यताविशेषणात् ज्ञानत्वावच्छिन्नत्वेन वा तद्विशेषणान्नायं दोष इति वाच्यम् । तथा सतीन्द्रियत्वव्याप्यधर्मावच्छिन्नत्वस्य वैयर्थ्यापत्तेरिति चेन्न । मनस्त्वातिरिक्तेन्द्रियत्वव्याप्यधर्मावच्छिन्नजनकतानिरूपितजन्यतावद्वृत्त्यनुभवविभाजकधर्मवत्त्वस्य विवक्षितत्वादिति । त्वक्सन्निकर्षस्य कारणतायां परमाणुघटितसन्निकर्षेण स्पार्शनवारणाय महत्त्वावच्छिन्नत्वं प्रभाघटितसन्निकर्षेण स्पार्शनवारणाय स्पर्शवत्त्वावच्छिन्नत्वादिति । नन्वत्र स्पर्शस्पार्शनान्यथानुपपत्त्या त्वक्संयुक्तसमवायस्य स्पर्शत्वस्पार्शनान्यथानुपपत्त्या त्वक्संयुक्तसमवेतसमवायस्य च कारणत्वावश्यकत्वेऽपि त्रुटेः स्पार्शनानङ्गीकारात् त्वक्संयोगस्य कारणत्वे मानाभावः । नच त्रसरेणुस्पार्शनवारणाय स्पर्शान्यद्रव्यसमवेतस्पार्शनं प्रति त्वक्संयुक्तस्पार्शनवत्समवायत्वेन कारणत्वस्य वक्तव्यतया चतुरणुकस्पार्शनोपपत्त्यर्थं त्वक्संयोगस्य कारणत्वमावश्यकमिति वाच्यम् । त्वक्संयुक्तमहदुद्भूतस्पर्शवत्समवायत्वेन कारणत्वकल्पनयैव त्रुटिस्पार्शनवारणसंभवेन तेनैव चतुरणुकस्पार्शनस्योपपादयितुं शक्यत्वादिति चेन्न त्रसरेणुपरिमाणस्पार्शनवारणाय तथा कल्पनाया असंभवेन त्वक्संयुक्तस्पार्शनवत्समवायत्वेनैव स्पर्शान्यद्रव्यसमवेतस्पार्शनं प्रति कारणताया वक्तव्यतया चतुरणुकस्पार्शनोपपादनाय त्वक्संयोगहेतुताया आवश्यकत्वात् । स्पर्शान्यद्रव्यसमवेतस्पार्शनं प्रति त्वक्संयुक्तस्पार्शनवत्समवायित्वेन कारणत्वे स्पर्शस्पार्शनोपपत्त्यर्थं कार्यकारणभावे कल्पनीये द्रव्यसमवेतस्पार्शनं प्रति त्वक्संयुक्तसमवायित्वेनैव कारणता कल्प्यते तेनैव चतुरणुकस्पार्शनोपपत्तिः । नचैवं सति चतुरणुकस्पार्शनस्य स्पार्शनवत्त्वक्संयुक्तसमवायकार्यतावच्छेदकाक्रान्तत्वाद्व्यतिरेकव्यभिचार इति वाच्यम् त्वक्संयोगहेतुतामतेऽपि तद्दोषस्य तुल्यतया स्पर्शान्यद्रव्यसमवेतविषयकस्पार्शनत्वस्य स्पार्शनवत्समवायिकार्यतावच्छेदकत्वात् । नचैवं त्रसरेणुस्पार्शनापत्तेः तत्स्पार्शनस्य निरुक्तस्पार्शनवत्समवायिकार्यतावच्छेदकाक्रान्तत्वादिति वाच्यम् । द्रव्यसमवेतस्पार्शनं प्रति त्वक्संयुक्तमहदुद्भूतस्पर्शवत्समवायित्वेनैव कारणतायाः कल्पनीयतया तद्वारणसंभवात् । नचैतत्कार्यकारणभावेनैव त्रसरेणुस्पार्शनवारणसंभवे स्पार्शनवत्समवायस्य पृथक्कारणत्वे प्रमाणाभाव इति वाच्यम् । त्रसरेणुगतसंख्यापरिमाणादिस्पार्शनवारणाय तादृशकार्यकारणभावस्यावश्यकत्वादिति । एवंच त्वक्संयोगकारणतां विनापि चतुरणुकस्पार्शनमुपपद्यत एवेति चेन्न । स्पर्शान्यद्रव्यसमवेतस्पार्शनं प्रति त्वक्संयुक्तस्पार्शनवत्समवायित्वेन कारणत्वेनोपपत्तौ द्रव्यसमवेतस्पार्शनं प्रति त्वक्संयुक्तसमवायस्य कारणत्वे मानाभावः । नच स्पर्शस्पार्शनान्यथानुपपत्त्या तदावश्यकतेति वाच्यं महत्त्वादिघटितसामग्रीबलादेव तदुत्पादसंभवात् । नचैवमसन्निकृष्टस्पर्शस्पार्शनापत्तिरिति वाच्यम् एकाश्रयमात्रघटितसन्निकर्षबलेन संयोगविभागद्वित्वादिस्पार्शनवारणाय द्रव्यसमवेतविषयकस्पार्शनं प्रति स्वाश्रयसमवेतत्वसंबन्धेन त्वक्संयोगाभावस्य प्रतिबन्धकताया आवश्यकतया तत एवासन्निकृष्टस्पर्शस्पार्शनवारणसंभवात् । एवं च चतुरणुकस्पार्शनस्य स्पार्शनवत्समवायेनोपादातुमशक्यतया त्वक्संयोगहेतुताया आवश्यकत्वात् । नन्वत्रापि महत्त्वादिघटितसामग्रीबलादेव चतुरणुकस्पार्शनमुपपादयितुं शक्यं द्रव्यसमवेतस्पार्शनं प्रति पूर्वोक्तस्वाश्रयसमवेतत्वसंबन्धेन त्वक्संयोगाभावाविरोधितयैवासन्निकृष्टचतुरणुकस्पार्शनवारणसंभवादिति चेन्न । एकाश्रयमात्रघटितसन्निकर्षस्थले द्रव्यस्पार्शनोत्पत्त्या व्यभिचारेण गुणस्पार्शनत्वस्यैव तत्तत्कार्यतावच्छेदकतावश्यकतया असन्निकृष्टचतुरणुकस्पार्शनवारणाय त्वक्संयोगहेतुताया आवश्यकत्वादिति ॥ इति प्रत्यक्षखण्डः ॥

पुटम् (४८३) स्वाधिकरणावृत्तिसाध्यवदन्योन्याभावकत्वस्य व्याप्तित्वे साध्यवत्ताग्रहविरोधितानियामकसंबन्धेनैवावृत्तित्वस्यावश्यं विवक्षणीयतया सत्ताभाववान् जात्यभावादित्यादावव्याप्तिरित्युक्तं दिनकरेण । तदसत् स्वाधिकरणवृत्त्यधिकरणत्वावृत्तिसाध्यवदन्योन्याभावाधिकरणतात्वविवक्षणेनाव्याप्त्यनवकाशात् । इदानीञ्च वृत्तित्वं स्वरूपसंबन्धेनैव । एतेन संयोगसंबन्धावच्छिन्नघटाभावे साध्ये विषयितया हेतौ घटादावव्याप्तिरित्यपि निरस्तम् । हेत्वधिकरणज्ञानादिवृत्त्यधिकरणतायां साध्यवदन्योन्याभावाधिकरणतात्वासत्त्वेनाव्याप्त्यनवकाशात् साध्यवदन्योन्याभावाधिकरणतात्वघटकमधिकरणत्वं साध्यवत्ताग्रहविरोधितानियामकसंबन्धेन । साध्यवदन्योन्याभाववत्साध्यतावच्छेदकताघटकसंबन्धावच्छिन्नसाध्यतावच्छेदकनिष्ठावच्छेदकतानिरूपकसाध्यतावच्छेदकसंबन्धावच्छिन्नावच्छेदकताकप्रतियोगिताकान्योन्याभावप्रतियोगितावच्छेदकतायां साध्यतावच्छेदकसंबन्धावच्छिन्नत्वनिवेशात् न वह्निमान् धूमादित्यादौ समवायसंबन्धावच्छिन्नवह्नित्वावच्छिन्नावच्छेदकताकप्रतियोगिताकान्योन्याभावमादायाव्याप्तिः । प्रतियोगितावच्छेदकतावच्छेदकतायां साध्यतावच्छेदकताघटकसंबन्धावच्छिन्नत्वनिवेशान्न गुणवान् द्रव्यत्वादित्यादौ विषयतासंबन्धावच्छिन्नगुणत्वनिष्ठावच्छेदकताकसमवायसंबन्धावच्छिन्नावच्छेदकताकप्रतियोगिताकान्योन्याभावमादायाव्याप्तिः । ननु तथापि महानसीयवह्निमान् धूमादित्यादावव्याप्तिः महानसीयत्वनिष्ठसाध्यतावच्छेदकताघटककालिकसंबन्धावच्छिन्नवह्नित्वनिष्ठावच्छेदकताकवह्नित्वनिष्ठसाध्यतावच्छेदकताघटकसमवायसंबन्धावच्छिन्नमहानसीयत्वनिष्ठावच्छेदकताकप्रतियोगिताकान्योन्याभावस्य हेतुमति सत्त्वादिति चेन्न स्वावच्छेदकसंबन्धावच्छिन्नत्वस्वसामानाधिकरण्योभयसंबन्धेन साध्यतावच्छेदकताविशिष्टान्यावच्छेदकत्वानिरूपकप्रतियोगितावच्छेदकताकान्योन्याभावस्य विवक्षितत्वात् । उपदर्शितवह्निनिष्ठप्रतियोगितावच्छेदकता निरुक्तविशिष्टान्यावच्छेदकतानिरूपिकैव महानसीयत्वनिष्ठप्रतियोगितावच्छेदकतावच्छेदकतायाः वह्नित्वनिष्ठसाध्यतावच्छेदकतावच्छेदकसंबन्धावच्छिन्नत्वेऽपि तत्सामानाधिकरण्याभावाद्वह्नित्वनिष्ठप्रतियोगितावच्छेदकतावच्छेदकताया महानसीयत्वनिष्ठसाध्यतावच्छेदकताघटककालिकसंबन्धावच्छिन्नत्वेऽपि तत्सामानाधिकरण्याभावाच्च विशिष्टान्यतया तादृशान्योन्याभावमादायाव्याप्तेरप्रसक्तेरिति दिक् ॥

पुटम् ( ४७४ ) स्मरणात्मकपरामर्शे व्याप्तिज्ञानस्य व्यभिचार इत्यपि न तत्रापि संस्कारसंबन्धेन पूर्वं व्याप्तिज्ञानस्य सत्त्वादिति दिनकरः । अत्रेदं चिन्त्यते । व्याप्तिज्ञानस्य संस्कारसंबन्धेन कारणत्वं न संभवति पूर्वं व्याप्तिग्रहस्थले संस्कारसंबन्धेन व्याप्तिग्रहस्यावश्यकत्वेऽपि यत्र शाब्दात्मकपरामर्शः तत्रोक्तसंबन्धेन व्याप्तिज्ञानस्याभावात् । नच तत्रापि योग्यताज्ञानसमुदायव्याप्तिज्ञानं शाब्दबोधात् पूर्वमावश्यकमिति वाच्यम् । यत्र तावदर्थोपस्थितिमूलकः खलेकपोतन्यायेन शाब्दात्मकपरामर्शः तत्र विशिष्टव्याप्तिज्ञानात्मकयोग्यताज्ञानस्यासत्त्वात् । नच नोत्पद्यत एव ततोऽनुमितिर्विशिष्टवैशिष्ट्यबोधात्मकपरामर्शस्यैवानुमितिहेतुत्वोपगमादिति वाच्यम् । तथापि यत्रावान्तरवाक्यार्थबोधात्मकं व्याप्तिज्ञानं ततो विशिष्टवैशिष्ट्यबोधात्मकपरामर्शः तत्र व्याप्तिज्ञानस्य स्वजन्यसंस्कारसंबन्धेन परामर्शहेतुत्वासंभवात् । एवं यत्र विशिष्टवैशिष्ट्यबोधात्मकप्रात्यक्षिकपरामर्शः तत्र विशेषणतावच्छेदकप्रकारकनिर्णयविधया पूर्वं व्याप्तिज्ञानस्यावश्यकत्वेऽपि स्वजन्यसंस्कारसंबन्धेन तस्याभावात् । अत्रेदं बोध्यम् । नहि परामर्शत्वावच्छिन्नं प्रति व्याप्तिज्ञानत्वेन संस्कारसंबन्धेन कारणता स्वीक्रियते येनोक्तदूषणं स्यात् । परन्तु परामर्शस्य व्याप्तिज्ञानव्यापारत्वोपपादनार्थं स्मरणात्मकपरामर्शस्य संस्कारसंबन्धावच्छिन्नव्याप्तिज्ञाननिष्ठजनकतानिरूपितजन्यत्वमुपपादितम् । नच स्वजन्यसंस्कारसंबन्धावच्छिन्नव्याप्तिज्ञाननिष्ठजनकतानिरूपितजन्यताशालिपरामर्शस्यैव व्याप्तिज्ञानव्यापारत्वोपगमे निरुक्तप्रात्यक्षिकपरामर्शादनुमितिर्न स्यादिति वाच्यम् । सामान्यतो व्याप्तिज्ञाननिष्ठजनकतानिरूपितजन्यताशालिपरामर्शस्यैव व्यापारत्वं तत्रच स्मरणात्मकपरामर्शस्य संस्कारसंबन्धावच्छिन्नव्याप्तिज्ञाननिष्ठजनकतात्वं प्रात्यक्षिकपरामर्शस्थले तु समवायसंबन्धावच्छिन्नव्याप्तिज्ञाननिष्ठजनकतानिरूपकत्वमित्येव तदभिप्रायात् ॥

पुटम् ( ४८५ ) ननु वैशिष्ट्यव्यासज्यवृत्तिधर्मानवच्छिन्नप्रतियोगिताकत्वेनाभावविशेषणात् नाव्याप्तिरित्यत आह गुणवानिति दिनकरः । अत्र वैशिष्ट्यव्यासज्यवृत्तिधर्मानवच्छिन्नप्रतियोगिताकत्वेन त-

त्ताभावविशेषणे विशिष्टसत्तावान् जातेरित्यादावतिव्याप्तिः । तत्र हि हेतुसमानाधिकरणाभावो न सत्तात्वावच्छिन्नप्रतियोगिताकाभावः किन्तु विशिष्टसत्तात्वावच्छिन्नप्रतियोगिताकाभावो वाच्यः सच न संभवति तस्य वैशिष्ट्यावच्छिन्नप्रतियोगिताकत्वेन लक्षणघटकत्वादित्यभावान्तरमादायातिव्याप्तिर्दुर्वारैव । नच साध्यतावच्छेदकातिरिक्तः यो वैशिष्ट्यव्यासज्यवृत्तिधर्मः तदनवच्छिन्नप्रतियोगिताकत्वमेव विवक्षणीयमिति तत्र विशिष्टसत्तात्वावच्छिन्नप्रतियोगिताकाभावमादाय नातिव्याप्तिरिति वाच्यम् । प्रमेयत्वावच्छिन्नसाध्यतावच्छेदकसद्धेतौ प्रमेयत्ववान् घटत्वादित्यादौ अव्याप्तिः तत्र प्रमेयत्वावच्छिन्नसाध्यतावच्छेदकातिरिक्तस्याप्रसिद्धत्वात् तस्मादिदमसङ्गतमिति चेन्न साध्यतावच्छेदकाविषयकप्रतीतिविषयत्वस्य वैशिष्ट्यव्यासज्यवृत्तिधर्मविशेषणत्वात् । नच तथापि तत्र साध्यतावच्छेदकीभूतप्रमेयत्वाविषयकप्रतीतेरप्रसिद्धत्वादव्याप्तिर्दुर्वारैवेति वाच्यम् । यत्र येन रूपेण यस्य साध्यतावच्छेदकत्वं तत्र तद्धर्मावच्छिन्नं साध्यतावच्छेदकपदेन उपादेयं यत्र च स्वरूपतस्साध्यतावच्छेदकत्वं तत्र स्वरूपत एव तदुपादेयमित्यनुपपत्त्यभावात् ॥

**पुटम् ( ५१७ )** प्रमेयत्वविशिष्टव्यभिचारादावतिव्याप्तिवारणाय प्रकृतानुमितिप्रतिबन्धकतावच्छेदकधर्मान्तराघटितत्वेनानुमितिप्रतिबन्धकतावच्छेदकाविषयतानिरूपकतावच्छेदकधर्मो विशेषणीय इति अनुमितिविरोधितावच्छेदकधर्मो विशेषणीय इत्युक्तं दिनकरेण । तदर्थश्च प्रकृतानुमितिप्रतिबन्धकतावच्छेदकविषयतानिरूपकतावच्छेदकधर्मान्तराघटितत्वेनानुमितिप्रतिबन्धकतावच्छेदकविषयितानिरूपकतावच्छेदकधर्मो विवक्षणीय इति। नन्वत्र धूमाभाववद्वृत्तिवह्निमान् धूमवान् वह्नेरित्यादौ धूमाभावविशिष्टधूमाभाववद्वृत्तिवह्निमत्त्वावच्छिन्नरूपव्यभिचारघटितत्वेनानुमितिप्रतिबन्धकतावच्छेदकबाधेऽव्याप्तिः धूमाभावविशिष्टधूमाभाववद्वृत्तिवह्निमत्त्वरूपानुमितिप्रतिबन्धकतावच्छेदकविषयितानिरूपकतावच्छेदकधर्मस्य तादृशविषयितानिरूपकतावच्छेदकीभूतधूमाभाववद्वृत्तिवह्नित्वरूपधर्मान्तरघटितत्वात् । न च स्वावच्छिन्ननिरूपितविषयत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकविषयतानिरूपकतावच्छेदकं यत्स्वावच्छिन्नाविषयकप्रतीतिविषयितावच्छेदकं तदघटितत्वमेव यद्रूपे विशेषणीयम् । धूमाभाववद्वृत्तिवह्निमत्त्वं तु स्वावच्छिन्ननिरूपितविषयत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकविषयितानिरूपकतावच्छेदकं तदवच्छिन्ननिरूपितविषयतायाः स्वावच्छिन्ननिरूपितविषयित्वान्यूनवृत्तिव्याप्तिज्ञानप्रतिबन्धकतानतिरिक्तवृत्तित्वेऽपि तादृशप्रतिबन्धकतासामान्यान्तर्गतविशिष्टानुमितिप्रतिबन्धकत्वानतिरिक्तवृत्तित्वाभावात् । तथाच तद्घटितत्वमादाय नोक्ताव्याप्तिरिति वाच्यम् असंभवापत्तेः स्वावच्छिन्ननिरूपितविषयत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकाविषयितानिरूपकतावच्छेदकत्वावच्छिन्नविषयकप्रतीतिविषयत्वावच्छेदकस्याप्रासिद्धेः व्यभिचारत्वाद्यवच्छिन्नविषयत्वावच्छिन्नप्रतिबन्धकतासामान्यानतिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकव्यभिचारत्वप्रमेयविशिष्टव्यभिचारत्वादेः स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वाभावादिति चेन्न । स्वावच्छिन्ननिरूपितविषयित्वान्यूनवृत्तियत्किञ्चित्प्रकृतानुमितिप्रतिबन्धकतानतिरिक्तवृत्तिविषयतात्वव्यापकस्वावच्छिन्ननिरूप्यताकधर्मावच्छिन्नत्वस्य समुदितलक्षणार्थत्वेन दोषाभावात् । एवं व्यभिचारित्वं तदवच्छिन्ननिरूपितविषयत्वावच्छिन्नयत्किञ्चिद्व्याप्तिज्ञानप्रतिबन्धकतावच्छेदकाविषयितायाः सर्वस्या अपि स्वावच्छिन्ननिरूप्यत्वात् लक्षणसमन्वयः । प्रमेयत्वविशिष्टव्यभिचारत्वं तु स्वपदेनोपादातुमशक्यं तदवच्छिन्ननिरूपितविषयत्वावच्छिन्नयत्किञ्चित्प्रतिबन्धकतावच्छेदकशुद्धव्यभिचारत्वावच्छिन्ननिरूपितविषयतायाः स्वावच्छिन्ननिरूप्यत्वादिति नातिव्याप्तिः । एवं व्यभिचारघटितबाधकत्वावच्छिन्ननिरूपितविषयत्वावच्छिन्नानुमितिप्रतिबन्धकतावच्छेदकविषयतायाः सर्वस्या एव स्वावच्छिन्ननिरूपितत्वनियमान्नातिव्याप्तिरित्यादि बोध्यम् ॥

**पुटम् ( ५१७ )** नन्वत्र अनुमितितत्करणान्यतरप्रतिबन्धकत्वं अन्यतरनिष्ठप्रतिबध्यतानिरूपितत्वघटितं यदि तदा पर्वतो वह्निमान् धूमादित्यादौ वह्न्यभावविशिष्टहृदस्य दोषताप्रसङ्गः पर्वतो वह्निमान् हृदो वह्निमानिति समूहालम्बनात्मकप्रकृतानुमितिनिष्ठप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकत्वात् तादृशान्यतरत्वावच्छिन्नप्रतिबध्यतानिवेशे असंभवः तादृशान्यतरत्वव्यापकप्रतिबध्यतानिवेशे व्यभिचारादौ बाधे चाव्याप्तिरिति दूषितं दिनकरेण। तत्तु न समीचीनम्। अनुमितितत्करणान्यतरप्रतिबन्धकेत्यस्य स्वावच्छेदकत्वस्वनिरूपितका-

रणतावच्छेदकत्वान्यतरसंबन्धेन प्रकृतानुमितिनिष्ठकार्यताविशिष्टविषयत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकेऽस्यार्थकरणेनानुपपत्त्यभावात् वह्निमान् धूमादित्यादौ वह्न्यभावविशिष्टह्रदत्वावच्छिन्ननिरूपितविषयत्वावच्छिन्नप्रतिबन्धकताया अतिरिक्तविषयत्वावच्छिन्नप्रतिबध्यतानिरूपितत्वाभावेनातिव्याप्त्यनवकाशात् व्यभिचारादौ व्याप्तिविषयत्वावच्छिन्नप्रतिबध्यतां बाधादौ साध्यविशिष्टपक्षविषयकत्वावच्छिन्नप्रतिबध्यतां चादाय लक्षणसमन्वयः। नच तथापि पर्वतो वह्निमान् ह्रदो वह्निमानिति समूहालम्बनात्मकप्रकृतानुमितिनिष्ठकार्यता—विशिष्टविषयिता वह्निप्रकारतानिरूपितह्रदत्वावच्छिन्नविशेष्यतानिरूपितविशेष्यतापि तदवच्छिन्नं प्रति प्रतिबध्यतामादाय वह्निमान् धूमादित्यादौ वह्न्यभाववद्ध्रदस्यापि दोषत्वापत्तिर्दुर्वारैवेति वाच्यम्। प्रकृतानुमितिनिष्ठेत्यस्य प्रकृतपक्षकप्रकृतसाध्यकप्रकृतहेतुकानुमितित्वव्यापकेत्यर्थकत्वात् वह्नित्वावच्छिन्नप्रकारतानिरूपितह्रदत्वावच्छिन्नविशेष्यतानिरूपितविशेष्यत्वावच्छिन्नकार्यतायाश्च वह्निमद्ध्रदाविषयकप्रकृतानुमितावसत्त्वेन प्रकृतानुमितित्वव्यापकत्वाभावात् । अथवा प्रकृतानुमितित्वव्यापकप्रतिबध्यताप्रकृतानुमितिकारणीभूतज्ञानत्वव्यापकप्रतिबध्यतान्यतरप्रतिबध्यतानिरूपितप्रतिबन्धकतैव निवेशनीया । व्यभिचारादौ व्याप्तिज्ञानप्रतिबन्धकतां बाधादौ चानुमितिप्रतिबन्धकतामादाय लक्षणसमन्वयः । वह्निमान् धूमादित्यादौ वह्न्यभाववद्ध्रदत्वावच्छिन्ननिरूपितविषयत्वावच्छिन्नप्रतिबन्धकतायाश्चान्यतरप्रतिबध्यतानिरूपितत्वाभावात् नातिव्याप्तिः । एवं निर्वह्निः पर्वतो वह्निमानित्यादौ न कोऽपि हेत्वाभासः स्यात् तादृशानुमितेरप्रसिद्धत्वादिति यदुक्तं तदपि न विचारसहम् । तथाहि यद्रूपावच्छिन्नविषयकनिश्चयाव्यवहितोत्तरक्षणोत्पत्तिकानुमितित्वव्यापकः प्रकृतपक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितप्रकृतसाध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपितप्रकारित्वप्रकृतपक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितप्रकृतसाध्यतावच्छेदकावच्छिन्ननिरूपितव्याप्त्यवच्छिन्नप्रकृतहेतुतावच्छेदकावच्छिन्नप्रकारतानिरूपितप्रकारित्वोभयाभावः तद्धर्मावच्छिन्नत्वमिति विवक्षणेन सर्वानुपपत्तिपरिहारसंभवात् । तथाहि पर्वतो वह्न्यभाववान् निर्वह्निमानित्यादौ आश्रयासिद्धिबाधज्ञानानन्तरमुत्पन्नानुमितिसामान्ये मिथः आहार्यज्ञानप्रसिद्धयोर्निरुक्तप्रकारित्वयोरुभयोरभावस्य सत्त्वान्निर्वह्निः पर्वतो वह्निमानित्यादौ आश्रयासिद्धेः निर्वह्निर्वह्निमानित्यादौ बाधस्य च दोषत्वसंभव इत्यादिभट्टाचार्यकृतदीधितिटिप्पणिरीत्या अवसेयम् ॥ इत्यनुमानखण्डः ॥

पुटम् ( ५५६ ) अत्र कल्पे चैत्र एव पचतीत्यादौ चैत्रे सङ्ख्यान्वयोपपादनं सम्यक् विभावनीयमिति चैत्रस्य धात्वर्थातिरिक्त एवकारार्थान्यत्वविशेषणादिति भावः। अत्र चैत्रः चैत्रं पश्यतीत्यादौ धात्वर्थातिरिक्तविषयताविशेषणत्वाच्चैत्रे आख्यातोपात्तसङ्ख्यान्वयानुपपत्तिवारणाय धात्वर्थनिष्ठप्रकारतानिरूपितविशेष्यत्वाभावविशिष्टधात्वर्थातिरिक्तनिष्ठविशेष्यतानिरूपितप्रकारत्वाभावस्य धात्वर्थेत्यादिना विवक्षणीयतया विषयतानिष्ठविशेष्यतानिरूपितप्रकारतायाः धात्वर्थनिष्ठप्रकारतानिरूपितविशेष्यत्वाभावविशिष्टतया तत्र चैत्रे आख्यातोपात्तसङ्ख्यान्वयवत् निरुक्तस्थलेऽपि एवकारार्थान्यत्वनिष्ठविशेष्यतानिरूपितप्रकारतायाः धात्वर्थनिष्ठप्रकारतानिरूपितविशेष्यत्वाभावविशिष्टतया आख्यातोपात्तसङ्ख्यान्वयोपपत्तिरिति विभावना । ननु नव्यनये विभक्त्यर्थस्य संसर्गतया भानानुपगमात् चैत्र एव पचतीत्यादौ आख्यातार्थाश्रयत्वादेः संसर्गत्वापेक्षया प्रकारत्वमेवेति न धात्वर्थविशेष्यत्वं चैत्रस्येति चैत्रे आख्यातोपात्तसङ्ख्यान्वयानुपपत्तिः । नच धात्वर्थनिष्ठप्रकारतानिरूपितविशेष्यत्वाभावः धात्वर्थनिष्ठप्रकारतानिरूपितविशेष्यत्वाभाव एवेति नानुपपत्तिरिति वाच्यम्। सविषयवाचकधातुसमभिव्याहृताख्यातस्य निरर्थकत्ववादिनये चैत्रः चैत्रं पश्यतीत्यादौ निरुक्तविशेष्यत्वाप्रसिद्ध्याख्यातोपात्तसङ्ख्यान्वयानुपपत्तेर्दुर्वारत्वादिति चेन्न धात्वर्थनिष्ठप्रकारतानिरूपितविशेष्यत्वाभावस्य विवक्षणात् उक्तनयेऽप्यनुपपत्तेरभावात् । तिङर्थधर्मिणि नामार्थान्वयस्याव्युत्पन्नतया नेदं शक्तिग्रहस्योदाहरणमिति तु नये योऽयं शूद्रस्य पचतीत्यादौ तिङर्थधर्मिणि तथान्वयदर्शनादिति ग्रन्थः ॥ इति शाब्दखण्डः ॥

## ॥ अथ गुणनिरूपणम् ॥

पुटम् ( ६५३ ) सामान्यवत्त्वे सति कर्मान्यत्वे सति कर्मवदवृत्तिपदार्थविभाजकोपाधिमत्त्वं गु-

णलक्षणम् । अत्र सामान्यवत्त्वे सतीति विशेषणं व्यर्थम् । नच सामान्यादावतिव्याप्तिवारणाय तदिति वाच्यम् । तद्विशेषणदानेऽपि कालिकसंबन्धेन पदार्थविभाजकोपाधिमत्त्वमादाय कालादावतिव्याप्तिवारणाय समवायेन तद्वत्त्वस्यावश्यं विवक्षणीयतया तत एव सामान्यादावतिव्याप्तिवारणसंभवात् । नच जगदाधारताप्रयोजकसंबन्धभिन्नसंबन्धेन पदार्थविभाजकतावच्छेदकसंबन्धेन वा तद्वत्त्वं विवक्षणीयमित्यभिप्रायेण तद्विशेषणदानमिति वाच्यम् । प्रक्षालनाद्धीति न्यायेन निरुक्तसंबन्धेन तद्वत्त्वमुक्त्वा सामान्यादावतिव्याप्तिं सम्पाद्य तद्वारणाय विशेषणान्तरदानापेक्षया समवायेन तद्वत्त्वविवक्षणाया एव युक्तत्वात् । ननु सामान्यवत्त्वे सति कर्मान्यत्वे सति निर्गुणत्वं गुणलक्षणं अत उत्पन्नविनष्टघटाङ्गीकर्तृनये तत्रातिव्याप्तमिदं लक्षणम् । नच गुणवदवृत्तिपदार्थविभाजकोपाधिमत्त्वं निर्गुणत्वे सतीत्यस्यार्थ इति वाच्यम् । तथा सत्युक्तयुक्त्या सामान्यवत्त्वे सतीत्यस्य वैयर्थ्यापातादिति चेन्न गुणवद्वृत्तिपदार्थविभाजकोपाधिशून्यत्वस्य तदर्थत्वात् । तथाच सामान्यादावतिव्याप्तिवारणाय सामान्यवत्त्वे सतीति विशेषणमपि सार्थकमेवेत्यवधेयं यथोक्तलक्षणे तस्यानिवेशेनोभयथापि वैयर्थ्याभावाच्च । द्रव्यत्वव्यापकतावच्छेदकसत्ताभिन्नजातिमत्त्वं गुणस्य लक्षणम् । नन्वत्रोत्पन्नविनष्टद्रव्याङ्गीकर्तृनये द्रव्यत्वसमानाधिकरणभेदप्रतियोगितावच्छेदकतानवच्छेदकत्वं तद्व्यापकतावच्छेदकत्वं गुणत्वस्य न संभवतीत्यसंभव इति चेन्न द्रव्यत्वपदेन संयोगस्य विवक्षितत्वात् । नच तत्तत्संयोगव्यापकतावच्छेदकद्रव्यत्वमादायातिव्याप्तिरिति वाच्यं संयोगत्वावच्छिन्ननिरूपकताकव्यापकताया विवक्षितत्वात् । अत्र केचित् उत्पन्नविनष्टद्रव्ये प्रमाणाभावः समवायिकारणनाशस्यासमवायिकारणनाशस्य वा द्रव्यनाशं प्रति कारणत्वेन पूर्वक्षणे तदभावात् तत्सत्त्वे च समवायिकारणासमवायिकारणयोः कार्यसहभावेन हेतुत्वात् द्रव्योत्पत्तेरेवासंभवात् । नचाविनश्यदवस्थयोरेव समवाय्यसमवायिकारणयोः कार्यसहभावेन हेतुत्वं एवञ्च विनश्यदवस्थकाले घटोत्पत्तिस्संभवत्येवेत्युत्पन्नविनष्टद्रव्यं निराबाधमेवेति वाच्यम् । तथा सति विनश्यदवस्थेऽपि घटे गुणोत्पत्तिस्संभवत्येवेति प्रकृतलक्षणस्य निर्दोषत्वापत्तेः किञ्च अविनश्यदवस्थयोरेव तयोः कार्यसहभावेन हेतुत्वमिति नियमे मानाभावादित्याहुः । तन्न घटोत्पत्तिद्वितीयक्षणे कपालनाशाङ्गीकारेऽपि स्वाश्रयघटितसन्निकर्षेण कपालरूपादीनां घटादावसत्त्वेन तत्र गुणोत्पादासंभवादिति । मूर्तत्वव्यापकतावच्छेदकगुणवृत्तिजातिमत्त्वं मूर्तगुणानां लक्षणम् । अत्र त्रसरेणुपरिमाणे अपकर्षाख्यवैजात्यस्य स्वेनैवाग्रे लेखनात् तस्य च मूर्तत्वव्यापकतावच्छेदकतया तज्जातिमति परिमाणेऽतिव्याप्तिः एवं क्रियाजनकतावच्छेदकवैजात्यावच्छिन्नशब्दजनकतावच्छेदकवैजात्यावच्छिन्ने च संयोगे शब्दजनकतावच्छेदकवैजात्यावच्छिन्ने दलद्वयविभागेऽतिव्याप्तिः नच गुणवृत्तीत्यस्य गुणत्वसाक्षाद्व्याप्येत्यर्थ इति वाच्यम् । तथा सति वेगस्थितस्थापकाजन्यत्वस्य कार्यतावच्छेदककोटिप्रवेशे गौरवाद्वैजात्यमेव कार्यतावच्छेदकतयोपेयत इति वाच्यं तद्वैजात्यस्य मधुररसव्यावृत्तत्वे तत्र कार्यकारणभावान्तरकल्पनापत्त्या तत्साधारण्योपगमस्यावश्यकतया तादृशवैजात्यस्य द्रव्यविभाजकोपाधिव्याप्यतावच्छेदकत्वाभावात् । एवं सांसिद्धिकद्रवत्वत्वस्य जलत्वव्याप्यतावच्छेदकत्वेऽपि द्रव्यत्वावृत्तित्वात् द्रव्यविभाजकोपाधिव्याप्यतावच्छेदकत्वाभावात् सांसिद्धिकद्रवत्वेऽतिव्याप्तिः एवं स्थितस्थापकस्य पृथिवीमात्रसाधारण्येनाङ्गीकर्तृनये स्थितस्थापकत्वस्य पृथिवीत्वव्याप्यतावच्छेदकतया तादृशजातिशून्यत्वाभावेन तत्राव्याप्तिः । नच द्रव्यविभाजकोपाधिव्याप्यतावच्छेदकजातिमदवृत्तिसंयोगविभागवेगद्रवत्वावृत्तिजातिशून्यत्वं विवक्षितं तथाच पृथिवीत्वव्याप्यतावच्छेदकतिक्तत्वादिमदवृत्तिरसत्वादिमति रसादौ नातिव्याप्तिरिति वाच्यम् । तथापि सांसिद्धिकद्रवत्वेऽतिव्याप्तेर्दुर्वारत्वात् पृथिवीत्वव्याप्यतावच्छेदकनीलत्वादिमदवृत्तिरूपत्वादिमति रूपे जलत्वव्याप्यतावच्छेदकशीतत्ववदवृत्तिस्पर्शत्वादिमति स्पर्शे चातिव्याप्त्यप्रसक्त्या रूपस्पर्शान्यत्वे सतीति विशेषणवैयर्थ्यापत्तेश्च । नापि द्रव्यविभाजकोपाधिर्व्याप्यो यस्येति व्युत्पत्त्या द्रव्यविभाजकोपाधिनिष्ठव्याप्यतानिरूपकतावच्छेदकत्वमेव विवक्षितमिति सांसिद्धिकद्रवत्वेऽतिव्याप्तेस्तदवस्थत्वात् सङ्ख्यादावव्याप्तेः द्रव्यविभाजकोपाधेः व्यापकत्वादतस्तद्वृत्तित्वेनेत्युत्तरग्रन्थस्यासाङ्गत्यापत्तेः । अपि चात्र संयोगपदवैयर्थ्यं संयोगत्वस्य द्रव्यविभाजकोपाधिव्याप्यत्वाभावात् । नच संयोगत्वव्याप्यशब्दजनकतावच्छेदकवैजात्यमादायाव्याप्तेर्वारणाय तत्पदमावश्यकमिति वाच्यम् । ता-

दृशवैजात्यावच्छिन्नसंयोगस्य जलादिसाधारणतया तस्य द्रव्यविभाजकोपाधिव्याप्यतावच्छेदकत्वाभावात् । अत एव रूपादिनाशकतावच्छेदकवैजात्यावच्छिन्नाग्निसंयोगेऽपि नाव्याप्तिः तादृशसंयोगस्य पृथिवीतेजोद्वयवृत्तितया द्रव्यविभाजकोपाधिव्याप्यतावच्छेदकघटजनकतावच्छेदकतया सिद्धकपालद्वयसंयोगनिष्ठवैजात्यमादायाव्याप्तिवारणाय संयोगवृत्तित्वं विशेषणमावश्यकं तादृशवैजात्यस्य पृथिवीत्वव्याप्यतावच्छेदकत्वादिति चेन्न नोदनत्वादिना साङ्कर्येण तादृशवैजात्यासिद्धेः । अपिच कपालद्वयसंयोगस्य कपालद्वयसंयोगत्वेनैव हेतुताभिमता न तु वैजात्येन अत एव येन सहेत्यन्यथासिद्धिलक्षणे कपालेन कपालावयवेऽन्यथासिद्धिवारणाय यस्येत्यस्य स्वतन्त्रान्वयव्यतिरेकशून्यत्वे सतीति निवेशप्रयासोपचर्यते अन्यथा कपालद्वयसंयोगस्य वैजात्येनेव कारणत्वे कपालेनैव तस्य पूर्ववृत्तित्वनियमाभावात् । अत्रोच्यते वर्णजनकतावच्छेदकतया सिद्धवैजात्यावच्छिन्नकण्ठताल्वाद्यभिघाते अव्याप्तिवारणाय संयोगावृत्तित्वविशेषणमावश्यकमेव द्रवत्वपदस्य नैमित्तिकद्रवत्वपरत्वात् न सांसिद्धिकद्रवत्वेऽतिव्याप्तिः। स्थितस्थापकस्य पृथिव्यादिचतुष्टयवृत्तित्वं अनेन लक्षणस्य न स्थितस्थापकेऽव्याप्तिः । पृथिवीजलमधुररसयोरप्यव्याप्त्यापत्तेः संस्कारत्वस्य मूर्तत्वव्याप्यतावच्छेदकत्वाभावात् मूर्तत्वव्याप्यतावच्छेदकयोर्वेगत्वस्थितस्थापकत्वयोश्च गुणत्वसाक्षाद्व्याप्यत्वाभावात् इति चेन्न संस्कारत्वान्यगुणत्वव्याप्याव्याप्यत्वे सति गुणत्वव्याप्यत्वस्यैव गुणत्वसाक्षाद्व्याप्यत्वपदेन विवक्षितत्वात् स्वाश्रयान्योन्याभावव्यापकात्यन्ताभावप्रतियोगित्वं संयोगविभागद्वित्वद्विपृथक्त्वभिन्नानां लक्षणम्। अत्र संयोगाभावस्यापि स्वाश्रयान्योन्याभावप्रतियोगित्वादिदं लक्षणं संयोगेऽतिव्याप्तम् । नच प्रकृतव्यापकताशरीरे प्रतियोगिवैयधिकरण्यनिवेशे प्रयोजनाभावेन स्वाश्रयान्योन्याभावसमानाधिकरणात्यन्ताभावप्रतियोगित्वरूपं स्वाश्रयान्योन्याभावव्यापकत्वं स्वात्यन्ताभावस्यान्योन्यं नास्त्येव स्वात्मकतदत्यन्ताभावस्य स्वाश्रययत्किञ्चिद्व्यक्तिभिन्नापरव्यक्तौ सत्त्वादिति नातिव्याप्तिरिति वाच्यम् । तथापि स्वाश्रयान्योन्याभावः किं स्वाश्रयत्वावच्छिन्नप्रतियोगिताकाभावः उत स्वाश्रयान्यकप्रतियोगिकान्योन्याभावः । आद्ये स्वाश्रयत्वावच्छिन्नप्रतियोगिताकान्योन्याभावाधिकरणे स्वस्यावृत्तित्वात् संयोगेऽतिव्याप्तिस्तदवस्था। यदि स्वाश्रयप्रतियोगिकान्योन्याभावः तदा स्वाश्रयनिष्ठवैशिष्ट्यव्यासज्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकान्योन्याभावाधिकरणे स्वस्यापि सत्त्वादतिव्याप्तिः । अथ स्वाश्रयनिष्ठतद्व्यक्तित्वावच्छिन्नप्रतियोगिताकान्योन्याभाव एव विवक्षित इति न काप्यनुपपत्तिरिति चेत् तथापि स्वात्यन्ताभावस्य यो वैशिष्ट्यव्यासज्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकात्यन्ताभावः तस्य स्वाश्रयान्योन्याभाववति सत्त्वादसंभवस्य दुर्वारत्वात् । अत्रोच्यते स्वाश्रयान्योन्याभावाधिकरणवृत्तित्वस्य समवायसंबन्धेन विवक्षणे तादृशात्यन्ताभावस्य समवायेन वृत्तित्वेन लक्षणघटकत्वासंभवादिति दिक् । रूपस्पर्शान्यत्वे सति द्रव्यत्वविभाजकोपाधिव्याप्यतावच्छेदकसंयोगविभागवेगद्रवत्वावृत्तिजातिशून्यत्वे सति गुणत्वसामान्यं गुणलक्षणम्। तिक्तत्वाम्लत्वादेः पृथिवीत्वव्याप्यतावच्छेदकतया तिक्तत्वाम्लत्वादावतिव्याप्त्यभावेऽपि मधुररसेऽतिव्याप्तिः मधुरत्वावच्छिन्नस्य पृथिवीजलोभयसाधारणतया मधुरत्वस्य पृथिवीविभाजकोपाधिव्याप्यतावच्छेदकत्वात् । नच जलीयमधुररसे पार्थिवमधुररसव्यावृत्तवैजात्यं तद्व्यावृत्तवैजात्यं च पार्थिवमधुररसे स्वीक्रियत इति वाच्यं तत्र प्रमाणाभावात् । नच जलजन्यतावच्छेदकतया पृथिवीजन्यतावच्छेदकतया तत्सिद्धिरिति वाच्यम् । तथा सति तुल्ययुक्त्या जलीयशुक्लरूपे वाय्वनुष्णाशीतस्पर्शे च तज्जन्यतावच्छेदकवैजात्यसिद्धिसंभवेन जलीयशुक्लरूप इत्यादिग्रन्थासङ्गत्यापत्त्या विजातीयमधुररससाक्षात्कारत्वावच्छिन्नं प्रति हरीतक्यादिभक्षणस्य कारणतया तत्तज्जन्यतावच्छेदककुक्षिप्रविष्टतया जलीयरसे कथञ्चिद्वैजात्यस्वीकारेऽपि पार्थिवरसे तत्सिद्धौ प्रमाणाभावात् । नच तत्रापि पाकजन्यतावच्छेदकतया तत्सिद्धिरिति वाच्यं पाकजन्यमधुररसे तादृशवैजात्ये प्रमाणाभावात् । नच तत्रापि समवायेन मधुररसं प्रति स्वाश्रयसमवेतत्वसंबन्धेन मधुररसस्य कारणत्वे कल्पनीये पाकजन्यमधुररसे व्यभिचारवारणाय प्रत्येकव्यावृत्तवैजात्यानुभवोऽस्तीति कृतमिदं लक्षणमतो न तत्राप्यतिव्याप्तिः । स्वाश्रयसमवायिमात्रवृत्तित्वसजातीयगुणजन्यवृत्तिसङ्ख्यात्वपृथक्त्वातिरिक्तभावनावृत्त्यन्यजातिमत्त्वे सति पाकजत्वं पाकजरूपगन्धस्पर्शद्रवत्वानां स्नेहवेगगुरुत्वैकत्वैकपृथक्त्वपरिमाणस्थितस्थापकानां लक्षणम्। साजात्यं च गुणत्वव्याप्यजात्या । नन्वत्र स्ने-

हेऽव्याप्तिः स्नेहत्वव्याप्यजातौ प्रमाणाभावेन स्नेहत्वव्याप्यजात्या स्वसजातीयान्यस्याप्रसिद्धेः । यदि च जलाद्यन्तर्गतजलसमवेतस्नेहे दहननाशकतावच्छेदकतयापकर्षाख्यवैजात्यस्य तैलाद्यन्तर्गतजलनिष्ठस्नेहे दहनोत्पादकतावच्छेदकता तथापि फलत्ववत् गुरुत्ववदवयवारब्धावयव्युत्पन्नगुरुत्वे फलत्वजातेरभावेन स्वाश्रयसमवायिसमवेतस्य गुरुत्वव्याप्यव्याप्यजात्या स्वसजातीयगुणस्याप्रसिद्धेर्दुर्वारत्वात् ॥

पुटम् ( ६६३ ) स्पर्शान्तपरिमाणैकपृथक्त्वस्नेहशब्दानां असमवायिकारणत्वं लक्षणम् । स्पर्शोऽत्रानुष्णो ग्राह्यः । नन्वसमवायिकारणत्वं अन्त्यावयविगतरूपादिषु अन्त्ये शब्दे वा अव्याप्तं अतिव्याप्तं च कर्मणि । न चासमवायिकारणवृत्तिगुणत्वव्याप्यजातिमत्त्वस्य विवक्षितत्वान्नाव्याप्त्यतिव्याप्ती इति वाच्यं असमवायिकारणीभूतैकत्वैकपृथक्त्ववृत्तिसङ्ख्यात्वपृथक्त्वादिकमादाय द्वित्वद्विपृथक्त्वादावतिव्याप्त्यापत्तेः । नच समवायिकारणवृत्तिगुणत्वव्याप्यजातिमत्त्वस्य विवक्षितत्वात् नीलत्वादिकमादाय रूपादौ लक्षणसमन्वयः स्नेहे दहनोत्पादकतावच्छेदकतावच्छेदकतया तन्नाशावच्छेदकतया उत्कर्षापकर्षाख्यवैजात्यद्वयस्वीकारान्नाव्याप्तिः । तथाच सङ्ख्यात्वपृथक्त्वादिकमादाय नातिव्याप्तिरिति वाच्यं शब्देऽव्याप्त्यापत्तेः । नच कत्वादिजातिमादाय लक्षणसमन्वय इति वाच्यम् । तथापि ध्वन्यात्मकशब्दे अव्याप्तिः । अथ शब्दे संयोगजन्यतावच्छेदकतया विभागजन्यतावच्छेदकतया शब्दजन्यतावच्छेदकतया च वैजात्यत्रयं स्वीक्रियत इति नानुपपत्तिरिति चेन्न कत्वादीनां सङ्करेण तादृशजातिसिद्ध्यसंभवात् । अत एव तारत्वमन्दत्वादयोऽपि न जातय इति तान्यादायापि लक्षणसङ्गमो न संभवति । यदि च वर्णात्मकशब्दे कत्वादिकमादायैव लक्षणसमन्वयः ध्वन्यात्मकशब्दे तु संयोगादिजन्यतावच्छेदकतया वर्णात्मकशब्दव्यावृत्तवैजात्यत्रयं स्वीक्रियते अतो नाव्याप्तिः । जन्यशब्दे तु तत्तज्जन्यतावच्छेदकवैजात्यमनुभवसिद्धम् । अत एवायं शब्दो भेरीदण्डसंयोगजन्यः तादृशद्वयसंयोगजन्यविलक्षणत्वादित्यनुमीयते । एवञ्च तत्तज्जन्यतावच्छेदकवैजात्यवदन्यसमवायिकारणेष्वपि ध्वनिषु तत्तद्ध्वनिजन्यतावच्छेदकतया वैजात्यान्यवश्योपेयानि । तादृशद्वयसंयोगजन्यध्वनिजन्यध्वन्यपेक्षया भेरीदण्डसंयोगजन्यध्वनिजन्यध्वनिषु वैलक्षण्यस्य सर्वानुभवसिद्धत्वात् । तथाचाव्याप्तिरिति विभाव्यते कदाप्यणुपरिमाणस्य कुत्राप्यसमवायिकारणत्वाभावेनाणुत्वत्वजातेरसमवायिकारणावृत्तितयाणुपरिमाणेऽव्याप्तिर्दुर्वारा । अथ गुणत्वव्याप्यव्याप्यत्वं न निवेश्यते किंतु गुणत्वव्याप्यत्वमेव तथाच शब्दत्वपरिमाणत्वादिकमादाय लक्षणसमन्वयः नचैवं सङ्ख्यात्वपृथक्त्वादिकमादायातिव्याप्तिरिति वाच्यम् । अनायत्या सङ्ख्यात्वपृथक्त्वातिरिक्तत्वेन जातेर्विशेषणीयत्वेन न द्वित्वद्विपृथक्त्वादावतिप्रसङ्गावकाशादिति चेन्न । एवं तथापि गुरुत्ववेगद्रवत्वादौ अतिव्याप्तेर्दुर्वारत्वात् तेषामसमवायिकारणत्वात् । नच निरुक्तकारणताशून्यत्वे सतीति विशेषणान्न तेष्वतिव्याप्तिरिति वाच्यं तथापि यस्यां गुरुत्वादिव्यक्तौ निमित्तकारणता नास्ति तस्यामतिव्याप्तेर्दुर्वारत्वात् । अथासमवायिकारणवृत्तिनिमित्तकारणवृत्तिगुणत्वव्याप्यजातिमत्त्वं विवक्षितं गुरुत्वादेर्निमित्त कारणवृत्तित्वात् नातिव्याप्तिः नचैवमसंभवः रूपादेरपि स्वध्वंसप्रत्यक्षादिनिमित्तकारणतया रूपादेर्न तथात्वमिति वाच्यं स्वध्वंसप्रत्यक्षातिरिक्तनिरूपितकारणताया एव निवेशनीयत्वादिति चेन्न स्नेहेऽव्याप्तेः तैलान्तर्गतजलनिष्ठस्नेहस्य दहननिमित्तकारणतया स्नेहत्वस्य निमित्तकारणवृत्तित्वासंभवात् । नच प्रकृष्टस्नेहवज्जन्यस्यैव संयोगसंबन्धेन दहननिमित्तत्वं नतु प्रकृष्टस्नेहस्येति वाच्यं विनिगमनाविरहेण स्वाश्रयसंयुक्तत्वसंबन्धेन प्रकृष्टस्नेहस्यापि निमित्तकारणताया अक्षतत्वात् । नच ध्वंसप्रत्यक्षातिरिक्तद्रव्यं सभिन्ननिरूपितानिमित्तकारणत्वमेव निवेश्यमिति वाच्यं चूर्णादिविलक्षणसंयोगात्मकपिण्डीभावं प्रति स्नेहस्य निमित्तकारणताया अव्याप्तेर्दुर्वारत्वात् । नचैतन्मते सांसिद्धिकद्रवत्वस्यैव पिण्डीभावहेतुत्वं नतु स्नेहस्य तथाच वक्ष्यति द्रवत्वं स्यन्दनहेतुः निमित्तं सङ्ग्रहे हेतुरिति वाच्यं सांसिद्धिकद्रवत्वेन स्नेहत्वेन वा कारणत्वमित्यत्र विनिगमनाविरहेण द्वयोः कारणताया दिनकरेण वक्ष्यमाणत्वात् । किंच द्वित्वस्य परिमाणसमवायिकारणतया क्वचिन्निमित्तकारणताभावेन च द्वित्वमादायातिव्याप्तिः । नच गुणत्वव्याप्यपदं गुणत्वसाक्षाद्व्याप्यपरमिति वाच्यं तथा सत्येकत्वैकपृथक्त्वयोरव्याप्त्यापत्तेः । नच सङ्ख्याभिन्नत्वस्थाने द्वित्वावृत्तित्वमेव निवेशनीयमिति वाच्यं तथापि त्रित्वचतुष्ट्वादीनामपि परिमाणासमवायिकारणतया त्रित्वादिकमादायातिव्याप्तेर्दुर्वारत्वात् । अस्तु वा सङ्ख्याभि-

न्नत्वस्थाने एकत्वान्यसङ्ख्यावृत्त्यन्यत्वं निवेश्योक्तातिप्रसङ्गवारणात् तथापि पूर्वोक्तातिव्याप्तिवारणमाशङ्क्यमेव । अत्रोच्यते गुणत्वव्याप्यजात्या स्वसजातीयनिरूपितसमवायिकारणतावद्वृत्तिसङ्ख्यावृत्त्यन्यत्वं निवेश्योक्तातिव्याप्तिज्ञानातिरिक्तद्रव्याभिन्नभावनिरूपितनिमित्तकारणतावद्वृत्तिसङ्ख्यात्वपृथक्त्वातिरिक्तजातिमत्त्वं विवक्षितम् । रूपादिकमादाय लक्षणसमन्वयः । उष्णस्पर्शश्चात्र लक्ष्यः मुक्तावळ्यां तथा प्रतिपादनात् अत उष्णस्पर्शस्य पाकजनिमित्तकारणत्वेऽपि न क्षतिः । अनुष्णाशीतत्वादिकमादाय लक्षणसमन्वयात् । संयोगभिन्नत्वमपि निमित्तकारणतानिरूपकाभावे विशेषणीयं तेन पिण्डीभावनिमित्तकारणे स्नेहे नाव्याप्तिः । अत्र परिमाणासमवायिकारणद्वित्वादावतिव्याप्तिवारणाय गुणत्वव्याप्यजात्या स्वसजातीयनिरूपितत्वं असमवायिकारणताविशेषणम् । नच सङ्ख्याभिन्नत्वस्थाने एकत्वान्यसङ्ख्यावृत्त्यन्यत्वमेव जातौ विशेषणं क्रियतां तावतैव द्वित्वादिवारणसंभवात् किमुक्तगुरुविशेषणेनेति वाच्यम् । तथापि भेरीदण्डसंयोगवृत्तिशब्दजनकतावच्छेदकवैजात्यं दळद्वयविभागनिष्ठशब्दजनकतावच्छेदकवैजात्यं चादायातिव्याप्तेर्वारणाय तद्विशेषणावश्यकत्वात् भेर्याकाशसंयोगादीनां शब्दादौ निमित्तकारणत्वेऽपि निरुक्तवैजात्यानां तदवृत्तित्वात् । विवक्षिते तु शब्दस्य संयोगजातीयत्वाभावान्नातिव्याप्तिः । अथ स्नेहेऽव्याप्तिवारणाय निमित्तकारणतानिरूपकाभावे संयोगातिरिक्तत्वनिवेशे गुरुत्ववेगयोरव्याप्तिः तयोरभिघाताख्यसंयोगं प्रत्येव निमित्तकारणतया तदतिरिक्तं प्रति अनतिरिक्तत्वात् । अपिच पिण्डीभावात्मकविलक्षणसंयोगभिन्नत्वमेव निविष्टं नतु सामान्यतस्संयोगभिन्नत्वं अतो नातिव्याप्तिरिति वाच्यं तथापि द्रव्यत्वेऽतिव्याप्तेः । द्रवत्वस्य पिण्डीभावं प्रत्येव निमित्तकारणत्वादिति हि पिण्डीभावभिन्नत्वमपि निवेशयितुं न शक्यत इति चेत् मास्तु तन्निवेशः द्रव्याभिन्नत्वानिवेशेऽपि स्नेहेऽतिव्याप्तिश्च अनायत्या स्नेहत्वं निमित्तकारणे निवेश्य वारणाय अथ तथापि नैमित्तिकद्रवत्वस्य कुत्रापि निमित्तकारणत्वाभावात् नैमित्तिकद्रवत्वमादायातिव्याप्तिः । नच तन्निवेशे नैमित्तिकद्रवत्वस्य पिण्डीभावनिमित्तकारणतया तद्वृत्तित्वात्तस्य नातिव्याप्तिरिति वाच्यं सांसिद्धिकद्रवत्वत्वेनैव पिण्डीभावनिमित्तकारणतया तैलान्तर्गतजलनिष्ठजलत्वस्यैव तद्धेतुत्वोपगमात् इति चेन्न नैमित्तिकद्रवत्वाभिन्नस्याप्यनायत्या विशेष्ये निवेशनीयत्वात् । अथवा स्नेहान्यत्वं निवेश्य पिण्डीभावातिरिक्तत्वं निमित्तकारणतानिरूपकाभावे निवेश्य सामान्यतो द्रवत्वान्यत्वमेव निवेशयितुमुचितमिति । आत्मविशेषगुणानां निमित्तकारणत्वं लक्षणम् । ननु यादृशज्ञानादिव्यक्तेः कुत्रापि न निमित्तकारणत्वमासीत् तत्रेदमव्याप्तमतिव्याप्तं च द्रव्यादौ । नच निमित्तकारणवृत्तिगुणत्वव्याप्यजातिमत्त्वं विवक्षितमिति न दोष इति वाच्यं निमित्तकारणीभूतभावनावृत्तिसंस्कारत्वजातिमादाय वेगस्थितस्थापकयोरतिव्याप्तेः । ननु निमित्तकारणवृत्तिगुणत्वव्याप्यजातिमत्त्वं विवक्षितं ज्ञाने प्रत्यक्षादिकमादाय सुखदुःखेच्छाद्वेषेषु प्राकट्याप्राकट्ययोर्जातिविशेषयोरनुभवसिद्धत्वेन ते आदाय लक्षणसमन्वयः । स्वर्गादिरूपतत्तद्विलक्षणफलजनकतावच्छेदकतया धर्मत्वव्याप्यजातीनां नाकादिरूपतत्तद्विलक्षणदुःखजनकतावच्छेदकतया चाधर्मत्वव्याप्यजातीनां सिद्धत्वात्तयोरपि लक्षणसङ्गतिः । भावनायां तु भावनात्वमेव सुलभं यत्नेनतु प्रवृत्तित्वेन प्रवृत्तजीवनयोनित्वानि सुलभानि तथाच संस्कारत्वमादाय नाव्याप्तिरिति चेन्न तथाप्युष्णत्वादिकमादाय अव्याप्तेर्दुर्वारत्वात् । असमवायिकारणवृत्तिनिमित्तकारणवृत्तिगुणत्वव्याप्यजातिमत्त्वं समुदितलक्षणार्थः । उष्णत्वादिकं संस्कारवत्त्वं चासमवायिकारणवृत्त्येवेति न दोष इतिं वाच्यम् । तथा सत्यात्मप्रत्यक्षं प्रति आत्मगतपरममहत्त्वस्य कारणतायाः पूर्वमङ्गीकृतत्वात् परममहत्त्वस्य कुत्राप्यसमवायिकारणत्वाभावाच्च परममहत्त्वत्वजातिमादाय परिमाणेऽतिव्याप्तेर्दुर्वारत्वात् । नच ज्ञानातिरिक्तनिरूपितनिमित्तकारणतैव निवेश्यते अतो नातिव्याप्तिरिति वाच्यं भावनायामव्याप्त्यापत्तेः स्मृतिं प्रत्येव भावनाया निमित्तकारणतया ज्ञानातिरिक्तनिमित्तकारणत्वे मानाभावात् । नच प्रत्यक्षातिरिक्तनिरूपितनिमित्तकारणत्वमेव निवेशितं नतु सामान्यतो ज्ञानातिरिक्तत्वनिवेश इति नाव्याप्तिरिति वाच्यम् । तथा सति ज्ञायमानलिङ्गस्यानुमितिकारणतावादिनये मूर्तभिन्नद्रव्यत्वप्रकारकात्मविशेष्यकानुमितौ परममहत्त्वस्य निमित्तकारणताया अतिव्याप्तेर्दुर्वारत्वात् । अथ समवायिकारणवृत्तिप्रत्यक्षातिरिक्तानिरूपितनिमित्तकारणतावद्वृत्तिगुणत्वसाक्षाद्व्याप्यजातिमत्त्वं विवक्षितम् । परममहत्त्वन्तु प्रवृत्तित्वेन प्रवृत्तित्वजीवनयोनिगुणत्व-

साक्षाद्व्याप्यमिति नातिव्याप्तिः । नचैवं भावनायामव्याप्तिरिति वाच्यं संस्कारत्वान्यगुणत्वव्याप्यत्वे सति गुणत्वव्याप्यत्वे सति गुणत्वव्याप्यव्याप्यत्वस्यैव गुणत्वसाक्षाद्व्याप्यत्वपदेन विवक्षितत्वादिति चेन्न एवमपि सुखदुःखयोः अव्याप्तेर्दुर्वारत्वात् सुखदुःखयोः कुत्रापि निमित्तकारणत्वाभावात् । नच तयोः स्वजनकीभूतधर्माधर्मनाशे निमित्तकारणत्वमस्त्येवेति अव्याप्तिरिति वाच्यम् । तथा सति परत्वापरत्वयोरव्याप्त्यापत्तेः तयोः क्वाप्यसमवायिकारणत्वाभावात् । निमित्तकारणत्वं च स्वध्वंसातिरिक्तकार्यं प्रति । यदि च भावनिरूपितत्वं ध्वंसातिरिक्तनिरूपितत्वं वा निमित्तकारणतायां निवेश्य इयमतिव्याप्तिर्वार्यते तदा सुखदुःखयोरव्याप्तिरापतिता । अथ स्वध्वंसभिन्नप्रत्यक्षातिरिक्तनिरूपितनिमित्तकारणतैव विवक्षिता अतो नाव्याप्त्यतिव्याप्ती इति चेन्न तथापि ज्ञायमानलिङ्गस्यानुमितिकरणतानये मूर्तत्वप्रकारकघटादिविशेष्यकानुमितौ परत्वापरत्वयोर्निमित्तकारणतया परत्वादिकमादायातिव्याप्तेर्दुर्वारत्वात् सामान्यतो ज्ञानातिरिक्तत्वनिवेशे भावनायामव्याप्तिरिति । अत्रोच्यते असमवायिकारणावृत्तिस्वध्वंसभिन्नानुभवातिरिक्तनिरूपितनिमित्तकारणतावद्वृत्तिगुणत्वव्याप्यजातिमत्त्वं विवक्षितं संस्कारत्वं तु असमवायिकारणवृत्ति परममहत्त्वन्तु अनुभवातिरिक्ते न निमित्तकारणं परत्वापरत्वे स्वध्वंसभिन्नानुभवातिरिक्तं प्रति निमित्तकारणे इति नातिव्याप्तिः सुखदुःखयोश्चोत्तरं अतिरिक्तस्वजनकीभूतपूर्वनाशे निमित्तकारणत्वमस्त्येवेति नाव्याप्तिः । वस्तुतः सर्वेष्वात्मविशेषगुणेषु स्वाव्यवहितपूर्वक्षणोत्पन्नयोग्यविशेषगुणनाशनिमित्तकारणत्वमस्त्येवेति सुलभैव लक्षणसङ्गतिः । उष्णस्पर्शगुरुत्ववेगद्रवत्वसंयोगविभागानां असमवायिकारणत्वे सति निमित्तकारणत्वं लक्षणम् । नन्वत्रासमवायिकारणत्वविशिष्टनिमित्तकारणत्वमसमवायिकारणत्वाभाववति अन्त्यावयविगतोष्णस्पर्शादौ पाकजाद्यजनकेषु यत्किञ्चिद्वृत्तिविशेषेषु चाव्याप्तं अतिव्याप्तं च कर्मणि कुलालचेष्टायाः घटं प्रति निमित्तकारणत्वात् संयोगाद्यसमवायिकारणत्वाच्च । न त्वसमवायिकारणत्वविशिष्टनिमित्तकारणतावद्वृत्तिकगुणत्वव्याप्यजातिमत्त्वं विवक्षितं नाव्याप्त्यतिव्याप्ती इति वाच्यं संयोगविभागयोरव्याप्त्यापत्तेः असमवायिकारणयोर्भेरीदण्डसंयोगदळद्वयविभागयोर्निमित्तकारणत्वात् निमित्तकारणयोर्भेर्याकाशसंयोगदळद्वयविभागयोश्च असमवायिकारणत्वाभावाच्च समवायिकारणत्वाविशिष्टनिमित्तकारणत्ववतोस्संयोगविभागयोरप्रसिद्धेः । अथ यत्र हस्ताकाशयोरभिघाताख्यसंयोगात् शब्दो जायते तत्र हस्ताकाशसंयोगे निमित्तकारणं । नच संयोगः शरीराकाशसंयोगं प्रति असमवायिकारणं तथाच यः समवायिकारणत्वविशिष्टनिमित्तकारणतावान् स एव हस्ताकाशसंयोगः प्रसिध्यति तथा चासमवायिकारणत्वनिमित्तकारणत्वोभयवत्याः संयोगव्यक्तेरप्रसिद्धकथनं दिनकरस्य सङ्गतमिति चेन्न तथापि विशिष्टाश्रयीभूतविभागव्यक्तेरप्रसिद्धिर्दुर्वारैव परस्परं विभज्यमानवंशदळाकाशविभागभवस्य शब्दनिमित्तकारणस्य वंशाकाशविभागं प्रति असमवायिकारणत्वाभावात् वंशदळाकाशविभागकाले वंशस्य नष्टत्वात् कारणाकारणविभागजन्यकार्याकार्यविभागस्य च शब्दं प्रति निमित्तकारणत्वाभावात् अवयवद्वयविभागस्थल एव शब्दोत्पत्तेः असमवायिकारणवृत्तिनिमित्तकारणवृत्तित्वव्याप्यजातिमत्त्वं विवक्षितं संयोगत्वादेः प्रत्येकवृत्तितामादाय लक्षणसमन्वय इति चेन्न तथाविधोष्णस्पर्शवृत्तिस्पर्शत्ववतोरनुष्णाशीतस्पर्शयोः तथाविधवेगवृत्तिसंस्कारत्वादिजातिमतोः स्थितस्थापकभावनयोश्चातिव्याप्तेर्दुर्वारत्वात् । ननु तादृशगुणत्वव्याप्यजातिमत्त्वं विवक्षितं तादृशी चोष्णत्वजातिरेवेति नातिव्याप्तिः वेगे तु वेगत्वजातिरेव तथा गुरुत्वे फलत्वादिजातिः द्रवत्वे तु सांसिद्धिकद्रवत्वनैमित्तिकद्रवत्वे संयोगविभागयोः संयोगविभागक्रियादिजन्यतावच्छेदका जातयः तादृश्यः प्रसिद्धा इति सर्वत्र लक्षणसमन्वय इति चेन्न नैमित्तिकद्रवत्वे अव्याप्तेः नैमित्तिकद्रवत्वस्य पिण्डीभावनिमित्तकारणतया अन्यत्र प्रत्युक्तत्वात् स्नेहत्वव्याप्योत्कर्षापकर्षाख्यवैजात्यद्वयमादायातिव्याप्तेश्च । स्नेहस्यापि पिण्डीभावनिमित्तकारणत्वात्पिण्डीभावातिरिक्तनिरूपितत्वस्य निमित्तकारणताविशेषणत्वं स्वीकृत्यैव तद्दोषपरिहारे सांसिद्धिकद्रवत्वे अव्याप्तिः तस्य पिण्डीभावातिरिक्तं प्रति अनिमित्तकारणत्वात् स्नेहाजन्यपिण्डीभावातिरिक्तत्वमपि न सम्यक् स्नेहसांसिद्धिकद्रवत्वयोस्समनियतत्वात् स्नेहवृत्तित्वं जातिविशेषणत्वं स्वीकृत्यैव तद्दोषपरिहारेऽपि नैमित्तिकद्रवत्वे अव्याप्तिर्दुर्वारैवेति । उच्यते । असमवायिकारणावृत्तिज्ञानातिरिक्तभावनिरूपितनिमित्तकारणतावदवृत्तिशीतस्पर्शस्नेहावृत्तिगुणत्वव्याप्यजातिमत्त्वस्य विवक्षितत्वादिति सर्वं

सिद्धम् ॥ परत्वादीनां नासमवायिकारणत्वं नापि निमित्तकारणत्वमिति मुक्तावलीग्रन्थः । परत्वापरत्वद्वित्वादेः द्विपृथक्त्वादीनामित्यर्थः । द्वित्वादिरूपं च द्वित्वादिरूपविशेषपरम् । तथाच परिमाणासमवायिकारणद्वित्वाद्यतिरिक्तासमवायिकारणावृत्तिनिमित्तकारणावृत्तिजातिमत्त्वे सति परिमाणासमवायिकारणान्यत्वे सति गुणत्वं लक्षणम् । एतत्सर्वमभिप्रेत्योक्तं परस्त्वन्यत्रानुसन्धेय इति दिनकरेण ॥

**पुटम्** ( ७०७ ) यद्यप्यणुत्वमेव ह्रस्वत्वमस्तु महत्त्वमेव दीर्घत्वमस्त्विति कुतश्चातुर्विध्यं तथापि तदवधिकाणुतया प्रतीयमाने तदवधिकह्रस्वत्वाव्यवहारात् तदवधिकमहत्त्ववत्तया प्रतीयमाने तदवधिकदीर्घत्वाव्यवहाराच्च ह्रस्वत्वदीर्घत्वयोरतिरिक्तपरिमाणतया तच्चातुर्विध्यं बोध्यमिति दिनकरग्रन्थः । अणुत्वमेवेत्यस्यापकृष्टमहत्त्वमेवेत्यर्थः यथाश्रुते वृक्षो घटो ह्रस्व इति प्रतीतेरनुपपत्तेः घटस्य महत्त्वेनाणुत्वात्पार्थक्येन न विभाजकोऽनुपपन्न इति भावः ॥ **तदवधिकेति** ॥ घटावधिकापकृष्टमहत्त्ववत्तया प्रतीयमाने तदवधिकह्रस्वत्वाभावाव्यवहारात् घटावधिकोत्कर्षमहत्त्ववत्तया प्रतीयमाने घटे तदवधिकोत्कृष्टत्वाव्यवहारादित्यर्थः । ह्रस्वत्वदीर्घत्वे नापकर्षोत्कर्षरूपे किन्त्वतिरिक्तवैजात्ये महत्त्वत्वव्याप्ये तथाच घटनिष्ठमहत्त्वापेक्षया ह्रस्वत्वत्वजातेः घटनिष्ठमहत्त्वे पटनिष्ठमहत्त्वापेक्षया दीर्घत्वत्वजातेश्च घटनिष्ठमहत्त्वेऽनङ्गीकारेण नोक्तव्यवहारानुपपत्तिः ह्रस्वत्वत्वदीर्घत्वत्वयोर्महत्त्वत्वविरुद्धत्वे एकस्यां व्यक्तौ नानापरिमाणाङ्गीकारस्यावश्यकतया गौरवात् अस्माकन्तु महत्त्वस्यैव ह्रस्वत्वव्यवहारविषयत्वाभ्युपगमेन लाघवात् । ननु महत्त्वव्याप्योत्कर्षादिना ह्रस्वत्वत्वदीर्घत्वत्वयोस्सङ्करापत्तिः दण्डाद्यपेक्षया दीर्घस्तम्भाद्यपेक्षयोत्कृष्टमहत्त्ववद्द्रव्यसमवेतपरिमाणे दण्डापेक्षया ह्रस्वत्वस्तम्भापेक्षयापकृष्टमहत्त्ववद्द्रव्यसमवेतपरिमाणे परस्परपरिहारेण वर्तमानयोः दण्डनिष्ठपरिमाणावधिकह्रस्वत्वत्वस्तम्भनिष्ठपरिमाणावधिकोत्कर्षयोः दण्डापेक्षयाह्रस्वस्तम्भापेक्षयोत्कृष्टमहत्त्ववद्द्रव्यसमवेतपरिमाणे समावेशात् । एवं दण्डापेक्षयादीर्घ-स्तम्भापेपेक्षयाउत्कृष्टमहत्त्ववद्द्रव्यसमवेतपरिमाणे दण्डापेक्षया ह्रस्व-स्तम्भापेक्षयापकृष्टमहत्त्ववद्द्रव्यसमवेतपरिमाणे च परस्परपरिहारेण वर्तमानयोः दण्डनिष्ठपरिमाणावधिकदीर्घत्वस्तम्भनिष्ठपरिमाणावधिकापकर्षयोः दण्डापेक्षया दीर्घस्तम्भापेक्षयापकृष्टमहत्त्ववद्द्रव्यसमवेतपरिमाणे समावेशात् । नच ह्रस्वत्वपरिमाणस्य दीर्घत्वपरिमाणस्य च तत्तदवधिभेदेन भिन्नत्वेऽपि ह्रस्वत्वत्वजातेर्दीर्घत्वत्वजातेश्च एकतया दण्डापेक्षया दीर्घसमवेतपरिमाणेऽपि ह्रस्वत्वत्वजातिरस्त्येव एवं ह्रस्वेऽपि दीर्घत्वत्ववत्परिमाणमस्त्येवेति न साङ्कर्यमिति वाच्यम् । तथापि सर्वापेक्षया दीर्घद्रव्यसमवेतपरिमाणे सर्वापेक्षया ह्रस्वद्रव्यसमवेतपरिमाणे च परस्परपरिहारेण वर्तमानयोः ह्रस्वत्वत्वदीर्घत्वत्वयोर्घटादिपरिमाणे समावेशेन साङ्कर्यस्य दुर्वारत्वादिति चेन्न तत्तदवधिकापकर्षोत्कर्षादिव्याप्यनानाह्रस्वत्वत्वदीर्घत्वत्वजातिस्वीकारेण साङ्कर्याप्रसक्तेः । तस्माच्चातुर्विध्योपपत्तिर्दुर्वारैवेति । केचित्तु अणु दीर्घं महद्ध्रस्वमिति वाक्ये अणु दीर्घमिति विभागः । दीर्घपदं महत्परं तथाच परिमाणं द्विविधं अणुत्वं महत्त्वञ्चेत्यर्थः । महद्ध्रस्वमिति महत्त्वविभागः । महत्त्वपदञ्च उत्कृष्टमहत्त्वपरं ह्रस्वत्वपदं च अपकृष्टमहत्त्वपरं तथाच महत्त्वं द्विविधं परममहत्त्वमपकृष्टमहत्त्वञ्चेत्यर्थः अतः कारिकाविरोधो नास्तीत्याहुः । अन्ये तु दीर्घत्वत्वह्रस्वत्वत्वयोर्महत्त्वत्वव्याप्यत्वेऽपि प्रमाणप्रमेयेत्यादिवत् व्याप्यधर्मेणापि विभागस्वीकारात् न परिमाणचातुर्विध्यानुपपत्तिरित्याहुः ॥

**पुटम्** ( ७१६ ) ननु संयोगत्वं नान्यतरकर्मणः कार्यतावच्छेदकं उभयकर्मजसंयोगे संयोगजसंयोगे च व्यभिचारादिति चेन्न विजातीयकर्मत्वेन विजातीयसंयोगत्वेन समवायेन हेतुहेतुमद्भावात् उभयकर्मजसंयोगे च तादृशवैजात्याभावेन व्यभिचाराभावादेवं उभयकर्मणः संयोगस्यापि बोध्यमिति दिनकरः । अत्रोभयकर्मजन्यसंयोगे व्यभिचारशङ्का न संभवति प्रतियोगितासम्बन्धेन संयोगत्वावच्छिन्नं प्रति क्रियात्वेन समवायसंबन्धेन कारणत्वं न त्वन्यतरक्रियात्वेन उभयकर्मजन्यसंयोगस्य च उभयत्रैव प्रतियोग्यनुयोगिभावः स्वीक्रियत इति व्यभिचाराप्रसक्तेः । नचैतदस्वरसेनैव संयोगजसंयोग इति स्थलान्तरानुसरणं तत्र हि हस्ततरुसंयोगजन्यशरीरतरुसंयोगे शरीरजन्यप्रतियोगितासंबन्धेन तत्र क्रियाविरहादिति वाच्यम् । तथा सति क्रियाजन्यसंयोगमात्रे संयोगजसंयोगव्यावृत्तं वैजात्यं स्वीकृत्य प्रतियोगितासंबन्धेन विजातीयसंयोगत्वेन समवायसंबन्धेन क्रिया-

त्वेन कार्यकारणभावस्य वक्तुं शक्यतया अन्यतरकर्मोभयकर्मभेदेन कार्यकारणभावद्वयस्य कर्मणि च वैजात्यद्वयस्य कल्पनायां प्रयोजनाभावेन सन्दर्भविरोधात् नचान्यतरकर्मजन्यसंयोगयोरेकविधकार्यकारणभावस्यैव स्वीकारे आद्योऽन्यतरकर्मजः तत उभयस्पन्दजन्य इति विभागानुपपत्तिरिति वाच्यम् कार्यकारणभावस्यैकत्वेऽपि एकसंयोगोऽन्यतरमात्रनिष्ठकर्मणा जायते अन्यस्तु उभयकर्मभ्यामपीति रीत्या विभागस्य संभवात् । नच प्रतियोगितासंबन्धेन संयोगस्याभावेऽपि सत्त्वेन क्रियायास्तत्राभावात् व्यभिचार इति वाच्यम् । नास्तीति प्रतीतिसिद्धाभावनिष्ठप्रतियोगितातः अनेन संयुक्त इति प्रतीतिसिद्धायाः प्रतियोगितायाः वैलक्षण्यस्यानुभवसिद्धत्वेन तस्या एव कार्यतावच्छेदकसंबन्धत्वेनोपगमात् । नचैवं लितयोल्लिखितप्रतीतेः संयोगप्रतियोगित्वविषयकत्वे पर्वतः श्येनसंयुक्तः इति प्रतीतिवत् श्येनः पर्वते संयुक्त इत्यपि प्रतीत्या पर्वतादावपि संयोगप्रतियोगित्वसत्त्वेन व्यभिचारो दुर्वार इति वाच्यम् । तादृशप्रतीतेरप्रसिद्धेः श्येनः पर्वते संयुक्त इति सप्तम्युल्लिखितप्रतीतेरेवानुभवसिद्धत्वात् । अत एवात्मा मनसा संयुज्यते मन इन्द्रियेण इन्द्रियमर्थेनेत्यत्र इन्द्रियं मनसा अर्थ इन्द्रियेणेत्यर्थः इन्द्रियादिनैवार्थादेः संयोगादिति तत्र तत्र विवरणं ग्रन्थकृतां सङ्गच्छते । एतेन वृक्षसंयोगस्य वृक्षेऽपि सत्त्वेन तत्र क्रियाया अभावाद्व्यभिचारमाशङ्क्य कार्यतावच्छेदकावच्छिन्नयात्किञ्चिद्व्यक्त्यधिकरणयावद्व्यक्त्यत्यन्ताभावप्रतियोगितावच्छेदकधर्मवत्त्वमेव कारणताघटकमित्यादिवक्ष्यमाणप्रयासोऽपि न श्रद्धेयः । प्रतियोगितायाः कार्यतावच्छेदकसंबन्धत्वाङ्गीकारे तादृशस्य व्यभिचारस्यैव प्रसक्त्या तस्योक्तप्रलापतुल्यत्वादिति ध्येयम् ॥

पुटम् ( ७४४ ) तद्वद्विशेष्यकत्वावच्छिन्नतत्प्रकारकत्ववदनुभवत्वं तत्प्रमात्वम् । नन्वत्र पृथ्वीजलोभयं गन्धवदिति भ्रमेऽतिव्याप्तिः तत्रापि गन्धवद्विशेष्यकत्वावच्छिन्नगन्धप्रकारकत्वस्य सत्त्वात् । नच व्यासज्यवृत्तिधर्मानवच्छिन्नतद्वन्निष्ठविशेष्यतानिरूपिततन्निष्ठप्रकारताशालित्वं विवक्षितमिति वाच्यम् । तथा सति पृथिवीजलोभयं द्रव्यमिति प्रमायामव्याप्तेः तत्र विशेष्यतायाः व्यासज्यवृत्तिधर्मावच्छिन्नत्वात् । ननु विशेष्यतायां तदधिकरणतावच्छेदकधर्मावच्छिन्नत्वमेव निवेश्यते पृथिवीजलोभयत्वस्य च गन्धाधिकरणतानवच्छेदकत्वान्नातिव्याप्तिरिति नच पृथिवीजलोभयत्वस्य गन्धाधिकरणसंबन्धित्वात् तदधिकरणतावच्छेदकत्वं कुतो नास्तीति वाच्यम् । गन्धाधिकरणे तस्य समवायसंबन्धेन संबन्धित्वेऽपि पर्याप्त्याख्यसंबन्धेनासंबन्धित्वात् रङ्गं रजतत्ववदिति ज्ञानीयविशेष्यतानिरूपितसमवायसंबन्धावच्छिन्नावच्छेदकतावतो रङ्गत्वस्य रजतत्वाधिकरणतानिरूपककालिकसंबन्धावच्छिन्नावच्छेदकत्वात् अतिव्याप्तिवारणाय स्वावच्छेदकतासंबन्धावच्छिन्नतदधिकरणतावच्छेदकतावद्धर्मनिष्ठावच्छेदकत्वस्य निवेशनीयतया विशेष्यतावच्छेदकीभूतपर्याप्तिसंबन्धावच्छिन्नतदधिकरणतावच्छेदकताया उभयत्वेऽभावात् । नचोभयत्वस्य प्रत्येकानतिरिक्ततया उभयत्वस्य पर्याप्तिसंबन्धेन गन्धाधिकरणसंबन्धित्वमस्त्येवेति तत्संबन्धावच्छिन्नतदधिकरणतावच्छेदकत्वं कुतो नास्तीति वाच्यं पृथिवीजलोभयं गन्धवदिति प्रतीत्यभावेन स्वव्यापकगन्धाधिकरणतानिरूपितस्वरूपसंबन्धरूपावच्छेदकत्वस्य उभयत्वेऽनङ्गीकारादिति चेन्न निरवच्छिन्नविशेष्यताघटकप्रमायामव्याप्तेः । नच तदधिकरणतावच्छेदकावच्छिन्नत्वं तदधिकरणतावच्छेदकव्यापकत्वमिति वाच्यम् । तथा सति घटघटोभयं घट इति भ्रमेऽतिव्याप्तेर्दुर्वारत्वात् घटघटोभयत्वावच्छिन्नविशेष्यतायां घटाधिकरणतावच्छेदकतद्व्यक्तित्वव्यापकत्वात् । नच तदधिकरणतावच्छेदकसमनियतत्वनिवेशनान्न दोषः घटसाधारण्यात्तादृशविशेष्यताया घटत्वाधिकरणतावच्छेदकाव्याप्यत्वादिति वाच्यं घटो द्रव्यमिति प्रमायामव्याप्तेः घटत्वावच्छिन्नविशेष्यतायाः द्रव्यत्वाधिकरणतावच्छेदकाव्यापकत्वात् । नच तदधिकरणतावच्छेदकयत्किञ्चिद्धर्मसमनियतत्वं विवक्षितमिति घटत्वावच्छिन्नविशेष्यताया द्रव्यत्वाधिकरणतावच्छेदकीभूतघटत्वरूपयत्किञ्चिद्धर्मसमनियतत्वात् नाव्याप्तिरिति वाच्यम् । तथापि घटपटोभयं घट इति भ्रमेऽतिव्याप्तेर्दुर्वारत्वात् घटपटान्यतरो घट इति प्रतीत्यान्यतरत्वस्य घटत्वाधिकरणतावच्छेदकतया तत्समनियतत्वस्य घटपटोभयत्वावच्छिन्नविशेष्यताया अव्याहतत्वात् । नापि तदधिकरणतानवच्छेदकानवच्छिन्नत्वं विशेष्यताविशेषणं अतो न कोऽपि दोष इति प्रत्युक्तं निरवच्छिन्नरजतविशेष्यतानिरूपितरङ्गत्वप्रकारताशालिज्ञानस्य प्रमा-

त्वापत्तेरिति चेन्न तदधिकरणतानवच्छेदकानवच्छिन्नतद्वन्निष्ठविशेष्यतानिरूपिततन्निष्ठप्रकारताशालित्वविवक्षणेन सर्वानुपपत्तिपरिहारसंभवात् । नन्वत्र तद्वत्त्वं तत्प्रतियोगिकसंबन्धानुयोगित्वमावश्यकमन्यथा वृत्त्यनियामकसंबन्धावगाहिप्रमाया अव्याप्तिः । तथा च वायू रूपवानिति भ्रमेऽतिव्याप्तिरिति चेन्न रूपनिरूपितत्वविशिष्टसमवायिकारणताया एव रूपसंबन्धत्वेन महादेवेनाभ्युपगतत्वात् । तदभाववद्विशेष्यकत्वावच्छिन्नतत्प्रकारकत्वं तद्भ्रमत्वम् । नन्वत्र रजते रजतत्वज्ञानस्यापि भ्रमत्वापत्तिः वैशिष्ट्यव्यासज्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकरजतत्वाभावस्य रजते सत्त्वात् । नच प्रकारतावच्छेदकधर्मावच्छिन्नप्रतियोगिताकतदभावो विवक्षित इति न दोष इति वाच्यम् । तथा सति स्वरूपतो रजतत्वप्रकारकरङ्गविशेष्यकज्ञानस्य भ्रमत्वानुपपत्तेः तत्र प्रकारतावच्छेदकधर्माप्रसिद्धेः । न च स्वीयप्रकारतानवच्छेदकधर्मावच्छिन्नप्रतियोगिताकाभावो विवक्ष्यते व्यासज्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकाभावश्च न तथेति वाच्यम् । तावताऽव्याप्तेरनुद्धारात् स्वरूपतो रजतत्वप्रकारकप्रमीयप्रकारतावच्छेदकधर्मानवच्छिन्नप्रतियोगिताकरजतत्वाभावप्रसिद्धेः तत्प्रतियोगितावच्छेदकरजतत्वादेः प्रतियोगितानवच्छेदकत्वात् किंचित्स्वीयप्रकारतावच्छेदकत्वं स्वीयप्रकारतानिरूपितविलक्षणावच्छेदकत्वाभावः तथाच तत्राप्रसिद्धिस्तदीयप्रकारतानिरूपितविलक्षणावच्छेदकत्वाप्रसिद्धेः । नच वैशिष्ट्यव्यासज्यवृत्तिधर्मानवच्छिन्नप्रतियोगिताकतदभाववत्त्वविवक्षणान्न कोऽपि दोष इति वाच्यम् । गुणकर्मान्यत्वविशिष्टसत्तावान् गुण इत्यादिभ्रमे अव्याप्तेः वैशिष्ट्यव्यासज्यवृत्तिधर्मानवच्छिन्नसत्तानिष्ठप्रतियोगिताकाभावस्य गुणे सत्त्वात् । नच प्रकारतावच्छेदकातिरिक्तवैशिष्ट्यव्यासज्यवृत्तिधर्मानवच्छिन्नप्रतियोगिताकाभावो विवक्षितः उक्तस्थले च गुणकर्मान्यत्वविशिष्टसत्तात्वावच्छिन्नप्रतियोगिताकाभाव एव तादृशोभयवति नातिव्याप्तिरिति वाच्यम् । तथा सति स्वरूपतोऽतिरिक्तत्वप्रकारकभ्रमेऽव्याप्तिः वज्रलेपायमानत्वात् तत्र प्रकारतावच्छेदकाप्रसिद्धिः । यदि च प्रकारतावच्छेदकत्वं न प्रकारतानिरूपितप्रकारतारूपविलक्षणावच्छेदकतात्वेन निवेश्यते किन्तु प्रकारांशे विशेषणीभवद्धर्मनिष्ठप्रकारतानिरूपितावच्छेदकत्वप्रकारितावच्छेदकसंबन्धनिष्ठसांसर्गिकविषयत्वोभयसाधारणावच्छेदकतात्वेन प्रकारतानिरूपितविशेष्यताभिन्नविषयतात्वेन वा निवेश्यते तथा च स्वरूपतो रजतत्वप्रकारकज्ञानीयप्रकारतावच्छेदकत्वसमवाय एव प्रसिद्ध इति नाव्याप्तिरित्युच्यते तथापि प्रमेयत्वेन रूपेण यावत्प्रमेयप्रकारतावच्छेदकसंयोगसंसर्गकगुणविशेष्यकप्रमेयत्वान्यगुण इत्याकारके भ्रमेऽव्याप्तिः तत्र प्रमेयमात्रस्यैव तादृशप्रकारतावच्छेदकत्वेन तदतिरिक्ताप्रसिद्धेः । किञ्च संयोगेन दण्डप्रकारकप्रमायामतिव्याप्तिः तद्दण्डवृत्तिसंयोगान्तरव्यक्त्यवच्छिन्नतद्दण्डनिष्ठप्रतियोगिताकाभावस्य तद्वति सत्त्वात् । नन्व स्वीयप्रकारतानिरूपितविशेष्यताभिन्नविषयतानवच्छेदकावच्छिन्नावच्छेदकताकतन्निष्ठप्रतियोगिताकाभावो निवेश्यते प्रकृते च तादृशसांसर्गिकविषयतानवच्छेदकं संयोगत्वं न तत्प्रतियोगितावच्छेदकं प्रमेयत्वादीति नाव्याप्तिः प्रमेयत्ववान् गुण इत्यत्रापि तादृशविषयतावच्छेदकप्रमेयत्वातिरिक्तत्वस्य प्रसिद्धत्वात् तदवच्छिन्नप्रतियोगितानवच्छेदकताकतादृशाभावः प्रमेयावच्छिन्नसंयोगसंबन्धावच्छिन्नप्रतियोगिताकाभावः गुणे वर्तत एवेति नाव्याप्तिरिति वाच्यम् । रजतमित्यादिज्ञाने स्वरूपत एव समवायस्य संसर्गतास्वीकारात् रङ्गविशेष्यकरजतत्वप्रकारकभ्रमेऽव्याप्तिः तदवस्था । तत्र तादृशविषयतावच्छेदकाप्रसिद्धिः प्रमेयप्रकारतावच्छेदकतावच्छेदकसंयोगसंसर्गकगुणविशेष्यकप्रमेयत्ववान् गुण इत्याकारकभ्रमेऽव्याप्तेश्च तत्र तादृशविषयतावच्छेदकातिरिक्ताप्रसिद्धिः । अथ वृक्षस्संयोगीति प्रमायामतिव्याप्तिवारणाय प्रतियोग्यनधिकरणतदभावाधिकरणनिष्ठविशेष्यतेति निवेशनीयं तथाच वैशिष्ट्यव्यासज्यवृत्तिधर्मावच्छिन्नाभावमादाय न दोषः तदाधिकरणभूतस्य विशेष्यस्य प्रतियोग्यनधिकरणत्वात् सर्वत्र लक्षणसमन्वय इति चेन्न तथा सति गुणकर्मान्यत्वविशिष्टसत्तावान् गुण इति भ्रमेऽव्याप्तिः गुणस्य सत्तारूपप्रतियोग्यधिकरणत्वात् । नच प्रतियोगितावच्छेदकविशिष्टानधिकरणत्वं वक्तव्यमिति वाच्यं तथा सति रजतत्वप्रकारकप्रमायामतिव्याप्तेस्तदवस्थत्वात् रजतत्वस्य तादृशवैशिष्ट्यव्यासज्यवृत्तिधर्मावच्छिन्नानधिकरणत्वात् । अथ प्रकारताविशिष्टव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकाभावो निवेश्यते वैशिष्ट्यादेश्च रजतत्वव्यापकतानवच्छेदकत्वान्न दोषः एतेन घ्राणग्राह्यगुणवान् गुण इति भ्रमे प्रकारतावच्छेदकीभूतघ्राणग्राह्यगुणत्वस्याभावप्रतियोगितानवच्छेदकत्वेऽपि न दोषः तत्र

गन्धस्यैव तथात्वात् तथाच स्वीयतानिष्ठप्रकारतावच्छेदकसंबन्धावच्छिन्नतादृशप्रकारत्वावच्छिन्नव्याप्यतानिरूपितव्यापकतावच्छेदकरूपावच्छिन्नव्यापकताघटकसंबन्धावच्छिन्नप्रतियोगिताकाभावविशिष्टविशेष्यतानिरूपिततन्निष्ठप्रकारताशालित्वमिति निष्कर्षः । व्यधिकरणसंबन्धावच्छिन्नप्रतियोगिताकाभावमादाय प्रमायामतिव्याप्तिवारणाय व्यापकताघटकसंबन्धावच्छिन्नत्वं प्रतियोगितायां विशेषणम् । नच प्रकारतावच्छेदकसंबन्धावच्छिन्नत्वमेव निवेश्यतामिति वाच्यं तथा सति रजतत्वव्यापकतावच्छेदकरजतत्वप्रकारकप्रमाविशेष्यतात्वावच्छिन्नसमवायसंबन्धावच्छिन्नत्वाभावमादायातिव्याप्तिरित्यन्यदेतत् ॥ तदाच न कोऽपि दोष इति चेन्न गगनवान् घट इति भ्रमेऽतिव्याप्तेः गगनस्यावृत्तितया गगनाधिकरणत्वघटितगगनव्यापकत्वाप्रसिद्धेः विशिष्टसत्तावान् गुण इति भ्रमेऽव्याप्तेश्च । ननु प्रकारताव्याप्तधर्मावच्छिन्नाभावो निवेश्यते तथाच गगनत्वावच्छिन्नाभाव एवोक्तस्थले लक्षणघटकः । नचैवं सत्तावान् गुण इति प्रमायामव्याप्तिः विशिष्टसत्तात्वावच्छिन्नाभावस्य तादृशधर्मावच्छिन्नप्रतियोगिताकस्य गुणे सत्त्वादिति वाच्यं प्रतियोगिव्यापकधर्मावच्छिन्नाभावकूटवत्त्वस्य विवक्षणीयत्वात् गुणस्य सत्तात्वावच्छिन्नाभावघटिततादृशकूटानाधिकरणत्वात् । नचैवं रङ्गविशेष्यकरजतत्वप्रकारकभ्रमेऽव्याप्तिः रङ्गस्य रजतत्वनिष्ठप्रकारताव्यापकाभिन्नाभावघटितकूटानधिकरणत्वादिति वाच्यं प्रकारतासमनियतधर्मावच्छिन्नाभावकूटानधिकरणत्वस्य विवक्षणीयत्वात् जातित्वस्य प्रकारताव्याप्यत्वाभावेनादोषादिति चेन्न । तथा सति गुणकर्मान्यत्वविशिष्टसत्तावान् गुण इति भ्रमेऽव्याप्तेः गुणस्य सत्तात्वावच्छिन्नाभावघटिततादृशकूटानधिकरणत्वात् । अत्राहुः तत्प्रकारताघटितधर्मावच्छिन्नप्रतियोगिताकाभावो निवेश्यते तत्प्रकारताघटकधर्मश्च रजतत्वं तदवच्छिन्नप्रतियोगिताकाभावमादाय भ्रमे लक्षणसमन्वयः सत्ताप्रकारताघटकधर्मश्च सत्तात्वमेवेति नातिव्याप्तिः गुणकर्मान्यत्वविशिष्टसत्ताप्रकारताघटकधर्मश्च गुणकर्मान्यत्वविशिष्टसत्तात्वमेवेति नाव्याप्तिः । नच स्वविषयकप्रतीत्यविषयगुणकर्मान्यत्वविशिष्टसत्ताप्रकारतात्वरूपं विशिष्टसत्ताप्रकारताघटकत्वं विशिष्टसत्तात्वस्य न संभवति विशिष्टसत्तात्वावच्छिन्नप्रकारतामेव सत्ताप्रकारतात्वेन प्रमेयत्वेन वावगाहमानायां प्रतीतौ विशिष्टसत्तात्वस्याविषयत्वादिति वाच्यं स्वनिरूपकतावच्छेदकप्रकारतात्वघटकधर्मावच्छिन्नप्रतियोगिताकाभावविशिष्टविशेषनिवेशेनानुपपत्त्यभावात् स्वाविशेष्यतासत्ताप्रकारतात्वादिकं च नोक्तभ्रमीयविशेष्यतानिरूपकतावच्छेदकं किन्तु गुणकर्मान्यत्वविशिष्टसत्तात्वावच्छिन्नप्रकारतात्वमेवेति लक्षणसमन्वयात् । नच प्रकारतात्वस्यापि विशेष्यतानिरूपकतावच्छेदकघटकत्वात्तदवच्छिन्नप्रतियोगिताकाभावमादाय प्रमायामतिव्याप्तिरिति वाच्यं तन्निष्ठत्वस्यापि प्रतियोगितायां विशेषणत्वात् उक्तप्रतियोगितायाः प्रकारतानिष्ठत्वेनानुपपत्त्यभावादिति केचित् । तन्न घ्राणग्राह्यगुणवज्जलमिति भ्रमेऽव्याप्तेः तत्र जलत्वावच्छिन्नविशेष्यतानिरूपकतावच्छेदकघटकघ्राणग्राह्यगुणत्वस्याभावप्रतियोगितानवच्छेदकत्वेन तदवच्छिन्नप्रतियोगिताकाभावाप्रसिद्धेः । अतः स्वसमानाधिकरणाभावप्रतियोगितावच्छेदकावच्छिन्नप्रकारतान्या या समानाधिकरणाभावप्रतियोगितानवच्छेदकव्यापिका प्रकारता तदन्यनिष्ठप्रकारतानिरूपितविशेष्यत्वं समुदितलक्षणार्थः स्वपदं विशेष्यतापरं स्वरूपतो रजतत्वप्रकारकभ्रमे रजतत्वप्रकारतायाः स्वसमानाधिकरणप्रतियोगितावच्छेदकावच्छिन्नान्यत्वेन स्वसमानाधिकरणप्रतियोगितानवच्छेदकरजतत्वव्यापकत्वेन च तदन्यत्वाभावान्नातिव्याप्तिः गुणकर्मान्यत्वविशिष्टसत्तावान् गुण इति भ्रमे च प्रकारताया गुणनिष्ठाभावप्रतियोगितानवच्छेदकसत्तात्वव्यापकत्वेऽपि स्वसमानाधिकरणाभावप्रतियोगितावच्छेदकावच्छिन्नान्यत्वाभावेन तादृशान्यत्वासंभवान्नाव्याप्तिः । सत्तात्वेन स्वरूपतो वा सत्ताप्रकारकप्रमायान्तु प्रकारतायाः तादृशावच्छेदकावच्छिन्नान्यत्वात् तादृशावच्छेदकसत्तात्वव्यापकत्वात्तदन्यत्वाभावान्नातिव्याप्तिः । गगनवान् घट इत्यत्र तु गगनत्वावच्छिन्नप्रकारतायाः निरुक्तावच्छेदकावच्छिन्नत्वात् निरुक्तावच्छेदकाव्यापकत्वाभावान्नातिव्याप्तिः । घ्राणग्राह्यगुणवज्जलमिति भ्रमे घ्राणग्राह्यगुणत्वावच्छिन्नप्रकारताया निरुक्तप्रतियोगितावच्छेदकगन्धत्वावच्छिन्नान्यत्वेऽपि निरुक्तावच्छेदकव्यापकत्वाभावात् तदन्यत्वसत्त्वात् लक्षणसमन्वयः।घ्राणग्राह्यगुणवती पृथिवीत्यत्र तादृशानवच्छेदकव्यापकत्वान्नातिव्याप्तिः । ननु प्रतियोगितानवच्छेदकावच्छिन्नत्वं प्रतियोगितावच्छेदकतापर्याप्त्यधिकरणध-

र्मपर्याप्त्यवच्छेदकतात्वं तथा च प्रमेयत्वविशिष्टगुणकर्मान्यत्वविशिष्टसत्तावान् गुण इति भ्रमेऽव्याप्तिः तत्र प्रकारतावच्छेदकतापर्याप्त्यधिकरणीभूतप्रमेयत्वघटितगुरुधर्मस्याभावप्रतियोगितानवच्छेदकतया तदवच्छिन्नप्रकारतायाः निरुक्तावच्छिन्नान्यत्वात् स्वसमानाधिकरणाभावप्रतियोगितानवच्छेदकसत्तात्वव्यापकत्वाच्च तदन्यत्वाभावादिति चेन्न । स्वसमानाधिकरणाभावप्रतियोगितावच्छेदकतापर्याप्त्यधिकरणनिष्ठावच्छेदकतात्वनिवेशेनैवोपपत्तौ तत्र पर्याप्तिनिवेशे प्रयोजनविरहादिति वदन्ति । तदपि चिन्त्यं यत्र स्वरूपतो रजतत्वप्रकारकरङ्गविशेष्यकभ्रमे तत्राव्याप्तिः रजतत्वस्यापि रङ्गविशिष्टाभावीयकालिकसंबन्धावच्छिन्नप्रतियोगितानवच्छेदकत्वात् । नच प्रकारतावच्छेदकसंबन्धावच्छिन्नत्वेन प्रतियोगिताविशेषणान्नायं दोष इति वाच्यं तथा सति घटप्रकारकसंयोगसंसर्गकगुणविशिष्टभ्रमेऽव्याप्तेः जगत एव गुणनिष्ठाभावीयसंयोगसंबन्धावच्छिन्नप्रतियोगितावच्छेदकत्वेन तदनवच्छेदकस्याप्रसिद्धेः । अथ प्रकारतावच्छेदकसंबन्धातिरिक्तप्रकारताप्रतियोगिकसंबन्धभिन्नसंबन्धावच्छिन्नत्वेन प्रतियोगिता विशेषणीया तथाच संयोगेन घटवान् गुण इत्यत्र स्वरूपसंबन्धावच्छिन्नप्रतियोगितैव तादृशी तदवच्छेदकं च घटत्वं अनवच्छेदकं गुणत्वप्रकारकप्रमाविशेष्यत्वादिकमेवेति नाव्याप्तिरिति चेन्न । तथापि संयोगसंबन्धेन प्रमेयप्रकारकगुणविशेष्यकभ्रमेऽव्याप्तेर्दुर्वारत्वात् । तत्र प्रकारतावच्छेदकीभूतसंयोगातिरिक्तसंबन्धमात्रस्यैव प्रमेयप्रतियोगितया संयोगस्यैव तदतिरिक्तत्वेन तदवच्छिन्नप्रतियोगितानवच्छेदकत्वाप्रसिद्धेः तदवस्थत्वात् । यदि च प्रकारतावच्छेदकसंबन्धातिरिक्तो यः प्रकारतावच्छेदकसंबन्धप्रतियोगिप्रकारप्रतियोगिकसंबन्धः तदतिरिक्तसंबन्धावच्छिन्नत्वं प्रतियोगिताविशेषणं एवञ्च संयोगेन प्रमेयवान् गुण इत्यत्र संयोगातिरिक्तो यस्संयोगप्रतियोगिघटपटादिरूपप्रमेयप्रतियोगिकसंबन्धः समवायादिस्तदतिरिक्तस्वरूपादिसंबन्धः तदवच्छिन्नप्रतियोगितावच्छेदकत्वाभावाच्च गुणत्वप्रकारकप्रमाविशेष्यतात्वादौ त्रसिद्धेः । नच प्रमेयस्यापि गुणनिष्ठाभावीयतादृशप्रतियोगितानवच्छेदकत्वात् तद्व्यापकत्वात् प्रमेयत्वावच्छिन्नत्वेन तदन्यत्वविशिष्टतादृशान्यत्वस्य सत्त्वादित्युच्यते तदा विषयतया प्रमेयवान् घट इति भ्रमेऽव्याप्तेः तत्र प्रमेयमात्रस्यैव विषयतानिरूपकप्रकारतावच्छेदकसंबन्धप्रतियोगितया विषयताया एव तदतिरिक्ततत्प्रतियोगिकसंबन्धभिन्नसंबन्धतया तत्तत्संबन्धावच्छिन्नघटानिष्ठाभावीयप्रतियोगितानवच्छेदकाप्रसिद्धेः । एतेन स्वसमानाधिकरणाभावप्रतियोगितानवच्छेदकसंबन्धप्रतियोगिव्यापकत्वं स्वसमानाधिकरणाभावीयप्रतियोगितावच्छेदकसंबन्धावच्छिन्नप्रतियोगितावच्छेदकं यत् प्रकारतावच्छेदकसंबन्धप्रतियोगिवृत्ति तदतिरिक्तधर्मव्यापकत्वं घटप्रकारकसंयोगसंसर्गकगुणविशेष्यकभ्रमे गुणनिष्ठाभावीयसंयोगसंबन्धावच्छिन्नप्रतियोगितावच्छेदकयत्संयोगप्रतियोगिवृत्तिघटत्वादि तदतिरिक्तत्वं गुणत्वादौ प्रसिद्धं तद्व्यापकत्वाभावात् प्रकारतायां न दोषः गुणकर्मान्यत्वविशिष्टसत्तावान् गुण इत्यत्र तादृशसत्तात्वव्यापकत्वेऽपि तादृशप्रतियोगितावच्छेदकगुणकर्मान्यत्वविशिष्टसत्तात्वावच्छिन्नत्वान्न दोषः संयोगेन प्रमेयवान् गुण इत्यत्रापि गुणनिष्ठाभावीयसंयोगसंबन्धावच्छिन्नप्रतियोगितावच्छेदकं यत् संयोगसंबन्धे प्रतियोगिवृत्ति तदतिरिक्तत्वं गुणत्वादौ प्रसिद्धमिति न दोषः । नचैवमपि स्वरूपतो रजतत्वप्रकारकसंयोगसंसर्गकभ्रमेऽव्याप्तिः तत्र रजतत्वनिष्ठप्रकारतायाः विशेष्यतासमानाधिकरणाभावीयसंयोगसंबन्धावच्छिन्नप्रतियोगितावच्छेदकावच्छिन्नान्यत्वात् तादृशसंबन्धावच्छिन्नप्रतियोगितावच्छेदकं यत् संयोगप्रतियोगिवृत्ति तदतिरिक्तरजतत्वव्यापकत्वाच्च तदन्यत्वाभावादिति वाच्यं निरूपितत्वसमवायाभ्यां अतिरिक्तसंबन्धेन जातेः स्वरूपतो भाने मानाभावेन स्वरूपतो रजतत्वप्रकारकसंयोगसंसर्गकभ्रमस्यैवासिद्धिरित्यपि निरस्तं विषयितया प्रमेयवान् घट इति भ्रमेऽव्याप्तेर्दुर्वारत्वात् तत्र वृत्तितन्मात्रस्यैव घटानिष्ठाभावीयविषयितासंबन्धावच्छिन्नप्रतियोगितावच्छेदकत्वात् विषयितासंबन्धप्रतियोगिवृत्तित्वाच्च तदतिरिक्ताप्रसिद्धेः । न चाकाशादिरेव तादृशप्रसिद्ध इति वाच्यं तथापि तद्व्यापकत्वस्य प्रकारतायामसिद्धत्वादिति तस्मात् भ्रमत्वं कथञ्चिदपि निर्वक्तुमशक्यमिति चेदत्र ब्रूमः स्वसमानाधिकरणाभावप्रतियोगितावच्छेदकावच्छिन्नस्वसमानाधिकरणाभावीययत्संबन्धावच्छिन्नप्रतियोगितानवच्छेदको यो धर्मः तद्व्यापकतत्तत्संबन्धावच्छिन्ना या प्रकारता तदन्यतन्निष्ठप्रकारताशालित्वमिति निष्कर्षः । संयोगेन घटवान् गुण इत्यत्र गुणनिष्ठाभावीयस्वरूप-

संबन्धावच्छिन्नप्रतियोगितावच्छेदकत्वं प्रमेयत्वादौ प्रसिद्धं तद्व्यापकतत्संबन्धावच्छिन्नप्रकारताभेदस्य तदीयप्रकारतायां सत्त्वाल्लक्षणसमन्वयः गुणकर्मान्यत्वविशिष्टसत्तावान् गुण इत्यत्र गुणकर्मान्यत्वविशिष्टसत्तात्वावच्छिन्नप्रकारतायाः स्वसमानाधिकरणाभावीयसमवायसंबन्धावच्छिन्नप्रतियोगितानवच्छेदकसत्तात्वव्यापकत्वात् समवायसंबन्धावच्छिन्नत्वाच्चाव्याप्तिवारणाय स्वसमानाधिकरणाभावप्रतियोगितावच्छेदकावच्छिन्नान्यत्वं द्वितीयान्यत्वप्रतियोगिप्रकारताविशेषणम् । स्वरूपतो रजतत्वप्रकारकभ्रमेऽव्याप्तिवारणाय व्यापकान्तं रजतत्वत्वस्यापि रङ्गनिष्ठाभावीयकालिकसंबन्धावच्छिन्नप्रतियोगितानवच्छेदकत्वात् तद्दोषतादवस्थ्यं। अतः तत्समवायसंबन्धावच्छिन्नत्वं विशेषणं तथाच स्वसमानाधिकरणाभावप्रकारतानिरूपितविशेष्यतायाः वह्निप्रकारतानिरूपितविशेष्यतायाश्च एकत्वादिति । एकधर्मिकेत्यस्य एकधर्मितावच्छेदकताकेत्यर्थः। तथाच तन्निष्ठप्रकारतानिरूपितविशेष्यतावच्छेदकविशेष्यतानिरूपिततत्तद्विरुद्धतदभावनिष्ठप्रकारताकमिति निष्कर्षः निरुक्ताहार्यात्मकज्ञानीयसाध्याभावप्रकारतानिरूपितविशेष्यतावच्छेदकता शुद्धपर्वतत्वपर्याप्ता वह्निप्रकारतानिरूपितविशेष्यतावच्छेदकताकवह्न्यभावपर्वतत्वोभयपर्याप्तेति तयोर्भेदान्न दोषः । एवंच भिन्नरूपेण एकधर्मितावच्छेदकज्ञाने विभिन्नरूपेण एकधर्मितावच्छेदकतावच्छेदकज्ञाने च नातिव्याप्तिः तत्र विशेष्यतावच्छेदकतयोर्भेदात्। नच निरवच्छिन्नविशेष्यतावच्छेदकताकसंशयासङ्ग्रहप्रसङ्ग इति पूर्वपक्षो नादेयः विशेष्यतावच्छेदकतावच्छेदेनान्यतरकोट्यवगाहित्वविशेष्यतावच्छेदकसामानाधिकरण्येनोभयकोट्यवगाहित्वाभ्यां विरोधावगाहित्वानवगाहित्वाभ्यां च संशयसमुच्चययोर्वैलक्षण्योपपत्तौ संशये भावाभावप्रकारतानिरूपितविशेष्यतयोः तदवच्छेदकयोश्च भेद एवेति स्वीकर्तृनयसंभवापत्त्या तथा परिष्कारासंभवात् एकधर्मिकेति । ह्रदपर्वतौ वह्नितदभाववन्ताविति भ्रमेऽतिव्याप्तिवारणाय एकधर्मिकेति । वृक्षः संयोगवान् तदभाववांश्चेति समुच्चयव्युदासाय विरुद्धेति । विरोधावगाहित्वं तदर्थः घटो द्रव्यं पृथिवी चेति ज्ञानवारणाय भावाभावेति इच्छाव्युदासार्थं। वस्तुतस्तु एकधर्मावच्छिन्नविशेष्यकत्वानिवेशे भिन्नरूपेण एकधर्मितावच्छेदककज्ञानस्य संशयत्वापत्तिः एकधर्मावच्छिन्नविशेष्यतावच्छेदकताकत्वानिवेशे निरवच्छिन्नविशेष्यतावच्छेदकसंशयासङ्ग्रहः विभिन्नरूपेण एकधर्मितावच्छेदकतावच्छेदकावगाहिज्ञानस्य संशयत्वप्रसङ्गाच्चेति दिनकरः । अत्र च कस्यापि नैतद्दूषणस्यावकाशः यतः एकधर्मिकत्वं एकविशेष्यताकत्वं । तथाच तत्प्रकारतानिरूपितविशेष्यतानिरूपिततद्विरुद्धतदभावप्रकारताशालित्वं समुदितलक्षणार्थः । पर्वतो वह्निमान् द्रव्यं वह्न्यभाववदिति ज्ञाने च विशेष्यताभेदान्नातिव्याप्तिः इति । एकधर्मिकेत्यस्य एकधर्मितावच्छेदकविशिष्टविशेष्यकेत्यर्थकरणेन तत्रातिव्याप्तिवारणमयुक्तम् । परंतु निर्वह्निः पर्वतो वह्निमानित्याकारकाहार्यज्ञानेऽतिव्याप्तिः तत्र वह्न्यभावीययत्संबन्धावच्छिन्नप्रतियोगितानिरूपितयत्संबन्धावच्छिन्नावच्छेदकतावान्यो धर्मः तत्संबन्धावच्छिन्नतन्निष्ठावच्छेदकताकतत्संबन्धावच्छिन्नप्रकारतान्यस्वसमानाधिकरणाभावीययत्संबन्धावच्छिन्नप्रतियोगितानिरूपितयत्संबन्धावच्छिन्नावच्छेदकताश्रयो यो धर्मः तत्संबन्धावच्छिन्नतन्निष्ठव्याप्यतानिरूपितसंबन्धावच्छिन्नव्यापकताश्रयीभूततत्तत्संबन्धावच्छिन्ना या या प्रकारता तदन्यतन्निष्ठप्रकारताशालित्वमिति निष्कर्षः । तेन रजतत्वेन रजतत्वप्रकारकप्रमायाः प्रकारतावच्छेदकीभूतरजतत्वत्वस्य रजतनिष्ठाभावीयसमवायसंबन्धावच्छिन्नप्रतियोगितानिरूपितविषयतासंबन्धावच्छिन्नावच्छेदकताश्रयत्वेऽपि नाव्याप्तिः। नच रङ्गविशेष्यकरजतत्वप्रकारकभ्रमे वस्तुमात्रस्यैव रङ्गनिष्ठाभावप्रतियोगितानिरूपितविषयतासंबन्धावच्छिन्नावच्छेदकताश्रयतया तदनवच्छेदकाप्रसिद्ध्या अव्याप्तिरिति सर्वं समञ्जसम् ॥

॥ दिनकरीयटिप्पणं गङ्गारामजटीयं सम्पूर्णम् ॥

---

# प्रतिबन्धकतावादः ॥

धर्मं कार्यानुकूलं विघटयतितरां यत्तदेतद्विरोधी-
त्येतत्सिद्धान्तसारं प्रशमयितुमना यन्महादेव ऊचे ।
बाधज्ञानस्य न स्यादनुमितिरिपुतेत्येतदत्यन्तदूष्यं
मन्यन्ते ये तु तेषां निरसनकुतुकी कृष्णनामा सुधीन्द्रः ॥

कार्यानुकूलधर्मविघटकत्वस्य प्रतिबन्धकत्वपदार्थत्वे बाधज्ञानस्यानुमितिप्रतिबन्धकत्वानुपपत्तिः इत्याचख्यौ महादेवः । अनुमित्यनुकूलमनःसंयोगादिनिष्ठशक्तिविघटकतया बाधज्ञानस्यानुमितिप्रतिबन्धकत्वोपपत्तेः इदमसङ्गतमेवेत्याचक्षते मञ्जूषाकृतः । अत्रेदं विचार्यते किमिदमनुकूलत्वं नाम जनकजनकतावच्छेदकसाधारणः प्रयोजकत्वापरपर्यायः स्वरूपसंबन्धविशेष इति चेत् तर्हि अत्रानुमितित्वावच्छिन्नप्रयोज्यतानिरूपितप्रयोजकत्वं अनुमितिनिष्ठप्रयोज्यतानिरूपितप्रयोजकत्वं वा विवक्षितम् । नाद्यः, अनुमितित्वेन शक्तिमदात्ममनःसंयोगत्वेन कार्यकारणभावाभावेनात्ममनःसंयोगनिष्ठायाः शक्तेरनुमितित्वावच्छिन्नकार्यतानिरूपितकारणतानवच्छेदकतया तथाविधप्रयोजकत्वायोगात् । नापि द्वितीयः, ज्ञानत्वेन शक्तिमदात्ममनःसंयोगत्वेन कार्यकारणभावसद्भावेन आत्ममनःसंयोगनिष्ठायाः शक्तेः अनुमितिनिष्ठकार्यतानिरूपितकारणतावच्छेदकतया तादृशप्रयोजकत्वोपपत्तावपि तस्याः ज्ञानसामान्यानुकूलायाः बाधज्ञानेन विघटनाङ्गीकारे बाधज्ञानस्य ज्ञानसामान्यप्रतिबन्धकत्वापत्तेः । अथ प्रतियोगितासंबन्धेन स्वरूपसंबन्धेन वा तद्वत्ताज्ञानोपधायकशक्तिनाशत्वावच्छिन्नं प्रति समानाधिकरणवृत्तित्वसंबन्धेन सामानाधिकरण्यसंबन्धेन वा हेतुत्वम् । इत्थं च तद्वत्ताज्ञानानुपधायकानां ज्ञानान्तरानुकूलानां शक्तीनां न तदभाववत्तानिश्चयेन विनाशापत्तिरिति चेत् किमिदं तद्वत्ताज्ञानोपधायकत्वं तद्वत्ताज्ञानाव्यवहितपूर्ववृत्तित्वमिति चेत् तर्हि चैत्रस्य तद्वत्ताज्ञानवेलायां तदितरेषां तदभाववत्तानिश्चयवतां शक्तिमदात्ममनःसंयोगहेतुककार्यमात्रानुत्पत्तिप्रसङ्गः । चैत्रेतरात्ममनःसंयोगशक्तीनां चैत्रीयतद्वत्ताज्ञानाव्यवहितपूर्ववृत्तित्वेन तदभाववत्तानिश्चयेन विनाशात् शक्तिमदात्ममनःसंयोगरूपकारणाभावात् स्वसमानाधिकरणनिरूपितस्वाव्यवहितपूर्वक्षणावच्छिन्नाधेयतासंबन्धेन तद्वत्ताज्ञानविशिष्टत्वमेव तद्वत्ताज्ञानोपधायकत्वम् । तथाच चैत्रेतरात्ममनःसंयोगशक्तीनां निरुक्तसंबन्धेन चैत्रीयतद्वत्ताज्ञानविशिष्टत्वाभावान्न पूर्वोक्तदोषावसर इति वाच्यम् । तदभाववत्तानिश्चयोत्पत्तितृतीयक्षणे तद्वत्ताज्ञानोत्पत्तावेव द्वितीयक्षणे शक्तिनाशसंभवेन बाधनिश्चयोत्पत्तितृतीयक्षणे विशिष्टबुद्धेरप्रामाणिकतया तन्नाश्यशक्तेरेवाप्रसिद्धेः बाधनिश्चयोत्पत्तिचतुर्थक्षणे तद्वत्ताबुद्धेरानुभाविकतया तत्पूर्वं शक्तिविनाशापत्त्या तदनुत्पत्तिप्रसङ्गाच्च । अत एव आत्मनिष्ठशक्तिविघटकत्वं मनोनिष्ठशक्तिविघटकत्वं वा न बाधज्ञानस्य संभवति तयोरुभयोरपि ज्ञानसामान्यानुकूलत्वात् । न चानुमित्यनुकूलपरामर्शनिष्ठशक्तिविघटकतया बाधज्ञानस्यानुमितिप्रतिबन्धकतोपपत्तिः । एतदर्थमेवादिपदं प्रायुङ्क्त मञ्जूषाकृत इति वाच्यम् । तस्यापि विचारासहत्वात् । तथाहि यत्र प्रथमतो बाधनिश्चयः तदनन्तरं परामर्शः तत्र परामर्शोत्पत्तिद्वितीयक्षण एव शक्त्युत्पत्त्या तृतीयक्षण एव तन्नाशो वक्तव्यः । तच्च न संभवति । तत्पूर्वं परामर्शेन बाधज्ञानस्य विनाशात् योग्यविभुविशेषगुणानां स्वोत्तरवृत्तिगुणनाश्यत्वात् । नच परामर्शसमकालमेव तत्र शक्त्युत्पत्तिस्वीकारात् तद्वितीयक्षणे तन्नाशः संभवति तत्पूर्वं बाधनिश्चयस्य विद्यमानत्वादिति वाच्यम् । परामर्शीयशक्तिं प्रति परामर्शस्य हेतुतया पूर्वं परामर्शमन्तरा शक्त्युत्पत्तेरसंभवात् । एवं परामर्शानन्तरं यत्र लौकिकी बाधबुद्धिः तत्र परामर्शतृतीयक्षणे बाधबुद्ध्या शक्तिनाशो वक्तव्यः । तदपि न संभवति । सकलानामपि कारणानां शक्तिमत्त्वेनैव कारणतायाः तत्सम्मतत्वेन बाधनिश्चयस्य उत्पत्तिवेलायां पूर्वोक्तयुक्त्या निःशक्तित्वेन तदनितरक्षणे तदसंभवात् पूर्वं शक्तिमद्बाधनिश्चयरूपकारणाभावात् । नच बाधनिश्चयोत्पत्तितृतीयक्षणे शक्तिनाशः संभवत्येव । पूर्वं शक्तिमादाय निश्चयसद्भावात् इति वाच्यम् । तत्क्षणे शक्तिनाशस्य पूर्वक्षणोत्पन्नपरामर्शनाशजन्यत्वेन तं प्रति बाधनिश्चयस्य हेतुतायाः ज्ञानाभावात् । नच विनिगमनाविरहेण बाधनिश्चयस्यापि तद्धेतुत्वमिति वाच्यम् । बाधनिश्चयासमवधानदशायां परामर्शनाशात् तदीयशक्तिनाशानुरोधेन प्रतियोगितासंबन्धेन शक्तिनाशत्वावच्छिन्नं प्रति

स्वप्रतियोगिवृत्तित्वसंबन्धेन नाशस्य हेतुतायाःक्लृप्तत्वात्। अथ परामर्शनिष्ठशक्तिं प्रति न परामर्शः कारणम्। तथा सति परामर्शोत्पत्तिद्वितीयक्षणे अनुमित्यनुत्पत्तिप्रसङ्गात् पूर्वोक्तरीत्या परामर्शस्य शक्तिं प्रत्यपि शक्तिमत्त्वेनैव हेतुताया वाच्यतया द्वितीयक्षणेऽपि शक्त्यनुत्पादप्रसङ्गात् पूर्वं शक्तिमत्परामर्शाभावात्। किन्तु परामर्शसामग्र्येव परामर्शशक्तिं प्रत्यपि कारणम्। तेन परामर्शसमकालमेव तत्र शक्त्युत्पत्तिः। इत्थं च यत्र प्रथमतो बाधनिश्चयः तदनन्तरं परामर्शः तत्र परामर्शोत्पत्तिद्वितीयक्षणे शक्तिनाशः संभवत्येव। एवं बाधनिश्चयशक्तिं प्रति बाधनिश्चयसामग्र्येव कारणं। अन्यथा पूर्वोक्तयुक्त्या तद्द्वितीयक्षणेऽपि तत्र शक्त्यनुत्पादप्रसङ्गात्। तथाच परामर्शानन्तरं यत्र बाधबुद्धिः तत्र बाधबुद्धिद्वितीयक्षणपरामर्शशक्तिनाशोपपत्तिः पूर्वं शक्तिमद्बाधनिश्चयस्य सद्भावादिति चेन्न स्थलद्वयेऽपि शक्तिनाशक्षणे अनुमित्यापत्तेः पूर्वं शक्तिमत्परामर्शरूपकारणसद्भावात्। किंच द्वितीयस्थले बाधनिश्चयोत्पत्तिवेलायां अनुमित्यापत्तिः। न च नैयायिकानामपि दूषणं इदं तुल्यम्। तत्पूर्वं बाधनिश्चयाभावरूपकारणसद्भावादिति वाच्यम् तद्वत्ताबुद्धिं प्रति तदभाववत्तालौकिकप्रत्यक्षसामग्र्या अपि प्रतिबन्धकतया परामर्शानन्तरं बाधस्थले बाधनिश्चयात्प्राक्नियमेन तादृशसामग्र्याः विद्यमानत्वात्। न चास्माकमपि सैव गतिरिति वाच्यम्। परामर्शसमवधानकालीनया तया सामग्र्या तद्द्वितीयक्षणे बाधबुद्ध्युत्पत्तिवेलायामेव शक्तिनाशस्य वाच्यतया पूर्वं शक्तिमत्परामर्शसद्भावेन तत्क्षणे अनुमित्यापत्तेः भवद्भिः दुर्वारत्वात्। नच शक्तिमत्परामर्शस्य कार्यसहभावेनैव कारणत्वाङ्गीकारात् न शक्तिनाशक्षणे अनुमित्यापत्तिरिति वाच्यम्। तथा सति यत्र परामर्शानन्तरं सिषाधयिषा तत्र तदनन्तरं अनुभवसिद्धायाः अनुमितेः अपलापप्रसङ्गात्। अथ शक्तिनाशक्षणे अनुमित्युत्पत्त्यापत्तावपि बाधनिश्चयस्य कार्यानुकूलधर्मविघटकत्वरूपप्रतिबन्धकत्वस्य का क्षतिरिति चेत् यथाश्रुतग्राह्यसि यतः न कार्यानुकूलधर्मविघटकत्वमात्रं प्रतिबन्धकत्वम्। तथा सति दण्डनाशजनकदण्डावयवसंयोगनाशस्य घटप्रतिबन्धकत्वापत्तेः। न च दण्डस्य घटानुकूलत्वेऽपि न धर्मत्वमिति वाच्यम्। धर्मत्वस्य प्रकारत्वरूपस्याधेयतारूपस्य वा दण्डवानिति कृतिप्रकारीभूते दण्डावयवसमवेते चाव्याहतत्वात्। न च एवंविधधर्मत्वस्य केवलान्वयितया अव्यावर्तकतापत्त्या धर्मपदं कारणधर्मपरं तथा च कार्यानुकूलो यः कारणधर्मः तद्विघटकत्वमिति फलितम्। इत्थंच दण्डस्य ईदृशधर्मत्वाभावान्न पूर्वोक्तातिप्रसक्तिः। कारणधर्मत्वं च कारणतावच्छेदकसंबन्धेन कारणवृत्तित्वं। तेन दण्डस्य कालिकविशेषणतासंयोगादिना चक्रादिवृत्तित्वेऽपि न क्षतिः। न चैवमपि कपालद्वयसंयोगनाशजनककपालद्वयविभागेऽतिप्रसक्तिः। कपालद्वयसंयोगस्य कपालत्वनिष्ठकारणतावच्छेदकीभूतसमवायेन कपालवृत्तित्वात् घटानुकूलवृत्तित्वाच्चेति वाच्यम्। कार्यानुकूलधर्मशब्देन कारणतावच्छेदकस्य विवक्षितत्वात् दण्डस्य कपालद्वयसंयोगस्य च तथात्वादिति वाच्यम्। एवमपि घटविशिष्टज्ञानं प्रति घटज्ञानत्वेन हेतुतया घटज्ञाननिष्ठघटविशिष्टज्ञानकारणतायां विषयितया घटस्यावच्छेदकत्वात् तन्नाशजनककपालद्वयसंयोगनाशस्य घटविशिष्टज्ञानप्रतिबन्धकत्वापत्तेः। न च विशिष्टज्ञानं प्रति विशेषणज्ञानकारणतायाः तदनभिमतत्वात् नायं दोष इति वाच्यम्। तथापि पक्षधर्मताज्ञाननिष्ठानुमितिकारणतायां विषयतया धूमस्यावच्छेदकत्वेन तन्नाशजनकतदवयवसंयोगनाशेऽतिप्रसक्तेः। न च धूमत्वेन पदार्थान्तरावगाहिज्ञानसाधारण्याय धूमत्वावच्छिन्नविषयताया एव कारणतावच्छेदककोटौ प्रवेशः। न तु धूमस्येति नोक्तापत्तिरिति वाच्यम्। यादृशस्थले हेतुतावच्छेदकरूपेण पदार्थान्तरावगाहिभ्रमो न कदापि जातः तत्र लाघवेन विषयितया हेतोरेवावच्छेदकत्वेन तन्नाशजनकतदवयवसंयोगनाशेऽतिप्रसक्तेर्दुर्वारत्वात्। न च धर्मपदस्य शक्तिपरतया कार्यानुकूलशक्तिविघटकत्वं प्रतिबन्धकत्वमिति नोक्तातिप्रसक्तिरिति वाच्यम्। कार्यानुकूलदण्डनिष्ठशक्तिविघटकदण्डनाशेऽतिप्रसक्तेः शक्तिनाशं प्रति आश्रयनाशस्य हेतुतायाः प्रागुपदर्शितत्वात्। यदि च कार्यानुकूलशक्तिनाशत्वावच्छिन्नजन्यतानिरूपितजनकताश्रयत्वमेव तत् दाहाद्यनुकूलशक्तिनाशत्वावच्छिन्नं प्रति मणित्वादिना हेतुत्वेन मण्यादीनां प्रतिबन्धकत्वोपपत्तिः प्रागुपदर्शितरीत्या आश्रयनाशजन्यतावच्छेदकं शक्तिनाशत्वमेव न तु तत्र दाहानुकूलत्वमपि घटकं कार्यान्तरानुकूलशक्त्यविनाशप्रसङ्गात् प्रयोजनाभावाच्च। तथा च न दण्डनाशस्य घटप्रतिबन्धकत्वापत्तिरित्युच्यते तदा मण्यादीनामपि दाहा-

दिप्रतिबन्धकत्वानुपपत्तिः दाहानुकूलशक्तिनाशं प्रति मणेरिव मन्त्रौषध्योरपि कारणतया परस्परजन्यनाशे व्यभिचारवारणाय मण्याद्यव्यवहितोत्तरत्वस्य कार्यतावच्छेदककोटौ निवेशनीयतया स्वसामानाधिकरण्यस्वाव्यवहितोत्तरक्षणोत्पत्तिकत्वैतदुभयसंबन्धेन मणिविशिष्टं प्रति मणिः कारणमिति एतावतैव सामञ्जस्ये दाहानुकूलशक्तिनाशत्वस्य कार्यतावच्छेदककोटौ निवेशे प्रयोजनाभावात् । किन्तु कार्यानुत्पत्तिप्रयोजकत्वे सति कार्यानुकूलशक्तिविघटकत्वं दण्डनाशस्य घटानुकूलशक्तिविघटकत्वेऽपि न घटानुत्पत्तिप्रयोजकत्वं । दण्डात्यन्ताभावस्यैव कारणाभावविधया तत्प्रयोजकत्वात् दाहानुकूलशक्तिनाशान्न दाहोत्पत्तिरिति प्रतीत्या दाहानुत्पत्तिप्रयोजकत्वस्यैव शक्तिनाशे सद्भावात्तज्जनकमण्यादीनां तथात्वाक्षतेः प्रतिबन्धकत्वोपपत्तिः । कार्यानुत्पत्तिप्रयोजकत्वमात्रस्य कारणाभावसाधारणत्वात्कार्यानुकूलधर्मविघटकत्वनिवेशः । इत्थं च परामर्शात्पूर्वं यत्र बाधनिश्चयस्तत्र परामर्शोत्पत्तिद्वितीयक्षणे शक्तिनाशस्योत्पत्त्या तृतीयक्षणे अनुमित्यनुत्पादस्य शक्तिनाशप्रयोज्यता वाच्या । तच्च न संभवति । परामर्शोत्पत्तिद्वितीयक्षणेऽपि अनुमित्यनुत्पादात् तत्क्षणेऽनुमित्यभावप्रयोजकस्यैव तदुत्तरक्षणेऽपि तथात्वसंभवात् शक्तिनाशस्य तत्प्रयोजकत्वायोगात् परामर्शानन्तरबाधनिश्चयस्थले तु बाधनिश्चयसामर्थ्यैव शक्तेर्विनाशाद्बाधनिश्चयस्य शक्तिनाशकत्वमपि न संभवतीति कथं बाधनिश्चयस्य अनुमितिप्रतिबन्धकत्वोपपत्तिरिति । वस्तुतस्तु अनुमितिप्रतिबन्धकतायाः अनुपपत्तिः निष्प्रयोजनकत्वं बाधनिश्चयस्यानुमितिप्रतिबन्धकताया यत्प्रयोजनं बाधनिश्चयकालेऽनुमितिवारणरूपं तदसंभव इत्यर्थान्न कोऽपि दोषः । नचैवमीदृशानुपपत्तिः मणेर्दाहप्रतिबन्धकतायामपि संभवति । तत्र मणिवह्निनिष्ठशक्तिनाशक्षणे दाहापत्तेः पूर्वं शक्तिमद्वह्निरूपकारणसत्त्वादिति वाच्यम् । तत्र तत्क्षणे दाहाभावस्य शपथनिर्णयत्वेनेष्टापत्तिसंभवात् बाधनिश्चयानन्तरमनुमित्यभावस्य सर्वसम्मतत्वात् शक्तिमद्वह्नेः कार्यसहभावेन हेतुतामभ्युपगम्य उक्तानुपपत्तिवारणसंभवाच्च । न च तथापि मञ्जूषाकृदुक्तरीत्या वह्निनिष्ठशक्तिं प्रति वह्नेरेव हेतुतया मणिना शक्तिनाशेऽपि वह्निरूपकारणबलाच्छक्त्यन्तरोत्पादापत्त्या तदनन्तरं तत्र दाहः स्यादिति वाच्यम् । उत्तेजकेन मण्यपसरणेन च शक्तिर्जन्यत इति कल्प्यत इति मुक्तावलीग्रन्थेनैव मण्यभावोत्तेजकयोर्वह्निनिष्ठशक्तिकारणताप्रतिपादकेनेदृशशङ्काया दूरोत्सारितत्वात् तत्र मण्यभावस्य उत्तेजकस्य वा अभावात् मञ्जूषाकृतां तादृशशङ्काकरणस्य अनतिपरिशीलनविजृम्भितत्वात् । तस्मात् बाधनिश्चयस्य अनुमितिप्रतिबन्धकतायामेवेयमनुपपत्तिः प्रसरति । एतेन दण्डनाशान्न घटोत्पत्तिः कपालनाशान्न घटोत्पत्तिरित्यादिप्रतीत्या दण्डनाशकपालनाशादीनामपि घटानुत्पत्तिप्रयोजकत्वेन घटानुकूलशक्तिनाशकत्वेन च घटप्रतिबन्धकत्वापत्तेः तावतापि दुर्वारत्वात् लाघवाच्च नाशकतायां स्वप्रतियोगिवृत्तित्वसंबन्धानवच्छिन्नत्वमेव निवेशनीयम् । तथा सति दण्डनाशकपालनाशादीनां शक्तिनाशं प्रति स्वप्रतियोगिवृत्तित्वसंबन्धेनैव हेतुतया नोक्तापत्तिः । इत्थं च बाधनिश्चयस्यानुमितिप्रतिबन्धकत्वं सम्यगेव प्रतियोगितासंबन्धेन स्वरूपसंबन्धेन वा अनुमित्यनुकूलशक्तिनाशत्वावच्छिन्नं प्रति स्वसमानाधिकरणवृत्तित्वसंबन्धेन सामानाधिकरण्यसंबन्धेन वा बाधनिश्चयस्य हेतुत्वात् । बाधनिश्चयनिष्ठशक्तिनाशजनकतायाः स्वप्रतियोगिवृत्तित्वसंबन्धानवच्छिन्नत्वात् इति परास्तम् । नच दाहानुकूलशक्तिं प्रति मण्यभावस्येवानुमित्यनुकूलशक्तिं प्रति बाधनिश्चयाभावस्य हेतुत्वाभ्युपगमात् बाधनिश्चयानन्तरोत्पन्नपरामर्शे शक्त्युत्पत्तिः । तथा च तादृशबाधनिश्चयकालेऽनुमितिवारणं भवत्येव । एवं परामर्शानन्तरं यत्र बाधनिश्चयः तत्रापि न परामर्शानन्तरमनुमित्यापत्तिः अनुमित्यनुकूलशक्तिं प्रति बाधनिश्चयजनकसामग्र्यभावस्य कार्यसहभावेन हेतुत्वात् परामर्शे शक्त्यनुत्पादादिति वाच्यम् । तथा सति अनुमित्यनुकूलशक्तिनाशकत्वाभावेन प्रतिबन्धकत्वासंभवात् । नच कार्यानुकूलधर्मविघटकत्वं कार्यानुकूलशक्त्यभावप्रयोजकत्वमेव तच्च तादृशशक्तिनाशजनके तदत्यन्ताभावप्रयोजके चाक्षतम् । इत्थंच बाधनिश्चयस्य अनुमित्यनुकूलशक्त्यभावं प्रति कारणभावविधया प्रयोजकत्वेन प्रतिबन्धकत्वोपपत्तिरिति वाच्यम् । जनकातिरिक्तायाः स्वरूपसंबन्धविशेषरूपायाः प्रयोजकतायाः संबन्धविशेषावच्छिन्नत्वे मानाभावात् । स्वप्रतियोगिवृत्तित्वसंबन्धानवच्छिन्नघटानुकूलशक्त्यभावप्रयोजकतायाः दण्डनाशे सत्त्वेन दाहानुकूलशक्तिं प्रति उत्तेजकस्यापि कारणत्वेन शक्त्यभावं प्रति उत्तेजकाभावस्यापि प्रयोजकत्वेन तत्रचातिप्रसक्तेः । तस्मान्न परमार्शनिष्ठशक्तिविघटकतया बाधनिश्चयस्य अनुमितिप्रतिबन्धकत्वोपपत्तिरिति । यादृशानुमितिं प्रति विजातीयशक्तिमदात्ममनःसंयोगत्वेन

अतिरिक्तकार्यकारणभावः स्वीक्रियते तादृशशक्तिविघटकतया च बाधज्ञानस्यानुमितिप्रतिबन्धकत्वोपपत्तिः तादृशसंयोगस्य कार्यकालवृत्तित्वेन हेतुत्वाभ्युपगमाच्च न शक्तिनाशक्षणे अनुमित्यापत्तिः तादृशविजातीयशक्तेरेव बाधनिश्चयेन नाशाभ्युपगमात् न बाधनिश्चयस्य ज्ञानसामान्यप्रतिबन्धकत्वापत्तिरिति तन्न चारु ईदृशकार्यकारणभावाभ्युपगमे परामर्शादिसमवधानदशायां तादृशात्ममनःसंयोगाभावादेव अनुमित्यापत्तिनिर्वाहेण परामर्शादीनां अनुमितिकारणताविलोपप्रसङ्गात्। कार्यानुकूलधर्मविघटकत्वस्य प्रतिबन्धकत्वमभ्युपगम्य तन्निर्वाहाय ईदृशकार्यकारणभावाभ्युपगमस्य प्रक्षालनाद्धीति न्यायकबलितत्वाच्च तस्मात् बाधनिश्चयस्यानुमितिप्रतिबन्धकत्वानुपपत्तिः वज्रलेपायते। अत एव महादेवग्रन्थरन्ध्रान्वेषिभिः प्रभाकृद्भिरपि दूषणं इदमेवाभिहितमिति विदाङ्कुर्वन्तु विद्वांसः॥ ॥ इति श्रीतिरुप्पक्कुळिश्रीकृष्णतातविरचितः प्रतिबन्धकताविचारः सम्पूर्णः॥

## ॥ कारिकावली ॥

नूतनजलधररुचये गोपवधूटीदुकूलचोराय। तस्मै कृष्णाय नमः संसारमहीरुहस्य बीजाय॥ १॥ द्रव्यं गुणस्तथा कर्म सामान्यं सविशेषकम्। समवायस्तथाऽभावः पदार्थाः सप्त कीर्तिताः॥ २॥ क्षित्यप्तेजोमरुद्व्योमकालदिग्देहिनो मनः। द्रव्याण्यथ गुणा रूपं रसो गन्धस्ततः परम्॥ ३॥ स्पर्शः संख्या परिमितिः पृथक्त्वं च ततः परम्। संयोगश्च विभागश्च परत्वं चापरत्वकम्॥ ४॥ बुद्धिः सुखं दुःखमिच्छा द्वेषो यत्नो गुरुत्वकम्। द्रवत्वं स्नेहसंस्कारावदृष्टं शब्द एव च॥ ५॥ उत्क्षेपणं ततोऽपक्षेपणमाकुञ्चनं तथा। प्रसारणं च गमनं कर्माण्येतानि पञ्च च॥ ६॥ भ्रमणं रेचनं स्यन्दनोर्ध्वज्वलनमेव च। तिर्यग्गमनमप्यत्र गमनादेव लभ्यते॥ ७॥ सामान्यं द्विविधं प्रोक्तं परं चापरमेव च। द्रव्यादित्रिकवृत्तिस्तु सत्ता परतयोच्यते॥ ८॥ परभिन्ना तु या जातिः सैवापरतयोच्यते॥ द्रव्यत्वादिकजातिस्तु परापरतयोच्यते॥ ९॥ व्यापकत्वात्परापि स्याद्व्याप्यत्वादपरापि च। अन्त्यो नित्यद्रव्यवृत्तिर्विशेषः परिकीर्तितः॥ १०॥ घटादीनां कपालादौ द्रव्येषु गुणकर्मणोः। तेषु जातेश्च संबन्धः समवायः प्रकीर्तितः॥ ११॥ अभावस्तु द्विधा संसर्गान्योन्याभावभेदतः। प्रागभावस्तथा ध्वंसोऽप्यत्यन्ताभाव एव च॥ १२॥ एवं त्रैविध्यमापन्नः संसर्गाभाव इष्यते। सप्तानामपि साधर्म्यं ज्ञेयत्वादिकमुच्यते॥ १३॥ द्रव्यादयः पञ्च भावा अनेके समवायिनः। सत्तावन्तस्त्रयस्त्वाद्या गुणादिर्निर्गुणक्रियः॥ १४॥ सामान्यपरिहीनास्तु सर्वे जात्यादयो मताः। पारिमाण्डल्यभिन्नानां कारणत्वमुदाहृतम्॥ १५॥ अन्यथासिद्धिशून्यस्य नियता पूर्ववर्तिता। कारणत्वं भवेत्तस्य त्रैविध्यं परिकीर्तितम्॥ १६॥ समवायिकारणत्वं ज्ञेयमथाप्यसमवायिहेतुत्वम्। एवं न्यायनयज्ञैस्तृतीयमुक्तं निमित्तहेतुत्वम्॥ १७॥ यत्समवेतं कार्यं भवति ज्ञेयं तु समवायिजनकं तत्। तत्रासन्नं जनकं द्वितीयमाभ्यां परं तृतीयं स्यात्॥ १८॥ येन सह पूर्वभावः कारणमादाय वा यस्य। अन्यं प्रति पूर्वभावे ज्ञाते यत्पूर्वभावविज्ञानम्॥ १९॥ जनकं प्रति पूर्ववृत्तितामपरिज्ञाय न यस्य गृह्यते। अतिरिक्तमथापि यद्भवेन्नियतावश्यकपूर्वभाविनः॥ २०॥ एते पञ्चान्यथासिद्धा दण्डत्वादिकमादिमम्। घटादौ दण्डरूपादि द्वितीयमपि दर्शितम्॥ २१॥ तृतीयं तु भवेद्व्योम कुलालजनकोऽपरः। पञ्चमो रासभादिः स्यादेतेष्वावश्यकस्त्वसौ॥ २२॥ समवायिकारणत्वं द्रव्यस्यैवेति विज्ञेयम्। गुणकर्ममात्रवृत्ति ज्ञेयमथाप्यसमवायिहेतुत्वम्॥ २३॥ अन्यत्र नित्यद्रव्येभ्य आश्रितत्वमिहोच्यते। क्षित्यादीनां नवानां तु द्रव्यत्वं गुणयोगिता॥ २४॥ क्षितिर्जलं तथा तेजः पवनो मन एव च। परापरत्वमूर्तत्वक्रियावेगाश्रया अमी॥ २५॥ कालखात्मदिशां सर्वगतत्वं परमं महत्। क्षित्यादिपञ्च भूतानि चत्वारि स्पर्शवन्ति हि॥ २६॥ द्रव्यारम्भश्चतुर्षु स्यादथाकाशशरीरिणाम्। अव्याप्यवृत्तिः क्षणिको विशेषगुण इष्यते॥ २७॥ रूपद्रवत्वप्रत्यक्षयोगिनः

प्रथमाश्रयः । गुरुणी द्वे रसवती द्वयोर्नैमित्तिको द्रवः ॥ २८ ॥ आत्मानो भूतवर्गाश्च विशेषगुणयोगिनः । यदुक्तं यस्य साधर्म्यं वैधर्म्यमितरस्य तत् ॥ २९ ॥ स्पर्शादयोऽष्टौ वेगाख्यः संस्कारो मरुतो गुणाः । स्पर्शाद्यष्टौ रूपवेगौ द्रवत्वं तेजसो गुणाः ॥ ३० ॥ स्पर्शादयोऽष्टौ वेगश्च गुरुत्वं च द्रवत्वकम् । रूपं रसस्तथा स्नेहो वारिण्येते चतुर्दश ॥ ३१ ॥ स्नेहहीना गन्धयुताः क्षितावेते चतुर्दश । बुद्ध्यादिषट्कं संख्यादिपञ्चकं भावना तथा ॥ ३२ ॥ धर्माधर्मौ गुणा एत आत्मनः स्युश्चतुर्दश । संख्यादिपञ्चकं कालदिशोः शब्दश्च ते च खे ॥ ३३ ॥ संख्यादयः पञ्च बुद्धिरिच्छा यत्नोऽपि चेश्वरे । परापरत्वे संख्याद्याः पञ्च वेगश्च मानसे ॥ ३४ ॥ तत्र क्षितिर्गन्धहेतुर्नानारूपवती मता । षड्विधस्तु रसस्तत्र गन्धस्तु द्विविधो मतः ॥ ३५ ॥ स्पर्शस्तस्यास्तु विज्ञेयो ह्यनुष्णाशीतपाकजः । नित्यानित्या च सा द्वेधा नित्या स्यादणुलक्षणा ॥ ३६ ॥ अनित्या तु तदन्या स्यात्सैवावयवयोगिनी । सा च त्रिधा भवेद्देहमिन्द्रियं विषयस्तथा ॥ ३७ ॥ योनिजादिर्भवेद्देह इन्द्रियं घ्राणलक्षणम् । विषयो द्व्यणुकादिश्च ब्रह्माण्डान्त उदाहृतः ॥ ३८ ॥ वर्णः शुक्लो रसस्पर्शौ जले मधुरशीतलौ । स्नेहस्तत्र द्रवत्वं तु सांसिद्धिकमुदाहृतम् ॥ ३९ ॥ नित्यतादि प्रथमवत्किं तु देहमयोनिजम् । इन्द्रियं रसनं सिन्धुहिमादिर्विषयो मतः ॥ ४० ॥ उष्णस्पर्शस्तेजसस्तु स्याद्रूपं शुक्लभास्वरम् । नैमित्तिकं द्रवत्वं तु नित्यतादि च पूर्ववत् ॥ ४१ ॥ इन्द्रियं नयनं वह्निस्वर्णादिर्विषयो मतः । अपाकजोऽनुष्णाशीतः स्पर्शस्तु पवने मतः ॥ ४२ ॥ तिर्यग्गमनवानेष ज्ञेयः स्पर्शादिलिङ्गकः । पूर्ववन्नित्यताद्युक्तं देहव्यापि त्वगिन्द्रियम् ॥ ४३ ॥ प्राणादिस्तु महावायुपर्यन्तो विषयो मतः । आकाशस्य तु विज्ञेयः शब्दो वैशेषिको गुणः ॥ ४४ ॥ इन्द्रियं तु भवेच्छ्रोत्रमेकः सन्नप्युपाधितः । जन्यानां जनकः कालो जगतामाश्रयो मतः ॥ ४५ ॥ परापरत्वधीहेतुः क्षणादिः स्यादुपाधितः । दूरान्तिकादिधीहेतुरेका नित्या दिगुच्यते ॥ ४६ ॥ उपाधिभेदादेकापि प्राच्यादिव्यपदेशभाक् । आत्मेन्द्रियाद्यधिष्ठाता करणं हि सकर्तृकम् ॥ ४७ ॥ शरीरस्य न चैतन्यं मृतेषु व्यभिचारतः । तथात्वं चेदिन्द्रियाणामुपघाते कथं स्मृतिः ॥ ४८ ॥ मनोऽपि न तथा ज्ञानाद्यनध्यक्षं तदा भवेत् । धर्माधर्माश्रयोऽध्यक्षो विशेषगुणयोगतः ॥ ४९ ॥ प्रवृत्त्याद्यनुमेयोऽयं रथगत्येव सारथिः । अहंकारस्याश्रयोऽयं मनोमात्रस्य गोचरः ॥ ५० ॥ विभुर्बुद्ध्यादिगुणवान्बुद्धिस्तु द्विविधा मता । अनुभूतिः स्मृतिश्च स्यादनुभूतिश्चतुर्विधा ॥ ५१ ॥ प्रत्यक्षमप्यनुमितिस्तथोपमितिशब्दजे । घ्राणजादिप्रभेदेन प्रत्यक्षं षड्विधं मतम् ॥ ५२ ॥ घ्राणस्य गोचरो गन्धो गन्धत्वादिरपि स्मृतः । तथा रसो रसज्ञायास्तथा शब्दोऽपि च श्रुतेः ॥ ५३ ॥ उद्भूतरूपं नयनस्य गोचरो द्रव्याणि तद्वन्ति पृथक्त्वसंख्ये । विभागसंयोगपरापरत्वस्नेहद्रवत्वं परिमाणयुक्तम् ॥ ५४ ॥ क्रिया जातिर्योग्यवृत्तिः समवायश्च तादृशः ॥ गृह्णाति चक्षुः संयोगादालोकोद्भूतरूपयोः ॥ ५५ ॥ उद्भूतस्पर्शवद्द्रव्यं गोचरः सोऽपि च त्वचः । रूपान्यच्चक्षुषो योग्यं रूपमत्रापि कारणम् ॥ ५६ ॥ द्रव्याध्यक्षे त्वचो योगो मनसा ज्ञानकारणम् । मनोग्राह्यं सुखं दुःखमिच्छा द्वेषो मतिः कृतिः ॥ ५७ ॥ ज्ञानं यन्निर्विकल्पाख्यं तदतीन्द्रियमिष्यते । महत्त्वं षड्विधे हेतुरिन्द्रियं करणं मतम् ॥ ५८ ॥ विषयेन्द्रियसंबन्धो व्यापारः सोऽपि षड्विधः । द्रव्यग्रहस्तु संयोगात्संयुक्तसमवायतः ॥ ५९ ॥ द्रव्येषु समवेतानां तथा तत्समवायतः । तत्रापि समवेतानां शब्दस्य समवायतः ॥ ६० ॥ तद्वृत्तीनां समवेतसमवायेन तु ग्रहः । प्रत्यक्षं समवायस्य विशेषणतया भवेत् ॥ ६१ ॥ विशेषणतया तद्वदभावानां ग्रहो भवेत् । यदि स्यादुपलभ्येतेत्येवं यत्र प्रसज्यते ॥ ६२ ॥ अलौकिकस्तु व्यापारस्त्रिविधः परिकीर्तितः । सामान्यलक्षणो

ज्ञानलक्षणो योगजस्तथा ॥ ६३ ॥ आसत्तिराश्रयाणां तु सामान्यज्ञानमिष्यते । तदिन्द्रियजतद्धर्मबोधसामग्र्यपेक्ष्यते ॥ ६४ ॥ विषयी यस्य तस्यैव व्यापारो ज्ञानलक्षणः । योगजो द्विविधः प्रोक्तो युक्तयुञ्जानभेदतः ॥ ६५ ॥ युक्तस्य सर्वदा भानं चिन्तासहकृतोऽपरः । व्यापारस्तु परामर्शः करणं व्याप्तिधीर्भवेत् ॥ ६६ ॥ अनुमायां ज्ञायमानं लिङ्गं तु करणं नहि । अनागतादिलिङ्गेन न स्यादनुमितिस्तदा ॥ ६७ ॥ व्याप्यस्य पक्षवृत्तित्वधीः परामर्श उच्यते । व्याप्तिः साध्यवदन्यस्मिन्नसंबन्ध उदाहृतः ॥ ६८ ॥ अथवा हेतुमन्निष्ठविरहाप्रतियोगिना । साध्येन हेतोरैकाधिकरण्यं व्याप्तिरुच्यते ॥ ६९ ॥ सिषाधयिषया शून्या सिद्धिर्यत्र न विद्यते । स पक्षस्तत्र वृत्तित्वज्ञानादनुमितिर्भवेत् ॥ ७० ॥ अनैकान्तो विरुद्धश्चाप्यसिद्धः प्रतिपक्षितः । कालात्ययापदिष्टश्च हेत्वाभासास्तु पञ्चधा ॥ ७१ ॥ आद्यः साधारणस्तु स्यादसाधारणकोऽपरः । तथैवानुपसंहारी त्रिधानैकान्तिको भवेत् ॥ ७२ ॥ यः सपक्षे विपक्षे च भवेत्साधारणस्तु सः । यस्तूभयस्माद्व्यावृत्तः स चासाधारणो मतः ॥ ७३ ॥ तथैवानुपसंहारी केवलान्वयिपक्षकः । यः साध्यवति नैवास्ति स विरुद्ध उदाहृतः ॥ ७४ ॥ आश्रयासिद्धिराद्या स्यात्स्वरूपासिद्धिरप्यथ । व्याप्यत्वासिद्धिरपरा स्यादसिद्धिरतस्त्रिधा ॥ ७५ ॥ पक्षासिद्धिर्यत्र पक्षो भवेन्मणिमयो गिरिः । ह्रदो द्रव्यं धूमवत्त्वादत्रासिद्धिरथापरा ॥ ७६ ॥ व्याप्यत्वासिद्धिरपरा नीलधूमादिके भवेत् । विरुद्धयोः परामर्शे हेत्वोः सत्प्रतिपक्षता ॥ ७७ ॥ साध्यशून्यो यत्र पक्षस्त्वसौ बाध उदाहृतः । उत्पत्तिकालीनघटे गन्धादिर्यत्र साध्यते ॥ ७८ ॥ ग्रामीणस्य प्रथमतः पश्यतो गवयादिकम् । सादृश्यधीर्गवादीनां या स्यात्सा करणं मतम् ॥ ७९ ॥ वाक्यार्थस्यातिदेशस्य स्मृतिर्व्यापार उच्यते । गवयादिपदानां तु शक्तिधीरुपमाफलम् ॥ ८० ॥ पदज्ञानं तु करणं द्वारं तत्र पदार्थधीः । शाब्दबोधः फलं तत्र शक्तिधीः सहकारिणी ॥ ८१ ॥ लक्षणा शक्यसंबन्धस्तात्पर्यानुपपत्तितः । आसत्तिर्योग्यताकाङ्क्षातात्पर्यज्ञानमिष्यते ॥ ८२ ॥ कारणं सन्निधानं तु पदस्यासत्तिरुच्यते । पदार्थे तत्र तद्वत्ता योग्यता परिकीर्तिता ॥ ८३ ॥ यत्पदेन विना यस्याननुभावकता भवेत् । आकाङ्क्षा वक्तुरिच्छा तु तात्पर्यं परिकीर्तितम् ॥ ८४ ॥ साक्षात्कारे सुखादीनां करणं मन उच्यते । अयौगपद्याज्ज्ञानानां तस्याणुत्वमिहोच्यते ॥ ८५ ॥ अथ द्रव्याश्रिता ज्ञेया निर्गुणा निष्क्रिया गुणाः । रूपं रसः स्पर्शगन्धौ परत्वमपरत्वकम् ॥ ८६ ॥ द्रवत्वस्नेहवेगाश्च मता मूर्तगुणा अमी । धर्माधर्मौ भावना च शब्दो बुद्ध्यादयोऽपि च ॥ ८७ ॥ एतेऽमूर्तगुणाः सर्वे विद्वद्भिः परिकीर्तिताः । संख्यादयो विभागान्ता उभयेषां गुणा मताः ॥ ८८ ॥ संयोगश्च विभागश्च संख्या द्वित्वादिकास्तथा । द्विपृथक्त्वादयस्तद्वदेतेऽनेकाश्रिता गुणाः ॥ ८९ ॥ अतः शेषगुणाः सर्वे मता एकैकवृत्तयः । बुद्ध्यादिषट्कं स्पर्शान्ताः स्नेहः सांसिद्धिको द्रवः ॥ ९० ॥ अदृष्टभावनाशब्दा अमी वैशेषिका गुणाः । संख्यादिरपरत्वान्तो द्रवोऽसांसिद्धिकस्तथा ॥ ९१ ॥ गुरुत्ववेगौ सामान्यगुणा एते प्रकीर्तिताः । संख्यादिरपरत्वान्तो द्रवत्वं स्नेह एवच ॥ ९२ ॥ एते तु द्वीन्द्रियग्राह्याः अथ स्पर्शान्तशब्दकाः । बाह्यैकैकेन्द्रियग्राह्याः गुणत्वादृष्टभावनाः ॥ ९३ ॥ अतीन्द्रिया विभूनां तु ये स्युर्वैशेषिका गुणाः । अकारणगुणोत्पन्ना एते तु परिकीर्तिताः ॥ ९४ ॥ अपाकजास्तु स्पर्शान्ता द्रवत्वं च तथाविधम् । स्नेहवेगगुरुत्वैकपृथक्त्वपरिमाणकम् ॥ ९५ ॥ स्थितिस्थापक इत्येते स्युः कारणगुणोद्भवाः । संयोगश्च विभागश्च वेगश्चैते तु कर्मजाः ॥ ९६ ॥ स्पर्शान्तपरिमाणैकपृथक्त्वस्नेहशब्दके । भवेदसमवायित्वं अथ वैशेषिके गुणे ॥ ९७ ॥ आत्मनः स्यान्निमित्तत्वं उष्णस्पर्शगुरुत्वयोः । वेगेऽपि च द्रवत्वे च संयोगादिद्वये तथा ॥

९८ ॥ द्विधैव कारणत्वं स्यात् अथ प्रादेशिको भवेत् । वैशेषिको विभुगुणः संयोगादि द्वयं तथा ॥ ९९ ॥ चक्षुर्ग्राह्यं भवेद्रूपं द्रव्यादेरुपलम्भकम् । चक्षुषः सहकारि स्याच्छुक्लादिकमनेकधा ॥ १०० ॥ जलादिपरमाणौ तन्नित्यमन्यत्सहेतुकम् । रसस्तु रसनाग्राह्यो मधुरादिरनेकधा ॥ १०१ ॥ सहकारी रसज्ञाया नित्यतादि च पूर्ववत् । घ्राणग्राह्यो भवेद्गन्धो घ्राणस्यैवोपकारकः ॥ १०२ ॥ सौरभश्चासौरभश्च स द्वेधा परिकीर्तितः । स्पर्शस्त्वगिन्द्रियग्राह्यस्त्वचः स्यादुपकारकः ॥ १०३ ॥ अनुष्णाशीतशीतोष्णभेदात्स त्रिविधो मतः । काठिन्यादि क्षितावेव नित्यतादि च पूर्ववत् ॥ १०४ ॥ एतेषां पाकजत्वं तु क्षितौ नान्यत्र कुत्रचित् । तत्रापि परमाणौ स्यात्पाको वैशेषिके नये ॥ १०५ ॥ नैयायिकानां तु नये द्व्यणुकादावपीष्यते । गणनाव्यवहारे तु हेतुः संख्याभिधीयते ॥ १०६ ॥ नित्येषु नित्यमेकत्वमनित्येऽनित्यमिष्यते । द्वित्वादयः परार्धान्ता अपेक्षाबुद्धिजा मताः ॥ १०७ ॥ अनेकाश्रयपर्याप्ता एते तु परिकीर्तिताः । अपेक्षाबुद्धिनाशाच्च नाशस्तेषां निरूपितः ॥ १०८ ॥ अनेकैकत्वबुद्धिर्या सापेक्षाबुद्धिरिष्यते । परिमाणं भवेन्मानव्यवहारस्य कारणम् ॥ १०९ ॥ अणु दीर्घं महद्ध्रस्वमिति तद्भेद ईरितः । अनित्ये तदनित्यं स्यान्नित्ये नित्यमुदाहृतम् ॥ ११० ॥ संख्यातः परिमाणाच्च प्रचयादपि जायते । अनित्यं द्व्यणुकादौ तु संख्याजन्यमुदाहृतम् ॥ १११ ॥ परिमाणं घटादौ तु परिमाणजमुच्यते । प्रचयः शिथिलाख्यो यः संयोगस्तेन जन्यते ॥ ११२ ॥ परिमाणं तूलकादौ नाशस्त्वाश्रयनाशतः । संख्यावत्तु पृथक्त्वं स्यात्पृथक्प्रत्ययकारणम् ॥ ११३ ॥ अन्योन्याभावतो नास्य चरितार्थत्वमिष्यते । अस्मात्पृथगिदं नेति प्रतीतिर्हि विलक्षणा ॥ ११४ ॥ अप्राप्तयोस्तु या प्राप्तिः सैव संयोग ईरितः । कीर्तितस्त्रिविधस्त्वेष आद्योऽन्यतरकर्मजः ॥ ११५ ॥ तथोभयक्रियाजन्यो भवेत्संयोगजोऽपरः । आदिमः श्येनशैलादिसंयोगः परिकीर्तितः ॥ ११६ ॥ मेषयोः सन्निपातो यः स द्वितीय उदाहृतः । कपालतरुसंयोगात्संयोगस्तरुकुम्भयोः ११७ ॥ तृतीयः स्यात्कर्मजोऽपि द्विधैव परिकीर्तितः । अभिघातो नोदनं च शब्दहेतुरिहादिमः ॥ ११८ ॥ शब्दाहेतुर्द्वितीयः स्याद्विभागोऽपि त्रिधा भवेत् । एककर्मोद्भवस्त्वाद्यो द्वयकर्मोद्भवोऽपरः ॥ ११९ ॥ विभागजस्तृतीयः स्यात्तृतीयोऽपि द्विधा भवेत् । हेतुमात्रविभागोत्थो हेत्वहेतुविभागजः ॥ १२० ॥ परत्वं चापरत्वं च द्विविधं परिकीर्तितम् । दैशिकं कालिकं चापि मूर्त एव तु दैशिकम् ॥ १२१ ॥ परत्वं मूर्तसंयोगभूयस्त्वज्ञानतो भवेत् । अपरत्वं तदल्पत्वबुद्धितः स्यादितीरितम् ॥ १२२ ॥ तयोरसमवायी तु दिक्संयोगस्तदाश्रये । दिवाकरपरिस्पन्दभूयस्त्वज्ञानतो भवेत् ॥ १२३ ॥ परत्वमपरत्वं तु तदीयाल्पत्वबुद्धितः । अत्र त्वसमवायी स्यात्संयोगः कालपिण्डयोः ॥ १२४ ॥ अपेक्षाबुद्धिनाशेन नाशस्तेषां निरूपितः । बुद्धेः प्रपञ्चः प्रागेव प्रायशो विनिरूपितः ॥ १२५ ॥ अथावशिष्टोऽप्यपरः प्रकारः परिदर्श्यते । अप्रमा च प्रमा चेति ज्ञानं द्विविधमिष्यते ॥ १२६ ॥ तच्छून्ये तन्मतिर्या स्यादप्रमा सा निरूपिता । तत्प्रपञ्चो विपर्यासः संशयोऽपि प्रकीर्तितः ॥ १२७ ॥ आद्यो देहेष्वात्मबुद्धिः शङ्खादौ पीततामतिः । भवेन्निश्चयरूपा या संशयोऽथ प्रदर्श्यते ॥ १२८ ॥ किंस्विन्नरो वा स्थाणुर्वेत्यादिबुद्धिस्तु संशयः । तदभावाप्रकारा धीस्तत्प्रकारा तु निश्चयः ॥ १२९ ॥ स संशयो मतिर्या स्यादेकत्राभावभावयोः । साधारणादिधर्मस्य ज्ञानं संशयकारणम् ॥ १३० ॥ दोषोऽप्रमाया जनकः प्रमायास्तु गुणो भवेत् । पित्तदूरत्वादिरूपो दोषो नानाविधः स्मृतः ॥ १३१ ॥ प्रत्यक्षे तु विशेष्येण विशेषणवता समम् । संनिकर्षो गुणस्तु स्यादथ त्वनुमितौ पुनः ॥ १३२ ॥ पक्षे साध्यविशिष्टे तु परामर्शो गुणो भवेत् । शक्ये सादृश्यबुद्धिस्तु भवेदुपमितौ गुणः ॥ १३३ ॥ शाब्दबोधे योग्यतायास्तात्पर्यस्याथ वा प्रमा । गुणः

स्याद्भ्रमभिन्नं तु ज्ञानमत्रोच्यते प्रमा ॥ १३४ ॥ अथवा तत्प्रकारं यज्ज्ञानं तद्वद्विशेष्यकम्। तत्प्रमा न प्रमा नापि भ्रमः स्यान्निर्विकल्पकम् ॥ १३५ ॥ प्रकारतादिशून्यं हि संबन्धानवगाहि तत्। प्रमात्वं न स्वतो ग्राह्यं संशयानुपपत्तितः ॥ १३६ ॥ व्यभिचारस्याग्रहोऽपि सहचारग्रहस्तथा। हेतुर्व्याप्तिग्रहे तर्कः क्वचिच्छङ्कानिवर्तकः ॥ १३७ ॥ साध्यस्य व्यापको यस्तु हेतोरव्यापकस्तथा। स उपाधिर्भवेत्तस्य निष्कर्षोऽयं प्रदर्श्यते ॥ १३८ ॥ सर्वे साध्यसमानाधिकरणाः स्युरुपाधयः। हेतोरेकाश्रये येषां स्वसाध्यव्यभिचारिता ॥ १३९ ॥ व्यभिचारस्यानुमानमुपाधेस्तु प्रयोजनम्। शब्दोपमानयोर्नैव पृथक्प्रामाण्यमिष्यते ॥ १४० ॥ अनुमानगतार्थत्वादिति वैशेषिकं मतम्। तन्न सम्यग्विना व्याप्तिबोधं शाब्दादिबोधतः ॥ १४१ ॥ त्रैविध्यमनुमानस्य केवलान्वयिभेदतः। द्वैविध्यं तु भवेद्व्याप्तेरन्वयव्यतिरेकतः ॥ १४२ ॥ अन्वयव्याप्तिरुक्तैव व्यतिरेकादिहोच्यते। साध्याभावव्यापकत्वं हेत्वभावस्य यद्भवेत् ॥ १४३ ॥ अर्थापत्तिस्तु नैवेह प्रमाणान्तरमिष्यते। व्यतिरेकव्याप्तिबुद्ध्या चरितार्था हि सा यतः ॥ १४४ ॥ सुखं तु जगतामेककाम्यं धर्मेण जायते। अधर्मजन्यं दुःखं स्यात्प्रतिकूलं सचेतसाम् ॥ १४५ ॥ निर्दुःखत्वे सुखे चेच्छा तज्ज्ञानादेव जायते। इच्छा तु तदुपाये स्यादिष्टोपायत्वधीर्यदि ॥ १४६ ॥ चिकीर्षा कृतिसाध्यत्वप्रकारेच्छा च या भवेत्। तद्धेतुः कृतिसाध्येष्टसाधनत्वमतिर्भवेत् ॥ १४७ ॥ बलवद्द्विष्टहेतुत्वमतिः स्यात्प्रतिबन्धिका। तद्हेतुत्वबुद्धेस्तु हेतुत्वं कस्यचिन्मते ॥ १४८ ॥ द्विष्टसाधनताबुद्धिर्भवेद्द्वेषस्य कारणम्। प्रवृत्तिश्च निवृत्तिश्च तथा जीवनकारणम् ॥ १४९ ॥ एवं प्रयत्नत्रैविध्यं तान्त्रिकैः परिकीर्तितम्। चिकीर्षा कृतिसाध्येष्टसाधनत्वमतिस्तथा ॥ १५० ॥ उपादानस्य चाध्यक्षं प्रवृत्तौ जनकं भवेत्। निवृत्तिस्तु भवेद्द्वेषाद्द्विष्टसाधनताधियः ॥ १५१ ॥ यत्नो जीवनयोनिस्तु सर्वदातीन्द्रियो भवेत्। शरीरे प्राणसञ्चारे कारणं परिकीर्तितः ॥ १५२ ॥ अतीन्द्रियं गुरुत्वं स्यात्पृथिव्यादिद्वये तु तत्। अनित्ये तदनित्यं स्यान्नित्ये नित्यमुदाहृतम् ॥ १५३ ॥ तदेवासमवायि स्यात्पतनाख्ये तु कर्मणि। सांसिद्धिकं द्रवत्वं स्यान्नैमित्तिकमथापरम् ॥ १५४ ॥ सांसिद्धिकं तु सलिले द्वितीयं क्षितितेजसोः। परमाणौ जले नित्यमन्यत्रानित्यमुच्यते ॥ १५५ ॥ नैमित्तिकं वह्नियोगात्तपनीयघृतादिषु। द्रवत्वं स्यन्दने हेतुर्निमित्तं संग्रहे तु तत् ॥ १५६ ॥ स्नेहो जले स नित्योऽणावनित्योऽवयविन्यसौ। तैलान्तरे तत्प्रकर्षाद्दहनस्यानुकूलता ॥ १५७ ॥ संस्कारभेदो वेगोऽथ स्थितिस्थापकभावने। मूर्तमात्रे तु वेगः स्यात्कर्मजो वेगजः क्वचित् ॥ १५८ ॥ स्थितिस्थापकसंस्कारः क्षितौ केचिच्चतुर्ष्वपि। अतीन्द्रियोऽसौ विज्ञेयः क्वचित्स्पन्देऽपि कारणम् ॥ १५९ ॥ भावनाख्यस्तु संस्कारो जीववृत्तिरतीन्द्रियः। उपेक्षानात्मकस्तस्य निश्चयः कारणं भवेत् ॥ १६० ॥ स्मरणे प्रत्यभिज्ञायामप्यसौ हेतुरुच्यते। धर्माधर्मावदृष्टं स्याद्धर्मः स्वर्गादिसाधनम् ॥ १६१ ॥ गङ्गास्नानादियागादिव्यापारः स तु कीर्तितः। कर्मनाशाजलस्पर्शादिना नाश्यस्त्वसौ मतः ॥ १६२ ॥ अधर्मो नरकादीनां हेतुर्निन्दितकर्मजः। प्रायश्चित्तादिनाश्योऽसौ जीववृत्ती त्विमौ गुणौ ॥ १६३ ॥ इमौ तु वासनाजन्यौ ज्ञानादपि विनश्यतः। शब्दो ध्वनिश्च वर्णश्च मृदङ्गादिभवो ध्वनिः ॥ १६४ ॥ कण्ठसंयोगादिजन्या वर्णास्ते कादयो मताः। सर्वः शब्दो नभोवृत्तिः श्रोत्रोत्पन्नस्तु गृह्यते ॥ १६५ ॥ वीचीतरङ्गन्यायेन तदुत्पत्तिस्तु कीर्तिता। कदम्बगोलकन्यायादुत्पत्तिः कस्यचिन्मते ॥ १६६ ॥ उत्पन्नः को विनष्टः क इति बुद्धेरनित्यता। सोऽयं क इति बुद्धिस्तु साजात्यमवलम्बते ॥ १६७ ॥ तदेवौषधमित्यादौ सजातीयेऽपि दर्शनात्। तस्मादनित्या एवेति वर्णाः सर्वे मतं हि नः ॥ १६८ ॥

॥ इति श्रीविश्वनाथपञ्चाननभट्टाचार्यकृता कारिकावली समाप्ता ॥